॥ श्रीः ॥

श्रीविश्वनाथकविराजप्रणीतः

# साहित्यदर्पणः

नाम

## अलङ्कारसन्दर्भः ।

( आदितः षष्ठपरिच्छेदावधि )

अखिलशास्त्राध्यापकानां स्वपितामहसहजतनुजानां श्रीदेवीसहाय-
शास्त्रिणां चरणानुकम्पया लब्धविद्येन पाटननगरवास्तव्येन
सम्प्रति कलकत्तावासिना श्रीशिवनाथसूरितनूभुवा शिवदत्त-
कविरत्नेन विभावितया रुचिरया व्याख्ययाऽनुगतः ।

सोऽयं

मुम्बापुर्यां

क्षेमराज श्रीकृष्णदासश्रेष्ठिना

( खेतवाडी ७ वीं गली खम्वाटा लेन )

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम् मुद्रणयन्त्रालये

मुद्रयित्वा

प्रकाशमानीतः ।

संवत् १९७३, शकाब्दाः १८३८.

॥ श्रीः ॥



# निवेदनपत्रम्-

वाग् लक्ष्मीश्च शिवाऽमला च विभुता शान्तिः प्रसत्तिर्धृतिः
कान्तिः कीर्त्तिरुदारता च करुणा गम्भीरता वा स्वयम् ।
जाता येन समं दिवं च सकला याता यथार्थाऽभिधं
तं विष्वग्विदितानवद्यचरितं देवीसहायं नुवे ॥ १ ॥

धूर्त्तानां विविधानि तानि कुमतान्युत्सार्य्य येन क्षणाद्
दिव्यो धर्म्मदिवाकरः कलियुगे व्याप्तेऽपि विद्योतितः ।
विश्वोद्धारकृते च यः समभवद् ध्यायंश्च यः शङ्करं
भातस्तन्मयतां स्तुवीत सुमनास्तं को न विद्यागुरुम् ॥ २ ॥

पाखण्डमतदुर्ध्वान्तविभेदनयशस्विनम् ।
विमलेनोपदेशेन जनोद्धारे कृतक्षणम् ॥ ३ ॥

देवीसहायमानम्य पितामहगुरूद्भवम् ।
व्याख्येयं मनसा तस्य पदद्वन्द्वे निवेद्यते ॥ ४ ॥

कृतार्थयतु तामेनांत्यक्तप्राकृतविग्रहः ।
दिव्यं स्वरूपमास्थाय सर्वसाक्षितया स्थितः ॥ ५ ॥

इति

शिवदत्तस्य ।

# प्रस्तावना ।

सुविदितमेवैतत्साहित्यदर्पणाभिधमलङ्कारशास्त्रं भारतीदेव्याः सुरुचिरमलङ्करणमिति । निम्बचिरबिल्वादिविधातृनिर्मितरसास्वादलम्पटकरटादिमन्तरा नास्ति सार्वत्रिकी रुचिरता प्रजापतिविनिर्मितजनताचेतोहारिणी, कविनिर्मितनवरसेषु तु कोप्यपूर्वः सहृदयहृदयाह्लादको रसः सर्वदैव सुधीभिरनुभूयत एवेति विश्वजनीनमेतत् । शब्दस्य हि अभिधालक्षणाव्यञ्जनात्मिकास्तिस्रोऽपूर्वाः शक्तयः, तासु सर्वास्वपि तत्तन्महिममहितो ह्यर्थः सुधीस्वान्तानन्दजननो मृगमदामोद इव स्वैर्गुणैर्जागर्ति जगतीतले । परन्तु गतोऽस्तमर्क इत्यादिवाक्येषु व्यञ्जनाचमत्कारः साहित्यशास्त्रज्ञानमन्तरा नैव बोद्धुं शक्यत इति सर्वप्रवृत्तिः साहित्यज्ञानसम्पादने नैसर्गिक्येव । अत एव भारतवर्षीयसंस्कृतविद्यालयादिषु व्याकरणन्यायादिशास्त्रसहकृतस्साहित्यपाठोपि नान्तरीयकतया प्रचरति निर्विवादम् । वाराणसीप्रभृतिविद्यापीठेष्वपि बहुशः प्रचारोऽस्य ग्रन्थस्य वर्तते । काव्यसाहित्याचार्यादिपरीक्षासु प्रतिवर्षमनेके विद्यार्थिनः सश्रद्धमधीयत एनं ग्रन्थम् । यद्यपि द्वित्रव्याख्यासंवलितोयं ग्रन्थः साम्प्रतमुपलभ्यते परन्तु न तावतान्तेवासिहृदयसन्तोषो भवति । नच कठिनस्थलेषु सुस्पष्टं व्याख्यानमुपलभ्यते, लभ्यते च क्वचित्सरलस्थलेषु मुधापाण्डित्यम् । अत्र च सर्वत्रैव तथातिसौलभ्यमापादितं यथा सरलबुद्धिमन्तोपि च्छात्रा अनायासमस्य पदपदार्थावगतिमवबुद्ध्येयुः । यथाशक्ति चात्र समस्तग्रन्थस्य काठिन्यपरिहारस्तथानुष्ठितो यथाऽऽदर्शे स्वप्रतिबिम्बगतमालिन्यादिज्ञानपुरस्सरं तन्मार्जनं सुकरं सम्पद्यते । मया स्वमनीषया विरचिताऽन्वर्थाभिधेयं रुचिरा व्याख्या ग्रन्थाशययाथार्थ्यप्रकटनमार्जितादर्शरजा रञ्जयतु चेतृमनोम्भोजानीति शम् ।

किञ्च मयास्य सरुचिरसाहित्यदर्पणस्य पुनर्मुद्रणविक्रयादिसर्वेधिकाराः "श्रीवेङ्कटेश्वर" मुद्रणालयस्वामिश्रेष्ठिक्षेमराज श्रीकृष्णदासाय प्रदत्तास्सन्ति, अतश्चास्य पुनर्मुद्रणप्रतिबिम्बीकरणादिसाहसं न केपि कुर्युरन्यथा न्यायालयाद्दण्डभागिनस्ते स्युरिति श्रीशिवदत्तस्य कविरत्नस्य ।

श्रीहरिः ।

# प्रस्तावना ।

सुविदितमेव सर्वालङ्काराणां साहित्यदर्पणस्य परममाननीयत्वम् एतस्य सर्वविषयोपपादनपरस्यापि हन्त नाद्यावधि अपि रुचिरा व्याख्या केनापि विदुषा निर्मिता, अत्र किल दुरवगाह्यविषयतैव हेतुःप्रतिभासते । अस्तु नाम किन्तु सम्प्रति भारतेश्वरस्य पञ्चमजार्जमहोदयस्य शासनावसरे सर्वतः सर्वेषां शास्त्राणां पठनपाठनप्रचारप्राचुर्ये प्रतिष्ठमानेऽलङ्कारशास्त्रेऽस्यैव पाठः सर्वत्र प्रथमतया पठनपाठनादरः समुपलभ्यते, एवं लब्धादरस्यापि काठिन्यं छात्राणां कथमिव चेतो व्यापारयतीति त एव जानन्ति ये गुरुसन्निधौ कृताध्ययनाः, न केवलं छात्राणामेव किन्त्वध्यापकमहोदयानामप्यनेकेषु स्थलेषु सम्मोहमत्र गाहयति च नोन्नतिमिति सर्वेषां छात्राणां विदुषामध्यापकानाञ्च प्रमोदाय पण्डितशिवदत्तकविवरनिर्मिता रुचिराभिधेयान्वर्थाभिधया व्याख्या मया स्वकीयमुद्रणयन्त्रालये मुद्रिता । इयञ्च प्रायः प्रतिपदं दुरूहार्थतामपनयन्ती प्रौढां विचारसरणिं प्रकाशयति, अतः सर्वथा सम्भाव्यतेऽस्या लाभेन सर्वेषां तेषां पठनपाठनसौकर्यम् ।

किञ्चाखिलभारतीयानां स्वस्थानीयाया अस्मद्गीर्वाणभारत्याः समधिकप्रचाराय साहित्यमर्मज्ञानमावश्यकं तच्चानवद्यनिबन्धनिर्दुष्टव्याख्यानान्तराऽसम्भवीति समवधार्य मयास्य साहित्यज्ञसाहित्यसम्पादकस्य ग्रन्थस्य रुचिरव्याख्यानिर्माणप्रणीतत्वात्तेन महानुभावेनानेके धन्यवादा वितीर्यन्ते तस्मै बुधवरायेति कृतम्पल्लवितेनेति ॥

क्षेमराज श्रीकृष्णदासस्य ।

॥ श्रीः ॥

# निवेदनम् ।

अयि निखिलसहृदयधुरीणा निश्शेषविद्यानिष्णाता महानुभावाः ! साहित्यापरपर्यायमलङ्कारशास्त्रमेवालङ्कारायमाणमशेषाणां शास्त्राणामिति सुविदितचरं तत्रभवताम् । एतदेव हि शास्त्रान्तरचमत्कारजातन्निवेदयत्युपास्यमानम् । वापीकूपतडाकाद्यखिलजलाशयसम्पाद्यमर्थं जलनिधिरिवेदं सर्वेषां शास्त्राणां चमत्कारोद्बोधं समुपगमयति स्वं सेवमानानामित्येव साहित्याभिधानमलङ्कुरुते । हितेन सह वर्त्तमानत्वमेव साहित्यमितीदमपि तथाभूतम् । अलङ्कारशास्त्रमिति व्यपदेशबीजमपि तदेवैतस्य । साहित्यप्रधानमलङ्कारशास्त्रमिति न केवलं व्यपदेशः, अपि तु तथाभूतम् । एतदेकमुपासाना भवन्ति निश्चितनिःशेषतन्त्रस्वतन्त्रा लब्धाभिलषितार्थसार्थाश्च । एषां च साहित्यदर्पणो नाम निबन्धो निबध्नाति सचेतसां चेतांसि,अलङ्करोतिच चमत्कारं सुचेतसां चेतस्सु । यद्यपि सन्ति काव्यप्रकाशादयः परेऽपि परःशतं निबन्धाः, निवहन्ति चमत्कारं च परां प्रौढिम्, तदपि तेषां दुरधिगमत्वाज् झटिति च तेभ्यः फलालाभान्न तथाभूताः । एष पुनर्निबन्धो नातिदुरधिगमो न च झटिति चमत्कारानावहः । अनेकत्र च श्वश्रीयश्वश्रीय लभ्यानि फलान्येकस्यैवैतस्योपासितारो लभन्ते, तत्सार्थयति स्वकीयं सुगृहीताभिधानमेषः । एनमुपास्य न चिन्तामणिं कामयते, न वा मन्दारम् । एष हन्त कालमहिम्ना दुर्व्याख्याभिर्विच्छायीक्रियमाणोऽतथाभूत इव जात इत्येव पुनः स्वरूपमेनं नेतुकामेन मया प्रतिपदमनुसृत्य सार्थकतान्नीतान्येतदीयान्यक्षराणि सर्वाणि । अथायं पुनः स्ववर्णसद्भावं प्रपन्नः सहृदयहृदयालङ्कारो भवितुमर्हतीत्यत्र निकषस्थानानि श्रीमन्त इति ।

सहृदयचरणानुगतस्य,

**शिवदत्तशर्मणः.**

॥ श्रीः ॥

# विषयानुक्रमणिका ।

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥

यतस्तावन्नानास्थिरचरगणास्तं जगदिदं
यदेकाधारं तद्विलसति महाभूतविभवम् ॥
यदेवान्ते भूयः श्रयति परमं धाम महितं
नमस्तस्मै कस्मैचिदनघविलासाय महसे ॥ १ ॥

स श्रेयो विदधातु हन्तु निखिलान्विघ्नान्ददातु श्रियं
विद्यामुन्नयतु क्षिणोतु च तमः सिद्धिं च पुष्णातु मे ॥
किञ्चिन्मात्रकृपाकटाक्षविषयं येन क्षणं प्रापिता-
दिव्यानामपि सम्पदामनुभवं निस्तत्त्वमाचक्षते ॥ २ ॥

व्रजजनवनिताभिर्हेमपुष्पप्रभाभिः
सहजलद इवासश्चञ्चलाभिः समन्तात् ॥
सपदि निबिडतापोल्लासशान्तौ प्रवीणो
मृगमदरमणीयो हन्तु दैन्यं दयालुः ॥ ३ ॥

अणुमपि परकीयं हन्त दोषं गुणं वा
विपुलयितुमलं ये नित्ययुक्ताश्चिराय ॥
प्रकृतिसदृशचेष्टाधूतपापाः पवित्रा-
भुवि विदितचरित्रा वन्दनीया न केषाम् ॥ ४ ॥

अध्याप्य शास्त्राणि विकाश्य तत्त्वं यशांसि विस्फूर्य्य विराज्य तेजः ॥
वाचस्पतिं वा विबुधेश्वरं वा जेतुं प्रयाताः शरणं पितृव्याः ॥ ५ ॥

सौम्यान्प्रशान्तान्विमलान्महोज्ज्वलान् दयानिधीन्दिव्यविकाशशालिनः ॥
विद्याधरास्वादितपादपङ्कजान् पुनः पुनस्तानभिवादये गुरून् ॥ ६ ॥

कञ्चिज्जय्यं प्रसूनैरथ कमपि यमादप्यनुद्वेगभाजं
कञ्चित्क्रुद्धं च शान्तं कमपि च घृणितं कञ्चिदार्त्तं च कञ्चित् ॥
यः कञ्चित्साश्रुनेत्रं विकसितवदनं कञ्चिदेवं विधत्ते
कञ्चित्स्तब्धं च सोऽयं जयति कृतिकलां दर्शयन्विश्वनाथः ॥ ७ ॥

स्यात्कृती यमनुपास्य न कश्चित् सर्व एव कृतिनो यमुपास्य ॥
तं पवित्रचरितं महनीयं विश्वनाथमुपयामि शरण्यम् ॥ ८ ॥

आलम्ब्य महनीयानां सहजं करुणोदयम् ॥ साहित्यदर्पणव्याख्योन्नीयते शैवनाथिना ॥ ९ ॥

अन्तर्हितविकाशत्वाद्विगीतं विमलं स्वतः ॥ समुल्लासयितुं यत्न एष साहित्यदर्पणम् ॥ १० ॥

रुचिरा रुचिरानाम्ना विशदा विशदाशया ॥ विश्वनाथगुरोः कीर्तिः सदन्वयमलङ्क्रियात् ॥ ११ ॥

इयं प्रतिपदं मूलवर्णसंस्कारदीपिका ॥ कविरत्नकृतिर्भूयाद्विश्वनाथमतानुगा ॥ १२ ॥

नानासाहित्यसन्दर्भतत्त्वोल्लासनतत्परा ॥ विश्वनाथकृतिर्भूयादियमेव सतां मुदे ॥ १३ ॥

क्वाहं मन्दः, क्व भूयः कविगुरुमहिमस्वच्छताया विवेक-
व्याख्यां कर्तुं क्षमत्वं, तदपि शिरसि मे विश्वनाथप्रसादः ॥
इत्येवोत्साहितोऽयं सुमतमनुसरंस्तस्य नित्यं दयालोः
प्रौढानामप्यमीषां सपदि कुमतमुन्मूलयन्नस्म्यतन्द्रः ॥ १४ ॥

गुणान्गृह्णन्तु सुहृदो दोषांश्चिन्वन्तु दुर्धियः ॥ भाग्यमेवात्र निकषः सामान्ये रत्नपङ्कयोः ॥ १५ ॥

---

१ देवीसहायशास्त्रिणः । २ पितृपादान् श्रीशिवनाथसूरीन् । ३ ग्रन्थकर्त्ता शङ्करश्च । ४ मूढः सौरिर्वा । ५ कविः काव्यकर्ता भृगुर्वा । ६ गुरुरध्यापको बृहस्पतिर्वा । ७ विश्वनाथस्येत्यर्थः । ८ तन्मतद्वेषिणाम् । ९ रुमुद्रसदृशाया व्याख्यायाम् । १० गुणदोषसदृशयोः ।

॥ श्रीः ॥

## रुचिराव्याख्योपेतः

# साहित्यदर्पणः ।

## प्रथमः परिच्छेदः ।

**ग्रन्थारम्भे निर्विघ्नेन प्रारिप्सितपरिसमाप्तिकामो वाङ्मयाधिकृततया वाग्देवतायाः साम्मुख्यमाधत्ते–**

---

अत्र भवान् सर्वतन्त्रस्वतन्त्रः साहित्यार्णवकर्णधारो ध्वनिप्रस्थापनपरमाचार्य्यः कविसूक्तिरत्नाकरोऽष्टादशभाषावारविलासिनीभुजङ्गः सान्धिविग्रहिकमहापात्रं श्रीमान् **विश्वनाथ**कविराजः समस्तप्रबन्धैकसारभूतं साहित्यसिद्धान्ततत्त्वमनायासमवजिगमिषूणां तस्यतस्य च प्रबन्धस्य तत्त्वाकलनाय निरस्ताधिकाराणां बालानामामोदायैकत्रैवैकपदं तत्तत्प्रबन्धजातसिद्धान्तमनाविलमनवद्यं तत्त्वमुन्निनीषुः **साहित्यदर्पणं** नाम प्रबन्धं प्रबध्नंस्तस्य च साहित्यसिद्धान्तसूत्रभूताः कारिका मण्डूकप्लुतिन्यायेन व्याचिख्यासुस्तत्र तावदाद्यायाः कारिकाया अवतरणिकामाह–**ग्रन्थारम्भे** ग्रन्थस्य 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ॥ निर्णयश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्' ॥ इत्युक्तदिशा पञ्चाङ्गकस्य 'सम्बन्धप्रयोजनज्ञानाहितशुश्रूषाजन्यश्रुतिविषयशब्दसन्दर्भो ग्रन्थः' इत्युक्तस्वरूपस्य वा वाक्यविशेषस्य; आरम्भः प्रथममेव वर्णविन्यासावसरो लक्षणया तदव्यवहितपूर्ववर्त्ती क्षण इति यावत् तत्रेति तथोक्ते । लक्षणा चाद्यकृतिरूपस्यारम्भपदघटितस्य मुख्यार्थस्य बाधितत्वान्मङ्गलारम्भयोरव्यवधानेन बोधावताररूपस्य प्रयोजनस्य सत्त्वाच्चेति बोध्यम् । यत्तूक्तम् 'आरभ्यतेऽस्मिन्निति व्युत्पत्त्याऽऽरम्भशब्दस्तत्प्राक्कालवचनः ।' इति, तदसत्; तथाऽपि यथाश्रुतस्यैवारम्भशब्दघटितस्यार्थस्य लाभे तत्प्राक्कालावगमानुदयात् । यच्चाहुः 'ग्रन्थस्यारम्भ इति तस्मिन्, भाविनि सतीति शेषः ।' इति तदपि तथाभूतम् । एवं सत्यपि 'आरम्भे आरम्भाव्यवहितपूर्ववर्त्तिनि क्षणे' इति पदादिव 'भाविनि सती' ति पदादध्याहृत्य योज्यमानादपि तत्प्रागभावसमानकालिकत्वस्यैवावगमात्, सदाचारपरम्परया प्राप्तस्यारम्भाव्यवहितपूर्ववर्त्तिक्षणात्मकप्राक्कालिकत्वस्यावगमाभावाच्च; नच- 'कालान्तरीणस्यापि मङ्गलाचरणस्यादृष्टद्वारा प्रकृतोपयोगित्वान्मङ्गलारम्भयोरव्यवहितत्वागमापेक्षाऽकिञ्चित्करी' ति वाच्यम्, आरम्भाव्यवहितपूर्वकालिकस्यैव तस्य मङ्गलाचरणस्य प्राशस्त्येनाभिमननात्, अत एवात्रारम्भशब्देन व्यवहारः, न तु प्रारम्भशब्देन । 'सप्तम्यधिकरणे च ।' २।३।३६। इति सप्तमी न तु 'निमित्तात्कर्म्मयोगे ।' * इति निमित्तार्थे, 'क्रियाफलरूपस्य निमित्तस्य स्वान्वयिक्रियाकर्मणा योगे सति तद्वाचकात् निमित्तवाचकात्सप्तमी स्या'दित्यर्थकस्यास्य वार्त्तिकस्य 'चर्म्मणि द्वीपिनं हन्ती'त्यादावेव प्रसक्तेः । अत्र पुनर्निर्विघ्नतया प्रारिप्सितपरिसमाप्तेः क्रियाफलत्वे ग्रन्थारम्भस्य च तदनुपपत्तौ वाग्देवीप्रसादापादनात्मकेन कर्म्मणा साकं सम्बन्धानुपपत्तौ प्रसक्त्यसम्भवः । **निर्विघ्नेन** विघ्नानामभावो निर्विघ्नं तेन तद्द्वारेति यावत् विघ्नाश्च प्रतिबन्धकीभूता दुरदृष्टविशेषाः, प्रतिबन्धकश्च प्रकृते ग्रन्थपरिसमाप्त्यन्तरायहेतुः । 'कर्तृकरणयोस्तृतीया । ' २।३।१८। इति करणे तृतीया । **प्रारिप्सितपरिसमाप्तिकामः** प्रारिप्सितस्य प्रारब्धुमिष्टस्य परिसमाप्तिः परितः समाप्तिश्चरमवर्णावधिका पूर्त्तिरिति यावत्, सैव कामोऽभिलाषो यस्य स इति तथोक्तः । प्रारिप्सितमित्यत्र 'निष्ठा ।' ३।२।१०२ । इति क्तः । 'तदस्य सञ्जातं तारकादिभ्य इतच् ।' ५ । २। ३६ । इतीतच् वा । **वाङ्मयाधिकृततया** अधिकृतं वाङ्मयं ययेति तद्भावस्तयेति तथोक्तया । आहिताग्न्यादित्वात्परनिपातः । वाङ्मयस्याधिकृतताधिकारस्तयेति वा । वाङ्मयं शास्त्रम् । 'हेतौ ।' २।३।२३। इति तृतीया । **वाग्देवताया** वाचां देवता

**१ शरदिन्दुसुन्दररुचिश्चेतसि सा मे गिरां देवी ॥**
**अपहृत्य तमः सन्ततमर्थानखिलान् प्रकाशयतु ॥ १ ॥**

---

ऽधिष्ठात्री देवीति, वागेव देवतेति वा तस्याः। **साम्मुख्यं** प्रसन्नमुखीत्वम्।सम्यक् प्रसन्नं मुखं यस्यास्तस्या भाव इति तत्तथोक्तम्। **आधत्ते** निदधात्यारोपयतीति वा। यत्तूक्तम्–'आधत्ते करोती' ति, तत् कविसमयविरुद्धम्, आङ्पूर्वकस्य दधातेः करणार्थकताया अस्वीकारात्। अत्र 'ग्रन्थकृदि' ति, 'अहमादधे' इति वाऽनभिधाय 'आधत्ते' इत्यभिधानं ग्रन्थकृतामनभिमानित्वं सारल्येनावस्थानं च द्योतयते, न तु वृत्तिकारकारिकाकारयोर्भेदम्, 'जीवत्यहो रावणः।' इतिवद्भेदोक्तेः काल्पनिकत्वात्, 'रसस्वरूपं निरूपयिष्यामः' इति वृत्तिकारस्य कारिकाकारतयाऽभिधानस्यान्यथाऽनुपपत्तेश्चेति बोध्यम्। अत्रेदं निष्कृष्टम्–वाग्देव्याः साम्मुख्यं नितान्तमुपयुक्तं, तदन्तरा मूकत्वजडत्वाद्युपपत्तेः, ग्रन्थनिर्म्मातृत्वग्रन्थपरिसमाप्तिकर्तृत्वयोरनुपपत्तेश्च; तदाधानं चानुषङ्गतोऽध्येतॄणां वक्तॄणां श्रोतॄणां व्याख्यातॄणां च मङ्गलाय। यदाहुर्महाभाष्यकाराः–'मङ्गलादीनि हि शास्त्राणि प्रथन्ते वीरपुरुषाणि च भवन्ति आयुष्मत्पुरुषाणि च, अध्येतारश्च सिद्धार्था यथा स्युः।' इति तथा च–'प्रारिप्सितस्यैतस्य ग्रन्थस्यारम्भाव्यवहितपूर्ववर्त्तिनि क्षणे, तस्य च भवेन्निर्विघ्ना परिसमाप्तिः, इत्यभिलषन् ग्रन्थकारः श्रीविश्वनाथकविराजः स्वयं स्वस्यान्येषामपि मङ्गलमनुषङ्गतो वर्धयन् वाङ्मयस्य ग्रन्थस्य वागधिकृततया वाग्देव्या आशीःप्रार्थनमाधत्ते। इति। मगणात् परम्मगणस्यैव न्यासो गकारेणारम्भश्च 'मो भूमिः श्रियमातनोती' ति, 'मनौ मित्रे' इति 'मित्रान्मित्रं विधत्ते प्रचुरतरधन' मिति। 'कः खो गो घश्च लक्ष्मीं वितरती' ति च निर्दिष्टं फलम्। ननु किमिह मङ्गलम्? तस्य विघ्नध्वंसं प्रति समाप्तिं प्रति वा कारणत्वानुपपत्तेः। तथाहि–केचिन्मङ्गलमाचरन्तोऽपि न ग्रन्थपरिसमाप्तिं पारयन्ति, यथा–कादम्बरी–रसगङ्गाधर–काव्यप्रकाश–वृत्तिवार्त्तिकादिकाराः। केचित् पुनस्तदनाचरन्तस्तां पारयन्ति, यथा–आङ्गलभाषाग्रन्थकाराः, इति चेत्? यत्र मङ्गलसत्त्वेऽपि विघ्नस्तत्रैतदपेक्षया तस्य न्यूनत्वम्, यत्र पुनर्मङ्गलासत्त्वेऽपि समाप्तिस्तत्र स्वत एव भाविमहिम्ना मङ्गलाचरणमूह्यम्, 'यक्षानुरूपो बलि–' रिति न्यायेन विघ्नानुरूपस्यैव मङ्गलस्य ग्रन्थसमाप्तिं प्रति कारणत्वम्, यदुक्तम्–'श्रूयते हि अनुष्ठानज्ञानयोः स्वतन्त्रं पृथक्पृथक् फलम्। 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते, य उ चैनमेवं वेद' इति। अल्पप्रयाससाध्येन वेदनेन तत्सिद्धौ बह्वायाससाध्यमनुष्ठानं व्यर्थमिति चेन्न, तरणीयाया हि ब्रह्महत्याया मानसिकवाचनिककायिकत्वादिभेदेन तारतम्योपपत्तेः। मनसा सङ्कल्पिता, वाचाऽभ्यनुज्ञाता, परहस्तेन कारिता, स्वयङ्कृता, पुनः कृता चेत्येवं तारतम्येनावस्थिता ब्रह्महत्या अनेकविधा। अतस्तत्तरणमप्यनेकविधम्, यथा स्वर्गो बहुविधस्तद्वत्। "अग्निहोत्रं जुहुयात् स्वर्गकामः, दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेत" इत्याद्युच्चावचानेककर्मणामेकफलासम्भवात् स्वर्गो बहुविधोऽभ्युपगन्तव्यः, तथा ब्रह्महत्याऽदिपापनिवृत्तेरपि बहुविधत्वात्, वेदनेनापि काचिद् ब्रह्महत्या निवर्त्तत इति योग्यताऽनुसारेण कल्प्यताम्।' इति। अत एव क्वचिद्विघ्नस्याल्पतया भाविबलेन चारम्भावसरे मङ्गलायतनानां महनीयविभूतीनां महतां दर्शनस्पर्शनादिजन्यं मङ्गलं समाप्तिहेतुः। ग्रन्थे तन्निबन्धनं च परं शिष्यशिक्षायै। अत एवाहुः–'प्रारिप्सितपरिसमाप्तये विहितं मङ्गलं शिष्यशिक्षायै निबध्नाती' ति। वस्तुतस्तु मङ्गलं श्रुत्तेजकम्। तच्च प्रतिबन्धकस्थलीय एव कार्य्ये कारणम्, 'निर्विघ्नं समाप्यता' मिति कामनया स्वेष्टसाधनतांशे भ्रमरहितानां शिष्टानामाचारेणानुमितया श्रुत्या विघ्नाभावप्रयोज्यसमाप्तिमेव विधत्ते। समाप्तिश्च स्वाभिलषितरीत्या प्रारिप्सितस्य निष्पत्तिः, अत एव–मङ्गले विहितेऽपि असमाप्तिर्युज्यते, विघ्नबाहुल्यसम्भवात्, फलबलेन मङ्गलापूर्वस्यैकविघ्नध्वंसकर्तृतायाः कल्पनात् काम्यकर्मण्यङ्गवैकल्यस्यापूर्वानुत्पत्तेर्वा सम्भवात्। इति मङ्गलस्यापूर्वद्वारा विशिष्टसमाप्तिफलकत्वमुपपन्नम्। तदेवं निर्विघ्नतया चिकीर्षितपरिसमाप्त्यर्थं कर्त्तव्यं 'शन्नो मित्रः शं वरुणः शन्नो भवत्वर्य्यमा' इत्युक्तदिशा 'आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखम्।' इत्युक्तिदिशा च तत्र तावदाशीर्वादरूपं भगवत्याः सरस्वत्याः स्मरणगर्भितं मङ्गलमाचरन् स्वस्य च तदेकान्तभक्तत्वं सूचयन् शिष्यशिक्षायै निबध्नाति।

१ सा प्रसिद्धा, निगमागमैः गीयमानत्वात्, सर्वासामाशिषां पूरकत्वात्, स्वाराध्यत्वाद्वा। **शरदिन्दुसुन्दररुचिः** शरदिन्दोः शरत्कालिकस्य चन्द्रस्य सुन्दररुचिरिव सुन्दररुचिर्यस्याः सेति तथोक्ता। शाकपार्थिवादित्वान्मध्यमपदलोपः। सुन्दरी रुचिरिति सुन्दररुचिः। 'पुंवत्कर्मधारयजातीयदेशीयेषु।' ६।३।४२। इति पुंवद्भावः।

**अस्य ग्रन्थस्य काव्याङ्गतया काव्यफलैरेव फलवत्त्वमिति काव्यफलान्याह-**
**२ चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ॥**

---

'शरदि'ति चन्द्रमसो निरावृतत्वमाह्लादकत्वं च बोधयति। शरदिन्दोरपि सुन्दररुच्यैव पुनः सादृश्ये देव्या निर्मलत्व-प्रसन्नत्वादि भासते **गिरां** वचसाम्, 'गीः स्त्री भाषासरस्वत्योः' इति कोषात्। 'षष्ठी शेषे' २।३।५। इति षष्ठी। **देवी** देवताऽधिष्ठात्रीति यावत्। **मे** मम। **चेतसि** चित्तेऽन्तःकरण इति यावत्। **सन्ततं** निविडं पुञ्जीभूतमिति यावत्। **तमस्तिमिरं** लक्षणयाऽज्ञानमित्यर्थः। **अपहृत्य** संहृत्य। 'समासेऽनञ् पूर्वे क्त्वो ल्यप्।' ७।१।३७ इति ल्यपि कृते 'ह्रस्वस्य पिति कृति तुक्।' ६।१।७१। इति तुक्। **अखिलान् अर्थान्** वाच्यलक्ष्यव्यङ्ग्यात्मकान् धर्मार्थकाम-मोक्षात्मकान् वा पदार्थान्। **प्रकाशयतु** प्रकटयतु॥ यद्वा–सा मे (मम) चेतसि शरदिन्दुसुन्दररुचिर्गिरां देवी तमः (शिष्यादीनामज्ञानम्) अपहृत्य सन्ततम् (निरन्तरम्) अखिलान् अर्थान् (गुरुभिरुपदेष्टुमर्हान्) प्रकाशयतु। इति सा शरदिन्दुसुन्दररुचिः (शरदिन्दुसुन्दरे हंसे रुचिर्यस्याः सा) देवी (सरस्वती) तमोऽपहृत्य मे (मम) चेतसि गिरां [प्रकृतसन्दर्भोपयोगवहानां वचनानाम्] अखिलान् अर्थान् प्रकाशयतु॥ इति वाऽन्वयः। एवं च–शरदिन्दुर्यथा निविडं तमः संहृत्याशेषान् अर्थान् (वस्तूनि) प्रकाशयति, तथैव साऽपि मदेकाराध्या भगवती सरस्वती अन्तर्गतमन्धकारं न तु बहिर्गतं बहिर्गतस्यास्य निवृत्तये स्वत एव शशाङ्कादीनां विद्यमानत्वात् तत्प्रार्थनस्य चानावश्यकत्वात्। तिमिरं विनाश्य सर्वाननवद्यान् वाच्यादीन् अर्थान् प्रकाशयतु। इति, हंसो यथा जलक्षीरयोर्विवेकी तथैव यो भवेत्सदसतोर्विवेकी तत्र प्रसादमादधती भगवती सरस्वती देवी मदीये चेतसि वर्तमानं तमोऽपहृत्य मामपि हंसमिव विदधात्वखिलान् अर्थांश्च प्रकाशयतु॥ इति वा, निष्कृष्टो वाक्यार्थः। अत्र लुप्तोपमाऽलङ्कार, उपगीतिश्छन्दश्च; तल्लक्षणं यथोक्तम्- 'आर्या-द्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात्। यस्या उभयोर्दलयोरुपगीतिं तां मुनिर्ब्रूते।' इति॥ १॥

ननु 'सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्यचित्। यावत्प्रयोजनं नोक्तं तावत्तत्केन गृह्यते॥' इति, 'प्रयो-जनमनुद्दिश्य न मन्दोऽपि प्रवर्त्तते।' इति नयेन च तत्र तावत्प्रयोजनमवश्यमभिधेयम्, अन्यथा मन्दानामपि न प्रवृत्तिः, क पुनः प्रेक्षावताम्; 'इत्यत इत इयमर्थनिष्पत्ति'रित्यवगमपूर्विकाया एव प्रवृत्तेः सार्वजनीनत्वाद्ग्रन्थादौ ग्रन्थप्रयोजनाभि-धानमावश्यकं मन्वानस्तत्प्रयोजनदर्शिकां कारिकामवतारयन्नाह **अस्येत्यादि**॥

**अस्यैतस्य** चिकीर्षितस्य सर्वेषां साहित्यविषयाणां दर्पणवत्प्रकाशकस्य बुद्धिस्थतया च सन्निकृष्टस्येत्यर्थः। **ग्रन्थस्य। काव्याङ्गतया** काव्यस्य (शरीरभूतस्य) अङ्गं तत्तया। काव्यंच वक्ष्यमाणलक्षणः सन्दर्भविशेषः। एवं च काव्यमङ्गि एष पुनर्ग्रन्थोऽङ्गम्। काव्यस्यैव दोषाणां हेयत्वेन गुणानां पुनरुपादेयत्वेनैतस्य प्रतिपादकत्वात्। 'हेतौ' २।३।२३। इति तृतीया। **काव्यफलैः** काव्यस्य फलानि तच्छ्रवणपठनादिजन्यानि प्रयोजनानि तैः। 'धान्येन धनवा'नितिवदभेदे तृतीया॥ **एव** न तु स्वात्मनोऽपि फलैरिति भावः। **फलवत्त्वं** साफल्यम्। 'सम्भवती' ति शेषः। इतीत्यस्मात् हेतोः। 'इति हेतुप्रकरणप्रकर्षादिसमाप्तिषु।' इत्यमरः। **काव्यफलानि** (कर्म)। **आह-चतुर्वर्गफलप्राप्तिरित्यादिना**॥

अत्रायमभिप्रायः–प्रकृतोऽयं ग्रन्थः काव्यस्य दोषान् हेया इति, गुणान् पुनरुपादेया इति प्रतिपादयितुं प्रवृत्तः तस्मात् काव्यं प्रधानं शरीरस्थानीयं राजेन्द्रस्थानीयं वा, प्रकृतः पुनरयमप्रधानमङ्गस्थानीयो मागधाद्यन्यतम-स्थानीयो वा। अप्रधानभूतस्य स्वतन्त्रतया प्रयोजनोद्देशस्याप्रयोजकत्वेन प्रधानभूतस्यैव पुनः प्रयोजनवत्तयाऽप्रधानस्यापि प्रयोजनवत्त्वमिति। शरीरस्य शोभाऽऽदिना करायन्यतमाङ्गस्याऽपि शोभेव, राज्ञः सम्पन्नतया मागधादेरपि सम्पन्नतेव वा काव्यस्य फलवत्तयाऽस्यापि फलवत्त्वमिति काव्यफलाभिन्नान्येतत्फलानीति मन्वानः काव्यफलान्येवाह। तदाहुस्त-र्कवागीशाः–'काव्यफलै' रिति 'धान्येन धनवा' नितिवदभेदे तृतीया। काव्यफलाभिन्नफलवत्त्वमित्यर्थः। यथा दर्श-पौर्णमासाङ्गानां प्रयाजादीनां दर्शपौर्णमासफलेनैव फलवत्त्वं तथाऽस्यापीति भाव्यम्। ननु प्रयाजादीनामङ्गापूर्व [दृष्ट] जननद्वारा परमापूर्वं प्रत्युपकारः सम्भवतीति तत्र तथाऽस्तु। प्रकृते तु शास्त्रस्य काव्यगुणदोषादिज्ञापनोपक्षीणत्वेन चतुर्वर्गे प्रत्युपकारः सम्भवेत्, कथं तत्साधनत्वमिति चेन्न, काव्यं हि स्वरूपसन्न कारणम्, किन्तु-कृतिज्ञप्त्यन्यतरविषयतया तत्रास्योपकारः सम्भवतीति न काऽपि विप्रतिपत्तिः। नन्वस्य चतुर्वर्गातिरिक्तकाव्यगुणादिज्ञानरूपफलसत्त्वात्, कथमेव-

**काव्यादेव चतुर्वर्गफलप्राप्तिर्हि 'काव्यतो रामादिवत्प्रवर्त्तितव्यं, न रावणादिवत्' इत्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशद्वारेण सुप्रतीतैव ।**

---

कारार्थान्वय इति चेन्न, 'फलवत्त्व' मित्यत्र मतोः प्राशस्त्येनोत्कृष्टफलपरत्वात् । एवं च-चतुर्वर्गसाधनत्वज्ञानेनात्र लोकानां साभिनिवेशप्रवृत्तिर्भविष्यतीति भावः ।' इति । केचित्त्वेवमाहुः-'अस्य [ साहित्यदर्पणस्य ] बुद्धिस्थत्वेन सन्निकृष्टस्य ग्रन्थस्य काव्यमङ्गमस्येति तत्तया ( काव्यमङ्गभूतमितिहेतोः ) काव्यफलैः ( करादिशोभयाऽङ्गिशोभेव ) केवलं फलवत्त्वमिति तान्येवाह ।' इति । एषामयं भावः- काव्यं शाखादिस्थानीयं, प्रकृतोऽयं पुनर्ग्रन्थो वृक्षस्थानीयः; तस्मात्-शाखादिसाद्गुण्येनैव वृक्षस्यापि साद्गुण्यम्, इतीव काव्यस्यैव सफलतयाऽस्यापि स्वरूपसत्त्वम्, काव्यस्यैतदङ्गभूतत्वं चैतस्यैव कमप्येकं विषयमुपयुज्य प्रादुर्भूतत्वात्, इति ॥

२ **काव्यात्** काव्यरचनापठनाद्युपायेनेत्यर्थः । **एव** न तु शास्त्रान्तराद्यभ्यासादिनेति भावः । **अल्पधियां** मन्दप्रज्ञानामत एव शास्त्रान्तराद्यभ्यासाधिकारमप्राप्तानां यागाद्यनुष्ठानानधिकारिणां चेति भावः । **अपि** किं पुनरनल्पधियाम् । **सुखादायासमन्तरा** । **चतुर्वर्गफलप्राप्तिश्चतुर्वर्गो** धर्म्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयं, स एव फलं तस्य प्राप्तिर्लाभ इति तथोक्तः । यद्वा-चतुर्वर्गस्य फलानि स्वर्गादिभोगादिरूपाणि तेषां प्राप्तिः । इति । 'त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकैः ।' इत्यमरः । 'भवती'ति शेषः ॥

अयं भावः-यदि निरायासम्, अथ मन्दानाम्, उपलक्षणतो निर्धनानामसहायानामपि वा धर्म्मादिचतुर्वर्गः सम्पद्यते, तर्हि काव्यादेव, न तु वेदादिशास्त्रेभ्यो, न वा यागादिभ्यः, तज्ज्ञानायासतायामल्पधियां चावसराभावात् । यागादयो हि विभवविशेषमन्तरेण धूमधूसरितसाश्रुसहस्रासारव्याकुलितनेत्रभवनमन्तरेण वा न सम्पद्यन्ते, समस्तदर्शनाभिज्ञता च निरंतरमनेकवर्षपर्यन्तं गुरुशुश्रूषामन्तरा न भवतीति ॥

अत्राहुः साहित्यकौमुदीकाराः-'वेदः खलु शब्दप्राधान्यात् प्रभुसम्मितः पुराणादिश्चार्थप्राधान्यात्सुहृत्सम्मितः शास्ति, काव्यं तु शब्दार्थयोर्गुणतया रसाङ्गभूतव्यापारप्रावण्यात्तद्विलक्षणः ।' इति । एषामयं भावः-शब्दस्तावत् त्रिविधः, प्रभुसम्मितः सुहृत्सम्मितः कान्तासम्मितश्चेति । तत्राद्यः-शब्दप्रधानो वेदादिः, शब्दप्रधानत्वं नाम शब्दपरिवृत्त्यसहत्वम्, यथा-'देवदत्तस्तर्कालङ्कारः' इत्येवं व्यवहार्य्य इति प्रभुणाऽनुज्ञाते 'देवदत्तस्तर्कभूषण' मिति शब्दपरिवृत्त्यसहत्वं, तथा वेदस्यापि 'हिरण्यवर्णा'मित्यत्र 'सुवर्णवर्णा' मिति शब्दपरिवृत्त्यसहत्वम् । 'वेदादि'रित्यत्रादिशब्देन तन्त्रादीनां ग्रहणम् । तेन-'हस्तिपिशाचिलिखे' इत्यादौ 'करिपिशाचिलिखे' इति शब्दपरिवृत्त्यसहत्वम् । द्वितीयः-पुनरर्थप्रधानः पुराणादिः, अर्थप्रधानत्वं नाम शब्दपरिवृत्तिसहत्वेऽपि, अर्थपरिवृत्त्यसहत्वं, यथा-सुहृत् 'स्वधर्म्म एव श्रेयः, नहि स्वधर्ममुपासानः कदाचिद्विपद्यते ।' इत्युपदिशति, तथा-पुराणादिरपि 'सर्वान्धर्मान्परित्यज्य मामेकं शरणं व्रज' इति । अत्र हि-'स्वधर्मे केवलं श्रेयः, तस्मात्तमेवानुतिष्ठन्न जातु च्यवती'ति । 'अपहायाखिलान्धर्म्मान्मामेकं शरणं व्रज' इति च । एवमेतस्य शब्दपरिवृत्तिसहत्वेऽप्यर्थपरिवृत्त्यसहत्वम् । तृतीयः-पुनः काव्यादिः कान्तासम्मितो, न शब्दप्रधानो न वाऽर्थप्रधानः, किन्तु शब्दार्थोभयस्यैवाप्रधानत्वात्तदेकास्वादरसाधीन इति नासौ प्रभुसम्मितः, न वा सुहृत्सम्मितः, अस्ति पुनः केवलं कान्तासम्मितः । काव्यादेर्धर्म्मः कान्तातुल्यम्मृदुतया निवेदनद्वारा कृत्याकृत्ययोः प्रवृत्तिनिवृत्तिभ्यां सुलभः । इति ॥

यद्वा-आदित्यादिप्रसादतो मयूरादीनामनिष्टनिवृत्तिदर्शनात्सुखसाध्यो धर्म्मः, अर्थप्राप्तिश्च भोजराजादिद्यशसः सुविदितप्रायत्वान्न सन्देहकृते, कामपूर्त्तिश्चार्थलाभेऽनर्थनिवृत्तौ च प्रत्यक्षसिद्धा, शृङ्गाररसाद्यनुभवात्सम्पन्नमूर्त्तिर्वा । मोक्षः पुनस्तत्रतत्रोपदिष्टानां'तत्त्वमस्या' दिवाक्यार्थानां सुखावगमयोग्यतानिष्पादनात् तद्द्वारभूतानां प्रबोधचन्द्रोदयादीनां वा सद्भावात्सुप्रत्यक्षः । युक्तिनिर्देशपूर्वकं कारिकार्थं निगमयति **चतुर्वर्गफलप्राप्ति**रित्यादिना ।

**हि** यतः । 'हि हेताववधारणे ।' इत्यमरः । **चतुर्वर्गफलप्राप्तिः । काव्यतः** । पञ्चम्यास्तसिल् । ५ । ३ । ७ । इति तसिल् । '**रामादिव**द्रामचन्द्रादिना तुल्यम् । आदिपदं नलयुधिष्ठिरादीनां ग्राहकम् । 'पित्राज्ञापरिपालनादा'-विति शेषः । 'तेन तुल्यं क्रिया चेद्वतिः ।' ५ । १ । ११ । इति वतिः । **प्रवर्त्तितव्यम्** । **रावणादिवत्** 'परदारहरणादा'विति शेषः । **न** नैव 'प्रवर्तितव्य'मिति पूर्वेणान्वयः । **इत्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशद्वारेण**त्यादिरसौ कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशस्तद्द्वारेण । कृत्यं कर्त्तव्यम्, अकृत्यमकर्त्तव्यं चेति तयोः प्रवृत्तिनिवृत्ती इति तयोरुपदेशः । **सुप्रतीता**ऽसंदिग्धा । **एवे**ति निश्चितम् ।

उक्तंच–

'धर्मार्थकाममोक्षेषु वैलक्षण्यं कलासु च।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥' इति।

किञ्च–काव्यात् धर्म्मप्राप्तिर्भगवन्नारायणचरणारविन्दस्तवादिना, 'एकः शब्दः सुप्रयुक्तः सम्यग् ज्ञातः स्वर्गे लोके च कामधुग्भवती' त्यादिवेदवाक्येभ्यश्च सुप्रसिद्धैव, अर्थप्राप्तिश्च प्रत्यक्षसिद्धा, कामप्राप्तिश्चार्थद्वारैव, मोक्षप्राप्तिश्चैतज्जन्यधर्म्मफलाननुसन्धानात्,

---

अत्रेदं तत्त्वम्–काव्यादनुष्ठेये कर्म्मणि कर्त्तव्यताऽवगम इति स्वतस्तत्र प्रवृत्तिः, अन्यत्र पुनर्निवृत्तिः, तत्र कर्त्तव्यताऽवगमाभावात्। इत्थं कर्त्तव्यकर्म्मानुष्ठानद्वारा परित्याज्यकर्म्मपरित्यागद्वारा च धर्म्मस्तस्मादर्थस्तस्मात् कामश्चेति। तत्तदभिलाषपरित्यागपुरःसरं चानुष्ठेयेषु कर्म्मसु कर्त्तव्यतामात्रबुद्धया प्रवृत्तौ मोक्षः। उक्तं च 'धर्म्मादर्थश्च कामश्चे' ति 'अनाश्रितः कर्म्मफलं कार्य्यं कर्म्म करोति यः। युक्तः कर्म्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ॥' इति च। तर्कवागीशा अप्याहुः कृत्यं विहितं कर्म्म, अकृत्यं निषिद्धं कर्म्म, तयोः प्रवृत्तिनिवृत्ती यत्नविशेषौ, तयोरुपदेशस्तज्जनकं ज्ञानं स एव द्वारं व्यापारस्तेन। तथाहि–काव्याद्विहिते कर्म्मणि कर्त्तव्यताज्ञानं ततस्तत्र प्रवृत्तिस्ततस्तदनुष्ठानं ततो धर्म्मस्तस्मादर्थकामौ। विहितकर्म्मफलत्यागान्निषिद्धाननुष्ठानाच्च मोक्षः। 'व्यापारेण व्यापारिणो नान्यथासिद्धिः।' इति न्यायेन 'काव्यस्य धर्म्मादिजनकत्वमिति भावः।' इति ॥

स्थूणानिखननन्यायेन तमेवार्थं द्रढयितुं प्राचामनुमतिं दर्शयति–**उक्तं** चेत्यादिना। **उक्तं** 'पूज्यपादै'रिति शेषः। **चापि**। किमित्यपेक्ष्याह–'**साधु** सम्यग्विहितम्। **काव्यनिषेवणं** काव्यस्य निषेवणं श्रवणाद्यनुष्ठानम् [कर्तृ] साधुकाव्यनिषेवणमिति पाठे तु साधु यत् काव्यं तन्निषेवणमित्यर्थः। साधुत्वं च दोषशून्यत्वे सति गुणालङ्कारशालित्वे सति वाक्यविशेषस्य रससमनुगृहीतत्वम्। **धर्म्मार्थकाममोक्षेषु** धर्म्मादिविषय इत्यर्थः। **च** पुनः। **कलासु** कलाविषये। कलाश्च नृत्यगीतादिरूपाश्चतुष्षष्टिविधाः। **वैलक्षण्यम**सदृशताम्। 'विशिष्टज्ञान'मिति विवृतिकाराः। ज्ञानस्य लोकोत्तरं वैभवमित्यपरे। **च**। **कीर्त्तिम्**। **प्रीति**मुद्वेगमपकृत्यामोदाधानम्। करोति। साधुकाव्यनिषेवणकर्तृको धर्म्मादिकलाविषयकवैलक्षण्याधायकः कीर्तिप्रमोदोत्पादनहेतुभूतश्च ज्ञानानुकूलो व्यापारः सम्पद्यते इति भावः। अत्र श्लोकश्छन्दः ॥' इति ॥

एतदेव प्रकारान्तरतः सिद्धान्तयति–**किञ्चे**त्यादिना। **किञ्च**। **काव्यात्**। **धर्म्मप्राप्ति**र्धर्म्मसिद्धिः। **भगवन्नारायणचरणारविन्दस्तवादिना** भग 'ऐश्वर्य्यस्य समग्रस्य धर्म्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥' इत्यात्मकं वैभवमस्यास्तीति, सोऽसौ नारायणः। [नराणां जीवानामयं समूह इति, तस्यायनमुद्गमः स्थितिर्वा यस्माद् यत्र वेति तथोक्तः। अत्र व्यधिकरणो बहुव्रीहिः। यद्वा नारोऽयनं यस्य सः। अयनं निवासः] तस्य चरणारविन्दे तयोः स्तवादि तेन (कर्म्मणा)। '**एकः शब्दः** 'ॐ' इत्यादिस्वरूपः। **सुप्रयुक्तः** सुष्ठु प्रयोगं प्रति नीतः। **सम्यक्**। **ज्ञातः**। **स्वर्गे** परलोके। **च** तथा लोकेऽस्मिँल्लोके। **कामधुक्**। भवति सम्पद्यते।' **इत्यादिवेदवाक्येभ्य** इत्यादीनि वेदवाक्यानि तेभ्यः। वेदवद्वाक्यानीति वेदवाक्यानि। **च** तथा। **सुप्रसिद्धा**। **एव**। **अर्थप्राप्ति**रर्थस्य धनस्य प्राप्तिरिति तथोक्ता। **च**। **प्रत्यक्षसिद्धा**। 'काव्यद्वारा यस्मिन् कस्मिन्नपि श्रीमति स्तुते इति शेषः। **कामप्राप्तिः**। **च**। **अर्थद्वारा**। **एव**। यद्यपि निर्धनानामपि सहृदयानां शृङ्गारविषयककाव्यभावनया कामप्राप्तिः प्रत्यक्षसिद्धेति वक्तुं शक्यते, तथाऽपि काव्यतः सम्पत्तिपुरःसरमिति विशेषाभिधानम्। 'काव्यालापांश्च वर्ज्जयेत्।' इति स्मृत्या न काव्यमात्रस्य निषेधः, किन्तु निषिद्धस्य शृङ्गाररसमात्रप्रधानस्येति। भगवद्भक्तिमदेव काव्यमुपादेयमिति मन्वानेन केनापि पुनर्यदुक्तम् 'अत एव शाकुन्तले दुष्यन्तस्य, नैषधीये नलस्य, किरातार्जुनीयेऽर्जुनस्य च भगवद्भक्तिवर्णनं कृतम्। यत्तु–भामिनीविलासे शृङ्गारोल्लासे 'गुरुमध्यगता मया नताङ्गी निहता नीरजकोरकेण मन्दम्।' इत्यादिना पण्डितराजैः स्वप्रेयसीवर्णनं कृतं, तत्तु तेषां गङ्गाप्रसादादेव शोभतेतराम्।' इति। तन्नैकान्तमवदातम्, तत्रापि वेदान्तरहस्य एव वर्णनपर्य्यवसानात्। वस्तुतस्तु–न सर्वत्र महाकविभिरेक एव रसो निरूप्यते, न वा सर्वं एवाधिकारसाधारणाः। अत एव सर्वं एव क्रमेण सर्वत्रैव यथासमयं वर्ण्यन्ते, रामायणादिषु सर्वत्र सर्वेषां रसानां तथैवोपलम्भात्। इति बोध्यम्। **एतज्जन्यधर्मफलाननुसन्धाना**देतस्माद्भगवन्महिमवर्णनप्रधानात् काव्याल्लक्षणया

---

१ व्यापारवदसाधारणं कारणं करणम्। व्यापारश्च यं जनयित्वैव यस्य यज्जनकत्वं स तदीयः, असाधारणं कारणं

**मोक्षोपयोगिवाक्येषु व्युत्पत्त्याधायकत्वाच्च। चतुर्वर्गप्राप्तिर्हि वेदशास्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव जायते। परमानन्दसन्दोहजनकतया सुखादेव पुनः काव्यादेव। ननु 'तर्हि परिणतबुद्धिभिः सत्सु वेदशास्त्रेषु किमिति काव्ये यत्नः करणीय' इत्यपि न वक्तव्यम्। कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः सितशर्कराप्रवृत्तिः साधीयसी न स्यात्।**

---

तत्पठनाद्युपायद्वारा जन्यो यो धर्म्मस्तस्य फलम्। 'धर्म्मादर्थश्च कामश्चे' त्याद्युक्त्याऽर्थकामसम्पादनहेतुत्वं तदनुसन्धानं तदभिलाषविचाराभावस्तस्मात्। च। **मोक्षोपयोगिवाक्येषु। व्युत्पत्त्याधायकत्वात्** 'प्रबोधचन्द्रोदयादीना' मिति शेषः। व्युत्पत्तिस्तत्तन्मार्म्मिकतासम्पादनहेतुभूतः संस्कारविशेषः। **मोक्षप्राप्तिः** 'प्रत्यक्षसिद्धे'ति पूर्वेणान्वयः। अत्र व्युत्पत्तिशब्दः शक्त्यभ्यासयोरप्युपलक्षक इति बोध्यम्। अभ्यासमन्तरेण व्युत्पत्तेरेवानुपस्थानात्। व्युत्पत्तेश्च शक्तिसहचरितत्वात्। शक्त्यादीनां च स्वरूपमाह रुद्रटः "मनसि सदा सुसमाधिनि विस्फुरणमनेकधाऽभिधेयस्य। अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः॥ प्रतिभेत्यपरैरुदिता सहजोत्पाद्या च सा द्विधा भवति। पुंसा सहजातत्वादनयोस्तु ज्यायसी सहजा॥ स्वस्यासौ संस्कारे परमपरं मृगयते यतो हेतुम्। उत्पाद्या तु कथञ्चिद् व्युत्पत्त्या जन्यते परया॥ छन्दोव्याकरणकलालोकस्थितिपदपदार्थविज्ञानात्। युक्तायुक्तविवेकव्युत्पत्तिरियं समासेन॥ विस्तरतस्तु किमन्यत्तत इह वाच्यं न वाचकं लोके। न भवति यत्काव्याङ्गं सर्वज्ञत्वं ततोऽन्यैषा॥ अधिगतसकलज्ञेयः सुकवेः सुजनस्य सन्निधौ नियतम्। नक्तं दिनमभ्यसेदभियुक्तः शक्तिमान्काव्यम्॥" इति। अत एव काव्यस्योत्पत्तिं प्रत्यपि शक्त्यादित्रयस्यैव कारणत्वेऽपि न तस्य पृथक् प्रपञ्चः। किन्तु, इदमधिगंतव्यम्-काव्यं पादप इव, शक्तिर्बीजमिव, अभ्यासो जलमिव, व्युत्पत्तिः पुनर्मृत्स्नेवेति। तदाहुः-'प्रतिभैव श्रुताभ्याससहिता कवितां प्रति। हेतुर्मृदम्बुसम्बद्धबीजव्यक्तिर्लतामिव॥' इति। तथा च-काव्यद्वारा पुरुषार्थाः सिध्यन्ते कलावैलक्षण्यादि सम्पद्यते। इति निष्कृष्टम्। न च 'काव्यादुपनिषदादिव्युत्पत्तिमात्रं, ततस्तत्त्वानुमननं, ततो मोक्ष इति काव्यापेक्षयोपनिषदादेरेव प्रधानतया मोक्षलाभं प्रति काव्यस्यान्यथासिद्धतैव जागरूके'ति वाच्यम्, स्वातन्त्र्येणापि रामायणादिकाव्यानुष्ठानेन मोक्षलाभदर्शनात्।

अथ-काव्यादेवेत्येवकारव्यवच्छेद्यमर्थं दर्शयति–**चतुर्वर्गप्राप्तिरित्यादिना।**

**हि** यतः। **वेदशास्त्रेभ्यः। नीरसतया** 'तेषा' मिति शेषः। **दुःखात्। एव** न तु सुखात्। **परिणतबुद्धीनां** परिणता परिपक्वा बुद्धिर्ज्ञानं येषां तेषाम्। **एव। चतुर्वर्गप्राप्तिः। जायते। परमानन्दसन्दोहजनकतया** परमानन्दानां सन्दोहस्तदात्मको रस इति भावस्तस्य तदनुभवस्य जनकं तद्गतसम्पादकं तत्तया। **पुनः। सुकुमारमतीनाम्।** अपि किं पुनः परिणतबुद्धीनाम्। **सुखात्। एव** न तु दुःखात्। **काव्यात्** काव्यद्वारा। **एव** न तु वेदादिशास्त्रेभ्यः। 'मोक्षप्राप्ति' रिति शेषः। तथा च–रसास्वादार्थमपि प्रवर्त्तमानस्य कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशपर्य्यवसायि सत्काव्यं ( कर्त्तृ ) सर्वार्थान् सम्पादयति। इति निष्कृष्टम्॥

ननु चतुर्वर्गसिद्ध्यर्थं सुकृतिनः प्रेक्षावन्तो वेदशास्त्राण्यनाश्रित्य कथमनाप्तवाक्ये काव्ये प्रवार्त्तिष्यन्त इत्यभिप्रायेणाशङ्कते–**नन्वित्यादिना**॥

**ननु।** '**तर्हि** यदि वेदशास्त्रेभ्योऽपि पुरुषार्थसम्पत्तिरित्यर्थः। 'तर्हि काव्यस्य चतुर्वर्गसाधनत्वाधिकारेऽपी'ति व्याख्यानं तु न रुचिरम्। 'सत्सु वेदशास्त्रे' ष्विति मूलं विस्मृत्यैव तत्सत्त्वात्। **सत्सु** आसेपु विद्यमानेष्विति वा भावः। **वेदशास्त्रेषु। परिणतबुद्धिभिः** ( कर्तृभिः )। **किमिति। काव्ये** काव्यविषये **यत्नः** श्रमः। **करणीयः।**' **इत्यपि। न। वक्तव्यम्।** यतः–**कटुकौषधोपशमनीयस्य** कटुकं रसास्वादोपघातुकं यदौषधं तेनोपशमनीयमुपशमयितुमुचितस्तस्य। अत्र कटुकशब्दः 'काकेभ्यो दधि रक्ष्यता'मिति काकशब्द इवोपलक्षकः, तेन तिक्तकषायादीनामप्युपादानम्। **रोगस्य। सितशर्करोपशमनीयत्वे** 'सती'ति शेषः। **कस्य। वा। रोगिणः। साधीयसी,**

---

च–कार्य्यत्वातिरिक्तधर्म्मावच्छिन्नकार्य्यतानिरूपितकारणताशालि। 'यथा ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादौ 'ज्योतिष्टोमेन स्वर्गकामस्य यज्विनः स्वर्गः प्राप्यते।' इत्यादौ वा ज्योतिष्टोमस्यापूर्वं जनयित्वैव स्वर्गप्रापकत्वमिति तस्यापूर्वं व्यापारः। स च जनकतासम्बन्धेन तन्निष्ठ एव। इत्यपूर्वेण व्यापारेण तद्वतो ज्योतिष्टोमस्य यथा स्वर्गं प्रति नान्यथासिद्धत्वं, तत्रावश्यक्लृप्तनियतपूर्ववर्तिन एव कार्य्यस्य सम्भवे तद्भिन्नं तत्सहभूतं सर्वमन्यथासिद्धम्। तथा काव्यस्यं निरुक्तोपदेश एव व्यापारः तेन तद्वतोऽस्यापि चतुर्वर्गं प्रति नान्यथासिद्धत्वम्। इति बोध्यम्॥

किञ्च– काव्यस्योपादेयत्वमग्निपुराणेऽप्युक्तम्–

'नरत्वं दुर्लभं लोके विद्या तत्र च दुर्लभा ॥
कवित्वं दुर्लभं तत्र शक्तिस्तत्र च दुर्लभा ॥' इति ।

(अन्यत्र च–)

'त्रिवर्गसाधनं नाट्यम्' इति ।

विष्णुपुराणे च–

'काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च ।
शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मनः ॥' इति ।

३ यतस्तेन　　　　तत्स्वरूपं निरूप्यते ॥ २ ॥

तेन हेतुना तस्य काव्यस्य स्वरूपं निरूप्यते । एतेनाभिधेयं च प्रदर्शितम् ।

---

सितशर्करा प्रवृत्तिः । न । स्यात् किन्तु गर्दभस्य केवलं न सितशर्करां भोक्तुं प्रवृत्तिः, अन्येषां पुनः सर्वेषां भवत्येवेति भावः । तथा च–काव्यस्यानाप्तवाक्यत्वेऽपि वेदाद्यपेक्षयोपादेयवैशिष्ट्यं निर्बाधम् । इति सिद्धम् ॥

एवं काव्यस्य युक्तिसिद्धामुपादेयतां प्रदर्श्य वाचनिकामपि प्रदर्शयति किञ्चेत्यादिना ।

किञ्च । काव्यस्य । उपादेयत्वमहेयत्वम् । अग्निपुराणे । अपि । उक्तं 'व्यासपादै'रिति शेषः । तद्वाक्यं दर्शयति–'लोके प्रारब्धवशादुच्चानुच्चगतिकेऽस्मिन् भूमण्डलात्मके भुवन इत्यर्थः । नरत्वं मनुष्यशरीरधारित्वम् । दुर्लभम् । तत्र नरत्वे । च । विद्या 'पराऽपरा चेति' शेषः । दुर्लभा । तत्र विद्यायामपि सत्यामित्यर्थः । च । कवित्वं विचक्षणत्वम् । दुर्लभम् । तत्र कवित्वे जातेऽपीत्यर्थः । च । शक्तिः । प्रतिभा स्वतो ज्ञानोद्रेकविशेषः । दुर्लभा । 'व्युत्पत्तिर्दुर्लभा तत्र विवेकस्तत्र दुर्लभः ।' इति शेषः । तथा च–कवित्वस्य दुर्लभतां प्रतिपादयता भगवता व्यासेन सुप्रतिपादितमेतस्योपादेयत्वम् । इति निष्कृष्टम् ।' इति । (अन्यत्र । च उक्तमिति पूर्वेणान्वयः) । 'त्रिवर्ग-साधनं त्रिवर्गस्य साधनमुपायभूतमित्यर्थः । नाट्यं नाटकम् । एतेन–नाटकं त्रिवर्गस्यैव साधनमिति न मन्तव्यम्' किन्तु मोक्षस्यापि,तथाऽभिधानं पुनस्तद्द्वारा त्रिवर्गस्य सिद्धेः प्रत्यक्षसिद्धत्वं परं दर्शयितुम् । ननु'ज्ञानादृते न मुक्तिः' इति ज्ञानमेव मोक्षसाधनमिति चेत्, तदुत्पादनद्वारेति गृहाण । इति ।, भरतेनाप्युक्तम्–'धर्म्यं यशस्यमायुष्यं हितं बुद्धिविवर्धनम् । लोकोपदेशजननं नाट्यमेतद्भविष्यति ॥' इत्यादि । विष्णुपुराणे । च 'उक्त' मिति पूर्वेणान्वयः । किमित्यपेक्ष्याह–'ये । केचित् । च पुनः । काव्यालापाः काव्यसम्बन्धिवाक्यजातमिति भावः । अखिलानि । च गीतकानि गीतानि । शब्दमूर्तिधरस्य । महात्मनः विष्णोः । एते । अंशाः । तथा च काव्यसम्बन्धिवचनगानादीनां शब्दब्रह्मांशभूतत्वमेवेति तदिव काव्याद्युपासनीयमिति निष्कृष्टम् ।' इति ।

इत्येवं काव्यस्य फलान्यभिधाय तस्य स्वरूपमभिधातुमुपक्रमते–३ यत इत्यादिना ।

३ यतो यस्मात् कारणात 'ईदृशफलं काव्य' मिति शेषः । तेन । तत्स्वरूपं तस्य काव्यस्य स्वरूपं लक्षणम् । स्वं लक्ष्यपदार्थो रूप्यते लक्ष्यते इतरभेदकतयाऽनेनेति तथाभूतम् । निरूप्यते ॥ २ ॥

तदेव विवृणोति–तेनेत्यादिना ।

तेन । हेतुना । तस्य । काव्यस्य । स्वरूपं लक्षणम् । निरूप्यते । एतेन 'निरूप्यते' इति प्रतिज्ञाविधानेनेत्यर्थः । च । अभिधेयम् । दर्शितम् । तथा च –'सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते । शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥' इति न्यायाच्छास्त्रादौ सम्बन्धप्रयोजनाभिधानपुरःसरं तदभिधेयं निरूपणीयमित्यपेक्षायां काव्येनास्य सम्बन्धः, चतुर्वर्गादिस्य फलम्, काव्यस्वरूपं पुनरत्राभिधेयम् । इति निष्कृष्टम् ॥

**तत् किंस्वरूपं काव्यमित्यपेक्षायां कश्चिदाह-'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि' इति। एतच्चिन्त्यम्। तथाहि-यदि दोषरहितस्यैव काव्यत्वं, तदा-**

**"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः**
**सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।**
**धिग्धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा**
**स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः॥ १॥"**

---

अथात्र प्राचां लक्षणानि समालोचयति-**तदि**त्यादिना।

**तत्** काव्यम्। **किंस्वरूपं** किंलक्षणम्। **काव्यम्** । **इत्यपेक्षायाम्**। 'सत्या'मिति शेषः। **कश्चित्** काव्यप्रकाशकारः। **आह-'अदोषौ** निर्दोषौ। **सगुणौ** गुणसम्पन्नावित्यर्थः। क्वचिन्निर्दोषत्वेऽपि सगुणताया अदर्शनात्तद्ग्रहणार्थमेतद्विशेषणम्। **क्वापि** क्वचित्सति सम्भव इत्यर्थः। **अनलङ्कृती** अलङ्कारशून्यौ। **शब्दार्थौ**। **तत्** काव्यम्। अत्र 'वेदाः प्रमाण'मितिवदुद्देश्यविधेयभावः। तथा च-निर्दोषौ सगुणौ तथा प्रायः सालङ्कारौ शब्दार्थौ काव्यम्। इति निष्कृष्टम्। अत्र केचिदाहुः-'शब्दो वाऽर्थो वा दोषशून्यत्वे सति गुणविशिष्टत्वे सति क्वचित्सालङ्कारः काव्यं, न तु तदुभयं मिलितमेव, आस्वादव्यञ्जकताया उभयत्राप्यविशेषात्। श्रुतं काव्यं, बुद्धं काव्यमित्युभयविधव्यवहारदर्शनाच्च।' इति। अन्ये तु 'नात्र शब्दो वाऽर्थो वेति शब्दार्थौ, किन्तु शब्दश्चार्थश्चेति शब्दार्थौ। अतः शब्दार्थान्यतरत् काव्यमित्यर्थस्य 'शब्दार्थौ काव्य'मित्यत उपलब्धेरसम्भवान्न शब्दो वाऽर्थो वा काव्यमिति वक्तुं युज्यते। अन्यथा-'मातापितृभ्यां जगतो नमः' इत्यादावपि नमसोऽपि मातापित्रोरन्यतरेण सम्बन्धः स्यात्। तदुक्तं तर्कालङ्कारैः- 'सहृदयश्लाघ्यौ शब्दार्थौ काव्यम्। सहृदयैः श्लाघ्यते यः शब्दोऽर्थश्च तदुभयं मिलितं काव्यम्।' **इति**।' इति। **एतत्** सामान्येन काव्यलक्षणम्। **चिन्त्यम्**। **तथाहि यदि**। **दोषरहितस्य** दोषशून्यस्य। शब्दार्थोभयस्य शब्दार्थयोरन्यतरस्यैव वेति शेषः। **एव**। **काव्यत्वं** काव्यव्यपदेशशालित्वम्। 'स्वीक्रियते' इति शेषः। **तदा** तर्हि-

"**यद्** यस्माद्धेतोः। **मे** मम रावणस्येत्यर्थः। 'रावणस्ये'त्यनभिधानेन स्वनामोच्चरन्नपि 'जिह्रेमी'ति व्यज्यते। **अरयः** शत्रवः शत्रुबाहुल्यमिति यावत्। एतेन नैक एव न वा द्वावेव शत्रू इत्याश्चर्य्यमित्यावेद्यते। 'सन्ती'ति शेषः। अयमित्ययमित्यर्थः। **एव** 'प्रथम' मिति शेषः। **न्यक्कारो** धिक्कारः। **ह्येव**। यद्वा-यत्-अरयः, इत्ययमेव मे न्यक्कार इत्यन्वयः। **तत्र** तेष्वरिपु मध्ये इत्यर्थः। **अपि**। **असौ**। द्वेषातिशयाद्ग्रामस्थादसा निर्देशः। **तापसस्**तपस्वी। तपोऽस्यास्तीति तथोक्तः। 'अण् च।' ५।२।१०३ इत्यण्। 'अरिः' इति वचनविपरिणामेनान्वेति। स तापसः। **अपि** 'अरि'-रिति शेषः। **अत्र** मत्सन्निधावित्यर्थः। **एव** न तु मनागपि दूरे। इत्ययं पुनर्न्यक्कार इति शेषः। राक्षसकुलं राक्षसानां तापसभक्षकतया जन्मना प्रसिद्धानां कुलं वंशस्तत्, न तु तेषामेकं द्वौ त्रीन् वेति भावः। 'कुलं जनपदे गोत्रे सजातीयगणेऽपि च। भवने च तनौ क्लीव' मिति मेदिनी। **निहन्ति** निश्शेषेण हन्ति ( हिनस्ति ) न तु मारयित्वा क्वचिद्विलीनः, न वा दूरेऽवतिष्ठते, न वा कमप्यवशेषयति। 'इत्ययं पुनर्न्यक्कार' इति शेषः। **अहो** एवं न्यक्कारपरम्पराग्रस्तत्वेऽपीति भावः। **रावणो** रावयत्याक्रन्दयति लोकमिति तथाभूतः। **जीवति**। इत्ययं पुनर्न्यक्कार इति शेषः। **शक्रजितं** शक्रं जितवानिति तं तथोक्तम्। **धिग्धिक्**। स्वात्मापेक्षया पुत्रस्य तरुणत्वादिन्द्रजेतृत्वेन प्रसिद्धत्वाच्च न्यक्काराधिक्यम्। **प्रबोधितवता** प्रकृष्टं बोधं प्राप्तवता, न तु सुप्तवता। प्राबूबुधदिति प्रबोधितवांस्तेन, प्रबोध्यत इति प्रबोधितं प्रबोध इत्यर्थः, तदस्यास्तीति तेनेति वा तथोक्तेन। 'नपुंसके भावे क्तः।' ३।३।११४ इति क्तः। **कुम्भकर्णेन** कुम्भाविव कर्णौ यस्य तेन। एतेनैतस्य महाकायत्वं भयङ्करदर्शनत्वं च व्यज्यते। 'प्रकृत्यादिभ्य उपसङ्ख्यानम्।*' इति तृतीया। **वाऽपि**। **किम्**। जीवन् रावणोऽपि यं न विजेतुं प्रभवति, न च यं शक्रजित्, तं कुम्भकर्णो विजयेतेति केवलाशेति, अस्मदादिभिरजितोऽपि कुम्भकर्णेन प्रबुद्धेनानायासम्भक्ष्यत इति पूर्वमेव प्रसिद्धम्, सम्प्रति तु तत्सर्वं विलीनमिति वा भावः। **स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः** स्वर्गं इन्द्रराजधान्येव ग्रामटिका क्षुद्रो ग्रामस्तस्या विलुण्ठनं विशेषेण लुण्ठनमनाथाया इव तिरस्कारपूर्वकमाभरणापहरणं तेन वृथोच्छूना आध्मातास्तैः। ग्रामयत्याह्वयति निवासाय पान्था-

**इत्यस्य श्लोकस्य विधेयाविमर्शदोषदुष्टतया काव्यत्वं न स्यात्, प्रत्युत ध्वनित्वेनोत्तम-काव्यताऽस्याङ्गीकृता, तस्मादव्याप्तिर्लक्षणदोषः।**

---

निति ग्रामटः, स्त्री चेद् ग्रामटी, अल्पा ग्रामटीति ग्रामटिका। 'शकादिभ्योऽटन्।' * इत्यटन्। 'पिप्पल्यादश्च।' * इति ङीप्। 'अल्पे।' ५।३।८५ इति कः। 'केऽणः।' ७।४।१३ इति ह्रस्वत्वम्। उद्योतकारास्त्वाहुः-" ग्रामशब्दादल्पार्थे 'तद्धिताः।' ४।१।७६ इति बहुवचनबोध्यष्टिकच् प्रत्ययः।" इति। **एभिः। भुजैः। किं** न किमपि फलमित्यर्थः। स्वकीयं राक्षसकुलं संहर्तुं प्रवर्तमाने भगवति रामचन्द्रे रावणस्य स्वभर्त्सनपरमिदं हनुमन्नाटके पद्यम्। शार्दूलविक्रीडितं छन्दः। तल्लक्षणं यथा-"सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्।" इति॥ १॥'

**इत्यस्य। श्लोकस्य। विधेयाविमर्शदोषदुष्टतया** विधेयस्याविमर्शोऽविमृष्टत्वमुपेक्षेति यावत्, तादृशोऽविमृष्टविधेयांशनाम्नाऽभिधास्यमानोऽसौ दोषस्तेन दुष्टस्तस्य भावस्तत्ता तयेति तथोक्तया। **काव्यत्वं** काव्यलक्षणाक्रान्तत्वम्। **न। स्यात्। प्रत्युत। ध्वनित्वेन।** ध्वन्यतेऽस्मिन्निति ध्वनिस्तस्य भावो ध्वनित्वं तेन तथोक्तेन। **अस्य** 'न्यक्कारो ह्ययमेव' इति श्लोकस्य। **उत्तमकाव्यता** न तु मध्यमकाव्यता, क्व पुनरधमकाव्यतायाश्चर्चेति भावः। **अङ्गीकृता** 'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः।' इति स्वेनापि स्वीकृतेत्यर्थः। **तस्मात्। अव्याप्तिर्लक्ष्ये** लक्षणासम्भवरूप इत्यर्थः। **लक्षणदोषः।** 'अवतिष्ठत' इति शेषः।

अत्रेदमवधेयम्-'अनुवाद्यमनुक्त्वा तु न विधेयमुदीरयेत्। नह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठति॥' इत्युद्देश्यविधेययोः पौर्वापर्यं नियतं, तदन्यथात्वे पुनर्दोषः, अत एव 'पर्वतो वह्निमान्' 'वेदाः प्रमाणम्' इत्यभिधीयते, न तु'वह्निमान् पर्वतः' 'प्रमाणं वेदाः' इति। प्रकृते-स्वस्य शत्रुसद्भावाद्यभिधानमुद्देश्यम्, विधेयं पुनर्धिक्करणम्, शत्रुसद्भावाद्युद्दिश्यैव धिक्कारस्य विधानात्; तदनेनैव क्रमेण वन्धोऽपि युज्यते स्म, किन्तु अत्रान्यथेति वाक्यगतो विधेयाविमर्शः। तथा-भुजानां वैयर्थ्यं विधेयं, तच्च वृथापदेनानुवाद्यमानं प्रत्याय्यत इति पदगतोऽयम्। तस्मादुभयथा सम्भवता विधेयाविमर्शेन दोषेण ग्रस्तस्यास्य श्लोकस्य 'तददोषौ' इत्युक्तदिशा काव्यत्वं न स्वीकार्यम्, किन्तु ध्वनिशालितयोत्तमकाव्यता स्वीकृतेति स्फुटं लक्षणासमन्वयः। ध्वनिश्च वाच्यापेक्षया व्यङ्ग्यस्यातिशयितत्वम्, तच्च प्रकृते ईर्ष्याजन्यस्वावमाननेन निर्वेदरूपम्। अत्रायं तावत् क्रमः-काव्यं त्रिविधम्. उत्तममध्यमाधमभेदात्। तदाहुः प्रकाशकाराः 'इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः। अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्। शब्दचित्रं वाच्यचित्रमव्यङ्ग्यमवरं स्मृतम्॥' इति। काव्यं चतुर्विधमिति केचित्। तदाहुः पण्डितराजाः-'तच्चोत्तमोत्तमोत्तममध्यमाधमभेदाच्चतुर्धा। शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदाद्यम्॥ यत्र व्यङ्ग्यमप्रधानमेव सच्चमत्कारकारणं तद् द्वितीयम्। यत्र व्यङ्ग्यचमत्कारसमानाधिकरणो वाच्यचमत्कारस्तत्तृतीयम्॥ यत्रार्थचमत्कृत्युपस्कृता शब्दचमत्कृतिः प्रधानं तदधमं चतुर्थम्॥' इति॥ काव्यं त्रिविधं, शब्दार्थतदुभयचित्रभेदात्, तस्य पुनः प्रत्येकं त्रैविध्यम्, उत्तममध्यमाधमभेदात्; इति पुनर्वयम्। तदुक्तम्-'शब्दरम्यं सुबोधार्थं मुख्यं, गूढं तु मध्यमम्।' 'अवरं शब्दवैशद्यं विचित्रार्थस्य वा स्थितिः। व्यङ्ग्येऽतिशयिते वाच्यं मुख्यं, मध्यममन्यथा। अव्यङ्ग्यमवरं भिन्नमेवं शब्दार्थसुन्दरम्॥' इति। काव्यमनेकविधम्, उत्कृष्टत्वानुत्कृष्टत्वयोरानन्त्यात्। इति कविराजानामभिप्रायः। अत एव न तथाऽभिधानं तेषां सङ्गच्छते। अस्तु। प्रकृते भूयसी व्यञ्जकतेति काव्यस्योत्तमत्वम्। अत एवाहुर्ध्वनिकाराः-'सुप्तिङ्वचनसम्बन्धैस्तथाकारकशक्तिभिः। कृत्तद्धितसमासैश्च द्योत्यो लक्ष्यक्रमः क्वचित्॥' अलक्ष्यक्रमो ध्वनिरात्मा रसादिभिः सुब्विशेषैस्तिङ्विशेषैर्वचनविशेषैः सम्बन्धविशेषैः कारकशक्तिभिः कृद्विशेषैस्तद्धितविशेषैः समासैश्चेति। 'च' शब्दान्निपातोपसर्गकालादिभिः प्रयुक्तैरभिव्यज्यमानो दृश्यते। यथा-'न्यक्कारो ह्ययमेव' इत्यत्र हि श्लोके भूयसा सर्वेषामप्येषां स्फुटमेव व्यञ्जकत्वं दृश्यते। तत्र-'मे यदरयः' इत्यनेन सुप्सम्बन्धवचनानामभिव्यञ्जकत्वम्,१ 'तत्राप्यसौ तापसः।' इत्यत्र तद्धितनिपातयोः२, 'सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः' इत्यत्र

---

१ 'मे' इति शत्रुसद्भावे सम्बन्धानौचित्यम् 'अरय' इति बहुवचने तत्र क्रोधो व्यज्यते। २ 'तपोऽस्यास्तीति तापस इति मत्वर्थीयोऽण् प्रत्ययः, तेन तस्य पौरुषकथावैधुर्यौचित्यं, 'तत्रापी' ति निपातशब्देनात्यन्तासम्भावनीयत्वं द्योत्यते।

**ननु कश्चिदेवांशोऽत्र दुष्टो, न पुनः सर्वं एवेति चेत् तर्हि–यत्रांशे दोषः, सोऽकाव्यत्वप्रयोजको, यत्र ध्वनिः स उत्तमकाव्यत्वप्रयोजकः इत्यंशाभ्यामुभयत आकृष्यमाणमिदं काव्यमकाव्यं वा किमपि न स्यात् ।**

**नच कश्चिदेवांशं काव्यस्य दूषयन्ति श्रुतिदुष्टत्वादयो दोषाः, किं तर्हि सर्वमेव काव्यम् । तथाहि–काव्यात्मभूतस्य रसस्यानपकर्षकत्वे तेषां दोषत्वमपि नाङ्गीक्रियते । अन्यथा नित्यदोषानित्यदोषत्वव्यवस्थाऽपि न स्यात् ।**

---

तिङ्कारकशक्तीनाम् ३, 'धिग्धिक् शक्रजितम्' इत्यादौ श्लोकार्धे कृत्तद्धितसमासोपसर्गाणाम् ४ । एवंविधस्य व्यञ्जकभूयस्त्वे च घटमाने काव्यस्य सर्वातिशायिनी वन्धच्छाया समुन्मीलति, यत्र हि व्यङ्ग्यावभासिनः पदस्यैकस्यैव तावदाविर्भाव-स्तत्रापि काव्ये काऽपि वन्धच्छाया, किमुत यत्र तेषां वहूनां समवायः । यथाऽनन्तरोदिते ५ श्लोके । अत्र हि–'रावण' इत्यस्मिन् पदेऽर्थान्तरसङ्क्रमितवाच्येन ध्वनिप्रभेदेनालङ्कृतेऽपि पुनरनन्तरोक्तानां व्यञ्जकप्रकाराणामुद्भासनम् ।' इति । एवं सति शब्दानां व्यञ्जकभूयस्त्वे वाच्यातिशायिनी चमत्कृतिरप्रतिहताऽवतिष्ठते, तेन च–एतस्योत्तमत्वमपि निर्वाधमिति न तिरोहितं विदुषाम्, 'तददोषौ' इति निर्दोषत्व एव काव्यत्वस्वीकारे काव्यत्वमेव माभूत्, एतस्याविमृष्टविधेयांशत्वेन ग्रस्तत्वात् । तस्मात् प्रथमं स्वोक्तिविरोधः, आलङ्कारिकसिद्धान्तेन पुनरेतस्य ध्वनित्वेनोत्तमकाव्यत्वमिति स्फुटमव्याप्ति-लक्षणदोषावस्थानम् । यदि वा 'तददोषा' वित्यकाव्यत्वमेव स्वीकार्यं, तर्हि 'इदमुत्तम०' इत्युत्तमकाव्यत्वघटकलक्षणस्य सम्भवतः प्रत्याख्यानं कथम्? इत्युभयविघातोपस्थानाल्लक्षणानैकान्त्यम् ।

नन्वविमृष्टविधेयांशत्वं नाम दोषस्तावदास्तामांशिकः, न ततः सर्वं काव्यं दुष्टम्; इत्यास्त एवात्र काव्यत्वमित्याशङ्क्योत्तरयति–नन्वित्यादिना ।

**ननु** । अत्रास्मिन् 'न्यक्कारो..' इत्युदाहृते पद्य इत्यर्थः । **कश्चित्** 'न्यक्कारो ह्ययमेवे' ति 'वृथोच्छूनै' रिति वेत्यर्थः । **एव** । **अंशः** । **दुष्टो** विधेयाविमर्शदोषग्रस्तः । **न** । **पुनः** । 'पुनरप्रथमे भेदे' इत्यमरः । **सर्वः** समस्तपद्यात्मकः । एव । 'अंश' इति शेषः । 'दुष्ट' इति पूर्वेणाऽन्वयः । **इतीत्येवम्** । **चेत्** 'उच्येते' ति शेषः । **तर्हि** । **यत्र** यस्मिन् । अंशे । **दोषो** विधेयाविमर्शसद्भावः । **सः** 'अंश' इति शेषः । **अकाव्यत्वप्रयोजकः** काव्यत्वाभावप्रयोजकः । 'स्वीक्रियेते' ति शेषः । **यत्र** यस्मिन्नंशे इत्यर्थः । **ध्वनिः** । **स** ध्वनिमानंश इत्यर्थः । **उत्तमकाव्यत्वप्रयोजकः** । **इतीत्येवम्** । **अंशाभ्यां** विधेयाविमर्शदुष्टध्वनियुक्ताभ्यां भागाभ्यामित्यर्थः । **उभयतः** स्वस्वानुकूल्येनेत्यर्थः । **आकृष्यमाणं** व्यावर्त्यमानम् । **इदं** 'न्यक्कारो..' इति पद्यमिति भावः । **काव्यम्** । वाऽथवा । **अकाव्यम्** । **किमपि** । **न** नैव । **स्यात्** । द्यावापृथिव्योरन्तराले त्रिशङ्कोरिव काव्यत्वाकाव्यत्वयोरन्तरालेऽवलम्बमानस्यास्यापि पद्यस्य दुष्प्रतिष्ठेति भावः ।

ननु–'आंशिकदोषातिरिक्तौ शब्दार्थौ काव्यं, तथा च–'न्यक्कारो ह्ययमेव..' इत्यत्र दोषसद्भावस्यांशिकतया 'अदोषौ शब्दार्थौ काव्य' मिति लक्षणं निरवद्यम्' इति चेत् । इत्थमेवाङ्गीक्रियेत यदि दोषाः कश्चिदेवांशं दूषयेयुः, नच तथेत्याह–**नचे**त्यादिना । **नच श्रुतिदुष्टत्वादयो** दुःश्रवत्वादयः । **दोषाः** । **काव्यस्य** । **कश्चित्** । **एव** । **अंशम्** । **दूषयन्ति** 'इति वाच्य' मिति वाच्यम् । वादी सोल्लुण्ठनं पृच्छति–**किम्** । **तर्हि** । सिद्धान्त्युत्तरयति–**सर्वम्** । **एव** । **काव्यम्** । 'श्रुतिदुष्टत्वादयो दोषा दूषयन्ती' ति पूर्वेणान्वयः । तदेव सिद्धान्तयति–**काव्यात्मभू-**

---

३ 'अत्रैवे' ति मदधिष्ठितो देशोऽधिकरणं 'निहन्ती' त्यस्य च निश्शेषेण हन्यमानतया राक्षसकुलं च कर्म्मेति तदिदमसम्भाव्यमानमुपनतमिति पुरुषकारासम्पत्तिर्ध्वन्यते । 'जीवत्यहो रावणः' इति मत्कर्तृकाया जीवनक्रियाया एवं सर्वथाऽनौचित्येऽपि जीवनत्यागस्यापि दैवाधीनत्वं स्वस्मिंश्च जीवति राक्षसकुलकर्म्मिकायास्तापसकर्तृकाया निहनन-क्रियायाः सर्वथाऽसम्भावनीयाया अपि सम्भाव्यमानत्वेनोपस्थानं स्वदौर्भगविलसिताभिधानं च ध्वनयति, 'रावण' इति च स्वार्थं जहत् पराधीनत्वस्वाकर्म्मण्यत्वादि द्योतयदर्थान्तरे सङ्क्रमितम् । ४ 'धिग्धि' गिति निपातस्य क्रोधातिशयव्यञ्जकत्वं, 'शक्रजित' मिति कृतश्च देवराजाभिभाविन्या ओजस्वितायाः वैयर्थ्याभिव्यञ्जकत्वं 'प्रवोधितवता किं कुम्भकर्णेने' त्युपसर्गादीनां 'दैवं वलं स्याद्धल' मिति स्वपुरुषार्थवैयर्थ्याभिव्यञ्जकत्वम्, 'स्वर्गग्रामटिका' इति तद्धितादीनां स्वपौरुषसारकत्वं ततश्चामर्षातिशयाभिव्यञ्जनम् । ५ प्रागुक्ते 'न्यक्कारो ह्ययमेव' इत्यत्रेत्यर्थः ।

यदुक्तं ध्वनिकृता–

"श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः॥" इति।

---

**तस्य। रसस्य** चमत्कारविशेषस्येत्यर्थः। **अनपकर्षकत्वे**ऽपकर्षकर्तृत्वाभावे सति। **तेषां** श्रुतिदुष्टत्वादीनाम्। **दोषत्वं** दोषात्मनाऽवस्थीयमानत्वम्। **अपि। न अङ्गीक्रियते** 'अपकर्षकत्वे पुनस्तेषामांशिकत्वेऽपि सर्वदूषकत्व' मिति शेषः। **अन्यथा प्रकारान्तरेण नित्यदोषानित्यदोषत्वव्यवस्था। अपि। न। स्यात्।** अयं भावः–ननु यत्रांशे दोषः, तत्र तावानंशो दूष्यते, यत्र पुनः सर्वतोव्यापी, तत्र सर्वथा दुष्टत्वमिति नियमसिद्धम्। अथ आंशिकदोषश्च न 'अदोषा' विति काव्यत्वं व्यावर्त्तयते, किन्तु सर्वतोव्यापीति चेत् किन्नाम दोषत्वमिति गवेषणीयम्, तथा सति रसापकर्षकत्वमेवेति अन्ततः सिद्धान्तः। रसस्यैव काव्यात्मत्वम्। आत्मभूतस्य रसस्य यावद् येन नापकर्षस्तावन्न तस्य दोषत्वं, येन चापकर्षस्तस्य दोषत्वम्; सर्वतोव्यापिनः पुना रसस्यापकर्षकत्वेनैव दोषत्वे तथासिद्धेऽपि तस्यांशिकत्वव्यवहारोऽनवधानमूलः। अत एव तर्कवागीशाः प्राहुः–'परम्परया रसदूषकत्वेनैव तेषां सर्वदूषकत्वमव्याहतमेव।' इति। न च काव्यस्य सर्वमप्यंशं दूषयन् दोषः काव्यत्वं व्याहन्तुमीष्टे। अत एवाहुष्टिप्पणीकाराः–'यदि सर्वत्र दोषः काव्यस्य सर्वमेवांशं दूषयन्न काव्यत्वमेवोत्पादयेत्तर्हि 'तुरङ्गकान्तामुखहव्यवाहज्वालेव' इत्यत्र वडवाग्निज्वालारूपस्यार्थस्य विप्रकृष्टतया भानात् क्लिष्टाख्यार्थदोषापत्तिः। एवं च काव्यत्वं न स्यात् परं समुद्रान्तर्लीनायां वडवानलज्वालायां कदाचित् सम्भाव्यमानस्य मध्योल्लसनस्य पुरि दर्शनाभेदाध्यवसायेनास्या ज्वालात्वोत्प्रेक्षणात् को नामास्य काव्यत्वंनिवारयितुमीष्टे।' इति। न चापकर्षकत्वं नाम सर्वथा तिरोधायकत्वं व्याघातकत्वं वा, एवं च–रसस्यानुभूयमाणत्वेऽपि दोषतादवस्थ्यस्वीकारे न काऽपि क्षतिः। अत एवोक्तं टिप्पणीकारैः–'क्वचिद्रसे भासमानेऽपि दोषत्वमङ्गीक्रियते एव, यथा–भगवद्भर्तृहरिसङ्कलितवैराग्यशतकस्य 'अहौ वा हारे वा कुसुमशयने वा दृषदि वा' इति श्लोके मिथ्यात्वेन परिभाव्यमानं जगदालम्बनम्, तपोवनादिकमुद्दीपनम्, सर्पहाराद्योः समदर्शनमनुभावः, मतिधृतिहर्षाव्यभिचारिभावाः, निर्वेदः स्थायिभावः, एवं शान्तरसनिष्पत्तौ सत्यामपि 'क्वचित्पुण्यारण्ये' इति यदभिहितं तद्विकल्पप्रतिपादकमभेदवासनाविरुद्धमनुचितमवभासते। धारारूढसर्वसाम्यविगलितभेदाभिमानग्रन्थेर्हि सर्वत्र सर्वं शिवमयं पश्यतस्तपोवने नगरावस्करकूटे च विमलात्मलाभतृप्ततया समानदृशः क्वचित्पुण्यारण्यादिवचनमनुचितोच्चारणमेव।' इति। वस्तुतस्तु–नात्र शान्ताभिव्यक्तिः, न वा रसानौचित्यम्' किन्तु शङ्करविषयकरत्यभिव्यक्तिः। शान्तोदाहरणता तु प्राचां गौरवैकजीव्या। दोषश्च निरवधि स्वरूपसन्नित्यः सावधि पुनरनित्यः। अत एवाहुः–'दोषो गुणत्वं भजते, दोषत्वं वा निरस्यति।' इति 'वक्त्राद्यौचित्यवशाद् दोषोऽपि गुणः क्वचित् क्वचिन्नोभौ' इति च। ननु यदि रसापकर्षकतयैव दोषाणां दोषत्वं, न पुनरन्यथेति सिद्धान्ते यावद्रससत्त्वं तावत् काव्यस्य काव्यत्वं, दोषाणां दोषत्वाभावश्च; यावत् पुना रसाभावस्तावत् काव्यस्य काव्यत्वाभावो, दोषाणां पुनर्दोषत्वम्, इति स्वत एव निर्दोषयोः शब्दार्थयोः काव्यत्वम्। इत्युच्येत ? तर्हि नित्या दोषा एते, एते पुनरनित्या इति विभागो न सम्पद्येत। अथ नित्याः सचेतसा सर्वथा परिहार्य्याः, न पुनरनित्या अपि तथा परिहार्य्याः। क्वचित्तेषामुपादेयताया- अपि सम्भवात्। नित्यानां च दोषाणां रसापकर्षकत्वेऽपि काव्यत्वाभावो वक्तुमशक्यः। नह्यपकृष्टं किञ्चित्सर्वथा स्वरूपतोऽपहीयते। तस्मात्–नित्यानामप्यमीषां काव्यात्मभूतस्य चमत्कारप्राणस्य रसस्यापकर्षकत्वेऽपि तेषां सद्भावः, तस्मिन्नपि काव्यत्वमव्याहतमेवेति सुष्ठूक्तं कविराजैः 'तस्मादव्याप्तिर्लक्षणदोषः'। इति।

दोषाणां नित्यानित्यत्वाप्रामाणिकत्वनिरासायाचार्य्यसम्मतिं दर्शयति–**यदुक्त**मित्यादिना। **यद्** यस्मात् कारणात्। **ध्वनिकृता** ध्वन्यालोकनिर्म्मात्रेत्यर्थः। **उक्तम्।** किमित्यपेक्षायामाह–'**ये। श्रुतिदुष्टादयः** श्रुतिदुष्टत्वादयो दुःश्रवाश्लीलत्वादय इति यावत्। 'स्त्रियाम्'। ४।१।३। इतिवद्भावप्रधानो निर्देशः। **अनित्याः। दोषाः। च। दर्शिताः। ते** 'सर्वेऽपी'ति शेषः। ध्वन्यात्मनिर्व्यज्यमानोऽर्थ एवात्मा यस्य तस्मिन्। **एव। शृङ्गारे** शृङ्गारादावित्यर्थः, अत्र शृङ्गारपदस्योचितरसोपलक्षकत्वात्। तथा च–वीरशान्ताद्भुतादेरपि परिग्रहः। **हेयाः। इती** त्येवम्। **उदाहृताः॥**' इति।

**किञ्चैवं काव्यं प्रविरलविषयं, निर्विषयं वा स्यात्, सर्वथा निर्दोषस्यैकान्तमसम्भवात्।**

**ननु ईषदर्थे नञः प्रयोग इति चेत्! तर्हि ईषद्दोषौ शब्दार्थौ ‘काव्य’ मित्युक्ते निर्दोषयोः काव्यत्वं न स्यात्, ‘सति सम्भव ईषद्दोषा’ विति चेत्? एतदपि काव्यलक्षणे न वाच्यम्, रत्नादिलक्षणे कीटानुवेधादिपरिहारवत्। नहि कीटानुवेधादयो रत्नस्य रत्नत्वं व्याहन्तुमीशाः, किन्तूपादेयतारतम्यमेव कर्तुम्; तद्वदत्र श्रुतिदुष्टत्वादयोऽपि काव्यस्य। उक्तं च–‘कीटानुविद्धरत्नादिसाधारण्येन काव्यता। दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुटः॥’ इति।**

---

निर्दोषयोरेव शब्दार्थयोः काव्यत्वस्वीकारे आपत्त्यन्तरं दर्शयति– **किञ्चेत्यादिना।**

**किञ्च। एवम्** ‘अदोषौ शब्दार्थौ काव्य’ मित्येवमेव स्वीकारे इत्यर्थः। **काव्यम्। प्रविरलविषयं** प्रविरलोव विषयो यस्य तत्, दुःसम्पाद्यमित्यर्थः। **वाऽथवा। निर्विषयं** निर्गतो विषयो यस्य तत् स्यात्। कुत इत्याह– **सर्वथा** सर्वप्रकारेण **निर्दोषस्य। एकान्त**मेकपदम्। **असम्भवात्।** तदुक्तं भगवता ‘सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः।’ इति।

ननु तर्हि ‘पद्दोषौ शब्दार्थौ काव्य’ मित्येव स्यात्, का पुनः क्षतिः? इति चेन्नेत्याह–**नन्वित्यादिना।**

**ननु। ईषदर्थे** ईषत् स्वल्पमर्थस्तत्र, किञ्चिदित्यर्थे इति यावत्। **नञः** ‘अदोषौ’ इत्यत्र दोषपदेन समस्यमानस्य ‘नञि’ त्यव्ययस्येत्यर्थः। **प्रयोगः।** ‘स्यात्’ इति शेषः। ‘नञभावे निषेधे च स्वरूपार्थेऽप्यतिक्रमे। ईषदर्थे च सादृश्ये तद्विरुद्धतदर्थयोः॥’ इति मेदिनी। **इती**त्येवम् **चेद्** यदि। ‘विवक्ष्यते’ इति शेषः। तर्हि ‘**ईषद्दोषौ। शब्दार्थौ। काव्यम्।**’ **इती**त्येवम्। **उक्ते।** ‘सतीति’ शेषः। **निर्दोषयोः।** ‘शब्दार्थयो’ रिति शेषः। **काव्यत्वम्। न। स्यात्।** अतोऽव्याप्तितादवस्थ्यमेवेति भावः। **ननु–सम्भवे** ‘सदोषतायाः’ इति शेषः। **सति। ईषद्दोषौ।** ‘शब्दार्थौ काव्य’ मिति शेषः। **इती**त्येवम्। **चेत्।** ‘तर्ही’ति शेषः। **एतत्** ‘ईषद्दोषौ शब्दार्थौ सति सम्भवे काव्यम्’ इति। **अपि। काव्यलक्षणे** ‘निरूप्यमाण’ इति शेषः। **रत्नादिलक्षणे। कीटानुवेधादिपरिहारवत्** कीटेनानुवेधादि तस्य परिहारस्तेन तुल्यम्। आदिपदं मालिन्यादिलक्षकम्। अनुवेधोऽनुस्यूतत्वम्। **न** नैव। **वाच्यम्।** तदेवोपपादयति–**हि** यथा। निपातानामनेकार्थत्वात्। **कीटानुवेधादयः। रत्नस्य।** अत्र रत्नपदं सदृशोपलक्षकम्। तथा च–रत्नादेरित्यर्थः। **रत्नत्वं** रत्नत्वादीत्यर्थः। अत्रापि रत्नपदस्य सदृशोपलक्षकत्वात्। **व्याहन्तुम् ईशाः** समर्थाः। **न** नैव ‘भवन्ती’ति शेषः। **किन्तु उपादेयतारतम्यम्**उपादेयस्य रत्नादेस्तारतम्यमीषदुत्कृष्टात्युत्कृष्टत्वम्। (कर्म्म)। **एव** न तु स्वरूपतश्च्युतिम्। **कर्तुम्।** ईशा इति पूर्वेणान्वयः। **तद्वत्तथा। अत्र। श्रुतिदुष्टत्वादयः। अपि। काव्यस्य।** ‘न काव्यत्वं व्याहन्तुमीशाः, किन्तूपादेयतारतम्यमेव कर्तुं’ मिति शेषः।

अत्र प्राचां सम्मतिं दर्शयति–**उक्तं** चेत्यादिना।

**उक्तं** प्रतिपादितम्। ‘आलङ्कारिकाचार्य्यै’ रिति शेषः। **चा**पीत्यर्थः। किमित्याह **‘यत्र** येषु। **दुष्टेषु’** दुःश्रवत्वादिभिर्दोषैर्दूषितेष्विति भावः। **अपि** ‘काव्ये’ ष्विति शेषः। **कीटानुविद्धरत्नादिसाधारण्येन।** साधारण्यं समानता। ‘साधारणः समानश्च’ इत्यमरः। **काव्यता** काव्यत्वम्। **मता**ऽङ्गीकृता ‘तत्रे’ ति शेषः। **रसाद्यनुगमो** रसाः शृङ्गारहास्यादयस्तदादेरनुगमोऽनुस्यूतत्वमिति तथोक्तः। **स्फुटः॥** अयं भावः–चमत्कारप्राणभूतशृङ्गारादिशालितया दोषवत्स्वपि वाक्येषु तथा काव्यत्वं, यथा चमत्कारविशेषशालितया कीटानुस्यूतादिष्वपि रत्नादिषु। इति।’

आहुर्विवृतिकाराः ‘केचित्तु “अदोषा” विति च्युतसंस्कृत्यभवन्मतयोगक्लिष्टत्वादयो ये शाब्दबोधविघटका दोषास्तत्सामान्याभाववन्तावित्यर्थः। एते रसबोधप्रतिबन्धकाः। दोषान्तरं तु काव्यापकर्षकम्। इत्याहुः तन्न, व्यतिरेकध्वनेरुदाहरणे ‘धन्याऽसि या कथयसि... सख्यः शपामि ...॥’ इत्यत्र ‘शपामी’ ति च्युतसंस्कृतित्वदोषसत्त्वात्, ‘निःशेषच्युतचन्दनं ...।’ इत्यादावञ्जनस्यात्यन्तासत्त्वबोधाभिप्रायेण प्रयुक्तस्य ‘दूर’ मित्यस्य समासे गुणीभूतत्वेन सहान्वयेनाभवन्मतयोगत्वदोषसत्त्वाच्चाव्याप्तेः, अध्याहार्य्यक्रियाऽन्वयेन तदुपपत्तावप्यभिमतान्वयाभावेन तद्दोषतादवस्थ्यात्।” इति।

**किञ्च–शब्दार्थयोः सगुणत्वविशेषणमनुपपन्नम्, गुणानां रसैकधर्म्मत्वस्य 'ये रसस्याङ्गिनो धर्म्माः शौर्य्यादय इवात्मनः।' इत्यादिना तेनैव प्रतिपादितत्त्वात्। 'रसाभिव्यञ्जकत्वेनोपचारत उपपद्यते'**

---

यत्तूक्तं टिप्पणीकारैः–'अत्राहोपुरुषिकामात्रमिदम्–दोषाभावसत्तायां तु काव्यता निर्बाधैवेति सदोषेऽतिव्याप्तिवारणाय 'अदोषा वित्यभिहितम्। तत्र दोषात्यन्ताभावस्य दुरुपपादत्वात् काव्यत्वोपमर्दका ये प्रबलतरा दोषास्तद्रहितौ शब्दार्थौ काव्य मित्यर्थोऽल्पार्थकनञ्स्वारस्याल्लभ्यते। एवं च–क्वचिदनित्यदोषसत्त्वेऽपि काव्यत्वमव्याहतमेवेत्यर्थात् सिद्धम्। अत एव-'न्य-क्कारो ह्ययमेव मे' इत्यादौ विधेयाविमर्शसत्त्वेऽपि ध्वनिकाव्यता जागरूकैव। नहि 'ईषद्दोषा' वित्यनेन निर्दोषयोः काव्यत्वं व्यवच्छिद्यते, सदोषयोर्वा लभ्यते, इति केनापि सचेतसाऽवधारयितुं वार्य्यते। निर्दोषयोः स्वतः काव्यत्वे सदोषयोर्लक्षणघटकत्वासम्भवे कुत्रचिदीषद्दोषयोरेव तथात्वेन क्रोडीकरणात्।' इति। तत्र पृच्छ्यते–'अदोषा-वित्यनेन निर्दोषयोर्यदि काव्यत्वं प्रतिपाद्यते, तर्हि 'ईषद्दोषयोः केन।' नच तद्विधायकं किञ्चित्। 'सति सम्भवे' इति निवेश्यते तर्हि 'सर्वत्र निर्दोषौ क्वचित् पुनरीषद्दोषौ शब्दार्थौ काव्य' मिति वक्तव्ये तथाऽभिधानं किम्मूलम्। अन्यथा 'अनलङ्कृती क्वापी' त्यपि किमर्थमुक्तम्। किञ्च एतादृशमपि लक्षणं न सुशोभते। नहि केनापि कीटदंशादिशून्यमेव रत्नं, क्वचित् पुनरीषत्कीटदंशादिमदपि रत्नं भवति, न तु सर्वथा कीटदंशादिमत्' इति वक्तुं युज्यते। 'अदोषा' वित्यनेन काव्यत्वोपमर्दकैर्दोषैरेव शून्ययोर्यदि वा काव्यत्वमङ्गीक्रियते। तर्हि किं नाम काव्यम्? किं तत्र तत्त्वम्? किं वा तदनभिधाय तदुपमर्दकदोषशून्ययोः काव्यत्वमित्युच्यते? कथं वा' नात्रान्योऽन्याश्रयापातः? यदि काव्यत्वोपमर्दकदोषशून्यत्वमेव काव्यत्वमित्युच्येत? तर्हि के काव्यत्वोपमर्दकाः? के पुनर्नेति वक्तव्यम्। ननु अपरिहार्य्या नित्या दोषाः काव्यत्वोपमर्दका इति चेत्! 'अहौ वा हारे वा' इत्यादौ भवद्दर्शितनयेन रसानौचित्यस्य केन परिहार्य्यत्वं, केन वा काव्यत्वमवस्थाप्यते? तदिति सर्वं मत्तप्रलपितम्।

नच 'अदोषा' विति विशेषणमेव नायुक्तं, किन्तु–'सगुणा' वित्यपीत्याह–**किञ्चेत्यादिना**।

**किञ्च। शब्दार्थयोः।** सम्बन्धसामान्यविवक्षया षष्ठी। **सगुणत्वविशेषणं** सगुणत्वस्य विशेषणं विशिष्य प्रतिपादनमिति यावत्। 'सगुणा' विति विशेषणमिति भावः। **अनुपपन्नं** नोपपन्नं युक्तिसिद्धम्। हेतुमाह–**गुणानां** वक्ष्यमाणानां माधुर्य्यादीनामित्यर्थः। **रसैकधर्म्मत्वस्य** रसस्य रसादेरेके मुख्या धर्म्मास्तत्स्वरूपभूता इति यावत्, तेषां भावस्तत्त्वं तस्य। रसपदं रसादेरुपलक्षकं तेन तदाभासादीनामप्युपादानम्।' **आत्मनो** जीवात्मनो न तु शरीरस्य 'आत्मन एव हि यथा शौर्य्यादयः, नाकारस्य, तथा रसस्यैव माधुर्य्यादयो गुणाः, न वर्णानाम्' इत्यग्रिमग्रन्थस्वारस्यादिति भावः। एतेनात्रात्मशब्दस्य कलेवरार्थकत्वमपास्तम्। 'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धौ च परव्यावर्तनेऽपि च॥' इति धरणिः। **शौर्य्यादयः** शौर्य्यक्रौर्य्यादयः। **इव** यथा तथा। **ये**। **रसस्याङ्गिनः**। अत्राभेदेनान्वयः। तेन-प्रधानभूतस्य रसस्येत्यर्थः। 'काव्य' इति शेषः। **धर्म्माः** साक्षात्सम्बन्धेन सम्बन्धिनः। **इत्यादिना**। आदिपदेन 'उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः॥' इत्यभिधीयते। करणे तृतीया। **तेन** ''येन-'सगुणौ शब्दार्थावित्यभि-धीयते।''इति शेषः। **एव**। **प्रतिपादितत्वात्**। 'अतः स्वोक्त्यैव विरुद्ध' मिति भावः। **रसाभिव्यञ्जकत्वेनोपचा-रतः**। अत्र–'रसाभिव्यञ्जकत्वेने' ति 'उपचारत' इति पदद्वयम्। अभेदान्वयः। तथाच–रसाभिव्यञ्जकताऽभिन्नेनोपचारेणेति निष्कृष्टोऽर्थः। अन्ये त्वाहुः– रसपदं रसधर्मोपलक्षकं, तेन- 'रसधर्माभिव्यञ्जकत्वेने' त्यर्थः। इति। **उपपद्यते**। 'शब्दा-र्थयोः सगुणत्वविशेषण' मिति शेषः।

---

१ अत्राहुस्तर्कवागीशाः–'केचित्तु.. 'इदं च ग्रन्थकृतारोपबीजानवधानादेवोक्तम्। तथाहि–परम्परासम्बन्धघटकस्य मध्यभूतसम्बन्धिनो बहिरिन्द्रियप्रत्यक्षत्वे सत्येव–नैवमारोपः। यत्र तु परम्पराघटकमध्यभूतसम्बन्धी न बहिरिन्द्रियप्रत्यक्ष-स्तत्र त्वेवमारोपो दृश्यत एव। यथा-'शीतो वायुः, उष्णं जलम्, सुगन्धिर्वायुः' इत्यत्र परम्परासम्बन्धघटकानां मध्यभूतजलाग्निपुष्पावयवानां सूक्ष्मत्वेनाप्रत्यक्षत्वात्तादृशस्यारोपः। प्रकृते तु बहिरिन्द्रियप्रत्यक्षस्य रसादेः परम्परासम्बन्ध-घटकत्वान्न सम्भवत्येव गुणत्वारोपः शब्दार्थयोरिति, अत एवोच्चैः शब्दवत्त्वारत्ववदाकाशमिति नारोपः। तत्र परम्परासम्बन्धघटकस्य शब्दस्य बहिरिन्द्रियप्रत्यक्षत्वात्। न चैवं 'ज्ञानत्ववानात्मा' इत्यारोपापत्तिः। तत्र परम्पराघटकस्य मध्यभूतस्य ज्ञानस्य बहिरिन्द्रियाप्रत्यक्षत्वादिति वाच्यम्। यदि च तादृशारोपो नास्ति तदा कारणान्तराभावस्यैव तत्र-

इति चेत्तथाऽप्ययुक्तम्, तथाहि—तयोः काव्यस्वरूपेणाभिमतयो रसोऽस्ति, न वा; नास्ति चेद्गुणवत्त्वमपि नास्ति; गुणानां तदन्वयव्यतिरेकानुविधायित्वात्। अस्ति चेत् कथं नोक्तं 'रसवन्ता' विति विशेषणम्, 'गुणवत्त्वान्यथाऽनुपपत्त्यैतल्लभ्यते' इति चेत्! 'सरसा' वित्येव वक्तुं युक्तम्, 'न सगुणा' विति; नहि 'प्राणिमन्तो देशा' इति वक्तव्ये 'शौर्य्यादिमन्तो देशा' इति केनाप्युच्यते।

---

अयं भावः—रस आत्मवच्चमत्कारैकस्वरूपः स च शरीरेणेव शब्दार्थाभ्यामभिव्यज्यते, तदिति आत्मानं प्रत्याययतः शरीरस्य शौर्य्यादिशालित्वमिव रसं प्रत्याययतोः शब्दार्थयोरपि माधुर्य्यादिशालित्वम्। इति। रसधर्मा गुणा माधुर्य्याद्यास्तेषामभिव्यञ्जकौ शब्दार्थाविति तत्त्वेनोपचारेण तयोः सगुणत्वं युज्यते। इति वा। **इतीत्येवम्। चेत्।** विवक्ष्यते 'तर्हि' ति शेषः। **तथाऽपि। अयुक्तं** न युक्तम्। तदेवोपपादयति—**तथा हि।** यथा ह्ययुक्तं तथैवोपपाद्यत इति भावः। **तयोः। काव्यस्वरूपेण। अभिमतयोः।** 'तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि।' इत्युक्तदिशेति शेषः। शब्दार्थयोः। **रसो** रसादिः। रसपदं रसाद्युपलक्षकम्। **अस्ति। वाऽथवा। न** 'अस्ति रस' इति शेषः। अथ पर्य्यावृत्य प्रश्नाभिप्रायमुद्घाटयति—**न। अस्ति।** 'रसः शब्दार्थयोरिती' ति शेषः। **चेत्।** 'तर्हि' ति शेषः। **गुणवत्त्वम्। अपि न अस्ति।** कुत इत्याह-**गुणानाम्। तदन्वयव्यतिरेकानुविधायित्वात्।** रसाद्यन्वयव्यतिरेकानुविधायित्वात्। अयं भावः—'आत्माधिष्ठानमन्तरात्मस्वरूपेणाभिमतमपि शरीरमुपचारेणात्मगुणाधिष्ठानं च प्रतीयमानमपि यथा न स्वरूपसत्, तथा रसाधिष्ठानमन्तरा रसस्वरूपेणाभिमतावपि शब्दार्थौ गुणवृत्त्या रसगुणाधिष्ठानं प्रतीयमानावपि न रसधर्म्माधिष्ठानभूतौ। इति। अथ—**चेत्। अस्ति।** 'रसादि' रिति शेषः। **तर्हि।** '**रसवन्तौ** रसादिशालिनौ'। इतीत्येतत्। **विशेषणम्। कथं** केन हेतुना। **न** नैव। **उक्तम्** अथ—**गुणवत्त्वान्यथाऽनुपपत्त्या** गुणवत्त्वस्यान्यथा रसादिवत्त्वव्यतिरेकेणानुपपत्तिरिति तया। **एत** 'द्रसादिवन्ता' विति विशेषणम्। '**लभ्यते** तात्पर्य्येणाधिगम्यते।' **इति। चेत्। तर्हि।** '**सरसौ** रसादिशालिनौ।' इतीत्येतत्। 'शब्दार्थयोर्विशेषण' मिति शेषः। **एव। वक्तुम्। युक्तम्।** 'अत्र रूढिप्रयोजनाभावाल्लक्षणाऽप्रसङ्गात्।' इति शेषः। अत एव—**न** न तु। '**सगुणौ**'। **इति** 'विशेषण'मिति शेषः। उपपादयति—**हि** यतः— '**प्राणिमन्तः। देशाः**।' इति **वक्तव्ये** 'सती' ति शेषः। **शौर्यादिमन्तः** 'शौर्यक्रौर्यादिशालिन' इत्यर्थः। **देशाः।' न** नैव। **केनापि** 'सचेतसे' ति शेषः। **उच्यते**। अयं भावः—'सगुणौ शब्दार्थौ' इति नोपपद्यते, गुणानां रसमात्रधर्म्मत्वात्तत्रैतेषामसम्भवात्। ननु गुणाभिव्यञ्जकौ शब्दार्थाविति स्वाभिव्यञ्जकतासम्बन्धेन शब्दार्थनिष्ठत्वं गुणानामिति चेदेतदपि न वाच्यम्। तथाऽपि रसवत्तायाः पूर्वमवश्यमङ्गीकार्यत्वम्। गुणवृत्त्याऽपि गुणानां शब्दार्थनिष्ठत्वस्वीकारे रसवत्ताया अपि तथा शब्दार्थनिष्ठत्वमवश्यमभ्युपेतव्यम्। अतः सरसत्वमेव तयोरभिधेयम्। नहि 'प्राणिमन्तो देशा' इति वक्तव्ये 'शौर्यादिमन्तो देशाः' इति सचेतसा केनाप्यभिधीयते। इति।

यत्त्वाहुष्टिप्पणीकाराः—'अत्रेदमाकूतम्-'निर्गुणेऽतिव्याप्तिवारणाय 'सगुणा' वित्युक्तम्, गुणानां रसैकनिष्ठत्वेऽपि परम्परया तदभिव्यञ्जकशब्दार्थनिष्ठत्वमिति भावः। अत एवाष्टमोल्लासे 'गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता।' इत्यभिहितम्। तथा सत्येव 'मधुरः शब्दः, मधुरोऽर्थः इत्यादिव्यवहारः सङ्गच्छते।' इति। तत्रेदमालोच्यते—निर्गुणं तावत् काव्यं भवति न वा, भवतीति चेत् 'सगुणा' विति किमर्थम्। न भवतीति चेत् 'अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि!

---

—कल्पनीयत्वात्।' अत एवोदयनाचार्य्येणोक्तम् 'आरोपे सति निमित्तानुसरणम्, न तु निमित्तमस्ति।' इत्यारोपः। यस्तु जपाकुसुमस्य वहिरिन्द्रियप्रत्यक्षत्वेऽपि लोहितः स्फटिक इत्यारोपस्तत्र जपाकुसुमं नेदृशपरम्पराघटकं जपाकुसुमस्य स्फटिकावृत्तित्वात्। किन्तु जपाकुसुमस्य स्वच्छद्रव्यसान्निध्यमेव तद्वहितं पृथगेवारोपनिमित्तमिति सुधीभिरवधेयम्।' इत्याहुः। तत्र स्थूलजलसंयोगेन शीतो वायुः, अर्कोपलसंयोगेन उष्णं जलमित्यादौ स्थूलजलार्कोपलसंयोगघटितयोः परस्परयोर्मध्यपदार्थयोः स्थूलजलार्कोपलयोर्वहिरिन्द्रियप्रत्यक्षत्वेऽपि विशिष्टधीनियामकत्वेन सम्बन्धत्वाङ्गीकारात्। चिदानन्दचमत्कारमयस्य रसस्य वहिरिन्द्रियप्रत्यक्षाविषयत्वेन तद्घटितपरम्परायाः सम्बन्धत्वाङ्गीकारे बाधाभावाच्च। वस्तुतस्तु यत्र परम्परया विशिष्टधीनियामकत्वं तत्रैव तस्याः सम्बन्धत्वं कल्प्यते। यत्र तु विशिष्टधीनियामकत्वं, तत्र तु सम्बन्धत्वं न कल्प्यत एव। तेन 'ज्ञानत्ववानात्मा' इत्यादौ स्वसमवायिसमवायस्य न सम्बन्धत्वम्।' इति।

नन्तु 'सगुणौ शब्दार्थौ।' इत्यनेन 'गुणाभिव्यञ्जकौ शब्दार्थौ काव्ये प्रयोज्या 'वित्यभिप्रायः। इति चेत्, न; गुणाभिव्यञ्जकशब्दार्थवत्त्वस्य काव्य उत्कर्षमात्राधायकत्वम्, न तु स्वरूपाधायकत्वम्। उक्तं हि-'काव्यस्य शब्दार्थौ शरीरं, रसादिश्चात्मा, गुणाः शौर्य्यादिवत्, दोषाः काणत्वादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, अलङ्काराः कटककुण्डलादिवत्।' इति। एतेन-अनलङ्कृती पुनः क्वापि।' इति यदुक्तं तदपि परास्तम्।' अस्य ह्यर्थः-'सर्वत्र सालङ्कारौ, क्वचित्त्वस्फुटालङ्कारावपि शब्दार्थौ काव्य' मिति, तत्र सालङ्कारशब्दार्थयोरपि काव्ये उत्कर्षमात्राधायकत्वात्। एतेन 'वक्रोक्तिः काव्यजीवितम्' इति वक्रोक्तिजीवितकारोक्तमपि परास्तम्, वक्रोक्तेरलङ्काररूपत्वात्।

---

माम्। कम्बुकण्ठ्याः क्षण कण्ठे कुरु कण्ठार्त्तिमुद्धर॥' इति कथम्, ओजस्वितयेति चेत्, नेहौजो गुणः, प्रकृतरसपरिपन्थित्वात्। तर्हि-प्रसादवत्तयेति चेत्, 'मित्रात्रिपुत्रनेत्राय त्रयीशात्रवशत्रवे। गोत्रारिगोत्रजित्राय गोत्रात्रे ते नमोनमः॥' इति कथम्। अत एवाहुः पण्डितराजाः-'लक्षणे गुणालङ्कारनिवेशोऽपि न युक्तः, 'उदितं मण्डलं विधोः' इति काव्ये दूत्यभिसारिकाविरहिण्यादिसमुदीरितेऽभिसरणादिविधिनिषेधजीवनाभावादिपरे 'गतोऽस्तमर्कः' इत्यादौ चाव्याप्त्यापत्तेः। न चेदमकाव्यमिति शक्यं वदितुम्, काव्यतयाऽभिमतस्यास्यापि तथा वक्तुं शक्यत्वात्।' इति।

ननु 'सरसा' विति वक्तव्ये 'सगुणा' विति नोच्यते, 'किन्तु' गुणाभिव्यञ्जकाविल्यभिप्रेत्य 'सगुणा' विति; तथाच-'प्राणिमन्तो देशा' इति वक्तव्ये 'शौर्य्यादिमन्तो देशा' इत्यत्र प्रसिद्धिप्रयोजनाभावान्मा लक्षणा सम्भूत्, सम्भवति पुनस्तत्तथा प्रयोजनानपायादित्याह-**नन्तु**। '**सगुणौ**। **शब्दार्थौ** 'काव्य' मिति शेषः।' **इत्यनेन**। **गुणाभिव्यञ्जकौ**। **शब्दार्थौ**। **काव्ये**। अत्र निमित्ते सप्तमी। '**प्रयोज्यौ**।' **इत्यभिप्रायः**। 'लक्षणामूल' मिति शेषः। **इति**। **चेत्**। **न** 'तर्हि युक्त' मिति शेषः। उपपादयति-**गुणाभिव्यञ्जकशब्दार्थवत्त्वस्य**। **काव्ये**। अत्र विषये सप्तमी। **उत्कर्षमात्राधायकत्वम्**त्कर्षो रसादिमत्तया प्रतीतिः, स एवेति, तस्याधायकं स्थापकं तस्य भावस्तत्त्वमिति तथोक्तम्।

**नन्तु**। **स्वरूपाधायकत्वम्** 'सङ्घटते' इति शेषः। सम्मतिं दर्शयति **हि** यतः। **उक्तम्**। किमित्याह-**काव्यस्य** रसप्राणितवाक्यात्मकस्येत्यर्थः। **शरीरम्**। **शब्दार्थौ**। **रसादी** रसतदाभासादिः। **च** पुनः। **आत्मा**। **शौर्य्यादिवच्छौर्य्यौ**दार्य्यादिवत्। 'आत्मन इव रसादेर्धर्म्मा' इति शेषः। **गुणाः** माधुर्य्यौजः-प्रसादा इत्यर्थः। **काणत्वादिवत्** काणत्वखञ्जत्वपङ्गुत्वादिवत्। 'शरीरमात्रसम्भविन' इति शेषः। **दोषा** दुःश्रवत्वाश्लीलत्वादय इत्यर्थः। **अवयवसंस्थानविशेषवद**वयवानां करचरणादीनां संस्थानविशेषः सङ्घटनविशेषस्तद्वत्। 'शरीरदार्ढ्यादिप्रत्यायनविश्रामाः।' इति शेषः। **रीतयो** वैदर्भ्याद्याः। **कटककुण्डलादिवत्**। कटको हस्ताभरणम्। कुण्डलः कर्णाभरणम्। 'शरीरमात्रप्रसाधका' इति शेषः। **अलङ्काराः** पुनरुक्तवदाभासानुप्रासोपमाप्रभृतय इत्यर्थः। 'मन्तव्याः' इति शेषः। **इति**। तथा च- रसवत्त्वमन्तरेण शब्दार्थयोर्गुणाभिव्यञ्जकतया प्रयोज्यत्वाङ्गीकारेऽपि न काव्यस्य रसात्मकत्वलाभ इति निष्कृष्टम्। सम्मतेरानुषङ्गिकं फलमाह-**एतेन** 'काव्यस्य शब्दार्थौ शरीरं..., अलङ्काराः कटककुण्डलादिवत्।' इत्याद्यभिधानेनेत्यर्थः। **क्वापि** न तु सर्वत्र यत्र रससद्भावस्तत्रैवेति भावः। **अनलङ्कृती** नालङ्कृतिरलङ्कारोऽनुप्रासोपमाऽऽद्यन्यतमो यत्र ताविति तथाभूतौ। अत्रेषदर्थे नञः प्रयोगः। **पुनः**। एतेन 'अदोषत्वे सति सगुणत्वे च सती'त्यवश्यमूह्यमिति सूचितम्। 'शब्दार्थौ काव्यम्' इति पूर्वेणान्वयः।' **इतीत्येवम्**। **यत्**। **उक्तं** 'प्रकाशकारै'रिति शेषः। **तत्**। **अपि**। **परास्तं** पराभूतम्। कथमित्याह- **हि** यतः। **अस्य** 'अनलङ्कृती..' इत्यभिधानस्य। **अयम्**। **अर्थः**। '**सर्वत्र** सति सम्भवे। **सालङ्कारौ**। **शब्दार्थौ**। **काव्यम्**। **क्वचित्** सालङ्कारत्वासम्भवेऽपि रसवत्तायाः सम्भव इत्यर्थः। **तु** पुनः। '**अस्फुटालङ्कारौ** न स्फुटोऽलङ्कारो यत्र तौ। **अपि**। **शब्दार्थौ**। **काव्यम्**।' **इति**। **तत्र** तस्मिन्। **काव्ये**। **सालङ्कारशब्दार्थयोः** सालङ्कारयोः शब्दार्थयोः। **अपि** किं पुनरनलङ्कारयोः शब्दार्थयोरित्यर्थः। **उत्कर्षमात्राधायकत्वात्**। मात्रपदेन स्वरूपाधायकत्वं व्यावर्त्यते। इदं तत्त्वम्-अवश्यं निर्दोषत्वावच्छिन्नसगुणत्वे सति

यच्च क्वचिदस्फुटालङ्कारत्व उदाहृतम्–

'यः कौमारहरः स एव हि वर,स्ता एव चैत्रक्षपा,–
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।
सा चैवास्मि, तथाऽपि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते ॥ २ ॥'

---

क्वचिदनलङ्कारत्वेऽपि शब्दार्थौ काव्यम्। इति लक्षणं प्रोक्तं प्रकाशकारैः। इदं च न निर्दुष्टम्, 'ये रसस्याङ्गिनो धर्माः..' इत्याद्युक्तदिशा रसस्यैवात्मतयाऽमीषामप्यभिमननात्, आत्मभूतं रसं विना च शरीरस्थानापन्नयोः शब्दार्थयोः शरीरित्वानुपपत्तेः। प्रकारान्तरेण तथा द्योतनं 'प्राणिमन्तो देशाः' इति वक्तव्ये 'शौर्यादिमन्तो देशाः' इत्याद्युक्तिवन्न युक्तम्। इति। आनुषङ्गिकं फलं लक्षयति–**एतेनालङ्कारस्य** काव्यत्वाधायकतानिरसनेनेत्यर्थः। '**वक्रोक्ति**र्वक्रा काक्वादिनाऽन्यथाभूततां नीताऽत एव विलक्षणेति यावत्, उक्तिरिति तथोक्ता। **काव्यजीवितं** काव्यस्य जीवितमात्मेति तथोक्तम्। **इति**। **वक्रोक्तिजीवितकारोक्तं** वक्रोक्तिजीवितं तन्नामानं ग्रन्थं करोतीति वक्रोक्तिर्जीवितकारस्तेन कुन्तकेनोक्तमिति तथोक्तम्। **अपि परास्तम्**। कुत इत्याह–**वक्रोक्तेः**। **अलङ्काररूपत्वाद**लङ्कारस्वरूपत्वात्। अयं भावः–वक्रोक्तिरलङ्कारविशेषः, असौ च न जीवितम्, रसस्यैव तत्त्वोपपत्तेः। इति।

आनुषङ्गिकं फलं निर्दिश्य सिंहनिरीक्षणन्यायेन पुनः 'अनलङ्कृती..' इत्याद्युक्तं निरस्यति–**यच्चे**त्यादिना।

**यत्**। **च**। **क्वचित्**। काव्यप्रकाश इत्यर्थः। नाम्नो निर्देशाभावस्तु तदपसिद्धान्तताख्यापनार्थः। **अस्फुटालङ्कारत्वे**। अत्र विषये सप्तमी। **उदाहृतम्**। 'पद्य'मिति शेषः।

'**यः**। **कौमारहरः**' कौमारं बाल्यं परमरसिकतया सुरतोत्सवदानेन हृतवानपनीतवानिति तथोक्तः। एतेन नायकस्य 'श्रीमान् सुरतदक्षश्च योषितां सम्मतः पुमान्।' इत्युक्तं योग्यत्वं, नायिकाविषयश्चानुरागो द्योत्यते। 'हरतेरनुद्यमनेऽच्।' ३।२।९ इत्यच्। **हि** यद्यपीत्यर्थः। निपातानामनेकार्थत्वात्। **स** सुरतोत्सवदानेन हृदयङ्गमः। **एव** न त्वितरः। एतेनोपपतिसन्निध्यभावोऽनुभाव्यते। **वरः** स्वयंवृतः। व्रियते प्रियतया स्वयमभिलष्यते इति वरः। एतेन नायिकाया नायकविषयकोऽनुराग आवेद्यते। **ताः** सुरतोत्सवेन क्षणमिव व्यपनीता इत्यर्थः। **एव** न त्वितराः। एतेन तासां नितान्तमुपभुक्तत्वं प्रियत्वं च द्योत्यते। **चैत्रक्षपाश्चैत्रस्य** क्षपा रात्रय इत्यर्थः। अत्र चैत्रपदं वैशाखस्याप्युपलक्षकम्, तेन चैत्रवैशाखरात्रय इत्यर्थः। 'त्रियामा क्षणदा क्षपा' इत्यमरः। यद्वा-वैशाखे ग्रीष्मस्य सान्निध्येन तद्रात्रीणामतिसुरतामोदकताऽभावेन यथाश्रुत एवार्थो ज्यायान्। यद्वा–चैत्रस्य क्षपा इव क्षपा विहारयोग्या रात्रय इति तथोक्ताः। एवं चेतरासामपि तदुपमितानां रात्रीणामवगमः। मध्यमपदलोपः। यद्वा–चैत्रस्य चित्रायुक्तस्य चन्द्रमस इति यावत् क्षपा इत्यर्थः। अत्र बहुत्वेन निर्देशः पुनः पुनश्चित्राचन्द्रमसोर्योगे सम्भवन्तीनां सर्वासां रात्रीणां सूचनाय। तथाच– चित्राचन्द्रमसोरिव नायिकानायकयोश्चित्राचन्द्रमसोर्योगे सुरतामोदहेतुभूता रात्रय- इति भावः। तासां प्राशस्त्यं च–-'चित्राचन्द्रमसोरिव।' इत्यादिना महाकविभिरुद्गीतपूर्वम्। **ते** तदानीन्तनसजातीयाः। **च**। **उन्मीलितमालतीसुरभय** उन्मीलिता विकसिता मालतीसुरभयो मालतीसम्बन्धिनः सुगन्धा यत्र येन वेति ते तथोक्ताः। चैत्रमाससम्बन्धिनीनां रात्रीणां सान्निध्ये मालत्या जातेरसम्भवात्तदुपलक्षिता वासन्ती बोध्या। 'मालती युवती काक्रमाल्यां जातिविशल्ययोः। ज्योत्स्नायां निशि नद्यां चे' ति हैमः। क्वापि 'माधवी'-त्येव पाठः। **प्रौढाः**। **कदम्बानिलाः** कदम्बानामनिलाः। कदम्बान् प्राप्यावरुद्धसञ्चारतया शीतला वायव इत्यर्थः। अत्राहुस्तर्कवागीशाः–"**कदम्बानिला** धूलीकदम्बवायवः। चैत्रे तस्यैव (धूलिकदम्बस्यैव) सम्भवात्। केचित्तु 'कदम्बानिलाः कदम्बवनानिलाः। वनानिलानां प्रौढत्वे वनवहिर्भूतानां मान्द्योपलम्भादुद्दीपकत्वेनाह **प्रौढा** इति।' इति व्याचक्षुः। तन्न, तथात्वे कदम्बपर्यन्तानुधावनस्य निष्प्रयोजनत्वात्, 'अरण्यानिला' इत्यनेनैव तदर्थलाभात्। नच मालतीसम्बन्धेनैवानिलानां सौगन्ध्यलाभात्कदम्बसम्बन्धदर्शनं व्यर्थमिति वाच्यम्। विलक्षणसौगन्ध्यलाभाय तस्य सार्थकत्वात्। यथा 'रमणीकमनीयकपोलतले परिपीतपटीररसैरलसः। अयमञ्चति पञ्चशरानुचरो नवनीपवनीधुवनः पवनः॥' नवा नवपुष्पितेत्यर्थः। अत्र चन्दनसम्बन्धेन सौगन्ध्यलाभेऽपि विलक्षणतालाभाय कदम्बसम्बन्धदर्शनम्।" इति। **सा** तत्तत्सत्त्वे सुरतानन्दैकानुभवित्रीत्यर्थः। **एव**। **च**। **अस्म्यहम्**। **तथाऽपि** तत्तदुपभुक्तसकलसामग्रीसत्त्वेऽपि

**इत्येतच्चिन्त्यम् । अत्र हि विभावनाविशेषोक्तिमूलस्य सन्देहसङ्करालङ्कारस्य स्फुटत्वम् ।**

---

असकृदुपभुक्तानां भोग्यानां पुनर्भोगोत्कण्ठाया अनुचितत्वेऽसम्भवत्वेऽपि वेति यावत् । तत्रोपभुक्तपरित्यक्तस्य वान्तायितत्वेन पुनर्भोगानर्हे **रेवारोधसि** नर्म्मदातटे । 'वर्तमाने' इत्यर्थः । एतेन तत्सलिलसान्निध्ये तत्रत्यानां लताऽऽदीनां निविडत्वेन सुरतसाधनतौचित्यं द्योत्यते । **वेतसीतरुतले** वेतसी वेतसलता सैव (विशालतया लतान्तराश्रयतया च) तरुरिति, वेतस्या (वेष्टितः) तरुरिति वा; तस्य तलं तत्र । यद्वा वेतसीनां तरवो वेतसीप्रधाना वृक्षास्तेषां तले तस्मिन्निति वा । **सुरतव्यापारलीलाविधौ** सुरतानां सुखेन रतानां रमणानां (रतीनां) व्यापार उद्यमस्तेन लीलाविधिर्लीलाया वेषविन्यासादेर्विधिः सम्पादनं तत्र तन्निमित्तमित्यर्थः । **चेतश्चित्तम्** । 'चित्तं तु चेतो हृदयं..' इत्यमरः । 'मदीय' मिति शेषः । **समुत्कण्ठते** सम्यङ् न तु हठात् मनाग्वोत्कण्ठते । अत्र रेवाकूले कृतकेलेः स्वसौभगातिशयं मन्यमानाया असकृदुपभुक्तेष्वपि वरोपकरणादिषु तत्तत्सन्निहिततया पुनः संस्फुरन्त्याः समुत्कण्ठाया उचितत्वं सूचयन्त्याः कस्या अपि स्वाधीननायकाया नायिकाया उक्तिरियम् । पद्यमिदं च शार्ङ्गधरपद्धतिस्थम् । शार्दूलविक्रीडितं चास्य वृत्तम् । तल्लक्ष्म प्रागुक्तम् ॥ २ ॥' इति । **एतत्** । **चिन्त्यं** विचारणीयम् । किमिति चिन्त्यमित्याह–**अत्रा**स्मिन्नुदाहृते 'यः कौमारहरः...' इति पद्य इति यावत् । **विभावनाविशेषोक्तिमूलस्य** विभावना विशेषोक्तिश्च वक्ष्यमाणलक्षणौ अलङ्कारविशेषौ, ते एव मूलं यस्य तस्य, तयोर्वा मूलं मूलभूत इति तस्य । **सन्देहसङ्करस्य** सन्देहप्रधानस्य सङ्करालङ्कारस्येत्यर्थः । **स्फुटत्वम्** । तेन यत् प्रकाशकृद्भिरस्फुटालङ्कारतयोदाहृतं तत्सदोषतया विचारणीयमिति भावः ।

इदमभिहितम्–तत्र तावत् 'कारणमन्तरेण कार्य्योत्पत्तिनिवेदनं विभावना' इति समुत्कण्ठायाः कारणं तत्तदुपभुक्तताया अभावः, प्रियतमैर्वरादिभिर्वा विरहः । नहि नित्यं निषेव्यमाणाः पदार्थाः सरसा उपतिष्ठन्ते । अत एवोक्तं 'कामानामतिसेवया' । इति । प्रकृते तस्याभावः, तथा सति च तस्याः कार्य्यरूपायाः समुत्कण्ठाया उत्पत्तिरिति विभावना । तथा 'कारणसत्त्वे कार्य्यानुत्पत्तिर्विशेषोक्ति'रिति अनुत्कण्ठायाः कारणं तत्तदुपभुक्तत्वं, तत्सत्त्वे च तस्या अनुत्कण्ठाया उत्पत्त्यभाव इति विशेषोक्तिः । अनयोः पुनरुदाहृते पद्ये केति सन्देहस्तन्मूलकश्चैवं सङ्करः स्पष्टः, तत्र बाधानुपपत्तेः । यत्तूक्तं 'यद्यपि विभावनाविशेषोक्ती तावत्सम्भवतः । तथाहि...तथाऽपि नते स्फुटे कारणकार्य्यभावस्यार्थिकस्य सत्त्वेऽपि तद्वाचकनञादिनाऽनुपात्तत्वात् । यदि चेतोऽनुत्कण्ठितं नेत्यभिधीयेत तदा विशेषोक्तेः स्फुटत्वं भवेदिति बोध्यम् । अनयोरस्फुटत्वेन तन्मूलकः सन्देहसङ्करोऽप्यस्फुट इति, निर्विवादम्' इति,'विशेषोक्तिविभावने विद्यमाने अपि न स्फुटे । कथमिति चेत्? इत्थम्–विशेषोक्तिस्तावत्कारणसत्त्वेऽपि कार्य्याभावकथनम् । अत्र चानुत्कण्ठाकारणं वरोपकरणयोरुपभुक्तता, तत्सत्त्वे यद्यप्यनुत्कण्ठाऽभाव उत्कण्ठारूपो निर्दिष्ट एव, तथाऽपि नानुत्कण्ठाऽभावत्वेन, किन्तूत्कण्ठात्वेनैव । तस्मादस्फुटत्वमस्याः । यदि 'चेतोऽनुत्कण्ठितं ने' त्यभिधीयेत तदा स्फुटत्वं भवेत् । एवं कारणाभावेऽपि कार्य्योत्पत्तिकथनं विभावना । अत्र चोत्कण्ठाकारणं वरोपकरणयोरतत्ता । तदभावश्च यद्यप्युक्त एव, तथाऽपि नातत्ताविरहत्वेन, किन्तु तत्तारूपेणैव । अभावाभावस्य तत्त्वात् । अतोऽस्या अस्फुटत्वमेव । न च 'स एवे' त्येवकारेणातत्त्वाभावप्रतीतेरतत्ताभावत्वेन प्रतीतौ कथमस्फुटत्वमिति वाच्यम् । विशेषणसङ्गतेनैवकारेण विशेष्ये विशेषणायोगस्य व्यवच्छेदो हि प्रत्याय्यते, नतु विशेषणाभावाभाव एवाहत्य, पर्य्यवसानं तु तत्रेत्यस्फुटत्वमेव । एवं विशेष्यसङ्गतेनाप्येवकारेण विशेष्यभिन्ने विशेषणाभाव एव नाहत्य प्रत्याय्यते, किन्तु विशेषणयोगाभाव इति द्रष्टव्यम् । अत एव 'शङ्खः पाण्डुर एवे' त्यादौ 'नापाण्डुरः' 'पार्थ एव धनुर्धरः' इत्यादौ च 'नान्यो धनुर्धर' इत्यादिः कदाचित्स्फुटत्वार्थं प्रयुज्यते । दण्ड्याह– 'त्वन्मुखं त्वन्मुखेनैव तुल्यं नान्येन केनचित् ।' इति । अन्यथा पुनरुक्तिस्तत्र स्यादिति । अनयोरस्फुटत्वे च सन्देहरूपसङ्करोऽप्यनयोरस्फुट इति विभावनीयम् ।' इति च । तत्सर्वमविचाररमणीयम् । तथाहि–'यद्यपी' त्यर्थकतया प्रयुक्तं 'ही' ति, 'तथाऽपी' ति तु स्वार्थे प्रयुक्तं, तदित्यनयोर्द्वयी विभावनाविशेषोक्त्योर्मूलभूते । नञाऽनुपात्तेऽपि निषेधे तयाऽस्य प्रत्यायितत्वात् । न चात्र नञा साक्षान्निषेधो युक्तः, तथा सति तयोरेकतराया एव सम्भवात्, विरुद्धलक्षणयोरेकत्रासम्भवाच्च । अत एव तत्सङ्करस्य सन्देहपूर्वकत्वमभिमतम् । यद्यपि–'अहो अहोभिर्महिमा हिमागमेऽप्यभिप्रपेदे प्रति तां स्मरार्दिताम् । तपर्तुपूर्त्तावपि मेदसाम्भरा विभावरीभिर्विभराम्बभूविरे ॥' इत्यादौ विशेषोक्तिविभावनयोरवगम इति वक्तुं शक्यते, तथाऽपि नैकत्रांशे । तस्मात्–तयोर्यत्रैकत्र सम्भवस्तत्रेत्थमेवेति निःसंशयितम् । उच्येत

**एतेन 'अदोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम्। रसान्वितं कविः कुर्वन्कीर्तिं प्रीतिं च विन्दति।'**

**इत्यादीनामपि काव्यलक्षणत्वमपास्तम्। यच्च ध्वनिकारेणोक्तम्–'काव्यस्यात्मा ध्वनिः' इति, तत् किं 'वस्त्वलङ्काररसादिलक्षणस्त्रिविधो ध्वनिः काव्यस्यात्मा,' उत 'रसादिमात्रः'। नाद्यः, प्रहेलिकाऽऽदावतिव्याप्तेः, द्वितीयश्चेत् 'ओ' मिति ब्रूमः।**

---

वा। 'अत्र तात्पर्य्येण कारणकार्य्यासत्त्वासत्त्वे अधिगम्येते' इति, किं तेनापि कलञ्जभक्षणेन। तथा सति तयोर्व्यङ्ग्यत्वापगमात्। व्यङ्ग्यत्वे च सहृदयेतरविचारेणास्फुटत्वेऽपि कः सहृदयस्तयोरस्फुटत्वं वक्तुमुत्सहेत। यथा– 'तीरे तरुण्या वदनं सहासं, नीरे सरोजं च मिलद्विकासम्। आलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धाऽलिकिशोरमाला॥' इत्यत्र व्यज्यमानः स्फुटः सन्देहस्तथा तत्रापि ते स्फुटे। नच व्यज्यमानमात्रत्वे स्फुटत्वाभाव इति सचेतसा केनापि वक्तुं शक्यते, तदा तत्स्फुटतायाः स्वसाक्षिकत्वात्। इति। यच्चोक्तम्– "अत्र हि 'हरो, वरः' इत्याद्यनुप्रासस्य स्फुटस्यापि प्रकृतशृङ्गारप्रतिकूलवर्णघटितत्वेन नालङ्कारता।" इति, तदपि तथाभूतम्। 'रणौ लघू' इत्युक्तदिशा रेफानुप्रासस्य माधुर्य्यव्यञ्जकतया प्रतिकूलवर्णात्मकदोषासद्भावस्याक्षतमूर्तित्वात्। किन्तु– व्यङ्ग्यालङ्कारापेक्षया वाच्यालङ्कारस्यैवैतदपेक्षया शब्दालङ्कारस्य न्यूनत्वमिति नात्र निर्देशोऽस्येति विभावनीयम्।

एवमन्येषामपि लक्षणान्यवज्ञेयानीत्याह–**एतेने**त्यादिना।

**एतेन** 'प्रकाशकारोक्तकाव्यलक्षणनिराकरणेनेति' शेषः। '**अदोषं** दुःश्रवत्वादिदोषरहितम्। **गुणवन्**माधुर्य्यादि गुणशालि। **अलङ्कारै**रनुप्रासादिभिरुपमादिभिश्चेत्यर्थः। बहुवचनमतन्त्रम्। **अलङ्कृतं** पूर्णम्। **रसान्वितं** रसवत्। **काव्यम्। कुर्वन्** 'कवि' रिति शेषः। **कीर्त्तिम्। च प्रीति**मामोदम्। **विन्दति** लभते॥' **इत्यादीनां** काव्यलक्षणघटकतयाऽभिमतानां वाक्यानाम्। **काव्यलक्षणत्वम्।** 'नतु तेषां प्राशस्त्यं तादृशफलहेतुत्वं वे'ति शेषः। **अपास्त**मपाकृतम्। इदमभिहितम्–सरसवाक्यत्वमेव काव्यत्वम्, निर्दोषतापुरस्कृतगुणालङ्कारशालिता तु तदुपादेयत्वकृते, गुणदोषालङ्काराणां हानाहानाभ्यां काव्यत्वलाभालाभासम्भवात्। एवं सरसवाक्यताया एव काव्यत्वेनाभिधानौचित्येऽपि भोजराजादीनां तथाऽभिधानं तत्प्राशस्त्यार्थम्, न तु तत्स्वरूपाभिधानार्थम्। एवं च 'अदोषा लक्षणवती सरीतिर्गुणभूषिता। सालङ्काररसानेकवृत्तिर्वाक् काव्यनामभाक्॥' इत्याद्यपि तथाभूतम्। इति।

अथ ध्वनिकारमतमालोचयति–**यच्चे**त्यादिना।

**यत्। च। ध्वनिकारेण** ध्वन्यालोकप्रणेत्राऽऽनन्दवर्धनाचार्य्येणेत्यर्थः। **उक्तम्। 'काव्यस्य। ध्वनिः। आत्मा।' इति। तत्** 'कथन' मिति शेषः। **किम्। 'वस्त्वलङ्काररसादिलक्षणः। त्रिविधः। ध्वनिः। काव्यस्य। आत्मा।'** 'इत्यात्मक' मिति शेषः। **उत**ाथवा 'आहो उताहो किमुत विकल्पे किं किमूत च' इत्यमरः। '**रसादिमात्रो** रसादिरेव प्रमाणमस्यासाविति तथोक्तः।' 'ध्वनिः काव्यस्यात्मा' इति शेषः। 'वे'ति पाठाधिक्यं तु समुच्चयद्योतनार्थम्। 'वा स्याद्विकल्पोपमयोरेवार्थे च समुच्चये।' इति विश्वः। 'इती'ति शेषः। तत्र–**आद्यो** वस्त्वलङ्काररसादिभेदात्त्रिविधो ध्वनिः काव्यस्यात्मेति पक्ष इत्यर्थः। **न** 'युक्त' इति शेषः। हेतुमाह–**प्रहेलिकाऽऽदौ** 'व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात्। यत्र बाह्यार्थसम्बन्धः कथ्यतेऽसौ प्रहेलिका॥' इत्यादिनोक्ते दुर्विज्ञेयप्रश्नादौ। आदिपदेन बहिर्लापिकाऽन्तर्लापिकाक्रियागुप्तादेर्ग्रहणम्। **अतिव्याप्ते**रनिप्रसङ्गात्–'तरुण्याऽऽलिङ्गितः कण्ठे नितम्बस्थलमाश्रितः। गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुः॥' इत्यादौ 'किञ्चिदपूर्णजलघटरूपस्य वस्तुनो ध्वन्यमानत्वेऽपि रसविकलतयाऽकाव्यत्वेऽपि काव्यत्वप्रसक्तेरिति यावत्। अथ **द्वितीयो** रसादिमात्रो ध्वनिः काव्यस्यात्मेति पक्ष इत्यर्थः। 'इती'ति शेषः। **चेत्।** 'तर्हीं'ति शेषः। '**ओं**' स्वीकृत इत्यर्थः। 'ओमेवं परमम्मते' इत्यमरः। **इति। ब्रूमः।** अत्र बहुवचनेन निर्देशः, तेन च सर्वाभिमतवक्तृता द्योत्यते। अयंभावः–वस्त्वलङ्कारयोर्ध्वनौ न रसस्य (चमत्कारस्य) व्यभिचारित्वाभावः। अस्ति परं शृङ्गारादौ। अत एव शृङ्गारादे रसपदेन व्यपदेशः। तदिति नाभ्रान्ततया वस्तुव्यङ्ग्यादीनां काव्यात्मतयाऽभिमननं युक्तं, युक्तं पुना रसादि (शृंगारादि) ध्वनेः। तथासति रसादिध्वनिः काव्यस्यात्मेति साम्प्रम्, अथ यदि वस्तुव्यङ्ग्यादेरपि रसत्वं रससत्वं वा क्वचित्प्रतीयेत, तर्हि तस्यापि काव्यात्मत्वम्। इति।

**ननु यदि रसादिमात्रो ध्वनिः काव्यस्यात्मा तदा—**

**"अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसए पलोएहि ।**
**मा पथिअ ! रत्तिअंधिअ ! सेज्जाए मह णिमज्जहिसि ॥ ३ ॥"**

**इत्यादौ वस्तुमात्रस्य व्यङ्ग्यत्वे कथं काव्यत्वव्यवहारः, इति चेत् ? अत्रापि रसाभासवत्तयैवेति ब्रूमः ।**

---

अभिहितं द्रढयितुमाशङ्कते—**नन्वित्यादिना** ।

**ननु । यदि । रसादिमात्रो** रसादिः प्रमाणमस्येति, मात्रा वा मात्रं वा यस्य यत्र वेति स इति तथोक्तः । 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः ।' ५।२।३७ इति मात्रच् । 'मात्रा कर्णविभूषायां वित्ते माने परिच्छदे । अक्षरावयवे स्वल्पे क्लीबं कार्त्स्न्येऽवधारणे ॥' इति मेदिनी । **ध्वनिः । काव्यस्य । आत्मा** । इति स्वीक्रियते इति शेषः । **तदा**—

'**हे पथिअ!** पथिक । 'पथः ष्कन् ।' ५।१।७५ इति ष्कन् । अत्र पथिकोऽसीति नास्य देशस्याभिज्ञः, सञ्चरणश्रमार्त्तश्चेति कुत्रापि पतिष्यसीति गृहस्य दविष्ठतया रमण्या च विरहिततया कियन्तं समयमारिरंससीति प्रत्यायनं द्योत्यते । **एत्थ**ात्रास्मिन् स्थाने इति भावः । **अत्ता** श्वश्रूः । 'माते' त्यन्ये । **णिमज्जइ** निमज्जति जरत्तरतया मृतप्राया निपततीति यावत् । एतेन तस्यां स्वानुरागाभावः तस्यास्तथात्वे च यथेष्टं मया रमस्व, नात्र तत्प्रतिबन्धकताभीतिलेश इति द्योत्यते । **एत्थ** अस्मिन् स्थाने । **अहं** तव नयनचकोरयोश्चमत्कारप्राणा प्रत्यक्षभूता । 'अवतिष्ठे' इति, 'निमज्जामी' ति वा शेषः । एवं च न मम योग्यतायां त्वया सन्देहः कर्त्तुं शक्यते इति, समुचितरमणविरहेण न शयने मम सौमनस्यमिति, वा बुध्यतामिति, अहं च त्वया यत् संवदामि तेन तस्या वृद्धहतकाया वधिरत्वान्धत्वासहृदयत्वानि समवबोध्यानीति च द्योत्यते । **दिअसए** दिवसके । अल्पः कुत्सितो वा दिवसस्तत्र । 'अल्पे ।' ५।३।८५ इति 'कुत्सिते ।' ५।३।७४ इति वा कः । तदानीं सायंकालप्रायत्वेन दिवसस्याल्पता कुत्सितता वा । यद्यपि दिवसेऽपि नात्र रमणे प्रतिबन्धकता, तथाऽपि व्यतीत एवायमिति क्षणं प्रतीक्षणीयमिति द्योतयितुं दिवसस्याल्पत्वं, दिवसे रमणस्य निषिद्धतया तस्य कुत्सितत्वं निर्दिष्टम् । **पलोएहि** प्रलोकय याथार्थ्येनालोचयस्वेति भावः । एतेन अन्यथा विहिते सकलं विपर्य्येष्यतीति द्योत्यते । **हे रत्तिअंधिअ !** रात्र्यन्धक । रात्रावन्धक इति तत्सम्बुद्धौ तथोक्त । 'सप्तमी शौण्डैः ।' २।१।४० इत्यत्र 'सप्तमी' ति योगविभागेन समासः । यद्वा सम्बन्धसामान्यविवक्षया 'षष्ठी ।' २।२।८ इत्यनेन 'रात्रेरन्धक' इति षष्ठीतत्पुरुषः । कुत्सितोऽन्ध इत्यन्धकः । एतेन—तव दूरागमनश्रमापेक्षया रात्र्यन्धकताऽतिभयावहेति द्योत्यते । यद्वा—अन्ध इवेत्यन्धकः । 'इवे प्रतिकृतौ ।' ५।३।९६ इति कन् । एतेन- पश्यन्नपि धूर्त्ततयाऽन्धतां प्रत्याययसीति प्रत्याय्यते । यद्वा काकायितचेष्टितेत्यर्थः । एतेन काकेनेव त्वया मम तालोपभोगः कर्त्तुमुचित इति द्योतितम् । **मह** मम न त्वस्माकमिति भावः । एतेन स्वात्मनोऽद्वितीयता द्योतिता । **मा** नैव **सज्जाए** शय्यायां पर्य्यङ्क इति यावत् । एतेन तवाभिलाषयैवैषा शय्या प्रसाधितेत्यवश्यं त्वयाऽलङ्कर्त्तव्येति विपरीतलक्षणया द्योत्यते । **णिमज्जहिसि** निमङ्क्ष्यसि मृत इव जड इव विकल इव वा केवलं निपतिष्यसीति भावः । एतेन— अत्र रमणमात्रार्थः सङ्गो नौ, न तु वस्तुतया श्रमाद्यपनोदनार्थ इति द्योत्यते । एवं च— अत्र विरामाय वासं प्रार्थयमानं कमपि कमनीयं कामुकं युवानं प्रति कस्या अपि पतिविरहिततया चिरादुत्कण्ठितस्वोपभोगाया यौवनभराक्रान्ततयोन्मत्तमदनायाः स्वयंदूत्या उक्तिरियमिति द्योत्यते ॥ अत्र गाथा वृत्तम् । तदुक्तं पिङ्गलाचार्य्यैः—'पढमं बारह मत्ता बीए अट्ठारहेहि संजुत्ता । जह पढमं तह तीअं पंचदह विहूसिआगाहा ॥ ३ ॥' इति । **इत्यादौ । वस्तुमात्रस्य** । 'वक्तृबोद्धव्ययोर्वैशिष्ट्या' दिति शेषः । **व्यङ्ग्यत्वे** 'इह गृहे श्वश्रूद्वितीया ऽहं, श्वश्रूश्च मृतप्रायेति बाढं मया विहर, अपगमय निखिलामरति' मित्यात्मना प्रतीयमानत्वे इति भावः । **कथम् । काव्यत्वव्यवहारः । इति । चेत्** । 'तर्हि' ति शेषः । **अत्र । अपि । रसाभासवत्तया** रसस्य शृङ्गारस्याभास उपपत्तिविषयकतयाऽनुचितत्वात्मना प्रतीतिः सोऽस्मिन्नस्तीति तस्य भावस्तत्ता तया, यद्वा रसस्य चमत्कारस्याभासः किञ्चित्स्फुरणं तद्वत्तयेत्यर्थः । **एव ।' इतीत्येवम् । ब्रूमः** ।

---

१ 'श्वश्रूरत्र निमज्जति अत्राहं दिवसके प्रलोकय । मा पथिक ! रात्र्यन्धक ! शय्यायाम्मम निमङ्क्ष्यसि ॥ ३ ॥' इति संस्कृतम् । २ 'प्रथमं द्वादशमात्रा द्वितीयेऽष्टादशसंयुक्ताः । यथा प्रथमं तथा तृतीयं पञ्चदशविभूषिता गाथा ॥' इति संस्कृतम् ।

अन्यथा 'देवदत्तो ग्रामं याती'ति वाक्ये तद्भृत्यस्य तदनुसरणरूपव्यङ्ग्यावगतेरपि काव्यत्वं स्यात् 'अस्त्वि'ति चेत्, न; रसवत एव काव्यत्वाङ्गीकारात्। काव्यस्य प्रयोजनं हि 'रसास्वादसुखपिण्डदानद्वारा वेदशास्त्रादिविमुखानां सुकुमारमतीनां राजपुत्रादीनां विनेयानां रामादिवत् प्रवर्तितव्यम्, न रावणादिव' दित्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेश इति चिरन्तनैरप्युक्तत्वात्। तथा चाग्नेयपुराणे प्रोक्तम्–'वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्।' इति, व्यक्तिविवेककारेण चोक्तम्–'काव्यस्यात्मनि सङ्गिनि रसादिरूपे च न कस्यचिद्विमतिः।' इति, ध्वनिकारेणाप्युक्तम्–'न हि कवेरितिवृत्तमात्रनिर्वाहेणात्मपदलाभः, इतिहासादेरेव तत्सिद्धेः।' इत्यादि।

---

एतदेव द्रढयति–अन्यथा रसविकलत्वेऽपि वस्तुमात्राभिव्यक्त्या काव्यत्वस्वीकारेण। 'देवदत्तस्तदभिधेयः कस्यचित्स्वामीत्यर्थः। ग्रामम्। याति।' इति वाक्ये। 'श्रुते' इति शेषः। तद्भृत्यस्य तस्य देवदत्तस्य भृत्यः किङ्करस्तस्य। तदनुसरणरूपव्यङ्ग्यावगतेस्तस्य देवदत्तस्यानुसरणमनुगमनं तद्रूपं यद् व्यङ्ग्यं तस्यावगतिर्ज्ञानं तस्याः। अपि। काव्यत्वम्। स्यात्। अथ–अस्तु 'काव्यत्वव्यवहार' इति शेषः। इतीत्येवम्। चेत्। न 'तर्हि स्वीक्रियता'मिति शेषः। हेतुमाह–रसवतः शृङ्गारादिशालिनश्चमत्कारयुक्तस्येति वा। एव। काव्यत्वाङ्गीकारात्। तदेवोपपादयति–हि यतः। काव्यस्य लक्षणया काव्याध्ययनादेरित्यर्थः। प्रयोजनम्। 'रसास्वादसुखपिण्डदानद्वारा रसस्य चमत्कारस्य शृङ्गारादेवाऽऽस्वादः प्रसादहेतुकोऽनुभवस्तेन यत्सुखं तस्य पिण्डो घनीभूत इवावस्थितः पुञ्जस्तस्य दानं तदेव द्वारुपायस्तया। वेदशास्त्रादिविमुखानां वेदशास्त्रादिभ्यो विमुखाः पराङ्मुखाः लक्षणया तेषामध्ययनाध्यापनाभ्यां निवृत्तरुचयस्तेषाम्। सुकुमारमतीनां मृदुज्ञानानाम्। अत एव– विनेयानां शिक्षणीयानाम्। राजपुत्रादीनाम्। रामादिवत्। प्रवर्तितव्यम्। रावणादिवत्। न। 'प्रवर्तितव्य'मिति शेषः। 'इत्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशः।' इतीत्येवम्। चिरन्तनैः। अपि न त्वर्वाचीनैरेवेति भावः। उक्तत्वात्। अयं भावः–'स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपभुञ्जते। प्रथमालीढमधवः पिबन्ति कटुभेषजम्॥' 'रसास्वादप्रलोभेन प्रवृत्ता मृदुबुद्धयः। साहित्यशास्त्रमासेव्य जायन्ते कृतिनः खलु॥' इत्याद्यभिहितदिशा रसास्वादेन स्वाभिमुखीकृत्य कर्तव्ये कर्म्मणि प्रवर्त्तनमकर्तव्यतः पुनर्निवर्त्तनं काव्यस्य परं प्रयोजनम्। तथा च–यदि रसास्वाद एव न यतः, तस्य निष्प्रयोजनतया निस्तत्त्वमेवेति।

एवं प्रयोजनबलेन काव्यस्य रस एवात्मेति दर्शयित्वाऽऽप्तसम्मत्याऽपि तदेव दर्शयति–तथा चेत्यादिना। तथा च। आग्नेयपुराणे। 'वाग्वैदग्ध्यप्रधाने वाचो वैदग्ध्यं यमकानुप्रासादिनिवेशेन वैलक्षण्यं तेन प्रधानं प्रधानभूतमिति तत्र अपि। अत्रास्मिन् काव्य इति यावत्। जीवितं जीवनभूत इत्यर्थः।' इति प्रोक्तं 'भगवता व्यासेने'ति शेषः। व्यक्तिविवेककारेण व्यक्तिविवेकस्तदाख्यो व्यक्तिमनुमानेऽन्तर्भावयितुं प्रणीतो ग्रन्थस्तं करोतीति तेनेति तथोक्तेन। 'महिमभट्टेने'ति शेषः। च। 'काव्यस्य। सङ्गिनि प्रसङ्गशालिनि सहधर्मिणीति यावत् रसादिरूपे। 'रसादीन् शृङ्गारादिरसतदाभासादीन् रूपयतीति तस्मिन्निति तथोक्ते। चमत्कार इति भावः। यद्वा–रसादयः शृङ्गारादितदाभासादयो रूपं यस्य तस्मिन्निति तथोक्ते। शृङ्गारादीनां चमत्कारेण द्वितीयत्वमिति तथोक्तम्। आत्मनि। अत्र विषये सप्तमी। कस्यचित् कस्यापि मतान्तरानुयायिन इत्यर्थः। विमतिर्विरुद्धा मतिः प्रतिपत्तिरिति तथोक्ता। न नैव।' इति। उक्तम्। ध्वनिकारेण। अपि किं पुनरन्यैरित्यर्थः। एतेन–वस्तुध्वन्यादेः काव्यात्मत्वाभिधानं विरुद्धमिति सूच्यते। 'हि यतः (कविना सरसताऽवश्यं सम्पाद्या) इतिवृत्तमात्रनिर्वाहेण। अत्र मात्रपदेन रसनिर्वाह्यव्यवच्छेदः। तथा च–नीरसेतिवृत्तनिर्वाहद्वारेति तात्पर्य्यम्। कवेः। आत्मपदलाभः। स्वरूपसत्तालाभः। न नैव। 'सम्भवती'ति शेषः। तथा च–येन कविः कविः स्यात्तस्य लाभः सरसतामात्राधानेन न तु–नानाकथासङ्घटनयेति निष्कृष्टम्। हेतुमाह–इतिहासादेरितिहासकिंवदन्त्यादिना। एव तत्सिद्धेस्तस्येतिवृत्तादिनिर्वाहस्य सिद्धिस्तस्याः।' इत्यादि उक्तं तात्पर्य्येणेति शेषः। तथा च–'कविना प्रबन्धमुपनिबध्नता सर्वात्मना रसपरतन्त्रेण भवितव्यम्, तत्रेतिवृत्ते यदि रसाननुगुणां स्थितिं पश्येत् तां भङ्क्त्वाऽपि स्वतन्त्रतया रसानुगुणं कथाऽन्तरमुत्पादयेत्, न हि कवेरितिवृत्तनिर्वहणेन किञ्चित्प्रयोजनम्, इतिहासादेव तत्सिद्धेः।' इति ध्वनिकारेणोक्तमिति सिद्धम्। इदमभिहितम्–काव्यस्यात्मभूतो रसः, तं विना न तस्य स्वरूपसत्त्वमिति तद्वत्तयैव सर्वतोभावेनापेक्षणीयेति। अत एवाहुः– 'रसरीतिवीतवसना प्रियेव शुद्धाऽपि वाङ् मुदे सरसा। अरसा सालङ्कृतिरपि न रोचते शालभञ्जीव॥' इति।

**ननु तर्हि प्रबन्धान्तर्वर्तिनां केषाञ्चिन्नीरसानां पद्यानां काव्यत्वं न स्यात्, इति चेत् न; रसवत्पद्यान्तर्गतनीरसपदानामिव पद्यरसेन, प्रबन्धरसेनैव तेषां रसवत्ताऽङ्गीकारात्। यस्तु नीरसेष्वपि गुणाभिव्यञ्जकवर्णसद्भावाद्दोषाभावादलङ्कारसद्भावाच्च काव्यव्यवहारः सरसादिमत्काव्यसाम्याद्गौण एव। यच्च वामनेनोक्तम्-रीतिरात्मा काव्यस्य इति, तन्न; रीतेः सङ्घटनाविशेषत्वात्, सङ्घटनाया अवयवसंस्थानरूपत्वात् आत्मनश्च तद्भिन्नत्वात्।**

---

अथोक्तमेवार्थं द्रढयितुमाशङ्क्योत्तरयति–**नन्वित्यादिना**।

**ननु तर्हि** 'यदि रसनिर्वहणेनैव कवेः कवित्वं तदे' ति भावः। **प्रबन्धान्तर्वर्त्तिनाम्**। **केषाञ्चित्**। **नीरसानाम्**। **पद्यानाम्**। **काव्यत्वम्**। **न** नैव। **स्यात्**। **इतीत्येवम्**। **चेत्**। **न** 'किन्त्वस्ति काव्यत्वमि'-ति शेषः। कुत इत्याह–**पद्यरसेन** पद्यस्य रसः समष्ट्यात्मना स्फुरंश्चमत्कारः शृङ्गाराद्यन्यतमो वाऽऽस्वादविशेषस्तेन। **रसवत्पद्यान्तर्गतनीरसपदानां** रसरूपात्मशालिनां पद्यानामन्तर्गतानि नीरसानि पदानि तेषाम्। 'रसवत्ताऽङ्गीकार' इति शेषः। **इव**। **प्रबन्धरसेन** प्रबन्धस्य वेणीसंहारादेः रसः समष्ट्यात्मना चमत्कारो वा स्फुरन् शृङ्गारादिर्वा तेन। **एव**। न तु गुणाभिव्यञ्जकवर्णसद्भावादिनेत्यर्थः। **तेषां** नीरसानां पद्यानाम्। **रसवत्ताऽङ्गीकारात्**। 'गुणवृत्त्ये' ति शेषः।

ननु नीरसेष्वपि केषुचित्प्रबन्धेषु रीत्यादिमहिम्ना काव्यत्वं यद् व्यवह्रियते, तत्कथमित्याशङ्कामपनुदति **यस्त्वित्यादिना**।

**यः**। **तु** पुनः। **नीरसेषु**। **अपि**। 'प्रबन्धेषु' इति शेषः। **गुणाभिव्यञ्जकवर्णसद्भावाद्** गुणाभिव्यञ्जकानां 'मूर्ध्नि वर्गान्त्यवर्णेन' इत्यादिना वक्ष्यमाणानां माधुर्य्यादिप्रत्यायकानां वर्णानां सद्भावात्। **दोषाभावाद्**दुःश्रवत्वादिशून्यत्वात्। **अलङ्कारसद्भावात्**। **च** रीतिसमर्थितत्वाच्चेत्यर्थः। **काव्यव्यवहारः** काव्यात्मना प्रसिद्धिरित्यर्थः। **सः**। **रसादिमत्काव्यबन्धसाम्याद्**रसादिः शृङ्गारादितदाभासादिरस्मिन्नस्तीति तादृशं यत् काव्यं तस्य बन्धसाम्यं सङ्घटनेन सदृशत्वं तस्मात्। **गौणो** गुणवृत्त्या समर्थितः। **एव** न तु साक्षात्प्राप्तः। इदमभिहितम्– 'चित्रितः कल्पितः पराशुर्वा समुचिततया समुत्तम्भितात्मा पुरुषोऽय' मिति यथा व्यवह्रियते, तथा नीरसतया स्वरूपतोऽसदपि काव्यं गुणाभिव्यञ्जकवर्णसद्भावाद्दुष्टत्वविरहाद्रीतियोगादलङ्कारालङ्कृतत्वाद्वा तदेव 'काव्य' मिति व्यपदिश्यते। एतेन दत्तोत्तरं तत् यदुक्तं गङ्गाधरकारैः–'यत्तु–"रसवदेव काव्य" मिति साहित्यदर्पणे निर्णीतम्, तन्न; वस्त्वलङ्कारप्रधानानां काव्यानामकाव्यत्वापत्तेः, न चेष्टापत्तिः, महाकविसम्प्रदायस्याकुलीभावप्रसङ्गात्। तथा च जलप्रवाहवेगनिपतनोत्पतनभ्रमणानि कविभिर्वर्णितानि, कपिबालादिविलसितानि च। नच तत्रापि यथा कथञ्चित्परम्परया रसस्पर्शोऽस्त्येवेति वाच्यम्, ईदृशरसस्पर्शस्य 'गौश्चलति, मृगो धावती'त्यादावतिप्रसंगत्वेनाप्रयोजकत्वात्, अर्थमात्रस्य विभावानुभावव्यभिचार्य्यन्यतमत्वात्'। इति। अन्यथा रसस्य चिदात्मनाऽङ्गीकारो मासङ्गमिष्ट। एवं च रसस्य तदभिहितनयेनापि आत्मव्यवहारसाम्ये वस्त्वलङ्कारध्वनिप्रधानानां काव्यत्वेनाभिमननं निर्जीवे जीव इति व्यवहारवत्। इति।

एवं गुणादिना काव्यत्वं निराकृत्य रीत्याऽपि तन्निराकुरुते–**यत्त्वित्यादिना**।

**यत्**। **तु** पुनः। '**रीतिः**' विशिष्टा पदरचना रीति' रिति वक्ष्यमाणस्वरूपा पदसङ्घटनेति भावः। **काव्यस्य**। '**आत्मा**' **इति**। **वामनेन** काव्यालङ्कारसूत्रवृत्तिनिर्म्मात्रेत्यर्थः। **उक्तम्**। **तत्**। **न** नैव 'सङ्गच्छत' इति शेषः। हेतुं दर्शयति– **रीतेः**। **सङ्घटनाविशेषत्वात्**सङ्घटनाविशेषरूपत्वात्। **सङ्घटनायाः** 'पदानामि' ति शेषः। **अवयवसंस्थानरूपत्वाद**वयवानामवयवभूतानां पदानां संस्थानं गुणोपकर्तृतयाऽवस्थितिं रूपयतीति तत्त्वात्। **आत्मनः**। **च** पुनः। **तद्भिन्नत्वात्** तस्या रीतेर्भिन्नो विलक्षणस्तस्य भावस्तत्त्वं तस्मात्। अयं भावः–शरीरस्यावयवितयाऽवयवानां स्थितिविशेषमहिम्ना ऽऽस्तांनाम स्वरूपसत्त्वम्, किन्तु यथा शरीरस्यावयवस्थितिविशेषमहिम्ना स्वरूपसत्त्वेऽपि न तद्वत् आत्मनः स्वरूपसत्त्वमेतस्य तद्भिन्नत्वात्, तथा वाक्यस्य पदवत्तया पदानां निवेशमहिम्नाऽऽस्तां नाम स्वरूपसत्त्वम्, किन्तु न तद्वतः कस्यचिच्चमत्कारस्य, एतस्य रसमात्रस्वरूपतया तद्भिन्नत्वात्। इति।

**यच्च ध्वनिकारेणोक्तम्–**

**'अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः। वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृतौ॥'**

**इति अत्र वाच्यात्मत्वं काव्यस्यात्मा ध्वनिरिति स्ववचोविरोधादेवापास्तम्।**

---

अथ सिंहावलोकननयेन पुनरपि ध्वनिकारमतं विविनक्ति–**यच्चे**त्यादिना।

**ध्वनिकारेण । च । यत् । उक्तम् ।** 'तत्स्ववचो विरोधादेवापास्त'मिति शेषः । कथमित्याह–

'**सहृदयश्लाघ्यः** सहृदयाः काव्यभावनायां परिपक्वमतयस्तेषां श्लाघ्यः प्रसादोत्पादकतयाऽभिनन्दनीयः । अत एव–**काव्यात्मा।** 'स'न्निति शेषः । **यः। अर्थः। व्यवस्थितः** प्रत्याख्यातुमशक्यतां प्राप्तः । **तस्य** तादृशस्यार्थस्येत्यर्थः । **वाच्यप्रतीयमानाख्यौ** वाच्यो वाचा प्रतिपाद्यः प्रतीयमानः प्रतीयते न तु वाचाऽभिधीयते इति, तथोक्तश्च तन्नामानावित्यर्थः । **तौ । उभौ ।** द्विविधौ । अन्ये तु व्याचक्षते–'द्विवचनादेव द्वित्वे सिद्धे, उभौ उवन्महेश्वरवद्भा ययोस्तावित्यर्थः । 'उकारः शङ्करः प्रोक्तः।' इति कोशः । इति । **भेदौ** प्रकारौ । **स्मृतौ** 'मादृशैराचार्य्यै'रिति शेषः ॥' **इति । अत्र । वाच्यात्मत्वं** वाच्यस्यात्मत्वं काव्यात्मभूतत्वम् । 'प्रतिपादित'मिति शेषः । **'काव्यस्य ।** ध्वनिर्वाच्यलक्ष्यतात्पर्येभ्यो भिन्नः सन् केवलं यो ध्वन्यते तादृश इत्यर्थः । **आत्मा ।'**, इति च पूर्वं प्रतिपादित'मिति शेषः । **इतीत्येवम् । स्ववचोविरोधात्** स्ववचसोः 'तस्य वाच्यप्रतीयमानाख्यौ भेदा'विति वाच्यः काव्यस्यात्मेत्यात्मकस्य 'काव्यस्य ध्वनिरात्मेति' वाच्यातिरिक्तो व्यङ्ग्यः काव्यस्यात्मेत्यात्मकस्य चेति भावः, विरोधः परस्परम्बाध्यबाधकत्वं तस्मात् । **एव । अपास्तं** तिरोभूतमवज्ञातमिति यावत् । इदमभिहितम्–'काव्यस्यात्मा ध्वनिरिति प्रथममभिहितम्, ध्वनिश्च पदपदार्थयोर्गुणीभूतत्वे सति व्यञ्जनया केवलया संवेद्यं शब्दार्थयुगलम् । यदुक्तं प्रकाशकारैः–'बुधैर्वैयाकरणैः प्रधानीभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यपदेशः, ततस्तन्मतानुसारिभिरन्यैरपि न्यग्भावितवाच्यव्यङ्ग्यव्यञ्जनक्षमस्य शब्दार्थयुगलस्य ।' इति, यथा वा प्रोक्तं ध्वनिकारैः–'यत्रार्थः शब्दो वा समर्थमुपसर्जनीकृतस्वार्थौ । व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥' इति । तस्य च वाच्यत्वं कालत्रितयेऽपि प्रमत्तोन्मत्तव्यतिरिक्तेन नाभिधातुं शक्यम् । नच काव्यात्मनो ध्वनित्वं वाच्यत्वं चेति न ब्रूमः, किन्तु केवलं ध्वनित्वमिति वाच्यम्, 'यः काव्यात्मा तस्य भेदा' विति ग्रन्थास्वारस्यात् । अन्यथा 'काव्यविशेषः स ध्वनिः' इति ग्रन्थेन ध्वनेः काव्यभेदाङ्गीकरणमपि मा सङ्घटिष्ट । अतः–काव्यस्यात्मा ध्वनिरित्यभिधाय वाच्योऽपि काव्यात्मनो भेद इत्यभिधानं पूर्वापरालोचनयैव हतजीवितम् । यत्त्वनूदितं गुप्तदृतैः 'शब्दार्थशरीरं तावत् काव्यम्, तत्र शरीरगुणादेव केनचिदात्मना तदनुप्राणकेन भाव्यमेव, तत्र शब्दस्तावच्छरीरभाग एव सन्निविशते सर्वजनसंवेद्यत्वात् स्थूलकृशादिवत् । अर्थः पुनः सकलजनसंवेद्यो न भवति, नत्वर्थमात्रेण काव्यव्यपदेशः, लौकिकवाक्येषु तदभावात् । तदाह सहृदयश्लाघ्य इति । स एक एवार्थो द्विशाखया विवेकिभिर्विभागबुद्ध्याऽभियुज्यते । तथाहि तुल्येऽर्थरूपत्वे किमिति कस्मैचित् सहृदयः श्लाघते तद्भवितव्यं केनचिद्विशेषेण, यो विशेषः स प्रतीयमानविभागो विवेकिभिर्विशेषहेतुत्वादात्मेति व्यवस्थाप्यते । वाच्यसङ्कलनाविमोहितहृदयैस्तु तत्पृथग्भावो विप्रतिपद्यते चार्वाकैरिवात्मपृथग्भावः । अत एकार्थ इत्येकतयोपक्रम्य सहृदयश्लाघ्य इति विशेषणद्वारा हेतुमभिधायोद्धारणदृशा तस्य द्वौ भेदावंशावित्युक्तम् । न तु 'द्वावथात्मानौ काव्यस्य ।' इति । तत् पराभूतम्, यो विभुर्नित्यो विश्वात्मा, तस्य द्वौ भेदौ जीवात्मेति परमात्मेति च, तत्राद्यः शरीररूपः, परः पुनरात्मस्वरूप इत्यभिधानवत्तस्यापि प्रमत्ताभिधानापत्तेः । यच्चोक्तं मुरारिदानेन-'रमणीयशब्दकर्त्तरि कविशब्दो रूढः, तस्य पुनरिदं कर्म्मेति काव्यमिति समाख्याऽनुरूपमेव लक्षणं ज्यायः ।' इति, तन्न; तथाहि-रमणीयशब्दस्य कर्त्ता कविः, तस्य च कर्म्म सम्पाद्यो रमणीयः शब्द एवेति किं तत्र तावद्रमणीयशब्दत्वं, कविकर्म्मविषयता? किं वा कविकर्म्मविषयत्वं रमणीयशब्दता? उभयथाऽपि अन्योऽन्याश्रयादिदुष्टत्वात् । यच्चोक्तं केनापि–'तददोषौ..' इति प्रकाशोक्तमनुपहसनीयस्य काव्यस्य लक्षणम् ।' इति, तत्रेदं पृच्छ्यते–किन्नामानुपहसनीयत्वम् । उत्तमत्वम्मध्यमत्वमवरत्वं स्वरूपसत्त्वं वा? न च तत् कथमपि युक्तम्, सामान्यरूपेण लक्षणे लक्षयितव्ये तथा विशेषाभिधानस्यानुचितत्वात् । अनुपहसनीयत्वं चोत्तमकाव्यलक्षणैकसम्भवीति प्रकृतार्थपराभूतम् । यच्चोक्तम्–'यत्तूक्तं रसगङ्गाधरकारैः–'काव्यपदप्रवृत्तिनिमित्तं शब्दार्थयोर्व्यासक्तं, प्रत्येकपर्य्यासं वा नाद्यः, एको न द्वाविति व्यवहारस्येव श्लोकवाक्यं न काव्यमिति व्यवहारापत्तेः । न द्वितीयः

तत् किंस्वरूपं काव्यमित्युच्यते—

**४ वाक्यं रसात्मकं काव्यम्,**

**रसस्वरूपं निरूपयिष्यामः । रस एवात्मा स्वरूपतया जीवनाधायको यस्य, तेन विना तस्य काव्यत्वानङ्गीकारात् । 'रस्यते इति रस' इति व्युत्पत्तियोगाद्भावतदाभासादयोऽपि गृह्यन्ते ।**

---

एकस्मिन् पद्ये काव्यद्वयव्यवहारापत्तेः ।...' इति । तत्रास्वादव्यञ्जकत्वस्योभयत्राप्यविशेषाच्चमत्कारिबोधजनकज्ञान विषयताऽवच्छेदकधर्म्मवत्त्वरूपस्यानुपहसनीयकाव्यलक्षणस्य प्रकाशादिनिरूपितलक्ष्यताऽवच्छेदकस्योभयवृत्तित्वाच्च 'काव्यं पठितं, काव्यं श्रुतं, काव्यं बुद्ध'मित्युभयविधव्यवहारदर्शनाच्च काव्यपदप्रवृत्तिनिमित्तं व्यासज्यवृत्ति । लक्षणयाऽन्यतरस्मिन्नपि तत्त्वात्–'एको न द्वा' वितिवन्न तदापत्तिः' इति । तदाग्रहमात्रावष्टम्भं, नहि प्रकाशकारादिभिः–'आस्वादव्यञ्जकता नाम काव्यत्वं, तच्च शब्देऽर्थे च विशिष्ट' मित्युक्तं क्वापि । नच दोषाभावादेरन्यथाऽनुपपत्त्याऽनुमीयतामित्यपि वाच्यम्, तदेकैकसद्भावे आस्वादव्यञ्जकताया उपपत्त्यसम्भवात्, तत्कार्त्स्न्यसम्भवे च काव्यसामान्यलक्षणस्याव्याप्त्यतिव्याप्तिग्रस्तत्वात् । इति दिक् ।

अथ काव्यलक्षणमभिधातुमवतरणिकामाधत्ते–**तदि**त्यादिना ।

**तत्तर्हि** यद्येवं प्रायः प्राचां सर्वाण्येव लक्षणानि दुष्टानि तदेति यावत् । **किंस्वरूपं** किंस्वरूपं लक्षणं यस्य तत्तथोक्तम् । स्वं लक्ष्यपदार्थोऽसाधारणचिह्नं वेतरभेदकतया रूप्यते लक्ष्यते ज्ञाप्यत इति यावत् अनेनेति स्वरूपम् । **काव्यं** कवेरिदं कर्म्मेति, कवेः कर्म्मविशेषेण सम्पाद्यमित्यर्थः । 'गुणवचनब्राह्मणादिभ्यः कर्म्मणि च ।' ५।१।१२४ इति ष्यञ् । 'स्या'दिति शेषः । इतीत्यपेक्षायाम् । **उच्यते ४ वाक्यमि**त्यादिना ।

**४ रसात्मकं** रस आस्वादविशेषः शृङ्गारादिरिति यावदात्मा यस्य तत् तथोक्तम् । **वाक्यं** पदोच्चयविशेषः । **काव्यम्** । इदमभिहितम्–'रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दीभवती'त्यादिश्रुत्युक्तनयेन रस एवात्मा, स च 'रस्यते आस्वाद्यते'इति समाख्याऽनुरोधेनानुभवैकविषयः शृङ्गारादिव्यपदेश्यश्चमत्कारविशेषः । असौ च काव्यस्य शरीरिभूते जीवनाधारः । शरीरं चैतस्य वाक्यम्, तस्मात्–काव्यस्य वाक्यरूपे रसव्यपदेशश्चमत्काररूप आत्माऽधिगम्यते, अतोऽनेन प्राणितं वाक्यमेव काव्यम् । यथा–प्राणिनः प्राणित्वावस्थायां शरीरस्य च चेतनस्यात्मनश्चाधिगमोऽपेक्ष्यते, तथा काव्यस्य काव्यत्वावस्थायां वाक्यस्य च चमत्कारस्य रसात्मनश्च समधिगमोऽपीति नितरां विभाव्यम् । शरीरमन्तराऽऽत्मेव वाक्यमन्तरा न रसश्चमत्कुरुते, तदिति वाक्यशरीरो रसः, एतस्य च तस्मिन् वाक्यरूपे शरीर एव गुणा दोषा रीतयोऽलङ्काराश्च, अथापि शरीरात्मनोरिव वाक्यरसयोरभेदाध्यवसायेन चेतनात्मनीव चमत्कारात्मनि तेऽस्मिन् कल्प्यंते । आनन्दात्मनोऽपि चेतनस्य शरीरित्वदशायामिव अलौकिकाह्लादात्मनोऽप्यस्य चमत्कारमात्रस्वरूपस्य रसस्य काव्यत्वदशायामुत्तमत्वादिभेदाध्यवसायः । इति ।

अथ 'रसात्मक'मिति पदार्थ विवृणोति–**रसस्वरूप**मित्यादिना ।

**रसस्वरूपं** रसस्वरूपमसाधारणं रूपमिति, तत्तथोक्तम् । **निरूपयिष्यामो** निरूप्य दर्शयिष्याम इति भावः । 'तृतीये परिच्छेद' इति शेषः। अत्र बहुत्वेन निर्देशो निरूपिष्यमाणस्य सर्वानुकूल्येन निरूपणीयतां द्योतयितुमिति बोध्यम् । एवंच–**रसो** निरूपिष्यमाणस्वरूपो लोकोत्तरचमत्कार इति यावत् । **एव** न तु वस्त्वलङ्कारमात्रध्वनिरित्यर्थः । यदाहुस्तर्कवागीशाः–'एवकारेण ध्वनिकाराद्युक्तस्य वाच्यार्थस्य वस्त्वलङ्कारमात्रव्यङ्ग्यस्य च व्यवच्छेदः ।' इति । अत्र मात्रपदेन रसव्यवच्छेदः । तथा च–वस्त्वलङ्कारध्वनिप्राधान्येऽपि यत्र रसश्चमत्कुरुते तत्र न काव्यत्वव्याघात इति ध्वन्यते । **आत्मा** (एतत्पदार्थं लक्षयति–)। **स्वरूपतया** स्वरूपभूतत्वेनेति भावः। '**सारतये**'ति पाठान्तरम् । 'आनन्दसान्द्रत्वेन श्रेष्ठस्वभावतये'ति विवृतिकाराः । **जीवनाधायको** जीवनस्य सत्तायाः 'उपादेयताया' इति विवृतिकाराः । आधायकः स्थापयिता 'प्रयोजक' इति विवृतिकाराः । (इति) । **यस्य** । 'तद्रसात्मकं वाक्यं काव्य' मिति शेषः। कुत इत्याह–**तेन** रसेनेत्यर्थः । **विना** । **तस्य** वाक्यस्येत्यर्थः । **काव्यत्वानङ्गीकारात्** । 'काव्यत्वाभावस्य प्रतिपादितत्वा' दिति पाठान्तरम् । ननु

तत्र रसो यथा–

"शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-

र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।

---

'उदितं विधुमण्डलम्', 'अस्तमितस्तपनः' इत्यादौ दूत्यभिसारिकाऽऽद्युक्ते 'अभिसरणीयः सम्प्रति वल्लभ' इत्यादेः काव्यस्याकाव्यत्वमेव तर्हि स्यादिति का गतिरित्याह–**रस्यते**। 'रस' आस्वादनस्नेहनयोः। आस्वाद्यते विभावादिनो-द्भूयाह्लादानुभवात्मना परिणमत इत्यर्थः। अन्ये त्वाहुः–'विभावादिसान्निध्येनाह्लादात्मना परिणममानोऽनुभूयते सहृदयै-रसावित्यर्थः।' इति। 'सार्वधातुके यक्।' ३।१।६७ इति भावे कर्म्मणि वा यक्। इतीत्येवम्। **रसः**। 'भावे।' ३।३।१८ इति घञ्। 'एरच्' ३।३।५६ इत्यच् वा। **इति व्युत्पत्तियोगात्। भावतदाभासादयः**। आदिपदं सन्ध्यादिग्राहकम्। **अपि। गृह्यन्ते**। 'एतेषामप्यास्वादविषयत्वस्य अखण्डितत्वादि' ति शेषः। एतेन 'उदितं विधुमण्डलम्' इत्यादौ दूत्याद्युक्ते वल्लभसमागमावसरलाभेन मध्येसपत्नि प्रसीदन्त्या नायिकाया हर्षगोपनायावहित्थाऽभिधेयस्य भावरूपस्य रसस्य योगादस्ति काव्यत्वम्, 'गौश्चलती' त्यादौ पुनर्नेति सूचितम्। नहि तत्रोभयत्र रससादृश्यं सचेत-साऽङ्गीकर्त्तुं शक्यते, यदि वाऽङ्गीक्रियेत, तर्हि काव्यत्वमप्यस्त्येव, तत्को नाम वारयितुमीशीत। सर्वेषामप्यैकमत्येन रसस्यैवात्मताऽङ्गीकृतत्वात्। तन्निर्गतमपानमार्गेण द्विवेदिनां खण्डनोद्योगसाफल्यम्। इति दिक्। अत्राहुस्तर्कवागीशाः-"अत्र न्यक्कारो ह्ययमेव..' इत्यादौ विधेयाविमर्शदोषदुष्टतयोद्देश्यविधेयभावबोधकानुपूर्वीविरहेणाकाङ्क्षाविरहाद्वाक्यस्यैवाभावः। काव्यज्ञानं विना रसपदार्थस्य दुर्निरूप्यत्वादन्योऽन्याश्रयः। रसघटकविभावादीनां काव्यघटितत्वात्। इति दूषणद्वयं कश्चित्पण्डितम्मन्यः उपन्यस्यति, तदतीव मन्दम्। आनुपूर्वीविशेषरूपाया आकाङ्क्षाया विरहेऽपि श्रोत्रजिज्ञासारूपायास्तस्या विद्यमानत्वाद्वाक्यत्वाक्षतेः। तादृशाकाङ्क्षाया एव काव्यघटकत्वेन ग्रन्थकृतैवाङ्गीकारात्। यद्वा–सङ्कीर्त्तनत्वगर्भितत्वदोषदुष्टयोः पदसमुदाययोरासत्तिकल्पनेन वाक्यत्वं कल्प्यते, अन्यथा काव्यदोषत्वमेव न स्यात्। तथाऽत्रापि कल्पितानुपूर्वीयोगादस्य वाक्यत्वाङ्गीकारादखण्डास्वादविशेषविषयत्वरूपस्य भावादिसाधारणस्य ग्रन्थकृतैव निरुक्तत्वाच्च। अखण्डास्वादविशेषत्वं चानन्दसंवलितज्ञानविषयत्वमेवात्र भावादिसाधारणं वाच्यम्। नच 'ब्राह्मण! पुत्रस्ते जातः' इत्यादिवाक्ये आनन्दसंवलि-तज्ञानजनकेऽतिव्याप्तिस्तद्वारणाय काव्यजन्यत्वं विशेषणमुपादेयं, तथा सति अन्योऽन्याश्रयदोष इति वाच्यम्। अत्र हि शाब्दबोधानन्तरमेवानन्दो जायते तयोः पौर्वापर्य्यक्रमस्थितोऽपि काललाघवादुत्पलपत्रशतव्यतिरेकवत् स न गृह्यते। काव्ये तु शाब्दबोधानन्तरमलौकिकस्वादनाख्यव्यापारादिवलादेकमेवानन्दसंवलितमलौकिकं ज्ञानम्। तदेवास्माभी रसपदेनोच्यत इति। आनन्दसंवलितत्वमिह तादात्म्यसम्बन्धेनानन्दविशिष्टत्वम्, न तु जनकतासम्बन्धेन, विजातीय-योर्ज्ञानानन्दयोस्तादात्म्याङ्गीकारोऽलौकिके न दोष इति सर्वमवदातम्।" इति।

उदाहर्त्तुमुपक्रमते तत्रेत्यादिना।

**तत्र** तेषु रसभावतदाभासादिषु काव्यात्मभूतेषु मध्य इत्यर्थः। **रसः** शृङ्गारादिव्यपदेश्य आह्लादविशेषः। **यथा**।–

"**बाला**ऽप्रौढा कौतुकमात्रोत्सुकेति यावत्। **वासगृहं** रमणमन्दिरम्। 'भोगावासो वासगृह' मिति हारावली। **शून्यं** परिजनादिसञ्चारहीनम्। **विलोक्य** 'शयानैवे' ति शेषः। अन्यथा पतिनिद्राभङ्गे समाधातुं न शक्नुयादिति भावः। एतेन कौतुकौचित्यमुद्बोधितम्। **शयनाच्छय्यायाः**। 'शयनं सुरते निद्राशय्ययोश्च नपुंसकम्।' इति मेदिनी। **किञ्चिन्न** तु सर्वथा। अपरपार्श्वेनेति भावः। **शनैर्न** तु झटिति। यथा वलयादिक्वाणेन पार्श्वपरिवर्त्तनेन वा पतिर्न बुध्येतेति भावः। एतेन पत्युर्निद्राभङ्गभयं दर्शितम्। **उत्थायोत्थाय** इत्यर्थः। **निद्राव्याजं** निद्रायाः शयनस्य व्याजः कपटस्तदाचरणमिति यावत्, इति, तम्। निद्रैव व्याज इति वा, तम्। व्याजेन निद्रेति वा, तम्। 'आहिताग्न्या'-दित्वात्परनिपातः। एतेन पत्युः प्रौढत्वं कौतुकाचरणदाक्षिण्यं च व्यज्येते। **उपागतस्य**। पत्युर्न तु अन्यस्य दयितस्य। एतेनोपनायकानासक्तत्वं सूचितम्। **मुखम्**। **सुचिरं** यावद्बुद्धिसंचारस्तावदित्यर्थः। **निर्वर्ण्य** निश्शेषं वर्णयित्वा अयं जागर्ति न वेति संशयापनोदनपुरःसरम्, नायं जागर्त्तीति निर्धार्य्येति यावत्।

**विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं**
**लज्जा नम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥ ४ ॥" इति।**

**अत्र हि सम्भोगशृङ्गारः। भावो यथा महापात्रराघवानन्दसान्धिविग्रहिकाणाम्—**

**"यस्यालीयत शल्कसीम्नि जलधिः पृष्ठे जगन्मण्डलं—**
**दंष्ट्रायां धरणी नखे दितिसुताधीशः पदे रोदसी।**

---

**विश्रब्धं** विश्रब्धा 'नितान्तमयं शेते, न चायं ममेहितमवगन्तुं क्षमते' इति विश्वासङ्गता यथा भवेत्तथेति तथोक्तम्। क्रियाविशेषणतया क्लीबत्वम्। **परिचुम्ब्य** परितः कपोलयोर्नेत्रप्रान्तयोश्च सर्वतश्चुम्बित्वा। अत एव— **जातपुलकां** जाता उत्पन्नाः पुलका रोमोद्गमरूपा विकारा यत्र तां तथोक्ताम्। रोमाञ्चितामित्यर्थः। 'पुलकः पुनः। रोमाञ्चकण्टकौ रोमविक्रिया रोमहर्षणम्।' इति हैमः। एतेन पत्युराखादोद्रेको निद्राव्याजकारित्वं च द्योतिते। **गण्डस्थलीं** गण्डयोः कपोलयो रोमोद्गमक्षेत्रभूतया स्थली स्वतः सिद्धा भूमिरिति ताम् 'गण्डौ कपोलौ' वित्यमरः। 'अकृत्रिमा स्थली' इति कोशः। रोमोद्गमस्य सर्वाङ्गीणत्वेऽपि तत्रैव दर्शनादिदमुक्तम्। अत एव— स्थलीत्वेन निर्देशो निर्देशः। **आलोक्य**। **लज्जा** लज्जावती। लज्जतेऽसाविति तथोक्ता। पचादित्वादच्। अत एव— **नम्रमुखी** नम्रं मुखं लक्षणया मस्तकं यस्याः सेति तथोक्ता। 'अनेन सर्वं ममेहितं बुद्धम्, न च मया किमपि कर्तुं पारितम्, यत्र च प्रार्थनयाऽपि नाहं प्रावर्त्तिषि, तत्र स्वयं निद्राव्याजेन पराजिते' ति विनतमस्तकेति भावः। अत एव **हसता**। एतेनैतस्योद्बुद्धरहस्यत्वं स्वाभिलषितार्थपूर्त्या कृतकार्य्यत्वं च बुच्यते। **प्रियेण** प्रेमपात्रेण पत्येति भावः एतेनोभयोर्मिथोऽनुरागित्वं दर्शितम्। **चिरं** सम्भोगस्वीकारावधि। **चुम्बिता**। अमरुशतकस्येदं पद्यम्, अत्र शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥

उदाहरणं सङ्गमयति—अत्रहीत्यादिना।

**हि** यतः। अत्रास्मिन्नुदाहृते पद्य इत्यर्थः। **सम्भोगशृङ्गारो**ऽभिव्यज्यते। इदमुक्तम्—अत्र नायिकानायकौ परस्परमालम्बनं शून्यगृहवास उद्दीपनम्, चुम्बनमनुभावश्च लज्जाहासौ व्यभिचारिणी चेत्येषां—संयोगात् सहृदयहृदयनिष्ठा रतिः शृङ्गाररूपेणावतिष्ठते। इदमेवोत्तमं काव्यमित्यन्ये। इति।

अथ भावस्य रसात्मकत्वेन काव्यत्वमुदाहरति—भाव इत्यादिना।

**महापात्रराघवानन्दसान्धिविग्रहिकाणां** महापात्राणि प्रधानमन्त्रिणो ये राघवानन्दास्तेऽमी सान्धिविग्रहिकास्तेषाम्। 'कृता'विति शेषः। महान्ति (प्रधानभूताः) पात्राणि मन्त्रिण इति महापात्राणि। प्रधानमन्त्रिण इत्यर्थः। 'पात्रं तु भाजने योग्ये पात्रं तीरद्वयान्तरे। पात्रं स्रुवादौ पर्णे च राजमन्त्रिणि चेष्यते ॥' इति विश्वः। राघवानन्दा राघवानन्दनामानश्च ते सान्धिविग्रहिकाः सन्धिविग्रहकर्म्माध्यक्षाः। सन्धिविग्रहौ प्रयोजनमेषामिति सान्धिविग्रहिकाः। 'प्रयोजनम्।' ५।१।१०९ इति ठञ्। यद्वा—सन्धिविग्रहौ रक्षन्तीति तथोक्ताः। सन्धेर्विधातारः परिपोषकाश्च विग्रहस्य शत्रून्विद्राव्य रक्षकास्तस्य वा प्रथमत एव निवर्तका निवर्तनाय वा नियतकर्तव्या इति भावः। 'रक्षति।' ४।४।३३ इति ठक्। **भावो** भावात्मा रस इत्यर्थः। **यथा**—

'**यस्य शल्कसीम्नि** शल्कस्य वल्कस्य मत्स्यत्वच इति यावत् सीमा पर्य्यन्तभागस्तत्रेति तथोक्ते। एवं च—यस्य मत्स्यस्य त्वचः प्रान्तभाग इति निष्कृष्टोऽर्थः' 'शल्कं तु शकले वल्के' इति मेदिनी। **जलधिः** समुद्रः। **अलीयत** तिरोहित इवाभूदिति भावः। यस्य **पृष्ठे**। **जगन्मण्डलम्** (कर्तृ)। अलीयत। यस्य—**दंष्ट्रायाम्**। **धरणी** पृथ्वी। अलीयत। यस्य—**नखे** न तु नखेषु। एतेनास्यात्यन्तं गभीरत्वमावेदितम्। **दितिसुताधीशो** दितिसुतानां दैत्यानां लक्षणया दानवानामप्यधीशोऽधिपतिरिति तथोक्तः। 'हिरण्यकशिपु'रिति भावः। अलीयत। यस्य—**पदे** चरणे **रोदसी** द्यावापृथिवी। 'रोदश्च रोदसी चापि दिवि भूमौ पृथक् पृथक्। सहप्रयोगेऽप्यनयो रोदः स्यादपि रोदसी।'

क्रोधे क्षत्रगणः, शरे दशमुखः, पाणौ प्रलम्बासुरो,
ध्याने विश्व, मसावधार्म्मिककुलं कस्मैचिदस्मै नमः॥ ५॥'

अत्रहि भगवद्विषया रतिः। रसाभासो यथा—

'मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्त्तमानः।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णशारः॥ ६॥'

---

इति विश्वः। अत्र वचनविपरिणामेन—'अलीयाताम्' इति योज्यम्। यस्य—**क्रोधे**। **क्षत्रगणः** क्षत्रियकुलम्। अलीयत। यस्य—**शरे** वाणे तदग्र इति यावत्। **दशमुखो** रावणः। अलीयत। यस्य-**पाणौ** पाणितले प्रहते इत्यर्थः। **प्रलम्बासुरः** प्रलम्बनामाऽसुर इत्यर्थः। अलीयत। यस्य **ध्याने** समाधावित्यर्थः। **विश्वं** समस्तं जगत् (कर्तृ)। अलीयत। यस्य—**असौ** खड्गे नन्दकाख्ये करवाल इति यावत्। 'असिः खड्गे नदीभिदि।' इति हैमः। 'प्रहते' इति शेषः। **अधार्म्मिककुलम्**-धार्मिकाणां परित्यक्तस्वधर्माणां धर्म्ममर्य्यादाया उच्छेदकानां वा कुलमिति तथोक्तम् (कर्तृ)। धर्म्मं चरत्यनुतिष्ठतीति यावत्, इति धार्म्मिकस्तद्विरुद्धोऽधार्म्मिकः। 'धर्म्मं चरति।' ४।४।४१ इति ठक्। अलीयत। **कस्मैचिद**निर्वचनीय-स्वरूपाय। 'तस्मै' इति शेषः। **अस्मै** आत्मना विषयीक्रियमाणत्वेनेदमा निर्देश्यायात एव प्रत्यक्षभूतायेति भावः। **नमः**॥ अत्र प्रतिसप्तम्यन्तं 'यस्ये'तिषष्ठ्यन्तमनुयुज्यते, प्रतिकर्तृपद'मलीयते'ति क्रियापदं चेति बोध्यम्। एवं च 'मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः। रामो रामश्च रामश्च बुद्धः कल्कीति ते दश॥' इत्युक्तानां दशावताराणां चरित्राणि क्रमतोऽत्र वर्णितानीति बोध्यम् शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक्॥ ५॥ **इति।**

अथोदाहरणीयमवगमयति—**अत्रे**त्यादिना।

**हि** यतः। **अत्रा**स्मिन्नुदाहृते पद्ये। **भगवद्विषया** भगवान् विषयो यस्याः सेति तथोक्ता। **रति**र्भक्तिरूपा प्रीतिरित्यर्थः। (इदमुक्तम्—भगवानालम्बनम्। तस्य च लोकोत्तरचारित्र्यमुद्दीपनम्, तेन च स्वात्मापकर्षनिवेदनमनुभावः, तदभिव्यङ्ग्याः स्मृतिहर्षाद्याः सञ्चारिणो भावाश्च; तदिति प्रतीयमाना भगवद्विषया रतिः सहृदयानां चेतसि कमपि रसं (चमत्कारम्) भावयतीति भावपदव्यपदेश्याऽसौ काव्यत्वबीजम्। इदं च मध्यमकाव्योदाहरणमित्यन्ये। इति।)

अथ रसाभासमुदाहर्तुमुपक्रमते—**रसाभास** इत्यादिना।

**रसाभासो** रसस्य चमत्कारविशेषस्याभास ईषत् प्रतीतिरिति तथोक्तः। **यथा—**

**द्विरेफो** द्वौ रेफौ वर्णविशेषौ यस्य स इति तथोक्तः। भ्रमरशब्द इत्यर्थः। लक्षणया तत्पदवाच्यः। अत एवाहुः। 'शब्दधर्म्मेणाप्यर्थस्य व्यपदेशो दृश्यते, यथा भ्रमरशब्दस्य द्विरेफत्वात्, द्विरेफो भ्रमरः।' इति। 'द्विरेफपुष्पलिड्भृङ्गषट्पद-भ्रमरालयः।' इत्यमरः। **स्वां** स्वकीयामुपचारात्तामिवाभिमतामित्यर्थः। **प्रियां** प्रेमास्पदभूतां भ्रमरीमित्यर्थः। **अनुवर्त्तमानो**ऽनुगतो भूत्वा चेष्टमान इति भावः। 'सत्रि' ति शेषः **कुसुमैकपात्रे** कुसुममेवैकमभिन्नं पात्रं तत्रेति तथोक्ते। **मधु** मकरन्दम्। 'मधु मद्ये पुष्परसे क्षौद्रेऽपी'त्यमरः। **पपौ** पीतवांस्तत्पीतशेषमास्वादि-तवानिति भावः। **कृष्णशारः** कृष्णश्चासौ शारः शबलश्चेति तथोक्तः। 'वर्णो वर्णेन।' २।१।६९ इति समासः। शबलोऽनेकवर्णः। 'कृष्णसार' इति पाठे तु कृष्णेन कृष्णवर्णेन सारः श्रेष्ठ इति तथोक्तः। 'तृतीया तत्कृतार्थेन गुणवचनेन।' २।१।३० इति समासः। 'शारः स्याच्छबले वाच्यलिङ्गः पुंसि समीरणे।' इति। 'सारो बले स्थिरांशे च मज्जि पुंसि जले धने। न्याय्ये क्लीबे त्रिषु वरे' इति च मेदिनी। 'कृष्णसा (शा)रः शिंशिपायां मृगभेदे नुहीतरौ।' इति हैमः। **च**। **स्पर्शनिमीलिताक्षीं** स्पर्शेन स्पर्शजन्यसुखेन निमीलिते अक्षिणी यस्यास्तामिति तथोक्ताम्। **मृगीम्**। **शृंगेण**। **अकण्डूयत** घर्षितवान्। 'कण्डूञ्' गात्रविघर्षणे। 'कण्ड्वादिभ्यो यक्॥' ३।१।२७ इति यक्॥ अत्र 'कुसुमैकपात्रे' इति रूपकं, 'पपौ प्रिया' मित्यनुप्रासश्च। क्रियास्वाभाव्यात्स्वभावोक्तिश्च। इन्द्रवज्रोपे-न्द्रवज्रयोरुपजातिश्छन्दः। तदुक्तं यथा 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः।' इति। इदं च पद्यं कुमार-सम्भवस्थम्॥ ६॥' इति।

**अत्र सम्भोगशृङ्गारस्य तिर्य्यग्गतत्वाद्रसाभासः । एवमन्यत् ।**

**काव्ये पुनर्दोषाः किंस्वरूपा इत्युच्यन्ते–**

**५ दोषास्तस्यापकर्षकाः ।**

**श्रुतिदुष्टत्वापुष्टत्वादयः काणत्वखञ्जत्वादय इव शब्दार्थद्वारेण देहद्वारेणेव, व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो मूर्खत्वादय इव साक्षात्काव्यस्यात्मभूतं रसमपकर्षयन्तः काव्यस्यापकर्षका इत्युच्यन्ते । एषां विशेषोदाहरणानि वक्ष्यामः । गुणादयः किंस्वरूपा इत्युच्यन्ते–**

---

अत्रोदाहरणीयमवगमयति–अत्रेत्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्य इत्यर्थः । **सम्भोगशृङ्गारस्य** भ्रमर्य्यालम्बनस्य प्रकरणावगतवसन्तसमयोद्दीपनस्य भ्रमर्य्यनुवर्त्तनाद्यनुभावस्य तदभिव्यङ्ग्यदैन्यसञ्चारिभावस्य, मृग्यालम्बनस्य च तत्सौन्दर्योद्दीपनस्य मृगीलालनानुभावस्य तदभिव्यङ्ग्यदैन्यसञ्चारिभावस्य । **तिर्य्यग्विषयत्वात्** तिर्य्यग् द्विरेफः कृष्णसारो वा विषयो यस्य तस्य भावस्तत्त्वं तस्मात्तथोक्तात् । **रसाभासो** रसस्याभासो न्यग्भावितत्वेन स्फुरणमिति तथोक्तः । इदमुक्तम्–प्रकृते रसस्याभास इति काव्यात्मनो यथातथं सद्भावात् काव्यत्वमिति । इदं चावरं काव्यमित्यन्ये । अत्रायं पर्य्यालोकः—रसः काव्यस्यात्मा, असौ च 'रस्यत' इति व्युत्पत्तियोगात् सहृदयमात्रानुभाव्यश्चमत्कारापरपर्य्यायं आस्वादविशेष आनन्दात्मा । शृङ्गाराद्याश्च नास्मादतिरिच्यन्ते, किन्तु-सुरनरपश्वाद्यात्मनामभिन्नत्वेऽपि तत्तच्छरीरोपाधिभेदाद् भिन्नत्वमिव शृङ्गारादिभेदाच्छृङ्गारादिरसानामभिन्नत्वेऽपि भिन्नत्वं कल्प्यते । तदिति स्फुटमेतस्योत्कृष्टत्वानुत्कृष्टत्वादि । अत एव– 'शून्यं··' इत्युत्कृष्टम्, 'यस्या..'इति तन्न्यूनम्, 'मधु..' इति पुनस्ततोऽपि न्यूनं काव्यम्, तदात्मनस्तथैव भासमानत्वात् । 'मधु..' इत्यत्र न्यूनादपि न्यूनतया भासमानत्वेनैव भासमात्रत्वं कल्प्यते, न च स्वरूपान्वेषे । इति । **एवं** यथोदाहृतं तथा । **अन्यत् ।** **अपि** 'उदाहरणान्तरं गवेषणीय' मिति शेषः । तत्र भावाभासो यथा मम 'मुग्धे! जयश्रियमुपेत्य रणाङ्गणेऽयं साकं तयैव विहरिष्यति हन्त तत्र । मैवं त्वदर्थमपहातुमसूनपीशे किं तैर्द्विषद्भिरुपभुक्तसुधां पुनस्ताम् ॥' इत्यत्र वीरस्य दयितायामनुरागेण जयश्रियामप्यनुरागत्यागस्य कर्त्तव्यत्वं दर्शितं, तदिदमनौचित्यमावहद्तेदाभासमात्रतां लक्षयति । इति दिक् ।

अथ दोषस्वरूपमभिधातुमपेक्षां दर्शयति–**दोषा** इत्यादिना ।

**काव्ये । पुनः** 'यदि वस्तुतोऽकिञ्चित्करास्तर्हि' ति भावः । **दोषा** वक्ष्यमाणनानाभेदा दुःश्रवत्वाद्या इत्यर्थः । **किंस्वरूपाः** किंलक्षणाः । **इतीत्यपेक्षायाम् । उच्यन्ते । ५दोषा** इत्यादिना ।

**५ तस्य** निरुक्तस्वरूपस्य काव्यस्येत्यर्थः । **अपकर्षका** न्यूनत्वप्रत्यायका इति भावः । **दोषाः** । 'भवन्ती'ति शेषः ।

तदेव विवृणोति–**श्रुतिदुष्टत्वापुष्टत्वादय** इत्यादिना ।

**श्रुतिदुष्टत्वापुष्टत्वादयः** श्रुतिदुष्टत्वश्चापुष्टत्वश्चेति तौ आदी येषां ते तथोक्ताः । श्रुतौ दुष्टत्वं यस्मात्स श्रुतिदुष्टत्वः । न पुष्टत्वं यस्मात् (अर्थे) सोऽपुष्टत्वः । तथाच– श्रुतिदुष्टत्वादयः (दुःश्रवत्वादयः) शब्ददोषाः, अपुष्टत्वादयः (अपुष्टार्थत्वादयः) पुनर्दोषा इति निष्कृष्टम् । दोषा इति शेषः। **काणत्वखञ्जत्वादयः । इव ।** 'सन्तः' इति शेषः । **देहद्वारेण** देहः स्थूलशरीरं तद्द्वारेति भावः । **इव** । तथा–**व्यभिचारिभावादे**र्व्यभिचारिभावादिसम्बन्धिन इत्यर्थः । **स्वशब्दवाच्यत्वादयः** स्वशब्देन वाच्यत्वं यत्रेति स आदिर्येषां ते तथोक्ताः । अत्र व्यधिकरणो बहुव्रीहिः । यद्वा स्वशब्देन वाच्यत्वमिति, तदाश्रित्य पुनः प्रवृत्तो दोष उपचारात्स्वशब्दवाच्यत्वमिति गीयते । 'दोषा' इति शेषः । **मूर्खत्वादयः । इव । साक्षात्** स्वसम्बन्धद्वारेणेति भावः । 'सूक्ष्मशरीरद्वारेणे' ति शेषः । **काव्यस्य । आत्मभूतम् । रसम् । अपकर्षयन्तः** 'सन्त' इति शेषः । **काव्यस्य । अपकर्षकाः । इतीत्येवम् । उच्यन्ते** । अथ–**एषां** दोषाणाम् । **विशेषोदाहरणानि** विशेषाणां भेदानामुदाहरणानीति तानि तथोक्तानि । **वक्ष्यामः** 'सप्तमे परिच्छेदे' इति शेषः ।

**शब्दार्थद्वारेण** शब्दद्वाराऽर्थद्वारा चेति भावः । शब्दार्थावेव द्वारं तेनेति विग्रहः ।

अथ गुणादीनभिधातुमपेक्षां दर्शयति– **गुणादय** इत्यादिना ।

**गुणादयो** गुणरीत्यलङ्कारा इत्यर्थः । **किंस्वरूपाः** किंलक्षणाः । **इतीत्यपेक्षायाम् । उच्यन्ते–**

६ उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः ॥ ३ ॥

गुणाः शौर्य्यादिवत्, अलङ्काराः कटककुण्डलादिवत्, रीतयोऽवयवसंस्थानविशेषवत्, देहद्वारेणेव शब्दार्थद्वारेण तमेव काव्यस्यात्मभूतं रसमुत्कर्षयन्तः काव्यस्योत्कर्षका इत्युच्यन्ते। इह यद्यपि गुणानां रसधर्मत्वं, तथाऽपि गुणशब्दोऽत्र गुणाभिव्यञ्जकशब्दार्थयोरुपचर्य्यते। अत एव-गुणाभिव्यञ्जकाः शब्दा रसस्योत्कर्षका इत्युक्तं भवतीति प्रागेवोक्तम्। एषामपि विशेषोदाहरणानि वक्ष्यामः।

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापनपरमाचार्य्यकविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहापात्र-श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे काव्यस्वरूपनिरूपणो नाम प्रथमः परिच्छेदः।

---

६ उत्कर्षहेतव इत्यादिना।

६ गुणालङ्काररीतयः। 'अल्पाच्तरम्' २।२।३४ इत्यनेन रीतिशब्दस्य पूर्वनिपातस्तु नाशङ्क्यः।'लक्षणहेत्वोः।' ३।२।१२६ इत्यनेन तस्यानित्यत्वज्ञापितत्वात् उत्कर्षहेतव 'रसस्ये'ति शेषः। प्रोक्ताः। 'ताः स्यु' रिति पाठे तु ता उपादेयात्मना प्रसिद्धाः।' इति 'गुणा' इति विशेषणत्वेन योज्यम् ॥ १३ ॥

तदेव विवृणोति–गुणा इत्यादिना।

गुणा माधुर्य्यादयः। शौर्य्यादिवत्। अलङ्कारा अनुप्रासोपमादयः। कटककुण्डलादिवत्। रीतयो वैदर्भ्याद्याः। अवयवसंस्थानविशेषवदवयवानां संस्थानं सङ्घटनं तस्य विशेषश्चारुत्वप्रत्यायकः प्रकार इति तेन तुल्यमिति तद्वत्। देहद्वारेण। इव। शब्दार्थद्वारेण। तं प्रसिद्धम्। एव। काव्यस्य। आत्मभूतम्। रसम्। उत्कर्षयन्त उल्लसितं कुर्वन्तः। 'सन्त' इति शेषः। काव्यस्य। उत्कर्षका उत्कर्षहेतवः। इतीत्येवम्। उच्यन्ते। ननु गुणानामात्मभूतरसधर्मत्वे 'देहद्वारेणे'ति कथमुक्तमित्याह–इहेत्यादिना। इहास्मिन् साहित्यशास्त्रे। यद्यपि। गुणानां माधुर्य्यादीनाम्। रसधर्म्मत्वम्। 'उक्त'मिति शेषः। तथाऽपि।' अत्रास्मिन्प्रकरणे। गुणशब्दः। गुणाभिव्यञ्जकशब्दार्थयोः गुणानां स्वेषामभिव्यञ्जकाविति, तथाभूतौ यौ शब्दार्थौ तयोस्तथोक्तयोः। उपचर्य्यते लक्षणया प्रवर्त्यते। अतः। एव। गुणाभिव्यञ्जकाः। शब्दा लक्षणया– अर्थाश्चेत्यर्थः। रसस्य काव्यात्मभूतस्य चमत्कारविशेषस्य। उत्कर्षकाः। 'भवन्ती'ति शेषः। इतीत्येवम्। उक्तं प्रतिपादितम्। भवति।' इतीत्येतत्। प्राक् पूर्वं प्रकाशोक्तलक्षणसमीक्षाऽवसर इति यावत्। एव। उक्तम्। "ननु 'शब्दार्थौ सगुणा' वित्यनेन गुणाभिव्यञ्जकौ शब्दार्थौ इत्यादिनेति शेषः। एषां गुणादीनाम्। अपि न केवलं दोषाणामिति भावः। विशेषोदाहरणानि विशेषाणां भेदानामुदाहरणानीति तानि तथोक्तानि। वक्ष्यामः। 'अष्टमे दशमे नवमे च क्रमात्परिच्छेदे' इति शेषः। यत्तूक्तं तर्कवागीशैः–'ननु गुणाभिव्यञ्जकपदविन्यासस्य रीतित्वेन निरूपणीयतया रीतेरेतेनैव सङ्ग्रहे पृथक् तदुपादानमनर्थकमिति तदेतच्चिन्त्यम्।' इति तदसत्, रीतीनां रसधर्मत्वाभावाद्, गुणानां पुना रसधर्म्मत्वात्स्फुटं पार्थक्यात्।

प्रकरणमुपसंहरति इतीत्यादिना।

इति समाप्तः। श्रीमन्नारायण...इति। श्रीमानसौ नारायणस्तस्य चरणारविन्दे तयोर्मधुव्रत इव मधुव्रतः, साहित्यमेवार्णवस्तस्य कर्णधार इव कर्णधारः, ध्वनेः प्रस्थापनं तस्य परमाचार्य्यः, कवीनां सूक्तयस्ता एव रत्नानि तेषामाकर इवाकरः, अष्टादशभाषाः संस्कृतप्राकृताद्या अष्टादशसङ्ख्याका भाषास्ता एव वारविलासिन्यो वेश्यास्तासां भुजङ्गो जारः, सन्धिविग्रहयो रक्षक इति सान्धिविग्रहिकः, महापात्रं प्रधानमन्त्री, असौ श्रीविश्वनाथकविराजस्तस्य कृतिस्तत्रेति तथोक्तायाम्, तत्स्वरूपभूत इति भावः। साहित्यदर्पणे। काव्यस्वरूपनिरूपणः काव्यस्य स्वरूपनिरूपणं यत्र स इति तथाभूतः। नाम प्रसिद्धः। प्रथमः। परिच्छेदः। अभूदिति शेषः। शम्।

रसमयं सकलं कविवैभवं विविधभावविभावविभावितम्।
झटिति चेतसि कस्य चमत्कृतिं न निवहेन्निवहेन सुधोदधेः ॥ १ ॥

इति श्रीभारद्वाजगोत्रप्रभूतेन सहृदयशिरोमणिश्रीशिवनाथसूरिसूनुना श्रीशिवदत्तकविरत्नेन विरचितायां रुचिराख्यायां साहित्यदर्पणव्याख्यायां प्रथमः परिच्छेदः।

# द्वितीयः परिच्छेदः।

वाक्यस्वरूपमाह-

**७ वाक्यं स्याद् योग्यताऽऽकाङ्क्षाऽऽ- सत्तियुक्तः पदोच्चयः।**

योग्यता पदार्थानां परस्परसम्बन्धे बाधाभावः, पदोच्चयस्यैतदभावेऽपि वाक्यत्वे 'वह्निना सिञ्चती'-त्यादिरपि वाक्यं स्यात्।

---

समाश्लिष्टं शक्त्या, महितमुपचारेण महताम्,
अभिव्यक्तं व्यक्त्या सहृदयजनानां दयितया।
कवित्वस्याधानं स्वयमखिललोकस्य च रसं
चमत्कारस्यैकं पदमभिनुवे दिव्यपुरुषम्॥ १॥

पूर्वपरिच्छेदे 'वाक्यं रसात्मकं काव्य' मित्यभिहितम्, तत्र किं नाम वाक्यं स्यादिति प्रकृतसिद्ध्यनुकूलचिन्ता-विषयतारूपमुपोद्घातं सङ्गमयन् प्रकरणान्तरं निबध्नंस्तस्यावतरणिकामाधत्ते **वाक्ये** त्यादिना।

**वाक्यस्वरूपं** वाक्यस्य काव्यशरीरत्वेनाभिमतस्य स्वरूपं लक्षणमिति तत्तथोक्तम्। **आह** कथयति। तथा च-काव्यस्यात्मानात्मनोर्विभज्य प्रतिपादयितव्ये स्वरूपे तत्र तावदात्मस्वरूपस्य सूक्ष्मदृगेकदृश्यतया पुनर्दर्शनीयतां मन्वानोऽनात्मनः स्वरूपं-**वाक्यं स्या** दित्यादिना दर्शयतीति निष्कृष्टम्।

**७ योग्यताऽऽकाङ्क्षाऽऽसत्तियुक्तो** योग्यता चाकाङ्क्षा चासत्तिश्चेति, ताभिर्युक्त इति तथोक्तः। 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति युक्तपदस्य प्रत्येकं सम्बन्धः। तथा च योग्यतायुक्त आकाङ्क्षायुक्त आसत्तियुक्तश्चेत्यर्थः। **पदोच्चयः** पदानां वक्ष्यमाणस्वरूपाणां सुबन्तानां तिङन्तानां वा शब्दविशेषाणामुच्चयः समुच्चय इति तथोक्तः। 'सुप्तिङन्तं पदम्।' १।४।१४। अत्र बहुवचनमविवक्षितम्। तथा च-पदे च पदानि चेति पदानीत्येकशेषः समासः। उच्चयनं समुदायात्मनाऽवस्थानमुच्चयः। 'एरच्।' ३।३।५६ इत्यच्। **वाक्यं** तत्सञ्ज्ञक इत्यर्थः। उच्यते इति वाक्यम्। 'ऋहलोर्ण्यत्।' ३।१।१२४ इति ण्यत्। 'चजोः कु घिण्यतोः।' ७।३।५२ इति कुत्वम्। **स्यात्**। तथा च-योग्यताऽऽ-दियुक्तत्वे सति पदयोः पदानां वा समुदायात्मना वर्त्तमानत्वं वाक्यत्वमिति निष्कृष्टम्।

ननु 'तिङ्सुबन्तचयो वाक्यंक्रिया वा कारकान्विता।' इत्यमराद्युक्तदिशा योग्यताऽऽदिविरहितोऽपि पदोच्चयो वाक्यमित्येव वाच्यमिति चेन्नेत्यभिप्रायेण योग्यताऽऽदिपदार्थान् विवृण्वंस्तत्सापेक्षतां दर्शयति--**योग्यते**त्यादिना।

**पदार्थानां** पदानामर्था इति तेषां तथोक्तानाम्। **परस्परसम्बन्धे** परस्परमन्योऽन्यमेकस्यापरेण साकमिति यावत् सम्बन्धोऽन्वय इति तस्मिंस्तथोक्ते। 'हेतुभूत' इति शेषः। 'न तत्र करुणाहेतु' रितिवत्षष्ठ्यर्थे सप्तमी। **बाधाभावो** बाधस्य विपरीतबोधस्याभावोऽनुदय इति तथोक्तः। '**योग्यता** ज्ञेया' इति शेषः। एवं च--पदसम्बन्धिनामर्थानामन्वयबोधे हेतुभूतो यो बाधाभावस्तत्पदवाच्ये योग्यतापदार्थ इति फलितम्। प्रत्यक्षादिकारणीभूतबाधाभावस्य वारणाय भूतान्त-विशेषणन्यासः। 'जलेन सिञ्चति, वह्निना दहती'त्यादिषु श्रोतॄणां सेचनदहनादिति जलवह्न्यादिकरणकत्वाभाववन्तीति विप-रीतबोधरूपस्य बाधस्य स्वत एवाभाव इति स्फुटं लक्षणसमन्वयः। योग्यता च प्रमारूपैव ग्राह्या। अन्यथा-तत्र तत्र भ्रम-वतां श्रोतॄणां जलेन सिञ्चति, वह्निना दहतीत्यादीनां सेचनदहनादीनि जलवह्न्यादिकरणकत्वाभाववन्तीति विपरीतबोधरूपस्य बाधस्य सर्वथाऽनपगम इति वाक्यत्वं माभूत्। ननु तादृशयोग्यतारूपायाः प्रमाया अप्रसिद्धिरिति तद्बाधस्याप्यप्रसिद्धिरित्येवं पुनस्तदभावस्याप्रसिद्धिरिति स्फुटं तस्याः शशविषाणवदलीकत्वमिति चेत्? एवं व्याख्येयम्--**पदार्थानां** परस्परसम्बन्धे परस्परं यः सम्बन्धस्तत्र तन्निरूपण इति यावत्। **बाधाभावः** सद्भावः। **योग्यता**। तथा च-तात्पर्य्यविषयीभूतसम्बन्धेन तात्पर्य्य-निरूपकाणां पदार्थानां परस्परं यः सम्बन्धस्तन्निरूपणे सद्भावो योग्यतापदार्थ इति निष्कृष्टम्। भवति हि पदार्थान्तरेण

**आकाङ्क्षा प्रतीतिपर्य्यवसानविरहः, स च श्रोतुर्जिज्ञासारूपः। निराकाङ्क्षस्य वाक्यत्वे-'गौरश्वः पुरुषो हस्ती'त्यादीनामपि वाक्यत्वं स्यात्। आसत्तिर्बुद्धचविच्छेदः, बुद्धिविच्छेदेऽपि वाक्यत्वे इदानीमुच्चारितस्य'देवदत्त'पदस्य दिनान्तरे उच्चारितेन पदेन सङ्गतिः स्यात्।**

---

पदार्थान्तरस्य सद्भावः, किन्त्वसौ तात्पर्य्यनिरूपकाणामेव पदार्थानाम्, एषां च तात्पर्यनिरूपकत्वं तात्पर्यविषयीभूतेनैव सम्बन्धेनेति बोध्यम्। दहनादिषु विद्यमानस्य वह्न्यादिकरणकत्वस्य सेचनादिषु येन केनापि परम्परासम्बन्धेन सद्भावाङ्गीकारे 'वह्निना सिञ्चती' त्यादीनामपि वाक्यत्वं प्रसज्येत, तदिति तद्वारणाय 'तात्पर्य्यविषयीभूतसम्बन्धेने' त्युक्तम्। अस्ति च 'जलेन सिञ्चति, वह्निना दहती' त्यादिषु जलवह्न्यादिकरणकत्वस्य स्वरूपसम्बन्धेन सेचनदहनादिषु सद्भाव इति दिक्। अथास्याः सार्थकतामुद्भावयति-**एतदभावे** एतस्या निरुक्तलक्षणाया योग्यताया अभाव इति तस्मिंस्तथोक्ते। 'सती'ति शेषः। **अपि। पदोच्चयस्य** सुबन्ततिङन्तात्मकपदसमुदायमात्रस्येति भावः। **वाक्यत्वे** 'अङ्गीकृते सती'ति शेषः। **'वह्निना** वह्निद्वारा। **सिञ्चति।'** इत्यादिः। 'पदोच्चय' इति शेषः। **अपि। वाक्यम्। स्याद्**भवेत्। 'वह्निना सिञ्चती'त्यादीनां पदानामाकाङ्क्षाऽऽसत्तिमत्तया वाक्यत्वमुपपद्यमानमपि योग्यताशालिताविरहेण तिरोभूयत इति माभूदेषां वाक्यत्वमिति 'योग्यतायुक्त' इति विशेषणमिति निष्कृष्टम्। न चात्र कथमाकाङ्क्षेति शङ्क्यम्, 'कार्य्यं दृष्ट्वा कारणमनुमीयते' इति नियमात् 'वह्निना सिञ्चती' त्यादिषु सेचनरूपं कार्य्यं दृष्ट्वा कारणमनुमेयमित्याकाङ्क्षायाः सत्त्वात्। आकाङ्क्षापदार्थमाह-**प्रतीतिपर्य्यवसानविरहः** प्रतीतेः 'नैतावता पदार्थः पर्य्याप्त' इत्यात्मिकायाः प्रमायाः पर्य्यवसानं परितोऽवसानमन्वयबोधजनकत्वेनेच्छाविरहस्तस्य विरहोऽभाव इति तथोक्तः। **आकाङ्क्षा।** 'एतस्य पदस्यास्ति पदान्तरेण केनापि समं सम्बन्ध' इति पदान्तरस्य शुश्रूषाहेतुभूता बुद्धिः। आकाङ्क्ष्यते पदार्थान्वयावगमाय पदार्थान्तरमनयेत्याकाङ्क्षा। तथा च एकस्य पदार्थस्यापरेण पदार्थेन सममन्वयस्यावगमेच्छा यावता न पूर्य्येत तावता तस्य जिज्ञासासद्भाव आकाङ्क्षापदार्थ इति फलितम्। अत एवाह **स** प्रतीतिपर्य्यवसानविरह इत्यर्थः। **च। श्रोतुः** श्रोतृजनस्य। **जिज्ञासारूपो** ज्ञातुमन्वयमवगन्तुमिच्छेति जिज्ञासा, सा रूपं स्वरूपं यस्य स इति तथोक्तः। एतदुपयोगमाह-**निराकाङ्क्षस्या** ऽऽकाङ्क्षाशून्यस्य। 'पदोच्चयस्ये' ति शेषः। **वाक्यत्वे** 'अङ्गीकृते सती' ति शेषः। **'गौः, अश्वः, पुरुषः, हस्ती' इत्यादीनां** 'पदाना' मिति शेषः। **अपि। वाक्यत्वम्। स्याद्।** 'न चैतदस्ती' ति शेषः। तथाहि-'गौः'इत्यादीनां प्रथमान्तत्वेन स्वं स्वमर्थमुपस्थापयमानानामभेदातिरिक्तसम्बन्धेनान्वयावगमो न व्युत्पन्न इति भवत्येवात्र तत्तत्पदार्थोपस्थितैरन्वयबोधजनने श्रोतुरिच्छाऽभावः अभेदातिरिक्तेन सम्बन्धेन पुनर्बाधसत्त्वेऽपि सत्त्वादिसम्बन्धेन बाधाभावात्मिका योग्यताऽस्त्येवेति भाव्यम्। **बुद्धचविच्छेदो** बुद्धेः श्रुतपूर्वाणां पदानां स्मरणशक्तिरूपाया मतेरविच्छेदो विच्छेदाभावः कालादिनाऽव्यवधानमिति यावत्, इति तथोक्तः। न विच्छेद इत्यविच्छेदः। **आसत्तिरासदनं** परस्परं पदार्थानां संसर्गविधयाऽवस्थानम्। 'स्त्रियां क्तिन्।' ३।३।९४ इति क्तिन्। तथा च-यत्पदार्थस्य यत्पदार्थेन समं सम्बन्धापेक्षा तेन तस्याव्यवहितः सम्बन्ध आसत्तिपदार्थ इति निष्कृष्टोऽर्थः। तदुपयोगमाह-**बुद्धिविच्छेदे** श्रुतपूर्वाणां पदानां स्मृतिध्वंस इति भावः। **अपि। वाक्यत्वे** 'अङ्गीकृते सती' ति शेषः। **इदानीम्। उच्चारितस्य** कथितस्य। **'देवदत्तः' । इति पदस्य। दिनान्तरेऽ**न्यद् यावत्स्मृतिः, तावत्कालातिरिक्तात्मकं दिनमिति दिनान्तरं तत्रेति तथोक्ते। तथा च- यदा श्रुतपूर्वाणां पदार्थानां स्मृतिध्वंसो जातस्तदेति निष्कृष्टोऽर्थः। **उच्चारितेन** कथितेन **'गच्छती' ति पदेन** 'क्रियारूपेणे' ति शेषः। सङ्गतिरन्वयबोधविशेषः। **स्यात्।** 'न त्वसौ सम्भवती' ति शेषः। इदमुक्तम्-येन समं यस्य सम्बन्धः सङ्गच्छते तेन समं तस्य पदार्थस्य यावद्बुद्धिर्नोत्पद्येत तावद्वाक्यत्वं न स्यात्। यथा-'मधु द्विरेफ' इत्येतावन्मात्रस्यांशस्य। अत्र हि-'पपौ' इति श्रूयमाणे 'मधु द्विरेफ' इति श्रुतपूर्वयोरप्येतयोः स्मृतिध्वंसे परस्परमेषां सम्बन्धानुपपत्तेर्वाक्यत्वाभाव इति भावः। अतः-तादृशबुद्धिविच्छेदो नाम परस्परं सम्बन्धोचितानामपि पदानां विभिन्नकालीनतया बुद्ध्यन्तराभ्युदये तथाऽवधारणाभावः। 'गिरिजा वरदः, गिरिशो वरदा' इत्यादौ 'गिरिजा वरदा, गिरिशो वरद' इति यावदभिन्नकालीनत्वं, न तावत्तथाऽवधारणं, तदभावे च स्फुटो वाक्यतासम्भवाभावः। अत एव- 'गिरिजा वरदो, गिरिशो वरदा' इत्यादौ सङ्कीर्णत्वं दोषः। नच 'आसत्तियोग्यताऽऽकाङ्क्षातात्पर्य्यज्ञानमिष्यते। कारणं..' इत्यभिजनोक्त्या तात्पर्य्यज्ञानस्यापि शाब्दबोधं प्रति कारणत्वम्, अन्यथा 'सैन्धवमानय' इत्यादौ क्वचिल्लवणानयनं क्वचिदश्वानयनं नोपयुज्येत।

**अत्राकाङ्क्षायोग्यतयोरात्मार्थधर्मत्वेऽपि पदोच्चयधर्म्मत्वमुपचारात्।**

**८ वाक्योच्चयो महावाक्यम्—**

**'योग्यताऽऽकाङ्क्षाऽऽसत्ति'युक्त इत्येव।**

---

एवं सत्यसावपि योग्यताऽऽदिवद्वाक्यत्वं प्रति कारणमिति वाच्यम्। 'सैन्धवमानय' इत्यादौ 'पदार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।' इत्युक्तदिशा संयोगादीनामेव विशेषस्मृतिहेतुत्वेनाभिमननात्, अन्यत्र सर्वत्रैव योग्यताऽऽदीनामेव शाब्दबोधं प्रति कारणत्वाच्च। नापि 'वृद्धा युवानः शिशवः कपोताः खले यथाऽमी युगपत्पतन्ति। तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति॥' इति वाच्यम्। 'देवेन गच्छति मार्गां' इत्यादावपि खले कपोतिकान्यायेनान्वयोपपत्तेः। न वा 'यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते। तेन तेनान्वितः स्वार्थः पदैरेवाभिधीयते।' इति वाच्यम्। 'घटमानये' त्यादौ घटादिस्मृतिनाशेऽपि आनयादिस्मृतिकाले शाब्दबोधस्यैव इदानीमुच्चारितस्य 'देवदत्त' इत्यादेर्दिनान्तर उच्चारितेन 'गच्छती' त्यादिनाऽन्वयबोधस्य सम्भवात्। इति। ननु आकाङ्क्षाया इच्छाऽनतिरिक्तत्वात्, योग्यतायाश्चैकस्मिन् पदार्थेऽपरपदार्थान्वयोपपत्तिरूपाया अर्थरूपत्वात् कथं पदोच्चयधर्म्मत्वं सङ्घटेत? इति चेत्, **अत्रास्मिन्** पदोच्चयस्य योग्यताऽऽदिमत्तया वाक्यत्वप्रतिपादनावसर इत्यर्थः। **आकाङ्क्षायोग्यतयो**राकाङ्क्षाया योग्यतायाश्चेत्यर्थः। अत्राकाङ्क्षापदमासत्तेरप्युपलक्षकं, तथा च आकाङ्क्षाऽऽसत्त्योर्योग्यतायाश्चेति निष्कृष्टम्। 'क्रमा' दिति शेषः। **आत्मार्थधर्मत्वे** आत्मा (जीवश्चित्तं बुद्धिर्वा) चार्थश्चेति तयोर्धर्म्मौ स्वभावौ तयोर्भावस्तत्त्वं तस्मिंस्तथोक्ते। आत्मधर्मत्वेऽर्थधर्म्मत्वे च सतीति भावः। 'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि। चित्ते धृतौ च बुद्धौ च परव्यावर्त्तनेऽपि च॥' इति धरणिः। 'धर्म्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ।' इति विश्वः। **अपि। उपचारा**दुपचर्य्यतेऽन्यपरत्वं प्रति नीयतेऽर्थोऽनेनेत्युपचारो लक्षणया शक्यार्थपरित्यागेनान्यार्थपरत्वकल्पनं तस्मात् तथोक्तात्। 'उपचारो लक्षणा' इत्यन्ये। 'उपचारात्स्वजन्यजनकत्वरूपपरम्परासम्बन्धात्, स्वाश्रयोपस्थापकत्वाच्च। एकपदार्थायापरपदार्थसद्भावरूपयोग्यतायास्तु पदार्थधर्म्मत्वेऽपि स्वाश्रयोपस्थापकत्वसम्बन्धेन पदोच्चयधर्मत्वमेवावगन्तव्यं, निरुक्तासत्तेरप्यात्मधर्म्मत्वात्। तत्राप्येषैव रीतिरनुसर्तव्या। यदि पुनः समभिहारविशेष आकाङ्क्षा, अव्यवधानेनोच्चरितत्वमासत्तिः। तदाऽनयोः साक्षादेव पदधर्मत्वम्।' इति विवृतिकाराः प्राहुः। **पदोच्चयधर्म्मत्वम्।** 'ऊह्य'मिति शेषः। अत्रायं भावः—'बुद्ध्यादिषट्कं सङ्ख्याऽऽदिपञ्चकं भावना तथा। धर्माधर्म्मौ गुणा एते आत्मनः स्युश्चतुर्दश॥' इति बुद्ध्यादय आत्मन एव धर्म्माः, तत्र—'बुद्धिः सुखं दुःखमिच्छा द्वेषो यत्नश्चे'ति बुद्ध्यादिषट्कम्, एवं बुद्धीच्छयोरात्मधर्म्मत्वम्। 'बुद्धिस्तु द्विविधा मता। अनुभूतिः स्मृतिश्चे'ति स्मृतिरूपाया बुद्धेरासत्तेश्चाभिन्नत्वान्नैतस्याः पदोच्चयधर्म्मत्वम्। 'इच्छाऽऽकाङ्क्षा' इत्युक्तदिशेच्छाऽऽकाङ्क्षापदार्थैक्ये आकाङ्क्षाया अपि न पदधर्म्मत्वम्, एतस्या अपि तथाऽऽत्मधर्म्मत्वात्। इति न्यायमतं, वेदान्तमते तु 'आत्मा ब्रह्मैव'इति शुद्धो बुद्धो मुक्तः सत्य आनन्द आत्मा, तस्य च शुद्धत्वबुद्धत्वादिना सुखदुःखेच्छाऽऽदिधर्म्मत्वं वक्तुमसाम्प्रतम्, साम्प्रतं पुनस्तद्भिन्नस्य चित्तस्यैव, तस्मात्—आत्मापरपर्यायस्यास्यैवेच्छाधर्म्मत्वं स्मरणधर्म्मत्वं च; न तु पदोच्चयधर्म्मत्वम्। इति। अथ—योग्यतैकस्मिन् पदार्थेऽपरस्य पदार्थस्य सम्बन्धसद्भावः। असौ च पदार्थधर्म्मः तथा सति—आकाङ्क्षाऽऽसत्त्योरात्मधर्म्मत्वे योग्यतायाश्च पदार्थधर्म्मत्वेऽपि पदोच्चयधर्म्मत्वमुपचारमाश्रित्येति दिक्।

ननु 'रसो वै स'इत्याद्युक्तदिशा रसस्यात्मस्वरूपत्वात् तथैव प्रतिपाद्यमानत्वाच्च, तच्च वाक्यापेक्षया महावाक्यद्वारा सुतरामिति चेत्सत्यमिति महावाक्यस्वरूपमाह **८ वाक्योच्चय** इत्यादिना।

**८ वाक्योच्चयो** वाक्यानामनन्तरोक्तलक्षणानां पदोच्चयविशेषाणामुच्चयो योग्यताऽऽकाङ्क्षाऽऽसत्तियुक्तः (अत एव—'योग्यताऽऽ..'इति वृत्तिकाराः) समुदाय इति तथोक्तः। अत्रापि बहुवचनमविवक्षितम्, तथा च—वाक्ये च वाक्यानि चेति वाक्यानीत्येकशेषः। वाक्ययोर्वाक्यानां वा योग्यताऽऽकाङ्क्षाऽऽसत्तिमत्तयाऽवस्थितः समुच्चय इत्यर्थः। **महावाक्यं** महच्च तद्वाक्यमिति तथोक्तम्। 'आन्महतः समानाधिकरणजातीययोः।' ६।३।४६ इत्यादन्तादेशः। कारिकाणां सूत्रत्वं प्रत्याययन् 'सूत्रेष्वदृष्टं पदं सूत्रान्तरादनुवर्त्तनीय' मित्युक्तदिशाऽत्राप्यनन्तरोक्तात्सूत्रादनुवर्त्तनीयमवगमयति—'**योग्यताऽऽकाङ्क्षाऽऽसत्तियुक्तः**।' इत्य'नुवर्त्तनीय'मिति शेषः। **एव**। अत्राहुर्विवृतिकाराः 'योग्यताऽऽद्यभावे महावाक्यत्वस्वीकारे

**९ इत्थं वाक्यं द्विधा मतम् ॥ ४ ॥**

**'इत्थ' मिति वाक्यत्वेन, महावाक्यत्वेन च। उक्तं च—**

**'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया ।**
**वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥' इति ।**

**तत्र वाक्यं यथा—'शून्यं वासगृहम्..' इत्यादि, महावाक्यं यथा—'रामायण—महाभारत—रघुवंशा'दि ।**

---

'चक्षुषा गृह्यतां, गगनं वर्त्तते'इत्येतयोः 'भिक्षुरुपवसति, गृही भुङ्क्ते'इत्येतयोर्भिन्नदिनोच्चारितयोः 'चक्षुषा गृह्यतां घटो वर्त्तते' इत्येतयोरपि महावाक्यत्वं स्यात्।' इति । ननु वाक्योच्चयस्यैव महावाक्यत्वं चेत्तर्हि 'प्रज्ञानं ब्रह्मे'त्यादौ कथमिति चेत्सत्यम्, अत्रैतरेयारण्यादीनां सारभूतत्वेन महत्तामात्रमप्यपेक्ष्योपचारात्तत्प्रवृत्तम् । इति बोध्यम् ।

ननु 'वाक्यं रसात्मकं काव्य' मित्यनेन रसात्मकत्वे वाक्यस्यैव काव्यत्वमङ्गीकृतं, न तु महावाक्यस्य; तत्कथं रामायणादेः; इति चेद्वाक्यत्वस्योभयथाऽपि प्रवृत्तेरित्याह—९ इत्थमित्यादि ।

९ इत्थमनेन प्रकारेणेत्यर्थः । **वाक्यम्** । 'एवे'ति शेषः । **द्विधा** द्विप्रभेदं निरुपाधिकसोपाधिकत्वभेदाद्भिन्नमिति यावत् । **मतम्** ॥ ४ ॥

सूत्रस्थ'मित्थ'मिति पदद्योत्यार्थं विवृणोति—**'इत्थ'मिति** 'निपातात्मकेन पदेने'ति शेषः । **वाक्यत्वेन** । 'उपाध्यभावे'इति शेषः । **महावाक्यत्वेन** । 'सोपाधिकत्व'इति शेषः । **च** । 'इति द्योत्यत इति बोध्य' मिति शेषः । अत्रेदं तत्त्वम्—वाक्यमेव महत्त्वरूपेणोपाधिना संवलितं महावाक्यमिति गीयते अन्यदा तत् तदेवेति द्विप्रभेदम् । योग्यताऽऽदियुक्तताया अनुगमादभिन्नम् । इति ।

अत्र प्राचां संवादमाह—**उक्तं** चेत्यादिना ।

**उक्तं** प्रतिपादितमित्यर्थः। **चा**पीत्यर्थः। 'वृद्धै'रिति शेषः। किमित्यपेक्षायामाह-**'स्वार्थबोधे** स्वेषाम्। (वाक्यानाम्) अर्थास्तेषां बोध इति तत्र तथोक्ते । **समाप्तानां** कृतार्थानामिति भावः । तथा च—स्वस्वार्थबोधनमात्रव्यापाराणामिति फलितम् । समस्तपाठे तु—स्वार्थबोधेन स्वस्वार्थबोधनेन समाप्तानि निवृत्तव्यापाराणीति तेषां तथोक्तानाम् । स्वंस्वमर्थं बोधयित्वाऽर्थान्तरं बोधयितुं विमुखानामिति भावः । **वाक्यानाम्** । **अङ्गाङ्गित्वव्यपेक्षया**ऽङ्गानि चाङ्गीनि (शरीराणि) चेति तेषां भावस्तत्त्वं, तस्य व्यपेक्षया । 'अन्योऽन्य'मिति शेषः । तथा च—अन्योऽन्यमङ्गत्वाङ्गित्वाभ्यामवस्थातुमित्यर्थः । एकस्याङ्गात्मनाऽपरस्याङ्गिरूपेण, अपरस्य वाऽङ्गात्मनैकस्याङ्गयात्मनाऽवस्थातुमिति भावः । अङ्गेष्वङ्गिरूपेणाङ्गिषु वाऽङ्गरूपेणावस्थानापेक्षित्वेन हेतुनेति फलितम् । **पुन**र्यथा पूर्वं पदानि वाक्यतामङ्गीकर्त्तुं तथा वाक्यान्यपि योग्यताऽऽदिमत्तया महावाक्यतामिति भावः। **संहत्य** योग्यताऽऽदियोगेनैकीभूयैकार्थप्रतिपादकत्वेन मिलित्वेति यावत् । **एकवाक्यत्व**मेकं प्रधानं महदिति यावद्वाक्यमिति तस्य भावस्तत्त्वं तथोक्तम् । 'एकः सङ्ख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु ।' इति मेदिनी । **जायते ॥' इति** । इदमभिहितम्—अङ्गानि यथा गुणप्रधानभावेनान्योऽन्यमिलितानि अङ्गितामवलम्बन्ते, तथा पदानि वाक्यतामिव वाक्यानि पुनरेक (महा) वाक्यताम्, एवं च—पदानां वाक्यत्वे 'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया । पदानामेकपदता पुनः संहत्य जायते ॥' इत्येवं पदानामेकपदत्वस्वीकारे नयो बोध्य इति ।

अथ वाक्यमहावाक्ये विभज्य दर्शयति—तत्रेत्यादिना ।

तत्र वाक्यमहावाक्ययोर्म्मध्ये इत्यर्थः । **वाक्यम्** । **यथा** । **'शून्यं वासगृहम्..' इत्यादि** । एतत्पद्यं च व्याख्यातपूर्वम् । **महावाक्यम्** । **यथा** । **रामायण-महाभारत-रघुवंशादि** । आदिपदेन— 'नाथ ! विलोकय मे (ऽ)घं कुतोऽस्ति पापं तवातिपुण्यायाः ।' इत्यादि गृह्यते ।

अत्रेदं बोद्धव्यम्—पदोच्चयस्य वाक्यत्वाधायिका, वाक्योच्चयस्य वा महावाक्यत्वाधायिका वा योग्यता ऽऽकाङ्क्षा ऽऽसत्तिसमुदायस्वरूपा तात्पर्य्यं नाम वृत्तिः । एषा च पदोच्चयनिष्ठा वाक्योच्चयनिष्ठा वा, नतु पदमात्रनिष्ठा; अत एव-एनया प्रतिपाद्योऽप्यर्थो वाच्यवत्पदोच्चयवाक्योच्चयान्यतरप्रतिपाद्यो, न तु पदमात्रप्रतिपाद्यः; योग्यताऽऽद्यसम्भवात् । एवं च

**पदोच्चयो वाक्यमित्युक्तम्, तत्र किं पदलक्षणमित्यत आह–**

**१० वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः।**

**यथा–घटः 'प्रयोगार्ह'इति प्रातिपदिकस्य व्यवच्छेदः,**

---

वाच्यार्थस्येव तात्पर्य्यार्थस्य साधर्म्येऽपि वैधर्म्यमवसेयम्। वाक्यस्य महावाक्यस्य तदर्थस्य चायं बोधप्रकारः– तत्र तावत्, श्रूयन्ते शब्दाः, अर्थाश्च श्रोतॄणां चेतसि समारोहन्ते, संहन्यन्ते च योग्यताऽऽदिवशेन विशिष्टान्वयबोधेन, तदानीं सम्पद्यमानोऽर्थश्च तात्पर्य्याभिधेयो वाक्यमहावाक्यान्यतरप्रतिपाद्यः। अत्र च कारणभूता तात्पर्य्याख्या वृत्तिः, विशिष्टमर्थं बोधयितुं संहन्यमानानि पदानि वाक्यं, वाक्यानि च महावाक्यम्। संहन्यमानत्वं च योग्यताऽऽदिवशादेव भिन्नानामपि परस्परं तेषामित्यावेदितचरम्। अत एव कविराजा अभिधाऽऽदिनिरूपणोत्तरमेव तात्पर्य्यवृत्तिं दर्शयिष्यन्ति। इति।

ननु किं नाम तत् पदं, यदुच्चयो वाक्यमिति पृच्छामुत्थाप्युन्नयन्नाह–**पदोच्चय** इत्यादि।

**पदोच्चयः। वाक्यम्। इतीत्येवम्। उक्तं** 'वाक्यं स्याद् योग्यता...' इत्यादिनेति शेषः। **तत्र** पदोच्चय इत्यर्थः। **किम् पदलक्षणं** 'स्या' दिति शेषः। **इत्यत** इति जिज्ञासोत्थानात्। **आह १० वर्णा** इत्यादिनेति शेषः। **१० प्रयोगार्हानन्वितैकार्थबोधकाः** प्रयोगार्हाश्चानन्वितैकार्थबोधकाश्चेति तथोक्ताः। 'सुपा।' २।१।४ इति समासः। प्रयोगमर्हन्तीति तथोक्ताः।, 'नापदं प्रयुञ्जीते'ति निषेधाविषया इत्यर्थः, सुप्तिङन्तान्यतरा इति भावः। नान्वितो योग्यतया पदार्थान्तरेणान्वयं प्राप्त इत्यनन्वितः. सोऽसावेकार्थः (एकोऽर्थः)तं बोधयन्तीति, तस्य वा बोधका इति तथोक्ताः। **वर्णाः,** अक्षराणि। **पदम्**। तथा च प्रयोगार्हत्वे सति यादृशानुपूर्वीमन्तो वर्णा एकस्यानन्वितस्यार्थस्य बोधकास्तादृशानुपूर्वीमद्वर्णत्वं पदत्वमित्यर्थः।

तदेव विवरीतुमुपक्रमते–**यथे**त्यादिना।

**यथा** 'पद' मिति शेषः। **घटः** 'इती'ति शेषः। अत्र हि प्रयोगार्हत्वे पदार्थान्तरेणासंसृष्टत्वे सति एकस्य कम्बुग्रीवादिमदर्थस्य बोधका घकारटकारविसर्जनीयरूपा वर्णा इति।

अथ विशेषणसार्थक्यमुपपादयति– **'प्रयोगार्ह'** इत्यादिना।

'प्रयोगार्ह' इति 'विशेषणेने'ति शेषः। तथा च–'प्रयोगार्हा वर्णाः पद'मित्यभिधानेनेति निष्कृष्टम्। **प्रातिपदिकस्य,** 'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्।' १।२।४५ 'कृत्तद्धितसमासाश्च।' १।२।४६ इत्युक्तसञ्ज्ञिविशेषस्येत्यर्थः। एतदुपलक्षणं धातोरपि, तेन 'भूवादयो धातवः।' १।३।१ इत्युक्तसञ्ज्ञिविशेषस्य चेत्यर्थः। **व्यवच्छेदो** व्यावृत्तिः। निर्विभक्तिकस्य प्रातिपदिकस्य (धातोश्च) अनन्वितघटरूपैकार्थबोधकत्वात्तद्व्यावृत्तये प्रयोगार्हत्वे सतीत्युक्तम्, प्रयोगार्हत्वं चासाधुत्वप्रयोज्यपापाजनकं यदुच्चारणं तद्विषयत्वम्। 'नापदं प्रयुञ्जीते'त्यनेनागमेन सुप्तिङन्तान्यतरत्वहीनस्य किञ्चिदर्थावबोधकस्य शब्दस्यो-

---

१ अत्राहुष्टिप्पणीकाराः–'वर्णोत्पत्तिस्तावदेवमुपवर्ण्यते'-चेतनेन ज्ञातार्थविवक्षया तद्बोधकशब्दनिष्पादनाय प्रेरितमन्तःकरणं मूलाधारस्थितमनिलं चालयति, तच्चालितोऽनिलस्तत्स्थलवर्तिवायुचालनाय प्रभवति, तच्चलितेन वायुना तत्रैव सूक्ष्मरूपेणोत्पादितः शब्दः पश्यन्तीति ...न्तःसूक्ष्मा वागनपायिनी। अन्तःसङ्कल्परूपा या क्रमरूपाऽनुपातिनी। प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्त्तते॥ ... स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा। वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना॥" इति नानाविधा वाचः, तत्र वैखरी वाक केवलं वर्णरूपा।' इति।

**'अनन्वित' इति वाक्यमहावाक्ययोः' 'एक' इति साकाङ्क्षानेकपदवाक्यानाम्, 'अर्थबोधका' इति 'कचटतप' इत्यादीनाम्। 'वर्णा' इति बहुवचनमविवक्षितम्।**

---

च्चारणं पापजनकमिति बोधनात् न निर्विभक्तिकस्य तादृशप्रयोगार्हत्वमित्यभिप्रायः। एतावताऽपि वाक्यमहावाक्ययोः। प्रयोगार्हत्वे सति विशिष्टैकार्थबोधकत्वादतिव्याप्तिस्तन्निरासायाहुः-**'अनन्वित' इति** 'विशेषणेने'ति शेषः। **वाक्य-महावाक्ययोः**। 'व्यवच्छेद'इति शेषः। अनन्वितत्वं हि स्वस्य स्वघटकस्य वा वृत्त्यनुपस्थाप्यार्थान्तरासंसृष्टत्वम्। तथा च- वाक्यस्य महावाक्यस्य वा 'घटमानये' त्यादेः तादृशत्वाभावान्न दोषः। एवमपि 'घटेन जल' मित्याद्युदाहरणादिरूपक्रियावाचकपदासमभिव्याहृतसाकाङ्क्षपदसमुदायस्य पदत्वं स्यात्, तत्र तृतीयान्तद्वितीयान्त-पदार्थयोः परस्परमन्वयाभावेनानन्वितार्थबोधकत्वात्; अत आहुः-**'एक' इति** 'विशेषणेने'ति शेषः। **साकाङ्क्षाने-कपदवाक्यानां** साकाङ्क्षाणि यान्यनेकपदवाक्यानीति तेषां। तथोक्तानाम्। अनेकानि च तानि पदानि वाक्यानि चेत्यनेकपदवाक्यानि। 'व्यवच्छेद' इति पूर्ववत्। तत्रह्यनन्वितार्थानामनेकत्वमिति नातिप्रसङ्गः। ये शब्दा अर्थ-बोधका अथ च न संस्कृतास्तेषामेवोच्चारणं पापजनकत्वेन 'नापदं प्रयुञ्जीते' त्याद्यागमेन बोधितम्, येषां तु अर्थाव-बोधकत्वमेव नास्ति तेषु साधुत्वमसाधुत्वं वाऽपशब्दत्वं सुशब्दत्वं वा किमपि नास्तीति यथा साधुशब्दप्रयोगे पुण्यमुत्पद्यते न तथा तेभ्यः पुण्यम्; यथा वाऽसाधुशब्दप्रयोगे पापमुत्पद्यते न तथा तेभ्यः पापमपि; तस्मात्-तादृशानां शब्दानामसा-धुत्वपापाजनकोच्चारणविषयत्वरूपपूर्वोक्तप्रयोगार्हत्वस्य सत्त्वे बाधकाभावादनन्वितैकरूपत्वाच्च स्यात् पदत्वापत्तिः, तद्वारणा-याहुः-**'अर्थबोधका' इति** 'विशेषणेने'ति शेषः। **'कचटतप'इत्यादीनाम्** 'व्यवच्छेद' इति शेषः। एतेन-यत्त्वत्र पराक्रान्तं तर्कवागीशैः-'ननु "प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययाना" मिति नियमात् "घटीयं कर्मत्वम्" इत्या-द्यन्वितार्थबोधकस्य 'घट' मित्यादेः कथं पदत्वम्? नच "शक्तिमत्पदम्" इति मतानुसारेण "घट" इत्येकं पदम् "अम्", इत्यपरम्, अनयोः प्रत्येकपदार्थोपस्थापकत्वेनानन्वितार्थबोधकत्वमक्षतमिति वाच्यम्। तथा सति "घटम्" इत्यादेः पदसमुदायस्य वाक्यत्वं स्यात्, न चेष्टापत्तिः, एवं सति "शून्यं वासगृहं.." इत्यादि यद् वाक्योदाहरणं दत्तं तदसङ्गतं स्यात्, तस्य तथाविधवाक्यस्य महावाक्यतयैवोदाहर्त्तुमुचितत्वात्। न च प्रत्ययातिरिक्तानन्वितार्थबोधकत्वं विवक्ष-णीयमिति वाच्यम्, तथाऽप्यभेदसम्बन्धेन नीलाद्यन्वितोत्पलादिबोधकेषु "नीलोत्पल" मित्यादिषु पदेषु, मुख्यार्था-न्वितार्थबोधकेषु लाक्षणिक ('श्वेतो धावती' त्यादौ) लाक्षणिकश्वेतादिपदेषु चाव्याप्तेरनुद्धारात्। समस्तस्य पदत्वास्वीकारे "क्षीरोदजावसतिजन्मभुवः प्रसन्नाः" इत्यादिपदगतक्लिष्टत्वाद्युदाहरणमसङ्गतं स्यात्, एवम् "एक" इति न सङ्गच्छते-'घटौ, घट' इत्यादिद्विवचनान्तबहुवचनान्तपदेष्वनेकार्थबोधकेष्वव्याप्तेः। न चै "क" इति, "एकजातीय" इत्यर्थ इति वाच्यम्, "धवखदिरपलाशा" इत्यादौ, युगपच्चन्द्रसूर्य्योपस्थापके "पुष्पवन्तौ" इति पदे चाव्याप्तितादवस्थ्यात्। अपि च-पदघटकानां यावतां वर्णानामनन्वितार्थबोधकत्वम्, उत केषाञ्चिद्वा; नाद्यः, "सुन्दरस्य देवदत्तस्य धनम्" इत्यादौ विशेषण-विभक्तेरनर्थकत्वात् "सुन्दरस्ये" त्यादिपदे चाव्याप्तेः। नापि द्वितीयः, "वह्निना सिञ्चती" त्यादौ सर्वेषामनन्वितार्थ-बोधकत्वाभावेऽपि प्रत्येकं तथात्वसद्भावादव्याप्तेः। यद्वा "द्वौ घटौ" इति समुदायस्य सम्भेदेनान्यतरस्य "वैयर्थ्यम्" इति न्यायाद् "द्वौ" इति भागस्यानर्थकत्वेऽपि "घटौ" इति भागस्यानन्वितैकार्थबोधकत्वात् तत्राऽव्याप्तिः। इति, तदप्यपास्तम्-तथाहि-'घट' मित्यादेः पूर्वोक्तस्य स्वस्य स्वघटकस्य वा वृत्त्यनुपस्थाप्यार्थान्तरासंसृष्टत्वस्य सत्त्वात्, 'नीलोत्पल' मित्यस्य समस्तत्वेन एकस्या एव वृत्तेः शाब्दिकैरङ्गीकारेण स्वीयवृत्त्यनुपस्थाप्यत्वं नीलपदार्थेनास्तीत्यनुपस्थाप्यार्थान्तरासंसृष्टत्व-मस्त्येव। 'श्वेतो 'धावती' त्यादावपि श्वेतपदधर्मिकलक्षणाख्यवृत्त्यनुपस्थाप्यत्वस्य श्वेतंगुणेऽभावात् तदनुपस्थाप्यार्थान्तरा-संसृष्टत्वं श्वेतगुणविशिष्टस्य वर्त्तत एवेति न कुत्रापि दोषः। एकार्थबोधकत्वं च विशेषणविशेष्यभावानापन्नार्थद्वयाबोधकत्वे सति विशेषणविशेष्यभावापन्नार्थद्वयबोधकत्वम्। एवं च-सविभक्तिकपदमात्रस्यैव प्रकृत्यर्थान्वितप्रत्ययार्थरूपविशेषणविशे-ष्यभावापन्नार्थद्वयबोधकत्वसत्त्वेन तदनापन्नार्थद्वयाबोधकत्वेन च विशेष्यदलाक्रान्तत्वमिति लक्षणसमन्वयः। 'घटेन जल' मित्यादि साकाङ्क्षानेकपदघटितवाक्ये च 'घटेने'त्याद्यंशप्रतिपाद्यविशेषणविशेष्यभावापन्नार्थद्वयबोधकत्वसत्त्वेऽपि तदना-पन्नविशिष्टार्थद्वयाबोधकत्वाभावान्नातिव्याप्तिः। द्विवचनान्तबहुवचनान्तपदेषु च विशेषणविशेष्यभावापन्नार्थद्वयबोधक-त्वस्य तदनापन्नार्थद्वयाबोधकत्वस्य च सत्त्वेन नाव्याप्तिः। 'धवखदिरपलाशा' इत्यादिद्वन्द्वस्थले सर्वत्रैव साहित्या-

**११ अर्थो वाच्यश्च लक्ष्यश्च　　व्यङ्ग्यश्चेति त्रिधा मतः ॥ ५ ॥**

**एषमेषां स्वरूपमाह–**

**१२ वाच्योऽर्थोऽभिधया बोध्यो　　लक्ष्यो लक्षणया मतः ।**
**व्यङ्ग्यो व्यञ्जनया**

**[ अभिधाऽऽद्याः का इत्याह ]**

**१३ ताः स्यु–　　स्तिस्रः शब्दस्य शक्तयः ॥ ६ ॥**

**ता अभिधाऽऽद्याः ।**

---

श्रयरूपप्रकृत्यर्थस्य विभक्त्यर्थसङ्ख्यादेश्च विशेषणविशेष्यरूपत्वात् तद्भावापन्नार्थबोधकत्वे सति तदनापन्नार्थद्वयाबोधकत्वं वर्त्तत इति नाव्याप्तिः । 'पुष्पवन्ता' वित्यन्तापीयमेव गतिरिति सुधीभिर्विभावनीयम् । 'सुन्दरस्य देवदत्तस्य धन मित्यादिस्थले सुन्दरपदोत्तरषष्ठीविभक्तेर्निरर्थकत्वेन अर्थाबोधकत्वेनऽपि 'सुन्दरस्य पुत्र' इत्यादिस्थलीयसुन्दरविशिष्ट सम्बन्धरूपार्थविषयकबोधजनकताऽवच्छेदकानुपूर्वीमत्त्वस्य सत्त्वेन नाव्याप्तिः । अत एव–यत्र केनचित्प्रतिबन्धकवशेन यस्य कस्यचित् पदस्य अर्थावबोधजनकत्वस्य फलोपधायकत्वस्याभावेऽपि न तत्रतत्राव्याप्तिः, जनकताऽवच्छेदकानुपूर्वीमत्त्वस्वरूपयोग्यताया अनपायात् । तथाच–असाधुत्वप्रयुक्तपापाजनकत्वे सति स्वस्य स्वघटकताऽवच्छेदिका तथा विशेषणविशेष्यभावनापन्नार्थद्वयाविषयकबोधजनकताऽनवच्छेदिका यादृशानुपूर्वी तद्वन्तो वर्णाः पदमिति स्थितम् ।

ननु अर्थबोधका वर्णाः पदमित्युक्तं, तत्र को नामार्थः ? इत्याह–११ **अर्थ** इत्यादि ।

११ **अर्थः** पदार्थः । अर्थ्यते प्रार्थ्यते प्रतिपाद्यत्वेनासावित्यर्थः । 'अकर्त्तरि च कारके सञ्ज्ञायाम् ।' ३।३।१८ इति घञ् । क्रमवतां वर्णानामाशुविनाशितयैकदाऽनेकवर्णानुभवासम्भवात् पूर्वपूर्ववर्णान् अनुभूयान्त्यवर्णश्रवणकाले पूर्ववर्णानुभवजनितसंस्कारसहकृतेनानन्त्यवर्णसम्बद्धेन काऽपि प्रतीतिर्जन्यते, सहकारिसामर्थ्यात् । प्रत्यभिज्ञावत् । तत्प्रतीतिविषयभूतं (पदं) च यत्परः स इति भावः । **वाच्य** उच्यतेऽसाविति तथोक्तः । 'वचोऽशब्दसञ्ज्ञायाम् ।' ७।३।६७ इति ण्यत् । **च** । **लक्ष्यो** लक्ष्यतेऽसाविति तथोक्तः । 'ऋहलोर्ण्यत्' ३।१।१२४ इति । **च** । **व्यङ्ग्यो** व्यज्यतेऽसाविति तथोक्तः । **च** । 'महीभृतस्तस्य च मन्मथश्रिया निजस्य चित्तस्य च तं प्रतीच्छया ।' इत्यादिवत् समुच्चयार्थं चकाराभिक्यमिति बोध्यम् । **इतीत्येवम्** । **त्रिधा** त्रिस्वरूप इति भावः । **मतः** ॥ ५ ॥

ननु वाच्यादीनां किं नाम लक्षणमित्याकाङ्क्षायां तद्वक्तुं प्रतिजानीते–**एवमित्यादिना** । **एषां** वाच्यादीनाम् । **स्वरूपमसाधारणं** चिह्नम् । आह १२ **वाच्य** इत्यादिना ।

१२ **अभिधया** ऽभिधीयते सङ्केतितोऽर्थ उपस्थाप्यतेऽनयेत्यभिधा तया, वक्ष्यमाणलक्षणेन शक्तिविशेषेणेति भावः । **बोध्यो** बोध्यतेऽसाविति तथोक्तः । **अर्थः** । **वाच्यः** । **मतः** । **लक्षणया** लक्ष्यते रूढ्यनुरोधेन प्रयोजनानुरोधेन वोपस्थाप्यतेऽर्थान्तरमनयेति तया तथोक्तया । 'बोध्योऽर्थ' इति शेषः । **लक्ष्यः** । 'मत' इति शेषः । **व्यञ्जनया** व्यज्यते सूच्यते वाच्यलक्ष्यातिरिक्तत्वेनानिरूप्योऽप्यर्थोऽनयेति तया तथोक्तया । 'बोध्योऽर्थ' इति शेषः । **व्यङ्ग्यः** । 'चजोः कु घिण्यतोः ।' ७।३।५२ इति कुत्वम् । 'मत' इति शेषः ।

[अभिधाऽऽदीनां शक्तित्वमभिधित्सुः सङ्गतिं दर्शयति–**अभिधाऽऽद्याः** । **काः** किंस्वरूपाः । **इतीत्याशङ्क्य** । आह–] १३ **ता** इत्यादि ।

१३ **ता** अभिधाऽऽद्या इत्यर्थः । **तिस्रस्त्रिसङ्ख्याकाः** । **शब्दस्य शक्तयः** । **स्युः** ॥ ६ ॥

अथ सूत्रस्थं 'ता' इति पदार्थं विवृणोति– **तास्तत्पदवाच्याः** । **अभिधाऽऽद्याः** 'इति भाव' इति शेषः ।

अत्रेदं बोद्धव्यम्–अर्थबोधहेतुभूतत्वादेवाभिधाऽऽदीनां शक्तिरूपत्वम्, शब्दगतत्वात्तु वृत्तित्वम्, तार्किकैः प्रत्याख्याताया अपि सहृदयहृदयसाक्षिकार्थहेतुभूतत्वेन समादरणीयाया व्यञ्जनाया आवश्यकाभ्युपगमद्योतनार्थं 'तिस्र' इत्यनेन सङ्ख्यानम् । तात्पर्य्यं तु वाक्यमहावाक्ययोरेव, न तु पदस्ये ति; पदस्य शक्तित्रयत्वम् । तत्र वाच्यार्थहेतुरभिधा, लक्ष्यार्थहेतुभूता लक्षणा, व्यङ्ग्यार्थहेतुभूता व्यञ्जनाशक्तिरिति ।

तत्र-

**१४ मता सङ्केतितार्थस्य बोधनादग्रिमाऽभिधा।**

**उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य 'गामानय' इत्युक्ते तं गवानयनप्रवृत्तमुपलभ्य बालोऽस्य वाक्यस्य**

---

तदेव स्पष्टमभिधातुं स्वयं प्रवर्त्तते-**तत्र** तासु तिसृषु शक्तिषु मध्य इत्यर्थः।

१४ **सङ्केतितार्थस्य** सङ्केतो वृद्धव्यवहारादिना प्रतिपत्तिः, स सञ्जातो यस्य ,स सङ्केतितोऽसावर्थं इति तस्य तथोक्तस्य। 'तदस्य सञ्जातं तारकादिभ्य इतच्।' ५।२।३६ इतीतच्। एतेन-'ईश्वरेच्छा शक्तिः (अभिधा)' इत्युक्तनयेन 'इच्छैव शक्तिः' इति नयेन वा 'अस्माच्छब्दादर्थो बोद्धव्य' इति सङ्केतात्मिकाऽभिधा शक्तिः, तद्विषयीभूतश्चार्थः सङ्केतित एवेति तद्बोधिकाऽभिधेत्युच्यमाने स्फुटमात्माश्रयापत्तिः। इति यदुक्तं, तत्पराक्षिप्तम्। अत एव तर्कवागीशा अप्याहुः-'**सङ्केतितार्थस्ये**ति। सङ्केतितग्रहविषयार्थस्येति तु नार्थः, सङ्केतस्याभिधाया अभिन्नत्वेनात्माश्रयापत्तेः। किन्तु कोश-व्याकरणादिप्रसिद्धस्य मुख्यार्थस्येत्यर्थः। मुख्यत्वं च लक्ष्यव्यङ्ग्यापेक्षया प्रथमोपस्थितिविषयत्वम्।' इति। इदं तु चिन्त्यम्, 'लक्ष्यव्यङ्ग्यापेक्षया प्रथमोपस्थितिविषयत्वम्मुख्यत्वम्। तदवच्छिन्नस्य च मुख्यस्यार्थस्य बोधिकाऽभिधा'इति पर्य्यवसिते, असौ च लक्षणा व्यञ्जनाऽपेक्षया प्रथमोपस्थितिविषयभूतत्वेन मुख्यैव, तदिति मुख्यया प्रतिपाद्योऽर्थो मुख्य इति पर्य्यवसिते च कथं न पुनर्निरुक्तो दोषः। इति। **बोधनात्।** बोध्यतेऽनेनेति बोधनम्। 'करणाधि-करणयोश्च।' ३।३।११७ इति ल्युट्। **अग्रिमा**ऽग्रे वृद्धव्यवहारादिना प्रतिपन्नस्यार्थस्य बोधने हेतुभूतत्वात् प्रथमं भवेति तथोक्ता श्रेष्ठेति यावत्। 'अग्रादिपश्चाड्डिमच्।' * इति डिमच्। **अभिधा**। तदभिधेया शक्तिरिति भावः। तथा च-वृद्धव्यवहारादिना प्रतिपाद्यस्यार्थस्य बोधने हेतुभूता शक्तिरभिधा नाम। नहि वृद्धव्यवहारादिना सर्वः शब्दः सर्वमेवार्थं प्रतिपर्त्तिं नयते, किन्तु कश्चित् कञ्चिदेव। तदिति तत्र नियामकं किञ्चिदवश्यमभ्युपेतव्यम्, एवं सत्यभ्युपेतव्यं किमपि शब्दसामर्थ्यमित्येव, तच्चाभिधा। शब्दसामर्थ्यं च शब्दविशेषस्यार्थविशेषेण साकं प्रतिपाद्य-प्रतिपादकात्मा सम्बन्धविशेषः। सम्बन्धविशेषमन्तरा शब्दविशेषस्यार्थविशेषप्रतिपादकत्वानुपपत्तेः। तत्र च-संयोगादि-सम्बन्धविशेषानुपपत्तेः शक्तिविशेष इति कल्पनीयम्। इति पर्य्यवसितम्। अत एवाहुः 'शब्दार्थयोः सम्बन्धविशेषोऽ-भिधा, तथा च-शब्दस्यार्थगतः, अर्थस्य च शब्दगतः सम्बन्धविशेषोऽभिधा। सम्बन्धश्च एकत्रानुयोगी, परत्र पुनः प्रतियोगी। असौ चाग्रिमा, एतत्प्रतिपाद्यार्थानुपस्थितावेव लक्षणाया अप्युपस्थानात्, किं पुनर्व्यञ्जनायास्तयोरन्यतरा-माश्रित्यैव लब्धस्थितिकायाः। अत एव-केवलाऽप्येषा'प्राधान्येन व्यपदेशा भवन्ती'ति नयेन 'शक्ति' रिति व्यपदिश्यते।' इति, अस्माच्छब्दादयमर्थो बोद्धव्यः, इत्याकारिकेश्वरेच्छा शक्तिः, असौ च"एकादशेऽह्नि पिता नाम कुर्य्यात्" इत्याधुनिकेऽपि नाम्नि बोध्या। आधुनिकसङ्केतिते तु 'न' इति, 'न चेश्वरेच्छा, किन्तु-इच्छैव। तेनाधुनिकसङ्केतितेऽपि शक्तिः। एवं चेश्वरमनङ्गीकुर्वतां नास्तिकादीनामपि न विप्रतिपत्तिः।' इति च। इदं तु बोध्यम्-असौ च शब्दस्य समुदायावयवतदुभयनिष्ठताभेदात्त्रिधा, तत्राद्या यथा-'डित्थः, डवित्थ' इत्यादौ अवयवार्थानुपपत्तेः, द्वितीया यथा-'पाचकः, पाठक' इत्यादौ प्रकृतिप्रत्ययार्थयोरन्वयेनोल्लासात्, पाकादिकर्तृत्वरूपमन्तरेणार्थान्तरस्यानवभासेन समुदायार्थानु-पपत्तेश्च; तृतीया यथा-'जलधरः, जलनिधिः' इत्यादौ, 'जलानां धर'इत्याद्यवयवार्थस्य'धाराधरो जलधर' इति समुदाया-र्थस्य चोपपत्तेः। एता एव-योग-रूढि-योगरूढिशब्दैरपि व्यपदिश्यन्ते, तत्र योगरूढिशब्दव्यपदेश्या, केवला, अकेवला, केवलाकेवला चेति त्रिविधा। केवला यथा-'कामिनी'इत्यादौ'काम्यतेऽनेने'ति'कामयती'ति वा कामः, सोऽस्या अस्तीत्यवयवार्थपुरःसरं 'कामिनी वामलोचना'इति समुदायार्थबोधात्। अकेवला यथा-'चन्द्रहास' इत्यादौ 'चन्द्रवत् हासो यस्य'इत्यवयवार्थपुरःसरं 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः।' इति समुदायार्थबोधेऽपि 'चन्द्र-हास'शब्दार्थयोरनु-पपत्तेः। तदुभयात्मिका यथा-'विश्वम्भरः, सर्वज्ञ' इत्यादावुत्तरपदावयवार्थबोधेऽपि पूर्वपदावयवार्थबोधात्। इति दिक्।

अथ वृद्धव्यवहारादीन् दर्शयति-**उत्तमवृद्धेने**त्यादिना।

**उत्तमवृद्धेनो**त्तमः श्रेष्ठो नियोजक इति यावत्, सोऽसौ वृद्धः **पण्डितः** 'अयं शब्द एतत् पर' इति विद्वानिति यावत्, तेन तथोक्तेन। 'अयं शब्द इममर्थमभिधत्ते' इति विदुषा नियोजकेनेति भावः। 'वुध वृद्धौ पण्डितेऽ

साम्रादिमत् पिण्डानयनमर्थ'इति प्रथमं प्रतिपद्यते, अनन्तरं 'गां बधान, अश्वमानय' इत्यादावा-
वापोद्वापाभ्यां गोशब्दस्य 'सास्नाऽऽदिमानर्थः', आनयनपदस्य च'आहरणमर्थ' इति सङ्केतमवधा-
रयति। क्वचिच्च प्रसिद्धार्थपदसमभिव्याहारात् यथा– 'अत्र प्रभिन्नकमलोदरे मधूनि मधुव्रतः
पिबति।' इत्यत्र। क्वचिदाप्तोपदेशात् यथा 'अयमश्वशब्दवाच्य' इत्यत्र;

---

पी' त्यमरः। मध्यमवृद्धं मध्यमो नातिन्यूनवयस्त्वेन नियोज्योऽसौ वृद्धः 'अयं शब्द इममर्थमभिधत्ते' इत्यभिज्ञतया
पण्डित इति तं तथोक्तम्। उद्दिश्याभिमुखीकृत्य। 'गां गोपदवाच्यम्। आनय' 'आनयन' क्रियाकर्म्मविषयकं
विधेहीत्यर्थः। इतीत्येवम्। उक्तम्। तं मध्यमवृद्धमित्यर्थः। गवानयनप्रवृत्तं गोकर्म्मानयनक्रियायां प्रवृत्ति-
मन्तम्। उपलभ्यावधार्य्य। बालो मूढः 'अयं शब्द इममर्थमाहे' त्यविद्वानिति यावत्। 'बालः कचे शिशौ मूर्खे
ह्रीबेरेऽश्वेभपुच्छयोः।' इति विश्वः। अस्य 'गामानय' इत्येतस्येत्यर्थः। वाक्यस्य। 'सास्नाऽऽदिमत्पिण्डानयनं
सास्नादीनि अस्य सन्तीति सः, सास्नाऽऽदिमानसौ पिण्डः देह इति तस्यानयनमिति तथोक्तम्। सास्ना गलकम्बल
आदिर्येषां ककुदादीनां तानि। 'सास्ना तु गलकम्बलः' इत्यमरः। 'पिण्डो बोले बले सान्द्रे देहागारैकदेशयोः।
देहमात्रे निवापे च गोलसिह्लकयोरपि॥ ओण्ड्रपुष्पे च पुंसि स्यात्क्लीबमार्जीवनायसोः।' इति मेदिनी। अर्थः। प्रथमं न
यावत्प्रतिपदं तत्तदर्थावगमस्तावदिति भावः। प्रतिपद्यतेऽवधारयति 'तादृशाद्वृद्धाद्वृद्धानां व्यवहारा' दिति शेषः।
अनन्तरं तथाऽवधारणात् परम्। 'गां गोपदवाच्यम्। बधान बन्धनक्रियायाः कर्म्मविषयकं विधेहीत्यर्थः। अश्व-
मश्वपदवाच्यम्। आनय।' इत्यादौ। 'उक्ते' इति शेषः। आवापोद्वापाभ्यां परिक्षेपोपादानाभ्याम्। अन्वय-
व्यतिरेकाभ्यामित्यर्थः। 'आवापो भाण्डपचने परिक्षेपालवालयोः।' इति मेदिनी। 'उद्वापो ग्रहणे सस्योद्गमने
बीजरोपणे।' इति गोपालः। गोशब्दस्य 'सास्नाऽऽदिमान्' 'इत्याकारक' इति शेषः। अर्थः। 'आनयनपदस्य।
च। आहरणमुपस्थापनम्।' 'इत्याकारक' इति शेषः। अर्थः। इतीत्येवम्। सङ्केतं प्रतिपत्तिम्। अवधारयति
करोति। इदमुक्तम्– 'गां बधान' इत्यत्र गोपदसत्त्वे सास्नादिमत्पिण्डपदार्थबोधः, 'आनये' ति पदाप्रयोगेणाहरण
पदार्थबोधासत्त्वम्, 'अश्वमानये' त्यत्र 'गा' मितिपदाप्रयोगेण सास्नाऽऽदिमत्पिण्डपदार्थबोधासत्त्वम्, 'अश्वमानये'त्यत्र
'गा' मितिपदाप्रयोगेण सास्नादिमत्पिण्डपदार्थबोधासत्त्वम्, 'आनयेतिपदसत्त्वे आहरणपदार्थबोधः इत्येवमावापोद्वापाभ्यां
बालस्तादृशीं प्रतिपत्तिं कुरुते। इति। क्वचिद्वृद्धव्यहारादिभ्योऽन्यत्रेत्यर्थः। च। प्रसिद्धार्थपदसमभिव्याहारात्।
प्रसिद्धोऽर्थो यस्य तादृशस्य पदस्य समभिव्याहारः सन्निधानं तस्मात्। 'पदार्थबोधग्रह' इति शेषः। यथा–
'अत्रास्मिन्। 'इह' ति पाठान्तरम्। प्रभिन्नकमलोदरे प्रभिन्नं प्राप्तविकाशं यत् कमलं तस्योदरं
तत्र। 'स्थित' इति शेषः। 'प्रभिन्नो मत्तनागे स्याद् विकासवति वाच्यवत्।' इति गोपालः। मधुव्रतः।
मधूनि मकरन्दाख्यं रसम् 'मधु मद्ये पुष्परसे क्षौद्रेऽपी' त्यमरः। पिबति। 'विदधद्रुचिरे वदने मृगमदबिन्दुश्रिया
समं स्पर्धाम्' इति शेषः।' इत्यत्र 'मधूनि' इति पदस्येति शेषः। अयं भावः– प्रसिद्धार्थानि खलु कमलादीनि पदानि
तदिति तेषां सन्निधानेनाप्रसिद्धार्थमपि मधुपदं पुष्परसार्थतया पर्य्यवसीयते। इदमुक्तम्–कमलोदरे मकरन्द एव, असौ च
पेयो भ्रमरस्यैवेति विदुषो जनस्य तत्तत्पदसमभिव्याहारान्मधुपदस्य मकरन्दरूपार्थतयैव प्रतिपत्तिः। इति। क्वचित्ततोऽ-
न्यत्रेति भावः। आप्तोपदेशादाप्तस्य 'अयं सत्यं ब्रूते'इति विश्वसनीयस्योपदेशस्तस्मात्। 'आप्तः प्रत्ययितस्त्रिषु।'
इत्यमरः। यथा –'अयं। पुरोदृश्यमान इत्यर्थः। अश्वशब्दवाच्योऽ'श्व'इति शब्दस्य वाच्योभिधेय इति तथोक्तः।'
इत्यत्र 'इदमा निर्देश्याकारेऽश्वशब्दस्यार्थप्रतिप्रत्ति'रिति शेषः। अयं भावः–पशुविशेषोऽयमित्यवगच्छतो जनस्य
'किन्नामाऽय'मिति विशेषरूपेणावजिगमिषायाम् 'अयमश्व इत्याप्तोपदेशे 'अश्व ईदृशो भवती'ति प्रतिपत्तिः। इति।
अत्राहुस्तर्कवागीशाः–एतदुपलक्षणं, तेन व्याकरणादयोऽपि शक्तिग्रहोपाया द्रष्टव्याः। तदुक्तम्–"शक्तिग्रहं व्याकरणोप-
मानकोषाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य धीराः॥" इति। दाक्ष्यादि-
शब्दानां दक्षाद्यपत्येषु शक्तिग्रहो व्याकरणात्, गोसदृशपिण्डदर्शनाद्गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यस्मरणेऽयं
गवयपदवाच्य इत्युपमानात्, 'विनायको विघ्नराजद्वैमातुरगणाधिपाः।' इत्यादौ कोशात्, आप्तवाक्यादित्रयमुदाहृतं
स्वयमेव ग्रन्थकृता, वाक्यशेषाच्छक्तिग्रहो यथा–'यवमयश्चरुर्भवति'वाराही चोपानत्। 'वैतसे कटे प्राजापत्यं धिनोति।'

**इत्येवं तं च सङ्केतितमर्थम्बोधयन्ती शब्दस्य शक्त्यन्तरानन्तरिता शक्तिरभिधा नाम।**

**१९ सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च ॥ ७॥**

**जातिर्गोपिण्डादिषु गोत्वादिका, गुणो विशेषाधानहेतुः सिद्धोवस्तुधर्म्मः, शुक्लादयो हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यो व्यावर्त्तयन्ति, द्रव्यशब्दा एकव्यक्तिवाचिनो हरिहरडित्थडवित्थादयः, क्रियाः साध्यरूपा वस्तुधर्म्माः पाकादयः, एषु हि अधिश्रयणाद्यवश्रयणान्तादिपूर्वापरीभूतो व्यापारकलापः पाकादिशब्दवाच्यः। एष्वेव हि व्यक्तेरुपाधिषु सङ्केतो गृह्यते, न व्यक्तौ; आनन्त्य-व्यभिचारदोषापातात्।**

---

इत्यत्र यववराहवेतसशब्दाः किं म्लेच्छप्रयोगात् कङ्कुवायसजम्बूनां वाचकाः, उतार्य्यप्रयोगाद्दीर्घसूकरवञ्जुलानामिति विप्रतिपत्तौ 'वसन्ते सर्वसस्यानां जायते पत्रशातनम्। मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥' 'वराहं गावोऽनुधावन्ति,' 'अप्सुजो वेतसः' इति वाक्यशेषरूपवेदविरोधिनी म्लेच्छप्रतीतिः स्मृतिरिव वेदविरुद्धा हेया। इत्यार्य्यप्रयोगादेव दीर्घसूकरादौ शक्तिग्रहः। इति तं निरुक्तदिशा प्रतिपत्तिविषयकम्। **सङ्केतितम्। अर्थम्। च। बोधयन्ती। शब्दस्य** शब्दसम्बन्धिनीत्यर्थः। **शक्त्यन्तरानन्तरिता** शक्त्यन्तरेण लक्षणया व्यञ्जनया वाऽनन्तरिताऽव्यवहितप्रचारेति तथोक्ता। **शक्तिः** सामर्थ्यम्। **अभिधा। नाम।**

अभिधा यत्सङ्केतवन्तमर्थं बोधयति स सङ्केतः किन्निष्ठ इत्याशङ्क्याह–१५ **सङ्केत** इत्यादि।

१५ **सङ्केतः। जातौ** गोत्वादिरूपायां लक्षणया तदुपाधावित्यर्थः। **च** तथा। **गुणद्रव्यक्रियासु।** गुणः शुक्लादिर्द्रव्यमात्रवृत्तिः, द्रव्यं व्यक्तिवाचकं डित्थादि, क्रिया पाकादिरूपा चेत्येतासु लक्षणया गुणोपाधौ द्रव्ये क्रियोपाधौ चेत्यर्थः। **सङ्केतः। गृह्यते।** अयं भावः–केवलं जात्युपाधौ जातिगुणक्रियोपाधिषु वा द्रव्ये च सङ्केतग्रह इति। द्रव्यं च यदृच्छाशब्दस्तस्य तु व्यक्तावेव सङ्केतग्रहः। द्रव्यस्य शक्तिव्यतिरिक्तत्वाभावेनोपाधित्वाभावान्नानात्वाभावादानन्त्यस्य व्यभिचारस्य चापाताभावात्' इति॥ ७॥

अथ सूत्रार्थं विवृणोति–जातिरित्यादिना।

**जातिः। गोपिण्डादिषु** गोशरीरादिषु। **गोत्वादिका।** ज्ञेयेति शेषः। गोशरीरादिषु गोत्वादिरूपेण वर्त्तमाना या सा जातिरिति भावः। **गुणः। विशेषाधानहेतुर्**विशेषस्य विभागस्याधानहेतुः। विशेषयत्येकमपरेण सह विभक्तत्वेन प्रत्याययतीति विशेषः। **सिद्धो** नित्यं वर्त्तमानः। **वस्तुधर्म्मो** वस्तुनो धर्म्मः शुक्लादिरिति तथोक्तः। परस्परं विभागाधानहेतुः शुक्लादिरूपे नित्यसिद्धस्तत्तद्वस्तुधर्म्मो गुण इति फलितम्। तदेव हेतुनिर्देशेन सिद्धान्तयति–**हि** यतः। **शुक्लादिना। गवादिकं** शुक्लादिगुणविशिष्टं गवादिरूपं वस्त्विति भावः। **सजातीयेभ्यो** गोत्वादिरूपया जात्या समानेभ्य इत्यर्थः। **कृष्णगवादिभ्यः।** 'वस्तुभ्य' इति शेषः। **व्यावर्त्तयन्ति** विशेषयन्तीत्यर्थः। **द्रव्यशब्दाः। एकव्यक्तिवाचिन** एकस्या व्यक्तेरभिधायिकाः। हरि-हर-डित्थ-डवित्थादयः। 'सन्ती'ति शेषः। 'अयं हरिपदवाच्य'इत्येवं यदृच्छयैकैकव्यक्तिवाचकत्वेन गृहीता द्रव्यशब्दवाच्या इति भावः। इदं च बोध्यम्–द्रव्यं सञ्ज्ञाविषयः, सञ्ज्ञा च द्विप्रभेदा चिरन्तनी तद्भिन्ना च। तत्राद्या हरिहरादिरूपा, अन्त्या पुनर्डित्थादिरूपेति तत्तदात्मिका एकैकस्या व्यक्तेरेव वाचकाः सत्त्वापरपर्याया द्रव्यशब्दार्था इति। **क्रियाः। साध्यरूपाः। वस्तुधर्म्माः। पाकादयः** पाकादिरूपा बोध्या इत्यर्थः। तदेवाह-**हि** यतः। **एषु** साध्यरूपेषु वस्तुधर्म्मेषु। **अधिश्रयणाद्यवश्रयणान्तादिपूर्वापरीभूतः।** अधिश्रयणं चुल्ल्यूर्ध्वदेशे पाचनीयद्रव्यस्थापनमादिर्यस्य सोऽधिश्रयणादिः, अवश्रयणं पक्वे द्रव्ये चुल्लीतस्तस्यावतारणमन्तोऽन्त्यावयवभूतो यस्य सोऽवश्रयणान्तः, अधिश्रयणादिश्चासाववश्रयणान्त इति, स आदौ यस्य। (गृहप्रवेशनिर्गमादेः) तादृशोऽसौ पूर्वापरीभूत इति तथोक्तः। **व्यापारकलापः। पाकादिशब्दवाच्यः।** 'बोध्य' इति शेषः। इत्येवं जात्यादिस्वरूपं लक्षयित्वाऽऽशङ्कान्तरं निराकरोति **एष्वि**त्यादिना। **हि** यतः। **एषु जात्यादिषु** मध्ये **व्यक्तेः। उपाधिषु।** तथा च-'ये व्यक्त्युपाधिभूता जातिगुणक्रियारूपा धर्मास्तेषु इति निष्कृष्टम्। '**एव। सङ्केतः। गृह्यते। व्यक्तौ। न** 'सङ्केत'इति शेषः। **आनन्त्यव्यभिचारदोषापातादानन्त्यं** च व्यभिचारोऽति-

व्यासिश्चेति, तौ चैतौ दोषौ तयोरापातस्तस्मात्। अयं भावः—यद्यपि निखिलप्रयोजनक्रियाकारितया प्रसिद्धा व्यक्तिरेव सङ्केतग्रहपात्रं, तदपि तत्रानन्त्याद् व्यभिचाराच्च सङ्केतः कर्तुं न शक्यते। तथाहि किं सर्वासु व्यक्तिषु सङ्केतग्रहः, उत कस्याञ्चिदेकस्याम् न सर्वासु, अनन्तानां तासां युगपदुपस्थानासम्भवात्, नापि कस्यांचिदेकस्याम्, सङ्केतग्रहातिरिक्तायां सङ्केतानुपस्थानात्। अथ च—गौः शुक्लगुणवान् डित्थनामा चलनक्रियावान् इत्यभिप्रेत्य 'गौः शुक्लश्चलो डित्थ'इत्यादौ गवादिभिश्चतुर्भिरपि शब्दैरेका सैव गोव्यक्तिः सङ्केत्यते, इति पदार्थभेदो न स्यात्, तत्र व्यक्तेरेव पदार्थत्वात्, तस्याश्च प्रकृते एकत्वात्। एवं च—विषयविभागानुपपत्तौ गवादिपदार्थानां 'घटः कलश'इत्यादीनामिवैकार्थवाचकत्वेन सह प्रयोगो न स्यात्। न च जात्यादिष्वित्यपि वक्तुं शक्यम्, व्यक्तेरेव सकलप्रयोजनक्रियाकारित्वात्, व्यक्तिप्रतीत्यनुपपत्तेश्च। तस्मात् **जात्यादिषु** जात्याद्युपाधिष्वित्यर्थः। इत्यभिप्रेत्यैव'आस्वि'त्यनुक्त्वा'एष्वि'त्युक्तम्। न चापि व्यक्तौ, नानात्वस्वीकारे नानाशक्तिकल्पनायां गौरवात्, एकत्वस्वीकारे तदतिरिक्तायां शक्तिकल्पनानुपपत्तेर्व्यभिचारापाताच्च इति।

इदमभिहितम्—यदपि व्यक्तिरेव सर्वार्थान् सम्पादयते, तदपि अस्या आनन्त्याद् व्यभिचाराच्च नात्र सङ्केतो ग्राह्यः, न हि सर्वासु गवादिव्यक्तिषु सङ्केतो, नापि एकस्यामेव गवादिव्यक्तौ वक्तुं शक्यते, अनन्तानां गवादिव्यक्तीनां युगपदनुपस्थानात्, अन्यत्र तच्छब्देन तत्तत्प्रत्ययाभावाच्च; व्यक्तिगतशक्तिविशेषाभिधाने च 'गोत्वात्मकजातिशाली, शुक्लत्वात्मकवर्णशाली, डित्थसञ्ज्ञः, चलनक्रियावांश्चे' त्यभिप्रायेण 'गौः, शुक्लः, डित्थः, चल' इत्यभिहिते चतुर्भिर्गवादिशब्दैरेकैव असौ गोव्यक्तिरभिधीयते, इति प्रवृत्तिनिमित्तस्य पदार्थस्य विभागो न स्यात्। तत्र व्यक्तेरेव प्रवृत्तिनिमित्तरूपपदार्थत्वात्। तस्याश्च प्रकृत ऐक्यात्। इति। पुनरेवं विभागासत्त्वे गवादिशब्दानां 'घटः, कलश' इत्यादीनामिव एकार्थवाचकताया एव सिद्धौ पर्य्यायत्वोपपत्तौ सह प्रयोगो न स्यात्। इति। उपाधिगतशक्तिविशेषाभिधाने तु जाति, गुण, द्रव्य, क्रियाणां प्रवृत्तिनिमित्तानां गवादिशब्दानां विभागकल्पनया पर्य्यायत्वानुपपत्तेर्भवति सह प्रयोग इति भावः। तत्र—जातिर्गोत्वादिरूपाऽवयवसंस्थानविशेषाभिव्यङ्ग्या प्रत्यक्षसिद्धा गवादिशब्दानामभिधेया। अनुमानसिद्धा च घ्राणत्वरसनत्वादिर्घ्राणरसनादिशब्दानामभिधेया। जातिरूपोऽयं शब्दो व्यवहारौचित्यप्रदातृत्वेन 'प्राणप्रद' इत्यभिधीयते। तथाऽभिहितं भर्तृहरिणा—'गौः स्वरूपेण न गौर्नाप्यगौः गोत्वाभिसम्बन्धात्तु गौः।' इति। अस्य चायमर्थः—गौर्गोपदवाच्यः सास्नादिमान् धर्मी। स्वरूपेण धर्म्मिस्वरूपेण। न। गौ 'गौ' रिति व्यवहारविषयो भवति। अगौर्गोभिन्नः। अपि न 'गौ' रिति व्यवहारविषय इति शेषः। गोरपि हि गोत्वाभावप्रसक्तिः गोभिन्नस्यापि गोत्वप्रसक्तेश्च गोत्वाभिसम्बन्धाद्गोत्वस्याभिसम्बन्धाज्ज्ञानात्, गौ 'गौ'रिति व्यवहारविषयो भवति। एवं च—नित्यमनेकानुगतं सामान्यं जातिरिति फलितम्, गुणः शुक्लादिरूपः शुक्लादिपदानामभिधेयः। शुक्लादिना हि गवादिकं लब्धसत्ताकं सद्विद्यते। अयं भावः— उत्पन्नं द्रव्यं गुणेन युज्यते, उत्पत्तिदशायां क्षणं नैर्गुण्यात्। अत एव—'जन्मना जायते जातिः' इति सङ्गच्छते। सिद्धं च, एवं—जातिगुणयोः पार्थक्यम्। अन्ये त्वाहुः—'यद्यपि शुक्लादिगुणस्य नित्यत्वाभ्युपगमे गोत्वादिना समकालमेव सम्बन्धित्वम्, तथाऽपि शुक्लादिगुणस्य सम्बन्धः कदाचित् पाकरञ्जनादिना वर्णान्तरोपादाने अपयात्यपि, न तु गोत्वादेरिति जातिगुणयोर्भेदः। अत एव 'वोतो गुणवचनात्।' ४।१।४४ इति सूत्रे महाभाष्ये गुणलक्षणमुक्तम्, 'सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥' इति। अत्रेदमवगन्तव्यम्— 'चतुष्टयी शब्दानां प्रवृत्तिः।' इति वक्ष्यमाणमहाभाष्योक्तेर्जातिक्रियाद्रव्या-

---

१ अयं भावः यो द्रव्यमाश्रयते, तत एव द्रव्याभिवर्त्तते, भिन्नजातीयेषु द्रव्येषु दृश्यते स गुणः। एतेन—जातेर्गुणत्वमपाकृतम्। सा हि द्रव्ये निविशमाना द्रव्यं कदाचिन्न जहाति, न च भिन्नजातीयानि द्रव्याण्यभिनिविशते। यद्यपि गवादिषु प्राणित्वमप्यस्ति, तथाऽपि प्राणित्वेन तेषामेकजातीयत्वमेव। ननु क्रियायाः पूर्वोक्तलक्षणयोगाद् गुणत्वं प्राप्यते यत् साऽपि द्रव्ये निविशते, कदाचित् द्रव्यादपैति, निष्क्रियं च द्रव्यं कदाचिद्भवति, कदाचित् पुनः सक्रियम्, भिन्नजातीयानि च द्रव्याण्याश्रयति, तदेवाह—आधेय इति। उत्पाद्य इत्यर्थः। यथा घटादेः पाकजो रूपादिः। अक्रियाजोऽनुत्पाद्यः। यथा आकाशादेर्महत्त्वादिः। क्रिया तूत्पाद्यैव, न तु नित्या। तस्या द्वैविध्याभावाद्गुणत्वाभावः। ननु एवं द्रव्यस्यापि गुणत्वं स्यात्, अवयविद्रव्यमवयवद्रव्येषु निविशते, द्विविधं तन्नित्यानित्यभेदेन निरवयवस्य द्रव्यस्यात्मपरमाण्वादेर्नित्यत्वादवयविद्रव्यस्यानित्यत्वात् इदमेवाह—असत्त्वप्रकृतिरिति। अद्रव्यस्वभाव इत्यर्थः। 'पृथग्जातिष्वि'त्यत्र व्यासः, समासे 'जात्यन्ताच्छ बन्धुनि।' ५।४।९ इति छः स्यात्। तत्र व्यक्तिषु जात्याधारेषु दृश्यमानो जातिषु दृश्यते। इति।

तिरिक्तं धर्म्ममात्रं गुणः इति पर्य्यवस्यति । तेन अभावादेरपि गुणत्वमिति सिद्धम् । अत एव तत्त्ववोधिनीकाराः
प्राहुः–'सञ्ज्ञाजातिक्रियाशब्दान् हित्वाऽन्ये गुणवाचिनः । चतुष्टयी शब्दानां प्रवृत्तिः ।' इत्याकरग्रन्थ (महाभाष्य)
निष्कर्षादेव निर्णयः । इति । द्रव्यं च सञ्ज्ञाविषयः, सञ्ज्ञा च चिरन्तनी आधुनिकी च, असौ द्विविधाऽपि यादृच्छिकी[1],
वक्त्रैव सन्निवेशितधर्म्मरूपत्वात् । अत्राहुः–"तच्छब्दानां च व्यक्तावेव सङ्केतग्रहः । द्रव्यस्य व्यक्तिव्यतिरिक्तत्वाभावेन
उपाधित्वाभावान्नानात्वाभावेन आनन्त्यव्यभिचारदोषाभावाच्च । अत एवोक्तं कविराजैः–'द्रव्यशब्दा एकव्यक्तिवाचिनः ।'
इति । यत्तु–'सञ्ज्ञाशब्दानां सञ्ज्ञायामेव सङ्केतग्रहः, उपस्थाप्योपस्थापकभावेन अविनाभावाद् व्यक्तेराक्षेपः ।' इत्याहुः,
तन्न, सञ्ज्ञायाः शब्दानतिरिक्तत्वेन तस्य च उच्चारणभेदेन भिन्नत्वे आनन्त्यव्यभिचारप्रसङ्गात् । एवं च– 'हरित्व–
डित्थत्वादिकं व्यक्तिस्वरूपमेव, न तु तद्भिन्नं किञ्चित् ।' इति। क्रिया पुनः भावनोत्पादनादिव्यपदेश्या साध्या । तथोक्तम्–
'व्यापारो भावना सैवोत्पादना सैव च क्रिया ।' इति, 'यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात्सः
क्रियेत्यभिधीयते[2] ॥' इति च ।" इति । तथा च प्राणप्रदा जातिः, विशेषाधानहेतुर्गुणः, सञ्ज्ञाविषयो द्रव्यम्, साध्या
क्रिया चेति चतुर्धोपाधिः । तदेवम्–'गौः, शुक्लः, चलो, डित्थ'इत्यादौ शब्दानां प्रवृत्तेरपि निमित्तं चतुष्प्रकारम्,
अत एवोक्तं महाभाष्यकारैः-'गौः, शुक्लः, चलः, डित्थः' इत्यादौ 'चतुष्टयी शब्दानां प्रवृत्तिः[3] ।' इति । तथा
च-'जातावेव सङ्केत'इति मीमांसकाः, 'जात्याद्युपाधिषु सङ्केत' इति च वैयाकरणाः । अत्र मीमांसकानामिदमभिधानम्–
दधि-हंस-स्वर्ण-हरिद्राऽऽद्याश्रयेषु वस्तुतो भिन्नेष्वपि शुक्लपीतादिषु 'शुक्लः शुक्ल' इत्यादिप्रतीत्युत्पत्तिहेतुः, वालतरुणाद्युदी-
रितेषु हरिडित्थादिशब्देषु प्रतिक्षणं भिद्यमानेषु हरिडित्थाद्यर्थेषु वा हरित्वडित्थत्वादिप्रतीत्युत्पत्तिहेतुः, क्षीरतण्डुलगुडानां
व्रीह्यादिपाकेषु पाकत्वादिप्रतीत्युत्पत्तिहेतुश्च जातिरेवेति सर्वेषां शब्दानां प्रवृत्तिनिमित्तभूतैका जातिः । इति । अन्ये-
षां तु–गौः शुक्लश्चलो डित्थ इत्यादौ गवादिशब्दानां जात्याद्युपाधयः प्रवृत्तिनिमित्तभूताश्चत्वारः । न च सर्वत्रैव जातिः,
'शुक्ली गौ' रिति प्रयोगापत्तेः । 'जातेरस्त्रीविषयादयोपधात् ।' ४।१।६३ इति ङीषो वाधाभावात् । अत एव
महाभाष्यकाराः प्राहुः–'का जातिर्नाम ? 'आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं
च चरणैः सह ॥' इति । अपर आह–प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद् गुणैः । असर्वलिङ्गां वह्वर्थां तां
जातिं कवयो विदुः ॥ गोत्रं च चरणं च । कः पुनरेतयोर्लक्षणयोर्विशेषः ? यथा पूर्वं जातिलक्षणं तथा कुमारी-
भार्य्य इति भवितव्यम्, यथोत्तरं तथा– 'कुमारभार्य्य' इति भवितव्यम् ? ' इति । कैयटा व्याचक्षते– 'का
जातिरिति, लक्षणविप्रतिपत्त्या प्रश्नः ? आकृतिग्रहणेति । गृह्यतेऽनेनेति ग्रहणम् इति कारणसामान्ये पदं
संस्क्रियते, तत्राकृतिशब्दसन्निधाने स्त्रीत्वप्रतिपत्तिर्वहिरङ्गत्वात् स्त्रीप्रत्ययनिमित्तं न भवति । आकृतिर्ग्रहणं

---

१ यदृच्छया सन्निवेशितेति यादृच्छिकी । तथा च–वक्त्रा स्वेच्छया हरिडित्थादिशब्दानां प्रवृत्तिनिमित्तत्वे सन्नि-
वेशितो यो धर्म्मस्तत्स्वरूपा सञ्ज्ञेति फलितम् । अत्राहुः–'असौ ( धर्म्मः ) पुनः परम्परया व्यक्तिगतश्चरमवर्णाभि-
व्यङ्ग्योऽखण्डः स्फोट' इत्येके, 'आनुपूर्व्यवच्छिन्नो वर्णसमुदाय' इत्यन्ये, 'केवला व्यक्ति'रित्यपि केचित् ।

२ अयमर्थः–'यावत् सर्वम् । सिद्धम्भूतं वर्तमानध्वंसप्रतियोगीति यावत्, यथा 'अपाक्षी'दित्यादौ । असिद्धम्भूत-
भिन्नं वर्त्तमानतादृशप्रागभावप्रतियोगीति यावत्, वा । यथा–'पचति,' 'पक्ष्यती,' त्यादौ । व्यापारवृन्दं साध्यत्वेन तत्प्रका-
रेणाभिधीयते, साऽभिधीयमाना च क्रिया । सा च–आश्रितक्रमरूपत्वादाश्रितः क्रमो येन स एवं रूपं यस्य तस्य भावस्तत्त्वं
तस्मात् तथोक्तादित्यर्थः । क्रियेत्यभिधीयते ॥' इति । अन्ये त्वाहुः–साध्यत्वेनेति सिद्धत्वेनेत्यस्याप्युपलक्षणम्, तेन
साध्यत्वेन सिद्धत्वेन चेत्यर्थः । उक्तं च–'साध्यत्वेन क्रिया, तत्र धातुरूपनिवन्धना । सिद्धभावस्तु यस्तस्याः स घञादि-
निवन्धनः ॥' इति । तथा च–'क्रियान्तराकाङ्क्षाऽनुत्थापकताऽवच्छेदकरूपवत्त्वं कारकान्वयिताऽवच्छेदकरूपवत्त्वं वा
साध्यत्वम् ! यथा 'पचति, पक्ष्यति, अपाक्षीत्' इत्यादौ । इदमेव असत्त्वभूतत्वम्, तदुक्तम्–'असत्त्वभूते । भावश्च
तिङ्पदैरभिधीयते ।' इति । क्रियान्तराकाङ्क्षोत्थापकताऽवच्छेदकरूपवत्त्वं, कारकानन्वयिताऽवच्छेदकरूपवत्त्वं वा सिद्ध-
त्वम् । यथा -'पाकः, पक्तिः, पचनम्' इत्यादौ । इदमेव च सत्त्वभूतत्वम् ।' इति ।

३ केचित्त्वाहुः–'त्रय्येव शब्दानां प्रवृत्तिः । 'त्रयीशब्दानां प्रवृत्तिः । यदृच्छाशब्दा न सन्ति ।' इत्याद्युत्तरग्रन्थानु-
सन्धानात् ।' इति ।

अथ लक्षणा—.

**१६ मुख्यार्थबाधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते ।**
**रूढेः प्रयोजनाद् वाऽसौ लक्षणा शक्तिरर्पिता ॥ ८ ॥**

**'कलिङ्गः साहसिकः' इत्यादौ 'कलिङ्गादिशब्दो देशविशेषादिरूपे स्वार्थेऽसम्भवन्**

---

यस्याः सा आकृतिग्रहणा, अवयवनिवेशविशेषव्यङ्ग्येत्यर्थः । एतेन—गोत्वादिजातिर्लक्षिता, ब्राह्मणत्वादिस्तु न सङ्गृहीता । ब्राह्मणक्षत्रियादीनां संस्थानस्य सदृशत्वात्, इति तत्सङ्ग्रहायाह—लिङ्गानामिति । लिङ्गानि सर्वाणि भजतीति सर्वशब्दस्य लिङ्गापेक्षित्वेऽपि गमकत्वाद् भजो ण्विरिति ण्विप्रत्ययः । लिङ्गानामिति कर्म्मणि षष्ठी । अप्राप्तप्रमाणार्थं चेदं वचनम्, इति तटादेः सर्वलिङ्गत्वेऽपि आकृतिग्रहणत्वाज्जातिरूपोपपत्तिः । उपदेशापेक्षं च लिङ्गानामिति । जातिलक्षणमिति ब्राह्मणत्वादिरेव लक्ष्यते। तेन-देवदत्तेत्वसर्वलिङ्गत्वेऽपि जातिलक्षणङीषभावः । सकृदिति अयं गौरिति सकृदुपदिष्टा जातिर्निगृहीतुं निश्चेतुं पिण्डान्तरे शक्येत्यर्थः । गोत्रमिति । अपत्यमित्यर्थः । चरणशब्देन शाखाऽध्यायिनो गृह्यन्ते । गोत्रस्य सर्वलिङ्गत्वात् पृथगुपादानं 'नाड्यायनं नपुंसक' मिति दर्शनात् । प्रादुर्भावेति । सत्त्वस्य द्रव्यस्य प्रादुर्भावविनाशाभ्यां याऽऽविर्भावतिरोभावौ प्राप्नोति । यावद्द्रव्यभाविनीत्यर्थः । गुणैर्युगपद् द्रव्येण सम्बध्यते यथा निर्गुणस्य द्रव्यस्योपलम्भो न भवति, एवं जातिरहितस्यापि इत्यर्थः । वह्वर्थामिति सर्वव्यक्तिव्यापिनीमित्यर्थः । अर्थशब्दोऽत्र विषयवाची । चरणानीति । चरणशब्दोऽध्ययनवचनः, इह तु उपचारात् अध्येतृषु वर्त्तते । कुमारीभार्य्य इति । कौमारमयावद्द्रव्यभाव्यपि आकृतिग्रहणत्वाज्जातिरिति, जातेश्चेति पुंवद्भावप्रतिषेधः । उत्तरे तु लक्षणे कौमारं जातिर्न भवति, अयावद्द्रव्यभावित्वात् । पूर्वोक्तमेव लक्षणं महाभाष्यकारस्याभिमतम्, 'अपर आह' त्यभिधानात् ।'इति। तथा च—युवतितरेति ङ्याप्सूत्रे उदाहरणं ददौ, तसिलादिष्विति प्राप्तस्य पुंवद्भावस्य 'जातेश्चे'ति निषेधात् ।'इति दिक् ।

एवमभिधां निरूप्य लक्षणां निरूपयितुमुपक्रमते—अथेत्यादिना ।

**अथा**भिधायाः सप्रपञ्चं निरूपणानन्तरम् । **लक्षणा** लक्ष्यते १६ **मुख्यार्थबाध** इत्यादिना ।

१६ **मुख्यार्थबाधे** मुख्यार्थस्य वाच्यार्थस्य वाधोऽन्वयानुपपत्तिस्तस्मिंस्तथोक्ते । 'सती'ति शेषः । अन्वयस्य सम्बन्धस्यानुपपत्तिरुपपत्त्यभावः, स च क्वचित्, साक्षात् सम्भवाभावमुखेन, क्वचित् पुनः तात्पर्य्यानुपपत्तिमुखेन तात्पर्याविषयतया वा; इति वोध्यम् । 'पुंयोगादाख्यायाम् ।' ४।१।४८ इति सूत्रे महाभाष्यकारैरुदाहृते 'गङ्गायां घोषः' इत्यादौ प्रत्यक्षादिप्रमाणेन प्रवाहादिरूपस्य मुख्यार्थस्य घोषाद्यधिकरणत्वादिना सम्भवाभावे इति भावः । **तद्युक्त**स्तेन प्रत्यक्षादिप्रमाणेन वाधितेन मुख्यार्थेन युक्तः सम्बद्धः साक्षात्सम्बन्धं प्राप्त इति यावत्, इति तथोक्तः । **अन्यो** भिन्नः मुख्यार्थातिरिक्त इति यावत् । **अर्थः** तीरादिरूपः पदार्थ इति भावः । **यया** यद्द्वारा यद्वृत्तिद्वारेति यावत् । **प्रतीयते** प्रतीतिपथमेति । असौ 'से'ति शेषः । **रूढेः** प्रसिद्धेः प्रयोगप्रवाहादिति यावत् । अत्र 'ल्यब्लोपे कर्म्मण्यधिकरणे च ।' इति वार्त्तिकेन पञ्चमी, एवमुत्तरत्रापीति वोध्यम् । तथा च—रूढिमुद्दिश्येत्यर्थः । **वाऽ**थवा । **प्रयोजनात्** फलात् शीतलत्वपावनत्वाद्यतिशयबोधनरूपं फलमुद्दिश्येति यावत् । **अर्पिता** आरोपिता (अत एवास्या अमुख्यात्वम्, एतदर्थस्य च मुख्यातिरिक्तत्वमिति वोध्यम्) । **शक्ति**र्वृत्तिः । 'ज्ञेये'ति शेषः । अयम्भावः—'गङ्गायां घोषः,' 'कूपे गर्गकुलम्,' 'कलिङ्गः साहसिकः,' 'काकेभ्यो दधि रक्ष्यताम्,' इत्यादौ 'जलप्रवाहरूपगङ्गाऽधिकरणको ग्रामविशेषः' इत्याद्यर्थः प्रथममुपतिष्ठमानः सङ्केतितात्माऽत एवास्य मुख्य इति व्यपदेशः, मुख आदौ भव इति व्युत्पत्त्यनुगतत्वात् । अस्य च वाधे लक्षणायाः प्रवृत्तिः, अत एव नेयं मुख्या, किन्तु—आरोपिता शक्तिः । इति ॥८॥

**लक्षणा** लक्ष्यतेऽनयेति तथोक्ता तन्नाम्नीति भावः ।

स्वयं सूत्रार्थं विवृणोति—'**कलिङ्गः साहसिकः**' इत्यादिना ।

'**कलिङ्गः** 'जगन्नाथात्पूर्वभागे कृष्णातीरान्तरे शिवे । कलिङ्गदेश' इत्युक्तो देशविशेषः । **साहसिकः** साहसं दुष्कर्म्म विकर्म्मेति यावत्, अस्यास्तीति तथोक्तः । 'साहसं तु दमे दुष्करकर्म्मणि । अविमृष्यकृतौ धार्ष्ट्ये' इति हैमः । 'अत इनिठनौ ।' ५।२।११५ इति ठन् । 'ठस्येकः ।' ७।३।५० इतीकादेशः ।' **इत्यादौ** । आदिना—'वङ्गो भीरुः । 'वेदान्तो मोक्षनिश्रेणिः,' 'गङ्गा स्वर्गस्य वैजयन्ती' इत्यादीनां ग्रहणम् **कलिङ्गादिशब्द** आदिना वङ्गादीनां ग्रहणम् । **देशविशेषादिरूपे** । आदिना शास्त्रविशेषादीनां ग्रहणम् । **स्वार्थे** मुख्यार्थे इति भावः । **असम्भवन्** साहसिक-

**यया शब्दशक्त्या स्वसंयुक्तान् पुरुषादीन् प्रत्याययति, यया च-' गङ्गायां घोष ' इत्यादौ ' गङ्गा ' दिशब्दो जलमयादिरूपार्थवाचकत्वात् प्रकृतार्थेऽसम्भवन् स्वस्य सामीप्यादिसम्बन्धसम्बन्धिनं बोधयति, सा शब्दस्य अर्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम। पूर्वत्र हेतू रूढिः प्रसिद्धिरेव, उत्तरत्र 'गङ्गातटे घोष' इतिप्रतिपादनालभ्यस्य शीतत्वपावनत्वातिशयस्य बोधनरूपं प्रयोजनम्। हेतुं विनाऽपि यस्य कस्यचित् सम्बन्धिनो लक्षणेऽतिप्रसङ्गः स्यात्; इत्युक्तं ' रूढेः प्रयोजनाद् वा'इति।**

---

त्वानुपपत्त्या व्यापारविमुखः सन्। **यया**। **शब्दशक्त्या** शब्दवृत्त्येत्यर्थः, शक्ति-वृत्त्योरभिन्नार्थत्वात्, अत एव-'सा वृत्ति-र्व्यञ्जना नामे'ति विवृण्वानाः 'सा शब्दस्यार्थस्य.. शक्तिर्व्यञ्जन...प्रत्यायनादिविषया व्यञ्जना नामे'ति वक्ष्यन्ति कविराजाः। **स्वसंयुक्तान्** स्वेन स्वीयेनार्थेन संयुक्ताः कृतसम्बन्धास्तान्। **पुरुषादीन्**। आदिना तल्लक्ष्यब्रह्मसाक्षात्कारादीनां ग्रहणम्। **प्रत्याययति** प्रतीतिं नयति ( इदं च रूढिमुद्दिश्याभिधानम् )। **यया**। च 'शब्दशक्त्ये'ति शेषः। **'गङ्गायां** तन्नाम्न्यां नद्यामित्यर्थः। **घोषो** ग्रामविशेषः। 'घोष आभीरपल्लिः स्या' दित्यमरः।' **इत्यादौ**। आदिना 'काकेभ्यो दधि रक्ष्यताम्' 'भक्तिः साक्षान्मोक्षः,' इत्यादीनां ग्रहणम्। **गङ्गाऽऽदिशब्दः**। आदिना काकादीनां ग्रहणम्। **जलम-यादिरूपार्थवाचकत्वात्**। जलमयो जलमात्रस्वरूपः। आदिना पक्षिविशेषादीनां ग्रहणम्। **प्रकृते** घोषसद्भावदधिरक्ष-णार्थयत्नकर्त्तव्यताऽऽद्यभिधाने। **असम्भवन्** तात्पर्य्यानुपपत्त्याऽन्वयमलभमानोऽभिधया प्रवर्त्तितुं पराभवन् इति यावत्। **स्वस्य** गङ्गाकाकादेरित्यर्थः। **सामीप्यादिसम्बन्धसम्बन्धिनम्**। आदिनोपघातकत्वादीनां ग्रहणम्। तटादिम्। आदिना यावद्दध्युपघातकादीनां ग्रहणम्। **बोधयति** प्रत्याययति ( इदं प्रयोजनमुद्दिश्याभिधानम् )। **सा** रूढिमूलात्व-प्रयोजनमूलात्वाभ्यां द्विविधेति भावः। **शब्दस्य**। **अर्पिता** वक्त्रादितात्पर्योपपत्तये कल्पिता। अत एव-**स्वाभाविकेतरा**। स्वाभाविको हि शब्दव्यापारोऽभिधा, तद्भिन्नेति भावः। वा यद्वेति भावः ( 'ईश्वरेच्छा शक्ति'रिति नयाभिप्रायेणेदं पक्षा-न्तरोत्थापनम् )। **ईश्वरानुद्भाविते**श्वरेण (स्वेच्छया) अनुद्भावितोद्भाविताततो भिन्नेति तथोक्ता। इदानीन्तनैरेव तात्पर्य्यानुप-पत्तोद्भाविततेति भावः। **शक्तिः**। **लक्षणानाम** प्रसिद्धा ज्ञेया। 'नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सने।' इत्यमरः।

ननु द्विविधयोरेतयोः कुत्र केत्यपेक्षायामाह-**पूर्वत्रे**त्यादि।

**पूर्वत्र** 'कलिङ्गः साहसिकः' इत्यादावित्यर्थः। **रूढिः प्रसिद्धिः**। एव न तु प्रयोजनमिति भावः। **हेतुः** कारणं लक्षणायाः स्वीकारे निमित्तमित्तमित्तम् अतः रूढिमूला लक्षणेति निर्गलितोऽर्थः। **उत्तरत्र** 'गङ्गायां घोष' इत्यादावित्यर्थः। **'गङ्गातटे**। आधारे सप्तमीयम्। तथा च गङ्गातटाधिकरणक इत्यर्थः। **घोषः**।' **इतिप्रतिपादनालभ्यस्ये**त्येवं प्रतिपादनेनाप्यलभ्यस्य। इदमुपलक्षणं, तथा च-इत्यादिप्रतिपादनालभ्यस्येति निष्कृष्टम्। आदिना-'काकेभ्य उपघातकेभ्यो दधि रक्ष्यताम्' इत्यादीनां ग्रहणम्। **शीतत्वपावनत्वातिशयस्य** इदमप्युपलक्षणम्, तथा च-शीतत्वपावनत्वाद्युपघातकमा-त्रत्वाद्यतिशयस्य। 'घोषादिनिष्ठस्ये'तिशेषः। **बोधनरूपम्**। **प्रयोजनं** 'गङ्गाऽधिकरणकशीतलत्वाद्यतिशयितघोष' इत्यादि व्यङ्ग्यं फलमिति भावः। 'हेतु'रिति शेषः। तथा च-प्रयोजनमूला लक्षणेति निष्कृष्टम्। ननु लक्षणायाः प्रवृत्तौ रूढिप्रयोजनयोरन्यतरस्य हेतुत्वाभिधाने किं प्रयोजनमित्याह-**हेतुं** रूढिरूपं प्रयोजनरूपं वा कारणमिति भावः। **विना**। **अपि**। 'लक्षणाङ्गीकारे'इति शेषः। **यस्य**। **कस्यचित्**। **सम्बन्धिनो** मुख्यार्थयोगिनोऽर्थस्य। **लक्षणे** 'लक्षणाया'इति शेषः। विषये सप्तमीयम्। **अतिप्रसङ्गः**। **स्यात्** यद्वा-सम्बन्धिनोऽतिप्रसङ्गो लक्षणे लक्षणालक्षणे स्यादिति भावः। इतीत्यर्थम्। **उक्तम्**। **'रूढेः प्रयोजनाद्वा'इति**। इदं वक्तव्यम्'रूढेः प्रयोजनाद्वा'इति नयेन रूढिप्रयोजनयोरन्यतरस्य लक्षणायाः प्रवृत्तौ हेतुत्वानङ्गीकारेऽपि यं कञ्चिन्मुख्यार्थसम्बन्धमाश्रित्यैव लक्षणा यद्यङ्गी-क्रियेत तदा'कमले चरणाघातं मुखं सुमुखि ! तेऽकरोत्।' इत्यादौ लक्षणाऽतिप्रसज्येत, न च नेयार्थत्वं दोषः। इति। इदमपि वक्तव्यम्-'राजत्युमावल्लभ'इत्यादौ शाब्द्यां व्यञ्जनायामतिप्रसङ्गवारणाय 'मुख्यार्थबाधे'इति, एवं सति-असम्बन्धे लक्षणायां 'गङ्गायां घोष'इत्यादौ गङ्गाऽऽदिपदानां यमुनाऽऽदितटानामुपस्थापकत्वेऽतिप्रसङ्गवारणाय-'तद्युक्त'इति। मुख्यार्थेन सम्बद्धमर्थान्तरमेवानया निरूप्यते इति निदर्शयितुम्, 'अन्योऽर्थ'इति। अभिधेवैषाऽपीति 'शक्ति'रिति। नेयं पदार्थबोधकत्वसाधर्म्येणाभिधेति 'अर्पिते'ति दिक्।

**केचित्तु–'कर्मणि कुशल'इति रूढावुदाहरन्ति, तेषामयमभिप्रायः-कुशान् लातीति व्युत्पत्तिलभ्यः कुशग्राहिरूपो मुख्योऽर्थः प्रकृते असम्भवन् विवेचकत्वादिसाधर्म्यसम्बन्धसम्बन्धिनं दक्षरूपमर्थं बोधयति, तदन्ये न मन्यन्ते, कुशग्राहिरूपार्थस्य व्युत्पत्तिलभ्यत्वेऽपि दक्षरूपस्यैव मुख्यार्थत्वात्। अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तम्, अन्यच्च प्रवृत्तिनिमित्तम्। व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे 'गौः शेते'इत्यत्रापि लक्षणा स्यात्, 'गमेर्डोः।' (उ०) २।६७ इति गमधातोर्डोप्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकाले प्रयोगात्।**

---

अथ प्रकाशकारेणोदाहृतं रूढिलक्षणोदाहरणं न सम्यगिति जिज्ञासूपकृतये ब्रूते–**केचित्त्वि**त्यादिना ।

**केचित्** केऽपि प्रकाशकारादय इत्यर्थः। अत्र नाम्ना लेखाभावोऽनास्तत्वं, बहुवचनं तादृशबाहुल्यम्, अथापि विचा-रमान्येन तेषामपराधित्वाभावं द्योतयितुमिति बोध्यम्। तु पुनरित्यर्थः। '**कर्म्मणि** कर्म्मविषयक इत्यर्थः। अत्र विषये सप्तमी॥ **कुशलः** कुशान् लाति गृह्णातीति तथोक्तः, कुशग्राही तद्वच्चतुर इत्यर्थः।' इतीत्येवम्। **रूढौ उदाहरन्ति।** ननु अमीषामभिप्रायमज्ञात्वा किं दूषयितुं प्रवृत्ता इत्याशङ्क्याह–**तेषा**मित्यादि। **तेषां** प्रकाशकारादीनामित्यर्थः। **अयं** 'निर्देक्ष्यमाण'इति शेषः। **अभिप्रायः**। '**कुशान्** दर्भान् 'अस्त्री कुशं कुथो दर्भः पवित्रम्'इत्यमरः। **लाति** गृह्णाति। 'ला'दानग्रहणयोः। 'आतोऽनुपसर्गे कः।' ३।२।३ इति कः।' **इति व्युत्पत्तिलभ्यः। कुशग्राहिरूपः।** 'कुशल' इति शेषः। **मुख्योऽ**भिधया प्रतिपाद्यत्वेन प्रथममुपस्थितिविषय **इत्यर्थः। प्रकृते** 'कर्म्मणि कुशल' इत्यत्र कर्म्मविषयक-कुशग्राहितावानित्येवं वाक्यार्थोपस्थिताविति यावत्। **असम्भवन्** सामञ्जस्याभावेन स्वरूपसद्भावमलभमानः, कर्म्मविषयक-चतुरताशालीत्येवंविधं वक्तृतात्पर्य्यं वाऽनुपपत्त्योन्नेतुमशक्नुवन्निति भावः। **विवेचकत्वादिसाधर्म्यसम्बन्धसम्ब-न्धिनं** विवेचकत्वं योग्याहरणायोग्यापहरणरूपं विवेचनकारित्वमादौ यस्य (एवमुत्पाटनीयम् एवं च न; इत्यादेः) तथोक्तस्य साधर्म्यं समानधर्म्मत्वं तस्य यः सम्बन्धस्तस्य सम्बन्धी तदभिन्नसम्बन्धवांस्तं तथोक्तम्। **दक्षरूपं** दक्षश्चतुरः स एव रूपं स्वरूपं यस्य तम्। **अर्थम्। बोधयति** लक्षयति। 'लक्षणये'ति शेषः। अत एव तद्व्याख्यातारो व्याचक्षते–'कुशान् दर्भान् लाति आदत्ते'इति व्युत्पत्त्या कुशलपदं कुशग्राहिणि शक्तम्, दक्षे तु रूढ्या; इतीदं लाक्षणिकम्। न च'मुख्यार्थ-बाधाप्रतिसन्धानेऽपि झटिति दक्षबोधाच्छक्तिरेव, अन्यथा–मण्डपादिपदस्यापि मण्डं पिबतीत्यादिव्युत्पत्त्या गृहादौ शक्त्यभाव'इति वाच्यम्, क्लृप्तावयवशक्तिकस्य अन्यत्र गृहादिरूपेऽर्थे लक्षणयैवोपपत्तावतिरिक्तकल्पनाया अन्याय्यत्वात्, मण्डपादिपदस्यापि गृहादौ निगूढलक्षणाऽङ्गीकारात्, न चैवं पङ्कजादिष्वपि लक्षणाऽऽपत्तौ योगरूढिविलोपापत्ति'रिति वाच्यम्, तत्र योगार्थविशिष्टरूढ्यर्थस्यैव नियमेनोपस्थितौ रूढिकल्पने भेदात्। मुख्यार्थबाधप्रतिसन्धानमपि व्युत्पन्नाना-मस्त्येव, कदाचित् शक्तिभ्रमाद्बोधे तदभावेऽपि न क्षतिः।' इति।

इत्थेवमभिप्रायोद्घाटनपुरःसरं केषाञ्चिदभिधानमनूद्य स्वसिद्धान्तमुन्निनीषुराह–**तदि**त्यादि। **अन्येऽ**स्मदादयः। तत् 'यत् केचित्तथाऽऽहु' रिति शेषः। **न** नैवेत्यर्थः। **मन्यन्ते।** कुत इत्याह–**कुशग्राहिरूपार्थस्य। व्युत्पत्तिल-भ्यत्वे** व्युत्पत्त्या स्वाभिमतया योगाविष्कृत्या लभ्यस्तस्य भावस्तत्त्वं तस्मिन् तथोक्ते। **अपि। दक्षरूपस्य। एव,** न तु कुशग्राहिरूपस्येत्यर्थः। **मुख्यार्थत्वात्।** ननु कथमेतदित्याह–**हि** यतः। 'हि हेतावधारणे।' इत्यमरः। **शब्दानां** कुशलमण्डपादीनां पदानामित्यर्थः। **व्युत्पत्तिनिमित्तं** व्युत्पत्तेर्निमित्तं चिह्नं तदाख्यं वा कारणमिति तथो-क्तम्। **अन्यत्** भिन्नम्। **प्रवृत्तिनिमित्तं** प्रवृत्तेस्तत् तदर्थबोधकत्वस्य निमित्तं चिह्नं न तदाख्यं वा कारणमिति तथो-क्तम्। **च** पुनरित्यर्थः। अन्यत् भिन्नम्। नहि व्युत्पत्तेश्चिह्नं प्रवृत्तिः न वा प्रवृत्तेश्चिह्नं व्युत्पत्तिरिति, नहि व्युत्पत्तिः प्रवृत्तेः प्रयोजिका, न वा प्रवृत्तिर्व्युत्पत्तेः प्रयोजिकेति वा भावः। 'निमित्तं हेतुलक्ष्मणोः।' इत्यमरः। अत्र विप्रतिपत्तौ दोषमाह–**व्युत्पत्तिलभ्यस्य** कुशग्राहित्वादिरूपस्यार्थस्येति भावः। **मुख्यार्थत्वे** मुख्यत्वाङ्गीकारे। 'व्युत्पत्तिः प्रवृत्तेर्नि-मित्तम्।' इति नयेनेति शेषः। '**गौः। शेते** स्वपिति।' **इत्यत्र। अपि। 'गमेर्डोः।'** २।६७ **इति** 'औणादिकेन सूत्रेणे'ति शेषः। **गमधातोः। डोप्रत्ययेन। व्युत्पादितस्य** व्युत्पत्तिं नीतस्य। **गोशब्दस्य** 'गौ' रिति शब्दस्ये-त्यर्थः। **शयनकाले** 'शेते' इति क्रियापदेन 'बोध्य' इति शेषः। **प्रयोगात्** प्रयोगं निमित्तीकृत्येत्यर्थः। लक्षणा। स्यात्। गोपदस्य व्युत्पत्त्या गमनेकर्तृरूपेऽर्थे बोध्यमाने तत्कर्तृकशयनव्यापारपरभवनासम्भवात्, 'गौः

तद्भेदानाह–

**१७ मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये।**
**स्यादात्मनोऽप्युपादाना–देषोपादानलक्षणा ॥ ९ ॥**

**रूढौ उपादानलक्षणा यथा-'श्वेतो धावति।' प्रयोजने यथा-'कुन्ताः प्रविशन्ति।' इति।**

---

शेते' इत्यत्र गोपदं लाक्षणिकं स्यादिति भावः। इदमुक्तम्–यथा 'गौः शेते' इत्यादौ गवादिपदानि न लाक्षणिकानि मन्यन्ते, तथा 'कर्म्मणि कुशलः।' इत्यादौ कुशलादीन्यपि पदानि। तथा च–'प्रवृत्तेर्निमित्तं न व्युत्पत्ति' रित्यन्ततः स्वीकर्त्तव्ये 'अनड्वान् सौरभेयो गौः' इत्यादिना गवादिपदानां वाचकत्वमिव 'कृती कुशल इत्यपि।' इत्यादिना कुशलादीनामपि। इति निष्कृष्टम्। न च 'असति बाधकेऽवयवशक्तेः रूढि-शक्त्या नियन्त्रणायोगेन कुशलपदस्य कुशग्राहिणि शक्तत्वमव्याहतमेव। किञ्च–प्रयोगप्रवाहेण एव प्रवृत्तिनिमित्तत्वस्वीकारे यौगिकव्यवहारस्य मूलच्छेदो दुर्वारः।' इति वाच्यम्। अमराद्यनुद्बोधितसङ्केतानां यौगिककल्पनया तद्व्यवहारस्यानुच्छे-दात्। किञ्च–यौगिकस्यैव अर्थस्य मुख्यत्वाङ्गीकारे हंसादीनां लाक्षणिकत्वं, 'श्वेतः शोभते' इत्यादौ श्वेतादीनां पुनः पदानां 'गुणवचनेभ्यो लुगिष्ट' इत्यादिना मतुबादीनां लुगादौ व्युत्पन्नानां वाचकत्वं स्यात्। अस्तु वा व्युत्पत्तिरेव प्रवृत्तेर्निमित्तम्, किन्तु–'लशुने भक्षितेऽपि न शान्तो व्याधिः।' तथाहि–'कौ भुवि शलति चालयति कार्य्याणी'ति 'कुश्यति श्लेषयति फलैः कार्य्याणी'ति व्युत्पत्त्या वा 'वृषादिभ्यश्चित्।' १।१०६ इति कलच्प्रत्यये कुशलपदस्य दक्षरू-पार्थोल्लासात्। अत एव–तद्व्याख्यातारोऽप्याहुः–ये तु "कर्म्मणि कुशलः।" "शरीरे लावण्यम्," "विततो मण्डपः" इत्यादौ प्रवृत्तिनिमित्तं व्युत्पत्तिरिति न स्वीकुर्वन्ति तै, 'तैलं सुसुरभि' इत्याद्यूह्यम्।' इति। अतः 'कुशललावण्यादि-पदानां यौगिकत्वाभासेऽपि झटिति 'रूढिर्योगापहारिणी' इत्युक्तदिशा रूढ्या व्युत्पत्तिलभ्यस्यार्थस्य तिरोभावान्न तत्र तत्र लक्षणा। यत्र वा उभयविधार्थोद्बोधने स्वाभिनिवेशः, तत्र संयोगादिबलाद् यौगिकार्थोऽपि उपतिष्ठेत, किन्तु–न तावता रूढ्यर्थो लक्षणया यौगिकस्त्वभिधयेति बोध्यम्।

अथास्या अर्थान्तरसङ्क्रमितवाच्यादिव्यवस्थायै भेदान् निर्देष्टुमुपक्रमते–**तद्भेदानि**त्यादिना।

**तद्भेदां**स्तस्या द्विविधाया निरुक्तलक्षणायालक्षणाया भेदाः प्रकारास्तान्। १७ **मुख्यार्थस्ये**त्यादिना।

१७ **मुख्यार्थस्य** वाच्यार्थस्य 'श्वेतो धावती'त्यादौ 'कुन्ताः प्रविशन्ती' त्यादौ श्वेतादिकर्त्तृकधावनादिरूपस्य कुन्तादिकर्त्तृकप्रवेशनादिरूपस्य वाऽर्थस्येति यावत्। **वाक्यार्थे** वाक्यस्य'श्वेतो धावती'त्यादेः 'कुन्ताः प्रविशन्ती'त्यादेर्वा पदोच्चयस्यार्थो वक्ष्यमाणलक्षणया तात्पर्यवृत्त्या प्रतिपाद्यस्तस्मिंस्तथोक्ते। विषये सप्तमीयम्। **अन्वयसिद्धये** अन्वयस्य सम्बन्धस्य श्वेतादिकर्त्तृकधावनादिक्रियारूपस्य सिद्धिः सङ्गतिरनुपपत्तिपरिहारस्तस्यै तदर्थमिति भावः। **इतराक्षेप** इतरस्य श्वेतादिरूपमुख्यार्थभिन्नस्य अश्वादिरूपस्यार्थस्येति यावत्। आक्षेप आकर्षणमिति तथोक्तः। 'आक्षेपो भर्त्सनाकृष्टिकाव्या-लङ्कृतिषु स्मृतः।' इति। **उपादानलक्षणो**पादाननाम्नी लक्षणा। शाकपार्थिवादित्वान्मध्यम (नाम) पदलोपः। **एषा। आत्मनो** मुख्यस्य श्वेतादिरूपस्यार्थस्येत्यर्थः। **अपि** पुनरित्यर्थः। **उपादानात्**सङ्ग्रहणादपरित्यागात्। स्याद्भियमाना भवेदिति भावः। इदमुक्तम्–लक्षणा रूढिमूला, प्रयोजनमूला च; एषैव यदि मुख्येऽर्थेऽशेन स्थितेऽपि तस्य वाक्यार्थेऽन्वयलाभाय मुख्यातिरिक्तस्यार्थस्योपादानादुपादानं नाम लक्षणा। एतस्या उदाहरणेषु क्वचिन्मुख्यार्थः क्वचित तद्विशिष्ट एतत्प्रतिपाद्यः क्वचित् पुनस्तदुभयं प्रधानं भवति। अत एव–'कदली कदली' इत्यत्र द्वितीयकदल्यादिपदस्य शैत्यादिरूपधर्म्मान्तरेण कदल्याद्यर्थं एव, 'कुन्ताः प्रविशन्ति' इत्यत्राचेतनस्य कुन्तादिपदस्य प्रवेशासम्भवात् स्वविशिष्टं पुरुषरूपमर्थान्तरम्, 'छत्रिणो यान्ति'इत्यत्र पुनर्यानक्रियायाः कर्त्तृत्वोपपत्त्या छत्रिपदार्थस्तावन्मात्राभिधाने तात्पर्याभावेन तदितरार्थश्च प्राधान्य मवलम्बेते। इति दिक् ॥ ९ ॥

तत् सर्वं निर्दिशन् स्वयं सूत्रार्थं स्पष्टयति–**रूढावि**त्यादिना।

**रूढौ** प्रसिद्धौ तदभिधेये निमित्ते सति प्रवर्त्तमानेति भावः। **उपादानलक्षणो**पादीयते पदार्थोऽनेनेत्युपादानं तदेव लक्षणेति तथोक्ता। **यथा**–'**श्वेतः। धावति।**' इत्यत्रे'ति शेषः। **प्रयोजने** 'निमित्ते सति प्रवर्त्तमाने'ति शेषः। **यथा** 'उपादानलक्षणे'ति पूर्वतोऽन्वेति। "**कुन्ता** भल्लाख्यानि शस्त्राणि। **प्रविशन्ति।**" इति 'अत्रे'ति

**अनयोर्हि श्वेतादिभिः कुन्तादिभिश्च अचेतनतया केवलैर्धावनप्रवेशनक्रिययोः कर्त्तृतयाऽन्वयमलभमानैः एतत्सिद्धये आत्मसम्बन्धिनः अश्वादयः पुरुषादयश्च आक्षिप्यन्ते। पूर्वत्र प्रयोजनाभावाद् रूढिः, उत्तरत्र तु कुन्तादीनामतिगहनत्वं प्रयोजनम्। अत्र चात्मनोऽप्युपादानम्, लक्षणलक्षणायां परस्यैवोपलक्षणम्, इत्यनयोर्भेदः। इयमेवाजहत्स्वार्थेत्युच्यते।**

---

शेषः। इदं चोपलक्षणं, तेन 'श्वेतः शोभते,' 'छत्राणि यान्ती'त्यादौ च इयमेवेति सिद्धम्। अन्यथा 'श्वेतादिभि'रित्यादावादिपदोपादानं न सङ्गच्छेत। अत्र लक्षणसमन्वयं दर्शयति– **हि** यतः। **अनयोर्द्विविधयोरुदाहरणयो**'रिति शेषः। अत्र निर्द्धारणे षष्ठी सप्तमी वा। **श्वेतादिभिः** 'धावनक्रियाऽऽदिकर्त्तृत्वादिनाभिमतै'रिति शेषः। **कुन्तादिभिः** प्रवेशनक्रियाऽऽदिकर्त्तृत्वादिनाऽभिमतैरित्यर्थः। **च**। **अचेतनतयो**पलक्षणेनामूर्त्ततया चेत्यर्थः। **केवलैः** स्वाश्रयभूताश्वादिसम्बन्धशून्यैः। **धावनप्रवेशनक्रिययो**रुपचारात् धावनादिक्रियायां प्रवेशनादिक्रियायां चेत्यर्थः। 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति नयेन क्रियापदस्य प्रत्येकं सम्बन्धः। अत्र विषये सप्तमी। **कर्त्तृतया** इदमप्युपलक्षणं, तेन 'श्वेतं पश्ये'त्यादौ कर्म्मत्वादिना चेति सिद्धम्। **अन्वयं** सम्बन्धम्। **अलभमानैः**। **एतत्सिद्धये** एतस्यान्वयस्य सिद्धिरनुपपत्तिपरिहारेण निष्पत्तिरिति यावत्तस्यै। अत्र 'तादर्थ्ये चतुर्थी'ति चतुर्थी। **आत्मसम्बन्धिन** आत्मनः स्वस्य मुख्यार्थस्य सम्बन्धिनो वैशिष्ट्यादिसम्बन्धशालिन इति तथोक्ताः। **अश्वादयः**। **पुरुषादयः**। **च** (समुच्चयार्थमिदम्)। **आक्षिप्यन्ते** आक्षिप्य प्रत्याय्यन्ते। अत्र विशेषं दर्शयति–**पूर्वत्र** पूर्वस्मिन् पूर्वमुदाहृते 'श्वेतो धावती'त्यादाविति यावत्। **प्रयोजनाभावात्** 'प्रसिद्धिमात्रनिमित्तसद्भावाच्चे'ति शेषः। **रूढिस्त**न्निमित्तोपादानलक्षणेत्यर्थः। **उत्तरत्रो**त्तरस्मिन् उत्तरं पश्चादुदाहृते 'कुन्ताः प्रविशन्ती' त्यादाविति यावत्। **तु**। **कुन्तादीनाम्**। **अतिगहनत्वमु**पलक्षणेन आदिलाभः, तथा च अतिगहनादित्वमित्यर्थः। **प्रयोजनं,** तन्निमित्तोपादानलक्षणेत्यर्थः। इदमुक्तम्–श्वेतकुन्तादीनाममूर्त्ताचेतनत्वादिना धावनप्रवेशनादिक्रियाकर्त्रादित्वानुपपत्तेर्धावनप्रवेशनादिक्रियाकर्त्रादित्वोपपत्तये स्ववैशिष्ट्यादिसम्बन्धिनोऽश्वपुरुषादय आक्षिप्यन्ते। अस्या वक्ष्यमाणलक्षणातो भेदं दर्शयति- **अत्र** 'श्वेतो धावती'त्यादौ इत्यर्थः। **च**। **आत्मनः** स्वस्य श्वेतादिरूपस्य मुख्यस्यार्थस्येति यावत्। **अपि** 'न केवलं परस्याश्वादेरि'ति शेषः। **उपादानम्**, 'अत उपादानलक्षणैवे'ति शेषः। **लक्षणलक्षणायां** लक्षणनाम्न्यां लक्षणायामित्यर्थः। शाकपार्थिवादित्वान्मध्यमपदलोपः। **परस्य** शक्यार्थतो भिन्नस्याश्वादेरित्यर्थः। **एव**। **उपलक्षणमु**पस्थापनम्। **इती**त्येवम्। **अनयो**रुपादानलक्षणयोरित्यर्थः। **भेदः**। अस्याः पर्य्यायान्तरं दर्शयति–**इयमु**पादानलक्षणा। **एव**। **अजहत्स्वार्था** न जहत् त्यजन् स्वार्थो मुख्यार्थो यां सेति तथोक्ता। **इती**त्याख्ययेत्यर्थः। **उच्यते**।

अत्रेदं प्रतिभाति– 'श्वेतो धावती'त्यादौ श्वेतगुणादेरमूर्त्तादित्वेन 'कुन्ताः प्रविशन्ती'त्यादौ कुन्तादेरचेतनादित्वेन धावनादिप्रवेशनादिक्रियाकर्त्रादित्वासम्भव इति मुख्यार्थबाधः, वाक्यार्थे च श्वेतादेर्धावनादिकर्त्रादित्वोपपत्तये तत्सम्बन्धिनोऽश्वादय आक्षिप्यन्ते इति मुख्यार्थयोगः। रूढिप्रयोजनान्यतरनिमित्तत्वसद्भावासद्भावाभ्यां रूढिमूलाप्रयोजनमूला च लक्षणेति सिद्धम्। उपादानं तु श्वेतकुन्तादिरूपमुख्यार्थस्याक्षयमूर्त्तित्वात्, आत्मार्थापरित्यागेन परार्थोपस्थापनमिति तदर्थश्च। एवं–'श्वेतो धावती' त्यादेः श्वेतगुणसमवेतोऽश्वो धावती'त्यादिः 'कुन्ताः प्रविशन्ति'इत्यादेः 'कुन्तवन्तः पुरुषाः प्रविशन्ति'इत्यादिश्च वाक्यार्थः। अत्र च श्वेतकुन्तादिरूपमुख्यार्थापरित्यागपुरःसरमश्वपुरुषादिरूपामुख्यार्थोपादानम्। अत एवात्रोपादानलक्षणा। एवं च– यत्र स्वार्थपरित्यागेन परार्थोपस्थापनं सा लक्षणलक्षणा, यत्र पुनः स्वार्थापरित्यागेन परार्थोपस्थापनं सोपादानलक्षणा, एष एवानयोर्भेद इति सिद्धम्। यत्तूक्तं तर्कवागीशैः-'अत्र ''श्वेतो धावती''त्युदाहरणं चिन्त्यम्, धावनानुकूलकृतिरूपस्य धावनकर्त्तृत्वस्याश्वसम्बन्धेनापि श्वेतगुणेऽन्वयासम्भवात्। न च ''कुन्ताः प्रविशन्ती''त्यादौ यथा कुन्तस्याचेतनस्यापि पुरुषसम्बन्धेन प्रवेशकर्त्तृत्वमुपचर्य्यते, तथाऽत्राप्यचेतनस्य धावनकर्त्तृत्वमौपचारिकमिति वाच्यम्, कुन्तस्य पुरुषसम्बन्धोत्पन्नक्रियासम्बन्धेनैव कर्त्तृत्वोपचारात्। प्रकृते तु श्वेतगुणस्याश्वसम्बन्धेनापि क्रियासम्बन्धासम्भवात्। तस्माल्लक्षणलक्षणाया एवैतदुदाहरणम्।' इति, तदाग्रहमूलम्, गुणगुणिनोः समवायसम्बन्धे भेदेन तयोरनवस्थानात् स्व (श्वेत) समवेतपर (अश्व) कर्त्तृकधावनव्यापारस्य स्वस्मिन् (श्वेते) उपलक्षितत्वाबाधात्। न च श्वेतस्यामूर्त्तत्वेन मूर्त्तस्य कुन्तस्येव क्रियाकारित्वं चेतनविशेषसम्बन्धेनापि न सम्भवती'ति वाच्यम्,

**१८ अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।**
**उपलक्षणहेतुत्वाद् एषा लक्षणलक्षणा ॥ १० ॥**

**रूढिप्रयोजनयोर्लक्षणलक्षणा यथा–"कलिङ्गः साहसिकः," "गङ्गायां घोषः"इति च। अनयोर्हि पुरुषतटयोर्वाक्यार्थेऽन्वयसिद्धये कलिङ्गगङ्गाशब्दावात्मानमर्पयतः।**

---

अचेतनस्य कुन्तस्येवामूर्त्तस्यापि श्वेतगुणस्य क्रियाकर्तृत्वोपचारिकल्पनाया युक्तत्वात्। वस्तुतस्तु– श्वेतगुणसमवेतस्याश्वस्यैव धावनक्रियायामन्वयोऽभिमतः। न तु अश्वसम्बन्धेन श्वेतस्य, अन्यथा–वाक्यार्थसम्बन्धोपपत्तये मुख्यार्थस्योत्तरार्थाक्षेपापेक्षैव न स्यात्। ननु 'श्वेतः शोभते', 'श्वेतं पश्यति' इत्यादौ श्वेतादेः शोभनादिक्रियाकर्त्रादित्वानुपपत्त्यभावादभिधैव 'कथं पुनर्लक्षणे'ति चेत् सत्यम्, गुणस्याश्वादिसम्बन्धमन्तराऽनुपपत्तौ केवलस्य क्रियाकर्त्रादित्वानुपपत्तिरिति बोध्यम्। इति दिक्।

लक्षणलक्षणाया लक्षणमाह– १८ **अर्पण**मित्यादिना।

१८ **स्वस्या**त्मनः 'कलिङ्गः साहसिकः,' 'वङ्गो भीरुः' इत्यादौ कलिङ्गादिरूपस्य 'गङ्गायां घोषः', 'मथुरा कृष्णं जपति'इत्यादौ गङ्गादिरूपस्य मुख्यस्यार्थस्येति यावत्। **वाक्यार्थे** 'कलिङ्गाभिन्नः साहसिकः'इत्यादिरूपे 'गङ्गाऽधिकरणको घोष'इत्यादिरूपे वेति भावः। **परस्य** पुरुषतटादिरूपस्य मुख्यार्थतोऽतिरिक्तस्येत्यर्थः। **अन्वयसिद्धये**ऽन्वयस्य सम्बन्धस्य सिद्धिस्तस्यै। **अर्पणं** तदात्मनोपस्थापनम्। **लक्षणलक्षणा** लक्षणनाम्नी लक्षणेत्यर्थः। **एषा** 'चे'ति शेषः। **उपलक्षणहेतुत्वा**दुपलक्ष्यते ( मुख्यार्थोऽमुख्यार्थत्वेनोपस्थीयते ) इत्युपलक्षणं तस्य हेतुर्निमित्तं तस्य भावस्तत्त्वं तस्मात्। 'स्या'दिति शेषः ॥ १० ॥

सूत्रार्थं निर्दिशन्नुदाहर्तुमुपक्रमते– **रूढिप्रयोजनयो**रित्यादिना।

**रूढिप्रयोजनयो** रूढिश्च प्रयोजनं च तयोः। सतिसप्तमीयम्। **लक्षणलक्षणा**। **यथा**-"**कलिङ्गः** 'जगन्नाथात् पूर्वभागे कृष्णातीरान्तरं शिवे। कलिङ्गदेश'इत्युक्तस्वरूपो देशविशेषः। **साहसिकः** साहसवान् बलात् चौर्य्यादिना वा हिंसक इति यावत्। 'साहसं तु दमे दुष्करकर्म्मणि। अविमृष्य कृतौ धाष्टर्य'इति हैमः। 'अत इनिठनौ।' ५।२।११५ इति ठनः।" 'इत्यत्रे'ति शेषः। "**गङ्गायाम्**। अधिकरणे सप्तमीयम्। **घोषो** ग्रामविशेषः।" **इति**'अत्रे'ति शेषः। **च** 'क्रमा'दिति शेषः। उपपाद्य दर्शयति–**अनयो**रेतयोर्द्विविधयोरुदाहरणयोर्मध्य इत्यर्थः। **हि** यतः। कलिङ्गगङ्गाशब्दौ कलिङ्गशब्दो गङ्गाशब्दश्चेत्यर्थः। 'क्रमा'दिति शेषः। **पुरुषतटयोः** पुरुषस्य तटस्य चेत्यर्थः। 'परार्थभूतयो'रिति शेषः। **वाक्यार्थे**'कलिङ्गः साहसिक' इति वाक्यस्यार्थे'गङ्गायां घोष' इति वाक्यस्यार्थे चेत्यर्थः। **अन्वयसिद्धये**सम्बन्धसम्पादनाय। **आत्मानं** स्वं स्वार्थमिति यावत्। **अर्पयत** उपलक्ष्य स्थापयतः। इदमुक्तम्–'कलिङ्गः साहसिक' इत्यादौ रूढिमूला लक्षणलक्षणा, 'गङ्गायां घोष'इत्यादौ पुनः प्रयोजनमूला। तथाहि– एकत्र 'कलिङ्गो नाम देशः साहसिक'इत्यादिर्मुख्यार्थः, रत्र'गङ्गाऽधिकरणको ग्रामविशेष'इत्यादिः। तत्र कलिङ्गादेः साहसिकत्वादेर्गङ्गादेश्च घोषाद्यधिकरणकत्वादेरर्थस्यानुपपत्तिः, इत्येवं लक्षणायाः प्रवृत्तौ पूर्वत्र रूढिः परत्र पुनः प्रयोजनं निमित्तम्। एवं सति कलिङ्गादेर्देशविशेषादिरूपो मुख्योऽर्थः साहसिकत्वाद्यनुपपत्त्या गङ्गादेर्जलप्रवाहादिरूपश्च घोषाधारभूतत्वाद्यनुपपत्त्या स्वस्वार्थे पुरुषाद्यात्मना तटाद्यात्मना चोपस्थापयत एतयोर्हि वाक्यार्थेऽन्वयः। एवं सति 'कलिङ्गः कलिङ्गभवः पुरुषः साहसिक'इत्यादिः 'गङ्गायां गङ्गातटे घोष' इत्यादिर्वाक्यार्थश्च। अयं भावः–कलिङ्गादिर्गङ्गादिर्वा शब्दः स्वयं वाक्यार्थे सम्बन्धमलभमानः पुरुषादिरूपं तटादिरूपं वाऽर्थमुपस्थाप्य तत्तदात्मना सम्बन्धमुपपद्यते, इति मुख्यार्थस्य सर्वथा वाक्यार्थेऽन्वयानुपपत्त्या लक्ष्यार्थत्वेनोपस्थित्या लक्षणलक्षणा। 'स्वायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे'इति नयेन 'गङ्गातटे घोष'इत्येवंवाचकं शब्दमपहाय 'गङ्गायां घोष'इत्याद्यभिधानं तदलभ्यं शीतलत्वपावनत्वादि द्योतयितुम्, अतोऽत्र प्रयोजनसद्भावात्तस्या एतन्मूलत्वं च न परत्र प्रयोगप्रवाहेणैव तथाऽभिधानात्। इति।

यथा वा–

'उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे! सुखितमाःस्व ततः शरदां शतम्' ॥ ५ ॥

अत्रापकारादीनां वाक्यार्थेऽन्वयसिद्धये उपकृतादयः शब्दा आत्मानमर्पयन्ति । अपकारिणं प्रत्युपकारादिप्रतिपादनात् मुख्यार्थबाधः, वैपरीत्यलक्षणः सम्बन्धः, फलमपकारातिशयः । इयमेव 'जहत्स्वार्थे' त्युच्यते ।

१९ आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा ।

---

उदाहरणान्तरं दर्शयति–यथा वा–उपेत्यादि ।

'हे **सखे** मित्र ! **भवता** न तु त्वया । **बहु** अत्यन्तम् । **उपकृतम्** । **तत्र** तस्मिन् उपकारविषय इत्यर्थः । **किम्** ।**उच्यते** न किमपीति भावः । **सुजनता** सौजन्यम् । **परं** केवलम् । (इदमव्ययम्) । **प्रथिता** विख्यातिं नीता । **ततस्**तस्माद्धेतोः । **ईदृशं** यथैतदुपकृतं सुजनता च प्रथिता तथाभूतमिति भावः । **एव** न त्वन्यविधम् । **सदा** न तु यदा कदा वा । **विदधद्** विदधानः । **शरदां** वत्सराणाम् । 'हायनोऽस्त्री शरत्समाः ।' इत्यमरः । **शतं** शतावधि । 'कालाध्वनोरत्यन्तसंयोगे ।' २।३।५ इति द्वितीया । **सुखितं** सुखं जातं यस्मिन् कर्म्मणि तत्तथा । **आःस्वो**पविश स्थितो भव । अत्र'स्ता' मिति वक्तव्येऽपि तथा वचश्छन्दोऽनुरोधात् । अपकारिणं प्रति कस्यचिदुक्तिरियम् । द्रुतविलम्बितं वृत्तम्, तल्लक्षणं चोक्तं यथा–'द्रुतविलम्बितमाह नभौ भरौ ।' इति ॥ ५ ॥'

अत्र लक्षणं सङ्गमयति–**अत्रे**त्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्य इत्यर्थः । **उपकृतादय** 'उपकृतं बहु' इत्यादिना पठिताः । **शब्दाः** । **अपकारादीनां** तात्पर्येणोन्नेयानाम् 'अपकृतं बहु' इत्यादिनाऽभिधेयानामिति यावत् । **वाक्यार्थे** 'उपकृतं बहु' इत्यादिवाक्यस्यार्थे । **अन्वयसिद्धये**ऽन्वयस्य सम्बन्धस्य सिद्धिस्तस्यै । **आत्मानं** स्वं स्वार्थमिति यावत् । **अर्पयन्ति** । **अपकारिणं** 'बोद्धव्य' मिति शेषः । **प्रति** । **उपकारादिप्रतिपादनात्** 'उपकृत' मित्यादिनेति शेषः । **मुख्यार्थबाधो** मुख्यार्थस्य 'उपकृत' मित्यादिपदार्थस्य बाधः 'अपकृत' मित्यादिरूपेण वैपरीत्येन द्योतनात्तिरस्कार इति तथोक्तः । **वैपरीत्यलक्षणो** वैपरीत्यम् अपकारस्योपकारात्मना प्रतिपादनात् विरुद्धं लक्षणं यस्य तादृशः । **सम्बन्धः** । **अपकारातिशयः** । उपलक्षणेन स्वस्य सुजनताद्योतनं चेत्यर्थः । **फलं** प्रयोजनम् । इदमुक्तम्–'उपकृतं बहु..' इत्येवमपठित्वा यदि–'अपकृतं बहु तत्र किमुच्यते कुजनता प्रथिता कुटिल! त्वया । विदधदीदृशमेवमुपेष्यसि व्यसनमन्त्यज! यत्र पुनर्भवेः ॥' पठितमभविष्यत् तर्हि अपकारिणं प्रत्यपि अभिधानम् । एवं मुख्यार्थबाधे वैपरीत्येन मुख्यार्थसम्बन्धे लक्षणा उपकृतादिपदानां चापकृताद्यर्थोपलक्षणादसौ लक्षणं नाम लक्षणा प्रयोजनमूला । प्रयोजनं च वक्तुः स्वसुजनताऽतिशयप्रकटनपूर्वकं सम्बोध्यस्य कुजनताऽतिशयपूर्वकमपकारिताऽतिशयः । इति । अस्याः सञ्ज्ञान्तरमाह–**इयम्** । **एव** । '**जहत्स्वार्था** जहत्यजन् स्वार्थो यां सा तथाभूता ।' **इत्युच्यते** ।

एवमजहत्स्वार्थापरपर्य्यायामुपादानाख्यां, जहत्स्वार्थाऽपरपर्यायां च लक्षणाख्यां रूढिमूलां प्रयोजनमूलां च लक्षणां प्रदर्श्यासां भेदान्तरद्वयं प्रदर्शयितुमाह– १९ **आरोपे**त्यादि ।

१९ **ता** रूढिमूला प्रयोजनमूला चेति द्वे तथोक्ते चैवमुपादानलक्षणलक्षणे द्वे इत्येवं चतुर्विधा लक्षणा इत्यर्थः । **अपि** पुनः । **आरोपाध्यवसानाभ्या**मारोपेणाध्यवसानेन च । 'प्रकृत्यादिभ्य उपसङ्ख्यानम्'* इत्यनेन विशेषणेऽर्थे तृतीया । **प्रत्येकम्** । **द्विधा** भिद्यन्त इति शेषः । अयं भावः–आरोप–स्तावत् अनिगीर्णस्वरूपस्य विषयस्यान्यतादात्म्यप्रत्यायनहेतुः । अध्यवसानं पुनर्निगीर्णस्वरूपस्य विषयस्य, आभ्यां च प्रत्येकं विशेष्यमाणास्ता द्विधा भूत्वाऽष्टविधा भवन्ति । इति ।

ताः पूर्वोक्ताश्चतुर्भेदलक्षणाः।

२० विषयस्यानिगीर्णस्या-न्यतादात्म्यप्रतीतिकृत् ॥ ११ ॥

विषयिणाऽनिगीर्णस्य विषयस्य तेनैव सह तादात्म्यप्रतीतिकृत्सारोपा। इयमेव रूपकालङ्कारबीजम्।

सारोपा स्यान्निगीर्णस्य मता साध्यवसानिका।

रूढावुपादानलक्षणा सारोपा यथा-"अश्वः श्वेतो धावति"इति, अत्र हि श्वेतगुणवान् अश्वोऽनिगीर्णस्वरूपः, स्वसमवेतगुणतादात्म्येन प्रतीयते, प्रयोजने यथा-"एते कुन्ताः प्रविशन्ति" इति। अत्र सर्वनाम्ना कुन्तधारिपुरुषनिर्देशात्सारोपात्वम्। रूढौ लक्षणलक्षणा यथा-'कलिङ्गः पुरुषो युध्यते।' इति। अत्र हि पुरुषकलिङ्गशब्दयोराधाराधेयभावः सम्बन्धः। प्रयोजने यथा-"आयुर्घृतम्"इति।

---

कारिकां सुगमयितुमाह-ताः। पूर्वोक्ताः। चतुर्भेदलक्षणाश्चतुर्भेदा लक्षणा इत्यर्थः। इति। आरोपाध्यवसानपदार्थं विवृण्वन्नुक्तं द्वैविध्यं स्पष्टयति-२० विषयस्येत्यादिना।

२० अनिगीर्णस्य अतिरोहितस्वरूपस्य। विषयस्यारोपविषयस्य। अन्यतादात्म्यप्रतीतिकृदन्यस्यारोप्यमाणस्य विषयिण इति यावत्, तादात्म्यमभेदस्तस्य प्रतीतिस्तां करोतीति तथोक्ता। सारोपा। स्यात् 'लक्षणे'ति शेषः।

अथ-निगीर्णस्य। 'विषयस्यान्यतादात्म्यप्रतीतिकृत्'इति पूर्वतोऽन्वेति। साध्यवसानिका मता ॥ ११ ॥

तदेवाह-विषयिणाऽऽरोप्यमाणेन 'गौर्वाहीक'इत्यादौ गवादिरूपेण। अनिगीर्णस्य न निगीर्णस्तिरोहितस्वरूपस्तस्य विषयस्यारोपविषयस्य वाहीकादेरित्यर्थः। तेनारोप्यमाणेन गवादिरूपेण विषयिणेति यावत्। अत्र सहार्थे-'वृद्धो यूने'ति लिङ्गात्तृतीया। एव। तादात्म्यप्रतीतिकृत्स्वरूपतायाः प्रतीतिविधात्रीत्यर्थः। सारोपा।

अस्याः फलं निर्दिशति-इयमित्यादिना।

इयं सारोपा लक्षणा। एव। रूपकालङ्कारस्य। बीजं कारणभूता, 'एनामेवोपजीव्य रूपकप्रवृत्ते'रिति शेषः। उदाहरति-रूढावित्यादिना।

रूढौ सत्यामिति शेषः। सारोपा। उपादानलक्षणा। यथा "श्वेतस्तद्गुणसमवेतः। अश्वः। धावति वेगेन गच्छति।" इति। हि यतः। अत्र "अश्वः श्वेतो धावति" इत्युदाहरणे। श्वेतगुणवान् श्वेतगुणसमवेतः। अश्वः। अनिगीर्णस्वरूपः 'श्वेतो धावती'त्यत्रैव श्वेतेनारोप्यमाणेन विषयिणा निगीर्णं स्वरूपं यस्य तादृश इत्यर्थः। स्वसमवेतगुणतादात्म्येन स्वस्मिन् अश्वे समवेतः समवायसम्बन्धेन वर्तमानो यो गुणः श्वेतगुणस्तस्य तादात्म्यमभेदस्तेन। प्रतीयते। अयं भावः- 'गुणगुणिनोः समवायसम्बन्ध'इति नयेन श्वेतगुणः समवायसम्बन्धेनाश्वे वर्तमानोऽपि विशिष्य निर्दिश्यमान आरोप्यमाण इति गीयते, तथा च-'श्वेतोऽश्व'इत्यत्र श्वेत आरोप्यमाणस्तेन चाश्वोऽनिगीर्ण इत्ययं विषयस्तेन विषयिणाऽनिगीर्णात्मा, स्फुटा चैवं सारोपा। 'श्वेतवानश्वो धावती'त्येवमनभिधाय 'श्वेतोऽश्वो धावती'त्यभिधानशैल्यैवेति रूढिमूला चेयम्। इति। प्रयोजने 'सत्या'मिति शेषः। यथा-'सारोपोपादानलक्षणे'ति पूर्वतोऽन्वेति। "एते। कुन्ताः प्रासाः। प्रविशन्ति" इति। यतः-अत्रास्मिन् उदाहृते वाक्य इति यावत्। सर्वनाम्ना तत्सञ्ज्ञकेनैतच्छब्देनेत्यर्थः। कुन्तधारिपुरुषनिर्देशात् कुन्तधारिणोऽमी पुरुषास्तेषां निर्देशस्तस्मात्। सारोपात्वम्। अयं भावः—एतच्छब्दो हि सम्मुखस्थनिर्देशकः, सम्मुखस्थाश्च वक्तुः कुन्तधारिणः, एवं तत्र कुन्तत्वारोपणात् सारोपा। कुन्तानां च स्वतः प्रवेशक्रियाकर्तृत्वानुपपत्तेः तच्छब्दः स्वार्थमजहत् स्वाधारभूतान् उपपादयतीत्युपादानसद्भावः। कुन्तसदृशानिवार्यपुरुषकर्तृत्वस्य पुरुषगतस्य स्मारणं प्रयोजनम्। धार्यधारकभावरूपश्च सम्बन्धः। इति। रूढौ 'सत्यां प्रवृत्ता' इति शेषः। लक्षणलक्षणा। 'सारोपा' इति शेषः। यथा-"कलिङ्ग स्तन्नामा देशः। लक्षणया तत्रत्य इत्यर्थः। पुरुषः। युध्यते।" इति। अत्रास्मिन् 'उदाहृते वाक्य' इति यावत्। पुरुषकलिङ्गशब्दयोस्तद्वाच्ययोरिति भावः। आधाराधेयभाव आधाराधेयत्वरूप इत्यर्थः। 'अभ्यर्हितं च।*' इत्याधारशब्दस्य पूर्वनिपातः। सम्बन्धः। इदमवधेयम्- कलिङ्गो देशविशेषः पुरुषः प्राणिविशेषश्च तयोर्विशेषणविशेष्यभावो नोपपद्यते न वा योधनक्रियायाः कर्तृत्वं कलिङ्गे,

अत्रायुष्कारणमपि घृतं कार्यकारणभावसम्बन्धसम्बन्ध्यायुस्तादात्म्येन प्रतीयते । अन्यवैलक्षण्येन अव्यभिचारेण आयुष्करत्वं प्रयोजनम् । यथा वा– राजकीये पुरुषे गच्छति "राजाऽसौ गच्छति" इति । अत्र स्वस्वामिभावलक्षणः सम्बन्धः । यथा वा– अग्रमात्रेऽवयवभागे "हस्तोऽयम्" इति । अत्र अवयवावयविभावलक्षणः सम्बन्धः । यथा वा–ब्राह्मणोऽपि "तक्षाऽसौ" इति, अत्र तात्कर्म्यलक्षणः । यथा वा– इन्द्रार्थासु स्थूणासु "अमी इन्द्राः" इति, अत्र तादर्थ्यलक्षणः सम्बन्धः । एवमन्यत्रापि ।

---

तस्माल्लक्षणा, कलिङ्ग आधारः पुरुषः पुनराधेय इत्यनयोः सम्बन्धश्च, इत्येवं स्थितौ कलिङ्गः स्वार्थं जहत् स्वाधेयस्य पुरुषस्य विशेषणात्मतयोपपद्य योधनक्रियायामन्वयं प्रतिपद्यते, तदेतत् फलं लक्षणस्य । पुरुषे कलिङ्ग आरोप्यते, इति कलिङ्गो विषयी पुरुषः पुनर्विषयः । अत एवात्र सारोपात्वमपि । नं चैवं, श्वेतोऽश्वो धावती'त्यपीति शङ्क्यम्, कलिङ्गस्येव श्वेतस्य स्वार्थापरित्यागात् । इति । **प्रयोजने** 'सति प्रवृत्ते'ति शेषः । **"आयुः । घृतम्" इति । अत्रास्मिन्नुदाहृते** वाक्य इति यावत् । **आयुष्कारणमायुषो** जीवनसमयस्योपलक्षणेनायुष्यवृद्धेः कारणमित्यर्थः । 'आयुर्जीवितकालः' इत्यमरः । **अपि । घृतम् । कार्य्यकारणभावसम्बन्धसम्बन्ध्यायुस्तादात्म्येन** कार्य्यं (जन्यं) च कारणं (जनकं) चेति तयोर्भावः तत्ता स एव सम्बन्धस्तत्सम्बन्धि यदायुस्तस्य तादात्म्यमभेदस्तेन तथोक्तेन । **प्रतीयते** । इदमुक्तम्–आयुश्शब्दार्थमन्वयोपपत्तये स्वार्थं परिज्यजन् घृतशब्दार्थोऽङ्गीकरोति, तथा चायुरभिन्नं घृत'मिति वाक्यार्थः सम्पद्यते, अन्यथा कार्यकारणयोरायुर्घृतयोर्विशेपणविशेष्यभावो नोपपद्येत । अथ घृत आयुरारोप्यत इत्यायुष आरोप्यमाणत्वं घृतस्य चारोपकत्वमिति सारोपा । घृतशब्देन स्वार्थं परित्यज्यायुःशब्दार्थोऽङ्गीक्रियत इति लक्षणम्, तदेवमायुर्जन्यं घृतं च तज्जनकमिति वास्तविकभेदेऽपि लक्षणया तयोर्विशेपणविशेष्यभावः, ननु कार्य्यकारणभावरूपः सम्बन्धस्तदुत्तम्भितश्च भेदः । इति । **अन्यवैलक्षण्येनान्येभ्यः** स्वव्यतिरिक्तेभ्य उपवनादिसेवनेभ्यो वैलक्षण्यं विशेषस्तेन तथोक्तेन । **अव्यभिचारेण** चेति शेषः । **आयुष्करत्वमायुष्यकरत्वम् । प्रयोजनम्** । अयं भावः–आयुर्घृतयोर्जन्यजनकभावसम्बन्धमनभिधाय विशेषणविशेष्यभावेण यदभिधानं तेनायुष उपलक्षणेनायुष्यस्यासाधारणतया नियतरूपेण वा वृद्धिसम्पादकत्वं घृतस्येत्यभिधीयते । तदेतत् प्रयोजनं लक्षणामूलम् । इति । **यथा । वा । राजकीये** राजसम्बन्धिनि प्रधानादावित्यर्थः । 'वृद्धाच्छः ।' ४।२।११४ इति छः । 'राज्ञः क च ।' ४।२।१४० इति कादेशः । **पुरुषे । गच्छति** 'सती'ति शेषः । तथा च–'राजकीयो गच्छती'ति वक्तव्येऽपि तथाऽनुक्त्वेत्यर्थः । **"असौ । राजा । गच्छति" इति । अत्रास्मिन्नुदाहरण** इति यावत् । **स्वस्वामिभावलक्षणः** स्वश्च स्वामी चेति तयोर्भावः स एव लक्षणं यस्य तथोक्तः । स्वः स्वयंभृत्य इति यावत्, स्वमस्यास्तीति स्वामी प्रभुरिति यावत् । 'स्वामिन्नैश्वर्ये ।' ५।२।१२६ इति निपातनात् साधुः । तथा च–शास्यशासकभावलक्षण इत्यर्थः । **सम्बन्धः** । इदं तत्त्वम्– अत्र राजकीयस्य तत्त्वेनानभिधानात् अदसो मुख्यार्थबाधाल्लक्षणा । राजकीयत्वेन राजशास्यत्वेऽपि राजवच्छासकत्वस्य सातिशयद्योतनं फलम् । अदसा निर्दिश्यमानस्य राजकीयस्य राजपदवाच्येनान्वयोपपत्त्यभावेऽदसः स्वार्थत्यागपुरःसरं परार्थात्मताग्रहणाल्लक्षणम्' राजकीये राजत्वमारोप्यत इति आरोप्यमाणेनारोपविषयस्यादःपदवाच्यस्यानिगीर्णस्वरूपत्वात्सारोपात्वम् । मूर्त्यत्वाधोशत्वरूपः सम्बन्धश्च हेतुः । इति । **यथा । वा । अग्रमात्रेऽग्रमेवेति** तत्र । **अवयवभागे । "अयं** निर्दिश्यमानोऽङ्गुल्याद्यन्यतम इति यावत् । **हस्तो** विस्तृतः कर इत्यर्थः । 'प्रकोष्ठे विस्तृतकरे हस्त' इत्यमरः । **" इति । अत्र । अवयवावयविभावलक्षणः । सम्बन्धः** । इदं बोध्यम्– हस्ताग्रभागस्य हस्तत्वाभावात्तत्रापि हस्तत्वव्यवहारो मुख्यत्वेन बाधितोऽत एवाग्रमुख्यार्थबाधाल्लक्षणा । अत्रेदं शब्दः स्वार्थं जहत् हस्तपदार्थतां गृह्णातीति लक्षणम् । अग्रभागे हस्तत्वारोपणात् सारोपात्वम् । हस्तवत् मालादिग्रहणरूपक्रियाकारित्वद्योतनं फलम् । इति । **यथा । वा । ब्राह्मणो । अपि । "असौ । तक्षा** काष्ठस्य तक्षणादिना कपाटादिनिर्म्माता वर्धकिरिति यावत् । 'तक्षा तु वर्धकिस्त्वष्टा रथकारस्तु काष्ठतट् ।' इत्यमरः ।" **इति । अत्र । तात्कर्म्यलक्षणस्तात्कर्म्येण** लक्ष्यतेऽसाविति तथोक्तः । तत्कर्म्मणो भावस्तात्कर्म्यम् । **सम्बन्धः** । इदमवधेयम्– अदःपदवाच्यस्य ब्राह्मणस्य तक्षपदवाच्यत्वाभावात् विशेषणविशेष्यभावानुपपत्तौ । लक्षणा । असावपि अदःपदवाच्यस्य ब्राह्मणस्य तक्षतया लक्षणाल्लक्षणम् । समस्ततक्षकर्म्मनैपुण्यद्योतनं प्रयोजनम् । आरोप्यमाणेनादसो निगीर्णत्वात् सारोपा । इति । **यथा । वा । इन्द्रार्थास्विन्द्रोऽधिष्ठातृतयाऽर्थः** प्रयोजनं

निगीर्णस्य पुनर्विषयस्यान्यतादात्म्यप्रतीतिकृत् साध्यवसाना। अस्याश्चतुर्षु भेदेषु पूर्वोदाहरणान्येव।

**२१ सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि ॥ १२ ॥**

**सादृश्यात्तु मता गौण्य-स्तेन षोडशभेदिताः।**

**ताः पूर्वोक्ता अष्टभेदा लक्षणाः। सादृश्येतरसम्बन्धाः कार्य्यकारणभावादयः।**

---

स्थापितास्वित्यर्थः। **स्थूणासु** स्तम्भेषु। 'स्थूणा सूर्म्यां स्तम्भे रुगन्तरे।' इति हैमः। "**अमी** ।**इन्द्राः**। 'अदसो मात्।' १।१।१२ इति संहिताऽभावः।" **इति**। **अत्र**। **तादर्थ्यलक्षण**स्तादर्थ्येन लक्ष्यतेऽसाविति तथोक्तः। तस्यार्थस्तदर्थ-स्तदर्थस्य भावस्तादर्थ्यम्। 'कर्मण्यधिकरणे च।' ३। ३। ९३ इति ल्युट्। यद्वा-तादर्थ्यं लक्षयतीति तथोक्तः। 'नन्दि-ग्रहिपचादिभ्यो ल्युणिन्यचः।' ३। १। १३४ इति ल्युः। 'युवोरनाकौ।' ७। १। १ इत्यनः। **सम्बन्धः**। इदमवसेयम्-अदःपदवाच्यस्येन्द्रस्य स्थूणापदवाच्येन काष्ठविशेषेणान्वयानुपपत्तौ लक्षणा। इन्द्रस्येव स्थूणापदवाच्यस्य पूज्यत्वद्योतनं प्रयोज-नम्। अदसः स्थूणोपलक्षणाल्लक्षणम्। आरोप्यमाणेनेन्द्रेण स्थूणाया अनिगिरणमदःशब्दस्य तद्वाचकस्य प्रयोगादिति सारोपा। इति। ननु 'तात्स्थ्यात्तथैव ताद्धर्म्यात्तत्सामीप्यात्तथैव च। तत्साहचर्य्यात्तादर्थ्याद् ज्ञेया वै लक्षणा बुधैः ॥' इत्युक्तदिशा तात्स्थ्यादिनाऽपि लक्षणोदाहर्त्तव्येति चेत्सत्यमित्याह- **एवम्**। **अन्यत्र**-"मञ्चाः क्रोशन्ती" त्यादौ। **अपि**। इति। अयं भावः-तात्स्थ्याद् यथा-"मञ्चाः क्रोशन्ति" इत्यादौ, ताद्धर्म्यात् यथा-"गौर्ब्राह्मण"इत्यादौ, तत्सामीप्याद् यथा-"अग्नौ माणवकस्तपती" त्यादौ, तत्साहचर्य्याद् यथा-"विभूषणानि यान्ति" इत्यादौ, तादर्थ्याद् यथा-"अमी इन्द्राः" इत्यादौ। तात्कर्म्याद्प्येषा यथा-'तक्षाऽसा' वित्यादावित्येके, ताद्धर्म्यादेवात्रापीत्यपरे। न चैवं 'पीनो देवदत्तो दिवा न भुङ्क्ते' 'इत्यादावपी'ति वाच्यम्, अर्थापत्या तदुपपत्तेः। अत एव-'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र च रात्रि-भोजनं न लक्ष्यते, श्रुतार्थापत्तेरर्थापत्तेर्वा तस्य विषयत्वात्।' इति प्रकाशकारः। यत्रानुपपद्यमानः शब्दः शब्दान्तरं कल्पयति सा श्रुतार्थापत्तिः, यत्र च दृष्टः श्रुतो वाऽर्थोऽनुपपन्नोऽर्थान्तरं कल्पयति, साऽर्थापत्तिः। इति दिक्। **निगीर्ण**-स्यारोप्यमाणेनान्तर्भावितस्य। **विषयस्य**। **पुनः**। **अन्यतादात्म्यप्रतीतिकृ**दन्यस्य विषयिणः ( आरोप्यमाणस्य ) तादात्म्यं तस्य प्रतीतिकृत् विषयविषयिणोरभेदप्रतीतिकारणभूतेति भावः। **साध्यवसाना**। **अस्याः** साध्यवसानाया लक्षणाया इत्यर्थः। **चतुर्षु** रूढिमूलक उपादानरूपे प्रयोजनमूलक उपादानरूपे रूढिमूलके लक्षणरूपे प्रयोजनमूले लक्षणरूपे चेत्यर्थः। **भेदेषु**। **पूर्वोदाहरणानि** पूर्वमुदाहृतानि लक्ष्याणीत्यर्थः। **एव**। अयं भावः-विषयिणाऽनिगीर्णस्य विषयस्य तेन सहाभेदप्रत्यायिका सारोपा, विषयिणा पुनर्निगीर्णस्य विषयस्य तेन सहाभेदप्रत्यायिका साध्यवसाना; तथा च-विषयस्याश्वादेरनभिधाने निगरणमिति तत्तद्वाचकशब्दाप्रयोग एवैवेति सिद्धम्, अत एव-"अश्वः श्वेतो धावती" त्यादौ यथा सारोपा, तथा-"श्वेतो धावति," "कुन्ताः प्रविशन्ति," "कलिङ्गो युध्यते," "आयुः" इत्यादौ साध्यवसाना। अत्र हि क्रमात्-'अश्वः,' 'एते,' 'पुरुषः,' 'घृतम्'इत्येतेषां निगरणम्। अन्यत्पूर्ववत्। इति।

एतासां पुनर्द्वैविध्यं दर्शयति-२१ **सादृश्येतरसम्बन्धा** इत्यादिना।

२१ सादृश्येतरे सादृश्यभिन्नाः सम्बन्धा हेतवो यासां तास्तथोक्ताः। **ताश्चतुर्विधास्सारोपाश्चतुर्विधाः साध्यवसाना**-श्चेत्येवमष्टविधा इत्यर्थः। **सकला** न तु तासां तिस्रश्चतस्रो वेति भावः। **अपि** पुनः। **शुद्धाः**। 'लक्षणा'इति शेषः। **सादृश्यात्** 'सम्बन्धा'दिति शेषः, तथा च-सादृश्यसम्बन्धा इत्यर्थः। **तु** ( इदं पूर्वतो व्यतिरेकद्योतनार्थम् )। 'ताः सकला अपी'ति पूर्वतोऽन्वेति। **गौण्यो** गुणेभ्य आगता इति तथोक्ताः। 'तत आगतः।' ४।३।७४ इत्यण्। 'टिड्ढाण..।' ४।१।१५ इति ङीप्। **मताः**। **तेनाष्टविधानां द्वैविध्येनेत्यर्थः**। **षोडशभेदिताः** षोडशभेदा जाता यासां तास्तथोक्ताः। 'लक्षणा' शेषः। तारकादित्वादितच् ॥ १२ ॥

कारिकार्थमवगमयितुं तत्काठिन्यं परिहरति-**ता** इत्यादिना।

**ताः** 'इत्यस्ये'ति शेषः। **पूर्वोक्ता** रूढिमूला प्रयोजनमूला वा सारोपा वा साध्यवसाना वोपादानलक्षणा लक्षणलक्षणा वा, इत्येवं पूर्वमभिहिता इत्यर्थः। **अष्टविधाः**। **लक्षणा** 'इत्यर्थ' इति शेषः। **सादृश्येतरसम्बन्धाः** 'इत्यस्ये'ति शेषः। **कार्य्यकारणभावादयः**। आदिना-आधाराधेयभावादीनां ग्रहणम्। उपचारात् तत्सम्बन्धाः कार्य्यकारणभावादिसम्बन्धा

**अत्र शुद्धानां पूर्वोदाहरणान्येव।**

**रूढावुपादानलक्षणा सारोपा गौणी यथा-"एतानि तैलानि हेमन्ते सुखानि" इति। अत्र तैलशब्दस्तिलभवस्नेहरूपं मुख्यार्थमुपादायैव सार्षपादिषु स्नेहेषु वर्त्तते। प्रयोजने यथा-राजकुमारेषु तत्सदृशेषु च गच्छत्सु "एते राजकुमारा गच्छन्ति" इति। अत्र सौन्दर्य्याद्यतिशयः प्रयोजनम्। रूढावुपादानलक्षणा साध्यवसाना गौणी यथा-"तैलानि हेमन्ते सुखानि" इति।**

---

इति यावत्, 'इत्यर्थ'इति शेषः। यद्वा-कार्य्यकारणभावा उपलक्षणेनाधाराधेयभावादयश्चादयः कारणानि यासां तास्तथोक्ताः। 'इत्यर्थ' इति शेष इति पूर्ववत्। यद्वा ननु सादृश्येतरसम्बन्धाः शुद्धा इति यत्प्रतिपादितं, तत्र सादृश्यादितरे के सम्बन्धा? इत्यपेक्षायामाह-सादृश्येतरसम्बन्धाः सादृश्यादितरे सम्बन्धाः। कार्य्यकारणभावादयः। 'आदिनाऽऽधाराधेयभावादयः। अत एव-'ता'इति पदं व्याख्यायैतद् व्याख्यानं सङ्गच्छते। अन्यथा--एतद्-व्याख्याय 'ता' इति व्याख्यातुं सङ्गच्छेत। अयं भावः-यदि सादृश्येतरसम्बन्धा इति कारिकांशस्तर्हि कार्य्यकारणभावादिसम्बन्धशालिन्य इत्यर्थो ज्यायान्, सादृश्यादितरे सम्बन्धाः क इत्यपेक्षायां यदि, तर्हि यथाश्रुत एवार्थः, इति दिक्।

उदाहरति-**अत्रे**त्यादिना।

**अत्रा**सां शुद्धानां गौणीनां च लक्षणानां मध्य इति यावत्। **शुद्धानां** कार्य्यकारणभावादिसम्बन्धवतीनाम्। **पूर्वोदाहरणानि** पूर्वाणि दर्शितान्येवोदाहरणानि लक्ष्याणीति तथोक्तानि। यद्वा-पूर्वासां पूर्वं निरूपितस्वरूपाणामुदाहरणानीति तथोक्तानि। **एव**। तथा च-"अश्वः श्वेतो धावती" त्यत्र रूढिमूला सारोपा शुद्धोपादानलक्षणा। श्वेताश्वयोर्गुणगुणिभावोपपत्तेः। "एते कुन्ताः प्रविशन्ति" इत्यत्र प्रयोजनमूला सैव, एतद्वाच्यानां कुन्तधारिणां कुन्तवाच्यानां शस्त्राणां धार्य्यधारकभावोपपत्तेरनिवार्य्यप्रवेशकर्त्तृत्वद्योतनरूपात् प्रयोजनाच्च। "कलिङ्गः पुरुषो युध्यते" इत्यत्र रूढिमूला शुद्धा सारोपा लक्षणलक्षणा, कलिङ्गपुरुषयोराधाराधेयभावोपपत्तेः। "आयुर्घृतम्" इत्यत्र प्रयोजनमूला सैव, कार्य्यकारणभावोपपत्तेः, अन्यापेक्षया घृतस्यातिशयद्योतकत्वोपपत्तेश्च। इति सिद्धम्।

अथ गौणीरुदाहरति- **रूढावि**त्यादिना।

**रूढौ** रूढिमूलायां सत्याम्। **सारोपा**ऽऽरोपसहिता। **उपादानलक्षणा। गौणी। यथा-"एतानि** प्रत्यक्षभूतानीति शेषः। **तैलानि** तिलभवानि स्नेहरूपद्रव्याणीति भावः। 'तस्येदम्।' ४।३।१२० 'इत्यण्। **हेमन्ते**ऽलि-धनुःस्थसूर्य्ये उपलक्षणेन तादृशशीतप्रधानावसरे। **सुखानि** सुखरूपाण्युपचारात् तत्साधनभूतानीत्यर्थः। **इति**। अयं भावः-'तैलं सम्मर्दयेदङ्गे हेमन्ते शिशिरेऽपि वा।' इत्युक्तनयेन तैलाभ्यङ्गः सुखकरः अन्यथा शैत्याद्यनपायाद् दुःखम्। इति। **अत्र। तैलशब्दः** तैलानीति पदमित्यर्थः। **तिलभवस्नेहरूप**स्तिलभवो यः स्नेहस्तं रूपयति निरूपयतीति तथोक्तम्। **मुख्यार्थम्**। **उपादाय** सादृश्येन गृहीत्वा। **एव। सार्षपादिषु** सर्षपभवादिषु। आदिपदेन तिलमामृगमदादिद्रव्यसंपृक्तानां ग्रहणम्। **स्नेहेषु। वर्त्तते**। अयं भावः। एतत्पदं प्रत्यक्षग्राहकं, तैलपदं च स्वार्थं परित्यज्यार्थान्तरस्नेहग्राहकम्, प्रत्यक्षं च सार्षपादि तस्मात्तत्सादृश्यमुपादाय तैलपदं स्वेतरग्राहकम्। एवं च-स्वार्थं परित्यज्यार्थान्तरस्वीकारादुपादानम् एतत्पदवाच्यस्य सार्षपादेस्तैलपदार्थेनानिगीर्णत्वात्सारोपात्वम्, सादृश्यनिबन्धनत्वाद् गौणीत्वं च। स्नेहान्तरापेक्षयाऽऽधिक्यद्योतनाभावाद् रूढिमूलेयम्। इति। **प्रयोजने** प्रयोजनमूला'उपादानलक्षणा सारोपा गौणी'ति शेषः। **यथा। राजकुमारेषु। तत्सदृशेषु** धन्येष्वपरेषु नवजातेष्विति शेषः। **च। गच्छत्सु** 'सत्स्वि'ति शेषः। **"एते** दृश्यमानाः। **राजकुमाराः। गच्छन्ति।" इति। अत्र। सौन्दर्य्याद्यतिशयः** 'द्योत्यमान'इति शेषः। **प्रयोजनम्**। अयं भावः-एतत्पदवाच्यानां सर्वेषां राजकुमारत्वाभावात् तत्सदृशानां लक्षणात्सारोपा गौणी। प्रयोजनं च सर्वेषां सौन्दर्यविभुत्वादि प्रत्यायनम्। इति। एवं सारोपामुदाहृत्य साध्यवसानामुदाहरति-**रूढावि**त्यादिना। **रूढौ** सत्यां प्रवृत्तेति शेषः। **साध्यवसाना**ऽध्यवसानवती। **उपादानलक्षणा। गौणी। यथा-"तैलानि। हेमन्ते** तदाख्य ऋतौ। **सुखानि।" इति**। अत्र हि 'एतानी' तिपदाप्रयोगात्

**प्रयोजने यथा–"राजकुमारा गच्छन्ति" इति। रूढौ लक्षणलक्षणा सारोपा गौणी यथा–"राजा गौडेन्द्रं कण्टकं शोधयति।" इति। प्रयोजने यथा–"गौर्वाहीकः" इति। रूढौ लक्षणलक्षणा साध्यवसाना गौणी यथा–"राजा कण्टकं शोधयति" इति। प्रयोजने यथा–"गौर्जल्पति।" इति।**

**अत्र केचिदाहुः–'गोसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यन्ते, ते च गोशब्दस्य वाहीकार्थाभिधाने निमित्तीभवन्ति' इति तदयुक्तम्, गोशब्दस्यागृहीतसङ्केतं वाहीकार्थमभिधातुमशक्यत्वात्,**

---

विषयस्य (तैलरूपस्य) विषयिणा (सार्षपादिरूपेण) अभेदाध्यवसानात्साध्यवसाना सादृश्यनिबन्धनमूलकत्वाद् गौणी च। अन्यत्पूर्ववत्। **प्रयोजने** 'सति साध्यवसाना गौण्युपादानलक्षणे'ति शेषः। **यथा**–'राजकुमारसदृशेषु गच्छत्सु'इति शेषः। **"राजकुमाराः। गच्छन्ति।"** इति। अत्रापि पूर्ववत्। 'एत'इति पदाप्रयोगात्। लक्षणलक्षणामुदाहरति–रूढावित्यादिना। **रूढौ। लक्षणलक्षणा। सारोपा। गौणी। यथा–"राजा। गौडेन्द्रं** गौडदेशाधीशम्। **कण्टकम्। शोधयति** तद्दुःखदातृत्वमपनुदतीति भावः।" **इति।** अत्र हि–'वङ्गदेशं समारभ्य भुवनेशान्तिकः शिवे! गौडदेशः समाख्यातः' इत्युक्तदेशस्य 'सारस्वताः कान्यकुब्जा गौडमैथिलकोत्कलाः। पञ्च गौडाः समाख्याता विन्ध्यस्योत्तरवासिनः॥' इत्युक्तदिशा वा विन्ध्योत्तरस्य प्रदेशविशेषस्य वा इन्द्रः कण्टकरूपेणाभिधीयमानः शोधनक्रियायाः कर्मत्वेन नोपपद्यते। अतः–आरोप्यमाणेन कण्टकत्वेनारोपविषयस्य गौडेन्द्रस्याभेदारोपात् सारोपा, कण्टकस्य च शोधनक्रियाकर्म्मत्वानुपपत्तौ स्वार्थपरित्यागपुरःसरं क्षुद्रतया दुःखदत्वरूपार्थोपस्थापकत्वाल्लक्षणलक्षणा। सादृश्यमूलत्वाच्च गौणी। **प्रयोजने** 'सति लक्षणलक्षणा सारोपा गौणी'ति शेषः। **यथा–"गौः। वाहीकः।** वहिर्भवो वाहीकः। 'वहिषष्टिलोपो यञ्च।*', 'ईकक्।*' इति वार्त्तिकाभ्यां टिलोपे ईककि कृते रूपमिदम्। पाञ्चालापरपर्य्यायो हलवाहकापरपर्य्यायो ब्राह्मणब्रुवो वेत्यर्थः।" **इति।** अत्र हि–वाहीकस्य गोत्वेन निरूपणाद्गौणीत्वम्, गोर्वाहीकस्य चान्वयानुपपत्तौ गोपदं स्वार्थं परित्यज्याज्ञत्वादिसाधर्म्यसम्बन्धेन वाहीकार्थमङ्गीकरोतीति लक्षणलक्षणा। विषयविषयिणोरुभयोः सद्भावात् सारोपा, तयोरभेदातिशयप्रतीतिः फलम्। **रूढौ। साध्यवसाना। लक्षणलक्षणा। गौणी। यथा–"राजा।** 'गौडेन्द्रप्रतिद्वन्द्वी'ति शेषः। **कण्टकं** तीक्ष्णाग्रं वृक्षाङ्गम्। **शोधयति" इति।** अत्र गौडेन्द्ररूपस्यारोपविषयस्य निगरणात्साध्यवसाना। अन्यत्पूर्ववत्। **प्रयोजने** 'सैवे'ति शेषः। **यथा–"गौः जल्पति।** मनुष्यवद् व्यक्तं समुच्चरति।" **इति।** अत्र हि गोर्जल्पनक्रियायामन्वयलाभाय वाहीकार्थोऽङ्गीक्रियते। तस्मादेषा साध्यवसाना लक्षणलक्षणा, गोर्वाहीकस्य च सादृश्यं रूढौ हेतुरिति गौणी॥

अत्र शाब्दबोधप्रकारं दर्शयन् परमतेऽस्वारस्यं दर्शयति– अत्रेत्यादिना।

**अत्रा**स्मिन् "गौर्जल्पती" त्युदाहृते वाक्य इति यावत्। **केचित्। आहुः 'गोसहचारिणो** गोः सहचारिणः समानाधिकरणतया वर्त्तमाना इति तथोक्ताः।**जाड्यमान्द्यादयः।** आदिना हिमवातादिसहत्वादयो गृह्यन्ते। **गुणाः। लक्ष्यन्ते** गोशब्देन लक्षणाद्वारा बोध्यन्त इति भावः। **ते** लक्ष्यमाणा गुणा इत्यर्थः। **च। गोशब्दस्य** 'गौ' रिति पदस्येत्यर्थः। **वाहीकार्थाभिधाने** 'वाहीक' इति पदार्थस्याभिधया बोधजनन इत्यर्थः। **निमित्तीभवन्ति** कारणभूततामापद्यन्त इति भावः। इदमुक्तम्–'गौर्जल्पती'त्यस्य 'वाहीको ब्रूत' इत्यर्थः। अत्र च गोशब्दस्य वाहीकार्थः, 'जल्पती' त्यस्य च ब्रूत इति। गोवाहीकयोर्जाड्यादिगुणानां सामानाधिकरण्यात्, एवं च 'गौ' रित्यनेन स्ववृत्तयो गुणा लक्ष्यन्ते, ते च स्वसामानाधिकरण्येन वाहीकार्थं बोधयन्तीति तस्य 'वाहीक' इत्यभिधया बोध्योऽर्थः' लक्षणया तु परं गुणा बोध्यन्ते। इति निष्कृष्टम्।' **इति।** 'य' दिति शेषः। **तत्। अयुक्तम्।** कुत इति हेतुं दर्शयति–**गोशब्दस्य** 'गौ' रिति पदस्य। **अगृहीतसङ्केतं** न गृहीतः सङ्केतः स्वबोध्यत्वनियमो येन तं तथोक्तम्। **वाहीकार्थं** 'वाहीक' इत्यर्थम्। **अभिधातुम**भिधया बोधयितुम्। **अशक्यत्वा**त्सामर्थ्याभावात्। वाहीको गोपदवाच्य इति सङ्केताभावान्न गोपदं न वा तदर्थगता लक्ष्यमाणगुणा वाहीकार्थं बोधयितुमीशते साक्षात्। इति भावः। ननु गोत्वे गृहीता शक्तिर्व्यक्तिमिव तत्सदृशमपि (वाहीकं) बोधयितुं शक्ता स्यादिति

---

१ 'विप्रसंस्कारयुक्तोऽपि नित्यं सन्ध्याऽऽदिकं च यः। नैमित्तिकं च नो कुर्य्याद्ब्राह्मणब्रुव उच्यते॥' इत्युक्तो। जातिमात्रेण ब्राह्मणः।

**गोशब्दार्थबोधनाच्च । अभिधाया विरतत्वाद् विरतायाश्च पुनरुत्थानाभावात् । अन्ये पुनः-'गोशब्देन वाहीकार्थो नाभिधीयते, किन्तु-स्वार्थसहचारिगुणसाजात्येन वाहीकार्थगता गुणा एव लक्ष्यन्ते ।' इति । तदप्यन्ये न मन्यन्ते, तथाहि- अत्र गोशब्दाद् वाहीकार्थः प्रतीयते, न वा; आद्येऽपि गोशब्दादेव, लक्षिताद्वा गुणात्, अविनाभावाद्वा; तत्र न प्रथमः, वाहीकार्थस्यासङ्केतितत्वात्, न द्वितीयः, गोगवयचन्द्रमुखादिशब्दद्वन्द्वानामवयवप्रसादादि साम्येऽपि अन्योऽन्यस्य अन्यतमशब्दार्थानभिधायकत्वात्, न तृतीयः, अविनाभावलभ्यस्यार्थस्य शाब्देऽन्वये प्रवेशासम्भवात् । शाब्दी ह्याकाङ्क्षाशब्देनैव पूर्य्यते । इति । न द्वितीयः, यदि हि गोशब्दाद् वाहीकार्थो न प्रतीयते,**

---

चेन्नेत्याह- **गोशब्दार्थमात्रबोधनात्** । 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयती'ति न्यायाद् गोशब्देन गोशब्दार्थ एव बोधयितुं शक्यते इति नियमादिति भावः । **च** । नन्वस्य नियमस्य श्लेषादौ व्यभिचारात् प्रयोजनवशात्पुनरपि प्रतीतिः कल्पनीयेति चेन्नेत्याह- **अभिधायाः** । **विरतत्वाद्**विरतव्यापारत्वात् । **विरताया** विरतव्यापाराया अभिधायाः । **च** । **पुनरुत्थानाभावात्** व्यापारान्तरं ग्राहयितुं शक्त्यभावात् । श्लेषादौ धर्म्मान्तरे गृहीतं शक्त्यन्तरमर्थान्तरमुपस्थापयतु नाम, किन्तु गोत्वेऽत्र गृहीता शक्तिस्तदाश्रयमुपस्थाप्य यदि तत्सदृशमप्युपस्थापयेत्तर्हि अभिधयैव लक्ष्यार्थोपस्थाने लक्षणायाः पुनरङ्गीकारानौचित्यमिति भावः । अत्रापरेषां मतं दर्शयति- **अन्ये** । **पुनः** । 'प्राहु'रिति शेषः । **'गोशब्देन'** 'गौ' रिति पदेनेत्यर्थः । **वाहीकार्थो** 'वाहीक' इत्यर्थः । **न** । **अभिधीयते**ऽभिधया बोध्यते । **किन्तु** । **स्वार्थसहचारिगुणाः** स्वार्थस्य गोपदवाच्यस्य सहचारिणो गुणाः, गोवृत्तयो जाड्यादयो गुणा इति भावः । **साजात्येन** समानजातीयत्वेन । **वाहीकार्थगताः** । **लक्ष्यन्ते** ।' **इति** । अयं भावः-जाड्यादिसाधर्म्येण गोः सजातीयो वाहीकः, तस्माद्गता गुणा अपरत्र लक्ष्यन्ते लक्ष्यमाणाश्चामी तं लक्षयन्तीति । निराकरोति- **तत्** । **अपि** । **अन्ये**ऽस्मदादयः । **न** । **मन्यन्ते** । तदेवोपपादयति- **तथाहि** । **अत्र** 'गौर्जल्पती'त्यत्रेत्यर्थः । **गोशब्दात्** गोशब्दं प्रवृत्तिनिमित्तीकृत्येत्यर्थः । **वाहीकार्थः** । **प्रतीयते** बुध्यते (?इत्येकः पक्षः) । **वा**ऽथवा । **न** (इत्यपरः पक्षः) । एवं पक्षद्वयमुपस्थाप्याद्ये विकल्पत्रयेणास्वरसतां दर्शयति- **आद्ये** 'गोशब्दाद्वाहीकार्थः प्रतीयत'इत्यङ्गीकार इति भावः । **अपि** । **गोशब्दात्** 'गौ'रिति पदात् । **एव** केवलात् । **वा** । **लक्षितात्** । **गुणात्** जाड्यादिगुणादित्यर्थः । **वा**ऽथवा **अविनाभावादा**क्षेपात् । वाहीकार्थः प्रतीयत इति शेषः । अयं भावः-केवलाद्गोशब्दाद् वाहीकार्थः प्रतीयते ? किं वा गोसाजात्येन लक्षिताद्गुणात् वाहीकार्थः प्रतीयते ? आहोस्वित् ? साजात्येन लक्षितेषु जाड्यादिगुणेष्वाक्षेपाद्वाहीकार्थः प्रतीयते ? इति । **तत्र** तेषु त्रिषु विकल्पेषु मध्य इति यावत् । **प्रथमः** । 'विकल्प' इति शेषः । **न** 'युक्त' इति शेषः । हेतुमाह- **वाहीकार्थस्य** । **असङ्केतितत्वात्** 'वाहीको गोपदवाच्य' इति सङ्केताभावात् । गोशब्दाद्वाहीकार्थस्तदा प्रतीयेत, तत्र यदि तस्य सङ्केतः ? अतस्तदभावात् केवलाद्गोशब्दाद्वाहीकार्थः प्रतीयत इति न युक्तः पक्ष इति भावः । **द्वितीयः** 'लक्षिताद्गुणाद्वाहीकार्थः प्रतीयत' इति विकल्प इत्यर्थः । **न** । कुत इत्याह- **गो-गवयव, चन्द्र-मुखादिशब्दद्वन्द्वानाम्** । आदिपदेन-कर्पूरालादीनां ग्रहणम् । **अवयव-प्रसादादिसाम्ये** । प्रसादः प्रसन्नता । आदिपदेन शीतलत्वादीनां ग्रहणम् । **अपि** । **अन्योऽन्यस्य** परस्परस्य । **अन्यतमशब्दार्थानभिधायकत्वात्** । गोगवयवयोश्चन्द्रमुखयोरित्येवं पदार्थद्वन्द्वस्य सादृश्येऽपि न गोशब्दस्य गवयवार्थाभिधायकत्वं न वा गवयवशब्दस्य गोपदार्थाभिधायकत्वमित्येवं स्थितेः । अयं भावः-यदि गोशब्दस्य गवयवार्थो गवयवशब्दस्य च गवार्थः प्रतीयेत, तदा गोशब्दार्थस्य लक्षिताद्गुणाद्वाहीकार्थः प्रतीयेत, नहि लक्ष्यमाणं गुणादिना साम्यमुपजीव्यान्यस्यान्यार्थो वक्तुं सुशकः । इति । **तृतीयः** 'अविनाभावाद्वाहीकार्थः प्रतीयत'इति विकल्पः । 'अपी'ति शेषः । **न** 'युक्त'इति शेषः । हेतुमाह-**अविनाभावलभ्यस्या**क्षेपलभ्यस्य । **अर्थस्य** । **शाब्दे** शब्दसम्बन्धिनि । **अन्वये** बोधे । **प्रवेशासम्भवात्** । **हि** यत इत्यर्थः । **शाब्दी** शब्दसम्बन्धिनी । **आकाङ्क्षा** । **शब्देन** । **एव** नत्वाक्षेपादिना । **पूर्य्यते** । अयं भावः-'गौर्जल्पती'त्यादौ जल्पनकर्त्तृत्वादेर्गवादिनिष्ठत्वासम्भवाद् गवादिपदानामाक्षेपतो वाहीकाद्यर्थ इति न युक्तं वक्तुम्, शाब्द्या आकाङ्क्षायाः शब्देनैव पूर्त्तेर्नियमः, अन्यथाऽतिप्रसङ्ग आपद्येत । **इति** । एवं प्रथमं पक्षं त्रिधा विकल्प्य निराकृत्य द्वितीयमपि निराकरोति-**द्वितीयः** 'गोशब्दाद्वाहीकार्थो न प्रतीयत'इति पक्षः । **न** 'युक्त' इति शेषः । कुत इत्याह-**हि** यत इत्यर्थः । **यदि** । **गोशब्दाद्** 'गौ' रिति

तदाऽस्य वाहीकशब्दस्य च सामानाधिकरण्यमसङ्गतं स्यात्। तस्मात् अत्र गोशब्दो मुख्यया वृत्त्या वाहीकशब्देन सहान्वयमलभमानोऽज्ञत्वादिसाधर्म्यसम्बन्धाद् वाहीकार्थं लक्षयति, वाहीकस्याज्ञत्वाद्यतिशयबोधनं प्रयोजनम्। इयं च गुणयोगाद् गौणीत्युच्यते। पूर्वा तूपचारामिश्रणाच्छुद्धा। उपचारो नामात्यन्तं विशकलितयोः शब्दयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनमात्रम्। यथा-'अग्निमाणवकयोः।' इति। शुक्लपटयोस्तु नात्यन्तभेदप्रतीतिः। शुद्धैव लक्षणा।

तस्मादेवमादिषु।

**२२ व्यङ्ग्यस्य गूढागूढत्वाद् द्विधा स्युः फललक्षणाः ॥ १३ ॥**

---

पदं प्रवृत्तिनिमित्तीकृत्य 'गौर्जल्पती'त्यादौ इत्यर्थः। वाहीकार्थो 'वाहीक' इति पदार्थः। **न। प्रतीयते। तदा। अस्य** गोशब्दस्योपलक्षणेन गोशब्दार्थस्येत्यर्थः। **वाहीकशब्दस्य** वाहीकशब्दार्थस्येत्यर्थः। **च। सामानाधिकरण्यं** 'जाड्यादिगुणै'रिति शेषः। **असङ्गतम्। स्यात्।** अयं भावः-'गौर्जल्पती'ति वाक्यस्य 'अज्ञत्वादिगुणको जल्पनक्रियावा'निति विवक्षितोऽर्थः, अज्ञत्वादिगुणकश्च वाहीकः; तदेवं स्थितौ गोशब्दं निमित्तीकृत्य वाहीकार्थाप्रत्ययो यदि स्यात्, तदा गोवाहीकयोरज्ञत्वादीनां सामानाधिकरण्यस्याप्यप्रत्ययः स्यात्। इति। ननु कथं तर्हि शाब्दबोधः? इति चेदेवमित्याह-**तस्माद्** यदेवमुभयोरपि पक्षयोरस्वारस्यं ततः कारणादिति भावः। **अत्रास्मिन्** 'गौर्जल्पती'ति वाक्य इति यावत्। **गोशब्दः** 'गौ'रिति पदम्, उपचारात्तदर्थः। **मुख्यया**ऽभिधाऽऽख्ययेत्यर्थः। **वृत्त्या।** करणे तृतीयेयम्। **वाहीकशब्देन** 'वाहीक' इति पदेन 'जल्पती'ति क्रियायाः कर्तृत्वेनाभिमतेन 'वाहीक' इति पदार्थेनेति यावत्। **सह। अन्वयं** सम्बन्धमभेदमिति यावत्। **अलभमानः। अज्ञत्वादिसाधर्म्यसम्बन्धात्** तमङ्गीकृत्येत्यर्थः। **वाहीकार्थं** 'वाहीक' इति पदार्थम्। **लक्षयति** लक्षणया वृत्त्या बोधयति। तदुक्तम्-'मानान्तरविरुद्धे तु मुख्यार्थस्य परिग्रहे। अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ॥' इति। अयं भावः-अत्र गोपदार्थस्य जल्पनक्रियाकर्तृत्वानुपपत्तौ वाहीकपदार्थस्य च जल्पनक्रियाकर्तृत्वसम्भवाच्च गोपदं स्वार्थं परित्यज्यान्येन सहाभेदोपपत्तयेऽज्ञत्वादिगुणसाधर्म्यसम्बन्धित्वेन तं ( वाहीकार्थं ) लक्षयति। तस्मात्-गोपदस्याज्ञत्वादिमान् वाहीक इत्यर्थो लक्ष्यः। इति। **वाहीकस्य** लक्ष्यमाणस्येति शेषः। **अज्ञत्वाद्यतिशयबोधनम्। प्रयोजनम्।** अयं भावः-वाहीकस्य गोत्वेन निरूपणात्तयोरभेदाद् वाहीको गौरेव तद्वदत्यन्तं जाड्यादिगुणक इति लभ्यते। इति। **इयं** 'गौर्जल्पती' त्यत्रोदाहृता लक्षणेत्यर्थः। **च। गुणयोगाद्** गुणानामज्ञत्वादीनां योगः सामानाधिकरण्येन सम्बन्धस्तस्मात्। **गौणी। इत्युच्यते। पूर्वा** 'अश्वः श्वेतो धावती' त्यादावुदाहृता। **तु। उपचारामिश्रणादु**पचारस्यानन्तरमेव वक्ष्यमाणस्यामिश्रणमयोगस्तस्मात्। **शुद्धा। उपचारः। नाम। अत्यन्तम्। विशकलितयो**र्विशेषेण खण्डितयोः। 'भित्तं शकलखण्डे वा' इत्यमरः। **शब्दयोः** शब्दार्थयोरित्यर्थः। **सादृश्यातिशयमहिम्ना। भेदप्रतीतिस्थगनमात्रम्। यथा-'अग्निमाणवकयोः' इति।** अयं भावः-'अग्निर्माणवकः,' 'गौर्वाहीक' इत्यादौ अग्न्यादिपदार्थमत्यन्तं भिन्नत्वेऽपि सादृश्यमहिम्नाऽभेद इति भेदप्रतीतेस्तिरोभावादत्र गौण्येव। इति। नन्वेवम् 'अश्वः श्वेतो धावती' त्यादावपि गौण्येव कुतो नेति चेन्नेत्याह- **शुक्लपटयोः** 'शुक्लः पटः' अश्वः श्वेत' इत्यादौ शुक्लपटादिपदार्थयोरित्यर्थः। **तु। अत्यन्तभेदप्रतीतिः।** 'गुणगुणिनोरभेद' इति नयेनेति शेषः। **न** 'अङ्गीक्रियते' इति शेषः। **तस्मात्। एवमादिषु। शुद्धा। एव। लक्षणा।** 'ज्ञेये'ति शेषः। अत्राहुस्तर्कवागीशाः-"ननु गौणीलक्षणातो रूपकालङ्कारस्य को भेदः? रूपकालङ्कारेऽप्यभेदारोपानन्तरं सादृश्यबोधस्यानुभवसिद्धत्वादिति चेद्, रूपकेऽभेदारोपात् प्रागपि सादृश्यप्रतीतिः सम्भवति। गौणीलक्षणायां तु पश्चादेव, सादृश्यप्रतीत्योः कारणवैलक्षण्यादपि वैलक्षण्यं सम्भवति। 'आरोप्यमाणस्य प्राङ्निर्देशे हि गौणीलक्षणाप्रयोगवाक्यम्। पश्चान्निर्देशे रूपकालङ्कारप्रयोगवाक्य' मिति केचित्। 'गौडेन्द्रं कण्टकं शोधयति' इति गौणीलक्षणोदाहरणं, 'राजति व्योमकासारे राजहंसः सुधाकरः।' इति रूपकोदाहरणं, ददतो ग्रन्थकृतस्तन्नाभिमतमिति मन्तव्यम्" इति।

इत्येवमष्टविधाः फललक्षणा अभिधायासां पुनर्द्वैविध्यमाह-२२ व्यङ्ग्यस्येत्यादिना।

२२ **व्यङ्ग्यस्य** प्रयोजनस्य। अत एव-२९ 'लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम्'इत्यादि वक्ष्यते। **गूढागूढत्वात्** गूढत्वादगूढत्वाच्चेत्यर्थः। **फललक्षणाः** प्रयोजनमूला अष्टविधा लक्षणा इत्यर्थः। **द्विधा। स्युः॥ १३ ॥**

**प्रयोजने या अष्टभेदा लक्षणा दर्शिताः, ताः प्रयोजनरूपव्यङ्ग्यस्य गूढागूढतया प्रत्येकं द्विधा भूत्वा षोडशभेदाः । तत्र गूढः, वाक्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यः । यथा– "उपकृतं बहु तत्र–"इति ।**

**अगूढः अतिस्फुटतया सर्वजनवेद्यः । यथा—**

**'श्रीपरिचयाज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानाम् ।**
**उपदिशति कामिनीनां यौवनमद एव ललितानि ॥ ८ ॥' इति ।**

---

स्वयं विवृणोति– **प्रयोजने** । 'राहूपरागे स्नाया'दितिवन्निमित्तार्थे सप्तमीयम् । **याः** । **अष्टभेदाः** उपादानलक्षणा लक्षणलक्षणा चेति द्वौ भेदौ, तयोः सारोपा साध्यवसाना चेति पुनर्द्वैविध्ये चत्वारो भेदाः, एतेषां शुद्धा गौणी चेति द्वैविध्येऽष्टौ विधा लक्षणायाः सम्पद्यन्त इति बोध्यम् । **लक्षणाः** । **दर्शिताः** । **ताः** । **प्रयोजनरूपव्यङ्ग्यस्यअगूढागूढतया** । **प्रत्येकम्** । **द्विधा** । **भूत्वा** । सम्पद्यमाना इति शेषः । **षोडश** । **भेदाः** । 'सम्भवन्ती'ति शेषः । **तत्र** तयोर्गूढागूढयोरिति यावत् । **गूढः** नामेति शेषः । **वाक्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यो** वाक्यार्थस्य भावना-विचारसापेक्षं गवेषणं तया तत्र वा परिपक्वा बुद्धिस्तस्या विभवस्तन्मात्रवेद्य इति तथोक्तः । **यथा– 'उपकृतं बहु तत्र' इति ।**

व्याख्यातपूर्वमिदं पद्यम् । अत्र हि वक्तृतात्पर्य्यरूपस्यापकारित्वाद्यर्थस्य गूढत्वमिति बोध्यम् । यथा वा–'मुखं विकसितस्मितं, वशितवक्रिम प्रेक्षितं, समुच्छलितविभ्रमा गति, रपास्तसंस्था मतिः । उरो मुकुलितस्तनं, जघनमंसबन्धोद्धुरं, बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥' इति । अत्र हि– 'मुखं विकसितं स्मितं यस्य तथाभूतम्, विकासित्वं हि कुसुमधर्म्मः स च स्मितेऽनुपपन्नः, यो विकसति स सच्छायो भवति इति विकसितशब्दो बाधितविकासमुख्यार्थः सन् सच्छायत्वसादृश्यात् स्मितं लक्षयन् हृद्यत्वसुरभित्वादिप्रयोजनसहस्रं व्यनक्ति, प्रेक्षितं प्रेक्षणं वशित आयत्तीकृतो वक्रिमा येन तत् तथाभूतं, वशीकरणं चेतनधर्म्मः, स च वक्रिमणि अनुपपन्नः, यो यस्य वशो भवति स तस्यायत्तो भवति, वशितशब्दो बाधितमुख्यार्थः सन् आयत्तत्वादिसादृश्याद्वक्रिमाणं लक्षयंस्तदनुसरणत्वादि प्रयोजनं व्यञ्जयति । गतिर्गमनं समुच्छलितो नितान्तमुद्गतो विभ्रमो यस्यां तथोक्ता, समुच्छलनं जलादेर्धर्म्मः, स च विभ्रमेऽनुपपन्नः, यः समुच्छलति स उत्कल्लोलो भवति, इति समुच्छलितशब्दो बाधितमुख्यार्थः सन् उत्कल्लोलादिसादृश्याद्विभ्रमं लक्षयन् प्रौढप्रौढतरं सर्वजनाभिलषणीयत्वादि प्रयोजनं प्रत्याययति । मतिर्बुद्धिर्मन इति यावत् । अपास्ता मुक्ता संस्था मर्य्यादा यया सा, अपासनं चेतनधर्म्मः, स चामूर्त्तायां मतावनुपपन्नः, यो येनापास्यते, स तस्य न भवतीति बाधितमुख्यार्थः स्वपरिवृत्तिसादृश्यात् संस्थानं लक्षयन् पुनरस्वीकारादिकं प्रयोजनं व्यञ्जयति । उरो वक्षःस्थलं मुकुलितौ स्तनौ यस्य यत्र वेति तथोक्तम्, मुकुलितत्वं पुष्पधर्म्मः स च स्तनयोरनुपपन्नः, यो मुकुलितो भवति स किञ्चिदुद्भिन्नो भवति, इति मुकुलितशब्दो बाधितस्वार्थः सन् अभिनवोद्भेदसादृश्यात् स्तनयुगुलं लक्षयन् स्पृहणीयत्वादि प्रयोजनसहस्रं व्यनक्ति । जघनमंसबन्धेनोद्धुरम् । धुरायामुद्धुरीकरणमुद्धुरत्वं, तच्च चेतनधर्म्मो जघनेऽनुपपन्नः, यो हि उद्धुरो भवति स किञ्चिदुच्चैर्भवतीत्युद्धुरशब्दो बाधितधुरामुख्यार्थः सन्नतत्त्वादिसादृश्यादंसबन्धवज्जघनं लक्षयन्मनोहरत्वादिप्रयोजनं प्रत्याययति । बत आश्चर्य्यम् । इन्दुवद्वदनं यस्यास्तस्यास्तनौ, वदनं इन्दुत्वमनुपपन्नं, यो हीन्दुसदृशो भवति स पारिमाण्डल्या दियुक्तो भवति, इतीन्दुशब्दो बाधितस्वार्थः पारिमाण्डल्यादिसादृश्याद्वदनं लक्षयञ्जगज्जीवनतापोपशान्त्यादिप्रयोजनं व्यञ्जयति । तरुणिम्नस्तारुण्यस्योद्गमः, उद्गमोऽङ्कुरादेर्धर्म्मः, स च तरुणिमनि नोपपन्नः, यो हि उद्गच्छति स किञ्चिदुद्भिन्नो भवतीत्युद्गमशब्दो बाधितोदयरूपमुख्यार्थः सन्नभिनोद्भेदसादृश्यात्तारुण्यं लक्षयन् सौन्दर्य्यादिप्रयोजनं व्यनक्ति । मोदते, मोदनं च चेतनधर्मः, सोऽपि उद्गमेऽनुपपन्नः, यो हि मोदते स सप्रसरो भवति, इति मोदतेशब्दो बाधितमुख्यार्थः सन्नुद्गमं लक्षयन् स्पृहणीयत्वादिप्रयोजनं व्यनक्ति । कामपि युवतीं साक्षात्कृत्य कामयमानस्य कस्याप्युक्तिरियम् ।

**अगूढः** 'नामे'ति शेषः । **अतिस्फुटतया** । **सर्वजनसंवेद्यः** सर्वजनानां सहृदयेतराणां संवेद्यः । **यथा–**

'**जडा** मूढाः । **अपि** । **श्रीपरिचयात्** श्रियः सम्पदः शोभायाश्च परिचयः सङ्गमादिना प्रथमं ज्ञानसम्बन्धस्तस्मात् तं प्राप्येत्यर्थः । **एव** । **विदग्धचरितानां** विदग्धानां गूढकृत्यकारितया गम्भीरप्रकृतीनां चरितानि तेषाम् । **अभिज्ञा** अभितो ज्ञातारः । **भवन्ति** । अत एव–**कामिनीनाम्** । **यौवनमदः** । **एव** न त्वन्यः कश्चित् । **ललितानि** 'अना-

अत्रोपदिशतीत्यनेनाविष्करोतीति लक्ष्यते। आविष्कारातिशयश्चाभिधेयवत् स्फुटं प्रतीयते।

**२३ धर्म्मिधर्म्मगतत्वेन फलस्यैता अपि द्विधा।**

एता अनन्तरोक्ताः षोडशभेदा लक्षणाः फलस्य धर्म्मिगतत्वेन धर्म्मगतत्वेन च प्रत्येकं द्वैविध्याद् द्वात्रिंशद्भेदाः। दिङ्मात्रं यथा-

'स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।

---

चार्य्योपदिष्टं स्याल्ललितं रतिचेष्टितम्।' इत्युक्तान् रतिचेष्टितविशेषान्, 'सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत्' इत्युक्तानङ्गानां सौन्दर्य्येण निर्म्माणप्रकारान् वा। **उपदिशति।** अत्र यौवनमदकर्त्तृकललितोपदेशविधानं समर्थयितुं श्रीपरिचयादित्याद्युक्तं, तस्मादर्थान्तरन्यासः। श्रीपरिचयादित्यस्य चोपदिशतीति प्रतिविम्बमिति दृष्टान्तो वा। आर्य्याछन्दः, 'लक्ष्मैतत् सप्त गणा, गोपेता भवति नेह विषमे जः। षष्ठोऽयं न लघुर्वा, प्रथमेऽर्धे नियतमार्य्यायाः॥ षष्ठे द्वितीयलात् परके न्ले मुखलाच्च स यतिपदनियमः। चरमेऽर्द्धे पञ्चमके, तस्मादिह भवति षष्ठो लः॥' इत्युक्तम्॥८॥' इति।

अत्र व्यङ्ग्यस्यागूढतां दर्शयति-अत्रेत्यादिना।

अत्रास्मिन्नुदाहृते पद्य इति यावत्। **'उपदिशति।'** इत्यनेन। 'क्रियापदेने'ति शेषः। **'आविष्करोति।'** इति। 'पदार्थ' इति शेषः। **लक्ष्यते** लक्षणया बोध्यते। **आविष्कारातिशयः।** **च।** 'प्रयोजन'मिति शेषः। **स्फुटं** प्रत्यक्षं यथा भवेत्तथा। **अभिधेयवदभिधेयार्थ इव। प्रतीयते।** इदमुक्तम्-परप्रवर्त्तकरूपस्योपदेशस्य चेतनधर्म्मस्य यौवनमदे बाधितत्वात् सामान्यविशेषभावेनोपदिशतीति पदस्याविष्करोतीत्यर्थो लक्ष्यते। तदेवं तस्यातिशयः स्फुटं द्योतते। इति। इदं च बोध्यम्-यत्र यत्र प्रयोजनमनुसृत्य लक्षणा प्रवर्त्तते, तत्र तत्र तस्य गूढत्वागूढत्वाभ्यां लक्षणाया द्वैविध्यात् षोडशविधत्वम्। तत्तदुदाहरणान्यूह्यानि यथा-'गङ्गायां घोष'इत्यादौ शीतलत्वपावनत्वादिबोधकस्य पदस्याभावात् तीरादेः शीतलत्वादि व्यङ्ग्यं गूढम्। 'काकेभ्यो दधि रक्ष्यता'मित्यादौ दध्यादेरुपघातकादिभ्यो 'रक्ष्यता'मित्यादिपदसाचिव्येन रक्षणीयत्वादि व्यङ्ग्यमगूढम्। इति दिक्।

आसां पुनरपि द्वैविध्यमाह-२३ **धर्म्मिधर्म्मगतत्वेनेत्यादिना।**

२३ **एता** निरुक्ताः षोडश भेदाः प्रयोजनमूला लक्षणा इत्यर्थः। **अपि। फलस्य** प्रयोजनस्य। **धर्म्मिधर्म्मगतत्वेन** धर्म्मिगतत्वेन धर्मगतत्वेन चेत्यर्थः। धर्म्मी लक्ष्यः, धर्म्मः पुनस्तद्वृत्तिपदार्थः। अत्र हेतौ तृतीया। **द्विधा।** 'भिद्यन्त' इति शेषः।

तदेव विवृणोति-**एता** इत्यादिना। स्पष्टम्।

एतासां सर्वासामुदाहरणे ग्रन्थभूयस्त्वभयादाह-**दिङ्मात्रमित्यादि।**

**दिङ्मात्रं** दिगेवेति दिङ्मात्रमित्यर्थः। दिक् च मार्गनिर्देशः। **यथा-'स्निग्धः...'**इत्यादि।

**'स्निग्धश्यामलकान्तिलिप्तवियतः** स्निग्धा मनोज्ञतया स्नेहास्पदतां प्राप्ता, रूक्षेतरतया वा मनोरमा श्यामला सरसतया विहारोचिता श्यामा या कान्तिः शोभा तया (साधनेन) लिप्तं वियदाकाशं यैः (कर्त्तृभिः) ते तथाभूताः। 'स्निग्धस्तु वत्सले'इत्यमरः। 'श्यामलः पिप्पले श्यामे'इति हैमः। 'शोभा कान्तिर्द्युतिश्छविः।' इति 'वियद्विष्णुपद'मिति चामरः। **वेल्लद्बलाका** वेल्लन्त्यो विलसन्त्यः सविनोदं चलन्त्यो वा वलाका वकपङ्क्तयो येषु ते तथोक्ताः। 'वर्षासु वलाका उड्डीयन्त' इति सम्प्रदायः। 'वेल्ल'चलने। 'वलाका वकपङ्क्त्यां स्याद्विषकण्ठ्यां वकस्त्रियाम्। कामुक्यां च वलाकोऽपी'ति गोपालः। **घनाः** सङ्कुलतया स्थिता मेघा इत्यर्थः। घनाश्च घनाश्चेति घनाः। 'सरूपाणामेकशेष एकविभक्तौ।' १।२।६४ इत्येकशेषः। 'घनो मेघे मूर्तिगुणे त्रिषु मूर्ते निरन्तरे।' इत्यमरः। तथा **शीकरिणो** जलकणिकाऽन्विताः। 'शीकरोऽम्बुकणाः स्मृताः।' इत्यमरः। **वाता** वायवः। एवम्- **पयोदसुहृदां** पयोदा जलवर्षणपरा मेघास्ते सुहृद आनन्दकतया मित्राणीव येषां, पयोदानां सुहृद इति वा तेषां तथोक्तानाम्। पयोदाश्च पयोदाश्चेति पयोदाः। पयो जलं ददतीति

**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वंसहे**
**वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव ॥ ९ ॥'**

**अत्रात्यन्तदुःखसहिष्णुरूपे रामे धर्म्मिणि लक्ष्ये तस्यैवातिशयः फलम् ।**
**'गङ्गायां घोषः' इत्यत्र च तटे शीतलत्वपावनत्वातिशयः फलम् ।**

---

पयोदाः । 'आतोऽनुपसर्गे कः ।' ३।२।३ इति कः । 'पयोदोऽम्बुविमोचिनि ।' इति गोपालः । सुष्ठु हृदयं येषां ते सुहृदः । 'सुहृद्दुर्हृदौ मित्रामित्रयोः ।' ५।४।१५० इति साधुः । मयूराणामित्यर्थः । पयोदोदये हि मयूराः प्रमोदन्त इति तेषां मित्रत्वम् । **कला** अव्यक्ता मधुरा इत्यमरः । 'ध्वनौ तु मधुरास्फुटे । कल'इत्यमरः । **आनन्दकेकाः** आनन्दस्य (उत्पादिकाः) केका वाचः । 'केका वाणी मयूरस्ये'त्यमरः । **कामं** यथेष्टम् । 'अकामानुमतौ काम'मित्यमरः । तथा च–घनादीनां दुःखकारित्वातिशयं स्वस्य च धीरतया कथमपि सोढृत्वं द्योत्यते । **सन्तु** । ननु-एषां सहने दुःखातिपातो भविष्यतीत्याशङ्क्याह–**दृढ**मभेद्यं यथा भवेत्तथेत्यर्थः । 'शक्तस्थूलौ त्रिषु दृढौ'इत्यमरः । **कठोरहृदयः** कठोरमायसतोऽपि कठिनं हृदयं मनो वक्षःस्थलं वा यस्य तथोक्तः । 'हृदयं मानसे वुक्कोरसोरपि नपुंसके ।' इति मेदिनी । **रामः** । **अस्म्य**हमित्यर्थः । अतः–**सर्वं** समस्तं दुःखजातमिति भावः । **सहे** न तु किञ्चित् प्रतिकरिष्य इति भावः । यद्वा–हे **सर्वंसहे** सर्वसहनशीले पृथिवि ! एतेन स्वप्रियापत्यस्यापि तथाविधाकारणानर्थसम्पातं सहस इति मदपि त्वमधिकेति सूचितम् । अस्मि अहमित्यर्थः । अव्ययमिदम् । रामः । दृढम् । कठोरहृदयः । अतो मया तु कथमपि तद्दुःखजातं सहिष्यत इति निष्कृष्टम् । ननु किं पुनः शोच्यत इत्याह–**तु** किन्त्वित्यर्थः । **वैदेही** सीता । **कथम्** । **भविष्यति** । **ह** कष्टम् । **हा** कष्टम् । **हा** कष्टम् । हे **देवि** सीते, पृथिवि ! इति वा । **धीरा** । **भव** क्षणं साम्प्रतमपि तत्सहस्वेति भावः । वर्षासु सीताया विरहेण व्याकुलस्य रामस्योक्तिरियम् । महानाटकस्येदं पद्यम् । शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् पृष्ठे ११ ॥९॥' इति ।

लक्ष्यं सङ्गमयति–अत्रेत्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्य इति यावत् । **अत्यन्तदुःखसहिष्णुरूपे** यन्निष्ठतया लक्षणयाऽत्यन्तमापततां दुःखानाम्भाजनत्वेऽपि सहिष्णुताऽऽत्मधर्म्मवत्त्वं लक्षितं तथाभूत इति भावः । **रामे** । **धर्म्मिणि** । **लक्ष्ये** । सतिसप्तमीयम् । **तस्य** तथाभूतस्य रामस्य । **एव** । **अतिशयो** व्यज्यमानो धीरत्वादिरूप उत्कर्ष इति भावः । **फलम्** । अयम्भावः–'वैदेही तु कथं भविष्यती'ति वैदेह्या विरहस्तद्भूतश्च 'कामं सन्तु' इति तदानीं मेघादीनामपि दुःखदत्वं, 'दृढं कठोरहृदय'इति स्वस्य तेन झटिति जीवितत्यागौचित्येऽप्यतन्त्रत्वं 'रामोऽस्मी' त्यनेकेषां जन्मनः प्रभृति पितृमरणवनवासप्रियाहरणादीनामापततां क्लेशानां भाजनत्वं 'सर्वं सहे'इति तेषां भीषणत्वं स्वस्य सहिष्णुत्वं, 'त्वमपि अहमिव, किं पुनस्त्वदग्रे निवेदयेय' मिति प्रलपनं वा 'ह हा हे'ति तथा धैर्य्यशालित्वेऽपि कष्टातिकष्टशालित्वेन तेषामसह्यत्वं चावेद्यते । तथा च–वैदेह्यालम्बनको घनाद्युद्दीपितो विलापानुभावको विषादादिसञ्चारिको रामनिष्ठो विप्रलम्भो ध्वन्यते । अत्र च कठोरहृदयत्वस्य सर्वसहत्वस्य चोपपत्तये 'राम'इत्युक्तम्, अन्यथा रामस्य वक्तृत्वे 'अस्मी' त्युक्त्यैव रामपदार्थलाभे रामपदस्य पौनरुक्त्यम् । रामपदस्य च रमणीयाह्लादकादिवाचकतया दुःखशालिवाचकत्वाभावात्कठोरहृदयत्वादिनाऽऽत्मनिरूपणं नोपपद्येत, तस्माल्लक्षणया रामपदार्थस्तथा लक्ष्यते । इति ।

**'गङ्गायां घोषः' इत्यत्र** । **च** । 'प्रवाहरूपाया गङ्गाया घोषाधिकरणत्वासम्भवे मुख्यार्थबाधे लक्षणया लक्षिते तदुपपत्तये तत्सम्बन्धिनी'ति शेषः । **तटे** । शीतलत्वपावनत्वरूपधर्म्मस्य । अतिशयः । 'द्योतमान' इति शेषः । **फलम्** । अयम्भावः–शीतलत्वादिधर्म्मातिशयबोधनमुद्दिश्योदाहृते 'गङ्गायां घोष'इत्यादौ वाक्ये घोषाद्यधिकरणतया गङ्गाऽऽदिपदानां प्रवाहादिरूपमुख्यार्थबाधात् तत्सम्बन्धिनि तटादौ घोषाद्यधिकरणतायाः सम्भवाल्लक्षणेति धर्म्मगतफलमूलेयम् । 'रामोऽस्मी'त्यत्र तु दुःखसहिष्णुत्वरूपधर्म्मवतो रामस्योत्कर्षबोधनरूपं प्रयोजनमनुसृत्य रामस्य च वक्तृत्वादेवास्मीति बोधे तथोक्तेर्निष्प्रयोजनत्वापत्तावर्थबाधाल्लक्षणा, सा च रामस्य दुःखसहित्वातिशयं लक्षयतीति धर्म्मिगतफलमूला । इति ।

**२४ तदेवं लक्षणाभेदा-श्चत्वारिंशन्मता बुधैः ॥ १४ ॥**

रूढावष्टौ, फले द्वात्रिंशत्, इति चत्वारिंशद्भेदाः । किञ्च-

**२५ पदवाक्यगतत्वेन प्रत्येकं ता अपि द्विधा ।**

ता अनन्तरोक्ताश्चत्वारिंशद्भेदाः । तत्र-पदगतत्वे, यथा-'गङ्गायां घोषः' इति । वाक्यगतत्वे, यथा-'उपकृतं बहु तत्र...'इत्यादौ

एवमशीतिप्रकारा लक्षणाः ।

---

विशेषावधारणायासां सङ्ख्यामनुस्मारयति-२४ **तदेवमित्यादिना** ।

२४ **तत्** तस्मात् । **एवम्** । **बुधैः**आलङ्कारिकैः । **चत्वारिंशत्** । **मताः** स्वीकृताः । 'स्मृता' इति पाठान्तरम् ॥ १४ ॥

आसामपि पुनर्द्वैविध्यं दर्शयति-**२४ तदेवमित्यादिना** । स्पष्टम् ।

विविच्योक्तमर्थं स्पष्टयति-**रूढावित्यादिना** । स्पष्टम् ।

आसामपि द्वैविध्यमाह-**किञ्चेत्यादिना** ।

**किञ्चा**न्यदपि वक्तव्यमस्तीत्यर्थः । किमित्याह- २५ **पद..** इत्यादि ।

२५ **ताः** पूर्वमुक्ताश्चत्वारिंशद्भेदा लक्षणा इत्यर्थः । **अपि** । **प्रत्येकं** प्रतिभेदं कृत्वेत्यर्थः । **पदवाक्यगतत्वेन** पदगतत्वेन वाक्यगतत्वेन चेत्यर्थः । 'द्वन्द्वान्तं पदं प्रत्येकमभिसम्बध्यते'इति नयेन 'गतत्वेने'ति पदवाक्ययोरुभयोरन्वेतीति बोध्यम् । **द्विधा** द्विप्रभेदाः । 'मता बुधैः' इति तु पूर्वतोऽन्वेति । इदं बोध्यम्-यद्यपि अभिधाया इव लक्षणाया अपि पदधर्म्मत्वमेव, तथाऽपि यत्र वाक्यघटकेषु अनेकेषु पदेषु तस्याः सद्भावस्तत्र तस्यास्तादवस्थ्यमुपचर्य्यते । इति ।

सन्देहापनोदाय कारिकास्थं 'ता'इति पदं व्याचष्टे-**ता** इत्यादिना । स्पष्टम् ।

दिङ्मात्रमुदाहरति-**तत्रे**त्यादिना ।

**तत्र** तयोर्लक्षणानां पदगतत्ववाक्यगतत्वयोर्मध्य इति यावत् । **पदगतत्वे** 'सती'ति शेषः । **यथा**-'लक्षणा' इति शेषः । **'गङ्गायां घोषः' इति** । अत्र हि गङ्गापदस्यैव स्वसम्बन्धिनि तटे लक्षणा, न तु घोषपदस्यापि । तस्मादस्याः पदगतत्वमिति बोध्यम् । यद्यपि घोषपदस्य मत्स्यादौ लक्षणेति वक्तुं शक्यते, तथाऽपि तत्र वक्तुस्तात्पर्य्याभावान्नाङ्गीक्रियते, अङ्गीकारेऽपि पदगतत्वमक्षतम् । एवम्-'कुन्ताः प्रविशन्ती' त्याद्यन्यासामुदाहरणम् । इति च बोध्यम् । **वाक्यगतत्वे** । सतिसप्तमीयम् । 'पुनर्लक्षणा' इति शेषः । **यथा-'उपकृतं बहु तत्र..'इत्यादौ** । अस्यार्थः प्राक् प्रतिपादितः । अत्र हि सर्वमपि वाक्यं विपरीतार्थलक्षकमिति वाक्यगतत्वम् । इति बोध्यम् ।

एवं लक्षणाभेदानुक्त्वा तत्सङ्ख्यां स्मारयति-**एवमित्यादिना** ।

**एवं** चत्वारिंशद्भेदानां द्वैविध्येनेत्यर्थः । **अशीतिप्रकाराः** । **लक्षणाः** । सम्पद्यन्त इति शेषः । तथाहि-रूढौ सारोपोपादानलक्षणा, यथा-'अश्वः श्वेतो धावती'ति' रूढौ सारोपलक्षणलक्षणा, यथा-'कलिङ्गः पुरुषो युध्यत' इति २, रूढौ साध्यवसानोपादानलक्षणा, यथा-'श्वेतो धावती'ति ३, रूढौ साध्यवसाना लक्षणलक्षणा, यथा-'कलिङ्गः साहसिक' इति, ४ रूढौ गौणी सारोपोपादानलक्षणा, यथा-'एतानि तैलानि हेमन्ते सुखानि'इति ५, रूढौ गौणी सारोपा लक्षणलक्षणा, यथा-'राजा गौडेन्द्रं कण्टकं शोधयती'ति ६, रूढौ गौणी साध्यवसानोपादानलक्षणा, यथा-'तैलानि हेमन्ते सुखानी'ति ७, रूढौ गौणी साध्यवसाना लक्षणलक्षणा, यथा-'राजा कण्टकं शोधयती'ति ८ इत्येवं रूढावष्टौ भेदाः । प्रयोजने सारोपोपादानलक्षणा, यथा-एते कुन्ताः प्रविशन्ती'ति१,प्रयोजने सारोपा लक्षणलक्षणा, यथा-'आयुर्घृत'मिति२,प्रयोजने साध्यवसानोपादानलक्षणा, यथा-'कुन्ताः प्रविशन्ती'ति ३,प्रयोजने साध्यवसाना लक्षणलक्षणा, यथा-'गङ्गायां घोष'इति४, प्रयोजने गौणी सारोपोपादानलक्षणा, यथा-'एते राजकुमारा गच्छन्ती' ति ५, प्रयोजने गौणी सारोपा लक्षणलक्षणा, यथा-'गौर्वाहीक'इति ६, प्रयोजने गौणी साध्यवसानोपादानलक्षणा, यथा-'राजकुमारा गच्छन्ती'ति ७, प्रयोजने गौणी साध्यवसाना लक्षणलक्षणा, यथा-'गौर्जल्पती'ति ८इत्येवमष्टौ प्रयोजनलक्षणाः, ताश्च प्रत्येकं गूढा अगूढाश्चेति द्वैविध्ये षोडश भेदाः, एताश्च प्रत्येकं

अथ व्यञ्जना-

**२६ विरतास्वभिधाऽऽद्यासु ययाऽर्थो बोध्यते परः ॥ १५ ॥**

**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ।**

'शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभाव' इति नयेनाभिधालक्षणातात्पर्य्याख्यासु वृत्तिषु स्वंस्वमर्थं बोधयित्वोपक्षीणासु ययाऽन्योऽर्थो बोध्यते, सा शब्दस्यार्थस्य चेष्टाऽऽदिकस्य ( प्रकृतिप्रत्ययादेश्च ) च शक्तिर्व्यञ्जनगमनप्रत्यायनादिव्यपदेशविषया व्यञ्जना नाम ।

---

धर्म्मिगता धर्म्मगताश्चेति द्वैविध्ये द्वात्रिंशद्भेदाः,रूढिमूलानामष्टानां प्रयोजनमूलानां च द्वात्रिंशता मेलने चत्वारिंशत्त्वम्, एवं पुनश्चत्वारिंशद्भेदानां प्रत्येकं पदगततया वाक्यगततया च द्वैविध्येऽशीतिभेदाः । तत्र रूढिमूलाः पदगता लक्षणा अष्टौ, रूढिमूला वाक्यगता लक्षणाश्चाष्टाविति षोडशभेदा अव्यङ्ग्याः । प्रयोजनमूला गूढव्यङ्ग्या अष्टौ, प्रयोजनमूला अगूढव्यङ्ग्याश्चाष्टौ, इति षोडशभदा धर्म्मिगता धर्मगताश्चेति द्वैविध्ये द्वात्रिंशत् प्रकाराः, एताः पुनः पदगता वाक्यगताश्चेति द्वैविध्येन चतुःषष्ट्यः । षोडशानां चतुःषष्टीनां चासां मिलितानामशीतिभेदत्वम् । इति सर्वमवदातम् ।

एवं लक्षणां सप्रपञ्चं दर्शयित्वा व्यञ्जनां दर्शयितुमुपक्रमते–अथेत्यादिना ।

अथ लक्षणां निरूप्य प्रदर्शनानन्तरम् । व्यञ्जना । 'निरूप्यत'इति शेषः । २६ **विरतास्वित्यादिना** ।

२६ **अभिधाऽऽद्यास्वभिधाऽऽद्या** यासां (अभिधालक्षणातात्पर्य्याणां) तासु । वृत्तिष्विति शेषः। **विरतासू**परतासु स्वस्वव्यापारपराङ्मुखासु सतीष्विति यावत् । **यया** । **परो**ऽन्यो विलक्षण इति यावत् । **अर्थः** । **बोध्यते** न त्वभिधीयते, लक्ष्यतेऽभिप्राप्यते वेति शेषः । **सा** । **शब्दस्य** । **अर्थादिकस्य** । आदिना चेष्टादीनां ग्रहणम् । **च** । **वृत्ति**र्व्यापारः शक्तिरिति यावत् । **व्यञ्जना** । **नाम** प्रसिद्धा अयम्भावः–संयोगादिभिर्नियम्यमाना सङ्केतितमर्थं प्रतिपादयितुं प्रभवति केवलं या साऽभिधा, अतः सङ्केतितव्यतिरिक्तार्थप्रतिपादिका वृत्तिर्व्यञ्जना, स्वव्यापारप्रतिपाद्याभिधाया विरतत्वात्, विरतायाश्च पुनरुत्थानासम्भवात्, एवं लक्षणाऽपि केवलम्मुख्यार्थस्य तात्पर्य्योपघातादिना बाधमुद्दिश्य रूढेः प्रयोजनाद्वा तत्सम्बन्धिनमपरमर्थं लक्षयति, विरमति च, अतो मुख्यार्थासम्बद्धमर्थान्तरं प्रतिपादयितुमीशाना व्यञ्जना, तस्मादियमेव 'गङ्गायां घोष' इत्यादौ मुख्यार्थबाधे लक्षणया तीरादौ घोषाद्यधिकरणत्वादिनोपस्थापिते तस्य तस्य शीतलत्वाद्यतिशयरूपं प्रयोजनमवगमयति । नहि शक्यार्थसम्बद्धस्यैवार्थस्योपस्थापकत्वात् प्रयोजनस्य च शक्यार्थासम्बद्धत्वाल्लक्षणायास्तदवगमकत्वं सम्भवति । अथैवमाभ्यां स्वं स्वमर्थमुपस्थापयत्स्वपि तेषु तेषु शब्देषु समष्ट्याऽभिप्रायमुन्नेतुमप्रभवत्सूपस्थाप्यैव तात्पर्य्याऽपि निवर्त्तते । अतः समष्ट्या वाचिकैर्लाक्षणिकैर्वा तयोपस्थाप्यमानादभिप्रायावगमाद् व्यतिरिच्यमानं कमपि कमनीयं चमत्कारविशेषं प्रत्याययतीति व्यञ्जना नामान्यैव वृत्तिः । यथोक्तं ध्वनिकारैः–'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् । यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥' इति । तदेवमानन्दस्येव व्यङ्ग्यस्य वाच्यत्वादिविलक्षणत्वात्सहृदयहृदयङ्गमत्वमवदातम् । इति ॥ १५ ॥

तदेव विवृणोति– '**शब्द...**'इत्यादिना ।

**शब्दबुद्धिकर्म्मणां** शब्दस्य बुद्धेः ( ज्ञानस्य ) क्रियायाश्चेत्यर्थः । **विरम्य** '**स्थिताना**' मिति शेषः । **व्यापाराभावो** व्यापारान्तरे शक्त्यभाव इत्यर्थः। **इति** । **नयेन** । **अभिधालक्षणातात्पर्य्याख्यासु** । तिसृषु । **वृत्तिषु** । **स्वं स्वं** स्वकीयं स्वकीयम् । 'स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीये धनेऽस्त्रियाम् ।' इति मेदिनी । 'आनुपूर्व्ये द्वे वाच्ये*' इति द्विर्भावः । **अर्थं** वाच्यं लक्ष्यं तात्पर्य्यं वेति भावः। **बोधयित्वा** । **उपक्षीणासु** विरतव्यापारासु सतीष्वित्यर्थः । **यया** । **अन्यो** भिन्नो वाच्यादिभ्यो व्यतिरिक्तः । **अर्थः** । **बोध्यते** । **सा शब्दस्य** वाचकादिरूपस्य । **अर्थस्य** वाच्यादिरूपस्य । **च** तथा **चेष्टादिकस्य**।आदिपदेन देशकालादीनां ग्रहणम् । **(प्रकृतिप्रत्ययादेः**। प्रकृत्यादेः शब्दत्वेऽपि गोबलीवर्दन्यायेन भेदो बोध्यः । आदिपदेन निपातवचनादीनां ग्रहणम् । तत्र प्रकृतिर्नाम अर्थावगमहेतुः प्रत्ययविधानावधिभूतः शब्दविशेषः, प्रत्ययः पुनः प्रकृतिं निमित्तीकृत्य विधीयमानः स्वार्थावगमकः शब्दविशेषः । तथोक्तं–'यः शब्दः स्वेतरस्यार्थे स्वार्थस्यान्वयसाधने । यदपेक्षस्तयोः पूर्वा प्रकृतिः, प्रत्ययः परः ॥' इति । **च** ।) **शक्तिः** । **व्यञ्जना** । **नाम** । इदं निवेदनीयम्–'सकृदुच्चरितः शब्दः सकृदेवार्थमवगमयती'ति नयेन सकृदुच्चरितस्य

तत्र

**२७ अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा ॥ १६ ॥**

अभिधामूलामाह–

**२८ अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते ।**
**एकत्रार्थेऽन्यधीहेतु– व्यञ्जना साऽभिधाऽऽश्रया ॥ १७ ॥**

---

शब्दस्य सकृदेवार्थावगमकत्वं, सकृदेव तस्य व्यापारोन्मुखत्वात् । नहि सकृद्व्यापृतस्य शब्दस्यासकृद्व्यापारः सम्भवति, तस्य तत्रैव हतशक्तिकत्वात् । घटाद्याकारेण च परिणता बुद्धिः घटादिमेवावगमयति, न तु पटादिम्, तदाकारेण तस्या अनवस्थानात् । पचनाद्यात्मिका चैवं क्रिया स्वानुकूलं व्यापारं दर्शयित्वा क्षीणा न भोजनादिं स्वप्रतिकूलं व्यापारं दर्शयितुमीष्टे । अतः शब्दानामेकैकव्यापारजनकत्वादभिधाऽऽद्यासु स्वस्वव्यापारं सकृदुद्भाव्य क्षीणासु कथं ता एव व्यापारान्तरमुद्भावयेयुः ? एवं सति वृत्त्यन्तरमेव व्यापारान्तरे हेतुः तत्र–, या कल्पनीया वृत्तिः सा व्यञ्जना नाम, असौ चाभिधाऽऽदिवन्न शब्दार्थमात्रनिष्ठा, किन्तु प्रकृतिप्रत्ययादिनिष्ठाऽपि । इति । इदञ्च बोध्यम्–'अन्नमुङ्क्ष्व' इत्यादिशब्दः स्वार्थं श्रोतुरन्तः स्थापयित्वा विरमति, तदर्थाकारा बुद्धिरन्नभोजनक्रियायां श्रोतारं प्रवर्त्य विरमति, साऽपि क्रिया स्वव्यापारं प्रदर्श्य विरमति, तदेषां यथाविरामानन्तरं न व्यापारः, तथाऽभिधाऽऽदीनामपि स्वस्वव्यापारानन्तरं विरामः, न पुनर्व्यापारान्तरोन्मुखत्वम् । व्यञ्जना तु सर्वाभ्यस्ताभ्यो विलक्षणा, न केवलं सा शब्दवृत्तिरर्थवृत्तिर्वा, किन्तु चेष्टाऽऽदिवृत्तिरपि । तत्र शब्दानां पदपदांशादिभेदादनेकभेदा शब्दवृत्तिः, असौ यथा–'न्यक्कारो ह्ययमेव..' इत्युदाहृते पद्ये, अर्थवृत्तिश्चार्थानां वाच्यादिभेदात्त्रिविधा, यथा–'माए ! घरोवअणं अज्ज हु णत्थित्ति साहिअं तुमए । ता भण किं करणिज्जं? एमेअ ण वासरो ठाई ॥'[1] इति । स्वैरिण्या उक्तिरियम्, अतो वाच्योर्थः 'उपपतिसङ्गमार्थिनीयमि'ति श्रोतारं प्रत्याययति, लक्ष्यवृत्तिर्यथा–'साहन्ती सहि ! सुहअं खणे खणे दूम्मिआसि मज्झकए । सब्भावणेहकरणिज्जसरिसअं दाव विरइअं तुमए'[2] इति, नायकेन क्रीडित्वाऽऽगतां दूतीं प्रत्युक्तिरियम् । अत्र सख्यादीनां पदानां विरुद्धो लक्ष्योऽर्थः सम्बोध्याया अविश्वसनीयत्वं नायकस्य चापराधित्वं व्यञ्जयति । व्यङ्ग्यवृत्तिर्यथा–'उअ णिच्चलणिप्पंदा..'[3] इत्युदाहरिष्यमाणे, चेष्टावृत्तिरप्यत्रैवोह्या, यथा वा–'गुरुमध्यगता मया नताङ्गी निहता नीरजकोरकेण मन्दम् । दरकुण्डलताण्डवं नतभ्रूलतिकम्मामवलोक्य घूर्णिताऽऽसीत्[4] ॥' इति, सखायं प्रत्युक्तिरियम् । अत्र च निहननादिना स्वागमनादिगुरुजनतन्त्रत्वाद्यवगम्यते । इति दिक् । अन्यत्सर्वमवदातम् । इति ।

अथ व्यञ्जनाया द्वैविध्यं दर्शयति–**तत्रे**त्यादि ।

**तत्र** तास्वनेकविधासु मध्य इति यावत् । २७, **अभिधालक्षणामूला**ऽभिधामूला लक्षणमूला चेत्यर्थः । **शब्दस्य** शब्दसम्बन्धिनी शब्दवृत्तिरिति यावत् । **व्यञ्जना द्विधा** द्विविधा'ज्ञेये'ति शेषः ॥ १६ ॥

तत्राद्यां लक्षयितुं प्रतिजानीते–**तत्रे**त्यादिना ।

**अभिधामूलां**'शब्दवृत्तिं व्यञ्जना'मिति शेषः । **आह**–२८ **अनेकार्थस्ये**त्यादिना ।

२८ **संयोगाद्यैः** संयोगविप्रलम्भादिभिरित्यर्थः । **नियन्त्रिते** नियन्त्रणां प्रापिते नियततयोपस्थापिते इति यावत् । **अनेकार्थस्या**नेके विवक्षिताविवक्षिता अर्था वाच्या यस्य तस्य । अनेकत्र गृहीतशक्तिकस्येत्यर्थः । अनेकौ

---

१ 'मातः ! गृहोपकरणम् अद्य खलु नास्तीति साधितं त्वया । तद्भण किं करणीयम् ? एवमेव न वासरः स्थायी ॥' इति संस्कृतम् । अत्र च गाथाछन्दः । २ साधयन्ती सखि ! सुभगं क्षणेक्षणे दूनाऽसि मत्कृते । सद्भावस्नेहकरणीयसदृशकं तावद् विरचितं त्वया ॥ ' इति संस्कृतम् । अत्र च गीतिश्छन्दः । ३ 'पश्य निश्चलनिष्पन्दा..' इति संस्कृतम् । 'भिसिणीपत्तम्मि रेहइ वलाआ। णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्ति व्व ॥' इत्यवशिष्टस्यांशस्य तु 'बिसिनीपत्रे राजते बलाका । निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव॥' इति संस्कृतम् । आर्या छन्दः । ४ भामिनीविलासस्येदं पद्यम् । औपच्छन्दसिकं वृत्तम् ।

**आद्यशब्दाद्विप्रलम्भाद्याः।** उक्तं हि–

**'संयोगो विप्रयोगश्च साहचर्यं विरोधिता। अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥**
**सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥' इति।**

**'सशङ्खचक्रो हरिः' इति शङ्खचक्रसंयोगेन हरिशब्दो विष्णुमेवार्थमभिधत्ते, 'अशङ्खचक्रो**

---

चानेके चेत्यनेके, अर्थौ चार्थाश्चेत्यर्थाः। एवं चानेकार्थशब्दयोः 'सरूपाणामेकशेषः' इत्येकशेषे रूपमिदम्। **शब्दस्य।** एकत्रैकस्मिन् विवक्षितरूप इति यावत्। 'सप्तम्यास्त्रल्' ५।३।१० इति त्रल्। **अर्थे** वाच्यार्थे सतीत्यर्थः। **अन्यधीहेतु**-रन्यस्यानियन्त्रितस्याविवक्षितस्यार्थस्य धीर्ज्ञानं तस्या हेतुः कारणं तद्रूपेत्यर्थः। **सा** प्रसिद्धा। **अभिधाऽऽश्रया**-ऽभिधाऽऽश्रयो मूलं यस्याः सा। **व्यञ्जना।** 'मते'ति शेषः। अयम्भावः–प्राकरणिकापरपर्य्यायं विवक्षितमर्थं बोधयित्वाऽभिधायां विरतव्यापारायां सत्यां तदितरमर्थं बोधयितुं प्रवृत्ता शक्तिर्व्यञ्जना, असौ चाभिधाऽन्तरमाश्रित्यैवोत्तम्भितशरीरेत्यस्या अभिधाऽऽश्रयत्वम्। ननु संयोगादिना नियन्त्रितस्याप्राकरणिकस्यार्थस्य बोधनार्थं प्रवर्त्तमानाया व्यञ्जनायाः कथमभिधाऽन्तरसाचिव्यमिति चेत्, संयोगादिनाऽभिधायाः स्वातन्त्र्येणार्थान्तरबोधने नियमनात्। न चाभिधैव प्राकरणिकमप्यर्थं बोधयतु किं व्यञ्जनया, किं वा संयोगादिना तन्नियन्त्रणस्य कल्पनात् इति शङ्क्यम्, अभिधयैव द्वितीयस्यार्थस्य बोधे प्राकरणिकत्वाप्राकरणिकत्वभेदापह्नवद्वारा प्राकरणिकस्येवाप्राकरणिकस्याप्यर्थस्यास्वादानुभववैषम्ये तत्र च सहृदयसाक्षिकस्यास्वादानुभवभेदस्यापलपितुमशक्यतया बोधनाय वैजात्यस्यावश्यम्बोध्यत्वेन तस्य च कारणविशेषाधीनशक्तिकतया व्यञ्जनास्वीकारौचित्यात्, अभिधयैव उभयोरर्थयोर्बोधे प्राकरणिकस्याप्राकरणिकत्वेऽप्राकरणिकस्य च प्राकरणिकत्वेऽतिप्रसङ्गव्यावृत्तये संयोगादिना तन्नियन्त्रणस्य अवश्यं वाच्यत्वात्। इति दिक्॥ १७॥

कारिकां सुगमयितुं तत्कठिनार्थांशभूताद्यपदार्थं लक्षयति–**आद्यशब्दादि**त्यादिना।

**आद्यशब्दात्**संयोगाद्यैरित्यंशभूतस्याद्यशब्दस्य प्रयोगादिति भावः। **विप्रलम्भाद्या** विप्रलम्भसाहचर्य्यादय इत्यर्थः। 'ग्राह्या' इति शेषः।

ननु के ते, कथं वा तेषामभिधानियामकत्वमभ्युपगच्छेमेत्याशङ्क्याह–**उक्तं ही**त्यादि। **हि** यतः। **उक्तं**भर्तृहरिणा भगवता वाक्यपदीय' इति शेषः। 'नहि प्रतिज्ञामात्रेणार्थसिद्धि' रिति तद्वाक्यमवतारयति–**संयोगो**..इत्यादिना।

'**संयोगः** प्रसिद्धः सम्बन्धः। **विप्रयोगो** विश्लेषः। च। **साहचर्यं** परस्परापेक्षित्वं, सहावस्थानं वा। **विरोधिता** प्रसिद्धं वैरं, सहानवस्थानं वा। **अर्थ**श्चतुर्थीविभक्तितुमुन्प्रत्ययादि बोध्यं प्रयोजनम्। **प्रकरणं** प्रसङ्गः, वक्तृश्रोतृबुद्धिस्थविषयत्वमिति यावत्। **लिङ्गं** संयोगातिरिक्तसम्बन्धेन परपक्षव्यावृत्तो धर्म्मः, **अन्यस्य** च सान्निध्येनापरस्य विवक्षितार्थतोपस्थापकस्येत्यर्थः। **शब्दस्य। सन्निधिः** सन्निधानम्। 'शब्दस्यान्यस्य सन्निधिर्नियतार्थकशब्दान्तरसामानाधिकरण्य' मिति तु प्राञ्चः। 'देवः पुरारि' रित्यत्र नियतार्थत्वं पुनः 'कस्ये'ति त एव जानन्ति। **सामर्थ्यं** कारणत्वम्। **औचिती** योग्यता। **देशो** रहोवनादिः। **कालो** वसन्तादिः समयः। **व्यक्तिः** पुँल्लिङ्गत्वस्त्रीलिङ्गत्वादिरूपं चिह्नम्। **स्वरादय** उदात्तादिनामानः स्वराः। आदिपदेनाभिनयापदेशौ गृह्येते, तत्राभिनयः साक्षादिवार्थाकारादिप्रदर्शिका हस्तादिक्रिया, अपदेशोऽभिमतनिर्देशः। **शब्दार्थस्य** शब्दस्यानेकार्थस्य शब्दस्यार्थस्तस्य। **अनवच्छेदे** निश्चयाभावे। **विशेषस्मृतिहेतवो** विशेषस्य स्मृतिः स्मरणं तस्या हेतवः। 'भवन्ति' इति शेषः॥' इति। इदमुक्तम्–'अनेकार्थस्य शब्दस्य कतरोऽर्थो विवक्षितः? इति सन्देहापनोदाय संयोगाद्यास्तन्नियामकाः स्वीक्रियन्ते, एते ह्यविवक्षितमर्थं निरुन्धाना विवक्षितमेवार्थं नियमेनोपस्थापयन्ति। एषां क्वचित् पार्थक्येन क्वचिच्चान्यथा नियामकत्वम्। एवं सति यत्र संयोगादीनां नियन्त्रणाभावस्तत्र श्लेषस्यावसरः प्रसरति, यत्र पुनर्नियन्त्रणेऽपि अविवक्षितोऽर्थः प्रस्फुरति, तत्र व्यञ्जनाया अवसरः, किन्त्वेषाऽभिधामूला। इति॥' इति।

कथं संयोगादयोऽभिधां नियमयन्तीति सन्देहापनोदायाह–'**सशङ्खचक्रो। हरिः।**' इत्यादि। 'सशङ्खचक्रः शङ्खचक्राभ्यां पाञ्चजन्यसुदर्शनाभ्यां सह वर्त्तत इति तथोक्तः। न तु शङ्खचक्रेण मूढसमुदायेन सह वर्त्तत'इति, हरिपदार्थेन तस्यार्थस्य स्फुटमसङ्गतेः। 'सहस्य सः सञ्ज्ञायाम्।' ६।३।७८ इति सः। 'शङ्खः कम्बौ निधौ मूर्खे भालास्थिनखरेषु च।' इति गोपालः। 'चक्रः कोके पुमान् क्लीबं व्रजे सैन्यरथाङ्गयोः।..' इति मेदिनी। **हरि**र्विष्णुः। 'हरि-

हरिः' इति शङ्खचक्रविप्रयोगेन हरिशब्दो विष्णुमेव, 'भीमार्जुनौ' इति भीमसाहचर्य्येण अर्जुनः पार्थमेव, 'कर्णार्जुनौ' इत्यर्जुनविरोधितया कर्णः पृथाया ज्येष्ठपुत्रमेव, 'स्थाणुं वन्दे भवच्छिदे' इति भवच्छेदनार्थेन स्थाणुः शिवमेव, 'सर्वं जानाति देव' इति प्रकरणेन देवो भवन्तमेव, 'कुपितो मकरध्वज' इति कोपलिङ्गेन मकरध्वजः काममेव, 'देवः पुरारिः' इति देवशब्दसन्निधिना पुरारिः

---

विष्णौ यमे मरुौ चन्द्रसिंहांशुजिष्णुषु ।..' इति गोपालः । इति 'अत्रे'ति शेषः । शङ्खचक्रसंयोगेन शङ्खचक्रयोः संयोगः धार्य्यधारकत्वरूपः सम्बन्धस्तेन । हरिशब्दः । विष्णुं विष्णुपदार्थम् । एव न तु यमाद्यर्थमिति भावः । अभिधत्ते । शङ्खिचक्रित्वेन हरिर्विष्णुरेव प्रथित इति हरेर्विष्णुवाचकत्वमिति भावः । यथा वा–'सशङ्खचक्रः सगदः सपद्मः पीताम्बरः कौस्तुभमादधानः । श्रीवत्सचिह्नेन सुचारुवक्षा निर्व्याजमव्यादनिशं हरिर्नः ॥' इति । एवमेव–'वज्री हरिः', 'पाशी हरिः' 'शिखी हरिः' 'केसरी हरिः' इत्यादौ वज्रादिसंयोगेन हरिरिन्द्रादिवाचकः । इति दिक् । 'अशङ्खचक्रः शङ्खचक्ररहितः । हरिः ।' इति 'अत्रे'ति शेषः । हरिशब्दः । शङ्खचक्रविप्रयोगेन शङ्खचक्रयोर्विप्रयोगो विश्लेषस्तेन । विष्णुम् । एव ।'अभिधत्ते' इति पूर्वतोऽन्वेति । यथा वा–'अशङ्खचक्रो हरिरेष साक्षात्, अभालनेत्रः शिव एव यद्वा । त्यक्ताम्बुजन्मासन आत्मभूश्च, निरस्तमायो ननु वा महेशः ॥' इति । एवमेव–'अवज्रो हरिः', 'अकेशरो हरिः', इत्यादौ हरिरिन्द्रादिवाचकः । इति दिक् । 'भीमार्जुनौ भीमश्चार्जुनश्चेति तौ तथोक्तौ ॥' इति । 'अत्रे'ति शेषः । भीमसाहचर्य्येण भीमस्य भीमसेनस्य साहचर्य्यं तेन तथोक्तेन । अर्जुनः 'अर्जुनः ककुभे पार्थे कार्त्तवीर्य्यमयूरयोः ।..' इति मेदिन्युक्त्याऽनेकार्थोऽपी'ति शेषः । पार्थं पृथायाः कुन्त्या अपत्यं पुमान् तम् । एव 'अभिधत्ते' इति पूर्वतोऽन्वेति । इदं बोध्यम्–यद्यपि 'भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे ।' इति मेदिन्युक्त्या भीमशब्दोऽप्यनेकार्थस्तथाऽपि भीमस्यार्जुनसाहचर्य्येण मध्यमपाण्डवे सङ्केतं गृहीत्वा भीमसाहचर्य्येणार्जुनः पार्थमेवाभिधत्ते इति, तथा च–भीमसाहचर्य्येणार्जुन इवार्जुनसाहचार्य्येण भीमोऽपि पार्थमेवाभिधत्त इति निष्कृष्टम् । यथा वा–'भीमार्जुनौ रामजनार्दनौ वा स्वंस्वं समास्थाय रथं तदानीम् । युधिष्ठिरस्यान्वनुचक्रयानं मुदाऽन्विता दिव्यधुनीमभीयुः ॥' इति । 'कर्णार्जुनौ कर्णश्चार्जुनश्चेति तथोक्तौ ।' इति 'अत्रे'ति शेषः । अर्जुनविरोधितयाऽर्जुनस्य पार्थानुजस्य विरोधिता तया । कर्णः 'कर्णः पृथाज्येष्ठपुत्रे सुवर्णालौ श्रुतावपि ।' इति मेदिन्युक्त्याऽनेकार्थोऽपीति शेषः । पृथायाः कुन्त्याः । ज्येष्ठपुत्रम् । एव न तु श्रुत्याद्यर्थम् । 'अभिधत्ते' इति पूर्वतोऽन्वेति । इदं बोध्यम्–'सहानवस्थानं विरोधित्व' मिति पक्षे 'छायाऽऽतपौ' इत्युदाहरणम्, अत्र हि–'छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः' इति मेदिन्युक्त्याऽनेकार्थोऽपिच्छायाशब्द आतपाभावमेवाभिधत्ते । यथा वा–'राहुचन्द्रौ च पाकेन्द्रौ गुरुशुक्रौ च सङ्गतौ । सेनानीस्तारकश्चैवं महिषश्च महेश्वरी ॥' इति । भवच्छिदे भवस्य संसारस्य छित् छेदनं तस्मै, मुक्तय इत्यर्थः । स्थाणुं शङ्करम् । 'स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुवे' इति मेदिनी । वन्दे नमामि स्तौमीति वा ।' इति । 'अत्रे'ति शेषः । भवच्छेदनार्थेन । स्थाणुः । शिवम् । एव न तु कीलादिम् । 'अभिधत्ते' इति पूर्वतोऽन्वेति । यथा वा–'स्थाणुं सेवेत विद्यायै पौलस्त्यं धनवृद्धये । चित्रभानुं प्रतापाय मुकुन्दं मुक्तये भवान् ॥' इति । 'देवो भवान् (नृपवर्यः) सर्वं भूतं भविष्यद्भवच्च परस्येष्टमनिष्टं चेति भावः । जानाति । इति ।' अत्रेति शेषः । प्रकरणेन देवः 'देवस्तु नृपतौ तोयदे सुरे।' इति हैमोक्त्याऽनेकार्थोऽपीति शेषः । भवन्तमभिमुखस्थं नृपतिविषयमित्यर्थः । एव न तु तोयदादिम् । 'अभिधत्ते' इति पूर्वतोऽन्वेति । यथा वा—'तां राजकन्यां रथमारुरुक्षतीं जहार कृष्णो द्विषतां समीक्षताम् । रथं समारोप्य सुवर्णलक्षणं राजन्यचक्रं परिभूय माधवः ॥' इत्यत्र तच्छब्दो रुक्मिण्या एवाभिधायकः । इति दिक् । 'मकरध्वजो मकरो नक्रो (ऽसौ) ध्वज इति, यस्येति वा स तथोक्तः । कुपितः कोपवान् संवृत्त इत्यर्थः ।' इति 'अत्रे'ति शेषः । कोपलिङ्गेन कोपरूपचेतनधर्म्मविशेषेणेति भावः । मकरध्वजः 'कामे सागरे मकरध्वजः ।' इति गोपालोक्त्या वाऽनेकार्थोऽपीति शेषः । कामम् । एव न तु सागरमितिभावः । 'अभिधत्ते' इति पूर्वतोऽन्वेति । तथाऽऽहुस्तर्कवागीशाः–'मकरध्वजपदं कर्म्मधारयबहुव्रीहिभ्यामनेकार्थकम्, कोपस्य मकराकारध्वजेऽसम्भवात् कामस्यैव बोधकम् । केचित्तु–'मकरध्वजपदं कामसमुद्रानेकार्थकम्, कोपस्तु कामस्यैव चिह्नम् । समुद्राधिष्ठातुः कोपसम्भवेऽपि विरहिविषयः कोपोऽत्र बोध्यः ।' इत्याहुः, तन्न, 'सम्प्राप्तम्मकरध्वजेन मथन'मित्यादिप्रयोगबलान्मकरध्वजपदस्य समुद्रे शक्तिकल्पनेऽपि तदधिष्ठातृदेवताबोधस्तु लक्षणयैवेति तन्न कोपसम्भवस्या-

**शिवमेव, 'मधुना मत्तः पिकः' इति पिकस्य मादनसामर्थ्येन मधुर्वसन्तमेव, 'यातु वो दयिता मुखम्' इति मुखमौचित्या सम्मुखमेव, 'विभाति गगने चन्द्र' इति गगनदेशेन चन्द्रः शशिनमेव,**

---

किञ्चित्करत्वात् कोपविशेषप्रतिसन्धानस्य मकरध्वजपदार्थविशेषप्रतिसन्धानाधीनतया तस्य प्रथममनुपस्थितौ नियन्त्रकत्वायोगाच्च' इति । अत एव 'कुपितो मकरध्वजः' इत्यत्र मकराकारध्वजसमुद्राभ्यां व्यावृत्तेन समवायसम्बन्धवता कोपेन मकरध्वजपदस्य कामे (अभिधा)।' इति प्रदीपकाराः प्राहुः । अन्ये त्वाहुः'–'वस्तुतस्तु 'स्थाणुरपश्यत्' इत्यादिर्लिङ्गोदाहरणं बोध्यम्, मकरध्वजपदस्य कामे प्रसिद्धयैव नियमनात् ।' इति । आदिना–'रम्भा गायति,' 'सुमनसो घ्राणम्,' 'सुराः सम्राजन्ते,' 'सुराः पीयन्ते' इत्यादेर्ग्रहणम् । एवं च– 'शङ्करं पतितं दृष्ट्वा पार्वती हर्षमागता । रुदन्ति किन्नराः सर्वे हा हा शङ्कर शङ्कर ॥' इत्यादीन्यप्यस्यैवोदाहरणानीति दिक् । **'पुरारिः** पुरस्य त्रिपुरापरपर्यायस्यासुरस्य, नगरस्य वाऽरिः शत्रुर्विध्वंसक इति यावत् । **देवः** ।' इति 'अत्रे'ति शेषः । **देवशब्दसन्निधिना** देवशब्दस्य सन्निधिः सन्निधानं तेन । **पुरारिः । शिवम् । एव** 'न तु नगरध्वंसक'मिति शेषः । 'अभिधत्त' इति पूर्वतोऽन्वेति । अयम्भावः–पुरारिर्देवः शङ्कर एव प्रसिद्धः, तदिति देवशब्दसान्निध्येन पुरारिः शङ्करमभिधत्ते । इति । अन्ये तु–'पुरारिसान्निध्याद्देवशब्दः शिवमेवाभिधत्ते' इति पाठान्तरमङ्गीकृत्य 'राजाद्यर्थकत्वान्नानाऽर्थकस्य देवशब्दस्य वाचकत्वं शिवभिन्नस्य देवपदार्थस्य पुरारित्वासम्भवात् पुरारिशब्दसमभिव्याहारेण शिवे नियम्यते' इति प्राहुः । 'पुरारेर्देवस्य चेत्युभयोरपि अनेकार्थयोः शब्दयोरन्योऽन्यं सान्निध्यसाहाय्येन शिवस्यैव वाचकत्वम्, तथाहि– नृपतिदेवतवाचकतयाऽनेकार्थो देवशब्दः, नगरविध्वंसकासुरविशेषशातकतया पुरारिशब्दोऽप्यनेकार्थवाचकः, एवं सति–नृपतेः पुरारित्वाप्रसिद्धेः, दैवतविशेषस्यासुरविशेषारित्वप्रसिद्धेश्च देवशब्दसमभिव्याहारेण पुरारिशब्दः, पुरारिशब्दसमभिव्याहारेण देवशब्दश्च शिवमेवाभिधत्ते । नगरविध्वंसको नृपतिरित्यर्थस्तु प्रकरणमन्तरा नोन्नेतुं शक्यः । न चेदमौचित्या उदाहरणमिति वक्तुं युक्तम्, प्रसिद्ध्यातिरेकेणोभयोः सान्निध्येऽर्थान्तराभिधानसंशयस्यैवानुदयात् । अथैवं सत्यपि देवशब्दस्यैव सान्निध्येन पुरारिशब्दस्यैव शिववाचकत्वमिति ध्येयम्, पुरारिशब्दस्यैव प्राधान्येन शिववाचकत्वात् ।' इति च केऽप्याहुः । **'मधुना** वसन्तेन । **पिकः** कोकिलः । **मत्तः** ।' **इति** । 'अत्रे'ति शेषः । **मादनसामर्थ्येन** पिक (कोकिल) निष्ठोन्मादकारणीभूतेन सामर्थ्येन हेतुनेति भावः । **मधुः** 'मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः । दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे ।' इति विश्वोक्त्याऽनेकार्थोऽपीति शेषः । **वसन्तम् । एव** न तु क्षौद्रादि 'अभिधत्त'इति पूर्वतोऽन्वेति । यथा वा–'नारायणं भजत रे जठरेण युक्ताः, नारायणं भजत रे पवनेन युक्ताः । नारायणं भजत रे भवभीतिखिन्नाः, नारायणात्परतरं नहि किञ्चिदस्ति ॥' इति । अत्र हि नारायणशब्दो जाठरादिरोगनिवर्त्तकतयौषधविशेषाद्यर्थविशेषवाचकः । **'दयिता** प्रिया । **वो** युष्माकमित्यर्थः । **मुखं** सम्मुखम् । **यातु** प्राप्नोतु ।' **इति** 'कस्याश्चित्कुट्टिन्या उक्ता'विति शेषः । **मुखं** मुखपदम् । **औचित्या । सम्मुखम् । एव** 'अभिधत्ते' इति पूर्वतोऽन्वेति । अयम्भावः–'भीष्मद्रोणप्रमुखतः सर्वेषांच महीक्षिताम् ।' इत्यत्र प्रमुखस्येवात्र मुखस्यापि न सम्मुखवाचकत्वममरादिनाऽऽम्नातं, किन्तु औचित्या (लोके तथा प्रयोगबाहुल्यं दृश्यत इति शिष्टाचारेण)तद् युज्यते । इति । यथा वा–'केशवः शरणं मम'इत्यत्र केशवस्य'केशवोऽजे च पुन्नागे पुंसि, केशवति त्रिषु ।'इति मेदिन्युक्त्या केश्यादिवाचकत्वेऽपि शरणौचित्या भगवद्वाचकत्वमेव । यथा वा–'आरुह्यन्ते नृपैर्नागाः, सैन्धवाश्चानुयायिभिः ।, वन्दारवस्तु वन्दन्ते, तांस्तदानीं पुरोगताः ॥' इति, अत्र हि नागसैन्धववन्दनपुरोगतशब्दानां हस्तिवाजिस्तवनसम्मुखगताभिधायकत्वमेव, न तु सर्पलवणनमनपुर्गताभिधायकत्वम् । इति दिक् । **'गगने** आकाशे । **चन्द्रः । विभाति ।' इति** 'अत्रे'ति शेषः । **गगनदेशेन । चन्द्रः** 'चन्द्रः कर्पूरकाम्पिल्लसुधांशुस्वर्णचारुषु ।' इति मेदिन्युक्त्याऽनेकार्थोऽऽपीति शेषः । **शशिनं** सुधांशुम् । **एव** । 'अभिधत्त' इति पूर्वतोऽन्वेति । यथा वा–'गुरुरेकः कविरेकः सदसि मघोनः कलाधरोऽप्येकः । अद्भुतमत्र सभायां गुरवः कवयः कलाधराः सर्वे ॥' इति । अत्र हि सुरपतिनरपतिसभाभेदेन देशभेदे गुर्वादीनां जीवाचार्याद्याचकत्वभेदः । 'एवं 'लतोपरि खद्योतः,' 'व्योम्नि चित्रभानुः,' 'वेद्यां चित्रभानुः', 'उदयाचले खद्योतः' इत्यादौ । इति दिक् ।

---

१ पात्विति पाठान्तरं तु न सम्यक्, मुखस्य भावप्रत्ययान्तसाम्मुख्यपदाभिधेयत्वानुपपत्तेः ।

'निशि चित्रभानुः' इति कालेन चित्रभानुर्वह्निमेव, 'मित्रो भाति' इतिपुंव्यक्त्या मित्रः सूर्य्यमेव। * स्वरस्तु वेद एव विशेषप्रतीतिकृत्, न काव्ये; इति तस्य विषयो नोदाहृतः। इदं केप्यसहमाना आहुः–'स्वरोऽपि काक्कादिरूपः काव्ये विशेषप्रतीतिकृदेव। उदात्तादिरूपोऽपि मुनेः पाठोक्तदिशा शृङ्गारादिविशेषप्रतीतिकृदेव, इत्येतद्विषय उदाहरणमुचितमेव।' इति, तन्न; तथाहि–स्वराः

---

'निशि रात्रौ। चित्रभानुरग्निः। 'चित्रभानुः पुमान् वैश्वानरे चाहस्करेऽपि च।' इति मेदिनी।' इति। 'अत्रे'ति शेषः। चित्रभानुः। कालेन निशासमयेन। वह्निम्। एव न तु सूर्यम्। 'अभिधत्ते' इति शेषः। यथा वा–'पर्वणिपर्वणि चन्द्रो मुदितो भवतीति विश्रुतं भुवने। अथ तव वदनं दयिते सदैव पश्यामि संहृष्टम्॥' इति, अत्र हि पर्वणा चन्द्रः सुधांशुमेवाभिधत्ते। इति दिक्। मित्रः सूर्य्यः। 'मित्रं सुहृदि मित्रोऽर्के' इति गोपालः। भाति।' इति 'अत्रे'ति शेषः। पुंव्यक्त्या पुँल्लिङ्गरूपया व्यक्त्या। मित्रः। सूर्य्यम्। एव न तु सुहृदम्। 'अभिधत्ते' इति पूर्वतोऽन्वेति। यथा वा–'सुरा सेव्यते,' 'सुरान् सेवते,' 'पद्मं पद्माऽधितिष्ठति,' 'सुमनांसीव सुमनसः,' 'चक्रं,' 'चक्रः' इति दिक्।

प्रसङ्गप्राप्तं स्वरेणाभिधानियमनस्योदाहरणमुपेक्षमाणस्तत्र हेतुं दर्शयति–स्वरस्त्वित्यादिना।

स्वरः श्रूयमाणशब्दस्य ध्वनिविशेषः। तु (एतेन संयोगादीनां व्यवच्छेदो दर्शितः)। वेदे। एव। विशेषप्रतीतिकृद्विशेषस्य शब्दस्यानेकेष्वर्थेषु मध्ये यस्य कस्यचिदेकतरस्य प्रतीतिस्तां करोतीति तथोक्तः। न नत्वित्यर्थः। काव्ये उपलक्षणेन तादृशे सर्वस्मिन्नपि लौकिके वाक्ये इत्यर्थः। 'विशेषप्रतीतिकृ'दिति पूर्वतोऽन्वेति। अयम्भावः- 'शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।' इत्युक्तदिशा यद्यपि स्वरस्यापि संयोगादेरिव विशेषस्मृतिहेतुत्वमभिधातुं शक्यम्, तथाऽपि तद्वेद एव न पुनर्लोके। इति। इति 'अस्मात् कारणा'दिति शेषः। तस्य स्वरस्येत्यर्थः। विषयो लक्ष्यम्। न। उदाहृतः। इदमुक्तम्–'इन्द्रशत्रो विवर्धस्व'इत्यादौ'इन्द्रशत्रो' इत्यादेः इन्द्रः शत्रुः शातयिता यस्येति बहुव्रीहौ'बहुव्रीहौ प्रकृत्या पूर्वपदम्।' ६।२।१ इति पूर्वपदप्रकृतिस्वरे 'अनुदात्तं पदमेकवर्जम्।' ६।१।१५८ इति शेषनिघाते आद्यपदान्तोदात्तत्वे इन्द्रस्य शातनकर्तृत्वम्, 'इन्द्रः शत्रुः शातयिता'इति तत्पुरुषे तु'समासस्य' ६।१।२२३ इत्यन्त्यपदान्तोदात्तत्वे इन्द्रस्य शातनकर्म्मत्वं लभ्यते। इत्येवं वेद एवाचार्य्यैः स्वरस्य पार्थक्येनाभिधेयपार्थक्यमाम्नातम्। तथाहि-'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥' इति।

असत्पक्षनिराकरणपूर्वकं सत्पक्षसमर्थनं निर्णय इति सिद्धान्तमनुसृत्योक्तमेवार्थं द्रढयितुं तावत् पूर्वपक्षपातिनामभिप्रायमाविष्करोति–इदमित्यादिना।

इदं प्रदर्शितपूर्वं सिद्धान्तितं तात्पर्य्यम्, स्वरस्याभिधानियामकत्वं लोकातिरिक्तविषयमित्यभिधानमिति यावत्। (च) केऽपि। असहमानाः। केऽपि। आहुः। किमित्याह–'स्वरः। अपि। काक्कादिरूपः। सन्निति शेषः। काव्ये। विशेषप्रतीतिकृत्। एव। 'अस्ती'ति शेषः। उदात्तादिरूपः। अपि'स्वर' इति शेषः। मुनेर्भरतस्योपचारात्तदीयग्रन्थस्येत्यर्थः। पाठोक्तदिशा पाठप्रकारेणेति भावः। शृङ्गारादिविशेषप्रतीतिकृत् शृङ्गारादिषु विशेषोऽन्यतमस्तस्य प्रतीतिस्तां करोतीति तथोक्तः। 'अस्ती'ति शेषः। एव। इति इत्यस्मात् कारणात्। एतद्विषय एतस्य स्वरस्य विशेषप्रतीतिकृत्वस्य विषयस्तत्र। उदाहरणम्। उचितम्। एव नात्र कोऽपि विप्रति-

---

* 'सशङ्खचक्रो हरिः' इत्यत्र शङ्खचक्रसंयोगेन हरिशब्दो विष्णुमेवाभिधत्त। 'अशङ्खचक्रो हरिः' इति तद्वियोगेन तमेव। 'भीमार्जुनौ' इति अर्जुनः पार्थः। 'कर्णार्जुनौ इति कर्णः सूतपुत्रः। 'स्थाणुं वन्दे' इति स्थाणुः शिवः। 'सर्वं जानाति देवः' इति देवो भवान्। 'कुपितो मकरध्वजः' इति मकरध्वजः कामः। 'देवः पुरारिः (पुरारातिः)' इति पुरारिः शिवः। 'मधुना मत्तः कोकिलः ( पिकः )' इति मधुर्वसन्तः। 'यातु वो दयितामुखम्,' 'दयिता यातु वो मुखम्' इति मुखं सम्मुखम्। 'विभाति गगने चन्द्रः' इति चन्द्रः शशी। 'निशि चित्रभानुः' इति चित्रभानुर्वह्निः। 'भाति रथाङ्गम्' इति नपुंसकव्यक्त्या रथाङ्गं चक्रम्। इति पाठान्तरं प्रायो मुद्रितपुस्तकेषु।

**काक्वादय उदात्तादयो वा व्यङ्ग्यरूपमेव विशेषं प्रत्याययन्ति, न खलु प्रकृतोक्तमनेकार्थशब्दस्य एकार्थनियन्त्रणरूपं विशेषम्। किञ्च-यदि यत्र क्वचिदनेकार्थशब्दानां प्रकरणादिनियमाभावादनियन्त्रितयोरर्थयोरनुरूपस्वरवशेनैकत्र नियमनं वाच्यं, तदा तथाविधस्थले श्लेषानङ्गीकारप्रसङ्गः। न च तथा, अत एवाहुः श्लेषनिरूपणप्रस्तावे 'काव्यमार्गे स्वरो न गण्यते इति च नये।' इति। इत्यलमुपजीव्यानां मान्यानां व्याख्यानेषु कटाक्षनिक्षेपेण।**

---

पत्त्यवसर इति भावः।' इति। इदमुक्तम्-'हास्यशृङ्गारयोः कार्य्यौ स्वरौ मध्यमपञ्चमौ। षड्जर्षभौ तथा चैव वीररौद्राद्भुतेषु च॥ गान्धारश्च निषादश्च कर्त्तव्यौ करुणे रसे। धैवतश्चैव कर्त्तव्यो बीभत्से सभयानके॥.. तत्र हास्यशृङ्गारयोः स्वरितोदात्तैः, वीररौद्राद्भुतेषूदात्तकम्पितैः, करुणवात्सल्ये (बीभत्स) भयानकेष्वनुदात्तस्वरितकम्पितैर्वर्णैः (स्वरैः) पाठ्यमुपपादयति।' इति मुनिनिर्दिष्टनयेन हास्यशृङ्गारादिषु, 'उत्तरोत्तरसञ्जल्पे पुरुषाक्षेपणे तथा। तीक्ष्णरूक्षाभिनयन आवेगे क्रन्दिते तथा॥ परोक्षस्य समाह्वाने तर्जने त्रासने तथा। दूरस्थाभाषणे चैव तथा निर्भर्त्सनेषु च॥ सर्वेष्वेतेषु नित्यं हि नानारससमाश्रया। उच्चा दीप्ताहता चैव काकुः कार्य्या प्रयोक्तृभिः॥ दृष्टा नष्टानुसारेण इष्टा नष्टश्रुतौ तथा। दृष्टार्थाख्यापने चैव चिन्ताग्रस्ते तथैव च॥ उन्मादेऽसूयने चैव उपालम्भे तथैव च। यानि सौम्यार्थयुक्तानि सुखभावकृतानि च॥ मन्द्रा विलम्बिता चैव तत्र काकुर्विधीयते। यानि स्युस्तीक्ष्णरूपाणि दीप्ता चोच्चा च तेष्वपि॥ एवं नानाऽऽश्रयोपेतं पाठ्यं योज्यं प्रयोक्तृभिः। हास्यशृङ्गारकरुणेष्विष्टा काकुर्विलम्बिता॥ एवं भावरसोपेता काकुः कार्य्या प्रयोक्तृभिः॥' इति मुनिनिरुक्तदिशा च काकूनामन्यत्रापि विशेषप्रतीतिकृत्त्वे, वेदमात्रे तथाऽभिधानान्न तेषाम्मतं ज्यायः। इति।

उत्तरयति-तन्नेत्यादिना।

**तत्** 'यदुक्तं पूर्वपक्षिणा' इति शेषः। **न**। 'युक्तम्' इति शेषः। उपपाद्यते-**तथाहि-स्वराः**। **काक्वादयः**। अत्रादिपदं प्रकारवचनम्। तथा च-सप्रभेदा काकुरिति निष्कृष्टम्। **वाऽथवा**। **उदात्तादयः**। आदिपदेन स्वरितादीनां ग्रहणम्। 'ये सन्ति ते सर्वे' इति शेषः। **व्यङ्ग्यरूपम्**। **एव** न त्वभिधेयरूपमिति भावः। **विशेषम्**। **प्रत्याययन्ति** प्रतीतिपथं नयन्ति। **न खलु** न तु **प्रकृतोक्तं** प्रसङ्गानुप्रसक्तम्। **अनेकार्थशब्दस्य**। **एकार्थनियन्त्रणरूपम्**। **विशेषम्**। देहलीदीपन्यायेन 'प्रत्याययन्ती'ति पूर्वतोऽन्वेति। अयम्भावः-काक्वादय उदात्तादयो वा स्वरा व्यङ्ग्यार्थप्रत्यायन एव निमित्तीभवन्ति, न तु संयोगादय इवात्रैकार्थस्य शब्दस्य विशेषप्रत्यायन इति नैषामभिधानियामकत्वं वाच्यम्। इति। **किञ्च** कारणान्तरमप्यस्तीति प्रदर्शयत इति भावः। **यदि**। **यत्र**। **क्वचित्**। 'येनातितिनिन्द्यचरितेन मनुष्यधर्मा सम्पद्बलात् कवलिता कुटिलेन हन्त। पापेन तेन सहजेन तिरस्कृतं मां श्रीरामचन्द्र! परिपालय दीनबन्धो!॥' इत्यादाविति शेषः। **अनेकार्थशब्दानां** 'सहजादीना'मिति शेषः। **प्रकरणादिनियमाभावात्**। अत्र 'संयोगादिनियमाभावा'दिति वक्तव्येऽपि तथाऽभिधानं प्रकरणस्याभिधानियमने प्राधान्यख्यापनार्थम्। **अनियन्त्रितयोः**। **अपि**। **अर्थयोः** 'सोदरस्वाभाविकादिरूपयोः' इति शेषः। अत्र द्विवचनं सजातीयविजातीयताभेदमात्रनिमित्तकम्। **अनुरूपस्वरवशेन** विवक्षितार्थोपस्थापनानुकूलोदात्ताद्यन्यतमस्वरतन्त्रतयेति भावः। **एकत्रैकस्मिन्** विवक्षितेऽर्थे इति यावत्। **नियमनम्**। **वाच्यं** वाच्यत्वेनापद्येतेति भावः। कैवं क्षतिरित्याह- **तदा**। **तथाविधस्थले** 'अनुत्तमयशा लोके विलक्षणविलोचनः' इत्यादाविति शेषः। **श्लेषानङ्गीकारप्रसङ्गः**। 'अनभिमतोऽप्यापद्येते'ति शेषः। ननु कथं न तत्र श्लेषानङ्गीकारोऽभिमत इत्याह-**न च** न त्वित्यर्थः। **तथा** 'अभिमत' इति शेषः। आचार्य्यैः स्वरभेदेऽपि श्लेषस्याङ्गीकृतत्वादिति भावः। इदं वाक्यतात्पर्य्यं च-यदि स्वराणामभिधानियामकत्वमभविष्यत्, तर्हि समासभेदेनैकत्रैव यत्रानेकार्थाभिधानमभिमतं तन्नाभविष्यत्। अतः स्वरैरभिधानियमनं वेद एव, न तु काव्ये (लोके) इति। **अत एव-श्लेषनिरूपणप्रस्तावे** श्लेषस्य निरूपणं तस्य प्रस्तावः प्रसङ्गे। 'प्रकाशकारा' इति शेषः। **आहुः**। 'अर्थभेदेन शब्द' इति दर्शने इत्यभिधानानन्तरमिति शेषः। **'काव्यमार्गे** काव्यस्य श्लेषादिमद्वाक्यविशेषस्य मार्गो निरूपणप्रसङ्गस्तत्र। **स्वर** उदात्तादिरूप इत्यर्थः। **न**। **गण्यते**। स्वरमनपेक्ष्यैव काव्यमार्गस्यावस्थितत्वात्। **इतीत्यस्मिन्नित्यर्थः**। **नये**। **च** [ एतेन 'अर्थभेदेन शब्दभेदः इति दर्शने' इत्यस्य समुच्चयः ] 'वाच्यभेदेन भिन्ना अपि शब्दा यद् युगपदुच्चारणेन श्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते, स श्लेषः।' इति शेषः। **इति** [अस्य 'आहु' रित्यनेनान्वयः]। **इति** 'अस्मात् कारणा' दिति शेषः। **उपजीव्यानामा**लङ्कारिकसिद्धान्तस्थापकतया स्वपूर्वजवंश्यतया वाऽऽश्रयभू-

आदिशब्दात्-

**'एद्दहमेत्तत्थणिआ एद्दहमेत्तेहिं अच्छिवत्तेहिं। एद्दहमेत्तावत्था एद्दहमेत्तेहिं दिअएहिं' ॥१०॥'**

**इत्यादौ हस्तादिचेष्टादिभिः स्तनादीनां कमलकोरकाद्याकारकत्वम्।**

**एवमेकस्मिन्नर्थेऽभिधया नियन्त्रिते या शब्दस्य अन्यार्थधीहेतुः शक्तिः, साऽभिधामूला व्यञ्जना।**

---

तानाम् अत एव-**मान्यानाम्**। चण्डीदासादीनामिति भावः। **व्याख्यानेषु। कटाक्षनिक्षेपेण**पाङ्गपातेनोपचारादालोचनार्थं दृष्टिदानेनेत्यर्थः। **अलम्**। पर्य्याप्तम्, मन्दप्रयोजनमिति यावत्। अयम्भावः-"अर्थभेदेन शब्दभेदः" इति नयेन शब्दा भिन्नाः, 'काव्यमार्गे स्वरो न गण्यते' इति नयेन च युगपदुच्चारणविषयतया यत् श्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते 'एकवृन्तगतं फलद्वय' मिति नयेन पुनर्यत्रार्थानेकत्वं स श्लेष इति सिद्धान्तानुरोधेन स्वराणामभिधानियामकत्वं न लोकेऽङ्गीकर्त्तव्यम्, अन्यथा श्लेषस्य मूलच्छेदो दुर्वारः। स्वरभेदे हि अर्थभेदः, अर्थभेदे च शब्दभेदः, शब्दभेदे च शब्दभेदस्वरूपानपह्नवेन 'एकवृन्तगतफलद्वय'वत् एकशब्दगतार्थद्वयनिष्ठत्वानुपपत्तिः। इति।

अथ 'स्वरादय' इत्यत्रादिपदनिवेशस्य स्वारस्यं दर्शयति-**आदिशब्दादि**त्यादिना।

**आदिशब्दात्** 'स्वरादय' इत्यत्र पठितादिति शेषः।

**'एद्दहमेत्तत्थणिआ** एतावन्मात्रस्तनिका एतावन्मात्राभ्यां स्तनाभ्यां सम्पन्नेति यावत्। **एद्दहमेत्तेहिं** एतावन्मात्राभ्याम्। **अच्छिवत्तेहिं** अक्षिपत्राभ्यां नेत्ररूपाभ्यां पत्राभ्यामुपलक्षितेति यावत्। **एद्दहमेत्तावत्था** एतावन्मात्रावस्था। **एद्दहमेत्तेहिं** एतावन्मात्रैः। **दिअएहिं** दिवसकैः सम्पन्नेति शेषः। अत्रार्य्याच्छन्दः ॥१०॥'

**इत्यादौ हस्तादिचेष्टाऽऽदिभिः**। चेष्टाऽऽदिं विना एतावत्त्वादि प्रत्याययितुमशक्यत्वादिदमुक्तम्। अत्राद्यादिपदेनाङ्गुल्यादीनां ग्रहणम्, अन्यादिपदेनाभिनयापदेशयोर्ग्रहणम्। **स्तनादीनाम्**। **कमलकोरकाद्याकारकत्वम्**। आदिपदेन उच्चत्वपुष्टत्वादीनां ग्रहणम्। 'वाच्यमि' ति शेषः। इदमुक्तम्-'एद्दहमेत्तत्थणिआ..' इत्यादौ [ कस्याश्चित् सौन्दर्य्यातिशयशालिन्याः केवलं श्रुतगुणगौरवाया नयनविषयमनुपेतायाः परिणेतुकामेन केनापि राजकुमारेण अवस्थाऽऽदौ पृष्टे कस्यापि दूतस्योक्तौ ] कमलकोरकाकारेण हस्ताभिनयेन स्तनयोः, पद्मदलाकारेण नेत्रयोः, उच्चतापुष्टताप्रकर्षप्रदर्शकारेण सुन्दर्य्याः उच्चतापुष्टतयोः, अङ्गुल्यङ्कधारणाद्याकारेण हायनदिवससङ्ख्ययोश्च परिमाणविशेषे बुद्धिस्थ ( एतावन्मात्रांशभूत ) मात्रपदशक्त्या नियमनम्। 'इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्। विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥' इत्यत्र ( कुमारसम्भवीये पद्ये ) तु स्वहृदयस्पर्शनरूपेण हस्तापदेशेन वक्त्रीदं शब्दस्य शक्तेर्नियमनम्। इति।

अथ फलितमाह-**एवमि**त्यादिना।

**एवं** निरुक्तप्रकारेण। **एकस्मिन्** 'विवक्षित' इति शेषः। **अर्थे**। **अभिधया** 'संयोगादिसाचिव्येन' इति शेषः। **नियन्त्रिते** नियम्योपस्थापित इत्यर्थः। सतिसप्तमीयम्। **या**। **शब्दस्य** 'अनेकार्थस्ये' ति शेषः। **अन्यार्थधीहेतु**रन्यो नियन्त्रिताद् व्यतिरिक्तोऽसावर्थस्तस्य धीर्बोधस्तस्या हेतुः कारणस्वरूपेति भावः। **शक्तिः**। **सा**। **अभिधामूला**ऽभिधामूलमस्यास्तादृशी। **व्यञ्जना**। 'कथ्यत' इति शेषः। इदमवधेयम्-एकस्मिन् एव समये चमत्काराय यत्रार्थोद्भावोऽपेक्षितः, यश्च शब्दशक्त्या साक्षाद् वाच्यः सन्नवतिष्ठते स सर्वः श्लेषस्य विषयः, यत्र तु पृथक्पृथक् समये चमत्कारायानेकार्थोद्भावोऽपेक्षितोऽपि शब्दशक्तेः सामर्थ्याक्षिप्त एव यश्चमत्कुरुते, तत्र स व्यञ्जनयैवोन्नीयते। अत एवाभिधायां विरतायां व्यञ्जनाया व्यापारः सञ्चरते। यथोक्तं ध्वनिकारैः-'यत्र शब्दशक्त्या साक्षादलङ्कारो वाच्यः सन् प्रतिभासते स सर्वः श्लेषविषयः। यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालङ्कारान्तरं प्रकाशते स ध्वनेर्विषयः।' इति, 'श्लेषे द्वयोरर्थयोर्वाच्यत्वम्, एककालत्वं च, इह (ध्वनौ) त्वेकस्य वाच्यत्वम्, अपरस्य व्यङ्ग्यत्वम्भिन्नकालत्वं च।' इति गङ्गाधरकारैश्च। इति।

---

१ 'एतावन्मात्रस्तनिका एतावन्मात्राभ्यामक्षिपत्राभ्याम्। एतावन्मात्रावस्था, एतावन्मात्रैर्दिवसैः॥' इति संस्कृतम्।

यथा मम तातपादानां महापात्रचतुर्दशभाषाविलासिनीभुजङ्गमहाकवीश्वरश्रीचन्द्रशेखरसान्धिविग्रहिकाणाम् ।

**'दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा, प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः ।**
**नक्षत्रेशकृते क्षणो गिरिगुरौ गाढां रुचिं धारयन् गामाक्रम्य विभूतिभूषिततनू राजत्युमावल्लभः॥११॥'**

---

उदाहरन्नाह—**यथे**त्यादि ।

**मम** विश्वनाथस्येत्यर्थः । **तातपादानां** पितृचरणानाम् । अत्र पादशब्दः पूज्यार्थः । यथोक्तम् । 'एकत्वं न प्रयुञ्जीत गुरावात्मनि चेश्वरे । उत्तमानां स्वरूपं च पादशब्देन पठ्यते ॥' इति **महापात्र** ( प्रधानामात्य ) **चतुर्दशभाषा** (मागध्यादिभाषा ) **विलासिनीभुजङ्ग** ( जार ) **महाकवीश्वरश्रीचन्द्रशेखरसान्धिविग्रहिकाणां** सन्धिविग्रहविधानाविधानयोर्दक्षाणां ) 'कृता' विति शेषः । **यथा**—

'**दुर्गालङ्घितविग्रहः**' इत्यत्रेति शेषः । **दुर्गालङ्घितविग्रहो** दुर्गैर्दूरत एवायान्त्याः शत्रुसेनाया विनाशाय कारितैर्दृढैः सशस्त्रसैन्यावासविशेषैरलङ्घितोऽव्यवहितो विग्रहः सङ्ग्रामो यस्य सः, दुर्गाश्रयमन्तरैव योद्धेत्यर्थः । यद्वा—दुर्गया पार्वत्या लङ्घित आक्रान्तोऽधिकृत इति यावद् विग्रहः शरीरं यस्य सः (अर्द्धाङ्गतया पार्वत्या अङ्गीकारादिदमुक्तम्) 'दुर्गोमानील्योः स्त्री, दुर्गमे त्रिषु ।' इति, 'विग्रहः कायविस्तारविभागे ना, रणेऽस्त्रियाम् ।' इति च मेदिनी । **तेजसा** दीप्त्या कान्त्येति यावत्, यद्वा—तृतीयनेत्रोत्थेन ज्योतिषा । 'तेजः प्रभावे दीप्तौ च बले शुक्रेऽपी'त्यमरः । **मनसिजं** कामम् । शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः ।' इत्यमरः । **सम्मीलयन्** अधिक्षिपन्, यद्वा—संहरन् । 'स्थित' इति शेषः । कान्त्या मदनस्य पराजेता, तेजसा मदनस्य दग्धा वेत्यर्थः । **प्रोद्यद्राजकलः** प्रोद्यन्ती प्रकर्षेणोल्लसन्ती राजकला राज्ञः कला राजोचितमैश्वर्य्यं चातुर्य्यं वा यस्य सः' प्रचण्डप्रतापशाली राजनीतिज्ञप्रवरो वेत्यर्थः । यद्वा—प्रोद्यन्ती सकलङ्कत्वक्षयिष्णुत्वदोषापरामृष्टतयोल्लसन्ती राजकला चन्द्रकला यस्य ( ललाटे ) सः, अर्द्धचन्द्रशेखर इति भावः । 'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ ।' इति मेदिनी । 'प्रोक्ता कला स्त्रीचन्द्रांश-मात्रे शिल्पे च पाटवे। कालमाने मूलवृद्धौ' इति गोपालः । **गृहीतगरिमा** गृहीतोऽधिकृतो गरिमा गुरुत्वं पूज्यत्वं येन सः, सर्वं राजचक्रं पराजित्य पूज्यत्वं प्राप्त इति भावः । 'अगृहीतगरिमे' ति पाठे तु न गृहीतो गरिमा स्वस्मिन् पूज्यत्वमूलो गर्वः येन सः, इत्यर्थः । अन्यत्र गारिम्णा गृहीत इति गृहीतगरीमा । 'वाऽऽहिताग्न्यादिषु ।' २।२।३७ इति पूर्वनिपातः । गरिम्णा स्वयं सेवित इति भावः । पाठान्तरे तु—न गृहीतः स्वीकृतः केनाप्यादृतो गरिमा गुरुभावः अज्ञाननिवर्त्तकत्वादिपुरस्कृतपूज्यत्वसम्भारो यस्मात् यदपेक्षयाऽन्यस्येति तथोक्त इति भावः । 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रब्द्राघिवृन्दाः ।' ६।४।१५७ इति गुरोर्गरादेशः । **भोगिभिः** क्षुद्रनृपैः सर्पैर्वा । 'भोगी भुजङ्गमेऽपि स्याद्ग्रामपात्रे नृपे पुमान् ।' इति मेदिनी । **विष्वक्** सर्वतः । **वृतः** परिवेष्टितः । **नक्षत्रेशकृते** नक्षत्राणामीशोऽधिपतिश्चन्द्रस्तस्य कृते तदर्थम् । **क्षण** उत्साहरूपश्चन्द्रवंश्यतया चन्द्रस्यामोदयितृत्वनिर्वाधम् । 'अथ क्षण उद्धर्षः..' इत्यमरः । यद्वा—नक्षत्रेशवत् कृते क्षणश्शान्तदृष्टिः । कृतमीक्षणं दृष्टिर्भक्तेषु येन स कृतेक्षणः । 'ईक्षणं दर्शने दृशि ।'इति मेदिनी । **गुरौ** मान्यायाम् । **गिरि** वाण्यां वाक्य इति यावत् । गिरि गानादिरूपायाम्भागवतचारितकीर्त्तनरूपायां वा वाचि, गुरौ 'चे'ति शेषः । यद्वा-समस्त एवायं पाठः, तथा च-गिरेः पर्वतस्य कैलासस्येति यावत्, गुरुरधीशस्तत्र, कैलासाधीशे महादेव इति भावः । पर्वताधीशत्वं च तस्य 'गिरीशो गिरिशो मृडः ।' इत्यमराद्युक्त्या विदितचरम् । गिरीणां पूज्यानां गुरुः पूज्यः तत्र, परमात्मनीत्यर्थो वा । अन्यत्र—गिरीणां पर्वतानां गुरुरधिपतिस्तत्र, हिमालये इत्यर्थः । हिमालयस्य पर्वतेषु मुख्यत्वं 'स्थावराणां हिमालयः ।' 'हिमालयो नाम नगाधिराजः' इत्याद्युक्त्याप्रसिद्धम् । असमस्तपाठे तु—गिरि 'ओमित्युद्गीथमुपासीते' त्याद्युक्त्या ओङ्काररूपायां वाचि, गुरौ महति निर्विशेषे ब्रह्मणीति यावत् । 'चे'ति शेषः । 'गीर्वाग्वाणी सरस्वती ।' इत्यमरः । 'गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि । पुमान्निषेकादिकरे पित्रादौ सुरमन्त्रिणि ॥' इति मेदिनी । 'गिरिः, पूज्येक्षिरुजि कन्दुके । शैले गैरेयके गीर्णावपी'ति हैमः । अत्र विषये सप्तमी । **गाढा**मत्यन्तं घनरूपेणावस्थिताम् । **रुचिं** प्रीतिं प्रकाशं वा । 'रुचिः स्त्री दीप्तौ शोभायामभिष्वङ्गाभिलाषयोः ।' इति मेदिनी । **धारयन्** स्थापयन् । **विभूतिभूषिततनु**र्विभूत्या सम्पदा मुक्ताभरणादिनेति यावत् भूषिता तनुः शरीरं यस्य सः । यद्वा-विभूत्या

**अत्र प्रकरणेन अभिधेये नियन्त्रिते उमावल्लभशब्दस्य उमानाम्नी महादेवी तद्वल्लभभानुदेवनृपतिरूपे नियन्त्रिते व्यञ्जनयैष गौरीवल्लभरूपोऽर्थो बोध्यते। एवमन्यत्।**

---

भस्मना विभूतिभ्यां व्याप्तिसन्ततिरक्षणाभ्यां वा भूषिता तनुः शरीरम्, उपचारात्स्वरूपमिति वा यस्य तथोक्तः। 'विभूतिर्हस्तिशृङ्गारे भस्मैश्वर्य्योद्भवेषु च।'इति गोपालः। विभवनं विभूः 'सम्पदादिभ्यः क्विप्। वयनमवनं वेति ऊतिः।' 'ऊयी तन्तुसन्ताने,' 'अव रक्षणे' इत्यस्माद्वा क्तिनि रूपमिदम्, किन्त्ववतेः 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च।' ६।४।२० इत्यूठ्। 'तनुः काये त्वचि स्त्री स्यात्,' इति मेदिनी। **उमावल्लभ** उमायास्तन्नाम्न्या महाराज्ञ्याः, अन्यत्र भगवत्याः पार्वत्याः वल्लभः प्रियः पतिरिति यावत्। 'वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे।' इति मेदिनी। **गां** पृथिवीम्, अन्यत्र वृषभं नन्दिकेश्वरमिति यावत्। 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले।..' इत्यमरः। **आक्रम्य** वशीकृत्य, अन्यत्र उपविश्य। **राजति** विभाति। अत्र शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥'११॥ इति।

लक्ष्यं सङ्गमयति-अत्रेत्यादिना।

**अत्रा**स्मिन्नुदाहृते पद्य इति यावत्। **उमानाम्नी**। **महादेवी** महत्यसौ देवी अभिषिक्ता राज्ञीति तथोक्ता। 'देवी कृताभिषेकाया'मित्यमरः। **तद्वल्लभभानुदेवनृपतिरूपे** तस्या उमाया महादेव्या इति यावत् वल्लभः पतिः, सोऽसौ भानुदेवनृपतिस्तद्रूपे। उमाशब्दस्य। **अभिधेये**ऽभिधया प्रतिपाद्येऽर्थे इति यावत्। **प्रकरणेन** राजस्तवनपरकाव्यसम्बन्धितयाऽस्य पद्यस्य राजस्तवनमात्रपरेण प्रस्तावेन। **नियन्त्रिते**'संयोगो विप्रयोगश्चे'त्याद्युक्तदिशा नियम्योद्भाविते सतीत्यर्थः। **गौरीवल्लभरूपो** गौर्या उमापरपर्य्यायाया महादेव्या वल्लभः प्रियः शङ्कर इति यावत्, तद्रूपः। **अर्थः**। **व्यञ्जनया**ऽभिधामूलया व्यञ्जनाशक्त्येति भावः। **एष**। **बोध्यते**।

इदमुक्तम्-एकत्र उमाया देव्या वल्लभो राजा, अन्यत्र शङ्कर इत्यर्थः, अत्राद्यो वाच्यः अन्त्यः पुनर्व्यङ्ग्यः। अत एवाद्यस्य प्राकरणिकत्वम्, अन्यस्याप्राकरणिकत्वम्। तथाहि'दुर्गालङ्घितविग्रहः' इत्यादीनामनेकार्थानां पदानां प्रकरणेन प्राकरणिके तस्मिन् राज्ञि तदन्वययोग्येऽर्थे च अभिधाया नियन्त्रितत्वेऽपि सहृदयानां हृदये प्रतिभासामर्थ्यात् महेश्वरस्य तदन्वयोचितस्य चार्थस्य प्रतीतिर्या, सा व्यञ्जनयैव सम्पादितेति अप्राकरणिकस्य द्वितीयस्यार्थस्य तात्पर्य्यविषयस्यापि तात्पर्यग्राहकप्रकरणाद्यसद्भावात् व्यङ्ग्यावबोधविषयत्वम्, उभयोरप्येतयोरर्थयोर्मिथ एकान्तगतफलद्वयवदेकत्रैव समुल्लासे उपमयोपमेयभावः पुनर्व्यज्यते, अन्यथाऽसम्बद्धयोस्तयोर्बोधकत्वपार्थक्येन वाक्यभिन्नत्वमापद्येत। अनुभूयमानस्य च सादृश्योत्तम्भितोपमाऽऽस्वादस्य व्यवच्छेद एव स्यात्। इति। इदं बोध्यं च-भानुदेवरूपमर्थं प्रकरणसाचिव्येन उपस्थाप्याभिधाया विरतत्वात्, लक्षणायाश्च मुख्यार्थबाधहेतुकतया मुख्यार्थबाधस्य च प्रकृतेऽसम्भवात्, तात्पर्यायाश्चाभिहितलक्षितसंसर्गमात्रबोधननियतत्वात् या हि प्रकृते द्वितीयार्थप्रतीतिस्तद्धेतुभूता तुरीया व्यञ्जनैव वृत्तिः। न 'चार्थभेदेन शब्दभेद' इति नयेन अत्रापि शब्दद्वैविध्यमङ्गीकार्य्यम्, एवं च अर्थयोः साजात्याभावान्नाप्यैकात्म्यभ्रान्तिः, तदिति तेन तेन शब्देन तंतमर्थमुपस्थाप्य प्राथमिकायामभिधायां विरतायाम्, अपरा बोधयतु नाम तेन तेन द्वितीयमर्थम्। किं वृत्त्यन्तरकल्पनाऽऽडम्बरेणेति वाच्यम्, तयोर्द्वयोरेवार्थयोरभिधेयत्वे पूर्वपश्चाद्भावस्यानैयत्यापत्तेः, द्वितीयार्थबोधने च 'धर्म्मिकल्पनातो वरं धर्म्मकल्पने'ति नयेन शब्दद्वैविध्यकल्पनापेक्षयाऽपरस्या वृत्तेरेव कल्पनौचित्याच्च 'उपस्थितं परित्यज्य अनुपस्थितकल्पने मानाभाव' इति नयेन तथा निर्वाहस्य दूषितत्वाच्च। इति दिक्।

एवमुदाहृत्योदाहरणान्तरविषये प्राह-एवमित्यादि।

**एवम्**। **अन्यत्**, 'उदाहरणमूह्य' मिति शेषः। यथा-'अधिगम्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात्ततः। वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः।' इति। अत्र हि कस्यचिद्ब्राह्मणस्य मुक्तेर्वर्णनं केवलं प्रतीयते। यदि तु-एवं यथेदं व्यङ्ग्योदाहरणं तथा अन्यत् अव्यङ्ग्यमित्यर्थः, तदा-'भजन्ते भारतीलक्ष्मीपार्वत्यो यानन्तरम्। गुरून् देवीसहायांस्तान् प्रणमामि पुनः पुनः॥' इति। अस्य हि मङ्गलाचरणपरिपूततया गुरोर्देवीसहायस्य ब्रह्मादीनां च देवानां स्मरणाभिधानपरत्वम्, इदं मम।

लक्षणामूलामाह--

**२८ लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम्।**
**यया प्रत्याय्यते सा स्याद्, व्यञ्जना लक्षणाऽऽश्रया ॥१८॥**

**'गङ्गायां घोष' इत्यादौ जलमयाद्यर्थबोधनादभिधायां, तटाद्यर्थबोधनाच्च लक्षणायां, विरतायां यया शीतलत्वपावनत्वाद्यतिशयादिर्बोध्यते, सा लक्षणामूला व्यञ्जना।**

---

अथ लक्षणामूलां लक्षयितुं प्रतिज्ञायोपक्रमते-**लक्षणामूलाम्।** **आह-२८ लक्षणे**त्यादिना ।

२८ **यस्य।** **कृते** ( इदमव्ययम् )। **लक्षणा** 'प्रयोजनवती' ति शेषः। **उपास्यते** शब्दवृत्तित्वेनाङ्गीक्रियते। **तत्।** **तु** **प्रयोजनम्।** **प्रत्याय्यते।** **सा।** **लक्षणाश्रया** लक्षणाऽऽश्रयो यस्याः सा। **व्यञ्जना।** **स्यात्** ॥१८॥

अत्रेदं प्रतिभाति-'गङ्गायां घोष' इत्यादौ मा भूदभिधाप्रसङ्गः, मुख्यार्थबाधस्य सद्भावात्, गङ्गाऽऽदिपदस्य गङ्गाऽऽदितीरादौ च सङ्केतितत्वाभाव इत्यास्तां लक्षणाऽपि सम्प्रवृत्ता वृत्तिः। सैव यदि गङ्गाऽऽदिपदस्य गङ्गाऽऽदितीराद्यर्थमुपस्थाप्योपस्थापयन्त्येव वा शीतलत्वपावनत्वाद्यर्थमुपस्थापयेत् तत् किं व्यञ्जनयाऽपरया वृत्त्या, किन्तु-लक्षणाऽसौ मुख्यार्थबाधे बाधितमुख्यार्थमनुसृत्य रूढेः प्रयोजनाद्वा प्रवर्त्तते, न ततः सा तीराद्यर्थमुपस्थाप्य शीतलत्वपावनत्वाद्यर्थमपि प्रभवत्युपस्थापयितुम्। गङ्गाऽऽदिपदं हि घोषाद्यधिकरणत्वासम्भवे यथा तीरादौ सबाधं, तथा तत्रापि लक्ष्ये चेत्स्यात्सबाधं, लक्षयेत् तत्प्रयोजनम्। न च लक्ष्यो मुख्योऽर्थस्तीरादिः, न पुनस्तस्य कश्चिद्बाधः, न च तस्य शीतलत्वपावनत्वादिना कश्चित् सम्बन्धः, न च प्रयोजने तस्मिन् किमप्यवशिष्यते प्रयोजनम्, येन तदाश्रित्य प्रभवेत् सा, प्रयोजने प्रयोजनमप्यन्यदिति चेत्? भवेदानवस्थ्यम्, न च शीतलत्वपावनत्वादिविशिष्टस्यैव तीरादेर्लक्षणया प्रथमतो बोध इति वक्तुं शक्यम्, हेत्वसद्भावे तस्या एवाप्रवृत्तेः। न च तर्हि रूढिरेवास्तु हेतुरिति वाच्यम्, 'गङ्गातीरे घोष' इत्याद्यपि वक्तुं शक्यत्वात्, प्रयोजनं च बोधयितुं वृत्त्यन्तरस्वीकारस्य विरहाच्च, घोषाद्यधिकरणत्वाद्यसम्भवे तीरादावेव लक्षणायाः प्रवृत्तेश्च। न च 'गङ्गातीरे घोष' इत्यादिप्रयोगापेक्षया 'गङ्गायां घोष' इत्यादिप्रयोगे शीतलत्वपावनत्वादिवैशिष्ट्यरूपस्याधिकस्यार्थस्य प्रतीतिः प्रयोजनं स्याद्धेतुरिति वाच्यम्। लक्षणाजन्यज्ञानविषयस्य तीरादेः प्रयोजनीभूतज्ञानविषयेण शीतलत्वादिना सहान्वयानुपपत्तेः नहि ज्ञानाद् ज्ञानस्य, विषयात् फलस्येव विभिन्नत्वादेककालभवत्वं सम्भवति, इत्यवश्यं तत्र तदा वृत्तिः स्वीकार्य्या, इत्येवं चेत्? लक्षणामूला व्यञ्जनोद्दीप्तरूपा। अत एव शीतलत्वपावनत्वादिरूपं सर्वं प्रयोजनं व्यङ्ग्यम्। लक्ष्यं पुनः शक्यसम्बद्धम् (तीरादि) इत्यनैकात्म्येऽपि एतस्य शीतलत्वपावनत्वादिबोधनिमित्तमेव, रूढेरपि तत्सम्भवात्। अथ लक्षणया प्रतिपाद्ये तीरादौ शीतलत्वादिबोधनरूपं यत् प्रयोजनं व्यङ्ग्यमन्तरेण नान्यत्। इति तत्र लक्षणामूला व्यञ्जना नाम वृत्तिः। इति।

स्वयमपि तदेवं निदर्शयति-**'गङ्गायां घोष'** इत्यादिना।

**'गङ्गायाम्।** **घोषः।'** **इत्यादौ** 'वाक्य' इति शेषः। **जलमयाद्यर्थबोधना**ज्जलमयाद्यर्थबोधनं कृत्वा। जलमयाधिकरणको ग्रामविशेष इत्याद्यर्थं बोधयित्वेति भावः। **अभिधायाम्।** **विरतायां** विरतव्यापारायां सत्याम्। तथा-**तटाद्यर्थबोधनात्** तटाद्यर्थबोधनं कृत्वा। ल्यपो लोपे पञ्चमी। **लक्षणायाम्।** लक्षणवृत्तौ विरतायामित्यर्थः। 'तथैवं वाक्यतात्पर्य्यं बोधयित्वा तात्पर्य्यवृत्तावपि विरताया' मिति शेषः। **यया।** **शीतलत्वपावनत्वाद्यतिशयादिः** 'लक्ष्यमाणस्य तीरादे' रिति शेषः। **बोध्यते।** **सा।** **लक्षणामूला।** **व्यञ्जना** 'तुर्या वृत्ति' रिति शेषः।

इदं निष्कृष्टम्-यानि प्रयोजनमूलाया उदाहरणानि दर्शितानि, तानि खलु तन्मूलाया व्यञ्जनाया अपि ऊह्यानि। यथा वा-'बधान द्रागेव द्रढिमरमणीयं परिकरं, किरीटे बालेन्दुं विनिमय पुनः पन्नगगणैः। न कुर्य्यास्त्वं हेलामितरजनसाधारणधिया, जगन्नाथस्यायं सुरधुनि! समुद्धारसमयः॥' इत्यादि। अत्र हि जगन्नाथपदस्यात्यन्तं पापिष्ठमर्थं बोधयित्वा लक्षणायां विरतायां, तदितरापेक्षया तस्य सुरधुनीमात्रशरणत्वमत एवास्यावश्यं रक्षणीयत्वातिशयो व्यञ्जनया बोध्यते। इति दिक्।

एवं शाब्दीं व्यञ्जनामुक्त्वाऽऽर्थीमाह-

२९ वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः।
प्रस्तावदेशकालानां काकोश्चेष्टाऽऽदिकस्य च ॥ १९ ॥
वैशिष्ट्यादन्यमर्थं या बोधयेत्साऽर्थसम्भवा।

व्यञ्जनेति सम्बध्यते। तत्र-वक्तृ-वाक्य-प्रस्ताव-देश-काल-वैशिष्ट्ये यथा मम-

'कालो मधुः, कुपित एष च पुष्पधन्वा, धीरा वहन्ति रतिखेदहराः समीराः
केलीवनीयमपि वञ्जुलकुञ्जमञ्जु-र्दूरे पतिः कथय किं करणीयमद्य ॥१२॥'

---

एवं शाब्दीव्यञ्जनाया निरूपणं समाप्य आर्थीं निरूपयितुमुपक्रमते-**एवमि**त्यादिना।

**एवं** निरुक्तप्रकारेण। **शाब्दीं** शब्दे वाचके लक्षके वा भवेति तां तथोक्ताम्। 'तत्र भवः।' ४।३।५ इत्यण्। 'टिड्ढाणञ्..।' ४।१।१५ इति ङीप्। **व्यञ्जनाम्। उक्त्वा** कथयित्वा निरूप्येति यावत्। अर्थे वाच्ये लक्ष्ये वा भवा तां तथोक्ताम्। 'व्यञ्जना' मिति पूर्वतोऽन्वेति। **आह**-लक्ष्यलक्षणनिरूपणाभ्यां निरूपयतीत्यर्थः। २९ **वक्तृबोद्धव्यवाक्याना**मित्यादिना।

२९ **वक्तृबोद्धव्यवाक्यानां** वक्ता (यः कश्चित् कञ्चिद्बुद्बोध्य स्वयं वा वक्तीति तथोक्तः) च बोद्धव्यः (यमुद्बोध्योऽन्यो वक्ति) च वाक्यं (पदसमुदायविशेषः) चेति तेषाम्। **अन्यसन्निधिवाच्ययोः** अन्य (वक्तृबोद्धव्यवाक्यातिरिक्त) सन्निधिश्च वाच्योऽर्थश्चेति तयोः। अत्र वाच्यपदं लक्ष्यस्यापि लक्षकम्। **प्रस्तावदेशकालानां** प्रस्तावः (प्रकरणम्) च देशः (उपवनादिः) च कालः (वसन्तादिः) चेति तेषाम्। **काको**र्ध्वनिविशेषस्य। **चेष्टाऽऽदिकस्य**। आदिना-इङ्गितादीनां ग्रहणम्। च (इदं समुच्चयार्थमव्ययम्)। **वैशिष्ट्यात्** विशिष्टबुद्धिनियामकात् सम्बन्धविशेषात्। तदाश्रित्येति यावत्। **या**। **अन्य**मभिधाऽऽदिवृत्तित्रयादिविषयम्। **अर्थम्**। **बोधयेत्**। **सा**। **अर्थसम्भवा**ऽर्थमूला। 'व्यञ्जने'ति शेषः। इदं फलितम्-वक्त्रादीनां प्रत्येकं वा अन्यथा वा वैशिष्ट्यादभिधाऽऽदिवृत्त्यविषयीभूतस्य कस्यचिदर्थस्य प्रकाशिकाऽऽर्थी व्यञ्जना नाम तुर्या वृत्तिः। इति ॥ १९ ॥

कारिकाऽर्थं स्पष्टयितुमाह--**व्यञ्जना**। **इति** 'पद'मिति शेषः। **सम्बध्यते**ऽनुगम्यतेऽनुवर्त्तते इति यावत्। इति।

उदाहरति-**तत्रे**त्यादिना।

**तत्र** तेषु वक्त्रादिवैशिष्ट्येषु मध्य इति यावत्। **वक्तृ-वाक्य,-प्रस्ताव,-देश,-काल-वैशिष्ट्ये** 'सति व्यञ्जना' इति शेषः। **यथा**। **मम** मत् (विश्वनाथ) सम्बन्धिनि-**'कालो मधुः..'** इत्यत्रेति शेषः।

**'एषः**। **मधुः** वसन्तः। 'मधुः पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे। वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति॥' इति मेदिनी। **कालः** समयः। **कुपितः**। क्लेशहेतुकः समुपस्थित इत्यर्थः। 'वर्तत' इति शेषः। एतेनास्यापयानं कर्त्तुमशक्यमिति सूचितम्। **च** तथा। अत एव-'कुपितः' इति 'एष' इति च पूर्वतोऽनुवर्त्तेते। **पुष्पधन्वा**। पुष्पाणि अशोकादिसम्बन्धीनि प्रसूनानि एव धनुर्यस्य तथोक्तः। 'वा सञ्ज्ञायाम्' ५।४।१३३॥ इत्यनङ्। 'पुष्पधन्वा रतिपति' रित्यमरः। इदं बोध्यम्-वसन्तमदनयोरमूर्त्तत्वेऽपि कुपितत्वलिङ्गेन प्रतीयमानतामेतत्पदं विशदयति। इति 'कम्पयती'ति शेषः। एवम्-**धीरा** अचञ्चलाः। बुद्धिवृत्तेरपि क्षोभका इति तु वास्तविकोऽर्थः। 'धीरो धैर्य्यान्विते स्वैरे बुधे'इति मेदिनी। धियं बुद्धिवृत्तिमीरयन्तीति वा धीराः। अत एव-**रतिखेदहरा** रतेर्विलासस्य खेदः श्रम उपचारात् तज्जन्यः स्वेदस्तस्य हरा निवर्त्तकाः। 'रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोः।' इति मेदिनी। वचनविपरिणामेन'कुपित एष'इत्यनयोरध्याहारे-कुपिता एते इति निष्कृष्टमिति बोध्यम्। **समीरा** वायवो विरहिजनस्यात्यन्तमसह्या मलयचन्दनगन्धरूपविषोद्गारिणो वाता इति यावत्। समीरयन्तीति समीराः। 'समीर-

**अत्रैतं देशं प्रति शीघ्रं प्रच्छन्नकामुकस्त्वया प्रेष्यतामिति सखीं प्रति कयाचिद् व्यज्यते।**

**बोधव्यवैशिष्ट्ये यथा–**

**'निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो, नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः।**

---

मारुतमरुज्जगत्प्राणसमीरणाः।' इत्यमरः। **वहन्ति। इयमध्युषिता। केलीवनी** केल्याः केलेः क्रीडाया इति यावत् वनी उपवनं वाटिकेति यावत् प्रियरमणमात्रोपयोगिनिर्जनतारम्यं शुभवनमिति भावः। अत्र केलिशब्दात् 'कृदिकारादक्तिनः।*' इति ङीष्। वनशब्दात् तु 'षिद्गौरादिभ्यश्च।' ४।१।४१ इति ङीष्। 'भुवनी समुप्रवदपिका ऽपिका'इत्यादिप्रयोगदर्शनात् वनीशब्द उपवनवाचकः। **अपि।** अत्रापिना वसन्तादेरनात्मीयतया कदाचिदकृतापराधत्वेऽपि युज्यतां नाम कुपितत्वं दुःखावहत्वं वा, किन्तु अस्या वन्या आत्मीयत्वेऽपि ममापराधाभावेऽपि च यद्दुःखावहत्वं, तद्दैवनिर्घातएवेति द्योत्यते। कथमेतस्या दुःखावहत्वमित्यत आह–**वञ्जुलकुञ्जमञ्जुः** वञ्जुलानामशोकानां कुञ्जो निकुञ्जः (न तु एककं द्विकं त्रिकं वेति भावः) तेन मञ्जुः सुन्दरः। 'वञ्जुलोऽशोके'इत्यमरः। 'कुञ्जोऽस्त्रियां निकुञ्जेऽपि हनौ दन्तेऽपि दन्तिनाम्।' इति मेदिनी। 'मनोज्ञं मञ्जु मञ्जुलम्।' इत्यमरः। हे सखि! एतेन रहस्यनिवेदनयोग्यत्वं सूच्यते। **पतिः** परिणेता, न तु प्रियः। अत एव–**दूरे।** 'स्थित'इति शेषः। कार्य्यापदेशेन पतिर्मामपहाय क्वापि दूरे गत इति भावः। अतः–**अद्य** एवं दुर्दैवजातभोगानामेकदैवोपस्थापकेऽस्मिन् दिवस इति भावः। **किम्। करणीयम्,** यस्मिन् कृते कथमपि जीवितावशेषाऽवतिष्ठेयेति भावः। इति–**कथयोपदिश।** इदं बोध्यम्–य एवोन्मादकः स एव वियोगे दुःसहः, तदिति सर्वेऽपि वसन्तादयोऽमी दुःखावेदकतया कोपप्रकटकाः, युज्यते चैवं वसन्तस्यावस्थाने तत्साहाय्येन प्रचण्डत्वं कामस्य, तत्सहायकानां समीरादीनां च, यत्र च कामस्य शरवणं किं पुनस्तत्र तस्य प्रचण्डत्वभूयस्त्वस्य; एवं सति प्राणापहानोपस्थितौ अन्यत् किं करणीयम्, यथा प्राणा न नश्येयुस्तथैव करणीयम्, सत्यायुष्ये पुनर्धर्म्मादेः कर्त्तुं शक्यत्वात् प्राणानां च साम्प्रतमवस्थानोपायः केवलं मदनोपशमः,असौ च पत्युरसद्भावे परप्रसङ्गेनैव सम्भवेदिति कस्याश्चित् कामिन्याः सखीं प्रत्युक्तिरियम्।' अत्र वसन्ततिलकं वृत्तम्, तल्लक्षणं यथोक्तम्, 'उक्तं वसन्ततिलकं तभजा जगौ गः।' इति॥ १२॥'

अत्रोदाहरणीयं दर्शयति–अत्रेत्यादिना।

**अत्रा**स्मिन्नुदाहृते पद्य इति यावत्। '**एत**मधिष्ठितमित्यर्थः। **देशम्। प्रति। शीघ्रं** यावत् प्राणान्न जहामि तत्पूर्वमेव, न परमिति भावः। **प्रच्छन्नकामुकः** प्रच्छन्नं कामयत इति तथोक्तः। **त्वया** सख्या। **प्रेष्यतां** प्राप्तो विधीयताम्।' **इति** 'एव' मिति शेषः। **सखीम्। प्रति। कयाचित्** कामिन्या **व्यज्यते** व्यक्तः क्रियते 'द्योत्यत' इति पाठान्तरेऽप्ययमेवार्थः।

अवधेयमिदम्–उद्दीप्तकामा वियोगिनी वक्त्री, स च सु दूरे तस्याः पतिः, येन सह पतित्वाऽपि कालमपनयेत्। कामसायकानाम् (वञ्जुलानाम्) च जन्मभूमेरैश्वर्य्योल्लासकः सुरभिः समयोऽयं, तेन कामसायकानां क्षयासम्भवोऽपि युज्यत एव, कामं च प्रचण्डयितुं समीरा अप्येते त्वरयन्त इव वहन्ति, कामसायकाश्चाशोकादिपुष्पमया अपि 'उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा। सम्मोहनश्च कामस्य पञ्च बाणाः प्रकीर्तिताः॥' इत्युक्तदिशा स्वभावतोऽतिभीषणाः। इत्येवं तया स्फुटं बोध्यते, तथा च–अत्र वक्त्र्या वियोगिन्याः कामुकाया वैशिष्ट्येन, वाक्यस्य 'कालो मधुः' इत्यादिरूपस्य, प्रकरणस्य 'सम्प्रति कथं कालोऽपनीयते' इत्येवमनुमेयस्य सखीप्रश्नस्योत्तराभिधानरूपस्य देशस्य जनान्तरासञ्चारतया केलियोग्यस्य कुञ्जवनस्य, वसन्तस्य च समयस्य वैशिष्ट्येन कामुकस्यानयननिवेदनमभिव्यज्यते। इति।

यथा वा मम–'प्रिययाऽपि तया निवारिता कमलं हन्त गृहीतवत्यहम्। भ्रमरेण खलेन हा पुनः परिदष्टा स्खलिताऽस्म्यचेतना॥' इति, अत्र कस्याश्चिद्दूर्त्याया वक्त्र्या वैशिष्ट्येन परसम्भोगगोपनं व्यज्यते। इति।

अथ बोद्धव्यवैशिष्ट्येन व्यञ्जनामुदाहरति–**बोद्धव्य...**इत्यादिना।

**बोद्धव्यवैशिष्ट्ये। यथा।** 'व्यञ्जने'ति शेषः। '**निःशेषच्युतचन्दनं..**' इति।

'हे **दूति!** सन्देशहारिणि। एतेनास्याः परप्रतारणकर्तृत्वौचित्यं नैसर्गिकमित्यावेदितम्। **तव** दूत्या न तु सख्या इत्यर्थः। एवं च–दूत्याः सम्भवन्नपि क्वचित् सखीत्वभ्रमोऽपाकृतः। **स्तनतटं** स्तनयोः कुचयोस्तटं प्रान्तसम-

मिथ्यावादिनि ! दूति ! बान्धवजनस्याज्ञातपीडाऽऽगमे !,
वापीं स्नातुमितो गताऽसि न पुनस्तस्याधमस्यान्तिकम् ॥'

अत्र-'तस्यान्तिकमेव गताऽसी'ति विपरीतलक्षणया लक्ष्यम्, तस्य च 'रन्तुम्' इति व्यङ्ग्यं प्रतिपाद्यं दूतीवैशिष्ट्याद् बोध्यते।

---

देशः। **निश्शेषच्युतचन्दनं** निःशेषं निरवशेषं यथा भवेत्तथा च्युतं स्खलितं चन्दनं यस्माद् यस्य वा तथोक्तम्। न तु वक्षःस्थलं, न वा सन्ध्यादिरूपनिम्नोन्नतभागः। वापीगतानामनेकेषां युवजनानां सम्मर्देन त्रपापारवश्यतया च असद्वयलग्नाग्रस्वस्तिकीकृताभ्यां भुजाभ्यां पुनःपुनः स्तनयोस्तटस्यैवोन्नततया परामर्शात् स्तनतटं च्युतचन्दनमित्युक्तम्, न तु च्यावितचन्दनं नापि क्षालितचन्दनं वा तत्राप्यनवकाशात् इति भावः। अन्यत्र तु स्तनतटस्यैव मुहुर्मर्दनात्, सन्ध्यादौ च नायककरपरामर्शासम्भवात् तत्तथाभूतमिति बोध्यम्। एवम्-**अधरोऽ**धरोष्ठः। **निर्मृष्टरागो** निःशेषं यथा स्यात्तथा न तु किञ्चिन्मृष्टः शुद्धः रागस्ताम्बूलरक्तिमा यस्य तथोक्तः। अधरोष्ठस्यैवोत्तानतया तत्रैव बहलजल-सम्बन्धात्, न तूत्तरोष्ठस्य; न्युब्जतया तस्य जलासम्पर्कान्निर्मृष्टरागत्वमिति बोध्यम्। अन्यत्र तु-अधरोष्ठस्यैव वात्स्यायना-द्युक्तनयेन चुम्बनविधेः सम्भवात्, उत्तरोष्ठस्य च चुम्बनविधेर्निषेधात्तथोक्तमिति बोध्यम्। तथा-**नेत्रे**। **दूरं** न तु तयोरन्तः। अत एव-'दूरं प्रान्तभागे'इति व्याचख्युः। **अनञ्जने** नाञ्जनं यत्र तथोक्ते कज्जलरहिते इत्यर्थः। स्नानावसरे नेत्रयोर्मुद्रणात् मध्ये सलिलप्रवेशासम्भव इति प्रान्तभाग एव नेत्रयोरनञ्जनत्वमभिहितमिति बोध्यम्। अन्यत्र तु नेत्रयोः प्रान्तभाग एव चुम्बनं विहितमन्यत्र च तन्निषेध इति तथोक्तमिति बोध्यम्। किञ्च- इयं दृश्यमानाऽत एव अनपह्नव-नीयेति भावः। **तनुः** शरीरमित्यर्थः। 'तनुः काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे।' इति मेदिनी। **तन्वी** कृशा शैत्योद्रेकात् तत्र युवजनत्रपावशाद्वा सङ्कुचितेति यावत्। अत एव-**पुलकिता** रोमाञ्चितेति, उपचारात् कम्पमानेति वा भावः। पुलका जाता अस्या तथाभूता। 'पुलकः कृमिभेदे प्रस्तरभेदे च मणिदोषे। रोमाञ्चे हरिताले गजान्नपिण्डे च गन्धर्वे ॥' इति मेदिनी। अन्यत्र तु कृशात्वं सुरतश्रमात्, पुलकितात्वं च तदानीमद्भुतानन्दोल्लासात् नायके वाऽनुरागोद्रेकादिति बोध्यम्। अत एव-**मिथ्यावादिनि** ! 'मया तत् सविध्रमुपेत्यानेकशः प्रार्थितोऽपि स नायात'इति असत्यभाषिणि ! **बान्धवजनस्य** मद्रूपस्य सुहृज्जनस्येति भावः। बध्नाति स्नेहेनेति बन्धुः बन्धुरेव बान्धवः। 'बान्धवो बन्धुमित्रयोः।'इति हैमः। **अज्ञातपीडाऽऽगमे** ! अज्ञातः स्वमनोरथपूर्त्तिपरतया ज्ञातोऽप्यज्ञात इव कृत इति भावः पीडाऽऽगमः क्लेशोपस्थितिर्ययेति तथोक्ते। **इतो** मत्सकाशात्। **स्नातुं** स्नानार्थम्। **वापीं** वापिकाम्। **गता**। **असि**। त्वम्। **न पुनर्न** त्वित्यर्थः। **तस्य** बहुधा कृतापराधतया प्रसिद्धस्य। अत एव-**अधमस्य** नानाक्लेशावहकर्म्मकारिण इत्यर्थः। **अन्तिकं** समीपमित्यर्थः। 'उपकण्ठान्तिकाभ्यर्णा व्यग्रा'इत्यमरः। 'गताऽसी'ति देहलीदीपन्यायेनात्राप्यनुषज्यते। नायकमानेतुं प्रेषितां तमनानीय तं स्वयं सम्भुज्यायातां 'मया बहु प्रसादितोऽपि नायात'इति निवेदयन्तीं दूतीं प्रति तत्सर्वमवगम्यापि वाप्यां स्नानकार्य्यजन्यचिह्नप्रकाशनापदेशेन सम्भोगमुद्रावयन्त्याः कस्याश्चित् विदग्धाया उत्तमाया नायिकाया उक्तिरियम्। अमरुशतकस्येदं पद्यम्। अत्र शार्दूल-विक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ११ पृष्ठे ॥ १३ ॥'इति।

अथोदाहरणीयं सूचयति-**अत्रे**त्यादिना।

**अत्रा**स्मिन्नुदाहृते पद्य इति यावत्। **'तस्य**। **अन्तिकं** समीपम्। 'तदन्तिक' मिति पाठान्तरेऽप्ययमेवार्थः। **एव**। **गता**। 'अथागते'ति शेषः। **असि**। **इति**। 'तात्पर्य्य' मिति शेषः। **विपरीतलक्षणया** वापीगमननाय-कान्तिकगमनाभावाभिधानतो विरुद्धस्य नायकान्तिकगमनवापीगमनाभावरूपस्यार्थस्य बोधिकया लक्षणयेति भावः। 'कर्त्तृकरणयोस्तृतीया।' २।३।१८ इति तृतीया। **लक्ष्यं** बोध्यम्। **तस्य** लक्ष्यस्य ( लक्षणया बोध्यस्य ) इत्यर्थः। **च**। **प्रतिपाद्यम्**। **'रन्तुम्' इति**। **व्यङ्ग्यम्**। तच-**दूतीवैशिष्ट्याद्** दूत्या बोद्धव्याया नायकं सम्भुज्यागतायाः सन्देशहारिण्या वैशिष्ट्यं वैलक्षण्यं तस्मात् तदाश्रित्येति भावः। **बोध्यते**। 'व्यञ्जनये'ति शेषः। अयम्भावः-दूत्याः

**अन्यसन्निधिवैशिष्ट्ये यथा–**

**" उअ णिच्चलणिप्फंदा भिसिणीपत्तम्मि रेहइ बलाआ।**
**णिम्मलमरगअभाअण–परिट्ठिआ संखसुत्ति व्व॥ १४॥"**

**अत्र बलाकाया निश्चलनिस्पन्दत्वेन विश्वस्तत्वम्, तेनास्य देशस्य निर्जनत्वम्, अतः–**

---

सम्भोगचिह्नोद्घाटने वक्त्र्यास्तात्पर्यम्, तच्च वापीगमनजन्यचिह्नोद्घाटनेन न सम्भवतीति तात्पर्य्यार्थबाधे विपरीतलक्षणया नायकान्तिकगमनं लक्षितम्, स्वायत्ते शब्दे किमिति तथाऽभिधानम्? इति तस्या अन्यापेक्षयाऽतिनीचत्वद्योतनपुरःसरं स्वस्याश्चार्य्यात्वद्योतनपुरःसरं रमणार्थं प्रवृत्तिः प्रयोजनम्, तस्य च स्पष्टमभिधानं विदग्धाया उत्तमाया नायिकाया न शोभत इति तया तद् बोद्धव्यवैशिष्ट्येन बोध्यमानं व्यञ्जनैकव्यापारविषयम् इति। अथ वाक्यवैशिष्ट्ये यथा मम भगवत्सुधाशतके–'जगदीश! निजाङ्घ्रिसेविनासुचितैर्वार्थितया प्रतिष्ठितिः। अथ किं ददता कुचेलतां बत मय्येव निधारयते दया॥' इति। अत्र हि जगदीशस्य सेवया धनशालित्वौचित्येऽपरापेक्षया स्वस्मिन् कुचेलता (कुचयोरिला श्रीवत्सचिह्ना श्रीर्यस्यास्तत्ता)ऽऽधानातिशयः इति वाक्यस्य वैशिष्ट्येन 'अर्थितये' त्यस्य याचकतया 'कुचेलता' मित्यस्य च 'जीर्णवस्त्रत्व' मित्यर्थौ व्यङ्ग्यः। यदि तु अत्र वक्तुर्याचकस्य वैशिष्ट्यादेवाभिव्यज्यत इति सहृदयानां हृदयं, तदा ममेदमुदाहरणीयम्–'रुक्मिणीहरणे दृश्यकाव्ये माधुर्य्यसम्भृते। रसविज्ञा न ये विज्ञाः सिताखण्डे च ते किमु॥' इति, अत्र च रुक्मिणीहरणे रसाननुभवितारः केवलं खरा इति वाक्यवैशिष्ट्येन बोध्यम्। यथा वा–'तइआ मह गंडत्थलणिमिअं दिट्ठीं णाणेसि अण्णत्तो। एण्हिं सच्चेअ अहं ते अ कवोला ण सा दिट्ठी[२]॥' इति। अत्र हि वाक्यवैशिष्ट्येन 'तवानुरागोऽन्यत्रैव मयि तु परं रागाभासः।' इति व्यज्यते।

अथान्यसन्निधिवैशिष्ट्ये व्यञ्जनामुदाहरति–**अन्यसन्निधिवैशिष्ट्ये** इत्यादिना।

**अन्यसन्निधिवैशिष्ट्ये**ऽन्यस्य वक्तृबोद्धव्यवाक्येभ्यो भिन्नस्य सन्निधिः तस्य वैशिष्ट्यं तस्मिंस्तथोक्ते 'व्यञ्जने' ति शेषः। **यथा–'उअ..'** इति।

**'उअ** पश्येत्यर्थः। 'दयित!' इति सम्बुद्धिपदमध्याहार्य्यम्। **णिच्चलणिप्फन्दा** निश्चलनिःस्पन्दा निश्चलाऽसौ निःस्पंदेति तथोक्ता। अत्र विशेषणोभयकर्मधारयः। चलनस्पन्दनरहितेति भावः। चलनं देशान्तरप्रापिका शरीरक्रिया, स्पन्दनं त्ववयवमात्रक्रिया; एवं च न पुनरुक्तिः। **भिसिणीपत्तम्मि** बिसिनीपत्रे नीलकमलिनीपत्रे इति यावत्। उपचारात्तत्सविधे इत्यर्थः। **बलाआ** बलाका बकी बकपङ्क्तिर्वेत्यर्थः। **णिम्मलमरगअभाअणपरिट्ठिआ** निर्म्मलमरकतभाजनपरिस्थिता। **संखसुत्ति** शङ्खशुक्तिः। **व्व** इव। **रेहइ** राजते शोभत इति यावत्। इदमुक्तम्–शङ्खघटितं शुक्त्याकारं पात्रं यथा स्वच्छनीलमणिमयपात्रोपरि स्थितं शोभते, तथा–नीलकमलिनीपत्रे बलाका सुन्दरनीलेन्द्रमणिमयभाजनोपरि स्थिता शङ्खशुक्ती राजते। इति। एवं च अचेतनोपमया नांशतोऽपि अत्र क्षोभावसरो न वा जनान्तरसञ्चाराशङ्केति व्यज्यते। इति। आर्य्याछन्दः। तल्लक्षणं चोक्तं प्राक्॥ १४॥'

अथ व्यङ्ग्यं निदर्शयति–**अत्रे**त्यादिना।

**अत्रा**स्मिन्नुदाहृते पद्ये इति यावत्। **निश्चलनिस्पन्दत्वेन** निश्चलत्वेन निस्पन्दत्वेन चेत्यर्थः। 'निस्पन्दत्वेने' त्येव क्वचित् पाठः। **विश्वस्तत्वम**नुपद्रुतत्वेन यथेष्टरमणार्हत्वमिति भावः। **तेन** व्यङ्ग्येनेति शेषः। **अस्य। देशस्य।**

---

१ 'पश्य निश्चलनिष्पन्दा बिसिनीपत्रे राजते बलाका। निर्म्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव॥' इति संस्कृतम्। '२ तदा मम गण्डस्थलनिमग्नां दृष्टिं नान्यैषीरन्यत्र। इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः॥' इति संस्कृतम्। अत्र गाथाछन्दः।

'सङ्केतस्थानमेतत्' इति कयाऽपि सन्निहितं प्रच्छन्नकामुकं प्रत्युच्यते, अत्रैव स्थाननिर्जनत्वरूपं व्यङ्ग्यार्थवैशिष्ट्यं प्रयोजनम्।

'भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते।' इत्युक्तप्रकारायाः काकोर्भेदा आकरेभ्यो ज्ञातव्याः। एतद्वैशिष्ट्ये यथा-

---

**निर्जनत्वम्**। 'विजनत्व' मिति पाठान्तरेऽप्ययमेवार्थः। 'व्यज्यत' इति शेषः। **अतो**ऽस्मात् कारणादित्यर्थः। '**सङ्केतस्थानं** सङ्केतस्य रमणौचित्यस्य स्थानम्। **एतत्**।' इति 'एव' मिति शेषः। **कयाऽपि** कयाचित् कामिन्येति भावः। **सन्निहितं** समीपे एव स्थितम्। **प्रच्छन्नकामुकं** प्रच्छन्नो निलीय स्थितोऽसौ कामुकः कामी तम्। कामयत इति कामुकः। 'लषपतपदस्थाभूवृषहनकमगमशॄभ्य उकञ्।' ३।२।१५४ इत्युकञ्। 'लक्षणेत्थम्भूताख्यानभागवीप्सासु प्रतिपर्य्यनवः।' १।४।९० इति द्वितीया। **प्रति**। **उच्यते**। अयम्भावः-'उअ (पश्य) इत्यस्य सम्बुद्धिपदानुपलम्भात् कामुकस्य प्रच्छन्नत्वं सन्निहितत्वं च व्यक्तम्, अतः-तदभिधानं तं प्रत्येव। इति। तथा-**अत्रा**स्मिन्नुदाहृते पद्य इति यावत्। **एव** न 'त्वन्यत्रे'ति शेषः। **स्थाननिर्जनत्वरूपं** स्थानस्य निर्जनत्वद्योतनरूपम्। **व्यङ्ग्यार्थवैशिष्ट्यं** व्यङ्ग्यार्थेन बलाकाया निश्चलनिस्पन्दत्वाभिधानाभिव्यञ्जिताधिष्ठिते देशविश्वस्तत्वद्योतनेन वैशिष्ट्यम्। **प्रयोजनम्**। 'सङ्केतस्थानमेत' दिति प्रत्यायिकाया व्यञ्जनायास्तृतीयव्यञ्जनायाः प्रयोजकमिति भावः। इदमवधेयम्-अत्र बलाकाया निश्चलनिस्पन्दतया सन्निधिवैशिष्ट्येनाभिव्यक्तिरिति वक्तृबोद्धव्यवाक्यातिरिक्तवैशिष्ट्यं प्रतिभासते। इति।

वाच्यवैशिष्ट्ये यथा-'यमुनातीरवानीरनिकुञ्जस्तन्वि! मञ्जुलः। मालतीनर्त्तनं कुर्वन् सरतीह समीरणः॥' इति। अत्र हि-मालतीनर्त्तकसमीरणरूपविशेषणप्रकाशिताद्वाच्यस्य कुञ्जस्य वैशिष्ट्यात् 'रमणार्थमिह प्रविशे'ति व्यज्यते। प्रस्ताववैशिष्ट्ये यथा-'तल्पगताऽपि च सुतनुः श्वासासङ्गं पुरा न या सेहे। सम्प्रति सा हृदयगतं प्रियपाणिं मन्दमाक्षिपति॥' इति। अत्र हि प्रस्तावः पूर्वं 'प्रातरहं देशान्तरं यास्यामी'ति प्रियां प्रति प्रियस्याभिधानम्, तद्वैशिष्ट्यात् प्रवत्स्यत्पतिविषयको रत्याख्यो भावोऽभिव्यज्यते। देशवैशिष्ट्ये यथा-'एतत्तदेव कदलीवनमध्यवर्त्ती कान्तासखस्य शयनीयतलं सुखं ते। अत्र स्थिता तृणमदाद् बहुशो यदेभ्यः सीता ततो हरिणकैर्न विमुच्यते स्म।' इति। अत्र वासन्त्या रामं प्रत्युपवेशनार्थं शिलातलस्य निदर्शनम्, इत्येवं तस्य वैशिष्ट्याद् रामगतशोकोद्दीपनमभिव्यक्तम्। अत एव-'इत्यन्यतो रुदन्नुपविशती' ति उत्तरग्रन्थः सङ्गच्छते। कालवैशिष्ट्ये यथा-'गुरुअणपरवस पिअ! किं भणामि तुह मंदभाइणी अहकम्। अज्ज पवासं वच्चसि वच्च सअं जेव्व सुणसि करणिज्जम्॥' इति। अत्राद्यपदाभिधेयवसन्तकालवैशिष्ट्यात् त्वयि प्रयाते मम जीवितं न भविष्यतीति निश्चितम्, 'अथ तव भविष्यति न वेति तु न जानामी'। ति व्यज्यते।

अथ काकुवैशिष्ट्ये व्यञ्जनामुदाहर्तुकामः काकुपदार्थं प्रथमं निर्दिशति-'**भिन्न**..' इत्यादिना।

'**भिन्नकण्ठध्वनि**र्भिन्नो भेदं प्राप्तो यः कण्ठध्वनिः कण्ठस्योपलक्षणेन ताल्वादेर्ध्वनिरुच्चारणमिति तथोक्तः। कण्ठादिना यस्य वर्णस्य यथोच्चारणं सम्भवति तस्य वर्णस्य तथोच्चारणमकृत्वाऽन्यथोच्चारणं भिन्नकण्ठध्वनिरिति भावः।' अत एव-'वाक्याभिधेयमानेऽर्थे येनान्यः प्रतिपद्यते।' इति पूर्वांशोऽपि सङ्गच्छते। **काकुः** कायति उच्चरति अर्थान्तरमिति तथोक्ता। यद्वा-'काकुर्जिह्वा' इति भाष्यकारः, अभेदोपचारात्तद्व्यापारसम्पाद्यः शोकहर्षरागद्वेषभयनिषेधानिषेधादिप्रत्यायको ध्वनेर्विकार इत्यर्थः। **इति**। **अभिधीयते**। 'स काकुरभिधीयते।' इति पाठान्तरे तु 'तच्छब्दस्य सर्वादीनां पर्य्यायेणोद्देश्यविधेयलिङ्गभाक्त्वम्।' इति नयेनोद्देश्यलिङ्गत्वम्। एवं च-'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वनेः।' इत्यमरा-

---

१ 'गुरुजनपरवश! प्रिय! किं भणामि तव मन्दभागिनी अहम्। अद्य प्रवासं व्रजसि व्रज स्वयमेव श्रोष्यसि करणीयम्॥' इति संस्कृतम्। गीतिश्छन्दः।

**'गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम्।**
**अलिकुलकोकिलललिते नैष्यति ? सखि ! सुरभिसमयेऽसौ ॥ १५ ॥'**
**अत्र 'नैष्यति ? अपि तर्हि एष्यत्येवे'ति काक्वा व्यज्यते।**
**चेष्टावैशिष्ट्ये यथा–**
**'सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया। हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम् ॥ १६ ॥'**
**इत्यत्र 'सन्ध्या सङ्केतकाल' इति पद्मनिमीलनादिचेष्टया कयाचिद् द्योत्यते।**

---

युक्तमपि सङ्गच्छते।' **इत्युक्तप्रकाराया** इत्युक्तः प्रकारः स्वरूपं यस्यास्तथाभूतायाः। 'प्रकारो भेदसदृशभेदेषु' इति गोपालः। **काकोः। भेदाः। आकरेभ्यो** भरतादिशास्त्रेभ्यः। **ज्ञातव्याः। एतद्वैशिष्ट्ये** एतस्याः काकोर्वैशिष्ट्यं तस्मिन्। 'सती' ति शेषः। **यथा–'गुरुपर..'** 'इत्यत्र।' 'व्यञ्जने' ति शेषः।

'हे **सखि ! असौ** नायक इत्यर्थः। **गुरुपरतन्त्रतया** गुरूणामनुल्लङ्घनीयाभ्यनुज्ञानां पित्रादीनां परतन्त्रता तया। **बत** कष्टम्। **दूरतरं** नितान्तदूरवर्तिनमित्यर्थः। **देशम्। गन्तुम्। उद्यतः**। तस्मान्नागमिष्यत्येवेति भावः। किन्तु–**अलिकुलकोकिलललिते**ऽलीनां भ्रमराणां कुलं समुदायः, तच्च कोकिलाश्चेति तैर्ललितः कमनीयस्तस्मिन्। 'ललितं त्रिषु। ललिते चेप्सितेऽपि स्याद्धारभेदे तु न द्वयोः।' इति मेदिनी। **सुरभिसमये** वसन्तकाले। **न। एष्यति ?** आगमिष्यतीत्यर्थः। 'ओमाङोश्च।' । ६ । १ । ९५ ॥ इति पररूपैकादेशः। आर्य्या छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १५ ॥' इति।

अत्र नञि काकुः, तद्वैशिष्ट्यात् 'अवश्यमेष्यती'ति व्यज्यते इत्याह–**अत्रे**त्यादिना।

**अत्रा**स्मिन्नुदाहृते पद्ये इति यावत्। **'न। एष्यति ?** आगमिष्यति। 'इत्यस्यार्थ'इति शेषः। **अपि। तर्हि** अपि त्वित्यर्थः। **एष्यति। एव**।'**इती**त्येवमित्यर्थः। **काक्वा** काकुसाचिव्येन व्यञ्जनयेत्यर्थः। **व्यज्यते**। अयम्भावः– अत्र नैष्यतीत्यस्य नञ्पदं काक्वा ध्वनितमिति न तस्य निषेधार्थकत्वम्, किन्तु संशयापसारणपुरःसरं सम्भावितसार्थस्यावश्यम्भाविसिद्धिकत्वम्। एवं च नैष्यतीत्यस्य काक्वाऽवश्यमेष्यतीत्यर्थः प्रतीयते। इति चेष्टावैशिष्ट्ये व्यञ्जनामुदाहर्तुमुपक्रमते–**चेष्टावैशिष्ट्ये** इत्यादिना।

**चेष्टावैशिष्ट्ये**। 'व्यञ्जने' ति शेषः। **यथा–'सङ्केत..'** इति।

'**विदग्धया** चतुरया गूढाभिप्रायवेदनावेदनसमर्थयेति यावत्। कयाचित् कामिन्येति शेषः। **सङ्केतकालमनसं** सङ्केतस्य कालः समय उपलक्षणेन तदनुसन्धानं तत्र मनो यस्य तं, यद्वा– सङ्केतस्य कालः कलनं ज्ञानमिति यावत् तत्र मनो यस्य तं तथोक्तम्। **विटमुपपतिम्। ज्ञात्वा** तच्चेष्टया निश्चित्येत्यर्थः। **हसन्नेत्रार्पिताकूतं** हसन्ती विकसन्ती नेत्रे ताभ्यामर्पितं ( परचेतसि ) निहितमाकूतं स्वाभिप्रायो रहस्यमिति यावत् यत्र ( कर्मणि ) तद् यथा भवेत्तथेत्यर्थः। यद्वा–हसदिति पृथक् पदम्, लीलापद्ममित्यस्य विशेषणम्, विकसदित्यर्थः। **लीलापद्मं** लीलाया लीलार्थं धृतम् पद्ममिति तथोक्तम्। **निमीलितम्**। यत्तु–'हसद्भ्यां नेत्राभ्यामर्पितं सूचितमाकूतं रहस्यं येन त' मित्येवं कृत्वा 'विट' मित्यस्य विशेषणं स्वीकुर्वन्तः 'येन नेत्रेङ्गितद्वारा गूढाभिप्राय आवेदितस्तादृशम्' इति व्याचक्षते। तन्न साधु, तथा सति–अर्द्धान्तरैकपदत्वापत्तेः। अत्रोपस्थितं विटं प्रति सङ्केतसमयं निर्दिशन्तीं काञ्चित् कान्तां पश्यत इयमुक्तिः। अत्र श्लोकश्छन्दः, तल्लक्षणं च यथोक्तम्, श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्। द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ १६ ॥' इति।

इह निशि कमलनिमीलनमतिशेते, सायं पुनर्नेति ईषत्कमलनिमीलनेन सायमिति कयाचित् सङ्केतसमयो द्योत्यते इत्याह–**इत्यत्रे**त्यादिना।

**एवं वक्रादीनां व्यस्तसमस्तानां वैशिष्ट्ये बोद्धव्यम् ।**

**३० त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता ॥ २० ॥**

**अर्थानां वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिरूपतया सर्वा अपि अनन्तरोक्ता व्यञ्जनास्त्रिविधाः ।**

**तत्र वाच्यार्थस्य व्यञ्जना यथा—'कालो मधुः...' इत्यादौ । लक्ष्यार्थस्य यथा—'निःशेषच्युत चन्दनं..' इत्यादौ । व्यङ्ग्यार्थस्य यथा-'उअ णिच्चलणिप्फंदा...'इत्यादौ ।**

---

इत्यत्रास्मिन्नुदाहृते पद्ये इति यावत् । **कयाचित्** अज्ञाताभिधानया विचक्षणविलक्षणया नायिकयेत्यर्थः । (कर्त्र्या) । **पद्मनिमीलनादिचेष्टया** । आदिना नेत्रेङ्गितग्रहणम्, (साधनेन) **'सन्ध्या** 'सायङ्कालभवेति' शेषः । **सङ्केतकालः** सङ्केतस्यावयोः सङ्गमस्थानस्योपचारात् सङ्गमस्य कालोऽवसरः ।' **इति** । 'विटमुद्दिश्ये' ति शेषः । **द्योत्यते** । इदं च बोध्यम्—'चेष्टाऽऽदिकस्ये' त्यत्रादिपदेन चेष्टाविरहस्य ग्रहणम्, तद्वैशिष्ट्ये यथा—'नादत्ते भूषणं दत्तं नाहूता चिरमृच्छति। मृगाक्षी न क्षिपत्यक्षि सादरं मयि पश्यति ॥' इति । अत्र हि कोपोऽभिव्यज्यते ।

ननु वक्रादीनां केषाञ्चित् समस्तानां वैशिष्ट्ये कस्यचित् पुनर्व्यस्तस्य वैशिष्ट्ये व्यञ्जनैवमुदाहृतेति कियतां समस्तानां कियतां पुनर्व्यस्तानां वैशिष्ट्ये व्यञ्जनेति नियमोऽस्ति न वेत्याकाङ्क्षायां, नैवंविधो नियमः, किन्तु यथासंभवमेवेत्यभिप्रायेणाह—**एवमित्यादि** ।

**एवं** यथा कियतां व्यस्तानां, कियतां च समस्तानां वैशिष्ट्ये व्यञ्जनोदाहृता, तथेति भावः । **वक्रादीनाम्** । **व्यस्तसमस्तानां** व्यस्ताश्च समस्ताश्चेति तेषाम् । **वैशिष्ट्ये** । सतिसप्तमीयम् । **बोद्धव्यम्** । अत्र सामान्यविवक्षया नपुंसकत्वम् । इदं बोध्यम्—वक्रादीनां प्रत्येकं वैशिष्ट्यं व्यस्तवैशिष्ट्यम्, द्वित्र्यादिसङ्कीर्णं वैशिष्ट्यं समस्तवैशिष्ट्यम् । तत्र प्रत्येकं यथोदाहृता । **'निःशेषच्युतचन्दनं..'** इत्यादौ, समस्तानां पुनर्वैशिष्ट्ये यथा **'कालो मधुः..'** इत्यादौ । इति ।

अथास्या भेदानाह—३० **त्रैविध्यादित्यादिना** ।

३० **अर्थानां** वाच्यलक्ष्यव्यङ्ग्यानाम् । **प्रत्येकम्** । **त्रैविध्यात्** त्रिविधत्वात् । **इयं** काक्वादिवैशिष्ट्यसचिवा व्यञ्जनेति भावः । **त्रिविधा** । **मता** ॥ २० ॥

तदेव विवृणोति—**अर्थानामित्यादिना** ।

**अर्थानाम्** । **वाच्यलक्ष्यव्यङ्ग्यत्वेन** । वाच्यत्वेन लक्ष्यत्वेन व्यङ्ग्यत्वेन चेत्यर्थः । **त्रिरूपतया** त्रिविधतया हेतुनेत्यर्थः । **सर्वा** । वक्त्रादिवैशिष्ट्यानेकतया यावद्भेदाः सम्पद्यमाना इत्यर्थः । **अपि** । **अनन्तरोक्ता** अव्यवहितप्रागभिधानाः । **व्यञ्जनाः** । **त्रिविधाः** । अयम्भावः- काक्वादिवैशिष्ट्यभेदेन भिद्यमानाः प्रागुक्ताः सर्वा अपि व्यञ्जना-वाच्यादीनामर्थानां त्रैविध्यात् प्रत्येकं त्रिभेदाः पुनः सम्पद्यन्ते । इति ।

एतासां दिङ्मात्रमुदाहरणमुपस्थापयति-**तत्रेत्यादिना** ।

**तत्र** तासु वाच्यार्थादिमूलासु वक्तृवैशिष्ट्यादिसचिवासु व्यञ्जनासु मध्य इति यावत् । **वाच्यार्थस्य** । **व्यञ्जना** वक्त्रादिवैशिष्ट्यसचिवेति शेषः । **'कालो मधुः...'इत्यादौ** 'उदाहृते पद्ये'इति शेषः । **लक्ष्यार्थस्य** बोद्धव्यवैशिष्ट्यसचिवा 'व्यञ्जने'ति शेषः । **'निःशेषच्युतचन्दनं...'इत्यादौ** 'उदाहृते पद्ये'इति शेषः । **व्यङ्ग्यार्थस्य**'चेष्टावैशिष्ट्यसचिवा व्यञ्जने'ति शेषः । **यथा—'उअ णिच्चलणिप्फंदा** ( पश्य निश्चलनिस्पन्दा )...**'इत्यादौ**'उदाहृते पद्ये' इति शेषः । इदं बोध्यम्-'कालो मधुः...,' 'निःशेषच्युतचन्दनं...', 'उअ णिच्चलणिप्फंदा...'इत्यादीनां वक्त्रादीनां वैशिष्ट्ये यथा व्यञ्जनेति प्रागुदाहृतं, व्याख्यातानि च पद्यान्येतानि । इति ।

**प्रकृतिप्रत्ययादीनां तु व्यञ्जकत्वं प्रपञ्चयिष्यते ।**

**३१ शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रयः ।**
**एकस्य व्यञ्जकत्वे त-दन्यस्य सहकारिता ॥ २१ ॥**

**यतः शब्दो व्यञ्जकत्वेऽर्थान्तरमपेक्षते, अर्थश्च शब्दम्, तत् एकस्य व्यञ्जकत्वे अन्यस्य सहकारिता अवश्यमङ्गीकर्त्तव्या ।**

---

ननु व्यञ्जनास्वरूपनिरूपणप्रस्तावे प्रकृतिप्रत्ययादीनामपि व्यञ्जना स्वीकृता, किन्तु तेषां कथं पुनर्व्यञ्जकत्वमिति नोदीरितमित्यतआह–**प्रकृति**...इत्यादि ।

**प्रकृतिप्रत्ययादीनाम्** । आदिना निपातादीनां ग्रहणम् । **तु** । **व्यञ्जकत्वम्** । **प्रपञ्चयिष्यते** प्रपञ्च्य प्रदर्शयिष्यते । इदं बोध्यम्–यद्यपि-'न्यक्कारो ह्ययमेव...'इत्यादौ प्रकृतिप्रत्ययादीनां व्यञ्जकत्वं तदुदाहरतोदाहृतमेव, तथाऽपि तस्य प्रकरणान्तरीयतया, एषां च विविच्योदाहरणेषु चमत्कारातिशय इति तथा प्रतिजानीते । शाब्द्या व्यञ्जनायाः प्रकृत्यादिव्यञ्जनाया भेदस्तु गोबलीवर्दन्यायेन । इति ।

ननु'दुर्गालङ्घितविग्रहो'इत्यादौ शाब्द्यामार्थ्योः 'कालो मधुः...'इत्यादावार्थ्यां पुनः शाब्द्या व्यञ्जनायाः प्रतीतिस्तत् कथं तस्यास्तस्यास्तद्व्यपदेशभाक्त्वम् ? इत्याशङ्कामपनुदति–३१ **शब्दबोध्यो**...इत्यादिना ।

३१ **शब्दबोध्यः** शब्दस्य शब्देन वा बोध्यः प्रतिपाद्य इति तथोक्तः । अर्थस्य शाब्दत्वानतिरेकात् इदमुक्तम् । **अर्थः** । **व्यनक्ति** संयोगाद्यनियन्त्रितमर्थं प्रत्याययतीति भावः । एवम्–**शब्दः** । **अपि** । **अर्थान्तराश्रयो** व्यञ्जनीयार्थभिन्नार्थमाश्रित इति भावः । 'स' न्निति शेषः । 'व्यनक्ती'ति पूर्वतोऽन्वेति । **एकस्य** शब्दार्थयोरन्यतरस्य शब्दस्यार्थस्य वेति यावत् । **व्यञ्जकत्वे** । सतिसप्तमीयम् । **तत्** तस्मात् व्यञ्जकादित्यर्थः । **अन्यस्य** भिन्नस्य । **सहकारिता** सहायकत्वमुपकारित्वमिति यावत् । 'मते'ति शेषः । अयम्भावः–शब्दार्थयोः परस्परं प्रतिपाद्यप्रतिपादकात्मा सम्बन्धः, तत्–शब्दप्रतिपाद्यस्यार्थस्य यद् व्यञ्जकत्वं, तत् शब्दाश्रितमेव, अर्थप्रतिपादकस्यैवंशब्दस्य यद् व्यञ्जकत्वं, तत् शब्दाश्रितमेव; शब्दाश्रयमन्तराऽर्थस्यार्थाश्रयममन्तरा च शब्दस्य व्यञ्जकत्वानुपपत्तेः । एष विशेषः–शब्दो यदा व्यङ्क्ते तदा शब्दस्य, अर्थो यदा तदाऽर्थस्य प्राधान्यम्, अन्यत्रान्यस्य साचिव्यमेव । प्राधान्यं चाव्यवहितोपकारित्वम्, एवं च यत्र यस्य प्राधान्यं तत्र तत्सम्बन्धित्वेनैव व्यवहारः, स्थाने चैवं 'दुर्गालङ्घितविग्रहो..' इत्यादौ व्यञ्जनायाः शाब्दीत्वम्, अपरत्रार्थीत्वं च, 'प्राधान्येन व्यपदेशा भवन्ती'ति सिद्धान्तात् । इति ॥ २१ ॥

तदेव विवृणोति–**यत** इत्यादिना ।

**यतः** यस्मात् कारणादित्यर्थः । **शब्दः** । **व्यञ्जकत्वे** व्यञ्जकत्वावस्थायाम् । **अर्थान्तरमन्यो** व्यञ्जनीयाद्भिन्नोऽर्थ इति तत्तथोक्तम् । मयूरव्यंसकत्वादित्वात् निपातनात्साधु । **अपेक्षते** साचिव्येन कामयते तत्साहाय्यमभिलषतीति यावत् । **अर्थः** । अपि 'व्यञ्जकत्वे' इति पूर्वतोऽनुवृत्तम् । **शब्दम्** एकवृन्तगतफलद्वयनयेन यस्य स्वयं प्रतिपाद्यस्तमिति भावः । 'अपेक्षते' इति पूर्वतोऽन्वेति । **तत्** । **एकस्य** शब्दार्थयोरेकतरस्येति भावः । **व्यञ्जकत्वे** । सतिसप्तमीयम् । **अन्यस्य** । **सहकारिता** साहाय्यम् । **अवश्यम्** । **अङ्गीकर्त्तव्या** । इदमुक्तम्–शब्दो यदा यं कमपि अर्थमभिव्यङ्क्ते तदा तद्भिन्नमर्थमाश्रित्य, अथैवं यदाऽर्थोऽभिव्यङ्क्ते तदा कञ्चित् शब्दमाश्रित्यैव, असहायस्य तस्यतस्य स्वरूपत एवानुपलम्भे व्यञ्जकत्वस्य दवीयस्त्वात् । 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायेन यत्र शब्दस्य व्यञ्जकत्वे प्राधान्यं तत्र तत् शाब्दम्, अर्थस्य यत्र प्राधान्यं तत्र तदार्थम् । ननु नाटकादौ वेशाभिनयादेरपि व्यञ्जकत्वमिति कथं शब्दार्थयोरेव व्यञ्जकत्वम्? इति चेत् ! तत्रापि शब्दोपहितार्थस्यैव व्यञ्जकत्वात्, वेशाभिनयादेस्तु चेष्टाऽऽदिरूपवैशिष्ट्यमात्रसाचिव्योपपत्तेः । तस्य शाब्दत्वेऽपि वेशाभिनयत्वव्यपदेशः प्राधान्यात् । इति ।

३२ अभिधाऽऽदित्रयोपाधि-वैशिष्ट्यात् त्रिविधो मतः।
शब्दोऽपि वाचकस्तद्व-लक्षको व्यञ्जकस्तथा ॥ २२ ॥

अभिधोपाधिको वाचकः, लक्षणोपाधिको लक्षकः, व्यञ्जनोपाधिको व्यञ्जकश्च। किञ्च-

३३ तात्पर्य्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने।
तात्पर्य्यार्थं तदर्थं, च वाक्यं तद्बोधकं परे ॥ २३ ॥

अभिधाया एकैकपदार्थबोधनविरामाद् वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका तात्पर्य्यं नाम वृत्तिः। तदर्थश्च तात्पर्य्यार्थः, तद्बोधकं च वाक्यम्; इत्यभिहितान्वयवादिनां मतम्।

---

ननु ११ अर्थो वाच्यश्च लक्ष्यश्चेत्यादिनाऽर्थस्य त्रैविध्यं पूर्वमुक्तम्, किन्तु शब्दस्य कतिविधत्वम्? इत्याशङ्कामपहरति-३२ **अभिधाऽऽदि..** इत्यादिना।

३३ **अभिधाऽऽदित्रयोपाधिवैशिष्ट्यात्** अभिधाऽऽदीनामभिधालक्षणाव्यञ्जनानां त्रयं तदेवोपाधिस्तस्य वैशिष्ट्यं तस्मात्। **शब्दः**। **अपि** न केवलमर्थ इति भावः। **वाचकः**। **तद्वत्**। **लक्षकः**। **तथा**। **व्यञ्जकः**। 'इत्येव' मिति शेषः। **त्रिविधः**। **मतः** ॥ २२ ॥

तदेव निर्दिशति-**अभिधोपाधिक** इत्यादिना। स्पष्टम्।

अभिधाऽऽदिवृत्त्या शब्दैः प्रत्येकं पदार्था उपस्थाप्यन्ते, तेषां च संसर्गो वाक्याद्भासमानोऽपि न वृत्तिमन्तरेण सङ्गच्छते, तदन्या काऽपि वृत्तिः स्वीकार्य्या? इत्याशङ्कायामाह-**किञ्चेति**।

**किञ्च** अन्यदपि बोद्धव्यमिति भावः। किं तदित्याह-३३ **तात्पर्य्याख्यामित्यादि**।

३३ **परे**ऽन्येऽभिहितान्वयवादिन इति यावत्। एतेनात्मन औदासीन्यं सूचितम्। **पदार्थान्वयबोधने** पदानां 'गामानये' त्यादौ 'गा' मित्यादीनामर्था अभिधया प्रतिपाद्यमानाः सास्नाऽऽदिमदादिरूपास्तेषामन्वयो योग्यत्वादिनाऽन्योऽन्यं संसर्गस्तस्य बोधनं तत्र तन्निमित्तमित्यर्थः। निमित्ते सप्तमीयम्। **तात्पर्य्याख्यां** तात्पर्य्यमाख्यातीति ताम्। तस्मिन्नभिहिते वाक्ये परा योग्यत्वादिनाऽन्वयबोधनार्थं संसक्तेति तस्या भावस्तात्पर्य्यम्। भावे ष्यञ्। **वृत्तिम्**। **आहुः तदर्थं**। तस्यास्तात्पर्य्याख्यवृत्तेरर्थः प्रतिपाद्योऽर्थस्तं तथोक्तम्। **तात्पर्य्यार्थम्**। **च** 'आहुः' इति अनुवर्त्तते। ननु केनेयं बोधयतीत्याह-**तद्बोधकं** तस्य तात्पर्य्यार्थस्य बोधकं तत्तथोक्तम्। 'चे' ति देहलीदीपकन्यायेनानुषज्यते। **वाक्यम्**। 'आहुः'-इति पूर्वतोऽनुवृत्तम् ॥ २३ ॥

तदेवाह-**अभिधाया** इत्यादिना।

**अभिधाया** अभिधावृत्तेरुपलक्षणेन लक्षणावृत्तेर्व्यञ्जनावृत्तेश्चेत्यर्थः। **एकैकपदार्थबोधनविरामात्** स्वस्वबोध्यतत्तत्पदार्थानामनन्विततया बोधनानन्तरं विरामादिति भावः। **वाक्यार्थरूपस्य**। **पदार्थान्वयस्य** पदानामन्वितार्थस्य। **बोधिका**। **तात्पर्यम्**। **नाम**। **वृत्तिः**। **तदर्थ**स्तत्प्रतिपाद्योऽर्थः। **च**। **तात्पर्य्यार्थः**। **तद्बोधकं**। तस्य तात्पर्य्यार्थस्य बोधकमित्यर्थः। **वाक्यम्**। **इति**। एवम्भूतमित्यर्थः। **अभिहितान्वयवादिनाम**भिहितानाम् अभिधया लक्षणया व्यञ्जनया वा वृत्त्योपस्थापितानां तेषां पदार्थानामन्वयस्तात्पर्य्यवृत्त्या वाक्येन संसर्गस्तं वदन्तीत्येवंशीलास्तेषां तथोक्तानाम्, प्राचीननैयायिकानामित्यर्थः। **मतम्**। 'अस्ती' ति शेषः। अयम्भावः-लाघवात्पदानां पदार्थमात्रे शक्तिः, न तु अन्वयांशेऽपि गौणत्वात्, अनन्यलभ्यत्वाच्च। अन्वयांशो हि वाच्यादिविसदृशशरीरो योग्यताऽऽकाङ्क्षाऽऽसत्तिवशात् प्रतीयमानोऽप्यपदार्थः। तथा च 'घटं करोति' इत्यत्र घटवृत्तिकर्म्मत्वानुकूला कृतिरिति बोधः, तत्र घटपदस्य घटपदार्थः, अम्-प्रत्ययस्य च कर्म्मता, वृत्तिता पुनर्न कस्यापि; इत्यवश्यं वृत्त्यन्तरस्वीकार्य्ये 'तात्पर्य्य' मित्याख्यैव वृत्तिः स्वीकार्य्या, तद्वशादेव संसर्गोपपत्तेः। इत्यभिहितान्वयवादिनः प्राहुः। नन्वेवं यदि? तत्कथं

## इति साहित्यदर्पणे वाक्यस्वरूपनिरूपणो नाम द्वितीयः परिच्छेदः।

भवताऽपि न स्वीक्रियते ! इति चेत् ? अत्राहुः प्रकाशकाराः–'वाच्य एव वाक्यार्थः।' इति। अयम्भावः–अस्त्येव अन्वयरूपे वाक्यार्थेऽपि पदानां शक्तिः। व्यवहारेणान्वितस्यैवोपस्थापनात्, तत्रैव शक्तिग्रहात्। तथा हि-'देवदत्त ! गामानय' इत्युत्तमवृद्धप्रयोगात् सास्नाऽऽदिमतीं व्यक्तिं मध्यमवृद्धे उपस्थापयति सति तच्चेष्टया तस्य वाक्यस्य तदर्थबोधकतामवगम्य पश्चात् 'गां नय, अश्वमानय' इति प्रयोगे गवापनयनमश्वोपस्थापनं चावलोक्य बालोऽन्वयव्यतिरेकाभ्यां कारकपदार्थस्य क्रियापदार्थान्विते कारके, क्रियापदस्य च कारकपदार्थान्वितायां क्रियायां शक्तिमवधारयति। ततः प्रयोगावसर एव तस्यान्वितबुद्धिर्जायते। न च गौरवेणान्वयांशपरिहारः, प्रथमगृहीतान्वयशक्तेः उपजीव्यतया तदपरित्यागात्। शाब्दबोधे तु योग्यताऽऽदिवशात् वृत्तिताऽऽदिविशेषरूपमेव भासत इति नापदार्थो वाक्यार्थः इति। सिद्धान्तश्चायं मीमांसकगुरूणाम्, अत एव–'पदानि अन्वितानि भूत्वा विशिष्टमर्थं बोधयन्ती'ति वदतामन्विताभिधानवादितयैषां स्थाने प्रसिद्धिः। ननु कथमेतेषामपि मतं न दर्शितम्, कथं वा तेषामेवेति चेत् ? नेदं रुचिरम्, अन्वितत्वेन शक्तावपि अन्वयविशेषावगमाय योग्यताऽऽकाङ्क्षाऽऽदिरूपस्य कारणस्यावश्यमङ्गीकार्य्यत्वात्। एवं चैतैरपि विशेषाकारेणाशक्यस्यैव भानमित्यवश्यमभ्युपेयम्। ननु कस्तर्हि सिद्धान्तः ? इति चेत् ? यद्यपि व्यवहारेण प्रथमत एवान्वितानां पदार्थानामुपस्थानम्, इति वक्तुं युज्यते, तथाऽपि योग्यताऽऽदिरूपस्य कारणस्यावश्यं स्वीकार्य्यत्वे तात्पर्य्याख्यैव वृत्तिरन्या स्वीकार्य्या। इत्यभिप्रायेणैव कविराजा मीमांसकगुरूणां सिद्धान्तमुपेक्ष्य प्राचीननैयायिकानामेव सिद्धान्तं न्यरूरूपन्तः, किन्तु तेषां मुदे एतस्य परकीयतयाऽभिधानम् इति हृदयम्। इति दिक्।

एवं वाक्यस्वरूपं निरूप्य प्रकरणसमाप्तिं निर्दिशति-इतीत्यादिना।

इति समाप्तः। **साहित्यदर्पणे** 'श्रीविश्वनाथकविराजकृत' इति शेषः। **वाक्यस्वरूपनिरूपणो** वाक्यस्य स्वरूपं लक्षणं तस्य निरूपणं यत्र तादृशः। अत्र व्यधिकरणो बहुव्रीहिः। यद्वा–वाक्यस्वरूपं निरूपयतीति तथोक्तः। **नाम। द्वितीयः। परिच्छेदः।**

**अनभिधेयमलक्ष्यमबोध्यमप्रतिकृतिं प्रकृतेः परमद्वयम्।**
**प्रतिपदं प्रथितामलवैभवं विभवदं भवदंशहरं भजे॥ २॥**

इति श्रीभारद्वाजगोत्रप्रभूतेन सहृदयशिरोमणिश्रीशिवनाथसूरिसूनुना कविरत्नेन श्रीशिवदत्तशर्म्मणा विनिर्मितायांरुचिराऽभिधेयायां साहित्यदर्पणव्याख्यायां द्वितीयः परिच्छेदः।

# तृतीयः परिच्छेदः।

अथ कोऽयं रस इत्युच्यते-

**३४ विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा।**
**रसतामेति रत्यादिः स्थायी भावः सचेतसाम् ॥ २४ ॥**

---

सनिर्विण्णत्वाद्यैः सुमहदनुभावैकविषयैर्विशिष्टैर्भावैर्य्यः परमधिगतः स्यात्सुकृतिनाम्।
तमेवं विज्ञेयं कमपि कमनीयं सुमधुरं प्रसादाद्याधारं स्वयमिति विभाव्य प्रणिदधे ॥

एवं वाक्यस्वरूपं निरूप्य रसस्वरूपं निरूपयितुं तृतीयं परिच्छेदमारभते-**अथे**त्यादिना।

**अथ** वाक्यस्वरूपनिरूपणानन्तरम्। **कः** किंस्वरूपः। **अयं** वाक्यशरीरस्य काव्यस्य साक्षादात्मभूतः। **रसो** रस्यत आस्वाद्यत इति तथोक्तः, अत एवास्वादात्मना सामान्येन निर्दिष्टोऽपि स्फुटं निर्देश्य इति भावः। 'अस्ती'ति शेषः। इतीत्येवं स्थिताविति भावः। **उच्यते** लक्षणया स्फुटं प्रत्याय्यते-३४ **विभावेने**त्यादिना।

३४ **विभावेन** विभावयति विशिष्टात्मना भावनामास्वादयोग्यतां नयतीति तेन तथोक्तेन। भावना च-रत्यादीनामेव। कारणं चोत्पादनापरपर्य्यायमालम्बनं, निमित्तापरपर्य्यायं चोद्दीपनमिति द्विविधम्। तथा च-रत्यादीनां भावनाया आस्वादयोग्यताऽऽनयने कारणभूतो यः, तेनालम्बनोद्दीपनात्मकतया द्विविधेन विभावपदबोध्येनेति निष्कृष्टम्। **अनुभावे**नानुभावयति वासनारूपेणावस्थितान् रत्यादीन् स्फुटमिति तेन, अनुभवनं वासनाऽऽत्मनाऽवस्थितानां रत्यादीनां कार्य्यात्मना परिणमनं तेनेति वा। तथाच-स्तम्भस्वेदादिरूपतया सात्त्विकेन कटाक्षपातादिरूपतया चासात्त्विकेन रत्यादीनां कार्य्यात्मना परिणामेनेति निष्कृष्टम्। **तथा। सञ्चारिणा** सम्यक् सर्वाङ्गव्यापितया कार्य्यजनने आनुकूल्येनेति यावत्, चरतीत्येवंशीलस्तेन तथोक्तेन। सहकारिणेति भावः। अत्र सहार्थे योग्ये तृतीया। तेन-सम्भूयेति फलितम्। अत एवाहुः प्रदीपकाराः-'नन्वेवं स्थायिविभावादिसमूहालम्बनात्मिका रसस्य प्रतीतिरिति पर्य्यवसन्नम्, तच्च नयुक्तम्, विभावादीनां पार्थक्येन प्रतीतिप्रसङ्गात्, 'घटपटा' विति समूहालम्बनवदिति चेन्न, पानकरसन्यायेन चर्वणात्। यथा पानके कर्पूराद्यंशो न पार्थक्येनानुभूयते, तथाऽत्रापि विभावाद्यंशः।' इति। **व्यक्तो** व्यञ्जितो व्यक्त्याख्यया वृत्त्या प्रतिपत्तिं नीत इत्येके, भग्नावरणया चिदा विषयीकृत इत्यपरे प्राहुः। **सचेतसां** चेतसा परिपक्ववृत्तिकेन चित्तेन सहिता इति तेषां तथोक्तानाम्। **रत्यादिः। स्थायी। भाव**श्चिदवच्छिन्न इत्येके, तदवच्छिन्नं चैतन्यमित्यपरे प्राहुः। **रसतां** रसस्वरूपत्वम्। **एति** प्रतिपद्यते ॥ २४ ॥

अत्राहुर्गङ्गाधरकाराः-"समुचितललितसन्निवेशचारुणा काव्येन समर्पितैः सहृदयहृदयं प्रविष्टैस्तदीयसहृदयतासहकृतेन भावनाविशेषमहिम्ना विगलितदुष्यन्तरमणीयत्वादिभिरलौकिकविभावानुभावव्यभिचारिशब्दव्यपदेश्यैः शकुन्तलाऽऽदिभिरालम्बनकारणैश्चन्द्रिकाऽऽदिभिरुद्दीपनकारणैरश्रुपातादिभिः कार्य्यैश्चिन्ताऽऽदिभिः सहकारिभिश्च सम्भूय प्रादुर्भावितेनालौकिकेन व्यापारेण तत्कालनिवर्तितानन्दांशावरणाज्ञानेनात एव प्रमुष्टपरिमितप्रमातृत्वादिनिजधर्म्मेण प्रमात्रा स्वप्रकाशतया निजस्वरूपानन्देन सह गोचरीक्रियमाणः प्राग्विनिविष्टवासनारूपो रत्यादिरेव रसः। तथा चाहुः-"व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः।" इति। व्यक्तो व्यक्तिविषयीकृतः। व्यक्तिश्च भग्नावरणा चित्। यथाहि-शरावादिना पिहितो दीपस्तन्निवृत्तौ सन्निहितान् पदार्थान् प्रकाशयति, स्वयं च प्रकाशते, एवमात्मचैतन्यं विभावादिसंवलितान् रत्यादीन्, अन्तःकरणधर्म्माणां साक्षिभास्यत्वाभ्युपगतेः। विभावादीनामपि स्वप्नतुरगादीनामिव रङ्गरजतादीनामिव साक्षिभास्यत्वमविरुद्धम्। व्यञ्जकविभावादिचर्वणाया आवरणभङ्गस्य चोत्पत्तिविनाशाभ्यामुत्पत्तिविनाशौ रस

---

१ तेन रत्यादिस्थायिभावेनावच्छिन्नमिति तथोक्तम्। २ अनिर्वचनीयतया दिव्येन। ३ प्रतिबन्धकृतानिवृत्तेः।

उपचर्य्यते । वर्णनित्यतायामिव व्यञ्जकताल्वादिव्यापारस्य गकारादौ विभावादिचर्वणाऽवधित्वादावरणभङ्गस्य[1] निवृत्तायां तस्यां[2] प्रकाशस्यावृतत्वाद् विद्यमानोऽपि स्थायी न प्रकाशते । यद्वा–विभावादिचर्वणामहिम्ना सहृदयस्य निजसहृदयतोन्मिषितेन तत्तत्स्थाय्युपहितस्वरूपानन्दाकारा समाधाविव[3] योगिनश्चित्तवृत्तिरुपजायते । तन्मयीभवनमिति यावत् । आनन्दो ह्ययं न लौकिकसुखान्तरसाधारणः, अनन्तःकरणवृत्तिरूपत्वात् । इत्थं चाभिनवगुप्तमम्मटभट्टादिग्रन्थस्वारस्येन भग्नावरणचिद्विशिष्टो रत्यादिः स्थायी भावो रस इति स्थितम् । वस्तुतस्तु–वक्ष्यमाणश्रुतिस्वारस्येन रत्याद्यवच्छिन्ना भग्नावरणा चिदेव रसः । रत्याद्यंशमादाय तु अनित्यत्वमितरभास्यत्वं च । चर्वणा चास्य चिद्गतावरणभङ्ग एव प्रागुक्ता, तदाकारान्तःकरणवृत्तिर्वा[4] । इयं च परमब्रह्मास्वादात्समाधेर्विलक्षणा[5] विभावादिविषयसंवलितचिदानन्दालम्बनत्वात् । भाव्या च काव्यव्यापारमात्रात् । अथास्यां सुखांशभाने किं मानमिति चेत् ! समाधावपि तद्भाने किं मानमिति पर्य्यनुयोगस्य तुल्यत्वात् । 'सुखमात्यन्तिकं यत्तद् वुद्धिग्राह्यमतीन्द्रियम् ।' इत्यादिशव्दोऽस्ति तत्र मानमिति चेत्, अस्त्यत्रापि'रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति ।' इति श्रुती, सकलसहृदयप्रत्यक्षं चेति प्रमाणद्वयम् । येयं द्वितीयपक्षे तदाकारचित्तवृत्त्यात्मिका रसचर्वणोपन्यस्ता सा शव्दव्यापारभाव्यत्वाच्छाव्दी, अपरोक्षसुखालम्बनत्वादपरोक्षात्मिका। तत्त्वं[6] च वाक्यजवुद्धिवत् । इत्याहुरभिनवगुप्तपादाः । भट्टनायकास्तु-'ताटस्थ्येन[7] रसप्रतीतावनास्वाद्यत्वम् । आत्मगतत्वेन तु प्रत्ययो दुर्घटः । शकुन्तलाऽऽदीनां सामाजिकप्रत्ययविभावत्वात् । विना विभावमनालम्वनस्य[8] रसादेरप्रतीतेः । न च कान्तात्वं साधारणविभावताऽवच्छेदकमत्राप्यस्तीति[9] वाच्यम् । अप्रामाण्यनिश्चयानालिङ्गितागम्यात्वप्रकारकज्ञानविरहस्य विशेष्यतासम्वन्धावच्छिन्नप्रतियोगिताकस्य विभावताऽवच्छेदककोटाववश्यं निवेश्यत्वात् । अन्यथा स्वस्रादेरपि कान्तात्वादिना तत्त्वापत्तेः । एवमंशोच्यत्वकापुरुषत्वादिज्ञानविरहस्य तथाविधस्य करुणरसादौ । तादृशज्ञानानुत्पादस्तु[13] तत्प्रतिवन्धकान्तरनिर्वचनमन्तरेण दुरुपपादः । स्वात्मनि दुष्यन्ताद्यभेदवुद्धिरेव तथेति चेत्, न । नायके धराधौरेयत्वधीरत्वादेरात्मनि चाधुनिकत्वकापुरुषत्वादेर्वैधर्म्यस्य स्फुटं प्रतिपत्तेरभेदवोधस्यैव दुर्लभत्वात् । किंच– केयं प्रतीतिः ? प्रमाणान्तरानुपस्थानाच्छाव्दीति चेत्, न; व्यावहारिकशव्दान्तरजन्यनायकमिथुनवृत्तान्तवित्तीनामिवास्या[15] अप्यहृद्यत्वापत्तेः, नापि मानसी, चिन्तोपनीतानां तेषामेव पदार्थानां मानस्याः प्रतीतेरस्या वैलक्षण्योपलम्भात् । नच स्मृतिः, तथा प्रागननुभवात् । तस्मादभिधया निवेदिताः पदार्था भावकत्वव्यापारेणागम्यात्वादिरसविरोधिज्ञानप्रतिवन्धद्वारा कान्तात्वादिरसानुकूलधर्मपुरस्कारेणावस्थाप्यन्ते[16] । एवं[17] साधारणीकृतेषु दुष्यन्तशकुन्तलादेशकालवयोऽवस्थाऽऽदिषु पश्चौ[18] पूर्वव्यापारमहिमनि तृतीयस्य भोगकृत्त्वव्यापारस्य महिम्ना निगीर्णयो रजस्तमसोरु[19]द्रिक्तसत्त्वजनितेन[20] निजचित्स्वभावनिर्वृतिविश्रान्तिलक्षणेन साक्षात्कारेण विषयीकृतो भावनोपनीतः साधारणात्मा[21] रत्यादिः स्थायी रसः । तत्र भुज्यमानो रत्यादिः, रत्यादिभोगो वेत्युभयमेव रसः । सोऽयं भोगो[22] विषयसंवलनाद्ब्रह्मास्वादसविधवर्त्तीत्युच्यते । एवं च त्रयोंऽशाः काव्यस्य । 'अभिधा भावना चैव तद्भोगीकृतिरेव च ।' इत्याहुः । मतस्यैतस्य पूर्वस्मान्मताद्भावकत्वव्यापारान्तरस्वीकार एव विशेषः, भोगस्तु व्यक्तिः, भोगकृत्त्वं तु व्यञ्जनादविशिष्टम्, अन्या तु सैव सरणिः । नव्यास्तु–'काव्ये नाट्ये च कविना नटेन च प्रकाशितेषु विभावादिषु व्यञ्जनव्यापारेण दुष्यन्तादौ शकुन्तलादिरतौ गृहीतायामनन्तरं च सहृदयतो-

---

१ आवरणभङ्गस्य विभावादिचर्वणाऽवधित्वादित्यन्वयः । २ विभावादिचर्वणायामित्यर्थः । ३ परब्रह्मास्वादसमाधौ यथा परब्रह्माकारान्तर्वृत्तिस्तथाऽऽलम्वनाकारेति भावः । ४ तस्यालम्बनस्य य आकारस्तद्वृत्तत्स्वरूपाऽसावन्तःकरणवृत्तिरिति तथोक्ता । तदा आलम्वनरूपेणान्तःकरणवृत्तिः परिणमते इति भावः । ५ भिन्ना । ६ तदुभयात्मकत्वम् । शाब्दीत्वमपरोक्षात्मिकात्वं चेति यावत् । ७ स्वसम्वन्धराहित्येनेत्यर्थः । ८ अनाधारस्येत्यर्थः । ९ वेषेऽपीति भावः । १० आलम्वनविभावस्वरूपत्वापत्तेः । ११ उक्तरीत्या । १२ विशेष्यतासम्वन्धावच्छिन्नप्रतियोगिताकस्य । १३ अप्रामाण्यनिश्चयानालिङ्गितागम्यात्वप्रकारकज्ञानानुत्पत्तिरिति भावः । १४ काव्यान्यव्यवहारसाधकशव्दजन्यनायिकानायकवृत्तान्तज्ञानानामित्यर्थः । १५ निरुक्तशव्दाप्रतीतेरपीत्यर्थः । १६ कान्तात्वादिरूपो यो रसानुकूलो धर्म्मस्तस्य पुरस्कारो वैशिष्ट्यं तेन । १७ उक्तव्यापारेणेत्यर्थः । १८ 'सती'ति शेषः । १९ 'सतो'रिति शेषः । २० रजस्तमसी अभिभूयावस्थितेन सत्त्वेन जनितस्तेनेत्यर्थः । २१ सम्वन्धिविशेषानवच्छिन्न इत्यर्थः । २२ असौ च सत्त्वोद्रेकात्प्रकाशते य आनन्दस्तत्स्वरूपानन्यालम्वना या संवित् तत्स्वरूपः । लौकिकसुखानुभवाद् विलक्षण इति यावत् ।

ल्लासितस्य भावनाविशेषरूपस्य दोषस्य महिम्ना कल्पितदुष्यन्तादित्वावच्छादिते स्वात्मन्यज्ञानावच्छिन्ने शुक्तिकाशकल इव रजतखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यशकुन्तलाऽऽदिविषयकरत्यादिरेव रसः ।' अयं च कार्यो दोषविशेषस्य । नाश्यश्च तन्नाशस्य[1] । स्वोत्तरभाविना लोकोत्तराह्लादेन भेदाग्रहात् सुखपदव्यपदेश्यो भवति । स्वपूर्वोपस्थितेन[2] रत्यादिना तदग्रहात्[3] तद्गतित्वेनैकत्वाध्यवसानाद्वा व्यङ्ग्यो वर्णनीयश्चोच्यते । अवच्छादकं दुष्यन्तत्वमप्यनिर्वचनीयमेव, अवच्छादकत्वं च रत्यादिविशिष्टबोधे विशेष्यताऽवच्छेदकत्वम् । एतेन[4] दुष्यन्तादिनिष्ठस्य रत्यादेरनास्वाद्यत्वान्न रसत्वम्, स्वनिष्ठस्य तु तस्य[5] शकुन्तलाऽऽदिभिरतत्सम्बन्धिभिः कथमभिव्यक्तिः ? स्वस्मिन् दुष्यन्ताद्यभेदबुद्धिस्तु बाधबुद्धिपराहतेत्यादिकमपास्तम् । यदपि विभावादीनां साधारण्यं प्राचीनैरुक्तं, तदपि काव्येन शकुन्तलाऽऽदिशब्दैः शकुन्तलात्वादिप्रकारकबोधजनकैः प्रतिपाद्यमानेषु शकुन्तलाऽऽदिषु दोषविशेषकल्पनं विना दुरुपपादम् । अतोऽवश्यकल्प्ये दोषविशेषे तेनैव स्वात्मनि दुष्यन्ताद्यभेदबुद्धिरपि सूपपादा । नन्वेवमपि रतेरस्तु नाम दुष्यन्त इव सहृदयेऽपि सुखविशेषजनकता, करुणरसादिषु तु स्थायिनः शोकादेर्दुःखजनकतया प्रसिद्धस्य कथमिव सहृदयाह्लादहेतुत्वम् । प्रत्युत नायक इव सहृदयेऽपि दुःखजननस्यैव[6]ौचित्यात् । न च सत्यस्य शोकादेर्दुःखादिजनकत्वं क्लृप्तं, न कल्पितस्य; इति नायकानामेव दुःखम्, न सहृदयस्येति वाच्यम्, रज्जुसर्पादेर्भयकम्पाऽऽद्यनुत्पादकताऽऽपत्तेः । सहृदये रतेरपि कल्पितत्वेन सुखजनकताऽनुपपत्तेश्चेति चेत् ? सत्यम्, शृङ्गारप्रधानकाव्येभ्य इव करुणप्रधानकाव्येभ्योऽपि यदि केवलाह्लाद एव सहृदयहृदयप्रमाणकस्तदा कार्यानुरोधेन कारणस्य कल्पनीयत्वाल्लोकोत्तरकाव्यव्यापारस्यैवाह्लादप्रयोजकत्वमिव दुःखप्रतिबन्धकत्वमपि कल्पनीयम् । अथ यद्याह्लाद इव दुःखमपि प्रमाणसिद्धं तदा प्रतिबन्धकत्वं न कल्पनीयम् । स्वस्वकारणवशाच्चोभयमपि भविष्यति । अथ तत्र[7] कवीनां कर्तुं, सहृदयानां च श्रोतुं, कथं प्रवृत्तिः ? अनिष्टसाधनत्वेन निवृत्तेरुचितत्वादिति चेत् ! इष्टस्याधिक्यादनिष्टस्य च न्यूनत्वाच्चन्दनलेपनादाविव प्रवृत्तेरुपपत्तेः । केवलाह्लादवादिनां[8] तु प्रवृत्तिरप्रत्यूहैव । अश्रुपातादयोपि तत्तदानन्दानुभवस्वाभाव्यात्, न तु दुःखात्; अत एव—भगवद्भक्तानां भगवद्वर्णनाकर्णनादश्रुपातादय उपपद्यन्ते । नहि तत्र जात्वपि[9] दुःखानुभवोऽस्ति । न च करुणरसादौ स्वात्मनि शोकादिमद्दशरथादितादात्म्यादेरपि यद्याह्लादस्तदा स्वप्नादौ सन्निपातादौ वा स्वात्मनि तदारोपेऽपि[10] सः[11] स्यात् । आनुभविकं च तत्र केवलं दुःखम्, इतीहापि तदेव युक्तमिति वाच्यम् । अयं हि लोकोत्तरस्य काव्यव्यापारस्य महिमा, यत्प्रयोज्या[12] अरमणीया अपि शोकादयः पदार्था आह्लादमलौकिकं जनयन्ति । विलक्षणो हि कमनीयः काव्यव्यापारज आस्वादः प्रमाणान्तरजादनुभवात् । जन्यत्वं च स्वजन्यभावनाजन्यरत्यादिविषयकत्वम् । तेन रसास्वादस्य काव्यव्यापाराजन्यत्वेऽपि न क्षतिः । शकुन्तलादावगम्यात्वज्ञानोत्पादस्तु स्वात्मनि दुष्यन्ताद्यभेदबुद्ध्या प्रतिबध्यते ।' इत्याहुः । परेतु व्यञ्जनव्यापारस्यानिर्वचनीयख्यातेश्चानभ्युपगमेऽपि प्रागुक्तदोषमहिम्ना स्वात्मनि दुष्यन्तादितादात्म्यावगाही शकुन्तलाऽऽदिविषयकरत्यादिमदभेदबोधो मानसः काव्यार्थभावनाजन्मा विलक्षणविषयताशाली रसः । तेन तत्र न तादृशाह्लादापत्तिः । एवमपि स्वस्मिन्नविद्यमानस्य रत्यादेरनुभवः कथं नाम स्यात् ? मैवम्, न ह्ययं लौकिकसाक्षात्कारो रत्यादेः, येनावश्यं विषयसद्भावोऽपेक्षणीयः स्यात् । अपि तु भ्रमः । आस्वादनस्य रसविषयकत्वव्यवहारस्तु रत्यादिविषयकत्वालम्बनः ।' इत्यपि वदन्ति । एतैश्च[13] स्वात्मनि दुष्यन्तादित्वधर्मितावच्छेदकशकुन्तलादिविषयकरत्यादिवैशिष्ट्यावगाही, स्वात्मत्वविशिष्टे शकुन्तलादिविषयकरत्यादिविशिष्टदुष्यन्तादितादात्म्यावगाही, स्वात्मत्वविशिष्टे दुष्यन्तादित्वशकुन्तलादिविषयकरत्याद्योर्वैशिष्ट्यावगाही वा त्रिविधोऽपि बोधो रसपदार्थतयाऽभ्युपेयः । तत्र 'रतेर्विशेषणीभूतायाः शब्दादप्रतीतत्वाद् व्यञ्जनायाश्च तत्प्रत्यायिकाया अनभ्युपगमाच्चेष्टाऽऽदिलिङ्गकमादौ विशेषणज्ञानार्थमनुमानमभ्युपेयम् । मुख्यतया दुष्यन्तादिगत एव रसो रत्यादिः कमनीयविभावाद्यभिनयप्रदर्शनकोविदे दुष्यन्ताद्यनुकर्तरि नटे समारोप्य साक्षात् क्रियते' इत्येके । मतेऽस्मिन् साक्षात्कारो दुष्यन्तोऽयं शकुन्तलादिविषयकरतिमानित्यादिः प्राग्वद्धर्म्यंशे लौकिकः, आरोप्यांशे त्वलौकिकः । 'दुष्यन्तादिगतो रत्यादिर्नटे पक्षे दुष्यन्तादित्वेन गृहीते विभावादिभिः कृत्रिमैरप्यकृत्रिमतया गृहीतैर्भिन्ने विषयेऽनुमितिसामग्र्या बलवत्त्वादनुमीयमानो

---

१ दोषविशेषनाशस्य । २ दुष्यन्तादौ गृहीतशकुन्तलाऽऽदिरत्यादिना । ३ भेदाग्रहात् । ४ उक्तरीत्या सर्वोपपादनेन । ५ रत्यादेः । ६ सुरतकालिकदन्ताद्याघातस्येवेति शेषः । ७ करुणप्रधानकाव्ये । ८ प्रथममतपातिनाम् । ९ कदाचिदपि किञ्चिदपीति वा भावः । १० शोकादिमद्दशरथादितादात्म्यारोपेऽपीति भावः । ११ आह्लादः । १२ काव्यव्यापारप्रयोज्याः । १३ 'परे तु' इत्युक्तसिद्धान्तपातिभिरिति भावः ।

**विभावादयो वक्ष्यन्ते । सात्त्विकाश्चानुभावरूपत्वान्न पृथगुक्ताः । व्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतो व्यक्तीकृत एव रसः । न तु दीपेन घट इव पूर्वसिद्धो व्यज्यते । तदुक्तं**

---

रसः'इत्यपरे । 'विभावादयः समुदिता रसा'इति कतिपये । 'त्रिषु य एव चमत्कारी स एव रसोऽन्यथा तु त्रयोऽपि न'इति बहवः । 'भाव्यमानो विभाव एव रसः'इत्यन्ये । 'अनुभावस्तथा तथा'इतीतरे । 'व्यभिचार्येव तथा तथा परिणमति'इति केचित् । तत्र'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः'इति सूत्रं तत्तन्मतपरतया व्याख्यायते–'विभावानुभावव्यभिचारिभिः संयोगाद् व्यञ्जनाद्रसस्य चिदानन्दविशिष्टस्थाय्यात्मनः स्थाय्युपहितचिदात्मनो वा निष्पत्तिः स्वरूपेण प्रकाशनम्' इत्याद्ये । 'विभावानुभावव्यभिचारिणां सम्यक्साधारणात्मतया योगाद्भावकत्वव्यापारेण भावनाद्रसस्य स्थाय्युपहितसत्त्वोद्रेकप्रकाशितस्वात्मानन्दरूपस्य निष्पत्तिर्भोगाख्येन साक्षात्कारेण विषयीकृतिः ।'इति द्वितीये । 'विभावानुभावव्यभिचारिणां संयोगाद्भावनाविशेषरूपाद्दोषाद्रसस्यानिर्वचनीयदुष्यन्तादिरत्याद्यात्मनो निष्पत्तिरुत्पत्तिः ।'इति तृतीये । 'विभावादीनां संयोगाज् ज्ञानाद्रसस्य ज्ञानविशेषात्मनो निष्पत्तिरुत्पत्तिः'इति चतुर्थे । 'विभावादीनां सम्बन्धाद्रसस्य रत्यादेर्निष्पत्तिरारोपः ।' इति पञ्चमे । 'विभावादिभिः कृत्रिमैरप्यकृत्रिमतया गृहीतैः संयोगादनुमानाद्रसस्य रत्यादेर्निष्पत्तिरनुमितिर्नटादौ "पक्षे'इति शेषः ।' इति षष्ठे । 'विभावादीनां त्रयाणां संयोगात् समुदायाद्रसनिष्पत्ती रसपदव्यवहारः ।'इति सप्तमे । 'विभावादिषु सम्यग्योगाच्चमत्कारात्'इत्यष्टमे । तदेवं पर्य्यवसितास्त्रिपु सूत्रविरोधः । विभावानुभावव्यभिचारिणामेकस्य तु रसान्तरसाधारणतया नियतरसव्यञ्जकताऽनुपपत्तेः । सूत्रे मिलितानामुपादानम् । एवं च–"प्रामाणिके मिलितानां व्यञ्जकत्वे यत्र क्वचिदेकस्मादेवासाधारणाद्रसोद्बोधस्तत्रेतरद्वयमाक्षेप्यम् । अतो नैकान्तिकत्वम् । इत्थं नानाजातीयाभिः शेमुषीभिर्नानारूपतयाऽवसितोऽपि मनीषिभिः परमाह्लादाविनाभावितया प्रतीयमानः प्रपञ्चेऽस्मिन् रसो रमणीयतामावहतीति निर्विवादम् ।"इति ।

अथ स्वाभिमतम्मतं दर्शयन् कारिकार्थं सुगमयति–**विभावादय** इत्यादिना ।

**विभावादयो** विभाव आदौ येषां ( विभावानुभावसञ्चारिणाम् ) ते तथोक्ताः । विभावानुभावसञ्चारिण इत्यर्थः । **वक्ष्यन्ते** ६५ रत्याद्युद्बोधका–इत्यादिनेति शेषः । 'ननु विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः ।' इत्यादिना 'स्तम्भः स्वेदश्च रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥' इत्यादिना च भरताद्यभिहितानामपि सात्त्विकभावानामपि रसघटकत्वाद्रसघटकत्वेन प्रतिपादनीयत्वेऽपि कथं नैतेषां विहितं प्रतिपादनमिति चेदेवमित्याह–**सात्त्विकाः** सत्त्वेनेमे निष्पन्ना इति तथोक्ताः । **च** पुनः । **अनुभावरूपत्वाद**नुभावो रूपं येषां तेषां भावस्तत्त्वं तस्मात्तथोक्तात् । **पृथक्** 'अनुभावेभ्य' इति शेषः । **न** नैव । **उक्ताः** । इति । **व्यक्तः** 'विभावेनानुभावेन सञ्चारिणा च सम्भूय' इति शेषः । **दध्यादिन्यायेन** दध्यादिसादृश्यहेतुकेन मार्गेणेति भावः । **रूपान्तरपरिणतो** रूपान्तरमन्यत्स्वस्माद्भिन्नं रूपं परिणतं परिणमनं यस्य सः । आहिताग्न्यादित्वात्परनिपातः । यद्वा–रूपान्तरं परिणतः प्राप्त इति तथोक्तः । **व्यक्तीकृतो**ऽव्यक्तोऽपि व्यक्तः कृतः । **एव** । 'रत्यादि' रिति शेषः । **रसो** रसपदवाच्यः । अयम्भावः–यथा पयःप्रभृति तक्रादिसंयोगाद्रूपान्तरं प्रति नीतं दध्यादिव्यपदेश्यं भवति, तथा सहृदयहृदयं विनिविष्टः प्राग्वासनारूपो रत्यादिर्नाम स्थायी भावो विभावादिसंयोगाद्रूपान्तरं प्रति नीतो रस इति व्यपदिश्यते । इति । 'व्यक्तीकृत एवे' त्येवकारव्यवच्छेद्यार्थं दर्शयति–**न** । **तु** पुनः । **दीपेन** दीपकप्रकाशद्वारेत्यर्थः । **पूर्वसिद्धः** पूर्वं सिद्धः । **घटः** । **इव** । 'रस' इति शेषः । **व्यज्यते** व्यञ्जनया प्रतिबोध्यते इति भावः । ननु 'दध्यादिन्यायेन

---

१ 'भाव्यमान' इति शेषः । २ 'रस' इति शेषः ? ३ तथा भाव्यमानोऽनुभाव एव रसरूपतया परिणमतीतीतरेषां सिद्धान्त इति भावः । ४ 'भाव्यमान'इति शेषः । ५ रसरूपतयेत्यर्थः । ६ एवमनेकजातीयेषु मतेष्विति शेषः । तत्र तेष्विति भावः । ७ प्रथममभिहितेऽभिनवगुप्तमते इत्यर्थः । ८ भट्टनायकमते । ९ नव्यमते १० परेषां मते । ११ एकेषां मते । १२ अपरेषां मते । १३ कतिपयानां मते । १४ बहूनां मते । १५ 'अन्येषामितरेषां केषाञ्चिचे'ति शेषः । १६ 'मध्ये'इति शेषः । १७ सिद्धान्तस्वरूपत्वम् । १८ बुद्धिभिः । १९ मनीषिभिर्बुद्धिमद्भिरवसितो निश्चितोऽपीत्यर्थः ।

लोचनकारैः—"रसाः प्रतीयन्ते इति 'ओदनं पचती' तिवद् व्यवहारः ।" इति । अत्र च–रत्यादिपदोपादानादेव स्थायित्वे प्राप्ते पुनः स्थायिपदोपादानं रत्यादीनामपि रसान्तरेष्वस्थायित्वप्रतिपादनार्थम् । ततश्च हासशोकक्रोधादयः शृङ्गारादौ व्यभिचारिण एव । तदुक्तम्–'रसावस्थः परम्भावः स्थायितां प्रतिपद्यते ।' इति ।

---

रूपान्तरं प्राप्तो रत्यादिरेव रस इति स्वीक्रियते चेत् 'रसाः प्रतीयन्ते' इति व्यवहारः किम्मूलः ? न च 'प्रतीयन्ते परिणमन्ती'ति सचेतसा वक्तुं शक्यते, सर्वानुभवसिद्धस्यार्थस्यानपह्नवीयत्वात् । इति चेत् ? अत्रैवमभिहितमाचार्य्यैरित्याह–**तद्** यदस्माभिरुक्तं 'दध्यादिन्यायेन रूपान्तरपरिणत एव रस' इतीत्यर्थः । **लोचनकारै**र्लोचनं तत्सादृश्येन तदाख्यया प्रसिद्धं ध्वन्यालोकस्य व्याख्यारूपं ग्रन्थं कुर्वन्तीति तैस्तथोक्तैः । अभिनवगुप्ताचार्य्यैरिति भावः । एतेनैतेषां मोहतमोपहर्तृत्वं सूचितम् । **उक्तं** कथितं प्रतिपादितमिति भावः । '**रसाः** शृङ्गारादयः । **प्रतीयन्ते** ।' **इती**त्थम्भूतः । **व्यवहारो**ऽभिधानप्रवृत्तिरिति भावः । '**ओदनं** भक्तम् । 'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिविः ।' इत्यमरः । **पचति** विक्लित्तिं नयतीति भावः । **इतिवदि**तिव्यवहारादौपचारिक इति भावः । अयम्भावः–पाकसम्पर्केण रूपान्तरतया परिणतानां तण्डुलानामोदनमिति सञ्ज्ञा, तद्वतश्च यद्यपि पाकक्रियासम्बन्धेन रूपान्तरतया परिणतत्वं न सम्भवतीति, तथाऽपि तण्डुलान् विक्लित्त्या रूपान्तरपरिणतान् सम्पादयन्नोदनसञ्ज्ञाभाजः सम्पादयतीत्यर्थकं 'तण्डुलान् पचती'त्यनभिधाय यथा 'ओदनं पचती'ति व्यवहारस्तथा प्रतीतिसम्बन्धेन रूपान्तरे परिणतानां सामाजिकवासनारूपाणां रत्यादीनां रसव्यपदेशार्हत्वेऽपि 'सामाजिकवासनामया रत्यादयः प्रतीयन्ते' इत्यनभिधाय 'रसाः प्रतीयन्ते' इति व्यवहार उपचारेण । यथोक्तं लोचनकारैः–'तन्निदानभूतायाः सहृदयसंवाद्युपकृताया विभावादिसामग्र्या लोकोत्तरत्वाद्रसाः प्रतीयन्ते इति ओदनं पचतीतिवद् व्यवहारः प्रतीयमान एव हि रसः ।' **इति** । अत्राहुस्तर्कवागीशाः–'ननु ओदनं पचतीत्यत्र पाकात् पूर्वमोदनस्यानवस्थाने क्रियानिमित्तत्वाभावेन कर्म्मत्वं न स्यात् । अत ओदनपदस्य तण्डुलपदे लक्षणाऽवश्यमङ्गीकर्त्तव्येत्यसिद्धो दृष्टान्त इति चेत् ? उद्भाव्यते तर्हि 'कटं करोती'ति दृष्टान्तो द्रष्टव्यः । 'क्रियानिमित्तं हि कारक' मिति प्रवादस्य प्रायिकत्वमिति भावः । यद्यपि रत्यादीनां नायकादिनिष्ठतया पूर्वसिद्धत्वमस्त्येव, तथाऽपि सामाजिकनिष्ठतया ज्ञानात् पूर्वमिहासत्त्वं विवक्षितम् । यथा तण्डुलानां पाकात्पूर्वमोदनत्वं नास्ति तथा रत्यादीनामपि प्रत्ययात् पूर्वं रसत्वं नास्तीत्यर्थः ।' इति । वस्तुतस्तु–यथा 'ओदनं पचती' त्यादौ ओदनादिपदे तण्डुलादिपदलक्षणा तथा 'रसाः प्रतीयन्ते'त्यादावपि रसादिपदे रत्यादिपदलक्षणेति दृष्टान्तस्य सिद्धत्वम् । नच रत्यादीनां नायकादिनिष्ठत्वमात्रेण रसत्वं, किन्तु सामाजिकनिष्ठत्व एवेति रत्यादीनां रूपान्तरे परिणततया रसपदव्यपदेशार्हत्वेऽपि सम्पन्ने 'रसाः प्रतीयन्ते' इति व्यवहार 'ओदनं पचती'ति व्यवहारवदुपचारानुगृहीत इति न काऽपि विप्रतिपत्तिः । वक्ष्यमाणया २०५ 'रतिर्हासश्च..' इति कारिकया रत्यादीनां स्थायित्वे सम्पाद्ये किमिति पुनरिह स्थायित्वेन निर्देश इति चेदेवमित्याह–**अत्र** । **च** । **रत्यादिपदोपादानात्** 'रत्यादि' रिति पदस्योपादानात् । **एव** । **स्थायित्वे** । **प्राप्ते** सिद्धे । **पुनः** । **स्थायिपदोपादानं** स्थायिपदेनोपादानं विशेषणमिति भावः । **रत्यादीनाम्** । **अपि** । **रसान्तरेषु** भिन्नेषु रसेषु । **अस्थायित्वप्रतिपादनार्थम्** । अयम्भावः–रत्यादयः शृङ्गारादिषु स्थायिन एव, अथाप्येषां स्थायित्वेन निर्देशो विफलो मा भूदिति प्रतिपादयति यस्य यो हि स्थायी स एव रसतामेति नान्य इति । तदेवाह-**ततस्**तस्माद्रत्यादीनामस्थायित्वप्रतिपादनादिति यावत् । **च**ानन्तरम् । **हासशोकक्रोधादयो** हास्यकरुणरौद्रादीनां स्थायिभूता अपी'ति शेषः । **शृङ्गारादौ** शृङ्गारकरुणहासादावित्यर्थः । **व्यभिचारिणः** । **एव** न पुनः स्थायिन इति भावः । एतदेव प्राचां संवादेन द्रढयति–**तद्** 'यदुक्त' मिति शेषः । **उक्त**माचार्यै' रिति शेषः । **रसावस्थो** रसोऽवस्था यस्य तादृशः । **परं** केवलम् । एवेत्यर्थो वाऽव्ययस्यानेकार्थत्वात् । तदाहुस्तर्कवागीशाः-'परमिति मान्तमव्ययमेवकारार्थ' मिति । **भावो** रत्यादिरूप इति भावः । **स्थायितां** स्थायिस्वरूपत्वम् । **प्रतिपद्यते** । **इति** । अत्रेदं निष्कृष्टम्–वक्ष्यमाणैर्विभावानुभावसञ्चारिभिश्च सम्भूय सहृदयहृदये वासनारूपेण विनिविष्टो रत्यादिः स्थायी भावो दध्यादिवद्रूपान्तरं प्राप्तो रस इत्युच्यते । इति ।

---

१ अत्र 'तु'इत्यधिकः पाठः ।

**अस्य स्वरूपकथनगर्भं आस्वादप्रकारः कथ्यते-**

**३५ सत्त्वोद्रेकादखण्डस्व- प्रकाशानन्दचिन्मयः ।**
**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥ २५ ॥**
**लोकोत्तरचमत्कार-प्राणः कैश्चित्प्रमातृभिः ।**
**स्वाकारवदभिन्नत्वे-नायमास्वाद्यते रसः ॥ २६ ॥**

**'रजस्तमोभ्यामस्पृष्टं मनःसत्त्वमिति स्मृतम् ।' इत्युक्तप्रकारो बाह्यमेयाविमुखताऽऽपादकः**

---

अस्य स्वरूपनिरूपणं पुरस्कृत्यास्वादप्रकारं निरूपयितुं प्रतिजानीते- **अस्ये**त्यादिना ।

**अस्य** रसस्य । **स्वरूपकथनगर्भः** स्वरूपकथनं गर्भेऽन्तर्यस्य स इति तथोक्तः। **आस्वादप्रकार** आस्वादस्यास्वादनस्य प्रकारो भेदो रीतिर्वेति तथोक्तः । 'प्रकारः कथ्यते रीतौ भेदसादृश्ययोरपि ।' इति माधवः । **कथ्यते-** ३५ **सत्त्वोद्रेकादि**त्यादिनेति शेषः ।

३५ **कैश्चित्** कतिपयैर्न तु सर्वैरिति भावः । **प्रमातृभिर्यथार्थं** विद्वद्भिः । प्रमाबुद्धिशालिभिरिति भावः । ( कर्तृभिः ) । **अयं** 'विभावादिसंयोगात्सहृदयहृदये वासनारूपेण विनिविष्टो रत्यादिरेव परिणतो रस' इति निर्दिष्टस्वरूपः, अत एव सहृदयहृदयप्रमाणकतया सिद्ध इति भावः । **सत्त्वोद्रेका**त्सत्त्वस्योद्रेक उल्लासविशेषस्तस्मात् । तं निमित्तीकृत्येति यावत् । अत्र ल्यपो लोपे पञ्चमी । **अखण्डस्वप्रकाशानन्दचिन्मयो**ऽखण्डो धाराप्रवाहवदनवच्छिन्नोऽसौ स्वप्रकाशः स्वयं प्रकाशोऽसावानन्दः समस्तक्लेशोपरतिपुरःसरं पुण्यविशेषसम्पत्तिफलकः काव्यव्यापारभावनामात्रजन्माऽऽह्लादविशेष इति, स चासौ चिन्मयश्चित्स्वरूप इति तथोक्तः । चिच्च विभावादिसंवित् । यद्वा-आनन्देन चित् संविदानन्द ( कृता ) संविदित्यानन्दचित् । तन्मय आनन्दचिन्मय इति । 'विशेषणं विशेष्येण बहुलम् ।' २ । १ । ५७ इति समासः । विशेषणविशेष्यभावश्च कामचारादिति न दोषः । **वेद्यान्तरस्पर्शशून्यो**ऽन्यद्भावनाविशेषोपस्थाप्याद्व्यतिरिक्तं वेद्यं विषय इति वेद्यान्तरं, तस्य स्पर्शस्त्वचा साक्षात्कारो लक्षणयाऽनुभवस्तेन शून्यो रिक्त इति तथोक्तः । भावनाविशेषोपस्थाप्यमात्रतया भावनाविशेषोपस्थाप्याद्विषयाद् व्यतिरिक्तस्य विषयस्यानुभवाऽभूमिरित्यर्थः । **ब्रह्मास्वादसहोदरो** ब्रह्मास्वादस्य ब्रह्मानन्दानुभवस्य सहोदरः सदृशत्वात्सविधवर्त्तित्वाद्वेति तथोक्तः । अत एवाहुः-'ब्रह्मास्वादे ब्रह्ममात्रं प्रकाशते, रसास्वादे तु विभावाद्यपीति भेदः ।' इति । इदमुक्तम्-ब्रह्मास्वादो निर्विकल्पकः, अयं पुनः सविकल्पक इति । यद्वा-यत्र ब्रह्मास्वादस्तत्रैव रसास्वाद इति तत्सहोदरत्वमेतस्येति बोध्यम् । **लोकोत्तरचमत्कारप्राणो** लोकोत्तरचमत्कारस्य प्राणो जीवनमिति, लोकोत्तरचमत्कारः प्राणा यस्य यस्मिन्वेति वा तथोक्तः । **रसः** ( कर्म प. ) **स्वाकारव**त्स्वस्वरूप इवेत्यर्थः । यथा स्वस्माद्भिन्नोऽपि देहोऽध्यासवशाद्-'अयं गौरः, अहं श्याम' इतिभेदाज्ञानं तथेति भावः । यद्वा-स्वस्य ज्ञानस्यैवाकारो घटादिस्तस्मादभिन्नोऽपि तद्विषयो बाह्यैरङ्गीक्रियते यथा तथेत्यर्थः । अत्रेदं बोद्धव्यम्-स्वयंवेदनं तावन्मन्तव्यम्, अन्यथा जगदान्ध्यं प्रसज्येत; तथा च-स्वभिन्नग्राह्यविरहात्तत्तद्रूपा बुद्धिः स्वयमेव स्वप्रकाशिका, प्रकाशवत् । तदुक्तम्- 'नान्योऽनुभाव्यो बुद्ध्याऽस्ति तस्या नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्य्यात्स्वयं सैव प्रकाशते ॥' इति । अस्य चायमर्थः-'बुद्ध्याऽन्यो व्यतिरिक्तोऽनुभाव्यो नास्ति, तस्या बुद्धेरपरोऽनुभवो ( ऽपि ) न, ग्राह्यं विषयजातं, ग्राहकं पुनः स्वयंवेदनापरनामधेयं बुद्धितत्त्वं तयोर्वैधुर्य्यादभावात्सैव बुद्धिः स्वयं प्रकाशते इति ॥' इति । **अभिन्नत्वेन** । **आस्वाद्यते**ऽनुभाव्यत इत्यर्थः ॥२५-२६॥

अथ कारिकायां कठिनांशं सुगमयति-**'रजस्तमोभ्याम्'**...इत्यादिना ।

**'रजस्तमोभ्यां** रजसा तमसा चेत्यर्थः । रजस्तावदनुत्कृष्टो मानसो धर्मः, तमः पुनर्निकृष्टतम इति बोध्यम् । **अस्पृष्टं** न स्पृष्टं सम्पृक्तमिति तथोक्तम् । **मनश्चि**त्तमुपचारात्तदीयो धर्म्म इति यावत् । **सत्त्वम्** । **इती**त्येवमित्यर्थः । 'इहे'ति पाठान्तरम् । इह काव्यशास्त्रेऽस्माकं मते वा । **स्मृतम्** । 'उच्यते'इति पाठान्तरम् । 'वचिस्वपियजादीनां किति ।' ६।१।१५ इति सम्प्रसारणम् ।' **इत्युक्तप्रकारः** । 'शुद्धोदन्यादिभि'रिति शेषः । **बाह्यमेयविमुखताऽऽपादको** बाह्यानि यानि मेयानि वेद्यानि विषया इति यावत्, तेभ्यो विमुखताया आपादकः । विमुखता च ज्ञानानुकूल-

कश्चनान्तरो धर्म्मः सत्त्वम्, तस्योद्रेको रजस्तमसी अभिभूयाविर्भावः। तत्र हेतुस्तथाविधालौकिककाव्यार्थपरिशीलनम्। 'अखण्ड' इति, 'एक एवायं विभावादिरत्यादिप्रकाशसुखचमत्कारात्मकः।' अत्र हेतुं वक्ष्यामः। स्वप्रकाशत्वाद्यपि वक्ष्यमाणरीत्या। चिन्मय इति स्वरूपार्थे मयट्। चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायः, तत्प्राणत्वं चास्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तम्। तदाह धर्म्मदत्तः स्वग्रन्थे–

'रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते। तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः॥

तस्मादद्भुतमेवाह कृती नारायणो रसम्।' इति।

---

व्यापाराभावः। ज्ञानानुकूलव्यापाराश्चेन्द्रियान्तःकरणयोः संयोगः। **कश्चन। आन्तरो**ऽन्तर्भव इति तथोक्तः। **धर्म्मः। सत्त्वम्।** 'इति स्मृत'मिति शेषः। **तस्य** निरुक्तलक्षणस्य मानसिकस्य धर्म्मविशेषस्य। **उद्रेकः।** 'नामे'ति शेषः। **रजस्तमसी** तन्नामानौ मानसधर्म्मौ। **अभिभूय** तिरस्कृत्यापसार्येति यावत्। **आविर्भावः** स्वस्वरूपेणावस्थानमित्यर्थः। प्रतिबन्धो भावेन स्वकार्यक्षमतयाऽवस्थानमिति भावः। **तत्र** तस्मिन् सात्त्वोद्रेके। **तथाविधालौकिककाव्यार्थपरिशीलनं** तथाविधं सत्त्वोद्रेकानुकूल्ये प्रयोजकत्वेन वर्तमानं यदलौकिकस्य काव्यार्थस्य(विभावादेः) परिशीलनमत्यन्ताभिनिवेशः। **हेतुः। अखण्डः। इति।** 'अस्ये'ति शेषः। **एकः** खण्डत्वानवच्छिन्नः। **एव** सत्यपि विभावादेः प्रत्येकं खण्डत्वे समूहालम्बनविधया खण्डताया व्याहतत्वादिति भावः। **अयं** 'रस'इति शेषः। **विभावादिरत्यादिप्रकाशसुखचमत्कारात्मको** विभावादयश्च रत्यादयश्चेति तेषां प्रकाशः संवित् स एव सुखचमत्कारः सुखस्वरूपश्चमत्कार इति, स आत्मा स्वरूपं यस्येति तथोक्तः। 'इत्यर्थ'इति शेषः। **अत्र** रसस्याखण्डत्वे। **हेतुं** कारणम्। **वक्ष्यामः** ६४ रत्यादिरित्यादिनेति शेषः। **स्वप्रकाशत्वादि** स्वप्रकाशत्वं चिन्मयत्वं चेत्यर्थः। **अपि। वक्ष्यमाणरीत्या** वक्ष्यमाणा ६४ रत्यादिरित्यादिना प्रतिपादिष्यमाणाया रीतिस्तयेति तथोक्तया। 'बोध्य'मिति शेषः। **'चिन्मय'इत्यत्रे**'ति शेषः। **स्वरूपार्थे** स्वार्थे। 'न तु 'अन्नमय'इत्यादिवत्प्राचुर्यार्थे'इति शेषः। **मयट्** 'मयट्च' ४।३।८२ इति विधीयमानः प्रत्यय इति भावः। **चमत्कारस्तत्पदार्थ** इत्यर्थः। **चित्तविस्ताररूपश्चित्तस्य** विस्तारोऽलौकिकार्थाकलनेन ज्ञानधाराजनने दीर्घप्रायस्त्वमिति, दृष्टहेतुभ्योऽसम्भवित्वज्ञानेन हेत्वनुसन्धाने व्यापारे विस्फार इति वा, स एव रूपं यस्येति तथोक्तः। **विस्मयापरपर्य्यायो** विस्मयोऽपरः पर्य्यायो नाम यस्य सः। **तत्प्राणत्वं** तस्य चमत्कारस्य प्राणः प्राणस्वरूपस्तस्य भावस्तत्त्वमिति तथोक्तम्। **च। अस्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादै**रस्माकं वृद्धप्रपितामहास्ते एव सहृदयगोष्ठीगरिष्ठा इति, ते च ये कविपण्डितमुख्या इति, ते चामी श्रीमन्नारायणपादा इति तैस्तथोक्तैः। सहृदयानां गोष्ठी सभेति, तत्र गरिष्ठा अत्यन्तम्माननीया इति। कवयश्च पण्डिताश्चेति कवयश्चामी पण्डिता इति वा, तेषु मुख्याः। सहृदया मार्म्मिकाः। (कवयः प्रबन्धारः प्रतिभाचमत्कारिणो वा। पण्डिताः शास्त्राध्ययनजाततत्तत्त्वावगमाः।) गौरवार्थं बहुवचनम्। **उक्तम्। तद्** यत्प्रोक्तं तदिति तस्मादिति वाऽर्थः। **धर्म्मदत्तः। स्वग्रन्थे। आह-'रसे...'** इति।

**सर्वत्र** सर्वस्मिन्। **अपि। रसे** रसपदार्थे। **सारो** वास्तविकं तत्त्वम्। 'सारो बले स्थिरांशे च' इत्यमरः। **चमत्कार** आस्वादविशेषः। **अनुभूयते** विचारदृष्ट्या प्रतिपद्यते। 'सहृदयै' रिति शेषः। यद्वा–रस आस्वादे। सार आस्वादात्मतया व्यपदेश्यः। चमत्कारोऽलौकिकतया वाचामविषय आह्लादविशेषः। स च–सर्वत्र सर्वेषु। अपि। 'आस्वादनीयेषु पदार्थेषु' इति शेषः। किं पुनः शृंगारादौ रस इत्यर्थः। अनुभूयते। इति बोध्यम्। **तच्चमत्कारसारत्वे** तस्य (रसस्य) चमत्कारसारत्वमिति तस्मिन्। चमत्कारः सारः सारत्वेन स्थितो यत्र, तस्य भावस्तत्त्वम्। यद्वा–चमत्कार एव सारत्वं, तस्य भावस्तत्त्वमिति। यद्वा–तत्तस्मात् कारणादित्यर्थः। चमत्कारसारत्वे चमत्कारस्य (रसे) तस्य भावस्तत्त्वं सत्। 'सती'ति शेषः। इति बोध्यम्। **सर्वत्र** सर्वेषु साहित्यशास्त्रेषु रसेषु वा। **अपि। अद्भुतो** विस्मयोऽनिर्वचनीय इति यावत्। **रसः।** (इदमुक्तम्–रसश्चमत्कारमात्राजीव्य इति साहित्यशास्त्रेषु रसजातस्य श्रृंगारादौ रसे सत्त्वं तदद्भुतमिति वा।) इति। केचित्तु–'सर्वत्र अव्ययपदमिदम्।' सर्वे इत्यर्थः। अपि।

**कैश्चिदिति प्राक्तनपुण्यशालिभिः** । यदुक्तं–'पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम् ।' इति । यद्यपि 'स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः ।' इत्युक्तदिशा रसस्यास्वादानतिरिक्तत्वम्, तथाऽपि ' रसः स्वाद्यते ' इति काल्पनिकं भेदमुररीकृत्य, कर्म्मकर्त्तरि वा प्रयोगः । तदुक्तम्–' रस्यमानतामात्रसारत्वात्प्रकाशशरीरादनन्य एव हि रसः ' इति । एवमन्यत्राप्येवंविध-

---

रसः शृङ्गारादिः । अद्भुत इत्याहुः । तस्माद्रसजातस्याद्भुतत्वादित्यर्थः । **नारायणः** । **कृती** विद्वान् । 'धीमाञ्सूरिः कृती कृष्टिः' इत्यमरः । **अद्भुतम्** । **एव** नत्वन्यविधम् । **रसं** शृङ्गारादिम् । **आह** । अत्राहुस्तर्कवागीशाः–'वस्तुतस्तु रत्याद्यंशस्यानुभूयमानत्वे यथायथं शृङ्गारादिव्यपदेशः, तस्य ( रत्याद्यंशस्य ) अननुभावेऽद्भुतव्यपदेशः ।' इति । अन्ये तु–'अपि सर्वेषु रसेषु विलक्षणैवास्वादप्रतीतिरिति भवतु नाम सर्वेषामेव तत्तेषामद्भुतत्वादद्भुतव्यपदेशः । प्रतीतिश्चैषा सत्यपि स्वगतत्वेन परगतत्वेन च विकल्पास्पदमपरिहार्य्येति पिशाचवदकथनीया, अथ च–यथा प्रतीत्यन्तरेण प्रतीतिमात्रतया विलक्षणत्वासद्भावेऽपि प्रात्यक्षिक्यानुमानिक्यागमोत्पन्ना प्रतिभानकृता योगिप्रत्यक्षोत्पन्ना, तथा चर्वणास्वादनभोगाद्यपरनामधेयोपायवैलक्षण्याद्विलक्षणा ।' इत्याहुः । **इति** ।

**कैश्चिदिति** 'अस्य पदस्ये'ति शेषः । **प्राक्तनपुण्यशालिभिः** । इत्यर्थः । अयम्भावः–अत्र प्राक्तनपदं फलाभिमुखं कर्म्म, एतेन सञ्चितक्रियमाणयोर्निरासः । तथा च–फलाभिमुखपुण्यशालिभिरिति कैश्चिदितिपदस्यार्थ इति निष्कृष्टम् । इति । एतत्प्रमाणयति–**यद्** यतः । **उक्तम्** । किमित्याह–'**पुण्यवन्तः** पुण्यं प्रकृष्टं प्रारुब्धमस्त्येषामिति ते तथोक्ताः । **योगिवद्** योगिनः समाहितचेतसस्तद्वत् । तुल्यार्थे वतिः । **रससन्ततिं** रसस्य शृङ्गारादेर्ब्रह्मानन्दस्य वा सन्ततिरव्यवधानेनास्वादपरम्परेति तां तथोक्ताम् । 'रसो वै सः' इत्यादिः श्रुतिः । **प्रमिण्वन्ति** निश्चिन्वन्त्यनुभवन्तीति यावत् ।' **इति** । ननु को नाम रसः 'रस्यत आस्वाद्यते स्वयमेवेति रस' इति चेत् ? 'कैश्चित्.. अयमास्वाद्यते' इति कथं रसास्वादयोः कर्म्मक्रियाभावेनोल्लेखो भेदग्रहणमन्तरा सम्भवेत् ? यदि तु–'रस्यते आस्वाद्यते प्रमातृविशेषैरिति रस' इति, तर्हि रसास्वादयोः पार्थक्यमन्तरा कथं ? पार्थक्ये च को नाम रसः को वाऽऽस्वाद इति सन्देहदैर्घ्यमित्याशङ्क्य समाधत्ते–**यद्यपि** । '**काव्यार्थसम्भेदात्** काव्यस्यार्थास्तात्पर्य्याणि विभावादय इति यावत्, तेषां सम्भेदः सङ्गः परिशीलनजन्मैकात्म्यमिति यावत्, तस्मात्तथोक्तात् । 'सम्भेदा'दित्यत्र 'संवेदा' दिति 'सम्मेला' दिति वा पाठान्तरम् । संवेदात्परिशीलनादिति, सम्मेलान्मेलनादित्यर्थश्च । **आत्मानन्दसमुद्भव** आत्मनो बुद्धेरानन्दो विषयान्तरास्फुरणेनानन्दात्मनाऽवस्थानं तस्मात्समुद्भवतीति तथोक्तः । **स्वाद** आस्वादः । यद्वा–काव्यार्थसम्भेदात्, ( यः ) स्वाद आनन्दानुभवः ( सः ) आत्मानन्दसमुद्भव आत्मनः स्वस्वरूपस्यानन्दो वासनापरित्यागपुरःसरं भेदाग्रहेणानुभवविशेषस्तस्मात्समुद्भवतीति तथोक्तः, तदात्मेति यावत् । 'तत्र को मोहः, कः शोकः' इत्याद्युक्त आत्मज्ञानानन्दः काव्यार्थसम्भेदात्प्रतिपद्यमानः स्वादश्च न पृथगिति भावः ।' **इत्युक्तदिशे**त्युक्तमार्गप्रदर्शनेन । **रसस्य** शृङ्गारादेः । **आस्वादानतिरिक्तत्व**मास्वादाभिन्नत्वम् । उक्तं प्रतिपादितमिति भावः । **तथाऽपि** तथा सति 'रसः स्वाद्यते' इति वक्तुमयुक्तत्वेऽपीति भावः । '**रसः** शृङ्गारादिः । **स्वाद्यते** 'कैश्चि' दिति शेषः ।' **इति** । **प्रयोगः** । **काल्पनिकं** कल्पनासिद्धं न तु वास्तविकमित्यर्थः । **भेदं** भिन्नत्वम् । **उररीकृत्या**ङ्गीकृत्य । 'ज्ञेय' इति शेषः । **वाऽथवा** । **कर्म्मकर्त्तरि** कर्म्मैव ( विवक्षया ) कर्त्तेति तत्र । 'सती'ति शेषः । 'ज्ञेय' इति शेषः । अयम्भावः–'कैश्चित्.. अयमास्वाद्यते' इति प्रयोगो रसास्वादयोः काल्पनिकं भेदमनुसृत्य क्रियते, 'रसः स्वाद्यते स्वयमेव' इति प्रयोगः पुनः कर्मणः कर्त्तृत्वविवक्षया । **इति** । **तद्** 'यत्समाधानं दत्त'मिति शेषः । **उक्त**माचार्य्यै' रिति शेषः । किमित्याह–'**प्रकाशशरीरा**त्प्रकाशः संवेदनं स एव शरीरं शरीरवत्स्वरूपं यस्य तस्मात् तथोक्तात् । **रस्यमानतामात्रसारत्वा**द्रस्यते आस्वाद्यत इति रस्यमानस्तस्य भावस्तत्ता, सैवेति रस्यमानतामात्रं, तदेव सारः सामाजिकैरुपादेय आह्लादहेतुर्यस्य तस्य भावस्तत्त्वं तस्मात्तथोक्तात् । 'हेतो' रिति शेषः । **अनन्योऽभिन्नः** । **एव** । **हि** । **रसः** । अत्र 'एव ही' त्यव्ययद्वयं तस्य सजातीयविजातीयभेदं

**कश्चनान्तरो धर्म्मः सत्त्वम्, तस्योद्रेको रजस्तमसी अभिभूयाविर्भावः। तत्र हेतुस्तथाविधालौकिककाव्यार्थपरिशीलनम्। 'अखण्ड' इति, 'एक एवायं विभावादिरत्यादिप्रकाशसुखचमत्कारात्मकः।' अत्र हेतुं वक्ष्यामः। स्वप्रकाशत्वाद्यपि वक्ष्यमाणरीत्या। चिन्मय इति स्वरूपार्थे मयट्। चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायः, तत्प्राणत्वं चास्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तम्। तदाह धर्म्मदत्तः स्वग्रन्थे–**

**'रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते। तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः॥**

**तस्मादद्भुतमेवाह कृती नारायणो रसम्।' इति।**

---

व्यापाराभावः। ज्ञानानुकूलव्यापाराश्चेन्द्रियान्तःकरणयोः संयोगः। **कश्चन**। **आन्तरो**ऽन्तर्भव इति तथोक्तः। **धर्म्मः**। **सत्त्वम्**। 'इति स्मृत'मिति शेषः। **तस्य** निरुक्तलक्षणस्य मानसिकस्य धर्म्मविशेषस्य। **उद्रेकः**। 'नामे'ति शेषः। **रजस्तमसी** तन्नामानौ मानसधर्म्मौ। **अभिभूय** तिरस्कृत्यापसार्येति यावत्। **आविर्भावः** स्वस्वरूपेणावस्थानमित्यर्थः। प्रतिवन्धो भावेन स्वकार्यक्षमतयाऽवस्थानमिति भावः। **तत्र** तस्मिन् सात्त्वोद्रेके। **तथाविधालौकिककाव्यार्थपरिशीलनं** तथाविधं सत्त्वोद्रेकानुकूल्ये प्रयोजकत्वेन वर्तमानं यदलौकिकस्य काव्यार्थस्य(विभावादेः) परिशीलनमत्यन्ताभिनिवेशः। **हेतुः**। **अखण्डः**। **इति**। 'अस्ये'ति शेषः। **एकः** खण्डत्वानवच्छिन्नः। **एव** सत्यपि विभावादेः प्रत्येकं खण्डत्वे समूहालम्बनविधया खण्डताया व्याहतत्वादिति भावः। **अयं** 'रस'इति शेषः। **विभावादिरत्यादिप्रकाशसुखचमत्कारात्मको** विभावादयश्च रत्यादयश्चेति तेषां प्रकाशः संवित् स एव सुखचमत्कारः सुखस्वरूपश्चमत्कार इति, स आत्मा स्वरूपं यस्येति तथोक्तः। 'इत्यर्थ'इति शेषः। **अत्र** रसस्याखण्डत्वे। **हेतुं** कारणम्। **वक्ष्यामः** ६४ रत्यादिरित्यादिनेति शेषः। **स्वप्रकाशत्वादि** स्वप्रकाशत्वं चिन्मयत्वं चेत्यर्थः। **अपि**। **वक्ष्यमाणरीत्या** वक्ष्यमाणा ६४ रत्यादिरित्यादिना प्रतिपादिष्यमाणाया रीतिस्तयेति तथोक्तया। 'वोध्य'मिति शेषः। **'चिन्मय'इत्यत्रे**'ति शेषः। **स्वरूपार्थे** स्वार्थे। 'न तु 'अन्नमय'इत्यादिवत्प्राचुर्यार्थे'इति शेषः। **मयट्** 'मयट्च' ४।३।८२ इति विधीयमानः प्रत्यय इति भावः। **चमत्कारस्तत्पदार्थ** इत्यर्थः। **चित्तविस्ताररूपश्चित्तस्य** विस्तारोऽलौकिकार्थाकलनेन ज्ञानधाराजनने दीर्घप्रायत्वमिति, दृष्टहेतुभ्योऽसम्भवित्वज्ञानेन हेत्वनुसन्धाने व्यापारे विस्फार इति वा, स एव रूपं यस्येति तथोक्तः। **विस्मयापरपर्य्यायो** विस्मयोऽपरः पर्य्यायो नाम यस्य सः। **तत्प्राणत्वं** तस्य चमत्कारस्य प्राणः प्राणस्वरूपस्तस्य भावस्तत्त्वमिति तथोक्तम्। **च**। **अस्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादै**रस्माक वृद्धप्रपितामहास्ते एव सहृदयगोष्ठीगरिष्ठा इति, ते च ये कविपण्डितमुख्या इति, ते चामी श्रीमन्नारायणपादा इति तैस्तथोक्तैः। सहृदयानां गोष्ठी सभेति, तत्र गरिष्ठा अत्यन्तम्माननीया इति। कवयश्च पण्डिताश्चेति कवयश्चामी पण्डिता इति वा, तेषु मुख्याः। सहृदया मार्म्मिकाः। (कवयः प्रवन्धारः प्रतिभाचमत्कारिणो वा। पण्डिताः शास्त्राध्ययनजाततत्तत्तत्त्वावगमाः।) गौरवार्थं वहुवचनम्। **उक्तम्**। **तद्** यत्तैरुक्तं तदिति तस्मादिति वाऽर्थः। **धर्म्मदत्तः**। **स्वग्रन्थे**। **आह**-'**रसे**...'इति।

**सर्वत्र** सर्वस्मिन्। **अपि**। **रसे** रसपदार्थे। **सारो** वास्तविकं तत्त्वम्। 'सारो वले स्थिरांशे च' इत्यमरः। **चमत्कार** आस्वादविशेषः। **अनुभूयते** विचारदृष्ट्या प्रतिपद्यते। 'सहृदयै' रिति शेषः। यद्वा–रस आस्वादे। सार आस्वादात्मतया व्यपदेश्यः। चमत्कारोऽलौकिकतया वाचामविषय आह्लादविशेषः। स च–सर्वत्र सर्वेषु। अपि। 'आस्वादनीयेषु पदार्थेषु' इति शेषः। किं पुनः शृंगारादौ रस इत्यर्थः। अनुभूयते। इति वोध्यम्। **तच्चमत्कारसारत्वे** तस्य (रसस्य) चमत्कारसारत्वमिति तस्मिन्। चमत्कारः सारः सारत्वेन स्थितो यत्र, तस्य भावस्तत्त्वम्। यद्वा–चमत्कार एव सारस्तत्त्वं, तस्य भावस्तत्त्वमिति। यद्वा–तत्तस्मात् कारणादित्यर्थः। चमत्कारसारत्वे चमत्कारः सारो यत्र (रसे) तस्य भावस्तत्त्वं तत्र। 'सती'ति शेषः। इति योज्यम्। **सर्वत्र** सर्वेषु साहित्यशास्त्रेषु रसेषु वा। **अपि**। **अद्भुतो** विलक्षणोऽनिर्वचनीय इति यावत्। **रसः**। (इदमुक्तम्–रसश्चमत्कारमात्राजीव्य इति साहित्यशास्त्रेषु रसजातमद्भुतमिति शृङ्गारादौ रसे यद्रसत्वं तदद्भुतमिति वा) इति। केचित्तु–'सर्वत्र अव्ययपदमिदम्। सर्वे इत्यर्थः। अपि।

कैश्चिदिति प्राक्तनपुण्यशालिभिः। यदुक्तं-'पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम्।' इति। यद्यपि 'स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः।' इत्युक्तदिशा रसस्यास्वादानतिरिक्तत्वम्, तथाऽपि 'रसः स्वाद्यते' इति काल्पनिकं भेदमुररीकृत्य, कर्म्मकर्त्तरि वा प्रयोगः। तदुक्तम्-'रस्यमानतामात्रसारत्वात्प्रकाशशरीरादनन्य एव हि रसः' इति। एवमन्यत्राप्येवंविध-

---

रसः शृङ्गारादिः। अद्भुत इत्याहुः। तस्माद्रसजातस्याद्भुतत्वादित्यर्थः। नारायणः। कृती विद्वान्। 'धीमाञ्सूरिः कृती कृष्टिः' इत्यमरः। अद्भुतम्। एव नत्वन्यविधम्। रसं शृङ्गारादिम्। आह। अत्राहुस्तर्कवागीशाः-'वस्तुतस्तु रत्याद्यंशस्यानुभूयमानत्वे यथायथं शृङ्गारादिव्यपदेशः, तस्य (रत्याद्यंशस्य) अननुभावेऽद्भुतव्यपदेशः।' इति। अन्ये तु-'अपि सर्वेषु रसेषु विलक्षणैवास्वादप्रतीतिरिति भवतु नाम सर्वेषामेव तत्तेषामद्भुतत्वादद्भुतव्यपदेशः। प्रतीतिश्चैषा सत्यपि स्वगतत्वेन परगतत्वेन च विकल्पास्पदमपरिहार्य्येति पिशाचवदकथनीया, अथ च-यथा प्रतीत्यन्तरेण प्रतीतिमात्रतया विलक्षणत्वासद्भावेऽपि प्रात्यक्षिक्यानुमानिक्यागमोत्पन्ना प्रतिभानकृता योगिप्रत्यक्षोत्पन्ना, तथा चर्वणास्वादनभोगाद्यपरनामधेयोपायवैलक्षण्याद्विलक्षणा।' इत्याहुः। इति।

कैश्चिदिति 'अस्य पदस्ये'ति शेषः। प्राक्तनपुण्यशालिभिः। इत्यर्थः। अयम्भावः-अत्र प्राक्तनपदं फलाभिमुखं कर्म्म, एतेन सञ्चितक्रियमाणयोर्निरासः। तथा च-फलाभिमुखपुण्यशालिभिरिति कैश्चिदितिपदस्यार्थ इति निष्कृष्टम्। इति। एतत्प्रमाणयति-यद् यतः। उक्तम्। किमित्याह-'पुण्यवन्तः पुण्यं प्रकृष्टं प्रारब्धमस्त्येषामिति ते तथोक्ताः। योगिवद् योगिनः समाहितचेतसस्तद्वत्। तुल्यार्थे वतिः। रससन्ततिं रसस्य शृङ्गारादेर्ब्रह्मानन्दस्य वा सन्ततिरव्यवधानेनास्वादपरम्परेति तां तथोक्ताम्। 'रसो वै सः' इत्यादिः श्रुतिः। प्रमिण्वन्ति निश्चिन्वन्त्यनुभवन्तीति यावत्।' इति। ननु को नाम रसः 'रस्यत आस्वाद्यते स्वयमेवेति रस' इति चेत्? 'कैश्चित्.. अयमास्वाद्यते' इति कथं रसास्वादयोः कर्म्मक्रियाभावेनोल्लेखो भेदग्रहणमन्तरा सम्भवेत्? यदि तु-'रस्यते आस्वाद्यते प्रमातृविशेषैरिति रस' इति, तर्हि रसास्वादयोः पार्थक्यमन्तरा कथं? पार्थक्ये च को नाम रसः को वाऽऽस्वाद इति सन्देहद्वैध्यमित्याशङ्क्य समाधत्ते-यद्यपि। 'काव्यार्थसम्भेदात् काव्यस्यार्थास्तात्पर्य्याणि विभावादय इति यावत्, तेषां सम्भेदः सङ्गः परिशीलनजन्मैकात्म्यमिति यावत् तस्मात्तथोक्तात्। 'सम्भेदा'दित्यत्र 'संवेदा' दिति 'सम्मेला' दिति वा पाठान्तरम्। संवेदात्परिशीलनादिति, सम्मेलान्मेलनादित्यर्थश्च। आत्मानन्दसमुद्भव आत्मनो बुद्धेरानन्दो विषयान्तरास्फुरणेनानन्दात्मनाऽवस्थानं तस्मात्समुद्भवतीति तथोक्तः। स्वाद आस्वादः। यद्वा-काव्यार्थसम्भेदात्, (यः) स्वाद आनन्दानुभवः (सः) आत्मानन्दसमुद्भव आत्मनः स्वस्वरूपस्यानन्दो वासनापरित्यागपुरःसरं भेदाग्रहेणानुभवविशेषस्तस्मात्समुद्भवतीति तथोक्तः, तदात्मेति यावत्। 'तत्र को मोहः, कः शोकः' इत्याद्युक्त आत्मज्ञानानन्दः काव्यार्थसम्भेदात्प्रतिपद्यमानः स्वादश्च न पृथगिति भावः।' इत्युक्तदिशेत्युक्तमार्गप्रदर्शनेन। रसस्य शृङ्गारादेः। आस्वादानतिरिक्तत्वमास्वादाभिन्नत्वम्। उक्तं प्रतिपादितमिति भावः। तथाऽपि तथा सति 'रसः स्वाद्यते' इति वक्तुमयुक्तत्वेऽपीति भावः। 'रसः शृङ्गारादिः। स्वाद्यते 'कैश्चि' दिति शेषः।' इति। प्रयोगः। काल्पनिकं कल्पनासिद्धं न तु वास्तविकमित्यर्थः। भेदं भिन्नत्वम्। उररीकृत्याङ्गीकृत्य। 'क्षेय' इति शेषः। वाऽथवा। कर्म्मकर्त्तरि कर्म्मैव (विवक्षया) कर्त्तेति तत्र। 'सती'ति शेषः। 'क्षेय' इति शेषः। अयम्भावः-'कैश्चित्.. अयमास्वाद्यते' इति प्रयोगो रसास्वादयोः काल्पनिकं भेदमनुसृत्य क्रियते, 'रसः स्वाद्यते स्वयमेव' इति प्रयोगः पुनः कर्मणः कर्तृत्वविवक्षया। इति। तद् 'यत्समाधानं दत्त'मिति शेषः। उक्तमाचार्य्यै रिति शेषः। किमित्याह-'प्रकाशशरीरात्प्रकाशः संवेदनं स एव शरीरं शरीरवत्स्वरूपं यस्य तस्मात् तथोक्तात्। रस्यमानतामात्रसारत्वाद्रस्यते आस्वाद्यत इति रस्यमानस्तस्य भावस्तत्ता, सैवेति रस्यमानतामात्रं, तदेव सारः सामाजिकैरुपादेय आह्लादहेतुर्यस्य तस्य भावस्तत्त्वं तस्मात्तथोक्तात्। 'हेतो' रिति शेषः। अनन्योऽभिन्नः। एव। हि। रसः। अत्र 'एव हीं' त्यव्ययद्वयं तस्य सजातीयविजातीयभेदं

**स्थलेषूपचारेण प्रयोगो ज्ञेयः । नन्वेतावता रसस्याज्ञेयत्वमुक्तं भवति, व्यञ्जनायाश्च ज्ञानविशेषत्वाद्द्वयोरैक्यमापतितम् । ततश्च–**

**'स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः । यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात् ॥'**

**इत्युक्तदिशा घटप्रदीपवद् व्यङ्ग्यव्यञ्जकयोः पार्थक्यमेवेति कथं रसस्य व्यङ्ग्यता ?**

---

निषेधतीति बोध्यम् । तथा च रस्यमानतामात्रसारत्वाद्धेतो रसः संवेदनात्मैव, भेदाभिधानं पुनरुपचारादिति निष्कृष्टम् । **एवम् । अन्यत्रान्येषु । अपि । एवंविधस्थलेषु । उपचारेण** गौण्या वृत्त्येत्यर्थः । **प्रयोगः । ज्ञेयः ।**

उक्तमर्थं द्रढयितुमाक्षेपसमाधी दर्शयति–**नन्वित्यादिना ।**

**ननु । एतावता** तदवधिकेन प्रतिपादनेनैतेन रसस्य ज्ञानविशेषात्मताप्रदर्शनेनेति यावत् । **रसस्य । अज्ञेयत्वं** ज्ञेयत्वाभावः । **उक्तं** प्रतिपादितमिति भावः । **भवति ।** 'अज्ञेयस्य च कथं सद्भावं प्रतीम' इति शेषः । अत्रेदमालोचनम्–ज्ञानविशेषविशिष्टास्वादमात्रात्मको रस इत्युक्तं, स च ज्ञानविषय इति वक्तुमसाम्प्रतम् । तथाहि–ज्ञानं तावद्द्विविधं, सविकल्पकं निर्विकल्पकं चेति । नामरूपजात्यादिविशेषशालिज्ञानं सविकल्पकम्, निर्विकल्पकं पुनस्तद्विपरीतम् । अथायं कस्य विषयः स्यादिति विचार्य्यम्, नाद्यस्य, रसमात्रविषयिण्यां चर्वणायां प्रतीत्यन्तरासम्भवे नामरूपजात्यादिविशेषोल्लेखासम्भवात्, नाप्यन्त्यस्य, विभावादिसंवेदनस्य निर्विकल्पकत्वायोगात् । इति । तर्कवागीशास्तु–'विभावादीनां प्रत्येकं पूर्वं ज्ञानं, ततः–विभावादिविशेषणकानन्दविशेष्यकज्ञानम्, तद्विषयत्वमेव विभावादिमेलकः, तस्मादेव य आनन्दो जायते तत्संवलितानां मिलितविभावादीनां या संवित्सैव रस इति स्थितिः । तत्र ज्ञानस्य द्विक्षणानन्तरं त्रिक्षणानन्तरं वा पूर्वपूर्वस्य ध्वंस इति नियमाच्चरमज्ञानरूपायां रसचर्वणायां पूर्वपूर्वज्ञानस्य च ध्वंसे स्वारम्भककारणध्वंसोत्तरं कार्य्यध्वंसस्यापि नियतत्वादानन्दस्यापि ध्वंसः, तत्कथं पुनारसानुभवः स्यादित्यभिप्रेत्याशङ्कते–ननु..' इत्युद्घोषयन्तः प्राहुः 'ननु विभावादिमेलकाज्जायमानानन्दसंवलित–मिलितविभावादिसंविद्रस इत्युक्तं भवति, विभावादीनां मेलकश्च विभावादिविशिष्टवैशिष्ट्यावगाह्येकज्ञानविषयत्वमित्यवश्यं वाच्यम्, प्रकारान्तरेण तन्निरूपणस्याशक्यत्वात्, तादृशज्ञानं च विभावादिप्रत्येकज्ञानादेव भवति । एवं च तादृशज्ञानानन्तरं रसास्वादः कथं जायतामुपायाभावादित्यभिप्रायेणाशङ्कते–ननु.. ।' इति । ननु तर्हि व्यञ्जनया रसास्वादः स्यादिति चेदेवमपि न वाच्यमित्याह–**व्यञ्जनायाः । च** रसस्येत्यर्थः । **ज्ञानविशेषत्वात्** ज्ञानविशेषरूपत्वात् । **द्वयोर्व्यञ्जनाया** रसस्य चेत्यर्थः । **ऐक्यं** ज्ञानविशेषेणाभिन्नरूपत्वम् । **आपतितम्** अनभिमतमपि बलादुपस्थितमित्यर्थः । **ततस्तस्माद्** व्यञ्जनाया रसस्य **चै**क्यापातादित्यर्थः ।

'**सिद्धे** पूर्ववर्त्तिनि । **अर्थे** 'सती'ति शेषः । **स्वज्ञानेन** स्वं व्यञ्जकत्वेन यदभिमतं तस्य ज्ञानेनेति भावः । **अन्यधीहेतु**रन्यस्य शक्यलक्ष्यतात्पर्य्यार्थेभ्यो व्यतिरिक्तस्यार्थस्य या धीर्ज्ञानं तस्या हेतुः कारणम् । **व्यञ्जको** व्यञ्जनया वृत्त्याऽर्थबोधकः शब्दः । **मतः** स्वीकृतः । तदेव स्पष्टयति–**यथा । दीपः ।** 'सिद्धेऽर्थे स्वज्ञानेन ( स्वप्रकाशेन ) अन्य ( घटादि ) धी ( प्रकाश ) हेतुर्मतस्तथे'ति शेषः । **अन्यथाभावे** सिद्धार्थज्ञापकत्वाभावेऽङ्गीकृते सतीत्यर्थः । **अस्य** व्यञ्जकस्य । **कारकाज्जनकात् । कः** किंस्वरूपः । **विशेषोऽ**वच्छेदकधर्म्मः । 'स्या' दिति शेषः ॥ अयम्भावः––जनकोऽसिद्धमर्थमुत्पादयति, व्यञ्जकस्तु सिद्धमर्थं ज्ञापयत्येव, न तूत्पादयति, असिद्धार्थस्यैव उत्पत्तिसम्भवात्, अतः–यथा प्रदीपः स्वप्रकाशेन घटादेर्ज्ञापको भवति, तथा व्यञ्जकोऽपि शब्दः सिद्धस्यैवार्थस्य । अन्यथा–जनकज्ञापकयोरैक्यमापतेत् । इति ।' **इत्युक्तदिशा । घटप्रदीपवत्** घटप्रदीपयोरिवेत्यर्थः । 'तत्र तस्येव ।' ५।१।११६ इति वतिः । **व्यङ्ग्यव्यञ्जकयोः । पार्थक्यम् । एव** न त्वैक्यमित्यर्थः । **इति,** इत्यस्मात् कारणादित्यर्थः । **रसस्य** 'रस्यमानतामात्रसारत्वात् प्रकाशशरीरादनन्य एव हि रसः' इति निरूपितनयेन ज्ञानविशेषात्मनाऽभि-

---

१ रसस्य तु संविद्विशेषात्मकत्वं विदितचरम् । अथ व्यञ्जनाया दीपकस्येव व्यञ्जक ( प्रकाशक ) त्वेन प्रकाश ( ज्ञान ) विशेषात्मकत्वं वाच्यम् । अत्र च प्रकाशः संवेदनानतिरिक्त एवाभिमतः । अत एव–'प्रकाशशरीरा' दित्युक्तं सङ्गच्छते ।

**इति चेत्? सत्यमुक्तम् । अत एवाहुः-'विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वादनाख्यः कश्चिद् व्यापारः ।' इति । अत एव-रसनास्वादनचमत्करणादयो विलक्षणा एव व्यपदेशाः । इति । अभिधाऽऽदिविलक्षणव्यापारमात्रप्रसाध(द)नग्रहिलैस्त्वस्माभी रसादीनां व्यङ्ग्यत्वमुक्तम् । इति ।**

**ननु तर्हि करुणाऽऽदीनां रसानां दुःखमयत्वाद् रसत्वं न स्यात्? इत्युच्यते—**

---

मतस्य चमत्कारस्येत्यर्थः । **कथम्** 'व्यञ्जनाया अपि ज्ञानविशेषात्मनाऽभिमतत्वेन रसव्यञ्जनयोरभेदापत्ता' विति शेषः । **व्यङ्ग्यता?** न केनापि प्रकारेण व्यङ्ग्यता सम्भवतीति भावः । **इति । चेत्? सत्यम्** (अत्रार्द्धाङ्गीकारेऽव्ययमिदम्) । **उक्तम्** । तदेव समर्थयते-**अतः** अस्मात् कारणात् रसस्यैवं व्यङ्ग्यत्वासम्भवात् हेतोरिति यावत् । **एव । आहुः** 'अभिनवगुप्तपादाचार्य्याः' इति शेषः । किमित्याह-'**अयं** रससाक्षात्कारानुकूल इति भावः । **स्वादनाख्यः** स्वादनं चर्वणाऽऽख्या नाम यस्येति तथोक्तः । **कश्चित्** अनिर्वचनीयात्मा सहृदयहृदयैकप्रमाणक इत्यर्थः । **व्यापारः** शक्तिविशेषः । **कृतिज्ञप्तिभेदेभ्यः** कृतिः प्रयत्नश्च ज्ञप्तिर्ज्ञापनं चेति तद्भेदेभ्यः । तत्र कृतेर्भेदा नानाशरीरादिचेष्टाविशेषसाध्याः, ज्ञप्तेर्भेदाः ज्ञानानुकूलव्यापारविशेषाः । पुनर्व्यञ्जनाऽऽदय इति बोध्यम् । **विलक्षणो** विभिन्नः । व्यापारः ।' **इति** । एतेन फलितं निर्दिशति-**अतो**ऽस्मात् कारणात् । **एव** । **रसनास्वादनचमत्करणादयो** रसनमास्वादनं चमत्करणं चेत्येतान्यादयो येषां तादृशा रसास्वादचमत्कारा इत्यर्थः । **विलक्षणा** अद्भुता अनिर्वचनीया इति यावत् । **एव । व्यपदेशा** उक्तिसिद्धान्ताः । **इति** । तादृशं सिद्धान्तमनुसृत्यैव रसस्य विलक्षणत्वं तैर्व्यपदिश्यत इति हृदयम् ।

अथ स्वमतं निर्दिशति-**अभिधाऽऽदि**..इत्यादिना ।

**अभिधाऽऽदिविलक्षणव्यापारमात्रप्रसाधनग्रहिलै**रभिधाऽऽदिभ्योऽभिधालक्षणातात्पर्य्याख्याभ्यो वृत्तिभ्यो विलक्षणो यो व्यापारो व्यञ्जनव्यापारः स एवेति तस्य प्रसाध(द)नं युक्त्यादिना सिद्धान्तरूपेण स्थापनं तत्र ग्रहिलाः सयत्नास्तैस्तथाभूतैः । **तु** पुनः । **अस्माभिः । रसादीनां** शृङ्गारादीनां निर्वेदादीनां तदाभासादीनां चेत्यर्थः । **व्यङ्ग्यत्वं** व्यञ्जनाजन्यबोधविषयत्वम् । **उक्तम्** 'व्यक्तः सञ्चारिणा तथा ।' इत्यादिनेति शेषः ।

अत्रेदं तत्त्वम्-"प्रथमं काव्यनाट्यश्रवणदर्शनाभ्यां विभावानुभावयोरुपस्थितिः, एवमाक्षेपेण क्वचिच्छब्देन च झटिति एव व्यभिचारिस्थायिभावयोः । सा च दोषविशेषमहिम्ना सम्भवति, ततः साधारणीकरणव्यापारबलेन शकुन्तला मम दुष्यन्तस्य वेति विभावादिचतुष्टये साधारण्येन प्रत्ययः, ततश्च व्यञ्जनया रससदृशाकारः प्रत्ययः, तदनन्तरं व्यञ्जनासहकृतेन स्वादनाख्यव्यापारविशेषेण 'दुष्यन्तोऽहं शकुन्तलाविषयकरतिमान्' इत्यात्मकः स्ववासनायां रत्यभेदं स्वस्मिंश्च नायकाभेदमवगाहमानः साक्षात्कारं लभते । 'भूतलं रजतवत्'इति भ्रमे शुक्तित्वमिव वासनात्वादिकमत्र न भासते ।" इति प्राञ्चः, नव्यास्त्वाहुः-"व्यञ्जनयैव रसादीनां प्रतिपत्तिरङ्गीकार्य्या । किमधिकेन वासनाऽऽदिनानापदार्थकल्पनाव्यापारेण? तथाहि-व्यञ्जनया दुष्यन्तादौ प्रतीयमानो रत्यादिज्ञानसम्बन्धेन सामाजिकवृत्तिः रसः, रत्यादिज्ञाने च 'दुष्यन्तः शकुन्तलाविषयकरतिमान्' इत्यात्मकमेव, यथा-चिरविनष्टस्यापि यागादेः स्वजन्यापूर्वसत्त्वेनैव स्वर्गाद्यव्यवहितपूर्ववृत्तित्वं कल्प्यते, तथाऽतीतस्यापि रत्यादेः स्वगोचरज्ञानसत्त्वेनैव सामाजिकवृत्तित्वं कल्प्यते ।" इति । ननु "रसव्यञ्जनयोः पूर्वोक्तदिशा ऐक्यं कथं न तर्हि समापतेत्! इति चेत्! न, व्यञ्जनाया वक्तृतात्पर्य्यरूपज्ञानात्मना निरूपणाद्रसस्य च तद्भिन्नत्वात् विभावादीनां प्रत्येकं ज्ञानं जनकं, विशिष्टज्ञानं च जन्यमिति भेदाङ्गीकाराद्वा । न च साक्षात्कारस्यैवास्वादरूपत्वं, ननु 'व्यञ्जनाजन्यबोधस्ये'ति वाच्यम्, व्यङ्ग्यचारुतयैव व्यञ्जनाजन्यबोधस्यापि आस्वादरूपत्वसम्भवात् । ननु वासनाया अनङ्गीकारेऽपि श्रोत्रियादीनां रसाभिव्यक्तिः कथं न सम्पद्यते? इति चेत्? न, पुण्यविशेषवत्त्वाभावात् ।" इति ।

अथ रसस्यानन्दमयत्वं साधयितुं तत्र तावत्पूर्वमवतारयति-**नन्वि**त्यादिना ।

**ननु । तर्हि** 'यदि रस आनन्दमय इति स्वीक्रियते'इति शेषः । **करुणाऽऽदीनां** करुणबीभत्सभयानकादीनाम् अनिष्टावेगादीनां च । **रसानाम् । दुःखमयत्वात्** दुःखप्रधानत्वात् । (तच्च तेषां शोकादिस्थायिकत्वेन स्पष्टम् ।) **रसत्वम् । न । स्यात्** 'आनन्दमयत्वाभावा'दिति शेषः । **इति** इत्याशङ्कायाम्, **उच्यते** । ३६ **करुणादौ**.. इत्यादिना ।

**३६ करुणाऽऽदावपि रसे जायते यत् परं सुखम् ।**
**सचेतसामनुभवः प्रमाणं तत्र केवलम् ॥ २७ ॥**

आदिशब्दाद् बीभत्सभयानकादयो गृह्यन्ते ।

तथापि, असहृदयानां मुखमुद्रणाय पक्षान्तरमुच्यते—

**३७ किञ्च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः ।**

नहि कश्चित् सचेतन आत्मनो दुःखाय प्रवर्त्तते, करुणादौ च सकलस्यापि साभिनिवेशं प्रवृत्तिदर्शनात् सुखमयत्वमेव ।

अनुपपत्त्यन्तरमाह—

**३८ तथा रामायणादीनां भविता दुःखहेतुता ॥ २८ ॥**

---

३६ **करुणाऽऽदौ** करुणबीभत्सादौ अनिष्टावेगादौ चेत्यर्थः । **अपि** किं पुनः सम्भोगशृङ्गारादौ हर्षादौ चेत्यर्थः । **रसे** । **यत्** किञ्चिदनिर्वचनीयमिति शेषः । **परं** सातिशयम् । **सुखम्** । **जायते** । **तत्र** तस्मिन् जायमाने सुखे उपचारात्तत्सत्तायामित्यर्थः। **सचेतसां** सहृदयानां तदनुभवामोदितहृदयानां विदुषामिति यावत् । **अनुभवः**। **केवलम्** । 'सर्वोत्कृष्ट'मिति शेषः । **प्रमाणम्** । यद्यपि 'रसो वै सः' 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति ।' इत्यादिश्रुत्यादिरपि प्रमाणम्, तथाऽपि तदविश्वासिनं प्रतीयमुक्तिरिति प्रतीयते ॥ २७ ॥

आदिपदार्थं विबोधयति—**आदिशब्दादि**त्यादिना ।

**आदिशब्दात्** तदुपादानादिति भावः । 'करुणाऽऽदा' वित्यत्रेति शेषः । **बीभत्सभयानकादयः** । अत्राप्यादिशब्दात् अनिष्टावेगादीनां ग्रहणम् । **गृह्यन्ते** । नन्वेतद् वचनमात्रम् ! यदि शोकादिस्थायिभावानां करुणादीनामनिष्टादिमूलानामावेगादीनामपि आनन्दमयत्वं निर्बाधं ? तर्हि किन्न परेषामपि अनुभवविषयमित्याशङ्कामुन्मूलयन्नाह—**तथाऽपी**त्यादि ।

**तथाऽपि** यद्यपि सहृदयहृदयप्रमाणको रस आनन्दरूप एवतदपीत्यर्थः । **असहृदयाना**मनुभवविधुरतया तथा तथा स्वपक्षोपन्यासमात्रपराणां मन्दधियामित्यर्थः। **मुखमुद्रणाय** मुखस्योपचारात्तद्वाचो मुद्रणं तस्मै, ता मित्यर्थः । मुद्रयितुं तद्व्यापारमवरोद्धुमिति भावः । **पक्षान्तरम्** । **उच्यते** । ३७ **किञ्चे**त्यादिना ।

३७ **किञ्च** । **तेषु** करुणाऽऽदिष्वनिष्टावेगादिषु च रसभावेष्वित्यर्थः । **यदा** यदि । **दुःखम्** । 'वस्तुतोऽस्त्येवे'ति शेषः । तर्हि—**तदुन्मुख**स्तेषु करुणादिषून्मुख उद्युक्त इति तथोक्तः । उत्कृष्टं मुखमुपायो यत्नो यस्येति तथोक्तः । 'मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि ।' इति मेदिनी । **कोऽपि** कश्चिदपि प्राणीत्यर्थः । **न** । **स्यात्** यत् करुणादौ सर्वोऽप्युन्मुखस्तस्मान्नास्य दुःखहेतुत्वमिति भावः ।

तदेव स्पष्टयति—**नही**त्यादिना ।

**हि** यतः । **कश्चित्** । **सचेतन**श्चेतनेन जीवात्मना सह वर्त्तत इति तथोक्तः सन् । **आत्मनः** स्वस्य । **दुःखाय** कष्टलाभार्थम् । **न** । **प्रवर्त्तते** यतत इति भावः । अत एव—'आत्मनः कामाय सर्वं प्रियं भवती'त्यादिः श्रुतिरपि स्वात्मनः प्रेम्णे एवेतरेषां प्रेमाह । ननु कथमेतावता करुणादीनामानन्दहेतुत्वं समर्थितमित्यत आह—**करुणादौ** । **च** । **सकलस्य** कलाभिर्नानादाक्षिण्यसम्पत्तिभिः सह वर्त्तत इति तस्य तथोक्तस्य । **अपि** किं पुनरन्यस्येति भावः । **साभिनिवेशं** साग्रहम् । **प्रवृत्तिदर्शनात्** । **सुखमयत्वं** प्रचुरसुखरूपत्वम् । **एव** निश्चितम् ।

करुणादेर्दुःखमयत्वाङ्गीकारेऽनिष्टान्तरं दर्शयितुं प्रतिजानीते—**अनुपपत्त्यन्तर**मित्यादिना ।

**अनुपपत्त्यन्तर**मन्या प्रदर्शिताया अनुपपत्तेर्भिन्नाऽनुपपत्तिरिति तत्तथोक्तम् 'मयूरव्यंसकादयश्च ।' २।१।७२ इत्यनेन निपातात्साधुः ॥ **आह**—३८ **तथा**.. इत्यादिना ।

३८ **तथा** पुनः **रामायणादीनां** करुणादिरसप्रधानानां महाप्रबन्धानाम् । **दुःखहेतुता** दुःखकारकत्वम् । **भविता** भविष्यति ॥ २८ ॥

करुणादिरसस्य दुःखहेतुत्वे करुणादिरसप्रधानरामायणादीनामपि दुःखहेतुता स्यात्।
ननु कथं दुःखकारणेभ्यः सुखोत्पत्तिरित्याह—

३९ हेतुत्वं हर्षशोकादेर्गतेभ्यो लोकसंश्रयात्।
हर्षशोकादयो लोके जायन्तां नाम लौकिकाः ॥ २९ ॥
अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात्।
सुखं प्रजायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः ॥ ३० ॥

ये खलु वनवासादयो लोके दुःखादिकारणान्युच्यन्ते, त एव काव्यनाट्ययोः समर्पिता अलौकिकविभावनव्यापारवत्तया कारणशब्दवाच्यतां विहाय अलौकिकविभावशब्दवाच्यत्वं भजन्ते

---

तदेव विवृणोति—करुणादिरसस्येत्यादिना।

**करुणादिरसस्य** करुणाद्यनिष्टावेगादिरूपस्य रसस्य (भावानामपि रसत्वप्रतिपादनादिदमुक्तम्)। **दुःखहेतुत्वे** दुःखस्य हेतुभूतत्वे सति। **करुणादिरसप्रधानरामायणादीनां** करुणादिरसः प्रधानं प्रधानतया वर्त्तमानो यत्र तानि रामायणादीनि तेषां तथोक्तानामार्षकाव्यानामिति भावः। **अपि**। **दुःखहेतुता** दुःखकारकत्वम्। **स्यात्**। न चास्तीति तदग्राहितं वच इति भावः।

ननु कारणानुकूलं कार्योत्पत्तेर्नियतत्वात् कथं शोकादिस्थायिभावेभ्यः करुणादिभ्यः सुखं समुत्पद्यत इत्याशङ्क्योत्तरयितुं प्रतिजानीते—नन्वित्यादिना।

**ननु**। **दुःखकारणेभ्यो** दुःखस्य क्लेशस्य कारणानि तत्स्वरूपभूताः करुणादिरसानां स्थायिभावाः शोकादयस्तेभ्यः। **कथं** केनोपायेन। **सुखोत्पत्तिः**? **इत्याह**, इत्येवमाशङ्कायामुत्तरयति-३९ **हेतुत्वमित्यादिना**।

३९ **लोकसंश्रयाल्लो**कः संसारस्तस्य संश्रय आश्रय आनुकूल्यमिति यावत् तस्मात्। यो हि यादृशस्वभावस्तस्य तादृशस्वभावानुकूल्यमवलम्ब्येति भावः। 'लोकस्तु भुवने जने' इत्यमरः। **हर्षशोकादेः**। आदिना क्रोधजुगुप्सारतिहास्यादीनां ग्रहणम्। **हेतुत्वं** कारणत्वम्। **गतेभ्यः** प्राप्तेभ्यः। 'शत्रुस्ते परास्तः' 'पुत्रस्ते मृतः' इत्यादिवाक्येभ्यः शत्रुपराजयपुत्रमरणादिभ्यो दृश्येभ्यो वेति शेषः। **लोके** जगति। **लौकिका** लोके भवाः सर्वलोकसाधारणा इति यावत्। 'तत्र भवः।' ४।३।५३ इत्यण्। **हर्षशोकादयो** 'मुखविकासादिलक्ष्याः' इति शेषः। **जायन्ता**मुत्पद्यन्ताम्। **नाम** ॥ अथ यदि—**काव्यसंश्रयात्** काव्यस्य कविचारुत्वोत्तम्भितालम्बनादेः संश्रयः सम्बन्धस्तस्मात्। **अलौकिकविभावत्व**मलौकिकालौकिकेभ्यः पुत्रजन्मादिभ्यो विलक्षणाः ये विभावा वर्ण्यमाना आलम्बनोद्दीपनरूपाः पुत्रजन्ममृतपुत्रदेहादयस्तेषां भावस्तत्त्वं तत्। **प्राप्तेभ्यः**। **तेभ्यः** 'लोके हर्षशोकादेर्ये हेतवोऽभिमता' इति शेषः। **सर्वेभ्यः**। **अपि** न केवलं हर्षहेतुभ्य इति भावः। **सुख**माह्लादः। **प्रजायते** उत्पद्यते। 'सञ्जायते' इति पाठान्तरम्। इत्येवं लौकिकत्वालौकिकत्वाभ्यां हर्षशोकादेर्हेतूनां वैलक्षण्ये सतीत्यर्थः। **का**। **क्षतिः**? न काऽपीत्यर्थः। अयम्भावः—लौकिकेभ्यो हर्षहेतुभ्यो हर्ष एव शोककारणेभ्यः पुनः शोक एव जायतां नाम, किन्तु अलौकिकेभ्यः शोकादिहेतुभ्योऽपि सुखमेव, किं पुनः साक्षात् सुखहेतुभ्यः सुखं जायेतेति, अत एवैतेषां भेदः ॥ २९ ॥ ३० ॥

तदेव विवृणोति—ये खल्वित्यादिना।

**लोके** जगति। **ये**। **खलु**। **वनवासादयो** वनवासराज्यलाभादयः। **दुःखादिकारणानि** दुःखहर्षादिकारणानि। **उच्यन्ते**। 'इत्युच्यन्ते' इति पाठान्तरम्। **ते**। **एव** न त्वन्य इति भावः। **काव्यनाट्ययोः** काव्यं श्रव्यकाव्यं च नाट्यं दृश्यकाव्यं चेति तयोः। **समर्पिता** निरूपिताः। समस्तं पाठान्तरम्। 'सन्त' इति शेषः। **अलौकिकविभावनव्यापारवत्तयाऽ**लौकिकस्य लौकिकात् (दुःखादेः) विलक्षणस्य (दुःखादेः) विभावनमालम्बनतासम्पादनमुद्दीपनतोत्पादनं वा तदेव व्यापार इति, स एवैषामस्तीति तेषां भावस्तत्ता तयेति तथोक्तया। विभाव्यते आलम्ब्यते उद्दीप्यते इति वा विभावनम्। भावे ल्युट्। **कारणशब्दवाच्यतां** कारणपदवाच्यताम्। लौकिकस्य दुःखादेः कारणभूतो यो वनवासादिस्तत्स्वरूपतामिति भावः। **विहायो**त्सृज्य। **अलौकिकविभाव-**

तेभ्यश्च सुरते दन्तघातादिभ्य इव सुखमेव जायते। अतश्च लौकिकशोकहर्षादिकारणेभ्यो लौकिकाः शोकहर्षादयो जायन्ते। इति लोक एव प्रतिनियमः। काव्ये पुनः सर्वेभ्योऽपि विभावादिभ्यः सुखमेव जायते इति नियमान्न कश्चिद् दोषः।

कथं तर्हि हरिश्चन्द्रादिचरितस्य काव्यनाट्ययोरपि श्रवणदर्शनाभ्यामश्रुपातादयो जायन्ते? इत्युच्यते—

**४० अश्रुपातादयस्तद्वद् द्रुतत्वाच्चेतसो मताः।**

कथं तर्हि काव्यतः सर्वेषामीदृशी रसाभिव्यक्तिर्न जायते—इत्याह—

---

शब्दवाच्यत्वमलौकिको यो विभावशब्दवाच्यस्तस्य भावस्तत्त्वं तत् तथोक्तम्। दुःखशोकादेरपि सुखहर्षाद्यात्मना सङ्घटकत्वोद्दीपकत्वाभ्यामलौकिकस्य विभावशब्दवाच्यस्य स्वरूपतामित्यर्थः। **भजन्ते** आश्रयन्ते। अत एव–**तेभ्यः** पूर्वोक्तेभ्योऽलौकिकेभ्यो विभावशब्दवाच्येभ्य इत्यर्थः। **च** पुनः। **सुरते** दयितेन सह रमणावसर इति भावः। **दन्तघातादिभ्यः** 'दयितकृतेभ्यो दयितायाः' इति शेषः। **इव** यथा तथा। 'काव्यनाट्ययोः श्रवणदर्शनावसरे' इति शेषः। **सुखम्**। **एव** केवलं न तु दुःखमिति भावः। **जायते**। अयम्भावः–लोके दुःखशोकादिहेतुभूता वनवासादयोऽभिमताः, तेभ्यश्च लोके यत् दुःखशोकादि जायते, तत् युक्तमेव, किन्तु काव्ये नाट्ये वा ( कविना नटेन वा ) वर्ण्यमाना दर्श्यमाना वा ये वनवासादयस्ते न तथाभूताः, यदेभ्योऽपि तथैव दुःखादि जायेत। किन्तु अलौकिकाः, अत एवैते विभावशब्देनाभिधेयाः। ननु एतेभ्योऽपि दुःखाद्येव किं न स्यादिति शङ्क्यम्, यतः–दयितस्य दन्तघातादिभ्यः सुरते दयिताया न दुःखमुत्पद्यते, उत्पद्यते पुनः केवलं यथा सुखमेव, तथा विभावेभ्योऽपि। इदमुक्तम्–सुरतसमयापक्रमानन्तरं यथा दन्तघातादिभ्यो दुःखमेव जायते, इति तदानीन्तनानां तेषां लौकिकत्वं, सुरते च तेषां विलक्षणकार्य्यकारितया लोकोत्तरत्वं तथा प्रकृतेऽपि। सुरतस्य चालौकिकत्वं यथाऽऽह श्रुतिः–'तद् यथा प्रियया स्त्रिया सम्परिष्वक्तो न वाह्यं किञ्चन वेद, नान्तरमेवायं, प्राज्ञेनात्मना सम्परिष्वक्तो न वाह्यं किञ्चन वेद नान्तरम्।' इति। तदेव व्यवस्थापयति–**अतः**। **च**। **लौकिकशोकहर्षादिकारणेभ्यः**। 'वनवासादिभ्य' इति शेषः। **लौकिकाः**। **शोकहर्षादयः**। **जायन्ते**। इत्येवम्भूतः। **लोके**। **एव** न तु लोकविलक्षणताऽवसरेऽपीति भावः। **प्रतिनियमः** प्रतिष्ठितो नियमः। **काव्ये** उपलक्षणेन नाट्ये चेत्यर्थः। **पुनः**। **सर्वेभ्यो** 'दुःखादिकारणेभ्य' इति शेषः। **अपि**। **सुखम्**। **एव**। **जायते**। **इति** एवम्भूतादिति भावः। **नियमात्**। **न** नैव। **कश्चित्**। **दोषः**।

ननु 'कार्य्येण कारणमनुमीयते' इति नयेन करुणादौ अश्रुपातादिदर्शनेन अश्रुपातादेश्च दुःखरूपकार्य्याभिन्नतया करुणादेर्विभावादीनां दुःखकारणत्वमेवानुमातव्यमिति चेत्! न; इति साशङ्काऽपोहमाह–**कथमित्यादिना**।

**तर्हि** 'यर्हि करुणादेर्विभावेभ्योऽपि सुखमेव जायते' इति शेषः। **काव्यनाट्ययोः**। **अपि**। **हरिश्चन्द्रादिचरितस्य**। आदिना नलरामयुधिष्ठिरादीनां ग्रहणम्। **श्रवणदर्शनाभ्याम्** 'दर्शनश्रवणाभ्याम्' इति तु पाठान्तरम्। **अश्रुपातादयः**। **कथम्**। 'करुणादेर्विभावानां दुःखदत्वमन्तरा' इति शेषः। **जायन्ते** सम्भवन्ति? **इति** इति कृत्वेति भावः। **उच्यते ४० अश्रुपातादय** इत्यादिना।

४० **तद्वत्** यथा विभावादेरलौकिकतया सुखमेव जायते तथेत्यर्थः। **चेतसो**ऽन्तःकरणस्य। **द्रुतत्वात्**सर्वोपाधिपरित्यागपूर्वकं तदेकाकारेणावस्थितत्वाद्धिति भावः। **अश्रुपातादयः**। **मताः**। अतो दुःखहेतुभ्य इव तेभ्यो नाश्रुपातादयः; किन्तु आनन्दप्रेमवशादिव ते जायन्ते इति बोध्यम्।

तदेव स्थूणानिखननन्यायेन द्रढयितुं शङ्कते–**कथं तर्हीत्यादिना**।

**तर्हि** यर्हि वस्तुतो रस आनन्दमय एव तदेत्यर्थः। **काव्यतो** दृश्यश्रव्योभयविधात् काव्यादित्यर्थः। दृश्यमानादृश्यकाव्यात् श्रूयमाणाच्च श्रव्यकाव्यादिति भावः। **सर्वेषां** 'तत्तत्पश्यतां शृण्वतां पठतां वा' इति शेषः। **ईदृशी** आह्लादस्वरूपा। **रसाभिव्यक्तिः**। **कथम्**। **न**। **जायते**? यदि दृश्यस्य दर्शनात् श्रव्यस्य वा श्रवणाज्जायमाना

**४१ न जायते तदास्वादो विना रत्यादिवासनाम् ॥ ३१ ॥**

**वासना चेदानीन्तनी प्राक्तनी च रसास्वादहेतुः। तत्र यद्याद्या न स्यात्तदा श्रोत्रियजरन्मीमांसकादीनामपि स स्यात्, यदि द्वितीया न स्यात्तदा यद् रागिणामपि केषाञ्चिद्रसोद्बोधो न दृश्यते, तन्न स्यात्।**

---

रसाभिव्यक्तिर्वस्तुत आह्लादरूपा, तत् कथं सा कैश्चिदेवानुभूयते, न पुनः सर्वैः? इत्यतः किमपि नियामकमभिधेयम्, अन्यथा तद्वास्तवत्वमपहास्यतीति प्रश्नाभिप्रायः। इत्यतः। **आह–४१ नेत्यादि।**

४१ **रत्यादिवासनां** रत्यादे रतिहासादिभावस्य वासना भावना सूक्ष्मात्मनाऽवस्थितः संस्कारविशेष इति यावत्ताम्। **विना। तदास्वादस्तस्य** रत्यादेरास्वादो रसात्मनाऽनुभव इति भावः। 'तस्य रसस्यास्वाद' इति केचित्, 'तत्तस्मात् काव्यात् आस्वादो रसानुभवः' इत्यपरे व्याचक्षते। **न। जायते।** रत्यादिवासनावासितान्तःकरणानां रसास्वादो जायते, तद्भिन्नानां पुनर्नेति केषाञ्चिदेव रसानुभवः, सर्वेषां रत्यादिवासनाऽनुपलम्भात्। इति तात्पर्य्यम् ॥ ३१ ॥

इदमवगमकम्–रत्यादिरेव सूक्ष्मात्मना सहृदयहृदयं विनिविष्टो वासना, सहृदयहृदयमेव च तद्भाजनम्। इति सहृदयहृदयविनिविष्ट इत्युक्तम्। तस्याश्चाभावे श्रुतात् पठिताद्वा श्रव्यकाव्यात् दृष्टात्पठिताद्वा दृश्यकाव्यादपि न रसास्वादः सम्पद्यते। रत्यादिरेव विभावादिसंयोगविशेषाद्रसत्वेन प्रतीत्यभिमतत्वात्। इति।

कारिकाऽर्थं समवगमयितुं भङ्ग्यन्तरेण स्वयं विवृणोति–**वासना** चेत्यादिना।

**वासना** रत्यादेरन्तःसूक्ष्मात्मा संस्कारो रसास्वादहेतुभूतः पुण्यविशेष इति यावत्। 'वासना सूक्ष्मसंस्कार' इति गोपालः। **च। इदानीन्तनी** अस्मिञ्जन्मनि भवा। **प्राक्तनी** प्राग्भवा पूर्वस्मिन् जन्मनि भवेति यावत्। 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च।' ४।३।२३ इति ट्युः। **च। रसास्वादहेतू** रसानुभवकारणभूता। इदं बोद्धव्यम्–यथातथमस्मिन् जन्मनि सम्पादिता वासनेदानीन्तनी, पुण्यविशेषात् प्राग्जन्मनि सम्पादिता पुनः प्राक्तनीत्युभयविधा मिलिता साहाय्यसहायकतां प्राप्ता वासना रसास्वादस्य हेतुः। न तु इदानीन्तनी प्राक्तनी च वासना स्वातन्त्र्येण रसास्वादहेतुः। इति। तदेवाह–तयोरिदानीन्तनीप्राक्तन्योर्वासनयोर्मध्ये इत्यर्थः। **आद्ये**दानीन्तनी वासनेति भावः। **यदि** 'रसास्वादहेतु' रिति शेषः। **न। स्यात्** 'अभिमते'ति शेषः। 'किन्तु प्राक्तन्येव वासना रसास्वादहेतुरभिमता भवेदि'ति शेषः। **तदा** तर्हि। **श्रोत्रियजरन्मीमांसकादीनां** श्रोत्रियाः केवलं वेदाध्ययनरताः, ते च जरन्मीमांसका जरन्तो (वृद्धाः) मीमांसकाः (कर्म्मवादरताः) चेति त आदौ येषां (तार्किकादीनाम्) तेषां तथोक्तानाम्। 'श्रोत्रियंश्छन्दोऽधीते।' ५।२।८४ इति निपातात् 'छन्दोऽधीत'इत्यर्थे'श्रोत्रिये'ति साधु। 'प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि।'इत्यमरः। मीमांसां जैमिनीयसिद्धान्तमधीते वेद वेति मीमांसकः। 'क्रमादिभ्यो वुन्।' ४।२।६१ इति वुन्। 'प्राक्तनीं वासनामेवाधिगतवता'मिति शेषः। **अपि** किं पुनः 'प्राक्तन्या वासनाया हीनाना'मिति शेषः। **स** रसास्वाद इत्यर्थः। 'सा'इति पाठान्तरे तु रसाभिव्यक्तिरित्यर्थः। **स्यात्** 'किन्तु न भवतीत्यत इदानीन्तन्यनुगतप्राक्तनवासनासम्पन्नानामेव रसास्वादो जायते'इति शेषः। ननु तर्हि इदानीन्तन्येव वासना रसास्वादहेतुरित्यङ्गीक्रियतां, किं प्राक्तन्या अन्यस्या वासनायाः स्वीकारेणेति चेन्नेत्याह–**यदि** 'तत्रे'ति पूर्वतोऽनुक्रान्तम्, तयोर्वासनयोर्मध्ये इत्यर्थः। **द्वितीया** प्राक्तनी वासनेत्यर्थः। **न** 'रसास्वादहेतुः' इति शेषः। **स्यात्।** 'किन्तु इदानीन्तन्येव वासना रसास्वादहेतुरङ्गीक्रियेते'ति शेषः। **तदा। केषाञ्चित्। रागिणाम**नुरागिणामिदानीन्तन्या वासनया केवलं वासितान्तःकरणानामित्यर्थः। **अपि। रसोद्बोधो** रसस्योद्बोध आस्वाद इति तथोक्तः। **यत्** यतः 'प्राक्तन्या वासनाया अभावरूपात् कारणा'दिति शेषः। **न। दृश्यते। तत्** 'कारणमि'ति शेषः। **न। स्यात्।** अतः– इदानीन्तनीं वासनामधिगतवतामपि प्राक्तन्या वासनायाः केवलं विरहेण तेषां रसास्वादानुभवाभाव इति फलितम्। इदं बोध्यम्–"यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति कौन्तेय! सदा तद्भावभावितः ॥", "पुण्यवन्तः प्रमिण्वन्ति योगिवद् रससन्ततिम्।" इत्याद्युक्त्या कृतभूरिपुण्या उत्कण्ठायास्तद्विषयिण्याः प्राक्तन्या वासनाया महिम्ना सहृदयतां

उक्तं च धर्मदत्तेन-

" सवासनानां सभ्यानां रसस्यास्वादनं भवेत्। निर्वासनास्तु रङ्गान्तकाष्ठकुड्याश्मसन्निभाः ॥ "

ननु कथं रामादिरत्याद्युद्बोधकारणैः सामाजिकरत्याद्युद्बोधः ? इत्युच्यते—

**४२ व्यापारोऽस्ति विभावादेर्नाम्ना साधारणीकृतिः।**

**तत्प्रभावेण यस्यासन् पाथोधिप्लवनादयः ॥ ३२ ॥**

---

प्रतिपद्यैव साम्प्रतमपि तद्वासनाशालिनः सन्तो रसास्वादमनुभवन्ति, नान्यथा; अतश्च-अकृतभूरिपुण्या अत एव प्राक्तन्या वासनाया बलाच्छ्रोत्रियत्वाद्येव लभन्ते, ननु सहृदयतां, न वा रसास्वादनाभ्युदयं, भूरिपुण्यैनैव तत्प्राप्यत्वात्। येऽप्येवं कृतभूरिपुण्या अप्यकृततद्भावनाः, ते सम्प्रति कथमपि सहृदयतामधिचिकीर्षव एव भवन्ति, न पुनर्लभन्ते रसास्वादाभ्युदयम्। तस्मात् न केवलं प्राक्तनीं, न वा केवलं साम्प्रतिकीं वासनां प्रतिपन्ना रसास्वादाभ्युदयभागिनो भवितुमर्हन्तीति प्राक्तन्या वासनाया महिम्ना येषां कृतभूरिपुण्यानां साम्प्रतमपि जाता रत्यादिवासना त एव सहृदयाः, त एव पुनारसास्वादभागिनः। एवञ्च-श्रोत्रियादीनां कृतविद्यत्वादिना रसास्वादाद्यधिकारियोग्यत्वं प्राक्तन्या वासनाया अवगमकम्, अन्येषां साम्प्रतं वासनासत्त्वेऽपि यद्रसास्वादवैधुर्यं तदमीषां पुनः प्राक्तन्या वासनाया अभावावगमकम्। इति सूचितम्। इति।

उक्तमर्थं प्राचां सम्मत्याऽनुकूलयितुमाह-**उक्तश्चे**त्यादि।

**धर्मदत्तेन** तथा सुगृहीतनामधेयेनेत्यर्थः। **च**। **उक्तम्**। "**सवासनानां**.." इत्यादि।

"**सवासनानां** वासनया इदानीन्तनेन प्राक्तनेन चेति द्विविधेन रत्यादितादात्म्यतः प्रतीयमानेन संस्कारविशेषेणेत्यर्थः सह वर्त्तन्त इति तेषां तथोक्तानाम्। अत एव-**सभ्यानां** सभायां साधूनां सहृदयानामिति यावत्। 'सभाया यः।' ४।४।१०५ इति यः। **रसस्य** 'राहोः शिरः' इतिवदुपचारात् षष्ठी। **आस्वादन**मानन्दविशेषानुभवः। **भवेत्**। **तु** किन्तु। 'त्वन्ताथादि न पूर्वभाक्।' इत्यमरः। **रङ्गान्ता** रङ्गो नृत्यशालोपलक्षणेन काव्यानुभवावसरश्च तस्यान्तर्मध्ये। 'अधिष्ठिता' इति शेषः। **निर्वासना** वासनाशून्या रत्यादिसंस्कारविशेषहीना इति यावत्। **काष्ठकुड्याश्मसन्निभाः** स्तम्भभित्तिपाषाणादिसदृशाः। 'न रसास्वादं लभन्ते' इति शेषः। निर्वासनानां काष्ठादीनामिव न रसानुभवितृत्वमुपपद्यत इति भावः। एतेन-वासनैव रसास्वादहेतुः। युक्तं च, विभावादिसाहाय्येन रत्यादिरेव रस इति रत्यादिसंस्काररूपया वासनया हीनाः कथं रसं लभेरन्? इति निष्कर्षः ॥" इति।

भङ्गयन्तरेणैतदेव पुनः स्पष्टयितुमाशङ्कते-**नन्वि**त्यादिना।

**ननु**। **रामादिरत्याद्युद्बोधकारणै** रामादीनां रत्यादयः संस्काररूपेणान्तर्हृदिता भावास्तेषामुद्बोधः प्रस्फुरणमास्वादोचितीभवनमिति यावत्, तस्य कारणानि कारणभूतास्तैस्तथोक्तैः। अत्राद्येनादिना सीताऽऽदीनां ग्रहणम्, अन्त्येन हासादीनामिति बोध्यम्। 'सीतारामादिभिः' इति शेषः। अत एव-परस्परालम्बनभूतत्वं सङ्गच्छते। **सामाजिकरत्याद्युद्बोधः** सामाजिकानां रत्यादिवासनावासितान्तःकरणतया सहृदयतां प्राप्तानाम् (अपि) रत्यादयः सूक्ष्मात्मनाऽन्तःस्थितास्तेते भावास्तेषामुद्बोध इति तथोक्तः। **कथम्**। 'जायते' इति शेषः। रामसीताऽऽदिरत्याद्युद्बोधकारणभूताः सीतारामादय एवेत्येतैर्यदि रामादीनां रत्यादय उद्बुध्यन्त इति युज्यते, किन्तु-तैरेव सामाजिकानां रत्यादयः कथं रसौचित्यं प्रतिनीयन्ते इत्याशयः। इत्येवमाशङ्कायामित्यर्थः। **उच्यते-४२ व्यापारोऽस्ती**त्यादि।

४२ **विभावादेः**। आदिनाऽनुभावसञ्चारिणोर्ग्रहणम्। **साधारणीकृतिः**। 'साधारणी'ति च्व्यन्तम् असाधारणस्य (असदृशस्य) साधारणत्वार्थमव्ययम्, तत्पूर्वकात् कृ-धातोर्भावे क्तिन्। असदृशस्य सदृशताऽऽपादनमिति भावः। **नाम्ना**। 'प्रसिद्ध'इति शेषः। **व्यापारः** सामर्थ्यविशेषः। **अस्ति** वर्त्तते। विभावादेः सामर्थ्यमेवैवम्भूतम्, येन श्रूयमाणश्रोत्रोर्दृश्यमानद्रष्ट्रोश्चाभेदः सम्पाद्यत इति भावः। सामाजिकेतराणां तु श्रोतृत्वाद्यभाव एव, काष्ठादिसदृशतयाऽभिमतत्वात्। न तेन तेषां साधारणीकरणमिति च बोध्यम्। अत एव-**तत्प्रभावेण** तस्य विभावादिसम्बन्धिनः साधारणीकरणरूपस्य व्यापारस्य प्रभावस्तेन। **प्रमाता** विभावादिव्यापारेणाधिकृतः सहृदय इति यावत्। **यस्य** रामादेरित्यर्थः। **पाथोधिप्लवनादयः** पाथांसि जलानि धीयन्तेऽत्रेति पाथोधिः समुद्रस्तस्य प्लवनं तरणं तदादिर्येषां (शत्रुनिहननादीनाम्)

**प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते।**

**ननु कथं मनुष्यमात्रस्य समुद्रलङ्घनादावुत्साहबोधः ? इत्युच्यते—**

**४३ उत्साहादिसमुद्बोधः साधारण्याभिमानतः ॥ ३३ ॥**

**नृणामपि समुद्रादि-लङ्घनादौ न दुष्यति।**

---

ते तथोक्ताः। "कबन्धमुदकं पाथः...."इत्यमरः। 'कर्मण्यधिकरणे च।' ३।३।९३ इति धात्वः किः। **आसन्।** 'व्यापारा'इति शेषः। **तदभेदेन** तस्य तादृशचरितस्य रामादेरभेद ऐक्यमिति यावत्, तेन तथोक्तेन। **स्वात्मानम्। प्रतिपद्यते**। अयम्भावः—यद्यपि"अयं रामः, इयं च सीता" "अयमहम्, इयं च मे प्रिया"इति, 'अयं रामः सीताविषयकरतिमान् सेतुबन्धादिविधाता, अहं दीनः शत्रुभिरनेकशः पराजितः प्रेष्यः प्रेष्याविषयकरतिमान्'इति च यथाऽवगम आपामरमिति साधारणः। तथा 'अयं रामोऽहमिव प्रियानिरतः, तत एव—प्रियाविरहेण विलापादिविधाता'इत्यपि, एवं तत्तद्भेदकांशपरित्यागपुरस्कृतः 'अयमहं रामः' इत्यादिरवगमोऽसाधारणः, तथाऽपि—अत्र, असाधारणो नाम, "अयं परमेश्वरो रामः।"इत्येवंज्ञानविषयो रामादिः, "अहं दीनः"इत्येवंज्ञानविषयः स्वात्मा पुनः साधारण इति विवक्षितः, एवं च-लोकोत्तरचरिततयाऽसाधारणस्य रामादेर्लौकिकव्यापारकारितया साधारणस्य स्वात्मनोऽभेदाध्यवसायः साधारणीकरणम्। असाधारणेन रामादिना च समं यदा प्रमात्राऽभेदोऽध्यवसीयते, तदा तत्तदनुभावव्यभिचारिभावानामपि सीताऽऽदिविषयकरत्यादीनां च स्वत एवाभेदः। न च तदानीं किञ्चिन्मात्रं स्वात्मानं स्वात्मतयाऽवैति। इदमुक्तम्—असाधारणेषु रामादिविभावतदनुभावादिषु साधारण्याभिमानात् 'रामोऽह'मिति प्रतिपत्तौ श्रीरामाद्युत्साहादेरभेदेन स्वादनाभिधेयेन व्यापारेण स्ववासनैव सर्वैः सामाजिकैरास्वाद्यते। इति। न चैवं सामाजिकेष्विव तदितरेष्वपि विभावादेर्व्यापारः प्रभवेदिति शङ्क्यम्, मण्यादिसन्निधाने पावकीयशक्तेरिव निर्वासनत्वसन्निधाने तेष्वपि विभावादिव्यापारस्य प्रवद्धताकल्पनात् ॥ ३२ ॥

ननु भवतु तथा विभावादिव्यापारेण सामाजिकानां नायकाद्यभेदाद्यध्यवसायः, किन्तु कर्त्तुमशक्ये समुद्रोल्लङ्घनादौ कथमुत्साहादिः सम्पत्स्यते इत्याशङ्कते—नन्वित्यादिना।

**ननु। मनुष्यमात्रस्य**। 'विभावादेर्व्यापारेण रामादिनाऽभेदाध्यवसायं नीतत्वेऽपि मनुष्यतामपरित्यज्यावस्थितत्वादिति शेषः। **समुद्रलङ्घनादौ। कथम्। उत्साहबोधः** 'सङ्गच्छते' इति शेषः। इत्यतः। **उच्यते—४३ उत्साहादि**..इत्यादिना।

४३ **नृणाम्। अपि। साधारण्याभिमानतः** साधारण्यस्य विभावादिव्यापारेण समर्पितस्य रामहनुमदादिनाऽभेदाध्यवसायस्याभिमानस्तस्मात्। पञ्चम्यास्तसिल्। **समुद्रादिलङ्घनादौ**। अत्राद्येनादिना पर्वतशकुन्तलादीनां ग्रहणम्, अन्त्येनोत्फाल्यालिङ्गनादीनाम्। **उत्साहादिसमुद्बोधः**। आदिना रत्यादेर्ग्रहणम्। **न** नैव। **दुष्यति** निरुध्यते। यद्वा—'अपी' ति 'समुद्रादिलङ्घनादौ' इत्यनेन योज्यम्। तथा सति, किम्पुनः सुखसम्भोगादावित्यर्थः पर्य्यवसीयते। 'नृणामपी' ति पक्षे तु यद्यपि सहृदयानां विभावादिव्यापारेण लोकोत्तरतां नीतत्वे नृतयाऽभिमननमनुचितं, तथाऽपि तथा नृतयैवाभिमतानामिति भावः ॥ ३३ ॥

अत्रायं निष्कर्षः—तत्र तावत् विभावादिसम्बन्धिनः साधारणीकरणाख्येन व्यापारेण नृणां रामादिभिः समं साधारण्याभिमानः, ततश्च तत्तदुत्साहादिप्रत्ययः सम्पद्यते। इति। अत्र तर्कवागीशाः—"ननु ज्ञानप्रत्यासत्त्या सन्निकृष्टस्योत्साहादेः साक्षादेव सामाजिके प्रकारत्वमस्तु, किं वासनायाः प्रकारत्वाङ्गीकारात्? "पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम्।" इत्यादिना प्राचीनव्यवहारेण "धर्मिणि सर्वमभ्रान्तम्, प्रकारे तु विपर्य्ययः।"इत्युक्तदिशा रसबोधस्य वासनांऽशे प्रमा त्वङ्गीक्रियते, एतदभिप्रायेणैव पूर्वकारिकायां प्रमातृपदोपन्यासः।" इत्याहुः।

रत्यादयोऽपि साधारण्येनैव प्रतीयन्ते इत्याह-

**४४ साधारण्येन रत्यादिरपि तद्वत् प्रतीयते ॥ ३४ ॥**

रत्यादेरपि हि आत्मगतत्वेन प्रतीतौ सभ्यानां व्रीडाऽऽतङ्कादिर्भवेत्, परगतत्वेन तु अरसताऽऽपातः।

विभावादयोऽपि प्रथमतः साधारण्येन प्रतीयन्ते इत्याह-

**४५ परस्य न परस्येति ममेति न ममेति च।**
**तदाऽऽस्वादे विभावादेः परिच्छेदो न विद्यते ॥ ३५ ॥**

---

जिज्ञासूनां बोधसौकर्य्याय पूर्वकारिकायाम् 'उत्साहादी'त्यादिपदेन बोधितमप्यर्थं समुपदेष्टुं प्रतिजानीते-**रत्यादय** इत्यादिना।

**रत्यादयः** 'उत्साहतो व्यतिरिक्ताः स्थायिभावाः' इति शेषः। **अपि**। **साधारण्येन** 'विभावादिव्यापारसमर्पितेने' ति शेषः। **एव**। **प्रतीयन्ते** 'सीताऽऽदिविषयिण' इति शेषः। इत्येवम्। **आह**-४५**साधारण्येने**त्यादि।

४४ **तद्वत्** 'यद्वदुत्साहः समुद्रलङ्घनादिविषयक' इति शेषः। **रत्यादिः**। 'स्थायिभाव' इति शेषः। **अपि**। **साधारण्येन** 'विभावादिव्यापारसमर्पितेने'ति शेषः। **प्रतीयते**। 'सीताशकुन्तलादिविषयकतये'ति शेषः ॥ ३४ ॥

उक्तमेवार्थं युक्त्या समर्थयते-**रत्यादे**रित्यादिना।

**हि** यतः। 'हि हेताववधारणे।' इत्यमरः। **सभ्यानां**। सहृदयतया सभायां महत्त्वं गतानामिति भावः। **आत्मगतत्वेन** स्वात्मनिष्ठतयेत्यर्थः। **रत्यादेः**। **अपि**। 'न केवलं जुगुप्साऽऽदेः' इति शेषः। **प्रतीतौ** प्रत्यये 'सत्या'मिति शेषः। **व्रीडाऽऽतङ्कादिः** व्रीडा ( लज्जा ) चातङ्कः ( तापः शङ्का वा ) चेत्येतावादी यस्य ( शोकादेः ) स इति तथोक्तः। 'रुक्तापशङ्कास्वातङ्क' इत्यमरः। **भवेत्**। **परगतत्वेन** परो नायकस्तत्र गतस्तस्य भावस्तत्त्वं तेन। नायकनिष्ठतयेति भावः। 'रत्यादेः प्रतीता' विति पूर्वतोऽन्वेति। **तु** पुनः। **अरसताऽऽपातः** अरसताया नीरसताया अनास्वादनीयताया इति यावत्, आपात इति तथोक्तः 'भवे'दिति शेषः। रत्यादिरमणीयतायाः सार्वजनीनतयाऽऽत्मगतत्वेन च रत्यादेः प्रतीतेः स्वीकारे तस्यां च तथैव सत्यां न सभ्यानां रमणीयतालाभः, प्रत्युत व्रीडाऽऽतङ्कादिर्भवेत्; तस्मान्न रत्यादेः प्रतीतिः स्वात्मनिष्ठत्यभ्युपेतव्या, परगततयां पुना रत्यादेः प्रतीतौ सत्यां तथा वा तस्याः स्वीकारे सर्वथा रत्यादेरास्वादविलयः, प्रत्युत वैमुख्यमापद्येत, तदित्यवश्यं साधारण्यं स्वीकार्य्यम्। अनेन च परगतत्वात्मगतत्वयोर्निरासः सम्पाद्यते, अत एव निरवरोधो रत्यादे रमणीयताप्रत्ययः सम्पद्यत इति भावः।

ननु यावन्न भवेत् साधारण्यं तावदेव नीरसत्वमङ्गीक्रियतामित्याशङ्कामपनेतुं प्रतिजानीते-**विभावादयोऽपी**त्यादिना।

**विभावादयो** विभावानुभावव्यभिचारिणः। **अपि** 'न केवलं रत्यादय' इति शेषः। **प्रथमतः** पूर्वंत आरम्भादिति यावत्। रसानुभवमारभ्येति भावः। **साधारण्येन** सम्बन्धविशेषस्वीकाररूपस्य प्रतिबन्धस्य परिहारहेतुभूतेन व्यापरेण। सहार्थे तृतीयेयम्। **प्रतीयन्ते**। इत्यभिप्रायगर्भितमिति भावः। **आह**-४५ **परस्ये**त्यादि।

४५ **तदाऽऽस्वादे** तस्य रसस्यास्वादस्तस्मिन् 'भाविनी'ति शेषः। सतिसप्तमीयम्। **परस्या**न्यस्य नायकस्य दुष्यन्तादेरिति यावत्। 'एव शकुन्तलाऽऽदि'रिति शेषः। दुष्यन्तादेरेव शकुन्तलाऽऽदिरित्याकारक इत्यर्थः। **परस्या**न्यस्य नायकस्य दुष्यन्तादेरिति यावत्। **न** 'एव शकुन्तलादि'रिति शेषः। परस्य शकुन्तलाऽऽदिर्नैवेत्याकारक इति भावः। **मम** मत्पदवाच्यस्य सभ्यस्येत्यर्थः। 'एव शकुन्तलाऽऽदि'रिति शेषः। **इति** इत्याकारक इत्यर्थः। **मम**। **न** 'एव शकुन्तलाऽऽदि'रिति शेषः। **इति** इत्याकारक इति भावः। **च** (इदं समुच्चयार्थमव्ययम्)। **विभावादे**र्विभावानुभावव्यभिचारिणाम्। **परिच्छेदो** विभागः सम्बन्धविशेषस्वीकारपरिहाराध्यवसाय इति यावत्। **न**। **विद्यते**। विभावादिपरिच्छेदा-

ननु तथापि कथमलौकिकत्वमेतेषां विभावादीनामित्युच्यते—

४६ विभावनाऽऽदिव्यापारमलौकिकमुपेयुषाम् ।
अलौकिकत्वमेतेषां भूषणं न तु दूषणम् ॥ ३६ ॥

आदिशब्दादनुभावनसञ्चारणे । तत्र, विभावनं रत्यादेर्विशेषेणास्वादाङ्कुरणयोग्यताऽऽनयनम् । अनुभावनमेवम्भूतस्य रत्यादेः समनन्तरमेव रसादिरूपतया भावनम् । सञ्चारणं तथाभूतस्यैव तस्य सम्यक् चारणम् ।

---

परपर्य्यायस्य तादृशाध्यवसायरूपस्य प्रतिवन्धस्य निवृत्त्या, उपहितः साधारणीकरणाख्यो व्यापारः सामाजिकस्य शकुन्तलादिर्मम दुष्यन्तादेश्चेति प्रतीतिमखण्डामेव जनयतीति भावः ॥३५॥

अयम्भावः—"विभावादेः साधारणीकरणकव्यञ्जनाऽपरपर्य्यायव्यापारेण परत्वं ममत्वं च निवर्त्तेते । तदनु परकीयत्वं मामकीनत्वं च तिरोधीयेते तथा सति तत्तदनुभावत्वसञ्चारित्वानवगमे रसास्वादः, अन्यथा तु रसास्वाद एव न, परिच्छेदे तस्य प्रतिवन्धात् ।" इति ।

एवं ब्रह्मण इव रसस्यापि निर्विशेषत्वं प्रदर्शयितुं साधारणीकरणव्यापारेण तेषां तेषां साधारण्यमुपपाद्य लौकिकानामपि विभावादीनामलौकिकत्वसाधनोपायं निरूपयितुमुपक्रमते—नन्वित्यादिना ।

**ननु** । **तथाऽपि** विभावादीनां साधारणीकरणाख्यव्यापारस्वीकारेऽपीति भावः । **एतेषाम्** । **विभावादीनां** विभावानुभावव्यभिचारिणाम् । **अलौकिकत्वमेतल्लोकवैलक्षण्यम्** । **कथम्** । 'सङ्घटते' इति शेषः । **इतीति** कृत्वा । **उच्यते—४६ विभावनादिव्यापारमित्यादि** ।

**४६ अलौकिकम्** । **विभावनादिव्यापारं** विभावनानुभावनसञ्चारणात्मकं व्यापारमित्यर्थः । **उपेयुषां** प्राप्तवताम् । 'क्वसुश्च' ३।२।१०७। इति क्वसुः ( यद्यपि छन्दस्येवैष आम्नातः, तथाऽपि प्रयोगभूयस्तया नास्य अप्रयोज्यत्वमिति वोध्यम् । ) **एतेषां** विभावादीनामित्यर्थः । **अलौकिकत्वम्** । 'सम्पद्यमान' मिति शेषः । **भूषणम्** । **न** । **तु** । **दूषणम्** । अलौकिकव्यापाराणामलौकिकत्वमेव शोभते, न पुनर्लौकिकत्वमिति भावः ॥ ३६ ॥

इदं वोद्धव्यम्—मा भूदलौकिकाल्लौकिकार्थसम्पत्तिः, किन्तु अलौकिकार्थसम्पत्तिर्भवत्येव; तथा च काव्यनिबद्धतयाऽलौकिकतां गतानां विभावादीनामलौकिकार्थरूपस्य रसस्य सम्पत्तिः सभ्यानामनुभवसिद्धा स्थाने, सङ्गच्छते चैवमलौकिकयो रसविभावादिकयोरसाधारणः कार्य्यकारणभावः सम्पाद्यसम्पादकभावो वा व्यङ्ग्यव्यञ्जकभावो वाऽपि । इति ।

वोधसौकर्य्याय कारिकास्थादिपदं विवृणोति—आदिशब्दादित्यादिना ।

**आदिशब्दात्** 'विभावनादिव्यापार' मित्यंशभूतमादिशब्दं प्रयुज्येत्यर्थः । ल्यब्लोपे पञ्चमीयम् । **अनुभावनसञ्चारणे** । 'गृहीते' इति शेषः । **तत्र** तेषु विभावनानुभावनसञ्चारणेषु मध्ये इति यावत् । **विभावनं** विभावकत्वम् । 'नामे'ति शेषः । **विशेषेणा**तिशयेनेतरापेक्षया वैलक्षण्येनेति यावत् । **रत्यादेः** स्थायिभावस्य सञ्चारिभावस्य चेत्यर्थः । **आस्वादाङ्कुरणयोग्यताऽऽनयनमास्वादस्य** चमत्कारविशेषस्याङ्कुरणमङ्कुरसदृशीभवनं सूक्ष्मरूपेणाविर्भाव इति यावत्, तस्य या योग्यता तस्या आनयनमिति तथोक्तम् । **अनुभावनम**नुभावकत्वं नामेत्यर्थः । **एवम्भूतस्य** सूक्ष्मरूपेणाविर्भूतस्याङ्कुरितस्येति यावत् । **रत्यादेः** 'स्थायिभावस्य व्यभिचारिभावस्य चे'ति शेषः । **समनन्तरं** सूक्ष्मात्मनाऽङ्कुरणानन्तरमिति भावः । **एव** । **रसादिरूपतया** रस आदिर्येषां (भावादीनाम्) ते एव रूपाणि येषां तान् वा रूपयन्तीति तथोक्तास्तेषां भावस्तत्ता तया तथोक्तया । **भावनं** सम्भावनमुद्बोधनमिति यावत् । इदं वोद्धव्यम्—यद्यपि विभावस्य व्यापारेण विभावितस्य रत्यादेः सूक्ष्मात्मनाऽऽस्वादनीयता सम्भवति, तथाऽपि वस्तुतया न रसादिरूपत्वम्, अनुभावपरिपुष्टस्यैव रसादिरूपत्वाङ्गीकारात्, अथात्र रसादिरूपतापदं सम्भविष्यद्रूपतामुपादायैवोपचरितम् । इति। **सञ्चारणं** सञ्चारकत्वं नामेत्यर्थः । **तथाभूतस्य** रसादिरूपेणाविर्भूयैवावस्थितस्य । **एव** । **तस्य** रत्यादेः स्थायिभावस्य व्यभिचारिभावस्य चेत्यर्थः । **सम्यग्** रसाद्यनुकूलतया रसादिरूपेणाविर्भावयोग्यतयेति यावत् । **चारणं** प्रापणं परिपोषण-

विभावादीनां यथासङ्ख्यं कारणकार्यसहकारित्वे कथं त्रयाणामेव रसोद्बोधे कारणत्वम् ? इत्युच्यते—

४७ कारणानि च कार्य्याणि सहकारीणि लोकतः।
रसोद्बोधे विभावाद्याः कारणान्येव ते पुनः ॥ ३७ ॥

---

मिति यावत्, एतेनैव परिपोषं गतस्य रत्यादेर्निर्वेदादेश्चात्यन्तास्वादयोग्यतासम्भवात्। एवं च—आस्वादपरिपोषातिपोषजनकत्वेनैवानुभावसञ्चारिणोरास्वादजनकत्वमिति सिद्धम्। न च शृङ्गारादावेव सञ्चारिव्यापारस्यापि स्वीकारौचित्यम्, न तु निर्वेदादावपीति शङ्क्यम्, शृङ्गारादाविव निर्वेदादावपि प्रतीयमाने सञ्चार्य्यन्तरसम्भवात्। अत्रेदं सङ्कलनम्— अर्थस्तावत् विभावादीनां व्युत्पत्तिप्रदर्शनपुरःसरं स्फुटीकृत एव। अथेदं बोद्धव्यम्, विभावनं विभावस्य, अनुभावनमनुभावस्य, सञ्चारणं पुनः सञ्चारिणो व्यापारः, अत्रापि कारणत्वं विभावस्य, कार्य्यत्वमनुभावस्य, सहकारित्वं पुनः सञ्चारिणो रूपम्। तदेवं सञ्चारित्वं नाम रत्यादेः कार्य्यविशेषरूपत्वम्, सहकारित्वं पुनः कारणविशेषरूपत्वम्, अथ कथङ्कारं कार्य्यविशेषात्मनाऽभिमतस्य निर्वेदादे रसान्तरे वा रत्यादेः सञ्चारिणः कारणविशेषरूपत्वं सङ्घटते? इति चेत्! साधनस्यानुवादिमते स्वकारणानुमितौ मनसः सहकारितया लोके तथा व्यपदेशात्। न च तथाऽपि निर्वेदादे रत्यादिकार्य्यतयाऽनुभावतैव युक्ता, न पुनः सञ्चारितेति शङ्क्यम्, व्यापारवैलक्ष्यण्येन फलवैलक्षण्याद् व्यपदेशवैलक्षण्यौचित्यात्। इति। विभावनादिव्यापारस्य च यदवच्छेदकत्वं तद्दर्शितमेव स्वयं ग्रन्थकृता, तस्य च लोकोत्तरत्वात् विभावादेरपि लोकातीतत्वं निर्बाधम्। तत्पुना रसस्य लोकातीतत्वे न कस्यचिद्विप्रतिपत्तिः। रसस्यालौकिकत्वं पुनर्वेदान्तिनां सिद्धान्ते ब्रह्मानन्दसादृश्यमधिरोहति। इति।

विभावादीनां रसोद्बोधे कारणमात्रत्वं व्यवस्थापयितुमुपक्रमते—**विभावादीना**मित्यादिना।

**विभावादीनां** विभावानुभावसञ्चारिणाम्। **यथासङ्ख्य**मुद्देशक्रमपूर्वकमिति भावः। **कारणकार्य्यसहकारित्वे** विभावस्य कारणत्वे, अनुभावस्य कार्य्यत्वे, सञ्चारिणः पुनः सहकारित्वे सति सिद्ध इति भावः। **त्रयाणां** विभावादीनामित्यर्थः। **एव** 'न त्वेकैकस्य' इति शेषः। **रसोद्बोधे। कथम्। कारणत्वम्? इती**त्याशङ्कायामिति भावः। **उच्यते**—४७ **कारणानी**त्यादि।

४७ **लोकतो** लोकनयेनेत्यर्थः। **विभावाद्या** विभावानुभावसञ्चारिभावा इत्यर्थः। 'क्रमात्' इति शेषः। **कारणानि। च। कार्य्याणि।** तथा। **सहकारीणि** तदभिधेयानि कारणानि। 'भवन्ती' ति शेषः। **पुनः। ते** विभावाद्याः कारणकार्य्यसहकारिरूपाः। **रसोद्बोधे। कारणानि** 'निरुक्तविभावनादिव्यापारत्रयबलाद्रत्यादेरास्वादात्मकत्वेनोत्पादकत्वादि' ति शेषः। **एव** 'न तु कार्य्याणि न वा सहकारीणी' ति शेषः ॥ ३७ ॥

अत्र तर्कवागीशाः—"ननु विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः इति मुनिवचनाद्विभावादीनां समुदितानामेव कारणत्वं वाच्यम्। तथा सति कारणान्येवेति बहुवचनमनुपपन्नम्। तादृशस्थले एकवचनस्यैव युक्तत्वात्। 'तृणारणिमणि' न्यायेन प्रत्येकं कारणताप्रत्ययप्रसङ्गाच्च। अत एव—काव्यप्रकाशे, "शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्। काव्यज्ञशिक्षयाऽभ्यास इति हेतुस्तदुद्भवे ॥" इत्यत्र "त्रयः समुदिता हेतुर्न तु हेतवः" इत्युक्तम्। उच्यते, कारणपदस्य एकधर्म्मावच्छिन्नकार्य्यतानिरूपितकारणतापरत्वे हि एकवचनम्, कारणतामात्रपरत्वे तु बहुवचनं साधु। प्रकृते रत्यादेः कार्य्यभूतयोरप्यनुभावव्यभिचारिभावयो रसरूपतोत्पत्तौ कारणत्वमिति कारणतामात्रे तात्पर्य्यम्, न तु तादृशकारणतायाम्। काव्यप्रकाशनिर्वचनस्य तु कार्य्यकारणभावग्राहकतया कार्यताऽवच्छेदकेऽपि तात्पर्य्यम्।" इत्याहुः।

---

१ यथाऽग्निं प्रति तृणारणिमणीनां प्रत्येकं कारणत्वं तथा यत्र प्रत्येकं कारणत्वं प्रसज्येत तत्रायं तृणारणिमणिन्यायः प्रसज्यत इत्यत आह—**तृणारणिमणिन्यायेनेति** बोध्यम्। २ नेदं युक्तम्, हस्तामलकादीनां व्युत्पत्त्यभ्यासावन्तराऽपि शक्त्यैव काव्योत्पत्तेः। अत एवाहुः—"प्रतिभैव कवीनां काव्यकरणकारणं, व्युत्पत्त्यभ्यासौ तस्या एव संस्कारकारकौ, न तु काव्यहेतू।" इति। विस्तरस्तु काव्यरसायने तस्य च सुधाप्रपायां प्रतिपादितोऽस्माभिः। इति दिक्।

ननु तर्हि कथं रसास्वादे तेषामेकः प्रतिभास इत्युच्यते—

४८ प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते।
ततः सम्मिलितः सर्वो विभावादिः सचेतसाम् ॥ ३८ ॥
प्रपाणकरसन्याया-च्चर्व्यमाणो रसो भवेत्।

यथा खण्डमरिचादीनां सम्मेलनादपूर्व इव कश्चिदास्वादः प्रपाणकरसे सञ्जायते, विभावादिसम्मेलनादिहापि तथा।

---

ननु विभावादयो विभिन्ना अपि कथं रसास्वादे विभिन्नतया न प्रतिभासन्ते? इत्याशङ्कते—नन्वित्यादिना।

**ननु। तर्हि** "विभावाद्याः कारणान्येव" इत्युक्तदिशा विभावादीनां विभिन्नात्मनैव कारणत्वमभिमतं चेत्! तदेत्यर्थः। **रसास्वादे** रसास्वादावसर इति भावः। **तेषाम्।** "विभावादीनाम्" इति शेषः। **कथम्। एको**ऽभिन्नः। **प्रतिभासः** प्रतीतिः। प्रतिभासनं प्रतिभास इति भावे घञ् प्रत्ययः। 'एकप्रतिभास'इति समस्तपाठेऽपि स एवार्थः। विभिन्नकारणानां विभिन्नकार्य्यतयैव परिणामस्य (प्रतीतेः) 'उचितत्वा'दिति शेषः। विभावादेरतीतस्यापि रसास्वादकारणत्वाभिधानं तज्ज्ञानाभिप्रायेणेति बोद्धव्यम्। **इति** इत्याशङ्कायामित्यर्थः। **उच्यते ४८ प्रतीयमान**इत्यादि।

४८ **सचेतसां** सहृदयानां काव्यभावनापरिपक्वधिषणानामिति यावत्। **प्रथमं** पूर्वम्। 'रसानुभवा' दिति शेषः। **प्रतीयमानः** प्रतीतिपथं प्रतिपद्यमानः। **विभावादिः।** आदिनाऽनुभावव्यभिचारिणोर्ग्रहणम्। **प्रत्येकं** पृथक्पृथक्। **हेतुः** कारणम्। विभावोऽनुभावो व्यभिचारी चेति त्रय एव रसानुभवात्प्राक् कारणभूता इति भावः। **ततः** तदनन्तरं रसानुभवावसर इति यावत्। **सर्वः। सम्मिलितः** पार्थक्यं परित्यज्य रत्यादिविशिष्टः सन् समष्ट्यात्मनाऽवस्थितो विभावादिरिति भावः। **प्रपाणकरसन्यायात्** प्रपीयते इति प्रपाणं तेन गर्वित इति प्रपाणकः, सोऽसौ रसस्तस्य न्यायस्तस्मात् तमनुसृत्येत्यर्थः। 'ल्युट् च' ३।३।११५ इति ल्युट्। 'उपसर्गाद्बहुलम्' ८।४।२८ इति नस्य णत्वम्। 'अवक्षेपणे कन्।' ५।३।९५ इति कन्। ल्यबर्थेयं पञ्चमी। **चर्व्यमाण**श्चर्वणया विषयीक्रियमाण इति भावश्चर्वणा च स्वाभिन्नाह्लादमयी काऽपि वृत्तिः। **रसः। भवेत्।** रसस्य रसात्मनाऽनुभवावसरे विभावादयस्त्रयोऽपि रत्यादिविशिष्टाः सम्मिलिता अभिन्ना अवतिष्ठन्त इति भावः॥ ३८॥

प्रपाणकरसन्यायं विवृणोति—यथेत्यादिना।

**यथा। खण्डमरिचादीनाम्।** आदिनाऽऽमीक्षाकर्पूरयोर्ग्रहणम्। तत्र खण्डः शुद्धा शर्करा पानविशेषो वा, मरिचं प्रसिद्धम्। आमीक्षा शृते क्वथिते तप्ते पयसि दध्नः सम्पर्कात् सम्पद्यमानः कोऽपि रसः, कर्पूरं प्रसिद्धम्। 'खण्डोऽस्त्री शकले नेक्षुविकारमणिदोषयोः। खण्डः पानान्तरे भेदे' इति मेदिनी, 'आमीक्षा सा शृतोष्णे या क्षीरे स्याद्दधियोगतः।' इत्यमरश्च। **सम्मेलनात्। अपूर्वो**ऽननुभूतपूर्वः। **इव।** इदमुत्प्रेक्षार्थम्। **कश्चित्** अनिर्देश्यस्वरूपः। **आस्वादः। प्रपाणकरसे। सञ्जायते। तथा। विभावादिसम्मेलना**द्विभावानुभावव्यभिचारिणामुपजीव्योपजीवकभावेन सम्मिल्यावस्थानात्। **इहा**स्मिन् रस इति यावत्। **अपि।** 'आस्वादः सञ्जायते' इति च पूर्वतोऽन्वेति। इत्यर्थः।

इदं तत्त्वम्—रसानुभवात्प्रथमं 'विभावोऽयम्,' 'अनुभावोऽयम्,' इत्यात्मिका प्रतीतिः सम्भवतीति विभावादीनां प्रत्येकं हेतुत्वम्। रसानुभवावसरे तु न तथा प्रतीतिः, किन्तु—'विभावादिभिः सम्भूय सचेतसां स्थायी भाव

---

१ विवृतिकारास्तु—इवेत्यपि उपमाघटकमेवामनन्ति, तथाहि—'यथा—खण्डादिचतुष्टयमेलकाज्जायमाने प्रपाणकद्रवे माधुर्य्यादिविलक्षणो विशिष्य निर्देष्टुमशक्य आस्वादो रसाख्यगुणविशेष इव विभावादिचतुष्टयमेलकाज्जायमाने शृङ्गारादिरसेऽप्याह्लादः सञ्जायते इत्यन्वयः। "देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः। आविरासीद् यथा प्राच्यां दिशीन्दुरिव पुष्कलः॥" इत्यादाविव सप्तम्यन्तप्रथमान्तपदार्थयोरुपमाद्वयमुपस्थापयतोर्यथेवशब्दयोर्न पौनरुक्त्यम्। अत एव रसास्वादपदयोः श्लिष्टत्वादुपमानोपमेयभावः।' इति विवृतिः। विभावादीनां चतुष्टयत्वं च रत्याद्येकतममादाय सात्त्विकभावान् वा पृथग्गणयित्वेति बोध्यम्।

**ननु यदि विभावानुभावव्यभिचारिभिर्म्मिलितैरेव रसः, तत् कथं तेषामेकस्य द्वयोर्वा सद्भावेऽपि स स्यात् ? इत्युच्यते-**

**४९ सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत् ॥ ३९ ॥**

**झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते ।**

**अन्यसमाक्षेपश्च प्रकरणादिवशात् । यथा-**

**'दीर्घाक्षं शरदिन्दुकान्ति वदनं, बाहू नतावंसयोः, सङ्क्षिप्तं निबिडोन्नतस्तनमुरः, पार्श्वे प्रमृष्टे इव ।**

---

एव रसः' इति नयेन रत्यादिविशिष्टानां तेषां लोकातीततयाऽवतरितत्वेन न पृथक् प्रतीतिः सम्पद्यत इति न तदा प्रत्येकं हेतुत्वम् । यथाहि- खण्डमरिचामीक्षाकर्पूराणि सम्मेलनात्पूर्वं पृथक्पृथक् स्वस्वास्वादम्, सम्मेलनादुत्तरं पुनरभिन्नकमप्येकम्, तथैव-विभावादयः सम्मेलनात्पूर्वं पृथक्पृथक् स्वस्वास्वादम्, उत्तरं पुनः कमप्येकमभिन्नम् । न च तदा ते स्वयं पृथक् प्रतीयन्ते । तथा ह्युक्तं छान्दोग्ये षष्ठेऽध्याये-"यथा सौम्य! मधु मधुकृतो नितिष्ठन्ति नानाऽत्ययानां वृक्षाणाञ्रसान् समवहारमेकताꣳ रसं गमयन्ति,ते यथा तत्र न विवेकं लभन्ते, अमुष्याहं वृक्षस्य रसोऽस्मि-अमुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सौम्येमाः सर्वाः प्रजाः संति सम्पद्य न विदुः सम्पद्यामहे ।" इत्यादि । इति ।

ननु विभावादयो रत्यादिविशिष्टा रस इत्युच्यते चेत्तर्हि यत्र तेषां कस्यचित् समावेशो नास्ति, कस्यचित् पुनरस्ति तत्र कथं रस इत्याशङ्कते-**नन्वित्यादिना** ।

**ननु । यदि । मिलितैः** समष्ट्यात्मनाऽवस्थितैः । **विभावानुभावव्यभिचारिभिः** । 'सम्भूये'ति शेषः । अत एवात्र सहार्थेयं तृतीया । **एव** 'रत्यादि' रिति शेषः । **रसः** । 'इति सिद्धान्त' इति शेषः । **तत्तर्हि । तेषां** विभावादीनां मध्य इत्यर्थः । निर्धारणार्थेयं षष्ठी । **एकस्य** विभावाद्येकतमस्येति भावः । **द्वयोः** विभावानुभावयोर्विभावव्यभिचारिणोरनुभावव्यभिचारिणोर्वेति भावः । **वा । सद्भावे । अपि । स** रसः । **कथम् । स्यात्? इति** इत्याशङ्क्येत्यर्थः । **उच्यते-४९ सद्भाव** इत्यादि ।

४९ **चेत् । विभावादेः** विभावादित्रिकस्येत्यर्थः । 'मध्ये'इति शेषः । तथाच- विभावानुभाव्यभिचारिणां मध्ये इति निर्गलितोऽर्थः । 'अचोऽन्त्यादिटि ।' १।१।६४ इत्यादिवन्निर्धारणार्थेयं षष्ठी । **द्वयोर्विभावानुभावयोर्विभाव**-व्यभिचारिणोरनुभावव्यभिचारिणोर्वेत्यर्थः । **एकस्य** विभावस्यानुभावस्य व्यभिचारिणो वेत्यर्थः । **सद्भावः । भवेत् । तदा** तर्हि । **झटिति** दुराग्रहमन्तरेति भावः । **अन्यसमाक्षेपे** ऽन्यस्यान्ययोर्वा समाक्षेपः सम्यगाक्षेपो व्यञ्जनया बोधस्तस्मिंस्तथोक्ते। 'सती'ति शेषः । **दोष**स्त्रुटिः । यत्र यदभावस्तत्र तदभावजन्या क्षतिरिति भावः । **न । विद्यते** । किन्तु निवर्त्तत इति भावः । यत्र तु दुराग्रहेणान्याक्षेपस्तत्र तु दोषतादवस्थमेवेति बोध्यम् । अत एव '**झटिति**समो:' सार्थक्यं सङ्गच्छते ॥ ३९ ॥

अन्यसमाक्षेपश्च कथं स्यादित्याशङ्क्याह-**अन्यसमाक्षेप** इत्यादि ।

**अन्यसमाक्षेपः । च । प्रकरणादिवशात्** । आदिना वक्तृबोद्धव्यादिवैशिष्ट्यादेर्ग्रहणम् । 'सम्पद्यत' इति शेषः ।

उदाहरति-**यथा-'दीर्घाक्षं शरदिन्दुकान्ती'** ति ।

**'दीर्घाक्षं** दीर्घे आयते अक्षिणी नेत्रे यस्य तत्तथोक्तम् । कमलपत्राभ्यां मृगलोचनाभ्यामिवायताभ्यां नेत्राभ्यां सम्पन्नमिति भावः । **शरदिन्दुकान्ति** शरद इन्दुस्तद्वत् कान्तिश्शोभा यस्य तत्तथोक्तम् । शरत्कालिकस्य चन्द्रस्य स्वच्छत्वाद्रमणीयतरत्वादिदमुक्तम् । **वदनं** मुखम् । तथा-**अंसयोः** स्कन्धयोः । विषये सप्तमीयम् । **नतौ** विनतौ । **बाहू** । तथा-**निबिडोन्नतस्तनं** निबिडौ परस्परं सँश्लिष्टत्वात्पीनत्वाच्च घनीभूतौ अथ च उन्नतौ तारुण्योद्रेकादुच्चतां प्राप्तौ स्तनौ कुचौ, न तु पयोधरौ (पयोधरत्वे तादृशपुष्टेरसौन्दर्यात्) यत्र तत्तथोक्तम् । **उरो** वक्षःस्थलम् । तथा-**पार्श्वे**

**मध्यःपाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली छन्दो नर्त्तयितुर्यथैव मनसि श्लिष्टं तथाऽस्या वपुः१७'**

**अत्र मालविकामभिलषतोऽग्निमित्रस्य मालविकारूपविभावमात्रवर्णनेऽपि सञ्चारिणामौत्सुक्यादीनाम्, अनुभावानां च नयनविस्फारादीनाम् औचित्यादेवाक्षेपः। एवमन्याक्षेपेऽप्यूह्यम्।**

कक्षयोरधोभागौ। 'पार्श्वमङ्गी तयोरधः।' इत्यमरः। **प्रमृष्टे** संशोधिते पार्श्वोस्थामलक्ष्यत्वात्प्रमार्जिते इति यावत्। 'निर्णिक्तं शोधितं मृष्ट' मित्यमरः। **इव**। 'स्थिते' इति शेषः। तथा-**पाणिमितः** पाणिना करेण लक्षणया मुष्ट्या मितः परिमित इति तथोक्तः। मुष्टिपरिमित इति भावः। **मध्यो** मध्यभाग उदरमिति यावत्। **नितम्बि** नितम्बः पश्चात् कटिभागोऽस्यास्ति विपुलत्वेन प्रशस्तमिति तथोक्तम्। 'अत इनिठनौ।' ५।२।११५ इत्यनेन प्रशंसायामिनिः। 'अमितं चे'ति पाठान्तरे तु अनुप्रासोऽपि। **जघनम्**। तथा-**उदग्राङ्गुली** उदग्रा उन्नताग्रा अङ्गुलयो ययोस्तौ तथोक्तौ। 'अरालाङ्गुली' इति पाठान्तरे तु अराला आकुञ्चिताग्रा अङ्गुलयो ययोस्तौ तथोक्तौ। 'अरालं वृजिनं जिह्मम्' इत्यमरः। **पादौ** 'शोभेते' इति शेषः। इत्येवम्-**यथा**। **एव**। **नर्त्तयितुः** 'गणदासस्ये' ति शेषः। 'कामस्ये'ति तु व्याख्यानं तत्रत्यग्रन्थानवलोकविजृम्भितम्। **मनसि**। **श्लिष्टं** संसक्तम्। **छन्दो**ऽभिप्रायः। 'अभिप्रायश्छन्द आशयः' इत्यमरः। **तथा**। **अस्या** मालविकाया इत्यर्थः। **वपुः** शरीरम्। 'मनसः सृष्ट' मिति तु तत्र नोपलभ्यते पाठः। अत्र तर्कवाचस्पतयः-'नर्त्तयितुर्गणदासस्य मनसि यथा छन्द इच्छा यादृशाङ्गसौष्ठवे सति नर्त्तनं सुनिपुणं भवति, तथैवास्या वपुः श्लिष्टं संहतं भवति, स्वतःसिद्धसौन्दर्य्यादिगुणकतया सम्बद्धमित्यर्थः।' इति, 'नर्त्तयितुः नृत्यशिक्षकस्य गणदासस्य मनसि यथैव छन्दोऽभिप्रायः, अङ्गानां यादृशे सौन्दर्य्ये सति नृत्यादिकमतिमनोहरं भवेदित्यर्थः। तथा तेनैव प्रकारेणास्या मालविकाया वपुः शरीरं श्लिष्टं सङ्गतं गणदासेन सम्बद्धमित्यर्थः, स्वभावसुन्दराकृतिरियं पुनर्गणदासेन भावविशेषसमावेशान्निरतिशयसुन्दराकृतिरिदानीं जातेति भावः।' इति सिद्धान्तवागीशाश्चाहुः। अनेन च नर्त्तनपराया नृत्तारम्भोचितावस्थानविशेष उक्तः, तथा चोक्तं वसन्तराजे-'अङ्गस्य चतुरस्रत्वं समपादौ लताकरौ। आरम्भे सर्वनृत्यानामेतत्सामान्यमिष्यते॥' इति। मालविकाऽग्निमित्रे मालविकाया वर्णनमेतत्, अत्र च चतुर्थवाक्यार्थं प्रति पूर्वपादवाक्यार्थस्थितपदार्थानां हेतुतया निर्देशात् काव्यलिङ्गम्। शार्दूलविक्रीडितं वृत्तम्। तल्लक्षणं चोक्तं प्राक् ११ पृष्ठे॥ १७॥

उदाहरणतात्पर्य्यं निर्दिशति-अत्रेत्यादिना।

**अत्रा**स्मिन्नुदाहृते पद्य इति यावत्। **मालविकाम्**। **अभिलषतः**। **अग्निमित्रस्य**। **मालविकारूपविभावमात्रवर्णने** मालविका च रूपं चेति ते एव विभावौ आलम्बनोद्दीपनविभावौ, तावेवेति. तस्य वर्णनं तस्मिन् तथोक्ते। 'क्रियमाणे सती'ति शेषः। अन्ये तु-'मालविकारूपमेव विभावस्तन्मात्रस्य वर्णने'इति व्याचक्षते। **सञ्चारिणां** व्यभिचारिभावानाम्। **औत्सुक्यादीनाम्**। आदिना हर्षादीनां ग्रहणम्। **अनुभावानाम्**। **च**। **नयनविस्फारादीनाम्**। आदिना मन्दस्मितरोमोद्गमादीनां ग्रहणम्। **आक्षेपो** व्यञ्जनया य एव बोधो जायते स इति भावः। **औचित्याद्** वाच्यस्य विभावस्य विशिष्टत्वादिति भावः। **एव** 'सम्पद्यत' इति शेषः। अयम्भावः-उदाहृतेऽस्मिन् पद्येऽग्निमित्रस्य मालविकाविषयकरतिमत्त्वान्मालविकाऽऽलम्बनं विभावः, तद्रूपसौन्दर्य्यं चोद्दीपनं विभावः, अस्य हि मदनोद्दीपकत्वात्। तदानीं च नयनविस्फारमुखविकाशकालासहिष्णुत्वादीनामनुभावानामौत्सुक्यहर्षादीनां च व्यभिचारिणां स्वतः स्फुटमवगमः। इति।

ननु विभावाक्षेपो विभावानुभावाक्षेपो विभावव्यभिचार्य्याक्षेपश्चेत्येतेऽप्युदाहर्त्तव्या इत्यत आह **एव**मित्यादि।

**एवं** यथोदाहृते पद्येऽनुभावव्यभिचारिणोराक्षेपस्तथेत्यर्थः। **अन्याक्षेपे**ऽन्यस्य विभावस्य अन्ययोश्च विभावानुभावयोर्विभावव्यभिचारिणोर्वेत्यर्थं आक्षेपस्तस्मिन्। **अपि**। **ऊह्यम्** 'उदाहरण' मिति शेषः। तथा च-'परिमृदितमृणालीम्लानमङ्गं, प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु। कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्तच्छेदकान्तः कपोलः॥" इत्यत्र मालतीमाधवा आलम्बनविभावौ मालत्याश्चोद्दीपनविभावोऽपि प्रकरणोन्नेयः। तथा-अत्रैव, माधवस्य मालत्यामनुरागेण जनितो रोमोद्गमादिरनुभावः, उभयोश्च चिन्तौत्सुक्यादिर्व्यभिचारिभावश्च प्रस्ताववैशिष्ट्याद् व्यज्येते। यथा वा-विभावाक्षेपः, "दूरादुत्सुकमागते विवलितं, सम्भाषिणि स्फारितं, संश्लिष्यत्यरुणं, गृहीतवसने किञ्चिन्नतभ्रूलतम्। मानिन्याश्चरणानतिव्यतिकरे वाष्पाम्बुपूर्णेक्षणं, चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि

अनुकार्य्यगतो रस इति वदतः प्रत्याह-

**५० पारिमित्याल्लौकिकत्वात् सान्तरायतया तथा ॥ ४० ॥**

**अनुकार्य्यस्थ ( स्य ) रत्यादेरुद्बोधो न रसो भवेत् ।**

**सीताऽऽदिदर्शनादिजो रामादिरत्याद्युद्बोधो हि परिमितो, लौकिको, नाट्यकाव्यदर्शनादेः सान्तरायश्च, तस्मात् कथं रसरूपतामियात् ? रसस्यैतद्धर्म्मत्रितयविलक्षणधर्म्मत्वात् ।**

---

प्रेयसि ॥' इति । न च 'प्रेयसी' त्यालम्बनविभावोऽस्त्येवेति वाच्यम्, रत्यनुकूलधर्म्मत्वेन तस्य निर्देशाभावात् प्रत्युत 'जातागसी'ति विशेषणदानाद्विरुद्धधर्म्मत्वेन निर्देशात् । इदं पद्यममरुशतकस्य, निराकरणेन प्रसादनपराङ्मुखस्य नायकस्य पुनरागमने किञ्चिदुदितभावाया मानिन्याश्चक्षुर्मात्रक्रियावर्णनपरम् । इतिदिक् इदमत्राकूतम् शकुन्तलादिभिरालम्बनविभावैरुत्पादित, उद्यानादिभिरुद्दीपनविभावैरुद्दीपितः, सुस्मितनिरीक्षणादिभिरनुभावैर्व्यञ्जितो हर्षावेगादिभिः सञ्चारिभिः पोषितश्च दुष्यन्तादावनुकार्य्ये नाट्येनाभिनेये स्थायी भावो रसः, नर्त्तके तु अभिनयनैपुण्येन तुल्यरूपताप्रोत्पादनादारोपितः स्थायी भावः सहृदयानां चमत्कारकारणम् । अयं क्रमः-प्रथमं शकुन्तलाऽऽदिगतो दुष्यन्तादिविषयो रत्यादिरेव रसः सहृदयैः काव्योपात्तलिङ्गद्वाराऽनुमीयते, अनन्तरं तस्य रमणीयविभावाद्यभिनयप्रदर्शननिपुणे दुष्यन्ताद्यनुकारिणि नर्त्तके तुल्यरूपताऽनुसन्धानवशादारोपः साक्षात्काररूपो धर्म्यंशे लौकिकः, आरोप्यांशे तु लोकविलक्षणः 'शकुन्तलेयं दुष्यन्त-विषयकरतिमान्' इत्याद्यात्मकश्चमत्कारकारणं रस इति । न च तुल्यताया भेदमूलत्वाद्बाधे सति कथं दुष्यन्ताद्यारोप इति शङ्क्यम्, अभिनवनैपुण्येन तस्याः प्रथमतो दूरमुत्सारितत्वात् । इति ।

इत्येवंनायकनिष्ठमेव रसं मन्यमानानाम् भट्टलोल्लटादीनाम्मतं निराकर्त्तुम्प्रवृत्तः स्वाभिप्रायमाविष्करोति-**अनुकार्य्यगत** इत्यादिना ।

**अनुकार्य्यगतो**ऽनुकार्य्यो दुष्यन्तादिविभावस्तं गतस्तत्र निष्ठ इति भावः । **रसः** । **इति** । **वदतो** । व्याचक्षाणान् । **प्रत्याह-५० पारिमित्या**दित्यादि ।

५० **अनुकार्य्यस्थरत्यादे**रनुकार्य्योऽभिनेयो रामादिरूपो विभावादिस्तत्र तिष्ठतीति, सोऽसौ रत्यादिस्तस्य तथोक्तस्य । अनुकार्य्यस्येति पाठे तु अनुकार्य्यसम्बन्धिन इत्यर्थः । **पारिमित्यात्** परिच्छिन्नत्वादिति भावः । **लौकिकत्वा**द्दिव्यत्वासम्पत्तेः 'विभाषा गुणेऽस्त्रियाम् ।' २।३।२५ इत्युभयत्र हेतौ पञ्चमी । **तथा** । **सान्तरायतया**-ऽन्तरायेण विघ्नेन व्यवधानेनेति यावत् सह वर्त्तत इति तस्य भावस्तत्ता तया । कालादिना व्यवधानं नीतत्वादिति भावः । 'हेतौ ।' २।३।२३ इति तृतीया । **उद्बोध** आस्वादनीयतया सम्पद्यमानत्वम् । **रसः** । **न** । **भवेत्** । अयम्भावः-यद्यनुकार्य्यगत एव रत्यादी रसः ? तदा तन्मात्रनिष्ठस्य रत्यादेः सकलसहृदयसन्निविष्टत्वाभावात् परिमितत्वे रसस्यापि पारिमित्यमापद्येत, न च तथा युक्तम्; अस्य ब्रह्माभिन्नत्वेन निरतिशयासदृशाह्लादरूपत्वात् । तथा-स्वगतरत्यादिरिवानुकार्य्यगतरत्यादिरपि लोकसाधारणत्वेऽलौकिकत्वं तिरोधीयेत, अलौकिकस्य लौकिकत्वं परमेश्वरस्य पामरत्वमिव । एवम्-अनुकार्य्यो रामादिः स च कालान्तरे देशान्तरे देहान्तरे च जातः, स्वयं च सम्प्रति अस्मिन् देशे देहे चेति कालान्तरे देशान्तरे देहान्तरेणानुभूतो रसास्वादो नर्त्तकेनाभिनीय सम्भाव्यमानोऽप्यन्तरित एव, ब्रह्मानन्दस्येव रसास्वादस्य सान्तरायत्वं पुनर्नितान्तमयुक्तम् । इति ॥ ४० ॥

तदेव निर्दिशति-**सीताऽऽदिदर्शनादिज** इत्यादिना ।

**हि** यतः । **सीताऽऽदिदर्शनादिज** आदिपदाभ्यां रामादीनां स्पर्शनादीनां च ग्रहणम् । **रामादिरत्याद्युद्बोध** आदिभ्यां रामसीताऽऽदीनां हासादीनां च ग्रहणम् । **परिमितः** । **लौकिकः** । तथा-**नाट्यकाव्यदर्शनादेः** । आदिना श्रवणालोचनादेर्ग्रहणम् । **कथम्** । **रसरूपताम्** । **इयात्** प्राप्नुयात् ? ननु पारिमित्यादित्वेऽपि रत्यादी रस इत्यङ्गीक्रियतामिति चेन्नेत्याह-**रसस्य** । **एतद्धर्म्मत्रितयविलक्षणधर्म्मत्वात्** एतद्धर्म्मत्रितयं यस्य तस्माद्विलक्षणधर्म्मा तस्य भावस्तत्त्वं **तस्मात्** । रसो हि न परिमितो लौकिकः **सान्तरायश्च** न स्वरूपसन्, अनुकार्य्यस्थतायां पुना

---

१ "अनुकार्य्यो रामादिः, तद्गतो रत्यादिना परिमितो, लौकिकः, कालान्तरेसम्भूतत्वात् सान्तरायश्च, स कथमपरिमितस्यालौकिकस्यानुभूयमानस्य च रसस्य स्वरूपसत्तामधिकुर्य्यात् ? " इति पाठान्तरं तु साधु स्पष्टार्थं च ।

अनुकर्त्तृगतत्वं चास्य निरस्यति—

५१ शिक्षाऽभ्यासादिमात्रेण राघवादेः सरूपताम् ॥ ४१ ॥
दर्शयन्नर्त्तको नैव रसस्यास्वादको भवेत् ।

किञ्च—

५२ काव्यार्थभावनेनाय—मपि सभ्यपदास्पदम् ॥ ४२ ॥

---

रत्यादेः पारिमित्यादित्वं तस्य स्यादिति भावः । तथाऽऽहुस्तर्कवागीशाः—"एतदिति पारिमित्यादीत्यर्थः । विलक्षणत्वं च तदभावव्याप्यत्वमेव । एवं च—यद्धर्म्माभावव्याप्यो यद्वृत्तिधर्म्मस्तद्धर्म्मस्तद्भेदव्याप्य इति नियमः सम्पद्यते । यथा पटवृत्तिधर्म्मः पटत्वं घटत्वधर्म्माभावव्याप्यो भवति, घटत्वधर्म्मोऽपि पटभेदव्याप्यो भवति । यथाश्रुतं तु न सम्यक् । तथाहि—यद्धर्म्मो यद्वृत्तिधर्म्मभिन्नस्तद्धर्म्मस्तद्भेदव्याप्य इति नियमो नोपपद्यते । घटत्वं घटवृत्तिधर्म्मान्तरविलक्षणम्, न तु घटभेदव्याप्यमिति, व्यभिचारात् । यदि तु यद्वृत्तित्वावच्छिन्नप्रतियोगिताको भेदो विवक्ष्यते, तदा नायं दोष इत्यवधेयम् ।" इति ।

कुज्झटिकाऽऽकुलिते प्रदेशेऽविद्यमानस्यापि धूमस्याभिमानात् धूमनियतो धूमध्वजो वह्निरनुमीयते, तथा नर्त्तकेनैव स्वशिक्षाऽभ्यासमहिम्ना सुनिपुणं "ममैवैते विभावानुभावव्यभिचारिणः" इति प्रकाशितैस्तस्मिन्नविद्यमानैरपि तैस्तन्नियतः स स स्थायी भावोऽनुमीयमानोऽपि स्वचैभवेन सामाजिकानां चेतसि रस्यमानतया चमत्कृतिमादधद् रसतां प्रतिपद्यते, तस्मान्नर्त्तकेऽनुमीयमानः स स स्थायीभाव एव स स रस इति स्वीक्रियतामिति श्रीशङ्कुकादीनां मते रसस्य नर्त्तकगतत्वं निराकर्त्तुमुपक्रमते—**अनुकर्त्तृगतत्वमि**त्यादिना ।

**अस्य** रसस्येत्यर्थः । **अनुकर्त्तृगतत्व**मनुकर्त्ताऽभिनेता नर्त्तक इति यावत् तत्र गतस्तस्य भावस्तत्त्वं तत्तथोक्तम् । नर्त्तकनिष्ठत्वमिति भावः । **च** पुनः अनुकार्य्यगतत्वनिरसनानन्तरमिति यावत् । **निरस्यति**—५१ **शिक्षाऽभ्यासादिमात्रेणे**त्यादिना ।

५१ **शिक्षाऽभ्यासादिमात्रेण** शिक्षा गुरूपदेशलाभश्चाभ्यासः शिक्षितस्यार्थस्य मुहुरनुष्ठानेन संस्कारातिशयश्चेति तावादी यस्य ( नैपुण्यादेः ) सः, शिक्षाऽभ्यासादिरेवेति तेन तथोक्तेन । मात्रपदेन काव्यार्थभावनाव्यवच्छेदः । **राघवादे**रनुकार्य्यस्य नायकस्येत्यर्थः । **सरूपताम्** । **दर्शयन्** । **नर्त्तकः** । **रसस्य** । **आस्वादको**ऽनुभविता । **न** । **एव** । **भवेत्** । अयम्भावः—नर्त्तकः केवलं शिक्षाऽभ्यासादिप्रभावेण विभावादेः सादृश्यं प्रकटयितुं प्रभवति, न पुना रसास्वादानुभवितृत्वम्, स्वस्य सहृदयत्वमप्राप्यैव तत्र तथा प्रवृत्तत्वात् । सामाजिकानां च सहृदयत्वेऽपि तस्य तस्य स्थायिनो भावस्यास्वीकारात् स्फुटं रसाभावः । अत एवाहुः—"न तावत् नर्त्तकनिष्ठतयाऽनुमीयते, रामदुष्यन्ताद्यभावेन तद्गत्यादेरपि अभावादसतः सत्तयाऽनुमानागोचरत्वात्, रामदुष्यन्तादिनिष्ठस्य कथमपि नर्त्तकनिष्ठतयाऽनुमितस्यापि रत्यादेः सामाजिकेऽभावात् तेन च चमत्कारासम्भवाच्च । न रामदुष्यन्तादिनिष्ठतया जायते विभावादेर्वास्तविकाभावात्, न वा सामाजिकनिष्ठतयाऽभिव्यज्यते, सिद्धस्यैव व्यङ्ग्यत्वसम्भवात्तद्रसस्य चासिद्धत्वात् ।" इति ॥४१॥

ननु यदि सहृदय एव कदाचिन्नर्त्तको भवेत्, तर्हि तस्यापि रसास्वादानुभवितृत्वं मा भूदित्याशङ्क्याह-किञ्चान्यदपि 'उच्यते' इति शेषः । ५२ **काव्यार्थभावनेनाय**मित्यादि ।

५२ **अयं** नर्त्तक इत्यर्थः । **अपि** । **काव्यार्थभावनेन** काव्यस्यार्थो व्यङ्ग्यतया विभावादिस्तस्य भावनं तन्मात्रनिष्ठचित्तत्वं तदेकतानत्वमिति यावत् तेन तथोक्तेन । 'सरूपतां दर्शय'न्निति पूर्वतोऽन्वेति । **सभ्यपदास्पदं** सभ्यानां सामाजिकानां पदं रसास्वादकत्वरूपं लक्ष्म पदवी वा तस्यास्पदं पात्रं प्रतिष्ठा वेति तथोक्तम्, तथाभूत इति भावः । 'भवे' दिति शेषः । 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ।' इति 'प्रतिष्ठाकृत्यमास्पदम् ।' इति चामरः ॥ ४२ ॥

यदि पुनर्नटोऽपि काव्यार्थभावनया रामादिस्वरूपतामात्मनो दर्शयेत् तदा सोऽपि सभ्यमध्य एव गण्यते।

**५३ नायं ज्ञाप्यः स्वसत्तायां प्रतीत्यव्यभिचारतः।**

यो हि ज्ञाप्यो घटादिः स सन्नपि कदाचिदज्ञातो भवति, नह्ययं तथा प्रतीतिमन्तरेणाभावात्।

**५४ यस्मादेष विभावादि- समूहालम्बनात्मकः॥ ४३॥**

**तस्मान्न कार्य्यः-**

यदि रसः कार्य्यः स्यात् तदा विभावादिज्ञानकारणक एव स्यात्। ततश्च रसप्रतीतिकाले

---

उक्तमर्थं निर्दिशति **यदी**त्यादिना।

**यदि। पुनः। नटो** नर्तकः। **अपि। काव्यार्थभावनया** काव्यस्यार्थः प्रतिपाद्यो विभावादिस्तस्य भावना चेतसा तथाभवनं तया तद्द्वारेत्यर्थः। **आत्मनः। रामादिस्वरूपतां** रामादेर्विभावादेः सरूपता ताम्। समानं रूपं यस्य तस्य भावस्तत्ता। 'ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबन्धुषु।' ६।३।८५ इति सादेशः। **दर्शयेत्। तदा। स** नट इत्यर्थः। **अपि। सभ्यमध्ये। एव। गण्यते।** वस्तुतस्तु नर्त्तकस्य रङ्गानुरञ्जनमात्रपरतया विभावादिभावितान्तःकरणताविरहान्न भवत्येव रसास्वादः। अत एव- अपीति सुप्रयुक्तम्।

अस्यापरिमितत्वादि साधयितुं प्रवृत्तोऽनुषङ्गेण "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति भरतसूत्रे पञ्चम्या हेतुत्वेनापतितं ज्ञाप्यत्वं कार्यत्वं च निरसितुकामस्तत्र तावज्ज्ञाप्यत्वं निरस्यति-५३ **नायमि**त्यादिना।

५३ **अयं** रस इत्यर्थः। **स्वसत्तायां** स्वस्य ( रसस्य ) सत्ता स्वरूपसत्त्वं तस्याम्। 'सत्या' मिति शेषः। **प्रतीत्यव्यभिचारतः** प्रतीतेर्व्यभिचाराभावात् प्रतीतिमन्तरेणानुपलब्धेरिति यावत्। तर्कवागीशास्तु-'स्वसत्तायां' मित्यत्र षष्ठ्यर्थे सप्तमीं मन्वानाः "षष्ठ्यर्थे सप्तमी। प्रतीतिं विना स्वावस्थानस्याभावात्" इति व्याचक्षते। **ज्ञाप्यो** बोधनीयतायाः विषय इति भावः। **न।** 'भवती'ति शेषः।

तदेव सुस्पष्टमवगमयति-**यो ही**त्यादिना।

**हि** यतः। **यः। घटादिः।** आदिना पटादेः पदार्थस्य ग्रहणम्। **ज्ञाप्यो** बोधनीय इति भावः। 'भवती'ति शेषः। **स** घटादिः पदार्थ इत्यर्थः। **सन्** विद्यमानः। **अपि** 'किम्पुनरविद्यमान' इति शेषः। **कदाचित्** 'ज्ञापकसामग्र्यसद्भावे' इति शेषः। **अज्ञातः। भवति। नहि** नत्वित्यर्थः। **अयं** रस इत्यर्थः। **तथा।** 'यथा ज्ञाप्यो घटादि'रिति शेषः। **प्रतीतिम्। अन्तरेण** विना। **अभावात्** सिद्धत्वाभावात्।

अयं निर्गलितोऽर्थः-यो यो ज्ञाप्यः स कदाचित् दीपादिसद्भावे प्रतीयते, कदाचिद्दीपाद्यसद्भावे च न प्रतीयते, अयं पुना रसः कदाचिन्न प्रतीयते इति न, न वा कदाचित् प्रतीयत इति च; अस्य प्रतीयमानशरीरत्वात्, प्रतीयमानत्वाभावे पुनरस्य सद्भावस्यैवाशक्यत्वम्। इति।

एवं ज्ञाप्यत्वं निरस्य कार्य्यत्वमपि निरस्यति-५४ **यस्मादेष** इत्यादिना।

५४ **एष** रस इत्यर्थः। **यस्मात्** 'कारणादि'ति शेषः। **विभावादिसमूहालम्बनात्मको** विभावादीनां विभावानुभावव्यभिचारिणां समूहः समष्ट्यात्मनाऽवस्थितत्वमिति यावत् स एवालम्बनं तदात्मा स्वरूपं यस्येति तथोक्तः। **तस्मात्** 'कारणा'दिति शेषः। 'रसोऽय' मिति शेषः। **कार्य्यः। न** 'मन्तव्य' इति शेषः॥ ४३॥

तदेव स्पष्टमवगमयति-**यदी**त्यादिना।

**यदि। रसः। कार्य्यः। स्यात्। तदा। विभावादिज्ञानकारणको** विभावादीनां ज्ञानं संवित् तदेव कारणं यस्य तादृशः। **एव** 'न त्वन्यकारणक' इति शेषः। 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः' इति सूत्रोपदिष्टदिशा निष्पत्तिशब्दस्य चोत्पत्त्यर्थस्वीकारेण रसप्रादुर्भावप्राक्क्षणे विभावादिज्ञानस्यैव सत्त्वात्तथात्वस्योपपत्तेरिति भावः। **स्यात्। ततस्त**स्मात् कारणादित्यर्थः। **च। रसप्रतीतिकाले** रसस्य स्वरूपसत्त्वावसर इति भावः।

विभावादयो न प्रतीयेरन् । कारणज्ञानतत्कार्य्यज्ञानादीनां युगपददर्शनात् । न हि चन्दनस्पर्श-ज्ञानं तज्जन्यसुखज्ञानं चैकदा सम्भवति । रसस्य च विभावादिसमूहालम्बनात्मकतयैव प्रतीतेर्न विभावादिज्ञानकारणकत्वमित्यभिप्रायः ।

५५ नो नित्यः पूर्वसंवेदनोज्झितः ।

असंवेदनकाले हि न भावोऽप्यस्य विद्यते ॥ ४४ ॥

न खलु नित्यवस्तुनोऽसंवेदनकालेऽसम्भवः ।

---

विभावादयः । न नैवेत्यर्थः । प्रतीयेरन् । हेतुं स्पष्टयति-कारणज्ञानतत्कार्य्यज्ञानादीनाम् । आदिनो-त्पत्तिविनाशयोर्ग्रहणम् । युगपत् । एकस्मिन्नेवावसर इति भावः । 'युगपदेकदा ।' इत्यमरः । अदर्शनात् । अयम्भावः--कारणकार्य्ययोरुत्पत्तिविनाशयोः कारणज्ञानकार्य्यज्ञानयोरुत्पत्तिज्ञानविनाशज्ञानयोश्च युगपददर्शनाच्च रसप्रतीतिकाले विभावादिः प्रतीयेत, प्रतीयत इति न, विभावादिज्ञानकारणको हि रसरूपः कार्य्यः । इति । तदेव दृष्टान्तमुखेन स्पष्टयति-हि यत इत्यर्थः । चन्दनस्पर्शज्ञानम् । तज्जन्यसुखज्ञानं तस्य विभावादिस्पर्शस्य जन्यं यत्सुखं तस्य ज्ञानमिति तथोक्तम् । च । एकदैकस्मिन् काल इत्यर्थः । न । सम्भवति । यस्मिन् क्षणे चन्दनस्पर्शज्ञानं जायते तस्मिन् क्षणे यथा चन्दनस्पर्शजन्यसुखज्ञानं न सम्भवति, तथा यस्मिन् क्षणे रसानुभवो जायेत तस्मिन् क्षणे विभावादीनामनुभवो न जायेत, कारणकार्य्ययोर्युगपदनुपपत्तेः । ज्ञानस्य क्षणिकत्वात् विजातीययोर्द्वयोरेकक्षणिकत्वासम्भवाच्चेति भावः । बोधसौकर्य्याय पुनः स्पष्टयति-रसस्य । च पुनः । विभावादिसमूहालम्बनात्मकतया विभावादीनां विभावानुभावव्यभिचारिणां समूहः समष्ट्यात्मनाऽवस्थितत्वमेवालम्बनं तदात्मा स्वरूपं यस्य तस्य भावस्तत्ता तयेति तथोक्तया । विभावादीनां समष्ट्यात्मनाऽवस्थितत्वालम्बनात्मत्वेनेति भावः । एव 'न तु विभावादयः कारणं कारणानि वा यस्य तत्तया'इति शेषः । प्रतीतेः । अत्र 'विभाषा गुणेऽस्त्रियाम् ।' २।३।२५ इत्यत्र 'विभाषे'ति योगविभागात् पञ्चमी । विभावादिज्ञानकारणकत्वम् । न नैव । 'मन्तव्य' मिति शेषः । इति । अभिप्रायः ।

ननु यदि रसो नैवं ज्ञाप्यः कार्य्यो वा तर्हि किं नित्यः ? इति चेत् ! नापि नित्य इत्याह-५५ नो नित्य इत्यादिना ।

५५ पूर्वसंवेदनोज्झितः पूर्वं प्रत्यभिज्ञायाः पूर्ववर्त्ति यत्संवेदनं विभावादि संवित् आस्वादानुभवविशेष इति यावत्, यद्वा-विभावादिसंविदः पूर्वं पूर्ववर्त्ति यत् संवेदनं लौकिकं ज्ञानं तस्मात् उज्झितश्च्युतो, यद्वा शून्य इति तथोक्तः । अत एव-नो नैव । 'अभावे नह्यनो नापि' इत्यमरः । नित्यः 'रस' इति प्रसङ्गानुप्रसक्तम् । अयम्भावः-अयं नित्योऽभविष्यत् तर्हि सर्वदैवैकस्वरूपोऽभविष्यत्, न च तथा; प्रत्यभिज्ञाऽवसरे तदनुभवाद्वा प्राक् तस्याभावात् । इति । ननु ब्रह्मणोऽपि समाध्युत्थानान्तरं समाधितो वा पूर्वं न प्रत्ययस्सम्पद्यते तत् किमेतावताऽस्यानित्यत्वमापतितम् ? इति चेत् एवमित्याह-हि यत इत्यर्थः । 'हि हेतावधारणे' इत्यमरः । अस्य रसस्येत्यर्थः । भावः स्वरूपेणावस्थितत्वमिति भावः । अपि 'किं पुनरप्रतीतत्वमि'ति शेषः । असंवेदनकाले 'विभावादीना'मिति शेषः । तथा च-विभावाद्यसंवेदनावसरे इति निष्कृष्टोऽर्थः । न । विद्यते । इदमाकूतम्-विभावादिसंविदात्मैवायमिति विभावादिसंविदोऽभावेऽस्यापि स्वतोऽभाव एवेति तथोक्तम् । इति ॥ ४४ ॥

उक्तमर्थं स्पष्टयितुमाह-न खल्वित्यादि ।

न । खलु नैवेत्यर्थः । नित्यवस्तुनः । असंवेदनकाले ज्ञानाभावावसर इति भावः । असम्भवः सद्भावाभावः । 'सम्पद्यत' इति शेषः । तथोक्तम्-'नासतो विद्यते भावो, नाभावो विद्यते सतः ।' इति । इदमुक्तम्-यद्यपि ब्रह्मणः संविदभावो भवति, तथाऽपि न तस्य स्वरूपासत्त्वमिति तस्यास्तां नित्यत्वम्, अस्य तु विभावादिसंविन्मात्रालम्बनत्वात् विभावादिसंविदवच्छेव सद्भावो, न संविदोऽभावेऽपि । अस्मादयमनित्य इति । 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यादाविवार्थापत्त्याऽऽपतितमनित्यत्वमप्यस्यानिर्वचनीयत्वं साधयितुमाह-५६ न चेत्यादि ।

**५६ न चानादिरनन्तोऽय–मनित्यः सम्भवेद्रसः।**
**अस्य भानमभानं च चर्वणावशतः परम् ॥ ४५ ॥**

**चर्वणायां सत्यां निवृत्तायां च रसस्य भानमभानं चाविरुद्धम् *।**

**५७ नापि भविष्यन् साक्षा–दानन्दमयप्रकाशरूपत्वात्।**
**कार्य्यज्ञाप्यविलक्षण–भावान्नो वर्त्तमानोऽप्ययम् ॥ ४६ ॥**
**विभावादिपरामर्श–विषयत्वात्सचेतसाम्।**

---

५६ **अनादिर्नादिः** पूर्वं उत्पत्तिहेतुभूत इति यावत् यस्येति तथोक्तः। अत एव 'नायं कार्य्यं' इत्युक्तम्। **अनन्तो** नान्तो विनाशो यस्येति तथोक्तः। आवरणभङ्गोत्तरं तथैव स्वरूपेण प्रकाशमानत्वात्, आवरणस्य च स्वरूपसत्तां प्रत्यकिञ्चित्करत्वात्। एतेन नास्य मायाया इवानादित्वमिति द्योतितम्। **अयम्। रसः। च। अनित्यः। न। सम्भवेत्।** ननु कथं तर्हि विभावादिसंवेदनस्यादावन्ते ऽयं न प्रकाशते इति चेत्? अत्र चर्वणैव हेतुरित्याह–**अस्य** रसस्येत्यर्थः। **भानं** स्वरूपसत्त्वेन प्रतीतिः। 'विभावादिसंवेदनावसरे' इति शेषः। **च** तथेत्यर्थः। **अभानं** स्वरूपसत्त्वेन प्रत्ययाभाव इति भावः। 'विभावादिसंवेदनानवसर' इति शेषः। **चर्वणावशतश्च**र्वणायाः सहृदयहृदयस्य तदुन्मुखीभवनस्य वश आयत्तत्वं तस्मादिति तथोक्तः। 'वशो जनस्पृहायत्तेष्वायत्तत्वप्रभुत्वयोः।' इति हैमः। **परं** केवलम्। चर्वणायां सत्यां रसस्य भानम्, तस्यामसत्यामभानं चेति भावः। इदमुक्तम्–यद्यपि "रस्यमानतामात्रसारत्वात् प्रकाशशरीरादनन्य एव हि रसः।" इत्युक्तदिशा प्रकाशात्मक एव रसः। प्रकाशश्च विभावादिसंवेदनादनन्यः। अतश्च विभावादिसंवेदनमेव तत्सद्भावहेतुस्तदभावश्च तदभावहेतुरिति स्थिते विभावादिसंवेदनस्य पूर्वोत्तरभागयोरस्य दर्शनाभावात् तत एव जन्मविनाशयोः कल्पनीयत्वं सङ्गच्छते। तथाऽपि कथं विभावादिसंवेदनं कदाचिदुज्जृम्भते, कदाचित् पुनस्तिरोभवतीति मीमांसाव्यतिकरे किमपि नियामकमवश्यं कल्पनीयमित्यध्यवसायः सहृदयहृदयङ्गमः स्यात्। कल्पनीयं पुनर्नियामकं चर्वणैव, असौ चावरणभङ्गापरपर्य्याया। तथा च–यथाऽऽवरणसद्भावे सूर्यो न प्रतीयते, आवरणभङ्गे पुनर्यथाऽसौ प्रतीयते, तथा रसोऽपि। आवरणसद्भावासद्भावावेवं तदप्रत्ययप्रत्ययौ प्रति कारणे इति सिद्धम्। इति ॥ ४५ ॥

बोधसौकर्य्याय चर्वणावशत इति मूलांशकाठिन्यं परिहरति–**चर्वणाया**मित्यादिना।

**चर्वणायां** भावनाविशेषे। **सत्याम्। निवृत्ताया**मसत्यामिति भावः। **च। रसस्य। भानम्। अभानम्। च। अविरुद्धम्।** चर्वणायां सत्यां रसस्य स्वरूपसत्तया प्रत्ययः, तस्यां पुनर्निवृत्तायां रसस्य स्वरूपसत्तया प्रत्ययाभावश्च स्थाने एवेति भावः।

अथ रसस्य भविष्यत्त्वं निराकुरुते–५७ **नापी**त्यादिना।

**५७ साक्षादानन्दमयप्रकाशरूपत्वात्** साक्षादपरोक्षोऽसावानन्द इति, स एवेति साक्षादानन्दमयः, स चासौ प्रकाशो विभावादिसंविदिति, स रूपं यस्य तस्य भावस्तत्त्वं तस्मात्तथोक्तात्। **भविष्यन्** भविष्यः, न तु साम्प्रतं स्फुरति न वा प्रागस्फुरदित्याकारकज्ञानविषयः। **अपि।** 'रस' इति शेषः। 'नैष' इति पाठान्तरे तु नाध्याहारापेक्षा। न नैव अत एवं भूतोऽपि नेति स्वतःसिद्धम्। अयम्भावः–नहि साक्षादानन्दमयः सन् प्रकाशमानो यः, स 'भविष्यती'ति वक्तुं शक्यते, वर्त्तमानकालिकस्य भविष्यत्कालिकत्वेन सति प्रत्यक्षे निर्देशायोगात्। तदिति साक्षादानन्दमयत्वेन प्रत्यक्षसिद्धः प्रकाशात्मा रसो न भविष्यन् न वा भूतः, साक्षादानन्दमयप्रकाशरूपेण तस्य स्फुरणात्। इति। ननु तर्हि वर्त्तमान इति चेन्नैवंविधोऽपीत्याह– **अयं** रस इत्यर्थः। 'अपी'ति पाठान्तरम्। **कार्य्यज्ञाप्यविलक्षणभावान्नि**रुक्तदिशा कार्य्यभिन्नत्वाज् ज्ञाप्यभिन्नत्वाच्चेति भावः। **वर्त्तमानः। नो** नैव। वर्त्तमानवस्तुनः कार्य्यज्ञाप्यान्यतरत्वनियमादस्य च तद्विरहान्न वर्त्तमानत्वेन निर्देशो ज्यायानिति भावः। न च ततो निर्विकल्पकज्ञानविषय इत्याह– **तस्य** रसस्य। **विभावादिपरामर्शविषयत्वाद्** विभावादीनां परामर्शः सम्मेलनं विशिष्टवैशिष्ट्यावगाही ग्रह इति यावत्, स एव विषयो यस्य तस्य भावस्तत्त्वं तस्मात्तथोक्तात्। रत्यादिविशिष्टविभावादिसंयोगाभिन्नत्वादिति भावः।

---

* ५७ न चेत्यारभ्याविरुद्धमित्यन्तः पाठ उपयुक्तोऽपि प्रायः पुस्तकान्तरे नोपलभ्यते।

परानन्दमयत्वेन संवेद्यत्वादपि स्फुटम् ॥ ४७ ॥
न निर्विकल्पकं ज्ञानं तस्य ग्राहकमिष्यते ।
तथाऽभिलापसंसर्ग-योग्यत्वविरहान्न सः ॥ ४८ ॥
सविकल्पकसंवेद्यः
सविकल्पकज्ञानसंवेद्यानां हि वचनप्रयोगयोग्यता, न तु रसस्य तथा ।
५८ साक्षात्कारतया न च ।
परोक्षस्तत्प्रकाशो ना-परोक्षः शब्दसम्भवात् ॥ ४९ ॥

---

**सचेतसां** मार्म्मिकाणाम् । **स्फुटम्** । **परानन्दमयत्वेन** परः परमोऽसावानन्द इति, स एव परानन्दमयस्तस्य भावस्तत्त्वं तेन तथोक्तेन । अत्राभेदे तृतीया । **संवेद्यत्वात्** संवेदन ( ज्ञान ) विषयत्वात् । तथा च-परमानन्दत्व-प्रकारकसंवेदनविषयत्वाद्धेतोरिति निष्कृष्टम् । अपि । **निर्विकल्पकं** निर्गतो विकल्पो विभेदसंसर्गो यस्मिन्, तत् । नामरूपजात्यादिविशेषशून्यमित्यर्थः । **ज्ञानम्** । **ग्राहकं** विषयतानिरूपकम् । **न** नैव । **इष्यते**ऽभिमतं क्रियते । रसग्रहो निर्विकल्पकस्वरूप इति न वक्तुं शक्यत इति भावः । विभावादिनिष्ठप्रकारतायाः परमानन्दतानिष्ठप्रकारतायाश्च निरूपकस्य रसग्रहस्य निष्प्रकारकं निर्विकल्पात्मकत्वं न सङ्गच्छत इति तात्पर्य्यम् । अथ तर्हि सविकल्पकं ज्ञानं तस्य ग्राहकमिति चेदेतदपि न वाच्यमित्याह-**स** रस इत्यर्थः । 'चे'ति पाठान्तरम् । **तथाऽभिलापसंसर्गयोग्यताविरहात्**तथाऽभिलापस्य तथाभूतोऽयं रस इत्यभिधानविषयतायाः संसर्गः सम्बन्ध इति, तस्य योग्यत्वविरह इति तस्मात्तथोक्तात् । **सविकल्पकसंवेद्यः** सविकल्पकेन ज्ञानविशेषेण संवेद्यो ज्ञेयस्तद्विषयीभूत इति यावत्, इति तथोक्तः । **न** नैव । आस्वादे ज्ञानान्तरासम्भवात् स्वमात्रविषयिण्यां चर्वणायां च नामरूपजात्यादिविशेषोल्लेखायोगाद्रसः सविकल्पकज्ञानस्यापि न विषय इति तात्पर्य्यम् । एवं च-रसः सर्वथाऽज्ञेयोऽलौकिकश्चेति स्थितम् ॥ ४६ ॥ ४७ ॥ ४८ ॥

रसस्य सविकल्पकज्ञेयेभ्यो वैलक्षण्यं स्पष्टयति-**सविकल्पकज्ञानसंवेद्यानां** सविकल्पकज्ञानेन संवेद्यास्तेषां तथोक्तानाम् । नामरूपजात्यादिशालिनामिति भावः । **ह्येव** । **वचनप्रयोगयोग्यता** वचनं कथनं तस्य प्रयोगस्तस्य योग्यतेति तथोक्ता । 'अभिधाया अन्यत्र प्रवृत्त्ययोगा' दिति शेषः । **रसस्य** । **तु** पुनः । **तथा** यथा सविकल्पकज्ञान-संवेद्यानां वचनप्रयोगयोग्यता सम्भवति तद्वदिति भावः । **न** नैव । 'सम्भवती'ति शेषः । किन्तु रसस्य यत् सविकल्पकज्ञान-संवेद्यत्वं तन्न तदितरविषयं, वचनप्रयोगयोग्यताया अन्यत्र सत्त्वादत्र च तस्या अभावादिति भावः । अत एव तर्कवागीशा अप्याहुः-'स रसः सविकल्पकज्ञानसंवेद्यः संसर्गावगाहिज्ञानविषयः । प्रागुक्तहेतुद्वयासङ्गतेरस्य सविकल्पकज्ञानविषयत्वमस्त्येव, किन्तु-सविकल्पकवेद्यान्तरादस्य वैलक्षण्यसाधने तात्पर्य्यं वेदितव्यम् । स्वप्रकाशकत्वेनापि ज्ञानान्तरग्राह्यात्स-विकल्पकादस्य वैलक्षण्यं वोध्यम् ।' इति ।

अथास्यालौकिकत्वं ज्ञापयितुं परोक्षत्वापरोक्षत्वे अपि निषेधति-५८ **साक्षात्कारतये**त्यादिना ।

५८ **साक्षात्कारतया** साक्षात् क्रियत इति तस्य भावस्तत्ता तयेति तथोक्तया, ऽसंशयमनुभूयमानत्वेन हेतुना । **च** पुनः । **तत्प्रकाशस्त**स्य रसस्य प्रकाशो भानमिति तथोक्तः । **न** नैव । **परोक्षः** । परोक्षस्य साक्षात्कारासम्भवान्न रसप्रकाशोऽप्रत्यक्ष इति भावः । तर्हि प्रत्यक्ष इति चेन्नैवंविधोऽपीत्याह-**शब्दसम्भवा**च्छब्देभ्यः काव्य-त्वघटनानुकूलेभ्यः पदविशेषेभ्यः सम्भव इति तस्मात् । **न** नैव । 'तत्प्रकाश' इति पूर्वेणान्वेति । **अपरोक्षः** प्रत्यक्षः । नहि शब्दप्रमाणमात्रगम्यानां प्रत्यक्षत्वमिति भावः । यत्तु तर्कवागीशा व्याचक्षते-'साक्षात्कारतयेति ।..स्वादनाख्य-व्यापारस्य मनःसन्निकर्षत्वाङ्गीकारेण तज्जन्यत्वादिति भावः ।...शब्दसम्भवात् । काव्यजन्यविभावादिज्ञानजन्यत्वनि-यमात् । अनेन प्रत्यक्षान्तराद्वैलक्षण्यमेव साधितम् । ननु प्रत्यक्षभिन्नत्वं प्रागुक्तविरोधात् ।' इति, न तत्र रसप्रकाशस्य प्रत्यक्षभिन्नत्वाङ्गीकाराभावः शङ्क्योऽस्यानिर्वचनीयताऽन्यथाऽनुपपत्तेः, किन्तु प्रकारान्तरेणेति विशेषः ॥ ४९ ॥

तत्कथय कीदृगस्य तत्त्वमश्रुतादृष्टपूर्वनिरूपणप्रकारस्येत्याह–

**५९ तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयम् ।**

तत् किं प्रमाणं तस्य सद्भाव इत्याह–

**६० प्रमाणं चर्वणैवात्र स्वाभिन्ने विदुषां मतम् ॥ ५० ॥**

चर्वणाऽऽस्वादनम् । तच्च–'स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः' इत्युक्तप्रकारम् ।

---

अत्रेदमपि बोद्धव्यम्–'एवं तावद्रसो न कार्यो, न ज्ञाप्यो, न नित्यो, नानित्यो, न भविष्य,न्न भूतो, न भव,न्न निर्विकल्पकज्ञानग्राह्यो, न सविकल्पकज्ञानग्राह्यो, न परोक्षो, न वा प्रत्यक्षः ।' इत्युक्तदिशा तस्योभयभिन्नत्वं प्रतिपादितम्। अथ 'विरुद्धयोरेकतरनिषेधेऽपरस्मिन् पर्य्यवसान'मिति नियमेन तस्योभयात्मकत्वमपि बोध्यम् । यथा तस्य नित्यत्वनिषेधेऽनित्यत्वमनित्यत्वनिषेधे च नित्यत्वमिति दिक् । तदुक्तम्–'उभयाभावस्वरूपस्य चोभयात्मकत्वमपि पूर्ववल्लोकोत्तरतामेव गमयती'ति ।

नन्वेवमलौकिकीयं प्रक्रियेत्याशङ्क्य शङ्कोत्तराभ्यामिष्टापत्तिमाह–**तदि**त्यादिना ।

**तत्तर्हि । अस्य रसस्य । अश्रुतादृष्टपूर्वनिरूपणप्रकारस्य** न श्रुत इत्यश्रुतः, न पूर्वं दृष्ट इत्यदृष्टपूर्वः, तादृशो निरूपणप्रकारो यस्य तस्य । त्रिपदो बहुव्रीहिः । **कीदृ**क्किंस्वरूपम् । **तत्त्वम्** । इति–**कथय** । **इतीत्यतः । आह–५९ तस्मादि**त्यादि ।

**५९ तस्माद**श्रुतादृष्टपूर्वनिरूपणप्रकारकत्वाद्धेतोरित्यर्थः। **अयं** रसः । **सहृदयै**र्मनस्विभिर्मार्मिकैर्वा। **वेद्यो** ज्ञेयः । **सत्यं** निश्चितम् । **अलौकिकः** । तथा च श्रुतिः–'पराणि खानि व्यतृणोत्स्वयम्भूः ।' इति । अन्यत्र तादृशं प्रतिपादनं च तस्यालौकिकस्य भूषणं न तु दूषणं, लोकोत्तरस्य लोकोत्तरत्वेनैव प्रतिपादनौचित्यात् । अत एवोक्तं प्रकाशकारैः–'अलौकिकसिद्धेर्भूषणमेतन्न दूषणम् ।' इति ।

एतदेव स्थूणानिखननन्यायेन द्रढयितुमाह–**तदि**त्यादि ।

**तत्त**र्हि यदि सत्यमज्ञेयत्वादिना रसः कार्य्यादिभ्यो विलक्षण एव तदेति यावत् । पुनः । **तस्य** तादृशस्य विलक्षणस्य रसस्येति भावः । **सद्भावे । किं** किन्नाम । **प्रमाणं** प्रमीयतेऽनेनेति तथाभूतम् । **इती**त्येवं जिज्ञासायाम् । **आह–६० प्रमाण**मित्यादि ।

६० **अत्रा**स्मिन् रस इति यावत्। **स्वाभिन्ने** स्वस्माच्चर्वणाख्याद् व्यापारादभिन्नस्तत्स्वरूपभूत इति तस्मिंस्तथोक्ते। चर्वणास्वरूप इति भावः । तथोक्तम्–'**चर्वणैव** भगवतीस्वसंवित्स्वस्वरूपादभिन्ने तस्मिन् प्रमाणम् ।' इति । **विदुषाम्।** चर्वणाऽऽस्वादानुभवविशेषः । **प्रमाणम् । मतम् ॥ ५० ॥**

चर्वणापदार्थं समवगमयति–**चर्वणे**त्यादिना ।

**चर्वणा** चर्व्यत आस्वाद्यत इति स्त्रीत्वविवक्षायां तथोक्ता । **आस्वादनम् । तच्च**र्वणापरपर्य्यायमास्वादनम् । **च** पुनः । **'काव्यार्थसम्भेदात्** । विभावादिपरिशीलनादित्यर्थः । **आत्मानन्दसमुद्भव** आत्मनो बुद्धेरानन्दसमुद्भवो विषयान्तरतिरोधानेन बुद्धेरानन्दव्यक्तिकतयाऽवस्थानमिति यावत् । **स्वादः** आस्वादः।' **इत्युक्तप्रकार**मितीत्येवमुक्तः प्रकारः सादृश्यं यस्य तत्तथोक्तम् । 'प्रकारस्तुल्यभेदयोः ।' इति मेदिनी । 'बोध्यम्' इति शेषः ।

इदमवसितम्–अलौकिकः खलु रसः, यन्नायं ज्ञाप्यः कार्य्यो वा नित्यो वाऽनित्यो वा भानवान् वाऽभानवान् वा भविष्यन्वा भूतो वा भवन् वा निर्विकल्पकज्ञानविषयो वा सविकल्पकज्ञानविषयो वा परोक्षो वा प्रत्यक्षो वा; न चायं प्रत्याख्यातुं शक्यते, सहृदयहृदयस्य तत्र साक्षिकतया वर्त्तमानत्वात् । इति ।

**ननु यदि रसो न कार्य्यस्तत् कथं महर्षिणा 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति' रिति लक्षणं कृतमित्युच्यते—६१**

---

अथ रसस्य सिंहनिरीक्षणन्यायेन स्वरूपं परीक्षते—नन्वित्यादिना ।

**ननु । यदि । रसः** शृङ्गारादिव्यपदेश्य आस्वादविशेषः । **कार्य्यं** उपलक्षणेन ज्ञाप्यश्च । **तत्तर्हि । महर्षिणा** भरताचार्य्येण । **'विभावानुभावव्यभिचारिसंयोगा**द्विभावानुभावव्यभिचारिणां संयोगः परस्परं मेलनं तस्मात् । **रसनिष्पत्ती** रसस्य निष्पत्तिरुत्पत्तिः।' **इती**त्येतत् । **लक्षणं** 'रसस्ये'ति शेषः । **कथम् । कृतम् । इती**त्यतः । **उच्यते**–६१ **निष्पत्त्ये**त्यादि ।

अत्रेदं बोध्यम्–'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः ।' इति रसलक्षणलक्षकं मूलभूतं भरतसूत्रम्, नानाविधशेमुषीणां वैचित्र्येण नाना व्याचक्षते चैतदाचार्य्याः, तथाहि–'स्थायिभावानां ललनाऽऽदिभिरालम्बनरूपैरुद्यानादिभिरुद्दीपनरूपैश्च विभावैः स्तम्भस्वेदादिभिः कटाक्षभुजोत्क्षेपादिभिश्च सात्त्विकासात्त्विकैरनुभावैरुत्कण्ठादिभिर्व्यभि-(सं) चारिभिश्च सहकारिरूपैः सह संयोगात् क्रमेणोत्पाद्योत्पादकभावरूपाद् गम्यगमकभावरूपात् पोष्यपोषकभावरूपाच्च सम्बन्धाद्रसस्य निष्पत्तिः क्रमेणोत्पत्तिरभिव्यक्तिः पुष्टिश्च भवती' त्येवं मीमांसकाः, एषां चायमभिप्रायः–'ललनादिभिरालम्बनविभावैर्जनितः, उद्यानादिभिरुद्दीपनविभावैरुद्दीपितः, स्तम्भस्वेदादिभिः कटाक्षादिभिश्चानुभावैः प्रतीतियोग्यः कृतः, उत्कण्ठादिभिर्व्यभिचारिभिश्च परिपोषितः स्थायी रत्यादिर्भावो रामादावनुकार्य्ये नाट्येनाभिनेये रसः, नटे तु सादृश्यानुसन्धानवशादारोप्यमाणः सामाजिकानां चमत्कारकारणम् । यथा हि–सर्पासत्त्वेऽपि तत्तयाऽवलोकिताया रज्जोरपि भयं जायते, तथा दुष्यन्ताद्यसत्त्वेऽपि तत्तयाऽवलोक्यमानादपि नर्त्तकादभिनयनैपुण्येन शकुन्तलादिविषयानुरागरूपा दुष्यन्तादिरतिस्तन्निष्ठेव प्रतीयमाना सामाजिके चमत्कारं समर्पयन्त्येव रसपदवीमधिरोहति । न च 'सादृश्यस्य भेदगर्भितत्वात्सति बाधे कथं दुष्यन्ताद्यारोप' इति शङ्क्यम्, भेदस्य नर्त्तकनैपुण्यदोषेणाग्रहणात् ।' इति। 'दुष्यन्तादावेवानुकार्य्ये रसनिष्पत्त्या सामाजिके रसनिष्पत्त्यभावात्तत्र चमत्कारो न जायेत' इति 'विभावादिभिरभिहितस्वरूपैः सहानुमाप्यानुमापकभावरूपात्संयोगात्सम्बन्धाद्रसस्य निष्पत्तिरनुमितिः ।' इत्येवं नैयायिकाः, एषां चायमभिप्रायः–दुष्यन्तोऽयं शकुन्तलाविषयकरतिमान् शकुन्तलाऽऽलम्बनोद्यानोद्दीपनविभावस्तम्भाद्यनुभावोत्कण्ठादिव्यभिचारिभावसम्बन्धित्वात् । 'यो हि स्वविभावत्वे सत्यनुभावव्यभिचारिभाववान् स तद्रत्याद्यन्यतमभाववान्' इति यत्तद्भ्यां सामान्यतो व्याप्तिः। 'यो नैवं स नैवम्' इति व्यतिरेकव्याप्तिर्वा । इतीयमेवानुमितिः सचमत्कारप्रतीत्यात्मिका चर्वणा । एनया च विषयीक्रियमाणो रत्यादिः स्थायीभावो रसः । चर्वणा च सामाजिकानां, तस्मादेतेष्वेव रस इति व्यवहारः । न च साक्षात्कार एव चमत्कारभूमिः, न त्वनुमितिः । अनुमीयमाने सुखादावपि तत्त्वापत्तेरिति वाच्यम्, चमत्कारास्पदवस्तुमहिमवशादनुमीयमानत्वेन रत्यादिस्थायिनामनुमेयान्तरवैलक्षण्यात् । न च तथाऽपि नटे रत्यादीनामवर्त्तमानत्वाद्बाधाऽवतारे कथमनुमितिरिति शङ्क्यम्, तेषामवर्त्तमानत्वनिश्चयावर्त्तमानत्वात् स्थायिरूपेणानुमानस्य च निर्बाधात्। इति। 'एवमपि सामाजिके रसनिष्पत्त्यभावेन चमत्कारानुभवाभाव एव । न च चन्दनाद्यारोपश्चमत्काराय, किन्तु तत्सम्बन्ध एवेति सुखमपि नारोप्यमाणं तथाभूतम्, अपि तु वस्तुतो विद्यमानमेवेति चमत्कारकारणमन्यदेवे'ति 'स्थायिनां भोज्यभोजकरूपात्संयोगाद्रसस्य निष्पत्तिर्भुक्तिर्भवति ।' इति साङ्ख्यविदः, एषां चायमभिप्रायः—शब्दात्मनः काव्यस्य त्रयोंऽशाः, ते च 'अभिधा भावना चैव तद्भोगीकृतिरेव च' इत्युक्तेरभिधा भावना भोगश्चेति । एषामप्यभिधायकत्वं भावकत्वं भोजकत्वं चेति व्यापारत्रयम् । एतदपि वाच्यं, रसादि, सामाजिकविषयम् । तत्राभिधा निरन्तरार्थगता सान्तरार्था चेति द्विधा, एतेन लक्ष्यस्यापि ग्रहणम्, एतस्य मुख्यार्थबाधजन्यविच्छित्त्युपस्थित्या सान्तरार्थत्वात् । भावना च साधारणीकरणम्, अनया हि सस्थायिका विभावादयः साधारणीक्रियन्ते । एतेषां साधारण्यं च विशेष्यत्वप्रकारकज्ञानविरहेण तत्तत्साधारण्याध्यवसायरूपम्, यथा शकुन्तलायां कान्तात्वमात्रप्रतिपत्तिः । स्थाय्यनुभावादीनामपि साधारण्यं विशेषानवच्छेदेनैव । अन्त्यं तु व्यापारद्वयं नाट्येऽपि। एवं काव्ये नाट्ये च भावकत्वव्यापारेण साधारणीकृतैर्विभावादिभिर्भोजकत्वव्यापारसहकारेण तथाकृत एव स्थायी भावो भुज्यते, भोगश्च सत्त्वोद्रेकात्प्रकाशते य आनन्दस्तन्मयत्वनन्यालम्बना या संवित्तस्वरूपो लौकिकसुखानुभवविलक्षणः । सत्त्वरजस्तमोगुणानामुद्रेकेण क्रमात्सुख, दुःख, मोहाः

प्रकाश्यन्ते, उद्रेकश्च स्वेतरावभिभूयावस्थानम्। तथा च–'प्रत्यासन्ना नटो नायकादिः सामाजिकश्चेति त्रयः। तत्राद्यद्वय-गतत्वेन न रसप्रतीतिः, ताटस्थ्येन तस्यामनास्वाद्यत्वात्, अन्त्यगतत्वेन तु तस्या असम्भव एव। न हि शकुन्तलायाः सामाजिकान् प्रति विभावत्वम्। विभावमन्तरेणानालम्बनस्य रसादेरप्रतिपत्तेः। न च कान्तात्वं साधारणविभावत्वाव-च्छेदकमत्राप्यस्तीति वाच्यम्, अप्रामाण्यनिश्चयानालिङ्गितागम्यात्वप्रकारकज्ञानविरहस्य विशेष्यतासम्बन्धावच्छिन्नप्रति-योगिताकस्य विभावत्वावच्छेदककोटाववश्यं निवेश्यत्वात्। अन्यथा स्वस्रादेरपि कान्तात्वादिना तत्त्वापत्तेः। एवमशोच्य-त्वकापुरुषत्वज्ञानविरहस्य तथाविधस्य करुणादौ। तादृशज्ञानानुत्पत्तिस्तु तत्प्रतिबन्धकान्तरनिर्वचनमन्तरा दुरुपपादा। स्वात्मनि दुष्यन्ताद्यभेदबुद्धिरेव तथेति चेन्न, नायके धराधौरेयत्वधीरत्वादेरात्मनि चाधुनिकत्वकापुरुषत्वादेर्वैधर्म्यस्य स्फुटं प्रतिपत्तेरभेदबाधस्यैव दुरुपपादत्वात्। अथ केयं रसप्रतीतिः। प्रमाणान्तरानुपस्थित्या शाब्दीति चेन्न, व्यवहारिक-शब्दान्तरजन्यनायकमिथुनवृत्तान्तावगमानामिवास्या अप्यनास्वाद्यत्वापत्तेः। नापि मानसी, चिन्तोपनीतानां तेषामेव पदार्थानां मानस्याः प्रतीतेरस्या वैलक्षण्यात्। न च स्मृतिरूपा। पूर्वं तथाऽननुभवात्। अतः–शब्दस्याभिधावत् काव्यनाट्ययोर्भावकत्वं भोजकत्वं चेति व्यापारद्वयं कल्प्यम्। तत्राभिधया निवेदिताः पदार्था आद्येन व्यापारे-णागम्यात्वादिरसविरोधिज्ञानप्रतिबन्धकद्वारा कान्तात्वादिरसानुकूलपुरस्कारेणावस्थाप्यन्ते। एवं च–साधारणीकृतेषु दुष्यन्तशकुन्तलादेशकालवयोदशादिषु सत्सु सति पङ्गौ च तस्य व्यापारस्य महिमनि द्वितीयेन व्यापारेण निगीर्णयो रज-स्तमोगुणयोरुद्रिक्तसत्त्वजनितेन निजचित्स्वभावनिर्वृतिविश्रान्तिलक्षणेन साक्षात्कारेण विषयीकृतो रत्यादेरास्वाद एव रसनिष्पत्तिपदवाच्यः। सोऽयमास्वादोऽपि विषयसंवलनाद्ब्रह्मास्वादसविधवर्त्ती। इति। 'एवमपि लक्षणाप्रयोजनव्यञ्जक-तया एकत्र सत्यभिधानियन्त्रणेऽर्थान्तरव्यञ्जकतया वक्तृवैशिष्ट्यादिसाहाय्येन तत्तदर्थावगमकतया सिद्धेन व्यञ्जनाव्यापारेणैव भावकत्वभोजकत्वव्यापारयोर्गतार्थत्वेऽनयोः पुनः कल्पने प्रमाणाभावो गौरवापत्तिश्च।' इति स्थायिनां विभावादिभिः साकं संयोगाद् व्यङ्ग्यव्यञ्जकत्वरूपात् सम्बन्धाद् विभावादीनामेव वा परस्परं संयोगान्मेलनाद्रसस्य निष्पत्तिरभिव्यक्तिः।' इति प्राञ्च आलङ्कारिकाः, एषामयं पुनरभिप्रायः–लोके प्रमदादिभिरालम्बनकारणैश्चन्द्रिकादिभिरुद्दीपनकारणैरश्रुपातादि-भिरनुभावपदवाच्यैः कार्यैश्चिन्तादिभिर्व्यभिचारिपदवाच्यैः सहकारिभिश्च स्थायिनो रत्यादिभावस्यानुमितिविषये परिशी-लनेन झटितिप्रवृत्तिमतां सामाजिकानां प्राग्वासनयाऽन्तर्निविष्टः काव्ये नाट्ये च गुणालङ्कारयोगेन कायिकवाचनिकसा-त्त्विकाहार्य्यरूपेणाभिनयेन च तैरेव कारणादिव्यपदेशहानेन विभावनानुभावनव्यभिचारणात्मकव्यापारवत्तया लोकोत्तरविभा-वानुभावव्यभिचारिपदाभिधेयैः 'ममैवैते, 'शत्रोरेवैते, उदासीनस्यैवैते' इति सम्बन्धिविशेषस्वीकारनियमस्य 'न ममैवैते' न शत्रोरेवैते, न वोदासीनस्यैवैते' इति सम्बन्धिविशेषपरिहारनियमस्य चानवगमाच्छकुन्तलात्वादिविशेष्यतावच्छे-दकधर्म्ममपहाय कान्तात्वादिना प्रतीतैरभिव्यक्तो रत्यादिः स्थायी तत्तदात्मनिष्ठोऽपि विभावादिसाधारण्यबलाद्रसा-नुभावावसरे विगलितपरिमितप्रमातृत्वादिनिजधर्म्मतया प्रादुर्भूतेतरावगमविधुरापरिमितभावेन प्रमात्रा सकलसहृदय-संवादकारिणा प्रमातृविशेषसम्बन्धाग्रहरूपेण साधारण्येन स्वाकार इवाभिन्नोऽपि प्रत्यक्षीकृतश्चर्व्यमाणैकप्राणतया चर्वणो-त्पत्तिविनाशयोरुत्पत्तिविनाशशीलत्वेन प्रतीयमानो विभावादिजीवितावधिः पानकरसन्यायेन चर्व्यमाणः पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन् इतरत् सकलमिव तिरोदधद्ब्रह्मास्वादमिवानुभावयन् लोकोत्तरचमत्कारकारी शृङ्गारादिव्यपदेश्यो रसः। तत्र तावत् काव्यपदेभ्यस्तत्तदर्थोपस्थितिः, ततो यथोपस्थितवि-भावादिविषयो वाक्यार्थावगमस्ततो गुणालङ्काराभिनयादि, ततो रत्यादिवासनावतः सामाजिकस्य साधा-रण्येन विभावाद्यवगमस्तेन साधारण्येनैव च विभावादिसंवलितरत्याद्यवच्छिन्नचिदानन्दावरणभङ्गात्प्रकाशमानानन्द-चिद्विषयो विभावादिसंवलितो रत्यादिस्थायिभावो रसः। इति। 'नैतदपि स्थाने, भावनामन्तरा केवलेन व्यञ्जन-व्यापारेण विभावादीनां साधारण्यं दुरुपपादम्, तस्माद्भावनारूपदोषविशेषस्यावश्यं कल्पनीयस्याकल्पना'दिति विभावा-दीनां संयोगाद्भावनाविशेषरूपाद्दोषाद्रसस्यानिर्वचनीयदुष्यन्तादिरत्याद्यात्मनो निष्पत्तिरुत्पत्तिः।' इति नव्याः, एषां चायमभिप्रायः–काव्येषु नाट्येषु च कविभिर्नटैश्च प्रकाशितेषु विभावादिषु व्यञ्जनव्यापारेण दुष्यन्तादिषु शकुन्तलादि-रत्यादिषु गृहीतेषु च सामाजिकसहृदयतोल्लासितस्य भावनारूपस्य दोषविशेषस्य महिम्ना कल्पितदुष्यन्तत्वाद्यवच्छादिते स्वात्मन्यज्ञानावच्छिन्ने शुक्तिकाशकल इव रजतखण्डः समुत्पद्यमानोऽनिर्वचनीयः साक्षिभास्यशकुन्तलादिविषयकर-त्यादिरेव रसः। अयं च कार्यो दोषविशेषस्य, नाश्यश्च तन्नाशस्य, स्वोत्तरभाविनाऽलौकिकाह्लादेन सम्भेदाग्रहात्सुख-

**६२ निष्पत्त्या चर्वणस्यास्य निष्पत्तिरुपचारतः।**

**यद्यपि रसाभिन्नतया चर्वणस्यापि न कार्यत्वं, तथाऽपि तस्य कादाचित्कतयोपचरितेन कार्य्यत्वेन कार्य्यत्वमुपचर्य्यते।**

**६३ अवाच्यत्वादिकं तस्य वक्ष्ये व्यञ्जनरूपणे ॥ ५१ ॥**

**तस्य रसस्य। आदिशब्दादलक्ष्यत्वादि।**

---

व्यपदेश्यः। स्वपूर्वोपस्थितेन रत्यादिना भेदाग्रहात्तत्तद्रत्याद्यन्यतरत्वेनैकत्वाध्यवसायाद्वा व्यङ्ग्यो वर्णनीयश्चेत्येवमेवायमनिर्वचनीयः। अवच्छादकं दुष्यन्तत्वादिकमप्यनिर्वचनीयमेव। अवच्छादकत्वं च रत्यादिविशिष्टावगमे विशेष्यतावच्छेदकत्वम्। इति। 'एवमपि भावनारूपदोषविशेषमहिम्नैव दुष्यन्ताद्यभेदावगमे जायमाने शकुन्तलादावगम्यात्वावगमे च प्रतिबध्यमाने किं काव्यव्यापारात् किं वाऽनिर्वचनीयख्यातेः।' इति 'विभावादीनां संयोगाद्भावनाविशेषाद्रसस्य निष्पत्तिरुत्पत्तिः।' इति त्वाधुनिकाः, एषां चायमभिप्रायः—व्यञ्जनव्यापारस्यानिर्वचनीयख्यातेश्चानभ्युपगमेऽपि भावनारूपदोषविशेषस्य महिम्ना स्वात्मनि दुष्यन्तादितादात्म्यावगाही शकुन्तलादिविषयकरत्यादिमदभेदाभ्युपगमो मानसः काव्यार्थभावनाजन्मा विलक्षणविषयताशाली रसः। स्वाप्नादिस्तु तादृशाभ्युपगमो न काव्यार्थभावनाजन्मा, तदिति न स रसः, तेन न तत्र तथाविधाह्लादापत्तिः। न चैवमपि स्वात्मनि अविद्यमानस्य रत्यादेरनुभवः कथमिवेति वाच्यम्, न ह्ययं लौकिकसाक्षात्कारो रत्यादेः, येनावश्यं विषयसद्भावोऽपेक्षणीयः स्यात्। अपि तु भ्रमः। आस्वादनस्य रसविषयकव्यवहारस्तु रत्यादिविषयकत्वालम्बनः। इति।

तदेवं व्याख्यातृवैचित्र्येण व्याख्यानवैचित्र्येऽपि 'संयोगा'दिति पञ्चमी हेतावित्यत्र न वैचित्र्यम्, तत्त्वं च कारकत्वं ज्ञापकत्वं वा स्यात्, तद्रसः कार्य्यो ज्ञाप्यो वाऽवश्यं मन्तव्यः। न चेष्टापत्तिरिति वक्तुं शक्यम्, पूर्वं तत्त्वस्य निराकृतत्वात्; इति चेदभिधीयते—६२ **निष्पत्त्या...** इत्यादिना।

६२ **चर्वणस्या**स्वादनस्येति भावः। **निष्पत्त्या** सिद्ध्या। **अस्य** रसस्य। **उपचारत** उपचारेणारोपेणेति यावत्। **निष्पत्तिः** सिद्धिरुत्पत्तिरिति यावत्। 'बोद्धव्ये'ति शेषः। रसचर्वणयोरभिन्नत्वात्तयोरेकतरस्य निष्पत्त्याऽन्यतरस्य निष्पत्तिरिति 'निष्पत्त्ये'त्यत्राभेदे तृतीया। न च 'तथाऽपि रसस्य कार्य्यत्वमतिरोहितम्' इति वाच्यम्, उपचारेण तथास्वीकारात्। न वोपचारतो रसस्यैव निष्पत्तिः स्वीक्रियते, न पुनश्चर्वणस्य; अतः कथं न तयोर्विभेद इति शङ्क्यम्। आविर्भावतिरोभावाभ्यां तस्य कादाचित्कत्वं प्रकल्प्योपचरितस्य कार्य्यत्वस्य प्रथमत एव क्रोडीकरणात्।

एतदेवाह—**यद्यपी**त्यादिना।

**यद्यपि। रसाभिन्नतया** ६१ प्रमाणं चर्वणैवात्र स्वाभिन्ने विदुषां मतमित्युक्तदिशा रसेन सममैक्येनेति भावः। **चर्वणस्या**स्वादनस्य। **अपि** न परं रसस्येति भावः। **कार्य्यत्वमु**पलक्षणेन ज्ञाप्यत्वमपीति बोध्यम्। **न** 'सिद्ध्यति' इति शेषः। रसस्य कार्य्यत्वं ज्ञाप्यत्वं वा दूरमास्तां, किन्तु तदभेदेन चर्वणस्यापि नेति भावः। **तथाऽपि। तस्य** चर्वणस्य। **कादाचित्कतया** कदाचिदावरणभङ्गदशायां भवतीति कादाचित्कं तस्य भावस्तत्ता तयेति तथोक्तया। 'पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम्।' इत्युक्तदिशा पुण्यभोगावसर एवाविर्भावादन्यदा च तिरोभावाद्रसाभिन्नतया कल्पितेन कादाचित्कत्वेन हेतुनेति भावः। **उपचरितेना**रोपितेन न तु वास्तवेन। **कार्य्यत्वेन।** इदमुपलक्षणं 'ज्ञाप्यत्वेने' त्यस्यापीति बोध्यम्। अभेदे तृतीया। **कार्यत्वमु**पलक्षणेन ज्ञाप्यत्वं चेत्यर्थः। **उपचर्य्यते।**

ननु भवतु रसस्यैवं कार्य्यत्वं ज्ञाप्यत्वं वोपचरितम्, किन्तु कथं नास्य वाच्यत्वाद्यपि विभावादिसंयोगात्मकस्यैतदुपपत्तौ बाधाभावात्, प्रत्युत युक्तत्वादित्याशङ्क्याह—६३ **अवाच्यत्वादिक**मित्यादि।

६३ **तस्य** रसस्य। **अवाच्यत्वादिकम्।** आदिपदेनालक्ष्यत्वमतात्पर्य्यविषयत्वं चेति बोध्यम्। **व्यञ्जनरूपणे** व्यञ्जनस्य व्यञ्जनाया रूपणं निरूपणं यत्र तत्रेति तथोक्ते पञ्चमपरिच्छेदे इति भावः। **वक्ष्ये** प्रतिपादयिष्ये ॥ ५१ ॥

अथ सूत्रस्थस्य कठिनांशरूपस्य 'तस्ये'त्यादेः पदस्यार्थं दर्शयति—**तस्ये**त्यादिना।

**तस्य** 'इत्यस्ये'ति शेषः। **रसस्य** 'इत्यर्थः' इति शेषः। **आदिशब्दा** 'दवाच्यत्वादिक' मित्यादिपदादित्यर्थः। **अलक्ष्यत्वा**द्यलक्ष्यत्वं तात्पर्य्याविषयत्वं च। 'इत्यर्थो बोध्य' इति शेषः।

ननु यदि मिलिता रत्यादयो रसास्तत्कथमस्य स्वप्रकाशत्वं कथं वाऽखण्डत्वमित्याह—

६४ रत्यादिर्ज्ञानतादात्म्या–देव यस्माद्रसो भवेत्।
ततोऽस्य स्वप्रकाशत्वमखण्डत्वं च सिध्यति ॥ ५२ ॥

यदि रत्यादिकं प्रकाशशरीरादतिरिक्तं स्यात्तदैवास्य स्वप्रकाशत्वं न सिध्येत्, न च तथा; तादात्म्याङ्गीकारात्।

यदुक्तम्–'यद्यपि रसानन्यतया चर्वणाऽपि न कार्य्या, तथाऽपि कादाचित्कतया कार्य्यत्व-

---

अथास्य स्वप्रकाशत्वमखण्डत्वं च साधयितुमुपक्रमते–नन्वित्यादिना।

**ननु। यदि। मिलिता** विभावादिभिः समं सम्पृक्ताः। **रत्यादयः** स्थायिनो भावाः। **रसाः** शृङ्गाराद्या-स्याद्याः। **तत्** तर्हि। **कथम्। स्वप्रकाशत्वं** स्वयं प्रकाशन्त इति स्वप्रकाशा इति तेषां भावस्तत्त्वम्। 'सम्भवती'ति शेषः। **कथम्। वा। अखण्डत्वं** न खण्डोऽवयवविभागो येषां तेषां भावस्तत्त्वमिति तथोक्तम्। 'सम्भवती'ति शेषः। अयम्भावः–३६ 'सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मय' इत्यनेन रसानामखण्डत्वं स्वप्रकाशत्वं च यदभिहितं तत्र स्वप्रकाशत्वं नाम स्वस्वरूपज्ञानविषयत्वम्, अखण्डत्वं पुनरेकरूपत्वम्, एते च रत्यादेर्न सम्भवतः मनोज्ञेयत्वादनेकत्वाच्च। इति इतीत्याशङ्क्य। **आहोत्तरयितुमि'**ति शेषः। ६४ **रत्यादिरिति**।

६४ **यस्मात्। ज्ञानतादात्म्याज्ज्ञानं** विभावादिसंवित्तस्य तादात्म्यमभिन्नता तस्मादिति तथोक्तात्। 'तादात्म्यं स्यादभिन्नता।' इति गोपालः। अत्र ल्यपो लोपे पञ्चमीति विभावादिसंविदभिन्नतां प्रतिपद्येत्यर्थः। **रत्यादिः** 'स्थायी-भाव' इति शेषः। **एव। रसः। भवेत्। ततस्त**स्माद्विभावादिसंविदभिन्नस्यैव रत्यादे रसात्मताऽङ्गीकारादिति भावः। **अस्य** रसस्य। **स्वप्रकाशत्वं** पराप्रकाश्यत्वम्। **च** तथा। **अखण्डत्वम्। सिध्यति** सम्पद्यते। अयम्भावः–चि-दवच्छिन्नो रत्यादी, रत्याद्यवच्छिन्ना चिदेव वाऽवच्छिन्नत्वावच्छेदकत्वावच्छेदकतां निराकृत्य रसरूपेण सम्पद्यते। तथा च–चिदभिन्नो रत्यादी, रत्याद्यभिन्ना वा चिदेव रस इति स्थितम्। चिच्च ज्ञानं, तत्स्वप्रकाशमखण्डं चेति वेदान्तसि-द्धान्तः। तस्मादस्य स्वप्रकाशत्वमखण्डत्वं चेति ॥ ५२ ॥

तदेवोपपादयति–यदीत्यादिना।

**यदि। रत्यादिकं** स्थायी भावः। **प्रकाशशरीरा**त्प्रकाशो विभावादिज्ञानं स एव तस्य वा शरीरं तस्मात्। **अतिरिक्तं** भिन्नम्। **स्यात्। तदा। एव। अस्य** रसात्मनो रत्यादिकस्येत्यर्थः। **स्वप्रकाशत्वमु**पलक्षणेनाखण्डत्वं चेत्यर्थः। **न** नैव। **सिध्येत्। न च** न तु। **तथा** 'रसात्मनो रत्यादिकस्वप्रकाशशरीरादतिरिक्तत्वम्' इति शेषः। कुत इत्याह–**तादात्म्याङ्गीकारात्** विभावादिसंविदोऽभिन्नत्वाङ्गीकारात्। अयम्भावः–यदि चिद्रत्याद्योरभेदमनङ्गीकृत्य रत्यादी रस इतिनाङ्गयकरिष्यत, तर्हि रसस्यापि स्वप्रकाशत्वमखण्डत्वं च नाङ्गयकरिष्यते ति, चिच्च स्वप्रकाशाऽखण्डा च; तदिति तथाभूतो रत्यादी रस इति स्थितौ रसः स्वप्रकाशोऽखण्डश्च। इति।

उक्तमर्थं द्रढयितुं प्रवृत्तोऽनुषङ्गेण 'रसस्य स्वप्रकाशत्वाद्यङ्गीकारे तदनुयोगिनः चर्वणस्यापि स्वप्रकाशत्वाद्येव युज्येत, न चैवं युक्तम्, "६२ निष्पत्त्या चर्वणस्यास्य निष्पत्तिः" इत्ययुक्तत्वापत्तेः;' इत्याशङ्कामप्यपनेतुमाह–यदुक्तमि'त्यादि।

**यद्** यतः। **उक्त** 'माचार्य्यै'रिति शेषः। **'यद्यपि** 'सिद्धान्तपक्षे' इति शेषः। **रसानन्यतया** रसस्यानन्यता-ऽभिन्नता तया तथोक्तया। नान्या भिन्नेत्यनन्या। **चर्वणाऽऽस्वादः। अपि** किं पुना रस इति भावः। **कार्य्या** कार्य्य-रूपा। **न** नैवास्ति। इदमुक्तम्–रसचर्वणयोरास्वादमात्ररूपत्वादभिन्नत्वमिति चर्वणाया अपि न केवलं रसस्य, कार्य्य-व्यतिरिक्तत्वमुपपद्यते। कार्य्यव्यतिरिक्तत्वं नाम स्वप्रकाशत्वमखण्डत्वं वा इति। **तथाऽपि। कादाचित्कतया** कदाचिद्विभावादिरूपायां चित्तवृत्तौ सत्यामाविर्भवति, असत्यां पुनस्तस्यां तिरोभवतीति कृत्वा कस्मिंश्चित्समये भवतीति कादाचित्कं तस्य भावस्तत्ता तयेति तथोक्तया। 'शरदः कृतार्थते' तिवत्सामान्ये नपुंसकम्। **कार्य्यत्वं** कार्य्यरूपत्वम्।

**मुपकल्प्य तदेकात्मन्यनादिवासनापरिणतिरूपे रत्यादिभावेऽपि व्यवहार इति भावः।' "सुखादितादात्म्याङ्गीकारे चास्माकीं सिद्धान्तशय्यामधिशय्य दिव्यं वर्षसहस्रं प्रमोदनिद्रामुपेयाः।" इति च। 'अभिन्नोऽपि स प्रमात्रा वासनोपनीतरत्यादितादात्म्येन गोचरीकृतः।' इति च। ज्ञानस्य स्वप्रकाशत्वमनङ्गीकुर्वतामुपरि वेदान्तिभिरेव निपातनीयो दण्डः। तादात्म्यादेवास्याखण्डत्वम्।**

---

**उपकल्प्य** लक्षणया स्वीकृत्येत्यर्थः। **तदेकात्मनि** सा चर्वणैवैक आत्मा स्वरूपं यस्य तस्मिन्निति तथोक्ते। चर्वणातोऽभिन्नस्वरूप इत्यर्थः। चर्वणामात्रस्वरूप इति भावः। अत एव **अनादिवासनापरिणतिरूपे**ऽनादिः प्राक्तनी या वासना तस्याः परिणतिः परिणामस्सैव रूपं यस्य तस्मिंस्तथोक्ते। 'सामाजिकाना' मिति शेषः। तथा च–सामाजिकानां चिरकालिका या रामादिविषया वासना सैव परिणामं प्राप्ता यत्स्वरूपभूता तादृशे इति भावः। **रत्यादिभावे** रत्यादौ स्थायिनि भावे। **अपि** किं पुना रस इत्यर्थः। **व्यवहारः** 'काव्यत्वस्ये'ति शेषः। अभिहितं च विवृतिकारैः'– "विभावादिसंयोगाद्रत्यादी रसो जायते" इत्यत्र रसे साक्षाद्रत्यादौ रसद्वारैव प्रतीयते इति भावः।' इति, यद्वा–रत्यादिभावे रत्यादेर्विभावादिसंयोगोत्तरकालिकेभ्यो रत्यादिभ्यो भावो जन्म यस्य तस्मिन्निति तथोक्ते। रस इत्यर्थः। अपि व्यवहारः 'कार्य्यत्वस्ये'ति शेष इति पूर्ववत्। इदमुक्तम्–रसस्य चर्वणाऽऽस्वादविशेषः। स च न सर्वकालिकः स्यादेतस्याविर्भवनतिरोभवनशीलत्वात्। तदिति चर्वणायाः कार्य्यत्वं लक्षणया स्वीक्रियते। एवं च–रसस्य चर्वणामात्रस्वरूपभूतत्वादत्र कार्य्यत्वम्। रसश्च रत्यादिरेवेति रसस्य कार्य्यत्वेऽङ्गीकृते रत्यादेरपि कार्य्यत्वम्। अत एवाहुस्तर्कवागीशाः–'रत्यादीति। रत्यादि (भाव) विषयावच्छेद इत्यर्थः।' इति। एवं च–'रत्यादिभागे' इति क्वाचित्कः पाठोऽपि सङ्गच्छते। न च रसावस्थायां रत्यादिश्चर्वणातो व्यतिरेकेणावतिष्ठते, न वाऽनादिवासनापरिणतिरूपो नेति वक्तुं शक्यः; युक्तं चैवं यथोक्तम्। इति। ननु 'विभावादिसंयोगाद्रत्यादयो रस' इति मते रत्यादीनां ज्ञानाभिन्नत्वं स्वीकृत्य रसावस्थायां स्वप्रकाशत्वं, मिलितानामेवैषां रसावस्थां स्वीकृत्य रसस्याखण्डत्वं चोपपाद्यतां नाम, किन्तु–'स्वप्रकाशानन्दचिन्मयः।' इति मते न रसस्य स्वप्रकाशत्वाद्युपपादयितुं शक्यम्, विजातीयानां चिदानन्दचमत्काराणामैक्यानुपपत्तेः। तदिति रसस्य चिन्मयत्वादिस्वीकारे कथं स्वप्रकाशत्वादीत्युपपाद्यतामिति चेद्दूरमित्यप्युक्तमित्याह–"**सुखादितादात्म्याङ्गीकारे** सुखादिनाऽऽनन्दप्रकाशाभ्यां तादात्म्यमभिन्नत्वमेकत्वमिति यावत्तस्य स्वीकारस्तस्मिन्निति तथोक्ते। अत्र सतिसप्तमी। यदि रस आनन्दमात्रस्वरूपश्चमत्कारैकप्राण इत्येवं स्वीक्रियते तर्हीति भावः। **च। आस्माकी**मस्माकमियमिति तां तथोक्ताम्। **सिद्धान्तशय्यां** सिद्धान्त एव शय्या तामिति तथोक्ताम्। **अधिशय्य। दिव्य**मानन्दमात्रानुभावकतया शुद्धं स्वर्गे वा भवम्। **वर्षसहस्रम्।** 'कालाध्वनोरत्यन्तसंयोगे।' २।३।५ इति द्वितीया। अत्र सहस्रशब्दोऽनन्तवाचकः। तथा च–अनन्तवर्षपर्य्यन्तमित्यर्थः। **प्रमोदनिद्रां** प्रमोदेन निद्रेति ताम्। **उपेया** यायाः। अयम्भावः–रस आनन्दाद्यभिन्न इति त्वस्माकं सिद्धान्त एवेति यद्येवमङ्गीक्रियते तर्हि न कोऽपि त्वां विजेष्यत इति निर्भरं सुखमनुभव। आनन्दचमत्कारादेश्च रमणीयतावशात् क्षणेक्षणे विलक्षणव्यपदेशमात्रत्वं, न तु तत्त्वतोऽनेकत्वं येन रसस्याखण्डत्वं व्यपहन्येत। तस्मादखण्ड एवायं रसः। इति।" **इति। च।** 'उक्तमन्यै'रिति शेषः। प्रमाणान्तरेणापि रसस्य स्वप्रकाशत्वं प्रदर्श्य प्रकरणमुपसंहरति–'**प्रमात्रा**ऽनुभवकर्त्रा 'प्रमया चे'ति शेषः। प्रमा च चर्वणारूपवेति चर्वणरूपया प्रमया चेत्यर्थः। **अभिन्नः। अपि। वासनोपनीतरत्यादितादात्म्येन** वासनया संस्कारेणोपनीतो यो रत्यादिस्तदभेदेनेत्यर्थः। 'विशिष्ट' इति शेषः। **स** रस इत्यर्थः। **गोचरीकृतः** 'प्रमात्रे'ति पूर्वेण। अयम्भावः–प्रमात्रभिन्नः प्रमाऽभिन्नोऽपि च रसो वासनोपनीतरत्यादिरूपेण प्रमात्रा स्वानुभवानतिरिक्ततयाऽनुभूयते। इति।' **इति। च।** 'उक्तमन्यै' रिति शेषः। ननु ज्ञानमनुव्यवसायरूपमेवाथ कथं स्वप्रकाशमित्याक्षिपतः प्रत्याक्षिपति–**ज्ञानस्य। स्वप्रकाशत्वम्। अनङ्गीकुर्वतां** ये नाङ्गीकुर्वन्ति तेषामित्यर्थः। **उपरि** मते। **वेदान्तिभि**र्ज्ञानस्य स्वप्रकाशत्वानङ्गीकारेण स्वसिद्धान्तस्य सर्वथा हानिं पश्यद्भिरिति भावः। **एव। दण्डो** दोषः। **निपातनीय** उपन्यस्तव्यः। दोषश्च–ज्ञानस्यानुव्यवसायेन, तस्याप्यपरेणेति ग्रहेऽनवस्थापात एवेति बोध्यम्। अथ निरुक्तकारिकार्थं सुगमयन्नाह–**अस्य** रसस्य। **तादात्म्या**ज्ज्ञानतादात्म्यात्। **एव। अखण्डत्वं** विभावादिरत्यादिपार्थक्यावगाहिज्ञानाविषयत्वम्। अत एव स्वप्रकाशत्वं चेति भावः। 'सिध्यति'

रत्यादयो हि प्रथममेकैकशः प्रतीयमानाः सर्वेप्येकीभूताः स्फुरन्त एव रसतामापद्यन्ते। तदुक्तम्-

'विभावाश्चानुभावाश्च सात्त्विका व्यभिचारिणः।
प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डताम् ॥'इति।

'परमार्थतस्त्वखण्ड एवायं वेदान्तसिद्धान्तप्रसिद्धब्रह्मतत्त्ववद् वेदितव्यः।' इति च।

अथ के ते विभावानुभावव्यभिचारिण इत्यपेक्षायां विभावमाह-

६५ रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः।

---

इति शेषः। एतदेव हेतुनिर्देशपुरस्सरमुपपाद्य दर्शयति-**हि** यतः। **रत्यादयः** 'विभावादयश्चे'ति शेषः। तथा च-रत्यादयो भावाः, विभावानुभावव्यभिचारिणश्चेति निष्कृष्टम्। **प्रथमं** रसात्मनाऽवतारात्प्रागित्यर्थः। **एकैकशः** पृथक्-पृथक्स्वरूपेण। **प्रतीयमानाः** प्रतीयन्ते, तदनन्तरं तथासन्त इति भावः। **सर्वे** रत्यादयो विभावादयश्च। **अपि**। **एकीभूता** अपृथग्भूताः। **स्फुरन्तः**। **एव** यावत्तावत्। **रसताम्**। **आपद्यन्ते**। **तत्**तथा। **उक्तम्**। 'अन्यै' रिति शेषः। किमित्याह—

'**विभावाः**। **अनुभावाः**। **सात्त्विकाः** स्वेदस्तम्भादयोऽनुभावविशेषाश्चेत्यर्थः। **व्यभिचारिणः**। **च**। **प्रथमं** 'रसात्मनाऽवतारा'दिति शेषः। **खण्डशः** पृथक्पृथग्रूपेण। **प्रतीयमानाः**। **अखण्डताम्**। **यान्ति** प्रतिपद्यन्ते॥' **इति**। इदमुक्तम्-यथा खण्डमरिचादीनां पृथक्पृथगवस्थितानां पृथक्पृथक्त्वयैव रसानुभवः, सम्मिलितानां पुनस्तेषामपृथगात्मना विलक्षणरसानुभवः सम्पद्यते; तथैव रत्यादीनां प्रथमं पार्थक्येनानुभवः, सम्मिलितानां पुनस्तेषां कोऽपि य आस्वादः सोऽखण्डो विलक्षणानन्दात्मा रसपदव्यपदेश्यः। एवं पूर्वं रत्यादीनां खण्डात्मनाऽवस्थानं तत्पुनरखण्डात्मनेति निष्कृष्टम्। इति।

एवं प्रकारान्तरेण समाधाय सिद्धान्तमवजिगमयिषुराप्तलेखमुद्धरति--'**परमार्थत..**' इत्यादिना।

'**परमार्थतः** सिद्धान्तदशायाम्। **तु**। **अयं** रसः। **वेदान्तसिद्धान्तप्रसिद्धब्रह्मतत्त्ववद्**वेदान्तस्य सिद्धान्तस्तत्र प्रसिद्धं यद्ब्रह्मतत्त्वं तेन तुल्यमिति तथोक्तम्। **अखण्डः** परिपूर्णः। **एव**। 'इती'ति शेषः। **वेदितव्यो** ज्ञेयः। विवृतं च तर्कवागीशैः-'यथा चिदानन्दरूपोऽयं पुरुषः इत्यनेन चिदानन्दयोरेकब्रह्मरूपत्वं प्रतिपादितं तथा चिदानन्दचमत्काराणामेकरसरूपत्वमिति भावः।' **इति**।

अत्रायं पूर्वापरसन्दर्भभावः-'चिदपरपर्य्यायं ज्ञानम्, तदवच्छिन्नो रत्यादी, रत्याद्यवच्छिन्ना वा चिद्विभावादिभिः समं सम्भूयैव सहृदयदृशा रसात्मनाऽवतिष्ठत इति सिद्धान्तः। अत्र च केवलं रत्याद्यंशमादाय न स्वप्रकाशत्वं न नित्यत्वं च, यथाहि स्वोपाधिकत्वेन कल्पितस्य ब्रह्मणः, अथ विशेषणतया विशेष्यतया ज्ञानांशमादाय स्वप्रकाशत्वं नित्यत्वमखण्डत्वं च सर्वथैव पर्य्यवसितम्, यथाहि-चिन्मात्रस्य ब्रह्मणः।' इति केचित्, 'रत्यादेर्ज्ञानाभिन्नत्वमेव, तत्त्वस्य ज्ञानाल्लेशतोऽप्यतिरिच्यमानताऽनुपपत्तेः। अथ सर्वथैव स्वप्रकाशत्वं नित्यत्वमखण्डत्वं च तस्य निर्बाधम्।' इति परे, 'यथा पानकरसे खण्डमरिचादीनां भिन्नास्वादानामप्येषामभिन्नास्वादात्मनोपलभ्यमानत्वं तथाऽनेकस्वरूपाणामपि रत्यादीनां रसावस्थायामेकात्मत्वमात्रम्।' इत्येके, 'यथा-'विज्ञानमानन्दं ब्रह्म' 'सर्वं खल्विदं ब्रह्मे'त्यादिश्रुत्युक्तदिशा जगदावर्त्तदशायां पृथक्पृथगात्मनाऽवभासमानमपि ब्रह्म परमार्थदशायामेकमेवेति प्रतिपाद्यते तथा-रसावस्थातः पूर्वं रत्यादीनां विभावादीनां च पार्थक्येन प्रतीयमानानामपि रसावस्थायां पुनस्तेषां न खलु पार्थक्यम्। तदिति ब्रह्मवद् रसस्याखण्डत्वं स्वप्रकाशत्वं च।' इति त्वाहुरन्ये। इति।

अथ विभावादिस्वरूपं लक्षयितुमवतरणिकामुपन्यस्यति-**अथे**त्यादिना।

**अथ** 'रत्यादिसम्मिलिता विभावादयो रस' इति सिद्धान्तप्रतिपत्त्यनन्तरम्। **ते** 'ये रत्यादिसम्मिलिता रसपदव्यपदेश्या' इति शेषः। **विभावानुभावव्यभिचारिणः**। **के** किंस्वरूपाः। **इत्यपेक्षायामि**त्येवं ज्ञातुमभिलाषायां सत्यामित्यर्थः। **विभावम्**। क्रमप्राप्तत्वात्तत्र प्रथमं विभावपदवाच्यम्। **आह-६५ रत्याद्युद्बोधका** इत्यादिना।

६५ **लोके** काव्यनाट्यभिन्ने जगतीत्यर्थः। 'लोकस्तु भुवने जने।' इत्यमरः। **रत्याद्युद्बोधका** नायकादयः। 'ये स्यातास्त एवे'ति शेषः। **काव्यनाट्ययोः** काव्ये नाट्ये (नाटके) च। काव्यनाट्ययोः श्रव्यदृश्यभेदेन गोबलीवर्दवत्पृथगभिधानम्। **विभावा** विभावपदवाच्याः। 'ज्ञेया' इति 'उच्यन्ते' इति वाऽध्याहार्य्यम्।

**ये हि लोके रामादिगतरत्यादीनामुद्बोधकारणानि सीतादयस्त एव काव्ये नाट्ये च निवेशिताः सन्तो 'विभाव्यन्ते आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभि' रिति, विभावा उच्यन्ते । तदुक्तं भर्तृहरिणा–**

**'शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान् । प्रत्यक्षानिव कंसादीन्साधनत्वेन मन्यते॥' इति ।**

**तद्भेदावाह–**

**६६ आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ ॥ ५३ ॥**

**स्पष्टम् । तत्र–**

**६७ आलम्बनं नायकाऽऽदि–स्तमालम्ब्य रसोद्गमात् ॥ ५४ ॥**

---

तदेव स्वयं विवृणोति– ये हीत्यादिना ।

**ये । हि खलु । लोके** काव्यनाट्याभ्यामन्यत्र जगति । **रामाऽऽदिगतरत्यादीनां** रामाऽऽदिगता ये रत्यादयः (स्थायिभावाः) तेषां तथोक्तानाम् । आदिपदाभ्यां सीतादीनां शोकादीनां च ग्रहणम् । **उद्बोधकारणान्युद्बोधकारणभूताः । सीतादयः ।** आदिपदेन रामादीनां ग्रहणम् । अत एवात्र पुल्लिङ्गत्वेन निर्देशो युज्यते । 'सीतादिरत्यादीनामुद्बोधकारणानि रामादय' इति पाठान्तरे तु आदिपदाभ्यां पूर्ववत् रामादीनां हासादीनां च ग्रहणम् । उत्तरत्रादिपदेन सीतावसन्तादीनां ग्रहणम् । 'प्रसिद्धा' इति शेषः । **ते । एव । काव्ये** श्रव्यकाव्ये । **नाट्ये** नाटके श्रव्यकाव्ये इति यावत् । **च । निवेशिता** वर्णितस्वरूपा इत्यर्थः । **सन्तः । विभाव्यन्ते** विशेषेण भाविताः क्रियन्ते । तदेवाह– **एभिः** (कर्तृभिः) **सामाजिकरत्यादिभावाः** सामाजिकानामभिनयदर्शिनामत एव तत्तद्वासनाशालिनां मार्मिकाणां रत्यादिभावा इति तथोक्ताः । **आस्वादाङ्कुरप्रादुर्भावयोग्या** आस्वादस्याङ्कुरप्रादुर्भावोऽङ्कुरवत्प्रादुर्भावस्तस्य योग्या इति तथोक्ताः । **क्रियन्ते** सम्पाद्यन्ते ।' **इति, । विभावा** इति व्युत्पन्नार्थका विभावपदवाच्याः । **उच्यन्ते ।** अथोक्तं द्रढयितुं प्रमाणमाह–**तत् । भर्तृहरिणा** वाक्यपदीयाभिधं ग्रन्थं रचितवतेति भावः । **उक्तं** कथितं प्रतिपादितमिति यावत् । किमित्याह–'सहृदयो मर्मवेत्ता । **शब्दोपहितरूपान्** शब्देन काव्यनाट्यसम्बन्धिना वचसोपहितान्युपधानीकृतानि रूपाणि मूर्तयो येषां तान् । उप-धा-क्तः । 'दधातेर्हिः ।' ७।४।४२ इति ह्यादेशः । तत एव–**बुद्धेर्व्यञ्जनाजन्यबोधस्य । विषयताम् । गतान् । तान्** प्रसिद्धान् । **कंसादीन् ।** वीररसाभिप्रायेणेदमुक्तम् । वस्तुतस्तु-'रामादी' नित्येव पाठः साधीयान् । **साधनत्वेन** तत्तद्रसाविर्भावस्य साधनात्मना । **प्रत्यक्षान् । इव ।** वस्तुतस्तु–परोक्षानपीति शेषः । **मन्यते** प्रत्येति । इदमभिहितम्–केवलं वर्ण्यमाना अपि व्यञ्जनया ज्ञापितस्वरूपा अत एव प्रत्यक्षभूता इव सहृदयैरध्यवसीयन्ते रामादयः ।' **इति ।**

एवं च लोके यत् कारणपदवाच्यं तदेवात्र विभावपदेन निर्दिश्यते, इदं चोपादानरूपं मुख्यं, निमित्तरूपं पुनरपरमिति निदर्शयितुं प्रतिजानीते–**तद्भेदा**वित्यादिना ।

**तद्भेदौ** तस्य विभावस्य रत्याद्युद्बोधने कारणस्येति यावत् भेदौ भेदद्वयमिति तौ तथोक्तौ । **आह–६६ आलम्बनोद्दीपनाख्या**वित्यादिना ।

६६ **तस्य** विभावस्य । **आलम्बनोद्दीपनाख्यौ** आलम्बनं चोद्दीपनं चेति ते आख्ये ययोस्तौ तथोक्तौ । आलम्ब्यतेऽनेनेत्यालम्बनम्, उद्दीप्यतेऽनेनेति पुनरुद्दीपनम् । तथा च– आलम्बनं नाम विभाव एव लोक उपादानं नाम कारणमिति, उद्दीपनं पुनर्निमित्तमिति गीयते, यदालम्बनमन्तरा रसानाविर्भावस्तस्यालम्बनपदार्थत्वात्, यस्य चोद्दीपनमात्रकारित्वं तस्य पुनरुद्दीपनमित्यभिधानात् । इति बोध्यम् । **उभौ द्वौ** शुद्धौ वा । उपद्वा ययोस्तौ । **भेदौ । स्मृतौ** 'भरतादिभि' रिति शेषः ॥ ५३ ॥

न किञ्चिद्गूढार्थं विशेषेण वा विवरणीयमित्याह–**स्पष्ट**मिति ।

ननु किं तत्र तावदालम्बनपदाभिधेयमित्याह–**तत्र** तयोरालम्बनोद्दीपनाख्ययोर्विभावभेदयोर्मध्य इति यावत् ।

६७ **नायकादि**र्नायको रामादिरादौ यस्य नायिकाप्रतिनायिकादेरिति तथोक्तः । **आलम्बन**मालम्बनपदवाच्यः । आलम्ब्यतेऽनेनेति तथोक्तः । आङ्–लबि–ल्युट् । 'ल्युट्च' ३।३।११५। कुत इत्याह–**तं** नायकादिम् । **आलम्ब्य-**

**आदिशब्दान्नायिकाप्रतिनायकादिः। अत्र यस्य रसस्य यो विभावः स तत्स्वरूपवर्णने वक्ष्यते। तत्र नायकः-**

**६८ त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।**
**दक्षोऽनुरक्तलोक-स्तेजोवैदग्ध्यशीलवान्नेता॥ ५५॥**

**दक्षः क्षिप्रकारी, कृती कृतज्ञः, शीलं सद्वृत्तम्। तद्भेदानाह-**

---

श्रित्य। **रसोद्गमाद्** यतो रसस्योद्गमो भवति तस्माद्धेतोरिति भावः। उक्तं च पण्डितराजैः-'एवं यो यस्याश्रित्तवृत्ते-विषयः स तस्य आलम्बनम्।' इति। यस्या इत्यविवक्षितम्। 'आलम्बन' इति ल्यपपाठः॥५४॥

आदिशब्दाद्बोद्धव्यं निर्दिशति-**आदिशब्दा**दित्यादिना।

**आदिशब्दात्**। अत्र ल्यपो लोपे पञ्चमी। तथा च-आदिशब्दमाश्रित्येत्यर्थः। **नायिकाप्रति-नायकादिः**। 'गृह्यत' इति शेषः।

न च सर्वेषां रसानामालम्बनमुद्दीपनं वाऽभिन्नमित्याह-**अत्रे**त्यादिना।

**अत्रै**षु नायकादिष्वालम्बनेषूपलक्षणेन वक्ष्यमाणेषूद्यानादिषूद्दीपनेषु च मध्य इति यावत्। **यस्य। रसस्य** शृङ्गारादेः। **यः। विभाव** 'आलम्बनरूप उद्दीपनरूपो वेति' शेषः। **सः। तत्स्वरूपवर्णने** तस्य ( रसस्य ) स्वरूपं लक्षणमिति, तस्य वर्णनं तत्रेति तथोक्ते। 'उपक्रम्यमाण' इति शेषः। **वक्ष्यते** कथयिष्ये। एवं च-सर्वेषां रसानां न विभावैक्यमिति यद्यद्रससम्बन्धी योयो विभावः सस तत्स्वरूपवर्णनोपक्रमे वर्णयिष्यते। इति निष्कृष्टम्।

अथ नायकादिस्वरूपं वर्णयितुमुपक्रमते-**तत्रे**त्यादिना।

**तत्र** तेषु नायकादिषु मध्य इत्यर्थः। **नायकः**। 'उच्यते' इति शेषः। ६८ **त्यागी**त्यादिना।

६८ **त्यागी** परार्थे द्रव्यादेरुत्सर्जनं त्यागः, सोऽस्यास्तीति तथोक्तः। दातेत्यर्थः। **कृती** कृतं परेणोपकृतम-स्यास्तीति तथोक्तः। कृतज्ञ इत्यर्थः। **कुलीनः** सत्कुले प्रसूतः। 'कुलात्खः।' ४।१।१३९ इति खः। **सुश्रीको** मनोज्ञाऽतिशयिता श्रीः शोभा कीर्त्तिरिति यावत्, यस्य सः। 'श्रीर्वेषरचनाशोभाभारतीसरलद्रुमे। लक्ष्म्यां त्रिवर्ग-सम्पत्तौ वेषोपकरणे मतौ॥' इति मेदिनी। **रूपयौवनोत्साही** प्रशस्तरूपवान्, युवा, उत्साहशीलश्चेत्यर्थः। रूपं च यौवनं चोत्साहश्चेति तेऽस्य सन्तीति तथोक्तः। **दक्षः** प्रवीणः क्षिप्रं कार्य्यं सम्पादयितुं समर्थ इति यावत्। **अनु-रक्तलोको**ऽनुरक्तोऽनुरागवाँल्लोकः सर्वोऽपि जनो यत्र स इति तथोक्तः। **तेजोवैदग्ध्यशीलवान्**। तेजः परेणा-परिभूयमानत्वं परं वा परिभवितुं युक्तत्वम्, वैदग्ध्यम् उचितकर्मकारित्वम्, शीलं सदाचरणम्। तथा च- परेणाना-क्रम्यः स्वयं च परमाक्रमितुं प्रभुस्तेजस्वी। याथार्थ्येन समयोचितकर्मकर्त्ता विदग्धः सदाचारी शीलवान्। इति निष्कृष्टोऽर्थः। **नेता** नायको 'भवती'ति शेषः। अत्रार्य्याछन्दः। लक्षणं चोक्तं प्राक्॥५५॥

अथानेकार्थकानां दक्षादिपदानां विवक्षितमर्थं निर्दिशति-**दक्ष** इत्यादिना।

**दक्षो** दक्षपदार्थः। **क्षिप्रकारी** चतुरः। 'न तु-'दक्षः प्रजापतौ रुद्रवृषभे कुक्कुटे पटौ। द्रुमे दक्षा तु मेदिन्या' मिति विश्वोक्त्या प्रजापतिरित्यादि'रिति शेषः। **कृती** कृतिपदार्थः। **कृतज्ञः** परेण मनागप्युपकृतं स्मर्त्ता। 'न तु-'कृती विज्ञे कृती दक्षे कृतज्ञे च कृती स्मृतः।' इति गोपालोक्त्या विज्ञ इत्यादि' रिति शेषः। **शीलं** शीलपदार्थः। **सद्वृत्तं** सदुत्तमं चेदं वृत्तमाचरणमिति तथोक्तम्, 'न तु-'शीलं स्वभावे सद्वृत्ते' इति विश्वोक्त्या स्वभाव' इति शेषः।

एतस्य पुनश्चत्वार आत्मान इति निर्देष्टुमुपक्रमते-**तद्भेदा**नित्यादिना।

६९ धीरोदात्तो धीरो-द्धतस्तथा धीरललितश्च ।
धीरप्रशान्त इत्यय-मुक्तः प्रथमश्चतुर्भेदः ॥ ५६ ॥

स्पष्टम् । तत्र धीरोदात्तः-

७० अविकत्थनः क्षमावा-नतिगम्भीरो महासत्त्वः ।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः ॥ ५७ ॥

अविकत्थनोऽनात्मश्लाघाकरः । महासत्त्वो हर्षशोकाद्यनभिभूतस्वभावः । निगूढमानो विनयच्छन्नगर्वः । दृढव्रतोऽङ्गीकृतनिर्वाहकः । यथा-रामयुधिष्ठिरादिः । अथ धीरोद्धतः--

---

तस्य निरुक्तस्वरूपस्य नायकस्य भेदानाह । आह-६९ धीरोदात्त इत्यादिना ।

६९ प्रथमो नायकनायिकादीनां मध्ये प्रथमं गणनामार्गं प्राप्तः, प्रियपत्यपेक्षयाऽपरेषां गौणत्वात् प्रियपत्याख्यो मुख्यो नायक इति वा । अयम् । धीरोदात्तो धीरश्चासा उदात्त इति तथोक्तः । धीरो धैर्य्यसम्पन्नः, उदात्त उदारः । तथा । धीरोद्धतो धीरोऽसा उद्धत उद्दण्ड इति तथोक्तः । च तथा । धीरललितो धीरोऽसौ ललितः सुभगत्वादियुक्त इति तथोक्तः । अथ धीरप्रशान्तो धीरोऽसौ प्रशान्तः प्रकृतितो जितचित्तः (कामक्रोधाद्यनभिभूतचित्तः) इति तथोक्तः । इतीत्येवम् । चतुर्भेदश्चत्वारो भेदा यस्य स इति तथोक्तः । उक्तः । 'भरतादिभि' रिति शेषः । अत्रोपगीतिश्छन्दः । तल्लक्षणं च यथोक्तम्-'आर्य्याद्वितीयकेऽर्धे यद्गदितं लक्षणं तत्स्यात् । यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥' इति ॥५६॥

नात्र किञ्चिद्गूढार्थं पदमित्याह-स्पष्टम् । इति ।

अथ क्रमेणैषामपि स्वरूपं लक्षयितुमुपक्रमते-तत्रेत्यादिना ।

तत्र तेषु धीरोदात्तादिषु मध्य इति यावत् । धीरोदात्तः । 'उच्यते' इति शेषः । ७० अविकत्थनइत्यादिना ।

७० अविकत्थनो न विकत्थत आत्मानं श्लाघत इति तथोक्तः । 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' । ३।१।१३४ इति ल्युः । यद्वा-न विकत्थनं यस्य स इति तथोक्तः । विकत्थ्यत इति विकत्थनम् । 'ल्युट् च ।' ३।३।११५ इति ल्युट् । 'युवोरनाकौ ।' ।७।१।१ इत्यनादेशः । क्षमावान् क्षमा कृतागसि दण्डं पातयितुं सामर्थ्येऽपि सहनम्, साऽस्यास्तीति तथोक्तः । अतिगम्भीरोऽत्यन्तं गम्भीरोऽबहिःप्रकाश्यान्तर्भाव इति तथोक्तः । महासत्त्वो महत्सत्त्वं स्वभावो यस्य तथोक्तः । 'सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयोः । आत्मत्वव्यवसायासुवित्तेष्वस्त्री तु जन्तुषु ॥' इति मेदिनी । 'आन्महतः समानाधिकरणजातीययोः ।' ६।३।४६ इत्याकारोऽन्तादेशः । महत्त्वं च हर्षाद्युद्रेकानभिभूतत्वम् । स्थेयान् नितान्तं स्थिरः । 'प्रियस्थिरस्फिरोरु...वृन्दारकाणां प्रस्थस्फ.. वृन्दाः ।' ६।४।१५७ इति स्थादेशः । अतिसङ्कटेऽपि न्यायपर इति भावः । निगूढमानो निगूढो नितान्तं गोपितो मानोऽभिमानो येन सः । दृढव्रतो दृढोऽचलो व्रतः प्रतिज्ञा यस्य स तथोक्तः । 'नियमो व्रतमस्त्री' इत्यमरः । धीरोदात्तः । कथितः । अत्रार्याछन्दः । तल्लक्षणं चोक्तं प्राक् ॥ ५७ ॥

अथ कारिकायाः कठिनांशं सुगमयति-अविकत्थन इत्यादिना ।

अविकत्थनस्तत्पदार्थ इत्यर्थः । अनात्मश्लाघाकर आत्मश्लाघाकारिणो व्यतिरिक्तः । 'इति बोध्य' इति शेषः । महासत्त्वस्तत्पदार्थ इत्यर्थः । हर्षशोकाद्यनभिभूतस्वभावो हर्षः पुत्रजन्मादिरूपः, शोकः पुत्रमरणादिरूपः, ता आदी येषां ( कामक्रोधादीनाम् ) तैरनभिभूतः स्वभावो यस्य स तथोक्तः । 'इति बोध्य' इति शेषः । निगूढमानस्तत्पदार्थ इत्यर्थः । विनयच्छन्नगर्वो विनयेन च्छन्नस्तिरोहितो गर्वो यस्य तथोक्तः । 'इति बोध्य इति शेषः । दृढव्रतस्तत्पदार्थं इत्यर्थः । अङ्गीकृतनिर्वाहको'ऽङ्गीकृतं सुकृतिनः परिपालयन्ती' त्युक्तस्वरूपः । 'इति बोध्य' इति शेषः । यथा । रामयुधिष्ठिरादिः । आदिपदेन नलहरिश्चन्द्रादेर्ग्रहणम् ।

अथ द्वितीयं लक्षयितुमाह-अथ । धीरोद्धतः । 'उच्यते' इति शेषः । ७१ मायापर इत्यादिना ।

७१ मायापरः प्रचण्ड-श्चपलोऽहङ्कारदर्पभूयिष्ठः ।
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः ॥ ५८ ॥

यथा भीमसेनादिः । अथ धीरललितः-

७२ निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात् ।

कला नृत्यादिका । यथा रत्नावल्यादौ वत्सराजादिः ।

अथ धीरप्रशान्तः-

७३ सामान्यगुणैर्भूयान् द्विजेषु धीरप्रशान्त इत्युक्तः ॥ ५९ ॥

यथा मालतीमाधवादौ माधवादिः । एषां च शृङ्गारादिरूपत्वे भेदानाह-

---

७१ **मायापरो** मायायां परः परायणः । **प्रचण्ड** उद्धतः । **चपलो**ऽतित्वराकारी । **अहङ्कारदर्पभूयिष्ठो**-ऽहङ्कारदर्पाभ्यां भूयिष्ठोऽतिशयितः । अहङ्कारः स्वात्मनि श्रेष्ठत्वमननम्, दर्पोऽपरेषामवज्ञाहेतुका चित्तवृत्तिः **आत्मश्लाघानिरत** आत्मानं बहुभाषी । **धीरोद्धतः** । **धीरै**र्विज्ञैः । **कथितः** । अत्रार्याछन्दः । तल्लक्षणं चोक्तं प्राक् ॥ ५८ ॥

उदाहरति-**यथा** । 'वेणीसंहारादिषु' इति शेषः । **भीमसेनादिः** । आदिपदेनानयसिन्ध्वादिग्रहणम् ।

अथ धीरललितस्वरूपमाह-**अथ** । **धीरललितः** 'लक्ष्यते' इति शेषः । ७२ **निश्चिन्त**इत्यादिना ।

७२ **निश्चिन्त**श्चिन्ताशून्यः । इदं कर्त्तव्यम्, इदं तु नेति विचारश्चिन्ता तद्रहित इति भावः । **मृदुः** कोमलस्वभावः । **अनिशं** निरन्तरं भूयोभूयो वा । **कलापरः** कलासु नृत्यगानादिषु पर उत्साहशील इति तथोक्तः । **धीरललितः** । **स्यात्** ।

कारिकायाः कठिनांशं व्याचष्टे-**कला** तत्पदार्थं इति भावः । **नृत्यादिका** नृत्यादिविद्यारूपा, 'न तु कालविशेष इति बोध्य' इति शेषः । इति । उदाहरति-**यथा** । **रत्नावल्यादौ** रत्नावल्यादिनाटिकादौ । **वत्सराजादि**-र्वत्सराजानिरुद्धादिः । इति ।

अथ चतुर्थं लक्षयितुमुपक्रमते-अथेत्यादिना ।

**अथ** धीरललितलक्षणानन्तरम् । **धीरप्रशान्तो** 'लक्ष्यत' इति शेषः । ७३ **सामान्ये**त्यादिना ।

७३ **सामान्यगुणैः** 'विशिष्ट' इति शेषः । तथा च- ६८ त्यागीत्यादिना निर्दिष्टैर्नायकमात्रसम्भविभिः प्रायो गुणैर्विशिष्ट इति भावः । **द्विजेषु** ब्राह्मणक्षत्रियवैश्येष्वित्यर्थः । निर्धारणार्थेयं सप्तमी । **भूया**ञ्छ्रेष्ठः । **धीरप्रशान्तः** । **इती**त्येवम् । **उक्तः** । अत्र 'द्विजाधिको धीरप्रशान्तः स्या' दिति त्वपपाठ एव, छन्दोभङ्गापत्तेः । 'द्विजादिको धीरशान्तः स्या' दिति पुनः पाठोऽपि नातिरुचिरः 'स्या' दिति पदस्य भागद्वये समुपस्थानात् । अथ-'द्विजादिको धीरशान्त इत्युक्तः' इति पाठे 'धीरप्रशान्त' इत्यनुक्त्वा तथा वचोदुष्टत्वेऽपि ६८ त्यागीत्यादिना सन्दिष्टैर्गुणैर्भूयान् यो ब्राह्मणाद्यन्यतमो द्विजन्मा स धीरप्रशान्त इत्युक्त इति तात्पर्य्यम् । अत्रोद्गीतिश्छन्दः, तल्लक्षणं चोक्तं यथा-'आर्य्याशकलद्वितयं व्यत्ययरचितं भवेद् यस्याः । सोद्गीतिः किल कथिता तद्वद् यत्यंशभेदसंयुक्ता ॥' इति ॥५९॥

उदाहरति-**यथा** । **मालतीमाधवादौ** मालतीमाधवं नाम भवभूतिप्रणीतः प्रकरणसञ्ज्ञो दृश्यकाव्यविशेषः, तदादौ यस्य ( कौमुदीसुधाकरादेः ) तत्रेति तथोक्ते । **माधवादि**र्माधवसुधाकरादिः ।

अथैतेषां प्रत्येकं चतुष्प्रकारत्वं निरूपयितुमुपक्रमते-**एषा**मित्यादिना ।

**एषां** निरुक्तस्वरूपाणां धीरोदात्तादीनामित्यर्थः । **च** । **शृङ्गारादिरूपत्वे** शृङ्गारादिरसानुकूलस्वरूपसत्त्वे । अत्र विषये सप्तमी । **भेदान्** । **आह**-७४ एभिरित्यादिना ।

**७४ एभिर्दक्षिणधृष्टा-नुकूलशठरूपिभिस्तु षोडशधा।**

तत्र तेषां धीरोदात्तादीनां प्रत्येकं दक्षिणधृष्टानुकूलशठत्वेन षोडशप्रकारो नायकः।

**७५ एषु त्वनेकमहिला-समरागो दक्षिणः कथितः ॥ ६० ॥**

द्वयोस्त्रिचतुःप्रभृतिषु नायिकासु तुल्यानुरागो दक्षिणनायकः। यथा—

'स्नाता तिष्ठति कुन्तलेश्वरसुता, वारोऽङ्गराजस्वसुः,
द्यूतै रात्रिरियं जिता कमलया, देवी प्रसाद्याऽद्य च।

---

७४ **दक्षिणधृष्टानुकूलशठरूपिभि**र्दक्षिणश्च धृष्टश्चानुकूलश्च शठश्चेति, ते रूपिणस्तैस्तथोक्तैः। अत्र 'अल्पाच्-तरम्।' २।२।३४ इत्यनेन शठादिपदानां पूर्वनिपातप्राप्तावपि नाभ्यर्हितत्वात्पूर्वनिपातः। **एभि**र्धीरोदात्तादिभिरित्यर्थः। **षोडशधा** षोडशभेदाः 'सम्पद्यन्त'इति शेषः। 'सङ्ख्याया विधार्थे धा।' ५।३।४२। तथा च-धीरोदात्तो दक्षिणः १, धीरोद्धतो दक्षिणः २, धीरललितो दक्षिणः ३, धीरप्रशान्तो दक्षिणः ४, धीरोदात्तो धृष्टः ५, धीरोद्धतो धृष्टः ६, धीरललितो धृष्टः ७, धीरप्रशान्तो धृष्टः ८, धीरोदात्तोऽनुकूलः ९, धीरोद्धतोऽनुकूलः १०, धीरललितोऽनुकूलः ११, धीरप्रशान्तोऽनुकूलः १२, धीरोदात्तश्शठः १३, धीरोद्धतः शठः १४, धीरललितः शठः १५, धीरप्रशान्तः शठः १६, इति षडधिकदशभेदा नायका बोध्याः। यद्यपि धीरोदात्तादयो न सदा दक्षिणादिरूपाः, किन्तु श्रृङ्गारवत्त्वाद्यनुप्राहित्वे युज्यंत इति निष्कृष्टम्।

तदेवाह-**तत्रे**त्यादिना।

**तत्र** श्रृङ्गारे। **तेषां** पूर्वोक्तस्वरूपाणाम्। **धीरोदात्तादीनाम्**। **प्रत्येकम्**। **दक्षिणधृष्टानुकूलशठत्वेन**। अत्र हेतौ तृतीया। **षोडशप्रकारः**। **नायकः** ६८ त्यागीत्याद्युक्तस्वरूप आलम्बननामा विभावविशेषः। 'सम्भवती'ति शेषः। तत्र-धीरोदात्तस्वरूपत्वे सति दक्षिणस्वरूपाक्रान्तो धीरोदात्तोपधिको दक्षिण इति दिक्।

किं नाम दक्षिणत्वादीत्यत आह-७५ **एष्वि**त्यादि।

७५ **एषु** धीरोदात्तत्वादिना चतुर्धा भिद्यमानेषु नायकेष्वित्यर्थः। **तु** पुनः। **अनेकमहिलासमरागो**ऽनेका अमूः महिला नायिका इति, तासु समो रागो यस्य स इति तथोक्तः। 'वनिता महिला तथा।' इत्यमरः। इदं च-श्रृङ्गारमुद्दिश्य निदर्शनमात्रम्, वस्तुतस्तु-सर्वत्र समचित्तः सन् समव्यवहारशालीति वाच्यम्। अत एव-**दक्षिण** उदारश्चतुर इति यावत्। 'दक्षिणे सरलोदारा'वित्यमरः। **कथितः**। अत्रार्या छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ६० ॥

एतदेव विवृणोति-**द्वयो**रित्यादिना।

**द्वयो**र्नायिकयोरितिशेषः। **त्रिचतुःप्रभृतिषु** तिस्रश्च चतस्रश्चेति ताः प्रभृतावादौ यासां तासु तथोक्तासु तिसृषु चतसृषु पञ्चसु वेत्येवमनेकासु **नायिका**स्विति भावः। **तुल्यानुराग**स्तुल्यः समानो रागः प्रेम यस्य स इति तथोक्तः। **दक्षिणनायको** दक्षिणश्चतुरोऽसौ नायक इति तथोक्तः। 'भवती'ति शेषः।

उदाहर्तुमुपक्रमते-**यथे**त्यादिना।

**यथा** दक्षिणः सम्भवति तथोदाह्रियते-"**कुन्तलेश्वरसुता** कुन्तलस्य तदाख्यस्य देशविशेषस्येश्वरो निग्रहानुग्रहसमर्थो राजेति यावत्, तस्य सुता पुत्रीति तथोक्ता। **स्नाता** मासिकप्रस्रवोत्तरं कृततद्दोषक्षालना गर्भधारणोन्मुखीति यावत्। **तिष्ठति**। तथा-**अङ्गराजस्वसु**रङ्गस्य देशविशेषस्य राजेति, तस्य स्वसा भगिनी तस्या इति तथोक्तायाः। **वारो** नियतसमयः। 'प्राप्त'इति शेषः। 'निवहावसरौ वारौ'इत्यमरः। **इयं** यस्यां स्नाता कुन्तलेश्वरतनया गर्भधारणमपेक्षते, यस्यां वाऽङ्गराजस्य स्वसा नियतसमयतया रिरंसति; सैवैषेति भावः। **रात्रिः**। **कमलया**। तदाख्यया राज्ञा (कन्या)। **द्यूतै**र्द्यूतद्वारा। **जिता** स्वायत्तीकृता। **अद्य**। **च** पुनः। **देवी** महाराज्ञी। 'देवी कृताभिषेकायाम्'

इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः ॥ १८ ॥'

७६ कृतागा अपि निश्शङ्क—स्तर्जितोऽपि न लज्जितः ।
दृष्टदोषोऽपि मिथ्यावाक् कथितो धृष्टनायकः ॥ ६१ ॥

यथा मम–
शोणं वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं, ततः
पादेन प्रहृतं तया, सपदि तं धृत्वा सहासे मयि ।

---

इत्यमरः । **प्रसाद्या**ऽनुनेया । **इती**त्येवम् । **विज्ञाय** । **मया**ऽवरोधसञ्चारिणा कञ्चुकिनेति भावः । **अन्तःपुरसुन्दरीः** । **प्रति** । अत एव–'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपी' त्यनेन 'सुन्दरीः' इति द्वितीया । **विज्ञापिते** निवेदिते सतीत्यर्थः । **अप्रतिपत्तिमूढमनसा** 'किं कर्तव्य'मिति व्याकुलमनसा । 'ऋतौ भार्य्यामुपेयात्'इति श्रुतेः । 'ऋतुस्नातां तु यो भार्य्यां स्वस्थः सन्नोपगच्छति । बालगोघ्नापराधेन लिप्यते नात्र संशयः ॥'इति स्मृतेश्च कथमृतुस्नातां कुन्तलेश्वरनन्दिनीं धर्मज्ञः सन् नाहमुपगच्छेयम्, कथं वा सत्यसन्धोऽसत्यवादिनां दण्डयिता वा सन् स्वयमेवाहमङ्गराजस्वसुर्नियतसमयमुल्लङ्घेयम्, 'एषु द्यूतेष्वयमेव पणः स्याद् यद्यहं जेष्यामि तर्हि भवानिमां रात्रिं स्थितः स्यात्, यदि तु भवाञ्जेष्यति तर्ह्यहं स्वरात्रिमपहास्यामी'ति सप्रतिज्ञं प्रवर्तितैर्द्यूतैर्जित्वा यया महाभागया रात्रिरेवेयं स्वायत्तीकृतेति तामपि कमलासदृशतया कमलेति प्रसिद्धां कथं मुञ्चेयम्, महाराज्ञ्याश्च रोषापनयः सर्वथैव कर्त्तव्य इत्यसावपि कथमयैव सम्पद्यतेति किं साम्प्रतं मम कर्त्तव्यमिति मूढेनेति भावः । **देवेन** राज्ञा । 'देवं हृषीके देवस्तु नृपतौ तोयदे सुरे ।' इति हैमः । **द्वित्रा** द्वे वा तिस्रो वेत्यर्थः । **नाडिका** घटिकापर्य्यन्तम् । 'कालाध्वनोरत्यन्तसंयोगे ।' २।३।५ इति द्वितीया । **स्थितम्** 'तूष्णी' मिति शेषः । अन्तःपुरचारिणः कस्यापि कमपि तथाविधं प्रत्येव कौतुकोक्तिरियं प्रतीयते, पद्यं त्वेतद् भोजप्रबन्धे समस्यापूर्तिप्रसङ्गे दृश्यते । अत्र च शार्दूलविक्रीडितं छन्दः । लक्षणं चोक्तं प्राक् ॥ १८ ॥'

अत्र हि राज्ञः सर्वासु समोऽनुरागः प्रतीयत इत्यस्य दक्षिणत्वम् । यथा वा मम–'जेतव्या पुरतः स्थिता किल मया नारायणीयं चमूः, साहाय्यं च विधेयमार्य्यचरणानासाद्य तत्राचिरात् । नैषां साम्प्रतमेव हन्त भवितुं शक्यो विनाशो, न वा त्याज्यो मे समरः कदाचि, दिति सम्मूढोऽर्जुनोऽभूत्क्षणम् ॥', यथा वा–'अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् । उदधेरिव निम्नगाशतेष्वभवन्नास्य विमानना क्वचित् ॥' इति दिक् ।

धृष्टस्वरूपं निर्दिशति–७६ **कृतागा** इत्यादिना ।

७६ **कृतागाः** कृतमागोऽपराधो येन स इति तथोक्तः । **अपि** । **निश्शङ्को** । निर्गता शङ्काऽपराधातङ्को यस्य स इति तथोक्तः । **तर्जित**स्तिरस्कृतः । **अपि** । **न** नैव । **लज्जितः** । **दृष्टदोषो** दृष्टः प्रत्यक्षं विदितो दोषः पररोषोत्पादनहेतुः कर्म यस्य सः । **अपि** । **मिथ्यावाक्** 'न मया कृतमिद' मित्यसत्यवचनः । **धृष्टनायको** धृष्टो ऽसौ नायक इति तथोक्तः । **कथितः**। 'भरताद्यै' रिति शेषः ॥ ६२ ॥

उदाहर्तुमुपक्रमते–**यथे**त्यादिना ।

**यथा** 'धृष्टः सम्भवति तथा' इति शेषः । **मम** 'प्रबन्धे' इति शेषः । **शोण**मित्यादि ।

"हे **सखे** मित्र! । **शोणं** रक्तवर्णं 'रोषा'दिति शेषः । **मुखम्** (कर्म्म) । 'वामभ्रुव' इति प्रकृतमनुषज्यते । **वीक्ष्य** निरीक्ष्य । **विचुम्बितुं** विशेषेण चुम्बितुम् । 'मद्गण्डस्थलसौन्दर्य्यलुब्ध एवायं चुम्बितुं प्रवर्त्तते, न तु जानाति स्मरति वा प्राक्तनं स्वानयमिति सूचयन्निवे'ति शेषः । **अहम्** । **समीपम्** । **यातो** गतः । 'गत्यर्थाकर्म्मकश्लिषशीङ्स्थासवसजनरुहजीर्य्यतिभ्यश्च ।' ३।४।७२ इति कर्त्तरि क्तः । **तत**स्तदनन्तरम् । **तया** वामभ्रुवा (कर्त्र्या) । **पादेन** पादद्वारा । **प्रहृतम्** । 'प्रहृत' मित्यपि पाठः । 'मम वक्ष' इति शेषः । 'तामेवानुसर या तव दयिता, किम्मये'ति प्रहृतं मदीयं वक्ष इति भावः । पुनः–**तं** पादम् । **सपदि** तदानीमेव । **धृत्वा** 'रिरंसयाऽयमङ्के मम चरणकमलं निदधातीत्यवश्यं मयाऽनुमाह्य इति जानात्वेषेति कृत्वे'ति शेषः । **सहासे** 'मानेन प्रहारकारणमवगतमिति निश्चिनोत्विय'मिति

किञ्चित्तत्र विधातुमक्षमतया बाष्पं सृजन्त्याः सखे !
ध्यातश्चेतसि कौतुकं वितनुते कोपोऽपि वामभ्रुवः ॥ १९ ॥' इति ।

७७ अनुकूल एकनिरतः

एकस्यामेव नायिकायामासक्तोऽनुकूलनायकः । यथा–

'अस्माकं सखि ! वाससी न रुचिरे, ग्रैवेयकं नोज्ज्वलं,
नो वक्रा गति, रुद्धतं न हसितं, नैवास्ति कश्चिन्मदः ।
किन्त्वन्येऽपि जना वदन्ति 'सुभगोऽप्यस्याः प्रियो नान्यतो
दृष्टिं निक्षिपती'ति, विश्वमियता मन्यामहे दुःस्थितम् ॥ २० ॥' इति ।

---

हसति सती'ति भावः । **मयि । तत्र** । चरणग्रहणावसर इत्यर्थः । **किञ्चित्** किमपि प्रतिकार्य्यम् । **विधातुं** कर्तुम् । **अक्षमतयाऽसमर्थतया** (हेतुना) । मुञ्चन्त्याः बाष्पमश्रुजलम् । **सृजन्त्या । वामभ्रुवो** वामे कुटिले अति मनोज्ञे च भ्रुवौ यस्यास्तस्यास्तथोक्तायाः । 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे । पयोधरे हरे कामे' इति विश्वः । **ध्यातः** स्मृतिपथं नीतः । **कोपः । अपि । चेतसि** 'ममे'ति शेषः । **कौतुकमानन्दविशेषम् । वितनुते** विस्तारयति । कस्यापि कमपि सखायं प्रत्युक्तिरियम्। अत्र च शार्दूलविक्रीडितं छन्दः । तल्लक्षणं चोक्तं प्राक् ॥ १९ ॥ इति ।

अत्र हि नायकस्य धृष्टत्वं विदितचरम् । यथा वा मम–'पीड्यते दह्यते भूयः समुपैति कृतार्थवत् । संसारे हन्त लोकोऽयं पीड्यते दह्यते पुनः ॥' इति । यथा वा ममैव, 'ताडितः परिहृतः प्रयापितो विस्मृताभिभववत्पुलर्वत । याचते धनमदेन दुर्दशं दीन एष न तु जातु तं परम् ॥' इति । संसारिणो धृष्टत्वं पश्यतो निर्वाणोक्तिरेषेति दिक् ।

अथानुकूलनायकस्वरूपमभिधत्ते–७७ **अनुकूल** इत्यादिना ।

७७ **एकनिरत** एकस्यां निरत आसक्त इति तथोक्तः । 'एका च नायिके'ति शृङ्गारे, अन्यत्र यथातथमूह्या । **अनुकूलः** । 'नायकः स्या'दिति शेषः ।

तदेव विवृणोति–**एकस्यामित्यादिना** ।

**एकस्याम् । एव** न तु द्वितीयायामिति भावः । **नायिकायामुपलक्षणेन** 'अङ्गीकृतं सुकृतिनः परिपालयन्ति ॥' इत्यादिदिशा निर्दिष्टानां प्रतिज्ञादीनां ग्रहणम् । **आसक्तः । अनुकूलनायकोऽनुकूलः** प्रातिकूल्यरहितत्वे सति तन्निष्ठोऽसौ नायक इति तथोक्तः । 'यथा रामभद्रादि'रिति शेषः ।

उदाहर्तुमुपक्रमते– **यथा–'अस्माकं सखि !..'**इत्यादिना ।

'**हे सखि ! अस्माकम्** । स्वसौभाग्याधिक्यमेव सूचयितुमत्र बहुत्वेन स्वनिर्देशः । **वाससी** वस्त्रद्वयम् । परिधेयमुत्तरीयं चेति भावः । **न । रुचिरे** सुन्दरे । 'स्त' इति शेषः । **ग्रैवेयकं** कण्ठाभरणं, किं पुनरन्यदिति भावः । 'कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ।' ४।२।९६ इति ढकञ् । **उज्ज्वलं** सुन्दरम् । **न** । 'अस्ती'ति शेषः । **गतिर्गमनम् । वक्रा** कुटिला विचित्रेति यावत् । **नो** नैव । **हसितम् । उद्धतमलन्तम्** । **न** नास्ति । **कश्चित्तारुण्याद्यतमावलेपजन्मा । मद** औद्धत्यसूचकश्चेतोविकारः । **न । एव** सर्वथा । **अस्ति** वर्त्तते । **किन्तु** तथाऽपि, एवं नायकमनोहरणसामग्र्यसद्भावेऽपीति भावः । इदमुक्तम्–कस्याश्चिद्वाससी एव मनोहरे भवतः, कस्याश्चिद्ग्रैवेयकादीन्याभरणान्येव मनोहराणि भवन्ति, कस्याश्चित्पुनः सञ्चरणशैल्यैवैतादृशी भवति यस्यां दृष्टायां स्वतो नायकस्य मनो हृतं भवेत्, कस्याश्चिद्धसितं कस्याश्चित्तथा मदो मनो हर्तुमलम् । न चास्माकं वासोरुचिरत्वादिसामग्री मनोहारिणी, अथापीति । **अन्ये** न त्वहंमम सख्य एव वेति भावः । **अपि । जनाः । अस्याः ( मम )** । '**प्रियः** प्रेमास्पदं नायकः । **सुभगः** सुन्दरत्वे सति श्रीमानित्यर्थः । **अपि । अन्यतोऽन्यत्र** स्वं कामयमानास्वपि परासु नायिकास्विति भावः । **दृष्टिं** किं पुनस्ताभिः सङ्गोत्कण्ठाम् । **निक्षिपति** निदधाति ।' इतीत्येवम् । **वदन्ति । इयतैतावता । विश्वं** जगत् । **दुःस्थितं** दुःखस्थम् । **मन्यामहे** । अस्माकं सौभाग्यं न लोकः सहते, इति निश्चिनुमः । कथमितरथाऽस्माकं तथा चर्चां कुर्य्युरिति भावः । रुद्रकृते शृङ्गारशतके कस्याश्चिदात्मसौभाग्यं व्यञ्जयन्त्याः सखीं प्रत्युक्तिरियम् । अत्र शार्दूलविक्रीडितं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ २० ॥

**७८ शठोऽयमेकत्र बद्धभावो यः।**

**दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति ॥ ६२ ॥**

**यः पुनरेकस्यामेव नायिकायां बद्धभावो द्वयोरपि नायिकयोर्बहिर्दर्शितानुरागोऽन्यस्या नायिकायां गूढं विप्रियमाचरति स शठः। यथा–**

**'शठान्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः। तदेतत्क्वाचक्षे घृतमधुमयत्वद्बहुवचो-विषेणाघूर्णन्ती किमपि न सखी मे गणयति ॥२१॥'**

---

अथ शठस्वरूपमभिधत्ते–७८ **शठ** इत्यादिना।

**७८ यः। दर्शितबहिरनुरागो** दर्शितो दानादिना प्रकटितो बहिरनुरागो बाह्यानुरागो न त्वान्तरिकोऽनुरागो येन स तथोक्तः। अभिमतायामपि किं पुनरनभिमतायां बाह्यानुरागस्यैव प्रकटयितेति भावः। **एकत्रै**कस्यामभिमतायां नायिकायामित्यर्थः। **बद्धभावो** बद्धो निबद्धः स्थापित इति यावत्, न तु दर्शितो भाव आन्तरिकः स्नेहो येन स तथोक्तः। **अन्यत्रा**न्यस्यामनभिमतायां नायिकायामित्यर्थः। 'सप्तम्यास्त्रल्।' ५।३।१० इति त्रल्। **गूढ**मप्रकटितस्वरूपम्। **विप्रियं** प्रियाद्विरुद्धम्। **आचरति। अयं** 'स' इति शेषः। **शठ**स्तदाख्यो नायको भवतीति भावः। अत्र गीतिश्छन्दः। तल्लक्षणं च–'आर्य्याप्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयोः। दलयोः कृतयतिशोभां तां गीतिं गीतवान्भुजङ्गेशः ॥' इत्युक्तम् ॥ ६२ ॥

तदेवाह–**य** इत्यादिना।

**यः। पुनः। एकस्याम्। एव** नत्वन्य इत्यर्थः। **नायिकायाम्** एतदुपलक्षणम्, तेन कार्य्यनिष्पत्तौ चेत्यर्थः **बद्धभावः** स्थापितान्तरिकानुरागः। **द्वयो**रभिमताऽनभिमतयोरिति भावः। **अपि। नायिकयोः। बहिः** प्रत्यक्षम्। **दर्शितानुरागो** दर्शितो न त्वनुष्ठितोऽनुरागः प्रेम येन स तथोक्तः। **अन्यस्या**मनभिमतायाम्। **नायिकायां** नायिकाविषये। **गूढं** परोक्षम्। **विप्रियं** प्रियाद्विरुद्धम्। **आचरति। सः। शठः** शठनायक इत्यर्थः।

उदाहरति–**यथा**–इत्यादिना।

**यथा– हे शठ** कुटिल! 'कुटिलस्त्वनृजुः शठः।' इत्यमरः। **यत्। अन्यस्या** अपरस्या अभिमताया नायिकायाः। नामाकीर्त्तनं द्वेषं सूचयति। **काञ्चीमणिरणितं** काञ्च्या मेखलाया मणयो रत्नखण्डानीति तेषां रणितं शब्दस्तत्तथोक्तम्। अत्र काञ्चीपदं नूपुरयोरप्युपलक्षकम्। तथा च–नूपुरमणिरणितं चेत्यर्थः। **आकर्ण्य** श्रुत्वा। **सहसा** शीघ्रं तत्पदमिति यावत्। **आश्लिष्यन्ना**लिङ्गमानः। **एव** न त्वन्यदा। **प्रशिथिलभुजग्रन्थिः** प्रकर्षेण शिथिल इति, प्रशिथिलो भुज ( योः ) ग्रन्थिर्यस्य स तथोक्तः। **अभवः।** 'त्व'मिति शेषः। **तत्।** 'मत्सख्या' आश्लेषावसर एव यदन्यस्याः काञ्चीरणितमाकर्ण्य तां प्रति चलचित्ततयाऽऽश्लेषरसं दूषितवानसि तदित्यर्थः। **एत**त्स्मृत्यारूढतया प्रत्यक्षभूतमित्यर्थः। 'चरित'मिति शेषः। **क्व** कुत्र। **आचक्षे** कथयामि। कुत्रापि मत्कथनं निशम्य तदुपारिणं जनं न पश्यामीति भावः। किं पुनस्तव सखी मयि विश्रब्धेत्यत आह–**घृतमधुमयत्वद्बहुवचोविषेण** घृतमधुनो विकार इति घृतमधुमयं यत्त्वद्बहुवचस्तव बहुधाऽऽलाप इति तदेव विषस्तेन तथोक्तेन। घृतमधुनी यथा मधुरे अपि प्रतीयेते, किन्तु परिणामे प्राणान् हरतस्तथा तव वचनमिति भावः। 'त्व'दित्यपठित्वा 'त्वा'दिति पाठे 'हेतौ' पञ्चमी, यद्वा– घृतमधुमयत्वमततीति तथोक्तं यद्बहुवच इति तदेव विषस्तेनेत्यर्थः। **आघूर्णन्ती** मूर्च्छां नाटयन्तीति भावः। **मे** मम। **सखी। किमपि** किं कार्य्यं किं वा नेत्यर्थः। **न** नैव। **गणयति** बुध्यते। कयाचिन्नायिकया प्रेरितायास्तत्सख्या दूत्या नायकं प्रत्युक्तिरियम्। पद्यं चेदममरुशतकस्थम्। अत्र शिखरिणी छन्दः, तल्लक्षणं च यथोक्तम्, 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी।' इति ॥ २१ ॥

इदं शृङ्गारमुद्दिश्योदाहृतम्। अन्यत्र तु कुटिलत्वमात्रशठलक्षणमित्यलम्। यथा मम–'रेरे शल्य! ममैत्य सारथिपदं तिग्मैः शरैराहतं निश्च्योतद्रुधिरौघमप्यविरतं दृष्ट्वाऽपि गाण्डीविनम्। मां न स्तौषि कदाऽपि, यर्हि तु मनाक् तद्बाणपातो मयि प्राज्यं तर्हि विनिन्द्य मां तमगिरां स्तोतुं भुजङ्गेश्वरः ॥' इति दिक्।

७९ एषां च त्रैविध्या-दुत्तममध्याधमत्वेन ।
उक्ता नायकभेदा-श्चत्वारिंशत्तथाऽष्टौ च ॥ ६३ ॥

एषामुक्तषोडशभेदानाम् ।

अथ प्रसङ्गादेतेषां सहायानाह—

८० दूरानुवर्तिनि स्यात्तस्य प्रासङ्गिके तिवृत्ते तु ।
किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्दाख्यः ॥ ६४ ॥

---

अथैतेषामवान्तरभेदान् गणयति—७९ एषामित्यादिना ।

७९ **एषां** निरुक्तषोडशप्रकाराणां नायकानामित्यर्थः । **च** पुनः । **उत्तममध्याधमत्वेन** । अत्र मध्यशब्दात् 'अ सामूप्रतिके ।' ४।३।९ इत्यप्रत्ययः। भावप्रत्ययस्य प्रत्येकं सम्बन्धः, अभेदे करणे वा तृतीया। **त्रैविध्यात्**त्रयो विधाः प्रकारा येषां तेषां भावस्त्रैविध्यं तस्मात् । **चत्वारिंशत्** । **तथा** । **अष्टौ** । **च** । **नायकभेदाः** । **उक्ताः** कथिताः । अत्रोपगीतिश्छन्दः । तल्लक्षणं चोक्तं प्राक् ॥ ६३ ॥

संशयापनोदाय कारिकास्थमेषामितिपदं व्याचष्टे-**एषामित्यस्य** पदस्ये'ति शेषः । **उक्तषोडशभेदानाम्** । 'इत्यर्थं' इति शेषः । षोडशानां च त्रैविध्ये ( त्रिभिर्गुणितत्वे ) अष्टचत्वारिंशत्त्वमव्याहतमेवेति बोध्यम् ।

अत्रायं पर्य्यालोकः—शृङ्गारे रसे नायको नायिका चेत्युभयमेवालम्बनम् । तत्र तावत् नायकः पतिः, उपपतिः, वैशिकश्चेत्येवं त्रिविधः, तत्रापि—विधिवत्पाणिग्रहीता पतिः, सोऽपि धीरोदात्तो, धीरोद्धतो, धीरललितो, धीरप्रशान्तश्चेति चतुष्प्रकारः, सोऽयं पुनरनुकूलो दक्षिणो धृष्टः शठश्चेति प्रत्येकं चतुर्धा । पाणिग्रहणमन्तरैव प्रेम्णाङ्गीकृतः पतिरुपपतिः । सोऽपि अनुकूलत्वादिना चतुर्धा । वैशिको नाम बहुलवेश्योपभोगरसिकः, अयमपि अनुकूलत्वादिना तथाविधः । ते पुनः—उत्तमा मध्यमा अधमाश्चेति प्रत्येकं त्रैविध्ये भेदान्तरसम्भवं प्रतिपन्नाः । तदेवं नायकश्चत्वारिंशत्प्रकारात्मा प्रोषितोऽप्रोषितश्चेति भिद्यत इत्येके, केचिदेवम्—'सोऽप्युत्कोऽनुत्को विप्रलब्धः खण्डितश्चेति भिद्यते ।' इति, 'नायकः—पतिरुपपतिर्वैशिकश्चेति त्रिविधः, सोऽप्यनुकूलो दक्षिणो धृष्टः शठश्चेति चतुर्भेदः, असावपि प्रोषितोऽप्रोषितश्चेति द्विविधः ।' इत्यपरे, 'पतिरुपपतिर्वैशिकश्चेति त्रिविधः, असौ च धीरोदात्तो धीरोद्धतो धीरललितो धीरप्रशान्तश्चेति चतुर्धा, एवं भिद्यमानोऽप्ययमनुकूलो दक्षिणो धृष्टश्शठश्चेति भिद्यते, असौ च दत्तो भद्रः पाञ्चालः कूचिमारश्चेति चतुरात्मा, अत्र दत्तः पद्मिन्या, भद्रश्चित्रिण्याः, पाञ्चालो हस्तिन्याः, कूचिमारः पुनः शङ्खिन्या एव नायक, इति बोध्यम् ।' इत्यनेके, 'पतिरुपपतिर्वैशिकश्चेति त्रयो नायकाः, तत्राद्यो दत्तो भद्रः पाञ्चालः कूचिर्मारश्च, अमी च धीरोदात्तो धीरोद्धतो धीरललितो धीरप्रशान्तश्चेति भिद्यन्ते । द्वितीयो भद्रः पाञ्चालः कूचिमारश्चेति त्रेधैव, न तु दत्तः; त्रयोऽप्येते धीरोदात्तादिना चतुर्धा, तृतीयः पुनः कूचिमारः, असावपि धीरोदात्तादिना चतुर्धा, एते दक्षिणा अनुकूलाश्च । सप्रभेदा उपपतयो वैशिकाश्चानुकूला दक्षिणा धृष्टाः शठाश्चेत्यमी अपि उत्तमा मध्यमा अवराश्चे'ति व्याहुर्वहवः । वीरादिषु पुना रसेषु नायको धीरोदात्तादिना यथोक्तास्तथाविध एव, विविक्तान्युदाहरणान्याकरे द्रष्टव्यान्येतेषाम् । इति दिक् ।

आनुषङ्गिकमभिधातुमुपक्रमते—अथेत्यादिना ।

**अथ** सप्रपञ्चं नायकभेदनिरूपणानन्तरमित्यर्थः । **प्रसङ्गात्** । **एतेषां** 'नायकाना' मिति शेषः । **सहाया**-ननुसङ्गिनः । **आह**—८०—**दूरानुवर्तिनी**त्यादिना ।

८० **तस्य** नायकस्य । **दूरानुवर्तिनि** दूरमनुवर्तितुं शीलमस्यास्तीति तस्मिंस्तथोक्ते । दूरं प्रस्त इति भावः । **प्रासङ्गिकेतिवृत्ते** प्रसङ्गात्प्राप्तं प्रासङ्गिकं, तच्च यदितिवृत्तं तस्मिंस्तथोक्ते । **तु** एव । 'तु स्याद्भेदेऽवधारणे ।' इत्यमरः । **किञ्चित्** । **तद्गुणहीनस्**तस्य गुणास्तैर्हीनः । **अस्य** नायकस्य । **एव** । **सहायः** सहायते गच्छतीति तथोक्तोऽनुचरविशेष इति भावः । **पीठमर्दाख्यः** पीठमर्द आख्या ( नाम ) यस्य स तथोक्तः । **स्यात्** ॥ अत्रोपगीतिश्छन्दः । तल्लक्षणं चोक्तं प्राक् ॥ ६४ ॥

तस्य नायकस्य बहुव्यापिनि प्रसङ्गसङ्गत इतिवृत्तेऽनन्तरोक्तैर्नायकसामान्यगुणैः किञ्चिदूनः पीठमर्दनामा सहायो भवति। यथा–रामचन्द्रादेः सुग्रीवादिः।

अथ शृङ्गारे सहायाः–

८१ शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः।
भक्ता नर्म्मसु निपुणाः कुपितवधूमानभञ्जकाः शुद्धाः॥ ६५॥

आदिशब्दान्मालाकाररजकताम्बूलिकगान्धिकादयः। तत्र विटः–

८२ सम्भोगहीनसम्पद्विटस्तु धूर्तः कलैकदेशज्ञः।
वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्॥ ६६॥

---

तदेव विवृणोति–तस्येत्यादिना।

**तस्य** पूर्वमभिहितस्वरूपस्य। **नायकस्य** धीरोदात्ताद्यन्यतमस्य नेतुः। **बहुव्यापिनि** बहु व्याप्तुं शीलमस्यास्तीति तस्मिंस्तथोक्ते। बहुव्यापित्वं च सर्वतो विदितत्वं दविष्ठत्वं वा। **प्रसङ्गसङ्गते** प्रसङ्गे सङ्गतं प्राप्तं तत्र। **इतिवृत्ते** कर्त्तव्यकर्म्मविषयके वृत्तान्ते। **अनन्तरोक्तैः**रनन्तरं प्राक् ७० अविकत्थन इत्यादिनोक्ताः कथितास्तैः। **नायकसामान्यगुणै**र्नायकस्य सामान्यगुणास्तैः। सामान्यं जातिः, तस्य तदनुरूपा गुणा इति सामान्यगुणाः। तथा च-यस्य धीरोदात्ताद्यन्यतमस्य नायकस्य धीरोदात्तत्वाद्यन्यतमरूपा जातिस्तदनुरूपा धीरोदात्तत्वाद्यवच्छिन्ने यादृशा गुणाः सम्भवन्ति तादृशा गुणास्तैरिति निष्कृष्टम्। 'जातिर्जातं च सामान्य'मित्यमरः। **किञ्चि**न्न तु सर्वथेति भावः। **ऊनो** न्यूनः। **पीठमर्द्दनामा**। पीठमासनं मृद्नाति सममध्यास्य दलतीति, पीठमर्द्दो नाम यस्य तथोक्तः। **सहायः** सहचारी। **भवति**। उदाहरति–**यथा–रामचन्द्रादे**र्धीरोदात्तादेर्नायकस्य। आदिपदेन श्रीकृष्णादेर्ग्रहणम्। **सुग्रीवादिः**। आदिपदेनोद्धवादेर्ग्रहणम्।

एवं रसमात्रे नायकस्य सहायस्वरूपं निर्दिश्य शृङ्गारे सप्रपञ्चं निर्देष्टुमुपक्रमते–अथेत्यादिना।

**अथ**। **शृङ्गारे**। **सहाया** 'नायकस्ये'ति शेषः। नायकसहाया अभिधीयन्ते–८१ **शृङ्गार** इत्यादिनेति। भावः।

८१ **अस्य** नायकस्येत्यर्थः। **नर्म्मसु** परिहासोक्तिषु। 'द्रवकेलिपरीहासाः क्रीडा खेला च नर्म च।' इत्यमरः। **निपुणा**श्चतुराः। **कुपितवधूमानभञ्जकाः** कुपिता नायिकान्तरसङ्गादिदोषावगमेन रुष्टाश्चामी वध्वो नायिकास्तासां मानभञ्जका इत्यर्थः। 'कुपितवधूमानभञ्जने' इति पाठान्तरम्। **शुद्धा** निर्दोषाः परदारसंपर्करहिता इति यावत्। दक्षा इति पाठान्तरम्। **विटचेटविदूषकाद्याः**। आद्यपदेन मालाकारादिग्रहणम्। **शृङ्गारे** शृङ्गारनिमित्तम्। 'उपरागे स्नाया'दितिवत् निमित्तार्थे सप्तमी। **सहायाः** सङ्गिनः। **स्युः**। अत्रार्य्या छन्दः, तल्लक्षणं चोक्तं प्राक्॥ ६५॥

'विदूषकाद्या' इत्यत्राद्यपदांशभूतादिशब्दाद्बोद्धव्यमर्थं बोधयति–**आदिशब्दात्**। आदिशब्दमाश्रित्येत्यर्थः। ल्यपो लोपेऽत्र पञ्चमी। **मालाकाररजकताम्बूलिकगान्धिकादयः**। तत्र मालाकारः पुष्पादिमालानिर्म्माणोपजीवकः, रजको वाससां रङ्गविधानोपजीविकः, ताम्बूलिकस्ताम्बूलसाध्यद्रव्यविक्रेता, गान्धिकः सुरभिततैलविशेषादिविक्रेतेति बोध्यम्। अत्राद्यादिपदेन वैद्यनापितगोपादिग्रहणम्।

अथ क्रमादेतेषां स्वरूपमभिधातुमुपक्रमते–तत्रेत्यादिना।

**तत्र** तेषु विटाद्येषु मध्य इत्यर्थः। **विटः**। उच्यते–८२ **सम्भोगहीनसम्प**दित्यादिना।

८२ **विटः**। **तु** पुनः। **सम्भोगहीनसम्प**त्सम्भोगे सुरतोपासने हीना सम्पद् इति तथोक्तः। हीना नष्टा सम्पद् यस्य सः। क्लीव इत्यर्थः। **धूर्त्तः**। **कलैकदेशज्ञः** कलानां नृत्यगीतादीनामेकदेशो न तु सर्वांश इति तं जानातीति तथोक्तः। **वेशोपचारकुशलो** वेशस्य वेश्यागृहस्योपचारस्तदुपयोगी व्यवहारस्तत्र कुशलः। 'सप्तमी शौण्डैः।' २।१।४० इति सप्तमीसमासः। 'नेपथ्ये गृहमात्रे च वेशो वेश्यासमाश्रये।' इति रभसः। **वाग्मी** प्रशस्ता वागस्यास्तीति तथोक्तः। 'वाचो ग्मिनिः।' ५।२।१२४ इति ग्मिन्नादेशः। **मधुरः** प्रीतिपात्रम्। **अथ**। **गोष्ठ्यां** वयस्यसमाजे इति भावः। **बहुमतो** नितान्तं सम्मानितः। 'भवती'ति शेषः। अत्र गीतिश्छन्दस्तल्लक्षणं चोक्तं प्राक्॥ ६६॥

चेटः प्रसिद्ध एव।

८३ कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेषभाषाद्यैः।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञः॥ ६७॥

स्वकर्म्म हास्यादि। अर्थचिन्तने सहायमाह–

८४ मन्त्री स्यादर्थानां चिन्तायां–

अर्थास्तन्त्रावापादयः। यत्त्वत्र सहायकथनप्रस्तावे–'मन्त्री स्वं वोभयं वाऽपि सखा तस्यार्थचिन्तने।' इति केनचिल्लक्षणं कृतम्, तद्राज्ञोऽर्थचिन्तनोपायलक्षणप्रकरणे लक्षयितव्यम्, न तु

---

अथ क्रमप्राप्तं चेटस्वरूपनिरूपणं 'बालस्वाभाव्यचेष्टाभिर्योषितां प्रीतिभाजनम्। तत्तदास्वादविमुखश्चेटः स्याच्चञ्चलः शिशुः॥' इत्यादिना 'सन्धानचतुरश्चेटः' इत्यादिना वा प्रसिद्धतया गतार्थं मन्वान आह–चेटश्चेटयते परेण प्रेष्यतेऽसाविति तथोक्तः। दासविशेषः। प्रसिद्धः। एव न पुनस्तन्निरूपणमत्यन्तोपकरमिति भावः। इति।

अथ विदूषकस्वरूपं लक्षयति–८३ कुसुमवसन्ताद्यभिध इत्यादिना।

८३ कर्म्मवपुर्वेषभाषाद्यैः कर्म्म च वपुश्च वेषश्च भाषा चेति, ता आद्या येषां (चेष्टितादीनाम्) तैस्तथोक्तैः। कर्म्मणा वपुषा वेषेण भाषणाऽऽदिना चेति भावः। हास्यकरो हास्यस्य (परेषां दोषानारोप्य) उत्पादकः। कलहरतिः कलहे परस्परं द्वेषोत्पादने रतिः कौतूहलं यस्य सः। स्वकर्म्मज्ञः स्वस्य कर्म्म भोजनादि हास्योत्पादनं कलहकौतूहलोत्प्रेक्षणं वेति तज्जानातीति तथोक्तः। कुसुमवसन्ताद्यभिधः कुसुमवसन्ताद्यन्यतमनामा। विदूषको विदूषयति दृष्टं श्रुतं वा निन्दनीयत्वेन प्रस्तौतीति तथोक्तः, अत एवान्वर्थसञ्ज्ञः। स्यात्। अत्रोपगीतिश्छन्दः। लक्षणं चोक्तं प्राक्॥ ६७॥

कारिकां सुगमयितुं स्वकर्म्मेति पदं व्याचष्टे–स्वकर्म्म 'इत्यस्ये'ति शेषः। हास्यादि। 'भोजनादी'ति परत्र पाठः। 'इत्यर्थ' इति शेषः।

मन्त्रिस्वरूपं लक्षयितुमुपक्रमते–अर्थचिन्तने इत्यादिना।

अर्थचिन्तनेऽर्थानां स्वमनोरथानुकूलकार्य्यानुष्ठानादीनां चिन्तनमिति कर्त्तव्यताविचारस्तत्रेति तथोक्ते। अत्र विषये निमित्ते वा सप्तमी। सहायम्। आह–८४ मन्त्रीत्यादिनेति शेषः।

८४ अर्थानां तन्त्रावापादीनाम्। चिन्तायां विचारविषये विचारनिमित्ते वेति भावः। मन्त्री 'सहाय' इति शेषः। स्यात्। 'नायकस्ये'ति शेषः। यो यादृशो नायकस्तस्य तादृश एव स्वभावादिनाऽनुरूपो मन्त्रीति च बोध्यम्।

अर्थपदार्थं दर्शयति–तन्त्रेत्यादिना।

अर्थाः। तन्त्रावापादयस्तन्त्रणं स्वाधीनतया स्वमनोरथानुकूलतया विधीयमानं कर्म्म तन्त्रं, तस्यावापो बीजारोपः, असावादिर्येषां ते तथोक्ताः। आवपनं समन्ताद्रोपणमावापः। 'हलश्च।' ३।३।१२१ इति घञ्। आदिशब्देन परोद्योगप्रयोजनादीनां ग्रहणम्।

दशरूपे धनञ्जयेनोक्तं मन्त्रिस्वरूपमालोचते–यत्त्वित्यादिना।

यत्। तु पुनः। अत्रास्मिन्। सहायकथनप्रस्तावे सहायानां सहायस्वरूपनिरूपणानां प्रस्ताव उपक्रमस्तत्रेत्यर्थः। 'तस्य नायकस्य। अर्थचिन्तने 'कर्त्तव्य' इति शेषः। सखा मित्रम्। स्वं स्वयम्। वा। उभयं सखा स्वयं चेत्यर्थः। वाऽथवा। अपि। मन्त्री। 'सहाय' इति शेषः।' इतीत्येवम्। केनचित्। दशरूपनिर्मात्रा 'दशरूपव्याख्यात्रे'ति तु चिन्त्यैवोक्तिः। अत्र नाम्नाऽनिर्देशोऽवज्ञां सूचयति। लक्षणं 'मंत्रिण' इति शेषः। कृतम्। तत्। लक्षणमित्यर्थः। 'अपी' त्यधिकः पाठः। राज्ञो न तु नायकमात्रस्येत्यर्थः। अर्थचिन्तनोपा

सहायकथनप्रकरणे। 'नायकस्यार्थचिन्तने मन्त्री सहाय' इत्युक्तेऽपि नायकस्यार्थत एव सिद्ध-त्वात्। यदप्युक्तम्-'मन्त्रिणा ललितः, शेषा मन्त्रिष्वायत्तसिद्धयः।' इति, तदपि स्वलक्षणकथने-नैव लक्षितस्य धीरललितस्य मन्त्रिमात्रायत्तार्थचिन्तनोपपत्तेर्गतार्थम्। न चार्थचिन्तने तस्य मन्त्री सहायः, किन्तु स्वयं सम्पादकः, तस्यार्थचिन्तनाद्यभावात्।

अथान्तःपुरसहायाः।

**८५ तद्वदवरोधे। वामनषण्ढकिरातम्लेच्छाभीराः शकारकुब्जाद्याः॥६८॥**

आद्यशब्दान्मूकादयः। तत्र षण्ढवामनकिरातादयो यथा रत्नावल्याम्-

---

यलक्षणप्रकरणे। लक्षयितव्यम्। न। तु। सहायकथनप्रकरणे। 'लक्षयितव्य'मिति पूर्वतोऽन्वेति। इदमभिहितम्-'कोऽत्र तत्पदवाच्यः? कोवाऽत्र स्वपदवाच्यः? यदि नाम नायक इति तत्कथं तयोः (तत्पदस्वपदवाच्ययोः) अन्वयः? यदि तु 'तस्यार्थचिन्तायां मन्त्री सखा, स्वं वा स्वस्यार्थचिन्तायां सखा स्यात्, स्वस्यार्थचिन्तायां मन्त्री तस्य च स्वं सखा स्यान्मन्त्री स्वं चेत्युभयं वाऽर्थचिन्तायां सखा' इत्यभिप्रायेण तथाऽभिधीयते तर्हि स्वकर्तृके चिन्ता-पक्षे तत्पदवाच्यस्य वैयर्थ्यं स्वस्य सहकारित्वात्मकसहायत्वानुपपत्तिश्च। उभयकर्तृके पुनरेवात्र राज्ञो मन्त्रित्वापत्तिः, मन्त्रिणश्च राजत्वापत्तिरित्येवं सहायकविवेकानुपपत्तिः, परत्र च तत्पदार्थस्य सङ्गतिनिरासः, उभयत्र च कारणान्तर-प्रसङ्गः। इति। **'नायकस्य। अर्थचिन्तने**ऽर्थचिन्तनविषय इति भावः। **मन्त्री। सहायः।** 'भवती'ति शेषः। **इती**त्येवम्। **उक्ते**'सती'ति शेषः। **अपि। नायकस्य** नायकपदार्थस्य। **अर्थतः** प्रसङ्गात्। **एव। सिद्धत्वात्त**द-नुल्लेखेऽपि तद्बोधात्। अत्रापि स्वारस्येन-'स्वं वोभयं वाऽपी'त्येषां वैयर्थ्यापत्तिः, सखिशब्दस्य च सहायापरपर्य्यायत्वा-नुपपत्तेस्तथाऽर्थालाभः स्वत एवेति। **यत्। अपि। 'मन्त्रिणा**। 'आयत्तसिद्धिरि'ति शेषः। **ललितो** धीरललितः। **शेषा**। धीरोदात्तप्रभृतयः। 'पुन' रिति शेषः। **मन्त्रिषु। आयत्तसिद्धयः।** 'अनियमेने'ति धनिकः। 'स्यु'रिति शेषः। इति **उक्तम्। तत्। अपि। स्वलक्षणकथनेन** स्वकर्तृकनायकलक्षणाभिधानेनेति भावः। **एव। लक्षि-तस्य। धीरललितस्य** निश्चिन्तत्वादिगुणशालिनः। **मन्त्रिमात्रायत्तार्थचिन्तनोपपत्तेः। गतार्थं** निरर्थकम्। **तस्य** धीरललितस्य। **च। अर्थचिन्तने। मन्त्री। सहायः।** न नैव भवति, **किन्तु। स्वयम्** एव। **सम्पादको**ऽर्थचिन्तनाद्यभावे प्रधानकारणम्। हेतुमाह-**तस्य** धीरललितस्य। **अर्थचिन्तनाद्यभावात्।** इति। इदमभिहितम्-स्वतश्चिन्ताविरहितस्य धीरललित स्यार्थचिन्ताऽसद्भाव एवेति तस्यार्थचिन्तायां मन्त्री सहाय इति न वक्तुं सांप्रतम्। अन्येषामप्येवं नायकानामन्यान्यस्वभावानामर्थचिन्ताचचैव न सम्भवतीति तथाऽभिधानं प्रामादिकम्। इति।

अथान्तःपुरसहायकथनं प्रतिजानीते-**अथे**त्यादिना।

**अथ** राज्ञोऽर्थचिन्तने सहायाभिधानानन्तरम्। **अन्तःपुरसहायान्।** आह-**८५ तद्व**दित्यादिना।

८५ **तद्वद्** 'यद्वद्राज्ञोऽर्थचिन्तने मन्त्री सहाय'इति शेषः। **अवरोधे**ऽन्तःपुरे। 'अवरोधस्तिरोधाने राजदारेषु तद्गृहे।' इति विश्वः। **वामनषण्ढकिरातम्लेच्छाभीराः** वामना अनल्पवयस्त्वेऽपि अदीर्घाङ्गाः, षण्ढा नपुंसक-विशेषाः, किराता अल्पवयस्त्वे सति विकृताकारा ह्रस्वाङ्गाः, म्लेच्छा इङ्गितमात्रेण बोधनसमर्था अव्यक्तवाचः, आभीरा भयानकस्वभावतया प्रियतामाधातुमसमर्थाः। 'षण्ढः स्यात् पुंसि गोपतौ। आकृष्टाण्डे वर्षवरे तृतीयप्रकृतावपि॥' इति मेदिनी। 'किरातो म्लेच्छभेदे स्याद् भूनिम्बेऽल्पतनावपि।' इति च मेदिनी। म्लेच्छन्त्यव्यक्तं ब्रुवत इति म्लेच्छाः। 'आभीरो बल्लवे भीमे'इति गोपालः। इदं च बोध्यम्-'आभीरा द्वारमात्रस्था भवन्ती'ति। तथा-**शकारकुब्जाद्याः।** 'राज्ञः सहाया भवन्ती'ति शेषः। अत्रोपगीतिश्छन्दः, लक्षणं चोक्तं प्राक्॥ ६८॥

आद्यपदार्थं द्योतयति-**आद्यशब्दा**'दुपात्तात्' इति शेषः। **मूकादयो** मूककुब्जादयः। 'ग्राह्या'इति शेषः। एषां दिङ्निर्देशमुदाहर्तुमुपक्रमते-**तत्रे**त्यादिना।

**तत्रा**वरोधसहायेष्वित्यर्थः। **षण्ढवामनकिरातादयः।** आदिपदेन कुब्जकञ्चुकिविदूषकग्रहणम्। क्वचित्-'षण्ढवामनकिरातकुब्जादय' इति पाठः। तत्रादिपदेन न कुब्जग्रहणम्। **रत्नावल्यां** तदाख्यायां नाटिकायामित्यर्थः। 'वानररूपेणान्तःपुरान्तःप्रविष्टे विदूषके' इति शेषः। **यथा-'नष्टं..'** इत्यत्र।

'नष्टं वर्षवरैर्मनुष्यगणनाऽभावादपास्य त्रपा-
मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः।
पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः॥ २२॥'

८९ मदमूर्खताऽभिमानी, दुष्कुलतैश्वर्य्यसंयुक्तः।
सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः॥ ६९॥

शकारो मृच्छकटिकादिषु प्रसिद्धः। अन्येऽपि यथादर्शनं ज्ञातव्याः। अथ दण्डसहायाः-

८६ दण्डे सुहृत्कुमाराटविकाः सामन्तसैनिकाद्याश्च।

---

'मनुष्यगणनाभावान्मनुष्यवद्गणनं तदभावाद्धेतोरित्यर्थः। त्रपां लज्जाम्। अपास्य त्यक्त्वा। वर्षवरैः 'ये त्वल्पसत्त्वाः प्रथमाः क्लीबाश्च स्त्रीस्वभाविनः। जात्या, न दुष्टाः कार्य्येषु, ते वै वर्षवराः स्मृताः॥' इति व्याख्यासुधा। नष्टं नष्टमित्येत्यर्थः। णश् अदर्शने। क्तो भावे। अयम्। वामनः। कञ्चुकिकञ्चुकस्य कञ्चुकिनः कुलीनस्य वृद्धस्यात एव सम्भोगविमुखस्य विकलप्रायस्य कञ्चुको वस्त्रविशेषस्तस्येति तथोक्तस्य। अन्तर्मध्ये। त्रासादुद्वेगात्। विशति प्रविशति। पर्य्यन्ताश्रयिभिः पर्य्यन्तमाश्रयन्तीत्येवंशीलैरित्यर्थः। किरातैः किरं स्वस्वसञ्चारणावधित्वेन कल्पितं प्रान्तदेशमतन्तीति तैस्तथोक्तैः। निजस्य स्वसम्बन्धिनः। नाम्नः। सदृशमनुरूपं पर्य्यन्ताश्रयित्वरूपमित्यर्थः। कृतमनुष्ठितम्। आत्मेक्षणाशङ्किन आत्मन ईक्षणम् इति तदाशङ्कन्ते इत्येवंशीलाः। अस्मानयं द्रक्ष्यतीत्येवं विभ्यन्तः। कुब्जाः। नीचतयाऽर्द्धभुग्नकायतयेति भावः। एव। शनकैः। यान्ति। अत्र शार्दूलविक्रीडितं छन्दः। तल्लक्षणं चोक्तं प्राक्।' इति॥ २२॥'

अत्रेदमवसेयम्-अन्तःपुरे क्लीबाः स्थविरा बाला अप्राप्तयौवनाः कुब्जा वामना मूका बधिरा म्लेच्छाः शकाराद्याः परीक्षिता एव सञ्चरन्ति, न तत्र म्लेच्छाः किराता वा यथाश्रूयमाणार्थाः, किन्तु म्लेच्छा व्यक्तं वक्तुमसमर्थाः, किराताः पुनरल्पवयसः। आभीराणां कञ्चुकिनां च द्वार एवावस्थानम्। अत एव-एषां पलायनं न कीर्त्तितम्। इति।

अन्येषां प्रसिद्धतया स्वरूपनिरूपणमुपेक्ष्याप्रसिद्धं शकारं निरूपयति-८६ मद..इत्यादिना।

८६ मदमूर्खताऽभिमानी मदश्च मूर्खता चाभिमानश्चेति तेऽस्य सन्तीति स तथोक्तः। दुष्कुलतैश्वर्य्यसंयुक्तो दुष्टं कुलं यस्य तस्य भावस्तत्ता तस्या ऐश्वर्यं तेन संयुक्तस्तथोक्तः। सः। अयम्। अनूढाभ्राताऽनूढाया भ्राता। राज्ञः। श्यालः। शकारः। इतीत्येवम्। उक्तः। अत्रोपगीतिश्छन्दः, तल्लक्षणं चोक्तं प्राक्॥ ६९॥

नन्वेवम्भूतः कुत्र वर्ण्यत इत्याह-शकारस्तत्सञ्ज्ञो राज्ञोऽधमः श्यालः। मृच्छकटिकादिषु मृच्छकटिकाख्यप्रकरणादिषु। प्रसिद्धः स्फुटं वर्ण्यमान उपलब्ध इति भावः।

कियतोऽन्तःपुरसहायान्निर्दिश्यान्यनिर्देशमुपेक्षमाण आह-अन्येऽनुदाहृता म्लेच्छादय इत्यर्थः। अपि। यथादर्शनं दर्शनं तत्तत्स्वरूपप्रसिद्धिस्तदनतिक्रम्य। ज्ञातव्याः। 'स्वय' मिति शेषः।

एवं शुद्धान्तसहायानभिधाय दण्डदाने सहायानभिधातुमुपक्रमते-अथेत्यादिना।

अथान्तःपुरसहायनिरूपणानन्तरम्। दण्डसहाया दण्डे लक्षणया दण्डप्रयोगे सहाया इति तथोक्ताः। 'सप्तमी शौण्डैः।' २।१।४० इति सप्तम्या समासः उच्यन्ते-८७ दण्ड इत्यादिनेति शेषः।

८६ दण्डे 'राज्ञ' इति शेषः। तथा च-राजकर्तृके दण्डप्रयोग इति निष्कृष्टम्। सुहृत्कुमाराटविकाः सुहृदश्च कुमाराश्चाटविकाश्चेति ते तथोक्ताः। सुष्ठु (शुद्धं) हृदयं येषां ते सुहृदः। 'सुहृद्दुर्हृदौ मित्रामित्रयोः।' ५।४।१५० इति साधुः। अटव्यां वने भवा आटविकाः। 'बह्वचोऽन्तोदात्ताट्ठञ्।' ४।३।६७ इति ठञ्। कुमारा युवराजाः। 'युवराजस्तु कुमार' इत्यमरः। च तथा। सामन्तसैनिकाद्याः सामन्ताः स्वाधिकारान्तर्वर्त्तिनोऽधिपाः,

दुष्टनिग्रहो दण्डः ।

८७ ऋत्विक्पुरोधसः स्युर्ब्रह्मविदस्तापसास्तथा धर्म्मे ॥७०॥

ब्रह्मविदो वेदविद आत्मविदो वा । अत्र च—

८८ उत्तमाः पीठमर्द्दाद्याः-

आद्यशब्दान्मन्त्रिपुरोहितादयः ।

८९ मध्यौ विटविदूषकौ । तथा शकारचेटाद्या अधमाः परिकीर्त्तिताः ॥ ७१ ॥

आद्यशब्दात्ताम्बूलिकगान्धिकादयः ।

अथ प्रसङ्गाद् दूतानां विभागगर्भलक्षणमाह-

---

सैनिकाः सेनापतयः । आद्यपदेन-हिंस्रादिग्रहणम् । सेनां रक्षन्तीति सैनिकाः । 'रक्षति ।' ४।४।३३ इति ठक् । 'सैनिकः सैन्यरक्षे च स्यात्सेनासमवेतके ।' इति मेदिनी । 'सहाया' इति शेषः ।

अत्र काठिन्यं परिहर्त्तुं दण्डपदार्थमाह-**दण्डः । दुष्टनिग्रहो** दुष्टानां दस्युप्रभृतीनां निग्रह उद्दण्डताया निवर्त्तनम् ।

एवं धर्मेऽपि सहाया वोद्धव्या इत्याह-८७ **ऋत्विक्**..इत्यादि ।

८७ **तथा** 'यथा दण्डे' इति शेषः । **धर्मे** धर्म्मप्रवृत्तिकृते । **ऋत्विक्पुरोधसः** ऋत्विजो याजकाश्च ते पुरोधसः पुरोहिता इति तथोक्ताः । 'वृताः कुर्वन्ति ये यज्ञमृत्विजो याजकाश्च ते ।' इति मेदिनी । पुरोऽग्रे धीयत इति पुरोधाः । 'पुरसि च (उ०)।' ४।२३१ इत्यसिः । **ब्रह्मविदो** ब्रह्म वेदं परं तत्त्वं वा विदन्तीति तथोक्ताः । 'वेदस्तत्त्वं परं ब्रह्म ।' इत्यमरः । **तापसास्त**पस्विनः । 'सहाया' इति शेषः । **स्युः** । अत्रार्य्या छन्दः । लक्षणं चोक्तं प्राक् ॥ ७० ॥

ब्रह्मवित्पदार्थं सूचयन् कारिकायाः काठिन्यं परिहरति-**ब्रह्मविदः** इत्यस्य । **वेदविदः** । **आत्मविदो** लब्धज्ञानाः । **वा**ऽथवा । 'इत्यर्थः' इति शेषः ।

एवं सहायान्निर्दिश्यैषामुत्तमत्वादि विभज्य निर्दिशति-**अत्रै**षु सहायात्मनाऽभिहितेषु पीठमर्दादिषु मध्य इति यावत् । **च** पुनः ।

८८ **पीठमर्द्दाद्याः** पीठमर्द आद्यो येषां (मन्त्र्यृत्विक्पुरोधस्तापसादीनाम्) ते तथोक्ताः । **उत्तमाः** श्रेष्ठाः 'सहाया' इति शेषः ।

आद्यपदार्थं स्वयमपि विवृणोति-**आद्यशब्दा**दाद्यशब्दमाश्रित्येत्यर्थः । अत्र ल्यपो लोपे पञ्चमी । **मन्त्रिपुरोहितादयः** । 'वोद्धव्या' इति शेषः ।

८९ **विटविदूषकौ । मध्यौ** मध्यमौ । 'वोद्धव्या' इति शेषः । **तथा । शकारचेटाद्याः** शकारचेटताम्बूलिकादयः । **अधमाः । परिकीर्त्तिताः** । अत्र श्लोकश्छन्दः ॥ ७१ ॥

आद्यपदार्थं निर्दिशति-**आद्यशब्दा**दाद्यशब्दमाश्रित्येत्यर्थः । **ताम्बूलिकगान्धिकादयः** । आदिपदेन षण्ढकुब्जकिरातादीनां ग्रहणम् ।

दूता अपि साहाय्येऽपेक्ष्यन्त इति तानपि स्वरूपेण निर्देष्टुमाह-अथेत्यादि ।

**अथ । प्रसङ्गा**त्सहायाभिधानरूपक्रमोपस्थानात् । **दूतानाम् । विभागगर्भलक्षणं** विभागः कार्य्यानुरूपतयाऽवच्छेदो गर्भे मध्ये यस्य तादृशं यल्लक्षणं स्वरूपं तत्तथोक्तम् । **आह**-९० **निसृष्टार्थ** इत्यादिना ।

९० निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः ।
कार्य्यप्रेष्यास्त्रिधा दूतो दूत्यश्चापि तथाविधाः ॥ ७२ ॥

तत्र कार्य्यप्रेष्यो दूत इति लक्षणम् । तत्र-

९१ उभयोर्भावमुन्नीय स्वयं वदति चोत्तरम् ।
सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थस्तु स स्मृतः ॥ ७३ ॥

उभयोरिति येन प्रेषितो यदन्तिके च प्रेषितः ।

---

९० **कार्य्यप्रेष्यः** कार्य्यस्य प्रेष्यः प्रेषणीयः । **दूतः** स च-**निसृष्टार्थो** निसृष्टो निहितोऽर्थः प्रयोजनं कार्य्यसिद्धिभार इति यावद् यत्र सः । **च** तथा । **मितार्थो** मितः परिमितोऽर्थो यस्मात्स तथोक्तः । **तथा-सन्देशहारकः** सन्देशं हरति गृह्णाति गृहीत्वा व्याहरतीति यावत् स तथोक्तः । इत्येवम्-**त्रिधा** त्रिप्रकारः । 'भवती'ति शेषः । अयम्भावः-यस्मिन् सर्वोपि कार्य्यभारः स प्रथमः, यस्मात् कस्मैचिदेव कार्य्याय प्रयोजनं स द्वितीयः, यस्तु यथोक्तानुवादी स तृतीय इत्येवं कार्य्ये प्रेष्यो दूतस्त्रिविध इति । न केवलं दूत एवंविध इत्याह-**दूत्यः** । **अपि** । **च** । **तथाविधा** यद्विधो दूतस्त्रिधा तद्विधा दूत्योऽपि त्रिधा ज्ञेया इत्यर्थः । अयम्भावः-कस्यचित् कार्य्यस्य सम्पत्तये केनचित् कयाऽपि वा कश्चित् काचिद्वा प्रेष्यतेऽसौ दूतो दूती वेति व्यपदिश्यते । तत्र-'आत्मवान्मित्रवान्युक्तो भावज्ञो देशकालवित् । असाध्यमप्ययत्नेन कार्य्यं संसाधयेन्नरः ॥' इत्युक्तदिशाऽऽत्मन्याहितगुणत्वादात्मवान्, सहायविमर्शित्वान्मित्रवान्, विश्वसनीयत्वाद् युक्तः, इङ्गिताकारज्ञतया भावज्ञः, देशकालानुरूपधाष्टर्यप्रतारणादिकारितया देशकालवित्, अत एव-विनाऽऽयासं यः कार्य्यं सम्पादयेत्स दूत इत्यर्थः । एवं दूती स्वयमात्मोपाधिपरतन्त्रतयाऽनेकविधाऽपि निसृष्टा, मितार्था, सन्देशहारिणी चेति त्रिविधा, असौ चात्मवती मित्रवती युक्ता ( समवहिता ) भावज्ञा, देशकालविच्च । तथोक्तम्-'स्वयंदूती, मूढदूती, भार्य्यादूती, मूकदूती, वातदूती चेत्येवमनेकविधा अपि दूत्यो निसृष्टार्थादिभिदा त्रिविधा एव ।' इति । अत एव कविराजैरपि 'दूत्य' इति बहुत्वेन निर्दिष्टम् । तत्र-स्वरूपं निगूहमाना स्वयं परस्यां दूतीव स्वस्यामेवानुरागाधानाय नायकं याऽनुकूलयेत्सा स्वयंदूती, मूढेव स्थित्वा गत्वा चेष्टित्वा वा या कार्य्यं निष्पादयति सा मूढदूती, नायकसविधे नायकभार्य्यामेव प्रेष्य केनापि व्याजेन स्वसङ्केतादिं सूचयेत सा भार्य्यादूती, मूकेव नायकस्य नायिकाया वा चेष्टितमवगन्तुमवतिष्ठतेऽसौ मूकदूती, किमपि चेष्टितं लवतोऽप्युपलभ्य सर्वं तदर्थं करामलकमिव या कुरुते सा वातदूती च; इति दिक् । अत्र श्लोकश्छन्दः ॥ तल्लक्षणं चोक्तं प्राक् ॥७२॥

अत्र त्रिविधत्वप्रसिद्धये 'कार्य्यप्रेष्य' इति पदार्थं सङ्गमयति-**कार्य्यप्रेष्यः** । **दूतः** । 'भवती'ति शेषः । **इति** । **लक्षणम्** । अयम्भावः-कार्य्यप्रेष्यत्वं नाम दूतत्वम्, तथा सति तदवच्छिन्नस्य निसृष्टार्थत्वादिना त्रिविधत्वमभिधीयमानं सङ्गच्छते । इति ।

अथ निसृष्टादिपदार्थं समवगमयितुमाह-**तत्र** तेषु निसृष्टार्थादिषु मध्य इत्यर्थः ।

९१ **निसृष्टार्थो** निसृष्टः समर्पितोऽर्थः कार्य्यभारो यत्र सः । **तु** पुनः । **सः** । **स्मृतश्चि**न्तितोऽभिमतः । यः-**उभयो**र्यन प्रेष्यते यदन्तिकं च प्रयाति तयोर्द्वयोरित्यर्थः । **भावमभिप्रायम्** । 'भावः सत्तास्वभावाभिप्रायचेष्टाऽऽत्मजन्मसु' इत्यमरः । **उन्नीय** 'आत्मनी'ति शेषः । तथा च-विचार्य्येति निष्कृष्टोऽर्थः । **स्वयं** येन प्रेषितस्तमपृष्ट्वैवात्मनेति भावः । **च** पुनः । **उत्तरं** प्रतिवादवाक्यमिति भावः । **वदति** कथयति । **कार्य्यं** यदि यः स्वयं तस्य कर्तव्यम् । **सुश्लिष्टं** सुयुक्तं यथा भवेत्तथा । **कुरुते** सम्पादयति । अत्र श्लोकश्छन्दः । लक्षणं चोक्तं प्राक् ॥ ७३ ॥

'उभयो' रिति पदार्थं विवृणोति-**उभयोः** । इत्यस्ये'ति शेषः । **येन** स्वामिनेति शेषः । **प्रेषितः** प्रचोद्य प्रापितः । **यदन्तिके** यत्समीपे । **च** । **प्रेषितः** । 'तयोर्द्वयोरित्यर्थ'इति शेषः ।

९२ मितार्थभाषी कार्य्यस्य सिद्धिकारी मितार्थकः।
यावद्भाषितसन्देश-हारी सन्देशहारकः॥ ७४॥

अथ सात्त्विकनायकगुणाः—

९३ शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी।
ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः॥ ७५॥

तत्र-

९४ शूरता दक्षता सत्यं महोत्साहोऽनुरागिता।
नीचे घृणाऽधिके स्पर्धा यतः, शोभेति तां विदुः॥ ७६॥

---

अथ मितार्थसन्देशहारकयोरेकयैव कारिकया स्वरूपं निर्दिशति-९२ **मितार्थभाषी**त्यादिना।

९२ **मितार्थभाषी** मितः परिमितः स्वल्प इति यावत्, यद्वा-मितः प्रमितः सुयुक्तिक इति यावत्, अर्थः प्रयोजनं यत्र तन्मितार्थं यथा भवेत्तथा भाषितुं शीलमस्यास्तीति तथोक्तः। 'स' त्विति शेषः। **कार्य्यस्य**। **सिद्धिकारी** सम्पन्नताविधायी। **मितार्थको** मितार्थः 'स्या'दिति शेषः। अत्र स्वार्थे कन्। तथा-**यावद्भाषितसन्देशहारी** यावद् यत् परिमितं भाषितमुक्तमिति, तेन कृतः सन्देश इति तं हर्तुं शीलमस्यास्तीति तथोक्तः। 'हार' इति पाठे तु-'हरती'ति तथोक्तः। 'कर्म्मण्यण्।'। ३।२।१ इत्यण्। **सन्देशहारकः**। 'ज्ञेय' इति शेषः। अत्र श्लोकश्छन्दः। लक्षणं चोक्तं प्राक्। एवं पुरस्तात्॥ ७४॥

अत्रेदमवसेयम्-त्रयाणां निसृष्टार्थो यथा-हनुमान्, मितार्थो यथा-युधिष्ठिरप्रेषितो देवमुनिः, सन्देशहारास्तु-प्रायः सर्व एवान्ये। इति।

एवं दूतस्वरूपं निर्दिश्य नायकगुणान्निर्देष्टुमुपक्रमते-**अथे**त्यादिना।

**अथ** दूतस्वरूपनिर्देशानन्तरम्। **सात्त्विकनायकगुणाः** सात्त्विकाः सत्त्वगुणप्रधाना ये नायकास्तेषां गुणा धर्म्मा इति तथोक्ताः। 'उच्यन्त' इति शेषः। तथा च-सात्त्विका ये नायकास्तेषां गुणा अपि सात्त्विका एवेत्यमी एव ९३ **शोभा**-इत्यादिनोच्यन्त इति निष्कृष्टम्।

९३ **शोभा** शोभयतीति तथोक्ता। पचाद्यच्। **विलासो** विलसनमिति, 'भावे।' ३।३।१८ इति घञ्। **माधुर्य्यं** मधुरस्य भाव इति तथोक्तम्। 'गुणवचनब्राह्मणादिभ्यः कर्म्मणि च।' ५।१।१२४ इति ष्यञ्। **गाम्भीर्य्यं** गम्भीरस्य दुर्बोध्यविचारस्य भाव इति तथोक्तम्। **धैर्य्यतेजसी** धैर्यं च तेजश्चेति तथोक्ते। धीरस्य भावो धैर्य्यम्। धीरो बुद्धिमत्तया धृतेरत्यागी। 'धीरो धैर्य्यान्विते स्वैरे बुधे क्लीबं तु कुङ्कुमे।' इति व्याख्यासुधा। तेजः प्रागल्भ्यम्। 'तेजः प्रभावे दीप्तौ च बले शुक्रेऽपी'त्यमरः। तथा-**ललितौदार्य्यं** ललितं चौदार्य्यं चेत्यनयोः समाहार इति तथोक्तम्। ललितमीप्सनीया चेष्टा, 'लल ईप्सायाम्', 'नपुंसके भावे क्तः।' ३।३।११४ इति क्तः। उदारस्य यथेष्ट दातुर्भाव औदार्य्यम्। ब्राह्मणादित्वात्ष्यञ्। **इती**त्येवम्। **अष्टौ**। **सत्त्वजाः** सत्त्वात्सत्त्वगुणाज्जाता इत्यर्थः। 'पञ्चम्यामजातौ।' ३।२।९८ इति डः। **पौरुषाः** पुरुषे नायके भवा इति तथोक्ताः। 'तत्र भवः' ४।३।५३ इत्यण्। **गुणाः**। 'ज्ञेया' इति शेषः॥ ७५॥

अथैनान् स्वरूपतो व्याचष्टुमुपक्रमते-**तत्र** तेषु सात्त्विकेषु पौरुषेषु गुणेषु मध्य इत्यर्थः।

९४ **यतो** यस्माद् यद्वत्तया हेतुनेति यावत्। **शूरता** शूरस्य भावस्तत्ता। 'शूरो वीरश्च विक्रान्तः।' इत्यमरः। 'तस्य भावस्त्वतलौ।' ६।१।११९ इति तल्। **दक्षता** दक्षस्य चतुरस्य भावस्तत्ता। 'दक्षः प्रजापतौ रुद्रवृषभे कुक्कुटे पटौ। द्रुमे दक्षा तु मेदिन्या'मिति मेदिनी। **सत्यं** यथाऽर्थभाषणम्। 'व्रतादस्खलन' मित्यन्ये। **महोत्साहो** महान्

**तत्रानुरागिता यथा**–

"अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशते-ष्वभवन्नास्य विमानना क्वचित् ॥ २३ ॥" इति ।

एवमन्यदपि । अथ विलासः–

**९५ धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः ।**

यथा–

---

महनीयोऽतिशयितो वाऽसा उत्साहः । **अनुरागिता**ऽनुरागः । **नीचे** नीचो जात्या कर्म्मणा गुणैर्वा स्वापेक्षया न्यूनस्तत्रेति, तद्विषय इति भावः । **घृणा** जुगुप्सा दया वा । 'जुगुप्साकरुणे घृणे' इत्यमरः । **अधिके** कर्म्मणा गुणैर्वोत्कृष्ट इत्यर्थः । **स्पर्धा** तदपेक्षयाऽऽत्मनो महिममहनीयतासम्पादनेन तत्पराभवेच्छा । **ताम्** । **शोभेति** । अत्रेतिना कर्म्मणोऽभिहितत्वाच्छोभेति प्रथमा । यदुक्तं वामनैः– 'निपातेनाप्यभिहिते कर्म्मणि न कर्म्मविभक्तिः, परिगणनस्य प्रायिकत्वात् ।' इति । **विदुः** ॥ ७६ ॥

दिङ्मात्रमुदाहर्त्तुमुपक्रमते–**तत्रे**त्यादिना ।

**तत्र** तासु शूरताऽऽदिष्वित्यर्थः । **अनुरागिता**ऽनुरागोऽस्यास्तीति तस्य भावस्तत्ता । प्रेमेति भावः । **यथा**– "**अहमेव**.." इत्यादौ ।

"**प्रकृतिषु** प्रजासु मध्ये । 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गे' इति मेदिनी । **सर्वः** समस्तो ब्राह्मणादिसमाजः ( कर्त्तृपदम् ) । **महीपते** राज्ञोऽजस्येति यावत् । **अहमेव** 'व्यवसायी'ति शेषः । एव न त्वन्यः । **मतो**ऽभिमतो'स्मी'ति शेषः । **इती**त्येवम् । **अचिन्तय**च्चिन्तयामास । **निम्नगाशतेषु** निम्नगानां नदीनां शतानि तेषु । अत्रापि निर्धारणार्थां सप्तमी । **उदधे**स्समुद्रस्य । **इव** । **अस्या**जस्य महीपतेः । **क्वचित्** कस्मिन्नपि जन इत्यर्थः । 'प्रकृति' ष्विति पूर्वतोऽन्वेति । **विमानना**ऽनादरोनुरागिताऽभाव इति यावत् । **न** नैव । **अभवत्** समुत्पन्ना । अयम्भावः–यथा नानादेशेभ्य उपस्थितासूच्चावचासु नदीषु मध्ये नदीपतेरभिन्नरूपतयाऽनुरागाभिन्नता लक्ष्यते तथाऽस्यापि महीपतेः प्रजासु मध्ये सर्व स्मिन्नपि जने विशदेवानुरागिताऽवस्थिता । इति । इदं रघुवंशस्य पद्यम्, वैतालीयं च वृत्तम्, तल्लक्षणं च यथोक्तम्, 'वैतालीयं द्विस्वराअयुक्पादे, युग्वसवोऽन्ते र्लगाः ।' इति ।"

एतन्निदर्शनमित्याह–**एवं** यथानुरागितोदाहरणं दर्शितं तथा । **अन्य**च्छूरताऽऽद्युदाहरणम् । **अपि** । 'द्रष्टव्य' मिति शेषः ।

अत्रेदं बोद्धव्यम्–शूरताऽऽदिबीजभूता शोभेति निवेदितं प्राक् । तत्र–शूरता महाभारतेऽर्जुनादेः प्रसिद्धैव, दक्षताऽप्येवं गान्धर्वप्रस्वापायस्त्रेण वीराणां मोहने जागरूका । अथ सत्यं हरिश्चन्द्रयुधिष्ठिरायुक्तिमनुगतमित्यपि न तिरोहितम् । उत्साहो वीरस्थायिभाव इत्यसौ पुनस्तस्मिन्नुदाहरिष्यमाणे स्वत उदाहरिष्यते । अत एवानुरागिता ग्रन्थकृद्भिरुदाहृता । नीचे घृणा यथा बन्धनं प्राप्तेऽपि भीमादौ, जेतुमशक्येऽप्यर्जुनादौ यथा वा स्पर्धा कर्णस्य । इति ।

एवं शोभां निर्वर्ण्य विलासं निर्वर्णयितुमुपक्रमते–**अथे**त्यादिना ।

**अथ** शोभावर्णनानन्तरम् । **विलासः** । 'स्वरूपतो वर्ण्यते'इति शेषः । तथा च विलासस्वरूपं–९५ **धीरे**त्यादिना ।

९५ **विलासे** 'विलास' इत्यभिधेये गुणे समुद्भूते सतीत्यर्थः । **धीरा** धैर्य्यवती व्याकुलताशून्येति यावत् । **दृष्टि**र्विलोकनम् । **चित्रा** विचित्रा मनोहारिणीति यावत् । **गति**र्गमनम् । तथा–**सस्मितं** स्मितं मन्दहासस्तेन सह वर्त्तत इति तथोक्तम् । **वचो** भाषणम् ।

उदाहर्त्तुमुपक्रमते–**यथा**–'**दृष्टिः**–'इत्यत्र ।

'दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा धीरोद्धता नमयतीव गतिर्धरित्रीम्।
कौमारकेऽपि गिरिवद्गुरुतां दधानो वीरो रसः किमयमित्युत दर्प एव ॥ २४ ॥'

९६ सङ्क्षोभेष्वप्यनुद्वेगो माधुर्य्यं परिकीर्त्तितम् ॥ ७७ ॥

ऊह्यमुदाहरणम्—

९७ भीशोकक्रोधहर्षाद्यै-र्गाम्भीर्य्यं निर्विकारता।

यथा-'आहूतस्याभिषेकाय, विसृष्टस्य वनाय च।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥ २५ ॥' इति ॥

---

'**तृणीकृतजगत्त्रयसत्त्वसारा** तृणीकृतौ तृणवत्तुच्छीकृतौ जगत्त्रयस्य सत्त्वसारौ यया सा। सत्त्वं पौरुषम्, सारो बलम्। 'सत्त्वं बले पिशाचादौ बले द्रव्यस्वभावयोः। आत्मत्वव्यवसायासुवित्तेष्वस्त्री तु जन्तुषु ॥'इति मेदिनी। 'सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु।' इत्यमरः। **दृष्टिः**। 'लक्ष्यत'इति शेषः। तथा-**धीरोद्धता** धीरा मन्थराऽसा उद्धतोद्धतेति तथोक्ता, विचित्रा (मनोरमा) इत्यर्थः। **गति**र्गमनम्। **धरित्रीं** पृथिवीम्। **नमयति**। **इवो**'पलक्ष्यत'इति शेषः। इत्यतः। **कौमारके** कुमारावस्थायाम्। कुमारस्येदम् (वयः) इति तत्र। **अपि**। **गिरिव**-द्गिरिरिव। **गुरुताम्**। **दधानः**। अयं 'सङ्ग्रामाङ्गणमलङ्कुर्वन्नुपस्थितः कुश'इति शेषः। **किं** किं ननु। **वीर** उत्साहस्थायिभावकः। **रसः**। **उता**थवा। **दर्पो**ऽहङ्कारः। **एव** 'साक्षात्'इति शेषः। अयम्भावः-अत्रोत्साहदर्पयोरतिशयं सूचयितुं नायकस्य कुशस्य वीरत्वेन दर्पत्वेनाध्यवस्योत्प्रेक्षणम्। अत एव हेतूत्प्रेक्षेति। पद्यं चैतदुत्तररामचरितस्थम्। वसन्ततिलकं च च्छन्दः। तल्लक्षणं चोक्तं प्राक् ॥ २४ ॥'

एवं विलासं निरूप्य माधुर्य्यं निरूपयति-९६ **सङ्क्षोभेष्वि**त्यादिना।

९६ **सङ्क्षोभेषु** लक्षणया तत्कारणेष्वित्यर्थः। अत्र सतिसप्तमी। सङ्क्षोभ उद्वेगापरपर्य्यायश्चित्तवृत्तेर्विक्षेपः, तत्कारणानि दोषारोपोक्त्यादीनि। **अपि**। **अनुद्वेगः** सङ्क्षोभाभाव इत्यर्थः। **माधुर्य्यम्**। **परिकीर्त्तित**-'माचार्य्यै'रिति शेषः ॥ ७७ ॥

उदाहरणं प्रसिद्धमित्युपेक्षमाण आह-**उदाहरणं** 'माधुर्य्यस्ये'ति शेषः। **ऊह्यं** गवेषणीयमित्यर्थः। अत एवाहुस्तर्कवागीशाः-'यथा मम रामविलासे-"तन्निपीय कटुकर्णपदव्या खेदमाप न मनागपि रामः। शूलपाणिरिव घोरमुदग्रं कालकूटपटलं किल पूर्वम्।" इति।'

अथ गाम्भीर्य्यमाह-९७ **भीशोक..** इत्यादिना।

९७ **भीशोकक्रोधहर्षाद्यैः**। भीर्भयम्, शोक इष्टमरणादिना चेतसो व्याकुलता, क्रोधोऽपकारादिना तदनिष्टाय चित्तक्षोभः, हर्ष इष्टाभ्युदयादिना चित्तविकारः। आद्यपदं च मोहादिवाचकम्। 'सङ्क्षोभेष्वपी'ति पूर्वतोऽध्याहार्य्यम्। * 'प्रकृत्यादिभ्य उपसङ्ख्यान'मिति तृतीया। तथा च-भयाद्यभिन्नसङ्क्षोभकारणेषु सत्स्वपीत्यर्थः। **निर्विकारता** निर्गतो विकारश्चित्तवृत्तिविपरिणामो यस्य तस्य भावस्तत्ता। **गाम्भीर्य्यं** नदनदीभिः क्षोभेऽपि सिन्धोरिव तादवस्थ्यमिति भावः।

उदाहरति-**यथा** 'गाम्भीर्य्य'मिति शेषः। **'आहूतस्ये**'त्यादिना।

'**अभिषेकाया**भिषेको युवराजपदे स्थापयितुमाभ्युदयिकः कर्म्मविशेषः, तस्मै तं सम्पादयितुमित्यर्थः। 'क्रियार्थोपपदस्य च कर्म्मणि स्थानिनः।' २।३।१४ इति चतुर्थी। **आहूतस्य**। **वनाय** वनं गन्तुम्। **च**। **विसृष्टस्य** कृताभ्यनुज्ञस्य। **तस्य** श्रीरामचन्द्रस्येत्यर्थः। **स्वल्पः** किञ्चिन्मात्रम्। **अपि**। **आकारविभ्रम** आकारस्य मुखनेत्रादेर्विभ्रमो वैपरीत्यं विकार इति यावत्, इति तथोक्तः। **न** नैव। **मया**। **लक्षितो** वृद्धः। अयम्भावः-युवराजपदप्राप्तिं श्रुतवतो रामस्य हर्षेण मुखनेत्रादिविकाशो मनाङ् न जातः, न च पुनर्वननिवासाज्ञां श्रुत्वा तस्यैव कोऽपि मनागुद्वेगेन मुखनेत्रादिग्लानिरभूत्। **इति**। इयं कस्यापि श्रीरामं तदा साक्षात्कुर्वतः कमपि प्रत्याश्चर्य्योक्तिः ॥ २५ ॥'

९८ व्यवसायादचलनं धैर्य्यं विघ्ने महत्यपि ॥ ७८ ॥

यथा–

'श्रुताप्सरोगीतिरपि क्षणेऽस्मिन् हरः प्रसङ्ख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥ २६ ॥'

९९ अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् ।
प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥ ७९ ॥
वाग्वेषयोर्मधुरता, तद्वच्छृङ्गारचेष्टितं ललितम् ।
दानं सप्रियभाषण–मौदार्यं शत्रुमित्रयोः समता ॥ ८० ॥

---

अथ धैर्य्यस्वरूपं लक्षयति–९८ व्यवसायादित्यादिना ।

९८ महति प्रबले । अपि । विघ्ने चित्तस्वास्थ्यविघातहेताविति भावः । सतिसप्तमी । 'विघ्नोऽन्तराये घाते चे'ति गोपालः । व्यवसायाद् व्यवसाय 'इदमेवमनुष्ठेय' मिति निश्चयस्तं कृत्वेत्यर्थः । ल्यपो लोपे पञ्चमी । 'व्यवसायस्तु यत्ने च जीविकायां च निश्चये ।' इति गोपालः । अचलनं चलनं चित्तक्षोभस्तदभाव इत्यर्थः । धैर्य्यं धीरो बुद्धिमान् धृतिमान् वा तस्य भाव इति तथोक्तम् । अत एव–'नानुशोचन्ति पण्डिताः ॥,' 'अङ्गीकृतं सुकृतिनः परिपालयन्ति ॥' इत्यादि सङ्गच्छतेऽभिधानम् ॥ ७८ ॥

उदाहर्त्तुमाह–यथा 'धैर्य्यं सम्भवति तथोदाह्रियते'इति शेषः । 'श्रुता..' इत्यादिना ।

'अस्मिन् समाधेश्चालकतया साक्षात् क्रियमाण इत्यर्थः । क्षणे समयेऽकस्माद् वसन्ताविर्भावोपस्थिताविति यावत् । 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ।' इत्यमरः । श्रुताप्सरोगीतिः श्रुताऽप्सरसामुर्वश्यादीनां देवाङ्गनानां गीतिर्गानं येन तथोक्तः । अपि । हरो महादेवः । प्रसङ्ख्यानपरः प्रसङ्ख्यानं तत्त्वविचारो ब्रह्मसाक्षात्कार इति यावत्, तत्र परः परायण इति तथोक्तः । बभूव । तदेव समर्थयते–हि यतः । आत्मेश्वराणामात्मनश्चित्तस्येश्वरा निग्रहसमर्थास्तेषाम् । जितेन्द्रियाणामिति भावः । 'आत्मा कलेवरे यत्ने स्वभावे परमात्मनि । चित्ते धृतौ च बुद्धौ च परव्यावर्त्तनेऽपि च ॥' इति धरणिः । समाधिभेदप्रभवः समाधेश्चित्तवृत्तिनिरोधस्य भेदो विघातस्तस्य प्रभवः प्रधानभूताः । विघ्नाः । न । जातु कदाऽपि । 'कदाचिज्जाति' त्यमरः । भवन्ति सम्भवन्ति । अत्रेयं देवदेवं जेतुं प्रयतमानेऽपि वसन्तादौ तस्य समाधितादवस्थ्यं वर्णयतः कवेरुक्तिः, कुमारसम्भवस्थं च पद्यमिदम् । इन्द्रवज्रोपेन्द्रवज्रयोश्च सम्मेलनात्तयोरुपजातिश्छन्दः, लक्षणं चोक्तं प्राक् ॥ २६ ॥'

अथ तेजोललितौदार्य्याणां स्वरूपमेकदैव कारिकाद्वयेन व्याख्यातुमुपक्रमते–९९अधि.. इत्यादिना ।

९९ परेण प्रवरेण, अथ च शत्रुणा । 'परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले ।' इति विश्वः । तथा च–बलीयस्त्वादिनोत्तमेन (अपि) शत्रुणेति निष्कृष्टोऽर्थः । प्रयुक्तस्य । अधिक्षेपापमानादेः । अधिक्षेपो भर्त्सनम्, अपमानस्तिरस्कारः, तावादी यस्य (अपकारादेः) तस्य तथोक्तस्य । प्राणात्यये प्राणानामत्ययो विनाशो लक्षणया तत्सदृशे भयावहेऽवसर इत्यर्थः । अपि । यत् । असहनं सहनाभावः, प्रतिकारमविधाय विराम इति यावत् । तत् । तेजः तत्पदवाच्योगुणः । समुदाहृतं कीर्त्तितम् । तथा–वाग्वेषयोर्वाक् (भाषणं) च वेष (आभूषणादिविहितशोभा) श्चेति तयोस्तथोक्तयोः । 'वाग्वाचे भारत्यां वचने स्त्रियौ ।' इति व्याख्यासुधा । आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ।' इत्यमरः । मधुरताऽऽह्लादकत्वमित्यर्थः । तद्वत्तथा । शृङ्गारचेष्टितं शृङ्गारस्य चेष्टितमुद्दीपनहेतुभूता चेष्टेति तथोक्तम् । ललितम् । 'समुदाहृत 'मिति पूर्वतोऽन्वेति । एवम्–सप्रियभाषणं प्रियं मनोरमं प्रीतिपुरःस्कृतमिति यावद् यद्भाषणं, तेन सह । 'वोपसर्जनस्य ।' ६।३।८२ इति सहस्य सादेशः । दानं

एषामुदाहरणान्यूह्यानि। अथ नायिकाभेदानाह—

**१०० ननु नायिका त्रिभेदा स्वाऽन्या, साधारणा, स्त्रीति।**
**नायकसामान्यगुणै–र्भवति यथासम्भवैर्युक्ता॥ ८१॥**

**नायिका पुनर्नायकसामान्यगुणैस्त्यागादिभिर्यथासम्भवैर्युक्ता भवति, सा च स्वस्त्री, अन्यस्त्री, साधारणस्त्री चेति त्रिविधा। तत्र—**

---

द्रव्यादिसमर्पणम्। तथा– **शत्रुमित्रयोः**। शत्रौ मित्रे च। विषये सप्तमी। **समता**ऽऽत्मसमानत्वम्। 'उदारचारितानां तु वसुधैव कुटुम्बकम्।' 'आत्मवत् सर्वभूतेषु' इत्याद्युक्तदिशाऽपकर्त्तुं सामर्थ्येऽपि शत्रूणामपकारात्पराङ्मुखत्वे सति यथासम्भवं तेषामुपकारप्रवणत्वम्, कृतज्ञत्वेऽपि मित्राणां 'नरः प्रत्युपकारार्थी विपत्तिमभिकाङ्क्षती' त्युक्तदिशा प्रत्युपकाराग्रहिलताशून्यत्वं चेति भावः। **औदार्य्यमुदारता**। 'समुदाहृतमि'ति पूर्वतोऽन्वेति। अत्र गीतिश्छन्दः, लक्षणं चोक्तं प्राक्॥ ७९॥ ८०॥

एषामुदाहरणानि प्रसिद्धान्येवेत्युपेक्षयाऽऽह–**एषां** निरुक्तलक्षणानां तेजोललितौदार्य्याणामित्यर्थः। **उदाहरणानि। ऊह्यानि** गवेषणीयानि। इति।

अत्राहुर्विवृतिकाराः–"यथा (मम) रामविलासे–'विस्फारस्फुरदोष्ठपल्लवमतिस्विन्नातिकान्तं क्रुधा किञ्चिल्लोहितलोचनाम्बुजयुगेनाकुञ्चितभ्रूलतम्। युक्तं तस्य दुरुक्तमुत्तरयितुं तेजोभराद्युद्यतन्नेत्रान्तेन निवार्य्य लक्ष्मणममुं प्रोचे स्वयं राघवः॥' विस्फारमत्यन्तं स्फुरदोष्ठं यस्य तं, तस्य भार्गवस्य, अमुं भार्गवम्...'वीक्ष्य तस्य रुचिरं कलेवरं सन्निशम्य मधुरं च भाषितम्। स्मारसारमपुलभ्य विभ्रमं दास्यमस्य कलयन्ति सुभ्रुवः॥' 'दत्ते सहासवचनं सप्रियवचनं च भूपालः। रिपुरपि लभते मानं निरीतिभावं धरा तस्मात्॥' इति"

अत्रायं पर्य्यालोकः–शोभाऽऽदयोऽष्टौ सात्त्विका गुणाः, तत्र शोभा शूरताऽऽदिभेदात्सप्तविधा, अत्र शूरता शत्रूञ्जेतुं साहसः, उत्साहः पुनः कार्य्यान्तरेऽपि मनोहर्षः, इत्येवानयोर्भेदः। विलासो धीरदृष्ट्यादिभेदात्त्रिविधः, माधुर्य्यगाम्भीर्य्यधीरत्वानामेकैकात्मकत्वमेव, कटूक्तिश्रवणादिना सम्पाद्यमानस्य सङ्क्षोभस्यावरोधो माधुर्य्यं, हर्षशोकादिनाऽपि किं पुनः कटूक्तिश्रवणादिना यस्य चेतसि कोऽपि तत्पारतन्त्र्यव्यञ्जको विकार एव न सम्भवेदेतद्गाम्भीर्य्यम्, एष एवानयोर्भेदश्च, वाङ्माधुर्य्यं वेषमाधुर्य्यं शृङ्गारचेष्टा चेति त्रिविधं ललितम्, प्रेमपुरःसरं दानं शत्रुमित्रयोः समत्वं चेति द्विभेदमुदारत्वं च। इति।

एवं नायकस्वरूपादि निरूप्य नायिकास्वरूपाद्यपि निरूपयितुं प्रतिजानीते–अथेत्यादिना।

**अथ** नायकनिरूपणानन्तरम्। **नायिकाभेदान्** 'स्वरूपकथनगर्भा'निति शेषः। **आह–१०० नन्वित्यादिना।**

१०० **स्वा** स्वकीया। 'स्वः स्यात् पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने।' इति मेदिनी। **अन्या**ऽन्यस्येयमिति तथोक्ता, परकीयेति यावत्। **साधारणा** साधारणस्येयमुपभोगयोग्येति तथोक्ता। 'साधारणं तु सामान्य' मित्यमरः। **स्त्री। इतीत्येवम्। त्रिभेदा** त्रिस्वरूपा। **यथासम्भवै**स्सम्भवमनतिक्रम्य वर्त्तमानैः, प्रायः सम्भवद्भिरिति भावः। **नायकसामान्यगुणै**र्नायकानां धीरोदात्तादीनां सामान्यगुणाः साधारणगुणास्तैः। नायकमात्रस्य ये गुणास्तैरिति भावः। ते च ६८ त्यागीत्यादिनोक्ता एवेति बोध्यम्। **युक्ता। नायिका। ननु।** 'अथे'ति पाठान्तरम्। **भवति॥ ८१॥**

एतदेव विवृणोति–**नायिकेत्यादिना।**

**नायिका। पुनः। यथासम्भवैः। त्यागादिभिः। नायकसामान्यगुणैः। युक्ता। भवति। सा।** निरुक्तस्वरूपा नायिका। **च** पुनः। **स्वस्त्री** स्वकीया स्त्रीत्यर्थः। **अन्यस्त्र्य**न्यस्य स्त्रीति तथोक्ता। **साधारणस्त्री। च। इतीत्येवम्। त्रिविधा।** 'मते'ति शेषः। अत्राहुर्विवृतिकाराः–'यथासम्भवैरिति। तेन दक्षतोत्साहतेजांसि नायिकानां न वर्णनीयानि। अत एव–दक्षताऽऽदयो नायकस्यैव सात्त्विका गुणा उक्ताः।' इति। अन्ये त्वेवम्–दक्षताऽऽ-

**१०१ विनयार्जवादियुक्ता गृहकर्म्मपरा पतिव्रता स्वीया ।**

यथा—

'लज्जापज्जत्तपसाहणाइँ परभत्तिणिप्पिवासाइँ ।
अविणअदुम्मेधाइँ धण्णाण घरे कलत्ताइँ ॥ २७ ॥'

**१०२ साऽपि कथिता त्रिभेदा मुग्धा मध्या प्रगल्भेति ॥ ८२ ॥**

तत्र—

---

दयो गुणा नायिकानामपि वर्ण्यन्ते, किन्तु न नायकानामिव, तथाहि-दक्षता क्षिप्रकारित्वं, विदग्धत्वं वा, तत्राद्या विभ्रमोदाहरणा, अन्त्या पुनः प्रसिद्धैव, उत्साहः 'शरीरं वा पातयेयं, देवदेवानुग्रहं वा सम्पादयेय' मित्यात्मा पार्वतीप्रभृतीनां विदिततरः, तेजोऽप्येवं सीताऽऽदेरग्निप्रवेशादिना प्रसिद्धात्मेति ।

एताः क्रमान्निरूपयितुमुपक्रमते—**तत्र** तासु स्वस्त्रीप्रभृतिषु मध्य इत्यर्थः । 'स्वीया तावलक्ष्यते'इति शेषः । १०१ **विनयेत्यादिना** ।

१०१ **विनयार्जवादियुक्ता** विनयार्जवादिना युक्ता । विनयो लज्जयाऽनुद्धतत्वम्, आर्जवमकौटिल्यम् । आदिपदेन सुशीलत्वादिग्रहणम् । **गृहकर्म्मपरा** गृहस्य श्वश्रूश्वशुरादेः कर्म्म परिचर्य्यादि तत्र परा क्षिप्रकारितया चातुर्य्येण सर्वसम्मानकारितया वोद्यतेति तथोक्ता । **स्वीया** स्वस्यैयमिति तथोक्ता । स्वस्य स्त्रीत्यर्थः । 'भवती'ति शेषः । इदमुक्तम्—**पतिव्रता** स्वीया, तथा च—पतिव्रतात्वं स्वकीयायाः स्वरूपम्, तदभिव्यञ्जकं पुनर्लक्ष्म विनयादियुक्तत्वे सति गृहकर्म्मपरत्वम् । गृहपरत्वं नामाचातुर्य्यानुत्साहपरित्यागेन गृहवर्त्तिनां श्वश्रूश्वशुरादीनामनुरञ्जनपुरःसरमशेषाणामन्येषामपि कार्य्याणां झटिति निष्पादनकारित्वम् । एवं च—क्षिप्रकारित्वं चतुरत्वमुत्साहवत्त्वं चेत्येतेऽपि गुणा नायिकायाः । इति निष्कृष्टम् । इति ।

उदाहरति—**यथा**—'**लज्जा**.. ॥' इत्यादिना ।

'**धण्णाण** धन्यानां कृतपुण्यानामित्यर्थः । **घरे** गृहे । **लज्जापज्जत्तपसाहणाइँ** लज्जापर्य्याप्तप्रसाधनानि लज्जायाः पर्य्याप्तानि योग्यानि प्रसाधनान्यलङ्कारादिरचना येषां तानि । 'आकल्पवेषौ नेपथ्यं प्रतिकर्म्म प्रसाधन' मित्यमरः । **परभत्तिणिप्पिवासाइँ** परभर्तृनिष्पिपासानि, परस्या अन्यस्या नायिकाया भर्त्ता कान्तस्तत्र निष्पिपासानि तृष्णारहितानि तत्सौभाग्यभोगायालुब्धानीति यावत् । निर्गता पिपासा ( पातुमिच्छा ) लक्षणया सौभाग्यामृतलाभेच्छा येषां तानि निष्पिपासानि । **अविणअदुम्मेधाइँ** अविनयदुर्म्मेधांस्यविनयस्य दुर्म्मेधांस्यनभिज्ञानीत्यर्थः । दुष्टा ( नष्टा ) मेधा बुद्धिर्येषां तानि दुर्म्मेधांसि । 'नित्यमसिच् प्रजामेधयोः ।' ५।४।१२२ इत्यसिच् । 'दुर्मेधानी'ति पाठे तु—अविनयस्य दुर्मेधानि नितान्तं हिंसकानीति भावः । 'मेधृ सङ्गमे च' इत्यस्य चकारेण हिंसाऽर्थकताया अप्युपपत्तेः । **कलत्ताइँ** कलत्राणि । 'सम्भवन्ती'ति शेषः । अत्र कस्यापि पतिव्रतां प्रशंसतोऽसावुक्तिः । आर्य्याछन्दश्च । तल्लक्षणं चोक्तं प्राक् ॥'

यथा वा रसमञ्जर्य्याम्—'गतागतकुतूहलं नयनयोरपाङ्गावधि, स्मितं कुलनतभ्रुवामधर एव विश्राम्यति । वचः प्रियतमश्रुतेरतिथिरेव, कोपक्रमः कदाचिदपि चेत्तदा मनसि केवलं मज्जति ॥' इति ।

एवं स्वकीयायाः स्वरूपं निर्दिश्य भेदात्मनाऽवस्थां निर्दिशति—१०२ **साऽपीत्यादिना** ।

१०२ **सा** स्वकीया । अपि । **मुग्धा** । **मध्या** । तथा—**प्रगल्भा** । **इतीत्येवम्** । **त्रिभेदा** । **कथिता** 'आचार्य्यै'।रिति शेषः ॥ आर्य्याछन्दः ॥ ८२ ॥

अथैतासां स्वरूपं निर्देष्टुमुपक्रमते—**तत्र** तासु मध्ये—'मध्या लक्ष्यते'इति शेषः १०३ **प्रथमेत्यादिना** ।

---

१ 'लज्जापर्य्याप्तप्रसाधनानि, परभर्तृनिष्पिपासानि । अविनयदुर्म्मेधांसि धन्यानां गृहे कलत्राणि ॥'

**१०३ प्रथमाऽवतीर्णयौवनमदनविकारा रतौ वामा ।**
**कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥ ८३ ॥**

**तत्र, प्रथमावतीर्णयौवना यथा मम तातपादानाम्—**

**'मध्यस्य प्रथिमानमेति जघनं, वक्षोजयोर्मन्दतां दूरं यात्युदरं च, रोमलतिका नेत्रार्जवं धावति ।**
**कन्दर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणादङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः ॥२८॥'**

---

**१०३ प्रथमावतीर्णयौवनमदनविकारा** प्रथममवतीर्णौ यौवनमदनविकारौ यस्याः सेति तथोक्ता । यौवनं मदन (कामकृत) विकारं च प्रथममेव (तदानीमेव) प्राप्तेति भावः । यद्वा-यौवनमदनविकारावतीर्णेत्यवतीर्णयौवन-मदनविकारा, प्रथममवतीर्णयौवनमदनविकारेति तथोक्ता । यौवनं च मदनविकारश्चेति यौवनमदनविकारौ । तथा च-प्रथमाऽवतीर्णयौवना, प्रथमावतीर्णमदनविकारा चेति निष्कृष्टम् । **रतौ** रमणे तद्विषय इति यावत् । **वामा** 'सकम्पा चुम्बने वक्त्रं हरत्यङ्गेषोपगूहिता । परावृत्य चिरं तल्प आस्ते रन्तुं च वाञ्छति ॥' इत्युक्तस्वभावा, 'वामौ वल्गुप्रतीपौ द्वा'विल्यमरः । **माने** आग्रहे । 'मानं प्रमाणे प्रस्थादौ मानश्चित्तोन्नतौ ग्रहे ।' इति हैमः । **च** । **मृदुः** अनिष्ठुराऽल्प-प्रयासापनेयाग्रहेति यावत् । **समधिकलज्जावती** नितान्तं लज्जावती । **मुग्धा** । **कथिता** । अत्रोपगीतिश्छन्दः, तल्लक्षणं च यथोक्तम्, 'अन्त्येनोपगीतिः (पि.)' इति ॥ ८३ ॥

अत्रेदमप्यवगम्यम्-मुग्धा, प्रथमावतीर्णयौवना, प्रथमावतीर्णमदनविकारा, रतौ वामा, माने मृदुः, समधिक-लज्जावती चेति पञ्चविधा । तत्र मुग्धा यथा-'आज्ञप्तं किल कामदेवधरणीपालेन काले शुभे वस्तुं, वास्तुविधिं विधास्यति तनौ तारुण्यमेणीदृशः। दृष्ट्या खञ्जनचातुरी, मुखरुचा सौधाधरी माधुरी, वाचा किन्तु सुधासमुद्रलहरीलावण्यमामन्त्र्यते ॥' इति । अन्ये त्वाहुः-'मुग्धाऽज्ञातयौवना ज्ञातयौवना ज्ञाताज्ञातयौवना चेति त्रिविधा ।' इति, तत्राज्ञातयौवना यथा-'नीरात्तीरमुपागता श्रवणयोः सीम्नि स्फुरन्नेत्रयोः श्रोत्रे लग्नमिदं किमुत्पलमिति ज्ञातुं करं न्यस्यति । शैवालाङ्कुर-शङ्कया शशिमुखी रोमावलीं प्रोञ्छति श्रान्ताऽस्मीति मुहुः सखीमविदितश्रोणीभरा पृच्छति ॥' इति । ज्ञातयौवना यथा मम-'अयि सखि कुचयुग्मं पीनतुङ्गम्मदीयं निरतिशयमसह्यं, तद्भरेणार्दिताऽस्मि । न किमु तदिति नित्यं वर्द्धते कार्श्यमेतत्त्वमिव बत कृशाङ्गी पश्य जाताऽहमद्य ॥' इति । ज्ञाताज्ञातयौवना यथा मम-'किं यौवने सखि नितम्बयुगेन सार्द्धं पुष्टिं प्रयाति न किमित्युदरम्ममैतत् । हन्तास्य किं हसति बालभवाऽपि नित्यं तत् कारणं वद विविच्य विवेकिनि ! त्वम् ॥' इति । वयं ब्रूमः-त्रयोऽप्येते भेदाः प्रथमावतीर्णयौवनानतिरिक्ता एव । इति ।

अथ क्रमादुदाहर्तुमुपक्रमते-तत्रेत्यादिना ।

**तत्र** तासु पञ्चविधासु मध्य इत्यर्थः। **प्रथमावतीर्णयौवना** प्रथममवतीर्णयौवना यौवनमवतीर्णा प्राप्तेति यावत्। **यथा**। **मम** विश्वनाथस्य। **तातपादानां** पितृपादानां चन्द्रशेखराणामिति यावत्। **'मध्यस्य..** इत्यादौ ।

**'जघनं** श्रोणिदेशः । **मध्यस्य**ोदरस्य । **प्रथिमानं** पृथोः स्थूलस्य भावस्तं तथोक्तम् । 'पृथ्वादिभ्य इमनिज् वा । ५।१।१२२ इतीमनिच् । **एति** प्रतिपद्यते । **उदरम्** । **च** पुनः । **वक्षोजयोः** स्तनयोः । **मन्दतां** । कृशत्वम् । 'मूढाल्पापटुनिर्भाग्या मन्दाः स्युः'रित्यमरः । **दूरं** विप्रकृष्टं यथा भवेत्तथा । **याति** । 'मन्दता' इति पाठे तु 'वक्षोजयोर्म-न्दता, दूरमुदरं (कर्म्म) यातीत्यन्वयः । **नेत्रार्जवं** नेत्रयोरार्जवं सरलता । **रोमलतिका** लक्षणया तत्कौटिल्यम् । **धावति** । अत्राहुष्टिप्पणीकाराः-'मध्यभागे या विशालताऽऽसीत् सा जघनेन लुण्ठिता, तेन तद्विशालं जातम्, एवं जघने यत् कार्श्यं तन्मध्यभागेन लुण्ठितम्, तेन स कृशो जातः, एवमुदरस्थौल्यं निर्लुण्ठितं सत् कुचयोर्जातम्, कुचयोश्चो-दरे, रोमलताकौटिल्यं नेत्रयोः सङ्गतम्, नेत्रयोः सारल्यं रोमलतायामिति तात्पर्य्यम्।' इति। इत्थम्-**सुभ्रुवः** कान्तायाः। **अङ्गानि** । **नूतनमनोराज्याभिषिक्तं** नूतनं यन्मनोराज्यं तत्राभिषिक्तमिति तत्तथोक्तम् । मन एव राज्यमिति मनोराज्यम् । **कन्दर्पं** कामदेवम् । **परिवीक्ष्य** । **क्षणात्** । **परस्परम्** । **निर्लुण्ठनम्** । **विदधते** । **इव** । नूतने राज्ये लुण्ठनं प्रायिकमित्यङ्गान्यपि परस्परं लुण्ठन्तीति भावः । अत्र शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं चोक्तं प्राक् २८॥'

प्रथमावतीर्णमदनविकारा, यथा मम प्रभावतीपरिणये-

'दत्ते सालसमन्थरं भुवि पदं निर्य्याति नान्तःपुरात्,
नोद्दामं हसति क्षणात्कलयते ह्रीयन्त्रणां कामपि।
किञ्चिद्भावगभीरवक्रिमलवस्पृष्टं मनाग्भाषते,
सभ्रूभङ्गमुदीक्षते प्रियकथामुल्लापयन्तीं सखीम् ॥ २९ ॥'

रतौ वामा यथा--

'दृष्टा दृष्टिमधो ददाति, कुरुते नालापमाभाषिता, शय्यायां परिवृत्य तिष्ठति, बलादालिङ्गिता वेपते।
निर्य्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते,जाता वामतयैव सम्प्रति मम प्रीत्यै नवोढा प्रिया॥३०॥'

मानै मृदुर्यथा--

---

एवं प्रथमावतीर्णयौवनामुदाहृत्य प्रथमावतीर्णमदनविकारामुदाहर्त्तुमुपक्रमते-प्रथमा इत्यादिना।

प्रथमावतीर्णमदनविकारा प्रथममवतीर्णो मदन ( काम ) विकारो यस्याः सा तथोक्ता। यथा। मम विश्वनाथस्येत्यर्थः। प्रभावतीपरिणये लक्षणया तदीये 'दत्ते..' इत्यत्र पद्य इत्यर्थः।

'सालसमन्थरमलसेनालस्येन सहवर्त्ततइति सालसंचतन् मन्थरं मन्दगमनमिति तथोक्तं यथा भवेत्तथा। 'प्रभावती 'ति शेषः। भुवि क्षितितले। पदं चरणम्। दत्ते। अन्तःपुरात्। न नैव। निर्य्याति निष्क्रामति। उद्दाममत्यन्तम्। न नैव। हसति। क्षणात्किञ्चिद् यदा कदाचिद्धसत्यपि तदा क्षणादुत्तरमिति भावः। काम्। अपि। ह्रीयन्त्रणां ह्रियो लज्जाया यन्त्रणा वन्धनं ताम्। कलयते रचयति। किञ्चिद्भावगभीरवक्रिमलवस्पृष्टं किञ्चिद्भावगभीरवक्रिम्णो लवोंऽशस्तेन स्पृष्टं यथा भवेत्तथा। गभीरो गम्भीरोऽसौ वक्रिमा कुटिलतेति गभीरवक्रिमा। भावोऽभिप्रायस्तस्य गभीरवक्रिमा। किञ्चिदित्यस्य लव इत्यनेन योगः। 'भावोऽभिप्रायवस्तुनोः।' इति हैमः। वक्रस्य भावो वक्रिमा। मनाक् किञ्चित्। 'किञ्चिदीषन्मनागल्पे' इत्यमरः। भाषते। प्रियकथां प्रियस्य स्वामिनः कथा नाम गुणादिकथनं ताम्। उल्लापयन्तीम्। अत्र स्वार्थे णिच्। सखीम्। सभ्रूभङ्गं भ्रूभङ्गेण सह यथा भवेत्तथा। भ्रुवोर्भङ्गः कौटिल्यमिति भ्रूभङ्गः। 'भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये। कौटिल्ये भयविच्छित्त्यो' रिति हैमः। उदीक्षते निरीक्षते। अत्र शार्दूलविक्रीडितं छन्दः। तल्लक्षणं चोक्तं प्राक् ॥ २९ ॥'

अथ रतौ वामामुदाहर्त्तुमुपक्रमते-रतावित्यादिना।

रतौ रमणे। वामा। प्रतिकूला अत एव स्वामिनो मनोरमत्वाद्वामा ( रमणीया )। यथा-'दृष्टा..' इत्यत्र।--

'मम। नवोढा नवपरिणीता। प्रिया। दृष्टाऽवलोकिता सतीत्यर्थः। दृष्टिम्। अधो नीचैर्भूम्यां पादाग्र इति यावत्। ददाति। आभाषिताऽऽलापिता सती। आलापम्। न नैव। कुरुते। शय्यायां शेतेऽत्रेति तथोक्तायां, शयनीये पर्य्यङ्कोपरीति यावत्। 'सञ्ज्ञायां समजनि..शीङ्भृञिणः।' ३।३।९९ इति क्यप्, 'अयङ् यि क्ङिति।' ७।४।२२ इत्ययङ्। परिवृत्य। तिष्ठति 'न तु शेते' इति शेषः। बलात्। आलिङ्गिताऽऽलिङ्गनं नीता। वेपते कम्पते। निर्य्यान्तीषु कथमपि विश्वास्य प्राप्य कृतकृत्यतया निवृत्तासु सतीषु। सखीषु। वासभवनाद्रमणगृहात्। 'सखीनामेवानुपद' मिति शेषः। निर्गन्तुं निर्य्यातुम्। एव न तु तत्र स्थातुमपि, किं पुना रन्तुमिति भावः। ईहते चेष्टते। सम्प्रति परिणयोत्तरं कतिपयेषु वासरेष्वेषु व्यतीयमानेषु सत्स्वपीति शेषः। वामतया प्रतिकूलस्वभावतया। एव। प्रीत्यै प्रीतिमाधातुम्। 'क्रियाऽर्थोपपदस्य च कर्मणि स्थानिनः।' २।३।१४ इति चतुर्थी। जाता सम्पद्यते स्मेत्यर्थः। अत्र 'आलाप' मित्यभिधाय 'आलापिते' त्यनभिधानेन 'निर्य्यान्ती' ष्वित्यभिधाय 'निर्य्यान्तु' मित्यनभिधानाच्च प्रक्रमभङ्गः। पद्यं चैतच्छ्रीहर्षदेवस्य। शार्दूलविक्रीडितं छन्दः। तल्लक्षणं चोक्तं प्राक् ॥ ३० ॥'

अथ माने मृदुमुदाहर्त्तुमुपक्रमते-माने इत्यादिना।

माने आग्रहे। मृदुः कोमला। यथा-'सा पत्युः.. इत्यादौ।

**'सा पत्युः प्रथमापराधसमये सख्योपदेशं विना,नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्। स्वच्छैरच्छकपोलमूलगलितैःपर्य्यस्तनेत्रोत्पला बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः॥३१॥'**

**समधिकलज्जावती यथा-'दत्ते सालसमन्थरं...'इत्यत्र श्लोके।**

**अत्र समधिकलज्जावतीत्वेनापि लब्धाया रतिवामताया विच्छित्तिविशेषवत्तया पुनः कथनम्। अथ मध्या-**

**१०४ मध्या विचित्रसुरता प्ररूढस्मरयौवना।**
**ईषत्प्रगल्भवचना मध्यमव्रीडिता मता॥ ८४॥**

---

'**सा** प्रक्रान्तवर्णना। **बाला** बालस्वभावा नायिकेत्यर्थः। **पत्युः**। **प्रथमापराधसमये** प्रथमः प्रथमं ज्ञातोऽसावपराधस्तस्य समयोऽवसरस्तस्मिन्निति तथोक्ते। अत्र सतिसप्तमी। **सख्योपदेशं** सखीकर्त्तृकोपदेशम्। सख्या ओपदेशः आसमन्तादुपदेश इत्योपदेशस्तं तथा। यद्वा-सख्याः कर्म्मेति सख्यम्। 'सख्युर्यः।' ५।१।१२६ इति यः। सख्यमेवोपदेश इति तं तथोक्तम्। सखीकर्म्माभिन्नमुपदेशमित्यर्थः। यद्वा-सख्या भावः सख्यम्। तेन सख्येन (सखीत्वेन) य उपदेशस्तम्। **विना। सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनं** सविभ्रममङ्गवलनावक्रोक्तिसंसूचनमिति तत् तथोक्तम्। विभ्रमेण सहवर्त्ततइति सविभ्रमं यथा भवेत्तथेति भावः। अङ्गस्य भ्रुकुटयादेर्वलना (स्वाभिप्रायाविष्करणार्थम्) चालनमित्यङ्गवलना। असौ च वक्रोक्तयस्ताभिः संसूचनमिति तत्तथोक्तम्। यद्वा-**सख्या**। **विना**। सख्या अभावादिति भावः। **सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनं,** तदभिन्नमित्यर्थः। **उपदेशम्**। इति। **नोनैव**। **जानाति**। **स्वच्छैः**। **अच्छकपोलमूलगलितैरच्छां** अञ्जनपत्ररचनाव्यपगमान्निर्म्मलौ यौ कपोलौ तयोर्मूलं तेन गलितास्तैस्तथोक्तैः। रोदनाधिक्यं सूचयितुम् 'अच्छे'ति विशेषणम्। **लुठल्लोलालकैर्लु**ठन्तो लोला अलका यत्र तैस्तथोक्तैः। **अश्रुभिः**। **पर्य्यस्तनेत्रोत्पला** पर्य्यस्ते अन्धीभूते व्याकुले वा नेत्रोत्पले यस्याः सा तथोक्ता। **केवलम्**। **रोदिति** दुःखं निवेदयते। **एव** न त्वन्यत् कोपनिदर्शनं जनयतीति भावः। इदं च पद्यममरुशतकस्थम्। अत्र शार्दूलविक्रीडितं छन्दः, तल्लक्षणं चोक्तं प्राक्॥ ३१॥'

अथ समधिकलज्जाशीलामुदाहर्त्तुमुपक्रमते-**समधिकलज्जावती**त्यादिना।

**समधिकलज्जावती**। **यथा**। '**दत्ते सालसमन्थरं...**'**इत्यत्र**। **श्लोके**। 'उदाहृत'इति शेषः।

ननु नितान्तमधिका लज्जा रतेः प्रतिकूलेति'रतौ वामे'त्यनेनैव समधिकलज्जावत्या ग्रहणे सिद्धे किमर्थमिदमुदाहरणमित्याशङ्क्याह-**अत्रे**त्यादि।

**अत्र**। **समधिकलज्जावतीत्वेन**। **अपि**। **लब्धाया** उपपन्नायाः। **रतिवामताया** रतौ वामतायाः। **रतिविच्छित्तिविशेषवत्तया** रतेर्विच्छित्तिविशेषश्चमत्कारविशेष इत्यसावस्यामस्तीति तस्यास्तथाभूताया भावस्तत्ता तया तथोक्तया। **पुनः**। **कथनम्**।

एवं मुग्धां निर्वर्ण्य मध्यामपि तथैव निर्वर्णयितुमुपक्रमते-**अथे**त्यादिना।

**अथ**। **मध्या** नातिमुग्धा नातिप्रौढेत्येवं मध्यमतया यौवनं मदनविकारं चाविष्कुर्वाणा नायिकेत्यर्थः। वर्ण्यते-१०४ **मध्या**.. इत्यादिनेति शेषः।

१०४ **विचित्रसुरता** विचित्रमनन्यसदृशं सुरतं विहारविशेषो यस्याः सा तथोक्ता। **प्ररूढस्मरयौवना** प्ररूढे मुग्धाऽपेक्षया सप्रकर्षमाविर्भूते स्मरयौवने यस्याः सा तथोक्ता। स्मरश्च यौवनं चेति स्मरयौवने। तथा च-प्ररूढस्मरा प्ररूढयौवना चेति निष्कृष्टोऽर्थः। अत एव-**ईषत्प्रगल्भवचनेषत्** किञ्चित् मुग्धाऽपेक्षयोत्कृष्टत्वात्प्रौढाऽपेक्षया च न्यूनत्वान्नात्यन्तमिति यावत्प्रगल्भं वचनं भाषणं यस्याः सा तथोक्ता। तथा-**मध्यमव्रीडिता** मध्यमं नातिशयितं नापि तिरोहितं व्रीडितं व्रीडा यस्याः सा तथा। अत्र भावे क्तः। **मध्या**। **मता** 'पूर्वाचार्य्यै'रिति शेषः। एवं च-विचित्रसुरता, प्ररूढस्मरा, प्ररूढयौवनेषत्प्रगल्भवचना तथा या मध्यमव्रीडिता सा मध्या मतेति निष्कृष्टम्। 'अत्र श्लोकश्छन्दः। तल्लक्षणं चोक्तं प्राक्॥ ८४॥

विचित्रसुरता यथा—

'कान्ते ! तथा कथमपि प्रथितं मृगाक्ष्या, चातुर्यमुद्धतमनोभवया रतेषु ।
तत्कूजितान्यनुवदद्भिरनेकवारं शिष्यायितं गृहकपोतशतैर्यथाऽस्याः ॥ ३२ ॥'

प्ररूढस्मरा यथाऽत्रैवोदाहरणे । प्ररूढयौवना यथा मम—

'नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयं, वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः।
कान्तिःकाञ्चनचम्पकप्रतिनिधिर्वाणी सुधास्पन्द्रिनी,स्मेरेन्दीवरदामसोदरवपुस्तस्याःकटाक्षच्छटा॥'

---

अत्राहुः—'मध्या यथा.. "स्वापे प्रियाननविलोकनहानिरेव स्वापच्युतौ प्रियकरग्रहणप्रसङ्गः । इत्थं सरोरुहमुखी परिचिन्तयन्ती स्वापं विधातुमपि हातुमपि प्रपेदे ॥ इति ।'

अथ मध्यामुदाहर्त्तुमुपक्रमते—विचित्र..इत्यादिना । **विचित्रसुरता** तत्स्वरूपा मध्या नायिकेति भावः । **यथा**—'कान्ते..' इत्यत्रेति शेषः ।

'हे **कान्ते** सुन्दरि ! नायकमनोहरणक्षमे ! इति यावत् । **उद्धतमनोभवया**ेद्धत उत्कटो मनोभवः कामो यस्यास्तयेति तथाभूतया । **मृगाक्ष्या** मृगस्येवाक्षिणी नेत्रे यस्यास्तयेति तथोक्तया । **रतेषु** रमणेषु लक्षणया तद्व्यतिकरेष्विति यावत् । अत्र बहुवचनं कपोतानां तथाऽध्ययनयोग्यतां सूचयतीति बोध्यम् । भावे क्तः । **तथा** तेन प्रकारेण । **कथमपि**अत्यल्पव्यवहितत्वेनेति भावः । **चातुर्य्यम्** । चतुराया भाव इति तथोक्तम् । **प्रथितं** ख्यापितम् । **यथा** येन प्रकारेण । **तत्कूजितानि** तान्येव कूजितानि भणितान्यव्यक्तशब्दविशेषा इति तानि तथोक्तानि । **अनेकवार**मसकृत् । अनेके वारा अवसरा यत्र (कर्मणि) इति यथा भवेत्तथेति भावः 'वारः सूर्य्यादिदिवसे वारोऽवसरवृन्दयोः । कुब्जवृक्षे हरे द्वारे वारं मध्यस्य भाजने ॥'इति विश्वः । **अनुवदद्भि**स्तदुत्तरं तथैवोच्चरद्भिः । **गृहकपोतशतै**र्गृहस्य कपोतशतानि तैः । अत्र शतपदं तदगणितत्वबोधनार्थम् । **अस्याः** । **शिष्यायितं** शिष्यवदाचरितम् । इदं पद्यं शृङ्गारतिलके । अत्र च वसन्ततिलकं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ३२ ॥'

प्ररूढस्मराया अप्येतदेवोदाहरणमित्याशयेनाह—**प्ररूढस्मरा** । **यथा** । **अत्रा**स्मिन् । **एव** । **उदाहरणे** 'विचित्रसुरतायाः'इति शेषः । तथा च—'कान्ते...'इत्यस्मिन् विचित्रसुरता यथा वर्णिता तथा प्ररूढस्मराऽपीत्युभयोरेतदुदाहरणमिति निष्कृष्टम् ।

अथ प्ररूढयौवनामुदाहर्त्तुमुपक्रमते—**प्ररूढयौवने**त्यादिना ।

**प्ररूढयौवना । यथा । मम** ग्रन्थकर्तुः । '**नेत्रे...**'इत्यादौ ।

'**खञ्जनगञ्जने** खञ्जनस्य खञ्जरीटस्य पक्षिविशेषस्य, लक्षणया तन्नेत्रयोर्गञ्जनं शब्दो लक्षणया प्रत्याख्यानं याभ्यां ते तथोक्ते । यद्वा—खञ्जनस्य गञ्जने प्रत्याख्यायके इति तथोक्ते । 'खञ्जरीटस्तु खञ्जनः ।' इत्यमरः । 'गजि' शब्दार्थः । गञ्जयत इति गञ्जने, गञ्जत इति वा गञ्जने । गञ्जनशब्दस्य हि प्रसिद्धिस्तिरस्कारे । **नेत्रे** स्त इति शेषः । **सरसिजप्रत्यर्थि** सरसिजयोः कमलयोः प्रत्यर्थि वैरि स्वमहिम्ना तिरस्कारकमिति यावत्, इति तथोक्तम् । **पाणिद्वयं** हस्तयुगलम् । अस्तीति शेषः । **वक्षोजौ** वक्षसो जायेते इति तथोक्तौ, कुचावित्यर्थः । **करिकुम्भविभ्रमकरीं** करिणः कुम्भौ मूर्धांशविशेषौ तयोर्विभ्रमः सादृश्यप्रत्यायनं, तयोः करी तां तथोक्ताम् । **अत्युन्नतिम्** । **गच्छतः** प्रतिपद्येते । **काञ्चनचम्पकप्रतिनिधिः** काञ्चनचम्पकयोः काञ्चनचम्पकस्य वा प्रतिनिधिस्तुल्यस्वरूपत्वेन स्थानमापन्नेति तथोक्ता । स्वच्छपीततया काञ्चनस्य, मार्दवसंवलिततया च चम्पक (पुष्प) स्यानुकारिणीति बोध्यम्, यद्वा—काञ्चनवर्णेतरचम्पकसादृश्यपरिहाराय काञ्चनेति विशिष्याभिधानम् । **कान्तिः** शोभा । अस्तीति शेषः । **सुधास्पन्दिनी** सुधाममृतं स्पन्दयितुं शीलमस्या अस्तीति तथोक्ता । 'स्पर्द्धिनी'ति पाठे तु—सुधायाः स्पर्द्धिनी तिरस्कारिणीत्यर्थः । **वाणी** भाषणम् । तथा—**तस्याः** । 'नायिकाया' इति शेषः । **स्मेरेन्दीवरदामसोदरवपुः** स्मेरं प्रफुल्लं यदिन्दीवरं नीलकमलं तस्य सोदरवपुःसदृशीति तथोक्ता । सोदराया इव वपुर्लक्षणया स्वरूपं यस्याः सेति सोदरवपुः । **कटाक्षच्छटा** कटाक्षयोश्छटा शोभाविशेषः, 'धारे'ति तु तर्कवागीशाः । अस्तीति शेषः । अत्र शार्दूलविक्रीडितं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ३३ ॥'

एवमन्यत्रापि। अथ प्रगल्भा–

१०५ स्मरान्धा गाढतारुण्या समस्तरतकोविदा।
भावोन्नता दरव्रीडा प्रगल्भाऽऽक्रान्तनायका॥ ८५॥

स्मरान्धा यथा–

'धन्याऽसि या कथयसि प्रियसङ्गमेऽपि विश्रब्धचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किञ्चिदपि स्मरामि॥ ३४॥'

---

ईषत्प्रगल्भवचनादेरुदाहरणमप्येवमित्याह–एवं यथा लक्षणानुसारेणात्र विचित्रसुरतादिस्तथेति भावः। अन्यत्रोदाहरणान्तरे। अपि। ईषत्प्रगल्भवचनाया मध्यमव्रीडितायाश्च व्यवस्थोह्येति भावः। अत्र तर्कवागीशाः–'यथा–"सुभग! कुरवकस्त्वं किं ममालिङ्गनोत्कः किमु मुखमदिरेच्छुः केसरो नो हृदिस्थः। त्वयि नियतमशोके युज्यते पादघातः प्रियमिति परिहासात्पेशलं काचिदूचे॥," "किञ्चिदाकुञ्चयत्यास्यं मन्दहासातिसुन्दरम्। दरमुद्रितनेत्रान्ता चुम्बतीशे नितम्बिनी॥" इति।'

अथ प्रगल्भां स्वकीयां नायिकां वर्णयितुमुपक्रमते–अथेत्यादिना।

अथ मध्यावर्णनानन्तरम्। प्रगल्भा वर्ण्यते–१०५ 'स्मरान्धा..' इत्यादिना।

१०५ स्मरान्धा स्मरः कामस्तेनान्धा लक्षणयाऽन्धसदृशी स्थानास्थानसमयासमयादिसमीक्षणायोग्येति यावत्, इति तथोक्ता। गाढतारुण्या गाढं पूर्णं तारुण्यं यस्याः सेति तथोक्ता। समस्तरतकोविदा समस्तान्यनुलोमविलोमादि यावद्भेदानि यानि रतानि सुरतानि तेषां कोविदा पण्डितेति तथाभूता। 'सन् सुधीः कोविदो बुधः।' इत्यमरः। भावोन्नता भावेनाभिप्रायेणोन्नता प्राधान्यं प्राप्तेति तथोक्ता। 'भावः सत्तास्वभावाभिप्रायचेष्टाऽऽत्मजन्मसु।' इत्यमरः। दरव्रीडा दरेषद् व्रीडा लज्जा यस्याः सा तथोक्ता। 'दराव्ययं मनागर्थे' इति मेदिनी। इयमेव स्वल्पव्रीडेत्यपि व्यपदिश्यते। आक्रान्तनायकाऽऽक्रान्तो वशीकृतो नायको यया सा तथोक्ता। प्रगल्भा प्रौढा नायिका। 'मते'ति शेषः॥ ८५॥

अथ तत्र तावत्स्मरान्धामुदाहर्तुमुपक्रमते–स्मरान्धेत्यादिना।

स्मरान्धा। 'प्रगल्भानायिके'ति शेषः। यथा–[1] धन्या.. इत्यादौ।

'हे सखि! धन्या कृतपुण्या। असि 'सा त्व' मिति शेषः। या। प्रियसङ्गमे प्रियस्य प्राणप्रियस्य सङ्गमस्तस्मिंस्तथोक्ते। 'सती'ति शेषः। रतान्तरेषु रतानां सुरतानामन्तराणि मध्यानि तेषु तथोक्तेषु। अपि किं पुनरन्यदा। विश्रब्धचाटुकशतानि विश्रब्धा ये चाटुकाः प्रियवचनानि तेषां शतानि तानि तथोक्तानि। 'चाटुकः प्रियवाक् चाटुः पुंसि प्रेमकथा स्त्रियाम्।' इति गोपालः। कथयसि। प्रियेण प्राणनाथेन। तु पुनः। नीवीं कटिबन्धनग्रन्थिम्। प्रति नेतुमिति शेषः। करे प्रणिहिते प्र–नि–धा–क्तः। यदि। किञ्चित्। अपि। स्मरामि। 'तर्हीं'ति शेषः। सख्याः। अत्र सम्बन्धमात्रविवक्षया षष्ठी। शपामि शपं (शपथं) करोमीत्यर्थः। 'सर्वप्रातिपदिकेभ्यः क्विप् वा।' इति। अन्यथा 'शप उपालम्भ' इत्यात्मनेपद स्यापत्तिः। इदमभिहितम्–प्रियसङ्गम एवालौकिकाह्लाद एतादृशः, येन तन्मन्थरतया किमपि न वक्तुं शक्यं, किं पुना रतेषु, तत्रापि तत्तेषां मध्ये एव, न त्वादावन्ते वेति तानितानि यद्ब्रवीषि तन्नितान्तमाश्चर्यम्, मम तु नीवीं प्रति नेतुं प्रियेण प्रणिहिते करे प्रणिधानविषयीकृत एव नत्वर्पिते न किञ्चिदप्यहं स्मरामि किं पुनश्चाटून् प्रस्तोतुं पारयामीति तवैव शपथपूर्वकं प्रतिजाने। इति। इदं विज्जकायाः पद्यम्। सखीनां मध्ये सुरतावसरे वाह्यकथालापिनीमुद्दिश्योपहसन्त्याः कस्याश्चिदियमुक्तिः। अत्र च वसन्ततिलकं छन्दः, तल्लक्षणं चोक्तं प्राक्॥ ३४॥'

---

१ 'सख्य' इति पाठे तु 'धन्याऽस्ति या कथयती' त्याद्यपादे पठितव्यम्, अन्यथा 'सखी'ति पठितव्ये 'सख्य' इति पाठोऽयुक्त एव स्यात्।

**गाढतारुण्या यथा—**

**"अत्युन्नतस्तनमुरो,नयने सुदीर्घे, वक्रे भ्रुवा, वतितरां, वचनं ततोऽपि।**
**मध्योऽधिकं तनु-रनूनगुरुर्नितम्बो मन्दा गतिः किमपि चाद्भुतयौवनायाः॥ ३५ ॥"**

**समस्तरसकोविदा यथा—**

**"क्वचित्ताम्बूलाक्तः क्वचिदगुरुपङ्काङ्कमलिनः, क्वचिच्चूर्णोद्गारी, क्वचिदपि च सालक्तकपदः।**
**वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः, स्त्रियाः सर्वावस्थं कथयति रतं प्रच्छदपटः ॥३६॥"**

**भावोन्नता यथा—**

---

गाढयौवनामुदाहरति—**गाढतारुण्या** गाढं घनीभूतं पूर्णरूपेण वर्तमानमिति यावत्, तारुण्यं यौवनावस्था यस्याः सेति तथोक्ता । 'प्रगल्भा नायिके' ति शेषः । **यथा—**

"**अद्भुतयौवनाया** अद्भुतं पूर्णतया ( सर्वतोभावेन ) वर्त्तमानतया विस्मयावहं यौवनं यस्यास्तस्याः । अतएव—**अत्युन्नतस्तन**मत्यन्तमुन्नतौ स्तनौ यत्रेति तथोक्तम् । **उरो** वक्षःस्थलम् । **सुदीर्घे** अत्यन्तमायते । **नयने** नेत्रयुगलम्। **वक्रे** कुटिले । **भ्रुवौ** भ्रुकुटी । **ततो** भ्रुवोरपेक्षया । **अपि** । **वचन**म्भाषणम् । वचनविपरिणामेन 'वक्र'मिति योज्यम् । **अधिकम्** । **तनुः** सूक्ष्मः । 'तनुः काये त्वचि स्त्री स्यात्त्रिष्वल्पे विरले कृशे' इति मेदिनी। **मध्यो** मध्यभाग उदरमिति यावत् । 'मध्यमं चावलग्नं च मध्योऽस्त्री'-त्यमरः । **अनूनगुरुर्नो** न्यून इत्यनूनः तादृशोऽसौ गुरुरिति तथोक्तः । 'हीनन्यूनावूनगर्ह्यौ'वित्यमरः । **नितम्बः**कटिपश्चाद्भागः । **किमपि** अनिर्वचनीयमत्यन्तमिति यावत् । इदं क्रियाविशेषणम् । **च** । **मन्दा** सविलासा **गति**र्गमनम् । पद्यमिदं धनिकस्य । वसन्ततिलकं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥"

समस्तरतकोविदामुदाहरन् तस्याः शय्याप्रच्छदपटवर्णनमिषेण विविधसुरताभिज्ञत्वं प्रकटयति—**समस्तरतकोविदा** समस्तानि लक्षणयाऽनेकविधानि यानि रतानि सुरतानि तेषां कोविदा पण्डिता चतुरेति यावत् । "सन् सुधीः कोविदो बुधः ।" इत्यमरः । **यथा—**

"**क्वचित्** कस्मिंश्चिदंशे । **ताम्बूलाक्त**स्ताम्बूलेन लक्षणया चर्वितावशिष्टेनाधरताम्बूलरागेणाक्तो रञ्जित इति तथोक्तः । एतेनाधोवदनाया ऊर्ध्वोत्तम्भितनितम्बाया मार्जारसुरतं सूचितम् । **क्वचित्**ततोऽपरस्मिन्नंशे। **अगुरुपङ्काङ्कमलिनो**ऽगुरुणः कालागुरुचन्दनस्य पयोधरयुगलोपरि चर्चितस्य श्रमाम्बुशबलिततयाऽऽर्द्रतां गतस्य तस्येति यावत् पङ्कस्तस्याङ्काश्चिह्नानि तैर्मलिनः श्यामतां नीतः । एतेनाधोवदनायाः समभावेन स्थिताया धेनुसुरतं सूचितम् । **क्वचित्**तदुभयतोऽपरस्मिन्नंशे । **चूर्णोद्गारी** चूर्णानि स्वभावसुरते लज्जारक्षाऽऽर्थं दीपनिर्वापणार्थं क्षिप्तानि सुरभितानि द्रव्याणि उद्गिरति लक्षणया तथा लक्ष्यमाण इति भावः । एतेन स्वाभाविकसुरतं सूचितम् । **क्वचित्** एभ्योऽप्यपरस्मिन्नंशे । **च** । **सालक्तकपदः** सालक्तकानि, अलक्तकेन सह वर्तन्ते इति तथाभूतानि अलक्तकरागरञ्जितानीति यावत् पदानि लक्षणया तन्न्यासचिह्नानि यत्र तथोक्तः । एतेन सङ्कुचितचरणयुगलाया उत्तानस्थितायाः सुरतं सूचितम् । **अपि** । इदं वैलक्षण्यं सम्भावयति । **वलीभङ्गाभोगै**र्वलीभिस्त्रिवलीभिः लोमरेखाविशेषैरिति यावत्, ( कृता ये ) भङ्गा विच्छित्तयस्तेषामाभोगाः परिपूर्णत्वानि तैस्तथोक्तैः । 'भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये । कौटिल्ये भयविच्छित्त्योः' इति हैमः । "आभोगः परिपूर्णता ।" इत्यमरः । "इत्थम्भूतलक्षणे" २।३।२१ इति तृतीया । एवं च वलीभङ्गाभोगैरुपलक्षित इत्यर्थः । 'क्वचित्' इति शेषः । एतेन अधोवदनसमभावस्थितायाः शय्याऽऽस्तरणे उदरस्थवलीत्रयचिह्नसम्भवात् सुरतविशेषः सूचितः । तथा—**अलकपतितैः** अलकेभ्यश्चूर्णकुन्तलेभ्यः पतितानि स्खलितानि तैस्तथोक्तैः । "अलकाश्चूर्णकुन्तलाः ।" इत्यमरः । **शीर्णकुसुमैः** शीर्णानि सुरतावसरे विमर्देनेतस्ततः परिक्षिप्तानि यानि कुसुमानि पुष्पाणि तैः । "उपलक्षितः" इति शेषः । अत्रापि 'इत्थम्भूतलक्षणे ।' २।३।२१ इति तृतीया । एतेन—नायकोपरि स्थिताया अधोवदनाया अलकेभ्यः कुसुमस्खलनसम्भवात् पुरुषायितं सुरतं सूचितम् । **प्रच्छदपटः** शय्यास्तरणवस्त्रम् । 'निचोलः प्रच्छदपटः ।' इत्यमरः । **स्त्रिया** नायिकायाः । **सर्वावस्थं** सर्वा यावत्-प्रकारा अवस्थाः स्वरूपाणि यस्य तत् । **रतं** सुरतम् । **कथयति** सूचयति । अमरुशतकस्येदं पद्यम् । इदं च कस्याश्चित् प्रातरास्तरणं पश्यतः कस्यापि वचनम् । अत्र शार्दूलविक्रीडितं वृत्तं तल्लक्षणं चोक्तं प्राक् ॥"

भावोन्नतामुदाहरति—**भावोन्नता** भावैश्चेष्टाविशेषैरुन्नता ज्येष्ठेति तथोक्ता । **यथा—**

'मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्जनै, रभसरचितैरङ्गन्यासैर्महोत्सवबन्धुभिः ।
असकृदसकृत्स्फारस्फारैरपाङ्गविलोकितै,-स्त्रिभुवनजये सा पञ्चेषोः करोति सहायताम् ॥३७॥'

दर ( स्वल्प ) व्रीडा यथा-'धन्याऽसि या कथयसि...' इत्यत्रैव । आक्रान्तनायका यथा,-

'स्वामिन् ! भङ्गुरयालकं सतिलकं भालं विलासिन् ! कुरु,
प्राणेश ! त्रुटितं पयोधरतटे हारं पुनर्योजय ।
इत्युक्त्वा सुरतावसानसमये सम्पूर्णचन्द्रानना-
स्पृष्टा तेन तथैव जातपुलका प्राप्तापुनर्मोहनम् ॥ ३८ ॥'

मध्याप्रगल्भयोर्भेदान्तराण्याह—

---

सा प्रकृतवर्णना नायिका । मधुरवचनैर्मिष्टैः कोमलैर्वचनैः । तथा-सभ्रूभङ्गैर्भ्रुवोर्भृकुटयोर्भङ्गः कौटिल्यं तेन सह वर्त्तन्ते इति तथोक्तैः । कृताङ्गुलितर्जनैः कृतान्यङ्गुलितर्जनानि यत्र तैः । अङ्गुलिभिस्तर्जनानीत्यङ्गुलितर्जनानि । रभसरचितैः रभसः प्रमोदस्तेन रचितास्तैः । 'रभसो वेगहर्षयोः' । इति विश्वः । महोत्सवबन्धुभिर्महोत्सवस्य नायकचित्तान्तःप्रमोदाधानस्य बन्धवो लक्षणया तद्वत्सहायकास्तैरिति भावः । अङ्गन्यासैरङ्गानां चरणादीनां न्यासास्तैः । तथा-असकृदसकृद्वारंवारम् । स्फारस्फारैः । अत्र वीप्सायां द्वित्वम् । तथा च-अतिविपुलैरित्यर्थः । 'स्फारस्तु स्फरकादीनां बुद्बुदे विपुलेऽपि च' इति हेमचन्द्रः । अपाङ्गविलोकितैरपाङ्गेन नेत्रान्तेन विलोकितानि विलोकनानि तैः । 'अपाङ्गो नयनस्यान्ते स्याच्चित्रकप्रधानयोः ।' इत्यजयः । अत्र "कर्तृकरणयोस्तृतीया ।" २।३।१८ इति सूत्रेण साधने तृतीया । त्रिभुवनजये त्रिभुवनस्य जयस्तत्र । 'कर्त्तव्य' इति शेषः । पञ्चेषोः पञ्चेषवो वाणा यस्य तस्य, कामदेवस्येत्यर्थः । कामस्य पञ्चेषवस्तु 'उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा । सम्मोहनश्च कामस्य पञ्च वाणाः प्रकीर्त्तिताः ॥' इत्युक्ता अवगम्याः । सहायतां प्रावल्याधानम् । करोति । शृङ्गारतिलकस्येदं पद्यम् । अत्र हरिणी छन्दः, तल्लक्षणं च यथोक्तम्-'हरिणी न्सौ म्रौ स्लौ गृतुसमुद्रऋषयः ।' इति ॥ ३७ ॥'

दर ( स्वल्प )-व्रीडामुदाहरति,-दरव्रीडा । यथा-'धन्याऽसि या कथयसि...॥' इत्यत्र । 'उदाहृते पद्य' इति शेषः । एव 'ज्ञेये'ति शेषः । अत्र हि वक्त्र्याः सुरतावसरे सर्वथा विस्मरणोक्तेर्लज्जायाः स्वल्पत्वम् । इति बोध्यम् ।

अथाक्रान्तनायकामुदाहरति-आक्रान्तनायकाऽऽक्रान्तः सुरतानन्दानुभावनेन वशीकृतो नायको यया सेति तथोक्ता, प्रगल्भा नायिकेत्यर्थः । यथा-

'स्वामिन् ! अलकं केशम् । भङ्गुरय भङ्गुरं कुरु । कुटिलतासम्पादनेन शोभा नयेति भावः । 'भङ्गुरं कुटिले भग्ने' इति गोपालः । हे विलासिन् ! भालं ललाटम् । 'भालो ललाटं निटिल'मिति गोपालः । हे प्राणेश ! प्राणानामीशो नाथ इति तत्सम्बुद्धौ तथोक्त ! त्रुटितं खण्डितमित्यर्थः । हारं मुक्ताऽऽभरणम् । 'हारो मुक्तावली' त्यमरः । पुनः । पयोधरतटे-पयोधरयोः कुचयोस्तटं तत्र, तदुपरीत्यर्थः । योजय संयोजय । इतीत्थेवम् । सुरतावसानसमये सुरतस्यावसानमन्तस्तस्य समयस्तत्र । उक्त्वा 'स्थिते'ति शेषः । सम्पूर्णचन्द्रानना सम्पूर्णः षोडशकलाभिः पूर्णोऽसौ चन्द्रस्तस्येवाननं यस्याः सेति तथोक्ता । सम्पूर्णचन्द्रसाम्याभिधानेनाभिधास्यमानमोहोपस्थितेर्योग्यत्वं व्यज्यते। तेन प्राणेशेनेत्यर्थः। स्पृष्टा करकमलादिना स्पर्शविषयीकृता । तथा 'यथा पूर्वं सुरतावसरे' इति शेषः । एव न त्वन्यथा । पुनः । 'अनुभूतमेव तत् किमपी'ति शेषः । मोहनं मोहम् । भावे ल्युट् । प्राप्ता प्राप्तवतीत्यर्थः । इदं पद्यं शृङ्गारतिलके कस्या अपि स्वात्मनि नितान्तमनुरक्तं नायकं प्रत्युक्तिपरम् । शार्दूलविक्रीडितं च च्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ३८ ॥'

अथ सिंहनिरीक्षणनयेन मध्याप्रगल्भयोर्भेदान्तराणि वक्तुं प्रतिजानीते-मध्याप्रगल्भयोर्मध्यायाः प्रगल्भायाश्चेत्यर्थः । भेदान्तराण्यन्ये निरुक्तेभ्यो विचित्रसुरतादिभ्यो भिन्ना भेदा इति तानि तथोक्तानि । आह ८ ते इत्यादिना

**१०६ ते धीरा चाप्यधीरा च धीराधीरेति षड्विधे ।**

**ते मध्याप्रगल्भे ।**

**तत्र—**

**१०७ प्रियं सोत्प्रासवक्रोक्त्या मध्या धीरा दहेद्रुषा ॥ ८६ ॥**
**धीराधीरा तु रुदितै–रधीरा परुषोक्तिभिः ।**

**तत्र मध्या धीरा यथा—**

**'तदवितथमवादीर्यन्मम त्वं प्रियेति, प्रियजनपरिभुक्तं यद् दुकूलं दधानः ।**

---

**आह—१०६ ते** इत्यादिनेति शेषः ।

**१०६ ते** मध्याप्रगल्भे इत्यर्थः । **धीरा** धैर्यवती । **च** । **अपि** । **अधीरा** धैर्यहीना । **च** । **धीराऽधीरा** किञ्चिद्धैर्यवतीति भावः । **इतीत्येवम्** । **षड्विधे** 'मते' इति शेषः । इदमभिहितम्–मध्या धीरा, मध्याऽधीरा, मध्या धीराधीरा चेति त्रयो मध्याया भेदाः, एवं प्रगल्भा धीरा, प्रगल्भाऽधीरा, प्रगल्भा धीराधीरा चेति पुनः प्रगल्भायाः, सम्मिलितानां चैषां षोढत्वं निर्विचिकित्सितम् ।

कारिकाऽर्थकाठिन्यपरिहारायाह–**ते** 'इत्यस्ये'ति शेषः । **मध्याप्रगल्भे** 'इत्यर्थ' इति शेषः । इति ।

अथ तत्र तावत्त्रिविधाया मध्यायाः पृथक्पृथक्क्रियाऽभिधानेन स्वरूपपार्थक्यं ज्ञापयितुमुपक्रमते–तत्रेत्यादिना ।

**तत्र** तयोः षड्विधयोर्मध्याप्रगल्भयोर्मध्य इत्यर्थः ।

**१०७ मध्या । धीरा** । 'नायिके'ति शेषः । **रुषा** रोषयतीति तथोक्ता, 'इगुपधज्ञाप्रीकिरः कः ।' ३।१।१३५ इति कः । अत एव विवृतं 'रुषेति कर्तृविशेषणम् ।' इति । यद्वा–साधने तृतीया । यद्वा–'इत्थम्भूतलक्षणे ।' २।३।२१ इति तृतीया, तथा च–रुष्यत इति रुट्, तया लक्षितेत्यर्थः । अत्र भावे सम्पदादित्वात् क्विप् । 'कोपक्रोधामर्षरोषप्रतिघारुट्क्रुधौ स्त्रियौ ।' इत्यमरः । अत्रान्त्य एव पक्षो ज्यायान्, अन्यथाऽस्या रोषकर्तृत्वं स्वाभाव्येनोपपद्येतेति बोध्यम् । **सोत्प्रासवक्रोक्त्या** साक्षेपया वक्रोक्त्येत्यर्थः । उत्प्रासनमुत्प्रक्षेपणमुत्प्रासः । उत्–प्र–असु–क्षेपणे इत्यस्माद् भावे घञ् । उत्प्रासेन सहेति, सोत्प्रासाऽसौ वक्रोक्तिस्तयेति तथोक्तया । 'उत्प्रासः परिहासे स्या' दिति गोपालः । **प्रियं** । **दहेल्लक्षणया** दहेदिवेत्यर्थः ॥ अथैवम् **धीराऽधीरा** । मध्या रुषा (रुष्टा सती) इति पूर्वतोऽन्वेति । **तु** । **रुदितै** रोदनै रोदनप्रधानैर्वचोभिरिति यावत् । 'प्रियं दहे' दिति पूर्वतोऽन्वेति । **अधीरा** । 'मध्या रुषा ( रुष्टा सती )' इति पूर्वतोऽन्वेति । **परुषोक्तिभिः** । 'प्रियं दहे' दिति पूर्वतोऽन्वेति ॥ ८६ ॥

इदमवसेयम्–मध्यायाः प्रगल्भाया अपि वा रुष्टत्वं मानावसर एव, मानश्च पत्युः परगामित्वबोधिका चेष्टा । तत्र मध्या धीरोपहासेन वक्रोक्त्या वा कोपं व्यनक्ति, अत एवास्या न परुषोक्तिर्न वा रुदितम्, अधीरा मध्या रुष्टा सती परुषोक्त्या कोपं व्यनक्ति, अत एवास्या अधीरत्वम्, धीराधीरा पुनर्मध्या रुष्टा सती रुदितप्रधानैर्वचोभिः कोपं व्यनक्ति, अत एवास्यास्तदुभयान्तरालावस्थात्वम् । इति ।

अथात्र तावदाद्यामुदाहर्तुमुपक्रमते–तत्रेत्यादिना ।

**तत्र** तासु त्रिविधासु मध्यानायिकासु । **मध्या । धीरा** । 'रुष्टा सती'ति शेषः । **यथा–'तदवितथ..'** इत्यादौ ।

'त्वं 'परिणीते'ति शेषः । **मम** 'परिणेतुर्नायकस्ये'ति शेषः । **प्रिया** प्रेमास्पदम् । 'असी'ति शेषः । 'प्रियो वृद्ध्यौषधौ हृद्ये धव' इति हैमः । **इतीत्येवम्** । **यत्** । 'मामुद्दिश्ये'ति शेषः । **अवादीः** । **तत्** । **अवितथं** न वितथं मिथ्येति तथोक्तं, सत्यमित्यर्थः । वस्तुतस्तु न वितथं मिथ्या यस्मात्तादृशम्, अत्यन्तमसत्यमित्यर्थः । तदेवोपपादयति–**यद्** यत इत्यर्थः । अत एव नात्र पुनरुक्तिः, । **प्रियजनपरिभुक्तं** प्रियजनेन परिभुक्तमिति तत्तथोक्तम् । प्रियजनश्चाहमेवेति सोल्लुण्ठनोक्तिः, प्रियजनेन न तु मयेति तु सत्योक्तिः । **दुकूलं** क्षौममंसोपरि निधेयं वस्त्रमित्यर्थः । 'क्षौमं दुकूल' मित्यमरः । **दधानो** दधदित्यर्थः । 'वसान' इति पाठे त्वाच्छादयन्नित्यर्थः । धाञः शानच् । एतेन

**मदधिवसतिमागाः कामिनां मण्डनश्रीर्व्रजति हि सफलत्वं वल्लभालोकनेन ॥ ७८ ॥'**

**मध्यैव धीराधीरा यथा-**

> **'बाले !, नाथ !, विमुञ्च मानिनि ! रुषं, रोषान्मया किं कृतं,**
> **खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्वेऽपराधा मयि।**
> **तत्किं रोदिषि गद्गदेन वचसा?, कस्याग्रतो रुद्यते,**
> **नन्वेतन्मम, का तवास्मि, दयिता, नास्मीत्यतो रुद्यते ॥ ७९ ॥'**

---

तत्तथाविदित्वं सङ्गच्छते । **मदधिवसतिं** मम (प्रियजनस्य, वस्तुतः-स्वप्रियजनसौभाग्यसूचनेन दुर्भगायमानतां प्रति नेष्यमाणायाः) अधिवसतिरधिवासस्ताम्। अधिवासः प्रधानगृहं, वस्तुतः-कथमपि समयापयापननिकेतनमित्यर्थः। 'अधिवासो मुख्यगृहे रहःस्थाने चे'ति गोपालः । **आगाः** प्राप्तवानसि । अहमेव तव प्रिया, अत एव मया भुक्तत्यक्तं दुकूलं मम प्रीत्यै सन्निकेतमुपेतोऽसि, वस्तुतस्तु-नाहं तव प्रिया, कथमन्यथाऽन्यया भुक्तत्यक्तं दुकूलं परिधायापि तस्याः प्रियत्वं सौभाग्यं च सूचयितुं मामेकान्तवासेन कथमपि समयं यापयन्तीमपि दुःखाकर्तुमुपेतोऽसि, तत्र तव प्रीतिर्निर्व्यलीकेति भावः । एतदेव स्पष्टयति-**हि** यतः-**कामिनां** कामवशंवदानामित्यर्थः । अत एव तथाऽऽचरणं स्थाने इति सूचितम्। **मण्डनश्रीर्म्मण्डनस्य** तादृशदुकूलादिना प्रसाधनस्य श्रीः शोभेति तथोक्ता। **वल्लभालोकनेन** वल्लभानां प्रेयसीनामालोकनं तेन। मादृशीनामालोकनेनैव, तादृशीनां तु सङ्गदानेन सौभाग्यार्पणेनेति भावः। एवं च-मामालोकितुमेव तवागमनम्, अन्यथा किमेतया मयेति सूच्यते। **सफलत्वं** कृतकार्य्यत्वम्। **व्रजति**। 'कामिनो ह्यलङ्कृत्यात्मानं नायिका आलोकयितुं परिभ्रमन्ति।' इति स्वभाव एवैषामिति तात्पर्य्यम्। अत्र सम्बुद्ध्यभावो नितान्तं स्थाने, अत एव कान्तायाः कान्तविषयककोपाभिव्यक्तिः, ततश्च कस्याश्चिदपरस्या दुकूलं वसानं कान्तं प्रति तत्परिणीताया नायिकायाः सोल्लुण्ठनमुक्तिरियम्, अस्याश्च धीरात्वम्। तथाहि-नाहं परिणीताऽपि प्रियात्वेन प्रतिज्ञाताऽपि तव निर्व्यलीकमभिमता प्रिया, प्रिया तु सैव यस्या दुकूलं वसानः स्वां मण्डनश्रीं मन्यसे, अतस्सैव प्रसत्स्यति, नाहम्, अत्रागमनं तु-यदि त्वमपि मम प्रियाऽभविष्यस्तर्हि तवापि तस्या इव दुकूलादिना कृतकृत्योऽभविष्यमिति परस्यामनुरागं सूचयित्वा मां परं सन्तापयितुमेवेति निष्कृष्टम्। पद्यमिदं शिशुपालवधस्य, अत्र च मालिनी छन्दः, तल्लक्षणं यथोक्तम्-'ननमयययुतेयं मालिनी भोगिलोकैः।' इति ॥ ७८ ॥

अथ द्वितीयामुदाहर्त्तुमुपक्रमते-**मध्यैवे**त्यादिना।

हे **बाले** कान्ते! 'बाला त्रुटिस्त्रियोः।'इति मेदिनी। (इति कान्तस्योक्तिः)। हे **नाथ** प्राणनाथ! (इति कान्ताया उक्तिः) । हे **मानिनि**! 'नाहं पत्या रंस्ये'इत्यभिसानवर्तीत्यर्थः। **रुषं** क्रोधं 'नाहं पत्या रंस्य'इत्याग्रहमूलभूताभिमानजन्यनिष्ठुरतामिति यावत् । **विमुञ्च्**ैकपदं त्यज (इति कान्तस्योक्तिः)। **मया**'बालये'ति शेषः । **रोषा**द्रोषं कृत्वा । अत्र ल्यपो लोपे पञ्चमी। **किम्**। 'तवाकार्य्य'मिति शेषः। **कृतम्** (इति कान्ताया उक्तिः)। **अस्मासु**। अत्र बहुत्वं मत्कथनानुसारमवश्यमनुष्ठेयमिति सूचनार्थम् । विषये सप्तमी । **खेदः** 'कृतः'इति लिङ्गव्यत्ययेन पूर्वतोऽन्वेति । (इति कान्तस्योक्तिः)। **मे** मम। 'तेमयावेकवचनस्य।' ८।१।२२ इति मयादेशः। **न** नैव। **भवान्**। **अपराध्यति**। यतः-**सर्वे**। **अपराधाः**। **मयि** मद्विषयाः (इति कान्ताया उक्तिः) । तत्तर्हि यदि नाहं तवापराधं विदध इत्यर्थः। **किं** किमर्थम्। **गद्गदेन**। **वचसा**। **रोदिषि** (इति कान्तस्योक्तिः)? **कस्य**। **अग्रतो**ऽग्रे। **रुद्यते** 'मये'ति शेषः। (इति कान्ताया उक्तिः)। **ननु**। **मम**। 'अग्रत' इति शेषः। **एतत्** 'रुद्यते' इति श्रावणं प्रत्यक्षमित्यर्थः। (इति कान्तस्योक्तिः)। **का** किंसम्बन्धा। **तव**। **अस्मि**अहमित्यर्थः। (इति कान्ताया उक्तिः)। **दयिता** प्रिया। 'त्वमसी'ति शेषः। 'प्रियं हृद्यं मनोहारि दयितं वल्लभं त्रिषु।' इति गोपालः। (इति कान्तस्योक्तिः)। **न** नैव। 'तव दयिते'ति शेषः। **अस्मि**। **इत्यत** इत्यस्मात् कारणात्। 'एवे'ति शेषः। **रुद्यते** रोदनं क्रियते। 'मये'ति शेषः। (इति कान्ताया उक्तिः)। अमरुशतकस्य पद्यमिदम्। अत्र शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ ७९ ॥'

इयमेवाधीरा यथा–

'सार्द्धं मनोरथशतैस्तव धूर्त्त! कान्ता सैव स्थिता मनसि कृत्रिमहावरम्या ।
अस्माकमस्ति नहि कश्चिदिहावकाश–स्तस्मात्कृतं चरणपातविडम्बनाभिः ॥ ८० ॥'

१०८ प्रगल्भा यदि धीरा स्या–च्छन्नकोपाकृतिस्तदा ॥ ८७ ॥
उदास्ते सुरते तत्र दर्शयन्त्यादरान्बहिः ॥

तत्र प्रिये ।

यथा–

'एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरत–स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः ।

---

अथ तृतीयामुदाहर्त्तुमुपक्रमते–इयमित्यादिना ।

इयं मध्या । एव । अधीरा । 'रुषा (रुष्टा सती)' इति शेषः । यथा–'सार्द्धं..' इत्यादौ ।

'हे धूर्त्त! परप्रतारणचतुर । एतेन–मयि परिणीतायामनुकूलायामपि न तवानुरागः, अनुरागः किल परस्यामेवेति तव चरितं स्थाने इति व्यज्यते । मनोरथशतैः । सार्द्धम् । तव । मनसि । सा परकीयेत्यर्थः । एव न त्वहम् । कृत्रिमहावरम्या कृत्रिमा न तु स्वतःसिद्धा ये हावा वक्ष्यमाणलक्षणाः 'स्त्रीणां विलासविव्वोकविभ्रमा ललितं तथा । हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः॥' इत्यमरोक्ताः शृङ्गारभावजाः क्रियास्तै रम्या रमणीयैवेति तथोक्ता । कान्ता सुन्दरी । स्थिता । ननु त्वमपि मम मनसि स्थितैवासीति चेत्तत्राह–इहास्मिंस्तव मनसीत्यर्थः । अस्माकम् । कश्चित् । अवकाशः । नहि नैव । अस्ति । तस्मात् । चरणपातविडम्बनाभिश्चरणपातेन विडम्बना अनुकरणानि क्षमाप्रार्थिवदाचरणानीति यावत्, ताभिस्तथोक्ताभिः । अथ यावद्यदपराद्धं तत्क्षमापय इति यच्चरणयोः प्रणिपत्य मुहुः क्षमाप्रार्थिवदनुकरोषि तेनेति भावः । कृतं पर्य्याप्तमितः परं व्यर्थमित्यर्थः । 'युगपर्य्याप्तयोः कृतम् ।' इत्यमरः । अत्र वसन्ततिलकं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ८० ॥

यथा वा–'जातस्ते निशि जागरो मम पुनर्नेत्राम्बुजे शोणिमा, निष्पीतं भवता मधु प्रविततं व्याघूर्णितं मे मनः । भ्राम्यद्भृङ्गघने निकुञ्जभवने लब्धं त्वया श्रीफलं पञ्चेषुः पुनरेष मां हुतवहक्रूरैः शरैः कृन्तति ॥' इति रसमञ्जर्य्याम् ।

अथ त्रिविधायाः प्रगल्भायास्तिस्रो विधाः पृथक्पृथक्स्वरूपेण निर्देष्टुकामः प्रथमं धीरेति प्रथमां विधामेव निर्दिशति–१०८ प्रगल्भा...इत्यादिना ।

१०८ यदि यदा । प्रगल्भा । धीरा । 'रुषा (रुष्टा)' इति शेषः । स्यात् । तदा । छन्नकोपाकृतिश्छन्नः पिहितः कोपो रोषो यत्र यया वेति, तथाभूताऽऽकृतिर्लक्षणया चेष्टाऽपि यस्यास्तथाभूता । यद्वा-छन्ना कोपाकृतिः कोपस्याकृतिः कोपसूचक आकारो यस्यास्तथाभूता । बहिर्बाह्यात् । आदरानादर–(प्रेम) हेतुकान् व्यवहारानिति भावः । दर्शयन्ती प्रत्यक्षतां नयन्ती सतीति भावः । तत्र तस्मिन् कृतागसि नायक इत्यर्थः । अत्र विषये सप्तमी । तथा च–तद्विषयक इति निष्कृष्टम् । सुरते । अत्रापि विषये सप्तमी । उदास्त उदासीना भवति ।

कारिकायाः कठिनांशं व्याचष्टे–तत्र 'इत्यस्ये'ति शेषः । प्रिये । 'इत्यर्थः' इति शेषः । इति ।

उदाहर्तुमाह–यथा-प्रगल्भा धीरा रुषा (रुष्टा) सती–'एकत्र...' इत्यादौ ।

'दूरतो दूरात् । प्रत्युद्गमात्प्रत्युत्थानात् । एकत्रैकस्मिन् स्थान'इति शेषः । आसनसंस्थितिरासने (शय्योपरि) संस्थितिः (सम्यगुपवेशनम्) इति तथोक्ता । 'आसनेन संस्थिति'रित्येके, 'एकत्रेति । एकस्मिन्नासन आसनस्थितिरुपवेशनसम्बन्धः ।' इति त्वाहुस्तर्कवागीशाः? परिहृताऽपाकृता । ताम्बूलानयनच्छलेन ताम्बूलस्य ताम्बूलपत्रस्य लक्षणया ताम्बूलवीट्या आनयनं तस्य तदेव वा छलं तेनेति तथोक्तेन । रभसाश्लेषो रभसेन वेगेनैकपदं हठेनेति यावत्, हर्षेण वाऽऽश्लेष आलिङ्गनमिति तथोक्तः । 'रभसो वेगहर्षयोः ।' इति विश्वः । अपि । संविघ्नितः

आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्याऽन्तिके,
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः ॥ ८१ ॥

**१०९ धीराऽधीरा तु सोल्लुण्ठ–भाषितैः खेदयत्यमुम् ॥ ८८ ॥**

अमुं नायकम्।

यथा मम–

'अनलङ्कृतोऽपि सुन्दर! हरसि मनो मे यतः प्रसभम्।
किं पुनरलङ्कृतस्त्वं सम्प्रति नखरक्षतैस्तस्याः ॥ ८२ ॥'

**११० वर्जयेत्ताडयेदन्या–**

अन्याऽधीरा।

यथा–'शोणं वीक्ष्य मुखं..' इत्यत्र। अत्र च सर्वत्र 'रुषे' त्यनुवर्तते।

---

सम्यक् प्रतिरुद्धः। अत्र'तत् करोति तदाचष्टे' इति णिच्, ततः निष्ठायां क्तः। **परिजनं** सेवकान्। **अन्तिके** समीपे। 'नायकस्ये'ति शेषः। **व्यापारयन्त्या** तत्तत्कार्येष्वि'ति शेषः। **आलापः** सम्भाषणम्। **अपि**। **न** नैव। **मिश्रितः** 'प्रत्यालापेने'ति शेषः। एवम्–**कान्तं** नायकम्। **प्रत्युपचारतः** प्रत्युपचारात्। उपचारः सेवार्थे तत्तत्कर्म्मानुष्ठानम्। **चतुरया**। **कोपः** परनायिकागमनचिह्नावगमजन्यः क्रोधः। **कृतार्थीकृतः** सफलतां नीतः। 'सम्भोगप्रतिरोधेने'ति शेषः। 'तेनैव कान्तो वशीकृत'इति विवृतिकाराः। अमरुशतकस्येदं पद्यम्, अत्र शार्दूलविक्रीडितं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ८१ ॥'

अथ धीराधीरायाः प्रगल्भाया रुषा (रुष्टा)त्वे स्वरूपं लक्षयति–१०९ **धीराऽधीरे**त्यादिना।

१०९ **धीराधीरा**। **तु** 'प्रगल्भा रुषा (रुष्टा) सती'ति शेषः। **सोल्लुण्ठभाषितैः** सोल्लुण्ठनानि (प्रियवद्भासमानान्यप्रियाणि) यानि भाषितानि तैरिति तथोक्तैः। **अमुं** नायकम्। **खेदयति** खिन्नमनस्कं करोतीत्यर्थः॥ ८८ ॥

कारिकांशकाठिन्यपरिहारायाह–**अमुम्** 'इत्यस्ये'ति शेषः। **नायकम्**। 'इति भावः' इति शेषः।

उदाहर्त्तुमुपक्रमते–**यथे**त्यादिना।

**यथा**। **मम**–'**अनल**.. इत्यादौ।

'हे **सुन्दर**! **यतो** यस्माद्धेतोः। **अनलङ्कृतो** नालङ्कृत इति तथोक्तः। **अपि** **प्रसभं**। बलादिति भावः। 'प्रसभं तु बलात्कारो हठः' इत्यमरः। क्रियाविशेषणमेतत्। **मे** मम। **मन**श्चित्तम्। **हरसि**। **किम्**। **पुनः**। 'चित्र' मिति शेषः। यत्–**सम्प्रति**। **तस्याः**। अत्र नामानुल्लेखस्तन्निन्दनीयत्वज्ञापनार्थः। **नखरक्षतै**र्नखराणां नखानां क्षतान्याघातास्तैः। 'नखोऽस्त्री नखरोऽस्त्रियाम्।' इत्यमरः। **अलङ्कृतो** नितान्तं कृतचिह्नः। **त्वम्**। 'प्रसभं मम मनो हरसी'ति शेषः॥ अत्रोपगीतिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ८२ ॥

अथ प्रगल्भाया अधीरत्वे स्वरूपमाह–११० **वर्जये**दित्यादिना।

११० **अन्याऽधीरा** प्रगल्भा रुपोपलक्षिता सतीति भावः। **वर्जयेत्** स्वसङ्गाद् व्यावृत्तं नायकं कुर्य्यादित्यर्थः। **ताडयेत्** 'पादाघातादिना वा प्रिय' मिति शेषः।

कारिकायाः काठिन्यपरिहारायान्यपदार्थमाह–**अन्या** 'इत्यस्ये'ति शेषः। '**अधीरे**त्यर्थः।' इति शेषः।

उदाहरति–**यथा**–'**शोणं वीक्ष्य मुखं**...' इत्यत्र 'उदाहृते पद्य' इति शेषः।

अथ प्रगल्भाया अपि स्वकीयायाश्छन्नकोपत्वादि सङ्गमयितुमाह–**अत्रे**त्यादि।

**अत्रै**षु १०८ प्रगल्भा.. ११० वर्जये...दन्या 'इत्युक्तेषु सूत्रेष्विति यावत्। **च**। **सर्वत्र**। '**रुषा**' इति। 'पद'मिति शेषः। **अनुवर्त्तते** '१०८प्रिय.. इति सूत्रा'दिति शेषः। तथा च–'रुपोपलक्षिते'ति कर्तृविशेषणत्वेन योज्यमिति निष्कृष्टम्।

११३ प्रत्येकं ता अपि द्विधा ।
कनिष्ठज्येष्ठरूपत्वान्नायकप्रणयं प्रति ॥ ८९ ॥

ता अनन्तरोक्ताः षड्भेदा नायिकाः ।

यथा—

'दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरादेकस्या नयने पिधाय विहितक्रीडाऽनुबन्धच्छलः ।
ईषद्वक्रितकन्धरः सपुलकः प्रेम्णोल्लसन्मानसामन्तर्हासलसत्कपोलफलकां धूर्त्तोऽपरां चुम्बति॥४३॥'

११४ मध्याप्रगल्भयोर्भेदास्तस्माद् द्वादश कीर्त्तिताः ।
मुग्धा त्वेकैव तेन स्युः स्वीयाभेदास्त्रयोदश ॥ ९० ॥

---

एवं मध्याप्रगल्भयोः षड्भेदानभिधायैतेषामपि द्वैविध्यमभिधत्ते,—११३ ताः षड्भेदभिन्ना मध्याप्रगल्भा नायिका इत्यर्थः । अपि । प्रत्येकमेकामेकां प्रति । नायकप्रणयं नायकस्य प्रणयोऽनुरागस्तम् ।' अत्र षष्ठ्यर्थे द्वितीया । 'प्रणयः प्रसरे प्रेम्णी'ति मेदिनी । प्रति । कनिष्ठज्येष्ठरूपत्वात् कनिष्ठं च ज्येष्ठं चेति, ते रूपे यस्य तस्य भावस्तत्त्वं तस्मात्। कनिष्ठमल्पं, ज्येष्ठं महत् । 'कनिष्ठोऽतियुवाल्पयोः ।' इत्यमरः, 'ज्येष्ठः श्रेष्ठे भृशे वृद्धे त्रिषु, मासान्तरे पुमान् ।' इति गोपालः । द्विधा द्विविधाः । अयम्भावः—'नायकप्रणयं प्रती' त्यत्र 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपी' त्यनेन प्रतियोगे षष्ठ्यर्थौ द्वितीया, तथा च—नायकप्रणयस्य प्रत्येकं ( नायिकां नायकां प्रतीति भावः ) कनिष्ठ (अल्प)—त्वाज्ज्येष्ठ ( महत् )—त्वाच्च ताः प्रागुक्ताः षड्विधा अपि नायिका द्विधा भिद्यमाना द्वादशभेदा भवन्तीति ॥ ८९ ॥

कारिकास्थं 'ता' इति पदं व्याचक्षाणस्तत्काठिन्यं परिहरति, ताः । 'इत्यस्ये'ति शेषः । अनन्तरोक्ता नान्तरं व्यवधानं यत्र तद् यथा भवेत्तथोक्ता इति तथोक्ताः । षड्भेदाः । नायिकाः । 'इत्यर्थ' इति शेषः ।

उदाहरति-यथा,—'धूर्त्तः प्रतारणचतुरो नायक इति भावः । एकासनसंस्थिते एकस्मिन् शय्याद्यन्यतमे आसने तदुपरि संस्थिते उपविष्टे । प्रियतमे कनिष्ठाज्येष्ठे इति शेषः । वस्तुतस्तु 'एकासनगे प्रियाप्रियतमे इति पाठः साधीयान्, तत्र प्रिया कनिष्ठा कान्ता, प्रियतमा तु ज्येष्ठा इति विवक्षितस्यार्थस्य स्फुटमुपलब्धेः । दृष्ट्वा विलोक्य । पश्चात् पृष्ठतः । उपेत्य समीपं प्राप्येत्यर्थः । आदरादादरं दर्शयित्वा । एकस्याः 'प्रणयेन कनिष्ठायाः प्रियतमायाः' इति शेषः । नयने नेत्रे । पिधाय करतलाच्छादनेन तिरोधाय । विहितक्रीडाऽनुबन्धच्छलो विहितं कृतं क्रीडानुबन्धः क्रीडाऽनुसार्य्येव च्छलं येन सः । क्रीडामनुबध्नाति इति क्रीडाऽनुबन्धम् । दोषोत्पादेऽनुबन्धः स्यात् प्रकृत्यादिविनश्वरे । मुख्यानुयायिनि शिशौ प्रकृतस्यानुवर्त्तने ॥' इत्यमरः । ईषद्वक्रितकन्धर ईषद्वक्रिता तिर्य्यक्कृता कन्धरा ग्रीवा येन सः । सपुलको रोमाञ्चितशरीरः । प्रेम्णा । उल्लसन्मानसामुल्लसत्सपत्न्यां प्रियतमस्यानुरागहासेन विकसन्मानसं चित्तं यस्यास्ताम् । अत एव-अन्तर्हासलसत्कपोलफलकामन्तर्हासेनान्तरिकेण विकासेन लसन्तौ कपोलफलकौ यस्यास्ताम् । अपरां प्रणयेन ज्येष्ठां प्रियतमामित्यर्थः । चुम्बति । अमरुशतकस्य पद्यमिदम्, अत्र शार्दूलविक्रीडितं छन्दः। तल्लक्षणं चोक्तं प्राक् ॥ ४३ ॥'

एवं स्वकीयाभेदान्निर्दिश्य सन्देहापनयाय सिंहनिरीक्षणन्यायेन तान् स्मारयति,—११४ तस्मात् षड्विधयोः मुग्धाप्रगल्भयोर्नायकप्रेम्णोऽल्पानल्पत्वाभ्यां द्वैविध्याद्धेतोः । मुग्धाप्रगल्भयोर्मुग्धायाः प्रगल्भायाश्चेत्यर्थः । द्वादश । भेदाः । कीर्त्तिताः । मुग्धा । तु पुनः। एका 'भेदान्तरानुपपत्ते'रिति शेषः। एव 'सम्भवती'ति शेषः । तेन 'हेतुने'—ति शेषः । त्रयोदश । स्वीयाभेदाः स्वीयायाः ( स्वकीयाया नायिकायाः ) प्रकारा इत्यर्थः । स्युः ॥ ९० ॥

**११५ परकीया द्विधा प्रोक्ता परोढा कन्यका तथा।**

तत्र-

**११६ यात्राऽऽदिनिरताऽन्योढा कुलटा गलितत्रपा ॥ ९१ ॥**

यथा-

---

अत्राहू रसमञ्जरीकाराः-'एते च धीरादिषड्भेदा द्विविधाः। ज्येष्ठा कनिष्ठा च। धीरा ज्येष्ठा कनिष्ठा च, अधीरा ज्येष्ठा कनिष्ठा च, धीराधीरा ज्येष्ठा कनिष्ठा च, परिणीतत्वे सति भर्त्तुरधिकस्नेहा ज्येष्ठा, परिणीतत्वे सति भर्त्तुर्न्यूनस्नेहा कनिष्ठा। अधिकस्नेहासु न्यूनस्नेहासु च परकीयासु सामान्यवनितासु च नातिव्याप्तिः, परिणीतपदेन व्यावर्त्तनात्। धीरा ज्येष्ठा कनिष्ठा च यथा-"एकस्मिन् शयने सरोरुहदृशोर्विज्ञाय निद्रां तयोरेकां पल्लविताऽवगुण्ठनपटामुत्कन्धरो दृष्टवान्। अन्यस्याः सविधं समेत्य निभृतं व्यालोलहस्ताङ्गुलिव्यापारैर्वसनाञ्चलञ्चपलयन् स्वापच्युतिं क्लृप्तवान् ॥" अधीरा ज्येष्ठा कनिष्ठा च यथा-"अन्तः कोपकषायिते प्रियतमे पश्यन्घने कानने पुष्पस्यावचयाय नम्रवदनामेकां समायोजयत्। अर्द्धोन्मीलितलोचनाञ्चलचमत्काराभिरामाननां स्मेरार्द्धाधरपल्लवां नववधूमन्यां समालिङ्गति॥" धीराधीरा ज्येष्ठा कनिष्ठा च यथा-"धैर्य्याधैर्यपरिग्रहग्रहिलयोरेणीदृशोः प्रीतये रत्नद्वन्द्वमनन्तकान्तिरुचिरं मुष्टिद्वये न्यस्तवान्। एकस्याः कलयन्करे प्रथमतो रत्नं परस्याः प्रियो हस्ताहस्तिमिषात्स्पृशन्कुचतटीमानन्दमाविन्दति ॥" इति।

अत्रेदमवसेयम्-यद्यपि मुग्धाया न भेदावतार इत्येकविधैवासौ, मध्याप्रगल्भे पुनर्धीरा मध्या धीरा प्रगल्भाऽधीरा मध्याऽधीरा प्रगल्भा धीराधीरा मध्या धीराधीरा प्रगल्भा कनिष्ठ (अल्प)-प्रणया धीरा मध्या कनिष्ठप्रणयाऽधीरा मध्या कनिष्ठप्रणया धीराधीरा मध्या ज्येष्ठ (अनल्प) प्रणया धीरा मध्या ज्येष्ठप्रणयाऽधीरा मध्या ज्येष्ठप्रणया धीराधीरा मध्या, कनिष्ठ (अल्प)-प्रणया धीरा प्रगल्भा कनिष्ठप्रणयाऽधीरा प्रगल्भा कनिष्ठप्रणया धीराधीरा प्रगल्भा ज्येष्ठ (अनल्प)-प्रणया धीरा प्रगल्भा ज्येष्ठप्रणयाऽधीरा प्रगल्भा ज्येष्ठप्रणया धीराधीरा प्रगल्भा चेत्येवं स्वीयैकोनविंशभेदा, तथा मुग्धा प्रथमाऽवतीर्णयौवना प्रथमावतीर्णमदनविकारा मृदुमाना समधिकलज्जेत्येवं चतुष्प्रकारा, मध्याप्रगल्भे अप्येवं विचित्रसुरतादिभेदैर्भिद्यमाना धीराऽऽदिप्रभेदैः पुनर्भिन्ना ततोऽप्यधिकभेदेति वक्तुं शक्यते, तथाऽपि मुग्धायाः प्रथमावतीर्णयौवनत्वादिना, मध्याप्रगल्भयोर्विचित्रसुरतत्वादिना च स्वरूपनिरूपणमात्रं न तु भेदनिरूपणं विवक्षितमिति, तथा धीराऽधीराधीराधीराणामेव कनिष्ठप्रणयत्वज्येष्ठप्रणयत्वे, न तु मध्याप्रगल्भेतिभेदभिन्नानामिति स्वीया त्रयोदशभेदैवावतिष्ठते। इति।

एवं स्वकीयायाः स्वरूपनिरूपणपुरःसरं भेदान्निरूप्य परकीयां निरूपयितुमुपक्रमते,-११५ **परोढा** परेणान्येन प्रेमास्पदभिन्नेनेति यावदूढा परिणीतेति तथोक्ता। 'ऊढे' त्यभिधानमात्रेण प्रकरणवशात्स्वेष्टार्थे प्रतिपद्यमानेऽपि 'परोढे' त्यभिधानं तत्स्पष्टताकरणायेति बोध्यम्। **तथा**। **कन्यका**ऽनूढेत्यर्थः। 'कन्या कुमारी'-त्यमरः। एवम्-**परकीया**। **द्विधा**। **प्रोक्ता**। 'आचार्य्यै'-रिति शेषः।

एवं परकीयाया द्वैविध्यं दर्शयित्वा तत्राद्यायाः स्वरूपं दर्शयितुमुपक्रमते,-**तत्र** तयोः परोढाकन्यकयोर्मध्ये इत्यर्थः। ११६ **यात्राऽऽदिनिरता** यात्रेतस्ततः कथमपि गमनं साऽऽदिर्यस्य(द्वारावस्थानगोष्ठीयोजनगवाक्षोपवेशनादेः) तत्र निरता परायणेति तथोक्ता। **कुलटा** पुंश्चली पत्युरन्यत्र प्रेमवतीति यावत्। 'पुंश्चली धर्षणी बन्धक्यसती कुलटेत्वरी' इत्यमरः। **गलितत्रपा** गलिता त्रपा लज्जा यस्याः सा, निर्लज्जेति भावः। **अन्योढा** परोढा ॥ ९१ ॥

उदाहरति-**यथा-स्वामी**... इत्यादौ।

**'स्वामी निःश्वसितेऽप्यसूयति, मनोजिघ्रः सपत्नीजनः, श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः । तद्दूरादयमञ्जलिः, किमधुना दृग्भङ्गिभावेन ते, वैदग्धीमधुर! प्रबन्धरसिक! व्यर्थोऽयमत्र श्रमः॥८४॥'**

**अत्र हि मम परिणेताऽन्नाच्छादनादिदातृतया स्वाम्येव, न तु वल्लभः, त्वं तु वैदग्धीमधुर-प्रबन्धरसिकतया मम वल्लभोऽसीत्यादिव्यङ्ग्यार्थवशादस्याः परनायकविषया रतिः प्रतीयते ।**

---

हे **वैदग्धीमधुर** वैदग्ध्या चातुर्य्येण मधुरो मनोरम इति तत्सम्बुद्धौ तथोक्त ! विदग्धस्य भावः कर्म्म वा वैदग्धी, 'गुणवचनब्राह्मणादिभ्यः कर्म्मणि च ।' ५।१।१२४ इत्यनेन ब्राह्मणादित्वात् ष्यञ्, षित्त्वाच्च ङीष् । 'विदग्ध-श्चतुरेऽत्यन्तं दग्धे च त्रिषु वाच्यवत् ।' इति गोपालः । **प्रबन्धरसिक** प्रबन्धस्य सुरतानुबन्धिव्यापारस्य रसिको मार्म्मिक इति तत्सम्बुद्धौ तथोक्त ! यद्वा—समस्तमिदं पदम् । वैदग्ध्या मधुरो यः प्रबन्धस्तस्य रसिक इति तत्सम्बुद्धौ तथोक्त ! इति । **स्वामी** प्रभुर्न तु प्रियः । एतेन तत्रानुरागाभावो द्योतितः । **निःश्वसिते** निःसारिते श्वासे । 'त्वादृशमवलोक्य हन्त नाहं दैवहतकेनैतस्याङ्कभाजिर्ना कृताऽस्मी'ति चिन्तयाऽन्यथाऽपि चोच्छ्वासपरित्यागे कृत इति यावत् । अपि किं पुनः कमलनिमीलनादिना सङ्केतबोधनादिव्यापार इति भावः । **असूयति** । असू—उपतापे । **सपत्नीजनः** समानः पतिर्यस्याः, सोऽसौ जन इति तथोक्तः । 'नित्यं सपत्न्यादिषु ।' ४।१।३५ इति साधुः । **मनोजिघ्रो** मनश्चित्तं लक्षणया मनोरूपं कुसुमं जिघ्रतीति, मनो जिघ्रति लक्षणया सूक्ष्ममपि तत्सङ्कल्पमनुभवतीति वेति तथोक्तः । मनसा किमियं सङ्कल्पत इति पर्यवेशत इति भावः । **श्वश्रूः** पत्युर्भार्य्या । 'पतिपत्न्योः प्रसूः श्वश्रू' रित्यमरः । **इङ्गितदैवत**मिङ्गितस्याभिप्रायानुकूलचेष्टाया दैवतं विदुषीति तथोक्तम् । **यातरः** पतिभ्रातॄणां भार्य्याः । 'भार्य्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।' इत्यमरः । **नयनयोः। ईहालिह** ईहां चेष्टां लिहन्ति स्वादन्ते लक्षणया नितान्तम-नुभवन्तीति तथोक्ताः । लिह्-क्विप् । मदीयमितस्ततो दृष्टिपातचेष्टां विज्ञातुमेव सक्षणा इति भावः । **तत्**तस्मात् कारणात् । **दूरात्** । एतेन समीपं यातुं नाहं प्रभवामीति व्यज्यते । **अयम्** । **अञ्जलिः** । **अधुना**ऽस्मिन्समये । **ते** तव । **दृग्भङ्गि-भावेन** दृशोर्नेत्रयोर्भङ्गिः कल्लोलो लक्षणया तद्वत्पुनःपुनरुल्लासस्तस्य तेन वा भावोऽभिप्रायावेदनं तेन । **किं** न किमपि सम्पत्स्यत इति भावः । अत एव **अत्रा**स्मिन् मत्प्राप्तिविषये । **अयम्** । **श्रमः** परिश्रमः । **व्यर्थो** निष्फलः । नाहमधुना तव श्रमेण लभ्या, नापि तवाहं मनोरथं पूरयितुं प्रभवामीत्ययमञ्जली परमेश्वराय क्रियते, स एव यदा मयि प्रसत्स्यति तदा कदाचित् त्वया विहरिष्य इति भावः । भिक्षाटनस्य पद्यमिदम् । अत्र शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ ८४ ॥

अथ लक्ष्यं सङ्गमयति—अत्रेत्यादिना ।

**हि** यतः । **अत्र** 'स्वामी...'इत्यस्मिन्नुदाहृते पद्य इति यावत् । 'नायिकोक्तये'ति शेषः । **मम** तवाभिमतादपि सञ्जातपराङ्मुखाया अस्या इत्यर्थः । **परिणेता** पाणिग्रहीता । **अन्नाच्छादनादिदातृतया** भोजनवस्त्रादिदानकर्तृत्व-मात्रेण हेतुनेत्यर्थः । अन्नं भोजनमाच्छादनं वस्त्रम् । **स्वामी** यावत्तस्य दृष्टिविषयाऽस्मि तावन्ममेह निरोधे प्रभुः । **एव । न । तु । वल्लभः** प्रीतिविषयः । **त्वं** ममास्या नयनचकोरचन्द्रः । **तु । वैदग्धीमधुरप्रबन्धरसिकतया** । 'हेतुने'ति शेषः । **मम**ास्यास्त्वचन्द्रचकोरनयनाया इति यावत् । **वल्लभः** प्रियः । **असि । इत्यादिव्यङ्ग्यार्थवशा-**दित्यादि यद् व्यङ्ग्यं तस्यार्थस्य वश आधीन्यं तस्मात् । **अस्या** एवंवादिन्या इत्यर्थः। **परनायकविषया** परो भिन्नः स्वपत्युर्द्वितीयोऽसौ नायक इत्यसावेव विषयो यस्यास्सेति तथोक्ता । **रतिः । प्रतीयते** । अतः 'स्वामी...'इत्येवं वक्त्री परोढा परकीयेति भावः ।

अत्राहू रसमञ्जरीकाराः—'गुप्ताविदग्धालक्षिताकुलटानुशयानामुदिताप्रभृतीनां परकीयायामेवान्तर्भावः । गुप्ता त्रिधा—वृत्तसुरतगोपना, वर्तिष्यमाणसुरतगोपना, वृत्तवर्तिष्यमाणसुरतगोपना च । त्रितयमपि यथा-''श्वश्रूः क्रुध्यतु विद्विषन्तु सुहृदो निन्दन्तु वा यातरस्तस्मिन् किन्तु न मन्दिरे सखि! पुनः स्वापो विधेयो मया । आखोराक्रमणाय कोणकुहरादुत्फालमातन्वती मार्जारी नखरैः खरैः कृतवती कांकां न मे दुर्दशाम् ॥'' विदग्धा च द्विविधा—वाग्विदग्धा,

**११५ कन्या त्वजातोपयमा सलज्जा नवयौवना ।**

**अस्याश्च पित्राद्यायत्तत्वाद् परकीयात्वम् । यथा 'मालतीमाधवा' दौ मालत्यादिः ।**

**११६ धीरा कलाप्रगल्भा स्याद् वेश्या सामान्यनायिका ॥ ९२ ॥**

---

क्रियाविदग्धा च; तत्र वाग्विदग्धा यथा-"निबिडतमतमालवल्लिवल्लीविचकिलराजिविराजितोपकण्ठे । पथिक ! समुचितस्तवात्र तीव्रे सवितरि तत्र सरित्तटे निवासः ॥" क्रियाविदग्धा यथा-"दासाय भवननाथे वदरीमपनेतुमादिशति । हेमन्ते हरिणाक्षी पयसि कुठारं विनिक्षिपति ॥" लक्षिता यथा-"यद्भूतं तद्भूतं यद्भूयास्तदपि वा भूयात् । यद्भवति तद्भवति वा विफलस्तव गोपनायासः ॥" कुलटा यथा-"एते वारिकणान्किरन्ति पुरुषान्वर्षन्ति नाम्भोधराः शैलाः शाद्वलमुद्भमन्ति न सृजन्त्येते पुनर्नायकान् । त्रैलोक्ये तरवः फलानि सुवते नैवारम्भन्ते जनान् धातः ! कातरमालपामि कुलटाहेतोस्त्वया किंकृतम् ॥" अनुशयाना यथा-वर्त्तमानस्थानविघटनेन भाविस्थानाभानशङ्कया स्वानधिष्ठितसङ्केतस्थलं प्रति भर्त्तुर्गमनानुभावेनानुशयाना त्रिधा । प्रत्येकमुदाहरणानि । "समुपागतवति चैत्रे निपतितपत्रे लवङ्गलतिकायाः । सुदृशः कपोलपाली शिवशिव तालीदलद्युतिं लेभे ॥ निद्राळुकेकिमिथुनानि कपोतपोतव्याधूतनूतनमहीरुहपल्लवानि । तत्रापि तानि न वनानि कियन्ति सन्ति खिद्यस्य न प्रियतमस्य गृहं प्रयाहि ॥ कर्णकल्पितरसालमञ्जरीपिञ्जरीकृतकपोलमण्डलः । निष्पतन्नयनवारिधारया राधया मधुरिपुर्निरीक्ष्यते ॥" मुदिता यथा-"गोष्ठेषु तिष्ठति पति-र्बधिरा ननान्दा, नेत्रद्वयस्य च न पाटवमस्ति यातुः । इत्थं निशम्य तरुणी कुचकुम्भसीम्नि रोमाञ्चकञ्चुकमुदञ्चितमाततान ॥" इति ।' अत्र राधिकायाः परकीयात्वं चिन्त्यम् ।

एवं परोढामुदाहृत्य कन्यायाः परकीयायास्तावत्स्वरूपं लक्षयति ११५ **कन्येत्यादिना** ।

११५ **कन्या** । **तु** पुनः । **अजातोपयमा**ऽनूढा । न जात उपयमो विवाहो यस्या इति तथोक्ता । 'विवाहोपयमौ समौ ।'इत्यमरः । **सलज्जा** । **नवयौवना** । अन्यथा सुरतोत्कटाया अभावादिति भावः ।

ननु यदि दयितमेव भवेत् तर्हि कथमियं परकीयेत्याशङ्क्याह-**अस्याश्चेत्यादि** ।

**अस्या** एतस्याः कन्यारूपाया नायिकाया इत्यर्थः । **च** । **पित्राद्यायत्तत्वात्** । **परकीयात्वं** परस्येयमिति बुद्धिविषयात्वमिति भावः । इदमुक्तम्-या काऽपि परिणयात् प्राक् कमपि कामयेत, तस्यास्तदवधि परकीयात्वं, यथा रुक्मिण्याः कियत्समयावधि, पुनः स्वकीयात्वम्, यदि तु साऽनभिमतेन परिणीता तमपि भवेत् तर्हि परोढात्वमेव, यथा गोपवालानां सर्वदैवासां परकीयात्वेनावस्थानात्, इयान् पुनर्विशेषः, प्राक्परिणयात्कन्यात्वे पुनः परोढात्वे । इति ।

उदाहरति-**यथा-'मालतीमाधवा'दौ** । अत्रादिपदं भागवतादिपरम् । **मालत्यादिः** । अत्रादिपदंरुक्मिण्यादिपरम् । 'कन्याः परकीया' इति शेषः । यथा वा-'किञ्चित्कुञ्चितहारयष्टिसरलभ्रूवल्लिसाचिस्मितं प्रान्तभ्रान्तविलोचनद्युतिभुजापर्य्यस्तकर्णोत्पलम् । अङ्गुल्या स्फुरदङ्गुलीयकरुचा गण्डस्य कण्डूयनं कुर्वाणा नृपकन्यका सुकृतिनं सव्याजमालोकते ॥ इति ।

साधारणनायिकां लक्षयति-११६ **धीरेत्यादिना** ।

११६ **धीरा** धैर्य्यवती चतुरा वा । **कलाप्रगल्भा** कलासु परप्रतारणार्थासु नृत्यगानादिषु प्रगल्भा दृढप्रत्यया । **वेश्या** वेशेन नेपथ्येन सम्पादिनीति मेदिनी । **सामान्यनायिका** सामान्या सामान्यतया सर्वेषां भोग्याऽसौ नायिकेति तथोक्ता । **स्यात्** । इदमुक्तम्-धैर्य्यादिगुणविशिष्टत्वे सति वेश्या (नेपथ्येन प्रशस्ता) त्वं सामान्य ( साधारण ) नायिकात्वम् । धैर्य्यादिगुणविशिष्टत्वं च यावद्धनास्त्यनूनत्वे सत्यन्यत्र नायकस्यानुरक्तत्वे चिन्ताऽऽयनात्रिलालम् । अत एव-यदस्याः कदाचिद्दोषप्रदर्शनादि; तद्वस्तुतो व्यलीकं स्वार्थापकर्षोन्नीतं वा इति ॥ ९२ ॥

११७ निर्गुणानापि न द्वेष्टि न रज्यति गुणिष्वपि ।
वित्तमात्रं समालोक्य सा रागं दर्शयेद्बहिः ॥ ९३ ॥
काममङ्गीकृतमपि परिक्षीणधनं नरम् ।
मात्रा निष्क्रामयेदेषा पुनःसन्धानकाङ्क्षया ॥ ९४ ॥
तस्कराः पण्डका मूर्खाः सुखप्राप्तधनास्तथा ।
लिङ्गिनश्छन्नकामाद्या अस्याः प्रायेण वल्लभाः ॥ ९५ ॥
एषाऽपि मदनायत्ता क्वापि सत्यानुरागिणी ।
रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम् ॥ ९६ ॥

---

अथास्याः स्वभावं लक्षयति–११७ निर्गुणानित्यादिना ।

११७ **निर्गुणा**न्निरस्ता गुणा वदान्यत्वाद्यतिरिक्ता धैर्य्यादयो येषां तान् । अत एव–'वित्तमात्रम् ।' इति वक्ष्यते । **अपि** । 'किं पुनरन्यैरपि गुणैस्सम्पन्ना' निति शेषः । **न** । **द्वेष्टि** । **गुणिषु** गुणा वदान्यत्वाद्यतिरिक्ता धैर्य्यशौर्य्यादयः येषां सन्तीति तेषु । अत्र विषये सप्तमी, न त्वनादरे । **अपि** । 'किं पुनर्दोषशालिष्वि' ति शेषः । **न** । **रज्यति** । किन्तु–**वित्तमात्रं** वित्तमेवेति तत्तथोक्तं, केवलं धनमित्यर्थः । केवलशब्देन-दोषादोषहानोपादानापेक्षा निरस्ता । मयूरव्यंसकादित्वादस्वपदविग्रहो बोध्यः । यद्वा-वित्तं धनमेव मात्रं कार्त्स्न्यं कृतार्थताऽवगमकं यस्य तं तथोक्तम् । 'मात्रं कार्त्स्न्येऽवधारणे ।' इत्यमरः । **समालोक्य** । **सा** वेश्येत्यर्थः । **बहि**र्बाह्यमित्यर्थः । **राग**मनुरागम् । **दर्शयेत्** सूचयेत् । **कामं** यथेष्टम् । 'कामं कामाभ्यनुज्ञयोः ।' इति त्रिकाण्डशेषः । **अङ्गीकृतं** स्वानुरागपात्रतयाऽभिमतम् । **अपि** । 'किं पुनरनभिमत' मिति शेषः । **परिक्षीणधनं** परिक्षीणं धनं यस्य तं तथोक्तम् । **नरम्** । **एषा** । **पुनःसन्धानकाङ्क्षया** पुनः सन्धानस्य कालान्तरीणसङ्घटनस्य काङ्क्षा तया । मय्यनुरक्ततया सर्वं मत्सात्द्विधाय क्षीणधनोऽयम्, अथ यद्येनं निष्क्रामयिष्ये तर्हि कथमपीतस्ततो धनमुपार्ज्य त्वरितमेव मामुपगमिष्यतीतीच्छयेति भावः । वेश्यायाः प्रकृतिरेवैषा यत् अनुरक्तमनुरक्तं निष्पीड्य निष्पीड्य परंपरं समीहते, कथमपि पुनरर्जितधनं च तमनुरञ्जयतीति । **मात्रा** जनन्या लक्षणया तद्वदधिकृतया कुट्टिन्या वोपदेशिन्या वेति भावः । **निष्क्रामये**न्निःसारयेत् ॥ एवम्–**अस्या** वेश्याया इत्यर्थः । **प्रायेणा**धिक्येन । 'प्रायश्चानशने मृत्यौ प्रायो बाहुल्यतुल्ययोः ।' इति विश्वः । **तस्कराश्चो**राः । अत्र बहुवचनमेतस्यास्सामान्यरूपेण भोग्यात्वसूचनार्थम्, एवमन्यत्रापि । **पण्डकाः** । षण्डका इति पाठान्तरम् । प (ष)ण्डको वातिकप (ष)ण्डकनामा रोगविशेषः, लक्षणया तद्विशिष्ट इत्यर्थः । अयम्भावः-वेश्यासङ्गिनः प्राय एवंविधै रोगैर्जर्जिताङ्गा भवन्तीति । तल्लक्षणं चोक्तं यथा चरकेण–'वाय्वग्निदोषाद् वृषणौ तु यस्य नाशं गतौ वातिकप (ष) ण्डकः सः ।' इति । **मूर्खा** धर्म्मादिनाशपूर्वकस्वार्थापक्षयचिन्ताशून्याः । **सुखप्राप्तधना** अनायासेन लब्धधनाः । **तथा** । **लिङ्गिनो** लिङ्ग ( वेष ) मात्रेणोपजीविनः । लिङ्गं ब्रह्मचार्य्यादिवेषरूपं चिह्नमेषामस्तीति तथोक्ताः । **छन्नकामाद्या**श्छन्नं प्रच्छन्नरूपेण ये कामयन्ते तथाभूता आद्या येषां ते । अत्राद्यपदं कामसूत्रोक्तेष्ववशिष्टानां वाचकम् । यथोक्तं–'स्वतन्त्रः, पूर्वे वयसि वर्त्तमानो, वित्तवानपरोक्षवृत्तिरधिकरणवानकृच्छ्राधिगतवित्तः, सङ्घर्षवान्, सन्ततायः, सुभगमानी, श्लाघनकः, पण्डकश्च, पुंशब्दार्थी । समानस्पर्धी, स्वभावतस्त्यागी । राजनि महामात्रे, वा सिद्धो, दैवप्रमाणो, वित्ताभिमानी, गुरूणां शासनातिगः, सजातानां लक्ष्यभूतः, सवित्त एकपुत्रो, लिङ्गी, प्रच्छन्नकामः, शूरो, वैद्यश्च ।' इति । **वल्लभाः** प्रियाः । 'भवन्ती'ति शेषः ॥ तथा–**एषा** सामान्यनायिकेत्यर्थः । **अपि** । 'अवस्थामहिम्ना' इति शेषः । **मदनायत्ता** कामाधीना । **क्वापि** कस्मिंश्चित् पुरुषे । **सत्याऽनुरागिणी** सत्या प्रतारणशून्याऽसावनुरागिणीति तथोक्ता । 'भवती'ति शेषः । **रक्ताया**मनुरागिण्याम् । **वा** तथा । **विरक्ताया**मनुरागहीनायाम् । **अस्याम्** । **सुदुर्लभ**मत्यन्तं दुःखेन सम्पादयितुं शक्यम् । **रतं** रमणं लक्षणया तदानन्द इत्यर्थः । अयम्भावः–प्रथमं त्वेषा कदाचिदपि कुत्रचिदनुरागिण्येव न भवति

**पण्डको वातिकपण्डकादिः । छन्नं प्रच्छन्नं ये कामयन्ते ते छन्नकामाः । तत्र रागहीना यथा—लटकमेलकादौ मदनमञ्जर्यादिः । रक्ता यथा—मृच्छकटिकादौ वसन्तसेनादिः ।**

**पुनश्च—**

---

धनार्जनमात्रपरत्वात्, अथ यद्यनुरागिण्यपि स्यात्तदाऽपि किं तेन, न ह्येतस्याः सङ्गः सुलभ उभयलोकभीत्या प्रतिबन्धं नीतत्वात्, ततोऽपि सङ्गे न किञ्चित्सुखम्, पण्डकत्वादिसम्भवात् । इति । यत्तूक्तं टिप्पणीकारैः—'रतमिति । 'रतमस्यां सुदुर्लभमि' त्युक्तिस्तु नितरां जघन्यतमा हरितालपातयोग्या च । शास्त्रस्य वस्तुस्थितिख्यापनमात्रपरतया तदनुमोदनानुपलम्भाच्छिष्टैरनादृतत्वाच्च । अत एव सूत्रकृताऽप्यभिहितम्—'धर्म्ममर्थं च कामं च प्रत्ययं लोकमेव च । पश्यत्येतस्य तत्त्वज्ञो न च रागात्प्रवर्त्तते ॥ अधिकारिवशाद्युक्ता ये चित्रा रागवर्धनाः । तदनन्तरमत्रैव ते यत्नाद्विनिवारिताः ॥ तदेतद्ब्रह्मचर्य्येण परेण च समाधिना । विहितं लोकयात्रायै न रागार्थोऽस्य संविधिः ॥' इति । एवं परकीयाविषयोऽपि जघन्यतम एव । उक्तं च तेनैव—'संदृश्य शास्त्रतो योगान् पारदारिकलक्षितान् । न याति च्छलनां कश्चित्स्वदारान्प्रतिशास्त्रवित् ॥ पाक्षिकत्वात्प्रयोगाणामपायानां च दर्शनात् । धर्म्मार्थयोश्च वैलोम्यान्नाचरेत्पारदारिकम् ॥ तदेतद्दारगुप्त्यर्थमारब्धं श्रेयसे नृणाम् । प्रजानां दूषणायैव न विज्ञेयोऽस्य संविधिः ॥' इति ।' तदेतदन्यथा व्याख्यानेन पाण्डित्यप्रदर्शनमात्रम् । नहि 'सुदुर्लभ' मित्यस्यात्यन्तमुपादेय' मित्यर्थोऽभिप्रेतः कविराजानाम्, 'वित्तमात्रं..' इत्यादिना स्फुटं तत्सम्भोगस्य तुच्छतया प्रदर्शितत्वात् ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥

कारिकांशदुर्बोधतां परिहरति—**पण्डक** इत्यादिना ।

**पण्डकः** 'पण्डकाइति पठित'इति शेषः । **वातिकपण्डकादिः** । 'वातपण्डादि'रिति पाठान्तरम् । अत्रादिपदं बहुवचनबोध्यम् । तेनोपदेशादिग्रहणम् । 'इत्यर्थक'इति शेषः । अयम्भावः—'पण्डका'इति पठितः पण्डकशब्दो वातिकपण्डकार्थको, लक्षणया पुनस्तद्वदर्थकः तत्र प्रत्ययः पुनराद्यर्थमाह । यत्तु—कामसूत्रव्याख्यातृभिः 'पण्डको नपुंसकः । स पुंस्त्वख्यापनार्थं बहु ददाती'त्युक्तम् । तन्न चारु, मूलाभिप्रायाननुसृतत्वात् । तथाहि-'पण्डकश्च पुंशब्दार्थी'ति मूलम्, अत्र पण्डकपुंशब्दार्थिशब्दार्थयोर्विशेष्यविशेषणभावपरिहारकं 'चे'त्यव्ययमन्तराले पठितम् । एतेन पण्डको वातिकपण्डकार्त्तार्थकः, पुंशब्दार्थी पुनः पुंस्त्वमात्रख्यापनार्थी नपुंसकप्राय इति स्पष्टम् । ननु-'पण्डकस्य (वातिकपण्डकस्य रुग्णस्य) किं वेश्यये'ति चेत्? अत्रेयं व्यवस्था-अजितेंद्रियाः खलु वेश्याऽऽदिनिरता भवन्तीति तु विदितचरम्, तत्र ये ह्यल्पधना अल्पाया वा ते तद्वश्विताः प्रथमं सर्वस्वं तदधीनं विधाय विषीदन्तस्ततोऽप्यनिर्विण्णास्तस्करा भवन्ति । केचित्कृपणा धनलोभाद्दुर्भगां भजन्तः पण्डकादिरोगग्रस्ता भवन्ति, ये केचित्सुखप्राप्तधनास्ते यथा भाग्यवशादनायासं प्राप्तधनास्तथैव वेश्यागामिनोऽपि भाग्यवशादेव न तस्करा न वा पण्डकादिरोगार्त्ता भवन्ति । ये मूर्खास्ते विषीदन्तोऽपि पुनःपुनस्तत्र प्रवर्त्तन्त इति च स्पष्टम् । ये लिङ्गमात्रेणोपजीवन्ति, तैर्दारग्रहस्तु लोकभयान्न विधीयते, अतो वेश्यासङ्गेऽपि नितान्तमप्रवृत्तास्ते यथायस्तथा वितरन्ति, किन्तु तस्करतां नावलम्बन्ते । एतादृशा एवान्येऽस्वतन्त्रा वा लोकमान्यास्ते प्रच्छन्नकामाः सङ्कुचितवेश्यासङ्गत्वान्न तस्करताऽऽदिभागिनो भवन्तीति दिक् । **छन्न**'मित्यस्ये'ति शेषः । **प्रच्छन्न**'मित्यर्थ'इति शेषः । **ये** । **कामयन्ते** सुरतमभिलषन्तीत्यर्थः । **ते** । **छन्नकामा**'भवन्ती'ति शेषः । अत्र कर्म्मण्यण् ।

उदाहरति—**तत्रे**त्यादिना ।

**तत्र** तयो रक्ताऽरक्तयोर्मध्य इत्यर्थः । **रागहीना**ऽरक्ता । **यथा-लटकमेलकादौ** आदिपदेन हास्यार्णवादेर्ग्रहणम् । **मदनमञ्जर्यादिः** । आदिपदेन शशाङ्कलेखादेर्ग्रहणम् । **रक्ता** रागयुक्ता । **यथा-मृच्छकटिकादौ** । आदिपदेन मालविकाग्निमित्रादेर्ग्रहणम् । **वसन्तसेनादिः** । आदिपदेनैरावत्यादेर्ग्रहणम् ।

अथ नायिकानामवस्थाभेदेनान्येऽपि भेदा इत्याह-**पुनश्चे**त्यादिना ।

**पुन**र्निरुक्तनयेन नायिकायाः षोडश भेदभिन्नत्वोपपत्त्यनन्तरमित्यर्थः । **च**ापीत्यर्थः ।

११७ अवस्थाभिर्भवन्त्यष्टावेताः षोडशभेदिताः ।
स्वाधीनभर्तृका तद्वत् खण्डिताऽथाभिसारिका ॥ ९७ ॥
कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका ।
अन्या वासकसज्जा स्यात् विरहोत्कण्ठिता तथा ॥ ९८ ॥

---

११७ **एता** निरुक्ता अमी नायिका इत्यर्थः । **षोडशभेदिताः** षोडश भेदा जाता यासां ताः । तारकादित्वादितच् । स्वकीयायास्त्रयोदश भेदाः, परकीयाया द्वौ भेदौ, सामान्यायाः पुनरेक एव भेद इति नायिकायाः षोडशभेदा अवसेयाः । **अवस्थाभिः** स्वाधीनत्वादिहेत्ववसरविशेषैरिति भावः । **अष्टौ** । **भवन्ति** । ताः का इत्यत आह–**स्वाधीनभर्तृका** स्वाधीनो भर्त्ता नायको यस्याः सा तथोक्ता । **तद्वत्** । **खण्डिता** खण्डो भेदः सम्भुक्ताया व्यवच्छेदो जातो यस्याः सेति तथोक्ता । **अथ** । **अभिसारिका**ऽभिसारयत्यभिसरति वा कान्तं सङ्केतस्थलं प्रत्यसाविति तथोक्ता ॥ **कलहान्तरिता** कलहेनान्तरिता नायकविरहितेति, कलह एवान्तरं व्यवधानमिति, तज्जातं यस्या इति वा । **विप्रलब्धा** विप्रलभ्यते स्मेत्यसौ तथोक्ता वञ्चिता । **प्रोषितभर्तृका** प्रोषितो दूरे निवासं प्राप्तो भर्त्ता नायको यस्याः सा तथोक्ता । **अन्या**ऽवरा । **वासकसज्जा** वासकं वासस्थानं सज्जयतीति वासके सज्जा कृतमण्डना वेति तथोक्ता । **तथा** । **विरहोत्कण्ठिता** विरहेणोत्कण्ठिता । **स्यात्** ॥ ९७ ॥ ९८ ॥

इदमवधेयम्-नायिकास्तिस्रः । स्वीया परकीया सामान्या च, तत्र स्वीया, मुग्धा मध्या प्रगल्भा च, अत्र मुग्धैकैव, मध्याप्रगल्भे पुनर्धीराऽधीरा धीराधीरा चेति त्रिस्त्रिर्भिद्येते ता अपि कनिष्ठप्रणया ज्येष्ठप्रणया चेति स्वीया त्रयोदशभेदा । परकीया-कन्या, परोढा चेति द्विभेदा। अथ सामान्यनायिका रक्ताऽरक्ता चेति द्विभेदाऽप्येकैव गण्यते, तस्या उभयविधात्वेऽपि रतेरल्प (तुच्छ) त्वात् । इत्येवं त्रयो भेदा एते तैस्त्रयोदशभेदैः सम्मेलिताः षोडशेति सुव्यक्तम् । एता अपि प्रत्येकमष्टप्रकाराः । तथा च–भर्तुः स्वाधीनत्वावसरे वर्त्तमाना स्वाधीनभर्तृका, खण्डितत्वावसरे खण्डिता, अभिसारित्वावसरेऽभिसारिका, कलहान्तारितत्वावसरे कलहान्तरिता, विप्रलब्धत्वावसरे विप्रलब्धा, प्रोषितत्वावसरे प्रोषितभर्तृका, वासे सज्जकत्वावसरे वासकसज्जा, विरहोत्कण्ठितत्वे पुनर्विरहोत्कण्ठिता । अन्ये तु नायिकानां षोडश भेदानभिधाय स्वीयादीनां प्रथमं भेदान्तरत्रयमभिदधति । अत एव रसमञ्जरीकाराः–एता–(स्वीया परकीया सामान्या चेति त्रिविधाः) अन्यसम्भोगदुःखिता, वक्रोक्तिगर्विता, मानवत्यश्चेति तिस्रो भवन्ति । तत्रान्यसम्भोगदुःखिता यथा-'त्वं दूति ! निरगाः कुञ्जं ननु पापीयसो गृहम् । किंशुकाभरणं देहे दृश्यते कथमन्यथा ॥' वक्रोक्तिगर्विता द्विभेदा, प्रेमगर्विता सौन्दर्य्यगर्विता च । तत्र–प्रेमगर्विता यथा-'वपुषि तव तनोति रत्नभूषां, प्रभुरिति धन्यतमाऽसि किं ब्रवीमि । सखि तनुनयनान्तरालभीरुः कलयति मे न विभूषणानि कान्तः ॥' सौन्दर्यगर्विता यथा-'कलयति कमलोपमानमक्ष्णोः प्रथयति वाचि सुधारसस्य साम्यम् । सखि ! कथय किमाचरामि कान्ते ! समजनि तत्र सहिष्णुतैव दोषः ॥' मानवती यथा–प्रियापराधसूचिका चेष्टा मानः । स च लघुर्मध्यमो गुरुश्च । अल्पापनेयो लघुः । कष्टतरापनेयो मध्यमः । कष्टतमापनेयो गुरुः । असाध्यस्तु रसाभासः । अपरस्त्रीदर्शनादिजन्मा लघुः । गोत्रस्खलनादिजन्मा मध्यमः, अपरस्त्रीसङ्गजन्मा गुरुः । अन्यथासिद्धकुतूहलापनेयो लघुः । अन्यथा वा दशपथाद्यपनेयो मध्यमः । चरणपातभूषणदानाद्यपनेयो गुरुः । अपरस्त्रीदर्शनादिजन्मा यथा-'स्वेदाम्बुभिः क्वचन पिच्छलमङ्गभूमौ शातोदरि क्वचन कण्टकितं चकास्ति । अन्यां विलोकयति भूषयति प्रियेऽपि मानः क्व दास्यति पदं तव तन्न विद्मः ॥' गोत्रस्खलनादिजन्मा यथा–'यद्गोत्रस्खलनं तत्र भ्रमो यदि न मन्यते । रोमालिव्यालसंस्पर्शं शपथं तन्वि ! कारय ।' अपराङ्गनासङ्गजन्मा यथा–'दयितस्य निरीक्ष्य भालदेशं चरणालक्तकपिञ्जरं सपत्न्याः । सुदृशो नयनस्य कोणदेशाः श्रुतिमुक्ताः शिखरोपमा बभूवुः ॥' यभिधाय'एताः षोडशाप्यष्टाभिरवस्थाभिः प्रत्येकमष्टविधाः ।.. 'इत्याद्यभिदधति । इति ।

अथैतासामष्टौ भेदान् क्रमशोऽभिधातुमुपक्रमते-तत्रेत्यादिना ।

तत्र-

**११८ कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकम् ।**
**विचित्रविभ्रमासक्ता सा स्यात्स्वाधीनभर्तृका ॥ ९९ ॥**

यथा-'अस्माकं सखि ! वाससी..' इत्यादि ।

**११९ पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः ।**
**सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता ॥ १०० ॥**

यथा-'तदवितथमवादीः..' इत्यादि ।

---

तत्र तास्वष्टासु मध्य इत्यर्थः-

११८ **रतिगुणाकृष्टो** रतेर्गुणास्तैराकृष्टो वशीकृत इति तथोक्तः । रतेर्गुणाश्च सीत्कारादिनाऽऽमोदप्रमोदाधानहेतुभूता ज्ञेयाः । **कान्तो** नायकः पत्युपपत्यन्यतर इति यावत् । **यदन्तिकं** यस्या अन्तिकं सन्निधानमित्यर्थः । **न। जहाति** परित्यजति। **सा। विचित्रविभ्रमासक्ता** विचित्रा ये विभ्रमा मनोविकारजन्याश्चेष्टाविशेषा लक्षणया सर्वा अपि विलासादिरूपाश्चेष्टास्तैरासक्ता पूर्णा। यद्वा-विचित्रो भूषणाद्यन्तराऽपि कान्तमनोग्राही यो विभ्रमः शोभा तयाऽऽसक्ताऽऽलिङ्गितेति तथोक्ता । 'अथ विभ्रमः । शोभायां संशये हावे'इति हैमः । **स्वाधीनभर्तृका स्यात्** ॥ ९९ ॥

उदाहृतान्येवास्या अप्यवसेयानीत्याशयेनाह-**यथा-'अस्माकं सखि। वाससी...'इत्यादि।** इति । अयम्भावः-यथेदं तथा-'दृष्टादृष्टि...' 'कान्ते तथा...' 'स्वामिन् भङ्गुरया...'इत्याद्युदाहरणमपि बोध्यम्। अत एव रसमञ्जरीकाराः-'मुग्धा स्वाधीनपतिका यथा-'मध्ये न कृशिमा, स्तने न गरिमा, देहे न वा कान्तिमा, श्रोणौ न प्रथिमा, गतौ न जडिमा, नेत्रे न वा वक्रिमा। लास्ये न द्रढिमा, न वाचि पटिमा, हास्ये न वा स्फीतिमा, प्राणेशस्य तथाऽपि मज्जति मनो मय्येव किं कारणम् ॥' मध्या स्वाधीनपतिका यथा-'यदपि रतिमहोत्सवे नकारो, यदपि करेण च नीविधारणानि । प्रियसखि ! पतिरेष पार्श्वदेशं तदपि न मुञ्चति तत्किमाचरामि ॥' प्रौढा (प्रगल्भा) स्वाधीनपतिका यथा-'वक्त्रस्याधरपल्लवस्य वचसो हास्यस्य लास्यस्य वा धन्यानामरविन्दसुन्दरदृशां कान्तस्तनोति स्तुतिम् । स्वप्नेनापि न गच्छति श्रुतिपथं चेतःपथं दृक्पथं काऽप्यन्या दयितस्य मे सखि ! कथं तस्यास्तु भेदग्रहः ॥' परकीया स्वाधीनपतिका[1] यथा-स्वीयाः सन्ति गृहेगृहे मृगदृशो यासां विलासक्वणत्-काञ्चीकुण्डलहेमकङ्कणझणत्कारो न विश्राम्यति । को हेतुः सखि ! कानने पुरपथे सौधे सखीसन्निधौ भ्राम्यन्ती मम वल्लभस्य परितो दृष्टिर्न मां मुञ्चति ॥' स्वाधीनपतिका सामान्यवनिता यथा-'सन्त्येव प्रतिमन्दिरं युवतयो यासां सुधासागर-स्रोतःस्यूतसरोजसुन्दरचमत्कारा दृशो विभ्रमाः । चित्रं किन्तु विचित्र-मन्मथकलावैशद्यहेतोः पुनर्वित्तं चित्तहरं प्रयच्छति युवा मय्येव किं कारणम् ॥'

अथ खण्डितां लक्षयति-११९ **पार्श्वमेती**त्यादिना ।

११९ **अन्यसम्भोगचिह्नितो**ऽन्यस्याः सम्भोगस्तेन चिह्नित इति तथोक्तः । 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः ।' इति पुंवद्भावः । **प्रियो** नायकः । **यस्याः । पार्श्वं** लक्षणया समीपदेशम् । **एति** गच्छति । **सा । ईर्ष्याकषायिते**-र्ष्यया परोपभोगचिह्नावलोकनजन्येनासहिष्णुताहेतुभूतेन मनोविकारविशेषेण कषायिता कलुषितचित्तेति तथोक्ता । **धीरैः। खण्डिता। इती**त्येवम् । **कथिता** । यथोक्तं रसमञ्जरीकारैः-'अन्योपभोगचिह्नितः प्रातरागच्छति पतिर्[2]यस्याः सा खण्डिता । प्रातरित्युपलक्षणम्[3] । अस्याश्चेष्टा अस्फुटालापचिन्तासन्तापनिःश्वासतूष्णीम्भावाश्रुपातादयः ।' इति ॥१००॥

उदाहृतान्येवास्या अप्युदाहरणानीत्याशयेनाह-**यथा-'तदवितथमवादी.' इत्यादि** । इति । अयम्भावः-यथेदं तथा-'सा पत्युः प्रथमा..' 'सुभग ! कुरवकस्त्वं किं ममालिङ्गनोत्कः किमु मुखमदिरेच्छुः केसरो नो हृदिस्थः । त्वयि नियतमशोके युज्यते पादघातः प्रियमिति परिहासात् पेशलं काचिदूचे ॥' 'एकत्रासन..' 'अनलङ्कृतोऽपि' इत्याद्युदाहरणान्तरमपि गवेषणीयम् । इति । अत एव--रसमञ्जरीकाराः-'मुग्धा खण्डिता यथा--

---

१ स्वाधीनः पतिको यस्याः सेति तथोक्ता । पतिक उपपतिः । 'कुत्सिते।' ५।३।७४ इति कः । एवं पुरस्तादपि ।
२ पतिरित्युपपतेरप्युपलक्षणम् । ३ अन्यकालस्येत्यध्याहार्य्यम् ।

१२० अभिसारयते कान्तं या मन्मथवशंवदा ।
स्वयं वाऽभिसरत्येषा धीरैरुक्ताऽभिसारिका ॥ १०१ ॥

क्रमाद् यथा–

'न च मेऽवगच्छति यथा लघुतां, करुणां यथा च कुरुते स मयि ।
निपुणं तथैनमभिगम्य वदे–रभिदूति काचिदिति सन्दिदिशे ॥ ८५ ॥'

'उत्क्षिप्तं करकङ्कणद्वयमिदं बद्धा दृढं मेखला, यत्नेन प्रतिपादिता मुखरयोर्मञ्जीरयोर्मूकता ।
आरब्धे रभसान्मया प्रियसखि! क्रीडाऽभिसारोत्सवे चण्डालस्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः ॥ ८६'

---

'वक्षः किमु कलशाङ्कितमिति किमपि प्रष्टुमिच्छन्त्याः । नयनं नवोढसुदृशः प्राणेशः पाणिना पिदधे ॥' मध्या खण्डिता यथा–'वक्षोजचिह्नितमुरो दयितस्य वीक्ष्य दीर्घं न निःश्वसिति जल्पति नैव किञ्चित् । प्रातर्जलेन वदनं परिमार्जयन्ती बाला विलोचनजलेन तिरोदधाति॥' प्रौढा (प्रगल्भा) खण्डिता यथा–'मामुद्वीक्ष्य विपक्षपक्ष्मलदृशः पादाम्बुजालक्तकैरालिप्ताननमानतीकृतमुखी चित्रार्पितेवाभवत् । रूक्षं नोक्तवती न वा कृतवती निःश्वासकोष्णे दृशौ प्रातर्मङ्गलमङ्गना करतलादादर्शमादर्शयत् ॥' परकीया यथा–'कान्तं निरीक्ष्य वलयाङ्कितकण्ठदेशं मुक्तास्तया परभिया परुषा न वाचः । दूतीमुखे मृगदृशा स्खलदम्बुपूरा दूरात्परं निदधिरे नयनान्तपाताः ॥' सामान्यवनिता खण्डिता यथा-'उरस्तव पयोधराङ्कितमिदं कुतो मे क्षमा ततो मयि निधीयतां वसु पुरा यदङ्गीकृतम् । इति प्रचलचेतसः प्रियतमस्य वारस्त्रिया क्वणत्कनककङ्कणं करतलात्समाकृष्यते ॥' इत्याहुः ।

अथाभिसारिकां लक्षयति– १२० अभिसारयते–इत्यादिना ।

१२० या । **मन्मथवशंवदा** कामार्तेत्यर्थः । 'सती' ति शेषः । **कान्तं** पतिमुपपतिं वा । **अभिसारयते** 'रमणदेशं प्रती' ति शेषः । वाऽथवा । **स्वयम्** । 'ये' ति पूर्वतोन्वेति । **अभिसरति** 'रमणदेशस्य' मिति शेषः । 'कान्त' मिति पूर्वतोऽन्वेति । **एषा** । 'से' ति शेषः । **अभिसारिका** । **धीरैः** । **उक्ता** कथिता । अत्रेदं बोध्यम्-अभिसारयित्र्यभिसारिणी चेति द्विविधाऽभिसारिका । इति ॥ १०१ ॥

उदाहर्तुमुपक्रमते-क्रमादित्यादिना ।

**क्रमाद्** यथानिर्देशमित्यभिप्रायः । **यथा**–'नचेत्यादौ ।

'**स** प्रियः पतिः । 'अय' मिति शेष : । **मे** मम कामार्त्ताया इत्यर्थः । **लघुतां** तुच्छप्रकृतित्वम् । मनागपि कामवेगासहिष्णुतामिति भावः । **न च** नैव । **यथा** येन प्रकारेण । **अवगच्छति** जानाति । **यथा** । **च** । **मयि** । **करुणाम्** । असमयेऽपि रमणे प्रवृत्तिरूपमनुग्रहमिति भावः । **कुरुते** । **एनम्** । 'त' मिति शेषः । **अभिगम्य** सम्मुखमुपेत्य न तु यथाकथमपि सन्देशद्वारेत्यभिप्रायः । **तथा** तेनैव प्रकारेण । **निपुणं** यथा नैपुण्यं सञ्चछेत तथेति भावः । **वदेः** कथय । अत्र विध्यर्थे लिङ् । **इतीत्येवम्** । **अभिदूति** दूत्याः सम्मुखम् । **काचिन्नायिका** । **सन्दिदिशे** स्वाभिप्रायं प्रकाशितवती । शिशुपालवधस्येदं पद्यम् । अत्र प्रमिताक्षरा च्छन्दः । तल्लक्षणञ्च प्रमिताक्षरा सजससैरुदितेति ॥ ८५ ॥'

'हे **प्रियसखि! इदम्** । **करकङ्कणद्वयं** करयोः कङ्कणद्वयं तदाभरणयुग्मम् । अत्र 'कङ्कणं करभूषणम् ।' इत्यमरोक्त्या कङ्कणद्वयमित्येतावत्यभिहिते करपदार्थलाभेऽपि करपदं कङ्कणयोराधारात्मताऽवगमनार्थम् । **उत्क्षिप्तम्**-ऊर्ध्वं न्यस्तम् । येन तयोः सञ्चाराभावे शब्दो माभूदिति भावः । **मेखला** काञ्ची । **दृढं** यथा शिथिला शब्दं न कुर्यादिति भावः । **बद्धा** । **मुखरयोरप्रियशब्दकारिणोः** । अप्रियत्वं च तदानीं तूष्णीम्भावस्यैवाभिमतत्वात् । 'दुर्मुखे मुखराबद्धमुखा' वित्यमरः । **मञ्जीरयोः** पादाङ्गदयोः । 'पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ।' इत्यमरः । **मूकता** वाग्हीनत्वम् । 'अवाचि मूक' इत्यमरः । **यत्नेनात्यन्तमुद्यमेन** । **प्रतिपादिता** सम्पादिता । **रभसाद्वेगात्** । **क्रीडाऽभिसारोत्सवे** क्रीडाया अभिसारोत्सवस्तत्र । **मया** । **आरब्धे** 'सती' ति शेषः । **चण्डाल** उपचारात्तद्वत् क्रूरकर्म्मठः । एतस्य चण्डालसादृश्येनाभिधानं तु स्वानिष्टकारित्वेनैवावसेयम् । **विधुश्चन्द्रः** । **तिमिरावगुण्ठनपटक्षेपं** तिमिरमन्धकारस्तदेवावगुण्ठनमाच्छादनवस्त्रमिति तस्य क्षेपो दूरविधानमिति तम् । **विधत्ते** । अत्र शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं चोक्तं प्राक ॥ ८६ ॥'

१२१ संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा ।
अवगुण्ठनसंवीता कुलजाऽभिसरेद् यदि ॥ ॥
विचित्रोज्ज्वलवेषा तु रणन्नूपुरमेखला ।
प्रमोदस्मेरवदना स्याद्वेश्याऽभिसरेद् यदि ॥१०३॥
मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसञ्चारा स्यात्प्रेष्याऽभिसरेद् यदि ॥१०४॥

तत्राद्ये'उत्क्षिप्तं...'इत्यादौ । अन्ययोरूह्यमुदाहरणम् ।

---

अथाभिसरणक्रममाह–१२१ संलीना इत्यादिना ।

१२१ यदि । कुलजा कुलीना स्वकीयेति यावत् । अभिसरेत् । 'कान्त' मिति शेषः । तदा–स्वेषु स्वकीयेषु । गात्रेषु । संलीना लक्षणया नितान्तं लीनेवेत्यर्थः । 'लज्जये' ति शेषः । मूकीकृतविभूषणा यथा शब्दं न कुर्य्युस्तथा कृतानि भूषणानि यया तादृशीति भावः । अवगुण्ठनसंवीताऽवगुण्ठनेनाच्छादनवस्त्रेण संवीता परिवेष्टिता । अवगुण्ठनं चन्दनादीनामप्युपलक्षकं, तेन चन्द्रिकायां सितं, तमिस्रायां पुनरसितं वसनचन्दनादि-युक्तमिति बोध्यम् । 'स्या'दिति 'अभिसरे' दिति वा शेषः ॥ अथ– यदि । वेश्या सामान्यनायिका । अभिसरेत् । 'कान्त' मिति शेषः । तु तदा । अव्ययानामनेकार्थत्वात् । विचित्रोज्ज्वलवेषा विचित्रो विलक्षणो (चन्द्रिकायां नीलस्तमिस्रायां पुनश्शुक्ल इत्यर्थः) सा उज्ज्वलः प्रकाशमानो वेषो वस्त्रभूषणादिरचना यस्याः सा । रणन्नूपुरमेखला रणन्त्यो नूपुरमेखला यस्याः सा । अत्र नूपुरपदं कङ्कणयोरप्युपलक्षकम् । प्रमोदस्मेर-वदना प्रमोदो धनाप्तिजन्य आनन्दस्तेन स्मेरं सस्मितं विकसितं वा वदनं मुखं यस्याः सा । स्यात् ॥ अथ– यदि । प्रेष्या दासी लक्षणया तद्वत् कामार्त्ततया दीना परकीयेति यावत् । 'स्यात्प्रेष्या'इत्यत्र'परकीये'ति पाठान्तरम् । अभिसरेत् । 'कान्त' मिति शेषः । तदा–मदस्खलितसंलापा मदेन कामक्षोभविशेषेण स्खलिता अव्यवस्थिताः संलापा उच्चारणानि यस्याः सा । विभ्रमोत्फुल्ललोचना विभ्रमेण शृङ्गारजन्यचेष्टाविशेषेणोत्फुल्ले विकसिते लोचने यस्याः सा । आविद्धगतिसञ्चाराऽऽविद्धा कुटिला या गतिर्गमनशैली तया (तदभिन्नः) सञ्चारो यस्याः सा । 'आविद्धं कुटिलं भुग्न'मित्यमरः । यद्वा–आविद्धौ गतिसञ्चारौ यस्याः सेति । सञ्चारो भ्रमणम् स्यात् ॥ १०२ ॥ १०३ ॥

उदाहरति–तत्र तासु मध्ये । आद्ये कुलजे स्वीयापरकीये इत्यर्थः । 'उत्क्षिप्तं...'इत्यादौ । अन्ययोर्वेश्या-कुलजेतरपरोढयोः । उदाहरणम् । ऊह्यं गवेषणीयम् ।

अत्रेदमवधेयम्–स्वकीयाया अभिसारो लज्जयाऽऽलिङ्गित एवेति तया मुखराण्यपि विभूषणानि तथा भ्रियन्ते यथा मूकान्येव स्युः, स्वयं चात्यन्तं सुङ्कुचितावयवयाऽऽच्छादनवस्त्रेणालक्ष्यमाणा च भवति । यद्यसौ चन्द्रिकायामभि-सारिणी तदा श्वेतं चन्दनं श्वेतान्येव वसनानि, हीरकादिप्रधानानि प्रायो भूषणानि स्वीकुरुते, यदि तु तमिस्रायां तदा कस्तूरिकाचन्दनं नीलानि च वसनानि नीलमणिप्रधानानि प्रायो विभूषणानि । अथ यदि वेश्याऽभिसरति तदा लज्जाया असम्पर्कात् प्रमोदोद्रेकाच्च चन्द्रिकायां नीलमणिप्रधानानि मुखरीकृतानि विभूषणानि कस्तूरिकाऽऽलेपनं, तमिस्रायां सितमाल्येपनं मुखरीकृतानि हीरकमुक्ताऽऽद्याभरणानि च स्वीकुरुते स्वयं च शनैःशनैः स्मयमाना सञ्चरति । एवं पुनः परकीयाया मुग्धात्वस्यासम्मतत्वान्मदोद्धतैव सर्वाश्चेष्टा भवन्ति । किन्त्वेतदवश्यं स्मरणीयम्–यदि परकीया महति कुले प्रसूता परिणयेऽधिकृता वा तदा स्वकीयाया इवास्या अपि १२१ संलीना..इत्याद्युक्ताऽवस्था स्यात्, यदि तु प्रेष्यरूपैव तदा–मदस्खलितसंलापा..इत्याद्युक्ता । अत एव कविराजैः 'स्वकीये' त्यनभिधाय

प्रसङ्गादभिसारस्थानानि कथ्यन्ते-

**१२२ क्षेत्रं वाटी भग्नदेवा-लयो दूतीगृहं वनम् ।**
**माऽऽलापं च श्मशानं च नद्यादीनां तटी तथा ॥ १०५ ॥**
**एवङ्कृताभिसाराणां पुंश्चलीनां विनोदने ।**
**स्थानान्यष्टौ तथाध्वान्त-च्छन्ने कुत्रचिदाश्रये ॥ १०६ ॥**

---

'कुलजे' त्यभिहितम् । इति । यत्तूक्तं रसमञ्जरीकारैः-'स्वयमभिसरति प्रियमभिसारयति वा या साऽभिसारिका । अस्याश्चेष्टाः समयानुरूपवेषभूषणशङ्काप्रज्ञानैपुण्यकपटहासादिरूपा इति परकीयाः । स्वीयायास्तु प्रवृत्त एव क्रमः। अलक्ष्यतासम्पादकस्य श्वेताद्याभरणस्य स्वीयाभिसारिकायामसम्भवात्। इति, तन्मन्दम्; स्वकीयाया अपि पितृगेह-स्थाया गुरुजनसन्निहितावस्थानाया वा अभिसरणे तथोपपत्तेः । अत्र रसमञ्जरीकाराः-'मुग्धाऽभिसारिका यथा-'दूती विद्युदुपागता सहचरी, रात्रिः सहस्थायिनी, दैवज्ञो दिशति स्वनेन जलदः प्रस्थानवेलां शुभाम्। वाचं माङ्गलिकीं तनोति तिमिरस्तोमोऽपि झिल्लीरवैर्जातोऽयं दयिताऽभिसारसमयो मुग्धे विमुञ्च त्रपाम् ॥' मध्याऽभिसारिका यथा-'भीताऽसि नैव भुजगात्पथि मद्गुजस्य सङ्गे पुनः किमपि कम्पमुरीकरोषि । अम्भोधरध्वनिभिरक्षुभिताऽसि तन्वि ! मद्वाचि साचिवदनाऽसि किमाचरामि ॥' प्रगल्भाभिसारिका यथा-'स्फुरदुरसिजभारभङ्गुराङ्गी किस-लयकोमलकान्तिना पदेन । अथ कथय कथं सहेत गन्तुं यदि न निशासु मनोरथो रथः स्यात् ॥' परकीयाऽभिसारिका यथा-'रभसादभिसर्तुमुद्यतानां वनितानां सखि ! वारिदो विवस्वान् । रजनी दिवसोऽन्धकारमर्चिर्विपिनं वेश्म विमार्ग एष मार्गः ॥' ज्योत्स्नाऽभिसारिका यथा-'चन्द्रोदये चन्दनमङ्कपेषु विहस्य विन्यस्य विनिर्गतायाः । मनो निहन्तुं मदनोऽपि वाणान्करेण कौन्दान्विभराम्बभूव ॥' तमिस्राऽभिसारिका यथा-'नाम्बुजैर्न कुमुदैरुपमेयं स्वैरिणीजनविलो-चनयुग्मम् । नोदये दिनकरस्य न चेन्दोः केवले तमसि तस्य विकाशः ॥' दिवसाऽभिसारिका यथा-'पल्लीनामधिपस्य पङ्कजदृशां पर्वोत्सवामन्त्रणे जाते सद्मजना मिथः कृतमहोत्साहं पुरः प्रस्थिताः । सव्याजं स्थितयोर्विहस्य गतयोः शुद्धान्त-मन्त्रान्तरे यूनोः स्विन्नकपोलयोर्विजयते कोऽप्येष कण्ठग्रहः ॥' सामान्यवनिताऽभिसारिका यथा-'लोलल्लोलचमत्कृति प्रविलसत्काञ्चीलताझङ्कृति न्यञ्चत्कञ्चुकबन्धुबन्धुरचलद्वक्षोजकुम्भोन्नति । स्फूर्जद्दीधितिविस्फुरद्रतिचलच्चामीकरालङ्कृति क्रीडाकुञ्जगृहं प्रयाति कृतिनः कस्यापि वाराङ्गना ॥' इत्याहुः ।

अभिसारस्थानानि निर्देष्टुं प्रतिजानीते-**प्रसङ्गा**दित्यादिना ।

**प्रसङ्गा**त्प्रसङ्गं प्राप्येत्यर्थः । **अभिसारस्थानानि** । **कथ्यन्ते**-१२२ **क्षेत्र**मित्यादिना ।

१२२ **एवङ्कृताभिसाराणा**मेवं कृत उदाहृतविधिना विहितोऽभिसारो याभिस्तासाम् । **पुंश्चलीनां** पुंसः पत्युश्चलन्ति जारमुपयन्तीति पुंश्चल्यस्तासाम्। एतेन स्वीयाया व्यवच्छेदः सूचितः, तस्या एतादृशस्थानेष्वभि-सरणस्य कादाचित्कत्वात् । अत्र पचादित्वादच्, गौरादित्वात्ङीष् च । **विनोदने** 'विनोदे सति सम्पद्यमान' इति शेषः । **क्षेत्रं** सस्यदेशः । **वाटी** गृहोद्यानम् । **भग्नदेवालयो** भग्नावशेषो देवतानामालयः । देवपदमुपलक्षकं सत्यादीनाम्। **दूतीगृहम्** । दूतीपदं धात्र्याः सख्याः कुट्टिन्याश्चोपलक्षकम्। **वनं** तृणगुल्मादिना गहनो देशः । **च** तथा । **मालापं** मा नास्त्यालापो यत्र त, जनसञ्चाराभावेन निश्शब्दं स्थलमित्यर्थः । **च** । **श्मशानं** लक्षणया तद्वज्जनान्तरभयावहो देशस्तत्र वा कस्यचिन्मृतस्य सूचनार्थं कारितं स्थानमित्यर्थः । **तथा** । **नद्यादीनाम्** । आदिपदेन प्रस्रवणवापीगह्वरादीनां ग्रहणम्। **तटी**। इत्येवम्-**अष्टौ** । **स्थानानि** । 'प्रसिद्धानी' ति शेषः । **तथा** । **कुत्रचिदाश्रये** कुत्रचिदाश्रयो ययोस्ते । **ध्वान्तच्छन्ने** ध्वान्तं च छन्नं (रहः) चेति तथोक्ते। 'छन्नं रहस्छादितयोः।' इति हैमः । यद्वा-तथा (यथा जनान्तरदृष्टिपातो न स्यात्) ध्वान्तेन छन्नस्तत्र । कुत्रचित् । आश्रये देशे । विनोदने 'क्रियमाण' इत्यध्याहृत्य योज्यम् । स्थानान्यष्टौ मुनिः प्राह ध्वान्तच्छन्नं स्थलं तथा । इति पाठान्तरे तु-'एवं प्राहे'ति योज्यम् । अन्यत्स्पष्टम् ॥ १०५ ॥ १०६ ॥

---

१ मालपञ्च इति विवृतिकारसम्मतः पाठः । तथाहि-'मालपञ्च पुष्पोद्यान' मिति विवृतिः। सच-मालानां लक्षणया पुष्पाणां पञ्चोऽभिव्यक्तिर्यस्मात् तादृशः । इति सङ्गमनीयः

**१२३ चाटुकारमपि प्राण-नाथं रोषादपास्य या।**
**पश्चात्तापमवाप्नोति कलहान्तरिताऽस्तु सा ॥ १०७ ॥**

यथा मम तातपादानाम्-

'नो चाटुश्रवणं कृतं न च दृशा हारोऽन्तिके वीक्षितः
कान्तस्य प्रियहेतवे निजसखीवाचोऽपि दूरीकृताः।
पादान्ते विनिपत्य तत्क्षणमसौ गच्छन्मया मूढया
पाणिभ्यामवरुध्य हन्त सहसा कण्ठे कथं नार्पितः ॥ ८७ ॥'

**१२४ प्रियः कृत्वाऽपि सङ्केतं यस्या नायाति सन्निधिम्।**
**विप्रलब्धेति सा ज्ञेया नितान्तमवमानिता ॥ १०८ ॥**

---

अथ कलहान्तरितां लक्षयति-१२३ चाटु..इत्यादिना।

१२३ या। **चाटुकारं** सूनृतवक्तारम्। चाटुं प्रियकथनं करोतीति तम्। **अपि। प्राणनाथं** प्राणस्य जीवितस्य नाथस्तम्। एतेन वस्तुतस्तत्र रोषानौचित्यं प्रेमानुबन्धौचित्यं च सूचिते। **रोषात्। अपास्य** परित्यज्याऽवमान्य वा। **पश्चात्तापं** प्राणनाथापनोदनानन्तरीणं सन्तापमिति भावः। **अवाप्नोति। सा। कलहान्तरिता** कलहेनान्तारिता प्राणनाथतो व्यवहितेति, कलह एवान्तरं तज्जातं यस्याः सेति वा तथोक्ता। **अस्तु** भवेत्। 'लोट् च।' ३।३।१६२ इत्यनेन विध्यर्थे लोट्। 'त्वि'ति पाठान्तरम् ॥ १०७ ॥

उदाहरति-**यथा। मम** विश्वनाथस्य। **तातपादानां** पूज्यानां पितॄणां चन्द्रशेखराणाम्। 'कृता'विति शेषः। कृतिश्च- **'नो चाटु..'** इति पुरस्त्यैवेति बोध्यम्।

**'चाटुश्रवणं** चाटूनां प्रेम्णा क्रियमाणानां प्रार्थनानां श्रवणम्। **नो** नैव। **कृतम्। अन्तिके** समीपे। 'कान्तेन समर्पित' इति शेषः। **हारो** मुक्ताऽऽभरणम्। **च। न। दृशा। वीक्षितः। कान्तस्य** मनोरमस्य। **प्रियहेतवे। निजसखीवाचः। अपि। दूरीकृता** अवज्ञाताः। **तत्क्षणं** रोषसमये। **पादान्ते** पादयोरन्तोऽग्रभागस्तत्रेति तथोक्ते। **विनिपत्य** विशेषेण प्रणम्य। **गच्छन्** 'प्रसादालाभ' इति शेषः। **असौ** कान्तः। **मया। मूढया** कर्त्तव्यविचारहीनया। **पाणिभ्याम्। अवरुध्य** निरुध्य। **हन्त** कष्टम्। **सहसा** वेगेन हर्षेण (रोषपरित्यागेन) वा। **कण्ठे** 'मुक्ताहारव' दिति शेषः। **कथम्। न** नैव। **अर्पितः।** इदं च स्वीयाऽऽदीनां सर्वासां विरहान्तारितानां समम्मुदाहरणं स्थाने। शार्दूलविक्रीडितं च वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥'

अत्र रसमञ्जरीकाराः-'मुग्धा कलहान्तरिता यथा-'अनुनयति पतिं न लज्जमाना, कथयति नापि सखीजनाय किञ्चित्। प्रसरति मलयानिले नवोढा वहति परन्तु चिराय शून्यमन्तः ॥' मध्या कलहान्तरिता यथा-'विरमति कथनं विना न खेदः, सति कथने समुपैतिकाऽपि लज्जा। इति कलहमधोमुखी सखीभ्यो लपितुमनालपितुं समाचकाङ्क्ष ॥' प्रौढा कलहान्तरिता यथा-'अकरोः किमु नेत्रशोणिमानं किमकार्षीः करपद्मतर्जनं वा। कलहं किमधाः क्रुधा रसज्ञे हितमर्थं न विदन्ति दैवदग्धाः ॥' परकीया कलहान्तारिता यथा-'भर्त्तुर्यस्य कृते गुरुर्लघुरभूद्, गोष्ठी कनिष्ठीकृता, धैर्य्यं कोशधनं गतं, सहचरी नीतिः कृता दूरतः। निर्म्मुक्ता तृणवत्त्रपा, परिचिता स्रोतस्विनी विन्दुवत् स क्रोधादवधीरितो हतधिया मातर्वैलीयान्विधिः ॥' सामान्यवनिता कलहान्तरिता यथा-'यत्पङ्केरुहलक्ष्मपाणिकमलं भाग्यालये यद् गुरुर्न्यस्तं वा मम यल्ललाटफलके भाग्याक्षरं वेधसा। तत्सर्वं सखि! यो यथाऽर्थमकरोत्तस्मिन्प्रकोपः कृतो धिङ्मां, धिङ्मम जीवितं, धिगतनुं, (कामं) धिक् चेष्टितं धिग् वयः ॥' इत्याहुः ॥

विप्रलब्धां लक्षयति-१२४ प्रिय इत्यादिना।

१२४ **प्रियः। सङ्केतं** निश्चयं 'तत्र त्वया विहरिष्यामी'ति प्रतिज्ञामिति यावत्। **कृत्वा। अपि। यस्याः। सन्निधिं** समीपम्। **न। आयाति। सा। नितान्तमत्यन्तम्। अवमानिताऽवमानास्पदतां** नीता। **विप्रलब्धा** विशेषेण प्रलब्धा वञ्चितेति तथोक्ता। **इतीत्येवं** ख्यातेत्यर्थः। **ज्ञेया** ॥ १०८ ॥

यथा—'उत्तिष्ठ दूति ! यामो यामो यातस्तथाऽपि नायातः ।
याऽतः परमपि जीवेज्जीवितनाथो भवेत्तस्याः ॥ ४८ ॥'

१२५ नानाकार्य्यवशाद् यस्या दूरदेशं गतः पतिः ।
सा मनोभवदुःखार्त्ता भवेत्प्रोषितभर्तृका ॥ १०९ ॥

यथा—

'तां जानीयाः परिमितकथां जीवितं मेऽद्वितीयं दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।

---

उदाहरति–यथा-'उत्तिष्ठ...इत्यादौ ।

'हे दूति ! उत्तिष्ठ । यामो गच्छामः 'स्वस्थान'मिति शेषः । यामः प्रहरमितः कालः । यातो व्यतीतः । तथाऽपि तदपि । 'कान्त'इति शेषः । न । आयातः प्राप्तः । या । अतोऽस्मात् प्रहरपर्य्यन्तमपेक्षणात् । परमनन्तरम् । अपि । जीवेत् । अत्र सम्भावनायां लिङ् । तस्याः । जीवितनाथो जीवितस्य नाथो रक्षकः स्वामी चेति तथोक्तः । भवेत् स्यात् । नातः परं मम जीवनमिति चिराय तेन शून्या भवामीति भावः । आर्या छन्दस्तल्लक्षणं चोक्तं प्राक् ॥ ४८ ॥'

अत्र रसमञ्जरीकाराः–'मुग्धा विप्रलब्धा यथा–'आलीभिः शपथैरनेककपटैः कुञ्जोदरं नीतया शून्यं तच्च निरीक्ष्य विक्षुभितया न प्रस्थितं, न स्थितम् । न्यस्ताः किन्तु नवोढनीरजदृशा कुञ्जोपकण्ठे रुषा ताम्यद्भृङ्गकदम्बडम्बरचमत्कारस्पृशो दृष्टयः ॥' मध्या विप्रलब्धा यथा–'सङ्केतकेलिगृहमेत्य निरीक्ष्य शून्यमेणीदृशो निभृतनिःश्वसिताधरायाः । अर्धाक्षरं वचनमर्धविकाशि नेत्रं ताम्बूलमर्धकवलीकृतमेव तस्थौ ॥' प्रौढा विप्रलब्धा यथा–'शून्यं कुञ्जगृहं निरीक्ष्य कुटिलं विज्ञाय चेतोभुवं, दूती नापि निवेदिता, सहचरी पृष्टाऽपि नो वाऽनया । शम्भो ! शङ्कर ! चन्द्रशेखर ! हर ! श्रीकण्ठ ! शूलिन् ! शिव ! त्रायस्वेति परन्तु पङ्कजदृशा भर्गस्य चक्रे स्तुतिः ॥' परकीया विप्रलब्धा यथा–'दत्त्वा धैर्य्यभुजङ्गमूर्ध्नि चरणावुल्लङ्घ्य लज्जानदीमङ्गीकृत्य घनान्धकारपटलं तन्व्या न दृष्टः प्रियः । सन्तापाकुलया तया च परितः पाथोधरे गर्जति क्रोधाक्रान्तकृतान्तमत्तमहिषभ्रान्त्या दृशौ योजिते ॥' सामान्यवनिता विप्रलब्धा यथा–'कपटवचनभाजा केनचिद्वारयोषा सकलरसिकगोष्ठीवञ्चिका वञ्चिताऽसौ । इति विहसति रिङ्गद्भृङ्गविक्षिप्तचक्षुर्विकचकुसुमकान्तिच्छद्मना केलिकुञ्जः ॥' इत्याहुः ।

अथ प्रोषितभर्तृकां लक्षयति–१२५ नाना..इत्यादिना ।

१२५ नानाकार्य्यवशादनेककार्य्याधीनतया । इदमुपलक्षणं शापादेः । दूरदेशं सन्निधानाभावमिति भावः । गतः । यस्याः । पतिः । इदमुपलक्षणमुपपतेर्ज्जारस्य च । सा । मनोभवदुःखार्त्ता मनोभवस्य कामस्य दुःखं तेनार्त्तेति तथोक्ता । प्रोषितभर्तृका प्रोषितः प्रवासं गतो भर्त्ता भर्तृको वा यस्याः सा तथोक्ता । भवेत् ॥ १०९ ॥

उदाहरति–यथा-'तां जानीयाः..' इत्यादिना ।

'सहचरे सह चरति गच्छतीति तथोक्ते । सहभोगिनीति भावः । एतेन वियोगासहत्वं सूचितम् । मयि तन्नायके यक्ष इत्यर्थः । दूरीभूते साहचर्य्यतो निवृत्ते सतीत्यर्थः । सहचरे (चक्रवाके) दूरीभूते–चक्रवाकीं चक्रवाकस्त्रियं ताम् । 'जातेरस्त्रीविषयादयोपधात् ।' ४।१।६३ इति ङीष् । इव । एकामेकाकिनीम् । परिमितकथां परिमिता कथा जीवनवार्त्ता यस्यास्ताम्, मृतप्रायामिति भावः । तां, निर्दिष्टस्वरूपाम् । मे मम । अद्वितीयमभिन्नम् । जीवितं जीवनम् । जानीयाः । यथा सा मां विना परिमितकथा तथा तां विनाऽहमपि परिमितकथ एवास्मीति सा मम

गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम्॥४९॥'

१२६ कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि ।
साऽसौ वासकसज्जा स्याद्विदितप्रियसङ्गमा ॥ ११० ॥

यथा-राघवानन्दानां नाटके-

'विदूरे केयूरे कुरु, करयुगे रत्नवलयैरलं, गुर्वी ग्रीवाऽऽभरणलतिकेयं किमनया ।

---

जीवनमेवेति त्वं जानीया इति भावः। **एषु** । **गुरुषु** । **दिवसेषु** । **गच्छत्सु** व्यतियत्सु सत्सु। **गाढोत्कण्ठां** गाढा नितान्तं दुःसहा प्रवृद्धा वोत्कण्ठा 'रागे त्वलब्धविषये वेदना महती तु या। संशोषिणी च गात्राणां तामुत्कण्ठां विदुर्बुधाः॥' इत्युक्तलक्षणा मद्विरहनिवेदिता चिन्ता यस्यास्ताम् । प्रकृतितश्च-**बालां** वेदनां सोढुमसमर्थां कोमलाङ्गीं नायिकामिति भावः । **शिशिरमथितां** शिशिरेण शिशिरभवहिमोपद्रवोद्रेकेण (गजेंद्रेणेव) मथिता ताम् । **पद्मिनीं** कमलिनीं सरसीं वा । 'पद्मिनी योषिदन्तरे । अब्जेऽब्जिन्यां सरस्यां चे'ति हैमः । व (वा) इवेत्यर्थः । 'व वा यथा तथैवैवं साम्य' इत्यमरः । **अन्यरूपा**मन्यत् पूर्वावस्थातो भिन्नं रूपं यस्यास्ताम्। **जातां** । **मन्ये** तर्कयित्वा निश्चिनोमि। एवं च तस्याः साम्प्रतमन्यविधामालक्ष्य न त्वया भ्रमितव्यमिति मेघं दूतत्वेन कल्पयित्वा संदिशतो यक्षस्योक्तिः । पद्यं चैतन्मेघदूतस्थम् । मन्दाक्रान्ता छन्दः, तल्लक्षणं च यथोक्तं । 'मदाक्रान्ता म्भौ न्तौ त्गौ ग् समुद्रर्तुस्वराः ।' इति ।

यथा चाऽऽह रसमञ्जरीकाराः 'मुग्धा-प्रोषितभर्तृका यथा-'दुःखं दीर्घतरं वहन्त्यपि सखीवर्गाय नो भाषते शैवालैः शयनं सृजन्त्यपि पुनः शेते न वा लज्जया। कण्ठे गद्गदवाचमञ्चति दशा धत्ते न वाष्पोदकं सन्तापं सहते यदाम्बुजमुखी तद्वेद चेतोभवः ॥' मध्या प्रोषितभर्तृका यथा-'वासस्तदेव वपुषो, वलयं तदेव हस्तस्य, सैव जघनस्य च रत्नकाञ्ची। वाचालभृङ्गसुभगे सुरभौ समस्तमद्याधिकं भवति ते सखि! किं निदानम् ॥' प्रौढा प्रोषितभर्तृका यथा-'माला बालाऽम्बुजदलमयी मौक्तिकी हारयष्टिः, काञ्ची याते प्रभवति हरौ सुभ्रुवः प्रस्थितैव । अन्यद् ब्रूमः किमिह धमनी वर्त्तते वा न वेति ज्ञातुं बाहोरहह वलयं पाणिमूलं प्रयाति ॥' परकीया प्रोषितभर्तृका यथा-'श्वश्रूः पद्मदलं ददाति, तदपि भ्रूसञ्ज्ञया गृह्यते, सद्यो मर्मरशङ्कया न च तया संस्पृश्यते पाणिना। याञ्चुर्वीचि सुहृद्गणस्य वचसि प्रत्युत्तरं दीयते, श्वासः किन्तु न मुच्यते हुतवहक्रूरः कुरङ्गीदृशा ॥' सामान्यवनिता प्रोषितभर्तृका यथा-'विरहविदितमन्तः प्रेम विज्ञाय कान्तः पुनरपि वसु तस्मादेत्य मे दास्यतीति । मरिचनिचयमक्ष्णोर्न्यस्य वाष्पोदविन्दून् विसृजति पुरयोषिद् द्वारदेशोपविष्टा ॥' इति ।'

वासकसज्जां लक्षयति-१२६ **कुरुत** इत्यादिना ।

१२६ **वासवेश्मनि** निवासस्थाने । **सज्जिते** शोभां नीते शय्याऽऽकल्पनप्रदीपज्वालनवितानविधानादिभिः परिष्कृत इति यावत् । **यस्याः** । 'सखी'ति शेषः । 'या चे'ति पाठे तु न 'सखी'त्यध्याहार्य्यम् । **मण्डनं** भूषाऽऽकल्पनाम् । **कुरुते** विरचयति । **सा** । **असौ** । 'त्वि'ति पाठे तु'पुन'रित्यर्थः । **विदितप्रियसङ्गमा** विदितो ज्ञातः प्रियसङ्गमो विलम्बेन भावी प्रियेण सह संयोगो यया सा । अत एव-**वासकसज्जा** वासके वासभवने सज्जा प्रियेण रमणयुद्धार्थं सज्जा सन्नद्धेति, वासकं वा सज्जयतीति वा तथोक्ता । वास एव वासकः । 'सन्नद्धो वर्म्मितः सज्ज'इत्यमरः । 'षस्ज'गतौ, अच्, टाप् । **स्यात्** । ॥ ११० ॥

उदाहरति-**यथा-राघवानन्दानाम्** । अत्र सम्बन्धसामान्यविवक्षया षष्ठी । **नाटके** नाटकीये । 'विदूरे....' इत्यत्र इत्यर्थः ।

'अयि ! । **केयूरे** अङ्गदे बाह्वाभरण इति यावत् । 'केयूरमङ्गदं तुल्ये'इत्यमरः । **विदूरे** नितान्तं दूरे । **कुरु** । **करयुगे** करयोर्लक्षणया करमूलयोर्युगं द्वन्द्वं तत्र । **रत्नवलयै** रत्नजटितैरपि कङ्कणैरित्यर्थः । **अलम्** । **इयम्** । **ग्रीवाऽऽभरणलतिका** ग्रीवाऽऽभरणमेव लतिका लतेति तथोक्ता । एतेनायुक्तत्वमप्यावेद्यते । **गुर्वी** । अतः-**अनयै**-

नवामेकामेकावलिमयि मयि त्वं विरचये-र्न नेपथ्यं पथ्यं बहुतरमनङ्गोत्सवविधौ ॥ ५० ॥'

१२७ आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः ।
तदनागमदुःखार्त्ता विरहोत्कण्ठिताऽस्तु सा ॥ १११ ॥

यथा-

'किं रुद्धः प्रियया कयाचि, दथवा सख्या ममोद्वेजितः,
किं वा कारणगौरवं किमपि, यन्नाद्यागतो वल्लभः ।

---

तया ग्रीवाभरणरूपया लतयेति भावः । नात्रैवादेशः, अन्वादेशविषयत्वाभावात् । **किम्** । अथ-**एकां** केवलाम् । **नवां** नवगुम्फिताम् । अन्यथा परिरम्भे सद्य एव त्रुटिता स्यादिति भावः । **एकावलिमेक**यष्टिकहारम् । अन्यथा परिरम्भेऽति-विघ्नः स्यादिति भावः। 'एकावल्यादयो हारभेदा' इति गोपालः । **अयि** । (इदं मधुरामन्त्रणे) । **त्वं** 'सखी'ति शेषः । एतेन तत्र स्वात्मनो हितविधानौचित्यमावेद्यते । **मयि** । **विरचयेः** । ननु किमिति सर्वाण्यपास्यैकमेतदेवाभरणमित्या-शङ्क्याह-**अनङ्गोत्सवविधावनङ्गः** कामस्तस्योत्सवः प्रियसङ्गजन्य आमोदस्तस्य विधिर्विधानं तत्र । **बहुतरं** । **नेपथ्यं** भूषणरचनादिशोभा । 'नेपथ्यं तु प्रसाधने ।' इति हैमः । **पथ्यं** हितकारि । **न** न भवतीत्यर्थः । अत्र कस्याश्चित्त्वां मण्डयन्तीं सखीं प्रत्युक्तिः । शिखरिणी छन्दः, तल्लक्षणं चोक्तं प्राक् ॥'

यथा वाऽऽहू रसमञ्जरीकाराः-'मुग्धा वासकसज्जा यथा-'हारं गुम्फति तारकाऽतिरुचिरं, ग्रश्नाति काञ्चीलतां, दीपं न्यस्यति, किन्तु तत्र बहुलं स्नेहं न दत्ते पुनः । आलीनामिति वासकस्य रजनौ कामानुरूपां क्रियां साचि स्मेरमुखी नवोढसुमुखी दूरात्समुद्वीक्षते ॥' मध्या वासकसज्जा यथा-'शिल्पं दर्शयितुं करोति कुतुकात् कह्लारहारस्रजं चित्रप्रेक्षण-कौतुकेन किमपि द्वारं समुद्वीक्षते । गृह्णात्याभरणं नवं सहचरी भूपाजिगीषामिषादित्थं पद्मदृशः प्रतीत्य चरितं स्मेरा-ननोऽभूत्स्मरः ॥' प्रगल्भा वासकसज्जा यथा-'क्लृप्तं वपुषि भूषणं, चिकुरधोरणी धूपिता, कृता शयनसन्निधौ क्रमुक-वीटिकासम्भृतिः । अकारि हरिणीदृशा भवनमेत्य देहत्विषा स्फुरत्कनककेतकीकुसुमकान्तिभिर्दुर्दिनम् ॥'...परकीया वासकसज्जा यथा-'श्वश्रूं स्वापयति, च्छलेन च तिरोधत्ते प्रदीपाङ्कुरं धत्ते सौधकपोतपोतनिनदैः साङ्केतिकं चेष्टितम् । शश्वत्पार्श्वविवर्त्तिताऽञ्चलतिकं लोलत्कपोलद्युति क्वापि क्वापि कराम्बुजं प्रियधिया तल्पान्तिके न्यस्यति ॥' सामान्यवनिता वासकसज्जा यथा-'चोलं नीलनिचोलकर्षणविधौ, चूडामणिं चुम्बने, याचिष्ये कुचयोः करार्पणविधौ काञ्चीं पुनः काञ्चनीम् । इत्थं चन्दनचर्चितैर्मृगमदैरङ्गानि संस्कुर्वती तत् किं यन्न मनोरथं वितनुते वारेषु वाराङ्गना ॥' इति ।'

विरहोत्कण्ठितां लक्षयति-१२७ **आगन्तुं**..इत्यादिना ।

१२७ **यत्प्रियो** यस्याः प्रियः । **आगन्तुम्** । **कृतचित्तः** । **अपि** । **दैवा**ल्लक्षणयाऽऽकस्मिककार्य्याद्युपस्था-नेन । **न** । **आयाति** । **सा** । **तदनागमदुःखार्त्ता** तस्य प्रियस्यानागम आगमनाभावस्तस्य दुःखेनार्त्ता पीडितेति । **विरहोत्कण्ठिता** विरहेणोत्कण्ठिता । **अस्तु** स्यात् । विध्यर्थे लोट् ॥ १११ ॥

उदाहरति-**यथा**-'**किं रुद्धः**.. इत्यादौ ।

'**कयाचित्** कयाऽप्यज्ञातनाम्न्याऽत्युन्नतपुण्ययेत्यर्थः । **प्रियया** मद्भिन्नया दयितया । **किं** किंस्वित् । **रुद्धो** निरोधं नीतः । **अथवा** । **मम** । **सख्या** वयस्यया, वस्तुतोऽसख्या सखीत्वाच्च्युतया सपत्न्या दूत्या वेत्यर्थः । 'आनेतुं मयैव प्रेषितये'ति शेषः । **उद्वेजित** उद्वेगं प्रापितो, मयि दोषानारोप्य पराङ्मुखतां नीत इति यावत् । 'किं' मिति पूर्वतोऽनुवृत्तम् । **वा**ऽथवा । **किं** किंनु । **किमप्य**निर्वचनीयं, दुर्दैवादापतितमित्येवावाच्याभिधेयं वा । **कारणगौरवं** कारणानामनागमनेऽवष्टम्भरूपाणां हेतूनां गौरवं गुरुत्वमनुल्लङ्घ्य सम्पादनीयत्वमिति यावत् । यद्वा-स्वजी-वितं प्रति संशयानाऽऽह-कारणानां घातनानां ममैव मृत्युहेतूनां गौरवमवश्यम्भाव्युपस्थितिकत्वमित्यर्थः । 'आपतित'

इत्यालोच्य मृगीदृशा करतले विन्यस्य वक्त्राम्बुजं,
दीर्घं निःश्वसितं, चिरं च रुदितं, क्षिप्ताश्च पुष्पस्रजः ॥ ५१ ॥'

**१२८ इति साऽष्टाविंशतिशत-मुत्तममध्यमकनिष्ठरूपेण ॥**
**चतुरधिकाशीतियुतं शतत्रयं नायिकाभेदाः ॥ ११२ ॥**

---

मित्यस्ती'ति वाऽध्याहार्यम्। 'कारणं घातने हेतौ करणे चे' ति हैमः। कुत एवं तर्क्यत इत्याह-**यद्** यस्मात्कारणात्। **वल्लभः** प्रियो, वस्तुतस्त्ववल्लभो, वल्लभताप्रदर्शनेऽक्षमत्वात्पराङ्मुखत्वाद्वेत्यर्थः। **अद्यास्मिन्नवश्यं त्वत्सन्निधिं भजिष्य** इति प्रतिज्ञाया विषयभूते दिवस इति भावः। **न** नैव। **आगतः**। **इतीत्येवम्। आलोच्य** विचार्यान्तिमं पक्षं स्थिरीकृत्येति यावत्। **मृगीदृशा** मृगीदृशौ इव पारिप्लवे ( स्वभावत एव ) दृशौ नेत्रे यस्यास्तया ( कर्त्र्या )। **करतले** करतलोपरि। **वक्त्राम्बुजं** मुखकमलं लक्षणया कपोलपालीमित्यर्थः। **विन्यस्य** स्थापयित्वा। **दीर्घं** दूरं प्रसारि। **निःश्वसितम्**। **च** तथा। **चिरम्**। **रुदितम्**। **च** तथा। **पुष्पस्रजः**। **क्षिप्ता** दूरं पातिताः। अत्र प्रियानागमने कारणमालोचमानायाः कस्या अपि मदननिपीडिताया अवस्थावर्णनम्। शृङ्गारतिलकस्य पद्यमिदम्। शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ ५१ ॥'

यथा वाऽऽह रसमञ्जरीकारः-'मुग्धोत्का ( विरहोत्कण्ठिता ) यथा-'यन्नाद्यापि समागतः प्रिय इति प्रायः प्रपेदे परामित्थं चेतसि चिन्तयन्त्यपि सखीं न व्रीडया पृच्छति। दीर्घं निःश्वसितं दधाति, चकितं न प्रेक्षते, केवलं किञ्चित्पक्वपलाण्डुपाण्डुररुचिं धत्ते कपोलस्थलीम् ॥' मध्योत्का यथा-'आनेतुं न गता किमु प्रियसखी, भीतो भुजङ्गात्किमु, क्रुद्धो वा प्रतिषेधवाचि किमसौ प्राणेश्वरो वर्त्तते। इत्थं कर्णसुवर्णकेतकरजःपातोपघातच्छलादक्ष्णोः काऽपि नवोढनीरजमुखी वाष्पोदकं मुञ्चति ॥' प्रौढोत्का यथा-'भ्रातर्निकुञ्ज! सखि यूथि! रसालबन्धो! मातस्तमस्विनि! पितस्तिमिर! प्रसीद। पृच्छामि किञ्चिदिति नीरधराभिरामो दामोदरः कथय किं न समाजगाम ॥' परकीयोत्का यथा-'स्नातं वारिदवारिभिर्विरचितो वासो घने कानने, शीतैश्चन्दनबिन्दुभिर्मनसिजो देवः समाराधितः। नीता जागरणव्रतेन रजनी, व्रीडा कृता दक्षिणा, तप्तं किं न तपस्तथाऽपि स कथं नाद्यापि नेत्रातिथिः ॥' सामान्यवनितोत्का यथा-'कथं न कान्तः समुपैति कुञ्जमित्थं चिरं चेतसि चिन्तयन्ती। अश्रावयन्निष्पतदश्रुधारा वाराङ्गना काऽपि धनाभिलाषात् ॥' इति।' यत्तूक्तमेतैरेव-'सङ्केतस्थलं प्रति भर्तुरनागमनकारणं या चिन्तयति सोत्का, अवधिदिवसानागतप्रेयसि प्रोषितभर्तृकायां नातिव्याप्तिः। तस्या भर्तुरवधिदिवसे भवनागमननियम इति सङ्केतपदेन व्यावर्तनात्।' इति। तन्मन्दम्, उदाहरिष्यमाणेषु पद्येष्वद्यापीत्यादीनामपि स्वारस्येन वासभवनस्थाया अपि तादवस्थ्यात्। नहि स्वीया सदा सङ्केतस्थल एव रतिं लभते, इति वक्तुं सुशकम्, प्रत्युत प्रायस्तस्या वासभवन एव तथा वर्णनौचित्यम्। तस्मात्-अवधिदिवसेऽनुपेतप्रिया प्रोषितभर्तृका स्यात्, विप्रलब्धा वा स्यात्, किन्तु या तदनागमनहेतुचिन्तया मुह्यति सैवोत्का विरहोत्कण्ठिताऽपरनामधेयेति बोध्यम्।

अत्रेदमप्यवधेयम्-अनुदाहृता विविच्य धीरादिभेदा अप्येवमेवावगम्याः, तथाऽऽह रसमञ्जरीकारः-'मुग्धाया लज्जाप्राधान्येन, मध्याया लज्जामदनसाम्येन, प्रगल्भायाः प्राकाश्यप्राधान्येन, धीराया धैर्य्यप्राधान्येन, अधीरायां अधैर्य्यप्राधान्येन, धीराऽधीराया धैर्य्याधैर्य्यप्राधान्येन, ज्येष्ठायाः स्नेहाधिक्यप्राधान्येन, कनिष्ठायाः स्नेहन्यूनत्वप्राधान्येन, परोढायाः सङ्गुप्तिप्राधान्येन, मुग्धाया इव कन्यकायाश्च, सामान्यवनिताया धनप्राप्तिप्राधान्येनाष्टविधनायिकावर्णनमिति विशेषः।' इति।

आसां पुनः स्वरूपभेदमाह-१२८ इतीत्यादिना।

१२८ इतीत्येवं षोडशानां प्रत्येकमष्टविधत्व इत्यर्थः। **साऽष्टाविंशत्य**ष्टाविंशत्या सहितम्। **शतम्। उत्तममध्यमकनिष्ठरूपेण**। 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति नयेन 'रूप' पदस्य प्रत्येकं सम्बन्धे उत्तमरूपेण मध्यमरूपेण कनिष्ठरूपेण चेत्यर्थः। 'उत्तममध्याधमस्वरूपेणे'ति पाठान्तरम्। 'भेदं प्राप्ता' इति शेषः। **नायिकाभेदाः। चतुरधिकाशीतियुतम्। शतत्रयं** 'सम्पद्यन्त' इति शेषः। अत्रार्य्या छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ११२ ॥

'इह च परस्त्रियौ कन्यकाऽन्योढे सङ्केतात्पूर्वं विरहोत्कण्ठिते, पश्चाद्विदूषकादिनाऽभिसरन्त्यावभिसारिके, कुतोऽपि सङ्केतस्थानमप्राप्ते नायके विप्रलब्धे, इत्यवस्थैवानयोरस्वाधीनप्रिययोरवस्थाऽन्तरायोगात् ।' इति कश्चित् ।

१२९ क्वचिदन्योऽन्यसाङ्कर्यमासां लक्ष्येषु दृश्यते ।

---

परमतं निर्दिशति–'इह च.. इत्यादिना ।

'इहास्मिन्नायिकाभेदप्रसङ्ग इत्यर्थः । **च** । **परस्त्रियौ** परकीये नायिके इत्यर्थः । **कन्यकाऽन्योढे** कन्यकाऽन्योढा चेत्यर्थः । **सङ्केतात्** 'प्रियकर्तृका' दिति शेषः । **पूर्वम्** । **विरहोत्कण्ठिते** विरहेणोत्कण्ठिते । **पश्चात्** । **विदूषकादिना** । आदिपदेन चेटकादेर्ग्रहणम् । अत्र सहार्थे तृतीया । **अभिसरन्त्यौ** । **अभिसारिके** । 'उच्येते' इति शेषः । अथ–**कुतोऽपि** कस्माच्चित्कारणात् । **सङ्केतस्थानम्** । 'कृतमपी'ति शेषः । **अप्राप्ते** । **नायके** । 'सती'ति शेषः । **विप्रलब्धे** । इतीत्थेवम् । **एव** । **अस्वाधीनप्रिययोः** स्वाधीनभर्तृकेतिव्यपदेशार्हत्वमप्राप्तयोः । **अनयोः** परस्त्रियोरित्यर्थः। **अवस्थान्तरायोगा**दन्यासामवस्थानामसम्भवात्। **अवस्था**। 'न तु खण्डितात्वादिक'ति शेषः ।' **इति**। **कश्चित्**। 'आहे'ति शेषः । अत्र 'कश्चिदि' त्यस्वरसतां द्योतयति । इदं तत्त्वम्–परकीया नायिका कन्यका परोढा चेति द्विविधा, अस्याश्च पार्श्वे नायकस्य सततमवस्थानासम्भवान्न स्वाधीनभर्तृकात्वम्, नायिकान्तरसम्भोगेनेर्ष्याया अयोगान्न खण्डितात्वम्, नायिकान्तरसम्भोगदोषात् कान्तत्यागायोगाच्च कलहान्तारितात्वम्, कान्तस्य दूरदेशगमनेन मनोभववेदनाया अयोगान्न प्रोषितभर्तृकात्वम्, परालोकनशङ्कया सज्जिते वासभवने मण्डनायोगान्न च वासकसज्जात्वम् । तस्मात्–अभिमतेन यावन्न सङ्केतस्थलं निर्दिश्यते तावत्तस्या विरहोत्कण्ठितात्वम्, विदूषकादिना सममभिसारयोगादभिसारिकात्वम्, कुतोपि सङ्केतस्थले प्राप्त्ययोगाद्विप्रलब्धात्वमित्येत एव त्रयो भेदाः परकीयायाः । इति यत् केनाप्युक्तं तन्न विचारपेशलम् । तथाहि–प्रियस्य मनसि या सन्निहिता सा स्वाधीनभर्तृकेति परकीया सामान्याऽपि वा स्वाधीनभर्तृकेति वक्तुं सुशकम्; न हि कायेन स्वीयाया अपि दयितोऽधीनोऽपि सदा सन्निहितः स्थातुं क्षमते तदिति 'स्वीयाः सन्ती' त्यत्र परकीयायाः 'सन्त्येव..' इत्यत्र च सामान्यवनितायाः स्वाधीनभर्तृकात्वं स्पष्टम् । स्वीयं पतिमपहाय यथा परत्र नायिकाऽनुरज्यते, तथा नायकोऽपि स्वीयां नायिकामपहाय परत्रानुरज्यते । नानुरक्तविरक्तयोरनुरागोऽनुरागः । तदिति नायकः प्रियायाः सन्निधौ परोपभोगमवगमयन्नुपैति, तथा सति तदन्तःसन्तापः । अत एवैवं परकीयाया अपि खण्डितात्वम् । यदपि न प्रायः सामान्या प्रेमान्धा भवति, तथाऽपि परत्रानुरागे धनलाभस्य न्यूनतामाशङ्क्यात्मन्यनुरागवृद्धये खण्डितेव नकारसिद्धान्तमाश्रिता जयन्ती खण्डिता गीयते । नकारो हि स्त्रीणां सिद्धो मोहनमन्त्रः। एवं चानयोः 'कान्तं...'इत्यादौ खण्डितात्वं स्पष्टम् । रोषो नाम महाञ्छत्रुः, अतः 'भर्तुर्यस्ये' त्याद्युदाहरणदृशा परकीयायाः सामान्याया अपि च कान्तत्यागो, ऽन्यदा ततो व्यावर्त्तनमुपदेष्टुं सम्भवतीति विदितचरं कलहान्तारितात्वम् । एवं प्रोषिते दयिते प्रोषितभर्तृकात्वम्, दूत्यादिगृहेऽसङ्कुचितं स्वगृहे च सङ्कुचितं परकीयाया वासकसज्जात्वं 'श्वश्रू स्वापयती'त्यत्र, सामान्यायाश्च सर्वदा'चोलं नील...'इत्यत्रेति निर्बाधं सूक्ष्मधियां धिया । इति ।

एवं नायिकानां शुद्धभेदनिर्देशानन्तरं मिश्रिता अपि भेदा निर्देष्टव्या इत्यपेक्षायामाह-१२९ क्वचिदित्यादि ।

१२९ **आसां** निर्दिष्टनयेन चतुरधिकशतत्रयसङ्ख्याकानां नायिकानाम् । **लक्ष्येषू**दाहरणेषु । **क्वचि**न्न तु सर्वत्रेत्यर्थः । **अन्योऽन्यसाङ्कर्य**मन्योऽन्यं परस्परं साङ्कर्यं सङ्करतामिश्रणमिति यावत् । **दृश्यते** । 'तदूह्य'मिति शेषः । अस्माभिस्तु तस्य क्वाचित्कत्वेन विरम्यत इति भावः ।

यथा-

'न खलु वयममुष्य दानयोग्याः, पिबति च पाति च याऽसकौ रहस्त्वाम् ।
विट ! विटपममुं ददस्व तस्यै, भवति यतः सदृशोश्चिराय योगः ॥ ५२ ॥
तव कितव ! किमाहितैर्वृथा नः, क्षितिरुहपल्लवपुष्पकर्णपूरैः ।
ननु जनविदितैर्भवद्व्यलीकैश्चिरपरिपूरितमेव कर्णयुग्मम् ॥ ५३ ॥
मुहुरुपहसितामिवालिनादैर्वितरसि नः कलिकां किमर्थमेनाम् ।
वसतिमुपगतेन धाम्नि तस्याः शठ ! कलिरेष महांस्त्वयाऽद्य दत्तः ॥ ५४ ॥

---

उदाहरति-यथा-'न खलु...'इत्यादाविति शेषः ।

'हे **विट** कामिन् ! 'विटोऽद्रौ धवले पिङ्गे (लम्पटे) मूषिके खदिरेऽपि च ।'इति मेदिनी । **वयं** विटपेतरा रमण्य इत्यर्थः । **अमुष्य** विटपस्येत्यर्थः । **दानयोग्या** दानाधिकारिण्यः । **न** । **खलु** । भवाम'इति शेषः । किन्तु-**या** । **असकौ** । असावेवेत्यसकौ, 'अव्ययसर्वनाम्नामकच् प्राक् टेः ।' ५।३।७१ इत्यकच् । 'त्वत्प्रिये'ति शेषः । **रहः** एकान्ते । **त्वां** 'सुरतरसनिधान'मिति, 'मदनानलसन्तापित'मिति वा शेषः । **पिबति** । **च** । **पाति** रक्षति । **च** । समुच्चयार्थमेतत् । अतः-**तस्यै** निरुक्तनयेन विटपेति नाम सार्थयित्र्यै । **अमुम्** । **विटपं** पल्लवम्, लक्षणया सपुष्पं शाखाखण्डमित्यर्थः । 'विटपं सपुष्पमालां शाखा'मिति विवृतिकाराः । 'विटपः पल्लवे षिङ्गे विस्तारे स्तम्बशाखयोः ।' इति विश्वः । **ददस्व** देहि । 'दद'दाने । **यतो** यस्माद्दाना'दिति शेषः । **सदृशो**र्विटपानकर्त्तया सदृशयोरित्यर्थः । **चिराय** । **योगः** सम्बन्धः । **भवति** । अयम्भावः-'विटं पिबति, पाति वेति व्युत्पत्त्यनुकूलतया तव विटस्य पानकर्त्री[1] (विटपा), तदयं विटपस्तस्या एव योग्यः, सा चास्यैव योग्या । तथा च-विटपेनानेन विटपाया अस्या योगो दम्पत्योरिव स्थाने इति। अत्र 'समालङ्कारोऽय' मिति मल्लिनाथाः। वयं तु समालङ्कारेण 'मा मामुपगम' इति वस्तु व्यङ्ग्यमिति।॥५२॥
हे **कितव!** धूर्त्त ! **वृथा। आहितैः** स्थापितैः । **तव । क्षितिरुहपल्लवपुष्पकर्णपूरैः** क्षितिरुहाणां वृक्षाणां पल्लवपुष्पाणि (पल्लवाश्च पुष्पाणि च) तान्येव कर्णपूराः कर्णाभरणानि तैस्तथोक्तैः । कर्णौ पूरयन्तीति कर्णपूराः । 'कर्णपूराऽवतंसे स्यादि'ति गोपालः । **नोऽ**स्माकम् । **किम्** । न किमपि साध्यमिति भावः । तथा च-सत्यं ब्रूमः 'वृथाऽऽहितै' रिति सूचितम् ।**ननु । जनविदितै**र्जनैर्विदितानि ज्ञातानि तैः । 'जनेषु विदितै' रिति मल्लिनाथाः । **भवद्व्यलीकै**र्भवतो व्यलीकानि विशेषेणालीकानि (अप्रियाण्यनृतानि वा वचनानि) लक्षणया तच्छ्रवणानि तैः । 'अलीकं त्वप्रियेऽनृते' इत्यमरः । यद्वा-भवतो व्यलीकान्यकार्य्याणि (निषिद्धानि कर्म्माणि) लक्षणया तच्छ्रवणानि तैरिति तथोक्तैः । 'व्यलीकमप्रियाकार्य्यवैलक्ष्येष्वपि पीडने ।' इति विश्वः । **कर्णयुग्मम् । चिरपरिपूरितं** चिरेण परिपूरितमित्यर्थः । **एव** नात्र संशयः । अतः-परितः पूरितस्य (पूर्णतां नीतस्य) पूर्णताकृते विफलश्रमः, प्रत्युतोऽनिष्टहेतुरिति भावः । 'अत्रोत्तरवाक्यार्थस्य पूर्ववाक्यार्थहेतुत्वेनोपनिवन्धनाद्वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ।' इति मल्लिनाथाः ॥५३॥ हे **शठ ! मुहुः। अलिनादै**र्भ्रमरशब्दैः (कर्तृभिः)। **उपहसितामिव** 'प्रतारणार्थेयं' मिति परिहासविषयतां नीतामिव, वस्तुतस्तथाभूतामेवेति भावः । अत्रेवेन समासो विभक्त्यलोपश्च । **एनाम्** । **कलिकां** पुष्पकोरकम्, अल्पः कलिः कलहस्तं वा । 'कलिका कोरकः पुमान् ।' इत्यमरः । 'अल्पे ।' ५ । ३ । ८५ । इति कः । अत्र स्त्री प्रत्ययस्त्वविवक्षित एवेति बोद्धव्यम् । 'कलहे च युगे कलिः ।' इति विश्वः । **नोऽ**स्माकम् । **किमर्थम् । वितरसि । तस्या** दुश्चरितात्वेन ख्याताया अत एवानुच्चारणीयनामधेयाया इति भावः । **धाम्नि** भवने । 'धाम शक्तौ प्रभावे च तेजोमन्दिरजन्मसु ।' इति विश्वः । **वसतिं** निवासम् । **उपगतेन । त्वया** (कर्त्रा) । **अद्य । एष** वर्त्तमानः । **महान्** । **कलिः** कलहः । **दत्तः** । महति कलौ दत्ते पुनस्तस्याल्पत्वेन दानमकिञ्चित्करमिति भावः । 'अत्रापि पूर्ववाक्यार्थस्योत्तरवाक्यार्थहेतुकत्वाद्वाक्यार्थहेतुकं काव्यलिङ्गम् । कलिकामिति श्लेषोत्थापितया कोरककलहयोर्भेदेऽभेदरूपा-

---

१ 'पानं पीति-भाजनरक्षणे ।' इति मेदिनी ।

'इति गदितवती, रुषा जघान स्फुरितमनोरमपक्ष्मकेसरेण।
श्रवणनियमितेन कान्तमन्या सममसिताम्बुरुहेण चक्षुषा च ॥ ५५ ॥'

इयं हि वक्रोक्त्या परुषवचनेन कर्णोत्पलताडनेन च धीरमध्यताऽधीरमध्यताऽधीरप्रगल्भताभिः सङ्कीर्णा। एवमन्यत्राप्यूह्यम्।

१३० इतरा अप्यसङ्ख्यास्ता नोक्ता विस्तरशङ्कया ॥ १२४ ॥

ता नायिकाः।

---

तिशयोक्त्याऽनुप्राणितमिति सङ्करः।' इति मल्लिनाथाः ॥५४॥ इतीत्थेवम्। अन्या पूर्वस्या भिन्नेत्यर्थः। कान्तम्। रुषा रोषेण रोषवती वेति भावः। एकत्र भावे क्विप्, परत्रेगुपधत्वात् कः। गदितवती कथयति स्म। च तथा। स्फुरितमनोरमपक्ष्मकेसरेण स्फुरितानि च मनोरमाणि च पक्ष्माणीव केसराणि, केसराणीव पक्ष्माणीति वा यस्य तेन। श्रवणनियमितेन श्रवणेन कर्णेन नियमितं धृतं तत्पर्य्यन्तमायतत्वेन वाऽऽकृष्टं तेन। असिताम्बुरुहेणासितं नीलं च तदम्बुरुहं तेनोपचारात्तत्सदृशेन वा अत एव 'पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः।' इत्यादि सङ्गच्छते। समं सह। चक्षुषा। यद्वा-'असम' मिति क्रियाविशेषणम्। जघान ताडयति स्मोपचारात्ताडयति स्मेवेति वा। यत्तु व्याख्यातं 'इति गदितवती, अन्या पुनर्जघाने' ति, तन्न सत्, 'इयं ही' त्यादिमूलाक्षरसात्। शिशुपालवधस्यैतानि पद्यानि, पुष्पिताऽग्रा च च्छन्दः। तल्लक्षणं च यथोक्तं 'पुष्पिताग्रा नौयौं नूजौ ज्रौग्।' इति ॥ ५५ ॥'

प्रकृतमाह-इयं हीत्यादिना।

हि यतः। इयम्। वक्रोक्त्या विटपादिपदार्थस्यान्यथा योजनरूपया वाचा। परुषवचनेन परुषं 'शठे' त्याद्यस्निग्धं यद्वचनं तेन। च। कर्णोत्पलताडनेन कर्णोत्पलेन ताडनं तेन, कर्णान्तमायतत्वेन कर्णकमलसदृशस्य नेत्रस्य वा पातेनेति भावः। हेतौ तृतीया, एवं पूर्वत्रापि। धीरमध्यताऽधीरमध्यताऽधीरप्रगल्भताभिर्धीरामध्यात्वेना-धीरामध्यात्वेनाधीराप्रगल्भात्वेन चेत्यर्थः। अत्र 'शरदः कृतार्थते' तिवत्सामान्ये नपुंसकम्। सङ्कीर्णा। अयम्भावः-धीरामध्या रुषा वक्रा, मधीरामध्या परुषां वाचमुदीरयति, अधीराप्रगल्भा पुनस्ताडयतीत्येवमासां तिसृणां लक्षणाक्रान्तेयम्। इति।

उक्ता नीतिरन्यत्रापि सङ्गच्छत इत्याह-एवम्। अन्यत्र। अपि। ऊह्यं 'सङ्कीर्णत्वमासा' मिति शेषः। अयम्भावः-यथा गोप्यादीनां-'मधुप! कितवबन्धो! मा स्पृशाङ्घ्रिं सपत्न्याः कुचविलुलितमालाकुङ्कुमश्मश्रुभिर्नः।' इत्यादौ परकीयानामपि 'सपत्न्या' इत्याद्युक्त्याः स्वकीयात्वं तथा सति सम्भवेत् सङ्कीर्णात्वमेतासाम्। इति।

ननु 'तल्पगताऽपि च सुतनुः श्वासासङ्गं न या सेहे। सम्प्रति सा हृदयगतं प्रियपाणिं मन्दमाक्षिपति॥' इत्यादिलक्ष्या-त्प्रवत्स्यन्नायका, 'यामि न यामीति धवे वदति पुरस्तात्क्षणेन तन्वङ्ग्याः। गलितानि पुरो वलयान्यपराणि तथैव दलितानि ॥' इत्यादिलक्ष्याच्च प्रवत्स्यदागच्छन्नायकेत्येवमन्येऽपि भेदा वक्तुं युक्ता इति चेत्सत्यमित्याह-१३० इतरा इत्यादि।

१३० ताश्चतुरधिकाशीतियुतं शतत्रय' मित्युक्ता नायिका इत्यर्थः। इतरा इतरभेदवत्यः। अपि। असङ्ख्या न सङ्ख्या गणना यासां ताः। 'सन्ती' ति शेषः। किन्तु-विस्तरशङ्कया एवं कथनेऽत्यन्तं ग्रन्था-डम्बर इति शङ्कयेति भावः। 'स च शब्दस्य विस्तरः।' इत्यमरः। न। उक्ता ॥ १२४ ॥

कारिकास्थं तत्पदं व्याचष्टे-ता 'इत्यस्ये' ति शेषः। नायिकाः 'इत्यर्थ' इति शेषः। इति। अयम्भावः-यथा-स्वकीयाऽऽदीनां धीराऽऽदिभेदास्तथा प्रवत्स्यन्नायकाऽभिधेयो भेदोऽवगन्तव्यः, यस्या नायकः परत्र गमिष्यन्, यथा रसगङ्गाधरकारैरुदाहृते 'तल्पगताऽपी' त्यत्र, यथा वा-रसमञ्जरीकारैरुदाहृतेषु। 'मुग्धा प्रोष्यत्पतिका यथा-"प्राणेश्वरे किमपि जल्पति निर्गमाय क्षामोदरी वदनमानमयाञ्चकार। आली पुनर्निभृतमेत्य लता-

अथासामलङ्काराः-

निकुञ्जमुन्मत्तकोकिलकलध्वनिमाततान ॥" मध्या प्रोष्यद्भर्तृका यथा-"गन्तुं प्रिये वदति निःश्वसितं न दीर्घमासीन्न वा नयनयोर्जलमाविरासीत्। आयुर्लिपिं पठितुमेणदृशः, परन्तु भालस्थलीं किमु कचः समुपाजगाम ॥" प्रौढा प्रोष्यद्भर्तृका यथा-"नायं मुञ्चति सुभ्रुवामपि तनुत्यागे वियोगज्वरस्तेनाहं विहिताञ्जलिर्यदुपते! पृच्छामि सत्यं वद। ताम्बूलं कुसुमं पटीरमुदकं यद्बन्धुभिर्दीयते स्यादत्रेव परत्र तरिकमु विषज्वालाऽवली दुःसहम् ॥" परकीया प्रोष्यद्भर्तृका यथा-"न्यस्तं पन्नगमूर्ध्नि पादयुगलं, भक्तिर्विमुक्ता गुरो-स्त्यक्ता नीतिरकारि किं न भवतो हेतोर्मया दुष्कृतम्। अङ्गानां शतयातना, नयनयोः कोऽपि क्रमो रौरवः, कुम्भीपाकपराभवश्च मनसो युक्तं त्वयि प्रस्थिते ॥" सामान्यवनिता प्रोष्यद्भर्तृका यथा-"मुद्रां प्रदेहि वलयाय भवद्वियोगमासाद्य यास्यति बहिः सहसा यदेतत्। इत्थं निगद्य विगलन्नयनाम्बुधारा वाराङ्गना प्रियतमं करयोर्बभार ॥" इति। तथा-यस्या नायको यामीति पूर्वं विचारवान्, पश्चाद् यदि न परत्र याति तदाऽसौ न प्रवत्स्यन्नायकोत्तरक्षण एव तद्विचारस्य निषिद्धत्वात्, नाप्यागच्छन् येन नायिका वासकसज्जा स्यात्, तदानीं तत्रैव वर्त्तमानत्वात्, किन्तु नरसिंहन्यायेनान्यैव। एवम्-आसां पद्मिनीत्यादयो भेदा अप्यवगन्तव्याः। अत्राहू रसमञ्जरीकाराः-'यत्त्वेतासां "दिव्यादिव्योभयभेदेन गणनया द्विपञ्चाशदधिकशतयुतं सहस्रं भेदा भवन्ति। दिव्या इन्द्राण्यादयः, अदिव्या मालत्यादयः, दिव्यादिव्याः सीतादयः।" इति तन्न, अवस्थाभेदेनैव नायिकानां भेदात्, जातिभेदेन भेदस्वीकारे नायकानामप्येवमानन्त्यं स्यात्। तथा भेदा नायकानामपि सन्ति। 'इन्द्रादयो दिव्या, अदिव्या माधवादयः, दिव्यादिव्या अर्जुनादयः।' इत्यत्र। इतरा इति प्रतीकमुपादाय-'पुनश्च तास्त्रिधा ज्ञेया दिव्यादिव्योभयात्मना। चतुर्धा चोद्धतोदात्ता ललिता शान्तिका तथा ॥ अक्षता च क्षता यातायाता यायावरेत्यपि। पुनश्चतुर्धा कथिताः पूर्वैर्भोजादिभिर्बुधैः ॥ पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनीति च। पुनश्चतुर्धा कथिताः कामशास्त्रेषु जातितः ॥ कफिनी वातुला पित्तला प्रकृत्या पुनस्त्रिधा। अथोक्तानां च भेदानां लक्षणोदाहृती ब्रुवे॥ दिव्याः शच्यादयः प्रोक्ता अदिव्या मालतीमुखाः। दिव्यादिव्या इति प्रोक्ता जानकीरुक्मिणीमुखाः ॥ गर्वशालिन्युद्धता स्यादुदात्ता गूढमानिनी। ललिता साध्यमानेहा शान्ता निर्मानमानसा ॥ उदात्तैव भवेद्धीराऽथाधीरा तूद्धता मता। ललिता तु भवेन्मुग्धा शान्ता स्वीयोत्तमा मता ॥ भुक्ताऽन्येन पुरा पश्चादूढान्येनाक्षता मता। भुक्ता शक्तिसुतेनोढा राज्ञा सत्यवती यथा ॥ गते भर्त्तरि यत्त्वन्यं श्रिता सा तु क्षता मता। यथा तारा रविसुतं श्रिता वालिनि मारिते। यातायाता तु युगपदूढाऽनेकैस्तु भर्तृभिः ॥ यथा पाण्डुसुतैरूढा द्रुपदस्य कुमारिका। ऊढैकेन तु सन्त्यक्ता क्रमाद् यायावरा मता ॥ यथा बहुवरैरूढा माधवी चोपलात्मजा ॥ पद्मिनी चन्द्रवदना शिरीषमृदुला तथा। शङ्खिनी स्याद्बृहन्मध्या कोपिन्यल्पस्तनी तथा ॥ दीर्घपादा द्रुतगतिः कुटिलाक्षी च पिङ्गला। हस्तिनी बहुभुक् क्रूरा निस्त्रपा पिङ्गकुन्तला ॥ ह्रस्वा स्थूलाधरा गौरशरीरा मन्दगामिनी। कफिनी दृढरागा स्याच्छ्यामा तु स्निग्धलोचना ॥ वातुला तु कठोराङ्गी, चञ्चला कृष्णपाणिजा। श्यामधूसरवर्णा च बहुभोज्या प्रलापिनी ॥ पित्तला शोणनयना गौराङ्गी कुशला रते। सा चतुर्धा पुनरपि नायिका प्रतिनायिका ॥ दुर्योधनस्य दयिता तत्र भानुमती यथा। तस्याः कैश्चिद्गुणैर्हीना पूज्या चैवोपनायिका ॥ समा न्यूनाऽपि या किञ्चित् कनीयस्यनुनायिका ॥'इत्यादि।' इत्याहुष्टिप्पणीकाराः। 'सुखस्य च स्त्रियो मूलं नानाशीलधराश्च ताः। देवताऽसुरगन्धर्वरक्षोनागपतत्रिणाम् ॥ पिशाचयक्षभुजङ्गानां नरवानरहस्तिनाम्। मृगमीनोष्ट्रमकरखरसूकरवाजिनाम् ॥ महिषाजगवादीनां तुल्यशीलाः स्त्रियः स्मृताः। स्निग्धाङ्गोपाङ्गनयना स्थिरा मन्दनिमेषिणी ॥ अरोगा दीप्त्युपेता च सत्यार्जवदयान्विता। अल्पस्वेदा समरता स्वल्पशुक्रतप्रिया ॥ गन्धपुष्परता हृद्या देवशीलाङ्गना स्मृता।'इत्यादि भरताचार्य्याश्चाहुः। 'स्वाधीनभर्तृका मुख्या एवाष्टौ कीर्तिता भिदाः। पद्मिन्याद्याः पुनर्भेदाः स्वीयाऽऽदिभ्योऽनयत्पृथक् ॥' इति चाच्युताचार्य्याः। वयं तु-एवं सिद्धान्तानैक्यमेव सम्भावयामः, अत एव कविराजैः १३० इतरा इत्यभिधायैव विरताः, यद्यपि प्रवत्स्यद्भर्तृकां प्रायोऽनेके स्वीकुर्वन्त्युदाहरन्ति च, किन्तु भरतैरत्तुकेरप्येतेऽपि नोक्तवन्तः। इति बोध्यम्।

एवं नायिकाभेदप्रभेदवर्णनं समाप्य नायिकानामलङ्कारानभिधातुं प्रतिजानीते-अथेत्यादिना।

अथ। आसां नायिकानाम्। अलङ्काराः पर्य्याप्तताबुद्धिसाधनानि। 'उच्यन्ते-१३१ यौवने'-इत्यादिनेति शेषः

१३१ यौवने सत्त्वजास्तासा-मष्टाविंशतिसङ्ख्यकाः।
अलङ्कारास्तत्र भाव- हावहेलास्त्रयोऽङ्गजाः ॥ ११४ ॥
शोभा कान्तिश्च दीप्तिश्च माधुर्य्यं च प्रगल्भता।
औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः ॥ ११५ ॥
लीला विलासो विच्छित्ति-र्विव्वोकः किलकिञ्चितम्।
मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ॥ ११६ ॥
विकृ ( हृ ) तं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम्।
हसितं चकितं केलिरित्यष्टादशसङ्ख्यकाः ॥ ११७ ॥
स्वभावजाश्च, भावाद्या दश पुंसां भवन्त्यपि।

पूर्वे भावादयो धैर्य्यान्ता दश नायकानामपि सम्भवन्ति, किन्तु सर्वेऽप्यमी नायिकाश्रिता

---

१३१ तासां निरुक्तानुक्तलक्षणानां नायिकानाम्। यौवने 'सती'ति शेषः। अष्टाविंशतिसङ्ख्यकाः। सत्त्वजाः सत्त्वात् रजस्तमसी अभिभूयोज्जृम्भमाणाद्गुणविशेषाज्जायन्त इति ते। अलङ्कारा 'भवन्ती'ति शेषः। तत्र तेषु मध्य इत्यर्थः। भावहावहेला भावहावहेलानामानोऽलङ्कारा इत्यर्थः। त्रयः। अङ्गजा अङ्गान्मनसो जायन्त इति ते तथोक्ताः। 'अङ्गं चित्ते च गात्रे च प्रतीकेऽन्तिकगौणयोः।' इति गोपालः। एवं च सर्वेषामेतेषामलङ्काराणां सात्त्विकत्वेऽपि भावादीनां त्रयाणां पुनरङ्गज (मनोज) त्वेनाभिधानं प्राधान्यं प्रत्याययन् रूढिमनुसरतीति द्योतितम्। तेषुपुनः—शोभा। कान्तिः। च। दीप्तिः प्रकाशः। च। माधुर्य्यम्। च। प्रगल्भता। औदार्य्यम्। धैर्य्यम्। इत्येते। अयत्नजा न यत्नजा इति तथोक्ताः। आन्तरबाह्योभययत्नमन्तरा जायमाना इति भावः। सप्त। एव। स्युः। तथा—लीला। विलासः। विच्छित्तिर्विच्छेदनं रूपदर्पादिवशादलङ्काराणामनादरणमिति तथोक्ता। 'आभरणविलेपनादीनां कुतश्चित्प्रियापराधादीर्ष्ययाऽनादरणेन त्यक्तानां सखीनां प्रयत्नाद्धारणं विच्छित्ति'रिति तु न सत्, वक्ष्यमाणलक्षणविरुद्धत्वात्। विव्वोकः प्रियविधेरप्यविधानमितिभावः। विवानं विवुः तस्यौकः स्थानमिति तथोक्तः। 'मृगय्वादयश्च।' (उ०) १।३।७ इति विवुः 'ओक उचः के।' ७।३।६४ इत्योकः किलकिञ्चितम्। मोट्टायितं मोटनं (जृम्भाऽऽदिना) हिंसनमङ्गानामिति तथोक्तम्। 'भावे।' ३।३।१८ इति घञ्। 'बाहुलकत्वाद्' घञस्तुट्च। कुट्टमितं कुट्टेन च्छेदनेन नखाघातादिनेति यावत् निर्वृत्तं, कुट्टिमम्; तदिवाचरति स्मेति तथोक्तम्। भावे घञ्, 'भावप्रत्ययान्तादिमब्वक्तव्य*' इतीमप्। ततो नामधातुत्वे णिच् ततो भावे क्तः। विभ्रमो विशिष्टो हर्षोद्रेके त्वरयाऽधिगतो भ्रम इति तथोक्तः। ललितं ललनमिति तथोक्तम्। 'लल'ईप्सायाम्। भावे क्तः। मदः विकृ(हृ)तम्। तपनम्। भावे ल्युट्। मौग्ध्यम्। विक्षेपः। अस्वस्थत्वम्। च। कुतूहलम्। हसितम्। भावे क्तः। चकितम्। 'चक' तृप्तौ प्रतिघाते च। भावे क्तः। केलिः। इतीत्येवम्। अष्टादशसङ्ख्यकाः। च पुनः। स्वभावजाः स्वभावात् स्वभाव आत्मनो मनोविकारविशेषस्तस्माज्जायन्ते समुत्पद्यन्त इति तथोक्ताः। 'ज्ञेया' इति शेषः। अथ—भावाद्या भावो हावो हेला चेति त्रयः, तथा-शोभा कान्तिर्दीप्तिर्माधुर्यं प्रगल्भतौदार्यं धैर्यं चेति सप्तेत्यर्थः। अत एव—दश 'अलङ्कारा'इति शेषः। पुंसां नायकानाम्। अपि। न केवलं नायिकानामिति सत्यम्, अथापि न चमत्कारातिशयायेति भावः। भवन्ति ॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७ ॥

'भावाद्या' इत्यायंशकाठिन्यं परिहरन्नाह—पूर्वं इत्यादिना।

पूर्वे प्रागुक्ताः। भावादयो 'भाव' इत्यारभ्य पठिता इत्यर्थः। धैर्य्यान्ता 'धैर्य्य' मित्यन्तं पठिता इत्यर्थः। दश। नायकानाम्। अपि 'यौवने' इति शेषः। सम्भवन्ति। किन्तु। सर्वेऽष्टाविंशतिमिताः। अपि। न केवलं भावादयो धैर्य्यान्ताः, किन्तु 'एतेभ्योऽतिरिक्ता अपी'ति शेषः। अमी एतेऽलङ्काराः। नायिकाश्रिता

एव विच्छित्तिविशेषं पुष्णन्ति। तत्र भावः—

१३२ निर्विकारात्मके चित्ते भावः प्रथमविक्रिया ॥ ११८ ॥

जन्मतः प्रभृति निर्विकारे मनसि उद्‌बुद्धमात्रो विकारो भावः। यथा—

'स एव सुरभिः कालः, स एव मलयानिलः। सैवेयमबला, किन्तु मनोऽन्यदिव दृश्यते॥५६॥'

अथ हावः—

१३३ भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः।
भाव एवाल्पसंलक्ष्य-विकारो हाव उच्यते ॥ ११९ ॥

यथा-

---

नायिका नायिकाभिर्नायिकासु वाऽऽश्रिता आश्रित्य स्थिता आलिङ्गिता, आधेयत्वेन स्थिता वेति तथोक्ताः। एव 'न तु नायकाश्रिता' इति शेषः। विच्छित्तिविशेषं विच्छित्तिर्वैचित्र्यं तस्य विशेषः कश्चित् प्रकारोऽतिशयो वा तं तथोक्तम्। पुष्णन्ति वर्धयन्ति। अयम्भावः-एतेऽष्टाविंशत्यलङ्कारा नायिकानां यौवनानुपदं रजस्तमसी अभिभूयोज्जृम्भमाणात्सत्त्वात् (गुणात्) जायन्ते, आसामेव श्रियं पुष्णन्ति। यद्यपि-भावाद्या दश नायकानामप्यलङ्काराः सम्भवन्ति, सम्भवन्तु नाम, किं तेन; न हि नायकानां पुनरपि चमत्कारातिशयाय। सर्वेऽप्यमी सात्त्विकाः। 'प्राधान्येन व्यपदेशा भवन्ती'ति नयेन पुनरमीषामप्यङ्गजत्वादिना व्यपदेशः। भावादयो यथाऽङ्गात् (मनसः) सम्भवन्ति न तथाऽन्ये इत्यमी अङ्ग (मनः) सम्भवाः, शोभादयो यथाऽयत्नजा न तथाऽन्य इत्यमी अयत्नजाः, लीलाऽऽदयः पुनर्नायिकानामेव मनोविकारानन्तरं मनोविकाराज्जायन्त इति स्वभावजा इति सुधीभिरवधेयम्।

अथ सर्वेषामप्येषां लक्ष्यलक्षणानि निर्देष्टुमुपक्रमते-तत्रेत्यादिना।

तत्र तेषु भावादिषु मध्ये। भावः। 'लक्ष्यते-१३२ निर्विकारा..इत्यादिना।

१३२ निर्विकारात्मके निर्गतो विकारो रिरंसात्मकः क्षोभो यत्र यस्य वा, तादृश आत्मा यस्य तस्मिंस्तथोक्ते। चित्ते। 'नायिकाया नायकस्य वे'ति शेषः। प्रथमविक्रिया। भावः ॥ ११८ ॥

तदेवाह-जन्मतो जन्मनः। पञ्चम्यर्थे तसिल्। प्रभृत्यारभ्य। अव्ययमिदम्। 'कार्तिक्याः प्रभृत्याग्रहायिणी मास' इति भाष्यनिर्देशात् निर्विकारे मदनवासनाशून्यतया शुद्धे। मनसि। उद्‌बुद्धमात्र उद्‌बुद्धा मात्रांशो यस्य सः। 'स्त्रियां मात्रा त्रुटी' इत्यमरः। विकारः। भावः। भावयति रिरंसां, भावनं रिरंसात्मना वा भावः।

उदाहरति-यथा-'स एव..' इत्यादौ।

'सः। एव। सुरभिर्वसन्तोपलक्षित इत्यर्थः। कालः। सः। एव। मलयानिलः। सा। एव। इयम्। अबला। 'वर्तत' इति शेषः। किन्तु। मनः। 'अस्या' इति शेषः। अन्यदिव विलक्षणमिव। दृश्यत उपचाराल्लक्ष्यते। अत्र श्लोकश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ५६ ॥'

अथ हावं लक्षयितुं प्रतिजानीते-अथेत्यादिना।

अथ भावोदाहरणानन्तरम्। हावो 'लक्ष्यते-१३३ भ्रूनेत्रादि..इत्यादिना।

१३३ भ्रूनेत्रादिविकारैर्भ्रूनेत्रादीनां विकाराश्चाञ्चल्यादिरूपास्तैः। तु। सम्भोगेच्छाप्रकाशकः सम्भोगस्यालिङ्गनादिरूपस्येच्छा तद्विषयाया भावनायाः प्रकाशक आविर्भावकारक इति तथोक्तः। भावो निरुक्तस्वरूपः। एव। अल्पसंलक्ष्यविकारोऽल्पं यथा भवेत्तथा संलक्ष्यो विकारो यस्मात् तथोक्तः। हावः। हवनमिति हावः। 'हु'दानादनयोः। 'क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशते।' इति परिभाषयाऽच्विषये'भावे।' ३।३।१८ इति घञ्। उच्यते। तथोक्तम्-'साद्भावसूचको हावः।' इति ॥११९॥

उदाहरति-यथा-विवृण्वतीत्यादि।

'विवृण्वती शैलसुताऽपि भाव-मङ्गैः स्फुरद्बालकदम्बकल्पैः।
साचीकृता चारुतरेण तस्थौ मुखेन पर्य्यस्तविलोचनेन ॥ ५७ ॥'

अथ हेला-

१३४ हेलाऽत्यन्तसमालक्ष्य-विकारः स्यात्स एव तु।

स एव भाव एव। यथा-'तह से झत्ति पउत्ता वहुए सव्वंगविब्भमा सअला।
संसइअमुद्धभावा होइ चिरं जह सहीणं पि' ॥ ५८ ॥'

अथ शोभा-

---

'शैलसुता शैलस्य हिमालयस्य सुता पुत्रीति तथोक्ता। गौरीत्यर्थः। अपि 'न केवलं हर'इति शेषः। एतेन-'हरस्तु किञ्चित्परिलुप्तधैर्य्यश्चन्द्रोदयारम्भ इवाम्बुराशिः। उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥'इति निर्दिष्टो हरस्य हावः स्मार्य्यते। स्फुरद्बालकदम्बकल्पैः स्फुरन्तो विकसन्तो ये बालकदम्बा उपचारात्तत्पुष्पाणि तेभ्यो मनाङ् न्यूनानि तैः। अत्र बालपदं कठोरतां व्यावर्त्तयति। 'बालकदम्बेत्यनेन पुलकस्याल्पत्वं, तेन च भावस्याल्पलक्ष्यत्वं प्रतीयते'इति चाहुस्तर्कवागीशाः। 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः।' ५।३।६७ इति कल्पप्। रोमाञ्चितैरिति भावः। अङ्गैः। साधने तृतीया। भावमभिप्रायं शङ्करविषयकानुरागात्मिकां चित्तवृत्तिमिति यावत्। 'भावोऽभिप्रायवस्तुनोः।'इति हैमः। विवृण्वती प्रकटयन्ती। 'सती'ति शेषः। चारुतरेणातिशयेन चारु सुन्दरमिति तेन तथोक्तेन, नितान्तं सुन्दरेणेत्यर्थः। पर्य्यस्तविलोचनेन पर्य्यस्ते सङ्कुचिते लज्जया भ्रान्ते इति यावत् यस्य तेन, यद्वा-पर्य्यस्ते शङ्करे निक्षिप्ते विलोचने येन यस्य वा तेनेति तथोक्तेन। मुखेन। साचीकृता वक्रीकृता। तस्थौ स्थिताऽऽसीत्। कुमारसम्भवस्येदं पद्यम्, अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्च च्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ५७ ॥'

एवं हावमुदाहृत्य क्रमप्राप्तां हेलामपि लक्षयितुमुपक्रमते-अथेत्यादिना।

अथ हावनिदर्शनानन्तरम्। हेला 'हेलाऽस्यैवा ( हावस्यैवा ) नुभावनम्।'इति परैर्लक्षितस्वरूपोऽलङ्कारविशेषः। 'लक्ष्यते' इति शेषः। १३४ हेला इत्यादिना।

१३४ स निरुक्तस्वरूपो भाव इत्यर्थः। एव। तु। अत्यन्तसमालक्ष्यविकारोऽत्यन्तं हावापेक्षया-ऽप्यधिकं यथा भवेत्तथा समालक्ष्यः सम्यगालक्ष्यो विकारो मानसक्षोभो यत्र सः। 'स'त्विति शेषः। हेला। 'हिल' भावकरणे। घञ्। स्यात्।

स एवेति व्याचक्षाणः कारिकाकाठिन्यं परिहरति-सः। एव'इत्यस्ये'ति शेषः। भावः। एव। 'इत्यर्थं' इति शेषः।

उदाहरति-यथा-'तह...'इत्यादौ।

'जह यथा। सहीणं सखीनामाबाल्यं सौहार्देन सङ्गिनीनामिति यावत्। पि अपि। चिरम्। संसइ-असुद्धभावाः संशयितमुग्धभावाः संशयिताः सन्देहं नीता मुग्धभावा मुग्धावस्था धर्मा यैस्तथोक्ता इति भावः। होइ भवन्ति। तह तथा। से तस्याः। वहुए वध्वाः। झत्ति झटिति। सअला सकलाः। सव्वंगविब्भमाः सर्वाङ्गविभ्रमाः। सर्वेषां भ्रूनेत्रादीनामङ्गानां विभ्रमाः सञ्चारणविशेषा इति भावः। पउत्ताः प्रवृत्ताः। अत्रार्या छन्दः, लक्षणं चोक्तं प्राक् ॥ ५८ ॥'

एवमङ्गजान् लक्षणानुपदमुदाहृत्यायत्नजानपि लक्षणानुपदमुदाहर्तुं प्रवृत्तस्तत्र तावच्छोभां लक्षयितुं प्रतिजानीते-अथेत्यादिना।

अथाङ्गजनिदर्शनानन्तरम्। शोभा लक्ष्यते-१३५ रूप..इत्यादिना।

---

१ 'तथा तस्या झटिति प्रवृत्ता वध्वाः सर्वाङ्गविभ्रमाः सकलाः। संशयितमुग्धभावा भवन्ति चिरं यथा सखीनामपि ॥' इति संस्कृतम्।

१३५ रूपयौवनलालित्य-भोगाद्यैरङ्गभूषणम् ॥ १२० ॥

शोभा प्रोक्ता—

तत्र यौवनशोभा यथा–

'असम्भृतं मण्डनमङ्गयष्टे-रनासवाख्यं करणं मदस्य।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साऽथ वयः प्रपेदे ॥ ५९ ॥'

एवमन्यत्रापि। अथ कान्तिः–

१३६ सैव कान्ति-र्मन्मथाप्यायितद्युतिः।

मन्मथोन्मेषेणातिविस्तीर्णा शोभैव कान्तिरुच्यते।

---

१३५ रूपयौवनलालित्यभोगाद्यैः रूपं (सौन्दर्य्यं) च यौवनं च लालित्यं (सुकुमारत्वं) च भोगाद्यानि (स्रक्चन्दनताम्बूलादिसेवनान्यलङ्कारधारणानि च) चेति तैः। अङ्गभूषणमङ्गानां भूषणं पर्य्याप्तिः शोभा। प्रोक्ता। अयमभावः–रूपादिनाऽङ्गसज्जा शोभा। न चालङ्कारधारणे शोभा यत्नजा स्यादिति वाच्यम्। शोभायास्तथा प्रसाधनमात्रत्वात्, वस्तुतस्तु शोभयाऽयत्नजयैवालङ्कारधारणस्य पर्य्यासत्वम्। इति ॥ १२० ॥

तत्र तासु रूपाद्युपाधिभिर्भिद्यमानासु शोभासु मध्ये इति यावत्। यौवनशोभा। यथा–असम्भृतमित्यादौ

अथ प्राक्तनजन्मन्यभ्यस्तानां विद्यानां प्राप्त्यनन्तरमित्यर्थः। सा पार्वती। अङ्गयष्टेरङ्गं शरीरं यष्टिर्ध्वजादिदण्ड इवेति तस्याः। 'अङ्गं गात्रे...त्रिष्वङ्गवति चान्तिके।' इति मेदिनी। असम्भृतं न सम्भृतं सङ्गृह्य सम्पादितमिति तथोक्तम्। अयत्नसिद्धमिति भावः। मण्डनमाभूषणं। मदस्य। अनासवाख्यं नासवाख्या यस्य तत्तथोक्तमास-वाख्यारहितमिति भावः। करणं साधनम्। कामस्य पुष्पधन्वत्वेन प्रसिद्धस्य। पुष्पव्यतिरिक्तं पुष्पेभ्यो व्यति-रिक्तं भिन्नं तत्तथोक्तम्। अस्त्रम्। बाल्याच्छैशवात्। परमनन्तरभावि। वयोऽवस्थाम्, यौवनमिति यावत्। प्रपेदे प्राप्तवती। अत्राहुर्मल्लिनाथाः–'यौवनेनैव हि युवतयः प्रसाध्यन्ते काम्यन्ते चेति भावः। अत्र द्वितीये पादे आसवरूपकारणाभावेऽपि तत्कार्य्यमदोक्तेर्विभावनाऽलङ्कारः।..प्रथमतृतीययोस्तु आरोप्यमाणयोर्म्मण्डनमदनाश्रितयोः प्रकृतोपयोगात्परिणामालङ्कारः।' इति। कुमारसम्भवस्येदं पद्यम्, अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ५९ ॥'

एवं रूपादिशोभाऽपि बोध्येत्याह–एवमित्यादिना।

एवं यथाऽत्र यौवनशोभोदाहृता तथेत्यर्थः। अन्यत्र। अपि 'रूपादिशोभोदाहार्य्ये'ति शेषः। तथाहि–रूप-शोभा यथा–'आलोक्य सुन्दरि! मुखं तव मन्दहासं नन्दन्त्यमन्दमरविन्दधिया मिलिन्दाः। किञ्चासिताक्षि! मृगला-ञ्छनसम्भ्रमेण चञ्चूपुटं चपलयन्ति चिरं चकोराः ॥' लालित्यशोभा यथा–'अधारि पद्मेषु तदङ्घ्रिणा घृणा क्व तच्छ-यच्छायलवोऽपि पल्लवे। तदास्यदास्येऽपि गतोऽधिकारितां न शारदः पार्विकशर्वरीश्वरः ॥' भोगशोभा यथा–'वियति विलोलति जलदः, स्खलति विधुश्चलति कूजति कपोतः। निष्पतति तारकाततिरान्दोलति वीचिरमरवाहिन्याः ॥' इत्यत्र चन्द्रहारादिवर्णनात्। इति दिक्।

अथ कान्तिं लक्षयितुमुपक्रमते–अथेत्यादिना।

अथ। कान्तिर्लक्ष्यते–१३६ सैव..इत्यादिना।

१३६ सा निरुक्तस्वरूपा शोभेत्यर्थः। एव। मन्मथाप्यायितद्युतिर्म्मन्मथेन कामदेवेनाप्यायिता वर्द्धिता पोषिता वा द्युतिर्यस्याः सा। 'सती'ति शेषः। कान्तिः।

तदेवाह–मन्मथोन्मेषेण मन्मथस्य (मनो मनसो मथो मन्थनकारीति तस्य) उन्मेषो जागृतिस्तेन। अतिवि-स्तीर्णाऽत्यन्तं विस्तारं प्रापितेत्यर्थः। शोभा। एव। कान्तिः। उच्यते कथ्यते।

यथा-'नेत्रे खञ्जनगञ्जने-' इत्यादि । अथ दीप्तिः—

**१३७ कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते ॥ १२१ ॥**

यथा मम चन्द्रकलानामनाटिकायां चन्द्रकलावर्णनम्-

'तारुण्यस्य विलासः समधिकलावण्यसम्पदो हासः ।
धरणितलस्याभरणं युवजनमनसो वशीकरणम् ॥ ६० ॥'

अथ माधुर्य्यम्-

**१३८ सर्वावस्थाविशेषेषु माधुर्य्यं रमणीयता ।**

यथा-

'सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।

---

उदाहरणं दर्शयति-**यथा**-'**नेत्रे खञ्जनगञ्जने**..'इत्यादि । 'तथाऽन्यदप्यवसेय' मिति शेषः ।

अथ दीप्तिं लक्षयितुमुपक्रमते-**अथे**त्यादिना ।

**अथ । दीप्तिर्लक्ष्यते-१३७ कान्ति...**इत्यादिना ।

१३७ **कान्तिर्निरुक्तलक्षणे**'ति शेषः । **एव । अतिविस्तीर्णा । दीप्तिः । इति । अभिधीयते**॥ १२१ ॥

उदाहर्तुमुपक्रमते-**यथे**त्यादिना ।

**यथा । मम ।** सम्बन्धसामान्यविवक्षया षष्ठी । **चन्द्रकलानामनाटिकायां** चन्द्रकलानाम्नी चासौ नाटिका तस्याम् । 'पुंवत्कर्मधारयजातीयदेशीयेषु ।' ६।३।४२ इति पुंवद्भावः । **चन्द्रकलावर्णनम् ।**

'**तारुण्यस्य** यौवनावस्थायाः । **विलासस्तत्स्वरूपभूतेत्यर्थः । समधिकलावण्यसम्पदः** समधिकं यदपेक्षयाऽनन्यातिशयस्तादृशं यल्लावण्यं 'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' इत्युक्तलक्षणं सौन्दर्य्यं तस्य सम्पत् समधिका वा या लावण्यसम्पत्तस्या इति तथोक्तायाः । **हासः** प्रमोदचिह्नभूतेत्यर्थः । **धरणितलस्य** धरणिः पृथिवी तस्यास्तलं स्वरूपं तस्य, पृथिव्या इति भावः । 'अधः स्वरूपयोरस्त्री तल' मित्यमरः । **आभरणमाभूषणस्वरूपेत्यर्थः । युवजनमनसो** युवानो ये जनास्तेषां मनस्तस्य । **वशीकरणं** तत्स्वरूपभूतेति भावः । अत्रेदं बोध्यम्-विलासादीनां तारुण्यादिसम्बन्धित्वाभावेपि चन्द्रकलास्वरूपभूतत्वाभावेऽपि च तथा प्रतिपादनं लक्षणया । अत एव तर्कवागीशाः प्राहुः 'अत्र तारुण्यविलासादीनामतिशयो लक्षणाप्रयोजनम् ।' इति । अत्रार्य्या छन्दः, तल्लक्षणं चोक्तं प्राक् ॥'

अथ माधुर्य्यं लक्षयितुमाह-**अथ । माधुर्य्यम् ।** लक्ष्यते-१३८ **सर्वा**..इत्यादिना ।

१३८ **सर्वावस्थाविशेषेषु** सर्वाः प्रतिकूलाप्रतिकूलोभयविधा या अवस्थाः स्वरूपावस्थितयस्तासां विशेषाः प्रकारास्तेषु । **माधुर्यं । रमणीयता** 'क्षणेक्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः ।' इत्युक्तस्वरूपा सुन्दरतेत्यर्थः ।

उदाहरति-**यथा-'सरसिज**.. इत्यादौ ।

'**शैवलेन** शेवालेन । 'जलनीली तु शेवालं शैवल' इत्यमरः । **अपि** किं पुनरन्येन येन केनापि वस्तुनेति भावः । **अनुविद्धं** व्याप्तम् । **सरसिजं** कमलम् । **रम्यं** रमणीयं भवति । न हि जलस्य शेवालेनापि जलस्थस्य कमलस्य रमणीयत्वं व्याहन्यत इति भावः । **मलिनं** स्वभावतोऽसुन्दरम् । **अपि । हिमांशोश्चन्द्रमसः । लक्ष्म** नीलिमचिह्नम् । **लक्ष्मीं** शोभाम् । 'लक्ष्मीः सम्पत्तिशोभयोः । ऋद्ध्यौषधे च पद्मायां वृद्धिनामौषधेऽपि च ।' इति मेदिनी । **तनोति ।**

इयमधिकमनोज्ञा वल्कलेनापि तन्वी, किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥६१॥'

अथ प्रगल्भता—

१३९ निःसाध्वसत्वं प्रागल्भ्यम्—

यथा—

'समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि। दष्टाश्च दंशनैः कान्तं दासीकुर्वन्ति योषितः ॥६२॥'

अथौदार्य्यम्—

१४० औदार्य्यं विनयः सदा ॥ १२२ ॥

यथा—'नो ब्रूते परुषां गिरं, वितनुते न भ्रूयुगं भङ्गुरं,
नोत्तंसं क्षिपति क्षितौ श्रवणतः सा मे स्फुटेऽप्यागसि।
कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्ष्या बहिः-
सख्या वक्त्रमभि प्रयच्छति परं पर्य्यश्रुणी लोचने ॥६३॥'

---

इयम्। तन्वी। वल्कलेन वृक्षाणां त्वचा। 'त्वक् स्त्री वल्कं वल्कलमस्त्रियाम्।' इत्यमरः। अपि। अधिकमनोज्ञा 'पूर्वावस्थात' इति शेषः। नन्वेवं कथमित्याह–हि यतः। मधुराणां माधुर्य्यमापन्नानाम्। आकृतीनाम्। किमिव किं नाम। मण्डनं प्रसाधनम्। न 'भवे' दिति शेषः। अपि तु सर्वमेवेति भावः। 'हीनमहीनं स्वसंबद्धं चेति सामान्यस्य समर्थकत्वादर्थान्तरन्यासः।..पादत्रये साधारणधर्मस्य रम्यलक्ष्मीविस्तारमनोज्ञपदैरभिधानान्मालाप्रतिवस्तूपमा। वृत्त्यनुप्रासच्छेकानुप्रासयोः संसृष्टिः। अर्थालङ्कारयोरङ्गाङ्गिभावः सङ्करः।' इति राघवभट्टाः। शकुन्तलाया वल्कलधारणेऽपि शोभाऽतिशयमनुभवतो दुष्यन्तस्य स्वयं परामर्शोऽयम्। शाकुन्तलस्येदं पद्यम्, मालिनी छन्दः, तल्लक्षणं च यथोक्तम् 'ननमयययुतेयं मालिनी भोगिलोकैः ॥ ६१ ॥'

अथ प्रगल्भतां लक्षयितुमुपक्रमते–अथेत्यादिना।

अथ। प्रगल्भता 'लक्ष्यते–१३९ निःसाध्वसत्वं...इत्यादिना।

१३९ निःसाध्वसत्वं निर्गतं साध्वसं भयं दयितापराधविचारजन्यो दयितादुःखसम्भावनाजन्यो वा दयिताय। दयितेन दयितस्य दयितया वा साकं यथेष्टं रमणप्रतिबन्ध इति यावत्, यस्या यस्य वा तस्यास्तस्य वा भावस्तत्त्वं तथोक्तम्। प्रागल्भ्यम्।

उदाहरति–यथा–'समाश्लिष्टाः..इत्यादौ।

'समाश्लिष्टाः सम्यग् यथेष्टमाश्लिष्टा आलिङ्गिता इति तथोक्ताः। 'सत्य' इति शेषः। एवं परत्रापि। समाश्लेषैः। चुम्बिताः। चुम्बनैः। अपि। दष्टाः। च पुनः। दंशनैः। अत्र साधने तृतीया। योषितो नायिकाः। कान्तम्। दासीकुर्वन्ति स्वाधीनं कुर्वत इत्यर्थः। अत्र श्लोकश्छन्दः, लक्षणं चोक्तं प्राक् ॥६२॥'

उदारतां लक्षयितुमाह–अथ। औदार्य्यमुदारता 'लक्ष्यते–१४० औदार्य्यम्...इत्यादिना।

१४० सदाऽपराधे ज्ञातेपि किं पुनरन्यदेति भावः। विनयः कोपाविष्करणाभावः। औदार्यमुदारत्वम् ॥१२२॥

उदाहरति–यथा–'नो ब्रूते.. इत्यादौ।

'साऽपराधेऽपि सौम्यस्वभावा। कान्ता प्रियेत्यर्थः। मे मम। आगस्यपराधेऽन्योपभोगरूपे दण्डनीयत्वहेतुभूते चेष्टित इत्यर्थः। स्फुटे प्रत्यक्षं ज्ञाते। अपि। परुषां क्रोधव्यञ्जिकां रूक्षामित्यर्थः। गिरम्। नो। ब्रूते उच्चरति, यद्युच्चरति तदा कोमलामेवेति भावः। भ्रूयुगं भ्रुवोर्युगं तत्तथोक्तम्। भङ्गुरं कुटिलम्। न। वितनुते करोति, यदि वितनुते तदा सरलमेव भ्रूयुगमिति भावः। श्रवणतः कर्णात्। उत्तंसं तस्याभरणम्। 'कमलादी'ति शेषः।

अथ धैर्यम्—

**१४१ मुक्ताऽऽत्मश्लाघना धैर्यं मनोवृत्तिरचञ्चला ।**

यथा—

**'ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी, दहतु मदनः, किं वा मृत्योः परेण विधास्यति ।**
**मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया, कुलममलिनं, न त्वेवायं जनो न च जीवितम् ॥६४॥'**

---

**क्षितौ** पृथिव्याम् । **न** नैव । **क्षिपति** पातयति, यदि क्षिपति तथा सन्निधानस्थान एवेति भावः । किन्तु—**गर्भगृहे** गर्भ इव गृहमिति तत्र, गृहस्य मध्यभाग इत्यर्थः । 'स्थिते'ति शेषः । **गवाक्षविवरव्यापारिताक्ष्या** गवाक्षस्य विवरं तत्र व्यापारिते सञ्चालिते, अक्षिणी यया तस्यास्तथोक्तायाः । किं मम सखी करोतीति गवाक्षरन्ध्रतस्तन्निरीक्षणा तच्चेष्टितं विजिज्ञासन्त्या इत्यर्थः । **बहिःसख्या** बहिर्वर्त्तमानायाः सख्या इत्यर्थः । **वक्त्रं** मुखम् । **अभ्यभिलक्ष्य** । अत एव-'अभिरभागे ।' १।४।९१ इत्यनेन'वक्त्र'मिति द्वितीया । **परं** केवलम् । **पर्य्यश्रुणी** परिगतानि अश्रूणि ययोस्ते अश्रुरहिते इत्यर्थः, असम्भवं द्योतयितुमिदं विशिष्योक्तम् । **लोचने** । **प्रयच्छति** समर्पयति । अत्राहुष्टिप्पणीकाराः—'विषयान्तरावलोकनप्रवणेयं ममैवंविधामवस्थां न ज्ञास्यतीति तथाचरति । अन्यथा स्वजनसमक्षं दुःखोत्पीडस्य प्रतिरोद्धुमशक्यतया तत्कारणाभिव्यक्तौ विनयव्यत्यासः स्यात् ।' इति । यद्वा-पर्य्यश्रुणी अश्रुभिर्व्याप्ते । लोचने । प्रयच्छति निवर्त्तयतीत्यर्थः । 'यम' उपरमे । बहिःस्थां सखीमालक्ष्य जायमाने दुःखोत्पीडे नेत्रे पर्य्यश्रुणी इति ततोऽपहरतीति भावः । यद्वा—**वक्त्रं** मुखावधि । 'कालाध्वनोरत्यन्तसंयोगे ।' २।३।५ इति द्वितीया । पर्य्यश्रुणी पर्य्याप्तान्यश्रूणि ययोस्ते । लोचने । अभिप्रयच्छति समर्पयति । नह्येतावता (दुःखनिवेदनेन) कोपाविष्करणं, येन लक्षणसङ्गतिर्व्याहन्येत । अत एव 'पर्य्यश्रुणी अश्रुव्याप्ते' इति विवृतिकाराः प्राहुः । 'पर'मिति च सङ्गच्छते । कस्यापि ज्ञानपरप्रसङ्गस्य कमपि सखायं प्रत्युक्तिरियम् । अत्र शार्दूलविक्रीडितं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ६३ ॥'

अथ धैर्य्यं लक्षयितुमाह—**अथ** । **धैर्य्यं** धीरस्य भाव इति तथोक्तम् । 'लक्ष्यते—**१४१ मुक्ता**..इत्यादिना ।

**१४१ मुक्तात्मश्लाघना** मुक्तं परित्यक्तमात्मनः स्वस्य श्लाघनं गुणारोपपुरःसरं प्रशंसनं यया सा । **अचञ्चला** । **मनोवृत्तिर्मनसो** वृत्तिः प्रणिधेयाकारतयाऽवस्थानमिति तथोक्ता । **धैर्य्यं** तत्पदवाच्यं'स्या'दिति शेषः ।

उदाहरति—**यथा**—'**ज्वलतु**...इत्यादौ ।

'**रात्रौरात्रौ** प्रतिरात्रि । **अखण्डकलो**ऽखण्डाः समग्राः कला यस्य सः, पूर्णकल इत्यर्थः । **शशी** चन्द्रः । **गगन** आकाशे । **ज्वलतु** ज्वलनः सन् दीप्यताम् । 'सन्तापकः सन् दीप्यता'मिति तु विवृतिकाराः । **मदनः** कामः । 'अपी'ति शेषः । **दहतु** । पूर्णचन्द्रस्य साहाय्येन प्रचण्डो मदनोऽपि करोतु यथेष्टं दग्धं मामिति भावः । **मृत्योः** । **परेणा**धिकम् । 'परेणे'त्यव्ययमधिकार्थे इति विवृतिकाराः । **किम्** । **वा** । **विधास्यति**'मदनः शशी वे'ति पूर्वतोऽन्वेति । **मम** । **तु** पुनः । **दयितः** प्रियः । **श्लाघ्यः** प्रशंसनीयः । **तातः** पिता । **जननी** माता । 'चे'ति शेषः । **अमलान्वया**ऽमलो निष्कलङ्कोऽन्वयो वंशो यस्याः सा तथोक्ता । लिङ्गव्यत्ययेन'तात'इत्यनेनाप्यन्वेति । एवं च—**कुलम्** । **अमलिनं** न मलिनमिति तथोक्तः । **न** । **तु** । **अयं** मल्लक्षणो **जनः** । **एव** । 'अमलिन'मिति लिङ्गव्यत्ययेनान्वेति, अमालिन्ये दुःखानुदयादिति भावः । अत एव—**न** । **च** । **जीवित**ममलिन'मिति पूर्वतोऽन्वेति । टिप्पणीकारास्त्वाहुः-'अयं मल्लक्षणो जनो न त्वेव स्थिरः, जीवितं च न स्थिरम्, अचिरावस्थायिनः शरीरस्य कृते मातृपितृभर्तृकुलकलङ्कनमतितरामनुचितमिति भावः ।'इति । ज्वलति शशिनि, दहति च मदने मालत्याः सख्याः पुरस्तात्परामर्शोऽयम् । मालतीमाधवस्येदं पद्यम् । हरिणीप्लुतं च च्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥६४॥'

एवं भावादींस्त्रीनङ्गजान् शोभादीन् सप्तायत्नजानित्येवं नायिकानायकोभयसाधारणान् दशालङ्काराँल्लक्षणानुपदमुदाहृत्य स्वभावजान्नायिकामात्रसम्भवाँल्लक्षयितुमुपक्रमते-अथेत्यादिना ।

अथ लीला-

१४२ अङ्गैर्वेषैरलङ्कारैः प्रेमभिर्वचनैरपि ॥ १२३ ॥
प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः ।

'मृणालव्यालवलया वेणीबन्धकपर्दिनी । हरानुकारिणी पातु लीलया पार्वती जगत् ॥६५॥'

अथ विलासः--

१४३ यानस्थानासनादीनां-मुखनेत्रादिकर्म्मणाम् ॥ १२४ ॥
विशेषस्तु विलासः स्या-दिष्टसन्दर्शनादिना ।

यथा-

'अत्रान्तरे किमपि वाग्विभवातिवृत्त-वैचित्र्यमुल्लसितविभ्रममुत्पलाक्ष्याः ।
तद्भूरिसात्त्विकविकारमपास्तधैर्य्य-माचार्य्यकं विजयि मान्मथमाविरासीत् ॥६६॥'

---

अथ । लीला-'लक्ष्यते...१४२ अङ्गै...इत्यादिना ।

१४२ प्रीतिप्रयोजितैः प्रीत्या प्रयोजितानि प्रयोजिता वा तैस्तथाभूतैः । अङ्गैर्लक्षणयाऽङ्गचेष्टाभिः । वेषैर्वस्त्रादिना प्रसाधनैः । अलङ्कारैः । प्रेमभिः प्रेमवद्भिः । वचनैः । अपि । प्रियस्य । अनुकृति मनुकरणम् । लीलाम् । विदुः ॥१२३॥

उदाहरति-यथा-'मृणाल...इत्यादौ ।

'मृणालव्यालवलया मृणालं कमलमूलमेव व्यालस्सर्पः, स एव वलयं कङ्कणं यस्याः सा । वेणीबन्धकपर्दिनी वेण्याः केशपाशस्य बन्धो बन्धनं स एव कपर्दोऽस्या अस्तीति तथोक्ता । कपर्दो महादेवस्य जटाजूटः । अत एव-लीलया न तु कारणान्तरेण । हरानुकारिणी । पार्वती । जगत् ( कर्म्म ) । पातु । अत्र श्लोकश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥'

यथा वा मम-'श्यामस्य गानमिव हन्त निशम्य यस्याः पादस्पृशोऽहमहमित्युपपद्य धेन्वः । सा वेणुवादनपरा परमा त्रिभङ्गा श्यामा पुनात्वखिलमोहनमोहनीयम् ॥६५॥' इति ।

विलासं लक्षयितुमाह-अथ । विलासो लक्ष्यते-यान..इत्यादिना ।

१४३ यानस्थानासनादीनां यानं ( गमनं ) च स्थानं ( उत्थानं ) चासनं ( उपवेशनं ) चेति, तान्यादौ येषां तेषाम् । आदिपदेनागमनशयनादीनां ग्रहणम् । मुखनेत्रादिकर्म्मणां मुखनेत्रादीनां कर्म्माणि तेषां तथोक्तानाम् । आदिपदेन भ्रुकुट्यादीनां ग्रहणम् । मुखकर्म्म ताम्बूलचर्वणसुहसितविकसनादि, नेत्रकर्म्म सप्रेमसलज्जनिरीक्षणादि । इष्टसन्दर्शनादिनेष्टस्य प्रियस्य सन्दर्शनादि समवलोकनादि तेन । आदिपदेनालिङ्गनादिग्रहणम् । विशेषः कश्चित्प्रकारोऽतिशयो वा । तु पुनः । विलासः । स्यात् ॥१२४॥

उदाहरति-यथा-'अत्रा... इत्यादौ ।

'अत्रास्मिन्मम ( नायकस्य ) समीक्षणरूप इत्यर्थः । अन्तरेऽवकाशे । उत्पलाक्ष्याः उत्पले इवाक्षिणी यस्यास्तस्याः अम्बुजनेत्राया मालत्या इत्यर्थः । किमप्यनिर्वचनीयम् । वाग्विभवातिवृत्तवैचित्र्यं वाचो भाषणस्य विभवस्तस्यातिवृत्तमत्यन्तं यद्वैचित्र्यमद्भुतत्वं तत्तथोक्तम् । उल्लसितविभ्रममुल्लसितो विभ्रमो यत्र तत् । भूरिसात्त्विकविकारं भूयोऽनेके सात्त्विकविकारा यत्र तत् । अनेकसात्त्विकविकारलक्षणलक्षितमित्यर्थः । अपास्तधैर्य्यमपास्तं विजितं धैर्य्यं येन तत् । अत एव-विजयि विजयशीलम् । अन्यैरजेयमिति भावः । तदनुभवरमणीयम् । मान्मथं मन्मथस्य मनोमथनकारिण इदमिति तथोक्तम् । आचार्य्यकमाचार्य्यरूपं प्रधानस्वरूपं 'चेष्टित' मिति शेषः । आविरासीत् । माधवस्येयमुक्तिः । मालतीमाधवस्येदं पद्यम् । वसन्ततिलकं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥६६॥'

अथ विच्छित्तिः-

**१४४ स्तोकाऽप्याकल्परचना विच्छित्तिः कान्तिपोषकृत् ॥ १२५ ॥**

यथा-

'स्वच्छाम्भःस्नपनविधौतमङ्ग, मोष्ठ-स्ताम्बूलद्युतिविशदो विलासिनीनाम्।
वासस्तु प्रतनु विविक्तमस्त्वितीया-नाकल्पो यदि कुसुमेषुणा न शून्यः॥६७॥'

अथ विव्वोकः-

**१४५ विव्वोकस्त्वतिगर्वेण वस्तुनीष्टेऽप्यनादरः ॥ १२६ ॥**

यथा-'यासां सत्यपि सद्गुणानुसरणे दोषानुवृत्तिः परा,
याः प्राणान्वरमर्पयन्ति, न पुनः सम्पूर्णदृष्टिं प्रिये।

---

अथ विच्छित्तिं लक्षयितुं प्रतिजानीते-अथेत्यादिना।

अथ विलासोदाहरणानन्तरम्। **विच्छित्तिर्लक्ष्यते-१४४ स्तोका**..इत्यादिना।

१४४ **स्तोका**ऽल्पा। 'स्तोक--स्त्रिष्वल्पे चातके पुमान्।' इति मेदिनी। अपि किं पुनर्वह्वीति भावः। **कान्तिपोषकृत्** कान्तेः शोभायाः पोष आनुकूल्यमिति यावत्, तं करोतीति तथाभूता। **आकल्परचना**ऽऽकल्पस्य रचना यथोपयोगं सङ्घटनविशेष इति तथोक्ता। 'आकल्पवेषौ नेपथ्यं..' इत्यमरः। **विच्छित्तिः** ॥ १२५ ॥

उदाहरति-यथा-'**स्वच्छाम्भः...**'इत्यादौ।

'**यदि**। **कुसुमेषुणा** कुसुमानि पुष्पाण्येवेषवो बाणा यस्य तेन। कामदेवेनेत्यर्थः। **न** नैव। **शून्यो** रिक्तः। **स्यात्**। तर्हि-**विलासिनीनां** विलासः सुरतमेषामस्तीति तेषामिमा विलासिन्यस्तासाम्। सुरतशीलानां नायिकानामित्यर्थः। 'विलासो हावभेदे स्याल्लीलायामपि पुंस्ययम्।' इति मेदिनी। **स्वच्छाम्भःस्नपनविधौतं** स्वच्छमम्भो जलं तेन स्नपनं तेन विधौतमपनीतरज इति तथोक्तम्। 'धावु' गतिशुद्ध्योः। 'निष्ठा।' ३।२।१०२ क्तः। **अङ्गं** शरीरम्। तथा-**ताम्बूलद्युतिविशद**स्ताम्बूलस्योपचारात्ताम्बूलवीट्या द्युतिस्तया विशदो व्यक्तो रंजित इति यावत्, इति तथोक्तः। 'विशदः पाण्डुरे व्यक्त' इति हैमः। **ओष्ठः**। एवम्-**वासो** वस्त्रम्। **तु**। **प्रतनु** प्रकर्षेण तनु सूक्ष्ममिति तथोक्तम्। 'सूक्ष्मं दभ्रं कृशं तनु।' इत्यमरः। **विविक्तं** पवित्रं निर्म्मलमिति यावत्। 'विविक्तौ पूतविजना' वित्यमरः। **इतीत्थ**मेवम्। **इयानेतावान्**। **आकल्पो** वेषः। **अस्तु** 'पर्य्याप्त' इति शेषः। शिशुपालवधस्येदं पद्यम्। अत्र प्रहर्षिणी छन्दः, तल्लक्षणं यथोक्तम् 'प्रहर्षिणी म्नौ ज्रौ ग् त्रिकदशकौ। इति ॥६७॥'

यथा वा मम-'नो हारं, न च मेखलां, न च रणद्रत्नावली नूपुरौ, नो निष्कं, न च कङ्कणं, न च महद्वत्ते विभूषान्तरम्। एषा हन्त तथाऽपि दीपकशिखेवेतस्ततश्चारिणी यावद्दर्शनमातनोति किमपि ज्योतिस्तमस्तत्परम्॥' इति

अथ विव्वोकं लक्षयितुं प्रतिजानीते-अथेत्यादिना।

अथ विच्छित्त्युदाहरणानन्तरम्। **विव्वोकः** लक्ष्यते-१४५ **विव्वोकः** इत्यादिना।

१४५ **इष्टे**ऽभिमते। अपि 'किं पुनरनभिमत' इति भावः। **वस्तुनि** नीवीविस्रंसनादावित्यर्थः। अत्र विषये सप्तमी। **अतिगर्वेण**। **अनादर** आदराभावः। **विव्वोकः**। **तु** 'मत' इति शेषः ॥ १२६ ॥

उदाहरति-यथा-'**यासां...** इत्यादौ।

'**यासाम्**। **सद्गुणानुसरणे** सन्तः सतां वा गुणाः सुस्मितभाषणादिरूपास्तेषामनुसरणमनुसृत्योपासनं तस्मिंस्तथोक्ते। **सति** वर्त्तमाने। **अपि**। **दोषानुवृत्ति**र्दोषाणां गुणप्रतिकूलानां प्रसादानुग्रहाद्यभावरूपाणां दूषणानां, रात्रीणां वाऽनुवृत्तिरनुवर्त्तनं सेवनमिति यावत्। 'दोषौ ऽवद्यो, निशा दोषा' इति गोपालः। **परा**ऽत्यन्ता। 'अस्ती' ति शेषः। **याः**। **प्राणान्** जीवनमित्यर्थः। **वरं** यथेष्टम्। **अर्पयन्ति** निवेदयन्ति। **न**। **पुनः**। **प्रिये** स्वकान्ते। **सम्पूर्णदृष्टिं** सम्पूर्णा मुखावगुण्ठनोद्घाटनपुरःसरमसङ्कुचिता दृष्टिर्दर्शनं नेत्रविषयीकरणमिति यावत्,

अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मक,-
स्तास्त्रैलोक्यविलक्षणप्रकृतयो वामाः प्रसीदन्तु ते ॥६८॥'

अथ किलकिञ्चितम्-

१४६ स्मितशुष्करुदितहसित-त्रासक्रोधश्रमादीनाम् ।
साङ्कर्य्यं किलकिञ्चित-मभीष्टतमसङ्गमादिजाद्धर्षात् ॥ १२७ ॥

यथा-'पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः ।
कामिनः स्म कुरुते करभोरू-र्हारि शुष्करुदितं च सुखेऽपि ॥६९॥'

अथ मोट्टायितम्--

---

ताम्। 'अर्पयन्ती' ति पूर्वतोऽन्वेति। यासाम्। अत्यन्ताभिमतेऽत्यन्तमभिमतं तत्र। वस्तुनि। अपि 'किं पुनर्येन केनापि रूपेणाभिमत' इति शेषः । निषेधात्मकः। विधिर्विधानम्। ताः। त्रैलोक्यविलक्षणप्रकृतय-स्त्रयो लोका इति त्रैलोक्यं तस्माद् विलक्षणा भिन्ना प्रकृतिः स्वभावो यासां तास्तथोक्ताः । *'चतुर्वर्णादीनां स्वार्थ उपसङ्ख्यानम्।' इति ष्यञ्। 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः।' इति मेदिनी। एवं च-ब्रह्मणस्त्रैलोक्य-मात्रस्रष्टृत्वेन तल्लेखापरतन्त्रभूता इति सूचितम्। वामाः सुन्दर्यः। ते तुभ्यम्। 'रुच्यर्थानां प्रीयमाणः।' १।४।३३ इति चतुर्थी। प्रसीदन्तु। कमपि कामिनं प्रति कस्यापि सख्युराशीर्वादोऽयम् । अत्र शार्दूलविक्रीडितं वृत्तम्। तल्लक्षणं चोक्तं प्राक् ॥६८॥.'

अथ किलकिञ्चितं लक्षयितुं प्रतिजानीते-अथेत्यादिना ।

अथ बिब्बोकोदाहरणानन्तरम्। किलकिञ्चितं लक्ष्यते-१४६ स्मित...इत्यादिना ।

१४६ अभीष्टतमसङ्गमादिजादतिशयितोऽभीष्टः प्रियः प्राणनाथ इति यावत्, इत्यभीष्टतमः, तस्य सङ्गमा-दिस्तस्माज्जायत इति तस्मात्तथोक्तात् । आदिपदेनालिङ्गनादिग्रहणम्। 'अतिशायने तमबिष्ठनौ।' ५।३।५५ इति तमप्। 'सप्तम्यामजातौ।' ३।२।९८ इति डः। हर्षात्। स्मितशुष्करुदितहसितत्रासक्रोधश्रमादीनां स्मितं (मन्दहासः) च शुष्करुदितं (अश्लेशमश्रुपातरहितं रोदनं) च हसितं च त्रासश्च क्रोधश्च श्रमश्चेति त आदौ येषां तथोक्तानाम्। आदिपदेन कम्पनोज्जृम्भणादीनां ग्रहणम्। साङ्कर्य्यं सङ्करता 'खले कपोत'-न्यायेन युगपदुपस्थिति-रिति यावत्। किलकिञ्चितम्। 'मत' मिति शेषः। अत्रोद्गीतिः छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १२७ ॥

उदाहरति-यथा-'पाणि... इत्यादौ ।

'करभोरूः करभौ मणिबन्धादारभ्य कनिष्ठापर्य्यन्तो हस्तस्तद्वदूरू जानूपरितनौ भागौ यस्याः सा । 'करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते।' इति मेदिनी । 'ऊरूत्तरपदादौपम्ये।' ४।१।६९ इत्यूङ्। कामिनः। कामोऽभि-लाषो रिरंसेति यावत्, अस्यास्तीति तस्य। रिरंसोर्नायकस्येति भावः । अविरोधितवाञ्छं न विरोधिता वाञ्छा यस्मिन् कर्मणि तत्तथा। पाणिरोधं पाणेः (नीवीस्रंसने व्यापृतस्य) करस्य रोधो निरोधस्तम्। च। मधुर-स्मितगर्भा मधुरं रमणीयं स्मितं गर्भे मध्ये यासां ताः। भर्त्सना 'मैव' मित्यादिरूपा अपपूर्विका उक्तीः। च तथा। सुखे सुखसाधनभूते चुम्बनादावित्यर्थः। अपि 'किं पुनरन्यदे'ति शेषः। हारि 'मनस' इति शेषः। शुष्करुदितं शुष्कं दुःखमन्तरा क्रियमाणत्वादनार्द्रं (अश्रुपातरहितम्) च तद्रुदितं तत् तथोक्तम्। 'नपुंसके भावे क्तः।' ३।३।११४ इति क्तः। कुरुते। स्म। चकार। 'लट् स्मे।' ३।२।११८ इति लट्। शिशुपालवधस्येदं पद्यम्। अत्र स्वागता छन्दः, तल्लक्षणं यथोक्तं 'स्वागता रनभगैर्गुरुणा स्यात्' इति ॥६९॥

अथ मोट्टायितं लक्षयितुं प्रतिजानीते-अथेत्यादिना ।

अथ किलकिञ्चितोदाहरणानन्तरम्। मोट्टायितं लक्ष्यते-१४७ तद्भाव..इत्यादिना ।

१४७ तद्भावभाविते चित्ते वल्लभस्य कथाऽऽदिषु ।
मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम् ॥ १२८ ॥

'सुभग ! त्वत्कथाऽऽरम्भे कर्णकण्डूतिलालसा। उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साऽङ्गना॥७०॥'

अथ कुट्टमितम्–

१४९ केशस्तनाधरादीनां ग्रहे हर्षेऽपि सम्भ्रमात् ।
आहुः कुट्टमितं नाम शिरःकरविधूननम् ॥ १२९ ॥

यथा–'पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे ।
पर्य्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण ॥७१॥'

---

१४७ **तद्भावभाविते** तस्य वल्लभस्य भावो रतिर्वासनेति यावत्तेन भावितं व्याप्तं तत्र । 'विकारो मानसो भाव' इत्यमरः। **चित्ते** 'सती'ति शेषः । **वल्लभस्य** । **कथाऽऽदिषु** 'सत्सु चे'ति शेषः । **कर्णकण्डूयनादिकम्** । आदिपदेन जृम्भणादिग्रहणम्। **मोट्टायितम्**। इतीत्येवं प्रसिद्धमलङ्कारम्। **प्राहुः** 'भरताद्या' इति शेषः ॥१२८॥

उदाहरति–**यथा**–'**सुभग**.. इत्यादौ ।

'हे **सुभग** सुन्दर ! **सा** । **अङ्गना** । **त्वत्कथाऽऽरम्भे** तव कथा चरितचर्चा तस्या आरम्भस्तस्मिन् । 'सती'ति शेषः । **कर्णकण्डूतिलालसा** कर्णस्य कण्डूतिः कण्डूयनं तत्र लालसोत्कण्ठा कामना यस्याः सा । 'सोऽत्यन्तं लालसा द्वयोः ।' इत्यमरः । **उज्जृम्भवदनाम्भोजो**ज्जृम्भं जृम्भायुक्तं वदनाम्भोजं मुखकमलं यस्याः सा । **अङ्गानि** । **भिनत्ति** । अत्र श्लोकश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥७०॥'

या वा–'उपासनामेत्य पितुः स्म रज्यते दिनेदिने साऽवसरेषु बन्दिनाम्। पठत्सु तेषु प्रतिभूपतीनलं विनिद्र-रोमाऽजनि शृण्वती नलम् ॥' इत्यादौ ।

अथ कुट्टमितं लक्षयितुं प्रतिजानीते–अथेत्यादिना।

अथ मोट्टायितनिरूपणानन्तरम्। **कुट्टमितं** लक्ष्यते–१४८ **केश**..इत्यादिना ।

१४९ **केशस्तनाधरादीनाम्** । आदिपदेन दुकूलादीनां ग्रहणम्। **ग्रहे** ग्रहणे। विषयसप्तमीयम्। **हर्षे** सतिसप्तमीयम् । **अपि** । **सम्भ्रमा**त्त्वरया । 'सम्भ्रमस्त्वरे' त्यमरः । **शिरःकरविधूननं** शिरःकर-योर्मस्तकहस्तयोर्विधूननं कम्पनम्। **कुट्टमितम्**। **नाम** प्रसिद्धम् । 'अलङ्कार' मिति शेषः।' **आहु**'र्भरतादय' इति शेषः ॥ १२९ ॥

उदाहरति–**यथा**–'**पल्लवो...**'इत्यादौ ।

'**पल्लवोपमितिसाम्यसपक्षं** पल्लवो नवाङ्कुरितं पत्रमुपमितिरुपमानं यत्र तादृशं यत्साम्यं समानधर्मत्वं तेन सपक्षं सरूपं तत्। 'पल्लवेनोपमित्या सादृश्येन यत्साम्यं तेन सपक्षमुभयोरपि पल्लवोपमानत्वसाधर्म्यात्सुहृद्भूत'मिति मल्लिनाथाः। **अधरबिम्ब**मधरो बिम्बमिवाधर एव वा बिम्बं तत्तथोक्तम्। **दष्टवति**। **अभीष्टे**ऽभिमत इष्टः प्रियस्तस्मिन्, प्राणप्रिय इति भावः। **तरुण्या** युवत्या नायिकायाः। **सरुजेव** समाना रुक् पीडा यस्य तेनेव । 'ससखी'तिवदस्वपदविग्रहो बहुव्रीहिः। 'सह रुजेति सरुक्। 'तेन सहे'ति बहुव्रीहिः। 'सहस्य स'इति सः, तेन सरुजेवे'ति तु मल्लिनाथाः। 'स्त्री रुग् रुजा चोपताप' इत्यमरः। **तारलोलवलयेन** तारमत्युच्चस्वरं लोलं चञ्चलं च कङ्कणं यत्र तेन। 'तारं च रजतेऽत्युच्चस्वरेऽन्यवदीरितम्।'इति विश्वः। **करेण** पाणिना। **पर्य्यकूजि** परिकूजितम्। भावे लुङ्। अत्राहुर्मल्लिनाथाः-'सुहृद्दुःखाद् दुःखायन्ते सुहृद इति भावः। अत्र कङ्कणद्वारकस्य करकूजनस्य विधूननहेतुकस्य 'सरुजेवे'ति रुग्घेतुकत्वमुत्प्रेक्षते' इति। शिशुपालवधस्येदं पद्यम्। स्वागता छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ७१ ॥'

अथ विभ्रमः-

१५० त्वरया हर्षरागादे-र्दयितागमनादिषु।
अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः॥ १३०॥

यथा-'श्रुत्वाऽऽयान्तं बहिः कान्त-मसमाप्तविभूषया॥
भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः॥७२॥'

अथ ललितम्-

१५१ सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत्।

---

'भोजराजस्तु सरस्वतीकण्ठाभरणे विपरीतमेव लक्षणमाह-"केशस्तनाधरादीनां ग्रहाद् दुःखेऽपि यत्पुनः। मुखाविष्करणं तन्व्यास्तच्च कुट्टमितं मतम्॥' यथा-"ह्रीभरादवनतं परिरम्भे रागवानवटुजेष्ववकृष्य। अर्पितोष्ठदलमानन-पद्मं योषितो मुकुलिताक्षमधासीत्॥"इति।' इत्यधिकोऽपि क्वचित्पाठः। 'रागवान् कामवशंवदो नायकः। अवटुजेषु ग्रीवापश्चाद्भवेषु केशेषु। अवकृष्य। परिरम्भे। ह्रीभरात्। अवनतम्। अर्पितोष्ठदलम्। मुकुलिताक्षम्। योषितः। आननपद्मम् (कर्म्म) यद्वा-'मुकुलिताक्ष'मिति क्रियाविशेषणम्। अधासीत् पपौ॥ इत्ययमर्थश्च।

अथ विभ्रमं लक्षयितुमुपक्रमते-अथेत्यादिना।

अथ कुट्टमितनिदर्शनानन्तरम्। **विभ्रमः** लक्ष्यते-१५० **त्वरया**..इत्यादिना।

१५० **दयितागमनादिषु** दयितस्यागमनादीनि तेषु। आदिपदेनाभिसरणादीनां ग्रहणम्। 'सत्स्वि'ति शेषः। **हर्षरागादे**र्हर्ष आनन्दश्च रागः प्रेम चेति तौ आदी यस्योत्सवादेस्तस्य तस्माद्वा। **त्वरया**। **अस्थाने**ऽनुपयुक्ते स्थाने। **भूषणादीनाम्**। आदिपदेन तिलकाञ्जनदुकूलादीनां ग्रहणम्। **विन्यासः**। **विभ्रमः**। **मतः**॥ १३०॥

उदाहरति-**यथा**-'**श्रुत्वा**...इत्यादौ।

'**बहिः**। **आयान्त**मागच्छन्तम्। **कान्तम्**। **श्रुत्वा**। **असमाप्तविभूषया** न समाप्ताः सम्यक् प्रसाधन-त्वेनोपन्यस्ता विभूषा अलङ्कारा यया तथाभूतया, कान्तयेत्यर्थः। **भाले** ललाटे। **अञ्जनम्**। अत्र 'कृत'इति लिङ्गव्यत्ययेनान्वेति। **दृशो**र्नेत्रयोरुपरिभाग इति भावः। **लाक्षा** लाक्षारससेक इत्यर्थः। अत्रापि 'कृत'इति लिङ्गव्य-त्ययेनान्वेति। **कपोले**। **तिलकः**। **कृतः**। अयम्भावः-भाले करणीयस्तिलकः कपोले कृतः, चरणतले करणीयो लाक्षारससेको नेत्रयोः कृतः, नेत्रयोः करणीयं पुनरञ्जनं भाले कृतमित्येवमसमाप्तविभूषणत्वे सति कान्तागमने हर्षावेगो व्यज्यत इति। अत्र श्लोकश्छन्दः, तल्लक्षणं चोक्तं प्राक्॥७२॥'

यथा वा-'तां सम्प्रकृष्टौ वसुदेवनन्दनौ वृतौ वयस्यैर्नरदेववर्त्मना। द्रष्टुं समीयुस्त्वरिताः पुरस्त्रियो हर्म्याणि चैवारुरुहुर्नृपोत्सुकाः॥ काश्चिद्विपर्य्यग्धृतवस्त्रभूषणा विस्मृत्य चैकं युगलेष्वथापराः। कृतैकपत्रश्रवणैकनूपुरा नाङ्क्त्वा द्वितीयं त्वपराश्च लोचनम्॥ अश्नन्त्य एकास्तदपास्य भोजनमभ्यज्यमाना अकृतोपमज्जनाः। स्वपन्त्य उत्थाय निशम्य निःस्वनं प्रपाययन्त्योऽर्भमपोह्य मातरः॥'इति।

विभ्रमनिदर्शनान्तरं ललितं लक्षयितुं प्रतिजानीते-अथेत्यादिना।

अथ विभ्रमनिदर्शनानन्तरम्। **ललितं** लक्ष्यते-१५० **सुकुमारतया**..इत्यादिना।

**अङ्गानां** करचरणाद्यवयवानाम्। **सुकुमारतया** सुकुमारस्वरूपत्वेन। **विन्यासः**। **ललितं** तदाख्यो-ऽलङ्कारः। **भवेत्**।

यथा—

'गुरुतरकलनूपुरानुनादं सुललितनर्तितवामपादपद्मा।
इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम ॥७३॥'

अथ मदः-

१५१ मदो विकारः सौभाग्य-यौवनाद्यवलेपजः ॥ १३१ ॥

यथा-

'मा गर्वमुद्वह कपोलतले चकास्ति कान्तस्वहस्तलिखिता मम मञ्जरीति।
अन्याऽपि किं न खलु भाजनमीदृशीनां, वैरी न चेद्भवति वेपथुरन्तरायः ॥७४॥'

अथ विकृ(हृ)तम्-

---

उदाहरति-यथा 'गुरुतर.. इत्यादौ।

अथ। गुरुतरकलनूपुरानुनादं गुरुतरोऽत्यन्तं गुरुर्महान् कलो मधुरास्फुटो ध्वनिर्ययोस्तादृशौ नूपुरौ तयोरनुनादो नादोत्तरो नादो यस्मिन् कर्म्मणि तद् यथा भवेत्तथेति तथोक्तम्। 'गुरुस्त्रिलिङ्गयां महति' इति मेदिनी। 'ध्वनौ तु मधुरास्फुटे। कल' इत्यमरः। सुललितनर्तितवामपादपद्मा सुष्ठु ललितं मनोज्ञं यथा भवेत्तथा नर्त्तितं वामपादपद्मं यया सा। वामो दक्षिणेतरोऽसौ पादः स एव पद्ममिति, वामपादः पद्ममिवेति वा, वामं सुन्दरं च तत्पादपद्ममिति वा, वामपादपद्मम्। 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे।' इति विश्वः। इतरद्दक्षिणम्। पदं चरणम्। अनतिलोलमनति किञ्चिल्लोलं चचलं यथा भवेत्तथा। आदधाना स्थापयन्ती। मन्मथमन्थरं मन्मथेन कामदेवेन मन्थरा यथा भवेत्तथेति भावः। जगाम गतवती। 'पार्श्ववर्त्तिनीय' मिति मल्लिनाथाः। शिशुपालवधस्येदं पद्यम्। पुष्पिताग्रा छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ७३ ॥'

यथा वा-'सभ्रूभङ्गं करकिशलयावर्त्तैरालपन्ती सा पश्यन्ती ललितललितं लोचनस्याञ्चलेन। विन्यस्यन्ती चरणकमले लीलया स्वैरपातैर्निःसङ्गीतं प्रथमवयसा नर्त्तिता पङ्कजाक्षी ॥' इति। करकिशलयस्यावर्त्तनानि सञ्चारणविशेषास्तैरेवालपन्ती, न तु जिह्वया। अन्यत्स्पष्टम्।

अथ मदाभिधानं प्रतिजानीते-अथेत्यादिना।

अथ ललितनिदर्शनानन्तरम्। मदः लक्ष्यते-१५१ मदो..इत्यादिना।

१५१ सौभाग्ययौवनाद्यवलेपजः सौभाग्ययौवनादीनामवलेपो गर्वः सम्बन्धो वेति तस्माज्जायत इति तथोक्तः। विकारः। 'मनस' इति शेषः। मदः ॥ १३१ ॥

उदाहरति-यथा-'मा गर्व.. इत्यादौ।

'मदविह्वले! मम। कपोलतले कपोलदेशे। कान्तस्वहस्तलिखिता कान्तस्य स्वहस्तेन लिखितेति तथोक्ता कान्तेन या स्वस्य हस्तेन लिखिता सेत्यर्थः। मञ्जरी। चकास्ति शोभते। कान्तो हि मदनवशंवदः कान्तायाः कपोलयोर्मञ्जर्य्यादिं लिखतीति कविसमयः। इतीत्थमेवम्। गर्वमभिमानम्। मा। उद्वह। यतः-किम्। ईदृशीनामेवंविधानां मञ्जरीणामिति भावः। अत्र बहुवचनस्वारस्येन एकस्या द्वयोर्वा का नाम कथेति व्यज्यते। भाजनं पात्रभूता। अन्या त्वत्तो व्यतिरिक्ता मादृशीति भावः। अपि। चेद् यदि। अन्तरायो विघ्नरूपः। 'विघ्नोऽन्तरायः प्रत्यूहः' इत्यमरः। वेपथुः स्पर्शजः सात्त्विकभावविशेषः। वैरी शत्रुर्मञ्जरीलेखनविघटकत्वेन शत्रुभूत इति यावत्। न। भवति। 'तर्हीं'ति शेषः। न। खलु। किन्तु भवत्येवेति भावः। स्वकपोलतले कान्तकृतं मञ्जरीलेखं दर्शंदर्शं स्मयमानां, कामपि मदनोद्धतायाः कस्याश्चिदवमाननोक्तिरियम्। अत्र वसन्ततिलकं छन्दः, लक्षणं चोक्तं प्राक् ॥ ७४ ॥

अथ विकृ(हृ)तं लक्षयितुमुपक्रमते-अथेत्यादिना।

अथ मदोदाहरणानन्तरम्। विकृ(हृ)तं लक्ष्यते-१५२ वक्तव्य.. इत्यादिना।

**१५२ वक्तव्यकालेऽप्यवचो व्रीडया विकृ ( हृ ) तं मतम् ।**

यथा--'दूरागतेन कुशलं पृष्टा नोवाच सा मया किञ्चित् ।
पर्य्यश्रुणी तु नयने तस्याः कथयाम्बभूवतुः सर्वम् ॥ ७५ ॥'

अथ तपनम्--

**१५३ तपनं प्रियविच्छेदे स्मरावेगोत्थचेष्टितम् ॥ १३२ ॥**

यथा मम-

'श्वासान्मुञ्चति, भूतले विलुठति त्वन्मार्गमालोकते,
दीर्घं रोदिति, विक्षिपत्यत इतः क्षामा भुजावल्लरीम् ।
किञ्च प्राणसमान ! काङ्क्षितवती स्वप्नेऽपि ते सङ्गमं,
निद्रां वाञ्छति, न प्रयच्छति पुनर्दग्धो विधिस्तामपि ॥ ७६ ॥'

अथ मौग्ध्यम्-

---

१५२ **व्रीडया** लज्जया । **वक्तव्यकाले** वक्तव्यस्य कालोऽवसरस्तस्मिन् । **अपि** किं पुनरन्यदेति भावः । **अवचो** न वचः कथनमिति तथोक्तम् । **विकृ ( हृ ) तम्** । **मतं** 'भरताद्यै' रिति शेषः ।

उदाहरति-**यथा**-'**दूरा...** इत्यादौ ।

'**दूरागतेन** दूरादागतेन । **मया** । **कुशलम्** । 'कच्चिदिती'ति शेषः । **पृष्टा** । **सा** । **किञ्चित्** कुशलमकुशलं वेति भावः । **न** । **उवाच** । **तु** किन्तु । **तस्याः** । **पर्य्यश्रुणी** अश्रुभिर्व्याप्ते । **नयने** । **सर्वम्** । मम दूरं गतावकुशलं, तत आगतौ च कुशलम् । **कथयाम्बभूवतुः** । अत्र गीतिश्छन्दः,। तल्लक्षणं चोक्तं प्राक् ॥ ७५ ॥'

यथा वा-'पादाङ्गुष्ठेन भूमिं किशलयरुचिना सापदेशं लिखन्ती भूयोभूयः क्षिपन्ती मयि सितशवले लोचने लोलतारे । वक्त्रं ह्रीनम्रमीषत्स्फुरदधरपुटं वाक्यगर्भं दधाना यन्मां नोवाच किञ्चित् स्थितमपि पुरतो मानसं तद् दुनोति ॥' इति ।

अथ तपनं लक्षयितुं प्रतिजानीते-**अथे**त्यादिना ।

**अथ** विकृ(हृ)तोदाहरणानन्तरं **तपनं** लक्ष्यते-१५३ तपनं...इत्यादिना ।

१५३ **प्रियविच्छेदे** प्रियस्य विच्छेदो वियोगस्तस्मिन्सतीत्यर्थः । **स्मरावेगोत्थचेष्टितं** स्मरस्य कामस्यावेग आसमन्ताद्वेगस्तस्मादुत्तिष्ठतीति स्मरावेगोत्थं, तच्च यच्चेष्टितमिति तथोक्तम् । **तपनम्** ॥ १३२ ॥

उदाहरति-**यथा** । **मम** विश्वनाथस्येत्यर्थः । 'कृता'विति शेषः । '**श्वासान्..** इत्यादौ ।

'**श्वासान्** । **मुञ्चति** । **भूतले** पृथिव्याम्, 'न तु शय्याया' मिति शेषः । **विलुठति** मरणोन्मुखेवेतस्ततो निपततीति भावः । **त्वन्मार्गं** तव मार्गं आगमनद्वारं तम् । **आलोकते** निरीक्षते । त्वद्दर्शनालब्धौ च-**दीर्घ**मायतं यथा भवेत्तथा । **रोदिति** । अत एव **क्षामा** दुर्बला तव वियोगाधिना पीडितेति यावत् । 'सती'ति शेषः । **भुजावल्लरीं** भुजा वल्लरी लतेवेति ताम् । **अत इत** इतस्तत इत्यर्थः । **विक्षिपति** निपातयति । **किञ्च** । हे **प्राणसमान** तस्या जीविताधायकत्वेन तत्सदृश ! अत एव त्वद्विरहेऽपि क्षणं तस्या जीविताशेयमिति व्यञ्जितम् । **ते** तव । **सङ्गमं** समागमम् । **स्वप्ने** । **अपि** 'किं पुनर्जागृतावि'ति शेषः ।' **काङ्क्षितवती** । तथा काङ्क्षोत्तरमपि लाभाभावे निर्विण्णा । **निद्राम्** । **वाञ्छति** । **दग्धः** 'क्रोधेने'ति शेषः, निष्ठुरतां प्राप्त इति भावः । 'निर्दय'इति हि विवृतिकाराः । **विधि**र्ब्रह्मा । **पुनः** । **तां** निद्रामित्यर्थः । **अपि**'किं पुनस्ते सङ्गम'मिति शेषः । **न** । **प्रयच्छति** ददाति । 'दाण्'दाने । नायकं प्रति नायिकासख्या वियोगाधिरावेदनपरेयमुक्तिः । अत्र शार्दूलविक्रीडितं छन्दः । तल्लक्षणं चोक्तं प्राक् ॥ ७६ ॥'

अथ मौग्ध्यं लक्षयितुं प्रतिजानीते-**अथे**त्यादिना ।

**अथ** तपनोदाहरणानन्तरम् । **मौग्ध्यं** लक्ष्यते-१५४ **अज्ञाना...**इत्यादिना ।

१५४ अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः।
वल्लभस्य पुरः प्रोक्तं मौग्ध्यं तत्तत्त्ववेदिभिः ॥ १३३ ॥

यथा–'के द्रुमास्ते क्व वा ग्रामे सन्ति केन प्ररोपिताः।
नाथ ! मत्कङ्कणन्यस्तं येषां मुक्ताफलं फलम् ॥ ७७॥'

अथ विक्षेपः–

१५५ भूषाणामर्धरचना मिथ्या विष्वगवेक्षणम्।
रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके ॥ १३४ ॥

यथा–'धम्मिल्लमर्धमुक्तं कलयति तिलकं तथाऽसकलम्।
किञ्चिद्वदति रहस्यं चकितं विष्वग्विलोकते तन्वी ॥ ७८ ॥'

---

१५४ **प्रतीतस्य** ज्ञातस्य। अपि किं पुनर्वस्तुतोऽज्ञातस्येति भावः। **वस्तुनः**। **अज्ञानादिव**। वास्तविकाज्ञानस्यासम्भवादिवेत्युक्तम्। **वल्लभस्य** प्रियस्य। **पुरः** पुरस्तात्। **या**। **पृच्छा** प्रष्टुमिच्छा। **तत्त्ववेदिभिः**। **तत्**। **मौग्ध्यम्**। **प्रोक्तम्** ॥ १३३ ॥

उदाहरति-**यथा**-'के द्रुमाः...इत्यादौ।

'हे **नाथ ! येषाम्**। **मुक्ताफलं** मौक्तिकं फलम्। एतेनास्य स्थूलत्वं मधुरत्वं च द्योत्येते। **फलम्**। **मत्कङ्कणन्यस्तं** मम (कान्तायाः) कङ्कणं तत्र न्यस्तं जटितमिति तथोक्तम्। 'शोभत'इति शेषः। **ते**। **के** किंनामानः किंस्वरूपाश्चेत्यर्थः। **द्रुमाः**। **क्व** कस्मिन्। **वा**। **ग्रामे**। **केन**। **प्ररोपिताः**। **सन्ति** विद्यन्ते। अत्र श्लोकश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ७७ ॥'

यथा वा--'यदि चूतस्य मञ्जर्यां सख्यः ! सन्निहितः स्मरः। भग्नायां तत् कथं सौख्यं मनागपि न दृश्यते ॥' इति।

अथ विक्षेपं लक्षयितुं प्रतिजानीते--**अथे**त्यादिना।

अथ मौग्ध्योदाहरणानन्तरम्। **विक्षेपो** 'लक्ष्यते--१५५ **भूषाणा**...इत्यादिना।

१५५ **दयितान्तिके** दयितस्य प्रियस्य, दयितायाः प्रियायाः सख्या वाऽन्तिकः समीपस्तत्र। **भूषाणां** भूषणानाम्। **अर्धरचना**ऽर्धं यथा भवेत्तथा रचना गुम्फनं प्रसाधनत्वेन वा धारणमिति तथोक्ता। **मिथ्या**। **विष्वक्** सर्वतः। **अवेक्षणम्**। **च** तथा। **ईषत्** किञ्चित्। **रहस्याख्यानं** रहस्यस्य गुह्यस्य सौरतादिसम्बन्धिवृत्तस्याख्यानम्। **विक्षेपः**। अयम्भावः--कान्त्यपि अभिसरणादियोग्यानि भूषणादीनि प्रथमं प्रसाधयति, पुनः केनापि भयादिना त्यजति, एवं किञ्चिद्वक्तुं कर्तुं वा स्पृहते, किन्तु जनान्तरागमनश्रवणादिभयाद् विष्वङ्निरीक्षते, किञ्चिदन्तर्निहितं रहस्यं चेष्टितं कथमपि प्रकटयति, किन्तु भयात् प्रमादनिवृत्त्या वा ततो निवर्तते, इत्येवंभूताया यच्चेष्टितं तद्विक्षेपपदाभिधेयम्। इति ॥ १३४ ॥

उदाहरति-**यथा**-'**धम्मिल्ल**... इत्यादौ।

'**तन्वी धम्मिल्लं** बद्धान् केशान्। 'धम्मिलः संयताः कचाः।' इत्यमरः। **अर्द्धमुक्तम**र्धं यथा भवेत्तथा मुक्तो बन्धनतो निवृत्तिं नीतस्तम्। **कलयति** रचयति। **तथा**। **तिलकम्**। **असकलम**सम्पूर्णम्। 'शकल' मिति पाठेऽप्ययमेवार्थः। 'कलयती'ति देहलीदीपकवत्, काकाक्षिगोलकवद्वोभयत्रान्वेति। **किञ्चि**न्न तु सर्वम्। **रहस्यम्**। **वदति**। **चकितं** यथा भवेत्तथा। **विष्वक्** सर्वतः। 'सर्वतो विष्वगित्यपि' इत्यमरः। **विलोकते**। अत्रोपगीतिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ७८ ॥'

अथ कुतूहलं लक्षयितुं प्रतिजानीते--**अथे**त्यादिना।

अथ कुतूहलम्-

१५६ रम्यवस्तुसमालोके लोलता स्यात्कुतूहलम्।

यथा-

'प्रसाधिकाऽऽलम्बितमग्रपाद-माक्षिप्य काचिद् द्रवरागमेव।
उत्सृष्टलीलागति-रा गवाक्षा-दलक्तकाङ्कां पदवीं ततान॥ ७९॥'

अथ हसितम्-

१५७ हसितं तु वृथा हासो यौवनोद्भेदसम्भवः॥ १३५॥

यथा-'अकस्मादेव तन्वङ्गी जहास यदियं पुनः।
नूनं प्रसूनबाणोऽस्यां स्वाराज्यमधितिष्ठति॥ ८०॥'

अथ चकितम्-

१५८ कुतोऽपि दयितस्याग्रे चकितं भयसम्भ्रमः।

---

अथ विक्षेपोदाहरणानन्तरम्। कुतूहलं लक्ष्यते-१५६ रम्य...इत्यादिना।

१५६ रम्यवस्तुसमालोके रम्यं रमणीयं यद्वस्तु नायकादिरूपं तस्य समालोकः सम्यगालोकनं तस्मिन्। 'सती' ति 'कर्त्तव्ये सती' ति वा शेषः। विषये वा सप्तमीयम्। लोलता चञ्चलता। कुतूहलम्। स्यात्।

उदाहरति-यथा-'प्रसाधिकाऽऽ...इत्यादौ।

'काचित् काऽपि कामिनीत्यर्थः। 'अज-महेश्वरान्यतरावेक्षणोत्के'ति शेषः। प्रसाधिकाऽऽलम्बितं प्रसाधिकयाऽलङ्कर्त्र्याऽलक्तरसादिना पादादीन् रञ्जयित्रीति यावत्, आलम्बितोऽवलम्बितोऽलक्तेन रञ्जनार्थं धृतस्तम्। अतः-द्रवरागं द्रवो रसात्मना पारिणाम्यलक्तक इत्यर्थः, स एव रागो यत्र तम्। आर्द्रेणालक्तकेन रञ्जितरागमित्यर्थः। एव। अग्रपादमग्रश्चासौ पादस्तम्। 'हस्ताग्राग्रहस्तादयो गुणगुणिनोर्भेदाभेदाभ्यामि'ति वामनः। आक्षिप्याकृष्य। उत्सृष्टलीलागतिरुत्सृष्टा लीलागतिर्ययोत्सृष्टलीलं यथा भवेत्तथा वाऽऽगतिरागमनं यस्याः सा। त्वरितगमना सतीति भावः। आ गवाक्षाद् गवाक्षमभिव्याप्येत्यर्थः। पदद्वयमेतत्। 'पञ्चम्यपाङ्परिभिः।' २।३।१० इत्याङ्योगे पञ्चमी। अलक्तकाङ्कामलक्तको लाक्षोपचारात्तद्रसरागोऽङ्क उत्सङ्ग उपचारान्मध्ये यस्यास्ताम्। 'अलक्तकस्याङ्को लक्ष्म यत्र ता'मित्यन्ये। 'यावोऽलक्तो द्रुमामयः।'इति, 'उत्सङ्गचिह्नयोरङ्क'इति चामरः। पदवीं मार्गम्। ततान चकार। रघुवंशकुमारसम्भवयोः समं पद्यमिदम्। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दश्च, तल्लक्षणं चोक्तं प्राक्॥ ७९॥'

अथ हसितं लक्षयितुं प्रतिजानीते-अथेत्यादिना।

अथ कुतूहलोदाहरणानन्तरम्। हसितं लक्ष्यते-१५७ हसितं...इत्यादिना।

१५७ हसितम्। तु पुनः। यौवनोद्भेदसम्भवो यौवनस्योद्भेद उद्गमस्तस्मात्सम्भवतीति तथोक्तः। वृथाऽकारणम्। हासः। 'स्या'दिति शेषः॥ १३५॥

उदाहरति-यथा-'अकस्मा...इत्यादौ।

इयम्। तन्वङ्गी कृशोदरी। अकस्मात् कारणमन्तरा। एव। यत्। पुनः। जहास। 'ततः शङ्कयत' इति शेषः। अस्याम्। नूनं निश्चितम्। प्रसूनबाणः कामः। स्वाराज्यमेकाधिपत्यम्। अधितिष्ठति प्राप्नोति कुरुते वा। कामपि पश्यतः सखायं प्रति स्वोत्प्रेक्षणोक्तिरियम्। अत्र श्लोकश्छन्दः॥ ८०॥'

अथ चकितं लक्षयितुं प्रतिजानीते-अथेत्यादिना।

अथ हसितोदाहरणानन्तरम्। चकितं लक्ष्यते-१५८ कुतोऽपि...इत्यादिना।

१५८ कुतः कस्मात्। अपि'हेतो'रिति शेषः। दयितस्य। अग्रे पुरस्तात्। भयसम्भ्रमो भयस्य विभ्रमः संशय इति तथोक्तः। 'अथ विभ्रमः। शोभायां संशये हावे'इति हैमः। 'भयविभ्रमो भयेनातिशयाञ्चल्य'मिति तु विवृतिकाराः। चकितम्। 'स्या'दिति शेषः।

यथा–

'त्रस्यन्ती चलशफरीविघट्टितोरुर्वामोरूरतिशयमाप विभ्रमस्य।
क्षुभ्यन्ति प्रसभमहो विनाऽपि हेतोर्लीलाभिः किमु सति कारणे तरुण्यः ॥८१॥'

अथ केलिः–

**१९९ विहारे सह कान्तेन क्रीडितं केलिरुच्यते ॥ १३६ ॥**

यथा–

'व्यपोहितुं लोचनतो मुखानिलैरपारयन्तं किल पुष्पजं रजः।
पयोधरेणोरसि काचिदुन्मनाः प्रियं जघानोन्नतपीवरस्तनी ॥८२॥'

---

उदाहरति–**यथा**–'त्रस्यन्ती....इत्यादौ।

'**चलशफरीविघट्टितोरु**श्चलाश्चञ्चला याः शफर्यो मत्स्यविशेषास्ताभिर्विघट्टितौ विद्धावूरू यस्याः सा। अत एव–**त्रस्यन्ती** बिभ्यती। 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषः।' ३।१।७० इति विकल्पात् श्यनि शतरि ङीप्। **वामोरूः** वामौ सुन्दरावूरू यस्याः सेति तथोक्ता। 'संहितशफलक्षणवामादेश्च।' ४।१।७० इत्यूङ्। **विभ्रमस्य** भ्रान्तेः। 'विलासस्ये'त्यन्ये। **अतिशयम्। आप** प्राप। **अहो। तरुण्यो** यौवनवत्यः कामिन्यः। 'रमण्य'इति पाठान्तरम्। **हेतोर्हेतुम्**। 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्।' २।३।३२ इति विकल्पात् पञ्चमी। **विना। अपि। प्रसभं** बलात्कारो यथा भवेत्तथा। 'प्रसभं तु बलात्कार'इत्यमरः। **क्षुभ्यन्ति।** चकिता भवन्तीत्यर्थः। **लीलाभिर्विलासैः।** 'इत्थम्भूतलक्षणे।' २।३।२१ इति तृतीया। **कारणे।** तथा च लीलाज्ञाप्यकारण इत्यर्थः। **सति।** 'क्षुभ्यन्ती'ति पूर्वतोऽन्वेति। 'इती'ति शेषः। **किमु** किमाम चित्रमिति भावः। शिशुपालवधस्येदम्। अत्र प्रहर्षिणी छन्दः, तल्लक्षणं चोक्तं प्राक् ॥८१॥'

अथ केलिं लक्षयितुं प्रतिजानीते–**अथे**त्यादिना।

**अथ** चकितोदाहरणानन्तरम्। **केलिः** 'लक्ष्यते–१५९ **विहारे**....इत्यादिना।

१५९ **कान्तेन। सह। विहारे** विहरणे क्रीडार्थकसञ्चार इति यावत्। 'विहारस्तु परिक्रमः।' इत्यमरः। 'क्रियमाण' इति शेषः। **क्रीडितं** खेलनम्। **केलिः। उच्यते।** 'वल्लभेन सहैकान्ते कान्तायाः क्रीडितेषु यः॥ चुम्बनालिङ्गनादीनां विशेषः केलिरुच्यते॥' इति पाठान्तरे तु–वल्लभेन प्रियेण सहैकान्त एकान्तप्रदेशे कान्तायाः कान्तासम्बन्धिषु क्रीडितेषु सत्सु यश्चुम्बनालिङ्गनादीनां विशेषः प्रकारोऽतिशयो वाऽसौ केलिरित्युच्यत इत्यर्थः॥१३६॥

उदाहरति–**यथा**–'व्यपोहितुम्.. इत्यादौ।

'**मुखानिलै**र्मुखसम्बन्धिभिर्वायुभिः। **लोचनतो** नेत्राभ्याम्। अत्रापादानपञ्चम्यां तसिल्। **पुष्पजम्**पुष्पेभ्यो जायत इति तत् तथाभूतम्। **रजो** धूलिं परागमिति यावत्। **व्यपोहितु**मपनेतुम्। **किला**रुच्या। चुम्बितुमेव रुचोरीति भावः। 'वार्तायामरुचौ किले'ति त्रिकाण्डशेषः। **अपारयन्त**मशक्नुवन्तम्। **प्रियम्। उन्नतपीवरस्तनी** पीनोन्नस्तनी। **काचित्। उन्मनाः** प्रगल्भा। **पयोधरेण।** अत्रैकत्वं तु पीनोन्नतत्वाभ्याममेदमवगमयति। **उरसि** वक्षसि। **जघान** संताडयामासेति भावः। वंशस्था छन्दः, तल्लक्षणं यथोक्तं 'वंशस्था जतौ जरौ।' इति ॥८२॥'

---

१ 'तत्र त्रासेन यथा–"परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः। उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम्॥" लज्जया यथा–"अभिमुनि सहसा हृते परस्या घनमरुता जघनांशुकैकदेशे। चकितमवसनोरुसत्रपायाः प्रतियुवतीरपि विस्मयं निनाय॥" इति पाठान्तरम्।' २ अत्र 'विघट्टितोरू'रिति त्वपपाठः, न च 'संहितशफलक्षणवामादेश्च।' ४।१।७० इत्यत्र'सहितसहाभ्यां चेति वक्तव्यम्।' 'किमः क्षेपे।' ५।४।७० इत्यादाविव विनाऽप्यादिपदं सकलेष्टसिद्धावादिपदं 'शे तृम्फादीनां नुम्वाच्यः।' इत्यत्रेव प्रकारार्थम्। तथा च–'अत्राप्यूङ् निर्बाधः। इति वाच्यम्। 'परिस्फुरन्मीनविघट्टितोरव' इत्याद्युदाहरणान्तरदर्शनात्तथेष्टासिद्धेः।

**अथ मुग्धाकन्ययोरनुरागेङ्गितानि--**

**१६० दृष्ट्वा दर्शयति व्रीडां सम्मुखं नैव पश्यति ।**
**प्रच्छन्नं वा भ्रमन्तं वाऽ- तिक्रान्तं पश्यति प्रियम् ॥ १३७ ॥**
**बहुधा पृच्छ्यमानाऽपि मन्दम्मन्दमधोमुखी ।**
**सगद्गदस्वरं किञ्चित् प्रियं प्रायेण भाषते ॥ १३८ ॥**
**अन्यैः प्रवर्तितां शश्वत् सावधाना च तत्कथाम् ।**
**शृणोत्यन्यत्र दत्ताक्षी प्रिये बालाऽनुरागिणी ॥ १३९ ॥**

**अथ सकलानामपि नायिकानामनुरागेङ्गितानि-**

---

यथा वा--'ताः क्लिन्नवस्त्रविवृतोरुकुचप्रदेशाः सिञ्चन्त्य उद्धृतवृहत्कवरप्रसूनाः । कान्तं तु रेचकजिह्वीरपयोपगुह्य जातस्मरोत्सवलसद्वदना विरेजुः ॥' इति । यद्यपि--'कृष्णस्तु तत्स्तनविषज्जितकुङ्कुमस्रक् क्रीडाऽभिषङ्गधुतकुन्तलवृन्द-बन्धः । सिञ्चन्मुहुर्युवतिभिः प्रतिसिच्यमानो रेमे करेणुभिरिवेभपतिः परीतः ॥' इत्यादौ नायकस्यापि केलिरिति वक्तुं शक्यते, तथाऽपि तत्रतत्र नायिकाया एव प्राधान्यम्, तामाश्रित्य मदनस्य स्वाराज्यात् । इति बोध्यम् ।

अथ नायिकामात्रस्याङ्गजादीनामलङ्काराणां लक्षणलक्ष्यनिदर्शनानन्तरमिङ्गितानि निर्देष्टुं प्रवृत्तस्तत्र तावत् मुग्धायाः कन्यायाश्च तान्यनुरागजानि निर्देष्टुं प्रतिजानीते--अथेत्यादिना ।

**अथा**लङ्कारनिदर्शनानन्तरम् । **मुग्धाकन्ययोः** । **अनुरागेङ्गितान्य**नुरागस्य नायकविषयस्य प्रेम्ण इङ्गितान्यभिप्रायानुकूलानि चेष्टितानीति तानि तथोक्तानि । निर्दिशति-- १६० **दृष्ट्वा**...इत्यादिना ।

१६० **प्रिये** नायके । अत्र विषये सप्तमी । **अनुरागिण्य**नुरक्ता । **बाला**ऽप्रौढा मुग्धा कन्याऽन्यतरेति यावत् । **प्रियं** प्रीतिविषयीभूतं नायकम् । **दृष्ट्वा** । **व्रीडां** लज्जाम् । **दर्शयति** । अत एव-**सम्मुखम**भिमुखम् । अथवा-उपचारात्सम्मुखीनमिति भावः । यद्वा-सम्यङ् मुखं यस्मिन् कर्म्मणि तत्तथा, प्रकामं मुखावगुण्ठनमपवार्य्येति भावः । **न** । **एव** । **पश्यति** । किन्तु--**प्रच्छन्नं** क्वापि स्वेहितं ज्ञातुमपि निलीय स्थितम् । **वा**ऽथवा । **भ्रमन्त**मितस्ततः पर्य्यटन्तम् । **वा**ऽथवा । **अतिक्रान्त**मतिक्रम्य ( उपेक्ष्य ) स्थितं गतं वा । **पश्यति** । अत एवास्या अनुरागो व्यज्यते ॥ **बहुधा**ऽनेकैः प्रकारैः । **पृच्छ्यमाना अपि** किं पुनः स्वत इति शेषः । **मन्दंमन्दं** 'न तु स्पष्ट' मिति शेषः । **सगद्गदस्वरं** गद्गदस्वरेणाव्यक्तोच्चारणेन सह यथा भवेत्तथा । **किञ्चित्** परिमितपदरूपमत एव वाक्यतामप्राप्तमिति । **अधोमुखी** । 'सती' ति शेषः । **प्रियम्** । **प्रायेण** । **भाषते** । यद्वा--दुःखिता सगद्गदस्वरम् । किञ्चित् किमप्यनिर्वचनीयम् । भाषते । हृष्टा--प्रियं हृद्यं यथा भवेत्तथा । किञ्चित् । भाषते । अन्यत् पूर्ववत् ॥ **अन्यै**र्वन्दारुप्रभृतिभिः । **प्रवर्तितां** प्रसङ्गं प्राप्य प्रापय्य वोन्नीताम् । **तत्कथां** तस्य ( प्रियस्य ) कथा गुणादिवर्णनं ताम् । **च** । **शश्व**'न्न तु यदा कदा वे'ति शेषः। **सावधाना** समवहितचित्ता। तथा-**अन्यत्र** परस्मिन् पदार्थ इत्यर्थः । **दत्ताक्षी** दत्ते समर्पिते अक्षिणी नेत्रे यया तथाभूता । 'सती'ति शेषः । **शृणोति** ॥ १३७ ॥ १३८ ॥ १३९ ॥

अत्रेदं स्मरणीयम्--मुग्धायाः कन्यायाश्चैवंविधानीङ्गितानि भवन्ति, तानि यथोदाहृते--'दृष्टा दृष्टिमधो ददाति, कुरुते नालापमाभाषिता..' 'दत्ते सालसमन्थरं भुवि पदं निर्य्याति नान्तः पुरा--न्नोद्दामं हसति, क्षणात् कलयते ह्रीयन्त्रणां कामपि...' 'एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी । लीलाकमलपत्राणि गणयामास पार्वती ॥' इत्यादौ । तथाऽभिज्ञानशाकुन्तले प्रथमेऽङ्के--शकुन्तला (आत्मगतम्) 'किं णु क्खु इमं पेक्खिअ तवोवणविरोहिणो विआरस्स गमणीआह्मि संवुत्ता' इतः प्रभृति गान्धर्वपरिणयावधि शकुन्तलायाः कन्यात्वे तानीङ्गितानि । एवमन्यत्रापीति दिक् ।

अथ नायिकामात्रस्य प्रायेण यानीङ्गितानि, तानि निर्देष्टुं प्रतिजानीते--अथेत्यादिना ।

**अथ** मुग्धाकन्ययोरनुरागेङ्गितनिदर्शनानन्तरम् । **सकलानाम्** । **अपि** 'न तु मुग्धाकन्येतरासामेव'इति शेषः । **नायिकानाम्** । **अनुरागेङ्गितानि** । 'निर्दिश्यन्ते--१६१ **चिराय**...इत्यादिने'ति शेषः ।

---

१ 'किन्तु खल्विमं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृत्ता' इति संस्कृतम् ।

१६१ चिराय सविधे स्थानं प्रियस्य वहु मन्यते ।
विलोचनपथं चास्य न गच्छत्यनलङ्कृता ॥ १४० ॥

काऽपि कुन्तलसंव्यानसंयमव्यपदेशतः ।
वाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत्स्फुटम् ॥ १४१ ॥

आच्छादयति वागाद्यैः प्रियस्य परिचारकान् ।
विश्वसित्यस्य मित्रेषु वहु मानं करोति च ॥ १४२ ॥

सखीमध्ये गुणान्ब्रूते स्वधनं प्रददाति च ।
सुप्ते स्वपिति दुःखेऽस्य दुःखं धत्ते सुखे सुखम् ॥ १४३ ॥

---

१६१ चिराय दीर्घकालावधि । प्रियस्य कान्तस्य । सविधे निकटे लक्षणया किञ्चिद्दूर इत्यर्थः । स्थानमुपस्थितिम् । वहु । मन्यते युक्तं श्रेष्ठं चेति वुध्यत इति भावः । अस्य प्रियस्येत्यर्थः । च । विलोचनपथं साम्मुख्यम् ।—अनलङ्कृताऽलङ्कारैरनुपासितेति भावः । न । गच्छति काऽपि काचिन्मुग्धाकन्याभ्यामितरेत्यर्थः । कुन्तलसंव्यानसंयमव्यपदेशतः कुन्तल (केशपाशः) श्च संव्यानं (उत्तरीयं)—चेति तयोः संयमस्तस्य व्यपदेशश्छलस्तत इति तथोक्ततः । 'चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः ।' इति, 'संव्यानमुत्तरीयं चे'ति चामरः । वाहुमूलं वाह्वोर्मूलमारम्भभूताङ्गमित्यर्थः । स्तनौ । तथा—नाभिपङ्कजं नाभिकमलम् । स्फुटम् । दर्शयेत् प्रियस्य । परिचारकान् दूतान् किङ्करान् वा । वागाद्यैः । आद्यपदेनान्नवस्त्रभूषणदानादीनां ग्रहणम् । आच्छादयति पिहितान् करोत्युपचारादवरुद्ध इत्यर्थः । अत एव 'वशीकरोती'ति विवृतिकाराः । अस्य प्रियस्येत्यर्थः । मित्रेषु । अत्र विषये सप्तमी । विश्वसिति विश्वस्ता भवति । वह्वत्यन्तम् । मानमादरम् । च । करोति । तथोक्तं कामसूत्रकारैः—'परिजनानवष्टभ्य तास्ताश्च लीला दर्शयति, तन्मित्रेषु विश्वसिति, वचनं चैषां वहु मन्यते करोति च, तत्परिचारकैः सह प्रीतिं सङ्कथां द्यूतमिति च करोती'त्यादि सखीमध्ये सखीनां मध्ये । गुणान् 'प्रियस्य प्रियपरिचारकाणां चे'ति शेषः । ब्रूते कथयते । स्वधनं स्वस्य स्वस्यैव वा धनं तत् । च । प्रददाति समर्पयति । अयम्भावः—यदि स्वीया तदा, विपत्तौ यदलङ्कारादि तत्सर्वं तत्सात् करोति । यदि च परकीया, तदा प्रियो यदि दीनो लुब्धो वा तदा सर्वस्वं तत्सात् तथैव करोति, यदि पुनः समृद्धः केवलं स्वलावण्यमात्रे मुग्धस्तर्हि स्वात्मानमेव धनमिव तदायत्तं करोति । यदि तु सामान्या तदा केवलं स्वात्मानमेवं धनमिव प्रयच्छति । प्रियस्य परिचारकानपि प्रियस्य प्रीतिभाजनानीति मन्यमाना तेषां जीवनाद्यर्थं 'यन्मदीयं तत्सर्वं भवता'मिति वहु तेभ्यो वितरति स्वीया परकीया वा, सामान्या तु अनुरक्ताऽपि स्वात्मानमेव । इति । सुप्ते निद्रिते सति'प्रिय'इति शेषः । स्वपिति निद्राति । तथोक्तम्-'अनुसुप्ताऽपि तत्पूर्वमुत्थाय चरणौ नमेत् । मार्जनाद्यैर्गृहं, देहं स्नानाद्यैः शुद्धिमानयेत् ॥' इत्यादि । यद्वा—सुप्ते शय्योपरि शयनार्थमुपविष्टे शयित इव वाऽवस्थित इत्यर्थः । स्वपिति शय्योपर्य्यवतिष्ठत इति भावः । एवं परकीया सामान्ययोरपि नाव्याप्तिः । अस्य प्रियस्येत्यर्थः । दुःखे 'सती'ति शेषः । दुःखम् । धत्ते स्वीयत्वेन मनुते । सुखे 'सती'ति शेषः । सुखम् । 'धत्ते'इति पूर्वतोऽन्वेति । अत्रायम्भावः—यदि स्वीया तदा नूनं सर्वविधेऽपि दुःखे दुःखिनी सुखे च सुखिनीति, परकीयाऽप्येवं प्रायेण, परायत्ततया तथा स्वस्य दुःसम्भवात् । अथापि मनसा, तस्य तत्रापि शारीरिके नितरां नूनम् । सामान्या पुनर्य्यद्यनुरक्ता, तदाऽपि शारीरिके दुःखे मनाग् दुःखिनी, सुखे च नितराम्, अथासावननुरक्ता, तदाऽऽयहानौ धनहानावेव वा दुःखिनी भवति, आयवृद्धौ धनवृद्धौ वा सुखिनी च । शारी-

स्थिता दृष्टिपथे शश्वत् प्रिये पश्यति दूरतः ।
आभाषते परिजनं सम्मुखं स्मरविक्रियम् ॥ १४४ ॥
यत्किञ्चिदपि संवीक्ष्य कुरुते हसितं मुधा ॥
कर्णकण्डूयनं तद्वत् कबरीमोक्षसंयमौ ॥ १४५ ॥
जृम्भते स्फोटयत्यङ्गं बालमाश्लिष्य चुम्बति ।
भाले तथा वयस्याया रचयेत्तिलकक्रियाम् ॥ १४६ ॥
अङ्गुष्ठाग्रेण लिखति सकटाक्षं निरीक्षते ।
दशति स्वाधरं चापि ब्रूते प्रियमधोमुखी ॥ १४७ ॥
न मुञ्चति च तं देशं नायको यत्र दृश्यते ।
आगच्छति गृहं तस्य कार्य्यव्याजेन केनचित् ॥ १४८ ॥

---

रिकेऽन्यविधे वा दुःखे सुखे च न तथा। यदि तु भवेत्तदाशाऽवशेषात्। इति **शश्वत्** निरन्तरम् 'यावन्नावश्यकं कार्य्यान्तरापातस्ताव' दिति शेषः। **दूरतो** दूरात्। **प्रिये**। **पश्यति** 'सती'ति शेषः। तस्य-**दृष्टिपथे**। **स्थिता** 'सती'ति शेषः। **स्मरविक्रियं** स्मरेण कामदेवेन ( कृता ) विक्रिया विकारो यत्र तद् यथा भवेत्तथा। 'तृतीया तत्कृता-र्थेन गुणवचनेन।' २।१।३० इति तृतीयासमासः। **सम्मुखं** सम्यङ् मुखं यथा भवेत्तथा। 'सम्मुखमिति परिजनस्य विशेषण' मिति तु विवृतिकाराः। **परिजनं** सेवकजनम्। **आभाषते**। तथोक्तं सूत्रकारैः-'दूरे स्थिता 'पश्यतु मा' मिति मन्यमाना समदनविकारमाभाषते।' इति **यत्**। **किञ्चित्**। **अपि** 'वस्त्वि'ति शेषः। **संवीक्ष्य** विलोक्य। **मुधा** विकृताङ्गत्वावेक्षणादिरूपकारणमन्तरेति भावः। **हसितं** हास्यम्। **कुरुते**। तथोक्तं 'यत् किञ्चिद्दृष्ट्वा विहसितं करोति।' इति तथा-**कर्णकण्डूयनं** कर्णस्योपलक्षणेन गण्डस्य च कण्डूयनं तत्। **तद्वत्**। **कबरीमोक्षसंयमौ** कबर्य्याः केशबंधरचनाया मोक्षसंयमौ तौ। 'कुरुत' इति पूर्वतोऽन्वेति। यथा-'गुरुभिः परिवेष्टिताऽपि गण्ड-स्थल-कण्डूयनचारुकैतवेन। दरदर्शितहेमबाहुनाला मयि बाला नयनाञ्चलं चकार ॥' इति दिक्। **जृम्भते** मुखं व्यादत्ते। **अङ्गं** पार्श्वादिगात्रमित्यर्थः। **स्फोटयति** 'स्फुट' भेदने। **बालम्**। **आश्लिष्यालिङ्गय**। **चुम्बति**। तथोक्तं 'बालस्याङ्कगतस्यालिङ्गनं चुम्बनं च करोती'ति। **भाले** ललाटे 'स्वस्या' इति शेषः। 'गोधिभालौ महाशङ्खा' विति त्रिकाण्डशेषः। **तथा**। **वयस्यायाः** सख्याः। 'आलिः सखी वयस्या चे'त्यमरः। उपलक्षणेन परिचारिकाया अपीति बोध्यम्। 'भाले' इति पूर्वतोऽन्वेति। **तिलकक्रियाम्**। **रचयेत्**। उक्तं च 'परिचारिकायाश्च तिलकं रचयती'ति ॥ **अङ्गुष्ठाग्रेणा**ऽङ्गुष्ठस्याग्रभागेन। 'पादस्थे'ति शेषः। **लिखति** 'भूमि' मिति शेषः। यदपीदममङ्गलम्, तदपि तदभिव्यक्तये वर्ण्यत एव। अत एव श्रीमद्भागवते-'कृत्वा मुखान्यवशुचः श्वसनेन शुष्यद्बिम्बाधराणि चरणेन भुवं लिखन्त्यः। अस्रैरुपात्तमषिभिः कुचकुङ्कमानि तस्थुर्मृजन्त्य उरुदुःखभराः स्म तूष्णीम् ॥' इत्यादि दृश्यते। **सकटाक्षम्**। **निरीक्षते** पश्यति 'प्रिय' मिति शेषः। यथा भागवते-'एका भ्रुकुटिमाबध्य प्रेमसंरम्भविह्वला। घ्नन्तीवैक्षत्कटाक्षेण सन्दष्टदशनच्छदा ॥' इति। **स्वाधरम्**। **अपि**। **च**। **दशति** सङ्गच्छते चैवं 'सन्दष्टदशनच्छदा।' इत्युक्तम्। **अधोमुखी** 'भूत्वा' इति शेषः। **प्रियम्**। **ब्रूते**। यथा शाकुन्तले-'वाचं न मिश्रयति यद्यपि मद्वचोभिः, कर्णं ददात्यभिमुखं मयि भाषमाणे। कामं न तिष्ठति मदाननसम्मुखीना भूयिष्ठमन्यविषया न तु दृष्टिरस्याः ॥' इति। **यत्र** यस्मिन् देशे स्वप्रियः। **नायकः** स्वप्रियः। **दृश्यते** दृष्टिविषयो भवति उपचाराद्भवितुं शक्यत इति भावः। **तम्**। **देशम्**। **च**। **न** नैव। **मुञ्चति** परित्यजति। तत्रैव कथमपि अवस्थातुमिच्छतीति भावः। यथा-'अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः। नाहं हि दूरं भ्रमितुं समर्था, प्रसीदतायं रचितोऽञ्जलिर्वः ॥' इति 'अस्मी' त्यहमित्यर्थेऽव्ययम्। **केनचित्**। **कार्य्यव्याजेन** कार्य्यस्य व्याजश्छलन्तेन।

दत्तं किमपि कान्तेन धृत्वाऽङ्के मुहुरीक्षते ।
नित्यं हृष्यति तद्योगे वियोगे मलिना कृशा ॥ १४९ ॥

मन्यते बहु तच्छीलं तत्प्रियं मन्यते प्रियम् ।
प्रार्थयत्यल्पमूल्यानि सुप्ता न परिवर्त्तते ॥ १५० ॥

विकारान्सात्त्विकानस्य सम्मुखीनाऽधिगच्छति ।
भाषते सूनृतं स्निग्धमनुरक्ता नितम्बिनी ॥ १५१ ॥

एतेष्वधिकलज्जानि चेष्टितानि नवस्त्रियाः ।
मध्यव्रीडानि मध्याया स्रंसमानत्रपाणि तु ॥ १५२ ॥

---

तस्य प्रियस्येत्यर्थः । **गृहम्** । उपचारेण समीपदेशमित्यर्थः । **आगच्छति** । यथा मम—'यद्यपि तत्र बिडालो येन तदाऽहं कृतक्षता भूरि । तदपि न कथमिव यायां हारः पतितश्चिरान्नश्येत् ॥' इति **किमपि** अनिर्वचनीयम् । **कान्तेन । दत्तम्** । 'वस्त्वि' ति शेषः । **अङ्के । धृत्वा । मुहुः** पुनःपुनः । **ईक्षते** पश्यति । यथा मम—'अयि सखि ! किं किं न भवेदाभरणं चारु कान्तायाः । इदमिदमेव मया यद्विजितं रतिसङ्गरे भूयः ॥' इति । **तद्योगे** तस्य नायकस्य योगः सङ्गस्तस्मिंस्तथोक्ते, 'सती' ति शेषः । अत एव—'प्रियसङ्गम' इति विवृतिकारा अप्याहुः । **नित्यम् । हृष्यति** प्रसन्ना भवति । **वियोगे** 'तस्ये' त्येव । **मलिना** । तथा—**कृशा** । 'जायत' इति शेषः । यथा—'औत्सुक्यात्परिमिलतां, त्रपया सङ्कोचमञ्चतां च मुहुः । नवसङ्गमयोर्यूनोर्नयनानामुत्सवो जयति ॥' 'तल्पगताऽपि च सुतनुः श्वासासङ्गं न या सेहे । सम्प्रति सा हृदयगतं प्रियपाणिं मन्दमाक्षिपति ॥' इत्यादि । **तच्छीलं** तस्य (नायकस्य) शीलं स्वभावस्तत् । 'शीलं स्वभावे सद्वृत्त' इत्यमरः । **बहु** विपुलम् । **मन्यते** आद्रियते । यथा—'सीता—धण्णा खु साजः एव्वं अज्जउत्तेण बहु मण्णीअदि चा एव्वं अज्जउत्तं विणोदयंदी आसाबंधणं खु जादा जीअलोअस्स इति । **तत्प्रियं** तस्य (प्रियस्य) प्रियं (वस्तु) तत् । **प्रियम् । मन्यते** । यथा गान्धार्यादीनां पिहितनेत्रत्वादिनाऽवस्थानम् । **अल्पमूल्यानि** 'वीटिकाऽऽदीनि वस्तूनी'ति शेषः । **प्रार्थयति** प्रार्थयते । अत्र णिजन्तत्वेन परस्मैपदम् । यथा मम—'चिकुरमलङ्कुरु कुसुमैर्योजय हारं प्रयच्छ ताम्बूलम् । अद्य नृशंस इव त्वं नखैर्दशनैश्च मां विभो हतवान् ॥' इति । **सुप्ता** तल्पगता । **न । परिवर्त्तते** पार्श्वे परिवर्त्तयतीत्यर्थः, पृष्ठतः कान्तं कुरुत इति भावः । यत्तु 'शय्यायां परिवृत्य तिष्ठती'त्युक्तम्, तत्तस्या वामात्वं प्रत्याययितुमिति युक्तमेव । **अस्य** कान्तस्येत्यर्थः । **सम्मुखीना** समस्य सर्वस्य मुखस्य दर्शना (दर्शयतीति तथाभूता) इति तथाभूता । 'यथासुखसम्मुखस्य दर्शनः खः ।' ५।२।६। इति खः, समासान्तलोपश्च निपातात् ।, 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ।' ७।१।२ इति खस्य ईनादेशः । 'अजाद्यतष्टाप् ।' ४।१।४ इत्यतष्टाप् च । **सात्त्विकान्** सत्त्वगुणसम्बन्धिनः 'स्तम्भः स्वेदोऽथ रोमाञ्च' इत्यादिना वक्ष्यमाणानित्यर्थः । **विकारान् । अधिगच्छति** प्राप्नोति । 'प्रकाशयती'ति तु विवृतिकाराः । **स्निग्धं** स्निग्धा यथा भवेत्तथा । अत एव—**सूनृतं** मङ्गलं यथा भवेत्तथा । 'सूनृतं मङ्गलेऽपि स्यात् प्रियसत्ये वचस्यपि'इति मेदिनीकारः । 'प्रियसत्यवचन'मिति विवृतिकाराः । **अनुरक्ता । नितम्बिनी । भाषते** । अत एव—यथा मम-'दयित ! भवन्तु सुभव्या भवतोऽध्वानः, प्रमोदयेर्जनकौ । नाथ परस्मिञ्जन्मनि 'शुचि चरणौ भजिष्येऽहम् ॥' इति, अत्र प्रवत्स्यन्तमपि कान्तं प्रति सूनृतोक्तिः । ननु स्वकीयाऽऽदीनां लज्जातारतम्ये कथं सर्वासामासां समानानीङ्गितानीत्यत आह-**एतेषु** कथितेष्वेङ्गितेषु मध्ये इति भावः। **नवस्त्रिया** नवोढाया अभिनवसङ्गमाया वेति भावः । **चेष्टितानि । अधिकलज्जा**न्यधिका लज्जा येषु तादृशानि । 'भवन्ती'ति शेषः । **मध्याया** नवोढाप्रगल्भयोरन्तरालावस्थाया इत्यर्थः । 'चेष्टितानि पुन'रिति शेषः । **मध्यव्रीडानि**

---

१ 'धन्या खलु साऽद्य एवमार्यपुत्रेण बहु मन्यते चैवमार्यपुत्रं विनोदयती आशाबन्धनं खलु जातं जीवलोकस्य' इति संस्कृतम् ।

**अन्यस्त्रियाः प्रगल्भाया-स्तथा स्युर्वारयोषितः ।**

**दिङ्मात्रं यथा मम—**

**'अन्तिकगतमपि मामिय-मत्र लोकयतीव हन्त दृष्ट्वाऽपि ।**
**सरसनखक्षतलक्षित-माविष्कुरुते भुजामूलम् ॥८३॥'**

**तथा—**

**१६२ लेख्यप्रस्थापनैः स्निग्धै-र्वीक्षितैर्मृदुभाषितैः ॥ १५३ ॥**
**दूतीसम्प्रेषणैर्नार्य्या भावाभिव्यक्तिरिष्यते ।**

---

मध्याऽनल्पानतिशयिता व्रीडा लज्जा येषु तानि । 'भवन्ती'ति शेषः । **स्रंसमानत्रपाणि** स्रंसमाना नश्यन्ती त्रपा लज्जा येषु तानि । 'मन्दाक्षं ह्रीस्त्रपा व्रीडा लज्जा'इत्यमरः । **तु** पुनः । 'चेष्टितानी'ति पूर्ववत् **अन्यस्त्रियाः** परकीयायाः कान्ताया **प्रगल्भायाः । तथा । वारयोषितो** वेश्यायाः । **स्युः** 'भवन्ती'ति शेषः । यथा नवस्त्रियाः—'मुहुरङ्गुलि-संवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् । मुखमंसविवर्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितं तु ॥'इति । अथ मध्याया यथा—'भ्रातस्तरां प्रणमने विहिते गुरूणामाकर्ण्य वाचममलां भव पुत्रिणीति । नेदीयसि प्रियतमे परमप्रमोद-पूर्णादरं दयितया दधिरे दृगन्ताः ॥'इति । प्रगल्भायाः पुनर्यथा—'विवरीअरए लच्छी बह्मं दट्ठूण णाहिकमलट्ठम् । हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ'[1] ॥ इति । परस्त्रिया यथा-'शयिता सविधेऽप्यनीश्वरा सफलीकर्त्तुमहो मनोरथान् । दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते ॥'इति । न चेदं स्वकीयायाश्चेष्टितमिति वाच्यम्, मनोरथान् सफलीकर्त्तुमनीश्वरेति व्याख्यानेऽपि 'यावन्तो मनोरथास्तावन्तोऽद्य यावदेतस्या हृदयस्था'इत्यर्थमात्रलब्धेः । नहि स्वकीयाया नवसङ्गमेऽप्येवं प्रवृत्तिः सहृदयहृदयसाक्षिकेति। सामान्यवनिताया यथा—'सा मज्जनालेपदुकूलभूषणस्रग्गन्ध-ताम्बूलसुधाऽऽसवादिभिः । प्रसाधितात्मोपससार माधवं सव्रीडलीलोस्मितविभ्रमेक्षितैः ॥' इति दिक् ॥१४०॥१५२॥

एवं नायिकानामनुरागेङ्गितावस्थां निरूप्याह-**दिङ्मात्रं** दिक्प्रदर्शनमेवेति तथोक्तम् । **यथा । मम । 'अन्तिक..**इत्यादि ।

**'इयम् । मां** कान्तम् । **अन्तिकगत**मन्तिकं समीपं गतस्तम् । **अपि** 'किं पुनर्दूरगत'मिति शेषः । **दृष्ट्वा । अपि** 'किं पुनरदृष्ट्वे'ति शेषः । **अत्र** नैवेत्यर्थः । 'अत्रोपमा ते बुद्धि'रितिव'दत्रे'त्यस्यापि निषेधार्थकाव्ययत्वात् । **लोकयतीव**। 'लज्जये'ति शेषः। **हन्त**। तथा-**सरसनखक्षतलक्षितं** सरसमुपचाराद्भिनवं यन्नखक्षतं तेन लक्षितमिति तत्तथोक्तम् । नखैः । (कृतं) क्षतमिति नखक्षतम् । 'तृतीया तत्कृतार्थेन गुणवचनेन' २।१।३० इति तृतीयासमासः । **भुजामूलं**भुजयोर्मूलमिति तत्तथोक्तम् । 'भुजे'ति टावन्तोऽपि भुजशब्दः। 'अथो भुजा । द्वयोर्बाहौ करे ।' इति मेदिनी-कोशात् । **आविष्कुरुते** प्रकटयति । नायकस्य नायिकासखीं प्रति नायिकाचेष्टितदर्शनार्थोक्तिरियम् । अत्रार्य्या छन्दः, तल्लक्षणं चोक्तं प्राक् ॥८३॥'

भावाभिव्यक्तेर्हेतुं दर्शयति-**तथा**-१६२ लेखेत्यादिना ।

१६२ **लेख्यप्रस्थापनै**र्लेख्यानां लेखनीयानां स्वाभ्यर्थनानां **प्रस्थापनानि** तैस्तथोक्तैः । **स्निग्धैः** स्निह्यन्तीति स्निग्धानि तैः । 'गतिबुद्धिपूजार्थेभ्यश्च ।' ३।२।१८८ इति चाद्वर्त्तमाने क्तः । **वीक्षितै**र्वीक्षणैः । **मृदुभाषितै**र्मृदूनि कोमलपदानि भाषितानि तैः । यद्वा-'स्निग्धै'रिति'लेख्यप्रस्थापनै' रित्यस्य 'मृदुभाषितै' रित्यस्यापि च विशेषणमवगम्यम् **दूतीसम्प्रेषणै**र्दूतीनां सम्प्रेषणानि तैः । 'चे'ति शेषः । **नार्य्या** उपलक्षणेन नरस्य चेत्यर्थः । **भावाभिव्यक्ति**र्भावस्य नायकविषयस्य नायिकाविषयस्य वाऽनुरागरूपस्य मनोविकारस्याभिव्यक्तिः । **इष्यते** । 'इषु 'इच्छायाम् । 'सार्वधातुके यक् ।' ३।१।६७ इति कर्म्मणि यक् । अत्रेदं तत्त्वम्-नायिकाकर्तृकै-र्लेख्यप्रस्थापनादिभिर्नायिकानिष्ठस्य नायकविषयस्यैव नायककर्त्तृकैस्तैरेव नायकनिष्ठस्य नायिकाविषयस्यानुरागस्याभि-व्यक्तिर्भवति । किन्तु—'पूर्वं रक्ता भवेन्नारी पुमान्पश्चात्तदिङ्गितैः ।' इत्युक्तदिशाऽनुरागस्य नायिकानिष्ठताप्रत्ययान-न्तरमेव नायकनिष्ठताप्रत्ययः स्याने इत्येव 'नार्या' इत्युक्तम् । यथा—'विज्ञप्तिरेषा मम जीववन्धो ! तत्रैव नेया

---

[1] 'विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम्। हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति॥' इति संस्कृतम्।

दूत्यश्च—

**१६३ दूत्यः सखी नटी दासी धात्रेयी प्रतिवेशिनी ॥ १५४ ॥**
**बाला प्रव्रजिता कारूः शिल्पिन्याद्याः स्वयं तथा ।**

**कारूः रजकीप्रभृतिः, शिल्पिनी चित्रकारादिस्त्री । आदिशब्दात्ताम्बूलिकगान्धिकस्त्रीप्रभृतयः ।**

**तत्र सखी यथा—'श्वासान्मुञ्चति—' इत्यादि । स्वयंदूती यथा मम—**

**'पन्थिअ ! पिआसिओ विअ, लच्छीअसि जासि ता किमण्णत्तो ।**

---

दिवसाः कियन्तः । सम्प्रत्ययोग्यस्थितिरेष देशः, करा यदिन्दोरुपतापयन्ति ॥' इदं नायिकाया लेख्यप्रस्थापनम् । नायकस्य पुनर्यथा—'सुन्दरि ! न मम विना त्वां शयनं नक्तं, दिवा कुतोऽपि वाऽऽमोदः । अमृषा ब्रवीमि दयिते ! तनुरिह, तत्रासवो भूयः ॥' इति, इदं मम । 'इत एव निजालयं गताया वनिताया गुरुभिः समावृतायाः । परिवर्तित-कन्धरं नतभ्रु स्मयमानं वदनाम्बुजं स्मरामि ॥' इदं नायकस्य वीक्षितम् । नायकस्य यथा शाकुन्तले दुष्यन्तस्य । मृदुभाषणमप्येवं तत्रैवोभयोः । दूतीसंप्रेषणं यथा गीतगोविन्दादौ । इति दिक् ॥ १५३ ॥

ननु का नाम दूत्यो यासां सम्प्रेषणं भावाभिव्यञ्जकमित्याह—दूत्यः । च पुनः ।

१६३ **सखी । नटी** नृत्यादिकुशला । **दासी । धात्रेयी** धात्र्या अपत्यं स्त्रीति तथोक्ता । 'स्त्रीभ्यो ढक् ।' ४।१।१२७ इति ढक् । 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम् ।' ७।१।२ इति ढस्य एयित्यादेशः । **प्रतिवेशिनी** प्रतिविशति प्रत्यासन्नतया निविशत इत्येवंशीलेति तथोक्ता । गृहान्तिके यस्या गृहं सेत्यर्थः । **बाला**ऽनिषिद्धप्रचारतया सर्वत्र सर्वोदन्तावगमसमर्था । **प्रव्रजिता**पचारेण प्रव्रजितासदृशीत्यर्थः । तथोक्तम् 'इह प्रव्रजिताशब्देन श्रमणाक्षपणारक्तपाट्टिका-दयस्तद्विशेषा अपि ग्राह्याः ।' इति । **कारूः** कारो रजकनापिततक्षकतन्तुवायचर्म्मकारान्यतमस्येयं स्त्रीति तथोक्ता । 'रजकस्तक्षकश्चैव तन्तुवायश्च नापितः । चर्म्मकारस्तथैवैवं कारुः पञ्चविधः स्मृतः ॥' इति गणेशः । 'ऊङुतः ।' ४।१।६६ इत्यूङ् । **शिल्पिन्याद्याः** शिल्पिनी चित्रकारिण्याद्या यत्र ताः । शिल्पं कलादि कर्म्माख्या अस्तीति शिल्पिनी । 'शिल्पं कर्म्म कलाऽऽदिकम् ।' इत्यमरः । **तथा । स्वयं** नायिका । 'इत्येता' इति शेषः । **दूत्यः** । 'भवन्ती'ति शेषः ॥ १५४ ॥

कारिकाकाठिन्यं परिहरति—**कारूः** । 'इत्यस्ये'ति शेषः । **रजकीप्रभृतिः** । 'इत्यर्थः' इति शेषः । **शिल्पिनी** 'शिल्पिन्याद्या' इत्यंशभूतः शब्दः । 'इत्यस्ये'ति शेषः । **चित्रकारादिस्त्री** । 'इत्यर्थ' इति शेषः । **आदिशब्दा**दाद्य-शब्दावयवभूतादित्यर्थः । **ताम्बूलिकगान्धिकस्त्रीप्रभृतयस्ता**म्बूलं शिल्पमस्यास्तीति ताम्बूलिकः, गन्धः शिल्पम-स्यास्तीति गान्धिकस्तयोः स्त्रियौ, ते प्रभृती यासां ताः । आदिपदेन पाचकगायकस्त्र्यादीनां ग्रहणम् । एता हि प्रगल्भा-श्चतुरा अप्रतिहतगमनाश्च भवन्ति । यथोक्तं कामसूत्रकारैः—'विधवेक्षणिका दासी भिक्षुकी शिल्पकारिका । प्रविशत्याशु विश्वासं दूतीकार्य्यं च विन्दति ॥' इति ।

उदाहर्त्तुमुपक्रमते—तत्रेत्यादिना ।

**तत्र** तासु दूतीषु मध्ये । **सखी** । इदमुपलक्षणं दास्यादीनामपि । 'दूती'ति शेषः । **यथा—'श्वासान् । मुञ्चति' इत्यादि** । अयम्भावः—यदिदं तत् सखीधात्र्यादिपरतयाऽप्युदाहार्य्यम् । यथा वा गीतगोविन्दे । अथ नटी शिल्पिनी वा दूती यथा मम-'नृत्यं (शिल्पं) दर्शयितुं स्वं परितो भ्रमणं सदैव नः सुभगे (ग !) । तस्य तत्रापि च (तस्यास्तव वा) सुषमा या दृष्टा नान्ययोर्भुवि सा ॥' इति । **स्वयंदूती** 'पुन'रिति शेषः । **यथा । मम** कृतौ । **'पंथिअ... इत्यादौ** ।

**'पंथिअ** पान्थ दूरादागमनश्रमार्त्त ! इति रमणीवियोगदुःखित ! इति वा यावत् । **पिआसिओ** पिपासितः पातुं जलमधरसुधां वाऽऽस्वादितुं जातेच्छ इति यावत् । **विअ** इव । **लच्छीअसि** लक्ष्यसे 'मुखम्लानतया वा सस्मितं सकटाक्षं तव दृष्टिपाता'दिति शेषः । तातत्तर्हीति यावत् । **किम् । अण्णत्तो** अन्यत्र जलाशये गुरुजन-

**ण मणा पि वारओ इध अत्थि घरे घणरसं पिअंताणम् ॥ ८४ ॥'**

**एताश्च नायिकाविषये नायकानामपि दूत्यो भवन्ति ।**

**दूतीगुणानाह—**

**१६४ कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः ॥ १५५ ॥**
**माधुर्य्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः ।**
**१६५ एता अपि यथौचित्यमुत्तमाधममध्यमाः ॥ १५६ ॥**

**एता दूत्यः । अथ प्रतिनायकः—**

---

तन्नाया वा कामिन्या अन्तिक इति यावत् । **जासि** यासि । **इध** इह । **घरे** गृहे । **घणरसं** घनरसं घनस्य मेघस्य रसस्तम्, जलमित्यर्थः । 'मेघपुष्पं घनरस'इत्यमरः । घनो निविडो रस आस्वादो यत्र तम्, अधरमित्यर्थो वा । **पिअंताणं** पिबताम् । 'जनाना'मिति शेषः । **मणा** मनाक् । **पि** अपि । **वारओ** वारकः । **ण** न । **अत्थि** अस्ति । अत्र गीतिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ८४ ॥'

न केवलं नायिकानामेव दूत्यो भवन्तीत्याह—**एता** अनन्तरोक्ताः । **च** । **दूत्यः** । **नायकानाम्** । **अपि** न केवलं नायिकानामेवेति भावः । **नायिकाविषये** 'अनुरागे सती'ति शेषः । **भवन्ति** । सङ्गच्छते चैव 'नार्या उपलक्षणेन नरस्य चे'ति बोध्यम् । तथा च—नायिकाविषयानुरागे नायकस्य स्वयंदूतीत्वमपि, यथा मम—'सखि ! हरिमानय जीवय मामपि भावय तमन्तराऽशरणम् । इत्यनुनीय विसखीज्ञामुदहत राधां स्वयं हरिर्भूत्वा॥' इति दिक् ।

अथ प्रसङ्गानुसक्तं दूतीगुणाभिधानं प्रतिजानीते—**दूतीगुणान्** । **आह**—**१६४ कला**...इत्यादिना ।

१६४ **कलाकौशलं** कलानां नृत्यादीनां कौशलं चातुर्य्यम् । **उत्साहः** सप्रमोदं कर्तव्यकर्म्मणि प्रवर्त्तितत्वम् । **भक्तिः** । **चित्तज्ञता** नायिकानायकयोश्चित्ताभिप्रायाभिज्ञत्वम् । **स्मृतिः** स्मरणम् । **माधुर्य्यं** मधुरभाषित्वम् । **नर्म्मविज्ञानं** नर्म्मणां परिहासानां विज्ञानं विशेषेण ज्ञातृत्वम् । **वाग्मिता** भाषणपटुत्वम् । प्रशस्ता वागस्येति वाग्मी । 'वाचो ग्मिनिः ।' ५।२।१२४ इति ग्मिनिः । **च** । **इतीत्येवम्** । **तद्गुणास्तस्या** दूत्या गुणा इति तथोक्ताः॥१५५॥

अथोक्तगुणानामेव हानोपादानाभ्यामुत्कृष्टत्वानुत्कृष्टत्वे प्राह—१६५—**एता** इत्यादिना ।

**एता** 'यासामनन्तरोक्ता गुणास्ता एवे'ति शेषः । **अपि** । **यथौचित्यमौ**चित्यमनतिक्रम्येति तथोक्तम् । **उत्तमाधममध्यमा** उत्तमाश्चाधमाश्च मध्यमाश्चेति तथोक्ताः । 'भवन्ती'ति शेषः ॥ १५६ ॥

एताः का इत्याशङ्कां परिहरति—**एताः** । **दूत्यः** । इति ।

अयम्भावः—कलाकौशलादिभिर्गुणैः सुसम्पन्नोत्तमा, तद्विपरीताऽधमा, साधारण्येन सम्पन्ना मध्यमा च, तत्राद्या यथा मम—'तं कथमहमुपयायामिति यदि, तत्सखि ! चिकित्सका भूत्वा । एहि, तदाधिं व्यपनय, धर धृतिमिति काऽप्ययोजयद्राधाम् ॥' इति । द्वितीया यथा—'निःशेषच्युतचन्दनं..' इत्यत्र यां प्रत्युक्तिः । तृतीया पुनर्गीतगोविन्दादौ प्रसिद्धैव सन्देशमात्रपरत्वात् । इति दिक् ।

अथ प्रतिनायकं निरूपयितुं प्रतिजानीते—**अथे**त्यादिना ।

**अथ** नायिकानायकयोर्लक्ष्यलक्षणाभ्यां प्रपञ्च्यनिरूपणानन्तरम् । **प्रतिनायकः** प्रतिनयति प्रापयत्यनर्थमिति, प्रतिकूलत्वेन न यातीति वा तथोक्तः । 'ण्वुल्तृचौ ।' ३।१।१३३ इति ण्वुल् । 'निरूप्यते—१६६ **धीरोद्धतः**.. इत्यादिना ।

---

१ 'पान्थ ! पिपासित इव लक्ष्यसे यासि तत् किमन्यत्र । न मनागपि वारकं इहास्ति गृहे घनरसं पिबताम् ॥' इति संस्कृतम् ।

**१६६ धीरोद्धतः पापकारी व्यसनी प्रतिनायकः।**

यथा रामस्य रावणः।

अथोद्दीपनविभावाः—

**१६७ उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये ॥ १५७ ॥**

ते च—

**१६८ आलम्बनस्य चेष्टाऽऽद्या देशकालादयस्तथा।**

चेष्टाऽऽद्या इत्याद्यशब्दाद्रूपभाषणादयः। कालादय इत्यादिशब्दाच्चन्द्रचन्दनकोकिलालापभ्रमरझङ्कारादयः। तत्र चन्द्रोदयो यथा मम—

'करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य।
विकसितकुमुदेक्षणं विचुम्ब-त्ययममरेशदिशो मुखं सुधांशुः ॥ ८५ ॥' इति।

---

१६६ **धीरोद्धतो** 'मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः। आत्मश्लाघानिरत' इत्युक्तलक्षणलक्षित इत्यर्थः। **पापकारी** पापमनर्थं करोतीत्येवंशील इति तथोक्तः। **व्यसनी** व्यसनानि सन्त्यस्येति तथोक्तः। व्यसनानि च कामजानि क्रोधजानि च, यथोक्तानि मनुना—'कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः। वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव हि ॥ मृगयाऽक्षो दिवास्वप्नः परिवादः स्त्रियो मदः। तौर्य्यत्रिकं वृथाऽट्या च कामजो दशको गणः ॥ पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम्। वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः ॥' इति। अक्षोऽक्षैर्द्यूतादिरूपा क्रीडा। तौर्य्यत्रिकं तौर्य्योपलक्षितं त्रिकमिति तथोक्तम्, तच्च 'तौर्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम्।' इत्यमरेणोक्तम्। पैशुन्यमविज्ञातपरदोषाविष्करणम्। साहसं साधोर्बन्धनादिनानिग्रहणम्। द्रोहो हन्तुमिच्छा। ईर्ष्या परगुणोत्कर्षद्वेषित्वम्। असूया परगुणेषु दोषारोपणम्। अर्थदूषणम् अर्थानामपहरणम्, देयानामदानं च। स्पष्टमितरत्। **प्रतिनायकः**। 'मत' इति शेषः।

उदाहरति—**यथा। रामस्य। रावणः।** इति।

एतावताऽऽलम्बनविभावो निरूपितः, अथोद्दीपनविभावं निरूपयितुं प्रतिजानीते—**अथे**त्यादिना।

अथालम्बनाख्यविभावनिरूपणानन्तरम्। **उद्दीपनविभावाः**। निरूप्यन्ते—१६७ **आलम्बनस्ये**त्यादिना।

१६७ **ये। रसं** शृङ्गारादिरूपं निर्वेदादिरूपं वाऽऽस्वादविशेषम्। **उद्दीपयन्ति। ते। उद्दीपनविभावाः।** 'मता' इति शेषः ॥ १५७ ॥

तेषां च दिङ्मात्रं दर्शयन्नाह—**ते** उद्दीपनपदवाच्या विभावा इत्यर्थः। **च**—

१६८ **आलम्बनस्य** नायकादिरूपस्य विभावस्येत्यर्थः। **चेष्टाऽऽद्याश्चे**ष्टा नेत्रसञ्चारादिरूपा आद्या येषां ते। **तथा। देशकालादयः।** देश उपवनादिरूपः, कालो वसन्तादिरूपः, तावादी येषां ते 'मता' इति शेषः।

कारिकाया दुर्बोधतां परिहरति—**चेष्टाऽऽद्याः।** इत्य'त्रे'ति शेषः। **आद्यशब्दात्।** ल्यपो लोपेऽसौ पञ्चमी। **रूपभाषणादयः।** आदिपदेन तत्तच्छ्रवणादीनां ग्रहणम्। 'ग्राह्या' इति शेषः। **कालादयः।** 'इत्यत्रे'ति शेषः। **आदिशब्दात्।** अत्रापि ल्यपो लोपे पञ्चमी। **चन्द्रचन्दनकोकिलालापभ्रमरझङ्कारादयः।** आदिपदेन मलयानिलादीनां ग्रहणम्। 'ग्राह्या' इति शेषः।

उदाहरति—**तत्र** तेषु तथाऽनेकविधेषूद्दीपनविभावेषु मध्य इति यावत्। **चन्द्रोदयः।** 'नामोद्दीपनविभाव' इति शेषः। **यथा। मम** कृतौ—'**कर..**' इत्यत्र।

'अयं पुरतो दृश्यमानः। **सुधांशुश्च**न्द्रमास्तन्नामा वा तत्त्वेनाध्यस्यमानो वा नायक इत्यर्थः। **गलिततमःपटलांशुके** गलितं नष्टं तमःपटलमन्धकारनिचय एवांशुकं यस्य तथाभूते। अन्यत्र—गलितं च्युतं तमो नीलं श्यामं वा पटलांशुकमावरणीयवस्त्रं यस्मात् तत्र। **उदयमहीधरस्तनाग्र** उदयमहीधर उदयगिरिरेव स्तनस्तस्याग्रं

**यो यस्य रसस्योद्दीपनविभावः स तत्स्वरूपवर्णने वक्ष्यते ।**

**अथानुभावः-**

**१६९ उद्बुद्धं कारणैः स्वैःस्वै-र्बहिर्भावं प्रकाशयन् ॥१९८॥**
**लोके यः कार्य्यरूपः सोऽनुभावः काव्यनाट्ययोः ।**

**यः खलु लोके सीताऽऽदिचन्द्रादिभिः स्वैःस्वैरालम्बनोद्दीपनकारणै रामादेरन्तरुद्बुद्धं**

---

तत्र । अन्यत्र-उदयमहीधरवत् (अत्युच्चौ) स्तनौ तयोरग्रन्तत्र । **करं** किरणं पाणिं वा । 'बलिहस्तांशवः कराः' इत्यमरः । **निवेश्य** स्थापयित्वा । **विकसितकुमुदेक्षणं** विकसितानि यानि कुमुदानि तानीक्षयति दर्शयतीतितत्, तानीक्षणानीव यत्र तदिति वा तथाभूतम् । अन्यत्र-विकसितकुमुदे इवेक्षणे नेत्रे यस्य तत् । **अमरेशदिशो**ऽमराणामीशस्तस्येन्द्रदेवस्य या दिक् दिशा तस्याः, पूर्वस्या दिश इत्यर्थः । अमरेशस्य किं पुनः कस्यचिन्मनुष्येशस्य दिक्उपचारात्तद्रूपथदर्शिकाऽत एव नायकं वशीकृत्योच्छृङ्खलतया वर्त्तमाना नायिका तस्या इत्यर्थः । **मुखं** द्वारम् । अन्यत्राननमुपचारात् तदुपलक्षितः समुदाय इत्यर्थः । 'मुखमुपाये प्रारम्भे श्रेष्ठे निस्सरणास्ययोः ।'इति हैमः । **विचुम्बति** विशेषेण चुम्बत्युपचाराच्चुम्बतीव, स्पृशतीत्यर्थः । अन्यत्र यथाश्रुतार्थ एव । अत्र श्लेषवती समासोक्तिः । पुष्पिताऽग्रावृत्तं च, तल्लक्षणं चोक्तं प्राक् ॥ ८५ ॥' इति ।

अत्रेदं बोध्यम्-सुधांशौ नायकत्वस्य दिशि नायिकात्वस्य चारोपः, अत एवात्र समासोक्तिः । तत्र सुधांशुदर्शनेन दिशो विकसितकुमुदेक्षणत्वमित्युद्दीपनविभावः सुधांशूदयः । इति ।

ननु स्यादेवं शृङ्गाराभासस्यायं, किन्तु कस्कोरसान्तरस्योद्दीपनविभाव इत्याह-**यः । यस्य । रसस्य** 'रस्यत आस्वाद्यत'इति व्युत्पत्तेः शृङ्गारादेर्निर्वेदादेश्चेत्यर्थः । **यः उद्दीपनविभावः** । 'सम्भवती'ति शेषः । **सः । तत्स्वरूपवर्णने** तस्य (रसस्य) स्वरूपं लक्षणं तस्य वर्णनं निरूपणं तस्मिन्, 'सती'ति शेषः । **वक्ष्यते** ।

अयमिह पर्य्यालोकः-'विभावयती'ति विभाव इति यदवलम्ब्य रत्यादिराविर्भवति, तल्ललनादिरूपमालम्बनविभावाभिधेयं जनककारणम्, आविर्भूते च रत्यादौ यत्तत्परिपोषकं तच्चन्द्रोदयादिरूपमुद्दीपनविभावाभिधेयं परिपोषककारणम् । यथाऽऽहुः 'यद्यप्युद्दीपकस्य स्थायिनि न कारणत्वं, किन्तूत्पन्ने तस्मिन्नीषदुत्कर्षाधायकत्वमुद्दीपकत्वम् । तथाऽप्यनुद्दीपितोऽजातप्राय एवेत्युद्दीपकेऽपि कारकत्वोपचारात् तत्रापि विभाव (कारण) व्यवहारः । विभावादिसञ्ज्ञा च विभावनादिव्यापारयोगात् ।'इत्येके । 'यो यस्याश्रितत्रृत्तेर्विषयः स तस्या आलम्बनम् । निमित्तानि चोद्दीपकानि ।' इत्यपरे । एतेषामयमभिप्रायः-नायिकाऽऽदिरत्यादिं प्रति नायकादिः समवायिकारणम्, चन्द्रोदयादिस्तु निमित्तम् । नहि नायकादिं विना नायिकाऽऽदिरत्यादिरुद्भाव्यते न वाऽवतिष्ठते । इत्यस्य समवायित्व, मितरस्य तु निमित्तत्वमपराऽक्षम् । इति ।

अथानुभावस्वरूपमभिधातुं प्रतिजानीते-अथेत्यादिना ।

**अथ** विभावनिरूपणानन्तरम् । **अनुभावः** निरूपयिष्यते-१६९ **उद्बुद्धं** इत्यादिना ।

१६९ **स्वैःस्वैः** स्वकीयैःस्वकीयैरित्यर्थः । वीप्सायां द्वित्वम् । **कारणै**र्जनकपरिपोषकरूपैरालम्बनोद्दीपनपदवाच्यैर्हेतुभिरित्यर्थः । **उद्बुद्धं** प्रतीतिपथमवतीर्णम् । 'अन्त' रिति शेषः । **भावं** मनोविकारं तद्रूपं रत्यादिकमिति यावत् । **बहिः । प्रकाशयन्** उद्भावयन् **लोके** जगति व्यवहारमार्गे इति यावत् । **यः । कार्य्यरूपः । सः । काव्यनाट्ययोः** काव्ये नाट्ये चेत्यर्थः । **अनुभावः** । 'इति व्यपदिश्यत' इति शेषः ॥ १५८ ॥

तदेव निर्दिशति-**यः । खलु । लोके** संसारे । **सीताऽऽदिचन्द्रादिभिः** सीताऽऽदीनि च चन्द्रादीनि चेति तैस्तत्स्वरूपभूतैरित्यर्थः । **स्वैःस्वैः** स्वकीयैःस्वकीयैः । 'स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने ।' इति मेदिनी । **आलम्बनोद्दीपनकारणै**रालम्बनकारणैरुद्दीपनकारणैश्चेत्यर्थः । **रामादेः । अन्तः**रन्तःकरणे । **उद्बुद्धमु-**

रत्यादिकं बहिः प्रकाशयन् कार्य्यमित्युच्यते, स काव्यनाट्ययोः पुनरनुभावः। कः पुनरसावित्याह-

१७० उक्ताः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः ॥ १५९ ॥

तद्रूपाः सात्त्विका भावा-स्तथा चेष्टाः परा अपि ।

तद्रूपा अनुभावस्वरूपाः । तत्र यो यस्य रसस्यानुभावः स तत्स्वरूपवर्णने वक्ष्यते । तत्र सात्त्विकाः-

१७१ विकाराः सत्त्वसम्भूताः सात्त्विकाः परिकीर्त्तिताः ॥ १६० ॥

---

द्भूतम् । रत्यादिकम् । 'भाव' मिति शेषः । वहिः प्रत्यक्षम् । प्रकाशयन् प्रकाशयतीत्येवम्भूतः । कार्यम् । इतीत्येवम् । उच्यते । स कार्य्यरूपो रत्यादिर्नामान्तरुद्बुद्धो भाव इत्यर्थः । काव्यनाट्ययोः काव्ये नाट्ये चेत्यर्थः । नाट्यं नाटकम् । एतयोः श्रव्यदृश्यत्वाभ्यां गोवलीवर्दवद्भेदः । पुनः । एतेन 'लोक' इति व्यवच्छिद्यते । अनुभावस्तत्पदेन व्यपदिश्यत इति भावः ।

अस्य स्वरूपमभिधातुं जिज्ञासामुत्थाप्य प्रतिजानीते-कः इत्यादिना ।

असावनुभावः । पुनः । कः किंस्वरूपः । इतीत्येवम् । 'जिज्ञासासत्त्व' इति शेषः । आह- १७० उक्ताः... इत्यादिना ।

१७० स्त्रीणाम् 'य' इति शेषः । अङ्गजा अङ्गान्मनसो जायन्त इति तथोक्ताः, भावादयस्त्रय इत्यर्थः । च तथा । स्वभावजाः । स्व आत्मीयो नाथिकासम्बन्धीति यावद्, यो भावो मनोविकारस्तस्माज्जायन्त इति तथोक्ताः । यद्वा-स्वः सत्त्वगुणप्रधानो यो भावस्तज्जा इत्यर्थः । लीलाऽऽद्या अष्टादशेति भावः । अलङ्कारा अलं (स्त्रीसम्बन्धि यौवनं) पर्य्याप्तं क्रियत एभिः, कुर्वन्तीत्येव वा तथोक्ताः । उक्ता निरूपिताः । 'अथासामलङ्कारा' इत्यादिनेति शेषः । तथा । 'ये' इति शेषः । सात्त्विकास्सत्त्वाद्भवन्तीति तथोक्ताः । सत्त्वगुणप्रधाना इति भावः । भावा मनोविकारस्वरूपाः । 'वक्ष्यन्ते' इति शेषः । ते एवम्-परा अन्या एतेभ्यो भिन्ना इति यावत् । चेष्टा भ्रूनेत्रादिविक्षेपाः, वहुवचनेन तदादयः । 'सम्भाव्यमाना' इति शेषः । अपि । समुच्चयार्थमिदमव्ययम् । तद्रूपास्सो ऽनुभावो रूपं स्वरूपं येषां ते तथोक्ताः । 'ज्ञेया' इति शेषः ॥ १५९ ॥

संशयापनोदायाह-तद्रूपा 'इत्यस्ये' ति शेषः । अनुभावस्वरूपाः । 'इत्यर्थ' इति शेषः ।

अयम्भावः-भावादयस्त्रयोऽङ्गजा लीलाऽऽदयश्चाष्टादश स्वभावजा येऽलङ्काराः स्त्रीणामुक्तास्ते तथा वक्ष्यमाणा ये स्तम्भादयोऽष्टौ सात्त्विका भावास्ते, एवं याश्चेष्टाऽऽद्याः सम्भवन्ति ता अपि नानुभावातिरिक्ताः अनुभावयन्तीति व्युत्पत्तेः । न चैवमयत्नजा अप्यनुभावा इति गदितुं युक्तम्, रत्याद्यनुमापकत्वाभावात् । भेदोऽप्येवं स्वभावजेभ्य एतेषाम् । एते च कार्य्याणि । यथोक्तं-'यानि च कार्य्यतया तान्यनुभावशब्देन ।' इति । 'कार्य्याणि हि रोमाञ्चादीनि स्वकारणमाधिक्येन व्यञ्जयन्तीत्यनुभावा अपि रत्यादेः कार्य्याणी' ति च । इति ।

एतानपि सौकर्य्येण प्रस्तावमुपपद्यैवाभिधातुं युक्तमित्याह-तत्र तेषु अनुभावेष्विति यावत् । निर्धारणार्थां सप्तमी । यः । यस्य । रसस्य शृङ्गारादेर्निर्वेदादेश्च । अनुभावः । 'सम्भवती' ति शेषः । सः । तत्स्वरूपवर्णने तस्य-रसस्य स्वरूपं तस्य वर्णनं तत्र 'क्रियमाण' इति शेषः । वक्ष्यते ।

अथ सात्त्विकानभिधातुं प्रतिजानीते-तत्रेत्यादिना ।

तत्र तेष्वनेकविधेष्वनुभावेषु मध्य इति यावत् । सात्त्विका वक्ष्यन्ते १७१ विकाराः..इत्यादिना ।

१७१ सत्त्वसम्भूताः सत्त्वात्सम्भूता उद्बुद्धा ( अभिव्यक्ता ) इति यावत् । विकाराः परिणामाः । 'मनस' इति शेषः । सात्त्विकाः । 'भावा' इति शेषः । परिकीर्त्तिताः । 'सत्त्वमात्रोद्भवा भावाः सात्त्विकाः परिकीर्त्तिताः ।' इति पाठान्तरेऽप्ययमेवार्थः ॥ १६० ॥

किं नाम सत्त्वमिति 'रजस्तमोभ्यामस्पृष्टं मनः सत्त्व' मिति स्वरूपमपि शिष्याणां सौख्यायाह-सत्त्वमित्यादिना ।

सत्त्वं नाम स्वात्मविश्रामप्रकाशकारी कश्चनान्तरो धर्म्मः।

१७२ सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः।

'गोबलीवर्दन्यायेने'ति शेषः। केऽत इत्याह—

१७३ स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः॥ १६१॥
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः।

तत्र—

१७४ स्तम्भश्चेष्टाप्रतीघातो भयहर्षामयादिभिः॥ १६२॥

---

**सत्त्वम्**। **नाम**। प्रसिद्धयर्थेऽव्ययमिदम्। **स्वात्मविश्रामप्रकाशकारी** स्वात्मनि विश्रामः पर्य्यवसानं यस्य तस्य, सोऽसौ वा प्रकाशकारी। विवृतिकारास्तु—'स्वात्मन्येव विश्रामो यस्य स रत्यादिः; तस्य प्रकाश उद्बोधस्तत्कारी।' इति विवृण्वते, 'प्रागुक्तमपि सत्त्वलक्षणं शिष्याणां विविधव्युत्पत्त्यै प्रकारान्तरेण पुनरुक्तम्।' इति चाहुः। **कश्चन**। **आन्तरो**ऽन्तर्भव इति तथोक्तः। **धर्म्मः**।

नन्वेषां किं नाम व्यपदेशबीजम्? इत्याह—१७२ **सत्त्व**..इत्यादि।

१७२ **ते** सात्त्विका भावाः। **सत्त्वमात्रोद्भवत्वात्**। मात्रपदेन रजस्तमसोः सर्वदा व्यवच्छेदः। अत्र हेतौ पञ्चमी। **अनुभावतो**ऽनुभावेभ्यः। अत्रापादानपञ्चम्यर्थस्तस्। **भिन्नाः**। अपि 'अभिन्ना' इति शेषः।

ननु कथमेवमित्याह—'**गोबलीवर्दन्यायेन** गोबलीवर्दयोर्न्यायो युक्तिस्तेन, यथा गोत्वेन बलीवर्दत्वेन चानयोर्भेदेऽपि गोत्वेनाभेदस्तथेति युक्त्येति यावत्।' **इती**'त्येवम्। **शेषः**। अवशिष्यत इति भावः। विवृतं च विवृतिकारैः—'ननु भेदाभेदयोर्विरोध इत्यत आह—**गोबलीवर्दे**ति। तथा चानुभावत्वावच्छिन्नप्रतियोगिताकभेदाभावेन सहानुभावत्वसमानाधिकरणधर्म्मावच्छिन्नप्रतियोगिताकभेदस्य समावेशः। यथा बलीवर्दे गोत्वावच्छिन्नप्रतियोगिताकभेदाभावेन सह गोत्वसमानाधिकरणधेनुत्वादिधर्म्मावच्छिन्नप्रतियोगिताकभेदाभावेन सह गोत्वसमानाधिकरणधेनुत्वावच्छिन्नप्रतियोगिताकभेदस्येति भावः। 'विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः।' इत्यादौ सात्त्विकभावस्य पृथगुपन्यासेनानुभावातिरिक्तत्वशङ्कानिवारणार्थमिह पृथगुपादानम्।' इति।

सात्त्विका इति बहुवचनेन तेषां बहुत्वे सिद्धे तज्जिज्ञासामुत्थापयति—**क** इत्यादिना।

**ते** बहुवचनबोध्याः सात्त्विकभेदा इत्यर्थः। **के** किंकिंनामानः किंकिंस्वरूपाश्चेत्यर्थः। **इती**त्येव जिज्ञासायाम्। **आह**—क्रमेणोत्तरयतीति भावः। १७३ **स्तम्भः**..इत्यादिना।

१७३ **स्तम्भो** जडीभावः। 'स्तम्भौ स्थूणाजडीभावा' वित्यमरः। **स्वेदः** स्वेदनम्। 'स्वेदो घर्म्मे स्वेदने चे'ति हैमः। **अथ**। **रोमाञ्चो** रोम्णामुद्गमः। **स्वरभङ्गः** स्वरस्य भङ्गो भञ्जनम्। **अथ**। **वेपथुः** कम्पः। 'अथ वेपथुः कम्पः' इत्यमरः। **वैवर्ण्यं** विगतो वर्णो रूपं यस्य तस्य भावस्तथोक्तम्। यद्वा—विरुद्धो वर्णः, स एवेति तथोक्तम्। 'वर्णदृढादिभ्यः ष्यञ्च।' ५।१।१२३ इति 'चतुर्वर्णादीनां स्वार्थे उपसङ्ख्यानम्' इति वा ष्यञ्। **अश्रु** नेत्रोदकमुपचारात्तत्पातः। 'रोदनं चास्रमश्रु च।' इत्यमरः। **प्रलयो** 'बुद्ध्यादीना'मिति शेषः। **इती**त्येवम्। **अष्टा** अष्टभेदाः। **सात्त्विकाः**। **मताः**॥ १६१॥

एवं नामानि निर्दिश्य स्वरूपाणि निर्देष्टुमुपक्रमते—**तत्र** तेषु स्तम्भादिषु मध्ये इति यावत्।

१७४ **भयहर्षामयादिभि**र्भयं च हर्षश्चामय ( रोग ) श्चेति त आदौ येषां ( घातपातादीनां ) तैः। अत्र साधने तृतीया। **चेष्टाप्रतीघात**श्चेष्टायाः कायिकव्यापारस्य मानसिकव्यापारस्य चेति भावः, प्रतीघातो विघात इति तथोक्तः। 'उपसर्गस्य घञ्यमनुष्ये। बहुलम्।' ६।३।१२२ इति दीर्घः। **स्तम्भस्**तत्पदवाच्यः सात्त्विको भाव इत्यर्थः॥ १६२॥

यथा—

'अधीराक्ष्याः कटाक्षा वः श्रेयसे सन्तु जिष्णवः । युवानस्तत्रतत्रैव यत्पातैर्लिखिता इव॥८६॥'

**१७५ वपुर्जलोद्गमः स्वेदो रतिघर्म्मश्रमादिभिः ।**

यथा-

'कान्तानां कृतपुलकः स्तनान्तराले, वक्त्रेषु च्युततिलकेषु मौक्तिकाभः ।
आपेदे श्रमसलिलोद्गमो विभूषां रम्याणां विकृतिरपि श्रियं तनोति ॥ ८७ ॥'

**१७६ हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया ॥ १६३ ॥**

यथा-

'चित्रं करतले स्पृष्टे सञ्जाताः पुलकोत्कराः । सखे ! तस्याः कुचयुगे हर्षबीजाङ्कुरा इव ॥८८॥'

---

उदाहरति-यथा-'अधीराक्ष्याः.. इत्यादौ ।

'**यत्पातैः** येषां पाताः शराणामिव पतनानि तैः । **युवानो** न तु वृद्धाः शिशवो वेति भावः । एतेन सामर्थ्यातिशयो द्योत्यते । **तत्रतत्र** । 'यत्रयत्र स्थिता आस' न्निति शेषः । वीप्सायां द्वित्वम् । **एव** 'न तु पुरः किञ्चित् प्रवृत्ता' इति शेषः । **लिखिता** । **इव** चित्रिता इवासन् । 'ते' इति शेषः । **अधीराक्ष्या** अधीरे चञ्चले अक्षिणी यस्यास्तस्याः । एतेन-रोपाभावो द्योतितः । **जिष्णवो** जयशीलाः । जयन्तीति तथोक्ताः । 'ग्लाजिस्थश्च ग्स्नुः।' ३।२।१३९ इति ग्स्नुः । **कटाक्षा** अपाङ्गेन दर्शनानि । 'कटाक्षोऽपाङ्गदर्शने ।' इत्यमरः । **वो** युष्माकम् । **श्रेयसे** । **सन्तु** । कस्या अपि वेश्यामातुः कमपि श्रीमन्तं प्रति ससम्मानमाशीर्वचनम् । अत्र श्लोकश्छन्दः, तल्लक्षणं चोक्तम्॥८६॥

स्वेदं लक्षयति-१७५ वपु... इत्यादिना ।

१७५ **रतिघर्म्मश्रमादिभिः** । रतौ रमणं तदायास इति यावत् । घर्म्मः सूर्यादितेजःप्रभावस्तापः । श्रमो गमनाद्यायासः । आदिपदेन भयङ्करदर्शनाकस्मिकदुर्घटनादीनां ग्रहणम् । रमणायासस्य रमणान्तरायासस्य च नितान्तं वैलक्षण्यमिति व्यवच्छिद्य निर्देशः । **वपुर्जलोद्गमो** वपुषो जलोद्गमो जलस्य प्रादुर्भाव इति तथोक्तः । **स्वेदः** । 'स्या'दिति शेषः ।

उदाहरति-यथा-'कान्तानां... इत्यादौ ।

'**कान्तानां** सुन्दरीणाम् । **स्तनान्तराले** स्तनयोरन्तरालं मध्यं तत्र । 'अभ्यन्तरं त्वन्तराल' मित्यमरः । **कृतपुलकः** उत्पादितरोमहर्षः । 'पुलको गजान्नपिण्डे रोमाञ्चे प्रस्तरान्तरे ।'इति हैमः । **च्युततिलकेषु** च्युतं गलितं तिलकं येभ्यस्तेषु । **वक्त्रेषु** मुखेषु । अधिकरणे सप्तमी । **मौक्तिकाभो** मुक्ताफलसदृशः । **श्रमसलिलोद्गमः** श्रमो भ्रमणाद्यायासस्तस्य सलिलोद्गमः । **विभूषाम्** । **आपेदे** प्राप । युक्तं चैतत्, यतः-**रम्याणां** 'स्वभावत'इति शेषः । **विकृतिः** कथमपि जातो विकार इति भावः । अपि किं पुनस्तादवस्थ्यमिति शेषः। **श्रियं** शोभाम् । 'श्रीर्वेशरचनाशोभाभारतीसरलद्रुमे । लक्ष्म्यां त्रिवर्गसम्पत्तौ वेषोपकरणे मतौ ॥'इति विश्वमेदिन्यौ । **तनोति** विधत्ते विस्तारयति वा अत्र प्रहर्षिणी छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ८७ ॥'

रोमाञ्चं लक्षयति-१७६ हर्षा...इत्यादिना ।

१७६ **हर्षाद्भुतभयादिभ्यः** । हर्षः पुत्रजन्माद्यामोदः । अद्भुतं विलक्षणदर्शनम् । भयमनिष्टाशंसनादिजम् । आदिपदेन-शीतादीनां ग्रहणम् । **रोमविक्रिया** रोम्णां विक्रिया कदम्बपुष्पावयवाकारत्वेन परिणाम इति तथोक्ता । **रोमाञ्चः** । 'उच्यत'इति शेषः ॥ १६३ ॥

उदाहरति-यथा-'चित्रं.. इत्यादौ ।

'हे **सखे** मित्र ! **करतले** 'ममे'ति शेषः । **स्पृष्टे** 'सती'ति शेषः । **तस्याः** मनःस्थायाः प्रकृतप्रशंसनायाः कान्ताया इत्यर्थः । **कुचयुगे** कुचयुगलोपरि । **हर्षबीजाङ्कुरा** हर्षस्यामोदस्योपचाराद्धर्षवृक्षस्य बीजं तस्याङ्कुरा

**१७७ मदसम्मदपीडाऽऽद्यै-र्वैस्वर्य्यं गद्गदं विदुः ।**

**यथा—**

**'उन्मादिकोकिलककुप्क्वणनोज्ज्वलानि संवाद्यमानकुररीगणकूजितानि ।**
**सम्भ्रान्तगद्गदविभिन्नमुहुःस्वराणि चेतो हरन्ति वचनानि सरोरुहाक्ष्याः ॥ ८९ ॥'**

**१७८ रागद्वेषश्रमादिभ्यः कम्पो गात्रस्य वेपथुः ॥ १७२ ॥**

**यथा-**

**'वारंवारं तिरयति दृशोरुद्गमं बाष्पपूर-स्तत्सङ्कल्पोपहितजडिम स्तम्भमभ्येति गात्रम् ।**

---

उद्भूयमानत्वप्रत्यायकाश्चिद्विशेषाः । **इव** । **सञ्जाताः** । **पुलकोत्कराः** पुलकानां रोम्णामुत्कराः पुञ्जा इति तथोक्ताः । इति-**चित्रमाश्चर्य्यम्** । सखायं प्रति कस्यापि स्वानुभूतवृत्तवर्णनपरेयमुक्तिः । अत्र श्लोकश्छन्दः ॥ ८८ ॥

यथा वा मम--'अन्तर्जातो मदनो वहिर्वुभूपुः सरोजनेत्रायाः । प्रेयसि दृष्टे पुलकितमासीद्वक्षः कपोलयुग्मंच ॥' इति।

स्वरभङ्गं लक्षयति--१७७ **मद..**इत्यादिना ।

१७७ **मदसम्मदपीडाऽऽद्यैर्मद** उन्मादः । सम्मदो हर्षः । पीडा व्याधिः । आदिपदं च जागरणोच्चारणाधिक्यादिग्राहकम् । **गद्गदमु**पचारादव्यक्तोच्चारणम् । **वैस्वर्य्यं** विस्वरस्य भाव इति तथोक्तम् । स्वरभङ्गमित्यर्थः । **विदुः** ।

उदाहरति--**यथा-'उन्मादि...** इत्यादौ ।

**'उन्मादिकोकिलककुप्क्वणनोज्ज्वला**न्युन्मादिन उन्मत्ता ये कोकिलास्तेषां ककुप्क्वणनं दिग्व्यापी शब्दस्तद्वदुज्ज्वलानि सुन्दराणीति तथोक्तानि । 'ककुवि' त्यत्र 'कले'ति पाठान्तरे तून्मादिकोकिलकल ( मधुरध्वनि ) वत् ( मधुरं ) क्वणनं रशनाध्वनिस्तेनोज्ज्वलानि व्याप्तानीति भावः । 'क्वणनं रशनाध्वनि'रिति कविसमयः । **संवाद्यमानकुररीगणकूजितानि** संवाद्यमानानि स्वरैक्येनोचार्य्यमाणानि कुररीगण ( स्य ) कूजितानि यत्र यैर्वा तानि । कुररी पक्षिविशेषः । कूजितं च दुःखावेदकः शब्दः, स च कुरर्य्याः स्वाभाविकः कान्तायाः पुनः कृत्रिमोऽनुरागातिशायकः । **सम्भ्रान्तगद्गदविभिन्नमुहुःस्वराणि** सम्भ्रान्तं सभयाश्चर्य्यं यथा भवेत्तथा गद्गदोऽव्यक्तध्वनिविशेषस्तेन विभिन्ना विशेषिताः मुहुःस्वरा अत्यन्तमाक्षेपकध्वनयो यत्र तानि । **सरोरुहाक्ष्याः** । 'आलिङ्गितायाः'इति शेषः । **वचनानि** । **चेतश्चि**त्तम् । **हरन्ति** । सखायं प्रति रमणावस्थावर्णनोक्तिरियम् । अत्र वसन्ततिलकश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ८९ ॥'

वेपथुं लक्षयति–१७८ राग...इत्यादिना

१७८ **रागद्वेषश्रमादिभ्यो** राग ( अनुराग ) श्च द्वेषश्च श्रमश्चेति त आदौ येषां ( घोरदर्शनादीनां ) तेभ्यः । **गात्रस्य** शरीरस्य । 'गात्रं वपु'रित्यमरः । **कम्पः**। **वेपथुः** । 'मत' इति शेषः ॥ १६४ ॥

उदाहरति–**यथा–'वारंवारं...**इत्यादौ ।

**बाष्पपूरो**ऽश्रुजलप्रवाहः । 'बाष्पमूष्माश्रु'इत्यमरः । 'पूरो जलप्रवाहे स्या'दिति मेदिनी । **वारंवारं** पुनःपुनरित्यर्थः । 'वारंवारं शश्वदर्थे'इति त्रिकाण्डशेषः । **दृशोर्नेत्र**योः । **उद्गममु**न्मीलनमिति भावः । **तिरयति** तिरस्यति तिरोहितं करोतीति यावत् । 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च ।'इति णिच् । 'अव्ययानां भमात्रे टिलोपश्च ।' इति टिलोपः । **तत्सङ्कल्पोपहितजडिम** तस्याः कान्तायाः सङ्कल्पो मनोवृत्तिविषयता तेनोपहितः सन्निधिं नीतो जडिमा जाड्यं यत्र तत्तथोक्तम् । 'सङ्कल्पः कर्म्म मानसम् ।' इत्यमरः । जडस्य भावो जडिमा । 'वर्णदृढादिभ्यः ष्यञ्च ।' ५।१।१२३ इतीमनिच् । **गात्रम**ङ्गं शरीरं वा । (कर्तृ) 'गात्रं गजाग्रजङ्घाऽऽदिभागेऽप्यङ्गे कलेवरे ।'इति मेदिनी ।

सद्यः स्विद्यत्ययमविरतोत्कम्पलोलाङ्गुलीकः पाणिर्लेखाविधिषु नितरां कम्पते किं करोमि ॥९०॥'

एवमन्यत ।

**१७९ विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता ।**

यथा-

'परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु ।
कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मी-मभिनवकरिदन्तच्छेदपाण्डुः कपोलः ॥ ९१ ॥'

**१८० अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजम् ॥ १६५ ॥**

यथा—

'शशाम वृष्टिर्मेघाना-मुत्सङ्गे तस्य भूभृतः । विरराम न रामस्य धारासन्ततिरश्रुणः ॥९२॥'

---

**स्तम्भम्** । **अभ्येति** । **अयम्** । **अविरतोत्कम्पलोलाङ्गुलीको**ऽविरतो निरन्तरं प्रवृत्तो य उत्कम्पस्तेन लोला अस्थिरा अङ्गुल्यो यस्य स इति तथोक्तः । 'नद्युतश्च ।' ५।४।१५३ इति कप् । **पाणिः** । **सद्यः** । **स्विद्यति** तापेनेव सवाष्पो भवति । 'ष्विदा'गात्रप्रक्षरणे । **लेखाविधिषु** लेखानां लिपीनां विधयो विधानानि तेषु । 'लेखा राज्यां लिपावपि ।' इति मेदिनी । 'विधिर्विधाने दैवेऽपि'इत्यमरः । **नितरां** नितान्तम् । **कम्पते** । **किम्** । **करोमि** कुर्य्याम् । मन्दाक्रान्ताछन्दः, तल्लक्षणं चोक्तं प्राक् ९० ।

विवर्णतां लक्षयति–१७९ **विषाद...**इत्यादिना ।

१७९ **विषादमदरोषाद्यैः** विषादश्च मदरोषौ चेति त आद्या येषां (शोकमोहादीनाम्) तैः । **वर्णान्यत्वं** वर्णस्याकृतेरन्यत्वं विपरीतत्वं क्लान्तत्वेन परिणमनमिति यावत्तथोक्तम् । **विवर्णता** । 'मते'ति शेषः ।

उदाहरति–**यथा**–'**परिमृदित...**इत्यादौ ।

'**परिमृदितमृणालीम्लानं** परिमृदिता कराभ्यां ग्लापिता या मृणाली बालमृणालं (कमलानां कोमलं मूलम्) तद्वन्म्लानं क्लान्तमिति तथोक्तम् । **अङ्गं** गात्रम् । 'जात्यभिप्रायेणैकवचनम् ।' 'अस्या'इति पूर्वतः प्राप्तम् । एवं पुरस्तादपि । अस्या मालत्या इत्यर्थः । तथा–**कथमपी**च्छाराहित्येऽपि पारतन्त्र्येणेति भावः । **परिवारप्रार्थनाभिः** परिवारस्य वयस्याऽऽदिसमाजस्य प्रार्थना न तु प्रार्थनाप्रार्थने वा, ताभिः । **क्रियासु** 'शरीरधारणमात्रोपयोगिनीष्वि'ति शेषः । **प्रवृत्तिर्न** त्वादर'इति शेषः । एवं च तत्र वैराग्यातिशयो व्यज्यते । **अभिनवकरिदन्तच्छेदपाण्डु**-रभिनवोऽसौ करिदन्तच्छेदस्तद्वत् पाण्डुः पाण्डुरः । 'हरिणः पाण्डुरः पाण्डु' रित्यमरः । 'पाण्डु' रित्यत्र'कान्त'इति पाठान्तरे'कान्तः सुन्दरः पाण्डुरिति यावत्'इति भाव्यम् । **कपोलो** न तु कपोलौ, एकपार्श्वशयनेनैकस्यैव तथात्वात् । एवं च नितान्तं क्षामत्वं प्रतीयते चापीत्यर्थः । **निष्कलङ्कस्य** कलामात्रावशिष्टतया तिरोहितलाञ्छनचिह्नस्येति भावः । **हिमांशो**श्चन्द्रस्य । **च** । **लक्ष्मीं** शोभाम् । **कलयति** धारयति । एतेन तस्य क्षान्तत्वेऽपि प्रकृतिरमणीयत्वं द्योत्यते । मालतीमाधवस्येदं पद्यम्, 'तथाहि-अस्या'इत्युपक्रम्य माधवस्य मकरन्दं प्रति मालत्यवस्थावर्णनपरम् । अत्र मालिनी छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ९१ ॥'

अश्रु लक्षयति–१८० **अश्रु**..इत्यादिना ।

१८० **क्रोधदुःखप्रहर्षजम्** । दुःखमाधिव्याध्युभयरूपम् । **नेत्रोद्भवं** नेत्राभ्यां सम्भवतीति तथोक्तम् । **वारि** जलम् । 'आपः स्त्री भूम्नि वार्वारि' त्यमरः । **अश्रु** 'मत' मिति शेषः ॥ १६५ ॥

उदाहरति–**यथा**– '**शशाम**.. इत्यादौ ।

'**तस्य**र्ष्यमूकनाम्न इत्यर्थः । **भूभृतः** पर्वतस्य । 'भूभृद्भिरिनरेन्द्रयोः ।' इति गोपालः । **उत्सङ्गे** क्रोड उपचारान्मध्यभागे । **मेघानां** 'न तु मेघस्य मेघयोर्वे'ति शेषः । **वृष्टिः** । **शशाम** निवृत्ताऽऽसीत् । 'वृष्ट्या' इति पाठे तु–वृष्टिसम्बन्धिनीत्यर्थः । धारासन्ततिरिति शेषः । किन्तु–**रामस्य** । **अश्रुणो**ऽश्रुसम्बन्धिनीत्यर्थः । **धारासन्तति**-र्धाराणां स्थूलस्थूलपातानां सन्ततिरुत्तरोत्तरं वृद्धिः । **न** नैव । **विरराम** शशाम । अत्र यद्यपि पुनरुक्ततापरिहाराय

१८१ प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः ।

यथा-

'प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढरागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि ।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधी क्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः ॥ ९३ ॥'

यथा वा-

'हाहा देवि ! स्फुटति हृदयं, स्रंसते देहबन्धः, शून्यं मन्ये जगदविरतज्वालमन्तर्ज्वलामि ।

---

'विरामे'ति प्रयुक्तं, तदपि न साम्प्रतम्, 'विरराम ने' त्यपठित्वा 'न तु हा हन्ते'ति तु साम्प्रतम् । यद्वा—न हा-शशामेत्यपि युक्तम्, अन्यथा पदान्तरेण तस्यैवार्थस्याभिधाने प्रतीतिस्थगनं स्यादेव । किन्तु—'वृष्ट्या' इति पाठान्तरं 'न तु हा हन्ते' त्येव युक्तः पाठः, अन्यथा 'वृष्ट्या' इत्यनेन 'धारासन्तति' रित्यत्रान्वयो नोपपद्येतेति बोध्यम् । अत्र व्यतिरेकोऽलङ्कारः, श्लोकश्छन्दः । तल्लक्षणं चोक्तं प्राक् ॥ ९२ ॥'

यथा वा मम-'गन्तास्मीति निरुक्ता पतति स्म शुचा समर्पितैरस्रैः । परिहसिताऽसीति मुदोत्पतति स्म समं च तैः सैव ॥' इति ।

प्रलयं लक्षयति-१८१ **प्रलय** इत्यादिना ।

१८१ **सुखदुःखाभ्याम्** । 'प्रवृद्धै' रिति शेषः । **चेष्टाज्ञाननिराकृति**श्चेष्टा च ज्ञानं चेति तयोर्निराकृतिः । परिभवोऽभाव इति यावत् । निश्चेष्टत्वं निरस्तज्ञातृत्वं चेति भावः । **प्रलयः** । 'मत' इति शेषः ।

उदाहरति-**यथा**-'**प्रेमार्द्रा**.. इत्यादौ ।

'**आशंसापरिकल्पितास्वा**शंसया मनोरथेन परिकल्पिता आरोप्य सङ्घटित ( सङ्कल्पित ) शरीरा इति तासु । **अपि** 'किं पुनःपुनः साक्षादनुभूयमानास्वि'ति शेषः । **यासु** ( चेष्टासु ) 'सती'ष्विति शेषः । **अन्तःकरणस्य** मनसः । **बाह्यकरणव्यापाररोधी** बाह्योऽसौ करणव्यापारश्चक्षुरादीनां विषयग्राहित्वं तं रुणद्धीत्येवंशील इति तथोक्तः । करणानीन्द्रियाणि । 'करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ।' इत्यमरः । **आनन्दसान्द्र** आनन्देन सान्द्रो घनीभूतः । **लय**स्तन्मयीभवनम् । **क्षणा**'न्न तु कालान्तरे' इति शेषः । **भवति** । अयम्भावः-'भवति समाधिष्वपि परमानन्दसाक्षात्कारे परमानन्दानुभवः, किन्तु न क्षणा' दिति ततोऽप्यतिशयितमहिमत्वेन व्यतिरेको ध्वन्यते । इति । **तास्ताः** । ताः सर्वा इति भावः । **प्रेमार्द्राः** प्रेम्णा करुणापरिपाकरूपेणापराधसहस्रेऽपि अविकारिणा वात्सल्येनार्द्राः सरसा न तु प्रयोजनमात्रानुयायिन्य इति तथोक्ताः । **प्रणयस्पृशः** प्रणयं प्रेमपरिपाकं स्पृशन्तीति तथोक्ताः । 'मुग्धदृश' इति विशेषत्वे तु 'प्रणयं स्पृशतीति तस्यास्तथोक्ताया इत्यर्थः । **परिचयात्** । ल्यपो लोपे पञ्चमी । तथा च परिचय-मनुरुध्येत्यर्थः । **उद्गाढरागोदया** उद्गाढो नितान्तं स्थिरोऽनेकैरप्युपायैरुत्खातुमशक्य इति यावत् रागोदयो यासु ताः । रागस्यानुरागस्योदयः । **निसर्गमधुरा** निसर्गेण स्वभावेन मधुराः । **मुग्धदृशो** मुग्धे सुन्दरे अप्रगल्भे वा दृशौ यस्यास्तस्याः । 'मालत्या' इति शेषः । **चेष्टा** दर्शनहसितादिरूपा व्यापारविशेषाः । **मयि** माधव इति शेषः । अत्र विषये सप्तमी । **भवेयुः** । एवं च चेष्टासु चेष्टाविरोधोविरुद्धोऽपि सम्भवंस्तासामनैकान्त्यादिति विरोधाभासः । मालती-माधवस्येदं पद्यम्, मालतीप्राप्तये श्मशानसाधने प्रवृत्तस्य माधवस्येयमुक्तिः । अत्र शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ ९३ ॥'

एवं सुखहेतुकं प्रलयमुदाहृत्य दुःखहेतुकमुदाहर्तुमुपक्रमते-**यथा** वेत्यादिना ।

वाऽथवा । **यथा**-'**हाहा**...इत्यादौ ।

'**हाहा** कष्टंकष्टम् । 'सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्धः'इति द्विः । हे **देवि** सीते । **हृदय**-मुपचाराद्वक्षः । **स्फुटति** दीर्य्यति । **देहबन्धो** देहस्योपचाराद्देहाङ्गानां बन्धः सङ्घटनम् । **स्रंसते** विशीर्यति । 'ध्वंसत' इति पाठान्तरेऽप्ययमेवार्थः । **जगत्** । **शून्यम्** । **मन्ये** । **अविरतज्वालम**विरता ज्वाला यत्र (कर्मणि)

सीदन्नन्धेतमसि विधुरो मज्जतीवान्तरात्मा, विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥९४॥

यथा वा मम दिङ्मात्रम्—

'तनुस्पर्शादस्या दरमुकुलिते हन्त नयने उदञ्चद्रोमाञ्चं व्रजति जडतामङ्गमखिलम्।
कपोलौ घर्म्मार्द्रौ ध्रुवमुपरताशेषविषयं मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम् ॥९५॥'

अथ व्यभिचारिणः—

१८२ विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ॥ १६६ ॥
स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशत्प्रकीर्तिताः ॥ १६७ ॥

---

तद् यथा भवेत्तथा। अन्तः। ज्वलामि। विधुरो दुःखितः। 'विधुरं विकले त्रिषु।' इति त्रिकाण्डशेषः। अन्धेतमसि गाढान्धकारे। सीदन् विषीदन्। अन्तरात्मा। मज्जति। इव (इत्युत्प्रेक्षा)। मोहो ज्ञानाभावो मूर्च्छेति यावत्। विष्वक् परितः। स्थगयति चेष्टातो निवर्त्तयति। मन्दभाग्यो मन्दं सीतायाः साक्षादनुपलब्धेस्तुच्छं भाग्यं यस्य सः। 'अह'मिति शेषः। कथं केन प्रकारेण। करोमि करिष्यामि। हृदयस्फोटादि कथमहं निवारयिष्यामीत्यर्थः। 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा।' ३।३।१३१ इति लट्। यद्वा—'विभाषा कथमि लिङ्च।' ३।३।१४३ इत्यनेन गर्हायां चाल्लट्। उत्तररामचरितस्येदं पद्यम्। रामस्य सीतां स्पृशतोऽपि भगवतीमहिम्नाऽपश्यत उक्तिरियम्। मन्दाक्रान्ता छन्दः। तल्लक्षणं चोक्तं प्राक् ॥ ९४ ॥'

एवं प्रलयमुदाहृत्य सर्वेऽप्यमी मनागुदाह्रियन्ते—यथा वेत्यादिना।

वाऽथवा। यथा। मम "कृतौ—तनु...इत्यत्रे"ति शेषः। दिङ्मात्रम्। 'सात्त्विका भावा' इति शेषः।

'अस्याः प्रत्यक्षायाः कान्ताया इत्यर्थः। तनुस्पर्शात्तन्वाः स्पर्शस्तस्मात् तमनुभूयेत्यर्थः। हन्त हर्षे। दरमुकुलिते दरमीषन्मुकुलिते इति तथोक्ते। नयने। 'भवत'इति शेषः। उदञ्चद्रोमाञ्चमुदञ्चन् परिस्फुरन् रोमाञ्चो रोमोद्गमो यत्र तत्। 'स'दिति शेषः। अखिलम्। अङ्गम्। जडतां निश्चेष्टताम्। व्रजति प्रयाति। कपोलौ। घर्मार्द्रौ घर्म्मेण स्वेदाम्बुनाऽऽर्द्रौ। घरणं क्षरणमिति घर्मः। 'घृ क्षरणदीप्त्योः। 'घर्म्मं' इत्यनेन निपातनात्साधुः। 'जातौ'इति शेषः। ध्रुवम्। उपरताशेषविषयमुपरता निवृत्ता अशेषविषया यस्य तत्। मनः (कर्तृ)। झटिति निर्विषयस्य तस्य स्थातुमशक्यत्वात्तदानीमेवेति शेषः। सान्द्रानन्दं सान्द्रः पूर्णो निरवच्छिन्न इति यावदानन्दस्तं तत्स्वरूपभूतम्। अत एव—परममुत्कृष्टं। शुद्धं निरस्तोपाधिमालिन्यमिति यावत्। ब्रह्म। स्पृशति तत्स्वरूपेणोपपद्यत इति भावः। अत्र "उदञ्चद्रोमाञ्च"मिति रोमाञ्चः, 'व्रजति जडता'मिति स्तम्भः, 'घर्म्मार्द्रौ'विति स्वेदः, 'उपरताशेषविषय'मिति प्रलयश्च निर्दिष्टः। शिखरिणी छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ९५ ॥'

व्यभिचारिणो लक्षयितुं प्रतिजानीते—अथानुभावनिरूपणानन्तरम्। व्यभिचारिणो 'लक्ष्यन्ते—१८२ विशेषादित्यादिना।

१८२ विशेषाद्विभावात् भावसात्त्विकभावापेक्षयाऽऽधिक्यमनुरुध्येति भावः। आभिमुख्येन रसानुगुण्येन। स्थायिनि'वारिधा'विवेति शेषः। स्थायी च रत्यादिरेव, तथा च-समुद्र इव स्वरूपेणावस्थायिनि (गम्भीरे) रत्यादाविति निष्कृष्टम्। उन्मग्ननिर्मग्ना उन्मग्ना अविलम्बप्रतीतिकत्वेन प्रादुर्भूताश्च निर्मग्ना विलम्बप्रतीतिकत्वेन तिरोहिताश्चेति तथोक्ताः। एतेन—तरङ्गधर्मत्वं सूचितम्। 'भूत्वे'ति शेषः। चरन्तः। 'सन्त'इति शेषः। त्रयस्त्रिंशत्। व्यभिचारिणः। प्रकीर्त्तिताः। 'तु तद्भिदा'इति पाठान्तरे तु—तद्भिदास्तेषां व्यभिचारिभावानां भिदा भेदा इति तथोक्ताः। तु। त्रयस्त्रिंशत्। इति योज्यम् ॥ १६६ ॥ १६७ ॥

अयम्भावः—विशिष्टतयाऽभितः (अनियताः सन्तः) चरन्तीति व्यभिचारिणः। तत्र विशिष्टत्वं नाम विभावानुभावसात्त्विकभावापेक्षयातिशयितत्वम्। तच्च (अतिशयितत्वं च) रसानुगुण्यापेक्षाकृतमेव, तेन विभावानुभावसात्त्विका-

स्थिरतया वर्त्तमाने हि रत्यादौ निर्वेदादयः प्रादुर्भावतिरोभावाभ्यामाभिमुख्येन चरणाद्व्यभिचारिणः कथ्यन्ते । के त इत्याह—

**१८३ 'निर्वेदावेगदैन्यश्रममदजडता औग्र्यमोहौ विबोधः**
**स्वप्नापस्मारगर्वा मरणमलसतामर्षनिद्राऽवहित्थाः ।**
**औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसन्त्राससलज्जा**
**हर्षासूयाविषादाः सधृतिचपलता ग्लानिचिन्तावितर्काः ॥ १६८ ॥**

---

पेक्षया रसानुगुण्येनातिशयितत्वं व्यभिचारित्वम् । यद्वा-रत्यादावनियतवर्तित्वं व्यभिचारित्वम् । अत एव-'रत्यादयोऽप्यनियता रसे स्युर्व्यभिचारिणः ।'इति वक्ष्यते, 'स्थायिन्युन्मग्ननिर्मग्नाः'इति चोक्तम् । एतत्सर्वमनुसन्धायाभिहितं १८२ विशेषादित्यादि ।

स्वयमपि विवृणोति-**स्थिरतया** 'विरुद्धा' इत्यादिना वक्ष्यमाणया स्वाभाविक्याऽवस्थित्या । **वर्त्तमाने** प्रतीयमाने । **हि**एव न तु हासादावन्यथाभूत इत्यर्थः । **रत्यादौ** 'वारिधौ कल्लोला इवे'ति शेषः । **प्रादुर्भावतिरोभावाभ्यां** तदभिन्नेनेत्यर्थः । **आभिमुख्येनानु**कूल्येन 'ये तूपकर्तुमायान्ति स्थायिनं रसमुत्तमम् । उपकृत्य च गच्छन्ती' त्युक्तेन ( रसप्रकर्षे ) सहायकेनेति यावत् । **चरणात्** । चरन्तीति हेतोरिति भावः । **निर्वेदादयः** 'वक्ष्यमाणा' इति शेषः । **व्यभिचारिणः । कथ्यन्ते ।**

ननु किंकिं तेषां नाम स्वरूपं चेत्याशङ्कामुन्मूलयितुमाह-**ते** व्यभिचारिसञ्ज्ञका निर्वेदादयः । **के** किंकिन्नामानः किंकिंस्वरूपाश्चेत्यर्थः । **इती**त्थेवमाशङ्कायाम् । **आह** -क्रमश उत्तरयितुं प्रवर्त्तत इति भावः । '१८३ **निर्वेदा..**इत्यादिना ।

१८३ **निर्वेदावेगदैन्यश्रममदजडता** निर्वेदश्चावेगश्च दैन्यं च श्रममदजडताश्चेति तथोक्ताः । श्रमश्च मदश्च जडता चेति ताः । निर्वेदनं तत्त्वज्ञानान्तरेणावमानादिना भोगेभ्यो विमुखीभवनं निर्वेदः । आवेजनमनर्थातिशयसम्भावनादिना सन्त्वरणमावेगः । आङ्-'ओविजी' भयचलनयोः । 'भावे ।' ३।३।१८ इति घञ् । दीनस्य दारिद्र्यादिना स्वात्मन्यपकृष्टत्वारोपेण दुःखितस्य भावो दैन्यम् । श्रमणमध्वगमनादिना दुःखीभवनं श्रमः । घञ् । 'नोदात्तोपदेशस्य मान्तस्यानाचमेः ।' ७।३।३४ इति वृद्ध्यभावः । मदनमुल्लसनं मदः । 'मदोऽनुपसर्गे ।' ३।३।६७ इत्यप् । जडस्य चिन्तादिना विकलस्य भावो जडता । **औग्र्यमोहा** औग्र्यं च मोहश्चेति तौ । उग्रस्यापमानादिनोद्रिक्तरोपस्य भाव औग्र्यम् । मोहनं भयादिना विस्मरणं मोहः । **विबोधो** विशेषेण निद्रादिनिवृत्तिपुरःसरं याथार्थ्येन बोधः । **स्वप्नापस्मारगर्वाः** । स्वपनं निद्रयाऽज्ञानीभवनं स्वप्नः । 'स्वपो नन् ।' ३।३।९१ इति नन् । अपस्मरणमिष्टवियोगादिना विमुह्य तमसि निमज्जनमपस्मारः । गर्वणं सम्पदादिनाऽभिमननं गर्वः । 'गर्व' माने । 'भावे ।' ३।३।१८ इति घञ् । **मरणमु**पचारात्तथा भवनमित्यर्थः । **अलसता** निद्रादिनाऽनुत्साहित्वम् । **अमर्षनिद्राऽवहित्थाः** । न मर्षणं सहनममर्षः । निद्राणं श्रमादिना कुत्सिताऽत्मना भवनं निद्रा । 'द्रा' कुत्सायाम् । 'आतश्चोपसर्गे ।' ३।१।१३६ । इत्यङ् । न बहिर्व्रीडाऽऽदिहेतुसत्त्वेऽपि स्थानं तद्व्यञ्जकगोपनेनावस्थानमवहित्था । 'सुपि स्थः ।' ३।२।४ इत्यत्र'स्थ' इति योगविभागात् कः । 'पृषोदरादीनि यथोपदिष्टम् ।' ६।३।१०९ इति साधुः । **औत्सुक्योन्मादशङ्काः** । उत्सुकस्येष्टसङ्गमादेरनुरागातिशयादिना सत्वरमभिलषतो भाव औत्सुक्यम् । उन्मादनं भूताद्यावेशादिना प्रलापादिविधानमुन्मादः । शङ्कनमनिष्टादेः शत्रुप्राबल्यादिचिन्तनं शङ्का । **स्मृतिमतिसहिताः** स्मृतिश्च मतिश्चेति ताभ्यां सहिताः । स्मरणं संस्कारवशाद्दृष्टश्रुतयोश्चिन्तनं स्मृतिः । मननमर्थनिर्धारणं मतिः । **व्याधिसन्त्राससलज्जाः** । विविधा आधयोऽस्मादिति व्याधीयन्ते पीडा अनेनेति वा व्याधिः । 'उपसर्गे घोः किः ।' ३।३।९२ इति किः । **हर्षासूयाविषादा** हर्षश्चासूया च विषादश्चेति ते । हर्षणमिष्टप्राप्त्यादिना सुखोद्गमनं हर्षः । असूयनमिष्टेष्वप्यनिष्टत्वाद्यध्यारोपणमसूया 'असूञ्' असूयायाम् । कण्ड्वादित्वात् 'कण्ड्वादिभ्यो यक् ।' ३।१।२७ इति यकि

तत्र निर्वेदः—

**१८४ तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननम् ।**
**दैन्यचिन्ताऽश्रुनिःश्वास-वैवर्ण्योच्छ्वसितादिकृत् ॥ १६९ ॥**

**तत्र तत्त्वज्ञानान्निर्वेदो यथा—**

**'मृत्कुम्भवालुकारन्ध्रपिधानरचनार्थिना । दक्षिणावर्त्तशङ्खोऽयं हन्त चूर्णीकृतो मया ॥९६॥'**

---

'अप्रत्ययात् ।' ३।३।१०२ इत्यः । 'अजाद्यतष्टाप् ।' ४।१।४ इति टाप् । विषीदनं विषादः । **सधृतिचपलता** धृतिचपलताभ्यां सहिताः । मनसो धरणमवरोधो धृतिः । चपति गच्छतीति चपलः । 'चप' गतावित्येके । 'वृषादिभ्यश्चित् ।' इति कलच् । चपलस्य भावश्चपलता । **ग्लानिचिन्तावितर्काः** ग्लानिश्च चिन्ता च वितर्कश्चेति ते । 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ।' इति निः । चिन्तनं चिन्ता । वितर्कणं वितर्कः । 'तर्क' भाषार्थः॥ १६८ ॥

एवं नामतो निर्दिश्य स्वरूपतो निर्देष्टुमुपक्रमते—**तत्रे**त्यादिना ।

**तत्र** तेषु निर्वेदादिषु मध्ये । **निर्वेदः**—स्वरूपतो निर्दिश्यते—१८४ **तत्त्व..**इत्यादिनेति शेषः ।

१८४ **तत्त्वज्ञानापदीर्ष्यादे**स्तत्त्वज्ञानं चापच्चेर्ष्या चेति ता आदौ यस्य ( दारिद्र्यादेः ) तस्मात्तमनुरुध्येति भावः । अत्र ल्यपो लोपे पञ्चमी । अत्राहुस्तर्कवागीशाः—'तत्त्वज्ञानमिह देहविषयादावनुपादेयत्वज्ञानमेव, न तु जीवात्मपरमात्मनोरभेदज्ञानम्; तस्मिन्सति मोक्ष एव, न तु स्वावमाननम् ।' इति । **दैन्यचिन्ताऽश्रुनिःश्वास-वैवर्ण्योच्छ्वसितादिकृत्** । प्राणवायूनां दीर्घदीर्घं बहिर्निस्सरणं निःश्वासः । वक्षउत्कम्पनमुच्छ्वसितम् । आदिपदेन निजकुचरितोद्भावनादिग्रहणम् । अन्यत्स्पष्टम् । **स्वावमाननम्** । **निर्वेदः** ॥ १६९ ॥

लक्षणं सङ्गमयितुमाह—**तत्र** तेषु तत्त्वज्ञानादिकार्यभूततयाऽनेकविधेषु निर्वेदेषु मध्ये । **तत्त्वज्ञानात्** तत्त्वस्य भगवद्भजनाद्यन्तरा शरीरधारणादि व्यर्थमेवेति यावन्मात्रस्य शास्त्रस्य ज्ञानं न तु विज्ञानं तस्मात् । 'सम्पद्यमान' इति शेषः । **निर्वेदः** । **यथा**— '**मृत्कुम्भ..** इत्यादौ ।

'**मृत्कुम्भवालुकारन्ध्रपिधानरचनार्थिना** मृत्कुम्भस्य मृन्मयस्य घटस्य वालुका तस्या रन्ध्रपिधानं तन्निरोधोपायस्तस्य रचनं यत्नस्तस्यार्थी तेन । मृन्मये घटे निहिताया वालुकाया बहिर्निःसरणं माभूदिति प्रयतमानेनेत्यर्थः । मृत्कुम्भः शरीरं तत्र वालुका तद्भोगसुखमिति रूपकातिशयोक्तिः । **मया** । **अयम**नपोहनीयस्वरूपः । **दक्षिणावर्त्तशङ्खः** । मनुष्यदेह इति रूपकातिशयोक्तिः । **हन्त** कष्टम् । **चूर्णीकृतो** विनाशितः । अयम्भावः—प्रतिशरीरं विषयसुखं, तस्मात् तदर्थो यत्नोऽनर्थकः, मनुष्यशरीरं पुनस्तत्रापि ब्राह्मणस्य न विषयसुखानुभवार्थं, 'नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् । मयाऽनुकूलेन नभस्वतेरितं पुमान् भवाब्धिं न तरेत्स आत्महा ॥' 'ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते । कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय च ॥' इत्याद्युपदेशात् । अथ यदि तथाभूतस्यास्य विषयभोगेनापहननं तर्हि सत्यं वालुकारक्षाऽर्थं दक्षिणाऽऽवर्त्तशङ्खस्यापहननम् ।' इति । यत्तु—'यद्वा—रावणशक्त्या पतिते लक्ष्मणे श्रीरामस्य परिदेवनमिदम् । अयं लक्ष्मण एव दक्षिणावर्त्तशङ्खो मया चूर्णीकृतो विनाशितश्चूर्णाख्यद्रव्यविशेषीकृतश्च ।...अत्र पक्षे आपज्जन्यं स्वावमाननं वेद्यम् ।' इत्युक्तं तर्कवागीशैस्तदुपेक्ष्यम् । 'तत्त्वज्ञाना' दिति मूलविरोधाद्रामवाक्यतयाऽस्यानुपलम्भाच्च । शास्त्रोपदेशमात्रेण विषयसुखं तुच्छंमन्वानस्योक्तिरियम् । अत्र श्लोकश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ९६ ॥

यथा वा मम—'दयितेति सुमञ्जुभाषिणी मम वा जीवितमेव या स्वयम् । बत हन्त विनाऽद्य तां प्रियामिह वाऽन्यत्र न किञ्चन प्रियम् ॥' इति ।

यत्तूक्तं पण्डितराजैः—नीचपुरुषेष्वाक्रोशनाधिक्षेपव्याधिताडनदारिद्र्येष्टविरहपरसम्पद्दर्शनादिभिः, उत्तमेषु त्ववज्ञादिभिर्जनिता विषयद्वेषाख्या रोदनदीर्घश्वासदीनमुखताऽऽदिकारिणी चित्तवृत्तिर्निर्वेदः ॥ उदाहरणम्— "यदि लक्ष्मण ! सा मृगेक्षणा न मदीक्षासरणिं समेष्यति । अमुना जडजीवितेन मे जगता वा विफलेन किं फलम् ॥" नित्यानित्यवस्तुविवेकाभावाद्यासौ रसव्यपदेशहेतुः ।' इति 'अवज्ञाऽऽदिभिरिति । आदिना विरहादयः ।' इति च नागेश-

अथावेगः–

**१८५ आवेगस्सम्भ्रमस्–**

**१८६ तत्र वर्षजे पीडिताङ्गता ।**

**उत्पातजे स्त्रस्तताऽङ्गे धूमाद्याकुलताऽग्निजे ॥ १७० ॥**

**राजादेर्विद्रवाज्जाते शस्त्रयानादियोजनम् ।**

**गजादेः स्तम्भकम्पाऽऽदि पांस्वाद्याकुलताऽनिलात् ॥ १७१ ॥**

**इष्टाद्धर्षाः, शुचोऽनिष्टाज्–ज्ञेयाश्चान्ये यथायथम् ।**

तत्र शत्रुजो यथा:–

'अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनवेक्ष्य भरताग्रजो यतः ।

---

भट्टस्तच्चिन्त्यम् । तथाहि–इष्टविरहजन्यस्य निर्वेदस्य नीचजनसम्भवित्वाभिधानेनोदाहृतस्य पद्यस्यासङ्गतत्वापत्तेः । न हि श्रीरामो नीच इति पामरव्यतिरेकेण वक्तुं शक्यम् । न वा 'अवज्ञाऽऽदिभि' रित्यादिपदेनेष्टविरहग्रहणेन न निरुक्तदोष इति वक्तुं शक्यम् । 'इष्टविरहजन्यस्य निर्वेदस्य नीचजनसम्भवित्वमभिदधद्भिः पण्डितराजैः स्फुटं विरोधापत्तेः । वस्तुतस्तु 'नीचपुरुषेषु' 'उत्तमे' ष्विति च विशिष्याभिधानमयुक्तमेव । इति ।

आवेगं लक्षयितुं प्रतिजानीते–**अथ** निर्वेदनिरूपणानन्तरम् । **आवेगः** । 'लक्ष्यते–१८५ **आवेग**...इत्यादिना ।

१८५ **सम्भ्रमः** । 'सम्भ्रमस्त्वरा ।' इत्यमरः । कथमपि किमपि कर्त्तुं सन्त्वरणमिति भावः । **आवेग**स्तत्पद वाच्य इत्यर्थः ।

एवं स्वरूपतो निर्दिश्य तत्र विशिष्य निर्देष्टव्यं निर्दिशति-१८६ तत्रे त्यादिना ।

१८६ **तत्र** तस्मिन्नावेग इत्यर्थः । **वर्षजे** वर्षणं वर्षस्तज्जे 'सती'ति शेषः । **पीडिताङ्गता** पीडितान्यङ्गानि यस्य तत्ता । 'भवती'ति शेषः । यथेन्द्रे कुपिते गोकुलस्येति बोध्यम् । **उत्पातज** उत्पतनमुपरितोऽकस्माद्वा पतनमुत्पातस्तज्जे सतीत्यर्थः । **अङ्गे** शरीरे गात्रे वा । **स्त्रस्तता** स्त्रस्तं ध्वस्तं तस्य भावस्तत्ता । स्त्रस्तम्भविष्यतीत्याकाराऽवस्था भवतीति भावः । यथा द्रौण्यस्त्रपाते पाण्डवानामुत्तरायाश्च शकटादिनिपाते वा यथा गोपानामिति बोध्यम् । **अग्निजे**ऽग्निप्रकोपजन्य आवेगे सतीत्यर्थः । **धूमाद्याकुलता** । आदिपदेन स्वस्वपरित्राणार्थादीनां ग्रहणम् । प्रत्यक्षैवेयम् । **राजादेः** । आदिपदेन प्रबलशत्रुप्रभृतीनां ग्रहणम् । **विद्रवा**दुपद्रवात् । **जात** उत्पन्ने । 'राजविद्रवजादेस्त्वि'ति त्वपपाठः, 'तत्रे'ति विशेषणत्वानुपपत्तेः । **शस्त्रयानादियोजनम्** । योजनं सङ्घटनम् । 'शस्त्रनागादियोजन'मिति पाठान्तरम् । **गजादे**र्गजादेः प्रमत्तस्योपद्रवेण । 'जाते'इति पूर्वतोऽन्वेति । हेतौ पञ्चमी । **स्तम्भकम्पाऽऽदि** । आदिपदेन पलायनादीनां ग्रहणम् । उदाहरणं प्रत्यक्षसिद्धम् । यथा मागधोद्योगे माधवोद्योगः । **अनिला**द्वायोः । प्रकम्पननामानं वायुं प्रतिकूल्यगमनादिति भावः । 'जात'इति पूर्वतः । **पांस्वाद्याकुलता** । पांसुर्धूलिः । आदिना पतनादि । **इष्टा**दिष्टस्यलाभादिना 'जात' इति पूर्वतः । **हर्षा** आमोदास्तद्व्यञ्जकानि मुखविकासादीनीति यावत् । यथा नन्दस्य नन्दने जाते गोकुलवासिनाम् । **अनिष्टा**दनिष्टस्योपस्थित्या 'जात'इति पूर्वतः । **शुचः** शोकास्तद्व्यञ्जका मुखमालिन्यादीनीति यावत् । 'भवन्ती'ति शेषः । प्रत्यक्षम् । **अन्ये** । **च** । 'आवेगा'इति शेषः । **यथायथम्** । 'यथास्वे यथायथम् ।' ८।१।१४ इति साधुः । **ज्ञेयाः** ॥ १७० ॥ १७१ ॥

उदाहर्त्तुमुपक्रमते–**तत्र** तेषु वर्षजादिष्वावेगेषु मध्ये । **शत्रुजः** । 'आवेग'इति शेषः । **यथा**-'**अर्घ्य**...'इत्यादौ ।

'स परशुधरो जामदग्न्यः । **अर्घ्यमर्घ्यम्** । 'सम्भ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्ध'इति द्विः प्रयोगः । इतीत्येवम् । **वादिनम्** । **नृपं** दशरथम् । **अनवेक्ष्यो**पेक्ष्य । **यतो** यत्र । **भरताग्रजः** श्रीरामचन्द्रः ।

---

१ अत्र विधेयाविमर्षोऽपि दोषः, विफलस्य विफलत्वेनाभिधाने विधेयस्यानुवाद्यत्वप्रत्यायकत्वात् ।

क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम् ॥ ९७ ॥'

एवमन्यदूह्यम् ।

अथ दैन्यम्—

**१८७ दौर्गत्यादेरनौजस्यं दैन्यं मलिनताऽऽदिकृत् ॥ १७२ ॥**

यथा—

'वृद्धोऽन्धः पतिरेष मञ्चकगतः, स्थूणावशेषं गृहं,
कालोऽभ्यर्णजलागमः, कुशलिनी वत्सस्य वार्ताऽपि नो
यत्नात्सञ्चिततैलबिन्दुघटिका भग्नेति पर्याकुला,
दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिरं रोदिति ॥ ९८ ॥'

---

ततस्तत्र । **क्षत्रकोपदहनार्चिषं** क्षत्रेषु कोपदहनार्चिस्ताम् । कोप एव दहनार्चिर्यत्र सा कोपदहनार्चिः । 'क्षत्रेषु यः कोपः स एव दहनस्तस्यशिखामिति तु विवृतिकाराः । **उदग्रतारका**मुदग्रोन्नता तारका कनीनिका यत्र ताम् । 'उच्चप्रांशून्नतोदग्रोच्छ्रितास्तुङ्ग'इत्यमरः । 'तारको दैत्यभित्कर्णधारयोर्न द्वयोर्दृशि । कनीनिकायामृक्षे च न पुमांस्त्रातरि त्रिषु ॥'इति मेदिनी । **दृशं** दृष्टिम् । **सन्दधे** । 'शस्त्रमिवे'ति शेषः । रघुवंशस्येदं पद्यम् । रथोद्धता वृत्तं, तल्लक्षणं च 'रथोद्धतानौं लौं ग् ।' इति ॥ ९७ ॥'

अत्रेदं बोध्यम्—भार्गव आलम्बनविभावः, तस्यानेकशः क्षत्रापहननमुद्दीपनविभावः, 'अर्घ्यमर्घ्य' मित्यभिधानं चानुभाव इत्येवं दशरथगतो भार्गवस्य सर्वक्षत्रसंहर्तृतया शत्रोर्दर्शनोत्थ आवेगः । इति ।

अत्र दिग्दर्शनमेव न्याय इत्याह—**एवं** यथेदं तथा । **अन्य**दुदाहरणान्तरम् । **ऊह्यं** बोध्यम् । अस्माभिस्तु—स्पष्टमिति विरम्यत इति भावः ।

दैन्यं लक्षयितुं प्रतिजानीते—**अथा**वेगनिदर्शनानन्तरम् । **दैन्यं** दीनत्वम् । 'लक्ष्यते १८७ **दौर्गत्यादे**… इत्यादिना ।

१८७ **दौर्गत्यादे**र्दुर्गतस्य भावो दौर्गत्यं, तदादिर्यस्य ( बन्धुनाशादेः ) तस्मात् । दुर्गतो दरिद्रः । 'दरिद्रो दुर्गतोऽपि सः ।' इत्यमरः । **मलिनताऽऽदिकृत्** । 'अयं मलिन' । इत्यादिप्रतीतिहेतुः । आदिपदेन पाप्मतामूढतादीनां ग्रहणम् । **अनौजस्यं** नौजो दीप्तिः पराक्रमो वा यस्य तस्य भावस्तथोक्तम् । 'ओजो दीप्तौ बल'इत्यमरः । **दैन्यम्** । 'मत' मिति शेषः ॥ १७२ ॥

उदाहरति—**यथा**—'**वृद्धो**..'इत्यादौ ।

'**वृद्धो** जरया जर्जरीकृतदेहः । अथ च—**अन्धो** नेत्रविहीनः । **एषः** । **पतिः** । **मञ्चकगतः** मञ्चकमल्पं मञ्चं न तु दीर्घं गतः प्राप्तस्तत उत्थातुमपि न शक्त इति भावः । अल्पो मञ्चो मञ्चकः । 'अल्पे ।' ५।३।८५ इति कः । **स्थूणाऽवशेषं** स्थूणाः काष्ठस्तम्भा अवशेषा यस्य तत् । 'स्थूणा स्तम्भेऽपि वेश्मनः ।' इत्यमरः । स्थूणाभिरवशेषमिति वा । अवशिष्यतीत्यवशेषम् । **गृहम्** । **कालः** समयः । **अभ्यर्णजलागमोऽ**भ्यर्णे समीपे जलागमो वर्षा यस्य सः । 'उपकण्ठान्तिकाभ्यर्णाभ्यग्रा' इत्यमरः । **वत्सस्य** पुत्रस्य । कथमपि किञ्चिद्वोजनाच्छादनाद्युपयोगिद्रव्यमानेतुं देशान्तरं कियन्तं समयं निर्गतस्यैकाकिनो बालकुमारस्येति यावत् । 'वत्सः पुत्रादिवर्षयोः ।' इति मेदिनी । **कुशलिनी** कुशलमस्यामस्तीति तथोक्ता । **वार्त्ता** लोकमुखाद् वृत्तश्रवणम् । 'वार्त्ता वृत्तौ जनश्रुतौ ।' इत्यमरः । अपि किं पुनर्द्रव्यप्रेषणम् । **नो** नास्ति । **यत्नात्** कथमपीतस्ततोऽऽभ्यर्थ्य महताऽऽयासेनेति भावः । **सञ्चिततैलबिन्दुघटिका** सञ्चिता ये तैलबिन्दवः ( तैलस्य कतिपये बिन्दव इत्यर्थः ) तेषां घटिकाऽल्पा घटीति तथोक्ता । **भग्ना** । **इतीत्यतः** । **पर्याकुला** परितो व्यग्रा । **गर्भभरालसां** गर्भस्य पूर्णमास्यस्य भ्रूणस्य भरो भारस्तेनालसा गमनादावशक्ता ताम् । 'गर्भो भ्रूण इमौ समौ ।' इत्यमरः । **निजवधूं** निजा स्वकीया वधूः पुत्रस्य सहधर्म्मिणी ताम् । 'स्वके नित्ये निजं त्रिषु ।' 'वधूर्जाया स्नुषा स्त्री चे'ति चामरः । **दृष्ट्वा** । **श्वश्रूः** । **चिरं** न त्वल्पसमयावधि । **रोदिति** । देशान्तरे धनेहया व्यापारितपुत्राया दैवहतकाया व्याकुलतावर्णनपरोक्तिरियम् । अत्र शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ ९८ ॥'

अथ श्रमः-

**१८८ खेदो रत्यध्वगत्यादेः श्वासनिद्राऽऽदिकृच्छ्रमः ।**

यथा-

'सद्यः पुरीपरिसरेऽपि शिरीषमृद्वी सीता जवान्त्रिचतुराणि पदानि गत्वा ।
गन्तव्यमस्ति कियदित्यसकृद् ब्रुवाणा रामाश्रुणः कृतवती प्रथमावतारम् ॥ ९९ ॥'

अथ मदः-

**१८९ सम्मोहानन्दसम्भेदो मदो मद्योपयोगजः ॥ १७३ ॥**
**अमुना चोत्तमः शेते, मध्यो हसति गायति ।**
**अधमप्रकृतिश्चैवं परुषं वक्ति रोदिति ॥ १७४ ॥**

---

अत्रेदं बोध्यम्-पत्यादेर्वृद्धत्वाद्यालम्बनं वध्वास्तथाऽवस्थानमुद्दीपनं रोदनमनुभावश्चेत्येवं कस्या अपि वृद्धाया असहायाया दैन्यमभिव्यज्यते । इति ।

अथ श्रमं लक्षयितुं प्रतिजानीते-**अथ** दैन्योदाहरणानन्तरम् । **श्रमः** । लक्ष्यते-१८८ **खेदो**..इत्यादिना ।

१८८ **रत्यध्वगत्यादे** रतिश्चाध्वगतिश्चेति ते आदी यस्य (व्यायामादेः) तस्मात् । **श्वासनिद्राऽऽदिकृत्** । आदिनाऽङ्गपीडनादि । **खेदः** । **श्रमः** । 'मत' इति शेषः । यथोक्तं 'अध्वव्यायामसेवाद्यैर्विभावैरनुभावकैः । गात्रसंवाहनैरास्यसङ्कोचैरङ्गमोटनैः ॥ निःश्वासैर्जृम्भितैर्मन्दैः पादोत्क्षेपैः श्रमो मतः ।' इति ।

उदाहरति-**यथा**-'**सद्यः**..' इत्यादौ ।

'**शिरीषमृद्वी** शिरीषवत् शिरीषकुसुमवत् मृद्वी कोमला । **अपि** । **सीता** । **सद्यः** श्रीरामस्य वनं गन्तुं विचारे प्रवृत्ते एवेति भावः । **जवात्** । श्रीरामतोऽपि पूर्वमिति भावः । **पुरीपरिसरे** पुर्याः अयोध्यायाः परिसरः प्रान्तदेशस्तत्र । 'पर्यन्तभूः परिसर' इत्यमरः । **त्रिचतुराणि** त्रीणि वा चतुराणि वेति तथोक्तानि । एतदुपलक्षणं 'कियन्ती' त्यस्य । **पदानि** तद्विन्यासदेशपर्यन्तमिति भावः । **गत्वा** । **कियत्** किंप्रमाणम् । 'इतःपर' मिति शेषः । **गन्तव्यम्** । **अस्ति** । इतीत्थेवम् । **असकृद्**वारंवारम् । **ब्रुवाणा** । **रामाश्रुणो** रामस्याश्रु नेत्राम्बु तस्य । **प्रथमावतारं** प्रथमोऽसाववतार आविष्कारस्तम् । **कृतवती** । महानाटकस्थेदं पद्यम् । अत्र वसन्ततिलकं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ९९ ॥'

अत्रायम्भावः-शिरीषमृद्व्या जवात् कियत् पदपर्यन्तं गमनमालम्बनं, तदनन्तरमपि गन्तव्यदेशस्याप्राप्तिरुद्दीपनम्, असकृत्पृच्छाऽनुभाव इत्येवं सीताया अध्वश्रमोऽभिव्यज्यते । इति यथा वोदाहृतं रसगङ्गाधरकारैः- 'विधाय सा मद्वदनानुकूलं कपोलमूलं हृदये शयाना । चिराय चित्रे लिखितेव तन्वी न स्पन्दितुं मन्दमपि क्षमाऽऽसीत् ॥' इति । अत्र हि विपरीता रतिरालम्बनं, कान्तस्य पुनरपि पराजयाभाव उद्दीपनम्, तथा शयनाद्यनुभाव इति स्फुटा श्रमाभिव्यक्तिः ।

मदं लक्षयितुं प्रतिजानीते-**अथ** श्रमोदाहरणानन्तरम् । **मदः** । लक्ष्यते-१८९ **सम्मोहा**.. इत्यादिना ।

१८९ **मद्योपयोगज** मद्यस्य मादनीयद्रव्यस्य न तु मदिराया एवोपयोगः सेवनं तस्माज्जायत इति तथोक्तम् । माद्यन्त्यनेनेति मद्यम् । 'गदमदचरयमश्चानुपसर्गे ।' ३।१।१०० इति यत् । **सम्मोहानन्दसम्भेदः** सम्मोहानन्दयोः सम्भेदो मेलनम् । **मदः** स्तदाख्योभावः । 'मत'इति शेषः । **अमुना** निरुक्तस्वरूपेण मदेनेत्यर्थः । **च** । **उत्तमः** श्रेष्ठप्रकृतिको जनः । **शेते** । **मध्यो** मध्यमप्रकृतिकः । **हसति** । तथा **गायति** । **एवम्** । **च** पुनः । **अधमप्रकृति**-रधमा प्रकृतिः स्वभावो यस्य सः । **परुषं** रूक्षं यथा भवेत्तथा । **वक्ति** । तथा-**रोदिति** ॥ १७३ ॥ १७४ ॥

---

१ 'अथ "अइविउलं जलकुंभं घेत्तूण समागदह्मि सहि तुरिअं । समसेअसलिलणीसासणीसहा वीसमामि खणं ॥" इति पाठान्तरम् । अस्य च 'अतिविपुलं जलकुम्भं गृहीत्वा समागताऽस्मि सखि! त्वरितम् । श्रमस्वेदसलिलनिःश्वासनिःसहा विश्राम्यामि क्षणम् ॥' इति संस्कृतम् । वस्तुतो नेदं युक्तमुदाहर्तुम् । 'श्रम' इत्यभिहितस्य ध्वन्यमानत्वं वक्तुमशक्यत्वात् ।

यथा–

'प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः ।
गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः ॥ १०० ॥'

अथ जडता–

१९० अप्रतिपत्तिर्जडता स्यादिष्टानिष्टदर्शनश्रुतिभिः । स्यादिष्टानिष्टदर्शन
अनिमिषनयननिरीक्षण–तूष्णीम्भावादयस्तत्र ॥ १७५ ॥

यथा मम कुवलयाश्वचरिते प्राकृतकाव्ये–

---

अत्राहुः पण्डितराजाः–'अयं च मदस्त्रिविधः, तरुणमध्यमाधमभेदात् । अव्यक्तासङ्गतवाक्यैः सुकुमारस्खलद्गत्या च योऽभिनीयते स आद्यः, भुजाक्षेपस्खलितघूर्णितादिभिर्मध्यमः, गतिभङ्गस्मृतिनाशहिक्काछर्द्यादिभिरधमः ।' इति ।

उदाहरति–यथा–'प्रातिभ..' इत्यादौ ।

'त्रिसरकेण त्रिगुणितेन मद्यपानेन । त्रयाणां सरकाणां मद्यपानानां समाहार इति, तेन । 'तद्धितार्थोत्तरपदसमाहारे च ।' २।१।५१ इति द्विगुः, 'पात्रेसमितादयश्च ।' २।१।४८ इति पात्रादित्वान्नपुंसकत्वं साधु । 'सरकं सीधु (मद्य) पात्रे स्याच्छीधुपाने च शीधुनि ।' इति विश्वः । प्रातिभं प्रतिभायां भवस्तम् । प्रतिभाऽलैकिकी बुद्धिः । 'तत्र भवः ।' ४।३।५३ इत्यण् । गतानाम् । सुभ्रुवां कामिनीनाम् । वक्रवाक्यरचनारमणीयो वक्राणि प्रतिकूलानि वाक्यानि तेषां रचना प्रयोगस्तया रमणीयो मनोरमः । गूढसूचितरहस्यसहासो गूढानि प्रथमं लज्जया गुप्तानि तदानीं पुनः सूचितानि मदेन प्रकाशितानि रहस्यानि सुरतसम्बन्धीनि प्रलपितानि यत्र, सोऽसौ सहासश्चेति तथोक्तः । अत्र विशेषणसमासः, विशेषणविशेष्यभावस्य वैवक्षिकत्वात् । परिहासः उपहासः । प्रववृते प्रवर्त्तते स । शिशुपालवधस्येदं पद्यम्, अत्र स्वागताछन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १०० ॥'

अत्रेदं तत्त्वम्–त्रिसरकमालम्बनम्, तत्प्रभाव एवोद्दीपनम्, प्रतिभोत्कर्षेण तथा परिहासोऽनुभावश्चेत्येवं सुभ्रुवां मदोऽभिव्यज्यते ।

यथा वा–'मधुरसान्मधुरं हि तवाधरं तरुणि! मद्वदने विनिवेशय । मम गृहाण करेण कराम्बुजं पपपतामि-हहाभभूतले ॥' अत्र हि मधुपानमालम्बनं तरुण्या अधररस उद्दीपनं वर्णाधिक्येनोच्चारणमनुभावश्च, इत्येवं मदोऽभिव्यज्यते ।

जडतां लक्षयितुं प्रतिजानीते–अथ मदोदाहरणानन्तरम् । जडता–लक्ष्यते–१९० अप्रति..इत्यादिना ।

१९० इष्टानिष्टदर्शनश्रुतिभिरिष्टं (पुत्रजन्मादि) चानिष्टं (पुत्रमरणादि) चेति तयोर्दर्शनश्रुतयस्ताभिः । दर्शनानि च श्रुतय (श्रवणानि) श्चेति । अप्रतिपत्तिर्न प्रतिपत्तिः (कर्त्तव्य) सुनिश्चय इति तथोक्ता । जडता । स्यात् । तत्र तस्यां (जडतायां) सत्याम् । अनिमिषनयननिरीक्षणतूष्णीम्भावादयोऽनिमिषनयनं यथा भवेत्तथा निरीक्षणमिति, तच्च तूष्णीम्भावश्चेति तावादी येषां (स्थगनादीनां) ते तथोक्ताः । 'भवन्ती'ति शेषः । यथोक्तम्–'कार्य्याविवेको जडता पश्यतः शृण्वतोऽपि वा । तद्विभावाः प्रियानिष्टदर्शनश्रवणे रुजा ॥ अनुभावास्त्वमी तूष्णीम्भावविस्मरणादयः । सा पूर्वं परतो वा स्यात् मोहादिति विदां मतम् ॥' इति ॥ १७५ ॥

उदाहरति–यथा । मम मत्कर्त्तृके । कुवलयाश्वचरिते तदाख्ये इति भावः । प्राकृतकाव्ये प्राकृतभाषाप्रधाने काव्ये–'णवरिअ...' इत्यादौ ।

'णवरिअ तं जुअजुअलं अण्णोण्णं णिहिदसजलमंथरदिट्ठिं।
आलेक्खओप्पिअंविअ खणमेत्तं तत्थ संट्ठिअं मुअसण्णं ॥ १०१ ॥'

अथोग्रता-

**१९१ शौर्य्यापराधादिभवं भवेच्चण्डत्वमुग्रता।**
**तत्र स्वेदशिरःकम्प-तर्जनाताडनादयः ॥ १७६ ॥**

यथा-

'प्रणयिसखीसलीलपरिहासरसाधिगतै-र्ललितशिरीषपुष्पहननैरपि ताम्यति यत्।

---

'**तं** तत्। **जुअजुअलं** युवयुगलम्। युवती च युवा चेति युवानौ, तयोर्युगलमिति तथोक्तम्। 'पुमान् स्त्रिया ॥' १।२।६७। इत्येकशेषः। अत्र युगलपदमनुरागातिशयं द्योतयितुम्। **णवरिअ** केवलम्। 'णवरिअशब्दः केवलार्थे देशी'ति विवृतिकाराः। **अण्णोण्णमन्योन्यम्। णिहिदसजलमंथरदिट्ठिं** निहितसजलमन्थरदृष्टि। निहिते आरोपिते सजलमन्थरदृष्टी येन तत्तथोक्तम्। सजले (अत एव) मन्थरे स्तिमिते इमे दृष्टी इति सजलमन्थरदृष्टी। 'स' दिति शेषः। **तत्थ** तत्र। **खणमेत्तं** क्षणमात्रम्। **आलेक्खओप्पिअंविअ** आलेख्यार्पितमिव। आलेख्यं चित्रं तत्रार्पितमङ्कयित्वा स्थापितमिव। **मुअसण्णं** मुक्तसज्ञम्। **संट्ठिअं** संस्थितम्। सम्यक् स्थितमासीदिति भावः। चिरात् सम्मिलितयोः प्रथमं दृष्टिपातेऽवस्थावर्णनपरमिदम्। अत्र स्कन्धकं छन्दः, तल्लक्षणं यथोक्तम्-'स्कन्धकमिति तत्कथितं यत्र चतुष्कलगणाष्टकेनार्धं स्यात्। तत्तुल्यमग्रिमदलं भवति चतुष्षष्टिमात्रकशरीरमिदम् ॥'इति ॥ १०१ ॥

अत्रेदं बोध्यम्-अन्योऽन्यं दृष्टिपात आलम्बनम्, चिरं विप्रवासे दुःखस्य स्मरणमुद्दीपनम्, मुक्तसज्ञं सचित्रार्पितमिवावस्थानं नेत्रयोः सजलमन्थरत्वं चानुभाव इत्येवं जडताऽभिव्यज्यते। न च मोहः, तत्र सजलनेत्रार्पणस्यान्योऽन्यमसम्भवात्। सजलत्वं हि तयोर्विरहवेदनावेदकम्, अन्योऽन्यं निश्चलदृष्टिश्च तयोरत्यन्तं तदानीमामोदमावेदयतीति।

यथा वा-'यदवधि दयितो विलोचनाभ्यां सहचरि! दैववशेन दूरतोऽभूत्। तदवधि शिथिलीकृतो मदीयैरथकरणैः प्रणयो निजक्रियासु ॥' इति, अत्र दयितविरह आलम्बनं, तत्र दुःखमुद्दीपनम्, इन्द्रियाणां निश्चेष्टत्वमनुभावः; इत्येवं जडताऽभिव्यज्यते। अत्राहुः-'मोहे चक्षुरादिभिश्चाक्षुषादेरजननम्, इह तु प्रकारविशेषवैशिष्ट्येन बाहुल्येनाजननमिति तस्मादस्य विशेषः। अत एवोदाहरणे 'शिथिलीकृत' इत्युक्तम्, न तु व्यक्त इति।' इति।

उग्रतां लक्षयितुं प्रतिजानीते-**अथ** जडतोदाहरणानन्तरम्। **उग्रता** लक्ष्यते..**१९१ शौर्य्या...**' इत्यादिना।

१९१ **शौर्यापराधादिभवं** शौर्य्यं (बलात्कारः) चापराधः (प्रतिद्वन्द्विताभवो दोषः) च तावादी येषां (दीनतर्जनताडनादिस्वाज्ञोल्लङ्घनादीनां) तेभ्यो भवतीति तथोक्तम्। **चण्डत्वम**सहित्वम्। **उग्रता। भवेत्। तत्र** तस्यामुग्रतायां सत्यामित्यर्थः। **स्वेदशिरःकम्पतर्जनाताडनादयः**। आदिना नेत्ररक्तिमादीनां ग्रहणम्। 'भवन्ती'ति शेषः ॥ १७६ ॥

'उदाहरति-**यथा**। '**प्रणयि..**' इत्यादौ।

**'प्रणयिसखीसलीलपरिहासरसाधिगतैः** प्रणयिन्यः प्रीतिभाजनानि याः सख्यः तासां सलीलपरिहासस्तस्य रसस्तेनाधिगतास्तैः। लीलया सह वर्त्तत इति, सलीलोऽसौ परिहास इति सलीलपरिहासः। **ललितशिरीषपुष्पहननैर्ल**लितानि मनोरमाणि यानि शिरीषपुष्पाणि तैः (तत्कृतानि) हननानि तैः। हननं ताडनम्। **अपि** किं

---

१ केवलं तद् युवयुगलमन्योऽन्यं निहितसजलमन्थरदृष्टि। आलेख्यार्पितमिव क्षणमात्रं तत्र संस्थितं मुक्तसञ्ज्ञम् ॥ इति संस्कृतम्।

वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः, पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥१०२॥'

अथ मोहः-

१९२ मोहो विचित्तता भीति-दुःखा-वेगा-नुचिन्तनैः ।
मूर्च्छना-ज्ञान-पतन-भ्रमणा-दर्शनादिकृत् ॥ १७७ ॥

यथा-

'तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्त्तं कृतोपकारेव रतिर्बभूव ॥ १०३ ॥'

अथ विबोधः-

---

पुनरन्यैरिति भावः । यत् । ताम्यति क्लिश्यति । तत्र तस्मिन् । वपुषि शरीरे 'मालत्या' इति शेषः । वधाय हन्तुम् । 'तुमर्थाच्च भाववचनात् ।' २।३।१५ इति चतुर्थी । शस्त्रम् । उपक्षिपतः पातयतः । तव 'अघोरघण्टस्ये'ति शेषः । शिरसि मस्तके । अकाण्डयमदण्ड इवाकाण्डेऽसमये यो यमदण्डः कालदण्ड इति, तथोक्त इव । 'कराल'इति शेषः । एषः माधवसम्बन्धीति भावः । भुजो बाहुः । पततु । मालतीमाधवस्येदं पद्यम्, मालतीं हन्तुमुद्यतमघोरघण्टं प्रति माधवस्योक्तिरियम्, अत्र नर्कुटकं छन्दः, तल्लक्षणं चोक्तं यथा-'यदि भवतो नजौ भजजला गुरु नर्कुटकम् ।' इति ॥ १०२ ॥'

इदं बोध्यम्-अघोरघण्टस्य प्रहारोद्योग आलम्बनं, मालत्या वधानर्हत्वमुद्दीपनं, भुजपाततद्व्यङ्ग्यभर्त्सनाद्यनुभाव इत्युग्रताऽभिव्यज्यते । इति ।

मोहं लक्षयितुं प्रतिजानीते-अथोग्रतोदाहरणानन्तरम् । मोहः । लक्ष्यते..१९२ मोहः..इत्यादिना ।

१९२ भीतिदुःखावेगानुचिन्तनैर्भीति-दुःखा-वेगानामनुचिन्तनानि तैः । मूर्च्छनाज्ञानपतनभ्रमणा-दर्शनादिकृत् । नेषद्दर्शनमदर्शनम्, न तु अज्ञानम्; पृथगुपादानेनैव तस्य गतार्थत्वात् । आदिनाऽश्रवणादि । विचित्तता विगतं चित्तमनुसन्धानात्मकवृत्तिकमन्तःकरणमिति यस्य तस्य भावस्तत्ता । मोहो 'मत' इति शेषः । यथोक्तम्-'भयवियोगादिप्रयोज्या वस्तुतत्त्वानवधारिणी चित्तवृत्तिर्मोहः ।' इति ॥ १७७ ॥

उदाहरति-यथा-'तीव्रा.. इत्यादौ ।

'तीव्राभिषङ्गप्रभवेण तीव्रः सोढुं दुःशकोऽसावभिषङ्गः पराभवः ( प्रियव्यापादनरूपस्तिरस्कारः ) स एव प्रभवो यस्य तेन । इन्द्रियाणां नेत्रादीनाम् । वृत्तिं दर्शनादिरूपं परिणामम् । संस्तम्भयता निरुन्धता । मोहेन मूर्च्छया न तु निरुक्तस्वरूपेण भावविशेषेण, तथा तस्य व्यङ्ग्यत्वानुपपत्तेः । 'मूर्च्छा तु कश्मलं मोहोऽपी'त्यमरः । मुहूर्त्तम् । किञ्चित्कालस्योपलक्षणमिदम् । अज्ञातभर्तृव्यसनाऽज्ञातं विस्मृतं भर्तृव्यसनं यया सा । भर्तुः कामस्य व्यसनं शरीरदाहरूपं दुःखमिति भर्तृव्यसनम् । अत एव-कृतोपकारा कृत उपकारो भर्तृमरणविस्मरणेन व्यसननिवर्त्तनं यया सा । इव । रतिः कामस्य सहधर्म्मिणी । बभूव । कुमारसम्भवस्येदं पद्यम्, अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १०३ ॥'

इदं बोध्यम्-अत्र मदनस्य तथात्वमालम्बनं, पुनःपुनस्तस्यावेक्षणं स्मरणं चोद्दीपनम्, व्यसनविस्मरणमनुभावश्चेत्येवं मोहोऽभिव्यज्यते । न चेयं निद्रा, सर्वथेन्द्रियलयाभावात्, केवलमनुसन्धानस्यैवात्र तिरोभावाच्च । अत एवोदाहरन्ति-'विरहेण विकलहृदया विलपन्ती दयितदयितेति । आगतमपि तं सविधे परिचयहीनेव वीक्षते बाला ॥' इति, 'शुण्डादण्डं कुण्डलीकृत्य कूले कल्लोलिन्याः किञ्चिदाकुञ्चिताक्षः । नैवाकर्षत्यम्बु नैवाम्बुजालिं कान्तापेतः कृत्यशेषो गजेन्द्रः ॥' इति च ।

विबोधं लक्षयितुं प्रतिजानीते-अथ मोहोदाहरणानन्तरम् । विबोधो 'लक्ष्यते-१९३ निद्रा...इत्यादिना ।

**१९३ निद्राऽपगमहेतुभ्यो विबोधश्चेतनागमः ।**
**जृम्भाऽङ्गभङ्गनयन–मीलनाङ्गविलोककृत् ॥ १७८ ॥**

यथा–

'चिररतिपरिखेदात्प्राप्तनिद्रासुखानां चरममपि शयित्वा पूर्वमेव प्रबुद्धाः ।
अपरिचलितगात्राः कुर्वते न प्रियाणा–मशिथिलभुजचक्राऽऽश्लेषभेदं तरुण्यः ॥ १०४ ॥'

अथ स्वप्नः–

**१९४ स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः ।**
**कोपावेगभयग्लानि–सुखदुःखादिकारकः ॥ १७९ ॥**

---

**१९३ निद्राऽपगमहेतुभ्यो** निद्राया अपगमस्तस्य हेतवः कारणानि गीतवादित्रादीनि तेभ्यः । **जृम्भाऽङ्गभङ्गनयनमीलनाङ्गविलोककृत्** । जृम्भा ( मुखविस्फारः ) चाङ्गभङ्गः ( पार्श्वादिमोटनं ) च नयनमीलनं ( नेत्रोन्मीलनं ) चाङ्गविलोकः ( करतलमुखकमलादिनिरीक्षणं ) चेति, तान् करोतीति तथोक्तः । **चेतनागमश्चेतनाया** बुद्धेरागमो बाह्यग्रहणयोग्यत्वम् । **विबोधो** 'मत' इति शेषः ॥ १७८ ॥

उदाहरति–यथा–'चिर.. इत्यादौ ।

'**चिररतिपरिखेदाच्चिरं** रती रमणं तया परिखेदः परिश्रमस्तस्मात्, तं प्राप्येति यावत् । ल्यब्लोपे पञ्चमी । **प्राप्तनिद्रासुखानां** प्राप्ता निद्रासुखमिति तेषाम् । 'प्राप्तापन्ने च द्वितीयया ।' २।२।४ इति समासः । **प्रियाणाम्** । **चरमं** पश्चाच्छयनादूर्ध्वमिति यावत् । अपि । **शयित्वा** । **पूर्वं** प्रबोधात्प्राक् । **एव** न तूर्ध्वम् । **प्रबुद्धा** जागृतिं प्राप्ताः । एष साध्वीनां धर्म एव । तथाहि–'सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते । नान्यं कामयते चित्ते सा स्त्री ज्ञेयां पतिव्रता ॥' इति स्मृतिः । **तरुण्यः** । **अपरिचलितगात्रा** न परिचलितानि गात्राणि यासां ताः, 'सत्य' इति शेषः । **अशिथिलभुजचक्राश्लेषभेदमशिथिलो** गाढो भुजचक्राश्लेषस्तस्य भेदो भङ्गस्तम् । भुजचक्रेण चक्राकारेण भुजेन कृत आश्लेष इति भुजचक्राश्लेषः । **न** । **कुर्वते** 'शयानं न प्रबोधयेत् ।' इति स्मरणात् । अत एवात्रात्मनेपदम् । 'निद्राभङ्गो माभूदेषा' मिति प्रबुद्धा अपि शयिता इवासन्निति भावः । शिशुपालवधस्येदं पद्यम्, अत्र मालिनी छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १०४ ॥'

इदं बोध्यम्––पत्युः प्रबोधात् पूर्वमुत्थातव्यमित्यालम्बनस्तदवधि पत्युः शयनमुद्दीपनं, 'न कुर्वत' इत्यत्र क्रियागतात्मनेपदव्यङ्ग्यं स्वधर्म्मपरिरक्षणमनुभावश्चेति विबोधोऽभिव्यज्यते । वस्तुतस्तु नेदं विविक्तमुदाहरणम् । अत एव–एतस्य स्थाने 'एकेन नेत्रकमलं मलयन्करेण, पाणिं परं च कलयन्नवनीतभाण्डे । निद्राविरामकमनीयमुखाम्बुजश्रीर्मां पातु पादरजसा ननु नन्दबालः ॥' इति क्वचित् लभ्यमानमुदाहरणमेव साधु । अत्र हि बाल्यनाट्यं दर्शयतः श्रीकृष्णस्य स्मरणम् । तथा च–बुभुक्षाऽऽलम्बनं, तदानीमभिव्यङ्ग्यो दधिमथनघोष उद्दीपनं, नयनमलिनीकरणपुरःसरं नवनीतभाण्डे करप्रक्षेपश्चानुभाव इत्येवं विबोधोऽभिव्यज्यते । यथा वा–'नितरां हि तयाऽद्य निद्रया मे बत यामे चरमे निवेदितायाः । सुदृशो वचनं शृणोमि यावन्मयि तावत्प्रचुकोप वारिवाहः ॥' इति । अत्र च चिराच्छयनमालम्बनं, वारिवाहगर्जनमुद्दीपनं. स्वप्नानुभवोऽनुभावश्चेति विबोधोऽभिव्यज्यते ।

स्वप्नं लक्षयितुं प्रतिजानीते–अथ विबोधोदाहरणानन्तरम् । **स्वप्नः** । 'लक्ष्यते–१९४ **स्वप्नो**...इत्यादिना ।ने'ति शेषः ।

१९४ **निद्राम्** । **उपेतस्य** प्राप्तस्य । **कोपावेगभयग्लानिसुखदुःखादिकारकः** । आदिना गानादि । **यः** । **तु** । **विषयानुभवो** विषया दृश्याः श्रुता वा ये नेत्रादिभिर्ग्राह्यास्तेषामनुभवो मनसैवारोप्य तथाऽनुसन्धानम् । 'स' इति शेषः । **स्वप्नः** । 'स्यादि'ति शेषः ॥ १७९ ॥

यथा-

'मामाकाशप्रणिहितभुजं निर्दयाऽऽश्लेषहेतो-र्लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेन।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां मुक्तास्थूलास्तरुकिशलयेष्वश्रुलेशाः पतन्ति ॥१०५॥'

अथापस्मारः-

१९५ मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः।
भूपातकम्पप्रस्वेदफेनलालाऽऽदिकारकः ॥ १८० ॥

---

उदाहरति-यथा-'मामाकाश..इत्यादौ।

'**स्वप्नसन्दर्शनेन** स्वप्नः शयनावस्थायां जागृतिकालिकानां दृष्टश्रुतविषयाणामनुभवः, स एव सन्दर्शनं सम्यग्दर्शनं संविदिति यावत्तेन। 'स्वप्नः सुप्तस्य विज्ञान'मिति विश्वः, 'दर्शनं समये शास्त्रे दृष्टौ स्वप्नेऽक्ष्णि संविदि।' इति शब्दार्णवः। स्वप्यतेऽनेनेति स्वप्नः। 'स्वपो नन्।' ३।३।९१ इति नन्। संदृश्यतेऽनुभूयत इति सन्दर्शनम्। 'ल्युट् च।' ३।३।११५ इति ल्युट्। 'कर्तृकरणयोस्तृतीया।' २।३।१८ इति करणे तृतीया। 'स्वप्नसन्दर्शने'ष्विति तु मल्लिनाथसम्मतः पाठः। **मया**ऽनेन त्वदीयेन जनेनेत्यर्थः। अत्र कर्त्तरि तृतीया। यद्वा-मया, माययाऽज्ञानेनेति यावत्। करणे तृतीया। तथा च-स्वप्नसन्दर्शनेन (तदभिन्नया) मया (अज्ञानेन) इति निष्कृष्टोऽर्थः। एतेन तस्य मृषात्वमावेदितम्। 'मा स्त्री लक्ष्म्यां च मायाया'मिति गोपालः। **कथमपि** नाल्पेन यत्नेनेति भावः। **लब्धायाः** प्राप्ताया इवाभिमताया इत्यर्थः। **ते** तव (प्रियायाः)। **निर्दयाश्लेषहेतोर्निर्दयो** गाढोऽसावाश्लेष आलिङ्गनं तस्य हेतुः कारणं तस्मात्। **आकाशप्रणिहितभुजमाकाशे** शून्येऽत एव निरस्तत्वरसम्भव इति यावत् प्रणिहितौ प्रसारितौ भुजौ येन तम्। **मां** त्वत्प्रियमत एव त्वद्वियोगेन विकलमिति भावः। **पश्यन्तीनाम्। स्थलीदेवतानां** स्थल्या अस्य देशस्य देवता अधिष्ठात्र्यो देव्यस्तासाम्। **मुक्तास्थूला** मुक्ता मौक्तिकानीव स्थूलाः। **अश्रुलेशाः। तरुकिशलयेषु** तरूणां वृक्षाणां किशलयाः पल्लवास्तेषु। **बहुशः। न। खलु। पतन्ति।** (इति) **न**। किन्तु पतन्त्येवेति भावः। यक्षस्य मेघं दूतं प्रकल्प्य तद्द्वारा प्रियाऽन्तिके सन्देशप्रेषणमिदम्। अत एव-मेघदूतस्येदं पद्यम्। अत्र मन्दाक्रान्ता छन्दः, तल्लक्षणं चोक्तं प्राक्॥ १०५॥'

इदं बोध्यम्-प्रबुद्धस्यापि प्रियाविरहेण विकलस्य यक्षस्येयमुक्तिः, अत्र च प्रियाऽऽलम्बनं, तद्विरह उद्दीपनं-स्मरणमात्रेणोत्तम्भितशरीरायाः प्रियाया आलिङ्गनार्थे भुजोत्तम्भनमनुभावश्चेत्येवं स्वप्नोऽभिव्यज्यते। 'स्वप्नसन्दर्शनेने' त्यादिना तु तस्यैवानुवादः। अथ यदीदं विबोधस्यैवोदाहरणमिति, तर्हि 'हा सोह्म अज्जउत्त कहिं सि' इत्युत्तररामचरितस्य 'दयिते दयितैव मे भवेस्त्यज मध्ये रससिन्धु नैव माम्। बत तामनुपेक्ष्य शाश्वतीं रतिमामोदय मां पुनर्मनाक्॥' इति वा मम बोध्यम्। अत्र हि-स्वप्नेनावेदिता प्रियाऽऽलम्बनं, तयाऽऽश्लेषानन्द उद्दीपनं, तदर्थं प्रलपनं तदानीमाश्लेषानन्दस्याविर्भावतिरोभावौ चानुभाव इत्येवं स्वप्नोऽभिव्यज्यते। इति।

अपस्मारं लक्षयितुं प्रतिजानीते-**अथ** स्वप्नोदाहरणानन्तरम्। **अपस्मारः**। लक्ष्यते- १९५ **मनः...**इत्यादिना।

१९५ **ग्रहाद्यावेशनादिजो** ग्रहादीनां ग्रहभूतादीनामावेशनमाक्रमणं तदादौ यस्य (धातुवैषम्यादेः) इति, तस्माज्जायत इति तथोक्तः। 'पञ्चम्यामजातौ।' ३।२।९८ इति डः। **भूपातकम्पप्रस्वेदफेनलालाऽऽदिकारकः।** आदिनाऽव्यक्तशब्दविशेषादीनां ग्रहणम्। **मनःक्षेपो** मनसः क्षेपो विक्षिप्तत्वं निरस्तधर्म्मत्वमिति यावत्। **तु** पुनः। **अपस्मारः**। उक्तं च-'वियोगशोकभयजुगुप्साऽऽदीनामतिशयाद्ग्रहावेशादेश्चोत्पन्नो व्याधिविशेषोऽपस्मारः।' इति, 'व्याधित्वेनास्य कथनेऽपि विशेषाकारेण पुनः कथनं बीभत्सभयानकयोरस्यैव व्याधेरङ्गत्वं नान्यस्येति स्फोरणाय-विप्रलम्भे तु व्याध्यन्तरस्यापी'ति ॥१८०॥

---

१ 'हा सौम्य आर्यपुत्र कुत्रासि।'इति संस्कृतम्।

यथा—

'आश्लिष्टभूमिं रसितारमुच्चै-र्लसद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के ॥ १०६ ॥'

अथ गर्वः—

**१९६ गर्वो मदः प्रभावश्री-विद्यासत्कुलताऽऽदिजः ।**
**अवज्ञासविलासाङ्ग-दर्शनाविनयादिकृत् ॥ १८१ ॥**

तत्र शौर्य्यगर्वो यथा—

'धृतायुधो यावदहं तावदन्यैः किमायुधैः । यद्वा न सिद्धमस्त्रेण मम, तत्केन सेत्स्यति ॥ १०७ ॥'

---

उदाहरति—यथा—'आश्लिष्टभूमिं...'इत्यादौ ।

'असौ श्रीकृष्णचन्द्र इत्यर्थः । आश्लिष्टभूमिमाश्लिष्टा भूमिर्येन तम् । भुवि पतितमिति भावः । उच्चैः । रसितारं शब्दकर्त्तारम् । 'रस'शब्दे । 'ण्वुल्तृचौ ।' ३।१।१३३ इति तृच् । लसद्भुजाकारबृहत्तरङ्गं लसन्तौ स्फुरन्तौ यौ भुजौ तयोराकार इवाकारो येषां, तथाभूता बृहत्तरङ्गा यस्य तम् । फेनायमानं फेनमुद्वमन्तम् । 'फेनाच्चेति वक्तव्यम् ।'इति क्यङ् । आपगानां नदीनाम् । 'स्रवन्ती निम्नगापगा ।' इत्यमरः । पतिम् । अपस्मारिणमपस्मारोऽस्यास्तीति, तम् । आशशङ्के तत्कर्म्मयोगात्तथा सम्भावयामासेत्यर्थः । शिशुपालवधस्येदम्, अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १०६ ॥'

इदमवसेयम्—सम्भाव्यमानः कोऽप्यावेग आलम्बनं, तत्स्मरणमुद्दीपनं, भूपाताद्यनुभावश्चेत्येवमपस्मारोऽभिव्यज्यमानः सम्भाव्यते । 'अपस्मारिण' मित्यनेन तु समुद्रस्य समासोक्त्या नायकत्वं नदीनां च नायिकात्वं च प्रत्याय्यापस्मारस्याशङ्क्यमानत्वेन व्यक्तिबोध्यत्वं स्थिरीक्रियते सम्भवद् यत् सत्येतरत्वं तन्निराक्रियते च । यद्वा 'हरिमागतमाकर्ण्य मथुरामन्तकान्तकम् । कम्पमानः श्वसत्कंसो निपपात महीतले ॥' इति रसगङ्गाधरस्य, 'तव निशम्य जयाय विचारणां रिपुजना वत मत्सारिणोऽपि ते । धधधरेति विभो निजगोत्रयाऽप्यहह सङ्गमुशन्त्यतथेक्षणाः ॥' इति वा मम विविक्तमुदाहरणम् । इति ।

गर्वं लक्षयितुं प्रतिजानीते—अथापस्मारोदाहरणानन्तरम् । गर्वः । 'लक्ष्यते—१९६ गर्वो.. इत्यादिना ।

१९६ प्रभावश्रीविद्यासत्कुलताऽऽदिजः । शौर्य्यादिजन्यः प्रतापः प्रभावः, कोशजन्यः पुनः श्रीः । शास्त्राध्ययनातिशयो विद्या । महतां कुले जन्म सत्कुलता । आदिना तपोमन्त्रादिसिद्धिः । अवज्ञा-सविलासाङ्गदर्शना-(ऽ) विनयादिकृत् । आदिना क्रोधपारतन्त्र्यादीनां ग्रहणम् । मदोऽभिमानः । गर्वः । 'उच्यते' इति शेषः ॥ १८१ ॥

उदाहरति—तत्र तेषु शौर्य्याद्युद्भवतयाऽनेकविधेषु गर्वेष्विति यावत् । शौर्य्यगर्वः । यथा—'धृतायुधो... इत्यादौ ।

'यावद् यदवधि । अहं 'कर्ण' इति शेषः । धृतायुधो धृतमायुधमस्त्रं येन सः । 'आयुधं तु प्रहरणं शस्त्रमस्त्र' मित्यमरः । 'अस्मी'ति शेषः । तावत्तदवधि । अन्यैः । आयुधैर्योद्धृप्रवरैः । आयुध्यन्त इत्यायुधास्तैः । 'इगुपधज्ञाप्रीकिरः कः ।' ३।१।१३५ इति कः । किम् । यद्वा । मम 'कर्णस्ये'ति शेषः । अस्त्रेण । अत्र करणे तृतीया । न । सिद्धम् । 'य' दिति शेषः । तत् । केन 'मदन्यस्यास्त्रेणे'ति शेषः । सेत्स्यति । वेणीसंहारे कर्णस्योक्तिरियम् । अत्र श्लोकश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १०७ ॥'

इदं बोध्यम्—स्वकीयास्त्रबलस्यासाधारणताज्ञानमालम्बनं, स्वस्य धृतास्त्रतयोद्युक्तत्वमुद्दीपनं, स्वेतरायुधधारणादूषणमनुभावश्चेत्येवं गर्वोऽभिव्यज्यते । इति ।

अथ मरणम्-

१९७ शराद्यैर्मरणं जीव-त्यागोऽङ्गपतनादिकृत् ।

यथा-

'राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ १०८ ॥'

---

यथा वा-'दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः । इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं नखानां पाण्डित्यं प्रकटयतु कस्मिन्मृगपतिः ॥' अत्र हि स्वं मृगपतिमिवादान्त-पराक्रममभिमन्यमानस्य पण्डितराजस्येयमुक्तिरिति स्वस्यासाधारणताभिमान आलम्बनं, स्वसदृशानां च श्रुत्यवशेषत्व-मुद्दीपनमधिगम्यमानानां च तुच्छत्वबुद्ध्याऽवज्ञादर्शनमनुभावश्चेत्येवं गर्वोऽभिव्यज्यते । अत्राहुः पण्डितराजाः-उत्साह-प्रधानो गूढगर्वो हि वीररसध्वनिः, अयं तु गर्वप्रधान इति तस्मादस्य विशेषः । तथाहि वीररसप्रसङ्गे प्रागुदाहृते-'यदि वक्ति गिरां पतिः स्वयं, यदि तासामधिदेवताऽपि वा । अयमस्मि पुरो हयाननस्मरणोल्लङ्घितवाङ्मयाम्बुधिः ॥' इत्यादि (इति) पद्ये गीष्पतिना गिरामधिदेवतयाऽपि साकमहं वदिष्यामीति वचनेनाभिव्यक्तस्योत्साहस्य परिपोषकतया स्थितः सर्वेभ्यः पण्डितेभ्योऽहमधिकः । न तु प्रकृतपद्य इव नास्त्येव महीतले मदन्य इति स्फुटोदितेन सोल्लुण्ठवचनेना-नुभावेन प्राधान्येन प्रतीयमानः ।' इति दिक् ।

मरणं लक्षयितुं प्रतिजानीते-अथ गर्वोदाहरणानन्तरम् । **मरणं** लक्ष्यते-१९७ **शराद्यै**..इत्यादिना ।

१९७ **शराद्यैः** । अत्र शरपदं शस्त्रमात्रस्योपलक्षकम् । आद्यपदं च रोगाधःप्रपातादीनां ग्राहकम् । करणे तृतीया । **अङ्गपतनाऽऽदिकृत्** । अङ्गस्य शरीरस्य पतनादि, तत् करोतीति तथोक्तः । आदिना नेत्रादीनां लयः । **जीवत्यागो** जीवस्य त्यागो वर्जनमिति तथोक्तः । 'जीवोऽसुधारणम् ।' इत्यमरः । 'त्यागो दाने च वर्जने' इति मेदिनी । **मरणम्** । 'मत' मिति शेषः ।

उदाहरति-यथा-'**राम**.. इत्यादौ ।

'**दुःसहेन** दुःखेन सह्यत इति तेन । 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।' ३।३।१२६ इति खल् । **राममन्मथशरेण** रामो मन्मथ इवेति राम एव मन्मथ इति वा तस्य शरो बाणस्तेन मन्मथसदृशस्य रामस्य रामरूपस्य वा मन्मथस्य (कामस्य) शरेणेत्यर्थः । **हृदये** मनसि वक्षसि वा । 'हृदयं मानसे वुक्कोरसोरपि नपुंसकम् ।' इति मेदिनी । **ताडिता** । प्रहृता । अत एव-**गन्धवद्रुधिरचन्दनोक्षिता** प्रशस्तो गन्धोऽस्यास्तीति, गन्धवद् यद्रुधिरचन्दनं रुधिरस्य कुङ्कुमस्य चन्दनं रुधिरं चन्दनमिवेति वा तेनोक्षिता सिक्ता लिप्ता वेति तथोक्ता । 'रसादिभ्यश्च ।' ५।२।९५ इति मतुप् । 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः ।' ८।२।९ इति मस्य वः । 'रुधिरं कुङ्कुमासृजोः ।' इति विश्वः । **सा** प्रस्तुतवर्णना । **निशाचरी** । राक्षसी निशायामभिसारिका वा । **जीवितेशवसतिं** जीवितेशो यमः प्रियो वा तस्य वसतिः स्थानमिति ताम् । 'प्रियार्की जीवितेशाना' विति गोपालः । 'वसतिः स्यात्स्त्रियां वासे यामिन्यां च निकेतने ।' इति मेदिनी । **जगाम** । रघुवंशस्येदं पद्यम् । अत्र बीभत्सः शृङ्गारश्चेति रसद्वयी । तत्राद्यः प्रकृतानुप्रसक्तः, अन्त्यस्तु केवलं कविना प्रत्यायित एव । रथोद्धता छन्दश्च, तल्लक्षणं चोक्तं प्राक् ॥ १०८ ॥'

अत्रेदं बोध्यम्-शराघात आलम्बनं, तस्य दुःसहत्वमुद्दीपनं, रुधिरोक्षितत्वमनुभावश्चेत्येवं मरणमभिव्यज्यते ।

अत्र मरणं शस्त्रपाताद्यैर्मूर्च्छाऽङ्गपतनादिकृत् । यथा-'आसाद्य भीमं पतितोऽपि चित्रं सुयोधनः साधुकृतार्थ एव । विहातुमिच्छन्नपि यत्समाधिं न जातु शक्नोति पुनः प्रकामम् ॥' इति पाठान्तरं मन्यते केचित् । अत एव रसगङ्गाधरकारा अप्याहुः-"**रोगादिजन्या मूर्च्छारूपा मरणप्रागवस्था मरणम्** । न चात्र प्राणवियोगात्मकं मुख्यं मरणमुचितं ग्रहीतुम् । चित्तवृत्त्यात्मकेषु भावेषु तस्य अप्रसक्तेः । भावेषु च सर्वेषु कार्य्यसहवर्त्तितया शरीरप्राण-

अथालस्यम्

**१९८ आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भासितादिकृत् ॥ १८२ ॥**

यथा-

**'न तथा भूषयत्यङ्गं न तथा भाषते सखीम् । जृम्भते मुहुरासीना बाला गर्भभराकुला १०९॥'**

---

संयोगस्य हेतुत्वात् । उदाहरणम्-'दयितस्य गुणाननुस्मरन्ती शयने सम्प्रति या विलोकिताऽऽसीत् । अधुना खलु हन्त सा कृशाङ्गी गिरमङ्गीकुरुते न भाषिताऽपि ॥' प्रियविरहोऽत्र विभावः । वचनविरामोऽनुभावः । हन्तपदस्यात्रा-त्यन्तमुपकारकत्वाद्वाक्यव्यङ्ग्योऽप्ययं भावः पदव्यङ्ग्यतामावहति । एतेन भावस्य पदव्यङ्ग्यतायां नात्यन्तं वैचित्र्यमिति परास्तम् । दयितस्य गुणाननुस्मरन्तीत्यनेन व्यज्यमानं चरमावस्थायामपि तस्या दयितगुणविस्मरणं नाभूदिति वस्तु-विप्रलम्भस्य शोकस्य वा चरममभिव्यक्तस्य पोषकम् । अयं च भावः । स्वव्यञ्जकवाक्योत्तरवर्त्तिना वाक्यान्तरेण सन्दर्भघटकेन नायिकादेः प्रत्युज्जीवनवर्णने विप्रलम्भस्य, अन्यथा तु करुणस्य पोषक इति विवेकः । कवयः पुनरमुं प्राधान्येन न वर्णयन्ति, अमङ्गलप्रायत्वात् ॥'' इति । 'साक्षादपिस्थाने, भवन्तु चित्तवृत्तिरूपा भावाः, 'विषयाभिनिवेशेन नात्मानं यत्स्मरेत्पुनः । जन्तोर्वै कस्यचिद्धेतोर्मृत्युरत्यन्तविस्मृतिः ॥' इत्याद्युक्तदिशैतत्स्थूलशरीरसम्बन्धत्यागेऽपि यावल्लिङ्गशरीरं तावदस्यापि चित्तवृत्त्यात्मकत्वं निर्बाधम् । अत एवोक्तं 'मृत्युरत्यन्तविस्मृति'रिति । अन्यथा महतामपि तेषांतेषां तदातदा मूर्च्छां मरणमिति स्मृतिं लेभे ।' इत्यन्ये ।

आलस्यं लक्षयितुं प्रतिजानिते-अथ मरणोदाहरणानन्तरम् । **आलस्यं** । लक्ष्यते-१९८ **आलस्यं**.. इत्यादिना ।

१९८ '**श्रमगर्भाद्यैः** श्रमश्च गर्भश्चेति तावाद्यौ येषां ( जागरणादीनां ) तैः । श्रमोऽध्वगमनादिना क्लान्तत्वं, गर्भो गर्भे बालधारणम, उपचारात्तेन क्लमः । **जृम्भाऽऽसितादिकृत्** । आसितमेकत्र स्थितिः । आदिनाऽङ्गपतनादि । **जाड्यम्** । **आलस्यम्** । तदुक्तम्-'**अतितृप्तिगर्भव्याधिश्रमादिजन्या चेतसः क्रियाऽनुन्मुखताऽऽल-स्यम्** । 'अत्र च नासामर्थ्यम् । नापि कार्याकार्य्यविवेकशून्यत्वम् । तेन कार्य्याकरणरूपस्यानुभावस्य तुल्यत्वेऽपि ग्लानेर्जडतायाश्चास्य भेदः ।' इति ॥ १८२ ॥

उदाहरति-यथा-'न तथा... इत्यादौ ।

'**गर्भभराकुला** गर्भस्य कुक्षिस्थबालस्य भरो भारस्तेनाकुला खिन्नेति तथोक्ता । एतेन शिरसि निहितो भारोऽ-पनेतुमपि कदाचिच्छक्यते, तेन न तथा क्लेशो यथाऽनेनेति युक्तमस्या आकुलात्वमिति सूचितम् । 'गर्भो भ्रूण इमौ समौ ।' इत्यमरः । **बाला** न तु प्रगल्भा । **आसीना** । 'आस्' उपवेशने । 'लक्षणहेत्वोः क्रियायाः ।' ३।२।१२६ इति शानच् । 'ईदासः ।' ७।२।८३ इतीत्त्वम् । **मुहुः** पुनःपुनः । 'यथे'ति शेषः । **जृम्भते** मुखं व्यादत्ते । **तथा** । **अङ्गं** शरीरं करचरणादिरूपं शरीरावयवं वेति भावः । 'अङ्गं गात्रे प्रतीकोपाययोः पुम्भूम्नि नीवृति । क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके ॥' इति मेदिनी । **न** नैव । **भूषयति** । **तथा** । **सखीम्** । 'अपी'ति शेषः । न नैव । **भाषते** । यद्यपि कदाचित् सख्यादीनामाग्रहान्माङ्गल्यचिह्नत्वाद्वाऽङ्गमपि भूषयति सखीमपि भाषते किन्तु यथा मुहुरुपविशन्ती जृम्भते तथा नेति भावः । अत्र श्लोकश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १०९ ॥'

इदं बोध्यम्-बालाया बाल्यमालम्बनं, गर्भभराकुलत्वमुद्दीपनं, जृम्भणं चानुभाव इत्येवौदासीन्यमभिव्यज्यते ।

यथा वा मम-'युधि साम्प्रतमेव वीक्षिता ये शितशस्त्रा रुषिता समुन्नदन्तः । विनमन्त इवापि शेरतेऽमी बत हा मुञ्च विमुञ्च नाथ ! शार्ङ्गम् ॥' इति शार्ङ्गिणोऽवलोकनमालम्बनं, शार्ङ्गतो बाणानां निपत्यनिपत्याहननमुद्दीपनं, भुवि शयनमनु-भावश्चेत्येवं मरणमभिव्यज्यते ।

**अथामर्षः**—

**१९९ निन्दाऽऽक्षेपापमानादे-रमर्षोऽभिनिविष्टता ।**
**नेत्ररागशिरःकम्प-भ्रूभङ्गोत्तर्जनादिकृत् ॥ १८३ ॥**

**यथा**—

**'प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात् । न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतम् ॥ ११० ॥'**

**अथ निद्रा**—

**२०० चेतःसम्मीलनं निद्रा, श्रमक्लममदादिजा ।**
**जृम्भाऽक्षिमीलनोच्छ्वास--गात्रभङ्गादिकारणम् ॥ १८४ ॥**

---

अमर्षं लक्षयितुं प्रतिजानीते—अथेत्यादिना ।

**अथ** मरणोदाहरणानन्तरम् । **अमर्षः** । 'लक्ष्यते..१९९ निन्दा..इत्यादिना ।

**१९९ निन्दाऽऽक्षेपापमानादेः** । निन्दा दोषोद्भावनम्, आक्षेपो भर्त्सनम्, अपमानस्तिरस्कारः, आदिनाऽ-मिष्टाचरणानन्तरम् । **नेत्ररागशिरःकम्पभ्रूभङ्गोत्तर्जनादिकृत्** नेत्र (योः) रागश्च शिरः (सः) कम्पश्च भ्रू (भ्रुवोः) भङ्गश्चोत्तर्जनादि चेति तानि करोतीति तथोक्ता । रागो रक्तवर्णत्वम्, भङ्गः कौटिल्यम् । आदि परुषोक्त्यादिग्राहकम् । रञ्जनं रागः । 'भावे ।' ३।३।१८ इति घञ् । 'घञि च भावकर्म्मणोः ।' ६।४।२७ इति नलोपः । 'भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये । कौटिल्ये भयविच्छित्त्यो'रिति हैमः । **अभिनिविष्टता**ऽभिनिवेशोऽत्यन्तमाग्रहः । **अमर्षः** । 'मत' इति शेषः ॥ १८३ ॥

उदाहरति—**यथा**—'**प्रायश्चित्तं**... इत्यादी ।

**पूज्यानां** पूजाऽर्हाणाम् । **वो** युष्माकम् । 'वसिष्ठशतानन्दविश्वामित्राणा'मिति शेषः । **व्यतिक्रमात्** प्रति-कूलाचरणात् । 'पूतं भजस्व पन्थानम् ।' इत्यादिरूपाया अनुज्ञाया अनाचरणं कृत्वेति भावः । **प्रायश्चित्तं** प्रायस्य पापस्य चित्तं शोधनमिति तत् । 'प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम् ।' इति स्मरणम् । 'प्रायस्य चित्तिचित्तयोः ।' इति सुडागमः । **चरिष्याम्या**चरिष्यामि । **न तु** न पुनरित्यर्थः । **शस्त्रग्रहमहाव्रतं** शस्त्र(स्य)ग्रह एव महाव्रतमवश्य-मनुष्ठेयमिति तत् । महच्च तद् व्रतमिति महाव्रतम् । **एवं** युष्माकमभ्यनुज्ञामात्रेणेति भावः । **दूषयिष्यामि**। महावीरचरिते जामदग्न्यस्येयमुक्तिः । अत्र श्लोकश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ११० ॥'

अयम्भावः—शैवस्य धनुषो भङ्ग आलम्बनं, तस्य क्षत्रियकुमारकर्त्तृकत्वमुद्दीपनं, पूज्यानामप्यनुज्ञाननुपालनमनुभाव-श्चेत्येवममर्षोऽभिव्यज्यते । अत्र च—'लाक्षागृहानल–विषा–न्न–सभाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य । आकृष्य पाण्डववधू-परिधान-केशान् स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः ॥' इत्युदाहरणमपि लभ्यते । परिधानं च केशाश्चेति तान् । 'स्वस्था भवन्त्वि'ति काकूक्तिः, तथा च 'मा भूवन्स्वस्था' इत्यर्थः । यद्वा—स्वः स्वर्गे तिष्ठन्तीति स्वस्थाः । 'खर्परे शरि वा विसर्गलोपो वक्तव्यः * ।' इति विसर्जनीयलोपः । तथा च—स्वर्गे स्थिता भवन्तु म्रियन्ता-मित्यर्थः । मयि भीमसेन इत्यर्थः । अन्यत्पुरस्ताद् व्याख्यास्यते ॥'

निद्रां लक्षयितुं प्रतिजानीते—अथेत्यादिना ।

**अथा**मर्षोदाहरणानन्तरम् । **निद्रा** । लक्ष्यते–२०० **चेतः**..इत्यादिना ।

२०० **श्रमक्लममदादिजा** । श्रमो व्यापारप्रयासः, क्लमो मनःखेदः, मदो मद्यादिपानजन्यो विकारः । आदिना रात्र्यादीनां ग्रहणम् । **जृम्भाऽक्षिमीलनोच्छ्वासगात्रभङ्गादिकारणम्** । आदिना व्यापारान्तरेऽनुत्साहादि । **चेतःसम्मीलनं** चेतसो मध्यनाडीप्रवेशेन निश्चलत्वम् । **निद्रा** । 'मते'ति शेषः ॥ १८४ ॥

यथा—

'सार्थकानर्थकपदं ब्रुवती मन्थराक्षरम् । प्रियाऽर्धमीलिताक्षी सा लिखितेवास्ति मे हृदि ॥१११॥'

अथावहित्था—

२०१ भयगौरवलज्जाऽऽदे-र्हर्षाद्याकारगुप्तिरवहित्था ।
व्यापारान्तरसक्त्य-न्यथाऽवभाषणविलोकनादिकरी ॥ १८५ ॥

यथा—

'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी । लीलाकमलपत्राणि गणयामास पार्वती ॥ ११२ ॥

---

उदाहरति-यथा-'सार्थका..'इत्यादौ ।

'सा प्रस्तुतसौन्दर्य्यप्रशंसेति भावः । **सार्थकानर्थकपदं** सार्थकानि चानर्थकानि चेति तानि पदानि यत्र तद्यथा भवेत्तथा । **मन्थराक्षरं** मन्थराणि मन्दमुच्चार्य्यमाणानि अक्षराणि यत्र तद्यथा भवेत्तथा । **ब्रुवती** कथयन्ती सतीत्यर्थः । **अर्धमीलिताक्षी** । **प्रिया** । 'निद्रा मीलिताक्षी'ति तु न युक्तम् । उदाहियमाणस्य भावस्य वाच्यत्वापत्तेः । **मे** मम । **हृदि** वक्षसि । **लिखितेव** । **अस्ति** । 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा ।' ३।३।१३१ इत्यासीदित्यर्थे । 'आसे'ति पाठे तु रराजेत्यर्थः । आमोदे चित्तविक्षेपाल्लिङ्गा अत्र श्लोकश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १११ ॥'

अयम्भावः-विपरीतरतिरालम्बनं, प्रियं पराजेतुमुत्कण्ठोद्दीपनं, सार्थकानर्थकमन्थराक्षरोच्चारणपुरःसरं वक्षसि लिखितवदवस्थानमनुभावश्चेति निद्राऽभिव्यज्यते ।

यथा वा-'सा मदागमनबृंहिततोषा जागरेण गमिताखिलदोषा । बोधिताऽपि बुबुधे मधुपैर्न प्रातराननजसौरभलुब्धैः॥' इति । अत्र हि रात्रिजागरणमालम्बनं, तत् खेद उद्दीपनं, बन्दिभिरिव मधुपैर्बोध्यमानाया अपि बोधाभावोऽनुभाव इति निद्राऽभिव्यज्यते ।

अवहित्थां लक्षयितुं प्रतिजानीते-अथ निद्रोदाहरणानन्तरम् । **अवहित्था** लक्ष्यते-२०० **भय...**इत्यादिना ।

२०१ **भयगौरवलज्जादेः** । आदिना धाष्टर्यादेर्ग्रहणम् । तथोक्तम्-'अनुभावपिधानार्थोऽवहित्थं भाव उच्यते । तद्विभाव्यं भयव्रीडाधाष्टर्यकौटिल्यगौरवैः ॥' इति । **व्यापारान्तरसक्ति** व्यापारान्तरे सक्तिरासक्तिर्यत्रासौ यथा भवेत्तथा । **अन्यथा** प्रकारान्तरेण । **अवभाषणविलोकनादिकरी** । आदिना भ्रमणादीनां ग्रहणम् । **हर्षाद्याकारगुप्तिर्**हर्षादीनाकारयत्याविष्करोतीति, तस्य ( मुखविकासादेः ) गुप्तिर्गोपनम् । 'कर्मण्यण् ।' ३।२।१ इत्यण् । 'आदिना शोकादीनां ग्रहणम् । **अवहित्था** । 'उच्यत' इति शेषः । गीतिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥१८५॥

उदाहरति- यथा-'एवं... इत्यादौ ।

'**एवंवादिनि** निर्दिष्टप्रकारेण कथयति सतीति भावः । **देवर्षा** वङ्गिरसी'ति शेषः । **पितुर्हिमालयस्ये**'ति शेषः । **पार्श्वे** । **अधोमुखी** 'लोकलज्जाभयेने'ति शेषः । **पार्वती** । **लीलाकमलपत्राणि** लीलायाः कमलं तस्य पत्राणीति तानि । **गणयामास** संचख्यौ । शङ्करेण समं विवाहार्थमङ्गिरसा देवर्षिणा याच्यमाने स्वपितरि प्रमोदवशात्तदन्तिके च ह्रातुमशक्ता लज्जयाऽधोमुखीभूय लीलार्थं धृतस्य कमलस्य पत्रगणनव्याजेन तदनुमोदनं स्वहर्षं जुगोपेति भावः । कुमारसम्भवस्येदं पद्यम् । श्लोकश्छन्दः, लक्षणं चोक्तं प्राक् ॥ ११२ ॥'

अत्रायम्भावः-शङ्करगता रतिरालम्बनं, देवर्षेस्तदर्थो यत्न उद्दीपनं, तत्र स्वानुमतिव्यञ्जनार्थमवस्थानमनुभावस्तद्दिति व्यज्यमानस्य हर्षस्य लीलार्थं धृतस्य कमलस्य पत्रगणनया गोपनादवहित्थाऽभिव्यज्यते ।

यथा वा महावीरचरिते रावणस्य मन्दोदर्य्याः पुरस्ताद्भयस्य धाष्टर्येन गोपनम्, नैषधे च श्रीनलस्य सभायां दमयन्तीविषयकानुरागस्य मूर्च्छनादिना । एवमन्यत्रापीति दिक् ।

अथौत्सुक्यम्-

२०२ इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ।
चित्ततापत्वरास्वेद-दीर्घनिःश्वसिताऽऽदिकृत् ॥ १८६ ॥

यथा—'यः कौमारहरः स एव हि वरः...'इत्यादि ।

अत्र यत् काव्यप्रकाशकारेण रसस्य प्राधान्यमित्युक्तं तद्रसनधर्म्मयोगित्वाद् व्यभिचारिभावस्यापि रसशब्दवाच्यत्वेन गतार्थं मन्तव्यम् ।

अथोन्मादः-

२०३ चित्तसम्मोह उन्मादः कामशोकभयादिभिः ।
अस्थानहासरुदित--गीतप्रलपनादिकृत् ॥ १८७ ॥

---

औत्सुक्यं लक्षयितुं प्रतिजानीते-अथ । औत्सुक्यम् । 'लक्ष्यते-२०२ इष्टा...इत्यादिना ।

२०२ इष्टानवाप्तेरिष्टस्य (प्रियसङ्गमादेः) अनवाप्तिः प्राप्त्यभावस्तस्याः । चित्ततापत्वरास्वेददीर्घनिःश्वसितादिकृत् । आदिनेतस्ततो विलोकनादि । कालक्षेपासहिष्णुता कालस्य क्षेपोऽत्ययस्तस्यासहिष्णुताऽसहनशीलत्वम् । औत्सुक्यम् । 'मत'मिति शेषः ॥ १८६ ॥

उदाहरणं दर्शयति-यथा-'यः कौमारहरः स एव हि वरः...'इत्यादि । 'तथाऽन्यदप्युदाहरणं द्रष्टव्य'मिति शेषः ।

इदं तत्त्वम्—नायकेन समं विलासस्य कियन्तं समयमभाव आलम्बनं वसन्ताद्युद्दीपनं, तस्यतस्यानुगुण्योद्भावनमनुभावश्चेत्येवमौत्सुक्यं प्रतीयते । इति ।

ननु यदिह भावस्यास्यैवाभिव्यक्तिः कथं तर्हि काव्यप्रकाशकारैः'रसस्य च प्राधान्यान्नालङ्कारते'त्युक्तमिति चेदत्रभिलाह-

अत्रास्मिन्नुदाहृते पद्य इति यावत् । काव्यप्रकाशकारेण मम्मटाचार्य्येण । रसस्य । प्राधान्यम् । इतीत्येवम् । यत् । उक्तम् । तद्रसस्य प्राधान्यमिति वच इत्यर्थः । रसनधर्म्मयोगित्वाद् रसनधर्म्मस्य ('रस्यत आस्वाद्यत'इति रसनं तदेव धर्मस्तस्य) योगित्वं योगस्तस्मात् । व्यभिचारिभावस्य व्यभिचारिभावरूपस्यास्यौत्सुक्यस्येत्यर्थः । अपि । रसशब्दवाच्यत्वेन । गतार्थं गतः सम्पन्नोऽर्थस्तात्पर्य्यं यस्य तत् । मन्तव्यम् । तथोक्तं-'रसपदं चात्र सम्भोगव्यभिचार्य्यौत्सुक्यमाह-'रस्यतआस्वाद्यत'इति व्युत्पत्त्या, न तु सम्भोगनामा रसः, स्वाधीनपतिकायाः क्रीडास्थानं प्रत्यौत्सुक्यस्य वर्णनीयत्वा'दिति । एवं च-'अत्र विप्रलम्भो रस'इति व्याचक्षाणा अपि परास्ताः, 'स एव हि वर'इत्यादिना नायकस्य तदानीं तत्रैवावस्थानाद्विप्रलम्भस्य वक्तुमशक्यत्वात् । अयम्भावः—'रस्यत आस्वाद्यत'इति व्युत्पत्त्यौत्सुक्यस्यापि रसस्येव रसनाख्यधर्म्मविशिष्टत्वम् । युज्यते चैवौ'त्सुक्यस्य च प्राधान्या'दित्यनभिधाय 'रसस्य च प्राधान्यादित्य'भिधातुम् । इति ।

यथा वा मम-'उदियाद् यदि चन्द्रमाः सदा यदि वा चण्डकरो विलीयताम् । दयितं विजहातु का पुनः सुखिता वा न चिराय का भवेत् ॥' इति । दयितविरह आलम्बनं, चण्डकरस्य तत्र हेतुत्वमुद्दीपनं, तदिति चण्डकरस्य विलयार्थं चन्द्रमसः पुनरुदयार्थमाशंसनमनुभावश्चेत्येवमौत्सुक्यमभिव्यज्यते ।

उन्मादं लक्षयितुं प्रतिजानीते-अथौत्सुक्योदाहरणानन्तरम् । उन्मादः । लक्ष्यते-२०३ चित्त..इत्यादिना ।

२०३ कामशोकभयादिभिः । आदिना परमानन्दादि । अस्थानहासरुदितगीतप्रलपनादिकृत् । आदिना—असम्बद्धभाषणादि । चित्तसम्मोहश्चित्तस्य सम्मोहोऽन्यस्मिन्नन्यावभासरूपो मोहः । उन्मादः 'उच्यत' इति शेषः । अत्राहुः—'उन्मादस्य व्याधावन्तर्भावे सम्भवत्यपि पृथगुपादानं व्याध्यन्तरापेक्षया वैचित्र्यविशेषस्फोरणाय ।' इति । ॥ १८७ ॥

यथा मम-

'भ्रातर्द्विरेफ ! भवता भ्रमता समन्तात् प्राणाधिका प्रियतमा मम वीक्षिता किम् ?

(झङ्कारमनुभूय-सानन्दम्)

ब्रूषे किमोमिति ? सखे ! कथयाशु तन्मे किंकिं व्यवस्यति ? कुतोऽस्ति ? च कीदृशीयम् ॥११३॥'

अथ शङ्का-

२०४ परक्रौर्य्यात्मदोषाद्यैः शङ्काऽनर्थस्य तर्कणम् ।
वैवर्ण्यकम्पवैस्वर्य्य--पार्श्वालोकास्यशोषकृत् ॥ १८८ ॥

यथा मम-

'प्राणेशेन प्रहितनखरेष्वङ्ककेषु क्षपाऽन्ते जातातङ्का रचयति चिरं चन्दनालेपनानि ।
धत्ते लाक्षामसकृदधरे दत्तदन्तावघाते क्षामाङ्गीयं चकितमभितश्चक्षुषी विक्षिपन्ती ॥११४॥'

---

उदाहरति-यथा । मम 'भ्रातर्द्विरेफ..इत्यादौ ।

'हे भ्रातर्भ्रातृवत्स्वाभाविकबन्धो इति भावः । द्विरेफ भ्रमर ! समन्तात्सर्वतः । भ्रमता भ्रमणं कुर्वता भ्रमणकरणशीलेनेति यावत् । भवता । आदरोक्तिरियम् । किम् । मम । तव बन्धोरिति भावः । प्राणाधिका प्राणेभ्योऽधिकाऽतिशयिता । अत एव-प्रियतमाऽत्यन्तं प्रिया । वीक्षिता दृष्टा ? (झङ्कारं झमित्यव्यक्तं शब्दम् । अनुभूय विज्ञाय । सानन्दम्) किम् । ओमेवं स्वीकरोमीति यावत् । 'ओमेवं परमं मतम् ।' इत्यमरः । इतीत्थेवम् । ब्रूषे ? सखे ! तत्तर्हि । मे मह्यम् । आशु । कथय । इयं मम प्रियतमा । किंकिम् । अत्र सम्भ्रमेण द्विरुक्तिः । व्यवस्यति निश्चिनोति । कुतः कुत्र । अस्ति ? च तथा । कीदृशी किंस्वरूपाऽस्तीति भावः । अत्र वसन्ततिलका छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ११३ ॥'

इदम्बोध्यम्-प्रियावियोग आलम्बनं, स्मर्य्यमाणं च तत्सौन्दर्यमुद्दीपनं, भ्रमरं प्रति प्रश्नोऽनुभावश्चेत्येवमुन्मादोऽभिव्यज्यते ।

यथा वा-' का त्वं चिकीर्षसि च किं मुनिवर्य्य ! शैले मायाऽसि काऽपि भगवत्परदेवतायाः । विज्ये बिभर्षि धनुषी सुहृदात्मनोऽर्थे किं वा मृगान्मृगयसे विपिने प्रमत्तान् ॥' इत्यादौ ।

शङ्कां लक्षयितुं प्रतिजानीते-अथोन्मादोदाहरणानन्तरम् । शङ्का । लक्ष्यते-२०४ पर..इत्यादिना ।

२०४ परक्रौर्य्यात्मदोषाद्यैः । आद्यपदेन दुर्दैवादीनां ग्रहणम् । वैवर्ण्यकम्पवैस्वर्य्यपार्श्वालोकास्यशोषकृत् । अनर्थस्य । तर्कणं सम्भावना । शङ्का । 'मते'ति शेषः ॥ १८८ ॥

उदाहरति-यथा । मम । 'प्राणेशेन..इत्यादौ ।

'क्षपान्ते क्षपाया अन्तोऽवसानं तस्मिन्सति । जातातङ्का जात आतङ्कः पीडा सन्तापो वा यस्याः सा । 'रुक्तापशङ्कास्वातङ्क'इत्यमरः । अतः-क्षामाङ्गी क्षामाणि क्षीणानि कृशतां दुर्बलतां वा प्राप्तान्यङ्गानि यस्याः सा । इयम् । 'प्रिये'ति शेषः । प्राणेशेन प्राणानामीशो निग्रहानुग्रहकर्म्मणि समर्थः, यत्कृते प्राणा अपि तुच्छास्तादृश इति वा, तेन । प्रहितनखरेषु प्रहिता(नि) न्यस्ता(नि) नखरा(णि) नखा(नि) उपचारेण तदाघातचिह्नानि यत्र तेषु । अङ्ककेषु स्वल्पानि कृशतया कोमलतया वाऽङ्गानि तेषु । 'अल्पे ।' ५।३।८५ इति कन् । चन्दनालेपनानि चन्दनस्यालेपनानि समन्तात्लेपव्यापारास्तानि । चिरं शङ्कायाः पुनःपुनराविर्भावाद्दीर्घसमयावधीति भावः । रचयति विधत्ते । दत्तदन्तावघाते दत्तो दन्तावघातो यत्र तत्र । अधरे । चकितं यथा भवेत्तथा । अभितः सर्वतः । चक्षुषी नेत्रे । विक्षिपन्ती 'सती'ति शेषः । असकृद्वारंवारम् । लाक्षामुपचारात् तद्रसमिति भावः । धत्ते निधत्ते सिञ्चतीति यावत् । मुग्धेयं नायिका। एतस्याश्चेष्टां निदर्शयन्त्या नायिकासख्या नायकं प्रत्युक्तिः। अत्र मन्दाक्रान्ता छन्दः, तल्लक्षणं चोक्तं प्राक्॥११४॥'

अथ स्मृतिः—

२०५ सदृशज्ञानचिन्ताऽऽद्यै-र्भूसमुन्नयनादिकृत् ।
स्मृतिः पूर्वानुभूतार्थ-विषयं ज्ञानमुच्यते ॥ १८९ ॥

यथा मम—

'मयि सकपटं किञ्चित्क्वापि प्रणीतविलोचने किमपि नयनं प्राप्ते तिर्य्यग्विजृम्भिततारकम् ।
स्मितमुपगतामालीं दृष्ट्वा सलज्जमवाञ्चितं कुवलयदृशः स्मेरं स्मेरं स्मरामि तदाननम् ॥११५॥'

---

अत्रेदं बोद्धव्यम्—नायककृतो नखदन्ताघातः आलम्बनं, तस्य पुनः प्रातः प्रेक्षणमुद्दीपनं, तत्रतत्र चन्दनालेपादि-विधानमनुभावश्चेत्येवं शङ्काऽभिव्यज्यते ।

यथा वा—'विधिवञ्चितया मया न यातं सखि ! सङ्केतनिकेतनं प्रियस्य । अधुना बत किं विधातुकामो मयि कामो नृपतिर्निहन्त जाने ॥' इति । अत्र हि कामदेवो नृपतित्वेन वर्ण्यमान आलम्बनं, तस्यापराधरूपस्य प्रियसङ्केतं निकेतनं प्रति गमनाभावस्य स्मरणमुद्दीपनम्मुखवैवर्ण्याद्याक्षिप्यमाणमनुभावश्चेत्येवं शङ्काऽभिव्यज्यते ।

स्मृतिं लक्षयितुं प्रतिजानीते—**अथ** शङ्कोदाहरणानन्तरम् । **स्मृतिः** लक्ष्यते—२०५ **सदृश**.. इत्यादिना ।

२०५ **सदृशज्ञानचिन्ताऽऽद्यैः** सदृश ( स्य ) ज्ञानचिन्ते आद्ये येषां ( सम्बन्धिज्ञानादीनां ) तैः, सदृशज्ञानं च चिन्ताऽऽद्ये चेति तैरिति वा तथोक्तैः । चिन्ताऽऽद्या ययोः ( सम्बन्धिज्ञानादृष्टज्ञानयोः ) ते चिन्ताऽऽद्ये । सदृशं तद्भिन्नं सत्तद्गतभूयोधर्म्मवत्, यथा मुखस्य कमलम् । ज्ञानं बुद्धिः । चिन्ता ज्ञानजन्या भावना; एवं च ज्ञानस्य भावनो-द्बोधनद्वारा भावनायाश्च साक्षात् कारणत्वमिति ध्वनितम् । सम्बन्धि यथा मुखस्य भाषणं, कमलस्य भ्रमरादि वा । अदृष्टं प्रारब्धम् 'बुद्धिरनुभव' इति 'भावना संस्कार' इति चानर्थान्तरम् । एवं च—'अनुभवजन्या स्मृतिहेतुर्भावना' इति, 'संस्कारजन्यं ज्ञान' मिति च स्थाने । **भ्रूसमुन्नयनादिकृत्** । नेत्रादिविकारादि । **पूर्वानुभूतार्थविषयं** पूर्वम-नुभूतो योऽर्थः पदार्थः स एव विषयो यस्य तत् । **ज्ञानम्** । **स्मृतिः** । **उच्यते** ॥ १८९ ॥

उदाहरति—**यथा** । **मम** । '**मयि...** इत्यादौ ।

'**क्वापि** कस्मिंश्चित्कमल' इति शेषः । **किञ्चित्** । **प्रणीतविलोचने** प्रणीते प्रवर्त्तिते विलोचने ( विशिष्टे सस्पृहत्वाद्विस्फारं प्राप्ते लोचने ) येन तादृशे । **मयि** 'नायक' इति शेषः । **सकपटं** 'मधुपः कमलमिव माऽयं मां पा' दिति कपटपूर्वकं सन्निधीयमानमिति भावः । अथ—**विजृम्भिततारकं** विजृम्भिता सस्पृहं व्यापादिता तारका यस्मिन् कर्म्मणि तत्तथा । **किमपि** किञ्चित्, अनिर्वचनीयं वा । **नयनं** 'नायिकाया' इति शेषः । नायिकाया नयनविषयता-मित्यर्थः । **प्राप्ते** 'मयी'ति शेषः । **तिर्य्यक्** तिर्य्यग्भूतमित्यर्थः । अत एव—**स्मितं** ( आवयोर्भावमुन्नीय ) मन्दहासम् । **उपगतां** प्राप्ताम् । **आलीं** सखीम् । **दृष्ट्वा** । **सलज्जं** लज्जया सहितं यथा स्यात् तथा । **अवाञ्चितम्** आनमितम् । **तत्** मनोविजयत्वेनाह्लादयमानम् । **कुवलयदृशः** कुवलयवन्नीलकमलवद्दृशौ यस्यास्तस्याः । 'कुवलयमिन्दीवरं च नीलाब्जम् ।' इति नाममाला । 'प्रियाया' इति शेषः । **स्मेरम्** ईषद्धास्ययुक्तम् । अत एव—**स्मेरं** विकसितम् । **आननं** मुखम् । **स्मरामि** । मरुता परिभूयमानेनापि मधुपेन पुनःपुनर्निपीयमानं कमलं विलोक्य तथैव प्रियाया वदनं पातुं जातायां स्पृहायां कदाचिदनुभूतं प्रियायाः स्मितोद्गारं स्मरतः कस्याप्युक्तिरियम् । अत्र हरिणी छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ११५ ॥'

अत्रायम्भावः—मधुपेन निपीयमानं कमलं दृष्ट्वा प्रियाया वदनं पातुं स्पृहाऽऽसीदित्येतावता स्मृतिर्ध्वन्यते इति सहृदयाः; न तु स्मरामीत्यनेन, तथा तस्यावाच्यत्वाच्चमत्कारानुदयाच्च । तथा च—कमलं वदनसदृशमिति कमलं दृष्ट्वोद्बुद्धया भावनया वदनं स्मृतं, स्वसदृशं च मधुपपानमिति मधुपेन क्रियमाणं पानं दृष्ट्वोद्बुद्धया भावनया पानं स्मृतमिति कमलं वदनस्मृतौ मधुपपानं पुनः स्वपान आलम्बनं, प्रियासन्निधिश्चोद्दीपनं, विजृम्भिततारकं यथा भवेत्तथा पातुं प्रवृत्तिरनुभाव-

**अथ मतिः-**

**२०६ नीतिमार्गानुसृत्यादे-रर्थनिर्द्धारणं मतिः।**
**स्मेरताधृतिसन्तोषा बहुमानश्च तद्भवाः॥ १९०॥**

**यथा-**

**'असंशयं क्षत्रपरिग्रहक्षमा यदार्य्यमस्यामभिलाषि मे मनः।**
**सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥ ११६॥'**

---

श्चेत्येवं स्मृतिर्ध्वन्यते। यथा वा-'तन्मञ्जु मन्दहसितं श्वसितानि तानि सा वै कलङ्कविधुरा मधुराननश्रीः। अद्यापि मे हृदयमुन्मदयन्ति हन्त सायन्तनाम्बुजसहोदरलोचनायाः॥' इति। अत्र हि अदृष्टज्ञानमालम्बनं, चिन्ताविशेष उद्दीपनम्, आक्षेपगम्या भ्रून्नतिगात्रनिश्चलत्वादयश्चानुभावा इति स्मृतिर्ध्वन्यते। यथा वा मम-'विकसत्कमलं वीक्षे यदा यदा वा सुधांशुमुद्यन्तम्। सुमुखि! तदाऽहं तत्र त्वन्मुख इव हन्त लुभ्यामि॥' इति, अत्र हि कमलं सुधांशुश्चेत्येतद्द्वयं त्वन्मुखसदृशमिति तस्येक्षणमात्रेण त्वन्मुखस्मृतेरुद्रेके तत्रैव लुभ्यामीत्यभिहितम्, तथा च कमलविकासस्य सुधाकरोदयस्य च युगपदसम्भवात् कमलं सुधाकरो वाऽऽलम्बनं, तयोरेकतरस्य विकास उदयो वोद्दीपनं, 'तत्र त्वन्मुख इव लुभ्यामी' त्यावेद्यमानः स्वस्य तत्र तथा स्पृहाऽतिशयोऽनुभावश्चेति स्मृतिर्ध्वन्यते। इति।

मतिं लक्षयितुं प्रतिजानीते-अथ स्मृत्युदाहरणानन्तरम्। **मतिः**-लक्ष्यते-२०६ **नीति**...इत्यादिना।

२०६ **नीतिमार्गानुसृत्यादे**र्नीतिमार्गस्य नीतिशास्त्रस्यानुसृतिरनुसरणमित्यसावादिर्यस्य (अनुमानादेः) तस्मात्। **अर्थनिर्धारणम्। मतिः।** 'उच्यत' इति शेषः। **तद्भवा**स्तस्या भवन्त्युत्पद्यन्त इति ते। **स्मेरताधृतिसन्तोषाः** स्मेरता (मन्दहासान्वितता) च धृतिसन्तोषौ चेति ते। स्मेरतेति धृतिसन्तोषाविति पृथक्पाठोऽपि। **च** तथा। **बहुमानो**ऽत्यन्तं स्वात्मनि गुरुत्वप्रत्ययः। 'सम्भवन्ती'ति शेषः॥ १९०॥

उदाहरति-**यथा**। '**असंशयं**.. इत्यादौ।

'**असंशयं** न संशयो यत्र (कर्म्मणि) तद् यथा स्यात्तथेत्यर्थः। **क्षत्रपरिग्रहक्षमा** क्षत्रस्य (क्षत्रियस्य) परिग्रहः (विवाहः) तस्य क्षमा योग्या। 'क्षत्रं क्षत्रियराजन्या'इति नाममाला, 'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोः।'इति विश्वः। 'इय'मिति शेषः। **यद्** यस्माद्धेतोः। **आर्य्यं** पवित्रम्। **मे** मम। इदमर्थान्तरे सङ्क्रमितवाच्यम्। तथा च-आर्य्यस्य (जितेन्द्रियस्य) दुष्यन्तस्येति निष्कृष्टोऽर्थः। **मनः। अस्याम**ज्ञातकुलायां संशयितकुलायां वा परकन्यायाम्। इदमपि। पूर्ववत्। **अभिलाषि**। 'जात'मिति शेषः। यद्वा-यत्। आर्य्यम्। मे। मनः। अस्यां (विषये) अभिलाषि। 'तत'इति शेषः। असंशयं निश्चितं यथा स्यात्तथा। 'इय'मिति शेषः। क्षत्रपरिग्रहक्षमा। इत्यन्वयः। न च प्रमाद एवायमिति वक्तुमर्हसीत्याह-**हि** यतः। **सन्देहपदेषु** सन्देहस्य संशयस्य पदानि स्थानानि तद्रूपाणीति यावत्, तेषु। 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु।' इत्यमरः। **वस्तुषु**। विषये सप्तमीयम्। **सता**मार्य्याणाम्। **अन्तःकरणप्रवृत्तयः। प्रमाणम्**। 'वेदाः प्रमाण' मितिवदुद्देश्यविधेयभावं कल्पयित्वाऽन्वयोऽवगम्यः। शकुन्तलाया अवलोकनमात्रेण तत्र जातायां स्पृहायां 'कथं मुनितनयायामीदृशम्मन'इति गवेषयतो दुष्यन्तस्य 'कृतं सन्देहेने'त्यभिधानान्तरमिदमनुमानम्। अत्र वंशस्थं छन्दः, तल्लक्षणं चोक्तं प्राक्॥ ११६॥'

अयम्भावः-स्वात्मनि जितेन्द्रियत्वप्रत्यय आलम्बनं, तन्निदिध्यासनमुद्दीपनं, शकुन्तलायामभिलाषा युक्तैव जातेत्येवं धृत्यादय आक्षिप्यमाणा अनुभावाश्चेति मतिर्व्यज्यते। इति। यथा वा गङ्गाधरकाराः 'शास्त्रादिविचारजन्यमर्थनिर्द्धारणं मतिः।' इत्यभिधाय अत्र निःशङ्कतदर्थानुष्ठानसंशयोच्छेदादयोऽनुभावाः। उदाहरणम्-'निखिलं जगदेव नश्वरं पुनरस्मिन्नितरां कलेवरम्। अथ तस्य कृते कियानयं क्रियते हन्त मया परिश्रमः॥' 'शरीरमेतज्जलबुद्बुदोपमं...' इत्यादिशास्त्रपर्य्यालोचनमत्र विभावः। हन्तपदगम्या स्वनिन्दा राजसेवाविरतिर्वितृष्णता चानुभावः। झटितिमतेरेव चमत्काराद्ध्वनिहेतुता न शान्तस्य, विलम्बेन प्रतीतेः।' इत्याहुः।

अथ व्याधिः–

२०७ व्याधिर्ज्वरादिर्वाताद्यै–र्भूमीच्छोत्कम्पनादिकृत् ।

तत्र–दाहमयत्वे भूमीच्छादयः, शैत्यमयत्वे तूत्कम्पनादयः । स्पष्टमुदाहरणम् ।

अथ त्रासः–

२०८ निर्घातविद्युदुल्काद्यैस्त्रासः कम्पादिकारकः ॥ १९१ ॥

यथा—

'परिस्फुरन्मीनविघट्टितोरवः सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् ॥११७॥'

---

व्याधिं लक्षयितुं प्रतिजानीते–अथ मत्युदाहरणानन्तरम् । व्याधिः-लक्ष्यते-२०७ व्याधि..इत्यादिना ।

२०७ वाताद्यैर्वातपित्तश्लेष्मप्रियविरहादिभिरित्यर्थः । भूमीच्छोत्कम्पनादिकृद्भूमेरुपचाराच्छीतलदेशस्ये च्छेत्यसौ चोत्कम्पनादीनि चेति, तानि करोतीति तथोक्तः । आदिना श्वसितप्रलपनगात्रप्रक्षेपणादीनि । ज्वरादिरादिनाऽतिसारादिः । व्याधिः । 'उच्यत'इति शेषः ।

अत्रानुभावान् विशेष्य निर्दिशति-तत्र तस्मिन् ज्वरादिरूपे व्याधावित्यर्थः । दाहमयत्वे दाहः प्राचुर्येण प्रस्तुतो यत्र तस्य भावस्तत्त्वं तत्र । 'तत्प्रकृतवचने मयट् ।' ५।४।२१ इति मयट् । 'सती'ति शेषः । भूमीच्छाऽऽदयः । आदिना शैवलोशीराद्युपयोगादयः । 'अनुभावा ज्ञेया' इति शेषः । शैत्यमयत्वे शैत्यं प्राचुर्येण प्रस्तुतं यत्र तस्य भावस्तत्त्वं तत्र । 'सती'ति शेषः । तु पुनः । उत्कम्पनादयः । आदिना जाड्यादीनां ग्रहणम् । 'अनुभावा ज्ञेया' इति शेषः ।

ननु किमस्योदाहरणमित्याशङ्क्याह–उदाहरणम् । स्पष्टम् । इति ।

इदं बोध्यम्–शरीरसम्बन्धनिबन्धनानामपि ज्वरादीनां (तापस्य) मनोमात्रवेद्यतया भावरूपत्वम् । अत एवाहुः–'एकैकशो द्वन्द्वशो वा त्रयाणां वा प्रकोपतः । वातपित्तकफानां स्युर्व्याधयो ये ज्वरादयः ॥ इह तत्प्रभवो भावो व्याधिरित्यभिधीयते ।' इति । उदाहरणं यथा–'हृदये कृतशैवलानुषङ्गा मुहुरङ्गानि यतस्ततः क्षिपन्ती । तदुदन्तपरे मुखे सखीनामतिदीनामियमादधाति दृष्टिम् ॥' इति । अत्र हि प्रियविरह आलम्बनम, आक्षिप्यमाणो वसन्तादिकालश्चोद्दीपनम्, अस्वास्थ्यं चानुभाव इति व्याधिर्व्यज्यते । इति ।

त्रासं लक्षयितुं प्रतिजानीते--अथ व्याध्युदाहरणानन्तरम् । त्रासो । लक्ष्यते–२०८ निर्घात..इत्यादिना ।

२०८ निर्घातविद्युदुल्काद्यैर्निर्घातः 'यदाऽन्तरिक्षे बलवान् मारुतो मरुता हतः । पतत्यधः स निर्घातो जायते वायुसम्भवः ॥' इत्युक्तः पवनाघातजन्यः शब्दविशेषः 'निर्घातो भूमिचलने'इत्युक्तदिशा वा भूमिकम्पश्च विद्युदुपचारात्तदुत्पातश्चोल्का 'बृहच्छिखा च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला । पौरुषी च प्रमाणेन सोल्का नानाविधा स्मृता ॥' इत्युक्तो गगनान्निपतंस्तेजःपुञ्जश्चेति त आद्या येषां (सर्पव्याघ्रादीनां) तैः । कम्पाऽऽदिकारकः । आदिना विस्मयादिः । 'मनःक्षोभ'इति शेषः । त्रासः । 'उच्यत'इति शेषः । 'औत्पातिकैर्मनःक्षोभस्त्रासः कम्पादिकारकः ।' इति पाठान्तरे तु औत्पातिकैरुत्पातसम्बन्धिभिर्निर्घातादिभिरित्यर्थः । उत्पातश्चाकस्मिकी घटना । अन्यत्स्पष्टम् ॥ १९१ ॥

उदाहरति–यथा–'परि...इत्यादौ ।

'परिस्फुरन्मीनविघट्टितोरवः परिस्फुरन्तो ये मीनास्तैर्विघट्टिताः संश्लेषाभावं प्रापिता ऊरवो यासां ताः । अत एव–त्रासविलोलदृष्टयस्त्रासं सम्भ्रमं यथा भवेत्तथा विलोलाश्चञ्चला दृष्टयो दृष्टिव्यापारा यासां ताः । त्रासेन भयेनेति तु न युक्तम् । एवंमस्य वाच्यत्वापत्तेः । कम्पितपाणिपल्लवाः कम्पिताः पाणिपल्लवा यासां ताः । पाणयः पल्लवा इति पाणिपल्लवाः । सुराङ्गनाः । सखीजनस्य । अपि किं पुनर्दर्शकान्तरस्य प्रियजनस्य । विलोकनीयतां रमणीयत्वम् । उपाययुः प्रापुः । किरातार्जुनीयस्येदं पद्यम् । अत्र वंशस्थं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥११७॥'.

अथ व्रीडा-

**२०९ धाष्टर्याभावो व्रीडा वदनानमनादिकृद्दुराचारात् ।**

यथा-

'मयि सकपटं..'इत्यादि, यथा वा-

**'पटालग्ने पत्यौ नमयति मुखं जातविनया, हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ।
प्रवृत्तेऽपि प्रष्टुं न गदति सखीं पश्यति परं, समुत्ताम्यत्यन्तः प्रथमपरिहासे नववधूः॥ ११८ ॥**

---

अयम्भावः-अत्र मीनकृतोरुविघट्टनमालम्बनं, सुराङ्गनानां स्वभावसिद्धं चाञ्चल्यमुद्दीपनं, सम्भ्रमचाञ्चल्यकम्पनान्यनुभावाश्चेत्येवं त्रासोऽभिव्यज्यते । यथा वा-'आलीषु केलीरभसेन बाला मुहुर्ममालापमुपालपन्ती । आरादुपाकर्ण्य गिरम्मदीयां सौदामिनीयां सुषमामयासीत् ॥' इति, अत्र हि प्रियस्याकस्मादागमनमालम्बनम्, 'तेन मद्वचनं श्रुत'मिति नायिकागता नायकविषयिणी लज्जया परिपोषिताऽऽशङ्कोद्दीपनं, पलायनमनुभावश्चेत्येवं त्रासोऽभिव्यज्यते ।

व्रीडां लक्षयितुं प्रतिजानीते-अथ त्रासोदाहरणानन्तरम् । **व्रीडा** लज्जा । लक्ष्यते-२०९ **धाष्टर्याभावो..** इत्यादिना ।

२०९ **दुराचाराद्** दूषितादाचरणात् । **वदनानमनादिकृत्** । आदिना वैवर्ण्यादि । **धाष्टर्याभावो** धाष्टर्यस्य (धृष्टस्य ( स्वच्छस्य) भाव इति धाष्टर्यं तस्य ) अभावः । **व्रीडा** । 'उच्यत' इति शेषः । विवृण्वतेऽप्यपरे-'स्त्रीणां पुरुषमुखावलोकनादेः पुंसां च प्रतिज्ञाभङ्गपराभवादेरुत्पन्ने । वैवर्ण्याधोमुखत्वादिकारणीभूतश्चित्तवृत्तिविशेषो व्रीडा ।' इति । स्त्रीणां (पर) पुरुषमुखावलोकनाद्येव दुराचरणमिति बोध्यम् ।

उदाहरणं दर्शयति-**यथा-'मयि सकपटं..' इत्यादि** । 'बोध्य'मिति शेषः । अयम्भावः-व्याख्यातपूर्वमिदं पद्यम्, अन्यत्र दत्तदृष्टावपि पत्यौ सकपटं, सस्पृहं च स्वनयनगोचरतां प्रतिपन्ने तस्मिंस्तिर्य्यगित्येतावता लज्जाऽपि ध्वन्यते, तथा हि-स्वकपटमवस्थानमालम्बनं, नायकस्य सस्पृहं स्वनयनविषयीभवनमुद्दीपनं, तिर्य्यग्भवनमनुभावश्चेत्येवं व्रीडाध्वनिः । न तु-'सलज्ज' मिति लज्जां द्योतयतीति वाच्यम्, स्फुटं वाच्यत्वात् । इति ।

मा वा भूत्सूदाहरणमिदमित्याह-**वाऽथवा । यथा-'पटालग्ने..** इत्यादि ।

**'पटालग्ने** पटे आ समन्तान् लग्नः संसक्तस्तस्मिन् । **पत्यौ** 'सती'ति शेषः । **जातविनया** जात उत्पन्नो विनयोऽनुनयस्तदिच्छेति यावत्, यस्याः सा । **मुखम्** । **नमयति** । **हठाश्लेषं** हठेन बलात्कारेणाश्लेष आलिङ्गनमिति तं तथोक्तम् । **वाञ्छति** 'पत्यौ सती'ति शेषः । **निभृतं** तिरोभवितुमवस्थितं यथा भवेत्तथा । 'नभसा निभृतेन्दुने' त्यादिप्रयोगदर्शनान्निभृतशब्दोऽस्त्रायावस्थितवचनः । **गात्राणि** । **अपहरति** स्पृश्यत्वयोग्यतां निवर्त्तयतीति भावः । **प्रष्टुं** किमप्यालपनप्रसङ्गोपन्यासाय सहासं कुशलादिज्ञातुमिति भावः । **प्रवृत्ते** । **अपि** किं पुनरप्रवृत्त इति भावः । **न** नैव । **गदति** । उत्तरं ददातीति भावः । किं तर्हि विधत्त इत्याह-**परं** केवलम् । **सखीं** सखीमुखम् । **पश्यति** । तथा-**नववधूः प्रथमपरिहासे** । **अन्त**रन्तःकरणे **समुत्ताम्यति** नितान्तं खिद्यति । 'वतोत्ताम्य'ति इति पाठान्तरं, वतेति च हर्षे । अमरुशतके कस्याश्चिन्नववध्वा वर्णनमिदम् । अत्र च शिखरिणी छन्दः, तल्लक्षणं चोक्तं प्राक् ॥११८॥'

इदं बोध्यम्- नवसङ्ग आलम्बनं, पत्युस्तत्तदीहितमुद्दीपनं, मूकीभवनाद्यनुभावश्चेति व्रीडा ध्वन्यते । यथा वा-'कुचकलशयुगान्तर्मामकीनं नखाङ्कं सपुलकतनु मन्दंमन्दमालोकमाना । विनिहितवदनं मां वीक्ष्य बाला गवाक्षे चकितनतनताङ्गी सद्म सद्यो विवेश ॥' इति, अत्र हि प्रियस्य दर्शनमालम्बनं तदानीमेव प्रियकृतनखक्षतावलोकनजन्यहर्षावेदकपुलकादिदर्शनमुद्दीपनं सद्यः सद्मनि प्रवेशोऽनुभावश्चेति व्रीडाऽभिव्यज्यते । यथा वा-'निरुध्य यान्तीं तरसा कपोतीं कूजत्कपोतस्य पुरो ददाने । मयि स्मिताद्र्रं वदनारविन्दं सा मन्दमन्दन्नमयाम्बभूव -' इति, अत्र हि प्रियकर्तृकं कपोतस्याग्रे कपोत्याः समर्पणमालम्बनं, कपोत्याश्च कूजन्तमपि कपोतमपहाय यानार्थं चेष्टितमुद्दीपनं, वदननमनमनुभावश्चेति व्रीडाऽभिव्यक्तिः ।

अथ हर्षः—

२१० हर्षस्त्विष्टावाप्ते—र्मनःप्रसादोऽश्रुगद्गदादिकरः ॥ १९२ ॥

यथा-

'समीक्ष्य पुत्रस्य चिरात्पिता मुखं निधानकुम्भस्य यथैव दुर्गतः ।
तदा शरीरे प्रबभूव नात्मनः पयोधिरिन्दूदयमूर्च्छितो यथा ॥११९॥'

अथासूया-

२११ असूयाऽन्यगुणर्द्धीना—मौद्धत्यादसहिष्णुता ।
दोषोद्घोषभ्रूविभेदा—वज्ञाक्रोधेङ्गितादिकृत् ॥ १९३ ॥

---

हर्षं लक्षयितुं प्रतिजानीते-अथ व्रीडोदाहरणानन्तरम् । हर्षः लक्ष्यते-२१० हर्ष..इत्यादिना ।

२१० इष्टावाप्तेरिष्टस्यावाप्तिर्लाभस्तस्याः । तु पुनः । अश्रुगद्गदादिकरोऽश्रुगद्गदादेः करः कर्त्तेति तथोक्तः । आदिपदं सम्भ्रमादिग्राहकम् । मनःप्रसादो मनसः प्रसादः प्रसन्नत्वम् । 'प्रसादस्तु प्रसन्नता ।' इत्यमरः । हर्षः । विवृण्वते यथाऽऽर्य्याः—'देवभर्तृगुरुस्वामिप्रसादः प्रियसङ्गमः । मनोरथाप्तिरप्राप्य मनोहरधनागमः ॥ तथोत्पत्तिश्च पुत्रादेर्विभावो यत्र जायते । नेत्रवक्त्रप्रसादश्च प्रियोक्तिः पुलकोद्गमः ॥ अश्रुस्वेदादयश्चानुभावा हर्षं तमादिशेत् ॥ 'इति । अत्र गीतिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १९२ ॥

उदाहरति-यथा-'समीक्ष्य..इत्यादौ ।

'यथा । एव । दुर्गतो दरिद्रः । 'दरिद्रो दुर्गतोऽपि सः ।' इत्यमरः । निधानकुम्भस्य निधानस्य कोशस्य कुम्भः कलशस्तस्य । 'तथे'ति शेषः । पिता । पुत्रस्य । चिराद्बहोः कालादनेकदेवाराधनाद्यनन्तरमिति भावः । मुखम् । समीक्ष्य दृष्ट्वा । 'स्थित' इति शेषः । यथा । पयोधिः क्षीरसमुद्रः । 'तथे'ति शेषः । इन्दूदयमूर्च्छित इन्दोश्चन्द्रस्योदय इति, इन्दुवच्चन्द्रस्येवोदयो जन्मविकाशो वेति वा तेन मूर्च्छितः प्रवृद्ध उन्मत्तो वेति तथोक्तः । तदा यदा मुखं समीक्षितमिति शेषः । 'मुदे'ति पाठस्तु न साधीयान्, अस्य वाच्यत्वापत्तेः । आत्मनः स्वस्य । शरीरे न नैव । प्रबभूव प्रभुरभूत् । कस्याप्येतत्पद्यम्, एतेन 'पिता दिलीप' इति व्याख्यानमपास्तम्, रघुवंशेऽस्यादर्शनात् । अत्र वंशस्थं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ ११९ ॥'

इदमवसेयम्-पुत्रमुखस्य दर्शनमालम्बनं, 'चिरा'दिति निर्दिष्टदिशा तत्सम्भवाशानिवर्त्तनानन्तरमिति समयात्यय उद्दीपनं, तदानीमत्युन्नतत्वमनुभावश्चेति हर्षो व्यज्यते । इति ।

यथा वा-'अवधौ दिवसावसानकाले भवनद्वारि विलोचनं दधाना । अवलोक्य समागतं तदा मा-मथ रामा-विकसन्मुखी बभूव ॥' इति अत्र हि प्रतीक्ष्यमाणोऽवसर आलम्बनं, तदानीमेव प्रियस्य पुनरागमनमुद्दीपनं, मुखविकासश्चानुभाव इति हर्षोऽभिव्यज्यते ।

असूयां लक्षयितुं प्रतिजानीते-अथ हर्षोदाहरणानन्तरम् । असूया लक्ष्यते-२११ असूया...इत्यादिना ।

२११ औद्धत्यादुद्धततया गर्वातिशयेन दुर्जनत्वोत्कर्षेण क्रोधोद्रेकेण वेति भावः । दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत् । क्रोधेङ्गितं मुखरागादि । आदिना कलहादि । अन्यत्स्पष्टम् । अन्यगुणर्द्धीनामन्यस्य गुणर्द्धयस्तासाम् । गुणाश्चर्द्धयश्चेति गुणानामृद्धय इति वा गुणर्द्धयः । असहिष्णुताऽसहिष्णुत्वम् । असूया 'उच्यत' इति शेषः ॥ १९३ ॥

यथा--
'अथ तत्र पाण्डुतनयेन सदसि विहितं मधुद्विषः ।
मानमसहत न चेदिपतिः परवृद्धिमत्सरि मनो हि मानिनाम् ॥१२०॥'

अथ विषादः-

२१२ उपायाभावजन्मा तु विषादः सत्त्वसङ्क्षयः ।
निःश्वासोच्छ्वासहृत्ताप-सहायान्वेषणादिकृत् ॥ १९४ ॥

यथा मम-
'[1]एसा कुडिलघणेण सुचिउरकडप्पेण तुह णिबद्धा वेणी ।
मह सहि ! दारइ डंसइ आअसजट्ठिव्व कालअ इव्व हिअअम् ॥१२१॥'

---

उदाहरति-यथा-'अथ..इत्यादौ ।

'अथ श्रीकृष्णचन्द्रस्य मुख्यतयाऽर्चनानन्तरम् । चेदिपतिश्चेदेर्देशविशेषस्योपचारात्तत्रत्यानां जनानां पतिः प्रभुरिति तथोक्तः । शिशुपालनामा वीर इति भावः । तत्र तस्यां तस्मिन्नित्येव वा । सदसि सभायाम् । पाण्डुतनयेन पाण्डोः सुगृहीतनाम्नो नृपेन्द्रस्य तनयस्तेन, युधिष्ठिरेणेत्यर्थः । विहितं कृतम् । मधुद्विषो मधुं दैत्यविशेषमद्विषदिति तस्य । श्रीकृष्णचन्द्रस्येत्यर्थः । 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ।' ३।२।६१ इति क्विप् । मानं मुख्यत्वप्रत्यायकं पूजनम् । मननमेतेन नान्यत्सदृश इति विबोधनमिति मानः । भावे घञ् । न नैव । असहत । किन्त्वद्विक्षतेति भावः । हि यतः । 'हि हेतावधारणे ।'इत्यमरः । मानिनाम्मननम्मम सदृशो नान्य इति विचारणमिति मानोऽभिमानः, स एषामस्तीति तेषां तथोक्तानाम् । मनश्चित्तम् । परवृद्धिमत्सरि परेषां स्वभिन्नानां वृद्धिरुत्कर्ष इति, तत्र मत्सरि मात्सर्य्यग्रस्तमिति तथोक्तम् । मत्सरोऽस्मिन्नस्तीति तथोक्तम् । 'मत्सरोऽन्यशुभद्वेष'इत्यमरः । 'भवती'ति शेषः । शिशुपालवधस्येदं पद्यम् । अत्रोद्गता छन्दः, तल्लक्षणं यथोक्तम्'सजसादिमे सलघुके च नसजगुरुकेऽप्यथोद्गता । अङ्घ्रिगतभजनजला गयुताः सजसा जगौ चरणमेकतः पठेत् ॥' इति ॥ १२० ॥'

अयम्भावः-श्रीकृष्णेन समं पुरातनं वैरमालम्बनं, सभायां च मुख्यत्वेन तदीया पूजा चोद्दीपनं, तृतीयपादार्थपर्य्यालोचनयोज्जृम्भमाणं तदपमानार्थं दोषारोपणमनुभावश्चेत्येवमसूयाऽभिव्यज्यते । यथा वा-'वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्त्तते, सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते । यानि त्रीण्यकुतोभयान्यपि पदान्यासन्खरायोधने यद्वा कौशलमिन्दुसूनुदमने तत्राप्यभिज्ञो जनः ॥'इति । उत्तररामचरितस्येदं पद्यम्, लवस्य चन्द्रकेतोः समक्षे रामचन्द्रस्योपहासोक्तिरियम् । 'रामं प्रति कुशोपहास'इति तु प्रमाद एव प्रकाशव्याख्यातुः । अत्र च औद्धत्यमालम्बनं, सुमन्त्रचन्द्रकेतुभ्यां कृतं रामचन्द्रचरितस्य सर्वातिशायित्वेन वर्णनमुद्दीपनं, वयोमात्रेण गौरवं रामस्येत्यादिरूपाः परिहासा अनुभावाश्चेति लवस्य रामचन्द्रविषयिण्यसूयाऽभिव्यज्यते ।

विषादं लक्षयितुं प्रतिजानीते-अथासूयोदाहरणानन्तरम् । विषादः । लक्ष्यते-२१२ उपाया... इत्यादिना ।

२१२ उपायाभावजन्मोपायस्य सिद्धिसाधनरूपस्य चेष्टितविशेषस्याभावो विफलत्वं तस्माज्जन्म यस्य स इति तथोक्तः । तु । निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् निःश्वास (बाह्यश्वासः) श्चोच्छ्वास-(अन्तःसञ्चारी श्वासः) श्च हृत्तापश्च सहायान्वेषणं चेति तान्यादौ येषां (ग्लानिवैवर्ण्यादीनां) तानि करोतीति तथोक्तः । सत्त्वसङ्क्षयः सत्त्वस्य बलस्योत्साहस्येति यावत् सङ्क्षय इति तथोक्तः । विषादः । 'उच्यते' इति शेषः ॥ १९४ ॥

उदाहरति-यथा । मम 'कृतौ-एसा.. इत्यादौ ।

सहि सखि, उपचाराद्धितकारिणीत्यर्थः । एसा एषा । तुह तव । कुडिलघणेण कुटिलघनेन । कुटिलेन निबिडेनेत्यर्थः । विशेषणविशेष्यभावे कामचार इति 'विशेषणं विशेष्येण बहुलम् ।' २।१।५७ इति समासः । सुचि-

---

[1] 'एषा कुटिलघनेन सुचिकुरकलापेन तव निबद्धा वेणी ! मम सखि ? दारयति दशति आयसयष्टिरिव कालोरगीव ॥' इति संस्कृतम् ।

अथ धृतिः--

२१३ **ज्ञानाभीष्टागमाद्यैस्तु सम्पूर्णस्पृहता धृतिः।**
**सौहित्यवचनोल्लास-साहसप्रतिभाऽऽदिकृत् ॥ १९५ ॥**

यथा -मम-

**'कृत्वा दीननिपीडनां, निजजनैर्बद्ध्वा वचोविग्रहं**
**नैवालोच्य गरीयसीरपि चिरायामुष्मिकीर्यातनाः।**

---

**उरकडाप्पेण** सुचिकुरकलापेन। शोभनानां चिकुराणां वालानां कलापः समूहस्तेन। 'चिकुरः कुन्तलो वालः' इत्यमरः। 'कलापः संहतौ वर्हे काञ्च्याम्भूषणतूणयोः।' इत्यजयः। **णिबद्धा** निबद्धा। **वेणी** वेणी। **मह** मम। यस्य हितकारिणी त्वं तस्यास्येति भावः। **हिअअं** हृदयमन्तरात्मानमिति यावत्। **आअसजट्ठिव्व** आयसयष्टिरिव। आयसयष्टिः खड्ग इत्येके, क्रकच इत्यपरे। **दारइ** दारयति। **कालअइव्व** कालाहिरिव। 'कालउरइव्व' इति पाठान्तरे कालोरगीवेत्यर्थः। एवं सति मात्राधिक्ये छन्दोभङ्गः। **डंसइ** दशति। यत्तु व्याख्यातं मह सही मम सखि!.. तस्य हिअअं हृदयं..' इति, तन्न सत्, मम सखीति सम्बुद्धौ सारस्यभङ्गात्। हितकारिण्या अपि ते (सख्याः) वेणी मम (यस्य त्वं हितकारिणी तस्यास्य) हृदयं यदि दारयेद्दशेद्वा, तर्हि नितान्तमयुक्तम्। अतो मम यथा हितं तथा त्वया त्वदीयया वाऽनया भवितव्यमिति निष्कृष्टोऽर्थः। अत्रार्य्यागीतिश्छन्दः, तल्लक्षणं सूत्रितं यथा-'अर्द्धे वसुगण आर्य्यागीतिः।' इति ॥' इदमिह पुनरवधेयम्-यां प्रति कस्या अपि कामुकस्येयमुक्तिस्तत्सङ्गार्थं कृतस्यापि यत्नस्य विफलत्वं गम्यमानमालम्बनं, वेणीसौन्दर्य्यदर्शनेनोज्जृम्भमाणः काम उद्दीपनम्, असत्यत्वं च तस्यानुभाव इति विषादो ध्वन्यते। इति ॥ १२१ ॥

यथा वा-'व्यर्थं यत्र हरीन्द्रसख्यमपि मे, वीर्य्यं हरीणां वृथा, प्रज्ञा जाम्बवतोऽपि यत्र, न गतिः पुत्रस्य वायोरपि। मार्गं यत्र न विश्वकर्म्मतनयः कर्त्तुं नलोऽपि क्षमः, सौमित्रेरपि पत्रिणामविषयस्तत्र प्रिया क्वास्ति मे ॥' इति, अत्र हि-सीतायाः प्रियात्वं स्मर्य्यमाणमालम्बनं, तदलाभश्चोद्दीपनं, सुग्रीवसख्यादीनामपि सीतालाभविषये विफलत्वेन मुखवैवर्ण्यादिरनुभावश्चेति स्फुटो विषादध्वनिः।

धृतिं लक्षयितुं प्रतिजानीते-**अथ** विषादोदाहरणानन्तरम्। **धृतिः** लक्ष्यते २१३ **ज्ञाना**..इत्यादिना।

२१३ **ज्ञानाभीष्टागमाद्यैः** ज्ञानं चाभीष्टागमश्चेति तावाद्यौ येषां (वैराग्यादीनां) तैः। **तु** पुनः। **सौहित्यवचनोल्लाससाहसप्रतिभाऽऽदिकृत्**। सुहितस्य भावः सौहित्यं, तृप्तिः। 'सौहित्यं तर्पणं तृप्ति'रित्यमरः। 'गुणवचनब्राह्मणादिभ्यः कर्म्मणि च।' ५।१।१२४ इत्यनेन भावे ष्यञ्। वचनानामुल्लासोऽनाकुलत्वम्। सहसि बले भवं साहसम्, भयाभाव इत्यर्थः। 'तत्र भवः' ४।३।५३ इत्यण्। प्रतिभा नवनवोन्मेषशालिनी बुद्धिः। आदिना शान्त्यादीनां ग्रहणम्। **सम्पूर्णस्पृहता** सम्पूर्णा स्पृहा यस्य तस्य भावस्तत्ता। **धृतिः**। 'उच्यते' इति शेषः ॥ १९५ ॥

उदाहरति-**यथा**। **मम** कृतौ-'**कृत्वा**..इत्यादौ।

'**दीननिपीडनां** दीनानां दुःखितानामधमर्णत्वादिना पीडितानामिति यावन्निपीडना निश्शेषेण (पुनःपुनर्धनवृद्ध्युत्कोचवञ्चनादिना) पीडना दुःखाकरणमिति ताम्। **कृत्वा**। **निजजनैः** नैजाः स्वात्मीया जनास्तैस्तथोक्तः। 'वृद्धो यूना..' इत्यादिनिर्देशात्तृतीया। 'निजजन' इति पाठान्तरे विषये सप्तमी। **वचोविग्रहं** वचसां विग्रहः कलहस्तम्। 'कलहविग्रहौ।' इत्यमरः। **बद्ध्वा**। **गरीयसीः** अत्यन्तं गुर्वीः। 'द्विवचनविभज्योपपदे तरबीयसुनौ।' ५।३।५७ इतीयसुन्। 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फ-वर्हिगर्वर्षित्रब्द्राघिवृन्दाः।' ६।४।१५७ इति गरादेशः। 'उगितश्च।' ४।१।६ इति ङीप्। **अपि**। **चिराय** चिरं भोग्याः 'चिरा' दिति पाठान्तरम्। 'चिराय चिरराय

द्रव्यौघाः परिसञ्चिताः खलु मया यस्याः कृते, साम्प्रतं
नीवाराञ्जलिनाऽपि केवलमहो सेयं कृतार्था तनुः ॥ १२२ ॥'

अथ चपलता-

२१४ मात्सर्यद्वेषरागादेश्चापल्यं त्वनवस्थितिः ।
तत्र भर्त्सनपारुष्य-स्वच्छन्दाचरणादयः ॥ १९६ ॥

यथा-

'अन्यासु तावदुपमर्दसहासु भृङ्ग ! लोलं विनोदय मनः सुमनोलतासु ।

---

चिरस्थायाश्चिरार्थकाः ।' इत्यत्राद्यपदाच्चिरादित्यपि । आमुष्मिकीर्लोकान्तरे कालान्तरे वा भाविनीः । अमुष्मिन् ( परस्मिन् लोके काले वा ) भवा इति तास्तथोक्ताः । 'अमुष्मि'न्निति विभक्तिप्रतिरूपकमव्ययमिति कल्पयित्वा 'तत्र भवः ।' ४।३।५३ इत्यनेन 'अध्यात्मादिभ्यश्च' इति वा ठक्। 'कालाट्ठञ्।' ४।३।११ इति ठञ् वा । 'अव्ययानाम्भमात्रे टिलोपः।'* इति टिलोपः । यद्वा-'पृषोदरादीनि यथोपदिष्टम् ।' ६।३।१०९ इत्यनेन निपातनात् विभक्त्यलुक् टिलोपश्चेति बोध्यम् । यातनास्तीव्रवेदनाः । नैव । आलोच्य विचार्य । यस्याः ( तनोः ) । कृते निमित्तम् । मया लोभान्धेनेत्यर्थः । द्रव्यौघा द्रव्याणामनेकविधानां सुवर्णादिरूपाणां धनानामोघा राशय इति तथोक्ताः । 'द्रव्यं स्याद्द्रविणे भव्ये..' इति विश्वः। परिसञ्चिताः परितः सञ्चिताः। खलु। अहो आश्चर्यम्। साम्प्रतमस्मिन्समये संतोषावस्थायामिति यावत् । सा । इयम् । तनुः शरीरम् । 'ममे'ति शेषः । केवलम् । नीवाराञ्जलिना नीवारस्य तृणधान्यस्याञ्जलिस्तेनेति तथोक्तेन । अञ्जलिपरिमितेन नीवारेणेति भावः । 'तृणधान्यानि नीवारा' इत्यमरः । अपि । कृतार्था कृतो निष्पादितोऽर्थः प्रयोजनं यस्याः सेति तथोक्ता। कस्यापि सर्वतो विरक्तेः यथालाभं प्रसादे पूर्वावस्थां निन्दत उक्तिरियम् । अत्र शार्दूलविक्रीडितं वृत्तम् ॥ १२२ ॥'

अत्रेदं बोध्यम्-आप्तवचनान्यालम्बनं, नीवाराञ्जलिनाऽपि निर्वाह उद्दीपनं, स्वात्मनस्ततोऽपि कृतार्थत्वनिश्चयोऽनुभावश्चेति धृतिर्व्यज्यते । इति ।

यथा वा-'वयमिह परितुष्टा वल्कलै, स्त्वं दुकूलैः, सम इह परिणामे निर्विशेषो विशेषः । स तु भवतु दरिद्रो यस्य तृष्णा विशाला, मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥' इति । अत्र च प्रपञ्चस्य मिथ्यात्वनिश्चय आलम्बनं, विरक्तिश्चोद्दीपनं, तृष्णाया निन्दनमनुभावश्चेति धृतिरभिव्यज्यते ।

चपलतां लक्षयितुं प्रतिजानीते-अथ धृत्युदाहरणानन्तरम् । चपलता लक्ष्यते-२१४ मात्सर्य.. इत्यादिना ।
२१४ मात्सर्यद्वेषरागादेः। मत्सरोऽन्यशुभद्वेषोऽस्य इति मत्सरस्तस्य भावो मात्सर्यम् । 'गुणवचनेभ्यो मतुपो लुगिष्टः'* इति मतुपो लुक् । अत एव-'मत्सरोऽन्यशुभद्वेषे तद्वत्कृपणयोस्त्रिषु ।' इत्यमरोक्तौ तद्वदिति सङ्गच्छते । यद्वा-'माद्यति परेषां दुःखादौ'इति मत्सरोऽन्येषां दुःखे शोके वा प्रमोदी । ब्राह्मणादित्वात् ष्यञ् । द्वेषो वैमनस्यम् । रागोऽनुरागः सौमनस्यमिति यावत् । आदिरसूयादिग्राहकः । तु पुनः । अनवस्थितिः । चापल्यं चपलता । 'उच्यत'इति शेषः । तत्र तस्मिंश्चापल्ये सतीति यावत् । भर्त्सनपारुष्यस्वच्छन्दाचरणादयः । आदिना ताडनादयः । 'सम्भवन्ती'ति शेषः । यथाहुः-'अमर्षप्रातिकूल्येर्ष्या रागद्वेषाश्च मत्सरः । इति यत्र विभावाः स्युरनुभावास्तु भर्त्सनम् ॥ वाक्पारुष्यं प्रहारश्च ताडनं वधबन्धने । तच्चापल्यमनालोच्य कार्यकारित्वमिष्यते ॥' इति ॥ १९६ ॥

उदाहरति-यथा-'अन्यासु' इत्यादौ ।

'हे भृङ्ग ! मधुकर उपचाराज्जार ! अन्यासु । उपमर्दसहासूपमर्दस्य चरणप्रहारादिना दलनस्य चुम्बनादिना वा पीडायाः सहा इति तासु तथोक्तासु । सुमनोलतासु सुमनसां पुष्पाणां विहारे प्रशस्तमनसां वा लतास्ता इव

मुग्धामजातरजसं कलिकामकाले व्यर्थं कदर्थयसि किं नवमल्लिकायाः ॥ १२३ ॥'

अथ ग्लानिः—

२१५ रत्यायासमनस्तापक्षुत्पिपासाऽऽदिसम्भवा।
ग्लानिर्निष्प्राणताकम्पकार्य्यानुत्साहताऽऽदिकृत् ॥ १९७ ॥

यथा-

'किशलयमिव मुग्धं बन्धनाद्विप्रलूनं हृदयकमलशोषी दारुणो दीर्घशोकः।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ १२४ ॥'

---

वेति तासु। विषये सप्तमीयम्। **लोलं** चञ्चलं तृष्णातरलमिति यावत्। **मनः**। **तावत्** तृप्तिपर्य्यन्तमित्यर्थः। 'यावत्तावच्च साकल्य'इत्यमरः। **विनोदय**। **नवमल्लिकायाः** नवाऽभिनवाङ्कुराऽऽत्मवल्लभेनाप्यनुपभुक्तपूर्वा वाऽसौ मल्लिका तस्याः। **मुग्धां** कोमलां मूढां वा। **अजातरजसं** न जातं रजः पराग ऋतुजं स्रवणं वा यस्यास्ताम्। 'रजः क्लीवं गुणान्तरे। आर्त्तवे च परागे च रेणुमात्रेऽपि दृश्यते।'इति मेदिनी। **कलिकामल्पा** कलीति कलिका ताम्। 'कली(लिः)स्त्री कलिकायां...'इति मेदिनी। 'अल्पे' ५।३।८५ इति कः। **अकाले** मकरन्दाभावदशायां बाल्ये (रसिकत्वविरहावस्थायां) वा। **किम्**। **व्यर्थं** विगतो निवृत्तोऽर्थो मकरन्दास्वादनरूपः सुरतामोदानुभवनरूपो वा यस्मिन् कर्म्मणि तद् यथा भवेत्तथा। **कदर्थयसि** कदर्थां। करोषीत्यर्थः। विकटनितम्बायाः पद्यमिदम्। अत्र वसन्ततिलकं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १२३ ॥'

इदमवसेयम्-अत्र भृङ्गस्य कलिकायामनुराग आलम्बनं, मल्लिकासम्बन्धित्वं पुनरुद्दीपनं, कदर्थितकरणेनाक्षेप्यं हठादायत्तीविधानमनुभावश्चेति चपलताऽभिव्यज्यते। इति।

ग्लानिं लक्षयितुं प्रतिजानीते-अथ चपलतोदाहरणानन्तरम्। **ग्लानिः** लक्ष्यते-२१५ **रत्यायास...**इत्यादिना।

२१५ **रत्यायासमनस्तापक्षुत्पिपासाऽऽदिसम्भवा**। आदिना पराभवजुगुप्सितावेक्षादिग्रहणम्। **निष्प्राणताकम्पकार्य्यानुत्साहताऽऽदिकृत्**। निर्गताः प्राणा उपचारात्सामर्थ्यं यस्य तस्य भावो निष्प्राणता। कम्पः प्रसिद्धः। कार्य्यस्यानुत्साहतेति कार्य्यानुत्साहता, नोत्साहो यस्येत्यनुत्साहस्तस्य भावस्तत्ता। आदिना वैवर्ण्यादिग्रहणम्। **ग्लानिः**। 'उच्यत'इति शेषः ॥ १९७ ॥

उदाहरति-यथा-'किशलय...'इत्यादौ।

'**शरदिजः** शरत्कालिकः। 'प्रावृट्शरत्कालदिवां जे।' ६।३।१५ इति सप्तम्या अलुक्। 'सप्तम्यां जनेर्डः।' ३।२।९७ इति जनेर्डः। **घर्म्मस्तापः**। **केतकीगर्भपत्रं** केतक्या गर्भो मध्यं तस्य पत्रं तदिति तथोक्तम्। **इव**। **हृदयकमलशोषी** हृदयं कमलमिवेति तच्छोषयतीत्येवंशील इति तथोक्तः। अत एव-**दारुणः**। **दीर्घशोको** दीर्घ आयतश्चिरकालं स्थायीति यावत्, शोको रामचन्द्रेण समं विरहजन्यो मनस्ताप इति तथोक्तः। **बन्धनात्** उत्पत्तिस्थानात्। **विप्रलूनमेकपदं** छिन्नं दूरं पतितमिति यावत्। **मुग्धं** कोमलम्। **किशलयमिव**। **अस्याः** सीतायाः। **परिपाण्डु** परितः पाण्डुः पीतसंवलितः श्वेतवर्ण इति, सोऽस्यास्तीति तत्तथोक्तम्। 'पाण्डुस्तु पीतभागार्द्धः केतकीधूलिसन्निभः।'इति शब्दार्णवः। 'गुणवचनेभ्यो मतुपो लुगिष्टः*'इति मतुपो लुक्। **क्षामं** दुर्बलम्। **शरीरम्**। **ग्लपयति** म्लानं करोति। इदमुत्तररामचरितस्य। अत्र मालिनी छन्दः। तल्लक्षणं चोक्तं प्राक् ॥ १२४ ॥'

इदमवधेयम्-रामचन्द्रेण कृतः परित्याग आलम्बनम्, तत्र स्वात्मनो निरवद्यत्वस्मरणानुपदं तद्विरहस्यानवधिकत्वमुद्दीपनं, दौर्बल्यमनुभावश्चेति ग्लानिरभिव्यज्यते। इति।

यथा वा—

'लुलितनयनताराः क्षामवक्त्रेन्दुबिम्बा रजनय इव निद्राक्रान्तनीलोत्पलाक्ष्यः।
तिमिरमिव दधानाः स्रंसिनः केशपाशानवनिपतिगृहेभ्यो यान्त्यमूर्वारवध्वः॥ १२५॥'

अथ चिन्ता—

२१६ ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत्।

यथा मम—

'कमलेण विअसिएण सुसंजोएंती विरोहिणं ससिबिंबम्।
करअलपल्लत्थमुही किं सुचिरं सुमुहि! अंतराहिअहिअआ॥ १२६॥'

---

उदाहृते पद्ये 'ग्लपयती'ति स्वशब्दवाच्यत्वावहमित्याह—**यथा। वा।** '**लुलित**...इत्यादौ।

'**रजनयः। इव** रात्रय इव। **लुलितनयनतारा** लुलिता विमर्दिता उपचारात्तथाभूता नयनतारा यासां ताः। नयनानीव तारा नक्षत्राणीति, नयनानि तारा इवेति वा नयनताराः। **क्षामवक्त्रेन्दुबिम्बाः** क्षामं वक्त्रेन्दुबिम्बं यासां ताः। वक्त्रं मुखमिवेन्दुबिम्बमिति वक्त्रमिन्दुबिम्बमिवेति वा वक्त्रेन्दुबिम्बम्। **निद्राक्रान्तनीलोत्पलाक्ष्यो** निद्राक्रान्तं नीलोत्पलाक्षि यासां ताः। निद्रयेव निद्रयेत्येव वा क्रान्तमभिभूतमिति निद्राक्रान्तम्। नीलोत्पलमक्षीवेति नीलोत्पलमिवाक्षीति वा नीलोत्पलाक्षि। स्रंसिनः शिथिलबन्धनान्। **केशपाशान्। इव तिमिरम**न्धकारम्। यद्वा—तिमिरम्। इव। स्रंसिनः। केशपाशान्। इति योज्यम्। **दधानाः। अमूः। वारवध्वो** वारस्य समुदायस्य साधारण्येन सर्वस्येति यावत्, वध्व इति तथोक्ताः। वेश्या इत्यर्थः। 'स्तोमौघनिकरव्रातवारसङ्घातसञ्चयाः।' इत्यमरः। **अवनिपतिगृहेभ्यो**ऽवनिपतीनां राज्ञां गृहास्तेभ्यः। **यान्ति**। शिशुपालवधस्येदं पद्यम्। अत्र मालिनी छन्दः, तल्लक्षणं चोक्तं प्राक्॥ १२५॥'

अत्रेदं बोध्यम्—रत्यायास आलम्बनं, जागरणं चोद्दीपनं, नयनादेर्मन्दप्रभत्वाद्यनुभावश्चेति ग्लानिरभिव्यज्यते।

चिन्तां लक्षयितुं प्रतिजानीते—**अथ** ग्लानिनिदर्शनानन्तरम्। **चिन्ता**—लक्ष्यते—२१६ **ध्यानं**..इत्यादिना।

२१६ **हितानाप्ते**र्हितस्याभीष्टस्यानाप्तिः प्राप्त्यभावस्तस्याः। **शून्यताश्वासतापकृत्। ध्यानं** किमया साम्प्रतं कार्य्यमिति विमर्षः। **चिन्ता**। 'उच्यत' इति शेषः। यथोक्तम्—'विभावा यत्र दारिद्र्यमैश्वर्यभ्रंशनं तथा। इष्टार्थापहृतिः शश्वच्छ्वासोच्छ्वासावधोमुखम्॥ सन्तापः स्मरणं चैव कार्श्यं देहानुपस्कृतिः। अधृतिश्चानुभावाः स्युस्सा चिन्ता परिचिन्तिता। वितर्कोऽस्याःक्षणे पूर्वे पाश्चात्येवोपजायते।' इति।

उदाहरति—**यथा। मम।** 'कृतौ—'**कमलेण**.. इत्यादौ।

'हे **सुमुहि** सुमुखि! **करअलपल्लत्थमुही** करतलपर्य्यस्तमुखी करतले पर्य्यस्तं निक्षिप्तं निहितमिति यावत्, मुखमुपचारात्कपोलदेशो यया सा तथोक्ता। **अंतराहिअहिअआ**ऽन्तराहितहृदया, अन्तराहितं सङ्कल्पविकल्पान्तरं परित्यज्य स्थितं हृदयं मनो यस्याः सा। अत एव—**विअसिएण** विकसितेन। **कमलेण** कमलेन। सहार्थेऽसौ तृतीया। **विरोहिणं** विरोधिनम्। नहि कमलं शशिन उदये विकाशते, न वा कमले विकाशमाने शशी पुनरुदेतीत्युक्तमिदम्। **ससिबिंबं** शशिबिम्बं शशिनश्चन्द्रस्य बिम्बो मण्डलं तम्। 'बिम्बोऽस्त्री मण्डलं त्रिषु।' इत्यमरः। **सुसंजोएंती** सुसंयोजयन्ती। **किम्। सुचिरम्।** बहुकालमारभ्येत्यर्थः। 'स्थिताऽसी'ति शेषः। 'चिंतसी'ति पाठान्तरे तु 'चिन्तयसी'त्यर्थः। इदमुक्तम्—विकसितकमलसदृशं करतलं, शशिबिम्बसदृशं च

---

१ 'कमलेन विकासितेन सुसंयोजयन्ती विरोधिनं शशिबिम्बम्। करतलपर्य्यस्तमुखी किं सुचिरं सुमुखि! अन्तराहितहृदया॥' इति संस्कृतम्।

अथ वितर्कः-

**२१७ ऊहो वितर्कः सन्देहाद् भ्रू-शिरो-ङ्गुलिनर्त्तकः ॥ १९८ ॥**

यथा-'किं रुद्धः प्रियया....' इत्यादौ ।

एते च त्रयस्त्रिंशद् व्यभिचारिभेदा इति यदुक्तं तदुपलक्षणमित्याह-

**२१८ रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः ।**

---

मुखमिति करतले मुखस्य निधानं कमलेन शशिनः संयोग इव, कमलेन शशिने विरोध इति तथाभूते करतले मुखस्य निधानं विरुद्धं न तु युक्तम् । तथा सति-पृच्छति, किं चिरादेवं ? किं वा स्तिमितेवासीति । अत्र गीतिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १२६ ॥'

अत्रेदं बोध्यम्-प्रियविरह आलम्बनं, पुनःपुनरसा एव स्मर्य्यमाण उद्दीपनं, करतलोपरि मुखस्य पर्य्यस्तत्वं हृदयस्थ हितत्वं चानुभावा इति चिन्ताऽभिव्यज्यते ।' 'किं चिन्तसी'ति पाठान्तरे स्वशब्दवाच्यत्वं स्यात् । इति ।

यथा वा-'अधरद्युतिरस्तपल्लवा मुखशोभा शशिकान्तिलङ्घिनी । अकृतप्रतिमा तनुः कृता विधिना कस्य कृते मृगीदृशः ॥' इति । अत्र हि नायिकायाः स्मर्य्यमाणं लावण्यमालम्बनं, तदप्राप्तिस्तद्वैलक्षण्यं वोद्दीपनमनुतापादयश्चाक्षेप्या अनुभावा इति चिन्ता ध्वन्यते ।

वितर्कं लक्षयितुं प्रतिजानीते-अथ चिन्तोदाहरणानन्तरम् । **वितर्को** लक्ष्यते-२१७ ऊहो.. इत्यादिना ।

**२१७ सन्देहात्** । इदं विपर्य्ययस्याप्युपलक्षकम् । ल्यपो लोपे चात्र पञ्चमी । तथा च-सन्देहं विपर्य्ययं वाऽऽलम्ब्येति निष्कृष्टोऽर्थः । **भ्रूशिरोङ्गुलिनर्त्तकः** । **ऊहो** निश्चयानुकूलो विचारः । **वितर्कः** । 'तर्को विचार 'इति पाठान्तरे 'निश्चयानुकूल' इत्यध्याहार्य्यम् ॥ १९८ ॥

**उदाहरति-यथा । 'किं रुद्धः प्रियया... इत्यादौ ।**

इदमुक्तम्-'किं रुद्धः...' इति व्याख्यातपूर्वं पद्यम्, अत्र च प्रियस्यागमने विलम्ब आलम्बनं, सख्या अपि प्रत्याशुत्योत्तरदानाभाव उद्दीपनम्, भ्रूप्रभृतीनां नर्त्तनमाक्षिप्तं पुनरनुभाव इति वितर्कोऽभिव्यज्यते । न चासौ चिन्ता, 'इत्यालोच्ये'ति स्वारस्येनान्तिमपक्षस्य निश्चयोपलम्भात्, चिन्तायां पुनस्तद्विरहात् । यथा वा मम-'न दयां मयि नेभिधास्यते सखि हन्ताभिनवाम्बुदोदयः । शिशुपालमसौ भजिष्यतीत्यपि किं जातु मनाक् प्रमन्यसे ॥' इति । अत्र च-'यदि नागमिष्यति मुकुन्दः, तदा किं सखी शिशुपालं नोपासिष्यत 'इति सख्या विपर्य्ययग्रह आलम्बनम्, आगमनविलम्बे च सख्या प्रस्तूयमानाऽऽक्षेप्यामीमांसोद्दीपनं, किमाऽऽक्षेप्यं भ्रूक्षेपाद्यनुभावश्चेति वितर्को ध्वन्यते ।

एवं निर्वेदादीन् प्रदर्श्य रत्यादीनामपि हास्यादौ व्यभिचारित्वमिति प्रदर्शयितुमुपक्रमते-**एते** चेत्यादिना ।

**एते** 'निर्वेदादय' इति शेषः । **च** । **व्यभिचारिभेदाः** । **त्रयस्त्रिंशत्** त्र्युत्तरत्रिंशत्सङ्ख्याकाः । **इती**त्येवम् । **यत्** । **उक्तम्** । 'त्रयस्त्रिंश' दित्यादिनेति शेषः । **तत्** 'त्रयस्त्रिंश' दिति वच इत्यर्थः । **उपलक्षणं** ज्ञापनं, न तु तथा नियमनमिति भावः । **इती**त्येवम् । **आह**-२१८ रत्यादयो..इत्यादिना ।

**२१८ रत्यादयः** शृङ्गारादेः स्थायिभावा इत्यर्थः । **अपि** किं पुनर्निर्वेदादय एव । **अनियते** नियततो भिन्ने स्वावस्थितिनियमरहित इति यावत् । नियतता च वक्ष्यते । **रसे** । **व्यभिचारिणः** । **स्युः** ।

**तथाहि-शृङ्गारेऽनुच्छिद्यमानतयाऽवस्थानाद्रतिरेव स्थायिशब्दवाच्या। हासः पुनरुत्पद्यमानो व्यभिचार्य्येव। व्यभिचारिलक्षणयोगात्।**

**तदुक्तम्-**

**'रसावस्थः परम्भावः स्थायितां प्रतिपद्यते।' इति।**

**तत् कस्य स्थायिनः कस्मिन् रसे सञ्चारित्वमित्याह-**

**२१९ शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः॥ १९९॥**

---

कथमित्युपपादयति-**तथा** 'यथा रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः।' इत्युक्तं तेन प्रकारेणेत्यर्थः। **ह्येव।** 'प्रतिपाद्यत' इति शेषः। **शृङ्गारे** तदाख्ये रसे। **अनुच्छिद्यमानतया** नोच्छिद्यमानेत्यनुच्छिद्यमाना तस्या भावस्तत्ता तया। 'त्वतलोर्गुणवचनस्य।' इति ह्रस्वत्वम्। यद्वा-नोच्छिद्यमानं तस्य भावस्तत्ता तया। 'सामान्ये नपुंसकम्।' इति तथा निर्देशः। **अवस्थानात्।** **रतिर्**दम्पत्योरनुरागविशेषः। **एव** 'न तु हासादय' इति शेषः। **स्थायिशब्दवाच्या।** यदवधि शृङ्गारस्तदवधि रतिरवतिष्ठत इति तत्र रतिः। स्थायिशब्दवाच्या, न पुन हासादय इति भावः। **हासः।** इदमुपलक्षणं क्रोधादेः। तथा च-हासादत्र इत्यर्थः। **पुनः। उत्पद्यमानः। व्यभिचारी। एव** न तु स्थायीत्यर्थः। कुत इत्याह-**व्यभिचारिलक्षणयोगाद्** व्यभिचारिणां लक्षणं (विशेषा..' इत्यादिना यदुक्तं तत्) तस्य योगस्तस्मात्। अयम्भावः-'विशेषाः...' इत्यादिनोक्तस्य लक्षणस्य याथाऽर्थ्येनोपस्थितेर्हासादयः शृङ्गारे व्यभिचारिणः, एवं हासे रत्यादयो व्यभिचारिणः, हासः परं स्थायी। एवमन्यत्रापीति।

**तत्** तथा। **उक्तम्।**

किमिति निर्दिशति-**'रसावस्थो** रसः शृङ्गाराद्यन्यतमोऽवस्था स्वरूपं यस्य सः। **परं** केवलम्। **भावः। स्थायितां** स्थायिस्वरूपताम्। **प्रतिपद्यते।' इति।**

अत्रायं पर्य्यालोकः-'अस्य रसस्यायमेव स्फूर्तिमूल' मिति नियमात्तन्त्रत्वे सति विभावानुभावसात्त्विकभावभिन्नतया रसानुगुणकत्वं व्यभिचारिभावत्वम्। रसानुगुणकत्वं रसोत्कर्षकात्मना समुद्रे तरङ्गवत्स्थायिनि तिरोभवनाविर्भवनशीलत्वम्। यथा पवनाहतिवशात् पृथक् प्रतीयमाना अपि तरङ्गा न समुद्रतोऽतिरिच्यन्ते, तथा विभावानुभाववशात्प्रतीयमाना अपि व्यभिचारिणो न स्थायिनोऽतिरिच्यन्ते। एवं च विभावानुभाववशात् प्रतीयमानत्वं व्यभिचारिभावत्वम्। न चैवं (शृङ्गारादौ) रसेऽतिप्रसङ्गः, विभावानुभावमात्रेणाभिव्यज्यमानस्य रसत्वा (शृङ्गाराद्यन्यतमत्वा) नङ्गीकारात्। भावत्वं मनोविकारविशेषत्वम्। यथाऽऽहुः-'विकारो मानसो भावः।' इति। भावाश्च निर्वेदाद्यास्त्रयस्त्रिंशत् रत्याद्या अनियते रसे न वेत्येवमेकचत्वारिंशत्। यद्यपि-मात्सर्य्योद्वेगदम्भेर्ष्याविवेकनिर्णयक्लैब्यक्षमाकुतुकोत्कण्ठाविनयसंशयधाष्टर्यापमानसम्मानादीनां तत्रतत्र व्यञ्जयात्मनोपपद्यमानत्वम्, तथाऽप्येतेष्वेवैषामन्तर्भावो युक्तः, तावन्मात्रताया मुनिवचनायत्तीकृतत्वात्। तथा च-असूयातो मात्सर्य्यस्य, त्रासत उद्वेगस्य, अवहित्थातो दम्भस्य, अमर्षत ईर्ष्याया, मतितो विवेकस्य, निर्णयस्य च; दैन्यतः क्लैब्यस्य, धृतितः क्षमायाः, औत्सुक्यतः कुतुकस्योत्कण्ठाया, लज्जातो विनयस्य, तर्कतः संशयस्य, चपलतातो धाष्टर्यस्य, विषादतोऽपमानस्य, हर्षतश्च सम्मानस्य, सूक्ष्मदृशा भेदेऽपि तत्रतत्रैवान्तर्भावो बोध्यः। एषां चैक एवैकत्राभिव्यज्यते, न पुनर्द्वितीय इति न नियमः, सामग्रीमहिम्ना द्वितीयस्यापि ध्वन्यमानतायामक्षतेः। अत एव-'मयि सकपटं..' इत्यादौ स्मृतिर्व्रीडा च, न चैवमेकस्य प्राधान्यमपरस्य गुणीभूतत्वं वाच्यम्, स्वंस्वं प्रति तस्यतस्य तथागुणीभावानुपपत्तेः। कुत्रचित्त्वेकस्यैव प्राधान्यमपरस्याङ्गभूतत्वम्, यथाऽमर्षे गर्वस्य, गर्वे चाऽमर्षस्य। ग्लानिदैन्यविषादानां बलहानिस्वरूपत्वेन प्रतीयमानेऽप्यभेदे निष्प्राणत्वानौजस्य सस्वराङ्कक्षयाणां विभिन्नत्वेन विभिन्नत्वम्। केषांचिद्धिभेदो गोबलीवर्दन्यायेन, यथामतिवितर्कयोः। इति दिक्।

२१८ रत्यादयो..इत्यादिनोक्तं स्पष्टयितुमुपक्रमते-**तदि**त्यादिना।

**तत्** तर्हि। **कस्य। स्थायिनः** स्थायिभावस्य। **कस्मिन्। रसे। सञ्चारित्वं** व्यभिचारिभावत्वम्। इतीत्येवम्। 'आशङ्क्योत्तरयितु'मिति शेषः। **आह-२१९ शृङ्गार..**इत्यादि।

**२१९ शृङ्गारवीरयोः।** उपचारादद्भुतेऽपि। **हासः।** 'व्यभिचारी'ति शेषः। **तथा। वीरे।** उपलक्षणेन शृङ्गारेऽपि। **क्रोधः।** उपचाराद्रागेऽपि। 'व्यभिचारी'ति शेषः। **मतः॥ १९९॥**

शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः।
इत्याद्यन्यत्समुन्नेयं तथा भावितबुद्धिभिः ॥ २०० ॥

अथ स्थायिभावः–

२२० अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः।
आस्वादाङ्कुररूपोऽसौ भावः स्थायीति सम्मतः ॥ २०१ ॥

---

शान्ते। पुनः। जुगुप्सा। उपचारात् शोकोऽपि। व्यभिचारितया। कथिता। इत्यादि। तथा। अन्यत्। यथा भयानके भयस्य व्यभिचारित्वम्। भावितबुद्धिभिर्भाविता काव्यभावनया नियमिता बुद्धिर्येषां तैः। सहृदयजनैरिति भावः। समुन्नेयं निश्चेतव्यम्। अयम्भावः–यो यत्र स्थायी तं विना सर्वेऽप्यन्ये यथायथमन्यत्र व्यभिचारिणो भवन्तीति ॥ २०० ॥

स्थायिभावं लक्षयितुं प्रतिजानीते–अथ व्यभिचारिभावनिरूपणानन्तरम्। स्थायिभावो लक्ष्यते–२२०अविरुद्धा...इत्यादिना।

२२० अविरुद्धा अनुकूलाः। यथा शृङ्गारे हर्षौत्सुक्यादयः, हास्ये स्मृत्यादयः, एवमन्यत्रापि। वाऽथवा। विरुद्धाः प्रतिकूलाः। यथा वीरे चिन्ताऽऽदयः, रौद्रे विषादादयः। 'विरुद्धा अविरुद्धा वे'ति पाठान्तरम्। 'भावा' इति शेषः। यम्। तिरोधातुं तिरोहितं कर्त्तुम्। अक्षमा न क्षमा भवन्तीत्यर्थः। आस्वादाङ्कुररूप आस्वादस्य रसानुभवस्याङ्कुर उपचारात् सम्भवस्तं रूपयतीति तथोक्तः। असौ। 'स' इति शेषः। 'आस्वादाङ्कुरकन्द'इति पाठान्तरे तु आस्वादो रसः सोऽङ्कुर इवेति तस्य कन्दो मूलमिवेत्यर्थः। यद्वा–आस्वादस्य रसप्रत्ययस्य (वृक्षस्येव) अङ्कुरोऽभिनवोद्भेदः प्राथमिकः सम्भवस्तस्य कन्दो मूलभूतस्तमिति। 'आस्वाद्यत'इत्यास्वादः। 'अङ्कुरोऽभिनवोद्भिदि।'इत्यमरः। 'कन्दोऽस्त्री सूरणे सस्यमूले जलधरे पुमान्।'इति मेदिनी। भावो मानसो विकारः। स्थायी। इतीत्येवम्। सम्मतः। अयम्भावः–भावयति ज्ञापयति हृदयगतमिति भावः, असौ च मानसो विकारः। अमुष्य पुनःपुनर्झटित्याविर्भावतिरोभावशीलत्वेऽपि संस्कारात्मना चिरमवस्थीयमानत्वाद् यावद्रसमनुसन्धीयमानत्वाच्च स्थायित्वम्। तथोक्तम्-'विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः। आत्मभावं नयत्यन्यान् स स्थायी लवणाकरः ॥'इति। लवणाकरः समुद्रः। उपचारात्–तद्वन्निर्विकारः। अत एव–'स यथेमा नद्यः स्यन्दमानाः समुद्रायमाणाः समुद्रमेवास्तं गच्छन्ति' त्याद्युक्तं सङ्गच्छते। 'चिरं चित्तेऽवतिष्ठन्ते सम्बन्ध्यन्तेऽनुबन्धिभिः। रसत्वं ये प्रपद्यन्ते प्रसिद्धाः स्थायिनोऽत्र ते ॥' इति च। चिरं यावद्रसस्फुरणम्, तं विनैतस्यासम्भवात्। एतेन–व्यभिचारिणो व्यवच्छेदः सूचितः। अनुबन्धिभिर्विभावादिभिः। यदपि–अनुबन्धिभिर्व्यभिचारिणोऽपि सम्बन्ध्यन्ते। तदपि न स्फुटं सर्वत्रैव, अत एवोक्तम्–'विभावस्त्वत्र व्यभिचारिणो निमित्तकारणसामान्यम्। न तु रसस्येव सर्वथैवालम्बनोद्दीपने अपेक्षिते। यदि तु क्वचित्सम्भवतस्तदा न वार्य्येते।' इति, 'रत्यादयः स्थायिभावाः स्युर्भूयिष्ठविभावजाः। स्तोकैर्विभावैरुत्पन्नास्त एव व्यभिचारिणः ॥' इति च। 'सजातीयविजातीयैरतिरस्कृतमूर्त्तिकः। यावद्रसं वर्त्तमानः स्थायी भाव उदाहृतः ॥' इति च, 'यथा नराणां नृपतिः शिष्याणां च यथा गुरुः। एवं हि सर्वभावानां भावः स्थायी महानिह ॥' इति च। यथा समानावस्थाका अपि जनाः कुलविद्याप्रतापादिना राजत्वं लभन्ते, तदभावेऽनुचरत्वं प्रतिपद्यन्ते, तथा विभावादिप्रकर्षेण भावाः स्थायित्वं ;तदन्यथा पुनरस्थायित्वं (व्यभिचारित्वम्) श्रयन्ते। अथ एवैषामपि स्थायिन आश्रयभूता भवन्ति। तथा च–आलम्बनोद्दीपन–(विभाव) व्यभिचारिणमाश्रयभूताः स्थायिनो भावा राजान इव, व्यभिचारिणस्तु एतेषामाश्रयितार इत्यनुचरा इव। यथा च राजाऽनुचरद्वारा सम्पादितमपि यशः स्वमिति लभते, तथा स्थायी भावोऽपि विभावादिना सम्पादितं चमत्कारं स्वमिति रसत्वं लभते। इति दिक् ॥ २०१ ॥

तदुक्तम्—

'स्रक्सूत्रवृत्त्या भावाना-मन्येषामनुगामकः।
न तिरोधीयते स्थायी तैरसौ पुष्यते परम्॥' इति।

तद्भेदानाह—

२२१ रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेत्थ-मष्टौ प्रोक्ताः शमोऽपि च॥ २०२॥

तत्र—

२२२ रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्।

---

उक्तेऽर्थे प्राचां सम्मतिं प्रदर्श्य सिद्धान्तयति—**तद्** 'यदस्माभिः २२० 'अविरुद्धा...,इत्यादिनोक्त'मिति शेषः। **उक्तम्**। 'स्रक्..इत्यादिना।

'**स्रक्सूत्रवृत्त्या** स्रजो मालायाः सूत्रं तस्य वृत्तिः स्थितिर्न्यायः इति यावत्तया। **अन्येषाम्**। 'मणीनामिव स्थितानां'मिति शेषः। **भावानां** 'निर्वेदादीना'मिति शेषः। **अनुगामको**ऽनुगमयतीति तथोक्तः। 'व्यञ्जकत्वेन सम्बन्धी'ति विवृतिः। तैर्मणिभिरिवास्थितैरन्यैर्भावैरित्यर्थः। **स्थायी** 'सूत्रायमाणो भाव' इति शेषः। **न**। **तिरोधीयते**। **असौ** तैरतिरस्कृतः स्थायीत्यर्थः। **परं** केवलम्। **पुष्यते**। अयम्भावः—यथा—मणिभिस्तदाधारभूतं सूत्रं न तिरस्क्रियते, प्रत्युतालङ्क्रियते; तथाऽन्ये (व्यभिचारिभि)र्भावैः स्थायी भावो न तिरस्क्रियते, प्रत्युत परिपुष्टः क्रियते। एवं च मालास्थानीयो रसः, सूत्रस्थानीयः स्थायी मणिस्थानीयश्च व्यभिचारी भावः। इति॥' इति।

स्थायिभावस्य भेदानभिधातुमुपक्रमते—**तद्भेदा**नित्यादिना।

**तद्भेदां**स्तस्य (स्थायिभावस्य) भेदास्तान्। **आह**—२२१ रति..इत्यादिना।

२२१ **रतिः** प्रीतिः। 'नायिकानायकयोरन्योन्यालम्बना'इति शेषः। **हासः**। **च**। **शोकः**। **च**। **क्रोधोत्साहौ** क्रोध उत्साहश्चेत्यर्थः। **तथा**। **भयम्**। **जुगुप्सा** कुत्सनम्। 'गुपू' गोपनकुत्सनयोः। 'गुप्तिज्किद्भ्यः सन्।' ३।१।५ इति गर्हणे सन्। **च**। **विस्मयः**। **इत्थ**मित्यनेन प्रकारेण। **अष्टौ**। 'स्थायिनो भेदा' इति शेषः। **प्रोक्ताः**। ननु तर्हि शान्तस्य क इत्याशङ्कयाह—**च** तथा। **शमो** न तु निर्वेदः, एतस्य व्यभिचारित्वादिति बोध्यम्। **अपि**। 'नवम' इति शेषः॥ २०२॥

अयम्भावः—'शान्तस्य शमसाध्यत्वान्नटे च तदसम्भवात्। अष्टावेव रसा नाट्ये न शान्तस्तत्र युज्यते॥' इत्येवं केचिदष्टावेव रसा नाट्ये सम्भवन्तीत्याहुः, अत एव रत्यादीन् स्थायितया निर्दिश्य 'इत्थमष्टा'विति परिगणयति स्म। किन्तु—'अष्टावेव रसाः।' इति नैषामपि सिद्धान्तः, नाट्यमात्रे तथास्वीकारात्। 'नाट्यमात्र' इत्यपि न युज्यत इत्यन्ये, तथाहि— 'नटे च तद (शमा) सम्भवा' दिति हेतुरसङ्गतो, नटे रसाभिव्यक्तेरेवास्वीकारात्, सामाजिकेषु पुना रसाभिव्यक्तिः स्वीक्रियते तत्र शमोऽस्त्येव, तदस्तु शान्तस्याप्यभिव्यक्तिः। इति। अतः सुप्रयुक्तम्, 'शमोऽपि चे' त्यत्रा'पी'ति।

अथ रत्यादीन् क्रमतः स्वरूपतो निर्देष्टुमाह—**तत्र** तेषु रत्यादिषु मध्य इति यावत्।

२२२ **मनस**श्चित्तस्य। **अनुकूले** प्रीतिविषयत्वेनाविरुद्धे। **अर्थे** 'वस्तुनि नायिकारूपे नायकरूपे वाऽऽलम्बन इति यावत्। अत्र विषये सप्तमी। **प्रवणायितं** जलमिव सरलं सरस्वभावतः प्रवृत्तमिव स्थितम्। प्रवणमिवाचरतीति प्रवणायते। अस्माच्निष्ठायां क्तः। **मनश्चित्तम्**। **रतिः**। तथा च—'मनस' इत्यस्य 'स्वस्ये' त्यर्थः। इदं बोध्यम्—नायिकायां नायकमनसो, नायके च नायिकामनसः प्रवणायितत्वं सम्भोगेच्छारूपमेव। तस्मात्—सम्भोगेच्छारूपेणानुकूलायां नायिकायां नायकस्य, नायके वाऽनुकूले नायिकाया मनःप्रवृत्ती रतिरिति स्थितम्। यद्वा—मनोऽनुकूले मनसो

वागादिवैकृतैश्चेतो-विकासो हास उच्यते ॥ २०३ ॥
इष्टनाशादिभिश्चेतो-वैक्लव्यं शोकशब्दभाक् ।
प्रतिकूलेषु तैक्ष्ण्यस्या-ववोधः क्रोध इष्यते ॥ २०४ ॥
कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते ।
रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम् ॥ २०५ ॥
दोषेक्षणादिभिर्गर्हा जुगुप्सा विस्मयोद्भवा । ष
विविधेषु पदार्थेषु लोकसीमाऽतिवर्तिषु ॥ २०६ ॥

---

मनीषाया अनुकूलो ममासौ लोकतः शास्त्रतो वाऽविरुद्धो भोगविषय इत्यध्यवसायेनाभिमतस्तत्र। 'मनश्चित्ते मनीषायाम्।' इति। अर्थे। नायिकानायकान्यतमरूप एव पदार्थे इति भावः। मनसश्चित्तस्य। प्रवणायितं प्रवणायनम्। अत्र भावे क्तः। रतिः। 'शृङ्गारस्य स्थायी भाव' इति शेषः। अत एवोक्तं-'स्त्रीपुंसयोरन्योऽन्यालम्बनः प्रेमाख्यश्चित्तवृत्तिविशेषो रतिः।' इति 'प्रवणायितं प्रेमार्द्रं मनोरतिरित्यर्थः। तच्चोत्कटावेश एव पर्य्यवस्यति, स चानुराग एव, सोऽपि प्रकृते सुरतेच्छारूप एवे'ति च। **वागादिवैकृतैः**। विकृतस्य भावो वैकृतम्। अत्र भावेऽण्। आदिनाऽङ्गादीनां ग्रहणम्। बहुवचनेन जाड्यादिग्रहणम्। **चेतोविकास**श्चेतसश्चित्तस्योपहसनीयत्वज्ञानेन ( मुखविकासद्वारा प्रतीयमानः ) विकास इति तथोक्तः। **हासः**। 'हास्यस्य स्थायी भाव' इति शेषः। **उच्यते**। अत एवोक्तं-'वागङ्गादिविकारदर्शनजन्मा विकासाख्यो हासः।' इति। **इष्टनाशादिभिरि**ष्टस्य स्वप्रियस्य स्त्रीपुत्रादेर्नाशादयस्तैः। आदिना विपदादिस्थित्यादीनां ग्रहणम्। बहुवचनेन दुराशङ्कादीनां ग्रहणम्। **चेतोवैक्लव्यं** चेतसो वैक्लव्यं विक्लवता। **शोकशब्दभाक्** शोक इत्यर्थः। 'करुणस्य स्थायी भाव' इति शेषः। अत एवोक्तम्-'पुत्रादिवियोगमरणादिजन्मा वैक्लव्याख्यश्चित्तवृत्तिविशेषः शोक' इति। **प्रतिकूलेषु** विरोधिषु शत्रुप्रभृतिष्विति यावत्। **तैक्ष्ण्यस्य** तीक्ष्णतायाः 'किमहमेतस्यानिष्टमुपपादयेय' मिति दुर्भावनेच्छाया इति यावत्। **अवबोधो** ज्ञानम्। 'यतः स' इति शेषः। 'उत्कटत्वम्' इति विवृतिकाराः। **क्रोधः**। 'रौद्रस्य स्थायी भाव'इति शेषः। **इष्यते**। तथोक्तं-'गुरुबन्धुवधादिपरमापराधजन्मा प्रज्वलनाख्यः क्रोधः। अयं च परविनाशादिहेतुः।' इति यद्यप्युक्तं 'क्षुद्रापराधजन्मा तु परुषवचनासम्भाषणादिहेतुः। अयमेवामर्षाख्यो व्यभिचारीति विवेकः।' इति, 'तदपि क्रोधोऽपि रसान्तरे व्यभिचारी न परममर्ष एव।' इति बोध्यम्। **कार्य्यारम्भेषु** कार्य्याणां युद्धादीनामारम्भाः प्रक्रमास्तेषु। 'सत्सु' इति शेषः। **स्थेयान्** अत्यन्तं दृढस्थितिक इत्यर्थः। विघ्नोपस्थितावपि स्वरूपसन्निति भावः। **संरम्भ** उत्कट आवेगः। **उत्साहः**। 'वीरस्य स्थायी'ति शेषः। **उच्यते**। अयम्भावः-'अङ्गीकृतं सुकृतिनः परिपालयन्ती'त्याद्युक्तदिशा कस्मिन्नपि दुर्घटेऽपि कार्य्ये समारब्धेऽवश्यमेतत्सम्पादयिष्यामो जीवितं वा परित्यक्ष्याम इति दृढप्रत्ययमुत्तम उत्साहः, असावेव वीररसस्य स्थायी भावः। इति। **रौद्रशक्त्या** रुद्रस्य भयङ्करस्येदं कर्म्म रौद्रं, तस्य शक्तिः सामर्थ्यं तया रोदयतीति रुद्रः। 'रोदेर्णिलुक्च *।' इति रक् णिलुक् च। 'तस्येदम्।' ४।३।१२ इत्यण्। **तु**। **जनितम्**। **चित्तवैक्लव्यदं** चित्तस्य वैक्लव्यं विक्लवता ( व्याकुलता ) तद्ददातीति तथोक्तम्। **भयम्** 'भयानकस्य स्थायी'ति शेषः। तथोक्तम्-'व्याघ्रदर्शनादिजन्मा परमानर्थविषयको वैक्लव्याख्यः स भयम्।' इति। **दोषेक्षणादिभिर्दो**षाणां दीनजनव्यापादनादीनामीक्षणादीनि दर्शनादीनि तैः। आदिना सम्भावनादीनां ग्रहणम्। **विस्मयोद्भवा** विस्मयात् किमर्थमिदमित्याश्चर्य्यादुद्भवतीति तथोक्ता। **गर्हा** कुत्सनम्। **जुगुप्सा**। 'बीभत्सस्य स्थायी भाव'इति शेषः। **लोकसीमाऽतिवर्तिषु** लोकस्य दृश्यमानस्य श्रूयमाणस्य वाऽस्य प्रपञ्चस्य सीमा मर्य्यादा सङ्घटनीयत्वेन सम्भावना तमतिवर्त्तन्त इति तथाभूतेषु।

**विस्फारश्चेतसो यश्च स विस्मय उदाहृतः ॥**
**शमो निरीहावस्थायां स्वात्मविश्रामजं सुखम् ॥ २०७ ॥**

---

**विविधेषु** नानाप्रकारेषु। **पदार्थेषु**। विषये सप्तमीयम् ॥ २०६ ॥ **च** । **यः** । **चेतसश्चित्तस्य विस्फारो** विस्तारः । **सः** । **विस्मयः** । **उदाहृतः** । 'अद्भुतस्य स्थायी भाव'इति शेषः । **निरीहावस्थायां** निर्गतेहा 'एवं कृते एतदधिगमिष्यामी'त्येवं तृष्णोत्तरङ्गा चेष्टा यस्य तस्यावस्था दशा तस्याम् । 'सत्या'मिति शेषः । **स्वात्मविश्रामजं** स्वस्य जीवस्यात्मविश्रामस्तस्माज्जायत इति तथोक्तम्। आत्मनि परमात्मरूपे स्वस्वरूपे विश्रामोऽवस्थानमित्यात्मविश्रामः। **सुखम्**। **शमः** शान्तिः। 'शान्तस्य स्थायी भाव'इति शेषः। अत एवोक्तं प्रदीपकारैः—' अत्र वदन्ति शान्तो नाम रसस्तावदनुभवसिद्धतया दुरपह्नवः न चैतस्य स्थायी निर्वेदो युज्यते, तस्य विषयेष्वलंप्रत्ययरूपत्वादात्मावमानरूपत्वाद्वा । शान्ते[1]श्च निखिलविषयपरिहारे जनितात्ममात्रविश्रामानन्दप्रादुर्भावमयत्वानुभवात् । तदुक्तं (कृष्णद्वैपायनेन)—'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥' अत एव—'सर्ववृत्तिविरामोऽस्य स्थायी'ति निरस्तम्। अभावस्य स्थायित्वायोगात्, तस्माच्छमोऽस्य स्थायी, निर्वेदादयस्तु व्यभिचारिणः, स च शमो निरीहावस्थायामानन्दः, स्वात्मविश्रामात्।'इति । अत्राहुः—'तत्तु चिन्त्यमेव, विषयेष्वलम्प्रत्ययस्य आत्मावमाननरूपस्य वा निर्वेदस्य शोकवत्समाधानात्। वस्तुतो रत्यादिकमुपजीव्य हर्षादेरिव तत्त्वज्ञानजं निर्वेदमुपजीव्य शमादिप्रवृत्तेः स एव स्थायी, न शमः । न च 'क्वचिच्छम'इति भरतमुन्युक्तिविरोध इति वाच्यम्, शम्यते यस्मादिति व्युत्पत्त्या तस्य निर्वेदपरत्वात् तृष्णायाः क्षयो यस्मादिति व्युत्पत्त्या तृष्णाक्षयोऽपि निर्वेद एव। अत एव—'एकोनपञ्चाशद्भावा'इति मुन्युक्तिः सङ्गच्छते। अष्टौ स्थायिनः, अष्टौ सात्त्विकाः, त्रयस्त्रिंशद् व्यभिचारिणः; इत्येवं गणनया हि एकोनपञ्चाशत्त्वं, शमस्यापि स्थायिभावे त्वाधिक्यापत्तिः।'इति। इदं न विचारसहम्। तथाहि-'शम्यते यस्मा'दिति व्युत्पत्तिस्तावन्न साम्प्रतम् अपादाने घञोऽविधानात्। न च बाहुलकाद् भविष्यतीति वाच्यम्, अतिप्रसङ्गात्। न वा 'अकर्त्तरि च कारके सञ्ज्ञायाम्।' ३।३।१९ इत्यनेन 'सञ्ज्ञाया'मित्यस्य प्रायिकत्वाद्भविष्यतीत्यपि वाच्यम्, प्रायिकस्य प्रकारान्तरेणोपपत्तावनभ्यनुज्ञानात्। नापि निर्वेद एव स्थायी भाव इत्यर्थं तथा समाधीयत इति वक्तुं शक्यम्, 'शमनं शम'इति व्युत्पन्नस्यैव शमपदवाच्यस्य स्थायित्वाभ्युपगमात्। एवं'तृष्णायाः क्षयो यस्मा'दिति व्युत्पत्त्या तृष्णाक्षयशब्दोऽपि निर्वेदपर इत्यपि न युक्तं वक्तुम्, व्यधिकरणबहुव्रीहेरनाम्नातत्वात् । 'सप्तमीविशेषणे बहुव्रीहौ ।' २।२।३५ इति ज्ञापकस्याप्यनित्यत्वाच्च। ननु निर्वेदातिरिक्तत्वेन शान्तरसस्य शमः स्थायीति स्वीकारे कथमेकोनपञ्चाशद्भावाः' इति सङ्गमिष्यत इति चेत्, 'शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः । बीभत्साद्भुतसञ्ज्ञाश्चेत्यष्टौ नाट्ये रसाः स्मृताः ॥ एते ह्यष्टौ रसाः प्रोक्ता द्रुहिणेन महात्मना।' इत्येवं शान्तस्यानभिधानेन शमस्याप्यगणनात्। अत एव—'क्वचिच्छम' इत्यादौ 'क्वचि' दित्याद्यपि सङ्गच्छते। न च निर्वेदः स्थायी शान्तस्येति वक्तुं युक्तम्। अस्य व्यभिचारित्वेनाम्नातत्वात् । यद्यपि—'आपदादिभिर्जायमानस्यैवास्य व्यभिचारित्वमुपपद्यते । तत्त्वज्ञानजस्य पुनः शमस्येव स्थायित्वम् । अत एव—'तत्त्वज्ञानापदीर्ष्यादे'रिति व्याख्यानावसरे तत्त्वज्ञानमिह देहविषयादावनुपादेयत्वज्ञानमेव, न तु जीवात्मपरमात्मनोरभेदज्ञानम्, तस्मिन् सति मोक्ष एव, न तु स्वावमाननम्।' इति व्याख्यातं तर्कवागीशैः। तथाऽपि तत्रेदं वक्तव्यम्—जीवपरमात्मनोरभेदज्ञानमपि द्विविधम्, उपदेशमात्रलब्धमनुभवलब्धं च । तत्राद्यस्यैव निर्वेदापरपर्य्यायत्वं, द्वितीयस्य पुनः शमापरपर्य्यायत्वम्। इत्यनुभवितारः। एवं चाद्यस्य स्थायित्वमुपयुज्यत एव न, अन्यस्य पुनरुपयुज्यते। उपयुज्यमानत्वस्वीकारेऽन्यनाममात्रे विवादः। इति ॥ २०७ ॥

---

१ शान्तेश्चेति । 'निखिलविषयपरिहारेण वैराग्येण जनितो य आत्ममात्रे विश्रामो विगलितवेद्यान्तरतया चित्तस्य स्थितिस्तेन य आनन्दः शमाख्यस्तस्य प्रादुर्भावोऽभिव्यक्तिस्तत्स्वरूपत्वानुभवात्।'इति तट्टीकाकाराः प्राहुः।

यथा मालतीमाधवे रतिः । लटकमेलके हासः । रामायणे शोकः । महाभारते शमः । एवमन्यत्रापि ।

एते हि एतेष्वन्तरोत्पद्यमानैस्तैस्तैर्विरुद्धैरविरुद्धैश्च भावैरनुच्छिन्नाः, प्रत्युत परिपुष्टा एव सहृदयानुभवसिद्धाः ।

किञ्च–

२२३ नानाऽभिनयसम्बन्धान् भावयन्ति रसान्यतः ।
तस्माद्भावा अमी प्रोक्ताः स्थायिसञ्चारिसात्त्विकाः ॥ २०८ ॥

यदुक्तम्–

'सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम् ।' इति ।

अथ रसस्य भेदानाह–

---

उदाहरति–यथेत्यादिना ।

यथा । मालतीमाधवे तदभिधेये भवभूतिविरचिते प्रकरणे । रतिः । 'मालतीमाधवयोरन्योऽन्यालम्बने'ति शेषः । लटकमेलके लटकान् दुर्जनान्मेलयतीति, तत्र तदभिधेये शङ्खधरविरचिते प्रहसन इति यावत् । 'लटकानां मेलकः सङ्घटनं यत्र तत्रे'ति तु न युक्तम्, व्यधिकरणस्य बहुव्रीहेरन्यथाऽनुपपत्तावुपपत्तेः । हासः । दन्तुरादीनां निरीक्षणादिजन्य' इति शेषः । रामायणे 'वाल्मीकिविरचिते महाकाव्य' इति शेषः । शोकः । 'रामदशरथादिवियोगादिजन्य' इति शेषः । महाभारते । शमः । 'पाण्डवाना' मिति शेषः । एवम् । अन्यत्र 'वेणीसंहारादावुत्साहादि' रिति शेषः । अपि । इति ।

ननु कथमेषां स्थायित्वमित्याशङ्क्याह–एते हीत्यादि ।

एते 'रत्यादयः स्थायिनो भावा' इति शेषः । हि खलु । 'हि हेतावववधारणे ।' इत्यमरः । एतेषु 'शृङ्गारादि' ष्विति शेषः । अन्तरा मध्ये । 'अथान्तरेऽन्तरा । अन्तरेण च मध्ये स्यु' रित्यमरः । उत्पद्यमानैर्जायमानैः । तैस्तैः । वीप्सायां द्वित्वम् । विरुद्धैः । अविरुद्धैः । चाथ वेत्यर्थः । भावैः 'व्यभिचारिभि' रिति शेषः । अनुच्छिन्ना उच्छेदमप्राप्ताः । प्रत्युत । परिपुष्टाः परिपोषं प्राप्ताः । एव । सहृदयानुभवसिद्धाः । इदमभिहितम्–रसेषु जायन्त एव ते ते व्यभिचारिणो भावाः, किन्तु तैः सर्वैर्विरुद्धैरविरुद्धैरपि वा तेषां स्थायिनो भावा नोच्छिद्यन्ते, प्रत्युत परिपुष्यन्त इति सहृदयानुसिद्धतया दुरपह्नवम् । इति ।

एवं स्थाय्यादीनां विशेषलक्षणान्यभिधाय सामान्यलक्षणानि वक्तुमुपक्रमते–किञ्चेत्यादिना ।

किञ्च–२२३ स्थायिसञ्चारिसात्त्विकाः स्थायिनश्च सञ्चारिणश्च ( व्यभिचारिणश्च ) सात्त्विकाश्चेति ते । यतः । नानाऽभिनयसम्बन्धान् नाना विविधा येऽभिनया हृद्गताभिव्यञ्जिकाः शरीरचेष्टास्तान् सम्बध्नन्तीनि तान् । यद्वा–नानाऽभिनयसम्बन्धा येषु तान् । रसान् । भावयन्ति बोधयन्तीत्यर्थः । तस्मात् । अमी स्थायिप्रभृतयः । भावाः । प्रोक्ताः । तथोक्तं–'नानाऽभिनयसम्बद्धान्भावयन्ति रसानिमान् । यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः ॥' इति ॥ २०८ ॥

उक्तार्थे प्राचां सम्मतिं दर्शयितुमाह–यद् यतः । उक्तम् । किमित्याह–'सुखदुःखादिभिः सुखं 'निरीहावस्थायां स्वात्मविश्रामज' मित्युक्तस्वरूपं, शम इति यावत्, तच्च–'दुःखमिष्टनाशादिभिश्चेतोवैक्लव्य' मित्युक्तस्वरूपं, शोक इति यावत्, तच्चेति ते आदी येषां ( रत्यादीनाम् ) तैः । भावैः । तद्भावभावनं तेषां रसानां भावा अवच्छेदका धर्मास्तेषाम्भावनम् । भावः ।' इति ।

एवम्भावान्निरूप्य तदभिव्यङ्ग्यान् शृङ्गारान्निरूपयितुं प्रवृत्तस्तत्र तावत्तान्नाम्ना निर्देष्टुमुपक्रमते–अथेत्यादिना ।

अथ भावनिरूपणानन्तरम् । रसस्य ३६ सत्त्वोद्रेकादित्यादिनोक्तस्वरूपस्य । भेदान् । आह–२२४ शृङ्गार.. इत्यादिना ।

२२४ शृङ्गार-हास्य-करुणा रौद्र-वीर-भयानकाः।
बीभत्सोऽद्भुत इत्यष्टौ रसाः, शान्तस्तथा मतः॥ २०९॥

अथ शृङ्गारः—

२२५ शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते॥ २१०॥

---

२२४ **शृङ्गारहास्यकरुणाः**। 'इति त्रय'इति शेषः। तथा **रौद्रवीरभयानकाः**। 'इति त्रय'इति शेषः। एवम्-**बीभत्सः**। **अद्भुतः**। 'चेति द्वय'मिति शेषः। **इतीत्येवम्**। **अष्टौ**। **रसाः**। न चैत एवेत्याह-**तथा**। **शान्तः**। 'नवम'इति शेषः। **मतः**। अत्राहुर्विवृतिकाराः—अष्टाविति नाट्याभिप्रायेण, शान्तस्य नाट्ये तादृक्पुष्टिविरहात्। तदुक्तम्—'अष्टौ नाट्ये रसाः स्मृताः।'इति। अयमभिप्रायः—'शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। बीभत्साद्भुतसञ्ज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः।'इति भरतमुनेर्वचनं प्रकाशकारैश्च सङ्गृहीतम्। स्फुटं चैतदाकलयत, 'नाट्येऽष्टावेव शृङ्गाराद्या अद्भुतान्ता रसाः, शान्तस्तु ने'ति। अत एव व्याख्यातारः प्राहुः—'नाट्येऽभिनयात्मके काव्ये। श्रव्ये काव्ये तु शान्तो नवमोऽपि रसः, नाट्ये ह्यवस्थाऽनुकृतौ सर्वविषयोपरमस्वरूपस्य शान्तस्य न सम्भवनं रोमाञ्चादिविरहेणानभिनेयत्वात् गीतवाद्यादेस्तद्विरोधित्वाच्च। तदुक्तम्—'न यत्र दुःखं न सुखं न चिन्ता, न द्वेषरागौ न कदाचिदिच्छा। रसः प्रशान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः।' इति।' इति। यद्यपि केचित्—'अष्टाविति नाट्य इति चोपलक्षणम्। तेन—'शान्तोऽपि नवमो रसः।' इत्येतद्वक्ष्यमाणं दृश्यश्रव्यसाधारणम्, तस्याप्यभिनेयत्वस्य बहुभिरङ्गीकारात्, गीतवाद्यादिकमपि तद्विषयकं न तद्विरोधि। अत एव चरमाध्याये सङ्गीतरत्नाकरे—'अष्टावेव रसा नाट्येष्विति केचिदचूचुदन्। तदचारु, यतः कश्चिन्न रसं स्वदते नटः॥' इत्यादिना नाट्येऽपि शान्तरसोऽस्ती'ति व्यवस्थापितम्।' इत्याहुः। तदपि न यथा श्रव्ये अत एव प्रतिवादिनोऽप्याहुः—'यैरपि नाट्ये शान्तो रसो नास्तीति अभ्युपगम्यते, तैरपि बाधकाभावान्महाभारतादिप्रबन्धानां शान्तरसप्रधानतया अखिललोकानुभवसिद्धत्वाच्च काव्ये सोऽवश्यं स्वीकार्यः।' इति। सुष्ठूक्तं तद्विवृतिकारैः—'अष्टाविति नाट्याभिप्रायेण, शान्तस्य नाट्ये तादृक्पुष्टिविरहा'दिति यद्यपि प्रतिवदन्ते केचित् 'नाट्ये गीतवाद्यादीनां विरोधिनां सत्त्वात्सामाजिकेष्वपि विषयवैमुख्यात्मनः शान्तस्य कथमुद्रेक इति चेद्, नाट्ये शान्तरसमभ्युपगच्छद्भिः फलबलात् तद्गीतवाद्यादेस्तस्मिन् विरोधितायाः अकल्पनात्, विषयचिन्तासामान्यस्य तत्र विरोधित्वस्वीकारे तदीयालम्बनस्य संसारानित्यत्वस्य तदुद्दीपनस्य पुराणश्रवणसत्सङ्गपुण्यवनतीर्थावलोकनादेरपि विषयत्वेन विरोधित्वात्।' इति। तदपि-शान्तो नाम शमस्थायिको रसः, शमश्च पुराणश्रवणादिनोत्तम्भितात्मैवेति नासौ तस्य सत्त्वे तिरोधीयते प्रत्युत तेनोद्दीप्यते, तिरोधीयते पुनर्गीतादेः सत्त्व एवेत्यनुभवसिद्धमितिहासप्रसिद्धं च। मैवं वा भूत्, सुष्ठूक्तं कविराजैः-'अष्टौ प्रोक्ताः शमोऽपि च।' इति 'अष्टौ रसाः शान्तस्तथा मतः।' इति च, सुप्रयुक्तं च 'अपी'ति 'तथे'ति चेत्याकलयन्तु सहृदयधुरीणादरमुकुलितनयनाः। इति॥ २०९॥

एवं रसभेदान्निर्दिश्य तान् क्रमशो निरूप्य निदर्शयितुमुपक्रान्त आह-**अथे**त्यादि।

**अथ** रसभेदनिर्देशावसरे शृङ्गारादीनां यथौचित्यं क्रमान्निरूपणानन्तरम्। **शृङ्गारः**। तत्र तावत् निरूप्यते-२२५ **शृङ्गं**...इत्यादिना।

२२५ **मन्मथोद्भेदो** मन्मथस्य कामस्य सम्भोगेच्छाया इति यावदुद्भेद उद्बोध इति तथोक्तः। **शृङ्गम्**। **हि** खलु। **तदागमनहेतुकस्तस्य** (मन्मथोद्भेदस्य) आगमनं प्राप्तिस्तस्य हेतुको हेतुभूतः। **उत्तमप्रकृतिप्राय** उत्तमा प्रकृतिः स्वभावो येषां तानिति, उत्तमाः प्रकृतयो नायकास्तानिति वा प्रीणातीति वा'श्रयतीति तथोक्तः। उत्तमप्रकृत्यालम्बनक इत्यर्थः। 'कर्मण्यण्।' ३।२।१ इत्यण्। 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः। योनौ लिङ्गे पौरवर्ग' इति मेदिनी। एतेन स्वाभासाद्रसान्तराच्चैतस्य व्यतिरेकः सूचितः। 'उत्तमप्रकृति'रिति 'प्राय'इति च पृथक्पाठे'उत्तमः प्रकृतिर्नायको यत्र सः'इति, 'प्रायो बाहुल्येने'ति चार्थः। 'प्रायो भूम्नी'त्यमरः। तथा च—प्रायः शृङ्गार उत्तमालम्बन

परोढां वर्जयित्वा च वेश्यां चाननुरागिणीम् ।
आलम्बनं नायिकाः स्यु-र्दक्षिणाद्याश्च नायकाः ॥ २११ ॥
चन्द्रचन्दनरोलम्बरुताद्युद्दीपनम्मतम् ।
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्त्तितः ॥ २१२ ॥
त्यक्त्वौग्र्यमरणालस्यजुगुप्सा व्यभिचारिणः ।
स्थायिभावो रतिः श्यामवर्णोऽयं विष्णुदैवतः ॥ २१३ ॥

यथा-'शून्यं वासगृह..'इत्यादि, अत्रोक्तस्वरूपः पतिरुक्तस्वरूपा च बालाऽऽलम्बनविभावौ,

---

एव, किन्तु क्वचिदधमालम्बनकोऽपि । अत एव-शृङ्गाराभासस्याप्यधममेवालम्बनम् । सङ्गच्छते चैवम् 'प्राय इत्यनेन शृङ्गाराभासादावधमप्रकृतित्वं सूचित'मिति तर्कवागीशैरुक्तम् । **रसः** । **शृङ्गारः** । **इष्यते** । अयमभिप्रायः-शृणाति चरमदशाप्रापणेन हिनस्ति यून इति शृङ्गम्मन्मथोद्भेदः । 'शॄ' हिंसायाम् । 'शृणातेर्ह्रस्वश्चे'तिगुनुडूह्रस्वाः । तथा च-मारणावधिको मन्मथव्यापारः शृङ्गम्, शृङ्गमृच्छति प्रापयत्यारात्याश्रयतीति वा शृङ्गारः । अन्तर्भावितण्यर्थकादृच्छतेः 'कर्मण्यण् ।' ३।२।१ इत्यण् आङुपपदाद्रातेः 'आतश्चोपसर्गे' ३।१।१३६ इति को वा । इतीयमन्वर्था सञ्ज्ञेति निष्कृष्टम् । एष चोत्तमप्रकृतीनेवावलम्ब्योज्जृम्भते । इत्येव 'शृङ्गं...' इत्यर्द्धेन शृङ्गारस्यान्वर्थां सञ्ज्ञां लक्षयित्वा तृतीयपादे पुना रसान्तरतो व्यतिरेको लक्षितः । इति । ननु शृङ्गारस्य रसस्य रतिस्थायित्वे कथमुत्तमालम्बनत्वमित्याह-**परोढाम्** । 'अनुरागिणीमपी'ति शेषः । **च** । **वर्जयित्वा** । **अननुरागिणी**मनुरागशून्याम् । **च** । **वेश्यां** गणिकाम् । एतेन-'देवाङ्गनानामप्युपादानम्' 'वर्जयित्वे'ति पूर्वेणान्वेति, अत एव 'चे'त्यस्याधिक्यं सङ्गच्छते । **नायिकाः** । **च** तथा । **दक्षिणाद्याः** । आद्यपदेन धीरललितानुकूलयोर्ग्रहणम् । **नायकाः** । **आलम्बनम्** । **स्युः** । इदमुक्तम्-नहि स्त्रीपुंसयोरन्योऽन्यालम्बनः प्रेमाख्यश्चित्तवृत्तिविशेष एव रतिः । 'सैवास्य स्थायी'ति वक्तुं युक्तम् । दम्पतित्वविरहे स्त्रीपुंसयोरप्यन्योऽन्यालम्बनस्य प्रेम्णोऽपि स्थायित्वानुपपत्तेः । दम्पती अप्युत्तमप्रकृती एव । तथा च-शृङ्गारस्योत्तमप्रकृतयो नायिका-नायकाश्चालम्बनम् । उत्तमप्रकृतिकत्वेनैव परोढाया अननुरक्ताया वेश्यायाः शठादेश्च निरासः । उद्देश्यविधेयभावेन 'वेदाः प्रमाण'मित्यत्रेकत्राप्यन्वयोपपत्तिः । इति । उद्दीपनानुभावौ निर्दिशति-**चन्द्रचन्दनरोलम्बरुतादि** । रोलम्बो भ्रमरस्तस्य रुतं झङ्कारशब्दः । आदिना रहःस्थानयौवनादि । **उद्दीपनम्** । **मतम्** । **भ्रूविक्षेपकटाक्षादिः** । आदिना मुखविकासादि । **अनुभावः** । **प्रकीर्त्तितः** । **औग्र्यमरणालस्यजुगुप्साः** । **त्यक्त्वा** अगृहीत्वा । 'अन्ये सर्वेऽपि यथासम्भवं निर्वेदाद्या'इति शेषः । **व्यभिचारिणः** । **रति**र्निरुक्तलक्षणः प्रेमविशेष इत्यर्थः । **स्थायिभावः** । 'अस्ये'ति शेषः । **अयं** 'शृङ्गार'इति शेषः । **श्यामवर्णः** श्यामो वर्णो यस्य तादृशः । तथोक्तं श्यामो भवति 'शृङ्गार'इति । ननु श्यामवर्णस्यास्य कथमुत्तमप्रकृतिप्रायत्वमित्याह-**विष्णुदैवतो** विष्णुर्दैवतं यस्य स इति तथोक्तः । उक्तं च-'शृङ्गारो विष्णुदेवस्त्वि'ति । विष्णुदैवतत्वेनैवास्य श्यामवर्णत्वं, सङ्घटते तत उत्तमप्रकृतिप्रायत्वमिति भावः ॥ २११ ॥ २१२ ॥ २१३ ॥

उदाहरणं दर्शयति-यथेत्यादिना ।

**यथा** । **'शून्यं वासगृहं...'इत्यादि** । 'शृङ्गारस्योदाहरण'मिति शेषः । पद्यं चेदं व्याख्यातपूर्वमिति बोध्यम् । **अत्र** 'शून्यं वासगृहं...'इत्यादाविति शेषः । **उक्तस्वरूप** उक्तो 'निद्राव्याजमुपागतस्ये'त्यादिनाभिहितं स्वरूपं यस्य स तथोक्तः । **पतिः** । **च** तथेत्यर्थः । **उक्तस्वरूपो**क्त 'शयनादुत्थाय..'इत्यादिना प्रोक्तं स्वरूपं यस्याः सेति तथोक्ता । **बाला**ऽचिरात्परिणीता नायिकेति भावः । **आलम्बनविभावौ** । 'अत्र द्विवचनमुभयोर्न तु तयोरेकतरस्यैवालम्बनविभावत्वमिति सूचनार्थम् । अन्यथा 'वेदाः प्रमाण'मितिवदुद्देश्यविधेयभावकल्पनयैकवचनमेव प्रसज्येतेति बोध्यम् ।

**शून्यवासगृहमुद्दीपनविभावः, चुम्बनमनुभावः, लज्जाहासौ व्यभिचारिणौ, एतैरभिव्यक्तः सहृदयविषयो रतिभावः शृङ्गाररसरूपताम्भजते।**

**तद्भेदावाह-**

**२२६ विप्रलम्भोऽथ सम्भोग इत्येष द्विविधो मतः ॥ २१४ ॥**

**तत्र-**

**२२७ यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ।**

**अभीष्टं नायकं नायिकां वा।**

---

**शून्यवासगृहं** शून्यं जनान्तरसञ्चारसन्निधानादिना रहितं यद्वासगृहं तदित्यर्थः। **उद्दीपनविभावः**। **चुम्बनं** 'परिचुम्ब्ये'ति 'चुम्बित'मिति पदद्योत्यं चेत्यर्थः। **अनुभावः**। **लज्जाहासौ** 'लज्जेति हसते'ति पदद्योत्यौ। **व्यभिचारिणौ**। **एतैः** आलम्बनादिभिरित्यर्थः। **अभिव्यक्तो** भग्नावरणत्वं नीतः। **सहृदयविषयः**। **रतिभावः**। **शृङ्गाररसरूपताम्**। अत्र शृङ्गारः सम्भोगाख्यः। **भजते** आश्रयतीत्यर्थः।

एवं श्रृङ्गारं निर्दिश्य तद्भेदद्वयं निर्देष्टुं प्रतिजानीते-**तद्भेदावि**त्यादिना।

**तद्भेदौ** तस्य श्रृङ्गारस्य भेदौ तौ तथोक्तौ। **आह-२२६ विप्रलम्भो**..इत्यादिना।

२२६ **विप्रलम्भो** विशेषेण प्रलम्भ ईर्ष्यादिना रतेरुच्छेदो लक्षणया तन्मूलो रस इत्यर्थः। **अथ**। **सम्भोगः** सम्यग्भोगे ईर्ष्यादिराहित्यादिना रतेरुन्मेषो लक्षणया तन्मूलो रस इत्यर्थः। **इती**त्येवम्। **द्विविधः**। **एष** श्रृङ्गार इत्यर्थः। **मतः** ॥ २१४ ॥

अथ क्रमादेतयोर्लक्षणे अभिधातुमुपक्रमते-**तत्र** तयोर्विप्रलम्भसम्भोगयोर्मध्य इत्यर्थः।

२२७ **यत्र** यस्मिन् श्रृङ्गार इत्यर्थः। **तु** पुनः। **प्रकृष्टे**र्ष्यादिनाऽकलुषिता हीनत्वमप्राप्ता वेति भावः। **रति** प्रेमविशेषो विलासविशेषो वा। **अभीष्टं** नायकरूपं नायिकारूपमालम्बनं वा। **न**। **उपैति** सेवते। **असौ** स इत्यर्थः। **विप्रलम्भ**स्तदाख्यः श्रृङ्गार इत्यर्थः। इदमुक्तम्-रतिर्हि नायकस्य नायिकाविषया नायिकाया वा नायकविषया प्रीतिः, सा यदीर्ष्यादिना दूषिता सती स्वस्वाभिमतमपि नायकसम्बन्धिनी नायिकारूपनायिकासम्बन्धिनी वा नायकरूपं वाऽऽलम्बनमाश्रयते तदा विप्रलम्भ इति। तर्कवागीशास्तु-'यत्र रसे प्रकृष्टा प्रकरणादिना प्रधानत्वं प्राप्ता रतिरस्ति। नायिका नायको वाऽभीष्टं नायकं नायिकां वा नोपैति नोपभुङ्क्तेऽसौ विप्रलम्भ इत्यर्थः। तथा च-उपभोगाभावसंवलितप्रकृष्टरतिविषयो रसो विप्रलम्भ इत्यर्थः। करुणादौ शोकोद्दीपनतया रतिसत्त्वेन तत्रातिव्याप्तिवारणाय प्रकृष्टेति। सम्भोगेऽतिव्याप्तिवारणायोपभोगाभावेति। विप्रलम्भसमानविषयके ज्ञानान्तरे संस्कारे वाऽतिव्याप्तिवारणाय रस इत्यर्थः। अन्ये तु-'यत्र दुःखसंवलितत्वाद्रतिर्न प्रकृष्टाऽभीष्टमुपैति विषयीकरोति स विप्रलम्भ' इति व्याकुर्वन्ति, तन्न; करुणेऽतिव्याप्तेः। यदि च-'यत्रे' त्यस्य 'श्रृङ्गार' इति व्याकारात् करुणे नातिव्याप्तिरित्युच्यते, तदा 'अभीष्टमुपैती' त्यस्यानर्थक्यम्। अभीष्टविषयकरतेरेव श्रृङ्गारत्वेन परिणामात्। अपरे तु-'नायिकादिभिरभीष्टं नोपैति न सङ्गच्छते, तथा चाभीष्टविच्छेदाभावेनाव्याप्तेः। केचित्तु-'संयोगः सुखसम्भिन्नो विप्रलम्भस्तु दुःखयुक। रतिस्तयोः प्रकर्षः स्यादाधिक्यात्सुखदुःखयोः ॥' इति दर्शनाद् दुःखसंवलितरतिस्थायिभावको रसो विप्रलम्भ' इत्याहुः, तन्न, 'प्रणयमाने दुःखायोगादव्याप्तेः।' इति व्याचक्षते। 'ईर्ष्यादिहेतुका' दिति निवेशे तु न काऽपि क्षतिः। आदिना प्रणयमानगुरुतन्त्रताप्रवासादिनां ग्रहणम्। अत एवाहुः-'श्रृङ्गारो द्विविधः, संयोगो विप्रलम्भश्च, रतेः संयोगकालावच्छिन्नत्वे प्रथमः; वियोगकालावच्छिन्नत्वे द्वितीयः; संयोगश्च न दंपत्योः सामानाधिकरण्यम्, एकतल्पशयनेऽपीर्ष्यादिसद्भावे विप्रलम्भस्यैव वर्णनात्। एवं वियोगोऽपि न वैयधिकरण्यम्, दोषस्योक्तत्वात्। तस्मात् द्वाविमौ संयोगवियोगाख्यावन्तःकरणवृत्तिविशेषौ। यत्संयुक्तो वियुक्तश्चास्मीति धीः।' इति।

कारिकाकाठिन्यपरिहारायाभीष्टपदं व्याचष्टे-**अभीष्टमि**त्यादिना।

**अभीष्टम्**। 'इत्यस्ये'ति शेषः। **नायकम्**। 'इत्यर्थ' इति शेषः। **वा**। **नायिकाम्**। 'इत्यर्थ' इति शेषः। इदं बोध्यम्-'अभीष्ट' मित्यस्य लिङ्गविपरिणामेनाभीष्टां नायिकामित्यर्थः। इति।

२२८ स च पूर्वरागमान-प्रवासकरुणात्मकश्चतुर्धा स्यात् ॥ २१५ ॥

तत्र-

२२९ श्रवणाद्दर्शनाद्वाऽपि मिथः संरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥ २१६ ॥

२३०. श्रवणं तु भवेत्तत्र दूतवन्दीसखीमुखात् ।
इन्द्रजाले च चित्रे च साक्षात्स्वप्ने च दर्शनम् ॥ २१७ ॥

२३१ अभिलाषश्चिन्ता, स्मृति--गुणकथनोद्वेग-संप्रलापाश्च ।
उन्मादोऽथ व्याधि-र्जडता, मृति,--रिति दशाऽत्र कामदशाः ॥२१८॥

अथ-

२३२ अभिलाषः स्पृहा, चिन्ता प्राप्त्युपायादिचिन्तनम् ।
उन्मादश्चापरिच्छेद-श्चेतनाचेतनेष्वपि ॥ २१९ ॥

---

अथास्य प्रभेदान् दर्शयितुं चतुर्भेदत्वमाह-२२८ स चेत्यादिना ।

२२८ **स** विप्रलम्भः । **च** । **पूर्वराग-मान-प्रवास-करुणात्मकः** । 'स'न्निति शेषः । **चतुर्धा** चतुष्प्रकारः । **स्यात्** । अत्राहुस्तर्कवागीशाः--'चतुर्धे' तीदमुपलक्षणम् । विरहोऽपि वेदितव्यः, स च गुर्वादिपरतन्त्रत्वात् । सङ्गमप्रतिरोधो यथा-'किं रुद्धः प्रियया..'इत्यादि । अन्यथा तस्य निरुक्तप्रकारचतुष्टयानन्तर्भावाल्लक्ष्यत्वाभावेन तत्र सामान्यलक्षणस्यातिव्याप्तिप्रसङ्गात् । इति ॥ २१५ ॥

पूर्वरागेत्यादीनां स्वरूपतो निर्देशार्थं प्रवृत्त आह--तत्रेति । तत्र तेषु पूर्वरागादिषु मध्य इत्यर्थः ।

२२९ **श्रवणात्** सौन्दर्य्यादीनां गुणानामिति शेषः । **वा** । **दर्शनाद्** यथा श्रवणमनुभवात् । **अपि** । **मिथः** परस्परम् । **संरूढरागयोः** । यथा दमयन्तीनलयोरुषाऽनिरुद्धयोश्चेति शेषः । **अप्राप्तौ** 'रते' रिति शेषः । **यः** । **दशाविशेषो**ऽवस्थाविशेषः । 'सम्भवती'ति शेषः । **सः** । **पूर्वरागः** पूर्वः प्रथमः फलविशेषमप्राप्त इति यावत्, असौ रागोऽनुराग इति तथोक्तः । **उच्यते** ॥ २१६ ॥

ननु श्रवणं कथं दर्शनं वा कुत्र स्यादित्याशङ्क्याह--२३० **तत्र** तयोः श्रवणदर्शनयोर्मध्य इत्यर्थः । **श्रवणम्** । **तु** । **दूतबन्दीसखीमुखात्** । मुखं द्वारम् । सखीति श्रोत्रन्तरदृष्टन्तरग्राहकम् । **भवेत्** । अथ-**दर्शनम्** । **इन्द्रजाले** । इदमुपलक्षणं मायिकदर्शितदृश्यजातस्य । **च** । **चित्रे** लिखिते दृश्ये । **च** । **साक्षात्**प्रत्यक्षम् । **च** । **स्वप्ने** । 'भवे'दिति पूर्वतोऽन्वेति ॥ २१७ ॥

ननु साम्प्रतमनुरागान्वितावेताविति ज्ञायेतेत्याह--२३१ **अत्रा**स्मिन्पूर्वरागे। **अभिलाषः**। **चिन्ता** वक्ष्यमाणलक्षणं चिन्तनम् । **स्मृतिगुणकथनोद्वेगसंप्रलापाः** स्मृति ( ध्यानं ) श्च गुणकथनं चोद्वेग ( व्याकुलता ) श्च संप्रलापश्चेति तथोक्ताः । **च** । **उन्मादः** । **अथ** । **व्याधिः** पीडाज्वरादिरिति यावत् । **जडता** निश्चेतनत्वम् । **मृतिर्**मरणम् । 'अपी'ति शेषः । **इती**त्येवम् । **दश** । **कामदशाः** कामकृता अवस्थाः । 'भवन्ती'ति शेषः ॥ २१८ ॥

अथ बोद्धव्यार्थविशेषानभिलाषादीन् व्याख्यातुमुपक्रमते--अथेत्यादिना ।

**अथ** पूर्वरागे कामदशानामभिधानाभिधानानन्तरम् । 'बोद्धव्यार्थविशेषा अभिलाषादयो व्याख्यायन्ते-२३२ **अभिलाषः** इत्यादिना ।

२३२ **स्पृहा** स्पृहणं प्रियस्येति तथोक्ता । षिद्भिदादिभ्योऽङ् ।' ३।३।१०४ इत्यङ् । **अभिलाषः** । 'उच्यते'इति शेषः । **प्राप्त्युपायादिचिन्तनं** प्राप्तेः प्रियसङ्गस्योपायतत्प्रतिरोधनिराकरणादेश्चिन्तनम् । **चिता** । 'उच्यत'इति शेषः । **चेतनाचेतनेषु** जडाजडेषु । **अपि** किं पुनस्तदन्यतरेष्वेवेत्यर्थः । **अपरिच्छेदो** विवेकाभाव

**अलक्ष्यवाक् सम्प्रलापश्चेतसो भ्रमणाद्भृशम् ।**
**व्याधिस्तु दीर्घनिःश्वास-पाण्डुताकृशताऽऽदयः ॥ २२० ॥**
**जडता हीनचेष्टत्व-मङ्गानां मनसस्तथा ।**

शेषं स्पष्टम् । क्रमेणोदाहरणानि यथा-'प्रेमार्द्राः...' इत्यादौ मालतीसाक्षाद्दर्शनप्ररूढरागस्य माधवस्याभिलाषः ।

'कथमीक्षे कुरङ्गाक्षीं साक्षाल्लक्ष्मीं मनोभुवः ।
इति चिन्ताऽऽकुलः कान्तो निद्रां नैति निशीथिनीम् ॥ १२७ ॥'

इत्यत्र च कस्याश्चिन्नायिकाया इन्द्रजालदर्शनप्ररूढरागस्य नायकस्य चिन्ता ।

---

इत्यर्थः । च पुनः । **उन्मादः** । 'उच्यत'इति शेषः **चेतसश्चित्तस्य** । **भृशमत्यन्तम्** । **भ्रमणात्** प्रियस्य भावनया तन्मयत्वेनावस्थानात् । **अलक्ष्यवाक्** न लक्ष्यं विषयो यस्याः साऽलक्ष्या, साऽसौ वागिति तथोक्ता । **सम्प्रलापः**। 'प्रलापः स्या'दिति पाठान्तरम् । 'उच्यत'इति शेषः । **दीर्घनिःश्वासपाण्डुताकृशताऽऽदयस्तद्रूप** इति भावः । **तु** । **व्याधिः** । उच्यत' इति शेषः **अङ्गानां** करचरणादीनाम् । **तथा** । **मनसश्चित्तस्य** । **हीनचेष्टत्वं** हीना नष्टप्राया चेष्टा व्यापारो येषां यस्य वा तेषां तस्य वा भावस्तत्त्वम् । **जडता**'ज्ञेये'ति शेषः ॥ २१९-२२२ ॥

स्मृत्यादयस्तु न बोद्धव्यार्थविशेषा इत्याशयेनाह-**शेषं** शिष्यते व्याख्यानतोऽवशिष्यते यत् ( स्मृत्यादिकम् ) तत्तथोक्तम् । 'सम्बन्धमनुवर्त्तिष्यत'इति भाष्यात् घञन्तस्याप्येतस्य क्लीबत्वम् । **स्पष्टम्** । न बोद्धव्यार्थविशेषमिति 'न व्याख्यायत'इति शेषः ।

इदमवधेयम्-अभिलाषाया दश कामावस्था भवन्ति, तत्राभिलाषश्चिन्तोन्मादः संप्रलापो व्याधिर्जडता चेति षड् व्याख्याताः, स्मृत्याद्याः पुनः-'मुहुर्मुहुर्निःश्वसितैर्मनोरथविचिन्तनैः । प्रद्वेषस्त्वन्यकार्य्याणामनुस्मृतिरुदाहृता ॥' 'अङ्गप्रत्यङ्गलीनाभिर्वाक्चेष्टाहसितेक्षणैः । नास्त्यन्यः सदृशस्तेनेत्येतत्स्याद्गुणकीर्त्तनम् ॥' 'आसने शयने वाऽपि न कुप्यति न हृष्यति । नित्यमेवोत्सुका यस्मादुद्वेगस्थानमेव तत् ॥ चिन्तानिःश्वासखेदेन हृद्दाहाभिनयेन च । तदेव कुर्यादत्यन्तमुद्वेगाभिनयेन च ॥' 'सर्वं कृतं प्रतीकारैर्यदि नास्ति समागमः । कामाग्निना प्रदीप्ताया जायते या मृतिस्तु सा ॥' 'मरणं तत'इति पाठान्तरम् । इत्यादिना भरतादिभिर्व्याख्यातत्वाद्बोद्धव्यार्थविशेषत्वाभावाच न व्याख्याताः । इति ।

एवमभिलाषादीन् व्याख्याय क्रमेणोदाहर्त्तुं प्रतिजानीते-**क्रमेणे**त्यादिना ।

**क्रमेण** यथानिर्देशपौर्वापर्य्यम् । **उदाहरणानि** 'निर्दिश्यन्त'इति शेषः । **यथा-'प्रेमार्द्राः...इत्यादौ** 'प्रलयलक्ष्यत्वेनोदाहृतपूर्वे पद्य'इति शेषः । **मालतीसाक्षाद्दर्शनप्ररूढरागस्य** मालत्याः साक्षादात्मना दर्शनं तेन प्ररूढरागस्येत्यर्थः । **माधवस्य** । **अभिलाषः** 'मालतीविषयक'इति शेषः ।

'**मनोभुवो** मनसो भवत्युत्पद्यत इति तस्य, कामस्येत्यर्थः । **साक्षात्** । **लक्ष्मीं** तत्स्वरूपामित्यर्थः । **कुरङ्गाक्षीं** कुरङ्गस्य मृगस्येवाक्षिणी यस्यास्ताम् । **प्रियाम्** । **कथम्** । 'हतभाग्योऽह'मिति शेषः । **ईक्षे** पश्येयम् । 'विभाषा कथमि लिङ्च ।' ३।३।१४३ इति चाल्लङ् । **इतीत्येवम्** । **चिन्ताऽऽकुलः** शोकग्रस्तः । **कान्तः** । **निशीथिनीं** यावद्रात्रि । 'कालाध्वनोरत्यन्तसंयोगे' २।३।५ इति द्वितीया । **निद्रां** ( कर्म्म ) । **न** । **एति** प्रतिपद्यते । इदं कस्यापि कवेः पद्यं, कविराजानामेव वा, 'इदं ममे'ति पाठाधिक्यस्य क्वाचित्कत्वात् ॥ १२७ ॥'

**इत्यत्र** । **च** । **कस्याश्चित्** । **नायिकायाः** । **इन्द्रजालदर्शनप्ररूढरागस्ये**न्द्रजालस्यानिर्वचनीयद्रव्यस्य दर्शनं तेन प्ररूढो रागो यस्य तस्येत्यर्थः । **नायकस्य** । **चिन्ता** प्राप्त्युपायादिचिन्तनं लक्ष्यत इति भावः ।

यथा वा-'मनस्तुवं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः । का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेदलज्जा ॥' इत्यत्र नलस्य गुणश्रवणाद्दमयन्त्याश्चिन्ता ।

'मयि सकपटं..'इत्यादौ च नायकस्य स्मृतिः। 'नेत्रे खञ्जनगञ्जने..'इत्यादौ च गुणकथनम्। 'श्वासान् मुञ्चति..' इत्यादौ चोद्वेगः।

'त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत।
क्व नीलकण्ठ! व्रजसीत्यलक्ष्यवागसत्यकण्ठार्पितबाहुबन्धना॥ १२८॥'

इत्यत्र प्रलापः। 'भ्रातर्द्विरेफ!..' इत्यादावुन्मादः।

'पाण्डु क्षामं वदनं, हृदयं सरसं, तवालसं च वपुः।
आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः॥ १२९॥'

---

'मयि सकपटं..'इत्यादौ। स्मृत्याख्योदाहरणत्वेन निदर्शितपूर्वे इत्यर्थः। च। नायकस्य 'स्वनायिकादर्शनप्ररूढरागस्ये'ति शेषः। स्मृतिरनुस्मृत्यपरपर्य्याया लक्ष्यत इत्यर्थः। यथा वा–'अजस्रमारोहसि दूरदीर्घां सङ्कल्पसोपानततिं तदीयाम्। श्वासान्स वर्षत्यधिकं पुनर्यद् ध्यानात्तव त्वन्मयतामवाप्य॥' इत्यत्र नलस्य दमयन्तीस्मृतिः।

'नेत्रे खञ्जनगञ्जने..'इत्यादौ प्ररूढयौवनलक्ष्यतयोदाहृतपूर्वे च। गुणकथनम्। केनापि क्रियमाणं 'नायिकाया' इति शेषः।

यथा वा–'अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू। कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्॥' इत्यादौ दुष्यन्तस्य शकुन्तलागुणवर्णनम्।

'श्वासान्मुञ्चति..'इत्यादौ 'तपनलक्ष्यत्वेनोदाहृतपूर्वे' इति शेषः। च। उद्वेगो 'नायिकाया' इति शेषः।

'त्रिभागशेषासु त्रिभ्यो भागेभ्यः शेषा अवशिष्टास्तासु। कर्मणि घञ्। यद्वा–निशायाः त्रियामत्वेन तृतीयो भागस्त्रिभागः, स शेषो यासां तासु इति। निशासु रात्रिषु। च पुनः। क्षणं नत्वधिकम्। नेत्रे। निमील्य न तु निद्रामनुभूयापीति भावः। सहसा तत्क्षणात्। हे नीलकण्ठ! क्व कुत्र मदद्दृष्टश्रुतपूर्वे स्थाने इत्यर्थः। व्रजसि गच्छसि। इतीत्थेवम्। अलक्ष्यवागलक्ष्या निर्विषया वागुक्तिर्यस्याः सेति तथोक्ता। तथा असत्यकण्ठार्पितबाहुबन्धनाऽसत्ये मिथ्याभूते कण्ठे नीलकण्ठकण्ठेऽर्पितं निहितं बाहुबन्धनं यया यस्या वेति तथोक्ता। 'पार्वती'ति शेषः। व्यबुध्यत नेत्रे उन्मील्य जागरं नाटितवतीत्यर्थः। अत्र वंशस्थं वृत्तं, तल्लक्षणं चोक्तं प्राक्। कुमारसम्भवस्येदं न पद्यम्॥१२८॥'

इत्यत्र। प्रलापः समप्रलापपराभिधेया कामावस्था लक्ष्यत इत्यर्थः। 'भ्रातर्द्विरेफ!' इत्यादौ 'उन्मादाख्यसात्त्विकभावस्य लक्ष्यत्वेनोदाहृतपूर्वे' इति शेषः। उन्मादः। तदाख्या कामावस्थेति भावः। 'नायकस्य नायिकादर्शनप्ररूढरागस्ये'ति शेषः। यथा वा–'बिभेति रुष्टाऽसि किलेत्यकस्मात्स त्वां किलापेति हसत्यकाण्डे। यान्तीमिव त्वामनुयात्यहेतोरुक्तस्त्वयेति प्रतिवक्ति मोघम्॥' इत्यत्र नलस्याविवेकादुन्मादः।

'हे सखि! तव। पाण्डु सितं गतरक्तिमात एवारमणीयमिति यावत्। 'पाण्डुः कुन्तीपतौ सिते।' इति हैमः। क्षामं कृशं म्लानमिति यावत्। वदनम्मुखम्। तथा–सरसं रसेनान्नरसेन सह वर्त्तत इति तथोक्तम्। शोकदैर्घ्येणापरिपक्वभुक्तान्नमिति भावः। यद्वा–रसेनानुरागेणोपचारात्तदुपलक्षकेण रोमाञ्चितत्वादिना सह वर्त्तत इति तथोक्तम्। 'शृङ्गारादौ विषे वीर्य्ये गुणे रागे द्रवे रसः' इत्यमरः। एवम्–हृदयं भुक्तान्नस्थानविशेषो वक्षो वा। 'हृदयं वक्षसि स्वान्ते बुक्काया'मिति व्याख्यासुधा। अलसमालस्ययुक्तं कर्म्मानर्हमिति यावत्। च। वपुः शरीरम्। (कर्तृ) हृदन्तर्हृदयमध्ये। नितान्तमत्यन्तम्। क्षेत्रियरोगं क्षेत्रियोऽसाध्योऽसौ रोगस्तम्। परक्षेत्रे न तु यावद्वर्त्तमानक्षेत्रं चिकित्स्यः प्रतिकार्य्य इति क्षेत्रियः। क्षेत्रं शरीरम्। 'क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः।' इति मेदिनी। 'क्षेत्रियच् परक्षेत्रे चिकित्स्यः।' ५।२।९२ इति निपातनात्साधुः। 'क्षेत्रियं क्षेत्रजतृणे परदाररतेऽपि च। अन्यदेहचिकित्सार्हेऽसाध्यरोगे च जायते॥' इति विश्वः। आवेदयति बोधयति। अत्रार्या छन्दः। लक्षणं चोक्तं प्राक्। इदं च कस्येति नज्ञायते। मालतीमाधवस्येति तु भ्रान्तोक्तिः, अस्य तत्रानुपलम्भात्। अपरिणीतामिति स्वानुरागं प्रकटयितुमक्षमां सखीं प्रति सख्या उक्तिरियम्॥१२९॥' इति।

इत्यत्र च व्याधिः।

'भिसिणीअलसअणीए णिहिअं सव्वं सुणिच्चलं अंगं।
दीहो णीसासहरो एसो साधेइ जीअइ त्ति परं' ॥ १३० ॥'

इत्यत्र च जडता। इदम्मम।

२३३ रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते ॥ २२१ ॥

२३४ जातप्रायं तु तद्वाच्यं चेतसाऽऽकाङ्क्षितं तथा।
वर्ण्यतेऽपि यदि प्रत्यु-ज्जीवनं स्याददूरतः ॥ २२२ ॥

---

इत्यत्र। च। व्याधिः 'कुत्राप्यनुरक्ताया बालाया' इति शेषः। यथा वा-'क्षामक्षामकपोलमाननमुरःकाठिन्य-मुक्तस्तनं, मध्यः क्लान्ततरः, प्रकामविनतावंसौ छविः पाण्डुरा। शोच्या च प्रियदर्शना च मदनक्लिष्टेयमालक्ष्यते पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी ॥' इत्यत्र दुष्यन्तेऽनुरक्तायाः शकुन्तलाया व्याधिः।

'भिसिणीअलसअणीए' विसिनीदलशयनीये विसिनीनां कमलिनीनां दलानि पत्राणि तेषां शयनीयं शय्या तत्र। 'नलिन्यां तु विसिनीपद्मिनीमुखाः।' इत्यमरः। सव्वं सर्वम्। अङ्गं करचरणादि। सुणिच्चलं सुनिश्चलम्। णिहिअं निहितं स्थापितमिति यावत्। अथापि-एसो एषः। दीहो दीर्घः। णीसासहरो निःश्वासभरः। जीअइ जीवति'एसा (एषा)' इति शेषः। त्तीत्येवम्। परं केवलम्। साधेइ साधयति। अत्रार्या छन्दः। तल्लक्षणं चोक्तं प्राक्। इदं च कविराजानाम्, अत एव वक्ष्यन्ति-'इदम्ममे'ति ॥ १३० ॥'

इत्यत्रेत्यस्मिन्नुदाहृते पद्य इति यावत्। च। जडता। 'क्वाप्यनुरक्ताया नायिकाया' इति शेषः।

उदाहृतं चेदं पद्यं स्वप्राकृतकाव्यस्येति सूचयितुमाह-इदं'भिसिणी...'इति पद्यम्। मम दर्पणकृत इत्यर्थः।

यथा वा-'भवद्वियोगाच्छिदुरातिधारायमस्वसुर्मज्जति निःशरण्यः। मूर्च्छामयद्वीपमहान्ध्यपङ्के हाहा महीभृद्भट-कुञ्जरोऽयम् ॥'इत्यत्र नलस्य मूर्च्छाया वर्णनात्।

अथ कामस्यान्त्यदशामुदाहर्तुं प्रवृत्तः प्रथमं तत्र वक्तव्यविशेषं निर्दिशति-२३३ रस...इत्यादिना।

२३३ रसविच्छेदहेतुत्वाद्रसस्यानुरागस्य रतेरिति यावद् विच्छेदो विनाशस्तद्धेतुत्वात्। मरणं मरणाख्या दशा। नैव। वर्ण्यते'कविभि'रिति शेषः। रत्याश्रयस्य मरणदशायां रतेर्विनाशस्तच्छोकस्य पुनरुदय इति मरणरूपानुभावेन रतौ विनष्टायां तत्स्थायिकस्य शृङ्गाररस्याप्यनुदयस्तस्मान्मरणं पूर्वरागवर्णनावस्थायां न वर्ण्यत इति भावः। विवृतिकारा अपि व्याचक्षते-'रत्याश्रयस्य मरणाद्रतेर्नाश इति मरणरूपानुभावेन रतेर्मेलनाभावाद्रसत्वं नोपपद्यते।'इति। 'मिलनाभावा' दिति पाठान्तरन्तु च्युतसंस्कारमेव, मिलनस्य कुटादित्वाभावेन गुणनिषेधानुपपत्तेः ॥ २२१ ॥

एतस्य प्रतिप्रसवमाह-२३४ जातप्रायं...इत्यादिना।

२३४ तु किन्तु। तन्मरणं तदाख्या दशेत्यर्थः। जातप्रायं जातस्य प्रायं सदृशमिति तथोक्तम्। यद्वा-प्रायेण ( न तु सर्वथा ) जातमिति तथोक्तम्। सन्निहितमिति भावः। 'प्रायो बाहुल्यतुल्ययोः।' इति विश्वः। 'वाऽऽहि-ताग्न्यादिषु।' २।२।३७ इति परनिपातः। वाच्यं वर्णनीयम्। तथा। चेतसा 'रत्याश्रयस्य वियोगस्यासहिष्णुत्वे' इति शेषः। आकाङ्क्षितं वाञ्छितम्। 'मदीयं मरणं स्या' दित्येवं प्रार्थितमिति भावः। 'वाच्य'मिति पूर्वतोऽन्वेति। अथ-यदि। अदूरतो नातिकालातिक्रम इति भावः। प्रत्युज्जीवनं मरणावस्थायां प्राप्तायामपि देवप्रसादादिना पुनर्जीवनमिति भावः। स्यात्सम्भाव्येत। 'तदे'ति शेषः। अपि। 'त' दिति पूर्वतोऽन्वेति। वर्ण्यते। 'कविभि' रिति शेषः ॥ २२२ ॥

तत्राद्यं यथा—

'शेफालिकां विदलितामवलोक्य तन्वी प्राणान्कथञ्चिदपि धारयितुं प्रभूता ।
आकर्ण्य सम्प्रति रुतं चरणायुधानां किं वा भविष्यति न वेद्मि तपस्विनी सा ॥१३१॥'

द्वितीयं यथा—

'रोलम्बाः परिपूरयन्तु हरितो झङ्कारकोलाहलै-
र्मन्दम्मन्दमुपैतु चन्दनवनीजातो नभस्वानपि ।
माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चमं
प्राणाः सत्वरमश्मसारकठिना गच्छन्तु गच्छन्त्वमी ॥ १३२ ॥

---

अत्रैवं बोध्यम्—मरणं तावच्चतुर्विधम्, प्रत्युज्जीवनाशाशून्यं, जातसदृशं, 'स्यान्ममे'ति चिन्तितं, प्रत्युज्जीवनाशासनाथं चेति भेदात्; तत्राद्यं रसभङ्गहेतुत्वान्न वर्ण्यते, त्रिविधं पुनर्वर्ण्यते । इति ।

उदाहर्त्तुं प्रतिजानीते—तत्रेत्यादिना ।

**तत्र** तेषु वर्णनीयेषु त्रिविधेषु मरणेषु मध्य इत्यर्थः । **आद्यम्** । 'मरण'मिति शेषः **यथा**—'**शेफालिकां**..'इत्यादौ ।

'**तन्वी** कान्ता मदीयदर्शनमारभ्य मयि जातानुरागतया विरहाकुलत्वेन कृशाङ्गी वेत्यर्थः । 'तनुः काये त्वचि स्त्री स्याच्चिष्वल्पे विरले कृशे ।' इति विश्वमेदिन्यौ । 'वोतो गुणवचनात् ।' ४।१।४४ इति ङीप् । **शेफालिकां** निर्गुण्डीम् । 'शेफालिका तु सुवहा निर्गुण्डी नीलिका च सा ।' इत्यमरः । **विदलितां** विकसिताम् । **अवलोक्य** । **कथञ्चि**न्महताऽऽयासेन । **प्राणान्** । **धारयितुम्** न तु धर्त्तुं, तत्र मम वियोगेन खल्वस्य परित्यक्तत्वात् । **अपि** । **प्रभूता** क्षमा जाता । **सा** तदानीमेव कथञ्चिदनिर्गमितप्राणेति भावः । अत एव—**तपस्विनी** मद्वियोगे त्यक्तशरीरापेक्षत्वेनाहारादिविमुखा तदवध्यनयत्नादत्तचित्ता वेति भावः । **सम्प्रति** रात्रिशेषावसरे । **चरणायुधानां** कुक्कुटानाम् । 'कुक्कुटश्चरणायुधः ।' इत्यमरः । **रुतं** शब्दम् । **आकर्ण्य** श्रुत्वा । **किं** किमवस्थाका । **भविष्यति** । 'इती'ति शेषः । **न** । **वेद्मि** जानामि । **वे**ति तु वाक्यालङ्कारार्थम् ।

अयम्भावः—सायं कयोश्चित्कुत्रापि सानुरागं साक्षात्कारो जातः, अथ—मनसा दृष्टिपातं वञ्चयितुमशक्तयोरपि तयोः स्वंस्वं निकेतनं प्रति कथमपि गुरुजनादितन्त्रतया गतयोर्नायको नायिकां नक्तं चिन्तयमानोऽत एवोच्छिन्ननिद्र आह—सम्भावयामि मम सा प्रिया तदवध्येवाशमनीयबाधा, अथापि निशीथे मनसिजबाधोद्दीपकं शेफालिकाया विदलनमवलोक्यावशिष्टपरिमितनिःश्वासोच्छ्वासा सम्भूयापि न सर्वथा जीवनावस्थातो विमुखीसंवृत्ता । किन्तु ततोऽप्यसह्यं साम्प्रतिकं कुक्कुटानां रुतमाकर्ण्य किमवस्थाका भविष्यतीति न ज्ञातुं क्षमे, संवृत्ता किं ननु विमुखी जीवनावस्थातः ? इति । अत्र वसन्ततिलकं छन्दः ॥ १३१ ॥'

चेतसाऽऽकाङ्क्षितं मरणमुदाहर्त्तुं प्रतिजानीते—**द्वितीय**मित्यादिना ।

**द्वितीयं** चेतसाऽऽकाङ्क्षितम् । 'मरण'मिति शेषः । **यथा**—'**रोलम्बाः**...'इत्यादौ ।

'**रोलम्बा** भ्रमराः । 'रोलम्बः स्यान्मधुकर'इति गोपालः । **झङ्कारकोलाहलै**र्झङ्कारा एव कोलाहलास्तैः । झङ्कारस्य कोलाहलत्वं त्वसह्यत्वात्, अत एव बहुवचनेनापि निर्देशः सङ्गच्छत इति बोध्यम् । **हरितो** दिशः । 'आशाश्च हरितश्च ताः ।'इत्यमरः । **परिपूरयन्तु** परितो व्याप्ताः कुर्वन्तु । **चन्दनवनीजात**श्चन्दनानां वनी वने तत्र जातः प्रभूत इति तथोक्तः । 'षिद्गौरादिभ्यश्च ।' ४।१।४१ इति ङीप् । **नभस्वान्** वायुः । 'नभस्वद्वातपवनपवमानप्रभञ्जनाः ।'इत्यमरः । **अपि** । **मन्दम्मन्दम्** । **उपैतु** । 'काम'मिति शेषः । **चूतशिखरे** चूतानामाम्राणां शिखरं शिरोदेशस्तत्र । 'आम्रश्चूतो रसालः' इति, 'शिरोऽग्रं शिखरं वा ने'ति चामरः । **माद्यन्तः** प्रमत्ताः सम्पद्यमानाः । **केलीपिकाः** केलीनां क्रीडानां (सञ्चारकाः) पिकाः कोकिला इति तथोक्ताः । 'केलिः केली रतिः क्रीडे'ति गोपालः । 'कोकिलः पिक इत्यपि ।'इत्यमरः । **पञ्चमं** तदाख्यं रागस्वरम् । 'पञ्चमश्चेत्यमी सप्त तन्त्री-

**ममैतौ ।**

**तृतीयं यथा-कादम्बर्यां महाश्वेतापुण्डरीकवृत्तान्ते । एष च प्रकारः करुणविप्रलम्भविषय इति वक्ष्यामः ।**

**केचित्तु-**

**'नयनप्रीतिः प्रथमं, चित्तासङ्गस्ततोऽथ सङ्कल्पः ।**
**निद्राछेदस्तनुता, विषयनिवृत्तिस्त्रपानाशः ॥ १३३ ॥**

---

कण्ठोत्थिताः स्वराः ।' इत्यमरः । **कलयन्तु** रचयन्तु । **अश्मसारकठिना** अश्मसारवल्लोहवत् कठिनाः । एतेनात्यन्तायासदातृत्वं सूचितम् । 'लोहोऽस्त्री शस्त्रकं तीक्ष्णं पिण्डं कालायसायसी । अश्मसार'इत्यमरः । **अमी । प्राणाः । त्वरं** झटिति । एतेन प्राणानामत्यन्तमनुपयोगित्वं ध्वनितम् । **गच्छन्तुगच्छन्तु** । कामाभ्यनुज्ञायां द्विर्भावः । अत्र शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ १३२ ॥'

अयम्भावः-अनुरागवशाद्विश्लिष्य स्थातुमक्षमस्याक्षमाया वा कस्याश्चिन्नायिकाया जीवनान्निराशाया उक्तिरियम् । तथा च-भ्रमरा झङ्कारसन्तानैर्दिशो निरवकाशाः कुर्वन्त्वित्याद्या अभ्यनुज्ञा 'गच्छन्तुगच्छन्तु प्राणा' इत्यभ्यनुज्ञाऽर्थां एव, तासामत्र साहाय्याधायकत्वात् । अनुरागिणां हि परस्परं विश्लिष्य स्थितानां भ्रमरझङ्कारादयोऽत्यन्तं जीवितं संशयं नयन्त इति समयः । इति ।

उदाहृतं 'शेफालिकां..' इति, 'रोलम्बाः..' इति श्लोकश्च स्वस्येत्याह-**मम । एतौ** उदाहृतौ श्लोकावित्यर्थः । प्रत्युज्जीवनाशापुरस्कृतं मरणमुदाहरति-**तृतीय**मित्यादिना ।

**तृतीयं** 'प्रत्युज्जीवनं स्याददूरतः ।' इति निर्दिष्टम्मरणमित्यर्थः । **यथा । कादम्बर्यां** तदाख्ये गद्यकाव्ये । **महाश्वेतापुण्डरीकवृत्तान्ते** । 'वर्णित' मिति शेषः । इदमुक्तम्-महाश्वेता नाम हंसस्य गन्धर्वराजस्य दुहिताऽऽसीत्, पुण्डरीकः पुनः श्वेतकेतोस्तपोधनप्रवरस्य तनयः । परस्परमनुरागोत्पत्त्यनन्तरं विश्लिष्य स्थितयोः पुण्डरीकस्तपःप्रवणप्रवरोऽपि मदनशरज्वालया जर्जरीकृतो लोकान्तरपथिकोऽभूत् । अथ तस्मिंस्तदवस्थे महाश्वेतायां च तथा भवितुमुद्यतायां केनापि समुपदिष्टम्-'वत्से महाश्वेते ! न त्याज्यास्त्वया प्राणाः । पुनरपि तवानेन भविष्यति समागमः ।' इति । स्फुटं चैवं प्रत्युज्जीवनाशापुरस्कृतं मरणं पुण्डरीकस्य । इति ।

ननु भवतु तथा सन्निकृष्टजीवनं तन्मरणम्, किन्तु तदन्तः सम्भवति शोके किन्न करुणः ? इति चेत्सत्यमित्याह-**एष च**त्यादिना ।

**एषो**ऽनुरागोद्भावनानन्तरमनुरागाश्रयस्य मरणवर्णनरूप इत्यर्थः । **प्रकारः । च । करुणविप्रलम्भविषयः** करुणविप्रलम्भयोर्विषयः स्थानम् । **इती**त्येवम् । **वक्ष्यामः** ( यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये । ) 'इत्यादिने'ति शेषः । अयम्भावः-सन्निकृष्टप्रत्युज्जीवने मरणे वर्ण्यमानेऽपि यावन्न प्रत्युज्जीवनं तावच्छोकरतिविप्रकृष्टत्वयोरवस्थानम् । रत्याश्रयस्य लोकान्तरपथिकत्वे शोकः, प्रत्युज्जीवनाशादार्ढ्यें तदानीं च ततो विश्लेषसद्भावे रतेर्विप्रकर्षश्च । स्फुटौ चैवं करुणो विप्रलम्भश्च । इति ।

अथ मतान्तरेऽन्या एव मरणदशा इत्याह-**केचित्त्वि**त्यादिना ।

**केचिद्** वात्स्यायनप्रभृतयः । **तु** पुनः । 'आहु'रिति शेषः ।

किमाहुरित्यपेक्षायामाह-'**प्रथमं** गुणश्रवणाद्यवसरानन्तरं गुरुजनादिपरतन्त्रत्वेऽपि साक्षात्कारे सम्पद्यमाने इति भावः । **नयनप्रीति**र्नयनयोः प्रीतिः परस्परमनुरागसङ्गिगमिषाऽऽदिव्यञ्जकोऽवस्थाविशेषः । **ततस्त**दनन्तरम् । **चित्तासङ्ग**श्चित्तस्यासङ्ग आसक्तिः । **अथ । सङ्कल्पो**ऽ'हमेतेन सङ्गच्छेय'मित्याकारको मनोधर्म्मः । अथ तत्र विलम्बे-**निद्राछेदो** निद्रायाश्छेदोऽभावः । अत एव-**तनुता** कृशत्वम् । **विषयनिवृत्ति**र्विषयेभ्यः शरीरयात्रानिर्वाहकेभ्यो भोजनादिभ्यो(ऽपि) निवृत्तिर्विरक्तिः । **त्रपानाश** एते गुरवः किमन्तरवगमिष्यन्तीत्येवं लज्जाया अभावः ॥

उन्मादो, मूर्च्छा, मृतिरित्येताः स्मरदशा दशैव स्युः ।' इति ।

तत्र च–

**२३९ आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः ।**

इङ्गितान्युक्तानि, यथा–रत्नावल्यां सागरिकावत्सराजयोः । आदौ पुरुषानुरागे सम्भवत्यप्येवमधिका हृदयङ्गमता भवति ।

---

**उन्माद** उन्मत्तत्वम् । **मूर्च्छा** वैचित्त्यम् । **मृतिर्मरणम्** । 'च'ेति शेषः । इतीत्येवं दर्शिता इति भावः । **एताः । दश । एव । स्मरदशा ।** स्मरस्य कामस्य दशास्तत्कृता अवस्था इत्यर्थः । **स्युः ।' इति** ॥ १३३ ॥

अत्रेदं बोध्यम्–चित्तासङ्गोऽभिलाषे, सङ्कल्पश्चिन्तायां, निद्राभङ्गस्तनुताविषयनिवृत्तिश्च व्याधौ, त्रपानाशः सम्प्रलापे, मूर्च्छा जडतायां च तिरोधीयन्ते, नयनप्रीतिः पूर्वानुराग एव, मृतिः पुनर्नाम्नाऽप्यभिन्नोदिता । तदिति–अन्यासामपि दशानां सम्भवापरिहेयत्वेन कविराजैरभिहिता एव दश दशाः साम्प्रतं प्रतिभासन्ते । इति ।

पूर्वानुरागः प्रथमं कस्य वाच्यमित्याकाङ्क्षायामुत्तरयितुमुपक्रमते–**तत्रे**त्यादिना ।

**तत्र** तस्मिन् पूर्वानुराग इत्यर्थः । **च–**

२३५ **आदौ** प्रथमम् । **स्त्रिया** नायिकायाः । 'नायकविषय'इति शेषः । **रागो**ऽनुरागः । **वाच्यो** वक्तव्यः । **पश्चा**न्नायिकाया अनुरागकथनानन्तरम् । **तदिङ्गितै**स्तस्या नायिकाया इङ्गितान्यभिप्रायनिवेदकानि चेष्टितानि तैः । **पुंसः** पुरुषस्य नायकस्येति यावत् । 'रागो वाच्य'इति पूर्वतोऽन्वेति ।

कुत्र दर्शितान्येवंविधानि चेष्टितानीत्याह–**इङ्गितानि** चेष्टितविशेषाः । 'आकारस्त्विङ्ग इङ्गितम् ।' इत्यमरः । **यथा– । रत्नावल्यां** रत्नावलीं प्रस्तुत्य श्रीहर्षदेवेन निर्म्मितायां नाटिकायामित्यर्थः । **सागरिकावत्सराजयोः । उक्तानि** 'तथाऽन्ययोरप्यवगन्तव्यानी'ति शेषः । अयम्भावः–सागरिका नाम सिंहलेशस्य दुहिता वासवदत्ताया वयस्या रत्नावलीतराभिधेया, वत्सराजः पुनर्वासवदत्तायाः स्वामी । तयोरेवान्योऽन्यं हार्दावेदकानि चेष्टितानि रत्नावल्यां नाटिकायां दर्शितानि । तथाहि–वासवदत्तया छलेन स्वसन्निधानतो निवर्त्तयितुं सारिकासन्निधानं गन्तुं प्रेरितया सागरिकया किञ्चित्ततोऽपसृत्य निलीय मदनमर्चयितुं कुसुमावचयनात्प्रभृति–'हद्धीहद्धी ! कहं कुसुमलोहोक्खित्तहिअआए अदिचिरं जेव्व मए किदं, ता इमिणा सिन्दुवार विडवेण ओवारिअसरीरा भविअ पेक्खामि (विलोक्य) कहं पेक्खिदो जेव्व अपुव्वो कुसुमाउहो अह्माणं तादस्स अंतेउरे चित्तगदो अच्चीअदि, इह दु पच्चक्खो लक्खीअदि ।' इत्यादिना वत्सराजविषयकप्रेमावेदकानि चेष्टितानि, वत्सराजेन पुनः–चित्रफलकदर्शनानन्तरं 'लीलाऽवधूतपद्मा कथयन्ती पक्षपातमधिकं नः । मानसमुपैति केयं चित्रगता राजहंसीव ॥'इत्यभिधानात्प्रभृति–'श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः । कुतोऽन्यथा स्रवत्येप स्वेदच्छद्मा सृतद्रवः ॥'इत्यादिना दर्शितानि । इति ।

ननु प्रथमं यदि पुरुषस्यैवानुरागः स्यात्तदाऽसौ तथोच्येत का क्षतिरित्याशङ्क्याह–**आदौ** पुरुषनिष्ठानुरागसम्भवात् प्रथमम् । **पुरुषानुरागे** । पुरुषनिष्ठे नायिकाविषयानुराग इति भावः । **सम्भवति** । सतिसप्तमीयम् । **अपि । एवं** नायिकाऽनुरागवर्णनस्य प्राथमिकत्व इति भावः । **अधिका**'नायकानुरागवर्णनस्य प्राथमिकत्वापेक्षये'ति शेषः । **हृदयङ्गमता** युक्त्युपेतत्वं रमणीयतेति यावत् । 'सङ्गतं हृदयङ्गमम् ।'इत्यमरः । **भवति** सम्पद्यते । अयम्भावः–पुरुषः पौरुषापेतो न शोभते, पौरुषं च धैर्य्याद्यभिन्नमेवेति विदितं विदुषाम्; तथा च–पुरुषस्य धैर्य्याद्यपराभिधेयं पौरुषमुद्भावयितुं तन्मनसि जातमपि मदनक्षोभं न निबध्नन्ति सहृदयधुरीणाः । उक्तं चैवं स्थाने–'आदा'-वित्यादि । इति ।

---

१ 'हाधिक्हाधिक् ! कथं कुसुमलोभोत्क्षिप्तहृदययाऽतिचिरमेव मया कृतं, तस्मादमुनैव सिन्धुवारविटपेनापवारितशरीरा भूत्वा प्रेक्षिष्ये । कथं प्रेक्षित एवापूर्वः कुसुमायुधः, अस्माकं तातस्यान्तःपुरे चित्रगतोऽर्च्यते, इह तु प्रत्यक्षो लक्ष्यते ।' इति ।

२३६ नीली कुसुम्भमञ्जिष्ठा पूर्वरागोऽपि च त्रिधा ॥ २२३ ॥

तत्र-

२३७ न चातिशोभते यन्नापैति, प्रेम मनोगतम् ।
तन्नीलीरागमाख्यान्ति यथा श्रीरामसीतयोः ॥ २२४ ॥

कुसुम्भरागं तत्प्राहु-र्यदपैति च शोभते ।
देवहूत्या समं यद्वत् कर्दमस्य तपस्विनः ॥ २२५ ॥

मञ्जिष्ठारागमाहुस्तद् यन्नापैत्यतिशोभते ।
इन्दुमत्या यथाऽजस्य दमयन्त्या नलस्य वा ॥ २२६ ॥

अथ मानः—

---

अथास्य त्रैविध्यं दर्शयति-२३६ नीली..इत्यादिना ।

२३६ च पुनः । पूर्वरागः । अपि । नीली तत्स्वरूपभूत इत्यर्थः । कुसुम्भं तत्स्वरूपभूतः । मञ्जिष्ठा तत्स्वरूपभूतः । 'चेती'ति शेषः । त्रिधा ॥ २२३ ॥

अथ त्रिविधानामेषां लक्षणनिर्देशपूर्वकं लक्ष्याणि निर्देष्टुमुपक्रमते-तत्रेत्यादिना ।

तत्र तेषु नील्याद्युपाधिकेषु रागेषु मध्ये-

२३७ यत् । न । अपैति निवर्त्तते । न । च 'य'दिति समन्वेति । अतिशोभतेऽत्यन्तं शोभते प्रत्यक्षं सद्विकसतीति भावः । तत् । मनोगतं न तु बहिर्भूतम् । प्रेम । नीलीरागं नीली नीलोऽसौ राग इति तं तथोक्तम् । 'नीली रुग्भेदनीलिन्यो' रिति मेदिनी । आख्यान्त्यभिदधति । । 'विशेषज्ञा' इति शेषः । उदाहरति-यथा । श्रीरामसीतयोः श्रीरामचन्द्रस्य सीतायाश्चेत्यर्थः । श्रिया युक्ते रामसीते इति श्रीरामसीते तयोः । 'अल्पाच्तरम् ।' २।२।३४ इत्यनेन रामस्य पूर्वनिपातः । यद्वा-श्रीरामश्च सीता चेति तयोरित्येव युक्तम् । 'अभ्यर्हितं चे'त्यनेन श्रीरामस्य पूर्वनिपातः । अत एव रामस्य श्रीविशिष्टत्वं शोभते । न च स्त्रीवाचकस्यैव पूर्वनिपातनं न्याय्यम्, तथा प्रमाणानुपलब्धेः 'इन्द्रेन्द्राण्या' इत्याद्युदाहरणोपलब्धेश्च । अयम्भावः-श्रीरामचन्द्रस्य जनकनन्दिन्याश्च पारस्परिकोऽनुराग आन्तरिको विरहदैर्घ्येऽप्यरिक्तैश्वर्य्य एवासीदिति नीलीरागसदृशत्वान्नीलीरागापराभिधेयः । इति । अथ यत् । अपैति 'कालान्तरे' इति शेषः । च । शोभते यावद्वियोगाद्यभावस्तावद् बाह्यमपि भवतीति भावः । तत् 'प्रेमे'ति शेषः । कुसुम्भरागं कुसुम्भः कौसुम्भोऽसौ रागस्तम् । कुसुम्भरागसदृशमिति भावः । 'कुसुम्भं हेमनि महारजते ना कमण्डलौ ।' इति मेदिनी । प्राहुः । उदाहरति-यद्वत् । देवहूत्या । समम् । कर्दमस्य । तपस्विनः । अयम्भावः कर्दमस्य देवहूत्याश्च पारस्परिकोऽनुरागो यावत्तद्भगवदवतार इति कुसुम्भरागसदृश इति । तथा यत् । न । अपैति । किन्तु-अतिशोभते । तत् 'प्रेमे'ति शेषः । मञ्जिष्ठारागं मञ्जिष्ठा मञ्जिष्ठासम्बन्ध्यसौ रागस्तम् । आहुः । उदाहरति-यथा । अजस्य रघुपुत्रस्य । इन्दुमत्या । 'सम'मिति शेषः । वाऽथवा । 'यथे'ति पूर्वतोऽन्वेति । नलस्य । दमयन्त्या 'सम'मिति शेषः । अयम्भावः- अजस्येन्दुमत्याश्च नलस्य वा दमयन्त्याश्च पारस्परिकोऽनुरागो यावज्जीवनं स्फुटोऽभूदिति मञ्जिष्ठासदृशो गाढो रमणीयश्चेति ॥ २२४ ॥ २२५ ॥ २२६ ॥

एवं पूर्वरागं निर्वर्ण्य निर्दिश्य च क्रमप्राप्तम्मानं निर्वर्णयितुमुपक्रमते-अथेत्यादिना ।

अथ पूर्वरागनिर्देशनानन्तरम् । मानः । 'निर्दिश्यत' इति शेषः । २३८ मानः..इत्यादिना ।

२३८ मानः कोपः, स तु द्वेधा प्रणयेर्ष्यासमुद्भवः ।
२३९ द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि ॥ २२७ ॥
प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना ।

'द्वयो'रिति, नायकस्य नायिकायाश्चोभयोश्च प्रणयमानो वर्णनीयः ।

तत्र नायकस्य यथा–

'अलिअपसुत्तअ णिमीलिअच्छ ! देसु सुहअ मज्झ ओआसं ।

---

२३८ मानः । 'नामे'ति शेषः । कोपो लक्षणया तन्मूलो विप्रलम्भ इत्यर्थः । स मानमूलो विप्रलम्भ इत्यर्थः । तु । प्रणयेर्ष्यासमुद्भवः प्रणयश्चेर्ष्या चेति ते सम्भव उत्पत्तिस्थानं यस्य स इति तथोक्तः । प्रणयः प्रीत्या प्रार्थनं प्रीतिरेव वा । ईर्ष्यासपत्न्याद्युत्कर्षासहिष्णुत्वम् । 'प्रश्रयप्रणयौ समौ ।' इति 'प्रणयास्त्वमी । विश्रम्भयाच्ञाप्रेमाण' इति 'अक्षान्तिरीर्ष्या' इति चामरः । 'सन्नि'ति शेषः । तथा च–प्रणयजात ईर्ष्याजातश्च सन्नित्यर्थः । द्वेधा द्विविधः । तथा च–मानस्य द्वैविध्यान्मानविप्रलम्भोऽपि द्विविध इति निष्कृष्टम् ।

ननु प्रेमकोपयोः परस्परं विरुद्धत्वात् कथं प्रणयसम्भवो मान इत्याशङ्क्याह–२३९ द्वयोः..इत्यादिना ।

२३९ द्वयोर्नायिकानायकयोरित्यर्थः । 'व्यस्तसमस्तयो'रिति शेषः । न च 'द्वे च द्वे चेति तयो'रिति वाच्यम्, एकद्वित्र्यादीनामेकशेषानभ्युपगमात् । तथा च–नायिकानायकयोर्व्यस्तयोः समस्तयोर्वेति निष्कृष्टम् । सुमहत्यतिशयितो ( जीवनावधिस्थायी ) महानिति तस्मिंस्तथोक्ते । अपि 'किं पुनरल्पे' इति शेषः । प्रमोदे प्रेम्णि कोपावसरप्रतिरोधके हेताविति यावत् । प्रेम्णः । कुटिलगामित्वात् कुटिलोऽसौ गामी सञ्चारीति तस्य भावस्तत्त्वं तस्मात् । 'कुटिलनिष्ठत्वा' दित्यन्ये । कारणम् । विना । यः । कोपः । 'स' इति शेषः । प्रणयमानः प्रणयस्य मानः । स्यात् । अयम्भावः–यद्यपि प्रेम्णि सति कोपः स्यादिति वक्तुं न शक्यते, तथाऽपि–वैश्वानरं स्वर्णस्येव कोप एव प्रेम्णः परीक्षेति कविभिस्तथा वर्ण्यते नायिकानायकाभ्यां च तथाऽनुष्ठीयते । तत्सुष्ठूक्तं 'प्रेम्णः कुटिलगामित्वा'दिति ॥ २२७ ॥

कारिकाकाठिन्यं परिहर्तुं द्वयोरिति पदार्थं निर्दिशन्नाह–द्वयोरित्यादिना ।

द्वयोः । इतीत्य'स्या'इति शेषः । नायकस्य । च तथा । नायिकायाः । चाथवा । उभयोर्नायकनायिकयोः । प्रणयमानः प्रणयस्य मानः लक्षणया तन्मूलो विप्रलम्भ इत्यर्थः । वर्णनीयः । 'इत्यभिप्राय'इति शेषः । इदं बोद्धव्यम्–'वर्णनीय' इत्यत्रानीयरः प्रत्ययस्य कृत्यसञ्ज्ञकतयाऽर्हार्थे प्रयोगः, तथा च–वर्णयितुमर्ह इत्यर्थः पर्य्यवसीयते । वर्णनीयत्वं चान्यथा तस्य विवेकानुपपत्तेरेव । तदिति साधूक्तं प्रणयस्य कुटिलत्वे वर्णनीयत्वम् । इति ।

एवं प्रणयमानस्य त्रैविध्ये क्रमप्राप्तं तावदुदाहर्तुमुपक्रमते–तत्रेत्यादिना ।

तत्र तेषु नायकादिसम्बन्धित्वेन त्रिविधेषु प्रणयमानेषु मध्य इत्यर्थः । नायकस्य 'प्रणयमान' इति शेषः । यथा–'अलिअ... इत्यादौ ।

'अलिअपसुत्तअ अलीकप्रसुप्तक अलीकम्मिथ्या प्रसुप्तं प्रस्वापः ( शयनं ) यस्य तत्सम्बुद्धौ तथोक्त ! इति यावत् । 'शेषाद्विभाषा ।' ५।४।१५४ इति कप् । अत एव–णिमीलिअच्छ निमीलिताक्ष निर्मीलिते निर्व्यापारे कृते ( न तु जाते ) अक्षिणी नेत्रे येन तत्सम्बुद्धौ तथोक्त ! इति यावत् । यद्वा–समस्तमिदम्, तथा च–अलीकं यत् प्रसुप्तं (शयनं) तस्य कं सुखं (क्रीडारसः) तेन निमीलिते अक्षिणी यस्येति तत्सम्बुद्धौ तथोक्त ! 'अलीकं त्वप्रियेऽनृते ।' इत्यमरः ।·प्रसुप्तमित्यत्र भावे क्तः । 'सुखशीर्षजलेषु कम् ।' इति मेदिनी । सुहअ सुभग ! मज्झ मह्यमनुनयपरायै तव प्रियायै इति यावत् । ओआसं अवकाशं शय्यायां शयनसान्निध्योपयोगित्वमिति यावत् । देसु देहि । एतावन्तं

गंडपरिउंबणपुलइअंग ण पुण्णो चिराइस्सं¹ ॥ १३४ ॥'

नायिकाया यथा-कुमारसम्भवे सन्ध्यावर्णनावसरे ।

उभयोर्यथा-

'पणअकुविआणँ दोण्णँ वि अलिअसुत्ताणँ माणइण्णाणं ।

णिच्चलणिरुद्धणीसासदिण्णअण्णाणँ को मल्लो ॥ १३५ ॥'²

अनुनयपर्य्यन्तासहत्वे त्वस्य न विप्रलम्भभेदता, किन्तु-सम्भोगसञ्चार्याख्यभावत्वम् । यथा-

---

समयं जागरितं, न त्वमुपागतवतीति यत्र स्थितवत्यसि तत्रैव तिष्ठेति कोपो मयि न निधेय इत्याह-गंडपरिउंबणपुलइअंग गण्डपरिचुम्बनपुलकिताङ्ग गण्डयोः कपोलयोः परिचुम्बनं परितश्चुम्बनं तेन पुलकितमङ्गं यस्य तत्सम्बुद्धौ तथोक्त ! इति यावत् । पुण्णो पुनः । ण न । चिराइस्सं चिरस्यामि विलम्बं करिष्यामीति यावत् । चिरादागमने 'नात्र शयीते'ति पर्य्यङ्कं निरुध्य मिषेणापि सुप्तं सुप्तमालक्ष्य कथमपि तत्र लब्धशयनावकाशाया निद्राव्याजेन स्वगण्डपरिचुम्बनेन पुलकिताङ्गं च तं दृष्ट्वा ज्ञाततद्भावायाः स्वचिरागमनापराधक्षमापनार्थेयं कस्याश्चित् कामिन्या उक्तिः । एवं च नायकस्य प्रणयमहत्त्वेऽपि मानो व्यज्यते । अत्र गाथा छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ गाथासप्तशत्याः पद्यमिदम् ॥ १३४ ॥'

एवं नायकस्य प्रणयमानमुदाहृत्य नायिकायाः प्रणयमानमुदाहर्त्तुमुपक्रमते-नायिकाया इत्यादिना ।

नायिकाया नायिकात्वेनाभिमतायाः पार्वत्या इत्यर्थः । 'प्रणयमान' इति शेषः । यथा-कुमारसम्भवे कुमारस्य देवसेनापतेः सम्भवो जन्म लक्षणया तं प्रकृत्य कालिदासेन कृतं काव्यमिति तस्मिंस्तथोक्ते । 'अष्टमे सर्ग' इति शेषः । सन्ध्यावर्णनावसरे । मुञ्च कोपमनिमित्तकोपने ! सन्ध्यया प्रणमितोऽस्मि नान्यया । किन्न वेत्सि सहधर्म्मचारिणं चक्रवाकसमवृत्तिमात्मनः ॥' इत्यादाविति शेषः ।

अथोभयोःप्रणयमानमुदाहर्त्तुमुपक्रमते-उभयोरित्यादिना ।

उभयोर्नायकनायिकयोः । 'प्रणयमान' इति शेषः । यथा । 'पणअ..' इत्यादौ ।

'पणअकुविआणँ प्रणयकुपितयोः प्रणयेन कुपिते तयोस्तथोक्तयोः । दोण्णं द्वयोर्नायकनायिकयोरिति यावत् । वि अपि । अलिअसुत्ताणँ अलीकसुप्तयोर्निद्रामन्तराऽपि निद्रालीढयोरिव पतितयोरिति यावत् । माणइण्णाणं मानविज्ञयोर्माने विज्ञे चतुरे तयोः । 'प्रवीणे निपुणाभिज्ञविज्ञनिष्णातशिक्षिताः ।' इत्यमरः । 'अन्योऽन्य' मिति शेषः । तथा च-अन्योऽन्यम्मानाविष्करणे चतुरयोरित्यर्थः । णिच्चलणिरुद्धणीसासदिण्णअण्णाणँ निश्चलनिरुद्धनिश्वासदत्तकर्णयोः । को कः । मल्लो मल्लः समर्थ इति यावत् । 'मानभञ्जन' इति शेषः । परस्परं रुष्टे नायकनायिके अवलोकयन्त्यास्तदन्तःपुरचारिण्याः कस्याश्चित् 'पर्य्याप्तोऽयम्मान' इति मानभञ्जनार्थं यतमानाया वितर्कोक्तिरियम् । अत्रापि गाथा छन्दः, तल्लक्षणं चोक्तं प्राक् । इदं च गाथा सप्तशत्याः ॥ १३५ ॥'

अनुनयमन्तरेणैवास्य निवर्त्त्यत्वेऽसूयारूपत्वमित्याह-अनुनय...इत्यादिना ।

अस्य प्रणयमानस्येत्यर्थः । अनुनयपर्य्यन्तासहत्वेऽनुनयस्य 'क्षमस्व प्राणेशे ! न पुनरपराधिष्यति कदाचनायं दासस्ते सुकृतिनि दयां धेहि सुमुखि ।' इत्याद्यर्थनस्य पर्य्यन्तोऽवधिस्तदसहत्वे । अनुनयमन्तरैव निवर्त्त्यत्व इति भावः । सतिसप्तमीयम् । तु पुनः । विप्रलम्भभेदता विप्रलम्भस्य भेदात्मकत्वम् । न 'मन्तव्य'ेति शेषः । किन्तु-सम्भोगसञ्चार्याख्यभावत्वं सम्भोगस्य सञ्चार्य्याख्यभावो व्यभिचारिभावस्तस्य भावस्तत्त्वम् । इदमुक्तम्-प्रणयमानो यद्यनुनयमन्तरैव निवर्त्त्येत, तदाऽसौ सम्भोगस्यासूया नाम सञ्चारिभावविशेष इत्याख्यायते न पुनर्विप्रलम्भविशेष इति । इति ।

उदाहरति -यथा-भ्रूभङ्गे...इत्यादौ ।

---

१ 'अलीकप्रसुप्तकनिमीलिताक्ष ! देहि सुभग ! मह्यमवकाशम् । गण्डपरिचुम्बनपुलकिताङ्ग न पुनश्चिरस्यामि ॥' इति संस्कृतम् । २ प्रणयकुपितयोर्द्वयोरप्यलीकसुप्तयोर्मानविज्ञयोः । निश्चलनिरुद्धनिःश्वासदत्तकर्णयोः को मल्लः ॥' इति संस्कृतम् ।

'भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते,
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ।
कार्कश्यङ्गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते,
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिञ्जने ॥ १३६ ॥

यथा वा–

'एकस्मिञ्शयने पराङ्मुखतया वीतोत्तरं ताम्यतो–
रन्योऽन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो–
र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः ॥ १३७ ॥' –

---

'भ्रूभङ्गे' भ्रुवोर्भ्रुकुट्योर्भङ्गः कौटिल्यं तस्मिन् । 'भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये । कौटिल्ये भयविच्छित्त्योः' इति मेदिनी । **रचिते** । 'षष्ठी चानादरे ।' २।३।३८ इति सप्तमी । **अपि** 'किं पुनरन्यदे'ति शेषः । तथा च–उद्यम्य कृतमपि भ्रुकुट्योः कौटिल्यमनादृत्यैवेति निष्कृष्टोऽर्थः । **दृष्टिर्नेत्रम्** । 'दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ।' इति हेमः । जातावेकवचनम् । यद्वा–उद्वीक्षणक्रियायां भेदत्यागेन व्याप्तत्वमादायैकत्वेन तथोक्तिः । **अधिकम्भ्रूभङ्गरचनापेक्षयाऽऽधिक्यं** यथा स्यात्तथेति भावः । **सोत्कण्ठमुत्कण्ठया** सह वर्तत इति तद्यथा स्यात्तथा । **उद्वीक्षते** पश्यति कष्टं द्रष्टुं प्रावर्ततेति यावत् । 'अपूर्वमिव य'मिति शेषः । 'गर्हायां लडपिजात्वोः ।' ३।३।१४२ इति गर्हायां भूते लट् । **रुद्धायां** निर्व्यापारतां नीतायाम् । **अपि** किं पुनरन्यदेति शेषः । **वाचि** वाग्देव्याम् । 'गीर्वाग्वाणी सरस्वती ।' इत्यमरः । अनादरे सप्तमीयम् । तथा च–'नाहं तेन सम्भाषिष्ये' इति निर्व्यापारतां नीतामपि वाचमनादृत्यैवेति निष्कृष्टोऽर्थः । **इदम्** । **दग्धाननं** दग्धं लक्षणया तुच्छं यदाननं तत् । **सस्मितं** स्मितेनेषद्धास्येन सह वर्तत इति तथोक्तम् । **जायते** कष्टमवर्तत । अत्रापि गर्हायां भूते लट् । आननस्य सस्मितत्वेन विधेयं दग्धत्वं विशेषणीभूतं गौणतां प्राप्तमिति विधेयाविमर्शः । **कार्कश्यं** कर्कशस्य निष्ठुरस्य भावः कार्कश्यं तत्तथोक्तम् । 'स्यात्कर्कशः साहसिकः कठोरामसृणावपि ।' इत्यमरः । **गमिते** नीते न तु गते, एतेन यत्नातिशयो द्योतितः । **अपि** । **चेतसि** चित्ते । 'चित्तं तु चेतो हृदय'मित्यमरः । अत्राप्यनादरे सप्तमी । तथा च–कर्कशतां नीतामपि चित्तवृत्तिमनादृत्येति निष्कृष्टम् । **तनूः** शरीरम् । **रोमाञ्चं** रोमोद्गमम् । **आलम्बते** कष्टमवालम्बत । अत्राप्यपियोगे तथा लट् । **तस्मिन्** । **जने** नायकरूपे लोके । **दृष्टे** । अत्राप्यनादरे सप्तमी । तथा च–तं जनं दृष्टमनादृत्येति निष्कृष्टोऽर्थः । **मानस्य** चित्तोद्धतताविशेषस्य । 'मानश्चित्तसमुन्नतिः ।' इत्यमरः । **निर्वहणं** निर्वाहः । **कथं** केनोपायेन । **भविष्यति** । न कथमपीति भावः । 'मानस्त्वया तदा रक्षितव्य' इत्युपदिशन्तीं सखीं प्रति कस्याश्चित्सरलस्वभावायाः स्वस्वाभाव्योक्तिरियम् । तथा च–यदा यदा मानं रक्षितुं समुद्यताऽहं, तदा सर्वदैव मम नेत्रादिवैपरीत्यमाचरितवत्, तत् कथमद्यैव तं दृष्ट्वा प्रभविष्यामीति निष्कृष्टोऽर्थः । एवं च–नायिकाया नायकविषया रतिः परिपुष्टा सम्भोगात्मनाऽवतिष्ठते । तथा दर्शनादिव्यापारा अनुभावा असूया चात्र व्यभिचारिणी नायकस्य दर्शनादौ सोत्कण्ठत्वादेर्गर्हितत्वाप्रत्यायनात् । अमरुशतकस्येदं पद्यम् । अत्र शार्दूलविक्रीडितं छन्दः । तल्लक्षणं चोक्तं प्राक् ॥ १३६ ॥'

उदाहरणान्तरमपि दर्शयति–**यथा वा**–इत्यादिना ।

**वा**ऽथवा । **यथा** । मानस्यानुनयपर्यन्तासहत्वे सम्भोगसञ्चारित्वमिति शेषः । **'एकस्मिन्**..इत्यादौ ।

**'एकस्मि**न्नभिन्ने । **शयने** शय्यायाम् । 'शयनं सुरते निद्राशय्ययोश्च नपुंसकम् ।' इति मेदिनी । **पराङ्मुखतया** पराङ्मुखे ययोस्तयोर्भावस्तत्ता तया तथोक्तया । **वीतोत्तरं** वीतं निवृत्तमुत्तरमुक्तिप्रत्युक्तिरूपं यस्मिंस्तद् यथा भवेत्तथा । **ताम्यतोः** क्लिश्यतोः । 'तमु' काङ्क्षायाम् । **अन्योऽन्यस्य** परस्परस्य । 'असमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्यः ।' इति सुः । **हृदि** हृदयेऽन्तरात्मनीति यावत् । **अनुनये** धार्ष्ट्याभावे । **स्थिते** । अनादरे सप्तमी । **अपि** । **गौरवं** गुरुत्वं 'कथमहं पूर्वमनुनयेय' मिति महत्त्वमिति यावत् । **संरक्षतोः** पालयतोर्निर्वहतोरिति यावत् । अथापि–**शनकैः** शनैः । **अपाङ्गवलनाद**पाङ्गयोर्नेत्रपर्यन्तभागयोर्वलनं चालनं तस्मात् । 'अपाङ्गो नयनस्यान्ते स्याच्चित्रकप्रधानयोः ।' इत्यजयः । 'वल' सञ्चरणे । ल्युट् । **मिश्रीभवच्चक्षुषो**र्मिश्रीभवन्ति व्यासजन्ति चक्षूंषि ययोस्तयोः **दम्पत्योर्नायि-**

**२४० पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते ॥ २२८ ॥**
**ईर्ष्यामानो भवेत्स्त्रीणां तत्र त्वनुमितिस्त्रिधा ।**
**उत्स्वप्नायितभोगाङ्क–गोत्रस्खलनसम्भवा ॥ २२९ ॥**

तत्र दृष्टे यथा–

'विनयति सुदृशो दृशोः परागं प्रणयिनि कौसुममाननानिलेन ।
तदहितयुवतेरभीक्ष्णमक्ष्णो–र्द्वयमपि रोषरजोभिरापुपूरे ॥ १३८ ॥'

---

कानायकयोः। **सहासरभसव्यासक्तकण्ठग्रहः** सहासं यथा स्यात्तथा रभसेन वेगेन व्यासक्तो भुजबन्धनेन दृढं लग्नः कण्ठग्रहो यत्र सः। क्रियाविशेषणत्वं तु युक्तम्। **मानकलिर्मानस्य** कलिः कलहः। कली स्त्री कलिकायां, ना शूराजिकलहे युगे।' इति मेदिनी। **भग्नस्त्रुटितः**। अत्र दम्पत्योरन्योन्यगता रतिः परिपुष्यमाणा सम्भोगात्मना परिणता, तत्र दर्शनमात्रेण मानत्यागोऽनुभावः, हर्षश्च व्यभिचारी। अमरुशतकस्येदं पद्यम्, अत्र च शार्दूलविक्रीडितं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १३७ ॥'

एवं प्रणयमानं निरूप्येर्ष्यामानं निरूपयितुमुपक्रमते–२४० **पत्युरि**त्यादिना।

२४० **पत्युर्न** तूपपते'रिति शेषः। **अन्यप्रियासङ्गेऽ**न्याऽसौ प्रिया तस्या आसङ्ग आसक्तिस्तस्मिन्। **दृष्टे**। **अथ** तथा। **अनुमिते** तत्परिभुक्तदुकूलधारणादिदर्शनद्वारा निश्चिते। एवम्–**श्रुते**। 'सती'ति शेषः **स्त्रीणां** नायिकानाम्। **ईर्ष्यामान** ईर्ष्यया ऽसहिष्णुतया मानः। 'तृतीया तत्कृतार्थेन गुणवचनेन।' २।१।३ःइति तृतीयासमासः। ईर्ष्याया मान इति पक्षे तु–'षष्ठी।' २।२।८ इति सम्बन्धसामान्यविवक्षया समासः। **भवेत्**। **तत्र** तस्मिन्नीर्ष्यामाने। **तु** पुनः। **उत्स्वप्नायितभोगाङ्कगोत्रस्खलनसम्भवोत्स्वप्नायितं** (सुरतश्रमवशाद् गाढनिद्रा) च भोगाङ्कश्च (सम्भोगचिह्नं च) गोत्र (नाम) स्खलनं (उच्चारणं) चेति तानि सम्भव उत्पत्तिर्यस्याः सा। सम्भवत्यस्मादिति सम्भवः। 'ऋदोरप्।' ३।३।५७ इत्यप्। 'गोत्रं कुलाख्ययोः।' इति मेदिनी। **अनुमितिरनुमानम्**। **त्रिधा** त्रिप्रकारा। 'ज्ञेये'ति शेषः। अयम्भावः–ईर्ष्यामानो नायिकानामेव जायते, तथाहि–यदि प्रियो यस्यां कस्याञ्चिदन्यस्यामनुरज्येत, तया रममाणश्च दृष्टोऽनुमितः श्रुतो वाऽयं भवेत्तदा तदासक्तिसमर्पितसपत्नीसौभाग्यविभावक ईर्ष्यामानः समुदयते। न नायं नायकानाम्, नायिकानां हि नायकान्तरासक्तौ शृङ्गारस्यैवानभ्यनुज्ञानात्। इति ॥ २२८ ॥ २२९ ॥

दर्शनादिना भिद्यमानाया नायकस्य नायिकान्तरासक्तेरुदाहृतत्वेनैवेर्ष्यामानमुदाहृतत्वं मन्यमान आह–**तत्रे**त्यादिना।

**तत्र** तस्मिन्नीर्ष्यामानस्य मूलभूते नायकस्य नायिकासङ्ग इति यावत्। **दृष्टे**। सतिसप्तमीयम्। 'ईर्ष्यामान' इति शेषः। **यथा–'विनयति..'** इत्यादौ।

'**सुदृशः** शोभने सुखदे वा दृशो नेत्रे यस्यास्तस्याः। निजाभिमतायाः कान्ताया इत्यर्थः। 'यस्या' इति शेषः। **दृशोर्दृ**ष्टियुगलोपरीत्यर्थः। सप्तमीयम्। 'दृक् स्त्रियां दर्शने नेत्रे बुद्धौ च, त्रिषु वीक्षके।' इति मेदिनी। 'स्थित' मिति शेषः। 'दृश'इति पाठे तु–पञ्चमी। नेत्रादित्यर्थः। **कौसुमं** कुसुमस्य कमलायन्यतमस्येदं तत्तथोक्तम्। **परागं** रजः। 'परागः कौसुमे रेणौ धूलिस्नानीययोरपि। गिरिप्रभेदे विख्यातावुपरागे च चन्दने ॥' इति मेदिनी। अस्यानेकार्थतया 'कौसुम' मिति विशिष्याभिधानान्न पौनरुक्त्यकृते, प्रत्युत पुनरुक्तवदाभासार्थमिति बोध्यम्। **आननानिलेन** मुखवायुना। **विनयति** समुद्धूयापनीतं कुर्वेति ( कर्त्तुं प्रवर्त्तमान इव )। **प्रणयिनि** प्रणयः प्रेमास्मिन्नस्ति, न त्वस्यास्तीति; तथोक्ते। एतेन–नायके नायिकाया अनुरागः, न तु नायकस्य नायिकायामिति समर्थितम्। यद्वा–यस्याः नेत्रपरागमपनयति, तस्यां प्रणयोऽस्यास्तीति तथोक्त इति युक्तमेवेति बोध्यम्। 'प्रणयः प्रसरे प्रेम्णी'ति मेदिनी। सतिसप्तमीयम्। **तदहितयुवतेस्तस्या** ( नायकेनापनीयनेत्रपरागत्वेन महोन्नतायाः ) अहितयुवतिरहिता प्रतिकूला युवतिस्तरुणी तस्याः। **अक्ष्णोर्नेत्रयोः**। 'षष्ठी शेषे।' २।३।५० इति षष्ठी। **द्वयं** युगलम्। द्वाववयवौ यस्य तत्। 'सङ्ख्याया अवयवे तयप्।' ५।२।४२ इति तयप्। 'द्वित्रिभ्यां तयस्यायज् वा।' ५।२।४३ इति तयस्यायच्।

**सम्भोगचिह्नेनानुमिते यथा-**

**'नवनखपदमङ्गं गोपयस्यंशुकेन, स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।**
**प्रतिदिशमपरस्त्रीसङ्गशंसी विसर्प-न्नवपरिमलगन्धः केन शक्यो वरीतुम् ॥ १३९ ॥'**

**एवमन्यत्र ।**

**अथ मानभङ्गोपायानाह-**

**२४१ साम भेदोऽथ दानं च नत्युपेक्षे रसान्तरम् ।**
**तद्भङ्गाय पतिः कुर्यात् षडुपायानिति क्रमात् ॥ २३० ॥**

---

अपि न त्वेकक्रमिति भावः । **रोषरजोभी** रोषः पत्युरन्यस्याः प्रियाया नेत्रपरागापनयनकरणापराधजन्यः क्रोध एव रजांसि धूलयस्तैः । **अभीक्ष्णम्**मुहुर्निरन्तरं वा । 'अभीक्ष्णमसकृत्समाः ।'इति 'अभीक्ष्णं शश्वदनारते ।'इति चामरः । **आपुपूरे** समन्ततः पूर्णं जातम् । कर्म्मणि लिट् । शिशुपालवधस्येदं पद्यम्, पुष्पिताग्रा वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ १३८ ॥'

अथानुमितस्योदाहरणं निर्देष्टुमुपक्रमते-**सम्भोगचिह्नेने**त्यादिना ।

**सम्भोगचिह्नेन । अनुमिते**'पत्युरन्यप्रियासङ्ग ईर्ष्यामान'इति शेषः । **यथा-'नव...**इत्यादौ ।

'**नवनखपदं** नवानि अत एव प्रत्याख्यातुमशक्यानि नखपदानि नखानां पदानि चिह्नानि यत्र तत् तथोक्तम् । 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ।' इत्यमरः । **अङ्गं** शरीरम् । 'अङ्ग गात्रे प्रतीकोपाययोः पुम्भूम्नि नीवृति ।' इति मेदिनी । **अंशुकेन** वस्त्रेणोत्तरीयेण वा । 'अंशुकं श्लक्ष्णवस्त्रे स्यादुत्तमामात्रोत्तरीययोः ।'इति मेदिनी । **गोपयसि** निगूहसे । स्वार्थे णिच् । **दन्तदष्टं** दन्तेन दष्टम् । **ओष्ठम् । पुनः । पाणिना** हस्तेन । **स्थगयसि** छादयसि । 'सम्बुद्धिपदानभिधानं क्रोधातिशयं सम्बोधनीयस्यानभिधेयत्वं च द्योतयतीति बोध्यम् । '**स्थग**' अपवारणे । स्वार्थे णिच् । **प्रतिदिशं** दिशिदिशि । विभक्त्यर्थेऽव्ययीभावः । 'अव्ययीभावे शरत्प्रभृतिभ्यः ।' ५।४।१०७ इति टच् । **अपरस्त्रीसङ्गशंस्य**परासौ स्त्री (सपत्नी) तस्याः सङ्गस्तं शंसति कथयतीत्येवंशीलः । **विसर्प**न्व्याप्नुवन् । **नवपरिमलगन्धो** नवः सद्योभुक्तत्वेनात्तमप्राप्तोऽसौ परिमलः कुसुमामर्दनजन्यः शोभनो गन्ध इति तथोक्तः । 'विमर्दोत्थे परिमल'इत्यमरः । **केनां**शुकेन पाणिनाऽन्येन वे'ति शेषः । **वरीतुं** गोपयितुम् । 'वृतो वा ।' ७।२।३८ इतीटो दीर्घः । **शक्यः** । सपत्नीभवनादुपपन्नान्नायकं प्रति नायिकायास्तत्सम्भोगोद्घाटनोक्तिरियम् । तथा च-यद्यपि नखाघातचिह्नानि दन्तदशनचिह्नानि च तव तया सह सम्भोगं निवेदयन्ति तानि हि साम्प्रतिकानि, कालान्तरीणानि कदाचित्तिरोधीयेरन्नपि तदपि तेषां स्वशरीरसम्बन्धितयांऽशुकादिना निगूहनं कर्त्तुं पार्य्यते, अथायं सर्वतो व्याप्तः परिमलः कथं निगूहितुं पारिष्यते । इति निष्कृष्टं तात्पर्य्यम् । अत्र मालिनी छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १३९ ॥'

एवमन्यत्रान्यविधोऽपीर्ष्यामान ऊह्य इत्याह-**एव**मित्यादिना ।

**एवं** यथा दृष्टो भोगाद्यनुमितश्च'विनयति..'इत्यत्र 'नवनख'..इत्यत्र च दर्शितस्तथा 'स्वयमुत्स्वप्नायितानुमितो गोत्रस्खलनानुमितः श्रुतश्चेत्येवं त्रिविधोऽन्योऽपीर्ष्यामान इति भावः । **अन्यत्र** । 'द्रष्टव्य'इति शेषः । यथा वा मम-'घूर्णन्नयनं निपतद्वसनं वर्षत्स्रजं स्खलच्चिकुरम् । प्रातर्यान्तं कान्तं दृष्ट्वा कान्ताऽन्तिकान्ताऽऽसीत् ॥' 'कमले ! क्वासि गता त्वं मध्येरससिन्धु मां निपात्यवत । इत्युन्नदति विबुद्धा कान्ते सहसा जगामास्तम् ॥' 'रमयति सततमसौ तां सा च तमिन्दुं कलेव संश्रयते । इत्याकर्ण्य रुषा स्वं दयितमपि हन्त सम्मेने ॥' इत्यादावूह्यः ।

एवं सप्रभेदं प्रणयमानमीर्ष्यामानं च निदर्श्य प्रसङ्गान्मानशमनोपायान् निदर्शयितुं प्रतिजानीते-**अथे**त्यादिना ।

**अथ** मानस्य कार्य्यकारणाभ्यां निर्देशानन्तरम् । **मानभङ्गोपायान् । आह-२४१ साम...**इत्यादिना ।

२४१ **तद्भङ्गाय** तस्य (मानस्य) भङ्गो भञ्जनं तस्मै । **साम** सान्त्वनम् । अनुनयवचनैः सौहार्दावेदनमिति यावत् । **भेदो** मानिन्याः सखीं वशीकृत्य-तद्द्वाराऽपराधस्यान्यथाबोधनमिति भावः । **अथ । दानं** कथमपि कङ्कणादि-समर्पणम् । **च** तथा । **नत्युपेक्षे** नतिश्च (पादयोर्निपत्य प्रसादनं च) उपेक्षा च (अवज्ञया सामादिप्रयोगाभावश्च) इति

**२४२ तत्र प्रियवचः साम, भेदस्तत्सख्युपार्जनम्।**
**दानं व्याजेन भूषादिः, पादयोः पतनं नतिः॥ २३१॥**
**सामादौ तु परिक्षीणे स्यादुपेक्षाऽवधीरणम्।**
**रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम्॥ २३२॥**

यथा-'नो चाटुश्रवणं कृतं...'इत्यादि। अत्र सामादयः पञ्च सूचिताः, रसान्तरमूह्यम्।

अथ प्रवासः-

---

तथोक्ते। **रसान्तरम**न्यो रस इति तथोक्तम्। 'मयूरव्यंसका'दित्वादन्यस्यान्तरादेशस्तत्परनिपातश्च। 'रस्यत इति' रस औग्र्यं, तदन्यत्त्रासादिरिति भावः। इतीत्येवम्। 'पूर्वपूर्वस्य निष्फलत्व'इति शेषः। **षट्**। **उपायान्**। **क्रमात्** न तु व्यत्ययेनेति भावः। **पतिः**। **कुर्य्याद्** विदध्यात्। तथा चेदं निष्कृष्टम्-यदि साम्ना न मानो भज्येत, तदा भेदं विदध्यात्, तेन यदि नासौ नश्येत तदा दानम्, इत्येवं क्रमेण पूर्वपूर्वस्य निष्फलत्वे यथोत्तरं बलीयांसमुपायं विदध्यात्। अत एवोक्तं शृङ्गारतिलके-'यथोत्तरं बलीयांस इत्युपायाः प्रसादने। आद्यास्त्रयो वरं कार्य्या विदग्धैः पश्चिमाः क्वचित्॥' इति॥ २३०॥

ननु किंनाम सामादीति तद् व्याचष्टे-२४२ तत्रेत्यादिना।

२४२ **तत्र** तेषु सामादिषु मध्य इति यावत्। **प्रियवचः** प्रियमनुनयपूर्वकं सौहार्दावेदकं च तद्वच इति तथोक्तम्। **साम**। तथा-**तत्सख्युपार्जनं** तस्याः (प्रसिद्धाया मानिन्याः) सखी तस्या उपार्जनं स्वानुकूलतां प्रत्यानयनम्। येनासौ स्वसख्या बुद्धिमन्यथा (नायकानुनयपरतया) सम्पादयेदिति भावः। **भेदः**। तथा। **व्याजेन** कपटेन येनासौ प्रथमं स्वं न जानीयात्तेन केनाप्युपायेनेति यावत्। **भूषादिः** पथ्यादिः। 'भूषादे'रिति पाठे तु-'अर्पण'मित्यध्याहार्य्यम्। **दानम्**। तथा-**पादयोः** पादसमीपे। **पतनं** 'शिरसे'ति शेषः। **नतिः**॥ प्रणमनम्। **सामादौ**। आदिपदेन भेददानप्रणिपातानां ग्रहणम्। **तु** पुनः। **परिक्षीणे** सर्वथा क्षीणे। सतिसप्तमीयम्। विफले जाते सतीति भावः। **अवधीरणं** तिरस्कारोऽनभिलाषीभवनमिति यावत्। 'प्रसादनस्ये'ति शेषः। **उपेक्षा**। **स्यात्**। अथ-**रभसत्रासहर्षादे** रभसाद्वेगात्त्रासहर्षौ, तावादी यस्य (निर्वेदादेः) तस्मात्तथोक्तात्। **कोपभ्रंशः** कोपस्य भ्रंशो लक्षणया तद्धेतुरित्यर्थः। **रसान्तरम्**॥ २३१॥ २३२॥

लक्ष्यं दर्शयति-**यथा**-'**नो चाटुश्रवणं कृतं...**'**इत्यादि** 'पद्य'मिति शेषः। कथमिदं लक्ष्यमित्याशङ्क्याह-**अत्रा**स्मिन्, 'नो चाटुश्रवणं कृतं...'इत्युदाहृते व्याख्यातपूर्वे पद्य इति यावत्। **सामादयः** सामभेददाननत्युपेक्षा इत्यर्थः। **पञ्च** 'मानभङ्गोपाया'इति शेषः। **सूचिताः**। ननु षष्ठं केत्याह-**रसान्तरम्**। **ऊह्यं** गवेषणीयमिति भावः। 'अन्यत्रे'ति शेषः। इदमुक्तम्-कलहान्तरिताया उदाहरणत्वेन निदर्शितपूर्वमत एव तदानीं व्याख्यातमपीदं 'नो चाटुश्रवणं कृतं...'इति पद्यम्, असौ च-नायकं निराकृत्य पश्चात्तापं कुर्वत्याः कस्याश्चिदुक्तिः, तथा च-'नो चाटुश्रवणं कृत'मित्यनेन 'नायकेन सामोपासित'मिति, 'न च दृशा हारोऽन्तिके वीक्षित'इत्यनेन 'नायकेन दानं कृत'मिति, 'कान्तस्य प्रियहेतवे निजसखीवाचोऽपि दूरीकृता'इत्यनेन'नायकेन भेदोऽनुष्ठित'इति, 'पादान्ते विनिपत्य तत्क्षणमसौ गच्छे'त्यनेन च 'नायकेन नतिरुपेक्षा च क्रमादाश्रिते'इति नायिकोक्तिः स्फुटमवगमयति। अथ रसान्तरमुदाहृतं यथा तर्कवागीशैः-'कथं ममोरसि कृतपक्षनिस्वनः शिलीमुखोऽपतदिति जल्पति प्रिये। विवृत्य किंकिमिति सजल्पया तया ससाध्वसं कुपितमवोचि कान्तया॥'इति, अत्र हि कान्तवक्षसि शरपतनशङ्कया मानभङ्गः। इति।

एवं मानं सप्रभेदं लक्षयित्वा क्रमप्राप्तं प्रवासं लक्षयितुमुपक्रमते-**अथे**त्यादिना।

**अथ** सप्रभेदस्य मानस्य लक्ष्यलक्षणाभ्यां निदर्शनानन्तरमित्यर्थः। **प्रवासः**। लक्ष्यते-२४३ **प्रवासो..** इत्यादिना।

२४३ प्रवासो भिन्नदेशत्वं कार्य्याच्छापाच्च सम्भ्रमात् ।

२४४ तत्राङ्गचेलमालिन्य-मेकवेणीधरं शिरः ॥ २३३ ॥

निःश्वासोच्छ्वासरुदित-भूमिपातादि जायते ।

किञ्च-

२४५ अङ्गेष्वसौष्ठवं तापः पाण्डुताकृशताऽरुचिः ॥ २३४ ॥

अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः ।

मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह ॥ २३५ ॥

---

२४३ **कार्य्याद्** कार्य्यं निश्चितं कर्त्तुं युक्तं, तस्मात्तदनुरुध्येत्यर्थः । ल्यपो लोपे पञ्चमीयम् । **शापाच्छापो** महतां कोपात्परानिष्टफलको वाक्यविशेषस्तस्मात्तं प्राप्येत्यर्थः । अत्रापि ल्यपो लोपे पञ्चमी । **च** तथा । **सम्भ्रमात्** सम्भ्रमो हर्षेण भयेन वा किञ्चित्कृते त्वरणं तस्मात्तमुपजीव्येत्यर्थः । अत्रापि ल्यपो लोपे पञ्चमी । **भिन्नदेशत्वम्भिन्नः** पृथग्भूतो देशो ययोस्तत्त्वं तथोक्तम् । 'देशित्व' मिति तु न युक्तम्, 'न कर्म्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर' इति मत्वर्थीयानुपपत्तेः । 'नायिकानायकयो' रिति शेषः । **प्रवासः** । 'स्या' दिति शेषः । इदमुक्तम्–नायकयोः पृथक्पृथग्देशवर्तित्वं प्रवासः, स च त्रिविधः, कार्य्यशापसम्भोगोपाधिभेदात् । इति ।

अथास्यानुभावाँल्लक्षयति–२४४ **तत्रा**..इत्यादिना ।

२४४ **तत्र** तस्मिन् प्रवासे सतीति यावत् । **अङ्गचेलमालिन्यमङ्गं** ( शरीरं ) च चेलं ( वस्त्रं ) चेति तयोर्म्मालिन्यमिति तथोक्तम् । 'अङ्गं गात्रे..' इति मेदिनी । 'चेलं वसनमंशुकम्' इत्यमरः । तथा–**एकवेणीधरमेका** सौरभतैलाद्युद्वासनाभावेन जटिलतां प्राप्ता वेणी केशरचनाविशेषस्तस्या धरमिति तथोक्तम् । **शिरो**मस्तकम् । अथ–**निःश्वासोच्छ्वासरुदितभूमिपातादि** निःश्वासश्चोच्छ्वासश्च रुदितभूमिपातादि चेति तथोक्तम् । निश्वासो दीर्घश्वसितम्, उच्छ्वास ऊर्द्ध्वश्वसितम् । रुदितभूमिपातादि रोदनपृथिवीपतनचकितनिरीक्षणोद्घोषणादि । **जायते** समुद्भवति । प्रायेण नायिकायाः 'स्वाल्प्येन पुनर्नायकस्यापी'ति शेषः ॥ २३३ ॥

न केवलमेतावदित्याह–**किञ्चा**न्यदपि जायत इति भावः । किमित्यपेक्षायामाह–२४५ **अङ्गेष्व**...इत्यादिना ।

२४५-**इहा**स्मिन् प्रवासे सतीत्यर्थः । **अङ्गेषु** शरीरावयवेषु मुखादिष्विति यावत् । **असौष्ठवं** न सौष्ठवं सुष्ठुत्वं सुभगत्वमिति यावत्, इति तथोक्तम् । मालिन्यमिति भावः । **ताप** उपचारात्तादृशं दुःखम् । **पाण्डुताकृशता** पाण्डुतया पाण्डुरुग्णतया ( युक्ता ) कृशता क्षामाङ्गत्वमिति तथोक्ता । 'पाण्डुस्तु पीतभागार्द्धः केतकीधूलिसन्निभः ।'इति शब्दार्णवः । **अरुचि**र्न रुचिरभिलाषेति तथोक्ता । सर्वेषु वस्तुषु वैराग्यमिति भावः । 'अभिष्वङ्गे स्पृहायां च गभस्तौ च रुचिः स्त्रियाम् ।'इत्यमरः । **अधृति**र्न धृतिः सन्तोष इति तथोक्ता । असन्तुष्टत्वमिति भावः । 'धृतिर्योगान्तरे धैर्य्ये धारणाध्वरतुष्टिषु ।'इति विश्वः । **स्यात्** । तथा–**अनालम्ब** आलम्बशून्यत्वम् । **तन्मयोन्मादमूर्च्छनास्तन्मयं** चोन्मादश्च मूर्च्छना चेति तथोक्ताः । प्राधान्येन प्रस्तुता सा यत्रेति, प्राधान्येन प्रस्तुतः स यत्रेति वा तत्तन्मयं, प्राधान्येन तत्स्वरूपभूतमित्यर्थः । **मृति**र्मरणम् । **च** । इदं समुच्चयार्थम् । 'चान्वाचयसमाहारेतरेतरसमुच्चये ।' इत्यमरः । **इती**त्येवम् । **क्रमाद्** पौर्वापर्य्येण । **दश** । यत्तूक्तं विवृतिकारैः–'दशेत्यत्र एकादशेति विज्ञेयम् ।'इति, तत् पाण्डुताकृशतायां द्वैतभ्रान्त्या । **स्मरदशाः** कामकृता अवस्थाः । **ज्ञेयाः** । इदमुक्तम्–प्रवासे सति यथासम्भवं नायकयोरसौष्ठवाद्यामरणान्ता दश कामस्य यथोत्तरं प्राबल्ये तत्कृता यथाऽऽनुपौर्व्यमेता अवस्था भवन्ति, न तु व्यत्ययेनेति ॥ २३४ ॥ २३५ ॥

२४६ असौष्ठवं मलापत्तिस्तापश्च विरहज्वरः।
अरुचिर्वस्तुवैराग्यं सर्वत्रारागिताऽधृतिः॥ २३६ ॥
अनालम्बनता चापि शून्यता मनसः स्मृता।
तन्मयं तत्प्रकाशः स्याद्बाह्याभ्यन्तरतस्तथा ॥ २३७ ॥

शेषं स्पष्टम्।

एकदेशतो यथा मम तातपादानाम्-

'चिन्ताभिः स्तिमितं मनः, करतले लीना कपोलस्थली,
प्रत्यूषक्षणदेशपाण्डु वदनं, श्वासैकखिन्नोऽधरः।
अम्भःशीकरपद्मिनीकिसलयैर्नोपैति तापः शमं,
कोऽस्याः प्रार्थितदुर्लभोऽस्तिं सहते दीनां दशामीदृशीम्॥ १४० ॥'

---

अथ सौकर्य्याय काश्चिद्व्याचष्टे-२४६ असौष्ठवं...इत्यादिना।

२४६ असौष्ठवम्। मलापत्तिर्मलानामापत्तिः प्रक्षालनाद्यभावेन सम्पत्तिः। च तथा। तापः। विरहज्वरो विरहेण कृतो ज्वरस्तद्वत्सन्तापः। अरुचिः। वस्तुवैराग्यं वस्तुषु पदार्थेषु वैराग्यमुपादेयेष्वप्यनुपादेयताव्यवहारः। अथ-अधृतिः। सर्वत्र सर्वस्मिन् सुहृज्जनान्तर इति यावत्। अरागिता सन्तोषराहित्यं सन्तोषकरत्वप्रत्ययविमुखत्वमिति यावत्। अनालम्बनता नालम्बनमाश्रयो यस्य यस्या वा तस्य तस्या वा भावस्तत्तेति तथोक्ता। आश्रयशून्यत्वमनालम्बत्वमिति यावत्। च। अपि। मनसः। शून्यता निर्व्यापारत्वम्, विषयाग्राहितेति यावत्। स्मृता। तथा। तन्मयम्। बाह्याभ्यन्तरतो बहिरन्तश्चेति भावः। तत्प्रकाशस्तस्य तस्या वा प्रकाशः परिस्फूर्तिः। स्यात्॥ २३६ ॥ २३७ ॥

पाण्डुताकृशताऽऽदीनां तु व्याख्यानं स्पष्टमित्याशयेनाह-शेषम्। स्पष्टम्। इति।

अथाङ्गासौष्ठवादीनां दिङ्मात्रमुदाहरणं प्रस्तावयति-एकदेशत इत्यादिना।

एकदेशत एकांशादिङ्मात्रमिति यावत्। यथा 'अङ्गासौष्ठवाद्या' इति शेषः। मम 'विश्वनाथस्ये'ति शेषः। तातपादानां पितृपादानां चन्द्रशेखराणाम्। अत्र पादशब्दः पूज्यार्थः। कृतौ 'चिन्ताभिः..' इत्यादौ।

'चिन्ताभिः शोकानुगृहीतैर्ध्यानविशेषैः। मनः। स्तिमितं चञ्चलमस्थिरमिति यावत्। यद्वा-क्लिन्नं शान्तप्रकाशमिति यावत्। 'स्तिमितं तरले क्लिन्न' इति रुद्रः। करतले। कपोलस्थली गण्डदेशः। लीनाऽस्तमिता। प्रत्यूषक्षणदेशपाण्डु प्रत्यूषस्य प्रभातस्य प्रभातकालिक इति यावत्, क्षणदेशः क्षणदाया रात्रेरीशश्चन्द्र इति यावत्, तद्वत् पाण्डु पाण्डुरोगग्रस्तमिवेति तथोक्तम्। मलिनश्वेतीभावमापन्नमिति भावः। 'प्रत्यूषोऽहर्म्मुखं कल्य' मिति 'त्रियामा क्षणदा क्षपा।' इति चामरः। वदनम्मुखम्। श्वासैकखिन्नो श्वासेनैकं केवलं खिन्नः। श्वासमात्रेण खिन्न इत्यर्थः। मात्रपदेन कान्तदशनक्षतव्युदासः। अधरः। तथा-अम्भःशीकरपद्मिनीकिसलयैरम्भसां जलानां शीकराः कणिका इति, ते च-पद्मिनीकिसलयानि पद्मिनीनां कमलिनीनां किसलयानि पत्राणीति तानि च तैस्तथोक्तैः। अत्र 'शीकरोऽम्बुकणाः स्मृताः। इत्युक्त्याऽम्भः पदं व्यर्थं सचन्दनाद्युषितार्थं व्यञ्जयतीति बोध्यम्। तापः सन्तापोन्तरात्मन' इति शेषः। शमं शान्तिम्। न। उपैति। अतः-अस्याः प्रकृते वर्ण्यमानावस्थाया नायिकायाः। प्रार्थितदुर्लभः प्रार्थितोऽसौ दुर्लभ इति तथोक्तः। कः। अस्ति। यः-ईदृशीम्। दीनाम्। दशामवस्थाम्। सहते न तां निवर्त्तयितुं प्रयतत इति भावः। विरहिणीसख्या नायकं प्रत्युक्तिरियम्। अत्र शार्दूलविक्रीडितं छन्दः, तल्लक्षणं चोक्तं प्राक्॥१४०॥'

**२४७ भावी भवन्भूत इति त्रिधा स्यात्तत्र कार्य्यजः ।**

**कार्य्यस्य बुद्धिपूर्वकत्वात् त्रैविध्यम् । तत्र भावी यथा मम--**

**'यामः सुन्दरि ! याहि पान्थ ! दयिते ! शोकं वृथा मा कृथाः,**

**शोकस्ते गमने कुतो मम, ततो बाष्पं कथं मुञ्चसि ।**

---

अयम्भावः-'चिन्ताभिः स्तिमितम्मनः' इत्यनेन आलम्वाख्या, 'करतले लीना कपोलस्थली'त्यनेन शोकमुद्रापुरस्कृताऽरुचिः, 'प्रत्यूषक्षणदेशपाण्डु वदन'मित्यनेन पाण्डुताकृशता, 'श्वासैकखिन्नोऽधरः' इत्यनेन मृतिः, 'अम्भःशीकरपद्मिनीकिसलयैर्नोपैति तापः शम'मित्यनेन तापश्चेति दशा अभिव्यज्यन्ते ।' मृतेः साक्षाद्वर्णनमनुचितमिति तत्प्रागवस्थैव मृतिपदबोध्याऽत्रोदिता । प्रत्यूषे क्षणदेशः कृशो मलिनश्च भवतीति वदनरूपस्याङ्गस्यासौष्ठवमपि दर्शितम् । यद्यपि नैताः क्रमाद्दर्शिताः, अथापि आसां यौगपद्येन न काऽपि विप्रतिपत्तिः । इति ।

यथा वा मम-'कान्ते याति पुरान्तरं सपदि संत्यक्ता विभूषाक्रियाः, कोऽप्यन्तर्निहितोऽनलश्च तनुतां नीता च पाण्डुतनूः । वैराग्यं समुपासितं, न तु धृतिर्दृष्टं जगत्तन्मयं, नो तत्त्वं, बत मूर्च्छनाः सुपठिता, नोन्मीलनार्थाः क्रियाः ॥' इति । अत्र हि क्रमाद्दश सर्वा अप्यमी बोधिताः । इति दिक् ।

अथाऽस्य कार्य्यजस्य प्रभेदानाह-२४७ **भावी**..इत्यादिना ।

२४७ **तत्र** तेषु कार्य्यजशापजसम्भ्रमजभेदात्त्रिविधेषु प्रवासेषु मध्य इति यावत् । **कार्य्यजः** किञ्चित् कार्य्यमुपजीव्य प्रवृत्तः प्रवास इत्यर्थः । **भावी** भविष्यः । **भवन्** वर्त्तमानः । **भूतः** । 'चे'ति शेषः । **इती**त्येवम् । **त्रिधा** त्रिविधः । **स्यात्** ।

अस्य त्रैविध्ये हेतुं निर्दिशति-**कार्य्यस्ये**त्यादिना ।

**कार्य्यस्य** 'यत् किञ्चिदुपजीव्य प्रवृत्तः प्रवासस्तस्ये'ति शेषः । **बुद्धिपूर्वकत्वा**ज्ज्ञानपूर्वकत्वात् । **त्रैविध्यम्** । 'प्रवासस्ये'ति शेषः । अयम्भावः---ज्ञानं हि त्रैकालिकमिति तत्पूर्वकस्य कार्य्यस्यापि त्रैविध्यम्, युक्तं चैवं प्रवासस्य त्रैविध्यम् । इति ।

क्रमादुदाहर्त्तुं प्रवृत्त आह-**तत्रे**त्यादिना ।

**तत्र** तेषु भाविभवद्भूतविधतया त्रिविधेषु कार्य्यजेषु प्रवासेष्विति यावत् । **भावी** । 'प्रवास'इति शेषः । **यथा** । **मम** 'विश्वनाथस्ये'ति शेषः । **मम**-कर्त्तौ-'**यामः**..' इत्यादौ ।

'हे **सुन्दरि** सौन्दर्य्यशालिनि ! एतेन-अस्मासु परत्र यातेष्वपि तव सौन्दर्य्यमेव युक्तं, न तु म्लानत्वमिति सूचितम् । **यामो** यास्यामः । 'वय'मिति शेषः । 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा ।' ३।३।१३१ इति लट् । गौरवद्योतनार्था बहुत्वेनोक्तिः । तथा च-न वयमल्पस्य हेतोरन्यत्र जिगमिषामि, किन्तु महतः कार्य्यस्य हेतोरिति निष्कर्षः । (प्रेयसीं प्रति प्रेयस इयमुक्तिः) । हे **पान्थ** पथिक ! एतेन-नास्ति मम त्वया दयितादयितत्वव्यवहारः । अस्ति चेत् ? किम्मां विहाय परत्र यातुमुद्यतोऽसि । तत्स्फुटं 'तव मयि प्रेमाभाव' इति सूचितम् । अत एवाह-**याहि** ( प्रेयांसं प्रति प्रेयस्या इयमुक्तिः ) । हे **दयिते** प्रेयसि ! 'यत्नादपि परक्लेशं हर्त्तुं या हृदि जायते । इच्छा भूमिसुरश्रेष्ठ ! दया सा परिकीर्त्तिता ॥' इत्युक्तलक्षणेच्छा जाता यस्यास्तत्सम्बुद्धौ तथोक्ते । तारकादित्वादितच् । तथा च-समुत्प्रति गन्तुमभ्यनुज्ञां प्रदायोत्साहनीया वयम्, न शोकं प्रकटय्य प्रयाणे दुरितोदर्को विधेया । इति स्वाभिप्रायाविष्करणयोग्यत्वं सूचितम् । **शोकम्** । **वृथा** 'तव स्वरूपस्य न्यक्कारकत्वा'दिति शेषः । **मा** नैव । **कृथाः** कुरु । 'माङि लुङ् ।' ३।३।१७५ इति लुङ् । 'न माङ्योगे ।' ६।४।७४ इत्यटो निषेधश्च । (इति प्रेयसीं प्रति प्रेयसोऽसावुक्तिः) **ते** तव पान्थस्येति यावत् । एतेन प्रयाणकर्त्तृत्वेन प्रेमाभावः, तद्दयितत्वस्यासम्भवात्पान्थत्वमेव त्वयि युज्यत इति सूच्यते । अत एव-गौरवेण सम्बुद्ध्यभावोऽपि स्थाने इति बोध्यम् । **गमने** । **मम** 'तव पान्थत्वेन स्वतस्त्वया सम्भाषितुमप्यनुचितत्वा'इति शेषः । **कुतः** केन हेतुना । **शोकः** । 'सम्भाव्यते'ति शेषः । (इति प्रेयांसं प्रति प्रेयस्या उक्तिः) । **ततस्तर्हि** । बाष्पमश्रु । 'बाष्पमूष्माश्रु 'इत्यमरः । **कथम्** । 'शोकाभाव'इति शेषः । **मुञ्चसि** (इति प्रेयसः

शीघ्रं न व्रजसीति, मां गमयितुं कस्मादियं ते त्वरा,
भूयानस्य सह त्वया जिगमिषोर्जीवस्य मे सम्भ्रमः ॥ १४१ ॥'

भवन् यथा--

'प्रस्थानं वलयैः कृतं, प्रियसखैरस्रैरजस्रं गतं,
धृत्या न क्षणमासितं, व्यवसितं चित्तेन गन्तुं पुरः।
यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता,
गन्तव्ये सति जीवितप्रिय ! सुहृत्सार्थः किमु त्यज्यते ॥ १४२ ॥'

---

प्रेयसीं प्रत्युक्तिः)। **शीघ्रमविलम्बो** यथा भवेत्तथेति भावः। **न** नैव। **व्रजसि** यासि। **इतीत्यस्माद्धेतोः**। 'वाष्पं मुञ्चामी' ति शेषः। अयम्भावः–पान्थेन समं कुलस्त्रिया भाषणानौचित्येन तस्मिन् गते तेन भाषणविरह एव युक्तः, स च तव शीघ्रगमनप्रयुक्तः स्यादिति तदभावाद्बाष्पं मुञ्चामि। इति (प्रेयांसं प्रति प्रेयस्या इयमुक्तिः)। **माम्**। 'तव दयित' मिति शेषः। **गमयितुम्**। **कस्माच्छोकाभाव**'इति शेषः। **इयम्**। 'शीघ्रं न व्रजसी'ति वाक्येन प्रत्याख्येति भावः। **ते** तव दयिताया इति यावत्। **त्वरा** त्वरणम्। कार्य्यसहस्रातिपातेऽपि न दयितं गमयति काचित्, किं पुनस्त्वरयेद् गमयितुमिति भावः (इति प्रेयसः प्रेयसीं प्रत्युक्तिः)। **त्वया** 'पान्थेने'ति शेषः। **सह**। **जिगमिषो**-र्गन्तुमुत्कण्ठस्य। **मे** मम मदीयस्येति यावत्। **अस्य**। **जीवस्या**न्तरात्मनः। **भूया**नत्यन्तम्। अयम्। **सम्भ्रमो** व्यग्रता। 'उपस्थित'ति शेषः। अयम्भावः–पान्थं त्वामवगम्य मदीयोऽयं जीवोऽपि बाल इव बलात् त्वया सह पान्थो भवितु-मुत्कण्ठते। तदिति यावत्पान्थो न भवेत् तावत्त्वया त्वरितमपसर्त्तव्यम्। इति (प्रेयांसं प्रति प्रेयस्या इयमुक्तिः)। एवं च नायिकानायकयोरुक्तिप्रत्युक्तिपरमिदं पद्यम्। अत्र शार्दूलविक्रीडितं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १४१ ॥'

अत्रेदम्बोद्धव्यम्–मम गमने शोकस्त्वया न कर्त्तव्य इति कान्तस्य प्रार्थनम्, प्रकारान्तरेण तद्गमनं प्रतिषेद्धुं नास्ति पान्थस्य तव गमने शोक इत्यपह्नवनं कान्तायाश्च। एवं च–याम इति किं, यास्येवासि, तद् यथेष्टं त्वरितं त्वया यातव्यम्, न कालोऽपयातव्यः, अनेन किल कालापयापनेन मम मरणासन्नाया जीवितमतीवापीड्यते। अथ यदि यायास्तर्हि जीवितापयापनेन सुखिता स्याम्, न यायाश्चेत् तर्हि जीवितस्य सुस्थतया सुस्थिता स्याम्। यानायानयोरेकतरासम्भवे जीवितं निष्क्रामदपि न निष्क्रामति, सन्तिष्ठदपि न सन्तिष्ठते। नायकश्चालम्बनं, तस्य 'याम 'इत्युक्तिरुद्दीपनं, जीवस्य जिगमिषुत्वाभिधानमनुभावोऽस्रपातो व्यभिचारी चेति यात्रायाः सम्भावितमात्रतया भावो प्रवासोऽभिव्यज्यते। इति।

एवम्भाविनमुदाहृत्य भवन्तप्रवासमुदाहर्त्तुमाह–भवन्नित्यादिना।

**भवन्** सम्पद्यमानः। 'प्रवास 'इति शेषः। **यथा**-'**प्रस्थानं**...'इत्यादौ।

'हे **जीवितप्रिय** जीवनप्राणाः ! इति यावत्। **प्रियतमे**ऽत्यन्तं प्रिये। 'त्वत्तोऽपी'ति शेषः। अत एव–त्वन्नाथे कान्त इति भावः। **यातुं** गन्तुम्। अन्यत्र प्रवसितुमिति यावत्। **निश्चितचेतसि** निश्चितं चेतश्चित्तं बुद्धिरिति यावत्, यस्य तस्मिंस्तथोक्ते। निश्चित्यावस्थित इति भावः। सतिसप्तमीयम्। **वलयैः** कटकैरुपलक्षणेन कङ्कणैश्चेत्यर्थः। 'कटको वलयोऽस्त्रियाम्।' इत्यमरः। **प्रस्थानं** प्रयाणम्। **कृत**मारब्धम्। 'पुरोगन्तुमिवे'ति शेषः। वस्तुतः–प्रयाणं श्रुत्वैव दुर्मनायमानायाः कार्श्येन कटककङ्कणानां पतनं संवृत्तमिति भावः। **प्रियसखैः** प्रियस्य कान्तस्य सखायः मित्राणि तथाभूतत्वेनोत्प्रेक्षितानीति यावत्, तैस्तथोक्तैः। 'राजाहःसखिभ्यष्टच्।' ५।४।९५ इति टच्। **अस्रैरश्रुभिः**। 'अस्रः कोणे कचे पुंसि, क्लीवमश्रुणि शोणिते।' इति यावत्। **अजस्रं** नित्यं चिरायेति यावत्। 'नित्यानवरताजस्रमपी' त्यमरः। **गतं** निर्गतम्। **धृत्या** धैर्य्येण। **क्षणं** क्षणपर्य्यन्तम्। 'अपी'ति शेषः। **न**। **आसित**मुपवेशनं कृतम्। **चित्तेन**। 'अपि तथे'ति शेषः। **पुरः** 'प्रियतमगमना'दिति शेषः। **गन्तुम्**। **व्यवसितं** निश्चितम्। एवम्-**सर्वे** 'वलयादय' इति शेषः। **सम**मेकपदम्। **प्रस्थिताः** प्रस्थानं कृतवन्तः। अथ–**गन्तव्ये** 'त्वयाऽपी'ति शेषः। **सति**। **सुहृत्सार्थः** सुहृदां वलायदीनां सार्थः समुदाय इति भावः। **किम्**। **उ**। **त्यज्यते**। कान्तप्रवासं निश्चित्य स्वजीविते निराशायाः कस्याश्चित् कान्तायास्तदानींतनीं स्वावस्थां निर्दिश्य स्वजीवितं प्रत्युक्तिरियम्। अमरुशतकस्येदं पद्यम्। अत्र शार्दूल-विक्रीडितं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ १४२ ॥'

**भूतो यथा–'चिन्ताभिः स्तिमितं..'इत्यादौ । शापाद् यथा–'तां जानीयाः..'इत्यादौ ।**

**२४८ दिव्यनाभसमानुष्यो–त्पातजात्सम्भ्रमात्त्रिधा ॥ २३८ ॥**

**उन्मादादीनामत्रैवान्तर्भावान्न पार्थक्यम् । तत्र दिव्यो यथा–विक्रमोर्वश्यामुर्वशीपुरूरवसोः ।**

---

इदं बोध्यम्–प्रेयसः प्रवासनिश्चयमात्रेण कार्श्ये वलयानां पतनम्, अस्राणामतर्कितप्रेयःप्रवासशोकोपस्थित्या निर्गतानां प्रलयः, (अस्राण्यपि शोकज्वालां शमयितुं प्रभवन्ति, किन्तु तेषामपि प्रेयःप्रवासेन समं प्रवासश्चिराय उपस्थित इति भावः) एवं सति कथं धैर्य्यमवतिष्ठेत, कथं वा चित्तम्, तदिति हे प्रियजीवित! तेषां सुहृदां सङ्गः किमु त्वया त्यज्यते, एतैर्विना त्वं किं करिष्यसीत्यन्ततो गन्तव्ये साम्प्रतमेव तवापि गमनं साम्प्रतम् । अत्र च–नायक आलम्बनं, स्मर्य्यमाणं पुरातनं प्रवासदुःखमुद्दीपनं, एवमुक्तिरनुभावः, अस्रादिर्व्यभिचारी चेति नायिकाया रतिजे रसाभिव्यक्तिः । इति ।

भूतमुदाहरन्नाह–**भूत** इत्यादिना ।

**भूतः** । 'प्रवास'इति शेषः । **यथा–'चिन्ताभिः स्तिमितं..'इत्यादौ** । अयम्भावः–'चिन्ताभिः स्तिमितं...' इति प्रवासस्य स्मरदशोदाहरणतयोदाहृतपूर्वं पद्यम्, तत्र प्रोषितः प्रेयानालम्बनं, तस्य प्रत्यावर्त्तने विलम्ब उद्दीपनं, चिन्ताजाड्यादयोऽनुभावाः, चिन्ताऽऽदयश्च सञ्चारिभावाः, इत्येवम्भूतप्रवासोऽभिव्यज्यते । इति ।

शापजः प्रवासस्तु तदुपाधीनामानन्त्येन गणयितुमशक्य इत्येकविध एवेति तद्भेदगणनामुपेक्ष्य तमुदाहरन्नाह–**शापादि**त्यादिना ।

**शापाच्छा**पनिमित्तकोत्पत्तिकः । 'प्रवास' इति शेषः । **यथा–'तां जानीयाः..'इत्यादौ** । अयम्भावः–'तां जानीया' इति प्रोषितभर्त्तृकोदाहरणतयोदाहृतपूर्वं पद्यम्, अत्र च कुबेरशापादन्तरितसहवासायाः प्रेयस्या आलम्बनत्वेन स्मर्य्यमाणायाश्च तस्या दैन्यावस्थाया उद्दीपनत्वेन मेघं प्रति दूतभावनया सन्देशोक्तेरनुभावतया ग्लान्यादेः सञ्चारितया शापजो यक्षयोः प्रवासोऽभिव्यज्यते । इति ।

अथ सम्भ्रमजं लक्षयति–२४८ **दिव्य**..इत्यादिना ।

२४८ **दिव्यनाभसमानुष्योत्पातजात** । दिव्याश्च नाभसा (आकाशप्रभवा) श्च मानुष्या (मनुष्यलोके भवा) श्चेति तेभ्यो जायत इति तस्मात्तथोक्तात् । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यत' इति न्यायेनोत्पातपदस्य प्रत्येकं सम्बन्धः । दिव्या दिवि भवा उत्पाता विद्युदुल्काद्याः । नाभसा नभसि भवाः केतूदयाद्या उत्पाताः । मानुष्या मनुष्ये मनुष्यलोके भवा भूमिकम्पाद्याः । तथा च–दिव्योत्पातादिभ्यो जातो यस्तस्मादिति निष्कृष्टोऽर्थः । **सम्भ्रमात्**सम्भ्रमं निमित्तीकृत्य जात इत्यर्थः । 'प्रवास' इति शेषः । **त्रिधा** त्रिविधः । 'स्यात्' इति शेषः ॥ २३८ ॥

ननून्मादादीनामप्युत्पातानतिरिक्तत्वात् क्वान्तर्भाव इत्याशङ्क्याह–**उन्मादादीना**मित्यादिना ।

**उन्मादादीनाम्** ।आदिपदेन निर्घातादीनां ग्रहणम् । **अत्रै**षु दिव्योत्पातादिषु । **एव** । **अन्तर्भावात्** । **न** । **पार्थक्यं** भेदः । भूकम्पादिवदुन्मादादयोऽपि मनुष्यलोकभवा उत्पाताः, केतूदयादिवन्निर्घातादयोऽपि नाभसा उत्पाताश्चेति दिक् । तथा च–एभ्यः सञ्जातस्य सम्भ्रमस्य त्रैविध्यादेतज्जातः प्रवासोऽपि त्रिविधः । इति ।

उदाहरति–**तत्रे**त्यादिना ।

**तत्र** तेषु सम्भ्रमस्य दिव्यादित्रैविध्येन त्रिविधेषु प्रवासेषु मध्य इत्यर्थः । **दिव्यो** दिव्यसम्भ्रमाज्जातः प्रवास इत्यर्थः । **यथा–विक्रमोर्वश्यां** तदाख्ये कालिदासकृते त्रोटकसञ्ज्ञके दृश्यकाव्यभेद इत्यर्थः । 'चतुर्थेऽङ्के' इति शेषः । **उर्वशीपुरूरवसोः** । उर्वशी नाम देवाङ्गना, पुरूरवा नाम राजर्षिः तयोः । इदं बोध्यम्–'उर्वश्या विहरता पुरूरवसा काऽपि विरहन्त्युदकवती नाम विद्याधरसुता क्षणं दृष्टा, तत् कुपिता मित्रावरुणशापाच्च हतविवेका विदितप्रभावमपि कुमारवनं प्रविष्टवती । प्रविशन्त्येव लतासंवृत्ता, राजर्षिश्च तां विचिन्वन् प्रवासमन्वभूत् ।' इति तत्रत्यं तात्पर्य्यम्, एवं च सम्भ्रमानुपदं पुरूरवसः सम्भ्रमः । असौ च तादृशघटनाऽऽलम्बनकस्तेन सुरतविच्छेदोद्दीपनकः, प्रलापानुभावको

अत्र पूर्वराग उक्तानामभिलाषादीनामत्रोक्तानां चाङ्गासौष्ठवादीनामपि दशानामुभयेषामप्युभयत्र सम्भवेऽपि चिरन्तनप्रसिद्ध्या विविच्य प्रतिपादनम्।

अथ करुणविप्रलम्भः—

२४९ यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये।
विमनायते यदैकस्तदा रसः त्करुणविप्रलम्भः॥ २३९॥

यथा—कादम्बर्य्यां, पुण्डरीकमहाश्वेतावृत्तान्ते।

---

मेद्दादिसञ्चारिभावकः।' इति। यत्तूक्तं विवृतिकारैः—'उर्वशी हि पुरा मित्रावरुणशापान्मनुष्यलोकं प्राप्य पुरूरवसो गृहे 'यदि भवन्तं सुरतसमयातिरिक्तसमये नग्नं पश्यामि, तदा त्वामहं त्यक्ष्यामि, मम मेषद्वयं भवता रक्षणीय' मिति नियमं कृत्वा स्थिता, तदनन्तरं देवैरन्धतमसे मेषद्वयमपहृतं, तच्छ्रुत्वा पुरूरवाः ससम्भ्रमेण वस्त्रमपरिधायैव खड्गपाणिर्मेषापहर्त्तुः पश्चाद्धावितः। एतस्मिन्नन्तरे विद्युद्भिस्तं नग्नमवलोक्योर्वशी स्वर्गं गतेति ग्रन्थस्य वर्त्तुलार्थः। अत्र देवकृतमेषापहरणरूपदिव्योत्पातेन पुरूरवसः सम्भ्रमः, तेनोर्वश्या भिन्नदेशवर्तित्व' मिति, तद् विक्रमोर्वश्यनवलोकनमूलम्। अन्यौ यथा—मम, 'दूरादुपायान्तममुं चिरेण विलोचनाभ्यां नितरां पिबन्ती। निर्घातमाकर्ण्य कुतोऽपि बाला सौदामनीयां सुषमामजैषीत्॥,' 'घ्नन्ती दृगन्तैः सुचिरायितं मां पादानतं सस्पृहमुद्गिरन्ती। जनान्तरं तत्र कुतोऽपि यान्तं निशम्य सद्यस्तिरयाम्बभूव॥' इति अत्र हि चित्तप्रमादद्योतनायैव पारोक्ष्येणोक्तिः।

ननु अभिलाषादीनामङ्गासौष्ठवादीनां च पूर्वरागे प्रवासे च व्यत्ययेनापि सम्भवोऽनुभूयत इति कथं तेषां पार्थक्यमित्याशङ्क्याह—अत्रेत्यादिना।

**अत्रा**स्मिन् ग्रन्थ इत्यर्थः। **पूर्वरागे** 'सम्भवित्वेने'ति शेषः। **उक्तानां** प्रतिपादितानाम्। समस्तपाठे तु-'सप्तमी शौण्डैः।' २।१।४ इत्यत्र 'सप्तमी'ति योगविभागात् साधुत्वम्। **अभिलाषादीनाम्**। **अत्रा**स्मिन् प्रवास इत्यर्थः। 'सम्भवित्वेने'ति शेषः। **च**। **उक्तानाम्**। **अङ्गासौष्ठवादीनाम्**। **अपि** न केवलमभिलाषादीनां न वा केवलमङ्गासौष्ठवादीनामित्यर्थः। **दशानां** दशसङ्ख्याकानामवस्थाविशेषाणामित्यर्थः। ( प्रतिपादनमित्येतेन सम्बन्धः ) **उभयेषा**मभिलाषादीनामङ्गासौष्ठवादीनां चेत्यर्थः। **अपि** पुनः। **उभयत्र** पूर्वरागे प्रवासे चेत्यर्थः। **सम्भवे**। **अपि**। **चिरन्तनप्रसिद्ध्या**श्चिरन्तनानां प्रसिद्धिरुद्धोष्याभिधानं तस्यास्तामनुरुध्येति भावः। **विविच्य** पार्थक्येन निश्चित्य। **प्रतिपादनम्**। 'कृतमिति बोध्य'मिति शेषः।

एवं प्रवासं निरूप्य करुणं निरूपयितुमुपक्रमते—अथेत्यादिना।

**अथ** प्रवासविप्रलम्भस्य लक्ष्यलक्षणाभ्यां निरूपणानन्तरम्। **करुणविप्रलम्भः** करुणोऽसौ विप्रलम्भ इति तथोक्तः। निरूप्यते—२४९ **यूनो**रित्यादिना।

२४९ **यूनो**र्युवतियूनोर्मध्य इत्यर्थः। 'पुमान् स्त्रिया।' १।२।६७ इत्येकशेषः। **एकतरस्मिन्** युवत्यां यूनि वेति भावः। **लोकान्तरम्**। **गतवति** प्राप्तवति सति, मृत इति यावत्। तथा—**पुनर्लभ्ये** तदनन्तरमपि लब्धुं शक्ये तादृशेनैव शरीरेणोज्जीवितुं युक्त इति यावत्। **यदा**। **एक**स्तद्भिन्न'इति शेषः। **विमनायते** दुःखितचेता जायते प्रलापादिना तथाऽवगम्यत इति यावत्। 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः।' ३।१।१२ इति क्यङ् सो लोपश्च। **तदा**। **करुणविप्रलम्भाख्यः**। **रसः**। 'स्या'दिति शेषः। अयम्भावः—'करुणः शोकस्थायिको, विप्रलम्भो विप्रकृष्टरतिस्थायिकश्च, तत्—यत्र शोकेन लोकान्तरगमनजन्येन चेतसो दौःस्थ्यम्, अत एव—यदनुभावा विलापाद्याः, स करुणः; यत्र पुनःपुनः सङ्गमाशया तत्र प्रोषित इवाभिधानाद्याः, स विप्रलम्भः; इत्यनयोरङ्गाङ्गिभावो यत्रोपपद्यते स करुणविप्रलम्भः। इति।' अत्रार्य्याछन्दः, तल्लक्षणं चोक्तं प्राक्॥ २३९॥

उदाहरति—**यथा—कादम्बर्य्यां** तदाख्यस्य वाणकृतस्य गद्यकाव्यस्य पूर्वभाग इति भावः। **पुण्डरीकमहाश्वेतावृत्तान्ते** पुण्डरीकस्य महाश्वेतया चन्द्रापीडं प्रति वर्ण्यमाने वृत्तान्त इति भावः। तत्रेदमुपलभ्यते—'अन्योऽन्यं सप्रश्रय-

**पुनरलभ्ये शरीरान्तरेण वा लभ्ये तु करुणाख्य एव रसः। किञ्च--'अत्राकाशसरस्वतीभाषाऽनन्तरमेव शृङ्गारः, सङ्गमप्रत्याशया रतेरुद्भवात्। प्रथमन्तु-करुण एव।' इत्यभियुक्ता मन्यन्ते।**

**यच्च-अत्र, 'सङ्गमप्रत्याशाऽनन्तरमपि भवतो विप्रलम्भशृङ्गारस्य प्रवासाख्यो भेद एवे'ति केचिदाहुः, तदन्ये-'मरणरूपविशेषसम्भवात्तद्भिन्न एवे'ति मन्यन्ते।**

---

मदलोकनानन्तरं वयस्याभिः कथमपि भवनं प्रति नीतायां महाश्वेतायां पुण्डरीको भुवनान्तरं प्रति तद्विरहपीडितो गतवान्, अथ तया प्रेयसो भुवनमध्यारोढुं निश्चीयमाने केनापि 'वत्से महाश्वेते! न त्याज्यास्त्वया प्राणाः, पुनरपि तवानेन भविष्यति समागमः।' इत्याश्वास्यमानया प्रोषितभर्तृक एव तं झटिति साक्षात्कर्तुं तपसे प्रवृत्तम्।' इति।

अथ-करुणविप्रलम्भव्यवस्थां दर्शयति-**पुनरलभ्य** इत्यादिना।

**पुनरलभ्ये** प्रत्युज्जीवनाशारहिते तादृशेनैव शरीरान्तरेण वा सङ्गमानर्हे इति भावः। **शरीरान्तरेण**ान्यत्तादृशातिरिक्तं यच्छरीरं तेन। **वा। लभ्ये** 'यूनोरेकतरस्मि'न्निति शेषः। **तु** पुनः। (इदं तादृशशरीरलभ्यस्य व्यवच्छेदार्थम्)। **करुणाख्यः। एव** न तु करुणविप्रलम्भः। **रसः।** 'रत्यालम्बनस्य विच्छेदे रतेर्वैक्लव्यहेतुकत्वेनावतारा'दिति शेषः। इदं बोध्यम्-पुण्डरीको लोकान्तरं गतोऽपि पुनस्तादृशेनैव शरीरेण लब्ध इति महाश्वेतायाः करुणविप्रलम्भ एव। अथ यथा मदनो लोकान्तरं गतस्तत आगतोऽपि 'शरीरान्तरेणे'ति रतेः करुणयैवाभूत्, तथाऽन्यत्रापि। इति।

पुण्डरीकमहाश्वेतावृत्तान्ते तु करुणविप्रलम्भ एव, स च यथा, तत् प्राचां समीक्षाऽनुपदं समर्थयते-**किञ्चे**त्यादिना।

**किञ्च। '**अत्र**ास्मिन् पुण्डरीकस्य महाश्वेतया वर्ण्यमाने वृत्तान्त इति यावत्। **आकाशसरस्वतीभाषाऽनन्तरम्**आकाशस्य सरस्वतीभाषा वागुच्चारणं तस्या अनन्तरं पश्चादिति तथोक्तम्। आकाशते परितः प्रकाशत इत्याकाशो देवादिः। अशरीरवाक्सम्भवपक्षेऽप्येवं न दोषः, दिव्यानां शरीरस्फुरणस्य तदिच्छाऽधीनत्वात्। **एव** न तु प्रथममिति शेषः। अत एव-'प्रथमन्त्वि'ति वक्ष्यते। **शृङ्गारः।** कुत इत्याशङ्क्याह-**सङ्गमप्रत्याशया** सङ्गमस्य तादृशेनैव शरीरेण सम्भोगहेतुकत्वेन लाभस्य प्रत्याशा रत्यालम्बनस्य प्रत्युज्जीवनवासनया पुनर्जाताऽऽशा तयेति तथोक्तया। **रतेः। उद्भवात्। प्रथम**माकाशसरस्वतीभाषायाः पूर्वमित्यर्थः। **तु** पुनः। **करुणः। एव**'न तु शृङ्गार'इति शेषः। तावत् सङ्गमाशाया अनुदयाच्छोकस्यैवोदयादिति भावः।' इतीत्येवम्। **अभियुक्ता** आलङ्कारिकगुरवः। **मन्यन्ते।** अत्रेयं व्यवस्था-रत्यालम्बनस्य लोकान्तरं गतवतो यावन्न तस्य ततः प्रतिनिवृत्त्याशा तावद्रतेः शोकात्मना परिणामात् करुणः, तदनन्तरं यावन्न सङ्गमः, किन्तु जातः प्रत्ययस्तत्प्रतिनिवृत्तेः, तावद्विप्रलम्भः, अथ सङ्गमे सम्भोगः। न चैवम्मदनस्य सङ्गमप्रत्याशायां रतेर्विप्रलम्भ इति शङ्क्यम्, शरीरान्तरेण तदुदयात्। तथा च-अत्र यावन्न सङ्गमस्तावत् सङ्गमप्रत्याशाया उदयेऽपि करुणः, तस्याः शरीरान्तरीणत्वेन शोकनिवृत्तावकिञ्चित्करत्वात्। तदनन्तरं सम्भोगः। इति।

स्थूणानिखननन्यायेनैतदेव द्रढयितुं केषांञ्चिन्मतं निर्दिश्यान्येषां मतं दर्शयति-**यच्च** ( इति केचिदित्यनेन सम्बन्धः )। **अत्र**ास्मिन् पुण्डरीकमहाश्वेतावृत्तान्त इति यावत्। **'सङ्गमप्रत्याशाऽनन्तरम्। अपि** पुनः। **भवतः** सम्भवतः। **विप्रलम्भशृङ्गारस्य। प्रवासाख्यः। भेदः। एव** न तु करुणाख्य इत्यर्थः। 'तथोक्तं प्रदीपकारैः-'करुणशृङ्गारस्याप्यत्रैवान्तर्भावः।'इति। अत्रैव प्रवास एवेत्यर्थः। इतीत्येवम्। **केचित्। आहुः। तदन्ये** तेभ्योऽन्ये भिन्ना इत्यर्थः (इति मन्यन्ते इत्यनेन सम्बन्धः)। **'मरणरूपविशेषसम्भवान्**मरणरूपो यो विशेषोऽधिकोऽवच्छेदक इति यावत् तत्सम्भवस्तस्मात्तं निमित्तीकृत्येत्यर्थः। **तद्भिन्न**स्तस्मात्प्रवासाद्भिन्नो द्वितीयो विजातीय इति यावत्। **एव** न तु प्रवास इति शेषः।' इतीत्येवम्। **मन्यन्ते।** इदमुक्तम्-देशान्तरगमनहेतुकः प्रवासः, स च मृतस्यापि पुनः सङ्गमाशायाम्, लोकान्तरस्यापि देशान्तरत्वानतिरेकात्। इति यत्किञ्चिदाहुस्तन्मन्दम्, प्रवासस्य जीवद्दशायामेव देशान्तरगमनमूलत्वात्, मृतज्ञानानन्तरं सङ्गमप्रत्याशाया उद्भवेऽपि यावन्नासौ तावद्रतेर्वैक्लव्यात्मना परिणामात्। प्रोषितज्ञानानन्तरं तथाऽनवतारात्, किन्तु विप्रकृष्टत्वेनैव। अत एव-प्रवासानन्तरं तेनैव शरीरेण सङ्गमप्रत्याशा, मरणानन्तरं तु तद्भिन्नेन तादृशेन। इति परे प्राहुः। इति।

अथ सम्भोगः-

२५० दर्शनस्पर्शनादीनि निषेवेते विलासिनौ।
यत्रानुरक्तावन्योऽन्यं सम्भोगोऽयमुदाहृतः॥ २४०॥

आदिशब्दादन्योऽन्याधरपानचुम्बनादीनि। यथा- 'शून्यं वासगृहं..' इत्यादौ।

२५१ सङ्ख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात्।
अयमेक एव धीरैः कथितः सम्भोगशृङ्गारः॥ २४१॥

२५२ तत्र स्यादृतुषट्कं, चन्द्रादित्यौ तथोदयास्तमयः।
जलकेलि-वनविहार-प्रभात-मधुपान-यामिनीप्रभृतिः॥ २४२॥

---

एवं विप्रलम्भं सप्रभेदं लक्ष्यलक्षणाभ्यांनिरूप्य सम्भोगं तथा निरूपयितुमाह-अथेत्यादिना।

अथ विप्रलम्भनिरूपणानन्तरम्। **सम्भोगः** निरूप्यते-२५० '**दर्शन**..इत्यादिना।

२५० **यत्र**। **विलासिनौ** विलासिनी च विलासी चेति तथोक्तौ। **अन्योऽन्यम्**। **अनुरक्तौ**। अत एवैकतरस्यानुरक्तत्वे शृङ्गाराभास इति वक्ष्यते। 'सन्ता' विति शेषः। **दर्शनस्पर्शनादीनि**। **निषेवेते**। 'स' इति शेषः। **अयम्**। **सम्भोगः**। **उदाहृतः** कथितः। तथोक्तम्-'अनुकूलौ निषेवेते यत्रान्योऽन्यं विलासिनौ। दर्शनस्पर्शनादीनि स सम्भोगो मुदान्वितः॥' इति॥ २४०॥

आदिपदार्थमाह-**आदिशब्दा**दादिशब्दोपादानादितिभावः। **अन्योऽन्याधरपानचुम्बनादीनि**। अत्र पुंस्त्वेन निर्देशस्तु न स्थाने, कारिकायां, 'सामान्ये नपुंसक'मिति न्यायसिद्धवार्तिकेनाऽऽदिपदस्य क्लीवत्वेन निर्देशात्। उदाहरति-**यथा-'शून्यं वासगृहं..' इत्यादौ**। उदाहृतपूर्वमिदम्। इदं तु बोध्यम्-सम्भोगो द्विविधः, नायिकाऽऽरब्धो नायकारब्धश्च; तत्राद्यो यथा-'शून्यं वासगृहं..' इत्यादौ। द्वितीयो यथा-'त्वं मुग्धाक्षि! विनैव कञ्चुलिकया धत्से मनोहारिणीं लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि। शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो निर्यातः शनकैरलीकवचनोपन्यासमालीजनः॥' इति।

अयं चैकविध एव गण्यत इत्याह-२५१ **सङ्ख्यातु**मित्यादिना।

२५१ **चुम्बनपरिरम्भणादिबहुभेदा**च्चुम्बनं च परिरम्भणमालिङ्गनं चेति ते आदौ येषां (सम्भाषणादीनां), तैः (कृतः) बहुभेदः प्रचुरो भेदस्तस्मात्। **सङ्ख्यातुम्**। **अशक्यतया**। **अयम्**। **सम्भोगशृङ्गारः**। **एको**ऽवान्तरभेदशून्यः। **एव**। **धीरैः कथितः**। तथोक्तम्-'सम्भोगस्य परस्परावलोकनसम्भाषणालिङ्गनचुम्बनाद्यनेकव्यापारमयत्वेनानन्त्यादेकविधत्वेन गणना कृता।' इति। इदमुक्तम्-'प्राधान्येन व्यपदेशा भवन्ती'ति नयेन चुम्बनादीनामनुभावानां प्राधान्येन तेषां चानन्त्येन तत्तदुपाधिवशाद्भिद्यमानोऽप्ययमेकविध एव मन्यते। तथाहि-चुम्बनानुभावप्राधान्येन भिद्यमानश्चुम्बनसम्भोगः, चुम्बनं च क्वचिन्नायिकाऽऽरब्धं क्वचिन्नायकारब्धं च तत्रापि नायिकाऽपि स्वीयादिभेदादनेकविधा, नायकोऽप्येवं धीरोदात्तादिभेदात्। एवं च-तत्तदुपाधिवशाद्भिद्यमानस्यानेकविधस्य चुम्बनस्य सम्भोगोऽप्यनेकविधः, किं पुनस्तत्तद्भेदप्रभेदात्मा; तदेक एवायं स्वीक्रियते। इति। अत्रार्या छन्दः, तल्लक्षणं चोक्तं प्राक्॥ २४१॥

अस्योद्दीपनविभावान्निर्दिशति-२५२ **तत्रे**त्यादिना।

२५२ **तत्र** तस्मिन् सम्भोग इत्यर्थः। **ऋतुषट्क**मृतूनां वसन्तादीनां षट्कमिति तथोक्तम्। **स्यात्**। 'उद्दीपनतयाऽभिमत' मिति शेषः। तथा-**चन्द्रादित्यौ** चन्द्रश्चादित्यश्चेति तौ। वचनविपरिणामेन 'स्याता' मिति योज्यम्। **तथा**। **उदयास्तमय** उदयास्ताभ्यां प्रचुर इति तथोक्तः, 'काल' इति शेषः। 'स्यादि'ति पूर्वतोऽन्वेति, एवं परत्र। 'उदितास्तमिता' विति पाठे तु-'चन्द्रादित्या'वित्यस्य विशेषणत्वेन बोध्यम्। तथा-**जलकेलि-वनविहार-प्रभात**

**अनुलेपनभूषाद्याः शुचि मेध्यं वाच्यमन्यच्च।**

**तथा च भरतः-'यत् किञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तत्सर्वं शृङ्गारेणोपमीयते।' इति।**

**किञ्च--**

**२५३ कथितश्चतुर्विधोऽसावानन्तर्य्यात्तु पूर्वरागादेः ॥ २४३ ॥**

**यदुक्तम्-**

**'न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते। कषायिते हि वस्त्रादौ भूयान्रागो विवर्धते॥' इति।**

---

**मधुपानयामिनीप्रभृतिः** । प्रभृतिपदेन मलयाचलमारुतादिग्रहणम् अथ-**अनुलेपनभूषाद्याः** । आद्यपदेन कन्दुकलीलाऽऽदिग्रहणम्। 'उद्दीपनतयाऽभिमताः स्यु' रिति शेषः । तथा-**शुचि** निर्म्मलं जनान्तरसञ्चारादि-दोषशून्यमिति यावत्। **मेध्यं** पवित्रम् । नैरुज्यकारितया सङ्गमार्हमिति यावत्। **अन्यद्**हंसदर्शनादीति भावः । **च वाच्यम्** । 'उद्दीपनविभावतये'ति शेषः । तथोक्तम्-'ऋतुमाल्यालङ्कारैः प्रियजनगान्धर्वकाव्यसेवनतः । उपवनगमन-विहारैः शृङ्गाररसः समुद्भवति ॥ २४२ ॥' इति ।

ननु स्यादेवं वसन्तादीनामुद्दीपनत्वं, किन्तु शुच्यादीनां कथं मन्यावहे इत्याचार्य्यसम्मतिं दर्शयति **तथा-चे**त्यादिना।

**तथा** यथाऽस्माभिरुक्तं तद्वत्। **च** पुनः । **भरतः** स्वनामधन्यो नाट्याचार्यः । 'आहे'ति शेषः । किमि-त्याह-'**यत्** । **किञ्चित्** किमपि । सामान्यविवक्षया नपुंसकत्वेन निर्देशः । **लोके** जगति । 'लोकस्तु भुवने जने ।' इत्यमरः । **शुचि** निर्म्मलम् । **मेध्यं** पवित्रम् । 'पूतं पवित्रं मेध्यं चे' त्यमरः । **उज्ज्वलं** दीप्तिमत्। **दर्शनीयम्** । **वा** । **तत्** । **सर्वम्** । **शृङ्गारेण** । **उपमीयत** उपमितिविषयः क्रियते ।' इति । इदं तत्त्वम्-'तत्र शृङ्गारो नाम रतिस्थायिभावप्रभव उज्ज्वलवेषात्मकः, यत् किञ्चिल्लोके शुचि मेध्यमुज्ज्वलं दर्शनीयं वा तत्सर्वं शृङ्गारेणोपमीयते। यस्तावदुज्ज्वलवेषवान् स शृङ्गारवानित्युच्यते । यथा-गोत्रकुलाचारोत्पन्नान्याप्तोपदेशसिद्धानि पुंसां नामानि भवन्ति, तथैषां रसानां भावानां च नाट्याश्रितानां चार्थानामाचारोत्पन्नान्याप्तोपदेशसिद्धानि नामानि। एवमेष आचारसिद्धो हृद्योज्ज्वलवेषात्मकत्वाच्छृङ्गारो रसः ।' इति भरताचार्य्यैरुक्तम्, तेन शुच्यादीनां शृङ्गारेणोपमितत्वाच्छृङ्गारस्योद्दीपना-त्मनाऽङ्गीकारः । इति ।

अथाप्येतस्य प्रसिद्धान् भेदान् निर्देष्टुमाह-**किञ्च** किन्चित्यर्थः । यद्यपि-असङ्ख्यभेदतयैकविध एवायमङ्गीकृत-स्तथाऽपीति भावः ।

वक्तव्यं निर्दिशति-२५३ **कथित** इत्यादिना ।

२५३ **पूर्वरागादेः** पूर्वरागमानप्रवासकरुणानामित्यर्थः । **आनन्तर्य्याद**नन्तरंभव आनन्तरस्तस्य भाव आनन्तर्य्यं तस्मात्। आनन्तरभवत्वमङ्गीकृत्येति भावः । **तु** एव ( निपातानामनेकार्थत्वात् )। **असौ** सम्भोग इत्यर्थः । **चतुर्विधश्च**तस्रो विधाः प्रकारा यस्य स इति तथोक्तः । पूर्वरागानन्तरो, मानानन्तरः, प्रवासानन्तरः, करुणानन्तरश्चेति चतुर्भेद इति भावः । **कथितः** ॥ २४३ ॥

ननु कथमयं पूर्वरागादीनामानन्तर उच्यत इत्याशङ्क्य प्राचां सम्मतिमुपन्यस्यति-**यदि**त्यादिना ।

**यद्** यतो हेतोरित्यर्थः। **उक्तम्** । किमित्यत आह-**न विने**त्यादिना ।

'**विप्रलम्भेन** पूर्वरागादिहेतुकेन स्वविशेषेण । **विना** । **सम्भोगः** । **पुष्टिं** परिस्फुरत्स्वरूपत्वमिति भावः । **न** । **अश्नुते** प्राप्नोति । तत्र हेतुमाह-**हि** यतः । **कषायिते** कषायो रागविशेषो जातो यस्य तस्मिंस्तथोक्ते । **वस्त्रादौ** । **भूयान्** अतिशयितः प्रचुरः । **रागः** । **विवर्धते** विशिष्टतया वृद्धिं प्राप्नोतीति भावः । तथा च-यथा वस्त्रादौ कषा-यितत्वोत्तरं रागः पुष्टिमधिगच्छति न तथा कषायितत्वतः पूर्वम् । एवं, यथा सम्भोगे पूर्वरागाद्यनन्तरं रसः, न तथा पूर्वरागादेः पूर्वम् । तस्मात् पूर्वरागादिकमन्तराऽपि 'सम्भोगः सम्भवती'ति व्यञ्जितम् । पूर्वरागाद्यनन्तरं विप्रलम्भं विना, एतस्य पूर्वरागादिहेतुकत्वात् ।' इति ।

तत्र-

पूर्वरागानन्तरः सम्भोगो यथा-कुमारसम्भवे पार्वतीपरमेश्वरयोः। मानानन्तरो यथा-

'सन्दष्टेऽधरपल्लवे सचकितं हस्ताग्रमाधुन्वती,
मामा मुञ्च शठेति कोपवचनैरानर्त्तितभ्रूलता।
सीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी,
प्राप्तं तैरमृतं, श्रमाय मथितो मूढैः सुरैः सागरः॥ १४२॥' इति।

प्रवासानन्तरसम्भोगो यथा मम तातपादानाम्—

---

अस्य चतुरो भेदान् क्रमादुदाहरति-तत्रेत्यादिना।

**तत्र** तेषु पूर्वरागानन्तरादिषु सम्भोगेषु मध्य इत्यर्थः। **पूर्वरागानन्तरः** पूर्वरागस्यानन्तरभावीत्यर्थः। **सम्भोगः**। **यथा-कुमारसम्भवे** कुमारसम्भवमुद्दिश्य कालिदासेन निर्म्मिते महाकाव्य इत्यर्थः। **पार्वतीपरमेश्वरयो**र्गौरीशङ्करयोः। 'चरित'इति शेषः। इदं तत्त्वम्-नारदेन परमेश्वरेणैव समं परिणययोग्येयमिति स्वात्मनस्तथा योग्यतामवगम्य तत्र जातानुरागा तत्सम्पादनार्थं तपसे प्रवृत्ताऽऽसीत् देवी, तदेवं शनैश्शनैः। पूर्वरागोदयं तस्या अभिधाय सम्भोगो वर्णितः, इति सुव्यक्तं कुमारसम्भवं विदुषाम्। सुष्ठूक्तं ततः, पूर्वरागानन्तरः सम्भोगो यथा कुमारसम्भव इत्यादि।

**मानानन्तरः**। 'सम्भोग'इति शेषः। **यथा-'सन्दष्टे..'** इत्यादौ।

**'अधरपल्लवे**ऽधरः पल्लव इवेति तत्र तथोक्ते। **सन्दष्टे** सम्यग् दष्टे सति। 'नायकेने'ति शेषः। **सचकितं** सभयं यथा स्यात्तथेत्यर्थः। 'चक'भ्रान्तौ, भावे क्तः। **हस्ताग्रम्**। **आधुन्वती** कम्पयन्ती सतीत्यर्थः। **मामा** नन। सम्भ्रमोक्तौ द्विरुक्तिः। मा दाङ्क्षीर्मा दाङ्क्षीरिति भावः। हे **शठ** निर्लज्ज धृष्ट! **मुञ्च**'मा' मिति शेषः। **इती**त्येवम्। **कोपवचनैः** कोपस्य (व्यञ्जकानि) वचनानि तैः। सहार्थेयं तृतीया। **आनर्तितभ्रूलता** परिकम्पितभ्रुकुटिका। **सीत्काराञ्चितलोचना** 'सी'दिति पीडाऽतिशयव्यञ्जकस्य ध्वनेरनुकरणार्थमव्ययम्, तस्य कारेण विधानेनाञ्चिते पूजिते लक्षणया निमीलिते लोचने ययेति तथोक्ता। **मानिनी** मानोऽभिमान आग्रहः कोपो वाऽस्त्यस्या इति तथोक्ता 'मानोऽभिमाने कोपे चाग्रहे'इति गोपालः। **सरभसं** सहर्षं सौत्सुक्यं सत्वरं वा। 'रभसो हर्षवेगयोः' । पौर्वापर्याविचारे च पुंस्यौत्सुक्ये च सम्भ्रमे।' इति गोपालः। **यैः**। **चुम्बिता**। **तैः**। **अमृतम्**। **प्राप्तं** लब्धम्। ननु किं पुनस्तत्कृते पयोनिधिर्देवैर्मथित इत्याशङ्क्योत्तरयति-**मूढै**र्व्यर्थं श्रान्तत्वात् स्पष्टमौर्ख्यैरिति भावः। **सुरै**र्देवैः। **श्रमाय**। 'केवल'मिति शेषः। **सागरः** समुद्रः क्षीरोद इति यावत्। **मथितः**। केवलं श्रम एव क्षीरनिधिमथनेन देवैरुपलब्धः, न पुनरमृतमिति ते मूढा एवेति भावः। इदं कस्यापि सुभाषितरत्नभाण्डागारेऽप्युपलभ्यते। अत्र च शार्दूलविक्रीडितं छन्दः, तल्लक्षणं चोक्तं प्राक्॥ १४२॥' इति।

इदं बोध्यम्-मानिन्याः-'मामा मुञ्च शठे'त्याद्युक्त्या हस्ताग्राधूननादिरूपया चेष्टया च व्यज्यमानस्य मानस्यानन्तरं मानिन्यालम्बनः पेयत्वाभिमताधरोद्दीपनोऽधरपानानुभाव आवेगसञ्चारिकः सम्भोगस्तद्वति 'प्राप्तं तैरमृतं..' इत्यभिधायिनि व्यज्यते। इति।

**प्रवासानन्तरसम्भोगः** प्रवासानन्तरोऽसौ सम्भोग इति तथोक्तः। **यथा**। **मम**। 'विश्वनाथस्ये'ति शेषः। **तातपादानां** ताताः पितरोऽमी पादाः पूज्यास्तेषां, तथाभूतानां चन्द्रशेखराणामित्यर्थः। संस्कृतप्राकृतकाव्यरूपे-'क्षेमं..'इत्यादौ।

'क्षेमं ते ननु पक्ष्मलाक्षि ! किसअं खेमं मदंगं दिढं,
एतादृक्कृशता कुतः, तुह पुणो पुट्ठं सरीरं जदो ।
केनाहं पृथुलः प्रिये, पणइणीदेहस्स संमेलणात्,
त्वत्तस्तन्वि ! न काऽपि मे, जइ इदं खेमं कुदो पुच्छसि ॥ १४४ ॥

करुणानन्तरसम्भोगो यथोत्तरकादम्बर्याम् ।

अथ हास्यः—

**२५४ विकृताकारवाग्वेषचेष्टादेः कुतुकाद्भवेत् ।**
**हास्यो हासस्थायिभावः श्वेतः प्रमथदैवतः ॥ २४४ ॥**

---

'हे **पक्ष्मलाक्षि** पक्ष्मले पक्ष्मशालिनी अक्षिणी नेत्रे यस्यास्तत्सम्बुद्धौ तथोक्ते ! 'सिध्मादिभ्यश्च ।' ५।२।९७ इति लच् । **ननु** पृच्छयत इति भावः ।' प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु ।' इत्यमरः । **ते** तव । **क्षेमम्** । 'अस्ती'ति शेषः । (इति परदेशत आगतस्य प्रेयसः प्रेयस्यै प्रश्नः) । **मदंगं** मदङ्गम् । मम त्वया परित्यक्ताया अङ्गं शरीरमिति तथोक्तम् । 'अङ्गं गात्रे...'इति मेदिनी । **दिढं** दृढमत्यन्तमिति यावत् । 'दृढः स्थूले नितान्ते च प्रगाढे बलवत्यपि ।'इति मेदिनी । **किसअं** कृशकं कृशमिति यावत् । 'अस्तीत्येतावत्'इति शेषः । **खेमं** क्षेमम् । (इति तं प्रति तस्यां उत्तरम्) । **एतादृक्** । **कृशता** । **कुतः** । 'जाते'ति शेषः । (इति तस्यै तस्य प्रश्नः) । **तुह** तव मां परित्यज्य दूरं गतवत इति यावत् । **पुणो** पुनः । **जदो** यतो यस्मात्कारणादिति यावत् । **पुट्ठं** पुष्टम् । **सरीरं** शरीरम् । 'अस्ति तत'इति शेषः । (इति तं प्रति तस्या उत्तरम्) । हे **प्रिये** ! **केन**'हेतुने'ति शेषः । **पृथुलः** पुष्टः । **अहम्** । 'अस्मी'ति शेषः । (इति तस्यै तस्य प्रश्नः) । **पणइणीदेहस्स** प्रणयिनीदेहस्य । प्रणयिन्याः प्रेमास्पदभूताया (मद्भिन्नायाः) देहस्तस्य । **संमेलणात्** सम्मेलनात् सङ्गमादिति यावत् । 'त्वं पुष्ट'इति शेषः । परत्र कयाऽपि समं प्रेम विधाय त्वया रमितं, तदानन्देन त्वं पुष्टः, मया तु न केनापि समं प्रेम कृतं न वा रमितं, तदार्त्या कृशशरीराऽस्मीति निष्कृष्टोऽर्थः । (इति तं प्रति तस्या उत्तरम्) । हे **तन्वि** ! 'सुभ्रु'इति त्वपपाठः, ह्रस्वान्ततानुपपत्तेः, तथाऽनुप्रासस्याप्युल्लासाच्च । **त्वत्तः** । 'अन्ये'ति शेषः । **मे** मम । **काऽपि** । 'प्रणयिनी'ति शेषः । **न** नास्ति । यद्देहसङ्गादहं पुष्टः स्यां सा त्वमेव, न त्वदन्या, न तत्त्वया शङ्कितव्यमिति वाक्यार्थः । एतेन प्रेयसोऽपि कृशशरीरत्वमित्यावेदितम् । (इति तां प्रति तस्य प्रत्युत्तरम्) । **जइ** यदि । **इदं** इदम् । 'त्वत्तस्तन्वि न काऽपि मे'इत्येवमवगम्यते । 'तर्ही'ति शेषः । **कुदो** कुतः । **खेमं** क्षेमम् । **पुच्छसि** पृच्छसि । यथा मम विरहे तव शरीरं तथा तव विरहे ममापि कृशमिति भावः । (इति तं प्रति तस्याः पुनः प्रत्युत्तरम्) । अत्र च संस्कृतभाषया प्रेयसः, प्राकृतभाषया च प्रेयस्या उक्तिः । प्रोषित्वाऽऽगतस्य स्वविरहेण क्लिश्यन्तीं प्रति'क्षेमं ते नन्वि'त्यादि, तथा क्लिश्यन्त्याश्च स्वविरहेण क्लिश्यन्तं तं प्रति'किसअं'इत्याद्युक्तिः । अत्र शार्दूलविक्रीडितं छन्दः, तल्लक्षणं चोक्तं प्राक्॥१४४॥'

**करुणानन्तरसम्भोगः** । **यथा** । **उत्तरकादम्बर्यां** कादम्बर्यां उत्तरभागे 'पुण्डरीकस्य प्रत्युज्जीवने महाश्वेतायाः, चन्द्रापीडस्य प्रत्युज्जीवने कादम्बर्याश्चे'ति शेषः ।

एवं शृङ्गारं निरूप्य हास्यं निरूपयितुमुपक्रमते—अथेत्यादिना ।

**अथ** शृङ्गारनिरूपणानन्तरम् । **हास्यः** । निरूप्यते—२५४ **विकृता...**इत्यादिना ।

२५४ **विकृताकारवाग्वेषचेष्टाऽऽदेर्**विकृतानि विपरीतान्याकारवाग्वेषचेष्टादीनि यत्र तस्मात् तथोक्तात् । आकार आकृतिः । वाग्भाषणम् । वेषो वस्त्रादिना नेपथ्यरचना । चेष्टा हस्तादिचालनादिरूपा । आदिनोन्मादादीनि । **कुतुकात्** कुतूहलात्तन्निमित्तीकृत्येति यावत् । ल्यब्लोपे पञ्चमीयम् । 'दृश्यमानाद्वर्ण्यमानाद्वे'ति शेषः । 'कुतुकं च कुतूहलम् ।'इत्यमरः । 'कुहका'दिति पाठान्तरे तु नर्त्तकादुपलक्षणेन श्रव्यकाव्याच्चेत्यर्थः । 'नर्त्तका'दिति पक्षे विकृता- न्याकारवाग्वेषचेष्टादीनि यस्य तस्मादिति व्याख्येयम् । 'कुहको नर्त्तको नटः ।' इति गोपालः । **श्वेतः** । **प्रमथदैवतः** प्रमथो दैवतं यस्येति तथोक्तः । **हासस्थायिभावो** हासः स्थायिभावो यत्र तथोक्तः । **हास्यः** । **भवेत्** ॥ २४४ ॥

विकृताकारवाग्वेषं यदालोक्य हसेज्जनः।
तदत्रालम्बनं प्रोक्तं तच्चेष्टोद्दीपनं मतम् ॥ २४५ ॥
अनुभावोऽक्षिसङ्कोच-वदनस्मेरताऽऽदिकः।
हर्षावहित्थचापल्या-वेगाश्च व्यभिचारिणः ॥ २४६ ॥

अस्यानुभावभेदेन भेदानाह-

२५५ ज्येष्ठानां स्मितहसिते, मध्यानां विहसितावहसिते च।
नीचानामपहसितं तथाऽतिहसितं तदेष षड्भेदः ॥ २४७ ॥

---

विभावादीनाह-**विकृताकारवाग्वेषं** विकृता आकारवाग्वेषा उपलक्षणेन चेष्टा च यस्य यत्र वा तत्तथोक्तम्। **यत्**। सामान्यविवक्षया नपुंसकत्वेन निर्देशः। **आलोक्य** दृष्ट्वोपलक्षणेन स्मृत्वा श्रुत्वा मत्वा वेत्यर्थः। **जनः**। **हसेत्** विकसितमुखो भवेत्। **तत्** पुरुषादिकमित्यर्थः। **अत्रास्मिन्** हास्य इत्यर्थः। **आलम्बनम्**। **प्रोक्तम्**। **तच्चेष्टा** तस्य विकृताकारादेश्चेष्टा। 'वर्ण्यमाना दृश्यमाना वे'ति शेषः। **उद्दीपनम्**। **मतम्**। **अक्षिसङ्कोचवदनस्मेरताऽऽदिकः**।, अक्ष्णो र्नेत्रयोः सङ्कोचः। वदनस्य मुखस्य स्मेरता विकासः। आदिना-गल्लफुल्लादिः। **अनुभावः**। 'अत्रे'ति 'मत'इति लिङ्गविपरिणामेन चानुषज्यते। **च** तथा। **हर्षावहित्थचापल्यावेगाः**। हर्षावहित्थप्रमुखास्तथा स्युः'इति पाठान्तरे प्रमुखशब्देन चापल्यावेगादीनां ग्रहणम्। **व्यभिचारिणः**। 'अत्रे'ति 'मता'इति च लिङ्गवचनविपरिणामेनानुषज्येते इदं च बोध्यम्-अयं हासश्चात्मगतः परगतश्चेति द्विविधो भवति, तदाहुः-'आत्मस्थः परनिष्ठश्चेत्यस्य भेदद्वयं मतम्। आत्मस्थो द्रष्टुरुत्पन्नो विभावेक्षणमात्रतः॥ हसन्तमपरं दृष्ट्वा विभावश्चोपजायते। योऽसौ हास्यरसस्तज्ज्ञैः परस्थः परिकीर्तितः ॥ २४५ ॥ २४६ ॥' इति।

अयं चात्मस्थः परस्थश्चेति द्विविधः, तत्रात्मपरयोरुत्तममध्यमाधमभावभेदेन त्रिभेदत्वं तत्राप्युत्कृष्टत्वानुत्कृष्टत्वाभ्यां पुनर्द्वैभेद्यमिति निर्देष्टुमुपक्रमते-अस्येत्यादिना।

**अस्य** हास्यस्यात्मस्थत्वपरस्थत्वाभ्यां द्विभेदस्येति भावः। **अनुभावभेदेना**नुभावानामनुभवित्रोरात्मपरयोरुत्तमत्वादिभेदेन त्रिभेदयोरुत्कृष्टत्वानुत्कृष्टत्वाभ्यां भिद्यमानानां स्मितादीनां भेदस्तेन तथोक्तेन। अभेदे तृतीयेयम्। **भेदान्**। **आह**-२५५ ज्येष्ठानामित्यादिना।

२५५ **ज्येष्ठाना**मुत्तमानामिति भावः। **स्मितहसिते** स्मितं च हसितं चेति तथोक्ते। 'अनुभावा' विति शेषः। तथा च-उत्कृष्टानामुत्तमानां हास्योदये स्मितं, तद्भिन्नानां हसितं चानुभावो मन्तव्य इति निष्कृष्टम्। उत्तमानामनुत्कृष्टत्वं चोत्तमानामुत्कृष्टत्वापेक्षाकृतमेवेति बोध्यम्, एवं परत्रापि। **मध्याना**मुत्तमत्वमप्राप्तानामधमत्वतश्चोन्नतानामिति भावः। **विहसितावहसिते** विहसितं चावहसितं चेति तथोक्ते। 'अनुभावा' विति शेषः। तथा च-गुणजात्यादिना मध्यमानामपि केनापि विशेषेणोत्कृष्टानां विहसितमनुत्कृष्टानां पुनरवहसितमनुभाव इति निष्कर्षः। **च** तथा। **नीचाना**मुत्तमत्वमध्यमत्वाभ्यां च्युतानामत एव गुणजात्यादिनाऽधमानामिति भावः। **अपहसितम्**। **तथा**। **अतिहसितम्**। 'अनुभावा' विति शेषः। तथा च-तेषामपि केनापि विशेषेणोत्कृष्टानामपहसितमनुत्कृष्टानां पुनरतिहसितमनुभावः स्यादिति भावः। **तत्**तस्माद्धेतोः। **एष हास्यः**। **षड्भेदः**। तदुक्तम्-'उत्तमानां मध्यमानां नीचानामप्ययं भवेत्। त्र्यवस्थः कथितस्तस्य षड्भेदाः सन्ति चापदे ॥ स्मितं च हसितं प्रोक्तमुत्तमे पुरुषे बुधैः। भवेद्विहसितं चावहसितं मध्यमे नरे ॥ नीचेऽपहसितं चातिहसितं परिकीर्तितम्।' इति। अत्र गीतिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ २४७ ॥

२५७ ईषद्विकासिनयनं स्मितं स्यात्स्पन्दिताधरम् ।
किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः ॥ २४८ ॥
मधुरस्वरं विहसितं, सांसशिरःकम्पमवहसितम् ।
अपहसितं सास्राक्षं, विक्षिप्ताङ्गं च भवत्यतिहसितम् ॥ २४९ ॥

यथा—

'गुरोर्गिरः पञ्च दिनान्यधीत्य वेदान्तशास्त्राणि दिनत्रयं च ।
अमी समाघ्राय च तर्कवादान् समागताः कुक्कुटमिश्रपादाः ॥ १४५ ॥'

---

ननु स्मितादीनां किं स्वरूपमित्याशङ्क्याह–२५७ ईषदित्यादिना ।

२५७ **तत्र** तेषु । **ईषद्विकासिनयनमीषद्** (अल्पं) विकासिनी विकासिते नयने यस्मात्तथोक्तम् । **स्पन्दिताधरं** स्पन्दितावीषच्चलितावधरौ यत्र तत्तथोक्तम् । 'हसन' मिति शेषः । **स्मितम्** । **स्यात्** तदुक्तम्–'ईषत्फुल्लकपोलाभ्यां कटाक्षैरप्यनुल्वणैः । अदृश्यदशनो हासो मधुरः स्मितमुच्यते ॥' इति । **किञ्चिल्लक्ष्यद्विजं** किञ्चिल्लक्ष्या द्विजा दन्ता यस्मात्तथोक्तम् । 'दन्तविप्राण्डजा द्विजाः ।' इत्यमरः । 'हसन'मिति शेषः । **हसितम्** । **बुधैः** । **कथितम्** । तदुक्तम्–'वक्त्रनेत्रकपोलैश्चेदुत्फुल्लैरुपलक्षितः । किञ्चिल्लक्षितदन्तश्च तदा हसितमिष्यते॥' **मधुरस्वरम्**मधुरो मिष्टो मनोरमः इती यावत् स्वरो यत्र तथोक्तम् । 'हसन' मिति शेषः । **विहसितम्** । तदुक्तम्–'सशब्दं मधुरं कालगतं वदनरागवत् । आकुञ्चिताक्षि मन्द्रं च विदुर्विहसितं बुधाः ॥' इति । **सांसशिरःकम्पमंसौ** च शिरश्चेति तेषां कम्पा तया सह वर्त्तत इति तथोक्तम् । यद्वा–अंसाभ्यां सह वर्त्तत इति सांसं, तच्च शिरश्चेति तयोः कम्पा, सा यथा स्यात्तथेति तथोक्तम् । क्रियाविशेषणत्वेन क्लीवत्वम् । 'हसन' मिति शेषः । **अवहसितम्** । तदुक्तम्–'विकुञ्चितांसशीर्षश्च जिह्मदृष्टिविलोकनः । उत्फुल्लनासिको हासो नाम्नोपहसितम्मतम् ॥' इति । **सास्राक्षं** सास्रे सजले अक्षिणी यस्माद्यत्र वेति तथोक्तम् । 'अस्रः कोणे कचे पुंसि क्लीवमश्रुणि शोणिते ।' इति मेदिनी । 'हसन' मिति शेषः । **अपहसितम्** । तदुक्तम्–'अस्थानजः साश्रुदृष्टिराकम्पस्कन्धमूर्धजः । शार्ङ्गदेवेन गदितो हासोऽपहसिताह्वयः ॥' इति । **विक्षिप्ताङ्गं** विक्षिप्तानि स्थानाच्चलितान्यङ्गानि पार्श्वादीनि यत्र तथोक्तम् । 'हसन' मिति शेषः । **च** । **अतिहसितम्** । **भवति** । तदुक्तम्–'स्थूलकर्णकटुध्वानो वाष्पपूरप्लुतेक्षणः । करोपगूढपार्श्वश्च हासोऽतिहसितं मतम् ॥' इति । अत्रोपगीतिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ २४८ ॥ २४९ ॥

उदाहरति–यथा—

**'गुरोर्भट्टप्रभाकरस्य** । **गिरो** वाचो वचांसीति यावत् । 'मीमांसाशास्त्ररूपा' इति शेषः । **पञ्चदिनानि** । **अधीत्य** पठित्वा । **च** तथा । **वेदान्तशास्त्राणि** । **दिनत्रयम्** । 'अधीत्ये'ति पूर्वतोऽन्वेति । **तर्कवादांस्तर्कस्य** न्यायशास्त्रस्य वादा वचनानि तांस्तथोक्तान् । **च** पुनः । **समाघ्राय** लक्षणया किञ्चिदधीत्येत्यर्थः । **अमी** । **कुक्कुटमिश्रपादाः** । कुक्कुटाश्च ते मिश्रपादा इति तथोक्ताः । मिश्रशब्दः श्रेष्ठवाची, पादशब्दश्च पूज्यवाची, तथा च कुक्कुटनामानः परमपूज्या इति निर्गलितोऽर्थः । **समागताः** । कमपि पण्डितम्मन्यं कुक्कुटनामानं सभायां शास्त्रार्थावसरे प्रविशन्तमवलोक्योपहासोक्तिरियम् । तथा च–कुक्कुट आलम्बनं, तदीयं पण्डितम्मन्यत्वमुद्दीपनं, गौरवेणाभिधानमनुभावः, तदभिव्यञ्ज्यं चापल्यं सञ्चारी चेति हास्यः सामाजिकेनानुभूयते । इति बोध्यम् । अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १४५ ॥'

यथा वा–'श्रीतातपादैर्विहिते प्रबन्धे निरूपिता नूतनयुक्तिरेषा । अङ्गं गवां पूर्वमहो पवित्रं, कथं न वा रासभधर्म्मपत्न्याः ॥' इति । अत्र हि तार्किकपुत्र आलम्बनं, तदीया निःशङ्कोक्तिरुद्दीपनं, व्यज्यमानो दन्तविकाशोऽनुभाव उद्वेगश्च व्यभिचारी भावः ।

अस्य 'लटकमेलक' प्रभृतिषु परिपोषो द्रष्टव्यः ।

अत्र च-

२५८ यस्य हासः स चेत्क्वापि साक्षान्नैव निबध्यते ।
तथाऽप्येष विभावादि-सामर्थ्यादुपलभ्यते ॥ २५० ॥
अभेदेन विभावादि-साधरण्यात्प्रतीयते ।
सामाजिकैस्ततो हास्य-रसोऽयमनुभूयते ॥ २५१ ॥

एवमन्येष्वपि रसेषु बोद्धव्यम् । अथ करुणः-

२५९ इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः ॥ २५२ ॥

---

अयं च महावाक्यविशेषे परिपुष्यमाण उपलभ्यत इत्याशयेनाह-अस्येत्यादिना ।

**अस्य** हास्यस्य । **'लटकमेलक' प्रभृतिषु** । लटकानां धूर्तानाम्मेलकं, तत्प्रभृति तदादि तेषु । प्रभृतिपदेन 'हास्यार्णवा' दीनां ग्रहणम् । 'महावाक्यविशेषेषु' इति शेषः । **परिपोषः** । **द्रष्टव्योऽ**नुभवितव्यः ।

ननु नायकसामाजिकयोरभेदे रसोदयः, नायकसामाजिकयोरभेदश्च नायके निबध्यमान एव, अन्यथा तदयोगात्, नायकसामाजिकयोरभेदाभावे रसोदयोऽपि न स्यादिति चेत् ? एवमित्युत्तरयति-अत्रेत्यादिना ।

**अत्रा**स्मिन् हास्य उपलक्षणेन रसान्तरेऽपीत्यर्थः । **च**—

२५८ **चेद्** यद्यपीत्यर्थः । **यस्य** 'नायकस्ये'ति शेषः । **हासः** । उपलक्षणेन स्थाय्यन्तरमपीत्यर्थः । 'स्या' दिति शेषः । **स** 'नायक' इति शेषः । **क्वापि** क्वचित् । **साक्षात्** स्वरूपसन् । **न** । **एव** । **निबध्यते** । **तथाऽपि** । **एष** नायक इत्यर्थः । **विभावादिसामर्थ्यात्** विभावादेः सामर्थ्यं यद्विना रसानुदयस्तद्रूपं तस्मात्तथोक्तात् । **उपलभ्यते**ऽधिगम्यतेऽनुमीयत इति यावत् । अयम्भावः-'विभावादिं विना रसाभाव इति यत्र न तदन्यतमस्य साक्षान्निर्देशस्तत्रोद्दीपनादिवदालम्बनस्याप्यङ्गीकार्य्यत्वे तेन समं सामाजिकस्याप्यभेदोऽङ्गीकर्त्तव्य' इति । ननु कथमभेदोऽङ्गी कृतः स्यात् इत्याह-**विभावादिसाधारण्या**द्विभावादीनां साधारण्यं साधारणीकरणव्यापारस्तस्मात् । **अभेदेना**भेदरूपेण । 'सामाजिकस्य विभावादि'रिति शेषः । 'विभावादिः साधारण्या' दिति पाठान्तरे तु-साधारण्यात् । विभावादिः । अभेदेन 'सामाजिकस्ये'ति शेषः । इत्यन्वितार्थो बोद्धव्यः । **प्रतीयते** । **ततस्त**स्मात् कारणात् । सामाजिकस्य विभावादिना सममभेदप्रत्ययरूपात् कारणादिति भावः । **सामाजिकैः** सहृदयैः । एवं श्रव्यकाव्यत्वेऽपि न क्षतिरिति बोध्यम् । **अयम्** । **हास्यरस** उपलक्षणेन रसान्तरमपीत्यर्थः । **अनुभूयते** ॥ २५० ॥ २५१ ॥

अत्र हासादि स्थाय्यन्तरादेरप्युपलक्षकमिति सूचयति-एवमित्यादिना ।

**एवं** यथाऽस्मिन् हास्य एवं तथेति भावः । **अन्येषु** । **रसेषु** श्रृङ्गारादिकेष्वित्यर्थः । **अपि** । **बोद्धव्यम्** । 'आलम्बनादिसत्त्व' मिति शेषः ।

एवं हास्यं निरूप्य करुणं निरूपयितुमुपक्रमते-अथेत्यादिना ।

**अथ** हास्यनिरूपणानन्तरम् । **करुणः** । निरूप्यते-२५९ इष्ट..इत्यादिना ।

२५९ **इष्टनाशादि**ष्टस्य पुत्रादेर्नाशो विनाशस्तस्मात् । तथा-**अनिष्टाप्ते**रनिष्टस्य शोकादेराप्तिः प्राप्तिस्तस्याः । **करुणाख्यः** । **रसः** । **भवेत्** । **अयम्** । 'चे'ति शेषः । **धीरैः** । **कपोतवर्णः** कपोतवद्वर्णो यस्य तथोक्तः ।

शोकोऽत्र स्थायिभावः स्या-च्छोच्यमालम्बनं मतम् ।
तस्य दाहादिकाऽवस्था भवेदुद्दीपनं पुनः ॥ २५३ ॥
अनुभावा दैवनिन्दा-भूपातक्रन्दितादयः ।
वैवर्ण्योच्छ्वासनिःश्वास-स्तम्भप्रलपनानि च ॥ २५४ ॥
निर्वेदमोहापस्मार-व्याधिग्लानिस्मृतिश्रमाः ।
विषादजडतोन्माद-चिन्ताऽऽद्या व्यभिचारिणः ॥ २५५ ॥

शोच्यं विनष्टबन्धुप्रभृति ।

यथा मम राघवविलासे—

'विपिने क्व जटानिबन्धनं, तव चेदं क्व मनोहरं वपुः ।
अनयोर्घटनाविधेः स्फुटं ननु खड्गेन शिरीषकर्त्तनम् ॥ १४६ ॥' इति ।

अत्र हि रामवनवासजनितशोकार्त्तस्य दशरथस्य दैवनिन्दा ।

---

**यमदैवतो** यमो देवतं यस्य तथा भूतः । **कथितः अत्रास्मिन्** करुणे रस इति यावत् । **शोक** आधिविशेषः । **स्थायिभावः** । **स्यात्** । **शोच्यं** यत्कृते शोकस्तत् । सामान्ये नपुंसकम् । **आलम्बनम्** । **मतम्** । **तस्य** शोच्यस्येत्यर्थः । **दाहादिका** दाहादिरूपा । आदिपदेन ध्वंसादिरूपा । **अवस्था** । **पुनः** । **उद्दीपनम्** । **भवेत्** । **दैवनिन्दाभूपातक्रन्दनादयो** दैवस्य प्रारब्धस्य देव (परमेश्वर) सम्बन्धिनः कार्य्यविशेषस्य वा निन्दा, सा च-भुवि पातो भूपातः, स च क्रन्दितं (रोदनं) चेति तान्यादौ येषां (उरःपीडनादीनाम्) ते तथोक्ताः । **च** तथा । **वैवर्ण्योच्छ्वास-निःश्वासस्तम्भप्रलपनानि** वैवर्ण्यं म्लानाकारत्वं चोच्छ्वासोऽन्तर्मुखः श्वासश्च निःश्वासो बहिर्मुखः श्वासश्च स्तम्भो जडीभावश्च प्रलपनं चेति तथोक्तानि । **अनुभावाः** । 'तस्ये'ति पूर्वतोऽन्वेति । **निर्वेदमोहापस्मार-व्याधिग्लानिस्मृतिश्रमाः** । **विषादजडतोन्मादचिन्ताऽऽद्याः** । आद्यपदेन दैन्यसन्त्रासादीनां ग्रहणम् । **व्यभिचारिणः** । 'तस्ये'ति शेषः ॥ २५३ ॥ २५४ ॥ २५५ ॥

कारिकाः स्पष्टार्था इति द्योतयन् (शोच्य) मित्येकमेव पदं व्याचष्टे-**शोच्यं** शोचितुं योग्यमिति तथोक्तम् । 'इत्यस्ये'ति शेषः । **विनष्टबन्धुप्रभृति** विनष्टा बन्धवो बान्धवाः पुत्राद्या इति ते प्रभृतौ यत्र तथोक्तम् । 'इत्यर्थं'इति शेषः ।

उदाहरति-**यथा** । **मम** 'विश्वनाथस्ये'ति शेषः । **राघवविलासे**-'**विपिने**..' इत्यादौ ।

'**विपिने** वने । **जटानिबन्धनं** जटाया अप्रसाधितकेशजालस्य निबन्धनं निबध्य धारणमिति तथोक्तम् । **क्व** कस्यामवस्थायामिति भावः । अयि राम ! **तव** । **इदम्** । **मनोहरं** क्षमार्दवसौभगत्वादिना मनोहारीति भावः । **वपुः** शरीरम् । **च** । **क्व** कस्यामवस्थायामित्यर्थः । **अनयोर्जटानिबन्धनमनोहरवपुषोरित्यर्थः** । **घटना** संयोजनम् । **विधेर्विधातृदेवस्येत्यर्थः** । **ननु** निश्चितम् । **स्फुटं** प्रत्यक्षम् । **खड्गेन** खड्गद्वारा । **शिरीषकर्त्तनं** शिरीषस्योपचारात्तत्पुष्पस्य कर्त्तनं छेदनमिति तथोक्तम् । तदभिन्नमिति भावः । 'कर्त्तन'मित्यत्र 'कृन्तन'मिति पाठान्तरेऽपि स एवार्थः । अत्र वैतालीयं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १४६ ॥' **इति** ।

उदाहार्य्यं सङ्गमयति-**अत्रे**त्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्य इत्यर्थः । **हि रामवनवासजनितशोकार्त्तस्य** । **दशरथस्य** । **दैवनिन्दा** । 'अनुभावस्तस्मात् करुण'इति शेषः । अयम्भावः-अत्र रामस्य वनवास आलम्बनं, तत्र जटानिबन्धनायोग्यमपि तदीयं मनोहरं स्मर्य्यमाणं शरीरमुद्दीपनम्, दैववनिन्दनमनुभावः, तेनाक्षिप्तो मोहादिः सञ्चारी चेति दशरथस्य तदभेदाध्यवसायेन सामाजिकस्य (सहृदयस्य) करुणः । इति ।

एवं-बन्धुवियोगविभवनाशादावप्युदाहार्य्यम् । परिपोषस्तु महाभारते स्त्रीपर्वणि द्रष्टव्यः ।

अस्य करुणविप्रलम्भाद्भेदमाह—

२६० शोकस्थायितया भिन्नो विप्रलम्भादयं रसः ।
विप्रलम्भे रतिः स्थायी पुनःसम्भोगहेतुकः ॥ २५६ ॥

अथ रौद्रः—

---

नन्वेतदघटनीयस्य घटनायां करुणसत्त्वोदाहरणम्, अथ प्रतिज्ञातमिष्टनाशादौ कथं न प्रदर्शितं तदित्याशङ्कयाह-**एवमित्यादिना** ।

**एवं** यथाऽत्राघटनीयस्य घटनायां दैवस्यायोग्यकारित्वेन करुणसत्त्वमुदाहृतं, तथेत्यर्थः । **बन्धुवियोगविभवनाशादौ** बन्धूनामिष्टजनानां पुत्रादीनां वियोग आत्यन्तिको विरहो मरणमिति यावत् स च, विभवनाशो विभवस्य राज्यादेर्नाशो व्याघात इति स चैतावादी यस्य (वनवासादिरूपस्यानिष्टस्य) तस्मिंस्तथोक्ते । अपि । **उदाहार्य्यम्** । 'करुणसत्त्व'मिति शेषः ।

तत्र बन्धुवियोगे यथा-'अपहाय सकलबान्धव-चिन्तामुद्वास्य गुरुकुलप्रणयम् । हा तनय! विनयशालिन्! कथमिव परलोकपथिकोऽभूत् ।' इति, 'गृहिणी सचिवः, सखी मिथः, प्रियशिष्या ललिते कलाविधौ । करुणाविमुखेन मृत्युना हरता त्वां वद किन्न मे हृतम् ॥' इति च, अत्र हि शवशरीरमालम्बनं, स्मर्य्यमाणं तदीयं गुणवैभवमुद्दीपनं, रोदनमनुभावो दैन्यं मोहश्च सञ्चारिणौ भावौ । इति, विभवनाशे यथा-'प्रातर्भवामि वसुधाऽधिपचक्रवर्त्ती सोऽहं व्रजामि विपिने जटिलस्तपस्वी । यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसा न गणितं तदिहाभ्युपैति ॥' इति, अत्र च भावितया निश्चितस्य राज्यसम्भारसम्भृतत्वस्य विनाशपूर्वकं तद्विपरीतस्य वनवासादे रूपस्थितिरालम्बनं, तदानींतनं चेष्टितहस्यमुद्दीपनं, तन्निवेदनेनानिष्टसूचनमनुभावः तेनावेगः सञ्चारी च । इति ।

उदाहरणभूयस्त्वं त्वस्य महाप्रबन्धे द्रष्टव्यमित्याशयेनाह-**परिपोषस्त्वित्यादिना** ।

**परिपोषः** । **तु** पुनः । 'अस्ये'ति शेषः । **महाभारते** लक्षणया तदन्तर्गते । **स्त्रीपर्वणि** । **द्रष्टव्यः** ।

ननु करुणविप्रलम्भादस्य को भेदः, उभयत्र विलापादेः साम्येनानुभूयमानत्वादित्याशङ्क्य तं प्रदर्शयितुं प्रतिजानीते-**अस्येत्यादिना** ।

**अस्य** करुणस्येत्यर्थः । **करुणविप्रलम्भात्** । **भेदं** विलक्षणत्वम् । **आह-२६० शोक..इत्यादिना** ।

२६० **अयं** करुणाख्यः । **रसः** । **शोकस्थायितया** शोकः स्थायी यस्य तस्य भावस्तत्ता तया तथोक्तया । **विप्रलम्भात्** करुणविप्रलम्भादित्यर्थः । **भिन्नः** । अयम्भावः-करुणः शोकस्थायिभावः, न त्वेवंविधः करुणविप्रलम्भ इत्यनयोर्भेदः । इति । ननु करुणविप्रलम्भेऽपि करुणवद्विलापादीति तस्य कथं न शोकस्थायित्वमित्याशङ्कयाह-**विप्रलम्भे** करुणविप्रलम्भे इत्यर्थः । **पुनःसम्भोगहेतुकः** पुनःसम्भोगः कियत्कायिकान्तरन्तरायापातेऽप्यन्ततस्तत्रैव भाविसम्भोगस्तस्य हेतुको हेतुभूत इति तथोक्तः । **रति**र्नामे'ति शेषः । **स्थायी** स्थायिभावः । भावस्थविशेषणत्वमेवोद्दिश्य'स्थायी'ति पुंस्त्वेन निर्देशः । तथा च-करुणविप्रलम्भे पुनःसम्भोगस्य कारणभूतो रत्याख्यो भावः स्थायी भावः, केवले करुणे पुनः शोकाख्यः, इत्यनयोर्भिन्नस्थायिकतया भेद इति निर्गलितोऽर्थः ॥ २५६ ॥

एवं करुणं निरूप्य रौद्रंनिरूपयितुमुपक्रमते-**अथेत्यादिना** ।

**अथ** करुणनिरूपणानन्तरम् । **रौद्रः** । निरूप्यते-२६१ **रौद्र** इत्यादिना ।

२६१ रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः ।
आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनम्मतम् ॥ २५७ ॥
मुष्टिप्रहारपातन-विकृतच्छेदावदारणैश्चैवम् ।
सङ्ग्रामसम्भ्रमाद्यै-रस्योद्दीप्तिर्भवेत्प्रौढा ॥ २५८ ॥
भ्रूविभङ्गौष्ठनिर्दंश-बाहुस्फोटनतर्जनाः ।
आत्मावदानकथन-मायुधोत्क्षेपणानि च ॥ २५९ ॥
उग्रताऽऽवेगरोमाञ्च स्वेदवेपथवो मदः ।
अनुभावास्तथाऽऽक्षेप-क्रूरसन्दर्शनादयः ॥ २६० ॥
मोहामर्षादयस्तत्र भावाः स्युर्व्यभिचारिणः ।

यथा—

'कृतमनुमतं दृष्टं वा यैरिदं गुरुपातकम्मनुजपशुभिर्निर्म्मर्य्यादैर्भवद्भिरुदायुधैः ।

---

२६१ **क्रोधस्थायिभावः** क्रोधः स्थायी भावो यस्य तथोक्तः । **रक्तस्तद्वर्ण** इत्यर्थः । **रक्ताधिदैवतो** रक्तं रुधिरमधिदैवतं यस्य तथोक्तः । **रौद्रस्तदाख्यो रस** इत्यर्थः । 'स्या'दिति शेषः । **तत्र** तस्मिन् रौद्र इत्यर्थः । **अरिः** शत्रुद्वेषविषय इति यावत् । **आलम्बनम्** । तदाख्यो विभाव इत्यर्थः । **तच्चेष्टा** तस्यारेः ( शत्रोः ) चेष्टा शस्त्रप्रहरणोद्योगादिरूपो व्यापार इति यावत्तथोक्ता । **उद्दीपनम्** । तदाख्यो विभाव इत्यर्थः । पूज्यैः **मतम्** । अत एवाह—**मुष्टिप्रहारपातनविकृतच्छेदावदारणैर्मुष्ट्या** प्रहारः स च पातनं शस्त्राघातादिना भूमावुपरिष्टात्पतनविषयीकरणं, यद्वा—मुष्टिप्रहारेण पातनं तच, विकृतं विरुद्धाचरणं च च्छेदः खड्गादिना खण्डनं चावदारणं शूलादिना हननविषयीकरणं चेति तैस्तथोक्तैः । च पुनः । **एवम्** । **सङ्ग्रामसम्भ्रमाद्यैः** सङ्ग्रामो युद्धं च सम्भ्रमस्तदर्थं त्वरणं चेति तावाद्यौ येषां ( दुर्भाषणादीनाम् ) तैः । **अस्य** रौद्रस्य । रसस्य **प्रौढा** । **उद्दीप्तिरुद्दीपनम्** । **भवेत्** । **भ्रूविभङ्गौष्ठनिर्दंशबाहुस्फोटनतर्जना** भ्रूविभङ्गश्चौष्ठनिर्दंशश्च बाहुस्फोटनं च तर्जना चेति तथोक्ताः । **आत्मावदानकथनम्** आत्मनोऽवदानकर्म्मणामितिवृत्तं तस्य कथनं प्रशंसनमिति तथोक्तम् । 'अवदानं कर्म्मवृत्त' मित्यमरः । **आयुधोत्क्षेपणान्यायुधानामुत्क्षेपणान्यनेकवारं** प्रहरणानि तथोक्तानि । **च** । **उग्रताऽऽवेगरोमाञ्चस्वेदवेपथवः** । वेपथुः शरीरकम्पः । **मदः** । **तथा** । **आक्षेपक्रूरसन्दर्शनादयः** । आदिना क्रूरप्रतिज्ञाविधानं क्रूरकर्म्मणि प्रवृत्तिः क्रूरजनसङ्गादयश्च गृह्यन्ते । **अनुभावाः** कथिताः **तत्र** । **मोहामर्षादयः**। आदिनोग्रताऽऽवेगादीनां ग्रहणम् । **व्यभिचारिणः** । **भावाः** । **स्युः** । तथा च—क्रोधस्थायिभावकः शत्रुजनालम्बनकः शत्रुकृतापकाराद्युद्दीपनको मुष्टिप्रहाराद्यनुभावको मोहादिसञ्चारिभावको रक्तवर्णो रक्तदैवतो रौद्र इति निष्कृष्टोऽर्थः ॥२५७॥२५८॥२५९॥

उदाहरति—यथेत्यादिना ।

**यथा**—यत्रायं तत्—'कृत...'इत्यादिना ।

'**यैः** । **मनुजपशुभिर्मनुजा** मनुष्या एव पशवस्तैस्तथोक्तैः । 'मनुजा मानवा नराः ।'इत्यमरः । अत एव—**निर्म्मर्य्यादैर्निरस्ता** मर्यादा धर्मविचाररूपा सीमा येषां तैस्तथोक्तैः । तत एव—**उदायुधैरुद्यतान्यायुधानि** यैस्तथोक्तैः । **भवद्भिः** । अत्र युष्मच्छब्देनानिर्दिश्यभवच्छब्देन निदेशः परेषामतिरथित्वं जानन्नप्यहं प्रतिपक्षित्वेन बिभेमीति द्योतनार्थः । **इदं** द्रोणाचार्य्यस्य हननरूपमिति शेषः । **गुरु** महत् । **पातकमात्मनः** पतनहेतुकं पापाचरणमित्यर्थः । यद्वा—इदं निर्दिश्यमानम् । गुरुपातकं गुरोर्द्रोणस्य पातकं वधरूपं पापाचरणम् । इत्यर्थः । **कृतम्** । **अनुमतमनु-**

नरकरिपुणा सार्धं तेषां सभीमकिरीटिनामयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ १४७॥'

अस्य युद्धवीराद्भेदमाह—

२६२ रक्तास्यनेत्रता चात्र भेदिनी युद्धवीरतः ॥ २६१ ॥

अथ वीरः—

२६३ उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः ।
महेन्द्रदैवतो हेम-वर्णोऽयं समुदाहृतः ॥ २६२ ॥
प्रतिनेतृ-तदुत्कर्षा-लम्बनोद्दीपनान्वितः ।
चातुर्य्यामन्त्रणस्थैर्य्य-प्रसादाद्यनुभावभूः ॥ २६३ ॥

---

ज्ञातम् । वाऽथवा । दृष्टमवलोकितमनिराकृतं वेत्यर्थः । तेषां गुरुपातकस्य कारिणो धृष्टद्युम्नस्यानुज्ञाकारिणां सात्यक्यादीनां दर्शिनां वाऽन्येषां सर्वेषामिति भावः । नरकरिपुणा नरकस्य नरकासुरस्य रिपुस्तेन, श्रीकृष्णेनेत्यर्थः । सार्धम् । सभीमकिरीटिनां भीमश्च किरीटी ( अर्जुनः ) चेति ताभ्यां सह वर्त्तन्त इति तेषां तथोक्तानाम् । भीमार्जुनसहितानामित्यर्थः । असृङ्मेदोमांसैरसृग्रुधिरं च मेदश्च मांसश्चेति तैस्तथोक्तैः । अयं पातकिनां भवतामुच्छेत्तेत्यर्थः । अहम् । दिशां लक्षणया तदधिष्ठात्रीणां देवतानामित्यर्थः । बलिम् । करोमि । मृषाऽऽत्ममरणं निशम्य त्यक्तशस्त्रस्यान्तःश्वासस्य योगिनः पितुर्द्रोणाचार्य्यस्य वधेन सन्तप्तस्याश्वत्थाम्नोऽर्जुनादीन् प्रत्युक्तिरियम् । यद्यपि धृष्टद्युम्नस्य सम्बुद्धिः क्रमप्राप्ता, तथाऽपि महापातकितयाऽनुच्चार्य्यनामानं तमवज्ञाय पराक्रमोचिततया 'अरे रे अर्जुनार्जुन ! सात्यके सात्यके' इति सम्बोध्ययोक्तिः । वेणीसंहारस्येदं पद्यम् । अत्र हरिणीछन्दः, तल्लक्षणं चोक्तं प्राक् ॥१४७॥'

अत्रापकारिणोऽर्जुनादय आलम्बनं, पितृहन्तृत्वमुद्दीपनं, प्रतिज्ञाऽनुभावोऽन्यनैरपेक्ष्यव्यङ्ग्यो गर्वः सञ्चारी चेत्येतैः क्रोधो रौद्रतां प्रतिपद्यमानः सामाजिकेऽभिव्यज्यते, अस्याभिव्यञ्जिकाया वृत्तेरप्रयोगात् कवेरशक्तिश्च । न चैतावताऽस्यानुदाहार्य्यत्वम्, अस्य सद्भावे तथाक्षत्यनवतारात्, सद्भावेनैवास्योदाहार्य्यत्वाच्च । यथा वा—'नवोच्छलितयौवनस्फुरदखर्वगर्वज्वरे मदीयगुरुकार्म्मुकं गलितसाध्वसं वृश्चति । अयं पततु निर्दयं दलितदृप्तभूभृद्गलस्खलद्रुधिरघस्मरो मम परश्वधो भैरवः ॥' इति, अत्र च गुरुकार्म्मुकभञ्जक आलम्बनं, निःशङ्ककार्म्मुकभङ्ग उद्दीपनं, परुषोक्तिरनुभावो, गर्वोग्रताऽऽद्याः सञ्चारिणश्च । इति ।

ननु रौद्रयुद्धवीरयोः को भेद उभयत्र विभावादेः साम्यादिति चेन्नैवमित्यनयोर्भेदं वक्तुं प्रतिजानीते—अस्येत्यादिना ।

अस्य रौद्रस्येत्यर्थः । युद्धवीरात् । भेदं विशेषम् । आह—२६२ रक्तास्येत्यादिना ।

२६२ अत्रास्मिन् रौद्ररस इति यावत् । च । रक्तास्यनेत्रता लक्षणया तद्व्यङ्ग्यः क्रोध इत्यर्थः । युद्धवीरतः ।'पञ्चम्यास्तसिल् ।' ५।३।७ इति तसिल् । भेदिनी भेदकारणम् । अनयोर्द्विषदालम्बनत्वेनैक्येऽपि क्रोधस्थायिको रौद्रः, उत्साहस्थायिकश्च युद्धवीर इति भिन्नत्वमवगन्तव्यमिति भावः ।

एवं रौद्रं निरूप्य वीरं निरूपयितुमुपक्रमते—अथेत्यादिना ।

अथ रौद्ररसनिरूपणानन्तरमित्यर्थः । वीरः निरूप्यते—२६३ उत्तमेत्यादिना ।

२६३ उत्तमप्रकृतिरुत्तमा कुलीनत्वादिनोत्कृष्टा प्रकृतिः स्वभावो यस्मात्तथोक्तः । यद्वा—उत्तमः प्रकृतिर्नायको यस्य तथोक्तः । एतेन—शठधृष्टयोर्व्युदासः । 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गे' इति मेदिनी । उत्साहस्थायिभावक उत्साहः कर्त्तव्यार्थेषु दृढोद्यमः स्थायी भावो यस्य तथोक्तः । महेन्द्रदैवतो महेन्द्रो देवराजो दैवतमधिपतिर्यस्य तथोक्तः । हेमवर्णो हेमवत्सुवर्णवद्वर्णो यस्य तथोक्तः । 'हिरण्यं हेम हाटकम् ।' इत्यमरः । प्रतिनेतृतदुत्कर्षालम्बनोद्दीपनान्वितः प्रतिनेता ( प्रतिनायकः ) च तदुत्कर्षश्चेति तावालम्बनोद्दीपने

क्रोधाभिमानहास-प्रमुखव्यभिचारिभिः पुष्टः।
२६४ स च दानधर्म्मयुद्धै-र्दयया च समन्वितश्चतुर्धा स्यात् ॥ २६४ ॥

स च वीरो दानवीरो, धर्म्मवीरो, युद्धवीरो, दयावीरश्चेति चतुर्विधो मतः।

तत्र दानवीरो यथा-

'त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः ॥ १४८ ॥' इति।

---

ताभ्यामन्वित इति तथोक्तः। इदं तु बोध्यम्-दानवीरे प्रतिनायको याचकस्य दारिद्र्यम्, धर्म्मवीरेऽधर्म्मः, युद्धवीरे शत्रुः, दयावीरे पुनः परस्य दुःखमालम्बनविभावः, तत्तदुत्कर्षश्चैषामुद्दीपकः। इति। चातुर्य्यामन्त्रणस्थैर्य्यप्रसादाद्यनुभावभूश्चातुर्य्यं (चतुरता) चामन्त्रणं (मित्रादिभिः समं कर्त्तव्यस्य स्थिरीकरणं) च स्थैर्य्यं (स्थिरता धैर्य्यमिति यावत्) च प्रसादः (प्रसन्नता) चेति ते आदौ येषां (सहायान्वेषणादीनां) तेऽमी अनुभावास्तेषां भूरुत्पत्तिस्थानमिति तथोक्तः। क्रोधाभिमानहासप्रमुखव्यभिचारिभिः क्रोधाभिमानहासाः प्रमुखा आद्या येषां (शोकादीनां) तेऽमी व्यभिचारिणस्तैः। पुष्टः। अयम्। वीरः। समुदाहृतः। अत्र सार्द्धश्लोकद्वयस्यैकवाक्यत्वम् ॥ २६२ ॥ २६३ ॥

अस्य भेदानाह-२६४ स चेत्यादिना।

२६४ स वीर इत्यर्थः। च। दानधर्म्मयुद्धैः। 'विशेषणीभूतै'रिति शेषः। दयया। 'विशेषणीभूतये'ति शेषः। च। समन्वितो विशेषित इति भावः। 'स'न्निति शेषः। चतुर्धा चतुर्विधः। स्यात्। अत्रोद्गीतिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ २६४ ॥

तदेव विवृणोति-स चेत्यादिना।

स निरुपितस्वरूपः। वीरः। च पुनः। दानवीरः। धर्म्मवीरः। युद्धवीरः। दयावीरः। च (इदं समुच्चयार्थम्)। इतीत्येवम्। चतुर्विधः। मतः। ननु निरुपपदस्य वीरपदस्य युद्धवीर एव शक्तिः, न तु दानवीरादौ, दानाद्युत्साहस्य भावात्मकतोपपत्तेः। इति चेत्, न, युद्धोत्साहस्येव दानाद्युत्साहस्यापि भावात्मकताऽनुपपत्तेः, निरुपपदस्यैवोत्साहस्य भावात्मकताऽङ्गीकारात्। यद्यपि दानवीरदयावीरयोर्धर्म्मवीरान्तर्भावो युज्यते, अन्यथा तयोरिव सत्त्ववीरपाण्डित्यवीरादीनामपि पार्थक्यमुपपद्येत, तथाऽपि तयोर्धर्म्मानन्तर्भावः प्राशस्त्यार्थः प्राचां नाऽनुरोधस्य ज्यायस्त्वादिति मन्तव्यम्, अन्यथा पलायनवीरनिष्ठुरतावीरादीनामपि तथाऽङ्गीकारापत्तावुच्छृङ्खलताऽऽपत्तिः स्यात्।

उदाहर्त्तुमुपक्रान्त आह-तत्रेत्यादिना।

तत्र तेषु दानवीरादिषु मध्य इत्यर्थः। दानवीरः। यथा-'त्यागः..'इत्यादौ।

सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः सप्त च ते समुद्रास्तैः सप्तानां समुद्राणां वा समाहारः सप्तसमुद्रं तेन मुद्रिता वेष्टिता मही पृथिवी तस्या निर्व्याजं निष्कपटं विख्यात्याद्यपेक्षाशून्यं यद् दानं तदेवावधिः सीमा यत्र यस्य वेति तथोक्तः। 'सप्तसमुद्र'मिति पक्षे पात्रादित्वात् क्लीवत्वम्। 'अवधाने परिच्छेदे सीम्नि काले बलेऽवधिः।' इति रत्नमाला। त्यागः कश्यपादिभ्यः संप्रदानमित्यर्थः। 'भवत'इति शेषः। अयम्भावः-'उत्पत्तिर्जमदग्नितः, स भगवान् देवः पिनाकी गुरुः शौर्य्यं यत्तु न तद्गिरां पथि ननु व्यक्तं हि तत्कर्म्मभिः। त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिः क्षत्रब्रह्मतपोनिधेर्भगवतः किं वा न लोकोत्तरम् ॥' इति समस्तं पद्यं महावीरचरितस्य द्वितीयाङ्के रामस्य परशुरामप्रशंसनपरम्। अस्य च तृतीयः पादः 'त्याग'इत्यादिः, अत्र च परशुरामकर्त्तृकस्य त्यागस्य (दानस्य) सप्तसमुद्रवेष्टितायाः पृथिव्याः सम्बन्धित्वादत्र परशुरामस्योत्साहो दानवीरस्य स्थायी। इति। अत्र शार्दूलविक्रीडितं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १४८ ॥ इति।

अत्र परशुरामस्य त्याग उत्साहः स्थायिभावः सम्प्रदानभूतैरालम्बनविभावैः सत्त्वाध्यवसायादिभिश्चोद्दीपनविभावैर्विभावितः सर्वस्वत्यागादिभिरनुभावितो हर्षधृत्यादिभिः सञ्चारिभिः पुष्टिं नीतो दानवीरतां भजते।

धर्म्मवीरो यथा, युधिष्ठिरः-

'राज्यं च वसु देहश्च भार्य्या भ्रातृसुताश्च ये।
यच्च लोके ममायत्तं तत्परस्मै सदोद्यतम् ॥ १४९ ॥' इति।

---

उदाहरणं सङ्गमयति-अत्रेत्यादिना।

अत्रास्मिन्नुदाहृते पद्यांश इत्यर्थः। **परशुरामस्य**। **त्यागे** दाने। 'त्यागो विहापितं दान' मित्यमरः। **उत्साहः** 'कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते।' इत्युक्तलक्षण उद्यम इत्यर्थः। **स्थायिभावः**। **सम्प्रदानभूतैः** संप्रदानोचितस्वरूपैः। संप्रदीयते एभ्य इति संप्रदानास्तद्भूतास्तैः। 'कृत्यल्युटो बहुलम्।' ३।३।११३ इति ल्युट्। सम्प्रदानोचितत्वं च ब्रह्मवित्त्वादिनैव,-तथोक्तम् 'न विद्यया केवलया तपसा वाऽपि पात्रता। यत्र दानमिमे चोभे तद्धि पात्रं प्रचक्षते ॥' इति। **आलम्बनविभावैः**। 'कश्यपादिभि' रिति शेषः। अत्राभेदे तृतीया। **सत्त्वाध्यवसायादिभिः** सत्त्वस्य शान्तत्वदान्तत्वादिकारणभूतस्य गुणविशेषस्याध्यवसाय उद्रेक आदिर्येषां (प्ररोचनादीनां) तैस्तथोक्तैः। 'तेषा' मिति शेषः। तथा च-सत्त्वोद्रेकजनितैः शान्तत्वदान्तत्वादिभिः प्ररोचनादिवाक्यैश्चेति निष्कृष्टोऽर्थः। **उद्दीपनविभावैः**। अत्राप्यभेदे तृतीया। **च** (इदं समुच्चयार्थम्) **विभावितः**। **सर्वस्वत्यागादिभिः**। आदिना सादरवाक्यादीनां ग्रहणम्। 'अनुभावै' रिति शेषः। अभेदे तृतीया। **अनुभावितः**। **हर्षधृत्यादिभिर्हर्षधृती** आदी येषां (आवेगादीनाम्।) तैः। **सञ्चारिभिः**। **पुष्टिम्**। **नीतः** प्रापितः। **दानवीरतां** दानवीररसस्वरूपत्वमित्यर्थः। **भजते**। इदम्बोध्यम्-उत्साहस्थायिको वीर, उत्साहस्य च दानविषयकत्वाद् वीरोऽपि तद्विशेषितः, न च तेनास्य शृङ्गारहास्यादीनामिव पार्थक्यम्, अतस्त्यागादीनामभिधानेऽपि न स्वशब्दवाच्यत्वम्, यदि तु विप्रलम्भादीनामिवास्य स्वशब्देनाभिधानं विरुद्धं स्वीक्रियेत, तर्हीदं नोदाहार्य्यम्। किन्तु-'कियदिदमधिकं मे यद् द्विजायार्थयित्रे कवचमरमणीयं कुण्डले चार्पयामि। अकरुणमवकृत्य द्राक् कृपाणेन निर्य्यद्बहलरुधिरधारं मौलिमावेदयामि ॥' इति, अत्र हि द्विजवेषेण याचमान इन्द्र आलम्बनं, तस्याभ्यर्थनमुद्दीपनं, कवचकुण्डलवितरणापेक्षया मौलिनिवेदनार्थमुद्यमनमनुभावो, हर्षधृत्यादिश्च सञ्चारी। इति।

एवं दानवीरमुदाहृत्य धर्म्मवीरमुदाहरति-**धर्म्मवीर** इत्यादिना।

**धर्म्मवीरः**। **यथा**। **युधिष्ठिरः**। 'प्रतिजानीते' इति शेषः।

'**राज्यम्**। **च**। **वसु** धनम्। 'धने वसु' इत्यमरः। **देहः** शरीरम्। **च**। **भार्य्या** 'द्रौपदी नामे'ति शेषः। **ये**। **च**। **भ्रातृसुता** भ्रातॄणां भीमसेनादीनां सुताः पुत्राः। **यत्**। **च**। **लोके** संसारे। 'लोकस्तु भुवने जने।' इत्यमरः। **मम**। **आयत्तमधीनम्**। 'अधीनो निघ्न आयत्तोऽस्वच्छन्दो गृह्यकोऽप्यसौ।' इत्यमरः। **तत्** राज्यादीत्यर्थः। '**सर्वं**' मिति शेषः। **परस्मै** परमात्मन इत्यर्थः। **सदा** विपत्तावपि किं पुनः सम्पत्ताविति भावः। **उद्यतम्**। इदं कस्यापि नाटकस्य पद्यम् ॥ १४९ ॥' इति।

इदम्बोध्यम्-अत्र युधिष्ठिरस्य धर्म्मं उत्साहः स्थायी, परमात्माऽऽलम्बनं, 'न जातु कामान्न भयान्न लोभात्त्यजेद्धर्म्मं जीवितस्यापि हेतोः।' इत्यादिवाक्यस्मरणमुद्दीपनं, स्वार्थताऽभिनिवेशाभावोऽनुभावो धृत्यादिः सञ्चारी चेति सामाजिकानां चेतसि धर्म्मवीरोऽभिव्यज्यते। इति। यथा वा मम-'अशुभमुदयतां मे लीयतां वा शुभश्रीः सपदि शमयतां वा जीविताशां कृतान्तः। अनभिमतमशेषं वर्धतामन्यदेव पुनरपि न कदाचित्प्रोज्झिता स्वान्तमद्धा ॥' इति। यत्तूदाहृतम्-'सपदि विलयमेतु राज्यलक्ष्मी-रुपरि पतन्त्वथवा कृपाणधाराः। अपहरतुतरां शिरः कृतान्तो मम तु मतिर्न मनागपैति धर्म्मात् ॥' इति, तत्र 'धर्म्मा' दिति शब्देन धर्म्मवीरस्याभिधानं दुष्टम्। एवं 'सत्या' दिति पाठे सत्यवीरस्यापीति बोध्यम्। रसस्य वाच्यत्वापत्तेः।

युद्धवीरो यथा, श्रीरामचन्द्रः,-

'भो लङ्केश्वर ! दीयतां जनकजा, रामः स्वयं याचते,
कोऽयं ते मतिविभ्रमः, स्मर नयं, नाद्यापि किञ्चिद्गतम् ।
नैवं चेत्खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः ॥ १५० ॥' इति ।

दयावीरो यथा, जीमूतवाहनः,-

'शिरामुखैः स्यन्दत एव रक्तमद्यापि देहे मम मांसमस्ति ।
तृप्तिं न पश्यामि तवापि तावत्, किं भक्षणात्त्वं विरतो गरुत्मन् ॥ १५१ ॥' इति ।

---

युद्धवीरमुदाहरति-**युद्धवीरः। यथा श्रीरामचन्द्रः।** 'रावणं प्रत्याहे'ति शेषः । '**भोः।लङ्केश्वर ! जनकजा** जनकसुता सीतेत्यर्थः । **दीयताम्** । 'मह्य'-मिति शेषः । **रामः** खरदूषणादिहन्ता । **स्वयम्** । **याचते** 'त्वा'-मिति शेषः । **ते** तव । **कः** किमात्मकः । **अयं** सीताप्रत्यवरोधात्मेत्यर्थः । **मतिविभ्रमो** बुद्धिवैपरीत्यमिति भावः । 'अस्ती'ति शेषः । **नयं** नीतिं सन्मार्गमिति यावत् । **स्मर** चिन्तय कर्त्तव्यत्वेनानुसन्धत्स्व । **अद्य** । **अपि** । **किञ्चित्** राज्यपुत्रादीत्यर्थः । **न** । **गतं** नष्टमिति भावः । **एवं** नीतिमनुष्ठाय सीता देयेत्येवमिति भावः । **न** 'अङ्गीकरिष्यत' इति शेषः। **चेत्** । 'तर्हि'ति शेषः । **खरदूषणत्रिशिरसां** तत्तदाख्यानां राक्षसानामित्यर्थः । **कण्ठासृजा** कण्ठानामसृग्रुधिरं तेन । **पङ्किलः** सकर्दमो लक्षणया कर्दमेनेव लिप्त इत्यर्थः । 'सजम्बाले तु पङ्किलः ।' इत्यमरः । **धनुर्ज्याबन्धबन्धूकृतो** धनुषो ज्याबन्धस्तेन बन्धूकृतो बान्धववत् कृत इति तथोक्तः । धनुष्यारोपित इत्यर्थः । **एषः** । **मम** राक्षसकुलसंहारायावतीर्णस्य रामस्येत्यर्थः । **पत्री** बाणः । 'पत्री रोप इषुर्द्वयोः ।' इत्यमरः । **न** । **सहिष्यते** 'तव जीवितमपनयं चे'ति शेषः । यदि प्रार्थनयाऽपि न त्वया जनकजा समर्पयिष्यते, तदा न मयि पुनर्दोषआरोपयिष्यते, एष बाणो यथा खरादीनां शिरांसि निकृत्य तेषां कण्ठरुधिरेण भूषितस्तथा तवापि कण्ठरुधिरेण स्वं भूषयिष्यति, नेतः परमपराधं सहिष्यते । त्वयि विनाशिते एतद्राज्यादि तु स्वयं नङ्क्ष्यति अतः एतत्पूर्वमेव जनकनन्दिनीं प्रत्यर्प्य स्वजीवितेन सहैतद्राज्यपुत्रादि परिपालयेति भावः । एवं च-अत्र स्वासहनं पत्रिण्यारोप्याभिधानमूलम् । बालरामायणस्येदं पद्यम् । शार्दूलविक्रीडितं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १५० ॥' **इति** ।

इदम्बोध्यम्-अत्र रामस्य युद्ध उत्साहो रावणेनालम्बनेन तदनयेनोद्दीपनेनेतः परमसहनाभिधानेनानुभावेन तदभिव्यङ्ग्येन क्रोधादिना सञ्चारिणा चास्वाद्यतां प्रतिपद्यमानः सामाजिकानां रसतामापद्यते । इति । यथा वा-'क्षुद्राः ! सन्त्राससमेते विजहत हरयः क्षुण्णशक्रेभकुम्भा युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः । सौमित्रे ! तिष्ठ, पात्रं त्वमसि नहि रुषां, नन्वहम्मेघनादः किञ्चिद्भ्रूभङ्गसञ्ज्ञानियमितजलधिं राममन्वेषयामि ॥' इति, अत्र राम आलम्बनं तत्कारितं सेतुबन्धनमुद्दीपनं, क्षुद्रेषूपेक्षापराक्रमशालिनि रामे चातिस्पर्धाऽनुभावौ, 'लज्जां दधती'ति व्यङ्ग्यो गर्वः, 'क्षुण्णशक्रेभकुम्भा' इतिव्यङ्ग्या स्मृतिश्च व्यभिचारीत्येषां संयोगान्मेघनादस्य युद्ध उत्साहः सामाजिकानां रसतामापद्यते । इति ।

दयावीरमुदाहरति-**दयावीरः । यथा, जीमूतवाहनः**-'हे **गरुत्मन्** गरुड ! 'पक्षिताक्ष्यौं गरुत्मन्ता' वित्यमरः । **शिरामुखैः** । शिराणां नाडीनाम्मुखानि द्वाराणीति तैस्तथोक्तैः । 'नाडी तु धमनिः शिरा ।' इति, 'मुखं० निस्सरण'मिति चामरः । **रक्तं** रुधिरम् । **स्यन्दते** क्षरति । 'स्यन्दू'प्रस्रवणे । **एव** । **अद्यास्मिन्** दिवसे, लक्षणयाऽस्मिन् समये । **अपि** । **मम** 'जीमूतवाहनस्ये'ति शेषः । **देहे** शरीरे । **मांसम्** । **अस्ति** वर्त्तते । **तव** क्षुधाऽत्यन्तं पीडितस्य विपुलकायस्यात एवैतावताऽतृप्तस्य भवत इत्यर्थः । **अपि** पुनः । **तावत्** । **तृप्तिं** सन्तोषम् ।

एष्वपि विभावादयः पूर्वोदाहरणवदूह्याः। अथ भयानकः-

न। पश्यामि। किं कस्माद्धेतोरिति भावः। भक्षणाद्भक्षणमारभ्येत्यर्थः। त्वमनपगतक्षुधार्त्तिर्भवानिति भाः। विरतो निवृत्तः। नागानन्दस्येदं पद्यम्, वध्यवेषधारिणो नागस्य परित्राणकामनया शंखचूडस्य वध्यवेषं कृत्वा तत्प्रतिनिधित्वेन गरुडाय स्वात्मानं समर्प्य भक्षयतो जीमूतवाहनस्य तं प्रत्युक्तिरियम्। अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः, तल्लक्षणं चोक्तं प्राक्' इति। अत्र रुदत्या मात्राऽनुगतो वध्यवेषो नाग आलम्बनं, तद्दैन्यमुद्दीपनं, स्वकलेवरे भक्षितेऽपि तत्तृप्त्यभावनिवेदनमनुभावो हर्षधृत्यादिः सञ्चारी चेत्येषां संयोगात् शंखचूडविषयिण्यां करुणायामुत्साह आस्वादनीयतां प्रतिपद्यमानः सामाजिकानां रसतामवलम्बते। इति बोध्यम्॥ १५१॥'

दानवीर इव धर्म्मवीरादिष्वपि विभावाद्यूह्यमित्याह-एषु धर्म्मवीरादिष्वित्यर्थः। अपि। पूर्वोदाहरणवत् पूर्वस्य दानवीरस्योदाहरणं तत्रैवेति तथोक्तम्। 'तत्र तस्येव।' ५। १। ११६ इति वतिः। विभावादयः आलम्बनोद्दीपनानुभावसञ्चारिण इति भावः। ऊह्याः स्वयं यथायथं बोध्या इति भावः। अत्रायं पर्य्यालोकः-'वीरो युद्धविषय एव, उत्साहस्य तादृशत्व एव तत्स्थायिकत्वोपपत्तेः।' इति केचित्, 'वीरस्त्रिविधः, युद्धदानदयाभेदात्।' इति बहवः 'वीरश्चतुर्विधः, दानधर्म्मयुद्धदयाभेदात्।' इति प्राञ्चः, 'वीरोऽसङ्ख्येयप्रकारः, सत्यवीरादीनामपि युद्धवीरस्येव गणनौचित्यात्।' इति नव्याः, अत एव-'एवं पाण्डित्यवीरोऽपि प्रतीयते। यथा-'अपि वक्ति गिरां पतिः स्वयं यदि तासामधिदेवताऽपि वा। अयमस्मि पुरो हयाननस्मरणोल्लङ्घितवाङ्मयाम्बुधिः॥' अत्र बृहस्पत्यालम्बनः सभाऽऽदिदर्शनोद्दीपितो निखिलविद्वत्तिरस्कारानुभावितो गर्वेण सञ्चारिणा परिपोषित उत्साहो वक्तुः प्रतीयते। नचात्र युद्धवीरः, युद्धस्य वादसाधारणवाच्यत्वात्, इति चेत्, क्षमावीरे किं ब्रूयाः। यथा-'अपि बहलदहनजालं मूर्ध्नि रिपुर्मे निरन्तरं धमतु। पातयतु वाऽसिधारामहमणुमात्रं न किञ्चिदाभाषे।' क्षमावत उक्तिरियम्। बलवीरे वा किं समादध्याः। यथा-'परिहरतु धरां फणिप्रवीरः सुखमयतां कमठोऽपि तां विहाय। अहमिह पुरुहूत! पक्षकोणे निखिलमिदं जगदक्रमं वहामि॥' पुरुहूतं प्रत्येषा गरुत्मत उक्तिः। ननु 'अपि वक्ति-' 'परिहरतु धरां-' इति पद्यद्वये गर्व एव नोत्साहः। मध्यस्थे ( 'अपि बहलदहनजालं-' इति ) पद्ये तु धृतिरेव ध्वन्यते इति भावध्वनय एवैते, न रसध्वनय इति चेत्, तर्हि युद्धवीरादिष्वपि गर्वादिध्वनितामेव किन्न ब्रूयाः? रसध्वनिसामान्यमेव वा किन्न तद्व्यभिचारध्वननेन गतार्थयेः। स्थायिप्रतीतिर्दुरपह्नवा चेत्तुल्यं प्रकृतेऽपि। अनन्तरोक्तपद्ये तु नोत्साहः प्रतीयते, दयावीरादिषु प्रतीयत इति तु राज्ञामाज्ञामात्रम्। इति रसगङ्गाधरेऽप्युक्तम्।' इति। 'वीरश्चतुर्विध एव, न त्वसङ्ख्येयप्रकारः, तथैव प्राचां स्वीकारात्। एवं च-'अपि वक्ति...' इत्यत्र युद्धवीर एव, प्रतिस्पर्धिताजागरूकत्वात् प्रकारान्तरस्वीकारानावश्यकत्वाच्च। अपि बहलदहनजालम्' इत्यत्र धृतिरिति न राज्ञामाज्ञायितम्,अन्यथा—'सन्तापयामि हृदयं धावंधावं धरातले किमहम्। अस्ति मम शिरसि सततं नन्दकुमारः प्रभुः परमः॥' इत्यत्रोपरतिविषयकोत्साहात्तद्वीर एवास्तु, मा भूदयं वा, किन्तु धृतिवीरं को निवारयितुमीशः? 'अस्ति मम शिरसि' इत्यनेन धृत्युत्साहस्योद्दीपितत्वात्। 'परिहरतु धरां...' इत्यत्रापि गर्व एव, अन्यथा-'आमूलाद्रत्नसानोर्मलयवलयितादा च कूलात्पयोधेः, यावन्तः सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु। मृद्वीकामध्यनिर्यन्मसृणरसझरीमाधुरीभाग्यभाजां वाचामाचार्य्यतायाः पदमनुभवितुं कोऽस्ति धन्यो मदन्यः॥ इत्यत्र सुकवितावीर एव स्यात्। किं वाऽधिकं ब्रूमः, सर्वथोच्छृङ्खलत्वमापद्येत। अतः-यथाऽवस्थितं ज्यायः।' इति तु नव्यतराः प्राहुः। इति दिक्।

एवं वीरं निरूप्य भयानकं निरूपयितुमुपक्रमते-अथ वीरनिरूपणानन्तरम्। भयानकः। निरूप्यते—२५५ भया...इत्यादिना।

२६५ भयानको भयस्थायि-भावः कालाधिदैवतः।
स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः ॥ २६८ ॥

यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम्।
चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः ॥ २६९ ॥

अनुभावश्च वैवर्ण्यं गद्गदस्वरभाषणम्।
प्रलयस्वेदरोमाञ्च-कम्पदिक्प्रेक्षणादयः ॥ २७० ॥

जुगुप्साऽऽवेगसम्मोह-सन्त्रासग्लानिदीनताः।
शङ्काऽपस्मारसम्भ्रान्ति-मृत्य्वाद्या व्यभिचारिणः ॥ २७१ ॥

यथा-'नष्टं वर्षवरैः...' इत्यादि।

---

२६५ **भयस्थायिभावो** भयं स्थायिभावो यत्र तथोक्तः। **कालाधिदैवतः** कालोऽधिदैवतमधिष्ठातृदेवो यस्य तथोक्तः। **स्त्रीनीचप्रकृतिः** स्त्रियश्च नीचाश्चोपलक्षणेन बालाश्चेति ते प्रकृतयो यस्य तादृशः। 'बालस्त्रीनीचनायकः।' इति रुद्रभट्टः। **कृष्णः** कृष्णवर्णः। **भयानको** बिभेत्यस्मादिति तथोक्तः। 'आनकः शीङ्भियः।' इत्यानकः। **तत्त्वविशारदैः**तत्त्वस्य भयानकस्वरूपस्य विशारदा अभिज्ञास्तैः। **मतः** स्वीकृतः। **यस्मात्**। यद्दृष्ट्वेत्यर्थः। ल्यब्लोपे पञ्चमी। 'भीत्रार्थानां भयहेतुः।' १।४।२५ इति वा पञ्चमी। **भीतिर्भयम्**। 'भीतिर्भीः साध्वसं भयम्।' इत्यमरः। **उत्पद्यते**। तत्-'व्याघ्रादी'ति शेषः। **अत्रा**स्मिन् भयानक इति शेषः। **आलम्बनम्**। **मतम्**। **तस्यालम्बनस्ये**त्यर्थः। **घोरतरा** अत्यन्तं घोराः। **चेष्टा** विभीषकारूपाणि चेष्टितानीति भावः। **पुनः**। **उद्दीपनम्**। **भवेत्**। 'वेदाः प्रमाण'मितिवदुद्देश्यविधेयभावेनान्वयोपपत्तिरूह्या। **वैवर्ण्यं** विवर्णमुखत्वम्। **गद्गदस्वरभाषणं** गद्गदस्वरं यथा भवेत्तथा भाषणमित्यर्थः। तथा-**प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः**। आदिना-भूपतनादीनां ग्रहणम्। तत्र प्रलयो निश्चेष्टत्वम्, स्वेदः प्रसिद्धः, रोमाञ्चो रोमोल्लासः, कम्पः कम्पितगात्रत्वम्, दिक्प्रेक्षणमितस्ततः कातरतया दृष्टिप्रक्षेपः, भूपतनं प्रसिद्धम्। इति दिक्। **अनुभावः**। अत्रापि 'वेदाः प्रमाण'मितिवत्। **च** (इदं समुच्चयार्थम्)। 'अत्रे'ति पाठान्तरम्। **जुगुप्साऽऽवेगसम्मोहसन्त्रासग्लानिदीनताः**। जुगुप्सा घृणा बीभत्सस्य स्थायिरूपेति यावत्। आवेगादयोऽन्ये स्पष्टाः। **शङ्काऽपस्मारसम्भ्रान्तिमृत्य्वाद्याः**। सम्भ्रान्तिरुन्मादः। आद्यपदेन विषादादीनां ग्रहणम्। **व्यभिचारिणः**। तथा च-भयस्थायिभावको भयङ्करालम्बनकस्तच्चेष्टितोद्दीपनको विवर्णत्वाद्यनुभावको जुगुप्साऽऽदिसञ्चारिको भयानको नाम रसः, स च कालाधिष्ठातृकः स्त्र्यादिनायकः कृष्णवर्ण उक्त इति निर्गलितोऽर्थः ॥ २६८ ॥ २६९ ॥ २७० ॥ २७१ ॥

उदाहरति-**यथा-'नष्टं वर्षवरैः...' इत्यादि**। अयम्भावः-वामनषण्ढाद्युदाहरणरूपेणापि निरूपितपूर्वमिदम्, अत्र च वर्षवरादीनां नीचानां वानरवेषेणान्तःपुरप्रविष्टं विदूषकमवलोकयतां भयं स्थायिभावो, वानरवेषेण प्रविष्टेन विदूषकेनालम्बनेन तादृशतच्चेष्टयोद्दीपनेन वर्षवरादीनामदर्शनादिनाऽनुभावेन दैन्यादिना सञ्चारिणा च सम्भूयास्वाद्यमानं सामाजिकानां भयानकरसरूपतामापद्यते। इति।

यथा वा-'ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः पश्चार्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्वकायम्। दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥' इति। अभिज्ञानशाकुन्तले प्रथमेऽङ्के मृगं निहन्तुं धावितस्यन्दनस्य दुष्यन्तस्य राज्ञः सूतं प्रति 'अयं पुनरिदानीमपि' इत्युपक्रम्योक्तिरियम्। अत्र धावितस्यन्दनो राजाऽऽलम्बनं, शरपतनभयं स्यन्दनस्य चानुपतनमुद्दीपनं, ग्रीवाभङ्ग-पलायन-पूर्वकायप्रवेश-अर्धावलीढदर्भविकिरणाद्यनुभावः श्रमशङ्कात्रासादिर्व्यभिचारी चेत्येषां संयोगान्मृगस्य पशुतया नीचस्य

अथ बीभत्सः-

२६६ जुगुप्सास्थायिभावश्च बीभत्सः कथ्यते रसः।
नीलवर्णो महाकाल-दैवतोऽयमुदाहृतः ॥ २७२ ॥
दुर्गन्धमांसरुधिर-मेदांस्यालम्बनं मतम्।
तत्रैव कृमिपाताद्य-मुद्दीपनमुदाहृतम् ॥ २७३ ॥
निष्ठीवनास्यवलन-नेत्रसङ्कोचनादयः ।
अनुभावाश्च मोहाद्या-स्तथा स्युर्व्यभिचारिणः ॥ २७४ ॥

यथा-

'उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूत्सेधभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा।
आर्त्तः पर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति ॥ १५७ ॥'

---

भयं सामाजिके रसतामापद्यते। यथा वा मम-'सिंहवद्भुत विनद्य दरेन्द्रं ध्मातवान् प्रथितविक्रमधन्यः। योषितो रिपुजनस्य सहास्तैस्तत्यजुः सपदि सौभगतृष्णाम् ॥' इति, अत्र च रिपुस्त्रीणां भयं ससिंहनादं शङ्खध्मानेनालम्बनेन तद्भयङ्करत्वेनोद्दीपनेन रोदनेन पतिजीवननैराश्येन चानुभावाभ्यां दैन्यमोहादिना व्यभिचारिणा च सम्भूय रसतामापद्यमानः सामाजिकैरनुभूयते। यथा वा-'घोरमम्भोधरध्वानं निशम्य व्रजवालकाः। मातुरङ्के निलीयन्ते सकम्पविकृतस्वराः ॥' इति, अत्र व्रजवालानां भयमम्भोधरध्वानेनालम्बनेन तद्वैकल्येनोद्दीपनेन मातॄणामुत्सङ्गेषु निलयनेन सकम्पस्वरवैकल्येन चानुभावाभ्यां त्रासावेगाभ्यां सञ्चारिभ्यां च सामाजिकानां रसतामापद्यते। इति दिक्।

एवं भयानकं निरूप्य वीभत्सं निरूपयितुमुपक्रमते-**अथे**त्यादिना।

**अथ** भयानकनिरूपणानन्तरम्। **बीभत्सः** निरूप्यते-२६६ **जुगुप्सा..** इत्यादिना।

२६६ **जुगुप्सास्थायिभावो** जुगुप्सा घृणा कुत्सितत्वेनावगमनमिति यावत्, स्थायी भावो यस्य स तथोक्तः। **च**। **वीभत्सो** वीभत्स्यते जुगुप्स्यत इति तथोक्तः। 'वध' कुत्सायाम्, कुत्सायां सन्, भावे घञ्। **रसः**। **कथ्यते**। अयं वीभत्सो नाम रसः। **नीलवर्णः**। **महाकालदैवतो** महाकालो दैवतं यस्य तथोक्तः। **उदाहृतः** कथितः। **तत्र** तस्मिन् वीभत्स इत्यर्थः। **एव**। **दुर्गन्धमांसरुधिरमेदांसि**। **आलम्बनम्**। **मतम्**। अत्र 'वेदाः प्रमाण' मितिवदुद्देश्यविधेयत्वमिति वोध्यम्। तथा-**कृमिपाताद्यम्**। आद्यपदेन दुर्गन्धित्वादीनां ग्रहणम्। **उद्दीपनम्**। **उदाहृतम्** 'आचार्यै'रिति शेषः। **च निष्ठीवना-स्यवलननेत्रसङ्कोचनादयो** निष्ठीवनं (मुखेन श्लेष्मणो निष्ठासनम्) चास्यवलनं (आस्यस्य वलनमाच्छादनम्) च नेत्रसङ्कोचनादयः (नेत्रयोः सङ्कोचनमादिर्येषां [वमनवैचित्त्यादीनाम्] तथोक्ताः) चेति तथोक्ताः। **अनुभावाः**। **तथा**। **मोहाद्याः**। आद्यपदेनापस्मारादीनां ग्रहणम्। **व्यभिचारिणः**। **स्युः**। 'अनुभावास्तत्र मतास्तथा स्युर्व्यभिचारिणः। मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः ॥' इति पाठान्तरम्। तथा च-जुगुप्सास्थायिभावको नीलवर्णो महाकालाधिष्ठानको दुर्गन्धितमांसाद्यालम्बनको दुर्गन्धत्वाद्युद्दीपनको निष्ठीवनाद्यनुभावको मोहापस्मारादिसञ्चारिको रसो वीभत्सनामा भवतीति निष्कृष्टम् ॥ २७२ ॥२७३॥ २७४ ॥

उदाहरति-**यथा**-'**उत्कृत्योत्कृत्य..**' इत्यादौ।

'**आर्त्तः** पीडितः। 'क्षुधये'ति शेषः। अत एव-**पर्य्यस्तनेत्रः** पर्य्यस्ते अन्तःप्रविष्टत्वेन पतिते वलवत्सजातीयान्तरभीतत्वेन विक्षिप्ते वा नेत्रे यस्य येन वेति तथोक्तः। **प्रकटितदशनः** प्रकटिताः (दैन्यात् स्थपुटगतमांसग्रहणार्थं वा) दशना दन्ता येन तथोक्तः। **प्रेतरङ्कः** प्रेतेषु पिशाचविशेषेषु रङ्कः (कृपणो दरिद्र इति यावत्) इति तथोक्तः। शौण्डादि-

अथाद्भुतः–

२६७ अद्भुतो विस्मयस्थायि-भावो गन्धर्वदैवतः।
पीतवर्णो वस्तु लोका-तिगमालम्बनं मतम् ॥ २७५ ॥
गुणानां तस्य महिमा भवेदुद्दीपनं पुनः।
स्तम्भः स्वेदोऽथ रोमाञ्च-गद्गदस्वरसम्भ्रमाः ॥ २७६ ॥

---

त्वात्सप्तमीसमासः। 'प्रेतोभूतान्तरे पुंसि मृते स्याद्वाच्यलिङ्गकः।' इति मेदिनी। 'रङ्कः कृपणमन्दयोः।' इति गोपालः। **प्रथ**मं 'मांसोद्घाटनादपी'ति शेषः। **कृत्तिं** चर्म्म। 'मृतशरीरस्थे'ति शेषः। 'अजिनं चर्म्म कृत्तिः स्त्री'त्यमरः। **उत्कृत्त्यो-त्कृत्योत्पाट्योत्पाट्येत्यर्थः**। अत्र वीप्सायां द्विर्भावः। **अथानन्तरम्**। **पृथूत्सेधभूयांसि** पृथुर्विपुलश्चासावुत्सेध उन्नतत्वमुच्छूनत्वमिति यावत्, तेन भूयांसि बहुलानीति तथोक्तानि। **अंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्यंसौ** (स्कन्धौ) च स्फिचौ (कटिस्थमांसपिण्डौ) च पृष्ठं च पिण्डाद्यवयवाः (पिण्डी जानुनोरधोभागौ आदी येषां [जानूर्ध्वभागादीनां] चेति, तेषु सुलभानीति तथोक्तानि। 'स्कन्धो भुजशिरोऽंसोऽस्त्री।' 'स्त्रियां स्फिचौ कटिप्रोथौ।' 'पृष्ठं तु चरमं तनोः।' इति चामरः। 'पिण्डी स्यात् पिण्डिकायां स्त्री'ति गोपालः। **उग्रपूतीन्युग्रोत्कटा** सोढुमक्षमेति यावत्, पूतिर्दुर्गन्धो येषां तथाभूतानि। 'पूतिगन्धस्तु दुर्गन्धः'इत्यमरः। **मांसानि**। **जग्ध्वा** भक्षयित्वा। **अङ्कस्था**-दुत्सङ्गे स्थितादित्यर्थः। 'उत्सङ्गचिह्नयोरङ्क'इत्यमरः। **करङ्कान्मस्तकात्**। 'करङ्को मस्तक'इति मेदिनी। **अस्थि-संस्थमस्थिषु लग्नम्**। **स्थपुटगतं** स्थपुटं विषमोन्नतं शरीरभागं गतमिति तत्तथोक्तम्। 'स्थपुटं विषमोन्नतम्।' इति गोपालः। **अपि किं पुनरन्यदिति** शेषः। **क्रव्यं** मांसम्। 'पललं क्रव्यमामिषम्।' इत्यमरः। **अव्यग्रं** न व्यग्रो यस्मात्तादृशो यथा भवेत्तथेत्यर्थः। अत्यन्तं क्षुधार्त्ततया वलवत्प्रेतान्तरभीतत्वेन तावताऽपि क्षुधानिवृत्त्यभावाच्च सति व्यग्रत्वमिति भावः। यद्वा–शनैरित्यर्थः। मांसान्तरस्य कृतभक्षणत्वेनोदरपर्य्याप्तेर्व्यग्रतामपहायेति भावः। **अत्ति** भक्षयति (अत एवास्य दरिद्रत्वम्)। मालतीमाधवस्येदं पद्यम्, श्मशाने शवभोजनं कञ्चित् पिशाचं दृष्ट्वा बीभत्सितस्य माधवस्योक्तिरियम्। अत्र च स्रग्धराछन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १५२ ॥'

अत्रेदम्बोध्यम्– प्रेतरङ्केनालम्बनेन कृत्त्युत्कर्त्तनादिनोद्दीपनेन तद्द्रष्टुर्निष्ठीवनमुखसंवरणादिनाऽनुभावेन मोहादिना सञ्चारिणा च प्रेतरङ्कव्यापारे जुगुप्सासामाजिके रसतामापद्यते। इति। यथा वा–'नखैर्विदारितान्त्राणां शवानां पूयशोणितम्। आननेष्वनुलिम्पन्ति हृष्टा वेतालयोषितः' इति। अत्र हि शव आलम्बनमन्त्रविदारणाद्युद्दीपनमाक्षिप्तो नेत्रनिमीलननिष्ठीवनरोमोद्गमादिरनुभाव आवेगादिर्व्यभिचारिभावश्चेत्येतैः सम्भूयमाना द्रष्टॄणां जुगुप्सा सामाजिकेषु रसतामापद्यते। अत्राहुः पण्डितराजाः–'ननु रतिक्रोधोत्साहभयशोकविस्मयनिर्वेदे (शमे) षु प्रागुदाहृतेषु यथाऽऽलम्बनाश्रययोः सम्प्रत्ययो, न तथा हासे जुगुप्सायां च, तत्रालम्बनस्यैव प्रतीतेः, पद्यश्रोतुश्च रसास्वादाधिकरणत्वेन लौकिकहासजुगुप्साऽऽश्रयत्वानुपपत्तेः, इति चेत्सत्यम्! तदाश्रयस्य द्रष्टृपुरुषविशेषस्य तत्राक्षेप्यत्वात्, तदनाक्षेपे तु श्रोतुः स्वीयकान्तावर्णनपद्यादिव रसोद्बोधे बाधकाभावात्।' इति।

अथाद्भुतं निरूपयितुमुपक्रमते–अथेत्यादिना।

**अथ** बीभत्सनिरूपणानन्तरम्। **अद्भुतो** निरूप्यते–२६७ **अद्भुत** इत्यादिना।

२६७ **विस्मयस्थायिभावो** विस्मयः स्थायिभावो यस्य तादृशः। **गन्धर्वदैवतो** गन्धर्वो दैवतं यस्य तथोक्तः। 'ब्रह्माधिदैवत' इति तु युक्तः पाठः 'अद्भुतो ब्रह्मदैवतः।' इति भरतोक्तेः। **पीतवर्णः**। **अद्भुतः**। **तस्य** (इदमुत्तरश्लोकादाकृष्यते)। 'अद्भुतस्ये'ति शेषः। **लोकातिगं** लोकं संसारमतिगच्छत्यतिक्रामतीति तथोक्तम्। लोकविलक्षणमिति भावः। **वस्तु**। **आलम्बनम्**। **मतं** स्वीकृतम् ॥ तस्य–**गुणानां** 'विस्मयोत्पादकहेतुभूताना'मिति शेषः। **महिमा** महत्त्वमुत्कृष्टत्वमिति यावत्। महतो भावो महिमा। 'पृथ्वादिभ्य इमनिज् वा।' ५।१।१२२ इतीमनिचि'टेः।' ६।४।११५ इति टेर्लोपः। **पुनः**। **उद्दीपनम्**। **भवेत्**। **अथ**। **स्तम्भो** जाड्यम्। **स्वेदः**। **रोमाञ्चगद्गदस्वरसम्भ्रमा** रोमाञ्चश्च गद्गदस्वरश्च सम्भ्रमश्च (भयजनितत्वराविशेषश्च) इति ते तथोक्ता मता इति शेषः।

तथा नेत्रविकाशाद्या अनुभावाः प्रकीर्त्तिताः।
वितर्कावेगसम्भ्रान्ति-हर्षाद्या व्यभिचारिणः॥ २७७॥

यथा-

'दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
टङ्कारध्वनिरार्य्यबालचरितप्रस्तावनाडिण्डिमः।
द्राक्पर्य्यस्तकपालसम्पुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति॥ १५३॥'

---

तथा। **नेत्रविकाशाद्या** नेत्रविस्फारा निमिषत्वाद्य इत्यर्थः। **अनुभावाः**। 'तस्ये'ति पूर्वतोऽन्वेति। **प्रकीर्त्तिताः**। एवम्-**वितर्कवेगसम्भ्रान्तिहर्षाद्या** वितर्कश्चावेगश्च सम्भ्रान्तिश्च (उन्मादश्च) हर्षाद्याश्चेति तथोक्ताः। आद्यपदेनौत्सुक्यादीनां ग्रहणम्। **व्यभिचारिणः**। 'तस्ये'ति पूर्वतोऽत्राप्यनुवृत्तम्॥ २७५॥ २७६॥ २७७॥

उदाहरति-यथा-'**दोर्दण्डाञ्चित..**' इत्यादौ।

'**दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यतो** दोषौ भुजावेव दण्डौ ताभ्यामञ्चित आकुञ्चितो यश्चन्द्रः शेखरे यस्य तस्य चन्द्रशेखरस्य महेशस्य धनुः पिनाकाख्यश्चाप एव दण्ड इति धनुर्दण्डस्तस्यावभङ्गेनावज्ञाय भञ्जनेनोद्यत उत्थित इति तथोक्तः। भुजाभ्यां यन्महेशधनुराकुञ्च्य खण्डितं तज्जन्य इति भावः। 'भुजबाहू प्रवेष्टो दोः स्या' दित्यमरः। अत्र दण्डस्य द्विरुक्तेः पुनरुक्तत्वं दोषः। **द्राक्पर्य्यस्तकपालसम्पुटमिलद्ब्रह्माण्डभाण्डोदरभ्राम्यत्पिण्डितचण्डिमा** द्राग् झटिति प्रतियातस्य महिम्ना पर्य्यस्तः परितः क्षिप्तो यः कपालसम्पुटे मिलत् श्लिष्यमाणं यद्ब्रह्माण्डं तदेव भाण्डं तस्योदरं तत्र भ्राम्यन् पिण्डितो घनीभूतश्चण्डिमोग्रत्वं स यस्य तथोक्तः। कपालयोस्तत्सदृशयोरुपरितनाधस्तनयोः पिधानपात्रयोः सम्पुट इत्यर्थः। अयम्भावः-यथा कस्मिंश्चित् सम्पुटे निहितं भाण्डमुत्क्षिप्तं सदनवस्थितं भवति, तथा ब्रह्माण्डमपि, तादृशस्य चास्यान्तर्भ्राम्यन्नितस्ततोऽविश्रामं सञ्चलन् (व्याप्नुवन्) पिण्डीभूतमुग्रत्वं यस्य तथाभूतः। एतेन-टङ्कारध्वनिरेव न विश्वव्याप्ता, किन्तु तच्चण्डिम्ना ब्रह्माण्डमपि सम्पुटस्थं भाण्डमिवोत्क्षिप्तमिवाभूत्। इति। चण्डस्य भावश्चण्डिमा। पृथ्वादित्वादिमनिच्। अत्र पिण्डो जातो यस्येति तथोक्तत्वमारोपितम्, अमूर्त्तस्य मूर्त्तत्वमन्यथा नोपपद्येत। **आर्य्यबालचरितप्रस्तावनाडिण्डिम** आर्य्यो गाम्भीर्यौदार्य्यादिना धन्यमान्यः सोऽसौ बालो बालत्वेनास्थितो रामस्तस्य चरितानि तेषां प्रस्तावना कीर्त्तनारम्भस्तस्या डिण्डिमो राजाऽऽज्ञानिशामनार्थो वाद्यविशेष उपचारात्तद्ध्वनिस्वरूपभूत इति तथोक्तः। **टङ्कारध्वनिष्टङ्** इत्याकारस्याव्यक्तशब्दस्य कारः सोऽसौ ध्वनिरिति तथोक्तः। **कथम्। अहो। अद्यास्मिन्नहनीत्यर्थः। अपि। न। विश्राम्यति** विरमति निवर्त्तत इति यावत्। दीर्घकालव्यापिना भग्नस्य पिनाकस्य टङ्कारेण चकितस्य लक्ष्मणस्योक्तिरियम्। बालरामायणस्य पद्यमिदम्। अत्र शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक्॥ १५३॥'

अत्रायम्भावः-रामेण यन्महेश्वरस्य धनुराकुञ्च्य खण्डितं, तद्ध्वनिना च यदेतद्ब्रह्माण्डं परिपूरितं तत्तद्बालचरितानां प्रस्तावनाडिण्डिमेनैव अत एव टङ्कारध्वनिप्रस्तावनाडिण्डिमयोरभेदाध्यवसायोऽत्र सङ्गच्छते। अयं च ध्वनिरुच्चैस्तिष्ठन् लक्ष्मणं चकितं कृतवान्, अत एव किञ्चित्समयानन्तरमेव लक्ष्मणस्य भ्रान्तिरियमुदयत, यत्, बहून् दिवसान् व्याप्यायं ध्वनिः, अन्यथा 'अद्यापी' त्यत्रापेः सार्थक्यं मा भूत्। तथा च-टङ्कारध्वनिनाऽऽलम्बनेन तद्दीर्घकालव्यापित्वेनोद्दीपनेन ध्वनेरुद्भवे दिनान्तरभ्रान्तिरूपेणानुभावेन हर्षादिना सञ्चारिणा च लक्ष्मणगतो विस्मयो रसतामापद्यमानः सामाजिकैरनुभूयते। इति। नच 'चित्रं महानेषवतावतारः क्व कान्तिरेषाऽभिनवैव भङ्गिः। लोकोत्तरं धैर्य्यमहो प्रभावः काप्याकृतिर्नूतन एष सर्गः॥' इत्युदाहार्य्यम्, स्तोतृभक्तेः प्राधान्येन विस्मयस्य गुणीभूतत्वात्। इदं तूदाहार्य्यम्-'एते किन्नु सत्यमेव तरवश्चूतप्रसूनोत्कराः, किं वा काचन वाटिकेयमनघा यस्याममी कोकिलाः। चित्रं कुत्र तिरोहिता मरुधरा सा यत्र मे पत्तनं नानानिर्झरवैभवं कुत इदं सद्यः समुन्मीलितम्॥' इति। ऐन्द्रजालमहिम्ना स्वदेशे पुष्पवाटिकाऽऽविर्भावं दृष्टवतः कस्यचिन्मरुदेशीयस्येयमुक्तिः।

अथ शान्तः—

२६८ शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः।
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः ॥ २७८ ॥
अनित्यत्वादिनाऽशेष-वस्तुनिःसारता तु या।
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते ॥ २७९ ॥
पुण्याश्रमहरिक्षेत्र-तीर्थरम्यवनादयः।
महापुरुषसङ्गाद्या-स्तथोद्दीपनरूपिणः ॥ २८० ॥
अनुभावाश्च रोमाञ्च-तोषभूतदयाऽऽदयः।
निर्वेदहर्षस्मृतय-स्तथा स्युर्व्यभिचारिणः ॥ २८१ ॥

यथा—

'रथ्याऽन्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः
सत्रासं च सकौतुकं च सदयं दृष्टस्य तैर्नागरैः।
निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कः करटः कदा करपुटीभिक्षां विलुण्ठिष्यति ॥ १५४॥'

---

अथ नवमं शान्तं लक्षयितुमुपक्रमते-अथेत्यादिना।

अथाद्भुतनिरूपणानन्तरम्। शान्तः। लक्ष्यते-२६८ शान्त इत्यादिना।

२६८ शमस्थायिभावः शमः स्थायी भावो यत्र तथोक्तः। उत्तमप्रकृतिरुत्तमः प्रकृतिर्नायको यस्य तथोक्तः। कुन्देन्दुसुन्दरच्छायः कुन्देन्दुवत्सुन्दरच्छाया यस्य तथोक्तः। 'छाया सूर्यप्रभा कान्तिः प्रतिबिम्बमनातपः।' इत्यमरः। श्रीनारायणदैवतः श्रिया युक्तो नारायणः स दैवतं यस्य तथोक्तः। शान्तस्तन्नामा रसः। मतः। या। तु पुनः। अनित्यत्वादिना। आदिना नीरसत्वादीनां ग्रहणम्। 'ज्ञायमानेने'ति शेषः। अशेषवस्तुनिःसारता। वाऽथवा। परमात्मस्वरूपं परमात्मनः स्वरूपं 'ज्ञायमान' मिति शेषः। तथा च-'सर्वं खल्विदं ब्रह्म' इत्याद्युक्तदिशा जगतो ब्रह्माभिन्नत्वं, ब्रह्मणश्च 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्याद्युक्तदिशा सत्यस्वरूपत्वादि ज्ञायमानमिति निर्गलितोऽर्थः। तस्य शान्तरसस्येत्यर्थः। आलम्बनम्। इष्यते स्वीक्रियते ॥ पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः। आदिना सरोवरमहीधरादीनां ग्रहणम्। तथा। महापुरुषसङ्गाद्याः। आद्यपदेन तेषां संवादोपदेशादीनां ग्रहणम्। उद्दीपनरूपिणः ॥ रोमाञ्चतोषभूतदयाऽऽदयः। आदिना चिन्ताविरहादीनां ग्रहणम्। च। अनुभावाः मताः। तथा। निर्वेदहर्षस्मृतयः। इदमुपलक्षणं मत्यादीनाम्। व्यभिचारिणः। स्युः। अत्र प्रायः "रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः। निर्वेदहर्षस्मरणमतिभूतदयादयः ॥' इति पाठान्तरमुपलभ्यते, अत आद्यपदेनामोदोन्मोदादीनां ग्रहणम्, आदिपदेन धैर्यादीनां चेति बोध्यम्। भूतदया च दैन्यविशेषरूपत्वाद्भावः। यथोक्तं 'भूतदया चदैन्यविशेष एव परदुःखेन परोपचिकीर्षया वा स्वदुःखेन स्वानौजस्यस्य दयात्वेन क्रोडीकरणा'दिति ॥ २७८ ॥ २७९ ॥ २८० ॥ २८१ ॥

उदाहरति-यथा-'रथ्याऽन्त'इत्यादौ।

'निःशङ्को निर्गता मत्क्रोधसम्भावनमूला शङ्का यस्य तथाभूतः। करटः काकः। 'काके तु करटारिष्टबलिपुष्टसकृत्प्रजाः।'इत्यमरः। रथ्यान्तो रथ्यानां पथां चत्वराणां वान्तरिति तथोक्तम्। 'रथ्या तु रथसङ्घाते प्रतोल्यां पथि चत्वरे।' इति मेदिनी। चरतः पर्य्यटतः। तथा। धृतजरत्कन्थालवस्य जरन् पुरातनः कन्थालवः कन्थाया भिक्षूणामाच्छदनीयस्य वस्त्रस्य लवो लेशः खण्डमिति यावत् यस्य (आच्छादनीयत्वेन) तस्य तथाभूतस्य। तैः प्रसिद्धैर्बहुशः परिचितैरित्यर्थः। अध्वगैः पथिकैः। तथा-नागरैर्नगरभवैर्जनैरित्यर्थः। अत्र बहुत्वेनेदमपि विवेदिषितं, यत् तत्र केचिदार्य्याः केचिच्चानार्य्या इति। अत एव-सत्रासं सोद्वेगं यथा स्यात्तथा। अहह किमिति

अस्य दयावीरादेः सकाशाद्भेदमाह—

**२६९ निरहङ्काररूपत्वाद् दयावीरादिरेष नो ॥ २८२ ॥**

दयावीरादौ हि नागानन्दादौ जीमूतवाहनादेरन्तरा मलयवत्याद्यनुरागादेरन्ते च विद्याधरच-क्रवर्त्तित्वाद्याप्तेर्दर्शनादहङ्कारोपशमो न दृश्यते । शान्तस्तु सर्वाकारेणाहङ्कारप्रशमैकरूपत्वान्न

---

एवंविध एष इत्युद्वेगपूर्वकमिति यावत् । च । सकौतुकं सोत्सवम्, दिष्ट्याऽयमेवंविध इति सप्रेम यथा भवेत्तथेत्यर्थः । च । सदयम् । दृष्टस्य । निर्व्याजीकृतचित्सुधारसमुदा निर्व्याजीकृतः कामक्रोधादिक्षयेन निष्प्रतिबन्धकीकृतो यश्चित्सुधारसश्चिदेवसुधा तस्या रस आस्वादस्तस्य मुदानन्दस्तयेति तथोक्तया । कामादीनपहाय चिदानन्देऽनुभूयमाने जायमानेन प्रमोदेनेत्यर्थः । निद्रायमाणस्य निद्रां नाटयत इत्यर्थः । मे ममेत्यर्थः । भिक्षां याञ्चयालब्धमन्नमित्यर्थः । कदा कस्मिन्सुसमय इत्यर्थः । करपुटीभिक्षां करौ हस्तावेव पुटी पत्ररचितं दध्याद्याधानयोग्यं पात्रं तत्र भिक्षा तां, करयुगलात्मिकायां पुट्यां स्थितां भिक्षामित्यर्थः । विलुण्ठिष्यत्यपहरिष्यतीतस्ततो वा विकिरन्नपनेष्यतीत्यर्थः । कस्यापि निर्विण्णस्येयमुक्तिः—तथा च, अत्र शमः स्थायीभावो निःसारतया ज्ञातेन जगता, अस्य वा 'सर्वं खल्विदं ब्रह्मे'ति नयेन परमात्मताज्ञानेनालम्बनेन ब्रह्मानुभवानन्दे देहाध्यासशैथिल्येनोद्दीपनेन भिक्षाऽन्नापहरणादावपि निरुद्वेगादिनाऽनुभावेन निर्वेदादिना सञ्चारिणा च सम्भूय रसतामापद्यमानः सामाजिकैरनुभूयते । इति निष्कृष्टम् । शार्दूलविक्रीडितं वृत्तम्, एतल्लक्षणं चोक्तं प्राक् ॥ १५४॥'

यथा वा—'मलयानिलकालकूटयो रमणीकुन्तलभोगिभोगयोः । श्वपचात्मभुवोर्निरन्तरा मम जाता परमात्मनि स्थितिः ॥'इति, अत्र हि सर्वस्मिन्नपि प्रपञ्चे परमात्मभावनयाऽऽलम्बनेनाक्षिप्तेन वेदान्तशास्त्रोपदेशेनोद्दीपनेन सर्वत्र साम्यमूलेन रागद्वेषराहित्येनानुभावेन मत्यादिना सञ्चारिणा निर्विण्णस्य शमो रसतामापद्यमानः सामाजिकैरनुभूयते । यथा वा—'शिलं किमनलं भवेदनलमोदरं बाधितुं ? पयःप्रसृतिपूरकं किमु न धारकं सारकम् । अयत्नमलभल्पकं पथि पटच्चरं कच्चरं भजन्ति विबुधा मुधा हहह कुक्षितः कुक्षितः ॥' इति, अत्र हि जगतोऽनित्यताज्ञानेनालम्बनेन पुण्यविशेषेणोद्दीपनेन तृष्णाराहित्यादिनाऽनुभावेन निर्वेदादिना सञ्चारिणा च शमो रसतामापद्यमानोऽनुभूयत इति बोध्यम् ।

ननु दयावीरधर्मवीरदेवताविषयकरतिभावेष्वेवास्य कथं नान्तर्भावः, उभयत्र कारुण्याद्यतिशयाद्यनुभाव्यमानत्वात्, इत्याशङ्क्योत्तरयितुमुपक्रमते—अस्येत्यादिना ।

**अस्य** शान्तस्य । **दयावीरादेः** । **सकाशात्** । **भेदम्** । **आह**—२६९ **निरहङ्काररूपत्वादित्यादिना** ।

२६९ एष शान्त इत्यर्थः । **निरहङ्काररूपत्वा**न्निर्गतोऽहङ्कारो यस्मात्, स रूपं स्वरूपं यस्य तस्य भावस्तत्त्वं तस्मात् । शमस्थायिकतयाऽह'मिति प्रलयावष्टम्भकत्वादिति भावः । **दयावीरादि**स्तत्स्वरूपभूत'इति शेषः । आदिना धर्म्मवीरादीनां ग्रहणम् । **नो** न भवतीत्यर्थः । 'अभावे नह्य नो नापी'त्यमरः ॥ २८८ ॥

तदेवोपपादयति—**दयावीरादा**वित्यादिना ।

**नागानन्दादौ** नागानन्दं नाम श्रीहर्षप्रणीतं तदादौ यस्य (चण्डकौशिकादेः) तत्र । **हि** यतः । 'हि हेताववधारणे ।' इत्यमरः । **जीमूतवाहनादे**र्जीमूतवाहनो मलयवत्या वल्लभ आदौ यस्य ( हरिश्चन्द्रप्रह्लादादेः ) तस्य । **दयावीरादौ** दयावीरधर्म्मवीरादौ विषये । **दर्शनात्** । **अहङ्कारोपशमः** । **न** नैव । **दृश्यते** । कुत इत्याह- **अन्तरा** मध्ये नागानन्दादेराद्याङ्कादाविति यावत् । 'अथान्तरेऽन्तरा । अन्तरेण च मध्ये स्युः' इत्यमरः । **मलयवत्याद्यनुरागादेः** । आदिना शैव्यादीनामभिधानम् । **अन्ते**ऽन्त्येऽङ्क इति भावः । **च** । **विद्याधरचक्रवर्त्तित्वाद्याप्तेः** । आदिना राज्यैश्वर्य्यदिव्यसुखभोक्तृत्वादीनां ग्रहणम् । अयम्भावः—दयावीरादेर्नायका जीमूतवाहनादयस्तेषां तत्त्वे सत्यपि नायिकाऽनुरागादीनां सद्भावेन 'अह' मिति प्रत्ययालम्बनत्वं, तन्नैषां निरहङ्कारत्वम् । इति । **शान्तः** । **तु** पुनः । **सर्वाकारेण** सर्वथा सर्वप्रकारेणेति यावत् । **अहङ्कारप्रशमैकरूपत्वात्** । अन्यथा शमस्थायिकत्वानुदये तस्यैव

तत्रान्तर्भावमर्हति, अतश्च नागानन्दादेः शान्तरसप्रधानत्वमपास्तम्।

ननु–

'न यत्र दुःखं, न सुखं, न चिन्ता, न द्वेषरागौ न च काचिदिच्छा॥
रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु समप्रधानः॥'

इत्येवंरूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात् तत्र सञ्चार्य्यादीनामभावात् कथं रसत्वमित्युच्यते—

२७० युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः॥
रसतामेति तदस्मिन् सञ्चार्य्यादेः स्थितिश्च न विरुद्धा॥ २८०॥

---

सद्भावं वक्तुमशक्यत्वात्। तत्र दयावीरादावित्यर्थः। न नैव। अन्तर्भावम्। अर्हति। अतोऽस्मात् साहङ्कारत्वनिरहङ्कारत्वकृतभेदजागरूकत्वाद्धेतोः। च। नागानन्दादेः 'दयावीरधर्मवीरशालिन' इति शेषः। आदिना चण्डकौशिकादीनां ग्रहणम्। शान्तरसप्रधानत्वम्। अपास्तमपाकृतं भवतीत्यर्थः।

अस्य रसत्वमाक्षिपति–नन्वित्यादिना।

ननु–'यत्र यस्मिन् रस इत्यर्थः। दुःखम्। न नास्ति। सुखं 'चे'ति शेषः। न। चिन्ता 'चे'ति शेषः। न नास्तीत्यर्थः। द्वेषरागौ द्वेषो रागश्चेत्यर्थः। 'चे'ति शेषः। न नास्ति। काचित् केनचिद्विशेषेण विशेषिता। इच्छा। च। न नास्तीत्यर्थः। सः। सर्वेषु। भावेषु पदार्थेषु। समप्रधानः समं भेदरहितं प्रमाणं प्रतीतिर्येन तथोक्तः। शान्तः। रसः। मुनीन्द्रैः भरतादिभिराचार्य्यैरित्यर्थः। कथितः। 'शमप्रधान'इति पाठान्तरम्, एतस्मिन्सत्येषोऽर्थः। सर्वेषु सर्वविधेषु अर्थानर्थकारणभूतेष्वित्यर्थः। भावेषु चेष्टितेषु सत्सु। 'भावः सत्तास्वभावाभिप्रायचेष्टाऽऽत्मजन्मसु।' इत्यमरः। यत्र यस्मिन् प्रतीयमान इत्यर्थः। दुःखमहो आपदियमुपस्थितेति कष्टम्। न। सुखं च। न। चिन्ता कथमेषोऽनर्थो निवर्त्स्यते कथं वा समत्स्यतेऽर्थ इति चिन्तनम्। च न। द्वेषरागौ द्वेषोऽर्थविघातपूर्वमनर्थोपस्थापकानामपचिकीर्षा, रागश्चानुरागोऽनर्थविघातपूर्वकमर्थोपस्थापकानामुपचिकीर्षा। च न। काचित्। च। इच्छाऽभिलाषा। च। न। सः। शमप्रधानः शमः प्रधानं स्थायी यत्र तथोक्तः। शान्तः। रसः। मुनीन्द्रैः। कथितः॥' इति अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः। तल्लक्षणं चोक्तं प्राक्॥'

इत्येवंरूपस्येत्येवम्प्रकारेण निदर्शितस्वरूपस्य। शान्तस्य। आत्मस्वरूपापत्तिलक्षणायामात्मनः स्वस्य ब्रह्मण इति यावत्। पारमार्थिकदशायां स्वस्य ब्रह्माभेदात्, स्वरूपं तस्यापत्तिर्बोधमहिम्ना विस्मरणापनयनं सैव लक्षणं यस्यास्तस्याम्। मोक्षावस्थायाम्। एव 'न तु ततः पूर्वमपी'ति शेषः। प्रादुर्भावात्। तत्र तस्मिन् शान्तस्य प्रादुर्भाव इति यावत्। सञ्चार्य्यादीनां व्यभिचारिभावादीनां हर्षादीनामिति यावत्। आदिना क्वचिदुद्दीपनविभावानां ग्रहणम्। अभावादसम्भवात्। कथम्। रसत्वम्। इतीत्येवं बुभुत्सायामिति भावः। उच्यते–२७० युक्तेत्यादिना।

२७० यतो यस्मात् कारणात्। यः। युक्तवियुक्तदशायाम्। युक्तो योगारूढः 'यदा हि नेन्द्रियार्थेषु न कर्म्मस्वनुरज्यते। सर्वसङ्कल्पसन्न्यासी योगारूढस्तदोच्यते॥'इत्युक्तलक्षणो ज्ञानिविशेष इति यावत्, वियुक्तो विशिष्टो युक्तः 'योगिनामपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मतः॥' इत्युक्तलक्षणो युक्ततम इति यावत्, तयोर्दशाऽवस्था, तस्यां तथोक्तायाम्। दशा चान्तरालभवैवाऽत्र ग्राह्या, अत एवैकवचनं सङ्गच्छते। तथा च–युक्त(योगारूढ)दशात उत्कृष्टा, वियुक्त (युक्ततम) दशातः पुनरपकृष्टा या दशा तस्यामित्यर्थः। अवस्थितः। शमः। अत एवोक्तं–'योगारूढस्य तस्यैव शमः कारणमुच्यते'इति। सः। एव न त्वन्यः। रसतामास्वादनीयताम्। एति लभते। तत्तस्मात् कारणात्। अस्मिन् शमस्थायिके शान्ते रस इत्यर्थः। सञ्चार्यादेः। आदिपदेन विभावस्य ग्रहणम्। च। स्थितिः। विरुद्धा। न भवतीति शेषः। इदमुक्तम्–विषयेभ्यः समाकृष्य परमात्मनि मनसः प्रणिधीयमानत्वे शमः आलम्बनादिना सम्भूय रसत्वमुपपद्यते। तदस्मिन् निर्वेदादेः सम्भवो निर्बाधः, निर्विण्णस्यैव मनो विषयेभ्यो व्यावर्त्य परमात्मनि प्रणिधीयते। इति। अत्रार्याछन्दः, तल्लक्षणं चोक्तं प्राक्॥ २८०॥

यश्चास्मिन् सुखाभावोऽप्युक्तः। तस्य वैषयिकसुखपरत्वान्न विरोधः।

उक्तं च-

'यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥'
'सर्वाकारमहङ्काररहितत्वं व्रजन्ति चेत्।
अत्रान्तर्भावमर्हन्ति दयावीरादयस्तदा॥' इति च।

आदिशब्दात् धर्मवीरदानवीरदेवताविषयरतिप्रभृतयः।

तत्र देवताविषया रतिर्यथा—

'कदा वाराणस्यामिह सुरधुनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम्।

---

ननु शमस्य सुखरूपतया 'न सुखं'मिति कथं सङ्गमिष्यते इत्याशङ्कयाह–यश्चेत्यादिना।

यः। च। अस्मिन् शान्तरसे सति। सुखाभावः। अपि। उक्तः 'न सुख'मित्यादिना उक्तः। तस्य शान्तोदये प्रत्याख्यातस्य सुखस्येति भावः। वैषयिकसुखपरत्वात्। न नैव। विरोधः। अयम्भावः–'न सुख' मित्यादिना प्रत्याख्यातं यत्सुखं तत् वैषयिकं, यच्च शमे सुखं तत्ततोऽतिरिक्तमितिन कश्चिद्विरोधः। इति।

नन्वेवं कथमवगतमित्याह–उक्तम्। च। आचार्य्यैरिति शेषः।

किमित्याह–यत्। च। कामसुखं कामानां (भोगादिना) सुखमिति तथोक्तम्। लोके मर्त्यलोके सम्भवतीत्यर्थः। यत्। च। दिव्यं दिवि भवं स्वर्गगतैर्भोग्यमिति यावत्। महत्। सुखम्। 'श्रूयते'इति शेषः। एते 'ते' इति शेषः। तृष्णाक्षयसुखस्य तृष्णाया ऐहिकामुष्मिकविषयभोगविषयाया अभिलाषायाः क्षय एकान्ततोऽपनोदनं तस्य सुखमानन्दवल्ल्यादिषु ब्रह्मानुभवजन्य आनन्दस्तस्य। षोडशीम्। कलामंशम्। न। अर्हतः। अयम्भावः– 'तृष्णाक्षयो हि'विषया विनिवर्त्तन्ते निराहारस्य देहिनः। रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते॥' इत्युक्तदिशा परमात्मसाक्षात्कारानन्तर एवेति तस्मिन् सति ऐहिकं चामुष्मिकं च सुखं सर्वं विरसायते। अत्र सर्वाऽऽनन्दवल्लीप्रमाणम्॥'इति। अथ 'चेत्। सर्वाकारं सर्वाकारश्चेष्टा यत्र, तद् यथा भवेत्तथा। 'आकाराविङ्गिता कृती।'इत्यमरः। सर्वं देहेन्द्रियादि आकार आश्रयो यस्य तद् यथा भवेत्तथेति वा। अहङ्काररहितत्वम्। व्रजन्ति 'दयावीरादिनायका' इति शेषः। तदा। अत्रास्मिन् शान्तरसे। दयावीरादयः। अन्तर्भावम्। अर्हन्ति॥' इति। च।

आदिशब्दोपादानप्रयोजनं दर्शयति–आदिशब्दादित्यादिना।

आदिशब्दादादिशब्दमुपादायेत्यर्थः। धर्मवीरदानवीरदेवताविषयकरतिप्रभृतयः। 'उपादीयन्ते' इति शेषः। प्रभृतिशब्देन च धर्मविषयकरत्यादिनां ग्रहणम्। इदं च वोध्यम्–दयावीरादिनायका यदा देहेन्द्रियादिविषयकाभिमानशून्या भवन्ति, तदा तेषां दयावीरादयः शान्तरसस्वरूपा एव भवन्ति। तत्र यथा–दयावीरो बुद्धस्य, धर्मवीरो जनकस्य, दानवीरो दधीचः, देवतारतिः प्रह्लादस्य इति।

एतेषां शान्तरसस्वरूपत्वं दिङ्मात्रं निर्दिशन्नाह–तत्र तेषु निरहङ्कारनायकनिष्ठदयावीरादिषु मध्य इत्यर्थः। देवताविषया। रतिः। यथा। 'कदा..' इत्यादौ।

'कदा कस्मिन् सुसमय इत्यर्थः। वाराणस्यां काश्याम्, तदधिकरणक इति यावत्। इहास्मिन्। सुरधुनीरोधसि सुरधुन्या सुराणां धुनीं नदी तस्या गङ्गाया रोधस्तटं तत्र। 'तटिनी ह्रादिनी धुनी।' 'कूलं रोधश्च तीरं चे'त्यमरश्च। वसन्। कौपीनं चीरं गुह्यं वा। वसानो दधान आच्छादन्वा। 'वस आच्छादने' इत्यस्मात् शानचि रूपमिदम्। शिरसि

अये गौरीनाथ ! त्रिपुरहर ! शम्भो ! त्रिनयन !
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ १५५ ॥'

अथ मुनीन्द्रसम्मतो वत्सलः—

२७१ स्फुटं चमत्कारितया वत्सलं च रसं विदुः ।
स्थायी वत्सलतास्नेहः पुत्राद्यालम्बनं मतम् ॥ २८१ ॥
उद्दीपनानि तच्चेष्टा—विद्याशौर्यदयाऽऽदयः ।
आलिङ्गनाङ्गसंस्पर्श—शिरश्चुम्बनवीक्षणम् ॥ २८२ ॥
पुलकानन्दवाष्पाद्या अनुभावाः प्रकीर्त्तिताः ।

---

भाल इति भावः । **अञ्जलिपुटम्** । **निदधानः** । अये (प्रेमामन्त्रण इदम्) । 'अये अयि चानुनये' इति गोपालः । **गौरीनाथ** गौर्याः पार्वत्याः शुद्धाया विद्याया वा नाथो वल्लभस्तत्सम्बुद्धौ तथोक्त ! **त्रिपुरहर** त्रिपुरस्य तदाख्यासुरस्य त्रिपुराणां स्थूलसूक्ष्मकारणभेदात् त्रिविधानां शरीराणां वा हरस्तत्सम्बुद्धौ तथोक्त ! **शम्भो** शङ्कर ! **त्रिनयन** सूर्य्यचन्द्र पावकात्मकनेत्रत्रयशालिन्! त्रिषु कालेषु लोकेषु वा नयनं दृष्टिर्ज्ञानमिति यावत्, यस्य तत्सम्बुद्धौ तथोक्त ! **प्रसीद** प्रसन्नो भव । इतीत्येवम् । **क्रोशन्** उच्चैर्घोषन् । **निमिषं** निमेषोन्मीलनपरिमितं कालम् । **इव** (इदमुत्प्रेक्षार्थम्) । **दिवसान्** प्रारब्धभोगावसरव्यञ्जकान् वारान् । **नेष्यामि** अपनेष्यामि । कस्यचिच्छैवस्येयमुक्तिः । अत्र शार्दूलविक्रीडितं छन्दः । तल्लक्षणं चोक्तं प्राक् ॥ १५५ ॥'

इदं बोध्यम्—अत्र हि—गङ्गातटनिवासपूर्वकं कौपीनाच्छादनमात्रेच्छयाऽहङ्काररहित्यं व्यज्यते इत्यस्य शान्तत्वानतिरेकित्वम् । इति । इदमपि बोध्यम्—यदि तु देवताविषया रतिरभिमानपुरस्कृता, तदा तु न शान्तव्यपदेशार्हा । यथा-'सुरस्रोतस्विन्याः पुलिनमधितिष्ठन्नयनयोर्विधायान्तर्मुद्रामथ सपदि विद्राव्य विषयान् । विधूतान्तर्ध्वान्तो मधुरमधुरायां चिति कदा निमग्नः स्यां कस्याञ्चन नवनभस्याम्बुदरुचि ॥' इति ।

यद्यपि न सकलसम्मतो वत्सलो रसः, किन्तु केवलं मुनीन्द्रसम्मतः, तथाऽपि तदनिरूपणे तावता त्रुटिरिति तन्निरूपयितुमुपक्रमते—अथेत्यादिना ।

**अथ** सिद्धान्ततयाऽभिमतानां शृङ्गारादीनां निरूपणानन्तरमित्यर्थः । **मुनीन्द्रसम्मतः** मुनीन्द्रः कश्चित् प्रागालङ्कारिको जातस्तस्य सम्मतः । एतेन अत्र स्वसम्मतेरपि अभावः सूचितः । **वत्सलस्तन्नामा रसः** । 'निरूप्यते' इति शेषः । २७१ **स्फुटं**..इत्यादिना ।

२७१ **स्फुटं** न तु सन्दिग्धमिति भावः । **चमत्कारितया** चमत्कारः काव्यजीवातू रसत्वमिति यावत् सोऽस्मिन् अस्तीति तस्य भावस्तत्ता तया, यद्वा—चमत्कुरुते सहृदयानुभवतया प्रकाशते सहृदयान् वाऽऽह्लादयतीति एवम्भूततयेत्यर्थः । **वत्सलम्** । **च** अपीत्यर्थः । **रसम्** । **विदुः** । 'मुनीन्द्रप्रभृतय' इति शेषः । अस्य च—**वत्सलतास्नेहो** वत्सलताऽभिनिविष्टः स्नेह इत्यर्थः । असमस्तपाठाङ्गीकारे तु—वत्सलता नाम स्नेह इत्यर्थः । **स्थायी** स्थायिभावः । **पुत्रादि** । आदिपदेन कनिष्ठभ्रात्रादीनां ग्रहणम् । **आलम्बनम्** आलम्बनविभाव इत्यर्थः । **मतम्** । **तच्चेष्टाविद्याशौर्य्यदयाऽऽदयः** तस्य पुत्रादेश्चेष्टाविद्याशौर्य्यदयाऽऽदयः । चेष्टा च विद्या च शौर्य्यं च दया चेति ता आदौ येषां ते । आदिना दाक्षिण्यादीनां ग्रहणम् । **उद्दीपनानि** तदाख्या विभावाः । **आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनवीक्षणम्** । अत्र समाहारेण क्लीबत्वमेकवचनान्तत्वं चेति बोध्यम् । **तथा** । **पुलकानन्दवाष्पाद्या** पुलकश्च (रोमोद्गमश्च) आनन्दवाष्पमानन्दहेतुकमश्रु चेति ते आद्या येषाम् (अभिनन्दनादीनां) ते तथोक्ताः । **अनुभावाः** । **प्रकीर्त्तिताः** ।

सञ्चारिणोऽनिष्टशङ्का-हर्षगर्वादयस्तथा ॥ २८३ ॥
पद्मगर्भच्छविर्वर्णो दैवतं लोकमातरः।

यथा—
'यदाह धात्र्या प्रथमोदितं वचो ययौ तदीयामवलम्ब्य चाङ्गुलीम्।
अभूच्च नम्रः प्रणिपातशिक्षया पितुर्मुदं तेन ततान सोऽर्भकः ॥ १५६ ॥'

---

अनिष्टशङ्काहर्षगर्वादयोऽनिष्टस्य शङ्केति अनिष्टशङ्का, सा च हर्षश्च गर्वश्चेति ते आदौ येषां ( जाड्यादीनाम् ) ते। सञ्चारिणो व्यभिचारिभावाः। 'प्रकीर्तिता' इति पूर्वतोऽन्वेति। तथा-पद्मगर्भच्छविः पद्मगर्भस्येव छविर्यस्येति तथोक्तः। वर्णः। एवम्-लोकमातरः। दैवतम्। 'प्रकीर्तिता' इत्येव लिङ्गवचनविपरिणामेनान्वेति ॥ २८१ ॥ २८२ ॥ २८३ ॥

अत्र प्राञ्चः-'वत्सलो रसोऽप्यपरोऽवश्यमङ्गीकार्य्यः। रसत्वापरपर्य्यायाश्चमत्कारितायाः स्फुटं प्रतीयमानत्वात्।' इत्याहुः। नव्याः पुनः-'( यदाह धात्र्या.. ) इत्यादौ वात्सल्यलक्षणा रतिरेव जागर्त्ति, न तेन वत्सलो रसोऽङ्गीकरणीयः, भावत्वेनैव गतार्थत्वात्। यदि स च रसव्यपदेशमर्हति तदा भगवदालम्बनो रोमाञ्चाद्यनुभाविनो हर्षादिसञ्चारितो भागवतादिश्रवणसमये भगवद्भक्तैः स्फुटमनुभूयमानो भक्तिरसः कुतो न स्यात्। भगवदनुरागरूपा भक्तिश्चात्र स्थायिभावः। नचायं शान्तेऽन्तर्भावमर्हति, अनुरागस्य वैराग्यविरुद्धत्वात्। नन्वसौ अपि रसत्वव्यपदेशं लभतां, का क्षतिः? इति चेत्, न; अन्यथैव उपपत्तौ मुनेः शासनातिक्रमेण रसानां नवत्वाधिककल्पने मानाभावात्।' इति। अन्ये तु-'एषोऽपि रस इति व्यपदेशमर्हति, 'करुणवात्सल्य ( वत्सल ) भयानकेष्वनुदात्तस्वरितकम्पितवर्णैः पाठ्यमुपपादयती'त्यभिदधता मुनिनाऽस्यापि प्रकारान्तरेण स्वीकृतत्वात्। न च वात्सल्यमपि रतिः, मनसः प्रवणायितत्वाविशेषात्। इति वाच्यम्, दयाऽऽद्युत्साहस्याप्येवं रतित्वोपपत्तौ काव्यमार्गस्याकुलीभावप्रसङ्गात्। 'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः। भावः प्रोक्तः'इति नयेन भक्तेर्व्यभिचारित्वेन कण्ठतः स्वीकृतत्वात्तस्या रसव्यपदेशस्तु सम्भवत्येव, न च 'आदिशब्दात् गुरुनृपपुत्रादिविषयाया अपि रतेर्व्यभिचारित्व'मिति नयेन वात्सल्यस्यापि व्यभिचारित्वमेव मन्तव्यमिति वाच्यम्, तत्र 'पुन्नाम्नो नरकात् घोरात् त्वमेव त्रातुमीश्वरः। आयुष्मानेधि दयया तातं तस्य परात्मनः ॥'इत्याद्युदाहरणाया एव पुत्रविषयाया रतेर्व्यभिचारित्वेनाभिमननात्। न च 'यदाह धात्र्या..'इत्यादावपि रतेरिति वाच्यम्, अत्र ततो वैलक्षण्यस्य सहृदयहृदये जागरूकत्वात्।'इति व्याचक्षते।

उदाहरति-यथा-'यदाह..'इत्यादिना।

'स रघुनामेत्यर्थः। अर्भको बालः। 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः।'इत्यमरः। धात्र्या स्तन्यपानार्थं नियुक्तयोपमात्रेत्यर्थः। 'धात्री स्यादुपमाताऽपि..'इत्यमरः। प्रथमोदितं प्रथममुदितमुक्तम्। यत् 'अयि तात! शिशुरेष प्रणमति'इत्यादिरूपमित्यर्थः। वचः। आह। तदीयां तस्या धात्र्या इयं तां तथोक्तां, धात्रीसम्बन्धिनीमिति भावः। अङ्गुलीम्। अवलम्ब्य गृहीत्वेत्यर्थः। च। ययौ प्राप्तवानभूत्। प्रणिपातशिक्षया प्रणिपातस्य पूज्यानां पुरतः प्रणमस्य शिक्षा एवं प्रणामः कर्त्तव्य इति शिक्षा तया। च। नम्रः। अभूत्। तेन। पितुर्दिलीपस्येत्यर्थः। मुदं हर्षम्। ततान वर्धितवान्। रघुवंशस्येदं पद्यम्। अत्र वंशस्थं वृत्तम्, तल्लक्षणं चोक्तं यथा-'जतौ तु वंशस्थमुदीरितं जरौ।' इति ॥ १५६ ॥

इदम्बोध्यम्-अत्र दिलीपवात्सल्यस्य बाल्यावस्थो रघुरालम्बनम्, तदीयमीहितमुद्दीपनं विभावः, आक्षेप्यो मुखविकाशादिरनुभावः, तेन तद्विषयकौत्सुक्यादयः सञ्चारिणश्चेत्येषां संयोगाद्वत्सलो व्यज्यते। इति। यथा वा-'एह्येहि वत्स! रघुनन्दन! पूर्णचन्द्र! चुम्बामि मूर्धनि चिरं च परिष्वजे त्वाम्। आरोप्य वा हृदि दिवानिशमुद्वहामि वन्देऽथवा चरणपुष्करकद्वयं ते ॥' इति, अत्र हि दशरथवात्सल्यस्य राम आलम्बनं तन्मधुरमधुरदर्शनमुद्दीपनमत्युत्कण्ठयाऽऽह्वाना-द्याक्षिप्तौत्सुक्याद्यनुभाव आवेगादिः सञ्चारी चेत्येतैरभिव्यक्तं वात्सल्यं वत्सलरसतामापद्यमानस्तदभेदाध्यवसायेन सचेतसां वात्सल्यं तदात्मना तैरनुभूयते। अथ भ्रात्रालम्बनोऽयं यथा-'बालोऽसि मुग्धमधुरोऽसि सुखोचितोऽसि दूरं प्रयान्तम-

**एतेषां रसानां च परस्परविरोधमाह–**

**२७२ आद्यः करुणवीभत्स–रौद्रवीरभयानकैः ॥ २८४ ॥**
**भयानकेन करुणे–नापि हास्यो विरोधभाक् ।**
**करुणो हास्यशृङ्गार–रसाभ्यामपि तादृशः ॥ २८५ ॥**
**रौद्रस्तु हास्यशृङ्गार–भयानकरसैरपि ।**
**भयानकेन शान्तेन तथा वीररसः स्मृतः ॥ २८६ ॥**
**शृङ्गारवीररौद्राख्य–हास्यशान्तैर्भयानकः ।**
**शान्तस्तु वीरशृङ्गार–रौद्रहास्यभयानकैः ॥ २८७ ॥**
**शृङ्गारेण च वीभत्स इत्याख्याता विरोधिता ।**

---

नुयाहि न मां प्रयाहि । हा हन्त ! लक्ष्मण ! किमित्यनुयासि तात ! स्वेदाञ्चितं मुखमिदं श्रमितोऽसि कष्टम् ॥' इति । प्रजाऽऽलम्बनो यथा–'आर्य्य ! ननु रामभद्र ! इत्येव मां प्रत्युपचारः शोभते तातपरिजनस्य ।' इति । इदम्बोध्यम्–यदि पुत्रादेः पित्रादौ प्रेम तर्हि न तस्य वत्सलस्थायित्वम्, तत्र भक्तेरेव साम्राज्यात् । यदि तु पित्रादेः पुत्रादौ तदेव तस्य वात्सल्यात्मनाऽवतारः, युज्यते च वत्सलस्थायिभावत्वम् । ननु तर्हि 'रामभद्र..' इत्यादौ कथं कञ्चुकिनो रामालम्बनः, रामस्य वा कञ्चुक्यालम्बनोऽयं रस इति चेत् ? अत्रापि कञ्चुकिनो रामवात्सल्यं, रामस्य च कञ्चुकिदीनप्रजात्वं मत्वैवेति प्रतिभासते । यद्यपि रामस्य कञ्चुकिनं प्रति 'आर्य्ये'ति सम्बुद्ध्या पूज्यत्वप्रत्यायनमिति वक्तुं सुशकम् । तथाऽपि तस्य तं प्रति तद्भीतिं निवर्त्तयितुमेव 'आर्य्य' इति सम्बुद्धिः । अत एव–'यथाऽभ्यस्तमभिधीयताम्' इत्युत्तरग्रन्थः सङ्गच्छते । परिपालनीयमनुचरमपि 'आर्य्य' इति सम्बुद्धिः परिपोषयति रामगतं तद्विषयकं वात्सल्यम् । इति मुनीन्द्रमतानुमन्तारः । इति ।

रसानामेकत्र समावेशो विभाव्य विधेय इत्यनुपङ्गतो बोधयन् वत्सलस्य मतान्तरेणैव रसत्वमिति निर्दिशंश्च तेष कस्य केनैकत्र न समावेशौचित्यमिति सन्देहमपाकर्त्तुं प्रतिजानीते–**एतेषा**मित्यादिना ।

**एतेषा**मभिहितानां नवाना।मित्यर्थः । एतेन–वत्सलस्य मतान्तरेणैव रसत्वमिति सूचितम् । **रसानां** शृङ्गारादिशान्तान्तानामित्यर्थः । **च** । **परस्परविरोधं** परस्परं विरोधो विरुद्धसत्ताकत्वं तमिति तथोक्तम् । **आह**–**२७२आद्यः**...इत्यादिना ।

२७२ **आद्यो** मुख्यः प्रथममभिहितो वेत्यर्थः । शृङ्गारो नाम रस इति भावः । **करुणवीभत्सरौद्रवीरभयानकैः**'वृद्धो यूने'त्यादिनिर्देशात् । अत्र सहार्थे तृतीया । एवं पुरस्तात् 'विरोधभाक्'इति परेणान्वेति । **हास्यः** तन्नामा रस इत्यर्थः । **भयानकेन** । **करुणेन** । **अपि** । **विरोधभाक्** । **करुणः** । **अपि** पुनरित्यर्थः । **हास्यशृङ्गाररसाभ्याम्** । **तादृशो** विरोधभागित्यर्थः । **रौद्रः** । **तु** पुनः । **हास्यशृङ्गारभयानकरसैः** । **अपि** विरोधभाक् सम्भाव्यत इत्यर्थः । 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि ।'इत्यमरः । **वीररसः** । **भयानकेन** । **तथा** । **शान्तेन** । 'विरोधभाग्'इति पूर्वतोऽनुवृत्तम् । **स्मृतः** । **भयानकः** । **शृङ्गारवीररौद्राख्यहास्यशान्तैः** शृङ्गारवीररौद्रहास्यशान्तैस्समित्यर्थः । 'विरोधभाक्'इति पूर्वतोऽन्वेति । **शान्तः** । **तु** पुनः । **वीरशृङ्गाररौद्रहास्यभयानकैः** । 'विरोधभा'गिति पूर्वतोऽन्वेति । **बीभत्सः** । **च** । **शृङ्गारेण**'विरोधभा'गिति शेषः । **इति** । एवमिति शेषः । **विरोधिता** । **आख्याता** अभिहितेति भावः । इदम्बोध्यम्–अत्र शृङ्गारादीनामेव रसानामन्योऽन्यं विरोधः प्रदर्शितः, तस्मात् वत्सलस्य रसत्वं न कविराजाभिमतम् । एषां च यथा एकत्र विरोधिनोर्न भवेत् समावेशस्तथा यतितव्यम् । मुनीन्द्रमतानुयायिनस्त्वाहुः–शृङ्गारादीनामेव रसानां विरोधदर्शनात् वत्सलस्य च तदभावान् कविराजानुमतो वत्सलो रस इति मन्दमुक्तम् । एवं सति अद्भुतस्यापि रसत्वं कविराजाननुमतं स्यात्, तदिति–यथाऽद्भुतस्य न केनापि विरोधः, तथा वत्सलस्यापि । शृङ्गारेण यद्यपि विरोधः, किन्त्वसावपि अद्भुतस्य शान्तेनेवाभासमात्रः । इति ।

आद्यः शृङ्गारः। एषां च समावेशप्रकारो वक्ष्यते।

२७३ कुतोऽपि कारणात्क्वापि स्थिरतामुपयन्नपि ॥ २८८ ॥
उन्मादादिर्न तत्स्थायी न पात्रे स्थैर्य्यमेति यत्।

यथा विक्रमोर्वश्यां चतुर्थेऽङ्के पुरूरवस उन्मादः।

अथ भावादीनामपि रसत्वमाह—

२७४ रसभावौ तदाभासौ भावस्य प्रशमोदयौ ॥ २८९ ॥
सन्धिः शबलता चेति सर्वेऽपि रसनाद्रसाः।

---

सन्देहापनयनाय कारिकास्थमाद्यपदार्थं स्पष्टयति—आद्यः। शृङ्गारः। इति भावः।

नन्वेषां क्वचित्समावेशोऽप्यनुज्ञेय इत्याशङ्कयाह—एषामित्यादिना।

एषां विरुद्धतयाऽभिहितानां शृङ्गारकरुणादीनां रसानामित्यर्थः। च। समावेशप्रकारः। वक्ष्यते 'सप्तमे परिच्छेदे दोषाणां प्रतिप्रसवाभिधानावसरे' इति शेषः।

ननु रत्यादेरिवोन्मादादेरपि क्वचित् सम्भवे उन्मादादेरपि स्थायित्वं मन्तव्यमिति चेन्नेत्याह—२७३ कुतोऽपीत्यादिना।

२७३ यत् यस्मात् कारणात्। पात्रे आलम्बने तदभेदाध्यासाच्च सामाजिके इति भावः। 'योग्यभाजनयोः पात्रम्' इत्यमरः। उन्मादादिरुन्मादप्रमादादिः। उन्मादप्रमादयोर्भेदस्तु—'उन्मादश्चित्तविभ्रमः।' 'प्रमादोऽनवधानता' इत्यमराद्युक्त्या बोद्धव्यः। स्थैर्य्यं स्थिरतामव्यभिचारितया सर्वत्र सम्भवमिति यावत्। न। एति प्राप्नोति। तत् तस्मात् कारणात्। 'त्वि'ति त्वपपाठः। क्वापि कस्मिंश्चिदालम्बने। यद्वा-कस्याञ्चिन्मन्मथाद्युद्रेकदशायामित्यर्थः। कुतोऽपि कस्मादपि अवितर्कितात्। कारणात्। स्थिरतामवस्थितताम्। उपयन् प्राप्नुवन्। अपि किं पुनरनुपयन्निति तत्त्वम्। 'अपि सम्भावनाप्रश्नशङ्कागर्हासमुच्चये। तथा युक्तपदार्थे च कामचारक्रियासु च ॥' इति विश्वः। न। स्थायी स्थायिभावव्यपदेशार्ह इति भावः। इदमुक्तम्—यो यस्य रसस्य यावत्सत्त्वं सर्वत्रैव न तु कस्मिंश्चिदेवालम्बनेऽवतिष्ठते स तस्य स्थायीति वक्तुं शक्यते। उन्मादादिस्तु न तथाभूत इति नास्य स्थायिभावौचित्यम्। इति ॥ २८८ ॥

उदाहरति—यथेत्यादिना।

यथा। विक्रमोर्वश्यां तदाख्ये त्रोटके। चतुर्थे। अङ्के। पुरूरवसस्तदभिधेयस्य चन्द्रवंशभूषणस्य राजर्षेरित्यर्थः। उन्मादः। अयम्भावः—यथा शृङ्गारालम्बनस्य पुरूरवस एवोन्मादः, न त्वेवमपरस्य कस्यापीति नास्य स्थायित्वम्। इति।

काव्यात्मतयाऽभिमतो रसो न केवलं शृङ्गारादिमात्रव्यपदेश्यः, किन्तु 'रस्यते रस इति व्युत्पत्तियोगाद् भावतदाभासादयोऽपि गृह्यन्ते' इति पूर्वोक्तं सिंहनिरीक्षणन्यायेन निरीक्षमाणो व्यभिचारिभावादयोऽपि रसव्यपदेश्या इति समर्थयितुं प्रतिजानीते—अथेत्यादिना।

अथोन्मादादीनां स्थायित्वनिराकरणानन्तरम्। भावादीनां व्यभिचारिभावादीनाम्। अपि किं पुनस्तथातथा पुष्यमाणस्य रत्यादेः स्थायिभावस्येत्यर्थः। 'गर्हासमुच्चयप्रश्नशङ्कासम्भावनास्वपि।' इत्यमरः। रसत्वं रसस्वरूपत्वम्। आह—२७४ रसभावौ..इत्यादिना।

२७४ रसभावौ रसश्च भावश्चेति तौ। रसः शृङ्गारादिरूपः, भावः पुनर्निर्वेदादिरूप इति बोध्यम्। तदाभासौ तयो रसभावयोराभासौ इति तथोक्तौ। रसाभासो भावाभासश्चेत्यर्थः। भावस्य निर्वेदादे रसान्तरे च रत्यादेरपीति भावः। प्रशमोदयौ प्रशमः शान्तिः, स चोदयश्चेति तथोक्तौ। तथा च—भावशान्तिर्भावोदयश्चेति निर्गलितोऽर्थः।

रसनधर्म्मयोगित्वाद् भावादिष्वपि रसत्वमुपचारादित्यभिप्रायः ।

भावादय उच्यन्ते—

२७५ सञ्चारिणः प्रधानानि देवादिविषया रतिः ॥ २९० ॥
उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ।

'न भावहीनोऽस्ति रसो न भावो रसवर्जितः । परस्परकृतासिद्धिरनयो रसभावयोः ॥'

---

**सन्धिः** प्रशमोदययोरन्तरालावस्थेति भावः । प्रशमोदययोर्भावसम्बन्धित्वात्सन्धेरपि भावसम्बन्धित्वमित्यूह्यम् । तथा च–द्वयोस्त्रयाणां वा भावानामाविर्भावतिरोभावयोर्मध्यावस्था भावसन्धिरिति निर्गलितोऽर्थः । **शबलता** सङ्करता । अत्र वचनविपरिणामेन भावानामित्यनुपञ्जनीयम् । **च** (समुच्चयार्थमिदम्)। **इति** इत्येते । **सर्वे** रसभावरसाभास-भावाभासादय इत्यर्थः । **अपि** किं पुनरेको द्वौ वेति भावः । **रसनात्** 'रस्यते आस्वाद्यत' इति व्युत्पत्त्यवष्टम्भेना-स्वादनधर्मादुपचारात्तद्योगादित्यर्थः । **रसा** रसपदेनापि व्यपदेश्या इति भावः ॥ २८९ ॥

उक्तमर्थं तात्पर्य्यतो ग्राहयति–**रसनधर्म्मयोगित्वादि**त्यादिना ।

**रसनधर्म्मयोगित्वात्** रसनरूपस्य धर्म्मस्य ( रसत्वस्य ) योगित्वात्सम्बन्धित्वात् । **भावादिषु** । भावरसा-भासभावाभासादिषु । **अपि** किं पुनः शृङ्गारादिषु रसेष्वित्यर्थः । **उपचारात्** 'उपचारो हि नामात्यन्तं विशकलि-तयोः शब्दयोः सादृश्यातिशयमहिम्ना भेदस्थगनमात्रम्' इत्युक्ताद् व्यवहारविशेषात् तमवलम्ब्येत्यर्थः । अत्र ल्यपो लोपे पञ्चमी । **रसत्वम्** । **इति** । **अभिप्रायः** । इदमवोच्यम्–शृङ्गारादीनां रसत्वं तु भवत्येव, किन्तु रसाभासभावभावा-भासादीनामपि रसत्वं रसत्वाविशेषादौपचारिकम् । इति ।

ननु केषां भावत्वं केषां पुनराभासत्वमित्याशङ्क्योत्तरयितुं प्रतिजानीते–**भावादय** इत्यादिना ।

**भावादयो** भावरसाभासभावाभासभावशान्तिभावोदयभावसन्धिभावशबलता इत्यर्थः । **उच्यन्ते** 'क्रमात्'इति शेषः । २७५ **सञ्चारिणः**..इत्यादिना ।

२७५ **प्रधानानि** प्रधानभूता इत्यर्थः । अजहल्लिङ्गतयाऽस्य क्लीवत्वम् । **सञ्चारिणो** निर्वेदादयस्त्रयस्त्रिंशत् रत्यादयश्चानियते रसे नव दश वेति भावः । तथा–**देवादिविषया** देवादिपूज्यमात्रविषयेति मुनीन्द्रानुयायिनः, देवादिपूज्या पूज्यविषयेति प्रकाशकारानुयायिनः । **रति**र्भक्तिव्यपदेश्या प्रीतिरिति मुनीन्द्रानुयायिनः । प्रीतिरित्येवेति तु प्रकाशकारानुयायिनः । **उद्बुद्धमात्रः** । मात्रपदेन विभावादिभिः परिपोषितस्य रत्यादेर्भावत्वशङ्काऽपाकृतेति वेदितव्यम् । **स्थायी** रत्यादिरित्यर्थः । **च** (समुच्चयार्थमिदमव्ययम्) । **भावः** । **इति** । **अभिधीयते** । ननु रत्यादेः स्थायिनोऽपि भावत्वं पूर्वमभिहितम् । अथ कथमस्य भावत्वमपाक्रियते इति चेत् ? स्थायी भाव एव, यदि न विभावादिभिः परिपोषितः, तथात्वे तु तस्य रसत्वेनैवावस्थानात् । अत एव–'उद्बुद्धमात्रः' इत्युक्तमिति विभावनीयम् ॥ २९० ॥

ननु व्यभिचारिणां कथं प्रधानत्वं 'सञ्चारिणः प्रधानानि' इत्युक्त्वा दर्शितमिति चेत् ? एवमित्याह–'**न भावहीनोऽ-स्ति...**'इत्यादिना ।

'**भावहीनो** भावेन निर्वेदाद्यन्यतमेन हीनः शून्य इति तथोक्तः । निर्वेदाद्यन्यतमेनाप्यसम्पर्कीति भावः । **रसः** शृङ्गाराद्यन्यतमः । **न** । **अस्ति**'भवती'ति शेषः । **रसवर्जितो** रसेन शृङ्गाराद्यन्यतमेन वर्जितः शून्य इति तथोक्तः । शृङ्गाराद्यन्यतमेन केनापि असम्पर्कीत्यर्थः । **भावो** निर्वेदाद्यन्यतमः । **न** । तस्मात्–**अनयोः** परस्परमाश्रितयोः । **रसभावयोः** । **परस्परकृता** परस्परं सिद्धसाधकाभ्यामिवान्योऽन्यं कृता रसभावाभ्यां सम्पादितेति तथोक्ता ।

इत्युक्तदिशा परमालोचनया परमविश्रान्तिस्थानेन रसेन सहैव वर्त्तमाना अपि राजानुगतविवाह-प्रवृत्तभृत्यवदापाततो यत्र प्राधान्येनाभिव्यक्ता व्यभिचारिणो देवमुनिगुरुनृपादिविषया च रतिरुद्बुद्धमात्रा विभावादिभिरपरिपुष्टतया रसरूपतामनापद्यमानाश्च स्थायिनो भावा भावशब्दवाच्याः।

तत्र व्यभिचारी यथा--

---

**सिद्धिः** स्वरूपसत्ता भवतीत्यर्थः।' **इत्युक्तदिशा**। इत्येवं प्रदर्शितेन भरतादिनयेनेत्यर्थः। **परमालोचनया** परमा सिद्धान्तरूपा याऽऽलोचना मीमांसा तया तथोक्तया। **परमविश्रान्तिस्थानेन** परमा स्वप्नावस्थातोऽपि विलक्षणाऽसौ विश्रान्तिर्विश्रामश्चेतसः स्वव्यापारतः पराङ्मुखत्वमिति, सैव स्थानं स्वरूपस्थितिर्यस्य तेन तथोक्तेन। यद्वा-परमा भावानां परिपाककालीनतयोत्कृष्टा विश्रान्तिरात्मनो विश्रामः ब्रह्मणीव चेतःसमाधिरिति यावत्, सैव स्थानं यस्य तेनेति पूर्ववत्। **रसेन**। 'सहयुक्तेऽप्रधाने।' २।३।१९ इति तृतीया। एतेनात्र रसस्याप्राधान्यमभिव्यञ्जितम्। **सह**। **एव** न त्वेकाकित्वेनेत्यर्थः। **वर्त्तमानाः**। **अपि** किं पुनरवर्त्तमाना इत्यर्थः। **राजानुगतविवाहप्रवृत्तभृत्यवत्** राजानमनुगता इति राजानुगताः, ते च विवाहे विवाहनिमित्तककार्य्यसम्पादने प्रवृत्ता इति विवाहप्रवृत्ताः, ते चेति राजानुगतविवाहप्रवृत्ताः, तेऽमी भृत्यास्ते इवेत्यर्थः। यथा राजपुरुषा विवाहनियुक्ता वा पुरुषास्तथेति भावः। **आपाततः**। **यत्र** यस्मिन् प्रबन्धे इत्यर्थः। **प्राधान्येन** रसोपकारमन्तरेणैवेति भावः। **अभिव्यक्ता** अभितो व्यक्ताः। **व्यभिचारिणो** निर्वेदादयोऽनियते रसे रत्यादयश्चेत्यर्थः। **देवमुनिगुरुनृपादिविषया**। आदिपदेन पूज्यान्तरग्रहणम्, प्रयोजनवशात् क्वचिदपूज्येऽपि कृतविषयेत्यर्थः। एवं च-'आदिशब्दान्मुनिगुरुनृपपुत्रादिविषया' इति प्रकाशोऽप्यनुकूलः। **रतिः**। **च** (इदं व्यभिचारिणामपि समुच्चायकम्)। **उद्बुद्धमात्रा** उद्बुद्धा किञ्चिदुद्भूता मात्रा येषां तथोक्ताः, अत एव-**विभावादिभिः**। **अपरिपुष्टतया** परिपुष्टत्वाभावेनेत्यर्थः। **रसरूपताम्**। **अनापद्यमाना** अलभमानाः। **स्थायिनो** रत्यादय इत्यर्थः। **च**। **भावा**। **भावशब्दवाच्याः**।

अयम्भावः-'किं रसेभ्यो भावानां निर्वृत्तिः? उत भावेभ्यो रसानाम्? आहोस्वित् परस्परसम्बन्धादेषामभिनिर्वृत्तिः? इति, दृश्यते हि भावेभ्यो रसानामभिनिर्वृत्तिः, न रसेभ्यो भावानाम्; नानाऽभिनयसम्बद्धान् भावयन्ति रसानिमान्। यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः॥ न भावहीनोऽस्ति रसो न भावो रसवर्जितः। परस्परकृता सिद्धिस्तयोरभिनये भवेत् (रतयो रसभावयोः)॥ व्यञ्जनौषधिसंयोगो यथाऽन्नं स्वादुतां नयेत्। एवं भावा रसाश्चैव भावयन्ति परस्परम् (एवमेव रसान् भावा भावयन्ति सचेतसः)॥ यथा बीजाद्भवेद्वृक्षो वृक्षात्पुष्पं फलं ततः। तथा मूलं रसाः सर्वे ततो भावा व्यवस्थिताः॥' इत्यादि भरताद्युक्तनयेन रसानां भावानां चान्योऽन्यं, निःसन्देहमुपकार्य्योपकारकत्वम्। अथाप्यत्र रसस्याप्राधान्यं भावस्य पुनः प्राधान्यमभिप्रेतम्, अत एव-सहयोगे रसशब्दस्य तृतीयाऽन्तत्वेन निर्देशो युज्यते। यद्यपि रसो नृपतिरिव विवाह इवेति प्रधानतया निर्देश्यः, तथाऽपि-भाव एव तथा निर्दिष्टः, अन्यथा तत्पुरुषसमास एव न सङ्गच्छेत, 'राजपुरुष' इत्यादौ पुरुष इवात्रापि भाव एव प्रधानभूतः। इदमुक्तम्-राजानमनुगता अपि तदीया जनाः यथाऽऽपाततः प्रधानभूताः, यथा वा विवाहे भृत्यतया प्रवृत्ता अपि जना अध्यक्षाः प्रतीयन्ते तथा रसमुपजीव्य वर्त्तमानोऽपि भाव आपाततः प्रधानभूतः। इति। अत एवोक्तं भरतेन-'योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः। शरीरं व्याप्यते तेन शुष्ककाष्ठमिवाग्निना॥' इति सर्वमवदातमितरत्।' इति।

क्रमात् व्यभिचार्य्यादिरूपं भावमुदाहर्त्तुमुपक्रमते-तत्रेत्यादिना।

**तत्र** तेषु व्यभिचार्य्याद्यनेकभेदभिन्नेषु भावेषु मध्य इति यावत्। **व्यभिचारी** तत्सञ्ज्ञको भाव इत्यर्थः। **यथा**-'एवंवादिनि..' इत्यादौ।

'एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी। लीलाकमलपत्राणि गणयामास पार्वती ॥ १५७॥'

इत्यत्रावहित्था। देवविषया रतिर्यथा मुकुन्दमालायाम्–

'दिवि वा भुवि वा ममास्तु वासो नरके वा नरकान्तक! प्रकामम्।
अवधीरितशारदारविन्दौ चरणौ ते मरणेऽपि चिन्तयामि ॥ १५८॥'

मुनिविषया रतिर्यथा–

'विलोकनेनैव तवामुना मुने! कृतः कृतार्थोऽस्मि निबर्हितांहसा।
तथापि शुश्रूषुरहं गरीयसी–र्गिरोऽथवा श्रेयसि केन तृप्यते ॥ १५९॥'

---

**'एवंवादिनि..'** उदाहृतपूर्वमत एव व्याख्यातपूर्वं च पद्यमिदम् ॥१५७॥ **इत्यत्र। अवहित्था** तन्नामा भावः। एवमन्येऽपि व्यभिचारिणो भावा उदाहृता अवगम्या इति दिक्।

देवविषयां रतिं भावत्वेनोदाहरति–**देवविषयेत्यादिना**।

**देवविषया** देवो दीव्यति स्वयं स्वातन्त्र्येण विकाशते इति, देवयति प्रकाशयतीति वा तथोक्तः, स्वप्रकाशात्मा सर्वप्रकाशको विष्णुरित्यर्थः, स विषयो यस्याः सेति तथोक्ता। **रतिः** प्रीतिर्भक्तिरिति यावत्। **यथा। मुकुन्दमालायां** तदाख्ये स्तोत्रे इति भावः। **'दिवि वा..'** इत्यादिना।

**'हे नरकान्तक** नरकासुरनिहन्तः! यद्वा–नरकस्य तन्नाम्नो लोकविशेषस्योपचारात्तदीयक्लेशजातस्येत्यर्थः। अन्तको विनाशको निवर्त्तक इति यावत्, तत्सम्बुद्धौ तथोक्त! 'नरकः पुंसि निरये देवारातिप्रभेदयोः।' इति मेदिनी। **दिवि** स्वर्गे। 'यदि मया किमपि सुकृतमुपासित' मिति शेषः। **वा। भुवि** पृथिव्याम्। 'यदि प्रारब्धमवशिष्टं भोक्तु' मिति शेषः। **वा। नरके** निरये 'यदि पापमाचरित' मिति शेषः। **वा** (अत्र निपाताधिक्यं सर्वथा क्लेशाभावं द्योतयति)। **प्रकामं** यथेष्टं चिरकालं यावदिति यावत्। **मम** त्वच्चिन्तनदृढव्रतस्यास्येति भावः। **वासो** निवासः। **अस्तु**। अन्ये त्वेवमपि व्याचक्षते–'दिवि मम वासः प्रकाममस्तु अथवा दिवि वा दिवीव स्वर्गे इवेति यावत्, मम वासः प्रकाममस्तु, अथवा दिवि वा (दिवीव) भुवि वा (भुवीव) नरके प्रकामं मम वासोऽस्तु। 'उपमायां विकल्पे वा' इत्यमरः।' इति। **अवधीरितशारदारविन्दौ** अवधीरितौ तिरस्कृतौ स्वप्रभया पराजिताविति यावत्, शारदारविन्दे शरत्कालविकाशिनी कमले याभ्यां तौ तथोक्तौ। **ते** तव। **चरणौ। मरणे** उपचारात् तदासन्नायामस्यामवस्थायाम्। **अपि** किं पुनः पूर्वं समर्थावस्थायामचिन्तयमितीत्यर्थः। **चिन्तयामि**। एतेनाजन्मनो मरणान्तं भक्तस्य परमात्मविषयिणी रतिः प्रतीयते। अत्र प्रतीपमलङ्कारः, उपमानस्यारविन्दस्यावधीरितत्वाभिधानात्। वैतालीयं छन्दः, तल्लक्षणं यथोक्तम्–'वैतालीयं द्विस्वरा अयुक्पादे, यगवसवोऽन्ते ल्गौ।' इति ॥ १५८॥'

यथा वा–'चित्रं महानेष तवावतारः क्व कान्तिरेषाऽभिनवैव भङ्गिः। लोकोत्तरं धैर्यमहो प्रभावः काऽप्याकृतिर्नूतन एष सर्गः ॥' इति। अत्र हि–'पश्यामि देवांस्तव देव! देहे सर्वांस्तथा भूतविशेषसङ्घान्।' इत्यादाविव विस्मयस्य व्यज्यमानत्वेऽपि महापुरुषविषयायाः स्तोतृगतभक्तेरेव प्राधान्येनाभिव्यक्तिः।

मुनिविषयां रतिमुदाहर्त्तुमुपक्रमते–**मुनिविषयेत्यादिना**।

**मुनिविषया** मुनिर्नारदः सविषयो यस्याः सा तथोक्ता। **रतिः** प्रीतिर्भक्तिरिति यावत्। **यथा–विलोकनेनैवेत्यादिना**।

**'हे मुने** नारदमुने! अत्र नामानुच्चार्य्य सम्बुद्धिः। 'आत्मनाम गुरोर्नाम...न गृह्णीयात्...' इत्युक्तदिशा तत्र गुरुत्वं सूचयति। **अमुना। निबर्हितांहसा** निबर्हितानि विनाशितान्यंहांसि पापानि अस्मादृशां दुरितानि येन तादृशेन, नतु सम्प्रति पापानि निवर्त्तयितुं प्रार्थनीयेनेति भावः। एतेन तस्यातिशयितं महत्त्वं सूचितम्। 'अंहो दुरितदुष्कृतम्।' इत्यमरः। **विलोकनेन** सानुकम्पं दृष्टिपातेनेति भावः। **एव**। किं पुनरातिथ्यग्रहणेनैतेनेति भावः। **कृतार्थः** कृतः पर्य्याप्तः सम्पन्न इति यावत्, अर्थः धर्मादिचतुर्वर्गरूपं प्रयोजनं यस्य तथोक्तः। परिपूर्णसर्वार्थ इत्यर्थः।

राजविषया रतिर्यथा मम—

'त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम्। न धत्ते शिरसा गङ्गां भूरिभारभिया हरः ॥१६०॥'

एवमन्यत्। उद्बुद्धमात्रः स्थायिभावो यथा—

'हरस्तु किञ्चित् परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥ १६१ ॥'

---

'युगपर्य्याप्तयोः कृतम्।' इत्यमरः। **कृतः। अस्मि।** किं पुनः प्रार्थयसे? इत्याह-**तथाऽपि** यद्यपि अहं सर्वतोभावेन सिद्धसर्वार्थस्त्वदवलोकनमात्रेण कृतोऽस्मि, तत् पुनरपीति भावः। **तव। गरीयसीः**अत्यन्तं महनीया इत्यर्थः। **गिरो** वाचः। **शुश्रूषुः** श्रोतुमिच्छुः। शृणोतेः सन्नन्तात् 'सनाशंसभिक्ष उः।' ३।२।१६८ इत्युः। **अहम्।** किमपि त्वदीयमर्थगरीयो वचः श्रोतुमिच्छुरस्मीति भावः। **अथवा। श्रेयसि** उपचारात् तल्लाभे। **केन। तृप्यते?** न केनापीति भावः। शिशुपालवधस्येदं पद्यम्, श्रीकृष्णचन्द्रस्य नारदमुनिं प्रत्युक्तिरियम्। वंशस्थावृत्तम्, तल्लक्षणं यथोक्तम्-'वंशस्था जतौ जरौ ॥' इति ॥ १५९ ॥

राजविषयां रतिन्निदर्शयन्नाह-**राजविषयेत्यादि**।

**राजविषया** राजा राजते स्वातन्त्र्येण शासनाद्यधिकारितया प्रकाशत इति तथोक्तः (कश्चित् सम्राट् इत्यर्थः), स विषयो यस्याः सेति तथोक्ता। **रतिः** प्रीतिः। **यथा। मम-'त्वद्वाजि..'** इत्यादौ।

'**हरः** शङ्करः। **त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलां** तव नृपतेर्वाजिराजिर्वाजिनामश्वानां राजिः पङ्क्तिस्तया निर्धूतो यो धूलीपटलस्तेन पङ्किला पङ्कवती तां तथोक्ताम्, त्वयि सैन्ये प्रयाति अश्वानां खुरक्षोदैरुत्थितेन धूलीपुञ्जेन पङ्किलतां नीतामिति भावः। **गङ्गाम्। भूरिभारभिया** भूरिर्भूयान् असौ भारो धूलीपुञ्जवर्धितो भारस्तस्य भीर्भयं तया। **न। शिरसा। धत्ते** अत एव कपर्दात्तांनिःसारयतीति भावः। अत्र स्वतो जगन्ति पवित्रयितुं समुल्लसन्त्या भगवत्या गङ्गाया अन्यथा वर्णनेन राजोत्कर्षस्य सूचनाद्राजविषया कवे रतिरभिव्यज्यते ॥ १६० ॥'

एवं गुरुप्रभृतिविषयाया अपि रतेरुदाहरणमवसेयमित्याह- **एवं** यथोदाहृतं तथेत्यर्थः। **अन्यद्**गुरुप्रभृतिविषयाया रतेरपि उदाहरणमवधेयमित्यर्थः। तत्र गुरुविषया दशरथस्य रतिर्यथा-'अरमद्गोत्रमहत्तरः क्रतुभुजामद्यायमाद्यो रविर्येज्वानो वयमद्य ते भगवती भूरद्य राजन्वती। अद्य स्वं बहु मन्यते सहचरैरस्माभिराखण्डलो येनैतावदरुन्धतीपतिरपि स्वेनानुगृह्णाति नः ॥' इति, पितृविषया श्रीरामस्य रतिर्यथा-'जीवत्सु तातपादेषु न वे दारपरिग्रहे। मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥' इति, मित्रविषया यथा-'अद्य राज्यं मया प्राप्तमद्य वाली हतो मया। हरीणामद्य पूज्योऽस्मि यद्भवान् मित्रतां गतः ॥' इति अत्र श्रीरामगता सुग्रीवविषया रतिः। अत्रैके-'आदिशब्दात्पुत्रादेरपि ग्रहणम्। तन्मते- स्वार्थलाभानुमोदिताया एव रतेर्यथा कथञ्चित् सञ्चारितयोदाहरणीयम्, नतु स्वाभाविक्या अपि तत्र वात्सल्यस्यैव साम्राज्यात्, वस्तुतस्तु-देवादिविषयेत्यत्रादिपदेन पूज्यानामेव ग्रहणं युक्तम्, नतु अपूज्यस्यापि; आदिपदस्य तत्सदृशस्यैव ग्राहकत्वात्। अत एव नीचजनेषु न रती रतिः, किन्तु दयैव। इति।

उद्बुद्धमात्रं स्थायिनमुदाहर्तुमुपक्रमते-**उद्बुद्धमात्र** इत्यादिना।

**उद्बुद्धमात्रो** नतु रसत्वं प्राप्त इति शेषः। **स्थायिभावः**। 'रत्याख्य' इति शेषः। **यथा-'हरस्तु..'** इत्यादौ।

'**हरः** क्षणं त्यक्तसमाधिर्योगिराजः शङ्कर इत्यर्थः। **तु** पुनः पार्वत्याः सपर्यां ग्रहीतुं क्षणं समाधित्यागावसरे मदनस्यामोघशरसन्धानानन्तरमिति यावत्। **चन्द्रोदयारम्भे** चन्द्रस्योदयः प्रकाशस्तस्यारम्भस्तस्मिन्। सतिसप्तमीयम्। **अम्बुराशिः** सागरः। **इव। किञ्चित्**'नतु सर्वथे'ति शेषः। एतेन-इतरजनेभ्यो वैलक्षण्यं सूचितम्। **परिवृत्तधैर्य्यः** परिवृत्तं निवृत्तं धैर्य्यं यस्य तथोक्तः। 'परिलुप्तधैर्य्य'इति पाठान्तरम्। **बिम्बफलाधरोष्ठे** बिम्बफलवदधरोष्ठो यस्य तादृशे। **उमामुखे** उमायाः पार्वत्या मुखं तत्रेति तथोक्ते। **विलोचनानि** नेत्राणि। **व्यापारयामास**। इदं बोध्यम्-'समुद्र इव प्रकृतितो गभीरधीरोऽपि महेश्वरः चन्द्रोदयस्येव उमामुखस्य विलोकना-

अत्र पार्वतीविषया भगवतो रतिः।

नन्वेवं प्रागुक्तं प्रपाणकरसवद्विभावादीनामेकोऽत्रावभासो रस इति, तत्र सञ्चारिणः पार्थक्याभावात् कथं प्राधान्येनाभिव्यक्तिरित्युच्यते—

२७६ यथा मरिचखण्डादेरेकीभावे प्रपाणके ॥ २९१ ॥
उद्रेकः कस्यचित् क्वापि तथा सञ्चारिणो रसे।

---

वसरे किञ्चित् निवृत्तधैर्य्य इवासीत्। एवं च महेश्वरस्य गाम्भीर्य्ये धैर्य्ये चातिशयिते, उमाया मुखं च चन्द्रोदय एव मनोरमायामासीदिति च सूचितम्। इति। उपमाऽत्रालङ्कारः। कुमारसम्भवस्येदं पद्यम्। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ॥१६१॥'

ननु कोऽत्रोद्बुद्धमात्रः स्थायिभाव इत्याशङ्कयाह—अत्रेत्यादिना।

**अत्र**ास्मिन्नुदाहृते पद्ये इति यावत्। **पार्वतीविषया**। **भगवतः** शङ्करस्य। **रतिः**। अयम्भावः—पार्वत्याः प्राथमिके दर्शने महेश्वरस्य तद्विषयतयोज्जृम्भमाणाऽपि रतिः, पार्वत्याः स्वकीयतयाऽगृहीतत्वेन शृङ्गारस्य स्थायित्वं प्राप्ता; इत्यसावुद्बुद्धमात्रैव। इति। सरस्वतीकण्ठाभरणकारास्त्वेवमाहुः—"अत्र बिम्बोष्ठादिभिर्मनोऽनुकूले पार्वतीमुखे विलोचनव्यापारानुमितो महेश्वरस्याभिलाषविशेषः सात्त्विको रत्युत्पादात्सुखानुभवस्योत्पत्तिमात्रमनुमापयति।" इति। उद्बुद्धमात्रो हासो यथा—'कनककलशस्वच्छे पीने पयोधरमण्डले नवजलधरश्यामामात्मद्युतिं प्रतिबिम्बिताम्। असितसिचयांप्रान्तभ्रान्त्या मुहुर्मुहुरुत्क्षिपञ्जयति जनितव्रीडाहासः प्रियाहसितो हरिः॥' इति। अत्र व्रीडाप्राधान्येन हरेर्हासो न रसरूपतां प्राप्तः। क्रोधो यथा—'समाधिभङ्गाय समीहमानं रतिप्रियं वीक्ष्य वसन्तमित्रम्। मनाङ् नतभ्रूलतिकोऽपि हन्त मुग्धोऽयमित्येव शमी शशाम॥' इति। अत्र क्रोधो जायमानोऽपि शान्तेः साम्राज्येन रसत्वाधिकाराच्च्यावितः। शोको यथा—'पविं पतन्तं परिलोक्य मूर्ध्नि हन्तेत्यनीचै रुरुदुः क्षणं ते। दैवानुकूल्येन चमूचरीणां च्युते तदा तत्र जहर्षुराराव॥' इति। अत्र शोकोऽपि उत्तरक्षण एव हर्षनिदानेन विकसत्कुड्मलतामेव नीतः। यथा वा शोकः—'हा सोम्म! अज्जउत्त! कहिं सि'[1]?' इत्यत्र सीतायाः। जुगुप्सा यथा—'विण्मूत्रे लेपयन्नङ्गं लालाभिः स्पृष्टभूतलः। हन्तेत्युद्घ्राणमह्नाय स्वार्भकोऽङ्के समुद्धृतः॥' इत्यत्र मातुः। भयं यथा—'व्योम्नः प्रपातेन विशीर्णवर्ष्मणो दैत्यस्य दीव्यन्तमुरस्यवेक्ष्य तम्। सर्वेऽपि नष्टा व्रजवासिनः क्षणं शक्तिः समानेतुमभून्न कस्यचित्॥' इति. अत्र तृणावर्त्तस्य मृतस्यापि शरीरपातेन गोपानां भयमुत्पद्यमानमपि श्रीकृष्णस्य कुशलितयोपलब्धौ न रसतां प्रतिपन्नः। विस्मयो यथा—'चित्रं महानेष तवावतारः क्व कान्तिरेषाऽभिनवैव भङ्गिः। लोकोत्तरं धैर्य्यमहो प्रभावः काऽप्याकृतिर्नूतन एष सर्गः॥' इत्युदाहृतपद्ये। शमो यथा—मृत्कुम्भवालुकारन्ध्रपिधानरचनार्थिना। दक्षिणावर्त्तशङ्खोऽयं हन्त चूर्णीकृतो मया॥'इत्युदाहृतपूर्वे। एवमन्यत्रापि।

सञ्चारिणः प्राधान्याङ्गीकारे पूर्वापरविरोधं दर्शयति—नन्वित्यादिना।

**ननु**। अत्रास्मिन्नेव ग्रन्थ इति यावत्। **प्रपाणकरसवत्** प्रपाणकन्नाम खण्डमरिचादीनां सम्मेलनं तदेव तस्य वा रसः स इवेत्यर्थः। **विभावादीनां** विभावानुभावसात्त्विकभावव्यभिचारिभावानामित्यर्थः। **एको**ऽपृथग्भूत इति भावः। **अवभासः** प्रतीतिः। **रसः**। **इति**। **उक्तम्**। **प्राक्** (३९) ३८।३९ इत्यादिना निरूपितमिति भावः। **तत्र** तस्मिन् तथा प्रतिपादिते रसत्वे इति यावत्। **सञ्चारिणः**। **पार्थक्याभावात्**। **कथम्**। **प्राधान्येन**। **अभिव्यक्तिः**? इत्येवमाशङ्कायाम्। **उच्यते**—२७६ **यथे**त्यादिना।

२७६ **यथा**। **प्रपाणके**। **मरिचखण्डादेः**। आदिनाऽऽमलक्यादीनां ग्रहणम्। **एकीभावे** एकत्वं प्राप्तत्वे सति **कस्यचित्** मरिचाद्यन्यतमस्य। **क्वापि** कस्मिन्नपि प्रपाणके मरिचस्य कुत्रापि खण्डस्येत्येवमिति भावः। **उद्रेकः**। **तथा**। **रसे** शृङ्गाराद्यन्यतमे। 'कस्यचित् क्वापि उद्रेक'इति पूर्वतोऽन्वेति। **सञ्चारिणः**। उद्रेकप्राधान्येन भानम् इति। भावः॥ २९१॥

---

[1] 'हा सौम्य! आर्यपुत्र! क्वासि' इति संस्कृतम्।

अथ रसाभासभावाभासौ--

**२७७ अनौचित्यप्रवृत्तत्व आभासो रसभावयोः ॥ २९२ ॥**

अनौचित्यं चात्र रसानां भरतादिप्रणीतलक्षणानां सामग्रीरहितत्वे एकदेशयोगित्वोपलक्षणपरम्बोध्यम्, तच्च बालव्युत्पत्तये एकदेशतो दर्श्यते--

**२७८ उपनायकसंस्थायां मुनिगुरुपत्नीगतायां च ।**
**बहुनायकविषयायां रतौ तथाऽनुभयनिष्ठायाम् ॥ २९३ ॥**

---

अयम्भावः-यद्यपि प्रपाणके खण्डमरिचादीनामेकीभावोऽवश्यं भवति, किन्तु यथा तत्र क्वचित् खण्डस्य, क्वचित् मरिचस्य, क्वचित् आमलक्याः, क्वचिल्लवणस्य; इत्येवं तदन्यतमस्यातिशयोऽनुभूयत एव, तथा-यद्यपि रसे विभावानुभावसात्त्विकभावसञ्चारिभावानामेकीभाव एव, तथाऽपि तत्र क्वापि विभावस्य, क्वापि सञ्चारिणः, क्वाप्येवमन्यस्य प्राधान्येन प्रतीतिरतिरोहितैव सहृदयानां जायते । इत्युक्तं-'सञ्चारिणः प्रधानानी'ति न काऽपि विप्रतिपत्तिः । इति ।

अथ रसाभासादिं लक्षयितुं प्रतिजानीते-**अथे**त्यादिना ।

**अथ** सञ्चारिणां प्राधान्यनिरूपणानन्तरम् । **रसाभासभावाभासौ** । 'उच्येते'इति शेषः । **२७७ अनौचित्यप्रवृत्तत्व** इत्यादिना ।

२७७ **अनौचित्यप्रवृत्तत्वे**ऽनौचित्यं भरतादिसिद्धान्तोल्लङ्घनप्रयुक्तयोग्यताविरहस्तेन प्रवृत्तौ कृतप्रवृत्तिकौ वर्त्तमानौ इति तयोर्भावस्तत्त्वं तस्मिंस्तथोक्ते सतीत्यर्थः । **रसभावयोः** । **आभास** ईषद्भासनमिति तथोक्तः, अप्राधान्येन स्फुरणमिति भावः ॥ २९२ ॥

ननु किन्नामानौचित्यमित्याशङ्क्य तद्दर्शयति-**अनौचित्यमि**त्यादिना ।

**अनौचित्यं** रसभावयोराभासमात्रत्वस्य कारणतया निरूपितमिति भावः । **च** पुनः । **अत्रा**स्मिन् प्रस्ताव इत्यर्थः । **रसानां** रससम्बन्धिनाम् । **भरतादिप्रणीतलक्षणानां** भरतादिभिः प्रणीतानि प्रणीयप्रतिपादितानि लक्षणानि तेषामित्यर्थः । **सामग्रीरहितत्वे** विभावादियावत्कारणासत्त्वे सतीत्यर्थः । **एकदेशयोगित्वोपलक्षणपरम्**एकदेशस्य यत्किञ्चिल्लक्षणस्य योगः सम्बन्धः सोऽत्रास्तीति तस्य भावस्तत्त्वं, तस्योपलक्षणं बोधनं तत्र परमिति तथोक्तम् । **बोध्यं** ज्ञेयम् । अयम्भावः-भरतादिभी रसानां भावानां च यानि लक्षणानि प्रदर्शितानि तेषां तदेकदेशित्वेन वर्त्तमानत्वमनौचित्यम् । इति ।

ननु तत्सहसा कथं ज्ञेयमित्यत आह-**तत्** अनौचित्यमित्यर्थः । **च** । **बालव्युत्पत्तये** बालानां बोधसिद्धये । **एकदेशतः** न तु सर्वतोभावेन, तथा दर्शयितुमशक्यत्वादिति भावः । **दर्श्यते** बोध्यते-**२७८ उपनायकसंस्थायामि**त्यादिना ।

२७८ **उपनायकसंस्थाया**मुपनायक उपपतिः स संस्था सम्भवस्थानं यस्याः तस्यां तथोक्तायाम् । उपपतिश्च परिणेतुः पत्युर्भिन्नः सर्वोऽपीतरो लोकः । अत एव परप्रसङ्गः सर्वथाऽधर्म्यं इति धर्मशास्त्रस्य सिद्धान्तः सङ्गच्छते । **च । मुनिगुरुपत्नीगतायां** मुनिश्च गुरुः ( पिता श्वशुर आचार्य्यस्तत्सदृशोऽन्यो वा पूज्यो वा ) चेति तयोः पत्नी तत्र गता तस्यां तथाभूतायाम् । मुनिगुरुविषयायां मुनिगुरुपत्नीसम्बन्धिन्यामिति भावः । एवम्-**बहुनायकविषयायां** बहवो नायका जारा एककालावच्छेदेन पतयो वा विषया यस्यास्तस्यां तथोक्तायामित्यर्थः । **तथा** । **अनुभयनिष्ठायां** नोभयं नायिकानायकरूपमालम्बनं निष्ठाऽन्योऽन्यं कुत्रचिन्नायकसम्बन्धित्वाभावेन क्वापि पुनर्नायिकासम्बन्धित्वाभावेने-

प्रतिनायकनिष्ठायां तद्वदधमपात्रतिर्य्यगादिगतौ ।
शृङ्गारेऽनौचित्यं, रौद्रे गुर्वादिगतकोपे ॥ १९४ ॥
शान्ते च हीननिष्ठे गुर्वाद्यालम्बने हास्ये ।
ब्रह्मवधाद्युत्साहे-ऽधमपात्रगते तथा वीरे ॥ १९५ ॥
उत्तमपात्रगतत्वे भयानके ज्ञेयमेवमन्यत्र ।

---

त्येवं कृत्वा नियतं स्थानं यस्यास्तस्यां तथोक्तायाम् । **प्रतिनायकनिष्ठायां** प्रतिकूलो नायकः प्रतिनायकः प्रधाननायकस्य प्रतिपक्षी धृष्टशठान्यतरो वा निष्ठा यस्यास्तस्याम् । 'प्रतिनायकनिष्ठत्वे' इति पाठान्तरे तु 'रते'रित्यध्याहार्य्यम् । **तद्वत्** । **अधमपात्रतिर्य्यगादिगता**वधमो जघन्यः स्वस्ववर्णापेक्षया निकृष्टो यत् पात्रं नायकस्तच्च तिर्य्यगादिश्च तौ गती आश्रयभूतौ यस्यास्तस्याम् । 'अधमपात्रतिर्य्यगादिगत' इति पाठान्तरे तु 'प्रेम्णि' इत्यध्याहृत्य कथमपि समर्थनीयम् । **रतौ** 'सत्या'मिति शेषः । **शृङ्गारे** । **अनौचित्यम्** । एवम्-**गुर्वादिगतकोपे** गुर्वादिगतो गुरुपितृमुनिसुरार्य्यादिविषयोऽसौ कोपस्तस्मिन् सतीत्यर्थः । **रौद्रे** । 'अनौचित्य' मिति पूर्वतोऽन्वेति । **हीननिष्ठे** । हीनोऽनुत्तमप्रकृतिर्निष्ठा यस्य तस्मिंस्तथोक्ते । **च** । **शान्ते** 'अनौचित्य' मिति शेषः । तथा-**गुर्वाद्यालम्बने** गुर्वादिर्गुरुमुनिनृपादिरालम्बनं यस्य तस्मिन् तथोक्ते । **हास्ये** । सतिसप्तमीयम् । 'अनौचित्य'मिति शेषः । **तथा** । **ब्रह्मवधाद्युत्साहे** ब्रह्मणो ब्राह्मणस्य वेदस्य वा वधो हिंसनमनर्थोपपादनं वा स आदिर्येषां ( गोवधादीनां पाखण्डप्रवर्त्तनादीनां वा ) तेषूत्साहस्तस्मिन् सतीत्यर्थः । **अधमपात्रगते** निकृष्टालम्बनके । **वीरे** । 'अनौचित्य'मिति शेषः । **उत्तमपात्रगतत्वे** 'भयस्ये'ति शेषः । यद्वा-उत्तमपात्रगं तत्त्वं स्वरूपं यस्य तस्मिंस्तथोक्ते इत्यर्थः । **भयानके** 'अनौचित्य'मिति शेषः । **एवं** यथा शृङ्गारादौ दर्शितं तथेत्यर्थः । **अन्यत्रा**न्यस्मिन् वीभत्सादावित्यर्थः । **ज्ञेयम्** । तथा च-वीभत्से, कर्म्मठस्याश्वमेधादौ, युद्धवीरस्य वा सङ्ग्रामे घृणायाः सद्भावे, अद्भुते, करुणे च मृषाज्ञानस्यानौचित्यम्, वत्सले पूज्याद्यालम्बनेऽप्येवम् । इति दिक् ॥ १९३ ॥ १९४ ॥ १९५ ॥

अयम्भावः-"अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् । प्रसिद्धौचित्यवन्धस्तु रसभङ्गस्य कारणम् ॥" इत्युक्तदिशा यावताऽनौचित्येन रसस्य भावस्य वा न पुष्टिः स्यात् पुष्टिर्वाऽपहीयेत तावत्तत्रानौचित्यं परिहरणीयं, प्रतिकूलतायाः सर्वथा निषेध्यत्वात् । तथा सति-रतिरुपपतिविषया न वर्णनीया, एतेन-'स्वामी निःश्वसितेऽप्यसूयति, मनोजिघ्रः सपत्नीजनः, श्वश्रूरिङ्गितदैवतं, नयनयोरीहालिहो यातरः । तद्दूरादयमञ्जलिः, किमधुना दृग्भङ्गिभावेन ते, वैदग्धीमधुरप्रवन्धरसिक ! व्यर्थोऽयमत्र श्रमः ॥' इत्यादौ शृङ्गाराभास एवेति सूचितम्, न चात्रापि शृङ्गार एवेति शङ्क्यम्, उपपतिविषयाया रतेः शृङ्गारस्थायित्वानौचित्यात् । अन्यथा 'उत्तमप्रकृतिप्रायः..' इत्याद्युक्तमेव न सङ्गच्छेत । एवम्-मुनीनां गुरूणामुत्तमदेवानां पितॄणां ज्यायःसहजादीनां च स्वस्वपत्नीविषयाऽपि रतिर्न वर्णनीया, जघन्यताप्रत्यायकतया वैरस्योल्लासे रसोच्छेदस्यैवं दुर्वारत्वात् । अत एव गङ्गाधरकारा अप्याहुः-'रतेः सम्भोगरूपाया मनुष्येष्विवोत्तमदेवतासु स्फुटीकृतसकलानुभाववर्णनमनुचितम् ।' इति । तथा-'१५ एषु त्वनेकमहिलासमरागो दक्षिणः कथितः ॥ ५९ ॥' इति प्रागुक्तनयेन दक्षिणस्य यथैककालावच्छेदेनानेकत्रानुरागौचित्यं, तथा न स्वकीयेषु अपि नायकेषु नायिकायाः । अतः-'युधिष्ठिरं मोदयति स्म सुस्मितैः, कलेन भीमं परिरम्भतोऽर्जुनम् । भ्रुवा प्रणीतैर्नकुलं च सान्त्वनैः पदोश्च तैः सा सहदेवमञ्चितैः ॥' इत्यत्र द्रौपद्या अनुरागः पतिविषयकोऽपि न शृङ्गारव्यपदेशार्हः । 'वारोऽयं नृपतेस्तथा तदनुजो मान्योऽद्य मानव्रतः सङ्गम्यः समयाद्बहोरुपगतो जिष्णुश्च जित्वा रिपून् । द्यूते रात्रिरियं जिता च युगपन्माद्रीसुताभ्यामतः किंकर्त्तव्यविमूढया वत तया द्वित्राः स्थितं नाडिकाः ॥' इत्यादौ च भावाभास एव । तथा-'आक्रान्ता रमयति हन्त ! कान्तमेकं सन्दष्टाऽधरसुधयाऽपरौ प्रियौ द्वौ । प्रेयांसावुरसिजयोर्निपीडिताऽन्यौ धन्येयं युगपदनेकधाऽर्दिताऽपि ॥' इत्यत्र वाराङ्गनाया रतिरनेकविषयेति न शृङ्गारव्यपदेशार्हा । एवम्-अधमनायकगतोत्तमनायिकायाः; अधमनायिकागतोत्तमनायकस्याप्येवं रतिर्न शृङ्गारपदं भजते । अत्रापि उत्तमायामधमस्य नितान्तं

तत्र रतेरुपनायकनिष्ठत्वे यथा मम-

> 'स्वामी मुग्धतरो, वनं घनमिदं, बालाऽहमेकाकिनी,
> क्षोणीमावृणुते तमालमलिनच्छाया तमस्सन्ततिः ।
> तन्मे सुन्दर ! मुञ्च कृष्ण ! सहसा वर्त्मेति गोप्या गिरः
> श्रुत्वा, तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः ॥ १६२ ॥'

---

धर्मशास्त्रस्योच्छेदापत्तेः । आचार्याणां तथात्वेऽपि यद्वर्तेर्महत्त्वं तत्तेषां महिमा ! तथा-तिरश्चामुपलक्षणेन पश्वादीनां परस्परं या रतिः सा न शृङ्गारस्वरूपार्हा । अत एव-'मधुद्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्त्तमानः । शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥' इत्यादौ शृङ्गाराभास एवेति दर्शितपूर्वम् । एवं गुरौ मुनौ पित्रोर्वाऽन्यत्रासजने कोपो न रौद्रपदार्हः, तत्र कोपस्यानौचित्यात् । एवमन्यत्रापि यथायथमनौचित्यं लोकतोऽनुभवतश्च स्वयं विमृश्यम्, एतत् परं दिङ्मात्रेण निदर्शनम् । अत एव-'**एवमन्यत्रे**'ति कविराजैरुक्तम् । ननु काव्यनाट्यश्रवणदर्शनाभ्यां विभावादिसाधारण्यज्ञाने सति सामाजिकानां जायमानस्यालौकिकस्य रसस्य कथमाभासरूपत्वम् ? इति चेत् ! सत्यम्, तथाऽपि असाधारण्यप्रतीतिप्रयोजककाव्यवर्णिते यत्रानौचित्यप्रतिसन्धानं तत्र व्यङ्ग्येऽपि रसे आभासव्यपदेशः सङ्गच्छते । इति दिक् ।

तदेव क्रमेणोदाहरन्नाह-**तत्रे**त्यादिना ।

**तत्र** तेष्वनौचित्येष्विति भावः । **रतेः । उपनायकनिष्ठत्वे** उपनायक उपपतिर्निष्ठा नियतं स्थानं यस्याः तस्या भावस्तत्त्वं तस्मिन् । 'अनौचित्य'मिति प्रकृतप्राप्तम् । **यथा । मम**-'पद्ये' इति शेषः । **'स्वामी..'** इत्यादौ ।

'हे **सुन्दर !** ( अनेन स्वात्मनो मनोहरणक्षमत्वमावेद्यते ) । **स्वामी** पतिः न तु प्रियः । 'स्वामिन्नैश्वर्ये ।' ५।२।१२६ इति निपातनात् साधु ( एतेन-तत्र स्वाननुरागः सूचितः ) । **मुग्धतरो**ऽत्यन्तं मुग्धो मूढ इति तथोक्तः । 'मुग्धस्तु सुन्दरे मूढे'इति मेदिनी । 'द्विवचनविभज्योपपदे तरबीयसुनौ । ५।३।५७ इति तरप् ( एतेन-कालापयाने तद्भयं तस्य च रत्यनभिज्ञत्वेन रमणायोग्यत्वं चावेद्यते ) । **वनं** न तु नगरम्, ग्रामो वा ( एतेन-जनान्तरासञ्चाराद्भयं रमणौचित्येन च देशस्य निर्भयत्वं बोध्यते ) । **इदं** न तु तत्पदवाच्यम् ( एतेन-इहावस्थानं नोचितमिति, अत्रैव मया रमस्व, नान्यत्र गन्तुमावश्यकतेति च द्योत्यते ) । **घनं** निबिडमनेकानेकवृक्षजालग्रथितमिति भावः ( एतेन-तस्य भयङ्करत्वं मदनोद्दीपकत्वं चावेद्यते, अनुषङ्गतश्च-अत्र न कश्चिदागन्तुं प्रभविष्यति, प्रभवेदपि कदाचित् कश्चिदागन्तुं, किन्तु आवयोः सङ्गं नै "सूचितम् ज्ञातुं प्रभविष्यतीति ) । **अहम्** ( एतेन-आत्मनो भयाश्लेषयोरुचितावस्थाकत्वमनुषङ्गतश्च मनोरमत्वमावेद्यते ) । **बाला**ऽल्पवयस्का कान्तेत्यर्थः । 'बालोऽज्ञेऽश्वेभपुच्छयोः । बाला तु त्रुटियोषितोः ।' इति हैमः ( एतेन न चिरमिह स्थातुं शक्नोमीति पत्याऽपि अनुपभुक्तपूर्वत्वं चात्मनः सूच्यते ) । **एकाकिनी** एकैव । असहायां सख्यादिविरहितेति यावत् । 'एकादाकिनिच्चासहाये ।' ५।३।५२ इत्याकिनित् । ततो ङीप् ( एतेन-अत्रैवम्भूताया अत्यन्तं गर्हितमागमनमिति निरपराधत्वेऽपि यदा तस्माद्बिभेमि, किं पुनरेवमपराधे, तस्मात्त्वरितं गन्तव्यम् इति; यथेष्टं मयैव रमस्व नात्र काऽपि सपत्नीशङ्कोपनायिकाऽन्तरप्रतिनायिकयोश्चाशङ्केति द्योत्यते ) । **तमालमलिनच्छाया** तमालैर्मलिनाऽत्यन्तं कृष्णत्वं नीता छाया कान्तिः स्वरूपप्रतीतिर्यस्यास्तथोक्ता । यद्वा-तमालवन्मलिना छाया यस्यास्तथाविधा ( एतेन-दृष्टिप्रतिबन्धौचित्यं भयग्रस्तत्वं च, अन्यत्र-एतैरुद्दीपितमदनाऽस्मि संवृत्तेति च बोध्यते ) । **तमस्सन्तति**स्तमसां तिमिराणां सन्ततिः पुञ्ज इति तथोक्ता ( एतेन-वनस्य स्वतो भयङ्करस्यातिशयितत्वेन स्थानायोग्यत्वं निर्जनत्वादिना च रमणौचित्यातिशयश्च द्योत्येते ) । **क्षोणीं** पृथिवीम् । 'क्षोणी ज्या काश्यपी क्षितिः ।'इत्यमरः । **आवृणुते** आच्छादयति ( एतेन तमस्विनी निशेयं प्रवृत्ता अतो नाधिकं स्थातुं शक्येति, तमस्विन्याः सर्वतः प्रभूतत्वेन क्व सा गतेति बान्धवभीतिरिति च द्योत्येते, अनुषङ्गतः कालवैशिष्ट्यं च ) । **तत्** तस्मात् कारणादित्यर्थः । हे **कृष्ण !** **मे** मम । **वर्त्म** मार्गं तदवरोधमिति यावत्, यद्वा-नेत्रच्छदमुपचारान्नेत्रवि-

**बहुनायकनिष्ठत्वे यथा–**

**'कान्तास्त एव भुवनत्रितयेऽपि मन्ये येषां कृते सुतनु! पाण्डुरयं कपोलः ॥ १६३ ॥'**

---

पर्यीकरणम् इत्यर्थः। 'वर्त्म नेत्रच्छदेऽध्वनि।' इत्यमरः। **सहसा। मुञ्च** (एतेन–गमनविलम्बासहिष्णुत्वं दृष्टिमात्रपातेन कृतार्थतालाभाभावश्चावेद्येते)। यद्वा–(अन्यत्र पक्षे) ई सुन्दर लक्ष्मीकान्त! 'ई विषादेऽनुकम्पायां लक्ष्म्यां पुनरनव्ययम्।' इति मेदिनी। मा नैव। 'मा वारणे विकल्पे च..' इति मेदिनी। वर्त्म सहसा मुञ्च, किन्तु अत्रैव चिरं मां निरुध्योपभुङ्क्ष्वेति भावः। अथवा–हे कृष्ण! ई अनुकम्पस्व सहसा वर्त्म हसतीति हसो नर्मज्ञो भवानिति यावत् तेन सह वर्त्तत इति सहसा, तस्या वर्त्मेति तथोक्तम्। मा मुञ्चेत्यर्थः। नर्मज्ञेन त्वया सह रह आगतेति यथेष्टं रमस्व न त्वया गमनानुज्ञा दातव्येति भावः। इत्येवम्। **गोप्या** गोपिकाया विदुष्या वेत्यर्थः। गां सौरमेयीं सरस्वतीं वा पाति रक्षतीति तस्याः तथोक्तायाः। 'स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले।' इत्यमरः। **गिरो** वचांस्यनेकार्था इति यावत्। **श्रुत्वा। तां** गोपीम्। **परिरभ्यालिङ्ग्य** वक्षसा वक्ष आहत्येति यावत्। **मन्मथकलासक्तो** मन्मथः कामस्तस्य कला कौशलं तत्रासक्त आसक्तिं गत इति तथोक्तः। मतो बुद्धेर्मथो व्याकुलताविधातेति मन्मथः, मननं मत्, सम्पदादित्वात् क्विप्। 'गमादीनामिति वक्तव्यम्।' * इति नलोपः। 'ह्रस्वस्य पिति कृति तुक्।' ६।१।७१ इति तुक्। मथतीति मथः। पचादित्वादच्। यद्वा–मनसो मथ इति मन्मथः। 'पृषोदरादीनि यथोपदिष्टम्।' ६।३।१०९ इति साधु। **हरिर्विष्णुः। वो** युष्मान् भक्तानिति भावः। **पातु** रक्षतु। अत्र गोप्या रहस्यपक्षे अनन्यदयितात्वेऽपि 'स्वामी' त्यादिना गोलोकाधिपतौ भगवति मानवनाट्येनोपनायिकत्वस्य बोधनान्न शृङ्गारः, किन्तु तदाभासः। तथा–अत्रैव 'पातु वः' इत्येवं कविभक्तिविषयतया गुरुप्रभृत्यन्यतमत्वेऽपि तथा वर्णनमनुचितमित्यतोऽपि शृङ्गाराभासः, कविरतिः पुनर्न भावः, किन्त्वाभास इति बोध्यम्। अत एव-मुन्यादिविषयिण्यां रतौ शृङ्गाराभासो नोदाहरिष्यत इति बोध्यम्। अस्य शुद्धोदाहरणं तु–"स्वामी निःश्वसितेऽप्यसूयति मनोजिघ्रः सपत्नीजनः..॥' इत्येव। एतेन नात्र शृङ्गाराभास इति सिद्धान्तयन्तस्तर्कवागीशाः परास्ताः। शृङ्गारे परनायिकोदाहरणमनर्थकं स्यादिति तु हेत्वाभासः। अत्र शार्दूलविक्रीडितं वृत्तम्, तथोक्तम्–'शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्यऋषयः।' इति ॥ १६२ ॥'

मुन्यादिविषयिण्या रतेरत्यन्तमनौचित्यमिति तत्साक्षादनुदाहृत्य–'स्वामी मुग्धतरः..' इत्यादिनैवानुपज्ञत उदाहृतं मन्यमानो बहुनायकनिष्ठत्वे रतेरनौचित्यं दर्शयति–**बहुनायकनिष्ठत्व** इत्यादिना।

**बहुनायकनिष्ठत्वे** बहवो नायका इति ते निष्ठा यस्यास्तस्या भावस्तत्त्वं तस्मिंस्तथोक्ते (सतिसप्तम्यर्थम्) 'रतेरनौचित्यम्' इति शेषः। **यथा–'कान्ताः...'** इत्यादौ।

'**हे सुतनु!** शोभनं तनुः शरीरं यस्यास्तत्सम्बुद्धौ तथोक्ते! शोभनाङ्गीति भावः (एतेन–तस्या मनोहरणक्षमत्वं सूच्यते)। **येषाम्।** "दूरङ्गतानाम्"इति शेषः। **कृते**ऽनुरागेण रतिलाभार्थमित्यर्थः (अव्ययमिदम्)। **अयं** प्रत्यक्षं प्रस्फुरन्माधुर्य्य इत्यर्थः। **कपोलो** गण्डस्थलम्। **पाण्डुः** किञ्चित्पीतत्वविशिष्टः श्वेतः। "हरिणः पाण्डुरः पाण्डुः"इत्यमरः (एतेन–वियोगावस्थाऽऽवेद्यते)। अतः–**मन्ये** जाने। **भुवनत्रितये** त्रिषु स्वर्गपृथिवीपातालेषु लोकेष्वित्यर्थः। **अपि** "किं पुनरेकस्मिन्नस्मिन् भूतले"इति शेषः। **ते। एव**'नान्ये मादृशाः' इति शेषः। **कान्ताः** सुन्दराः 'सन्ती'ति शेषः। अस्य च पूर्वार्द्धम्–"सङ्केतितेषु सुभगेषु रता त्वमेव भूत्वाऽप्यहो धनवधूरत एव-नूनम्।' इति। अत्र'त्वमेवे'त्यस्य'त्वमिव त्वमेवे'त्यन्ततोऽवसानादनन्वयः, 'भूत्वाऽप्यहो धनवधू'रित्यस्य च 'अन्या धनवधूरिव त्वमसि, किन्तु सा न कुत्राप्यभिरता, त्वं च नियतेषु किल निरता'इत्यन्ततोऽवगमे व्यतिरेको व्यज्यते। 'नूनं मन्ये' इत्युत्प्रेक्षा कपोलपाण्डिम्ना'कान्तास्त एवे'ति समर्थनात् काव्यलिङ्गं च वाच्ये। 'एवे'त्यस्य पुनरुक्तावपि न दुष्टत्वम्, वाचकस्यैव पुनरुक्तौ दुष्टत्वाङ्गीकारात्। वसन्ततिलका नामेदं वृत्तम्,यथोक्तम्–"वसन्ततिलका त्भौ जौ गौ।"इति॥ १६३॥

अत्रेदम्बोद्धव्यम्–उपपतिविषयिण्या रतेरनौचित्येन रसाभासत्वम् 'स्वामी मुग्धतरः..'इत्यादिनोदाहृतम्, पतिविषयिण्या अपि रतेरेककालावच्छेदेनानौचित्यं तेन च रसाभासो व्याख्यायामुदाहृते पूर्वपद्ये, उत्तरस्मिन् भावाभासश्च। अथ धनवध्वाः पत्यसम्भवे एकत्र रतिः शृङ्गारः, अनेकत्रास्या अपि न रतिः शृङ्गारतां भजते, किन्तु

**अनुभयनिष्ठत्वे यथा-मालतीमाधवे नन्दनस्य मालत्याम् ।**

**[ " पश्चादुभयनिष्ठत्वेऽपि प्रथममेकनिष्ठत्वे रतेराभासत्वम् " इति श्रीमल्लोचनकाराः ।**

**तत्रोदाहरणं यथा-रत्नावल्याम्, सागरिकाया अन्योऽन्यसन्दर्शनात् प्राग्वत्सराजे रतिः । ]**

---

तदाभासताम्, इति पूर्वस्मिन्नुदाहृते । परकीयासु पुनः कन्यैव, यदि तदैव नायकेनाप्यनुमतसङ्गमा, यदि तु तयोरेकतरस्यैव रतिः न तदा तस्या रसभाक्त्वम् । अन्योऽन्यमनुरागे हि गान्धर्वपरिणयः । अत एव-राधाकृष्णयो रतिर्नाभासरूपा किन्तु रसरूपैवेति व्यवस्था । एवं च-कन्यायां नायकस्यानुरागः, नायके वा कन्याया अनुरागः केवलो न रसरूपतां भजते, यदि तु यथा कन्यायां नायकस्यानुरागः तथा कन्याया अपि तत्र तदा न तस्याभासतेति केवलेन व्यवच्छेदः । कन्याया अनुरागाविषयस्य नायकस्यानुरागोऽत एवाननुरक्तायां कन्यायामनुचित इति तत्र तावत् दर्शयति-'इति ।

क्रमप्राप्तमनुभयनिष्ठत्वेन रतेराभासतामुदाहर्तुमुपक्रमते-अन्वित्यादिना ।

**अनुभयनिष्ठत्वे** नोभयी निष्ठा यस्याः तस्या भावस्तत्त्वं तस्मिन् तथोक्ते । उभौ नायिकानायकौ अवयवौ यस्याः सा उभयी । "सङ्ख्याया अवयवे तयप् ।' ५।२।४५ इति तयप् । 'उभादुदात्तो नित्यम् ।' ५।२।४५ इति तयपोऽयच् 'टिड्ढाणञ्..।' ४।१।१५ इति ङीप् । 'स्त्रियाः... ।' ६।३।७४ इति पुंवद्भावः। 'सति रतेरनौचित्यमिति शेषः । **यथा-मालतीमाधवे** तदाख्ये मालतीमाधवयोरनुरागवर्णनमुपजीव्य श्रीभवभूतिमहाकविना विरचिते प्रकरणे इत्यर्थः । 'प्रथमेऽङ्के'इति शेषः । **नन्दनस्य** तदाख्यस्य राजनर्मसुहृदः । **मालत्याम्** 'माधवानुरक्तत्वमात्रेण स्वात्मन्यननुरक्तायाम्' इति शेषः । इदमुक्तम्-कामन्दकी ( अवलोकितां प्रति ) तां याचते नरपतेर्नर्म्म सुहृन्नन्दनो नृपमुखेन तत् साक्षात् प्रतिषेधः कोपाय, शिवस्त्वयमुपायः । अवलोकिता ( कामन्दकीं प्रति ) 'अचरीयं ! अचरीयं ! ण क्खु अमच्चो माहवस्स णाम ष्पि जाणदित्ति णिरवेक्खदाए लक्खीअदि [१]। कामन्दकी ( अवलोकितां प्रति ) संवरणं हि तत् । 'विशेषतस्तु बालत्वात्तयोर्विवृतभावयोः । तेन माधवमालत्योः कार्य्यः स्वमतिनिह्नवः ॥' अपि च-'अनुरागप्रवादस्तु वत्सयोः सार्वलौकिकः । श्रेयोऽप्यस्माकमेवं हि प्रताय्यौं राजनन्दनौ ॥' इत्युक्तदिशा कविना कामन्दकीमुखेन नन्दनस्य मालत्यां दर्शितः । अयं च मालत्या अनुरागेण नार्चित इति अनुचितः सन् शृङ्गारतां न प्रतिपद्यते । इति । अयम्भावः-अयं तथा कविना कथमपि वर्ण्यमानोऽपि अनुभावादिना न स्फुटीकृतः, अतः-नन्दनस्यापि नानुरागः किन्तु-तयोः परिणयार्थं त्वरितुं केवलं किमपि सूचितः । एवम्भूतस्य स्फुटमनौचित्यं शृङ्गारानर्हत्वं च । इति । इदमत्र बोद्धव्यम्-दैत्याचार्य्यात्मजाया देवयान्याः स्वपितुरन्तिकं मृतसञ्जीविनीं विद्यां ग्रहीतुमागते देवगुरोरात्मजे कचेऽनुरागः पुराणप्रसिद्धः, कचस्य च गुरुं पितरं चाभेदेन गुरुपुत्रीं च पितृपुत्रीं चाभेदेन पश्यतस्तस्यां स्वसृस्नेह एवासीत्, इत्येवं व्यतिकरे देवयान्या अनुरागः प्रवृद्धोऽपि न रसतामापन्नः । इत्येवमन्यत्रापि । इति ।

नायिकानायकयोर्यावदेकतरस्यैवानुरागस्तावत्तस्य भविष्यदुभयसम्बन्धित्वेऽपि न शृङ्गारार्हत्वम् । इत्याशयेन परमतमुपन्यस्यति-'पश्चात्...' इत्यादिना ।

[ "**प्रथमं** पूर्वम् । 'परिणयात्, उभयोर्वा गुणश्रवणात्, अन्योऽन्यं वा दर्शनादे'रिति शेषः । **एकनिष्ठत्वे** एकतरनिष्ठत्व इत्यर्थः । **पश्चात्** 'परिणयादे' रिति शेषः । **उभयनिष्ठत्वे** नायिकानायकोभयगतत्वे इत्यर्थः । **अपि** । **रतेः** 'प्रथममेकनिष्ठाया' इति शेषः । **आभासत्वम्** ।" इत्येवम् । **श्रीमल्लोचनकाराः** श्रीमन्तो लोचनकाराः । लोचनं नाम ध्वन्यालोकव्याख्या नाट्यशास्त्रव्याख्या वा तत्कुर्वन्तीति लोचनकाराः, अभिनवगुप्तपादाचार्य्या इत्यर्थः । 'आहुः' इति शेषः ।

ननु किमिह उदाहरणमित्याशङ्क्याह-**तत्रोदाहरण**मित्यादिना ।

**तत्र** तस्मिन् रतेरौचित्याभाव इत्यर्थः । **उदाहरणम्** । **यथा** । **रत्नावल्यां** तदाख्यायां रत्नावल्यां वत्सराजविषयकमनुरागमुपजीव्य श्रीहर्षकविना प्रणीतायां नाटिकायामित्यर्थः । **सागरिकाया** रत्नावल्या इत्यर्थः । **अन्योऽन्य-**

---

१ 'आश्चर्य्यम् ! आश्चर्य्यम् ! न खलु अमात्यो माधवस्य नामापि जानातीति निरपेक्षतया लक्ष्यते ।' इति संस्कृतम् ।

**प्रतिनायकनिष्ठत्वे यथा–हयग्रीववधे, हयग्रीवस्य जलक्रीडावर्णने ।**

**अधमपात्रगतत्वे यथा–**

**"जघनस्थलनद्धपत्रवल्ली गिरिमल्लीकुसुमानि काऽपि भिल्ली ।**
**अवचित्य गिरौ पुरो निषण्णा स्वकचानुत्कलयाञ्चकार भर्त्रा ॥ १६४ ॥"**

---

**सन्दर्शनात्** अन्योऽन्यं सन्दर्शनं सागरिकावत्सराजयोरभिमुखीभूय सम्यग्दर्शनं तस्मात्। **प्राक्** पूर्वं 'वर्त्तमाने'ति शेषः । **वत्सराजे** । **रतिरनुरागः** । 'अनुचिता' इति शेषः । इदन्तु बोद्धव्यम्, यदि कन्यात्वेऽभिलषन्तमनादृत्यानभिलषन्तमाद्रियते, तं वाऽप्राप्यानादृतमभिलषन्तमेव लभते काऽपि, तदा पश्चादपि न शृङ्गाराऽर्हा, यदि तु–पूर्वं कुत्राप्यन्यत्रैवानुरागः, परिणयश्चोदासीनयोः, तदा परिणयात् प्राग्वर्त्तमाना रतिरनुचितैव, अथ यदि परतोऽप्येवमनुरक्तत्वाभाव एव तदा परिणयात्पश्चादपि न शृङ्गारार्हा । अत एव–भ्रातृकृते शाल्वानुरतां काशिराजसुतां स्वयंवरादपनीयापि शाल्वान्तिक एव प्रहितवान्, तेन च प्रत्याख्यातां स्वयमपि प्रत्याख्यातवान् शान्तनवः । इति दिक् । ] एतावान् पाठः प्रक्षिप्त इवाभासते, तत्रास्यान्वेषणेऽपि अनुपलभ्यमानत्वात् । इति । स्वात्मनः प्रतिकूलः शठो धृष्टो वा नायकः तत्र नायिकाया रतिर्न शृङ्गारार्हा । यथा–'मामेति निषेधमिषाज् झटिति परस्यानिशम्य सञ्चारम् । नीवीविमोकविमुखे स्वामिनि चकितेक्षणा तस्थौ ॥' 'अयि तव यदि हरति मनः कोकनदाभं मुखं ममेति किं चित्रम् । अपि तनु परोत्तरीयं हरति यदा मे धृतं भवता ॥' इत्यादौ । इत्येतत्सर्वं विदुषामतिरोहितम् ।

अथ प्रधाननायकस्य निर्भयताऽऽदिप्रत्यायकं रत्याद्यवर्णयित्वा प्रतिनायकस्य वर्ण्यमानं न रसतामावहतीति निदर्शयितुमाह–**प्रतिनायकनिष्ठत्वे** इत्यादि ।

**प्रतिनायकनिष्ठत्वे** 'रतेरनौचित्य'मिति शेषः । **हयग्रीववधे** विष्णुना कृतं हयग्रीवस्य दैत्यस्य वधमुपजीव्य श्रीमता काश्मीरकेण भर्तृमेण्ठेन प्रणीते महाकाव्ये इत्यर्थः । **यथा** । **हयग्रीवस्य** प्रतिनायकस्य । **जलक्रीडावर्णने** 'ललनाजनेन सम'मिति शेषः । अयम्भावः–निश्चितान्तिकान्तकस्येव प्रतिनायकस्यापि हन्तुमुपस्थितेऽन्यस्मिन् उद्वेगमवर्णयित्वा रतेर्वर्णनं प्रकृतिविरुद्धम्, अतः–वर्णिताऽपि ललनारतिर्न शृङ्गारपदं प्रतिपन्ना । इति ।

अधमपात्रगतत्वेऽपि रतेर्न शृङ्गारत्वं, समुज्ज्वलस्य हि शृङ्गारस्य तदानीं तिरस्कारादित्याह–**अधमपात्रगतत्वे** इत्यादि ।

**अधमपात्रगतत्वे**ऽधमं जात्या वर्णतो वा निकृष्टं पात्रं नायकरूपं नायिकारूपं नायकनायिकोभयरूपं वाऽलम्बनं तत्र गता तस्या भावस्तत्त्वं तत्र । 'त्वतलोर्गुणवचनस्य ।'* इति ह्रस्वत्वम् । 'रतेरनौचित्यम्' इति शेषः । **यथा–** "**जघन....**" इत्यादौ ।

"**जघनस्थलनद्धपत्रवल्ली** जघनस्थले नितम्बभागे नद्धा बद्धा पत्रवल्ली वल्ल्याकारा ग्रथिता पत्रावली यया तादृशी । 'णह्' बन्धने, इत्यतः 'निष्ठा ।' ३।२।१०२ इति क्तः । **काऽपि** काचित् । अविज्ञातनाम्नीत्यर्थः । **भिल्ली** किरातपत्नी । **गिरिमल्लीकुसुमानि** गिरिमल्ल्याः कुटजस्य कुसुमानि पुष्पाणीति तानि तथोक्तानि । 'कुटजो गिरिमल्ली स्यात्' इति गोपालः । **अवचित्य** सञ्चीय । **गिरौ** पर्वते । **पुरो**ऽग्रतः 'स्वामिनः'इति शेषः । **निषण्णो**पविष्टा सतीत्यर्थः । **भर्त्रा** स्वामिना तद्द्वारेति यावत् । **स्वकचान्** निजकेशान् । **उत्कलयाञ्चकार** बन्धयामास । 'भर्त्तुं'रिति पाठान्तरे तु बबन्धेत्यर्थः । अत्र ग्राम्यत्वं दोषो न दोषः, प्रत्युत गुणः, 'गिरिमल्ली'ति समुदितं पदमिति 'गिरौ' इत्यभिधानेऽपि न पुनरुक्तम् । स्वभावोक्तिश्चालङ्कारः । उदारराघवस्येदं पद्यम्, मालभारिणी छन्दः, तथोक्तम्–'विषमे सजसा गुरू अनोजे सभरा यश्च तु मालभारिणीयम् ।' इति ॥ १६४ ॥"

इदम्बोद्धव्यम्–जात्यानिकृष्टयो रतेरनौचित्यमुदाहृतपूर्वम्, वर्णतो निकृष्टत्वं पुनर्द्विविधम्, नायिकाऽपेक्षातो नायकस्य, नायकापेक्षातो वा नायिकायाः; अत्रोभयथाऽपि रतेरधर्म्यत्वान्न रसत्वम् । अथाऽपि सुतरां नायिकाऽपेक्षया नायकस्य । अत एव–स्वस्ववर्णापेक्षया निकृष्टवर्णाया अपि नायिकायाः पाणिग्रहणमाम्नातम्, निकृष्टवर्णस्य पुनर्नायकस्य

तिर्य्यग्गतत्वे यथा-

"मल्लीमतल्लीषु वनान्तरेषु वल्ल्यन्तरे वल्लभमाह्वयन्ती।
चञ्चद्विपञ्चीकलनादभङ्गीसङ्गीतमङ्गीकुरुते स्म भृङ्गी ॥ १६५॥"

आदिशब्दात्तापसादयः।

रौद्राभासो यथा-

"रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गो मुहु-
र्मुक्त्वाकर्णमपेतभीर्धृतधनुर्बाणो हरेः पश्यतः।
आध्मातः कटुकोक्तिभिः स्वमसकृद्दोर्विक्रमं कीर्त्तय-
न्नंसास्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्जुनः ॥१६६॥"

---

तदपि निषिद्धम्। ननु कथं देवयान्या ययातिना साकं परिणयः, रतिश्च न दूषितेति चेत्! कचशापेन देवयान्या निकृष्टतां नीतत्वात् इत्यवधेयम्। अन्यथा राजर्षेस्तस्य तत्र प्रवृत्तिरेव न सम्पद्येत। अतितरां च वर्णनिकृष्टोत्कृष्टयो रतिरिति नोदाहृतम्। एवं द्वयोर्निकृष्टयोरपि न तथाऽनुचिता, किंपुनः जात्या निकृष्टयोरेव, अथापि उज्ज्वलस्य शृङ्गारस्य स्वरूपापकारात् अनौचित्यम्। वर्णतो निकृष्टौ च शूद्रौ। उदाहरणं च स्पष्टम्। इति।

अथ तिर्य्यग्गतत्वेऽनौचित्यं दर्शयितुमाह-**तिर्य्यग्गतत्वे** इत्यादि।

**तिर्य्यग्गतत्वे** तिर्य्यञ्चः पक्षिण उपलक्षणेन पशवश्च तान् गता प्राप्ता तस्या भावस्तत्त्वं तस्मिन्। 'सति रतेरनौचित्यम्' इति शेषः। **यथा-"मल्लीमतल्लीषु.."** इत्यत्र।

**"मल्लीमतल्लीषु** मल्लीभिर्मल्लिकाकुसुमतरुभिर्मतल्ल्यः प्रशस्तास्तासु। अत्र नियतलिङ्गत्वेन स्त्रीत्वम्। 'मतल्ली स्त्री मतल्लिका।' इति गोपालः। **वनान्तरेषु** स्वाधिष्ठितभिन्नेषु वनेषु इत्यर्थः। **वल्ल्यन्तरे** वल्ल्या अन्तरे मध्ये। 'स्थित' मिति शेषः। 'अथान्तरेऽन्तरा। अन्तरेण च मध्ये स्युः' इत्यमरः। यद्वा-अन्या वल्लीति तत्र तथोक्ते। **वल्लभं** प्रियं भ्रमरमित्यर्थः। **आह्वयन्ती** तदाह्वानं कुर्वतीव। **भृङ्गी** भ्रमरी। **चञ्चद्विपञ्चीकलनादभङ्गीसङ्गीतं** चञ्चन्ती स्वनन्ती या विपञ्ची वीणा तस्याः कलो मधुरास्फुटः शब्दस्तस्य भङ्गी वैदर्भी सुरचना तद्वत्तत्सदृशं सङ्गीतं तत्तथोक्तम्। 'व्याजच्छलनिभे भङ्गी वैदर्भी तनमीलिका।' इति रभसः। भङ्गिशब्दात् 'कृदिकारादक्तिनः' इति गणसूत्रेण ङीष्। **अङ्गीकुरुते स्म** अङ्गीचकार प्रारब्धवतीत्यर्थः। अत्र रतेराभासमात्रतया प्रतिकूलवर्णत्वं न दुष्टम्। उत्प्रेक्षा च बोध्या। उदारराघवस्येदं पद्यम्। इन्द्रवज्राछन्दः, तथोक्तम्-"स्यादिन्द्रवज्रा तभजा जगौ गः।" इति ॥ १६५ ॥"

तिरश्चामपि रतिर्वर्णनीया, न पुनः कदाऽपि तापसानामित्याशयेन-"तिर्य्यगादि" इति कारिकाऽऽदिपदार्थं स्पष्टयति-**आदिशब्दादि**त्यादिना।

**आदिशब्दात्। तापसादयः।** तापसो ब्रह्मचारी संन्यासी वा अत एव-मुनिगुरुभ्यो व्यवच्छिद्याभिधानम्। स आदिर्येषां ते तथोक्ताः। अत्रादिपदेन-स्वप्ने विधवाया योषितो, मृतजानेर्वा नरस्य, रतिरप्यनुचितेति तयोः, उपरागादौ च गृहमेधिप्रमुखानां ग्रहणम्। "गृह्यन्ते" इति शेषः।

एवं दिङ्मात्रेण शृङ्गारेऽनौचित्यं दर्शयित्वा रौद्रे तद्दर्शयितुमाह-**रौद्राभास** इत्यादि।

**रौद्राभासः।** 'अग्रजगतत्वेन क्रोधस्यानौचित्ये' इति शेषः। **यथा-"रक्तोत्फुल्ल..."** इत्यादौ।

**"रक्तोत्फुल्लविशाललोलनयनो** रक्ते अथ च उत्फुल्ले अत एव-विशाले अथ च लोले चञ्चले नयने यस्य स तथोक्तः। **मुहुः** पुनःपुनः। **कम्पोत्तराङ्गः** कम्पत इति कम्पं कम्पमानमिति भावः, तादृशमुत्तराङ्गमुपरितनमङ्गं(ओष्ठं)यस्य कम्पया वोत्तरमितस्ततः पतदङ्गं करादि यस्य तथोक्तः। उत्तरतीत्युत्तरम्। उभयत्र पचादित्वादच्। **कर्णम्।** तदभिधेयं प्रतिनायकमिति भावः। **मुक्त्वा** परित्यज्य तद्युद्धतो निवृत्त्येति यावत्। **अपेतभीः**रपेता विनष्टा भीर्भयं यस्य तथोक्तः। **हरेः** श्रीकृष्णस्य। **पश्यतः।** 'षष्ठी चानादरे।' २।३।३८ इति षष्ठी। तथा च

भयानकाभासो यथा–

"अशक्नुवन्सोढुमधीरलोचनः सहस्ररश्मेरिव यस्य दर्शनम्।
प्रविश्य हेमाद्रिगुहागृहान्तरं निनाय बिभ्यद्दिवसानि कौशिकः ॥ १६७ ॥"

स्त्रीनीचविषयमेव हि भयं रसप्रकृतिः।

---

हरिं पश्यन्तमनादृत्येत्यर्थः। **धृतधनुर्बाणो** धृतौ धनुर्बाणौ वा येन तादृशः। धनुश्च बाणश्चेति धनुर्बाणौ, धनुषि वा बाण इति धनुर्बाणः। **कटुकोक्तिभिः** कटुवचनैस्तद्रूपैरनलैरिति यावत्। **आध्मात** आध्मानं नीतः। **असकृत** वारंवारम्। **स्वं** स्वकीयम्। **दोर्विक्रमं** दोषोर्भुजयोर्विक्रमः पराक्रमस्तं तथोक्तम्। 'भुजबाहू प्रवेष्टो दोः'इत्यमरः। **कीर्त्तयन्।** **अंसास्फोटपटुरंसयोः** स्कन्धयोरास्फोट आस्फालनं तत्र पटुः परस्तं कुर्वन्निति भावः। **असौ।** **अर्जुनः।** **युधिष्ठिरं** तन्नामानमात्मनोऽग्रजम्। **हन्तुम्।** **प्रविष्टः।** 'सभा'मिति शेषः। अत्र शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं यथा–'शार्दूलविक्रीडितं मूसो जूसौ तौ गादित्यऋषयः।' इति ॥ १६६ ॥

अत्रायमभिसन्धिः–कर्णेन पराजितोऽतिखेदितो युधिष्ठिरः कर्णेन युध्यन्तं तं निहन्तुमप्रभवन्तं 'यो मे गाण्डीवं निन्दिष्यति तस्याहं शिरः कायादपहरिष्यामी'ति प्रतिज्ञावन्तमप्यर्जुनं तस्य गाण्डीवं निन्दन् कटुकोक्तीः श्रावयामास, अथ तां प्रतिज्ञां सत्यां विधित्सुरर्जुनः स्वाग्रजमपि हन्तुं समुद्यतः। इति यद्यपि पुराणेषु नेयमेककालिका, न वेत्थमेव तथाऽपि नाटकानुरोधेन किञ्चिदन्यथा कृता कथा। अर्जुनस्य च तथा प्रतिज्ञां स्मरतोऽपि ज्यायसि कोपोऽनुचित इति रौद्राभासः। इति। अथ शान्ताभासो यथा–"अन्त्यज एष इतीमे हन्त यथेष्टं ब्रुवन्तु देहं मे। सत्रहमनुपम एकः शुद्धश्चिन्मात्ररूपोऽस्मि ॥" इति, अत्र हि अन्त्यजनिष्ठत्वान्न शमो रसरूपतां प्राप्तः। हास्याभासो यथा–उत्तररामचरिते, "सौधातकिः–हुं वसिट्ठो ! मए उण जाणिदं कोवि वग्घो विअ एसोत्ति...जेण परावडिदेन एव्व सा वराई कविला कल्लाणी बलामोडिअ मडमडाइआ।"इति। वीराभासो यथा–'ब्राह्मीं पूजां सर्वथोन्मूल्य सद्यः सर्वान् विप्रान् सत्यमापादयिष्ये। नाहं वज्रान्नैव कालस्य दण्डान्नो वा किञ्चिद्रुद्रशूलाद्बिभेमि ॥' इति।

अथ भयानकाभासं समुदाहरति–**भयानकाभासस्तदाख्यो रस इत्यर्थः।** **यथा–'अशक्नुवन्नित्यादौ।**

"**अधीरलोचनो** न धीरे लोचने यस्य स तथोक्तः। भयात् 'नेहः कदाचिदायमायाया' दिति परितः सञ्चरन्नेत्र इत्यर्थः। अन्यत्र–अधीर्न धीस्तिर्य्यगधमत्वाद्बुद्धिर्यस्य तथोक्तः, अलोचनो न लोचने उपचारात्तत्सामर्थ्यं यस्य तथोक्तः, तथा च– मूढोऽन्धभूतश्चेत्यर्थः। **यस्य** रावणस्येत्यर्थः। **सहस्ररश्मेः** सहस्रांशोः सूर्य्यस्येति यावत्। **इव।** **दर्शनं** प्रतापं प्रकाशं वा। **सोढुम्।** **अशक्नुवन्** अपारयन्नित्यर्थः। **हेमाद्रिगुहागृहान्तरं** हेमाद्रिरतिदवीयान् सुमेरुस्तस्य गुहा कन्दरा सैव गृहं तस्यान्तरमवकाशो मध्यमिति यावत् तत्। **प्रविश्य।** **कौशिक** इन्द्र उलूको वा। 'महेन्द्रगुग्गुलूलूकव्यालग्राहेषु कौशिकः।'इत्यमरः। **बिभ्यद्** भयं दधानः कम्पमान इति यावत्। अत्र'भी भये'इत्यतः 'लटः शतृशानचावप्रथमासमानाधिकरणे।' ३।२।१२४ इति शतरि कृते'नाभ्यस्ताच्छतुः।' ७।१।७८ इति नुमभावः। **दिवसानि** दिनानि। 'वा तु क्लीवे दिवसवासरौ।'इत्यमरः। **निनाय।** उलूकः सूर्य्यस्य भीत्या गाढान्धकारे गुहायां प्रविश्य दिनान्यपनयति, तथैव शक्रोऽपि यत्पदवाच्यस्य रावणस्य भीत्या हेमाद्रेरन्तः प्रविश्येति भावः। अत्र 'कौशिक' इत्यभिधायाः प्रस्तुतैकगोचरत्वेनोभयश्लेषेऽपि विशेष्यश्लेषासम्भवादुलूकविषयशक्तिमूलो ध्वनिः। 'सहस्ररश्मेरि'वेत्युपमानिर्वाहकतया वाच्यसिद्ध्यङ्गम्।'इति मल्लिनाथाः। शिशुपालवधस्येदं पद्यम्। शुद्धविराट् छन्दः, "जतौ जरौ शुद्धविराडिदं मतम्।"इति च तल्लक्षणम् ॥१६७॥"

इदमवोध्यम्–अत्रेन्द्रस्य भयमनुचितं सन्न रसतां प्रतिपन्नः। अत एवाह–**स्त्रीनीचेत्यादि।**

---

१ 'हुं वसिष्ठः ? मया पुनर्ज्ञातं कोऽपि व्याघ्र इवैष इति येन परा पतितेनैव सा वराकी कपिला कल्याणी बलात्कृत्य मडमडायिता।' इति संस्कृतम्।

एवमन्यत्र—

**२७९ भावाभासो लज्जाऽऽदिके तु वेश्याऽऽदिविषये स्यात् ॥ १९६ ॥**

स्पष्टम्—

**२८० भावस्य शान्तावुदये सन्धिमिश्रणयोः क्रमात् ।**

**भावस्य शान्तिरुदयः सन्धिः शबलता मता ॥ १९७ ॥**

---

हि यतः। **स्त्रीनीचविषयं** स्त्रीनीचौ विषयावालम्बनं यस्य तत्तथोक्तम्। **एवं**'न तु देवार्यादिविषय'मिति शेषः। **भयम्। रसप्रकृतिः** रसस्य प्रकृतिः कारणं तत्स्वरूपभूतमिति यावत्। 'प्रकृतिर्योनिलिङ्गे चे'त्यमरः। अयम्भावः—स्त्रीनीचालम्बनमेव भयं भयानकस्य स्थायी भाव इति।

एवं बीभत्सादावपि यथायथं स्वयमनौचित्यमवगम्योदाहरणान्तराण्यन्वेषणीयानीत्याह—**एव**मित्यादिना।

**एवं** निर्दिष्टेनैव नयेनेत्यर्थः। **अन्यत्र**'बीभत्सादा'विति शेषः। अयम्भावः—बीभत्साद्भुतकरुणवत्सलानामपि रसानामेवमेव स्वयं यत्रयत्रानौचित्यं स्यात्तत्र सर्वत्रैव तस्यतस्याभासः। एतत्तु दिङ्निदर्शनमात्रम्, अत एव—एतेषां देशकालावस्थाऽऽदिनौचित्यानौचित्ये प्रतीयेते। इति। तत्र बीभत्साभासो यथा—"वैदिकोऽयं क्रमो हन्त! सौनकाचारतोऽधिकः। नान्यत्रार्द्धमृतं कृत्वा शनैरेवं निकृन्तनम् ॥" 'शिरःप्रततयः क्वचित् क्वचिदुरांसि दोषः क्वचित्, क्वचिन्मनुजपुङ्गवा गजतुरङ्गमाश्च क्वचित्। किमद्य बत पाप्मना विहितमत्र धिङ्मामिमं न कस्य हृदि वेदना मयि च हिंस्रधीः स्यान्न हा ॥' इति। अमू हि वैदिकवीरयोरुक्ती। अद्भुताभासो यथा—"चित्रं महानेष तवावतारः क कान्तिरेषाऽभिनवैव भङ्गिः। लोकोत्तरं धैर्य्यमहो प्रभावः काऽप्याकृतिर्नूतन एष सर्गः ॥" इत्यादौ। करुणाभासो यथा—"मृत्कुम्भवालुकारन्ध्रपिधानरचनाऽर्थिना। दक्षिणाऽऽवर्त्तशङ्खोऽयं हन्त चूर्णीकृतो मया ॥" इत्यादौ। इयं यदि मृते लक्ष्मणे रामस्योक्तिः। वत्सलाभासो यथा—"अम्बां तां जनकं तं वा कदा सुस्मितभाषिणम्। कदा मृषन्भविष्यामि सुसमाहितमानसः ॥" अत्र हि भक्तेः साम्राज्येन वत्सलताया अपाकृतत्वम्।

एवं रसाभासं लक्ष्यलक्षणाभ्यां व्यवस्थाप्य भावाभासं व्यवस्थापयन् तत्स्वरूपं दर्शयति—२७९ **भावाभास-** इत्यादिना।

२७९ **लज्जाऽऽदिके**। आदिना भयादीनां ग्रहणम्। **तु** पुनः। **वेश्याऽऽदिविषये**। आदिनाऽनुरागिण्यादीनां ग्रहणम्। सतिसप्तमीयम्। **भावाभासः। स्यात्** ॥ १९६ ॥

अयम्भावः—लज्जा "रतमस्यां सुदुर्लभम्" इत्युक्तदिशा च रतिर्भयं चेत्यादयो भावा वेश्याऽऽदौ आभासमात्रात्मानः। वीरस्य च सन्त्रासः, कुपितस्य धृतिः, मुनिप्रभृतीनामुद्वेगादयश्च न स्वरूपसन्तः। औचित्यभङ्गे ह्यनौचित्यस्य साम्राज्यम्, तदेवाभासमूलम्। इति।

अस्याः कारिकायास्तात्पर्यं तदुदाहरणं च किमित्याह—**स्पष्टम्**। इति। लज्जाऽऽभासो यथा—हास्यार्णवे मृगाङ्कलेखायाः। चिन्ताऽऽभासो यथा—"राकासुधाकरमुखी तरलायताक्षी सा स्मेरयौवनतरङ्गितविभ्रमाङ्गी। तत् किं करोमि? विदधे कथमत्र मैत्रीं? तत्स्वीकृतिव्यतिकरे क इहाभ्युपायः? ॥" इयं हि सीतामननुरक्तामपि चिन्तयतो रावणस्योक्तिः। स्मृत्याभासो यथा—"सर्वेऽपि विस्मृतिपथं विषयाः प्रयाताः, विद्याऽपि खेदकलिता विमुखीबभूव। सा केवलं हरिणशावकलोचना मे नैवापयाति हृदयादधिदेवतेव ॥" इयं हि गुरुपुत्र्यां स्वयमेवानुरागं गतवतः कस्याप्युक्तिः। भामिनीविलासस्येदं पद्यम्। एवमन्यत्र।

एवं भावाभासं लक्षयित्वा भावशान्त्यादीन् लक्षयति—२८० **भावस्ये**त्यादिना।

२८० **भावस्य** निर्वेदादेः सञ्चारिणः। अत्र जातावेकवचनम्, सन्धौ द्वयोः शबलतायां बहूनामुपयोगित्वात्। **शान्तौ** प्रशमे विरुद्धसामग्रीमहिम्नोत्पत्तिकाल एव विलयावस्थायामिति यावत्। **उदये** आविर्भावे स्वानुकूलसामग्रीमहिम्नाऽऽस्वादावस्थायामिति यावत्। तथा—**सन्धिमिश्रणयोः** सन्धौ मिश्रणे चेत्यर्थः। तत्र सन्धिः अनुकूलाननुकूलोभयसामग्रीमहिम्ना परस्परं विमर्देऽपि अन्योन्याभिभावनयोग्यत्वेनान्योऽन्यानभिभावेन सामानाधिकरण्यावस्था,

क्रमेण यथा-

'सुतनु! जहिहि कोपं पश्य पादानतं मां न खलु तव कदाचित् कोप एवंविधोऽभूत्।
इति निगदति नाथे तिर्य्यगामीलिताक्ष्या नयनजलमनल्पं मुक्तमुक्तं न किञ्चित् ॥"
इत्यत्र हि वाष्पमोचनेन ईर्ष्याऽऽख्यसञ्चारिभावस्य शमः ।
"चरणपतनप्रत्याख्यानात्प्रसादपराङ्मुखे निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते।
व्रजति रमणे निःश्वस्योच्चैः स्तनस्थितहस्तया नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता ॥"

---

मिश्रणं पुनः उत्तरोत्तरवाधकसामग्रीमहिम्ना पूर्वपूर्वोपमर्देन अन्यथा वा परपदोदयः, उपमर्दनीयोपमर्दकतामापन्नाना-मुदासीनानां वा भावानां सङ्घर्ष इति यावत्। **क्रमात्** निर्देशानुसारेण । **भावस्य** । अत्र जातावेकवचनम् । **शान्तिः** । **उदयः** । **सन्धिरेककालं** द्वयोरास्वादः । तथा-**शबलता** । पूर्वपूर्वोपमर्देन परपराविर्भावः । **मता** । यथाहुः-"यद्यपि शान्तेर्भावान्तरोदय एव चमत्कारित्वम् उदयस्य च शान्तिपूर्वकत्व एव चमत्कारित्वम्, अत एव भावाद् भावोदयः पृथग्गणितः, एवं च एतद्भेदद्वये शवलता आवश्यकी, तथाऽपि तदनुभावाद्यनुपादानादनास्वाद्यत्वाच्च न सा, पूर्वपूर्वो-पमर्देन परोदयस्यास्वाद्यत्वे एव तत्स्वीकारात्। तदेतदुक्तं सङ्क्षेपेण काव्यप्रदीपे-"न च भावस्य शवलतायाः शान्त्यु-दयाभ्यामविशेषः शान्तेरुदयस्य वा एकैकस्यास्वादे तद्भेदद्वयोपगमात् ।" इति। एवं शान्त्युदयावुक्तकालावच्छिन्नाविव चमत्कारिणाविति वोध्यम् । स्थायिनां त्वेते ( शान्त्यादयः ) न सम्भवति, तेषां सन्ततमविच्छेदात्।" इति ॥ ११७ ॥

उदाहर्त्तुमुपाक्रमते-**क्रमेणे**त्यादिना ।

**क्रमेण** निर्देशानुसारेणेत्यर्थः । **यथा**-'प्रथमं शान्तिः' इति शेषः । "**सुतनु!..**" इत्यादौ ।

"हे **सुतनु** सुन्दरि! **कोपं** मानं परप्रसङ्गावगमजनितामीर्ष्यामिति यावत् । **जहिहि** परित्यज । "ओहाक् त्यागे" इत्यस्य लोटि मध्यमवचनस्येदं रूपम्। **माम्** 'तवापराधिन'मिति शेषः । **पादानतं** पादयोरानतः प्रणतः तम्। **पश्य** दृष्टिविषयं कुरु । प्रेम्णा कृतार्थयेति भावः । **एवंविधः** यादृशः साम्प्रतं तादृश इत्यर्थः । **कोपः** । **कदाचित्** कस्मिन्नपि प्राक्समय इति भावः । **तव** । **न** । **खलु** । **अभूत्** । इत्येवम् । **निगदति** निवेदयतीति भावः । **नाथे** प्राणनाथे सतीत्यर्थः । **तिर्य्यक्** । क्रियाविशेषणमिदम् । **आमीलिताक्ष्या** आमीलिते अक्षिणी नेत्रे यस्या यया वा तयेति तथोक्तया । 'तया' इति शेषः । **अनल्पं** भूरि । क्रियाविशेषणमिदम् । **नयनजलम**श्रु । **मुक्तम्** । किन्तु-**न** नैव । **किञ्चित्** । **उक्तं** वचसा प्रत्युत्तरं दातुं प्रभूतमिति भावः । अत्र 'कोप' इति द्विरुक्तमपि न पुनरुक्तत्वमावहति, प्रत्युत " उदेति सविता ताम्रस्ताम्रमेवास्तमेति च ।" इत्यत्रेव गुणत्वम्, तस्यैव प्रत्यायकत्वात्। अमरुशतकस्येदं पद्यम् । मालिनीछन्दः, यथोक्तम्-'ननमयययुतेयं मालिनी भोगिलोकैः ।' इति ॥ १६८ ॥"

अत्र कस्य भावस्य कथं शान्तिरित्याशङ्क्योत्तरयति- **इत्यत्र ही**त्यादिना ।

**इत्यत्रे**त्यस्मिन् उदाहृते पद्य इत्यर्थः । **हि** । **वाष्पमोचनेन** 'लिङ्गेने' ति शेषः । **ईर्ष्याऽऽख्यसञ्चारिभा-वस्य** । **शमः** शान्तिः । 'प्रतीयत ' इति शेषः । अयम्भावः-ईर्ष्यया हृदयकाठिन्यं, तच्छान्तौ च पूर्ववत् हृदयस्य सारल्यं, तच्चाश्रुपातेन प्रतीयते । इति कान्तस्य कान्ताचरणयोः पतनरूपेण सामग्रीमहिम्नाऽत्रेर्ष्याभावस्य शान्तिः । इति । यथा वा-'अधुना तु निधेहि दृशं वाले ! सविधे न ते वयस्याऽपि । इति मुहुरनुनयमानं कान्तमपश्यन्मृगेक्षणा किमपि ॥' इत्यत्र व्रीडायाः शान्तिः ।

भावोदयमुदाहरति-"**चरण..**" इत्यादौ ।

"**चरणपतनप्रत्याख्याना**च्चरणयोः पतनमपराधक्षमापनार्थं नमनं तस्य प्रत्याख्यानं सावज्ञं निषेधस्तस्मात्त-द्धेतोः। **प्रसादपराङ्मुखे** प्रसादादनुनयात्पराङ्मुखो विरतस्तस्मिंस्तथाविधे । हे **निभृतकितवाचार** निभृतो मूढोऽत्यन्तं वा कितवाचारः कपटिव्यवहारो यस्य तत्सम्बुद्धौ तथोक्त ! इत्येवम्। **उक्त्वा** । **रुषा** कोपेन । **परुषीकृते** कठोरतां नीते । अत एव-**व्रजति** स्वसन्निधिमपहाय गन्तुमुद्यत एवेत्यर्थः । **रमणे** प्रिये । 'सती'ति शेषः । **उच्चैः** । **निःश्वस्य** । **स्तनस्थितहस्तया** स्तनयोरुपचारात् ( ताम्यतः ) हृदयस्योपरि स्थितो हस्तो यस्यास्तया तथोक्तया ।

इत्यत्र विषादस्योदयः ।
"नयनयुगासेचनकं मानसवृत्त्याऽपि दुष्प्रापम् ।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥१७०॥"
इत्यत्र हर्षविषादयोः सन्धिः ।
'क्काकार्य्यं ! शशलक्ष्मणः क्क च कुलं ! भूयोऽपि दृश्येत सा,
दोषाणां प्रशमाय नः श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः, स्वप्नेऽपि सा दुर्लभा,
चेतः स्वास्थ्यमुपेहि, कः खलु युवा धन्योऽधरं धास्यति ॥१७१॥'

---

'कान्तये'ति शेषः । **नयनसलिलच्छन्ना**ऽश्रुपूर्णा । **दृष्टिः** । **सखीषु** । **निवेशिता** 'स्वविषादंप्रत्याययितु' मिति शेषः । अमरुशतकस्येदं पद्यम् । हरिणी छन्दः । यथोक्तम्—'रसयुगहयैर्न्सौ म्रौ म्लौ गो यदा हरिणी तदा ।' इति॥१६९॥'

अत्र कस्य भावस्योदय इत्याशङ्कायामुत्तरयति—इत्यत्रेत्यादिना ।

इत्यत्रेत्यस्मिन्नुदाहृते पद्य इति भावः । **विषादस्य** तदाख्यस्य भावस्य । **उदयः** । अयम्भावः—हृदये हस्तनिधानेन 'हृदयं विदीर्य्यत' इति सूच्यमानो विषादः साश्रुदृशाऽऽविर्भूतः प्रतिभासते । इति । यथा वा—"वीक्ष्य वक्षसि विपक्षकामिनी हारलक्ष्म दयितस्य भामिनी । अंसदेशवलयीकृतां क्षणादाचकर्ष निजबाहुवल्लरीम् ॥" इत्यत्र भुजाकर्षणेन रोषस्याविर्भावः ।

भावसन्धिमुदाहरति—"**नयन..**" इत्यादौ ।

"**नयनयुगासेचनकं** नयनयोर्युगं द्वन्द्वं तस्यासेचनकमतिसन्तृप्तिकरमिति तथोक्तम् । "तदासेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनात् ।" इत्यमरः । **मानसवृत्त्या** चित्तवृत्त्या । **अपि** 'किं पुनर्वाचः'इति शेषः । **दुष्प्रापम्** । **इदम्** । **मदिराक्ष्या** मदिरस्येव खञ्जनस्येवाक्षिणी यस्यास्तस्याः । 'मदिरः खञ्जनः'इति तर्कवागीशाः । मदिरे उपचारान्मत्ते अक्षिणी यस्याः तस्या इति वा । अत्र 'सौष्ठवेनापरित्यक्ता स्मेरापाङ्गमनोहरा । वेपमानान्तरादृष्टिर्मदिरा परिकीर्त्तिता ॥' इत्युक्तौ मदिराशब्दार्थस्तु न युक्तः, विशेषणविशेष्यभावानुपपत्तेः । 'मधुराक्ष्या'इति पाठान्तरम् । **रूपम्** । **मे** मम । **हृदय**मन्तःकरणम् । **मदयति** आनन्दयति 'नयनयुगासेचनकत्वात्'इति शेषः । **दुनोति** व्यथयति सन्तापयतीति यावत् 'मानसवृत्त्याऽपि दुष्प्राप्यत्वा'दिति शेषः । **च** । अत्रोद्गीतिश्छन्दः, यथोक्तम्—'आर्य्याद्वितीयकेऽर्द्धे यद्गदितं लक्षणं तत्स्यात् । यद्युभयोरपि दलयोरुपगीतिं तां मुनिर्ब्रूते ॥' इति ॥१७०॥"

लक्ष्यं दर्शयति—इत्यत्रेत्यादिना ।

इत्यत्रेत्यस्मिन्नुदाहृते पद्य इति यावत् । **हर्षविषादयोः** । **सन्धि**रेककालावच्छेदेनैकस्यैव कान्तारूपस्यात्यन्तसन्तर्पकत्वेन दुष्प्राप्यत्वेन चोपस्थानमिति भावः । यथा वा—'यौवनोद्गमनितान्तशङ्किताः शीलशौर्य्यबहुकान्तिलोभिताः ॥ सङ्कुचन्ति विकसन्ति राघवे जानकीनयनवारिजश्रियः ॥' इत्यत्र व्रीडौत्सुक्ययोः सन्धिः ।

भावशबलतामुदाहरति—"**क्काकार्य..**" इत्यादिना ।

"**अकार्य्यं** गर्दभीमनु गर्दभस्येव तदनुधावनरूपमकरणीयस्यार्थस्य करणमिति भावः । **क्क ? शशलक्ष्मणः** चन्द्रस्य । **च** । **कुलं** वंशः । **क्क ?** चन्द्रवंशे प्रभूतस्य ममैवमकार्य्यं नोचितमिति भावः । **सोर्वशी** । **भूयः** । **अपि** । **दृश्येत** । अतः क्षणमुत्सुकेनापि मया विश्रान्तव्यम् । अहो **दोषाणां** प्रियविरहादिना विषादादीनामित्यर्थः । **प्रशमाय** । **नो**ऽस्माकम् । **श्रुतं** शास्त्रं, तद्धैर्य्यमवलम्बनीयमिति भावः । **अहो** । **कोपे** क्रोधावसरे क्रोधे वा जाते इत्यर्थः । **अपि** । **कान्तं** कमनीयम् । **मुखं** 'तस्या' इति शेषः । **अपकल्मषा** अपगतानि कल्मषाणि पापानि येषां ते पापशून्यतयैवंविधदुःखभाजनतामप्राप्ता इति भावः । अत एव—**कृतधियः** कृताऽनुद्विग्ना धीर्येषां ते तथोक्ताः । **किम्** । **वक्ष्यन्ति ? सा** उर्वशीत्यर्थः । **स्वप्ने** । अपि किं पुनरवस्थान्तर इति शेषः । **दुर्लभा**ऽप्राप्येति भावः । हे **चेतः** ! **स्वास्थ्यम्** । **उपेहि** । **कः** कोऽपि । **खलु** नूनम् । **युवा** । **धन्यः** 'ननु अहमिवाधन्य' इति शेषः । **अधरम्** ।

**इत्यत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता।**

**इति साहित्यदर्पणे रसादिनिरूपणो नाम तृतीयः परिच्छेदः॥**

---

**धास्यति** यःकिल पास्यति स एव धन्य इति भावः। 'धेट् पान' इत्यस्य लृटि प्रथमैकवचनमिदम्। स्वं परित्यज्य गच्छन्ती मुर्वशीमनुगच्छतः पुरूरवसः प्रलापोऽयम्। शार्दूलविक्रीडितं वृत्तम्, तल्लक्ष्म यथोक्तम्–"सूर्य्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्।" इति॥"

लक्ष्यं दर्शयति–इत्यत्रेत्यादिना।

इत्यत्रेत्यस्मिन्नुदाहृते पद्य इति यावत्। **वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां** 'सञ्चारिणा' मिति शेषः। **शबलता** मिश्रणम्। अयम्भावः–प्रथमं क्वद्वयेन शान्तसञ्चारी वितर्कः, तस्य च 'भूयोऽपी'ति व्यङ्ग्येन श्रृङ्गारसञ्चारिणौत्सुक्येन बाधः, 'दोषाणां प्रशमाये'त्यनेन शान्तसञ्चारिणी मतिस्तया चौत्सुक्यस्य बाधः, 'कोपेऽपि' इत्यनेन व्यङ्ग्या श्रृङ्गारिसञ्चारिभावरूपा, तया च मतेर्बाधः। 'किं वक्ष्यन्ती'त्यनेन शान्तसञ्चारिण्या व्यज्यमानया शङ्कया स्मृतेर्बाधः। 'स्वप्नेऽपी'ति व्यङ्ग्येन दैन्येन पुनः शङ्काया बाधः। 'चेतः!' इति शान्तसञ्चारिण्या धृत्या तस्य बाधः। 'कः खलु' इत्यनेन श्रृङ्गारसञ्चारिचिन्तया शान्तसञ्चारिण्या धृतेर्बाधः; इत्येवं पूर्वंपूर्वोपमर्देन परपरोदनैयेकस्मिन्नेव काव्ये वितर्कादीनां शाबल्यम्। इति। यथा वा–"पश्येत् कश्चिच्चल चपल रे, का त्वरा,ऽहं कुमारी, हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि। इत्थं पृथ्वीपरिवृढ! भवद्विद्विषोऽरण्यवृत्तेः कन्या कञ्चित् फलकिसलयान्याददानाऽभिधत्ते॥" इत्यत्र शङ्काऽसूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानांशाबल्यम्। पूर्वंपूर्वोपमर्दमन्तराऽपि शाबल्यम्।

प्राकरणसमाप्तिं सूचयति–इतीत्यादिना।

इत्येवं समाप्त इत्यर्थः। **साहित्यदर्पणे**। **रसादिनिरूपणो**। रसभावादेर्निरूपणं यत्र तादृशस्तथोक्तः। **नाम**। **तृतीयः**। **परिच्छेदः**। शुभम्भूयात्।

**सहृदयैर्विहितानुभवं सुधामपि जयन्तमलौकिकवैभवम्।**
**सकलवृत्तिलयेऽपि विकाशिनं पदमुदारमुदाश्रयमाश्रये॥ १॥**

इति श्रीभारद्वाजगोत्रप्रभूतेन सहृदयशिरोमणि श्रीशिवनाथसूनुना श्रीशिवदत्तकविरत्नेन रचितायां रुचिराख्यायां साहित्यदर्पणव्याख्यायां तृतीयः परिच्छेदः॥

# चतुर्थः परिच्छेदः ।

अथ काव्यभेदमाह–

**२८१ काव्यं ध्वनिर्गुणीभूत–व्यङ्ग्यं चेति द्विधा मतम् ।**

---

निधानं भूतीनां, रमणमुदयानां, स्थितिपदं महिम्नां भव्यानां, निगमशिरसां रत्नमुकुटम् ।
गुणानामासेव्यं, जनिरतिलयास्था त्रिजगतां, शरण्यं सिद्धीनां किमपि कमनीयं विजयते ॥

एवं काव्यस्वरूपं निरूप्य तद्विभागनिरूपणमनुगतं मन्वान आह–अथेत्यादि ।

अथ काव्यस्वरूपनिरूपणानन्तरम् । **काव्यभेदं** काव्यानां भेदस्तम् । **आह** । स्वरूपज्ञानानन्तरं विशेषजिज्ञासामपनेतुं काव्यं स्वरूपतो निरूप्य विभागतो, निरूपयितुमाह–२८१ **काव्यमि**त्यादि ।

अत्रेदं बोद्धव्यम्–भेदः सजातीयो विजातीयः स्वगतश्चेति त्रिप्रकारः । घटाद् घटस्य भेदः सजातीयः,पटाद् घटस्य पुनर्विजातीयः, एकस्यैव पुनर्घटस्य कपालैकदेशादिभ्यः स्वगतः । तत्र वक्ष्यमाणः काव्यविभेदः किं सजातीयो विजातीयः स्वगतो वा । न स्वगतः । चमत्कारापरपर्यायस्य रसपदवाच्यस्य काव्यत्वस्याखण्डैकरसत्वे सावयवित्वासम्भवात् । न वा विजातीयः । काव्यसंसारे काव्यत्वमन्तरेण भानाभावात्, नाप्येवं सजातीयः काव्यत्वस्य निरवच्छिन्नत्वात् । 'तमेव भान्तमनुभाति सर्वम्, तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम्, सर्वं खल्विदं ब्रह्म नेह नानाऽस्ति किञ्चन, एकमेवाद्वितीयं ब्रह्म, रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दीभवती'त्यादिश्रुतिस्वारस्यात् काव्यसंसारे काव्यत्वात्मकस्य चमत्कारापरपर्यायस्य रसस्यैव भासा सर्वं वाच्यत्वादिरूपमिदं जगद्भासते तदभावे सर्वस्यैवामुष्य भासमानत्वासम्भवात् भासमानत्वमपि तेषाम् 'यथाऽग्नेर्विस्फुलिङ्गा व्युच्चरन्ति एवमेवात्मन'इत्यादिश्रुतिप्रामाण्यान्न तदतिरिक्तमवसेयम् । 'विकारो नामधेयं मृत्तिकेत्येव सत्य'मित्यादिभ्यश्च श्रुतिभ्यस्तेषां रसव्यतिरिक्तानां मृषात्वेनाभिधानमपि तत एव सङ्गच्छते । भासमानस्य च सूर्यस्योलूकानुमत्या तत्त्वाभावो यथाऽकिञ्चित्करस्तथा सहृदयेतरस्य दृशा रसस्यापि । श्रीमद्भगवताऽपि 'या निशा सर्वभूतानां तस्यां जागर्ति संयमी'त्युक्तम् । सहृदयदृशा रसमन्तरेण काव्यसंसार एव न भासते इति निरवच्छिन्नत्वमेकत्वमद्वितीयमनतिरिक्तत्वं च तस्य निर्बाधम् । 'विज्ञानमानन्दं ब्रह्मे'त्यादिभिः श्रुतिभिरुद्घोष्यमाणं ब्रह्मणो विज्ञानात्मकत्वमानन्दात्मकत्वं च रसरूपस्यैव सङ्घटते । रसस्य विज्ञानापरपर्यायानुभवात्मकताया आनन्दापरपर्यायास्वादात्मकतायाश्च सहृदयहृदयसाक्षिकत्वात् । 'तच्छुक्रमकायमव्रणमस्नाविरं' इत्यादिभिश्च श्रुतिभिस्तस्यैवामुष्य निरवयत्वाद्युद्घोष्यते इत्यत्र न विप्रतिपत्तिः । सहृदयानां काचित् । ऐकमत्येन तैरेव रसस्य निरवयवत्वादीनामुद्घोष्यमाणत्वात् इत्येवं, कथं पुनस्तस्य भेदजिज्ञासा । काव्यसंसारे रसमन्तरेण भानाभावान्न विजातीयत्वसमर्पितस्तस्य भेदः, निरवयवत्वादिना च न तस्य भेदान्तरावतारोऽपि । इति चेत् ! सत्यम् । न वास्तविकं भेदं तस्य वक्ष्यामः, किन्त्वौपाधिकम् । उपाधिः कः पुनरसौ पिशाच इति चेत् ! रक्तिमनीलिमाद्यसम्पृक्तस्य स्फटिकस्य रक्तिमनीलिमत्वादिप्रत्यायकं जपाकुसुमेन्दीवरादिसन्निधानमिव, जातिव्यक्त्यादिः शरीरस्येव, शरीरादि च चेतनस्य शरीरिण इव, देश काल वक्तृ तात्पर्यं संयोग विप्रयोगादिः शब्दार्थयोः, तत्समर्पितः पुना रसस्येति दिक् । १ **ध्वनि**स्तदाख्यमित्यर्थः । ध्वन्यतेऽभिव्यज्यते चमत्कारालिङ्गितो भावोऽस्मिन्निति ध्वनिः । 'खनिकस्य ज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च (उ०) ४।१४१॥'.इत्यौणादिकादिः । च तथा । **गुणीभूतव्यङ्ग्यं** गुणीभूतोऽप्रधानीभूतो वाच्यलक्ष्यपूर्वव्यङ्ग्यचमत्कारापेक्षया गौणत्वं प्राप्तो व्यङ्ग्यो व्यञ्जनयोन्नेयश्चमत्कारो यत्र तत् । व्यङ्ग्यश्चमत्कारोऽपि द्विधा पौर्वोऽन्त्यश्च । क्वापि पौर्वस्य क्वापि पुनरन्त्यस्य चमत्कारवैलक्षण्यमभिप्रेतं यथा भवति तथा पुरस्ताद् दर्शयिष्यते । तदाख्यं तत्स्वरूपं वेति भावः । इतीत्येवम् । **काव्यम्** । **द्विधा** । **मतम**ङ्गीकृतम् । 'विवेकिभि'रिति शेषः ।

तत्र-स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः । वलीषु तस्याः स्खलितं प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥' इतीदं ध्वन्युदाहरणम् । एवं चेदं कुमारसम्भवस्य चित्रमीमांसायां चोदाहृतम् । अत्र हि भगवतो महेश्वरस्य स्वात्मनि कमप्यनुग्रहमाकाङ्क्षमाणाया भगवत्याः समाध्यवस्थावर्णनम् । अस्य च वाक्यार्थो दशमे परिच्छेदे स्फुटीभविष्यति । मूलकृता तत्रैव प्रसङ्गान्तरेणोदाहृतत्वात् । चमत्कारः पुनरप्पयदीक्षितपादैरेव यथा स्फुटीकृतस्तथा प्रदर्श्यते, तस्य निरवद्यत्वात् । तथा च तत्रत्यो ग्रन्थः 'अत्र तपस्यन्त्या देव्या देहोपरि निपततां प्रथमवृष्टिबिन्दूनां क्रियास्वभाववर्णनेन देव्याः समाध्युचितावस्थाऽभिव्यक्तिद्वारा चिरनिदाघतप्तदेहोपरि निपतनेन सुखपारवश्यसम्भ्रमहेतावपि अभिहिता समाध्यवस्था व्यज्यते । तथा हि-' नासाऽग्रन्यस्तनयनः संवृतास्यः सुनिश्चलः । ध्यायीत मनसा देवमुरो विष्टभ्य चाग्रतः ।'इति समाधिमतामवस्थानमाहुः । तत्र 'पक्ष्मसु स्थिता'इत्यनेन नासाऽग्रन्यस्तनयनतारूपमर्धनिमीलनं व्यज्यते । सर्वथोन्मीलने पक्ष्मणामूर्ध्वाग्रत्वेन, सर्वथा निमीलनेन च तेषामधोऽग्रत्वेन जलबिन्दूनां स्थित्यसम्भवात् पक्ष्मभ्यश्च्युतानां तेषामास्यप्रवेशेनाधरोष्ठे निपत्य ततश्च्युतिकथनेन संवृतास्यत्वं व्यज्यते । ततश्च्युतानां तेषां स्तनोत्सेधनिपतनादिवर्णनेन तूरोविष्टम्भः । अलसंवदनावस्थाने हि स्तनयोरन्तः सङ्कुचिताकारतया तदुत्सेधयोस्तेषां पतनं न स्यात् । कथञ्चित्तयोः पतित्वा वलित्रयं प्राप्तानामपि तिर्यगेव गमनं स्यात् । न नाभिदेशप्राप्तिः । नाभौ च संवृतायां प्रवेशो न स्यात् । पक्ष्माधरादिपतनक्रमकथनेन च निश्चलत्वं व्यज्यते । मुखादिचलने सति पक्ष्मपतितानां तेषामधरपयोधरादिक्रमेण पतनासम्भवात् । किञ्चैभिरेव विशेषणैर्देव्या लोकोत्तरं सौन्दर्यमभिव्यज्यते । [ तथाहि-] 'स्थिता'इत्यनेन पक्ष्मणामविरलतायाः 'क्षण' मित्यनेन तेषां मसृणतायाः शिथिलवेगानां तेषां स्तनोत्सेधे चूर्णीभाववर्णनेन तयोरतिकाठिन्यस्य, उरोविष्टम्भेऽपि वलीषु तेषां स्खलनोक्त्या वलीनां विस्पष्टतायाः सर्वबिन्दूनां नाभावेव प्रवेशकथनेन नाभेरतिगभीरतायाश्चाभिव्यञ्जनात् ।'इति यत्तु पण्डितराजैरुत्तमोत्तमं काव्यमुदाहरद्भिः-' शयिता सविधेऽप्यनीश्वरा सफलीकर्त्तुमहो मनोरथान् । दयिता दयिताननाम्बुजं दरमीलन्नयना निरीक्षते ॥' अत्रालम्बनस्य नायकस्य सविधशयनाक्षिप्तस्य रहःस्थानादेरुद्दीपनविभावस्य तादृशनिरीक्षणादेरनुभावस्य त्रपौत्सौक्यादेश्च व्यभिचारिणः संयोगाद्रतिरभिव्यज्यते ।'इत्युक्तम् । तत्र 'अहो पूर्णं सरो यत्र लुठन्तः स्नान्ति मानवाः'इत्यत्रेवाहो इत्यस्य विरुद्धार्थप्रत्यायकत्वेन'अहो अनीश्वरा विधवाऽपि मनोरथान् सफलीकर्त्तुं सविधे शयिता दयिता सती दयितानऽऽनाम्बुजं दरेण न कश्चिन्मम जुगुप्सितं कर्म जानीयादिति भयेन निमीलन्नयना निरीक्षते'इत्यर्थस्य निर्बाधितत्वेन परकीयायाः कस्या अपि विधवायाः परप्रसङ्गगर्हणपरत्वेन काव्यत्वमभाव एवेति तु दूरमास्तां तत्सद्भावविचारः । अथ कथमपि ध्वनिस्वीकारेऽपि 'शयिता सविधे'इति प्रयुक्ता ग्राम्यता दुर्निवारा । गुणीभूतव्यङ्ग्यं यथा-' प्रहरविरतौ मध्ये वाऽह्नस्ततोऽपि परेण वा किमुत सकले याते वाऽह्नि प्रिय ! त्वमिहैष्यसि । इति दिनशतप्राप्यं देशं प्रियस्य यियासतो हरति गमनं बालाऽऽलापैः सबाष्पगलज्जलैः ॥'इति । पद्यमिदममरुशतकस्य प्रवत्स्यन्नायिकायाः कस्याश्चिदधैर्यवर्णनपरम् । अस्य च 'हे प्रिय प्रेमनिकेत ! प्रहरविरतौ एकस्य प्रहरस्य विरामे सति किमिह मत्सन्निधौ एष्यसि पुनरागमिष्यसि किं वाऽह्नो दिवसस्य मध्ये प्रहरद्वयावसाने इह समागमिष्यसि किं वा ततोऽपि परेण प्रहरत्रयापगमे पुनरुपैष्यसि किमुत सकलेऽह्नि दिने याते व्यतीते एव पुनरागमिष्यसि । इत्येवं बाला काचिदधीरा दिनशतप्राप्यं देशं यियासतो गन्तुमभिलषतः प्रियस्य गमनं गमनोद्योगं सबाष्पगलज्जलैरालापैर्हरति निरुणद्धि ॥'इत्यर्थः । तात्पर्यं पुनः-' हे प्रिय ! यत्र क्वापि गन्तुमिच्छसि तत्र याहि, किन्तु पुनः प्रहरस्यैकस्यावसाने एव प्रथमं त्वयेहागन्तव्यं, यदि पुनर्विलम्बः स्यात् तर्हि द्वितीये प्रहरेऽवश्यं पुनरागन्तव्यम्, अथ कथमपि किञ्चिद्विलम्बो भवेत्तदा तृतीये प्रहरे समागन्तव्यम्,इतः परमशेषेऽस्मिन्दिवसे व्यतीते पुनरागमनं कथमपि युज्यते किन्तु पुनरपि अनागते त्वयि न क्षणमपि मम जीवितं भविष्यतीति दृढं निश्चीयताम् । इत्येवं ब्रुवन्ती बाला नेत्रेभ्योऽश्रूणि मुञ्चति विह्वलतया च तस्या गद्गदाक्षरा आलापाः, प्रियश्च यत्र गन्तुमभिलषति स देश एव प्रथममनेकशतदिवसप्राप्यः, तत्र कार्यसम्पादनं पुनः कियता कालेन सम्पाद्यमिति तु तादृशगमनोद्योगेनैव विज्ञेयं, पुनः प्रत्यागमाशा कदाचित् सम्भवति । अतः प्रियं निवर्त्तयत्येव तथोद्योगविचारादिति । अत्र 'च ततः परं प्राणान्धारयितुं न शक्ष्यामी'ति व्यङ्ग्यस्य 'हरति गमन' मित्यस्य वाच्यस्य सिद्धाङ्गतया गुणीभावः । न च । ननु तथाऽस्तु गुणीभूतत्वं, किन्तु नायकादेर्विभावस्य, बाष्पादेरनुभावस्य, चिन्ताऽऽवेगादेश्च सञ्चारिणः संयो

तत्र-

**२८२ वाच्यातिशायिनि व्यङ्ग्ये ध्वनिस्तत् काव्यमुत्तमम् ॥ १९८॥**

**वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे 'ध्वन्यतेऽस्मि'न्निति व्युत्पत्त्या ध्वनिर्नामोत्तमं काव्यम्।**

---

गादभिव्यज्यमानेन विप्रलम्भेन ध्वनित्वं को निवारयेदिति शङ्क्यम्। कवितापरिपाकस्य वाच्यसिद्ध्यङ्गभूते तादृशे व्यङ्ग्य एव विश्रान्तेः। तथा कथमपि ध्वनित्वोज्जीवनेऽपि तादृशचमत्कारस्य तत्र पुनरप्युदयाभावात्।

ननु को नाम काव्यत्वोत्कर्षसमर्पको ध्वनिरिति पृच्छन्तं प्रत्याह-तत्रेत्यादि।

तत्र तयोर्मध्ये इत्यर्थः। ध्वनिगुणीभूतव्यङ्ग्ययोर्मध्ये इति भावः।

२८२ **वाच्यातिशायिनि**। वाच्यपदं लक्ष्यव्यङ्ग्ययोरप्युपग्राहकम्। व्यङ्ग्यशब्देनापि पौर्व एव व्यङ्ग्यो बोध्यः। तथा च-वाच्यमतिशयितुं शीलमस्यास्तीति तस्मिन्। वाच्यलक्ष्यपूर्वव्यङ्ग्यार्थापेक्षया सातिशयं चमत्कारशालिनीत्यर्थः। क्वचिद्वाच्यापेक्षया क्वापि लक्ष्यापेक्षया क्वापि पुनः पूर्वव्यङ्ग्यापेक्षया स्फुटं सातिशयं चमत्कारसम्भारभाजनभूत इति भावः। अत्र 'स्फुट'मिति 'अतिप्रकट' मित्यर्थकपरं नावगन्तव्यम्, किन्तु 'असंशय' मित्यर्थपरम्। अतिप्रस्फुटत्वे चमत्कारस्यैव निवृत्तिप्रसङ्गात्। 'सुप्यजातौ णिनिस्ताच्छील्ये। ३।२।७८' इति णिनिः। यत्र तु 'वाच्यातिशायिनी'ति पाठः। तत्र, वाच्यादतिशायीति समासः पुनर्योगविभागात्। **व्यङ्ग्ये** व्यञ्जनया बोध्येऽर्थे चमत्कारे वा। सतीति शेषः। **ध्वनिः** 'ध्वनि'रिति व्यपदेशः। **तत्** तस्मात्कारणादित्यर्थः। **काव्यम्**। पूर्वोक्तलक्षणाक्रान्तं सदिति शेषः। पूर्वोक्तं च लक्षणं 'वाक्यं रसात्मकं काव्य' मित्येव। तथा च-रसात्मकवाक्यस्वरूपं काव्यं ध्वनिविशिष्टत्वेन ध्वनिरिति व्यपदिश्यमानमित्यर्थः। 'तत्काव्य'मिति समस्ते पाठे तु 'तस्य ध्वनेः काव्य' मित्यर्थः। **उत्तमम्**। श्रेष्ठमित्यर्थः। वस्तुतया सहृदयहृदयदयितमिति भावः। एवं च-गुणीभूतवाचकादिशब्दवाच्याद्यर्थसत्त्वे सति कस्मिन्नपि सहृदयवास्तविकदयिते कस्मिन्नपि चमत्कारभूमावर्थे च परिस्फुरति रसात्मकवाक्यस्वरूपं काव्यं ध्वनिप्राधान्येन 'ध्वनि' रित्येव व्यपदिश्यमानमुत्तममिति निष्कर्षः। कस्मिन्नपि सहृदयहृदयेतरभाग्यविषये। तथोक्तं भगवता-'कश्चिन्मां वेत्ति तत्त्वतः।' इति। यद्वा-'रस्यते इति रसः' इति पूर्वोक्तनिर्वचनवशाच्चमत्कारापरपर्याय एव रसः। तस्य च सहृदयदयितत्वे स्वाभाविकेऽपि वाच्याद्यतिशायित्वे सुतरामिति ध्वनिरेव काव्यं, तच्चोत्तममिति बोध्यम्। अस्मिन् पक्षे व्यङ्ग्यस्य वाच्याद्यतिशायित्वे स्वतः सम्भवति रसात्मकत्वोत्कर्षः, न तदर्थं पूर्वोक्तलक्षणशबलताभ्युपगमप्रयास इति लाघवम्। एवमुभयथैव प्रहेलिकादिषु यथा कथञ्चिद्ध्वनिमतीष्वपि चमत्कारानुदयान्न काव्यत्वं, ध्वनिकाराणामपि मते ध्वनीनां चमत्कारशालिनामेव काव्यात्मकत्वाङ्गीकारस्य स्फुटं तत्रत्यग्रन्थपर्यालोचनया प्रतीतेः। चमत्कारमन्तरा काव्यत्वमपि नोदयत इति हि निर्विवादम्। अथैवं 'शयिता सविधे' इति निरुक्तपण्डितराजोदाहरणे तथा कथमपि ध्वनिप्रसङ्गावतारेऽपि ग्राम्यताप्राधान्यवशाच्चमत्कारविशेषस्य स्थगनान्नोत्तमोत्तमत्वम्। किन्तु काव्यत्वमात्रम्। ननु 'वाक्यं रसात्मकं काव्य' मित्यत्र रसपदं शृङ्गारादीनामेव ग्राहकमवगन्तव्यम्, 'रसस्वरूपं निरूपयिष्यामः' इति पुरस्तादेव तत्र तत्रभवता ग्रन्थकृता प्रतिज्ञातत्वात्। इति चेन्न। तदनन्तरं पुनस्तेनैव 'रस्यते इति रसः। इति व्युत्पत्तियोगाद् भावतदाभासादयोऽपि गृह्यन्ते' इत्यस्याप्यभिहितत्वात्। न च तावता 'रसभावरसाभासदिभावाभासादीनामेव ग्रहणमुपपद्यते न पुनर्वस्तुध्वन्यादीनामपी' ति वाच्यम्। तस्या व्युत्पत्तेरादिपदार्थस्य च विपुलोदरत्वेन प्रतिहतत्वासम्भवेन च तत्र तत्र सर्वत्र चमत्कारशालिनि वाक्ये सुङ्कुचितप्रसारत्वाभावात्। अत एव तृतीये परिच्छेदे रसस्वरूपनिरूपणानन्तरं 'चमत्कारप्राण' इति विवरणावसरे 'चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्यायः। तत्प्राणत्वं च .. तदाह...'रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते। तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः ॥...' इत्युक्तं तत्रभवता तेनैव। रसानां तथा निरूपणं तु तत्र स्फुटं चमत्कारप्रतीत्यनुबन्धीति बोध्यम्। तत एव रसस्याद्भुतत्वोद्घोषणमपि सङ्गच्छते। एतेन 'काव्यात्मभूतस्य ध्वनेर्भेदैनैव ध्वनिकाव्यप्रभेदानाह-भेदाविति। इह यद्यपि वस्त्वलङ्कारध्वनीनां काव्यात्मत्वं नाङ्गीकृतं तथाऽपि रसादिप्रकर्षकत्वेनैव तेषां काव्यात्मत्वमित्यभिप्रायेण तत्साधारणं ध्वनिप्रभेदनिरूपणं प्रक्रमते इति भावः।' इति तर्कवागीशपादानां समाधानं नातिरुचिरमित्यवगम्यम्॥ १॥

अथ कारिकाया निर्गलितमर्थं समासेनाह-वाच्यादित्यादिना।

**वाच्यात्**। अत्रापि वाच्यपदं लक्ष्यपूर्वव्यङ्ग्यार्थयोरप्युपग्राहकम् । तथा च वाच्यार्थलक्ष्यार्थपूर्वव्यङ्ग्यार्थापेक्षयेत्यर्थः । **अधिकचमत्कारिणि**। अधिकं स्फुटं सातिशयं वा चमत्कारीति तस्मिन्। यद्यपि गुणीभूताभ्यां शब्दार्थाभ्यामभिव्यज्यमानस्यार्थस्य प्रायः सर्वत्रैव चारुत्वमवगम्यते तथाऽपि तत् क्वचित् प्रहेलिकादौ व्यभिचरति, क्वचिच्च तत्साधारण्यम्, न ततस्तत्तथात्वमात्रे काव्यत्वोत्तमत्वं सङ्गच्छते। इत्येव 'अधिकचमत्कारिणी'त्युक्तम्। **व्यङ्ग्यार्थे** व्यङ्ग्योऽसावर्थस्तस्मिन्। व्यङ्ग्यो व्यञ्जनया बोध्यः। पूर्वव्यङ्ग्यार्थापेक्षया यत्राधिकचमत्कारी चरमो व्यङ्ग्यार्थस्तत्र। **ध्वन्यते** स्फुटं सातिशयमभिव्यज्यते। **अस्मिन्**। 'भावोऽर्थो वे'ति शेषः।' इति। **व्युत्पत्त्या**। 'हेतौ' ।२।३।२३॥ इति तृतीया :। तथा च-इत्याकारव्युत्पत्तिहेतोरित्यर्थः। **ध्वनिः**। **नाम** प्रसिद्धम्। **उत्तमम्**। निरवद्यत्वात् कवितापरिपाकनिकषभूतत्वाच्च सहृदयानां नितरां दयितमित्यर्थः । वाच्यार्थापेक्षया लक्ष्यार्थापेक्षया वा पूर्वव्यङ्ग्यार्थापेक्षया वाऽतिशयितचमत्कारे व्यङ्ग्यार्थे समुदीयमाने ध्वनिरिति व्यपदेशार्हमुत्तमं काव्यमिति भावः । यत्तूक्तं ध्वन्याचार्यैः-'यत्रार्थः शब्दो वा, तमुपसर्जनीकृतस्वार्थौ । व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः ॥' इति । तत्र 'त'मिति 'चमत्कार'मिति, 'व्यङ्क्तः' इति च 'स्फुटं ध्वनतः' इति 'काव्यविशेषः' इति च 'उत्तमसञ्ज्ञः काव्यभेदः' इति । यद्यप्येवं 'काव्यस्यात्मा ध्वनि'रिति ध्वनिमात्रस्य काव्यात्मत्वमङ्गीकुर्वतां तेषां नये 'काव्यविशेष'इत्यभिधानं विरुध्यते। तथाऽपि-चमत्कारसाधारण्येन ध्वनिमात्रस्य काव्यात्मत्वाङ्गीकारेऽपि तदतिशायितत्वेन तस्यैवास्योत्तमत्वमनवद्यम् । अत एव-ध्वनिप्राधान्येन काव्यस्य 'ध्वनि'रित्येव व्यपदेशः स्वीकृतः । अन्यथा 'ध्वनिम' दित्येवाभिहितं स्यात्। एतेन ध्वनेश्चमत्कारातिशयशालित्वे काव्योत्तमत्वाङ्गीकारेण चमत्कारसाधारण्ये काव्यस्यापि साधारण्यं, चमत्कारस्य कथञ्चित्सम्भवे कथञ्चिद् वा काव्यत्वचमत्काराभासे काव्याभासः, चमत्कारस्य सर्वथा सम्भवाभावे काव्यस्यापि सर्वथा सम्भवाभाव एवेति स्फुटं सूचितं भवति । शब्दार्थयोश्चमत्कारतारतम्येन काव्यस्यापि तारतम्यमिति स एव जीवातुः काव्यत्वस्येति सिद्धान्तवादे सर्वेषां प्राचामर्वाचां च मतानि तानि लक्षणानि च भवन्त्योतप्रोतत्वेनावस्थितानीति । 'काव्यस्ये' ति 'राहोः शिरः' इतिवदौपचारिका षष्ठी । नन्वेवं भवतु नाम वाक्यचमत्कारतारतम्यभेदेन काव्यत्वस्यापि तारतम्यव्यवस्था, किन्तु ग्रन्थकृतां का गतिः। उत्तममध्यमसञ्ज्ञौ द्वौ भेदाविति तैर्निरूपितत्वात् । इति चेत्! उच्यते। प्रथमतस्तु उत्तममध्यमत्वप्रयुक्तकाव्यद्वैविध्याभिधानमेव, अथ यत् काव्यस्यावरत्वं तदप्युत्तमत्वादप्युत्तमत्वं च न निवर्त्तयितुमीशः। प्रत्युत तस्य तथा समर्थयितुं विहितावष्टम्भत्वम् । यत्प्रत्यभिधातुं किञ्चित् प्रयतेवहि, पुनस्तत्केवलं रसस्य स्फुटं प्रतीत्यनुबन्धि । यावदुत्तमत्वं मध्यमत्वमपि वा तावदेव स्फुटं रसस्य प्रतीतिरित्यभिप्रायमूलमिति गृहाण । कथमन्यथा विभिन्नरूपचमत्कारावस्थिकध्वनिप्रपञ्चस्य काव्यात्मत्वाङ्गीकारः, कथं वा 'रस्यते इति रसः।' इति .. भावतदाभासादयोऽपि...,इत्यभिहितं सङ्गच्छेत। अत एवोक्तं रसगङ्गाधरकारैः-'तच्चोत्तमोत्तमोत्तममध्यमाधमभेदाच्चतुर्धा । शब्दार्थौ यत्र गुणीभावितात्मानौ कमप्यर्थमभिव्यङ्क्तस्तदाद्यम् । ...तारतम्यस्य स्फुटमुपलब्धेः । कोह्येवं सहृदयः सन् विनिर्गतं मानदमात्ममन्दिरात्! 'सच्छिन्नमूलः क्षतजेन रेणुः' इत्यादिभिः काव्यैः 'स्वच्छन्दोच्छलद ...' इत्यादीनां पामरश्लाघ्यानामविशेषं ब्रूयात्। सत्यपि तारतम्ये यद्येकत्वं कस्तर्हि ध्वनिगुणीभूतयोरीषदन्तरयोर्विभिन्नभेदत्वे दुराग्रहः । यत्र च शब्दार्थचमत्कृत्योरैकाधिकरण्यं तत्र तयोर्गुणप्रधानभावं पर्यालोच्य यथालक्षणं व्यवहर्त्तव्यम्। समप्राधान्ये तु मध्यमतैवे'ति । यत्तूक्तं ध्वन्याचार्यैः-'यत्रार्थः शब्दो वा ... यत्रार्थो वाच्यविशेषः, वाचकविशेषः शब्दो वा..' इति । तत्र वाचकवाच्यरूपशब्दार्थाभिधानं तत्प्राधान्याभिप्रायेणैव, न तु लाक्षणिकव्यञ्जकलक्ष्यव्यङ्ग्यव्यावृत्तिपरकत्वेन । कथमन्यथा-अविवक्षितवाच्यत्वे ध्वन्यवतारः सम्भवेत्। वाचकवाच्ययोस्तदानीं स्थगितप्रायत्वात्। उदाहरणं च तत्र-'सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः। शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥' इत्याद्येव। कथं पुनर्वा-'उअ णिच्चलणिप्पंदा भिसिणीपत्तम्मि रेहइ वलाआ । णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्तिव्व ॥ इत्याद्युदाहरणान्यगतिकानि न स्युः । अत्र हि व्यङ्ग्यावतारस्य स्फुटं रमणीयत्वम् । तथाहि-'निश्चला निष्पन्दा च वलाक

---

१ 'पश्य निश्चलनिष्पन्दा विसिनीपत्रे राजते वलाका। निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिव ॥' इति संस्कृतम्। पद्यमिदं च हालकविवरविरचितायाः श्रीशालिवाहनसप्तशत्या गाथाकोषस्य प्रथमशतकस्य चतुर्थम्।

२८३ भेदौ ध्वनेरपि द्वा-वुदीरितौ लक्षणाऽभिधामूलौ ।
अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च ॥ १९९ ॥

---

( 'वलाका वकपङ्क्तिः स्याद्बलाका विषकण्टिका । वलाका कामुकी प्रोक्ता'इत्युक्तेर्वकानां पङ्क्तिः ) विसिन्याः ( पद्मिन्याः ) पत्रे निर्मले मारकते भाजने ( पात्रे ) परिस्थिता शङ्खस्य शुक्तिरिव राजते इति पश्येति वाच्यार्थावतारो- 'निर्जनोऽयं देश'इति व्यनक्ति । स च 'स्वच्छन्दमिह चिरं विहर, पत्रे वलाकेव वलाका (कामुकी) भवन्ती त्वयि (त्वदङ्के) निर्भयमवस्थास्ये । आवयोः परिष्वङ्गश्च मरकतस्य शुक्त्याश्च कामपि कमनीयतामाकलयिष्यतीति व्यङ्ग्यान्तरावतारायेति । अभिनवगुप्तपादा अप्यत एवाहुः 'व्यङ्क्त इति द्विवचनेनेदमाह—यद्यप्यविवक्षितवाच्ये शब्द एव व्यञ्जकः, तथाऽपि—अर्थस्य सहकारिता न त्रुट्यति । अन्यथा ज्ञातोऽपि शब्दस्तद्व्यञ्जकः स्यात् । विवक्षितान्यपरवाच्ये च शब्दस्यापि सहकारित्वं भवत्येव ।...तेन यद्भट्टनायकेन द्विवचनं दूषितं, तद्गजनिमीलिकयैव । अर्थः शब्दो वेति तु विकल्पाभिधानं प्राधान्याभिप्रायेण । काव्यं च तद्विशेषश्चासौ, काव्यस्य वा विशेषः । काव्यग्रहणाद्गुणालङ्कारोपस्कृतशब्दार्थपृष्ठपाती ध्वनिलक्षण आत्मेत्युक्तम् । तेनैतन्निरवकाशं 'श्रुतार्थापत्तावपि ('जीवी गृहे न तिष्ठती'त्यादावपि) ध्वनिव्यवहारः स्यादिति । यच्चोक्तं (भट्टनायकेन) 'चारुत्वप्रतीतिस्तर्हि काव्यस्यात्मा स्या'दिति तदङ्गीकुर्म एवे' ति ।

उत्तमकाव्यमपि चमत्कारवैलक्षण्येन विभिद्यते इति दिदर्शयिषुराह—२८३ भेदावित्यादि ।

२८३ ध्वनेः पूर्वोक्तस्वरूपस्य काव्योत्तमत्वप्रयोजकस्य । अपि । **लक्षणाऽभिधामूलौ** । लक्षणामूलोऽभिधामूलश्चेतिः । यद्यप्यभिधापदस्य परत्वं नैव युज्यते । तथाऽपि तथा विवक्षावलाद् 'अभ्यार्हितं च*।' इति परत्वम् । **द्वौ** । 'द्वा'विति नियमार्थम्, द्विवचननिर्देशादेव द्वित्वप्रतीतिसिद्धेः । **भेदौ** । **उदीरितौ** कथितौ । तत्रैकः—**अविवक्षितवाच्यः** न विवक्षितमित्यविवक्षितं, तथाभूतं वाच्यमभिधया प्रतिपाद्यं यत्र सः । अत्र सामान्याभिप्रायेण क्लीवत्वम् । अन्यथा तु अविवक्षितो वाधितस्वरूपो वाच्योऽभिधया प्रतिपाद्योऽर्थो यत्र स इति । च पुनः । **अन्यो** द्वितीयो भेद इत्यर्थः । **विवक्षितान्यपरवाच्यः** विवक्षितं वक्तुमीप्सितमन्यपरं वाच्यं यत्र सः । अन्यद् व्यञ्जनया यत् प्रतिपाद्यते तत्, तत्र परं निष्ठम् । अत्रापि सामान्याभिधायेन क्लीवत्वमन्यथा तु पुंस्त्वमेव सङ्गच्छते । इति ॥ १९९ ॥

अत्रायम्भावः—लक्षणा तावद् द्विविधा रूढिः प्रयोजनवती च तत्र रूढिमूलस्तु ध्वनिर्न सम्भवति तत्र व्यञ्जनीयत्वस्य सर्वथाऽभावात् । अथ प्रयोजनवत्येष ध्वनेर्मूलं भवितुमर्हतीति नातिरोहितम् । यद्यपि लक्षणातः प्राथमिक्यभिधावृत्तिस्ततस्तन्मूल एव ध्वनिः प्रथमं निर्देश्यस्सम्भवति, तदपि तस्य वहुविषयतया, लक्षणामूलस्याल्पविषयतया सूचीकटाहन्यायेन प्रथमं लक्षणामूल एव निर्दिष्टः । वक्ष्यन्त्यत एव वृत्तिकारा अपि 'अभिधामूलस्य वहुविषयतया पश्चान्निर्देशः ।' इति । लक्षणा च मुख्यार्थवाधाऽनन्तरभाविनीति तन्मूलेऽपि ध्वनौ मुख्यार्थो वाधितस्वरूप एवावस्थास्यते इति निर्विवादम् । मुख्यार्थश्च वाच्यार्थ एवेत्यसावविवक्षितवाच्यः । अभिधया तु वाच्य एवोद्भाव्यते इति कथंस्वित् स्यात्तन्मूलस्य तथात्वम् । किन्तु प्रयोजनवत्या लक्षणायाः प्रयोजनं व्यञ्जनैकगम्यमिति स्वत एव तन्मूलस्य व्यङ्ग्यपरत्वं, न पुनस्तथासमर्थनोपयोगित्वम्, अथाभिधाया न व्यञ्जनोपकृतत्वं किञ्चिदिति तत्प्रतिपाद्यस्य ( वाच्यस्य ) व्यङ्ग्यपरत्वमन्तरा ध्वनित्वं न सङ्घटत इत्यभिधामूलस्य तस्य विवक्षितान्यपरवाच्यस्वरूपत्वं निर्वाधम् । नन्वेवं व्यञ्जनामूलोऽपि ध्वनिः प्रतिपादनीयः । व्यञ्जनाया अपि वृत्तित्वात् । त्वयाऽपि पूर्वं पूर्वव्यङ्ग्यस्य चरमव्यङ्ग्यं प्रति हेतुत्वं प्रदर्श्य तत्सातिशयत्वे चरमव्यङ्ग्यस्य ध्वनित्वाभिहितत्वात् । कथङ्कारं ग्रन्थकारैर्ध्वनेर्द्वैविध्यमेव पुनरभिहितम् । इति चेत् ! उच्यते । अभिधा तावत्स्वतन्त्रा वृत्तिः, तयैव शब्दस्यार्थः प्रथममुद्भाव्यते । किन्त्वसौ यदि सङ्केतितः । अतः सङ्केतितार्थोद्भावनानन्तरं तस्यां विरतायां तन्मात्रावष्टम्भा तद्बाधस्थले लक्षणा समुदयते । चन्द्रस्य सूर्यप्रकाशमात्रावष्टम्भत्वेऽपि सूर्यस्यैव प्रकाशवाधे यथा सम्भवस्तथातस्या अपीति । ताभ्यामप्येवं प्रत्येकं शब्दार्थ उद्भाव्यते, न पुनर्वाक्यार्थतात्पर्य्यमिति तात्पर्याऽऽख्याया वृत्तेरवतारः । अथ व्यञ्जना तासु विरतासु तासां पुनर्व्यापाराभावेऽपि यः कश्चित्सचमत्कारोऽर्थः सहृदयहृदयमात्रसाक्षिकोऽवतारोन्मुखोऽवतिष्ठते तन्मात्रोपजीव्या, पामरैः प्रत्याख्याताऽपि सहृदयैरभिनन्दितोन्मोदते । असौ च न केवलं शब्दशक्तिरर्थशक्तिरेव वा किन्तु प्रकृतिप्रत्ययादीनामपि शक्तिः । किन्त्वसौ क्वचिदभिधेया प्रतिपाद्यस्य

तत्र अविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः । लक्षणामूलत्वादेवात्र वाच्यमविवक्षितं वाधितस्वरूपम् । विवक्षितान्यपरवाच्यस्त्वभिधामूलः । अत एवात्र वाच्यं विवक्षितम् । अन्यपरं व्यङ्ग्यनिष्ठम् । अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः । यथा-प्रदीपो घटस्य । अभिधामूलस्य बहुविषयतया पश्चान्निर्देशः । अविवक्षितवाच्यस्य भेदावाह,—

२८४ अर्थान्तरे सङ्क्रमिते वाच्येऽत्यन्तं तिरस्कृते ।
अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति ॥ २०० ॥

---

वाच्यस्य स्वप्रतिपाद्यत्वे क्वचित् पुनस्तस्य वाधितस्य प्रयोजनोद्भावकत्वे इति नातिरिच्यते ताभ्याम् । पूर्वत्र ह्यभिधामूलस्य ध्वनेः सञ्चारः, उत्तरत्र च लक्षणामूलस्येति विदितचरं विदुषाम् । अत एव ध्वनेर्द्वैविध्यम् । ध्वनिः पुनः शब्दार्थातिशायिनि सति व्यङ्ग्ये सम्भवतीति क्वचित्तत्त्वानुदये प्रथमं व्यङ्ग्यमात्रम् । अथ यदि तस्माद्द्वव्येसातिशयं व्यङ्ग्यान्तरं ध्वनिरपि तदा स्यात्, किन्त्वत्र वाच्यस्य विवक्षितत्वेनाभिधामूलत्वमेवेति न तस्य तृतीयत्वम् । इदमभिहितम्-व्यङ्ग्याद् व्यङ्ग्यान्तरस्य ध्वनित्वेन व्यञ्जनामूलः पृथक् सम्भवन्नपि ध्वनिरभिधामूलेऽन्तर्भवति विवक्षितान्यपरवाच्याख्ये ध्वनाविति द्विविध एव ध्वनिरिति ॥ १९९ ॥

अथ कारिकायाः पूर्वे भागमदुर्बोध इत्युपेक्ष्योत्तरमेव भागं विवृणोति-**तत्र** तयोर्द्वैविध्ये । "आद्य" इति शेषः । लक्षणामूलाभिधामूलध्वनिद्वयान्तराद्यो लक्षणामूल इति भावः । **अविवक्षितवाच्यः । नाम** प्रसिद्धः । **लक्षणामूलो** लक्षणा मूलं यस्य सः । **ध्वनिः** । कुतोऽत्र वाच्यस्य विवक्षितत्वाभाव इत्याह—**लक्षणामूलत्वात्** । **एव** केवलम् । **वाच्यं** मुख्यार्थं इत्यर्थः । क्लीबत्वं तु सामान्याभिप्रायेण । **वाधितस्वरूपं** वाधितं स्वरूपं यत्र तत् । **तु** पुनः । **विवक्षितान्यपरवाच्यः** । "ध्वनि"रिति शेषः । **अभिधामूलः । अतो**ऽभिधामूलत्वादिति भावः । **एव । अत्रा**-स्मिन्नित्यर्थः । **वाच्यं** वाच्योऽर्थ इति भावः । **विवक्षितम**बाधितस्वरूपम् । **अन्यपर**मन्यद् व्यङ्ग्यं तत्र परं निष्ठम् । **व्यङ्ग्यनिष्ठम्** । कथं वाच्यस्य व्यङ्ग्यपरत्वमित्याह-**हि** यतः । **अत्रा**स्मिन् ध्वनौ । **वाच्यः । अर्थः । स्वरूपम् । प्रकाशयन् । एव । व्यङ्ग्यार्थस्य । प्रकाशकः** । इति । तत्र साहश्यं निदर्शयति-**यथा । प्रदीपः** । स्वरूपं प्रकाशयन्निति पूर्वेणान्वयः । **घटस्य** । अपीति शेषः । प्रकाशक इति पूर्वेणान्वयः । अत्रायम्भावः-यथा प्रदीपः स्वयमपि प्रकाशते, घटमपि प्रकाशयति, न पुनः केवलं स्वं, न वा घटमेव; तथा ध्वन्यवतारावसरे वाच्यो भवतु गुणीभूतः, किन्तु तथासन्नपि स्वयं प्रकाशते, व्यङ्ग्यार्थं च प्रकाशयते । तस्य हि स्वोपस्थितिद्वाराऽन्यावबोधं प्रति कारणत्वम् । अत्र तत्पदेन प्रदीपो वाच्यार्थो वा बोध्यः । उक्तं च विवृतिकारैः-'अत्र हीति । वाच्यार्थस्य स्वोपस्थितिद्वारा शाब्दबोधं प्रति कारणत्वमित्यभिप्रायेणेदमिति । यद्यपि घटाभावस्थले प्रदीपः स्वयमेव प्रकाशते न पुनर्घटं प्रकाशयते, तत्स्थितेरेव तदानीमभावात् । तथाऽपीदं तत्सत्त्वमुद्दिश्यैवोक्तम् । यद्वा-घटपदेनोपस्थितं प्रकाश्यजातं वस्तु । अत एव 'न किञ्चिदवेदिष' मित्यत्राबोधावबोधकत्वं परस्वरूपस्ये'ति । अथाभिधामूलस्य ध्वनेः पुनर्निर्देशाभिप्रायं स्वयं प्रकटयति-**अभिधामूलस्य** । ध्वनेरिति शेषः । **बहुविषयतया** बहवो विषयाः प्रतिपाद्या अर्था यत्र तस्य भावस्तत्ता तया । **पश्चा**ल्लक्षणामूलानन्तरम् । **निर्देशः** । 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र 'रात्रौ' इतिवत् 'लक्षणामूलस्याल्पविषयतया प्रथमं निर्देश' इत्यपि स्फुटम् ।

अथ निर्दिष्टमेव क्रममाश्रित्य लक्षणामूलस्याविवक्षितवाच्यस्य भेदद्वयवत्तायां कारणं प्रदर्शयंस्तदन्वयव्यतिरेकानुविधायिनीं काव्यद्वयोपपत्तिं च निदर्शयन्भेदद्वयप्रदर्शनं प्रतिजानीते-**अविवक्षितवाच्यस्य** अविवक्षितो वाच्यो मुख्यार्थो यत्र तस्य, अत एव लक्षणामूलस्येति भावः । ध्वनेरिति शेषः । **भेदौ** प्रकारौ । **आह—२८४ अर्थान्तरे** ऽन्योऽर्थ इत्यर्थान्तरं तत्र, अन्यस्मिन्नर्थे इत्यर्थः । अन्यो भिन्नः, सच वाच्यादेव, तथा च वाच्यापेक्षया भिन्नेऽर्थे इति भावः । **सङ्क्रमिते** सङ्क्रमो जातो यस्य तस्मिंस्तथाभूते, प्रविष्ट इत्यर्थः । **अत्यन्तं** सर्वथैवेति भावः । **तिरस्कृते**

अविवक्षितवाच्यो नाम ध्वनिरर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसङ्क्रमितत्वादर्थान्तरसङ्क्रमितवाच्यत्वम्। यथा;-

'कदली कदली, करभः करभः, करिराजकरः करिराजकरः।
भुवनत्रितयेऽपि बिभर्ति तुलामिदमूरूयुगं न चमूरुदृशः॥ १७२ ॥'

---

त्यक्ते। सतीति शेषः। "चातितिरस्कृते" इत्येव पाठो वा। **वाच्ये** वाच्यार्थे। **अविवक्षितवाच्यः। अपि। ध्वनिः। द्वैविध्यं** द्विविधस्य भाव इति तत्। **ऋच्छति** प्रतिपद्यते। अत्रायम्भावः-ध्वनिस्तावद् द्विविधः, लक्षणामूलोऽभिधामूलश्च; तत्र लक्षणामूल एवाविवक्षितवाच्यः। तत्त्वे हि वाच्यार्थस्याविवक्षितत्वं प्राधान्येनानभिमतत्वमन्यथाऽनुपयोगित्वं वा सङ्गच्छते। लक्षणा चोपादानाख्या, लक्षणाख्या; च। उपादानमजहत्स्वार्थेति, लक्षणं च जहत्स्वार्थेत्युच्यते। तत्रोपादानेन वाच्यार्थस्य लक्ष्यताऽवच्छेदके उपयोगिन्यर्थे आश्रयरूपेणैव सङ्क्रमितत्वं परिणमितत्वमुपस्थितत्वं वा, लक्षणेन तु न तत्, किन्तु तत्र वाच्यार्थस्य सर्वथैवानुपस्थितत्व लक्ष्यताऽवच्छेदकस्यैवार्थस्यावस्थानं न च वाच्यार्थस्य योगोऽभिमतः। तदेवं लक्षणाद्वैविध्ये तदन्वयव्यतिरेकानुविधायिनो ध्वनेरपि द्वैविध्यं निर्विवादम्। अत्रैतावानेव विशेषः, पूर्वत्राविवक्षितवाच्यत्वं वाच्यार्थानुपयोगित्वात, उत्तरत्र तु स्फुटमेवेति। ध्वनिस्वरूपं च निदर्शितं प्रागिति व्यङ्ग्यस्यास्फुटत्वे सन्दिग्धप्राधान्ये तुल्यप्राधान्येऽसौन्दर्ये काक्वाक्षिप्ते च नितान्तं गूढत्वेऽगूढत्वे चापराङ्गत्वे च न ध्वनिरूपत्वम्। इति बोध्यम्॥ २०० ॥

तत्र तावत् कारिकाऽर्थं सुगमयितुमाद्यप्रभेदतात्पर्यं विवृणोति **अविवक्षितवाच्यः। नाम** प्रसिद्धः। 'नाम कामे (कोपे) ऽभ्युपगमे विस्मये स्मरणेऽपि च। सम्भाव्यकुत्साप्राकाश्यविकल्पेष्वपि दृश्यते॥' इति मेदिन्युक्तेः। **ध्वनिः। अर्थान्तरसङ्क्रमितवाच्यः।** तथा-**अत्यन्ततिरस्कृतवाच्यः।** इतीत्थम्भूत् कारणात्। **द्विविधः। यत्र** यस्मिन् प्रकृतान्वये इति शेषः। **मुख्यः।** मुखे आदौ भव इति सङ्केतितार्थस्यैव प्राथमिकत्वात्तत्र चाभिधाया नियामकत्वादभिधया प्रतिपाद्यमान एव मुख्यः, आद्य इति भावः। **अर्थः। स्वयम्।** मुख्यताऽवच्छेदकरूपेणोपस्थित इत्यर्थः। **अनुपयुज्यमानो** नोपयुज्यमानः प्रकृतोपयोगितामनुपपद्यमान इति भावः। **स्वविशेषरूपे** स्वस्य विशेषः प्रकारस्तद्रूप इत्यर्थः। **अर्थान्तरे** प्रकारान्तरभूतेऽर्थे इत्यर्थः, येन रूपेण मुख्यार्थः प्रकृतान्वयानुपयोगी तद्भिन्नप्रकारभूतेऽर्थे इति भावः। **परिणमति** परिणामं गच्छन्निवेति भावः। यत्र मुख्योऽप्यर्थः प्रकारान्तरेण लक्ष्यार्थत्वमुपपद्यत इति तु समुदायतात्पर्यम्। **तत्र। मुख्यार्थस्य। स्वविशेषरूपार्थान्तरसङ्क्रमितत्वात्। अर्थान्तरसङ्क्रमितवाच्यत्वम्।** अत्रायम्भावः-यथा "काकेभ्यो दधि रक्ष्यता" मित्यत्र वाच्योऽपि काको दध्युपघातकरूपेण लक्ष्योऽर्थस्तथा यत्र यद्रूपेण प्रकृतान्वयानुपयोगी तदितरप्रकारेण स्वयं परिणमन्निव लक्ष्यः सोऽर्थान्तरसङ्क्रमितवाच्यो नाम ध्वनिः। अत्र च मुख्यार्थस्य साक्षाद्रूपेण प्रकृतानुपयोगित्वं बाधः। अस्यैव पुनः प्रकारान्तरेणोपयोग इतीयमुपादानलक्षणेति। अत्र तर्कवागीशाः "यत्रेति। 'प्रकृतान्वये' इति शेषः। स्वयं मुख्यताऽवच्छेदकरूपेण स्वविशेषरूपे स्वकीयमुख्यताऽवच्छेदकरूपेण स्वविशेषरूपे स्वकीयमुख्यताऽवच्छेदकव्याप्यधर्मे परिणमति विशेष्यतया भासते अर्थान्तरे सङ्क्रमितत्वाद् विशेष्यतया भासमानत्वात्। एतेन मुख्यार्थस्य मुख्यताऽवच्छेदकरूपेण प्रकृतान्वयानुयोगित्वं भावस्तस्यैव विशेषणान्तररूपेण बोध इतीयमुपादानलक्षणेति सूचितम्।" इत्याहुः।

उदाहरति-**यथा। कदली** रम्भा नाम वृक्षविशेषो न तु तन्नामा मृगविशेषः। तस्योरुसादृश्यासम्भवात्। 'रम्भा वृक्षेऽथ कदली पताकामृगभेदयोः।' इति मेदिनी। **कदली। करभः।** मणिबन्धमारभ्य कनिष्ठापर्यन्तं हस्तस्य बाह्यो भागो न तृष्ट्र-

अत्र द्वितीयकदल्यादिशब्दाः पौनरुक्त्यभिया सामान्यकदल्यादिरूपे मुख्यार्थे बाधिता जाड्यादिगुणविशिष्टकदल्यादिरूपमर्थं बोधयन्ति। जाड्याद्यतिशयश्च व्यङ्ग्यः।

---

शिशुः तस्याप्यूरुसादृश्यकल्पनासम्भवानुपपत्तेः। 'करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते।' इति मेदिनी। 'मणिबन्धादाकनिष्ठं करस्य करभो बहिः।' इत्यमरश्च। **करभः**। **करिराजकरः**। करिराजस्य गजेन्द्रस्य करो हस्तः शुण्डादण्ड इति यावत्। करः शुण्डादण्डोऽस्यातीति करी गजस्तेषां राजेति करिराजः। 'करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः।'इति मेदिनी। **करिराजकरः**। किन्तु—**चमूरुदृशश्च**मूरुरजिनयोनिर्मृगविशेषस्तस्येव दृशौ यस्यास्तस्याः। मृगनयनाया इति यावत्। 'कदली कन्दली चीनश्चमूरुप्रियकावुभौ। चमूरश्चेति हरिणा अमी अजिनयोनयः॥' इत्यमरः। **इदम्**। **ऊरुयुगम्**ऊर्वोर्जानूपरिभागयोर्युगं द्वन्द्वम्। **भुवनत्रितये**। **अपि**। किं पुनरेकस्मिन् भुवनद्वयोर्वा भुवनयोरिति भावः। **तुलां** सादृश्यमानयोः। 'गृहाणां दारुबन्धाय पीठकायामपीष्यते। राशौ पलशते भाण्डे' इति विश्वो हेमचन्द्रो मेदिनी च। **न**। **बिभर्ति** दधाति।' इदं पद्यं प्रसन्नराघवस्य। तोटकं चास्य च्छन्दः, तल्लक्षणं तु 'इह (ननु) तोटकमम्बुधिसैः प्रथितम्।' इति ॥१७२॥

अत्रौदाहार्यं दर्शयति—**अत्रे**त्यादिना।

**अत्रा**स्मिन्नित्यर्थः। उदाहृते पद्य इति भावः। **द्वितीयकदल्यादिशब्दा** द्वितीया द्वितीयवारं पठिताः कदल्यादिशब्दा इत्यर्थः। **पौनरुक्त्यभिया** पुनरुक्तत्त्व दोषभयेनोपराराात् पुनरुक्तत्वाभिधेयेन दोषेण दूषिता न स्यामेति भयेनेवेति भावः। **सामान्यकदल्यादिरूपे** सामान्यः स्वभावसिद्धोऽसौ कदल्यादिरूप इति तस्मिन्। **मुख्यार्थे**। **बाधिताः** प्रकृतान्वयानुयोगित्वं गता इत्यर्थः। **जाड्यादिगुणविशिष्टकदल्यादिरूपं** जाड्यादिगुणैः शीतलत्वह्रस्वत्वकर्कशत्वरूपैर्गुणैर्विशिष्टाः कदल्यादयस्तद्रूपम्। **अर्थम्**। **बोधयन्ति**। **च** तथा। **जाड्याद्यतिशयः** शीतलत्वाद्यतिशयः। **व्यङ्ग्यो** व्यञ्जनयाऽवगम्य इत्यर्थः। तथोक्तं तर्कवागीशैः। जाड्यं शैत्यम्। यद्यपि शैत्यं पयस्येव, तथाऽपि तस्य परम्परया कदलीवृत्तित्वमनुगन्तव्यम्। आदिना ह्रस्वत्वकर्कशत्वयोर्ग्रहणम्। न च शैत्यादीनामन्यत्रापि सत्त्वात् कथं कदल्यादिव्याप्यत्वमिति वाच्यम्। शैत्यादिविशेषस्यैवात्र विवक्षितत्वात्। जाड्याद्यतिशयश्चेति। व्यङ्ग्यो लक्षणाप्रयोजनबोधविषयः। सर्वत्रैव मुख्यार्थस्याभेदः सम्बन्धः। एवं च—कदल्यतिशीता, करभोऽतिह्रस्वः करिराजकरोऽतिकर्कश इति हेतोश्चमूरुदृश इदमीदृशमूरुयुगं भुवनत्रितयेऽपि तुलां सादृश्यं न बिभर्ति इत्यर्थः। घटादौ सर्वथा सादृश्यं न सम्भवति, यत्र कदल्यादौ सादृश्यं सम्भाव्यते तदतिशैत्यादिनाऽपकृष्टत्वमिति सुतरां भुवनत्रितये तुला नास्तीति भावः। अत्र व्यतिरेकालङ्कारो व्यङ्ग्यः।' इति। अत्रायं निर्गलितोऽर्थः—कदली रम्भा कदल्य तिशीतला, करभो मणिबन्धमारभ्य कनिष्ठापर्यन्तो हस्तस्य बाह्यो भागः करभोऽतिह्रस्वः, करिराजकरः शुण्डादण्डः पुनः करिराजकरोऽतिकर्कश इति चमूरुदृशो मृगनायनाया इदमीदृशं तत्तदपेक्षयाऽप्यतिरां शीतलत्वादिशाल्यूरुयुगं न भुवनत्रयेऽपि तुलां बिभर्तीति इति व्यतिरेकालङ्कारो व्यज्यते। इति। वस्तुतस्तु—या कदली सा कदली नितान्तं जडेति कथमप्येषा श्रिया सादृश्यमधिरोहन्त्यपि ततोऽपकृष्टा, तथा यः करभः सोऽपि करभो नितान्तं ह्रस्वो दुर्विध इति यावत् इत्येषोऽपि तथैव, यः पुनः करिराजकरः सोऽप्येवं करिराजकरो भृशं कर्कश इदं तु चमूरुदृशो मृगनयनाया ऊरुयुगं तेभ्यः सर्वेभ्यो व्यतिरेकीति भुवनत्रयेऽपि नान्यसदृशं किन्तु स्वमिव स्वमिति न केनापि समं तुलां बिभर्त्ति इत्यत्र व्यतिरेकोऽनन्वयश्चालङ्कारौ व्यज्येते इति। अस्मिन् भुवने या कदली रम्भा सा कदली नितान्तं विशिष्टा, अथ यः करभः करे भातीति तथोक्तश्चूडाकारो भुजगेशशिरोमणिः स करभो नितान्तं मध्ये मध्ये निम्नोन्नतत्वशाली, यः पुनरुपरिष्टात् करिराजकर ऐरावतशुण्डादण्डः सोऽपि करिराजकरो नितान्तं कर्कश इति स्फुटं भुवनत्रयेऽपि चमूरुदृश इदमूरुयुगं न तुलां बिभर्ति। इति वा कवेस्तात्पर्य्यम्।

यत्र पुनः स्वार्थं सर्वथा परित्यजन्नर्थान्तरे परिणमति तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम्। यथा-

"निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते॥"

अत्रान्धशब्दो मुख्यार्थे बाधितोऽप्रकाशरूपमर्थं बोधयति। अप्रकाशातिशयश्च व्यङ्ग्यः। अन्धत्वाप्रकाशत्वयोः सामान्यविशेषभावाभावान्नार्थान्तरसङ्क्रमितवाच्यत्वम्। यथा-

---

कवेस्तात्पर्यम्।

अथात्यन्ततिरस्कृतवाच्यपदार्थं विवृणोति-यत्रेत्यादिना।

**यत्र** यस्मिन्नित्यर्थः। पद्ये वाक्ये वेति शेषः। **पुन**स्त्वित्यर्थः। 'स्युरेवं तु पुनर्वैवेत्यवधारणवाचकाः।' इत्यमरः। एतेन सोऽस्त्येवार्थान्तरसङ्क्रमितवाच्य इति निर्दिशितं प्राक्। शब्द इति शेषः। **स्वार्थं** स्वस्य (शब्दस्य) अर्थस्तम्। अर्थः पुनः स्वभावसिद्धो मुख्य एवेति बोध्यम्। **सर्वथा** सर्वप्रकारेण। न तु येन केनैव प्रकारेणेति भावः। **परित्यजन्** समन्तात् त्यजन्। **अर्थान्तरे** अन्योऽर्थं इति तत्र। अन्योऽन्यप्रकारः। तत्त्वं च मुख्यार्थभिन्नत्वे सत्येवेति बोध्यम्। **परिणमति** परिणतो भवति। **तत्र**। यत्र शब्दस्य सर्वथैव न मुख्योऽर्थ उपयुक्तस्तत्रेत्यर्थः। **मुख्यार्थस्य**। **अत्यन्ततिरस्कृतत्वाद**त्यन्तं तिरस्कृतो बाधितः प्रकृतानुपयोगित्वादिति तत्त्वाद्धेतोरित्यर्थः। **अत्यन्ततिरस्कृतवाच्यत्व**मत्यन्तं सर्वथा तिरस्कृतो वाच्यो मुख्यार्थो यत्र तत्त्वमित्यर्थः।

तदेवोदाहरति-यथेत्यादिना।

**यथा** यद्वत्तत् सम्भवति तथा **'निःश्वासान्धः..'** इति।

**'निःश्वासान्धो** निःश्वासेन मुखनासिकाभ्यां निर्गतेन वायुनाऽन्धोदृष्टिहीनस्तत्प्रकाशानर्ह इति भावः। **आदर्शो** दर्पणः। **इव** तद्वत्। **चन्द्रमा** रविसङ्क्रान्तसौभाग्यः अथ तुषारावृतमण्डल इति शेषः। **न प्रकाशते**।' अत्रेदं तावद् बोध्यम्-यदिदं पद्यार्द्धं तद् भगवतो वाल्मीकिमुने रामायणे आरण्यकाण्डे षोडशे सर्गे शूर्पणखाया भाविनो मदनोद्दीपनस्य सूचनाय लक्ष्मणमुखेन हेमन्तवर्णनप्रस्तावे। अस्य च 'रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः।' इति पूर्वार्द्धम्। तथा च-रविसङ्क्रान्तसौभाग्यो रविणा सङ्क्रान्तं कृताक्रमणं सौभाग्यं सुभगत्वं सुन्दरत्वमिति यावत् यस्य सः। जायमानस्य सूर्यप्रकाशस्य पुरस्तादस्तमितमिव सुभगत्वं यस्य तादृश इति। सूर्ये ह्यभ्युदयमाने चन्द्रः कियन्तं समयं दृश्यमानश्चित्रित इवावतिष्ठते इति स्वाभाव्यात्। एतेन प्रातःकाले गोदावर्यामवगाह्य पुनरावर्त्तमानस्य (लक्ष्मणस्य) उक्तिरिति सङ्गच्छते। तुषारावृतमण्डलस्तुषारेण हिमेनावृतं व्याप्तम्मण्डलं यस्य सः। हेमन्ततौं हि चन्द्रमसो मण्डलं हिमकणिका (नीहार) संवृतं प्रभाते सम्भवतीति सिद्धम्। चन्द्रमाः। निःश्वासान्धः। आदर्शः। इव। न। प्रकाशते इति निष्पन्नोऽर्थः।

अथात्र तात्पर्यं निर्दिशति-अत्रेत्यादिना।

**अत्रा**स्मिन्नुदाहृतस्थल इति यावत् **अन्धशब्दः। मुख्यार्थे** मुख्यश्चासावर्थस्तस्मिन्नित्यर्थः। स च दृष्टिहीन इति। **बाधितः**। तस्यार्थस्य प्रकृतानुपयोगित्वेन तिरस्कृतः सन्नित्यर्थः। अन्धशब्दस्य मुख्यार्थश्च 'अन्धयती'त्यन्ध इति व्युत्पत्त्या दृष्ट्युपघातरूपः। 'अन्ध दृष्ट्युपघाते' इत्यस्माच्चौरादिकादच्। अन्धोऽदृगि' त्यमरः। **अप्रकाशरूपम्**। न प्रकाशो यत्रेति तं रूपयति निरूपयतीति यावत् तं तथोक्तम्। यद्यपि 'अन्धंतमस्यपी' त्यमरोक्त्या 'अन्धं स्यात्तिमिरे क्लीबे चक्षुर्हीनेऽभिधेयव'दिति मेदिनीकारोक्त्या चान्धशब्दः प्रकाशाभावरूपे तिमिरार्थेऽपि निर्दिष्टः प्रतिभाति, तथाऽपि तदर्थकस्य तस्यान्धशब्दस्य क्लीबलिङ्गमात्रत्वस्याभ्युपगमान्न प्रकृतान्वयोपयोग्यर्थकत्वम्। न च 'अन्धमस्यास्ती'त्यन्ध इति वाच्यम्। 'गुणवचनेभ्यो लुगिष्ट' इति वार्त्तिकस्याप्रवृत्तेः। न हि तिमिरं नाम गुणः। द्रव्यविशेषस्य तेजसोऽभावरूपेणैव तस्य स्वीकृतत्वात्। इति दिक्। **अर्थम्। बोधयति** न त्वभिधत्ते। **च** तथा। **अप्रकाशातिशय** आदर्शस्येति शेषः। **व्यङ्ग्यो** व्यञ्जनयाऽवगम्यो ध्वन्य इति यावत्। अस्तीति शेषः। तथा च ध्वन्यत इति निष्पन्नोऽर्थः। अत्र च चाक्षुषज्ञानाजनकत्वरूपैकधर्मवत्त्वं मुख्यलक्ष्ययोः सम्बन्ध इति बोध्यम्।

ननु अत्रापि कथं नार्थान्तरसङ्क्रमितवाच्यत्वम्। मुख्यार्थस्यैव तत्र परिणतत्वादिति चेन्नेत्याह-**अन्धत्वाप्रकाशत्वयो**रित्यादिना।

'भम धम्मिअ वीसत्थो सो सुणओ अज्ज मारिओ देण ।
गोलाणईकच्छकुडङ्गवासिणा दरिअसीहेण ॥ १७३ ॥'

अत्र 'भ्रम धार्मिक' इत्यतो भ्रमणस्य विधिः प्रकृतेऽनुपयुज्यमानतया भ्रमणनिषेधे पर्यवस्यतीति विपरीतलक्षणाऽऽशङ्का न कार्या । यत्र खलु विधिनिषेधावुत्पत्स्यमानावेव निषेधविध्योः पर्यवस्यतस्तत्रैव तदवसरः यत्र पुनः प्रकरणादिपर्यालोचनेन विधिनिषेधयोर्निषेधविधी अवगम्येते तत्र ध्वनित्वमेव ।

---

**अन्धत्वाप्रकाशत्वयोः । सामान्यविशेषभावाभावात्** सामान्यविशेषयोर्भावस्तदभावादित्यर्थः । अन्धत्वस्याप्रकाशत्वेन समं न सामान्यविशेषभावः सङ्घटते इत्यस्माद्धेतोरिति भावः । स च व्यापकत्वव्याप्यत्वात्मकः । मुख्यार्थताऽवच्छेदकलक्ष्यार्थताऽवच्छेदकयोः सत्येव व्यापकव्याप्यभावेऽर्थान्तरसङ्क्रमितवाच्यत्वमुदेति नान्यथेति । यथा—'त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति। आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥'अत्र हि 'अहं कथयामी'ति मुख्यार्थताऽवच्छेदकस्य 'आप्तोऽहमुपदिशामी'ति लक्ष्यार्थावच्छेदकस्य च सामान्यविशेष ( व्यापकव्याप्य ) भाव इत्यर्थान्तरसङ्क्रमितवाच्यः । ननु—'यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा। अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति॥' इत्यादौ मित्रत्वशत्रुत्वानुकम्प्यत्वादीनां मुख्यार्थताऽवच्छेदकानां लक्ष्यार्थतावच्छेदकैराश्वस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वरूपैः सह सामान्यविशेष ( व्यापकव्याप्य ) भावाभावेऽपि कथमर्थान्तरसङ्क्रमितवाच्यत्वं तर्हीति चेत्? अत्रापि आश्वस्तत्वादिविशेष ( व्याप्य ) स्यैव विवक्षिततत्वात् । अत एव 'कदली कदली'' त्युदाहृतेऽपि पद्ये 'कदलीत्वा'दिरूपस्य मुख्यार्थतावच्छेदकस्य शीतलत्वादिरूपस्य लक्ष्यार्थताऽवच्छेदकस्य च सामान्यविशेष ( व्यापकव्याप्य ) भावसद्भावादर्थान्तरसङ्क्रमितवाच्यत्वम् । **न** । तथेति शेषः । **अर्थान्तरसङ्क्रमितवाच्यत्वम्** । किन्तु अत्यन्ततिरस्कृतवाच्यत्वमेवेति भावः ।

ननु 'भम धम्मिअ..' 'इत्यादौ विपरीतलक्षणया स्यादत्यन्ततिरस्कृतवाच्यो ध्वनिरित्याशङ्क्याह—'**भम..**' त्यादि ।

'**धम्मिअ** धार्मिक ! **गोलाणइकच्छकुडङ्गवासिणा** गोदानदीकच्छकुञ्जवासिना गोदानद्या गोदावर्याख्याया नद्याः कच्छस्तटं तत्र कुञ्जः समन्ताल्लताऽऽदिभिराच्छन्नो देशविशेषस्तत्र वासिनेत्यर्थः । 'कच्छौ द्रुमेदे नौकाङ्गेऽनूपप्राये तटेऽपि च ।' इति हैमः । 'निकुञ्जकुञ्जौ वा क्लीबे लताऽऽदिपिहितोदरे ।' इत्यमरः । **देण** तेन प्रसिद्धेनेति यावत् । क्वचित्'तेणे'ति पाठः । तत्राप्ययमेवार्थः । **दरिअसीहेण** दृप्तसिंहेन। दृप्तेन सिंहेनेत्यर्थः ।**सो** स दुष्टः तवोपद्रवकर्तृत्वेनानुभवविषयीभूत इति यावत् । **सुणओ** शुनकः कुक्कुर इति यावत् । 'शुनको भषकः श्वा स्या' दित्यमरः । **अज्ज** अद्य । **मारिओ** मारितो मृत्युं प्रापित इति यावत् । अत इति शेषः । **वीसत्थो** विश्वस्तः । सन्निति शेषः । क्वचित् 'वीसद्धो' इति पाठः । तस्य 'विश्रब्धः' इत्यर्थः । **भम** भ्रम भ्रमणं कुरु । पद्यमिदं हालकविकृताया गाथासप्तशत्या द्वितीये शतके पञ्चसप्ततिसङ्ख्याकम् । अत्र च जघनविपुला छन्दः । तल्लक्षणं च यथा—'संलङ्घ्य गणत्रयमादिमं शकलद्वयोर्भवति पादः । यस्या ( आर्यायाः ) स्तां पिङ्गलनागो विपुलामिति समाख्याति ॥' इति । 'इयं विपुला चपलावन्मुखजघनभेदभिन्ना भवति, प्रथमेऽर्द्धे मुखचपला, उत्तरार्धे जघनचपले'ति च बोध्यम् ॥ १७३ ॥

अत्र पुनरिदमवगन्तव्यम्—कस्याश्चित् कुलटाया गोदावर्यास्तीरे कुञ्जस्थलमेव सङ्केतस्थलं, तत्र च पवित्राणां पुष्पाणामवचयायावगाहनाय च प्रत्यहं गमनं च कस्यचिद्धार्मिकस्य तदेवं कृतसङ्केतभङ्गं स्वप्रेरितदुष्टकुक्कुरभयेनापि अपरित्यक्तसञ्चारं तं प्रति तस्या एव दिनान्तरे प्रभाते समये नित्यमिवोद्यन्तमुक्तिरियम् । एवं च यस्त्वां दिनान्तरे स्मोद्वेजयति सोऽद्य शुनकस्तत्रत्येन दृप्तेन मांसभक्षणेन नितान्तं लोलुपेन सिंहेन मारितो मृत्युमुपनीतः । अतो विश्वस्तः सन् यथेष्टं भ्रमेति न विरुध्यतेऽन्वयः । न च ततो विपरीत ( विरुद्ध ) लक्षणा । यतः स्यादधार्मिकेति बोधावतारः । तत् कथङ्कारम् 'उपकृतं बहु तत्र किमुच्यते' इत्यत्रेवात्रापि भवेद् विपरीतलक्षणासत्त्वेनात्यन्ततिरस्कृतवाच्यत्वम् । इति ।

एतत्सर्वं निर्दिशन्नाह—अत्रेत्यादि ।

**अत्रा**स्मिन्नुदाहृते पद्य इति यावत् । '**भ्रम । धार्मिक**' । **इत्यत** इत्यस्मात् कथनात् । **भ्रमणस्य । विधिः ।** तदुपदेश इति यावत् । **प्रकृते** तात्पर्यविषयीभूतस्वैरविहारे । **अनुपयुज्यमानतया** नोपयुज्यमानता तया । उपयुज्यत इत्युपयुज्यमानस्तत्ता । **भ्रमणनिषेधे** भ्रमणस्य निषेधस्तस्मिन् । **पर्यवस्यति** पर्यवसितो भवति । **इति । विपरीतल-**

तदुक्तम्-

'क्वचिद् बाध्यतया ख्यातिः क्वचिद् ख्यातस्य बाधनम्।
पूर्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु ॥'

---

क्षणाशङ्का विपरीतलक्षणाया विरुद्धार्थप्रतिपादिकाया लक्षणाया आशङ्का। **न। कार्या।** कुत इत्याह-**यत्र** यस्मिन् स्थले। **खलु** वाक्यालङ्कारः। 'खलु स्याद्वाक्यभूषायां जिज्ञासायां च सान्त्वने। वीप्सामाननिषेधेषु पूरणे पादवाक्ययो' रिति मेदिनीकारोक्तेः। **विधिनिषेधौ। उत्पत्स्यमानावु**त्पत्स्यमानान्वयबोधाविति यावत्। अन्वयबोधात् प्रागिति शेषः। **एव। निषेधविध्योः। पर्यवस्यतः। तत्र। एव। तदवसरः**तस्या विपरीतलक्षणाया अवसरः। **पुनः। यत्र। प्रकरणादिपर्यालोचनेन।** आदिपदेन देशकालाद्युपग्रहः। **विधिनिषेधयोः।** विषये इति शेषः। **निषेधविधी। अवगम्येते** न तु पर्यवस्यत एव। **तत्र ध्वनित्वम्।** अभिधामूलध्वनित्वमित्यर्थः। **एव** निर्बाधम्। अत्रेदमभिहितं भवति- 'उपकृतं बहु तत्र किमुच्यते' इत्यादौ अपकारिणं प्रत्युक्तिरित्यस्त्येव तदवसरः। अत्र तु न तथात्वम् धार्मिकं प्रत्येव तथोक्तिसत्त्वात्। कुलटायाः सङ्केतभङ्गोद्विग्नाया न भ्रमणानुज्ञा युज्यते तत एव तस्यास्तथात्वात्। इत्येवं प्रकरणादिपर्यालोचनमात्रेण भ्रमणविध्यनुज्ञा तन्निषेधरूपेणावगम्यते न तु पर्यवस्यतीत्यस्त्येवात्र ध्वनित्वं विपरीतलक्षणाऽभावश्चेति। अत्र चाभिनवगुप्तपादाः-'स्वतः सिद्धमपि भ्रमणं श्वभयेनापोहितमिति प्रतिप्रसवात्मको निषेधाभावरूपः, न तु वियोगप्रैषादिरूपोऽत्र विधिः। अतिसर्गप्राप्तकालयोर्ह्ययं लोट्। तत्र भावतदभावयोर्विरोधाद् द्वयोस्तावन्न युगपद् वाच्यता, न क्रमेण। विरम्य व्यापारद्वयाभावात्। 'विशेष्यं नाभिधा गच्छे'दित्यादिनाऽभिधाया विरम्य व्यापारासम्भवाभिधानात्। ननु तात्पर्यशक्तिरपर्यवसिता विवक्षया दृप्तधार्मिकतदादिपदार्थान्वयरूपमुख्यार्थबाधकबलेन विरोधनिमित्तया विपरीतलक्षणया च वाक्यार्थीभूतनिषेधप्रतीतिमभिहितान्वयदृशा करोतीति शब्दशक्तिमूल एव सोऽर्थः। एवमनेनोक्तमिति हि व्यवहारस्तत्र वाच्यातिरिक्तोऽन्योऽर्थः। इति नैतत्। त्रयो ह्यत्र व्यापाराः संवेद्यन्ते-पदार्थेषु सामान्यात्मस्वभिधाव्यापारः, समयापेक्षाऽर्थावगमनशक्तिः, अभिधासमयश्च। तावत्येव न विशेषांशे, आनन्त्याद् व्यभिचाराच्च। एकस्य ततो विशेषरूपे वाक्यार्थे तात्पर्यशक्तिः परस्परान्विते। 'सामान्यस्यान्यथासिद्धेर्विशेषं गमयन्ति हि।' इति न्यायात्। तत्र च द्वितीयकक्ष्यायां भ्रमेति विध्यतिरिक्तं न किञ्चित् प्रतीयते, अन्वयमात्रस्यैव प्रतिपन्नत्वात्। नहि 'गङ्गायां घोषः।' 'सिंहो वटुः' इत्यत्र च यथाऽन्वय एव बुभूषन् प्रतिहन्यते योग्यताविरहात्। तथा तव भ्रमणनिषेद्धा स श्वा सिंहेन हतः। तदिदानीं भ्रमणनिषेधककारणवैकल्याद्भ्रमणं तवोचितमित्यन्वयस्य न काचित् क्षतिः। अत एव मुख्यार्थबाधा नात्र शङ्क्येति। न विपरीतलक्षणाया अवसरः। भवतु वाऽसौ। तथाऽपि द्वितीयस्थानसङ्क्रान्तत्वाभावादसौ न भवति। तथा हि मुख्यार्थबाधायां लक्षणाप्रकृतिः सा च विरोधप्रतीतिरेव। न चात्र पदार्थानां स्वात्मनि विरोधः। परस्परं विरोध इति चेत्, सोऽयं तर्ह्यन्वये विरोधः प्रत्येयः। न च प्रतिपन्नेऽन्वये विरोधप्रतीतिः। विप्रतिपत्तिश्चान्वयस्य नाभिधाशक्त्या तस्याः पदार्थप्रतिपत्त्युपक्षीणायाविरम्यव्यापाराभावादिति तात्पर्यशक्त्यैवान्वयप्रतिपत्तिः।' इत्याहुः।

उक्तार्थे प्राचां सम्मतिं दर्शयितुमाह-**तत्।** यदस्माभिरुदीरितमिति शेषः। **उक्तं** पूज्यपादैरिति शेषः। **इति।** तद्वाक्यं निर्दिशति-'क्वचि..' इत्यादिना।

'**क्वचित्। बाध्यतया** विपरीतार्थे पर्यवसन्नतया। **ख्यातिः** कथनम्। अन्वयबोधावतारस्येति शेषः। **क्वचित्। ख्यातस्या**न्वयबोधावतारकथनविषयीभूतस्य। **बाधनं** बाधोबाधोदयाद्विपरीतार्थपर्यवसानमिति यावत्। **पूर्वत्र** यत्र क्वचिद्बाध्यतया ख्यातिस्तत्रेत्यर्थः। **लक्षणा** तन्मूलध्वनिः। **एव। स्यात्। तु** पुनः। **उत्तरत्र** यत्र क्वचित् ख्यातस्य बाधनं तत्रेत्यर्थः। **अभिधा** तन्मूलध्वनिः। **एव।** स्यादिति पूर्वेणान्वयः॥' अत्रेदमभिहितं भवति यत्र विधेर्निषेधरूपे निषेधस्य च विधिरूपे विपरीतार्थे पर्यवसन्नतयाऽन्वयबोधः स लक्षणामूलो ध्वनिः। यत्र पुनरन्वयबोधविषयीभूतस्य बाधे विधेर्निषेधरूपेण निषेधस्य च विधिरूपेणार्थेन पर्यवसानं सोऽभिधामूलो ध्वनिः स्यादिति।

अत्राद्ये मुख्यार्थस्यार्थान्तरे सङ्क्रमणं प्रवेशः, न तु तिरोभावः। अत एवात्राजहत्स्वार्था लक्षणा। द्वितीये तु स्वार्थस्यात्यन्तं तिरस्कृतत्वाज्जहत्स्वार्था।

२८५ विवक्षिताभिधेयोऽपि द्विभेदः प्रथमं मतः।
असंलक्ष्यक्रमो यत्र व्यङ्ग्यो लक्ष्यक्रमस्तथा ॥ २०१ ॥

विवक्षितान्यपरवाच्योऽपि ध्वनिरसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः।

---

एवं प्राचां संवादं निर्दिश्य प्रकृतार्थं प्रस्तावयति—अत्रेत्यादिना।

**अत्रा**स्मिन्। **आद्ये** पूर्वमुदाहृते'कदली कदली—'त्यादिरूपे पद्ये इति यावत्। **मुख्यार्थस्य** कदल्यादिरूपस्य। **अर्थान्तरे** जाड्यादिरूपे सामान्यकदल्यादिरूपार्थतोभिन्ने। **सङ्क्रमणं** नामेति शेषः। **प्रवेशः**। **तु** पुनः। **तिरोभावः**। मुख्यार्थस्येति शेषः। **न**। नहि प्रवेशस्तिरोभावमाहेति भावः। किं तत इत्याह—**अतः**। **एव**। **अत्रा**स्मिन् निर्दिष्टस्थले। **अजहत्स्वार्थो**पादानापरपर्याया। **लक्षणा**। **द्वितीये**'निश्वासान्धः—'इत्युदाहृते। **तु** पुनः। **स्वार्थस्य** दृष्टिहीनादिरूपस्य। **अत्यन्तं** सर्वथैव। **तिरस्कृतत्वाद्** बाधितत्वाद्बाधितस्वरूपत्वादिति यावत्। **जहत्स्वार्था** लक्षणलक्षणा। ज्ञेयेति शेषः।

एवं लक्षणामूलस्य ध्वनेर्निरूपणानन्तरमभिधामूलस्य ध्वनेर्निरूपणमुपक्रमते—२८५ **विवक्षिताभिधेय** इत्यादिना।

२८५ **विवक्षिताभिधेयो** विवक्षितोऽभिधेयोवाच्यार्थोऽ'न्यपर' इति शेषो यत्र सः। तदभिधेयोऽभिधामूलो ध्वनिरिति यावत्। **अपि** तत्र तावद् यथा ध्वनिरविवक्षितवाच्योविवक्षितान्यपरवाच्यश्चेति लक्षणाऽभिधामूलत्वेन द्विप्रभेदः, तत्पुनरविवक्षितवाच्याख्यो लक्षणामूलो ध्वनिरर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति यथाऽजहत्स्वार्थामूलत्वेन जहत्स्वार्थामूलत्वेन च द्विप्रभेदस्तथैवाभिधामूलोऽप्ययमित्यर्थः। **प्रथमं** पूर्वम्। **मतः**। पश्चादस्यापरे भेदा वक्तव्या इति भावः। कौ तौ तस्य द्वौ प्रभेदावित्याह—**यत्र** यस्मिन्। ध्वनाविति शेषः। **असंलक्ष्यक्रमो** न सम्यग् लक्ष्यो लक्षयितुं शक्यः क्रमः पौर्वापर्यं यत्र सः। **व्यङ्ग्यो** व्यञ्जनया बोध्योऽर्थ इत्यर्थः। स एक इति शेषः। **तथा**। यत्र—**लक्ष्यक्रमो** लक्ष्यो लक्षयितुं शक्य इति यावत् क्रमो यस्य सः। व्यङ्ग्य इति पूर्वेणान्वयः। स द्वितीयो भेदः। विवक्षितान्यपरवाच्यस्य ध्वनेरसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्वौ प्रभेदाविति भावः ॥ २०१ ॥

एतदेवाह—**विवक्षितान्यपरवाच्य** इत्यादिना।

**विवक्षितान्यपरवाच्यो** विवक्षितो वक्तुमभिलषितोऽन्यपरो व्यङ्ग्यनिष्ठो वाच्यो यत्र सः। अभिधामूल इति शेषः। **ध्वनिः**। **अपि**। **असंलक्ष्यक्रमव्यङ्ग्यो** न सम्यग् लक्ष्यो लक्षयितुं शक्यः क्रमः पौर्वापर्यं व्यञ्जकेन वाच्येन (विभावाद्यर्थेन समम्) यस्य तादृशो व्यङ्ग्यो यत्र स इत्यर्थः। रसस्तावद्व्यङ्ग्यः, व्यञ्जकश्च तस्य विभावादिरित्यस्ति तयोः पौर्वापर्यं क्रमः किन्तु न स सम्यग्लक्ष्यते। अनाविले हि प्रस्तावे सपदि प्रतीतिमुपगतेषु विभावानुभावव्यभिचारिषु सहृदयमहनीयेन प्रमात्रा नितान्तं सूक्ष्मेणैव कालेन सोऽनुभाव्यत इति तदानीं चेतस आस्वादावलेहपरवशत्वात्तस्य चोत्पलपत्रशतभेदन्यायेन रसस्य झटिति सूक्ष्मेणैव कालेन प्रतीतत्वान्नसंलक्ष्यक्रमत्वम्। इति भावः। **संलक्ष्यक्रमव्यङ्ग्यः** संलक्ष्यः क्रमो यस्य, स व्यङ्ग्योयत्र सः। **च** पुनः। **इति**। **द्विविधः**। यत्र वाच्य (विभावादि) व्यङ्ग्य(रसादि)यो रतिसूक्ष्मत्वेन न संलक्ष्यं पौर्वापर्यं सोऽसंलक्ष्यक्रमव्यङ्ग्यः। यत्र तु विचारावगम्यः प्रस्तावः, उद्भाव्या वा विभावादयः, तत्र सामग्रीविलम्बाधीनः चमत्कारस्योद्भाव इति संलक्ष्यते क्रमो व्यङ्ग्यस्येति स संलक्ष्यक्रमव्यङ्ग्यः। निर्बाधं चैवं भेदद्वितयम्।

नन्वभावनिरूपणस्य भावनिरूपणपूर्वकत्वात् संलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेर्निरूपणानन्तरमेवासंलक्ष्यक्रमव्यङ्ग्यस्यापि निरूपणौचित्यं सिद्धम्, अथ कथमत्रासंलक्ष्यक्रमव्यङ्ग्यनिरूपणानन्तरं संलक्ष्यक्रमव्यङ्ग्यनिरूपणं सङ्गच्छेतेति चेत्। सूचीकटाहन्यायात्। असंलक्ष्यक्रमव्यङ्ग्यो ह्येकप्रभेदः, तदितरः पुनः पञ्चदशप्रभेद इत्येके। अपरे त्वाहुः—उभयोः समानकक्षत्व एवायं प्रवर्त्तते न्यायः। प्रकृते पुनर्भावाभावयोः पौर्वापर्यनियमात् संलक्ष्यक्रमव्यङ्ग्यस्यैव ध्वनेर्निरूपणौ-

**२८६ तत्राद्यो रसभावादिरेक एवात्र गण्यते ।**
**एकोऽपि भेदोऽनन्तत्वात्सङ्ख्येयस्तस्य नैव यत् ॥ २०२ ॥**

उक्तस्वरूपो रसभावादिरसंलक्ष्यक्रमव्यङ्ग्यः । अत्र व्यङ्ग्यप्रतीतेर्विभावादिप्रतीतिकारणकत्वात् क्रमोऽवश्यमस्ति । किन्तूत्पलपत्रशतव्यतिभेदवल्लाघवान्न संलक्ष्यते । एषु रसादिषु च एकस्यापि भेदस्यानन्तत्वात् सङ्ख्यातुमशक्यत्वादसंलक्ष्यक्रमव्यङ्ग्यध्वनिर्नाम काव्यमेकभेदमेवोक्तम् । तथाहि-एकस्यैव शृङ्गारस्यैकोऽपि सम्भोगरूपो भेदः परस्परालिङ्गनाधरपानचुम्बनादिभेदात् प्रत्येकं च विभावादिवैचित्र्यात् सङ्ख्यातुमशक्यः का गणना सर्वेषाम् ।

---

चित्ये प्राप्तेऽपि असंलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः रसादिस्वरूपत्वात्तस्य च निरतिशयानन्दत्वात् सहृदयहृदयदयितत्वाच्च प्राधान्यमित्येव तस्यैतस्य ततः प्राङ्निरूपणमवसेयम् । इति ।

अभिधामूलस्य ध्वनेर्द्वैविध्यमेवमुदीर्य तत्राद्यस्वरूपं सहेतुप्रदर्शनपुरःसरमुदीरयति-२८६ तत्रेत्यादिना ।

२८६ **तत्र** संलक्ष्यक्रमव्यङ्ग्यासंलक्ष्यक्रमव्यङ्ग्ययोर्मध्ये इत्यर्थः । **आद्यो** ध्वनिरिति शेषः । **रसभावादिः**। आदिपदेन तदाभासादीनां ग्रहणम् । नामेति शेषः । **एक** एकप्रभेदः । **एव** न तु तदधिकप्रभेदोऽपीति भावः । **अत्र** । साहित्यसंसारे इत्यर्थः । **गण्यते** कीर्त्यते । ननु रसभावादीनामनेकत्वे कथं तदेकत्वमेवेत्याह-**तस्य** रसभावादिरूपस्यैकत्वेनैवाभिमतस्य ध्वनिप्रभेदस्येति यावत् । **एकः** सम्भोगाद्यन्यतम इति शेषः । **अपि** । **भेदः** । **अनन्तत्वाद**मितप्रकारकत्वात् । **यत्** । **न** । **एव** । **सङ्ख्येयः** सङ्ख्यातुं शक्यः । तत एव रसभावादिर्नामासंलक्ष्यक्रमव्यङ्ग्यो ध्वनिरेकप्रभेद इत्यभिधीयते । इति भावः ॥ २०२ ॥

अथ कारिकाऽर्थमेवमेव विवृण्वन्नाह-**उक्तस्वरूप** इत्यादि ।

**रसभावादिः** । आदिपदं च तदाभासादिग्राहकम् । भावश्च स्थायिव्यभिचारिरूपतया द्विविधः । आदिपदेन वा व्यभिचारिभावग्रहणम् । भावपदेन तु स्थायिभावग्रहणम् रसपदसाहचर्यात् स्थायिभावग्रहणस्यैवोपपत्तेः । क्वचिद् भावादिरित्येव पाठः । तत्र भावपदेन स्थायिभावग्रहणम् । आदिपदेन पुना रसादिग्रहणमवसेयम् । **उक्तस्वरूपोऽसंलक्ष्यक्रमो** यत्र व्यङ्ग्य इत्युक्तं स्वरूपं यस्य सः । **असंलक्ष्यक्रमव्यङ्ग्य**स्तदाख्यो ध्वनिरित्यर्थः । **अत्रा**स्मिन् ध्वनाविति शेषः । **व्यङ्ग्यप्रतीतेः** व्यङ्ग्यो रसादिस्तस्य प्रतीतिस्तस्याः । **विभावादिप्रतीतिकारणकत्वाद्** विभावादिप्रतीतिरेव कारणं यस्य तत्त्वात् । रसादेर्हि व्यङ्ग्यस्य विभावादिव्यञ्जक इत्येतत्प्रतीतिस्तत्प्रतीतेः कारणमित्यूह्यम् । **क्रमः** पौर्वापर्यम् । कार्यं हि कारणपूर्वकम् । कार्या पुना रसादिव्यङ्ग्यप्रतीतिस्तत्कारणभूता च विभावादिप्रतीतिरिति पूर्वं विभावादिप्रतीतिस्ततपुना रसादिप्रतीतिरिति । **अवश्यं** निश्चितः । **अस्ति** विद्यते । **किन्तु** । **उत्पलपत्रशतव्यतिभेदव**दुत्पलस्य कमलस्य पत्रशतं पत्राणां शतं शतकं तस्य व्यतिभेदो विशेषेणात्यत्यन्तं भेदो भेदनं तद्वत् । **लाघवा**न्नितान्तमेव शीघ्रोत्पन्नत्वादिति भावः । **न** नैव । **संलक्ष्यते** । इत्येव रसभावादिरूपोऽसंलक्ष्यक्रमव्यङ्ग्यो नाम ध्वनिरिति सङ्गच्छते इति बोध्यम् । इत्येवं ध्वनेस्तथाभूतव्यपदेशबीजं निर्दिश्य तदेकत्वहेतुबीजमपि निर्दिशति-**एषु** । **रसादिषु** रसभावतदाभासादिषु मध्ये । निर्धारणेऽत्र सप्तमी । **च** । **एकस्य** । **अपि** किं पुनः सर्वेषाम् । **भेदस्य** । **अनन्तत्वात्** । **सङ्ख्यातुम्** । **अशक्यत्वात्** । **असंलक्ष्यक्रमव्यङ्ग्यध्वनिः** । **नाम** । **काव्यम्** । **एकभेद**मेको भेदो यस्य तत् । **एव** । **उक्त**मेतेनैव निर्देशेन निर्दिष्टमवसेयमिति । अभिहितमर्थं विशेषाख्यानेन द्रढयति-**तथा हि** यथा हि एकस्यापि तेषां भेदस्यानन्तत्वमिति यावत् । **एकस्य** । **एव** । **शृङ्गारस्य** तदाख्यस्य रसस्य । **एकः** । **अपि** । **सम्भोगरूपः** । शृङ्गारस्य सम्भोगविप्रलम्भरूपद्विप्रभेदत्वात् । **भेदः** । **परस्परालिङ्गनाधरपानचुम्बनादिभेदात्** । **च** पुनः । **प्रत्येकं** परस्परालिङ्गनाद्यैकैकम् । **विभावादिवैचित्र्यात्** । **सङ्ख्यातुम्** । **अशक्यः** । **का** । पुनरिति शेषः । **सर्वेषां** तत्तत्प्रभेदानाम् । इति ।

**२८७ शब्दार्थोभयशक्त्युत्थे व्यङ्ग्येऽनुस्वानसन्निभे ।**
**ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः ॥ २०३ ॥**

**क्रमलक्ष्यत्वादेवानुरणनरूपो यो व्यङ्ग्यस्तस्य शब्दशक्त्युद्भवत्वेन, अर्थशक्त्युद्भवत्वेन, शब्दार्थशक्त्युद्भवत्वेन च त्रैविध्यात् संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनेः काव्यस्यापि त्रैविध्यम् ।**

---

अथ क्रमप्राप्तं संलक्ष्यक्रमाख्यं ध्वनिं निरूपयति–८२७ **शब्दार्थोभयशक्त्युत्थे** इत्यादिना ।

२८७ **शब्दार्थोभयशक्त्युत्थे** शब्दश्चार्थश्चोभयं चेति तेषां शक्तिरिति शब्दार्थोभयशक्तिस्तस्या उत्तिष्ठत्युदयते आविर्भवतीति यावत् यस्तस्मिंस्तथोक्ते । शब्दशक्तेरर्थशक्तेः शब्दार्थोभयशक्तेश्च य आविर्भवति तस्मिन्निति यावत् । **अनुस्वानसन्निभे**ऽनुस्वानः प्रतिध्वनिस्तत्सन्निभे तत्सदृशे इति यावत् । अन्वनुकृत्य स्वानं प्रथमध्वनिं वर्त्तत इति । **व्यङ्ग्ये** व्यञ्जनया बोध्ये । तस्मिन्नर्थ इति यावत् । सतीति शेषः । **लक्ष्यक्रमव्यङ्ग्यः** । लक्ष्यः क्रमो यस्य तादृशो व्यङ्ग्यो यत्र स तत्स्वरूप इति यावत् । **ध्वनिः** । **त्रिविधः** शब्दशक्त्युत्थार्थशक्त्युत्थशब्दार्थशक्त्युत्थत्वेनेति शेषः । **बुधैः** पौर्वापर्यज्ञैः । **कथितः** प्रतिपादितः ॥ २८७ ॥

अत्रेदमुक्तम्–अनुस्वानोऽनुरणनप्रतिश्रुत्प्रतिध्वन्याद्यपरपर्यायः स च स्वकारणीभूतशब्दोत्तरजायमानत्वरूप-क्रमतत्स्वरूपः सन् लक्ष्यते, तत्सन्निभः पुनर्यो व्यङ्ग्यार्थः स कथं न स्याल्लक्ष्यक्रमः । अथैवं शब्दशक्त्युद्भवोऽर्थशक्त्युद्भवः शब्दार्थशक्त्युद्भवश्चेति ध्वनिरसौ त्रिप्रकारो निरूपितः । इति ।

अत्राहुर्ध्वनिकाराः–ननु शक्त्या यत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकार उच्यते तदिदानीं श्लेषस्य विषय एवापहृतः स्यात् । नापहृत इत्याह–'आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाशते । यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः ॥' यस्मादलङ्कारो न वस्तुमात्रं ( सत् ) यस्मिन् काव्ये शब्दशक्त्या प्रकाशते । स एव शब्दशक्त्युद्भवो ध्वनि-रित्यस्माकं विवक्षितः । वस्तुद्वये च शब्दशक्त्या प्रकाश्यमाने श्लेषः । यथा–'येन ध्वस्तमनोभवेन बलिजित् कायः पुरास्त्री-कृतो...॥'नन्वलङ्कारान्तरप्रतिभायामपि श्लेषस्य व्यपदेशो भवतीति दर्शितं भट्टोद्भवेन तत्पुनरपि शब्दशक्तिमूलो ध्वनिर्नि-रवकाश इत्याशङ्क्येदमुक्तम् 'आक्षिप्त' इति । तदयमर्थः–यत्र शब्दशक्त्या साक्षादलङ्कारं वाच्यं सत् प्रतिभासते स सर्वः श्लेषस्य विषयः । यत्र तु शब्दशक्त्या सामर्थ्याक्षिप्तं वाच्यव्यतिरिक्तं व्यङ्ग्यमेवालङ्कारान्तरं प्रकाशते स ध्वनेर्विषयः । शब्दशक्त्या साक्षादलङ्कारान्तरप्रतिभा यथा–'तस्या विनाऽपि हारेण निसर्गादेव हारिणौ । जनयामासतुः कस्य विस्मयं न पयोधरौ ॥' अत्र शृङ्गारव्यभिचारी विस्मयाख्योभावः साक्षाद्विरोधालङ्कारश्च प्रतिभासेते इति विरोधच्छायाऽनुग्राहिण-श्लेषस्यायं विषयः, न त्वनुस्वानोपमव्यङ्ग्यस्य ध्वनेः ।' इति ।

अथ कारिकोक्तमेवार्थं निर्दिशति–**क्रमलक्ष्यत्वा**दित्यादिना ।

**क्रमलक्ष्यत्वात्** क्रमस्य व्यङ्ग्यप्रतीतिपौर्वापर्यस्य लक्ष्यत्वं स्फुटं प्रतीयमानत्वं तस्मात् । **एव** । **अनुरणन-रूपो**ऽनुरणनं प्रतिध्वनिस्तद्रूपः यः । **व्यङ्ग्यो** व्यङ्ग्यार्थः । **तस्य** । **शब्दशक्त्युद्भवत्वेन** शब्दशक्तेरुद्भवतीति, तत्त्वेन । पुनः–**अर्थशक्त्युद्भवत्वेन** । **च** तथा । अव्ययानामनेकार्थत्वात् । **शब्दार्थशक्त्युद्भवत्वेन** । साधनेनेति शेषः । **त्रैविध्यात्** । हेतोरिति शेषः । **संलक्ष्यक्रमव्यङ्ग्यनाम्नः** संलक्ष्यक्रमव्यङ्ग्य इति नाम यस्य तस्य । **ध्वने**-स्तत्प्रधानस्य । **काव्यस्य** रसा ( चमत्कारा ) त्मकवाक्यस्य । **अपि** । **त्रैविध्यम्** । यद्वा–संलक्ष्यक्रमव्यङ्ग्यनाम्नः । ध्वनेः । त्रैविध्यात् । काव्यस्य । अपि । त्रैविध्यम् । इति ।

ननु 'नित्यः शब्दार्थसम्बन्धः' इति शब्दार्थयोर्व्यभिचारित्वासम्भवात् कथं ध्वनेस्त्रैविध्यं सङ्गच्छते इति चेत् सत्यम् । अत्र प्राधान्यं विवक्षितम् । एवं च–शब्दपरिवृत्त्यसहत्वेनार्थपरिवृत्त्यसहत्वेन शब्दार्थपरिवृत्त्यसहत्वेन च तस्य तथात्वमिति निर्बाधम् । उक्तं च प्रदीपकारैः–" शब्दशक्तिमूलत्वं च एतदेव, यत्तेनैव शब्देन तदर्थप्रतीतिर्नतु पर्यायान्तरेणापि, एतद्वैपरीत्यं चार्थशक्तिमूलत्वं, न त्वभिधया तत्प्रतीतिरिति । एतेन–"अभिधाया यत्र न नियमनं तत्रैष

---

१ अत्रोक्तमुद्द्योतकारैः–'शब्दार्थयोरेकव्यङ्ग्यस्यापरव्यङ्ग्यत्वनियमादाह–शब्दशक्तिमूलत्वं चेति । अवच्छेदक-

तत्र—

**२८८ वस्त्वलङ्काररूपत्वा—च्छब्दशक्त्युद्भवो द्विधा ॥ २०४ ॥**

**अलङ्कारशब्दस्य पृथगुपादानादनलङ्कारं वस्तुमात्रं गृह्यते—**

**तत्र वस्तुरूपशब्दशक्त्युद्भवो व्यङ्ग्यो यथा—**

'पंथिअ ! ण एत्थ सत्थर—मत्थि मणं पत्थरत्थले ग्गामे।
उण्णअपयोहरं पेक्खिऊण जइ वससि ता वसु* ॥ १७४ ॥'

---

भेदो द्रष्टव्यः, तन्नियमने तु नाभिधामूलत्वं, किन्तु व्यञ्जनामूलत्वमेव । 'भद्रात्मनो दुरधिरोहतनोर्विशाल-वंशोन्नतेः कृतशिलीमुखसङ्ग्रहस्य। यस्यानुपप्लुतगतेः परवारणस्य दानाम्बुसेकसुभगः सततं करोऽभूत् ॥' इतिवद्भवेत् ।" इति यत् केनचिदुक्तं तन्नादेयम्, 'भद्रात्मनः—' इत्यादेरप्येतद्भेदत्वेनेष्टत्वात्। अन्यथा तस्य सर्वभेदबहिर्भावापत्तेः। इति। अत्रेदं बोध्यम्—'क्रमेण प्रतिभात्यात्मा योऽस्यानुस्वानसन्निभः। शब्दार्थशक्तिमूलत्वात् सोऽपि द्वेधा व्यवस्थितः ॥' इत्युक्तदिशा स तावद्द्विविधः, शब्दशक्तिमूलोऽर्थशक्तिमूलश्च ।' इत्युक्तनयेन च संलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेर्द्वैविध्यमेव न्याय्यम्, अथापि अवच्छेदकभेदेन शब्दार्थ- परिवृत्तिसहत्वासहत्वाभ्यामनुभवसिद्धस्य तत्तृतीयप्रभेदस्य दुरपह्नव एवेति। अत एवोक्तं प्रकाशकारैः—'अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः। शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः ॥' इति। रसगङ्गाधरकारैरप्युक्तम् 'इत्थमभिधामूलस्त्रिविधोऽपि सङ्क्षेपेण निरूपितो ध्वनिः।' इति।

अथ शब्दशक्तिमूलस्य ध्वनेरपि द्वैविध्यमित्याह—**तत्रे**त्यादिना।

**तत्र** तेषु त्रिषु संलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेः प्रभेदेष्विति यावत्।

२८८ **वस्त्वलङ्काररूपत्वा**द्वस्त्वलङ्कारौ रूपं स्वरूपं यस्य तस्य भावस्तत्त्वं तस्मात्। वस्तुरूपत्वादलङ्काररूपत्वाच्चेत्यर्थः। शब्दशक्तिमूलः। ध्वनिः। **द्विधा** प्रकारद्वयेनावस्थितः। स्यादिति शेषः। वस्तुमात्ररूपोऽलङ्कारमात्ररूपश्चेति स द्विप्रभेद इति भावः ॥ २०४ ॥

नन्वलङ्कारोऽपि वस्त्वेव तत्कथं तस्य पृथगुपादानमित्याशङ्क्य तत्सार्थकतां दर्शयति—**अलङ्कारशब्दस्ये**त्यादिना।

**अलङ्कारशब्दस्य** 'वस्त्वलङ्काररूपत्वा'दित्यत्रेति शेषः। **पृथग्** वस्तुशब्दादिति शेषः। **उपादानात्**। हेतोरिति शेषः। **अनलङ्कारं** नालङ्कारो यत्र तत्, नालङ्कार इति स यथा भवेत्तथेति क्रियाविशेषणं वा। **वस्तुमात्रं** वस्त्वेवेत्यर्थः। **गृह्यते** उपादीयते। अनयोर्भेदस्तु 'गोवलीवर्द'न्यायेनोह्यः।

वस्त्वलङ्कारध्वनी क्रमादुदाजिहीर्षुराह—**तत्र** तयोर्वस्त्वलङ्कारध्वन्योर्मध्ये इति यावत्। **वस्तुरूपशब्दशक्त्युद्भवः**। शब्दशक्तिमूलो वस्तुध्वनिरिति भावः। **यथा—'पंथिअ—'**इत्यत्र।

---

—भेदेनोभयान्वयव्यतिरेकानुविधाने तूभयशक्तिमूलत्वं द्रष्टव्यम्।' इति। २ 'भद्रात्मनः पवित्रस्य भद्राख्ययोनेश्च। दुरधिरोहतनोर्दुरधिरोहा परैरनभिभवनीयाऽऽरोढुमशक्या च तनुर्यस्य तस्य। विशालवंशोन्नतेर्विशालवंशे तद्वच्चोन्नतिर्यस्य तस्य। कृतशिलीमुखसङ्ग्रहस्य कृतः शिलीमुखसङ्ग्रहः शरप्रक्षेपाभ्यासदाढर्यं भृङ्गसञ्चयश्च येन तस्य। अनुपप्लुतगतेरनुपप्लुताऽप्रतिहताऽनुद्धता च गतिर्ज्ञानं गमनं च यस्य तस्य परवारणस्य परान् वारयतीति, परोऽसौ वारण इति च तस्य। यस्य प्रकृतस्य राज्ञोऽप्रकृतस्य पुनः करिणः। करः पाणिः शुण्डादण्डश्च। सततम्। दानाम्बुसेकसुभगो दानाम्बुनः प्रदानार्थं गृहीतजलस्य मदजलस्य च सेकेन सुभगः। अभूत्। स इति शेषः।' इत्ययमस्यार्थः। ३ शब्दशक्तिमूलस्य ध्वनेः प्रभेदात्मकत्वेनेत्यर्थः। ४ इति ध्वनिकारोक्तमार्गेण। ५ स संलक्ष्यक्रमव्यङ्ग्याख्यो ध्वनिः। ६ इति रसगङ्गाधरकारोक्तनयेन। ७ अंशभेदेनेत्यर्थः। ८ इतः पूर्वं 'यत्र तु कार्यपरिवृत्तिं सहमानानामसहमानानां च शब्दानां नैकजातीयप्राचुर्यम्, अपि तु साम्यमेव तत्र शब्दार्थोभयशक्तिमूलकस्य व्यङ्ग्यस्य स्थितिरिति द्व्युत्थो ध्वनिः। न चायं शब्दशक्तिमूलकतयैवार्थशक्तिमूलकतयैव वा व्यपदेष्टुं शक्यः, विनिगमकाभावात्। नापि शब्दशक्तिमूलकार्थशक्तिमूलकयोः सङ्करेण गतार्थयितुम्। व्यङ्ग्यभेद एव सङ्करस्येष्टेः। इह तु व्यङ्ग्यस्यैक्येन तस्यानुत्थानात्...इत्यादि पाठः।

* 'पथिक ! नात्र स्रस्तरमस्तिमनाक् प्रस्तरस्थले ग्रामे। उन्नतपयोधरं प्रेक्ष्य पुनर्यदि वससि तद्वस ॥' इति संस्कृतम्।

अत्र सत्थरादिशब्दशक्त्या 'यद्युपभोगक्षमोऽसि तदाऽऽस्स्वेति' वस्तु व्यज्यते। अलङ्कारो यथा—'दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा—' इत्यादौ।

---

'पंथिअ हे पथिक! मार्गगमनश्रान्तेति यावत्। एत्थ अत्रास्मिन्निति यावत्। पत्थरत्थले प्रस्तराणां पाषाणानामिति यावत् स्थलं तत्प्रधानः प्रदेशस्तत्र। प्रस्तराः स्थले यस्य तत्रेति वा।' पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृष'दित्यमरः। ग्गामे ग्रामे। 'विप्राश्च विप्रभृत्याश्च यत्र चैव वसन्ति हि। स तु ग्राम इति प्रोक्तः शूद्राणां वास एव वा॥' 'तथा शूद्रजनप्रायाः सुसमृद्धकृषीवलाः। क्षेत्रोपयोगभूमध्ये वसतिर्ग्रामसञ्ज्ञिका॥' इत्युक्तलक्षणायां वसताविति यावत्। सत्थरं स्रस्तरं शयनीयकटः शास्त्रं वा। ण न नैवेति यावत्। मणं मनाक् किञ्चिदिति यावत्। अपीति शेषः। अत्थि अस्ति विद्यते इति यावत्। उण्णअपओहरं उन्नतपयोधरम्। उन्नतो वार्धुकः पयोधरो मेघो यत्र तद्, उन्नतोऽसौ पयोधर इति तमिति वा। उन्नतौऽउच्चौ पयोधरौ स्तनौ यत्र तत् तथोक्तमिति वा। पेक्खिऊण प्रेक्ष्य पुनः। जइ यदि। वससि वासं करोषि चिकीर्षसीति यावत्। न तु विश्रामार्होऽयं ग्राम इति भावः। ता तत्। वसस्सु वस वासं कुर्विति यावत्। अत्र जघनविपुला छन्दः। तल्लक्षणं चोक्तं प्राक्॥ १७४॥'

अत्र व्यङ्ग्यमाह—अत्रेत्यादिना।

अत्रास्मिन्नुदाहृते पद्ये इति यावत्। सत्थरादिशब्दशक्त्या स्रस्तरादिशब्दशक्त्या। आदिशब्देन पयोधरादिशब्दानामप्युपादानम्। 'यदि। त्वमिति शेषः। उपभोगक्षमः। असि। तत् तर्हि। आऽऽस्स्वोपविश। इति' वस्तु। एवेति शेषः। व्यज्यते ध्वन्यते।

अत्रेदं बोध्यम्—कमपि पथिकं निवासार्थिनं युवानं प्रति कस्या अपि स्वयंदूत्याः 'द्व्यर्थैः पदैः पिशुनयेच्च[1] रहस्यवस्तु[2]' इति कामशास्त्रानुसृतोक्तिरियम्। सा यथा—हे पथिक मार्गश्रमार्त्त! त्वयाऽत्र कियन्तं समयं स्थातव्यं, यद्यपि—प्रस्तराणां तत्त्वेनाध्यवसितानां मूढानां स्थलं तत्प्रधानो देश इति तथाभूते, प्रस्तरास्तत्त्वेनाध्यवसिता मूढाः स्थले प्रदेशे यस्य तादृशो वाऽत्र ग्रामे न तु नगरेऽत एव न स्रस्तरं शयनायोपयोगाय वा कटादीनि, शास्त्रं वा, क्व पुनस्तदन्तरेणेङ्गितज्ञत्वादीति नात्र खलु वस्तव्यमिति, अथापि उन्नतपयोधरं प्रेक्ष्य न पुरः प्रस्थातुं कामार्त्तः सन् रन्तुमेव वा कामयसे तत्र क्षमश्च चेत्तर्हि त्वमाऽऽस्स्व यथेष्टं च रमस्व प्रतिबन्धकस्य नाममात्रेणाप्यनुपलम्भात्। इति। एवं च—स्रस्तराभावकथनाभ्यामवयोः सङ्केताभिज्ञत्वशङ्का त्वया कार्येति ध्वन्यते। नितान्तं मूढप्रधानोऽयं ग्राम इति न 'अत्र कृतेऽपि त्वया निवासेऽन्यथा निरीक्षिष्यन्ते एते' इति भ्रमितव्यमिति द्योत्यते। मेघोऽयमुन्नत इति नानेन पुरःप्रस्थानं कृतमित्येवैते ज्ञास्यन्ति न पुनर्मदीयपयोधरौन्नत्यनिरीक्षणं प्रतिबन्धकरूपेणेति, पथिकस्य तव प्रिया तु नास्त्येव यन्मम सपत्नीशङ्का स्यात्, अथ ततः श्रान्तो मेघोदयं वा कुचौन्नत्यं वा वीक्ष्य मदनार्त्तश्चेत्तर्हि यथेष्टमत्र न्युष्य मया रमस्व, अहं च त्वां प्रमोदयिष्ये इति च द्योत्यते। स्रस्तरपयोधरशब्दमूलश्चैवं वस्तुध्वनिरिति दिक्।

अलङ्कारध्वनिमुदाहर्तुमाह—अलङ्काररूपः शब्दशक्त्युद्भवो ध्वनिरिति शेषः। यथा—'दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसाः इत्यादौ उदाहृते प्रबन्ध इति शेषः। अत्रेदमवधेयम्—इदं तावत् पद्यमभिधामूलाया व्यञ्जनाया उदाहरणप्रस्तावे उपन्यस्तम्, दर्शितश्च तत्रैवार्थः। अत्र प्रकृतम्—'उमा' नाम्न्या राज्ञ्या वल्लभस्य वर्णनमिति नियमनमप्यभिधायास्तत्रैव, अप्रकृतं पुनः पार्वत्या वल्लभस्य, तत्कथमिदं सङ्गच्छेत मा भूदसम्बद्धं चेति तयोरुपमानोपमेयभावः परिकल्प्यते। तथा सति चोपमाऽलङ्कारः शब्दशक्तिमूलः प्रतीयमानोऽवतिष्ठते निर्बाधम्। इति।

---

१ सूचयेत्। २ गोप्यं वस्तु।

अत्र हि प्राकरणिकस्यं 'उमा' नामदेवीवल्लभभानुदेवनामनृपतेर्वर्णने द्वितीयार्थसूचितमप्राकरणिकस्य पार्वतीवल्लभस्य वर्णनमसम्बद्धं मा प्रसाङ्क्षीदिती'श्वर-भानुदेव'योरुपमानोपमेयभावः कल्प्यते । तदत्र 'उमावल्लभ उमावल्लभ इवे' त्युपमालङ्कारो व्यङ्ग्यः ।

यथा वा-

'अमितः समितः प्राप्तैरुत्कर्षैर्हर्षदप्रभो । अहितः सहितः साधुयशोभिरसतामसि ॥ १७५ ॥'

---

अथ स्वयमप्येतदेवाह-अत्रेत्यादि ।

हि यतः । अत्रास्मिन् उदाहृते पद्ये इति यावत् । प्राकरिणकस्य प्रकरणे भव इति तस्य । 'उमा-नामदेवीवल्लभभानुदेवनामनृपतेः । 'देवी कृताभिषेकाया' मित्यमरः । वर्णने । उपक्रान्त इति शेषः । अप्राकरणिकस्य न प्राकरणिक इति तस्य । प्रकरणोपक्रान्तविरुद्धस्येति यावत् । पार्वतीवल्लभस्य पार्वत्या उमायाः वल्लभः स्वामी पतिरिति यावत् तस्य महेश्वरस्येति यावत् । 'वल्लभो दयितेऽध्यक्षे सल्लक्षणतुरङ्गमे ।' इति मेदिनी । वर्णनम् । द्वितीयार्थसूचितं द्वितीयार्थेन प्रतीतिमात्रनिष्पद्यमानेनार्थेन सूचितं न त्वभिहितम् । अभिधायाः प्रकृतार्थमुपस्थाप्य विरतव्यापारत्वात् । इति-असम्बद्धं सम्बन्धविपरीतम् । यद्वा-'वर्णन'मिति विशेष्यम्, 'द्वितीयार्थसूचित'मिति विशेषणम् । इति । अस्मिन् पक्षे 'असम्बद्ध'मित्यत्र 'इती'त्यादिना हेतुनिर्देशो न नितान्तं सापेक्षः । मा नैव । प्रसाङ्क्षीत् । प्रसक्तं भवतु । 'माङि लुङ् ।' ३।३।१७५। इति लुङ् । न माङ्योगे ।' ६।४।७४। इत्यटः प्रतिषेधः । इति । हेतोरिति शेषः । 'ईश्वर-भानुदेव' योः। ईश्वरो महेशो भानुदेवस्तदाख्यो राजा तयोः। 'ईश्वरः शम्भुरीशानः।' इत्यमरः । उपमानोपमेयभावः । क्रमादिति शेषः । उपमानं सादृश्याप्रतियोगि तद्व्यतिरिक्तं तूपमेयम् । तयोरेवोपमाशरीरघटकत्वं चेति बोध्यम् । कल्प्यते न तु वस्तुतयाऽस्त्येव । तत्तस्मात् कारणादिति शेषः । अत्रास्मिन्, एवम्भूते प्रकृताप्रकृतार्थयोरवस्थाने इति यावत् । 'उमावल्लभ उमायास्तन्नाम्न्या महाराज्ञ्या वल्लभः पतिर्भानुदेवो नाम नृपतिः । उमावल्लभ उमायाः पार्वत्या वल्लभः पतिर्महेश्वर इत्यर्थः । इव 'राजते' इति शेषः । इतीत्येवम् । उपमाऽलङ्कार उपमा नामालङ्कारः । व्यङ्ग्यो ध्वन्यः । अस्तीतिशेषः ।

ननु समासोक्तिवदुपमाया अपि प्रकृतोपस्कारकत्वेनापराङ्गत्वरूपैगुणीभूतव्यङ्ग्यत्वं स्यादिति चेन्न । तत्राप्रकृतवृत्तान्तस्य व्यङ्ग्यस्य प्रधानतया प्रतीतौ चमत्कृत्यभावेन गुणीभूतत्वेऽप्यत्रोपमायाः प्राधान्यसम्भवेन गुणीभूतत्वानङ्गीकरणात् ।

अत्रायं विवेकः-अलङ्काराणां सर्वेषामुद्दीपनविधया रसाद्युपयोगितयाऽऽलम्बनापेक्षयोद्दीपनेऽतिशयचमत्कृतिमत्त्वस्य सर्वानुभवसिद्धत्वेन'दुर्गालङ्घिते'त्यादिपदवाच्यालम्बनविभावापेक्षयाऽतिशयितत्वान्निर्बाधमेव ध्वनित्वम् । रसाद्यपेक्षया गुणीभूतव्यङ्ग्यत्वं पुनरभिमतम् । अथ समासोक्तौ अप्रकृतवृत्तान्ताध्यारोपमन्तरेण समासोक्तेरेवानुपपत्तेर्गुणीभूतव्यङ्ग्यत्वं स्पष्टमेव । यत्र पुनरप्रकृतवृत्तान्ताध्यारोपस्यापि रसाद्युपस्कारकत्वेन वाच्यादतिशायित्वं प्रागभिहितदिशा भवतु नाम तत्र ध्वनित्वं तस्याः समासोक्तेः । न चैवं सत्यप्युपमाकृतातिशयमुपादाय भवतु नाम ध्वनित्वम्, अलङ्कारध्वनिरिति पुनः कथङ्कारमिति शङ्क्यम् । अलङ्कारकृतातिशयध्वनावेवालङ्कारध्वनिरिति व्यवहारात् ।

अलङ्कारान्तरध्वनिरप्येवमवसेय इति ध्वनयन्नाह-यथा वेति ।

वाऽथवा । अलङ्कारध्वनिरिति शेषः । यथा-'अमितः-'इत्यादौ ।

'हर्षदप्रभो हर्षं ददातीति द्यतीति वा तेषां प्रभुरिति तत्सम्बुद्धौ तथोक्त ! तथा च-हर्षप्रदानामपि यः प्रभुः स एव हर्षहर्तॄणामिति विरोधः । तत्परिहारः पुनर्मित्रामित्रार्थमित्यध्याहारेण । समितः सङ्ग्रामात् । 'समित्याजिसमिद्युधः ।' इत्यमरः । प्राप्तैः । उत्कर्षैरतिशयैर्विजयैरिति यावत् । 'उत्कर्षोऽतिशये' इत्यमरः । अमितोऽपरिच्छिन्नोऽपर्याप्त इति यावत् । असतां खलानाम् । अहितः शत्रुः । 'द्विड्विपक्षाहितामित्रस्युशात्रवशत्रवः ।' इत्यमरः । साधुयशोभिः । साधूनि महनीयानि यानि यशांसि इति तैः । सहितः सम्पन्नः । असि त्वं विद्यसे इति वा ॥१७५॥'

अत्रा'मित' इत्यादा'वपि' शब्दाभावाद् विरोधाभासो व्यङ्ग्यः । व्यङ्ग्यस्यालङ्कार्यत्वेऽपि 'ब्राह्मणश्रमण' न्यायादलङ्कारत्वमुपचर्यते ।

---

अत्र व्यङ्ग्यं दर्शयति–अत्रेत्यादिना ।

अत्रास्मिन्नुदाहृते पद्ये इति यावत् । **'अमितः' इत्यादौ** पदन्यासे इति शेषः । **'अपि' शब्दाभावात्** । विरोधाभिधायको ऽपि शब्दस्तदभावस्तन्निवेशाभावस्तस्मात् । **विरोधाभासः** । अलङ्कार इति शेषः । **व्यङ्ग्यो** ध्वन्यः । तेषा 'ममिता'दिशब्दानां परिवृत्त्यसहत्वाच्छब्दशक्तिमूलश्चेति शेषः । अत्रायम्भावः–योऽमितः स एव समितः, योऽहितः स एव सहितः, यः पुनर्हर्षप्रदानां प्रभुः स एव हर्षहर्त्तॄणां प्रभुरिति विरोधः । असौ पुनः–'योऽमितोऽपि स एव समितः योऽहितोपि स एव सहितः, यः पुनर्हर्षप्रदानां प्रभुरपि स एव हर्षहर्त्तॄणां प्रभुरित्येव 'मपि'शब्दस्य निवेशे वाच्यः स्यात् । प्रकृते पुन 'रपि' रभावाद् व्यङ्ग्यत्वमेवैतस्य न तु वाच्यत्वम् । विरोधध्यायमाभासमात्रेणेति ।

अत्रायं पदाभङ्गे पदभङ्गे पुनर्यथा–'तिग्मरुचिरप्रतापो विधुरनिशाकृद्विभो ! मधुरलीलः । मतिमानतत्त्ववृत्तिः प्रतिपदपक्षाग्रणीर्विभाति भवान् ॥' इत्यत्र । अस्यायमर्थः–'हे विभो ! तिग्मरुचिरप्रतापः तिग्मस्तीक्ष्णो रुचिरो मनोहर इति तादृशः प्रतापो यस्य सः, शत्रूणामुत्तापनार्थं तिग्मप्रतापः, मित्राणां पुनराह्लादनार्थं रुचिरप्रताप इति भावः । विधुरनिशाकृत्, विधुराणां स्वप्रतापोत्तप्तानां निशा मरणं तत्कृत्, निशेव निशेति, 'वैकल्पेऽपि च विश्लेषे विधुरं विकले त्रिषु ।' इति त्रिकाण्डशेषः । मधुरलीलः, मधुराऽऽस्वादनीया लीला यस्य तादृशः । मतिमानतत्त्ववृत्तिः, मतिमानयोस्तत्त्वेन याथार्थ्येन वृत्तिर्वर्त्तनं यस्य सः, मतिः शास्त्रादिनिर्णायिका वस्तुतत्त्वावधारणक्षमा वा बुद्धिः । प्रतिपदपक्षाग्रणीः, प्रतिपदं पक्षः सहायस्तेषां पक्षो बलं येषां तेषां वाऽग्रणीः । 'पक्षस्तु मासार्धे गृहसाध्ययोः ॥ चुल्लीरन्ध्रे बले पार्श्वे वर्गे केशात् परश्च ये ॥ पिच्छे विरोधे देहाङ्गे सहाये राजकुञ्जरे ।' इति हैमः । भवान् । विभाति ॥'इति अत्र पदभङ्गे विरोधः,स च यथा–तिग्मरुचिर्यः स एव रुचिरप्रतापः, यो विधुः, स न निशाकृदिति, यो मधुः ( वसन्तः ) सोऽलीलः ( केलिशून्यः ), यो मतिमान्, सोऽतत्त्ववृत्तिः, प्रतिपत् पक्षस्यादिमा तिथिः पुनरपक्षाग्रणीरिति । अस्य चापि नानोक्तत्वादनित्यत्वमेवेति । यत्तु केनापि 'विभो निष्प्रभो विभातीति विरोध इति व्याख्यातं, तन्न सत्, तस्य पदाभङ्गसम्बन्धित्वेनारमणीयत्वात् । पदानां चैषां परिवृत्त्यसहत्वेन शब्दशक्तिमूलोऽयं विरोधाभासः । पद्यमिदं च कस्यापि राज्ञः प्रतापवर्णनपरम् ।

वस्त्वलङ्कारयोरेकत्रापि ध्वनिः सम्भवति, यथा–'शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र ! यस्मै त्वम् । यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारश्च ॥' इत्यत्र । अस्यायमर्थः–'हे नरेन्द्र ! यस्मै यं विनाशयितुम् । कुप्यसि क्रुद्धो भवसि । तमन्तिकान्तकम् । शनिः शनैश्चरः । च पुनः । अशनिर्वज्रम् । 'दम्भोलिरशनिर्द्वयोः ।' इत्यमरः । उच्चैरत्यन्तमुग्रम्य । निहन्ति । यत्र यदुपरि । पुनः । प्रसीदसि प्रसन्नतां प्रकटयसि । सः । उदारो महान्, 'उदारो दातृमहतोः' इत्यमरः । च पुनः । अनुदारोनोद्गता दारा यस्य सः, अप्रवासी, नोदारो दातृवीरो वा यस्मात् सः । भाति ॥' इति । अत्र च विरोधो यथा––शनिस्तद्विरुद्धोऽशनिः, नञः 'असुन्दराक्षा' दाविव 'तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता । अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिताः ॥' इत्युक्तदिशा विरोध्यर्थकत्वात् । तथा–उदारस्तद्विरुद्धोऽनुदारः, नोदार इति पूर्ववत् । अथैवं विरुद्धार्थकत्वेन प्रतीयमानयोरपि शन्यशन्योर्हननक्रियाकर्तृत्वान्वया'द्विरुद्धौ द्वावपि शन्यशनी त्वदर्थं हननरूपमेकमेवाविरुद्धं कार्यं कुरुत'इति वस्तु शब्दशक्तिमूलं ध्वन्यते पूर्वभागे, उदारानुदारयोः पुनर्भानकर्तृतत्पदार्थविशेषणयोस्तत्प्रकारविशेषणयोर्वा साक्षाद्भानकर्तृत्वान्वयाभावादेककार्यकारित्वासम्भव इति विरोध एव स्फुटमाभासते, विरुद्धार्थकत्वेन तयोः प्रतीतेः शब्दशक्तिमूलत्वाच्छब्दशक्तिमूलत्वं विरोधाभासस्योत्तरभागे । इति ।

---

१ अत्रोक्तं प्रदीपकारैः–'अत्र प्रथमार्धे शनिरशनिश्चेत्यनेन 'विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्यं कुरुतः' इति वस्तु ध्वन्यते, न तु विरोधालङ्कारः शनिरशनिरित्यनयोः सामानाधिकरण्याभावात् ( एकधर्मिगतत्वेन शनित्वतद्भिन्नत्वयोरप्रतिपादनात् ), विरोधस्य च तत्रैव विश्रान्तेः । द्वितीयार्धे तु नोदाहरणम् । तत्र 'च' शब्दस्याप्यर्थत्वे विरोधस्य वाच्यत्वात्स–

अत्राहू रसगङ्गाधरनिर्मातारः-'काव्यप्रकाशे तु-'शनिरशनिश्च तमुच्चैः' इत्यादिकमुदाहृत्य 'अत्र विरुद्धौ द्वावपि त्वदनुवर्त्तनार्थमेकं कार्यं कुरुतः । इति ध्वन्यते'इत्युक्तम् । तच्च-'द्वौ शन्यशनी उदारानुदारौ चैकं कार्यं हननं भानं च'इति व्याख्यातम् । तत्र शन्यशन्योर्हननक्रियाकर्तृत्वान्वयेऽप्युदारानुदारयोर्भानकर्तृतत्पदार्थविशेषणयोस्तत्प्रकारविशेषणयोर्वा साक्षाद्भानकर्तृत्वान्वयाभावात् कथमेककार्यकारित्वं सङ्गतं स्यात् । अतो विरुद्धौ द्वावित्यादिप्रथमार्धविषयम् । द्वितीयार्धं तु विरोधाभास एव । कर्त्तव्यभेदेनान्वयमात्रेण कुरुत इत्यस्योपपत्तिश्चेत् ! अस्तु द्वितीयार्धेऽपि विरुद्धौ द्वावित्यादि वस्तु व्यङ्ग्यम् । परन्त्वर्थद्वयेऽपि विरोधाभासालङ्कारशबलितमेव । शत्रुविरुद्धस्ये शत्रुत्वासम्भवादेकस्य शन्यशनिकर्तृकहननकर्मत्वायोगेनाद्यार्धे उदारत्वानुदारत्वयोरेकाधिकरणवृत्तित्वायोगाद् द्वितीयार्धे च विरोधस्य स्फुटत्वात् ।'इति ।

शब्दशक्तिमूलो विरोधाभासालिङ्गितस्य व्यतिरेकस्य ध्वनिर्यथा-'खं येऽत्युज्ज्वलयन्ति लूनतमसो ये वा नखोद्भासिनो ये पुष्णन्ति सरोरुहश्रियमपि क्षिप्ताब्जभासाश्च ये । ये मूर्धस्ववभासिनः क्षितिभृतां ये चामराणां शिरांस्याक्रामन्त्युभयेऽपि ते दिनपतेः पादाः श्रियै सन्तु वः ॥' इत्यादौ ।अस्यार्थः-ये । लूनतमसो लूनं छिन्नं विनाशितमिति यावत्तमोन्धकारो यैस्ते । खमाकाशम् । अत्युज्ज्वलयन्ति । वाऽथवा । ये । नखोद्भासिनो नखैरुद्भासन्त इति तथाभूताः । ये । सरोरुहश्रियम् । अपि । पुष्णन्ति । च । ये । क्षिप्ताब्जभासाः क्षिप्ताअब्जभासा चन्द्रस्य कान्तयो यैस्ते, 'अब्जोऽस्त्री शङ्खे ना निचुले धन्वन्तरौ च हिमकिरणे । क्लीवं पद्मे' इति विश्वः । ये । क्षितिभृतां पर्वतानाम् । मूर्धसु शिखरेषु । अवभासिनः । च । ये । अमराणां देवानाम् । शिरांसि । आक्रामन्ति, तैरेतेषां वन्द्यमानत्वात् । ते तथाभूताः । दिनपतेः सूर्यस्य । उभये । अपि । पादाश्चरणानि किरणा वा, 'पादो बुध्ने तुरीयांशे शैलप्रत्यन्तपर्वते । चरणे च मयूखे च' ति मेदिनी । वो युष्माकम् । श्रियै । सन्तु ॥' इति । अत्र च-ये खमत्युज्ज्वलयन्ति ते खोद्भासिनो न । ये च खोद्भासिनो न ते लूनतमसः । यच्च न वृक्षाङ्कुराद्यथितं तस्यैव तमसो लवनक्रियाकर्मत्वेनाभिधानविषयत्वम् । ये सरोजलक्ष्मीं वर्धयन्ते ते एव क्षिप्ताब्जभासाः सरोजलक्ष्म्या अवमातारः । ये क्षितिभृतां राज्ञां मूर्धस्ववभासन्ते 'ते पुनरमराणां शिरस्सु स्थायिनः । यो दिनपतिः स एवादिनपतिः तस्य ये दक्षिणाः पादाः श्रियै तस्यैव वामास्ते । इति विरोधः । अपि नाचानुक्तत्वाद् व्यङ्ग्यः । अथ-ये यदत्युज्ज्वलयन्ति तत् किमपि वस्तु नयनविषयताभाजनम् , न तु शून्यम् , अत एतादृशस्यापि खस्यात्युज्ज्वलकर्तृत्वेन प्रसिद्धोपमानेभ्य एषां व्यतिरेकः, तथा-ये च ग्रहाः खमुज्ज्वलयन्ति ते स्वधाम्ना न तु नखैरित्यप्येतेषां तेभ्यो व्यतिरेकः, येषां च कमलोल्लासकर्तृत्वं न तेषां तदभाव इत्यपि द्वादशादित्येभ्य उपमानेभ्य एतेषां सुधारकरत्वस्यापि सम्भूत्या व्यतिरेकः, भूयिष्ठानामपि भूभृतां ये शिरोमणयः ते भूभिमस्पृशतामेव देवानां शिरांस्याक्रमन्तीत्याक्रमणकृद्भ्यः प्रसिद्धेभ्य उपमानेभ्य एतेषां व्यतिरेक इत्येवमस्य तत्तच्छब्दशक्तिमूलं ध्वनित्वमवसेयम् । नन्वस्य कविगतदिनकरचरणविषयकरतिभावोत्कर्षकतया गुणीभूतस्य कथं ध्वनिव्यपदेशहेतुत्वं? प्रधानस्यैव व्यङ्ग्यस्य ध्वनिव्यपदेशहेतुत्वादिति चेन्न, वाच्यापेक्षया प्राधान्यमात्रेण तद्ध्वनित्वानतिरोहितत्वात् । इति ।

ननु उपमादेरेतस्य व्यङ्ग्यस्य प्रधानतयाऽलङ्कार्याणां कथं सम्भवत्यलङ्कारत्वमित्यत आह **व्यङ्ग्यस्येत्यादि** ।

**'ब्राह्मणश्रमण'न्यायाद्**ब्राह्मणोऽसौ श्रमणो बौद्धसंन्यासीति तस्य' न्यायो नीतिः परिपाटीति यावत् तस्मात् । यथा- कश्चिद् ब्राह्मणो बौद्धमतमवलम्ब्यावैधं गृहीतसंन्यासः, तस्य पुनस्तदानीं ब्राह्मणत्वाभावेऽपि तमुद्दिश्य लोकैर्ब्राह्मणोऽयं श्रमण इति, श्रमणोऽयं ब्राह्मण इत्येव वा तत्पौर्वकालिकं ब्राह्मणत्वमनुस्मृत्य व्यवह्रियते तथेति

---

-मुच्चयार्थमात्रत्वे तु विरोधस्यैव व्यङ्ग्यत्वादिति । २ अत्राहुर्मर्मप्रकाश ( रसगङ्गाधरव्याख्य ) काराः-'तदलङ्कारसत्त्वे हेतुमाह-**शत्रुविरुद्धस्येति** । विरोधिशत्रोर्विरोध्यन्तरमित्रत्वादेकस्य विरोधिद्वयकर्तृकहननकर्मत्वायोगेन तादृशहननकर्मत्वयोरपि विरोधादिति भावः । राज्ञो विहिताज्ञत्वमादाय कोपस्यातिशयितत्वमादाय वा तत्परिहारः । अशनिरित्यत्र नञ्विरुद्धार्थक इत्युक्तम् । नचैवंविरोधेऽस्य कथं व्यङ्ग्यता, तन्मूलकहननकर्मत्वयोर्विरोधस्य व्यङ्ग्यत्वेनाक्षतेः । तमादायैव विरोधाभासः । तस्यैव समाधानात् । न त्वनयोर्विरोधस्यास्य समाधानमस्ति । एतेनैकधर्मिगतत्वे एव विरोधस्यालङ्कारत्वान्नात्र विरोधालङ्कार इति परास्तम् । तादृशकर्मत्वयोरेकधर्मिगतत्वस्य स्पष्टत्वात् ।' इति ।

**२८९ वस्तु वाऽलङ्कृतिर्वेति द्विधाऽर्थः सम्भवी स्वतः ॥ २८५ ॥**
**कवेः प्रौढोक्तिसिद्धो वा तन्निबद्धस्य वेति षट् ।**
**षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलङ्काररूपकः ॥ २८६ ॥**
**अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदताम् ।**

**स्वतःसम्भवी, औचित्याद्बहिरपि सम्भाव्यमानः । प्रौढोक्तिसिद्धः, न त्वौचित्येन ।**

---

भावः । **व्यङ्ग्यस्योपमादेरिति** शेषः । **अलङ्कार्यत्वेऽलङ्कर्तुमुचितत्वे । अपि । अलङ्कारत्वमलङ्करणक्रिया-**कर्तृविषयत्वम् । **उपचर्यते** उपचाराद् व्यवह्रियते,वाच्यताकालिकमलङ्कारत्वमादायैव व्यङ्ग्यतादशायामपि तस्य तथा व्यवहारः । इति ।

प्रपञ्च्यैवं शब्दशक्तिमूलमर्थशक्तिमूलमपि ध्वनिप्रपञ्चं प्रदर्शयितुमुपक्रमते–२८९ **वस्त्वित्यादिना** ।

२८९ **वस्तु** तद्रूप इति यावत् । **वा**ऽथवा । **अलङ्कृतिर**लङ्कारस्तद्रूप इति यावत् । **वा** । इत्यत्र 'वे'ति समुच्चयमाह । **इति** । अस्माद्धेतोरित्यर्थः । **द्विधा** द्विविधः सन् । **अर्थः** । व्यञ्जक इति शेषः । अर्थशक्तिमूलध्वनावर्थस्यैव व्यञ्जकत्वं स्वतःसिद्धत्वात् । **स्वतः** स्वाभाव्यात् । **सम्भवी** सम्भवतीत्येवंशीलः । **वा** तथा । **कवेः** काव्यनिर्मातुः । 'कविर्वाल्मीकिकाव्ययोः । सूरौ काव्यकरे पुंसि स्यात्खलीने तु योषिति ॥' इति मेदिनी । **प्रौढोक्तिसिद्धः** । प्रौढोक्तिश्चमत्कारानुगुणोक्तिस्तया सिद्धः । **वा** । **तन्निबद्धस्य** तेन कविना निबद्ध उत्तम्भितः प्रदर्शितस्वरूप इति यावत् तस्य । प्रौढोक्तिसिद्ध इति पूर्वेणान्वयः । यद्वा–कवेः । वा । तन्निबद्धस्य । प्रौढोक्तिसिद्धः । इत्यन्वयः । इत्येवम् । त्रिधा पुनर्भवन्निति शेषः । **षट्** षड्विधः । **तु** पुनः । **तैः** । **षड्भिः** षड्विधैः । व्यञ्जकैरर्थैरिति शेषः । **व्यज्यमानो** व्यञ्जनयाऽवबोधविषयीक्रियमाणः । **वस्त्वलङ्काररूपको** वस्त्वलङ्कारौ रूपयति निरूपयतीति रूपं यस्येति वा सः । **अर्थशक्त्युद्भवः** अर्थशक्तेरुद्भवतीति तथोक्तः । **व्यङ्ग्यः** । ध्वनिरिति शेषः । **द्वादशभेदतां** द्वादश भेदा यस्य तस्यभावस्तत्ताम् । **याति** । प्रतिपद्यते ॥ २८५ ॥ २८६ ॥

अथ कारिकास्थयोः स्वतःसम्भवि,–प्रौढोक्तिसिद्ध,–पदयोः क्रमात्तात्पर्यं निर्दिशति–**स्वतःसम्भवीत्यादिना** ।

**औचित्याद** याथार्थ्यात् । **बहिरन**न्तर्देशे लोके इति यावत् । **अपि** । न केवलं प्रौढोक्त्येति भावः । **सम्भाव्यमानः** सम्भाव्यते सम्भवं प्रतिनीयते इति तथाभूतः । 'अर्थ' इति शेषः । **स्वतःसम्भवी** तत्पदवाच्य इति यावत् । अथ–**प्रौढोक्तिसिद्धः** प्रौढोक्त्या सिद्धो निष्पन्नशरीरः । **न** । **तु** । **औचित्येन** याथार्थ्यात्स्वतःसम्भविवद् बहिरपि सम्भाव्यमानोऽर्थ इति यावत् । 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि ।' इति न्यायात् प्रौढोक्तिमात्रेण सम्भवं नीत इति भावः ।

अत्रायं पर्यालोकः–अर्थशक्त्युद्भवो नाम ध्वनिः, तत्र तावदर्थो व्यञ्जकः, वस्त्वात्माऽलङ्कारात्मा चेति द्विविधः । द्विविधोऽसौ पुनः स्वतःसम्भवी, कविजनप्रौढोक्तिसिद्धः, कविजनोत्तम्भितनायकादिप्रौढोक्तिसिद्धश्चेति त्रिगुणितः षोढा भवति । तथा च–वस्त्वात्माऽर्थः स्वतःसम्भवी, कविप्रौढोक्तिसिद्धः, कविनिबद्धनायकादिप्रौढोक्तिसिद्धश्चेति त्रिविधः, अलङ्कारात्माऽप्येवं स्वतःसम्भवी, कविप्रौढोक्तिसिद्धः, कविनिबद्धनायकादिप्रौढोक्तिसिद्धश्चेति त्रिविध इति षट्प्रकारोऽर्थः । इति । षड्विधार्थस्य: प्रकारैर्व्यज्यमानो वस्त्वात्माऽलङ्कारात्मा च व्यङ्ग्यो द्वादशप्रकारः सम्पद्यते निर्बाधम् । ननु कवि–तन्निबद्धवक्तृप्रौढोक्तिनिष्पन्नयोरर्थयोः पार्थक्येनाभिधानं न न्याय्यम् । कविनिबद्धतन्निबद्धादेरपि भेदान्तरप्रयोजकत्वापत्तेः । न च तस्यापि कविनिबद्धत्वानपायात् तत्प्रयोज्यप्रभेदान्तर्गतत्वमेव युक्तमिति वाच्यम् । प्राङ्निबद्धप्रौढोक्तिसिद्धस्यापि रमणीयवर्णननिपुणत्वलक्षणकविप्रौढोक्तिसिद्धत्वानपायात् कविनिबद्धप्रौढोक्तिसिद्धस्याप्यर्थस्य कविप्रौढोक्तिसिद्धप्रकारत्वस्यैवापातादिति चेत् ? वृद्धोक्तिविषयसदर्भकोक्तिविषय इव कविजनाभिधानविषयात् कविनिबद्धाभिधानविषये चमत्कृत्यतिशयत्वानुभविकत्वात् तयोः पार्थक्यमेव न्याय्यम् । अथ प्रणिधानसाध्यप्रतीतिकतया चमत्कृतेः स्थगनान्न कविनिबद्धतन्निबद्धादिप्रौढोक्तिसिद्धस्य पार्थक्येनाभिधानम् । इति ।

तत्र क्रमेण यथा—

'दृष्टिं त्वं प्रणिधायिनि ! क्षणमिहाप्यस्मद्गृहे दास्यसि-
प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति।
एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं-
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः॥ १७६॥'

अत्र स्वतःसम्भविना वस्तुना एतत्प्रतिपादिकाया भाविपरपुरुषोपभोगजनखक्षतादिगोपनरूपं वस्तु व्यज्यते।

---

अथैतान् क्रमादुदाहरन्नाह—तत्रेत्यादि।

**तत्र** तेषु तथाविधेषु द्वादशस्वर्थशक्त्युद्भवस्य ध्वनेः प्रभेदेषु सत्स्विति यावत्। **क्रमेण** क्रमवशादुदाहर्त्तव्यत्वेन प्राप्तेनेत्यर्थः स्वतःसम्भविना वस्त्वात्मना व्यञ्जकेनार्थेन वस्तुनो ध्वनिरिति शेषः। **यथा**—'**दृष्टिं**—' इत्यादौ।

'हे **प्रतिवेशिनि** सन्निहित—गृहवासिनीत्यर्थः। प्रतिवेश आसन्नगृहमधिष्ठितत्वेनास्या अस्तीति तत्सम्बुद्धौ तथोक्ते! **त्वम्**। **इह**ास्मिन्। **अस्मद्गृहे**ऽस्माकं गृहमिति तत्र। 'गृहं गेहोदवसितं वेश्म सद्म निकेतनम्।' इत्यमरः। **अपि**। स्वगृहे तु निश्चितमेव। **दास्यसि** प्रदास्यसि निधास्यसीति यावत्। किमित्यत आह—**अस्य**। **शिशो**रर्भकस्य। **पिता**। अर्थात् मत्स्वामी। **प्रायेण** वाहुल्येन। 'प्रायो मरणानशने मृत्यौ वाहुल्यतुल्ययोः।' इति मेदिनीकरः। **विरसा** विगतो रसो यासां ताः, नीरसा इत्यर्थः अपेया इति भावः। **कौपीः** कूपे भवा इति ताः। कूपसम्बन्धिनीरित्यर्थः। **अपो** जलानि। 'आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम्।' इत्यमरः। **पास्यति**। अतः—**एकाकिन्य**केवेति तथोक्ता। 'एकादाकिनिच्चासहाये।' ५।३।५२। इत्याकिनित्। **अपि**। अहमिति शेषः। **सत्वरं** शीघ्रम्। **इतो**ऽस्मात्। गृहादिति शेषः। **तमालाकुलं** तमालैः स्वनामख्यातैः श्यामवर्णैर्वृक्षविशेषैराकुलमितस्ततो व्याप्तमिति तत्। 'कालस्कन्धस्तमालः स्यात्तापिच्छोऽपी'त्यमरः। **स्रोतः** स्वतो . जलनिःसरणस्थानम्। 'स्रोतोऽम्बुसरणं स्वतः।' इत्यमरः। **यामि** गच्छामि। **नीरन्ध्रा** निर्गतच्छिद्रा निविडा इति यावत्। **जरठच्छेदाः**। 'जरठः कठिनश्छेदोऽग्रभागो येषां ते' इति विवृतिकाराः। **नलग्रन्थयो** नलानां ग्रन्थयः पर्वाणीत्यर्थः। **तनुं** शरीरम्। **आलिखन्तु** खण्डयन्तु।' पद्यमिदं कस्याश्चन कुलटायाः कामपि स्ववेश्मसमीपवेश्मवासिनीं प्रति प्रतारणोक्तिपरम्। अत्र च च्छन्दः शार्दूलविक्रीडितं नामः। उक्तं च तल्लक्षणं प्राक्। अत्रायम्भावः—यत्र वहन्ति सरसानि जलानि तत्र निविडास्तमाला मेदुरितस्तत्रत्यश्च प्रदेशः, सर्वतः प्रसृतं च नयनपिधायकं तिमिरम्, अथ तत्र गात्रविदारकानलास्तेषां पत्राणि पर्वाणि च स्पृश्यमाणान्यतीव दुःसहानि तानि मम सर्वं शरीरं विदीर्णमपि करिष्यन्ति, कुर्वन्तु नाम, भाग्येवैवम्भूतम्, अहं चैवैव सरसपेयजलसम्भृतं स्रोतश्च कृष्णपक्षीयनिशीथायमानम्, अथापि गच्छामि किमत्रान्यत् कुर्याम्, न हि शिशोरेतस्य पिता मम प्राणनाथो नीरसानि कूपजलानि पिवति, शिशुमेवं च तत्र कथं नयेयं, भयेनैवायं व्यापद्येत, इति तावदत्रैव क्रीडतु स्वपतु वाऽयं यथासाध्यं सत्वरमेव प्रत्यागमिष्यामि, गमनमग्रेवं 'तत्रावश्यं मया कार्यमेव, किन्त्वेतद्गृहं शून्यं, प्राणनाथश्च नात्र यद्यागच्छेदसौ निवर्तनीयस्तस्य दुर्विचारः शिशुरयं चैकाकीति निरीक्षणं यावत्प्रत्यागमनं कृपया कार्यमिति पिधित्सतीहितस्य भाविदस्यं काऽपि कुलटा निजवेश्मोपवासिनीं प्रति प्रतारणात्मिकयोक्त्येति।'

अत्र व्यङ्ग्यमाह—अत्रेत्यादिना।

अत्रास्मिन्नुदाहृते पद्ये इति यावत्। **स्वतःसम्भविना** लोकप्रसिद्धेन। पत्युः प्रियया कथमपि न वैमनस्यावहं कदाऽपि कार्यं शश्वदेव तथा तथा यतितव्यं यथा पतिः प्रसीदेदिति शरीरविदरणीभावक्लेशं जानन्त्यपि तत्र यते इति लोकव्यवहारदृष्टेनेति भावः। **वस्तुना**। तद्रूपेण व्यञ्जकेनार्थेनेत्यर्थः। वस्तुत्वं पुनरेतस्यार्थस्यानलङ्कारत्वात्। **एतत्प्रतिपादिकाया** एतस्यैतत्पद्यरूपवाक्यतदर्थस्येति यावत्, प्रतिपादिका समर्थयित्री तस्याः। **भाविपरपुरुषोपभोगजनखक्षतादिगोपनरूपं** भावि भविष्यद् यत् परपुरुषस्य य उपभोगस्तज्जं नखक्षतादि तस्य गोपनं विधानं तद्रूपम्। परपुरुषकरिष्यमाणोपभोगतज्जनिष्यमाणनखक्षतादि केनापि मा ज्ञायतामित्यात्मकमिति भावः। **वस्तु**। **व्यज्यते** ध्वन्यते।

'दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे ॥१७७॥'

अत्र स्वतःसम्भविना वस्तुना 'रवितेजसो रघुप्रतापोऽधिक' इति व्यतिरेकालङ्कारो व्यज्यते
'आपतन्तममुं दूरादूरीकृतपराक्रमः । बलोऽवलोकयामास मातङ्गमिव केशरी ॥ १७८॥'
अत्रोपमाऽलङ्कारेण-स्वतःसम्भविना व्यञ्जकेनार्थेन 'बलदेवः क्षणेनैव वेणुदारिणः क्षयं करिष्यती'ति वस्तु व्यज्यते ।

---

अथानेनालङ्कारध्वनिमुदाहरति–'दिशी–'त्यादिना ।

'**रवेः** सूर्यस्य प्रचण्डतेजोनिधानस्येति यावत् । **अपि** । किं पुनरन्यस्य । **तेजः** प्रतापः । **दक्षिणस्याम्** । यस्यामिति शेषः । **दिशि** दिशायाम् । **मन्दायते** । अमन्दमपि मन्दमिव जायते । दक्षिणायने हि सूर्यस्य शैत्यप्रवृत्तेः । 'कर्तुः क्यङ् सलोपश्च ।' ३।१।११ इति क्यङ् । 'मन्दं भवती' त्यर्थे तु 'लोहितादिडाज्भ्यः क्यष् ।' ३।१।१३। इति क्यष् । **तस्याम्** । **एव** न त्वन्यस्यां दिशीति भावः । **रघोः** स्वाभिधानधन्यस्य महाराजस्य । **प्रतापं** तेजः । **पाण्ड्याः** पाण्डूनां तदाख्यानां जनपदानां राजान इति तथोक्ताः । 'पाण्डोर्ड्यण् वक्तव्यः *।' इति ड्यण् । **न** नैव । **विषेहिरे** नितान्तं सोढवन्तोऽभुवन् । इदं पद्यं रघुवंशे चतुर्थे सर्गे रघोर्दक्षिणदिग्विजयवर्णनपरम् । अनुष्टुप् च छन्दः ॥ १७७ ॥'

अत्र व्यङ्ग्यमाह–**अत्रे**त्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्ये इति यावत् । **स्वतःसम्भविना** लोकदृष्टेन ।सूर्यस्य तेजो दक्षिणायने प्रदिमानम्प्रतिपद्यते, दक्षिणायनं दक्षिणां दिशं प्रत्ययनमिति, तत्रैव पुना रघोस्तेजोऽसह्यमासीत्तत्रत्यानाम्, न हि निर्बलाः प्रबलस्यौजः सोढुं प्रभवन्ति, निर्बलाश्च तत्रत्याः इति लोकस्थित्यनुकूलेनेति भावः । **वस्तुना** । तद्रूपेण व्यञ्जकेनार्थेनेत्यर्थः । **रवितेजसो** रवेः सूर्यस्य तेजस्तस्मात्तदपेक्षयेत्यर्थः । **रघुप्रतापो** रघोः प्रतापस्तेजः प्रतापस्तापनेजयोः ।' इति मेदिनी । **अधिकः** प्रकृष्टः । **इ**त्येवम् । **व्यतिरेकालङ्कारः** । 'आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा ॥ व्यतिरेकः–' इति वक्ष्यमाणस्वरूपोऽर्थालङ्कारविशेषः । **व्यज्यते** ध्वन्यते । तेजसोत्कृष्टो हि लोके सूर्येणोपमीयते इति लोकप्रसिद्ध्या सूर्यस्योपमानत्वम्, अन्यस्य पुनरुपमेयत्वं सिद्धम्, अथात्र दक्षिणस्यां सूर्यतेजसः सोढव्यत्वोक्त्या रघोश्चासोढव्यत्वोक्त्या सुसिद्धमुपमानादुपमेयस्याधिक्यमित्युपमानादुपमेयाधिक्यं नाम व्यतिरेकः । सोऽपि 'रवेस्तेजसो रघोस्तेजोऽधिक' मित्येवमवर्णितत्वात् प्रतीयत एवेति ।

अथ स्वतः सम्भविनैवालङ्कारेण वस्तुध्वनिमुदाहरति–'**आपतन्तम्**–'इत्यादिना ।

'**बलो** बलदेवः **ऊरीकृतपराक्रम** ऊरीकृतः स्वीकृतः पराक्रमो योद्धुमुत्साहो येन स सन्नद्ध इति यावत् ।'सन्निति शेषः । **आपतन्तमभि**मुखमागच्छन्तम् । योद्धुमिति शेषः । **अमुं** वेणुदारिनामानम् । **केशरी** सिंहः । **मातङ्गं** हस्तिनम् । **इव** । **दूरात्** । **अवलोकयामास** ददर्श । पद्यमिदं शिशुपालवधस्थः । अनुष्टुप् चात्र छन्दः ॥ १७८ ॥'

अत्र व्यङ्ग्यमाह–**अत्रे**त्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्ये । **स्वतःसम्भविना** लोकप्रसिद्धेन । **उपमाऽलङ्कारेण** । 'मातङ्गमिव केशरी' इत्यत्रेत्यनेनेति शेषः । तद्रूपेणेति भावः । **व्यञ्जकेन** । **अर्थेन** । तद्द्वारेति यावत् । '**बलदेवः** । **क्षणेन** क्षणात् । **एव** न तु द्वित्रक्षणानन्तरम् । **वेणुदारिण**स्तदाख्यस्य बाणासुरपुत्रस्य । **क्षयं** । विनाशम् । **करिष्यति** ।' **इति वस्तु** । **व्यज्यते** ध्वन्यते । विपुलपराक्रमशालितया मदोन्मादसम्भृततया च बलदेववेणुदारिदैत्यपुत्रयोः सिंहमातङ्गाभ्यां सादृश्येनोपमात्वं लोकप्रसिद्धमेव, उपमानोपमेयसाधारणधर्माणामेवोपमाशरीरघटकत्वात्, अथैवम्भूतेन व्यञ्जकेनार्थेन गजस्य केशरीव बाणात्मजस्य बलः क्षणाज्जीवितं स हरिष्यतीति तादृशनिरीक्षणाधाने स्वतोऽवतिष्ठते ध्वन्यमानं वस्तु । इति ।

'गाढकान्तदशनक्षतव्यथा-सङ्कटादरिवधूजनस्य यः ।
ओष्ठविद्रुमदलान्यमोचय-न्निर्दशन्युधि रुषा निजाधरम् ॥१७९॥'

अत्र स्वतःसम्भविना विरोधालङ्कारेण 'अधरो निर्दिष्टः, शत्रवो व्यापादिताश्चे'ति समुच्चयालङ्कारो व्यङ्ग्यः ।

---

अथानेनैव वस्तुध्वनिमाह-'गाढकान्तदशनक्षतव्यथासङ्कटात्-'इत्यादिना ।

'यः । पूर्वप्रक्रान्तवीर्यः । राजेति शेषः । **युधि** सङ्ग्रामे । **रुषा** रोषेण क्रोधेनेति यावत् । **निजाधरं** निजस्य स्वस्याधर ओष्ठस्तम् । 'ओष्ठाधरौ तु रदन-च्छदौ रदनवाससी ।' इत्यमरः । **निर्दशन्** दन्तैः खण्डयन् सन् । **अरिवधूजनस्यारी**णां शत्रूणां प्रतिद्वन्द्वित्वेनोपलक्षितानां वधूजनस्तस्य । वधूनां जनः समाजः । 'जनःसमाजे लोके च लोकभेदे च पामरे ।' इति शिवशर्मा । **ओष्ठविद्रुमदलान्यो**ष्ठा एव विद्रुमदलानि प्रवालपत्राणीति तानि । **गाढकान्तदशनक्षतव्यथासङ्कटाद्** गाढं गाढा वा कान्तदशनक्षतं तद्व्यथा वेति, तद्व्यथैव सङ्कटः सैव सङ्कट इति वा तस्मात् । 'अप दाने पञ्चमी ।' २।३।२८। इति पञ्चमी **अमोचयत्** मोचितवान् । रुषा निजाधरं निर्दश्य निहतेषु वैरिषु तत्तद्वधूनां कान्तकर्त्तव्यो रतिकालिकोऽधरदंशो निर्वर्त्तित इति भावः ।' पद्यमिदं कस्यापि राज्ञः प्रभावोत्कर्षवर्णनपरम् । रथोद्धता चात्र च्छन्दः । लक्षणं तु प्रागुक्तम् ॥ १७९ ॥

अत्र व्यङ्ग्यमाह-अत्रेत्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्ये इति यावत् । **स्वतःसम्भविना** लोकसाक्ष्येण । **विरोधालङ्कारेण** विरोधाभासालङ्कारेण । यो हि स्वाधरमपि दशति स कथं परेषामधरान् सङ्कटान्मोचयतीति, उत्पद्यते वा व्यथा निर्दशनेन तत्कथं तन्निवृत्तिः स्यादिति आपाततो विरोधः, प्रतियोगिभेदेन च तदाभासमात्रत्वमिति तत्स्वरूपत्वात् । **अधरः** ओष्ठः । निजस्येति शेषः । **निर्दष्टो** निरदंशि । **च** तथा । **शत्रवः** प्रतिद्वन्द्विनः । **व्यापादिता** मारिताः । इत्येवम् **समुच्चयालङ्कारो** युगपत्पदार्थानामन्वयरूपोऽलङ्कारः । **व्यङ्ग्यो** ध्वन्यः । अस्तीति शेषः ।

अत्रेदमाकूतम्-योधनं तावत् कार्यं तेन जयसाधनं वा कार्यम्, 'युधी' ति निर्देशात्तथैव प्रतीतेः, तत्र च निर्दष्टव्यापादितक्रिययोर्यौगपद्येनान्वयाभिव्यक्तेः समुच्चयो ध्वन्यते इति ग्रन्थकारपादाः । अत एव 'समुच्चयोऽयमेकस्मिन् सति कार्यस्य साधके । 'खले कपोतिकान्याया' दिति वक्ष्यमाणं लक्षणमपि सङ्गच्छते । विरोधालङ्कारेण निर्दशन्नित्युक्त्या चाधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति वीरानुभावत्वेन प्रकृतयोः स्वाधरदशन-शत्रुव्यापादनयोरेककालैकधर्मसम्बन्धेन तुल्ययोगिता, मम क्षतेरपि निर्वर्ततां नाम परेषां क्षतिरिति तद्बुद्धेरुत्प्रेक्षणाच्चोत्प्रेक्षेति प्रकाशकाराः । विरोधालङ्कारेणेत्यस्य विरोधाभासालङ्कारेणेत्यर्थस्तु न, विरोधस्यासम्भवात्, किन्तु विरोधगर्भितोऽलङ्कारस्तेनेत्यर्थः कार्यकारणयोः पौर्वापर्यविपर्ययरूपातिशयोक्त्यलङ्कारेणेति यावत्, स्वाधरदशनस्य कारणस्य वैरिवधूजनोष्ठदशनव्यथामोचनस्य च कार्यस्य च समकालतया निर्दिष्टत्वात् । तुल्ययोगितेति पदस्यापि तुल्ययोगिताऽलङ्कार इत्यर्थस्तु न 'नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ।' इति सूत्रेण लक्षितायाः प्रकृतानामप्रकृतानां वा एकधर्मसम्बन्धरूपतुल्ययोगितायाः प्रकृते सम्भवाभावात्, तुल्ययोगितायां पुनर्धर्मस्य गुणक्रियाऽन्यतररूपस्यैवोपादानम् । अथ तुल्ययोगितापदस्याधरो निर्दष्टश्च शत्रवो व्यापादिताश्चेति तुल्यकालं ( एककालं ) योगो ( सम्बन्धः ) ययोस्ताविति, तयोर्भावस्तुल्ययोगिता चेति व्युत्पत्तेः समुच्चयालङ्कार इत्यर्थः, अधरनिर्दशनवैरिव्यापादनक्रिययोर्यौगपद्येन प्रत्ययात् । इति प्रदीपकाराः । विरोधालङ्कारेणेत्यस्य वास्तविकविरोधमूलासङ्गत्यलङ्कारेणेत्यर्थः, स्वाधरदशनरिपुवनिताजनाधरव्यथामोचनयोः कारणकार्ययोर्वैयधिकरण्येन निर्देशाद्विरोधस्य स्फुटत्वात् । इत्यपि केचित् । ओष्ठविषयकयोर्दशनमोचनयोर्विरोधः, ओष्ठत्वेन सामानाधिकरण्यस्य विवक्षितत्वात्; प्रतियोगिभेदेनाभास इति विरोधालङ्कारेण विरोधाभासालङ्कारेणेत्यर्थ एव, वीरानुभावत्वेन प्रकृतयोरात्माधरनिर्दशनवैरिजनव्यापादनयोरेककालरूपैकधर्मसम्बन्धस्य सद्भावात्तुल्ययोगिता तुल्ययोगिताऽलङ्कार इत्यर्थ एवेति, प्रदीपकाराभिहितातिशयोक्तेश्च प्रौढोक्तिसिद्धत्वेन स्वतस्सम्भवि-व्यञ्जकोदाहरणत्वायोग इति, तुल्ययोगितायां धर्मो गुणक्रियाऽन्यतर एवेत्यत्र मानाभावात्, कालोपाधेरपि सूर्यक्रियारूपत्वमिति च प्रकाशकारोक्तमेव तदवस्थम् । इत्युद्योतकाराः प्राहुः । वयं तु ब्रूमः-विरोधालङ्कारेणेत्यस्य विरोधाभासालङ्कार इत्यर्थ

'सज्जेहि सुरहिमासो, ण दाव अप्पेइ जुअइजणलक्खमुहे ।
अहिणवसहआरमुहे णवपल्लवपत्तले अणंगस्स सरे ॥ १८० ॥'

अत्र 'वसन्तः शरकारः, कामो धन्वी, युवतयो लक्ष्यम्, पुष्पाणि शरा' इति कविप्रौढोक्तिसिद्धं वस्तु प्रकाशीभवत् मदनविजृम्भणरूपं वस्तु व्यनक्ति ।

---

एव, तुल्ययोगितेत्यस्य न तुल्ययोगिताऽलङ्कार इत्यर्थ एवाप्यस्तु प्रदीपकारायुक्तदिशा क्लिष्टकल्पनाया अन्याय्यत्वात् । किन्तु नात्र समुच्चय इति कथङ्कारं सङ्गच्छेत ? निर्दशनव्यापादनरूपक्रिययोरेककालं सम्बन्धसद्भावस्याक्षतेस्तस्याप्यक्षततत्त्वेनावस्थितत्वात् । इति । वस्तुतस्तु–नात्र तुल्ययोगिता, न चोत्प्रेक्षा प्रतीयेते; किन्तु समुच्चय एवेति । 'निर्दशनमोचय' इत्युक्तया रोषेण वैरिव्यापादने वैरिवधूनां रमणानन्दस्यापि मोषणं दन्तक्षतात्त्यर्येनुभवो निवर्त्तित इति प्रत्यायिकयाऽधरो निर्दष्टो वैरिणश्च व्यापादिता इति समुच्चयस्यैव प्रतीतेः गम्यमानतुल्यतायाः प्रकृतेऽसम्भवात्तुल्ययोगिताया अप्रतीतेश्च । स्वाधरदशनवैरिव्यापादनयोर्यौगपद्येनान्वयस्य च समुच्चयस्यैव प्रत्यायकत्वेन तयोरेककालरूपैकधर्मसम्बन्धकल्पनया तुल्ययोगिताया अपि क्लृप्तत्वस्यैव च तादवस्थ्यात् प्रकाशकारोक्तेश्चान्यथाऽपि समर्थनाच्च इति बोध्यम् ।

एवं स्वतःसम्भविभ्यां वस्त्वलङ्काराभ्यां वस्त्वलङ्कारयोर्ध्वनिमुदाहृत्य कविप्रौढोक्तिसिद्धाभ्यां ताभ्यां तयोर्ध्वनिमुदाहर्तुं प्रवृत्तस्तावद्वस्तुना वस्तुध्वनिमुदाहरति–'**सज्जेहि**–'इत्यादिना ।

'**सुरहिमासो** सुरभिमासः । सुरभेर्वसन्तस्य मासः पक्षद्वयात्मकः कालः । 'वसन्ते पुष्पसमयः सुरभिः'–इत्यमरः । चैत्रो वैशाखश्चेति मासद्वयं वसन्तः, तत्रात्र मासशब्देनाद्यः, तस्यैव प्रथमं निर्देशात्प्रकृतत्वाच्च 'सुरभिमासश्चैत्रः' इति निवृत्तिकारैरुक्तं चेतिबोध्यम् । **सज्जेहि** सज्जयति सज्जितो भवति । यावदिति शेषः । **दाव** तावत् । **जुअइजणलक्खमुहे** युवतिजनलक्ष्यमुखान् युवतिजनो यौवनाक्रान्तानां वनितानां समूह एव लक्ष्यं शरव्यं येषां तानि तादृशानि मुखान्यग्रभागा येषां तान् । 'तरुणी युवतिः समे ।' इत्यमरः । 'लक्ष्यं स्यादपदेशेऽपि शरव्येऽपि नपुंसकम् ।' इति मेदिनी । 'मुखं श्रेष्ठे च वक्त्रे चोपायेऽग्रे निःसृतौ तथा । प्रारम्भे च प्रधाने चे'ति शिवशर्मा । **अहिणवसहअरमुहे** अभिनवसहकारमुखान् । अभिनवा नवमुकुलिता ये सहकारा नितान्तं सुरभिता आम्रा मुखमादिर्मुखानि प्रधानानि वा येषां तान् । 'असौ सहकारोऽतिसौरभः ।' इत्यमरः । अत्र मुखशब्दस्यार्थान्तरे उपादानान्न पुनरुक्तत्वम् । **णवपल्लवपत्तले** नवपल्लवपत्रलान् । नवा महितानि पल्लवपत्राणीति तौल्लान्ति गृह्णन्तीति तांस्तथोक्तान् । नूयते स्तूयते इति, नवनं स्तवनमिति वा नवः । 'ऋदोरप् । ३।३५७ इत्यप् । पल्लवैरुपलक्षितानि पत्राणीति पल्लवपत्राणि । 'पल्लवोऽस्त्री किसलयम्' इत्यमरः । यद्वा–नवं यशो पद्यन्ते प्रतिपद्यन्ते इति तथाभूतानि लव (सूक्ष्म) पत्राणीति तौल्लान्तीति तान् । पद् गतौ । क्विप् । 'लवः कालभिदि च्छिदि । विलासे रामजे लेशे' इति हैमशिवशर्माणौ । **अणंगस्स** अनङ्गस्य कामस्येति यावत् । **सरे** शरान् बाणान् । **ण** न नैवेति यावत् । **अप्पेइ** अर्पयति समर्पयति । यद्वा–यावदर्पयति . तावन्न परं सज्जयतीति भावः । पद्यमिदं वसन्तमुद्दिश्य केनापि सहृदयेनोक्तम् । अत्र चार्याछन्दस्तल्लक्षणं तूक्तं प्राक् ॥ १८० ॥'

व्यङ्ग्यमाह–अत्रेत्यादिना ।

अत्रास्मिन् प्रागुदाहृते पद्ये । '**वसन्त**श्चैत्रवैशाखोपलक्षित ऋतुविशेषः । **शरकारः** शरान् करोति निर्मातीति तथोक्तः । 'कर्मण्यण् ।' ३।२।१। इत्यण् । **कामो** मदनः । **धन्वी** धनुर्धरः । धनुरस्यास्तीति । व्रीह्यादित्वादिनिः । **युवतयस्**तरुण्यः स्त्रियः । **लक्ष्यम्** । **पुष्पाणि** सहकारादीनामिति शेषः । **शरा** बाणाः । 'इत्येवम् । **कविप्रौढोक्तिसिद्ध** कवेः प्रौढोक्त्या केवलं निबद्धस्वरूपमिति भावः । **वस्तु** । **प्रकाशीभवत्** । क्रमेणेति शेषः । **मदनविजृम्भणरूपं** मदनस्य कामदेवस्य विजृम्भणं विशेषेण जृम्भणं सन्नद्धभवनं वर्धनमिति यावत्तद्रूपम् । **वस्तु** । **व्यनक्ति** द्योतयति । अत्रायम्भावः–वसन्तस्तावदचेतनः, कामः पुनरनङ्गः, युवतयश्चावीराः कुसुमानि च मृदुलानीति क्रमेणैतेषां शरकारत्वादिकमलीकमित्येतत्सर्वं कवेः प्रौढोक्तिमात्रेण सिद्धं वस्तु, तच्चेदं वसन्तदशामभिनयत् क्रमेण मन्मथोन्माथस्यारम्भं गाढं गाढीभविष्यन्तं ध्वनयतीत्युक्तं ग्रन्थकारैः 'वसन्तः शरकारः,–'इत्यादि ।

'रजनीषु विमलभानोः, करजालेन प्रकाशितं वीर !
धवलयति भुवनमण्डल-मखिलं तव कीर्त्तिसन्ततिः सततम् ॥ १८१ ॥'

अत्र कविप्रौढोक्तिसिद्धेन वस्तुना कीर्त्तिसन्ततेश्चन्द्रकरजालादधिककालप्रकाशकत्वेन व्यतिरेकाऽलङ्कारो व्यङ्ग्यः।

---

अथ वस्तुनाऽलङ्कारध्वनिमुदाहरति-'रजनीषु-'इत्यादिना।

'हे वीर ! **तव** त्वदीया। **कीर्त्तिसन्ततिः** कीर्त्तिप्रसारः। **रजनीषु** रात्रिषु। 'रजनी यामिनी तमी' इत्यमरः। **विमलभानोर्विमलाः** शुद्धाः शुभ्रा इति यावद् भानवः किरणा यस्य तस्य शुभ्रांशोश्चन्द्रस्येति यावत्। 'भानुर्ना किरणे सूर्ये' इति मेदिनी। **करजालेन** किरणपुञ्जेन। 'भानुः करो मरीचि'रित्यमरः। **प्रकाशितं** प्रकाशमानीतम्। अखिलं समस्तम्। **भुवनमण्डलं** भुवनं लोकस्तदेव मण्डलमिति तत्तथाभूतम्। **सततं** निरन्तरं रात्रिंदिवं न तु रजनीष्वेवेति यावत्। **धवलयति** शुभ्रकान्तिकं विधत्ते ॥' पद्यमिदं कमपि वीरमूर्धन्यं प्रति गीतम्। अत्र चार्याछन्दः तल्लक्षणं चोक्तं प्राक् ॥ १८१ ॥

व्यङ्ग्यमाह-अत्रेत्यादिना।

अत्रास्मिन्नुक्तपद्ये। **कविप्रौढोक्तिसिद्धेन** कवेः प्रतिभामात्रनिष्पन्नेन। **वस्तुना** कीर्त्तिसन्तत्या निखिलभुवनधवलीकरणरूपेणेति शेषः। **कीर्त्तिसन्ततेः** कीर्त्तिप्रसारस्य। **चन्द्रकरजालात्**तदपेक्षयेति यावत्। **अधिककालप्रकाशत्वेनाधिकः** कालस्तं तदवधिप्रकाशकत्वं तेन। 'अत्यन्तसंयोगे च।' २।१।२९ इति समासः। हेत्वर्थे चात्र तृतीया। **व्यतिरेकालङ्कारः। व्यङ्ग्यो** ध्वन्यः। अस्तीति शेषः। अत्रेदं तात्पर्यम्-विमलस्य शुभ्रत्वं, कीर्त्यांश्च प्रकाशकत्वं तेन पुनर्भुवनस्य समग्रस्य धवलीकरणमित्यलीकमपि कविना स्वप्रौढोक्त्या एव निबद्धम्। चन्द्रो रात्रावेव पुनः प्रकाशते कीर्तिस्तु रात्रिन्दिवम्, न तेन तत औपम्यमिति चन्द्रादधिकप्रकाशकत्वेन कीर्त्यां व्यतिरेकोऽपि सम्पन्नमूर्त्तिः। यथा वा-'केसेसु वला मोडि अ; तेण अ समरम्मि जअसिरी गहिआ। जह कंदराहि विहुरा, तस्स दढं कंठ, अम्मि संठविआ ॥' इति अस्यायमर्थः-'तेण तेन प्रभूतपराक्रमतया प्रकृततया वा प्रसिद्धेनेति यावत्। राज्ञेति शेषः। अ चापीति यावत्। 'वी'ति पाठे त्व'पीत्येवार्थः केशेषु केसेषु केशपाशेष्विति यावत्। 'षष्ठी चानादरे।' २।३।३८इत्यनादरेऽर्थे चात्सप्तमी। मोडिअ मुट्टित्वाऽऽकृष्येति यावत्। तथेति शेषः। समरम्मि समरे सङ्ग्रामाङ्गणे इति यावत्। 'अस्त्रियां समरानीकरणाः कलहविग्रहौ' इत्यमरः। जअसिरी जयश्रीर्जयलक्ष्मीरिति यावत्। गहिआ गृहीता स्वायत्तीकृता सम्पादिता वेति यावत् जह यथा। कंदराहिं कन्दराभिर्दरीभिरिति यावत्। 'दरी तु कन्दरो वा स्त्री' त्यमरः। तस्स तस्य प्रकृतस्य राज्ञ इत्यर्थः। विहुरा विधुराः। शत्रव इति यावदिति प्राञ्चः, 'शत्रव इति शेषा'इति त्वाहुर्नव्याः। 'विधुरं विकले त्रिषु।' इति मेदिनी। दढं दढं गाढमिति यावत्। क्रियाविशेषणमिदम्। कंठअम्मि कण्ठसमीपे 'समीपगतशब्देषु त्रिषु कण्ठं विदुर्बुधाः।' इति शाश्वतः। संठविआ संस्थापिताः ॥' अत्र गीतिश्छन्दः। लक्षणं तूक्तं प्राक्।

अत्राहुः प्रकाशकाराः-'केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णन्तीत्युत्प्रेक्षा, एकत्र सङ्ग्रामे (सर्वथा) विजयदर्शनात्तस्यारयः पलाय्य गुहासु (दरीषु) तिष्ठन्तीति काव्यहेतुरलङ्कारः, न पलाय्य गतास्तद्वैरिणः, अपि तु ततः पराभवं सम्भाव्य; तान् कन्दरा न त्यजन्तीत्यपन्हुतिश्चे'ति। विवृण्वन्त्येतद्विवृत्तिकाराः-'अत्र कन्दराभिः कण्ठे स्थापिता इति कविप्रौढोक्तिसिद्धेन वस्तुना नायककर्तृकनायिकाकेशाकर्षणदर्शनादपरस्याः कामोद्रेकस्य लोके दर्शनात् तद्वत्य इव कन्दरास्तद्विधुरान् प्रकृतराजशत्रून् कण्ठे गृह्णन्तीत्युत्प्रेक्षाऽलङ्कारो व्यज्यते, एकत्रैव सङ्ग्रामे विजयदर्शनेन हेतुना तस्य राज्ञोऽरयः शत्रवः पलाय्य धावित्वा दरीषु गत्वा तिष्ठन्तीति काव्यहेतुः काव्यलिङ्गमलङ्कारो व्यज्यते, न पलाय्य धावित्वाऽपि तु किन्तु ततो राज्ञः पराभवं सम्भाव्य तांस्तस्य राज्ञः शत्रून् कन्दरा न त्यजन्तीति पलायनस्यापह्नवनादपन्हुतिश्चालङ्कारः।'इति।

सुधासागरकाराः पुनराहुः-'यदाहुः प्रदीपकाराः 'यत्तु केशग्रहणावलोकनोद्दीपितमदना इव कन्दरास्तद्विधुरान् कण्ठे गृह्णतीति उत्प्रेक्षा व्यज्यते' इति तन्नैवेदम्, यदि पूर्वं कन्दरादीनां नायिकात्वाद्यारोपः स्यात्, अन्यथा केशग्रहणस्य

'दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः । मणिव्याजेन पर्यस्ताः पृथिव्यामश्रुबिन्दवः॥१८२॥'

मदनोद्दीपकत्वायोगात्, तदभ्युपगमे ( नायिकात्वारोपस्वीकारे, प्रकृतेऽप्रकृतसमारोपस्य समासोक्तिघटकत्वात् ), न च वस्तुमात्रस्य व्यञ्जकत्वं, किन्तु समासोक्तेः (तच्छबलितवस्तुन इति यावत्) अलङ्कारस्ये'ति । तत्र ब्रूमः–यथेति यच्छब्देनोत्तरवाक्यगतेन तच्छब्द आक्षिप्यते, तेन च–पूर्ववाक्यार्थमनूद्य वाक्यान्तरावष्टम्भाद्वाक्यैकवाक्यमिदम्, तत्र–तेनेति कन्दराभिरिति च पदद्वयं विशेष्यसमर्पकं श्लिष्टं चेति, तथा च–न तावत् समासोक्तिः, विशेष्यमात्रस्याश्लिष्टत्वे समासोक्तिस्वीकारात्, न वा श्लेषः, जयश्रीपदस्याश्लिष्टत्वात्, विशेष्यविशेषणवाचिनां सर्वेषां (सर्वेषामेव) श्लिष्टत्वे तत् (श्लेष) स्वीकारात्, किञ्च–यत्रोभयतात्पर्यवशादभिधयैव अर्थद्वयोपस्थितिस्तत्रैव श्लेषः, प्रकृते तु व्यञ्जनया द्वितीयार्थस्य प्रतिभामात्रम् ।' इति । वयन्त्वेवं ब्रूमः–उत्प्रेक्षा नाम तद्भिन्नत्वेन तदभाववत्त्वेन वा प्रमितस्य पदार्थस्य चमत्कृततद्वृत्तितत्समानाधिकरणान्यतरतद्धर्मसम्बन्धनिमित्तकं तत्त्वेन तद्वत्त्वेन वा सम्भावनम् । तच 'इव खलु नूनं मन्ये शङ्के' इत्यादिभिः पदैः । 'यथा तथे'ति तु उपमाया एव द्योतकम् । अत एव 'उदयौ वापिकादर्भान्मुकुलं मेचकोत्पलम्॥ नारीलोचनचातुर्यशङ्कासङ्कुचितं यथा ॥' इत्यादौ यथाशब्दस्योत्प्रेक्षाऽवाचकत्वेनावाचकत्वं नाम दोषः सङ्गच्छते । समासोक्तिः पुनः 'साधारणविशेषणमात्रोपन्यस्ताप्रकृतधर्मिकव्यवहाराभेदेन प्रकृतधर्मिकस्य व्यवहारस्य भासनम् । तत्र च विशेष्यमात्रमश्लिष्टम् । अत एव श्लेषाद्भिन्नत्वम् उपमा च–उपमानोपमेयसाधारणधर्मसमर्पितं चमत्काराधायकं वाक्यार्थोपस्कारकं सादृश्यम् । तच 'इव यथा तथे' त्यादिभिर्द्योत्यते । इति । तत्र तावत्–पद्यतात्पर्यम्–'यथा कन्दराभिस्तस्य शत्रवः कण्ठे संस्थापिता तथा तेनात्मनाऽपि केशेष्वाकृष्य समरे जयश्रीरङ्गीकृते'ति । अतः स्यादुपमोपमानोपमेयसाधारणधर्माणामुपादानात् । उपमानं कन्दरा, उपमेयं तत्पदार्थः, साधारणधर्मश्च यथातथेति द्योत्यः । नात्रोपमा, तत्रैकस्या एव क्रियाया उपादेयत्वात्, अत्र पुनः 'संस्थापिताः गृहीताः' इति द्वयोः क्रिययोरुपादानम्, उपमानोपमेये च प्रसिद्धे तत्र, अत्र पुनरप्रसिद्धे । इति भेदात् । तत् स्यादुत्प्रेक्षा । मा भूद् यथेत्यस्य तद्वाचकत्वं तद्द्योतकत्वं वा ध्वन्यमानायां तस्यां तदपेक्षाविरहात् । नायिकानायकत्वभेदेऽपि कन्दरातत्पदवाच्ययोस्तथा सम्भावनस्यास्त्येवोत्प्रेक्षात्वं च । नास्त्युत्प्रेक्षा । यथेति न्यासात् । नाभविष्यद् यदि यथेति तदभविष्यद्ध्वनिस्तस्याः । यदि वाऽभविष्यद् 'इव नून'मित्यादि, अभविष्यद्वाच्याऽसौ । तद्वत् समासोक्तिः । तत्पदवाच्यकन्दरापदवाच्ययोः पुंलिङ्गस्त्रीलिङ्गत्वाभ्यां नायकत्वस्य नायिकात्वस्य चाभेदेनास्त्येव भासनम् । न च विशेष्ययोस्तयोः श्लिष्टत्वम् । तत्पदवाच्यार्थस्य कन्दरापदवाच्यार्थस्य च भिन्नत्वेनासम्भवात् । भवतु वा तच्छब्दस्य नायकवाचकत्वमपि, कथं पुनः कन्दराशब्दस्य नायिकावाचकत्वम् । वस्तुतस्तु तच्छब्दस्यापि नास्त्येव नायकवाचकत्वं, तस्य प्रकृतत्वाभावात्'समरे जयश्री'रित्यादिना चान्वयस्य चानुपपत्तेः । न स्यात् समासोक्तिः । तच्छब्देन नायकपदवाच्यस्य, समरशब्देन सुरतसमरपदवाच्यस्य जयश्रीकन्दराशब्दाभ्यां च नायिकाविशेषवाच्यस्यैवार्थस्य विवक्षितत्वात् । तन्न ध्वन्यतेऽलङ्कारः । ध्वन्यते समासोक्तिः । राज्ञो नायकत्वेन समरस्य सुरतत्वेन जयश्रियाः कन्दराणां च नायिकासब्रह्माविशेषत्वेनावभासनात् । न च तथा विवक्षितम्, प्रकृतपिधानापत्तेः । न ज्ञायते तत्कन्दराशब्दयोर्विशेष्यसमर्पकयोः श्लिष्टत्वम् । तयोर्वाचकान्तरत्वानुपलम्भात् । ध्वन्यते पुनरुत्प्रेक्षा । तेन राज्ञा नायकेन च तथा समरे सुरतरणे च केशेष्वाकृष्य जयश्रीर्गृहीता तथा 'कन्दराभि (दरीभि) र्वा नायिकाभिस्तस्यारयः कण्ठे संस्थापिताः ।' इत्येवं नायककर्तृकनायिकाकेशाकर्षणाभिधाने तद्दर्शनजातकामोद्रेका इव कन्दरा नायिकास्तत्प्रतिभटनायकान् कण्ठे गृह्णन्तीत्यपि प्रतीतेः । अत्रायं प्रश्नः। स्यादेवम् ! यदि भवेत् 'जह (यथा)' इत्यत्र'तह (तथा)' इति । न च यच्छब्दस्य पूर्वपरामर्षकत्वम्, तच्छब्दस्यैव तद्वत्त्वात् । 'जह ( यथा )' शब्दस्य पूर्वत्रान्वये, उत्तरत्र च 'तह ( तथा )' शब्दस्याध्याहृत्यान्वये तु स्यादर्थान्तरैकवाचकत्वं नाम दोषः । इति ।

अथालङ्कारेण वस्तुध्वनिमुदाहरति–'**दशाननकिरीटेभ्यः**–'इत्यादिना ।

'**दशाननकिरीटेभ्यो** दशाननस्य रावणस्य किरीटानि मूर्धसु विराजमानानि मुकुटानि तेभ्यः । 'अपादाने पञ्चमी। २।३।२८।' इत्यपादाने पञ्चमी । **मणिव्याजेन** मणीनां रत्नानां व्याजस्तेन । 'प्रकृत्यादिभ्य उपसङ्ख्यानम् ।' इति तृतीया । **तत्क्षणं** तं क्षणं व्याप्येत्यर्थः । 'कालाध्वनोरत्यन्तसंयोगे ।' २।३।५। इति द्वितीया । यस्मिन् क्षणे श्रीराम-

अत्र कविप्रौढोक्तिसिद्धेनापन्हुत्यलङ्कारेण भविष्यद्राक्षसश्रीविनाशरूपं वस्तु व्यज्यते।

'धम्मिल्ले नवमल्लिकासमुदयो, हस्ते सिताम्भोरुहं,
हारः कण्ठतटे, पयोधरयुगे श्रीखण्डलेपो घनः।
एकोऽपि त्रिकलिङ्गभूमितिलक! त्वत्कीर्तिराशिर्ययौ-
नानामण्डनतां पुरन्दरपुरीवामभ्रुवां विग्रहे ॥ १८३॥'

---

भद्रोऽवतीर्णस्तं कालमारभ्येति भावः। **पृथिव्यां** भूमिपृष्ठे। **राक्षसश्रियो** राक्षसानां रावणपालितानां दुष्टप्रकृतीनां क्रव्यादानां श्रीः सम्पत् तस्याः। 'श्रीर्वेशरचनाशोभाभारतीसरलद्रुमे। लक्ष्म्यां त्रिवर्गसम्पत्तिविधोपकरणेषु च॥' इति मेदिनी। **अश्रुबिन्दवो**ऽश्रूणां बिन्दवः कणिकाः। **पर्यस्ताः** पतिताः॥' पद्यमिदं रघुवंशस्य दशमसर्गस्य। अनुष्टुप्छन्दश्च। लक्षणं च प्रागुक्तम्॥ १८२॥

अत्र व्यङ्ग्यमाह-अत्रेत्यादिना।

**अत्रा**स्मिन्नुदाहृते पद्ये इति यावत्। **कविप्रौढोक्तिसिद्धेन** कवेः प्रौढोक्तिरलीकस्याप्यनलीकत्वेनाभिधानं तया सिद्धस्तेन। राक्षससम्पदो नायिकात्वाभावेन तदश्रुपातासम्भवात्तथात्वेऽपि कविप्रौढोक्तिमात्रसिद्धत्वम्। **अपन्हुत्यलङ्कारेण** प्रकृतानां मणीनामपह्नवनेनाप्रकृतानां पुनर्नेत्रजलकणानामुपन्यासस्तद्रूपेणालङ्कारेण। **भविष्यद्राक्षसश्रीविनाशरूपं** भविष्यतीति भविष्यन् पुरस्ताद्भावी यो राक्षसश्रीविनाशो राक्षसश्रियो विनाशोऽदर्शनं तिरोधानं तद्रूपम्। **वस्तु**। **व्यज्यते** ध्वन्यते। यदाऽवतीर्णो रामभद्रस्तदानीं रावणकिरीटेभ्यो मणीनां निपतनं यज्जातं तन्न वास्तविकं, किन्तु तदानीमेव रावणप्रभृतीनां राक्षसानां विनाशो जात इति तदारभ्य यथा स्वामिनां विनाशे कुलाङ्गनाः सदैव रुदन्ति, तथैव तत्तदीयाः सम्पदोऽपि नायिकात्वेनाध्यस्ता रुदन्तीति प्रकृतापह्नवेनाप्रकृतोपन्यास इत्यपह्नुत्या तद्रूपेण व्यञ्जकेनार्थेन 'भविष्यति राक्षसविनाशः' इति सूचनात्मकं वस्तु ध्वन्यते। अपह्नुतेश्च कविप्रौढोक्तिमात्रसिद्धत्वं राक्षसश्रियामचेतनायामपि चेतनात्वेन तस्या अभिधानात्। इति भावः।

अथालङ्कारेणालङ्कारध्वनिमुदाहरति-'**धम्मिल्ले**-'इत्यादिना।

'हे **त्रिकलिङ्गभूमितिलक** त्रिकलिङ्गभूमे'स्तैलिङ्ग'ति प्रसिद्धस्य देशस्य तिलकस्तिलकसदृशालङ्कार इति तत्सम्बुद्धौ तथोक्त! 'क्षितिपालभालतिलक'इति पाठान्तरे क्षितिपालानां राज्ञां भालस्य तिलकायमान! इत्यर्थः। **पुरन्दरपुरीवामभ्रुवां** पुरन्दरः स्वर्गस्थानां देवानामिन्द्रस्तस्य पुरी नगरी अमरावतीति यावत्, तस्या या वामभ्रुवः (कामोद्दीपकत्वेन कुटिलतां मनोहरतां वा दधत्यो भ्रुवो यासां ताः) इति तासाम्। 'वामं धने, पुंसि हरे कामदेवे पयोधरे। वल्गुप्रतीपसव्येषु त्रिषु, नार्यां स्त्रियाम्' इति मेदिनी। देवेन्द्रभुजपरिपालितायाममरावत्यां नगर्यां वसतीनां सुन्दरीणामित्यर्थः। **धम्मिल्ले** तदुपलक्षिते देशे। 'धम्मिल्लाः संयताः कचाः।' इत्यमरः। **नवमल्लिकासमुदयो** नवीना आविर्भवद्विकाशा इति भावः या मल्लिकाः 'वेल्ली'ति ख्याताः सुरभितश्वेतपुष्पविशेषा इति तासां समुदयः सम्यगुदय उल्लासः पुञ्जो वेति। 'मल्लिका शतभीरुश्च गवाक्षी भद्रमल्लिका। शीतभीरुर्मदायन्ती भूपदी तृणशून्यकम्॥' इति वाचस्पतिः। **हस्ते** पाणौ। **सिताम्भोरुहं** सितं शुक्लं यदम्भोरुहं कमलं तत्, पुण्डरीकमिति भावः। 'पुण्डरीकं' सिताम्भोज' मित्यमरः। **कण्ठतटे** कण्ठस्य तटं तीरदेशस्तत्र। **हारो** मुक्ताऽऽभूषणम्। 'हारो मुक्तावली'त्यमरः। **पयोधरयुगे** पयोधरयोः स्तनयोर्युगं द्वयं तत्र। 'युगो रथे हलाद्यङ्गे, न द्वयोस्तु कृतादिषु। युग्मे हस्तचतुष्केऽपि वृद्धिनामौषधेऽपि च॥' इति मेदिनी। **घनः** सान्द्रः। 'घनं स्यात् कांस्यतालादिवाद्यमध्यमनृत्ययोः। ना मुस्ताब्दौघदार्ढ्येषु विस्तारे लोहमुद्गरे। त्रिषु सान्द्रे दृढे च।' इति मेदिनी। **श्रीखण्डलेपः** श्रीखण्डो मलयशैले एव सम्भूतश्चन्दनस्तस्य लेपः प्रलेपः। 'मालयस्तु स्याच्छ्रीखण्डो रौहिणश्च सः।' इति त्रिकाण्डशेषः। इत्येवम्-**एको**ऽनन्योऽसहाय इति यावत्। **त्वत्कीर्त्तिराशिस्**तव कीर्त्तिर्यशस्तस्या राशिः पुञ्ज इति तथोक्तः। **विग्रहे** कलेवरे। पुरन्दरपुरीवामभ्रुवामिति शेषः। **नानामण्डनतां** विविधाभूषणस्वरूपताम्। **ययौ** गतवान्।' पद्यमिदं केनापि तैलङ्गेश्वरस्यानुग्रहभाजनेन तत्प्रीत्यै भणितम्। शार्दूलविक्रीडितं छन्दः। लक्षणं च प्रागुक्तम्॥ १८३॥'

**अत्र कविप्रौढोक्तिसिद्धेन रूपकालङ्कारेण'भूमिष्ठोऽपि स्वर्गस्थानामुपकारं करोषी'ति विभावनाऽलङ्कारो व्यज्यते ।**

**'शिखरिणि क्व नु नाम कियच्चिरं किमभिधानमसावकरोत्तपः ।**
**सुमुखि ! येन तवाधरपाटलं दशति विम्बफलं शुकशावकः ॥ १८४ ॥'**

**अत्रानेन कविनिबद्धस्य कस्यचित् कामिनः प्रौढोक्तिसिद्धेन वस्तुना 'तवाधरः पुण्यातिशयलभ्य'इति वस्तु व्यज्यते ।**

---

व्यङ्ग्यमाह—**अत्रे**त्यादिना ।

**अत्रा**स्मिन् पद्ये । **कविप्रौढोक्तिसिद्धेन** । साक्षान्नयनगोचरतामप्रतिपद्यमानाया अमूर्त्ताया अपि कीर्त्तेः पुञ्जाभिधानं धवलत्वेनाभिधानं च कवेः प्रौढोक्तिस्तत्सिद्धेनेत्यर्थः । **रूपकालङ्कारेणो**पमानोपमेययोर्निरपह्नवेनाभेदारोपणं रूपकं तदाख्येन तत्स्वरूपेण वाऽलङ्कारेणेत्यर्थः । तद्रूपेण व्यञ्जकेनार्थेनेति शेषः । '**भूमिष्ठो** भूमेः स्वर्गापेक्षयाऽधस्तनत्वं तत्स्थोऽधःस्थ इति यावत् । **अपि** । त्वमिति शेषः । **स्वर्गस्थानां** स्वर्गस्य भूम्यपेक्षयोर्ध्वत्वं तत्स्थानामूर्ध्वस्थानाम् । देवसुन्दरीणामिति यावत् । परम्परया देवानामपीति भावः । **उपकारं** हिताधानम् । **करोषि** ।' **इति विभावनालङ्कार** इत्येवं कारणमन्तरेण कारणसापेक्षस्यापि कार्योदयस्याभिधानं विभावना तन्नामालङ्कार इत्यर्थः । **व्यज्यते** ध्वन्यते ।

इत्येवं कविप्रौढोक्तिसिद्धाभ्यां वस्त्वलङ्काराभ्यां वस्त्वलङ्कारयोर्ध्वनिमुदाहृत्य कविनिबद्धप्रौढोक्तिसिद्धाभ्यां वस्त्वलङ्काराभ्यां वस्त्वलङ्कारयोर्ध्वनिमुदाहर्त्तुकामस्तत्र तावद्वस्तुना वस्तुध्वनिमुदाहरति—'**शिखरिणि**' इत्यादिना ।

'हे **सुमुखि** मनोहरवदने ! यद्वा—सुष्ठु 'दृष्टमात्रं कमप्यामोदमाधत्ते' इति पुण्यातिशयलभ्यं मुखमाननं यस्यास्तत्सम्बुद्धौ तथोक्ते ! लोके ह्येषा प्रसिद्धिः—दृष्टमात्रं यन्मुखं कमपि विदध्यादामोदं स सुमुखस्तन्मुखमपि दर्शनीयत्वेन सुष्ठ्विति । **नामा**श्चर्यम् आश्चर्येण पृच्छ्यते इति यावत् । 'नाम कोपेऽभ्युपगमे विस्मये स्मरणेऽपि च ।' इति मेदिनी । **असौ** । **शुकशावकः** शुकस्य कीरस्य शावकः पोतो बालपुत्र इति यावत् । 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः ।' इत्यमरः । **क्व** कस्मिन् । **नु** ननु । **शिखरिणि** शैले । **कियच्चिरं** कियत्समयावधि । **किमभिधानं** किन्नामकम् । **तपो**ऽनेकानेकजन्मार्जितपापपुञ्जप्रायश्चित्ताचरणम् । **अकरोत्** कृतवान् । प्रश्नाभिप्रायमाह—**येन** हेतुना तपोमहिम्ना । **तव** नितान्तपुण्योपचयेन दर्शनीयायाः । यद्दर्शनमामोदातिशयहेतुस्तद्दर्शनं तावन्नितान्तं कृतैः पुण्यैरिति प्रसिद्धेः । **अधरपाटल**मधरवदूर्ध्वाधस्तनौष्ठवत् पाटलं श्वेतरक्तत्वमात्रेण रमणीयं न तु सर्वतोभावेन । अधरसस्मितमित्यनुक्त्वाऽ'धरपाटल' मित्युक्त्याऽधरयोरनौपम्यमेवेति सूचितम् । 'आशुव्रीहौ पाटलो ना श्वेतरक्तेऽन्यलिङ्गवान् ।' इति रुद्रः । **बिम्बफलम्** । **दश**त्यास्वादते न त्वनच्छिन्नप्रबन्धतयौदरिकवत् केवलं भुङ्क्ते इति यावत् । द्रुतविलम्बितमत्र वृत्तम् । उक्तं च तल्लक्षणं प्राक् ॥ १८४ ॥

अत्रेदमभिहितम्—अयि सुन्दरि ! तव मुखदर्शनमतीव दुर्लभं जातं, यदिदमामोदमावहति, तत्र पुण्योपचय एव कारणम्, मम पुनस्तज्जातमिति ममाप्यतीव कश्चित् पुण्योपचयो जन्मान्तरीणोऽवश्यम् । अहो शुकशावकोऽयं मदपेक्षयाऽपि नितान्तं कृतपुण्यः प्रतीयते । तवाधरो निरतिशाय्यसदृशसौभाग्यसर्वस्वम्, तस्य यत् किञ्चिदेव यत्रोपमेयत्वमप्युपलभ्येत तदपि वरम्, बिम्बफलं च सर्वतोभावेन तदुपमितं स्यादिति तु क्व ? किन्तु श्वेतरक्तिमशालितया यदारोहते तत्सादृश्यं तच्चास्वादते शुकशावक एष इत्यस्य पुण्योपचयातिशयं कथं वर्णयितुं शक्तः स्याम् । अहमपि तत्सदृशो भविष्यामीति नाशासे, जिज्ञास्यते, यत्रैनेन तप्तः स किमभिधेयः शैलः, शैलेषु हि महान्तस्तपन्तीति प्रसिद्धेः । यदवधि च तप्तं, स कियान् समयः, तपांसि पुनर्बहुविधानि, तत् तपश्च किम् ? इति ।

अत्र व्यङ्ग्यमाह—**अत्रे**त्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्ये इति यावत् । **अनेना**लीकस्य शुकशावकतपश्चरणस्य वास्तविकतया प्रतिपादनरूपेणेति यावत् । **कविनिबद्धस्य** । **कस्यचित्** कस्यापि । **कामिनः** सुन्दरीदर्शनमात्रेण मदनाशुगैर्विध्यमानस्य वक्तु-

'सुभगे ! कोटिसङ्ख्यत्वमुपेत्य मदनाशुगैः ।
वसन्ते पञ्चता त्यक्ता पञ्चताऽऽसीद्वियोगिनाम् ॥ १८५ ॥'

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन कामशराणां कोटिसङ्ख्यत्वप्राप्त्या निखिलवियोगिमरणेन वस्तुना 'शराणां पञ्चता शरान् विमुच्य वियोगिनः श्रितेवे' त्युत्प्रेक्षाऽलङ्कारो व्यज्यते।

---

रिति यावत्। **प्रौढोक्तिसिद्धेन** प्रौढोक्त्या सिद्धेन । **वस्तुना** तद्रूपेणार्थेनेति यावत्। '**तव** । **अधर** ओष्ठः । **पुण्यातिशयलभ्यः** पुण्यातिशयः पुण्योत्कर्षस्तेन लभ्यो लब्धुं शक्यः ।' इति । **वस्तु** । अनलङ्कारमुक्तिसौन्दर्यमिति यावत्। **व्यज्यते** ध्वन्यते । यत्सादृश्येनोत्कृष्टं वस्तु पुण्यातिशयमन्तरेण न लभ्यते तस्य सुतरामेव पुण्यातिशयलभ्यत्वमिति भावः ।

अथ वस्तुनाऽलङ्कारध्वनिमुदाहरति– '**सुभगे**' इत्यादिना ।

'हे **सुभगे** सुन्दरि! **मदनाशुगैर्म**दनस्य कामदेवस्याशुगा बाणास्तैः । **वसन्ते** वसन्तसमये । **कोटिसङ्ख्यत्वं** कोटिस्तन्मिता सङ्ख्या येषां तत्त्वम् । **उपेत्य** प्रतिपद्य कामस्य कुसुमेषुत्वात् कुसुमानां च वसन्ते आनन्त्यस्य स्वतःसिद्धत्वात् । **पञ्चता** पञ्चसङ्ख्याकत्वम् । 'कामः पञ्चशरः स्मरः ।' इत्यमरोक्त्या मदनाशुगानां पञ्चसङ्ख्याकत्वम्। **त्यक्ता** विमुक्ता । ननु पञ्चता पुनः केषामाश्रिताऽऽसीदित्याह–**वियोगिना**मध्वगानामसादृशानामिति यावत्। **पञ्चता** पञ्चत्वं मरणमिति यावत्। 'पञ्चता पञ्चभावे स्या–न्मरणेऽपि च योषिति' इति मेदिनी । **आसीत्** । अत्रानुष्टुप्छन्दः लक्षणं, तूक्तं प्राक् ॥ १८५ ॥

अत्र व्यङ्ग्यमाह–**अत्रे**त्यादिना ।

**अत्रा**स्मिन्नुदाहृते स्थले इति यावत्। **कविनिबद्धप्रौढोक्तिसिद्धेन** । वसन्ते इति शेषः । **कामशराणां** कुसुमेषुबाणानाम्। **कोटिसङ्ख्यत्वप्राप्त्या**ऽनन्तत्वसम्भवात्। **निखिलवियोगिमरणेन** निखिला(न त्वहमेक एव) वियोगिनः पान्थास्तेषां मरणं प्राणत्यागोपस्थानं तेन तद्रूपेणेति यावत्। **वस्तुना** तदात्मकेन व्यञ्जकेनार्थेन । '**शराणां** कुसुमेषोरिति शेषः । **पञ्चता** पञ्चसङ्ख्याकत्वमात्रम् । **शरान्** । कुसुमेषोरिति शेषः । **विमुच्य** परित्यज्य । **वियोगिनः** पथिकान् । **श्रिता**ऽऽश्रिता । **इव** । वस्तुतः पञ्चत्वयोः पार्थक्यात् ।' इत्येवम् । **उत्प्रेक्षाऽलङ्कारः** । **व्यज्यते** । प्रतीयते । इति ।

यथा वा मम–'अयि सुभगं तव वदनं पश्यति सुभगे यदा यदा चन्द्रः । ग्लायति हन्त पिधत्ते सपदि तदैवात्मनो वदनम् ॥' इति ।-अस्यायमर्थः–'अयि सुभगे सौभाग्यसम्पन्ने ! चन्द्रश्चन्द्रमा यदायदा सुभगं दर्शनीयम्, अपि तव वदनं मुखं ( कर्म ) पश्यति तदैव हन्त ग्लायति ग्लानिमापद्यते, तथाभूतश्चात्मनो वदनं स्वरूपं सपदि पिधत्ते तिरोहितं कुरुते ॥' इति । अत्र कविनिबद्धवक्तृप्रौढोक्तिमात्रसिद्धेन 'अयि तव सुभगायाः सुभगमपि मुखं चन्द्रो यदायदा निरीक्षते। तदैव न तु कालान्तरे सपदि स्वमुखं पिधत्ते स्वयं तिरोहितो भवति । यदि भवेदसुभगाया असुभगं वा मुखं तदा कथिद्विपीदेत् पिदधीत वा स्वमुखं, किन्तु कथमन्यथा भानेऽपी'त्याश्चर्यगर्भिताभिधानात्मना वस्तुना व्यञ्जकेनार्थेन विरोधाभासशबलितो व्यतिरेकालङ्कारो व्यज्यते । यथा वा मम–'अवमनुते तव वदनं धाम सुधायाः श्रियं च पद्मानाम् । सम्मनुते मम जीवनमित्यसि दयिता मता त्वं मे ॥' इति । अस्यायमर्थः–'अयि तव वदनं मुखं ( कर्तृ ) सुधाया अमृतस्य धाम स्थानभूतं चन्द्रमसं पद्मानां श्रियं चावमनुतेऽवमानास्पदभूततां नयति, मम जीवनं जीवितमन्तरात्मानमिति यावत्, सम्मनुते सम्मानास्पदं कुरुते इत्यतो हेतोस्त्वं मे मम दयिता प्रिया माताऽसि ॥' इति । अत्र कविप्रौढोक्तिमात्रसिद्धेन वदनकर्तृकेणावमानेन सम्मानेन च वस्तुना 'अवमानकर्तुरपि सम्मानकर्तृत्व'मिति विरोधाभासः, वदनं चोपमेयं चन्द्रः पद्मं वा तदुपमानमपि तस्य वदनस्य ताभ्यां चन्द्रपद्माभ्यां तत्कर्तृकावज्ञानविषयीभूतत्वेन व्यतिरेकः । चन्द्रविरोधिनः पुनः पद्मविरोधित्वं, तस्य च जीवन ( जल ) सम्मातृत्वमिति विरोधशृङ्खलिताभासः, दयितात्वोत्प्रेक्षणादुत्प्रेक्षा, न वदनेन सदृशं सुधाधाम, न वा पद्मादिनिधीनां वैभवमपि केवलं पुनर्जीवनमित्यलौकिकास्वादसम्पत्सर्वस्वत्वेन प्राणसदृशत्वमित्येवं दयितात्वस्यानुमानादनुमानं चेत्यलङ्कारा ध्वन्यन्ते ।

'मल्लिकामुकुले चण्डि ! मत्तो गुञ्जति षट्पदः।
प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव ॥ १८६॥'

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेनोत्प्रेक्षाऽलङ्कारेण 'कामस्यायमुन्मादकः कालः प्राप्तः, तत् कथं न मानिनि ! मानं मुञ्चसि।' इति वस्तु व्यज्यते।

'महिलासहस्सभरिए, तुह हिअए सुहअ ! सा अमाअंति ।
अणुदिणमणस्मकम्पा अंगं तणुअं पि तणुएइ ॥ १८७ ॥'

---

अथालङ्कारेण वस्तुध्वनिमुदाहरति—'मल्लिकामुकुले' इत्यादिना।

'हे चण्डि अत्यन्तकोपनशीले! पञ्चबाणस्य कामदेवस्य सार्वभौमस्येति शेषः। 'कामः पञ्चशरः स्मरः।' इत्यमरः। प्रयाणे दिग्विजययात्रायाम्। शङ्खं विजयशङ्खमित्यर्थः। आपूरयन्। इव। मत्तः। सर्वं तुच्छमाकलय्य हन्तुं पीतमदिर इव त्यक्तकर्त्तव्याकर्त्तव्यविचार इति भावः। षट्पदो भ्रमरः। ज्वरस्य त्रिपान्मात्रतया ततो द्विगुणप्रभाव इति यावत्। 'द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः।' इत्यमरः। मल्लिकामुकुले मल्लिकाया 'बेली'ति प्रसिद्धाया लताया मुकुलो विकाशोन्मुखी कलिकेति यावत् तत्र तत्सविधे इति भावः। गुञ्जति रौति।' अत्रानुष्टुप्छन्दः। लक्षणं च प्रागुक्तम् ॥ १८६ ॥

अत्र व्यङ्ग्यमाह—अत्रेत्यादिना।

अत्रास्मिन्नुदाहृते पद्ये इति यावत्। कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन कविना निबद्धस्य कामिनः प्रौढोक्त्या सिद्धेन प्रौढोक्तिश्चालीकस्यापि भ्रमरध्वनेः कामस्य च दिग्विजयार्थं प्रयाणस्यावसरे शङ्खध्मानत्वेनोत्प्रेक्षणरूपा। उत्प्रेक्षाऽलङ्कारेण तदात्मकेन व्यञ्जकेनार्थेनेति यावत्। 'कामस्य मदनस्य। उन्मादकः प्रभावोत्कर्षाधायकत्वेन प्रमत्ततायाः विधाता। अयम्। कालो वसन्ताख्य इति यावत्। प्राप्तः। तत्तर्हि। हे मानिनि दुराग्रहशीले! मानमाग्रहमप्रणमनस्वभावमिति यावत्। कथं केन हेतुना। न नैव। मुञ्चसि परित्यजसि।' इति वस्तु तद्रूपमभिधानमिति भावः। व्यज्यते व्यञ्जनया बोधविषयीक्रियते। इति।

यथा वा, मम—'सुमुखि! मुखं तव रुचिरं त्वमिव न केनापि तुल्यमन्येन। इति तत् पश्यन् हसति प्रवर्धमानोऽपि हन्त शशी ॥' इति। अस्यायमर्थः—'अयि सुमुखि!। तव मुखं रुचिरं मनोरमम् तत्, किमिवेति चेत् त्वमिव त्वमेव तुल्यम्, अन्येन केनापि तुल्यं न तदुपमानभूततायाः अन्यत्रालब्धेः। इत्यस्माद्धेतोस्तदलौकिकसौन्दर्यसर्वस्वभूतं त्वदीयं मुखं पश्यन् निरीक्षमाणः शशी चन्द्रः प्रवर्धमानः पुनःपुनर्भयेनैव शनैःशनैर्वृद्धिं प्रतिपद्यमानोऽपि हसति ततो भ्रश्यती'ति। अत्र कविनिबद्धस्य कामिनो वक्तुः प्रौढोक्तिमात्रसिद्धेभ्योऽनन्वयव्यतिरेकविरोधाभासेभ्यः :'न त्वया वहिर्गन्तव्यम्, वहिर्गतायां च त्वयि परेषां मानभङ्गजनितोऽन्तः सन्ताप उपपद्यते,:त्वया तु कारणान्तरतोऽपि जातस्य सन्तापस्य निवृत्तिर्विधातव्ये'ति निजरमणविरहासहिष्णुत्वापह्नवनं वस्तु व्यज्यते। यथा वा, मम—'अयि सुन्दरि! तव सदृशी सुषमा लवतोऽपि कुत्रचिन्नैव। असदृशनिरतिशयरुचिरतया यदेकाऽसि सर्वतो विदिता ॥' इति।' अस्यायमर्थः—अयि सुन्दरि! असदृशनिरतिशयरुचिरतया यत्त्वमेकाऽद्वितीया सर्वतो विदिताऽसि तत्तव त्वया सदृशी सुषमा परमा रमणीयता कुत्रचित् कुत्रापि नैवास्ती'ति। अत्र कविनिबद्धप्रौढोक्तिमात्रसिद्धेन व्यतिरेकेण 'विदितसौभाग्याया अद्वितीयायास्तवासदृशनिरतिशयाह्लादहेतुत्वमुचितमेवे'ति वस्तु व्यज्यते।

अथालङ्कारेणालङ्कारध्वनिमुदाहरति—'महिलासहस्सभरिए—'इत्यादिना।

'सुहअ हे सुभग! परमैश्वर्यशालिन्निति यावत्। महिलासहस्सभरिए महिलानां वधूनां सहस्रं तस्य भरितं सङ्घयुक्तं तत्र। भरो जातो यस्य तत्। 'तदस्य सञ्जातं तारकादिभ्य इतच्।' ५।२।३६। इतीतच्। 'वनिता महिला तथा'इत्यमरः। तुह तव धूर्त्तसुभगस्येति यावत्। मनोहारित्वेन वञ्चकत्वेन च तस्य तत्त्वात्। हिअए हृदये तदुपलक्षितान्तःप्रदेशविशेषस्य मध्ये इति यावत्। अमाअंती अमान्ती स्थानमविन्दन्तीति यावत्। अत एव—अणण्णकम्मा अनन्यकर्माऽनन्यकर्त्तव्या त्यक्तसमस्तकर्त्तव्यान्तरत्वादिति यावत्। नान्यद् वक्ष्यमाणाङ्गतनूकरणातिरिक्तं

अत्र 'अमाअंती'ति कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण 'तनोस्तनूकरणेऽपि तव हृदये न वर्त्तते' इति विशेषोक्त्यलङ्कारो व्यज्यते।

---

कर्म यस्याः सा। **सा** प्रकृता साध्वीत्वेन सत्स्वभावत्वेन स्वभावतः कृशोदरीत्वेनैव वा प्रसिद्धेत्यर्थः। **अणुदिणम्** अनुदिनं प्रतिदिनमिति यावत्। **तणुअं** तनुकं सूक्ष्ममिवेति यावत्। तन्विव तनुकम्। 'इवे प्रतिकृतौ।' ५।३।९६। इति कन्। 'तनुः काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे' इति विश्वमेदिन्यौ। पि अपि न तु स्थूलम्। **अंगं** अङ्गम्। **तणुएइ** तनयति तनूकरोतीति यावत्। तत्र प्रवेशलाभायेति शेषः। पद्यमिदं गाथासप्तशत्याम्। गाथा चात्र च्छन्दः। लक्षणं तु प्रागुक्तम् ॥ १८७ ॥

अत्र व्यङ्ग्यमाह-अत्रेत्यादिना।

अत्रास्मिन्नुदाहृते पद्य इति यावत्। '**अमाअंती**' अमान्ती। हृदयस्य स्वतःसूक्ष्मत्वेऽपि महिलासहस्रभरितत्वेन सुतरां निरवकाशत्वे सूक्ष्मत्वमिति तत्रावकाशमानाऽवकाशलाभायाङ्गं तनूकरोतीति यावत्। इत्येवं 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्ग'मित्युक्तदिशेति यावत्। **कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन** कविना निबद्ध उत्तम्भितस्वरूपोऽसौ वक्ता नायकाय नायिकाया विरहदशामावेदयन् यः सखीजनस्तद्रूपस्तस्य प्रौढोक्तिसिद्धेन। **काव्यलिङ्गालङ्कारेण** अत्र जात्यभिप्रायेणैकवचनमिति काव्यलिङ्गालङ्काराभ्यामित्यर्थः। 'अमाअंती' इत्यत्र 'महिलासहस्सभरिए' इति सूच्यमानो हेतुः 'तणएइ' इत्यत्र पुनः 'अमाअंती' इति सूच्यमानः, तदेवं काव्यलिङ्गद्वितयत्वम्। **तनोः** सूक्ष्मस्य शरीरस्येति वा। 'तनुर्वं-पुंस्त्वचोः। विरलेऽल्पे कृशे' इति हैमः। **तनूकरणे** सूक्ष्मकरणे। **अपि**। **तव** महिलासहस्रभरितहृदयस्येत्यर्थः। **हृदये**। **न** नैव। **वर्त्तते** स्थानाभावादप्रविष्टैव तावद्विद्यते इत्यर्थः। इत्येवं 'कारणसत्त्वेऽपि कार्यानुत्पत्ते' रित्यर्थः। **विशेषोक्त्यलङ्कारः** 'सति हेतौ फलाभावो विशेषोक्ति'रित्युक्तस्वरूपोऽलङ्कारः। **व्यज्यते** ध्वन्यते।

यथा वा, मम-'जपदिव तपदिव सलिले केवलमुद्यन्तमीक्षते सूर्यम्। तदपि न जातं कमलं सुभगे! वदनेन ते सदृशम् ॥' इति। अस्यायमर्थः-'हे सुभगे! सलिले जलमध्ये तिष्ठज्जपज्जपं कुर्वदिव तपत्तपः कुर्वदिव कमलम् (कर्तृ) उद्यन्तमुदयमानं सूर्यं भगवन्तं गायत्र्युपास्यं सवितारमीक्षते तन्मात्रमनस्कतया तदेकलग्नदृष्टिभूत्वाऽद्य यावद्वर्त्तते। तदपि एवं मज्जज्जपादिकुर्वाणमपि तदेतदवधि ते तव वदनेन मुखेन सदृशं न जातं किं पुनस्तदुपमानभूत'मिति। अत्र कविनि-बद्धप्रौढोक्तिसिद्धेनोत्प्रेक्षाऽलङ्कारेण व्यतिरेको व्यज्यते।

यथा वा, मम-'सुन्दरि! सुधांशुसदृशं, तव वदनं नांशतोऽपि जातु भवेत्। इह वदनं नभसि पुनर्हन्त सुधांशुः समुद्याति ॥' इति। अस्यायमर्थः-'हे सुन्दरि! जातु कदाऽपि तव वदनं मुखमंशतोऽशमात्रेणापि सुधांशुसदृशं न भवेत्। इहास्मिँल्लोके वदनं तवेदं मुखं विराजते, हन्त! सुधांशुः पुनर्नभसि तदुपलक्षिते ऊर्ध्वदेशे समुद्याति समुदयते, अथ समुत्थितो भवति ॥' इति। अत्र कविनिबद्धप्रौढोक्तिसिद्धेनाक्षेपेण व्याजस्तुत्याख्येन वाऽलङ्कारेण व्यतिरेको व्यज्यते।

यथा वा, मम-'अमृतनिधानं रुचिरं सन्तापनिवर्त्तने सदा मुदितम्। चन्द्रमुखं तव सुन्दरि! सुस्मितभासा विकाशते परितः ॥' इति। अस्यायमर्थः-हे सुन्दरि! अमृतस्य पीयूषस्य तथाभूतस्वास्वादस्य निधानमाधारभूतं रुचिरं मनोज्ञं रुचिं कान्तिं राति ददातीति तथाभूतं सन्तप्तानां पुनः सन्तापनिवर्त्तने सदा न तु कदाचिदेव मुदितमुल्लासभाक्-न तूदासीनं न वाऽहृष्टम्। तव चन्द्रमुखं चन्द्र एव मुखं न तु मुखमेव चन्द्रः, सुस्मितभासा मन्दमन्दरुचिरहासः सम्बन्धिन्या कान्त्या परितः समन्ताद्विकाशते ॥' इति। अत्र कविनिबद्धप्रौढोक्तिसिद्धेन रूपकेण 'प्रसिद्धश्चन्द्रो नक्तमेव गृहिणामेव च सन्तापं निवर्त्तयति, इदं पुनर्नक्तंदिनं, गृहिणां पथिकानां चेत्युभयेषामपि सन्तापनिवर्त्तक'मिति व्यतिरेकः, 'चन्द्रो यथा भासा विकाशते तथा पुनरिदं सुस्मितेने'ति श्लिष्टं रूपकं, न तु श्लिष्टोपमा, तत्र प्रसिद्धस्यैवोपमानो-पमेयभावस्य तावदवश्येनाङ्गीकारात्, अत्र पुनः 'चन्द्रमुख' मित्युक्त्या 'मुखचन्द्र' इत्यनुक्त्या च प्रसिद्धस्योपमानस्य चन्द्रस्योपमेयभावेनारोपस्यैव न तु सादृश्यस्य सद्भाव इति तयोः संसृष्टिर्व्यज्यते।

न खलु कवेः कविनिबद्धस्येव रागाद्याविष्टता, अतः कविनिबद्धवक्तृप्रौढोक्तिः कविप्रौढोक्ते-रधिकं सहृदयचमत्कारकारिणीति पृथक् प्रतिपादिता। एषु चालङ्कृतिव्यञ्जनस्थले रूपणोत्प्रेक्षणव्यतिरेचनादिमात्रस्य प्राधान्यं सहृदयं सम्वेद्यं, नतु-रूप्यादीनामित्यलङ्कृतेरेव मुख्यत्वम् ।

२९० एकः शब्दार्थशक्त्युत्थे

उभयशक्त्युद्भवे व्यङ्ग्ये एको ध्वनेर्भेदः ।

---

नन्वस्त्येव कवेः प्रौढोक्तिसिद्धत्वं तन्निबद्धस्यापि वक्तृविशेषस्य, किं पुनस्तयोः पृथक्त्वमित्याह–नेत्यादि ।

**कविनिबद्धस्य** कविना निबद्ध उत्तम्भितस्वरूपस्तस्य तादृशस्य वक्तुः । **रागाद्याविष्टता** रागोऽनुरागस्त-दाद्याविष्टत्वम् । आदिपदं चात्रोत्साहाद्यनुग्राहकम् । **इव** यथातथा । **कवेः** तन्निबद्धुः । रागाद्याविष्टतेति शेषः । **न** । **खलु** नूनम् । **अतो**ऽस्मात् कारणात् । प्रौढोक्तेः रागाद्याविष्टत्वप्रत्यायिकत्वेऽपि कवेरपेक्षया तन्निबद्धस्य वक्तुरधि-करागाद्याविष्टताप्रत्यायनादिति भावः । **कविप्रौढोक्तेः** कविप्रौढोक्त्यपेक्षया । **कविनिबद्धवक्तृप्रौढोक्तिः** । **अधिकं** सातिशयम् । **सहृदयचमत्कारकारिणी** सहृदयानां चमत्कारो लोकोत्तराह्लादस्तत्कारिणी तद्विधात्री । इत्येवं मीमांसयित्वेत्यर्थः । **पृथक्** कविप्रौढोक्तेरिति शेषः । **प्रतिपादिता** । कविनिबद्धवक्तृप्रौढोक्तिरिति शेषः ।

अत्रेदमभिहितम्–'न हि कविना परदारा एष्टव्या नापि चोपदेष्टव्याः । कर्त्तव्यतयाऽन्येषां न च तदुपायोऽ-भिधातव्यः ॥ किन्तु तदीयं वृत्तं काव्याङ्गतया स केवलं वक्ति । आराधयितुं विदुषस्तेन न दोषः कवेरत्र ॥' इति रुद्रटोक्तनयेन, वाल्मीकिप्रभृतीनामपि कवित्वेन तन्निबद्धानामिव रागाद्याविष्टताया अन्याय्यकल्पनायाश्च न खलु कुत्रापि कवेस्तन्निबद्धस्येव तत्रतत्र रागाद्याविष्टत्वं, किन्त्वौदासीन्यमेवेति कविप्रौढोक्तेः कविनिबद्धप्रौढोक्तावस्त्येवाधिकचमत्कार-कारित्वम् । इति ।

ननु यत्रालङ्कारस्य व्यञ्जकत्वमुक्तं, तत्रास्त्येवालङ्कार्यस्य वस्तुनोऽपि व्यञ्जकत्वं तत् कथं तयोर्भेद इत्याह–एष्वित्यादि ।

**एषु** प्रागुक्तेषु द्वादशस्वर्थशक्त्यनुरणनस्य ध्वनेर्भेदेषु मध्ये इत्यर्थः । **च** । **अलङ्कृतिव्यञ्जनस्थले**ऽलङ्कृतिरल-ङ्कारस्तस्य व्यञ्जनं ध्वनिस्तत्स्थलं तद्वति शब्दे इति यावत् । **रूपणोत्प्रेक्षणव्यतिरेचनादिमात्रस्य** । अन्यस्मि-न्नन्यारोपो रोपणम्, कञ्चिदंशमादायावास्तविकस्यापि वास्तविकत्वेन सम्भावनमुत्प्रेक्षणम्, परस्परं वैलक्ष्याभिधानं व्यतिरेचनम्' आदिना चापह्नवनादि, मात्रपदेन पुना रूप्यादिव्यवच्छेदः । **प्राधान्यं** ध्वन्यमानत्वं, न गुणीभूतत्वम् । **सहृदयसंवेद्यं** सहृदयसाक्षिकम् । तत एवाह–**रूप्यादीनां** रूप्योत्प्रेक्ष्याव्यतिरेच्यापह्नव्यादीनामित्यर्थः । **तु** । प्राधान्यमिति शेषः । **न** । तस्यावास्तविकत्वेन सहृदयसम्वेद्यत्वाभावादिति शेषः । **इत्यतः** कारणात् । **अलङ्कृतेर**लङ्कारस्य । **एव** निर्बाधम् । **मुख्यत्वं** प्राधान्यम् । तदेवं तस्य सहृदयसक्षिकत्वेन ध्वनिरिति व्यपदेशार्हत्वमिति भावः ।

एवं द्वादशभेदात्मकार्थशक्त्यनुरणनमुदाहृत्य शब्दार्थोभयशक्त्यनुरणनध्वनिमाह–२९० एक इत्यादिना ।

२९० **शब्दार्थशक्त्युत्थे** शब्दार्थयोः शक्तिस्तस्यां उत्तिष्ठतीति तत्र । व्यङ्ग्ये इति शेषः । **एक** एकः प्रभेदः । शब्दार्थोभयशक्तिमूलः संलक्ष्यक्रमव्यङ्ग्यो नाम ध्वनिरेकप्रभेद एव, तत्र व्यङ्ग्यस्य शब्दार्थोभयशक्त्यनुरणनत्वमात्रेण भेदान्तरानुत्पत्तेरिति भावः ।

एवमेव विवृणोत्युभयशक्त्युद्भव इत्यादिना ।

**उभयशक्त्युद्भवे** उभयशक्तिः शब्दार्थोभयशक्तिः, सैवोद्भव उत्पत्तिस्थानं यस्य तस्मिन्निति, तस्या उद्भव-तीति तस्मिन्निति वा तथोक्ते । **व्यङ्ग्ये** सतीति शेषः । **एकः** । **ध्वनेः** । शब्दार्थशक्तिमूलस्य संलक्ष्यक्रमव्यङ्ग्यस्येति शेषः । **भेदः** प्रभेदः ।

यथा–

'हिममुक्तचन्द्ररुचिरः सपद्मको, मदयन् द्विजान् जनितमीनकेतनः ।
अभवत् प्रसादितसुरो महोत्सवः प्रमदाजनस्य स चिराय माधवः ॥ १८८ ॥'

अत्र 'माधवः' कृष्णः 'माधवो' वसन्त इवेत्युपमाऽलङ्कारो व्यङ्ग्यः ।

---

उदाहरति–यथेति ।

**'हिममुक्तचन्द्ररुचिरो** हिममुक्तो हिमावरणशून्यत्वेन निर्मलो यश्चन्द्रस्स इव रुचिरोऽभिलषणीयः, हिममुक्तश्चन्द्रो यत्र तादृशोऽसौ रुचिर इति वा । विवृतिकारास्तु 'हिममुक्तेन चन्द्रेण रुचिरो दीप्यमानः' इत्याहुः । **सपद्मकः** पद्मया लक्ष्म्या पद्मैः कमलैर्वा सहित इति । **द्विजान्** विप्रान् कोकिलादीन् पक्षिणो वा । **मदयन्** हर्षयन् स्थित इति शेषः । **जनितमीनकेतनो** जनितः पुत्रत्वेनोत्पादितः सुरतोत्सववर्धकत्वेन समुल्लासितो वा मीनकेतनः प्रद्युम्नो मदनो वा येन सः । **प्रसादितसुरः** प्रसादिताः प्रसादं प्रसन्नतामानीता गता वा सुरा येन यत्र वेति । विवृतिकारास्तु–'प्रसादिता विमलीकृता सुरा मद्यं येने'त्याहुः । **स** प्रकृतः प्रसिद्धो वा । **माधवो** यदुनन्दनो वसन्तो वा । **प्रमदाजनस्य** वधूजनस्य । **महोत्सवः** । **चिराय** चिरकालपर्यन्तम् । **अभवदभूत्** ॥ १८८ ॥' इति ।

अत्र व्यङ्ग्यमाह–**अत्रे**त्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्ये । **'माधवस्तत्पदवाच्यः । कृष्णः । माधवस्तत्पदवाच्यः । वसन्त** ऋतुराजः । **इव** ।' इत्येवम् । **उपमालङ्कारः** । शब्दार्थोभयशक्तिमूल इति शेषः । **व्यङ्ग्यो** ध्वन्यः । अत्रेदं तात्पर्यम्–सपद्मकद्विजमाधवशब्दानां परिवृत्त्यसहिष्णुत्वं, हिममुक्तादिशब्दानां पुनः परिवृत्तिसहिष्णुत्वमिति शब्दार्थोभयस्य प्राधान्येन व्यङ्ग्योपमेति ग्रन्थकाराणां, विवृतिकाराणां पुनः प्रमदाजनस्य महोत्सवजनने 'यदर्थे यस्य प्रसिद्धिस्तत्रैव तस्य सामर्थ्यम्' इति वसन्तस्यैव सामर्थ्यम् । प्रतिसन्धानसहकृतेन माधवपदेन वसन्त एव व्यज्यते न त्वर्थान्तरम् । तस्य ( माधवपदस्य ) तत्र ( अर्थान्तरे ) सामर्थ्याभावात् । न चात्र शब्दार्थोभयश्लेषसत्त्वेन शब्दार्थोभयशक्तिव्यङ्ग्योपमेति वाच्यम् । तथा सति ' दुर्गालङ्घित–' इत्यत्राप्युभयश्लेषसत्त्वेनोभयशक्तिव्यङ्ग्यत्वं स्यात् । ' गृहीतगरिमे ' त्यर्थश्लेषस्यापि तत्र सत्त्वात् । इति, अथान्येषाम्–'दुर्गालङ्घितविग्रहः ' इत्यत्र परिवृत्तिसहिष्णूनां वल्लभादिशब्दानामर्थान्तरव्यञ्जकताया अभावात् परिवृत्त्यसहिष्णूनामेवोमादिशब्दानामर्थान्तरव्यञ्जकतायाश्च सद्भावान्न शब्दार्थोभयशक्तिमूलत्वं, प्रकृते पुनः 'हिममुक्तचन्द्रादिशब्दानां परिवृत्तिसहिष्णूनां सपद्मकादिशब्दानां पुनः परिवृत्त्यसहिष्णूनामित्युभयेषामप्यर्थान्तरव्यञ्जकत्वमिति शब्दार्थोभयव्यङ्ग्यत्वं निर्बाधमिति ।

यथा वा, मम–'विलसत्स्पृहणीयरुचिर्मित्रप्रेम्णा विमुक्तचन्द्रमनाः । जीवनदिव्यविभूतिः पद्मिनि ! मानससमुपेताऽसि ॥ ' इति । अस्यायमर्थः–' हे पद्मिनि सुन्दरीणां मुख्ये ! कमलिनि ! इति वा त्वं विलसत्स्पृहणीयरुचिर्विलसतो विलासं कुर्वतो नायकस्य स्पृहणीयरुचिः, विलसन्ती स्पृहणीया रुचिर्यस्याः सेति वा मित्रप्रेम्णा मित्रस्य दयितस्य नायकप्रवरस्य, सूर्यस्य वा प्रेम्णा । तद्वियोगासहिष्णुत्वरूपेण तदवियोगमात्रकालस्वविकासित्वोत्प्रेक्षितेन वाऽऽन्तरिकेण भावेन, विमुक्तचन्द्रमना विमुक्तं चन्द्रमनश्चन्द्रमसि तदाख्यालङ्कारे वा मनो यया स जीवनदिव्यविभूतिर्जीवनस्य जीवितस्य दिव्या विभूतिः जीवनं जलं दिव्यविभूतिर्दिव्यावतारकारणं वा यस्याः सा, मानसं चित्तं सरोवरं वोपेता गता स्थिता वाऽसि ॥ ' इति । अत्र विलसन्मित्रचन्द्रजीवितविभूतिमानसशब्दानां परिवृत्त्यसहिष्णुतया परिवृत्तौ चापरार्थबोधजनकताऽसम्भवात् स्पृहणीयरुचिप्रेमादीनां शब्दानां पुनः परिवृत्तिसहिष्णुतया पद्मिनीतदभिधेयानां यिकास्वरूपात्वं पद्मिनी कमलिनी वासी, ति तयोरुपमानोपमेयभावेनोपमा व्यज्यते ।

यथा वा, मम–'भाति विलास्युपरिष्टाद्रुचिमादधदिष्टमस्य लोकस्य । वदनमिदं रमणीयं सुभगं तमसो भयान्मुक्तम् ॥' इति । अस्यायमर्थः– 'अयि सुन्दरि ! विलास्युपरिष्टाद्विलासिजनस्योपरि रुचिं प्रीतिमादधदादितं (निहितं) कुर्वाणमस्य ( मम ) लोकस्य प्राणिन इष्टममीप्सितं सुभगं सुन्दरं तमसो मालिन्यस्येति यावद्भयान्मुक्तं रमणीयं रमण्यास्तवेदमिति तथाभूतमिदं वदनं मुखं भाति ॥' इति । यद्वा–'अयि सुन्दरि ! उपरिष्टाद्गगनमण्डले रुचिं कान्तिमादधद् विलासिलोकस्य विश्वस्यास्य चेष्टमाराधनीयं रमणीयं सुन्दरं सुभगं सुभं सुष्ठुभं नक्षत्रं रोहिण्याख्यमिति यावत्तद्गच्छतीति

**एवं च व्यङ्ग्यभेदादेव व्यञ्जकानां काव्यानां भेदः।**

**२९१ तदष्टादशधा ध्वनिः॥ २८७॥**

**अविवक्षितवाच्यः, अर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। विवक्षितपदवाच्यस्तु असँल्लक्ष्यक्रमव्यङ्ग्यत्वेन एकः। सल्लक्ष्यक्रमव्यङ्ग्यत्वेन च शब्दार्थोभयशक्तिमूलतया पञ्चदश, इत्यष्टादशभेदो ध्वनिः।**

---

तथोक्तम्, तमसो राहोर्भयान्मुक्तमिदं वदनम्॥' इति अत्र 'विलासयुपरिग्रादधरादिशब्दानां परिवृत्तिसहिष्णुतय 'रुच्या'दिशब्दानां च परिवृत्त्यसहिष्णुतया चन्द्रविम्बेन समं वदनस्योपमानोपमेयस्य व्यङ्ग्यत्वेनोपमोल्लासेऽपि वदनपदार्थस्याश्लिष्टतया चन्द्रविम्बेन समं तस्याभेदाध्यवसाया'द्वदतं चन्द्रविम्ब'मिति रूपकं व्यज्यते। न च 'वदनचन्द्रबिम्बयोर्भेदेऽपि तदभावेनाभिधानादतिशयोक्तिरिति वाच्यम्। तत्र विषयिणा विषयस्याभेदमात्रावश्यकत्वेन निगरणस्यात्र पुनरन्यथात्वस्य सम्भवात्।

ननु किमेवं व्यङ्ग्यभेदप्रपञ्चनेन प्रकृते समायातमित्याशङ्क्याह–**एवं चे**त्यादि।

**एवम्।** **च** पुनः। **व्यङ्ग्यभेदाद्** व्यङ्ग्यानां व्यङ्ग्यार्थानां भेदस्तस्मात्। **एव** नत्वन्यतः। **व्यञ्जकानाम्।** **काव्यानां** कवित्वानां रसात्मकवाक्यानाम्। **भेदः।** एवं च यावन्तो व्यङ्ग्यभेदास्तावन्त एव काव्यस्यापि प्रभेदा इति सिद्धम्।

नन्वेवं कियन्तः काव्यभेदा जाता इत्याह–**२९१ तदि**त्यादि।

**२९१ तत्** तस्माद्धेतोरित्यर्थः। **ध्वनि**रगुणीभूतो व्यङ्ग्योऽर्थः। **अष्टादशधा**ऽष्टौ दश चेति सङ्ख्याकभेदात्मनाऽवस्थित इत्यर्थः। तदेवं ध्वनिकाव्यमष्टादशप्रकारमिति निष्पन्नम्। यावन्तो व्यङ्ग्यार्थास्तावन्ति पुनः काव्यान्यपीति सिद्धान्ताद्ध्वनेरष्टादशत्वे काव्यस्यापि स्यादेवाष्टादशत्वमिति स्पष्टोऽर्थः॥ २८७॥

तदेव विवृणोति–**अविवक्षितवाच्य** इत्यादिना।

**अविवक्षितवाच्यो**ऽविवक्षितो विवक्षाया अविषयभूतोऽन्वयायोग्यत्वेनानुपयुक्त इति यावद्वाच्योऽभिधाविषयभूतोऽर्थो यत्र स तदभिधेय इत्यर्थः। यत्र वाच्यताऽवच्छेदकरूपेणान्वयबोधविषयो न भवति शक्योऽर्थः, भवति पुनस्तत्सम्बन्धी स ध्वनिरविवक्षितवाच्य इति व्यपदिश्यते, अत एव ध्वनिरप्ययं लक्षणामूल इति भावः। **अर्थान्तरसङ्क्रमितवाच्यो**ऽर्थान्तरे स्वभिन्ने विवक्षोपयोगिनि लक्ष्यताऽवच्छेदकेऽर्थे इति यावत् सङ्क्रमित आश्रयत्वेन परिणतो वाच्यो वाच्यार्थो यस्मिन् स इत्यर्थः। च तथा। **अत्यन्ततिरस्कृतवाच्यो**ऽत्यन्तं सर्वथा तिरस्कृतोऽनादृतोऽन्वयमनाविष्ट इति यावद् वाच्यो वाच्यार्थो यत्र स तादृश इति यावत्। इत्येवम्। **द्विविधो** द्विप्रभेदो द्विरूपात्मेति यावत्। अर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति अजहत्स्वार्थामूलो जहत्स्वार्थामूलश्चेत्येवमविवक्षितवाच्यो नाम ध्वनिर्द्विरूपः, लक्षणाया अजहत्स्वार्थत्वेन जहत्स्वार्थत्वेन च तन्मूलोऽप्ययं ध्वनिर्द्विप्रभेदः, तत्राजहत्स्वार्थामूलस्यार्थान्तरसङ्क्रमितवाच्यत्वं जहत्स्वार्थामूलस्य पुनरत्यन्ततिरस्कृतवाच्यत्वमिति तात्पर्यम्। अथ–**विवक्षितान्यपरवाच्यो** विवक्षितो वाच्यताऽवच्छेदकरूपेणान्वयबोधविषयभूतः सन्नेवान्यपरो व्यङ्ग्योपसर्जनीभूतो व्यङ्ग्यरूपेणावस्थित इति यावद् वाच्यो वाच्यार्थो यत्र स इत्यर्थः। स्वरूपेण विवक्षितः सन् यो हि यत्र वा वाच्यार्थो व्यङ्ग्यावगमको भवति स विवक्षितान्यपरवाच्यो नामाभिधामूलो ध्वनिरिति भावः। अत्र हि वाच्यार्थः स्वरूपेणान्वयबोधविषयीभवन् व्यङ्ग्यरूपतामापद्यते इति बोध्यम्। **तु।** **असँल्लक्ष्यक्रमव्यङ्ग्यत्वेन** न सम्यग् लक्ष्यो लक्षयितुं शक्यः क्रमः पौर्वापर्यं यस्य तादृशो व्यङ्ग्यो व्यङ्ग्यार्थो यत्र तत्त्वेनेत्यर्थः। यत्र हि प्रकरणमहिम्ना झटिति युगपदिव विभावादयः प्रतीयमाना जायन्ते, तत्र सूक्ष्मेणैव कालेन व्यङ्ग्यप्रतीतिरुदयते इत्येवंविधे प्रकरणे हेतुहेतुमतोः कथं स्यात् सँल्लक्षितं पौर्वापर्यम्। इति बोध्यम्। **एको** रसभावाद्यात्मेति शेषः। च पुनः। **सँल्लक्ष्यक्रमव्यङ्ग्यत्वेन** सम्यग् लक्ष्यः क्रमो यस्य तादृशो व्यङ्ग्यो यत्र तत्त्वेनेत्यर्थः। यत्र हि प्रकरणमहिम्ना न झटिति किन्तु विलम्बेन विभावादयः प्रतीयन्ते तत्र प्रकरणस्य विचारवेद्यत्वाच्चमत्कारस्य च व्यङ्ग्यात्मकस्य प्रकारणावगमाधीनत्वेन मान्थर्यमिति शनैःशनैर्व्यङ्ग्यप्रतीयमानत्वे स्फुटं भवति सँल्लक्षितं पौर्वापर्यम्। इति

एषु च-

**२९२ वाक्ये शब्दार्थशक्त्युत्थस्तदन्ये पदवाक्ययोः।**

**तत्रार्थान्तरसंक्रमितवाच्यो ध्वनिः पदगतो यथा-**

**'धन्यः स एव तरुणो नयने तस्यैव नयने च।**
**युवजनमोहनविद्या भवितेयं यस्य सम्मुखे सुमुखी ॥ १८९ ॥'**

---

बोध्यम्। द्वितीयप्रभेदः सन्निति शेषः। **शब्दार्थोभयशक्तिमूलतया** शब्दश्चार्थश्चोभयं चेति, तच्छक्तिर्मूलं यस्य तत्त्वेनेत्यर्थः। शब्दशक्तिमूलतयाऽर्थशक्तिमूलतया शब्दार्थशक्तिमूलतया चेति भावः। **पञ्चदश** तत्सङ्ख्याकः। अत्रेयं व्यवस्था-विवक्षितान्यपरवाच्यो नाम ध्वनिः सँल्लक्ष्यक्रमव्यङ्ग्यः सन् पञ्चदशात्मतामापद्यते, तत्रासौ शब्दशक्तिमूलो वस्त्वात्माऽलङ्कारात्मा चेति द्विविधः, अर्थशक्तिमूलोऽप्येवं वस्तुरूपोऽलङ्काररूपश्चेति द्विविधः, अथ वस्तुरूपः स्वतःसम्भवी कविप्रौढोक्तिसिद्धः कविनिबद्धप्रौढोक्तिसिद्धश्चेति, अलङ्काररूपः पुनरसावेत्र स्वतःसम्भवी कविप्रौढोक्तिसिद्धश्च कविनिबद्धप्रौढोक्तिसिद्धश्चेति षड्विधः, स्वतःसम्भविना कविप्रौढोक्तिसिद्धेन कविनिबद्धप्रौढोक्तिसिद्धेन च वस्तुरूपेणालङ्काररूपेण च सँल्लक्षितक्रमव्यङ्ग्येनार्थशक्तिमूलेन विवक्षितान्यपरवाच्येन वस्तुध्वनावलङ्कारध्वनौ च द्वादशात्मकत्वं तस्येति। शब्दार्थोभयमूलः पुनरसावर्थान्तरसङ्क्रमितवाच्यो नाम सँल्लक्षितक्रमव्यङ्ग्यात्मा ध्वनिरेकप्रभेदः, स च वाक्य एव सम्भवति। इत्येवम्। **अष्टादशभेद**स्त्रयाणां पञ्चदशानां च सम्मेलनादिति शेषः। **ध्वनिः**। ध्वनेश्चाष्टादशत्वे काव्यस्यापि तत्प्रधानस्याष्टादशत्वम्। इति भावः।

एवं ध्वनेरष्टादशभेदा इति काव्यस्यापि तत्प्रधानस्याष्टादशभेदाः सन्तीति निर्दिश्य, तत्र शब्दार्थोभयशक्तिमूलातिरिक्तानां सप्तदशभेदानां पदवाक्यगतत्वेन द्वैविध्यमिति वक्तुमुपक्रमते-एषु चेत्यादिना।

**एषु**अभिहितेषु ध्वनेरष्टादशसु भेदेषु मध्ये इति यावत्। **च** पुनः-

२९२ **शब्दार्थशक्त्युत्थः** शब्दार्थयोः शक्तिरिति तस्या उत्तिष्ठतीति तथोक्तः। शब्दार्थोभयशक्तिमूलोऽर्थान्तरसङ्क्रमितवाच्यो नाम सँल्लक्षितक्रमव्यङ्ग्यात्मा ध्वनिरित्यर्थः। 'उदःस्थास्तम्भोः पूर्वस्य।' ८।४।६१। इत्युत्पूर्वस्य तिष्ठतेः सस्य पूर्वसवर्णत्वम्। 'आतश्चोपसर्गे।' ३।१।१३६ इति कः। **वाक्ये** पदसमुदायविशेषे। सम्भवतीति शेषः। **तत्** तस्माद्ध्वनेरित्यर्थः। **अन्ये** भिन्ना व्यतिरिक्ता इति यावत्। **पदवाक्ययोः** पदं च वाक्यं चेति, तयोः। पदे वाक्ये चेत्युभयत्रैव सम्भवन्तीति शेषः। अत्रेदं निष्कृष्टम्-शब्दश्चार्थश्चेत्येतयोः परिवृत्तिसहत्वासहत्वाभ्यां तच्छक्तिमूलो ध्वनिस्तदुभयशक्तिमूल इत्युच्यते इति निर्विवादम्, यद्यपि शब्दशक्तिमूलेऽर्थस्य, अर्थशक्तिमूले च ध्वनौ शब्दस्यापि व्यञ्जकत्वं सम्भवतीत्यास्तां सर्वत्रैवोभयशक्तिमूलत्वमिति वक्तुं शक्यते। तथाऽपि 'प्राधान्येन व्यपदेशा भवन्ती'ति गुणप्रधानभावेन तेषां पार्थक्यमेवेति न तादवस्थ्यम्। 'अथ एकस्यैव पदस्य परिवृत्तिसहत्वं परिवृत्त्यसहत्वं' चेति वक्तुमयुक्तम्, तदन्तरेण च शब्दार्थोभयशक्तिमूलत्वस्यैवासम्भव इति शब्दार्थोभयशक्तिमूलस्य ध्वनेर्वाक्य एव सम्भवित्वम्। असौ च वस्तुनाऽलङ्काररूप इत्येकविध एवेति। शब्दपरिवृत्त्यसहः पुनः शब्दशक्तिमूलोऽर्थपरिवृत्त्यसहोऽर्थशक्तिमूलश्च ध्वनिरिति सम्भवत्येव तयोः पदवाक्योभयसम्भवित्वम्। यत्रैकस्यैव पदस्य शक्तेः प्राधान्यम्, अन्येषां पुनरानुगुण्यम्, तत्र ध्वनेः पदसम्भवित्वम्, यत्र तु नानापदानां क्रियाकारकरूपाणां शक्तेस्तुल्यत्वम्, न विषमत्वम्; तत्र तस्य वाक्यसम्भवित्वमेव, न पदसम्भवित्वमपीति।

उभयशक्तिमूलस्य पुनर्ध्वनेरुदाहरणं "हिममुक्तचन्द्ररुचिरः-" इत्यादि। तच्च निर्दिष्टमेव पूर्वम्। अथ पदवाक्योभयसम्भविनोऽर्थान्तरसङ्क्रमितवाच्यस्य ध्वनेः क्रमेण पदसम्भवं वाक्यसंभवं चोदाहर्तुमाह-तत्रेत्यादि।

**तत्र** पदसम्भविवाक्यसम्भविनोर्मध्ये इत्यर्थः। **पदगतः** पदसम्भवी। **अर्थान्तरसङ्क्रमितवाच्य**स्तन्नामेति यावत्। **ध्वनिः**। **यथा** यद्वत्सम्भवति तथोदाह्रियते-"**धन्यः**-" इत्यादिना।

'**यस्य** निर्देक्ष्यमाणभाग्यवैभवस्य कस्यापि यूनः। **सम्मुखे** पुरोभागे। **इयम्**। **सुमुखी** सुन्दरवदना वामेति यावत्। **युवजनमोहनविद्या** युवानो जना इति, तेषां मोहनविद्या मोहविधात्री विद्या, तद्वद्व्रियमानेति यावत्।

अत्र द्वितीयनयनशब्दो भाग्यवत्ताऽऽदिगुणविशिष्टनयनपरः ।
वाक्यगतो यथा–

"त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठति ।
आत्मीयां मतिमास्थाय स्थितिमत्र विधेहि तत् ॥ १९० ॥"

अत्र प्रतिपाद्यस्य सम्मुखीनत्वादेव लब्धे प्रतिपाद्यत्वे 'त्वा' मिति पुनर्वचनमन्यव्यावृत्ति-विशिष्टं त्वदर्थं लक्षयति । एवं 'वच्मी' त्यनेनैव कर्त्तरि लब्धे 'स्मी'ति पुनर्वचनम् (१) तथा 'विदुषां समवाय' इत्यनेनैव वक्तुः प्रतिपादने सिद्धे पुन 'र्वच्मी' तिवचन 'मुपदिशामी'ति वचन-विशेषरूपमर्थं लक्षयति । एतानि च स्वातिशयं व्यञ्जयन्ति । एतेन 'मम वचनं तवात्यन्तं हितं, तदवश्यमेव कर्त्तव्य' मित्यभिप्रायः । तदेवमयं वाक्यगतोऽर्थान्तरसङ्क्रमितवाच्यो ध्वनिः ।

---

भविता भविष्यति । सः । एव । न पुनरन्यविधोऽपीति शेषः । तरुणः । धन्यो भाग्यशाली । च तथा । तस्य तरुणस्येति शेषः । एव । नयने नेत्रे । नयने धन्ये इति यावत् ॥' इति । अत्रायम्भावः–मोहविधैवेयं यूनां मोहविधात्री अस्याश्च सुमुख्याः सौन्दर्यातिशायिन्या दर्शनादि परमेण भाग्येनैव नान्यथाऽपि, अथ यस्य नयनपथिकेयं, स परं धन्यः, तस्य नयने अपि परं धन्ये, अन्यथाऽस्यादर्शनाद्युपलब्धिप्रसङ्गासम्भावात् । इति ॥ १८९ ॥

अत्र ध्वनेः पदसम्भवित्वं दर्शयितुमाह–अत्रेत्यादि ।

अत्रोदाहृतेऽस्मिन् पद्ये इति भावः । द्वितीयनयनशब्दो द्वितीयो द्वितीयवारं पठितो नयनशब्दो 'नयने चे'त्यत्र 'नयने' इति शब्द इति भावः । भाग्यवत्ताऽऽदिगुणविशिष्टनयनपरो भाग्यवत्ताऽऽदयोये गुणास्तैर्विशिष्टं सम्पन्नं यन्नयनं तत्परस्तदर्थबोधनाभिमुख इत्यर्थः । आदिपदेन च धन्यत्वमनोहरत्वाऽलौकिकत्वादयो ग्राह्याः । अत्रेदं बोध्यम्–'कदली कदली–'त्यादाविव प्रकृतेऽप्युदाहृतेऽस्मिन् पद्ये द्वितीयशब्दो न वाचकः, किन्तु लक्षकः । पूर्वत्र कदल्यादिशब्द इव लक्षको,ऽसावपि लक्ष्यस्यातिशयमवगमयति । लक्ष्यश्चात्र भाग्यवत्तादिः । यद्यपि 'कदली कदली'ति पदगतध्वनेरुदाहरणं दर्शितपूर्वम्, पुनरिदं प्रकृतमलङ्कर्त्तुमिति ।

अथ वाक्यनिष्ठममुमेवोदाहर्त्तुमाह–वाक्यगत इत्यादि ।

वाक्यगतो वाक्यं पदसन्दर्भविशेषनिष्ठ इति भावः । "अर्थान्तरसङ्क्रमितवाच्य" इति शेषः । यथा-'त्वा' मित्यादौ ।

'अत्रास्मिन् स्थाने । यदिति शेषः । तथा च–अस्मिन् स्थाने यस्मात्कारणादिति भावः । विदुषां विदन्ति जानन्तीति यावत् इति तेषाम् । पण्डितानामित्यर्थः । 'लटः शतृ...। ३ । २ । १२४ इति शतुः 'विदेः शतुर्वसुः । ७ । १ । ३६ इति वसुः । समवायः समूहः समाज इति यावत् । 'समवायश्चयो गणः ।' इतिकोशः तिष्ठति सावधानमास्ते । तत्तस्मादित्यर्थः । आत्मीयां स्वकीयामात्मसम्बन्धिनीमिति यावत् । 'गहादिभ्यश्च ।' ४।२।१३८ इति छः 'आत्मने हिता'मिति व्याख्यानं तु न सत् । 'तस्मै हितम् ।' ५।१।५ इति बाधित्वा 'आत्माध्वानौ खे ।' ६।४।१६९ इति प्रवृत्तौ 'आत्मनीना'मिति सुवचत्वात् । मतिं बुद्धिम् । आस्थायावलम्ब्य । अत्रास्मिन् विदुषां ( पण्डितानां ) समवाये इति यावत् । स्थितिं सावधानमासनमित्यर्थः । विधेहि कुरु । इतीति शेषः । अस्म्यहम् आप्तोऽहमिति यावत् । अव्ययमिदम् 'त्वां नेत्रगोचरतां प्राप्तम् । उपदेशार्हमिति यावत् । वच्मि ब्रवीम्युपदिशामीति यावत् । विद्वत्समाजे प्रविशन्तं कमपि युवानं बालं प्रत्येव वा कस्यापि वृद्धस्याप्तस्योक्तिरियम् ॥ १९० ॥

अथात्र लक्ष्यं व्यङ्ग्यञ्च निर्दिशन् वाक्यनिष्ठमर्थान्तरसङ्क्रमितवाच्यं ध्वनिं दर्शयति–अत्रेत्यादिना ।

अत्रास्मिन्नुदाहृते पद्ये इति यावत् । प्रतिपाद्यस्य बोधनीयस्योपदेशार्हस्येति यावत् । प्रतिपादयितुं बोधयितुमर्ह इति तस्य । 'अचो यत् ।' ३।१।९७ इति यत् । सम्मुखीनत्वात् सम्मुखस्य दर्शनो द्रष्टेति तत्त्वात् । प्रत्यक्षं

---

१ द्वितीशब्दो द्वितीयवारं पठितः शब्द इत्यर्थः ।

**अत्यन्ततिरस्कृतवाच्यः पदगतो यथा-'निःश्वासान्धः-' इत्यादि।**

दर्शनादिति भावः। 'यथामुखसम्मुखस्य दर्शनः खः।' ५।२।६ इति खः। समं सर्वं मुखमिति सम्मुखम्। समशब्दस्यान्तलोपश्च निपातात्। **एव** केवलाद्धेतोः। **प्रतिपाद्यत्वे** बोधनीयत्वे बोधन इति यावत्। **लब्धे** सतीति शेषः। तल्लाभे सतीति भावः। **'त्वाम्'।** इतीत्येवम्। **पुनर्वचनं** पुनरुक्तिः ( कर्तृ )। **अन्यव्यावृत्तिविशिष्टम**न्येभ्यो बोधनीयव्यतिरिक्तेभ्योऽन्तिकस्थितेभ्यो व्यावृत्तिर्निवृत्तिस्तद्विशिष्टमित्यर्थः। **त्वदर्थं** त्वत्पदार्थम्। **लक्षयति।** लक्षितं करोति। एवमनेन प्रकारेणैवेति भावः। **'वच्मि'** कथयामि। **इत्यनेने**त्यभिधानेन। **एव। कर्त्तरि** कर्तृपदार्थे। **लब्धे** सतीति शेषः। **'अस्मि'** अहम्। **इति पुनर्वचनम्।** अन्यव्यावृत्तिविशिष्टं मदर्थं लक्षयतीति शेषः। **तथा। विदुषाम्। समवायः। इत्यनेने**त्येतेनाभिधानेनेत्यर्थः। **एव। वक्तुः।** वक्तृजनस्य। **प्रतिपादने** बोधने बोधयितृविषय इति यावत्। **सिद्धे। पुनः** पश्चात्। **'वच्मि'**ब्रवीमि। **इति वचन**मित्यभिधानम्। **उपदिशाम्यु**पदेशं करोमि। **च** तथा। **एतानि** लक्षितानि पदानीति शेषः। **स्वातिशयं** स्वस्य स्वकीयास्यार्थस्य लक्ष्यस्येति यावदतिशयस्तम्। **व्यञ्जयन्ति। एतेन** लक्ष्यार्थाभिव्यञ्जनेन। **'ममा**स्यैतस्योपदेशकस्येत्यर्थः। **वचनं** कथनम्। **तव। अत्यन्तम्। हितं** हितकरम्। **तत्त**स्माद्धेतोः। **अवश्यम्।** निश्चितम्। **एव। कर्त्तव्य**मनुष्ठेयम्। **इत्यभिप्रायो** निष्कृष्ट इति शेषः। **तत्त**स्मात्कारणात्। **एवमनेन** प्रकारेण। **वाक्यगतो** वाक्यनिष्ठः। **अर्थान्तरसङ्क्रमितवाच्यः।** तदाख्य इति यावत्। **अयं** निर्दिश्यमानः। **ध्वनिः।** बोध्य इति शेषः। अत्रेदमभिहितम्-विदुषां सभायां प्रविशन्तमभिमुखीकृत्य कस्यचिदाप्तस्येयमुक्तिरि'त्थेवं विधेही'ति सम्बोध्यमुद्दिश्याभिधानम्, अथैतेनैव वक्तव्यविषयाभिधानेन गतार्थं 'त्वामस्मि वच्मी' त्यभिधानमिति माभूदनुपयुक्तमिति 'त्वा'मि'त्युपदेशार्हं त्वा'मि,त्यस्मी' त्याप्तोऽह'मिति, 'वच्मी'ति 'चोपदिशामी'ति लक्षयत्यर्थम्। लक्ष्यातिशयश्च व्यङ्ग्यः। एवं च-'विद्वत्प्रत्यक्षेऽपि 'विदुषा'मिति, आत्ममतेश्च सार्वकालिकत्वेऽपि 'आत्मीया' मित्यभिधानं च यथाक्रमं 'सर्वशास्त्रविशारदानां विदुषा'मिति'प्रमाणपरतन्त्रामात्ममति'मिति च निर्दिशन्-अन्यथाऽऽचरणे भविष्यसीत्युपहासास्पदमित्यभिव्यञ्जयति तदेवं 'त्वा' मित्यादिपदार्थानां 'मन्यव्यावृत्तिविशिष्टमुपदेशार्हं त्वा'मित्यादिष्वर्थान्तरेषु सङ्क्रमितत्वात्प्रकृतोऽयं ध्वनिरर्थान्तरसङ्क्रमितवाच्यः।' इति। अतएवैवं व्याख्यातं तर्कवागीशैः-'अस्मीति पुनर्वचनमिति। 'हितकारि मदर्थं लक्षयति' इति शेषः। सर्वत्र मुख्यार्थस्याभेदः सम्बन्धः। एतान्यन्यव्यावृत्तिविशिष्टत्वादिवस्तूनि। स्वातिशयमिति। त्वत्पदार्थस्य वादजल्पादिक्षमत्वम्। मत्पदार्थस्यान्तहितैषित्वम्। उपदेशस्यानुपेक्षणीयत्वमतिशयः।' इति।

अथात्यन्ततिरस्कृतवाच्यस्य द्वितीयप्रभेदस्य लक्षणामूलस्य ध्वनेः पदनिष्ठत्वं निदर्शयन्नाह-**अत्यन्ततिरस्कृतवाच्य** इत्यादि।

**अत्यन्ततिरस्कृतवाच्यो**ऽत्यन्तं तिरस्कृतो न केनापि स्वरूपेणान्वयं प्रविष्टो वाच्यो यत्र स तादृश इति यावत्। जहत्स्वार्थामूलत्वादिति। **पदगतः** पदनिष्ठो ध्वनिरिति शेषः। **यथा-'निःश्वासान्धः-इत्यादि।** 'निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥' इत्यस्य पूर्वार्धं 'रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः।' इति। पद्यमिदं च व्याख्यातपूर्वम्। दर्शितश्चात्रात्यन्ततिरस्कृतवाच्यो ध्वनिः पदनिष्ठ इति।

यथा वा-'मुनिरस्मि निरागसः कुतो मे भयमित्येव न भूतयेऽभिमानः। परवृद्धिषु बद्धमत्सराणां किमिव ह्यस्ति दुरात्मनामलङ्घ्यम् ॥' इति। अस्यायं पुनरर्थः-'अहमर्जुनो मुनिरस्मि, निरागसो निरपराधस्य मम भयं कुतो भवेत्, इत्येवाभिमानो भूतये सम्पदे सुखायेति यावन्न। हि यतः-परवृद्धिषु परकीयासून्नतिषु बद्धमत्सराणां जातमात्सर्योद्रेकाणां दुरात्मनामलङ्घ्यं न लङ्घ्यं किमिव किंनामास्ति, अस्ति किमपि नालङ्घ्यमकार्यमिति ॥' अत्र हि-मत्सरस्य 'मत्सरोऽन्यशुभद्वेषे' इत्यमरोक्त्याऽन्यशुभद्वेषरूपस्य चित्तवृत्तिविशेषस्य बन्धनासम्भवाद्बद्ध इति नितान्तं सद्भावं लक्षयति, लक्षितेन पुनरेतेन मत्सरस्य ( परवृद्धयो माभूवन्निति द्वेषरूपस्य चित्तवृत्तिविशेषस्य ) नितान्तसद्भावे बद्धसाधर्म्यमुद्रेकविशेषं व्यञ्जयतीति वाच्यस्यात्यन्तं तिरस्कृतत्वादत्यन्ततिरस्कृतवाच्याभिधेयो ध्वनिः।

**वाक्यगतो यथा–'उपकृतं बहु तत्र–' इत्यादि ।**

**अन्येषां वाक्यगतत्वमुदाहृतम् । पदगतत्वं यथा–**

**'लावण्यं तदसौ कान्ति–स्तद्रूपं स वचःक्रमः । तदा सुधास्पदमभू–दधुना तु ज्वरो महान् ॥१९१॥**

---

अथास्य वाक्यनिष्ठत्वं निदर्शयति–वाक्यगत इत्यादिना ।

**वाक्यगतो** वाक्यनिष्ठोऽत्यन्ततिरस्कृतवाच्य इति शेषः । **यथा–उपकृतं बहु तत्र इत्यादि** । 'उपकृतं बहु तत्र किमुच्यते सुजनता प्रथिता भवता परम् । विदधदीदृशमेव सदा सखे ! सुखितमास्स्व ततः शरदां शतम् ॥' इति । पद्यमिदं च व्याख्यातपूर्वम् । अत्र हि जहत्स्वार्थापरपर्य्यायाया लक्षणाभिधेयाया लक्षणायाः सद्भावस्य दर्शितरीत्या वाच्यस्यात्यन्ततिरस्कृतत्वं निर्बाधम् ।

यथा वा मम–'ललनारमणं प्रियजनसङ्गो भोगश्च सम्पदामासाम् । न मनो ! महसि महीयसि तत्ते न रती रतीप्सुनः स्थाने ॥' इति । अस्यायमर्थः–हे मनः ! महीयसि परमे महति तेजसि 'तमेव भान्तमनुभाति सर्वं' मित्यादिश्रुतिभिः प्रतिपाद्ये सच्चिदानन्दस्वरूपे परस्मिन् ब्रह्मणि विषये ललनारमणं ललनाभिः साकं रमणं, प्रियजनैः साकं न सङ्गः, आसां वर्त्तमानानां सम्पदानां च भोगो न विद्यते तदिति हेतो रतीप्सुनस्तव न तत्र रतिरिति स्थाने युज्यते ॥' इति । अत्र हि–विपरीतलक्षणया वास्तविक्या रतेरिप्सुनो मनसस्ते महीयसि महसि रतिः स्थाने ललनारमणादि तु सर्वं न वास्तविकमिति प्रतिपाद्यते ।

एवमत्यन्ततिरस्कृतवाच्यध्वनिं पदवाक्यगतमुदाहृत्यासँलक्ष्यक्रमव्यङ्ग्यादीनुदाहर्त्तुकाम आह–**अन्येषामित्यादि** ।

**अन्येषां** परेषामर्थान्तरसङ्क्रमवाच्यादिभ्यो व्यतिरिच्यमानानामसंलक्ष्यक्रमव्यङ्ग्यादीनां ध्वनीनामित्यर्थः । आदिपदेन संलक्ष्यक्रमव्यङ्ग्यतत्प्रभेदादिग्रहणम् । **वाक्यगतत्वं** वाक्यनिष्ठत्वम् । **उदाहृतम्** । तत्तदुदाहरणप्रसङ्गे इतिशेषः । इति तत एवावगन्तव्यमिति भावः ।

यथा वा मम–'ललने ! पश्यसि यंयं, सोऽनिमिषत्वं प्रपद्यते त्वरितम् । हन्त करेण गृहीतः कथमिव सुकृतिनि स जायेत॥' इति ।'अस्यायं पुनरर्थः–'हे ललने ! यं यं पश्यति, स सर्वोऽपि युवजनसमाजस्त्वरितमनिमिषत्वमाश्चर्योद्रेकजनकद्वारा सम्मोहोत्पादनमुखेन वा निमिषनिमीलनोन्मीलनस्तब्धत्वं जडानुरूपावस्थानं देवस्वरूपत्वं प्रतिपद्यते इत्येवं स्थितौ हे सुकृतिनि ! धर्मशीले त्वया करेण गृहीतः स ( युवजनः ) कथमिव हन्त जायेत ॥ ' इति । अत्र हि–कामपि सुन्दरीं स्तुवतः कस्यापि कामुकस्योक्तिरिति रहसि तत्सौन्दर्य्यनिरीक्षणमुद्दीपनं, नायिकाऽऽलम्बनं च, तदानीन्तनेन मदनोद्रेकेण तदालिङ्गनगाढौत्कण्ठ्यमनुभावः कम्पादिकारणीभूतव्याध्यादिर्व्यभिचारीभावश्चेत्येतेषां युगपत् प्रतीतिपथमवतरतां संयोगात्सम्भोगशृङ्गारस्य स्थायिभावभूता रतिः स एव वाऽभिव्यज्यते इत्यसंलक्ष्यक्रमव्यङ्ग्यत्वं वाक्यगतम् । वाक्यगतः पुनः संलक्ष्यक्रमव्यङ्ग्यो यथा मम–'सुमुखि ! तवैष विकासः कस्य न रुचये भवेत् सुधामधुरः । यद्दर्शनमनुभवतां तापशमो योगिनामचिरात् ॥ ' इति । अस्यायमर्थः–'हे सुमुखि ! तवैष सुधया सुधावद्वा मधुरो विकासः कस्य रुचये न भवेत् । यत्–दर्शनं विकासनिरीक्षणाह्लादमिति यावदनुभवतां योगिनां समाहितमनसां गृहिण तापशमोऽचिराद्भवति ॥ इति । अत्र हि–सुमुख्या विकासेन साकं सुधानिधेर्विकाससाधर्म्यमभिव्यज्यते इत्युपमाऽलङ्काररूपः संलक्ष्यक्रमव्यङ्ग्यो नाम ध्वनिर्वाक्यगतः । यथा वा मम–'साक्षादमृतनिधानं, मुखमिदमिति निश्चितं प्रिये ! सुहृदाम् । अथ कथमिति तव शरणं गत्वाऽपि मुमूर्षुरेवास्मि ॥ ' इति । अस्यायं पुनरर्थः–' हे प्रिये ! मुखमिदं साक्षान्न तु साधर्म्येणामृतनिधानमिति सुहृदां सहृदयानां त्वत्प्रीतिभाजनानां वा निश्चितम् । अथास्यामृतनिधानत्वे निश्चितेऽपि तवामृतनिधानवदनायाः शरणं गत्वाऽपि कथमिति मुमूर्षुरेवास्मि ॥ ' इति । अत्र हि–रूपकेण 'एष स्वाधरामृतपानदानेन कृतार्थनीय ' इति वस्तु व्यज्यते ।

अथासंलक्ष्यक्रमव्यङ्ग्यं पदगतमुदाहरन्नाह–**पदगतत्वमित्यादि** ।

**पदगतत्वं** पदनिष्ठत्वमसंलक्ष्यक्रमव्यङ्ग्यस्येति शेषः । **यथा**–'लावण्य...'इत्यादौ ।

'**तत्** । यत्पूर्वं सम्भोगावस्थायामासीदिति शेषः । **लावण्यं** सौदर्यविशेषः । अलौकिकाह्लादजनकत्वे सति जितेन्द्रियत्वाभिमानिनामपि मनसि मदनोद्रेकस्योल्लासाधायकत्वे सति च मनोहरत्वकारणीभूतमवयवगतं सौन्दर्य्यं लावण्यमित्यर्थः । अत एवोक्तम्–'मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥' इति । रामचरणास्त्वाहुः 'सर्वावयवगतो विदग्धनयनोत्सवहेतुः कोऽप्यतिशयो लावण्यम्–' प्रत्येकमवयवानां संस्थानसौभाग्यं

**अत्र लावण्यादीनां तादृगनुभवैकगोचरताव्यञ्जकानां तदादिशब्दानामेव प्राधान्यम्, अन्येषां तु तदुपकारित्वमेवेति तन्मूलक एव ध्वनिव्यपदेशः।**

**तदुक्तं ध्वनिकृता–**

**'एकावयवसंस्थेन भूषणेनैव कामिनी। पदद्योत्येन सुकवेर्ध्वनिना भाति भारती॥'**

---

कान्तिरिति चण्डीदासः।'इति। **असौ** न त्वेषा। सन्निकृष्टत्वाभावात्। पूर्वं साक्षात्कृतत्वेन स्मृतिमात्रमारूढा तद्विषयत्वेन वा जाता। **कान्तिः** शोभा लावण्यनिष्ठेति यावत्। इच्छेति वा। 'कान्तिश्शोभेच्छयोः स्त्रियाम्।'इति विश्वः। **तत्**। रूपमाकारः। यद्वतं कान्तिसंवलितमिच्छाविषयं वा लावण्यं तदित्यर्थः। **स्वः**। स्मृतिमात्रमारूढः॥। **वचःक्रमो** वचसामुक्तीनां क्रमोऽवस्थापनशैली, किन्तु–**तदा** यदा तया तादृशलावण्यशालिन्या सह समागमो जात इति शेषः। **सुधास्यन्दं** सुधां स्यन्दयन्तीति तथोक्तम्। स्यन्दू प्रस्रवणे। सुखातिशयजनकमित्यर्थः। एतत्सर्वमिति शेषः। **अभूत्**। **अधुना**। **तु** पुनः। **महान्** भयङ्करः। **ज्वरः** सन्तापः। अभूदिति पूर्वतोऽन्वेति। कस्यापि कयाऽपि कदापि विहितसङ्गमया नायिकया समं जाते पुनर्विरहे सङ्गमकालिकामोदानुभवं स्मरतः कामुकस्योक्तिरियम्। अत्र हि स्मृत्यारूढानायिकाऽऽलम्बनं, कथमपि तत्स्मृतिरेव कोऽपि वा तत्स्मृतिहेतुरुद्दीपनं, ज्वरेणेवार्द्यमानत्वमनुभावश्चिन्तोन्मादिर्व्यभिचारीभावश्चेत्येतेषां संयोगाद्विप्रलम्भो नाम शृङ्गारो रतिरेव वा तत्स्थायिभावभूता,व्यज्यते इति बोध्यम् १९१॥

अथ तदादिपदानां व्यञ्जकत्वमुपपादयति–**अत्रे**त्यादिना।

अत्रोदाहृते पद्ये। **लावण्यादीनाम्**। आदिपदेन कान्तिरूपवचः–चङ्क्रमाणनामपि ग्रहणम्। **तादृगनुभवैकगोचरताव्यञ्जकानां**। तादृग् यादृशो लावण्यादयः, योऽनुभवोऽनिर्वचनीयो मूकास्वादितास्वादनीयास्वादसदृशो वक्तुमशक्यो लावण्याद्यवगमोद्गार इति, तस्यैकगोचरता तेनैकगोचरतेति वा मुख्यविषय (प्रतिपाद्य) त्वं तस्या व्यञ्जकानीति तेषां तथोक्तानाम्। एका मुख्याऽसौ गोचरतेति। सम्बन्धसामान्ये षष्ठी, अभेदे वा तृतीया। **तदादिशब्दानाम्**। आदिपदमदःशब्दस्यापि ग्राहकम्। **एव** नतु लावण्यादीनामपि। **प्राधान्यम्**। अत्युत्कृष्टविप्रलम्भव्यञ्जने इति शेषः। **अन्येषां** लावण्यादीनाम्। **तु** पुनः। **तदुपकारित्वं** तदादिपदसहकारित्वम्। तददस्तत्तच्छब्दैरभिव्यज्यमानस्यैवानिर्वचनीयत्वस्य सहकारित्वमात्रेणोपकारित्वं न तु स्वातन्त्र्येणेति भावः। **एव** न तु प्राधान्यम्। इतीत्यस्माद्धेतोः। तन्मूलकस्तदादिशब्दमूलकः। **एव** न तु वाक्यमूलकः। **ध्वनिव्यपदेशः**। 'प्राधान्येन हि व्यपदेशा भवन्ती'ति न्यायात्। प्रमोदामोदावहवस्तूनां स्मरणात्तत्तद्विरहदशायां कामुकस्य भवत्येव सन्तापातिशय इत्येव प्रकृतेऽपि विप्रलम्भस्य शृङ्गारस्य सातिशयमभिव्यक्तौ तदादिपदानामेव प्राधान्यात्पदमूलक एवासंलक्ष्यक्रमव्यङ्ग्यो नाम ध्वनिरिति भावः। अत्राहुस्तर्कवागीशाः–' ननु तदादिपदानामनुभवगोचरेऽभिधैव, कथं व्यञ्जनेति चेत्, न अनुभवैकगोचरतेत्यनेनानिर्वचनीयत्वस्यैव विवक्षणात्। अत एव चण्डीदासः–'अनुभवैकगोचरास्तत्कालचमत्कारिणो निरङ्कुशमदनस्याः सर्वस्वव्ययप्राणपणादिभिरपि प्रार्थनीयाः।' इति व्याचकार।' इति।

ननु वाक्यध्वनावपि परस्परं साचिव्येनैव वाक्यतामापन्नानां पदानां व्यञ्जकत्वं, पदान्तरसाचिव्यमन्तरेण पदस्यैकस्य व्यञ्जकत्वासम्भवादिति प्राधान्याप्राधान्यविवेचनस्य चाकिञ्चित्करत्वम्। एवं सति च 'सर्वत्रैवास्तां वाक्यस्य व्यञ्जकत्वम्।' इति चेत्तत्राचार्यमतमुपन्यस्यति–**तदि**त्यादिना।

**तत्**। यदुपजीव्यात्र पदध्वनित्वमेवं स्वीकुर्म इति शेषः। **ध्वनिकृता** ध्वन्याचार्येण। **उक्तम्**। 'एकावयवसंस्थेनेत्यादिना।

'**एकावयवसंस्थेन** यस्मिन्कस्मिन्नपि कर्णाद्यन्यतमेऽङ्गे स्थितेनेत्यर्थः। 'विच्छित्तिशोभिनैकेने'ति पाठान्तरम्। विच्छित्तिः' स्तोकाऽप्याकल्परचना विच्छित्तिः कान्तिपोषकृत्।' इत्युक्तलक्षणः स्त्रीणां स्वभावसिद्धोऽलङ्कारविशेषस्तया शोभीति तेन। अभेदे तृतीया। विच्छित्त्यभिन्नशोभाशालिना। एकेनाद्वितीयेनेत्यर्थः। **भूषणेन** भूषणद्वारा। **कामिनी**। न तु विरक्ता सुन्दरी। **इव**। **पदद्योत्येन** पदेन पदद्वारा द्योत्यो व्यङ्ग्य इति, तेन तथोक्तेन। **ध्वनिना**। **सुकवेः** सहृदयस्य कवेः। **भारती**। श्रोत्रग्राह्यवाक्यव्यङ्ग्यास्फोटरूपा वागित्यर्थः। **भाति**। प्रकाशते॥' इति।

**एवं भावादिष्वप्यूह्यम् ।**

---

अत्रायं पर्यालोकः–काव्यानां चारुत्वप्रतीतिः क्वचिद् वाक्यगता, क्वचिच्च पदगता, अन्वयव्यतिरेकाभ्यां पुनस्तस्याः संस्थानम् । वाक्यानि हि शरीरीणीव, तेषां च चारुत्वप्रतीतिरन्वयव्यतिरेकाभ्यां वाक्येष्वपि कल्प्यते, इति पदानामपि व्यञ्जकत्वमुखेन व्यवस्थितो ध्वनिव्यवहार इति ध्वन्याचार्याणामाशयः । अत्राहुः प्रदीपकाराः–'ननु पदस्य व्यञ्जकत्वं किमायातम्, वाक्यरूपस्य काव्यस्य ध्वनित्वम् ! कथं वा पदमात्रस्य व्यञ्जकत्वे वाक्यस्यैव समस्तस्य चारुतेति चेत् ? उच्यते, पदप्रकाश्यत्वं न पदमात्रस्य व्यञ्जकतया, किन्तु तस्य प्राधान्येन । अविवक्षितवाच्ये पदमात्रस्य व्यञ्जकत्वेऽपि यद्वाक्यवर्तिशब्दस्यार्थस्य वाक्यस्याप्यतिशयितार्थव्यञ्जकत्वं तद्वाक्यस्यैव ध्वनित्वमित्युपगमान्न कश्चिद्दोषः । एकदेशस्थितेन च तादृशपदेन समस्तमेव वाक्यं चारुतामुपगच्छतीति । कामिनीवैकावयवस्थेन भूषणेने'ति । युक्तं चैतत्–सर्वेषामपि निर्णयोऽन्वयव्यतिरेकाभ्याम् । पदवाक्यसत्त्वासत्त्वाभ्यां ध्वनेः सत्त्वेऽसत्त्वे चैतस्याः पदनिष्ठत्वं वाक्यनिष्ठत्वं चाप्रतिहतम् । एवं च–पदमात्रद्योत्यो ध्वनिः पदध्वनिः, वाक्यमात्रद्योत्यः पुनर्वाक्यनिष्ठः । यद् द्योत्योऽतिशयितोऽर्थश्चारुतया व्यज्यते तस्यैव ध्वनिव्यपदेशात् । अतएवाभिनवगुप्तपादाः प्राहुः–'रसप्रतीतिर्विभावादेरेव । तेन विभावादयो यदा विशिष्टेन केनापि पदेनार्प्यमाणा रसचमत्कारविधायिनो भवन्ति तदा पदस्यैवासौ महिमा समर्प्यते । इति भावः।' इति

यथा वा मम–'को ननु धन्यः स युवा तरलायतलोचने प्रिये जगति । तेन दृगन्तेन तव प्रहृतोऽपि न यः पुनः प्रहृतः॥' इति । अस्यायमर्थः–हे तरलायतलोचने ! तेन तव दृगन्तेन प्रहृतोऽपि यः पुनर्न प्रहृतो मृतो जातो जीवतीत्यर्थः । स कोनु युवा जगति धन्यः ॥ इति । अत्र हि–स्मृत्यारूढा साक्षादिव प्रत्यक्षपथमवतरन्ती नायिकाऽऽलम्बनं तद्दृगन्तस्मृतिश्चोद्दीपनं, दृगन्तस्य चास्यामोघास्त्वेन सम्भावनमनुभावो, विस्मयोद्वेगादिर्व्यभिचारीभावश्चेत्येतेषां संयोगादभिव्यज्यते विप्रलम्भः । तस्याभिव्यक्तिश्च 'तेने'ति पदेनैवेति पदगतोऽसावसंलक्ष्यक्रमव्यङ्ग्यो नाम ध्वनिः ।

यथा वा मम–'यदसि जीवितनाथे ! त्वं मयि दीने सुनिश्चितं दयिता । प्रहरसि किं मां वितथं, हन्त दृगन्तेन तिग्मेन ॥' अस्यायमर्थः–'हे जीवितनाथे जीविताधीश्वरि ! यदि मयि दीने (विषये) सुनिश्चितं दयिता जातदयाऽस्यसि । तर्हि–किं तिग्मेन दृगन्तेन (साधनेन) हन्त ! मां प्रहरसि प्रहारेण व्याकुलतां नयसि ॥' इति । अत्र हि–काऽपि मृगाक्ष्यालम्बनमुद्दीपनं पुनस्तया सह रहसि समागमः, 'जीवितनाथे' इति सम्बुद्धिपदाक्षिप्तं मदनार्दितत्वमनुभावो, व्यभिचारी पुनर्भङ्ग्यन्तरेणौत्सुक्यं व्यज्यमानमित्येषां संयोगाद्रतेरभिव्यक्तिः । सा च–'दयिते'ति पदप्रकाश्या ।

यथा वा–'मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते मानं धत्स्व, धृतिं बधान, ऋजुतां दूरे कुरु प्रेयसि । सख्यैवं प्रतिबोधिता प्रतिवचस्तामाह भीतानना, नीचैः शंस, हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥' इति । अस्यायमर्थः–'हे मुग्धे ! सदुपदेशग्रहणशीलत्वाभावादप्रौढबुद्धे कौमारयौवनान्तरालावस्थाके इति वा मुग्धतयाऽविदग्धतयैवाखिलोऽतीतो वर्तमान आगमिष्यंश्च कालः समयो नेतुं यापयितुं किमारभ्यते अतः–मानं धत्स्व बलाद्धारय, धृतिं धैर्यं बधान, प्रेयस्यत्यन्तं प्रिये (विषये) ऋजुतां सरलतां दूरे कुरु । एवमित्येवं सख्या प्रतिबोधिता भीतानना सती तां सखीं प्रति वच उत्तरमाह–किमिति–नीचैः शंस कथय, हि यतो मे मम ननु हृदि स्थितः प्राणेश्वरः श्रोष्यति । 'ऋत्यकः ।' ६।१।१२८ इति संहिताया अभावः । अतिशयेन प्रियः प्रेयान्, तस्मिन् । द्विवचनविभज्योपपदे तरबीयसुनौ ।' ५।३।५७इति ई । यसुन् । 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः ।' ६।४।१५७ इति प्रादेशः । इति । अत्र हि–प्राणप्रिय आलम्बनं तेन विना संस्थानं रहसि सखीभिः संवादो वोद्दीपनं भीताननत्वेनोत्प्रेक्षितं चकितनयननिरीक्षणाद्यनुभावः भयकम्पादिपुनर्व्यभिचारी भाव इत्येतेषां च संयोगादभिव्यज्यते सम्भोगः शृङ्गारः । स च 'भीतानने'ति पदमात्रद्योत्यः, भयप्रतिपाद्याकृत्रिमानुरागेण च तस्य प्रकर्षात् ।

अथोक्तन्यायमितरत्राप्यतिदिशति–एवमित्यादिना ।

एवं यथोक्तस्थले शृङ्गारे तथा । भावादिषु भावतदाभासादिषु । अपि । ऊह्यमसंलक्ष्यक्रमव्यङ्ग्यस्य पदप्रकाश्यत्वमिति शेषः । तत्र–भावध्वनिर्यथा–'तन्मञ्जुमन्दहसितं श्वसितानि तानि, सा वै कलङ्कविधुरा मधुराननश्रीः। अद्यापि मे हृदयमुन्मदयन्ति हन्त सायन्तनाम्बुजसहोदरलोचनायाः॥' इति । अस्यायमर्थः–'सायन्तनाम्बुजसहोदरलोचनाया अर्ध-

'भुक्तिमुक्तिकृदेकान्त-समादेशन तत्परः। कस्य नानन्दनिस्यंदं विदधाति सदागमः॥ १९२ ॥'
अत्र 'सदागम' शब्दः सन्निहितमुपनायकं प्रति सच्छास्त्रार्थमभिधाय 'सतः पुरुषस्यागम' इति-
वस्तु व्यनक्ति। ननु सदागमः सदागमइवेति न कथमुपमाध्वनिः ? 'सदागम' शब्दयोरुपमयो-
पमेयभावाविवक्षणात्। रहस्यस्य संगोपनार्थमेव हि द्व्यर्थपदप्रतिपादनं प्रकरणादिपर्यालोचनेन च
सच्छास्त्राभिधानस्यासम्बन्धात्।

---

विकसितकमलमुकुलसदृशनेत्रायास्तन्मुञ्जु मनोहरं मन्दहसितं स्मितं, तानि श्वसितानि सौरभसम्पन्नामुखश्वासाः, सा वै
कलङ्कविधुरा निष्कलङ्का मधुरास्वाद्याऽऽननश्रीर्मुखच्छटा अद्यापि मे मम हृदयं हन्तोन्मदयन्ति ॥' इति। अत्र च तत्-
पदमात्रप्रकाश्यः स्मृतिभावध्वनिः। यथा वा मम–'विकसत् कमलं समुदितमिन्दुं पीयूषसागरं वाऽपि। सुमुखि!
यदेव विलोके तदा तदेव प्रमोदेऽहम् ॥' इति। अस्यायमर्थः–'हे सुमुखि! कमलवदनत्वाच्चन्द्रवदनत्वाद्वा यदेव विकस-
द्विकाशोन्मुखं कमलं, पीयूषस्य सागरभूतमिन्दुं चन्द्रमसं वा विलोके पश्यामि तदा तदेव प्रमादेऽहम् ॥' इति। अत्र हि
'प्रमोदे' इत्यस्य हेतुर्विकसतः कमलस्य समुदितस्य वा सुधानिधेर्विलोकनं, तदपि सुमुख्याः सादृश्येन तत्स्मारकत्वात्।
स्मृतिर्न पुनर्वाच्या, तद्वाचकानुपलम्भात्। 'तदेवे'ति च तदागमकालिकमनिर्वचनीयमलौकिकप्रमोदानुभवमुपन्यस्यति,
न त्वभिधत्ते, अनुभवपदार्थस्यैव वचनागोचरत्वात्। 'तदे' त्यस्य बुद्धिस्थ(त्व) धर्मप्रकारकस्य बोधस्य जनकत्वेऽपि वच-
नागोचरत्वप्रकारकबोधजनकत्वे शक्त्यभाव एवेति तन्मात्रप्रकाश्यः स्मृतिध्वनिः। इति दिक्।

अथ संलक्ष्यक्रमव्यङ्ग्यो वाक्यगतो यथा मम–'न दिवा सुधानिधानं विकसति नक्तं न हन्त वा कमलम्। एकं
पुनस्त्वदीयं सुभगे वदनं दिवानिशं विकसत् ॥' इति। अस्यायमर्थः–हे सुभगे! सुधानिधानं तत्त्वेन केवलं प्रसिद्धश्चन्द्रो
न दिवा दिवसे कदापि विकसति, न वा हन्त! कमलं नक्तं निशि विकसति। एकं पुनस्त्वदीयं वदनं दिवानिशं विकस-
द्विकसति ॥' इति। अत्र हि–चन्द्रापेक्षया कमलापेक्षया च सुभगाया वदनमतिशयितंचमत्कारशालीति व्यतिरेकेण
'यदीन्दुर्दिवाऽपि कमलं वा नक्तमपि विकसेत्तदा स्यात्सुभगावदनं तत्सदृशमि'त्युत्प्रेक्षा :'विरुद्धधर्मिणोरपि सर्वस्वायतनं
सुभगावदन'मिति वा वस्तु व्यज्यते। इति दिक्।

अथ संलक्ष्यक्रमव्यङ्ग्यस्यैतस्यैव पदप्रकाश्यत्वमुदाहर्तुं प्रवृत्तस्तत्र तावद् वस्तुना वस्तुध्वनिमुदाहरति–'भुक्तिमुक्ति-
कृत्'इत्यादिना।

**'भुक्तिमुक्तिकृद्** भुक्तिः स्वर्गादिभोगः सम्भोगश्च मुक्तिरपवर्गः सुरतप्रवृत्तौ वा विरहजनिततापत्रयस्य निवृत्तेः
स्वतःसिद्धत्वात्तदामोदोद्रेके समस्तकर्त्तव्यान्तरत्यागस्तत्कृत्। **एकान्तसमादेशनतत्पर** एकान्तः परमात्मस्वरूपं विविक्त-
देशो वा तत्समादेशनं तस्य सम्यक्कथोपदेशस्तत्परः। **सदागमः** सन् श्रेष्ठः सतां वाऽऽगमः शास्त्रं प्राप्तिः। **कस्य** मुमुक्षुर्मुनो
युवतीजनस्य वा मद्विधस्येति यावत्। **आनन्दनिस्यन्दम्** आनन्दस्य निस्यन्दः क्षरणमिति तम्। **न** नैव। **विदधाति**
समुत्पादयति, अपि तु सर्वस्यैव :।' अत्र हि समागतमुपसन्नमुपनायकं कमपि युवानं प्रति जनान्तरसन्निधौ रहस्याभिधाने
स्वारस्यभङ्गभियाऽप्रस्तुतवेदादिशास्त्रप्रशंसामिषेण स्वकीयं तदानींतनं हर्षमपारयन्त्या अतएवैतं सूचयन्त्याः कस्याश्चि-
नोपनायिकाया उक्तिरियम् ॥१९२॥

अथात्र पदप्रकाश्यं ध्वनिं निर्दिशति–अत्रेत्यादिना।

**अत्रो**दाहृते पद्ये इति यावत्। **सदागमशब्दः** 'सदागम' इति पदमित्यर्थः। **सन्निहितं** समीपे स्थितम्।
आगत्य समीप एव कृतस्थानमिति यावत्। **उपनायकं** साक्षान्नायक(पति) तो भिन्नमुपपतिमित्यर्थः। **प्रति**। **सच्छा-
स्त्रार्थं** सच्छास्त्रसंबन्धार्थ इति तम्। साधुशास्त्रमित्यर्थमित्यर्थः। **अभिधायो**क्त्वा मुख्यया (अभिधया) वृत्त्या प्रतिपाद्येति
यावत्। अप्रस्तुतस्याप्येतस्यार्थस्य प्रस्तुतत्वेन कल्पितत्वात्। **'सतः** श्रेष्ठस्य सुरतोपयुक्तत्वेन नायकत्वेन कल्पितत्वात्।
**पुरुषस्य** पौरुषमुन्नयतः। **आगमः** प्राप्तिः सङ्ग इति यावत्।'**इति** वस्त्विवत्यभिधानरूपं वस्तु। **व्यनक्ति** ध्वनयति।

अथात्राशङ्कते–नन्वित्यादिना।

**ननु**। **सदागमः** सत आगमः। **सदागमः** सतामागमः शास्त्रमिति। **इव** यथातथा। **इतीत्यतः**। **उपमाध्वनिरुप-
मालङ्कारस्य** ध्वनिर्ध्वन्यमानत्वेनावस्थानम्। **कथम्**। **न**। इति चेदुच्यते–**सदागमशब्दयोः** सदागमश्च सदागमश्चेति

"अनन्यसाधारणधीर्धृताऽखिलवसुन्धरः। राजते कोऽपि जयति स राजा पुरुषोत्तमः॥ १९२॥"

तौ शब्दाविति तयोस्तथोक्तयोः सदागमशब्दप्रतिपाद्यस्य सदागमशब्दप्रतिपाद्यस्य चेति यावत्। **उपमानोपमेयभावाविवक्षणादुपमानत्वोपमेयत्वयोर्विवक्षाऽभावादित्यर्थः।** नोपमाध्वनिरिति शेषः। हि यतः। अत्रायं हेतुरिति भावः। **रहस्यस्य** रहसि संवेदनीयस्य गोपनीयस्यार्थस्येति यावत्। रहस्येकान्ते भवमिति रहस्यम्। 'दिगादिभ्यो यत्।' ४।३।५४ इति यत्। 'रहस्या स्त्री नदीभेदे गोपनीयेऽभिधेयवत्।' इति मेदिनी। **सङ्गोपनार्थं** सम्यग्गोपनं रक्षणमप्रकाशनमिति यावत्तदेवार्थो यत्र तद् यथा भवेत्तथा। **एव** । **द्व्यर्थपदप्रतिपादनं** द्व्यर्थपदानां प्रतिपादनम्। 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु।' इति नियमात्। न चैवं सच्छास्त्राभिधानमपि प्रकृतं स्यात्, विवक्षाया उभयत्र साम्यात् इति वाच्यमित्याह—च पुनः। **प्रकरणादिपर्यालोचनेन** तद्द्वारेति शेषः। आदिपदेन वक्तृबोद्धव्ययोरभिधानम्। **सच्छास्त्राभिधानस्य** । **असम्बन्धात्** सम्बन्धाभावात्। न सदागमशब्देन सच्छास्त्राभिधानं प्रसज्येत। 'वक्तृबोद्धव्याधीनत्वादभिधायाः' इति शेषः। अत्रेदमभिहितं भवति—प्रस्तुतोऽर्थोऽत्रोपपतेः प्रशंसनं, वेदादिसच्छास्त्रप्रशंसनं न पुनः प्रस्तुतार्थविषयं, वक्तृबोद्धव्यवैशिष्ट्येनाभिधायास्तत्रैव नियमनात्। अथापि प्रस्तुतार्थस्य तस्य सकलजनसंवेदने रहस्यभङ्गः सारस्यभङ्गश्चेति भियाऽप्रस्तुतस्याप्यर्थस्य प्रस्तुतार्थत्वेन कल्पनम्। अत एवास्याभिधानं प्रथमम्। तत्र चाभिधया दर्शिते व्यापारे 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इति नयेन तस्या एव पुनर्व्यापारान्तरं दर्शयितुमशक्तौ प्रस्तुतोऽपि 'सुत आगमः कस्यानन्दहेतुको न स्या'दित्यर्थो व्यञ्जनयाऽवगम्यते। न चैवमनयोरुपमा, प्रधानभूते व्यङ्ग्यार्थ एव प्रतीतिविश्रान्तावुपमाकल्पनाभावात्, सङ्गोपनार्थमेवाप्रस्तुतस्याप्यर्थस्य प्रथममुपस्थानात्, शक्यस्य प्रस्तुतस्यार्थस्यापि अप्रस्तुतत्वेन कल्पनात्पुनरुपस्थानाच्च। यद्यपि भुक्तिमुक्त्येकान्तादीनामपि व्यञ्जकत्वं, तथाऽपि तेषां न सदागममन्तरेणेति परिवृत्त्यसहत्वात्सदागमपदप्रकाश्य एव वस्तुध्वनिः। इति।

अथ पदप्रकाश्यमलङ्कारध्वनिमुदाहरति—"**अनन्यसाधारणधी**"रित्यादिना।

"**अनन्यसाधारणधीः** नान्यसाधारणा अन्येन साधारणा तुल्या धीर्यस्य सः। 'साधारणः समानश्च'त्यमरः। विलक्षणविचक्षणत्वात्सर्वज्ञत्वाद्वा। **धृताखिलवसुन्धरो** धृता स्ववशीकृतत्वेन हस्तसात्कृता वराहरूपेण वोद्धृता अखिला समस्ता चतुःसमुद्रान्ता वसुन्धरा रत्नगर्भा पृथिवी येन स तथोक्तः। **पुरुषोत्तमः** पुरुषाणां मनुष्याणां क्षेत्रज्ञानां वोत्तमः श्रेयान्। पुरुषाणां प्रभुत्वेन "उत्तमः पुरुषस्त्वन्यः" इत्यादिस्मृत्युक्तेषु 'श्रीपतिः पुरुषोत्तमः' इत्यादिकोषेषु प्रसिद्धो वा। सम्बन्धसामान्यविवक्षया षष्ठी न तु निर्धारणे। 'न निर्धारणे' २।२।१० इति निषेधात्। यत्तु केचि"न्न निर्धारणे।"२।२।१० इति षष्ठीनिषेधान्न षष्ठीसमासः, किन्तु पुरुषेषूत्तम इति निर्धारणसप्तमीसमास एवेत्याहुस्तन्न हृदयङ्गमम्। "संज्ञायाम्।" २।१।४४ इति शास्त्रात्सप्तम्यन्तस्य सञ्ज्ञायामेव समासस्य नियमात्। अत एवाहुः कैयटपादाः—"यस्मिन्निर्धार्यते वा यश्चैकदेशो निर्धार्यते यश्च निर्धारणहेतु"—रित्येतत्त्रयसन्निधाने निर्धारणं भवतीति तत्रैव षष्ठीसमासनिषेधो भवति। इह तु नागानामुत्तमो नागोत्तम इतिवत् तत्त्रितयसन्निधानाऽभावात्सम्बन्धसामान्ये षष्ठीति समासो भवत्येवेति। अन्येऽप्याहुः, "यत्तु केऽप्याहुः पुरुषेषूत्तम इति निर्धारणसप्तम्याः "सञ्ज्ञाया"—मिति समासः—नचैवं 'न निर्धारणे' इति व्यर्थम्, स्वरे भेदात्। सप्तमीसमासे हि "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः।" ६।२।२ इत्यादिना पूर्वप्रकृतिस्वरः, षष्ठीसमासे तु "समासस्य।" ६।१।२२३ इत्यन्तोदात्तत्वं स्यात्, तच्चानिष्टमिति, तन्न विचारसहम्। सञ्ज्ञायामिति समासस्य नित्यत्वेन स्वपदविग्रहासङ्गतिप्रसङ्गात्" इति। तर्कवागीशास्त्वाहुः—"ननु सञ्ज्ञायामेव "सञ्ज्ञायाम्।"२।१।४४ इति शास्त्रात्(समासशास्त्रात्) कथं पुरुषोत्तमपदस्यानेकार्थकत्वं? न च सप्तमीसमासस्यैव सञ्ज्ञायां विधानात् षष्ठीसमासेन पुरुषश्रेष्ठवाचकत्वमिति वाच्यम्। निर्धारणे विहितायाः षष्ठ्याः, "न निर्धारणे।" २।२।१० इति शास्त्रात्समासनिषेधात्। उच्यते—"पुरुषमुत्तमयति संसर्गेणोत्कृष्टं करोति" इतिव्युत्पत्त्या तस्य पुरुषश्रेष्ठवाचकत्वात्।" इति। अन्येऽप्याहुः "उत्तमः पुरुषस्त्वन्यः" इत्युक्तदिशा 'उत्तमः पुरुष' इति कर्मधारय एव युक्तः प्रतिभासते, परनिपातस्तु राजदन्तादित्वादूह्यः।" इति। **सः** प्रसिद्धः। **कोऽपि** कश्चिददृष्टस्वरूपोऽनिर्वचनीयस्वरूपो वा। **राजा** राजतीति राजा, नृपतिर्विभुर्वा "स सर्वस्येशान" इत्यादिश्रुतेः "कनिन्" (उ०) १।१५४

अत्र पुरुषोत्तमः पुरुषोत्तम इवेत्युपमाध्वनिः । इमौ शब्दशक्तिमूलौ संलक्ष्यक्रमव्यङ्ग्यभेदौ ।

"सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विश्रब्धमत्रागतिः ।
आश्चर्यं! तव सौकुमार्यमभितः क्लान्तासि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरः शक्नोति ते नासितुम् ॥ १९४ ॥"

---

इत्यादिना कनिन् । "राजा प्रभौ च नृपता" विति मेदिनी । जगति भूमण्डले भुवनत्रितये वा । राजते द्योतते शासकत्वेन "तमेव भान्तमनुभाति सर्वं"मित्यादिश्रुतिप्रसिद्धत्वेन वा विराजते इति यावत् ॥ १९३ ॥'

अथात्र ध्वनिं निर्दिशति-अत्रेत्यादिना ।

अत्रोदाहृते पद्ये । पुरुषोत्तमः पुरुषेषु श्रेष्ठत्वेन तथा प्रसिद्धः। पुरुषोत्तमः क्षेत्रज्ञाऽपरपर्य्यायेषु पुरुषेषु श्रेष्ठत्वेन प्रसिद्धः परमात्मा । इव यथा तथा राजते इति शेषः । इतीत्येव "पुरुषोत्तम इति पदमात्रप्रकाश्य" इति शेषः । उपमाध्वनिः उपमाया ध्वनिरवसेय इति शेषः ।

ननु कस्यैतौ प्रभेदावित्याशङ्कामुन्मूलयन्नाह-इमावित्यादि ।

इमौ भुक्तिमुक्तिकृदित्यादिना, अनन्यसाधारणधीरित्यादिना चोदाहृतावित्यर्थः । शब्दशक्तिमूलौ शब्दशक्ति मूलं ययोस्तौ । शब्दपरावृत्त्यसहत्वेन तच्छक्तिमूलत्वमवसेयम् । संलक्ष्यक्रमव्यङ्ग्यभेदौ संलक्ष्यक्रमव्यङ्ग्यस्य तदभिधेयस्य ध्वनेर्भेदौ "ज्ञेया" विति शेषः ।

यथा वा मम—"कस्यामोदं कमलं वदनमिदं ते प्रिये न सन्तनुयात् । अवलम्ब्य मित्रमेकं विकसति न यदन्यथा जातु" इति । अस्यायमर्थः-हे प्रिये! यत् एकं मित्रं सूर्यं प्रियं वा "मित्रं सुहृदि न द्वयोः । सूर्ये पुंसि" इति अवलम्ब्य विकसति हृदयामोदमुद्घाटयति अन्यथा प्रकारान्तरेण जातु कदाऽपि न विकसति तत्ते तवेदं वदनं ( कर्तृ ) कमलं वदनमिति वा कस्य यून आमोदं कमामोदं न सन्तनुयात्सम्पादयेत्, अपि तु सर्वस्यैव सर्वविधमामोदं सर्वदैव विदध्यात् इति । अत्र हि मित्रमितिपदमात्रप्रकाश्यो रूपकध्वनिः ।

अथ पदप्रकाश्यस्यार्थशक्तिमूलस्य संलक्ष्यक्रमव्यङ्ग्यस्य ध्वनेर्द्वादशसु भेदेषु स्वतःसम्भवीत्यर्थे व्यञ्जके वस्तुना वस्तुनो व्यक्तिमुदाहरति—"साय"मित्यादिना ।

"सायं सूर्यास्तवेलायां दिवसे विधेयानां कृत्यानां सम्पादनानन्तरमिति यावत्, 'सखी'ति शेषः । स्नानं न वक्त्रस्य कस्यचिन्मुखादेरेव प्रक्षालनम् 'त्वया' इति शेषः। उपासितमनुष्ठितं सुचिरं सम्यक्तया विहितमिति यावत् । तत्तत्कर्म समाप्यैव सायं स्नानं क्रियते लोकैस्त्वयाऽप्येवं सायं स्नानमनुष्ठितं तदनन्तरं च कर्तव्यान्तरानवसरतया न श्रमावकाशः सम्भवितुमर्हति, सायं स्नानस्य दिवाकृतकृत्यजनितश्रमनिवृत्तिमात्रफलकत्वात् । एवं च दिवाकृतकृत्यजनितः क्लमः इति न वक्तुं शक्यमिति व्यज्यते । तथा-मलयजेन मलयसम्भवेन सुगन्धिना चन्दनेन। 'गन्धसारो मलयजो भद्रश्रीश्चन्दनोऽस्त्रिया"मित्यमरः । अङ्गं वक्षःस्थलादि गात्रम् । समालेपितं समन्तात्लेपितं 'परेण केनापी'ति शेषः । न तु चर्चितं वा लिप्तम् । एवं च लेपकरणजनितश्रमस्यापि नावकाशः । तथा-अम्बरमणिरम्बरमाकाशं तस्य मणिरिव मणिरिति तथोक्तः सूर्यः । अस्ताचलमौलिमस्ताचलस्य स्वयं यमुपेत्य अस्तो भवति तस्य पर्वतस्येति यावन्मौलिः शिखरं तम् । 'मौलिर्मस्तकमुण्डके' इति हैमः । 'उल्लङ्घ्ये'ति शेषः । यातः । निविडा सम्प्रति जाता रात्रिः, अतः सूर्योऽस्तगिरेरपि परस्मिन्प्रदेशे गत इति भावः । एवं च न लेशतोऽप्युष्णतासद्भावः, येन कथमपि क्लमाविर्भावः सम्भाव्येत इति व्यज्यते । तथा-विश्रब्धं-विश्रब्धं निर्भीकं यथा भवेत्तथा, स्वच्छन्दमित्यर्थः । मन्थरमभीतं चेति भावः । अत्र अस्मिन्दृश्यमाने प्रत्याख्यातुमशक्ये कुञ्जादिना घनच्छायभूते देशे इति यावत् । आगतिरागमनम् । 'तवे'ति शेषः । एवं च मार्गकृतस्तत्र त्वरया गमनकृतश्च न क्लमः सम्भवति इति व्यज्यते । आश्चर्यं विस्मयः । किं तदित्याह- तव प्रौढामप्येतामवस्थामापन्नाया इति भावः । अभितः सर्वतो बहिरन्तश्च, न वा बहिरेव नवान्तरेवेति यावत् । सौकुमार्य्यं सुकोमलत्वम् । 'अस्ती'ति शेषः । येन सौकुमार्येण ।

अत्र स्वतःसम्भविना वस्तुना कृतपरपुरुषपरिचया क्लान्ताऽसीति वस्तु व्यज्यते। तच्च अधुना क्लान्ताऽसि न पूर्वं कदचिदपि तवैवंविधः क्रमो दृष्ट इति बोधयतोऽधुनापदस्यैवेतरपदार्थोत्कर्षात । इति "अधुना" पदस्यैव पदान्तरापेक्षया वैशिष्ट्यम्।

---

'हेतौ' । २।३।२३। इति तृतीया। अधुना साम्प्रतं सायङ्कालिकस्नानविधानानन्तरमितरकार्याननुष्ठेयत्वात्सुरभितेन चन्दनेन सम्यगासमन्तात्परकृतलेपनाऽनन्तरं समस्ततापशान्तौ लेपविधानादिश्रमाऽनुत्पत्तौ च रात्रेश्च समीपायाः कृतावस्थानाद्भयाद्यभावाच्च क्रमसामग्र्याः सर्वथाऽसम्भवेऽस्मिन्समये । क्लान्ता श्रान्ता । असि त्वं यद्यभितोऽत्यन्तं सुकोमलत्वं न स्यात्कथमेवमस्मिन्नपि समये क्लान्ताऽभविष्य इति व्यज्यते। अत एव-ते तव अमीलनव्यतिकरः। नेत्रद्वन्द्वं नेत्रयोर्द्वन्द्वं युगलं (कर्तृ)। न नैव । आसितुं स्थातुम्। आस् उपवेशने। शक्नोति क्षमते। अत्र सखीतिपदाऽनभिधानं तन्मात्रकृतसुरतानन्दलाभाऽसहिष्णुतां व्यञ्जयति। इति उपनायकेन समं सङ्गम्य विलस्य च श्रमाऽपनोदनाय सुचिरं कृतस्नातां परकृताऽङ्गसुगन्धितचन्दनालेपाञ्चिशि निर्भयमागच्छन्तीं सखीं प्रति ज्ञातरहस्याया उपहसन्त्या विदग्धाया कस्याश्चिदुक्तिरियम्। अत्र च शार्दूलविक्रीडितं वृत्तम्। लक्षणं च प्रागुक्तम् ॥ १९४ ॥

अत्रध्वनिमाह-अत्रेत्यादिना।

अत्रोदाहृते पद्ये। स्वतः सम्भविना न तु कवेः प्रौढोक्तिसिद्धेन। वस्तुना। 'हे सखि ! तव सौकुमार्य्यमत्यन्तं, येनाऽधुना क्लान्तासी'ति वाच्यरूपेणेति शेषः। कृतपरपुरुषपरिचया कृतः परपुरुषपरिचयो यया, परपुरुषस्य स्वपतिभिन्नस्योपपतेरिति परिचय आमन्त्रणालिङ्गनादिरूपः व्यापारः। अत एव परपुरुषेण निर्दयतया मर्दितत्वात्। क्लान्ता श्रमार्त्ता। असि इति वस्तु। व्यज्यते तद् व्यङ्ग्यवस्तु इत्यर्थः।। च पुनः। अधुना कथमपि किञ्चिदपि क्रमाऽनापादके प्रत्युत सर्वथा सर्वतोभावेन कथमपि किञ्चित्सम्भवत्तापश्रमस्य झटिति यथेष्टं निवृत्तिकरे शान्तेश्च सम्पादकेऽस्मिन्नपि समये इति भावः। क्लान्ताऽसि श्रमार्त्ता असि विद्यसे। ननु-न। पुनः-कदाचित्कस्मिंश्चित्समये अपि पूर्वमितः पूर्वम्। तव 'सख्या' इतिशेषः। एवंविध एतादृशः। क्रमः परिश्रमः। दृष्टो 'मये'ति शेषः। इत्येवम्। बोधयतो ज्ञापयतः सूचितं कुर्वत इति यावत । इतरपदार्थोत्कर्षादितराणि यानि पदानि तेषामर्थस्तस्मादुत्कर्षात्तदुत्कर्षमपेक्ष्येति भावः। ल्यब्लोपे कर्मण्यधिकरणे चेति पञ्चमी। अधुनापदस्य। एव न त्वितरेषामितरपदार्थोत्कर्षापेक्षयाऽधुनापदार्थयोत्कर्षस्यैव सद्भावात। इति कारणात्। 'अधुना' पदस्य। एव।। पदान्तरापेक्षया। वैशिष्ट्यं विशिष्टत्वं विशेषेणोत्तमत्वप्राधान्योत्कृष्टत्वमवगम्यमिति शेषः।

अत्रेदमवधेयम्-अधुनेत्येकं पदं सायन्तनस्नानस्य निमित्तान्तरानुसन्धानप्रतिबन्धकं मलयजचन्दनलेपनस्य च तत्तत्सुरतकालिकपरपुरुषकृतचिह्नगोपनं सूर्यस्य चास्ताचलोल्लङ्घनोक्तेः परपुरुषसम्भोगप्रतिबन्धकप्रकाशाऽभावं विश्रब्धागमनस्य चेप्सितामोदहेतुकपरपुरुषसङ्गलाभेन हर्षोद्रेकं सूचयन् सुचिरं स्वच्छन्दं परपुरुषेण समं रमणानन्तरमन्तःसन्तृप्तिजनितेनाऽऽमोदोद्रेकेण च परपुरुषगाढोन्मर्दनश्रमार्ततया च निद्रास्पृहित्वं ध्वनयति। पदान्तरार्थानामुत्कर्षापेक्षयास्यैवोत्कर्षातिशयात् प्राधान्यं निर्बाधितम्। अधुनापदमपि स्वयं न परिवृत्त्यसहिष्णु, किन्त्वर्थेनेति तत्पदार्थशक्तिमूल एवाऽयं वस्तुध्वनिरिति। यथा वा मम-' विचरसि यतोयतस्त्वं मधुपा अनुयान्ति तत्रतत्र त्वाम् । केनापि रहसि दृष्टं हन्त तवेदं प्रिये! वदनम् ।।' अस्यायमर्थः-हे प्रिये! यतोयतस्त्वं विचरसि तत्रतत्र त्वां मधुपा मधु मकरन्दम्पिबन्तीति मधुपाः प्रमत्ता भ्रमरा अनुयान्ति हन्त कष्टं रहसि प्रतिबन्धकरहिते देशे केनापि मधुपेन तवेदं वदनं दृष्टमिति। अत्र हि केनापि सुकृतिना दृष्टां रमणीं प्रति प्रार्थयमानस्य कस्याप्यलब्धकामस्योक्तिरियमितिकेनापीति पदार्थेन तस्य सुकृतभाजनत्व स्वस्य च हतभाग्यत्वं सूचितमिति 'वदनं कमल'मिति रूपकातिशयोक्तिं ध्वनयति अत एतत्पदार्थशक्तिमूलएवालङ्कारध्वनिरिति।

"तदप्राप्तिमहादुःखविलीनाशेषपातका। तच्चिन्ताविपुलोह्लादक्षीणपुण्यचया तथा ॥ १९५ ॥
चिन्तयन्ती जगत्सूतिं परब्रह्मस्वरूपिणम्। निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका ॥ १९६ ॥"

अत्राशेषचयपदप्रभावादनेकजन्मसहस्रभोग्यदुष्कृतसुकृतफलराशितादात्म्याध्यवसिततया भगवद्विरहदुःखचिन्ताह्लादयोः प्रत्यायनमित्यतिशयोक्तिद्वयप्रतीतिरशेषचयपदद्वयद्योत्या। अत्र च व्यञ्जकस्य कविप्रौढोक्तिमन्तरेणापि सम्भवात्स्वतःसम्भविता।

---

अथ स्वतःसम्भविना वस्तुनाऽलङ्कारध्वनिमुदाहरति—'**तदप्राप्तिमहादुःखविलीनाशेषपातके**त्यादिना।

'**तदप्राप्तिमहादुःखविलीनाशेषपातका** तस्य प्रकृतस्य श्रीकृष्णस्येति यावत्। अप्राप्तिर्वियोगस्तया यन्महादुःखं परःसहस्रजन्मजन्मान्तपरिभोग्यं महत्कष्टमिति यावत्, तेन तद्भोगेन विलीनानि विशेषेणादर्शनीयतां प्राप्तानि अशेषाणि समस्तानि पातकानि पापपुञ्जा यस्याः सा। **तथा** पुनः। **तच्चिन्ताविपुलाल्हादक्षीणपुण्यचया** तस्य प्रकृतस्यैव श्रीकृष्णस्य या चिन्ता ध्यानं तदेकाग्रतया मनसा तत्स्वरूपभावेनेति यावत्, तया यो विपुलाह्लादः विपुलो महाननेकसहस्रयुगावसानभोगेनाप्यक्षय्यः अन्यत्रान्यथा चानुपलब्धुमशक्य आह्लादस्तेन तत्प्राप्त्या क्षीणाः पुण्यचयाः पुण्यानामाह्लादहेतुकानां धर्म्मानुष्ठानजनितादृष्टविशेषाणां चयाः पुञ्जा यस्याः सा। **जगत्सूतिं** जगत् प्रसवस्थानीयं यस्य तादृशमित्यर्थः। यत्तु जगतः सूतिर्यस्मात्तमिति व्याख्यानं तन्न, व्यधिकरणबहुव्रीहेरगतिकगतित्वात्। **परब्रह्मस्वरूपिणं** परब्रह्माभिन्नस्वरूपशालिनमित्यर्थः। श्रीकृष्णमिति शेषः। **चिन्तयन्ती** ध्यायन्ती। **अन्या** पूर्वश्लोकोक्ताभ्यो भिन्ना **गोपकन्यका** गोपस्य कन्यका पुत्री। **निरुच्छ्वासतया** निरुद्धप्राणतया निर्गत उच्छ्वासः श्वासोत्क्रमणं यस्मास्तत्तया "त्वतलोर्गुणवचनमि"ति पुंवद्भावः। 'नास्य प्राणाः समुत्क्रामन्ति अत्रैव समवलीयन्ते' इति श्रुतिः। **मुक्तिम् गता** प्राप्ता। इति भावः। गुरुजनोपरोधेन श्रीकृष्णसमीपं गन्तुमशक्यायाः श्रीकृष्णध्यानवशान्मुक्तिं गतायाः गोपकन्यकाया वर्णनपरं विष्णुपुराणपद्यं न चेदं पद्यद्वयमूह्यम् द्वाभ्यां युग्ममिति प्रोक्तमिति नियमात्॥ १९५ ॥ १९६ ॥

अथात्रालङ्कारध्वनिमाह—अत्रेत्यादिना।

**अत्रो**दाहृतपद्ये। **अशेषचयपदप्रभावा**दशेषचयपदयोः प्रभावः सामर्थ्यं तस्मात्। **अनेकजन्मसहस्रभोग्यदुष्कृतसुकृतफलराशितादात्म्याध्यवसिततया** अनेकजन्मनां सहस्राणि तैर्भोग्या ये दुष्कृतसुकृतफलराशयस्तेषां तादात्म्यमभिन्नत्वं तस्याध्यवसितता अध्यवसायस्तया। "हेतुने"ति शेषः। **भगवद्विरहदुःखचिन्ताल्हादयो**र्भगवतो विरहदुःखं च चिन्ताह्लादश्चेति तयोः। **प्रत्यायनं** प्रतीतिसम्पादनम्। इत्यतः कारणात्। **अतिशयोक्तिद्वयप्रतीति**रतिशयोक्त्योस्तदभिधेययोरलङ्कारयोर्द्वयं तस्य प्रतीतिः। **अशेषचयपदद्वयद्योत्या** अशेषपदद्योत्यां चयपदद्योत्या चेत्यर्थः। **च** पुनः। **अत्र**। व्यञ्जकस्याशेषचयपदद्वयस्य **कविप्रौढोक्तिं** कवेः प्रौढोक्तिं विना **अन्तरेण**। **अपि**। **सम्भवात्**। **स्वतः सम्भविता**। बोध्येति शेषः।

अत्रेदमवसेयम्—'नाभुक्तं क्षीयते कर्म्म कल्पकोटिशतैरपि।' इति स्मरणात्कर्मणां भोगा आवश्यकाः। कर्म्मफलानां भोगमन्तरेण मुक्तेरनुपपत्तेः। प्रकृतायाः गोपकन्यकायाः गुरुजनकृतनिरोधवशात्साक्षाद्भगवत्सविधं गन्तुमशक्तयाया भगवत्सन्निधानानुपस्थितिजन्यापरिमेयात्यन्तदुःखसमूहस्यैकपदमेव भोगेन समस्तानां पापानां क्षयः सपद्येव सञ्जातः। पुण्यकर्मणां सर्वेषां भोगश्च भगवद्ध्यानजन्यानिर्वचनीयानतिशयासमानापरिमेया संस्थाया असम्भवे स्वत एव मुक्तिः मुक्तिदशायां च प्राणा न बहिर्निर्यान्तीति तस्या अपि तत्रैव विलीना न तु निष्क्रान्ताः। इत्येवमशेषचयपदद्वयेन समस्तपापपुण्यभोगप्रतिपादनात्तयोरेव प्राधान्यम्। अथ भगवतः सन्निधानाप्राप्तिजन्यं दुःखं ततश्च प्रेमवशाद्भगवति मनसः सन्निवेशः। इत्येतयोरनेकजन्मसहस्रभोग्यदुष्कृतसुकृतफलराश्यभिन्नत्वेनाध्यवसायान्निगीर्याध्यवसानरूपातिशयोक्तिद्वयमशेषपदस्य च चयस्यैवाधीनमिति। अत्राहुस्तर्कवागीशाः-अत्रायम्भावः। प्रकृतेऽभिधेयबोधानन्तरं सुखदुःखभोगविशेषेण कथं यावत्पुण्यपापक्षयइत्युपपत्तिं प्रति सन्दधतो व्यञ्जनया यावत् सुखदुःखभोगजन्याशेषपुण्यपापत्वव्यञ्जनया झटिति प्रतीतिः प्रकरणवैशिष्ट्येन प्रकृतयोर्भगवद्विरहदुःखचिन्ताऽऽह्लादयोः प्रतीतिरित्यतिशयोक्तिद्वयस्य व्यङ्ग्यत्वम्। न चाध्यवसायमात्रेण कथमनुपपत्तिनिरास इति वाच्यम्। एककार्य्य-

भावित्वरूपसादृश्यावसाने च तन्निरासात्तथा च भगवच्चिन्ताभगवच्चिन्ताविरहाभ्यां तथा सुखदुःखे जनिते यदुपभोगेन यावत्सुखदुःखभोगनाश्ययोः सुकृतदुष्कृतपुञ्जयोर्नाशो जनितः । एतत्सूचनाय महत्त्वं विपुलत्वं च दुःखाह्लादयोर्विशेषणमुपन्यस्तम् । केचित्तु मुक्त्युपयोगित्वेन प्रकृतस्य समस्तपुण्यफलराशिः पुण्यविशेषफलेनाप्रकृतेन तच्चिन्ताविपुलसुखेन सदा भेदप्रतीतिरतिशयोक्तिः । निगीर्णे प्रकृते शब्दोपात्तेनाप्रकृतेन सदा भेदप्रतीतिरतिशयोक्तिरिति तल्लक्षणादित्याहुस्तन्न; विषयिणि प्रसिद्धधर्मस्य विषये प्रतीतिरेवातिशयोक्तेः फलम् । ननु विषये प्रसिद्धस्य विषयिणि प्रतीतिः । एवं स्थितावतिशयोक्तिद्वयस्य निष्फलत्वापादविषये प्रसिद्धस्य यावत् पुण्यपापनाशकत्वस्य विषयिणि प्रतीतेरसम्भवेनाऽभिप्रेतानुपपत्तिनिरासस्यायोगाद्विषयिणः शब्दोपात्तत्वेन 'कथमुपरिकलापिनाङ्कलापाः' । इति तद्वाच्योपपत्तावतिशयोक्तिद्वयस्य व्यङ्ग्यत्वायोगाच्च । न चाशेषचयपदप्रभावेण विषयस्य व्यङ्ग्यत्वेनैवैतस्य व्यङ्ग्यत्वमितिवाच्यम् । तथा सति 'कथमुपरि' इत्यादौ प्रकरणवैशिष्ट्येन विषयस्य व्यङ्ग्यतयाऽतिशयोक्तेर्व्यङ्ग्यत्वापातादिति । उद्योतकारा अप्याहुः—ननु वियोगदुःखचिन्तासुखाभ्यां कथमशेषपापपुण्यनाशस्तेषां स्वस्वफलभोगनाश्यत्वादित्युपपत्तेरशेषदुष्कृतसुकृतफलराशितादात्म्याध्यवसायेनैव परिहार इति वाच्यसिद्ध्यङ्गमेतदिति चेन्न—भगवन्माहात्म्यातिशयमादायापि तदुपपत्तेरिति । प्रभाकरा अप्याहुः । अन्यथा सर्वपुण्यपापनाशस्य चिन्तावियोगसुखदुःखाभ्यां क्षयाऽनुपपत्तेरिति भावः । न चोक्तव्यङ्ग्यस्य वाच्यसिद्ध्यङ्गतया गुणीभूतव्यङ्ग्यत्वमाशङ्कनीयम् । अन्यत्र तथात्वेऽपि प्रकृते भगवद्विषयकरत्युत्कर्षप्रयोजकतया वाच्यादतिशयितत्वेन तदप्रसङ्गात् । इति दिक् । विस्तरस्तु काव्यप्रकाशव्याख्यायां द्रष्टव्यम् । यथा वा मम—'मुग्धे ! स्मायं स्मायं हन्त किमेतान्निहंसि दैवहतान् । हननं सुकृतं सुकृती सुकृतिनि नहि कोऽपि निर्वक्ति' । अस्यार्थः—मुग्धे ! स्मायंस्मायं स्मित्वास्मित्वा दैवहतान् दैवेन पूर्वमेव निहतान् एतान्मादृशान्निहंसि हि यतः—हे सुकृतिनि धर्म्मशीले ! कोऽपि कश्चित् हननं हिंसाविधानं सुकृतं धर्म्मं न निर्वक्तिऽआह । अत्र च मन्दहासस्य निहननक्रियासाधनत्वेनाभिधानं कविप्रौढत्वमात्रनिष्पन्नमिति तेन मुग्धाऽसीत्येव निहंसीति पुनरपि सुकृतिनीत्युपरमेति च, मुग्धे इति सुकृतिनीतिपदाभ्यां द्योत्यते अलङ्कारेण वस्तुध्वनिः । यथावा मम—'स्मितसदृशानि सुमानि त्वमुखसुधया सुषिच्यमाणानि । प्राणप्रिये ! मनोभव आदाय जगन्ति संहरति ॥' अस्यार्थः—हे प्राणप्रिये ! मनोभवः कामदेवः त्वन्मुखसुधया तव मुखामृतेन सुषिच्यमाणानि स्मितसदृशानि सुमानि प्रसूनानि आदाय गृहीत्वा जगन्ति संहरति संहर्तुं प्रवृत्तः । अत्र च स्मितानां कुसुमसदृशत्वमभिधाय कुसुमानां पुनः स्मितसादृश्यमभिहितमित्युपमानस्योपमेयत्वेन प्रतीपं तेन च प्राणप्रिय इति पदेन तवातिप्रियस्यास्य रक्षणं त्वदधीनमिति वस्तु व्यज्यते । यथा वा मम—'त्वरितं पिधेहि वदनं वहिरथवा मैव जीविते ! यासीः । प्रस्फुरदमृतनिधानं पातुं समयः सदैवास्ते ।' अस्यार्थः—हे जीविते प्राणस्वरूपे ! वदनं त्वरितं पिधेहि अथवा वहिर्मैव यासीः याहि स्फुरत्पूर्णतया समुल्लसदमृतनिधानं चन्द्रं सुधासमुद्रं वा पातुं सदैव समय आस्ते न कदाप्यसमयः अमृतनिधेः पानाय । अत्र च वदनस्यामृतनिधानस्य च सादृश्यमनभिधाय वदनमात्रस्य वर्णनेन प्रसिद्धस्यामृतनिधानस्यापह्नवनमिति तन्मूलया कविप्रौढोक्तिसिद्धयाऽपह्नुत्या वदनस्य वाऽमृतनिधानस्य वा सादृश्यमनभिधाय वदनमेव पुनरभिधाय तयोरैकात्म्यमभिदधातीत्यर्थान्तरन्यासः । इति कविप्रौढोक्तिसिद्धेन वा त्वरितमिति पदमूलं जीवितइतिपदमूलं वा, यदि न वदनं पिधास्यसि अन्तरेव वा न स्थास्यसि तर्ह्यवश्यं कश्चित्तदिदं पास्यति इति निजकर्त्तृकतद्वदनकर्मकपानान्तराभिधानापह्नवनमिति ध्वन्यते । अथ वस्तुनाऽलङ्कारध्वनिर्यथा मम प्रागुदाहृते । 'अयि दयिते तव वदनं पापं पापं मनोभवो गर्जन् । स्मितमवलम्ब्य तमिस्रास्वपिहतकान्हन्त नो हन्ति ॥' इत्यत्र । यथा वा मम 'निशितशरधियार्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्यराले । निशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्थाः ।' अस्यार्थः—अनङ्गो अङ्गहीनोपि स्वयं मदनो निशितशरधिया निशितस्तीक्ष्णोऽसौ शर इति बुद्ध्या अराले कुटिले प्रमादोन्मेषशालित्वेन हिंसके तारुण्ये वयसि सति सुदृशोर्दृशि स्वबलमर्पयते सा च पुनर्दृष्टिर्यत्र निपतति तत्र व्यतिकरमहमहमिकया युगपदेव सङ्घं समुपेत्य "दृङ्मनःसङ्गसङ्कल्पा जागरः कृशता रतिः । ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशा दश॥" इत्युक्ता अवस्थाः समुन्मिषन्ति । अत्र व्यतिकरमेत्य समुन्मिषन्त्यवस्था इति वस्तुना परस्परविरुद्धा अपि दशावस्थाः समुन्मिषन्तीति विरोधाभासो व्यतिकरमितिपदद्योत्यः । यद्यपि मदनस्य कुसुमेषुत्वेन दृशः कमलत्वेनाभिधेयनिगरणमित्यतिशयोक्त्या विरोधालङ्कारध्वनिः । निशितशरधियेत्युत्प्रेक्षया च भ्रान्त्या वा विरोधः समुत्स्फुरति तथापि तथा वस्तुनाऽप्यलङ्कारो ध्वन्यत एवेति । यथा वा मम-'स्मरते

यथा यथेदं सुमुखि! मुखं ते तथा तथा हन्त। सहृदयहृदये मदनो निदधाति शरान्बलान्निशितान् ॥' अस्यार्थः—हे सुमुखि! यथा यथेदं ते तवेदं मुखं स्मयते तथा तथा हन्त मदनो बलात् सहसा सहृदयहृदयनिशितांस्तीक्ष्णान् शरान्निदधाति समर्पयतीति। अत्र च सुमुख्या मुखकर्तृकस्मयनानुक्रमेण मदनकर्तृकसहृदयहृदयाधिकारकनिशितशरकर्मार्पणं कविप्रौढोक्तिमात्रनिष्पन्नमिति वस्तुना मदन इति पदद्योत्य उपहासकर्तारमनिहत्य तदितरसहृदयहृदयनिहननस्य विरुद्धत्वाद्विषमः। यथा वा मम—'सुमुखि! मनोजो मदनः सुधानिधिर्वापि विश्रुतः परितः। इति तव वदनसुधानिधिरर्हति मदनात्मना स्थातुम् ॥' इति। अस्यार्थः—हे सुमुखि! मदनः सुधानिधिर्वापि मनोजः मनसो जातः 'शम्बरारिर्मनसिज' इत्यमरः। चन्द्रमा मनसो जात इति च परितो विश्रुत इतिवत्तव वदनसुधानिधिर्मदनात्मना स्थातुमर्हति। अत्र च वदनमेव सुधानिधिरिति रूपकेण इति तवेति काव्यलिङ्गेन वा वदनसुधानिधेर्मदनात्मनाऽभिधानेन सुधानिधिदर्शनस्य मदनोद्भावकापह्नवनादपह्नुतिरित्यर्हति इति पदप्राधान्येन द्योत्यते। यथा वा मम—'वदनं सुषमाभरणं पृथुले चपले च तेऽवले! नयने। इति सङ्गतं सुमुख्या न पुनर्मदमन्थरं गमनम् ॥' अस्यार्थः—हे अवले! ते तव वदनं मुखं सुषमाभरणं 'सुषमा परमा शोभा सैवाभरणं यस्यास्तादृशं च पुनश्चपले पृथुले च नयने शोभेते इति सुमुख्यास्तव सङ्गतं युक्तियुक्तं न पुनर्मदमन्थरं गमनं सङ्गतं तवाबलत्वादिति भावः। अत्र च तव सुमुख्या मुखं सुन्दरं नयने पुनः पृथुले अथ चपले इति वरं यदसि सुमुखी त्वम्। किन्तु त्वमबला बलविहीना मदं च बलाधीनमिति मदसम्बन्धाभावे निश्रीयमानेऽपि यत्तव मत्ताया इव गमनं तन्न शोभते इति स्वतः सम्भविना वस्तुना मदमन्थरस्य गमनस्य कारणाभावेऽपि तत्सद्भावकथनाद्विभावना। वदनस्य च सुषमाभरणोक्त्या चन्द्राभिन्नत्वेनाभिधानमिति रूपकम्। नयनयोः पुनश्चापलपृथुलत्वोक्त्या च मृगनयनसादृश्योक्त्या च निगरणात् रूपकातिशयोक्तिः। एवमेव गमनस्य मदमन्थरत्वमात्रोक्त्या गजसादृश्यं प्रतीयते न तु साक्षादभिधीयते इति तस्यापि निगरणात्सैव। अथ तत्र कारणोत्प्रेक्षाभावेऽपि तस्य प्रतीयमानोक्त्या हेतूत्प्रेक्षा इत्येषां संसृष्टिः। असौ च सुमुख्या इति पदद्योत्या अथ स्वतः सम्भविनाऽलङ्कारेण पदद्योत्यो वस्तुध्वनिर्यथा मम 'अयि दयिते! तव वदनं सुधानिधानं द्वितीयमभ्युदितम्। तदसहृदयमवलोक्य त्रस्येदिति निश्चितं स्थाने ॥' अस्यार्थः—अयि दयिते! द्वितीयमभ्युदितं सुधानिधानं चन्द्रो वदनम्। तत्तस्मादेव असहृदयरसिकं राहुमवलोक्य त्रस्येदिति निश्चितं स्थाने युक्तम्। 'युक्ते द्वे साम्प्रतं स्थाने' इत्यमरः। अत्र हि स्वतः सम्भविना रूपकेण "असहृदयपदमात्रमूलं ततो विरक्तिर्मयि पुनरनुरागस्तवोचित एवे" ति वस्तु व्यज्यते। यथावा—'क्षणदाऽसावक्षणदा वनमवनं व्यसनमव्यसनम्। बत वीर! तव द्विषतां पराङ्मुखे त्वयि सर्वमिति।' यस्यार्थः—हे वीर! बत कष्टं त्वयि पराङ्मुखे विमुखे सति तव द्विषतां सर्वं पराङ्मुखं विमुखं भवति। अत एव क्षणदा रात्रिरसौ अक्षणदा न क्षणमुत्सवं ददातीति तथाभूता अथ वनमवनं रक्षकमेवं व्यसनं विपद्व्यसनं द्यूतादिव्यसनापहारकम्। 'क्षणमुद्धव 'उत्सव' इति, 'व्यसनं विपदि भ्रंशे दोषे कामजकोपजे' इत्यमरः। अत्र हि स्वतः सम्भविना विरोधाभावस्योत्पादकेनार्थान्तरन्यासेन सर्वपदमूलम्। विधिरपि त्वामनुवर्तते इति व्यज्यते। अथ स्वतः सम्भविनालङ्कारेण पदमूलोऽलङ्कारध्वनिर्यथा 'तव पल्लवधरस्तन्वि! म्लानपद्मदलं प्रगे। इति श्रुत्वा नववधूः करोति मुखमानतम्।' अस्यार्थः—हे तन्वि! प्रगे प्रातःकाले तव पल्लवधरो म्लानपद्मदलमिति श्रुत्वा नववधूरानतं मुखं करोतीति। अत्र रूपकेण त्वया नितान्तं पत्युर्मुखं चुम्बितं तेन तस्य म्लानत्वमिति काव्यलिङ्गो व्यज्यते। यथा वा मम—'सुभगे! तव मुखमिन्दुर्मानसजातं वत प्रफुल्लयति। क्रीडनमेतत्तस्यैतस्य पुनः सङ्गतो मृत्युः।' अस्यार्थः—हे सुभगे! तव मुखेन्दुर्वत कष्टं मानसजातं कमलं कामं वा प्रफुल्लयति। एतत्तत्प्रफुल्लितत्वविधानं तस्य तव मुखेन्दोः क्रीडनं निरायाससाध्यमेतस्य मम पुनर्हतकस्य सङ्गतो मृत्युर्निकटमुपेतो मृत्युः। अत्र पुनर्मुखमिन्दुरिति रूपकेण इन्दुर्यदि मानसजातं कमलं प्रफुल्लितमपि म्लापयेदिति युक्तं न पुनरेवं किन्त्वसौ म्लानमपि मानसजातं (मदनं) प्रफुल्लयतीति विरोधो वर्तते पदद्योत्यस्तथा तस्य क्रीडा एतस्य मृत्युरिति रूपकेण विरोधसङ्गतेन मानसजातस्योद्दीपनमात्रविधानेन एतस्य सन्निहितो मृत्युर्भवतीति कारणमनभिधाय कार्यस्यमृत्युसन्निधानकथनस्य स्फुरणात्तस्य पुनस्तदभेदकथनेन ग्रस्तत्वाद्विभावना, पुनरिति पदेन ध्वन्यते। पुनरिति अनभिधाने रूपकस्यैवोल्लास इति दिक्। यथा वा मम—'वदनसुधानिधिरेष प्रमदे! न पुनस्त्वया तथा विदितः। तदिति सुधानिधिमपरं वीक्ष्य कृतार्था मुधा मनसि' अस्यार्थः—हे प्रमदे! एष वदनसुधानिधिः त्वया पुनस्तथा न विदितः। तदिति हेतोरपरं द्वितीयं तदपेक्षया चातुत्कृष्टं

"पश्यन्त्यसङ्ख्यपथगां त्वद्दानजलवाहिनीम्। देव! त्रिपथगात्मानं गोपयत्युग्रमूर्धनि ॥१८७॥"

इदं मम। अत्र पश्यन्तीति कविप्रौढोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण न केऽप्यन्ये दातारस्तव सदृशा इति व्यतिरेकालङ्कारोऽसङ्ख्यपदद्योत्यः।

---

सुधानिधिं वीक्ष्य मुधा कृतार्थो कृतकृत्या भवसि। अत्रापि पुना रूपकेण विशेषोक्तिः सुधापदप्राधान्येनाभिव्यज्यते। अथ कविप्रौढोक्तिमात्रसिद्धेन वस्तुना पदद्योत्यो वस्तुध्वनिर्यथा मम—'अपि दयिते! तव वदनं पायंपायं मनोभवो गर्जन्। स्मितमवलम्ब्य तमिस्रास्वपि हतकान्हन्त नो हन्ति॥' अत्र हि वदनस्य पानं तेन च मनोविकारमात्रस्याप्यनङ्गस्य गर्जनं स्मितस्य चावलम्बनं तेन च गाढान्धकारास्वपि रजनीषु हननमिति सर्वं कविप्रौढोक्तिमात्रनिष्पन्नशरीरं, तेन पुनः यदि स्ववदनमस्मान्पाययेत्तर्हि वयमपि गर्जन्तस्तं मदनं प्रति रोद्धुं समुत्सहेमहि। इति न इतिपदप्राधान्येन ध्वन्यते। अत्र च कस्यापि वियोगिनः स्वप्नमात्रार्पितशरीरां नायिकां स्मरप्रबुद्धस्योक्तिरिति विभावनीयम्। अत्र पुना रूपकातिशयोक्तिरपि व्यज्यते, वदनत्वेनाध्यस्तस्य सुधांशोः स्मितत्वेनाध्यस्तस्य च कुसुमस्य च गिरणात्। सा च गर्जन् हन्तीति पदद्योत्या।

अलङ्कारेणालङ्कारध्वनिमुदाहरति—'पश्यन्तीत्यादिना।

'देव राजन्! 'देवं हृषीके देवस्तु नृपतौ तोयदे सुरे' इति हैमः। **त्वद्दानजलवाहिनीं**—तव यद्दानं तस्य यज्जलं तद्वाहिनीं तस्य नदीरूपेण प्रवाहमिति यावत्। **असङ्ख्यपथगाम्** असङ्ख्या अगणिता ये पन्थानस्तान् गच्छतीति ताम्। असङ्ख्यधा भूत्वा सञ्चारकारिणीमित्यर्थः। 'अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः।'३।२।४८ इति डः। **पश्यन्ती** निरीक्षमाणा अत एव हीणेति यावत्। **त्रिपथगा** गङ्गा त्रीन् पथो गच्छतीति सा। **आत्मानं** मार्गत्रयेण प्रवाहिस्वरूपम्। **उग्रमूर्धनि** उग्रोऽशक्यमपि कर्तुं शक्तत्वेन भयङ्करः शिवस्तस्य मूर्धा जटाजूटसम्भृततयाऽति गह्वरं मस्तकं तत्र। **गोपयति** पिधाय रक्षतीति भावः। अत्र कस्यापि दानिप्रवरस्य राज्ञोऽभिनन्दनवर्णनम्। तथा पश्यन्तीति गोपयतीति क्रियाया हेतुवचनम्। तेन चैकत्वमिति काव्यलिङ्गालङ्कारः ॥१८७॥'

उदाहृतस्य पद्यस्यान्यदीयत्वभ्रमापनोदाय आह।

**इदमुदाहृतम्। मम** 'पद्यमिति शेषः।

उदाहरणीयं निरूपयति—अत्रेत्यादिना।

**अत्रोदाहृते पद्ये पश्यन्तीति** निरीक्षमाणे "लक्षणहेत्वोः क्रियायाः।" ३।२।१२५ इति शता "उगितश्च।" ४।१।६ इति ङीप् "शप्श्यनोर्नित्यम्। ७।१।८१ इति नुम्। **कविप्रौढोक्तिसिद्धेन** एतत्पदमूलकत्वेन कविप्रौढोक्तिसिद्धेनेत्यर्थः। दानजलस्य नदीरूपत्वं स्वतस्सम्भवतीति कवेः प्रौढोक्त्यैव सिद्धम्। **काव्यलिङ्गालङ्कारेण** तद्द्वारेति यावत्। **न। के अपि। अन्ये त्वद्भिन्नाः। तव** त्वया। "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्।"२।३।७२ इति तृतीयायाः पाक्षिकत्वात् षष्ठी। **सदृशाः** तुल्याः। **दातारो** दानिनः। **इति** इत्येवमुपमानान्तरात्त्यभावद्वारेतस्य वैलक्षण्याभिधानादिति भावः। **व्यतिरेकालङ्कारः**। आधिक्यमुपमेयस्योपमानादिति वक्ष्यमाणस्वरूप इति भावः। **असङ्ख्यपदद्योत्यः** असङ्ख्येति पदमात्रप्रकाश्य इत्यर्थः। 'अस्ती'ति शेषः। यद्यपि गोपयतीत्युत्प्रेक्षा तथोत्प्रेक्षणात्तन्मूला,तथा गोपनक्रियायाः कर्त्र्याः पश्यन्तीत्यादिपदानां साभिप्रायत्वात्परिकरोऽपि तत्पदमूलः। तथापि व्यतिरेकस्यालङ्कारान्तरापेक्षया चमत्काराधिक्येन नोत्प्रेक्षा न वा परिकरः। यथा वा मम—'अयि सुन्दरि! तव वदनं नित्यं पूर्णं सुधानिधिर्मत्वा। हन्त पतत्युपरिष्ठान्मध्येऽम्बुधि नित्यमेवासौ॥' अस्यार्थः। अयि सुन्दरि! सुधानिधिस्तव वदनं नित्यं पूर्णं मत्वा हन्त! उपरिष्ठान्मध्येऽम्बुधि समुद्रान्तर्नित्यमेवासौ सुधानिधिः पतति। अत्र च चन्द्रः प्रतिदिनं क्षयवृद्धिशीलं वदनं पुनर्नित्यमेव पूर्णं द्वितीयं सुधाया निधानमिति वदनस्योपमानत्वेन प्रसिद्धाच्चन्द्रमसस्तस्य व्यतिरेकस्तन्मूलया पुनर्मत्वा इति सूच्यमानयोत्प्रेक्षया हन्त पतत्युपरिष्टादिति विरोधस्तथैवं प्राणांस्त्यक्तुं प्रवर्तमानोऽपि जीवतीति। यद्वा—मम जन्माम्बुधिरिति जन्मभूमिमुपेत्य कान्तिर्वर्धनीयेति यतमाने नाभीष्टपूर्तिरिति कारणसद्भावेऽपि कार्यासङ्गतिर्नाम विभावना।

**एवमन्येष्वपि अर्थशक्तिमूलसंलक्ष्यक्रम ( व्यङ्ग्य ) भेदेषूदाहार्य्यम् ।**
**तदेवं ध्वनेः पूर्वोक्तेष्वष्टादशसु भेदेषु मध्ये शब्दार्थशक्त्युत्थोऽव्यङ्ग्यो वाक्यमात्रे भवन्नेकः ।**
**अन्ये पुनः सप्तदश वाक्ये पदे चेति चतुस्त्रिंशदिति पञ्चत्रिंशद्भेदाः ।**

---

एवं स्वतःसम्भवि वस्तुव्यङ्ग्याद्युदाहृत्य कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुव्यङ्ग्याद्युदाहरणानि तथैवावसेयानीत्याह–एवमित्यादिना ।

एवं यथोदाहृतेषु तथा । **अन्येषूदाहृतव्यतिरिक्तेषु अपि । अर्थशक्तिमूलसंलक्ष्यक्रम ( व्यङ्ग्य )** भेदेषु कविनिबद्धवक्तृप्रौढोक्तिसिद्धेष्विति यावत् । **उदाहार्यमुदाहरणं** बोध्यम् । तत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धवस्तुना वस्तुध्वनिर्यथा मम–'सखि ! सम्प्रति तव वदनं विकिरति हन्त ! स्मितं तत्किमिति । प्रकृतित एव सदा यच्छारदपूर्णेन्दुमानहरम् ।' अस्यार्थः–हे सखि ! यत् प्रकृतितः स्वभावादेव शारदपूर्णेन्दुमानहरं शरत्कालिकस्य पूर्णस्य चन्द्रमसो मानापहारि दृष्टमिति शेषः । तत् स्मितं ( कर्म ) तव वदनं 'कर्तृ' किमिति हन्त सम्प्रति न विकिरति । अत्र च कविनिबद्धा काचित्सखी सङ्केतस्थले नायकमप्राप्य प्रत्यागच्छन्तीं हसन्तीं प्रौढोक्त्याहेति । अन्यथा स्मितस्य विकीर्णत्वं वदनस्य पुनर्विकिरतीति क्रियायाः कर्तृत्वं शारदपूर्णेन्दोर्मानापहारित्वं च स्मितस्य सर्वकालिकत्वमिति कथं सङ्घटेत । तेन च स्मितं न सम्प्रति विकिरतीति वस्तुना नायकोऽद्य न लब्धस्तत एव खण्डितैवमसीति वस्तु सम्प्रति इतिपदद्योत्यम् । अथ वस्तुनालङ्कारध्वनिर्यथा मम–'सलिले तपदरविन्दं ग्लावं वा लीयमानमभ्रेषु । सुमुखि ! कृतार्थय मैवं यामो यामोऽपयात्येषः ।' अयि सुमुखि ! सलिले जले तपस्तपः कर्त्तुं प्रवर्तमानमरविन्दं कमलमभ्रेषु मेघेषु लीयमानं धावित्वा धावित्वा तिरोभवन्तं ग्लावं ग्लानिधर्म्माणं चन्द्रं वा मैवं कालं 'यापयित्वे' ति शेषः । कृतार्थय कृतार्थं कुरु यामः स्वयमेव तत्सन्निधावुत्थाय गच्छामः । एष यामस्तदुपलक्षितः समयोऽपयाति मृषैव व्यतीतो भवतीति । अत्र च कविनिबद्धायाः कस्याश्चिद् दूत्या मानवशंवदां नायिकां प्रति यद्यत्रैव स्थास्यामस्तर्हि समयस्त्वसौ निर्यास्यत्येव किन्तु औदासीन्येन सुमुख्यास्तव मुखं ग्लास्यति । म्लाने च तस्मिंस्त्वत्सदृशं भवितुं तपसे यतमानं कमलं कृतार्थितं भविष्यति सम्प्रति च तत्सदृशत्वमनुपेत्य सुधानिधिः सुधानिधिरेवेति प्रतिष्ठाभङ्गं भाविनं विचार्यैव म्लायति लज्जया चाभ्रान्तः क्वापि निलीय स्थातुमिच्छति चन्द्रमाः सोऽपि कृतार्थो नो भविष्यतीति स्वयमेव तथा वयं यतामहे । यथैनयोः कृतार्थता न स्यात्तथा यतनं च नायकमुपेत्य चिरसम्भृतमनोरथपूर्तिविधानमतो वयं झटिति यामः अन्यथा च समयोऽयं दुर्निरोध्य एवेत्युक्तिः । प्रौढा अन्यथा तथाऽभिधानं न सङ्घटेतेति तथाभूतेन वस्तुना मुखं चन्द्रश्चेत्युभावपि न तव मुखसदृशाविति व्यतिरेकः कृतार्थयेति पदद्योत्यः । अलङ्कारेण वस्तुध्वनिर्यथा मम–'वदनसुधानिधिरयि सखि ! सुस्मितकलया सुधारसाप्लुतया । कस्य निषिच्यानङ्गं साङ्गं कर्त्तुं समुल्लसति ।' अयि सखि ! वदनसुधानिधिस्त्वन्मुखरूपश्चन्द्रः सुधारसेन सुधाया इव सुधा वद्रसस्तेन 'तत्र तस्यैव ।'५।१।११६ इति वतुः । आप्लुताऽत्यन्तं पूर्णा तया इति सुधारसाप्लुतया सुस्मितकलया कस्य सुकृतिनोऽनङ्गमृतप्रायं मदनं सुस्मितम् अत्यन्तं मृदुलो रुचिरो हासस्तद्रूपया कलया निषेकसाधनयन्त्रविशेषेणेति यावत् । निषिच्य साङ्गं सशरीरं कर्त्तुं समुल्लसति विकसतीति । अत्र च कविनिबद्धा कापि सखी वक्त्री तस्याश्च वदनरूपत्वेन सुधानिधेः सुस्मितरूपत्वेन च कलायाः सुस्मितस्य च सुधारसत्वेन तथानङ्गस्यापि साङ्गत्वकृतेन तत्कृतनिषेककर्तृत्वेन वदनसुधानिधेरभिधानं प्रौढमिति तत्सिद्धेश्च न रूपकेण कोऽपि प्रच्छन्नोऽत्र तद् दृष्ट्वैवं स्मयसे इति वस्तु कस्येतिपदद्योत्यम् । अलङ्कारेणालङ्कारध्वनिर्यथा मम–'मध्येऽम्बु तपति कमलं निपतति मध्येऽब्धि चन्द्रमा नित्यम् । सुभगे ! तव मुखमेकं जयति विकाशं दधन्नितराम् । हे सुभगे सौभाग्यवति ! स्वाधीननायके इति यावत् । कमलं मध्येऽम्बु जलस्य मध्ये तपति चन्द्रमा मध्येऽब्धि समुद्रस्य मध्ये न तु कस्मिन्नेवाह्नि निपतति एकं तव मुखं नितरां विकाशं दधज्जयति । अत्र च खण्डितायाः कस्याश्चिदुक्तिरिति ; तस्याश्च प्रौढत्वं कमलकर्तृकजलान्तस्तपश्चर्यायाश्चन्द्रकर्तृकस्य च प्रतिदिवसं समुद्रान्तरात्मपातस्य साक्षात्तयाऽभिधानेनेति तत्सिद्धेन काव्यलिङ्गेन व्यतिरेक एक इति पदद्योत्यः ।

अथैवमुदाहृतान् ध्वनेः प्रभेदान्दृढप्रतिपत्तये स्मारयति–**तदेव**मित्यादिना ।

तत्तस्मात् । **एवम्** उदाहृतप्रकारेण । **ध्वने**र्ध्वनिसम्बन्धिष्वित्यर्थः । **पूर्वोक्तेषु** पूर्वमुदाहृतेषु । **अष्टादशसु भेदेषु मध्ये शब्दार्थशक्त्युत्थः** । शब्दार्थयोः शक्तिस्तस्या उत्तिष्ठतीति शब्दार्थोभयशक्तिमूल इत्यर्थः । **व्यङ्ग्यो** व्यङ्ग्य-

२९३　प्रबन्धेऽपि मतो धीरैरर्थशक्त्युद्भवो ध्वनिः ॥ २८८ ॥

प्रबन्धे महावाक्ये अनन्तरोक्तद्वादशभेदोऽर्थशक्त्युत्थः　। यथा महाभारते गृध्रगोमायुसंवादे-
"अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसङ्कुले । कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥ १९८॥
न चेह जीवितः कश्चित्कालधर्ममुपागतः । प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी॥ १९९॥"

---

ध्वनिरिति यावत् । वाक्यमात्रे वाक्य एव । भवन्स्फुरन् । एक एकप्रभेदः । अन्ये । पुनः । सप्तदश ध्वनेर्भेदा इति शेषः । वाक्ये । पदे । च । सम्भवन्ति इति शेषः । इतीत्यस्माद् हेतोः । चतुस्त्रिंशच्चतुरधिकास्त्रिंशत्संख्याकाः । इत्येवं सर्वे मिलित्वा-पञ्चत्रिंशत् । भेदा 'जाता' इति शेषः । अत्रेयं व्यवस्था-तत्र तावत् ध्वनिर्लक्षणमूलोऽभिधामूलश्चेति द्विविधः । तत्राप्याद्यो विवक्षितवाच्याऽभिधेयो द्वितीयः पुनर्विवक्षितान्यपरवाच्यः । अथाविवक्षितवाच्यः-अर्थान्तरसङ्क्रमितवाच्यः, अत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः । एवं पुनर्विवक्षितान्यपरवाच्योऽसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः । तत्राऽसंलक्ष्यक्रमव्यङ्ग्यो रसभावादिस्वरूप एकविध एव रसभावादीनामसङ्ख्यत्वादनन्ताद्वा । इत्येवमर्थान्तरसङ्क्रमितवाच्योऽत्यन्ततिरस्कृतवाच्योऽसङ्लक्ष्यक्रमव्यङ्ग्यश्चेत्यास्तां ध्वनेस्त्रैविध्यम् । अथ संलक्ष्यक्रमव्यङ्ग्यः शब्दशक्त्युद्भवोऽर्थशक्त्युद्भवः शब्दार्थशक्त्युद्भवश्चेति त्रिविधः । तत्राप्याद्यः स्वतःसम्भवी, कविप्रौढोक्तिसिद्धः ।' कविनिबद्धप्रौढोक्तिसिद्धश्चेति त्रिविधः । एवं पुनर्द्वितीयः स्वतःसम्भवी, कविप्रौढोक्तिसिद्धः, कविनिबद्धप्रौढोक्तिसिद्धश्चेति त्रिविधः । अथैवं षड्विधो वस्तुनाऽलङ्कारेण च वस्तुस्वरूपोऽलङ्कारस्वरूपश्चेति त्रिविधत्वं प्रतिपाद्यमानो द्वादशविधः । तत्र शब्दार्थशक्त्युद्भवमन्तरेण सर्वेऽप्यन्ये ध्वनेः सप्तदश प्रभेदा वाक्ये पदे च सम्भवन्ति,शब्दार्थशक्त्युद्भवः पुनर्वाक्यस्य एवेति सप्तदशद्विगुणिताश्चतुस्त्रिंशदेकेनापरेण पुनः सम्मिलिताः पञ्चत्रिंशदिति ।

अथैवं ध्वनेः पञ्चत्रिंशद्भेदानुदाहृत्य भेदान्तरोदाहरणान्याह-२९३ प्रबन्धे इत्यादि ।

२९३ अर्थशक्त्युद्भवो 'वस्तु वाऽलङ्कृति'रित्युक्तदिशा द्वादशात्मेति शेषः । ध्वनिः । प्रबन्धे महावाक्ये तन्निष्ठ इति यावत् । अपि पदे वाक्ये च निष्ठितस्त्वस्त्येवेति यावत् । धीरैः प्रबन्धमार्मिकैः । मतः स्वीकृतः ॥ २९३ ॥

ननु को नाम प्रबन्धः,योगशक्त्या यस्यानेकपर्य्यायवाचित्वोपपत्तिरित्याशङ्क्याह-प्रबन्धे । निरुक्तलक्षणे महावाक्ये सङ्घटितनानावाक्यकदम्बरूप इत्यर्थः । ननु-अर्थशक्त्युद्भव एकविध एवात्र गृह्यते? आहोस्विद् द्वादशविधः ? इत्याशङ्क्य स्पष्टयति । अनन्तरोक्तद्वादशभेदोऽनन्तरं किञ्चित्पूर्वमेव न त्वत्यन्तं व्यवधायोक्ता द्वादशभेदा यस्य स इत्यर्थः । अर्थशक्त्युत्थोऽर्थशक्त्युद्भवः । ज्ञेय इति शेषः ।

अथोदाहर्तुमुपक्रममाण आह यथेत्यादिना ।

यथा यद्वत्तथेति शेषः । यथा स्वतःसम्भविना वस्तुना प्रबन्धप्रकाश्यो वस्तुध्वनिस्तथेति भावः । महाभारते स्वनाम्नैव प्रसिद्धे तदन्तर्गते शान्तिपर्वणि आपद्धर्माभिधानप्रसङ्गे इति यावत् । गृध्रगोमायुसंवादे गृध्रा रात्र्यन्धाः पक्षिविशेषाश्च, गोमायवः प्रायो नक्तंप्रभावाः जम्बूकाश्चेति तेषां संवादे । अलमित्वति शेषः । अस्मिन् दृश्यमाने गृध्रगोमायुसङ्कुले गृध्राश्च गोमायवश्चेति तैः सङ्कुलं तत्र । कङ्कालबहुले कङ्कालाः शरीरास्थीनि बहुला यत्र तत्र । अस्थिप्राय इत्यर्थः । 'स्याच्छरीरास्थि कङ्काल' इत्यमरः । अत एव घोरे दारुणे । सर्वप्राणिभयङ्करे सर्वे ये प्राणिनो जन्तवस्तेषां भयङ्करस्त्रासजनकस्तत्र । घोरभयङ्करशब्दयोरेकार्थकत्वेन परस्परं च तयोर्विशेष्यविशेषणभावेनोपस्थाने 'विशिष्टवाचकानां पदानां सति विशेषणरामत्रधाने विशेष्यमात्रपरत्वमि'ति नयेन घोरशब्दस्य अत्यन्तमिति भयङ्करशब्दस्य न यथाश्रुतार्थत्वमवसेयम् । श्मशाने तत्रत्यप्रदेश इति यावत् । स्थित्वा । अलं पर्य्याप्तम् । यतः-इहास्मिन्संसारे । यदि । प्रियः । वा । द्वेष्यः द्वेषार्हः शत्रुः । वा । कश्चित्कोऽपि । कालधर्म्मं मरणम् । उपागतः प्राप्तः । न च नं पुनः । जीवित आसीदिति शेषः । प्राणिनां जन्तूनाम् । गतिः क्रमः स्वभाव इति यावत् । एवेति शेषः । ईदृशी भवतीति 'स्वभावो दुरतिक्रम' इति नियमात् ॥ १९८ ॥ १९९ ॥'

इति दिवाप्रभवतो गृध्रस्या श्मशाने मृतं बालमुपादाय तिष्ठतां तं परित्यज्य गमनमिष्टम्।
'आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत साम्प्रतम्। बहुविघ्नो मुहूर्तोऽयं जीवेदपि कदाचन॥२००॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम्। गृध्रवाक्यात्कथं मूढास्त्यजध्वमविशङ्किताः॥२०१॥'
इति निशि समर्थस्य गोमायोर्दिवसे परित्यागोऽनभिलषित इति वाक्यसमूहेन द्योत्यते। अत्र स्वतः सम्भवी व्यञ्जकः।

---

अत्र दिवा प्रभवतो गृध्रस्योक्त्या झटित्येव यावद्दिवसं बालमुपादाय प्रयास्यन्त्येते अहं पुनरेनं भक्षयिष्यामि इत्यभिधानरूपवस्तु प्रबन्धगतं व्यज्यते इत्याह-**इती**त्यादिना।

**इती**त्येवम्। **दिवा** दिवसे। **प्रभवतः** प्रभूभवतः। **गृध्रस्य** पक्षिराजस्य। **श्मशाने** श्मशानभूमौ। **मृतं** गतप्राणम्। **बालम्।** **उपादाय** गृहीत्वा। **तिष्ठतां** श्मशानमपरित्यज्य स्थितिं कृतवतां जनानाम्। **तं** मृतं बालम्। **परित्यज्य** श्मशान एव त्यक्त्वा। **गमनं** श्मशानभूमेः स्वगृहं प्रति यानम्। **इष्ट**'मभिव्यज्यते' इति शेषः। अत्रायम्भावः-मृतं बालं श्मशानभूमिमानीयापि स्नेहवशादुत्सङ्ग एव निधाय रुदतस्तं त्यक्त्वा च स्वमन्दिरमप्रत्यागच्छतः दिवसं पुनरेवमेव व्यतीयमानमवलोक्य तन्मांसं झटिति भक्षितुकामेन गृध्रेणालोचितं यद्येते कियन्तं समयमत्रैव स्थास्यन्ति तर्हि भविष्यति दुष्टाया रात्रेरवतारः तस्मिन्सति च कृतन्मांसलाभः शृगालादीनां मुखमुपगतस्य सर्वथैव पुनर्लाभासम्भवः, अत एव मनुष्येयं येन-एते झटित्येव इतः प्रसरेयुरित्यालोच्यैवाऽभिहितं तेनापि, जनानां श्मशानात्पुनर्जीवाशा न सञ्चच्छते इतः पुनर्गमनासम्भवादिति। एतत्पुनः स्वतःसम्भव्येवेत्यनेन इतो झटिति दिवैव निवर्त्तन्तामिति व्यज्यते। इति।

एवं गृध्रसंवादे वस्तुध्वनिमुदाहृत्य गोमायुसंवादेऽप्युदाहरति-'आदित्य...' इत्यादिना।

'हे **मूढाः** मूर्खा जनाः! **अयं** प्रत्यक्षं दृश्यमानः। **आदित्यः** सूर्यः। न दितिः खण्डनं यस्यास्तस्या अदितेरपत्यं पुमानिति तथोक्तः। 'आदित्यो भास्करो देव' इति विश्वः। **स्थित** अस्तीति शेषः। इति सम्प्रति रात्रिञ्चरेभ्यो न भयङ्कार्यम्। **साम्प्रत**मिदानीम्। **स्नेहं** पुत्रस्यास्य वियोगकालिकं तत्परित्यागाऽसहिष्णुत्वरोदनादिरूपं प्रेम। **कुरुत** विधत्त। यद्वा-स्नेहं कुरुतेति साम्प्रतं युक्तम्। **अयं** सन्ध्यासमयासन्नः। **मुहूर्त**'स्तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रिया'मित्युक्तस्वरूपः समयविशेषः। **बहुविघ्नो** 'बहवो विघ्ना यत्र सः। भूतावेशादिरूपविघ्नबहुल इत्यर्थः। अस्यापगमे च भूतावेशादिरूपग्रहग्रस्तत्वादिविघ्नानां स्वतोऽपगमस्तस्मिन्सति च कदाचिद्युष्माकं भाग्यवशान्मुहूर्तस्य च भव्यभावुकत्वेनेति शेषः। **कदाचन।** **जीवेत्** इति सम्भाव्यते। **अमुम्।** **कनकवर्णाभं** सुवर्णवर्णप्रतिमम्। अन्यथा तद्गतकाठिन्यस्यापि प्रतिपत्तिः स्यात्। **अप्राप्तयौवनं** न प्राप्तं यौवनं येन तादृशम्। **बालं** यौवनाप्राप्तौ परदाराभिमर्शासम्भवादायुःक्षीणत्वस्याऽपि असम्भवग्रस्तत्वम्। **गृध्रवाक्यात्** गृध्रस्य मांसप्रियस्यात एव दुष्टान्तःकरणस्य वाक्यात्। **मूढाः** कर्तव्याकर्तव्यममीमांसित्वैव। **अविशङ्किता** निर्भयाः। **कथम्।** **त्यजध्वं** परित्यजत॥२००॥२०१॥'

अत्र व्यङ्ग्यं निर्दिशति-इतीत्यादिना।

**इती**त्येवम्। **निशि** रात्रौ। **समर्थस्य**'भक्षितु'मिति शेषः। **गोमायोः** शृगालस्य। **दिवसे।** **परित्यागः** 'बालस्ये'ति शेषः। **अनभिलषितो**ऽनभिमतः। **इति।** **वाक्यसमूहेन** निरुक्तेन'आदित्योऽय'मित्यादिनेत्यर्थः। **द्योत्यते।** इदमुक्तम्-अत्र नक्तं प्रभवतः शृगालस्योक्त्या यावद्दिनमत्र यद्येते तिष्ठेयुस्तर्हि अवश्यं बालं भक्षितुं प्रभविष्यामि सम्प्रति तु गृध्रादीनामेव प्रभाव इति यावत्। न खल्वस्य दिने परित्यागः साम्प्रतं, किन्तु नक्तमेवेति व्यज्यते। **अत्रा**स्मिन्वस्तुध्वनौ **स्वतःसम्भवी** अर्थ इति शेषः। **व्यञ्जकः** कारणत्वेनावसेयः। अत्रायम्भावः-सन्ध्या यावन्न भवेत्तावन्न रात्रिञ्चरेभ्यो मनागपि भयं विधेयम्। आदित्ये भगवति प्रतपति सति तेषां भयदातृत्वाऽनवसरात्। एष पुनर्बाल इति नैवमरण्यप्राये प्रदेशे परिहातव्यः, न चायं मृत इति निश्चितम्। तथा सति कनकवर्णाभत्वस्यैकान्ते सम्भवात्। प्रत्युत तदभावस्यैव सम्भवात्। न चायुःक्षयकारणमपि किञ्चित्प्रतीयते यौवनाऽप्राप्ततया परदाराभिगमनासम्भवे आयुःक्षीणत्वाऽयोगात्, न चेदमप्याशङ्कनीयं कुतोऽयं निरुच्छ्वासो जडभूतश्चेति सन्ध्यायाः प्रवर्तमानाद् भूतावेशादिनाऽपि सम्भवादिति। मुहूर्ते पुनर्जीवितताशा प्रतीक्ष्यतामिति स्वतःसम्भविनाऽभिधानेन (वस्तुना) यावन्न रात्रिस्तावदत्रैव स्थितिर्विधेया पुनर्यथाऽऽगतास्तथा गन्तव्यमिति वस्तु व्यज्यते।

एवमन्येष्वेकादशभेदेषूदाहार्यम् ।

एवमाद्यप्रभेदमुदाहृत्य भेदान्तरोदाहरणप्रसङ्ग आह एवमित्यादि ।

एवं यथाऽत्र तथा। अन्येषु एतद्भिन्नेषु। एकादशभेदेषु तद्रूपेषु ध्वनिषु सत्सु। उदाहार्यमवधेयमिति शेषः। तत्र तावत्स्वतःसम्भविना वस्तुनाऽलङ्कारध्वनिर्यथा श्रीमद्भागवते वामनावतारवर्णने। अत्र हि श्रीपतिर्वामनस्वरूपेणावतरदित्यनेन—'अभूद्वामनः श्रीशः स्वयं बलिमखोत्सवे। सर्वे एवाऽर्थिनो हन्त सम्भवन्ति हि वामनाः॥' इति दृष्टान्तः। श्रीपतिरपि यत साक्षाद्वामन आसीद्यदाऽर्थयामास। किं पुनरन्ये स्युर्यदि याचनमात्रोद्यताः दीना इति वाऽर्थान्तरन्यासः प्रबन्धे परिस्फुरति। अलङ्कारेण वस्तुध्वनिः पुनर्यथा श्रीमद्भागवते ययातिना शर्मिष्ठायै स्वावस्थावस्तुस्वरूपेण निर्दिष्टेति तत्र तेन रूपकातिशयोक्त्यलङ्कारेण—विषयभोगवासनैव महतोप्यनर्थताया आपादिकेति व्यज्यते। अलङ्कारेणालङ्कारध्वनिर्यथा श्रीमद्भागवते ऋषभदेवोपाख्याने मलादिदूषितशरीरस्यापि ऋषभदेवस्य योजनान्तं सुरभिरुतस्थे इत्यतिशयोक्त्या महात्मनां सर्वमपि सम्पद्यते इत्यर्थान्तरन्यासोऽभिव्यज्यते। कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुव्यक्तिर्यथा महावीरचरिते वाली स्वयं रामेण समगम्यत इति वस्तुना मुमूर्षुः स्वयं मृत्युमाह्वयतीति वस्तु व्यज्यते। अलङ्कारध्वनिर्यथा नैषधीयचरिते निगृहीतपरिमुक्तस्य हंसस्य राजहंसस्य स्वयं पुनर्नलहस्तयोः संवादवर्णनमित्यनेन सुकृतिनः कृतज्ञा भवन्तीति अर्थान्तरन्यासो व्यज्यते। यथा वा वाल्मिकीये रामायणे मारीचागमने रामस्य तत्र हि—'प्रायः समापन्नविपत्तिकाले धियो जनानां मलिना भवन्ती' त्यर्थान्तरन्यासः। अलङ्कारेण पुनर्वस्तुध्वनिर्यथा श्रीमद्भागवते पुरन्दरोपाख्याने रूपकाव्यतिरेकेन संसारः सर्वथैव निःसार इति वस्तु व्यज्यते। अलङ्कारेणालङ्कारध्वनिर्यथा श्रीमद्भागवते यदुकुलसंहारवर्णने एकेनैव प्रहारेण यदुवीराणां संहार इति शक्त्या—'सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।' इति अर्थान्तरन्यासो व्यज्यते। कविनिबद्धप्रौढोक्तिसिद्धेन वस्तुना वस्तुनोऽभिव्यक्तिर्यथा श्रीमद्भगवद्गीतायामर्जुनेन—ममैते सुहृदः कथमेतानेव विनिहन्यां विनिघ्नन्हि कुलघ्नः स्यामिति। नाहमेतान्निहनिष्यामि इति भगवता पुनर्न कस्यापि कश्चित् सुहृत् स्वयं सर्वे न स्वतो भिन्नं किञ्चिदिति न कस्यापि कश्चिन्निहन्ता निहन्तुं योग्यो वा भवितुमर्हति इत्युपदिष्टम्। अत्र हि कवितानिबद्धो भगवदर्जुनसंवादस्तत्प्रौढोक्तिः—'गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते। निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन॥ पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः। कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्॥ अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।' इत्यादिरूपा, एतन्मूलकेन च सुहृदामपकारिणामपि अन्याय्यं हननम्। नात्मनः कदापि हननं सम्भवति तन्निमित्तनिबन्धनः शोकोऽपि अकिञ्चित्कर एव। किन्तु वस्तुतः सुकृतसाधनसम्पत्स्वरूपस्य स्वर्गादेरपि हानिहेतुः। इत्यनेनाऽभिधानरूपेण वस्तुना सुहृद्वियोगकारणीभूतप्रेमस्नेहाऽन्यतरनिबन्धनो दुःसहो दुःखतया परिणामी शोकः केवलं यावदज्ञानमिति वस्तु प्रबन्धप्रकाश्यमभिव्यज्यते। वस्तुनाऽलङ्कारध्वनिर्यथा श्रीमन्महाभारते—गजग्राहकथाप्रस्तावनायां तत्र हि देवलशापेन गन्धर्वराजौ गजो ग्राहश्च बभूवतुः, इत्यनेन भीष्मप्रौढोक्तिसिद्धेन महात्मनां कथमपि अवज्ञाता न कदाचित् सुखमेधते। यथा गन्धर्वराजावित्युपमाऽभिव्यज्यते। अलङ्कारेण पुनर्वस्तुध्वनिर्यथा तत्रैव मूषकसिंहगाथाप्रस्तावे—अत्र हि युधिष्ठिरेण लघुर्महत्पदं प्राप्य किमिव भवतीति पृष्टेन भीष्मेण कस्यापि मुनेर्मूषक आसीत्प्रसादभाजनं, स च तस्य कृपया सिंहो बभूव, भूत्वा पुनः सिंहः कोपेन तस्यैव मूषक एव जात इति यथा मूषकः सिंहोपि भूत्वा मूषक एवासीत्तथा 'लघुरपि महत्पदम्प्राप्तोऽवहेलितः पुनर्लघुतामेव प्रतिपद्यते' इत्युपमया महानेव महान्भवितुमर्हति लघुः कदाचित्तथा भवेदपि किन्तु पुनः पततीति सर्वथा प्रमादावद्यजातं परिहातव्यमिति वस्तु व्यज्यते। अलङ्कारेण पुनरलङ्कारध्वनिर्यथा तत्रैव श्रीकृष्णादीनां माधवं विजेतुं प्रयाणप्रस्तावे श्रीकृष्णेन समं भीमार्जुनौ ब्राह्मणौ भूत्वैव जरासन्धं विजेतुं प्रस्थितौ, जरासन्धेन समं पुनः सन्नतास्ते युद्धं देहीत्यर्थयित्वा विजितवन्तस्तमित्युत्प्रेक्षया वैशम्पायनप्रौढोक्तिनिष्पन्नस्वरूपया दीनतयाऽपि कार्यं सम्पादयितुं प्रवृत्तोऽपि शत्रुसविधे न वस्तुतया दीन इव भवेदित्युत्प्रेक्षा—यथा श्रीकृष्णादयो मागधसविधे इत्युपमा वाऽभिव्यज्यते—यथा वा कादम्बर्यां शुकनासिते मातङ्गस्य शबरसेनापतेरागमनसमये तत्रोपमया विरोधाभासेन च 'अपरो मृत्युरेवैष' इति रूपकं व्यज्यते—यथा वा रामायणे सीताविकलेन रामेण पम्पाया नायिकात्वेन वर्णनप्रस्तावे तत्र हि रामप्रौढोक्तिसिद्धेन रूपकोत्प्रेक्षयाऽलङ्कारेण वा सीतां ध्यायमानस्य रामस्य सर्वतः सीतैव दृष्टिगोचरीभूताऽऽसीत्। स्थाने च ध्यानानुकूलप्रतीतिर्भवतीति रूपकातिशयोक्तिद्वारा सर्वं ध्यानानुकूलं सम्पद्यते इति रूपकं विशेषोक्तिर्वाऽभिव्यज्यते।

**एवं वाच्यार्थव्यञ्जकत्वे उदाहृतम् । लक्ष्यार्थस्य यथा-'निःशेषच्युत'मित्यादि—**

---

लक्ष्यार्थव्यङ्ग्यार्थयोरप्येवं व्यञ्जकत्वमुदाहर्तुकाम आह-**एवमि**त्यादि ।

**एवं** निरुक्तदिशा । **वाच्यार्थव्यञ्जकत्वे** वाच्यार्थस्य व्यञ्जकत्वं तस्मिन्सति । **उदाहृतं** व्यङ्ग्यमिति शेषः । अथ क्रमप्राप्तं लक्ष्याऽर्थव्यङ्ग्याऽर्थयोरपि व्यञ्जकत्वे व्यङ्ग्यमुदाहर्तुं प्रवृत्त आह-**लक्ष्यार्थस्य** व्यञ्जकत्वे सतीति शेषः। **यथा** 'व्यङ्ग्य'मिति शेषः। **'निःशेषच्युत'मित्यादि** । 'बोध्य'मिति शेषः । अत्राऽयमभिप्रायः-पद्यार्थस्तु स्फुटीकृत एव प्राक् । अत्रेदमन्वेषणीयम्-कोऽत्र लक्ष्यार्थः ? तस्य व्यञ्जकत्वे किं व्यङ्ग्यं स्फुरतीति । अत्र वापीं स्नातुमितो याता न भवती किन्तु तस्यान्तिकमिति विपरीतं परिणमन् अत एव सुचिरं तेन समं विहृत्य समायाताऽसीति व्यङ्ग्यार्थमवतारयति । अथ स्वतःसम्भविना लक्ष्यार्थरूपेण वस्तुनाऽलङ्कारध्वनिर्यथा-'बधान द्रागेव द्रढिमरमणीयं परिकरं किरीटे बालेन्दुं नियमय पुनः पन्नगगणैः । न कुर्यास्त्वं हेलामितरजनसाधारणधिया जगन्नाथस्याऽयं सुरधुनि! समुद्धारसमयः ।' अत्र हि जगन्नाथ इति वाच्योऽर्थः प्रकृतानुपयुक्तपापविशिष्टत्वेन लक्ष्यते असौ पुनरितरजनसाधारणोनायं पापीति जगन्नाथो जगन्नाथ इव पापीयानिति व्यञ्जयत्यनन्वयम् । अलङ्कारेण पुनर्वस्तु ध्वनिर्यथा मम-'शान्तोऽसि दान्तोऽसि सुहृद्वरोऽसि त्वमेक एवासि दयानिधानम् । परोपकर्ता त्वमनन्य एव एवं निरर्थं भुवनत्रयेऽपि ॥' एवं निरर्थं भुवनत्रयेऽस्य परोपकर्ता न परस्त्वयाऽस्ते । इत्येक एवासि विधातृसृष्टौ दयानिधानं त्वमेव' इति । अत्र हि नितान्तं निरर्थमपकारिणं प्रत्युक्तिरिति वाच्योऽर्थः । प्रकृतेऽनुपयुज्यमानो विपरीतलक्षणया विपरिणमति । तत्सिद्धेन पुनरनन्वयेन हन्त यद्य निरर्थमपकृतम्-अथापि मधुर एवाहं भाषे न पुनः परुषमितीदृशोऽपि मयि दुर्धियस्तव पापीयस्त्वं केन वक्तुं न शक्येतेति व्यज्यते । यद्वा-विधातृसृष्टौ त्वमेतादृश इति वरम् । यद्यपरोऽपि त्वादृशोऽभविष्यत्तर्हि किं लोकदुःखमुदवर्धिष्यतेति किं केन वक्तुं शक्येत इति व्यज्यते । अलङ्कारेण पुनरलङ्कारध्वनिर्यथा मम-अलकतमः परिपीतं सुस्मितसुषमापुरस्कृतं मधुरम् । को न सुधानिधिसहजं सुमुखि ! मुखं हन्त सम्मनुयात् ॥' अस्यार्थः-अलकयोस्तमोऽलक एव तमो राहुरिति वा तेन परिपीतं सुषमा परमा शोभा तया पुरस्कृतं मधुरं मिष्टं रमणीयं वा मुखं सुधानिधिसहजं कोन सम्मनुतेऽपि तु सर्व एवेति। अत्रोत्प्रेक्षया रूपकं समासोक्तिश्च व्यज्येते । कविप्रौढोक्तिसिद्धेन लक्ष्यवस्तुना वस्तुध्वनिर्यथा मम-'अयि सुभगे! तव नयने कृतार्थयेते अपि क्षणं यं यम्। हन्त! स एव न चाऽन्यो भुवनत्रितयेऽपि धन्यमूर्धन्यः ॥' अत्र हि कृतार्थयेते इति स्वयं बाधितः सन् पश्यत इति परिणमन् तव दृष्टिपातोऽनेकसुकृतैकलभ्य इति व्यञ्जयति । वस्तुनाऽलङ्कारध्वनिर्यथा मम-'विकसितसुस्मितरुचिरं मधुरिमसुरभितदिगन्तमुल्लसितम् । मध्ये भुवनत्रितये सुन्दरि ! तव सङ्गतं वदनम् ॥' अत्र हि विकासस्य सुरभेरुल्लासस्य च कुसुमधर्मस्य च स्मिते मधुरिमणि वदने च बाधितत्वात् । स्मितादिपदैः कुसुमधर्मा लक्ष्यन्ते तैश्च मुखस्य साधर्म्यमुपस्थाप्यते इत्युपमालङ्कारो लक्ष्यवस्तुना व्यज्यते । अलङ्कारेण वस्तुध्वनिर्यथा-'जयति प्रियापदान्ते गरलग्रैवेयकः स्मरारातिः । विषमविशिखे विशन्निव शरणं बद्धकरवालः ॥' अत्र हि गरलस्य रसविशेषस्य पार्थिवविशेषत्वाऽसम्भवाद्गरलस्य तस्यापि तादृशधर्मित्वं लक्ष्यते तत्सिद्धेन पुना रूपकेण-अयि प्रिये झटिति प्रसीद अन्यथा त्वत्सम्मुख एवैषोऽहं म्रिये। स्मरहतके कुपितायामेव त्वयि तमहंविजितवानपि ,अद्य पुनर्मयि कुपितायां त्वयि स एव मां विजेतुमुद्यत इति व्यज्यते । यथा वा मम-'मानससम्भवदयितं मित्रमुपेत्य प्रहृष्यदास्यरुचि । सरसिजविकाससहजं सुमुखि ! तवेदं मुखं भवने '॥' अत्र हि सरसिजविकाससहजताया मुखे बाधात्तत्साधर्म्यं लक्ष्येत एतत्सिद्धेन पुनरुपमालङ्कारेण तव मुखं सरसिजमिव जडत्वादिसम्पन्नं किन्तु तद्विकासमात्रसमानमिति व्यज्यते । अलङ्कारेण पुनरलङ्कारध्वनिर्यथा मम-सुमुखि ! तव स्मितसहजश्चन्द्रः स्मितं च तत्सहजम् । तदुभयमपि रमणीयं नयनानन्दसोपानम् ॥' अत्र हि उपमेयोपमया रूपकं व्यज्यते । कविनिबद्धप्रौढोक्तिसिद्धेन लक्ष्यवस्तुना वस्तुध्वनिर्यथा-'मुखं विकसितस्मितं वशितविभ्रमप्रेक्षितं समुच्छलितविभ्रमा गतिरपास्तसंस्था मतिः । उरो मुकुलितस्तनं जघनमंसबन्धोद्धुरं बतेन्दुवदनातनौ तरुणिमोद्गमो मोदते ॥' अत्र विकासस्य पुष्पधर्मस्य स्मिते वशीकरणस्य प्रेक्षिते ऊर्ध्वगतिरूपसमुच्छलनरूपस्य मूर्तद्रवधर्मस्य विभ्रमे संस्थाया (मर्यादायास्त्यागस्य चेतनधर्मस्य) मतौ मुकुलितत्वस्य पुष्पधर्मस्य स्तनयुगले उद्धुरस्योत्कृष्टरूपधुरावत्त्वस्य चेतनधर्मस्य जघने मोदस्य (हर्षस्य चेतनधर्मस्य) यौवनोद्गमे बाधितत्वाद्विकासादिभिः पदैः पुष्पादिनिष्ठधर्माः स्मितादि-

**व्यङ्ग्यार्थस्य यथा उअ–'णिच्चलणिप्फन्दा' इत्यादि।**

**अनयोः स्वतःसम्भविनोर्लक्ष्यव्यङ्ग्यार्थौ व्यञ्जकौ।**

---

सङ्क्रान्तत्वेन लक्ष्यन्ते तैश्च सौरभादिशालित्वं व्यज्यते। अलङ्कारध्वनिर्यथा मम–'मृगमदमानितसुषमे! सुकृतपताकावलोकने! सुभगे! मृदुरुचि हसितं विकिरद्वदनमिदं ते सदोदयते॥' मृगमदेन मानिता चार्चिताऽलौकिकी शोभा तदधिष्ठितं कलेवरं यस्यास्तत्सम्बुद्धौ। सुकृतस्य पुण्यस्य पताकासूचकमवलोकनं दर्शनं यस्यास्तत्सम्बुद्धौ। सुभगे! मृदुलं हसितं हासं विकिरत्तच्छालीति यावत्। तवेदं वदनं सदोदयते। अत्र हि मानकर्तृत्वस्य चेतनधर्मस्य मृगमदे सुकृतस्य चावलोकनस्य मूर्तत्वात् पताकायाश्च मूर्तधर्मस्य सुकृतेऽवलोकने चामूर्ते विकिरणस्य पुष्पधर्मस्य तत्कर्तृतायाश्च पाणिधर्मस्य मृदुले हसिते मुखे चन्द्रादिधर्मस्य च मुखे बाधितत्वात्तत्तद्गताः धर्मा अन्येषु हसितादिषु लक्ष्यन्ते। तत्सादृश्यप्रत्यायनं प्रयोजनम्। एवं च प्रसिद्धादुपमानभूतात् कुसुमात्स्मितस्य तथा चन्द्रमसो मुखस्य सर्वकालिकोदयशालित्वेन वैलक्षण्यं प्रतीयत इति व्यतिरेको ध्वन्यते। अलङ्कारेण वस्तुध्वनिर्यथा–'धिक् तं विधे! पाणिमजातलज्जं निर्माति यः पर्वणि पूर्णमिन्दुम्। मन्ये स विज्ञः स्मृततन्मुखश्रीः कृत्वाऽर्धमौज्झन्मृडमूर्ध्नि यस्तम्॥' अत्र हि अजातलज्जत्वोक्त्याऽऽक्षिप्तस्य लज्जास्पदभवनयोग्यताया विज्ञत्वस्य स्मर्तृत्वस्य च मनस्वितागतधर्मस्य पाणौ बाधितत्वात्पाणेरपि मनस्वित्वं संलक्ष्यते–तन्मूलकेन पुनः प्रतीतेनोत्प्रेक्षालङ्कारेण सुमनस्विनो यदि कदाचित्कुत्रचित्प्रमाद्यन्ति तर्हि ते तत्क्षणादेव पुनः स्वरूपतामापद्यन्ते। इति व्यज्यते। अलङ्कारेणालङ्कारध्वनिर्यथा मम–'महतामपि सुभगानां लोचनमिथुनस्य निर्भरं पेया। सा तव तत्र विलोचनसुषमा सुकृतिन्! बत त्वमिह॥' अस्यार्थः–हे सुकृतिन्! सुभग विद्वद्वर्य इति वा महतामुत्तमानामुत्कृष्टानामिति यावत्। सुभगानां सौभाग्यास्पदानां रूपलावण्यादिसौभाग्यसम्पन्नानामिति यावल्लोचनमिथुनस्य नेत्रयोर्निर्भरं यथेष्टं पेयाऽऽस्वादनीया दर्शनीयेति यावत्। सा मम सखी तव नायकस्य लोचनसुषमा तत्र तस्मिन्सङ्केतनिलये सोत्कण्ठाऽऽस्ते। त्वं पुनस्तस्या लोचनम्, अस्मिंस्ततोऽतिदूरे प्रदेशे निर्विचारं तिष्ठतीति। अत्र हि–पानकर्तृकायाः पानोचिततायाश्च सत्ताधर्मस्य रसधर्मस्य च लोचनयोर्नायिकायां चाऽसम्भवात्तत्तद्धर्मा लक्ष्यन्ते। तत्सातिशयत्वप्रतिपादनं च प्रयोजनमिति तन्मूलकेन पुनर्व्याजोक्त्यऽलङ्कारेण लोचनविलोचनयोश्चकोरचन्द्ररूपत्वानध्यवसितत्वेऽपि तत्स्फुरणस्य सहृदयहृदयवेद्यत्वम्। तेन च समासोक्तिर्व्यज्यते। अथ लक्ष्यमूलः प्रबन्धगतोऽर्थध्वनिर्यथा–'निपीय यस्य क्षितिरक्षिणः कथां तथाऽऽद्रियन्ते न बुधाः सुधामपि।...रसैः कथा यस्य सुधावधीरणी।...पवित्रमत्राऽतनुते जगद्युगे स्मृता रसक्षालनयेव यत्कथा' इत्यादौ। अत्र हि कथाया रसधर्मत्वाभावान्निपानं सुधाया रसविशेषमात्रत्वे आदराऽनादराऽनभिज्ञतयाऽऽदरणीयत्वं, कथाया वाक्यसन्दर्भविशेषात्मकत्वेन रससम्पर्कः। कथाया एवं सुकृतविशेषात्मकत्ववैधुर्ये पवित्रीकरणौचित्यं च न सम्भवतीति तेनाऽऽन्यत्राऽन्यत्र गता अपि धर्मास्तत्तद्गता एव लक्ष्यन्ते, इति नलकथाऽलौकिकमहिममहिता सर्वदैव यथेष्टं श्रोतव्येति वस्तु व्यज्यते। इति दिक्।

एवं लक्ष्यार्थध्वनिमप्युदाहृत्य व्यङ्ग्यार्थध्वनिमुदाजिहीर्षुराह–**व्यङ्ग्यार्थस्येत्यादि।**

**व्यङ्ग्यार्थस्य** ध्वन्युदाहरणमिति शेषः। **यथा–'उअ णिच्चल णिप्फंदा' इत्यादि–**

'उअ णिच्चलणिप्फंदा भिसिणीपत्तम्मि रेहइ बलाआ। णिम्मलमरगअभाअणपरिट्ठिआ संखसुत्ति व्व॥' इत्यादि बोध्यमित्यर्थः। अयमभिप्रायः–(पद्यस्यार्थो निरूपितः प्राक्।) अत्र बलाकाया निष्पन्दत्वेन वाच्येन विश्वस्तत्वं व्यङ्ग्यं तेनाऽस्य देशस्य निर्जनत्वं (रमणयोग्यत्वं) व्यज्यते। एवं च सङ्केतस्थानमेतदावयो रुचिरमिति कयाऽपि सन्निहितमपि प्रच्छन्नं कमपि सुकृतिनं प्रति स्वाभिप्रायमाविष्क्रियते।

एवं 'निःशेषच्युतचन्दन'मित्यत्र 'उअ णिच्चलणिप्फन्दा' इत्यत्र चोदाहृते सन्देहापनुदे व्यञ्जकाऽभिधानमाह–**अनयोरित्यादिना।**

**अनयो**र्निर्दिष्टयोरुदाहृतपद्ययोरित्यर्थः। **स्वतःसम्भविनो**र्वस्तुनोरिति शेषः। **लक्ष्यव्यङ्ग्याऽर्थौ** व्यङ्ग्यार्थः लक्ष्यार्थश्चेत्यर्थः। **व्यञ्जकौ** स्त इति शेषः।

**एवमन्येष्वेकादशभेदेषूदाहार्यम् ।**

---

उदाहरणान्तरं तु स्वत एवोह्यमित्याह–एवमित्यादिना ।
**एवम् अन्येषु** उदाहृतभिन्नेषु । **एकादशभेदेषु** स्वतःसम्भविना वस्तुना वस्तुध्वनिमन्तरेण सर्वेषु अलङ्कारध्वन्या-
दिषु । **उदाहार्यम्**उदाहरणीयत्वमवसेयमिति शेषः । अत्रेदमवधेयम्–लक्ष्यार्थस्य द्वादश भेदा ध्वनयः सुनिरूपिता एव
ग्राक् । अथ व्यङ्ग्यार्थध्वनेराद्यप्रभेदमुदाहृत्यान्येष्वपि भेदेषूदाहर्त्तव्येषु वस्तुनाऽलङ्कारध्वनिर्यथा मम–'उन्नतपीनपयोधरयुग-
लोपरिपीतमञ्जुलाभरणा । अभिवाञ्छितदर्शनतः सुभगे ! कथमिति मुदे न स्याः ।' अत्र च सुभगायाः सर्वदैव दर्शनमभिप्रेतं
भवति किं पुनस्तव सुन्दर्या इति दर्शनदानेन सर्वथा कृतार्थनीयस्त्वयैष इति व्यङ्ग्येन उन्नतपीनपयोधरयुगलोपरि सत्या झटिति
स्फुरन्त्याः सुभगायाश्चन्द्रकलाया दर्शनं सर्वस्यापि यावत्तापितस्य लोकस्याऽभिप्रेतमिति समासोक्तिर्व्यज्यते । अलङ्कारेण वस्तु-
ध्वनिर्यथा मम–'न हसति वर्धते न च मलिनं च न दृश्यते मनाक् क्वापि । वदनमिदं तव सुभगे ! स्फुरति न कस्य प्रमोदाय ॥'
अत्र हि-व्यज्यमानेन व्यतिरेकेण तव दर्शनमेव सदैकरसत्वेन कामपि कमनीयतामावहतीति व्यज्यते । अलङ्कारध्वनिर्यथा
मम–'उपरि स्थितः सुधानिधिरत्र पुनस्ते स्थितं मुखं सुभगे । उभयोरनयोर्भूयः स्पृहणीयं दर्शनं कस्य।' इति । अत्र व्यज्य
मानेन व्यतिरेकेणाक्षेपो व्यज्यते। कविप्रौढोक्तिसिद्धेन वस्तुना वस्तुध्वनिर्यथा–'स्थिताः क्षणं पक्ष्मसु ताडिताधरा' इत्युदाहृते
पद्ये । वस्तुनाऽलङ्कारध्वनिर्यथा मम–'मृगमदतिलकितनिटिलं केशच्छटयाऽपि सर्वदाऽधारितम् । नित्यं विकसनशीलं
विकसत्येवाननं सुभगे ॥' अत्र च मलिनसम्पर्केण किमपि भवत्येव मलिनत्वं दुर्जना मलिनाः पुनरमलिनं मलिनयि-
तुमभिलषन्त्येव, किन्तु निर्मलान्तःकरणानाम्न काऽपि क्षतिः सम्भवतीति भावना व्यज्यते । अलङ्कारेण वस्तुध्वनिर्यथा–
'नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम् । नवरसरुचिरां निर्मितिमादधती भारती कवेर्जयति ॥' अत्र च व्य-
तिरेकेण सुकृतिभिर्ब्रह्मणः सृष्टिमपहाय कविभारत्या सृष्टायामेव विहर्तव्यमिति व्यज्यते । अलङ्कारेणालङ्कारध्वनिर्यथा मम–
'नक्तं चकोरमाला मधुकरमाला पुनर्दिवा वाला । भ्रमति किमेषा सुमुखि ? त्वमितः किञ्चिदपि वीक्षस्व ॥' अत्र
हि व्यज्यमानया व्याजोक्त्या भ्रान्तिमान्व्यज्यते । कविनिबद्धप्रौढोक्तिसिद्धेन व्यज्यमानेन वस्तुना वस्तुध्वनिर्यथा मम–
'मध्ये गुरुजनवृन्दं स्थिता विदग्धा विलोक्य मां पुरतः । विकसत्सुरतसरोजं विदधौ सा मुद्रितं सहसा ॥' अत्र हि
वाच्यः सूक्ष्माऽलङ्कारः, तेन सुभग ! गुरुजननिरुद्धा किं साम्प्रतं विदध्यां तदिदानीं गन्तव्यं सन्ध्यायां पुनरागन्तव्य-
मिति व्यज्यते तेन परतन्त्रैव त्वदागमनेन विकसितमपि हृदयं निमीलयन्ती स्वात्मानं वञ्चयामीति न क्षन्तव्य एतस्या
अपराध इति व्यज्यते । वस्तुनाऽलङ्कारध्वनिर्यथा मम–'सुभगे ! तव मुखमेकं पश्यन् सुकृती कृतार्थतां मनुते । भ्रमति
स एव सुतप्तः क्वचिदपि विन्दन्न चान्यदा शर्म ॥' अत्र हि सुभगायास्तव दर्शने जाते सुकृती प्रसीदति प्रमुदं प्राप्नोति
च तदितरदर्शने पुनर्जाते सन्ताप एव शरणमिति व्यज्यमानेन त्वमेव सुभगा तवैव मुखं विलोकितं सुभगं त्वन्मुखमन-
वलोक्य स्थितस्य कमलं सुधानिधिरपि वा सुभग इति व्यतिरेको व्यज्यते । अलङ्कारेण वस्तुध्वनिर्यथा मम–'विकसतु
सरोजमुदयतु सुधानिधिर्वा मुदा किमेतेन । मम तु मुदे तव सुभगे ! वदनं भुवने सुवर्णायाः ।' अत्र हि व्यतिरेकेण
व्यज्यमानेन यदि परजनप्रमोदवर्धनहेतुकं विकसनमुदयनं वा न स्यात्तर्हि तत्सर्वं मृषैवेति व्यज्यते । अलङ्कारेणालङ्कारध्व-
निर्यथा मम–'एकं जीवयसि त्वं सुदति ! निहंसि द्वितीयमेव त्वम् । किमिदं का वा त्वमसि स्थगयसि सत्यं बलाच्चेतः ॥'
अत्र हि विरोधेन व्याजोक्तिरभिव्यज्यते न च विरोधो वाच्यः । अनेकक्रियाकुशलाया नायिकाया विरुद्धयोः क्रिययो-
र्योग्यतापादनमुखेन , विस्मयमात्रस्याऽवशेषितत्वात् । अयं पुनः प्रबन्धगतोऽपि द्वादशविध एव । तत्र यथा
अभिज्ञानशाकुन्तले प्रथमेऽङ्के–'शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहाऽस्य ।' इत्यादि प्रस्तूय ।
'असंशयं क्षत्रपरिग्रहक्षमा यदाऽऽर्यमस्यामभिलाषि मे मनः । सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः'
इत्यादौ 'स्खलनपदेष्वपि न महान्तः कदापि स्खलन्ति इत्यनेन व्यज्यमानेन महतां सर्वमनुकूलं दृष्टचरं, ते च स्वत एव
महनीयचरिता भवन्तीत्यभिव्यज्यत इति दिक् ॥ अत्रेदमवसेयम्–ध्वनिस्तावल्लक्षणामूलोऽभिधामूलश्च । तत्राद्यः–अविव-
क्षितवाच्यः द्वितीयः पुनर्विवक्षितान्यपरवाच्यश्च । अथासावेव अर्थान्तरसङ्क्रमितवाच्यः, अत्यन्ततिरस्कृतवाच्यश्चेति ।
विवक्षिताऽन्यपरवाच्यः पुनरसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्च । तत्राद्यो रसादिस्वरूप एकप्रकार एव, द्वितीयः
पुनः शब्दशक्तिमूलोऽर्थशक्तिमूलः शब्दार्थोभयशक्तिमूलश्चेति त्रिप्रभेदः । अथ शब्दशक्तिमूलो वस्तुरूपोऽलङ्कारमूलश्चेति

**२९४ पदांशवर्णरचना-प्रबन्धेष्वस्फुटक्रमः ।**

**असंलक्ष्यक्रमव्यङ्ग्यो ध्वनिः । स च-पदांशप्रकृतिप्रत्ययोपसर्गनिपातादिभेदादनेकविधः । यथा-**
**"चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।**
**करं व्याधुन्वन्त्याः पिबसि रतिसर्वस्वमधरं वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती ॥२०२॥"**
**इत्यत्र "हता" इति, न पुनः "दुःखं प्राप्तवन्तः" इति; हन् प्रकृतेः ।**

---

द्विविध एव, अर्थशक्तिमूलः पुनः स्वतःसम्भवित्वादिरूपः द्वादशविधः । एवं शब्दार्थोभयशक्तिमूल एक एव वाक्यनिष्ठः अथ शब्दशक्तिमूलोऽर्थशक्तिमूलश्च पदे वाक्ये च, किं त्वर्थशक्तिमूलः प्रबन्धेऽपीति निर्णीतम् । ननु अर्थशक्तिमूलस्याभिधामूलत्वे सिद्धान्तितेऽपि **लक्ष्यार्थस्य यथा**-इत्याद्यभिधानं किम्मूलमिति चेत्सत्यम् । अत एव काव्यप्रकाशकारेण लक्ष्यार्थस्य यथेत्यादि न प्रपञ्चनमारब्धम् । अथैवं सति यदि विचारयामस्तदेवं प्रतीमः । लक्षणामूलस्तावद्ध्वनिरविवक्षितवाच्यो न विवक्षितस्तत्र वाच्यः किन्तु लक्ष्यार्थस्तत्र विवक्षितः स्यादिति मा भूद् विवक्षितो वाच्यो लक्षणामूले ध्वनौ, किन्तु लक्ष्यार्थस्तु विवक्षित एवेत्यत्र न काऽपि प्रतिपत्तिरिति न तिरोहितं विदुषाम् । अर्थान्तरसङ्क्रमितो वाच्य एव लक्ष्यः स पुनर्विवक्षितश्च । असौ पुनः स्वतःसम्भवित्वादिस्वरूपो भवितुमर्हत्येव विवक्षितार्थानतिरिच्यमानत्वात् । वाच्य इति लक्ष्य इति सत्यपि प्रभिन्नत्वे अर्थोऽर्थ इति जात्या तु न तथा । एवं व्यङ्ग्योऽप्यर्थः, अभिधाया मुख्यवृत्तित्वाल्लक्षणायाः पुनरमुख्यवृत्तित्वाल्लक्षणामूलस्य ध्वने स्तन्मूल-त्वमिति लक्ष्यार्थस्याभिधामूलत्वानपायात् । वाच्यस्य लक्ष्यस्य चार्थस्वरूपेणानतिरिक्तत्वादर्थशक्तिमूलस्य लक्ष्यार्थमूलत्वमपि निर्बाधमिति बोध्यम् ।

एवं संलक्ष्यक्रमव्यङ्ग्यं ध्वनिं प्रपञ्च्य तत्राद्यो रसभावादिरित्याद्युक्तदिशा प्रपञ्चितोऽप्येकविधो रसाद्यात्माऽसंलक्ष्यक्रमव्यङ्ग्यो वाक्ये तु सम्भवत्येव किन्त्वन्यत्राऽपि सम्भवति न वेति जायमानायामाकाङ्क्षायां तत्स्थानानन्तरस्यापि प्राधान्येन व्यपदेशा भवन्तीति न्यायमनुसृत्य निर्देशमाह-**२९४ पदांशवर्णरचनाप्रबन्धेष्वित्यादिना ।**

**२९४ पदांशवर्णरचनाप्रबन्धेषु** पदानां 'सुप्तिङन्तं पदम् ।' १।४।१४ इत्युक्तदिशा सुबन्तानां तिङन्तानां चांशाः प्रकृतिप्रत्ययोपसर्गरूपास्त्रिप्रकारा अवान्तरभेदेनानेकप्रकारास्ते च ये वर्णास्तेषां वा रचना ते च या रचनेति वेति सा च प्रबन्धश्चेति तेषु पदांशेषु पदांशवर्णेषु वा वर्णरचनायां रचनायां वा प्रबन्धे चेत्यर्थः । **अस्फुटक्रमो** न स्फुटः संलक्ष्यक्रमः क्रमव्यङ्ग्यो यत्र सोऽसंलक्ष्यक्रमव्यङ्ग्य इत्यर्थः 'सम्भवती' ति शेषः ।

कारिकोक्तमेव स्पष्टयति-**असंलक्ष्येत्यादिना ।**

**असंलक्ष्यक्रमव्यङ्ग्यः** रसादिरूप इति भावः । **ध्वनिः । सः । च । पदांशप्रकृतिप्रत्ययोपसर्गनिपातादिभेदात्** पदांशाः पदावयवभूताः प्रकृतिप्रत्ययोपसर्गनिपातादयस्तेषां भेदस्तस्मात्तमङ्गीकृत्येत्यर्थः । आदिपदेन वर्णप्रबन्धरचनानां ग्रहणम् । **अनेकविधः ।**

उदाहरति-**यथेत्यादिना ।**

**यथा-"हे मधुकर ! करं** हस्तम् । **व्याधुन्वन्त्या** इतस्ततस्तवापनयनाय सञ्चालयन्त्याः 'अस्या' इति शेषः । **चलापाङ्गां** चलौ चञ्चलावपाङ्गौ प्रान्तभागौ यस्यास्तथाभूताम् । 'अपाङ्गौ नेत्रयोरन्तौ' इत्यमरः । **वेपथुमतीं** वेपथुः कम्पोऽस्यामस्तीति तथोक्ताम्, तव दंशनभयेन कम्पमानाम् । **दृष्टिम् । बहुशो** वारंवारम् । **स्पृशसि । रहस्याख्यायी** रहस्यं गोप्यमाख्यातीति तथोक्तः । गोपनीयस्यार्थस्य वक्तेति भावः । **इव । कर्णान्तिकचरः** कर्णसमीपचारी 'स' न्निति शेषः । **मृदु** मधुरं यथा तथा । **स्वनसि** (अनेन तस्य तन्मिषेण चुम्बनकारित्वं ध्वन्यते । कामिनो हि रहस्यकथनमिषेण कपोलामृतं पिबन्तीति नातितिरोहितम्) । एवम्-**रतिसर्वस्वं** रतेरुपचारात्तदानन्दस्य सर्वस्वं सर्वप्रकारेण फलभूतम् । **अधर**मुपचारात्तत्रत्यममृतम् । **पिबसि । वयम् । तत्त्वान्वेषात्** 'इयं कस्य सुता, परिणेया वा न वा' इति स्वरूपान्वेषणात् । **हता** मृताः, न केवलं दुःखं प्राप्ता इति शेषः । **त्वम् । खलु** निश्चयेन । **कृती** कृतार्थः । इदमभिज्ञानशाकुन्तलस्य । अत्र च शिखरिणीवृत्तम् ॥ २०२॥"

**इत्यत्र । "हताः"** इति 'प्रयुक्त' मिति शेषः । **न । पुनः । "दुःखम् । प्राप्तवन्तः" । इति; ।** अतः **हन्प्रकृतेः** 'व्यञ्जकत्व' मिति शेषः । (अयम्भावः-प्रत्ययविधानावधिः प्रकृतिः, सा च-धातुस्वरूपा नामस्वरूपा चेति द्विधा । एवं सति 'हता' इति हन्प्रकृतेरेव 'दुःखं प्राप्तवन्त' इत्यपेक्षया दुःखातिशयव्यञ्जकत्वं स्फुटम् । इति ।)

"मुहुरङ्गुलिसंवृताधरौष्ठं प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं, न चुम्बितं तु ॥२०३॥"

इत्यत्र '.तु' इतिनिपातस्यानुतापव्यञ्जकत्वम्।

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।
धिग्धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ॥ २०४ ॥"

इत्यत्र 'अरय' इति बहुवचनस्य, 'तापस' इत्येकवचनस्य, 'अत्रैव' इति सर्वनाम्नः, 'निहन्ति' इति 'जीवति' इति च तिङः, 'अहो' इत्यव्ययस्य, 'ग्रामटिका' इति टिकच्रूपतद्धितस्य 'विलुण्ठन' इति व्युपसर्गस्य, 'भुजैः' इति बहुवचनस्य च व्यञ्जकत्वम्।

---

"पक्ष्मलाक्ष्याः प्रशस्तानि पक्ष्माणि सन्त्यनयोरतिपक्ष्मले तादृशे अक्षिणी यस्यास्तस्याः। 'सिध्मादिभ्यश्च।' ५।२।९७ इति लच्। 'अस्या' इति शेषः। **मुहुः**। **अङ्गुलिसंवृताधरौष्ठम**ङ्गुलिभिः संवृतोऽधरौष्ठो न तूर्ध्वौष्ठो यस्य तादृशम्। **प्रतिषेधाक्षरविक्लवाभिरामं** प्रतिषेधाक्षरेण 'नाजी, नाजी' इत्यात्मकेन निषेधसूचकेन पदप्रयोगेण यो विक्लवो विक्लवता तेनाभिरामं मनोहरम्। **अंसविवर्त्ति** अंसे स्कन्धदेशे विवर्तते लज्जया चुम्बनशङ्कया प्रवर्त्तत इति तथोक्तम्। **मुखम्**। **कथमपि** महताऽऽयासेन पुण्यसाहाय्येन वा। **उन्नमितम्**। तु किन्तु। न। **चुम्बितं** तस्य चुम्बनं लब्धुं न मया पारितमिति भावः। अभिज्ञानशाकुन्तलस्येदं पद्यम्, अत्रौपच्छंन्दसिकं वृत्तम्। "गौपच्छन्दसकम्" इति च पिङ्गलाचार्य्यः ॥२०३॥"

**इत्यत्र। "तु" इतिनिपातस्य। अनुतापव्यञ्जकत्वम्।** अनेन 'यदि तावन्मात्रं चुम्बनमलप्स्यत तदा तेनैव कृतार्थोऽभविष्य'मिति, तदभावेनानुतापातिशयो राज्ञो ध्वन्यते इति भावः।

"न्यक्कारोह्ययमेव..." इति पद्यमुदाहृतपूर्वं व्याख्यातपूर्वं च। **इत्यत्र। 'अरयः' इति। बहुवचनस्य।** 'व्यञ्जकत्व' मित्यग्रेतनेन सम्बन्धः। तथा च-शत्रुसम्बन्धस्य सर्वथाऽनौचित्येऽपि बहुत्वमनुतापशवलितामर्षातिशयं ध्वनयति बहुवचनमिति निष्कर्षः। एवम्-**'तापस' इत्येकवचनस्य** 'व्यञ्जकत्व'मिति पूर्ववत्सम्बध्यते, तथा च-तपस्विनां स्वभावतः पौरुषकथाराहित्यम्, अथ तत्राप्येकः सन् मम प्रतिकूलः संवृत्त इत्येकवचनं प्रधानतया व्यञ्जकमिति निष्कर्षः। **'अत्रैव** मदाधिष्ठिते एव देशे'। **इतिसर्वनाम्न** इदमात्मकस्य सर्वनाम्नः। 'व्यञ्जकत्व' मिति पूर्ववत्। तथा च-मम परोऽक्षेऽपि कस्यचिच्छत्रुताऽऽचरणं सर्वथाऽसम्भवम्, अथ मम प्रत्यक्षमित्यपि दूरमास्तां कथा, किन्तु मम सन्निधाविति तत्राप्यत्रैवेति सर्वनाम व्यनक्ति। **'निहन्ति'** इति 'अत्रे'ति शेषः। **'जीवति'** इति 'अत्रे'ति शेषः। **च। तिङः** तिङ्प्रत्ययस्य। 'व्यञ्जकत्व' मिति पूर्ववदन्वेति। तथा च-मयि जीवति तस्य निहननकर्तृत्वं सर्वथाऽनुचितमिति तिङ्प्रत्ययो व्यनक्तीति निष्कर्षः। **'अहो' इत्यव्ययस्य।** 'व्यञ्जकत्वम्' इति पूर्ववत्। तथा च-एतत्सर्वं सर्वथाऽसम्भाव्यमानमवस्थितमिति पुरुषकारापेक्षया दैवस्यातिशयकार्य्यकारित्वं द्योतयत् स्वस्य विस्मयाकुलताऽनुपदं किंकर्तव्यविमूढताम् 'अहो' इत्यव्ययं व्यनक्तीति बोध्यम्। **'ग्रामटिका' इति टिकच्रूपतद्धितस्य।** 'व्यञ्जकत्व'मिति पूर्ववत्। तथा च-स्वर्गस्य ग्रामेष्वपि तुच्छत्वात्तस्य विलुण्ठनेन किं मे भुजयोरुच्छूनात्मना भवनं युक्तमिति स्वात्मन्यवज्ञानिवेशानुपदममर्षातिशयः 'टिकच्'प्रत्ययव्यङ्ग्य इति हृदयम्। तथा-**'विलुण्ठन' इति** 'अत्रे'ति शेषः। **व्युपसर्गस्य** 'व्यञ्जकत्व'मिति पूर्ववत्। तथा च-'विशेषेण लुण्ठन' मित्यर्थे व्युपसर्गो लुण्ठनस्य विशिष्टतां बोधयन् स्वात्मनस्तादृशपराक्रमशालिनोऽपि अकिञ्चित्करत्वमाक्षमतां च सूचयति। एवम्-**'भुजैः' इति। बहुवचनस्य। च। व्यञ्जकत्वम्।** तथा च-द्वाभ्यां भुजाभ्यां यदमुना क्रियते तत्, तदनेकगुणितैरपि एभिर्न कर्तुं पार्य्यते इत्येषां केवलं भारायमाणत्वमिति द्योतयत् तथैवामर्षातिशयं तद्बहुवचनं ध्वनयतीति निष्कृष्टम्।

| संख्या । | ध्वनिनाम । | तस्य सजातीयेन विजातीयैश्च सह संयोगे भेदाः । | एवं संसृष्ट्या-दिचतुर्विध-संयोगे तु । |
|---|---|---|---|
| १ | पदगतोऽर्थान्तरसङ्क्रमितो विवक्षितवाच्यध्वनिः । | ५१ | २०४ |
| २ | वाक्यगतोऽर्थान्तरसङ्क्रमितो विवक्षितवाच्यध्वनिः । | ५० | २०० |
| ३ | पदगतोऽत्यन्ततिरस्कृतो विवक्षितवाच्यध्वनिः । | ४९ | १९६ |
| ४ | वाक्यगतोऽत्यन्ततिरस्कृतो विवक्षितवाच्यध्वनिः । | ४८ | १९२ |
| ५ | पदगतः शब्दशक्तिमूलः संलक्ष्यक्रमवस्तुध्वनिः । | ४७ | १८८ |
| ६ | पदगतः शब्दशक्तिमूलः संलक्ष्यक्रमालङ्कारध्वनिः । | ४६ | १८४ |
| ७ | वाक्यगतः शब्दशक्तिमूलः संलक्ष्यक्रमवस्तुध्वनिः । | ४५ | १८० |
| ८ | वाक्यगतः शब्दशक्तिमूलः संलक्ष्यक्रमालङ्कारध्वनिः । | ४४ | १७६ |
| ९ | पदगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः । | ४३ | १७२ |
| १० | पदगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः । | ४२ | १६८ |
| ११ | पदगतः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारध्वनिः । | ४१ | १६४ |
| १२ | पदगतः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः । | ४० | १६० |
| १३ | वाक्यगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः । | ३९ | १५६ |
| १४ | वाक्यः गतस्वतःसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः । | ३८ | १५२ |
| १५ | वाक्यगतः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारऽध्वनिः । | ३७ | १४८ |
| १६ | वाक्यगतः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः । | ३६ | १४४ |
| १७ | प्रबन्धगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः । | ३५ | १४० |
| १८ | प्रबन्धगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः । | ३४ | १३६ |
| १९ | प्रबन्धगतः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः । | ३३ | १३२ |
| २० | प्रबन्धगतः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः । | ३२ | १२८ |
| २१ | पदगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः । | ३१ | १२४ |
| २२ | पदगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः । | ३० | १२० |
| २३ | पदगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः । | २९ | ११६ |
| २४ | पदगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः । | २८ | ११२ |
| २५ | वाक्यगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः । | २७ | १०८ |
| २६ | वाक्यगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोवस्तुनाऽलङ्कारध्वनिः । | २६ | १०४ |

१ अत्र पूर्वपूर्वापेक्षयाऽग्रिमाग्रिमभेदस्य योजने—एकैकभेदह्रासो भवति । यथा—अर्थान्तरसङ्क्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्येन योगे यो भवति भेदः स एव अत्यन्ततिरस्कृतवाच्यस्यार्थान्तरसङ्क्रमितवाच्येन सह योगेऽपीति बोध्यम् ।

| सङ्ख्या। | ध्वनिनाम। | तस्य सजातीयेन विजातीयैश्च सह संयोगे भेदाः। | एवं संसृष्ट्यादिचतुर्विध संयोगे तु। |
|---|---|---|---|
| २७ | वाक्यगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः। | २५ | १०० |
| २८ | वाक्यगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः। | २४ | ९६ |
| २९ | प्रवन्धगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः। | २३ | ९२ |
| ३० | प्रवन्धगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः। | २२ | ८८ |
| ३१ | प्रवन्धगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः। | २१ | ८४ |
| ३२ | प्रवन्धगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः। | २० | ८० |
| ३३ | पदगतः कविनिवद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः। | १९ | ७६ |
| ३४ | पदगतः कविनिवद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः। | १८ | ७२ |
| ३५ | पदगतः कविनिवद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः। | १७ | ६८ |
| ३६ | पदगतः कविनिवद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः। | १६ | ६४ |
| ३७ | वाक्यगतः कविनिवद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः। | १५ | ६० |
| ३८ | वाक्यगतःकविनिवद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः। | १४ | ५६ |
| ३९ | वाक्यगतःकविनिवद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः। | १३ | ५२ |
| ४० | वाक्यगतःकविनिवद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः। | १२ | ४८ |
| ४१ | प्रवन्धगतःकविनिवद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः। | ११ | ४४ |
| ४२ | प्रवन्धगतःकविनिवद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः। | १० | ४० |
| ४३ | प्रवन्धगतःकविनिवद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः। | ९ | ३६ |
| ४४ | प्रवन्धगतःकविनिवद्धवक्तृप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः। | ८ | ३२ |
| ४५ | प्रवन्धगतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः। | ७ | २८ |
| ४६ | वाक्यगतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः। | ६ | २४ |
| ४७ | पदगतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः। | ५ | २० |
| ४८ | पदैकदेशगतासंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः। | ४ | १६ |
| ४९ | रचनागतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः। | ३ | १२ |
| ५० | वर्णगतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः। | २ | ८ |
| ५१ | वाक्यगतउभयशक्तिमूलो ध्वनिः। | १ | ४ |
| | सर्वेषां सङ्कलनम्। | १३२६ | ५३०४ |

"आहारे विरतिः, समस्तविषयग्रामे निवृत्तिः परा,
नासाऽग्रे नयनं, तदेतदपरं यच्चैकतानं मनः ।
मौनं चेदमिदं च शून्यमधुना यद्विश्वमाभाति ते,
तद् ब्रूयाः सखि! योगिनी किमसि भोः किं वा वियोगिन्यसि ॥ २०५ ॥"

इत्यत्र तु 'आहारे' इति विषयसप्तम्याः, 'समस्त' इति 'परा' इति च विशेषणस्य, 'मौनं चेदम्' इति प्रत्ययपरामर्शिनः सर्वनाम्नः 'आभाति' इत्युपसर्गस्य, 'सखि!' इति प्रणयस्मारणस्य, 'असि भोः!' इति सोपहासस्य, 'किं वा' इत्युत्तरपक्षदार्ढ्यसूचकस्य 'वे'ति शब्दस्य 'असि' इति वर्त्तमानोपदेशस्य च तत्तद्विषयव्यञ्जकत्वं सहृदयसंवेद्यम् ।

वर्णरचनयोरुदाहरिष्यते, प्रबन्धे यथा–महाभारते शान्तः, रामायणे करुणः, मालतीमाधव-रत्नावल्यादौ शृङ्गारः । एवमन्यत्र ।

---

एवं प्रकृत्यादीनां व्यञ्जकत्वमुदाहृत्य विभक्त्यादीनां व्यञ्जकत्वमुदाहरति–"आहारे"...इत्यादिना ।

"हे सखि! आहारे भोजनक्रियायाम् । 'तवे'ति शेषः । विरतिः रागाभावः । समस्तविषयग्रामे समस्ता विषया भोगास्तेषां ग्रामः समूहस्तत्र । पराऽतिशयिता । निवृत्तिः पराङ्मुखत्वम् । 'तवे'ति शेषः । नासाऽग्रे । नयनं दृष्टिः । यत् । च । एकतानम् एकाग्रम् । तत् । एतत् । अपरम् । मनः । 'तवे'ति शेषः । इदम् । च । मौनम् । इदम् । च । विश्वं समस्तो लोकः । शून्यम् । अधुना । ते तव । यत् यतः । आभाति प्रतिभासते । तत् तस्मात् । ब्रूयाः कथय । भो भवति । किम् । योगिनी योगनिरता । असि ? किं वा । वियोगिनी विप्रकृष्टरतिका । असि ? विरहिणीमुपहसन्त्याः सख्या उक्तिरियम् । शार्दूलविक्रीडितं वृत्तम् ॥२०५॥"

अत्र पूर्वापेक्षया वैशिष्ट्यं दर्शयति–इत्यत्र त्वित्यादिना ।

इत्यत्र 'उदाहृते पद्य' इति शेषः । तु । 'आहारे'इति 'पदे' इति शेषः । विषयसप्तम्याः'आहारविषयकरागाभावव्यञ्जकत्व'मिति शेषः । तथा च–'नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।' इत्युक्तदिशा योगिन्या न सर्वथाऽऽहाराभावस्तव तु सर्वथैवेति वियोगिन्येवासीति व्यज्यत इति निष्कर्षः । 'समस्त'इति 'अस्ये'ति शेषः । 'परा'इति 'अस्ये'ति शेषः । च । विशेषणस्य 'विषयमात्रस्य याथाऽऽत्म्येन व्यञ्जकत्व'मिति शेषः । तथा च–योगिन्या योगसाधने यदृच्छयोपस्थिते च सति विषये प्रवृत्तिरिति वियोगिन्येवासीति व्यज्यते इति हृदयम् । मौनम् । 'चेदम्'इति 'अत्रे'ति शेषः । प्रत्ययपरामर्शिनः प्रत्ययस्य मौनावस्थाऽनुभवस्य परामर्शी प्रणिधाता तादृशस्य । सर्वनाम्नस्तत्सञ्ज्ञकस्येदंशब्दस्येत्यर्थः । 'मौनस्य सर्वात्मना सर्वकालसम्भववित्वप्रत्यायकत्व'मिति शेषः । तथा च–योगिन्या मौनेऽपि इङ्गितादिनाऽर्थबोधकता, मौनस्य च सर्वकालिकत्वाभाव इति वियोगिन्येवासीति व्यज्यते इति निर्गलितोऽर्थः । 'आभाति'इति 'अत्रे'ति शेषः । उपसर्गस्याङुपसर्गस्य । 'शून्यतायाः सर्वात्मना प्रत्यायकत्व'मिति शेषः । तथा च–योगिन्या विज्ञानानुपदं जगति शून्यत्वं न सर्वात्मना; तदानीं ब्रह्मस्फूर्त्तेरपि सम्भवात् । इति वियोगिन्येवासीति व्यज्यते इति सूचितम् । 'सखि'इति 'अनेने'ति शेषः । प्रणयस्मारणस्य 'स्वानुरक्ते प्रणयसद्भावद्योतकता'इति शेषः । तथा च–योगिन्याः प्रणयाभावो भवतीति वियोगिन्येवासीति व्यज्यत इति निष्कृष्टोऽर्थः । 'असि भोः!' इति 'अनेने'ति शेषः । सोपहासस्योपहासपूर्वकस्याभिधानस्य 'योगिनीचेष्टितव्यञ्जकत्व'मिति शेषः । तथा च–योगिनीव दूरात् प्रतीयसे न सर्वथा तथाभूताऽसीति ध्वनितोऽर्थः । 'किं वा'इति 'अत्रे'ति शेषः । उत्तरपक्षदार्ढ्यसूचकस्य 'वा' इति 'निपातरूपस्ये'ति शेषः । शब्दस्य । 'उत्तरपक्षदार्ढ्यव्यञ्जकत्व'मिति शेषः । तथा च–योगिनी नासि, किन्तु वियोगिन्येवासि इति सूच्यते । 'असि' इति 'अस्ये'ति शेषः । वर्त्तमानोपदेशस्य 'योगिनीत्वभ्रान्तिनिवृत्तिव्यञ्जकत्व'मिति शेषः । च । 'इत्येव'मिति शेषः । तत्तद्विषयव्यञ्जकत्वम् । सहृदयसंवेद्यम् 'नतु सहृदयेतरैरपि संवेद्य'मिति शेषः ।

अथ वर्णरचनयोरसंलक्ष्यक्रमव्यङ्ग्यत्वमनुदाहृत्य प्रबन्धगतत्वेन तदुदाहरन्नाह–वर्णेत्यादि ।

वर्णरचनयोर्वर्णो माधुर्यादिव्यञ्जक-ष्टठादिभिन्नः स च, रचना पदविन्यासरूपा वैदर्भ्यादिका च, इति तयोः 'असंलक्ष्यक्रमव्यङ्ग्यत्वमष्टमे नवमे च परिच्छेदे' इति शेषः । उदाहरिष्यते । प्रबन्धे । 'पुनरसंलक्ष्यक्रमव्यङ्ग्यत्व'

**२९५ तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्मताः ॥ २८९ ॥**
**सङ्करेण त्रिरूपेण संसृष्टया चैकरूपया ।**
**वेदे-खाग्नि-शराः शुद्धै-रिषुबाणाग्निसायकाः ॥ २९० ॥**

मिति शेषः । **यथा महाभारते । शान्तः** 'अङ्गित्वेने'ति शेषः । एवं परत्र, शेषं स्पष्टम् । **एवं यथोक्तेषु प्रबन्धेषु तथा-अन्यत्र** वेणीसंहारादिषु वीरादिरिति भावः ।

एवमभिहिता ध्वनेर्भेदाः समुच्चीय सौकर्य्याय दर्श्यन्ते-२९५ **तदेवमि**त्यादिना ।

२९५ **तत्** तस्मात् । **एवं** निरुक्तप्रकारेण । **तस्य** वाच्यातिशायिव्यङ्ग्यत्वेनाभिहितस्वरूपस्य । **ध्वनेः । एकपञ्चाशद्भेदाः । मताः** । अत्र टिप्पणीकाराः-"अत्र ध्वनेर्लक्षणाऽभिधामूलत्वेन विवक्षितवाच्यविवक्षितान्यपरवाच्याख्यौ द्वौ भेदौ, अविवक्षितवाच्यस्यार्थान्तरसङ्क्रमितात्यन्ततिरस्कृतवाच्यतया द्विविधस्य वाक्यपदगतत्वेन द्वैविध्ये चातुर्विध्यम्, विवक्षितान्यपरवाच्यस्य संलक्ष्यक्रमव्यङ्ग्यासंलक्ष्यक्रमव्यङ्ग्यतया द्वौ भेदौ । संलक्ष्यक्रमव्यङ्ग्ये शब्दशक्तिमूले वस्त्वलङ्काररूपतया द्वैविध्ये वाक्यपदगतत्वेन चातुर्विध्यम्, अर्थशक्तिमूले संलक्ष्यक्रमव्यङ्ग्येऽर्थस्य स्वतःसम्भवित्वेन कविप्रौढोक्तिसिद्धत्वेन कविनिबद्धप्रौढोक्तिसिद्धत्वेन च त्रैविध्यम् । त्रिविधस्यापि वस्त्वलङ्काररूपतया द्वैविध्ये षड्विधत्वम् । षड्विधस्यापि व्यङ्ग्यव्यञ्जकतया द्वैविध्ये द्वादशविधत्वम्, द्वादशविधस्यापि प्रबन्धगतत्वेन वाक्यगतत्वेन पदगतत्वेन च त्रैविध्ये षट्त्रिंशत्प्रकारोऽर्थशक्तिमूलोऽनुरणनध्वनिः, उभयशक्तिमूलो वाक्यगतत्वेनैकविधः, एवं संलक्ष्यक्रमव्यङ्ग्यध्वनेरेकचत्वारिंशद्भेदाः । असंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः प्रबन्धवाक्यपदपदैकदेशरचनावर्णगतत्वेन षड्विधः । एवं विवक्षितान्यपरवाच्यध्वनेः सप्तचत्वारिंशद्भेदाः । अविवक्षितवाच्यभेदैश्चतुर्भिः सह ध्वनेः प्रथमं शुद्धा एकपञ्चाशद्भेदाः । तेषां नामानि निर्दिश्यन्ते ( १ ) पदगतोऽर्थान्तरसङ्क्रमितोऽविवक्षितवाच्यध्वनिः; ( २ ) वाक्यगतोऽर्थान्तरसङ्क्रमितोऽविवक्षितवाच्यध्वनिः ( ३ ) पदगतोऽत्यन्ततिरस्कृतोऽविवक्षितवाच्यध्वनिः ( ४ ) वाक्यगतोऽत्यन्ततिरस्कृतोऽविवक्षितवाच्यध्वनिः ( ५ ) पदगतः शब्दशक्तिमूलः संलक्ष्यक्रमवस्तुध्वनिः ( ६ ) वाक्यगतः शब्दशक्तिमूलः संलक्ष्यक्रमवस्तुध्वनिः ( ७ ) पदगतः शब्दशक्तिमूलः संलक्ष्यक्रमालङ्कारध्वनिः ( ८ ) वाक्यगतः शब्दशक्तिमूलः संलक्ष्यक्रमालङ्कारध्वनिः ( ९ ) पदगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ( १० ) पदगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ( ११ ) पदगतः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ( १२ ) पदगतः स्वतः सिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ( १३ ) वाक्यगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ( १४ ) वाक्यगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः । ( १५ ) वाक्यगतः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ( १६ ) वाक्यगतः स्वतः सिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ( १७ ) प्रबन्धगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ( १८ ) प्रबन्धगतः स्वतःसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ( १९ ) प्रबन्धगतः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ( २० ) प्रबन्धगतः स्वतःसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ( २१ ) पदगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ( २२ ) पदगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ( २३ ) पदगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ( २४ ) पदगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ( २५ ) वाक्यगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ( २६ ) वाक्यगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ( २७ ) वाक्यगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ( २८ ) वाक्यगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ( २९ ) प्रबन्धगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ( ३० ) प्रबन्धगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ( ३१ ) प्रबन्धगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ( ३२ ) प्रबन्धगतः कविप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ( ३३ ) पदगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ( ३४ ) पदगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ( ३५ ) पदगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ( ३६ ) पदगतः कविनिबद्ध-

प्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ( ३७ ) वाक्यगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ( ३८ ) वाक्यगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ( ३९ ) कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ( ४० ) वाक्यगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ( ४१ ) प्रबन्धगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुना वस्तुध्वनिः ( ४२ ) प्रबन्धगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलो वस्तुनाऽलङ्कारध्वनिः ( ४३ ) प्रबन्धगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेणालङ्कारध्वनिः ( ४४ ) प्रबन्धगतः कविनिबद्धप्रौढोक्तिसिद्धार्थशक्तिमूलोऽलङ्कारेण वस्तुध्वनिः ( ४५ ) प्रबन्धगतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ( ४६ ) वाक्यगतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ( ४७ ) प्रबन्धगतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ( ४८ ) पदैकदेशगतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ( ४९ ) रचनागतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ( ५० ) वर्णगतोऽसंलक्ष्यक्रमव्यङ्ग्यो रसादिध्वनिः ( ५१ ) वाक्यगत उभयशक्तिमूलो ध्वनिः ।'' इति । विवृतिकारास्तु—'यद्यपि—अर्थानां वाच्यलक्ष्यव्यङ्ग्यभेदेन पदांशानां च प्रकृत्यादिभेदेन अतोऽधिका अपि प्रकारा भवन्ति, तथाऽपि सम्प्रदायानुरोधेन एकपञ्चाशत्त्वमेव दर्शितम्'इति प्राहुः । अथैषामपि प्रकारप्रपञ्चमाह—**त्रिरूपेण** 'अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ । सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः ॥' इतिवक्ष्यमाणरीत्या त्रिविधेनेत्यर्थः । **सङ्करेण** । सहार्थेयं तृतीया । **एकरूपया** । **संसृष्ट्या** 'मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते ।' इत्यात्मिकया रचनया । **च** । 'एकपञ्चाशद्भेदा'इति पूर्वतोऽनुवृत्तम् । तथा च—एते चतुर्भिस्सङ्करसंसृष्टिभेदैर्योजिता इत्यर्थः । **वेदखाब्धिशराः** चतुरधिकशतत्रयोत्तरपञ्चसहस्रसङ्ख्याकाः सम्पद्यन्ते इत्यर्थः । तथा हि—वेदाश्चत्वारः, खं शून्यं बिन्दुरिति यावत्, अग्नयस्त्रयः, शराः पञ्च । एते च—'अङ्कानां वामतो गतिः ।'इति नयेन वामतः पठितास्तां सङ्ख्यामाहुरिति बोध्यम् । एतेऽपि—**शुद्धैः** सङ्करासंसृष्टैः । सहार्थेयं तृतीया । तथा च—एतैः संयोजिता इत्यर्थः । **इषुबाणाग्निसायकाः** पञ्चपञ्चाशदुत्तरशतत्रयाधिकपञ्चसहस्रसङ्ख्याकाः सम्पद्यन्ते इत्यर्थः । तथा हि—इषवः पञ्च, बाणाः पञ्च, अग्नयस्त्रयः, सायकाः पञ्चेत्येते पूर्ववत् वामतः पठितास्तथा सम्पद्यन्त इति बोध्यम् । अत्राहुस्तर्कवागीशाः—'ननु तदेकपञ्चाशतश्चतुर्गुणने चतुरधिकशतद्वयमेव भवतीति चेत्! न; यतः—प्रथमेन सजातीयेनैकेन विजातीयैः पञ्चाशता च संसृष्टावेकपञ्चाशत्त्वम्, एवं द्वितीयस्य सजातीयेनैकेन विजातीयैः पञ्चाशता च संसृष्टौ पञ्चाशत्त्वम् । तृतीयस्य सजातीयेनैकेन विजातीयैरष्टचत्वारिंशता च संसृष्टावूनपञ्चाशत्त्वं भवति, चतुर्थस्य सजातीयेनैकेन विजातीयैः सप्तचत्वारिंशता च संसृष्टावष्टचत्वारिंशत्त्वम् । एवमन्येषामेकैकह्रासेन सप्तचत्वारिंशदादिकम् । चरमस्य सजातीयेनैकेन संसृष्टौ एकविषयत्वमेवेति मिलित्वा षड्विंशत्यधिकत्रयोदशशतत्वं ध्वनिसंसृष्टेः । एवम्—क्रमेण अष्टसप्तत्युत्तरनवशताधिकंत्रिसहस्रत्वं त्रिविधध्वनिसङ्करस्य । मिलित्वा'वेदखाग्निशरा'इति सङ्ख्याया उपपत्तिः । नच 'एकपञ्चाशतस्तावता गुणने एकाधिकषड्विंशतिशती संसृष्टौ, तत्रैव तत्त्रिगुणसङ्करयोजने'वेदखाब्धिवियच्चन्द्रा'इति काव्यप्रकाशोक्तसङ्ख्या भवति, तत् कथं'वेदखाग्निशरा' इति सङ्ख्या इति वाच्यम्, संसृष्टिसङ्करयोः पूर्वपूर्वसंसर्गस्योत्तरोत्तरगणनायामप्रवेशात्तत्सङ्ख्यत्वानुपपत्तेः । ' इति प्रदीपकाराः । 'अर्थान्तरसङ्क्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्येन योजने यो भेदः स एवात्यन्ततिरस्कृतवाच्यस्यार्थान्तरसङ्क्रमितवाच्येन योजनायाम् । एवमन्यत्रापि । तस्मात्-''एको राशिर्द्विधा स्थाप्य एकमेकाधिकं कुरु । समार्धेनासमो गुण्य एतत्सङ्कलितं लघु ॥'' इत्युक्तदिशा द्विपञ्चाशदर्धेन षड्विंशत्या एकपञ्चाशतं गुणयेत् । तथा च—'रसदस्राग्निभेदिन्यः' इति त्रयोदशशतानि षड्विंशत्यधिकानि जायन्ते, योगश्चतुष्प्रकार इति तेषु चतुर्भिर्गुणितेषु 'वेदाभ्रदहनेषवः' इति पञ्चसहस्राणि चतुरधिकं शतत्रयं सङ्कीर्णभेदाः ।' इति, यत्तु 'तेषां चान्योऽन्ययोजने । सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया । वेदखाब्धिवियच्चन्द्राः । ( शुद्धभेदैः सह ) शरेषुयुगखेन्दवः ।' इति काव्यप्रकाशकारिकां व्याचक्षाणास्तदेकपक्षपाताः 'एकपञ्चाशतो भेदानामेकपञ्चाशता गुणने एकोत्तरषड्विंशताधिकसहस्रद्वयं भवति, योजनं च सङ्करादिचतुष्प्रकारैरिति तावता चतुर्भिर्गुणने चतुरुत्तरचतुःशताधिकायुतपरिमिता भेदाः सम्पद्यन्ते । तेषां च प्रागुक्तैः शुद्धैरेकपञ्चाशद्भेदैः समं योजने शरेषुयुगखेन्दुमिता भेदा भवन्ति । यद्यपि अर्थान्तरसङ्क्रमितवाच्यस्यात्यन्ततिरस्कृतवाच्येन योजने यो भेदः, स एवात्यन्ततिरस्कृतवाच्यस्यार्थान्तरसङ्क्रमितवाच्येन योजने भेद इति वक्तुं युक्तम्, तथाऽपि—'प्राधान्येन व्यपदेशा भवन्ती'ति

**शुद्धैः शुद्धभेदैरेकपञ्चाशता योजनेत्यर्थः। दिङ्मात्रं तूदाह्रियते-**

**" अत्युन्नतस्तनयुगा तरलायताक्षी द्वारि स्थिता तदुपयानमहोत्सवाय।**
**सा पूर्णकुम्भनवनीरजतोरणस्रक्सम्भारमङ्गलमयत्नकृतं विधत्ते ॥ २०८ ॥ "**

**इत्यत्र स्तनावेव पूर्णकुम्भौ, दृष्टय एव नवनीरजस्रज इति रूपकध्वनिरसध्वन्योरेकाश्रयानुप्रवेशः सङ्करः।**

**" धिन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि धूताध्वनीनहृदयानि मधोर्दिनानि।**
**निस्तन्द्रचन्द्रवदनावदनारविन्दसौरभ्यसौहृदसगर्वसमीरणानि ॥ २०९ ॥ "**

---

न्यायेन पुण्ड्रकेक्षुरसेष्विव ध्वनिष्वपि हृद्यत्वातिशयानतिशयौ व्यपेक्ष्यार्थान्तरसङ्क्रमितवाच्यस्य यत्रातिशयः तत्रात्यन्ततिरस्कृतवाच्येन तद्योजनम्, यत्र तु अर्थान्तरसङ्क्रमितवाच्यापेक्षयाऽत्यन्ततिरस्कृतवाच्येऽतिशयस्तत्रात्यन्ततिरस्कृतवाच्यस्यार्थान्तरसङ्क्रमितवाच्येन योजनम्। तथैव तेषां व्यपदेशः, व्यक्तिभेदमादाय विजातीयवत्सजातीयेनापि योजने भेदान्तरस्वीकारौचित्यात्।' इत्याहुः। तन्नातिपेशलम्, एवं गुणननयस्वीकारे वक्ष्यमाणविरोधभेदाभिधानेऽपि एतस्यैव गुणननयस्य स्वीकारौचित्ये 'जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद् गुणास्त्रिभिः। क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश॥' इति वक्तुमयुक्तत्वस्यापत्स्यमानत्वात्, किन्तु-'गुणजातिक्रियाद्रव्यैश्चतुर्भिश्च परस्परम्। गुणादीनां चतुर्णां हि भेदाः षोडशयोजने॥' इत्थेवं वक्तुं युक्तत्वस्यापत्स्यमानत्वात्। चमत्कारस्य यथातथं तथाऽपि सुसम्भवात्॥२८९॥२९०॥

कारिकां सुगमयितुमाह-**शुद्धै**रित्यादि। स्पष्टम्।

सर्वेषां भेदानामुदाहरणाशक्यत्वादाह-**दिङ्मात्र**मित्यादि।

**दिङ्मात्रं** मार्गनिदर्शनमात्रमित्यर्थः। **तु**। **उदाह्रियते** 'ध्वनि'रिति शेषः। **"अत्युन्नत..."**इत्यादिना।

"**अत्युन्नतस्तनयुगा**ऽत्युन्नतं स्तनयुगं यस्यास्तादृशी। **तरलायताक्षी** तरले चञ्चले आयते दीर्घे अक्षिणी यस्यास्तादृशी। **तदुपयानमहोत्सवाय** तस्य पत्युरुपयानं विदेशतः स्वगृहं प्रति यानं तेन महोत्सवस्तस्मै तं प्रकटयितुमिति भावः। तुमर्थेयं चतुर्थी। **द्वारि**। **स्थिता**। अत एव-**सा** तद्गेहिनी युवतीति यावत्। **अयत्नकृतं** विना यत्नेन सम्पादितम्। **पूर्णकुम्भनवनीरजतोरणस्रक्सम्भारमङ्गलं** पूर्णकुम्भौ च नवनीरजतोरणस्रजौ चेति तासां सम्भारः सम्पादनमेव मङ्गलं तत्तथोक्तम्। नवानि नीरजानि कमलानि तेषां तोरणस्रजौ बहिर्द्वारस्य माले। **विधत्ते**। महोत्सवे हि पूर्णं कुम्भद्वयं नीरजादिस्रजश्च बहिर्द्वारेऽलङ्क्रियन्ते, अत्र च द्वारे स्थिताया युवत्या उच्चं स्तनद्वयं तदेव तथाभूतकुम्भवत्, तरले आयते च नेत्रे द्वारस्य भागद्वये माले इवालमक्रियेतामिति भावः। प्रवासादागच्छति पत्यौ तत्पत्न्या द्वारि स्थिताया वर्णनमिदम्। वसन्ततिलकं वृत्तम्॥ २०८॥"

**इत्यत्र**। प्रागुदाहृते पद्य इत्यर्थः। **स्तनौ**। **एव**। **पूर्णकुम्भौ** कलशौ। **दृष्टयः**। **एव**। **नवनीरजस्रजः**। **इति**। **रूपकध्वनिरसध्वन्योः**। **एकाश्रयानुप्रवेशः**। **सङ्करः**। अयम्भावः-स्तनयोर्लोचनयोश्च यथाक्रमं पूर्णकुम्भद्वयात्मना तोरणस्रगात्मना च रूपकध्वनिः। तेषामेव नायकरतेरुद्दीपकतया रसश्च श्रृङ्गारो ध्वन्यमान इत्येवमेतयोरेकत्रैवाश्रितत्वादेकाश्रयानुप्रवेशः सङ्करश्चेति।

"**अमूनि**। **मदमूर्च्छदलिध्वनीनि** मदेन मूर्छन्तस्तदुत्कटतां प्रकटयन्तो येऽलयो मधुपास्तेषां ध्वनयो यत्र तथाभूतानि यद्वा-मदेन मूर्च्छन्तो मूर्छा ( रागविशेषस्यावस्थाविशेषम् ) प्रकटयन्तोऽलिध्वनयो यत्र तानि। अत एव-**धूताध्वनीनहृदयानि** धूतानि अध्वनीनानां पान्थानां हृदयानि यैस्तादृशानि। **निस्तन्द्रचन्द्रवदनावदनारविन्दसौरभ्यसौहृदसगर्वसमीरणानि** निस्तन्द्र उदितः परिपूर्णमण्डलतया स्वस्वरूपं याथाऽऽत्म्येन प्रकटयितुमुद्यत इति यावत् यश्चन्द्रस्तद्वद्वदनं मुखं यासां तासां वदनारविन्दानि वदनान्यरविन्दानीवेति तेषां सौरभ्यं तेन यत्सौहृदं तेन सगर्वः समीरणो यत्र तथाभूतानि। नीचो हि महद्भिः संसक्तः स्वप्रतिष्ठालाभामोदेन गर्वितो भवतीति सिद्धम्। **मधोर्**वसन्तस्य। "मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः। दैत्ये चैत्रे वसन्ते च जीवाशोके मधुद्रुमे॥" इति विश्वः। **दिनानि**। **धिन्वन्ति** प्रीणयन्ति। 'लोक'मिति शेषः। वसन्ततिलकं वृत्तम्॥ २०९॥"

इत्यत्र 'निस्तन्द्र' इत्यादिलक्षणामूलध्वनीनां संसृष्टिः ।

अथ गुणीभूतव्यङ्ग्यम्—

**२९६ अपरं तु गुणीभूतव्यङ्ग्यं वाच्यादनुत्तमे व्यङ्ग्ये ।**

अपरं काव्यम् । अनुत्तमत्वं न्यूनतया साम्येन च सम्भवति ।

**२९७ तत्र स्यादितराङ्गं काक्वाक्षिप्तं च वाच्यसिद्ध्यङ्गम् ॥ २९१ ॥**
**सन्दिग्धप्राधान्यं तुल्यप्राधान्यमस्फुटमगूढम् ।**
**व्यङ्ग्यमसुन्दरमेवं भेदास्तस्योदिता अष्टौ ॥ २९२ ॥**

इतरस्य रसादेरङ्गं रसादिव्यङ्ग्यम् । यथा—

---

इत्यत्र प्रागुदाहृते पद्ये इत्यर्थः । **निस्तन्द्रेत्यादिलक्षणामूलध्वनीनां** निस्तन्द्रेत्यादिषु या लक्षणा सा मूलं येषां तादृशा ये ध्वनयस्तेषां तथोक्तानाम् । **संसृष्टिः** । अयम्भावः—'तन्द्रा निद्राप्रमीलयोः' इत्यमरोक्त्या तन्द्रा निद्राऽक्षिप्रमीलनावस्था वा, सा निर्गताऽस्येति निस्तन्द्रः, इत्येवं निस्तन्द्रपदेन निद्रातत्पूर्वापरावस्थाऽन्यतररहित उच्यते, चन्द्रे च तत्त्वस्यानुपयोगितया प्रकाशमानत्वाभावाभावोऽर्थो लक्ष्यते तदतिशयश्च प्रयोजनम् । एवम्—सौहृदपदेन प्रेमोच्यते, तत्सादृश्यं च लक्ष्यते तदतिशयश्च प्रबोध्यमानः प्रयोजनम्, तथा—गर्वपदेनाभिमानः प्रोच्यते, तस्य च समीरणेऽसम्भवादुत्कर्षो लक्ष्यते तदतिशयबोधनं च फलम् । तदिति लक्ष्यमाणेष्वर्थेषु वाच्यार्थस्यार्थान्तरसङ्क्रमितत्वादत्यन्ततिरस्कृतवाच्यत्वम् । एतेषां च त्रिविधेषु सङ्करेष्वनन्तर्भावात् संसृष्टिरिति ।

एवं ध्वनिं निरूप्य गुणीभूतव्यङ्ग्यं निरूपयितुमाह—अथेत्यादि ।

**अथ** । **गुणीभूतव्यङ्ग्यम्** 'लक्ष्यते' इति शेषः । २९६ **अपरं** त्वित्यादिना ।

२९६ **वाच्यात्** अभिधाप्रतिपाद्यादर्थात् तदपेक्षयेति यावत् । **व्यङ्ग्ये** व्यञ्जनया बोध्येऽर्थे । **अनुत्तमे**ऽनुत्कृष्टे सतीत्यर्थः । **अपरं** भिन्नं काव्यम् 'ध्वनिकाव्या' दिति शेषः । **तु** । **गुणीभूतव्यङ्ग्यं** गुणीभूतमप्रधानभूतचमत्कारं व्यङ्ग्यं व्यञ्जनया बोध्यं यत्र तादृशम् । 'भवती'ति शेषः ।

कारिकां सुगमयति—**अपर**मित्यादिना । स्पष्टम् । तत्राद्यं यथा—"ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम् । पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥" इत्यत्र मुखच्छायाया मालिन्यातिशयप्रतिपादको वाच्योऽर्थः तदपेक्षया 'वञ्जुलगृहे दत्तसङ्केताऽपि न गता तरुणी'ति व्यङ्ग्यं न्यूनचमत्कारम् । द्वितीयं यथा—'ब्राह्मणातिक्रमत्याग' इत्याद्युदाहरिष्यत्येव ।

अस्य पुनर्भेदानन्यानाह—२९७ **तत्रे**त्यादिना ।

२९७ **तत्र** तस्मिन् गुणीभूतव्यङ्ग्यकाव्य इत्यर्थः । **व्यङ्ग्यम्** । **इतराङ्ग**मितरस्य रसादेर्वाक्यार्थस्य वाऽङ्गमङ्गभूतम् । **काक्वाक्षिप्तं** काक्वाऽऽक्षिप्तमाक्षेपेण सिद्धमिति तथोक्तम् । **च** तथा । **वाच्यसिद्ध्यङ्गं** वाच्यस्याभिधाप्रतिपाद्यस्यार्थस्य ( कुतोऽपि वैगुण्यादसिद्धस्य ) सिद्धिः सिद्धतया सम्पत्तिस्तस्या अङ्गम् । आपाततः प्रतीतस्य वाच्यार्थस्य प्रतिसन्धानानुपपत्तिनिवर्त्तकमिति भावः । **सन्दिग्धप्राधान्यं** सदिग्धं ( वाच्यव्यङ्ग्ययोः ) सन्देहास्पदं प्राधान्यं यत्र तादृशम् । **तुल्यप्राधान्यं** तुल्यं ( वाच्यस्य ) समकक्षं प्राधान्यं ( व्यङ्ग्यस्य ) चमत्कारोल्लासो यत्र तथोक्तम् । वाच्यस्य चमत्कारेण समकक्षो यस्य चमत्कारस्तथाभूतमित्यर्थः । **अस्फुटं** न स्फुटं सहृदयैरपि झटित्यवगन्तुं शक्यमिति तथोक्तम् । **अगूढं** न गूढं सहृदयेतरैरपि झटिति बोध्यम् । **एवम्** । **असुन्दरं** चमत्कारव्यपदेशानर्हम् । **स्यात्** । तस्मात् **तस्य** गुणीभूतव्यङ्ग्यस्य । **अष्टौ** । **भेदाः** । **उदिताः** कथिताः । अयम्भावः—गुणीभूतव्यङ्ग्यं हि काव्यं व्यङ्ग्यस्य इतराङ्गत्वाष्टविधत्वेनेतराङ्गाद्यष्टविधम् । इति ॥ २९१ ॥ २९२ ॥

क्रमादुदाहर्त्तुकाम आह—**इतरस्ये**त्यादि ।

**इतरस्य** स्वस्माद् भिन्नस्य । **रसादेः** । **अङ्गम्** अङ्गभूतमित्यर्थः । **रसादिव्यङ्ग्यम्** । तद्रूपमितराङ्गं नाम गुणीभूतव्यङ्ग्यं काव्यमित्यर्थः । **यथा**—

"अयं स रसनोत्कर्षी पीनस्तनविमर्दनः। नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः॥२०६॥"

इत्यत्र शृङ्गारः करुणस्याङ्गम्।

"मानोन्नतां प्रणयिनीमनुनेतुकामस्त्वत्सैन्यसागररवोद्गतकर्णतापः।

हाहा कथं नु भवतो रिपुराजधानीप्रासादसन्ततिषु तिष्ठति कामिलोकः २०७॥"

इत्यत्र औत्सुक्यत्राससन्धिसंस्कृतस्य करुणस्य राजविषयरतावङ्गभावः।

---

"**स** प्रागनुभुतनाभ्यूरुजघनोत्कर्षणादितत्तच्छृङ्गारावस्थः। **अयं** दृश्यमानदुरवस्थः। **रसनोत्कर्षी** रसनायाः काञ्च्या उत्कर्षी आकर्षक इति तथोक्तः। उत्कर्षतीत्याकर्षतीत्युत्कर्षी। 'सुप्यजातौ णिनिस्ताच्छील्ये' ३।२।७८ इति णिनिः। **पीनस्तनविमर्दनः** पीनौ पुष्टौ यौ स्तनौ तयोर्विमर्दनो विमर्दकः। **नाभ्यूरुजघनस्पर्शी** नाभिश्चोरू च जघनं च तानि स्पृशतीति तथोक्तः। **नीवीविस्रंसनो** नीव्या नाभितलगतवसनग्रन्थेर्विस्रंसन उन्मोचकः। 'नीवी स्त्री कटीवस्त्रविबन्धने। मूलद्रव्ये परिपणे' इति हैमः। **करः**। महाभारते स्त्रीपर्वणि चतुर्विंशेऽध्याये रणभूमौ पतितं भूरिश्रवसश्छिन्नं हस्तं गृहीत्वा तत्पत्न्याः प्रलापोऽयम् ॥ २०६ ॥"

उदाहरणं समर्थयते–इत्यत्रेत्यादिना।

**इत्यत्र** प्रागुदाहृते पद्ये। **शृङ्गारो** नायकाश्रयो रतिस्थायिभावको रसः। **करुणस्य** नायिकाश्रयस्य शोकस्थायिभावस्य रसस्य। **अङ्गम्**। अयम्भावः–प्राणप्रियस्य वियोगे युवत्यास्तेन कृतस्य शृङ्गारोचितस्य रसनोत्कर्षणादेः स्मरणं हृदयं विगलयच्छोकावेगं प्रवर्धयतीति शृङ्गारः करुणाङ्गभूतः, रतेः शोकोपकारितया प्रस्तुतत्वान्न शृङ्गारः प्रधानभूततां प्राप्तः, शोकस्य तथा प्रवृद्धत्वात् तत्स्थायिभावकः करुणः पुनः प्रधानतां प्राप्तः। तथा च–शृङ्गारमपेक्ष्यास्य गुणीभूतव्यङ्ग्यकाव्यत्वम्, करुणमपेक्ष्य पुनरस्यैव ध्वनिकाव्यत्वम्। इति।

इतरस्य रसादेरित्यत्रादिपदेन निर्वेदादीनां ग्रहणमिति द्योतयन्नुदाहरति–"**मानोन्नतामित्यादि**।

"भो राजन्! (इतिसम्बुद्धिपदमूह्यम्) **भवतः**। **रिपुराजधानीप्रासादसन्ततिषु** रिपूणां शत्रूणां राजधान्यो राजनगर्यस्तासु याः प्रासादसन्ततयः प्रासादश्रेणयस्तासु। 'प्रासादो देवभूभुजाम्।' इत्यमरः। **कामिलोकः** कामी जनः। **मानोन्नतां** मानेनाग्रहेण उन्नतोद्धता ताम्। **प्रणयिनीम्** प्रियाम्। **अनुनेतुकामः** प्रसादयितुमिच्छुः। **त्वत्सैन्यसागररवोद्गतकर्णतापः** तव सैन्यमेव सागरः समुद्रस्तस्य रवो गर्जनं तेनोद्गत उत्थित उत्पन्न इति यावत् कर्णतापो यस्य तादृशः। **हाहा**। **कथंनु**। **तिष्ठति**। वसन्ततिलकं वृत्तम् ॥ २०७॥"

उदाहृते किं कस्याङ्गमित्यपेक्षायामाह–इत्यत्रेत्यादि।

**इत्यत्र** प्रागुदाहृते पद्ये। **औत्सुक्यत्राससन्धिसंस्कृतस्य** औत्सुक्यत्रासयोः सन्धिराविर्भावतिरोभावयोर्मध्यावस्था तेन संस्कृतो विशेषितस्तादृशस्य। **करुणस्य** तदाख्यस्य रसस्य। **राजविषयरतौ** राजविषयिण्यां रतावित्यर्थः। **अङ्गभावो** गौणात्मनाऽवस्थानम्। अयम्भावः–अत्र हि प्रथमेन पादेनौत्सुक्यस्य, द्वितीयेन त्रासस्याभिव्यक्तिः, इत्येवं तयोः सन्धिना विशेषितस्तृतीयेनाभिव्यज्यमानः करुणः कवे राजविषयिण्यां रतौ न्यभूतः। इति।

यथा वा–"कैलासालयभाललोचनरुचा निर्वर्त्तितालक्तकव्यक्तिः पादनखद्युतिर्गिरिभुवः सावम् सदा त्रायताम्। स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते॥" इति, अत्र हि "त्रायता" मित्यभिव्यक्तस्य पार्वतीविषयिण्या रतेर्महादेवनिष्ठः पार्वतीविषयकः सम्भोगः शृङ्गारोऽङ्गम्। यथा वा–"अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाऽम्भोधयस्तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः। आश्चर्येण मुहुर्मुहुः स्तुतिमिमां प्रस्तौमि यावद्भुवस्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः॥" इति, अत्र हि भूमिविषया रती राजविषयाया रतेरङ्गम्। यथा वा–"बन्दीकृत्य नृप! द्विषां मृगदृशस्ताः पश्यतां प्रेयसां श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः। अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारान्निधे! विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे॥' इति, अत्र हि प्रथमार्धे सैनिकनिष्ठः परस्त्रीविषयकतया शृङ्गारः, द्वितीयार्धे च प्रत्यर्थिनिष्ठो निजशत्रुभूतराजविषयकतया रतिभावश्चेत्येवमनौचित्यात्तदुभयमप्याभासरूपं सत् कविनिष्ठस्य

"जनस्थाने भ्रान्तं कनकमृगतृष्णाऽन्धितधिया,
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृताऽलङ्का (ऽ) भर्त्तुर्वदनपरिपाटीषु घटना,
मयाऽऽप्तं रामत्वं कुशलवसुता न त्वधिगता ॥ २०८ ॥"

इत्यत्र रामत्वं प्राप्तम् इत्यवचनेऽपि शब्दशक्तेरेव रामत्वमवगम्यते । वचनेन तु सादृश्यहेतुकतादात्म्यारोपणमाविष्कुर्वता तद्गोपनमपाकृतम् । तेन वाच्यं सादृश्यं वाक्यार्थान्वयोपपादकतयाऽङ्गतां नीतम् ।

---

राजविषयकरतेरङ्गम् । "अविरलकरवालकम्पनैर्भ्रुकुटीनर्त्तनगर्जनैर्मुहुः । ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥" इति अत्र हि वैरिगतस्य गर्वापरपर्य्यायस्य मदभावस्य शान्तिः कविनिष्ठायां राजविषयकरतावङ्गम् । यथा वा—"साकं कुरङ्गकदृशा मधुपानलीलाः कर्त्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते । अन्याभिधायि तव नाम विभो ! गृहीतं केनापि तत्र विषमामकरोदवस्थाम् ॥" इति, अत्र हि विषमावस्थानव्यङ्ग्यस्य त्रासभावस्योदयो राजविषयकरतेरङ्गम् । यथा वा—"असोढा तत्कालोल्लसदसहभावस्य तपसः कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः । प्रमोदं वो दिश्यात् कपटवटुवेषापनयने त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥" इति, अत्र हि आवेगधैर्य्ययोस्त्वरापदशैथिल्यपदव्यङ्ग्ययोर्महादेवनिष्ठयोः सन्धिः कविनिष्ठाया महादेवविषयिण्या रतेरङ्गम् । यथा वा—"पश्येत् कश्चिच्चलचपल ! रे ! का त्वरा ? ऽहं कुमारी हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि । इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः कन्या कञ्चित् फलकिसलयान्यादधानाऽभिधत्ते ॥" इति, अत्र हि 'पश्येत् कश्चि'दित्यनेन शङ्कायाः, 'चल चपल !' इत्यनेनासूयायाः, 'का त्वरा' इत्यनेन धृतेः, 'अहं कुमारी' इत्यनेन स्मृतेः, 'हस्तालम्बं वितरे'त्यनेन श्रमस्य, 'हहहे'त्यनेन दैन्यस्य, 'व्युत्क्रमः' इत्यनेन विबोधस्य, 'क्वासि यासि' इत्यनेन औत्सुक्यस्य च व्यज्यमानस्य शबलता कविनिष्ठे नृपतिविषयके रतिभावेऽङ्गम् । इति ।

एवं रसादेरङ्गभूतत्वेन व्यङ्ग्यस्य गुणीभूतत्वमुदाहृत्य वाच्यार्थस्याङ्गभूतत्वेनापि व्यङ्ग्यस्य गुणीभावे इतराङ्गव्यपदेशार्हे इति सूचयन्नुदाहरति—"जनस्थाने.." इत्यादि ।

"जनस्थाने जनानां स्थानं ग्रामनगरादि, तत्र (दण्डकारण्ये इति तु श्लिष्टोऽर्थः) कनकमृगतृष्णाऽन्धितधिया कनकस्य सुवर्णस्य मृगतृष्णा निष्फलाऽऽशा तयाऽन्धिता अन्धभूता या धीस्तया, यद्वा—अन्धिता धीर्यस्य तेन मयेति शेषः (कनकमृगस्य तृष्णा लाभेच्छा तयाऽन्धिता धीर्यस्य वा तेन तया वेति तु श्लिष्टोऽर्थः)। भ्रान्तं भ्रमणं कृतम् । वै निश्चयेन । देहि सम्प्रदद्स्व (वैदेहि हे सीते ! इति तु श्लिष्टः)। इति । वचः । प्रतिपदम् (इदं क्रियाविशेषणम्)। उदश्रु उद्गतमश्रु यत्र तद् यथा तथा (इदमपि क्रियाविशेषणम्)। प्रलपितम् । भर्त्तुः स्वामिनो धनिन इति यावत् । वदनपरिपाटीषु वदनानि कथनानि प्रार्थनानीति यावत्, तेषां परिपाट्य आनुपूर्व्यस्तासु । का । घटना । अलम् । अनेनेत्यर्थः कृता धनिनः पुरस्तात् प्रार्थनानां सन्ताने का न घटना कृता ? अपितु सर्वा अपि प्रार्थनाः कृता न तत्र काऽपि त्रुटिर्विहितेति भावः । यद्वा—काभर्त्तुरीषद्भर्त्तेति काभर्त्ता तस्य । 'ईषदर्थे ।' ६ । ३ । १०५ इति कादेशः वदनपरिपाटीषु वदनानि कथनानि प्रार्थनानि तेषां परिपाट्यस्तास्विति पूर्ववत् । घटना समर्थनार्था युक्तिः । अलम् कृता । यद्वा—लङ्कानां कुलटानां ननु दीनानां भर्त्ता पोषकस्तादृशस्य । 'लङ्का रक्षःपुरीशाखाशाकिनीकुलटासु च ।' इति मेदिनी । वदनपरिपाटीषु स्तवनपरम्परासु । घटना कृता ('लङ्काभर्त्तुः रावणस्य वदनपरिपाटीषु घटना मस्तकानुपूर्व्ये बाणसम्पातघटनेति तु श्लिष्टोऽर्थः)। इत्थम्—मया । रामत्वं रामधर्म्मत्वम् ! आप्तं प्राप्तं लब्धमिति यावत् । तु किन्तु । कुशलवसुता कुशलं निपुणं स्वकुटुम्बपरिपोषणोपयोगीति यावत् वसु धनं यस्य तस्य भावस्तत्ता (कुशलवौ सुतौ यस्यास्तया सदृशी सीतेत्यर्थस्तु श्लिष्टः)। न । अधिगता लब्धा । अत्र श्लेषोपस्थितानां जनस्थानादिपदार्थानामभेदारोपाद्रामत्वोपपत्तिर्बोध्या । नानायत्नोत्तरमप्यलब्धधनस्य कवेरुक्तिरियम् । भट्टवाचस्पतेः पद्यमिदम् । शिखरिणीवृत्तम् ॥ २०८ ॥"

उदाहरणं सङ्गमयति—इत्यत्रेत्यादिना ।

इत्यत्रेत्यस्मिन्नुदाहृते पद्य इति यावत् । 'रामत्वं रामधर्मः । प्राप्तम् ।' इत्यवचने इति कथनाभावे ।

काकाक्षिप्तं यथा-

" मथ्नामि कौरवशतं समरे न कोपाद्, दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
सञ्चूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु नृपतिर्भवतां पणेन ॥ २०९॥ "

इत्यत्र ' मथ्नाम्येव ' इत्यादि व्यङ्ग्यं वाच्यस्य निषेधस्य सहभावेनैव स्थितम् ।

---

अपि । **शब्दशक्तेः** शब्दनिवेशसामर्थ्यात् । **एव** । **रामत्वम्** । 'कवयितु'रिति शेषः । **अवगम्यते** बुध्यते । **वचनेन**'मयाऽऽसं रामत्वम्'इति कथनेन । तु पुनः । **सादृश्यहेतुकतादात्म्यारोपणं** सादृश्यं रामेण समं साधर्म्यं तद्धेतुकं यत् तादात्म्यारोपणं शब्दशक्तिद्वाराऽऽत्मनि वक्तरि रामत्वस्यारोपस्तत् । **आविष्कुर्वता**'वाच्यतां नीत्वा ध्वन्यतां निवर्त्त्य च पामरैरपि बोद्धव्यतां नयता । **तद्गोपनं** तस्य गोपनं शब्दशक्तिमात्रवेद्यत्वं ध्वन्यत्वमिति यावत् । **अपाकृतम्** । **तेन** सादृश्यस्य गोपनापाकरणेन । **वाच्यमभिधया** प्रतिपाद्यम् । **सादृश्यम्** । **वाक्यार्थान्वयोपपादकतया** वाक्यार्थस्य रामसादृश्यावगमकस्य पदार्थविशेषस्यान्वयोपपादकतासम्बन्धसङ्घटकता तया । **अङ्गताम्** । **नीतम्** । अयम्भावः-स्वस्य रामेण समं साधर्म्यं प्रतिपाद्यमानं यावत् पादत्रयं व्यञ्जनया बोध्यं सद्भिधेयतां गतम्, 'मयाऽऽसं रामत्व'मिति वचनेन चाभिधेयतां नीतम् इति तस्य व्यङ्ग्यस्य वाच्याङ्गत्वम् । एवं च-शब्दशक्तिमूलकानुरणनेन यच्चमत्कारातिशयेनोपमाया ध्वन्यमानत्वं तत् न्यग्भूतम् । इति । यथा वा-' आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गीमम्भोजिनीं क्वचिदपि क्षपितत्रियामः । एतां प्रसादयति पश्य शनैः प्रभाते तन्वङ्गि ! पादपतनेन सहस्ररश्मिः ॥" इति, अत्र हि विनैवानुनयमपनीतमानां नायिकां प्रति सख्या उपालम्भोक्तौ नायकवृत्तान्तोऽर्थशक्त्या व्यज्यमानो वाच्ये रविकमलिनीवृत्तान्तेऽभिन्नतयाऽऽरोप्यमाण एतस्याङ्गतां गतः ।

काकाक्षिप्तमुदाहर्त्तुमाह-काक्वेत्यादि ।

**काकाक्षिप्तं** काका ध्वनिविशेषेणाक्षिप्तं झटिति बोध्यतां नीतम् । 'व्यङ्ग्य'मिति प्रकृतम् । **यथा**-" **मथ्नामी**"त्यादि ।

" **समरे** सङ्ग्रामे । **कोपात्** । **कौरवशतं** कौरवाणां कुरुपुत्राणां दुर्योधनादीनां शतं तत् । **न** । **मथ्नामि** । **दुःशासनस्य** । **रुधिरम्** । **उरस्त** उरसो वक्षःस्थलं निर्भद्येति यावत् । ल्यब्लोपे पञ्चमी । **न** । **पिबामि** । **गदया** । **सुयोधनोरू** सुयोधनस्य दुर्योधनस्योरू जङ्घे ते । **न** । **सञ्चूर्णयामि** । **भवतां** ( नतु ममेति स्वाक्षिप्तोऽर्थः ) । **नृपतिः** राजा युधिष्ठिर इति यावत् । **पणेन**'इन्द्रप्रस्थं वृकप्रस्थं जयन्तं वारणावतम् । देहि मे चतुरो ग्रामान् पञ्चमं कञ्चिदेव तु ॥' इत्युक्त्योऽन्येन । **सन्धिं** मैत्रीं विरोधशान्तिं वा । **करोतु** । वेणीसंहारे सन्धिश्रवणेन कुपितस्य भीमसेनस्य सहदेवं प्रत्युक्तिरियम् । वसन्ततिलकं वृत्तम् ॥२०९॥"

उदाहृते पद्ये किं व्यङ्ग्यमित्यपेक्षायामाह-इत्यत्रेत्यादि ।

**इत्यत्र** प्रागुदाहृते पद्ये । '**मथ्नामि कौरवशतम्**' इति शेषः । **एव** 'नतु मथ्नामि' इति शेषः ।' **इत्यादि** । 'आदिना-'पिबाम्येव, सञ्चूर्णयाम्येवे' त्यनयोर्ग्रहणम् । **व्यङ्ग्यम्** । **वाच्यस्य** । **निषेधस्य** 'न मथ्नामी'-त्यादिपदार्थभूतस्य मथनादिविषयकप्रतिषेधस्य । **सहभावेन एव** 'न तु पार्थक्येने' ति शेषः । **स्थितम्** । अयम्भावः-कुपितस्य भीमसेनस्य प्रतिज्ञात्रयम्, 'दुर्योधनादीन् अहमेव शतसङ्ख्यकान् धार्त्तराष्ट्रान् निहनिष्यामि' इत्येका, 'दुःशासनस्य वक्षो विदार्य्य रुधिरं पास्यामी' त्यन्या, 'दुर्य्योधनस्य जङ्घे गदया चूर्णयिष्यामी' ति तृतीया च प्रतिज्ञा । इत्येवं प्रतिज्ञात्रयवतः 'न मथ्नामी' त्यादिः प्रतिज्ञाविरुद्धोक्तिरिति नञि काकुः; तया च काका नञर्थान्तरं प्रतीयमानं 'न मथ्नामीति, न,' 'न पिबामीति, न,' 'न सञ्चूर्णयामीति, न' इति प्रकृतनञर्थान्वयीत्यभावाभावरूपं 'मथ्नाम्येवे' त्याद्यवधारणं समुन्नीयते । स्फुटं चैवं व्यङ्ग्यस्य काकाऽऽक्षिप्तत्वम् । आक्षिप्तत्वं नाम झटिति प्रत्याय्यमानत्वम् । तत्सर्वमभिप्रेत्यैव कविराजैः 'वाच्यस्य निषेधस्य सहभावेनैव स्थित' मित्युक्तम् । एवकारेण-"तथाभूतां दृष्ट्वा नृपसदसि पाञ्चालतनयां वने व्याधैः सार्धं सुचिरमुषितं वल्कलधरैः । विराटस्यावासे स्थितमनुचितारम्भनिभृतं गुरुः खेदं खिन्ने मयि भजति नाद्यापि कुरुषु ॥" इत्यादौ 'मयि न योग्यः खेदः, कुरुषु तु योग्य' इति इति काका प्रतीयमानस्यार्थस्य व्यवच्छेदः । इति दिक् ।

"दीपयन् रोदसी रन्ध्रमेष ज्वलति सर्वतः । प्रतापस्तव राजेन्द्र ! वैरिवंशदवानलः ॥ २१० ॥"

इत्यत्रान्वयस्य वेणुत्वारोपणरूपो व्यङ्ग्यः प्रतापस्य दवानलत्वारोपसिद्धयङ्गम् ।

"हरस्तु किञ्चित्परिवृत्तधैर्य्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥ २११ ॥"

इत्यत्र विलोचनव्यापारचुम्बनाभिलाषयोः प्राधान्ये सन्देहः ।

---

वाच्यसिद्ध्यङ्गमुदाहरति–"दीपय'न्नित्यादिना ।

"हे **राजेन्द्र** ! **रोदसीरन्ध्रं** रोदस्योर्द्यावापृथिव्यो रन्ध्रं विवरं तत्तथोक्तम् । 'भूद्यावौ रोदस्यौ रोदसी च ते ।' इत्यमरः । **दीपयन्** प्रकाशयन् । **एषः** । **वैरिवंशदवानलो** वैरिण एव वंशा वेणवस्तेषां दवो वनं तस्यानलः तद्रूप इति भावः । **तव** । **प्रतापः** । **सर्वतः** । **ज्वलति** दीप्यते ॥ २१० ॥"

वाच्यसिद्ध्यङ्गतां दर्शयति–इत्यत्रेत्यादिना ।

**इत्यत्र** । **अन्वयस्य** वंशस्य वैरिवंशस्येति यावत् । **वेणुत्वारोपणरूपः** । **व्यङ्ग्यः** । स च–**प्रतापस्य** । **दावानलत्वारोपसिद्ध्यङ्गं** दवानलस्यारोपस्तस्य सिद्धिस्तस्या अङ्गम् । अयम्भावः–प्रतापस्य दवानलत्वं वाच्यम्, तेन दावानलत्वारोपस्य सिद्ध्यर्थं वैरिवंशे वंशत्वारोप उपपाद्यः, प्रतापस्य वैरिवंशसंहारमूलत्वात्; स च व्यङ्ग्यः । आरोपणं च दवानलस्य साक्षादात्मना वैरिवंशत्वासम्भवात् । इत्येवमेव व्यङ्ग्योऽर्थस्तस्य वाच्यस्य सिद्धावङ्गभूतः । अत एव-तर्कवागीशा अप्याहुः, अन्वयस्य कुलस्य प्राथमिके बाधे दवानलस्य शत्रुगोत्रसम्बन्धासम्भवोपलम्भादप्रामाण्योपग्रहः, ततः प्रतापस्य दवानलत्वोपपत्त्या व्यङ्ग्यं कुलस्य वेणुत्वारोपणमभिसन्दधतः श्रोतुर्वैरिकुलवेणुदवानल इति द्वितीयबोधः । आरोप्यमाणस्य वेणोर्दवानलसम्बन्धित्वमक्षतमित्यनुपपत्तिनिरासेन दवानलत्वारोपणस्याङ्गं व्यङ्ग्यरूपकं प्रतापस्य दाहकत्वेन कविपरम्परासिद्धपिशङ्गत्वेन च दवानलसादृश्यं प्रसिद्धमिति तद् रूपकं वैरिकुलस्य वेणुत्वारोपणकारणमिति श्लिष्टनिबन्धनं परम्परितरूपकमिदम् ।' इति । ननु वेणोर्न व्यङ्ग्यत्वम्, सत्यपि राजप्रतापवर्णनप्रसङ्गेन प्रसिद्धिबलादभिधयैव वंशपदेन वेणूपस्थितेः । प्रसङ्गात् हि प्रसिद्धिः खलु बलीयसी, अन्यथा निहतार्थत्वविलोपप्रसङ्गात्, प्रसङ्गबलादप्रसिद्धार्थस्यार्थस्य प्रागुपस्थितौ तद्दोषस्यानवसरात् । इति चेन्, उच्यते, प्रसिद्धा वेणूपस्थितिरिति कुलाभिन्ने वेणौ दवाभिन्नवैरित्वावगमः । सर्वथा वेणुप्रत्यायनं तु व्यञ्जनयैव, अभिधाया विरामात् । ननु पुनरभिधयैव वेणुप्रत्यायनं भवतु, किं व्यञ्जनयेति न शङ्क्यम्, एवं सति अभिधायाः पुनरुत्थानकल्पनापत्तेः पुनरुत्थानस्य चासम्भवात् एवं च निहतार्थत्वं श्लेषादावदुष्टम् । इति च बोध्यम् । यथा वा–"गच्छाम्यच्युत ! दर्शनेन भवतः किं तृप्तिरुत्पद्यते ? किं त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा । इत्यामन्त्रणभङ्गिसूचितवृथाऽवस्थानखेदालसामाश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥" इत्यत्र तृतीयपादार्थस्य अच्युतादिपदव्यङ्ग्योऽर्थः सिद्धावङ्गभूतः ।

सन्दिग्धप्राधान्यमुदाहरति–'हरस्तिव'त्यादिना । व्याख्यातपूर्वमिदं पद्यम् ॥ २११ ॥

उदाहरणीयं निर्दिशति-इत्यत्रेत्यादिना ।

**इत्यत्र** । **विलोचनव्यापार–चुम्बनाभिलाषयोः** तद्रूपयोर्वाच्यव्यङ्ग्ययोरर्थयोरित्यर्थः । **प्राधान्ये** चमत्कारित्वातिशयस्फूर्तौ । **सन्देहो** विलोचनव्यापारविधानस्य वाच्यस्य किंस्वित् प्राधान्यम् ? आहोस्वित् चुम्बनाभिलाषप्रकटनस्य; इति संशय उभयत्र साधकबाधकमानाभावात् । अयम्भावः–विलोचनव्यापारणं धैर्य्यपरिवृत्तता चानुभावौ वाच्यौ, तौ चेदौत्सुक्यादीन् व्यभिचारिणोऽभिव्यज्य रतिचर्वणायां पर्य्यवसास्यातां तर्हि 'चुम्बितुमभ्यलाषी'दिति व्यङ्ग्यस्यापि प्राधान्यम् । व्यङ्ग्यभूताभिलाषाऽनुपदमेवौत्सुक्यादेर्व्यञ्जनात् । न च तथा । यदि तु रतिकार्यत्वादाहत्यैव रतिचर्वणायां पर्य्यवसास्यातां तर्हि वाच्यस्य । न च तथा । विनिगमकाभावात् । तस्मात् उभयोरपि प्राधान्यं सन्दिग्धम् । न च तुल्यं प्राधान्यम्, पृथग् विश्रामाभावात् । इति ।

"ब्राह्मणातिक्रमत्यागो भवतामेव भूतये। जामदग्न्यश्च वो मित्रमन्यथा दुर्मनायते ॥ २१२॥"

इत्यत्र 'परशुरामो रक्षःकुलक्षयं करिष्यति' इति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम्।

"सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः। अल्लावदीननृपतौ न सन्धिर्न च विग्रहः ॥२१३॥"

इत्यत्र अल्लावदीनाख्ये नृपतौ दानसामादिमन्तरेण नान्यः प्रशमोपाय इति व्यङ्ग्यं व्युत्पन्नानामपि झटित्यस्फुटम्।

"अनेन लोकगुरुणा सतां धर्मोपदेशिना। अहं व्रतवती स्वैरमुक्तेन किमतः परम् ॥२१४॥"

---

तुल्यप्राधान्यमुदाहरति-'ब्राह्मणे'त्यादिना।

"**ब्राह्मणातिक्रमत्यागो** ब्राह्मणानामतिक्रमोऽवमानस्तस्य त्यागोऽनाचरणम्। **भवताम्**। **एव** ननु ब्राह्मणानाम्। ब्राह्मणानां हि भूतेर्जामदग्न्ये जीवति स्वतःसिद्धत्वात् तदर्थं चान्यस्यापेक्षाविरहादिति भावः। **भूतये** सम्पदेऽस्तु। **वो** युष्माकम्। **च**। **जामदग्न्यो** जमदग्निनन्दनः। **मित्रं** 'महादेवशिष्यत्वेनोभयेषां सतीर्थ्यतया मित्रत्वम्। **अन्यथा** ब्राह्मणातिक्रमे। **दुर्मनायते** झटिति दुर्मना भविष्यतीति भावः। 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा।' ३।३।१३१ इति भविष्यत्सामीप्ये वर्त्तमाननिर्देशः। अयम्भावः-ब्राह्मणातिक्रमे भवतामकल्याणम्, भवन्मित्रस्य जामदग्न्यस्य च क्षोभः। ब्राह्मणानतिक्रमे च भवतां कल्याणम्, जामदग्न्यस्य च क्षोभाभावः। इति। महावीरचरितस्थेदं पद्यम्। 'रावणमुद्दिश्य रावणामात्यम्माल्यवन्तं प्रति परशुरामेण प्रेषिते पत्रे पद्यमिदम् ॥२१२॥"

अत्र कस्य व्यङ्ग्यस्य कस्य च वाच्यस्य समं प्राधान्यमित्याशङ्क्याह-इत्यत्रेत्यादि।

**इत्यत्र**। '**परशुरामः**। 'ब्राह्मणातिक्रमे' इति शेषः। **रक्षःकुलक्षयम्**। 'क्षत्रकुलक्षयमिवे'ति शेषः। **करिष्यति**।' **इति**। **व्यङ्ग्यस्य**। **वाच्यस्य** 'ब्राह्मणानतिक्रमो युष्माकं सम्पत्तये, जामदग्न्यस्य च युष्माकं मैत्र्यै' इति तस्याप्येवमेव प्रमोद' इत्यात्मकस्य। **च**। **समं** तुल्यम्। **प्राधान्यम्**। अयम्भावः-'परशुरामो ब्राह्मणातिक्रमे क्षत्रियाणामिव रक्षसामपि क्षयं करिष्यती'ति दण्डरूपं व्यङ्ग्यमिव 'ब्राह्मणातिक्रमे युष्माकं मित्रं परशुरामो दुर्मनायते। ब्राह्मणानतिक्रमे च युष्माकं सम्पत्ति'रिति सामरूपं वाच्यमपि 'अन्यथा दुर्मनायते'इति गभीरोक्त्या प्रधानम्, विग्रहपरसन्धेरपि अनर्थनिवारकतया विवक्षितत्वाच्च। इत्येतयोः समं प्राधान्यम्। इति।

अस्फुटं व्यङ्ग्यमुदाहरति-"**सन्धा**"वित्यादिना।

"**सन्धौ** 'कर्त्तव्य'इति शेषः। **सर्वस्वहरणम्**। **विग्रहे** युद्धे 'कर्त्तव्य'इति शेषः। **प्राणनिग्रहः** प्राणानां निग्रहो दण्डः। अतः-**अल्लावद्दीननृपतौ** (विषये सप्तमीयम्)। **सन्धिर्मेलनोपायः**। **न** 'सम्भवती'ति शेषः। **विग्रहो** युद्धम्। **च**। **न**। अल्लावद्दीनाख्यस्य यवनेन्द्रस्य स्तुतिरियम् ॥ २१३ ॥

व्यङ्ग्यस्यास्फुटतां दर्शयति-इत्यत्रेत्यादिना।

**इत्यत्र**। **अल्लावद्दीनाख्ये**। **नृपतौ**। **दानसामादिम्**। आदिना शुश्रूषाया ग्रहणम्। **अन्तरेण** विना। **अन्यः**। **प्रशमोपायः** कोपशान्त्युपाय इत्यर्थः। **न**। **इति**। **व्यङ्ग्यम्**। **व्युत्पन्नानां** सहृदयानाम्। **अपि**। **झटिति**। **अस्फुटं** न स्फुटम्। अयम्भावः-अल्लावद्दीनेन सन्धिविग्रहावुभावपि न युक्ताविति वाच्येन व्यज्यमानं 'दानाद्येव युक्त'मिति न स्फुटम्, तस्य हेतोः 'न कथमपि तस्य कुपितस्य कोपोपशमोपाय'इत्येवं प्रत्यायने स्फुटमुपपत्तेः। इति।

अगूढं व्यङ्ग्यमुदाहरति-**अनेने**त्यादिना।

"**सतां** महताम्। **धर्म्मोपदेशिना** धर्म्मोपदेशकेन। अत एव-**लोकगुरुणा**। लोकस्य जगतो गुरुः धर्म्मतो निवर्त्तकत्वेनाज्ञाननिवर्त्तकत्वेन वाऽऽचार्य्यस्तत्त्वेन ख्यातस्तथोक्तेन। **अनेन**। 'तिर्य्यग्योषिद्बलादुपभुज्यते स्मे'ति शेषः। ननु त्वया किं नासौ तदा प्रबोधित इत्यत आह-**अहं** तस्य गृहिणीत्यर्थः। **व्रतवती** पतिव्रता तदनुकूलत्वाचरणनियमपरेति यावत्। अतो न किमपि वक्तुं क्षमेत्याह-**अतः**। **परम्**। **स्वैरं** यथेष्टमुच्चैरिति यावत्। **उक्तेन** कथनेन। भावे क्तः। **किम्**। न किमपि फलमिति भावः। शाक्यमुनिं तिर्य्यग्योषितमुपगतवन्तमसहमानातस्यात्पत्न्या उक्तिरियम्। अतोऽत्र प्रकरणद्वयङ्ग्योऽर्थो वाच्यायते ॥२१४॥"

इत्यत्र प्रतीयमानोऽपि शाक्यमुनेस्तिर्य्यग्योषिति बलात्कारेणोपभोगः स्फुटतया वाच्यायमान इत्यगूढम् ।

"वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणंतीए । घरकम्मवावडाए बहुए सीअंति अंगाइं ॥ २१५ ॥"[1]

इत्यत्र 'दत्तसङ्केतः कश्चिल्लतागृहं प्रविष्ट'इति व्यङ्ग्यात् 'सीदन्त्यङ्गानी'ति वाच्यस्य चमत्कारः सहृदयसंवेद्य इत्यसुन्दरम् ।

---

इत्यत्र को व्यङ्ग्योऽर्थः स्फुट इत्यत आह–इत्यत्रेत्यादि । स्पष्टम् । यथा वा मम–"अस्माकमेष एको जीवितमेनं विना कथं स्यामः । इत्यनुरक्ता नित्यं स्त्रीपुत्राद्या भवन्ति यत्र स्म॥ सोऽहं तेषां भरणाद्विमुखो विकलेन्द्रियादिसामर्थ्यैः । तृणतोऽपि तैः परास्तः श्वसिमीति बतास्य वैभवं जगतः ॥" इति । अत्र हि 'जीवन्नपि मृत' इति श्वसिमीति पदेन, 'लोकोऽयं स्वार्थपर'इति च 'बतास्य वैभवं जगत' इत्यनेन च व्यज्यमानोऽर्थो नितान्तं स्फुटो वाच्यतां धत्ते ।

असुन्दरं व्यङ्ग्यमुदाहरति–"वाणीरे"त्यादिना ।

"वाणीरकुडंगुड्डीणसउणिकोलाहलं वानीरकुञ्जोड्डीनशकुनिकोलाहलं वानीरा वेतसास्तेषां कुञ्जा गहनस्थानानि तेभ्य उड्डीना उत्थायाकाशमार्गे उत्पतिता ये शकुनयः पक्षिणस्तेषां कोलाहलः कलकलशब्दस्तम् । 'अथ वेतसे । रथाभ्रपुष्पविदुलशीतवानीरवञ्जुलाः ।' इति, 'निकुञ्जकुञ्जौ वा क्लीबे लताऽऽदिपिहितोदरे ।' इति, 'कोलाहलः कलकलः' इति च नामलिङ्गानुशासनम् । सुणंतीए शृण्वन्त्याः । घरकम्मवावडाए गृहकर्म्मव्यापृतायाः । बहुए वध्वाः । अंगाइं अङ्गानि । सीअंति सीदन्ति विषीदन्तीतियावत् । गृहपार्श्ववर्तिनि वेतसकुञ्जे दत्तसङ्केतायास्तदुत्पतत्पक्षिकोलाहलतर्कितोपनायकप्रवेशाया गुरुजनपारजन्त्र्येण गृहकर्म्मणि व्यापृताया अत एव तत्र गन्तुं स्पृहायामप्यशक्नुवत्या अवस्थावर्णनमिदम् । मुखविपुला छन्दः । तल्लक्षणं च यथोक्तम्, "संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः । यस्यास्तां पिङ्गलनागो विपुलामिति समाख्याति ॥" इति, 'इयं विपुला चपलावन्मुखजघनभेदभिन्ना भवति, प्रथमेऽर्धे मुखविपुला, उत्तरार्धे जघनचपला ।' इति च ॥ २१५ ॥"

कथं व्यङ्ग्यस्यासुन्दरत्वमित्यपेक्षायामाह–इत्यत्रेत्यादि ।

इत्यत्र । 'दत्तसङ्केतो दत्तः सङ्केतो यस्येति तथोक्तः । कश्चित् 'उपनायक'इति शेषः । लतागृहम् । प्रविष्टः ।' इति व्यङ्ग्यात् तमपेक्ष्येति भावः । 'अङ्गानि गात्राणि । सीदन्ति विषीदन्ति ।' इति । वाच्यस्य । 'विप्रलम्भपरिपोषकत्वा'दिति शेषः । चमत्कारस्तस्यातिसौन्दर्यादिना मुग्धाया अतीवौत्सुक्यातिपर्य्यवसायी बोधविशेषः । सहृदयसंवेद्यः सहृदयाः काव्यतत्त्वज्ञास्तत्संवेद्यः । अयम्भावः–'मया स दत्तसङ्केत आगतः' इति व्यङ्ग्यम्, तदपेक्षया च 'तत्कोलाहलश्रवणसमकालमेव नायिकायाः सर्वाङ्गावसादन'मिति वाच्यस्य 'तदलाभे नायिकाया अतीवौत्सुक्यमासी'दित्यत्र पर्य्यवसायी चमत्कारः सुन्दर इति व्यङ्ग्यस्य गुणीभूतत्वम् । इति । तथाऽऽहुः 'दत्तसङ्केतः स उपेत'इति व्यङ्ग्यं शरीरावसादस्य विप्रलम्भानुभावभूतस्य वाच्यस्यौत्सुक्यावेगसंवलितानुरागोद्रेकजनितमदनपारतन्त्र्यपरश्चमत्कारः सुन्दरः ।' इति । "शकुनिकोलाहलश्रवणेन उपनायकस्य लतागृहप्रवेशानुमानम्, ततो हर्षावेगौ, ताभ्यामनुरागोद्रेकः । ततो मदनपरवशताप्रतीतिः, एवं च–व्यङ्ग्यस्य चमत्काराप्रत्यासन्नत्वमेवासुन्दरत्वमिति फलितम् । केचित्तु'रसादिबोधजनने वाच्यसापेक्षत्वमेवासुन्दरत्वम् । इति । व्यङ्ग्यादिति । इत्यादिव्यङ्ग्यादित्यर्थः । तथा च वधूश्च न तत्र गतेत्येतत्पर्यन्तादित्यर्थः । वध्वा अगमनमेव न केवलं तदीयविप्रलम्भव्यञ्जकम्, किन्तु–शकुनिकोलाहलश्रवणेन सीदन्त्या वध्वा अगमनमिति वाच्याङ्गावसादसहकारेणैव रसव्यञ्जनाया वाच्यमुखनिरीक्षकत्वात्तदपेक्षया न्यूनचमत्कारी ।' इति वदन्ति, तन्न; अङ्गावसादव्यङ्ग्यविषादसहकृतस्यैव वध्वगमनस्य विप्रलम्भव्यञ्जकत्वसम्भवेन वाच्याङ्गावसादमुखनिरीक्षणाभावेनातनानीन्तनगमनाभावसत्त्वेऽपि गमनसम्भावनया विप्रलम्भासम्भवात् । न च 'गृहकर्म्मव्यापृताया' इत्यनेन गमनाभावनिश्चयेन

---

१ "वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः । गृहकर्म्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ॥" इति संस्कृतम् ।

**किञ्च-यो दीपकतुल्ययोगिताऽऽदिषु उपमाऽऽद्यलङ्कारो व्यङ्ग्यः, स गुणीभूतव्यङ्ग्य एव, काव्यस्य दीपकादिमुखेनैव चमत्कारविधायित्वात्।**

**तदुक्तं ध्वनिकृता-**

**"अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते।**
**तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेर्मतः॥"**

**यत्र च शब्दान्तरादिना गोपनकृतचारुत्वस्य विपर्यासः।**

---

गमनसम्भावनैव नास्ती'ति वाच्यम्। गृहकर्म्मान्तःपातिजलाहरणादिच्छलेनापि तत्सम्भवात्, रतेरुपनायकविषयत्वेन विप्रलम्भाभासस्यैव वक्तुमुचितत्वाच्च।" इति च।

एवं गुणीभूतव्यङ्ग्यस्याष्टौ भेदान् लक्ष्यलक्षणाभ्यां निर्दश्य गुणीभूतव्यङ्ग्यत्वमेवमन्यत्रापि निर्दृष्टव्यमिति ध्वनिभ्रमसम्भवनिरासपूर्वकं निर्देष्टुमुपक्रमते-**किञ्चे**त्यादिना।

**किञ्च** निरूपणीयान्तरमस्तीति भावः। **दीपकतुल्ययोगिताऽऽदिषु** तदाख्येष्वलङ्कारेषु। आदिना व्याजस्तुतिसमासोक्त्यादीनां ग्रहणम्। **उपमाऽऽद्यलङ्कारः**। आदिना श्लेषादीनां ग्रहणम्। **यः**। **व्यङ्ग्यः**। **सः**। **गुणीभूतव्यङ्ग्यो** गुणीभूतं व्यङ्ग्यं यत्र तादृशः। **एव**। ननु कोऽत्र हेतुरित्याशङ्क्याह '**काव्यस्य** व्यज्यमानोपमाऽऽद्यलङ्कारस्ये'ति शेषः। **दीपकादिमुखेन** दीपकादिद्वारा। **एव**। **चमत्कारविधायित्वात्**। अयम्भावः-यत्र दीपकादिसद्भावे उपमाऽऽदेर्व्यंज्यमानत्वं तत्र दीपकाऽऽद्यन्वयव्यतिरेकानुविधायित्वमिति न व्यज्यमानस्याप्युपमादेश्चमत्कारकारित्वे प्राधान्यम्, किन्तु दीपकादेरेव। इति।

उक्तमर्थं ध्वनिकारसम्मत्या समर्थयते-**तदुक्त**मित्यादिना।

**तत्** 'यत्प्रागुक्त' मिति शेषः। **ध्वनिकृता** ध्वनिमार्गस्थापकाचार्य्येणानन्दवर्धनेनेत्यर्थः। **उक्तम्**। किमित्याह-

"**अलङ्कारान्तरस्या**न्यो वाच्याद्भिन्नोऽलङ्कार इति तस्य। **यत्र** यस्याम्। **प्रतीतौ** कथमपि व्यक्तौ 'सत्या' मिति शेषः। **अपि** 'किं पुनरसत्या'मिति शेषः। **काव्यस्य**। **तत्परत्वं** तस्मिन् प्रतीयमानेऽलङ्कारे परः कृतनिष्ठस्तस्य भावस्तत्त्वम्। **न**। **भासते** प्रकाशते। **असौ** स इत्यर्थः। **ध्वनेः**। **मार्गो** विषयः। **न**। **मतः**। अयम्भावः-दीपकादौ या ह्युपमाऽऽदेः प्रतीतिस्तत्र यदि प्रकृतस्य काव्यस्य चारुत्वापादनौन्मुख्यं न प्रत्यवतिष्ठेत तन्न ध्वनिः; किन्तु व्यङ्ग्यस्य गुणीभाव एव। अत एवोक्तं ध्वनिकृता "तथा च दीपकादावलङ्कारे उपमाद्या गम्यमानत्वेऽपि तत्परत्वेन चारुत्वस्याव्यवस्थानान्न ध्वनिव्यपदेशः। यथा-"चंदमऊएहिं णिसा णालिणीकमलेहिं कुसुमगुच्छेहिं लआ। हंसेहिं सरअसोहा कव्वकहा सज्जणेहिं करइ गुरुई॥"[1] इति।" यथा वाऽस्यैव च्छायाभूते-"रजनी हिमकरकिरणैर्विसिनी नलिनैस्तरङ्गिणी सलिलैः। वल्ली कुसुमस्तवकैः काव्यकथा भूष्यते सुजनैः॥" इत्यादौ तुल्ययोगिताऽऽदौ उपमाऽऽदेः प्रतीयमानस्यापि वाच्यालङ्कार ( तुल्ययोगिताऽऽदि ) द्वारेणैव चारुत्वमिति न तस्य ध्वनिव्यपदेश्यत्वम्। इति दिक्।

प्रकारान्तरेण व्यङ्ग्यस्य वाच्यापेक्षया न्यग्भावं लक्षयितुमाह-**यत्रे**त्यादि।

**यत्र** यस्मिन् काव्ये। **च**। **गोपनकृतचारुत्वस्य** गोपनेन 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु।' इत्युक्तदिशा द्व्यर्थैः पदैरभिधानेन कृतं यच्चारुत्वं चमत्कारस्तस्य। **शब्दान्तरादिना** शब्दान्तरं विजातीयः शब्दस्तदादिना। आदिपदं च तद्विजातीयेङ्गिताऽऽदिबोधकम्। **विपर्यासो**ऽगोपनीयत्वापाकरणम्। 'तत्रापि गुणीभावो व्यङ्ग्यस्ये'ति शेषः।

---

[1] "चन्द्रमयूखैर्निशा, नलिनी कमलैः, कुसुमगुच्छैर्लता। हंसैः शारदशोभा, काव्यकथा सज्जनैः क्रियते गुर्वी॥" इति संस्कृतम्।

यथा- "दृष्ट्या केशव ! गोपरागहृतया किञ्चिन्न दृष्टं मया,
तेनेह स्खलिताऽस्मि नाथ ! पतितां किन्नाम नालम्बसे ?
एकस्त्वं विषमेषु (-) खिन्नमनसां सर्वाबलानां गति-
र्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम् ॥२१६॥"

इत्यत्र गोपरागादिशब्दानां 'गोपे राग' इत्यादिव्यङ्ग्यार्थानां 'सलेश' मिति पदेन स्फुटतयाऽवभासः, 'सलेश' मिति पदस्य परित्यागे हि ध्वनिरेव।

किञ्च-यत्र वस्त्वलङ्काररसादिरूपव्यङ्ग्यानां रसाभ्यन्तरे गुणीभावः तत्र प्रधानकृत एव काव्यव्यवहारः।

---

उदाहरति-यथा। "दृष्टया" इत्यत्र।

"हे केशव कृष्ण ! गोपरागहृतया गवां परागा धूलयस्तैर्हृता विनष्टा स्वकार्य्यक्षमत्वतश्च्याविततेति यावत् तया तथाभूतया। ( गोपे त्वयि यो रागोऽनुरागस्तेन हृतयेति तु गोपितोऽर्थः )। दृष्ट्या दर्शनेन ( विचारेणेति तु गोपितोऽर्थः )। किञ्चित् प्रस्तरादिकमिति शेषः ( परत्वादिकं धर्म्मविरुद्धाचरणादिजन्यप्रत्यवायादीति तु गोपनार्थम् )। न। मया। दृष्टम् ( विचारितमिति गोपितोऽर्थः। तेन निरुक्तेन हेतुना । इहास्मिन् प्रस्तरादिदेश इति भावः ( अस्मिंस्त्वयि 'प्रवृद्धमन्मथतयेति शेषः।' इति गोपनीयोऽर्थः )। हे नाथ रक्षक ! स्खलिता पतिता ( च्युतधैर्य्येति गोपनीयोऽर्थः )। अस्मि। अतः-पतितां प्रस्तरादिदेशे च्युताम् ( त्वयि चलितचित्ततया वा भ्रष्टाम् उपभोक्तुमर्हतां वा प्रतिपाद्य शयितामिति गोपनीयोऽर्थः )। 'मा' मिति शेषः। किन्नाम। न। आलम्बसे उद्धरसि करावलम्बदानेन रक्षसीति यावत् ( स्वकीयां मत्वा कृतार्थयसे इति गोपितोऽर्थः )। ननु किमहमेव रक्षिताऽस्मि तदन्यमाश्रयमिच्छाशङ्क्याह-विषमेषु सङ्कटेषु। खिन्नमनसामुद्विग्नानाम् ( विषमेषुः पञ्चशरः काम इति यावत् तेन खिन्नं मनो यासां तादृशीनामिति गोपनीयोऽर्थः )। सर्वाबलानां सर्वेषां निर्बलानाम् ( सर्वासां सुन्दरीणामिति गोपितोऽर्थः )। एकोऽनन्यः। त्वम्। गतिराश्रयः। एवम्। सलेशं लेशोऽशोऽभिप्रायाविष्करणार्थं सूक्ष्ममीहितमिति यावत् तेन सहिता यत्र तद् यथा भवेत्तथा। गोप्या। गदितः कथितः। गोष्ठे गोमण्डले 'स्थित' इति शेषः। हरिः। चिरम्। वो युष्मान्। अवतात् रक्षतु। अत्र 'सर्वाबलानाम्' इत्यंशे सर्वशब्दस्य गुणीभावेऽपि श्लेषोपकारितया नाविमृष्टविधेयांशतामावहतीत्यस्यानित्यदोषत्वमिति बोध्यम्। शार्दूलविक्रीडितं वृत्तम्॥ २१६ ॥"

लक्ष्यं सङ्गमयति-इत्यत्रेत्यादिना।

इत्यत्र। 'गोपरागादिशब्दानाम्। आदिना-दृष्ट्यादिपदानां ग्रहणम्। 'गोपे राग' इत्यादिव्यङ्ग्यार्थानाम्।' आदिना 'विचारित' मित्याद्यर्थानां ग्रहणम्। 'सलेश' मितिपदेन ( साधने तृतीयेयम् )। स्फुटतया। अवभासः। अतः क्षौमान्तरितकामिनीकुचकलशयुगलस्येव व्यङ्ग्यस्य गूढत्वमपेक्षितमपि निवृत्तमिति न ध्वनिव्यपदेश्यत्वमेतस्येति भावः। तदेव युक्त्या समर्थयते-हि यतः। 'सलेश' मितिपदस्य। परित्यागे 'कृते सती' ति शेषः। ध्वनिः। एव। तथा च-'गोप्यैवं गदितः समुद्धृतिपरः पायाच्चिरं वो हरिः।' इति पठनीयमिति भावः।

एवं गुणीभूतव्यङ्ग्येष्वपि यत्र रसादितात्पर्यपर्य्यालोचनेन काव्यत्वं तद्ध्वनिरूपमेवेत्याह-किञ्चेत्यादिना।

किञ्च वक्तव्यान्तरमस्त्येति भावः। किं तदित्याह-यत्र यस्मिन्। रसाभ्यन्तरे। रसे वस्त्वलङ्काररसादिरूपव्यङ्ग्यानाम्। गुणीभावः। तत्र। प्रधानकृतः प्रधानेन यत्र वस्त्वादीनां गुणीभावस्तेन रसेन कृतः। एव 'न तु गुणीभूतव्यङ्ग्यवस्त्वादिकृत' इति शेषः। काव्यव्यवहारः। अयम्भावः-प्रधाने रसेऽङ्गभूतादेर्वस्त्वलङ्कारादेश्च गुणीभाव इति रसादीनां गुणीभावमादाय गुणीभूतव्यङ्ग्यकाव्यत्वं वक्तुमर्हत्वेऽपि 'प्राधान्येन व्यपदेशा भवन्ती' ति न्यायेन रसस्य प्राधान्यमादाय काव्यस्य प्रधानत्वम्। नहि सागरेऽन्तर्भवतां नदीनदानां गौणत्वमादाय तस्य तुच्छत्वं केनचिद्वक्तुं शक्यते, किन्तु सागरस्य गभीरतामादायागाधत्वमेव। इति।

तदुक्तं तेनैव-

"प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।
धत्ते रसादितात्पर्यपर्य्यालोचनया पुनः॥" इति।

यत्र तु-

"यत्रोन्मदानां प्रमदाजनानामभ्रंलिहः शोणमणीमयूखः।
सन्ध्याभ्रमं प्राप्नुवतामकाण्डेऽप्यनङ्गनेपथ्यविधिं विधत्ते ॥२१७॥"

इत्यादौ रसादीनां नगरीवृत्तान्तादिवस्तुमात्रेऽङ्गत्वम्, तत्र तेषामतात्पर्य्यविषयत्वेऽपि तैरेव गुणीभूतैः काव्यव्यवहारः।

तदुक्तमस्मत्सगोत्रकविपण्डितमुख्यश्रीचण्डीदासपादैः-"काव्यार्थस्याखण्डबुद्धिवेद्यस्य तन्मयीभावे आस्वाददशायां गुणप्रधानभावावभासस्तावन्नानुभूयते, कालान्तरे तु प्रकरणादिपर्य्यालोचनया भवन्नप्यसौ न काव्यव्यपदेशं व्याहन्तुमीशः, तस्यास्वादमात्रायत्तत्वात् इति।

---

तदेव ध्वनिकारसम्मत्या समर्थयते-तत् 'यदस्माभिरुक्त'मिति शेषः। तेन ध्वनिकृतेत्यर्थः। एव। उक्तम्। किमित्याह-

"अयम्। गुणीभूतव्यङ्ग्यः। प्रकारो भेदः 'काव्यस्ये'ति शेषः। अपि 'किम्पुनरगुणीभूतव्यङ्ग्यात्मा प्रकार'इति शेषः। रसादितात्पर्यपर्य्यालोचनया रसादौ यत्तात्पर्य्यं तस्य पर्य्यालोचनाऽनुसन्धानं तया। पुनः। ध्वनिरूपताम् अगुणीभूतव्यङ्ग्यताम् धत्ते। अयम्भावः-यथा-"प्रयच्छतोच्चैः कुसुमानि मानिनी विपक्षगोत्रं दयितेन लम्भिता। न किञ्चिदूचे चरणेन केवलं लिलेख बाष्पाकुललोचना भुवम्॥" इत्यादौ 'न किञ्चिदूचे'इत्यादिना व्यङ्ग्यस्यार्थस्योक्त्या गुणीभावेऽपि नायिकानायकयोरनुरागातिशयमुपजीव्य व्यज्यमानं शृङ्गारमादाय ध्वनिकाव्यत्वम्। यथा वा-'अयं स रसनोत्कर्षी'त्यादौ शृङ्गारमादाय गुणीभावः, करुणमादाय ध्वनिकाव्यत्वम्। तथा सर्वत्र रसादिप्राधान्ये व्यङ्ग्यान्तरमादाय गुणीभावेऽपि न तस्य गुणीभूतव्यङ्ग्यव्यपदेशार्हत्वम्। इति।

ननु सर्वत्रैवं निवर्त्ततां नामास्य गुणीभूतव्यङ्ग्यत्वमित्याशङ्क्याह-यत्र त्वित्यादि। यत्र यस्मिन्। तु-

'यत्र यस्यां नगर्य्यामित्यर्थः। अभ्रंलिहो गगनस्पर्शी अत्युन्नत इति यावत्। शोणमणीमयूखः शोणाश्च मण्यो मणयो रत्नानीति यावत् तासां मयूखः। 'कृदिकारादक्तिनः।' इति गणसूत्रेण मणिशब्दात् ङीप्। उन्मदानां प्रमत्तानाम्। अकाण्डेऽसमये। अपि। सन्ध्याभ्रमम्। प्राप्नुवतां लब्धवताम्। प्रमदाजनानाम्। अनङ्गनेपथ्यविधिमनङ्गः कामस्तस्य नेपथ्यं तद्वर्धको वेषस्तस्य विधिर्विधानं तम्। विधत्ते सम्पादयति। अत्र टिप्पणीकाराः-'अत्र शास्त्रसिद्धमपि कर्तुरेकवचनं किमपि अरुचिबीजं सहृदयहृदयेष्वङ्कुरयतीति त एवात्र प्रमाणम्,' एवं चात्र 'शोणमणिप्रकाशः' इति पठनीयम्, अथवा-'यत्रोन्मदानां प्रमदाजनानामभ्रंलिहा विद्रुमवेश्मभासः। सन्ध्याभ्रमं प्राप्नुवतामकालेऽप्युल्लासयन्ति स्मरनेपलीलाम्॥' इति। अभ्राणि लिहन्तीत्यभ्रंलिहाः। 'वहाभ्रेलिहः।' ३।२।३२ इति खश्। गगनस्पृश इत्यर्थः।' इत्याहुः। 'सा नगरी'ति शेषः। उपजातिश्छन्दः॥ २१७॥"

इत्यादौ। रसादीनाम्। नगरीवृत्तान्तादिवस्तुमात्रे। अङ्गत्वमप्रधानत्वम्। नगरीवृत्तान्तादिरूपवस्तुमात्रे प्रधानभूते रसादीनामप्राधान्यमित्यर्थः। तत्र 'अत्रे'ति शेषः। तेषां रसादीनाम्। अतात्पर्य्यविषयत्वे तात्पर्य्यविषयत्वाभावे। अपि। तैः रसादिभिरित्यर्थः। एव। गुणीभूतैः। 'कृत'इति शेषः। काव्यव्यवहारः। अयम्भावः-अत्र हि नगरीवर्णने प्रक्रान्ते चरमपादेन स्फुरतां शृङ्गारानुभावादीनां तत्रानुपयोगिनामपि न प्रधानव्यपदेशार्हत्वम्, एषां चमत्कारस्य तन्मुखमात्रप्रेक्षित्वात्। अतो रसादेरपि व्यपेक्षया सर्वत्र ध्वनिकाव्यत्वमङ्गीकार्य्यम्। अत एवोक्तं ध्वनिकृता-"प्रभेदस्यास्य विषयो यश्च युक्त्या प्रतीयते। विधातव्या सहृदयैर्न तत्र ध्वनियोजना॥"इति।

उक्तमर्थं प्राचां सम्मत्या समर्थयते-तदुक्तमित्यादिना।

अस्मत्सगोत्रकविपण्डितमुख्यश्रीचण्डीदासपादैरस्माकं सगोत्राः कविपण्डितेषु मुख्याश्च ते श्रीचण्डीदासपादास्तैः। समानं गोत्रं येषां ते सगोत्राः, कवयः काव्यनिर्म्माणपटवः आलङ्कारिका वा, पण्डिता ब्रह्मविदस्तेषु मुख्या

केचित् चित्राख्यमपि तृतीयं काव्यभेदमिच्छन्ति। यदाहुः—

"शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्।" इति।

तन्न। यदि हि अव्यङ्ग्यत्वेन व्यङ्ग्याभावः तदा! तस्य काव्यत्वमपि नास्तीति प्रागेवोक्तम्, ईषद्व्यङ्ग्यमिति चेत्! किन्नाम ईषद्व्यङ्ग्यत्वम्? आस्वाद्यव्यङ्ग्यत्वम्! अनास्वाद्यव्यङ्ग्यत्वं वा!! आद्ये प्राचीनभेदयोरेवान्तःपातः, द्वितीये त्वकाव्यत्वम्; यदि च आस्वाद्यत्वं तदाऽक्षुद्रत्वमेव, क्षुद्रतायामनास्वाद्यत्वात्।

---

लभ्यमानाः। पादशब्दश्च पूज्यत्वादिप्रत्यायनार्थः। 'एकत्वं न प्रयुञ्जीत गुरावात्मनि चेश्वरे। उत्तमानां स्वरूपं तु पादशब्देन पठ्यते॥' इत्यभियुक्तोक्तेः। 'चण्डिदासे'ति पाठे तु 'कालिदासे'त्यादिवत् क्वचित्सञ्ज्ञायां ह्रस्वत्वमपीत्याश्रित्य समाधेयम्। तत्। उक्तम्।" अखण्डबुद्धिवेद्यस्याखण्डा वासनान्तरेणाविच्छिन्ना या बुद्धिस्तया वेद्योऽनुभाव्यस्तस्य। काव्यार्थस्य रसादेः। तन्मयीभावेन तदभिन्नप्रमातृप्रमेयत्वानध्यवसायीभावेन। आस्वाददशायां तत्तत्स्वरूपानुभवावसरे। गुणप्रधानभावावभासो गुणत्वप्रधानत्वाभ्यां प्रत्यय इति भावः। तावत् याथार्थ्येन। न। अनुभूयतेऽनुभवगोचरो विधातुं शक्यते। कालान्तरे आस्वादप्रत्ययनिवृत्त्यनन्तरमिति भावः। तु। प्रकरणादिपर्य्यालोचनया प्रकरणादेः पर्य्यालोचना मीमांसा तया तद्द्वारेति यावत्। भवन् विद्यमानः। अपि। असौ गुणप्रधानभावः। काव्यव्यपदेशं ध्वनिकाव्यमिदं गुणीभूतव्यङ्ग्यकाव्यमिदमित्येवं काव्यभेदप्रत्यायिकीं सञ्ज्ञाम्। न। व्याहन्तुम्। ईशः समर्थो भवति। कुत इत्याह—तस्य काव्यव्यपदेशस्य। आस्वादमात्रायत्तत्वादास्वादमात्राधीनत्वात्। अयम्भावः—आस्वादानुभवदशायां यादृशो गुणप्रधानभावो यस्य प्रतीतः, तदनन्तरं प्रकरणादिपर्य्यालोचनयाऽन्यथा प्रतीयमानोऽप्यसौ न तमन्यथाकर्तुं शक्नोति, तस्यैव ज्यायस्त्वात् प्रमाणकोटौ। तथा च—अनन्तरोदाहृते पद्ये आस्वादयाथाऽत्म्यानुभवावसरे गुणीभूतव्यङ्ग्यतया कृतः प्रत्यय एव तदनन्तरमपि तथाभूतः।" इति बोध्यम्। इति।

सिंहनिरीक्षणनयेन काव्यस्य रसात्मकवाक्यतामात्रं पुनः स्थापयितुं प्रकाशकारादिमतं पर्य्यालोचते—केचिदित्यादिना।

केचित् काव्यप्रकाशकारादयः। चित्राख्यं चित्रसञ्ज्ञकमित्यर्थः। अपि। तृतीयम्। काव्यभेदम्। इच्छन्ति स्वीकुर्वन्ति। यत्। आहुः। 'ते' इति शेषः। "अव्यङ्ग्यं न नास्ति ईषद्वा व्यङ्ग्यं रसादि यत्र तादृशम्। तु। शब्दचित्रम्। वाच्यचित्रम्। 'चेति द्विविध'मिति शेषः। अवरं तृतीयं काव्यम्। स्मृतम्।" इति। तत्। न 'सङ्गच्छते' इति शेषः। हि यतः। यदि। अव्यङ्ग्यत्वेन 'अव्यङ्ग्य'मिति विशेषणविशिष्टत्वेनेति भावः। व्यङ्ग्याभावो रसादिमत्त्वाभावः 'विवक्ष्यते' इति शेषः। तदा। तस्याव्यङ्ग्यस्य। काव्यत्वम्। अपि। न। अस्ति। इति। प्राक् काव्यलक्षणसमीक्षणावसरे इत्यर्थः। एव। उक्तम्। ईषद्व्यङ्ग्यमीषत् किञ्चित् व्यङ्ग्यं यत्र तदित्यर्थः। 'विवक्ष्यते' इति शेषः। इति। चेत्। 'तर्हि पृच्छ्यते' इति शेषः। किन्नाम। ईषद्व्यङ्ग्यत्वम्? आस्वाद्यव्यङ्ग्यत्वं रसादिस्फूर्तिमद् व्यङ्ग्यशालित्वम्। वा अथवा। अनास्वाद्यव्यङ्ग्यत्वं रसादिस्फूर्तिशून्यव्यङ्ग्यवत्त्वम्। 'ईषद्व्यङ्ग्यत्वं विवक्ष्यते' इति शेषः। एवं विकल्प्य क्रमादुत्तरयति—आद्ये 'आस्वाद्यव्यङ्ग्यमीषद्व्यङ्ग्यं तदेव काव्यम्' इति मते इत्यर्थः। प्राचीनभेदयोर्ध्वनिगुणीभूतव्यङ्ग्याख्ययोर्भेदयोरित्यर्थः। एव। अन्तः पातः। द्वितीये अनास्वाद्यव्यङ्ग्यमीषद्व्यङ्ग्यम्, तत् काव्यमिति स्वीकारे इत्यर्थः। तु। अकाव्यत्वम्। आद्येऽनुपपत्त्यन्तरमाह—यदि। च। आस्वाद्यत्वम् 'व्यङ्ग्यस्ये'ति शेषः। तदा। अक्षुद्रत्वम् एव। क्षुद्रतायामीषत्तायामित्यर्थः। अनास्वाद्यत्वात्। एवं च—व्यङ्ग्यस्यास्वाद्यत्वाङ्गीकारे क्षुद्रताया असम्भवात्, अनास्वाद्यत्वाङ्गीकारे काव्यताया असम्भवाच्च ईषद्व्यङ्ग्यमव्यङ्ग्यं तच्च शब्दचित्रवाच्यत्वाभ्यां द्विविधं चित्रप्रभेदं काव्यमित्येतत्सर्वं क्षुद्रमिति निष्कृष्टोऽर्थः।

तदुक्तं ध्वनिकृता—

"प्रधानगुणभावाभ्यां काव्यस्यैवं व्यवस्थिते।
उभे काव्ये ततोऽन्यद् यत्। तच्चित्रमभिधीयते॥" इति।

इति साहित्यदर्पणे ध्वनि-गुणीभूतव्यङ्ग्याख्य-काव्यभेदनिरूपणो नाम चतुर्थः परिच्छेदः।

---

तदेव प्राचां सम्मत्याऽनुगमयति–तत्। उक्तम्। ध्वनिकृता "एवं निरुक्तप्रकारेण। काव्यस्य। प्रधानगुणभावाभ्याम्। उभे द्वे ध्वनिगुणीभूतव्यङ्ग्यात्मके इति यावत्। काव्ये। व्यवस्थिते। ततस्ताभ्याम्। अन्यत् भिन्नम्। यत् 'तृतीयप्रभेदक'मिति शेषः। तत्। चित्रमाभासरूपम्, नतु वास्तवं काव्यमिति भावः। अभिधीयते॥" इति।

अत्राहुष्टिप्पणीकाराः–" व्यङ्ग्यार्थस्य प्राधान्ये ध्वनिः, गुणभावे तु गुणीभूतव्यङ्ग्यता;. ततोऽन्यद्रसभावादितात्पर्य्यरहितं व्यङ्ग्यार्थविशेषप्रकाशनशक्तिशून्यं च काव्यं केवलवाच्यवाचकवैचित्र्यमात्राश्रयेण उपनिबद्धमालेख्यप्रख्यं यदाभासते, तच्चित्रम्, तच्च द्विविधम्, इति ध्वनिकृतैव अग्रिमकारिकया व्यवस्थापितम्–" चित्रं शब्दार्थभेदेन द्विविधं च व्यवस्थितम्। तत्र किञ्चिच्छब्दचित्रं वाच्यचित्रमतः परम्॥" इति। तत्र,–किञ्चिच्छब्दचित्रं यथा दुष्करयमकादि, वाच्यचित्रम् अतः शब्दचित्रादन्यत् व्यङ्ग्यार्थसंस्पर्शरहितं प्राधान्येन वाक्यार्थतया स्थितं रसादितात्पर्य्यरहितमुत्प्रेक्षादि। अथ किमिदं चित्रं नाम! यत्र न व्यङ्ग्यार्थसंस्पर्शः! तत्र, यत्र वस्तु अलङ्कारान्तरं वा व्यङ्ग्यं नास्ति स नाम चित्रस्य कल्प्यतां विषयः। यत्र तु रसादीनामविषयत्वं स काव्यप्रकारो न सम्भवत्येव, यस्मादवस्तुसंस्पर्शिता काव्यस्य नोत्पद्यते। वस्तु च सर्वमेव जगद्गतमवश्यं कस्यचिद्रसस्य चाङ्गत्वं प्रतिपद्यते।विभावत्वेन चित्तवृत्तिविशेषा हि रसादयः। न च तदस्ति वस्तु किञ्चित् यन्न चित्तवृत्तिविशेषमुपजनयति, तदनुत्पादने वा कविविषयतैव तस्य न स्यात्। कविविषयश्च कश्चिन्निरूप्यते। अत्रोच्यते, सत्यम्। न तादृक् काव्यप्रकारोऽस्ति यत्र रसादीनामप्रतिपत्तिः, किन्तु, यदा रसभावादिविवक्षाशून्यः कविः शब्दालङ्कारमर्थालङ्कारं वा उपनिबध्नाति तदा तद्विवक्षाऽपेक्षया रसादिशून्यताऽर्थस्य परिकल्प्यते। विवक्षोपारूढ एव हि काव्ये शब्दानामर्थः, वाच्यसामर्थ्यवशेन च कविविवक्षाविरहेऽपि तथाविधे विषये रसादिप्रतीतिर्भवन्ती परिदुर्बला भवतीत्यनेनापि प्रकारेण नीरसत्वं परिकल्प्य चित्रविषयो व्यवस्थाप्यते, तदिदमुच्यते–"रसभावादिविषयविवक्षाविरहे सति। अलङ्कारनिबन्धो यः स चित्रविषयो मतः॥ रसादिषु विवक्षा तु स्यात्तात्पर्य्यवती यदा। तदा नास्त्येव तत्काव्यं ध्वनेर्यत्र न गोचरः॥" इति। एतेन–तृतीयकाव्यभेदं प्रत्याचक्षाणस्य ग्रन्थकृतो मतं न सहृदयहृदयमधिरोहति।" इत्यादि, सर्वमेतत् प्रागल्भ्योज्जृम्भितम्। कथमन्यथा तत्र ध्वनिकृतैव–"एतच्च चित्रं कवीनां विशृङ्खलगिरां रसादितात्पर्यमनपेक्ष्यैव काव्यप्रवृत्तिदर्शनादस्माभिः परिकल्पितम्। इदानीन्तनानां तु न्याय्ये काव्यनयव्यवस्थापने क्रियमाणे नास्त्येव ध्वनिव्यतिरिक्तः काव्यप्रकारः। यतः परिपाकवतां (सहृदयानां) कवीनां रसादितात्पर्य्यविरहे व्यापार एव न शोभते। रसादितात्पर्य्ये च नास्त्येव तद्वस्तु यदभिमतरसाङ्गतां नीयमानं न प्रगुणीभवति।" इत्यादि प्रतिपादितं सङ्गच्छेत? को वाऽनुन्मत्तः सन् 'काव्यस्यात्मा ध्वनि'रिति प्रतिपाद्य "शब्दचित्रं वाच्यचित्रं च काव्य"मिति प्रतिपादयन् 'रसादितात्पर्य्यविवक्षाविरहे' इत्यादि प्रतिपादयेत्। वस्तुतस्तु–तथा सति काव्यजीवातोरेवासत्त्वम्, कथं पुनश्चित्रं काव्यम्,इति ब्रुवतां लज्जाऽभाव इत्येव चित्रम्। इति शम्।

एवमवान्तरं प्रकृतं समापयन्नाह–इतीत्यादि।

इति 'श्रीविश्वनाथकविराजकृते' इति शेषः। ध्वनिगुणीभूतव्यङ्ग्याख्यकाव्यभदनिरूपणो ध्वनिगुणीभूताख्यौ यौ काव्यभेदौ तयोर्निरूपणं यत्र। तादृशः। नाम। चतुर्थः। परिच्छेदः। 'समाप्तः' इति शेषः।

सहृदयानुभवैककलेवरं सकलतापनिवारणभेषजम्।
सुकृतिदिव्यविभूतिनिदर्शनं स्मरति तं रतितन्त्रमयं न कः।

इति श्रीशिवनाथसूरिसूनुना कविरत्नेन श्रीशिवदत्तशर्म्मणा रचितायां रुचिराऽऽख्यायां साहित्यदर्पणव्याख्यायां चतुर्थः परिच्छेदः समाप्तः।

# पञ्चमः परिच्छेदः ।

**अथ केयमभिनवा व्यञ्जना नाम वृत्तिरित्युच्यते—**

**२९८ वृत्तीनां विश्रान्ते–रभिधातात्पर्यलक्षणाख्यानाम् ।**
**अङ्गीकार्या तुर्या वृत्तिर्बोधे रसादीनाम् ॥ २९३ ॥**

---

निधानं भव्यानां, धृततनु च भव्यं विभविनां, फलं भूयस्तेषां सुकृतविभवानां समुदितम् ।
फलस्याप्याधानं, परममनघं तस्य च पदं, निरस्तानर्थौघं मम शरणमेकं भवतु तत् ॥ १ ॥

ननु काव्यस्य रसात्मकत्वमभिहितं, रसश्च व्यङ्ग्यं वस्तु तदिति तदेव काव्यस्य व्यपदेशबीजं, तस्य पुनर्व्यञ्जनया बोध्यत्वं सहृदयसाक्षिकमेव, अथैवं व्यञ्जनाया अप्रामाणिकत्वेऽसिद्धत्वे च तत् सर्वमप्रामाणिकमसिद्धं च स्वत एव स्यादित्यवश्यं तत्र प्रमाणमुन्नेयं, तत्सिद्धिश्च युक्तिपुरःसरमवस्थाप्येति मन्वानः पञ्चमपरिच्छेदरूपस्यास्य प्रकरणान्तरस्यावतरणिकाभूतामाशङ्कामुपन्यस्यति–अथेत्यादिना ।

**अथ** रसात्मकवाक्यस्वरूपस्य काव्यस्य भेदनिरूपणानन्तरमित्यर्थः । **इयं** सहृदयानामनुभवास्पदत्वेन साक्षादिव सन्निकृष्टतया निर्देष्टुं शक्येत्यर्थः । **अभिनवा** नूतना । अनादरणीयेति भावः । नवीनैरेव कैश्चिदुद्घोष्यमाणा न तु वस्तुयाथात्म्यविद्भिर्नैयायिकैरत एव नूतना क्षोदक्षमत्वशून्यत्वेन वस्तुतयाऽनङ्गीकार्येति निष्कर्षः । **व्यञ्जना** व्यज्यते न त्वभिधीयते लक्ष्यते वा रसादिरनयेति । **नाम** प्रसिद्धा । **का** किम्प्रमाणा किंस्वरूपा चेत्यर्थः । **वृत्तिः** । 'अस्ती'ति शेषः । **इति** । सिंहावलोकनन्यायेनेति शेषः । ( इत्थेवं सिंहावलोकनन्यायमनुसन्दधानेन ग्रन्थकृतेति निष्कृष्टोऽर्थः )। **उच्यते** । प्रमाणोपन्यासपुरःसरं तस्याः स्वरूपं निरूप्यते–२९८ **वृत्तीना**मित्यादिना ।

अत्रेदमभिव्यज्यते–यत्सद्भावे एव सन्देहः कथं साक्षात्तदभिधानं सङ्गच्छेत ? इदमाऽभिधानं च दृश्यमानस्य, निश्चितत्वेनादृश्यमानस्यापि, दृश्यमानस्येवाभिधेयस्य वा; अन्यथा तद्गतं भ्रममूलं, तथाऽभिधानं वा वञ्चनमात्रम् । प्रकृते च व्यञ्जना येषामज्ञातरूपा कथं ते'केय'मित्याशङ्कितुं शक्ताः । तदिति,तेषां तथाऽऽशङ्कनं भ्रमास्पदत्वं वा वञ्चनमात्रत्वं वाऽऽह–अथेत्यादि । ननु'विरतास्वभिधाऽऽद्यास्वि'त्यादिना व्यञ्जनायास्तावन्निरूपितमेव स्वरूप(लक्षण)म्, उपन्यस्तं च तत्र'व्यञ्जनध्वननावगमनप्रत्यायनादिव्यपदेशविषये'त्यनेन प्रमाणम् । अथ कथमाशङ्क्यते–अथेत्यादिनेति चेत् ? दृढप्रत्ययप्रतिपत्तये प्रमाणान्तरोपन्यासार्थं चेति गृहाणेति बोध्यम् ।

**२९८ अभिधातात्पर्यलक्षणाऽऽख्याना**मभिधाऽऽख्यायास्तात्पर्याख्याया लक्षणाख्यायाश्चेत्यर्थः । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते'इति नयेनाभिधाऽऽदिभिः प्रत्येकं सम्बन्धः । तात्पर्यस्यान्तर्निवेशश्च वृत्त्यन्तरोपयोगित्वानुकूलत्वोपलक्षणार्थम् । **वृत्तीनां** शब्दार्थयोर्व्यापारभूतानाम् । **विश्रान्ते**र्विश्रामात्तदनन्तरम् । स्वस्वव्यापारमुद्भाव्य विरतत्वात् । विरतत्वं च व्यापारान्तरमुद्भावयितुमशक्तत्वम् । 'अपादाने पञ्चमी ।' २।३।२८ इति पञ्चमी । **रसादीनां** रसभावतदाभासादिवस्त्वलङ्काराणाम् । **बोधे** बोधनिमित्तं बोधविषये वेत्यर्थः । **तुर्या** चतुर्थी अभिधातात्पर्यलक्षणाख्याभ्यो वृत्तिभ्यो विलक्षणेति यावत् । 'चतुरश्छयतावाद्यक्षरलोपश्च' इति चतुरश्चलोपो यत्प्रत्ययश्च । **वृत्तिः** । 'व्यञ्जने'ति शेषः । **अङ्गीकार्या** । 'आलङ्कारिकै'रिति शेषः ॥ २९३ ॥

अत्राहुष्टिप्पणीकाराः–'अत्रेदं तत्त्वम्–"गङ्गायां घोषः । इत्यत्र'गङ्गाशब्दो'घोष'शब्दश्च सामान्यात्मके जलप्रवाहे आभीरगृहनिकुरम्बे च सङ्केतितौ । सामान्ये एवोद्योगात् । विशेषस्य हि सङ्केतकरणे आनन्त्यं व्यभिचारश्च स्यात् । ततश्च अभिधया जलप्रवाहमात्रं तद्गृहनिकुरम्बमात्रं च प्रतीतमिति प्रथमा कक्ष्या । एतत्प्रतिपाद्यान्यप्रतिपादनायाप्यभिधा न समर्था । 'विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे ।' इति नयेन "अभिधाशक्तिर्विशेष्यं व्यक्तिरूपं धर्मिणं न गच्छेन्न यायात् । यतो विशेषणे जातिरूपे उपाधौ क्षीणशक्तिर्विरतव्यापारा । 'नागृहीतविशेषणा बुद्धि-

अभिधायाः सङ्केतितार्थमात्रबोधनविरताया न वस्त्वलङ्काररसादिव्यङ्ग्यबोधने क्षमत्वम् । न च सङ्केतितो रसादिः । नहि विभावाद्यभिधानमेव तदभिधानम् । तस्य तदैकरूप्यत्वात् । न च रसादिशब्देन शृङ्गारादिशब्देन वाऽभिधेयत्वम्, तस्य तदन्वयव्यतिरेकानुविधानात् । (किञ्च-) यत्र (च) स्वशब्देनाऽभिधानं तत्र प्रत्युत दोष एवेति वक्ष्यामः, क्वचिच्च-'शृङ्गारोऽयम्' इत्यादौ स्वशब्देनाभिधानेऽपि न तत्प्रतीतिः । तस्य स्वप्रकाशानन्दरूपत्वात् ।: अभिहितान्वयवादिभिरङ्गीकृता तात्पर्याख्या वृत्तिरपि संसर्गमात्रे परिक्षीणा न व्यङ्ग्यबोधिनी ।

---

विशेष्ये चोपजायते ।' इति न्यायेन विशेषणं प्रत्याय्य विरामात् ॥" इत्यर्थकेन तस्याः विरम्य व्यापारासम्भवात् । 'सामान्यान्यन्यथासिद्धेर्विशेष्यं गमयन्ति हि ।' इति न्यायात्तात्पर्यशक्त्या सामान्यान्याधाराधेयभावेनावस्थितं विशिष्टं गङ्गाघोषाद्यागूरयन्ति इति तात्पर्येण परस्परान्वितत्वमात्रमेव प्रतीयत इति द्विविधा । जलप्रवाहस्य च घोषाधिकरणत्वमयुक्तमिति प्रमाणन्तरबाधितः सन् गङ्गाशब्दस्तदधिकरणयोग्यं तीरं लक्षयतीति तृतीया । तत्र तावत् 'मुख्यार्थबाधे तद्युक्तो यथाऽन्योऽर्थः प्रतीयते । रूढेः प्रयोजनाद् वाऽपी'ति नीत्या लक्षणा तन्त्रितयसन्निधावेव भवति । तत्र मुख्यार्थबाधा तावत् प्रत्यक्षादिप्रमाणान्तरमूला । यश्च सामीप्यादिसम्बन्धः स च प्रमाणान्तरावगम्य एव । यत् पुनरिदं तीरस्य शैत्यपावनत्वादिलक्षणं प्रयोजनं प्रतीयते तत् शब्दान्तरानुक्तं प्रमाणान्तराप्रतिपन्नं च कुत आगतम् । न तावत् प्रत्यक्षादेतत्प्रतीतिः । अस्मादेव शब्दादवगमसिद्धेः, शब्दार्थे च तस्याप्रवृत्तेः । नाप्यनुमानात् । सामीप्येऽपि शैत्यपावनत्वादेरसम्भवादनैकान्तिकत्वात् । न च स्मृतिः । तदनुभवाभावात् । सत्यामपि तस्यां नियतस्मरणं न स्यात् । अस्मादेव च शब्दादेतदेव बुध्यत इति को हेतुः । तस्मादस्यैव शब्दस्यैष व्यापारोऽभ्युपगन्तव्यः । निर्व्यापारस्यार्थप्रतीतिकारित्वाभावात् । स तावन्नाभिधात्मा समयाभावात् । न तात्पर्यात्मा, तस्यान्वयप्रतीतावेव परिक्षयात् । न लक्षणात्मा मुख्यार्थबाधाद्यभावात् । तस्मादभिधातात्पर्यलक्षणाव्यतिरिक्तश्चतुर्थकक्ष्यानिक्षिप्तो व्यङ्ग्यनिष्ठो व्यञ्जनाव्यापारो व्यञ्जनद्योतनादिसोदरव्यपदेशनिरूपितोऽभ्युपगन्तव्य इति निष्कर्षः ।" इति ।'

अथ कारिकोक्तं विवृणोति-**अभिधाया** इत्यादिना ।

**सङ्केतितार्थमात्रबोधनविरतायाः** सङ्केतो जातोऽस्येति सङ्केतितः कृतसङ्केत इति यावत्, सोऽसावर्थ इति, स एवेति सङ्केतितार्थमात्रं, तस्य बोधनं ज्ञापनं तस्माद्विरता विरतव्यापारा तस्याः । मात्रपदेन लक्ष्यादेर्व्यवच्छेदः । **अभिधायास्तदाख्याया** वृत्तेः । **वस्त्वलङ्काररसादिव्यङ्ग्यबोधने** वस्त्वलङ्काररसादयो ये ये व्यङ्ग्या व्यञ्जनामात्रगम्यास्तेषां बोधने ज्ञापनविषये । अत्रादिपदं रसाभासभावभावाभासादिग्राहकम् । **न** नैव । **क्षमत्वं** सामर्थ्यम् । 'अस्ती'ति शेषः । अभिधया सङ्केतितरूपो वाच्योऽर्थ एव, न तु लक्ष्यादिरूपोऽपि बोध्यते; सङ्केतितार्थबोधनानन्तरमेव तद्विरामात् । विरतायाश्च तस्या निरुक्तदिशा पुनरुत्थानासम्भवाद् रसवस्त्वलङ्कारादिबोधो व्यञ्जनयैवैकया वृत्त्या न पुनरभिधयाऽपि 'शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभावः ।' इति सिद्धान्तात् । ननु यद्यभिधया सङ्केतित एवार्थो बोध्यते ? तर्हि रसादिरपि सङ्केतितार्थस्वरूपः किं न स्यादित्याह-**रसादिः** । **च** पुनः । **न** नैव । **सङ्केतितः** । सङ्केतितार्थरूपः । यदसावभिधया बोधितः स्यात् । 'स्वव्यञ्जकपदसङ्केताभाववत्त्वादिति' शेषः । एवं च-रसादेः रसादिपदसङ्केतितत्वेऽपि न क्षतिरिति भावः । 'अस्ती'ति शेषः । **हि** यतः कारणात् । **विभावाद्यभिधानं** विभावानुभावादेरभिधानम् । **एव** । **तदभिधानं** तस्य रसादेरभिधानम् । **न** । नैव । 'अस्ती'ति शेषः । विभावादेः रसादिरूपत्वादिति भावः । तदेवोपपादयति-**तस्य** विभावादेः । **तदैकरूप्यानङ्गीकारात्**तस्य रसादेरैकरूप्यमेकरूपत्वमभिन्नस्वरूपत्वमिति यावत्तस्यानङ्गीकारः स्वीकाराभावस्तस्मात् । 'आस्वादरूपरसादिप्रतीतितादात्म्येनैव विभावादेरङ्गीकाराच्चे'ति शेषः । विभावाद्यभिधानस्य रसाद्यभिधानस्य च भिन्नत्वाद् विभावादेरेव रसादिस्वरूपत्वाङ्गीकाराच्च । तस्य चास्वादानतिरिक्तत्वात् कथं भवेद् रसादिः सङ्केतित इति भावः । सङ्केतस्तस्यैव भवेद् यस्य स्वरूपं निर्देष्टुं शक्यते । विभावाद्यभिधानेन विभावादिस्वरूपस्य निर्दिष्टतया च न रसाद्यभिधानं, न वा रसादिस्वरूपस्य निर्देशः सम्पद्यते । वस्तुतस्तु विभावादिरेव रसादिः । सोऽसावास्वादानतिरिक्तभूतः । ततश्चास्वादस्वरूपाया रसादिप्रतीतेस्तादात्म्यमेव विभावादेः । तदेवं नात्राभिधायाः सञ्चारः । तदभावे च व्यञ्जनैव आस्वादस्वरूपाया

रसादिप्रतीतेः कारणतयाऽभ्युपगन्तव्या। ननु 'देवदत्तोऽय' मित्यादिना देवदत्तादेरिव 'रसोऽय' मित्यादिना रसादेरभिधानं प्रत्यक्षसिद्धमिति कुतो न अभिधाया अत्र स्वीकारः कुतो वा वृत्त्यन्तरान्वेषणप्रयासः? इत्याशङ्क्य परिहरति–**रसादिशब्देन** रसादिः रसभावतदाभासादिस्तस्य शब्दो वाचकस्तेन **च**। **शृङ्गारादिशब्देन** शृङ्गारादिवाचकशब्देन। 'रसादे'रिति शेषः। **वा अभिधेयत्वं** वाच्यत्वम् **न** नैव। 'सम्भवती'ति शेषः। **तस्य** रसादेः। **तदन्वयव्यतिरेकानुविधानात्**तस्य रसादिशब्देन शृङ्गारादिशब्देन वा यद् रसादेर्वाच्यत्वं तस्यान्वयव्यतिरेकौ तदनुविधानात्तदनुविधानापत्तेः। यदि रसादिशब्दद्वारा रसादेर्वाच्यत्वं स्यात् तर्हि 'रसोऽयं' 'शृङ्गारोऽय' मित्यादिशब्देनैव रसादिरप्यवतिष्ठेत न च तथेति भावः। (**किञ्च** किन्तु।) **यत्र**। 'तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोऽप्यजायत।' इत्यादाविति शेषः। (**च** पुनः।) **स्वशब्देन** स्वं रसादिस्तस्य शब्दो वाचकस्तेन। 'रसोऽय' मिति शब्देन शृङ्गारोऽय' मित्यादिशब्देन वेति यावत्। **अभिधानं** प्रतिपादनम्। 'रसादे'रिति शेषः। **तत्र** तादृशे स्थले। 'तामुद्वीक्ष्ये'त्यादाविति यावत्। **प्रत्युत** (चमत्कारसद्भावो दूरमास्ताम्।) **दोषः** सतोऽपि चमत्कारप्रत्ययस्य तिरोधाता। **एव** निश्चितः। **इति**। **वक्ष्यामः** कथयिष्यामः। 'रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि।' इत्यादिनेति शेषः। ननु रसादेः स्वशब्देनाभिधानं काव्ये एव दुष्टं न तु लौकिकेऽपि वाक्ये, इति यत्रयत्र (काव्ये) दुष्टत्वं, तत्रतत्र मा भूत्तादृशी प्रतीतिः, क्वचित्त्वन्यत्र स्यान्नामेति चेन्नेत्याह–**क्वचिद्**लौकिकवाक्यस्वरूपकाव्यातिरिक्ते लौकिके वाक्ये इत्यर्थः। **च**। '**शृङ्गारः। अयम्।**' **इत्यादौ स्वशब्देन अभिधाने** 'सती' ति शेषः। **अपि**। 'किं पुनरसती' शेषः। **तत्प्रतीतिस्तस्य** रसादेः प्रतीतिरित्यर्थः। **न** नैव सम्भवति। **तस्य** रसादेः। **स्वप्रकाशानन्दरूपत्वात्** स्वप्रकाशः स्वप्रकाशेनैव प्रकाशमानत्वम्, आनन्द आह्लादाभिन्नत्वं तद्रूपत्वात्तन्मात्रस्वरूपत्वादिति यावत्। 'रसोऽयं' 'शृङ्गारोऽय' मित्येवमभिधीयमानत्वेऽपि तस्य रसादेः स्वप्रकाशानन्दरूपतया न तथा प्रतीतिः सम्भवति। स्वप्रकाशानन्दस्याभिधेयत्वासम्भवान्मूकानुभूतास्वादायमानत्वाच्च तस्य न रसादेर्वाच्यत्वम्, किन्तु तेन वाचकेन प्रतीतेस्तिरोभाव इति भावः। अत्रेदं तत्त्वम्–' लौकिकोऽप्यास्वादप्रत्ययो न वाच्यः, तस्य रसनामात्रग्राह्यत्वात्। कुतः पुनरलौकिकः। तथा हि–न रसादिर्वाच्यः, तस्य सहृदयहृदयमात्रसाक्षिकास्वादानुभवातिरिक्तस्वरूपत्वाभावात्। तदभिधानं प्रत्युत तद्याथात्म्यापह्नवनार्थमिति तद्दोष एवेति निर्विवादम्। रसादिमनुभवन् 'ब्रह्मविद् ब्रह्मैव भवति' 'अविज्ञातं विजानता' मित्यादिश्रुत्युक्तदिशा रसादिस्वरूप एव भवति, ज्ञातृज्ञानज्ञेयाभावात्; न च ततस्तदभिधानं शक्यते तुच्छत्वपरिमेयत्वस्वव्यतिरिच्यमानत्वाद्यापत्तेः। न हि रसादिस्तुच्छोऽपरिच्छिन्नत्वात्, न च परिमेयोऽखण्डत्वात्, न वा स्वस्माद् व्यतिरिच्यमानः प्रतीत्यन्तरानुभवस्य सहृदयहृदयासाक्षिकत्वात्। व्यतिरिच्यमानश्च तदनुभवादपि व्यतिरिच्यते एव, तस्यानुभवमात्रस्वरूपस्यानिर्वचनीयत्वेन वचनीयत्वानुपपत्तेः। अनिर्वचनीयत्वं च मूकानुभूतास्वादायमानत्वम्। विगलितविभावादिपार्थक्यप्रतीत्यभिन्ना च रसादिप्रतीतिरिति व्यञ्जनैकगम्यत्वं रसादेः इति स्थितम्। ननु माभूदभिधा रसादिव्यङ्ग्यबोधनक्षमा, किन्तु तात्पर्याभिधेया वृत्तिरपि कुतो न? रसादेर्व्यङ्ग्यत्वाद् व्यङ्ग्यस्य च तात्पर्यातिरिक्तत्वात्। इति चेन्नेत्याह–**अभिहितान्वयवादिभिः** सर्वेपागेव कथितानां पदानां परस्परं सम्बन्धो योग्यत्वसाकाङ्क्षत्वादिना स्वत एव भवतीति कथयद्भिरित्यर्थः। 'नैयायिकै'रिति शेषः। **अङ्गीकृता**। **तात्पर्याख्या** तात्पर्यमित्याख्या यस्याः सा। **वृत्तिः**। **अपि**। किं पुनरभिधा, अस्याः प्रथमसेव क्षीणत्वात्। **संसर्गमात्रे**। संसर्गो योग्यतादिवशात्पदानामेकार्थोपस्थापनार्थोऽन्वयापरपर्य्यायः परस्परं पार्थक्यमपहाय,'खले कपोत' न्यायेन युगपदेकत्र सम्बन्धविशेषः स एव संसर्गमात्रं तस्मिंस्तथोक्ते। **परिक्षीणा** सर्वतो भावेन क्षीणा। अत एव–**न** नैव। **व्यङ्ग्यबोधिनी** व्यङ्ग्यस्य बोधिका। 'सम्भवती'ति शेषः। व्यङ्ग्यस्य तात्पर्यादतिरिच्यमानत्वात्तात्पर्यस्य च व्यङ्ग्यापेक्षया जघन्यत्वात्तात्पर्यमात्रमुद्बोध्य परिक्षीयमाणाया वृत्तेर्व्यङ्ग्यं पुनरुद्बोधयितुमक्षमत्वमिति भावः। व्यङ्ग्यस्य तात्पर्यादतिरिच्यमानत्वं तात्पर्यस्य च व्यङ्ग्यापेक्षया जघन्यत्वं, व्यङ्ग्यस्य तात्पर्योद्बोधोत्तरकाले समुद्भासमानत्वादवसेयम्। अभिधया हि पदानां तावन्मुख्योऽर्थ एवोपस्थाप्यते, तात्पर्यवृत्त्या पुनस्तदीयं तादृशं तात्पर्य्यमुपस्थाप्यते, तदनन्तरमपि कस्यापि सहृदयहृदयमात्रेणापरिमिततयाऽपरिच्छिन्नतयाऽखण्डतया च चमत्कुर्वतश्चमत्कारस्यावरणापसारणद्वारोपस्थापनार्थमवश्यमभ्युपेतव्यत्वं व्यञ्जनायाः, तया च तादृशस्तथोद्बोधः स्फुट एव तात्पर्योत्तरभावीति न तिरोहितं प्रेक्षावताम्।

यच्च केचिदाहुः-'सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाया व्यापारः।' इति, 'यत्तथा धनिकेनोक्तम्-'तात्पर्याव्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः। यावत्कार्यप्रसारित्वात्तात्पर्यं न तुलाधृतम् ॥' इति।

तयोरुपरि "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः।" इति वादिभिरेव पातनीयो दण्डः। एवं च-किमिति लक्षणाऽप्युपास्या ? दीर्घदीर्घतराभिधाव्यापारेणापि तदर्थबोधसिद्धेः। किमिति च 'ब्राह्मण! पुत्रस्ते जातः, कन्या ते गर्भिणी' त्यादावपि हर्षशोकादीनामपि न वाच्यत्वम् ?

---

ननु किमिदमभिधीयते? शब्दश्रवणानन्तरं जायमानस्य सर्वस्याप्यर्थस्य शाब्दत्वात्, अभिधाया व्यापारस्य वाणवेगस्येव दीर्घदीर्घतरत्वं स्वीकर्त्तुमुचितत्वात् इति चेन्नेत्याह-यच्चेत्यादिना।

**केचित्**। भट्टमतोपजीविनो लोल्लटप्रमुखा इत्यर्थः। भट्टश्च मीमांसाया आचार्यविशेषः। नामानिर्देशः पुनरेतन्मतस्य क्षोदाक्षमत्वसूचनार्थः। **च** तथा। 'इषोर्वाणस्य बलीयसा प्रेरितस्ये'ति शेषः। **इव**। **अभिधायास्तन्नाम्न्याः** वृत्तेः। **स** परैर्वृत्त्यन्तरस्य व्यापाररूपत्वेन स्वीक्रियमाणोऽपि य इति भावः। **अयं**'सर्व'इति शेषः। **व्यापारः**। **दीर्घदीर्घतरो**ऽतीव यथेष्टं प्रसरणशीलः।' **इती**त्येवम्। **यत्**। **आहुः** कथयन्ति। **तथा** तथैव। **धनिकेन** तदाख्येन केनापि विदुषेत्यर्थः। 'ध्वनिकेने'ति पाठेऽपि 'तदाख्येन केनापि विदुषा'इत्येवार्थः। 'ध्वनिकारेणे'ति पाठस्त्वपपाठः। स्वमतविरुद्धत्वापत्तेः। धनिकश्च'दशरूपक'कर्त्तेत्यपि न सम्यक्। दशरूपकेऽनुपलब्धेः। '**तात्पर्याव्यतिरेकात्**तात्पर्यस्याव्यतिरेको व्यतिरेकाभावस्तस्मात्। यदसत्त्वे यदसत्त्वं व्यतिरेकः। न व्यतिरेकोऽव्यतिरेकः। तात्पर्येण समं भेदाभावात् इति भावः। 'यत्परः शब्दः स शब्दार्थः'इत्युक्तनयेन सर्वविधस्याप्यर्थस्य तात्पर्याव्यतिरेकित्वं च निर्वाधम्। **च**। **व्यञ्जकत्वस्य** व्यञ्जनोद्बोधकतायाः। व्यञ्जनोद्बोधकापरपर्यायो व्यञ्जकश्च क्वचिच्छब्दः क्वचिदर्थः क्वचित्पुनस्तदुभयमिति व्यञ्जकस्य तस्य शब्दाद्यन्यतमस्य यद् व्यञ्जनोद्बोधनसम्बन्धि सामर्थ्यं तस्येति भावः। **ध्वनिः**। इति व्यपदेश इति शेषः। **न** नैव। 'सङ्गच्छते'इति शेषः। एवं च तात्पर्य्यमेव सर्वोऽप्यर्थ इति न व्यञ्जकत्वस्य ध्वनिरिति व्यपदेशोपयोगित्वमावश्यकमिति निष्कृष्टम्। न चेदं (तात्पर्यं) संसर्गमेव बोधयित्वा परिक्षीयते, तत् पुनः कथं व्यञ्जनोद्बोधकत्वोपयोगित्वमावहेदिति वाच्यमित्याह-**यावत्कार्यप्रसारित्वाद्** यावन्ति कार्याणि वाच्यादीनीति यावत्कार्याणि, तानि तेषु वा प्रसर्तुं शीलमस्यास्तीति तत्त्वात्। यद्वा-यावत्कार्यं यदवधि कार्यं तावत्प्रसरणशीलत्वादित्यर्थः। कार्यमवधीकृत्य वर्त्तमानं यावत्कार्यम्। 'यावदवधारणे।' २।१।८ इति समासः। **तात्पर्य**मभिप्रायो यत्परः शब्दस्तत्परत्वमिति यावत्। यादृशाभिप्रायको वक्ता भवति तादृशाभिप्रायक एव तस्य शब्द इति सर्वोऽप्यर्थः शाब्दः, स च तत्पर इति तात्पर्यं शब्दसम्बन्धित्वं च न भिन्नार्थम्। इति बोध्यम्। **तुलाधृतं** तुलायां सादृश्ये तन्निश्चायके पात्रविशेषे वा धृतं निहितमित्यर्थः। **न** नैव। 'भवती'ति शेषः। एवं च-तात्पर्यं संसर्गमेव न बोधयति, यत्र व्यञ्जनाकार्यकारीति निष्कृष्टम्। **इती**त्येवम्। **यत् उक्तं** प्रोक्तं प्रतिपादितमिति यावत्। इदमभिहितम्-प्रबलेन वीरेण प्रेरितो यथा वाण एकेनैव स्वीयेनात्यन्तं दीर्घीयसा वेगेन व्यापारेण रिपोर्वर्म्म च्छित्त्वा, उरो भित्त्वा, जीवितं हरन् प्रसर्पति, तथा विविधाभिप्रायेण विचक्षणेन निवेदिताऽभिधाऽपि वृत्तिरेकेनैव स्वीयेन तत्तत्पदार्थोपस्थापकत्वरूपेण व्यापारेण तत्तत्पदार्थस्वार्थमुपस्थाप्य, वाक्यार्थमनुभाव्य रसादेश्चमत्कारं च सम्भाव्य विजयते इति ये केऽपि यया कयाऽप्यन्ययाऽपि वृत्त्या यस्य यस्यार्थजातस्योपस्थितिं कल्पयन्ति स सर्वोऽप्यर्थस्तन्मतेऽभिधयैवैकया वृत्त्योपस्थाप्यः, तस्य सर्वस्यैव तयैवोपस्थाप्यत्वात्; इत्येकयाऽभिधयैव वृत्त्या निर्वाहे वृत्त्यन्तरकल्पनाया अन्याय्यत्वमिति यदेकेषां भट्टमतोपजीविनां मतम्, धनिकस्य पुनस्तन्मतानुमन्तॄणां वा 'यत्परः शब्दः स शब्दार्थः' इति न्यायोक्तदिशा यंयमर्थं समवगमयितुं प्रवृत्तः शब्दः स सर्वोऽपि शाब्दः, तत्त्वं च तात्पर्यम्। एवं च शब्दसम्बन्ध्यर्थस्वरूपत्वं तात्पर्यमिति फलितम्। अथ तात्पर्यस्य महाकायत्वाद् व्यञ्जकसम्बधित्वमपि तदभिन्नम्। व्यञ्जकसम्बन्धी च व्यङ्ग्य एवार्थः। तदेवं वाच्य इव व्यङ्ग्य, उभयोरप्यनयोः शाब्दत्वात्। तात्पर्यं च यावत्कार्यं प्रसरणशीलमिति न परिमेयमियत्तयाऽनवच्छेद्यत्वात्।' इति यन्मतम्। इति।

**तयो**रुभयोर्मतयोरित्यर्थः। **उपरि**उपरिष्टात्। '**शब्दबुद्धिकर्मणां** शब्दस्य बुद्धेः कर्मणश्चेत्यर्थः। तत्र-शब्दो वाचकादिः, बुद्धिर्घटाद्याकारेण परिणमनशीलाऽन्तर्वृत्तिः, कर्म पुनः पचनादि। **विरम्य** विश्रम्य; विश्रामानन्तरमिति

यत् पुनरुक्तं–"पौरुषेयमपौरुषेयं च वाक्यं सर्वमेव कार्यपरम्, अतत्परत्वेऽनुपादेयत्वादुन्मत्तवाक्यवत्, ततश्च काव्यशब्दानां निरतिशयसुखास्वादव्यतिरेकेण प्रतिपाद्यप्रतिपादकयोः प्रवृत्त्यौपयिकप्रयोजनानुपलब्धेर्निरतिशयसुखास्वाद एव कार्यत्वेनावधार्यते। 'यत्परः शब्दः शब्दार्थः।' इति, न्यायात्।" इति।

---

यावत्। 'स्थिताना'मिति शेषः। **व्यापाराभावो** व्यापारोन्मुखीभावाभावः। एकं कार्यं निष्पाद्य कार्यान्तरं निष्पादयितुमव्यापृतत्वं क्षीणशक्तिकत्वात् सकृदेव कार्यकारित्वोपयोगिशक्तिशालित्वाच्चेति भावः। 'भवती'ति शेषः।" **इतिवादिभिरि**तिवक्तृभिः। 'आचार्यै'रिति शेषः। **एव** 'न त्वस्माभिरपी'ति शेषः। **दण्डः**। 'स्वविरोधफलं प्रदर्शयितु'मिति शेषः। **पातनीयः** पातनार्हः। इति। अत्रेदमभिहितं भवति–ये हि 'बाणस्य वेगइवाभिधाया व्यापारो दीर्घदीर्घतर इति सर्वेषामप्यर्थानामभिधेयत्व'मिति, ये च–'सर्वोऽप्यर्थः शाब्दस्तात्पर्यरूपत्वानपायात्। तात्पर्यं च शब्दसम्बन्धि। तत्यापौरुषेयतया व्यङ्ग्यमपि तथाभूतमिति न व्यञ्जनोपास्या, न च सा सार्थाऽन्यथाऽपि तदर्थसिद्धेः'। एवं च व्यञ्जकत्वं वाचकत्वं च न भिन्नस्वरूपं न वा व्यङ्ग्यत्वं वाच्यत्वं चे'ति मन्वते; ते सर्वेऽपि 'शब्दबुद्धिकर्मणां विरम्य-व्यापाराभावः' इति सिद्धान्तविरुद्धाभिधाना देवानांप्रियाः। तदिति तान् स्वयमेव 'शब्दबुद्धिकर्मणां व्यापाराभावः' इति सिद्धान्तिन उत्तरयिष्यन्ति, वयं पुनस्तत्रोदास्म हे इति। अथापि–जिज्ञासवः पृच्छामः–**एवं** 'सिद्धान्ते सती'ति शेषः। **च**। **लक्षणा** शब्दसम्बन्धरूपाऽन्यावृत्तिः। **अपि**। 'व्यञ्जनाया इवैतस्या अपि परिहारौचित्यात्।' इति शेषः। **किमिति** किमर्थं किमभिप्रेत्येति वा। **उपास्या** निषेव्याऽपेक्ष्या स्वीकार्येति यावत्। **दीर्घदीर्घतराभिधाव्यापारेणा**त्यन्तं सुदीर्घेणाभिधायास्तत्तत्समस्तपदार्थोपस्थापकेन व्यापारेणेत्यर्थः। **अपि एव**। अव्ययानामनेकार्थकत्वादत्रैवार्थेऽपिरिति बोध्यम्। **तदर्थबोधसिद्धेस्तया** लक्षणया कृतो योऽर्थस्तद्बोधसिद्धेरित्यर्थः। 'तृतीया तत्कृतार्थेन गुणवचनेन।' २।१।३० इति समासः। यद्वा–तस्या लक्षणायास्तत्सम्बन्धिनीति यावद्, याऽर्थबोधसिद्धिस्तस्मात्तद्रूपात् कारणादित्यर्थः। इह सम्बन्धसामान्यविवक्षया षष्ठी तया पुनः समासः। लक्षणयाऽपि प्रतिपाद्यस्यार्थस्य बोधो यदि स्वकल्पितेनाभिधाव्यापारेण तेन सम्पद्येत, **किं** पुनस्तस्या अपि 'स्वीकारौचित्यम्। **इति** भावः। **च** तथा। '**ब्राह्मण! ते** तव। **पुत्रः**। **जात** उत्पन्नः। **ते** तव। **कन्या**ऽनूढा पुत्री। **गर्भिणी** गर्भवती। 'जाते'ति शेषः। **इत्यादौ** 'वाक्यकदम्बे'इति 'शब्दे' इति 'उच्चारिते' इति च शेषः। **अपि**। **हर्षशोकादीनां** 'जायमानाना' मिति शेषः। **अपि**। आश्चर्यम्। **वाच्यत्वम्**। **न** 'स्वीक्रियते' इति शेषः।

इदमभिहितम्–यदीषोर्वेगेन रिपोर्वर्मशरीरच्छेदादिरिवाभिधाया व्यापारेणैव सर्वोऽपि तस्यतस्य शब्दस्यार्थःसम्पत्स्यते, तर्हि तेन व्यङ्ग्यइव लक्ष्योऽपि कुतो न सम्पद्येत, किंवा व्यञ्जनाया इव लक्षणाया अपि व्यापारान्तरस्वीकारौचित्यम्। व्यञ्जनाया इव लक्षणाया अप्यभिधातो भिन्नत्वेन तस्या अपि आनर्थक्यम्। अन्यथा किमपराद्धं व्यञ्जनया, किं वा लक्षणयोपकृतम्। इति दिक्।

ननु मैवं भूद् व्यङ्ग्यस्य वाच्यस्यार्थस्य च नाममात्रे विवादास्पदत्वम्, किन्तु–'यत्परः शब्दः स शब्दार्थः' इत्युक्तदिशा सर्वेषां शब्दानां कार्यपरत्वस्य विचिकित्सितत्वे रसात्मकवाक्यस्वरूपस्य काव्यस्य शब्दानां च निरतिशयसुखास्वादस्वरूपरसाविभिन्नतायां सहृदयहृदयसाक्षिकायां, तेषां पुनः कार्यपरतया, कार्यस्य च निरतिशयसुखास्वादानतिरेकितया परैरभ्युपगतो व्यङ्ग्यो रसोऽपि कुतो न शब्दार्थः? इति प्रकारान्तरेण व्यङ्ग्यस्य वाच्यात्मकतामभिदधतामन्विताभिधानवादिनां मतं परिहर्तुं तत्र तावत् तदेवोपपादयति–यत्पुनरित्यादिना।

**पुनः**। निरुक्तदिशा रसस्य व्यङ्ग्यमात्रस्य वा वाच्यतायां परिहृतायां सत्यामित्यर्थः। 'प्रकारान्तरेण पुनस्तामेव समादधानैः कैश्चि'दिति शेषः। "**पौरुषेयं** लौकिकम्। पुरुषाणामिदमिति तथोक्तम्। 'शुभ्रादिभ्यश्च।' ४।१।१२३ इति ढक्। **च** तथा। **अपौरुषेयमलौकिकम्**। न पौरुषेयमिति तथोक्तम्। **सर्वं** यावदस्ति तावत् तत्प्रकारकमिति यावत्। **एव**। **वाक्यं** पदोच्चयविशेषः। **कार्यपरं** कार्ये परं परायणं तत्कर्तुं समुद्यतमिति यावत्। कार्यं च वाक्यस्यार्थबोधनम्, तथा च–अर्थबोधने सदैवोद्यतमिति निष्कृष्टम्। 'अस्ती'ति शेषः। **अतत्परत्वे** तत्परत्वा-

तत्र प्रष्टव्यम्-किमिदं तत्परत्वं नाम ? तदर्थत्वं वा, तात्पर्यवृत्त्या तद्बोधकत्वं वा ? आद्ये न विवादः ? व्यङ्ग्यत्वेऽपि तदर्थताऽनपायात् । द्वितीये तु-केयं तात्पर्याख्या वृत्तिः ? अभिहितान्वयवादिभिरङ्गीकृता, तदन्या वा ? आद्ये दत्तमेवोत्तरम् । द्वितीये तु नाममात्रे विवादः । तन्मतेऽपि तुरीयवृत्तिसिद्धेः ।

---

भावे । तत्परत्वं च कार्यपरत्वं, तथा च-कार्यपरत्वाभावे इति निष्कृष्टम् । **उन्मत्तवाक्यवत्** उन्मत्तोऽसमाहितचेताः । 'उन्मत्तो मुचुकुन्दे स्याद्धत्तूरोन्मादयुक्तयोः ।' इति मेदिनी । 'तत्र तस्येव ।' ५ । १ । ११६ इति वतुप् । **अनुपादेयत्वादुपादेयताहानेरित्यर्थः** । 'हेतो'रिति शेषः । अत्रेयमनुमितिः-सर्वविधं वाक्यं कार्यपरम्, यदेवं न भवति, तत्तथा न भवति यथोन्मत्तस्य वाक्यम् । इति । अयं पुनर्निष्कर्षः-वाक्यं सर्वं द्विविधं, लौकिकमलौकिकं चेति । लौकिकं तावत् 'गामानय, अश्वं बधाने'त्यादि । अलौकिकं पुनः-'विश्वजिता यजेत, इन्धध्वं दैव्याय कर्मणे'इत्यादि । वाक्यं च योग्यताऽऽकाङ्क्षाऽऽसत्तिशाली पदसमूहः । इत्थं द्विविधमप्यशेषजातीयं वाक्यं कार्यपरम् । यतः-'गामानय'इति'अहरहः सन्ध्यामुपासीते'ति च वाक्यं यथाक्रमं 'गवानयन'रूपकार्यपरं प्रतिदिनं सन्ध्योपासनरूपकार्यपरं च । यत् पुनर्वाक्यं, वस्तुतः ( वाक्याभासरूपः पदोच्चय इति यावत् ) कार्यपरं न स्यात् तद् वाक्यमपि न, अनुपादेयत्वात्; यथोन्मत्तजल्पितम् । अतः-यद् वाक्यं भवति तत् कार्यपरमुपादेयं च, यथा'घटमानये'त्यादि । यन्न वाक्यं, तत्कथं कार्यपरमुपादेयं च न स्यात्, यथोन्मत्तजल्पितं 'पपं'त्यादि । इति । **च** पुनः । **ततस्तस्मात्** कारणात् । 'वाक्यं सर्वं कार्यपरं भवत्येवे'ति नियमात् । **काव्यशब्दानां** काव्यसम्बन्धिनां शब्दानाम् । **निरतिशयसुखास्वादव्यतिरेकेण** निरतिशयो यदपेक्षयाऽतिशयितो न भवति, सोऽसौ सुखास्वादो यस्मात् स निरतिशयसुखास्वादस्तस्य स एव वा व्यतिरेक इति तेन । 'हेतुने'ति शेषः । **प्रतिपाद्यप्रतिपादकयोः** । प्रतिपाद्यः श्रोता । प्रतिपादकः पुनर्वक्ता । प्रतिपादनं प्रतिपादस्तत्र साधुस्तस्मै हित इति वेति प्रतिपाद्यः । 'तत्र साधुः ।' ४।४।९८ इति 'तस्मै हितम् ।' ५।१।५ इति वा यत् । ननु'पादार्घाभ्यां च ।' ५।४।२५ इति यत्, तेन तादर्थ्ये एव केवलादेव पादशब्दाच्च तस्य विधानात् । प्रतिपादयति निरूपयति शब्देन स्वाभिमतार्थमिति प्रतिपादकः । 'ण्वुल्तृचौ ।' ३।१।१३३ इति ण्वुलि 'युवोरनाकौ ।' ७।१।१ इत्यकः । **प्रवृत्त्यौपयिकप्रयोजनानुपलब्धेः** प्रवृत्त्यौपयिकं यत् प्रयोजनं तदनुपलब्धेः कारणादित्यर्थः । प्रवृत्तिः काव्यस्य श्रवणे पाठे वा चित्तवृत्तेः प्रावण्यम् । उपायादनपेतमौपयिकम् । 'विनयादिभ्यष्ठक् ।' ५।४।३४ इति ठक् । 'उपायो ह्रस्वत्वं च'इति ह्रस्वत्वम् । प्रवृत्त्युपायकारणीभूतप्रयोजनवत्ताया अनुपस्थितेः कारणादिति भावः । **निरतिशयसुखास्वादो** निरतिशयं यत् सुखं तदास्वाद इति । **एव** । ननु यत्किञ्चित्सुखास्वाद इत्यर्थः । **कार्य्यत्वेन** सम्पाद्यत्वेन तद्रूपेणेति यावत् । **अवधार्यते** निश्चीयते । 'वाक्यं तावत् सर्वमेव कार्यपरम् ।'इति नियमोऽस्त्येव, अतः काव्यशब्दाः कार्यपराः स्युस्तेषामपि वाक्यत्वानपायात् । यस्य पुनः कार्यपरत्वं, तस्य पुनरुपादेयत्वमपीत्यपि सिद्धान्तः । अथ काव्यवाक्यस्य किं कार्यं किं च तत्परत्वं तच्चेति गवेषणीयम् । तत्र, कार्यं प्रयोजनम् । काव्यं च रसात्मकं वाक्यम् । तस्यैतस्य पुनः कार्यं (प्रयोजनं)निरतिशयसुखास्वादेन स्वमुपासीनस्याभिमुखीकरणम्, तस्य रसान्वयव्यतिरेकानुविधायित्वात् । रसश्च निरतिशयसुखास्वादान्न व्यतिरिक्तः । आयातं चैवं रसस्यापि वाक्यकार्यत्वम् । वाक्यकार्यं च वाच्यमेवेत्युभयमतम् । तथा सति रसस्य वाच्यत्वे स्वतःसिद्धं व्यङ्ग्यमात्रस्यापि वाच्यत्वम् । व्यङ्ग्यत्ववाच्यत्वयोश्चाव्यतिरेके नाममात्रे विवादः । सत्येवं किमर्था व्यञ्जना ? इति । न चैतत् प्रमाणासिद्धमभिधानमित्याह-"**यत्परो** यस्मिन् बोधनीयत्वेच्छाविषयीभूतेऽर्थे इति यावत् परः कारणत्वेनाभिमत इति तथोक्तः । यत्तात्पर्यमुद्दिश्य प्रवृत्त इत्यर्थः । **शब्दः** पदरूपो वाक्यरूपो वा । **सः** । **शब्दार्थः** शब्दस्यार्थस्तात्पर्यमिति तथोक्तः ।' **इतिन्यायात्** । इत्येवम्भूतात् सिद्धान्तादित्यर्थः ।" **इतीत्येवम्** । **यत्** । **उक्तं** प्रतिपादितम् ।

इत्थमेवमन्विताभिधानवादिनां रसादेर्व्यङ्ग्यत्वनिरसनाय युक्त्यन्तरं प्रतिपाद्य सहेलं खण्डयितुमाह-**तत्रे**त्यादि । **तत्रे**'ति यत्पुनरुक्त'मिति प्रदर्शिते इति यावत् । **प्रष्टव्यं** जिज्ञास्यम् । किमित्याह-**इदं** तथाऽभिमतम् । **तत्परत्वं** तस्मिन् बोध्येऽर्थे इति यावत् परं तत्त्वम् । **नाम** प्रसिद्धम् तेन रूपेण प्रसिद्ध मिति यावत् । **किं** किंस्वरूपमिति

यावत्। **तदर्थत्वं** तस्य शब्दस्यार्थ इति तस्यभावः तत्त्वम्। **वा**। **तात्पर्यवृत्त्या** तद्द्वारेति भावः। **तद्बोधकत्वं** तस्यार्थस्य बोधकस्तत्त्वम्। **वा**। 'अस्ती'ति शेषः। अत्र'वे'त्याधिक्यं समुच्चयार्थम्। अत एव 'दीव्रीश्वरो वा जगदीश्वरोवे' इत्यादौ'वे'ति 'शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्।' इत्यादौ च 'चे'त्यधिकं सङ्गच्छते। **आद्ये** तत्परत्वं नाम तदर्थत्वमिति पक्षस्वीकारे। **विवादो** विपरीतो वादोऽभिधानम्। **न** नैव। कुत इत्याह-**व्यङ्ग्यत्वे** 'व्यञ्जनावाद्युक्तदिशा रसादे' रिति शेषः। **अपि** 'सिद्धान्तिते' इति शेषः। **तदर्थताऽनपायात्** तस्य शब्दस्यार्थ इति तद्भावस्तत्ता तस्या अनपायस्तस्मात्। व्यङ्ग्यतायाः अपि शब्दार्थताऽपरिहानात्। **तु** पुनः। **द्वितीये** 'तत्परत्वं नाम तात्पर्यवृत्त्या तदर्थबोधकत्व'मिति पक्षस्वीकारे इत्यर्थः। इयं 'यया तदर्थबोधकत्वं से'ति शेषः। **तात्पर्याख्या** तात्पर्यमित्याख्या नाम यस्याः सा। **वृत्तिः**। **का** किंस्वरूपा। **अभिहितान्वयवादिभिर्नैयायिकैरिति** शेषः। **अङ्गीकृता** सिद्धान्तत्वेनाभिमता। **वाऽथवा**। **तदन्या** प्रसिद्धायास्तात्पर्याख्याया वृत्तेरन्या भिन्नेति यावत्। **आद्ये** 'अभिहितान्वयवादिभिरङ्गीकृतैव तात्पर्याख्या वृत्तिरस्माकमप्यभिमते'ति पक्षस्वीकारे। **उत्तरं** तदपसिद्धान्तता-प्रदर्शकं समाधानम्। **दत्तं** 'संसर्गमात्रे परिक्षीणा न व्यङ्ग्यबोधिनी'त्यनेनेति शेषः। **एव** नात्र कश्चित् संशयः। **तु**। अथ। **द्वितीये**'प्रसिद्धायास्तात्पर्यवृत्तेर्भिन्नैव तात्पर्यवृत्तिरिय'मिति पक्षस्वीकारे इत्यर्थः। 'सती'ति शेषः। **नाममात्रे** नामैवेति तस्मिन्। **विवादो** विरुद्धो वादः। कुत इत्याह-**तन्मते** तदिदं मतमिति तस्मिन्। प्रसिद्धायास्तात्पर्यवृत्तेर-पेक्षया विलक्षणां तात्पर्यवृत्तिमभ्युपगच्छतां मते इति भावः। यत्तु टिप्पणीकारैः-'तदिति अभिहितान्वयवादिमतेऽपी'ति व्याख्यातम्। तदापातरमणीयम्। 'तदन्या वे'त्युक्तदिशाऽभिहितान्वयवादिभिरङ्गीकृतायास्तात्पर्यवृत्तेरपेक्षया विल-क्षणायास्तात्पर्यवृत्तेः स्वीकारस्यैव द्वितीयत्वेनाभिमतत्वात्। अभिहितान्वयवादिनां मते तुरीयवृत्तेरनङ्गीकाराच्चेति। **अपि**। किं पुनः साक्षाद् व्यञ्जनामङ्गीकुर्वतां मते इति भावः। **तुरीयवृत्तिसिद्धेस्तुरीया** चतुर्थी या वृत्तिरिति तत्सिद्धेः। वाच्यलक्ष्यतत्तात्पर्यरूपार्थबोधाय वृत्तित्रयमङ्गीकृत्य प्रतीयमानस्यार्थस्य पुनर्बोधायापरां तात्पर्यवृत्तिमुरीकुर्वतां मते खल एव तुरीयाया वृत्तेरङ्गीकृतत्वात्।

अत्रायं पर्यालोकः-'शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्रुपश्यति। श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया॥ अन्यथाऽनुप-पत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम्। अर्थापत्त्याऽवबोधेच्च सम्बन्धं त्रिप्रमाणकम्॥' इति नयेन "यज्ञदत्त! गामानयेत्यादेः प्रयोजकवृद्धवाक्यप्रयोगात् प्रयोज्यवृद्धे देशान्तरात् सास्नादिमन्तमर्थं सन्निधापयितुमानयति सति प्रतिपत्तुः 'एतेनैतस्माद् वाक्यादेष स्यादर्थः प्रतिपन्नः' इति तदीहितानुपदमनुमाय प्राक् तत्र प्रतिपद्यते। अथ 'यज्ञदत्त! गां बधान। अश्वमानये' त्यादेः प्रयोजकवृद्धवाक्यप्रयोगात् प्रयोज्यवृद्धे सास्नादिमन्तमर्थं बध्नति, एकशफत्वादिमन्तमर्थं सन्निधा-पयति च सति स्वयमावापोद्वापाभ्यां तस्यतस्य शब्दस्य तंतमर्थमभ्युपपद्यते। अतः प्रवृत्तिनिवृत्तिहेतुभूतमेव प्रयोगयोग्यं वाक्यमिति निर्विचिकित्सितं प्रतिभासते विवेकदृशाम्। तस्मात्-वाक्यत्वमुपगतानां वार्न्यान्तरेण चा-सम्पृक्तानामेवान्वितैः पदार्थैः समं सङ्केतस्य गृह्यमाणत्वादन्विता एव (परस्परं सम्बद्धा एव) पदार्था वाक्यार्थः, ननु पदैरभिधया प्रतिपादितानामर्थानामाकाङ्क्षायोग्यताऽऽदिवशाद्भासमानः सम्बन्धरूपोऽप्यपदार्थोऽप्यर्थस्तात्पर्यवृत्त्या वाक्यार्थ इति बोद्धव्यम्। अन्वयबोधार्थं वृत्त्यन्तरकल्पनाया वैयर्थ्यादन्याय्यत्वाच्च। ननु-प्रत्यभिज्ञावशाद् वाक्या-न्तरेणान्वीयमानानामपि पदानां 'तान्येवैतानी' ति प्रत्ययात् कलशमानय, अश्वमानयेत्यादिस्थले 'आनये' त्यादेः कलशान्वितत्वमश्वान्वितत्वमित्यादिरूपो नार्थः, किन्तूभयत्र साधारण्याय साधारण्येनापरपदार्थान्वितानयनत्वादिनाऽपरप-दार्थान्वितानयनादिरूप एवार्थः, सति चैवं निरुक्तस्थले कलशान्वयरूपविशेषान्वयावगमाय स्वीकार्यैव तात्पर्यवृत्तिरिति चेन्न। साधारण्यादपरपदार्थान्वितत्वेन सङ्केतेऽप्याकाङ्क्षादिवशात् समभिव्याहृततत्तत्पदार्थान्वयबलाच्च तत्तदन्वितत्वरूप-विशेषान्वयस्यैवावगमात्। सम्बद्धानां हि पदार्थानां साधारण्येन विशेषस्यैवावगमः।"इत्याहुरन्विताभिधानवादिनः। एतन्मते सर्वमभिधानं सर्वदैवान्वितं भवति. न चान्वयावगमापेक्षितं किमप्यभिधानमिति तात्पर्यवृत्तिरपि न स्वीकार्या। अथ तात्प-र्यवृत्तिस्वीकर्त्तारः प्राहुः-प्रथमत एव न भवति किञ्चिदन्वितमभिधानम्, सर्वस्यैवाभिधानस्यानन्विततयोपस्थानं च निर्बाधं प्रत्यक्षसिद्धं च सूक्ष्मदृशाम्। इति तदर्थं काऽपि वृत्तिरवश्यं स्वीकर्त्तव्येति स्थिते तात्पर्याख्यैव, तस्यतस्याभिहितस्य तात्पर्यगवेषणार्थमेव वृत्तेरपि गवेषणीयत्वात्। इति। एवं चैते एवाभिहितान्वयवादिन इत्यप्यूह्यम् भेदश्चात्र-' अन्वितं

भवत्यभिधान' मिति, 'अनन्वितं भवत्यभिधान'मिति च। तत्र तावत्–' वाक्यं सर्वं, 'यत्परः शब्दः स शब्दार्थ ' इति निरूपितदिशा स्वत एव कार्यपरं भवति, कार्यं च तात्पर्यरूपमेव। तदनुद्दिश्य तस्य प्रवृत्त्यसम्भवात्। अतः–व्यङ्ग्यमपि काव्यं तथाभूतमेव। तदीयवाक्यस्यापि वाक्यत्वेनाव्यतिरेकात् तथाभूतं कार्यपरम्। कार्यं चात्रालौकिकास्वादानुभाव-कत्वम्। अलौकिकत्वं च निरतिशयत्वम्। अनुभावकत्वं च मुखविकासादिना हर्षादेरिव तस्यतस्य प्रतीतिगमकत्वम्। काव्यसम्बन्धिनोऽपि वाक्यस्यैवं तात्पर्यस्योल्लासकतया तस्य पुनः परेषां विचारदशा व्यञ्जनाप्रतिपाद्यरूपत्वाद् व्यञ्जनाप्र-तिपाद्यस्य च रसादिरूपत्वात्तस्यैवार्थभूतत्वे व्यञ्जनाया वृत्त्यन्तरत्वेन स्वीकारोऽपि न किञ्चित्करः प्रतिभासते।' इत्या-हुरेके, अपरे पुनः 'अभिहितानि तावत् सर्वाण्येव पदानि भवन्त्यनन्वितानि, तदर्थं तात्पर्याख्याऽपराऽपि वृत्तिरेका स्वीकार्या। अपरा चाभिधाऽपेक्षया लक्षणाऽपेक्षया च द्वितीया न तु व्यञ्जनाऽपेक्षयाऽपि। एतया पुनस्तस्यतस्यानन्वितमेव तंतमर्थमुद्बोध्य पुनरन्विततां नीत्वा तात्पर्यमुपस्थाप्यते, तदेव वाक्यार्थः। तात्पर्यं च यदुद्दिश्य वक्त्राऽभिहितानि पदानि। एवं च व्यञ्जनां वृत्त्यन्तरत्वेन स्वीकृत्य तया पुनः प्रत्यायितत्वेन स्वीक्रियमाणा रसादयोऽपि तात्पर्यान्नातिरिक्तस्व रूपा उपलभ्यन्ते, तदर्थं च तात्पर्याख्या वृत्तिः स्वीकृतैवेति तात्पर्यभिन्नाया वृत्तेः स्वीकारः किम्मूल इति त एव जानन्तु व्यञ्जनास्वीकर्तारः। एकतः कार्यसम्पत्तौ द्वितीयकल्पनाया वैयर्थ्याद् गौरवापत्तेश्च। न तात्पर्यवृत्त्यैव रसादि-बोधे तदर्थं व्यञ्जनायाः स्वीकारः स्थाने।' इति। अत्रोच्यते–'कलशमानय, अश्वमानये' त्यादौ वस्तुत्वेन वस्तुपदवाच्य-स्यापि कलशादेः कलशत्वादिना तदवाच्यत्वमिवापरपदार्थान्वितानयनत्वादिनाऽऽ'नये'त्यादिपदवाच्यस्यापि कलशाद्यान-यनस्य कलशानयनत्वादिना तदवाच्यत्वमेवेति सङ्केताविषये वाक्यबोध्ये प्राथमिकबोधविषयीकृतेऽपि अभिधाया व्यापा-रसञ्चारे सुतरां तत्पुनः प्रतीतिमात्रस्वरूपेऽर्थेऽभिधाया व्यापारासञ्चार इति साम्प्रतं तदर्थं व्यञ्जनायाः स्वीकारः। इति नान्विताभिधानवादिनां पक्षो युक्तः। इति। अत्र–काव्यप्रकाशकाराः। 'अनन्वितस्यैवाभिहितानां पदानामर्थस्याभिधेय त्वेऽन्वितत्वायापि वृत्त्यन्तरस्वीकारार्हत्वे तदनन्तरं प्रतीतियोग्येऽपि स्यादभिधाया व्यापार इत्यविचारितमेवाभिधानमभिहि-तान्वयवादिनाम्।' इति। कविराजाः पुनः–'भवन्तु सर्वेऽर्थाः शाब्दाः, तावता व्यङ्ग्यताऽनपायात्। न च तात्पर्याख्यया वृत्त्या व्यङ्ग्यस्यार्थस्यापि प्रतिपत्तिरिति वक्तुं शक्यम्। तस्याः संसर्गमात्रे विरामात्। व्यञ्जनायाः पुनरप्यभ्युपेयत्वात्। तात्पर्यवृ-त्तिरन्यैव वाक्यार्थादनन्तरमुद्बुध्यमानेऽर्थे। तथा सति नाममात्रे विवादः। वाक्यार्थावगमाय तात्पर्यवृत्तिमेकामङ्गीकृत्य व्यङ्ग्यार्थावगमायापरां स्वीकर्तुं प्रवृत्तेः। अपराया एव व्यञ्जनेत्यभिधीयमानत्वाच्च।' इत्याहुः। यत्तु–''नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते।''इति न्यायाच्छब्दश्रवणानन्तरं यावानर्थोऽवगतो भवति तावति सर्वस्मिन्नेव समुपस्थितत्वाच्छब्द एव निमित्त'मित्याहुः केचित्। तत्र प्रष्टव्यम्–किमिदं निमित्तम्? जनकं वा, बोधकं वा; न जनकं,शब्दस्य बोधकत्वात्,न चापि बोधकम्, तत्त्वासम्भवात्। बोधकं हि द्विविधं, बुद्धमबुद्धं चेति। न बुद्धं, सङ्केतमन्तरेणासम्भवात्, सङ्केतश्च अन्वितमात्रे, न त्वन्वितविशेषे, न वा प्रतीयमाने व्यङ्ग्ये। न चाबुद्धम्, तस्य बोधकत्वासम्भवात्। इति न यावत्तस्य नियतत्वं बुध्येत, तावन्न नैमित्तिकं बुद्धिविषयम्। न चैवं व्यङ्ग्योपस्थितिर्निर्निमित्ता स्यात्। इति वक्तुं शक्यम्। तत्र शब्दस्य बोधकत्वरूपेण निमित्तस्याभिप्रेतत्वात्। किन्तु–न तद् व्यञ्जनामन्तरा। शब्दस्यार्थनिमित्तताया व्यापारापेक्षितत्वात्। वाच्यलक्ष्यार्थयोरभिधालक्षणे व्यापारभूते इव व्यङ्ग्यार्थेऽपि कस्यापि व्यापारस्यावश्यकत्वे व्यञ्जनारूपस्यैव व्यापारस्या-वश्यकत्वम्। अन्यथा–वृत्त्यन्तरमपि दत्तजलाञ्जलिः स्यात्। अतः–'गतोऽस्तमर्कः, उदितश्चन्द्रः, पुत्रस्ते जातः, कन्या पुनर्गर्भिणी' त्यादौ तस्यतस्य कस्याप्यर्थस्य शाब्दस्य व्यञ्जनाव्यापार एव बोधकन्निमित्तम्।'' इति पुनः प्राहुः प्राञ्चः।'' इति।

ननु 'शब्दबुद्धिकर्मणां विरम्यव्यापाराभाव'इति निरूपितदिशा मा भूत्तात्पर्यवृत्त्या विभावादेः संसर्गस्य रसादेः पुनः प्रकाशस्य क्रमात् प्रतिपत्तिः! किन्तु युगपत् स्यात्, तदर्थं च तस्याः स्वीकारः सम्मत एव सर्वेषाम्। एवं सति किमर्थं पुनर्व्यञ्जना। तदर्थमेवैतस्या अपि स्वीकारात्। इति चेन्न। तात्पर्यवृत्त्या हि तत्र तावदनन्वितानि पदानि अन्विततां नीत्वा तेषामखण्डं तात्पर्यं प्रत्युपस्थाप्यते, अथ व्यञ्जनया तदनन्तरं समुल्लासि किमपि प्रत्याय्यते तत्त्वम्। अतः–विभावादे रसादेश्च प्रतीयमानत्वातिरिक्ततयाऽनवस्थानात्तयोः संसर्गप्रकाशावपि तथाभूताविति नास्त्येव तत्र व्यञ्जना-मन्तरेण कस्या अपि वृत्तेर्व्यापारसार्थक्यम्। इति तु दूरमास्ताम्। किन्तु–अत्र यौगपद्यमेव न सङ्गच्छते इत्यभिधास्य-न्नत्र तावदाशङ्कते नन्वित्यादिना।

नन्वस्तु युगपदेव तात्पर्यशक्त्या विभावादिसंसर्गस्य रसादेश्च प्रकाशनम् इति चेद्, न; तयोर्हेतुफलभावाङ्गीकारात्। यदाह मुनिः–'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः।' इति।

सहभावे च कुतः सव्येतरविषाणयोरिव कार्यकारणभावः। पौर्वापर्यविपर्ययात्। 'गङ्गायां घोषः।' इत्यादौ तटाद्यर्थमात्रबोधविरताया लक्षणायाश्च कुतः शीतत्वपावनत्वादिव्यङ्ग्यबोधकता। तेन तुरीया वृत्तिरुपास्यैवेति निर्विवादमेतत्।

---

**ननु** आशङ्क्यते। **तात्पर्यशक्त्या** तात्पर्यरूपया शक्त्या वृत्त्येति यावत्। वस्तुतस्तु–तात्पर्यस्य तात्पर्यवृत्त्या प्रतिपाद्यस्यार्थस्य शक्तिस्तद्रूपा व्यञ्जना नाम वृत्तिस्तयेत्यर्थः। **विभावादिसंसर्गस्य** विभावादेरालम्बनोद्दीपनादेः संसर्गोऽन्वयः परस्परमनन्वितस्य तस्यान्वितत्तयोपस्थितिरिति तस्य। च तथा। **रसादेः** शृङ्गारादेः। **प्रकाशनं** प्रकाशः प्रतिपत्तिरिति यावत्। **युगपदे**ककालावच्छेदेन। **एव** न पुनः क्रमात्। **अस्तु** स्यात्। 'लोट्च।' ३।३।१६२ इति सम्भावनायां लोट्। **इति चेदि**त्येवं यदि। 'प्रतिपाद्यते' इति शेषः। तर्हि–**न** नैव। 'युक्त'मिति शेषः। कुत इत्याह–**तयोः** संसर्गप्रकाशनयोः। **हेतुफलभावाङ्गीकारात्।** हेतुत्वफलत्वयोरङ्गीकारात्। विभावादिसंसर्गस्य हेतुत्वेन रसादेः पुनः प्रकाशस्य फलत्वेनाभिप्रेतत्वादिति यावत्। ननु निष्प्रमाणे तयोर्हेतुत्वफलत्वे इति चेन्नेत्यभिप्रेत्याह–**यद्** यस्मात् कारणात्। **मुनिः**। 'भरत' इति शेषः। **'विभावानुभावव्यभिचारिसंयोगाद्** विभावस्यानुभावस्य व्यभिचारिणश्च संयोगात् सम्बन्धविशेषात्। **रसनिष्पत्तिः**। रसस्य निष्पत्तिः समुल्लास इत्यर्थः। 'भवती'ति शेषः।' **इती**त्येवम्। **आह** प्रतिपादयति। अत्र विस्तरः प्राग् द्रष्टव्य इति दिक्।

न च युगपद्भवयोरपि तयोः 'कार्यकारणभावोऽस्त्वि'ति वाच्यमित्याह–**सहभावे** इत्यादिना।

**च** पुनः। **सहभावे** विभावादिसंसर्गस्य रसादिप्रकाशस्य चेति शेषः। **सव्येतरविषाणयोर्वा**मदक्षिणशृङ्गयोः। सव्यं चेतरच्चेति सव्येतरे, ते इमे विषाणे शृङ्गे इति, तयोः। **इव** यथातथा। **कार्यकारणभावः** कार्यत्वं कारणत्वं च। **कुतः** कस्माद्धेतोः। तयोरिति शेषः। तथा च–विभावादिसंसर्गस्य रसादिप्रकाशस्य च कार्यत्वं कारणत्वं च कुतः स्यात् इत्यर्थः। हेतुमाह–**पौर्वापर्यविपर्ययात्** पूर्वं चापरं चेति, तयोर्भावः पौर्वापर्यं तस्य विपर्ययस्तस्मात्। 'कारणात् कार्यमुत्पद्यते' इति नियमात् कारणस्य पूर्ववर्त्तित्वं कार्यस्य पुनस्तदपेक्षया पश्चाद्भावो नियत एवेति हेतोर्विभावादिसंसर्गस्य रसादिप्रकाशस्य च यौगपद्यं न सङ्गच्छते। यौगपद्यं तु सव्यापसव्यविषाणयोरिव स्यात्। तयोः पुनः कारणत्वं कार्यत्वं च न कुत्रापि दृष्टचरे। अथैतयोः कारणत्वं कार्यत्वं च भगवता मुनिनाऽऽज्ञापितमेवेति तात्पर्यशक्त्यैतयोः समुल्लासः स्यादिति कथमपि न सम्भवितुमर्हतीति भावः। ननु मैवम्भूदभिधा तात्पर्यवृत्तिश्च व्यञ्जनास्थानापन्ने, किन्तु लक्षणा तु भवितुमर्हत्येव व्यञ्जनाया अपि कार्यकारिणी, 'गङ्गायां घोषः।' इत्यादावर्थान्तरस्य प्रत्यायिकत्वात्। अन्यथा 'मुख्यार्थबाधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते। रूढेः प्रयोजनाद्वाऽपि लक्षणाशक्तिरर्पिता॥' इत्यत्र 'ययाऽन्योऽर्थः प्रतीयते' इत्युक्तमनर्थकं स्यादिति चेन्नेत्याह–**गङ्गायां** गङ्गाऽऽख्यायां नद्याम्। **घोषो** ग्रामविशेषः।' **इत्यादौ** 'वाक्यप्रयोग' इति शेषः। **च तटाद्यर्थमात्रबोधविरतायास्**तटं तीरमादौ यस्य सः, तटादिरसावर्थ इति, स एवेति, तत्र विरतायाः। तीरादिरूपमर्थमेव बोधयित्वा विरतव्यापारायाः। **लक्षणायास्**तन्नाम्न्या वृत्तेः। **शीतत्वपावनत्वादिव्यङ्ग्यबोधकता** शीतलत्वपवित्रत्वादिरूपस्य व्यञ्जनया प्रतिपाद्यस्य तात्पर्यस्य प्रत्यायिकत्वम्। **कुतः**। कथं स्यात्। **तेन** 'हेतुने'ति शेषः।। **तुरीया** चतुर्थी व्यञ्जनाऽऽख्येति यावत्। **वृत्तिः**। **उपास्या**ऽऽश्रयणीया। **एव** निश्चितम्। **इती**त्यस्मात् कारणात् **एतत्** अभिधालक्षणातात्पर्यवृत्तित्रयव्यतिरिक्ता चतुर्थी व्यञ्जना वृत्तिरुपास्यैवेति कथनमिति यावत्। **निर्विवादं** सिद्धान्तभूतम्। 'अस्तीति' शेषः।

अत्रेदमभिहितं भवति–गङ्गा हि जलराशिरूपा तन्मध्ये ग्रामस्थितिर्निरान्तमसम्भवैवेति 'गङ्गायां (जलप्रवाहमध्ये) घोषः (ग्रामविशेषः)।' इति कथनमुन्मत्तप्रमत्तजल्पितायितमात्रं, नात्र काऽपि विप्रतिपत्तिः। सत्ये तत्सजातीये वाक्यप्रयोगस्थले वक्तुस्तात्पर्यान्तरमन्वेष्टव्यमिति भवत्यन्तः काऽपि चेतोवृत्तिः सचेतोमात्रस्य। अथावगम्यते–मुख्यार्थस्तावद्बाधज्ञानपराहत एवअतोऽत्र लक्षणा। मुख्यार्थबाधे एव तस्याः प्रवृत्तेः। किन्तु तत्सम्बद्धोऽर्थोऽवश्यमत्रास्तीति

किञ्च-

**२९९ बोद्धृस्वरूपसङ्ख्या-निमित्तकार्यप्रतीतिकालानाम्।**
**चाश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्यः ॥ २९४ ॥**

---

पुनर्गवेषणावसरे'गङ्गायां गङ्गातीरे'इत्यर्थो द्रागारोहति प्रज्ञाविषयताम्। अथ-'गङ्गातीर'इत्यनभिधाय'गङ्गाया'मित्येव किमर्थमुक्तमिति पुनस्तत्तत्त्वान्वेषणे कर्त्तव्ये तदाश्रितस्य शीतलत्वं पावनत्वं च बोधयितुमिति गृहीतव्यम्। ननु 'गङ्गातीरे घोष'इत्युच्यमानेऽपि किं घोषस्य शीतलत्वादि न बोद्धुं शक्यम्। यद्'गङ्गायां घोष'इत्येवोक्तम्। इति चेत् तत्रातिशयितत्वार्थमित्यवधार्यम्। तथा च-'गङ्गाया'मित्यस्य'गङ्गाऽधिकरणकतीरवृत्ते' तिलक्षणया प्रतिपादितोऽर्थः। अथ'शब्दबुद्धिकर्मणां विरम्यव्यापाराभाव'इत्युक्तदिशा लक्षणायां विरतव्यापारायां 'नितान्तं शीतलत्वपावनत्वविशिष्टो घोषः'इति चमत्कुर्वतोऽर्थस्य प्रतीतिरभिधया लक्षणया वा तात्पर्येण वा भवितुमशक्यैव। 'घोष'इत्यस्य 'आभीराणां ग्रामस्य सद्भाव'इत्यर्थमात्रस्याभिधेयत्वात्, लक्षणायाश्च स्वत एव दूरमपसारितत्वाच्च। अतोऽसौ कयाऽपि तुरीयया वृत्त्यैवेति सिद्धान्ते व्यञ्जनयैवेति स्थितम्। न च'यया ऽन्योऽर्थ'इत्युक्तदिशा'गङ्गातीरे'इत्यस्मादर्थाद्भिन्नस्याप्यर्थस्य 'शीतलत्वादिविशिष्ट'इत्यात्मकस्यापि लक्ष्यत्वं कुतो नेति शङ्क्यम्। अन्यशब्देन मुख्यभिन्नस्यैवोपात्तत्वात्, 'तद्युक्त' इति विशेषणस्य च तत्र सार्थक्यात्। इति दिक्।

अथ वृत्त्यन्तराद् व्यञ्जनाया व्यतिरेकं दर्शयितुं प्रवृत्तस्तत्र तावदभिधाया विभेदं दर्शयन् व्यञ्जनया प्रतिपाद्यमानोऽर्थः किमेकस्वरूप एव, आहोस्विदनेकस्वरूप इति जिज्ञासामप्यनुषङ्गतोऽपनयन् 'स्थूणानिखनन' न्यायेन पुनरेतस्या अङ्गीकारौचित्यं द्रढयितुमुपक्रमते-किञ्चेत्यादिना।

**किञ्च-२९९ बोद्धृस्वरूपसङ्ख्यानिमित्तकार्यप्रतीतिकालानाम्।** तत्र-बोद्धा श्रुत्वा तात्पर्यज्ञाता, स्वरूपं लक्षणं, सङ्ख्या बोद्धॄणां यावन्मात्रतासूचिका गणना, निमित्तं हेतुः, कार्यमुद्देश्यम्, प्रतीतिर्ज्ञानम्, कालः समयः। च तथा। **आश्रयविषयादीनामाश्रयो** विषय ( पूर्वोपक्रान्तं वक्तव्यं तात्पर्यं वा )श्चेत्येतावादौ येषां ( प्रकरणादीनाम् ) तेषाम्। **भेदात्तद्रू**पात् कारणात्। **व्यङ्ग्यो** व्यञ्जनया वृत्त्या प्रतिपाद्योऽर्थ'इति शेषः। **अभिधेयतो**ऽभिधेयोऽभिधया प्रतिपाद्योऽर्थस्तस्मात्। 'पञ्चम्यास्तसिल्।' ५।३।७ इति तसिल्। **भिन्नः** पृथग्भूतः। 'भवती'ति शेषः। क्वचित्। 'अभिधीयते'इति पाठः। तत्र'वाच्या'दित्यध्याहृत्य भिन्नो व्यङ्ग्योऽभिधीयते इत्यन्वयः॥ २९४॥

अत्रायम्भावः-वाच्यो व्यङ्ग्यश्च नैकात्मानौ। तयोरनेकान्तिकत्वात्। यो व्यङ्ग्यः स नाभिधेयः, यश्चासौ न सः। तथाहि-'संयोगो विप्रयोगश्च साहचर्यं विरोधिता। अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः॥ सामर्थ्यमौचितो देशः कालो व्यक्तिः स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥' इति निरूपितदिशा संयोगादयोऽभिधाया नियन्तारः। तदेतया प्रतिपाद्या अप्यर्था नियमितात्मान एव न पुनरनियतस्वरूपा जातु। संयोगादिभिर्नियमनानन्तरमपि वक्तृबोद्धव्यादितात्पर्यवशात् समुल्लसन्तः सर्वेऽप्यर्था नाभिधेयाः, किन्तु व्यङ्ग्या एवेति न तिरोहितं विदुषाम्। अतः-संयोगादयः शब्दस्यार्थविशेषस्मृतिहेतुभूता एकत्राभिधाया नियन्तारः, परत्र त एव व्यञ्जनायाः सञ्चारयितारः तमस्तेरपनेतारो हि तेजस्ततेः प्रवर्त्तयितारो भवन्ति। स्पष्टश्चैवमभिधाव्यञ्जनयोर्वाच्यव्यङ्ग्ययोश्च भेदः। अभिधाया नियन्तुं शक्यत्वादभिधेया अपि नियन्तुं शक्याः, व्यञ्जनायाः पुनः सर्वदाऽधीशानत्वाद् व्यङ्ग्या अपि सर्वेऽधीशाना एवेत्येवोच्यते-'यो व्यङ्ग्यः स नाभिधेयः, यश्चासौ न सः।' इति। अथ-अभिधेयस्य बोद्धृप्रभृतयोऽन्य एव व्यङ्ग्यस्य पुनरन्य एव। अभिधेयः पुनः शब्दसम्बन्धिसङ्केतमात्रेण प्राप्तस्वारूप्यः, व्यङ्ग्यस्तु न तथाभूत इति कथमनयोः सारूप्यं सम्भाव्येत ? तथा-ऽभिधेयोऽभिधातुं शक्यः, व्यङ्ग्यः पुनरनुभवदशा विज्ञातुमेव शक्यः, ननु साक्षाद्वचसा प्रत्यक्षीकर्तुमिति महदान्तर्यमेतयोः। एवमभिधेयो नानवच्छेद्यः, व्यङ्ग्यः पुनः सर्वदाऽनवच्छेद्य एव, अभिधेयस्तथाऽऽस्वादिताखाद एव व्यङ्ग्यस्तु प्रतिक्षणं समुपपद्यमानानाखादितास्वादोद्रेकः। न ततस्तयोरैक्यम्। अभिधेयस्तथा यस्मिन् सङ्केतितोऽभिधायकः शब्दस्तस्मिन् परिज्ञाते परिज्ञातो भवति, व्यङ्ग्यः पुनस्तदनन्तरमेव केषाञ्चित्। तदेवं वाच्यव्यङ्ग्ययोः सामञ्जस्यं सारूप्यं च न केनापि सचेतसाऽभिधातुं शक्येते। इति दिक्।

वाच्यार्थव्यङ्ग्यार्थयोर्हि पदतदर्थमात्रज्ञाननिपुणैर्वैयाकरणैरपि सहृदयैरेव च संवेद्यतया बोद्धृभेदः, 'भम धम्मिअ'-इत्यादौ क्वचिद्वाच्ये विधिरूपे निषेधरूपतया स्वरूपभेदः, क्वचित्-'निश्शेषच्युतचन्दनम्'-इत्यादौ निषेधरूपे विधिरूपतया च स्वरूपभेदः। 'गतोऽस्तमर्कः।' इत्यादौ च

---

अथैतदेव विवृणोति-**वाच्यार्थव्यङ्ग्यार्थयो**रित्यादिना ।

**पदतदर्थमात्रज्ञाननिपुणैः** पदानि सुबन्तास्तिङन्ता वा शब्दविशेषास्तदर्थास्तेषाम् ( पदानाम् ) अर्था इति ते चेति, पदतदर्था एवेति, तस्य ज्ञानं तत्र निपुणैः । पदानां सिद्धिमेव तेषां पुनः सङ्केतितमेवार्थं जानद्भिरित्यर्थः । **वैयाकरणै**र्व्याकरणाभिज्ञैः । व्याकरणमधीते वेद वेति तैः । 'तदधीते तद्वेद ।' ४।२।५९ इति साधु । **अपि** किं पुनस्तार्किकैर्मीमांसकप्रमुखैश्च । 'सम'मिति शेषः । यद्वा-'वृद्धो यूना' इत्यादिनिर्देशवशात् तत्र विनाऽपि तद्योगं तृतीया । **च** तथा । **सहृदयै**र्मार्मिकैः । **एव** नतु परैरपि । **वाच्यार्थव्यङ्ग्यार्थयो**र्वाच्यार्थस्य व्यङ्ग्यार्थस्य चेत्यर्थः । **संवेद्यतया** सम्यग्रूपेण विज्ञेयतया । 'हेतुने'ति शेषः । 'हेतौ ।' २।३।२३ इति तृतीया । **बोद्धृभेदो** ज्ञातृभेदः । उक्तं च ध्वनिकारैः-'शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते । वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलैः ॥' इति । एवं च-शब्दार्थशासनज्ञानमात्रेण वाच्यार्थस्यैवाभिज्ञतोल्लासान्न तेषां व्यङ्ग्याभिज्ञत्वम् । इत्यतोऽतिरोहित एव बोद्धृभेदः । सहृदया हि व्यङ्ग्यार्थाभिज्ञा न पुनस्तदितरे । एतेषां वाच्यार्थज्ञानमात्रेण कृतार्थत्वान् व्यङ्ग्यार्थज्ञानद्धर्यां तु नितान्तं वञ्चितत्वात् । सुष्ठूक्तं केनापि कविना-'कविताऽऽस्वादसमये पदव्युत्पत्तिमात्रधीः । नीवीमोक्षस्य वेलायां यथा क्षौमार्घचिन्तकः ॥' इति । अथ बोद्धृभेदो यथा मम-'सुन्दरि ! चिरेण तव परिरम्भायावस्थितोऽस्म्यहं स्पृहयन् । त्वं पुनरवेक्ष्य वत मां नियताऽम्बुजमुद्रणे जाता ॥' इति । अस्यायं पुनरर्थः-हे सुन्दरि ! तव परिरम्भायालिङ्गनाय स्पृहयन् चिरेण चिरादहमवस्थितोऽस्मि । त्वं पुनर्मामवेक्ष्य दृष्ट्वाऽम्बुजस्य मुद्रणरूपे खेलने नियता दत्तचित्तेति वत कष्टम् ॥ इति । अत्र हि-वैयाकरणो वक्ता, तद्विचारेण नात्र प्रतिभासते चमत्कारः । श्रुत्वा पुनस्तत्तात्पर्यमन्वेषमाणस्य सहृदयस्य पुनर्विचारेण 'सूर्यास्तपर्यन्तं सह्यतां तद्वियोग' इति प्रतिभासते एव चमत्कारः । इति स्पष्टो बोद्धृभेदः । **'भम धम्मिअ-' इत्यादौ** । 'भम धम्मिअ ! वीसत्थो सो सुणओ अज्ज मारिओ देण । गोलाणइ कच्छकुडंगवासिणा दरिअसीहेण ॥' इत्यादावित्यर्थः । **क्वचित्** । कस्मिंश्चित् । 'उदाहरणप्रसङ्ग' इति शेषः । **विधिरूपे** 'भ्रमं धार्मिक ! विश्रब्धः-' इत्याद्युक्तदिशा भ्रमणनिर्भयताभिधानात्मकविधानरूपे इत्यर्थः । **वाच्ये** वाच्यार्थे । निषेधरूपतया 'नात्र पादविन्यासोऽपि कदाचन विधेयः ।' इत्यात्मकनिषेधरूपेण । **स्वरूपभेदः** । स्वरूपस्य भेदः । तथा च- वाच्यस्य विधिरूपतया व्यङ्ग्यस्य पुनर्निषेधात्मकतया वाच्यार्थव्यङ्ग्यार्थयोः स्वरूपतो भेदः क्वाचित्क इति निष्कृष्टम् । यथा वा मम-'अयि ललने ! तव लोचनपातः कस्यास्तु न प्रमोदाय । येनायमनुगृहीतो लोकान्तरमुद्यतो लब्धुम् ॥' इति । अस्यायमर्थः-'अयि ललने ! येन लोचनपातेनानुगृहीतोऽयं जनो लोकान्तरं स्थानान्तरं लब्धुमुद्यतो जातः, स तव लोचनपातः कस्य प्रमोदाय नास्तु न स्यात् । इति । अत्र हि लोचनपातोऽयं नितान्तं स्पृहणीयस्ते इति विधिरूपो वाच्योऽर्थो निषेधरूपः सन् व्यङ्ग्यपर्यवसायीति स्पष्टं वाच्यार्थव्यङ्ग्यार्थयोः स्वरूपतो भेदावस्थानम् । **च** पुनः । **क्वचित्** । उदाहरणप्रसङ्ग इति शेषः । **'निश्शेषच्युतचन्दनम्-'इत्यादौ** । 'निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः । मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे ! वापीं स्नातुमितो गताऽसि, न पुनस्तस्याधमस्यान्तिकम् ॥' इत्यादावित्यर्थः । **निषेधरूपे** 'वाच्ये'इति शेषः । **विधिरूपतया** । 'व्यङ्ग्यस्येति'शेषः । **स्वरूपभेदः** । तथा च 'तस्य सन्निधिं न गता'इति निषेधरूपस्य वाच्यस्य तस्यैव सन्निधिं गता'इति विधिरूपेण व्यङ्ग्यदशायां पर्यवसानात् स्पष्ट एव वाच्यार्थव्यङ्ग्यार्थयोः स्वरूपतो भेदः क्वाचित्को विधिरूपस्य निषेधपर्यवसायीति निष्कृष्टम् । यथा वा मम-'वामे ! मैव निपातय मयि दृष्टिं मन्मथासिकारूपाम् । अपनय दूरं त्वरितं शरणागत एष ते दीनः ॥' इति । अस्यायमर्थः-हे वामे कुटिले ! मन्मथस्यासिकां छुरिकां तत्स्थानापन्नां दृष्टिं मयि मैव निपातय, किन्तु-त्वरितं दूरमपनय, एषोऽहं दीनस्य शरणागतः ॥' इति । अत्र हि-नयननिपातदूरीकरणरूपनिषेधस्य नयननिपातावश्यकताऽऽत्मकविधिरूपेण व्यङ्ग्यदशायां पर्यवसायित्वम् । अथात्र टिप्पणीकाराः प्राहुः-'क्वचिद् वाच्ये

**वाच्योऽर्थ एक एव प्रतीयते ।  व्यङ्ग्यस्तु तद्बोद्धादिभेदात् क्वचित् 'कान्तमभिसर' इति 'गावो निरुध्यन्ताम्' इति 'नायकस्यायमागमनावसरः' इति 'सन्तापोऽधुना नास्ति' इत्यादिरूपेणानेक इति सङ्ख्याभेदः । वाच्यार्थः शब्दोच्चारणमात्रेण वेद्यः । एष तु तथाविधप्रतिभानैर्म-**

---

विधिरूपेऽनुभयरूपो व्यङ्ग्यो यथा मम–"याहि मर्मैवैकस्या भवन्तु निःश्वासरोदितव्यानि । मा भूवन् हतमनसस्तवापि तस्या वियोगेन ॥" इत्यत्र न विध्यभावो निषेधो, नापि विध्यन्तरम् । क्वचिद्वाच्ये निषेधरूपेऽनुभयरूपो यथा मम–"अयि वदनेन्दुविकाशप्रशमिततिमिरोत्करे निवर्त्तस्व । प्रत्यूहयसि परासामप्यभिसारं हताशे किम् ॥" प्रियतममभिसरन्तीं काश्चिन्नायिकां प्रति तद्गृहाभिमुखमागच्छतः प्रियतमस्योक्तिरियं प्रत्यभिज्ञानच्छलेन । अत एवात्मप्रत्यभिज्ञापनार्थं 'हताशे' इति नर्मवचनम् । परासामप्यभिसारं प्रत्यूहयसि, तवाभिमतसिद्धिर्भविष्यतीति का प्रत्याशा । ततश्च मदीयं वा गृहमायाहि, त्वदीयं वा यामीति तात्पर्यादनुभयरूपो व्यङ्ग्यः ।' इति । यथा वा मम–'सुन्दरि ! सुधानिधानं नयननिपातं निरूपयान्यत्र । एष तु सदा कृतार्थः स पुनर्भूयात् परं सुभगः ॥' इति । अत्र हि–'अन्यत्र दृष्टिं निपातये'ति विधिरूपो वाच्यः, व्यङ्ग्यः पुनः–त्वां निषेवमाणोऽप्ययं नाथ यावत् कृतार्थस्त्वया विहितो जातो वा, स केवलं पुनस्त्वामसेवमाणः कृतार्थोऽवश्यम्भावीति । तथा च–वाच्यस्य न विधिपर्यवसायित्वं न वा निषेधपर्यवसायित्वम्, स्वरूपतो भेदस्तु जागरूक एव । यथा पुनर्मम–'शशिमुखि ! सुदृष्टिसुधया जीवय मा मां कृताऽपराधं ते । अपराधिरोधिजन्यं न जहीहि यशः स्वकीयमुल्लसितम् ॥' इति । अत्र हि 'कृतापराधं मां मैव जीवये'ति जीवनदाननिषेधरूपस्य वाच्यस्य यदि कृत एवानेन तवापराधस्तर्हि मा मां जीवय यदि तु न तर्हि मृतप्रायोऽपि जीवितव्य एवायम्, अन्यथाऽपराधिनाशनजन्ययशोरक्षणापेक्षया निरपराधिनाशनजन्यं शरणागतपरित्यागजन्यं चायशस्त्वमपि लप्स्यसे इति व्यङ्ग्यदशायां निषेधानिषेधो भयसाधारण्येन पर्यवसायीति स्वरूपतो भेदः । च पुनः । 'गतः प्राप्तः । अस्तं प्रकाशतिरोधानम् । अर्कः सूर्यः ।' इत्यादौ । 'उदाहरणप्रसङ्ग' इति शेषः । **एको** द्वितीयत्वानवच्छिन्नः । **एव** । **वाच्यो**ऽभिधाप्रतिपाद्यः । **अर्थः** । **प्रतीयते** प्रतिभासते । **व्यङ्ग्यः** । 'अर्थ' इति शेषः । **तु** पुनः । **तद्बोद्धादिभेदा**त्तस्य ( व्यङ्ग्यस्य ) बोद्धा ज्ञातेति, स आदौ येषां ( बोद्धव्यादीनाम् ) तद्भेदात् । 'हेतो'रिति शेषः । **क्वचित्** । '**कान्तं** प्रियतमम् । **अभिसर** तत्सम्मुखीना भूयात् ।' इतीत्येवं रूपः । क्वचित्–'**गावः** । **निरुध्यन्ता**मवरुद्धाः क्रियन्ताम् ।' इतीत्येवंरूपः । क्वचित्–'**नायकस्य** प्राणप्रियस्य । **अयं** 'वर्त्तमान' इति शेषः । **आगमनावसरः** । समागमस्य समयः ।' इतीत्येवंरूपः । क्वचित्–'**सन्ताप**स्तापोद्रेकः । **अधुना**ऽस्मिन् समये । **न** । नैव । **अस्ति** विद्यते ।' **इत्यादिरूपेणे**त्याद्याकारकतया । **अनेको** नानाविधः । इतीत्यस्मात् कारणात् । **सङ्ख्याभेदः** सङ्ख्यातो भेदः । यथा वा मम–"स्फुरति सुधानिधिरुच्चैर्गर्जति नीचैः पयोनिधिर्भूयः । अनयोः सुषमा सुमुखि ! स्मयमानं कं न हा कुरुते ॥ " इति । अस्यायमर्थः–सुमुखि ! सुधानिधिश्चन्द्र उच्चैरुपरिष्टादाकाशे स्थितः सन् स्फुरति,पयोनिधिः समुद्रो भूयः पुनर्नीचैरधस्ताद् गर्जति । अनयोः सुषमा मनोरमा शोभा कं स्मयमानं प्रसन्नवदनं न कुरुते करोति ।' अपि तु सर्वमेवेति भावः । इति । अत्र हि–सुधानिधानभूतं 'त्वदीयं वदनमप्राप्यमेव, अथापि मदीयमन्तःकरणं समुद्र इव नितान्तमुच्छ्लति, एतयोः पुनरेतामवस्थामवेक्षमाणाः सर्वेऽपि हसन्ति, हसन्तु नाम, किं तेन यन्नयोः परस्परं प्रेमोद्गारः ।' इति 'सुकृती उपरिष्टाद् विराजमानोऽपि न गर्जति, दुष्कृती पुनरधःपतितोऽपि निस्त्रपो गर्जति; इत्येतयोर्दशामवेक्षमाणस्य कस्य न मनसि पारमेश्वरं वैभवमुदेति' इति नितान्तं स्पृहणीयसम्पत्तिकोऽप्यवदान्यो यद्युपरिष्टादपि विराजेत, तर्हि विराजतु नाम, किं तेन; यः पुनर्नितान्तं स्पृह-

---

१ 'व्रज मर्मैवैकस्या भवन्तु निःश्वासरोदितव्यानि । मा तवापि तया विना दाक्षिण्यहतस्य जानन्तु ॥' इति-संस्कृतरूपेण परिणतस्य 'वच्च मह व्विअ एक्केइ होंतु णीसासरोइअव्वाइं मा तुज्झ वितीअविणा दक्खिणहअस्स जाअंतु ॥' इति पद्यस्यैव स्वरूपान्तरभूतं पद्यम् ।

२ 'प्रार्थये तावत् प्रसीद निवर्त्तस्व मुखशशिज्योत्स्नाविलुप्ततमोनिवहे । अभिसारिकाणां विघ्नं करोष्यन्यासामपि हताशे ॥' इति संस्कृतरूपेण परिणतस्य 'देआ पसिअ णिवत्तसु मुहससिजोह्नाविलुत्ततमणिवहे । अहिसारिआणँ विग्घं करोसि अण्णाणँ वि हआसे ॥' इति पद्यस्यैव स्वरूपान्तरभूतं पद्यम् ।

इत्यादिनेति निमित्तभेदः। प्रतीतिमात्रकरणाच्चमत्कारकरणाच्च कार्यभेदः। केवलरूपतया चमत्कारितया च प्रतीतिभेदः। पूर्वपश्चाद्भावेन च कालभेदः। शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसङ्घटनाऽऽश्रयत्वेन चाश्रयभेदः।

---

णीयसम्पत्तिकोऽपि किन्तु परं वदान्यः स उच्चं पदमप्राप्तोऽपि उच्चं पदं प्राप्तस्यावदान्यस्य तस्यापेक्षया प्रसीदति तं विलोक्य च हसति गर्जति च; इत्यहो वदान्यतैव धन्यमूर्धन्या न तु सम्पन्नता जात्विति व्यवस्थां भावं वा मनस्याकलयतः कस्य न मनो हृष्यति' इति 'महान्तोऽगर्जन्तोऽपि जयन्ति, क्षुद्राः पुनर्गर्जन्तोऽपि पतिता एवेत्येतयोरवस्थाभेदं स्मरन् कस्य न भवेन्मनश्चकितम्' इति वा व्यङ्ग्ये स्फुटमेव सङ्ख्ययाभिन्नत्वमेतयोः। **वाच्यार्थो**ऽभिधावृत्त्या प्रतिपाद्योऽर्थः। **शब्दोच्चारणमात्रेण** शब्दस्य पदस्योच्चारणमिति, तदेवेति तेन। **वेद्यो** ज्ञेयो ज्ञातुं शक्य इति यावत्। **एषः**। 'व्यङ्ग्यार्थ' इति शेषः। **तु** पुनः। **तथाविधप्रतिभानैर्मल्यादिना** तथाविधं विविधार्थोन्मेषशालिवत् प्रतिभानैर्मल्यं (प्रतिभाया बुद्धिविशेषस्य नैर्मल्यं निर्म्मलत्वं स्वच्छत्वमिति यावत्) इति तदादौ यस्य तेन। 'भावनाविशेषादिने'ति भावः। 'वेद्यः' इति पूर्वेणान्वयः। **इतीत्य**स्मात्कारणात्। **निमित्तभेदो** निमित्तान्निमित्तस्य वा भेदः। यथा मम–'सुमुखि मुखं तव रुचिरं स्फुरति चिराय स्मितं किरत् परितः। राहोरपि यः प्रमुदे स तथा विदितः सुधानिधिर्लोके॥' इति। अत्र हि–उच्चारणमात्रेण वाच्यार्थस्य बोध्यत्वात् 'सहृदयरमणीयं तवैवाननं, सुधानिधिः पुनः सहृदयेतरमात्ररमणीयः, अत एवैतस्मै स्पृहयति' इति व्यङ्ग्यस्य पुनरुच्चारणमात्रेण वेद्यत्वाभावात् सहृदयतयैव पुनर्वेद्यत्वात् स्फुटो निमित्ततो भेदः। **प्रतीतिमात्रकरणात्** प्रतीतिरेव न त्वभिधानमर्पयति यावत् तत्करणात्तत्कारित्वात्। **च** तथा। **चमत्कारकरणा**च्चमत्कारस्य करणं साधनमिति तस्मात्। 'हेतो'रिति शेषः। **कार्यभेदः**। वाच्यस्य प्रतीतिमात्रकारित्वाभावात्, चमत्कारकत्वाभावाच्चेति शेषः। यथा मम–'सुदति! तवेदं वदनं कथमपि सदृशं न सोमबिम्बेन। यदमुष्य विलीयापि स्फुरति तथैव प्रपूर्णा श्रीः॥' इति। अस्यायमर्थः–'हे सुदति! तवेदं वदनं मुखं सोमस्य चन्द्रस्य बिम्बेन सदृशं कथमपि नैवास्ति। यतः–अमुष्य सोमबिम्बस्य श्रीः शोभा विलीयापि तथैव पूर्ववत्प्रसन्ना सती स्फुरति न पुनरेतस्ये'ति शेषः। इति। अत्र हि वाच्योऽर्थः स्फुट एव शाब्दः, व्यङ्ग्योऽर्थः पुनः 'पराभूयापि निस्त्रपस्यैवाम्लायतः प्रत्युत हृष्यतस्तत एव स्वात्मना समं मृषैव स्पर्धिनश्चन्द्रमसो बिम्बस्य स्ववदनेन समं सादृश्यं सङ्कुच्छेत कचिभिस्तदुद्घोष्यते इति सर्वं मनस्येव स्मरन्ती पुनःपुनः स्मयसे' इति। असौ पुनः प्रतीयमान एव चमत्कुरुते। स्पष्टं चैवं वाच्यव्यङ्ग्ययोः कार्यभिन्नत्वम्। **केवलरूपतया** चमत्कारविरहितस्वरूपेण। 'वाच्यस्ये'ति शेषः। **च** पुनः। **चमत्कारितया** 'व्यङ्ग्यस्ये'ति शेषः। **प्रतीतिभेदः** प्रतीतेर्भेदः। 'वाच्यस्य व्यङ्ग्यस्य चे'ति शेषः। यत्तूक्तं तर्कवागीशैः–'प्रतीतिभेदमुपपादयति–केवलेति। वाच्यप्रतीतेः सुखचमत्कारहीनतया, व्यङ्ग्यप्रतीतेस्तदुभयवत्तया भेदः।' इति। तद्विशदीकरणाय। वस्तुतस्तु 'केवलरूपतये' त्यस्य 'चमत्कारशून्यतये'त्येवार्थः। चमत्कारस्यालौकिकाह्लादस्फुरणरूपपदार्थत्वात्। यथा मम–'अयि सुन्दरि! तव वदनं स्मयमानं नैव कस्य मोदाय। अमृतनिधिस्तु प्रमुदे राहोः कवलीभवन्नपि सः॥' इति। अत्र हि न वाच्यार्थस्तथा चमत्कुरुते यथा 'असहृदयस्य राहोरेव प्रमुदे चन्द्रः, चन्द्रस्यापि प्रमुदे स एवैकः, अन्यथा तत्कवलीभवनमसह्यमेव भवेत्, तव पुनर्वदनं स्मयमानमपि सुभगस्य सहृदयस्यैव प्रमुदे इति न कथमपि तयोः सादृश्यं, वदनस्य निरुपमत्वात्, चन्द्रमसोऽपि तदपेक्षया ततो न्यूनत्वात्।' इति व्यङ्ग्योऽर्थः। स्फुटश्चैवं प्रतीतेर्भेदः। **च** तथा। **पूर्वपश्चाद्भावेन**। वाच्यस्य प्राक्कालिकत्वाद् व्यङ्ग्यस्य पुनरुत्तरकालिकत्वादित्यर्थः। **कालभेदः** कालस्य भेदः। यथा मम 'मानसगतमपि कमलं जयता, कुमुदं विकाशमानयता। सुतनु! मुखं तव सदृशं भवतु कथं चन्द्रबिम्बेन॥' इति। अत्र हि व्यतिरेको न वाच्यः, उपमानस्य विशेषणैर्व्यतिरिच्यमानत्वेऽपि तस्य साक्षादभिधानात् न च 'कथ' मित्येव व्यतिरेकमाह।' इति वाच्यम्। तस्य सन्देहमात्राभिधायकत्वात्, उत्थापितस्य च सन्देहस्य निर्णीतार्थाभिधानेन निवर्त्तकत्वाभावात्। अतः श्लेषमूलको व्यतिरेको व्यङ्ग्यः। व्यङ्ग्यस्य वाच्यापेक्षया पश्चात् प्रस्फुर्तिमत्त्वेन स्फुटः कालभेदः। **शब्दाश्रयत्वेन** 'वाच्यस्ये'ति शेषः। **च** पुनः। 'व्यङ्ग्यस्ये'ति शेषः। **शब्दतदेकदेशतदर्थवर्णसङ्घटनाश्रयत्वेन** शब्दश्च तदेकदेशश्चेति तौ च तदर्थवर्णसङ्घटने चेति, तदाश्रयत्वेनेत्यर्थः। शब्दः पदम्। तस्य पदस्यैकदेश इति तदेकदेशः।

**‘कस्स व ण होइ रोसो दट्ठूण पिआअं सव्वणं अहरम् ।**
**सभभरपङमग्घाइणि ! वारिअवामे ! सहसु एण्हिम् ॥ २१८ ॥**
**इत्यत्र सखीतत्कान्तविषयत्वेन विषयभेदः ।**

---

तदर्थश्च वर्णसङ्घटना चेति तदर्थवर्णसङ्घटने तयोः पदपदांशयोरर्थं इति तदर्थः । वर्णानां सङ्घटना विन्यासविशेष इति वर्णसङ्घटना, रीतिरिति यावत् । **आश्रयभेदो** वाच्यस्य व्यङ्ग्यस्य चे’ति शेषः । यथा मम–‘वामे ! तव मुखमेतन्मृगमदतिलकं सुधाधरं रुचिरम् । अलकग्रस्तं पर्वणिपर्वणि काञ्चन रुचिं जयति ॥’ इति । काञ्चन चान्द्रमसीम् । अत्र जयति न तु स्मारयतीति, व्यापारविश्रान्तिसामान्येऽपि लोकोत्तरतायास्तथैव समुद्रेकात् । वाच्यस्य वाक्याश्रयत्वेन, व्यङ्ग्यस्य ‘जि’धातुरूपप्रकृत्यात्मपदैकदेशाश्रयत्वेन स्फुट एवानयोराश्रयभेदः । यथा पुनर्मम–‘सुन्दरि ! तव वदनमिदं सङ्गतमपरं सुधानिधिं मन्ये । अधराधरीकृतरसं सकलं दृष्टं नयत् प्रमुदम् ॥’ इति । अस्यायमर्थः–‘हे सुन्दरि ! अधरेणाधरीकृतरसं (अधरीकृता न्यग्भाविता रसा येन तत्) यद्वा–अधराधरीकृता रसा येन तत् (अधरेभ्योऽधरा इत्यधराधराः, न तादृशास्तादृशाः कृता इत्यधराधरीकृताः; अत्यन्तं तिरस्कृता इत्यर्थः)। सकलं कलाभिः सहितं, समस्तमिति वा दृष्टं दृष्टिविषयतामापन्नं लोकं प्रमुदं नयदिदं तव वदनमपरं द्वितीयं सङ्गतं प्राप्तं सुधानिधिं मन्ये ।’ इति । अत्र हि–‘ममैवोपभोगार्ह’मिति व्यङ्ग्यस्य वाच्याश्रितत्वात्स्फुट आश्रयभेदः । यथा वा मम–‘मम मुखमेव सुधाऽधरमिति मानं मैव सुव्रते ! निवह । राहुरपि स्पृहयति ननु यस्मै, तं किं न जानासि ॥’ इति । अत्रापि‘सुधानिधिना सदृशं तव वदनं ममोपभोग्यस्वरूप’मिति व्यङ्ग्यस्य वाच्याश्रितत्वं, वाच्यस्य च वाक्याश्रितत्वम् । यथा पुनः– ‘रेरे चञ्चललोचनाञ्चितरुचे ! चेतः प्रमुच्य स्थिरप्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि । किं मन्ये विहरिष्यसे ? वत हतां मुञ्चान्तराशामिमामेषा कण्ठतटे कृता खलु शिला संसारवारान्निधौ ॥’ इति । अत्र हि–‘किं त्वं मन्यसे अहं विहरिष्ये’इत्यनभिधाय ‘किं त्वं, मन्ये अहं विहरिष्यसे’इति पुरुषव्यत्ययेनाभिधाने तदर्थ एव हासव्यञ्जक इति स्फुटं व्यङ्ग्यस्य वाच्यैकदेशाश्रितत्वम् । यथा पुनर्मम–‘वन्दारुमन्दारममन्दभूतिमानन्दकन्दं नवकन्दकान्तम् । दरं दरन्तं भगवन्तमन्तः परिस्फुरन्तं विनतोऽस्म्यनन्तम् ॥’ इति । अत्र हि माधुर्यवती वर्णसङ्घटना भगवद्विषयिण्या रतेरभिव्यज्यमानायाः परिपोषिका, न तु अभिधयोच्यमानस्याप्यर्थस्येति स्फुटं पुनराश्रयभिन्नत्वम् ।

‘**वारिअवामे** वारितवामे ! वारिता ‘एवं माकार्षी’रिति निवारिताऽपि वामा तत्प्रतिकूलाचरणेति, तत्सम्बुद्धौ तथोक्ते इति यावत् । **सभमरपङमग्घाइणि** सभ्रमरपद्माघ्रायिणि ! सभ्रमरं यत् पद्मं कमलं तदाघ्रातुं शीलमस्या अस्तीति तत्सम्बुद्धौ तथोक्ते इति यावत् । **पिआए** प्रियायाः । **सव्वणं** सव्रणम् । आघ्रातपद्मस्थेन भ्रमरेण दष्ट्वा कृतव्रणमिति यावत् । **अहरं** अधरम् । घ्राणस्य सन्निधिवर्त्तिनमङ्गविशेषमिति यावत् । ओष्ठमित्यर्थः । **दट्ठूण** पश्यतः, न तु दृष्टवतो न च द्रक्ष्यतः । एतेन ‘काचिदविनीता कुतश्चित् खण्डिताधरा तत्तद्विधसंविधाने भर्त्तरि तमनवलोकमानयेव कयाचिद्विदग्धसख्या तद्वाच्यतापरिहारायैवमुच्यते ।’ इति यदुक्तं लोचनकारैस्तन्निर्मूलमिति सूच्यते । **कस्स** कस्य क्लीवव्यतिरिक्तस्य । **व** वा । **रोसो** रोषः । **ण** न । **होइ** भवति । अतः–**एण्हि** इदानीम् पश्चात्तापावसरं इति यावत् । **सहसु** सहस्व । ‘पत्युस्तर्जनां, भ्रमरदंशनजन्यव्रणवेदनां चे’ति शेषः । स्वोपार्जितस्य दुःखस्यान्यं प्रति सापराधतारोपानुपपत्तेः । न हि स्वकृतं कर्मान्येन भुज्यते कृतनाशाकृताभ्यागमापत्तेः ॥ २१८ ॥

**इत्यत्र** । ‘उदाहृते पद्ये’ इति शेषः । **सखीतत्कान्तविषयत्वेन** सखीविषयत्वेन सख्याश्च प्रियविषयत्वेनेत्यर्थः । ‘वाच्यव्यङ्ग्ययो’रिति शेषः । **विषयभेदः** । ‘बोध्य’ इति शेषः । अत्रेदं तत्त्वम्–‘कस्से’त्यादि उपनायकदष्टाधरां पत्नीं तर्जयन्तं कान्तं प्रतारयन्त्या विदग्धया तत्सख्योक्तम् । स्वतस्त्वमविवेकिनी परेणोपदिष्टस्य स्वहितस्याप्यनङ्गीकारिणी प्रत्युत तद्विरुद्धाचरणपरायणाऽसि, अतः पुनः पुनः ‘इदं पद्मं मा जिघ्राण, अत्रत्य एष भ्रमरहतकस्त्वां दंक्ष्यति’इति निवार्य्यमाणाऽपि ‘तत्पद्मं घ्रातवत्येव, भ्रमरेणापि पुनर्दष्टैव, न हि खलः कदापि खलताया विरमति’इति तद्वेदना कयाऽन्ययाऽनुभूयेतेति त्वमेव सहस्वेति, अथ–प्रियाया भ्रमरेणैव स्यादधरो दष्टः, किन्तुप्रियायादष्टमधरं दृष्ट्वा को

---

१–‘कस्य वा न भवति रोषः पश्यतः प्रियायाः सव्रणमधरम् । सभ्रमरपद्माघ्रायिणि ! वारितवामे ! सहस्वेदानीम् ॥ इति सं०’

तस्मान्नाभिधेय एव व्यङ्ग्यः।

किञ्च—

३०० प्रागसत्त्वाद्रसादेर्नो बोधिके लक्षणाऽभिधे।
किञ्च मुख्यार्थबाधस्य विरहादपि लक्षणा ॥ २९९ ॥

---

नाम स भवेत् पुरुषः, यस्य चेतसि, न बलात् 'दुष्टाऽसौ, अस्या अवश्यं कश्चिन्नाकोऽन्योऽपि, तेनैव दष्टोऽयमोष्ठ' इत्याशङ्काजन्यो न स्याद् रोषः, स चासौ साम्प्रतमुपस्थित एवेति त्वयैव सोढव्यः, यदि मयोपदिष्टा न पद्ममघ्रास्यस्तर्हि मृषा कलङ्कीभवत्त्वमपि न तवाभविष्यदिति वाच्यार्थबोधे सखीं स्याद्युद्देश्या भ्रमरेणैव दष्टोऽस्या अधरो न पुनः केनापि नायकान्तरेणे'ति व्यङ्ग्यार्थबोधे कान्त एवोद्देश्यः, स्फुटश्चैवं विषयभेदः। इति। अत्रैवं पुनराहुर्लोचनकाराः 'सहस्वेदानी'मिति वाच्यमविनयवती-विषयम्। भर्तृविषयं तु 'अपराधो नास्ती'त्यावेद्यमानं व्यङ्ग्यम्। तस्यां च प्रियतमेन गाढमुपालभ्यमानायां तद्व्यली-कशङ्कितप्रातिवेश्मिकलोकविषयं चाविनयप्रच्छादनेन प्रत्यायनं व्यङ्ग्यम्। तत्सपत्न्यां च तदुपालम्भतदविनयप्रहृष्टाय-सौभाग्यातिशयख्यापनं प्रियाया इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम्। 'सपत्नीमध्ये इयत् खलीकृताऽस्मी'ति लाघवमात्मनि ग्रहीतुं न युक्तम्। प्रत्युतायं बहुमानः। सहस्व शोभस्वेदानीमिति सखीविषयं सौभाग्यप्रख्यापनं व्यङ्ग्यम्। अद्येयं तव प्रच्छन्नानुरागिणी हृदयवल्लभेत्थं रक्षिता, पुनः प्रकटरदनदंशनविधिर्न विधेय इति तच्चौर्यकामुक-विषयसम्बोधनं व्यङ्ग्यम्। इत्थं मयैतदपह्नुतमिति स्ववैदग्ध्यख्यापनं तटस्थविदग्धलोकविषयं व्यङ्ग्यम्।' इति। अथ प्रकरणभेदो यथा—'अधिगम्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात्ततः। वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः॥' इति। अत्र हि—वाच्योऽर्थः पूर्वसर्गोक्तं प्रकरणमाश्रितः, व्यङ्ग्यः पुनस्तदानीमेवारभ्यमाणसर्गारम्भकाले शिष्टाचारानुप्रयुक्तं मङ्गलाचरणकर्त्तव्यताकं प्रकरणमाश्रितः। इति स्फुटोऽनयोः प्रकरणतो भेदः। अथौचित्यभेदो यथा—'मन्दः कवियशःप्रार्थी गमिष्याम्युपहास्यताम्॥' इति। अत्र हि प्रकरणतः कालिदासस्य वक्तृत्वं, तेन पुनः स्वानुद्धतताऽऽविष्करणाय स्वात्मनि मन्दत्वमभ्युपेत्यैव कवित्वाभिलाषित्वं हास्यास्पदमिति प्रकटयमाने वाच्योऽर्थो वक्तुर्मूढत्वेऽपि पाण्डित्याभिलाषित्वं हास्यायैवेत्यभिधानौचित्यमाश्रितः, व्यङ्ग्योऽर्थस्तु वक्तुर्मन्दस्यैव मन्दत्वेऽपि कवेरिव कवित्वाभिलाषित्वं हास्यास्पदमिति प्रस्फुटयति। स्फुट एवमेतयोर्भेदः। शब्दान्तरसन्निधिभेदो यथा 'देवाद्भवानी-पतेः।' इति। अत्र हि 'देवा' दिति सन्निधेर्भवानीपतेरित्यस्य वाच्यार्थः 'पार्वतीपतेर्महेश्वरा'दिति, किन्तु व्यङ्ग्योऽर्थः पतिशब्दसन्निधेर्भवानीशब्दस्य पार्वती पुंश्चलीति; स्फुटं चैवं शब्दान्तरसन्निधिभेदः। इदं च प्राचामनुरोधात्, वस्तुतस्तु 'देवोऽसौ ब्राह्मणीपति' दित्यादावेवैतादृशव्यङ्ग्यावस्थानं बोध्यम्। इति दिक्।

ननु भवत्वेवं वाच्यव्यङ्ग्ययोर्बोद्धादिभेदः, किं तेनेत्यत आह—**तस्मा**दित्यादि।

**तस्माद्** यस्मादेवं भेदस्तस्मात् कारणादित्यर्थः। **अभिधेयो**ऽभिधया वृत्त्या प्रतिपाद्यः। 'अर्थ' इति शेषः। **व्यङ्ग्यः**। अर्थ इति शेषः। **एव**। **न** नैव। तत् कथं न स्याद् व्यञ्जनाया अङ्गीकारावश्यकत्वमिति शेषः। अत्रैव-माहुर्ध्वनिकाराः 'प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्। यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥' इति।

ननु मा भूदभिधेयो व्यङ्ग्यः, किन्तु लक्ष्यः पुनः कथं नेत्याशङ्क्य व्यङ्ग्यस्य लक्ष्यत्वं निराचिकीर्षुर्निराकृतं च तस्याभिधेयत्वं पुनः प्रकारान्तरेण निराकुर्वन् व्यञ्जनयैव प्रतिपाद्यत्वं द्रढयति—**किञ्चे**त्यादिना।

किञ्च अथ—

३०० **रसादेः**। 'बोधा' दिति शेषः। 'रसादे' रिति व्यङ्ग्यार्थमात्रग्राहकम्। 'शेषे षष्ठी।' २।३।५० इति षष्ठी। तथा च—रसाद्यात्मकव्यङ्ग्यार्थसम्बन्धिबोधादित्यर्थः। 'बोधा' दिति पञ्चमी तु 'अन्यारादितरर्त्तेदिक्शब्दाञ्चूत्तरपदाजाहि-युक्ते।' २।३।२९ इत्यनेन। यत्तूक्तं तर्कवागीशैः—'व्यङ्ग्यान्तरबोधो यथा तथाऽस्तु रसादिबोधस्तु व्यञ्जनावृत्त्य-ङ्गीकारमन्तरेण सर्वथा न सम्भवतीत्यभिप्रायेणाह—प्रागसत्त्वादिति।' इति, तन्न चारु; रसादिभिन्नस्य व्यङ्ग्यावगमा-यापि व्यञ्जनामनङ्गीकृत्य वृत्त्यन्तरेणैव निर्वाहे तत्प्रतिपाद्यत्वापत्तेर्व्यङ्ग्यत्वस्य च मूलोच्छेदे व्यङ्ग्यत्वसाधारण्येन रसादेरपि

निर्मूलत्वापत्तेश्च । **प्राक्** पूर्वम् । **असत्त्वाद्** विद्यमानत्वात् अव्यवहितपूर्वक्षणवर्त्तित्वाभावात् कारणादिति भावः । 'लक्ष-णाऽभिधयो'रिति शेषः । 'तयोर्हि स्वस्वव्यापारं निरूप्य सति विरामे पुनरुत्थानासम्भव' इति सुष्ठूक्तमसत्त्वादिति । **लक्षणाऽभिधे** लक्षणाऽभिधा च वृत्ती इत्यर्थः । **नो** नैव । 'अभावे नह्यनो नापी'त्यमरः । **बोधिके** 'रसादे'रिति व्यङ्ग्यार्थस्येति वा शेषः । इति । यद्वा–प्राक् पूर्वस्यामवस्थायाम् । 'रसादिबोधा'दिति 'व्यङ्ग्यार्थबोधा'दिति वा शेषः । तथा च–रसादिबोधाद्व्यङ्ग्यार्थबोधाद्वा पूर्वस्मिन् समये इति निष्कृष्टम् । असत्त्वादविद्यमानत्वात् । पदार्थत्वेन विद्यमान-त्वाभावात् कारणादिति यावत् । 'रसादे'रिति 'व्यङ्ग्यार्थस्ये'ति वा शेषः । यद् रसादिर्व्यङ्ग्यार्थो वा प्रतीयमानत्वान-तिरिक्तस्वरूपः, तस्य च शाब्दत्वेन विद्यमानत्वाभावः । रसादे रसादिस्वरूपस्य व्यङ्ग्यार्थस्येति वा भावः । नो नैव । बोधिके बोधकर्त्र्यौ । लक्षणाऽभिधे लक्षणावृत्तिरभिधावृत्तिश्चेत्यर्थः । 'सम्भवत' इति शेषः । इति । अत्रेदमुक्तम्–सर्वोऽपि शब्दः सङ्केतितस्तावद्भवति, तत्सङ्केतमुपस्थाप्य विरमति पुनरभिधा, यत्र तु वाक्यान्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा भवेत् तत्र मुख्यार्थैकांशमादाय प्रवर्त्तमाना लक्षणा वाक्यान्वयोपपत्त्यनुकूलं तात्पर्योपपत्त्यनुकूलं वा तत्सदृशमेवार्थमुपस्थापयति विर-मति च । (तत्सदृशमभिधेयसमरूपम्) । तदेवं विरतयोस्तयोः 'शब्दबुद्धिकर्मणां विरम्यव्यापाराभावः ।' इति प्रतिपादिता दिशा पुनर्व्यापारानुपपत्तौ सहृदयदृशा प्रस्फुरतः कस्याप्यर्थस्य पुनरुत्थापनाय कस्या अपि वृत्तेरङ्गीकारौचित्ये व्यञ्जनैव शरणमवतिष्ठते । (कस्यापि निह्नोतुमशक्यस्याह्लादहेतोश्च ) । 'नहि कारणमन्तरेण कार्यमुत्पद्यते' इति नियमेन व्यङ्ग्यार्थ-रूपस्य कार्यस्योल्लासाय व्यञ्जनायाः स्वीकारावश्यकत्वं बलादायातम् । न च–कालभेदेनैव व्यङ्ग्यार्थस्यार्थान्तरत्वनिरासे किं पुनरिदमभिहितम् ? इति शङ्क्यम्, कालभेदेन व्यङ्ग्यस्य वाच्यत्वमात्रविरासे लक्ष्यताया अनिरासात् । ननु तस्य वाच्यत्वनिरासेऽप्येवं स्वतोऽभिधाया निरासे किं पुनस्तस्या एव निरासार्थमयमुद्योगः । इति चेत् ? कालभेदेन वाच्यार्थ-व्यङ्ग्यार्थयोः पूर्वपश्चाद्भावाभिधाने निरूपितेऽपि अभिधायाः पुनरर्थान्तरोपस्थापनार्थं स्थगितव्यापारानभिधाने पुनः प्रवृत्तिचर्चायाः सर्वतोभावेनातिरोधानात् । ' लक्षणाऽभिधे ' इत्यभिधानं तु तयोरुभयोरपि व्यङ्ग्यार्थोल्लाससम्पादनरूपं व्यापारं प्रति अकिञ्चित्करत्वाख्यापनार्थम् । क्रमवशादभिधानस्य प्राप्तेऽपि औचित्ये पुनर्निर्देशो लक्षणाया एव व्यञ्जना-कार्यकारित्वस्य निरासार्थं इति बोध्यम् । इति । यद्वा–न हि व्यङ्ग्यार्थजातं सङ्केतस्वरूपं, न वा तद्बाधे तदंशमालम्ब्या-वतिष्ठमानम् ; किन्तु तदनन्तरं सहृदयदृशैवानुभूयमानम् । इति तस्य कृते लक्षणाया अभिधायाश्च न किञ्चित्करत्वं प्रतिभासते । ते हि सङ्केतं तत्सम्बन्धमेव वोपस्थापयितुं शक्नुतः, न तु तदनन्तरं प्रस्फुरणशीलम्; इति कथं तयोस्तत्र व्यापारः किञ्चित्करः स्यात् । इति सुव्यक्तं सुलोचनानाम् । तथा च–सङ्केतमुद्बोधयितुमभिधा यदा प्रयतते तदाऽपि नावतिष्ठते व्यङ्ग्योऽर्थः, यदा पुनस्तद्बाधे तत्सम्बन्धिनमपरमर्थमुद्बोधयितुं प्रयतते लक्षणा तदाऽपि नावतिष्ठते व्य-ङ्ग्योऽर्थः, इति प्रागसद्भावः सुव्यक्त एव व्यङ्ग्यस्यार्थस्य । तस्मात् स्वस्वव्यापारमुपस्थापयितुं प्रयतमानयोरपि लक्षणाऽभिधयोः प्रयतनावसरे व्यङ्ग्यस्यार्थस्यासद्भावात् सङ्केतस्य तत्सम्बन्धिनो वा तदनुरूपस्यार्थस्य सद्भावादेतावेव तयोर्व्यापाररूपतामवलम्बते न तु व्यङ्ग्योऽपि । व्यापारभूतयोश्च तयोरर्थयोः सति सम्पत्तिसद्भावे निर्व्यापारयोश्च लक्षणाऽभिधयोरुपशमः शरणम् । इति । **किञ्चान्यच्चेत्यर्थः** । **मुख्यार्थबाधस्य** मुख्योऽभिधया प्रतिपाद्योऽसावर्थ इति, तस्य बाधोऽनुपपत्तिस्तस्य । अभिधेयस्यैव सङ्केतस्वरूपत्वात् प्राग्भवत्वमिति मुख्यत्वम् । मुखमिव मुखे वा भवतीति मुख्यः । 'शाखादिभ्यो यः । ' ५।३।१०३ इति यः । **विरहाद्** वियोगादभावादिति यावत् । **अपि** । प्रागसत्त्वात्त्वस्त्येव न, किन्तु एतस्मादपि कारणादित्यर्थः । **लक्षणा** ' न बोधिके' ति शेषः । यद्वा–लक्षणा लक्षणावृत्तिः केवला । अपि ' न बोधिके ' ति शेषः ॥ २९५ ॥

अत्रायम्भावः–वाक्यार्थानुपपत्त्या तात्पर्यार्थानुपपत्त्या वा मुख्यार्थस्य बाधः स्यात् । अस्मिन् पुनः सति तदंशम-वलम्ब्य लक्षणायाः प्रवृत्ति,र्न त्वन्यथाऽपि । अथ–यत्र व्यङ्ग्यार्थावस्थानं न तत्र मुख्यार्थबाधः प्राग्वर्त्ती । येनासौ प्रवर्त्तेत । किन्तु–क्वचित्मुख्यार्थबाधादुत्तरस्मिन्क्षणे सम्भवी लक्षणया प्रथमत एव :तथा प्रतिपादितोऽर्थ, यथा पुनर्मु-ख्यार्थबाध एव नावतिष्ठेत । क्वचित् पुनरबाधितः प्रथमतः एव मुख्यार्थ इति व्यङ्ग्यार्थस्य बोधावसरे नैवोभयथाऽपि मु-ख्यार्थबाधोऽव्यवहितपूर्वक्षणवर्त्तीति न तदर्थं लक्षणायाः सद्भावः, किन्तु कस्याश्चन वृत्तेरन्यस्याः । एवं पुनर्निश्चये व्यञ्जनाया एवेति बलादायातम् । इति ।

'न बोधिका' इति शेषः। नहि कोऽपि रसनात्मकव्यापाराद् भिन्नो रसादिपदप्रतिपाद्यः पदार्थः प्रमाणसिद्धोऽस्ति यमिमे लक्षणाऽभिधे बोधयेताम्।

किञ्च—यत्र 'गङ्गायां घोषः।' इत्यादावुपात्तशब्दार्थानां बुभूषन्नेवान्वयोऽनुपपत्त्या बाध्यते तत्रैव हि लक्षणायाः प्रवेशः।

यदुक्तं न्यायकुसुमाञ्जलावुदयनाचार्यैः—

---

अत्रावशिष्टांशमाह—'न नैव। बोधिका 'व्यङ्ग्यस्ये'ति शेषः। इतिशेष इत्यनुषज्यते। इति।

अथोक्तकारिकायाः पूर्वभागं भङ्ग्यन्तरेण विवृण्वंस्तस्य तात्पर्यं निर्दिशति—नहीत्यादिना।

इमे। लक्षणाऽभिधे 'वृत्ती' इति शेषः। यं 'पदार्थ' मिति शेषः। बोधयेतां बोधितं कुर्याताम्। 'स' इति शेषः। कोऽपि कश्चित्। रसनात्मकव्यापाराद्रसनं प्रतीतिस्तदात्मको यो व्यापारस्तस्मात्। रस्यते आस्वाद्यते प्रतीयत इति यावत्, इति रसनम्। 'ल्युट् च।' ३।३।११५ इति ल्युट्। 'रस' आस्वादनस्नेहनयोः। भिन्नो द्वितीयः। रसादिपदप्रतिपाद्यो रसादीनि यानि पदानीति, तैः प्रतिपाद्यः। पदार्थो वस्तु। प्रमाणसिद्धः प्रत्यक्षादिष्वन्यतमेन प्रमाणेन सिद्धः। अस्ति विद्यते। नहि। इति।

अत्रायं निष्कर्षः—व्यङ्ग्यस्तावदर्थो रसाद्यात्मा व्यज्यमानत्वात्, तच्च प्रतीयमानत्वानुभूयमानत्वास्वाद्यमानत्वाद्यपरपर्यायः आह्लादविशेषोद्बोधः। तत्रैव सहृदयहृदयस्य साक्ष्यत्वात्। वाच्यः पुनरर्थस्तद्भिन्नोऽभिधीयमानत्वात्। तत्त्वं च-सङ्केतविषयत्वम्। सङ्केतः पुनर्जातिगुणक्रियायदृच्छाभेदाच्चतुर्विधो, जातिमात्रस्वरूपतया वैकात्मैव। तदाश्रितत्वेनैव तस्यावस्थानात्। व्यङ्ग्यत्वावच्छिन्नत्वावच्छेदकं च जात्याद्यतिरिक्तस्वरूपमिति व्यङ्ग्यस्य वाच्यत्वं न सङ्घटते, तथा सति तस्याभिधाव्यापारास्पर्शित्वं स्वतःसिद्धम्। लक्ष्योऽप्येवं न व्यङ्ग्यः। लक्ष्यो हि सङ्केतमवष्टभ्य लब्धसत्ताकः। तथा च—सङ्केतावष्टम्भत्वं लक्ष्यत्वमिति निष्पन्नम्। सङ्केतश्च जात्याद्यवष्टम्भात्मा। व्यङ्ग्यस्तु न जात्याद्यवष्टम्भो न च सङ्केतावष्टम्भः, येनासौ तथाविधः स्यात्। किन्तु ताभ्यां विलक्षण एवेति तत्तत्प्रतिपादिकाभ्यां वृत्तिभ्यां विलक्षणयैव कयाऽपि वृत्त्या प्रतिपाद्यः स्यादिति सिद्धान्तो नापनीयते विवेकदृशा सूक्ष्मदृशाम्। एवं सति व्यङ्ग्यो व्यञ्जनयैव प्रतिपाद्यो न तु लक्षणया नाप्यभिधया वृत्त्येति।

अथोत्तरभागं विवृणोति—किञ्चेत्यादिना।

किञ्च। यत्र यस्मिन्। 'गङ्गायां भागीरथ्यां नद्याम्। घोषो ग्रामविशेषः।' इत्यादौ 'प्रयोग'इति शेषः। उपात्तशब्दार्थानामुपात्ताः सम्पादिता अभिधया वृत्त्या स्वव्यापारात्मकतामानीता इति यावत्, ये शब्दार्थाः पदार्था इति तेषाम्। अन्वयः सम्बद्धतयाऽवस्थानम्। बुभूषन् भवितुमिच्छन्। भवितुमिच्छतीति बुभूषतीति तथोक्तः। सङ्गतत्वमुपस्थातुमिच्छां कुर्वन् न तु कृतवान्न च करिष्यन्निति भावः। एव। अनुपपत्त्योपपत्तिः सङ्गतिस्तदभावेनेत्यर्थः। बाध्यते बाधितः क्रियते बाधां प्राप्तः क्रियते इति यावत्। तत्र 'गङ्गायां घोषः।' इत्यादौ 'प्रयोग'इति शेषः। एव नत्वन्यत्र। हि यतः कारणात्। लक्षणायास्तन्नाम्न्या वृत्तेः। प्रवेशः सफलव्यापारा भवितुमवतारः। ततो व्यङ्ग्यार्थोद्बोधावसरे न लक्षणया प्रवेश इति शेषः।

इदमुक्तम्—'गङ्गा'शब्दस्य जलप्रवाहविशेषरूपोऽर्थः, सप्तम्याश्चाधिकरणरूपः; तथा—घोषशब्दस्याभीरजातीयजनसम्बन्धी ग्रामविशेषरूपोऽर्थः,प्रथमायाः पुनर्वर्तमानकालिकरूपोऽर्थः। इत्यस्य पुनरन्वयो बुभूषन्नेव दरिद्रमनोरथ इवासम्पन्नो बाधितो जायते। बाधिका चानुपपत्तिः। सा च—गङ्गाऽधिकरणकघोषाधेयताया असम्भवरूपा। इत्थेवं मुख्यार्थस्योपस्थितस्यापि बाधे लक्षणायाः प्रवृत्तिः अत्रैवान्यत्राप्येवम्, किन्तु यत्र नैवं तत्र नैवम्। तस्मात्—व्यङ्ग्यो न लक्ष्योऽर्थः। न च तदर्था लक्षणायाः प्रवृत्तिरिति।

अभिहितं प्रमाणयितुमाह—यदित्यादि।

उदयनाचार्यैरुदयना अमी आचार्या इति तैः उदयनेतिनाम्ना प्रसिद्धैराचार्यैरित्यर्थः। अत्र बहुवचनं गौरवार्थम्। न्यायकुसुमाञ्जलौ। यद् यतः कारणात्। उक्तं प्रतिपादितम्। ततस्तन्मयोक्तं तथैवेति शेषः।

'श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः॥' इति ।

न पुनः 'शून्यं वासगृहम्-' इत्यादौ मुख्यार्थवाधः । यदि च 'गङ्गायां घोषः।' इत्यादौ प्रयोजनं लक्ष्यं स्यात तीरस्य मुख्यार्थत्वं वाधितत्वं च स्यात्, तस्यापि च लक्ष्यतया प्रयोजनान्तरे तस्यापि प्रयोजनान्तरमित्यनवस्थापातः ।

---

अथ किमुक्तमित्याह—'श्रुतान्वयात्-' इति ।

'वाक्यं पदसमुदायविशेषः । श्रुतान्वयात् । श्रुतानामभिधयोपस्थापनानन्तरं श्रवणविषयमुपगतानामर्थानामन्वयः सम्बन्धः परस्परं योग्यत्वादिना साचिव्यं तस्मात कारणादित्यर्थः। यद्वा-श्रुतो योग्यताऽऽदिमत्तया प्रसिद्धिं प्राप्तोऽसौ अन्वय इति तस्मात् । यद्वा-श्रुतस्य ( वाक्यस्य ) अन्वयोऽर्थबोधजनकत्वेन पर्यवसानं तस्मात् । अनाकाङ्क्षं निराकाङ्क्षं सजातीयस्य विजातीयस्य वाऽर्थस्यावलम्वविषयिण्याऽऽकाङ्क्षया शून्यमिति यावत् । 'स'दिति शेषः । अन्यत् । 'अवलम्वनीयत्वेने'ति शेषः । न नैव । हि यतः । इच्छति काङ्क्षते । 'तत'इति शेषः । पदार्थान्वयवैधुर्यात् पदानां सुप्तिङन्तानां शब्दविशेषाणामर्था अभिधया प्रतिपाद्या अर्था इति तेषामन्वयोचितत्वेन ( सम्वद्धरूपेण ) पर्यवसानं तस्य वैधुर्यमभावस्तस्मात् । विधुरस्य वियुक्तस्य भावो वैधुर्यम् । 'कैवल्येऽपि च विश्लेषे विधुरं विकले त्रिषु' इति त्रिकाण्डशेषः । तदा तस्मिन् समये पदार्थान्वयवैधुर्यावसर इति यावत् । आक्षिप्तेनाक्षेपोपात्तेन न तु सङ्केतितमात्रस्वरूपेण । यद्वा-तदाक्षिप्तेन इत्येकं पदम् । तेन शक्येनाक्षिप्त आक्षिप्योपात्तोऽर्थस्तेन तद्द्वारा । सङ्गतिरन्वयोपपत्तिः । 'भवती'ति शेषः ॥' इति ।

अत्रेदमभिधानम्-अभिधया तावद्वृत्त्या तस्यतस्य पदस्य ससोऽर्थ उपस्थाप्यते । ते सर्वेऽप्यर्थाः श्रुतप्रायत्वाच्छ्रुता इत्युच्यन्ते, तथाभूताः पुनरर्थास्तात्पर्यवृत्त्या सम्भूयावतिष्ठमानाः सम्वद्धा अन्विता इति वाऽप्युच्यन्ते । अन्वितेषु तेषु पदेषु निराकाङ्क्षत्वं निर्वाधम्, यावदनन्वयं तेषां साकाङ्क्षत्वात् ; अन्वयोत्तरं च निराकाङ्क्षत्वात् । वाक्यं हि पदावष्टम्भम् । पदानि पुनरन्वितान्येव अवष्टम्भस्वरूपाणि वाक्यस्य । अन्वितेषु तेषु न तस्य कस्यापि साहाय्यापेक्षा, येन तत साकाङ्क्षं स्यात । यदि तु अभिधयोपस्थापिता अर्थास्तात्पर्यवृत्त्या अन्वितताः प्रतिनीयमाना अपि कथञ्चिदन्वितताँ न प्रतिनीयेरन्, किन्तु प्रतिवध्येरन्, तर्हि तद्वाचका अपि शब्दा अनन्विता एव, तेषु तथाविधेषु स्वावष्टम्भेषु वाक्यं विकलमिव सम्भवतीति तस्य वैकल्यस्य परिहाराय कस्याप्यवलम्वः सापेक्ष इति स्थिते न नितान्तं विजातीयस्यैति अभिधया प्रतिपाद्यमानेनार्थेन ससम्बन्धस्यार्थस्यावष्टम्भः स्थाने, तस्मात्तदा साकाङ्क्षस्य तस्य सङ्गतिर्वैकल्यपरिहारश्चोपपादनीयत्वेनोपयुज्येते । इत्येवाभिसन्धाय हरिहासभट्टाचार्यैरपि व्याख्यातम्-'गोसादृश्यसामानाधिकरण्येन गवयपदवाच्यत्वविषयकज्ञानजनकतया शब्दस्य गवयत्वादिना शक्तिवोधेनाकाङ्क्षा अन्वयस्य पर्यवसनात्, यत्र पदार्था एवान्वयविधुराः केनापि रूपेणान्वयायोग्याः तत्र तदाक्षिप्तेन तेन लक्षणीयेनार्थेन सङ्गतिरन्वयः, यथा 'गङ्गायां घोषः ।' इत्यादौ ।'इति ।

व्यङ्ग्यार्थस्थले मुख्यार्थवाधाभावं दर्शयन् तत्र लक्ष्यत्वं परिहर्तुमाह-न पुनरित्यादि ।

न नैव । पुनः तु । 'शून्यं वासगृहम्-इत्यादौ. 'शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैः' इत्यादौ इत्यर्थः । मुख्यार्थबाधः पदार्थान्वयवैधुर्यं 'मस्ती'ति शेषः । येन आक्षिप्य सङ्गतिरभिप्रेता स्यात् किन्तु प्रकृते तदभावाच्छ्रुतान्वयसद्भावाच्च निराकाङ्क्षत्वमिति "'गङ्गायां घोषः ।' इत्यादिस्थले एव मुख्यार्थवाधस्तदमुत्रैवाक्षिप्तेन सङ्गतिः सव्यपेक्षेति बोध्यम् । अत्रायम्भावः-'शून्यं वासगृहं विलोक्य' इत्यादौ मुख्यार्थोपपत्तेस्तदभावाभावाच्च नाक्षिप्तेन सङ्गतिरपेक्ष्यते, 'गङ्गायां घोषः ।'इत्यादौ तु मुख्यार्थस्य वाधः स्फुट एवेति कथमाक्षिप्तमनपेक्षितं स्यात् । इति । अनेवंविधस्थलेऽपि ( 'शून्यं वासगृहं-'इत्यादावपि ) व्यङ्ग्याभ्युदयदर्शनान्न लक्ष्यत्वं सम्भवति न च तथा सम्भावनीयमपीति ।

ननु लक्षणा हि प्रयोजनमूला प्रयोजनमन्तरेण तदप्रवृत्तेः प्रयोजनं पुनरालङ्कारिकाणां विचारदृशा व्यङ्ग्यं, किन्तु तयोपस्थाप्यमानस्यार्थस्यैव तस्यापि तत्त्वं कुतो न स्यात् तथा सति 'व्यङ्ग्यमेव लक्ष्यमिति सिद्धान्तः शरणमिति चेन्नेत्यभिधत्सुस्तत्रानवस्थापातमाह-यदीत्यादि ।

यदि यर्हि । च पुनः । "गङ्गायां तन्नाम्न्यां नद्याम् । घोषो'स्ति'ति शेषः ।' इत्यादौ 'प्रयोगे' इति शेषः । प्रयोजनं 'लक्षणायाः प्रवृत्तिनिवृत्तिनिमित्तभूत'मिति शेषः । लक्ष्यं यन्मूलं प्रयोजनं तयैव लक्षणया वृत्त्या

**न चापि प्रयोजनविशिष्ट एव तीरे लक्षणा, विषयप्रयोजनयोर्युगपत्प्रतीत्यनभ्युपगमात् । नीलादिसंवेदनानन्तरमेव हि ज्ञातताया अनुव्यवसायस्य वा सम्भवः ।**

---

प्रतिपाद्यम् । **स्याद्** भवेत् । 'तदे'ति शेषः । **तीरस्य** लक्षणया समर्प्यमाणस्यार्थस्येत्यर्थः । **मुख्यार्थत्वं** मुख्यार्थोऽभिधया प्रतिपाद्योऽर्थस्तत्त्वम् । 'स्यात्'इति शेषः । **च** तथा । 'तस्ये'ति शेषः । **बाधितत्वमनुपपत्तिमत्त्वम्** । बाधितस्योपपत्तिं प्राप्तस्य भाव इति तथोक्तम् । **स्यात्** । 'पावनत्वाद्यतिशयेन लक्षणीयेन सम्बन्धश्च स्या'दिति शेषः । **च** पुनः । **तस्य** लक्ष्यमामाणस्य तस्य प्रयोजनस्य । **अपि** । **लक्ष्यतया** लक्षणया समर्प्यमाणत्वेन । **प्रयोजनान्तरे** 'ऽभिप्रेते सती'ति शेषः । **तस्य** प्रयोजनान्तरस्य । **अपि** । 'यदी'ति शेषः । **प्रयोजनान्तरमन्यत्** प्रयोजनम् । 'स्यादि'ति शेषः । **इतीत्येवम्** । **अनवस्थापातोऽ**नवस्थायास्तदाख्यस्य दोषस्य पातः प्रसङ्ग आपतत उपस्थितिः स्यादिति यावत् ।

अत्रेदं तात्पर्यम्—यदि यत्र सप्रयोजनो मुख्यार्थबाधः स्यात्तत्र तर्हि मुख्यार्थे कथमपि सति बाधिते किमपि प्रयोजनमधिष्ठाय तत्सम्बन्धमुपादाय तद्बाधितत्वं निरसितुमेव लक्षणायाः प्रवृत्तिः, नान्यथाऽपीति सिद्धान्तः । तथा च—लक्षणया यस्य मुख्यार्थस्य यत्र बाधस्तत्र तत्सम्बद्ध एव तन्मात्रनिरसनपरोऽर्थ उपस्थाप्यते, नतु प्रयोजनमपि तस्य तथात्वेन तस्या अविषयत्वात् । इति । यथा—'गङ्गायां घोषः ।' इत्यत्र गङ्गाशब्दस्य जलप्रवाहरूपो मुख्योऽर्थः, तस्य पुनर्घोषाधिकरणकतयाऽनुपपत्तिरूपो बाधः, अतस्तस्य तीरे सम्बन्धेन निरास इति तत्पावनत्वाद्यतिशयख्यापनरूपं प्रयोजनमधिष्ठाय लक्षणया तीररूपस्यार्थस्योत्थापनम् । इति मुख्यार्थेन प्रतिपादयितुमशक्यस्य पावनत्वाद्यतिशयात्मकप्रतीत्यभिन्नस्य प्रयोजनस्य सद्भावे लक्षणया गङ्गाशब्देन तीरमुपस्थाप्यते गङ्गाशब्देन तीरं लक्ष्यते इति यावत् । तथा यदि गङ्गाशब्दस्य मुख्यार्थस्तीरं स्यात्, तत्र पुनर्घोषाधिकरणत्वं बाधितं स्यात् प्रयोजनस्य च गङ्गागतपावनत्वाद्यतिशयविशेषस्य तीरेण साक्षात् सम्बन्धः स्यात् लक्षणया च प्रयोजनप्रतिपादनस्य प्रयोजनान्तरं स्यात् तर्हि लक्षणया गङ्गाशब्देन प्रयोजनं लक्ष्येत न चेदं किमपि विद्यते । यदि च तीरगतपावनत्वाद्यतिशयरूपस्य प्रयोजनस्यापि लक्ष्यत्वं स्यात् तल्लक्ष्यगतं प्रयोजनान्तरं च स्यात्, तर्हि तथा प्रयोजनपारम्पर्ये लक्षणाऽङ्गीकारे प्रयोजनान्वेषणस्य चापर्यवसाने तस्य पावनत्वाद्यतिशयस्य तीरस्य च बोधाभावापादिकाऽनवस्थोपतिष्ठेत । इति । वस्तुतस्तु मनोविलसितमात्रमिदम् । कथमन्यथा गङ्गाशब्देन लक्षणयोपस्थापिते तीरे तदनन्तरं च तस्यां विरतव्यापारायां प्रयोजनमुपस्थाप्येत । इति ।

ननु न लक्षणया शक्यसम्बद्ध एवार्थः समुपस्थाप्यते किन्तु प्रयोजनमपि । अथ यदि शक्यसम्बद्धमर्थमुपस्थाप्यैव विरमति लक्षणा, विरतायां च तस्यां पुनरुत्थानाभाव एवाङ्गीक्रियते तर्हि काममङ्गीक्रियतां नाम, किन्तु प्रयोजनसंवलित एवासौ किमु न लक्ष्येतेत्याशङ्क्योत्तरयति—**न चापीत्यादिना** ।

**च** पुनः । **प्रयोजनविशिष्टे** प्रयोजनेन विशिष्टं संयुक्तं तत्र । **एव** । न तु तद्विपरीतेऽपीत्यर्थः । **तीरे** । 'तीरे' इति लक्ष्यमात्रस्योपलक्षकम् । 'निमित्तात्कर्मयोगे ॥' इति निमित्ते सप्तमी । तथा च—तीराद्यर्थबोधनिमित्तमित्यर्थः । **अपि** । **लक्षणा** 'प्रवर्त्तते' इति शेषः । इति—**न** नैव 'सङ्गच्छत' इति शेषः । कुत इत्याह—**विषयप्रयोजनयोर्विषयः** कारणीभूतज्ञानविषयः, प्रयोजनं फलीभूतज्ञानविषयस्तयोरित्यर्थः । **युगपदे**कस्मिन्नेव समये । **प्रतीत्यनभ्युपगमात्** प्रतीतेरनभ्युपगमस्तस्मात् । तदेव द्रढयति—**हि** यतः । **नीलादिसंवेदनानन्तरं** नीलादिज्ञानोत्तरकाले । **एव** नतु नीलादिज्ञानात् प्रागपि । **ज्ञातताया** ज्ञानविषयीकृततायाः । **वा**ऽथवा । **अनुव्यवसायस्य** निश्चयस्य । **न** नैव । **सम्भवो** 'जायत' इति शेषः ।

अत्रेदमभिहितम्—यदि 'गङ्गायां घोषः ।' इत्यादौ तीरादि लक्षयित्वा प्रयोजनं लक्षयितुं 'शब्दबुद्धिकर्म्मणां विरम्यव्यापाराभाव' इत्युक्तदिशा लक्षणा न प्रवर्तेत तर्हि मा प्रवर्त्ततताम्, किन्तु प्रयोजनीभूतज्ञानविषयेण पावनत्वादिना विशिष्टमेव तीरादि लक्षयितुं प्रवर्त्तेत, तथा च—'अतिपावने सुशीतले गङ्गातीरे घोषः ।' इत्यादिप्रकारको बोधः,

**३०१ नानुमानं रसादीनां व्यङ्ग्यानां बोधनक्षमम्।**
**आभासत्वेन हेतूनां**

अस्य पुनः 'गङ्गातीरे घोषः।' इत्याद्यनभिधाय 'गङ्गायां घोषः।' इत्याद्यभिधानमात्रेणापि तथा बोध इति बोधाधिक्यमेव प्रयोजनम्। इति न परिणामरमणीयम्। अत्र हि-पावनत्वाद्यतिशयात्मकप्रयोजनविशिष्टतीरादिबोधः। प्रयोजनं फलं, तीरादि पुनर्विषयस्तच्छालित्वात्। तथा च-स्फुटः फलफलिनोरभेदः। तत्प्रकारकः पुनर्बोधो न क्षोदक्षमः। फलज्ञानानन्तरमेव फलशालिविषयकज्ञानस्य सिद्धत्वेन तयोर्यौगपद्यासम्भवात्। न हि फलान्यजानता 'फलशाल्येष वृक्ष' इति ज्ञातुं केनापि पार्यते। अत एव मीमांसकमते नीलज्ञानानन्तरं' ज्ञातो नील' इति प्रतीतेस्तज्ज्ञानेन नीले प्रकटताऽपरपर्याया ज्ञातता जायते। ज्ञानस्यातीन्द्रियत्वात्तदनन्तरभाविन्याश्च ज्ञाततायाः प्रत्यक्षत्वादेतया पुनस्तदनुमीयते। तथा हि-यथा पीते पीतत्वप्रकारिका ज्ञातता, तथैव नीले नीलविशेष्यकनीलत्वप्रकारकज्ञानोत्तरकालिकनीलवृत्तिनीलत्वप्रकारकज्ञाततात्वादियं ज्ञातता, यद्वृत्तिर्यत्प्रकारिका या ज्ञातता सा तद्विशेष्यकतत्प्रकारकज्ञानोत्तरकालिकेति नैयायिकमते तु जाते नीलादिज्ञाने 'नीलमहं जानामी' ति ज्ञानं प्रत्यक्षरूपोऽनव्यवसायः। तथा हि-यथा सामान्यरूपेण पीतज्ञाने जाते 'पीतमहं जानामी' ति पीतविषयकज्ञानवानहमस्मीत्यात्मकं ज्ञानं प्रत्यक्षमनुव्यवसायशब्देनाभिधीयते तथैव नीले ज्ञाते 'नीलमहं जानामी' ति नीलनिष्ठकर्मतानिरूपितसम्बन्धावच्छिन्ना या जानातिक्रिया तन्निरूपिता या कर्तृता तद्वानहमस्मीति ज्ञानं प्रत्यक्षानुव्यवसायापरपर्यायम्। इति। तदेवं फलफलिनोर्भेद एव सर्वेषामभिमतः। अथ तथा प्रयोजनविशिष्टे तीरादौ लक्षणायाः स्वीकारे तयोर्भेदाभावो न प्राचां सम्मतो न चानुभवसिद्ध इत्युपेक्ष्य एवेति। वयं तु एवमपि ब्रूमः-प्रयोजनविशिष्टेऽपि तीरादौ लक्षणयोपस्थापिते 'गङ्गातीरे घोषः।' इत्याद्यनभिधाय 'गङ्गायां घोषः।' इत्याद्यभिधानमात्रेणापि तथा बोध इति बोधाधिक्यात्मकस्य प्रयोजनस्य पुनरवशिष्यमाणत्वेऽनवस्थापातोऽवशिष्यमाणस्य च प्रयोजनस्यावगमायैव पुनर्व्यञ्जनायाः स्वीकर्त्तव्यत्वम्। इति।

यथा कुज्झटिकाकुलिते देशेऽसतोऽपि धूमस्याभिमानात् धूमनियतस्य वह्नेरनुमानम्, तथाऽभिनयेऽसतामपि विभावादीनामभिमानात् विभावादिनियतानां रसादीनामनुमानम्। इत्यनुमानेनैव रसादिप्रतीतिं (व्यङ्ग्यप्रतीतिं) गतार्थयतां श्रीशङ्कुकानुयायिनां नैयायिकानां व्यक्तिविवेककाराणां श्रीमहिमभट्टानां मतं निराकरोति-३०१ नेत्यादिना।

३०१ **रसादीनां** रसभावतदाभासादीनाम्। **व्यङ्ग्यानां** व्यञ्जनया बोध्यानाम्। **बोधनक्षमं** बोधने क्षमं समर्थमिति यावत्। **अनुमानं** लिङ्गपरामर्शः। लिङ्गं च-अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेति त्रिविधम्। परामर्शः पुनः-व्याप्तिविशिष्टपक्षधर्मताज्ञानम्। **हेतूनाम्।** बहुत्वमविवक्षितम्। हेतोरित्यर्थः। अनन्यथा सिद्धत्वे सति कार्याव्यवहितपूर्वक्षणे नियतत्वेन वर्त्तमानस्यानुमितिसाधनस्येति यावत्। **आभासत्वेना**भासमात्रत्वेन। तच्च व्यभिचारादिदुष्टत्वम्। 'हेतुने'ति शेषः। 'हेतौ।' २।३।२३ इति तृतीया। **न** नैव। 'सङ्गच्छते।' इति शेषः।

अत्रायम्भावः-ज्ञानं तावद्द्विविधं, यथाऽर्थमयथाऽर्थं च, तत्र यथाऽर्थं ज्ञानं प्रमा, तद्भिन्नं भ्रमः। अथ प्रमा चतुष्प्रकारा प्रत्यक्षानुमानोपमानशब्दभेदात्। एवमनुमानमपि प्रमारूपमेव न तु तद्भिन्नम्। तथा हि-अनुमितेरसाधारणं कारणमनुमानम्, अनुमितिश्च परामर्शजन्यज्ञानरूपा। अनन्यथासिद्धनियतपूर्ववर्त्ति असाधारणं कारणम्। प्रत्यक्षमुपजीव्यप्रवृत्तं तथाभूतं ज्ञानं परामर्शः, स एव व्याप्तिविशिष्टपक्षधर्मताज्ञानम्। तत्र व्याप्तिर्यथा-'यत्रयत्र धूमस्तत्रतत्र वह्नि'रिति, पक्षधर्मता पुनः-'यत्र धूमस्तत्र वह्नि'रिति महानसादौ व्याप्तिमवलम्ब्य'अयं पर्वतो वह्निमान्'इति ज्ञानम्। न चेदं प्रत्यक्षम्। तदवधि धूमस्यैव प्रत्यक्षत्वात्। वह्नेस्तु तत्र व्याप्तिविशिष्टतयैवानुभूयमानत्वात्। इति। अथ-रसादयोऽनुमेया न वेति विविच्यते। रसादयस्सर्वेऽपि व्यङ्ग्यार्था अनुमेयाः। विभावादिनियतत्वात्। अत्र रसादयः, विभावादिसत्त्वात् यत्र विभावादिसत्त्वं तत्र रसादिशालित्वं यथाऽन्यत्र सर्वत्र। अतः-अभिनयोऽयं रसादिमान् विभावादिमत्त्वात्। इति। यद्यपि न नाट्ये न च काव्ये वस्तुतया विभावादयः, किन्तु नटेन कविनैव वा तत्र निरूप्यमाणाः; अतः-तथाभूतैः सहृदयहृदयद्यितानामत एव सहृदयैर्निर्भरमनुभूयमानानां रसादीनामनुमानं किं नामेति वक्तुं शक्यते, तथाऽपि

व्यक्तिविवेककारेण हि-'याऽपि विभावादिभ्यो रसादीनां प्रतीतिः साऽनुमाने एवान्तर्भवितुमर्हति । विभावानुभावव्यभिचारिप्रतीतिर्हि रसादिप्रतीतेः साधनमिष्यते, ते हि रत्यादीनां भावानां कारणकार्यसहकारिभूतास्तान् अनुमापयन्त एव रसादीन् निष्पादयन्ति, त एव प्रतीयमाना आस्वादपदवीं गताः सन्तो रसा इत्युच्यन्ते । इति-अवश्यम्भावी तत्प्रतीतिक्रमः केवलमाशुभावितया न लक्ष्यते, यतोऽयमत्रा ( द्या ) प्यभिव्यक्तिक्रमः ( क्तिकः, क्तकः, क्तः) इति 'यदुक्तम्'

---

कुज्झटिकाकुलिते देशे धूमस्यासतोऽप्यभिमानं, तेन यथा धूमनियतस्य वह्नेरनुमानम्, तथैव नाट्ये काव्ये वा नटेन कविनैव वा सुनिपुणं निरूप्यमाणैर्वस्तुतश्चासद्भिरपि विभावादिभिर्विभावादिनियता रत्यादयोऽनुमीयमानास्तत्साधर्म्यापादकनैपुण्यबलात्तेषां तेषामास्वाद्यमानतया चमत्कारकारणीभूताः सन्तो रसादयः, इति तत्रतत्रोपयुज्यत एवानुमानम् । इति । तथा-यत् प्रतीयते तत सर्वमर्थात् सम्बद्धम् । न तु तद्विरुद्धम् । यस्मात् कस्मादपि यस्य कस्यापि प्रतीतेः प्रसङ्गात् । अतः-व्यङ्ग्योऽप्यर्थो नियत एवेति सपक्षसत्त्वेन विपक्षासत्त्वेन पक्षसत्त्वेन चेति त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानस्यानुमानस्यैव विषयः सर्वोऽपि व्यङ्ग्योऽन्यः । तथाहि-' माए ! घरोवअरणं अज्ज हु ण त्थित्ति साहिअं तुमए । ता भण किं करणिज्जं एमेअ ण वासरो ठाई ॥'इति । अस्य च-' मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया । तद् भण किं करणीयमेवमेव न वासरः स्थायी ॥ ' इत्यर्थः । अत्र हि-सम्बोध्यकर्तृकगृहसमस्तोपकरणविनाशाभिधानेन गृहोपयोगिनस्तस्यतस्योपकरणस्य सम्पत्तये वक्तृमात्रकर्तृकयत्नावश्यकत्वाभिधानमनुमीयते, तेन च-बहिर्निर्गमार्थायामाज्ञायामनुमितायां वक्तृकर्तृकस्वैरभ्रमणार्थनमनुमीयते । इति दिक् ।' इत्याहुर्व्यक्तिमसहमानाः । व्यक्तिमङ्गीकर्त्तारः पुनरेवमाहुः-निर्जले जलज्ञानमिव कुज्झटिकाकुलितेऽपि देशे धूमज्ञानं न यथार्थम् । तथा सति तथाऽनुमानमपि न प्रमाणकोटिमधिरोहति, किन्तु भ्रमकोटिमेवेति यथा, तथा नाट्ये काव्ये वा विभावादीनां वस्तुतया सद्भावाभावे अननुभूतपूर्वाणां च तेषां स्मृतिगोचरतया प्रतिपादयितुमशक्यत्वे तत्तत्समर्प्यमाणतत्तत्साद‍ृश्यभ्रमावहसामग्रीवशादपि विभावादिनियतानां रत्यादीनां प्रतीतिस्तया पुनर्यश्चमत्कारो न स्यात्तद्यथाऽर्थम् । इति । तथा-सम्बोध्यकर्तृकगृहसमस्तोपकरणविनाशाभिधानेन तथातथाऽनुमानमपि न वस्तुसत् । त्वया सर्वमुपकरणं विलयं नीतमिति त्वयैव तत्सम्पत्तये यतितव्यम्, यद्यपि त्वयाऽपि न किमपि कर्तुं शक्यं, किं पुनर्मया, अथापि मया बालया किंकर्तव्यविमूढया न कथमपि किमपि श्रेयः प्रतिपद्यते, अथ यदि त्वया प्रतिपद्यते तर्हि त्वयैव तथा यतितव्यम् अन्यदा त्वयाऽपि मयैव स्थातव्यं, भोक्तव्यं च कृतं कर्मेति विरुद्धधियोऽपि तथाऽभ्युपगमात् । इति ।

अथोक्तमर्थमनुसन्दधानः कारिकां च व्याचक्षणः प्रणिधातव्यमर्थं सुगमयति-**व्यक्तिविवेककारेणे**त्यादिना । '**विभावादिभ्यो** विभावानुभावव्यभिचारिभ्यो विभावादीनभिव्याप्येति यावत् । 'ल्यब्लोपे कर्मण्यधिकरणे च ॥ इति पञ्चमी । **रसादीनां** रसभावतदाभासादीनाम् । **याऽ**निर्देश्या । **प्रतीतिः** प्रतीतिमात्रेण स्फुरणम् । **अपि** किं पुनः साक्षात्तयाऽभ्युपगमः । 'अस्ती'ति शेषः । **सा** 'प्रतीति'रिति शेषः । **अनुमाने** प्रत्यक्षमुपजीव्यलिङ्गपरामर्शजन्ये ज्ञाने । **एव** न तु पराभिमतव्यञ्जनाजन्यबोधे । **अन्तर्भवितुं** तिरोभवितुं तत्त्वेनावस्थातुमिति यावत् । **अर्हति** । क्षमते इति भावः । **हि** यतः । **विभावानुभावव्यभिचारिप्रतीतिर्वि**भावस्यानुभावस्य व्यभिचारिणश्च प्रतीतिः । **रसादिप्रतीते** रसादीनां रसभावतदाभासादीनां प्रतीतिः प्रत्ययोऽनुभवास्पदत्वेन स्फुरणमिति यावत् इति तस्याः । **साधन**मुपायविशेषः । **इष्यते**ऽभिलषितो भवति । **ततः-ते** विभावादयः । **हि** एव । **रत्यादीनां** रतिहासादीनाम् । **भावानां** स्थायिभावानाम् । **कारणकार्यसहकारिभूताः** कारणकार्यसहकारिस्वरूपाः । यथा- रतेर्नायकोद्यानादिरूपो विभावः कारणम्, रोमोद्गमादिरूपोऽनुभावः कार्यम्, मदमूर्च्छाऽऽदिरूपो व्यभिचारी भावः सहकारिकारणम् । इति । **तान्** रतिहासादीन् स्थायिनो भावान् । **अनुमापयन्तो**ऽनुमितिविषयं नयन्तः सन्तः स्वविषयकव्याप्तिविशिष्टपक्षधर्मताज्ञानेन बोधयन्त इति यावत् । **एव** न त्वनुमाप्य न वाऽनुमापयिष्यन्त इति यावत् । **रसादीन्** शृङ्गारादीन् रसान् निर्वेदादींश्च भावांस्तदाभासादींश्च । **निष्पादयन्ति** चर्वणीयत्वेनोपस्थापयन्ति । **ते** विभावादयः । **एव** केवलम् । **प्रतीयमानाः** 'सन्त' इति शेषः । **आस्वादपदवी**मास्वादस्य चमत्कारानुभवस्य पदवी सोपानं ताम् । **गताः** प्राप्ताः । **सन्तः** । **रसा** रसादयः । **इती**त्येवम् । **उच्यन्ते** कथ्यन्ते । **इती**त्यस्मात् कारणात् ।

तत्र प्रष्टव्यम्-किं शब्दाभिनयसमर्पितविभावादिप्रत्ययानुमितरामादिगतरागादिज्ञानमेव रसत्वेनाभिमतं भवतः ? तद्भावनया भावकैर्भाव्यमानः स्वप्रकाशानन्दो वा ? आद्ये न विवादः' किन्तु 'रामादिगतरागादिज्ञानं रससञ्ज्ञया नोच्यतेऽस्माभिः । इत्येव विशेषः । द्वितीयस्तु व्याप्तिग्रहणाभावाद्धेतोराभासतयाऽसिद्ध एव ।

---

अवश्यम्भावी निःसन्देहं भावी सम्भवशील इति यावत् । तत्प्रतीतिक्रमस्तेषां विभावादीनां प्रतीतय इति तासां क्रमः पौर्वापर्यम् । केवलमेव । आशुभावितया सूक्ष्मकालेन स्फुरणशीलतया । न नैव । लक्ष्यते दृश्यते ज्ञायत इति यवात् । शतपत्रव्यतिभेदवत् क्रमसत्त्वेऽपि नितान्तं त्वरितं सम्भूततया कालसौक्ष्म्ये न संलक्ष्यते तत्प्रतीतिक्रम इति हेतोरेवासंलक्ष्यक्रमा इति व्यपदेश्या रसादयः । इति तात्पर्यम् । यतः । अयम् । अभिव्यक्तिक्रमोऽभिव्यक्त्याः स्पष्टीभवनतायाः क्रमः । अत्रास्मिन्ननुमानवादे । अपि । 'सम्भवती'ति शेषः । 'अभिव्यक्तिक' इति पाठे-व्यङ्ग्योऽसंलक्ष्यक्रम इति यावत् । अभिव्यक्तिं कायति ब्रूते इति, अभिव्यक्तो ( ऽर्थोऽ ) स्मिन्नस्तीति वा । 'आतोऽनुपसर्गे कः ।' ३।२।३ इति कः, 'अत इनि ठनौ ।' ५।२।११५ इति ठनो वेति । अभिव्यक्तक इति पाठे-अनुकम्पितोऽभिव्यक्तोऽर्थः । 'अनुकम्पायाम् ।' ५।३।७६ इति कः । इति । अभिव्यक्त इति पाठे तु स्पष्ट एवार्थ इति । अद्यापीति पाठे अद्यानुमानवादाङ्गीकारके दिवसेऽपीत्यर्थः । 'अद्यात्राह्नी' त्यमरः ।' इतीत्येवम् । यत् । 'मत'मिति शेषः । व्यक्तिविवेककारेण व्यक्तिविवेकं ( तदाख्यं ग्रन्थम् ) करोतीति तेन । 'महिमभट्टेने'ति शेषः । कर्मण्यण् ।' ३।२।१ इत्यण् । हि एव । नतु केनापि द्वितीयेन सचेतसा । उक्तं निरूपितम् ।

अत्रेदं तात्पर्यम्-न तावद् व्यञ्जना काचिद् वृत्तिः । किन्तु-तस्याः प्रतिपाद्यत्वेन विवक्षितोऽभिमत एव वाऽर्थः नासावनुमानास्पदततां जहाति । न चात्र काचिद् विप्रतिपत्तिः । इति मन्यमाना महिमभट्टा व्यक्तिविवेकं विरचयांचक्रुः । अत एव तत्र तावत् प्रोचुः "अनुमानेऽन्तर्भावं सकलस्यैव ध्वनेः प्रकाशयितुम् । व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम् ।"इति । अथ तत्र ते प्राहुः-'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति'रिति निरूपितदिशा या परैरभिहिता विभावादिभ्यो रसादीनां प्रतीतिः, सा नानुमानाद् व्यतिरिक्ता । अयमिह हेतुः-विभावादीनां प्रतीतिरत्र रसादीनां प्रतीतिसाधनभूता, न हि विभावादिप्रतीतिमन्तरेण रसादिप्रतीतिः सम्भवति, न च रसादिप्रतीतिर्विभावादिप्रतीत्यमूला, रतिहासादिस्थायिभावानामालम्बनोद्दीपनात्मा विभावः कारणं, रोमोद्गममुखविकासाद्यात्मानुभावः कार्यं, मदाद्यात्मा सहचारी भावः पुनः सहकारिकारणम्, इत्येतत्त्रितयमेव रत्यादीन् स्थायिनो भावान् सत्त्वासत्त्वाभ्यामनुमितिविषयं नयति' तदन्तरेतेषामनभ्युपगमात् । तथाभूतं पुनरेतद् रसादिनिष्पत्तिमूलम् । पय एव यथाऽम्लयोगेन दधिस्वरूपत्वं प्राप्नुवत्तस्य हेतुस्तथैव विभावादिप्रतीतिरप्यनुमीयमानरत्यादियोगेन रसादिस्वरूपतां प्राप्तवती तत्कारणमित्यूह्यम् । नचैवं रसादिप्रतीतेर्विभावादिप्रतीत्युत्तरकालिकतया कथ'मसंलक्ष्यक्रम'इति व्यपदेशः सङ्गमिष्यते ? इति चिन्त्यम् । विभावादिप्रतीतिव्याप्तिपक्षधर्मताग्रहरसाद्यनुमित्यास्वादाभिन्नरसादिप्रतीतिक्रमस्याशुभावितयाऽसंलक्ष्यत्वेनैवावस्थानात् । यथा च व्यक्तिवादिमते-प्रथमं विभावाद्युपस्थितिः, तत्पुना रसादिव्यञ्जनं, तदनन्तरं साधारण्याभिमानः, अथ रसाद्याविर्भावः इति क्रमसत्त्वेऽपि रसादीनामसंलक्ष्यक्रमत्वम्; तथाऽनुमानवादेऽपि यत्रयत्र विभावादिप्रतीतिस्तत्रतत्र रसादिप्रतीतिरिति व्याप्तिः, ततः-रसादिव्याप्यविभावादिमानयमभिनय इति पक्षधर्मता, तत्पश्चात् अभिनयो रसादिमान् विभावादिशालित्वादित्यनुमितिः । अथ-अयमभिनय एतद्रसशाली, एतद्विभावादिशालित्वादित्यास्वादः । इति । यथाहि-'माए-' इत्यत्र'यो यदीयोऽपनयः स तत्साध्यत्वावच्छिन्नोपायनिष्ठसाध्यत्वाभाववानिति व्याप्तिं गृहीत्वा तदन्यकर्तव्योपायनिवर्त्यव्याप्यापनयाभिधानवदिदं वाक्यमिति पक्षधर्मताग्रहे मत्कर्तव्योपायनिवर्त्यत्वदपनय इत्यनुमितौ मया तथा यत्यते यथा त्वत्कर्तृकापनयो नावतिष्ठेत ।'इति साक्षान्निरूपणं प्रतिपद्यते । इति ।

तत्र तस्मिन् विषये । प्रष्टव्यं प्रष्टुं शक्यम् । 'अस्ती'ति शेषः । किं किन्नु । शब्दाभिनयसमर्पितविभावादिप्रत्ययानुमितरामादिगतरागादिज्ञानं शब्दाभिनयाभ्यां समर्पिता निरूपिता ये विभावादयस्तेषां प्रत्ययः प्रतीतिस्तेनानुमिता ये रामादिगतरागादयो रामादिनिष्ठसीताऽऽदिसीताऽऽदिविषयकानुरागादय इति

यच्चोक्तं तेनैव-'यत्रयत्रैवंविधानां विभावानुभावसात्त्विकसञ्चारिणामभिधानमभिनयो वा तत्रतत्र शृङ्गारादिरसाविर्भावः ।' इति सुग्रहैव व्याप्तिः पक्षधर्मता च । तथा-

---

तज्ज्ञानम् । शब्दो वाक्यादि । अभिनयो नटकर्तृकरामाद्यनुकरणम् । **एव** केवलम् । **रसत्वेन** शृङ्गारादिरसनिर्वेदादिभावादिस्वरूपेण । **भवतो** ध्वनिमनुमानेऽन्तर्भावयितुं प्रवृत्तस्य श्रीमतः सम्बोध्यस्य । **अभिमतं** स्वीकृतम् । **वाऽथवा** । किम्-**तद्भावनया** तेषां शब्दाभिनयसमर्पितविभावादीनां भावना सविश्रम्भं बोधस्तया । **भावकैः** सहृदयैः । **भाव्यमानः** प्राप्यमाण आस्वाद्यमान इति यावत् । भूप्राप्तावित्यस्येपदम् । **स्वप्रकाशानन्दः** स्वं प्रकाशत इति तादृशोऽसावानन्द इति । 'रसत्वेनाभिमतः' इति शेषः । इति । तत्र-**आद्ये** 'पक्षे'इति शेषः । **न** नैव । 'वस्तुतया'इति शेषः । **विवादो** विरुद्धाभिधानम् । 'सम्भवती'ति शेषः । **किन्तु** परन्तु । '**रामादिगतरागादिज्ञानं** रामादिनिष्ठसीताऽऽदिविषयकानुरागादिसम्बन्धिज्ञानम् । **रससञ्ज्ञया** रस इति सञ्ज्ञेति तया । 'सञ्ज्ञा स्याच्चेतना नाम हस्ताद्यैश्चार्थसूचना।' इत्यमरः । रस इति नाम्नेत्यर्थः । **न** नैव । **अस्माभिर्व्यक्तिमङ्गीकुर्वद्भिः** । **उच्यते** कथ्यते ।' इतीत्यात्मकः । एव खलु । **विशेषो** विभेदः । रामादिनिष्ठसीताऽऽदिसम्बन्ध्यनुरागादिज्ञानं रस इति अनुमाने ध्वनिमन्तर्भावयितुमेतम्, अभिधाऽऽदिवृत्तित्रयादतिरिक्तैव व्यञ्जना नाम वृत्तिरित्यङ्गीकर्तुः पुनस्तन्न, तादृशज्ञानस्य रसपदवाच्यत्वासम्भवात् । इति भावः । **द्वितीयः** 'पक्ष'इति शेषः । 'तद्भावनया भावकैर्भाव्यमानः स्वप्रकाशानन्दो रसत्वेनाभिमत' इत्यात्मकः पक्ष इति भावः । **तु** पुनः । **व्याप्तिग्रहणाभावात्** । व्याप्तिः 'हेतुमन्निष्ठविरहाप्रतियोगिना । साध्येन हेतोरैकाधिकरण्यं व्याप्ति'रित्युक्तदिशा साहचर्यनियमस्तस्य ग्रहणं स्मरणं सम्भवित्वेन ज्ञानं वा तदभावस्तद्विरहस्तस्मात् कारणात् । **हेतोः** कारणस्य । **आभासतया** वास्तविकत्वाभावात् । **असिद्धो**ऽनुमानाविषयत्वेनासमर्थितः । **एव** न तु सिद्धः । अत्रेदं निष्कृष्टम्-काव्यं तावद् द्विविधं, श्रव्यं दृश्यं च । श्रव्यं रघुवंशादि, दृश्यं शाकुन्तलादि । श्रव्ये शब्देनैव विभावादयो वर्ण्यन्ते, दृश्ये पुनः-अभिनयोपयोगिन्या सामग्र्या । अतः-यत्प्रतीत्यैवानुमितानां रामादिगतसीतादिविषयकानुरागादीनां ज्ञानं रसः, ते विभावादयः शब्देनाभिनयेनैव वोत्तम्भिताः भवन्तीति यद्ययं पक्षः । न तर्हि नितान्तं मतद्वैविध्यम् । किन्तु रस्यते आस्वाद्यते इति रस इति रसपदनिरुक्त्या रसस्यास्वादवाच्यत्वे रामादीनां तेषां स्वात्मभिन्नतया तत्तद्रामादिगतसीताद्यनुरागादिज्ञानस्य च तद्भिन्नत्वे रामादिनिष्ठसीताद्यालम्बनकानुरागादिज्ञानमेव रस इति किं मूलं मतमिति संशयानपनयनमेवास्माकं मतान्तरमास्थापयतीति द्रष्टव्यम् । अथ यदि-शब्देनाभिनयेन वा समर्पितानां विभावादीनां भावनाद्वारा भावकैर्भाव्यमानः स्वप्रकाशानन्दो रस इति पक्षः स्यात् तर्हि अनुमानवादेऽसिद्ध एवासौ प्रतिभासते । तथा हि-अनुमानं नाम व्याप्तिविशिष्टपक्षधर्मताज्ञानम् । तच्च प्रकृते न सम्भवति, व्याप्तिग्रहाभावे हेतोराभासत्वात् । न हि सति हेत्वाभासेऽनुमानं सङ्गच्छते । व्याप्तिस्तावत् यत्रयत्र विभावादिप्रतीतिः, तत्रतत्र रसादयः इत्येव । असौ च न सर्वत्र । यथा-जरतां श्रोत्रियाणां मीमांसकानां च विभावादिप्रतीतिसत्त्वम्, किन्तु न रसादयः । इति । एवं च व्याप्तिग्रहाभावेऽनुमानहेत्वसिद्धौ द्वितीयः पक्षोऽपि प्रत्युक्तः । इति ।

अथ व्यक्तिविवेककारोक्त्यैव प्रकृतेऽनुमानप्रसङ्गं वारयितुमाह-यच्चेत्यादि ।

**तेन** व्यक्तिविवेककृता । **एव** नत्वन्येन केनापि । **यत्** । **च** । **उक्तम्** '**यत्रयत्र** यस्मिन्यस्मिन् स्थले । **एवंविधानां** शब्दाभिनयाभ्यां समर्पितसत्त्वानामित्यर्थः । **विभावानुभावसात्त्विकसञ्चारिणाम्** । **अभिधानं** कथनं तत्तच्छब्देनोपादानमिति यावत् । **वाऽथवा** । **अभिनयो**ऽभिनेतुर्नटस्येहितेन निरूप्यमाणं विभावाद्यनुकरणम् । 'स्या' दिति शेषः । **तत्रतत्र** तस्मिंस्तस्मिन् स्थाने । **शृङ्गारादिरसाविर्भावः** शृङ्गारहासादिरसानामाविर्भावः । 'जायते'इति शेषः । इतीत्येवम् । **व्याप्तिः** साध्याभाववदवृत्तित्वरूपो नियमविशेषः । **च** तथा । **पक्षधर्मता** पक्षस्य यत्र यत्त्वं यद्वत्त्वं वा साध्यते तस्य धर्मता तन्निष्ठयत्किञ्चिन्निरूपितप्रकारतेति । व्याप्यस्य साध्यवृत्तित्वमिति भावः । **सुग्रहा** सुखेन ग्रहीतुं शक्या । 'अस्ती'ति शेषः । **एव** । **तथा** एवमित्यर्थः—

'याऽर्थान्तराभिव्यक्तौ वः सामग्रीष्टा निबन्धनम् । सैवानुमितिपक्षे नो गमकत्वेन सम्मता ॥'
इति । इदमपि नो न विरुद्धम् । न ह्येवंविधा प्रतीतिरास्वाद्यत्वेनाभिमता । किन्तु-स्वप्र-
काशमात्रविश्रान्ता सान्द्रानन्दनिर्भरा । तेन-अत्र सिसाधयिषितादर्थादर्थान्तरस्य साधनाद्धेतो-
राभासता ।

---

'वो युष्माकं व्यक्तिवादिनामित्यर्थः । तेषामेव सम्बोध्यत्वात् । 'बहुवचनस्य वस्नसौ ।' ८ ।
१ । २१ इति वसादेशः । **अर्थान्तराभिव्यक्तौ** अर्थो वाच्यो लक्ष्यो वा तस्मादन्य इति, तस्याभि-
व्यक्तिः स्फुरणं तस्याम् । **या** यत्स्वरूपा । **निबन्धनमु**पनाहस्तद्वत्प्रधानभूतेति यावत् । 'उपनाहो निबन्धन'
मित्यमरः । उपनाहश्च यत्रतन्त्र्यो निबद्धाः स्वनयन्ति तस्योर्ध्वभागः । 'निबन्धनं प्रधान' मिति तर्कवागीशाः ।
**सामग्री** शाब्दबोधादिस्वरूपः कारणसमुदायः । **इष्टा**ऽभिमताऽभिलषिता वा । 'अस्ती' ति शेषः । **नो**-
ऽस्माकम् । अनुमानवादिनामिति यावत् । **सा** तत्स्वरूपा । **एव** न त्वन्यस्वरूपाऽपीत्यर्थः । **अनुमिति-**
**पक्षे**ऽनुमितिरनुमानं तस्याः पक्षस्तस्मिन् । **गमकत्वेन** रसाद्यनुमापकत्वेन । गमयति प्रापयति अवबो-
धयतीति वेति तत्त्वेन । **सम्मता** स्वीकृता ॥' इति । अत्रेदं निष्कृष्टम्-यथा महानसमभितो धूममवलोकमानः
'कुतोऽय' मिति तं निश्चेतुं प्रवृत्तः, महानसे प्रविश्य वह्निव्याप्यं धूममवलोकते, परत्र पुनर्जलादिव्याप्यत्वाभावं
तदीयमवलोक्य यथा स्वयं यत्र धूमस्तत्र वह्निरिति व्याप्तिं निश्चिनोति । अथ-तथैव पर्वतेऽपि धूममवलोकमानस्तामेव
'यत्र धूमः, तत्र वह्नि' रिति व्याप्तिं स्मरति, स्मरंश्च तत्र वह्निमवलोक्य 'यत्रयत्र धूमस्तत्रतत्र वह्नि' रिति
निश्चिनोति. तदनन्तरं यत्रयत्र धूममवलोकते तत्रतत्र प्रथमत एव तस्येयमनुमितिः 'अयं वह्निमान्
धूमवत्त्वात् ।' इति सम्पद्यते । एवं यथा- 'यत्र धूमस्तत्र वह्नि'रिति व्याप्तिः, ततश्च धूमो वह्निव्याप्यो वह्निश्च धूमव्यापक
इति व्याप्यस्य साध्यवृत्तित्वं पक्षधर्मता, तज्ज्ञानं पुररनुमितिरिति व्यपदिश्यते । तथा कुत्रचिद् विभावादिसम्पत्तिं प्रतिपद्य
रसादिसद्भावं प्रतिपद्यमाना विभावादिसम्पत्तीरसादिसम्भूतिव्याप्येति नियते, परत्र पुनर्विभावादिसम्पत्तिं प्रतिपद्यमानानां
रङ्गगतानामात्मनश्चान्येषां च क्षणादेवाभिव्यक्ततया रसादिसम्भूतिमुपलभ्य चिरायानुमितिं प्रतिपद्यते यत्रयत्र विभावा-
दिस्तत्रतत्र रसादिः ।' इति । एवं च व्याप्तिविशिष्टपक्षधर्मताज्ञानं प्रकृते निर्बाधम् 'अयं रसादिमान् विभावादिमत्त्वादि'ति ।
अथ-यथा, व्यक्तिस्वीकर्त्तारो वाच्यलक्ष्यार्थोभयविलक्षणस्यार्थस्य प्रतिपत्तये व्यञ्जनां वृत्तिं स्वीकुर्वन्ति वयं पुनरनुमानेनैव
तदङ्गीकारप्रयोजनं गतार्थयामः । इति विचारापनोद्य एवैष भ्रमो व्यक्तिकारस्य । इति व्यक्तिविवेककाराणां मतम् ।' इति ।
अथैतद्दूषयति-**इदं** 'त'दिति शेषः । **अपि** । **नो**ऽस्माकं व्यञ्जनास्वीकर्त्तॄणाम् । **न** नैव । **विरुद्धम्** । 'उक्त'मिति
शेषः । **हि** यतः । **एवंविधा** यत्र विभावादीनामभिधानमभिनयो वा स्यात्तत्र रसादिरिति भवतोऽभिमता
विभावाद्यभिधानमात्रनिरूपितप्रकाराऽविभावाद्यभिनयमात्रनिरूपितप्रकाराऽपि वेति यावत् । **प्रतीतिः** । 'रसादे'
रिति शेषः । **आस्वाद्यत्वेना**स्वादस्वरूपेण । **न** नैव । **अभिमता** । 'अस्ती'ति शेषः । **किन्तु स्वप्रकाशमात्र-**
**विश्रान्ता** स्वप्रकाश एवेति, तत्र स्वप्रकाशमात्रे इत्यर्थः विश्रान्ता पर्यवसिता । **सान्द्रानन्दनिर्भरा** । सान्द्रोऽसावानन्द
इति, तेन निर्भरा सातिशयेति । 'प्रतीति'रिति शेषः । निःशेषेण भरोऽत्रेति, निर्गतो वा भरोऽत्र इति । भरोऽतिशयः ।
**तेन** 'हेतुने'ति शेषः । **अत्रा**स्मिन् । 'अनुमान'इति शेषः । **सिसाधयिषितात्** साधयितुमनुमानद्वारा समर्थयितुमी-
प्सित इति तस्मादिति तथोक्तात् । **अर्थात्** । 'स्वप्रकाशानन्दस्वरूपा'दिति शेषः । **अर्थान्तरस्या**न्योऽर्थ इति तस्य ।
रसाद्याविर्भावस्वरूपस्येत्यर्थः । **साधनात्** । अनुमापनात् । **हेतो**र्भवन्निरूपितस्वरूपस्य कारणस्य । **आभासता**
दुष्टता । अत्रेदमवधेयम्-'यत्रयत्र विभावादीनामभिधानमभिनयो वा तत्रतत्र रसादीनामाविर्भाव' इति व्यक्तिवाद्य-
नुमानवाद्युभयसाधारणं मतम् । न ह्यत्र किमपि कस्यापि वैमत्यम् । किन्तु-एतद्विचार्यम्-रसाद्याविर्भावो रसादिप्रतीतिश्च
नाम्ना वस्तुत एव वा भिन्ने इति । नच नाम्नैव । उत्पत्त्यपरपर्यायस्याविर्भावपदवाच्यस्य, आस्वादापरपर्यायस्य च प्रती-
तिपदवाच्यस्य परस्परं विभिन्नताया दृष्टश्रुतत्वात् । नहि भोग्यस्योत्पत्तिरास्वाद ( भोग ) श्च केनापि सचेतसाऽभिन्नत्वेन
निरूप्येते । उत्पत्त्यपेक्षया भोगस्योत्तरकालिकत्वाद् भोगापेक्षया चोत्पत्तेः प्राक्कालिकत्वात् । आस्वाद्यास्वादकयोर्भिन्नत्वे,
तयोरपि भिन्नत्वाच्च । अतो वस्तुत एव भिन्ने इति स्थितम् । यथा च यत्रयत्र मृत्तिकाकुलालादि तत्रतत्रैव घटोत्पत्ति-

यच्च-'भम धम्मिअ-' इत्यादौ प्रतीयमानं वस्तु,

'जलकेलितरलकरतलमुक्तपुनःपिहितराधिकावदनः।
जगदवतु कोकयूनोर्विघटनसङ्घटनकौतुकी कृष्णः ॥ २१९ ॥'

इत्यादौ च रूपकालङ्कारादयोऽनुमेया एव।

तथाहि-अनुमानं नाम पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टाल्लिङ्गाल्लिङ्गिनो ज्ञानम्।

---

रिति व्याप्तिग्रहेऽपि यत्रयत्र मृत्तिकाकुलालादि तत्रतत्रैव घटप्रतीतिरिति न वक्तुं शक्यते, तथा यत्र विभावादीनामभिधानमभिनयो वा तत्रैव रसाद्याविर्भाव इति व्याप्तिग्रहेऽपि यत्र विभावादीनामभिधानमभिनयो वा तत्रैव रसादिप्रतीतिरिति न सिद्धान्तः। यस्मात्-मृत्तिकाऽऽद्यभावस्थलेऽपि घटप्रतीतिरिव विभावाद्यभिधानाद्यभावेऽपि रसादिप्रतीतिः, मृत्तिकाऽऽदिसद्भावे च घटाप्रतीतिरिव विभावाद्यभिधानादिसद्भावे च रसाद्यप्रतीतिरिति नासौ सिद्धो हेतुः। अत्रायम्भावः-विभावादीनामभिधानेनाभिनयेन वा रसाविर्भावे, तयोः पुनर्विनाशेऽपि यथा रसप्रतीतिः सहृदयहृदयगोचरा तथा विभावादीनामभिधानेनाभिनयेन वा रसाविर्भावेऽपि तयोः पुनः सत्त्वेऽपि जरतां श्रोत्रियादीनां हृदयगोचरता न रसप्रतीतिः। इत्युत्पत्त्यपरपर्याय आविर्भावापरवाच्यो न स्वस्वरूपः, प्रतीतिः पुनरास्वादाद्यपरपर्याया स्वस्वरूपैवेति सुष्ठूक्तं 'न ह्येवंविधे'त्यादि, अव्याप्त्यतिव्याप्तिभ्यां च हेतोराभासत्वम्। इति।

नन्वेवं रसादिप्रतीतिर्मा भूदनुमेया, किन्तु तद्भिन्नस्य व्यङ्ग्यस्य प्रतीतिरपि कुतो नानुमानगोचरेत्याशङ्क्योत्तरयितुमाह-'भम धम्मिअ-'इत्यादौ 'भ्रम धार्मिक-'इत्याद्यर्थक उदाहृतपूर्वे। च। यत्। प्रतीयमानं'भ्रमणं न त्वया कार्यं सिंहो हि दृप्तः सदाऽवतिष्ठत' इत्यात्मकम्। वस्तु। 'अलङ्कारशून्य'मिति शेषः।

'जलकेलितरलमुक्तपुनःपिहितराधिकावदनो जलस्य केलिः क्रीडा तेन तरलौ चञ्चलौ यौ करौ तयोस्तलं तेन मुक्तं परित्यक्तं स्खलितमिति यावत् पुनः पिहितमाच्छादितं राधिकावदनं येन सः। कोकयूनोः कोकजातीययोर्दम्पत्योरित्यर्थः। कोका च कोकश्चेति कोकौ। युवती च युवा चेति युवानौ। कोकौ अमू युवानाविति तयोः। 'पुमान् स्त्रिया।' १।२।६७। कोकश्चक्रवाको नाम पक्षी। विघटनसङ्घटनकौतुकी। विघटनं सङ्गतयोः पृथक्करणम्। सङ्घटनं पुनः पृथग्भूतयोरपि सङ्गमं प्रति नयनम् तत्र कौतुकी तत्केलिपरः। कृष्णो राधिकाप्राणप्रियः। जगत्। चराचरात्मकं ब्रह्माण्डम्। अवतु रक्षतु अभिमतनिःश्रेयसप्रदानवर्धनाभ्यां पालयत्विति यावत्। प्रार्थनायां लोट् ॥ २१९ ॥'

इत्यादौ। च। रूपकालङ्कारादयः। अन्यस्मिन्नन्यत्वारोपमूलो रूपकालङ्कारः। यथा हि-राधिकावदनं चन्द्र इति प्रकल्प्य तद्विकाशे रात्रिज्ञानेन कोकयूनोर्विघटनम्, तदपिधाने रात्र्यभावज्ञानेन तयोः पुनः सङ्घटनम्। इति। अनुमेयाः। एव। नतु व्यङ्ग्याः।

अत्रायम्भावः-व्यक्तिवादिनस्तावत् 'भ्रमधार्मिक! विश्रब्धः स शुनकोऽद्य मारितस्तेन। गोदावरीकच्छकुडङ्गवासिना दृप्तसिंहेन॥' इत्याद्यर्थकादौ श्लोके 'यद्भयाद् गृहान्तरेव सञ्चरसि सः शुनको दृप्तेन तेन सिंहेन मारित इति शुनकादपि भीरुस्त्वं तस्मिन् मृते गोदावरीकूलकुञ्जपुष्पाणि सञ्चितानि कर्तुं प्रतिदिनं तत्र गच्छसि, किन्तु त्वं जानासि वा न वा तत्र दृप्तः सिंहो निवसति, स एव ग्रामान्तरत आगत्य तं शुनकं मारितवान् इति' वाच्यः 'त्वया शुनकादपि भीरुणा न तत्र गन्तव्य'मिति प्रत्याययतीति, तथा-'जलकेली-'त्यादौ 'करतलेन राधिकावदनस्यापिधानपिधानकरणपरः कृष्णो दिनमात्रसङ्गमशीलयोः कोकयोर्विघटनसङ्घटनकर' इति वाच्योऽर्थः 'राधिकावदनं चन्द्र' इति प्रत्याययती' त्याहुः। किन्तु निरूपिष्यमाणप्रकारेण नोभयत्रैव व्यङ्ग्यत्वम्। अस्ति पुनरनुमेयत्वमेवेत्याचक्षाणा अनुमानेनैव व्यञ्जनां गतार्थयन्तो महिमभट्टा उपक्रमन्ते-तथाहीत्यादिना।

तथाहि यथा प्रतीयमाना वस्त्वलङ्कारा नानुमानादतिरिच्येरंस्तथा। 'प्रतिपाद्यते'इति शेषः। 'अनुमानमनुगतत्वेन मीयते निश्चीयते इति तत्। नाम प्रसिद्धम्। तदाख्यया प्रसिद्धः प्रमाणविशेष इति यावत्। पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टात्। पक्षः सिसाधयिषा विरहविशिष्टसिद्ध्यभाववान् संदिग्धसाध्यको वा। 'पर्वतो

**वाच्यादसम्बद्धोऽर्थस्तावन्न प्रतीयते । अन्यथाऽतिप्रसङ्गः स्यात् । इति बोध्यबोधकयोरर्थयोः कश्चित् सम्बन्धोऽस्त्येव । ततश्च बोधकोऽर्थो लिङ्गम्, बोध्यश्च लिङ्गी, बोधकस्य चार्थस्य पक्षसत्त्वं निबद्धमेव । सपक्षसत्त्वविपक्षव्यावृत्तत्वे अनिबद्धे अपि सामर्थ्यादवसेये । तस्मात्-अत्र यो वाच्यार्थाल्लिङ्गरूपाल्लिङ्गिनो व्यङ्ग्यार्थस्यावगमः सोऽनुमान एव पर्यवस्यति । ' इति । तन्न ।**

**तथाहि-अत्र 'भम धम्मिअ-'इत्यादौ 'गृहे श्वनिवृत्त्या विहितं भ्रमणं गोदावरीतीरे सिंहोपल-**

---

वह्निमान् धूमवत्त्वाद् यथा महानस'मित्यादौ पर्वतादिस्तत्र सन् तदवृत्तिस्तत्त्वं यथा धूमत्वादिः समानः पक्ष इति, सपक्षः, स च निश्चितसाध्यचत्स्वरूपो यथा महानसादिः तत्र सत्त्वं धूमत्वादिविपरीतः पक्ष इति विपक्षः, स च साध्याभाववान् । यथा जलाशयादिः । तस्माद् व्यावृत्तस्तदवृत्तिस्तत्त्वं धूमत्वादि । तद्विशिष्टं तदवच्छिन्नं तस्मात् । **लिङ्गा**च्चिह्नात् धूमादिरूपात्'इति यावत् । **लिङ्गिनो** लिङ्गं चिह्नमस्यास्मिन् वाऽस्तीति तस्य'वह्न्यादे'रिति भावः । **ज्ञानं** निश्चयः । 'मत'मिति शेषः । **अर्थः** शाब्दबोधः । **तावत्** साकल्येन 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । **वाच्यात् असम्बद्धः** सम्बन्धित्वानवच्छिन्नः । **न । प्रतीयते अन्यथा** । ननु वाच्यादसम्बद्धोऽपि प्रतीयेत का हानिरिति चेन्न यत इति भावः । **अतिप्रसङ्गो**ऽतिव्याप्तिः । **स्याद्** भवेत् । **इत्येवं** सति । **बोध्यबोधकयो**र्बोध्यो व्यङ्ग्यो बोधकस्तद्भिन्नोऽर्थस्तयोः । **अर्थयोः । कश्चित् । सम्बन्धो** वैशिष्ट्यम् । **अस्ति । एव** नत्वत्र सन्देहावसरः । **ततस्तस्मात्** ' कारणा ' दिति शेषः । सम्बन्धस्यावश्यं सद्भाव इति स्वरूपात् । **बोधको** ' व्यङ्ग्यार्थस्ये ' ति शेषः । **अर्थो** ननु शब्दः । ' एवे ' ति शेषः । **लिङ्गं** चिह्नम् तत्स्वरूप इति यावत् । **च । बोध्यः लिङ्गी । च** तथा सति **बोधकस्य** व्यङ्ग्यार्थबोधकस्य । **अर्थस्य । पक्षसत्त्वं** पक्षे विद्यमानत्वम् । **निबद्धं** सिद्धम् । **एव** खलु । अथ-**सपक्षसत्त्वविपक्षव्यावृत्तत्वे** सपक्षसत्त्वं विपक्षतश्च व्यावृत्तत्वम् । **अनिबद्धे अपि । सामर्थ्यात्** संस्कारबलात् ' पक्षसत्त्वं समुद्दिश्य तत्र प्रकल्प्यमानादिति ' यावत् । **अवसेये** अनुमेये । ' ईदूदेद्द्विवचनं प्रगृह्यम् । ' १।१।११ इति प्रगृह्यत्वे संहिताऽभावः । **तस्मात्** ' कारणा'दिति शेषः । **लिङ्गरूपात् । वाच्यार्थात्** । वाच्यार्थमाश्रित्य 'ल्यब्लोपे कर्मण्यधिकरणे च' * इति पञ्चमी । **लिङ्गिनो** लिङ्गिसम्बन्धी । **यः । व्यङ्ग्यार्थस्य । अवगमो** बोधः । **सः । अनुमाने** निरुक्तलक्षणे प्रमाणे । **एव । पर्यवस्यति** पर्यवसितो भवति निश्चितो जायते इति यावत् । **इती**त्येवम् । ' व्यक्तिविवेककाराः प्राहुः ' इति शेषः । **तत्** ' कथन ' मिति शेषः । **न** ' सङ्गच्छते ' इति शेषः ।

अत्रेदं बोध्यम्-पक्षः पर्वतादिः, सपक्षः पुनर्महानसादिः, तत्र सन् विद्यमानः, स एव विपक्षाद् व्यावृत्तो धूमादिस्तत्त्वं च धूमादित्वम् । अथ-विशिष्टमवच्छिन्नम्, एवं सति धूमत्वावच्छिन्नमिति, तच्च धूमरूपमेव, तदादि लिङ्गं पुनर्धूमादि । ततश्च धूमवदादिज्ञानमनुमानम् । धूमवानग्निः । ' पर्वतोऽयमग्निमान् धूमवत्त्वाद् यथा महानसम् ' । इत्यस्य च ' पर्वतेऽस्मिन् धूमवानग्निः यथा महानसे; कुत एतत्-धूमवत्त्वा ' दिति शाब्दबोध एवानुमानपर्यवसायीति । तत्र-पक्षः, ' एष एतद्वा ' निति यत्र हेतुपुरःसरं सिसाधयिष्यते; सपक्षः पुनः, यत्र तादृशं हेतुं प्रतिपद्य तादृशत्वं प्रथमत एव प्रतिपन्नम्; एवं विपक्षः, यत्र तादृशहेत्वभावे तादृशत्वाभावो निश्चितः स्यात् । इति यत्रयत्र व्यञ्जनास्वीकर्त्तारो यादृशं व्यञ्जनया प्रतिपाद्यमानमर्थमुररीकुर्वन्ति, तत्रतत्रैव वयमनुमितिविषयं तादृशं साधयामः, तस्मात्-पक्षः स एव, 'भम धम्मिअ-'इत्यादिः, 'जलकेलि-'इत्यादिर्वा । अत्र सत्त्वं तस्य वाच्यस्य, यस्माद् व्यङ्ग्योऽर्थः प्रतीयते; एतस्मादेव हि अनुमेयोऽर्थः । सपक्षः पुनः, तादृशवाच्यार्थशाली खलु । तत एव तादृशानुमितिसिद्धेः । अत्र सत्त्वं पुनः तादृशस्यैव वाच्यस्य, तादृशादेव तथा प्रतिपत्तेरभ्युपगमात् । अथ-विपक्षः, तादृशवाच्याभाववान्; तत्रैव तत्त्वाभावप्रतिपत्तेः । लिङ्गं तादृशबोध्यबोधकयोः सम्बन्धविशेषः । अस्ति हि सर्वोऽपि बोध्यो बोधकश्च परस्परं यत्किञ्चित्सम्बन्धशाली; तत्त्वमनङ्गीकृत्यातिप्रसङ्गापत्तेः । तथाहि-'भमधम्मिअ-'इत्यादौ भ्रमणाभावस्येव घटाभावादेरपि बोधः स्यात् । इति यदाहुर्व्यक्तिविवेककाराः, तन्न क्षोदक्षमम् । इति । तदेवोपपादयति-**तथाहि**-'यथा तन्न सङ्गच्छत' इति शेषः । **अत्रास्मिन्** । **'भम धम्मिअ'-इत्यादौ**'श्लोक'इति शेषः । **श्वनिवृत्त्या** शुनो निवृत्तिर्ग्रामे आगत्य गोदावरीकुञ्जवासिना सिंहेन मारित इत्येव तस्यानुपलब्धिस्तया । 'हेतुने'ति शेषः । **गृहे** । 'एवे'ति शेषः । **विहितं** प्रतिपादितम् । **भ्रमणं** 'शुनकादपि भीतस्ये'ति शेषः ( कर्तृ ) । **गोदावरीतीरे** गोदावर्यास्तदाख्याया

**ब्धेरभ्रमणमनुमापयती'ति यद्वक्तव्यं तत्रानैकान्तिको हेतुः। भीरोरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण वा गमनस्य सम्भवात्। पुंश्चल्या वचनं प्रामाणिकं न वेति सन्दिग्धोऽसिद्धश्च।**

**'जलकेलि-'इत्यत्र 'य आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटनसङ्घटनकारी स चन्द्र एवे' त्यनुमितिरेवेयमिति न वाच्यम्। उत्त्रासकादावनैकान्तिकत्वात्। 'एवंविधोऽर्थ एवंविधार्थबो-**

---

नद्यास्तीरं तत्र। **सिंहोपलब्धेः**। 'विभाषा गुणेऽस्त्रियाम्।' २। ३। २५ इत्यत्र 'विभाषे'ति योगविभागाद्गुणे स्त्रियां च क्वचिदिति पञ्चमी। **अभ्रमणम्** (कर्म)। **अनुमापयति**। इतीत्येवम्। **यत्**। 'व्यक्तिविवेककाराणा' मिति शेषः। **वक्तव्यम्**। 'अस्ती'ति शेषः। **तत्र** तस्मिन्ननुमाने। **अनैकान्तिको** न एकान्तिक इति। व्यभिचारीत्यर्थः। एक एवान्तः परिच्छेदो यस्य स एकान्तः, तं रक्षतीत्यैकान्तिकः। 'रक्षति। ४। ४। ३३ इति ठक्। यद्वा-एकान्तमाहेत्यैकान्तिकः। 'आहौ प्रभूतादिभ्यः' इति ठक्। **हेतुः**। कुत इत्याह-**भीरोर्**भयशीलस्य। **अपि** किं पुनर्वीरस्येति भावः। **गुरोर्**आचार्यस्य पितुर्वा पूज्यस्य वा। 'गुरुस्त्रिलिङ्ग्यां महति दुर्जरालघुनोरपि। पुमान् निषेकादिकरे पित्रादौ सुरमन्त्रिणि॥' इति मेदिनीकरः। **वा**ऽथवा। **प्रभोः** स्वामिनो राज्ञो वा। **निदेशेन** सङ्केतेनाज्ञया वा। 'निदेशः शासनोपान्तकथनेषु प्रयुज्यते।' इति विश्वः। **वा**ऽथवा। **प्रियानुरागेण** प्रियः सुहृद् बान्धवो वाऽभीष्टदेवो वा तस्यानुरागः प्रेम तेन। प्रियाया वाऽनुरागस्तेन। **गमनस्य** भ्रमणस्य। क्वचित्तु 'भ्रमणस्ये' त्येव साधीयान् पाठः। **सम्भवाद्**निर्बाधितत्वात्। **च** पुनः। **पुंश्चल्याः** कुलटायाः। पुमांसं चलति प्राप्नोति भर्त्तारमपहायेति तस्याः। परपुरुषगामिन्या इति भावः। **वचनं** कथनम्। **प्रामाणिकम्**। प्रमाणं प्रयोजनमस्यास्तीति। प्रमाणप्रयोजनकमिति भावः। 'प्रयोजनम्।' ५।१।१०९ इति ठञ्। **न**। **वा**ऽथवा। 'प्रामाणिक'मिति शेषः। **इती**त्यस्मात् कारणात्। **सन्दिग्धः** सन्देहग्रस्तः। अत एव-**असिद्धः**। 'हेतु'रिति शेषः। 'सन्दिग्धासिद्धश्च'इति पाठे तु सन्दिग्धोऽसावसिद्ध इत्यर्थः। अत्रेदमवधेयम्-'भम धम्मिअ-'इत्यादौ व्यक्तिविवेककाराणां विचारदृशा धार्मिकः पक्षः, तत्र सत्त्वं शुनकनिवृत्त्या गृहान्तिके भीरुत्वपर्यवसायि भ्रमणत्वं, सपक्षः कुमारादिः, विपक्षो व्याघ्रादिः लिङ्गं पुनस्तादृशं भ्रमणं, तेन तस्य गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमीयते; तथा च-'गोदावरीतीरम् अभीरुभ्रमणानुचितसिंहवत्त्वा'दिति स्यादनुमानम्।' इति स्थितम्। व्यक्तिवादिनस्त्वेवं प्रतिपादयन्ति-'यत्तद् भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वक'मिति व्यतिरेकव्याप्तिरेव तावदसिद्धा, भीरोरपि गुरुस्वाम्यादिनियोगवशात् प्रियानुरागादिवशाद्वा भ्रमणकारित्वस्य समुपलब्धेः। अथ-धार्मिकस्य शुनकाद् भीरुत्वं पुंश्चल्या वचनमात्रेण प्रदर्शितम्, तच्च प्रमाणभूतमस्ति न वेत्यपि सन्देह एव। प्रमाणभूतत्वे शुनकाद् भीरोः सिंहाद् भीरुत्वं च नैकान्तिकम्, धार्मिकस्य शुनकास्पर्शादिभयशालित्वेऽपि वीरत्वानपाये सिंहाद्भीरुत्वानुपपत्तेः। प्रमाणभूतत्वाभावे तु सर्वमसिद्धमेवेति प्रतिपत्तव्यम्। इति।

अथ-'**जलकेलि**'-इत्यत्र 'जलकेलितरलकरतलमुक्तपुनःपिहितराधिकावदनः।' इत्यस्मिन्। 'उदाहृते पद्ये'इति शेषः। '**यः**। 'कश्चि'दिति शेषः। **आत्मदर्शनादर्शनाभ्यां** स्वदर्शनदानतिरोधानद्वारेत्यर्थः। आत्मनो दर्शनादर्शने इति ताभ्याम्। **चक्रवाकविघटनसङ्घटनकारी** चक्रवाकयोर्दिन एव सङ्गमशीलयोः स्वनाम्नैव प्रसिद्धयोः पक्षिणोर्विघटनसङ्घटने वियोगसंयोगौ कर्तुं शीलमस्यास्तीति तथोक्तः। 'स्या'दिति शेषः। **स** निरुक्तलक्षणः। **चन्द्रो** रात्रिकरश्चन्द्रमाः। **एव** नत्वन्यः। 'भवती'ति शेषः।' **इती**त्येवम्। **इयं** बुद्धिस्थस्वरूपा। **अनुमितिर**नुमानम्। 'सङ्गच्छत'इति शेषः। **एव**। **इति**। **न** नैव। **वाच्यम्**। **उत्त्रासकादौ** भयप्रदादौ। उत्त्रासयति नितान्तमुद्वेजयतीति, स आदिर्यस्य तस्मिन्। **अनैकान्तिकत्वाद्** व्यभिचारित्वादतिप्रसङ्गदोषग्रस्तत्वादिति यावत्। 'हेतो'रिति शेषः। अत्रेदमभिधीयते-राधिकावदनं चन्द्रः, आत्मदर्शनादर्शनद्वारा चक्रवाकयोर्विघटनसङ्घटनकारित्वात्। यथाऽऽकाशस्थश्चन्द्रः।' इत्येवमनुमितौ 'जलकेलि-'इत्युदाहृते पद्ये रूपकालङ्कारोऽनुमेय एव नतु व्यङ्ग्यः। इति महिमभट्टमतं न सुमतम्। नहि चक्रवाकयोर्विघटनसङ्घटने करोतीति चन्द्र इत्यनुमातुं शक्यते, धृतशरासनकरालाकृतिकव्याघ्रादीनां दर्शनादर्शनाभ्यामपि तत्त्वापत्तेः। राधिकावदनस्य विकाशेन या रात्रिप्रतीतिः, सा तस्य चन्द्राभिन्नत्वेनैव भवेदित्यपि न युज्यते। सूर्यपिधानेऽपि तस्याः सम्भवात्। यदि तु सूर्यस्य मेघादिना पिधाने तमःस्तोमेऽपि रात्रिसाधर्म्यप्रतीतेर्ना-

**धक एवंविधार्थत्वात्, यन्नैवं तन्नैवम्' इत्यनुमानेऽप्याभाससमानयोगक्षेमो हेतुः । 'एवंविधार्थत्वा-दि'ति हेतुना एवंविधानिष्टसाधनस्याप्युपपत्तेः ।**

**तथा-'दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे'-इत्यादौ नलग्रन्थीनां तनूलेखनम्, एकाकितया च स्रोतोगमनम्, तस्याः परकामुकोपभोगस्य लिङ्गिनो लिङ्गमित्युच्यते । तच्च-अत्रैवाभिहितेन स्वकान्तस्नेहेनापि सम्भवतीत्यनैकान्तिको हेतुः ।**

---

ङ्गीकारः, तर्हि चन्द्रस्य करतलादिना पिधाने दिनसाधर्म्यप्रतीतेरनङ्गीकारः स्थाने । एवं सति राधिकावदनस्य पिधाने चक्रवाकयोः सङ्घटनं न सङ्घटते । दिवाऽपि नक्तमपि वा राधिकावदनस्य स्फुरणमस्फुरणं वा यथेष्टं स्यात् किन्तु चक्रवाक-योर्विघटनसङ्घटने किम्मूले इति मीमांसाऽवसरे राधिकावदनस्य चन्द्राभिन्नत्वेनेति न वक्तुं पार्यते, दिवा चन्द्रदर्शनेऽपि नक्तं च तस्य दर्शनाभावे चक्रवाकयोर्विघटनस्य सङ्घटनस्य चादृष्टश्रुतत्वात् । न च राधिकावदनस्यैव दर्शनादर्शनाभ्यां रात्रे-र्दिनस्य च सत्त्वाङ्गीकारे सर्वमवदातम् ।'इति वाच्यम् । सूर्याचन्द्रमसयोरुभयोरपि दर्शनादर्शनाभ्यामेव रात्रेर्दिनस्य वा स्थिति-रिति नियमस्यासम्भवात् । राधिकावदनं चन्द्र इति कल्पनं तादात्म्यसंम्बन्धमादायैव सङ्गच्छते,अन्यथा निरूप्यमाणस्य रूपक-स्यापि मूलोच्छेदापत्तिः स्यात् । तादात्म्यसम्बन्धेन पुनः साध्यस्य चन्द्रस्य वदने वस्तुतया बाधाद्बाधोऽपि दोष एव हेतो-रित्येवं हेत्वाभासतयाऽनुमानमपि न प्रमाणकोटावारोहतीति । नन्वेवं मा भूदनुमानमिति प्रकारान्तरेणोपपाद्यमानेऽप्य-नुमाने दोषमुद्घाटयन्नाह-'**एवंविध** एवम्भूतः पक्षीभूतेन वाक्यार्थेन बोधयितुं योग्यः साध्यकोटिनिविष्टः । **अर्थः** । **एवंविधार्थबोधक** एवंविधो योऽर्थस्तस्य बोधकः प्रतिपादकः । **एवंविधार्थत्वाद्**एवंविधार्थस्य भावस्तस्मात् । 'हेतो'रिति शेषः । **यत्** । 'किञ्चि' दिति शेषः । **एवम्** । न 'स्या' दिति शेषः । **तत्** । **एवम्** । न 'भवितुमर्हती'ति शेषः । ' **इत्यनुमाने** इत्थम्भूतेऽनुमाने । **अपि** । **आभाससमानयोगक्षेमः** आभाससमानौ योगक्षेमौ यत्र यस्य वेति सः । आभाससमानौ नतु स्वरूपसन्तौ । अप्राप्तस्य प्राप्तिर्योगः । प्राप्तस्य पुनारक्षणं क्षेमः । 'योगोऽपूर्वार्थसम्प्राप्तौ सङ्गतिध्यानयुक्तिषु । वपुःस्थैर्यप्रयोगे च विष्कम्भादिषु भेषजे । विश्रब्धघातुके द्रव्योपायसंहननेष्वपि । कार्मणेऽपि ।' इति मेदिनी । 'क्षेमोऽस्त्री लब्धरक्षणे । चण्डायां नाशुभे न स्त्री कात्यायन्यां च योषिति ।' इति मेदिनी । **हेतुः** । '**एवंविधार्थत्वा' दिति हेतुना** । **एवंविधानिष्टसाधनस्य**ैवंविधस्यानिष्टार्थरूपस्य साधनस्य । **अपि** । **उपपत्तेः** सम्भवात् ।

अत्रेदं तत्त्वम्-'जलकेलि-' इति वाक्यार्थ एव 'राधिकावदनं चन्द्र' इति रूपकबोधोपयोगिभूतानुमितिबोधकः 'एवंविधार्थत्वा' दिति मतं महिमभट्टनाम् । व्यक्तिवादिनां पुनः-'एवंविधार्थत्वा' दिति पदार्थस्तावत् 'एवंविधो योऽर्थस्तत्त्वात् ।' इति । तत्र-'एवंविध' इति शब्देन 'अनभिमत' इत्यर्थबोधस्यापि भवितुमर्हितत्वात् तादृशो हेतुराभासमात्रावष्टम्भः । 'एवंविध' इति शब्दस्य साधारण्येन 'अभिमतानभिमतोभयविधार्थस्य बोधकत्वात् । इति तादृशमनुमानमपि न सङ्गच्छते ।' इति ।

एवमेवान्यत्रापि व्यङ्ग्यविषयेऽनुमानं न सङ्गच्छते हेतोर्व्यभिचारदुष्टत्वादिति प्रदर्शयिषुः पुनर्वस्तुव्यङ्ग्ये दोषमाह-**तथा** यथा पूर्वत्रातिप्रसङ्गस्तद्वत् । '**दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे-'इत्यादौ** । 'दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे दास्यसि प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यति । एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदानलग्रन्थयः ॥'इत्यस्मिन् श्लोके । '**नलग्रन्थीनां** नलानां वंशविशेषाणां ग्रन्थयः पर्वाणीति तेषाम् । **तनूलेखनं** तन्वा लेखनमङ्कनं रेखाकरणमिति यावत् । **चाथवा** । **एकाकितया** । **स्रोतोगमनं** स्रोतः प्रवाहस्तस्य ( तत्प्रति ) गमनम् । 'कृद्योगा षष्ठी समस्यत इति वाच्यम् * ।' इति समासः । **तस्याः** 'कुलटाया'इति शेषः । **परकामुकोपभोगस्य** परः स्ववल्लभादतिरिक्तोऽसौ कामुकः कामीति तस्योपभोगो वाह्यो भोगस्तस्य तदात्मकस्येति यावत् । **लिङ्गिनश्चिह्नवतः** । **लिङ्गं** चिह्नम् ।' इतीत्थेवम् । **उच्यते** कथ्यते । च पुनः । **तत्** तादृशं वचः । **अत्रास्मिन्** । **एव** 'श्लोक'इति शेषः । **अभिहितेन** कथितेन । 'प्रायेणास्य शिशोः पिता-'इत्यादिनोद्घोषितेनेति यावत् । **स्वकान्तस्नेहेन** स्वस्याः कान्तः प्रियतम इति तस्य स्नेहः प्रेम तेन । **अपि** । **सम्भवति** सङ्घटते । इतीत्यस्मात् कारणात् । **अनैकान्तिको** व्यभिचारग्रस्तः । **हेतुः** कारणम् ।

**यच्च—'निःशेषच्युतचन्दनं—' इत्यादौ दूत्यास्तत्कामुकोपभोगोऽनुमीयते तत्किं प्रतिपाद्यतया दूत्या, तत्कालसन्निहितैर्वाऽन्यैः, तत्काव्यार्थभावनया वा सहृदयैः। आद्ययोर्न विवादः तृतीये तु तथाविधाभिप्रायविरहस्थले व्यभिचारः।**

---

अत्रेदं बोद्धव्यम्—'सा परकामुकोपभोगवती नलग्रन्थीनां तनूल्लेखनादेकाकितया वा स्रोतोगमनात्। यथा प्राक् तथा दृष्टा श्रुता वा कुलटे'ति, 'या नलग्रन्थिकृततनूल्लेखा या वा एकाकिनी सती स्रोतोगन्त्री सा परकामुकोपभोगवती या नैवं सा नैव'मिति वाऽनुमानमेवात्रेति महिममहिमा। व्यक्तिवादिनां पुनर्वादव्यक्तिः—'नायं हेतुरैकान्तिकः, 'प्रायेणास्य शिशोः पिता न विरसाः कौपीरपः पास्यती'त्यभिधानसूचितेन स्वकान्तविषयकप्रेमवशादपि तत्सद्भावोपपत्तेः। इति। अथ विवृतिकारा एवमाहुः—'तथा च—यत्र'स्नेहेन किं दुष्कर'मिति जानतां सर्वेषामेव श्रोतॄणां तादृशबोधो न जायते तत्रैव व्यभिचार इति भावः। यदि तु कालान्तरे तादृग्वाक्यप्रयोगेण यस्य कस्यापि श्रोतुस्तादृशार्थबोधाद् व्यभिचारो न भवतीति विभाव्यते, तदाऽत्र तद्वाक्यप्रतिपाद्यं तादृशार्थद्वयं परकामुकोपभोगप्रतिपादकं तादृशार्थत्वात्'इत्यनुमाने बाधहेतु-दोषो द्रष्टव्यः। यथा—गन्धप्रागभावकालीनो घटो गन्धवान्'इत्यादौ तत्कालीनसाध्याभावमादाय बाधः। तथाऽत्रापि व्यक्तिविशेषं वा एवंविधार्थबोधकत्वरूपसाध्याभावमादाय बाधो बोध्यः।' इति।

उक्तं हेतोर्व्यभिचारमन्यत्राप्यतिदिशति—**यच्चे**त्यादिना।

**'निश्शेषच्युतचन्दनं—'इत्यादौ** (उदाहृतपूर्वे)। **च**। **दूत्याः** प्रेष्यायाः दास्याः। **तत्कामुकोपभोगस्**तस्या नायिकायाः कामुक इति, तस्योपभोग इति तथोक्तः। तद्रूपमिति यावत्। **यद्** 'वस्तु'इति शेषः। **अनुमीयते** 'दूती नायिकानायककृतोपभोगा निःशेषच्युतचन्दनस्तनतटादित्वा'दित्यात्मनेति शेषः। **तत्**। **किं** किन्तु। **प्रतिपाद्यतया** प्रतिपाद्याया भावस्तत्तातया। प्रतिपाद्या चात्र दूत्येव। तामेवोद्दिश्याभिधेयस्य प्रतिपादितत्वात्। **दूत्या**। 'अनुमीयते'इति शेषः। 'कर्तृकरणयोस्तृतीया।' २।३।१८ इति कर्त्तरि तृतीया। **वा**ऽथवा। 'किं'मिति शेषः। **तत्कालसन्निहितैः** स काल इति तत्कालस्तं सन्निहिता इति तैः। 'कालाः' २।१।१८ इति द्वितीयया समासः। तस्मिन् काले सन्निधिं भजमानैरित्यर्थः। 'दधातेर्हिः।' ७।४।४२ इति हिः। **अन्यैः** प्रतिपाद्यप्रतिपादकाभ्यां दूतीनायिकाभ्यां भिन्नैः। 'अनुमीयते'इति शेषः। **वा**ऽथवा। 'किं'मिति शेषः। **तत्काव्यार्थभावनया** स काव्यार्थस्तत्काव्यमिति तस्यार्थ इति वा तस्य भावना तया। **सहृदयैः** काव्यार्थभावनापरिपक्वधिषणैः। 'अनुमीयते'इति शेषः। **आद्ययोः** प्राथमिकयोः। 'पक्षयो'रिति शेषः। प्राक् त्रयः प्रश्ना निरूपिताः, तत्र—आद्यप्रश्नद्वयानुसारेण पक्षद्वयम्, अन्त्यप्रश्नानुसारेण पुनरेकः पक्षः। एवमत्र द्वयोः प्राथमिकयोः पक्षयोः स्वीकारे इति भावः। **न** नैव। **विवादो** विरुद्धो वादः। वाप्यां स्नानेनापि सम्भवतां निश्शेषच्युतचन्दनत्वादीनां प्रत्यक्षमुपभोगजनितत्वेन दूत्यास्तत्कालसन्निहितानां च परेषां तत्प्रत्यक्षताया एव प्राधान्येन पुरोवर्त्तित्वात्, तथा कल्पनायाः पुनरनुपपत्तेः। **तु** पुनः। **तृतीये** 'पक्षे' इति शेषः। **तथाविधाभिप्रायविरहस्थले** तथा यथाऽनुमीयते तत्स्वरूपो विधा प्रकारो यस्य सः तथोक्तोऽसावभिप्रायस्तात्पर्यं तस्य विरहो वियोगोऽभाव इति यावत्, तत्स्थले। **व्यभिचारः** सञ्चारस्तथाविधाभिप्रायस्थलीयतायाः सम्भव इति यावत्। अलक्ष्ये लक्ष्यवृत्तिर्व्यभिचार इति तथाविधाभिप्रायस्थलवर्त्तिताया अन्यत्र सम्भव एव व्यभिचारः इति सुव्यक्तम्।

अत्रेदं तत्त्वम्—नायकमानेतुमेव प्रेषितां, तं पुनरनुपानीय प्रत्युत तं तत्रैवोपभुज्यैकाकिनीं तां प्राप्तां दूतीं चन्दननिश्शेषच्यवनादिना तथाविधामालक्ष्य तत्प्रेषिकाया नायिकाया वैदग्ध्योक्तिः—'निःशेषच्युतचन्दनं—'इत्यादिः। एवमत्र प्रतिपाद्या (बोद्धव्या) दूत्येव। अथ यदि तथा नायिकाया वैदग्ध्योक्तिमवधार्य तन्नायककृतात्मोपभोगश्चन्दननिश्शेषच्यवनादिनाऽनुमीयेत, यदि वा तदानीतनैरन्यैरनुमीयेत तर्हि युक्तमेव। तेषामपेक्षया तत्प्रत्यक्षभूतताया एव जागरूकत्वे वापीगतस्नानादिना तथाविधतायाः कल्प्यमानायास्तिरोहितत्वात्। तथाभूतं पुनरनुमानं न चमत्कारास्पदम्, सहृदयहृदयाह्लादकत्वाभावात्, सहृदयहृदयाह्लादकस्यैव चमत्कारपदार्थत्वात्। यदि तु तत्काव्यार्थभावनया सहृदयैरनुमीयते तर्हि 'वापीं स्नातुमितो

**ननु वक्त्राद्यवस्थासहकृतत्वेन विशेष्यो हेतुरिति न वाच्यम्। एवंविधव्याप्त्यनुसन्धानस्याभावात्। किञ्च-एवंविधानां काव्यानां कविप्रतिभामात्रजन्मनांप्रामाण्यानावश्यकत्वेन सन्दिग्धासिद्धत्वं हेतोः। व्यक्तिवादिना च अधमपदसहायानामेवैषां पदार्थानां व्यञ्जकत्वमुक्तम्। तेन च तत्कान्तस्याधमत्वं प्रामाणिकं न वेति कथमनुमानम्।**

---

गताऽसी' त्युक्त्योदयमानस्याभिप्रायस्यापि स्थले तेषां विचारदशा चन्दननिश्शेषच्यवनादीनां सम्भवाद् व्यभिचारग्रस्त एव तथाविधानुमानहेतुः। एतदेवानुसन्धाय काव्यप्रकाशकारैरप्युक्तम्–तथा–'निश्शेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि, तानि कारणान्तरतोऽपि भवन्ति, अतश्चात्रैव स्नानकार्यत्वेनोक्तानि नोपभोगे एव प्रतिबद्धानीत्यनैकान्तिकानी'ति।

तृतीये पक्षे व्यभिचारोऽस्त्येवेति द्रढयितुं तत्र कल्प्यमानामाशङ्कां निवारयति–**नन्वि**त्यादिना।

**ननु** आशङ्क्यते। **वक्त्राद्यवस्थासहकृतत्वेन** वक्ताऽऽदौ येषां बोद्धव्यादीनामिति तेषामवस्थाऽऽस्तासां सहकृतत्वं वैशिष्ट्यं तेन। **विशेष्यो** विशेषे साधुरिति तथोक्तः। विशेषणान्तरदानेन समर्थनीयः। **हेतुः**। 'स्या'दिति शेषः। तथा सति व्यभिचाराभावेऽनुमानमवदातमिति भावः। **इति**। **न** नैव। **वाच्यम्**। **एवंविधव्याप्त्यनुसन्धानस्यै**वंविधा या व्याप्तिस्तस्या अनुसन्धानं तस्य। **अभावादस**द्भावात्। वक्त्राद्यवस्थासहकृतत्वेन विशेष्याया व्याप्तेः शब्देनोपात्तत्वादर्शनादिति भावः।

अत्रेदं बोध्यम्–यदपि 'दूती सम्भोगवती दृष्टश्रुततत्सङ्गरङ्गया नायिकया संर्थ्य चन्दननिश्शेषच्यवनादीनामुद्घाटितत्वात्' इति, 'नायकप्रेमवशादेव तद्दौत्यमधिकृतवती दूती सम्भोगवती नायकप्रेममात्रजन्याचन्दननिश्शेषच्यवनादित्वा' दिति वाऽनुमानं सङ्गच्छते। तदपि तथाविधाया व्याप्तेः साक्षादनुपात्तत्वेन सम्भवत्यथेव न तथाऽनुमानम्। इति। तर्कवागीशा अत्राहुः–प्रतिपाद्यावस्थासहकृतत्वस्य शब्देनानुपस्थानात् प्रमाणान्तरस्य वाऽसम्भवादनुपस्थितिरिति कथं तदन्तर्भावेण व्याप्तिग्रह इति भावः।' इति।

तत्र दोषान्तरमपि दर्शयितुमुपक्रमते–**किञ्चे**त्यादिना।

**किञ्चा**न्यदपि वक्तव्यमस्ति। किं तदित्याह–**एवंविधानां** 'निःशेषच्युतचन्दनं–' इत्यादिस्वरूपाणाम्। **कविप्रतिभामात्रजन्मनां** कवेः प्रतिभा लोकोत्तरकल्पनोन्मेषशालिनी बुद्धिरिति, कविप्रतिभैवेति कविप्रतिभामात्रं तस्माज्जन्म येषां तेषाम्। व्यधिकरणो बहुव्रीहिः। **काव्यानाम्। प्रामाण्यानावश्यकत्वेन** प्रमाणस्य भावः प्रामाण्यं तस्यानावश्यकत्वं तेन। 'हेतुने'ति शेषः। **हेतोर**नुमानकारणस्य। **सन्दिग्धासिद्धत्वम्**। सन्दिग्धं सन्देहग्रस्तं च तदसिद्धमिति तस्य भावः तत्त्वम्।

अत्रायम्भावः–'निःशेषच्युतचन्दनं–'इत्यादीनि काव्यानि केवलं कवेः प्रतिभयैव सम्पादितानि, न तत्र काऽपि दूती स्वरूपसती, न वा नायिका क्व पुनस्तच्चन्दननिश्शेषच्यवनादीनां गाथा। सत्यामेव भित्तौ चित्रसद्भावमभिधातुं युक्तत्वात्। एवं सति–एतदेतन्मूलकमेतत्पुनरेतन्मूलकमिति तत्प्रामाण्याभिधानमपि निरर्थकम्, प्रामाण्यशून्यत्वे च स्फुटमेव हेतोः सन्दिग्धत्वमसिद्धत्वं च।

नन्वेवं सति व्यञ्जनाऽपि कथं तत्रेत्याह–**व्यक्तिवादिने**त्यादिना।

**चा**थवा। **व्यक्तिवादिना** व्यञ्जनावादिना। 'निःशेषच्युतचन्दनं–' इत्यत्रेति शेषः। **अधमपदसहाया**नामधमपदं सहायः सहायकं येषां तेषाम्। **एव** ननु तद्भिन्नानामपि। **एषाम्**। **पदार्थानां** चन्दनच्यवनादीनाम्। **व्यञ्जकत्वं** व्यञ्जनया प्रतिपादकत्वम्। **उक्तम्**। **तेन** तथाऽभिधानेन। **च** पुनः। **तत्कान्तस्य** तस्याः कान्त इति तस्य। **अधमत्वं** नीचत्वम्। **प्रामाणिकं** प्रमाणसिद्धम्। 'अस्ती'ति शेषः। **वा**ऽथवा। **न** प्रामाणिकमिति शेषः। **इती**त्येवं सन्देहे। **कथं** केन प्रकारेण हेतुना वा। **अनुमानं** 'सिध्येते'ति शेषः।

अत्रेदं बोध्यम्–'निश्शेषच्युतचन्दनं–' इत्यादिर्नायकमानेतुमेव प्रेषितां तं पुनः सम्भुज्यैव, न तु तं पुनरनुनीय समुपागतां दूतीं प्रति स्नानकार्यप्रकाशनमुखेन सम्भोगं प्रकाशयन्त्या विदग्धाया नायिकाया उक्तिरियम्। अथ–'तस्या-

**एतेन—अर्थापत्तिवेद्यत्वमपि व्यङ्ग्यानामपास्तम् । अर्थापत्तेरपि पूर्वसिद्धव्याप्तीच्छामुपजीव्यैव प्रवृत्तेः । यथा—'यो जीवति, स कुत्राप्यवतिष्ठते; जीवति चात्र गोष्ठ्यामविद्यमानश्चैत्रः ।' इत्यादि ।**

**किञ्च—वस्त्रविक्रयादौ तर्जनीतोलनेन दशसङ्ख्याऽऽदिवत् सूचनबुद्धिवेद्योऽप्ययं न भवति । सूचनबुद्धेरपि सङ्केतादिलौकिकप्रमाणसापेक्षत्वेनानुमानप्रकारताऽङ्गीकारात् ।**

---

धमस्यान्तिक' मित्यत्रा 'धमस्येति' पदम् । तच्च—दुःखप्रयोजककर्मशीलतां प्रतिपादयति । तदर्थः पुनर्वाच्यतादशायां कर्मान्तरसाधारण्येनावस्थितोऽपि व्यङ्ग्यतादशायां दूतीसम्भोगरूपदुःखप्रयोजककर्मशीलत्वेन पर्यवसायीत्यधमपदार्थ एवैष चन्दनच्यवनादीनां पदार्थानां साहाय्यमुपपादयति । एतेषां स्नानकार्यत्वेन निवद्धत्वेऽपि योग्यतया सम्भोगाङ्गभूतालिङ्गनादिकार्यत्वस्य प्रतिसन्धानेऽपि तद्व्यञ्जनामुखेन तत्साहाय्येनैव सम्भोगगमकत्वमिति विशेषः । एतेन च नीचकर्मकारित्वस्याधमपदार्थस्य साधकं व्यङ्ग्यमित्यपास्तम् । प्रेषणसापेक्षत्वेन विस्मृतप्रेमतयाऽपि तत्सम्भवात् । एवं च—अत्राधमपदार्थ एव प्रधानभूतः । स च प्रमाणादनपेतो वेति सन्देहापन्न एव नतु निर्धारितः । तथा सति तस्य पक्षधर्मतासन्देहान्नानुमानं सङ्गच्छते । नच शब्दादेव निश्चय इति वक्तुं शक्यम् । तस्य रोषाकुलितकामिनीवचनत्वेनानिश्चायकत्वात् । एवं च—नायकस्याधमत्वानिश्चये सन्दिग्धासिद्धत्वमिति स्थितम् । न च व्यञ्जनापक्षेऽप्ययं दोष इति शङ्क्यम् । 'एवंविधादेवंविधोऽर्थ उपपत्त्यनपेक्षित्वेऽपि स्फुरती'त्यस्य तत्र भूषणत्वात् । इति ।

अथोक्तस्यार्थस्यानुषङ्गिकं फलं दर्शयति—**एतेने**त्यादिना ।

**एतेन** 'व्यङ्ग्यानामनुमानबोध्यत्वनिरासेने' ति शेषः । **व्यङ्ग्यानां** व्यञ्जनया बोध्यानाम् । **अर्थापत्तिवेद्यत्वम**र्थस्याभिमतार्थस्यापत्तिरापाततः प्रतीतिस्तस्यावेद्यत्वं ज्ञेयत्वम् । **अपि** । **अपास्तं** निरस्तम् । कुत इत्याह—**अर्थापत्तेः** । **अपि** । **पूर्वसिद्धव्याप्तीच्छां** पूर्वसिद्धाऽसौ व्याप्तिरिति तस्या इच्छेति ताम् । **उपजीव्या**श्रित्यावलम्ब्येति यावत् । **एव** नत्वनुपजीव्यापि । **प्रवृत्तेः** 'बोधयितु' मिति शेषः । **यथा** । '**यः** कश्चित् । **जीवति** । **सः** । **कुत्रापि** कुत्रचित् । **अवतिष्ठते** । **च** पुनः । 'य' इति शेषः । **जीवति** 'स' इति शेषः । **अत्रा**स्याम् । **गोष्ठ्यां** सभायाम् । **अविद्यमानः** न विद्यते इत्यसौ तथोक्तः । **चैत्रः** ।' **इत्यादि** ।

अत्रायं निष्कर्षः—अर्थापत्तिरपि प्रमाणान्तरमिति प्राचां मतम् । यथा—'आयुष्मान् देवदत्तो गृहे नास्ती' त्यत्रायुष्मतो देवदत्तस्य गृहासद्भावे परत्र सद्भावोऽर्थतः प्रतिपद्यते, यथा वा—'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यत्र पीनस्य देवदत्तस्य दिवा निराहारिणो नक्तमाहारित्वमर्थादापन्नम् । असावप्यर्थापत्तिर्न व्यङ्ग्यं बोधयितुं क्षमते । व्यङ्ग्यस्य व्याप्तिग्रहानधीनत्वात्, अर्थापत्तेः पुनर्व्याप्तिग्रहोपजीव्यत्वात् । यथा हि-देवदत्तो बहिरवतिष्ठते तस्यायुष्मत्त्वेऽपि गृहेऽनुपलब्धेः, यस्ययस्यायुष्मत्त्वेऽपि गृहेऽनुपलब्धिस्तस्यतस्य बहिरवस्थानमिति, देवदत्तो नक्तंभोजी दिवाऽभोजित्वेऽपि पीनत्वात्, यस्ययस्य दिवाऽभोजित्वेऽपि पीनत्वं तस्यतस्य नक्तम्भोजित्वम् । इति वा । इत्यत एवोदाजिहीर्षितोक्तम्—'यो जीवती' त्यादि । इति । नव्यानां पुनर्मते नानुमानादतिरिक्ताऽर्थापत्तिः । तेनैवैतस्या गतार्थत्वात् । अस्त्वेवम्, किन्तु यन्मतेऽर्थापत्तिः प्रमाणान्तरं, तैरपि 'तया व्यङ्ग्यार्थबोध' इति न वक्तुं शक्यम् । व्याप्तिग्रहमनुपजीव्य तत्सत्ताया एव संशयापत्तेः । यन्मते नास्त्यसौ प्रमाणान्तरं तत्कृते नायं वादः । इति ।

एवमर्थापत्तेर्व्यङ्ग्यबोधकतां निरस्य चेष्टाया अपि निरसितुमाह—**किञ्चे**त्यादि ।

**किञ्च** । 'एतेने'ति शेषः । **वस्त्रविक्रयादौ** वस्त्रस्य विक्रय इति, स आदौ यस्य तस्मिन् । वस्त्रविक्रयस्वर्णादिपरिमाणकथनयुवत्यादीयत्तासङ्केतादौ । 'विषय'इति शेषः । **तर्जनीतोलनेन** तर्जन्या तन्नाम्न्याऽङ्गुल्या तोलनं तेन तद्वारेति यावत् । इदमतन्त्रम् । तेन हस्तसम्पुटादीनामपि लाभः । **दशसङ्ख्याऽऽदिवद्** दशसङ्ख्यादीनामिवेति । 'दशे'त्यतन्त्रम् । 'तत्र तस्येव ।' ५।१।११६ इति वतिः । **सूचनबुद्धिवेद्यः** सूचनस्य हस्तचेष्टाऽऽदिरूपस्य सङ्केतस्य बुद्धिस्तया वेद्यो ज्ञातुं शक्यः । सूच्यतेऽनेनेति सूचनम् । 'करणाधिकरणयोश्च ।' ३।३।११७ इति करणे ल्युट् । सङ्केतबुद्धिजन्यबोधविषय इति यावत् । **अपि** । **अयं** 'व्यङ्ग्यार्थ' इति शेषः । **न** नैव । **भवति** । 'इत्यपि सूचित'मिति शेषः ।

## ३०२ स्मृतिर्न च रसादिधीः ॥ २९६ ॥

यच्च 'संस्कारजन्यत्वाद्रसादिबुद्धिः स्मृतिः'। इति केचित्, तत्रापि प्रत्यभिज्ञायामनैकान्तिकतया हेतोराभासता।

---

कुत इत्यत आह–**सूचनबुद्धेः** सङ्केतसम्बन्धिन्या बुद्धेः। अपि। **सङ्केतादिलौकिकप्रमाणसापेक्षत्वेन** सङ्केतादीनि तानि लौकिकप्रमाणानीति तेषां सापेक्षत्वं तेन तद्द्वारेति यावत्। न। **अनुमानप्रकारताऽङ्गीकारात्**। अनुमानस्य प्रकारता विभेदस्तस्याः अङ्गीकारस्तस्मात्।

अत्रेदं तत्त्वम्–'चेष्टाऽपि प्रमाणान्तरमिति मतं केषाञ्चित्। यथा–'एतद्वस्त्रं दशरूप्यकमूल्यकम्, एतत्स्वर्णं षोडशाणकतोलकम्; इयं षोडशवर्षीया'इत्यादौ वस्त्रादीनां तर्जनीतोलनादिना मूल्याद्यवगमः। इति असावपि न व्यङ्ग्यबोधनक्षमा। व्यङ्ग्यस्य लौकिकप्रमाणानधीनत्वात्। व्यङ्ग्यो ह्यलौकिकोऽर्थः, प्रत्यक्षादिप्रमाणजातातन्त्रः; तत्तामालम्ब्यैत्र स्फुरणशीलत्वाभावात्। चेष्टायाः पुनः सङ्केतादिप्रमाणाधीनत्वात्। यथा हि–'एतद्वस्त्रं दशरूप्यकमूल्यकम्, एतत्परिमितत्वात्। एतत् स्वर्णं षोडशाणकतोलकमेतत्समानत्वात्। इयं षोडशवर्षीया एवम्भूताङ्गत्वात्। इति। यथा वा–इयं षोडशवर्षीया वर्धमानाम्लानपीनत्वोन्नतत्वादिप्रयोधरादिशालित्वात्, यन्नैवं तन्नैवम्। इति। इतरेषां पुनर्मते नानुमानादतिरिक्तं चेष्टानाम प्रमाणम्, तदुक्तं मुक्तावलीकारैः–'चेष्टाऽपि न प्रमाणान्तरम्, तस्याः सङ्केतग्राहकशब्दस्मारकत्वेन लिप्यादिसमशीलत्वात् शब्द एवान्तर्भावात्।। यत्र तु व्याप्त्यादिग्रहस्तत्रानुमितिरेव।'इति।

ननु तर्हि स्मृतिरेव स्याद् व्यङ्ग्यावगमस्वरूपभूतेति चेन्नेत्याह–३०२ **स्मृतिरित्यादि**।

३०२ **रसादिधी** रसादीनां व्यङ्ग्यानां धीर्बुद्धिः। च पुनः। **स्मृतिः** स्मरणं संस्कारमात्रजन्यो ज्ञानविशेषः। **न** 'सम्भवती'ति शेषः ॥ २९६ ॥

अत्रेदं निष्कृष्टम्–दृष्टानां श्रुतानां वा पदार्थानां दर्शनेन श्रवणेन वा मनोनिविष्टत्वं संस्कारस्तन्मात्रजन्यं पुनर्ज्ञानं स्मृतिरित्युच्यते। मात्रपदेन प्रत्यभिज्ञायामतिव्याप्तेर्निरासः। तथा च–अनुभूतवस्तुनः उद्बोधकसहकारेण संस्काराधीनं ज्ञानं स्मृतिरिति फलितम्। यथा हि–दृष्टं श्रुतं दृष्ट्वा श्रुत्वा वा 'स घटः, सा प्रिया'इति दृष्टश्रुतविषयकसंस्कारमात्रजन्यं ज्ञानम्। रसावतारावसरे च 'सोऽयं राम'इति ज्ञानम्, तच्च संस्कारजन्यत्वे सति प्रत्यक्षताऽवगाहि;इति नैतज्ज्ञानं स्मृतिरिति वक्तुं शक्यते। इति।

ननु तर्हि संस्कारजन्यं ज्ञानं स्मृतिरित्येवास्तु, स्मृतेर्लक्षणमित्याशङ्क्य दूषयति–**यच्चेत्यादिना**।

**यत्**। च तु। **'संस्कारजन्यत्वात्**। 'हेतो'रिति शेषः। **रसादिबुद्धिः**। **स्मृति**'र्बोध्येति' शेषः। **इती**त्थेवम्। **केचित्**। 'आहुरिति शेषः। **तत्र** तस्मिन् समर्थने। अपि। **प्रत्यभिज्ञायां** संस्कारजन्यत्वे सति प्रत्यक्षावगाहिनि ज्ञाने। **अनैकान्तिकतया** व्यभिचारितया। **हेतोः**। **आभासता** साक्षात्तयाऽवर्तमानत्वम्। नच प्रत्यभिज्ञाऽपि रसादिबुद्धिरिति वक्तुं शक्यम्, तत्र हि'सोऽयं घट'इति संस्कारजन्यज्ञानशबलितं प्रत्यक्षताऽवगाहि ज्ञानम्। अत्र पुनः 'स एवास्मि सीताविषयकरातमा'निति संस्कारजन्यज्ञानशबलितं परस्मिन्नपि स्वाभेदाध्यवसायात्मकं ज्ञानम्। अत एवैषा भावनाविशेषमहिम्ना सहृदयानामेव, नतु तत्तत्स्मृतिमात्रवतां, न वा तत्तत्प्रत्यभिज्ञावतामेव; सम्पद्यते। अत्रायं सिद्धान्तः–न ह्यभिनये साक्षाद्रामः, सीता वा; किन्तु अभिनेत्रैवोत्तम्भ्यमानस्वरूपास्ते ते। प्रत्यभिज्ञास्थले च रामः सीताऽपि वा साक्षात् न तु केनापि कल्प्यमानस्वरूपाः। तत्र पुनस्तेषां तथात्वेऽपि स्वाभेदाध्यवसायः। अत्रैतेषामेवम्भूतत्वेऽपि न स्वाभेदाध्यवसायः। असौ पुनर्दूरमास्तां किन्तु तदभेदाध्यवसायोऽपि न; 'स एवायं घट'इति ज्ञानस्य प्रत्यभिज्ञायामसम्पन्नत्वात्। अथ–श्रव्ये न कश्चिदभिनेता न च तेनोत्तम्भ्यमानोत्तम्भिता वा रामाद्यवस्था, किन्तु कविनैव उत्तम्भितमात्रस्वरूपा। नच तदर्थं श्रुत्वा बुद्ध्वा वा तत्तेषां स्मृतिस्तदा रसादिविषयिणी बुद्धिरिति वक्तुमर्हम्। तत्तदर्थं श्रुत्वाऽपि वा बुद्ध्वाऽपि वा सहृदयव्यतिरिक्तानां तत्तत्स्मृतेः कदाचित्सद्भावेऽपि रसादिविषयिण्या बुद्धेरसम्भवात्, अदृष्टाश्रुतानां च स्मृतेः प्रत्यभिज्ञायाश्च सद्भावं वक्तुमशक्यतया तथाविधानामपि तत्र

"दुर्गालङ्घित..."इत्यादौ च द्वितीयार्थो नास्त्येवेति यदुक्तं महिमभट्टेन, तदनुभवसिद्धिमपलपतो गजनिमीलिकैव। तदेवमनुभवसिद्धस्य तत्तद्रसादिलक्षणार्थस्याशक्यापलापतया तत्तच्छब्दाद्यन्वयव्यतिरेकानुविधायितया चानुमानादिप्रमाणावेद्यतया च अभिधाऽऽदिवृत्तित्रयाबोध्यतया च तुरीया वृत्तिरुपास्यैवेति सिद्धम्। इयं च व्याप्त्याद्यनुसन्धानं विनाऽपि भवतीत्यखिलं निर्म्मलम्।

तत् किन्नामिकेयं वृत्तिरित्युच्यते—

३०३ सा चेयं व्यञ्जना नाम वृत्तिरित्युच्यते बुधैः।
रसव्यक्तौ पुनर्वृत्तिं रसनाऽऽख्यां परे विदुः॥ २८७॥

---

कविनोत्तम्भितमात्रस्वरूपाणां तेषांतेषां सहृदयानां हृदये तदा सम्पद्यमानस्य कस्याप्यानन्दस्य स्मृतिव्यतिरिक्तमेव कारणम्। एतेन—व्यङ्ग्यानां वस्त्वादीनामपि ज्ञानं न स्मृतिरिति प्रतिपादितम्, तेषामपि नवनवत्वेन दृष्टश्रुतत्वाभावाच्च; स्मृतेः प्रत्यभिज्ञाया एव वा तदानीमेव वक्तुमर्हत्वात्। तेषां नवनवत्वं सुप्रत्यक्षसिद्धम्। अतः सुष्ठूक्तं केनापि कविना—"अपारे काव्यसंसारे कविरेकः प्रजापतिः। यथाऽस्मै रोचते किञ्चित्तथेदं परिवर्त्तते॥' इति। अत्राहुस्तर्कवागीशाः—"प्रत्यभिज्ञायां सोऽयमित्याकारकज्ञानेऽनैकान्तिकतया साध्यं विना विद्यमानतया हेतोः संस्कारजन्यज्ञानत्वस्याभासता व्यभिचारिता, एतच्च साधनं रसप्रतीतिकारणीभूतवासनायाः संस्कारविशेषत्ववादिमते। अतिरिक्तत्ववादिमते तु हेतोः पक्षावृत्तित्वेन स्वरूपासिद्धिरपि दोषः, नतु व्यभिचारमात्रम्। ये तु प्रत्यभिज्ञायाः स्मृतित्वापत्तिभयेन स्मृतिजन्यत्वमेव मन्यन्ते, न तु संस्कारजन्यत्वं, तन्मते व्यभिचारो न भवतीत्यवदातम्।" इति।

अथाभिधामूलां व्यञ्जनामनङ्गीकुर्वाणानां मतमाक्षिपति—"दुर्गालङ्घित.."इत्यादिना।

"दुर्गालङ्घित..." इत्यादौ। च। द्वितीयार्थोऽप्राकरणिकः शङ्कररूपोऽभिधेयातिरिक्तार्थ इति यावत्। न। अस्ति। एव। इति। यत्। महिमभट्टेन व्यक्तिविवेककृतेत्यर्थः। उक्तम्। तत्। अनुभवसिद्धिम्। अपलपतः प्रत्याचक्षाणस्य 'तस्ये'ति शेषः गजनिमीलिका गजस्य निर्मीलिका नेत्रे निर्मील्य क्रीडा। "हस्तिन इव मूर्खत्व'मिति तु तर्कवागीशाः। एव। तत्तस्मात्। एवम्। अनुभवसिद्धस्य। तत्तद्रसादिलक्षणार्थस्य तत्तद्रसादिस्वरूपस्यार्थस्य। अशक्यापलापतया न शक्योऽपलापः प्रत्याख्यानं यस्य तस्य भावस्तत्ता तया। तत्तच्छब्दाद्यन्वयव्यतिरेकानुविधायितया स च स चेति तत्तौ शब्दौ आदी यस्य (प्रतिपाद्यस्य) तस्यान्वयव्यतिरेकौ तयोरनुविधायी तस्य भावस्तत्ता तया। च। अनुमानादिप्रमाणावेद्यतया। च। अभिधाऽऽदिवृत्तित्रयाबोध्यतया। च तुरीया चतुर्थी अभिधालक्षणातात्पर्याख्यवृत्तिभ्यो व्यतिरिक्तेति भावः। वृत्तिः "व्यञ्जने"ति शेषः। उपास्या स्वीकार्य्या। एव। इति। सिद्धम्। इयं 'वृत्ति' रिति शेषः। व्याप्त्याद्यनुसन्धानम्। विना। अपि। भवति। इति। अखिलं सर्वं कथनम्। निर्म्मलं शुद्धम्। अत्राहुष्टिप्पणीकाराः—"इहान्वयव्यतिरेकदृष्टान्तेन कश्चिदेव शब्दस्तादृशार्थव्यापनेऽलङ्कर्म्मीण इति दर्शितम्। तदुक्तं ध्वनिकारैः—"सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन। यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः॥" इति, "व्यङ्ग्यव्यञ्जकाभ्यामेव हि सुप्रयुक्ताभ्यां महाकवित्वलाभो महाकवीनाम्, न वाच्यवाचकरचनामात्रेणे" ति व्याख्यातं च। इति।

अथ तुरीयां वृत्तिं निर्देष्टुमपेक्षामुपस्थापयन् प्रतिजानीते—तदित्यादिना।

तत् तस्मात्। किन्नामिका। इयमभिधाऽऽदिभ्यस्तिसृभ्योऽपि वृत्तिभ्यो विलक्षणेति शेषः। वृत्तिः। इतीत्यपेक्षायाम्। उच्यते—३०३ सा चेयमित्यादिना।

३०३ सा 'ययाऽभिधाऽऽदिप्रतिपाद्यातिरिक्तार्थः प्रत्याय्यते' इति शेषः। च। इयं 'मनुमानाद्यन्तर्भावायोग्ये'ति शेषः। व्यञ्जना। नाम। वृत्तिः। इति। बुधैः सहृदयैरालङ्कारिकैरिति भावः। उच्यते। अथ केश्चिद्र-

**एतच्च विविच्योक्तं रसनिरूपणप्रस्तावे इति सर्वमवदातम् ।**

**इति साहित्यदर्पणे व्यञ्जनाव्यापारनिरूपणो नाम पञ्चमः परिच्छेदः ।**

---

सादेरास्वादाय स्वीकृता रसनाख्यां वृत्तिमप्यत्रैवान्तर्भावमाह—**रसव्यक्तौ** रसप्रतीतौ । **पुनः** । **परे** नैयायिका इत्यर्थः । **रसनाख्याम्** । **वृत्तिम्**'एनामेवे'ति शेषः । **विदुः** । अयमभिप्रायः—रसनावृत्तिर्व्यञ्जनावृत्तिश्च न वस्तुतो विलक्षणा, किन्तु नाममात्रतः । तस्मात्, यथा—वस्त्वलङ्काराणां प्रत्ययार्थं व्यञ्जनाऽवश्यमङ्गीकार्य्या, तथा रसादेः रसनार्थं कैश्चित् स्वीक्रियमाणा रसनाख्या या वृत्तिः साऽपि न ततो विलक्षणा, अभिधाऽऽदिवत् तस्या अनियन्त्रितव्यापार-त्वात् । इति ॥ २९७ ॥

अत एव—ग्रन्थस्य पूर्वोत्तरविरोधं परिहरन्नाह— **एतच्चे**त्यादिना ।

**एतत्** । 'यत् परे विदुस्त' दिति शेषः । **च** । **रसनिरूपणप्रस्तावे** । **विविच्य** निर्णीय । **उक्तम्** । **इति** । **सर्वम्** । **अवदात**मपहतपापम् ।

प्रकरणं समापयन्नाह—**इती**त्यादि ।

**इति** । **साहित्यदर्पणे** 'श्रीविश्वनाथकविराजकृत' इति शेषः । **व्यञ्जनाव्यापारनिरूपणो** व्यञ्जनाया व्यापारनिरूपणं प्रकृत्य रचित इत्यर्थः । **नाम** । **पञ्चमः** । **परिच्छेदः** ।

न विषयोऽनुमितेर्नच यः स्मृतेः स्फुरति यः परमात्मतया सताम् ।
अनभिधेयमलक्ष्यमबोध्यम-भ्युदयितं दयितं तमुपास्महे ॥

इति श्रीशिवनाथसूरिसूनुना श्रीशिवदत्तकविरत्नेन रचितायां रुचिराऽऽख्यायां
साहित्यदर्पणव्याख्यायां पञ्चमः परिच्छेदः समाप्तः ।

# षष्ठः परिच्छेदः ।

एवं ध्वनिगुणीभूतव्यङ्ग्यत्वेन काव्यस्य भेदद्वयमुक्त्वा पुनर्दृश्यश्रव्यत्वेन भेदद्वयमाह–

**३०४ दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।**

अथ–

**३०५ दृश्यं तत्राभिनेयं**

---

स्फुरन्नानादृश्यं श्रुतिरुचिरताकीर्त्तितकलं प्रमोदस्याधानं सहृदयजनस्यान्तरनघम् ।
समस्तं प्रत्यक्षं स्फुटमुपनयन्तं शुभदशां तमेकं सर्वेषां स्थितिलयपदं नौमि कमपि ॥

यद्यपि ध्वनिगुणीभूतव्यङ्ग्ययोर्भेदप्रभेदावतारः सङ्ख्याऽतीतः, तदेवं काव्यस्य भेदावतारोऽपि तथाविध एवेति यद्यपि; तथाऽपि'प्राधान्येन व्यपदेशा भवन्ती'त्युपजीव्य ध्वनिर्गुणीभूतव्यङ्ग्यं चेति भेदद्वयमवतिष्ठते, तत्तद्भेदप्रभेदानां ध्वनित्वगुणीभूतव्यङ्ग्यत्वानपायात्; काव्यस्याप्येवं भेदद्वयमेव, एतस्य तदभिन्नत्वात्तन्मूलत्वाद्वा तदिति द्विप्रभेदस्यास्य प्रकारान्तरेण भेदान्तरं निर्देष्टुं प्रतिजानीते–एवमित्यादिना ।

**एवं** निरुक्तप्रकारेण "ध्वनिगुणीभूतयोरसङ्ख्यत्वेऽपि 'प्राधान्येन व्यपदेशा'इति नयेने"ति शेषः । **ध्वनिगुणीभूतव्यङ्ग्यत्वेन** ध्वनित्वेन गुणीभूतव्यङ्ग्यत्वेन चेत्यर्थः । ध्वन्यते प्राधान्येन व्यज्यते इति, ध्वन्यतेऽर्थो यत्रेति ध्वनिः, गुणीभूतं व्यङ्ग्यमिति, यत्र वेति तथाभूतम् । 'खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च' इत्यौणादिकशास्त्रेणेप्रत्ययः । अत्रेदं बोध्यम्–ध्वनिः काव्यं कूटस्थस्थानापन्नम्, इतरत् पुनर्जीवस्थानापन्नम् । तथा च-अनवरतं परितः प्रकाशमानं यथा परमात्मनः स्वरूपं, तथैव ध्वनिकाव्यस्य, अत एवास्य ध्वन्यमानार्थत्वेन ध्वनिरिति व्यपदेशः । ध्वनिश्चागुणीभूतव्यङ्ग्यापरपर्य्यायः प्रधानभूतस्फोटात्मकव्यङ्ग्यव्यञ्जकः शब्दः । अत्राहुः–"ननु कथं शब्दात् पदार्थवाक्यार्थावगमः ? आशुविनाशिनां क्रमिकाणां वर्णानां मेलकाभावेन क्रमादवगन्तुमशक्यत्वात् । इति चेत् ? एवम्–पूर्वपूर्ववर्णानुभवजनितसंस्कारविशेषान्तिमवर्णानुभवेन स्फोटोऽभिव्यज्यते । स च स्फुटयति प्रकाशयत्यर्थमिति, स्फोटनं वा स्फोट इत्येवं ध्वन्यभिन्न एव, असौ नित्यो ब्रह्मस्वरूपः सकलप्रत्ययप्रत्यायनशक्तः एतद्व्यञ्जकश्च वर्णात्मकः शब्दः, तत्र वृत्तिर्व्यञ्जना नाम, अभिधालक्षणातात्पर्य्याख्याभ्यो वृत्तिभ्यो भिन्ना सङ्केताद्यनुत्पत्तेः ।"इति । स एव जीवो यथा-देहादावहमित्यध्यासमहिम्नाऽभिभूतस्वरूपो गीयते, तथैव वाच्यलक्ष्यतात्पर्य्येभ्यो न्यग्भावमध्युषितः स्फोट एव गुणीभूतव्यङ्ग्यतयाऽभिधीयते । इति । **काव्यस्य** चमत्कारप्राणवाक्यात्मकस्य । **भेदद्वयं** ध्वनिरिति गुणीभूतव्यङ्ग्यं चेति द्वौ भेदौ । **उक्त्वा**'स्थित'इति शेषः । **पुनः** । 'काव्यस्ये'ति शेषः । **दृश्यश्रव्यत्वेन** दृश्यत्वेन श्रव्यत्वेन चेत्यर्थः । अत्र'श्रव्यदृश्यत्वेने'त्यनुक्त्वा तथाऽभिधानं तु प्रथमं दृश्यस्यैव प्रतिपादयिष्यमाणत्वादिति बोध्यम् । द्रष्टुं योग्यं दृश्यं, श्रोतुं योग्यं श्रव्यम्; 'ऋदुपधाच्चाक्लृपि चृतेः ।' ३।१।११० इति दृशेः क्यप् । 'अचो यत् ।' ३।१।९७ इति शृणोतेर्यति 'सार्वधातुकार्धधातुकयोः ।' ७।३।८४ इति गुणे च'वान्तोयि प्रत्यये ।' ६।१।७९ इत्यव् । **भेदद्वयम्** । द्वाववयवौ यस्येति द्वयं, भेदयोर्द्वयमिति भेदद्वयम् ततः **आह** ३०४ **दृश्यश्रव्यत्वेने**त्यादिना ।

३०४ **काव्यम्** । **पुनः** तथा ध्वनित्वगुणीभूतव्यङ्ग्यत्वाभ्यां द्विधा भियत इत्यङ्गीकारानन्तरम् । **दृश्यश्रव्यत्वभेदेन** । **द्विधा** । **मतम**ङ्गीकृतम् । 'आचार्य्यै'रिति शेषः । तथाच **काव्यं** चतुर्भेदमिति सिद्धम् ।

अथ दृश्यस्य स्वरूपकथनपुरःसरं सञ्ज्ञान्तरं निर्दिशति अथ ३०५ दृश्यमित्यादिना ।

३०५ **तत्र** तयोर्दृश्यश्रव्ययोर्मध्ये । **दृश्यं** तन्नामकं काव्यमिति भावः । **अभिनेयं** तत्सञ्ज्ञकम् । 'ज्ञेयं'मिति शेषः । अयम्भावः–अभिनेयं नाम अभिनेतुमभिनयेन दर्शयितुं शक्यं योग्यं वा यत्तत् । अभिनवश्च–'व्यञ्जकाभिनयौ

तस्य रूपकसञ्ज्ञाहेतुमाह—

**३०६ तद्रूपारोपात्तु रूपकम् ॥ २९८ ॥**

तद् दृश्यं काव्यं नटे रामादिस्वरूपारोपाद्रूपकमित्युच्यते ।

कोऽसावभिनय इत्याह—

**३०७ भवेदभिनयोऽवस्थाऽनुकारः, स चतुर्विधः ।**

**आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा ॥ २९९ ॥**

नटैरङ्गादिभी रामयुधिष्ठिरादीनामवस्थाऽनुकरणमभिनयः ।

---

समौ ।' इत्यमरोक्त्या: मनोगतभावाभिव्यञ्जकस्तत्तदवस्थाऽनुकारात्मा नृत्यविशेषः । तथा च–नाटयेन तत्तदवस्थाऽनुकरणात्मनाऽभिनीयमानं नायकादिचारितमभिनेयं, तत्स्वरूपत्वाच्च काव्यमिति फलितम् । नायकादिचरितं च 'शब्दबोध्यो व्यनक्त्यर्थः' इतिदृशा शब्दोन्नेयम् । यद्वा–अभिनेयमत्रास्तीति अभिनेयम् । अर्शादित्वादच् । एवं च–अभिनयोचितनायकादिचारिताद्यभिन्नः शब्दबोध्योऽर्थस्तच्छालि वा काव्यम् । इति फलितम् ।

कारणान्तरेण सञ्ज्ञान्तरं वक्तुं प्रतिजानीते **तस्या**भिनेयस्येत्यर्थः । **रूपकसञ्ज्ञाहेतुं** रूपकमिति सञ्ज्ञाऽन्तरं वर्त्तते, तस्य यो हेतुस्तमित्यर्थः । **आह–३०६ तदि**त्यादिना ।

३०६ **तद**भिनेयं दृश्यं काव्यमित्यर्थः । **रूपारोपाद्रू**पस्य रामादिस्वरूपस्यारोपोऽभेदेन प्रत्यायनं तस्मात् । **तु** पुनः । **रूपकं** रूपयत्यभेदेन प्रत्याययतीति तथोक्तम् । 'उच्यते' इति शेषः । 'ण्वुल्तृचौ ।' ३।१।१३३ इति ण्वुल् ॥३१९ ॥

तदेव विवृणोति–**तदि**त्यादिना ।

**तत्** 'अभिनेयापरपर्य्यायमि'ति शेषः । **दृश्यम्** । **काव्यम्**. **नटे**ऽभिनेतरि । **रामादिस्वरूपारोपा**द्रामादेर्नायकादेरारोपस्तस्मात्तं निमित्तीकृत्य प्रवृत्तत्वादिति भावः । **रूपकम्** । इतीत्येवमित्यर्थः । **उच्यते** । अयम्भावः– "यथा मुखादौ पद्मादेरारोपो रूपकं मतम् । तथैव नायकारोपो नटे रूपकमुच्यते ॥' इति नयः, अत्र च नायकपदेन नायकनायिकतदुभयवयस्यादिग्रहणं बोध्यम् । तथा–नायकाद्यारोपोऽपि न रूपकं, किन्तु तन्निमित्तीकृत्य किमपि नायकादिचरिताद्येव, अथापि अभेदोपचारादिदमुक्तम् । तथा च–मुखादौ पद्मादेरिवाभिनेतारि नायकादेरारोपमुपजीव्य प्रवृत्तं यत्तत् रूपकम् । अन्यस्मिन्नन्यत्वकल्पनमारोपः,अन्य इव भूत्वाऽन्यस्यानुकर्त्तृत्वमभिनयश्चेत्यारोपाभिनयपदार्थयोर्वैधर्म्याभावः । इदमवधेयम्–काव्यं रसप्राणः, रसो यथा न तिरोधीयेत तथैव प्रवृत्तोऽभिनयोऽभिनयः । अन्यथा सर्वमेव विरुध्येत । इति ।

एतदेव बोधसौकर्य्याय स्वयं विवरीतुं प्रतिजानीते–**असौ** 'अभिनेयमूलभूत'इति शेषः । **अभिनयः कः** किंस्वरूपः ? इत्येवञ्जिज्ञासायाम् । **आह–३०७ भवे**दित्यादिना ।

३०७ **अवस्थाऽनुकारो**ऽवस्थाया नायकादिसाधर्म्यस्यानुकारोऽनुकरणमनुकृत्य प्रत्यायनमिति यावत् तथोक्तः । **अभिनयः** । **भवेत्** । स च कतिविध इत्याशङ्कायामाह–**स** निरुक्तलक्षणोऽभिनय इत्यर्थः । **आङ्गिकः** । **च** । **वाचिकः** । **एवम्** । **आहार्य्यः** । **तथा** । **सात्त्विकः** । 'इत्येव'मिति शेषः । **चतुर्विधः** । 'बोध्यः'-इति शेषः ॥ २९९ ॥

एतदेव पुनः स्पष्टयति–**नटैः** (कर्त्तृभिः) । **अङ्गादिभि**रङ्गवचनादिभिः ( कारणैः ) । **रामयुधिष्ठिरादीनां** 'नायकादीना'मिति शेपः । **अवस्थाऽनुकरण**मवस्थायाः साधर्म्यस्यानुकरणम् इति तथोक्तम् । 'नायकादे'रिति शेषः । **अभिनयः** । 'स चाङ्गिकादिचतुर्विध'इति शेषः । इदम्बोध्यम्–दृश्यमभिनेयं रूपकं चेत्यनर्थान्तरम्, तत्र हि दृश्यं नाम द्रष्टुं योग्यं शक्यं वा, तत्त्वं चाभिनेयस्वरूपकाभिन्नमेव, एवम्–अभिनेयं नामाभिनेतुं योग्यं शक्यं

रूपकस्य भेदानाह-

३०८ नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः।
ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥ ३०० ॥

किञ्च-

३०९ नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम्।
प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ॥ ३०१ ॥
संल्लापकं श्रीगदितं शिल्पकं च विलासिका।
दुर्म्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ॥ ३०२ ॥
अष्टादश प्राहुरुप-रूपकाणि मनीषिणः।

---

वा, तत्त्वं च दृश्यत्वरूपकत्वाभिन्नम्, तथा-रूपकं नाम रूपयति अन्यसाधर्म्यमन्यत्र प्रत्याययतीति तथोक्तम्, तत्त्वमप्येवं दृश्यत्वाभिनेयत्वाभिन्नम्। तथा सति अभिधानपार्थक्यं केवलमभिधानवैलक्षण्यव्युत्पादनार्थम्। एवं दृश्यमभिनेयं रूपकं वा नाम्नैव भिन्नं, तच्चाभिनयमूलम्, अभिनयश्च नायिकादिसाधर्म्यानुकरणम्। अत एवोक्तं भरतमुनिना-"विभावयति यस्माच्च नानाऽर्थान् हि प्रयोगतः। शाखाङ्गोपाङ्गसंयुक्तस्तस्मादभिनयो मतः ॥" इति। मन्दारमरन्दकृता तु-"उत्पादयन् सहृदये रसज्ञानं निरन्तरम्। अनुकर्तृस्थितो योऽर्थोऽभिनयः सोऽभिधीयते ॥" इति। एतस्य चत्वारो भेदाः, भरतमुनिनाऽपि तथोक्तम्-"आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा। इत्येवाभिनयो विप्राः! चतुर्धा परिकीर्त्तितः ॥" इति। तत्राङ्गिको नाम, अङ्गेषु शिरोहस्तवक्षःपार्श्वकटिचरणेष्वक्षिभ्रुकुटिनासाऽधरकपोलचिबुकेषु च नियुक्त इति तथोक्तः। 'तत्र नियुक्तः।' ४।४।६९ इति ठक्। 'अङ्गैर्जयतीति, जित इति वाऽऽङ्गिकः। 'तेन दीव्यति खनति जयति जितम्।' ४।४।२ इति ठक्' इत्येके। 'अङ्गैः संस्कृत इत्याङ्गिकः। 'संस्कृतम्।' ४।४।३ इति ठक्' इत्यपरे। 'अङ्गैर्निर्वृत्त इत्याङ्गिकः। 'निर्वृत्तेऽक्षद्यूतादिभ्यः।' ४।४।१९' इति बहवः। 'अक्षद्यूतादिष्वपठितत्वात् 'निर्वृत्ते' इति योगविभागाट्ठक्' इति केचित्। वाचि नियुक्तो वाचिकः, अत्रापि पूर्ववट्ठक्। न तु-"वाचो व्याहृतार्थायाम्।' ५।४।३५ इति ठक्। अभिनयविशेषणत्वानुपपत्तेः। आह्रियते वेषादिना साम्यमधिक्रियते इत्याहार्य्यः। 'ऋहलोर्ण्यत्।' ३।१।१२४ इति ण्यत्। वेषादिना साम्यानुकरणमाहार्य्यो नामाभिनय इति तात्पर्य्यम्। सत्त्वेन जितः संस्कृतो वेति सत्त्वे वा नियुक्त इति सात्त्विकः। सत्त्वं च रजस्तमोभ्यां शून्यस्य मनसः काऽपि अवस्था, सात्त्विकश्च स्तम्भस्वेदादिभावात्माऽभिनयः। इति।

एवमभिनयं निरूप्य रूपकं विशेषतो निरूपयितुं प्रवृत्तस्तत्रतावत्तस्य भेदाभिधानं प्रतिजानीते-रूपकस्येत्यादिना। स्पष्टम्।

३०८ **नाटकम्। अथ। प्रकरणम्। भाणव्यायोगसमवकारडिमा** भाणः, व्यायोगः, समवकारः, डिमश्चेत्यर्थः। **ईहामृगाङ्कवीथ्य** ईहामृगः, अङ्कः, वीथी चेत्यर्थः। तथा-**प्रहसनम्**। इत्येवम्। **दश। रूपकाणि** मतानीति शेषः ॥ ३०० ॥

अस्य भेदान्तरं निर्दिशति-किञ्च भेदान्तरमपि निर्दिश्यते ३०९ **नाटके**त्यादिना।

३०९ **नाटिका। त्रोटकम्। गोष्ठी। सट्टकम्। नाट्यरासकम्। प्रस्थानोल्लाप्यकाव्यानि** प्रस्थानम्, उल्लाप्यम्, काव्यं चेत्यर्थः। **प्रेङ्खणम्। तथा। रासकम्। संल्लापकम्। श्रीगदितम्। शिल्पकम्।** च तथा। **विलासिका। दुर्मल्लिका। प्रकरणी। हल्लीशः।** च पुनः। **भाणिका।** इत्येवम्। **अष्टादश। उपरूपकाणि** ( कर्म्म )। **मनीषिणो** विद्वज्जनाः ( कर्त्तृ )। **प्राहुः** ॥ ३०१ ॥ ३०२ ॥

**३१० विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् ॥ ३०३ ॥**

सर्वेषां प्रकरणादिरूपकाणाम् , नाटिकाऽऽद्युपरूपकाणां च ।

**३११ नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम् ।**
**विलासर्द्ध्यादिगुणवद् युक्तं नानाविभूतिभिः ॥ ३०४ ॥**
**सुखदुःखसमुद्भूति नानारसनिरन्तरम् ।**
**पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः ॥ ३०५ ॥**
**प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान् ।**
**दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः ॥ ३०६ ॥**

---

ननु एषां किंकिं लक्षणमित्याशङ्क्य बोधसौकर्य्यायाह-३१० **विने**त्यादिना ।

३१० **विशेषं** विशेषकं लक्षणमित्यर्थः । विशिनष्टयवच्छिनत्तीति तं तथोक्तम् । पचादित्वादच् । **विना** । **सर्वेषा**मुद्दिष्टानां रूपकाणां प्रकरणादीनां नवानामुपरूपकाणां नाटिकाऽऽदीनामष्टादशानां चेत्यर्थः । **लक्ष्म** लक्षणम् । **नाटकवत्** नाटकस्येव । 'तत्र तस्येव ।' ५।१।११६ इति वतिः । **मतं** भरतादिभिरङ्गीकृतमित्यर्थः ॥ ३०३ ॥

कारिकां सुगमयितुमाह-**सर्वेषाम्**'इत्यस्यार्थ' इति शेषः । **प्रकरणादिरूपकाणां** प्रकरणादीनां नवानां रूपकाणामित्यर्थः । **च** तथा । **नाटिकाऽऽद्युपरूपकाणां** नाटिकाऽऽदीनामष्टादशानामुपरूपकाणामित्यर्थः ।

ननु तर्हि किं नाम नाटकमित्याशङ्कायामाह-३११ **नाटक**मित्यादि ।

३११ **ख्यातवृत्तं** ख्यातं महाऽनुभावैर्वर्णिततया प्रसिद्धं वृत्तं चरितं नायकादेर्यत्र तथोक्तम् । एतेन-पूर्ववर्णितमेव चरितमुपजीव्य नायकादेश्चरितं नाटके वर्णनीयमिति दर्शितम् , **पञ्चसन्धिसमन्वितं** पञ्चसन्धयो वक्ष्यमाणास्तैः समन्वितम् । **विलासर्द्ध्यादिगुणवत्** विलासः (प्रियासङ्ग उद्यानविहारादिर्वा)च ऋद्धिः(अभ्युदयः)च गुणाः (धैर्य्यादयः) चेत्येते सन्त्यस्मिन् वर्ण्यमानास्तथोक्तम् । **नानाविभूतिभि**र्नानाविभूतिभिरमात्यादिभिःसद्भिः सहायैः । **युक्तम्** । **सुखदुःखसमुद्भुति** सुखदुःखाभ्यां समुद्भूतिः समुद्भवो यत्र तथोक्तम् ।'सुखदुःखोत्पत्तिकृतम्'इति मातृगुप्ताचार्य्याः । **नानारसनिरन्तरं** नाना विविधा रसास्तैः शृङ्गारहास्यादिभी रसैर्निरन्तरं व्याप्तम् । समस्तपाठे तु-सुखं च दुःखं च समुद्भूः (मुदा हर्षेण सह वर्त्तते, इति समुद् असौ भूरिति तथोक्ता) च ऊतिश्च नानारसाश्चेति तैर्निरन्तरं व्याप्तमिति तथोक्तम् । मुत् हर्षः, भूः स्थानम् , ऊतिः रक्षा च । अवनं रक्षणमित्यूतिः 'ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च ।' ३।३।९७ इति निपातनम् । यद्वा-सुखदुःखयोः समुद्भूतिस्तया नानारसनिरन्तरमित्यर्थः । **नाटकं** नटेन निर्वृत्तो नाटः (नटकर्तृकोऽभिनयः) तेन गर्वितमिति तथोक्तम् । अत एव-'विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् ।' इत्युक्तम् । अभिनयप्रधानभूतमिति भावः । 'तेन निर्वृत्तम् ।' ४।२।६८ इत्यण् । 'अवक्षेपणे कन् ।' ५।३।९५ इति कन् । यद्वा-नाटयति अभिनयोत्कर्षमहिम्नाऽभिनयपरानिव करोतीति तथोक्तम् । **स्यात्** । **तत्र** तस्मिन्नाटके इत्यर्थः । **पञ्चादिकाः** पञ्चसङ्ख्यातो न न्यूना इति भावः । **दशपरा** दशसङ्ख्यातो नाधिका इति भावः । **अङ्का** वक्ष्यमाणलक्षणा विभागविशेषा इति तात्पर्य्यम् । अत एव मेदिनीकारेणोक्तम्-"अङ्को रूपकभेदाङ्कश्चिह्न रेखाऽऽजिभूषणे ।" इति । **परिकीर्त्तिताः** । तथा-'तत्रे'ति पूर्वतोऽन्वेति । **प्रख्यातवंशः** प्रख्यातो वंशः पितृपितामहादिपूर्वजवर्गो यस्य तथोक्तः । **धीरोदात्तो** निरुक्तलक्षणो नायकविशेषः, यद्वा-धीरोऽसावुदात्त इति तथोक्तः । विशेषणविशेष्यभावस्य प्रायिकत्वाद्विशेषणसमासः । **प्रतापवान्** दिग्विजयादिसमर्थः । **राजर्षिः** । **अथ** यद्वेति भावः । **दिव्यो** दिव्यत्वाभिमानी । **वा**ऽथवा । **दिव्यादिव्यो** दिव्यत्वेऽप्यदिव्यत्वाभिमानीत्यर्थः । **गुणवान्** गाम्भीर्य्यौदार्यादिगुणसम्पन्नः । **नायकः** । **मतः** ।

एक एव भवेदङ्गी शृङ्गारो वीर एव वा ।
अङ्गमन्ये रसाः सर्वे कार्य्यो निर्वहणेऽद्भुतः ॥ ३०७ ॥
चत्वारः पञ्च वा मुख्याः कार्य्यव्यापृतपूरुषाः ।
गोपुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्त्तितम् ॥ ३०८ ॥

ख्यातं रामायणादिप्रसिद्धं वृत्तम्, यथा रामचरितादि । सन्धयो वक्ष्यन्ते । 'नानाविभूतिभिर्युक्त'मिति महासहायम् । सुखदुःखसमुद्भूतित्वं युधिष्ठिरादिवृत्तान्तेष्वभिव्यक्तम् । राजर्षयो दुष्यन्तादयः । दिव्याः श्रीकृष्णादयः । दिव्यादिव्याः, ये दिव्या अप्यात्मनि नराभिमानिनः; यथा श्रीरामचन्द्रादयः । "गोपुच्छाग्रसमाग्र"मिति क्रमेणाङ्काः सूक्ष्माः कर्त्तव्याः इति केचित् । अन्ये त्वाहुः, यथा-गोपुच्छे केचिद्वाला ह्रस्वाः केचिद्दीर्घाः, तथेह कानिचित् कार्य्याणि मुखसन्धौ समाप्तानि, कानिचित् प्रतिमुखे, एवमन्येष्वपि कानिचित्कानिचित् । इति ।

---

एवम्-'तत्रे'ति पूर्वतोऽनुक्रान्तम् । एकः । एव । नतु बहव इति भावः । शृङ्गारः । वा । वीरः । एव नतु वीभत्साद्यन्यतमोऽप्यन्यः । अङ्गी प्रधानभूतः । भवेत् । अन्ये हास्यवीभत्सादय इत्यर्थः । सर्वे । रसाः । अङ्गमप्रधानभूताः । इदमववधेयम्-'एक एवे'त्यभिधानमुत्कर्षाधानाय, 'शृङ्गारो वीर एव वे'ति पुनः हास्यवीभत्सभयानकरौद्रमात्रव्यवच्छेदाय तेन-प्रवोधचन्द्रे शान्तस्योत्तरचरिते करुणस्य च प्राधान्यं सङ्गच्छते । उक्तं च ध्वनिकृता-"प्रसिद्धेऽपि प्रबन्धानां नानारसनिबन्धने । एको रसोऽङ्गीकर्त्तव्यस्तेषामुत्कर्षमिच्छता ॥" इति । तथा-निर्वहणे निर्वहणसन्धावित्यर्थः । उपसंहाराख्ये चरमसन्धाविति भावः । अद्भुतः । 'रस' इति शेषः । कार्य्यः । तथोक्तम्-"सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम् । निर्वहणे कर्त्तव्यो नित्यं हि रसोऽद्भुतस्तज्ज्ञैः ॥" इति । एवम्-"तत्रे" ति पूर्वतोऽन्वेति । चत्वारः । पञ्च । वा । कार्य्यव्यापृतपूरुषाः कार्य्येषु नायककर्म्मसु व्यापृताः, तेऽमी पूरुषाः पुरुषा इति तथोक्ताः । 'पुरुषाः पूरुषा नरः ।' इत्यमरः । मुख्याः प्रधानतयाऽङ्गीकृताः । 'भवन्ती' ति शेषः । एतेन-अन्येऽपि कतिचिदमुख्याः क्वापि स्युरिति सूचितम् । अत एवोक्तम्-"न महाजनपरिवारं कर्त्तव्यं नाटकं प्रकरणं वा । येनात्र कार्य्यपुरुषाश्चत्वारः पञ्च वा ते स्युः ॥" इति, "व्यायोगेहामृगसमवकारडिमसञ्ज्ञितानि काव्यानि । दशभिर्वा द्वादशभिर्वा षोडशभिर्वाऽपि पुरुषैः स्युः ।" इति च । गोपुच्छाग्रसमाग्रं गोपुच्छाग्रेण सममिति तथोक्तमग्रमग्रभागो यस्य यत्र वा तत्तथोक्तम् । तु पुनः । तस्य नाटकस्य । बन्धनं गुम्फनं रचनेति यावत् । कीर्त्तितम् ।' अत एवोक्तं मुनिना-'काव्यं गोपुच्छाग्रं कर्त्तव्यं 'बन्धमासाद्य ।' इति ॥ ३०४ ॥ ३०५ ॥ ३०६ ॥ ३०७ ॥ ३०८ ॥

बोधसौकर्य्याय कठिनांशस्य तात्पर्य्यं निर्दिशति-ख्यातम् । रामायणादिप्रसिद्धं रामायणादिषु प्रसिद्धम् । आदिना महाभारतश्रीमद्भागवतादीनां ग्रहणम् । वृत्तं चरितम् 'यत्र तत्' इति शेषः । 'वृत्तं पद्ये चरित्रे त्रिष्वतीते दृढनिस्तले ।' इत्यमरः । उदाहरति-यथा । रामचरितादि । आदिना नलयुधिष्ठिरहारिश्चन्द्रादिचरितस्य ग्रहणम् । सन्धयो मुखप्रतिमुखादयः पञ्च सप्रभेदा' इति शेषः । वक्ष्यन्ते 'मुखं प्रतिमुख' मित्यादिनेति शेषः । 'नानाविभूतिभिः । युक्तम् ।' इति । 'अस्ये' ति शेषः । महासहायं महान् सहायः महान्तो वा सहाया यत्र तत् । 'इत्यर्थ' इति शेषः । 'सुखदुःखसमुद्भूति' इति पदार्थं निर्दिशति-सुखदुःखसमुद्भूतित्वं सुखदुःखाभ्यां समुद्भूतिर्यत्र तस्य भावस्तत्त्वं तथोक्तम् । युधिष्ठिरादिवृत्तान्तेषु युधिष्ठिरहारिश्चन्द्रादिचरितेषु । अभिव्यक्तम् । राजर्षिर्दिव्यो दिव्यादिव्यो वा नायकः स्यादित्युक्तं स्पष्टयति-राजर्षयः । दुष्यन्तादयः । आदिना नलादीनां ग्रहणम् । दिव्याः । श्रीकृष्णादयः । आदिना कपिलवामननृसिंहादीनां ग्रहणम् । दिव्यादिव्या दिव्याश्च तेऽदिव्या इति तथोक्ताः । ये । दिव्याः । अपि । आत्मनि । नराभिमानिनः 'इव प्रतीयमानास्ते इत्यर्थः' इति शेषः । यथा । श्रीरामचन्द्रादयः । आदिना पृथ्वादीनां ग्रहणम् । श्रीरामचन्द्रस्य नरत्वानङ्गीकारे रावणवधाद्यसम्भव आपद्येतेति बोध्यम् । 'गोपुच्छाग्रसमाग्रम् ।' इति 'अस्ये'ति शेषः । क्रमेणानुपूर्व्येण । अङ्काः परिच्छेदाः वक्ष्यमाणलक्षणा विभागवि-

३१२ प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः।
भवेदगूढशब्दार्थः क्षुद्रचूर्णकसंयुतः ॥ ३०९ ॥
विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नबिन्दुकः।
युक्तो न बहुभिः कार्यै-र्बीजसंहृतिमान्न च ॥ ३१० ॥
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान्।
आवश्यकानां कार्य्याणा-मविरोधाद्विनिर्म्मितः ॥ ३११ ॥
नानेकदिननिर्वर्त्य-कथया सम्प्रयोजितः।
आसन्ननायकः पात्रै-र्युतस्त्रिचतुरैस्तथा ॥ ३१२ ॥

---

शेषा इति यावत्। **सूक्ष्माः**। **कर्त्तव्याः**। 'प्रथमापेक्षया द्वितीयः, द्वितीयापेक्षया तृतीय इत्येवं पूर्वपूर्वापेक्षया परः परः सूक्ष्मोऽङ्को विधेय इति भावः। 'इत्यर्थः' इति शेषः। **इति**। **केचित्** 'कार्यं गोपुच्छाग्रं कर्त्तव्यं बन्धमासाद्ये'ति भरतपद्यं व्याचक्षाणेष्वन्यतमा इति शेषः। 'आहु'रिति शेषः। **अन्ये** इतो भिन्नास्तदेव व्याचक्षाणेष्वन्यतमा इत्यर्थः। **तु** पुनः। **आहुः**। **"यथा**। **गोपुच्छे**। **केचित्**। **वालाः**। **ह्रस्वा** अदीर्घाः। **केचित्**। 'वाला' इति पूर्वतोऽन्वेति। **दीर्घा** आयताः। 'भवन्ती'ति शेषः। **तथा**। **इहास्मिन्** नाटके इत्यर्थः। **कानिचित्** 'गुम्फनानी'ति शेषः। **मुखसन्धौ**। **समाप्तानि**। **कार्य्याणि**। **कानिचित्** 'गुम्फनानि' इति शेषः। **प्रतिमुखे** तदाख्ये सन्धौ। 'समाप्तानि कार्य्याणी'ति शेषः। **एवम्**। **अन्येषु** 'गर्भविमर्शनिर्वहणेषु सन्धिषु'ति शेषः। **अपि**। **कानिचित्कानिचित्**। वीप्सायां द्विरुक्तिरियम्।" **इति**।

एवं नाटकलक्षणं निरूप्य तदंशभूतस्याङ्कस्य प्रतिपाद्यमर्थमाह–३१२ **प्रत्यक्षनेतृचरित** इत्यादिना।

३१२ **प्रत्यक्षनेतृचरितः** प्रत्यक्षं प्रत्यक्षवद्भासमानं नेतुर्नायकस्य चरितं यत्र तथोक्तः। **रसभावसमुज्ज्वलो** रसस्य भावः सद्भावस्तेन रसभावाभ्यां वा समुज्ज्वलः सम्यक् शोभमान इति भावः। **अगूढशब्दार्थो** न गूढो दुर्बोध्यः शब्दार्थौ यत्र तथोक्तः। **क्षुद्रचूर्णकसंयुतः** क्षुद्रं स्वल्पं यत् चूर्णकं सरलं गद्यं तेन संयुतः। अन्यथा बोधमान्द्यैण सभ्यानां तदास्वादो न स्यादिति तथोक्तम्। **विच्छिन्नावान्तरैकार्थो** विच्छिन्नमवान्तरमेकांशो यस्य तादृश एकांशो मुख्यप्रतिपाद्योऽर्थो यत्र तथोक्तः। महावाक्येन प्रतिपाद्यस्यार्थस्यैकांशो यत्र विभज्य वर्णितः सोऽङ्क इत्यर्थः। **किञ्चित्संलग्नबिन्दुकः** किञ्चित् संलग्नो बिन्दुर्वक्ष्यमाणलक्षणो वर्णनविशेषो यत्र तादृशः। 'शेषाद्विभाषा।' ५।४।१५४ इति कप्। **भवेत्**। 'अङ्क'इति तु प्रसङ्गप्रसक्तम्। **बहुभिरनेकैः**। **कार्य्यैर्व्यापारैः**। **युक्तः**। **न** 'भवे'दिति शेषः, तथात्वे हि वैरस्यमापद्येतेति बोध्यम्। **बीजसंहृतिमान्** बीजसंहृती अस्मिन् स्त इति तथोक्तः। बीजं प्रथमार्थप्रकृतिः, संहृतिश्च निर्वहणसन्धिः। अन्ये तु'बीजस्य ग्रन्थप्रतिरूपस्य-मूलकारणस्य संहृतिः संहारस्तद्वा'निति व्याचक्षते। **च** अपीत्यर्थः। **न**। बीजसंहृत्योर्नाङ्के विधानं श्रेय इति भावः। **नानाविधानसंयुक्तो** बहुविधैः रुचिरताऽऽपादकैर्वर्णनैः संयुक्त इत्यर्थः। अथ-**अतिप्रचुरपद्यवान्**। **न**, 'किन्तु मध्येमध्ये क्षुद्रचूर्णकवा'निति शेषः। **आवश्यकानामवश्यमनुष्ठेयानाम्**। **कार्य्याणां** सन्ध्योपासनादीनाम्। **अविरोधाद्विरोधमनुपपाद्येति** भावः। **विनिर्म्मितः** कृतरचनः। सन्ध्योपासनादीनां कर्म्मणां लोपो न दर्शनीयः, किन्तु तदर्थं कार्य्यान्तरव्याघातः प्रदर्शितः श्रेयानिति भावः। **अनेकदिननिर्वर्त्यकथयाऽनेकदिनैर्निर्वर्त्याः** समाप्या या कथा चरितं तया तथोक्तया। **न**। **सम्प्रयोजितः**, 'किन्तु दिनान्तरैरपि निर्वर्त्त्यं चरितं तथा दर्शयेत्, यथा तदानीमेव संवृत्तमिदमिति सामाजिका विभावयेयु'रिति शेषः। **आसन्ननायक** आसन्नः प्राप्तो नायको यत्र तादृशः, प्रायः–नायकोपस्थित्या सनाथीकृत इति भावः, प्राय इत्यनेन क्वचितदभावः क्वचिच्चतदभावे नायिकया अप्युपस्थितिर्न दुष्येति सूचितम्। **तथा**। **त्रिचतुरैः** त्रीणि वा चत्वारि वेति तैस्तथोक्तैः। **त्रिभिश्चतु**-

दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः ।
विवाहो भोजनं शापो-त्सर्गौ मृत्यू रतं तथा ॥ ३१३ ॥
दन्तच्छेद्यं नखच्छेद्य-मन्यद् व्रीडाकरं च यत् ।
शयनाधरपानादि नगराद्यवरोधनम् ॥ ३१४ ॥
स्नानानुलेपने चैभि-र्वर्जितो नातिविस्तरः ।
देवीपरिजनादीना-ममात्यवणिजामपि ॥ ३१५ ॥
प्रत्यक्षचित्रचरितै-र्युक्तो भावरसोद्भवैः ।
अन्तनिष्क्रान्तनिखिल-पात्रोऽङ्क इति कीर्त्तितः ॥ ३१६ ॥

बिन्द्वादयो वक्ष्यन्ते । आवश्यकं सन्ध्यावन्दनादि ।

अङ्कप्रस्तावाद्गर्भाङ्कमाह—

३१३ अङ्कोदरप्रविष्टो यो रङ्गद्वारामुखादिमान् ।
अङ्कोऽपरः स गर्भाङ्कः सबीजः फलवानपि ॥ ३१८ ॥

---

भिर्वेत्यर्थः । पात्रैः योग्यै राजमन्त्र्यादिभिर्जनैरिति भावः । 'पात्रं स्रुवादौ योग्ये च नाटकीये च पूरुषे । तीरद्वयान्तरे राजामात्येऽमत्रे च पल्वे ॥' इति गोपालः । युतः सम्पन्नः । 'अङ्कः स्यात्, अत्र चे'ति शेषः । दूराह्वानम् । वधः । युद्धम् । राज्यदेशादिविप्लवः । आदिना—नगरग्रामादिदाहनादीनां ग्रहणम् । विवाहः । भोजनम् । शापोत्सर्गौ शापश्चोत्सर्गो मलत्यागश्चेत्यर्थः । मृत्युर्मरणम् । तथा । रतं रमणम् । दन्तच्छेद्यं दन्तैश्छेद्यमिति तथोक्तम्, नायककृतं नायिकायाः कपोलयोः दन्तैर्हननमिति भावः । नखच्छेद्यम् नायककर्त्तृकं नायिकाकुचयोर्व्रणोद्भावनमिति भावः । यत् । च पुनः । अन्यत् 'एवंविधम्'इति शेषः। व्रीडाकरं लज्जोत्पादकं कर्म्म । एवम्-शयनाधरपानादि। आदिना कुचमर्दनादि । नगराद्यवरोधनं नगरादेरवरोधनं शत्रुसैनिकादिकर्त्तृकप्रतिबन्धः । आदिनेत्यन्तरोपद्रवादेर्ग्रहणम् स्नानानुलेपने स्नानं चानुलेपनं चन्दनादिना मण्डनक्रिया चेति तथोक्ते । च ( समुच्चयार्थमिदमव्ययम् ) । एभिर्दूराह्वानमित्यारभ्य स्नानानुलेपने इत्यन्तैरित्यर्थः । वर्जितः । नातिविस्तरोऽत्यन्तं विस्तरमप्राप्त यद्वा नातिविस्तरोऽत्यन्तं शब्दव्यासो यत्र तथोक्तः । 'स च शब्दस्य विस्तरः ।' इत्यमरः । 'नैकधे'त्यादिवन्नेन समासः, न तु नञा । देवीपरिजनादीनां देवी देवाङ्गना कृताभिषेका राज्ञी वेति सा च परिजनः सखीजनो दासीगणो वेति स चेत्येतावादी येषाम् (कञ्चुक्यादीनाम्)तेषाम् । 'देवी कृताभिषेकायां दुर्गायां देवयोषिति । मेदिन्यां पिशुनायां च'इति गोपालः । अमात्यवणिजाम् । अपि । भावरसोद्भवैर्भावो रत्यादिश्च रस आह्लादविशेषश्च तयोरुद्भवा उत्पत्तिस्थानभूताः तैरित्यर्थः ।'भावः सतास्वभावाभिप्रायचेष्टाऽऽत्मजन्मसु ।...रत्यादौ च'इति मेदिनी । उद्भव नमुद्भवः । 'ऋदोरप् ।' ३।३।५७ इत्यप् 'जनिरुत्पत्तिरुद्भवः ।'इत्यमरः । प्रत्यक्षचित्रचरितैः प्रत्यक्षाणि प्रत्यक्षवद्भासमानानि यानि चित्रचरितानि तैस्तथोक्तैः । 'चित्राणि चरितानि चे'ति 'चित्राणि यानि चरितानि'इति वा तैस्तथोक्तैः । चित्राणि प्रतिमूर्त्तयः । 'चित्रमद्भुत आलेख्ये प्रतिमूर्तौ नपुंसके ।'इति गोपालः । युक्तः । अन्तनिष्क्रान्तनिखिलपात्रोऽन्ते निष्क्रान्तानि निखिलानि पात्राणि नाटकीयपुरुषा यस्मात्तथोक्तः । अङ्कः । इतीत्थम्भूत इत्यर्थः । कीर्त्तितः । ॥ ३०९ ॥ ३१० ॥ ३११ ॥ ३१२ ॥ ३१३ ॥ ३१४ ॥ ३१५ ॥ ३१६ ॥

सन्देहनिवृत्तये प्राह-बिन्द्वादय इत्यादि ।

बिन्द्वादयः । आदिना बीजसंहृत्यादीनां ग्रहणम् । वक्ष्यन्ते । आवश्यकमावश्यकानामिति पदमिति भावः । सन्ध्योपासनादि । 'अभिधत्ते'इति शेषः ।

एवं नाटकस्याङ्कलक्षणं निरूप्य तदवान्तरभेदस्वरूपं गर्भाङ्कं निरूपयितुं प्रतिजानीते—अङ्कप्रस्तावादित्यादिना ।

अङ्कप्रस्तावादङ्कस्याङ्कलक्षणनिरूपणस्य प्रस्तावस्तस्मात् कारणादित्यर्थः । गर्भाङ्कम् । आह-३१३ अङ्कोदरप्रविष्टइत्यादिना ।

यथा बालरामायणे-रावणं प्रति। "कोहलः...

श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः। भवदर्थमिव निबद्धं नाट्यं सीतास्वयंवरणम् ॥ २२०॥"

इत्यादिना विरचितः सीतास्वयंवरो नाम गर्भाङ्कः।

**३१४ तत्र पूर्वं पूर्वरङ्गः, सभापूजा ततः परम्।**

**कवेः सञ्ज्ञादिकथनं नाटकस्याप्यथामुखम् ॥ ३१८ ॥**

---

३१३ यः। **अङ्कोदरप्रविष्टो**ऽङ्कस्य निरुक्तलक्षणस्य "अङ्क इति रूढिशब्दो भावैश्च रसैश्च रोहयत्यर्थान्। नानाविधानयुक्तो यस्मात्तस्माद्भवेदङ्कः॥" इति निरुक्तार्थस्योदरं मध्यं तत्र प्रविष्ट इति तथोक्तः। **रङ्गद्वारामुखादिमान्** रङ्गद्वारं सूत्रधारेण क्रियमाणं मङ्गलं तच्च, आमुखं प्रस्तावना च; इति ते आदौ यस्य तदस्मिन्नस्तीति तथोक्तः। आदिना सभापूजादेर्ग्रहणम्। **सबीजो** बीजेन सह वर्त्तमानः। बीजं च वक्ष्यते। **फलवान्** फलं नायकनिष्पाद्यप्रधानप्रयोजनम्, तदस्यास्तीति तथोक्तः। अपि एवं विशेषणचतुष्टयसम्पन्नः। **अपरो** निरुक्तलक्षणात् प्रधानभूतादङ्काद्भिन्न इति भावः। **अङ्कः**। **सः**। **गर्भाङ्को** गर्भ इवाङ्क इति तथोक्तः ॥ ३१७ ॥

उदाहरति-**यथे**त्यादिना।

**यथा**। **बालरामायणे** तदाख्ये राजशेखररचिते महानाटक इत्यर्थः। **रावणम्**। **प्रति**। **"कोहलः** तदाख्यो वाद्यविशेष उपचारात्तेन सङ्गीतप्रवर्त्तको नट इत्यर्थः।...**अनेकैर्बहुभि**"र्न तु एकेन द्वाभ्यां वे"ति शेषः। अनेकशब्दस्य द्विवाचकत्वेऽपि बहुवचनप्रत्ययान्तत्वेनेदमुक्तम्। **श्रवणैः** कर्णैः। **पेयं** पानविषयीकरणीयमास्वादनीयमिति यावत्, श्रवणैश्च याअसम्भवात् श्रोतव्यमिति भावः। **च**। **दीर्घै**रायतैरुत्सुकतया गृहीतदैर्घ्यैरिति यावत्। **बहुभिः**। **लोचनै**र्नेत्रैः। **दृश्यं** दर्शनीयम्। तस्मात्-**भवदर्थं** भवते रावणायेति तथोक्तम्। 'अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्।'* इति साधु। **इव** (उत्प्रेक्षाऽर्थमिदमव्ययम्)। **निबद्धं** रचितम् 'भवतो बहुश्रवणलोचनत्वा'दिति शेषः। **सीतास्वयंवरणं** सीतास्वयंवराख्यमिति भावः। **नाट्यं** नाटकमिति भावः। अत्रोत्प्रेक्षाऽलङ्कारः। आर्य्यावृत्तम्। तल्लक्षणं चोक्तं यथा-"स्वरा अर्द्धं चार्य्यार्द्धम्। अत्रायुङ्नज्। षष्ठो ज्। न्लौ वा न्लौचेत्यदं द्वितीयादि। सप्तमः प्रथमादि। अन्त्ये पञ्चमः। पष्ठश्च ल्।" इति।' **इत्यादिना**। **विरचितः**। **सीतास्वयंवरः**। **नाम**। **गर्भाङ्कः**। इदमवधेयम्-बालरामायणे तृतीयेऽङ्के एवं दृश्यते-"रावणः-दिष्ट्या गतं दिवसेन। भोभो प्रहस्त ! तदुच्यन्तां वैरिञ्चा मुनयः, प्रस्तूयतामिति। प्रहस्तः (नेपथ्याभिमुखमवलोक्य) भोभो भरतपुत्राः! प्रेक्षणकृते कृतक्षणः क्षणदाचरचक्रवर्त्ती तत्प्रस्तूयताम्। (प्रविश्य) कोहलः-" कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने। नमः शृङ्गारबीजाय तस्मै कुसुमधन्वने॥" रावणः-द्वादशपदेयं प्रवर्त्तिता नान्दी, तत् प्रस्तावयिष्यति। कोहलः-तत्रभवतः परमेष्ठिनो मानसभुवः प्रथमपुत्रस्य नाट्ययोनेर्भरताचार्य्यस्य कृतिरभिनवं सीतास्वयंवर इति नाटकं प्रयोक्तव्यम् अतः कमलसम्भवोपदिष्टनाट्यवेदेन स्वपौरुषपरितोषितखण्डपरशुदर्शितलास्यताण्डवप्रपञ्चचतुरेण भवता दीनमवधानमभ्यर्थये। यतः-"श्रवणैः पेयमनेकै..." रावणः-किं पुनरिदमसंस्तुतं प्रस्तूयते। कः पुनरसौ योऽयमत्र मयि रावणेऽपि सति सीतां स्वयं वृणुते ? (विमृष्य) भवतु निरङ्कुशाः कविवाचः। कोहलः (समन्तादवलोक्य) अहो राक्षसराजस्य त्रिभुवनशिरः शेखरायमाणा प्रभुशक्तिः।...। (नेपथ्ये गीयते) "प्रकटितरामाम्भोजः कौशिकवान् सपदि लक्ष्मणा नन्दी। सुरचापदमनहेतोः रयमवतीर्णः शरत्समयः॥" कोहलः॥कथमुपक्रान्तं भरतपुत्रैः, यदियं लक्ष्मणानुगतस्य भगवतो विश्वामित्रस्य प्रावेशिकी ध्रुवा तदहमप्यनन्तरकरणीयाय सज्जो भवामि (इति निष्क्रान्तः)। (प्रस्तावना)। (ततः प्रविशति विश्वामित्र रामलक्ष्मणौ च) विश्वामित्रः-अहो तत्त्वेऽभिनिविष्टं मनो जनकस्य..." इत्येवं दृश्यते एतेन "रावणं प्रति कञ्चुकी" त्युपलभ्यमानोऽपपाठ एवेति सूचितम्॥ २२० ॥

एवं नाटकीयाङ्कस्य लक्षणं सप्रभेदं दर्शयित्वा कथं तावन्नाटकमुपक्रमणीयमित्याह-३१४ **तत्रे**त्यादि।

३१४ **तत्र** तस्मिन् नाटके इति यावत्। **पूर्वं** प्रथममारम्भे इति यावत्। **पूर्वरङ्गो** वक्ष्यमाणलक्षणः कर्म्मविशेषः। 'विधातव्य' इति शेषः। **ततः परं** तनदन्तरम्। **सभापूजा** सभाया उपस्थितसत्समाजस्य पूजा प्रशं-

तत्रेति नाटके।

३१५ यं नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥ ३१९ ॥
३१६ प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि।
तथाऽप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये ॥ ३२० ॥

---

सनमिति तथोक्ता। 'विधातव्ये'ति शेषः। तत्पुनः—कवेः नाटकप्रणेतुः। **सञ्ज्ञाऽऽदिकथनं** सञ्ज्ञाऽऽदेर्नामादेः कथनं वर्णनम्। आदिना सत्यभिप्राये गोत्रादेः कथनमप्युपयुक्तमिति सूचितम्। सत्यभिप्राये एतेनाभिज्ञानशाकुन्तलादौ गोत्रादेरकथनमपि सगच्छते। एवम्—**नाटकस्य**। अपि 'सञ्ज्ञाऽऽदिकथन'मिति पूर्वतोऽन्वेति। 'कथनं कवि-सञ्ज्ञाऽऽदे'रिति पाठान्तरं तु न साधु, नाटकस्येत्यनेन तदेकांशस्य सञ्ज्ञाऽऽदेरन्वयानुपपत्तेः। **अथ**। **आमुखं** वक्ष्यमाणलक्षणा प्रस्तावनेत्यर्थः। 'विधातव्य'मिति शेषः ॥ ३१८ ॥

सन्देहापनोदायाह—**तत्रेति**। 'अस्ये'ति शेषः। **नाटके** 'इत्यर्थ'इति शेषः।

अथ तत्र तावत् पूर्वरङ्गं लक्षयति ३१५ **यदित्यादिना**।

३१५ **नाट्यवस्तुनो** नाट्यस्य नाटकस्य वस्तु प्रतिपाद्योऽर्थस्तस्येत्यर्थः। **पूर्वम्**। **रङ्गविघ्नोपशान्तये** रङ्गे नृत्यस्थाने विघ्ना जायमाना नटादिदुरदृष्टविलसितरूपा उपद्रवास्तेषामुपशान्तिरुपशमनं तस्यै तथोक्तायै। **कुशीलवाः** सूत्रधारप्रभृतयो नटाः। "कुशीलवस्तु वाल्मीकौ नटयाचकयोरपि।" इति मेदिनी। **यम्**। **प्रकुर्वन्ति** प्रस्तुवन्ति आचरन्तीति यावत्। **सः**। **पूर्वरङ्गः**। **उच्यते**। "यद्यपि—पूर्वं रज्यतेऽस्मिन्निति पूर्वरङ्गः, नाट्यशालेत्येवार्थो मुख्यः तथाऽपि उपचारात् तत्स्थं कर्म्मापि तथा व्यपदिश्यते।" इति केचित्, अन्ये त्वाहुः "पूर्वो रङ्गः पूर्वं क्रियमाणो गानादिनिष्पाद्यः कर्म्मविशेष इति पूर्वरङ्गः, "रङ्गो। नृत्ये रणभुवि गाने नृत्याङ्गणेऽपि च। वङ्गे मल्लनियुद्धो तद्भूमौ च" इति गोपालः। तदेवं पूर्वरङ्गशब्दोऽत्र न लाक्षणिकः।" इति ॥ ३१९ ॥

नन्वत्र किमवश्यं विधेयमित्याह ३१६ **प्रत्याहारादिकानीत्यादि**।

३१६ **अस्य** पूर्वरङ्गस्येत्यर्थः। **यद्यपि**। **प्रत्याहारादिकानि**। **भूयांसि** बहूनि। **अङ्गानि**। 'सन्ती'ति शेषः। **तथाऽपि**। **विघ्नोपशान्तये**। **अवश्यम्**। **नान्दी**। **कर्त्तव्या**। अत्रेदं बोध्यम्—"प्रत्याहारोऽवतरणं तथा ह्यारम्भ एव च। आश्रावणा वक्त्रपाणिस्तथा च परिघट्टना। संस्वदना ततः कार्य्या मार्गसारित एव च। ज्येष्ठम-ध्यकनिष्ठानि तथैवासारितानि च ॥ ततः सर्वैस्तु कुतुपैः संयुक्तानीह कारयेत्। एतानि तु बहिर्योगान्यन्तर्जवनिकागतैः ॥ प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि च। ततः सर्वैस्तु कुतुपैः संयुक्तानीह कारयेत ॥ विघादन्तर्जवनिकां वृत्त-पाठ्यकृतानि च। गीतानां भद्रकादीनां योज्यमेकं तु गीतकम्। वर्धमानमथापीह ताण्डवं यत्र युज्यते। ततश्चोत्थापनं कार्य्यं परिवर्त्तनमेव च ॥ नान्दीशुष्कावकृष्टे च रङ्गद्वारं तथैव च। चारी चैव ततः कार्या महाचारी तथैव च ॥ प्ररो-चना च त्रिगतं पूर्वरङ्गे भवन्ति हि। एतान्यङ्गानि कार्य्याणि पूर्वरङ्गविधौ द्विजाः ॥ एतेषां लक्षणमहं व्याख्यास्याम्य-नुपूर्वशः। कुतुपस्य सविन्यासः प्रत्याहार इति स्मृतः ॥ तथाऽवतरणं प्रोक्तं गायकानां निवेशनम्। परिगीतक्रिया-ऽऽरम्भ आरम्भ इति कीर्त्तितः ॥ आतोद्यरञ्जनाऽर्थं च भवेदाश्रावणाविधिः। वाद्यवृत्तिविभागार्थं वक्त्रपाणिर्विधीयते ॥ तन्त्रीयकरणार्थं तु भवेच्च परिघट्टनम् ॥ तथा पाणिविभागार्थे भवेत्संस्वदनाविधिः॥ तन्त्रीभाण्डसमायोगान् मार्गसारितमि-ष्यते। कालपातविभागार्थं भवेदासारितक्रिया ॥ कीर्त्तनाद्देवतानां च ज्ञेया गीतविधिक्रिया ॥...यस्मादुत्थापयन्त्यत्र प्रयोगं नान्दि ( न्दी ) पाठकाः। पूर्वमेव तु रङ्गेऽस्मिन् तस्मादुत्थापनं स्मृतम् ॥ यस्माच्च लोकपालानां परिवृत्त्य चतुर्दिशम्। वन्दनानि प्रकुर्वन्ति तस्माच्च परिकीर्त्तनम् ॥" इत्येवं भरतादिभिरभिहितानि यद्यपि बहूनि पूर्वरङ्गे विधेयानि प्रत्याहा-रादीन्यङ्गानि, तथाऽपि न तेषां तथाऽऽवश्यकी स्थितिः प्रार्थनीया, यथा नान्द्याः। इति ॥ ३२० ॥

**तस्याः स्वरूपमाह-**

**३१७ आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते ।**
**देवद्विजनृपादीनां तस्मान्नान्दीति सञ्ज्ञिता ॥ ३२१ ॥**
**मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।**
**पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैर्युता ॥ ३२२ ॥**

---

ननु कीदृशीयं तर्हि नान्दीत्यतस्तत्स्वरूपमभिधातुं प्रतिजानीते-**तस्या इत्यादिना ।**

**तस्या** नान्द्या इत्यर्थः 'अस्या' इति पाठान्तरम् । **स्वरूपं** लक्षणम् । **आह-३१७ आशीरित्यादिना ।**

३१७ **यस्मात्** । 'कारणात्' इति शेषः । **देवद्विजनृपादीनाम्** । आदिना-गुरुप्रभृतीनां ग्रहणम् । **आशीर्वचनसंयुक्ता**ऽऽशीर्वचनमाशीर्वादस्तेन संयुक्ता । **स्तुतिः** । **प्रयुज्यते** । **तस्मात्** । **नान्दी** । इति । **सञ्ज्ञिता** । अयम्भावः-"नन्दन्ति यस्मात्सर्वेऽपि तस्मान्नान्दीति कीर्त्यते । पूज्यानां स्तवनं तत्र तथाऽऽशीर्वचनं महत् ॥" इत्युक्त्या पूज्यानां देवादीनां स्तवनं, तेषां पराभ्युदयार्थं चाशंसनं नान्दीसञ्ज्ञायां कारणम्, नान्दी हि नन्दनापरपर्यायस्यानन्दस्य लाभरूपा । इति । अत एव-**मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी** मङ्गल्यं मङ्गलहेतुभूतं वस्तु च शङ्खश्च चन्द्रश्चाब्जं कमलं च कोकौ चक्रवाकौ च कैरवं कुमुदं चेति तानि शंसतीत्येवंशीलेति तथोक्ता । 'मङ्गले साधु' इति मङ्गल्यम् "तत्र साधु" ४ । ३ । ९८ इति यत् । मङ्गल्यं च स्रक्चन्दनादीति बोध्यम्, तेन-'मध्याह्नार्कमरीचिकास्विव पयःपूरो यदज्ञानतः खं वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति । यत्तत्त्वं विदुषां निमीलति पुनः स्रग्भोगिभोगोपमं सान्द्रानन्दमुपास्महे तदमलं स्वात्मावबोधं महः ॥" इत्यादौ स्रगादिपदविन्यासेन नान्दीत्वमव्याहतम् । वस्तुतस्तु-नायं नियमः, यत्-शङ्खादीनां शंसनेनैव नान्दीत्वमिति, किन्तु एतद्दिग्दर्शनम्, एतेन यथातथं सूत्रधारकर्तृकं स्तवनादिरूपं मङ्गलाचरणं नान्दीति दरमुकुलितनयनं सनयनैरवधेयम् । तथा-**द्वादशभि**र्द्वादशसङ्ख्याकैः । **पदै**रवान्तरवाक्यरूपैः सुप्तिङन्तरूपैः पादरूपैर्वा शब्दैरित्यर्थः । तथोक्तं नाट्यप्रदीपकृता-"श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे । परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे ॥" इति, "पदं शब्दे च वाक्ये च..श्लोकपादेऽपि च क्लीवम्.." इति मेदिनीकरेण च, 'शब्दे सुबन्ते तिङन्ते वा । वाक्येऽवान्तरवाक्ये ।' इति विवृतिकृता च । **युक्ता** । **वा**ऽथवा । **अष्टाभि**रष्टसङ्ख्याकैः । **पदै**रवान्तरवाक्यैः सुप्तिङन्तैः पादरूपैर्वा । **युता** । 'उत' इति पाठान्तरम् । तदेवं षड्विधा नान्दी, तत्राद्या यथा-"नमोऽस्तु सर्वदेवेभ्यो १ द्विजातिभ्यस्ततो नमः २ । जितं सोमेन देवेन (वै राज्ञा) ३ शिवं गोब्राह्मणाय च ४ ॥ ब्रह्मोत्तरं तथैवास्तु ५ हता ब्रह्मद्विषस्तथा ६ । प्रशास्त्विमां महाराजः पृथिवीं च ससागराम् ७ ॥ राष्ट्रं प्रवर्धतां चैव ८ रङ्गस्याशा समृध्यतु ९ । प्रेक्षाकर्तुर्महान् धर्म्मो भवतु ब्रह्मभाषितः १० ॥ काव्यकर्तुर्यशश्चापि धर्म्मश्चापि प्रवर्धताम् ११ । इज्यया चानया नित्यं प्रीयन्तां सर्वदेवताः १२ ॥" इति । द्वितीयोदाहृतैव ग्रन्थकृता । तृतीया यथा, मालतीमाधवे-"सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हित्रासान्नासाऽग्ररन्ध्रं १ विशति फणिपतौ भोगसङ्कोचभाजि । २ गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे शूलपाणेर्वैनायक्यश्चिरं ३ वो वदनविधुतयः पान्तु चीत्कारवत्यः ॥ ४ चूडापीडकपालसङ्कुलगलन्मन्दाकिनीवारयो ५ विद्युत्प्रायललाटलोचनपुटज्योतिर्विमिश्रत्विषः ६ । पान्तु त्वामकठोरकेतकशिखासन्दिग्धमुग्धेन्दवो ७ भूतेशस्य भुजङ्गवल्लिवलयस्तन्नद्धजूटाजटाः ८ ॥ पक्ष्मालीपिङ्गलिम्नः कण इवतंडितां यस्य कृत्स्नः समूहो ९ यस्मिन् ब्रह्माण्डसीषद्विघटितमुकुले कालयज्वा जुहाव । १० आर्चिर्निष्टप्तचूडाशशिगलितसुधासारझङ्कारिकोणं ११ तार्त्तीयीकं पुरारेस्तदवतु मदनप्लोषणं लोचनं वः ॥" १२ इति । तुर्य्या यथा-"आनन्दं विदधातु पद्मवसतिः, १ शम्भुः शिवं यच्छतु २ श्रीनाथः श्रियमातनोतु ३ तनुतां सीतापतिर्वाञ्छितम् ४ । हेरम्बः कुरुतामविघ्नमनघं ५ वाग्ब्रह्मविद्योततां ६ व्यासोक्तं तदुदेतु वस्तु ७ भरतो नाट्येऽस्तु नः कौतुकी ८ ॥" इति (पद्मवसतिर्ब्रह्मा लक्ष्मीर्वा) । पञ्चमी यथा, महावीरचरिते-"अथ १ २ स्वस्थाय देवाय ३ नित्याय ४ हतपाप्मने ५ । त्यक्तक्रमविभागाय ६ चैतन्यज्योतिषे ७ नमः ८ ॥" इति । (अत्र हतपाप्मतयाऽऽशीर्वचनम्) । षष्ठी पुनरुदाहृतैव ग्रन्थकृता ॥ ३२१ ॥ ३२२ ॥

अष्टपदा यथा, अनर्घराघवे–

"निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः
कोकप्रीतिचकोरपारणपटुज्योतिष्मती लोचने।
याभ्यामर्द्धविबोधमुग्धमधुरश्रीरर्द्धनिद्रायितो–
नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः॥ २२१॥'
विरमति महाकल्पे नाभीपथैकनिकेतनं–
स्त्रिभुवनपुरः शिल्पी यस्य प्रतिक्षणमात्मभूः।
किमधिकरणा कीदृक् कस्य व्यवस्थितिरित्यसा–
वुदरमविशद् द्रष्टुं तस्मै जगन्निधये नमः॥२२२॥" इति।

द्वादशपदा यथा, मम तातमापानां पुष्पमालायाम्–

---

दिङ्मात्रमुदाहर्त्तुमुपक्रमते–अष्टपदेत्यादिना।

अष्टपदाऽष्टौ पदानि पादा यस्यां तथाभूता। 'नान्दी'ति प्रसङ्गानुप्रसक्तम्। अनर्घराघवे तदाख्ये श्रीमुरारिमिश्रकृते नाटके इत्यर्थः। यथा–( भगवतोलोचनाभ्याम् ) "याभ्याम्। अर्द्धविबोधमुग्धमधुरश्रीरर्द्धविबोधोऽर्द्धविकासस्तेन मुग्धा रमणीया मधुराऽमृतवर्षिणी श्रीः शोभा यस्य तादृशः। सूर्य्याचन्द्रमसयोर्युगपदुदय इव ययोरेकदैव पाते इति भावः। अत एव–अर्द्धनिद्रायितोऽर्द्धनिद्र इवावस्थितः। नाभीपल्वलपुण्डरीकमुकुलो नाभी पल्वलमिव तस्य पुण्डरीकं श्वेतकमलं तस्य मुकुलः कलिकेति तथोक्तः। कम्बोः शङ्खस्य। सपत्नीकृतः सदृशीकृतः। 'ते'इति शेषः। भगवतः। कौमोदकीलक्ष्मणः कौमोदकी स्वनामधन्या गदैव लक्ष्म धार्य्यत्वेन सम्पद्यमानं चिह्नं यस्य तस्य तथोक्तस्य। गदाधरस्येति भावः। कोकप्रीतिचकोरपारणपटुज्योतिष्मती कोकयोश्चक्रवाकयोः प्रीतिराश्लेषसम्भवः प्रमोदः, सा च चकोरस्य तदाख्यस्य पक्षिणः पारणमुपवासनियमत्यागपुरःसरं भोजनं, तच्चेति तयोः पटुनी चतुरे क्षमे इति यावत्, तादृशे ये ज्योतिषी प्रकाशौ ते विद्येते अनयोरिति तथोक्ते ( सूर्य्यश्चक्रवाकयोः सङ्घट्टयिता, चन्द्रश्चन्द्रिकया च चकोरममृतं विधत्ते, चकोरश्चन्द्रिकया कृतार्थितश्चाङ्गारानपि भक्षयितुं प्रवर्त्तते, दिवोपवासं च जहातीति कविसमयमुपादायेदमभिहितम् ) सूर्य्याचन्द्रमसरूप इति भावः। "कोकश्चक्रश्चक्रवाकः" इत्यमरः। लोचने नयनयुगलम्। निष्प्रत्यूहं निर्गतः प्रत्यूहो विघ्नो यस्मिन् कर्म्मणि तद् यथा तथेति भावः। 'विघ्नोऽन्तरायः प्रत्यूह' इत्यमरः। उपास्महे आराधयामः। अत्र शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं यथोक्तम्, "सूर्य्याश्वैर्मसजै–स्ततः सगुरवः शार्दूलविक्रीडितम्॥२२१॥"इति॥"महाकल्पे महाप्रलयावसरे।'संवर्त्तः प्रलयः कल्प'इत्यमरः। विरमति निवर्त्तमाने सति। नाभीपथैकनिकेतनो नाभी तदाख्यमुदराङ्गं तस्याः पथः पन्था द्वारमिति यावत्, स एवैकं मुख्यं निकेतनं निवासभूमिर्यस्य तथोक्तः। 'वाटः पथश्च मार्गश्च'इतित्रिकाण्डशेषः। 'वेश्म सद्म निकेतनम्।' इत्यमरः। त्रिभुवनपुरस्त्रिभुवनमेव पूर्नगरं तस्याः। 'पूः स्त्री पुरीनगर्यौ वा' इत्यमरः। शिल्पी रचनचतुरः।'कारुः शिल्पी' इत्यमरः। समस्तपाठे तु त्रिभुवनस्य पुरःशिल्पी प्रथमनिर्म्माता प्रजापतीनां मुख्य इति भावः। असौ। आत्मभूः स्वयम्भूर्ब्रह्मेति यावत्। 'ब्रह्माऽऽत्मभूः' इत्यमरः। कस्य। कीदृक् कीदृशी। किमधिकरणा किमधिकरणमधिकार आधार इति यावत्, यस्यास्तादृशी। व्यवस्थितिर्व्यवस्था। इति इतिकृत्वेत्यर्थः। प्रतिक्षणं पुनःपुनः। द्रष्टुं नयनविषयीकर्त्तुं स्फुटं ज्ञातुमिति यावत्। यस्य। उदरम्। अविशत् प्रविवेश। तस्मै। जगन्निधये जगतां भूर्भुवःस्वरिति सञ्ज्ञितानां लोकानां निधिर्निधानं तस्मै तथाभूताय। कुक्षिस्थसमस्तलोकायेति भावः। नमः। अत्र हरिणीवृत्तम्, तथोक्तं "नसमरसला गः षड्वेदैर्हयैर्हरिणी मता।' इति। इदं बोध्यम्–षष्ठीयं नान्दी, अत्र च कोकादीनामानन्दहेतुकताऽऽदिप्रदिपादनेनाशीराशंसनम्। इति॥२२२॥"इति। द्वादशपदा द्वादशपदानि सुप्तिङन्तरूपाः शब्दा यत्र तादृशी। 'नान्दी'ति प्रकृतम्। यथा। मम। तातपादानां पूज्यपितॄणां चन्द्रशेखराणाम्। 'कृता'विति शेषः। पुष्पमालायां

"शिरसि धृतसुरापगे स्मरारावरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री।
अथ चरणयुगानते स्वकान्ते स्मितसरसा भवतोऽस्तु भूतिहेतुः ॥२२३॥" इति।

एवमन्यत्र। एषा नान्दीति कस्यचिन्मतानुसारेणोक्तम्, वस्तुतस्तु-पूर्वरङ्गस्य रङ्गद्वाराऽभिधानमङ्गम्। यदुक्तम्-

"यस्मादभिनयो ह्यत्र प्राथम्यादवतार्य्यते।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ॥" इति।

उक्तप्रकारायाश्च नान्द्या रङ्गद्वारात्प्रथमं नटैरेव कर्त्तव्यतया महर्षिणा निर्देशः कृतः।

---

तदाख्ये रूपके इत्यर्थः। "**शिरसि** मस्तके। **धृतसुरापगे** धृता सुरापगा देवनदी गङ्गेति यावत् येन तादृशे। सतिसप्तमीयम्। **स्मरारौ** कामान्तके महेश्वरे इति यावत्। **अरुणमुखेन्दुरुचिः** अरुणा मुखमिन्दुरिवेति तस्य रुचिः कान्तिर्यस्यास्तथोक्ता (सुरापगायाः सपत्नीत्वाद् कान्तकर्त्तृकं शिरसा लालनमक्षममित्युक्तम्)। **अथ** सपदि तथा प्रियाप्रणयमानावगमानन्तरमिति भावः। **स्वकान्ते** स्वप्रेयसि तस्मिन् स्मरारावित्यर्थः। **चरणयुगानते** चरणयोर्युगं द्वन्द्वमानतस्तथाभूते। 'क्षन्तव्योऽयं ममापराध'इति चरणोपान्ते प्रणते सतीति भावः। **स्मितसरसा** स्मितेन मन्दहासेन सरसा प्रकटितप्रणयेति तथोक्ता। **गिरीन्द्रपुत्री** गिरीन्द्रस्य पर्वताधिराजस्य हिमालयस्येति यावत् पुत्रीति तथोक्ता, पार्वतीत्यर्थः। **भवतः** तव सभ्यजनस्येति यावत्। **भूतिहेतुः** भूतीनां सम्पदां हेतुः तत्स्वरूपेति भावः। **अस्तु** भवतु। आशिषि लोट्। द्वितीयेयं नान्दी। अत्र च भगवतः स्मरारेरपि वशीकरणमहिम्ना देव्या अलौकिकसौन्दर्य्यद्योतनानुपदं सौभाग्यातिशयो ध्वनितः, तथा सति तस्याः स्वभावतोऽपि महनीयैश्वर्य्यायाः सम्पदर्थमाशीराशंसनं नितान्तमुपयुक्तम्। पुष्पिताग्रावृत्तम्, तथोक्तम् "पुष्पिताग्रा नौ यौं, न्जौ ज्रौग्।" इति पिङ्गलाचार्य्यैः॥" इति ॥२२३॥

उदाहरणान्तरविषये प्राह-**एवमित्यादि**।

**एवं** यथाऽत्रोदाहृता तथेत्यर्थः। **अन्यत्र** 'मुद्राराक्षसादावपि नान्द्युदाहृता बोध्ये'ति शेषः।

ननु रत्नावलीमालविकाग्निमित्रादौ इतोऽधिकपदा न्यूनपदा च नान्द्युपलभ्यते तत् कथमयं नियमः सङ्गच्छते इत्याशङ्क्य व्यवस्थां दर्शयति-**एषेत्यादिना**।

**एषा** "निष्प्रत्यूहमुपास्महे" इत्यादिनोदाहृतेत्यर्थः। 'एत' दिति पाठान्तरे तु "निष्प्रत्यूहमुपास्महे" इत्यादिपठनमित्यर्थः। **नान्दी। इति। कस्यचित्** नाट्यप्रदीपकाराद्यन्यतमस्येत्यर्थः। **मतानुसारेण** सिद्धान्तानुसारेण। **उक्तम्। वस्तुतस्तु। पूर्वरङ्गस्य। रङ्गद्वाराभिधानं** रङ्गद्वारं नाम। **अङ्गम**वयवः। अयम्भावः-"निष्प्रत्यूहमुपास्महे" इत्यादौ नान्दीलक्षणं सङ्गच्छते इत्येषैव नान्दीति न सर्ववादिसम्मतं मतम्, पूर्वरङ्गस्य रङ्गद्वारनाम्नोऽङ्गस्यात्र वस्तुतया सद्भावात्। अत एव-"एकैश्वर्य्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः, कान्तासम्मिश्रदेहोऽप्यविषयउदितो यः परस्ताद् यतीनाम्। अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः॥" इत्यादौ अष्टपदाद्वादशपदान्यतमायाः नान्द्या लक्षणासद्भावेऽपि न क्षतिः। इति। इत्यन्ये, ( इत्युच्यते ) इति पाठाधिक्यं तु चिन्त्यम्।

तदेव प्राचां संवादेन सिद्धान्तयति-**यदित्यादिना**। **यत्** यतः। **उक्तम्**। किमित्याह-"**यस्मात्** 'कारणादि'ति शेषः। **अत्रा**स्मिन्नाटके इति यावत्। 'सूत्रधारेण क्रियमाणे मङ्गले' इत्यन्ये। **प्राथम्यात्** प्रथमत इत्यर्थः। **अभिनयः। अवतार्य्यते** विधीयते। **अतः** तस्मात्। **वागङ्गाभिनयात्मकं** वागङ्गाभ्यां निष्पाद्योऽभिनय इति, स आत्मा स्वरूपं यस्य तथोक्तम्। मयूरव्यंसकादित्वान्मध्यमपदलोपः। **रङ्गद्वारं** रङ्गारम्भः। **ज्ञेयम्**॥" इति।

ननु किमर्थं दर्शितं नान्दीलक्षणमित्याशङ्क्याह-**उक्तेत्यादिना**।

**उक्तप्रकारायाः। च। नान्द्याः। रङ्गद्वारात्** रङ्गारम्भात्। **प्रथमम्। नटैः** 'सूत्रधारादिभिः' इति शेषः। **एव। कर्त्तव्यतया। महर्षिणा** भरताचार्य्येणेत्यर्थः। **निर्देशः। कृतः।** "नान्दी शुष्काऽवकृष्टा च रङ्गद्वारं तथैव च।" इत्यादिनेति शेषः। इदं तत्त्वम्-अष्टपदा द्वादशपदा वा या नान्दी सा तु 'नान्द्युत्तरं शुष्काङ्गं ततः

कालिदासादिमहाकविप्रबन्धेषु च-

"वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी,
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथाऽर्थाक्षरः।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते,
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥ २२४ ॥"

एवमादिषु नान्दीलक्षणायोगात्। उक्तं च "रङ्गद्वारमारभ्य कविः कुर्यात्" इत्यादि। अत एव प्राक्तनपुस्तकेषु "नान्द्यन्ते सूत्रधारः" इत्यनन्तरमेव "वेदान्तेषु" इत्यादिश्लोकलेखनं दृश्यते, यच्च पश्चात् "नान्द्यन्ते सूत्रधार" इति लेखनं तस्यायमभिप्रायः, "नान्द्यन्ते सूत्रधार इदं प्रयोजितवान्" "इतःप्रभृति मया नाटकमुपादीयते" इति च कवेरभिप्रायः।

---

परमवक्तव्याङ्गं, ततोऽप्यनन्तरं रङ्गद्वार' मित्याद्युक्तदिशा पूर्वमेव नटैः क्रियते न तस्याः प्रयोगः प्रख्याप्यते, अत एव रत्नावल्यादौ न निरुक्ता नान्दी लक्ष्यते, नान्दीलक्षणानुक्रान्ततया प्रतीयमानत्वं तु अनर्घराघवादौ रङ्गद्वाराङ्गभूतं मङ्गलम्, न पुनर्वस्तुतो नान्दी। इति।

तदेव स्थूणानिखननन्यायेन द्रढयति-**कालिदासादिमहाकविप्रबन्धेषु**। आदिना श्रीहर्षादेर्ग्रहणम्। **च**-

"**रोदसी** स्वर्गं पृथिवीं चेत्यर्थः। "भूद्यावौ रोदस्यौ रोदसी च ते।" इत्यमरः। **व्याप्य**। **स्थितम्**। **यम्**। **वेदान्तेषु** वेदसिद्धान्तेषु। **एकपुरुषम**द्वितीयमात्मानमिति भावः। **आहुः** 'तत्त्वज्ञा' इति शेषः। **यस्मिन्**। **ईश्वर** ईशितुं शीलमस्यास्तीति तथोक्तः। 'स्थेशभासपिसकसो वरच्।' ३।२।१७५ इति वरच्। **इति** एवम्भूतः। **यथा-ऽर्थाक्षरो**ऽर्थमनतिक्रम्य वर्तमानान्यक्षराणि पदघटका वर्णा यस्य तथोक्तः। **शब्दः**। **अनन्यविषयो** नान्यो विषयो यस्य तादृशः। य एवेश्वर इति भावः। **नियमितप्राणादिभि**र्नियमिता वशीकृताः प्राणादयो यैस्तैस्तथोक्तैः। आदिनेन्द्रियमनोग्रहणम्। **मुमुक्षुभिः** 'संसारकारागारा'दिति शेषः। **यः**। **च**। **अन्त**रात्मनि, नतु परत्र। **मृग्यते**-ऽन्विष्यते चिन्त्यते इति यावत्। **सः**। **स्थिरभक्तियोगसुलभः** स्थिरेऽनन्यविषयतया परमां काष्ठां प्राप्त इति वा सुदृढो यो भक्तियोगो भक्तिरेव योग इति तथाभूतः तेन सुलभः। यः केवलं भक्त्या लभ्य इति भावः। **स्थाणु**रविक्रियमाणस्वरूपतया स्थायी शङ्कर इति यावत्। 'स्थो णुः (उ०)।' इति णुः। **वो** युष्माकम्। **निःश्रेयसाय** कल्याणाय तत्सिद्धये इति यावत्। 'निःश्रेयसं तु कल्याणमोक्षयोः शङ्करे पुमान्।' इति मेदिनी। **अस्तु**। विक्रमोर्वशीयं पद्यमेतत्। अत्र शार्दूलविक्रीडितं वृत्तम् "सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्।" इति च तल्लक्षणम् ॥ २२४ ॥"

**एवमादिषु** 'इत्येवमादिषु' इति पाठान्तरम्। **नान्दीलक्षणायोगा**न्नान्द्या लक्षणं तस्या योगोऽसम्बन्धस्तस्मात्। 'रङ्गद्वाराभिधानमेवेदमङ्गम्, न तु नान्दीय'मिति शेषः।

ननु माभूदियं नान्दी, किन्तु कथमेतदारभ्य केन नाटकं प्रयोज्यते इत्याशङ्कायामाह-**उक्तम्**। चापीत्यर्थः "**रङ्गद्वारम्**। **आरभ्य**। **कविः**। **कुर्यात्** मङ्गलमाचरेत् इति भावः।" **इत्यादि**।

ननु 'निष्प्रत्यूहमुपास्महे" इत्यादिर्न वस्तुतो नान्दी तत् कथं तत् पुरस्तात् 'नान्द्यन्ते' इत्यादिग्रन्थः सङ्गच्छते? इत्यत आह-**अतः**। **एव**। **प्राक्तनपुस्तकेषु**। '**नान्द्यन्ते**। **सूत्रधारो** नटेषु मुख्यः।' **इत्यनन्तरम्**। एव नतु ततः पूर्वमित्यर्थः। "**वेदान्तेषु...**" **इत्यादिश्लोकलेखनम्**। आदिना "निष्प्रत्यूहमुपास्महे" इत्यादीनां ग्रहणम्। 'लिखन' मिति पाठान्तरं तु पाणिनीयानुगतत्वादसाधु। नहि कुटादिष्वेतस्य पाठः। **दृश्यते**। अतः-आपाततो यत्र नान्दीलक्षणं प्रतीयतेऽपि न तत्र नान्दी, किन्तु रङ्गद्वाराङ्गभूतं मङ्गलाचरणमेवेति निष्कृष्टोऽर्थः।

ननु कथं पुनरर्वाचीना एवं लिखन्ति कथं वा साम्प्रतं तथा पाठ उपयुज्यते इत्याह-**यत्**। **च**। **पश्चात्** 'निष्प्रत्यूहमुपास्महे..' इत्याद्यनन्तरमित्यर्थः। "**नान्द्यन्ते**। **सूत्रधारः**।" **इति**। **लेखनम्**। 'दृश्यते' इति शेषः। **तस्य** तथा लेखनस्येति भावः। **अयम्**। **अभिप्रायः**। "**नान्द्यन्ते सूत्रधारः** सूत्रं प्रयोगानुष्ठानं धारयति स्वतन्त्रतया सञ्चालयतीति तथोक्तः प्रधानभूतो नटः। तथोक्तम्-"नाट्योपकरणादीनि सूत्रमित्यभिधीयते।

**३१८ पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते ।**
**प्रविश्य स्थापकस्तद्वत् काव्यमास्थापयेत्ततः ॥ ३२३ ॥**
**दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ।**
**सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा ॥ ३२४ ॥**

काव्यार्थस्य स्थापनात् स्थापकः । तद्वदिति, सूत्रधारसदृशगुणाकारः । इदानीं पूर्वरङ्गस्य सम्यक् प्रयोगाभावात् एक एव सूत्रधारः सर्वं प्रयोजयतीति व्यवहारः । स स्थापको दिव्यं वस्तु दिव्यो भूत्वा, मर्त्यं मर्त्यो भूत्वा, मिश्रं च दिव्यमर्त्ययोरन्यतरो भूत्वा सूचयेत् । वस्त्वितिवृत्तम् ।

---

सूत्रं धारयतीत्यस्मात्सूत्रधारो निगद्यते ॥" इति । इदं पूर्वरङ्गाङ्गभूतं मङ्गलाचरणमिति भावः । प्रयोजितवान् ।" इतीति शेषः । "इतःप्रभृति । मया । नाटकम् । उपादीयते सम्पाद्यते ।" इति । च पुनः । कवेः । अभिप्रायः । 'सूचित' इति तु पाठाधिक्यमनर्थम् । अत्र तर्कवागीशाः प्राहुः—"तथा च यत्र नान्यस्ति, रङ्गद्वारं नास्ति तत्र तन्त्रेण सैव रङ्गद्वारम् । यत्र रङ्गद्वारमेवास्ति, नतु नान्दी; तत्र सा फलानुमेया । यत्र त्वारम्भे बहवः श्लोकास्तत्र श्लोकद्वयं ( श्लोकत्रयं वा ) नान्दी, अपरे रङ्गद्वारम्; इत्यवधेयम् ।" इति । वयं त्वेवं प्रतीमः—नान्दीलक्षणं सम्भवतु, न वा सम्भवतु; "निष्प्रत्यूहमुपास्महे" इत्यादि, "वेदान्तेषु" इत्यादि "पादाग्रस्थितया" इत्यादि च सर्वमेव रङ्गद्वारम् । नान्दी तु ततः पूर्वमेवानुष्ठिताऽनुमेयेति ।

अथ नान्द्या अनन्तरं कर्त्तव्यं निर्दिशति—३१८ पूर्वरङ्गमित्यादिना ।

३१८ **पूर्वरङ्गं** निरुक्तलक्षणं कर्म्मविशेषम् । **विधाय** । **एव** । **सूत्रधारो** नटराजः । **निवर्त्तते** नेपथ्यान्तः प्रविशति । **ततस्तदनन्तरम्** । **तद्वत्** सूत्रधारवत् 'कोऽपि नट' इति शेषः । **प्रविश्य** सभायामुपस्थायेत्यर्थः । **स्थापकः** स्थापयति काव्यमिति तथोक्तः सन्निति भावः । यद्वा—'तद्वत् स्थापकः प्रविश्ये' त्यन्वयो बोद्धव्यः । **काव्यं** दृश्यकाव्यमुपचारात्तदीयं वस्तु इत्यर्थः । **आस्थापयेत्** सभापूजादिपुरःसरं प्रवर्त्तयेत् । कथमित्याह—**सः** स्थापकः सूत्रधारानुकारी नट इत्यर्थः । **दिव्यमर्त्ये** दिव्यं लोकोत्तरं च मर्त्यं लौकिकं चेत्यर्थः । 'वस्तुनी, बीजे, मुखे, पात्रे, चे'ति शेषः । **तद्रूपो** दिव्यरूपो मर्त्त्यश्चेत्यर्थः । 'सूचये' दिति पुरस्तात् । **तयोर्दिव्यमर्त्त्ययोरित्यर्थः** । **मिश्रम्** । **वस्तु** इतिवृत्तम् । **वा** । **बीजं** कारणविशेषम् । **अथापि** । **मुखम्** । **वा** । **पात्रम्** । **अन्यतरो** भिन्नो न दिव्यो न वा मर्त्यः, किन्तु तदुभयात्मेति भावः । 'भिन्नार्थका अन्यतर एकस्त्वोऽन्येतरावपि ।' इत्यमरः । 'भूत्वे'ति शेषः । **सूचयेत्** ॥ ३२३ ॥ ३२४ ॥

कारिकाऽर्थं सुगमयति—काव्यार्थस्येत्यादिना ।

**काव्यार्थस्य** काव्यस्य रूपकस्यार्थः प्रतिपादनीयं वस्तु तस्य । **स्थापनात्** स्थापकत्वादिति भावः । **स्थापकः** । **तद्वत्** । इत्यस्येति शेषः । **सूत्रधारसदृशगुणाकारः** सूत्रधारेण सदृशा गुणाकारा यस्य तथोक्तः । गुणैराकारेण च सूत्रधारायमाण इत्यर्थः । गुणाश्च यथोक्ताः—"चतुरातोद्यनिष्णातोऽनेकभाषाविचक्षणः । नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित् ॥ नानागतिप्रचारज्ञो रसभावविशारदः । नाट्यप्रयोगनिपुणो नानाशिल्पकलाऽन्वितः ॥ छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः । तत्तद्गीतानुगलयकलातालावधारणः ॥ अवधाय प्रयोक्ता च योक्तॄणामुपदेशकः । एवं गुणगणोपेतः सूत्रधारोऽभिधीयते ॥" इति मातृगुप्ताचार्य्यैः । ("पूर्वसदृश...")२।१।३१ इति तृतीयासमासः । )'इत्यर्थ' इति शेषः । ननु सूत्रधारः सूत्रधारायमाणश्चेति व्यवहारः कथं न तर्हि साम्प्रतमुपलभ्यते ? इत्याशङ्क्याह—**इदानीमस्मिन् समये** इत्यर्थः । **पूर्वरङ्गस्य** निरुक्तलक्षणस्य कार्य्यस्येत्यर्थः । **सम्यक्** निरुक्तलक्षणानुगततयेति भावः । **प्रयोगाभावात्** प्रयोगाननुष्ठानात् । **एकः** । **एव** 'नतु पृथग्भूतोऽपी' ति शेषः । **सूत्रधारः** । **सर्वं** स्वकर्त्तव्यं स्वानुकारिकर्त्तव्यं चेत्यर्थः । **प्रयोजयति** । **इति व्यवहारः** । तत्पदं व्याचष्टे—**सः** । **स्थापकः** । **दिव्यः** । **भूत्वा** । **दिव्यम्** । **वस्तु** । एतद्बीजादीनामुपलक्षणम् । **मर्त्यः** । **भूत्वा** । **मर्त्यम्** । 'वस्त्वादि' इति शेषः । **दिव्यमर्त्त्ययोः** । **अन्यतरः** । **भूत्वा** । **च** । **मिश्रम्** 'वस्त्वादि' इति शेषः । **सूचयेत्** । वस्तुपदं व्याचष्टे—**वस्तु** । **इतिवृत्तम्** ।

यथोदात्तराघवे–

"रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम्।
तौ सुग्रीवविभीषणावनुगतौ नीतौ परामुन्नतिं
प्रोत्सिक्ता दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः॥ २२५॥"

बीजं यथा रत्नावल्याम्–

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः॥ २२६॥" इति।

अत्र हि समुद्रे प्रवहण (वहित्र) भङ्गमग्नोत्थितताया रत्नावल्या अनुकूलदैवलालितो वत्सराजगृहप्रवेशो यौगन्धरायणव्यापारमारभ्य रत्नावलीप्राप्तौ बीजम्।

---

उदाहरति–यथा। उदात्तराघवे तदाख्ये नाटके इत्यर्थः। "रामो मूर्ध्नि..." इत्यादौ।

"रामः। गुरोः पितुर्दशरथस्येत्यर्थः। 'गुरुस्त्रिलिङ्गयां महति..पित्रादौ सुरमन्त्रिणि॥' इति मेदिनी। आज्ञां "वने चतुर्दशसमा निवस, भरतश्च राज्यं प्रशास्तु" इत्यनुज्ञाम्। मालां पुष्पादिमालामिवेत्यर्थः। इव। मूर्ध्नि मस्तके। निधाय स्थापयित्वा। काननं वनम्। "गहनं काननं वनम्" इत्यमरः। अगात् गतवान्। तद्भक्त्या तस्य तथा प्रथितयशसो रामस्य ज्येष्ठभ्रातुरित्यर्थः, भक्तिस्तया। भरतेन रामानुजेनेत्यर्थः। मात्रा कैकय्याख्यया जनन्या। सह। एव। अखिलमप्रतिहतचक्रं समस्तं वेत्यर्थः। राज्यम् 'मात्राग्रहात् पित्रा दीयमान' मिति शेषः। उज्झितं परित्यक्तम्। प्राप्तमपि न स्वस्वामित्वं तत्राभिमतमिति भावः। अनुगतौ शरणागतौ। तौ बन्धुबहिष्कृतावित्यर्थः। सुग्रीवविभीषणौ (कर्मपदमिदम्)। पराम्। उन्नतिम्। नीतौ प्रापितौ 'रामेणे' ति शेषः। 'णीञ्' इति द्विकर्म्मको धातुः। प्रोत्सिक्ता अत्यन्तं दुर्म्मदाः। दशकन्धरप्रभृतयो दश कन्धरा ग्रीवा उपचारान्मस्तकानि यस्य स तथोक्तः, प्रभृतिर्येषां (वाल्यादीनाम्) ते तथोक्ताः। रावणादय इत्यर्थः। समस्ताः। द्विषः शत्रवः। ध्वस्ताः विनाशिताः। 'रामेणे' ति शेषः। शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं च यथा–"शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्यऋषयः।" इति॥ २२५॥"

इदमवोध्यम्–अत्र रामस्य चरितं सर्वमेव प्रायः सङ्क्षेपेण बोधितम्, तथाहि–'मात्रे'त्यनेन कैकेय्या यद्घटितं तेन तस्या दुष्टत्वं भरतस्य च तत्रासम्पर्कित्वम्, 'ध्वस्ताः'इत्यनेन'उज्झितम्'इत्यनेन च दशाननादिनिहननपूर्वकं पुना राज्यग्रहणादि च। इति दिक्।

बीजमुदाहरति–बीजम्। यथा। रत्नावल्यां तदाख्यायां नाटिकायाम्। "द्वीपात्.."इत्यादौ।

"अभिमुखीभूतोऽनुकूलतां प्राप्त इति भावः। विधिर्दैवमित्यर्थः। "विधिर्विधाने दैवेऽपि"इत्यमरः। अन्यस्मात् स्वसन्निहितद्वीपतो भिन्नादित्यर्थः। अपि "किं पुनस्तस्मादेव"इति शेषः। द्वीपात्। यथा–जम्बुद्वीपाद्भिन्नः शाककुशक्रौञ्चशाल्मलिप्लक्षपुष्करान्यतमः, शाकद्वीपात्पुनर्जम्बुकुशाद्यन्यतम इति दिक्। जलनिधेः समुद्रस्य। मध्यात्। अपि"किं पुनस्तन्निकटात्"इति शेषः। दिशः पूर्वाद्यन्यतमायाः काष्ठाया उपचारात्तदुपलक्षितस्य दविष्ठदेशस्येत्यर्थः। अन्तात्। अपि"किम्पुनर्निकटात्"इति शेषः। आनीय प्रापय्य। झटिति विना विलम्बम्। अभिमतं वाञ्छितमर्थमिति भावः। घटयति सङ्गमयति। अत्रार्य्याछन्दः"यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्य्या॥"इति च तल्लक्षणम्। इति॥ २२६॥"

लक्ष्यं स्फुटयति–हि यतः। अत्रास्मिन्नुदाहृते"द्वीपादन्यस्मात्"इति पद्ये इति भावः। समुद्रे। प्रवहणभङ्गमग्नोत्थितायाः प्रवहणं प्रवाहो जलौघस्य जवात्सञ्चार इति यावत्, तस्य भङ्गस्तरङ्गस्तेन मग्नोत्थिता पूर्वं मग्ना पश्चादुत्थिता तस्यास्तथोक्तायाः। 'प्रवहणे'त्यस्य स्थाने 'वहित्रे'ति पाठान्तरे तु वहित्रस्य जलयानस्य नौकादेरिति भावः, भङ्गो भेदस्तेन मग्नोत्थिता तस्या इत्यर्थः। "भङ्गस्तरङ्गे भेदे च रुग्विशेषे पराजये। कौटिल्ये भयविच्छित्त्योः"

मुखं श्लेषादिना प्रस्तुतवृत्तान्तप्रतिपादको वाग्विशेषः । यथा—

"आसादितप्रकटनिर्म्मलचन्द्रहासः प्राप्तः शरत्समय एष विशुद्धकान्तिः ।
उत्खाय गाढतमसं घनकालमुग्रं रामो दशास्यमिव सम्भृतबन्धुजीवः ॥ २२७ ॥" इति ।

पात्रं यथा, शाकुन्तले—

'तवास्मि गीतरागेण हारिणा प्रसभं हृतः । एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा ॥२२८॥" इति ।

---

इति हैमः । रत्नावल्यास्तदाख्याया नायिकाया इत्यर्थः । **अनुकूलदैवलालितोऽ**नुकूलं प्रतिकूलतापरित्यागपुरःसरं सहायकतां प्राप्तं यत दैवं भाग्यं तेन लालितोऽनुमोदित इति तथोक्तः । **वत्सराजगृहप्रवेशो** वत्सराजस्य तदाख्यस्योदयनोपनामकस्य गृहं तत्र प्रवेशः । **यौगन्धरायणव्यापारं** यौगन्धरायणस्य सूत्रधारस्य कनीयसा भ्रात्रा गृहीतनेपथ्यविशेषस्य तथा कल्पितनाम्नः कस्यचिद्रत्नावल्या वृत्तान्ताभिज्ञस्य व्यापारो यत्नस्तम् । **आरभ्य । रत्नावलीप्राप्तौ । बीजम् ।** 'सूचित'मिति शेषः । अयम्भावः—रत्नावल्यां हि एवं दृश्यते—नव्या—स्वदुहितुर्दूरस्थितेन नायकेन कथं पाणिग्रहणं भविष्यतीत्युद्वेगावेदनानन्तरं सूत्रधारेण "द्वीपादन्यस्मा"दित्यादिनाऽऽश्वासनम् । अनन्तरं पुनः "नेपथ्ये । साधु एवमेतत् कः सन्देहः" इत्यनुमोदनं तदनु यौगन्धरायणस्य प्रवेशः । तेन च तदनुमोदनपुरःसरं रत्नवल्याः प्राप्तौ विध्यनुकूलताया बीजत्वमुद्घोषितम् । तथा च—तत्प्रभृति यद्यदनुष्ठितं तत्सर्वं तद्बीजाङ्कुरभूतमिति विदितं विदुषाम् । इति ।

मुखमुदाहर्त्तुं प्रवृत्तस्तल्लक्षयति—मुखमित्यादिना ।

**मुखम् ।** 'नामे'ति शेषः । **श्लेषादिना ।** आदिना समासोक्त्यप्रस्तुतप्रशंसादेर्ग्रहणम् । **प्रस्तुतवृत्तान्तप्रतिपादकः** प्रस्तुतः प्रकरणप्राप्तोऽसौ वृत्तान्तस्तस्य प्रतिपादक इति तथोक्तः । **वाग्विशेषः । यथा—"आसादित..."** इत्यादौ ।

**"आसादितप्रकटनिर्म्मलचन्द्रहास** आसादितः सम्पादितः प्रकटं प्रत्यक्षं निर्म्मल ( : ) चन्द्र ( स्य ) हासो ( विकाशो ) येन ( रामपक्षे तु आसादितो बलादपहृत्य गृहीतः, प्रकटं निर्म्मलः ( शाणोल्लिखितः ) चन्द्रहासो रावणखड्गो येन ) तथोक्तः । "चन्द्रहासोऽसिमात्रके । दशग्रीवकृपाणे चे"ति हैमः । **विशुद्धकान्तिः** विशुद्धा स्वच्छा घनापायेनानावृतेति यावत् अन्यत्र तु पवित्रा कान्तिर्नक्षत्रादिज्योतिः (अन्यत्र शोभा) यत्र (अन्यत्र यस्य) इति तथोक्तः । **सम्भृतबन्धुजीवः** सम्भृता पुष्टिं ( विकाशं ) नीता बन्धुजीवा बन्धूका उपचारात्तत्पुष्पाणि ( अन्यत्र तु सम्भृतो देवेन्द्रद्वाराऽमृतवर्षणेन बन्धुषु : सङ्ग्रामे हतेषु वानरभल्लेषु मित्रेषु जीवो जीवितं येन ) तथोक्तः । **एषः । शरत्समयः । रामो** रामचन्द्रः । **दशास्यं** रावणम् । **इव । गाढतमसं** गाढं निबिडं तमो ध्वान्तम् ( अन्यत्र तमोगुणो ज्ञानं वा ) यत्र ( अन्यत्र यस्य तं ) तथोक्तम् । 'राहौ ध्वान्ते गुणभिदि मौढये शोके तमो मतम् ।' इति गोपालः । अत एव—**उग्रं** पङ्काद्युत्पादनेन ( अन्यत्र दुर्जेयतया भयङ्करम् ) । **घनकालं** वर्षाकालम् । **उत्खाय** परिहृत्य ( निहत्य वा ) । **प्राप्तः ।** वसन्ततिलकं वृत्तम् । तल्लक्षणं चोक्तं यथा—"उक्तं वसन्ततिलकं तभजा जगौ गः ।" इति । अत्र श्लेषोत्थापितयोपमया नाटकीयस्यार्थस्य सूचनम् ॥ २२७ ॥" इति ।

पात्रमुदाहरन्नाह—पात्रमित्यादि ।

**पात्रं** नायकरूपो योग्यः पुरुष इति भावः । **यथा । शाकुन्तलेऽ**भिज्ञानशाकुन्तले—"तवास्मि.."इत्यादौ ।

**"अतिरंहसाऽ**तिवेगवता । **हारिणा** दूरमाकृष्य प्रापकेण । **सारङ्गेण** मृगेण । 'सारङ्गः पुंसि हरिणे चातके च मतङ्गजे ।' इति मेदिनी । **एषः । दुष्यन्तस्त**दाख्य इत्यर्थः । **प्रसभं** बलात् । **हृतः । राजा । इव । हारिणा** मनोहारिणा **तव** नव्या इत्यर्थः । **गीतरागेण** गीतस्वरेण । **अतिरंहसाऽ**तित्वरया । **प्रसभम् । हृतः । अस्मि ।** 'अहं'मित्यर्थेऽव्ययमिदम् । सूत्रधारस्येयमुक्तिः । पथ्यावक्त्रं वृत्तम्, तल्लक्षणं यथोक्तम्—"यचतुर्थात् । पथ्या युजोज् ।" इति । उपमानतया दुष्यन्तस्य राजर्षेः प्रस्तवानुपदं तथैवोपस्थितिरिति स्फुटमुपमानव्याजेन पात्रस्य वर्णनम् ॥ २२८ ॥" इति ।

**३१९ रङ्गं प्रसाद्य, मधुरैः श्लोकैः काव्यार्थसूचकैः ।**
**रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्त्तयेत् ॥ ३२५ ॥**
**ऋतुं च कञ्चित् प्रायेण भारतीं वृत्तिमाश्रितः ।**

स स्थापकः। प्रायेणेति क्वचिदृतोरकीर्त्तनमपि, यथा रत्नावल्याम्। भारती वृत्तिस्तु—

**३२० भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः ॥ ३२६ ॥**

संस्कृतबहुलो वाक्प्रधानो व्यापारो भारती ।

---

अथान्यदपि कर्त्तव्यं निर्दिशति—३१९ **रङ्गमित्यादिना** ।

३१९ **भारतीं** भरतस्येयमिति तां तथोक्ताम्, भरतेन प्रवर्त्तितामत एव तथाख्यातामिति भावः। **वृत्तिं** रचनाविशेषशैलीम्। **आश्रितोऽ**नुसृतः। **सः** स्थापकः सूत्रधारस्थानापन्नो नट इति यावत्। **रङ्गं** सभास्थानं तत्स्थाज्जनानिति यावत्। **प्रसाद्या**नुमोद्य प्रशंस्येति यावत्। **काव्यार्थसूचकैः** काव्यस्य रूपकस्य नाटकाद्यन्यतमस्येति भावोऽर्थः प्रतिपाद्यं वस्तु तं सूचयन्तीति, तस्य सूचका इति वा तैस्तथोक्तैः। **मधुरै**र्मृदुलपदरमणीयतया श्रुतिरमणीयैरिति भावः। **श्लोकैः** उपचारात् क्वचिद्गद्यैः क्वचिद्वा गद्यश्लोकैश्चेत्यर्थः। बहुवचनमविवक्षितम्। **रूपकस्य**। **कवेः** रूपकप्रणेतुः। **आख्यां** नाम। **गोत्रादि**। आदिना पित्रादिनामविद्याविशेषाभिज्ञत्वादि गृह्यते। **अपि** ( एतत्स्वारस्येन गोत्रादेः प्रायिकत्वं सूच्यते )। **कञ्चित्** कमपि। **च**। **ऋतुं** वसन्ताद्यन्यतममेकं तदानीन्तनं समयमिति भावः। **प्रायेणा**धिक्येन। **कीर्त्तयेत्** ॥ ३२५ ॥

कारिकाकठिनांशं सुगमयति—**स** इत्यादिना ।

**सः** 'इत्यस्ये'ति शेषः। **स्थापकः**। 'इत्यर्थ' इति शेषः। **प्रायेण**। इति 'अभिहितेने'ति शेषः। **क्वचित्** कस्मिंश्चिद्रूपके इत्यर्थः। **ऋतोः**। **अकीर्तनम्**। **अपि** 'न दोषावह'मिति शेषः। उदाहरति—**यथा**। **रत्नावल्याम्**।

इदमवोध्यम्— सभायाः प्रशंसनमल्पं महद्वा प्रथमं विधेयम्, अनन्तरं रूपकस्य नाम पद्येन गद्येन तदुभयेन वा काव्यार्थसूचकेन कीर्त्तनीयम्, एवं च रूपकस्य तन्नामैव तथाविधं विधातव्यं, येन यथा तत्प्रतिपाद्यं वस्तु सहृदयहृदयगोचरतां प्रतिपद्येतेति लब्धम्। तच्च रूपकं येन विहितं तस्य कवेर्नाम तदानीमप्रसिद्धौ गोत्रादि अन्यथा यथाकामं सूचनीयम्। अत एव—अभिज्ञानशाकुन्तलादौ कविगोत्रादेरकीर्त्तनम्,उत्तररामचरितादौ च कीर्त्तनं सङ्गच्छेते इति हृदयम्। अथ—ऋतोः कीर्त्तनं प्रायिकमिति तु स्फुटमभिहितमेव ग्रन्थकृता, अत एव नोत्तररामचरिते। अथापि तस्य सूचनमद्येत्यादिना प्रायः सर्वत्र। यथा रत्नावल्यामपि 'अद्याहं वसन्तोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः' इति, उत्तररामचरिते 'अद्य खलु भगवतः कालप्रियानाथस्य यात्रायामार्य्यमिश्रान् विज्ञापयामि'इति, प्रबोधचन्द्रोदये च—'तदद्य राज्ञः श्रीकीर्त्तिवर्म्मणः पुरस्तादभिनेतव्यं भवता ।' इति। एवमन्यत्रापि। इति दिक्।

अथ भारतीं वृत्तिं लक्षयितुमुपक्रमते—**भारतीत्यादिना** ।

**भारती** भरतसम्बन्धिनी भरतेन प्रवर्तितेति यावत्। **वृत्तिर्व्यापारः**। **तु** पुनः 'उच्यते'इति शेषः। **३२० भारतीत्यादिना** ।

३२० **नटाश्रयः** 'नराश्रय'इति'जनाश्रय'इति वा पाठान्तरे नरजनशब्दाभ्यां नटस्यैव ग्रहणम्। **संस्कृतप्रायः** प्रायेण बाहुल्येन संस्कृतः। आहिताग्न्यादित्वात् विभाषया परनिपातात् साधु। संस्कृतेन वा प्रायः सदृशः एतेन विदूषकाद्याश्रयत्वे क्वचित् प्राकृतस्याप्युपयोगः सूचितः। **वाग्व्यापारो**'न त्वङ्गव्यापारो न वा मनोव्यापारः'इति शेषः। **भारती** 'वृत्ति'रिति शेषः ॥ ३२६ ॥

तदेव समवगमयति—**संस्कृतबहुल** इत्यादिना ।

**संस्कृतबहुलः** संस्कृतेन बहुलः। **वाक्प्रधानः**। **व्यापारः**। **भारती**'नाम वृत्ति'रिति शेषः।

**३२१ तस्याः प्ररोचना वीथी तथा प्रहसनामुखे ।**

**अङ्गानि—**

**३२२ अत्रोन्मुखीकारः प्रशंसातः प्ररोचना ॥ ३२७ ॥**

**प्रस्तुताभिनयेषु प्रशंसातः श्रोतॄणां प्रवृत्त्युन्मुखीकरणं प्ररोचना । यथा रत्नावल्याम्—**

**"श्रीहर्षो निपुणः कविः, परिषदप्येषा गुणग्राहिणी,**
**लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम् ।**
**वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-**
**र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥२२९॥"**

**वीथीप्रहसने वक्ष्येते ।**

---

अस्या अङ्गान्याह—३२१ **तस्या** इत्यादिना ।

३२१ **तस्या** भारत्या वृत्तेरित्यर्थः । **प्ररोचना** । **वीथी** । **तथा** । **प्रहसनामुखे** प्रहसनं चामुखं चेति तथोक्ते । **अङ्गानि** मतानीति शेषः ।

तत्र तावत्प्ररोचनामाह—३२२ **अत्रे**त्यादिना ।

३२२ **अत्रै**षु प्ररोचनाऽऽदिष्वङ्गेष्वित्यर्थः । **प्रशंसातः** । **उन्मुखीकारः** 'सभ्याना'मिति शेषः । **प्ररोचना** ॥ ३२७ ॥

तदेव विवृणोति—**प्रस्तुताभिनयेष्वि**त्यादिना ।

**प्रशंसातः** "प्रशंसा तु द्विधा ज्ञेया चेतनाचेतनाश्रया । चेतनास्तु कथानाथकविसभ्यनटाः स्मृताः ॥ अचेतनौ देशकालौ कालो मधुशरन्मुखः ॥" इत्यादिना सुधाकरकारादिनाऽऽम्नातद्वैविध्यात् प्रशंसनादिति भावः । **श्रोतॄणाम्** । **प्रस्तुताभिनयेषु** । विषये सप्तमीयम् । **प्रवृत्त्युन्मुखीकरणं** प्रवृत्तौ उन्मुखीकरणम् उत्कण्ठीकरणम् । **प्ररोचना** 'नाम भारत्या वृत्तेरङ्ग'मिति शेषः ।

उदाहर्त्तुमुपक्रमते—**यथे**त्यादिना ।

**यथा** । 'प्ररोचने'ति प्रसङ्गानुप्रसक्तम् । **रत्नावल्यां** तदाख्यायां नाटिकायामित्यर्थः । **"श्रीहर्ष"** इत्यादौ ।

"**श्रीहर्ष**स्तन्नामा नृपतिरिति भावः **निपुण**श्चतुरः । **कविः** । 'प्रयोगस्यैतस्य रचयिते'ति शेषः । **एषा** 'श्रीहर्ष-कृतिं च द्रष्टुमुपस्थिते'ति शेषः । **परिष**त्सभा । 'समज्या परिषद्गोष्ठी सभासमितिसंसदः ।' इत्यमरः । **अपि** पुनः । **गुणग्राहिणी** । **वत्सराजचरितं** वत्सराजस्योदयनापरनामधेयस्य रत्नावलीनायकस्य नृपतेरिति भावः, चरितं रत्नावल्यामभिनेयत्वेन प्रतिपादितं चरित्रमिति तथोक्तम् । **च** । **लोके** जगति । 'लोकस्तु भुवने जने ।' इत्यमरः । **हारि** मनोहरं चेतसि प्रसादसम्पादकमिति यावत् । **नाट्ये** नृत्यगीतवाद्यत्रयविषये इति भावः । 'तौर्य्यत्रिकं नृत्यगीतवाद्यं नाट्यमिदं त्रयम् ।' इत्यमरः । **च** । **दक्षा** निपुणाः । **वयं** 'नटा' इति शेषः । **इह**ास्मिन् स्थाने । **एकैक**मेकमेकमित्यर्थः । **अपि** । **वस्तु** । **वाञ्छितफलप्राप्तेः** । **पदं** स्थानभूतम् । **किम्** । **पुनः** । **मद्भाग्योपचयात्** मम ( सूत्रधारस्य ) भाग्यं सुफलोन्मुखं प्रारब्धं कर्म्म तस्योपचय उदयस्तस्मात् । **अयम्** । **सर्वः** । **गुणानाम्** । **गणः** समुदायः । **समुदितः** । सूत्रधारस्येयमुक्तिः । शार्दूलविक्रीडितं वृत्तम्, तल्लक्ष्म यथोक्तम्, "शार्दूलविक्रीडितं म्सौ ज्सौ तौ गादित्यर्कयः ॥" इति ॥ अत्रेदं स्फुटम्, श्रीहर्षादीनां नैपुण्याद्यभिधानेन सर्वेषामुन्मुखीकरणात्प्ररोचना नाम भारत्या वृत्तेरङ्गम् । इति ॥२२९॥

अङ्गान्तरविषये प्राह—**वीथी**.. इत्यादिना ।

**वीथीप्रहसने** वीथी प्रहसनं चेत्यर्थः । 'भारत्या अङ्गभूते' इति शेषः । **वक्ष्येते** । अत्रेदमवोद्धव्यम्— यद्यपि वीथीं प्रहसनं च रूपकविशेषरूपेणैव निरूपयिष्यति, न तु प्ररोचनामिव स्वातन्त्र्येण, तथाऽपि तत्र तत्र प्रतिपाद्यमेवास्या अङ्गं विभावनीयम्, अत एवोक्तं कविराजैः—**वीथीप्रहसने वक्ष्येते** इति, दशरूपकृता "वीथी प्रहसनं वाऽपि स्वप्रस-

**३२३ नटी विदूषको वाऽपि पारिपार्श्विक एव वा।**
**सूत्रधारेण सहिताः सँल्लापं यत्र कुर्वते ॥ ३२८ ॥**
**चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः।**
**आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि सा ॥ ३२९ ॥**

---

क्षेऽभिधास्यते।' इति च। तत्र यथोक्ता वीथी 'आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः।' इति, प्रहसनं पुनः 'भवेत् प्रहसनं वृत्तं निन्द्यानां कविकल्पितम्।...' इति। तथा च—'चित्रे यत्रोक्तिप्रत्युक्ती स्यातामाकाशभाषितैः। कथञ्चिद्वाऽप्यनेकार्थसूचनं वीथिका च सा॥ भवेत् प्रहसनं यत्र हास्याधानाय धृष्टता। विरुद्धैर्वेषवाक्केलिचेष्टितैर्वा प्रसादनम्॥' इति तयोर्लक्षणे विविक्ते बोद्धव्ये। वीथी तावद् यथा बालरामायणे—" (आकाशे कर्णं दत्त्वा) किं ब्रूथ? विलक्षणेन सता कर्णाटनटेन तेन निर्म्मर्य्यादमिदमुदितम्। यदुताखण्डप्रसरा हि पुरुषकाराः कर्णाटानाम्। तथाहि—'अहमेष हरिष्यामि परिणेतुः पुरोऽपि ताम्। नारीपरिभवं सोढुं दाक्षिणात्या न शिक्षिताः॥' (अञ्जलिं बद्ध्वा) तदिदं मयाऽपि निवेद्यते यदि हि परिणयामि—'अपि द्वीपान्तरादेष हृतां प्रत्याहरामि ताम्। कलत्रहरणे पुंसां कियदर्णवलङ्घनम्॥' इति।...(सहर्षम्) अनुकूलं हि दैवं सर्वस्मै स्वस्ति करोति, यत प्रस्तुतसंवादी देवादेशः।...' इति। यथा वाऽनर्घराघवे—(आकाशे कर्णं दत्त्वा) किं ब्रूथ? वैदेशिको भवान् असमग्रपात्रः कथमीदृशे कर्म्मणि प्रगल्भते? (विहस्य सप्रश्रयमञ्जलिं बद्ध्वा) हन्त भोः! किमेवमुदीर्य्यते? भवद्विधानामाराधनी वृत्तिरेव मे पात्राणि समग्रयिष्यति। यतः—'यान्ति न्यायप्रवृत्तस्य तिर्य्यञ्चोऽपि सहायताम्। अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति॥' (पुनराकाशे कर्णं दत्त्वा) किं ब्रूथ? तर्हि प्रहितेयमस्माभिः पत्रिका। इति (प्रविश्य नटः पत्रिकां ददाति। सूत्रधारो गृहीत्वा वाचयति)...' इति। प्रहसनं यथा मृच्छकटिके—'अविदअविद भो! चिरसंगीदोवासणेण सुक्खपोक्खरणालाइं विअ मे बुभुक्खाए मिलाणाइं अंगाइं ता जाव गेहं गदुअ जाणामि। अत्थि किं पि कुटुंबिणीए उववादिदं ण वेत्ति। (१ 'कष्टंकष्टं भोः! चिरसङ्गीतोपासनेन शुष्कपुष्करनालानीव मे बुभुक्षया म्लानान्यङ्गानि, तद् यावद्गृहं गत्वा जानामि। अस्ति किमपि कुटुम्बिन्या उपपादितं न वेति।' इति संस्कृतम्)।...इति दिक्।

अथामुखं लक्षयति—३२३ **यत्र** यस्मिन् प्रस्तावे इत्यर्थः। **नटौ** नटी च नटश्चेति तथोक्तौ ["पुमान् स्त्रिया।" १।२।६७ इत्येकशेषः] **वा**ऽथवा। यद्वा नटीत्येव पाठः साधीयान्, नटी विदूषको वाऽपि पारिपार्श्विक एव वा "इति भरतोक्तेः। एतेन 'नटः' इति पाठः साधुः, तस्मात् किञ्चिदूनो नटः इति वृत्तिदर्शनात इति वदन्तः परास्ताः, वृत्तिग्रन्थस्य च "स्त्री चेन्नटी" इत्यध्याहृत्यापि योजनोपपत्तेः, न चैतस्मात् "किञ्चिदूना नटी" इत्येव वृत्तिः कुतो नेति चोद्यम्, नटसामान्यलक्षणस्यावश्यं वक्तव्यत्वात्, नटीलक्षणस्य च साक्षादनभिधानेऽपि तथाऽभिधानात। **विदूषकः**। **अपि**। (समुच्चयार्थमिदम्) एतेन नटी नटो विदूषकश्चेति त्रय इति सूचितम्। **वा**ऽथवा। यदि तेष्वेकतमो न स्यात् तदेति भावः। **पारिपार्श्विकः**। **एव**। एतेन तेष्वेकतमस्थानापन्नत्वमेतस्य सूचितम्। **सूत्रधारे**णोपचारेण तादृशेन स्थापकेन नटेनेति भावः। **सहिताः**। यद्वा-अत्र लिङ्गवचननिर्देशो न विवक्षितः। तथा सति,—सहिता सहितः सहिते सहितौ सहिता वा, सूत्रधारेण सहितो नटो विदूषकः परिपार्श्विको वा, सहिता वा नटी, सहिते नटनटी वा, सहितौ नटविदूषकौ नटपारिपार्श्विकौ नटीविदूषकौ नटीपारिपार्श्विकौ विदूषकपारिपार्श्विकौ वा, सहिता नटनटीविदूषका नटीविदूषकपारिपार्श्विका नटविदूषकपारिपार्श्विका नटनटीविदूषकपारिपार्श्विकाश्चेति निर्गलितोऽर्थः। अत एवोक्तम्—'नटो विदूषको वाऽपि नटी वा पारिपार्श्विकः। एषु द्वौ वा त्रयो यत्र सर्वे वा स्थापकान्विताः। आमुखं तद्विजानीयान्नाम्ना प्रस्तावनां च ताम्।' इति। **चित्रै**रनेकविधैः। **स्वकार्योत्थैः** स्वस्य स्वस्या वा कार्यं कर्त्तव्यं कर्म्म तस्मादुत्थानि तस्यानुकूलतयोपस्थितानि तैस्तथोक्तैः। अत एव-**प्रस्तुताक्षेपिभिः** प्रस्तुतं स्वस्वप्रवेशार्हतया प्रसङ्गानुप्रसक्तमाक्षिपन्तीति तथोक्तैः। **वाक्यैः**। **मिथः** परस्परम्। **सँल्लापं** सम्भाषणम्। **कुर्वते**। **तत्**। **तु** 'चे'ति पाठान्तरम्। **आमुखं** प्रारम्भद्वारमिति भावः। **विज्ञेयम्**। **नाम्ना** प्रसिद्ध्या। **सा** यच्छब्देन निर्दिष्टेति भावः। **प्रस्तावना**। **अपि**। 'मता' इति शेषः॥ ३२८ ॥ ३२९ ॥

सूत्रधारसदृशत्वात्स्थापकोऽपि सूत्रधार उच्यते, तस्यानुचरः पारिपार्श्विकः, तस्मात् किञ्चिदूनो नटः ।

३२४ उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा ।
प्रवर्त्तकावलगिते पञ्च प्रस्तावनाभिदाः ॥ ३३० ॥

तत्र–

३२५ पदानामगतार्थानां तान्यर्थगतये नटाः ।
योजयन्ति पदैरन्यैः स उद्घातक उच्यते ॥ ३३१ ॥

यथा, मुद्राराक्षसे । "सूत्रधारः..

"क्रूरग्रहः सकेतुश्चन्द्रमसम्पूर्णमण्डलमिदानीम् । अभिभवितुमिच्छति बलात्"

[इत्यर्द्धोक्ते] "नेपथ्ये-आः ! क एषः ! मयि जीवति चन्द्रगुप्तमभिभवितुमिच्छति ?" इति ।

---

कारिकाया दुर्बोधांशं स्पष्टयति–**सूत्रधारसदृशत्वात्** सूत्रधारेण सदृशः समानः सूत्रधारवत् कार्य्यकर्त्ता तस्य भावस्तत्त्वं तस्मात् तथोक्तात् कारणादित्यर्थः ( ३२२ पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते । प्रविश्य स्थापकस्तद्वत् काव्यमास्थापये'–दित्युक्तदिशा प्रकृते साक्षात् सूत्रधारस्यासम्भवादिदमुक्तम् )।**स्थापकः** । **अपि** । **सूत्रधारः**। **उच्यते** 'उपचारादि' ति शेषः ।**तस्य** स्थापकनटस्येत्यर्थः । **अनुचरः** । **पारिपार्श्विकः** पारिपार्श्वे वर्तते इति तथोक्तः । सहायकतया पार्श्ववर्त्ती नट इति भावः [ 'परिमुखं च ।' ४।४।२८ इति ठक् ] इदं च बोध्यम्–अस्यानुचरत्वेपि मारिष इति पदेन सम्बोध्यत्वम् । इति । **तस्मात्** पारिपार्श्वकादित्यर्थः। **किञ्चित्** । **ऊनो** हीनगुण इत्यर्थः । **नटः** । यद्वा–तस्मात् स्थापकात् किञ्चिदून इत्यर्थः । अतः–स्थापकनटस्य गृहिणी एव नटी, साऽपि नटवत्किञ्चिदूना भवतीति निगदव्याख्यातम् । विदूषकः पुनर्यथाऽर्थनामैवेति बोध्यम् ।

अथामुखापरपर्य्यायायाः प्रस्तावनाया भेदानाह,–३२४ **उद्घात्यक** उद्घाते आरम्भे साधुरित्युद्घात्यः, स एवेति तथोक्तः [ 'तत्र साधुः।' ४।४।९८ इति यति कृते स्वार्थे कः ] ( "स्यादभ्यादानमुद्घात आरम्भः" इत्यमरः ) । **कथोद्घातः** कथाया उद्घात आरम्भ इति तथोक्तः।**प्रयोगातिशयः** प्रयोगस्यातिशयो भावव्यञ्जकत्वेनोत्कर्षो यत्रेति तथोक्तः। **तथा** । **प्रवर्त्तकावलगिते** प्रवर्त्तकं चावलगितं चेति तथोक्ते । प्रवर्त्तयतीति प्रवर्त्तकम् । अवलग्यते स्म संसज्यते स्मेति अवलगितम् । इति–**पञ्च** । **प्रस्तावनाभिदाः** प्रस्तावनाया भिदा भेदाः [ भिद्–क्विप्–टाप् ] ॥ ३३० ॥

अथोद्घात्यकादीनां लक्षणं प्रदर्शयितुमाह–**तत्र** तेषूद्घात्यकादिषु मध्ये इति भावः । ३२५ **अगतार्थानां** न गतोऽवगतोऽर्थो येषां तेषां तथाभूतानाम् । **पदानाम्** । **अर्थगतये**ऽर्थावगमाय । **तानि** अगतार्थानि अनवगतार्थानि पदानि इत्यर्थः । 'यत्रे' ति शेषः । **अन्यैः** प्रस्तुतोपयुक्तार्थप्रत्यायकैरिति भावः । **पदैः** ( सहार्थेयं तृतीया ) । **नटाः** ( नरा इति पाठान्तरम् ) ।**योजयन्ति** सन्निधापयन्ति अभिप्रेतप्रस्तुतार्थतया समर्थयन्ते इति यावत् । **सः**। **उद्घातकः उच्यते** । अयम्भावः कथमपि केनापि श्लिष्टार्थानि पदान्युच्चारितानि, तानि च निशम्य तदन्ये पुनः यत्र प्रकृतोपयुक्ततां प्रदर्शयन्ति, स उद्घात्यको नाम प्रस्तावना । नटा इति वहुवचनं त्वविवक्षितम् । इति ॥ ३३१ ॥

उदाहरति–**यथा। मुद्राराक्षसे** । तदाख्ये विशाखदत्तविरचिते नाटके इत्यर्थः । " **सूत्रधारः** । 'नटीं प्रत्याहे' ति शेषः"इदानीमस्मिन् समये। **सकेतुः** केतुनोत्पातग्रहेण सह वर्त्तते इति तथोक्तः।**क्रूरग्रहः** क्रूरो ग्रासकर्त्तृतयोत्पातकेतूदयकालिकतया भयङ्करोऽसौ ग्रहो राहुरिति तथोक्तः । यद्वा–स प्रसिद्धः । क्रूरग्रहो भयङ्करात्मा ग्रहविशेषः ।

अत्रान्यार्थान्यपि पदानि हृदयस्थार्थगत्या अर्थान्तरे सङ्क्रमय्य पात्रप्रवेशः ।

३२६ सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा ।
भवेत् पात्रप्रवेशश्चेत् कथोद्घातः स उच्यते ॥ ३३२ ॥

वाक्यं यथा, रत्नावल्याम्—

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति, विधिरभिमतमभिमुखीभूतः ॥ २३० ॥"

---

केतुर्लक्षणया राहुरित्यर्थः । **पूर्णमण्डलं** सर्वाभिः कलाभिः परिपूर्णमित्यर्थः । **चन्द्रमसं** चन्द्रम् । **बलात्** । **अभिभवितुं** तिरस्कर्तुं ग्रसितुमिति यावत् । **इच्छति** ।' [ इति 'एवम्' इति शेषः । **अर्द्धोक्ते** अर्द्धमसम्पूर्णमुक्तं तत्र तथाभूते सतीत्यर्थः । असम्पूर्णत्वं च "रक्षत्येनं तु बुधयोगः ॥" इत्यवशिष्टत्वादिति बोध्यम् ] **नेपथ्ये** वेषोपकल्पनगृहे । 'केनापि उद्घोष्यते' इति शेषः । **आः !** कष्टं चित्रं वेत्यर्थः । 'आः स्मरणेऽपाकरणे कष्टे कोपविकासने ।' इति गोपालः । **कः** । **एषः** 'सकेतुः क्रूरग्रह' इति शेषः । **मयि** वक्तरि श्रोतरि वा ( चाणक्ये ) इति भावः । **जीवति** 'सती'ति शेषः । **चन्द्रगुप्तम्** । **अभिभवितुं** तिरस्कर्तुं राज्यात् पुनः प्रच्योतयितुमिति यावत् । **इच्छति** कामयते । अत्रार्याछन्दः । तुर्यपादोऽस्य "रक्षत्येनं तु बुधयोगः ॥" इति ।" **इति** । इदमुक्तम्—चन्द्रोपरागनिमित्तं ब्राह्मणान् भोजयितुं पाकः सम्पाद्यत इति नट्याऽभिहितमाकर्ण्य साङ्गे ज्योतिश्शास्त्रे निष्णातोऽस्मि नाद्योपरागः, तद् केनापि प्रतारिताऽसि। इत्युक्त्वा सूत्रधारः—"आःसाम्प्रतं चन्द्रमसंपूर्णमण्डलं सकेतुः क्रूरग्रहोऽभिभवितुं बलात् कामयते, न पुनः प्रभविष्यति ।" इत्युक्तम् । अत्र "रक्षत्येनं तु बुधयोगः ॥" इत्यंशावशेषः । इति । [ इति 'एव'मिति शेषः । अर्द्धोक्तेऽर्द्धं लक्षणयाऽसम्पूर्णमुक्तं तथाभूते 'सती'ति शेषः ] नेपथ्ये वेषे उपचारात् भूमौ तत्स्थाने । 'नेपथ्यं तु प्रसाधने । रङ्गभूमौ वेषभूमौ' इति हैमः । आः ! कः । एषः । मयि ( चाणक्ये ) । जीवति सतिसप्तमीयम् । चन्द्रगुप्तं तदाख्यं प्रकृतनन्दात्मुरानाम्न्यां दास्यामुद्भूतं चाणक्यसाहाय्येन योगानन्दं निहत्य तद्राज्येऽभिषिक्तं राजानमिति भावः । अभिभवितुं राज्याद्भ्रंशयितुम् । इच्छतीति । अयम्भावः—'क्रूरग्रहः..बलात्' इत्येव निशम्य तस्य च सकेतुः केतुना मलयकेतुना सह वर्त्तते इति तथोक्तः । क्रूरग्रहः क्रूरे कूटव्यवहारे ग्रह आग्रहो यस्येति तथोक्तः । "अमात्यपदप्रतिष्ठितो राक्षसाख्यः पण्डित"इति शेषः । इदानीमभिषेक्तः कालात्यन्तानत्ययावसरे इति भावः । अत एव—असम्पूर्णमण्डलं न सम्पूर्णं दस्यूपद्रवशान्त्यादिना पूर्णाधिकारं मण्डलं देशो राज्यमिति यावत् यस्य तथोक्तम् । 'मण्डलं परिधौ कोष्ठे देशे द्वादशराजसु । क्लीवेऽथ निवहे बिम्बे त्रिषु पुंसि तु कुक्कुरे ॥'इति मेदिनी । चन्द्रं चन्द्रगुप्तम् । अभिभवितुं राज्याद्भ्रंशयितुम् । बलाद्बलं मित्रादिसाहाय्यं प्राप्येत्यर्थः । ल्यब्लोपे पञ्चमी इच्छति ।"इत्यर्थं चानुसन्धाय ( नेपथ्यगृहे स्थितेन ) चाणक्येनाभिहितम् "आः ! क एषः ! मयि जीवति चन्द्रगुप्तमभिभवितुमिच्छती"ति । एवं च—तथाऽऽमर्षोदये चाणक्यस्य प्रादुर्भावः स्थाने । इति ।

अत्र तात्पर्यं निर्दिशति—अत्रेत्यादिना ।

**अत्रा**स्मिन्नुदाहृतेंऽशे इत्यर्थः । **अन्यार्थानि** अन्यश्चन्द्रोपरागसम्भवानवगमकतापरोऽर्थस्तात्पर्यं येषां तानि तथोक्तानि । **अपि** । **पदानि** । **हृदयस्थार्थगत्या** हृदये स्वमनसि तिष्ठतीति सोऽसावर्थस्तस्य गत्या सङ्गत्याऽऽनुकूल्येनेत्यर्थः । **अर्थान्तरे** द्वितीयेऽर्थे । **सङ्क्रमय्य** परिणमय्य । **पात्रप्रवेशः** पात्रस्य चाणक्यरूपस्य पुरुषस्य ( नाटकीयात्मनाऽवस्थितस्य)प्रवेशः । अयम्भावः—"क्रूरग्रहः..."इत्यादेः सूत्रधारेणोक्तस्य स्वानुकूल्येन तात्पर्यं निर्दिशन् चाणक्यः प्रविष्टः । अतः—अत्रास्फुटार्थानां क्रूरग्रहादिपदानामन्यथायोजनादुद्घात्यको नाम प्रस्तावना । इति ।

३२६ **चेद्** यदि । **सूत्रधारस्य** । **वाक्यम्** । **वा** । **अस्य** वाक्यस्येत्यर्थः । **अर्थम्** । **समादाय** गृहीत्वा । **वा** ( इदं च वाक्यालङ्कारे ) । **पात्रप्रवेशः** । **भवेत्** । 'तर्हि' ति शेषः । **सः** प्रसिद्ध इति भावः । **कथोद्घातः** तदभिधेया प्रस्तावनेति भावः । **उच्यते** ॥ ३३२ ॥

उदाहरति—वाक्यमित्यादिना ।

**वाक्यं** । **यथा** । **रत्नावल्यां** तदाख्यायां श्रीहर्षनृपतिकृतायां नाटिकायामिति भावः । "**द्वीपा**"दित्यादौ ।

इति सूत्रधारेण पठिते ( नेपथ्ये ) "साधु भरतपुत्र ! साधु ! ! एवमेतत् ! ! ! कः सन्देहः ?" "द्वीपादन्यस्मादपि..." इति पठित्वा यौगन्धरायणस्य प्रवेशः ।

वाक्यार्थो यथा वेणीसंहारे—

"निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥ २३१ ॥"

इति सूत्रधारेण पठितस्य वाक्यस्यार्थं गृहीत्वा "नेपथ्ये । आः पाप ! दुरात्मन् ! वृथामङ्गलपाठक ! शैलूषापसद !

---

"अभिमुखीभूतः अनुकूलतामाप्त इति भावः । विधिर्दैवम् । 'विधिर्विधाने दैवेऽपि'इत्यमरः । अन्यस्मात् स्वसन्निहितद्वीपतो भिन्नादित्यर्थः । अपि 'किं पुनस्तस्मादेवे'ति शेषः । द्वीपात् । यथा स्वसन्निहितो द्वीपो जम्बूनामा, तस्मात् भिन्नः प्लक्षाद्यन्यतम इति बोध्यम् । जलनिधेः समुद्रस्य । मध्यात् । अपि 'किं पुनस्तन्निकटा'दिति शेषः । दिशः पूर्वाद्यन्यतमायाः काष्ठाया उपचारात्तदुपलक्षितस्य दविष्ठस्य देशस्येत्यर्थः । अन्तात् । अपि 'किं पुनर्निकटात्' इति शेषः । आनीय प्रापय्य । झटिति विना विलम्बम् । अभिमतं वाञ्छितमर्थमिति भावः । घटयति सङ्गमयति । अत्रार्य्याछन्दः, "यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्य्या ।" इति ॥ २३० ॥"

इति । सूत्रधारेण सूत्रधारकेण स्थापकेन नटेनेति यावत् । पठिते तत्कृतपाठानन्तरमिति भावः । "(नेपथ्ये ) साधु भरतपुत्र ! साधु सम्यक् ! ! एवं यथा भवानाह—"द्वीपादन्यस्मादपि" इत्यादि तथेति भावः । एतत् 'विधिप्रसादवैलक्षण्यमिति शेषः ! ! ! कः । सन्देहः संशयः । "द्वीपादन्यस्मादपि..' इति । पठित्वा । यौगन्धरायणस्य तदाख्यस्य नगररक्षकस्य श्रीवत्सराज-राजामात्यस्येति यावत् । प्रवेशः । इदमुक्तम्—देशान्तरे दातुं प्रतिज्ञातायाः पुत्र्याः कथं परिणयो भविष्यतीत्यावेगनिवृत्तये नटीं प्रति सूत्रधारकेण तथाऽऽश्वासितम् । अत्र यौगन्धरायणस्य सूत्रधारवाक्यमादाय प्रवेश इति वाक्यात् पात्रप्रवेशो नाम कथोद्घातः । इति ।

वाक्यार्थं समादाय पात्रप्रवेशमुदाहरति—वाक्यार्थं इत्यादिना ।

वाक्यार्थो । यथा । वेणीसंहारे तदाख्ये नारायणभट्टकृते नाटक इति भावः । 'वेण्या'मिति पाठान्तरम् ।

"अरीणां शत्रूणां कौरवाणामिति यावत् । प्रशमात् कंसारेरुपदेशात् वैरमपहायावस्थानादिति भावः । निर्वाणवैरदहना निर्वाणः प्रशान्तो वैरदहनो दहनोपमितं वैरं येषां तथोक्ताः । वैरं दहन इवेति वैरदहनः । 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ।' २।१।५६ इत्युपमितसमासः । माधवेन माया रमाया मायाया वा धवः स्वामी तेन । 'मा मायायां रमायां च' इति गोपालः । 'धवः पुमान्नटे धूर्त्ते पत्यौ वृक्षान्तरेऽपि च ।" इति मेदिनी । सह । पाण्डुतनयाः पाण्डोस्तनयाः पुत्रा युधिष्ठिराद्या इति भावः । नन्दन्तु राज्यांशं प्राप्य भीष्मादिभीतिशून्याः सन्तः सुखमनुभवन्त्विति भावः । कुरुराजसुताः कुरुराजस्य धृतराष्ट्रस्य सुताः पुत्रा दुर्योधनादय इति भावः । च । सभृत्याः भृत्यैरुपलक्षणेनानुयायिभिश्च सह वर्त्तन्त इति तथोक्ता इति भावः । रक्तप्रसाधितभुवो रक्तेन रागेणानुरागेणेति यावत् प्रसाधिता अलङ्कृता अनुरञ्जिता इति यावत् भुवः भूविभागा भूर्वा यैस्तथोक्ताः । 'नपुंसके भावे क्तः ।' ३ । ३ ११४ इति क्तः । क्षतविग्रहाः क्षतो विनष्टो निवृत्त इति यावद् विग्रहो युद्धं येषां तथाभूताः । 'विग्रहः कायविस्तारविभागे ना रणेऽस्त्रियाम् ।' इति मेदिनी । "सन्त" इति शेषः । स्वस्था अनुद्विग्नाः । भवन्तु । अत्र वसन्ततिलकं वृत्तम्, तल्लक्षणं च यथोक्तम् "वसन्ततिलकं त्भौ जगौ ग् ।" इति ॥ २३२ ॥"

इति 'एव' मिति शेषः । सूत्रधारेण सूत्रधारकेणेत्यर्थः । पठितस्य । वाक्यस्य । अर्थं तात्पर्य्यम् । गृहीत्वा "नेपथ्ये । आः । पाप ! दुरात्मन् ! वृथामङ्गलपाठक ! शैलूषापसद शैलूषेषु नटेष्वपसदोऽधमः इति तत्सम्बुद्धौ तथोक्त ! 'नटे बिल्वे च शैलूषः' इति रभसः ।

लाक्षागृहानल-विषान्न-सभाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्य पाण्डववधूपरिधानकेशान् स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः ॥२३२॥"

इति निशम्य पारिपार्श्विकसूत्रधारौ निष्क्रान्तौ, भीमसेनस्य च प्रवेशः।

**३२७ यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते ।**
**तेन पात्रप्रवेशश्च प्रयोगातिशयस्तदा ॥ ३३३ ॥**

---

**लाक्षागृहानल-विषान्न-सभाप्रवेशैः** लाक्षाया गृहा लाक्षया निर्म्मितं स्थानं तत्र दत्तोऽनलोऽग्निरिति स च, विषान्नं विषस्यान्नं विषेण सम्पृक्तमन्नमिति तच्च, सभायां द्यूतस्थाने प्रवेशः साभिनिवेशमाहूय प्रवेशनं चेति तैस्तथोक्तैः। **नो**ऽस्माकम्। **प्राणेषु** जीवितेषु। **वित्तनिचयेषु** वित्तानां स्वर्णादीनां निचयास्तेषु तथोक्तेषु। च(इदं समुच्चयार्थम्)। **प्रहृत्य** प्रहारं कृत्वेत्यर्थः। **पाण्डववधूपरिधानकेशान्** पाण्डवानां युधिष्ठिरादीनां वधूस्तस्या द्रौपद्या इत्यर्थः। परिधानमुत्तरीयं च केशाश्चेति तान् तथोक्तान्। **आकृष्य**। **मयि**'भीमसेने' इति शेषः। **जीवति**। सतिसप्तमीयम्। **धार्त्तराष्ट्रा** धृतराष्ट्रस्यापत्यानि पुमांस इति तथोक्ता दुर्योधनादय इति भावः। **स्वस्थाः** (अत्र काकुः)। **भवन्तु** कथं भवन्त्विति भावः। यद्वा—स्वः स्वर्गे तिष्ठन्तीति स्वस्था मृता इत्यर्थः। "खर्परे शरि वा विसर्गलोपो वक्तव्यः *"इति विसर्गलोपः। भवन्तु। अत्र वसन्ततिलकं छन्दः,तल्लक्षणं च यथोक्तम्-'उक्तं वसन्ततिलकं तभजा जगौ गः।'इति॥२३२॥"

**इति। निशम्य** श्रुत्वा। **पारिपार्श्विकसूत्रधारौ** पारिपार्श्विकस्थापकौ। **निष्क्रान्तौ। भीमसेनस्य। च। प्रवेशः।** अत्रेदम्वोध्यम्-वेणीसंहारे"सूत्रधारकः। मारिष! ननु प्रतिहतं सर्वममङ्गलम्। स्वयं प्रतिपन्नदौत्येन कंसारिणा। तथा हि—निर्वाणवैरदहनाः...॥ (नेपथ्ये) साधिक्षेपम्। आः पाप! दुरात्मन्! शैलूषापसद! लाक्षागृहानल...॥ सूत्र...। (आकर्ण्य सभयम्—नेपथ्याभिमुखमवलोकयति)। पारि..। आः कुत एतत्। सूत्र...। (पृष्ठतोऽवलोक्य) अये कथमयं वासुदेवगमनात् कुरुसन्धानममृष्यमाणः पृथुललाटतटघटितभ्रूकुटिना दृष्टिपातेन आपिबन्निव नः सर्वान् सहदेवेनानुगम्यमानः क्रुद्धो भीम इत एवाभिवर्त्तते। तन्न युक्तमस्य पुरतः स्थातुम्। इति निष्क्रान्तौ।" इति पूर्वापरः सन्दर्भः। अस्य च—"सूत्रधारकः पारिपार्श्विकं प्रत्याह, हे मारिष! आर्य्य! 'आर्यस्तु मारिषः।' इत्यमरः। ननु सर्वम् अमङ्गलं कौरवपाण्डवानां परस्परविमर्दमलं लोकक्षयरूपं पापं स्वयं प्रतिपन्नदौत्येन दौत्यं 'प्रतिपन्नस्तेन 'वाऽऽहिताग्न्यादिषु।' २।२।३७ इति प्रतिपन्नशब्दस्य पूर्वादेशः। सन्धिं कारयतीति तादृशेन कंसारिणा प्रतिहतं विनाशितम्,....।" इत्यर्थः। "हे मारिष! ननु स्वयं साक्षात् 'सत्यां सन्धित्सायां किन्न कलहः प्रशमयितुं शक्यते'इति साभिनिवेशं प्रतिपन्नदौत्येन सन्धिकारिणा कंसारिणा कंसस्य तदाख्यस्य स्वमातुलस्यारिणा भगवता श्रीकृष्णचन्द्रेण (एतेन पक्षपातशून्यतया दुर्जनविनाशकत्वं सज्जनरक्षकत्वं च सूचितम्) सर्वं किंवदन्तीमूलं कथमपि वा भीष्मादिसाहाय्येन कौरवाणां जयसम्भावनामूलं चामङ्गलं प्रतिहतम्। अयम्भावः—भगवता स्वयं सन्धित्सया दौत्यं स्वीकृत्य 'न केनापि कौरवपाण्डवानां कलहनिमित्तं लोकक्षयो निवर्त्तित'इत्येकं किंवदन्तीमूलम्, 'तदानीं च श्रीमदान्धैः कौरवैः कृतमपकारं प्राप्य' भीष्मादिसाहाय्येन कौरवाः पाण्डवान् जेष्यन्ती'ति दुराशामात्रमूलं कौरवजीवितावशेषाशंसनरूपं द्वितीयम् अमङ्गलं प्रशमितम्। इति। तथाहि—अरीणां कौरवाणाम् प्रशमाद्विनाशं विधाय (ल्यबर्थेयं पञ्चमी) निर्वाणः प्रशान्तो वैरदहनो दहनोपमितं वैरं येषां तथोक्ताः। 'मरणान्तानि वैराणी'त्यभियुक्तोक्त्या शान्तद्वेषा इति भावः। मांधवेन सह पाण्डुतनयाः नन्दन्तु राज्यसुखमनुभवन्तु। सभृत्याः कुरुराजसुतास्तु रक्तेन नानाशस्त्रास्त्रक्षताङ्गतया निःसरता रुधिरेण प्रसाधिता भूयैस्तथाभूताः क्षता विग्रहाः शरीराणि येषां तथोक्ताः सन्तः स्वः स्वर्गे तिष्ठन्तीति तथोक्ता मृता इति भावः। ('खर्परे शरि वा विसर्गलोपः*' इति विसर्गलोपः) भवन्तु।...' इति तु ३३१ "वचः सातिशयक्लिष्टं.." इति वक्ष्यमाणदिशा पताकारूप इति विभाव्यम्। अत्र च प्रायः "वृथामङ्गलपाठक!" इत्यनन्तरं "शैलूषापसद!" इत्यारभ्य 'सूत्रधारौ'इति पाठो नोपलभ्यते, तत्स्थाने पुनः 'कथं स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः'। ततः सूत्रधारनिष्क्रान्तौ भीमसेनस्य प्रवेशः'इति पाठः। एवं पाठेऽपि अत्र सूत्रधारस्य वाक्यार्थमादाय भीमसेनस्य प्रवेश इति वाक्यार्थादानमूलोऽयं कथोद्घातः। इति बोध्यम्।

**३२७ यदि। एकस्मिन्। प्रयोगे। अन्यः। प्रयोगः। प्रयुज्यते** प्रवर्त्त्यते। **तेन**ान्येन प्रयोगेणेत्यर्थः।

यथा कुन्दमालायाम्, "( नेपथ्ये ) इतइतोऽवतरत्वार्य्या। सूत्रधारकः—कोऽयं खलु आर्य्याह्वानेन साहायकं मे सम्पादयति ? ( विलोक्य ) कष्टमतिकरुणं वर्त्तते।

लङ्केश्वरस्य भवने सुचिरं स्थितेति रामेण लोकपरिवादभयाकुलेन।
निर्वासितां जनपदादपि गर्भगुर्वीं सीतां वनाय परिकर्षति लक्ष्मणोऽयम् ॥२३३॥"

इत्यत्र नृत्यप्रयोगार्थं स्वभार्य्याह्वानमिच्छता सूत्रधारेण "सीतां वनाय परिकर्षति लक्ष्मणोऽयम्" इति सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजितः।

**३२८ कालं प्रवृत्तमाश्रित्य सूत्रधृग्यत्र वर्णयेत्।
तदाश्रयश्च पात्रस्य प्रवेशस्तत्प्रवर्त्तकम् ॥ ३३४ ॥**

---

च। **पात्रप्रवेशः**। 'स्यात्'इति शेषः। **तदा**। **प्रयोगातिशयः**। 'सम्पद्यते'इति शेषः। अयम्भावः—यदा किमपि प्रस्तूयान्यत् प्रस्तूयते, तेन च पात्रप्रवेशस्तथा प्रयोगातिशयो नाम प्रस्तावना। इति ॥ ३३३ ॥

उदाहरति—यथेत्यादिना।

**यथा**। **कुन्दमालायां** तदाख्यायां केनापि कविना कृतायां नाटिकायामिति भावः। "( **नेपथ्ये** )। **इतइतः**। अत्र सम्भ्रमे द्विरुक्तिः। सम्भ्रमश्च स्वामिन्या आर्य्यायाः सञ्चारे युक्तः इति बोध्यम्। **आर्या** मान्या। 'आर्य्यः सज्जनसौविदौ।' इति धनदः। "कर्त्तव्यमाचरन् काममकर्त्तव्यमनाचरन्। यस्तिष्ठति सदाऽऽचारे स आर्य्य इति कथ्यते॥" इति स्मृतिश्च। स्त्री चेदार्य्या 'अजाद्यतष्टाप्।' ४।१।४ इति टाप्। **अवतरतु**। **सूत्रधारकः** सूत्रधारसदृश इत्यर्थः। 'सूत्रधार' इति पाठे तु लक्षणया तथाऽर्थः। 'इवे प्रतिकृतौ॥' ४।१।८६ इति कन्। 'आहे' ति शेषः। **कः**। **अयम्**। **खलु**। **आर्य्याह्वानेना**र्य्याया नट्या आह्वानं तेन तद्द्वारेति भावः। **मे** मम। **साहायकं** साहाय्यम्। 'सहायाद्वा ॥' इति वुञ्। **सम्पादयति** ? ( **विलोक्य** )। **कष्टम्**। **अतिकरुणम्** ( क्रियाविशेषणमिदम् )। **वर्त्तते**।

( तदेव दर्शयति—लङ्केश्वरेत्यादिना— )

**लङ्केश्वरस्य** लङ्काया ईश्वरः पतिस्तस्य रावणस्येति भावः। **भवने** स्थाने। **सुचिरम्** चिरकालं व्याप्येत्यर्थः। **स्थिता** 'सीता। तां च रामः स्वीकृतवा' निति शेषः। **इति**। **लोकपरिवादभयाकुलेन** लोकैर्जनैः ( कृतः ) परिवाद इति तस्य भयं तेनाकुलस्तेन तथोक्तेन। 'तृतीया तत्कृतार्थेन गुणवचनेन।' २।१।३० इति कृतेऽर्थे तृतीयासमासः। **रामेण**। **जनपदात्** देशात्। **निर्वासिताम्**। **गर्भगुर्वीं** गर्भेण गुर्वी भाराक्रान्तेति तां तथोक्ताम्। 'वोतो गुणवचनात्।' ४।१।४४ इति ङीप्। **अपि**। यद्वा—जनपदात्, अपि किं पुनः स्वप्रासादादेव ( अन्यत्पूर्ववत् ) इति योज्यम्। **सीताम्**। **अयम्**। पुरतो दृश्यमान इति भावः। **लक्ष्मणः**। **वनाय** वनं प्रापयितुमित्यर्थः। **परिकर्षति** 'दण्ड्यां राजपुरुष इवे' ति शेषः॥ २३३॥"

**इत्यत्र**। **नृत्यप्रयोगार्थं** नृत्यस्य प्रयोगाय। **स्वभार्य्याऽऽह्वानं** नट्या आह्वानम्। **इच्छता**ऽभिलषतेत्यर्थः। **सूत्रधारेणो**पचारात् तत्प्रतिनिधिना स्थापकेनेत्यर्थः। "**सीतां वनाय परिकर्षति लक्ष्मणोऽयम्**॥"इति इत्येवमिति भावः। **सीतालक्ष्मणयोः**। **प्रवेशम्**। **सूचयित्वा**। **निष्क्रान्तेन**। **स्वप्रयोगं** स्वस्य प्रयोगो नटीमाहूय नृत्यकर्त्तव्यतारूपस्तम्। **अतिशयानः**। **एव**। **प्रयोगः**। **प्रयोजितः**। प्रयुज्य समर्थित इत्यर्थः। अयम्भावः—स्थापको नृत्यप्रयोगाय यावत् नटीमाह्वयितुमभिलषितवान्, तावत् नेपथ्ये 'इतइतोऽवतरत्वार्य्या' इति निशम्य 'कोऽयं मे साहाय्यं सम्पादयती'ति स्वाशयानुकूलं च सम्भावयन् एव रामाज्ञया सीतां वनं नयन्तं लक्ष्मणं दृष्टवान्। तदेवं स्वनिष्क्रमणेन नृत्यप्रयोगापेक्षया प्रबन्धानुकूल्येन अतिशयितः प्रयोगः प्रयोजितः,स्फुटं चास्य प्रयोगातिशयितत्वम्। इति।

३२८ **यत्र**। **सूत्रधृक्** सूत्रधार उपचारात्तत्प्रतिनिधिरिति यावत्। इदमपि प्रायिकम्, वस्तुतस्तु अन्योऽपीति। **प्रवृत्तम्**। **कालं** समयम्। **आश्रित्य**। **वर्णयेत**। **पात्रस्य**। नाटके नायकादिस्वरूपं लक्षयितुः पुरुष-

यथा—

"आसादितप्रकटनिर्म्मलचन्द्रहासः प्राप्तः शरत्समय एष विशुद्धकान्तः।
उत्खाय गाढतमसं घनकालमुग्रं रामो दशास्यमिव सम्भृतबन्धुजीवः॥ २३४॥"
ततः प्रविशति यथानिर्दिष्टो रामः ]

२३९ यत्रैकत्र समावेशात् कार्य्यमन्यत्प्रसाध्यते।
प्रयोगे खलु तज्ज्ञेयं नाम्नाऽवलगितं बुधैः॥ ३३९॥

यथाऽभिज्ञानशाकुन्तले, सूत्रधारको नटीं प्रति-

"तवास्मि गीतरागेण हारिणा प्रसभं हृतः। एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा॥ २३६॥" इति।

ततो राज्ञः प्रवेशः।

---

स्येति भावः। च। तदाश्रयः तत्कालवर्णनमाश्रयो यस्य तादृशः। प्रवेशः। तत्। प्रवर्तकम्। 'प्रस्तावना' इति शेषः। अयम्भावः—यत्र कमपि ऋतुं प्रकृत्य यद्वर्णितं तदेवाश्रित्य पात्रं प्रवृष्टं स्यात्तत्प्रवर्त्तकं नाम प्रस्तावना। इति॥ ३३४॥

उदाहरति—यथेत्यादिना।

यथा। .. "आसादितप्रकटनिर्मलचन्द्रहासः। विशुद्धकान्तिः। सम्भृतबन्धुजीवः। एषः। शरत्समयः। गाढतमसम्। उग्रम्। घनकालम्। रामः। दशास्यम्। इव। उत्खाय। प्राप्तः॥२३४॥" ततः। यथानिर्दिष्टः 'रामो दशास्यमिवे'त्यादिना। यथा सूचितस्तथाभूत इति भावः। रामः। प्रविशति। अयम्भावः—शरदं वर्णयता सूत्रधारकेण रामसादृश्यमुद्भाव्य शरद इव रामस्य प्रवेशः सूचित इति प्रवर्त्तकं नामेयं प्रस्तावना। यथा वा बालरामायणे तृतीयेऽङ्के गर्भाङ्के (नेपथ्ये गीयते) "प्रकटितरामाम्भोजः कौशिकवान् सपदि लक्ष्मणानन्दी। सुरचापद्मनहेतोरयमवतीर्णः शरत्समयः॥ कोहलः (तन्नामा नटः)—कथमुपक्रान्तं भरतपुत्रैः, यदियं रामलक्ष्मणानुगतस्य भगवतो विश्वामित्रस्य प्रावेशिकी ध्रुवा। तदहमनन्तरकरणीयाय सज्जो भवामि (इति निष्क्रान्तः प्रस्तावना)।" इति।

३३९ यत्र यस्मिन्। एकत्र एकस्मिन्। प्रयोगे कार्य्योद्यमे। समावेशात् सादृश्योद्भावनात्। ल्यवर्थेयं पञ्चमी। अन्यत्। कार्य्यम्। प्रसाध्यते सम्पाद्यते। तत्। 'कार्य्य'मिति शेषः। नाम्ना। अवलगितं तदाख्यः प्रस्तावनाविशेषः। बुधैः सहृदयैः। ज्ञेयम्। खलु। यस्य कस्यापि प्रस्तुतस्य कार्य्यस्य सादृश्यमुद्भाव्य यत्र पात्रप्रवेशरूपं कार्य्यं सम्पाद्यते तत्त्रावलगितत्वात् अवलगितं नाम प्रस्तावनाऽङ्गमिति भावः॥ ३३५॥

उदाहरति—यथेत्यादिना।

यथा। अभिज्ञानशाकुन्तलेऽभिज्ञानेन शाकुन्तलं शकुन्तलासम्बन्धि चरितमिति तत्र, उपचारात् तदुपजीव्य श्रीकालिदासमहाकविना रचिते नाटके इति भावः। सूत्रधारकः स्थापको नटः। नटीम्। प्रति। "अतिरंहसाऽत्यन्तशालिनेत्यर्थः। सारङ्गेण मृगेण। एषः। राजा। दुष्यन्तः। इव। तव। हारिणा मनोहारिणा। गीतरागेण। प्रसभं। हृतः। अस्मि॥ २३६॥" इति।

ततः तदनन्तरम्। राज्ञो दुष्यन्तस्येत्यर्थः। प्रवेशः। इदमुक्तम्—नटीकृतमृतुवर्णनमुपजीव्य गानं निशम्य तदभिनन्दता स्थापकेन सूत्रधारकेण 'एष राजेवे'ति सादृश्यमुद्भाव्य 'एष' इति पात्रप्रवेशः सूचितः, तस्मात् प्रस्तावनेयमवलगिताख्या। यथा वा, मालविकाग्निमित्रे सूत्रधारकः—"शिरसा प्रथमगृहीतामाज्ञामिच्छामि परिषदः कर्त्तुम्। देव्या इव धारिण्याः सेवादक्षः परिजनोऽयम्॥" इति। अत्र हि देव्याः सादृश्यमुद्भाव्य स्वनिष्क्रमणमभिलषता सूत्रधारकेण तत्प्रवेशः सूचितः। इति।

३३० योज्यान्यत्र यथालाभं वीथ्यङ्गानीतराण्यपि ।

अत्र आमुखे। उद्घात्यकावलगितयोरितराणि वीथ्यङ्गानि वक्ष्यमाणानि।

नखकुट्टस्त्वाह-

"नेपथ्योक्तं श्रुतं तत्र आकाशवचनं तथा। समाश्रित्यापि कर्त्तव्यमामुखं नाटकादिषु ॥" इति।

३३१ एषामामुखभेदानामेकं कश्चित्प्रयोजयेत् ॥ ३३६ ॥
तेनार्थमथ पात्रं वा समाक्षिप्यैव सूत्रधृक् ।
प्रस्तावनाऽन्ते निर्गच्छेत्ततो वस्तु प्रयोजयेत् ॥ ३३७ ॥

---

एवं पञ्चविधां प्रस्तावनां लक्ष्यलक्षणाभ्यां निरूप्य चारुत्वातिशयाय कर्त्तव्यान्तरमुपदिशति ३३० **योज्यानी**-त्यादिना।

३३० **अत्रा**स्मिन् प्रभेदे प्रस्तावनाऽपरपर्य्याये आमुखे इति भावः। **इतराणि** उद्घात्यकावलगिताभ्यां भिन्नानीत्यर्थः। **अपि** 'किं पुनरुद्घात्यवलगिते एवे'ति शेषः। **यथालाभं** यथासम्भवम् । **वीथ्यङ्गानि** वीथ्या वक्ष्यमाण-लक्षणस्य रूपकविशेषस्याङ्गानि भागाः इति तथोक्तानि । **योज्यानि** । यद्यपि-उद्घात्यकावलगिते प्रस्तावनाविशेषात्मना निरूपितपूर्वे एव, तथाऽपि एते वीथ्यङ्गे एव, तस्मात्-परत्र कथोद्घातादौ प्रस्तावनाभेदत्रये ते सूचयितुं शक्ये, किन्तु-अत्रापि, उद्घात्यकेऽवलगिते वा प्रस्तावनाभेदे उद्घात्यकमवलगितं वा वीथ्यङ्गं, तथा, प्रपञ्च-त्रिगत-च्छल-वाक्केल्य-धिवल-गण्डा-वस्यन्दित-नालिका-ऽसत्प्रलाप-व्याहार-मार्दवाख्यानि एकादशापराण्यपि वीथ्यङ्गानि यथासम्भवं सम्पाद्यानि। कथोद्घातादौ तु उद्घातकावलगिते अपि, न चैषामावश्यकी स्थितिरपेक्षिता, यथालाभमित्यस्य तंत एव स्वारस्यात्। एवं च-यत्र उद्घात्यकादौ उद्घात्यादिनिवेशः स्यात्तत्तस्य चारुत्वमतिशाययति, न तं विना स्वरूपच्युतिरित्यावेद्यते। इति।

सूत्रस्थानां कठिनार्थानां पदानां दुर्बोधतां परिहरति-**अत्रे**त्यादिना। स्पष्टम्।
अत्राचार्य्यान्तरमतं दर्शयितुमाह-**नखकुट्टस्त्वि**त्यादिना।

**नखकुट्ट**स्तदाख्य आलङ्कारिकः। **तु**। **आह**-"**नेपथ्योक्तं**..."इत्यादिना।

"**तत्र** तेषु निरुक्तलक्षणेषु प्रसिद्धेषु वा। **नाटकादिषु**। **नेपथ्योक्तं** नेपथ्ये जवनिकाऽन्तरुक्तं तत्तथोक्तम्। "नेपथ्यं स्याज्जवनिका रङ्गभूमिः प्रसाधनम्।" इत्यजयः। **तथा**। **आकाशवचन**माकाशे वचनं तत्। **श्रुतम्**। **समाश्रित्य**। **अपि** 'अन्यथा तु निर्दिष्टदिशा क्रियत एव, किन्त्वि'ति शेषः। **आमुखं** समन्तान्मुखं द्वारमिति तथोक्तम्, प्रस्तावनेति भावः। **कर्त्तव्यम्**। यथाऽन्याः पञ्च तथेयमपि द्विविधा प्रस्तावना कार्य्या, एका नेपथ्यभाषित-मूला, द्वितीयाऽऽकाशभाषितमूला च। इति भावः॥"**इति**।

एवं प्रस्तावना निर्दिश्यासां व्यवस्थां निर्दिशन् कर्त्तव्यान्तरमुपदिशति-३३१ **एषामि**त्यादिना।

३३१ **एषां** निरुक्तलक्षणानाम्। **आमुखभेदानां** प्रस्तावनाभेदानां मध्ये। **एकम्**, 'न तु द्वौ ततो वाऽधिकान् आमुखभेदा'निति शेषः। **कश्चित्**। **प्रयोजयेत्**। **अथ**। **सूत्रधृक्** उपचारात् तत्सदृशो नटः। **तेन** प्रयुक्तेनामुखेनेति भावः (साधने तृतीयेयम्)। **अर्थ**मितिवृत्तम्। **पात्रम्**। **वा**। **समाक्षिप्य** सूचयित्वा। **एव**। **प्रस्तावनाऽन्ते**। **निर्गच्छेत्**। रङ्गभूमितो जवनिकान्तः प्रविशेदिति भावः। **तत**स्तदनन्तरम्। **वस्तु** वर्णनीय-मितिवृत्तमिति भावः। **प्रयोजयेत्**। अयम्भावः-पञ्चस्वभिहितासु प्रस्तावनास्वेकामेव कामपि प्रस्तावनां विदध्यात्, यदि तु गर्भाङ्को विधेयः, तदा तु तस्मिन् अङ्के प्रस्तावना विधेयैव, अन्यथा गर्भाङ्कत्वानुपपत्तिः, यथा-बालरामायणे तृतीयेऽङ्के गर्भाङ्कः, तत्र च प्रस्तावना, तस्याश्च समाप्तौ विधीयमानायां कमप्यर्थं कल्यचिद्वा पात्रस्य प्रवेशं सूचयित्वा सूत्रधारादीनां निष्क्रमणं विधेयम्। एवं पुनस्तस्यां समापितायां प्रतिपाद्यमितिवृत्तं निरूपयेत्। इति ॥ ३३६ ॥ ३३७ ॥

वस्तु इतिवृत्तम् ।

३३२ इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते ।
आधिकारिकमेकं स्यात् प्रासङ्गिकमथापरम् ॥ ३३८ ॥

३३३ अधिकारः फले स्वाम्य-मधिकारी च तत्प्रभुः ।
तस्येतिवृत्तं कविभिराधिकारिकमुच्यते ॥ ३३९ ॥

फले प्रधानफले ।

यथा बालरामायणे रामचरितम् ।

३३४ अस्योपकरणार्थं तु प्रासङ्गिकमितीष्यते ।

अस्याधिकारिकेतिवृत्तस्योपकरणनिमित्तं यच्चरितं तत्प्रासङ्गिकम्, यथा सुग्रीवादिचरितम्

३३५ पताकास्थानकं योज्यं सुविचार्य्येह वस्तुनि ॥ ३४० ॥

इह नाटके ।

---

सूत्रं सुगमयितुं वस्तुपदं व्याचष्टे–वस्तु'इत्यस्ये'ति शेषः । इतिवृत्तम् 'इत्यर्थ'इति शेषः ।

इतिवृत्तस्य भेदद्वयमिदमित्याह–३३२ इदमित्यादिना ।

३३२ बुधैः । इदं प्रतिपाद्यमितिवृत्तमिति यावत् । वस्तु । पुनः । द्विविधम् । परिकल्प्यते । तत्र–एकम् । अधिकारिकमधिकारे भवम् । 'अध्यात्मादेष्ठञिष्यते'*इति ठञ् । स्यात् । अथ । अपरम् । प्रासङ्गिकं प्रसङ्गे भवम् ॥ ३३८ ॥

तत्राधिकारिकं लक्षयति–३३३ अधिकार इत्यादिना ।

३३३ फले कार्य्यस्य मुख्ये प्रयोजने इति भावः । स्वाम्यं प्रभुत्वम् । अधिकारः । तत्प्रभुस्तस्य स्वाम्यस्य प्रभुः । च पुनः । अधिकारी तन्नामा । तस्य । इतिवृत्तम् । अधिकारिकम् । कविभिः। उच्यते ॥ ३३९ ॥

सूत्रं सुगमयितुं फलपदं व्याचष्टे–फले 'इत्यस्ये'ति शेषः । प्रधानफले'इत्यर्थ'इति शेषः । प्रधानफलं च यदुद्दिश्य सर्वमनुष्ठीयते तदिति बोध्यम् ।

उदाहरति–यथा । बालरामायणे तदाख्ये राजशेखररचिते महानाटके इत्यर्थः । रामचरितम् । बालरामायणे हि रावणवधादिचरितं रामस्येति तदाधिकारिकमिति तत्त्वम् ।

प्रासङ्गिकं लक्षयति–३३४ अस्येत्यादिना ।

३३४ अस्याधिकारिकस्येतिवृत्तस्येत्यर्थः । उपकरणार्थमुपकरणायेदमिति तथोक्तम् । 'अर्थेन (नित्य)समासो विशेष्यलिङ्गता चेति वक्तव्यम् *' इति साधु । यदा–उपकरणमर्थो यस्य तदिति तथोक्तम् । तु पुनः । प्रासङ्गिकं प्रसङ्गानुप्रसक्तमानुषङ्गिकमिति यावत् । इति । इष्यते ।

तदेव स्पष्टयति–अस्येत्यादिना । स्पष्टम् ।

उदाहरति–यथा 'बालरामायणे'इति शेषः । सुग्रीवादिचरितम् । आदिना–प्रतिनायकादीनां ग्रहणम् ।

रूपकेषु पताकास्थानकनिवेशस्यावश्यकतामाह–३३५ पताकेत्यादिना ।

३३५ इहास्मिन् रूपके इति यावत् । सुविचार्य्य निपुणं विभाव्य रसव्यक्त्यनुकूलतामवधार्य्येति यावत् । वस्तुनि इतिवृत्ते । पताकास्थानकं पताकाया ध्वजस्य स्थानं तदिवेति तथोक्तम् । योज्यम् ॥ ३४० ॥

इहेति पदं व्याचष्टे, इहेत्यादिना । स्पष्टम् । 'नाटके' इत्यपि रूपकमात्रस्योपलक्षकम् । 'नाट्ये' इति पाठान्तरेऽप्ययमेवार्थः ।

३३६ यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकं तु तत् ॥ ३४१ ॥

तद्भेदानाह ।

३३७ सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्त्तितम् ॥ ३४२ ॥

यथा-रत्नावल्याम्, "वासवदत्तेयम्" इति राजा यदा तत्कण्ठपाशं मोचयति, तदा तदुक्त्या "सागरिकेयम्" इति प्रत्यभिज्ञाय "कथं मे प्रिया सागरिका" (इति कण्ठात् पाशमाक्षिप्य)-

"अलमलमतिमात्रं साहसेनामुना ते, त्वरितमयि विमुञ्च त्वं लतापाशमेतम् ।
चलितमपि निरोद्धुं जीवितं जीवितेशे ! क्षणमिह मम कण्ठे बाहुपाशं निधेहि ॥ २३७ ॥"

---

पताकास्थानकं लक्षयति-३३६ यत्रार्थे इत्यादिना ।

३३६ यत्र यस्मिन् । अन्यस्मिन् । अर्थे । चिन्तिते 'सती' ति शेषः । तल्लिङ्गश्चिन्तितसदृशः । अन्यः । 'अर्थ' इति शेषः । आगन्तुकेनानियमितोपस्थितिकेन । भावेन तात्पर्य्येण । सहार्थेयं तृतीया । प्रयुज्यते । तत् । तु । पताकास्थानकम् । 'मत' मिति शेषः ॥ ३४१ ॥

तद्भेदान् वक्तुमुपक्रममाण आह-तद्भेदानित्यादिना । स्पष्टम् । ३३७ सहसेत्यादिना ।

३३७ सहसा । एव । उपचारतोऽभेदाध्यवसायात् । गुणवती प्रशस्तगुणा । अर्थसम्पत्तिर्मनोरथसिद्धिः । इदम् (अत्र-'सर्वनाम्नामुद्देश्यविधेयलिङ्गभाक्त्वं पर्य्यायेण भवति' इति नयेन क्लीबत्वम् ) । प्रथमं मुख्यमेकं वेति भावः । पताकास्थानकम् । परिकीर्त्तितम् ॥ ३४२ ॥

उदाहरति-यथेत्यादिना ।

यथा । रत्नावल्यां । 'तृतीयेऽङ्के' इति शेषः । "वासवदत्ता वत्सराजस्य देवी । इयम् ।" इति 'उक्त्वे' ति शेषः । राजा । यदा । तत्कण्ठपाशं तस्या वासवदत्तावेषधारिण्याः सागरिकायाः कण्ठस्तत्र पातितः पाशस्तम् । मोचयति । तदा । तदुक्त्या वासवदत्तात्वेनाध्यवसिताया रत्नावल्या उक्तिस्तया इत्यर्थः ( "मुंचदु मुंचदु मं भट्टा पराहीणो क्खु अअं जणो ण पुणो ईदिशं अवसरं मरिदुं पावेदि, तुमं वि देवीए मा अप्पाणं अवराहिणं करेसि" इति च तदुक्तिः) । "इयं वासवदत्तावेषधारिणीत्यर्थः । सागरिका ।" इति । प्रत्यभिज्ञाय । "कथम् 'मत्तुंमुपस्थिते' ति शेषः । मे । प्रिया । सागरिका रत्नावली ।" ( इति । कण्ठात् । पाशम् । आक्षिप्य 'स्वकण्ठे तद्बाहुपाशं निदध' दितिं शेषः) ।

"अतिमात्रम् । अमुनोद्बन्धनद्वारा प्राणत्यागार्थेन उद्यमरूपेणेति भावः । साहसेन कर्म्मणा । 'गम्यमानाऽपि क्रिया कारकविभक्तौ प्रयोजिके' ति नयेन तृतीया । ते । अलमलम् । ( सम्भ्रमे द्विरुक्तिः ) । अयि ( इदं कोमलालापे ) त्वरितम् । त्वम् । एतम् । लतापाशम् । विमुञ्च । हे जीवितेशे प्राणेश्वरि ! चलितं 'स्थानं त्यक्त्वा' इति शेषः । अपि । मम । जीवितम् । निरोद्धुम् । इह । कण्ठे । बाहुपाशम् । क्षणं 'यावत् पुनः प्रत्यागतं न स्यात्' इति शेषः । निधेहि । निर्गच्छतोऽवरोधाय यथा पाशो निक्षिप्यते, तथा मम जीवितस्यावरोधाय तव बाहुपाश एवालमिति भावः । मालिनीवृत्तम् । "मालिनी नौ म्यौ य् ।" इति ( पि. सू. ) "यदाऽष्टभिः सप्तभिश्च यतिः" इति ( वृ. ) ॥ २३७ ॥"

---

१ "मुञ्चतु मुञ्चतु मां भर्त्ता, पराधीनः खल्वयं जनो न पुनरीदृशमवसरं मर्त्तुं प्राप्नोति त्वमपि देव्या माऽऽत्मानमपराधिनं करोषि ।"इति संस्कृतम् ।

इत्यादिफलरूपाऽर्थसम्पत्तिः पूर्वापेक्षयोपचारातिशयाद्गुणवती उत्कृष्टा ।

३३८ वचः सातिशयं श्लिष्टं नानाबन्धसमाश्रयम् ।
पताकास्थानकमिदं द्वितीयं परिकीर्तितम् ॥ ३४३ ॥

यथा–वेणीसंहारे–

"निर्वाणवैरदहनाः प्रशमादरीणां नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥ ३३८ ॥"

अत्र रक्तादीनां रुधिरशरीराद्यर्थहेतुकश्लेषवशेन बीजार्थप्रतिपादनान्नेतृमङ्गलप्रतिपत्तौ सत्यां द्वितीयं पताकास्थानकम् ।

---

उदाहरणं सङ्गमयति–इत्यादीत्यादिना ।

**इत्यादिफलरूपेत्यादिफलं** वासवदत्तोद्बन्धनधिया तन्मोचनार्थं प्रवृत्तौ सागरिकालाभरूपं प्रयोजनं तदेव रूपं यस्यास्तथोक्ता । **अर्थसम्पत्तिः** । **पूर्वापेक्षया** वासवदत्ताऽपेक्षया । **उपचारातिशयात्** सादृश्यातिशयात् । **गुणवती उत्कृष्टा** । अयम्भावः–वासवदत्ताया वेषं धृत्वा तस्याः सङ्केतस्थले मदनार्त्ता सागरिका राजानमुपगम्यापि वासवदत्ताभयेन पाशं कण्ठे धृत्वा जीवितं त्यक्तुमैच्छत्, राजा च वासवदत्तयाऽवहेलितस्तां मदनार्त्तोऽन्विच्छन् तथा सागरिकां दृष्ट्वा पाशमपनयन् तस्याः ( सागरिकायाः ) उक्त्या तां सागरिकामेवावगम्य 'क्षणमिह..' इत्युक्तवान्, तच्च तद्रक्षणं तत्सुरतार्थं वा चेष्टितमतर्कितो वासवदत्ताया लाभापेक्षया रत्नावलीलाभोऽतिशयित इति पताकास्थानकाधिकृतमिदम् । इति ।

द्वितीयं भेदं लक्षयति–३३८ वच इत्यादिना ।

**३३८ सातिशयम् । श्लिष्टं** नानाऽर्थप्रत्यायकतया सम्बद्धम् । **नानाबन्धसमाश्रयम्** नानाबन्धेन अनेकविधरचनाविशेषेण सम आश्रय उपजीव्यपदं यस्य तथोक्तम्, विविधविशेषणानुयोगिविशेष्यार्थप्रतिपादनानुकूलरचनाशालीति भावः । **वचः । इदम् । द्वितीयम् । पताकास्थानकम् । परिकीर्तितम्** ॥ ३४३ ॥

उदाहरति–यथेत्यादिना ।

**यथा वेणीसंहारे** 'प्रथमेऽङ्के'इति शेषः ।

"**अरीणां** शत्रूणाम् । **प्रशमात्** शान्तत्वात् । **निर्वाणवैरदहनो** निर्वाणः प्रशान्तो वैरदहनो वैराग्निर्येषां तथोक्ताः । **पाण्डुतनया** युधिष्ठिरादयः । **माधवेन** श्रीकृष्णेन । **सह । नन्दन्तु । कुरुराजसुताः** कुरुराजो धृतराष्ट्रस्तस्य सुताः, दुर्योधनादय इत्यर्थः । **च । सभृत्याः । रक्तप्रसाधितभुवो** रक्तेनानुरागेण रुधिरेण वा प्रसाधिता भूर्यैर्येषां वेति तथोक्ताः । **क्षतविग्रहाः** क्षता नष्टा विग्रहा युद्धानि शरीराणि वा येषां तथोक्ताः । **स्वस्था** अनुद्विग्नाः स्वर्गस्था वेति भावः । **भवन्तु** ॥ ३३८ ॥"

उदाहरणं सङ्गमयति–अत्रेत्यादिना ।

**अत्रा**स्मिन्नुदाहृते पद्ये इति भावः । **रक्तादीनां** रक्तविग्रह स्व(:)शब्दानाम् । **रुधिरशरीराद्यर्थहेतुकश्लेषवशेन** रुधिरशरीरस्वर्गार्थहेतुकश्लेषपारतन्त्र्येणेति भावः । **बीजार्थप्रतिपादनाद्**बीजं वेणीसंहाररूपस्य कार्य्यस्य कारणविशेषस्तदेवार्थस्तस्य प्रतिपादनं तस्मात् । **नेतृमङ्गलप्रतिपत्तौ** नेतुर्नायकस्य युधिष्ठिरस्येति यावन्मङ्गलं प्रतिनायकदुर्योधनाद्यमङ्गलप्रतिपत्तिपूर्वकमाह्लादनं तस्य प्रतिपत्तिस्तस्याम् । **सत्याम् । द्वितीयम् । पताकास्थानकम्** । अयम्भावः–"निर्वाणवैरदहनाः..." इत्यादेः "रक्तप्रसाधितभुवः..." इत्यादौ रक्तादीनां पदानामनुरागाद्यर्थश्चिन्तितः, अथापि तेषामनेकार्थकतया "आः ! दुरात्मन् ! वृथामङ्गलपाठक ! शैलूषाधम !" इत्याद्युक्तदिशा भीमसेनक्रोधोपचितस्य प्रधाननायकयुधिष्ठिरोत्साहस्य वेणीसंहारसन्दर्भकारणस्य सूचनान्नेतुर्म्मङ्गलं प्रतिनायकस्य चामङ्गलं प्रतिभासते । एवं न दुर्य्योधनादीनां मङ्गले चिन्त्यमाने युधि राादीनां मङ्गलं दुर्य्योधनादीनां चामङ्गलं प्रतिभासते । इतीदं द्वितीयम् । इति ।

**३३९ अर्थोपक्षेपकं यत्र लीनं सविनयं भवेत्।**
**श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥ ३४४ ॥**

**लीनमव्यक्तार्थम्, श्लिष्टेन सम्बन्धयोग्येनाभिप्रायान्तरप्रयुक्तेन प्रत्युत्तरेणोपेतम्, सविनयं विशेषनिश्चयप्राप्त्या सहितं सम्पाद्यते यत्तत्तृतीयं पताकास्थानकम्।**

**यथा वेणीसंहारे द्वितीयेऽङ्के ''कञ्चुकी-देव! भग्नम् ( सर्वे साकूतं पश्यन्ति )। राजा-केन? कञ्चुकी-भीमेन। राजा-कस्य? कञ्चुकी-भवतः। राजा-आः! किं प्रलपसि? भानुमती-'अज्ज! किं अणिट्ठं मन्तेसि' राजा-धिक् प्रलापिन्! वृद्धापसद! कोऽयमद्य ते व्यामोहः? कञ्चुकी-देव! न खलु कश्चिद्व्यामोहः। सत्यमेव ब्रवीमि-'भङ्गं भीमेन भवतो मरुता रथकेतनम्। पतितं किङ्किणी-क्वाणबद्धाक्रन्दमिव क्षितौ' ॥ ३३९॥''**

---

तृतीयं भेदं लक्षयति-३३९ **अर्थोपक्षेपक**मित्यादिना।

३३९ **यत्**। **च**। 'त्वि'ति पाठान्तरम्। **अर्थोपक्षेपकं** प्रयोजनसूचकम् ( इदं च वक्ष्यमाणविष्कम्भकाद्यन्यतम-मिति बोध्यम्)। **लीनमव्यक्तार्थतया** गूढम्। **सविनयं** विनयेन विशिष्टेन नयेन प्राप्त्या सह वर्त्तते इति तथो-क्तम्। विशिष्टो नयश्च विशेषेण निश्चितो लाभः। **भवेत्**। **इदम्**। 'त'दिति शेषः। **श्लिष्टप्रत्युत्तरोपेतं** श्लिष्टं यत्प्रत्युत्तरं तेनोपेतम्। **तृतीयम्**। पताकास्थानकम्। **उच्यते**। इदमुक्तम्-यत् प्रयोजनं सूचयत् अवश्यम्भावि श्लिष्ट-प्रत्युत्तरशालितया गूढं वचः स्यात्ततृतीयं पताकास्थानकम्। इति ॥ ३४४ ॥

कारिकां सुगमयितुं तत्तत्काठिन्यं परिहरति-**लीन**मित्यादिना। स्पष्टम्।

उदाहरति-**यथे**त्यादिना।

**यथा-वेणीसंहारे। द्वितीये। अङ्के** ''राजा तत्किमिति अनास्तीर्णे कठिनं शिलातलमध्यास्ते देवी। यतः-'लोलांशुकस्य पवनाकुलितांशुकान्तं त्वद्दृष्टिहारि मम लोचनबान्धवस्य। अध्यासितुं तव चिरं जघनस्थलस्य पर्य्याप्तमेव करभोरु! ममोरुयुग्मम् ॥' ( प्रविश्यापटाक्षेपेण सम्भ्रान्तः )'' इत्यन्तरमिति शेषः। **''कञ्चुकी** ''अन्तः-पुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते ॥'' इत्युक्तलक्षणः पुरुषविशेषः। 'राजानं प्रत्याहे'ति शेषः। **देव**! राजन्निति भावः। 'देवो मेघे सुरे राज्ञि स्यान्नपुंसकमिन्द्रिये।' इति मेदिनी। **भग्नम्** ( 'जरावै-क्लव्ययुक्तेन विषद्गात्रेण कञ्चुकी।' इत्युक्त्याऽस्य सपदि समस्तं वाक्यमुच्चरितुमशक्ततया तावत् उच्चारणमिति बोध्यम्)। ( **सर्वे**ऽन्तः पुरजनाः। **साकूत**मभिप्रायजिज्ञासामुद्रयेति भावः। **पश्यन्ति** )। **राजा**। **केन**! 'भग्न'मिति शेषः। **कञ्चुकी**। **भीमेन** भयङ्करेण। 'भीमोऽम्लवेतसे घोरे शम्भौ मध्यमपाण्डवे।' इति मेदिनी। **राजा**। **कस्य**? 'भग्न'मिति पूर्वतोऽनुप्रसक्तम्। 'ऊरुयुग'मिति तु स्मृतिमारूढम्। **कञ्चुकी**। **भवतः** ( 'कि'मिति राज्ञः प्रश्नानुदयात् 'रथकेतन'मिति विवक्षितमपि नोक्तवान्)। **राजा**। **आः**। **किम्**। **प्रलपसि** अनर्थकं ब्रवीषि? **भानुमती**। '**अज्ज** आर्य। **किं** किम्। **अणिट्ठं** अनिष्टम्। **मंत्तेसि** मन्त्रयसे?'। **राजा**। **वृद्धापसद**! अत एव-**प्रलापिन्**! **धिक्** 'त्वा'मिति शेषः। **कः** किन्नामा किंस्वरूपो वेति भावः। **अयम्**। भग्नं भीमेन भवत इत्युच्चारणरूप इत्यर्थः। **अद्य**। **ते**। **व्यामोहः**। **कञ्चुकी**। **देव**! **न खलु**। **कश्चित्**। **व्यामोहः**। **सत्यम्**। **एव**। **ब्रवीमि**-तथाहि-'**भीमेन**। **मरुता** वायुना। **भवतः**। **रथकेतनं** रथस्य पताका 'केतनं ध्वजमस्त्रियाम्।' इत्यमरः। **भग्नम्**। तच्च-**किङ्किणीक्वाणबद्धाक्रन्दमिव** किङ्किणीनां क्षुद्रघण्टिकानां क्वाणः शब्दविशेषस्तेन बद्धो य आक्रन्दो भञ्जनपतनयोः शब्दो यस्य तदिव। **क्षितौ**। **पतितम्**। अत्रेदम्बोध्यम्-'भग्नं भीमेन मरुता भवतो रथकेतनम्।' इत्यभिधित्सुः कञ्चुकी यावत् 'भग्नम्' इत्यभिहितवान्, तावत्-ऊरुयुगमध्यासितुं भानुमतीमभिदधानः-अत एव-'ऊरुयुग'मिति स्मरन्, तदेव श्रुतवान्, अत एव-'किमि'त्यपृष्ट्वैव राजा 'केन कस्ये'ति

---

१ ''आर्य्ये! किमनिष्टं मन्त्रयसे'' इति संस्कृतम्।

अत्र-दुर्य्योधनोरुभङ्गरूपप्रस्तुतसङ्क्रान्तमर्थोपक्षेपणम् ।

३४० द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः ।
प्रधानार्थान्तराक्षेपी पताकास्थानकं परम् ॥ ३४५ ॥

यथा रत्नावल्याम्—

"उद्दामोत्कलिकाविपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युतिमुखं देव्याः करिष्याम्यहम् ॥ ३४० ॥'

अथ भाव्यर्थः सूचितः

एतानि चत्वारि पताकास्थानकानि क्वचिन्मङ्गलार्थं क्वचिदमङ्गलार्थमपि सर्वसन्धिषु भवन्ति ।

---

पप्रच्छ, सोऽपि तथैवोत्तरितवान्, राजा च-'ऊरुयुग'मिति स्मरन् चुकोप, कुञ्चुकी च 'सर्वमश्रुत्वैव भवान् कुप्यती'ति 'न मे कश्चिद् व्यामोह'इति निवेदयाञ्चक्रे ।" इति ॥ ३३९ ॥'

उदाहरणं सङ्गमयति-अत्रेत्यादिना । स्पष्टम् । अयम्भावः-'रथकेतनं भग्नम्'इति निवेदनरूपस्य अर्थस्योपक्षेपणं 'दुर्योधनोरुयुगं भग्नम्' इत्यत्र पर्य्यवसितम्, एवं च-भग्नमित्यव्यक्तार्थम्, कर्त्रादीनामनुच्चारितत्वात् । भीमेन भवत इति च ऊरुभङ्गेऽन्वयोपयोगि, तदेवाभिप्रायान्तरप्रयुक्तेन प्रत्युत्तरेणोपेतम् । मरुता रथकेतनमिति च विशेषनिश्चयप्राप्तिरूपम् । इति ।

चतुर्थं लक्षयति-३४० द्व्यर्थ इत्यादिना ।

३४० द्व्यर्थः । अतएव-सुश्लिष्टः । काव्ययोजितः काव्ये पद्यमयप्रबन्धे इति भावः । एतेन-गद्यस्य निरासः । अत एव-'भग्न'मिति प्रागुदाहृतादेतस्य भेद इति बोध्यम् । प्रधानार्थान्तराक्षेपी प्रधानं फलमेवार्थान्तरमिति तदाक्षिपतीत्येवंशीलः । वचनविन्यासः । परमन्यत् पताकास्थानकम् ॥ ३४५ ॥

उदाहरति-यथा-रत्नावल्याम्-"उद्दामोत्कलिके"त्यादौ ।

"अद्य । उद्दामोत्कलिकाविपाण्डुररुचमुद्दामात्यन्तमुद्गता याः कलिकास्ताभिः, अन्यत्र-उद्दामात्यन्तं योत्कलिकोत्कण्ठा तया विपाण्डुरा रुक् कान्तिर्यस्यास्ताम् । 'उत्कण्ठोत्कलिके समे' इत्यमरः । प्रारब्धजृम्भां प्रारब्धा जृम्भा विकासः,अन्यत्र विरहाधिना कार्य्येषु विरतिसूचकं मुखव्यादानलक्षणं चेष्टितं यस्यास्ताम् । क्षणात् । अविरलैः श्वसनोद्गमैः श्वसनस्य वायोः, अन्यत्र श्वासस्योद्गमास्तैः । आत्मनः । आयासं कम्पारूपं खेदम् । आतन्वतीम् । समदनां मदनेन वृक्षविशेषेण, अन्यत्र कामदेवेन सह वर्त्तते इति तां तथाविधाम् । इमाम् । उद्यानलताम् । अन्यामपराम् । नारीम् । इव । पश्यन् । अहम् । ध्रुवम् । देव्या वासवदत्तायाः । कोपविपाटलद्युति कोपेन विपाटला विशेषेण पाटला श्वेतरक्ता द्युतिर्यस्य तत्तथाविधम् । मुखम् । करिष्यामि । नायिकायाः सपत्नीदर्शनमसह्यमिति तथोक्तमिति बोध्यम् । अत्र शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ ३४० ॥"

उदाहरणफलमाह-अत्रेत्यादिना ।

अत्राऽस्मिन्नुदाहृते पद्ये । भावी भविष्यः । सागरिकायामनुनयं निदधानं राजानं विलोक्य वासवदत्तायाः कोप इति शेषः । अर्थः । सूचितः । तथा चाऽत्र प्रधानं वासवदत्तायाः कुतूहलेन प्रणयकोपोद्भावनम्, अर्थान्तरं पुनः साक्षादेतदिति बोध्यम् ।

ननु कुत्र कविना किमर्थमेतानि निवेशनीयानि इत्याशङ्क्याह-एतानीत्यादिना ।

एतानि निर्दिष्टानि । चत्वारि । पताकास्थानकानि । क्वचित् कस्मिंश्चित् रूपके इत्यर्थः । मङ्गलार्थम् । क्वचिद् । अमङ्गलार्थम् । अपि । सर्वसन्धिषु सर्वे वक्ष्यमाणाः पञ्चविधाः सन्धयो विभागास्तेषु । भवन्ति 'इति बोध्य' मिति शेषः ।

काव्यकर्तुरिच्छावशाद्भूयोऽपि भवन्ति। यत् पुनः केनचिदुक्तम्-'मुखसन्धिमारभ्य सन्धिचतुष्टये क्रमेण भवन्ति' इति,तदन्ये न मन्यन्ते; एषामत्यन्तमुपादेयानामनियमेन सर्वत्राऽपि सर्वेषामपि भवितुं युक्तत्वात्।

३४१ यत्स्यादनुचितं वस्तु नायकस्य रसस्य वा।
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत् ॥ ३४६ ॥

अनुचितमितिवृत्तं यथा-रामस्य च्छद्मना वालिवधः, तच्चोदात्तराघवे नोक्तमेव। महावीरचरिते तु वाली रामवधार्थमागतो रामेण हत इत्यन्यथाकृतः।

३४२ अङ्केष्वदर्शनीया या वक्तव्यैव च सा मता।
या च स्याद्वर्षपर्यन्तं कथा दिनद्वयादिजा ॥ ३४७ ॥
अन्या च विस्तरात् सूच्या साऽर्थोपक्षेपकैर्बुधैः।

---

नचैष एव नियम इत्याह-काव्येत्यादिना।

**काव्यकर्तुः** रूपकनिर्मातुः कवेरित्यर्थः। **इच्छावशात्।** **भूयः** पुनः सन्धिमुल्लङ्घ्येति यावत्। **अपि। भवन्ति।** एतदेव परेषां मतं निराकृत्य समर्थयते-**यत्। पुनः। केनचित्** तु केश्चित्, एतेनास्याश्रद्धेयत्वं सूचितम्। **उक्तम्।** '**मुखसन्धिं** मुखसञ्ज्ञकं सन्धिमित्यर्थः। **आरभ्य। सन्धिचतुष्टये** मुखे प्रतिमुखे गर्भे विमर्शे चेति चतुर्षु सन्धिष्विति यावत्। **क्रमेण** निर्देशानुपूर्व्या। **भवन्ति।** 'पताकास्थानकानी'ति शेषः। **इति। तत्।** अन्ये। अस्मदादय इत्यर्थः। **न। मन्यन्ते।** हेतुं निर्दिशति-**एषां** पताकानामिति भावः। **अत्यन्तम्। उपादेयानाम्। अनियमेन** क्रमेण भवन्तीति नियमत्यागेन। **सर्वत्र** सर्वेषु'सन्धिषु' इति शेषः। **अपि। सर्वेषां** 'पताकास्थानकाना'मिति शेषः। **अपि। भवितुम्। युक्तत्वात्।** मुखे सन्धौ प्रथममेव पताकास्थानकं स्यादिति नियमो न युक्तः, न वा सन्धिष्वेव पताकास्थानकनिवेशः स्यादित्यपि युक्त इति भावः।

काव्ये च कवेरेव स्वातन्त्र्यं, न तु तत्र तस्य पारतन्त्र्यमिति दर्शयितुमाह-३४१ **यदि**त्यादि।

३४१ **यत्। नायकस्य।** सन्दर्भप्रधानस्येत्यर्थः। **अनुचितम्। वस्तु** इतिवृत्तमिति भावः। **स्यात्।** वा यद्वेत्यर्थः। **रसस्य। विरुद्धम्।** स्यादिति पूर्वतोऽन्वेति। **तत्। परित्याज्यम्। वा। अन्यथा। प्रकल्पयेत्** यथा नायकस्य रसस्य चापकर्षो न भवेत्तथा कविर्यतेतेति भावः। अत एवाहुर्ध्वन्यालोककाराः-'अपारे काव्यसंसारे कविरेव प्रजापतिः। यथाऽस्मै रोचते विश्वं तथेदं परिवर्त्तते'इति। विश्वं काव्यसंसारः। 'भावानचेतनानपि चेतनवच्चेतनानचेतनवत् व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया' इति च ॥ ३४७ ॥

उदाहरणेनोक्तमर्थं किञ्चित्स्पष्टयति-**अनुचित**मित्यादिना।

**अनुचितं** स्वरूपाऽपकर्षकम्। अत एव प्रहसनादौ धृष्टनायकादेः सत्त्वात्-,धीरोदात्ताद्यनुचितमप्युचितमेवेति बोध्यम्। **इतिवृत्तम्। यथा-रामस्य** रामकृतः। सम्बन्धसामान्यविवक्षया षष्ठी। **छद्मना** कपटेन। **वालिवधः** वालिहननम्। तद्वालिवधरूपमितिवृत्तमिति भावः। **च। उदात्तराघवे** नाटके। **उक्तम्। एव। न।** किन्तु परित्यक्तमिति भावः। **महावीरचरिते** भवभूतिकृतनाटके। **तु** 'पञ्चमेऽङ्के'इति शेषः। **वाली। रामवधार्थम्।** 'माल्यवत आग्रहा'दिति शेषः। **आगतः। रामेण। हतः।** इतीत्येवम्। **अन्यथाकृतो** विपरीतः कृतः। एवं प्रधानरसस्य विरुद्धमपि न वर्णनीयम्। इति बोध्यम्।

ननु युद्धादि अदर्शयित्वा कथं वीररसप्रधानः प्रबन्धः पूर्णो भवेदित्याशङ्क्य तदुपायमाह-३४२ **अङ्केष्वि**त्यादिना।

३४२ **अङ्केषु। अदर्शनीया** दर्शयितुमनुचिता। **या** युद्धाधरपानादिस्वरूपा। 'कथे'ति शेषः **सा। च। वक्तव्या। एव। मता।** सम्मतेति पाठान्तरे तु, सेत्यध्याहार्य्यम्। **या। च। वर्षपर्यन्तं** यावत्संवत्सरं 'सम्पादिते'ति

अङ्केष्वदर्शनीया कथा युद्धादिकथा।

३४३ वर्षादूर्ध्वं तु यद्वस्तु तत्स्याद्वर्षादधोभवम् ॥ ३४८ ॥

उक्तं हि मुनिना-

'अङ्कच्छेदे कार्यं मासकृतं वर्षकृतं वापि। तत्सर्वं कर्तव्यं वर्षादूर्ध्वं न तु कदाचित् ॥' इति।

एवं च चतुर्दशवर्षव्यापिनि अपि वनवासे ये ये विराधवधादयः कथांशास्तेते वर्षवर्षावयव-दिनयुग्मादीनामेकतमेन सूचनीया न विरुद्धाः।

३४४ दिनावसाने कार्यं यद्दिने नैवोपपद्यते।

अर्थोपक्षेपकैर्वाच्यमङ्कच्छेदं विधाय तत् ॥ ३४९ ॥

---

शेषः। स्यात्। सा। दिनद्वयादिजा। द्वाभ्यां दिनाभ्यां त्रिभ्यश्चतुर्भ्यो वा दिनैः सम्पादिता दर्शनीयेति भावः। अन्या नायकस्वभावानुकूला रसानुगुणा एकदिनसम्पादितेति भावः। च। सा। कथा। बुधैः। विस्तरात्। अर्थोपक्षेपकैर्वक्ष्यमाणलक्षणैर्वाक्यैस्तद्द्वारेति यावत्। सूच्या। अर्थोपक्षेपकाश्च विष्कम्भकप्रभृतयः पञ्च वक्ष्यन्ते। इदमुक्तम्-युद्धादि साक्षाददर्शयित्वा केवलं वाचा दर्शयेत्, वार्षिकं च कार्यं दिनाभ्यां दिनैर्वा त्रिभिर्निर्वर्तयेत्। दैनिकं रसस्य नायकस्य कार्यं चानुगतं यथावत् विष्कम्भकादिना प्रदर्शयेत् इति ॥ ३४८ ॥

अङ्केषु किमदर्शनीयमित्याशङ्क्याह-अङ्केष्वित्यादिना। स्पष्टम्।

ननु वर्षादधिककाले एव यन्निर्वर्त्यं तत्कथं सम्पादनीयमित्याशङ्क्याह-३४३ वर्षादित्यादिना।

३४३ वर्षादूर्ध्वमूर्ध्वभवम्। तु। यत्। वस्तु। तत्। वर्षात्। अधोभवं 'कर्तव्य'मिति शेषः। स्यात् ॥ ३४८ ॥

उक्तमर्थं मुनिसम्मत्या द्रढयितुमाह उक्तं हीत्यादिना-

हि यतः। मुनिना भरतमुनिना। उक्तम्। किमिति तदाह-'मासकृतं मासभवम्। वर्षकृतमेकवर्षमात्र-भवम्। अपि। वा। अङ्कच्छेदे। विष्कम्भादौ अङ्कसमाप्तौ वा। कार्य्यमभिनेयम्। वर्षात्। ऊर्ध्वम्। तु। तत्। सर्वं। 'कृतमपी' ति शेषः। न। कदाचित्। अपि कर्त्तव्यम् अभिनेयम्। किन्तु वर्षान्तर्गतमिव प्रयुञ्जीतेत्यर्थः। यदि अनेकवर्षैरपि कृतं तदाऽपि तत्सर्वं मासिकम्, अन्ततः वार्षिकं कृत्वाऽभिनयेत्। एतदपि यस्मिन्विष्कम्भकाद्यन्यतमे दर्शयितुमारब्धं तस्मिन्नेव तस्य वा अङ्कस्य समाप्तौ अवश्यमभिनेयम्। तात्कालिकं हि यथा चमत्कुरुते न तथा कालान्तरसाध्यमिति भावः।

फलमवगमयति-एवं चेत्यादिना।

एवं निरूपितनयेन। च पुनः। चतुर्दशवर्षव्यापिनि चतुर्दशवर्षकालं यावत् सम्पादिते इति भावः। अपि। किं पुनस्ततो न्यूनेन कालेन निर्वर्तिते इति भावः। वनवासे। ये ये। विराधवधादयः। आदिना वालिनिग्रह-णादीनां ग्रहणम्। कथांशाः कथाया अंशा विभागाः। तेते। सर्वे इति शेषः। वर्षवर्षावयवदिनयुग्मादीनां वर्षं च वर्षावयवः (मासर्त्वादिरूपः) दिनयुग्मं चेति तानि आदौ येषां (दिनत्रयादीनां) तेषाम्। एकतमेन। सूचनीयाः। ननु तर्हि प्रसिद्धेर्विरोध इत्याशङ्क्याह-न विरुद्धाः। 'नाटके तथैवाऽभिनयत्वा' दिति शेषः।

यच्चारितमभिनीय प्रदर्शयितुमारब्धोऽङ्कस्तच्चेदत्र न सर्वं तथोपपद्येत तर्हि किं कार्य्यमित्याह-३४४ दिनाव-सान इत्यादिना।

३४४ यत्। दिने। 'निर्वृत्त' मिति शेषः। कार्यं 'सर्व'मिति शेषः। दिनावसाने दिनमवसानमन्तोऽन्त्यावधिर्यस्य तस्मिन्, तथाभूतेऽङ्के इत्यर्थः। न। एव। उपपद्यते। तत्। अर्थोपक्षेपकैस्तदभिन्नमिति भावः। अभेदे तृतीया। अङ्कच्छेदम्। विधाय। वाच्यम्। अयम्भावः-एकस्मिन्दिने यन्नायकेन कृतं चरितं तदेकस्मिन्नेवाङ्के दर्शनी-यम्। अथ यदि तदतिविस्तृतं स्यात्तेन चाङ्कस्य भूयस्त्वं सम्भावयेत्तदा किञ्चित्तस्याऽऽदौ विष्कम्भकादि विधाय वाच्यं

के तेऽर्थोपक्षेपका इत्याह–

३४५ अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ ।
चूलिकाऽङ्कावतारोऽथ स्यादङ्कमुखमित्यपि ॥ ३५० ॥
३४६ वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः ।
सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ॥ ३५१ ॥
मध्येन मध्यमाभ्यां वा पात्राभ्यां वा प्रयोजितः ।
शुद्धः स्यात्स तु सङ्कीर्णो नीचमध्यमकल्पितः ॥ ३५२ ॥

तत्र शुद्धो यथा–मालतीमाधवे श्मशाने कपालकुण्डला । सङ्कीर्णो यथा–रामाऽभिनन्दे क्षपणककापालिकौ–

---

तथाऽऽह भरतः‘एकदिवसप्रवृत्तः कार्यस्त्वङ्कोऽथ बीजमाश्रित्य । आवश्यककार्याणामविरोधेन प्रयोगेषु ॥ दिवसाऽवसानकार्यं यद्यङ्के नोपपद्यते सर्वम् । अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधेयं हि ॥’ इति ॥ ३४९ ॥

कारिकार्थं समवगमयितुं स्वयमाह–क इत्यादि ।

ते यैरङ्कभूयस्त्वनिवृत्तये कार्यं वाच्यमिति । के । **अर्थोपक्षेपका** अर्थमभिनेयं कार्यमुपक्षिपन्ति सूचयन्ति इति ते तथोक्ताः । इत्याशङ्कायाम् । **आह**–३४५ अर्थोपक्षेपका इत्यादिना ।

३४५ **विष्कम्भकप्रवेशकौ** विष्कम्भकः प्रवेशकश्चेति द्वावित्यर्थः । विष्कभ्नाति रुणद्धीति विष्कम्भः‘कर्मण्यण् ।’ ३।२।१७० इत्यण् सञ्ज्ञायां कन् । प्रवेशयति निदधाति स्वान्तर्वाच्यविशेषमिति प्रवेशकः । **चूलिका** चूल्यते समुन्नीयतेऽनयेति तथोक्ता । तदाख्य एकः ‘सञ्ज्ञायाम् ।’ ३।३।१०९ इति ण्वुल् । **अङ्काऽवतारो**ऽङ्केऽवतारो यस्य तथोक्तः । इत्येकः । **अथ** । **अङ्कमुखम**ङ्कस्य मुखं द्वारमिति तथोक्तम् । **स्यात्** । इत्येकः । एवं **पञ्च–अपि** । **अर्थोपक्षेपकाः** । ‘भवन्ती’ति शेषः ॥३५०॥

एवं नामतो निर्दिश्य स्वरूपतो निर्देष्टुमाह–३४६ **वृत्ते** इत्यादि ।

१४६ **अङ्कस्य** । **आदावा**रम्भे । **वृत्तवर्तिष्यमाणानां** वृत्ता अतीता वर्तिष्यमाणा आगमिष्यन्तश्चेति तेषाम् । **कथांशानाम्** । **निदर्शको** निर्देशकारी । **सङ्क्षिप्तार्थः** सङ्क्षिप्तोऽर्थो यत्र तथोक्तः । **तु** । **विष्कम्भः** । **दर्शितः** । उपादेयत्वेन प्रतिपादितः । अस्योपादेयत्वं वदति यथा भरतः–‘यत्रार्थस्य समाप्तिर्न भवत्यङ्के प्रयोगबाहुल्यात् । विष्कम्भऽसौ स्वल्पः प्रवेशकैः सोऽभिधातव्यः ॥’इति । स च–**मध्येन**‘पात्रेणे’ति शेषः । अस्य **वा**ऽथवा । **मध्यमाभ्याम्** । **पात्राभ्याम्** । **प्रयोजितः** । **शुद्धः** । **स्यात्** । **नीचमध्यमकल्पितो** नीचमध्यमाभ्यां विसदृशाभ्यां पात्रविशेषाभ्यां कल्पित इति तथोक्तः । **सः** । **तु सङ्कीर्णः** । तथा चायं द्विविधः शुद्धसङ्कीर्णभेदात्तत्र शुद्ध एकेन मध्यमेन पात्रेण द्वाभ्यां वा मध्यमाभ्यां पात्राभ्यां सम्प्रयोजितः सम्यक्त्वं च संस्कृतप्राकृतात्मकत्वान्नीचमध्यमोभयविधपात्राभ्यां कल्पितः सङ्कीर्णः अत एवाऽत्र संस्कृतप्राकृतोभयभाषाप्राधान्यमिति निष्कृष्टोऽर्थः । यथाऽह भरतः–‘शुद्धः सङ्कीर्णो वा द्विविधो विष्कम्भकोऽपि विज्ञेयः । मध्यमपात्रः शुद्धः सङ्कीर्णो नीचमध्यकृतः ॥ मध्यमपुरुषैर्नित्यं योज्यो विष्कम्भकोऽपि तत्त्वज्ञैः । संस्कृतवचनानुगतः सङ्क्षिप्तार्थः प्रवेशकवत् ॥ ३५१ ॥ ३५२ ॥

उदाहरति–तत्रेत्यादिना ।

**तत्र** तयोः शुद्धसङ्कीर्णयोर्मध्ये । **शुद्धः** । **यथा– मालतीमाधवे** प्रकरणरूपके । **श्मशाने** । **कपालकुण्डला** अघोरघण्टस्य कापालिकाऽन्तेवासिनी तया प्रयोजित इति शेषः । अयम्भावः–मालतीमाधवे तृतीयेऽङ्के–“(ततः प्रविशति आकाशयानेन भीषणोज्ज्वलवेषा कपालकुण्डला ) कपालकुण्डला–( परिक्रम्यावलोक्य च गन्धमाघ्राय ) इदं तावत्पुराणनिम्बतैलाक्तपरिसृज्यमानरसोनगन्धिभिश्चिताधूमैः पुरस्ताद्विभावितस्य महतः श्मशानवटस्य नेदीयः करालायतनम्..: ( परिक्रम्य निष्क्रान्ता )” इत्येवं कपालकुण्डलाया मध्यमपात्रत्वाच्छुद्धो विष्कम्भः । **सङ्कीर्णः** । **यथा** । **रामाभिनन्दे** ।

अथ प्रवेशकः—

३४७ प्रवेशकोऽनुदात्तोक्त्या नीचपात्रैः प्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥ ३५३ ॥

अङ्कद्वयस्यान्तरिति प्रथमेऽङ्केऽन्त्ये चास्य प्रतिषेधः । यथा वेणीसंहारेऽश्वत्थामाङ्के राक्षस-मिथुनम् ।

अथ चूलिका—

३४८ अन्तर्जवनिकासंस्थैः सूचनाऽर्थस्य चूलिका ।

यथा महावीरचरिते चतुर्थाऽङ्कस्यादौ "( नेपथ्ये ) भोभो वैमानिकाः । प्रवर्त्तन्तां रङ्गमङ्गलानि" इत्यादिना रामेण परशुरामो जितः इति नेपथ्ये पात्रैः सूचितम् ।

अथाङ्कावतारः—

३४९ अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः ॥ ३५४ ॥
यत्राऽङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः ।

---

क्षपणककापालिकौ । ताभ्यां मध्यमजघन्यपात्राभ्यां प्रयोजित इति शेषः । यथा वा महावीरचरिते द्वितीयाङ्कादौ माल्यवता शूर्पणखया च कल्पित इति दिक् ।

एवं सप्रभेदकं विष्कम्भकं लक्ष्यलक्षणाभ्यां निरूप्य प्रवेशकं लक्षयितुमाह—अथेत्यादि ।

अथ विष्कम्भकोदाहरणानन्तरम् । **प्रवेशकः** 'लक्ष्यते' इति शेषः । ३४७ **प्रवेशक** इत्यादिना ।

३४७ **अनुदात्तोक्त्या**ऽनुदात्ता संस्कृतेतरेति भावः, असावुक्तिस्तया तद्द्वारा । **नीचपात्रैः** । **प्रयोजितः** । **अङ्कद्वयान्तः** द्वयोरङ्कयोर्मध्ये इति भावः । अत एवाद्यन्ताभ्यामन्यत्र सम्भवतीति भावः । **प्रवेशकः** । **विज्ञेयः** । अत्र च-**शेषम्** । **यथा** । **विष्कम्भके** 'तथा कथांशानां निदर्शनम्' इति शेषः ॥ ३५३ ॥

अन्तःपदार्थं विवृणोति—अन्तरित्यादिना । स्पष्टम् ।

एवं प्रवेशकमुदाहृत्य चूलिकां लक्षयितुमुपक्रमते—अथेत्यादिना ।

अथ । **चूलिका** लक्ष्यते—३४८ **अन्तरित्यादिना** ।

३४८ **अन्तर्जवनिकासंस्थैः** जवनिकायाःपटक्षेपस्याऽन्तरित्यन्तर्जवनिका तत्र सन्तिष्ठन्तीति तथोक्तैः । आहिताऽ-ग्न्यादित्वात् परनिपातः । पात्रैरिति भावः । **अर्थस्य** । **सूचना** । **चूलिका** । अत्र काव्येन्दुप्रकाशकाराः—"अनिर्गता-प्रविष्टैश्च नेपथ्यान्तर्गतैस्तथा । प्रयोजिता मध्यपात्रैः सूचिका चूलिका भवेत् ॥ कर्त्तव्याऽऽद्येतराङ्केषु स्यादादौ मध्य एव वा । सा खण्डाखण्डभेदेन द्विविधा परिकीर्तिता ॥ आद्यान्तः स्याद् द्वितीया तु सप्रवेशविनिर्गमा ।" इति । तथा च-चूलिका द्विप्रभेदा खण्डाऽखण्डा चेति, तत्राद्या पात्रप्रवेशरहिता, द्वितीया पुनः पात्रप्रवेशनिर्गमसहितेति तत्त्वार्थः ।

उदाहरति—यथेत्यादिना ।

**यथा** । **महावीरचरिते** । **चतुर्थाङ्कस्य** । **आदौ**आरम्भे । "( **नेपथ्ये** अन्तर्नटानां वेषपरिवर्तनस्थाने जवनि-कायाम् ) **भोभोः** (सम्भ्रमे द्विरुक्तिः) । **वैमानिका** विमानसञ्चारिणः । 'श्येन चरति ।' ४।४।८ इति ठक् । **रङ्गमङ्ग-लानि** रङ्गस्य मङ्गलानीति तानि । **प्रवर्तन्ताम्** ।" **इत्यादिना** । **रामेण** रामभद्रेण । **परशुरामो** जमदग्निनन्दनः । **जितः** पराजितः । **इति** । **नेपथ्ये** । **पात्रैः** । **सूचितम्** । अयम्भावः—तत्र हि प्रवर्तन्तां मङ्गलानीत्युद्घोषणानन्तरम्—"कृशाश्वान्तेवासी जयति भगवान्कौशिकमुनिः सहस्रांशोर्वंशे जयति जगति क्षत्रमधुना । विनेता क्षत्रारेर्जगदभयदानव्रतधनः शरण्यो लोकानां दिनकरकुलेन्दुर्विजयते ।' इति पात्रैः पठित्वा 'रामेण परशुरामो जितः' इति सूचितं नतूक्तम् । इति ।

एवं चूलिकामुदाहृत्याङ्कावतारं लक्षयति—अथेत्यादिना ।

अथ चूलिकायाः लक्ष्यलक्षणनिर्देशानन्तरम् । **अङ्कावतारः** 'लक्ष्यते' इति शेषः । ३४९ **अङ्कान्ते** इत्यादिना ।

३४९ **यत्र** यस्मिन् । **अङ्कान्ते**ऽङ्कसमाप्तौ सत्याम् । **पात्रैः** । **सूचितः**स्तात्पर्येण निर्दिष्टस्वरूपः । **तदङ्कस्य**

यथा अभिज्ञानशाकुन्तले पञ्चमाऽङ्के पात्रैः सूचितः षष्ठाङ्कस्तदङ्कस्याङ्गविशेष इवावतीर्णः।

अथाङ्कमुखम्-

**३५० यत्र स्यादङ्क एकस्मिन्नङ्कानां सूचनाऽखिला ॥ ३५५ ॥**
**तदङ्कमुखमित्याहुर्बीजाऽर्थख्यापकं च यत्।**

यथा मालतीमाधवे प्रथमाङ्कादौ कामन्दक्यवलोकिते भूरिवसुप्रभृतीनां भाविभूमिकानां परिक्षिप्तकथाप्रबन्धस्य च प्रसङ्गात्सन्निवेशं सूचितवत्यौ।

---

तस्याङ्कस्य। **अविभागतो** विभागमन्तरा इति भावः। यः-**अङ्कः**।-**अवतरति**। एष स इत्यर्थः। **अङ्कावतारः**। **इति**। **स्मृतः**। यथाह वा भरतः-अङ्कान्तरेऽथवाऽङ्के निपतति यस्मिन् प्रयोगमासाद्य। बीजाऽर्थयुक्तियुक्तो ज्ञेयो ह्यङ्कावतारोऽसौ।' इति ॥ ३५४ ॥

उदाहरति-यथेत्यादिना।

**यथा**। **अभिज्ञानशाकुन्तले**। **पञ्चमाङ्के** लक्षणया तदन्ते। **पात्रै**र्नागरिकादिनामधेयैः। **सूचितः**। **षष्ठाङ्कः**। **तदङ्कस्य** पञ्चमाङ्कस्य। **अङ्कविशेष इव**। **अवतीर्णः**। अयम्भावः-अभिज्ञानशाकुन्तले पञ्चमाङ्के समाप्ते महाराजस्य दुष्यन्तस्याङ्गुलीयकविक्रेतारं मत्स्याजीविनं निबध्यानुगाभ्यां सहितस्य नागरिकस्य राजश्यालस्य प्रवेशः, तदनन्तरं ताडनभर्त्सनादि महाराजं प्रति च तस्य सर्वस्य तथा निवेदनम्, अङ्गुलीयकदर्शनेन शकुन्तलापरिणयस्मरणं, मोचनपुरःसरं च तस्य मत्स्याजीविनः 'धीवर'! महत्तरो तुमं पिअवअस्सअ दाणिं मे संवुत्तो। कादंबरीसिक्खअं अह्माणं पढमसोहिदं इच्छीअदि ता सोडिआपणं एव्व गच्छामो''इति नागरिकेणानुनयनम्। ( ततः प्रविशति आकाशयानेन सानुमती नामाप्सरसः) इत्यारभ्यमाणस्य षष्ठाङ्कस्यादौ बीजभूतमुदन्तमनुभावयन्नङ्कोऽवतीर्णः। अतोऽस्याङ्काऽवतार इत्यार्थिकी सञ्ज्ञा। सुधाकरकारास्तु-'यन्नीचैः केवलं पात्रैर्भाविभूताऽर्थसूचनम्। अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशकः॥' इति प्रवेशकाऽपरपर्य्यायमेनमाहुरिति।

एवमङ्कावतारमुदाहृत्य अङ्कमुखं लक्षयितुमुपक्रमते-अथेत्यादिना।

अथाङ्कावतारोदाहरणानन्तरम्। **अङ्कमुखं** 'लक्ष्यते' इति शेषः। ३५० यत्रेत्यादिना।

३५० **यत्र** यस्मिन्। **एकस्मिन्**। **अङ्के**। **अङ्कानाम**न्येषामिति शेषः। **अखिला**। **सूचना**। **तत्**। **अङ्कमुखम्**। **इत्याहुः**। 'आचार्य्या' इति शेषः। **यत्**। **च बीजार्थख्यापकं** बीजार्थस्य मूलभूतविषयस्य ख्यापकमिति तथोक्तम्। 'आहुः' इति पूर्वतोऽन्वेति। यथाह भरतः-'विश्लिष्टमुखमङ्कस्य स्त्रिया वा पुरुषस्य वा। यदुपक्षिप्यते पूर्वं तदङ्कमुखमुच्यते॥' इति।

उदाहरति-यथेत्यादिना।

**यथा**। **मालतीमाधवे** तदाख्ये प्रकरणे। **प्रथमाङ्कादौ**। **कामन्दक्यवलोकिते** कामन्दकी अवलोकिता चेत्यर्थः। **भूरिवसुप्रभृतीनाम्**। **च**। **भाविभूमिकानाम्**। **परिक्षिप्तकथाप्रबन्धस्य**। **प्रसङ्गात्**। **सन्निवेशम्**। **सूचितवत्यौ**। अयम्भावः-भाविनीनां वेषरचनानामपि नाम तयोः कल्याणिनोर्भूरिवसुदेवरातापत्ययोर्मालतीमाधवयोरभिमतः पाणिग्रहः स्यात्। "अयि किन्न वेत्सि यदेकत्र नो विद्यापरिग्रहाय नानादिगन्तवासिनां साहचर्य्यमासीत् तदैव चास्मत्सौदामिनीसमक्षमनयोर्भूरिवसुदेवरातयोर्वृत्तेयं प्रतिज्ञा। अवश्यमावाभ्यामपत्यसम्बन्धः कर्तव्य इति तदिदानीं विदर्भराजमन्त्रेणासता देवराजेन माधवं पुत्रमान्वीक्षिकिश्रवणाय कुण्डनपुरादिमां पद्मावतीं प्रहिण्वता सुविहितमित्यादिना कामन्दक्या भूरिवसुदेवरातमालतीमाधवादीनां तत्तच्चरितानां च" अज्ज माहदो वि कोदूहलमुप्पादिअ मए

---

१ "हे धीवर! महत्तरस्त्वं प्रियवयस्यक इदानीं मे संवृत्तः। कादम्बरीसखित्वमस्माकं प्रथमशोभितमिष्यते। इच्छौण्डिकापणमेव गच्छामः" इति संस्कृतम्।

**३५१ अङ्कान्तपात्रैर्वाऽङ्कास्यं भिन्नाङ्कस्यार्थसूचनात् ॥ ३५६ ॥**

**अङ्कान्तपात्रैरङ्कान्ते प्रविष्टैः पात्रैः। यथा महावीरचरिते द्वितीयाङ्कान्ते '(प्रविश्य) सुमन्त्रः–भगवन्तौ वशिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः। इतरे–क्व भगवन्तौ। सुमन्त्रः–महाराजदशरथस्यान्तिके। इतरे–तत्तत्रैव गच्छामः। 'इत्यङ्कसमाप्तौ ( ततः प्रविशत उपविष्टौ वशिष्ठविश्वामित्रौ जामदग्न्य-शतानन्दौ च) इत्यत्र–पूर्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण शतानन्दजनककथाविच्छेदे उत्तराङ्कमुख-सूचनादङ्कमुखम् इति। एतच्च धनञ्जयमतानुसारेणोक्तम्। अन्ये तु अङ्कावतरणेनैवेदं गतार्थमित्याहुः।**

---

प्पउत्तमअणमहूसवं मअदणोज्जाणं पभादि अणुप्पेसिदो तहिं किल मालदी गमिस्सदि तदो अण्णोण्णसंदंसणं भोडत्ति'। तदो किं ति मालदीं अमच्चो माहवस्स अप्पणा ण पडिवादेहि जेण चोरिआविआहे भअवदी तुवरावेदि[2]।॥'' इत्यादिनाऽ-वलोकितया च मदनोद्यानादीनां परिणयरहस्यादेश्च सूचना विहिता। तस्मात् स्फुटमेतस्याङ्कमुखत्वमिति।

दशरूपकारमतेनास्य लक्षणान्तरं दर्शयति–३५१**अङ्कान्तपात्रै**रित्यादिना।

३५१ **वा** यद्वा। **अङ्कान्तपात्रै**रङ्कान्ते पात्राणि तैः। अङ्कान्ते प्रविष्टैः पात्रैरिति भावः। **भिन्नाङ्कस्य**। यत्राङ्कमुखं स्यात्ततो भिन्नस्याङ्कस्येत्यर्थः। छिन्नाङ्कस्येति पाठान्तरेऽप्ययमेवाऽर्थः। **अर्थसूचनात्**। **अङ्कास्य**मङ्कमुखं 'कथ्यते' इति शेषः ॥ ३५६ ॥

कारिकां सुगमयितुमङ्कान्तपात्रैरिति पदं व्याचष्टे–**अङ्कान्तपात्रै**रित्यादिना।

**अङ्कान्तपात्रै**रित्यस्येतिशेषः। **अङ्कान्ते। प्रविष्टैः। पात्रैः** एवं च–शाकपार्थिवादित्वान्मध्यमपदलोपस्तथा च अङ्कान्ते प्रविष्टानि पात्राणि तैरित्येव विग्रहः।

उदाहरति–**यथे**त्यादिना।

**यथा। महावीरचरिते। द्वितीयाङ्कान्ते। "(प्रविश्य)। सुमन्त्रः। भगवन्तौ। वशिष्टविश्वामित्रौ** अतिशयेन वशी जितेन्द्रिय इति वशिष्ठः स च, विश्वं मित्रमस्येति स चेति तथोक्तौ। 'मित्रे चर्षौ। ६।३।१३० इति दीर्घः। **भवतो** युष्मान्। **सभार्गवान्**परशुरामजनकशतानन्दानिति भावः। **आह्वयतः। इतरे** परशुरामादयः। **क्व। भगवन्तौ** वशिष्ठविश्वामित्रावित्यर्थः। **सुमन्त्रः। महाराजदशरथस्य। अन्तिके** समीपे। 'अन्तिकं निकटे वाच्यलिङ्ग'मिति विश्वमेदिन्यौ। **इतरे। तत्।** तस्मात् **तत्र** दशरथस्यान्तिके। **एव**। गुरुवचनादिति पाठान्तरम्। **गच्छाम।''इति। अङ्कसमाप्तौ** सत्यामिति शेषः। तृतीयाङ्कारम्भे इति भावः। **"(ततः। उपविष्टौ। वसिष्ठविश्वामित्रौ। जामदग्न्यशतानन्दौ। च। प्रविशतः)" इत्यत्र। पूर्वाङ्कान्ते।** तृतीयापेक्षया पूर्वोऽङ्को द्वितीयः तदन्ते। **एव। प्रविष्टेन। सुमन्त्रपात्रेण। शतानन्दजनककथाविच्छेदे** 'जायमाने' इति शेषः। **उत्तराङ्कमुखसूचनादु**त्तराङ्कस्तृतीयाङ्कस्तन्मुखस्य तद्द्वारस्य सूचनात्। **अङ्कमुख इति** 'ज्ञेयमितिशेषः।

अत्र स्वारुचिं दर्शयति–**एतच्चे**त्यादिना।

**एतद**ङ्कमुखलक्षणमित्यर्थः। **च। धनञ्जयमतानुसारेण।** दशरूपककारमतमनुसृत्येति भावः। **उक्तम्।** यथाह धनञ्जयः–"अङ्कास्यपात्रैरङ्कास्यं भिन्नाङ्कस्यार्थसूचना"दिति।

अथ–स्वाभिमतं मतं प्रकाशयति–**अन्ये**त्वित्यादिना।

**अन्ये**ऽस्मदादय इत्यर्थः। **तु। अङ्कावतरणेन। एव। इदम्** पूर्वोक्तलक्षणमङ्कास्यमित्यर्थः। **गतार्थम्। इति। आहुः।**

---

१ "अथ माधवोऽपि कौतूहलमुत्पाद्य मया प्रवृत्तमदनमहोत्सवं मदनोद्यानं प्रभातेऽनुप्रेषितस्तत्र किल मालती गमिष्यति तत्रान्योऽन्यसन्दर्शनं भवत्विति। २ ततः किमिति मालतीममात्यो माधवस्यात्मना न प्रतिपादयति येन चौरिकाविवाहे भगवती त्वरयति।"इति संस्कृतम्।

३५२ अपेक्षितं परिच्छिद्य नीरसं वस्तु विस्तरम् ।
यदा सन्दर्शयेच्छेपमामुखानन्तरं तदा ॥ ३५७ ॥
कार्य्यो विष्कम्भको नाट्ये आमुखाक्षिप्तपात्रकः ।

यथा—रत्नावल्यां यौगन्धरायणप्रयोजितः ।

३५३ यदा तु सरसं वस्तु मूलादेव प्रवर्तते ॥ ३५८ ॥
आदावेव तदाऽङ्कः स्यादामुखाक्षेपसंश्रयः ।

यथाऽभिज्ञानशाकुन्तले ।

३५४ विष्कम्भकाद्यैरपि नो वधो वाच्योऽधिकारिणः ॥ ३५९ ॥
३५५ अन्योऽन्येन तिरोधानं न कार्यं रसवस्तुनोः ।

रसः शृङ्गारादिः यदुक्तं धनञ्जयेन—
'न चापि रसतो वस्तु दूरं विच्छिन्नतां नयेत् ।
रसं वा न तिरोदध्याद्वस्त्वलङ्कारलक्षणैः ॥' इति ।

---

अथ सिंहनिरीक्षणनयेन विष्कम्भकादेर्व्यवस्थामाह—५३२ अपेक्षितमित्यादिना ।

३५२ यदा । अपेक्षितमाकाङ्क्षितम् । नीरसं चमत्कारशून्यम् । विस्तरं वाक्यम् । 'स च शब्दस्य विस्तर' इत्यमरः । वस्तु इतिवृत्तमिति भावः । परिच्छिद्य विच्छिद्य समाप्येति यावत् । शेषं शिष्टं सरसमल्पमितिवृत्तमिति भावः । सन्दर्शयेत् । तदा । नाट्ये रूपके । आमुखानन्तरम् आमुखस्य प्रस्तावनाया अनन्तरम् । आमुखाक्षिप्तपात्रक आमुखेनाक्षिप्तं सूचितप्रवेशं पात्रं यत्र तादृशः । विष्कम्भकः । कार्यः ।

उदाहरति यथेत्यादिना ।

यथा । रत्नावल्यां नाटिकायाम् । यौगन्धरायणप्रयोजितः । 'विष्कम्भक' इति शेषः ।

ननु प्रस्तावनान्ते एव यत्राङ्कस्तस्य का गतिरित्याह ३५३ यदात्वित्यादिना ।

३५३ यदा । तु । मूलादारम्भात् । एव । सरसं । वस्तु । प्रवर्तते । तदा । आदौ प्रारम्भे । एव । आमुखाक्षेपसंश्रयः—आमुखेन प्रस्तावनया कृताक्षेपः संश्रयः पात्रप्रवेशरूपो यत्र तथोक्तः । अङ्कः । स्यात् ॥ ३५८ ॥

उदाहरति यथेत्यादिना ।

यथा । अभिज्ञानशाकुन्तले 'प्रस्तावनानन्तरमङ्क' इति शेषः ।

अधिकारिणो वधः सर्वथैव रूपके वर्ज्यं इत्याह—३५४ विष्कम्भकाद्यैरित्यादिना ।

३५४ अधिकारिणः प्रधाननायकस्येति भावः । वधः । विष्कम्भकाद्यैर्विष्कम्भकप्रवेशकादिद्वारेति भावः । अपि किं पुनरङ्केनेति शेषः । नो । वाच्यः किन्तु प्रवेशकादिद्वारा केवलं सूचनीय इति भावः ॥ ३५९ ॥

रसवस्तुनोरुद्भावनं योग्यतया कार्यमित्याशयेनाह—३५५ अन्योऽन्येनेत्यादिना ।

३५५ रसवस्तुनो रसः शृङ्गाराद्यन्यतमः स च, वस्तु इतिवृत्तादि च तयोः । अन्योऽन्येन रसस्य वस्तुना वस्तुनश्च रसेनेत्यर्थः । तिरोधानम् । न । कार्यम् । कुर्यादिति पाठान्तरम् ।

रसपदवाच्यं निर्दिशति—रस इत्यादिना । स्पष्टम् ।

उक्तमर्थं स्पष्टयितुं प्राचां संवादं निर्दिशति—यदुक्तमित्यादिना ।

यत् यतः । धनञ्जयेन धनिकेनेति पाठान्तरम् । दशरूपककर्तेत्यर्थः । उक्तम् । "रसतो रसात् । वस्तु इतिवृत्तादि । अपि । दूरमत्यन्तम् । विच्छिन्नतां विच्छेदम् । न च । नयेत् । वस्त्वलङ्कारलक्षणै र्वस्त्वितिवृत्तमलङ्कारानुप्रासाद्यश्चेति तेषां लक्षणानि समुद्भावनानि तैस्तद्द्वारेति यावत् । वा । रसम् । न । तिरोदध्यात् । यथास्थानं हि रसवस्तुनोरुद्भावनं स्थाने इति भावः ॥' इति ।

३५६ वीजं विन्दुः पताका च प्रकरी कार्यमेव च ॥ ३६० ॥
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ।

अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः । तत्र वीजम्–

३५७ अल्पपात्रं समुद्दिष्टं वहुधा यद्विसर्पति ॥ ३६१ ॥
फलस्य प्रथमो हेतुः वीजं तदभिधीयते ।

यथा रत्नावल्यां वत्सराजस्य रत्नावली प्राप्तिहेतुर्दैवानुकूल्यलालितो यौगन्धरायणव्यापारः । यथा वा वेणीसंहारे द्रौपदीकेशसंयमनहेतुर्भीमसेनक्रोधोपचितो युधिष्ठिरोत्साहः ।

३५८ अवान्तराऽर्थविच्छेदे बिन्दुरच्छेदकारणम् ॥ ३६२ ॥

यथा रत्नावल्यामनङ्गपूजापरिसमाप्तौ कथाऽर्थविच्छेदे सति—

"अस्तापास्तसमस्तभाखि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनः सायन्तने सम्पतन् ।
सम्प्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥ ३४१ ॥"

---

बीजादीनां व्यवस्थां दर्शयितुमुपक्रमते–३५६ बीजमित्यादिना ।

३५६ बीजम् । विन्दुः । पताका । च । प्रकरी । कार्य्यम् । एव । इत्येते इति शेषः । पञ्च । अर्थ-प्रकृतयोऽर्थस्य प्रकृतयो योनयस्तत्सिद्धिकारणानीति भावः । "प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । योनौ लिङ्गे पौरवर्गे"इति मेदिनी । यथाविधि यथा भरतादिशास्त्रम् । ज्ञात्वा । योज्याः ॥३६०॥

कारिकाया दुर्बोधमंशं स्पष्टयति–अर्थप्रकृतय इत्यादिना ।

अर्थप्रकृतय इत्यस्येति शेषः । प्रयोजनसिद्धिहेतवः प्रयोजनस्य सिद्धिर्निष्पत्तिस्तस्य हेतवः कारणानीति भावः ।

बीजादीन् स्वरूपतो निर्देष्टुमाह–तत्रेत्यादि ।

तत्र तेषु बीजादिषु मध्ये । बीजं "लक्ष्यत"इति शेषः । ३५७ । अल्पमात्रमित्यादिना ।

३५७ यत् । अल्पमात्रम् । समुद्दिष्टं सूचितम् । बहुधा । विसर्पति फलोद्भावने साहाय्यायोपयुज्यते । तत् । फलस्य । प्रथम आरम्भिक इत्यर्थः । हेतुः । बीजम् । अभिधीयते ॥ ३६१ ॥

उदाहरति–यथेत्यादिना ।

यथा रत्नावल्यां रत्नावलीनाटिकायाम् । वत्सराजस्योदयनापरनामधेयस्य नृपतेः । रत्नावलीप्राप्तिहेतुः । दैवानुकूल्यलालितो दैवस्यानुकूल्यं प्रसादोन्मुखत्वं तेन लालितः । यौगन्धरायणव्यापारः । बीजमिति तु प्रसङ्गानुप्रसक्तम् । यथा वा । वेणीसंहारे । द्रौपदीकेशसंयमनहेतुः द्रौपद्याः केशास्तेषां संयमनं बन्धनं तस्य हेतुः । भीमसेनक्रोधोपचितो भीमसेनस्य क्रोधेनोपचितः सञ्जातो वृद्धो वा । युधिष्ठिरोत्साहो युधिष्ठिरस्योत्साहो युद्धार्थमभ्यनुज्ञानं बीजमिति भावः ।

विन्दुं लक्षयति–३५८ अवान्तरार्थविच्छेद इत्यादिना ।

३५८ अवान्तरार्थविच्छेदेऽवान्तरो मुख्यातिरिक्तः प्रसङ्गानुप्रसक्तेभ्योऽव्यतिरिक्तोऽर्थस्तस्य विच्छेदः समाप्तिस्तस्मिन्सतीत्यर्थः । अच्छेदकारणम् । 'तस्ये'ति शेषः । बिन्दुः ॥ ३६२ ॥

उदाहरति–यथेत्यादिना ।

यथा रत्नावल्याम् । 'प्रथमेऽङ्के'ति शेषः । अनङ्गपूजापरिसमाप्तौ अनङ्गस्य कामस्य पूजा वासवदत्तया कृतमर्चनं तस्याः परितः समाप्तिस्तस्यां सत्याम् । कथाऽर्थविच्छेदे कथार्थस्यावान्तरार्थस्य विच्छेदस्तस्मिन् जायमाने इत्यर्थः ।

इति सागरिका श्रुत्वा "( सहर्षं) कथं एसो सो उदअणणरिन्दो[1]" इत्यादिरवान्तरार्थहेतुः।

३५९ व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते।

यथा महावीरचरिते सुग्रीवादेः, वेणीसंहारे भीमसेनादेः, अभिज्ञानशाकुन्तले विदूषकस्य चरितं च।

३६० पताका नायकस्य स्यान्न स्वकीयं फलान्तरम् ॥ ३६३ ॥

गर्भे सन्धौ विमर्शे वा निर्वाहस्तस्य जायते।

यथा सुग्रीवादेःराज्यप्राप्त्यादि।

यत्तु मुनिनोक्तम्–"आ गर्भाद्वा। विमर्शाद्वा पताका विनिवर्तते।
यस्मात्कस्मान्निबन्धोऽस्याः परार्थः परिकीर्त्यते॥"

---

सति। अस्तापास्तसमस्तभासि अस्ते अस्ताचले अपास्ता निक्षिप्ताः समस्ता भासो दीप्तयो येन तस्मिन्। नभसः आकाशस्य तद्रूपकस्य गन्तव्यस्याध्वन इति भावः। पारम्। प्रयाते। रवौ सूर्ये सति। अत एव–सायन्तने सायङ्कालिके। समये। आस्थानीं सभाम्। 'आस्थानी क्लीबमास्थानं स्त्री नपुंसकयोः सदः।' इत्यमरः। सम युगपत्। सम्पतन्–आगच्छन्। एषः। नृपजनः। सम्प्रति। सरोरुहद्युतिमुषः सरोरुहाणां कमलानां द्युतिं शोभां विकाशं वा मुष्णाति वामुष्णन्तितां तान्वा। प्रीत्युत्कर्षकृतः प्रसादवर्धकान्। तव। उदयनस्य।इन्दोः। इव। पादान् चरणान् किरणान् वा। आसेवितुम्। दृशाम्। उद्वीक्षते। अत्र चक्षुश्चकोरसदृशत्वं व्यज्यते। इदं च नेपथ्ये वैतालिकैः पठितं पद्यम्। अत्र शार्दूलविक्रीडितं वृत्तम् ॥३४१॥'

इति। "श्रुत्वा। सागरिका (सहर्षम्) कधं कथम्। एसो एषः। सो सः। उदअणणरिंदो उदयननरेन्द्रः।" इत्यादिः 'पुनर्यस्तस्या वाक्यसन्दर्भः स' इति शेषः। अवान्तरार्थहेतुरवान्तरार्थस्य आनुषङ्गिकप्रयोजनस्य सागरिकाया वत्सराजविषयकानुरागेण तस्यतस्यानुष्ठानोद्भावनस्येति यावत् हेतुः कारणम्।

पताकां लक्षयति ३५९ व्यापीत्यादिना।

३५९ व्यापि निर्वहणसन्ध्यन्तमवस्थायीति भावः। प्रासङ्गिकं प्रसङ्गानुप्रसक्तम्। तत्र भवः ४।३।५३ इति ठञ्। वृत्तं चरितम्। पाताका। इति। अभिधीयते। तथोक्तं मुनिना–'यद्वृत्तं हि परार्थं स्यात्प्रधानस्योपकारकम्। प्रधानवच्च कल्प्येत सा पताकेति कीर्त्यते॥' इति।

उदाहरति–यथेत्यादिना। स्पष्टम्। महावीरचरिते इत्यत्र रामचरिते इति पाठान्तरे तु तत्प्रधाने महावीरचरितादावित्यर्थः।

व्यापीत्यनेन व्यावर्तनीयमर्थं द्योतयति–३६० पताकानायकस्येत्यादिना।

३६० पताकानायकस्य यस्य प्रासङ्गिकं व्यापि वृत्तं पताकेति प्रागुक्तं तस्येति भावः। स्वकीयं स्वमात्रोपकारि। फलान्तरमन्यत्फलम्। न। 'पताके' ति पूर्वतोऽनुप्रसक्तम्। स्याद्। अतः–तस्य फलान्तरस्येत्यर्थः। गर्भे तदाख्ये। वाऽथवा। विमर्शे तदाख्ये। सन्धौ। निर्वाहः सन्निवेशः। जायते ॥ ३६३ ॥

उहादरति–यथेत्यादिना।

यथा 'महावीरचरितादा' विति शेषः। सुग्रीवादेः। राज्यप्राप्त्यादि राज्यदारलाभादि। अयम्भावः–सुग्रीवादे राज्यप्राप्त्यादि सुग्रीवादेरेवोपकारीत्यस्य निर्वहणान्तं व्याप्तिस्वाभावान्न पताकात्वम्। यच्च तस्य तस्योत्साहादि तदेव पताकेति।

स्वमतं मुनिमताऽप्रतिकूलमिति सूचयितुमाह–यत्त्वित्यादि।

यत्तु। 'गर्भाद्गर्भसन्धेः। 'पञ्चम्यपाङ्परिभिः।' २।३।१० इति पञ्चमी। 'आङ्मर्यादाऽभिविध्योः॥' २।१।१३ इति समासाभावश्च। आ तमवधीकृत्येत्यर्थः। 'आङीषदर्थेऽभिव्याप्तौ सीमार्थे धातुयोगजे'इत्यमरः। वा। विमर्शा-

---

1 'कथमेष स उदयननरेन्द्र' इति संस्कृतम्।

तत्र 'पताकेति पताका नायकफलं निर्वहणपर्य्यन्तमपि पताकाया वृत्तिदर्शनादि'ति व्याख्यातमभिनवगुप्तपादैः।

३६१ प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता ॥ ३६४ ॥

यथा कुलपत्यङ्के रावणजटायुसंवादः-

३६२ प्रकरीनायकस्य स्यान्न स्वकीयं फलान्तरम्।

यथा जटायोर्मोक्षप्राप्तिः।

३६३ अपेक्षितं तु यत्साध्यमारम्भो यन्निबन्धनः ॥ ३६५ ॥
समापनं च यत्सिद्ध्यै तत्कार्य्यमिति सम्मतम्।

यथा महावीरचरिते रावणवधः।

---

द्विमर्शसन्धेः। अथवा इदं समुच्चयार्थम्। 'वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये'इति विश्वः। **पताकाः**। **विनिवर्तते** निवृत्तव्यापारा भवति। कुत इत्यत आह--**यस्मात्कस्मा**'दपि हेतो'रिति शेषः। **अस्याः** पताकायाः। **निबन्धः** सन्निवेशः समाप्तिरिति यावत्। **पद्वार्थः**। **परिकीर्त्यते** ॥'

**इति**। **मुनिना** भरतेन। **उक्तम्**। **तत्र** तस्मिन्विषये। "**पताकेति** 'प्रतीकं कृत्वे'ति शेषः। **नायकफलं** पताकानायकफलमिति भावः। **पताका**। 'अत्रोच्यत'इति शेषः। कुत इत्याह-**निर्वहणपर्य्यन्तं** निर्वहणसन्ध्यन्तम्। अपि यथेष्टम्। 'अपि सम्भावनाप्रश्नशङ्कागर्हासमुच्चये। तथा युक्तपदार्थे च कामचारक्रियासु चे'ति विश्वः। **पताकाया** वास्तविक्याः पताकाया इत्यर्थः। **प्रवृत्तिदर्शनात्**। **इति**।' **अभिनवगुप्तपादै**र्भरतमुनिकृतनाट्यशास्त्रव्याख्यातृभिः। **व्याख्यातम्**। तथा च-यन्मुनिना पताकापदं व्यवहृतम्, तल्लाक्षणिकं नतु वाचकम्; अन्यथा मूलव्याख्याग्रन्थयोर्विरोधापत्तेरिति निर्गलितोऽर्थः।

प्रकरीं लक्षयति-३६१ **प्रासङ्गिकमि**त्यादिना।

३६१ **प्रासङ्गिकम्**। **प्रदेशस्थ**मेकदेशवर्त्तीत्यर्थः। **चरितम्**। **प्रकरी** तत्पदवाच्यम्। **मता**। अत्र भावप्रकाशिकाकाराः 'शोभायै वैदिकादीनां यथा पुष्पाक्षतादयः। अर्थतुवर्णनादिस्तु प्रसङ्गे प्रकरी भवेत्। यथाऽभिज्ञाने शाकुन्तले षष्ठेऽङ्के-'ततः प्रविशति चूताङ्कुरमवलोकयन्ती चेटी-अपरा च पृष्ठतस्तस्याः।' इत्यादिना 'नेपथ्ये' इत्यन्तेन।'इत्याहुः।

उदाहरति-**यथे**त्यादिना। **यथा**। **कुलपत्यङ्के** तदाख्ये रूपकविशेषे। **रावणजटायुसंवादः**।

प्रासङ्गिकमिति पदेन व्यवच्छेद्यं लक्षयति-३६२ **प्रकरीनायकस्ये**त्यादिना।

३६२ **प्रकरीनायकस्य** यद्वृत्तं प्रकरीत्यभिधीयते तस्येति भावः। **स्वकीयं** स्वमात्रोपकारीत्यर्थः। **फलान्तर**मन्यत्फलम्। **न** 'प्रकरीति'पूर्वतोऽन्वेति। **स्यात्**।

उदाहरति-**यथे**त्यादिना।

**यथा**। **जटायोः**। **मोक्षप्राप्तिः**। अयम्भावः-जटायोर्मोक्षप्राप्तिर्वर्ण्यमाना न प्रकृतोपयोगिनी किन्तु तस्यैव श्रेयस्करीति तदिदं वृत्तं न पताका। यः पुना रावणेन संवादः स प्रकृतोपयोगीत्यस्य प्रासङ्गिकत्वात्प्रकरीत्वम्। अन्यस्य तु तदेकदेशवर्तित्वमात्रम्। इति।

कार्यमाह-३६३ **अपेक्षित**मित्यादिना।

३६३ **अपेक्षितं** न तु प्रासङ्गिकम्। **तु**। **यत्**। **साध्यं** साधनीयम्। **यन्निबन्धनो** यन्निबन्धनमुद्देशो यस्य तादृशः। यदृच्छाप्रयोज्य इत्यर्थः। **आरम्भः** प्रथमा प्रवृत्तिः। **यत्सिद्ध्यै** यस्य सिद्ध्ये। **च**। **समापनं** समस्तानां सामग्रीणां समासादनम्। **तत्**। **कार्यम्**। **इति**। **सम्मतम्** ॥ ३६५ ॥

उदाहरति-**यथे**त्यादिना। स्पष्टम्। रामचरिते इति पाठे तु तत्प्रधाने बालरामायणादावित्यर्थः।

३६४ अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिनः ॥ ३६६ ॥
आरम्भयत्नपर्याशानियताप्तिफलागमाः।

तत्र-

३६५ भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये ॥ ३६७ ॥

यथा-रत्नावल्यां रत्नावल्यन्तःपुरनिवेशार्थं यौगन्धरायणस्यौत्सुक्यम्। एवं नायकनायिकाऽऽदीनामप्यौत्सुक्यमाकरेषु बोद्धव्यम्।

३६६ प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वराऽऽन्वितः।

यथा रत्नावल्याम्-'तहवि तस्स जणस्स अण्णो दंसणोवाओ णत्ति ता जहा तहा आलिहिअ एणं पेक्खिस्सं' इत्यादिना प्रतिपादितो रत्नावल्याश्चित्रलेखनादिर्वत्सराजसङ्गमोपायः।

यथा-च महावीरचरिते समुद्रबन्धनादिः।

---

अस्याङ्गान्याह-३६४ अवस्थेत्यादिना।

३६४ फलार्थिनः। प्रारब्धस्य कृतारम्भस्य। कार्यस्य। 'निरुक्तलक्षणस्ये'ति शेषः। आरम्भयत्नपर्याशानियताप्तिफलागमास्तदाख्याः। पञ्च। अवस्थाः। 'अङ्गानि इति ज्ञेय'इति शेषः ॥ ३६६ ॥

अथारम्भादीनाह-तत्रेत्यादिना।

तत्र तास्ववस्थासु मध्ये। ३६५ भवेदित्यादिना।

३६५ यन्मुख्यफलसिद्धये यस्य मुख्यं फलं तस्य सिद्धिः निष्पत्तिस्तस्यै। औत्सुक्यम्। आरम्भः तत्पदवाच्यं कार्यमित्यर्थः। भवेत् ॥ ३६७ ॥

उदाहरति-यथेत्यादिना। स्पष्टम्। आकरेषु महानिबन्धेषु इत्यर्थः।

यत्नं लक्षयति-३६६ प्रयत्नेत्यादिना।

३६६ फलावाप्तौ फलस्याप्तिविषये। तु। अतित्वरान्वितः। व्यापारः। प्रयत्नः। तथोक्तम्-'अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति। परं चौत्सुक्यगमनं प्रयत्नः परिकीर्तितः ॥' इति।

उदाहरति-यथेत्यादिना।

यथा-रत्नावल्याम्। 'द्वितीयेऽङ्के'इति शेषः। 'तहवि तथापि। तस्स तस्य। जणस्स जनस्य वत्सराजस्य। अण्णो अन्यश्चित्रफलकादृिभ्नः। दंसणोवाओ दर्शनोपायः। णत्ति नास्ति। ता तत्। जहा यथा। तहा तथा। आलिहि आलिख्य। एणं एनम्। पेक्खिस्सं प्रेक्षिष्ये। 'इदं बोध्यम्। सागारिका (फलकमवलोक्य) ता जावदिहण कोवि आअअच्छदि, दाव आलिक्ख समप्पिदं तं अभिमदं जणं पेक्खिअ जहा समीहिदं तहा करिस्सं।' (सावष्टम्भमेकमना भूत्वा नाटयेन फलकं गृहीत्वा निःश्वस्य) "जइ वि मे अदिसद्धसेण वेवदि अअं अत्तित्तं अग्गहत्तो[3]" इति पूर्वतनोऽयं पाठः। पुस्तकान्तरे तु अत्र सर्वं सम्मेल्य "तह वि णत्ति अण्णो दंसणोवाओ त्ति जधा तधा आलिहिअ जधा समीहिदं करइस्सं" इति पाठो विहितो महानुभावैः। इति। इत्यादिना। प्रतिपादितः। रत्नावल्याः सागरिकायाः। चित्रलेखनादिः' प्रियतमस्य वत्सराजस्येति शेषः। वत्सराजसङ्गमोपायः।

उदाहरणान्तरं दर्शयति-यथेत्यादिना स्पष्टम्।

---

१ 'तथापि तस्य जनस्यान्यो दर्शनोपायो नास्तीति तद्यथा तथाऽऽलिख्यैनं प्रेक्षिष्ये' इतिं संस्कृतम्। २ "तावदिह न कोऽप्यागच्छति तावदालिख्य समर्पितं तमभिमतं जनं प्रेक्ष्य यथा समीहितं तथा करिष्ये" इति संस्कृतम्। ३ " यद्यपि मे अतिसाध्वसेन वेपतेऽयमतिमात्रमग्रहस्तः।" इति संस्कृतम्। ४ "तथापि नास्त्यन्यो दर्शनोपायः इति यथातथालिख्य यथा समीहितं करिष्यामि" इति संस्कृतम्।

३६७ उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः ॥ ३६८ ॥

यथा रत्नावल्यां तृतीयेऽङ्के। वेषपरिवर्तनाऽभिसरणादेः सङ्गमोपायाद्वासवदत्तालक्षणापायशङ्कया चानिर्धारितैकान्तसङ्गमरूपफलप्राप्तिः प्राप्त्याशा।

एवमन्यत्र।

३६८ अपायाभावतः प्राप्तिर्नियताप्तिश्च निश्चिता।

अपायाभावान्निर्धारितैकान्तफलप्राप्तिर्नियताप्तिः।

यथा रत्नावल्यां राजा देवीप्रसादनं मुक्त्वा नान्यमत्रोपायं पश्यामीति देवीलक्षणापायस्य प्रसादनेन निवारणान्नियतफलप्राप्तिः सूचिता।

३६९ साऽवस्था फलयोगः स्याद्यः समग्रफलोदयः॥ ३६९ ॥

यथा रत्नावल्यां-रत्नावलीलाभश्चक्रवर्तित्वलक्षणफलान्तरलाभसहितः।

एवमन्यत्र।

३७० यथासङ्ख्यमवस्थाभिराभिर्योगात्तु पञ्चभिः।
पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः॥ ३७० ॥

---

प्राप्त्याशां लक्षयति-३६७ उपायेत्यादिना।

३६७ उपायापायशङ्काभ्यामुपाय उद्यमश्चापायशङ्का विघ्नशङ्का च ताभ्याम्। सहार्थेयं तृतीया। प्राप्तिसम्भवः। प्राप्त्याशा ॥ ३६८ ॥

उदाहरति-यथेत्यादिना।

यथा। रत्नावल्याम्। तृतीयेऽङ्के। वेशपरिवर्त्तनाभिसरणादेस्तद्रूपादित्यर्थः। सङ्गमोपाया 'द्वत्सराजस्ये'ति शेषः। वासवदत्तालक्षणापायशङ्कया वासवदत्ता लक्षणं स्वरूपं यस्य तादृशो योऽपायो विघ्नस्तस्य शङ्का तया। च। अनिर्धारितैकान्तसङ्गमरूपफलप्राप्तिरनिश्चितोऽसावेकान्तसङ्गमः सयस्य तद्रूपं फलं यस्य तस्य प्राप्तिः। प्राप्त्याशा। एवम्-अन्यत्राभिज्ञानशाकुन्तलादाविति भावः।

नियताप्तिं लक्षयति-३६८ अपायाभावत इत्यादिना।

३६८ अपायाभावतो विघ्नराहित्येनेत्यर्थः। च। निश्चिता। नतु सम्भावितेत्यर्थः। प्राप्तिः। नियताप्तिः।

तदेव विवृणोति-अपायाभावादित्यादिना। स्पष्टम्।

उदाहरति-यथेत्यादिना।

यथा। रत्नावल्यां 'तृतीयेऽङ्के' इति शेषः। राजा वत्सराजः। 'आहे'ति शेषः। देवीप्रसादनं देव्याः महाराज्ञीवासवदत्तायाः प्रसादनं कोपापनयपुरःसरमनुकूलीकरणं तत्। मुक्त्वा परित्यज्य। अत्रास्मिन् सागरिकासङ्गमे इति यावत्। अन्यम्। उपायम्। न। पश्यामि। इति। स्पष्टमन्यत्।

फलागमं लक्षयति-३६९ सेत्यादिना।

३७० यः। समग्रफलोदयः समस्तफलानां सिद्धतया भानम्। सा। अत्र-'सर्वादीनां पर्यायेण उद्देश्यविधेय 'लिङ्गभाक्त्वम्'। इति स्त्रीलिङ्गत्वेन निर्देश इति बोध्यम्। फलयोगः फलस्य योग आगमः। अवस्था कार्याङ्गम्। स्यात्। 'फलागम इति प्रोक्तो यः समग्रफलोदयः। इति सुपाठः॥ ३६८ ॥

उदाहरति-यथेत्यादिना।

यथा। रत्नावल्यां। 'चतुर्थेऽङ्के' इति शेषः। अन्यत्स्पष्टम्। उदाहरणविषये आह-एवमन्यत्र महावीरचरितादौ सीतादिलाभपूर्वकं रावणवधादिरित्यूह्यम्।

अथ सन्धिं लक्षयितुमवतरणिकामुपस्थापयति-३७० यथासङ्ख्यमित्यादिना।

३७० आभिरुक्तस्वरूपाभिः। पञ्चभिः। अवस्थाभिरङ्गैः समम्। योगात् समन्वयात्। यथासङ्ख्यं यथोद्देशम्।

तल्लक्षणमाह-

३७१ अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति ।

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसम्बन्धः सन्धिः । तद्भेदानाह-

३७२ मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः ॥ ३७१ ॥

इति पञ्चास्य भेदाः स्युः

३७३ क्रमाल्लक्षणमुच्यते ।

३७४ यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ॥ ३७२ ॥

प्रारम्भेण समायुक्ता तन्मुखं कीर्तितम् ।

यथा रत्नावल्यां प्रथमेऽङ्के-

३७५ फलप्रधानोपायस्य मुखसन्धिनिवेशितः ॥ ३७३ ॥

लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत् ।

---

**इतिवृत्तस्य** । **पञ्चधा** । **एव** । **भागाः** । **स्युः** । त एव इति शेषः । **पञ्च** । **सन्धयः** । 'स्यु'रिति देहलीदीपकन्यायेनानुषज्यते ॥ ३७० ॥

ननु को नाम सन्धिरित्याशङ्कामपनेतुं प्रतिजानीते-**तल्लक्षणमि**त्यादिना ।

**तल्लक्षणं** तस्य सन्धेः लक्षणं तत् । आह-३७१ **अन्तरैकार्थे**त्यादिना ।

३७१ **एकान्वये** एक एवान्वयः सम्बन्धस्तस्मिन् । **सति** । **अन्तरैकार्थसम्बन्धो**ऽन्तर एकोऽसाधारणोऽसावर्थः प्रयोजनं तस्य सम्बन्धः । **सन्धिः** । तथोक्तम्-'मुख्यप्रयोजनवशात्तथाङ्गानां समन्वये । अवान्तरार्थसम्बन्धः सन्धिः सन्धानरूपतः ॥' इति ।

एतदेव तात्पर्येण निर्दिशति-**एकेने**त्यादिना । स्पष्टम् ।

एतस्य नामनिर्देशपुरःसरं भेदान् वक्तुं प्रतिजानीते-**तद्भेदा**नित्यादिना ।

**तद्भेदां**स्तस्य सन्धेर्भेदास्तानाह-३७२ **मुख**मित्यादिना ।

३७२ **अस्य** सन्धेः । **मुखम्** । **प्रतिमुखम्** । **गर्भः** । **विमर्शः** । तथा-**उपसंहृतिः** निर्वहणम् । **इति** । **पञ्च** । **भेदाः** । **स्युः** । इदम्बोध्यम्-३७० यथासङ्ख्यमित्युक्तदिशा कार्यस्यारम्भावस्था मुखं, यत्नः प्रतिमुखम्, प्राप्त्याशा गर्भः, नियताप्तिर्विमर्शः, फलागमो निर्वहणश्चेति सन्धिपञ्चकम् । भेदहेतुश्च ३७१ इत्यनेन दर्शितपूर्वः । इति ।

अथैषां लक्षणानि क्रमाल्लक्षयितुं प्रतिजानीते-३७३ **क्रमादि**त्यादिना ।

३७३ **क्रमा**दुद्देशक्रममनुसृत्य । **लक्षण**मेषामिति शेषः । **उच्यते** । वक्ष्यते सामान्यभविष्यत्त्वमादाय वर्तमानत्वेन निर्देशः ।

तत्र तावन्मुखमाह-३७४ **यत्रे**त्यादिना ।

३७४ **यत्र** यस्मिन्निति भावः । **नानार्थरससम्भवा** नाना अर्थरसास्तेषां सम्भवो यत्र तादृशी । **प्रारम्भेण** तदाख्यया कार्यावस्थया । **समायुक्ता** । **बीजसमुत्पत्तिः** । **तत्** । **मुखं** । **परिकीर्तितम्** । ॥ ३७२ ॥

उदाहरति-**यथे**त्यादिना । अत्र हि सागरिकावत्सराजयोरनुरागोत्पत्तिः । अन्यत् स्पष्टम् ।

प्रतिमुखं लक्षयति-३७५ **फले**त्यादिना ।

३७५ **यत्र** यस्मिन्वाक्ये । **च** । **मुखसन्धिनिवेशितः** मुखसन्धौ निविशते इति तस्य तथोक्तस्य । **फलप्रधानोपायस्य** फलस्य मुख्यप्रयोजनस्य लाभे यः प्रधानोपायस्तस्य बीजस्येत्यर्थः । **लक्ष्यालक्ष्यइव** । किञ्चिल्लक्ष्य इव । **उद्भेदो**ऽङ्कुरितो भूत्वाऽवस्थानम् । **तत्** । **प्रतिमुखम्** ॥ ३७३ ॥

यथा रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुरागविषयस्य प्रथमाङ्कोपक्षिप्तस्य सुसङ्गताविदूषकाभ्यां ज्ञायमानतया किञ्चिल्लक्ष्यस्य वासवदत्तया चित्रफलकवृत्तान्तेन किञ्चिदुन्नीयमानस्य उद्देशरूप उद्भेदः।

**३७६ फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन ॥ ३७४ ॥**
**गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः।**

फलस्य गर्भीकरणाद्गर्भः। यथा रत्नावल्यां द्वितीयेऽङ्के—"सुसङ्गता-सहि! अदक्खिणा असि तुमं दाणीं जा एवं भट्टिणा हत्थेण गहिदा वि कोवं ण मुंचसि" इत्यादौ समुद्भेदः। पुनर्वासवदत्ताप्रवेशे ह्रासः। तृतीयेऽङ्के "राजा-प्रेषितश्च मया तद्वार्तान्वेषणाय कथञ्चिरयति वसन्तकः।" इत्यन्वेषणम्। "वसन्तकः (सपरितोषम्) हीही भो कौसम्बीरज्जलंभेणावि ण तादिसो पिअवअस्सस्स हिअअपरितोसो आसी जादिसो मम सआसादो अज्ज पिअवअणं सुणिअ भविस्सदि।" इत्यादावुद्भेदः। पुनरपि वासवदत्ताप्रत्यभिज्ञानाद् ह्रासः। पुनः सागरिकायाः सङ्केतस्थानगमनेऽन्वेषणम्। पुनर्लतापाशकरणे उद्भेदः।

---

उदाहरति—यथेत्यादिना। अनुरागबीजस्येत्यर्थः। स्पष्टमन्यत्।

गर्भं लक्षयति—३७६ फलप्रधानोपायस्येत्यादिना।

३७६ यत्र यस्मिन्वाक्ये इति भावः। किञ्चन। प्राक् पूर्वम्। उद्भिन्नस्य प्रकटितस्य। फलप्रधानोपायस्य फलस्य मुख्यफलस्य प्रधानोपायो मुख्यफलस्तस्य। मुहुः। ह्रासान्वेषणवान् ह्रासः स्थगनमन्वेषमुत्कण्ठयाऽनुसन्धानं चेति ते अत्रास्तीति, तथोक्तः। समुद्भेदः। गर्भः ॥ ३७४ ॥

गर्भव्याख्यामुदाहरति—फलस्येत्यादिना। स्पष्टम्।

उदाहरति—यथेत्यादिना।

यथा। रत्नावल्यां। द्वितीयेऽङ्के। "सुसङ्गता। सागरिकां प्रत्याहेति शेषः। सहि सखि! अदक्खिणा अदक्षिणाऽचतुरा। असि असि। तुमं त्वम्। दाणीं इदानीम्। जा या। एवं एवम्। भट्टिणा भर्त्रा। हत्थेण हस्तेन। गहिदा गृहीता। वि अपि। कोवं कोपम्। ण न। मुंचसि मुञ्चसि।" इत्यादौ। समुद्भेदो 'प्रकाशोऽनुरागस्ये' ति शेषः। पुनः। वासवदत्ताप्रवेशे वासवदत्तायाः प्रवेशे सतीत्यर्थः। ह्रासः। सागरिकायामनुरागस्य तिरोभाव इत्यर्थः। अथ—तृतीयेऽङ्के। राजा। "प्रेषितः। च। मया। तद्वार्तान्वेषणाय तद्वार्त्ताया अन्वेषणायानुसन्धानार्थम्। कथम्। चिरयति। वसन्तकस्तदाख्यः सखा।" इति। अन्वेषणम्। "वसन्तकः "प्रविश्ये"ति शेषः। (सपरितोषम्) हीही (इति हास्यद्योतकमव्ययम्) भो कौसम्बीरज्जलंभेणावि कौशाम्बीराज्यलाभेनापि। कौशाम्बी काचिद्राजधानी। पिअवअस्सस्स प्रियवयस्यस्य वत्सराजस्येति यावत्। ण न। तादिसो तादृशः। हिअअपरितोसो हृदयपरितोषः। आसी आसीत्। जदिसो यादृशः। मम। सआसादो सकाशात्। अज्ज अद्य। पिअवअणं प्रियवचनं सागरिकावृत्तान्तनिवेदनरूपं प्रियं वाक्यम्। सुणिअ श्रुत्वा। भविस्सदि भविष्यति।" इत्यादौ। उद्भेदः। अन्यत्स्पष्टम्। एवं मुहुः सागरिकायामनुरागस्योद्भेदानुद्भेदाभ्यां लक्ष्यालक्षत्वेन गर्भं इति भावः।

---

१ 'सखि! अदक्षिणाऽसि त्वमिदानीं यैवं भर्त्रा हस्तेन गृहीताऽपि कोपं न मुञ्चसि' इति संस्कृतम्। २ 'भो कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य हृदयपरितोष आसीद्यादृशो मम सकाशादद्य प्रियवचनं श्रुत्वा भविष्यति' इति संस्कृतम्।

अथ विमर्शः—

३७७ यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः ॥ ३७५ ॥
शापाद्यैः सान्तरायश्च स विमर्श इति स्मृतः ।

यथाऽभिज्ञानशाकुन्तले चतुर्थाङ्कादौ–अनसूया–"पिअंवदे ! जइवि गंधव्वेण विहिणा णिव्वुत्तकल्लाणा पिअसही सउंदला अणुरूवभत्तुगामिणी संवुत्तेत्ति णिव्वुदं मे हिअअं तहवि एत्तिअं चिन्तणिज्जं ।" इत्यत आरभ्य सप्तमाङ्कोपक्षिप्तात् शकुन्तलाप्रत्यभिज्ञानात् प्राक् अर्थसञ्चयः शकुन्तलाविस्मरणरूपविघ्नालिङ्गितः ।

अथ निर्वहणम्–

३७८ बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् ॥ ३७६ ॥
एकार्थमुपनीयन्ते यत्र निर्वहणं हि तत् ।

---

विमर्शं लक्षयितुं प्रतिजानीते–अथेत्यादिना ।

अथ गर्भसन्ध्युदाहरणानन्तरम् । विमर्शः 'लक्ष्यते'इति शेषः । ३७७ यत्रेत्यादिना ।

३६७ यत्र यस्मिन्वाक्ये । गर्भतो गर्भसन्ध्यपेक्षया । अधिकः । उद्भिन्नः प्रकटीभूतः । च पुनः । शापाद्यैः । सान्तरायो विघ्नितः । 'विघ्नोऽन्तरायः प्रत्यूहं'इत्यमरः । मुख्यफलोपायः । स्यादिति शेषः । सः । विमर्शः । इति । स्मृतः ॥ ३७५ ॥

उदाहरति–यथेत्यादिना ।

यथा । अभिज्ञानशाकुन्तले । चतुर्थाङ्कादौ । "अनसूया (नेयमत्रिपत्नी किन्तु कापि सखी, कण्वाश्रमे तस्या [illegible]भवत्) प्रियंवदां प्रत्याहेति शेषः । पिअंवदे प्रियंवदे ! जइवि यद्यपि । गंधव्वेण गान्धर्वेण "इच्छयाऽन्योन्यसंयोगः कन्यायाश्च वरस्य च । गान्धर्वः स तु विज्ञेयः ।"इत्युक्तेनेति यावत् । विहिणा विधिना । णिव्वित्तकल्लाणा निर्वृत्तकल्याणा । पिअसही प्रियसखा । सउंदला शकुन्तला । अणुरूवभत्तुगामिणी अनुरूपभर्तृगामिनी । संवुत्तेत्त संवृत्तेति । णिव्वुदं निर्वृत्तम् । मे मम । हिअअं हृदयम् । तहवि तथाऽपि । एत्तिअं एतावत् । चिंतणिज्जं चिन्तनीयम् ।"इत्यतः । आरभ्य । सप्तमाङ्कोपक्षिप्तात् सप्तमाङ्के उपक्षिप्त उपसंहृतस्तस्मात् । शकुन्तलाप्रत्यभिज्ञानात् शकुन्तलायाः दुर्वाससः शापाद्विस्मृतपरिणयसम्बन्धायाः प्रत्यभिज्ञानमङ्गुलीयकदर्शनोत्तरं दुष्यन्तकर्तृकं स्मरणं तस्मात् । प्राक् । शकुन्तलाविस्मरणरूपविघ्नालिङ्गितः शकुन्तलाया विस्मरणं तद् रूपयति निरूपयति असौ विघ्नस्तेन आलिङ्गितः । अर्थसञ्चयः फलसमुदायः । तथा च–अत्र शकुन्तलायामनुराग उद्भिन्नोऽपि दुर्वाससः शापेन कियन्तं समयं विघ्नित इति तथावर्णनाद्विमर्श इति वोध्यम् ।

अथ निर्वहणं लक्षयितुं प्रतिजानीते–अथेत्यादिना ।

अथ विमर्शोदाहरणानन्तरम् । निर्वहणं 'लक्ष्यते'इति शेषः । ३७८ बीजवन्त इत्यादिना ।

३७८ यत्र यस्मिन्वाक्ये । हि । बीजवन्तः प्रधानफलसहिताः । यथायथम् । विप्रकीर्णाः अनेकत्र सूचिताः । मुखाद्यर्था मुखादीनां मुखप्रतिमुखादिसन्धीनामर्थाः । एकार्थं समुदितप्रयोजनरूपताम् । उपनीयन्ते तत् । निर्वहणम् । सुधाकरेणाप्युक्तम्–'मुखसन्ध्यादयो यत्र विकीर्णा बीजसंयुताः । महाप्रयोजनं यान्ति तन्निर्वहणमुच्यते'इति ॥ ३७६ ॥

---

"प्रियंवदे ! यद्यपि गान्धर्वेण विधिना निर्वृत्तकल्याणा मे प्रियसखी शकुन्तला तथाप्यनुरूपभर्तृगामिनी संवृत्तेति निर्वृत्तं मे हृदयमि"ति संस्कृतम् ।

यथा वेणीसंहारे-"कञ्चुकी (उपसृत्य सहर्षम्) महाराज वर्धसे अयं खलु भीमसेनो दुर्योधनक्षतजारुणीकृतसर्वशरीरो दुर्लक्ष्यव्यक्तिः।" इत्यादिना द्रौपदीकेशसंयमनादिमुखसन्ध्यादिबीजानां निजनिजस्थापनोपक्षिप्तानामेकार्थयोजनम्।

एषामङ्गान्याह-

३७९ उपक्षेपः परिकरः परिन्यासो विलोभनम्॥ ३७७॥
युक्तिः प्राप्तिः समाधानं विधानं परिभावना।
उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे॥ ३७८॥

यथोद्देशं लक्षणमाह-

३८० काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः।

काव्यार्थ इतिवृत्तलक्षणप्रस्तुताभिधेयः। यथा वेणीसंहारे "भीमसेनः-

लाक्षागृहानलविषान्नसभाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य।
आकृष्य पाण्डववधूपरिधानकेशान् स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः॥ ३४२॥"

३८१ समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः॥ ३७९॥

यथा तत्रैव-

"प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभिर्न तत्रार्यो हेतुर्न भवति किरीटी न च युवाम्।
जरासन्धस्योरःस्थलमिव विरूढं पुनरपि क्रुधा भीमः सन्धिं विघटयति यूयं घटयत॥३४३॥"

---

उदाहरति-यथेत्यादिना। क्षतजं रुधिरम्-स्पष्टमन्यत्।

एवं सन्धीन् लक्ष्यलक्षणाभ्यां निरूप्यैषामङ्गानि लक्षयितुं प्रतिजानीते-एषामित्यादिना।

एषां मुखादिपञ्चसन्धीनाम्। अङ्गानि। आह। ३७८ उपक्षेप इत्यादिना।

३७८ मुखे मुखसन्धौ। उपक्षेपः। परिकरः। परिन्यासः। विलोभनम्। युक्तिः। प्राप्तिः। समाधानम्। विधानम्। परिभावना। उद्भेदः। करणम्। तथा-भेदः। एतानि। द्वादशसंख्याकानि। अङ्गानि। वै। 'स्यु'रिति शेषः॥ ३७७॥ ३७८॥

एवं सामान्यतोऽभिधाय विशेषजिज्ञासायामाह-यथेत्यादि।

यथोद्देशमुद्देशं कारिकाया निर्देशमनतिक्रम्य। लक्षणमुपक्षेपादीनां स्वरूपम्। आह-३८० काव्यार्थस्येत्यादिना।

३८० काव्यार्थस्य सन्दर्भप्रतिपाद्यस्य प्रयोजनस्य। समुत्पत्ति'र्वर्ण्यमाने'ति शेषः। उपक्षेपः। इति। स्मृतः।

कारिकार्थं सुगमयितुं काव्यार्थपदं विवृणोति-काव्यार्थ इत्यादिना। स्पष्टम्।

उदाहरति-यथेत्यादिना। व्याख्यातपूर्वमिदं पद्यम्॥ ३४३॥

परिकरं लक्षयति- ३८१ समुत्पन्नार्थेत्यादिना।

३८१ समुत्पन्नार्थबाहुल्यम् समुत्पन्नः समुद्भूतोऽसावर्थः प्रयोजनं तस्य बाहुल्यम्। पुनः। परिकरस्तदाख्यसन्ध्यङ्गमित्यर्थः। ज्ञेयः॥ ३७९॥

उदाहरति-यथेत्यादिना।

यथा। तत्र। वेणीसंहारे इत्यर्थः। एव। "कुरुभिर्धार्तराष्ट्रैरिति भावः। सहार्थे तृतीया। मम भीमसेनस्य। शिशोः। एव। यत्। वैरम्। खलु निश्चितमनिवार्य्यमिति यावत्। प्रवृद्धम्। तत्र तस्मिन्वैरे। न। आर्यः पूज्यो युधिष्ठिर इति यावत्। हेतुः कारणम्। न। किरीटी अर्जुनः। 'न हेतु'रिति पूर्वतोऽन्वेति। भवति। न।

३८२ तन्निष्पत्तिः परिन्यासः।

यथा तत्रैव—

"चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य सुयोधनस्य।

स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः॥"॥ ३४४॥

अत्र उपक्षेपो नाम इतिवृत्तलक्षणस्य काव्याभिधेयस्य सङ्क्षेपेणोपक्षेपमात्रम्। परिकरस्तस्यैव बहुलीकरणम्, परिन्यासस्ततोऽपि निश्चयापत्तिरूपतया परितो हृदये न्यसनमित्येषां भेदः। एतानि चाङ्गानि उक्तेनैव पौर्वापर्य्येण भवन्ति। अङ्गान्तराणि त्वन्यथाऽपि।

३८३ गुणाख्यानं विलोभनम्।

तथा तत्रैव—"द्रौपदी-णाध? किं दुक्करं तुए परिक्कुविदेण।" यथा वा मम चन्द्रकलायां चन्द्रकलावर्णने "सेयम्—

तारुण्यस्य विलासः समधिकलावण्यसम्पदो हासः।

धरणितलस्याभरणं युवजनमनसो वशीकरणम्॥३४५॥" इत्यादि।

---

च। युवाम्। नकुलसहदेवौ सम्बोध्याविति भावः। अत्र वचनविपरिणामेन "हेतू"इति पूर्वतोऽनुषज्यते। कुरूणां मम च यद्वैरं जन्मान्तरीगं सम्प्रति प्रवृद्धमिति भावस्तस्मात्। भीमः। अयमिति शेषः। क्रुधा क्रोधेन। जरासन्धस्य जराराक्षस्या संहितशरीरतया तथाख्यातस्येत्यर्थः। उरःस्थलमिव। विरूढं विरुद्धत्वेन सञ्जातम्। सन्धिम्। विघटयति विभिनत्ति। यूयमार्यप्रमृतयः। सर्वे भवन्त इत्यर्थः। पुनरपि पुनः। घटयत सङ्घटयत। युष्माभिः कृतमपि सन्धि भेत्स्यामीति भावः। सन्ध्यर्थमुद्यतं राजानमवगम्य सर्वानुद्दिश्य भीमसेनस्येयमुक्तिः। शिखरिणीवृत्तम्। 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी'इति तल्लक्षणम्। अत्र समुत्पन्नस्य वैरस्य सन्धिनिवर्तनद्वारा विपुलतापादनम्॥ ३४३॥"

परिन्यासं लक्षयति—३८२ तन्निष्पत्तिरित्यादिना।

३८२ तन्निष्पत्तिस्तस्य काव्यार्थस्य निष्पत्तिर्निश्चितमभिधानम्। परिन्यासः। तथाऽह भरतः—'भविष्यद्वस्तुकथनं परिन्यासं प्रचक्षते' इति।

उदाहरति—यथेत्यादिना।

यथा तत्र वेणीसंहारे एव—"हे देवि राजसूये कृताभिषेके द्रौपदि! चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य चञ्चन् स्फुरन् यो भुजो बाहुस्तेन भ्रमिता घूर्णिता चण्डा भयङ्करा गदा तस्याअभिघातः प्रहारस्तेन सञ्चूर्णितमूरुयुगलं यस्य तादृशस्य। सुयोधनस्य न तु दुर्योधनस्य एतेन तस्य निरायासवध्यत्वं सूचितम्। स्त्यानावनद्धघनशोणितशोणपाणिः स्त्यानं स्निग्धं यदवनद्धं संसक्तं तथाभूतं घनं गाढं यत् शोणितं रुधिरं तेन शोणो रक्तवर्णः पाणिर्यस्य तथाभूतः 'स्त्यानं स्निग्धे प्रतिध्वानेघनत्वालस्ययोरपि।' इति मेदिनी। भीमः। तव कचान् केशान्। "चिकुरः कुन्तलो बालः कचः केशः शिरोरुह" इत्यमरः। उत्तंसयिष्यति संस्कारिष्यति। वसन्ततिलकं वृत्तम्॥ ३४४॥"

सिंहनिरीक्षणन्यायेन उपक्षेपादीनां परस्परं भेदं दर्शयति—अत्रेत्यादिना। स्पष्टम्।

विलोभनं लक्षयति—३८३ गुणाख्यानमित्यादिना।

३८३ गुणाख्यानं गुणानामाख्यानं कीर्तनम्। विलोभनम्। तथाह भरतः—'गुणनिर्वर्णनं तज्ज्ञैर्विलोभनमिति स्मृतम्।' इति।

उदाहरति—यथेत्यादिना।

यथा तत्र वेणीसंहारे। एव। 'द्रौपदी भीमं प्रत्याहे'ति शेषः। णाध! नाथ किं किन्नासेत्यर्थः। तुए त्वया। परिकुविदेण परिकुपितेन। दुक्करं दुष्करम्।' तारुण्यस्येति व्याख्यातपूर्वं पद्यम्॥ ३४५॥

---

१ 'नाथ किं दुष्करं त्वया परिकुपितेने'ति संस्कृतम्।

यत्तु अभिज्ञानशाकुन्तलादिषु–

"ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः ।
पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ॥
दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा ।
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥३४६॥"

इत्यादिमृगादिगुणवर्णनं, तद्बीजार्थसम्बन्धाभावान्न सन्ध्यङ्गम् । एवमङ्गान्तराणामप्यूह्यम् ।

**३८४ सम्प्रधारणमर्थानां युक्तिः**

यथा वेणीसंहारे सहदेवो भीमं प्रति–'आर्य किं महाराजस्य सन्देशोऽयमार्येणाव्युत्पन्न इव गृहीतः ।' इत्यतः प्रभृति–

"युष्मान् ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः । न लज्जयति दाराणां सभायां केशकर्षणम् ॥३४७॥"

इति भीमवचनं यावत् ।

**३८५ प्राप्तिः सुखागमः ॥ ३८० ॥**

---

श्रमापनोदायाह–यत्तु । अभिज्ञानशाकुन्तलादिषु–"अनुपतति पश्चादाधावनं कुर्वाणे । स्यन्दने रथे । ग्रीवाभङ्गाभिरामं ग्रीवाया भङ्गः किञ्चिद्वक्रीकरणं तेनाभिरामो यस्मिन्कर्मणि तद्यथा भवेत्तथा । मुहुः । बद्धदृष्टिर्दत्तनेत्रः । पूर्वकायम् । शरपतनभयात् शरपातजनितभीत्या । भूयसाऽधिकेन । पश्चार्धेन अर्धेऽङ्गेन । प्रविष्टः । अर्धावलीढैरर्धभक्षितैः । श्रमविवृतमुखभ्रंशिभिः श्रमेण धावनायासेन विवृतं व्यात्तं यन्मुखं तस्मा द्भ्रंस्यन्तीति तथोक्तैः । दर्भैः । कीर्णवर्त्मा कीर्णमितस्ततो दर्भक्षेपेण व्याप्तिं नीतं वर्त्म मार्गो येन तथोक्तः । उदग्रप्लुतत्वादुदग्रमुत्कटं प्लुतस्तस्य भावस्तत्त्वं तस्मात् । वियति आकाशे । बहुतरमत्यधिकम् । उर्व्यां पृथ्वीतले । पुनरिति शेषः । 'वसुधोर्वी वसुन्धरा' इत्यमरः । स्तोकमल्पम् । 'स्तोकाल्पक्षुल्लकाः श्लक्ष्ण' मित्यमरः । मृग इति पूर्वतोऽनुषज्यते । प्रयाति । पश्य । "सूत ! दूरममुना सारङ्गेण वयमाकृष्टाः । अयं पुनरिदानीमपि" इत्युक्त्वा मृगधावनं दर्शयतो महाराजदुष्यन्तस्य सूतं प्रत्युक्तिरियम् । स्रग्धरावृत्तम् । स्रग्धरा म्रौ भ्नौ यौ यू त्रिःसप्तकैरिति तल्लक्षणम् ॥३४६॥

इत्यादिमृगादिगुणवर्णनमित्यादिना मृगादीनां गुणवर्णनम् । तद्बीजार्थसम्बन्धाभावात्तद्बीजार्थस्य मुख्यार्थस्य सम्बन्धस्तस्यभावस्तस्मात् । सन्ध्यङ्गम् । न । ज्ञेयमिति शेषः । एवं यथा नेदं विलोभनसन्ध्यङ्गं तथेति भावः । अङ्गान्तराणामन्येषां सन्ध्यङ्गानामिति भावः । अपि । ऊह्यम् ।

युक्तिं लक्षयति–३५० सम्प्रधारणमित्यादिना ।

३५० अर्थानां सन्दर्भप्रयोजनानाम् । सम्प्रधारणं कर्तव्यरूपेण निश्चयनम् । युक्तिः ।

उदाहरति–यथेत्यादिना ।

यथा । वेणीसंहारे । सहदेवः । भीमं 'प्रत्याहे' ति शेषः । 'आर्य ! "कर्तव्यमाचरन् काममकर्तव्यमनाचरन् । तिष्ठति प्रकृताचारे यः स आर्य इति स्मृतः ।" इत्युक्तगुणसम्पन्न । किं प्रश्नार्थमिदम् । महाराजस्य युधिष्ठिरस्य । अयं युद्धे कुलक्षयो भविष्यति इति सन्धिरेव कर्तव्य इत्यभिप्रायावेदनरूपः । सन्देशः । आर्येण पूज्येन भवता । अव्युत्पन्नोऽनिर्धारितः । इव । गृहीतः । 'इत्यतः प्रभृत्यारभ्य ( इदमव्ययम् )' युष्मान्सन्ध्यर्थं यतमानान् पाण्डवानिति भावः । लोके संसारे । क्रोधात् । शत्रुकुलक्षयः शत्रूणां कुरूणां कुलक्षयः । ह्रेपयति लज्जां नयति । सभायां न तु रहसि । दाराणां द्रौपद्याः । अत्र "दाराः पुम्भूम्नी" त्यमरोक्त्या बहुवचनम् । केशकर्षणं शत्रुकृतमिति शेषः । न"पुन" रिति शेषः । लज्जयति लज्जायुक्तान्करोति॥ ३४७॥इति भीमवचनं यावत्पर्यन्तम् ।

प्राप्तिं लक्षयति–३५१ प्राप्तिरित्यादिना ।

३५१ सुखागमः सुखस्यागमः केनापि कार्येण लाभः । प्राप्तिः ॥ ३९९ ॥

यथा तत्रैव-

"मथ्नामि कौरवशतं समरे न कोपाद्दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
सञ्चूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु नृपतिर्भवतां पणेन ॥ ३४८॥"

इति श्रुत्वा द्रौपदी (सहर्षम्) जनान्तिकम्-"णाह! अस्सुदपूव्वं क्खु दे एदिसं वअणं ता पुणोपुणो दाव भणादि[1]।"

**३८६ बीजस्यागमनं यत्तु तत्समाधानमुच्यते।**

यथा तत्रैव "( नेपथ्ये कलकलानन्तरम् ) भोभो द्रुपदविराटवृष्ण्यन्धकसहदेवप्रभृतयः! अस्मदक्षौहिणीपतयः कौरवचमूप्रधानयोधाश्च शृण्वन्तु भवन्तः।

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता।
तद् द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥३४९॥"

---

उदाहरति-यथेत्यादिना।

यथा। तत्र वेणीसंहारे। एव 'मथ्नामीति'व्याख्यातपूर्वम्॥ ३४८॥ इति। श्रुत्वा भीमप्रतिज्ञावचनमाकर्ण्य। द्रौपदी ( सहर्षम् ) जनान्तिकं। सर्वेषां समक्षमिति भावः। 'अन्योऽन्यामन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकं'-मिति भरतः। "णाह। नाथ! दे तव। एदिसं ईदृशम्। वअणं वचनम्। अस्सुदपूव्वं अश्रुतपूर्वम्। क्खु खलु। ता तस्मात्। पुणोपुणो पुनःपुनः। दाव तावत्। भणाहि भण।" अत्र हि भीमस्य वचनाकर्णनाद् द्रौपद्याः सुखागमः।

समाधानं लक्षयति-३८६ बीजस्येत्यादिना।

३८६ यत्। च। त्विति पाठान्तरम्। बीजस्य प्रधानकरणस्य। आगमनं प्रधानतया कीर्तनम्। तत्। समाधानम्। उच्यते।

उदाहरति-यथेत्यादिना।

यथा। तत्र वेणीसंहारे। एव। "( नेपथ्ये कलकलानन्तरम् ) भोभोः सम्भ्रमे द्विरुक्तिः। अस्मदक्षौहिणीपतयः अस्माकं पाण्डवानामक्षौहिण्यः सेनाविशेषास्तेषां पतयः! द्रुपदविराटवृष्ण्यन्धकसहदेवप्रभृतयः द्रुपदश्च विराटश्च वृष्णयश्च अन्धकाश्च सहदेवप्रभृतयश्चेति तत्सम्बुद्धौ तथोक्ताः! वृष्णयो वृष्णिवंश्या अन्धका अन्धकवंश्या इति लक्ष्योऽर्थः। अन्यत्स्पष्टम्। च तथा। कौरवचमूप्रधानयोधाः कौरवाणां चम्वः सेनाविशेषास्तेषां प्रधानाः प्रधानभूता योद्धार इति तत्सम्बुद्धौ तथोक्ताः! 'एकेभैकरथा त्र्यश्वा पत्तिः पञ्चपदातिका। पत्त्यङ्गैस्त्रिगुणैः सर्वैः क्रमादाख्या यथोत्तरम्। सेनामुखं गुल्मगणौ वाहिनी पृतना चमूः। अनीकिनी'त्यमरः। भवन्तः। शृण्वन्तु। सत्यव्रतभङ्गभीरुमनसा सत्यमवश्यमनुष्ठेयं यद्व्रतं नियमस्तस्य द्वादशाब्दान्तं वने न्यूष्य पुनरेकाब्दं यत्र क्वाप्यज्ञाता निवत्स्याम इत्यात्मिकायाः प्रतिज्ञाया इति भावः भङ्गस्तेन भीरु भीतं मनो यस्य तेन। 'मये'ति शेषः। यत्नेन। यत्। मन्दीकृतम्। तत्। द्यूतारणिसम्भृतं द्यूतमेवारणिरग्न्युद्भावनदारु तेन सम्भृतमुत्पाद्य प्रत्यक्षतां नीतम्। नृपसुताकेशाम्बराकर्षणै नृपो द्रुपदराजस्तस्य या सुता तस्याः केशाश्चाम्बरं च तेषामकर्षणानि तैः। महत्प्रदीप्तमिति भावः। इदम्। यौधिष्ठिरं युधिष्ठिरस्य ( मम ) इदमिति तथोक्तम्। क्रोधज्योतिः क्रोधाग्निज्वाला। कुरुवने 'कुरुकुले' इति पाठान्तरम्। जृम्भते। अत्र शार्दूलविक्रीडितं वृत्तम्॥ ३४९॥"

---

1 "नाथ अश्रुतपूर्वं खलु ते ईदृशं वचनं तत्पुनः पुनर्भण।" इति संस्कृतम्।

इत्यत्र "स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः" इत्यादिबीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात् समाधानम् ।

३८७ सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम् ॥ ३८१ ॥

यथा बालचरिते 'परशुरामः–

उत्साहातिशयं वत्स ! तव बाल्यं च पश्यतः । मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः ॥ ३४९ ॥'

यथा वा, मम प्रभावत्याम्,—

" नयनयुगासेचनकं मानसवृत्त्याऽपि दुष्प्रापम् ।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे ॥ ३५० ॥"

३८८ कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना ।

यथा वेण्यां–द्रौपदी 'युद्धं स्यान्न वे'ति संशयाना तूर्यशब्दानन्तरम् ।

'णाह ! किं दाणीं एसो पलअजलहरघणत्थणिदमंसलो क्खणेक्खणे चंडघोसो समरदुन्दुही ताडीअदि' ।'

---

इत्यत्र "स्वस्था भवन्ति मयि जीवति धार्तराष्ट्राः" इत्यादिबीजस्य भीमसेनोत्साहबीजस्य। प्रधान-नायकाभिमतत्वेन प्रधाननायकस्य युधिष्ठिरस्याभिमतत्वं तेन । सम्यक् । आहितत्वात् स्थापितत्वात् । समाधानम् ।

विधानं लक्षयति–३८७ यः। सुखदुःखकृतः सुखदुःखाभ्यां कृतो मिश्रितः। अर्थः । तत् । विधानम् । इति । स्मृतम् ॥ ३८१ ॥

उदाहरति–यथा । बालचरिते बालस्य रामचन्द्रस्य चरितं बाल्यं नाट्यम् इति यावत्, तत्र तत्प्रधाने कस्मिंश्चिद् रूपके । 'परशुरामः "रामचन्द्रं प्रत्याहे"ति शेषः। वत्स ! तव। उत्साहातिशयं मयाऽपि समं योद्धुं हर्षस्यातिशयस्तम् । बाल्यम् चापश्यतः। मम । मनः। हर्षविषादाभ्याम्। युगपत्। आक्रान्तं योद्धुं तवोत्साहं पश्यतो ममान्तर्हर्षः, बाल्येनाज्ञात्वैव पतङ्गस्येवाग्नौ मम परशौ जीवितं त्यक्तुं तव प्रवृत्तिं पश्यतो मम विषादश्चेति भावः ॥ ३४९॥'

उदाहरणान्तरं दर्शयति,–यथा । वा । मम। प्रभावत्यां प्रभावतीनामिकायां नाटिकायाम् । 'नयनयुगासेचनकम् ( इति व्याख्यातपूर्वम् ) उदाहरणान्तरं निर्दिशति–अत्र हि रूपस्य मनोहरतया हर्षाधायकत्वं मदनोद्दीपकतया च विषादाधायकत्वं चेति लक्षणसमन्वयः ॥ ३५० ॥'

परिभावनां लक्षयति–३८८ कुतूहलोत्तराः कुतूहलमौत्सुक्यमुत्तरस्मिन् यासां ताः । वाचः । वचनानि । तु । परिभावना । तन्नामसुखसन्धेरङ्गम् । प्रोक्ता ।

उदाहरति–यथा । वेण्यां वेणीसंहारे । 'युद्धम् । स्यात् । न । वा ।' इति । संशयाना संशयं कुर्वाणा । द्रौपदी । तूर्यशब्दानन्तरं तूर्यवाद्यस्य शब्दश्रवणानन्तरं तूर्येत्यत्र दुन्दुभीति सुपाठः । 'णाह नाथ । किंदाणीं किमिदानीम् । एसो एषः । पलअजलहरघणत्थणिदमंसलो प्रलयजलधरघनस्तनितमांसलः । प्रलये ये जलधरा मेघास्तेषां घनं यत्स्तनितं गर्जितशब्दस्तद्वन्मांसलः पुष्टः । चण्डघोसो चण्डघोषः । तन्नामेतिभावः । समरदुन्दुही समरदुन्दुभिः । क्खणेक्खणे क्षणेक्षणे । ताडीअदि ताडयते ( 'घनं स्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः । नामुस्ताब्दौघदाढर्येषु' इति मेदिनी । 'स्तनितं गर्जितं मेघनिर्घोषो रसितादि च'त्यमरः ) । अत्र हि द्रौपद्या झटिति समरौत्सुक्यार्था वाचः ।'

---

१ 'नाथ ! किमिदानीमेष प्रलयजलधिघनस्तनितमांसलः क्षणेक्षणे चण्डघोषः समरदुन्दुभिस्ताड्यते ।' इति संस्कृतम् ।

३८९ बीजार्थस्य प्ररोहः स्यादुद्भेदः

यथा तत्रैव 'द्रौपदी अण्णञ्च णाह ! पुणोवि तुम्हेहिं समरादो आअच्छिअ अहं समासासइदव्वा।'
भीमसेनः। ननु पाञ्चालराजतनये ! किमद्यालीकाश्वासनया—

"भूयः परिभवक्लान्तिलज्जाविधुरिताननम्।अनिःशेषितकौरव्यं न पश्यसि वृकोदरम्॥३५१॥"

३९० करणं पुनः ॥ ३८२॥

प्रकृतार्थसमारम्भः

यथा तत्रैव भीमसेनः। 'तत् पाञ्चालि ! गच्छामो वयमिदानीं कुरुकुलक्षयाय'।

३९१ भेदः संहतभेदनम्।

यथा तत्रैव "भीमसेनः। एवमिदम्, अत एवाहमद्यप्रभृति भिन्नो भवद्भ्यः" इति।

केचि-'द्भेदः प्रोत्साहने'ति वदन्ति।

उद्भेदं लक्षयति—३८९ बीजार्थस्य मुख्यप्रयोजनस्य। प्ररोहः सिद्ध्यमानत्वम्। उद्भेदः। स्यात्।

उदाहरति—यथा। तत्र वेणीसंहारे। एव। 'द्रौपदी'भीमं प्रत्याहे'ति शेषः। णाह नाथ ! अण्णञ्च अन्यच्च 'वक्तव्य' मिति शेषः। पुणोवि पुनरपि। तुम्हेहिं त्वया। समरादो समरतः सङ्ग्रामभूमेरिति यावत्। आअच्छिअ आगत्य।अहं अहम्। समासासइदव्वा समाश्वासयितव्या तेषां संहननवृत्तान्तनिवेदनामृतसिञ्चनेन सञ्जीवनीयेति यावत्। भीमसेनः 'द्रौपदीं प्रत्याहे'ति शेषः। ननु। पाञ्चालराजतनये पाञ्चालदेशस्य राजा द्रुपदस्तस्य तनयेति तत्सम्बुद्धौ तथोक्ते ! किम्। अद्य। अलीकाश्वासनया व्यर्थया आश्वासनया तावदकृतकार्यत्वादलीकत्वमाश्वासनाया इति बोध्यम्। किन्तु—

परिभवक्लान्तिलज्जाविधुरिताननं परिभवस्तिरस्कारस्तेन क्लान्तिः हर्षक्षयस्तेनलज्जा तया विधुरितं विच्छायमाननं यस्य तम्। अनिःशेषितकौरव्यं न निःशेषिता मारिताः कौरव्या दुर्योधनादयो येन तम्। 'कुर्वादिभ्यो ण्यः।' ४।१।१७२ इति ण्यः। वृकोदरम्। न। पश्यसि द्रक्ष्यसि। 'वर्तमानसामीप्ये वर्तमानवद्वा' ३।३।१३१ इति लट्। अत्र हि कुरुविनाशनार्थस्य प्ररोहः॥ ३५१॥'

करणं लक्षयति— ३९० प्रकृतार्थसमारम्भः प्रकृतार्थस्य प्रस्तुतस्य कार्यस्य समारम्भः सम्यगापादनम्। पुनः। करणम्। 'मत' मिति शेषः॥ ३८२॥

उदाहरति—यथा। तत्र तस्मिन् वेणीसंहारे। एव। "भीमसेनः" 'द्रौपदीम्प्रत्याहे'ति शेषः। तत् यदेतत्कर्तव्यं तस्मात् कारणात। हे पाञ्चालि पञ्चालराजपुत्रि ! इदानीम्। वयं 'वीरा' इति शेषः। कुरुकुलक्षयाय कुरुक्षयं कर्तुम् [ तुमर्थे चतुर्थीयम् ] गच्छामः समराङ्गणे प्रविशाम इति भावः।

भेदं लक्षयति—३९१ संहतभेदनं संहतानां सम्मिल्य किञ्चित् कार्यं कर्तुं प्रवृत्तानामिति यावत् भेदनं द्वैधीकरणम्। भेदः।

उदाहरति—यथा। तत्र तस्मिन् वेणीसंहारे। एव। भीमसेनः 'सहदेवादीन् प्रत्याहे'ति शेषः। एवमिदम्। यथा ब्रूथ तथैवास्ति। अत एव। अहम्। अद्यप्रभृति अद्यारभ्य। भवद्भ्यो भवत उपेक्ष्य। भिन्नः पृथक्तया प्रवृत्तो भवामीति भावः।

परेषां मतं निर्दिशति—केचित् दशरूपकारादयः। 'प्रोत्साहनोत्साहं प्रत्यानयनम्। भेदः। इति। वदन्ति। एतन्मते—"अन्योन्यास्फालभिन्नद्विपरुधिरवसासान्द्रमस्तिष्कपङ्के मग्नानां स्यन्दनानामुपरि कृतपदन्यासविक्रान्तपत्तौ। स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे सङ्ग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः॥'इत्युदाहरणं बोध्यम्।

---

१ अन्यच्च नाथ ! पुनरपि त्वया समरत आगत्याहं समाश्वासयितव्या॥ इति संस्कृतम्।

अथ प्रतिमुखाङ्गानि—

३९२ विलासः परिसर्पश्च विधुतं तपनं तथा ॥ ३८३ ॥
नर्म नर्मद्युतिश्चैव तथा प्रगमनं पुनः ।
विरोधश्च प्रतिमुखे तथा स्यात्पर्युपासनम् ॥ ३८४ ॥
पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ।

तत्र—

३९३ समीहा रतिभोगार्थां विलास इति कीर्तितः ॥ ३८५ ॥

रतिलक्षणस्य भावस्य यो हेतुभूतो भोगो विषयः प्रमदा पुरुषो वा तदर्था समीहा विलासः । यथाऽभिज्ञानशाकुन्तले—

"कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनायासि ।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ ३५२ ॥"

३९४ इष्टनष्टानुसरणं परिसर्पश्च कथ्यते ।

यथाऽभिज्ञानशाकुन्तले 'राजा...अस्मिन्वेतसपरिक्षिप्ते लतामण्डपे सन्निहितया तया भवितव्यम् । तथा हि–( अधो विलोक्य )

---

उदाहरति–यथेत्यादिना ।

इदानीं मुखसन्धेरङ्गानि दर्शयित्वा प्रतिमुखसन्धेरङ्गान्यभिधातुं प्रतिजानीते–अथेत्यादिना ।

अथ । प्रतिमुखाङ्गानि प्रतिमुखस्य सन्धेरङ्गानि । उच्यन्ते इति शेषः । ३९२ विलास इत्यादिना ।

३९२ प्रतिमुखे विलासादयस्त्रयोदशाङ्गानि सम्भवन्तीति वर्तुलार्थः स्पष्टः ॥ ३८३ ॥ ३८४ ॥

क्रमाद्विलासादींल्लक्षयितुमुपक्रमते–तत्रेत्यादिना ।

तत्र तेषु । विलासो लक्ष्यते इति शेषः । ३९३ समीहा इत्यादिना ।

३९३ समीहा । रतिभोगार्था रतिभोगार्थेयमिति तथोक्ता । अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यमिति नित्यसमासः । विलासः । इति । कीर्तितः ॥ ३८५ ॥

तदेव विवृणोति–रतिलक्षणस्येत्यादिना ।

रतिलक्षणस्य रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितमित्यस्य । स्पष्टमन्यत् ।

उदाहरति–यथेत्यादिना ।

यथा । अभिज्ञानशाकुन्तले 'द्वितीयेऽङ्के राजा' इति शेषः ।

"काममत्यन्तं सेति शेषः । प्रिया । न सुलभा । मनः । तु पुनः । तद्भावदर्शनायासि तस्याः शकुन्तलाया भावदर्शने सव्याजमवलोकनादिना अभिप्रायावेदने आयासि तत्परम् । तद्भावदर्शनाश्वासीति पाठे तु तस्या भावः सव्याजमवलोकनादिनाऽऽवेद्यमानो मय्यनुरागावेदनार्थ इङ्गितविशेषस्तस्य दर्शनं ज्ञानं तेनाश्वासीत्यर्थः । 'दर्शनं नयनस्वप्नबुद्धिधर्म्मोपलब्धिषु' इति मेदिनी । तथा हि मनसिजे कामे । अकृतार्थे भोग्यालाभादसम्पन्नकार्ये । अपि । उभयप्रार्थना उभयोर्मम तस्याश्चान्योन्यं प्रार्थना । रतिम् । कुरुते । आर्या वृत्तम् ॥ ३५२ ॥"

परिसर्पं लक्षयति–३९४ इष्टेत्यादिना ।

३९४ इष्टनष्टानुसरणं इष्टं यन्नष्टमदृष्टं तस्यानुसरणमन्वेषणम् । च । परिसर्पः । कथ्यते ।

उदाहरति–यथा । अभिज्ञानशाकुन्तले तृतीयेऽङ्के इति शेषः । 'राजा ( परिक्रम्यावलोक्य ) अस्मिन् वेतसपरिक्षिप्ते । लतामण्डपे । तया शकुन्तलया । सन्निहितयाऽवस्थितया । भवितव्यम् । तथा हि ( अधो विलोक्य )

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात्।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥ ३५३ ॥"

३९५ कृतस्यानुनयस्यादौ विधुतं त्वपरिग्रहः ॥ ३८६ ॥

यथा तत्रैव "शकुन्तला-हला अलं वो अंतउरविरहपज्जुस्सुएण राएसिण उवरुद्धेणं[1]।" केचित्तु 'विधुतं स्यादरति'रिति वदन्ति।

३९६ उपायादर्शनं यत्र तपनं नाम तद्भवेत्।

यथा रत्नावल्यां "सागरिका...
दुल्लहजणाणुराओ लज्जा गुरुई परअसो अप्पा।
पिअसहि! विसमं पेम्मं मरणं सरणं णवरि एक्कं[2] ॥ ३५४ ॥"

३९७ परिहासवचो नर्म्म

---

"पुरस्तात् पादाग्रभागे। अभ्युन्नता। शकुन्तलायाः-पश्चात् पार्ष्णिभागे। जघनगौरवान्नितम्बभारात् "जघनं कटौ। स्त्रियः श्रोणिपुरोभागे" इति हैमः। अवगाढा निम्ना। अस्य लतामण्डपस्य। पाण्डुसिकते पाण्डुः सिकता यत्र तादृशे। द्वारे। अभिनवा। पदपङ्क्तिः। दृश्यते। अतोऽत्र शकुन्तलाया अन्वेषणम्। आर्याछन्दः ॥३५३॥"

विधुतं लक्षयति-३९५ कृतस्येत्यादिना।

३९५ विधुतम्। तु पुनः। आदौ प्रथमम्। कृतस्य। अनुनयस्य। अपरिग्रहः ॥ ३८६ ॥

उदाहरति-यथा। तत्राभिज्ञानशाकुन्तले। एव। "शकुन्तला प्रियंवदां प्रत्याह-हला सखि! 'हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति' इत्यमरः। अंतेउरविरहपज्जुसुएणा अन्तः पुरविरहपर्युत्सुकेन अन्तःपुरविरहोत्कण्ठितेन। उवरुद्धेण उपरुद्धेनाग्रहेण सन्निधापितेनेति यावत्। राएसिणा राजर्षिणा। अलम्। वो युष्माकमिति यावत्॥ ३५४॥"

अत्र परमतं दर्शयति-केचित्त्वित्यादिना।

केचित् दशरूपकारादयः। 'अरतिर्वैरस्यम्। विधुतम्। स्यात्।' इति। वदन्ति। त'त्कृतस्यानुनयस्यादौ त्वपरिग्रह' इति मुनिवचनविरोधादुपहेयमिति शेषः।

तपनं लक्षयति-३९६ उपायेत्यादिना।

३९६ यत्। च। उपायादर्शनमुपायाभावः। तत्। तपनम् नाम। भवेत्।

उदाहरति- यथारत्नावल्याम्। द्वितीयेऽङ्के। "सागरिका। 'सुसङ्गतां प्रत्याहे'ति शेषः।

दुल्लहजणणुराओ दुर्लभजनानुरागो। वत्सराजे ममानुरागः स च दुर्लभ इति भावः। लज्जा। गुरुई गुर्वी। अतः-अप्पा आत्मा। परवसो परवशः। लज्जाऽतिशयेन स्वयमपि स्वात्मानं समर्पयितुं न शक्नोमीति भावः। पिअसहि प्रियसखि! विसमं विषमम्। अननुरक्ते तत्रानुरक्तत्वान्मम वा दीनत्वात्तस्य च राजेन्द्रत्वादसमानभूमिकमिति यावत्। पेम्मं प्रेम। एवं सति एक्कं एकम्। णवरि केवलम्। मरणं। सरणं शरणम्। मरणमन्तरा नेदं दुःखं निवर्त्स्यते इति भावः। आर्य्यावृत्तम्। अत्र हि स्फुटं सागरिकाया अन्तःसन्तप्तत्वम्। अत्रेदमवोध्यम्-येषां मते अरतेः शमनाच्छमस्तन्मते "असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः। सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः॥" इत्यभिज्ञानशाकुन्तलीयं पद्यमुदाहरणीयम्। दुष्यन्तस्य शकुन्तलायां मुनिदुहितृत्वेन रतेरुपशमः। इति ॥ ३५४ ॥

नर्म लक्षयति-३९७ परिहासेत्यादिना। स्पष्टम्।

---

१ 'हला अलं वोऽन्तः पुरविरहपर्युत्सुकेन राजर्षिणोपरुद्धेने'ति संस्कृतम्।

२ 'दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा। प्रियसखि! विषमं प्रेम मरणं शरणं केवलमेक'मिति संस्कृतम्।

यथा रत्नावल्यां "सुसङ्गता–सहि जस्स किदे तुमं आअदा सो अयं दे पुरदो चिट्ठदि। सागरिका (साभ्यसूयम्) कस्स किदे अहं आअदा। सुसङ्गता–अलं अण्णसंकिदेण णं चित्तफल-अस्स (सखि यस्य कृते त्वमागता सोऽयं ते पुरतस्तिष्ठति। कस्य कृतेऽहमागता। अलमन्यशङ्कितेन, ननु चित्रफलकस्य)।

३९८ द्युतिस्तु परिहासजा ॥ ३८७ ॥

नर्मद्युतिः–

यथा तत्रैव 'सुसङ्गता–सहि,अदक्खिणा दाणिं सि, तुमं जा एव्वं भट्टिणा हत्थावलम्बिदा वि कोवं ण मुञ्चसि। (सखि अदक्षिणा इदानीमसि त्वं, या एवं भर्त्रा हस्तावलम्बिताऽपि कोपं न मुञ्चसि) सागरिका (सभ्रूभङ्गमीषद्विहस्य) सुसङ्गदे! दाणिं वि कीडिदं ण विरमसि (सुसङ्गते) इदानीमपि क्रीडितं न विरमयसि)। केचित्तु दोषस्याच्छादनं हास्यं नर्मद्युति'रिति वदन्ति।

३९९ प्रगमनं वाक्यं स्यादुत्तरोत्तरम्।

यथा विक्रमोर्वश्याम्, 'उर्वशी–जअदु जअदु महाराओ (जयतु जयतु महाराजः) राजा-मया नाम जितं यस्य त्वया जय उदीर्यते। जयशब्दः सहस्राक्षादागतः पुरुषान्तरम् ॥ ३५४ ॥'

४०० विरोधो व्यसनप्राप्तिः

यथा चण्डकौशिके, "राजा–नूनमसमीक्ष्यकारिणा मयाऽन्धेनेव स्फुरच्छिखाकलापो ज्वलनः पद्भ्यां समाक्रान्तः। इति।

---

उदाहरति–यथा। रत्नावल्याम्। 'सुसंगता 'रत्नावलीं प्रत्याहे'ति शेषः। हे सहि सखि। जस्स यस्य। किदे कृते प्रसादनायेति यावत्। तुमं त्वम्। आअदा आगता। सो सः। अयं वत्सराज इत्यर्थः। दे ते रत्नावल्या इति भावः। पुरदो पुरतः। चिट्ठदि तिष्ठति। सागरिका रत्नावली 'सुसङ्गतां प्रत्याहे'ति शेषः। (साभ्यसूयम्) कस्स कस्य। किदे कृते। अहं अहम् आअदा आगता। सुसंगता 'उत्तरयती'ति शेषः। अण्णसंकिदेण अन्यशङ्कितेनान्य (सपत्न्यादि)–शङ्कयेति यावत्। अलं अलं पर्याप्तमिति यावत्। णं ननु। चित्तफलअस्स चित्रफलकस्य। इदं केवलं नर्मवचः नायकार्थागमनस्यापह्नवनात्। इति लक्षणसमन्वयः।

नर्मद्युतिं लक्षयति–३९८ परिहासजा परिहासकृता। द्युतिः शोभा। तु। नर्मद्युतिः ॥ ३८७ ॥

उदाहरति—यथा। तत्र तस्यां रत्नावल्याम्। अदक्खिणाऽदक्षिणा मूढेति यावत्। दाणिं इदानीं पर-सङ्कटावसरे इति यावत्। स्पष्टमन्यत्।

भरतानुयायिनाम्मतं दर्शयति–केचित् 'दोषप्रच्छादनार्थन्तु नर्मद्युतिरिति स्मृतम्।' इति भरतमतानुमन्तारः। तु। स्पष्टमन्यत्। एतन्मते–उदाहरणं तु यथा रत्नावल्याम् 'विदूषकः ण किदो कहं पसादो, ज अज्जवि अक्खदसरीरा चिट्ठह्म (न कृतः कथं प्रसादः, यद्द्यापि अक्षतशरीरास्तिष्ठामः)' इति।

प्रगमनं लक्षयति–३९९ उत्तरोत्तरमुत्तरादुत्कृष्टादुत्तरमत्कृष्टम्। वाक्यम्। प्रगमनं तदाख्यं सन्ध्यङ्गम्।

उदाहरति–यथेत्यादिना। स्पष्टम्। अत्र उर्वश्या उक्त्यपेक्षया पुरूरवस उक्तिरुत्कृष्टा ॥ ३५४ ॥

विरोधं लक्षयति–४०० व्यसनप्राप्तिर्यतो व्यसनं स्यात् सः। विरोधः।

उदाहरति–यथा। चण्डकौशिके। राजा हरिश्चन्द्रः। 'अन्तः शोचती'ति शेषः। नूनं निश्चितम्। असमीक्ष्यकारिणा कर्त्तव्याकर्त्तव्यमसमीक्ष्य तत्कर्त्रा। मया। अन्धेनेव। स्फुरच्छिखाकलापः स्फुरन् जाज्वल्यमानः शिखाकलापो ज्वालापुञ्जो यस्य तथोक्तः। ज्वलनोऽग्निस्तद्रूपः कौशिको मुनिः। पद्भ्यां चरणाभ्यां तद्रूपेणातिथ्येन। समाक्रान्तो दलितः तथाऽङ्गीकृत इति यावत्। प्रज्वलतोऽग्नेः पद्भ्यामाक्रमणमिव मयाऽऽतिथ्येनाभ्यर्थितः कौशिक इति भावः। स्फुटाऽत्र तथा व्यसनप्राप्तिः।

४०१ कृतस्यानुनयः पुनः ॥ ३८८ ॥ स्यात्पर्युपासनं

यथा रत्नावल्याम् 'विदूषकः-भो मा कुप्य एसा हि कदलीघरंतरं गदा । ( भो मा कु० एषा हि कदलीगृहान्तरं गता । इति संस्कृतम् ) ।' इत्यादि ।

४०२ पुष्पं विशेषवचनं मतम् ।

यथा तत्रैव 'राजा ( सहर्षम् ) यथाऽह भवती ( सागरिकां हस्ते गृहीत्वा स्पर्शसुखं नाटयति ) विदूषकः-भो वअस्स एसा क्खु तुए अपुव्वा सिरी समासादिदा ( भो वयस्य एषा खलु अपूर्वा त्वया श्रीः समासादिता इति संस्कृतम् ) । राजा वयस्य ! सत्यम् ।

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः॥३५५॥'

४०३ प्रत्यक्षनिष्ठुरं वज्रम् ।

यथा तत्रैव 'राजा । सुसङ्गते कथमिहस्थोऽहं भवत्या ज्ञातः । सुसङ्गता । ण केव्वलं देवो, चित्तफलएण समं सव्वो वि वुत्तंतो मए विण्णादो ता देवीए गदुअ णिवेदइस्सं । ( न केवलं देवः, चित्रफकेन समं सर्वोऽपि वृत्तान्तो मया विज्ञातः तद्देव्यै गत्वा निवेदयिष्ये । इति संस्कृतम् )

४०४ उपन्यासः प्रसादनम् ॥ ३८९ ॥

यथा तत्रैव 'सुसङ्गता-भट्टुण ! अलं संकाए मया वि भट्टिणो पसाएण कीलिदं जेव्व ता किं कण्णाहरणेन पसाओ जं कीस तुए एत्थ अहं आलिहिदेत्ति कुविदा मे पिअसही साअरिआ चिट्ठदि ता गदुअ एसा पसादीअदु ।' भर्त्तः ! अलं शङ्कया मयाऽपि भर्त्तुः प्रसादेन क्रीडितमेव तत् किं कर्णाभरणेन एष मे गुरुप्रसादः, यत् कथं त्वयाऽत्र ( चित्रफलके ) अहमालिखितेति कुपिता मे प्रियसखी सागरिका तद्गत्वैषा प्रसाद्यताम् । इति संस्कृतम् ।

---

पर्युपासनं लक्षयति-४०१ कृतस्य 'अपराधस्ये'ति शेषः । अनुनयः समापनम् । पुनः । पयुपासनम् । स्यात् ॥ ३८८ ॥

उदाहरति-यथेत्यादिना । स्पष्टम् । अत्र हि सागरिकाऽपयापनापराधस्य क्षमापणम् ।

पुष्पं लक्षयति ४०२ विशेषवचनं विशेषस्यानुरागस्यायात्मकबीजोद्भावकत्वरूपस्योत्कर्षस्य वचनम् । पुष्पम् । मतम् ।

उदाहरति-यथा । तत्र रत्नावल्याम् । एव । "राजा ( सहर्षम् ) 'सुसङ्गतां प्रत्याहे'ति शेषः।यथा।भवती सुसङ्गता । आह । सागरिकायाः यादृशाः गुणा अभिहितास्तादृशा एवास्यामुपलभ्यन्ते इति भावः । स्पष्टमन्यत् । विदूषकः 'राजानं प्रत्याहे'ति शेषः । भो । वअस्स वयस्य । एसा एषा सागरिका । क्खु तुए खलु त्वया । अपव्वा सिरी अपूर्वा श्रीः । समासाहिदा समासादिता । राजा । वयस्य । सत्यम् ।

एषा सागरिका । श्रीर्लक्ष्मीः । अस्याः । पाणिः । अपि । पारिजातस्य देववृक्षविशेषस्य । पल्लवः कोमलपत्रम् । अन्यथा तथाऽस्वीकारे । एषः । 'स्वेदच्छद्मामृतद्रवः' स्वेदश्छद्म यस्य तादृशोऽमृतद्रवः । कुतः । स्रवति । अत्र हि रत्नावल्यामनुरागरूपस्य बीजस्य रत्नावल्याः श्रीत्वाद्यभिधानेन विशेषोऽभिहितः ॥ ३५५ ॥"

वज्रं लक्षयति-४०३ प्रत्यक्षनिष्ठुरमित्यादिना । स्पष्टम् ।

यथा । तत्र रत्नावल्याम्।एव । राजा । 'सुसङ्गतां प्रत्याहे'ति शेषः । स्पष्टम् । सुसङ्गता 'राजानं प्रत्याहे'ति शेषः। ण न। केव्वलं केवलम् । देवो भवानिति यावत् । किन्तु-चित्तफलएण चित्रफलकेन।'सागरिका तत्रभवतो'-रिति शेषः । समम् । सव्वो रत्नावल्यां देवस्यानुरागादिरूपः । वि अपि । वुत्तंतो वृत्तान्तः । विण्णादो विज्ञातः । ता तत् । गदुअ गत्वा । देवीए देव्यै वासवदत्तायै इति यावत् । णिव्वेदइस्सं निवेदयिष्ये ।' अत्र हि सुसङ्गताया वत्सराजं प्रति प्रत्यक्षं प्रतिकूलं वचनम् ।

उपायं लक्षयति-४०४ प्रसादनं प्रसन्नतां प्रत्यानयनम् । उपन्यासः ॥ ३८९ ॥

यथा । तत्र रत्नावल्याम् । एव । 'सुसङ्गता ( राजानं प्रत्याह ) । भट्टुण भर्तः ! संकाए शङ्कया देव्यै वासवदत्तायै ममानुरागं सूचयिष्यतीयमिति भीत्येति भावः । अलम् । स्पष्टमन्यत् । वत्सराजस्य चित्रं पश्यन्त्याः सागरिकाया हस्तादाच्छिद्य तत्समीपे राज्ञश्चित्रं सुसङ्गतया लिखितमिति कुपितेति पूर्वतः प्रसक्तमप्यत्रावधेयम् ।

केचित्तु 'उपपत्तिकृतो योऽर्थ उपन्यासः स कीर्तितः ।' इति वदन्ति उदाहरन्ति च तत्रै-व 'विदूषकः-भो वअस्स सव्वं संहावीअदि मुहरा क्खु एसा गब्भदासी ता परितोसेहि णं ।'

४०५ चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ।

यथा महावीरचरिते तृतीयेऽङ्के-

"परिषदियमृषीणामेष वीरो युधाजित् सह नृपतिरमात्यै रोमपादश्च वृद्धः ।
अयमविरतयज्ञो ब्रह्मवादी पुराणः प्रभुरपि जनकानामङ्ग भो याचकस्ते ॥ ३५६ ॥";

इत्यत्र ऋषिक्षत्त्रियादीनां वर्णानां मेलनम् ।

अभिनवगुप्तपादास्तु-'वर्णशब्देन पात्राण्युपलक्ष्यन्ते तत्संहारो मेलनम्' । इति व्याचक्षते । उदाहरन्ति च 'एसो एव्व मे गुरुओ पसादो.. ता गदुअ एसा पसादीअदु' ! राजा क्वासौ दर्शय दर्शय' इत्यारभ्य-'सुसङ्गता-भट्टा अतिकोवणा क्खु एसा अग्गहत्थेण गेह्णिअ पसादेहि णं" इत्यादि ।

---

मतान्तरं दर्शयति-केचित्त्वित्यादिना ।

केचित्तु पुनः । 'यः । उपपत्तिकृतः उपपत्त्या कारणेन कृतः । अर्थः । सः । उपन्यासः । कीर्तितः ।' इति । वदन्ति । उदाहरन्ति । च । तत्र रत्नावल्याम् । एव । 'विदूषकः । 'राजानं प्रत्याहेति शेषः । एसा एषा सुसङ्गता । गब्भदासी गर्भदासी । दास्या गर्भाज्जाता दासी न तु कर्मत इति भावः । स्पष्टमन्यत् ।

वर्णसंहारं लक्षयति-४०५ चातुर्वर्ण्येति ।

४०५ चातुर्वर्ण्योपगमनं चत्वार एव वर्णाश्चातुर्वर्ण्यं तस्योपगमनं समुपस्थितिः । चतुर्वर्ण्यादीनां स्वार्थे उपसं-ख्यानमिति ष्यञ् । वर्णसंहारः । इष्यते ।

यथा । महावीरचरिते । तृतीयेऽङ्के । वसिष्ठो जामदग्न्यं प्राह-"इयं ऋषीणां सत्यवचसां दिव्यज्ञानाना-मिति भावः । परिषत् सभा । अथास्यां सभायाम्-एषः । वीरः । युधाजित् कैकेयीभ्राता । च तथा अमात्यैर्म-न्त्रिभिः । सह । वृद्धः । रोमपादस्तदाख्यः । नृपतिः । अयं दशरथ इति भावः । अविरतयज्ञोऽविरतो यज्ञो यस्य स तादृशः । ब्रह्मवादी वेदतत्त्वोपदेष्टा । पुराणः । जनकानाम् । प्रभुः । अपि 'अत्रैवैष' इति शेषः । भो अङ्ग प्रिय ! 'अङ्ग प्रिये प्रतीके चे'ति गोपालः । ते तव । याचकः । मालिनीच्छन्दः ॥ ३५६ ॥"

लक्ष्यं सङ्गमयते-इत्यत्रेत्यादिना ।

इत्यत्र । ऋषिक्षत्त्रियादीनाम् । वर्णानाम् । मेलनम् । ऋषयो ब्राह्मणनृपतयः क्षत्त्रिया अमात्याः पुनः सर्वे ज्ञानिन इति चातुर्वर्ण्यं बोध्यम् ।

आचार्यान्तरमतं दर्शयति-अभिनवगुप्तपादेत्यादिना ।

अभिनवगुप्तपादाः नाट्यालोकप्रणेतारः । तु । 'वर्णशब्देन । पात्राणि । उपलक्ष्यन्ते । वर्णसंहार इत्यत्र -तत्संहारस्तेषां संहार इति । मेलनम् ।' इति । व्याचक्षते । 'एसो एषः । एव्व एव । मे मम । गुरुओ पसादो गुरुः प्रसादः । ता तद् । गदुअ गत्वा । एसा एषा । पसादीअदु प्रसाद्यताम् ।' इति सुसङ्गतावचः श्रुत्वेति शेषः । राजा ' सागरिकां प्रत्याहे 'ति शेषः । असौ सागरिका । क्वास्तीति शेषः । दर्शयदर्शय ।'इत्यारभ्य-'सुसङ्गता । भट्टा भर्तः ! अतिकोवणा अतिकोपना । क्खु खलु । एसा एषा । अग्गहत्थेण अग्रहस्तेन । गेह्णिअ गृहीत्वा । णं एनाम् । पसादेहि प्रसादय ।' इत्यादि । उदाहरन्ति । च । अत्र हि सुसङ्गताया राज्ञो विदुषकस्य सागरिकायाश्चेति त्रयाणां पात्राणां सम्मेलनम् । एवं च विदूषकस्य ब्राह्मणस्य राज्ञः क्षत्त्रस्य सुसङ्गतायाः शूद्रायाश्चेति त्रयाणामेव वर्णानामपि मेलने वर्णसंहार इति द्योतितम् ।

---

१ भो वयस्य ! सर्वं सम्भाव्यते मुखरा ( वाचाला ) खल्वेषा गर्भदासी तत् परितोषयैनाम् । इतिसंस्कृतम् ।

२ एष एव मे गुरुःप्रसादः तद्गत्वैषा प्रसाद्यताम् । ३ भर्तः ! अति कोपना खल्वेषाऽग्रहस्तेन गृहीत्वा प्रसादयैनाम् ।

अथ गर्भाङ्गानि—

४०६ अभूताहरणं मार्गो रूपोदाहरणे क्रमः ॥ ३९० ॥
सङ्ग्रहश्चानुमानं च प्रार्थना क्षिप्तिरेव च ।
तोटकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा ॥ ३९१ ॥

४०७ तत्र व्याजाश्रयं वाक्यमभूताहरणं मतम् ।

यथाश्वत्थामाङ्के—

"अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा—स्वैरं शेषे गज इति पुनर्व्याहृतं सत्यवाचा ।
तच्छ्रुत्वासौ दयिततनयः प्रत्ययात्तस्य राज्ञः शस्त्राण्याजौ नयनसलिलं चापि तुल्यं मुमोच॥ ३५७॥',

४०८ तत्त्वार्थकथनं मार्गः

यथा चण्डकौशिके 'राजा...भगवन्! अलमन्यथा सम्भावितेन—
गृह्यतामर्जितमिदं भार्यातनयविक्रयात् । शेषस्यार्थे करिस्यामि चण्डालेऽप्यात्मविक्रयम् ॥ ३५८॥'

---

एवं प्रतिमुखाङ्गानि निरूप्य गर्भाङ्गानि निरूपयितुमुपक्रमते—अथेत्यादिना ।

अथ । गर्भाङ्गानि गर्भस्य सन्धेरङ्गानि उच्यन्ते इति शेषः। ४०६ गर्भे तदाख्ये सन्धौ । अभूताहरणं मभूतस्याहरणम् । मार्गः । रूपोदाहरणे । रूपं चोदाहरणं चेत्यर्थः । सङ्ग्रहः । क्रमः । च तथा । अनुमानम् । च । प्रार्थना । क्षिप्तिः । एव । च । तोटकाधिबलोद्वेगास्तोटकमधिबलमुद्वेगश्च । तथा । विद्रव 'इत्येते त्रयोदशाङ्गानी'ति शेषः । स्युः ॥ ३९० ॥ ३९१ ॥

क्रमादेतानि लक्षयितुं प्रवृत्तोऽभूताहरणं लक्षयति—४०७ तत्रेत्यादिना ।

४०७ तत्र तेषु त्रयोदशस्वङ्गेसु-मध्ये इत्यर्थः । व्याजाश्रयं व्याजश्छलमाश्रयो यस्य तादृशम् । छलेनोच्चारितमिति भावः । वाक्यम् । अभूताहरणम् । मतम् ।

उदाहरति—यथा । अश्वत्थामाङ्के अश्वथामचरितप्रधाने वेणीसंहारस्य तृतीयेऽङ्के इति भावः ।

"अश्वत्थामा । हतो नष्टः । इत्येवम् । सत्यवाचा । पृथासूनुना पृथायाः कुन्त्याः सूनुस्तेन युधिष्ठिरेण । स्पष्टम् । उक्त्वा कथयित्वा । शेषेऽन्ते स्वैरं मन्दम् । 'स्वैरः स्वच्छन्दमन्दयो'रिति मेदिनी । गजः । इति । व्याहृतमुच्चरितम् । तत्सत्यवाचा स्पष्टमुक्तमित्यर्थः । श्रुत्वा । असौ । पुनः । दयिततनयः प्रियपुत्रः । द्रोणाचार्य इत्यर्थः । तस्य सत्यवक्तुर्युधिष्ठिरस्येति यावत् । राज्ञः । प्रत्ययात् विश्वासात् । आजौ सङ्ग्रामे । शस्त्राणि । नयनसलिलं पुत्रमरणशोकोत्थमश्रु । च । अपि । तुल्यमेककालावच्छेदेन । मुमोच । अयम्भावः—यावदश्वत्थामा तावदहं योत्स्ये इति प्रतिज्ञाय योद्धुं प्रवृत्ते शत्रूंश्च संहरति अश्वत्थाम्नश्च चिरजीवित्वे तदसम्भवोऽसम्भवएवेति, अथापि सन्त्रस्ताः पाण्डवाः—'अश्वत्थामा हत'इति मुहुरुजगुः, किन्तु भगवता द्रोणेन शस्त्राण्यमोचयित्वा सर्वे यूयं मिथ्यावादिनो नाहं युष्माकं वच आददे अथ यदि युधिष्ठिर एवं वदेत्तदा विरमिष्यामि इति प्रत्युक्तास्ते अश्वत्थामानं गजं निहत्य युधिष्ठिरं कथमपि तथा वक्तुं प्रोत्साहितवन्तः । राजा च सत्यवागपि च्छलेन अश्वत्थामा हत इत्युच्चैरुच्चार्यावस्थितः पाण्डवेषु च हर्षनादेन रोदसी प्रतिनादयमानेषु मन्दं स्वं सत्यवाक्त्वं साधयितुं गज इत्येवं युधिष्ठिर उच्चारितवान् । 'अश्वत्थामा गजो हत'इति वाक्यं सङ्गमयन्निव तथोवाच अजातशत्रुरिति तात्पर्य्यम् । वस्तुतस्तु तथात्वाभावात् व्याजादेवेदमुक्तमिति । मन्दाक्रान्ता छन्दस्तल्लक्षणं यथा—'मन्दाक्रान्ता जलधिषडगैर्म्भौ नतोताद् गुरू चे'दिति ॥ ३५८ ॥'

मार्गं लक्षयति—४०८ तत्त्वार्थेत्यादिना ।

४०८ तत्त्वार्थकथनं यथार्थवचनं । मार्गः ।

उदाहरति—यथेत्यादिना ।

यथा । चण्डकौशिके । आर्यक्षेमीश्वरविरचितनाटके तृतीयेऽङ्के । 'राजा हरिश्चन्द्रः । 'विश्वामित्रं प्रत्याहे'ति

४०९ रूपं वाक्यं विकर्तवत् ॥ ३९२ ॥

यथा रत्नावल्यां "राजा....

मनश्चलं प्रकृत्यैव दुर्लक्ष्यं च तथापि मे। कामेन तत्कथं विद्धं समं सर्वैः शिलीमुखैः ॥ ३५९॥"

४१० उदाहरणमुत्कर्षयुक्तं रचनमुच्यते ।

यथाऽश्वत्थामाङ्के--

'योयः शस्त्रं बिभर्ति स्वभुजगुरुमदात्पाण्डवीनां चमूनाम्
योयः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा।
योयस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम् ॥ ३६० ॥'

४११ भावतत्त्वोपलब्धिस्तु क्रमः स्यात्

---

शेषः। भगवन्! अन्यथा सम्भावितेन। अलं पर्याप्तम्। भार्य्यातनयविक्रयात् भार्य्यां शैव्यां तनयं रोहिताश्वं च विक्रीय तन्मूल्यादिति भावः। इदम्। अर्जितं सङ्गृहीतं धनमिति शेषः। गृह्यताम्। शेषस्य प्रतिज्ञातदानावशेषस्य। अर्थे निमित्तम्। चण्डाले चण्डालकुले। अपि। आत्मविक्रयम्। करिष्यामि। अत्र हि देयधनस्य निष्पत्तये यत् स्वानुष्ठेयं तत्सत्यमभिहितम् ॥३५८॥'

रूपं लक्षयति—४०९ रूपमित्यादिना।

४०९ वितर्कवत् तर्क्यमाणमिति भावः। वाक्यम्। रूपम् ॥ ४९२ ॥

उदाहरति—यथा। रत्नावल्यां तृतीयेऽङ्के। 'राजा। सागरिकां चिन्तयन्निति शेषः। मनः। प्रकृत्या स्वभावेन 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः। योनौ लिङ्गे पौरवर्गे' इति मेदिनी। एवं चलमस्थिरम्। दुर्लक्ष्यं दुर्भेद्यम्। च। तथाऽपि पुनरपि। मे मम। एतन्मन इति शेषः। सममेकदा। सर्वैः पञ्चभिः। शिलीमुखैर्बाणैः (करणे तृतीया)। 'अलिबाणे शिलीमुखा'वित्यमरः। कामेन मदनेन (कर्त्रर्थे तृतीया)। कथम्। विद्धम्। अत्र हि नसो मदनकर्तृकवेधने वितर्कः ॥ ३५९ ॥'

उदाहरणं लक्षयति—४१० उदाहरणमित्यादिना।

४१० उत्कर्षयुक्तं स्वातिशयार्थम्। वचनम्। उदाहरणम्। उच्यते।

उदाहरति—यथा। अश्वत्थामाङ्के तत्प्रधाने वेणीसंहारस्य तृतीयेऽङ्के अश्वत्थामा कर्णं सम्बोध्याहेति शेषः।'

'पाण्डवीनां पाण्डवसम्बन्धिनीनाम्। चमूनां सेनानाम्मध्ये। यो यः। स्वभुजगुरुमदात् स्वभुजयोर्गुरुमदस्तस्मात्। शस्त्रम्। बिभर्ति। पाञ्चालगोत्रे द्रुपदवंशे। योयः। शिशुः। अधिकवया अधिकं वयोऽवस्था यस्य तादृशः। वाऽथवा। गर्भशय्यां गर्भरूपां शय्यां गतः। यो यः। तत्कर्मसाक्षी तत्कर्मणस्तन्निहननरूपस्य धृष्टद्युम्नकर्तृकस्य (मन्मरणस्य मृषासम्भावनया त्यक्तशस्त्रं समाहितं केशेषु प्रहृत्य) नृशंसकार्यस्य साक्षी यः। च। यः। च। मयि अश्वत्थाम्नि। रणे सङ्ग्रामात्। चरति सति। प्रतीपः प्रतिकूलः स्यादिति शेषः। तस्यतस्य तेषां सर्वेषामिति भावः। जगताम्। अन्तकस्यापि इति शेषः। इहास्मिन् रणक्षेत्रे अहम्। क्रोधान्धः। अन्तकोऽन्तकर्ता। स्रग्धराच्छन्दः। 'स्रग्धरा म्रौ भ्नौ यौ यू त्रिःसप्तकैः' इति च तल्लक्षणम् ॥ ३६० ॥

क्रमं लक्षयति—४११ भावेत्यादिना।

४११ भावतत्त्वोपलब्धिः भावस्याभिप्रायस्य तत्त्वं यथार्थज्ञानं तस्योपलब्धिर्निष्पत्तिः। 'भावः सत्तास्वभावाभिप्रायचेष्टाऽऽत्मजन्मसु' इति मेदिनी। तु। क्रमः। स्यात्।

यथाभिज्ञानशाकुन्तले 'राजा स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । यतः—
उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः। पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन ३६१॥'

**४१२ सङ्ग्रहः पुनः ॥ ३९३ ॥**

**सामदानार्थसम्पत्तिः**

यथा रत्नावल्यां 'राजा (सपरितोषम्) साधु वयस्य इदन्ते पारितोषिकम्। इति कटकं ददाति।'

**४१३ लिङ्गादूहोऽनुमानिता ।**

यथा जानकीराघवे नाटके "रामः—
लीलागतैरपि तरङ्गयतो धरित्रीमालोकनैर्नमयतो जगतां शिरांसि ।
तस्याऽनुमापयति काञ्चनकान्तिगौरकायस्य सूर्यतनयत्वमधृष्यतां च ॥ ३६२ ॥"

**४१४ रतिहर्षोत्सवानां तु प्रार्थनं प्रार्थना भवेत् ॥ ३९४ ॥**

---

उदाहरति—यथा। **अभिज्ञानशाकुन्तले** तृतीयेऽङ्के। **राजा** दुष्यन्तः। शकुन्तलां पश्यन्नन्तराहेति शेषः। **स्थाने** युक्तम्। 'युक्ते द्वे साम्प्रतं स्थाने' इत्यव्ययवर्गेऽमरः। **खलु**। **विस्मृतनिमेषेण** विस्मृतनिमेषोन्मीलनेनेत्यर्थः। **चक्षुषा** दृष्ट्या (अत्रैकवचनं द्वयोरप्यभेदचेष्टितत्वद्योतनार्थम्)। **प्रियां** शकुन्तलाम्। **अवलोकयामि**।'

कोऽत्र हेतुरित्याह—**यतः**—**पदानि** सुप्तिङन्तरूपाणि। **रचयन्त्या अस्याः** शकुन्तलाया इत्यर्थः। **उन्नमितैकभ्रूलतं** उन्नमिता उत्क्षिप्ता एका भ्रूलता यस्य तादृशम्। **आननं** मुखम् (कर्तृपदम्)। **पुलकाञ्चितेन** कण्टकितेन रोमाञ्चितेन। **कपोलेन** (साधने तृतीयेयम्)। **मयि**। **अनुरागम्**। **कथयति**। आर्य्या वृत्तम् अत्र हि शकुन्तलाभावस्य यथार्थतयोपलब्धिः ॥ ३६१ ॥'

सङ्ग्रहं लक्षयति—४१२ **सङ्ग्रह** इत्यादिना।

४१२ **सामदानार्थसम्पत्तिः**। साम सान्त्वनम् दानं चेति ताभ्यामर्थसम्पत्तिः। सम्पन्न इति पाठान्तरे तु भावे क्तो बोध्यः। **पुनः**। **सङ्ग्रहः** ॥ ३९३ ॥

उदाहरति—**यथा**। **रत्नावल्यां** तृतीयेऽङ्के। **राजा** वत्सराजः। विदूषकं प्रत्याहेति शेषः। स्पष्टमन्यत्। अत्र हि सागरिकायाः कुशलमुपलब्धिं च सूचयितुं प्रवृत्तं वसन्तकनामानं विदूषकं प्रति कटकदानेन राज्ञोऽर्थसम्पत्तिः।

अनुमानं लक्षयति—४१३ **लिङ्गा**दित्यादिना।

४१३ **लिङ्गात्** व्याप्तिपक्षधर्म्मताभ्यां साधनताज्ञानात्। **ऊहः** उहापोहव्यापकतावगमः। **अनुमानिता**ऽनुमानम्। यत्तु तर्कवागीशैरनुमानतेति पाठं स्वीकृत्य ताप्रत्ययः स्वार्थे इत्युक्तं तद्भ्रान्तिमूलं स्वार्थे ताप्रत्ययविधायकसूत्रानुपलम्भात्।

उदाहरति—यथेत्यादिना।

**यथा जानकीराघवे** जानकीराघवनामके। **नाटके**। **रामः**। '**लीलागतैः** लीलया गमनैः। भावे क्तः। **अपि** किं पुनरुद्धतगमनैरिति शेषः। **धरित्रीं** पृथिवीम्। **तरङ्गयतः** कम्पयतः कम्पितां कुर्वाणस्येति यावत्। **आलोकनैः** दृष्टिपातद्वारेति भावः। **जगतां** लक्षणया तदन्तर्वर्तिनामित्यर्थः। **शिरांसि**। **नमयतो**ऽवनतानि कुर्वाणस्येत्यर्थः। **काञ्चनकान्तिगौरकायस्य** सुवर्णसदृशशरीरस्य। **तस्य** लक्ष्मणस्येत्यर्थः। **सूर्यतनयत्वं** सूर्यवंशभवत्वम्। **अधृष्यतां** धर्षणीयताशून्यत्वम्। **च**। **अनुमापयति**। अत्र वसन्ततिलकं वृत्तम्। अत्र लीलागमनदृष्टिपातप्रयुक्तधरित्रीकम्पनजगच्छिरोनमनं साधनम् ॥ ३६२ ॥

प्रार्थनां लक्षयति—४१४ **रतिहर्षे**त्यादिना।

४१४ **रतिहर्षोत्सवानां** रतिः रमणं च हर्षः प्रमोद आनन्द इति यावत् चोत्सवश्च तेषाम्। **तु**। **प्रार्थनं** भिक्षा। **प्रार्थना**। **भवेत्** ॥ ३९४ ॥

यथा रत्नावल्यां "राजा (उपसृत्य) प्रिये ! सागरिके !

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भास्तम्भनिभं तथोरुयुगलं बाहू मृणालोपमौ ।
इत्याह्लादकराऽखिलाङ्गि ! रभसान्निःशङ्कमालिङ्ग्य मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥ ३६३ ॥"

इदं च प्रार्थनाऽऽख्यमङ्गं यन्मते निर्वहणे भूतावसरत्वाभावात् प्रशस्तिनामाङ्गं नास्ति तन्मतानुसारेणोक्तम् । अन्यथा पञ्चषष्टिसङ्ख्यत्वप्रसङ्गात् सम्प्रदायविरोधः ।

**४१५ रहस्यार्थस्य तूद्भेदः क्षिप्तिः स्यात्**

यथाऽश्वत्थामाङ्के "कृपः ( सोद्वेगं निःश्वस्य )...

एकस्य तावत्पाकोऽयं दारुणो भुवि वर्तते। केशग्रहे द्वितीयेऽस्मिन्नूनं निःशेषिताः प्रजाः॥३६४॥

**४१६ तोटकं पुनः ।**

**संरब्धवाक्**

---

उदाहरति-यथेत्यादिना ।

यथा । रत्नावल्यां तृतीयेऽङ्के । 'राजा । ( उपसृत्य सागरिका समीपं प्राप्य ) प्रिये ! सागरिके ! तव । मुखम् । शीतांशुश्चन्द्रः । दृशौ नेत्रे । उत्पले कमले । करौ हस्तौ । पद्मानुकारौ पद्मेऽनुकारोऽनुकरणं ययोस्तौ । तथा । ऊरुयुगलं जङ्घायुगम् । रम्भास्तम्भनिभं कदलीस्तम्भसदृशम् । बाहू । मृणालोपमौ मृणाले कमलमूले उपमा ययोस्तौ तथोक्तौ । इत्यस्मात् । आह्लादकराखिलाङ्गि आह्लादकराण्यखिलान्यङ्गानि यस्यास्तादृशि ! एह्येहि आगच्छागच्छ ( अत्राभीक्ष्ण्ये द्विर्भावः ) । माम् । रभसाद्वेगात्, हर्षाद्वा । निःशङ्कम् । आलिङ्ग्य । अनङ्गतापविधुराणि अनङ्गतापः कामकृतसन्तापस्तेनविधुराणि दुःखितानि यान्यङ्गानि तानि । ममेति शेषः । निर्वापय प्रशमिततापानि विधेहि । शार्दूलविक्रीडितं वृत्तम् ॥ ३६३ ॥

निर्वहणाङ्गभूतप्रशस्त्यस्वीकार एव प्रार्थनाख्यस्याङ्गस्य स्वीकार इति व्यवस्थापयति-इदमित्यादिना ।

यन्मते । निर्वहणे तदाख्यसन्धौ । भूतावसरत्वाभावात् भूतो जातोऽवसरो यस्यास्तस्या भावस्तत्त्वं तस्याभावस्तस्मात् प्राप्ताधिकारत्वाभावादिति भावः । अभूतावसरत्वादिति पाठान्तरेऽप्ययमेवार्थः प्रशस्तिनामाङ्गम् । नास्ति । तन्मतानुसारेण । इदम् । च । प्रार्थनाख्यम् । अङ्गं गर्भसन्ध्यम् । उक्तम् । अन्यथैवमस्वीकारे । पञ्चषष्टिसङ्ख्यत्वप्रसङ्गात् । अङ्गानां पञ्चषष्टिसङ्ख्याकत्वमापद्येत । पञ्चषष्टिसङ्ख्याकत्वे को दोष इत्याशङ्क्याह-सम्प्रदायविरोधः । सम्प्रदायश्च 'चतुःषष्टिर्बुधैर्ज्ञेयान्येतान्यङ्गानि सन्धिषु ।' इति मुनिना निर्दिष्टः ।

क्षिप्तिं लक्षयति-४१५ रहस्यार्थस्येत्यादिना ।

४१५ रहस्यार्थस्य गोप्यस्य कारणस्य । तु । उद्भेदः प्रकटनम् । क्षिप्तिः । स्यात् ।

उदाहरति-यथेत्यादिना ।

यथा । अश्वत्थामाङ्के वेणीसंहारतृतीयेऽङ्के । "कृपः । (सोद्वेगं निःश्वस्य)-एकस्य एकवारं जातस्य द्रौपदिसम्बन्धिनः दुःशासनकर्तृकस्य केशग्रहस्येत्यर्थः । तावत् । अयम् । कुरुपाण्डवसंहननरूपः । दारुणः । पाकः । फलम् । वर्तते । एकस्य विपाकोऽयमिति पाठान्तोऽप्ययमेवार्थः । द्वितीये द्वितीयवारं कृते । अस्मिन् द्रोणाचार्यसम्बन्धिनि धृष्टद्युम्नकर्तृक इति भावः । केशग्रहे । सत्यर्थेयं सप्तमी । नूनं निश्चितम् । प्रजाः प्राणिनः । निःशेषिताः निरवशेषत्वं गता इति भावः । अत्र हि द्रौपदीकेशग्रहरूपस्य रहस्यार्थस्योद्भेदः ॥ ३६४ ॥"

तोटकं लक्षयति-४१६ तोटकमित्यादिना ।

४१६ संरब्धवाक् संरब्धस्य क्रुद्धस्य या ( क्रुद्धा क्रोधविषया ) वाक् सा । पुनः । तोटकम् ।

यथा चण्डकौशिके-'कौशिकः-आः कथमद्यापि न मे सम्भृताः स्वर्णदक्षिणाः ?'

४१७ अधिबलं चाभिसन्धिच्छलेन यः ॥ ३९५ ॥

यथा रत्नावल्याम्-'काञ्चनमाला भट्टिणि ! इअं सा चित्तसालिआ। ता इध जेव चिट्ठ अहं वि वसंतअस्स सण्णं देमि।' इत्यारभ्य वासवदत्तायाः परिचयान्तम्।

४१८ नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तितः।

यथा वेणीसंहारे 'सूतः-आयुष्मन् !
प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः। स कर्णारिः स च क्रूरो वृककर्मा वृकोदरः॥३६५॥'

४१९ शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः ॥ ३९६ ॥

'कालान्तककरालास्यं क्रोधोद्भूतं दशाननम्। विलोक्य वानरानीके सम्भ्रमः कोप्यजायत ॥३६६॥'

---

उदाहरति-यथेत्यादिना।

यथा। चण्डकौशिके तृतीयेऽङ्के। 'कौशिको विश्वामित्रः। 'हरिश्चन्द्रं प्रत्याहे'ति शेषः। कथम्। अद्यस्मिन् दिने। अपि। सुवर्णदक्षिणाः। अवशिष्टा इति शेषः। न। मे मह्यम्। सम्भृताः। कुतोऽप्यानीय सम्पूर्णतां नीता इति भावः। अत्र हि स्फुटा विश्वामित्रस्य कोपोक्तिः।

अधिबलं लक्षयति-४१७ अधिबलमित्यादिना।

४१७ यः। छलेन। अभिसन्धिरनुसन्धानादिः। 'स' इति 'तदिति'वा शेषः। अधिबलम् ॥ ३९५ ॥

उदाहरति-यथेत्यादिना।

यथा। रत्नावल्यां तृतीयेऽङ्के। 'काञ्चनमाला 'वासवदत्तां प्रत्याहे'ति शेषः। भट्टिणि भर्त्रि! स्वामिनीति यावत् इअं इयम्। सा। चित्तसालिआ चित्रशालिका। ता तत्। इध इह। जेव्व एव। चिट्ठ तिष्ठ। अहं वि अहमपि वसंतअस्स वसन्तकस्य। सण्णं सञ्ज्ञामनुसन्धानमिति यावत्। देमि ददामि।' इत्यारभ्य। वासवदत्ताया देव्याः। परिचयान्तम्। 'राजा ( दृष्ट्वा सवैलक्ष्यम् ) हा धिक् कथं कष्टं देवी वासवदत्ता? वयस्य ! किमेत'दिति राज्ञोऽपि विस्मयपर्यन्तमिति भावः। अत्रेदं बोद्धव्यम्-काञ्चनमाला वासवदत्ताया वेषेण सुसङ्गतासागरिकाभ्यां चेष्टितस्य सुसङ्गता-सागरिकावेषेणैव च्छलेन काञ्चनमालावासवदत्ताभ्यां वसन्तक ( विदूषक ) वत्सराजयोरभिप्रायस्य चानुसन्धानम्। इति।

उद्वेगं लक्षयति-४१८ नृपादि..इत्यादिना।

४१८ नृपादिजनिता। आदिपदेन प्रबलप्रतिपक्ष्यन्तरादिग्रहणम्। भीतिर्भयम्। उद्वेगः। परिकीर्तितः।

उदाहरति-यथा। वेणीसंहारे 'पञ्चमाङ्के'इति शेषः। 'सूतः'इत्यादिना।

'सूतः सारथिः। आयुष्मन् प्रशस्तजीवित !

त्वां दुर्योधनम्। इतस्ततः सर्वत इत्यर्थः। पृच्छन्तौ। एकरथारूढौ एकस्मिन् रथे स्थितौ। प्राप्तौ ( 'कश्च कश्चेति राज्ञः पृच्छाऽनन्तरं सूत उत्तरयती'ति शेषः) स प्रसिद्धपराक्रमः। कर्णारिः कर्णस्य निहन्ताऽर्जुन इति भावः। स भवतां प्रसिद्धः शत्रुरिति भावः। अत एव-क्रूरो निष्ठुरः। वृककर्मा वृको व्याघ्रविशेषस्तद्वत् कर्मकारीत्यर्थः। वृकोदरो भीमसेनः। अत्र हि भीमार्जुनयोरागमनजन्या भीतिरिति लक्षणसमन्वय इति बोध्यम् ॥ ३६५ ॥

विद्रवं लक्षयति-४१९ शङ्के इत्यादिना।

४१९ शङ्काभयत्रासकृतः। त्रास उद्वेगः। सम्भ्रमः किम्मयाऽद्य प्रतिकर्त्तव्यमिति चाञ्चल्यविशेषः। विद्रवः। मतः ॥ ३९६ ॥

उदाहरति-'कालान्तक..'इत्यादिना।

'कालान्तककरालास्यं कालेन (ग्रासः) अन्तकस्तद्वत्करालमास्यं मुखं यस्य तम् तादृशम्। ननु कुत इत्याह-क्रोधोद्भूतं प्रवृद्धकोपम्। दशाननं रावणम्। विलोक्य। 'स्थिते'इति शेषः। वानरनीके वानरसेनायाम्। कोऽपि अनिर्वचनीयः। सम्भ्रमः वानराणां सन्त्रासः। अजायत ॥ ३६६ ॥'

अथ विमर्शाङ्गानि—

४२० अपवादोऽथ सम्फेटो व्यवसायो द्रवो द्युतिः ।
शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम् ॥ ३९७ ॥
प्ररोचना विमर्शे स्यादादानं छादनन्तथा ।

४२१ दोषप्रख्याऽपवादः स्यात्

यथा वेणीसंहारे 'युधिष्ठिरः-पाञ्चालक । कच्चिदासादिता तस्य दुरात्मनः कौरवापसदस्य पदवी । पाञ्चालकः-न केवलं पदवी, स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः ।

४२२ सम्फेटोरोषभाषणम् ॥ ३९८ ॥

यथा तत्रैव 'दुर्योधनः-अरे रे मरुत्तनय ! किमेवं वृद्धस्य राज्ञः पुरतो निन्दितव्यमप्यात्मकर्म श्लाघसे शृणु रे—

कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा ।
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी ॥
अस्मिन्वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्राः ।
बाह्वोर्वीर्यातिरेकद्रविणगुरुमदं मामजित्वैव दर्पः ॥३६७॥"

---

एवं गर्भाङ्गानि दर्शयित्वा विमर्शाङ्गानि दर्शयितुमुपक्रमते-अथेत्यादिना ।

अथ । विमर्शाङ्गानि । विमर्शस्य तन्नाम्नः सन्धेरङ्गानि उच्यन्ते-४२० अपवाद इत्यादिना ।

४२० अपवादः । अथ । सम्फेटः । व्यवसायः । द्रवः । द्युतिः । शक्तिः । प्रसङ्गः । खेदः । च तथा । प्रतिषेधः । विरोधनम्-प्ररोचना । आदानम् । तथा छादनम् । विमर्शे । स्यात् । विमर्शे अपवादमारभ्य च्छादनान्तमुक्तानि त्रयोदशानि अङ्गानि भवन्तीति भावः ॥३९७ ॥

तत्र तावदपवादं लक्षयति । ४२१ दोषेत्यादिना ।

४२१ दोषप्रख्या दोषस्य प्रख्यानम् । अपवादः । स्यात् ।

उदाहरति-यथेत्यादिना ।

यथा । वेणीसंहारे षष्ठाङ्के । 'युधिष्ठिरः 'प्राह' ति शेषः । पाञ्चालक धृष्टद्युम्न ! कच्चित् किन्नु । 'कच्चित् कामप्रवेदने' इत्यमरः । क्वचिदिति पाठान्तरम् । तस्याकीर्तनीयनाम्नः । दुरात्मनः । कौरवापसदस्य कौरवेपसदस्तस्य । दुर्योधनस्येति भावः । पदवी मार्गः । आसादिता । पाञ्चालकः 'प्राह' ति शेषः । न । केवलम् । तस्य पदवी । 'किन्त्वि' ति शेषः । सः एव न त्वन्यः । दुरात्मा । देवीकेशपाश...द्रौपद्याः केशस्पर्शरूपपापस्य कारणभूतो दुर्योधनः । उपलब्धः । अत्र हि दुर्योधनस्य दोषप्रख्यानम् स्पष्टम् ।

सम्फेटं लक्षयति-४२२ सम्फट इत्यादिना ।

४२२ रोषभाषणं रोषेण भाषणं । सम्फेटः ( पृषोदरादित्वात्साधुः ) ॥ ३९८ ॥

उदाहरति-यथा । तत्र तस्मिन्वेणीसंहारे पञ्चमाङ्के । एव । दुर्योधनः राजा इति पाठान्तरम् । अरे रे । मरुत्तनय मरुतो वायोस्तनयस्तत्सम्बुद्धौ तथोक्त ! ( एतेन वायुप्रकृतिकत्वात्तथाप्रलपसीति सूचितम् ) । किमेवम् । वृद्धस्य । राज्ञो धृतराष्ट्रस्येति भावः । पुरतः-पुरस्तात् । निन्दितव्यम् । अपि । आत्मकर्म । श्लाघसे । रे शृणु ।

तव भीमस्य ( भीमं प्रति सम्बन्धोक्तिः ) तवार्जुनस्य । च । पशोः ( अर्जुनं सम्बोध्येयमुक्तिः ) । तस्य युधिष्ठिरस्य । राज्ञः ( इति युधिष्ठिरमभिसन्धायोक्तिः ) तयोर्नकुलसहदेवयोः ( इति माद्रेयावभिसन्धायोक्तिः ) वा । भूपतीनां राज्ञाम् ( इति सभ्यानभिसन्धायोक्तिः ) । प्रत्यक्षम् । भुवनपतेः । मम । आज्ञया । द्यूतदासी द्यूतेन जिता दासी द्रौपदी । 'युष्माक'मिति शेषः । केशेषु । कृष्टा । अस्मिन् । वैरानुबन्धे वैरप्रकरणे । 'सती'ति

**४२३ व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसम्भवः ।**

यथा तत्रैव "भीमः-
निहताशेषकौरव्यः क्षीबो दुःशासनासृजा । भङ्क्ता दुर्योधनस्योर्वोर्भीमोऽयं शिरसा नतः ॥३६८॥"

**४२४ द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवा ॥ ३९९ ॥**

यथा तत्रैव 'युधिष्ठिरः धिगस्मद्भागधेयानि । (आकाशमवलोकयन्) भगवन् ! कृष्णाग्रज ! सुभद्राभ्रातः !
ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयीत्थम् ॥३६९॥

**४२५ तर्जनोद्वेजने प्रोक्ता द्युतिः**

यथा तत्रैव दुर्योधनं प्रति भीमेनोक्तम्—
"जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां मां दुःशासनकोष्णशोणितमधुक्षीबं रिपुं मन्यसे।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे त्रासान्मे नृपशो ! विहाय समरं पङ्केऽधुना लीयसे॥३७०॥"

---

शेषः। ये। नरेन्द्राः। हताः। तैः। किम्। अपकृतम्। 'तवे'ति शेषः। वद 'त्वमेवे'ति शेषः। वाहोर्भुजयोः। वीर्यातिरेकद्रविणगुरुमदं वीर्यस्यातिरेकोऽतिशयः स एव द्रविणं धनं तेन गुरुमदो यस्य तादृशम्। माम्। अजित्वा एव। दर्पोऽभिमानः। अत्र हि हतवान्धवस्यापि दुर्योधनस्य भीमवचोऽसहमानस्य रोषोक्तिः। स्रग्धरावृत्तम् ॥३६७॥'

व्यवसायं लक्षयति-४२३ व्यवसायेति।

४२३ प्रतिज्ञाहेतुसम्भवः प्रतिज्ञैव हेतुः सम्भवो यस्य तथोक्तः। च। व्यवसायः। विज्ञेयः।

उदाहरति-यथा। तत्र। एव वेणीसंहारस्य पञ्चमाङ्के। 'भीमः। निहताशेषकौरव्यः निहता अशेषाः कौरव्याः कौरवा येन तादृशः। दुःशासनासृजा 'पीतेने'ति शेषः। दुःशासनरुधिरपानेनेति भावः। क्षीबो मत्तः। दुर्योधनस्य। ऊर्वोः ऊरुयुगलस्य। शेषे षष्ठी। भङ्क्ता खण्डयिता। अयम्। भीमः। शिरसा ज्येष्ठतातमिति शेषः। नतः प्रणतः। अत्र दुःशासनादिहननादिव्यवसायः प्रतिज्ञाहेतुकः ॥ ३६८ ॥'

द्रवं लक्षयति-४२४ द्रव इत्यादिना।

४२४ शोकावेगादिसंभवा शोकस्यावेगोऽत्यन्तं वृद्धिः स आदिसम्भव आदिकारणं यस्यास्तथोक्ता। गुरुव्यतिक्रान्तिर्गुरूणां व्यतिक्रान्तिर्व्यतिक्रमः। द्रवः ॥ ३९९ ॥

उदाहरति-यथा। तत्रैव वेणीसंहारस्य षष्ठाङ्के। युधिष्ठिरः। अस्मद्भागधेयानि अस्माकं भागधेयानि। धिक् (आकाशम्। अवलोकयन्)हे भगवन्! कृष्णाग्रज! सुभद्राभ्रातः सुभद्राया भ्रातः!

ज्ञातिप्रीतिः। मनसि। न। कृता। क्षत्रियाणाम्। धर्मः। न 'गणित'इति शेषः (युद्धे पक्षपातित्वाभावात्म को धर्मः,ज्ञातिप्रीतिश्च यादवानां पाण्डवानां च चन्द्रवंश्यत्वात् प्रेम)अनुजस्य कृष्णस्य। अर्जुनेन। सहार्थे तृतीया। सख्यं मित्रत्वम्। रूढं प्रसिद्धम्। 'यदि'ति शेषः। तदपि। न। गणितम्। शिष्ययोर्भीमसेनदुर्योधनयोरुभयोरपि कनिष्ठत्वात् गदायुद्धे च शिक्षणीयत्वाद्वा शिष्यभूतयोरिति भावः। स्नेहबन्धः। तुल्यः समानः। कामं यथेष्टम्। भवतः। भवतु 'न तु विषम'इति शेषः। अथ-अयम्। कः। पन्था मार्गः। यत् यतः। मन्दभाग्ये। मयि। इत्थं श्रीकृष्णस्य सन्निधिदूरीकरणेनेति भावः। विमुखः। असि अत्र हि मायाविनो मुनिवेषधारिणो राक्षसस्य वचसा भीममरणदुर्योधनार्जुनसमरवलदेवकृतकृष्णापनयनजन्यशोकेन युधिष्ठिरस्य वलदेवादरोल्लङ्घनम्। मन्दाक्रान्ता वृत्तम् ॥ ३६९॥'

द्युतिं लक्षयति-४२५ तर्जनेत्यादिना। स्पष्टम्।

उदाहरति-यथा। तत्र। वेणीसंहारे षष्ठेऽङ्के। एव। 'भीमेन। दुर्योधनम्। मध्येसरः शयानमिति शेषः। प्रति। उक्तम्। यथा-हे नृपशो जनाधम! सम्बुद्धौ। इन्दोश्चन्द्रमसः। विमले पवित्रे। कुले। जन्म

४२६ शक्तिः पुनर्भवेत् । विरोधस्य प्रशमनम्

यथा तत्रैव 'उभौ यथाज्ञापयत्यार्य्यः ( पुनर्नेपथ्ये )

कूर्वन्त्वाप्ता हतानां रणशिरसि जना वह्निसाद्देहभारा-
नश्रून्मिश्रं कथञ्चिद्ददतु जलममी बान्धवा बान्धवेभ्यः ॥
मार्गन्तां ज्ञातिदेहान् हतनरगहने खण्डितान् कङ्कगृध्रै-
रस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ॥ ३७१ ॥'

४२७ प्रसङ्गो गुरुकीर्तनम् ॥ ४०० ॥

यथा मृच्छकटिके-'उभौ सुणाध अज्जा ! सुणाध ! एसो क्खु सागलदत्तस्स सुदो अज्जवि-स्सुदत्तस्स णत्तिओ चालुदत्तो वावादितुं णिज्जइ । एदेन किल अकज्जकालिणा गणिआ वसंतसेणा सुअण्णलोहेण वावादिता । चारुदत्तः ( सनिर्वेदं स्वगतम् )

मखशतपरिपूतं गोत्रमुद्भासितं मे सदसिनिबिडचैत्यब्रह्मघोषैः पुरस्तात् ।
मम निधनदशायां वर्तमानस्य पापैस्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥ ३७२ ॥''

---

'स्वस्ये'ति शेषः । व्यपदिशसि प्रख्यापयसि । अद्य 'मरणसूचके'इति शेषः । अपि । गदाम् । धत्से । दुःशासनकोष्णशोणितमधुक्षीबं दुःशासनस्य कोष्णमीषदुष्णं यच्छोणितं तदेव मधु तेन तत्पानेन क्षीबो मत्तस्ता-दृशम् । रिपुम् । मन्यसे । दर्पान्धः 'सन्नि'ति शेषः । मधुकैटभद्विषि मधुकैटभयोरपि निहन्तरि । हरौ कृष्णे । अपि । उद्धतं प्रागल्भ्यम् । चेष्टसे दर्शयितुमिच्छसीति भावः । मे मम । त्रासाद्भयात् । समरं सङ्ग्रामम् । विहाय । अधुना । पङ्के कर्दमे । लीयसे । अत्र हि भीमकर्तृकं दुर्योधनस्य तर्जनम् । शार्दूलविक्रीडितं वृत्तम् ॥३७०॥''

उद्वेजनं यथा-'भो लङ्केश्वरः दीयतां जनकजा रामः स्वयं याचते कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किञ्चिद्गतम् । नैवं चेत् खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः ॥' इत्यत्र हि रामकृतं रावणस्य ।

शक्तिं लक्षयति-४२६ शक्तिरित्यादिना ।

४२६ विरोधनस्य । प्रशमनम् । पुनः । शक्तिः । भवेत् ॥

उदाहरति-यथा । तत्रैव वेणीसंहारे षष्ठेऽङ्के । उभौ भीमार्जुनौ । 'युधिष्ठिरं प्रत्यूचतु'रिति शेषः । यथा । आर्य्यः पूज्यः । आज्ञापयति ( पुनस्तदनन्तरमित्यर्थः । नेपथ्ये । ) आप्ताः सदाचारनिष्ठाः । जनाः । रण-शिरसि सङ्गरस्य मूर्धभागे । हतानाम् । देहभारान् । वह्निसादग्न्यधीनान् । 'तदधीनवचने ।' ५।४।५४ इति सातिः । कुर्वन्तु । बान्धवाः । बान्धवेभ्यः । अश्रून्मिश्रमश्रुभिरुन्मिश्रं युक्तम् । जलम् । कथञ्चित् 'शोकावेगं निरुध्य'ति शेषः । ददतु तद्दानं रणशिरसीति पूर्वतोऽनुवृत्तम् । कङ्कगृध्रैः कङ्कैः गृध्रैश्च । हतनरगहने । खण्डितान् चञ्चुभिर्विदार्य्य विकृतिं नीतानिति भावः । ज्ञातिदेहान् । मार्गन्तामनुसन्दधतु । अयम् । भास्वान् सूर्यः । रिपुभिः । सह । अस्तम् । प्रयातः । अतो बलानि सैन्यानि । संह्रियन्ताम् । अत्र विरोधशमनाभिधानं नाटकाङ्गम् । स्रग्धरावृत्तम् ॥ ३७१ ॥'

प्रसङ्गं लक्षयति-४२७ प्रसङ्ग इत्यादिना ।

४२७ गुरुकीर्तनं गुरूणां पित्रादीनां कीर्तनम् । प्रसङ्गः ॥ ४०० ॥

उदाहरति-यथा । मृच्छकटिके शूद्रकविरचितप्रकरणविशेषे । 'उभौ द्वौ चाण्डालौ । अज्जा आर्य्याः ! सुणाध २ शृणुत २ एसो एषः । क्खु खलु । सागलदत्तस्य सागरदत्तस्य । सुदो सुतः । अज्जविस्सुदत्तस्स आर्यविश्वदत्तस्य णत्तिओ नप्ता । चालुदत्तो चारुदत्तः । वावादितुं व्यापादयितुम् । णिज्जइ नीयते । एदेण एतेन । अकज्जका-लिणा अकार्यकारिणा । किल । वसंतसेणा वसन्तसेना । गणिआ गणिका । सुअण्णलोहेण सुवर्णलोभेन ।

इत्यनेन चारुदत्तवधाभ्युदयानुकूलप्रसङ्गाद्गुरुकीर्तनमिति प्रसङ्गः।

**४२८ मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः।**

मनः समुत्पन्नो यथा मालतीमाधवे–
'दलति हृदयं गाढोद्वेगं द्विधा नतु भिद्यते वहति विकलः कायो मोहं न मुञ्चति चेतनाम्।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात् प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥३७३॥'

एवं चेष्टासमुत्पन्नोऽपि।

**४२९ ईप्सितार्थप्रतीघातः प्रतिषेध इतीरितः ॥ ४०१ ॥**

---

**वावादिता** व्यापादिता। **चारुदत्तः ( सनिर्वेदनम् स्वगम् )** यत्–**निविडचैत्यब्रह्मघोषैः** निविडानि सभ्यजनैर्व्याप्तानि यानि चैत्यानि पूजायायतनानि तेषु ब्रह्मघोषाः ब्रह्मणां वेदानां वा घोषा अन्योन्यं विचारहेतुका वादास्तैः। **सदसि** सभायाम्। **पुरस्तात्**। **उद्भासितम्**। **मखशतपरिपूतं** मखानां यज्ञानां शतं तेन परिपूतं परितः पवित्रम्। **असदृशमनुष्यैः** असदृशा ये मनुष्यास्तैः। **पापैः** पापप्रधानैः 'श्चण्डालै'रिति भावः। **निधनदशायां**–निधनं मरणं तस्य दशाऽवस्था तस्याम्। **वर्तमानस्य**। **मम**। **तत्**। **गोत्रम्**। **घोषणायाम्**। **घुष्यते**। मालिनी-च्छन्दः ॥ ३७२ ॥'

कथमुदाहरणसङ्गतिरित्याह–इत्यनेनेत्यादिना।

**चारुदत्तवधाभ्युदयानुकूलप्रसङ्गा**च्चारुदत्तस्य वधः स एवाभ्युदयस्तस्यानुकूलप्रसङ्गस्तस्मात्तमधिकृत्येति भावः। ल्यबर्थे पञ्चमी। **गुरुकीर्तनं** गुरूणां नामघोषणम्। **इत्यत** इत्यर्थः। **प्रसङ्ग**स्तदाख्यं विमर्शाङ्गमिति भावः।

खेदं लक्षयति–४२८ **मनश्चेष्टे**त्यादिना।

४२८ **मनश्चेष्टासमुत्पन्नः** मानसिकः शारीरिकश्च। **श्रमः**। **खेदः**। **इति**। **स्मृतः**। स्पष्टो भावः।

उदाहरति–**मनः समुत्पन्न** इत्यादिना।

**यथा**। **मनःसमुत्पन्नः** 'खेद' इति शेषः। **मालतीमाधवे** नवमेऽङ्के। **'गाढोद्वेगं** गाढ उद्वेगो यत्र तादृशम्। **हृदयम्**। **दलति** विदीर्यते इति भावः। **नतु**। **द्विधा**। **भिद्यते**। यदि द्विधा दलितमभविष्यत्तदा गाढोद्वेगमप्येतन्नाभविष्यदिति भावः। **कायः** शरीरम्। **विकलः** कर्तव्यताशून्यः सन्निति भावः। **मोहम्**। **वहति**। **चेतनां** जीवितत्वम्। **न**। **मुञ्चति**। **अन्तर्दाहो**ऽन्तर्नतु वहिः अतएवासावचिकित्स्यो दाहः। **तनूं** शरीरम्। **ज्वलयति** सन्तापयति। **भस्मसात्** कात्स्न्र्येन भस्मरूपम्। **न**। **करोति**। **मर्मच्छेदी** मर्माणि च्छिनत्तीति तथोक्तः। **विधिर्दैवम्**। **प्रहरति**। **जीवितम्**। **न**। **कृन्तति** च्छिनत्ति। अत्र यद्दलति तस्य द्विधाभवनं युक्तं नच तद्भवतीत्येवं विरोधः, किन्तु शोकादिना हृदयादेर्वस्तुतो दलनाद्यसम्भवात्तथा तर्कणमात्रमिति तस्याभासः। मालतीमनुपलभ्यान्तः खिद्यतो माधवस्य मकरन्दं सम्बोध्य आवेगोद्भावनमिदम्। अत एवात्र मालत्या अलाभे खिन्नस्य माधवमनसः श्रमः। हरिणीप्लुतं छन्दः ॥ ३७३ ॥'

चेष्टासमुत्पन्नः खेदस्त्वन्वेषणीय इत्याह–एवमित्यादिना। स्पष्टम्। स यथा वेणीसंहारे षष्ठाङ्के–'अरे रे मारुते! किं भयेन प्रलीनं दुर्योधनं मन्यते भवान् मूढ! अनिहतपाण्डुपुत्रः प्रकाशं लज्जमानो विश्रमितुमध्यवसितवानस्मि पातालम्' इत्यत्र दुर्योधनस्य।

प्रतिषेधं लक्षयति–४२९ **ईप्सितार्थे**त्यादिना।

४२९ **ईप्सितार्थप्रतीघातः** ईप्सित आकाङ्क्षितो योऽर्थो वस्तु तस्य प्रतीघातो विघातः। 'उपसर्गस्य घञ्यमनुष्ये बहुलम्। ६।३।१२२ 'इति प्रतेरिको दीर्घत्वम्। **प्रतिषेधः**। **इति**। **ईरितः** कथितः ॥ ४०१ ॥

यथा मम प्रभावत्यां विदूषकं प्रति 'प्रद्युम्नः सखे कथमिह त्वमेकाकी वर्तसे क्व नु पुनः प्रियसखी जनानुगम्यमाना प्रियतमा प्रभावती ? विदूषकः असुरवइणा आअरिअ कहिं वि णीदा। प्रद्युम्नः-( दीर्घं निःश्वस्य )।

हा पूर्णचन्द्रमुखि ! मत्तचकोरनेत्रे ! मामानताङ्गि ! परिहाय कुतो गताऽसि ।
गच्छ त्वमद्य ननु जीवित ! तूर्णमेव दैवं कदर्थनपरं कृतकृत्यमस्तु ॥ ३७४ ॥'

**४३० कार्यात्ययोपगमनं विरोधनमिति स्मृतम् ।**

यथा वेणीसंहारे 'युधिष्ठिरः ( विचिन्त्य निःश्वस्य च )
तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम् ।
भीमेन प्रियसाहसेन रभसात् स्वल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥ ३७५ ॥'

**४३१ प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी ॥ ४०२ ॥**

---

उदाहरति-यथेत्यादिना ।

**यथा** । मम 'कृता'विति शेषः । **प्रभावत्याम्** । **'प्रद्युम्नः** । **विदूषकं प्रत्या**'हे'ति शेषः । स्पष्टमन्यत् । **विदूषकः** । **असुरवइणा** असुरपतिना । **आअरिअ** आकार्य आहूयेति यावत् । **कहिं वि** । क्वापि । **णीदा** नीता । **प्रद्युम्नः** । ( **दीर्घम्** । **निःश्वस्य** शोकं नाटयित्वेति भावः ) **हा** कष्टम् । **पूर्णचन्द्रमुखि** पूर्णचन्द्रवन्मुखं यस्यास्तादृशि ! **मत्तचकोरनेत्रे** मत्तो यश्चकोरस्तस्य नेत्रे इव नेत्रे यस्यास्तयोक्ते ! शाकपार्थिवादित्वान्मध्यमपदलोपः । **आनताङ्गि** आनतानि लज्जयाऽवनतानि अङ्गानि भ्रुकुट्यादीनि यस्यास्तादृशि ! **माम्** । **परिहाय** परित्यज्य । **कुतः** कुत्र । **गता** । **असि** । तदप्राप्तौ खिन्नः सन्नाह-हे **जीवित** ! **त्वम्** । **अद्य** । **गच्छ** निर्गच्छ । **ननु** । मम गमनात् किं भविष्यतीति आशङ्क्य जीवितं प्रत्याह-**कदर्थनपरं** सन्त्रासनपरायणम् । **तूर्णम्** झटिति । **एव दैवं** प्रारब्धम् । **कृतकृत्यम्** । **अस्तु** । अत्रेप्सितायाः प्रभावत्या असुरपतिकर्तृके हरणे व्याघातः । वसन्ततिलकं वृत्तम् ॥ ३७४ ॥'

विरोधनं लक्षयति-४३० **कार्यात्ययेत्यादिना** ।

४३० **कार्यात्ययोपगमनं** कार्यस्यात्ययो वृथा यापनं तस्योपगमनं सूचनम् । **विरोधनम्** । **इति** । **स्मृतम्** ।

उदाहरति-**यथा** । **वेणीसंहारे** षष्ठेऽङ्के । **'युधिष्ठिरः** । **विचिन्त्य** 'राक्षसचरितमि'ति शेषः । अत एव तत्कृतवृथासन्तापेन **निःश्वस्य** । **च** । **कथम्** । **अपि** । **भीष्ममहोदधौ** भीष्मरूपे महासागरे । **तीर्णे** उत्तीर्णे सति। **द्रोणानले** द्रोणाचार्यरूपेऽग्नौ । कथमपीति पूर्वतोऽनुषज्यते । **निर्वृते** शान्तिमुपगते सतीत्यर्थः । **कर्णाशीविषभोगिनि** कर्ण एव आशीविषभोगी विषोद्गारी सर्पस्तस्मिन् । आशीस्तालुगता दंष्ट्रा तया दष्टो न जीवतीत्युक्तायां दंष्ट्रायां विषमस्येति आशीविषः । कथमपीति पूर्वतोऽन्वितम् । **प्रशमिते** । **शल्ये** । **च** । **दिवं** स्वर्गम् । **याते** गते सतीति भावः । **प्रियसाहसेन** प्रियं साहसं दुःशासनरुधिरपानादिनृशंसं कर्म यस्य तादृशेन । **भीमेन** । **रभसात्** झटिति । **स्वल्पावशेषे** स्वल्पो दुर्योधनस्यावशिष्टत्वादवशेषो यस्य तादृशे । **जये** तद्विषये इति भावः । **अमी वयम्** । **सर्वे** । **वाचा** न तु कर्मणा । **जीवितसंशयं** जीवितसन्देहावस्थाम् । **समारोपिताः** । शार्दूलविक्रीडितं वृत्तम् ॥ ३७५ ॥'

प्ररोचनां लक्षयति-४३१ **प्ररोचनेत्यादिना** ।

४३१ **प्ररोचना** । **तु** **संहारार्थप्रदर्शिनी** संहारः कार्यसमाप्तिः स एवार्थः । प्रयोजनं तस्य प्रदर्शिनी प्रदर्शिका। **विज्ञेया** ॥ ४०२ ॥

---

१ असुरपतिनाऽऽकार्य क्वापि नीतेति संस्कृतम् ।

यथा वेणीसंहारे–'पाञ्चालकः 'अहं देवेन'इत्युपक्रम्य'कृतं सन्देहेन–

पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णात्यन्तचिरोज्झिते तु कबरीबन्धे करोतु क्षणम् ।
रामे शातकुठारभास्वरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ॥ ३७६ ॥

**४३२ कार्यसङ्ग्रह आदानं**

यथा वेणीसंहारे "भीमसेनः ( उद्धतं परिक्रामन् ) भो भोः स्यमन्तपञ्चकसञ्चारिणः !

नाहं रक्षो न भूतो रिपुरुधिरजलाह्लादिताङ्गः प्रकामं–
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।
भोभो राजन्यवीराः ! समरशिखिशिखामुक्तशेषाः कृतं व–
स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥ ३७७ ॥"

अत्र समस्तरिपुवधकार्यस्य सङ्गृहीतत्वादादानम् ।

---

उदाहरति–यथा । वेणीसंहारे षष्ठेऽङ्के । 'पाञ्चालको धृष्टद्युम्नः । 'युधिष्ठिरं प्रत्याहे'ति शेषः ।...अहम् । देवेन चक्रपाणिना देवसकाशमनुप्रेषितः । आह च देवो देवकीनन्दन इति शेषः । इत्युपक्रम्यारभ्य । सन्देहेन । कृतं पर्य्याप्तम् । "कृतं युगेऽलमर्थे स्याद्विहिते हिंसिते त्रिषु" इति मेदिनी । ते । तव । राज्याभिषेकाय । सलिलेन जलेन । 'चतुर्णां समुद्राणा'मिति शेषः । रत्नकलशा रत्नघटिता कलशाः । पूर्य्यन्ताम् । अत्यन्तचिरोज्झिते अत्यन्तचिरेणो-ज्झितस्त्यक्तस्तादृशे । कबरीबन्धे कबर्याः केशानां बन्धो बन्धनं तत्र । तु पुनः । क्षणमुत्सवमभिलाषम् । कृष्णा द्रौपदी । करोतु । ननु यावद्दुर्योधनं तावत् किमेवमुच्यते इत्याशङ्क्याह–शातकुठारभास्वरकरे शातस्तीक्ष्णो यः कुठारः परशुस्तेन भास्वरः करो यस्य तादृशे । क्षत्रद्रुमोच्छेदिनि । रामे जमदग्निनन्दने । क्रोधान्धे । च पुनः । वृकोदरे भीमे । आजौ सङ्ग्रामे । परिपतति । कुतः कथम् । संशयो जयादौर्लभ्यमिति भावः । अत्र हि युद्धकार्येऽ-समासेऽपि समाप्तप्रायत्वद्योतनम् । शार्दूलविक्रीडितं वृत्तम् ॥ ३७६ ॥'

आदानं लक्षयति–४३२ कार्येत्यादिना ।

४३२ कार्यसंग्रहः कार्यस्य मुख्यतयाऽनुष्ठेयस्य कर्मणः सङ्ग्रहः समाप्त्यनन्तरं फलात्मना सङ्ग्रहणम् । आदानम् ।

उदाहरति–यथा । वेणीसंहारे 'षष्ठेऽङ्के' इति शेषः । ' भीमसेनः । उद्धतम् । (परिक्रामन् परिभ्रमन् ) भोभोः स्यमन्तपञ्चकसञ्चारिणः स्यमन्तपञ्चकं कुरुक्षेत्रान्तर्वर्ती तीर्थविशेष उपचारात्तत्प्रान्तदेशस्तत्र सञ्चरन्तीति तत्सम्बुद्धौ तथोक्ताः ! अहम् । रक्षो राक्षसः । नास्मीत्यर्थः । भूतः प्रेतः । न । किन्तु–प्रकामं यथेष्टम् । रिपुरुधिरजलाह्लादितः । रिपूणां दुर्योधनादीनां रुधिरमेव जलं तेनाह्लादितमासिक्तमङ्गं यस्य तादृशः । निस्तीर्णो-रुप्रतिज्ञाजलनिधिगहनः निःशेषं कृत्वा तीर्णो उरुर्महान् प्रतिज्ञाजलनिधिः प्रतिज्ञारूपः सागरो येन अत एव गहनो दुरासदः । क्रोधनो क्रोधशीलः । क्षत्रियः । अस्मि । अन्यतो दृष्टिं निक्षिप्येति शेषः । भोभो राजन्यवीरा-राजन्येषु क्षत्रियेषु वीरास्तत्सम्बुद्धौ तथोक्ताः ! समरशिखिशिखामुक्तशेषाः समरः सङ्ग्राम एव शिखी अग्नि-स्तस्य शिखा ज्वाला तया मुक्तः शेषोऽवशेषो येषां तत्सम्बुद्धौ तथोक्ताः । समराग्नौ पतित्वा मृतास्तेभ्योऽवशिष्टा इति भावः । अनेन निलीयावस्थानतो व्यज्यमानेनेति भावः । वो युष्माकम् । त्रासेन । कृतमलम् । कथं त्रासो लक्षित इत्याह–यत् लीनैः । हतकरितुरगान्तर्हितै र्हता ये करितुरगा नागाश्वास्तेष्वन्तर्हितास्तैः । आस्यते स्थीयते । स्रग्धरा वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ ३७७ ॥"

लक्ष्यं सङ्गमयति–अत्रेत्यादिना । स्पष्टम् ।

४३३ तदाहुश्छादनं पुनः।
कार्यार्थमपमानादेः सहनं खलु यद्भवेत् ॥ ४०४ ॥

यथा तत्रैव 'अर्जुनः-आर्य! प्रसीद किमत्र क्रोधेन
अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ॥ ३७८ ॥'

अथ निर्वहणाङ्गानि—

४३४ सन्धिर्विबोधो ग्रथनं निर्णयः परिभाषणम्।
कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम् ॥ ४०५ ॥
भाषणं पूर्ववाक्यं च काव्यसंहार एव च।
प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः ॥ ४०६ ॥

तत्र-

४३५ वीजोपगमनं सन्धिः

यथा वेणीसंहारे 'भीमः स्मरति भवती यन्मयोक्तम्, "चञ्चद्भुज..." इत्यादि।' इत्यनेन मुखे क्षिप्तबीजस्य पुनरुपगमनमिति सन्धिः।

४३६ विबोधः कार्यमार्गणम्।

---

छादनं लक्षयति-४३३ तदाहुरित्यादिना।

४३३ यत्। कार्यार्थे कार्यसिद्धये। अपमानादेः। सहनम्। भवेत्। तत्। खलु पुनः-छादनम्। आहुः४०४॥

उदाहरति-यथा। तत्र वेणीसंहारे पञ्चमेऽङ्के। एव अर्जुनः 'दुर्योधनवचः श्रवणेन कुपितं भीमसेनं प्रत्याह'ति शेषः। आर्य! प्रसीद प्रसन्नो भव। किम्। अत्रास्मिन् हतप्राये दुर्योधने इति भावः। क्रोधेन। मरणासन्ने क्रोधो न कर्तव्य इति भावः।

तदेवाह-हतभ्रातृशतो हतं भ्रातृशतं यस्य तथोक्तः। अत एव-दुःखी। एष दुर्योधन इत्यर्थः। वाचा। शक्तः वाङ्मात्रेणाप्रियाणि कर्तुं समर्थः। अप्रियाणि। करोति। कर्मणा पुनरिति शेषः। न। करोतीति पूर्वतोऽन्वेति। अतः-अस्य। प्रलापैः। का। व्यथा न काऽपिव्यथेति भावः ॥ ३७८ ॥'

विमर्शाङ्गानि निरूप्य निर्वहणाङ्गानि निरूपयितुमुपक्रमते-अथेत्यादिना।

अथ विमर्शाङ्गनिरूपणानन्तरम्। निर्वहणाङ्गान्युच्यन्ते-४३४ सन्धिरित्यादिना।

४३४ संहारे निर्वहणे सन्धावित्यर्थः। सन्धि रित्यारभ्य प्रशस्तिः। इति (इत्यन्तमुक्तानि) चतुर्दश इति शेषः। अङ्गानि। नामतः। ज्ञेयानि। स्पष्टमन्यत् ॥ ४०५ ॥ ४०६ ॥

क्रमात्सन्ध्यादीन् लक्षयितुकाम आह-तत्र तेषु मध्ये। 'सन्धिर्लक्ष्यते' इति शेषः। ४३५ बीजोपगमनमित्यादिना।

४३५ वीजोपगमनं वीजस्य प्रधानकारणस्योपगमनं समन्वयः। सन्धिः।

उदाहरति-यथा। वेणीसंहारे षष्ठेऽङ्के। 'भीमः 'द्रौपदीं प्रत्याह'ेति शेषः। यत्। चञ्चद्भुज...इत्यादि। मया। उक्तम्। तत्-भवती याज्ञसेनीत्यर्थः। स्मरति।' इत्यनेन। मुखे युद्धारम्भे। क्षिप्तबीजस्य रोपितस्य कारणस्य। पुनरुपगमनं फलात्मनोद्भवनम्। इति। सन्धिः।

विबोधं लक्षयति-४३६ विबोध इत्यादिना।

४३६कार्यमार्गणं कार्यस्य मार्गणमन्वेषणम्। विबोधः।

यथा तत्रैव 'भीमसेनः-आर्य स एवाहं तन्मुञ्चतु मामार्यः क्षणमेकम् । युधिष्ठिरः-किमपरमवशिष्टम् ? भीमसेनः-सुमहदवशिष्टम् । संयमयामि तावदनेन सुयोधनशोणितोक्षितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम् । युधिष्ठिरः-गच्छतु भवान्, अनुभवतु तपस्विनी वेणीसंहारम् ।' इत्यनेन केशसंयमनकार्यस्यान्वेषणाद्विबोधः ।

**४३७ उपन्यासस्तु कार्याणां ग्रथनं**

यथा तत्रैव 'भीमः-पाञ्चालि ! न खलु मयि जीवति संहर्त्तव्या दुःशासनविलुलिता वेणिरात्मपाणिभ्यां तिष्ठ स्वयमेवाहं संहरामि' इत्यनेन कार्यस्योपक्षेपाद् ग्रथनम् ।

**४३८ निर्णयः पुनः ॥ ४०७ ॥**

**अनुभूतार्थकथनं**

यथा तत्रैव 'भीमः-देव ! अजातशत्रो ! क्वाद्यापि दुर्योधनहतकः मया हि तस्य दुरात्मनः ।

भूमौ क्षिप्तं शरीरं निहितमिदमसृक् चन्दनाभं निजाङ्गे,
लक्ष्मीरार्ये निषिक्ता चतुरुदधिपयःसीमया सार्धमुर्व्या ॥
भृत्या मित्त्राणि योधाः कुरुकुलमखिलं दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप ! तदधुना धार्तराष्ट्रस्य शेषम् ॥ ३७९ ॥'

---

उदाहरति-यथा । तत्र वेणीसंहारे षष्ठेऽङ्के । एव । )भीमः 'युधिष्ठिरं प्रत्याहे'ति शेषः । आर्य ! सः । यस्तवानुजः-इति शेषः । एव । अहम् । तत्तस्मात् । आर्यः भवान् । माम् । एकम् । क्षणम् । मुञ्चतु । युधिष्ठिरः । किम् । अपरमन्यत्कार्यमित्यर्थः । अवशिष्टम् । भीमसेनः । सुमहत कार्यमिति शेषः । अवशिष्टम् । किन्तदित्याह-तावत् कार्त्स्न्येन अनेन । सुयोधनशोणितोक्षितेन सुयोधनस्य रुधिरलिप्तेन । पाणिना हस्तेन । पाञ्चाल्याः द्रौपद्याः । दुःशासनावकृष्टं दुःशासनेनावकृष्टं बलादाकृष्टम् । केशहस्तं केशपाशम् । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । संयमयामि बध्नामि । युधिष्ठिरः । भवान् । गच्छतु । तपस्विनी द्रौपदी । वेणीसंहारं वेण्याः केशपाशस्य संहारः संयमनं तम् । अनुभवतु ।' इत्यनेन । केशसंयमनकार्यस्य । अन्वेषणात्सम्भावनात् । विबोधः ।

ग्रथनं लक्षयति-४३७ उपन्यास इत्यादिना ।

४३७ कार्याणामाधिकारिकाणां प्रासङ्गिकानाञ्च कर्तव्यानाम् । उपन्यासः समाप्य विश्रमणम् । तु । ग्रथनम् ।

उदाहरति-यथा । तत्र वेणीसंहारे षष्ठेऽङ्के । एव । 'भीम आहेति शेषः । स्पष्टमन्यत् ।

लक्ष्यं सङ्गमयति-इत्यनेन । कार्यस्य कौरवकुलसंहारणानुपदं द्रौपदीकेशसंहरणरूपस्य कर्तव्यस्य । उपक्षेपात समाप्य ततो निवर्तनात् । ग्रथनम् ।

निर्णयं लक्षयति-४३८ निर्णय इत्यादिना ।

४३८ अनुभूतार्थकथनं अनुभूतार्थस्य स्वात्मना सम्पाद्य कृतप्रत्यक्षस्य कार्यार्थस्य कथनम् । पुनः । निर्णयः ॥ ४०७ ॥

उदाहरति-यथा । तत्र वेणीसंहारे षष्ठेऽङ्के । एव । 'भीमः 'युधिष्ठिरं प्रत्याहे'ति शेषः । हे अजातशत्रो न जातः सर्वत्र शान्ततया शत्रुर्यस्य तत्सम्बुद्धौ देव राजन् ! अद्य । अपि । दुर्योधनहतकः पापात्मा दुर्योधन इति भावः । क्व कुत्रास्ति? न कुत्रापि जीवन्नवस्थित इति भावः । तदेव द्रढयति-हि यतः । मया । तस्य । दुरात्मनः दुर्योधनहतकस्येत्यर्थः । शरीरम् । भूमौ पृथिव्याम् । क्षिप्तं गदयोरू विदार्येति शेषः । इदम् । चन्दनाभं रक्तचन्दनसदृशम् । असृक् रुधिरम् । निजाङ्गे स्वशरीरे । भीमगात्रे क्रोधोद्भूतभयंकरेऽस्मिनङ्गे इति भावः । [illegible] सक्तम् । आर्ये पूज्ये भवतीति यावत् । चतुरुदधिपयःसीमया चत्वार उदधयः समुद्रास्तेषां पयः [illegible] सीमा वा यस्यास्तया । उर्व्या पृथिव्या । सार्धम् ! लक्ष्मी राज्यलक्ष्मीः । निषिक्ताऽभिषिक्ता । भृत्याः किङ्करा अनुजीविन इति यावत् । मित्राणि प्रेम्णा वशंवदाः । योधा योद्धारः । तथा-एतत् अखिलम् । कुरु-

**४३९ वदन्ति परिभाषणम् ।**
**परिवादकृतं वाक्यं**

यथाऽभिज्ञानशाकुन्तले 'राजा (प्रकाशम्) अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी । तापसी-को तस्स धम्मदारपरिट्टाइणो णामं गेह्लिस्सदि'

**४४० लब्धेऽर्थे शमनं कृतिः ॥ ४०८ ॥**

यथा वेणीसंहारे 'कृष्णः-एते भगवन्तो व्यासवाल्मीकिप्रभृतयोऽभिषेकं धारयन्तस्तिष्ठन्ति ।

**४४१ शुश्रूषादिः प्रसादः स्याद्-**

यथा तत्रैव भीमेन द्रौपद्याः केशसंयमनम् ।

**४४२ आनन्दो वाञ्छितागमः ।**

यथा तत्रैव-'द्रौपदी-णाह विसुमरिदं एदं वावारं णाधस्स पसादेण पुणोवि सिक्खिस्सं'

---

कृम् । रणाग्नौ । दग्धम् । हे क्षितिप राजन् ! यद् । ब्रवीषि । तत् । दुर्योधन इत्याकारम् । एकम् । अधुना । धार्तराष्ट्रस्य दुर्योधनस्य । नाम । शेषं शिष्टम् । शेषशब्दोऽयं कर्मण्यजन्तः, नतु घञन्त इति वाच्यलिङ्गः । अत्र हि साक्षादनुभूतार्थ्यवर्णनम् । शार्दूलविक्रीडितं वृत्तम् ॥ ३७९ ॥'

परिभाषणं लक्षयति-४३९ वदन्तीत्यादिना ।

४३९ परिवादकृतं परिवादेन निन्दया कृतं सम्पादितम् । वाक्यम् । परिभाषणम् । वदन्ति 'विद्वांस' इति शेषः ।

उदाहरति-यथा । अभिज्ञानशाकुन्तले सप्तमेऽङ्के । 'राजा दुष्यन्तः । ( प्रकाशं तापसीं पृच्छतीति शेषः ) अथ ( प्रश्नसूचकमव्ययम् ) प्राप्येति पाठान्तरम् । सा । 'येनामिह प्रसूतवती'ति शेषः । तत्रभवती पूज्या ( तदवधि स्वभार्यात्वेन तस्या अपरिचयात् ) । किमाख्यस्य किन्नामधेयस्य । राजर्षेः । पत्नी । तापसी । 'राजानं प्रत्याहे'ति शेषः । को कः । तस्स तस्य । धम्मदारपरिट्टाइणो धर्मदारपरित्यागिनो । धर्मेण (गृहीता) ये दारास्तान् परित्यजतीति तस्य । णामं नाम । गेह्लिस्सदि ग्रहीष्यति । कीर्तयिष्यतीत्यर्थः ।

कृतिं लक्षयति-४४० लब्धेत्यादिना ।

४४० अर्थे प्रयोजने । लब्धे सिद्धे सति । शमनं शान्तिः । कृतिः ॥ ४०८ ॥

उदाहरति-यथा । वेणीसंहारे षष्ठेऽङ्के । कृष्णः 'युधिष्ठिरं प्रत्याहे'ति शेषः । स्पष्टमन्यत् । अत्र कृष्णः-महाराज युधिष्ठिर ! व्यासोऽयं भगवानमी च मुनयो वाल्मीकिरामादयो धृष्टद्युम्नमुखाश्च सैन्यपतयो माद्रीसुताधिष्ठिताः । प्राप्ता माग-धमत्स्ययादवकुलैराज्ञाविधेयैः समं स्कन्धोत्तम्भिततीर्थवारिकलशा राज्याभिषेकाय ते ॥ इति प्रायः पाठः स्पष्टश्चार्थः ।

प्रसादं लक्षयति-४४१ शुश्रूषादिरित्यादिना ।

४४१ शुश्रूषादिः शुश्रूषा आदिर्यत्र ( तदनुकूलकर्ममात्रे ) सः । प्रसादः । स्यात् ।

लक्ष्यं दर्शयति-यथा तत्र वेणीसंहारे षष्ठेऽङ्के । एव । भीमेन भीमकर्तृकम् । द्रौपद्याः । केशसंयमनं केशानां दुर्योधनरुधिरेणाभिषिच्य बन्धनम् ।

आनन्दं लक्षयति-४४२ आनन्द इत्यादिना । स्पष्टम् ।

४४२ उदाहरति-यथा । तत्र वेणीसंहारे षष्ठाङ्के । एव । द्रौपदी 'भीमं प्रत्याहे'ति शेषः । णाह नाथ ! एदं एनम् । केशसंयमनरूपम् । विसुमरिदं विस्मृतम् । वावारं व्यापारम् । णाहस्स नाथस्य । पसादेण प्रसादेन प्रसन्नतयेति यावत् । पुणोवि पुनरपि । सिक्खिस्सं शिक्षिष्ये । एतावन्तं कालं केशा न मया बद्धा अतस्तद्बन्धनं विस्मृतम् । अथैनं तद्व्यापारं निरूप्य भवान् दर्शयतु-अथाहं प्रत्यभिज्ञास्यामीति भावः । अत्र द्रौपद्या अभिलषितार्थलाभः ।

---

१ कस्तस्य धर्मदारपरित्यागिनो नाम ग्रहीष्यतीति संस्कृतम् । नाथ ! २ 'विस्मृतमेनं व्यापारं नाथस्य प्रसादेन पुनरपि शिक्षिष्ये' इति संस्कृतम् ।

**४४३ समयो दुःखनिर्याणं**

यथा रत्नावल्यां "वासवदत्ता (रत्नावलीमालिङ्ग्य) समस्ससिहि वहिणि 'समस्ससिहि'"

**४४४ तद्भवेदुपगूहनम् ॥ ४०९ ॥**

**यत् स्यादद्भुतसम्प्राप्तिः**

यथा मम प्रभावत्यां नारददर्शनात्प्राक् "प्रद्युम्नः (ऊर्ध्वमवलोक्य)

दधद्विद्युल्लेखामिव कुसुममालां परिमलभ्रमद्भृङ्गश्रेणीध्वनिभिरुपगीतां तत इतः।

दिगन्तं ज्योतिर्भिस्तुहिनकरगौरैर्धवलयन्नितः कैलासाद्रिः पतति वियतः किं पुनरयम्॥३८०॥'

**४४५ सामदानादि भाषणम्।**

यथा चण्डकौशिके-'धर्म्मः-...तत्कृतं करणीयम्। इदानीं ब्रह्मलोकमभिप्रतिष्ठस्व।

**४४६ पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थोपदर्शनम् ॥ ४१० ॥**

यथा वेणीसंहारे "भीमः-बुद्धिमतिके! क्व सा भानुमती परिभवतु सम्प्रति पाण्डवदारान्।"

**४४७ वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते।**

यथा सर्वत्र "किं ते भूयः प्रियमुपकरोमि" इति।

---

समयं लक्षयति-४४३ समय इत्यादिना।

४४३ दुःखनिर्याणं दुःखस्य निर्याणं विसर्जनम्। समयः।

उदाहरति-यथा रत्नवल्यां चतुर्थेऽङ्के। 'वासवदत्ता (रत्नावलीमालिङ्ग्य आहेति शेषः।) वहिणि-भगिनि! समस्ससिहि समाश्वसिहि। समस्ससिहि समाश्वसिहि।'

उपगूहनं लक्षयति-४४४ तद्भवेदित्यादिना।

४४४ यत् यतः। अद्भुतसम्प्राप्तिरद्भुतार्थलाभः। स्यात्। तत्। उपगूहनम्। भवेत्॥ ४०९ ॥

उदाहरति-यथा। मम। प्रभावत्यां नाटिकायाम्। नारददर्शनात्। प्राक् प्रथमम्। प्रद्युम्नः (ऊर्ध्वमाकाशे। अवलोक्य अवतरन्तं 'नारद'मिति शेषः) विद्युल्लेखामिव विद्युत्पङ्क्तिमिव। परिमलभ्रमद्भृङ्गश्रेणीध्वनिभिः परिमलः पुष्पाणां विमर्दनादुत्थितो यः सुगन्धस्तेन तल्लोभेन भ्रमन्तो ये भृङ्गा भ्रमरास्तेषां श्रेणी तस्याः ध्वनयो झङ्कृतयस्तैः। उपगीताम्। कुसुममालां पुष्पमयीं मालाम्। दधत्। इत इतः। तुहिनकरगौरैः तुहिनकरश्चन्द्रस्तद्वद्गौराणि तैः। ज्योतिर्भिः। दिगन्तम्। धवलयन् अयम् कैलासाद्रिः कैलासपर्वतः। इतोऽस्मात्। वियत आकाशात्। किम् पुनः किम्नु। पतति ॥ ३८० ॥'

भाषणं लक्षयति-४४५ सामेत्यादिना। स्पष्टम्।

४४५ उदाहरति-यथा। चण्डकौशिक पञ्चमाङ्के। 'धर्म्मः 'हरिश्चन्द्रं प्रत्याहे'ति शेषः। स्पष्टमन्यत्। तदेहि धर्मलोकमधितिष्ठेति पाठस्तु ग्रन्थानवलोकभूतः।

पूर्ववाक्यं लक्षयति-४४६ पूर्ववाक्यमित्यादिना।

४४६ यथोक्तार्थोपदेशनं यथोक्तार्थस्य ज्ञापनम्। तु। पूर्ववाक्यं। विज्ञेयम् ॥ ४१० ॥

उदाहरति-यथा। वेणीसंहारे। षष्ठाङ्के। 'भीमः...बुद्धिमतिके? (तदाख्येयं चेटी)। सा। भानुमती दुर्योधनभार्या। क्व कुत्रास्ते। सम्प्रति। पाण्डवदारान्। परिभवतु अत्र हि भानुमतीकर्तृकस्य द्रौपदीपरिभवस्य भीमकर्तृकं ज्ञापनम्।

काव्यसंहारं लक्षयति-४४७ वरप्रदानेत्यादिना। स्पष्टमन्यत्।

---

१ समाश्वसिहि भगिनि? समाश्वसिहीति संस्कृतम्।

४४८ नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते ॥ ४११ ॥

यथा मम प्रभावत्यां भरतवाक्यम् ।

'राजानः सुतनिर्विशेषमधुना पश्यन्तु नित्यं प्रजा
जीयासुः सदसद्विवेकपटवः सन्तो गुणग्राहिणः ।
सस्यस्वर्णसमृद्धयः समधिकाः सन्तु क्षमामण्डले
भूयादव्यभिचारिणी त्रिजगतो भक्तिश्च नारायणे ॥३८१॥'

अत्र काव्यसंहारप्रशस्त्योरन्ते एकक्रमेणैव स्थितिः । "इह मुखसन्धौ उपक्षेपपरिकर-परिन्यास-युक्त्यु-द्भेद-समाधानानां प्रतिमुखे च परिसर्पण-प्रगमन-वज्रो-पन्यास-पुष्पाणाम् । गर्भे चाभूताहरण-मार्ग-तोटका-धिबल-क्षेपाणाम् । विमर्शे चापवाद-शक्ति-व्यवसाय-प्ररोचना-दानानां प्राधान्यम् । अन्येषां तु यथासम्भवं स्थितिः । इति च केचिदाहुः ।

४४९ चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः ।
कुर्यादनियते तस्य सन्धावपि निवेशनम् ॥ ४१२ ॥
रसानुगुणतां वीक्ष्य रसस्यैव हि मुख्यता ।

यथा वेणीसंहारे तृतीयेऽङ्के दुर्योधनकर्णयोर्महत्सम्प्रधारणम् । एवमन्यदपि । यत्तु रुद्रटादिभिर्नियम एवेत्युक्तं तल्लक्ष्यविरुद्धम् ।

---

प्रशस्तिं लक्षयति–४४८ नृपेत्यादिना ।

४४८ नृपदेशादिशान्तिः नृपाणां राज्ञां देशानां प्रजानां च निरुपद्रुततया भवनमिति भावः । तु । प्रशस्तिः । अभिधीयते । इयं च गर्भसन्ध्यङ्गभूतां प्रार्थनामस्वीकुर्वद्भिरेव मतेति बोध्यम् ॥ ४११ ॥

उदाहरति–यथेत्यादिना ।

यथा । मम । प्रभावत्याम् । भरतवाक्यम् । 'राजानः । अधुना । सुतनिर्विशेषं सुतेभ्यो निर्विशेषम् । निर्गतो विशेषो यत्र (कर्मणि) तन्निर्विशेषम् । पुत्रानिवेति भावः । प्रजाः । नित्यम् । पश्यन्तु । सदसद्विवेकपटवः । सन्तश्चासन्तस्तेषां विवेकस्तत्र पटवश्चतुराः । अत एव–गुणग्राहिणः परेषां दोषानगृहीत्वा गुणान् ग्रहीतार इति भावः । अत एव–सन्तः । जीयासुर्जयन्तु । क्षमामण्डले पृथ्वीमण्डले । समधिका अत्यन्तमुन्नताः । सस्यस्वर्णसमृद्धयः । सस्यानि धान्यादिक्षेत्राणि स्वर्णानि चेति तेषां समृद्धयः । सन्तु । त्रिजगतस्त्रिलोक्याः । भक्तिः । च । नारायणे परमात्मनि । अव्यभिचारिणी कामं निरता । भूयात् । शार्दूलविक्रीडितं वृत्तम् ॥ ३८१ ॥' यद्यपि रूपके सन्ध्यङ्गानां न स्थितिनियमः किन्तु काव्यसंहारप्रशस्त्योरन्ते निर्वेशनियम एवेत्याह–अत्रेत्यादिना । स्पष्टम् ॥

"इहैषु रूपकेषु मध्ये इति यावत् । मुखसन्धौ निरूप्यमाणे इति शेषः...प्राधान्यमावश्यकत्वम् । अन्येषामुपक्षेपादिभ्यो व्यतिरिक्तानां विलोभनादीनामिति भावः । स्पष्टमन्यत् ।" इति । च । केचित् । आहुः ।

एवं सन्ध्यङ्गानि निर्दिश्यैषां सङ्ख्यानिर्देशपूर्वकं निवेशविधिं दर्शयति–४४९ चतुःषष्टिविधमित्यादिना ।

४४९ एतदङ्गम् । अत्र जात्यभिप्रायेणैकवचनम् । चतुःषष्टिविधम् । मनीषिभिः प्रोक्तम् । तथाहि–मुखाङ्गानि द्वादशप्रतिमुखाङ्गानि त्रयोदश ( चतुर्दश ) चेति । अयं विशेषः–गर्भाङ्गभूतायाः प्रार्थनायाः निर्वहणाङ्गभूतायाः प्रशस्तेश्चैकस्या एव ग्रहणम्–अन्यस्यास्तत एव गतार्थत्वात् । तस्य तत्तत्सन्धिसम्बन्धितयाऽभिहितस्याङ्गस्येति भावः । रसानुगुणताम् । वीक्ष्य । अनियते । अपि । सन्धौ । निवेशनं । कुर्यात् । कविरिति शेषः । ननु कोऽत्र हेतुरित्याह– हि यतः । रसस्य एव न त्वङ्गस्य न वा सन्धेरिति शेषः । मुख्यता प्राधान्यम् ॥ ४११ ॥

उदाहरति–यथेत्यादिना । स्पष्टम् । सम्प्रसारणं युक्तिः ।

सन्ध्यङ्गानां नियतत्वेन स्वीकारे दोषं दर्शयति–यत्त्वित्यादिना ।

लक्ष्यविरुद्धं महाकविसम्प्रदायाननुगतम् । स्पष्टम् । रुद्रटाभिरिति त्वधिकः पाठः प्रतीयते । रुद्रटग्रन्थे तदनुपलम्भात् । यदि स्याद्रुद्रटादिभिरिति पाठान्तरं तदा स्यात्कदाचित्–उद्भटादीनां ग्रन्थानां प्रायो लुप्तत्वात् ।

४५० इष्टार्थरचनाश्चर्यलाभो वृत्तान्तविस्तरः ॥ ४१३ ॥
रागप्राप्तिः प्रयोगश्च गोप्यानां गोपनं तथा ।
प्रकाशनं प्रकाश्यानामङ्गानां षडिधं फलम् ॥ ४१४ ॥

४५१ अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत् ।
अङ्गहीनं तथा काव्यं न प्रयोगाय युज्यते ॥ ४१५ ॥

४५२ सम्पादयेतां सन्ध्यङ्गं नायकप्रतिनायकौ ।
तदभावे पताकाऽऽद्यास्तदभावे तथेतरत् ॥ ४१६ ॥

प्रायेण प्रधानपुरुषप्रयोज्यानि सन्ध्यङ्गानि भवन्ति 'किन्तु प्रक्षेपादित्रयं बीजस्याल्पमात्र-समुद्दिष्टत्वादप्रधानपुरुषप्रयोजितमेव साधु ।

४५३ रसव्यक्तिमपेक्ष्यैषामङ्गानां सन्निवेशनम् ।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥ ४१७ ॥

---

अङ्गानां फलमाह-४५० इष्टार्थेत्यादिना । ४५० अङ्गानां निरुक्तलक्षणानांमुखादिसन्ध्यङ्गानामिति भावः । **इष्टार्थ-रचना** अभीप्सितार्थोद्भावनम् । **आश्चर्यलाभ** आश्चर्यजनको लाभ इति भावः । **वृत्तान्तविस्तर** इतिवृत्तस्य रसानु-कूलतया समुद्भाव्यत्ववर्णनम् । **रागप्राप्ति**रनुरागलाभः । **च** । **प्रयोगश्च** प्रयोगसम्बन्धित्वमिति भावः । **गोप्यानां** गोपनीयानामर्थानाम् । **गोपनम्** । **तथा** । **प्रकाश्यानां** सुस्पष्टमुद्भावनीयानामर्थानाम् । **प्रकाशनम्** । इत्येवम् **अङ्गानां** सन्ध्यङ्गानाम् । **षड्विधम्** । **फलम्** ॥४१३॥४१४॥

अङ्गप्रशंसामाह ४५१ अङ्गहीन इत्यादिना ।

४५१ **यद्वत्** । **अङ्गहीनो** नेत्राद्यङ्गविकल **नरः** इति भावः । **आरम्भक्षम** आरम्भे कार्योद्यमे क्षमः । **नैव** । **भवेत्** । **तथा** । **अङ्गहीनं** सन्ध्यङ्गशून्यम् । **काव्यं** दृश्यमिति शेषः । **प्रयोगाय** प्रयोक्तुमिति भावः । **न युज्यते** ॥४१५॥

सन्ध्यङ्गादि कस्य सम्पाद्यमित्याशङ्क्याह--४५२ सम्पादयेतामित्यादिना ।

४५२ **नायकप्रतिनायकौ** सन्ध्यङ्गं मुखादिसन्धीनामुपक्षेपाद्यङ्गमात्रम् । **सम्पादयेताम्** । **तदभावे** सन्ध्यङ्गानामसम्पादनीयत्वावसरे **पताकाद्याः** पताकाप्रकरीकार्याद्या अर्थप्रकृतीः सम्पादयेतामिति भावः । **तदभावे** पताकाद्यानामर्थप्रकृतीनां सम्पादनानवसरे इति भावः । **तथा** पूर्ववत् । **इतरद्** बीजं बिन्दुं वा । 'सम्पादयेता' मिति पूर्वतोऽनुसक्तम् ॥ ४१६ ॥

अत्र विशेषं निर्दिशति-**प्रायेणे**त्यादिना ।

**प्रायेण** प्रायः सति सम्भवे **प्रधानपुरुषप्रयोज्यानि** प्रधानपुरुषौ नायकप्रतिनायकौ 'नायिका प्रतिनायिका चे' त्येतद्द्वयं तु अत्रैव गतार्थम् ताभ्यां प्रयोज्यानि । **सन्ध्यङ्गानि** । **भवन्ति** । **किन्तु** ( स्वारस्येनेदमाह ) **उपक्षेपादित्रय**मुपक्षेपपरिकरपरिन्यासाख्यसन्ध्यङ्गत्रयं न तु तद्भिन्नान्यन्यान्यपि सर्वाणीति भावः । **बीजस्य** अल्पमात्रमित्यादिना निरुक्तस्यकारणविशेषस्य । **अल्पमात्रसमुद्दिष्टत्वात्** । तस्य चैतदर्थमात्रत्वादिति शेषः । **अप्रधा-नपुरुषप्रयोजितं** नायकप्रतिनायकेतरप्रयोज्यम् । **एव** न तु नायकप्रतिनायकप्रयोज्यमिति शेषः । **साधु** । अयं भावः- बीजं तावदल्पमात्रं समुद्दिष्टं बहुधा यत्प्रसर्पतीत्युक्तः कारणविशेषः । उपक्षेपाद्यङ्गत्रयं पुनः बीजमात्रो-पकारि बीजस्य चाप्रधानपुरुषप्रयोज्यत्वे सम्प्रदायानुकूलत्वमिति'तदप्यप्रधानपुरुषप्रयोज्यमेव साध्विति ।

न च सर्वाण्येवाङ्गानि यत्र न यदि लभ्येरन् तत्र रूपकत्वन्न सम्भवेदिति न मन्तव्यमित्यभिप्रायेणाह ४५३ **रसव्यक्तिमित्यादिना** ।

४५३ **रसव्यक्तिं**-रसोद्भावनम् । **अपेक्ष्य** । **एषां** निरुक्तानामुपक्षेपादीनामिति भावः । **अङ्गानाम्** । **सन्निवेशनम्** । येन येनाङ्गनिवेशनेन रसाभिव्यक्तिः स्यात्तदेवाङ्गं निवेशनीयमिति भावः । रसाननुगुणशास्त्रोपदेश-

तथा च यो वेणीसंहारे दुर्योधनभानुमत्या सह विप्रलम्भो दर्शितस्तत्तादृशेऽवसरेऽत्यन्तमनुचितम्।

४५४ अविरुद्धं तु यद्वृत्तं रसादिव्यक्तयेऽधिकम्।
तदप्यन्यथयेद् धीमान्न वदेद्वा कदाचन ॥ ४१८ ॥

अनयोरुदाहरणं तत्प्रबन्धेष्वभिव्यक्तमेव।

अथ वृत्तयः—

४५५ शृङ्गारे कौशिकी वीरे सात्त्वत्यारभटी पुनः।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती ॥ ४१९ ॥
चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः।
स्युर्नायकादिव्यापारविशेषा नाटकादिषु ॥ ४२० ॥

---

स्यात्यकिञ्चित्करत्वमित्याह—नतु। केवलया रसव्यक्तिहीनया। शास्त्रस्थितिसम्पादनेच्छया शास्त्रमर्यादारक्षणमात्राभिप्रायेणेति भावः ॥ ४१६ ॥

एतेन किं सिद्धमित्याशङ्कायामाह—तथा चेत्यादिना।

तथा। च। वेणीसंहारे तृतीयेऽङ्के इति शेषः। स्पष्टमन्यत्। अयम्भावः—सङ्ग्रामे वीरस्यैवौचित्यं तदन्तश्च शृङ्गारस्योद्भावनेन प्रधानरसाभिव्यक्तौ सर्वथा तिरोभाव आपततीति रसस्यैवमनौचित्यं किं पुनस्तदा सन्ध्यङ्गादीनां निवेशे। तस्मात् यथा प्रधानरसः समभिव्यज्येत यथा वा तस्यौचित्यं सम्भवेत् तथैव सन्ध्यङ्गादिनिवेशः साधीयान्प्रतिभासते। उक्तं च—"अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्" इति। 'सन्धिसन्ध्यङ्गघटनं रसादिव्यक्त्यपेक्षया। नतु केवलया शास्त्रस्थितिसम्पादनेच्छया ॥' इति च।

पुनस्तदेव प्रकारान्तरेण विवृणोति—४५४ अविरुद्धमित्यादिना।

४५४ अविरुद्धमनुकूलताऽनालिङ्गितप्रतिकूलताविरहितम्। तु अप्यर्थः। यत्। वृत्तम्। अधिकमनुपयोगि अनुकूलताशून्यमिति यावत्। तत्। अपि। धीमान् सहृदयः। रसाभिव्यक्तये रसभावतदाभासादिव्यक्तये इति भावः। अन्यथयेत्—प्रकारान्तरं नयेत्। वा (इदं पक्षान्तरम्) कदाचन। न। वदेत्। अयं भावः यदविरुद्धं सदनुपयोगि तद्यथोपयोगि स्यात्तथा सङ्क्षिप्य वर्णयेत् यच्च सङ्क्षिप्य वर्णमानमपि नोपयोगि तद्यदि सर्वथाऽपि न वर्ण्येत तदाऽपि न क्षतिः। प्रत्युत युज्यत एव काव्यसंसारे कवेः स्वतन्त्रविधातृत्वादिति ॥ ४१८ ॥

नन्वेवं क दृष्टमित्याशङ्क्याह—अनयोरित्यादि।

अनयो रसानुपयोगित्वे वृत्तस्य सङ्क्षेपेण वर्णनस्य सर्वथा वा तदवर्णनस्येति भावः। उदाहरणम्। सत्प्रबन्धेषु महाकविप्रबन्धेषु अभिव्यक्तम्। एव। अयं भावः महाभारतादिषु यथोपलभ्यते न तथा सर्वथा नाटकेषु क्रिमपीतिवृत्तं न वा सङ्क्षिप्तमपि सर्वमिति वेणीसंहारबालरामायणादि दृष्टवतां प्रत्यक्षमिति।

अथ वृत्तीरभिधातुं प्रतिजानीते—अथेत्यादिना।

अथ। वृत्तय 'उच्यन्ते' इति शेषः। ४५५ शृङ्गार इत्यादिना।

४५५ शृङ्गारे कौशिकी वृत्तिरिति परतोऽध्याहृत्य योज्यम्। एवं—वीरे। सात्त्वती। रौद्रे रसे। च तथा। बीभत्से। पुनः। आरभटी। सर्वत्र सर्वेषु 'अन्येषु' इति शेषः। हास्यकरुणाद्भुतभयानकशान्तेषु इति भावः। भारती। वृत्तिः। एताः कौशिक्याद्याः। हि। चतस्रो। वृत्तयः। सर्वनाट्यस्य सर्वेषां रूपकाणामिति भावः। मातृका उपकारिकाः। अत एव—नाटकादिषु। नायकादिव्यापारविशेषाः। स्युः ॥ ४१९ ॥ ४२० ॥

तत्र कौशिकी-

४५६ या श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसङ्कुला पुष्कलनृत्यगीता ।
कामोपभोगप्रभवोपचारा सा कौशिकी चारुविलासयुक्ता ॥ ४२१ ॥

४५७ नर्म च नर्मस्फूर्जो नर्मस्फोटोऽथ नर्मगर्भश्च ।
चत्वार्यङ्गान्यस्याः

तत्र-

४५८ वैदग्ध्यक्रीडितन्नर्म ॥ ४२२ ॥
इष्टजनावर्जनकृत्-

४५९ तच्चापि त्रिविधं मतम् ।
विहितं शुद्धहास्येन सशृङ्गारभयेन च ॥ ४२३ ॥

तत्र केवलहास्येन विहितं यथा रत्नावल्यां 'वासवदत्ता ( फलकमुद्दिश्य सहासम् ) अज्जउत्त! एसा वि अवरा तव समीवे जधा आलिहिदा एवं किं अजवसंतस्स विण्णानं'?" शृङ्गारहास्येन यथा अभिज्ञानशाकुन्तले राजानं प्रति 'शकुन्तला असंतुट्ठो उण किंकरिस्सदि राजा-इदम् । ( इति व्यवसितः । शकुन्तला वक्त्रं ढौकते ) सभयहास्येन यथा रत्नावल्याम् । आलेख्यदर्शनावसरे ।

---

तत्र तावत् कौशिकीं वृत्तिं लक्षयितुं प्रतिजानीते-तत्रेत्यादिना ।

तत्र तासु चतसृषु वृत्तिषु मध्ये इति भावः । कौशिकी लक्ष्यते इति शेषः ४५६ येत्यादिना ।

४५६ या श्लक्ष्णनेपथ्यविशेषचित्रा श्लक्ष्णमरूक्षम्मृदुलमिति यावत् यन्नेपथ्यं नायकादीनां वेषस्तेन चित्राद्भुतः शोभातिशयाधायिनीति यावत् । स्त्रीसङ्कुला । पुष्कलनृत्यगीता । कामोपभोगप्रभवोपचारा कामोपभोगः शृङ्गारस्तस्मात्प्रभवतीति तथोक्त उपचारोऽनुष्ठानविशेषो यत्र । चारुविलासयुक्ता । वृत्तिरिति शेषः । सा । कौशिकी ॥ ४२१ ॥

अस्या भेदानाह-४५७ नर्म चेत्यादिना । स्पष्टम् ।

क्रमादेताँल्लक्षयितुमुपक्रममाण आह-तत्र तेषु नर्मादिषु मध्ये ४५८ वैदग्ध्यक्रीडितं वैदग्ध्यं चातुर्यं तेन क्रीडितं तथा-इष्टजनावर्जनकृत् इष्टजनस्य सामाजिकस्यावर्जनं प्रीत्याधानं करोतीति तथोक्तम् । नर्म तदाख्यम् ॥ ४२२ ॥

अस्यापि भेदानाह-४५९ तच्चेत्यादिना ।

४५९ तन्नर्म अपि पुनः । शुद्धहास्येन केवलेन हास्येन । विहितम् । च । सशृङ्गारभयेन शृङ्गारसहितेन भयसहितेन च । विहितमिति पूर्वतोऽनुप्रसक्तम् । त्रिविधं । मतम् ॥ ४२३ ॥

उदाहरति-तत्रेत्यादिना ।

तत्र तेषु त्रिविधेषु मध्ये इत्यर्थः । केवलहास्येन । विहितं 'नर्मे'ति शेषः । यथा रत्नावल्यां द्वितीयेऽङ्के । वासवदत्ता फलकं रत्नावलीचित्रपटमिति भावः । उद्दिश्य सहासं 'वत्सराजं प्रत्याहे'ति शेषः । अज्जउत्त आर्यपुत्र ! एसा एषा । वि अपि । अवरा अपरा । तव तव । समीवे समीपे । जधा यथा । आलिहिदा आलिखिता । एवं एवम् । किं किम् । अजवसंतस्स आर्य्यवसन्तकस्य ( तदाख्यविदूषकस्य ) विण्णाणं विज्ञानम् ? स्पष्टमन्यत् । शृङ्गारहास्येन । नर्म यथा । अभिज्ञानशाकुन्तले । राजानं दुष्यन्तम् । प्रति । 'आहे'ति शेषः । असंतुट्ठो असन्तुष्टः । उण पुनः । किंकरिष्यदि किंकरिष्यति । राजा 'शकुन्तलाया मुखं चुम्बितुं प्रवृत्त आहे'ति शेषः । इदम् एतच्चुम्बनम् । स्पष्टमन्यत् ।

---

१ आर्यपुत्र ! एषाऽपि अपरा तव समीपे यथाऽऽलिखिता एवं किमार्यवसन्तकस्य विज्ञानमिति संस्कृतम् ।
२ असन्तुष्टः पुनः किं करिष्यतीति संस्कृतम् ।

'सुसङ्गता-जाणिदो मए एसो वुत्तन्तो समं चित्तफलएण। ता देवीए गदुअ निवेदइस्सम्।' एतद्वाक्यसंबन्धि नर्मोदाहृतम्। एवं वेषचेष्टासम्बन्ध्यपि।

**४६० नर्मस्फूर्जः सुखारम्भो भयान्तो नवसङ्गमः ।**

यथा मालविकायाम्–सङ्केतनायकमभिसृतायां 'नायकः–

विसृज सुन्दरि सङ्गमसाध्वसं ननु चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां त्वमतिमुक्तलताचरितं मयि ॥ २८३ ॥

मालविका–भट्टा, देवीए भएण अप्पणो वि पिअं कउं ण पारेमि।' इत्यादि। अथ नर्मस्फोटः–

**४६१ नर्मस्फोटो भावलेशैः सूचिताल्परसो मतः ॥ ४२४ ॥**

---

'सुसङ्गता 'राजानं प्रत्याहे'ति शेषः। जाणिदो ज्ञातः। मए मया। एसो एष रत्नावल्याश्चित्रदर्शनेन तस्यामनुरागोद्भावनरूप इति भावः। चित्तफलएण चित्रफलकेन रत्नावल्याश्चित्रपटेनेति भावः। समं समम्। वुत्तंतो वृत्तान्तः। ता तत्। गदुए गत्वा। देवीए देव्यै वासवदत्तायै इत्यर्थः। णिवेदइस्सं निवेदयिष्ये कथयिष्यामीति भावः।' एतत्। वाक्यसम्बन्धि वाक्यमात्रावष्टम्भम्। नर्म क्ष्वेलितम्। उदाहृतम्। एवम्। वेषचेष्टासम्बन्धि। अपि। 'नर्मोदाहर्त्तव्यमि'ति शेषः। यथा–रत्नावल्याम् 'सुसङ्गता–(दृष्ट्वा विहस्य) अइ कादरे! मा भाआइ, ण होइ एसो वाणरो, अज्जवसंतओ क्खु एसो (अयि कातरे मा बिभेहि न भवति एष वानरः, आर्यवसन्तकः खल्वेषः) इत्यत्र वेषजभयसम्बन्धि। एवमन्यदिति) दिक्।

नर्मस्फूर्जं लक्षयति–४६० नर्मस्फूर्ज इत्यादिना।

४६० सुखारम्भः सुखमारम्भे यस्य तादृशः। भयान्तो भयमन्ते यस्य सः। नवसङ्गमः। नर्मस्फूर्जः। 'उच्यते'इति शेषः। तथोक्तम्–'नवसङ्गमसम्भोगो रतिसमुदयवेषवाक्यसंयुक्तः। ज्ञेयो नर्मस्फूर्जो ह्यवमानभयात्मकश्चैव ॥'इति।

उदाहरति–यथा। सङ्केतनायकम्। अभिसृतायां लक्ष्मीकृत्य प्राप्तायाम्। मालविकायाम् (सति सप्तमीयम्)। 'नायकः। (मालविकां प्रत्याह)।

हे सुन्दरि! सङ्गमसाध्वसं प्रसङ्गे भयम्। विसृज। ननु (इदं वाक्यालङ्कारे) चिरात् प्रभृति बहोः कालात्। प्रणयोन्मुखे तव प्रणयाभिलाषिणि। अत एव–सहकारताम् अतिसुगन्धिताम्ररूपत्वं सहकारित्वं च। गते प्राप्ते। मयि। त्वम्। अतिमुक्तलताचरितमतिमुक्ता वासन्ती एव लता तस्याश्चरितं तत्, अतिशयेन मुक्तं यल्लतं रतं (रलयोः सावर्ण्यम्) तस्याचरितमाचरणं पुनः सम्पादनं तदिति वा। परिगृहाण देहि आधेहि वा। द्रुतविलम्बितं वृत्तम् ॥ २८३ ॥

मालविका (नायकं प्रत्याह) भट्टा भर्त्तः। देवीए देव्या महाराज्ञ्या इति यावत्। भएण भयेन। अप्पणो आत्मनः। वि अपि। पिअं प्रियम्। कउं कर्त्तुम्। ण न। पारेमि पारयामि।'इत्यादि। एवं चात्र स्फुटो लक्षणसमन्वयः।

नर्मस्फोटं लक्षयितुमाह–अथ। नर्मस्फोटः। लक्ष्यते–४६१ नर्मेत्यादिना।

४६१ भावलेशैरीषत्प्रकटितैरभिप्रायैः। सूचिताल्परसः सूचितोऽल्परसः किञ्चिदास्वादो यत्र सः। नर्मस्फोटः। मतः ॥ ४२४ ॥

---

१ 'ज्ञातो मयैष वृत्तान्तः समं चित्रफलकेन। तद्देव्यै गत्वा निवेदयिष्ये' इति संस्कृतम्। २ 'भर्त्तः। देव्या भयेनात्मनोऽपि प्रियं कर्तुं न पारयामी'ति संस्कृतम्।

यथा मालतीमाधवे-

'गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवं श्वसितमधिकं किं न्वेतत्स्यात्किमन्यदितोऽथवा ।
भ्रमति भुवने कंदर्पाज्ञा विकारि च यौवनं ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम् ॥२८४॥'

अलसगमनादिभिर्भावलेशैर्माधवस्य मालत्यामनुरागः स्तोकः प्रकाशितः ।

४६२ नर्मगर्भो व्यवहृतिर्नेतुः प्रच्छन्नवर्तिनः ।

यथा तत्रैव सखीरूपधारिणा माधवेन मालत्या मरणव्यवसायवारणम् ।

अथ सात्त्वती—

४६३ सात्त्वती बहुला सत्त्वशौर्यत्यागदयार्जवैः ॥ ४२५ ॥
सहर्षा क्षुद्रशृङ्गारा विशोका साद्भुता तथा ।
४६४ उत्थापकोऽथ सङ्घात्यः संलापः परिवर्तकः ॥ ४२६ ॥
विशेषा इति चत्वारः सात्त्वत्याः परिकीर्तिताः ।
४६५ उत्तेजनकरी शत्रोर्वागुत्थापक उच्यते ॥ ४२७ ॥

यथा महावीरचरिते-'आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यं तु कुतोऽद्य सम्प्रति मम त्वद्दर्शने चक्षुषः ।
यन्माङ्गल्यसुखस्य नास्मि विषयः किं वा बहुव्याहृतै-
रस्मिन्विस्मृतजामदग्न्यविजये बाहौ धनुर्जृम्भताम् ॥ २८५ ॥'

---

उदाहरति-यथा-मालतीमाधवे । 'अलसमालस्ययुक्तम् । गमनम् । शून्या 'समतारा समपुटा निष्कम्पा शून्यदर्शना । बाह्यार्थग्राहिणी मध्या शून्या दृष्टिः प्रकीर्तिता ॥'इत्युक्तस्वरूपा । दृष्टिर्दर्शनव्यापारः । असौष्ठवं मलाद्यनपाकरणादिनाऽशोभमानम् । शरीरम् । अधिकम् । श्वसितं श्वाससञ्चारः । किन्नु । एतत् । स्यात् । अलसगमनादीदं किं रोगजन्यं कामकृतं वेति संशयः । अथ निर्धायाह-अथवा । इतो वक्ष्यमाणात्कारणात् । अन्यत् । किम् । निर्धारितं प्रकटति कन्दर्पाज्ञा कामदेवस्याज्ञा । भुवने संसारे । भ्रमति । यौवनं यूनामवस्था धर्मो वा । विकारि । ननु किमेतेनेत्याह-ललितमधुराः । तेते । भावाः । सुरतचेष्टाः । च । धीरतां धैर्यम् । क्षिपन्ति हरन्ति । हरिणीप्लुतं छन्दः ॥ २२४ ॥'

लक्षणसङ्गतिं सूचयति-अलसेत्यादिना । स्पष्टम् ।

नर्मगर्भं लक्षयति-४६२ नर्मेत्यादिना ।

४६२ प्रच्छन्नवर्त्तिनः । नेतुर्नायकस्य । व्यवहृतिर्व्यवहारः । नर्मगर्भः । तथोक्तम् 'विज्ञानरूपसम्भावनाऽऽदिभिर्नायको गुणैर्यत्र । प्रच्छन्नो व्यवहरते कार्य्यवशान्नर्मगर्भोऽसौ ॥' इति ।

उदाहरति-यथेत्यादिना । तत्रैव मालतीमाधवे एव । स्पष्टमन्यत् ।

सात्त्वतीं वृत्तिं लक्षयतुमाह-अथ । सात्त्वती । निरूप्यते-४६३ सात्त्वतीत्यादिना ।

४६३ सत्त्वशौर्यत्यागदयाऽऽर्जवैः । सत्त्वं धैर्यम् । आर्जवं सरलता । बहुला विचित्रा सात्त्वती तदाख्या वृत्तिः । स्पष्टमन्यत् ॥ ४२५ ॥

अस्या भेदान् कीर्त्तयति-४६४ उत्थापक इत्यादिना । स्पष्टम् ॥ ४२६ ॥

उत्थापकं लक्षयति-४६५ उत्तेजनकरीत्यादिना । स्पष्टम् ॥ २४७ ॥

उदाहरति-यथा । महावीरचरिते । वाली श्रीरामं प्रत्याह-'आनन्दाये' त्यादिना ।

'आनन्दाय । च । विस्मयायाश्चर्योद्भावनाय । च । दुःखाय । 'एतादृशस्य तव विनाशभाविने क्लेशाय । वा । मया वालिना । दृष्टः । असि । तु किन्तु । अद्य । सम्प्रति । मम । चक्षुषः । त्वद्दर्शने । ( विषये

४६६ मन्त्रार्थदैवशक्त्यादेः साङ्घात्यः सङ्घभेदनम् ।

मन्त्रशक्त्या यथा मुद्राराक्षसे राक्षससहायानां चाणक्येन स्वबुद्ध्या भेदनम् । अर्थशक्त्याऽपि तत्रैव । दैवशक्त्या यथा रामायणे रावणाद्विभीषणस्य भेदः ।

४६७ संलापः स्याद्गभीरोक्तिर्नानाभावसमाश्रया ॥ ४२८ ॥

यथा वीरचरिते-'रामः-अयं स यः किल सपरिवारकार्तिकेयविजयावर्जितेन भगवता नीललोहितेन परिवत्सरसहस्रान्तेवासिने तुभ्यं प्रसादीकृतः परशुः । परशुरामः-राम ! दाशरथे, ! स एवायमार्यपादानां प्रियः परशुः ।' इत्यादि ।

४६८ प्रारब्धादन्यकार्याणां कारणं परिवर्तकः ।

यथा वेण्याम्-'भीमः-सहदेव! गच्छ त्वं गुरुमनुवर्तस्व । अहमप्यस्त्रागारं प्रविश्यायुधसहायो भवामीति यावत् । अथवा आमन्त्रयितव्यैव मया पाञ्चाली ।' इति । अथारभटी-

४६९ मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ॥ ४२९ ॥

संयुक्ता वधबन्धाद्यैरुद्धताऽऽरभटी मता ।

४७० वस्तूत्थापनसम्फेटौ सङ्क्षिप्तिरवपातनम् ॥ ४३० ॥

---

सप्तमीयम् ) । वैतृष्ण्यमननुरक्तत्वम् । कुतः । ननु पुरस्तात् स्थिते शत्रौ क्रोधौचित्ये चक्षुर्वैतृष्ण्यं युक्तमेवेति पुनः किं पुनस्तथा शोचसे इत्याशङ्क्याह-यत् माङ्गल्यसुखस्य रमणीयतैकभाजनस्य तव दर्शनतो जायमानस्य अलौकिकाह्लादस्य । विषयः । न । अस्मि भवानि न तत् सुचिरमनुभवितुं चक्षुरवतिष्ठते इति भावः । ननु किं त्वं योद्धुं समागतः किं वा द्रष्टुमिति विमृश्याह-किं वा । बहुव्याहृतैः । अस्मिन् । विस्मृतजामदग्न्यविजये विस्मृतो जामदग्न्यस्य परशुरामस्य विजयो येन तथोक्ते । बाहौ । धनुः । जृम्भतां बाणप्रक्षेपार्थमुद्यतं स्यात् । शार्दूलविक्रीडितं वृत्तम् ॥२८५॥'

साङ्घात्यं लक्षयति-४६६ मन्त्रार्थेत्यादिना ।

४६६ मन्त्रार्थदैवशक्त्यादेर्मन्त्रो विचारोऽर्थो धनं दैवं प्रारब्धं तेषां शक्त्यादिस्तस्मात् । आदिना-परत्र तत्तद्वैपरीत्यादेर्ग्रहणम् । सङ्घभेदनं सङ्घस्य सहायकसमाजस्य भेदनं भेदः । साङ्घात्यः ।

उदाहरति-मन्त्रशक्त्येत्यादिना । स्पष्टम् ।

संलापं लक्षयति-४६७ संलाप इत्यादिना । स्पष्टम् ॥ ४२८ ॥

उदाहरति-यथा । वीरचरिते महावीरचरिते । 'रामः श्रीरामचन्द्रः ( परशुरामं प्रत्याह ) सपरिवारकार्तिकेयविजयावर्जितेन सपरिवारो यः कार्त्तिकेयोऽर्जुनस्तस्य विजयस्तेनावर्जितः संतोषितस्तेन । भगवता । नीलकण्ठेन महादेवेन । परिवत्सरसहस्रान्तेवासिने परिवत्सराणां संवत्सराणां सहस्रेणान्तेवासी शिष्यस्तस्मै । तुभ्यम् । यः । किल । प्रसादीकृतः प्रत्तः । सः । अयम् । परशुः । परशुरामः राम ! दाशरथे ! दशरथनन्दन ! सः । एव । अयम् । आर्यपादानां पूज्यानां महादेवानाम् । प्रियः । परशुः ।' इत्यादि । अत्र हि-महादेवविषयरतिमत्युत्साहानामाश्रयः ।

परिवर्त्तकं लक्षयति-४६८ प्रारब्धेत्यादिना । प्रारब्धं कार्यं परिहायान्यस्य करणं पारिवर्त्तकः । इति वर्त्तुलार्थः ।

उदाहरति-यथेत्यादिना स्पष्टोऽर्थः । अत्र हि शस्त्रं ग्रहीतुं प्रवृत्तेर्द्रौपद्या सममामन्त्रणावश्यकतया परित्यागः ।

आरभटीं लक्षयितुमाह-अथ । आरभटी । लक्ष्यते-४६९ मायेन्द्रेत्यादिना ।

४६९ मायेन्द्र... । मायाऽसतो वस्तुनः सद्रूपेणोद्भावनम् । इन्द्रजालः सतोऽप्यर्थस्यासत्ताविधानम् । तथा-वधबन्धाद्यैः । आद्यपदेन मोहनादीनां ग्रहणम् । संयुक्ता । आरभटी तदाख्या वृत्तिः । मता । स्पष्टमन्यत् ॥ ४२९॥

अस्या भेदान् गणयति-४७० वस्तूत्थापनसम्फेटानित्यादिना । स्पष्टम् ॥ ४३० ॥

इति भेदास्तु चत्वार आरभट्याः प्रकीर्तिताः।
४७१ मायाद्युत्थापितं वस्तु वस्तूत्थापनमुच्यते ॥ ४३१ ॥

यथोदात्तराघवे-'जीयन्ते जयिनोऽपि सान्द्रतिमिरव्रातैर्वियद्व्यापिभि-
र्भास्वन्तः सकला रवेरपि कराः कस्मादकस्मादमी।
एते चोग्रकबन्धकण्ठरुधिरैराध्मायमानोदरा
मुञ्चन्त्याननकंदरानलमुचस्तीव्रान्रवान्फेरवाः ॥२८६॥' इत्यादि।

४७२ सम्फेटस्तु समाघातः क्रुद्धसत्वरयोर्द्वयोः।

यथा मालत्यां माधवाघोरघण्टयोः।

४७३ संक्षिप्ता वस्तुरचना शिल्पैरितरथापि वा ॥ ४३२ ॥
संक्षिप्तिः स्यान्निवृत्तौ च नेतुर्नेत्रन्तरग्रहः।

यथोदयनचरिते कलिङ्गहस्तिप्रयोगः द्वितीयं यथा वालिनिवृत्त्या सुग्रीवः। यथा वा परशुरामस्यौद्धत्यनिवृत्त्या शान्तत्वापादानम्—'पुण्या ब्राह्मणजातिः-' इति।

---

वस्तूत्थापनं लक्षयति-४७१ मायेत्यादिना। निगदव्याख्यातम् ॥ ४३१ ॥

उदाहरति-यथा। उदात्तराघवे। 'जीयन्ते'इत्यादौ।

'जयिनो जेतारः। अपि। अमी। कस्मात्। अकस्मात् प्रकटकारणं विना। भास्वन्तः प्रकाशनशीलाः। रवेः सूर्यस्य। अपि 'किमुनरन्यस्ये'ति शेषः। वियद्व्यापिभिराकाशे व्याप्तैः। सान्द्रतिमिरव्रातैः सान्द्रा निबिडा ये तिमिरव्रातास्तैः। जीयन्ते पराभूयन्ते। एते। उग्र... उग्रा भयङ्करा ये कबन्धाः छिन्नशिरस्का अपि युद्धाय प्रवृत्तास्तेषां कण्ठरुधिरैः। आध्मायमानोदरा आध्मायमानानि परिपूर्यमाणान्युदराणि येषां ते। आननकन्दराऽनलमुच आननान्येव कन्दरास्ताभ्योऽनलमुचोऽग्निवर्षणशीलाः। फेरवाः शृगालाः। च। तीव्रान्। रवान्। 'कस्मादकस्मा'दिति पूर्वतोऽनुवृत्तम्। मुञ्चन्ति। असौ मायिकस्य मायाप्रभावं दृष्टवत उक्तिरियम्। अत्र शार्दूलविक्रीडितं वृत्तम्॥२८६॥' इत्यादि। अत्रादिपदेन'एष ब्रह्मा सरोजे रजनिचरकलाशेखरः शङ्करोऽयं दोर्भिर्दैत्यान्तकोऽसौ सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः। एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवि देवास्तथाऽन्ये नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्यः॥' इत्यादीन्युदाहरणान्यूह्यानि।

सम्फेटं लक्षयति-४७२क्रुद्धसत्वरयोः क्रुद्धः कुपितः सत्वरो झटिति तत्प्रतिकर्तुं व्यग्रस्तयोः। द्वयोः। 'कयोश्चित्' इति शेषः। समाघात एकत्र सङ्घट्टः। तु। सम्फेटः।

उदाहरति-यथा। मालत्याम्मालतीमाधवाख्ये प्रकरणे। माधवाघोरघण्टयोः। अयम्भावः-माधवीं चण्डिकायै बलीकर्तुम्प्रवृत्तमघोरघण्टमवलोक्य माधवस्य सत्वरम् 'अलं दुरात्मन् अपेहि प्रतिहतोऽसि कापालिकापसद' इति प्रवेशः। एवं च स्फुटस्तयो परस्परं समाघातः। इति।

सङ्क्षिप्तिं लक्षयति-४७३ शिल्पैः। अथ। (इदं पक्षान्तरे)। इतरथाऽन्यथा प्रकारान्तरेणेति यावत्। अपि। वा (इदं समुच्चये)। सङ्क्षिप्ता। वस्तुरचना पदार्थनिर्माणम्। च तथा। नेतुर्नायकस्य। निवृत्तौ आत्मना सत्त्वे स्वभावतो वाऽतथाभूतत्वे इति भावः। नेत्रन्तरग्रहो नेत्रन्तरस्यान्यस्य नायकस्य ग्रह उपादानम्। इदं तत्त्वम्-यदि नायको हतस्तदाऽन्यस्य नायकस्योपासनम्, यदि च सतोऽपि नायकस्य स्वभावपरिवृत्तिस्तर्हीति। सङ्क्षिप्तिः। स्यात् ॥ ४३२ ॥

उदाहरति-यथा। उदयनचरिते रूपकविशेषे। कलिङ्गहस्तिप्रयोगः। कलिङ्गहस्तिनः काष्ठनिर्मितगजस्य प्रयोगः। (इदं शिल्पोदाहरणम्) द्वितीयं नेत्रन्तरग्रहणम्। यथा। वालिनिवृत्त्या वालिनो मरणानन्तरम्। सुग्रीव 'स्ताराया उपास्यत्वेन संवृत्त' इति शेषः। यथा वा। परशुरामस्य। औद्धत्यनिवृत्त्या स्तब्धत्वनिवृत्तौ।

४७४ प्रवेशत्रासनिष्क्रान्तिहर्षविद्रवसम्भवम् ॥ ४३३ ॥
अवपातनमित्युक्तं

यथा कृत्यरावणे षष्ठेऽङ्के-'(प्रविश्य खड्गहस्तः पुरुषः ।)' इत्यतःप्रभृति निष्क्रमणपर्यन्तम् ।

४७५ पूर्वमुक्तैव भारती ।

अथ नाट्योक्तयः—

४७६ अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ॥ ४३४ ॥
सर्वश्राव्यं प्रकाशं स्यात्तद्भवेदपवारितम् ।
रहस्यं तु यदन्यस्य परावृत्य प्रकाश्यते ॥ ४३५ ॥
त्रिपताककरेणान्यानपवार्यान्तरा कथाम् ।
अन्योन्यामन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकम् ॥ ४३६ ॥
किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ।
श्रुत्वैवानुक्तमप्यर्थं तत्स्यादाकाशभाषितम् ॥ ४३७ ॥

---

शान्तत्वापादानं तपस्वितया भवनम् । तथा सति-'पुण्या ब्राह्मणजातिः' इति । इदं बोध्यम्-'पुण्यब्राह्मणजातिरन्वयगुणः शास्त्रं चरित्रं च मे येनैकेन हतान्यमूनि हरता चैतन्यमात्रामपि । एकः सन्नपि भूरिदोषगहनं सोऽयं त्वया प्रेयसा वत्स ! ब्राह्मणवत्सलेन शमितः क्षेमाय दर्पामयः ॥' इत्युच्चरतः परशुरामस्य शान्तत्वमिति । इदं च बोध्यम्-शिल्पेतरेण वस्तुरचना कविप्रतिभोत्थापितैव भवति, यथाऽभिज्ञानशाकुन्तले भ्रमरबाधोद्भावनेन कविना शकुन्तलाया आननं कमलात्मनोद्भावितमिति ।

अवपातनं लक्षयति-४७४ प्रवेशत्रासनिष्क्रान्तिहर्षविद्रवसम्भवं प्रवेशः पात्रान्तरप्रवेशस्तेन त्रासः, स च निष्क्रान्तिः पात्रान्तरनिष्क्रमणं तया हर्षश्च, तयोर्विद्रवो झटिति कार्यात्मना परिणमनं स सम्भव उत्पत्तिस्थानं यस्य तथोक्तम् । अवपातनम् । इत्युक्तम् ॥ ४३३ ॥

उदाहरति-यथेत्यादिना । स्पष्टोऽर्थः । इदं तु बोध्यम्-कृत्यरावणो नाम कस्यचिद्रूपकस्य षष्ठोऽङ्कः, सच रामं सीतां वा मोहयितुं रावणनिर्मितां सीताप्रतिकृतिं रामप्रतिकृतिं वा निर्दिश्य रामस्य सीताया वा त्रासहर्षयोरुद्भावनार्थः । एतच्च श्रीरामायणं दृष्टवतामतिरोहितम् । इति ।

अथ भारतीवृत्तेर्निरूपणस्य क्रमप्राप्तत्वेऽपि तदनावश्यकत्वम्मन्वान आह-४७५ पूर्वमित्यादि । पूर्वं स्थापककर्तव्यप्रस्तावे । स्पष्टमन्यत् ।

एवं वृत्तीर्दर्शयित्वा नाट्योक्तीर्लक्षयितुमाह-अथ । नाट्योक्तयः । लक्ष्यन्ते-४७६ अश्राव्यमित्यादिना ।

४७६ यत् । अश्राव्यं परस्य श्रवणानर्हम् । खलु । वस्तु इतिवृत्तम् । तत् । इह रूपके । स्वगतम् । अत्र स्वशब्द आत्मशब्दस्याप्युपस्थापकः, तेन-क्वचित्-'आत्मगत'मित्यप्यभिहितं सङ्गच्छते । मतम् । सर्वश्राव्यम् । पुनः-प्रकाशं तत्सञ्ज्ञम् । स्यात् । यत् । तु पुनः । परावृत्यान्यत्र गत्वा । अन्यस्य । रहस्यम् । प्रकाश्यते । तत् । अपवारितम् । भवेत् । त्रिपताककरेण पताकात्रयसदृशेन हस्तेन । अन्यान् । अपवार्य निवर्त्य । कथाम् । अन्तरा मध्ये । जनान्ते कस्यापि जनस्य सन्निधौ । यत् । अन्योऽन्यामन्त्रणम् । स्यात् । तत् । जनान्तिकम् । यत् । नाट्ये रूपके । पात्रे प्रष्टव्यम् । विना । प्रयुज्यते । तत्-किम् । ब्रवीषि । इति 'कीर्त्यते'इति शेषः । यच्चैवम्-अनुक्तम् । अपि । अर्थम् । श्रुत्वेव । 'प्रयुज्यते'इति शेषः । तत् । आकाशभाषितम् । स्यात् ॥ ४३४-४३७ ॥

यः कश्चिदर्थो यस्माद्गोपनीयस्तस्यान्तरतः। ऊर्ध्वसर्वाङ्गुलिनामितानामिकं त्रिपताकलक्षणं करं कृत्वाऽन्येन सह यन्मन्त्र्यते तज्जनान्तिकम्। परावृत्यान्यस्य रहस्यकथनमपवारितम्। शेषं स्पष्टम्।

४७७ दत्तां सिद्धां च सेनां च वेश्यानां नाम दर्शयेत्।
दत्तप्रायं च वणिजां चेटचेट्योस्तथा पुनः ॥ ४३८ ॥
वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत्।

वेश्या यथा वसन्तसेनादिः। वणिग्विष्णुदत्तादिः। चेटः कलहंसादिः। चेटी मन्दारिकादिः।

४७८ नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकम् ॥ ४३९ ॥

यथा रामाभ्युदयादिः।

४७९ नायिकानायकाख्यानात्संज्ञा प्रकरणादिषु।

यथा मालतीमाधवादिः।

४८० नाटिकासट्टकादीनां नायिकाभिर्विशेषणम् ॥ ४४० ॥

यथा रत्नावली-कर्पूरमञ्जर्यादिः।

---

अश्राव्यं कथं श्रावणीयमित्याशङ्क्याह—यः। कश्चित्। अर्थः। यस्मात्। गोपनीयः। सः—तस्य। अन्तरतो व्यवहितत्वे भवतीत्यर्थः। त्रिपताककरेणेत्यस्याऽर्थं लक्षयन् जनान्तिकपदार्थमाह—ऊर्ध्वसर्वाङ्गुलिनामितानामिकमूर्ध्वं ( कृताः ) सर्वाङ्गुल्यो यत्र सोऽसौ नामिताऽधः कृताऽनामिका यत्र तादृश इति तं तथोक्तम्। करं हस्तम्। कृत्वा। अन्येन। सह। यत्। मन्त्र्यते विचार्य्यते तत्। जनान्तिकम्। सिंहनिरीक्षण-न्यायेनापवारितपदार्थं दर्शयति—परावृत्य स्थानान्तरं गत्वा। स्पष्टमन्यत्।

पात्राणां सञ्ज्ञां लक्षयति—४७७ दत्तामित्यादिना।

४७७ यदा—वेश्यानाम्। नाम। दर्शयेत् प्रयुञ्जीत। तदा—दत्तां दत्तान्तम्। च। सिद्धां सिद्धान्तम्। सेनां सेनान्तम्। च। 'कृत्वे'ति शेषः। 'दर्शये'दिति पूर्वतोऽन्वेति, एवम्परत्र। वणिजां वेश्यानाम्। च। यदा नाम दर्शयेत् तदा। दत्तप्रायं प्रायेण दत्तान्तं कृत्वेति भावः। तथा। चेटचेट्योः। पुनः। नाम यदा दर्शयेत् तदा—वसन्तादिषु 'ऋतुषु'इति शेषः। वर्ण्यस्य। वस्तुनः। नाम। यत्। भवेत्। 'तत् कृत्वे'ति शेषः। इदं त्ववधेयम्—अयं नियमः कल्पितेतिवृत्ते एव रूपके, अत एव—वेणीसंहारादौ बुद्धिमतिकासुसङ्गताऽऽदिसञ्ज्ञा सङ्गच्छते। यत्तूक्तं 'ब्रह्मक्षत्रियोः सञ्ज्ञा गोत्रकर्मानुरूपतः। शर्मान्ता चैव वर्मान्ता कार्या काव्ये विचक्षणैः॥' इत्यादि, तदपि न नियतम्। 'पुरूरवाश्चारुदत्तः' इत्यस्याप्रयोज्यत्वापत्तेः। इति दिक् ॥ ४३८ ॥

रूपकसञ्ज्ञाप्रकारमाह—४७८ गर्भितार्थप्रकाशकं गर्भितो रूपके निरूप्य दर्शिष्यमाणो योऽर्थस्तस्य प्रकाशकं सूचकम्। नाटकस्य। नाम। कार्यम् ॥ ४३९ ॥

उदाहरति—यथेत्यादिना। स्पष्टम्।

प्रकरणादेः सञ्ज्ञाविधानप्रकारं दर्शयति—४७९ नायिकानायकाख्यानात् नायिकानायकयोराख्यानं नाम तदततीति तथोक्ता। प्रकरणादिषु। आदिपदेन भाणादीनां ग्रहणम्। सञ्ज्ञा 'कार्ये'ति शेषः। एषोऽपि न नियमः। सौगन्धिकाहरणादौ व्यभिचारात्।

उदाहरति—यथेत्यादिना। स्पष्टम्।

नाटिकाऽऽदीनां सञ्ज्ञाविधानं लक्षयति—४८० नाटिकेत्यादिना। आदिपदेन। त्रोटकनाट्यरासकादीनां ग्रहणम्। स्पष्टमन्यत् ॥ ४४० ॥

उदाहरति—यथेत्यादिना। स्पष्टम्।

४८१ प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते ।

यथा शाकुन्तले—ऋषी 'गच्छावः' इत्यर्थं 'साधयावस्तावत्' इति ।

४८२ राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः ॥ ४४१ ॥
राजर्षिभिर्वयस्येति तथा विदूषकेण च ।
राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च ॥ ४४२ ॥
स्वेच्छया नामभिर्विप्रैर्विप्र आर्येति चेतरैः ।
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः ॥ ४४३ ॥
वाच्यौ नटीसूत्रधारावार्यनाम्ना परस्परम् ।
सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः ॥ ४४४ ॥
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः ।
वयस्येत्युत्तमैर्हंहो मध्यैरार्येति चाग्रजः ॥ ४४५ ॥
भगवन्निति वक्तव्याः सर्वैर्देवर्षिलिङ्गिनः ।
वदेद्राज्ञीं च चेटीं च भवतीति विदूषकः ॥ ४४६ ॥
आयुष्मन्नथिनं सूतो वृद्धं तातेति चेतरः ।
वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः ॥ ४४७ ॥
शिष्योऽनुजश्च वक्तव्योऽमात्य आर्येति चाधमैः ।
विप्रैरयममात्येति सचिवेति च भण्यते ॥ ४४८ ॥
साधो इति तपस्वी च प्रशान्तश्चोच्यते बुधैः ।
स्वगृहीताभिधः पूज्यः शिष्याद्यैर्विनिगद्यते ॥ ४४९ ॥
उपाध्यायेति चाचार्यो महाराजेति भूपतिः ।
स्वामीति, युवराजस्तु कुमारो भर्तृदारकः ॥ ४५० ॥
भद्रसौम्यमुखेत्येवमधमैस्तु कुमारकः ।
वाच्या प्रकृतिभी राज्ञः कुमारी भर्तृदारिका ॥ ४५१ ॥
पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैः स्त्रियः ।
हलेति सदृशी, प्रेष्या हञ्जे, वेश्याऽज्जुका तथा ॥ ४५२ ॥

---

अथ कविसमयसाम्राज्यं दर्शयति—४८१ प्रायेण । गमेः गच्छतेर्धातोः । स्थाने प्रयोक्तव्यत्वे । ण्यन्तकः साधिः । प्रयुज्यते । एवं च—एतादृशप्रयोगे न च्युतसंस्कृतत्वं शङ्कयेत, प्रत्युत तथा सहृदयत्वं । दृश्येते । प्रायेणेति तु गमेः प्रयोगोऽपि युज्यते इति निष्कृष्टम् ।

उदाहरति—यथेत्यादिना । स्पष्टम् ।

पात्राणां सम्बोध्यत्वप्रकारं लक्षयति—४८२ राजेत्यादिना । स राजा । अपत्यप्रत्ययेनापत्यसूचकपदेन । यथ पौरवरघुनन्दनेत्यादि । इतरो युवा बालश्च । गोत्रेणापत्यसूचकेन पदेन । अयममात्यः । प्रशान्तो विरक्तः

कुट्टिन्यम्बेत्यनुगतैः पूज्या च जरती जनैः ।
आमन्त्रणैश्च पाषण्डा वाच्याः स्वसमयागतैः ॥ ४५३ ॥
शकादयश्च सम्भाष्या भद्रदत्तादिनामभिः ।
यस्य यत्कर्म शिल्पं वा विद्या वा जातिरेव वा ॥ ४५४ ॥
तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितम् ।

अथ भाषाविभागः-

४८३ पुरुषाणामनीचानां संस्कृतं स्यात्कृतात्मनाम् ॥ ४५५ ॥
सौरसेनी प्रयोक्तव्या तादृशीनां च योषिताम् ।
आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत् ॥ ४५६ ॥
अत्रोक्ता मागधी भाषा राजान्तःपुरचारिणाम् ।
चेटानां राजपुत्राणां श्रेष्ठानां चार्धमागधी ॥ ४५७ ॥
प्राच्या विदूषकादीनां, धूर्तानां स्यादवन्तिजा ।
योधनागरिकादीनां दाक्षिणात्या हि दीव्यताम् ॥ ४५८ ॥
शवराणां शकादीनां शावरीं सम्प्रयोजयेत् ।
बाल्हीकभाषोदीच्यानां द्राविडी द्रविडादिषु ॥ ४५९ ॥
आभीरेषु तथाऽऽभीरी चाण्डाली पुक्कसादिषु ।
आभीरी शावरी चापि काष्ठपात्रोपजीविषु ॥ ४६० ॥
तथैवाङ्गारकारादौ पैशाची स्यात्पिशाचवाक् ।
चेटीनामप्यनीचानामपि स्यात्सौरसेनिका ॥ ४६१ ॥
बालानां षण्डकानां च नीचग्रहविचारिणाम् ।
उन्मत्तानामातुराणां सैव स्यात्संस्कृतं क्वचित् ॥ ४६२ ॥
ऐश्वर्येण प्रमत्तस्य दारिद्र्योपद्रुतस्य च ।
भिक्षुवल्कधरादीनां प्राकृतं सम्प्रयोजयेत् ॥ ४६३ ॥
संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च ।
देवीमन्त्रिसुतावेश्यास्वपि कैश्चित्तथोदितम् ॥ ४६४ ॥

---

**स्वगृहीताभिधः** स्वेन (स्वेच्छया)गृहीताऽभिधा पूज्यत्वसूचिका सञ्ज्ञा यस्य तथोक्तः । यथा-'भगवन् महाभागे' त्यादि । सुगृहीतेति पाठे तु शोभना गृहीताऽभिधा ख्यातिर्येन तादृश इत्यर्थः । **कुमारको** राजकुमारः । **प्रकृति-भिरमात्यादिभिः** प्रजाभिश्चेत्यर्थः । **अनुगतैर्वैश्यावशंवदैः** । **पाषण्डा** धूर्ताः । **स्वसमयागतैः** स्वेच्छया कल्पितैः सङ्केतैः । यथा-'अघोरघण्टकापालिके'त्यादि । **शकादयो** म्लेच्छाऽऽभीरादयः । **कर्म** मालाकरणादि । **शिल्पं** चित्ररचनादि । **विद्या** ज्योतिःपुराणादिज्ञानम् । स्पष्टमन्यत् ॥ ४४१-४५४ ॥

यस्य या भाषा रूपके स्यात्तस्य तां निर्देष्टुमाह-अथ । **भाषाविभागः** । दर्श्यते-४८३ **पुरुषाणामि**त्यादिना । स्पष्टम् ॥ ४५५-४६६ ॥

यद्देश्यं नीचपात्रं तु तद्देश्यं तस्य भाषितम् ।
कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः ॥ ४६५ ॥
योषित्सखीबालवेश्याकितवाप्सरसां तथा ।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तराऽन्तरा ॥ ४६६ ॥

आसामुदाहरणान्याकरेषु बोद्धव्यानि, भाषालक्षणानि मम तातपादानां भाषार्णवे ।

४८४ षट्त्रिंशल्लक्षणान्यत्र, नाट्यालङ्कृतयस्तथा ।
त्रयस्त्रिंशत्, प्रयोज्यानि वीथ्यङ्गानि त्रयोदश ॥ ४६७ ॥
लास्याङ्गानि दश यथालाभं रसव्यपेक्षया ।

यथालाभं प्रयोज्यानीति सम्बन्धः । अत्रेति नाटके । तत्र लक्षणानि—

४८५ भूषणाक्षरसङ्घातौ शोभोदाहरणं तथा ॥ ४६८ ॥
हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः ।
निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च ॥ ४६९ ॥
दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा ।
विशेषणनिरुक्ती च सिद्धिर्भ्रंशविपर्ययौ ॥ ४७० ॥
दाक्षिण्यानुनयौ मालाऽर्थापत्तिर्गर्हणं तथा ।
पृच्छा प्रसिद्धिः सारूप्यं सङ्क्षेपो गुणकीर्तनम् ॥ ४७१ ॥
लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा ।
लक्षणानि

तत्र—

४८६ गुणैः सालङ्कारैर्योगस्तु भूषणम् ॥ ४७२ ॥

---

आसामाकरेषु (महाकविप्रबन्धेषु) उदाहरणानि दृष्टचराणि, लक्षणानि च भाषार्णवे (स्वप्रबन्धे निरूपितानि) द्रष्टव्यानीत्याह-आसामित्यादिना । स्पष्टम् । 'एषा'मिति पाठस्तु सामान्याभिप्रायेण ।

नाटकीयवस्तुनो रमणीयताऽतिशयं प्रतिपादयितुं कर्तव्यं निर्दिशति-४८४षट्त्रिंशदित्यादिना । यत्र यदाकाङ्क्षितं योग्यं वा स्यात् तस्मिन् रसे तदेव लक्षणाद्यन्यतमं योज्यमिति भावः । स्पष्टमन्यत ॥ ४६७ ॥

कारिकाऽर्थं सुगमयितुमाह-यथालाभमित्यादि । स्पष्टम् ।

अथ लक्षणादीनि विभज्य लक्षयितुमाह-तत्र तेषु रसव्यपेक्षया प्रयोज्येषु लक्षणादिषु मध्ये । लक्षणानि नामतो निर्दिश्यन्ते-४८५भूषणेत्यादिना । लक्षणानि षट्त्रिंश 'द्भूषणे' त्यारभ्य 'प्रियवच' इत्यन्तमभिहितताभिधानानीति भावः । स्पष्टमन्यत् ॥ ४६८-४७१ ॥

अथैतानि क्रमाल्लक्षयितुमाह तत्र भूषणं तावल्लक्ष्यते-४८६ गुणैरित्यादिना ।

४८६ सालङ्कारैरनुप्रासादिसहितैः । गुणैर्माधुर्यादिभिः । तु पुनः । योगः परस्परम्मिश्रणम् । भूषणं तन्नाम लक्षणमित्यर्थः ॥ ४७२ ॥

यथा—

'आक्षिपन्त्यरविन्दानि मुग्धे तव मुखश्रियम्। कोषदण्डसमग्राणां किमेषामस्ति दुष्करम्॥२८७॥'

४८७ वर्णनाक्षरसङ्घातश्चित्रार्थैरक्षरैर्मितैः।

यथा शाकुन्तले-'राजा-कच्चित्सखीं वो नातिबाधते शरीरसंतापः। प्रियंवदा-संपदं लधोसहो उअसमं गमिस्सदि।'

४८८ सिद्धैरर्थैः समं यत्राप्रसिद्धोऽर्थः प्रकाशते॥ ४७३॥
श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते।

यथा--

'सद्वंशसंभवः शुद्धः कोटिदोऽपि गुणान्वितः। कामं धनुरिव क्रूरो वर्जनीयः सतां प्रभुः॥२८८॥'

४८९ यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात्॥ ४७४॥
साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतम्।

यथा--

'अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम्। का दिनश्रीर्विनार्केण का निशा शशिना विना २८९॥'

---

उदाहरति-यथा-'आक्षिपन्ती'त्यादौ।

'हे मुग्धे! अरविन्दानि कमलानि। तव। मुखश्रियम्। आक्षिपन्ति निन्दन्ति। ननु किमितीत्याशङ्कयाह-कोषदण्डसमग्राणां कोषैः (बीजकोषैः, निधिभिश्च) दण्डैः (नालैः, चतुर्थोपायैश्च) च समग्राणि परिपूर्णतया समृद्धानि तेषाम्। एषामरविन्दानाम्। किम्। दुष्करम्। अस्ति। न किमपीति भावः। अत्र च-अरविन्दानामचेतनतयाऽऽक्षेपकत्वासम्भवात्सादृश्यं कल्प्यत इति निदर्शनाऽलङ्कारेण माधुर्यप्रसादयोर्योग इति लक्षणसमन्वयो बोध्यः॥ २८७॥'

अक्षरसङ्घातो लक्ष्यते-४८७ चित्रार्थैः रमणीयार्थैः। मितैः कतिपयैः। अक्षरैः। वर्णना। अक्षरसङ्घातस्तन्नाम लक्षणम्।

उदाहरति-यथा। शाकुन्तलेऽभिज्ञानशाकुन्तले। 'राजा दुष्यन्तः। (प्रियंवदामनुसूयां च पृच्छति) कच्चित्। वो युष्माकम्। सखीम्। शरीरसन्तापः। शरीरे वर्तमाना पीडा। न। अतिबाधते। प्रियंवदा (उत्तरयति) संपदं साम्प्रतम्। लधोसहो लब्धौषधो लब्धमौषधं यस्य तादृशः शरीरसन्ताप इत्यर्थः। उअसमं उपशमम्। गमिस्सदि गमिष्यति। इदं तत्त्वम्-राज्ञा अशरीर (काम) सन्तापः शकुन्तलां कच्चिन्नातिबाधते इत्यभिप्रायानुकूलं पृष्ट्या प्रियंवदयोत्तारितमिदानीं तस्यौषधरूपो भवानुपलब्ध इति। एवं च साकूतोक्त्या। स्फुटं चित्रार्थत्वमिति।

शोभां लक्षयति-४८८ यत्र। सिद्धैः सम्पन्नैः। अर्थैः। समम्। अप्रसिद्धोऽसम्पन्नः। अर्थः। प्रकाशते। सा। श्लिष्टलक्षणचित्रार्था श्लिष्टमभिप्रायान्तरगर्भितं लक्षणं स्वरूपं यस्य अतएव चित्रो रमणीयोऽर्थो यत्र सा। शोभा। इति। अभिधीयते॥ ४७३॥

उदाहरति-यथा-'सद्वंशप्रभवः सन् साधुर्यो वंशः कुलं वेणुर्वा तस्मात्प्रभवतीति तथोक्तः। शुद्धः पूतः कीटदंशजरन्ध्ररहितश्च। कोटिदो बहुधनप्रदः कोट्याऽग्रभागेन द्यतीति वा। गुणान्वितः शौर्यादिसम्पन्नो मौर्व्योपस्कृतो वा। क्रूरः। प्रभुः। सताम्। कामं यथेष्टम्। धनुरिव चाप इव। 'धनुश्चापौ' इत्यमरः। वर्जनीयः। अत्र सिद्धैरन्वयादिभिः सममेव धनुषोऽप्यन्वयादिसद्भावः॥ २८८॥'

उदाहरणं लक्षयति-४८९ यत्र। तुल्यार्थयुक्तेन समानाभिप्रायकेण। वाक्येन। अत्र साधने तृतीया। अभिप्रदर्शनादभिप्रायदर्शनरूपाल्लिङ्गात्। अभिमतः। अर्थः। साध्यते। तत्। उदाहरणम्। मतम्॥४७४॥

उदाहरति-यथा-'जनातीतं जनेभ्यो लोकेभ्योऽतीतोऽसदृशतया व्यतिरिक्तो मृततया वा त्यक्तस्तम्। कान्तम्। अनुयान्त्या। त्वया। साधु। कृतम्। यतः-अर्केण सूर्येण। विना। दिनश्रीः। का।

**४९० हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात् ॥ ४७५ ॥**

यथा वेण्यां भीमं प्रति 'चेटी-एवं मए भणिदं भाणुमदि, तुह्माणं अमुक्केसु केसेसु कहं देवीए केसा संजमिअन्तित्ति ।'

**४९१ संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद्यदनिश्चयः ।**

यथा ययातिविजये—

'इयं स्वर्गाधिनाथस्य लक्ष्मीः, किं यक्षकन्यका। किं चास्य विषयस्यैव देवता,किमु पार्वती॥२९०॥'

**४९२ दृष्टान्तो यत्तु पक्षेऽर्थसाधनाय निदर्शनम् ॥ ४७६ ॥**

यथा वेण्याम्-'सहदेवः-आर्य, उचितमेवैतत्तस्या यतो दुर्योधनकलत्रं हि सा' इत्यादि ।

**४९३ तुल्यतर्को यदर्थेन तर्कः प्रकृतिगामिना ।**

यथा तत्रैव—

'प्रायेणैव हि दृश्यन्ते कामं स्वप्नाः शुभाशुभाः। शतसङ्ख्या पुनरियं सानुजं स्पृशतीव माम्॥२९१॥'

---

न काऽपि। शशिना चन्द्रमसा। विना। निशा रात्रिः। का। इदं हि पतिं विपन्नमपि सेवमानां प्रति कस्या अपि साध्व्याः, परलोके वा पत्या सह स्वर्गं प्राप्तां प्रति वा कस्याश्चिद्देवाङ्गनाया वचनमिदम् ॥ २८९ ॥'

हेतुं लक्षयति-४९० हेतुदर्शनात् कारणज्ञानात्। इष्टकृत् स्वार्थसम्पादकम्। समासोक्तं सङ्क्षिप्तमभिहितम्। वाक्यम्। हेतुः ॥ ४७५ ॥

उदाहरति-यथा। वेण्यां वेणीसंहारे। भीमम् (प्रति) 'चेटी। (प्राह) एवं एवम्। मए मया। भणिदं कथितम्। हे भाणुमदि भानुमति! तुम्हाणं युष्माकम्। अमुक्केसु अमुक्तेषु। केसेसु केशेषु सत्सु। कहं कथम्। देवीए देव्याः। केसा केशाः। सञ्जमिअंतित्ति संयम्यन्ते इति। अत्र द्रौपदीकेशासंयमनस्य हेतुर्भानुमतीकेशसंयमनं तद्दर्शनेन दुर्योधनवधोत्तरमेव देव्याः केशसंयमनम्भविष्यतीत्यभिमतार्थो भीमस्य सम्पन्नः ।

संशयं लक्षयति-४९१ अज्ञाततत्त्वस्य। वाक्ये। यत् यः (इदमव्ययम्)। अनिश्चयः। सः-संशयः उच्यते।

उदाहरति-यथा-ययातिविजये तदाख्ये रूपके। 'इयम्। स्वर्गाधिनाथस्येन्द्रस्य। लक्ष्मीः 'मूर्तिमती'ति शेषः। किम् 'वे'ति शेषः। यक्षकन्यका। किंच किंवा। अस्य। विषयस्य देशस्य। एव। देवता 'काऽपी'ति शेषः। किमु किमुत। पार्वती। अत्र हि स्फुटस्तत्त्वानिर्णयः ॥ २९० ॥'

दृष्टान्तं लक्षयति-४९२ यत्। तु। पक्षे। अर्थसाधनाय साध्यस्य साधनाय। समस्तपाठेऽप्ययमेवार्थः। निदर्शनं हेतुप्रदर्शनम्। तत-दृष्टान्तः ॥ ४७६ ॥

उदाहरति- यथा। वेण्यां वेणीसंहारे। 'सहदेवः (भीमं प्रति) आर्य! तस्या भानुमत्याः। एतत् साभिमानं विकत्थनम्। उचितम्। एव। यतः। सा भानुमती। दुर्योधनकलत्रम्। हि एव।' 'अइ जण्णसेणि! पंच ग्गामा पत्थीअतित्ति सुणीअति ता कीस दाणीं वि दे केसा ण संजमीअंति? (अयि याज्ञसेनि! पञ्च ग्रामाः प्रार्थ्यन्त इति श्रूयते तत् कस्मादिदानीमपि ते केशा न संयम्यन्ते?)' इति च तद्वाक्यम्।

तुल्यतर्कं लक्षयति-४९३ प्रकृतगामिना प्रकृतात्मना परिणमिष्यमाणेन। अर्थेन वस्तुना। यत् यः (इदमव्ययम्) तर्को भाव्यर्थसूचनम्। स तुल्यतर्कः।

उदाहरति-यथा। तत्र वेणीसंहारे। एव। (दुर्योधनो भानुमत्याः स्वप्नवृत्तान्तं श्रुत्वाऽऽह) 'प्रायेण। एव। हि। शुभाशुभाः शोभना अशोभनाश्च। स्वप्नाः। कामम्। दृश्यन्ते। इयम् 'सहि सुमरिदं अज्ज किल पमदवणे आसीणाए मह अग्गदो एव्व दिव्वरूविणा णउलेण अहिसदं वावादिदं (सखि! स्मृतम्, 'अद्य किल प्रमदवने आसीनाया ममाग्रत एव दिव्यरूपिणा नकुलेनाहिशतं व्यापादितम्)' इति वाक्यश्रवणेन प्रतिबोधितेति भावः। शतसङ्ख्या। पुनः। सानुजम्। माम्। स्पृशतीव। अत्र स्वप्नदर्शनं प्रकृतार्थे परिणामि ॥ २९१ ॥'

**४९४ संश्रयोऽर्थानुरूपो यः पदानां स पदोच्चयः ॥ ४७७ ॥**

यथा शाकुन्तले—'अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु संनद्धम् ॥ २९२ ॥'

अत्र पदपदार्थयोः सौकुमार्यं सदृशमेव ।

**४९५ यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।
परपक्षव्युदासार्थं तन्निदर्शनमुच्यते ॥ ४७८ ॥**

यथा—
'क्षात्रधर्मोचितैर्धर्मैरलं शत्रुवधे नृपाः । किं तु वालिनि रामेण मुक्तो बाणः पराङ्मुखे ॥ २९३ ॥'

**४९६ अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पना ।**

यथा शाकुन्तले—'इदं किलाव्याजमनोहरं वपुस्तपःक्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति ॥ २९४ ॥'

**४९७ प्राप्तिः केनचिदंशेन किञ्चिद्यत्रानुमीयते ॥ ४७९ ॥**

---

पदोच्चयं लक्षयति-२९४यः । अर्थानुरूपोऽयभिधेयसदृशः । पदानाम् । संश्रयः । सः । पदोच्चयः ॥४७७॥

उदाहरति-यथा । शाकुन्तलेऽभिज्ञानशाकुन्तले । 'अधर'इत्यादौ ।

'अधरोऽधरौष्ठः । किसलयरागः किसलयस्य रागो रक्तिमा तद्रूप इति यावत् । बाहू । कोमलविटपानुकारिणौ कोमलौ अभिनवोद्भवौ यौ विटपौ स्कन्धोर्ध्वशाखौ तदनुकारिणौ । यौवनम् । लोभनीयं स्पृहणीयम् । कुसुममिव । अङ्गेषु अवयवेषु । सन्नद्धं संलग्नम् । 'अत्राङ्गेष्विति बहुवचनेन वदने कान्तिमत्ता, नेत्रयोस्तरलता । कण्ठे कम्बुत्रिरेखावत्त्वम्, वक्षसि स्तनोज्जृम्भणम्, नाभौ गभीरता, नितम्बे मध्यनिम्नत्वम्, उभयभागे चतुरस्रत्वम्, जघनजङ्घाजानुमण्डलोरुदेशानां मांसलत्वम्, गतौ सविलासत्वमित्यादि ध्वनितम्'इति टिप्पणीकाराः । गतेरङ्गत्वाभावात् तत्र तथा सविलासत्वध्वनिश्चिन्त्यः । शकुन्तलां दृष्टवतो दुष्यन्तस्येयमुक्तिः,- अत्र स्फुटः प्रतिपाद्यायाः कोमलाङ्ग्याः शकुन्तलाया अनुरूपः कोमलपदविन्यासः ॥ २९२ ॥'

लक्ष्यं समर्थयते-अत्रेत्यादिना । पदार्थः प्रतिपाद्यः शकुन्तलारूपोऽर्थः । स्पष्टम् ।

निदर्शनं लक्षयति-४९५यत्र । परपक्षव्युदासार्थं परपक्षनिरसनाय । प्रसिद्धानां स्वपक्षसाधकतया ख्यातानाम् । अर्थानाम् । परिकीर्तनम् । क्रियते । तत् । निदर्शनम् । उच्यते ॥ ४७८ ॥

उदाहरति-यथा-'हे नृपाः वीराः । शत्रुवधे 'कर्तव्ये' इति शेषः । क्षात्रधर्मोचितैः । धर्मैः'अनुष्ठीयमानैरिति शेषः । अलं पर्याप्तम् । न तत्र धर्मविचारः कर्तव्य इति भावः । किंतु यतः( अव्ययानामनेकार्थत्वादिदमुक्तम् )। पराङ्मुखे सुग्रीवेण समं योधने व्यग्रे । वालिनि । रामेण । बाणः । मुक्तः प्रहृतः ॥ २८३ ॥'

अभिप्रायं लक्षयति-४९६ अभिप्राय इत्यादिना । अभूतार्थोऽसम्भवोऽर्थः । स्पष्टमन्यत् ।

उदाहरति-यथा । शाकुन्तलेऽभिज्ञानशाकुन्तले । 'इदमि'त्यादौ ।

'यः कण्वः । इदम् । किल । अव्याजमनोहरमव्याजेन वस्तुतया मनोहरम् । वपुः शकुन्तलायाः शरीरम् । तपःक्षमं तपश्चर्योपयोगि । साधयितुम् । इच्छति । सः । ऋषिः । ध्रुवम् । नीलोत्पलधारया नीलकमलाग्रभागेन । शमीलतां शमीवृक्षरूपां लताम् । 'समिल्लता'मिति पाठे तु काष्ठमात्रस्वरूपां लताम् । छेत्तुम् । व्यवस्यति चेष्टते । नीलकमलाग्रभागेन शमीछेदनमिव शकुन्तलायाः शरीरेण तपश्चर्या न सम्भवतीति भावः । इदं शकुन्तलां तपस्विकन्यावेषेण नाटयन्तीं पश्यतो दुष्यन्तस्य वचः । अत्र वंशस्थं छन्दः, तल्लक्षणं च प्रागुक्तम् ॥२९४॥'

प्राप्तिं लक्षयति-४९७ प्राप्तिरित्यादिना । अंशेन विशेषणेन । स्पष्टमन्यत् ॥ ४७९ ॥

यथा मम प्रभावत्याम्—'अनेन खलु सर्वतश्चरता चञ्चरीकेणावश्यं विदिता भविष्यति प्रियतमा मे प्रभावती ।'

४९८ विचारो युक्तिवाक्यैर्यदप्रत्यक्षार्थसाधनम् ।

यथा मम चन्द्रकलायाम्—'राजा—नूनमियमन्तःपिहितमदनविकारा वर्तते । यतः ।

हसति परितोषरहितं निरीक्ष्यमाणाऽपि नेक्षते किंचित् ।
सख्यामुदाहरन्त्यामसमञ्जसमुत्तरं दत्ते ॥ २९५ ॥'

४९९ देशकालस्वरूपेण वर्णना दिष्टमुच्यते ॥ ४८० ॥

यथा वेण्याम्—'सहदेवः—

यद्वैद्युतमिव ज्योतिरार्ये क्रुद्धेऽद्य सम्भृतम् । तत्प्रावृडिव कृष्णेयं नूनं संवर्धयिष्यति ॥२९६॥'

५०० उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः ।

यथा शाकुन्तले—

'शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृताऽपि रोषणतया मा स्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ २९७ ॥'

---

उदाहरति—यथा । मम । प्रभावत्याम् । 'अनेनै'त्यादौ । चञ्चरीको भ्रमरः । स्पष्टमन्यत् । 'अत्र हि सर्वतः सौरभलोभेन भ्रमणेनांशेन सुरभितवदनायाः प्रभावत्या दर्शनं निश्चितम् । इति ग्रन्थस्य हृदयम् ।

विचारं लक्षयति—४९८ युक्तिवाक्यैर्नीतिपूर्णैर्वाक्यैः । यत् । अप्रत्यक्षार्थसाधनं परोक्षस्यार्थस्य निर्णयः । विचारः ।

उदाहरति—यथा । मम । चन्द्रकलायां तदाख्यायां नाटिकायाम् । 'राजा—नूनम् असंशयम् । इयं चन्द्रकलाऽभिधेया प्रेयसी । अन्तःपिहितमदनविकाराऽन्तर्ज्वलत्कामाग्निना पुटपाकसदृशी । वर्तते । यतः—

परितोषरहितमुदासीनतया । हसति । निरीक्ष्यमाणा परैरवलोकविषयीक्रियमाणा । अपि । किञ्चित् । न ईक्षते पश्यति । सख्यां प्रियसहचर्याम् । उदाहरन्त्यां क्ष्वेलितं कथयन्त्याम् । असमञ्जसमप्रियम् । उत्तरम् । दत्ते ॥ २९५ ॥'

दिष्टं लक्षयति—४९९ देशकालानुसारेण देशकालानुरूपतया । वर्णना । दिष्टम् । उच्यते ॥ ४८० ॥

उदाहरति—यथा । वेण्यां वेणीसंहारे । 'सहदेवः 'नेपथ्याभिमुखमवलोक्यात्मगत'मिति शेषः । क्रुद्धे । आर्ये ज्येष्ठे भीमसेने इति यावत् । यत् । वैद्युतमिव विद्युत्सम्बन्धीव । ज्योतिस्तेजः क्रोधाग्निरिति यावत् । सम्भृतं स्थितम् । तत् तेजः (कर्म) प्रावृडिव वर्षा इव । इयम् । कृष्णा द्रौपदी । नूनम् । संवर्धयिष्यति ॥ २९६ ॥'

उपदिष्टं लक्षयति—५०० शास्त्रानुसारतो यथाशास्त्रं सदिति भावः । मनोहारि । वाक्यम् । उपदिष्टम् ।

उदाहरति—यथा । शाकुन्तले । ( कण्वः शकुन्तलां प्रत्याह )—'गुरून् श्वश्रूप्रभृतीन् पूज्यजनान् । शुश्रूषस्व सेवस्व । सपत्नीजने पत्युर्नायिकान्तरे । प्रियसखीवृत्तिं प्रियसख्युचितं व्यवहारं प्रकटय । विप्रकृता तिरस्कृता । अपि । रोषणतयेर्ष्यया । भर्तुः । प्रतीपं प्रतिकूलताम् । मास्म नैव । गमो याहि । परिजने सेवकजने । भूयिष्ठमतिशयेन । दक्षिणा चतुरा सर्वतोऽनुकूलताऽऽपादनशीलेति यावत् । भव । भाग्येषु सपत्नीनामैश्वर्येषु । अनुत्सेकिन्यनुत्कण्ठिता भव । एवं मदुपदिष्टमार्गेण प्रवर्तमानाः । युवतयः स्त्रियः । गृहिणीपदं गृहाधीश्वरीत्वम् । यान्ति । इतः—वामाः प्रतिकूलशीलाः 'पुनः' इति शेषः । कुलस्य । आधयः शोककारणभूता भवन्ति । यद्वा—वामाः सुन्दर्यः । कुलस्याधय उज्जीवनाशारूपा भूत्वा गृहिणीपदं यान्तीत्यर्थः । 'वामौ वल्गुप्रतीपौ द्वौ' इत्यमरः । 'आधिर्मानसपीडायां प्रत्याशायां च बन्धने । व्यसने चाप्यधिष्ठाने' इति विश्वः । अत्र—शार्दूलविक्रीडितं वृत्तम् ॥ २९७ ॥'

**५०१ गुणातिपातः कार्यं यद्विपरीतं गुणान्प्रति ॥ ४८१ ॥**

यथा मम चन्द्रकलायां चन्द्रं प्रति—

'जइ संहरिज्जइ तमो घेप्पइ सअलेहिं ते पाओ।
वससि सिरे पसुवइणो तहवि हु इत्थीअ जीअणं हरसि ॥ २९८ ॥'

**५०२ यः सामान्यगुणोद्रेकः स गुणातिशयो मतः।**

यथा तत्रैव—'राजा—( चन्द्रकलाया मुखं निर्दिश्य। )
असावन्तश्चञ्चद्विकचनवनीलाब्जयुगल-स्तलस्फूर्जत्कम्बुर्विलसदलिसङ्घात उपरि।
विना दोषासङ्गं सततपरिपूर्णाखिलकलः कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि! ते॥२९९॥'

**५०३ सिद्धानर्थान्बहूनुक्त्वा विशेषोक्तिर्विशेषणम् ॥ ४८२ ॥**

यथा—
'तृष्णापहारी विमलो द्विजावासो जनप्रियः। ह्रदः पद्माकरः, किंतु बुधस्त्वं स जलाशयः॥३००'

**५०४ पूर्वसिद्धार्थकथनं निरुक्तिरिति कीर्त्यते।**

---

गुणातिपातं लक्षयति—५०१ यद्। गुणान्। प्रति। विपरीतं प्रतिकूलम्। कार्यम्। सत्स्वपि गुणेषु दुष्टात्मना भवनरूपमित्यर्थः। गुणातिपातः ॥ ४८१ ॥

उदाहरति—यथा। मम। चन्द्रकलायाम्। चन्द्रम्। प्रति 'नायकविरहिता चन्द्रकला आहे'ति शेषः। 'जइ यदि। तमो तमः। संहरिज्जइं संह्रियते 'त्वये'ति शेषः। तर्हि—ते तव। पाओ पादः किरणः। 'चरण'मिति श्लेषः। सअलेहिं सकलैः। घेप्पइ गृह्यते। संहर्तुश्चरणोपासनं विरुद्ध, मथाप्यद्य सम्भवतीति भावः। पसुवइणो पशुपतेर्देवदेवस्य महेश्वरस्येति यावत्। सिरे शिरसि। वससि निवससि। तहवि तथाऽपि तत्पुनरिति यावत्। इत्थीअ स्त्रियाः मादृश्या वियोगिन्या इति यावत्। जीअणं जीवनम्। हरसि। महादेवेन यदा शिरसि स्थापितः तत्पुनस्त्वं स्त्रिया नतु कस्यचिद्वीरस्य प्राणान् हर्तुं प्रवृत्त इति भावः ॥ २८९ ॥'

गुणातिशयं लक्षयति—५०२ यः। सामान्यगुणोद्रेकः सामान्यगुणेभ्य उपमानोपमेयवृत्तिसाधारणधर्मेभ्य उद्रेक अतिशयित्वप्रतिपादनम्। सः। गुणातिशयः। मतः।

उदाहरति—यथा। तत्र चन्द्रकलायाम्। एव। 'राजा ( चन्द्रकलायाः मुखं निर्दिश्य )—हे सुमुखि। असौ। अन्तश्चञ्च...अन्तर्गर्भे चञ्चत्स्फुरत् यत् विकचं प्रफुल्लं नवलीलाब्जयुगलं तद्रूपं नेत्रद्वयं यस्य सः। तलस्फूर्जत्कम्बुस्तलेऽधोभागे स्फूर्जन् कम्बुः कण्ठरूपः शङ्खो यस्य सः। उपरि। विलसदलिसङ्घातो विलसन्नलीनां भ्रमराणां सङ्घातो वालपुञ्जरूपो यस्य सः। दोषासङ्गं रात्रेः सम्बन्धम्। अन्यत्र दूषणानां सम्पर्कम्। विना। सततपरिपूर्णाखिलकलः सततं निरन्तरं परिपूर्णा अखिलाः कलाः षोडशभागाः कलाशास्त्राणि वा यस्य तथोक्तः। विगलितकलङ्को दूरीकृतलाञ्छनः। चन्द्रः। कुतः। प्राप्तः। अत्र साधारणधर्माणामतिशय उपमेयगतः। एवमन्यत्। अत्र शिखरिणीवृत्तम् ॥ २९९ ॥'

विशेषणं लक्षयति—५०३ सिद्धान् प्रसिद्धान्। बहून्। अर्थान् वस्तूनि। उक्त्वा। विशेषोक्तिर्भेदाभिधानम्। विशेषणम् ॥ ४८२ ॥

उदाहरति—यथा। 'तृष्णाऽपहारी जलदानेन धनदानेन च परस्य तृषां लिप्सां वाऽपहरतीति तथोक्तः। विमलोऽनुत्थितरजस्कः पूतश्च। द्विजावासो द्विजानां पक्षिणां ब्राह्मणानां वाऽऽवास आश्रयो यत्र यस्माद्वा सः। जनप्रियः। पद्माकरः कमलानामाकरभूतः पद्माया लक्ष्म्या वाऽऽकरः। ह्रदः। किंतु। हे राजन्—त्वं भवान्। बुधः। स ह्रदः। पुनः—जडाश्रयो जलाश्रय इति तु श्लिष्टाऽर्थः ॥ ३०० ॥'

निरुक्तिं लक्षयति—५०४ पूर्वसिद्धार्थकथनं पूर्वतः सम्पन्नानामर्थानां प्रतिपादनम्। निरुक्तिः। इति। कीर्त्यते।

यथा वेण्याम्—

'निहताशेषकौरव्यः क्षीबो दुःशासनासृजा । भङ्क्ता दुर्योधनस्योर्वोर्भीमोऽयं शिरसा नतः॥३०१॥'

**५०५ बहूनां कीर्तनं सिद्धिरभिप्रेतार्थसिद्धये ॥ ४८३ ॥**

यथा—

'यद्वीर्यं कूर्मराजस्य यश्च शेषस्य विक्रमः । पृथिव्या रक्षणे राजन्नेकत्र त्वयि तत्स्थितम्॥३०२॥'

**५०६ दृप्तादीनां भवेद्भ्रंशो वाच्यादन्यतरद्वचः ।**

वेण्याम्—कञ्चुकिनं प्रति 'दुर्योधनः—

सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे न चिरात्पाण्डुसुतः सुयोधनम् ॥३०३॥'

**५०७ विचारस्यान्यथाभावः संदेहात्तु विपर्ययः ॥ ४८४ ॥**

यथा—

'मत्वा लोकमदातारं संतोषे यैः कृता मतिः । त्वयि राजति ते राजन्न तथा व्यवसायिनः॥३०४॥'

**५०८ दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्तनम् ।**

वाचा यथा—

'प्रसाधय पुरीं लङ्कां राजा त्वं हि विभीषण । आर्येणानुगृहीतस्य न विघ्नः सिद्धिमन्तरा॥३०५॥'

---

उदाहरति-यथा । वेण्यां वेणीसंहारे ( भीमः कृतकार्यो युधिष्ठिरचरणान्तिकं प्रतिपद्याह ) 'निहिताशेषकौरव्यो निहता अशेषाः कौरव्या दुर्योधनादयो येन सः । दुःशासनासृजा दुःशासनरुधिरेण लक्षणया तद्रूपमधुपानेन । क्षीबो मत्तः । दुर्योधनस्य । ऊर्वोः । भङ्क्ता हन्ता अयम् । भीमः । शिरसा । नतः 'त्वा'मिति शेषः॥३०१॥'

सिद्धिं लक्षयति-५०४ अभिप्रेतार्थसिद्धयेऽभिमतस्यार्थस्य निष्पत्त्यर्थम् । बहूनामेकव्यतिरिक्तानामित्यर्थः । अत्रापि बहुवचनमविवक्षितम् । कीर्त्तनम् । सिद्धिः ॥ ४८३ ॥

उदाहरति-यथा- 'यद्वीर्य'मित्यादौ । स्पष्टोऽर्थः । अत्र हि पृथिवीपालनभारासहिष्णुत्वातिशयं बोधयितुं राज्ञि कूर्मशेषयोर्गुणसद्भावकथनम् ॥ ३०२ ॥

भ्रंशं लक्षयति-५०६ दृप्तादीनाम् । आदिपदेन-हृष्टदुःखितोद्विग्नादीनां ग्रहणम् । वाच्याद्वक्तुं युक्तात् । अन्यतरद्भिन्नम् । वचः । भ्रंशः । भवेत् ।

उदाहरति-वेण्यां वेणीसंहारे । 'दुर्योधनः । कञ्चुकिनम् । प्रति । 'आहे'ति शेषः ।

पाण्डुसुतो युधिष्ठिरः । स्वबलेन निजपराक्रमेण नतु परसाहाय्येन । सहभृत्यगणमनुचरसहितम् । सबान्धवं बन्धुजनसहितम् । सहमित्रं कर्णादिसहितम् । ससुतं सलक्ष्मणादिपुत्रवर्गम् । सहानुजं दुर्योधनादिसहितम् । सुयोधनम् । न चिरात् झटिति । संयुगे सङ्ग्रामे । निहन्ति । अत्र 'पाण्डुसुतं सुयोधन' इति वक्तव्यम्, किन्तु प्रमादात्तथा विपरीतमुक्तमिति भ्रंशः । अत्र सुन्दरीवृत्तम्, तल्लक्षणं च यथोक्तम्, 'विषमे ससजा गुरुः समे सभरा ल्गौ यदि सुन्दरी तदा ।' इति ॥ ३३० ॥'

विपर्ययं लक्षयति-५०७ सन्देहात् । तु पुनः । विचारस्य चिन्तितार्थस्य । अन्यथाभावः । विपर्ययः॥४८४॥

उदाहरति-यथा-यैः । लोकं संसारम् । अदातारं कृपणम् । मत्वा । सन्तोषे । मतिर्निश्चयः । कृता । हे राजन् ! त्वयि । राजति विराजमाने सति । न । तथा । 'यथापूर्वं सर्वे लोकं कृपणं ज्ञातवन्त' इति शेषः । व्यवसायिनः । अत्र त्वादृशेऽदातृत्वस्य विचाराभावः किन्तु दातृत्वस्यैवेति पूर्वविचारत्यागः ॥ ३०४ ॥'

दाक्षिण्यं लक्षयति-५०८ चेष्टया । वाचा । च-परचित्तानुवर्त्तनं सेवनीयजनाभिप्रायानुकूलतया भवनमिति भावः । दाक्षिण्यम् ।

उदाहरति-वाचा 'परचित्तानुवर्त्तन'मिति शेषः । यथा-( लक्ष्मणो विभीषणं प्रत्याह ) 'हे विभीषण

एवं चेष्टयापि ।

५०९ वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम् ॥ ४८५ ॥

यथा वेण्याम्-अश्वत्थामानं प्रति 'कृपः-दिव्यास्त्रग्रामकोविदे भारद्वाजतुल्यपराक्रमे किं न सम्भाव्यते त्वयि ।'

५१० माला स्याद्यदभीष्टार्थं नैकार्थप्रतिपादनम् ।

यथा शाकुन्तले-'राजा-

किं शीतलैः क्लमविमर्दिभिरार्द्रवातं सञ्चारयामि नलिनीदलतालवृन्तैः ।
अङ्के निवेश्य चरणावुत पद्मताम्रौ संवाहयामि करभोरु ! यथासुखं ते ॥ ३०६ ॥'

५११ अर्थापत्तिर्यदन्यार्थोऽर्थान्तरोक्तेः प्रतीयते ॥ ४८६ ॥

यथा वेण्याम्-द्रोणोऽश्वत्थामानं राज्येऽभिषेक्तुमिच्छतीति कथयन्तं कर्णं प्रति 'राजा-साधु अङ्गराज ! साधु । कथमन्यथा-

दत्त्वाभयं सोऽतिरथो वध्यमानं किरीटिना ।
सिन्धुराजमुपेक्षेत नैवं चेत्कथमन्यथा ॥ ३०७ ॥'

५१२ दूषणोद्घोषणायां तु भर्त्सना गर्हणं तु तत् ।

---

लङ्काम् । पुरीम् । प्रसाधयालङ्कुरु । हि यतः । त्वम् । हि । अस्याः राजा । कथमहमित्यत आह-आर्येण श्रीरामेण । अनुगृहीतस्य । सिद्धिम् । अन्तरा विना । न । विघ्नः किंतु-सिद्धिर्भवत्येवेति भावः ॥३०५॥'

एवम् । चेष्टया । अपि । 'ऊह्यमुदाहरण'मिति शेषः । तद् यथाऽभिज्ञानशाकुन्तले 'तदहमेनामनृणां करोमि' इत्यङ्गुलीयकं ददाति ।' इत्यत्र हि-अङ्गुलीयकदानेन शकुन्तलायाः प्रीणनम् ।

अनुनयं लक्षयति-५०९स्निग्धैः । वाक्यैः । अर्थस्य कार्यस्य । साधनं सम्पादनम् । अनुनयः ॥ ४८५ ॥

उदाहरति-यथा । वेण्यां वेणीसंहारे । अश्वत्थामानम् । प्रति । 'कृपः ( आह ) । दिव्यास्त्रग्रामकोविदे दिव्यानि यान्यस्त्राणि तेषां ग्रामः साकल्यं तस्य कोविदश्चतुरस्तस्मिन् । भारद्वाजतुल्यपराक्रमे द्रोणानुरूपपराक्रमशालिनि । त्वयि अश्वत्थाम्नि । किम् । न । सम्भाव्यते किंतु सर्वं सम्भाव्यते इति भावः ।'

मालां लक्षयति-५१० यत् । अभीष्टार्थमभिप्रेतार्थसिद्ध्यै । नैकार्थप्रतिपादनमनेकोपायानुष्ठानम् । माला । स्यात् ॥ ४८६ ॥

उदाहरति-यथा । शाकुन्तले 'राजा-शीतलैः सन्तापहरणक्षमैः । अत एव-क्लमविमर्दिभिः क्लमं ग्लानिं विमर्दयन्तीत्येवंशीलैः । नलिनीदलतालवृन्तैः कमलिनीदलरूपव्यजनैः । किम् । आर्द्रवातं शीतलं पवनम् । सञ्चारयामि । उतायवा । हे करभोरु ! अङ्के उत्सङ्गे । निधाय । पद्मताम्रौ रक्तकमलसदृशौ । ते । चरणौ । यथासुखं यथा क्लेशो न भवेत्तथेति भावः । संवाहयामि प्रापयामि । अत्र दुष्यन्तस्य सुरतार्थं वायुसञ्चारणाद्युपायालम्बनम् । अत्र वसन्ततिलकं वृत्तम् ॥ ३०६ ॥'

अर्थापत्तिं लक्षयति-५११ यत् यदि । अर्थान्तरोक्तेरन्यार्थकथनेन । अन्यार्थस्तद्भिन्नोऽभिप्रायः । प्रतीयते । तर्हि-अर्थापत्तिः ॥ ४८६ ॥

उदाहरति-यथा । वेण्यां वेणीसंहारे । 'द्रोणः...अङ्गराजाङ्गदेशाधिराज कर्ण ।... स द्रोणः । अतिरथोऽमितरथिभिः सममेकः सन् योद्धुं प्रत्युत तांश्च पराजेतुं समर्थः । किरीटिनाऽर्जुनेन ।.. सिन्धुराजं जयद्रथम् । अन्यथा किरीटी तं कथं हन्तुं प्रभवेदिति भावः । स्पष्टमन्यत् अत्र हि द्रोणेन जयद्रथवधापेक्षयाऽश्वत्थाम्नोऽभिषेक एवाभिमत इति स्थिरीकरणम् ॥ ३०७ ॥'

गर्हणं लक्षयति-५१२ दूषणोद्घोषणायामित्यादिना । भर्त्सना तिरस्कारः । स्पष्टमन्यत् ।

यथा तत्रैव-कर्णं प्रति 'अश्वत्थामा-

निर्वीर्यं गुरुशापभाषितवशात्किं मे तवेवायुधं
सम्प्रत्येव भयाद्विहाय समरं प्राप्तोऽस्मि किं त्वं यथा।
जातोऽहं स्तुतिवंशकीर्तनविदां किं सारथीनां कुले
क्षुद्रारातिकृताप्रियं प्रतिकरोम्यस्त्रेण नास्त्रेण यत्॥ ३०८॥'

५१३ अभ्यर्थनापरैर्वाक्यैः पृच्छाऽर्थान्वेषणं मता॥ ४८७॥

यथा तत्रैव-'सुन्दरकः-अज्जा, अवि णाम सारधिदुदिओ दिट्ठो तुह्मेहिं महाराओ दुय्योधणो ण वेत्ति।'

५१४ प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम्।

यथा विक्रमोर्वश्याम्-'राजा-

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ।
स्वयं कृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः॥ ३०९॥'

५१५ सारूप्यमभिभूतस्य सारूप्यात्क्षोभवर्धनम्॥ ४८८॥

यथा वेण्याम्-दुर्योधनभ्रान्त्या भीमं प्रति 'युधिष्ठिरः-दुरात्मन्, दुर्योधनहतक-'इत्यादि।

---

उदाहरति-यथा। तत्र वेणीसंहारे। एव। कर्णम्। प्रति।'अश्वत्थामा (आह)

किम्। तवेव। मे मम। आयुधं शस्त्रम्। गुरुशापभाषितवशात् गुरोः शापमहिम्ना। निर्वीर्यमकिञ्चित्करम्। किम्। यथा। त्वम्। सम्प्रतीदानीम्। एव। भयात्। समरं सङ्ग्रामम्। विहाय। प्राप्तः। तथा-अस्म्यहम्। 'प्राप्त' इति पूर्वतोऽन्वेति। किम्। अहम्। त्वमिवेति शेषः। स्तुतिवंशकीर्त्तनविदां स्तुतिः प्रशंसा वंशकीर्त्तनं चेति ते विदन्ति जानन्तीति तेषाम्। सारथीनाम्। कुले। जातः। अहम्। यत्। क्षुद्रारातिकृताप्रियं क्षुद्रा येऽरातयः शत्रवः तैः कृतमप्रियम्। अस्त्रेणाश्रुपातेन। प्रतिकरोमि। अस्त्रेण। न। 'प्रतिकरोमी'ति पूर्वतोऽन्वेति। अत्र शार्दूलविक्रीडितं वृत्तम्॥ ३०८॥'

पृच्छां लक्षयति-५१३ अभ्यर्थनापरैः सविनयैः। वाक्यैः। अर्थान्वेषणं कार्यगवेषणम्। पृच्छा। मता॥ ४८७॥

उदाहरति-यथा। तत्र वेणीसंहारे। एव। 'सुन्दरकः कर्णसारथिः। अज्जा आर्याः। अवि अपि। णाम। नाम। सारधिदुदिओ सारथिद्वितीयः। महाराओ महाराजः। दुय्योधणो दुर्योधनः। तुह्मेहिं युष्माभिः। दिट्ठो दृष्टः। ण वेत्ति न वेति।'

प्रसिद्धिं लक्षयति-५१४उत्कृष्टैः। लोकसिद्धार्थैर्लोकप्रसिद्धैः कार्यैः। अर्थसाधनम्। प्रसिद्धिः।

उदाहरति-यथा। विक्रमोर्वश्याम्। 'राजा सोऽय'मिति शेषः। यस्य। सूर्याचन्द्रमसौ सूर्यश्चन्द्रश्च। मातामहपितामहौ मातुः पिता, पितुः पिता च। यः। च। स्वयमात्मना। उर्वश्या तदाख्यया देवाङ्गनया। भुवा पृथिव्या। च। इति-द्वाभ्याम्। पतिः। कृतः। (इदमवोध्यम्) पुरूरवाश्चन्द्रपुत्रस्य बुधस्य पुत्र इति चन्द्रस्तस्य पितामहः। सूर्यपौत्रस्य मानवस्य सुद्युम्नस्य 'इतःप्रभृतीह य आगन्ता स स्त्री भविष्यती'ति रुद्रेण प्रशप्ते देशे प्रविष्टस्य स्त्रीत्वे उत्पन्न इति सूर्यो मातामहः। यद्यपि तथा प्रमातामहत्वं तथाऽप्युपचारात्तथा प्रयोगः। इति॥ ३०९॥'

सारूप्यं लक्षयति-५१५ अभिभूतस्य। तिरस्कृतस्य। 'अनुरूपस्ये'ति पाठान्तरे सदृशस्येत्यर्थः। स्पष्टमन्यत्॥ ४८८॥

उदाहरति-यथा। वेण्यां वेणीसंहारे। स्पष्टमन्यत्।

५१६ सङ्क्षेपो यत्तु सङ्क्षेपादात्माऽन्यार्थे प्रयुज्यते ।

यथा मम चन्द्रकलायाम्-'राजा-प्रिये,

'अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि मुधा ।
(आत्मानं निर्दिश्य) अयमीहितकुसुमानां सम्पादयिता तवास्ति दासजनः ॥ ३१० ॥'

५१७ गुणानां कीर्तनं यत्तु तदेव गुणकीर्तनम् ॥ ४८९ ॥

यथा तत्रैव-

'नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि-' इत्यादि ।

५१८ सलेशो भण्यते वाक्यं यत्सादृश्यपुरःसरम् ।

यथा वेण्याम्-'राजा-

'हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम् ।
या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति ॥ ३११ ॥'

५१९ मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत् ॥ ४९० ॥

यथा-

'रतिकेलिकलः किञ्चिदेष मन्मथमन्थरः ।
पश्य सुभ्रु ! समालम्भात्कादम्बश्चुम्बति प्रियाम् ॥ ३१२ ॥''

५२० विशेषार्थोहविस्तारोऽनुक्तसिद्धिरुदीर्यते ।

---

सङ्क्षेपं लक्षयति-५१६ यत् यतः । तु । अन्यार्थे । सङ्क्षेपाल्लघूकृत्य । आत्मा । प्रयुज्यते । सः-सङ्क्षेपः ।

उदाहरति-यथा । मम । चन्द्रकलायाम् । 'राजा । (कुसुमावचयं कुर्वन्तीं प्रत्याह) । हे प्रिये !-मुधा व्यर्थम् । शिरीषकुसुमपेलवानि शिरीषपुष्पाणीव कोमलानि । अङ्गानि । किम् । खेदयसि । ननु कस्तर्हि पुष्पाण्यवचिनुयादित्याह-(आत्मानम् । निर्दिश्य लक्षयित्वा) अयम् । तव । दासजनः सेवकः । ईहितकुसुमानामभिलषितानां पुष्पाणाम् । सम्पादयिता सङ्ग्रहीताऽवतिष्ठते । अत्रात्मनो दासत्वेनोद्भावनम् । आर्या छन्दः ॥ ३१० ॥'.

गुणकीर्त्तनं लक्षयति-५१७ गुणानामित्यादिना । स्पष्टम् ॥ ४८९ ॥

उदाहरति-यथा । तत्र तस्यां चन्द्रकलायाम् । एव । 'नेत्रे..' इत्यादि । व्याख्यातपूर्वमिदम् ।

लेशं लक्षयति-५१८ यत् । सादृश्यपुरःसरं सादृश्यतात्पर्यकम् । वाक्यम् । भण्यते उच्चार्यते । सः । लेशः ।

उदाहरति-यथा वेण्यां वेणीसंहारे । 'राजा दुर्योधनः (विनयन्धरं कञ्चुकिनं प्रत्याह) शिखण्डिनं क्लीबत्वात् दत्ताभयं द्रुपदपुत्रम् । पुरस्कृत्य । जरति वृद्धे । 'जीनो जीर्णो जरन्नपी'त्यमरः । गाङ्गेये गङ्गानन्दने भीष्मे । हते निधनं प्रापिते । या । पाण्डुपुत्राणाम् । श्लाघाऽपयश इति भावः । सा । एव । अस्माकमेकाकिनमशस्त्रं बालमभिमन्युं निहतवताम् । भविष्यति । अत्र हि पाण्डवकर्त्तृकभीष्महननस्य सादृश्योद्भावनम् ॥ ३११ ॥'

मनोरथं लक्षयति-५१९ यत् यतः । भङ्ग्यन्तरेण प्रकारान्तरेण । 'व्याजच्छलनिभे भङ्गि'रिति रभसः । अभिप्रायस्य । उक्तिः कथनम् । तु । मनोरथः ॥ ४९० ॥

उदाहरति-यथा-'हे सुभ्रु ! पश्य । एषः । रतिकेलिकलो रत्यै केलिकला यस्य तथोक्तः । अत एव-किञ्चित् । मन्मथमन्थरो मन्मथः कामस्तेन मन्थरः शिथिलोऽन्यतो विमुखः । समालम्भादादराधिक्येन । कादम्बो हंसः । 'कादम्बः कलहंसः स्या'दित्यमरः । प्रियां हंसीम् । चुम्बति । अत्र स्वस्य चुम्बनाभिप्रायः सूचितः ॥ ३१२ ॥'

अनुक्तसिद्धिं लक्षयति-५२० विशेषार्थोहविस्तारो विशेषो रूपलावण्यातिशयस्तस्यार्थो ज्ञापनं तदर्थं य ऊहायाथेष्टाया विस्तारः । अनुक्तसिद्धिः । उदीर्यते कथ्यते ।

यथा-गृहवृक्षवाटिकायाम्-

'दृश्येते तन्वि यावेतौ चारुचन्द्रमसं प्रति । प्राज्ञे! कल्याणनामानावुभौ तिष्यपुनर्वसू ॥३१३॥'

५२१ स्यात्प्रमाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषणम् ॥ ४९१ ॥

यथा शाकुन्तले-

'उदेति पूर्वं कुसुमं ततः फलं घनोदयः प्राक्तदनन्तरं पयः ।
निमित्तनैमित्तिकयोरयं विधिस्तव प्रसादस्य पुरस्तु सम्पदः ॥ ३१४॥'

अथ नाट्यालंकाराः-

५२२ आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः ।
उत्प्रासनस्पृहाक्षोभपश्चात्तापोपपत्तयः ॥ ४९२ ॥
आशंसाध्यवसायौ च विसर्पोल्लेखसञ्ज्ञितौ ।
उत्तेजनं परीवादो नीतिरर्थविशेषणम् ॥ ४९३ ॥
प्रोत्साहनं च साहाय्यमभिमानोऽनुवर्तनम् ।
उत्कीर्तनं तथा याच्ञा परिहारो निवेदनम् ॥ ४९४ ॥
प्रवर्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम् ।
इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः ॥ ४९५ ॥

५२३ आशीरिष्टजनाशंसा

यथा शाकुन्तले-

'ययातेरिव शर्मिष्ठा पत्युर्बहुमता भव । पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि ॥ ३१५॥'

५२४ आक्रन्दः प्रलपितं शुचा ।

---

उदाहरति-यथा । गृहवृक्षवाटिकायां गृहोपवने । 'विश्वामित्रसमीपे रामलक्ष्मणौ दृष्ट्वा नायको नायिकां प्रत्याहे'ति शेषः । हे तन्वि कृशोदरि ! यौ । एतौ । चारुचन्द्रमसं प्रति सुन्दरचन्द्रसन्निधौ । दृश्येते । तौ-उभौ । हे प्राज्ञे विदुषि ! कल्याणनामानौ सुगृहीताभिधेयौ । तिष्यपुनर्वसू पुष्यः पुनर्वसुश्चेत्यर्थः ॥ ३१३॥

प्रियवचो लक्षयति-५२१ पूज्यम् । प्रमाणयितुं प्रमाणं कर्तुम् । यत्-हर्षभाषणं हर्षावहवाक्यम् । तत्-प्रियोक्तिः प्रियवचो नाम नाट्यलक्षणमिति भावः । स्यात् ॥ ४९१ ॥

उदाहरति-यथा । शाकुन्तलेऽभिज्ञानशाकुन्तले । पूर्वम् । कुसुमं पुष्पम् । उदेति-विकसति । ततः तदनन्तरम् । फलम् । प्राक् । घनोदयो जलधरः । तदनन्तरम् । पयः । निमित्तनैमित्तिकयोः कार्यकारणयोः । विधिर्नियमः । अयम् । तव मारीचस्य महर्षेः । तु । प्रसादात् । पुरः । सम्पदः । प्रसादोत्तरं सम्पत्सद्भाव उचितः, किन्त्वन्यत्रैवं नियमो नात्राचिन्त्यप्रभावे भगवतीति भावः । वंशस्थं वृत्तम् ॥ ३१४ ॥'

एवं लक्षणानि दर्शयित्वा नाट्यालङ्कारान् दर्शयितुमाह-अथ । नाट्यालङ्काराः । नामतो निर्दिश्यन्ते-५२२ आशीरित्यादिना । स्पष्टम् ॥ ४९२-४९५ ॥

आशिषं लक्षयति-५२३ इष्टजनाशंसेष्टजनस्य बान्धवादेराशंसाऽभिमतप्राप्तीच्छा । आशीः ।

उदाहरति-यथा । शाकुन्तले । 'कण्वः शकुन्तलां प्रत्याहे'ति शेषः । 'ययातेः तदाख्यस्य नरेन्द्रस्य । शर्मिष्ठा तदाख्या राज्ञी । इव । पत्युर्दुष्यन्तस्य । बहुमताऽत्यन्तं सम्मानिता । भव । सा शर्मिष्ठा । पूरुं तदाख्यं पुत्रम् । इव । त्वम् । अपि । सम्राजं चक्रवर्तिनम् । पुत्रम् । अवाप्नुहि लभस्व ॥ ३१५ ॥'

आक्रन्दं लक्षयति-५२४ शुचा शोकेन । प्रलपितं प्रलापः । आक्रन्दः ।

यथा वेण्याम्-'कञ्चुकी-हा देवि कुन्ति। राजभवनपताके-' इत्यादि।

**५२५ कपटं मायया यत्र रूपमन्यद्विभाव्यते ॥ ४९६ ॥**

यथा कुलपत्यङ्के—
'मृगरूपं परित्यज्य विधाय कपटं वपुः। नीयते रक्षसा तेन लक्ष्मणो युधि संशयम् ॥ ३१६॥'

**५२६ अक्षमा सा परिभवः स्वल्पोऽपि न विषह्यते।**

यथा शाकुन्तले—'राजा—भोः सत्यवादिन्, अभ्युपगतं तावदस्माभिः, किं पुनरिमामतिसन्धाय लभ्यते। शार्ङ्गरवः-विनिपातः-' इत्यादि।

**५२७ गर्वोऽवलेपजं वाक्यं**

यथा तत्रैव-'राजा-ममापि नाम सत्त्वैरभिभूयन्ते गृहाः।'

**५२८ कार्यस्यारम्भ उद्यमः ॥ ४९७ ॥**

यथा कुम्भाङ्के-'रावणः-
पश्यामि शोकविवशोऽन्तकमेव तावत'।

**५२९ ग्रहणं गुणवत्कार्यहेतोराश्रय उच्यते।**

यथा विभीषणनिर्भर्त्सनाङ्के-'विभीषणः-राममेवाश्रयामि।' इति।

**५३० उत्प्रासनं तूपहासो योऽसाधौ साधुमानिनि ॥ ४९८ ॥**

---

उदाहरति-यथा। वेण्यां वेणीसंहारे। स्पष्टमन्यत्। धृतमुनिवेषेण दुर्योधनमित्रेण राक्षसेन श्राविते भीमहनने कञ्चुकिनः प्रलापोऽयम्।

कपटं लक्षयति-५२५ यत्र। मायया। अन्यत्। रूपम्। विभाव्यते। तत्-कपटम् ॥ ४९६ ॥

उदाहरति-यथा कुलपत्यङ्के तदाख्ये रूपके। 'मृगरूप'मित्यादौ। 'तेन मारीचेन। स्पष्टमन्यत् ॥ ३१६ ॥

अक्षमां लक्षयति-५२६ यः स्वल्पः। अपि। परिभवः। न। विषह्यते। सा। अक्षमा।

उदाहरति-यथा। शाकुन्तलेऽभिज्ञानशाकुन्तले। 'राजा ( शार्ङ्गरवं प्रत्याह ) अभ्युपगतं ज्ञातम्।.. अभिसन्धाय वञ्चयित्वा। विनिपातो नरके पतनम्। 'लभ्यते'इति पूर्वतोऽन्वेति। स्पष्टमन्यत्।

गर्वं लक्षयति-५२७ अवलेपजमवलेपो धनाद्युत्कर्षेणाविनयस्तस्माज्जायते इति तथोक्तम्। वाक्यम्। गर्वः। अत्रोपचारादभेदः।

उदाहरति- यथा। तत्र अभिज्ञानशाकुन्तले। एव। 'राजा। मम। अपि। गृहाः। 'गृहाः पुंसि च भूम्न्येवे'त्यमरः। सत्त्वैः प्राणिभिः। अभिभूयन्ते परिभवं नीयन्ते। अत्र हि को नाम परिभवितुं मम गृहान्। क्षमेतेति गर्वाविष्करणम्।

उद्यमं लक्षयति-५२८ कार्यस्य कर्त्तव्यस्यार्थस्य। आरम्भः। उद्यमः ॥ ४९७ ॥

उदाहरति-कुम्भाङ्के कुम्भकर्णवधप्रधानेऽङ्के। 'रावणः।-शोकविवशः! कुम्भकर्णमरणजशोकपराभूतः। तावत् ( इदं वाक्यालङ्कारे )। अन्तकं यमम्। एव। पश्यामि।' अत्र हि रावणस्य परलोकगमनकार्य्यारम्भः।

आश्रयं लक्षयति-कार्यहेतोः कार्यसिद्धिनिमित्तम्। गुणवदुत्कृष्टम्। ग्रहणम्। आश्रयः। उच्यते।

उदाहरति-यथा। विभीषणनिर्भर्त्सनाङ्के विभीषणस्य नितरान्भर्त्सनामुपजीव्य प्रारब्धेऽङ्के। स्पष्टमन्यत्। अत्र हि-लङ्काराज्यप्राप्तिनिमित्तं रामचरणग्रहणम्।

उत्प्रासनं लक्षयति-५२९ यः। साधुमानिनि सज्जनम्मन्ये। अतएव-असाधौ दुर्जने। उपहासः। स-तु। उत्प्रासनम् ॥ ४९८ ॥

यथा शाकुन्तले, "शाङ्गरवः–राजन्, अथ यदि पूर्ववृत्तान्तमन्यसङ्गाद्विस्मृतवान् भवान्। तत्कथमधर्मभीरोर्दारपरित्यागः।"

५३१ आकाङ्क्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा।

यथा तत्रैव, 'राजा—"चारुणा स्फुरितेनायमपरिक्षतकोमलः।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः॥ ३१७॥"

५३२ अधिक्षेपवचःकारी क्षोभः प्रोक्तः स एव तु॥ ४९९॥

यथा—"त्वया तपस्विचाण्डाल! प्रच्छन्नवधवर्तिना।
न केवलं हतो वाली, स्वात्मा च परलोकतः॥ ३१८॥"

५३३ मोहावधीरितार्थस्य पश्चात्तापः स एव तु।

यथानुतापाङ्के, "रामः—किं देव्या न विचुम्बितोऽस्मि बहुशो मिथ्याभिशप्तस्तदा" इति।

५३४ उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये॥ ५००॥

यथा वध्यशिलायाम्—"म्रियते म्रियमाणे या त्वयि जीवति जीवति।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः॥ ३१९॥"

---

उदाहरति–यथा। शाकुन्तलेऽभिज्ञानशाकुन्तले 'पञ्चमेऽङ्के' इति शेषः। "शाङ्गरवः। 'दुष्यन्तं प्रत्याहे'ति शेषः। राजन्। अथ। यदि। पूर्ववृत्तान्तं शकुन्तलया सह गान्धर्वविधिना परिणयनादिरूपम्। अन्यसङ्गाद् कार्य्यान्तरेषु व्यग्रतया। भवान्। विस्मृतवान्। तत्। कथम्। अधर्मभीरो'रधर्मो मां न स्पृशेदि'ति बिभ्यतो भवतः। दारपरित्यागः स्त्रीपरित्यागजन्यं पातकं स्यादिति भावः। अत्र हि–पूर्ववृत्तान्तस्यैवं विस्मरणासम्भव इति तथाऽभिधानमुपहासमात्रम्।"

स्पृहां लक्षयति–५३१ या। तु। वस्तुनः पदार्थस्य। रमणीयत्वात्। आकाङ्क्षा। सा। स्पृहा।

उदाहरति–यथा। तत्राभिज्ञानशाकुन्तले। एव 'तृतीयेऽङ्के' इति शेषः। 'राजा।

"अपरिक्षतकोमलो न परिक्षतो दष्टोऽसौ कोमलः (अत्र विशेषणोभयसमासः, विशेषणविशेष्यभावस्य प्रायिकत्वात्)। अयम्। प्रियाधरः। चारुणा सुन्दरेण। स्फुरितेन स्फुरणेन। मम। पिपासतः पातुमिच्छतः। अनुज्ञामनुमतिम्। ददातीव 'प्रतीयते' इति शेषः। अत्राधरस्य रमणीयतयाकाङ्क्षा॥ ३१७॥"

क्षोभं लक्षयति–५३२ अधिक्षेपवचःकारी भर्त्सनवाक्यहेतुः। क्षोभः अन्तश्चाञ्चल्यम्। तु। स क्षोभः। एव 'मत' इति शेषः॥ ४९९॥

उदाहरति–यथा "हे तपस्विचाण्डाल तपस्विषु चाण्डालः तत्सम्बुद्धौ तथोक्त! त्वया। प्रच्छन्नवधवर्त्तिना प्रच्छन्नो भूत्वाऽसौ वधवर्त्ती वधकारी तेन तथोक्तेन। वधं वर्त्तयति सम्पादयतीति वधवर्त्ती। केवलम्। वाली। न। हतः। किन्तु–परलोकतः स्वर्गादेः। स्वात्मा। चापि (इदं समुच्चयार्थम्)। श्रीरामं प्रति मरणासन्नस्य बालिन उक्तिरियम्॥ ३१८॥"

पश्चात्तापं लक्षयति–५३३ मोहावधीरितार्थस्य मोहेनाज्ञानेन विस्मृत्या वाऽवधीरितः पराभूतो योऽर्थस्तस्य। पश्चात्तापः 'मोहावसानदशायां पुन'रिति शेषः। तु। स पश्चात्तापः। एव।

उदाहरति–यथा। अनुतापाङ्केऽनुतापप्रधानेऽङ्के। "रामः 'अन्तःशोचती'ति शेषः। तदा परित्यागावसरे। देव्या सीतया। बहुशः। मिथ्याऽभिशप्तो मिथ्याऽभिशप्ता येन तादृशः। किम्। न। विचुम्बितः। अस्म्यहम्। सीतां परित्यज्यानुतपतो रामस्येयमुक्तिः। मया यन्मृषा सा कलंकिता तद् यद्यपि, अवश्यं प्रसादनीयाऽप्यासीत्, अथापि न प्रसादितेति नितान्तमनर्थकारीति भावः।" यथा वाऽभिज्ञानशाकुन्तले षष्ठेऽङ्के शकुन्तलामवज्ञाय दुष्यन्तस्य तामनुस्मरत उक्तौ।

उपपत्तिं लक्षयति ५३४ अर्थसिद्धये कार्यसम्पत्तये। हेतोः कारणस्य। उपन्यासः। उपपत्तिः। मता ५००

उदाहरति–यथा। वध्यशिलायां यत्र वध्यचिह्ना आरोह्यन्ते तादृश्यां शिलायामित्यर्थः। "हे शङ्खचूड! (इदं पूर्वतोऽनुप्रसक्तम्।) या त्वयि (पुत्रे)। म्रियमाणे। 'सती'ति शेषः। म्रियते। तथा–जीवति 'सती'ति शेषः। जीवति। ताम् आत्ममातरम्। यदि। जीवन्तीम्। इच्छसि। तर्हि–मम जीमूतवाहनस्य। असुभिर्गरुडाय मत्समर्पणेनेति भावः। आत्मानं स्वम्। रक्ष। जीमूतवाहनस्य 'इयम् (माता) अस्मद्विपत्तिविक्लवा न यथा जीवितं जह्यात्तथाऽभ्युपायश्चिन्त्यता'मिति प्रार्थयमानं शङ्खचूडं प्रति दयावीरस्योक्तिरियम्। नागानन्दस्य चतुर्थाङ्कस्य पद्यमिदम्॥ ३१९॥"

५३५ आशंसनं स्यादाशंसा

यथा श्मशाने—"माधवः—
सम्भूयेव सुखानि चेतसि परं भूमानमातन्वते यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः।
यद्बालेन्दुकलोच्चयादवचितैः सारैरिवोत्पादितं, तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ३१९"

५३६ प्रतिज्ञाऽध्यवसायकः।

यथा मम प्रभावत्याम्—"वज्रनाभः—
अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया। लीलयोन्मूलयाम्येष भुवनद्वयमद्य वः॥ ३२०॥"

५३७ विसर्पो यत्समारब्धं कर्मानिष्टफलप्रदम्॥ ५०१॥

यथा वेणीसंहारे तृतीयेऽङ्के "राजा—
एकस्य तावत्पाकोऽयं दारुणो भुवि वर्तते। केशग्रहे द्वितीयेऽस्मिन् नूनं निःशेषिताः प्रजाः॥३२१॥"

५३८ कार्यदर्शनमुल्लेखः

यथा शाकुन्तले—राजानं प्रति 'तापसौ—समिदाहरणाय प्रस्थितावावाम्। इह चास्मद्गुरोः साधिदैवत इव शकुन्तलयाऽनुमालिनीतीरमाश्रमो दृश्यते। न चेदन्य (था) कार्यातिपातः, प्रविश्य गृह्यतामतिथिसत्कारः' इति।

५३९ उत्तेजनमितीष्यते।

स्वकार्यसिद्धयेऽन्यस्य प्रेरणाय कठोरवाक्॥ ५०२॥

---

आशंसां लक्षयति-५३५ आशंसनं स्वाभीष्टमात्रलिप्सा। आशंसा। स्यात्।

उदाहरति-यथा। श्मशाने तद्वर्णनप्रस्तुते मालतीमाधवस्य पञ्चमेऽङ्के। "माधवः 'साशंस' मिति शेषः।

सुखानि आनन्दाः। सम्भूयेव मिलित्वेव स्थितानि सन्तीति भावः (इदं कर्तृवचनम्)' चेतसि चित्ते 'ममे ति शेषः। परमत्यन्तं केवलं वेत्यर्थः। भूमानमतिशयितत्वम्। आतन्वते विदधति। मम मनसि सर्वविधाः प्रमोदा उल्लसन्तीति भावः। 'अतः सम्भाव्यते' इति शेषः। यत्र यस्मिन् मालतीमुखे इत्यर्थः। आलोकपथावतारिणी आलोकौ दर्शने नेत्रे इति यावत् तयोः पथस्तत्रावतारीति तत्र। दृष्टे सति इति भावः। नेत्रोत्सवो नेत्रयोरुत्सव आह्लादः। रतिं क्रीडाम्। प्रस्तौति प्रथयति। यत् 'चे' ति शेषः। बालेन्दुकलोच्चयाद्बालो मूढः प्रियामुख मिवामृतं निपाय्य परोपकारानभिज्ञ इति यावत्, असाविन्दुस्तस्य कलोच्चयस्तस्मात्तमाश्रित्येति भावः। ['मूर्खेऽर्भकेऽपि बालः स्या' दित्यमरः]। अवचितैरेकत्र स्थापितैः। सारैः सद्धर्मैः। इव। उत्पादितम्। तत्। अनङ्गमङ्गल-गृहमनङ्गस्य कामस्य मङ्गलगृहमामोदस्थानरूपम्। तस्या माधव्याः। मुखम्। भूयः पुनरपि। पश्येयम्। न मालत्या आशंसनं, येनाशिषा सङ्करः स्यात्, किन्तु स्वात्मन एव तन्मुखचुम्बनार्थम्॥'

अध्यवसायं लक्षयति-५३६ प्रतिज्ञा सशपथं निश्चितोऽर्थः। अध्यवसायकोऽध्यवसायः।

उदाहरति-यथा। मम। प्रभावत्याम्। "वज्रनाभः 'प्रतिजानीते' इति शेषः।

अस्य पुरःस्थितस्य दुष्टस्येति भावः। वक्षः (कर्म)। अनया। गदया। क्षणेन। एव। निर्मथ्य विदार्य। एषः। अहम्-अद्य। वो युष्माकम्। भुवनद्वयं स्वर्गं पृथिवीं च। लीलयानायासेन। उन्मूलयामि। कस्यापि राक्षसराजस्य नरराजस्य वा देवराजेन समं युध्यमानस्य तं प्रति उक्तिरियम्॥ ३२०॥'

विसर्पं लक्षयति-५३७ यत्। प्रारब्धम्। अनिष्टफलप्रदमनिष्टफलकम्। कर्म। विसर्पः॥ ५०१॥

उदाहरति-यथा। वेणीसंहारे। तृतीये। अङ्के। राजा। "एकस्य...।" उदाहृतपूर्वमिदम्। अत्र केश ग्रहणस्यानिष्टफलोद्रेकत्वम्।

उल्लेखं लक्षयति-५३८ कार्यदर्शनं कार्यस्य कर्तव्यत्वेन प्रदर्शनम्। उल्लेखः।

उदाहरति-यथा। शाकुन्तले। 'तापसौ (दुष्यन्तं प्रत्याहतुः) समिदाहरणाय हवनोपयोगिकाष्ठमानेतुम्। आवाम्। प्रस्थितौ 'साधयाव' इति पाठे गच्छाव इत्यर्थः। इहास्मिन्वने। च। अस्मद्गुरोः कण्वमहर्षेः। शकुन्तलया। साधिदैवतोऽधिष्ठात्र्या देवतयाऽनुगृहीतम्। इव। मालिनीतीरम्मालिन्या नद्यास्तीरम्। अनु पश्चात्कूल। आश्रमः। दृश्यते। चेत्। अन्यकार्यातिपातः कार्यान्तरावश्यकता। न तर्हि-प्रविश्य। अतिथि-सत्कारः। गृह्यताम्। अत्र हि-राज्ञा समम्प्रस्थानाभावे समिदाहरणं हेतुः, राज्ञश्च कार्यान्तरानावश्यकत्वेऽतिथिस-त्कारग्रहणावश्यकत्वं दर्शितम्।'

उत्तेजनं लक्षयति-५३९ स्वकार्यसिद्धये स्वाभीष्टसम्पत्तये। अन्यस्य। प्रेरणाय स्वानुकूलकार्ये प्रवर्तयितुम्। कठोरवाक्। उत्तेजनम्। इति। इष्यते काम्यते। 'आचार्यै' रिति शेषः॥ ५०२॥

यथा–

'इन्द्रजिच्चण्डवीर्योऽसि नाम्नैव बलवानसि। धिग्धिक्प्रच्छन्नरूपेण युध्यसेऽस्मद्भयाकुलः ॥ ३२१ ॥'

५४० भर्त्सना तु परीवादो

यथा सुन्दराङ्के-'दुर्योधनः-धिग्धिक् सूत, किं कृतवानसि।
वत्सस्य मे प्रकृतिदुर्ललितस्य पापः पापं विधास्यति समक्षमुदायुधोऽसौ।'इत्यादि।

५४१ नीतिः शास्त्रेण वर्तनम्।

यथा शाकुन्तले-'दुष्यन्तः-विनीतवेषप्रवेश्यानि तपोवनानि।' इति।

५४२ उक्तस्यार्थस्य यत्तु स्यादुत्कीर्तनमनेकधा ॥ ५०३ ॥
उपालम्भविशेषेण तत्स्यादर्थविशेषणम्।

यथा शाकुन्तले राजानं प्रति 'शार्ङ्गरवः-आः, कथमिदं नाम। ननु भवानेव नितरां लोकवृत्तान्तनिष्णातः।

'सतीमपि ज्ञातिकुलैकसंश्रयां जनोऽन्यथा भर्तृमतीं विशङ्कते।
अतः समीपे परिणेतुरिष्यते प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥ ३२२ ॥'

५४३ प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम् ॥ ५०४ ॥

---

उदाहरति–यथा 'इन्द्रजि'दित्यादौ। स्पष्टोऽर्थः। प्रच्छन्नस्य हननं दुःसाध्यं मन्वानस्य लक्ष्मणस्य प्रकटं योधने प्रवर्त्तयितुमिन्द्रजितम्प्रत्युक्तिरियम् ॥३२१॥'

परीवादं लक्षयति–५४० भर्त्सना सोपालम्भं वचः। तु। परीवादः।

उदाहरति–यथा। सुन्दराङ्के वेणीसंहारस्य चतुर्थेऽङ्के। 'दुर्योधनः (सूतं प्रत्याह)। सूत! धिग्धिक्। किम्। कृतवान्। असि। पापो दुष्टः। असौ भीमः। उदायुध उद्यतशस्त्रः। मे मम। समक्षम्। प्रकृतिदुर्ललितस्य प्रकृत्या स्वभावेनालभ्यविषयकत्वाद्दुष्टं ललितं सौन्दर्यं सौभगं वा यस्य तस्य। वत्सस्य लालनीयस्यानुजस्य दुःशासनस्येत्यर्थः। पापं वक्षोविदारणरूपमनर्थम्। विधास्यति–'इत्यादि। अन्त्यं पादद्वयं चास्य–'अस्मिन्निवारयसि किं व्यवसायिनम्मां क्रोधो न नाम करुणा न च तेऽस्ति लज्जा ॥'इति।

नीतिं लक्षयति–५४१ शास्त्रेण शास्त्रानुसारेण। वर्त्तनं यत्नः। नीतिः।

उदाहरति–यथा। शाकुन्तले 'दुष्यन्त'इत्यादौ। स्पष्टम्।

अर्थविशेषणं लक्षयति–५४२ यत्। तु। उक्तस्य। अर्थस्य। अनेकधाऽनेकैः प्रकारैः। उपालम्भमिषेण। उत्कीर्त्तनं सूचनम्। तत्। अर्थविशेषणम्। स्यात्॥ ५०३ ॥

उदाहरति–यथा। शाकुन्तले। राजानं दुष्यन्तम्। प्रति। शार्ङ्गरवः। आः (इदं सखेदमाश्चर्याभिधाने)। कथम्। इदं शकुन्तलारूपं वस्तून्यस्तमिति भाषसे। नाम (इदं वाक्यालङ्कारे)। ननु। भवान्। एव। नितरामत्यन्तम्। लोकवृत्तान्तनिष्णातो लौकिकव्यवहाराभिज्ञः। जनो लोकः। भर्तृमतीं सजीवितभर्तृकाम्। ज्ञातिकुलैकसंश्रयां ज्ञातिकुलं पितृकुलमेकः संश्रयो यस्यास्तादृशीम्। पितृगृहे वसन्तीमिति भावः। सतीं शुद्धचरिताम्। अपि। अन्यथा 'असतीय' मित्यात्मना। विशङ्कते। अतः। परिणेतुः। समीपे। 'एवे'ति शेषः। स्वबन्धुभिः ज्ञातृजनैः। प्रिया। अप्रिया। वा। प्रमदा। 'प्रस्थापितु'मिति शेषः। इष्यते। अत्र वंशस्थं वृत्तम् ॥ ३२२ ॥

प्रोत्साहनं लक्षयति–५४३ उत्साहगिरोत्साहवर्धिन्या वाचा। कस्यापि। योजनं कार्यान्तरे प्रवर्त्तनम्। प्रोत्साहनम् ॥ ५०४ ॥

यथा बालरामायणे—

'कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि ।
तज्जगत्त्रितयं त्रातुं तात ताडय ताडकाम् ॥ ३२३ ॥'

**५४४ साहाय्यं सङ्कटे यत्स्यात्सानुकूल्यं परस्य च ।**

यथा वेण्याम्-कृपं प्रति 'अश्वत्थामा-त्वमपि तावद्राज्ञः पार्श्ववर्ती भव । कृपः-वाञ्छाम्यहमद्य प्रतिकर्तुम्-' इत्यादि ।

**५४५ अभिमानः स एव स्यात्**

यथा तत्रैव-'दुर्योधनः-

मातः किमप्यसदृशं कृपणं वचस्ते' इत्यादि ।

**५४६ प्रश्रयादनुवर्तनम् ॥ ५०५ ॥**

**अनुवृत्तिर्**

यथा शाकुन्तले-'राजा ( शकुन्तलां प्रति । ) अयि, तपो वर्धते । अनुसूया-दाणिं अदिधिविसेसलाहेण' इत्यादि ।

**५४७ भूतकार्याख्यानमुत्कीर्तनं मतम् ।**

यथा बालरामायणे-

'अत्रासीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।' इत्यादि ।

---

उदाहरति-यथा । बालरामायणे । ( विश्वामित्रो रामं प्रत्याह ) हे तात । इयम् । कालरात्रिकराला कालरात्र्या तुल्यं भयावहा । अतः-स्त्री । इति । किम् । विचिकित्ससि विचारयसि । अस्या हननेन स्त्रीहत्यापातकभयं न कर्त्तव्यमिति भावः । तत्-यतः कालरात्रिवत् लोकान् हन्तुं प्रवृत्तेयं तस्मादिति भावः । जगत्त्रितयम् । त्रातुं रक्षितुम् । ताडकाम् । ताडय जहि ॥ ३२३ ॥'

साहाय्यं लक्षयति-५४४ सङ्कटे विपत्तौ । उपस्थित इति भावः । च । यत् । परस्य । सानुकूलत्वं सहायकात्मना भवनम् । साहाय्यम् ।

उदाहरति-यथा वेण्यां वेणीसंहारे । स्पष्टमन्यत् ।

अभिमानं लक्षयति-५४५ अभिमानः । सोऽभिमानः । एव । स्यात् ।

उदाहरति-यथा । तत्र वेणीसंहारे । एव । दुर्योधनः ( गान्धारीं प्रत्याह ) । 'मात'रित्यादि । आदिपदेन 'सुक्षत्रिया क्व भवती क्व च दीनतैषा । निर्वत्सले सुतशतस्य विपत्तिमेतां त्वं नानुचिन्तयसि, रक्षसि भागधेयम् ॥' इत्यंशस्य ग्रहणम् । अत्र विपत्तावपि मातुराक्षेपपूर्वकं तथोद्यमनमित्यभिमानः । अर्थः स्पष्टः ।

अनुवृत्तिं लक्षयति-५४६ प्रश्रयाद्विनयेन । अनुवर्त्तनमनुकूलात्मना भवनम् । अनुवृत्तिः ॥ ५०५ ॥

उदाहरति-यथा...दाणिं इदानीम् । अदिधिविसेसलाहेण अतिथिविशेषलाभेनातिथिवरस्य भवतो लाभेनेति यावत् । स्पष्टमन्यत् ।

उत्कीर्त्तनं लक्षयति-५४७ भूतकार्याख्यानम्भूतस्य कार्यस्य कथनम् । उत्कीर्त्तनम् । मतम् ।

उदाहरति-यथा । बालरामायणे ( श्रीरामोऽयोध्यां प्रत्यावर्त्तमानस्तंतं प्रदेशं दर्शयति ) । हे मृगाक्षि ( इदं चतुर्थचरणगतम् ) । अत्र । फणिपाशबन्धनविधिः फणिनो नागस्य पाशस्तेन बन्धनं तस्य विधिः । आसीत् । अत्र । शक्त्येन्द्रजिता प्रयुक्तेनामोघेनायुधविशेषेण । भवद्देवरे भवत्या देवरे लक्ष्मणे । गाढम् । वक्षसि ( विषये सप्तमीयम् ) । ताडिते प्रहृते सति । हनुमता । द्रोणाद्रिर्द्रोणपर्वतः । आहृत आनीतः ।' इत्यादि ।

**५४८ याच्ञा तु कापि याच्ञा या स्वयं दूतमुखेन वा ॥ ५०६ ॥**

यथा–

'अद्यापि देहि वैदेहीं दयालुस्त्वयि राघवः। शिरोभिः कन्दुकक्रीडां किं कारयसि वानरान् ३२४॥'

**५४९ परिहार इति प्रोक्तः कृतानुचितमार्जनम् ।**

यथा–

'प्राणप्रयाणदुःखार्त उक्तवानस्म्यनक्षरम्। तत्क्षमस्व विभो, किं च सुग्रीवस्ते समर्पितः३२५॥'

**५५० अवधीरितकर्तव्यकथनं तु निवेदनम् ॥ ५०७ ॥**

यथा राघवाभ्युदये—'लक्ष्मणः—आर्य, समुद्राभ्यर्थनया गन्तुमुद्यतोऽसि। तत्किमेतत्।'

**५५१ प्रवर्तनं तु कार्यस्य यत्स्यात्साधु प्रवर्तनम् ।**

यथा वेण्याम्—'राजा—कञ्चुकिन्, देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य भीमसेनस्य विजयमङ्गलाय प्रवर्तन्तां तत्रोचिताः समारम्भाः।'

**५५२ आख्यानं पूर्ववृत्तोक्तिः**

यथा तत्रैव—

'देशः सोऽयमरातिशोणितजलैर्यस्मिन्ह्रदाः पूरिताः' इत्यादि।

---

आदिपदेन 'दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं लम्भितः केनाप्यत्र मृगाक्षि! राक्षसपतेः कृत्ता च कण्ठाटवी।' इति पादद्वयस्य ग्रहणम्।

याच्ञां लक्षयति–५४८ याच्ञेत्यादिना। स्पष्टोऽर्थः। इदं तु बोध्यम्–इयं स्वयं कृता दूतद्वारा कृता चेति द्विविधा। तत्राद्या यथा–'भो लङ्केश्वर! दीयतां जनकजा रामः स्वयं याचते' इत्यादौ। द्वितीया तूदाहृतैव ग्रन्थकृतेति ॥ ५०६ ॥

उदाहरति–यथा–'अद्यापि। वैदेहीं विदेहनन्दनीम्। देहि। राघवो रामः। त्वयि। दयालुरकृतकोपः। अथ–किम्। शिरोभिः 'रामबाणैः पातितैः स्वस्य दशभिः' इति शेषः। वानरान् वानराणाम्। (णिजन्तत्वे कर्म-पदमिदम्)। कन्दुकक्रीडाम्। कारयसि। अङ्गदस्य रावणं प्रत्युक्तिरियम् ॥ ३२४ ॥'

परिहारं लक्षयति–५४९ कृतानुचितमार्जनं कृतस्यानुचितस्य कर्मणो मार्जनम्। परिहारः। इति। प्रोक्तः।

उदाहरति–यथा। 'हे विभो प्रभो! प्राणप्रयाणदुःखार्त्तः प्राणानां प्रयाणं तस्य दुःखेनार्त्तः सन्। यत्–अक्षरं दुर्वचः। उक्तवान्। अस्मि। तत्। क्षमस्व। किंच–ते तव। सुग्रीवः। समर्पितः इतः परमस्य रक्षणं त्वदधीनमिति भावः। मरणासन्नस्य वालिनः श्रीरामं प्रत्युक्तिरियम् ॥ ३२५ ॥'

निवेदनं लक्षयति–५५० अवधीरितकर्त्तव्यकथनमवधीरितमवज्ञातं यत् कर्त्तव्यं कार्यं तस्य कथनम्। तु। निवेदनम् ॥ ५०७ ॥

उदाहरति–यथा। राघवाभ्युदये। स्पष्टोऽर्थः। समुद्रप्रसादेन गमनं नोचितमिति भावः।

प्रवर्त्तनं लक्षयति–५५१ यत्। कार्यस्य। साधु शोभनं यथा भवेत्तथा। प्रवर्त्तनम्। तु। प्रवर्त्तनम्।

उदाहरति–यथा। वेण्यां वेणीसंहारे। राजा युधिष्ठिरः। स्पष्टमन्यत्।

आख्यानं लक्षयति–५५२ पूर्ववृत्तोक्तिर्भूतपूर्वस्येतिवृत्तस्य कथनम्। आख्यानम्।

उदाहरति–यथा। तत्र वेणीसंहारे। एव। 'यस्मिन् यस्यां भूमौ। अरातिशोणितजलैररातीनां शत्रूणां शोणितरूपैर्जलैः। ह्रदाः (अत्र बहुवचनं पञ्चानां स्यमन्तकानां बोधकम्)। पूरिताः। सः। अयम्। देशः।' इत्यादि। आदिपदेन 'क्षत्त्रादेव तथाविधः परिभवस्तातस्य केशग्रहः तान्येवाहितशस्त्रघस्मरगुरूण्यस्त्राणि भास्वन्ति मे। यद्रामेण कृतं तदेव कुरुते द्रोणायनिः क्रोधनः।' इति पादत्रयस्य ग्रहणम्। केशेषु प्रहृत्य समाहितस्य मध्ये समरं द्रोणस्य हनने कुपितस्याश्वत्थाम्न उक्तिरियम्।

५५३ युक्तिरर्थावधारणम् ॥ ५०८ ॥

यथा तत्रैव—
'यदि समरमपास्य नास्ति मृत्योर्भयमिति युक्तमितोऽन्यतः प्रयातुम्।
अथ मरणमवश्यमेव जन्तोः किमिति मुधा मलिनं यशः कुरुध्वम् ॥ ३२६ ॥'

५५४ प्रहर्षः प्रमदाधिक्यं

यथा शाकुन्तले—'राजा—तत्किमिदानीमात्मानं पूर्णमनोरथं नाभिनन्दामि।'

५५५ शिक्षा स्यादुपदेशनम्।

यथा तत्रैव—'सहि, ण जुत्तं अस्समवासिणो जणस्स अकिदसक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमणम्।'

एषां च लक्षणं नाट्यालङ्काराणां सामान्यत एकरूपत्वेऽपि भेदेन व्यपदेशो गड्डलिकाप्रवाहेण। एषु च केषाञ्चिद्गुणालङ्कारभावसंध्यङ्गविशेषान्तर्भावेऽपि नाटके प्रयत्नतः कर्तव्यत्वात्तद्विशेषोक्तिः।

एतानि च—
'पञ्चसंधि चतुर्वृत्ति चतुःषष्ट्यङ्गसंयुतम्। षट्त्रिंशल्लक्षणोपेतमलंकारोपशोभितम् ॥
महारसं महाभोगमुदात्तरचनान्वितम्। महापुरुषसत्कारं साध्वाचारं जनप्रियम् ॥
सुश्लिष्टसंधियोगं च सुप्रयोगं सुखाश्रयम्। मृदुशब्दाभिधानं च कविः कुर्यात्तु नाटकम् ॥'

इति मुनिनोक्तत्वान्नाटकेऽवश्यं कर्तव्यान्येव।

---

युक्तिं लक्षयति—५५३ अर्थावधारणं कर्तव्यस्य निश्चयः। युक्तिः ॥ ५०८ ॥

उदाहरति—यथा। तत्र वेणीसंहारे। एव। यदि। समरं सङ्ग्रामम्। 'अस्त्रियां समरानीकरणाः' इत्यमरः। अपास्य परित्यज्य। मृत्योर्मरणस्य। भयम्। न। अस्ति। तर्हि—इतः सङ्ग्रामात्—अन्यतोऽन्यत्र। प्रयातुं गन्तुम्। युक्तम्। अथ यदि च 'अद्य वाऽब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः' इत्यादिनयेन। जन्तोः प्राणिनः। मरणम्। अवश्यम्। एव। तर्हि—किमिति। यशः स्वधर्मपालनजन्यां प्रशंसाम्। मुधा व्यर्थम्। मलिनम्। कुरुध्वम्। अत्र समरः कर्तव्य एवेत्यवधारणम्। पुष्पिताग्रा वृत्तम्। तल्लक्षणं चोक्तं प्राक् ॥ ३२६ ॥'

प्रहर्षं लक्षयति—५५४ प्रमदाधिक्यं प्रमदस्यानन्दस्याधिक्यम्। प्रहर्षः।

उदाहरति—यथा। शाकुन्तले। 'राजा। पुत्रप्राप्त्यनन्तरम् (आत्मगतम्). तत्। इदानीम्। आत्मानम्। पूर्णमनोरथम्। किम्। न। अभिनन्दामि।'

उपदेशनं लक्षयति—५५५ शिक्षा युक्तमार्गे प्रवर्तनम्। उपदेशनम्। स्यात्।

उदाहरति—यथा। तत्राभिज्ञानशाकुन्तले। एव। (अनसूया शकुन्तलां प्रत्याह) सहि सखि! अस्समवासिणो आश्रमवासिनः। जणस्स जनस्य। अकिदसक्कारमकृतसत्कारम्। अदिधिविसेसं अतिथिविशेषमुत्तममतिथिमिति यावत्। उज्झिअ उज्झित्वा। सच्छन्ददो स्वच्छन्दतः स्वाभिप्रायमिति यावत्। गमणं गमनम्। ण न। जुत्तं युक्तम्।

ननु नात्र युक्त्यादीनां युक्त्याऽऽदिसिध्यङ्गेषु नीत्यादीनां नीत्या च शिक्षाऽऽदिषु चान्तर्भावे सिद्धे पुनरुपादानं किमित्याशङ्क्याह—एषामित्यादि। स्पष्टम्।

उक्तमर्थं समर्थयते—एतानि नाट्यलक्षणादीनि। 'च। कविः। पञ्चसन्धि पञ्च मुखादयः सन्धयो यत्र तत्तथोक्तम्। चतुर्वृत्ति चतस्रः कौशिक्याद्या वृत्तयो यत्र तत्। चतुःषष्ट्यङ्गसंयुतम्। तत्र द्वादशमुखस्य। त्रयोदशप्रतिमुखस्य गर्भस्य विमर्शस्य निर्वहणस्य च सन्धेः प्रभेदाः। एतैरङ्गैरिव संयुतमिति भावः। षट्त्रिंशल्लक्षणोपेतं भूषणादिभिः षट्त्रिंशल्लक्षणैर्युक्तम्। अलङ्कारोपशोभितं त्रयस्त्रिंशत्सङ्ख्याकैराशिरादिभिरलङ्कारैर्युक्तम्। महान् शृङ्गा-

वीथ्यङ्गानि वक्ष्यंते, लास्याङ्गान्याह-

५५६ गेयं पदं[1] स्थितं पाठ्यमासीनं[3] पुष्पगण्डिकां ॥ ५०९ ॥
प्रच्छेदकं त्रिगूढं[5] च सैन्धवाख्यं[7] द्विगूढकम् ।
उत्तमोत्तमकं चान्यदुक्तप्रत्युक्तमेवं[10] च ॥ ५१० ॥
लास्ये दशविधं ह्येत-दङ्गमुक्तं मनीषिभिः ।

अत्र च-

५५७ तन्त्रीभाण्डं पुरस्कृत्योपविष्टस्यासने पुरः ॥ ५११ ॥
शुष्कं गानं गेयपदं

यथा-गौरीगृहे वीणां वादयन्ती "मलयवती-

उत्फुल्लकमलकेसरपरागगौरद्युते मम हि गौरि !
अभिवाञ्छितं प्रसिध्यतु भगवति तव सुप्रसादेन ॥३३०॥"

५५८ स्थितपाठ्यं तदुच्यते ।
मदनोत्तापिता यत्तु पठति प्राकृतं स्थिता ॥ ५१२ ॥

---

रवीरकरुणशान्तान्यतमो रसः प्रधानत्वे यत्र तत्तथोक्तम् । महाभोगम्महान् भोगः सहायकादिर्यत्र तत्तथोक्तम् । उदात्तरचनान्वितमुदात्ता सप्रासादा या रचना तयाऽन्वितम् । महापुरुषसत्कारं महापुरुषो धीरोदात्तो धीरललितो वा तस्य सत्कारो यत्र तत्तथोक्तम् । अत एव-साध्वाचारं रमणीयव्यवहारो वर्णनीयत्वेन यत्र तत् । जनप्रियम् । सुश्लिष्टसन्धियोगं सुश्लिष्टः सन्धीनां योगो यत्र तत् । सुप्रयोगम् । सुखाश्रयम् । मृदुशब्दाभिधानं मृदुभिः शब्दैरभिधानं पात्रनाम यत्र तत् । च । नाटकम् । कुर्यात् । तु (इदं वाक्यालङ्कारे) ॥' इतिमुनिनेत्येवम्भरतेन । उक्तत्वात् । नाटके । अवश्यम् । कर्त्तव्यानि । एव न:त्वेष्वेकं :द्वे वा । अतः-एतत्प्रदर्शयितुं भूषणादीनि विशिष्योद्दिष्टानीति विभाव्यम् ।

एवं नाट्यालङ्कारान्निर्दिश्य क्रमप्राप्तमपि वीथ्यङ्गानां प्रसङ्गौचित्येन पुनर्निर्देष्टव्यत्वमाह-वीथ्यङ्गानि वीथी रूपकविशेषस्तस्या अङ्गानि प्रभेदास्तानि । वक्ष्यन्ते तन्निरूपणप्रसङ्गे इति शेषः ।

लास्याङ्गानि वक्तुं प्रतिजानीते-लास्याङ्गानि लास्यस्य नृत्यस्याङ्गानि प्रभेदास्तानि । आह-५५६ गेयं पदं गेयपदमित्यर्थः । स्थितं पाठ्यं स्थितपाठ्यमित्यर्थः । स्पष्टमन्यत् ॥ ५०९ ॥ ५१० ॥

एतानि क्रमाल्लक्षयितुकाम आह-अत्रैषु दशसु लास्याङ्गेषु मध्ये । च 'गेयपदं लक्ष्यते' इति शेषः । ५५७ तन्त्रीभाण्डं वीणायन्त्रम् । पुरस्कृत्याग्रे निधाय गानोपयोगित्वेन निरूप्येति यावत् । आसने ;। उपविष्टस्य । पुरः प्रथमम् । शुष्कं शुद्धं संस्कृतमयमिति यावत् । गानम् । गेयपदम् ॥ ५११ ॥

उदाहरति-यथा । गौरीगृहे पार्वतीप्रासादे 'स्थिते'ति शेषः । वीणाम् । वादयन्ती । "मलयवती 'गायति' इति शेषः ।

उत्फुल्लकमलकेसरपरागगौरद्युते उत्फुल्लकमलस्य केसराः किञ्जल्कास्तेषां परागस्तद्वद्गौरी द्युतिर्यस्यास्तत्सम्बुद्धौ तथोक्ते ! भगवति ! गौरि ! तव । सुप्रसादेन शोभनेनानुग्रहेण । मम । हि नूतनम् । अभिवाञ्छितम् । प्रसिध्यतु सफलीभूयात् । आर्याछन्दः ॥ ३३० ॥"

स्थितपाठ्यं लक्षयति-५५८ मदनोत्तापिता कामार्दिता । स्थिताऽवस्थिता । तु । यत् । प्राकृतं प्राकृतभाषामयम् । पठति तत् । स्थितपाठ्यम् । उच्यते । यथा-विक्रमोर्वश्यां चतुर्थेऽङ्के "चित्रलेखा (प्रदेशान्तरे द्विपदिकया

अभिनवगुप्तपादास्त्वाहुः-"उपलक्षणं चैतत्, क्रोधोद्भ्रान्तस्यापि प्राकृतपठनं स्थितपाठ्यम्।" इति।

५५९ निखिलातोद्यरहितं शोकचिन्ताऽन्विताऽवला।
अप्रसाधितगात्रं यदासीनाऽऽसीनमेव तत्॥ ५१३॥

५६० आतोद्यमिश्रितं गेयं छन्दांसि विविधानि च।
स्त्रीपुंसयोर्विपर्यास-चेष्टितं पुष्पगण्डिका॥ ५१४॥

५६१ अन्यासङ्गं पतिं मत्वा प्रेमविच्छेदमन्युना।
वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः॥ ५१५॥

५६२ स्त्रीवेषधारिणां पुंसां नाट्यं श्लक्ष्णं त्रिगूढकम्।

---

दिशोऽवलोक्य) सहअरि दुक्खालिद्धअं सरवर अम्मि सिणिद्धं। वाहो-वग्गिअ-णअणअं तम्मइ हंसीजुअलअं॥" इति॥ ५१२॥

अत्र भरतसूत्रव्याख्यातॄणामभिप्रायं दर्शयति-**अभिनवगुप्तपादा** इत्यादिना।

**अभिनवगुप्तपादा** नाट्यशास्त्रव्याख्यातारः। **तु**। **आहुः**। "**एतत्**मदनोत्तापितेति विशिष्याभिधानमित्यर्थः। **च**। **उपलक्षणम्**। 'तेन न केवलं मदनोत्तापितेत्येवार्थः, किन्तु' इति शेषः। स्पष्टमन्यत्।" इति। तन्मते यथा-विक्रमोर्वश्यामेव-"राजा.. हिअआहिअपिअदुक्खओ सरवरए धुअपक्खओ। वाहो-वग्गिअ-णअणओ तम्मइ हंसजुअलओ" इति।

आसीनं लक्षयति-५५९ **आसीनोपविष्टा**। **शोकचिन्ताऽन्विता**। **अबला**। **निखिलातोद्यरहितं** निखिलानि सर्वाण्यातोद्यानि वाद्यानि तै रहितं यथा भवेत्तथा। तथा-**अप्रसाधितगात्रं** न प्रसाधितमलङ्कृतं गात्रं यस्मिन् कर्म्मणि तद् यथा भवेत्तथेत्यर्थः। **यत्** 'प्राकृतं पठती'ति पूर्वतोऽन्वेति। **तत्**। **आसीनम्**। **एव**। यथाऽभिज्ञानशाकुन्तले, तृतीयेऽङ्के"शकुन्तला-तुज्झ ण आणे हिअअं मम उण कामो दिवा वि रत्तिम्मि। णिग्घिण तवइ बलीअं तुइवुत्तमणोरहाइं अंगाइं"॥ ५१३॥

पुष्पगण्डिकां लक्षयति-५६० **आतोद्यमिश्रितं** वाद्यमिश्रितम्। **गेयम्**। **च** तथा। **विविधानि**। **छन्दांसि** छन्दोनिबद्धानि गीतानीति भावः। एवम्-**स्त्रीपुंसयो**र्नायिकानायकयोः। **विपर्य्यासचेष्टितं** विपरीतं चेष्टितम्। **पुष्पगण्डिका**। ऊह्यमुदाहरणम्॥ ५१४॥

प्रच्छेदकं लक्षयति-५६१ **अन्यासङ्ग**मन्यस्यामासङ्गः प्रीतिर्यस्य तम्। **पतिम्**। **मत्वा**। **प्रेमविच्छेदमन्युना** प्रेम्णो विच्छेदस्तेन (कृतः) मन्युः शोकस्तेन तदभिन्नमित्यर्थः। **वीणापुरःसरम्**। **स्त्रियाः** स्त्रीकर्तृकमित्यर्थः। **गानम्**। **प्रच्छेदकः**। **मतः**। उदाहरणमूह्यम्॥ ५१५॥

त्रिगूढकं लक्षयति-५६२ **स्त्रीवेषधारिणाम्**। **पुंसाम्**। **श्लक्ष्णं** मृदुलम्। **नाट्यम्**। **त्रिगूढकम्**।

---

१ 'सहचरीदुःखालीढं सरोवरे स्निग्धम्। अविरलवाष्पजलार्द्रतां ताम्यति हंसीयुगलम्॥' इति संस्कृतम्। २ 'हृदयाहितप्रियदुःखः सरोवरे धुतपक्षः। बाष्पाववल्गितनयनस्ताम्यति हंसयुवा॥' इति संस्कृतम्। ३ 'तव न जाने हृदयं मम पुनः कामो दिवाऽपि रात्रावपि। निर्घृणः तपति बलीयांस्त्वयि वृत्तमनोरथान्यङ्गानि॥' इति संस्कृतम्।

यथा–मालतीमाधवे "मकरन्दः–एषोऽस्मि मालतीसंवृत्तः ।"

५६३ कश्चन भ्रष्टसङ्केतः सुव्यक्तकरणान्वितः ॥ ५१६ ॥
प्राकृतं वचनं वक्ति यत्र तत्सैन्धवं मतम् ।

करणं वीणाऽऽदिक्रिया ।

५६४ चतुरस्रपदं गीतं मुखप्रतिमुखान्वितम् ॥ ५१७ ॥
द्विगूढं रसभावाढ्यम्

५६५ उत्तमोत्तमकं पुनः ।
कोपप्रसादजमधि–क्षेपयुक्तं रसोत्तरम् ॥ ५१८ ॥
हावहेलाऽन्वितं चित्र–श्लोकबन्धमनोहरम् ।

५६६ उक्तिप्रत्युक्तिसंयुक्तं सोपालम्भमलीकवत् ॥ ५१९ ॥
विलासान्वितगीतार्थमुक्तप्रत्युक्तमुच्यते ।

एषां स्पष्टान्युदाहरणानि ।

५६७ एतदेव यदा सर्वैः पताकास्थानकैर्युतम् ॥ ५२० ॥
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ।

---

उदाहरति–यथेत्यादिना । स्पष्टम् ।

सैन्धवं लक्षयति–५६३ **भ्रष्टसङ्केतो** भ्रष्टो नायिकाशून्यत्वेन हतः सङ्केतो यस्य तादृशः । **सुव्यक्तकरणान्वितः** सुव्यक्तानि सुव्यक्तस्वराणि यानि करणानि वीणादिक्रियास्तैरन्वितः । **कश्चन** । **यत्र** यस्मिन् नृत्य इति यावत् । **प्राकृतम्** । **वचनम्** । **वक्ति** गायति । **तत्** । **सैन्धवम्** । **मतम्** ॥ ५१६ ॥

कारिकां सुगमयितुं तत्कठिनांशभूतं करणपदार्थं व्याचष्टे–करणमित्यादिना । स्पष्टम् । उदाहरणमूह्यम् ।

द्विगूढं लक्षयति–५६४ **मुखप्रतिमुखान्वितं** मुखप्रतिमुखाभ्यां तदाख्याभ्यां सन्धिभ्यामन्वितम् । **रसभावाढ्यं** रसभावाभ्यामाढ्यं सम्पन्नम् । **चतुरस्रपदं** चतुरस्राणि पूर्णसस्वराणि रसिकमनोहराणि वा पदानि यत्र तथोक्तम् । **गीतम्** । **द्विगूढम्** । उदाहरणमूह्यम् ॥ ५१७ ॥

उत्तमोत्तमकं लक्षयति–५६५ **कोपप्रसादजं** कोपप्रसादाभ्यां जायत इति तथोक्तम् । **अधिक्षेपयुक्तम**धिक्षेपस्तिरस्कारस्तेन युक्तम् । **रसोत्तरं** रस उत्तरस्मिन् यस्य तथोक्तं, सरसमिति भावः । **हावहेलाऽन्वितं** हावहेलाभ्यां शृङ्गारजन्यचेष्टाविशेषाभ्यामन्वितम् ( एतौ च लक्षितपूर्वौ ) । **चित्रश्लोकबन्धमनोहरं** चित्रा विचित्रा ये श्लोकबन्धाः श्लोकरचनास्तैर्मनोहरम् । **पुनः** । **उत्तमोत्तमकम्** । उदाहरणमूह्यम् ॥ ५१८ ॥

उक्तप्रत्युक्तं लक्षयति–५६६ **उक्तिप्रत्युक्तिसंयुक्तम्** वचनप्रतिवचनशालि । अत एव–**सोपालम्भ**मुपालम्भव्यञ्जकम् । अत एव–**अलीकवन्**मृषावादसहितम् । **विलासान्वितगीतार्थं** विलासः शृङ्गारचेष्टाविशेषस्तेनान्वितो गीतार्थो यत्र तादृशम् । लास्यमिति प्रसङ्गानुप्रसक्तम् । **उक्तप्रत्युक्तम्** । **उच्यते** । उदाहरणमूह्यम् ॥ ५१९ ॥

नन्वेषां कान्युदाहरणानीत्याशङ्क्याह–एषामित्यादि । स्पष्टम् ।

महानाटकं लक्षयति–५६७ एतन्निरुक्तलक्षणं नाटकम् । **एव** । **यदा** । **सर्वैः** समस्तप्रभेदैः । **पताकास्थानकैः** । **च** तथा । **दशभिः** । **अङ्कैः** । **युतम्** । **धीराः** । **महानाटकम्** । **ऊचिरे** कथितवन्तः ॥ ५२० ॥

एतदेव नाटकम् । यथा-बालरामायणम् ।

अथ प्रकरणम्-

५६८ भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम् ॥ ५२१ ॥
शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक् ।
सापायधर्म्मकामार्थ-परो धीरप्रशान्तकः ॥ ५२२ ॥

विप्रनायकं यथा-मृच्छकटिकम् । अमात्यनायकं मालतीमाधवम्, वणिङ्नायकं पुष्पभूषितम् ।

५६९ नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित् ।
तेन भेदास्त्रयस्तस्य
५७० तत्र भेदस्तृतीयकः ॥ ५२३ ॥
कितवद्यूतकारादिविटचेटकसङ्कुलः ।

कुलस्त्री पुष्पभूषिते, वेश्या तु रङ्गदत्ते; द्वे अपि मृच्छकटिकायाम् । अस्य नाटकप्रकृतित्वात् शेषं नाटकवत् । अथ भाणः-

५७१ भाणः स्याद्धूर्त्तचरितो नानाऽवस्थाऽन्तरात्मकः ॥ ५२४ ॥

---

कारिकास्थमेतत्पदार्थमाह-एतेदेवेत्यादिना । उदाहरति-यथेत्यादिना । स्पष्टम् ।

प्रकरणं लक्षयितुमाह-अथ नाटकस्य सप्रपञ्चं निरूपणानन्तरम् । प्रकरणम् । लक्ष्यते-५६८ प्रकरणे तदाह्वये द्वितीये रूपक इत्यर्थः । कविकल्पितं 'नतु पुराणेतिहासप्रसिद्ध'मिति भावः । लौकिकमेतल्लोकमात्रोचितम् । वृत्तं नायकचरितम् । शृङ्गारः । अङ्गी प्रधानभूतो रसः । नायकः । तु पुनः । विप्रो ब्राह्मणः । अमात्यो मन्त्री । अथवा । वणिक् वैश्यः । सापायधर्म्मकामार्थपरोऽपायाः क्षयान्तसम्पत्तयस्तैः सहिता ये धर्म्मकामार्थास्तेषु परो भोगार्हधर्म्मकामार्थनिष्ठ इति भावः । धीरप्रशान्तको धीरप्रशान्तलक्षणाक्रान्तः । भवेत् ॥ ५२१ ॥ ५२२ ॥

उदाहरति-विप्रनायकमित्यादिना । स्पष्टम् ।

अस्य भेदानाह-५६९ क्वापि कस्मिंश्चित्तस्य भेदे इत्यर्थः । कुलजा कुलीना । नायिका । क्वापि । वेश्या 'नायिके'ति पूर्वतोऽन्वेति । क्वचित् । द्वयं कुलजा वेश्या चेत्येवं नायिकायुगलम् । "स्या"दिति शेषः । तेन । तस्य प्रकरणस्य । त्रयः । भेदाः । 'स्यु'रिति शेषः ।

अत्रापि तृतीयभेदस्य विशेषमाह-५७० तत्र तेषु त्रिषु भेदेष्विति भावः । तृतीयकः । भेदः कितवद्यूतकारादिविटचेटकसङ्कुलः । अत्र कितवो धूर्त्तः द्यूतकारो द्यूतव्यसनी, आदिना नागरिकादिः, विटचेटौ च लक्षितपूर्वौ ॥ ५२३ ॥

उदाहरणं दर्शयति-कुलस्त्रीति । 'विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम्' इत्युक्तं स्मारयति-अस्येत्यादिना । स्पष्टम् ।

भाणं लक्षयितुमाह-अथ । भाणः । लक्ष्यते ५७१ धूर्त्तचरितो धूर्तेन छलप्रधानेन ( नायकेन ) चरितोऽधिकृतः । नानाऽवस्थाऽन्तरात्मको नानाऽवस्थाऽन्तरं विविधाः प्रारम्भादिपञ्चविधावस्थातिरिक्ता अवस्था आत्मा

एकोऽङ्क एक एवात्र निपुणः पण्डितो विटः ।
रङ्गे प्रकाशयेत्स्वेनानुभूतमितरेण वा ॥ ५२५ ॥
सम्बोधनोक्तिप्रत्युक्ती कुर्य्यादाकाशभाषितैः ।
सूचयेद्वीरशृङ्गारौ शौर्य्यसौभाग्यवर्णनैः ॥ ५२६ ॥
तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती ।
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ॥ ५२७ ॥

तत्र–आकाशभाषितरूपं परवचनमपि स्वयमेवानुवदन्नुत्तरप्रत्युत्तरे कुर्य्यात् । शृङ्गारवीररसौ च सौभाग्यशौर्य्यवर्णनया सूचयेत् । प्रायो भारती, कौशिक्यपि वृत्तिर्भवति, लास्याङ्गानि गेयपदादीनि उदाहरणं लीलामधुकरः । अथ व्यायोगः–

५७२ ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः ।
हीनो गर्भविमर्शाभ्यां नरैर्बहुभिराश्रितः ॥ ५२८ ॥
एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः ।
कौशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः ॥ ५२९ ॥
राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः ।
हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः ॥ ५३० ॥

---

यस्य तादृशः भाणः । स्यात् । अत्र भाणे । एकः । अङ्कः । तथा–एकः । एव । निपुणश्चतुरः । पण्डितः । विटो धूर्त्तः । स्वेन । वा । इतरेण । अनुभूतम् 'वस्तु' इति शेषः । रङ्गे नाट्यशालायाम् । प्रकाशयेत् । एवम्–आकाशभाषितैः । सम्बोधनोक्तिप्रत्युक्ती सम्बोधनेनोक्तिप्रत्युक्ती । कुर्य्यात् । तथा–शौर्य्यसौभाग्यवर्णनैः शौर्य्यवर्णनेन, सौभाग्य ( शृङ्गारावस्था ) वर्णनेन चेत्यर्थः । वीरशृङ्गारौ । सूचयेत् 'कवि' रिति शेषः । तत्र भाणे । उत्पाद्यं कविना कल्पनीयम् । इतिवृत्तम् । वृत्तिः । प्रायेणाधिक्येन । भारती, 'क्वचित् पुनः कौशिकी'ति । भावः मुखनिर्वहणे तदाख्यौ ॥ सन्धी । च एवम् । दश सर्वाणीति भावः । अपि । लास्याङ्गानि गेयपदादीनीत्यर्थः ॥ ५२४ ॥ ५२५ ॥ ५२६ ॥ ५२७ ॥

कारिकायाः कठिनमंशं सुगमयति–तत्रेत्यादिना । स्पष्टम् ।

व्यायोगं लक्षयितुमाह–अथ । व्यायोगः । लक्ष्यते ।

५७२ ख्यातेतिवृत्तः ख्यातं पुराणादिषु प्रसिद्धमितिवृत्तं यत्र तथोक्तः । स्वल्पस्त्रीजनसंयुतः कतिपयाभिरेव स्त्रीभिर्युतः । गर्भविमर्शाभ्यां तदाख्याभ्यां सन्धिभ्याम् । हीनः । बहुभिः । नरैः पुरुषैः । आश्रितः । एकाङ्क एकोऽङ्को यत्र तादृशः । च तथा । अस्त्रीनिमित्तसमरोदयः स्त्रीनिमित्तव्यतिरिक्तनिमित्तकसङ्ग्रामवर्णनात्मक इति भावः । कौशिकीवृत्तिरहितः सात्वत्यारभटीभारतीभिर्वृत्तिभिरुपकृत इति भावः । व्यायोगः । भवेत् । तत्र व्यायोगे । प्रख्यातः प्रसिद्धचरितः । नायकः । 'भवे' दिति शेषः । स नायकः । च । राजर्षिः । अथ । दिव्यः स्वर्गभवः । वा ( इदं समुच्चयार्थम् ) । धीरोद्धतस्तल्लक्षणाक्रान्तः । 'ज्ञेय' इति शेषः । अत्र व्यायोगे इत्यर्थः । हास्यशृङ्गारशान्तेभ्यः । इतरे व्यतिरिक्ताः । रसाः । अङ्गिनः प्रधानतया वर्णनीयाः । 'भवन्ती' ति शेषः ॥ ५२८ ॥ ५२९ ॥ ५३० ॥

यथा-सौगन्धिकाहरणम्। अथ समवकारः—

५७३ वृत्तं समयकारे तु ख्यातं देवासुराश्रयम्।
सन्धयो निर्विमर्शाः स्युस्त्रयोऽङ्कास्तत्र चादिमे ॥ ५३१ ॥
सन्धी द्वावन्त्ययोस्तद्वदेक एको भवेत् पुनः।
नायका द्वादशोदात्ताः प्रख्याता देवदानवाः ॥ ५३२ ॥
फलं पृथक्पृथक् तेषां वीरमुख्योऽखिलो रसः।
वृत्तयो मन्दकौशिक्यो नात्र विन्दुप्रवेशकौ ॥ ५३३ ॥
वीथ्यङ्गानि च तत्र स्युर्यथालाभं त्रयोदश।
गायत्र्युष्णिग्मुखान्यत्र च्छन्दांसि विविधानि च ॥ ५३४ ॥
त्रिशृङ्गारस्त्रिकपटः कार्य्यश्चायं त्रिविद्रवः।
वस्तु द्वादशनाडीभिर्निष्पाद्यं प्रथमाङ्कगम् ॥ ५३५ ॥
द्वितीयेऽङ्के च तिसृभि-र्द्वाभ्यामङ्के तृतीयके।

नाडिका घटिकाद्वयमुच्यते, विन्दुप्रवेशकौ च नाटकोक्तावपि नेह विधातव्यौ। तत्र-

५७४ धर्म्मार्थकामैस्त्रिविधः शृङ्गारः, कपटः पुनः ॥ ५३६ ॥

---

उदाहरति-यथेत्यादिना। स्पष्टम्।

समवकारं लक्षयितुमाह-अथ। समवकारः। लक्ष्यते ५७३ समवकारे। तु। देवासुराश्रयं देवासुरा आश्रया यस्य तत्। ख्यातं प्रसिद्धम्। वृत्तं चरित्रम्। 'स्या'दिति शेषः। निर्विमर्शा विमर्शाख्यसन्धिव्यतिरिक्ताः। सन्धयः। स्युः। तथा-त्रयः। अङ्काः। तत्र तेष्वङ्केषु मध्ये इत्यर्थः। च। आदिमे प्रथमेऽङ्के।-द्वौ। सन्धी मुखप्रतिमुखाख्यौ सन्धी इत्यर्थः। तद्वत्। अन्त्ययोर्द्वितीये तृतीयेऽङ्के चेत्यर्थः। एकः। एकः। 'सन्धि'रिति शेषः। तथा च-द्वितीये गर्भस्तृतीये निर्वहणं सन्धिरिति निष्कृष्टोऽर्थः। पुनः। भवेत्। तथा-तत्र, द्वादश। उदात्ता धीरोदात्ताः। प्रख्याताः। देवदानवाः। नायकाः। तेषां नायकानामित्यर्थः। पृथक्पृथक् भिन्नंभिन्नमित्यर्थः। फलं कार्य्यतो लाभः। तथा-वीरमुख्यो वीररसप्रधानः। अखिलः सर्वविधः। रसः शृङ्गारादिरित्यर्थः। मन्दकौशिक्यो मन्दा क्वाचित्की कौशिकी यासु ताः, प्रायेण कौशिकीविरहिता इति भावः। वृत्तयो भारतीसात्वत्यारभव्य इत्यर्थः। 'भवन्ती'ति शेषः। अत्र समवकारे। विन्दुप्रवेशकौ विन्दुरर्थप्रकृतिविशेषः प्रवेशकश्च प्रस्तावनाविशेषः। न'स्याता'मिति शेषः। तत्र-समवकारे। च। यथालाभं यथासम्भवम्। त्रयोदश। वीथ्यङ्गानि (वक्ष्यमाणानि)। स्युः। अत्र। च। गायत्र्युष्णिग्मुखानि गायत्र्युष्णिगादीनि। विविधानि। छन्दांसि वृत्तानि। अयं समवकारः। च। त्रिशृङ्गारः। त्रिकपटः। त्रिविद्रवः। कार्य्यः। तस्य च-प्रथमाङ्कगं प्रथमेऽङ्के निवेश्यमिति भावः। द्वादशनाडीभिश्चतुर्विंशघटिकाभिः। निष्पाद्यम्। वस्तु इतिवृत्तम्। द्वितीये। अङ्के। च। तिसृभिर्नाडिकाभिरिति शेषः। तृतीयके तृतीये। अङ्के। द्वाभ्यां'नाडीभ्यां निष्पाद्यं वस्तु'इति शेषः ॥ ५३१ ॥ ५३२ ॥ ५३३ ॥ ५३४ ॥ ५३५ ॥

कारिकां सुगमयितुं तत्कठिनांशं विशदयति-नाडिकेत्यादिना। स्पष्टम्।

"त्रिशृङ्गार" इत्यादिना शृङ्गारादेस्त्रिविधत्वं स्वयमाह-५७४ धर्म्मार्थकामैः'पृथक्पृथक् विशेषित'इति शेषः। त्रिविधः। शृङ्गारः,। तथाहि-धर्म्मोपाधिकः शृङ्गार एकः, अर्थोपधिकः शृङ्गारोऽर्थशृङ्गारो द्वितीयः, कामोपाधिकः

स्वाभाविकः कृत्रिमश्च दैवजो, विद्रवः पुनः ।
अचेतनैश्चेतनैश्च, चेतनाचेतनैः कृतः ॥ ५३७ ॥

तत्र शास्त्राविरोधेन कृतो धर्म्मशृङ्गारः, अर्थलाभार्थं कल्पितोऽर्थशृङ्गारः, प्रहसनशृङ्गारः कामशृङ्गारः, । तत्र कामशृङ्गारः प्रथमाङ्क एव, अन्ययोस्तु न नियम इत्याहुः । चेतनाचेतना-गजादयः । समवकीर्य्यन्ते बहवोऽर्था अस्मिन्निति समवकारः । यथा—समुद्रमथनम्—अथ डिमः—

५७५ मायेन्द्रजालसङ्ग्राम—क्रोधोद्भ्रान्तादिचेष्टितैः ।
उपरागैश्च भूयिष्ठो डिमः ख्यातेतिवृत्तकः ॥ ५३८ ॥
अङ्गी रौद्ररसस्तत्र सर्वेऽङ्गानि रसाः पुनः ।
चत्वारोऽङ्का मता, नेह विष्कम्भकप्रवेशकौ ॥ ५३९ ॥
नायका देवगन्धर्वयक्षरक्षोमहोरगाः ।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः ॥ ५४० ॥
वृत्तयः कौशिकीहीना निर्विमर्शाश्च सन्धयः ।
दीप्ताः स्युः षड्रसाः शान्तहास्यशृङ्गारवर्जिताः ॥ ५४१ ॥

अत्रोदाहरणं च "त्रिपुरदाहः" इति महर्षिः । अथेहामृगः—

---

शृङ्गारः कामशृङ्गारस्तृतीय इति भावः । कपटः । पुनः । स्वाभाविकः । च। कृत्रिमः स्वाभाविकेतरः । दैवजः तदुभयव्यतिरिक्तोऽतर्कितोपनतः । 'इति' इति शेषः । 'त्रिविध' इति पूर्वतोऽन्वेति । विद्रवः पलायनम् । पुनः । अचेतनैः स्थाणुभूतादिभिरित्यर्थः । चेतनैर्दस्युप्रभृतिभिः । चेतनाचेतनैश्चेतनत्वेऽपि जडप्रकृतिकत्वेनाचेतनैरित्यर्थः । कृतः । इदम्बोध्यम्—त्रिविधाः शृङ्गारः कपटो विद्रवश्चेत्येतेऽवश्यं समवकारे समुद्भावनीयाः । इति ॥ ५३७ ॥

तदेव परिष्कृत्याह—तत्र तेषु शृङ्गारेष्वित्यर्थः । शास्त्राविरोधेन 'ऋतौ भार्यामुपेया' दित्यादिशास्त्रानुकूल्येन । कृतः । 'शृङ्गारः' इति शेषः । धर्म्मशृङ्गारः । तथा च—निषिद्धकाले निषिद्धस्त्रियां कृतः शृङ्गारः(तदर्थं चेष्टितम्) पापशृङ्गारस्ततो भिन्नो धर्म्मशृङ्गार इति निष्कृष्टार्थः । अर्थलाभार्थं प्रयोजनसिद्ध्यर्थं धनलाभमुद्दिश्य वेति भावः । कल्पितः । अर्थशृङ्गारः । कामशृङ्गारो विषयभोगमात्रनिमित्तकः शृङ्गारः । प्रहसनशृङ्गारस्तदपरनामधेयो बोध्य इत्यर्थः ।

निरूपणव्यवस्थामाह—तत्रेत्यादिना । स्पष्टमन्यत् । उदाहरति—यथा । समुद्रमथनं तदाख्य इत्यर्थः । डिमं लक्षयितुमाह—अथ समवकारनिरूपणानन्तरम् । डिमः । लक्ष्यते ५७५ मायेन्द्रजालसङ्ग्रामक्रोधोद्भ्रान्तादिचेष्टितैः । आदिपदेनोन्मत्तादीनां ग्रहणम् । उपरागैश्चन्द्रसूर्ययोर्ग्रहणैरुपचारात्तद्वर्णनैः । च ( इदं समुच्चयार्थम् ) । यद्वा—चकारेण निर्घातोल्कापातादिवर्णनैश्चेत्यर्थः । भूयिष्ठो विस्तरं प्राप्तः । ख्यातेतिवृत्तकः 'ख्यातमितिवृत्तं यत्र तादृशः । डिमः । तत्र डिमाख्ये रूपक इत्यर्थः । रौद्ररसः । अङ्गी । सर्वे रौद्रव्यतिरिक्ताः शृङ्गारादयः । रसाः । पुनः । अङ्गान्यप्रधानभूताः । तथा—चत्वारः । अङ्काः । मताः । इहास्मिन् डिमे । विष्कम्भकप्रवेशकौ । न 'कार्य्यौ' इति शेषः । षोडश । अत्यन्तम् । उद्धता धीरोद्धताः । देवगन्धर्वयक्षरक्षोमहोरगाः । भूतप्रेतपिशाचाद्या आद्यपदेन दैत्यादीनां ग्रहणम् । नायकाः । कौशिकीहीनाः कौशिकीं विहायान्याः । वृत्तयः । निर्विमर्शा विमर्शाख्यं सन्धिं परित्यज्यान्ये । सन्धयः । च । दीप्ता विभावादिसामग्रीबलेन स्फुटाः । शान्तहास्यशृङ्गारवर्जिताश्शान्तं हास्यं शृङ्गारं च वर्जयित्वाऽन्ये इत्यर्थः । षट् । रसाः । शान्तहास्यशृङ्गारास्तु अस्फुटा निरूपणीया इति भावः । स्युः ॥ ५३८–५४१ ॥

नन्वेतादृशः क इत्याशङ्क्याह—अत्रेत्यादि । स्फुटम् । महर्षिवाक्यं च—"इदं त्रिपुरदाहे तु लक्षणं ब्रह्मणोदितम् । ततस्त्रिपुरदाहश्च डिमसञ्ज्ञः प्रयोजितः ॥" इति ।

५७६ ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्त्तितः ।
मुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा ॥ ५४२ ॥
नरदिव्यावनियमौ नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्यो गूढभावादयुक्तकृत् ॥ ५४३ ॥
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।
शृङ्गाराभासमप्यस्य किञ्चित्किञ्चित् प्रदर्शयेत् ॥ ५४४ ॥
पताकानायका दिव्या मर्त्या वाऽपि दशोद्धताः ।
युद्धमानीय संरम्भं परं व्याजान्निवर्त्तयेत् ॥ ५४५ ॥
महात्मानो वधप्राप्ता अपि वध्याः स्युरत्र नो ।
एकाङ्को देव एवात्र नेतेत्याहुः परे पुनः ॥ ५४६ ॥
दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे ।

मिश्रं ख्याताख्यातम् । अन्यः प्रतिनायकः । पताकानायकास्तु नायकप्रतिनायकयोर्मिलिता दश । नायको मृगवदलभ्यामपि नायिकामत्र ईहते वाञ्छतीति ईहामृगः । यथा—कुसुमशेखरविजयादिः । अथाङ्कः—

---

ईहामृगं लक्षयितुमाह—अथ । ईहामृगस्तन्नामकं रूपकम् । लक्ष्यते ५७६ मिश्रवृत्तो मिश्रं ख्याताख्यातमितिवृत्तं यत्र तादृशः । चतुरङ्कश्चत्वारोऽङ्का यत्र तादृशः । ईहामृगः । प्रकीर्त्तितः । तत्र तस्मिन्नीहामृगाख्ये रूपके । मुखप्रतिमुखे तदाख्यौ । सन्धी । तथा । निर्वहणं तदाख्यः सन्धिर्विधेय इति भावः । अनियमौ विकल्पितनिरूपणौ । नरदिव्यौ मनुष्यो दिव्यश्च (देवयक्षाद्यन्यतमश्च) । ख्यातौ । धीरोद्धतौ । नायकप्रतिनायकौ तथा च-नायकः क्वचिन्मनुष्यः, कचित् दिव्यश्च; एवं प्रतिनायकौ मनुष्यो दिव्यो वा वर्णनीयः । एतावपि धीरोद्धतावेवेति निष्कर्षः । अत्रापि-अन्यः प्रतिनायक इति भावः । गूढभावात्तात्पर्य्यान्निगूहेति भावः । अयुक्तकृत् नीतिविरुद्धचेष्टित इति भावः । अस्य प्रतिनायकस्य । अपहारादिनाऽपहारो बलात्कार आदिर्यत्र ( छलादेः ) तेन तद्वारेति भावः । अनिच्छन्तीम् । दिव्यस्त्रियम् । इच्छतः 'सत'इति शेषः । शृङ्गाराभासम् । अपि । किञ्चित्किञ्चित् । प्रदर्शयेत् । दश । उद्धता धीरोद्धताः । दिव्याः । मर्त्या मनुष्याः वा । अपि । पताकानायकाः पञ्चविधानां पताकानां नायकाः ( पञ्चनायकाः पञ्च प्रतिनायकाश्चेति कृत्वा ) फलस्वामिनः । 'वर्णनीया' इति शेषः । अयम्भावः—पताकानां पञ्चविधत्वेन द्वयोरपि नायकप्रतिनायकयोस्तासां स्वामिभूतत्वात् प्रत्येकं पञ्चविधत्वे दशविधत्वम् । इति । परं प्रतिनायकम् । युद्धं युद्धभूमिम् । आनीय प्रापय्य । व्याजात् कश्चिच्छलमापाद्येति भावः । संरम्भं क्रोधम् । निवर्तयेत् । यद्वा—संरम्भम् आनीय युद्धं निवर्त्तयेदित्यन्वयः । अत्रास्मिन्नीहामृगे । वधप्राप्ताः पुराणेतिहासानुकूल्येन प्रतिनायकेन हननीयतया दर्शनीयाः । अपि । महात्मानः । वध्या हननीयाः । नो नैव । एवं स्वारस्येन लक्षयित्वा परमतेन तत्र किञ्चिदाह—अत्रेहामृगे इत्यर्थः । एकः । अङ्कः । देवो दिव्यजनः । एव न तु नर इत्यर्थः । नेता नायकः । इति । परे । आहुः । इतरे एतेभ्योऽपि भिन्ना आचार्य्याः । पुनः । दिव्यस्त्रीहेतुकं दिव्यस्त्रियं निमित्तीकृत्येति भावः । युद्धं 'वर्णनीय'मिति शेषः । षट् । 'स्त्रे'ति शेषः । नायकाः । इति । 'आहुरि'ति शेषः ॥ ५४२-५४६ ॥

कारिकां सुगमयितुमाह—मिश्रमित्यादि । स्पष्टम् ।

५७७ उत्सृष्टिकाङ्क एकाङ्को नेतारः प्राकृता नराः ॥ ५४७ ॥

रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम् ।
प्रख्यातमितिवृत्तं च कविर्बुद्ध्या प्रपञ्चयेत् ॥ ५४८ ॥

भाणवत् सन्धिवृत्त्यङ्गान्यस्मिन् जयपराजयौ ।
युद्धं च वाचा कर्त्तव्यं निर्वेदवचनं बहु ॥ ५४९ ॥

इमं च केचित् 'नाटकाऽऽद्यन्तःपात्यङ्कपरिच्छेदार्थमुत्सृष्टिकाऽङ्कनामानम्' आहुः, अन्ये तु "उत्क्रान्ता विलोमरूपा सृष्टिर्यत्र" इत्युत्सृष्टिकाङ्कः। यथा शर्मिष्ठा ययातिः।

अथ वीथी-

५७८ वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते ।
आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः ॥ ५५० ॥

सूचयेद्भूरि शृङ्गारं किञ्चिदन्यान् रसानपि ।
मुखनिर्वहणे सन्धी अर्थप्रकृतयोऽखिलाः ॥ ५५१ ॥

कश्चिदिति, उत्तमो मध्यमोऽधमो वा। शृङ्गारबहुलत्वाच्च अस्याः कौशिकीवृत्तिबहुलत्वम्।

---

रूपकस्य सञ्ज्ञायाः सार्थकतां दर्शयति-**नायक** इत्यादिना । स्पष्टम् ।

उदाहरति-**यथे**त्यादिना। आदिपदार्थ ऊह्यः । स्पष्टमन्यत् ।

अङ्कं लक्षयितुमाह-**अथ**। अङ्कस्तन्नामकं रूपकं लक्ष्यते ५७७ **उत्सृष्टिकाङ्क**.एतदपरनामकोऽङ्क इति भावः । **एकाङ्क** एकोऽङ्को यत्र तादृशः । **अत्रा**ङ्काख्ये रूपके। **प्राकृता** अनतिचतुराः । **नराः**। **नेतारो** नायकाः ( अत्र बहुवचनमेषामेकद्विसङ्ख्याऽतिरिक्तत्वं सूचयन् बहुत्वमात्रमाह )। **करुणः**। **रसः** करुणरसः । **स्थायी**। अत एव-**बहुस्त्रीपरिदेवितं** बहुस्त्रीणां विलापवर्णनगर्भितम्। **प्रख्यातम्** । **च** क्वचिदविख्यातमिति भावः। **इतिवृत्तम्**। **कविः**। **बुद्ध्या** स्वप्रतिभया । **प्रपञ्चयेत्** विस्तरं नयेत् । तथा हि भरतः-" प्रख्यातवस्तुविषयस्त्वप्रख्यातः कदाचिदेव स्यात् । दिव्यपुरुषैर्वियुक्तः शेषैरन्यैर्भवेत् पुम्भिः ॥" इति । **भाणव**द्यथा भाणे तथा। **अस्मिन्**। **सन्धिवृत्त्यङ्गानि** ( मुखनिर्वहणे ) सन्धी च ( कौशिकीभारत्यौ ) वृत्ती च ( गेयपदादीनि ) अङ्गानि चेति तानि तथोक्तानि । तथा-**जयपराजयौ**। 'प्रपञ्चये'दिति पूर्वतोऽन्वेति । **वाचा** ननु शस्त्रादिना । **च**। **युद्धम्** । **कर्त्तव्यम्**। तथा-**बहु** अत्यन्तम्। **निर्वेदवचनं** वैराग्यवर्णनम्। 'कर्त्तव्य'मिति शेषः ॥ ५४७-५४९ ॥

अस्यो'त्सृष्टिकाऽङ्के' इति नामान्तरे हेतुं परमतमुद्भाव्य दर्शयति-**इमम**ङ्कमित्यर्थः। स्पष्टमन्यत्। उदाहरति-**यथे**त्यादिना । स्पष्टम् ।

वीथीं लक्षयितुमाह-**अथा**ङ्कनिरूपणानन्तरम्। **वीथी**। लक्ष्यते । ५७८ **वीथ्याम्**। **एकः**। **अङ्कः**। **भवेत्**। **अत्रा**स्याम्। **कश्चि**दुत्तममध्यमाधमान्यतमः। **एकः**। 'नेते'ति शेषः । **कल्प्यते**। **उक्तै**रुच्चारितैः । **आकाशभाषितैः**। **चित्रां** मनोरमाम्। **प्रत्युक्तिं** प्रतिवचनम्। **आश्रितः**।'स'न्निति शेषः । **भूरि**। **शृङ्गारम्**। **किञ्चित्**। **अन्यान्** । **अपि**। **रसान्** । **सूचयेत्**। **मुखनिर्वहणे**। **सन्धी** 'कर्त्तव्यौ'इति शेषः । एवम्-**अखिलाः** समस्ताः । **अर्थप्रकृतयो** बीजादयः । 'कार्य्या'इति शेषः ॥५५०॥५५१॥

कारिकां सुगमयितुमाह-**कश्चिदि**तीत्यादि । स्पष्टम् ।

५७९ अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः ।
उद्घातकावलगिते प्रपञ्चस्त्रिगतं छलम् ॥ ५५२ ॥
वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।
असत्प्रलापव्याहार-मार्दवानि च तानि तु ॥ ५५३ ॥

तत्रोद्घातकावलगिते प्रस्तावनाप्रस्तावे सोदाहरणे लक्षिते ।

५८० मिथो वाक्यमसद्भूतं प्रपञ्चो हास्यकृन्मतः ।

यथा-विक्रमोर्वश्याम्, वलभीस्थविदूषकचेट्योरन्योऽन्यवचनम् ।

५८१ त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः ॥ ५५४ ॥

यथा-तत्रैव, "राजा-...

सर्वक्षितिभृतां नाथ! दृष्टा सर्वाङ्गसुन्दरी। रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया॥३३१॥
(नेपथ्ये तथैव प्रतिशब्दः)। राजा कथं यथाक्रमं दृष्टेत्याह ॥"

इत्यत्र प्रश्नवाक्यमेवोत्तरत्वेन योजितम्। 'नटादित्रितयविषयमेवेद' मिति कश्चित्।

---

अस्या भेदानाह-५७९ अस्या निरुक्तलक्षणस्य वीथीनाम्नो रूपकस्येत्यर्थः । स्पष्टमन्यत् ॥५५२॥ ५५३ ॥

उद्घातकावलगिते पूर्वं लक्षिते इत्याह-तत्रेत्यादिना । स्पष्टम् ।

प्रपञ्चं लक्षयति-५८० मिथः परस्परम् । असद्भूतमसत्यम् । हास्यकृत् हास्योद्भावकम् । वाक्यम् । प्रपञ्चः । मतः ।

उदाहरति-यथेत्यादिना । यथा । विक्रमोर्वश्याम् 'द्वितीयेऽङ्के' इति शेषः । वलभीस्थविदूषकचेट्योर्वलभ्यां प्रासादोपरि तिष्ठत इति तथोक्ते विदूषकचेटी तयोः । 'शुद्धान्ते वलभी चन्द्रशाले सौधोर्ध्ववेश्मनि ।' इति रभसः । अन्योऽन्यवचनं परस्परं वचनप्रतिवचने ।

त्रिगतं लक्षयति- ५८१ श्रुतिसाम्यतः श्रुतिः पदानां कर्णविषयीभवनं तत्र साम्यं सादृश्यप्रत्ययस्तस्मात्। पञ्चम्यर्थे तसिल् । अनेकार्थयोजनमनेकार्थप्रतिपादकतया कल्पना । त्रिगतम् । स्यात् ॥ ५५४ ॥

उदाहरति-यथा । तत्र विक्रमोर्वश्याम् 'चतुर्थेऽङ्के' इति शेषः । एव । "राजा पुरुरवाः 'चर्चारिकयोपसृत्याञ्जलिं बद्ध्वाऽऽहे' ति शेषः ।

हे सर्वक्षितिभृतां सर्वे क्षितिभृतो पर्वतास्तेषाम् । नाथ । मया पुरूरवसा । विरहिता । सर्वाङ्गसुन्दरी सर्वाङ्गरमणीया । रामा प्रियोर्वशीति यावत् । त्वया । अस्मिन् । वनान्ते वनमध्ये । 'अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः । अवयवेऽपी' ति हैमः । दृष्टा ? ॥३३१॥ (नेपथ्ये । तथा यथा राज्ञा पठितं तथाभूतः । एव । प्रतिशब्दः) । राजा 'सहर्षमाकर्ण्याहे' ति शेषः । कथम् । यथाक्रमं मया यथा पठितं तथेति भावः । दृष्टा । इति । आह उत्तरयति ।" इत्यत्र । प्रश्नवाक्यम् । एव । उत्तरत्वेन प्रतिवचनरूपेण । योजितम् । अयम्भावः-उत्तरवाक्ये 'सर्वक्षितिभृतां नाथ' इत्येव 'राजेन्द्र' इत्यर्थकं, ततश्च-'त्वया विरहिता मया दृष्टा' इत्यन्वयः सम्पद्यते इति ।

दशरूपककारमतं दर्शयति-'इदं त्रिगतम् । नटादित्रितयविषयम् । आदिना नटीपारिपार्श्विकयोर्ग्रहणम् । एव ।' इति । कश्चित् दशरूपककारः । 'आहे' इति शेषः । तथाहि तद्वाक्यम्-"श्रुतिसाम्यादनेकार्थयोजनं त्रिगतं त्विह । नटादित्रितयालापः पूर्वरङ्गे तदिष्यते ॥" इति ।

५८२ प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य च्छलना छलम् ।

यथा-वेणीसंहारे, "भीमार्जुनौ—

कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
राजा, दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः
क्वास्ते दुर्य्योधनोऽसौ कथयत न रुषा द्रष्टुमभ्यागतौ स्वः ॥ ३३२ ॥"

५८३ अन्ये त्वाहुश्छलं किञ्चित् कार्य्यमुद्दिश्य कस्यचित् ॥ ५५५ ॥
उदीर्य्यते यद्वचनं वञ्चनाहास्यरोषकृत् ।

५८४ वाक्केलिर्हास्यसम्बन्धो द्वित्रप्रत्युक्तितो भवेत् ॥ ५५६ ॥

द्वित्रेत्युपलक्षणम् । यथा—

"भिक्षो ! मांसनिषेवणं प्रकुरुषे किं तेन मद्यं विना,
मद्यं चापि तव प्रियं ? प्रियमहो वाराङ्गनाभिः सह ।
वेश्याऽप्यर्थरुचिः कुतस्तव धनं ? द्यूतेन चौर्य्येण वा
चौर्य्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य काऽन्या गतिः ॥ ३३३ ॥"

---

छलं लक्षयति–५८२ प्रियाभैः प्रियसदृशैः । वस्तुतः–अप्रियैः । वाक्यैः । विलोभ्य लुब्धं विधाय । छलना वञ्चना । छलम् ।

उदाहरति–यथा । वेणीसंहारे । 'पञ्चमेऽङ्के' इति शेषः । भीमार्जुनौ 'पृच्छत' इति शेषः ।

द्यूतच्छलानां द्यूतरूपस्य कपटस्य ( बहुवचनमविवक्षितम् ) । कर्त्ता । जतुमयशरणोद्दीपनो जतुमयं लाक्षाप्रचुरं यच्छरणं स्थानं तदुद्दीपयतीति तथोक्तः । 'शरणं गृहरक्षित्रो'रित्यमरः । लाक्षाभवनस्य दाहक इति भावः । दुःशासनादेः । अनुजशतस्य । गुरुर्ज्येष्ठः । अङ्गराजस्य कर्णस्य । मित्रम् । कृष्णाकेशोत्तरीयव्यपनयनपटुः कृष्णाया द्रौपद्याः केशोत्तरीयाणि केशा उत्तरीयवस्त्रं च तेषां व्यपनयनं स्थानाच्च्यावनं तत्र पटुः । यस्य । पाण्डवाः । दासाः किङ्कराः । सः । अभिमानी । असौ । राजा । दुर्य्योधनः । क्व कस्मिन् स्थाने । आस्ते । कथयत 'भोः समन्तपञ्चकसञ्चारिणः !' इति शेषः । यूयम्–कथयत । रुषा क्रोधेन । द्रष्टुम् । न 'आवा' मिति शेषः । अभ्यागतौ । स्वो भवावः । अत्र कर्त्तेत्यादीनां पदानां प्रियसदृशत्वं स्पष्टम् । शार्दूलविक्रीडितं वृत्तम् ॥ ३३२ ॥"

परमतेनाह–५८३ कस्यचित् । किञ्चित् । कार्य्यं प्रयोजनम् । उद्दिश्य निमित्तीकृत्य । वञ्चनाहास्यरोषकृत् वञ्चना ( प्रतारणं ) च हास्यं च रोषः ( क्रोधः ) च तान् करोतीति तथोक्तम् । यत् । वचनम् । उदीर्य्यते । 'त' दिति शेषः । छलम् । तु पुनः । अन्ये । आहुः ॥ ५५५ ॥

वाक्केलिं लक्षयति–५८४ द्वित्रप्रत्युक्तितो द्वे वा तिस्रो वेति द्वित्राः, ताः प्रत्युक्तयस्ताभ्य इति तथोक्ततः । 'द्वित्रि' इति पाठे तु समासविधेरनित्यतामाश्रित्य अप्रत्ययाविधानम् । हास्यसम्बन्धः । वाक्केलिः । भवेत् ॥ ५५६ ॥

द्वित्रेति पदं ततोऽधिकानामप्युपलक्षकमिति निरूपयन् उदाहरति–द्वित्रेत्यादिना । स्पष्टम् ।

'हे भिक्षो ! मांसनिषेवणं मांसस्य भक्षणम् । प्रकुरुषे ननु करोषि ? ( इति प्रश्नः ) । मद्यम् । विना । तेन मांसनिषेवणेन । किम् ( इत्युत्तरम् ) । मद्यम् । अपि । च पुनः । तव । प्रियम् ? ( इति प्रश्नः ) । अहो । वाराङ्गनाभिर्वेश्याभिः । सह । प्रियं न केवलं समांसं मद्यम्, किन्तु वाराङ्गना अपि मम प्रियाः इति भावः ( इत्युत्तरम् ) । वेश्याऽपि 'तव प्रिया' इति शेषः ( इति प्रश्नः ) । अर्थरुचिर्लुब्धा 'साऽपि प्रिये' ति शेषः ( इत्युत्तरम् ) । तव ( भिक्षोः ) । धनम् । कुतः ( इति प्रश्नः ) । द्यूतेन । चौर्य्येण । वा 'धनं मयाऽऽनीयत' इति शेषः (इत्युत्तरम्) । भवतो गृहीतभिक्षुवेशतया पूज्यस्य तवेत्यर्थः । चौर्य्यद्यूतपरिग्रहश्चौर्य्ये द्यूते चासक्तिः । अपि । ( इति

केचित्-'प्रक्रान्तवाक्यस्य साकाङ्क्षस्यैव निवृत्तिर्वाक्केलिः' इत्याहुः । अन्ये तु 'अनेकस्य प्रश्नस्यैकमुत्तरम् ।' इति ।

५८५ अन्योऽन्यवाक्याधिक्योक्तिः स्पर्द्धयाऽधिबलं मतम् ।

यथा-मम प्रभावत्याम्, "वज्रनाभः-

अस्य वक्षः क्षणेनैव निर्मथ्य गदयाऽनया । लीलयोन्मूलयाम्येष भुवनद्वयमद्य वः ॥ ३३४॥

प्रद्युम्नः-अरेरे असुरापसद ! अलममुना बहुप्रलापेन । मम खलु-

अद्य प्रचण्डभुजदण्डसमर्पितोरुकोदण्डनिर्गलितकाण्डसमूहपातैः ।
आस्तां समस्तदितिजक्षतजोक्षितेयं क्षोणिः क्षणेन पिशिताशनलोभनीया ॥ ३३५॥"

५८६ गण्डं प्रस्तुतसम्बन्धि भिन्नार्थं सत्वरं वचः ॥ ५५७ ॥

यथा-वेणीसंहारे, "राजा--

लोलांशुकस्य पवनाकुलितांशुकान्तं त्वद्दृष्टिहारि मम लोचनबान्धवस्य ।
अध्यासितुं तव चिराजघनस्थलस्य पर्याप्तमेव करभोरु ! ममोरुयुग्मम् ॥३३६॥"

---

प्रश्नः ) । नष्टस्य स्वधर्मतश्च्युतस्य । 'धर्म्म एव हतो हन्ती'ति मनुः । अन्या । का । गतिः ? न काऽपि गतिरिति पर्य्यवसितोऽर्थः ( इत्युत्तरम् ) । शार्दूलविक्रीडितं वृत्तम् ॥ ३३३ ॥"

अन्येषाम्मतं दर्शयति-'साकाङ्क्षस्य । एव ( नतु निराकाङ्क्षस्य ) प्रक्रान्तवाक्यस्य । निवृत्तिः सम्पूर्त्तिः । वाक्केलिः ।' इति । केचित् । आहुः ।' अन्ये । तु । अनेकस्य नानाविधस्य । प्रश्नस्य । एकम् । उत्तरम् । 'वाक्केलि'रिति पूर्वतोऽन्वेति ।' इति 'आहु'रिति पूर्वतोऽन्वेति ।

अधिबलं लक्षयति-५८५ स्पर्द्धया । अन्योऽन्यवाक्याधिक्योक्तिरन्योऽन्यं वाक्यस्याधिक्येनोक्तिः अधिबलम् । मतम् ।

उदाहरति-यथा । मम । प्रभावत्याम् । "वज्रनाभस्तदाख्यो दैत्यविशेषः । 'आहे'ति शेषः । अनया । गदया । क्षणेन । एव । अस्य । वक्ष उरःस्थलम् । निर्मथ्य विभेद्य । एषः । 'अह'मिति शेषः । अद्य । वो युष्माकं युष्माननादृत्येति यावत् । लीलया 'न त्वायासेने'ति शेषः । भुवनद्वयं मनुष्यलोकं देवलोकं चेति भावः । उन्मूलयामि ॥३३४॥ प्रद्युम्नः 'प्रत्याहे'ति शेषः । अरेरे । असुरापसद ! अमुना । बहुप्रलापेन । अलम् । मम । खलु-अद्य । प्रचण्ड...पातैः प्रचण्डं यद्भुजदण्डसमर्पितोरुकोदण्डं तेन निर्गलिताः पातिता ये काण्डाः शरास्तेषां समूहस्तस्य पातास्तैः । भुजौ दण्डाविव तयोः समर्पितं तच्च यदुरुकोदण्डं महाधनुरिति तथोक्तम् । इयम् । क्षोणिः पृथिवी । समस्तदितिजक्षतजोक्षिता । समस्ता ये दितिजा दैत्यास्तेषां क्षतजं रुधिरं तेनोक्षिता सिक्ता । पिशिताशनलोभनीया पिशितं मांसमशनं भोजनं येषां तेषां (रक्षसां गृध्रादीनां च) लोभनीया । क्षणेन । आस्ताम् । अत्र वज्रनाभस्य वाक्यापेक्षया प्रद्युम्नस्य वाक्यमधिकम् । वसन्ततिलकं वृत्तम् ॥३३५॥"

गण्डं लक्षयति-५८६ प्रस्तुतसम्बन्धि प्रसङ्गानुप्रसक्तम् । भिन्नार्थं प्रस्तुताननुकूलम् । सत्वरं झटिति 'उच्चरित'मिति शेषः । वच उत्तरम् । गण्डम् ॥ ५५७ ॥

उदाहरति-यथा । वेणीसंहारे 'तृतीयेऽङ्के'इति शेषः । "राजा दुर्योधनः ( प्रियां प्रत्याह ) हे करभोरु करभाविव हस्तयोर्वाह्यभागाविवोरू यस्यास्तत्सम्बुद्धौ तथोक्तं ! लोलांशुकस्य लोलं चञ्चलमंशुकं वस्त्रं यत्र तादृशस्य । मम । लोचनबान्धवस्य मदीयनेत्रयोस्तृप्तिकरस्य । तव । जघनस्थलस्य । अध्यासितुमधिष्ठातुम् । पवनाकुलितांशुकान्तं पवनेनाकुलितोंऽशुकान्तो वस्त्रपर्य्यन्तभागो यस्य तादृशम् । त्वद्दृष्टिहारि त्वदीयनेत्रयो रञ्जकम् । मम । ऊरुयुगम् । चिरात् चिरकालं व्याप्य । पर्य्याप्तम् । एव । वसन्ततिलकं वृत्तम् ॥ ३३६ ॥"

अनन्तरम् "( प्रविश्य ) कञ्चुकी–देव ! भग्नम्" इत्यादि । अत्र रथकेतनभङ्गार्थं वचनमूरुभङ्गार्थे सम्बन्धे सम्बद्धम् ।

**५८७ व्याख्यानं स्वरसोक्तस्यान्यथाऽवस्यन्दितं भवेत् ।**

यथा–छलितरामे–"सीता–जाद ! कल्लं क्खु अजोज्झाएण गंतव्वं तहिं सो राआ बिणएण पणयिदव्वो । लवः–अथ किमावाभ्यां राजोपजीविभ्यां भवितव्यम् ? सीता–जाद ! सो तुह्माणं पिदा । लवः–किमावयो रघुपतिः पिता ? सीता–( साशङ्कम् ) मा अण्णधा संकधं ण क्खु तुह्माणं सअलाए जेव पुहवीए त्ति ।"

**५८८ प्रहेलिकैव हास्येन युक्ता भवति नालिका ॥ ५५८ ॥**

संवरणकार्य्युत्तरं प्रहेलिका, यथा–रत्नावल्याम्, "सुसङ्गता–सहि ! जस्स किदे तुमं आअदा, सो अअं दे पुरदो चिट्ठदि । सागरिका (सासूयम्) कस्स किदे अहं आअदा ? सुसङ्गता (विहस्य) अइ अण्णसंकिदे ! णं चित्तफलअस्स ता गेह्न एदं" अत्र "त्वं राज्ञः कृते आगते"त्यर्थः संवृतः ।

---

अनन्तरम् । "प्रविश्य 'शुद्धान्त'इति शेषः । कञ्चुकी 'आह राजान'मिति शेषः । हे देव ! भग्नम् ।" इत्यादि । अत्र । रथकेतनभङ्गार्थं रथध्वजपतनसूचनाय प्रवृत्तमिति भावः । वचनम् । ऊरुभङ्गार्थे ऊरुभङ्गसूचके । सम्बन्धे । सम्बद्धमन्वितम् ।

अवस्यन्दितं लक्षयति–५८७ स्वरसोक्तस्य स्वरसेन स्वेच्छया स्वभावत इति यावत् उक्तं तस्य । अन्यथा प्रकारान्तरेण । व्याख्यानम् । अवस्यन्दितम् । भवेत् ।

उदाहरति–यथा । छलितरामे । "सीता 'लवं प्रत्याहे'ति शेषः । जाद जातपुत्र ! इति यावत् । कल्लं कल्यं परेद्युः । क्खु खलु । अजोज्झाएण अयोध्यायाम् । गंतव्वं गन्तव्यम् 'अस्माभि'रिति शेषः । तहिं तर्हि । सो सः । राआ राजा रामचन्द्र इति यावत् । विणएण विनयेन । पणयिदव्वो प्रणयितव्यः । लवः 'सीतां प्रत्याहे'ति शेषः । अथैतस्मात् दिवसात् परम् । किम् । आवाभ्याम् । राजोपजीविभ्याम् । भवितव्यम् ? सीता 'लवं प्रत्याहे'ति शेषः । हे जाद जातपुत्र इति यावत् । सो स राजा । तुह्माणं युष्माकम् । पिदा पिता । लवः 'सीतां प्रत्याहे'ति शेषः । किम् । आवयोः ( मम कुशस्य च ) । रघुपतिः । पिता ? सीता 'लवं प्रत्याहे'ति शेषः । ( साशङ्कम् ) मा । अण्णधा अन्यथा । संकधं शङ्कध्वम् । ण न । क्खु खलु । तुह्माणं युष्माकम् । सअलाए सकलायाः । जेव एव । पुहवीए पृथिव्याः । त्ति इति । अत्र पितृशब्दस्य स्वभावत उक्तस्य सकलाया अपि पृथिव्या इत्येवं पालकरूपेण व्याख्यानम् ।

नालिकां लक्षयति–५८८ हास्येन हास्यव्यञ्जकेन वचनेनेति भावः । युक्ता । प्रहेलिका संवरणकारकमुत्तरम् । एव । नालिका । भवति ॥ ५५८ ॥

कारिकां सुगमयति–संवरणकारि संवरणं प्रस्फुटीभवतोऽर्थस्य निगूहनं करोतीति तथोक्तम् । उत्तरं प्रतिवाक्यम् । प्रहेलिका ।

उदाहरति–यथा । रत्नावल्याम् । 'द्वितीयेऽङ्के'इति शेषः । "सुसङ्गता 'सागरिकां प्रत्याहे'ति शेषः । सहि हे सखि ! जस्स । किदे यस्य कृते यं लब्धुमिति यावत् । तुमं त्वम् । आअदा आगता । सो सः । अअं अयम् । दे ते । पुरदो पुरतः । चिट्ठदि तिष्ठति । सागरिका 'सुसङ्गतां प्रत्याहे'ति शेषः । (सासूयम्) कस्स कस्य । किदे कृते । अहं अहम् । आअदा आगता । सुसङ्गता 'सागरिकां प्रत्याहे'ति शेषः । (विहस्य) अइ अयि ! ( इदं कोमलालापे ) अण्णसंकिदे अन्यशङ्किते ! णं ननु । चित्तफलअस्स चित्रफलकस्य । 'कृते आगता असि'

---

१ "जात ! कल्यं खलु अयोध्यायां गन्तव्यं, तर्हि स राजा विनयेन प्रणयितव्य" इति संस्कृतम् । २ "जात ! स युष्माकं पिता" इति संस्कृतम् । ३ "माऽन्यथा शङ्कध्वं, न खलु युष्माकं सकलाया एव पृथिव्या इति" इति संस्कृतम् । ४ "सखि ! यस्य कृते त्वमागता, सोऽयं ते पुरतस्तिष्ठति ।...कस्य कृते अहमागता...अपि अन्यशङ्किते । ननु चित्तफलकस्य तद्गृहाणैतम् ।" इति संस्कृतम् ।

५८९ असत्प्रलापो यद्वाक्य–मसम्बद्धं तथोत्तरम्।
अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं वचः॥ ५५९॥

तत्राद्यो यथा, यथा–मम प्रभावत्याम् "प्रद्युम्नः (सहकारवल्लीमवलोक्य सानन्दम्) अहो कथमिहैव !।

अलिकुलमञ्जुलकेशी परिमलबहुला रसावहा तन्वी।
किशलयपेशलपाणिः कोकिलकलभाषिणी प्रियतमा मे॥ ३३७॥"

एवमसम्बद्धोत्तरोऽपि। तृतीयो यथा वेणीसंहारे दुर्योधनं प्रति गान्धारीवाक्यम्।

५९० व्याहारो यत् परस्यार्थे हास्यक्षोभकरं वचः।

यथा–मालविकाऽग्निमित्रे "( लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति ) विदूषकः–
भोदि ! चिट्ठ किंचि। वो विसुमरिदो कम्मभेदो तं दाव पुच्छिस्सं[1]" इत्युपक्रमे "गणदासः–(विदू-
षकं विलोक्य ) गौतम ! उच्यतां यस्त्वया क्रमभेदो लक्षितः। विदूषकः– पुढमोपदेसदंसणे पुढमं
बंह्मणस्स पूआ कादव्वा, सा णं वो विसुमरिदा[2] ( सर्वे प्रहसिताः, मालविका स्मितं करोति )।"
इत्यादिना नायकस्य विश्रुद्धनायिकादर्शनप्रयुक्तेन हासक्षोभकारिणा वचसा व्याहारः।

---

इति शेषः। ता तत्। एदं एतम्। गेह्ण गृहाण।" अत्र। "त्वम्। राज्ञो वत्सराजस्य। कृते। आगता" इत्यर्थः। **संवृतो** निगूढः कृतः।

असत्प्रलापं लक्षयति–५८९ **यत्। वाक्यम्। असम्बद्धं** युक्तिविरुद्धम्। 'त'दिति शेषः। **तथा**। 'य' दिति शेषः। **उत्तरम्**। 'असम्बद्धं तदसत्प्रलाप' इति पूर्वतोऽनुवृत्तम्। **यत्। च। अगृह्णतो**ऽस्वीकुर्वाणस्य। **अपि। मूर्खस्य। पुरो**ऽग्रे। **हितं** हितकरम्। **वचः**। 'तदसत्प्रलाप' इति प्रसङ्गानुप्रसक्तम्। तथा च–असत्-प्रलापस्त्रिविधः, तत्र–आद्यः असम्बद्धवाक्यात्मा, द्वितीयः–असम्बद्धोत्तरात्मा, तृतीयः पुनः पण्डितम्मन्यं प्रति उपदे-शात्मा। इति निष्कृष्टोऽर्थः॥ ५५९॥

उदाहरति–तत्र तेषु त्रिष्वसत्प्रलापेषु मध्ये। **आद्यो**'ऽसत्प्रलाप' इति शेषः। **यथा। मम। प्रभावत्याम्। "प्रद्युम्नः (सहकारवल्लीं** सहकारोऽतिसुगन्धित आम्रो वल्लीव ताम्। **अवलोक्य। सानन्दम्) अहो। कथम्**। इहास्मिन्। **एव**–

**अलिकुलमञ्जुलकेशी** अलिकुलेन भ्रमरपुञ्जेन मञ्जुला मनोरमाः केशा यस्याः सा। **परिमलबहुला** परिमलेन सौरभेण बहुलाऽतिशयिता। **रसावहा। तन्वी** सूक्ष्माङ्गी। **किशलयपेशलपाणिः** किशलयवत् कोमलपत्रवत् पेशलौ स्निग्धसुकुमारौ पाणी यस्याः सा। **कोकिलकलभाषिणी** कोकिलकलं भाषत इत्येवं शीलेति तथोक्ता। **मे** मम। **प्रियतमा** प्रभावती। गीतिश्छन्दः। अत्र वल्लीं प्रियां मत्वाऽभिधानादसत्प्रलापः॥ ३३७॥"

**एवम्। असम्बद्धोत्तरो**ऽसम्बद्धमुत्तरं यत्र तादृशः। 'असत्प्रलाप' इति शेषः। **अपि** 'ऊह्य' इति शेषः। स च यथा–रत्नावल्यां द्वितीयेऽङ्के "सहि को एसो तुए आलिहिदो[3] इति सुसङ्गतया पृष्टायाः सागरिकायाः "भअवं अणंगो[4]" इत्युत्तरवाक्ये। **तृतीयः**। 'असत्प्रलाप' इति शेषः। **यथा। वेणीसंहारे** 'पञ्चमेऽङ्के' इति शेषः। **दुर्यो-धनम्। प्रति। गान्धारीवाक्यम्**। अयम्भावः–गान्धारी दुःशासनादिमरणोत्तरमपि युधिष्ठिरेण सन्ध्यर्थमस-कृद्दुर्य्योधनमुपदिष्टवती, न तेन तत्प्रतिगृहीतमित्यसत्प्रलापः। इति।

व्याहारं लक्षयति–५९० **यत्। परस्य। अर्थे** निमित्तम्। **हास्यक्षोभकरं** हास्यक्षोभयोः कारकम्। **वचः** 'त'दिति शेषः। **व्याहारः**।

उदाहरति–**यथा। मालविकाऽग्निमित्रे** 'द्वितीयेऽङ्के' इति शेषः। **"( लास्यप्रयोगावसाने** नृत्यानुष्ठान-स्यान्ते। **मालविका। निर्गन्तुम्। इच्छति**। 'तदैव तां प्रत्याहे' ति शेषः) **विदूषकः। भोदि** भवति **किंचि**

---

[1] "भवति ! तिष्ठ किञ्चित्। वो विस्मृतः कर्म्मभेदः तं तावत् प्रक्ष्यामि" इति संस्कृतम्। [2] "प्रथमोपदेशदर्शने प्रथमं ब्राह्मणस्य पूजा कर्त्तव्या, सा ननु वो विस्मृता" इति संस्कृतम्। [3] "सखि ! क एष त्वयाऽऽलिखितः" इति संस्कृतम्। [4] "भगवान् अनङ्गः" इति संस्कृतम्।

**५९१ दोषा गुणा, गुणा दोषा यत्र स्युर्मार्दवं हि तत् ॥ ५६० ॥**

**क्रमेण यथा–**

**"प्रिय ! जीवितताक्रौर्य्यं निःस्नेहत्वं कृतघ्नता। भूयस्त्वद्दर्शनादेव ममैते गुणतां गताः ३३८॥"**

**"तस्यास्तद्रूपसौन्दर्य्यं भूषितं यौवनश्रिया। सुखैकायतनं जातं दुःखायैवमद्याधुना ॥३३९॥"**

**एतानि च अङ्गानि नाटकादिषु सम्भवन्त्यपि वीथ्यामवश्यं विधेयानि, विस्पष्टतया नाटकादिषु विनिविष्टान्यपि इहोदाहृतानि। वीथीव नानारसानां च अत्र मालारूपतया स्थितत्वाद्वीथीयम्। यथा–मालविका।**

**अथ प्रहसनम्–**

**५९२ भाणवत् सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम्।**
**भवेत् प्रहसनं वृत्तं निन्द्यानां कविकल्पितम् ॥ ५६१ ॥**

---

किञ्चित्। चिट्ठ तिष्ठ। वो युष्माकम्। विसुमरिदो विस्मृतः। कम्मभेदो कर्म्मभेदः किञ्चित् कर्म्मेति यावत्। तं तम्। दाव तावत्। पुच्छिस्सं प्रक्ष्यामि" इत्युपक्रमे। गणदासः। (विदूषकम्। विलोक्य) गौतम। (इदं विदूषकस्य नाम) उच्यताम्। यः। त्वया। कर्म्मभेदः। लक्षितो ज्ञातः। विदूषकः 'गणदासं प्रत्याहे'ति शेषः। पुढमोपदेसदंसणे प्रथमोपदेशदर्शने। पुढमं प्रथमम्। वह्मणस्स ब्राह्मणस्य। पूआ पूजा। कादव्वा कर्त्तव्या। सा। णं ननु। वो युष्माकम्। विसुमरिदा विस्मृता। (सर्वे राजसभासदः। प्रहसिता हास्यं कृतवन्तः। आदिकर्म्मणि क्तः। मालविका। स्मितम्। करोति)" इत्यादिना। नायकस्य राज्ञोऽग्निमित्रस्य। विशुद्धनायिकादर्शनप्रयुक्तेन विशुद्धा चिगुणत्वाभावेन निरवद्याऽसौ नायिका मालविका तस्या दर्शनं तत्र प्रयुक्तस्तेन। हासक्षो (लो) भकारिणा। वचसा। व्याहारः।

मार्दवं लक्षयति–५९१ यत्र यस्मिन् वाक्ये। दोषाः। गुणा गुणात्मना निर्दिष्टाः। गुणाः 'पुनः' इति शेषः। दोषा दोषात्मना निर्दिष्टाः। स्युः। वहुवचनमविवक्षितम्। तत्। 'द्विभेद' मिति शेषः। मार्दवम्! हि किल ॥ ५६० ॥

उदाहरति–क्रमेणानुपौर्व्येण। यथा–"हे प्रिय! जीवितताक्रौर्य्यं जीवितताया जीवनस्य क्रौर्य्यं काठिन्यं धाष्टर्यमिति यावत्। निःस्नेहत्वं स्नेहशून्यता। एवम्। कृतघ्नता। मम। एते 'दोषा' इति शेषः। भूयः पुनः। त्वद्दर्शनात् तव दर्शनं प्राप्य। एव। गुणतां गुणात्मत्वम्। गताः। विदेशतो वहोः कालादायातं प्रियं तत्प्रियाया उक्तिरियम्, तथा च–प्रिय! तव विरहे जीवनमनावश्यकमिति अस्य निर्गमयुक्तत्वेऽपि यदनेन धाष्टर्यमवलम्बितं, तथा–स्नेहाधारस्यानवस्थितौ स्नेहाभावस्य प्रत्यक्षसिद्धत्वात् निःस्नेहत्वम्, एवम् उपकारिण उपकारं विस्मृत्य तत्सेवनार्थमनुगमनाभावः कृतघ्नता, इत्येते दोषा अपि सांप्रतं तव दर्शनं प्राप्य गुणभूताः, अन्यथाऽमोदानुत्पत्तेः। इति निष्कृष्टोऽर्थः ॥ ३३८ ॥"

"तस्याः परलोकं यातायाः प्रियतमाया इति भावः। तत्। यौवनश्रिया। भूषितम्। सुखैकायतनमानन्दस्यैकमात्रं पात्रम्। रूपसौन्दर्यं रूपे सौन्दर्य्यं मनोहरम्। मम तया वञ्चितस्य। अधुना तद्विरहे। दुःखाय। एव। जातम्। अत्र सुखानुभवैकाधारभूतस्य सुन्दरीसौन्दर्य्यस्य गुणस्य दुःखकारित्वाभिधानाद्दोषात्मना परिणामः ॥ ३३९ ॥"

ननु एतानि त्रयोदशाङ्गानि यद्यन्यत्रापि सम्भवन्ति, तत् कथमेतेषां वीथीसम्बन्धित्वम्? इत्याशङ्क्याह–एतानि चेत्यादि। स्पष्टम्। अस्याः सञ्ज्ञानिमित्तं दर्शयति–वीथीव पङ्क्तिरिव। 'वीथ्यालिरावलिः पङ्क्तिः श्रेणी' त्यमरः। नानारसानां च। (भावानां च)। अत्र अस्मिन् रूपके। मालारूपतया मालारूपेण। स्थितत्वात्। इयम् (विधेयलिङ्गतयायं निर्देशः)। वीथी तदाख्यं रूपकमिति भावः। उदाहरति–यथेत्यादिना। यथा। मालविका, नतु 'मालविकाऽग्निमित्रम्' इति शङ्क्यम्, एतस्य नाटकतयैव व्यपदिष्टत्वात्।

प्रहसनं लक्षयितुमाह–अथ। प्रहसनम्। लक्ष्यते ५९२ भाणवदित्यादिना।

५९२ भाणवत् भाण इव। सन्धि-सन्ध्यङ्ग-लास्याङ्गा-ङ्कैः। विनिर्मितम्। भाणो यथा–मुखनिर्वहण-

अत्र नारभटी, नापि विष्कम्भकप्रवेशकौ।
अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा ॥ ५६२ ॥
तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः।
५९३ एको यत्र भवेद्धृष्टो हास्यं तच्छुद्धमुच्यते ॥ ५६३ ॥

यथा—कन्दर्पकेलिः।

५९४ आश्रित्य कञ्चन जनं सङ्कीर्णमिति तद्विदुः।

यथा—धूर्तचरितम्।

५९५ वृत्तं बहूनां धृष्टानां सङ्कीर्णं केचिदूचिरे ॥ ५६४ ॥
५९६ तत्पुनर्भवति द्व्यङ्कमथवैकविनिर्मितम्।

यथा—लटकमेलकादि। मुनिस्त्वाह—"वेश्याचेटनपुंसक-विटधूर्ता बन्धकी च यत्र स्युः।
अविकृतवेशपरिच्छद-चेष्टितकरणं तु सङ्कीर्णम् ॥" इति।

५९७ विकृतं तु विदुर्यत्र षण्डकञ्चुकितापसाः ॥ ५६५ ॥
भुजङ्गचारणभटप्रभृतेर्वेशवाग्युताः।

---

सन्धिद्वयेन यथासम्भवमुपक्षेपादिभिः सन्ध्यङ्गैः, सर्वैश्च लास्याङ्गैः, एकेनाङ्केन च निर्मितस्तथानिर्मितमिति भावः। **प्रहसनम्**। **भवेत्**। **अत्र**। **कविकल्पितम्**। 'नतु चिरात् प्रसिद्धम्'इति भावः। **निन्द्यानाम्**। **वृत्तम्**। 'निवेश्य'मिति शेषः। **आरभटी** तदाख्या वृत्तिः **न** किन्तु तद्भिन्ना भारत्यादय एवाश्रयणीया इति भावः। **विष्कम्भकप्रवेशकौ** तदाख्यौ प्रस्तावनाभेदौ। **अपि**। **न**। **तत्र**। **अङ्गी** प्रधानभूतः। **हास्यरसः**। **वीथ्यङ्गानाम्**-उद्धातकादीनाम्। **स्थितिः**। 'भवे'दिति शेषः। **वा**ऽथवा। **न**। वीथ्यङ्गानां स्थितिरनियतेति भावः। **तपस्विभगवद्विप्रप्रभृतिषु** तपस्वी (ब्रह्मचारी) च भगवान् (संन्यासी) च विप्रः (वेदवेत्ता ब्राह्मणः) चेति ते प्रभृतावादौ येषां (याज्ञिकादीनाम्) तेषु लक्षणया तथा प्रतीयमानेषु धर्मध्वजेष्वित्यर्थः। निर्धारणार्थेयं सप्तमी। 'कश्चि'दिति शेषः। **अत्र** प्रहसने। **नायकः** ॥ ५६१ ॥ ५६२ ॥

अस्य शुद्धाख्यं भेदमाह–५९३ **यत्र**। **एकः**। **धृष्टः**। 'नायक'इति शेषः। **भवेत्**। **तत्**। **शुद्धम्**। **हास्यं** तत्प्रधानं प्रहसनम्। **उच्यते** ॥ ५६३ ॥

उदाहरति–यथेत्यादिना। स्पष्टम्।

सङ्कीर्णाख्यं भेदमाह–५९४ **कञ्चन** धृष्टं धूर्तं वा कमपीति भावः। **जनम्**। **आश्रित्य** नायकतयाऽवश्योत्पादितमिति भावः। **तत्** पूर्वोक्तलक्षणाक्रान्तं प्रहसनम्। **सङ्कीर्णम्**। **इति**। **विदुः**। 'आचार्या'इति शेषः।

उदाहरति–यथेत्यादिना। स्पष्टम्।

अत्र परमतं निर्दिशति–५९५ **बहूनाम्**। **धृष्टानाम्**। 'यत्रे'ति शेषः। **वृत्तम्**। 'तत्प्रहसन'मिति शेषः। **सङ्कीर्णम्**। **केचित्**। **ऊचिरे** कथितवन्तः ॥ ५६४ ॥

अत्र विशेषं निर्दिशति–५९६ **तत्** निरुक्तलक्षणं सङ्कीर्णं प्रहसनम्। **पुनः**। **व्यङ्कम्**। **अथवा**। **एकविनिर्मितम्**नेकाङ्कम्। **भवति**।

उदाहरति–यथेत्यादिना। स्पष्टम्। आदिना–हास्यार्णवादीनां ग्रहणम्।

नाट्यशास्त्रकारमतं दर्शयितुमाह–मुनिरितः। **तु**। **आह**–"**यत्र**। **वेश्याचेटनपुंसकविटधूर्ताः**। **च** तथा। **बन्धकी** पुंश्चली। 'वर्ण्यमाना'इति शेषः। **स्युः**। 'त'दिति शेषः। **अविकृतवेशपरिच्छदचेष्टितकरणम**विकृतानि सम्भवीनि वेशपरिच्छदचेष्टितकरणानि यत्र तादृशम् (करणं चारितम्)। **तु**। **सङ्कीर्णम्** ॥'इति।

अस्य विकृताख्यं भेदं लक्षयति–५९७ **भुजङ्गचारणभटप्रभृतेर्**भुजङ्गः (वेश्याऽनुरक्तः) च चारणः

इदं च सङ्कीर्णेनैव गतार्थमिति मुनिना पृथङ् नोक्तम्। अथोपरूपकाणि। तत्र—

५९८ नाटिका क्लृप्तवृत्ता स्यात्स्त्रीप्राया चतुरङ्किका ॥ ५६६ ॥
प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः।
स्यादन्तःपुरसम्बन्धा सङ्गीतव्यापृताऽथवा ॥ ५६७ ॥
नवाऽनुरागा कन्याऽत्र नायिका नृपवंशजा।
सम्प्रवर्त्तेत नेताऽस्यां देव्यास्त्रासेन शङ्कितः ॥ ५६८ ॥
देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा।
पदेपदे मानवती तद्वशः सङ्गमो द्वयोः ॥ ५६९ ॥
वृत्तिः स्यात् कौशिकी स्वल्प-विमर्शाः सन्धयः पुनः।

द्वयोर्नायिकानायकयोः। यथा-रत्नावली-विद्धशालभञ्जिकादिः। अथ त्रोटकम्—

५९९ सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम् ॥ ५७० ॥
त्रोटकं नाम तत् प्राहुः प्रत्यङ्कं सविदूषकम्।

प्रत्यङ्कं सविदूषकत्वादेव अत्र शृङ्गारोऽङ्गी। सप्ताङ्कं यथा स्तम्भितरम्भम्, पञ्चाङ्कं यथा-विक्रमोर्वशी। अथ गोष्ठी-

---

(नटविशेषः) च भटश्चेति ते प्रभृती यस्य (चेटादेः) तस्य। वेशवाग्युताः। षण्डकञ्चुकितापसाः। यत्र। 'तदि'ति शेषः। तु। विकृतं तत्प्रभेदभिन्नं प्रहसनमित्यर्थः। विदुः ॥ ५६५ ॥

अस्य च मुनिमतेन सङ्कीर्णप्रभेदे प्रहसने एवान्तर्भाव इत्याह-इमं चेत्यादिना। स्पष्टम्। एवं रूपकाणि लक्ष्यलक्षणाभ्यां निरूप्योपरूपकाणि निरूपयितुमाह-अथेत्यादि।

अथ। उपरूपकाणि। लक्ष्यन्ते तत्र।

५९८ क्लृप्तवृत्ताऽप्रसिद्धचरितपूर्णा। स्त्रीप्राया स्त्रीप्रचुरा। चतुरङ्किका चतुरङ्का। नाटिका। स्यात्। तत्र तस्यां नाटिकायाम्। प्रख्यातो लोके प्रख्यातनामा। धीरललितः। नृपः। नायकः। स्यात्। अत्रास्मिन्नायके। नवानुरागा। नृपवंशजा राजनन्दिनी। कन्याऽप्रौढा। अन्तःपुरसम्बन्धा कथमपि अन्तःपुरे प्राप्तेति भावः। अथवा। सङ्गीतव्यापृता सङ्गीतचतुरा। 'सती'ति शेषः। नायिका। स्यात्। अस्यां नायिकायाम् 'पुन'रिति शेषः। देव्या ज्येष्ठाया राज्याः। त्रासेन कोपातङ्केन शङ्कितः। 'स'न्निति शेषः। नेता नायकः। सम्प्रवर्त्तेतानुरक्तोऽनुगतो भवेत्। देवी। पुनः। प्रगल्भा समस्तकलाप्रवीणा। नृपवंशजा राजनन्दिनी। पदेपदे पुनः पुनरिति भावः। मानवती दर्शितकोपा। ज्येष्ठा प्रथमं परिणीता। भवेत्। तद्वशस्तस्या वश इच्छा यत्र (प्रधानभूता) तादृशः। द्वयोस्तस्याः कन्यायास्तस्य च राज्ञ इति भावः। सङ्गमः। 'कीर्त्तनीय'इति शेषः। तथा-कौशिकी। वृत्तिः। स्यात्। स्वल्पविमर्शाः प्रायेण विमर्शरहिताः, सत्यावश्यके किञ्चिद्विमर्शेनापि सहिता इति भावः। पुनः। सन्धयः। 'निरूप्या'इति शेषः। ॥ ५६६—५६९ ॥

कारिकां सुगमयितुं 'द्वयो' रित्यर्थं विवृणोति-द्वयोरित्यादिना। स्पष्टम्।

उदाहरति-यथेत्यादिना। स्पष्टम्।

त्रोटकं लक्षयितुमाह-अथ। त्रोटकम्। लक्ष्यते ५९९ सप्ताष्टनवपञ्चाङ्कं सप्त वाऽष्ट वा नव वा पञ्च वाऽङ्का यत्र तादृशम्। दिव्यमानुषसंश्रयं दिव्यमानुषयोः संश्रयो नायिकानायकत्वेन यत्र तादृशम्। प्रत्यङ्कम् अङ्केऽङ्के। सविदूषकं विदूषकोपस्थितिकम्। तत् प्रसिद्धम्। त्रोटकम्। नाम 'उपरूपक'मिति शेषः। प्राहुः॥५७०॥

प्रत्यङ्कमित्यादिना बोधनीयमर्थान्तरं दर्शयति-प्रत्यङ्कमित्यादिना। स्पष्टम्।

६०० प्राकृतैर्नवभिः पुम्भिर्दशभिर्वाऽप्यलङ्कृता ॥ ५७१ ॥
नोदात्तवचना गोष्ठी कौशिकीवृत्तिशालिनी ।
हीना गर्भविमर्शाभ्यां षट्पञ्चयोषिदन्विता ॥ ५७२ ॥
कामशृङ्गारसंयुक्ता स्यादेकाङ्कविनिर्मिता ।

यथा-रैवतमदनिका। अथ सट्टकम्—

६०१ सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकम् ॥ ५७३ ॥
न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः ।
अङ्का जवनिकाऽऽख्याः स्युः स्यादन्यन्नाटिकासमम् ॥ ५७४ ॥

यथा-कर्पूरमञ्जरी। अथ नाट्यरासकम्-

६०२ नाट्यरासकमेकाङ्कं बहुताललयस्थिति ।
उदात्तनायकं तद्वत् पीठमर्दोपनायकम् ॥ ५७५ ॥
हास्योऽङ्ग्यत्र स शृङ्गारो नारी वासकसज्जिका ।
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ॥ ५७६ ॥
केचित् प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम् ।

तत्र सन्धिद्वयवत्-यथा, नर्म्मवती, सन्धिचतुष्टयवत् यथा, विलासवती।

---

उदाहरति-सप्ताङ्कमित्यादिना। स्पष्टम्। 'अष्टाङ्कं नवाङ्कं चोह्य' मिति शेषः।

गोष्ठीं लक्षयितुमाह-अथ। गोष्ठी। लक्ष्यते ६०० प्राकृतैरनतिचतुरैः। नवभिः। पुम्भिर्नायकैः। वाऽथवा। दशभिः। अपि 'पुम्भि' रिति पूर्वतोऽन्वेति। अलंऽकृता वर्णितचरिता। नोदात्तवचनाऽनुदारवर्णना-संस्कृतेतरभाषामयी वा। कौशिकीवृत्तिशालिनी। गर्भविमर्शाभ्यां तदाख्याभ्यां सन्धिविशेषाभ्याम्। हीना। षट्पञ्चयोषिदन्विता षड्भिः पञ्चभिर्वा योषिद्भिरन्विता। कामशृङ्गारसंयुक्ता न तु धर्म्मार्थशृङ्गारवर्णनशालिनीति भावः। एकाङ्कविनिर्मितैकाङ्का। गोष्ठी। स्यात् ॥ ५७१ ॥ ५७२ ॥

उदाहरति-यथेत्यादिना। स्पष्टम्।

सट्टकं लक्षयितुमाह-अथ। सट्टकम्। लक्ष्यते ६०१ प्राकृताशेषपाठ्यं प्राकृतं प्राकृतभाषामयमशेषं पाठ्यं यत्र तादृशम्। अप्रवेशकं प्रवेशकाख्यया प्रस्तावनया हीनम्। सट्टकम्। स्यात्। अत्र सट्टके। विष्कम्भकस्तदाख्या प्रस्तावना। अपि। नच नैव। प्रचुरः प्रधानभूतः। च। अद्भुतः। रसः। अङ्काः। जवनिकाऽऽख्याः। स्युः। अङ्कस्थाने जवनिकाशब्दो निवेश्य इति भावः। अन्यदङ्कसङ्ख्याऽऽदिकम्। नाटिकासमं यथा नाटिकायां तथाऽत्रापि ज्ञेयमिति भावः। स्यात् ॥ ५७३ ॥ ५७४ ॥

उदाहरति-यथेत्यादिना। स्पष्टम्।

नाट्यरासकं लक्षयितुमाह-अथ। नाट्यरासकम्। लक्ष्यते ६०२ एकाङ्कम्। बहुताललयस्थिति बह्वी ताललयस्थितिर्यत्र तादृशम्। ताललययोः स्थितिरिति ताललयस्थितिः। 'तालः कालक्रियामानो लयः साम्य'मित्यमरः। उदात्तनायकं धीरोदात्तनायकाधिष्ठितम्। तद्वत्। पीठमर्दोपनायकं पीठमर्द उपनायको नायकसहायो यत्र तादृशम्। नाट्यरासकम्। अत्र नाट्यरासके। सशृङ्गारः। हास्यो हास्यरसः। अङ्गी। वासकसज्जिका वासकसज्जा। नारी नायिका। मुखनिर्वहणे तदाख्यौ। सन्धी। च तथा। दश। अपि। लास्याङ्गानि। 'भवन्ती'ति शेषः। केचित्। 'पुनरि'ति शेषः। इह नाट्यरासके। केवलम्। प्रतिमुखम्। सन्धिम्। न। इच्छन्ति, किन्तु तद्भिन्नाः सर्वेऽपि मुखादयः सन्धयः सम्भवन्तीति भावः ॥ ५७५ ॥ ५७६ ॥

उदाहरति-तत्रेत्यादिना। स्पष्टम्। सन्धिद्वयवतीति स्वपपाठः, नाट्यरासकविशेषणत्वे स्त्रीप्रत्ययान्तताऽनुपपत्तेः। एवं परत्रापि।

अथ प्रस्थानम्–

६०३ प्रस्थाने नायको दासो हीनः स्यादुपनायकः ॥ ५७७ ॥
दासी च नायिका, वृत्तिः कौशिकी भारती तथा ।
सुरापानसमायोगादुद्दिष्टार्थस्य संहृतिः ॥ ५७८ ॥
अङ्कौ द्वौ लयतालादिर्विलासो बहुलस्तथा ।

यथा–शृङ्गारतिलकम् ।

अथोल्लाप्यम्–

६०४ उदात्तनायकं दिव्यवृत्तमेकाङ्कभूषितम् ॥ ५७९ ॥
शिल्पकाङ्गैर्युतं हास्य-शृङ्गारकरुणै रसैः ।
उल्लाप्यं बहुसङ्ग्राममस्रगीतमनोहरम् ॥ ५८० ॥
चतस्रो नायिकास्तत्र त्रयोऽङ्का इति केचन ।

शिल्पकाङ्गानि वक्ष्यमाणानि । यथा देवीमहादेवम् । अथ काव्यम्–

६०५ काव्यमारभटीहीनमेकाङ्कं हास्यसङ्कुलम् ॥ ५८१ ॥
खण्डमात्राद्विपदिकाभग्नतालैरलङ्कृतम् ।
वर्णमात्राच्छगणिका–युतं शृङ्गारभूषितम् ॥ ५८२ ॥
नेता स्त्री चाप्युदात्ताऽत्र सन्धी आद्यौ तथाऽन्तिमः ।

---

प्रस्थानं लक्षयितुमाह–अथ । प्रस्थानम् लक्ष्यते ६०३ प्रस्थाने तदाख्य उपरूपके । दासः शूद्रः । नायकः । हीनो दासादपि निकृष्टः । उपनायकः । स्यात् । दासी । च । नायिका । कौशिकी । वृत्तिः । तथा । भारती तदाख्या वृत्तिः स्यादित्यर्थः । सुरापानसमायोगात् । मद्यपानसम्बन्धं पुरस्कृत्येति भावः । ल्यबर्थेयं पञ्चमी । उद्दिष्टार्थस्य प्रस्तुतस्येतिवृत्तस्य । संहृतिः समाप्तिः । द्वौ । अङ्कौ । तथा । लयतालादिः । आदिना स्वरादीनां ग्रहणम् । बहुलः । विलासः 'वर्णनीय' इति शेषः ॥ ५७७ ॥ ५७८ ॥

उदाहरति–यथेत्यादिना । स्पष्टम् । नेदं कालिदासकृतम्, अस्य निरुक्तलक्षणानाक्रान्तत्वात् ।

उल्लाप्यं लक्षयति–अथ । उल्लाप्यं लक्ष्यते ६०१ उदात्तनायकं धीरोदात्तो नायको यत्र तादृशम् । दिव्यवृत्तं स्वर्गीयेतिवृत्तशालि । एकाङ्कभूषितमेकाङ्केन भूषितम् । शिल्पकाङ्गैः । युतम् । तथा–हास्यशृङ्गारकरुणैः । रसैः । 'युत'मिति पूर्वतोऽन्वेति । बहुसङ्ग्रामं सङ्ग्रामवर्णनप्रचुरम् । अस्रगीतमनोहरम् ; "उत्तरोत्तररूपं :यत् प्रस्तुतार्थपरिष्कृतम् । अन्तर्जवनिकं गीतमस्रगीतं तदुच्यते ॥" इत्युक्तलक्षणेनास्रगीतेन मनोहरम् । त्र्यस्रगीतेति पाठे तु 'त्र्यस्रो विरामस्त्रिकल' इति भरतोक्त्या त्र्यस्रं त्रिकलं यद्गीतं तेन मनोहरमित्यर्थः । उल्लाप्यम् । तत्रोल्लाप्याख्य उपरूपके । चतस्रः । नायिकाः । त्रयः 'पुन'रिति शेषः । अङ्काः । इति । केचन । 'प्राहु'रिति शेषः । अयम्भावः–चतुर्नायिकं त्र्यङ्कम्' इति केषाञ्चिन्मतं नतु सर्वेषाम् । इति ॥ ५७९ ॥ ५८० ॥

कारिकां सुगमयितुमाह–शिल्पकाङ्गानीत्यादि । स्पष्टम् । उदाहरति–यथेत्यादिना । स्पष्टम् ।

काव्यं लक्षयितुमाह–अथ । काव्यं तदाख्यमुपरूपकम् । लक्ष्यते ६०५ आरभटीहीममारभटीव्यतिरिक्तभारत्यादिवृत्तिशालीत्यर्थः । एकाङ्कम् । हास्यसङ्कुलं हास्यरसपूर्णम् । खण्डमात्राद्विपदिकाभग्नतालैस्तदाख्यैर्गीतैरित्यर्थः । अलङ्कृतम् । वर्णमात्राच्छगणिकायुतं वर्णमात्रेण नतु चारित्र्येण अच्छा या गणिका तया युतम् । शृङ्गारभाषितं शृङ्गारेण तद्व्यञ्जकेन वाक्येन भाषितम् । काव्यं तदाख्यमुपरूपकं स्यात् । अत्र । नेता 'उदात्त'इति लिङ्गव्यत्ययेनान्वेति । धीरोदात्तः । स्त्री नायिका । च । अपि । उदात्ता धीरोदात्तलक्षणा । आद्यौ मुखप्रतिमुखाख्यौ इत्यर्थः । सन्धी । तथा । अन्तिमोऽन्ते भवो निर्वहणाख्यः सन्धिर्ज्ञेय इति भावः॥५८१॥५८२॥

यथा-यादवोदयः । अथ प्रेङ्खणम्-

६०६ गर्भावमर्शरहितं प्रेङ्खणं हीननायकम् ॥ ५८३ ॥
असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम् ।
नियुद्धसम्फेटयुतं सर्ववृत्तिसमाश्रितम् ॥ ५८४ ॥
नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना ।

यथा-वालिवधः । अथ रासकम् ।

६०७ रासकं पञ्चपात्रं स्यान्मुखनिर्वहणान्वितम् ॥ ५८५ ॥
भाषाविभाषाभूयिष्ठं भारतीकौशिकीयुतम् ।
असूत्रधारमेकाङ्कं सवीथ्यङ्गं कलाऽन्वितम् ॥ ५८६ ॥
श्लिष्टनान्दीयुतं ख्यातनायिकं मूर्खनायकम् ।
उदात्तभावविन्याससंश्रितं चोत्तरोत्तरम् ॥ ५८७ ॥
इह प्रतिमुखं सन्धिमपि केचित् प्रचक्षते ।

यथा-मेनकाहितम् । अथ संलापकम्-

६०८ संलापकेऽङ्काश्चत्वारस्त्रयो वा, नायकः पुनः ॥ ५८८ ॥
पाषण्डः स्याद्रसस्तत्र शृङ्गारकरुणेतरः ।
भवेयुः पुरसंरोधच्छलसङ्ग्रामविद्रवाः ॥ ५८९ ॥
न तत्र वृत्तिर्भवति भारती नच कौशिकी ।

---

उदाहरति-यथेत्यादिना । स्पष्टम् । प्रेङ्खणं लक्षयितुमाह-अथ । **प्रेङ्खणम्** । लक्ष्यते ६०६ **गर्भावमर्शरहितं** गर्भविमर्शाख्यसन्धिभिन्नसन्धियुतम् । **हीननायकं** हीनो नीचो नायको यत्र तत् । **असूत्रधारं** सूत्रधारप्रवेशशून्यम् । **एकाङ्कम्** । **अविष्कम्भप्रवेशकं** विष्कम्भप्रवेशकव्यतिरिक्तार्थोपक्षेपकयुतम् । **नियुद्धसम्फेटयुतं** नियुद्धं ( युद्धं ) च सम्फेटः ( रोषभाषणं ) च ताभ्यां युतम् । **सर्ववृत्तिसमाश्रितं** सर्वाभिर्भारत्यादिभिर्वृत्तिभिः सम्पन्नम् । **प्रेङ्खणं** तदाख्यमुपरूपकम् । **तत्र** तस्मिन् प्रेङ्खणे । **नेपथ्ये** जवनिकायाम् । **नान्दी** । **गीयते** । **तथा** । **प्ररोचना** कविप्रभृतिप्रशंसनं 'गीयत' इति पूर्वतोऽन्वेति ॥ ५८३ ॥ ५८४ ॥

उदाहरति-यथेत्यादिना । स्पष्टम् । रासकं लक्षयितुमाह-अथ । **रासकम्** । लक्ष्यते ।

६०७ **पञ्चपात्रं** पञ्चपुरुषमात्रव्याप्तम् । **मुखनिर्वहणान्वितं** मुखनिर्वहणाख्याभ्यामेव सन्धिभ्यां युक्तम् । **भाषाविभाषाभूयिष्ठं** भाषा ( संस्कृतम् ) च विभाषा ( प्राकृतं ) च ताभ्यां भूयिष्ठम् । **भारतीकौशिकीयुतं** भारतीकौशिकीभ्यामेव वृत्तिभ्यां संग्रथितम् । **असूत्रधारं** सूत्रधारप्रयोगशून्यम् । **एकाङ्कम्** । **सवीथ्यङ्गं** वीथ्यङ्गैः सहितम् । **कलाऽन्वितम्** । **श्लिष्टनान्दीयुतं** श्लिष्टाऽनेकार्था मङ्गलमात्रपरार्थताशून्येति यावत्, या नान्दी तया युतम् । **ख्यातनायिकं** प्रसिद्धया नायिकया सहितम् । **मूर्खनायकं** शठनायकाधिष्ठितम् । **उत्तरोत्तर-** मग्रेऽग्रे । **च** । **उदात्तभावविन्याससंश्रितमुदात्त** उदारो यो भावोऽभिप्रायस्तस्य विन्यासो विशदरूपेण प्रकटनं तेन संश्रितम् । **रासकम्** । **स्यात्** । **इह** रासकाख्ये उपरूपके । **केचित्** । **प्रतिमुखं** तदाख्यम् । **सन्धिम्** । **अपि** । **प्रचक्षते** ॥ ५८५-५८७ ॥

उदाहरति-यथेत्यादिना । स्पष्टम् ।

संलापकं लक्षयितुमाह- अथ । **संलापकम्** । लक्ष्यते ६०८ **संलापके** तदाख्ये उपरूपके । **चत्वारः** । **त्रयः** । **वा** । **अङ्काः** । **नायकः** । **पुनः** । **पाषण्डः** पाषण्डपरः । **स्यात्** । **तत्र** तथाविधे संलापक इत्यर्थः । **शृङ्गारकरुणेतरः** शृङ्गारकरुणाभ्यां भिन्नः । **रसः** । **पुरसंरोधच्छलसङ्ग्रामविद्रवाः** पुरसंरोधो नगराक्रमण

यथा-मायाकापालिकम् । अथ श्रीगदितम्—

६०९ प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम् ॥ ५९० ॥
प्रसिद्धनायिकं गर्भविमर्शाभ्यां विवर्जितम् ।
भारतीवृत्तिबहुलं श्रीतिशब्देन संयुतम् ॥ ५९१ ॥
मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम् ।

यथा-क्रीडारसातलम् ।

६१० श्रीरासीना श्रीगदिते गायेत् किञ्चित् पठेदपि ॥ ५९२ ॥
एकोङ्को भारतीप्राय इति केचित् प्रचक्षते ।

ऊह्यमुदाहरणम् अथ, शिल्पकम्—

६११ चत्वारः शिल्पकेऽङ्काः स्युश्चतस्रो वृत्तयस्तथा ॥ ५९३ ॥
अशान्तहास्याश्च रसा नायको ब्राह्मणो मतः ।
वर्णनाऽथ श्मशानादेर्हीनः स्यादुपनायकः ॥ ५९४ ॥

६१२ सप्तविंशतिरङ्गानि भवन्त्येतस्य तानि तु ।
आशंसा[१]तर्क[२]सन्देह[३]-ताप[४]ोद्वेग[५]प्रशक्तयः[६] ॥ ५९५ ॥

---

छलसङ्ग्रामः छलपूर्णः सङ्ग्रामो, विद्रवः पलायनं च । भवेयुर्वर्णनीयाः स्युः । तत्र तस्मिन्नेन संलापके । भारती । वृत्तिः । न । भवति । नच । कौशिकी किन्तु एताभ्यां भिन्ने सात्वत्यारभटी एवेति भावः ॥ ५८८ ॥ ५८९ ॥

उदाहरति-यथेत्यादिना । स्पष्टम् ।

श्रीगदितं लक्षयितुमाह-अथ । श्रीगदितम् । 'लक्ष्यत' इति शेषः । ६०९ प्रख्यातवृत्तं प्रसिद्धमितिवृत्तमादाय गुम्फितम् । एकाङ्कम् । प्रख्यातोदात्तनायकं प्रसिद्धं धीरोदात्तं नायकमधिष्ठाय वर्णितम् । प्रसिद्धनायिकम् प्रसिद्धा नायिका यत्र तादृशम् । गर्भविमर्शाभ्यां तदाख्याभ्यां सन्धिभ्याम् । विवर्जितम् । भारतीवृत्तिबहुलं प्रायेण भारतीं वृत्तिमाश्रित्य रचितम् । श्रीतिशब्देन । संयुतं श्रीशब्दस्य विन्यासेन प्रचुरम् । श्रीगदितम् । नाम प्रसिद्धम् । उपरूपकम् । विद्वद्भिः । मतमङ्गीकृतम् ॥ ५९० ॥ ५९१ ॥

उदाहरति-यथेत्यादिना । स्पष्टम् ।

परमतेन तस्य विशेषमाह--६१० श्रीगदिते । आसीनोपविष्टा । श्रीर्लक्ष्मीस्तद्रूपवेशा नटीति भावः । किञ्चित् । गायेत् । किञ्चित् पठेत् । अपि । तथा-एकः । अङ्कः । प्रायः प्रायेण । 'प्रायो भूम्नी'त्यमरः । भारती । इति । केचित् । प्रचक्षते ॥ ५९२ ॥

उदाहरणं नोपलभ्यत इत्यभिप्रायेणाह—ऊह्यमित्यादि । स्पष्टम् ।

शिल्पकं लक्षयति-अथ । शिल्पकम् । 'लक्ष्यते'इति शेषः । ६११ शिल्पके । चत्वारः । अङ्काः । तथा । चतस्रः सर्वा इति भावः । वृत्तयो भारतीकौशिकीसात्वत्यारभट्यः । स्युः । अशान्तहास्याः शान्तहास्याभ्यां व्यतिरिक्ताः । च । रसाः । ब्राह्मणः । नायकः । मतः । अथ । श्मशानादेः । आदिना दग्धारण्यादेर्ग्रहणम् । वर्णना । एवम्-उपनायकः । हीनो नीचः । स्यात् ॥ ५९३ ॥ ५९४ ॥

एतस्याङ्गानि सङ्ख्यानिर्देशपूर्वकमुपदिशति-६१२ एतस्य शिल्पकाख्यस्योपरूपकस्य । सप्तविंशतिः । अङ्गानि । भवन्ति । तानि । तु पुनः । आशंसातर्कसन्देहतापोद्वेगप्रशक्तयः । अत्राशंसाऽभिलषितार्थ-

प्रयत्नग्रथनोत्कण्ठाऽवहित्थाप्रतिपत्तयः ।
विलासालस्यवाम्यानि प्रहर्षाश्लीलमूढताः ॥ ५९६ ॥
साधनानुगमोच्छ्वास-विस्मयप्राप्तयस्तथा ।
लाभविस्मृतिसम्फेटा वैशारद्यं प्रबोधनम् ॥ ५९७ ॥
चमत्कृतिश्चेत्यमीषां स्पष्टत्वाल्लक्ष्म नोच्यते ।

सम्फेटग्रथनयोः पूर्वमुक्तत्वादेव लक्ष्मसिद्धम् । यथा—कनकावतीमाधवः । अथ विलासिका—

६१३ शृङ्गारबहुलैकाङ्का दशलास्याङ्गसंयुता ॥ ५९८ ॥
विदूषकविटाभ्यां च पीठमर्देन भूषिता ।
हीना गर्भविमर्शाभ्यां सन्धिभ्यां हीननायका ॥ ५९९ ॥
स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका ।

केचित्त्वत्र 'विलासिका'स्थाने 'विनायिके'ति पठन्ति, तस्याश्च दुर्मल्लिकायामन्तर्भावः, इत्याहुश्च अथ, दुर्मल्लिका—

६१४ दुर्मल्ली चतुरङ्का स्यात् कौशिकीभारतीयुता ॥ ६०० ॥
आगर्भा नागरनरा न्यूननायकभूषिता ।
त्रिनालिः प्रथमोऽङ्कोऽस्यां विटक्रीडामयो भवेत् ॥ ६०१ ॥
षण्णालिकस्तृतीयश्च पीठमर्दविलासवान् ।
चतुर्थो दशनालिः स्यादङ्कः क्रीडितनागरः ॥ ६०२ ॥

---

प्रार्थना तर्कादयः प्रसिद्धाः । **प्रयत्नग्रथनोत्कण्ठावहित्थाप्रतिपत्तयः** । प्रयत्न उपायः, ग्रथनं कार्य्याणामुपन्यसनम्, उत्कण्ठाऽवहित्थे भावविशेषौ, प्रतिपत्तिर्निश्चयः । **विलासालस्यवाम्यानि** विलासालस्ये प्रसिद्धे, वाम्यं प्रातिकूल्यम् । **प्रहर्षाश्लीलमूढताः** प्रहर्षोऽश्लीलता मूढता चेत्यर्थः । **साधनानुगमोच्छ्वासविस्मयप्राप्तयः** साधनानुगमः साधनानुकूलत्वम्, उच्छ्वासः शोकव्यञ्जकः श्वासः, विस्मयः प्राप्तिश्च । **लाभविस्मृतिसम्फेटा** लाभो, विस्मृतिर्विस्मरणं, सम्फेटः क्रोधोक्तिश्च । **वैशारद्यं** नैपुण्यम् । **प्रबोधनम्** । **चमत्कृतिः** । **च** । **इति** । 'सप्तविंशतिरङ्गानी'ति पूर्वेणान्वयः । **अमीषाम्** । **लक्ष्म** लक्षणम् । **स्पष्टत्वात्** । **न** । **उच्यते** ॥ ५९५–५९७ ॥

सम्फेटादेरप्रस्फुटार्थतां परिहरति—**सम्फेटे**त्यादिना । स्फुटम् ।

निरुक्तलक्षणं शिल्पकमुदाहरति—**यथे**त्यादिना । स्पष्टम् ।

विलासिकां लक्षयति । **अथ** । **विलासिका**—६१३ **शृङ्गारबहुला** प्रायेण शृङ्गारशालिनी । **एकाङ्का** । **दशलास्याङ्गसंयुता** निरुक्तैर्दशभिर्लास्याङ्गैर्युक्ता । **विदूषकविटाभ्याम्** । **पीठमर्देन** । **च** । **भूषिता** युक्ता । **गर्भविमर्शाभ्यां** तदाख्याभ्याम् । **सन्धिभ्याम्** । **हीना** शून्या । **हीननायका** नीचेन नायकेनाधिकृता । **स्वल्पवृत्ता** स्वल्पेतिवृत्ता । **सुनेपथ्या** शोभनं नेपथ्यं वेषप्रसाधना यत्र तादृशी । **सा** । **विलासिका** । **विख्याता** ॥ ५९८ ॥ ५९९ ॥

परमतमुपपादयति—**केचित्त्वि**त्यादिना । **तस्या** विलासिकाया इत्यर्थः । स्पष्टमन्यत् ।

दुर्मल्लिकां लक्षयितुमाह— **अथ** । **दुर्मल्लिका** । लक्ष्यते ६१४ **चतुरङ्का** । **कौशिकीभारतीयुता** कौशिक्या भारत्या च युता । **अगर्भा** गर्भसन्धिरहिता । **नागरनरा** नागराश्चतुरा नराः ( वर्ण्यमानाः ) यत्र तादृशी । **न्यूननायकभूषिता** न्यूनो जात्या हीनो यो नायकस्तेन भूषिता । **दुर्मल्ली** । **स्यात्** । अस्यां दुर्मल्लिकायां तदाख्य उपरूपक इति यावत् । **प्रथमः** । **अङ्कः** । **त्रिनालिस्त्रियो** नाल्यो यत्र तादृशः; नाली घटिकाद्वयम्, उपचारात्तावन्मात्रकालनिष्पाद्येतिवृत्तनिबद्ध इति भावः । **विटक्रीडामयो** विटक्रीडावर्णनेन भूयान् । **भवेत्** । **तृतीयः** । **च**

यथा–बिन्दुमती । अथ प्रकरणिका ।

६१५ नाटिकैव प्रकरणी सार्थवाहादिनायका ।
समानवंशजा नेतुर्भवेत् तत्र च नायिका ॥ ६०३ ॥

मृग्यमुदाहरणम् । अथ हल्लीशः—

६१६ हल्लीश एवमेकाङ्कः सप्ताष्टौ दश वा स्त्रियः ।
वागुदात्तैकपुरुषः कौशिकी वृत्तिरुज्ज्वला ॥ ६०४ ॥
मुखान्तिमौ तत्र सन्धी बहुताललयस्थितिः ।

यथा–केलिरैवतकम् । अथ भाणिका—

६१७ भाणिका श्लक्ष्णनेपथ्या मुखनिर्वहणान्विता ॥ ६०५ ॥
कौशिकीभारतीवृत्तियुक्तैकाङ्कविनिर्मिता ।
उदात्तनायिका मन्दपुरुषा(ऽ)

६१८ अत्राङ्गसप्तकम् ॥ ६०६ ॥
उपन्यासोऽथ विन्यासो विबोधः साध्वसं तथा ।
समर्पणं निवृत्तिश्च संहार इति सप्तमः ॥ ६०७ ॥

---

'अङ्क'इति पूर्वतोऽन्वेति । **षण्णालिकः** षट् नालिका यत्र तादृशः । द्वादशघटिकासम्पाद्येतिवृत्तनिबद्ध इति भावः । **पीठमर्दविलासवान्** पीठमर्दो नायकसहायकविशेषस्तस्य विलासोऽस्मिन्नस्तीति तथोक्तः । **चतुर्थः** । **अङ्कः** । **च** । **दशनालिर्विंशतिर्घटिकासम्पाद्येतिवृत्तनिबद्धः** । **क्रीडितनागरः** क्रीडितो जातक्रीडस्तत्तया वर्णित इति याव-न्नागरश्चतुरजनो यत्र तादृशः । **स्यात्** । द्वितीयोऽङ्कस्तु यथासम्भवं सङ्घटित एवेति बोध्यम् ॥६०१–६०२ ॥

उदाहरति–**यथे**त्यादिना । स्पष्टम् ।

प्रकरणिकां लक्षयितुमाह–**अथ** । **प्रकरणिका** लक्ष्यते ६१५ **सार्थवाहादिनायका** वणिगमात्यपुरोहिता-धन्यतमनायकेति भावः । 'वैदेहकः सार्थवाहो नैगमो वाणिजो वणिक् ।'इत्यमरः । **नाटिका** । **एव** । **प्रकरणी** । **तत्र** तस्याम् । **च** । **नेतुर्ना**यकस्य । **समानवंशजा** यद्वर्णो नायकस्तद्वर्णेति भावः । **नायिका** । अयम्भावः-नाटिकाया यल्लक्षणं तदधिकृतैवेयं, किन्तु नायिकानायकयोरन्तर्विशेषः । इति ॥ ६२० ॥

उदाहरणं च प्रायो दुर्लभमित्यत आह–**मृग्यमि**त्यादि । स्पष्टम् ।

हल्लीशं लक्षयितुमाह–६१६ **एवम्** । **हल्लीश**स्तदाख्यमुपरूपकम् । **एकाङ्कः** । **तत्र** । **सप्त** । **अष्टौ** । **दश** । **वा** । **स्त्रियः** । 'व्यापृता भवन्ती'ति शेषः । **उदात्ता** । **वाक्** वर्णनम् । **एकपुरुष** एको नटः । **उज्ज्वला** । **कौशिकी** । **वृत्तिः** । **मुखान्तिमौ** मुखनिर्वहणाख्यावित्यर्थः । **सन्धी** । तथा–**बहुताललयस्थितिर्ब**ही ताललययोः स्थितिः ॥ ६०४ ॥

उदाहरति–**यथे**त्यादिना । स्पष्टम् ।

भाणिकां लक्षयितुमाह–६१७ **श्लक्ष्णनेपथ्या** श्लक्ष्णं मधुरं नेपथ्यं वेषरचना यत्र तादृशी । **मुखनिर्वहणा-न्विता** मुखनिर्वहणाख्याभ्यां सन्धिभ्यामुपेता । **कौशिकीभारतीवृत्तियुक्ता** । **एकाङ्कविनिर्मिता** एकाङ्का । **उदात्तनायिका** धीरोदात्तनायकानुरूपा नायिका यत्र तादृशी । **मन्दपुरुषा** मन्दो हीनः पुरुषो यत्र तादृशी । 'अमन्द पुरुषे' ति पाठे तु अमन्दो धीरोदात्तः पुरुषो नायको यत्र तादृशी । **भाणिका** 'स्या' दिति शेषः ॥ ६०५ ॥

अत्र विशेषमाह–६१८**अत्रा**स्मिन् भाणिकानामक उपरूपक इत्यर्थः । **अङ्गसप्तकं** सप्ताऽङ्गानि भवन्ति । तानि कानीत्यत आह–**उपन्यास** इत्यादि । स्पष्टम् ॥ ६०६ ॥ ६०७ ॥

६१९ उपन्यासः प्रसङ्गेन भवेत् कार्य्यस्य कीर्त्तनम्।
निर्वेदवाक्यव्युत्पत्तिर्विन्यास इति सुस्मृतः॥ ६०८॥
भ्रान्तिनाशो विबोधः स्यान्मिथ्याख्यातं तु साध्वसम्।
सोपालम्भवचः कोपपीडयेह समर्पणम्॥ ६०९॥
निदर्शनस्योपन्यासो निवृत्तिरिति कथ्यते।
संहार इति च प्राहुर्यत् कार्य्यस्य समापनम्॥ ६१०॥

स्पष्टान्युदाहरणानि। यथा-कामदत्ता। एतेषां सर्वेषां नाटकप्रकृतिकत्वेऽपि यथौचित्यं यथालाभं नाटकोक्तविशेषपरिग्रहः। यत्र च नाटकोक्तस्यापि पुनरुपादानं तत्र तत्सद्भावस्य नियमः। अथ श्रव्यकाव्यानि-

६२० श्रव्यं श्रोतव्यमात्रं तत्पद्यगद्यमयं त्रिधा।

तत्र पद्यमयान्याह-

६२१ छन्दोबद्धपदं पद्यं तेनैकेन च मुक्तकम्॥ ६११॥
द्वाभ्यां तु युग्मकं, सन्दानितकं त्रिभिरिष्यते।
कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम्॥ ६१२॥

---

क्रमादेतानि लक्षयति-६१९प्रसङ्गेन। कार्य्यस्य प्रयोजनस्य। कीर्त्तनम्। उपन्यासः। भवेत्। निर्वेदवाक्यव्युत्पत्तिर्निर्वेदप्रधानं वाक्यं विरक्तिसूचकं वाक्यं तस्य व्युत्पत्तिः प्रपञ्चनम्। विन्यासः। इति। सुस्मृतः सम्मतः। भ्रान्तिनाशः। विबोधः। स्यात्। मिथ्याख्यानं मिथ्याकथनम्। तु। साध्वसम्। इह नाटके। कोपपीडया क्रोधावेशेन। सोपालम्भवचः उपालम्भपूर्वकं कथनम्। समर्पणम्। तदाख्यमङ्गम्मतम्। निदर्शनस्य दृष्टान्तस्य। उपन्यासः फलतः स्थापनम्। निवृत्तिः। इति। कथ्यते। यत्। कार्य्यस्य। समापनं समाप्तिबोधकतया वर्णनम्। 'त' दिति शेषः। संहारः। इति। प्राहुः। च॥६०८-६१०॥

एषामुदाहरणानि प्रख्यातानीत्याह-स्पष्टानीत्यादि। भाणिकाया उदाहरणं दर्शयति-यथेत्यादिना। स्पष्टम्। एवं नाटिकाऽऽदिं लक्षयित्वाऽत्रानुक्तं सर्वं नाटकोक्तमेव ग्राह्यमित्याह-एतेषां नाटिकादीनाम्। सर्वेषाम्। नाटकप्रकृतिकत्वे नाटकसाजात्ये। अपि। यथौचित्यम्। यथालाभम्। नाटकोक्तविशेषपरिग्रहो नाटके उक्तं कथितं (यल्लक्षणं) तस्माद्विशेषस्तस्य परिग्रहः। यत्र येषु नाटिकाऽऽद्युपरूपकेषु मध्ये। च। नाटकोक्तस्य नाटक उक्तं तस्य। अपि। पुनः। उपादानम्। तत्र। तत्सद्भावस्य नाटकेऽभिहितस्य। नियमः। अयम्भावः-यत्र नाटिकादौ नाटकापेक्षया विशेषाभिधानं तत्तु युक्तमेव, किन्तु अन्यत्सर्वं तस्य नाटकप्रकृतिकत्वात् नाटकलक्षणाभिन्नत्वम्। यत्र च नाटिकाऽऽदौ नाटकलक्षणापेक्षया विशेषाभावेऽपि पुनस्तदीयतयाऽभिधानं तस्यावश्यकत्वद्योतनार्थमिति।

एवं दृश्यकाव्यान्यभिधाय-श्रव्यकाव्यानि लक्षयितुमाह-अथ। श्रव्यकाव्यानि 'लक्ष्यन्त' इति शेषः। ६२० श्रोतव्यमात्रम्। मात्रपदेन द्रष्टव्यस्य व्यवच्छेदः। श्रव्यं तत्सञ्ज्ञकं काव्यमित्यर्थः। तत् 'पुन'रिति शेषः। पद्यगद्यमयं पद्यं च गद्यं चेति, पद्यगद्ये च पद्यगद्यं चेति, पद्यगद्यानि प्रकृतान्युच्यन्ते यत्र तत्तथोक्तम्। 'सरूपाणामेकशेष एकविभक्तौ।' १।२।६४ इत्येकशेषः। 'तत्प्रकृतवचने मयट्।' ५।४।२१ इति मयट्। तथा च-पद्यमयम्, गद्यमयम्, पद्यगद्यमयं चेत्यर्थः। त्रिधा।

तत्र पद्यमयस्य भेदान् लक्षयितुमाह-तत्र तेषु त्रिविधेषु। पद्यमयानि 'काव्यानी'ति प्रसङ्गानुप्रसक्तम्। अत्र बहुवचनं वक्ष्यमाणबहुत्वनिर्देशार्थम्। आह ६२१ छन्दोबद्धपदं छन्दोभिरुक्ताऽऽदिभिर्बद्धानि पदानि यस्य तादृशम्। पद्यम्। तेन तादृशलक्षणकेन। एकेन पद्यान्तरनिरपेक्षेण। च। मुक्तकं मुक्तमिवेति तथोक्तम्। 'इवे प्रतिकृतौ।' ५।३।९६ इति कन्। द्वाभ्याम् 'ताभ्या'मिति पूर्वतो वचनविपरिणामेनान्वेति। एवं परत्र। तु। युग्मकं युग्ममिवेति तथोक्तम्। त्रिभिस्तैः पद्यैः। सन्दानितकं सन्दानितं बद्धमिवेति तथोक्तम्। 'बद्धे सन्दानितं मूत-

तत्र मुक्तकं यथा मम,

"सान्द्रानन्दमनन्तमव्ययमजं यद्योगिनोऽपि क्षणं
साक्षात्कर्त्तुमुपासते प्रति मुहुर्ध्यानैकताना मुहुः ।
धन्यास्ता मथुरापुरीयुवतयस्तद् ब्रह्म याः कौतुका-
दालिङ्गन्ति समालपन्ति शतधा कर्षन्ति चुम्बन्ति च ॥ ३४० ॥"

युग्मकं यथा मम-

"किं करोषि करोपान्ते कान्ते! गण्डस्थलीमिमाम् । प्रणयप्रवणे कान्तेऽनैकान्ते नोचिताः क्रुधः ॥ ३४१ ॥
इति यावत् कुरङ्गाक्षीं वक्तुमीहावहे वयम् । तावदाविरभूच्चूते मधुरो मधुपध्वनिः ॥ ३४२ ॥"

एवमन्यान्यपि । "

---

मुदितं सन्दितं सितम् ।' इत्यमरः । इष्यते । चतुर्भिः तैः पद्यैरिति पूर्वतः । च । कलापकं कलापः समूह इवेति तथोक्तम् । पञ्चभिः पञ्चसङ्ख्यातोऽन्यूनसङ्ख्यकैस्तैः पद्यैरिति भावः । कुलकं कुलमिवेति तथोक्तं काव्यम् । मतम् ॥ ६११ ॥ ६१२ ॥

तानि क्रमादुदाहर्त्तुमाह—तत्र तेषु मुक्तकादिषु मध्ये इति यावत् । मुक्तकम् । यथा । मम ।

"मुहुः पुनः । ध्यानैकताना ध्यानेनैकतानाः समाहितचित्ताः सन्तः । योगिनः । अपि । सान्द्रानन्दमानन्दघनम् । अनन्तं देशकालपरिच्छेदशून्यम् । अव्ययं परिणामिताशून्यमपचयहीनं वा । अजं जन्मरहितम् । यत् । परं सर्वतो विलक्षणं किमपि वस्तु । साक्षात्कर्त्तुम् । प्रति मुहुः पुनःपुनः । उपासते उद्दीधाद्युपासनं कुर्वते । तत् । ब्रह्म ( कर्म्म ) । याः । कौतुकात् । आलिङ्गन्ति । समालपन्ति । शतधा बहुप्रकारेण । कर्षन्ति स्वानुकूलतयाऽवस्थापयन्ति । चुम्बन्ति । च ( इदं समुच्चयार्थम् ) । ताः । मथुरापुरीयुवतयो मथुरापुर्यां निवासिन्यो योषितः । धन्याः कृतार्थाः सफलभाग्याः । ननु ते योगिन इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ३४० ॥'

युग्मकम् । यथा । मम—हे कान्ते सुन्दरि ! करोपान्ते करतलसमीपभागे । इमाम् । गण्डस्थलीम् । किम् । करोषि करतलोपरि गण्डस्थलनिधानं हि मन्युव्यञ्जिका मुदेति सा तया किं क्रियत इति प्रश्नाभिप्रायः । ननु त्वमन्यासक्त इति युक्तैव तथाऽवस्थितिरित्याशङ्क्याह—अनैकान्तेऽन्यस्यामनासक्ते । नैकाऽन्ते निश्चये यस्य स नैकान्तः तद्भिन्नस्तथोक्तः । तथाऽपि—प्रणयप्रवणे प्रणये प्रेम्णि प्रवणः कृताभिलापः तादृशे, यद्वा—प्रणये प्रेम्णाऽऽनमने प्रवण उद्यतस्तादृश इत्यर्थः । कान्ते वल्लभजने । क्रुधः । न । उचिताः । इति । यावत् । वयम् । कुरङ्गाक्षीं मृगनयनाम् । वक्तुम् । ईहामहे चेष्टामहे । तावत् तदवधि । चूते रसाले । मधुरो मन्मथोद्वुद्धकतया माननिवर्त्तक अतएव प्रिय इति भावः । मधुपध्वनिर्मधुपानप्रमत्तानां भ्रमराणां ध्वनिः । आविरभूत् । मधुपध्वनिराविर्भवन्नेव तस्या मानं जहार, न पुनः प्रार्थनाऽऽवश्यकत्वमापतितमिति भावः ॥ ३४१ ॥ ३४२ ॥"

सन्दानितकान्येवं स्वयम्मृग्यानीत्याह—एवमित्यादि । स्पष्टम् । तत्र सन्दानितकं यथा—"दृढदिषा वदनाम्बुरुहश्रियः सुतनु ! सत्यमलङ्करणाय ते । तदपि सम्प्रति सन्निहिते मधावधिगमं धिगमङ्गलमश्रुणः ॥ त्यजति कष्टमसावचिरादमून् विरहवेदनयेत्यघशङ्किभिः । प्रियतया गदितास्त्वयि वान्धवैरवितथा वितथाः सखि ! मा गिरः ॥ न खलु दूरगतोऽप्यतिवर्त्तते महमसाविति बन्धुतयोदितैः । प्रणयिणो निशमय्य वधूर्बहिः स्वरमृतैरमृतैरिव निर्ववौ ॥" एतस्यैव विशेषकमिति रत्नान्तरम् । कलापकं यथा—"न खलु वयममुष्य दानयोग्याः"इत्यादि । कुलकं पञ्चभिर्यथा—"यात यूयं यमश्रायं दिशं नाथेन दक्षिणाम् । विक्षावैस्तोयविश्रावं तर्जयन्तो महोदधेः ॥ उन्नायानधिगच्छन्तः प्रद्रावैर्वसुधाभृताम् । वनाभिलावान् कुर्वन्तः स्वेच्छया चारुविक्रमाः ॥ सदोद्गारसुगन्धीनां फलानामलमाशिताः । उत्कारेषु च धान्यानामनभीष्टपरिग्रहाः ॥ संस्तावमिव शृण्वन्तश्छन्दोगानां महाध्वरे । शिञ्जितं मधुलेहानां पुष्पप्रस्तारशायिनाम् ॥ आलोचयन्तो विस्तारमम्भसां दक्षिणोदधेः । स्वादयन्तः फलरसं मुष्टिसङ्ग्राहपीडितम् ॥" षड्भिर्यथा - विततवलिविभाव्यपाण्डुलेखाकृतपरभागविलीनां रोमराजिः । कृशमपि कृशतां पुनर्नयन्ती विपुलवरोन्मुखलोचनावलग्नम् ॥ प्रपृकलकुचवन्धुरोद्धुरोरःप्रसभविभिन्नतनूत्तरीयबन्धा । अवनमदुदरोच्छ्वसद्दुकूलस्फुटतरलक्ष्यगभीरनाभिमूला । व्यवहितमविजानती किलान्तर्व्रणभुवि वल्लभमाभिमुख्यभाजम् । अधिविटपि सलीलमग्रपुष्पग्रहणपदेन चिरं विलम्ब्य काचित् ॥ अथ किल कथिते सखीभिरत्र क्षणमपरेव सस-

६२२ सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः।
सद्वंशः क्षत्त्रियो वाऽपि धीरोदात्तगुणान्वितः॥ ६१३ ॥
एकवंशभवा भूपाः कुलजा बहवोऽपि वा।
शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते॥ ६१४ ॥
अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः।
इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम्॥ ६१५ ॥
चत्वारस्तस्य वर्गाः स्युस्तेष्वेकं च फलं भवेत्।
आदौ नमस्क्रियाऽऽशीर्वा वस्तुनिर्देश एव वा॥ ६१६ ॥
क्वचिन्निन्दा खलादीनां सतां च गुणवर्णनम्।
एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः॥ ६१७ ॥
नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह।
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते॥ ६१८ ॥
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत्।
सन्ध्यासूर्य्येन्दुरजनीप्रदोषध्वान्तवासराः॥ ६१९ ॥
प्रातर्मध्याह्नमृगयाशैलर्त्तुवनसागराः।
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः॥६२० ॥
रणप्रयाणोपयममन्त्रपुत्रोदयादयः।
वर्णनीया यथायोगं साङ्गोपाङ्गा अमी इह॥ ६२१ ॥
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा।
नामास्य सर्गोपादेयकथया सर्गनाम तु॥ ६२२ ॥

---

म्भ्रमा भवन्ती। शिथिलितकुसुमाकुलाग्रपाणिः प्रतिपदसंयमितांशुकावृताङ्गी॥ कृतभयपरितोषसन्निपातं सचकितसस्मित-वक्त्रवारिजश्रीः। मनसिजगुरुतत्क्षणोपदिष्टं किमपि रसेन रसान्तरं भजन्ती॥ अवनतवदनेन्दुरिच्छतीव व्यवधिमधीरतया यदस्थितास्मै। अहरत सुतरामतोऽस्य चेतः स्फुरमभिभूषयति स्त्रियस्त्रपैव॥'' इति एवं सप्तभिरष्टभिर्नवभिर्दशभिर्वाऽपि कुलकं भवतीति तत्तदुदाहरणानि स्वयमूह्यानि।

महाकाव्यं लक्षयति–६२२ **सर्गबन्धः** सर्गैरवान्तरार्थकैः सन्दर्भविशेषैर्बन्धः। **महाकाव्यम्**। **तत्र**। **एकः**। **सुरो** दिव्यः। **वा**ऽथवा। **सद्वंशः** शोभनवंशोद्भवः। **क्षत्त्रियः**। **अपि**। **धीरोदात्तगुणान्वितो** धीरोदात्तलक्षणसम्पन्न इति भावः। **नायकः**। **वा**ऽथवा। **एकवंशभवाः**। **कुलजाः** सगोत्राः संपिण्डा वा। **बहवः**। **अपि**। **भूपा** राजानः। 'नायका'इति पूर्वतो वचनविपरिणामेनान्वेति। **शृङ्गारवीरशान्तानाम्**। निर्धारणार्थेयं षष्ठी। **एकः**। **रसः**। **अङ्गी**। **इष्यते**। **सर्वे**ऽङ्गितो भिन्नाः समस्ताः। **अपि**। **रसाः**। **अङ्गानि** तदुद्भावकतया स्थिताः। 'भवन्ती'ति शेषः। तथा–**सर्वे**। **नाटकसन्धयो** मुखप्रतिमुखादयः पञ्च नाटकोपकारितयाऽभिहिताः सन्धय इति भावः। 'विधेया'इति शेषः। **इतिहासोद्भवं** पुराणादिप्रसिद्धम्। **वा**। **अन्य**त्तथाऽप्रसिद्धम्। **सज्जनाश्रयं** सज्जन आश्रयो यस्य तादृशं सज्जनमधिकृत्य प्रस्तुतम्। **वृत्तं** चरितम्। **तस्य** महाकाव्यस्य। **चत्वारः**। **वर्गा** धर्म्मार्थकाममोक्षरूपाः वर्गाः। **स्युः**। **तेषु**। **एकं** तदन्यतमरूपमिति भावः। **च** अथवा। **फलम्**। **भवेत्**। अयम्भावः–धर्मादिचतुष्टयं धर्म्माद्यन्यतमं वा तस्य फलं समुद्भावनीयम् इति। **आदौ** प्रारम्भे। **नमस्क्रिया**। **वा**। **आशीः**राशीर्वादः। **वा**। **वस्तुनिर्देश** इतिवृत्तसङ्क्षेपः। **एव**। 'मङ्गलत्वेनाचरणीय'मिति शेषः। **क्वचित**

सन्ध्यङ्गानि यथालाभमत्र विधेयानि, अवसानेऽन्यवृत्तकैरिति बहुवचनमविवक्षितम्। साङ्गोपाङ्गा इति जलकेलिमधुपानादयः। यथा-रघुवंश-शिशुपालवध-नैषधादि। यथा वा मम राघवविलासादि।

६२३ अस्मिन्नार्षे पुनः सर्गा भवन्त्याख्यानसञ्ज्ञकाः।

अस्मिन् महाकाव्ये। यथा-महाभारते।

६२४ प्राकृतैर्निर्मिते तस्मिन् सर्गा आश्वाससञ्ज्ञकाः॥ ६२३॥
छन्दसाऽऽस्कन्दकेनैतत् क्वचिद्गलितकैरपि।

यथा-सेतुबन्धः, यथा वा-मम कुवलयाश्वचरितम्।

६२५ अपभ्रंशनिबद्धेऽस्मिन् सर्गाः कडवकाभिधाः॥ ६२४॥
तथाऽपभ्रंशयोग्यानि च्छन्दांसि विविधान्यपि।

यथा कर्णपराक्रमे।

---

'महाकाव्य'इति प्रकृतम्। खलादीनां दुर्जनदुष्कृत्यादीनामिति भावः। निन्दा। सताम्। च वा। गुणकीर्त्तनम्। विधेयमिति शेषः। एकवृत्तमयैरेकलक्षणानुगतैः। पद्यैः। अवसाने अन्ते। अन्यवृत्तकैः। बहुवचनमविवक्षितम्। 'उपलक्षिता'इति शेषः। इह। नातिस्वल्पाः। नातिदीर्घाः। अष्टाधिका अष्टसङ्ख्यातोऽधिकसङ्ख्याकाः। सर्गाः। क्वापि कस्मिंश्चिन्महाकाव्ये। नानावृत्तमयोऽनेकच्छन्दोनिबद्धः। कश्चन। सर्गः। दृश्यते। सर्गान्ते। भाविसर्गस्य भाविविधानस्य सर्गस्य। कथायाः। सूचनं निदर्शनम्। भवेत्। सन्ध्यासूर्येन्दुरजनीप्रदोषध्वान्तवासराः। अत्र-रजनी रात्रिः, प्रदोषः सायङ्कालः, वासरो दिनम् अन्यत्स्पष्टम्। प्रातर्मध्याह्नमृगयाशैलर्त्तुवनसागराः। अत्र मृगया वने धावतां मृगादीनां हननम्। सम्भोगविप्रलम्भौ शृङ्गारविशेषौ। च। मुनिस्वर्गपुराध्वराः पुरं नगरम्, अध्वरो यज्ञः। रणप्रयाणोपयममन्त्रपुत्रोदयादयः प्रयाणं सैन्येन सह राज्ञोऽन्यत्र यानम्, उपयमो विवाहः, मन्त्रः कर्त्तव्यनिर्णयः आदिना नायकप्रतापादीनां ग्रहणम्। अमी। साङ्गोपाङ्गाः। यथायोगं यथोपयोगं यथासम्भवं वा। इह। वर्णनीयाः। अस्य महाकाव्यस्य। कवेः। वृत्तस्य। नायकस्य। नाम्ना। वा। इतरस्य प्रतिनायकस्य। 'नाम्ना' इति पूर्वतोऽनुवृत्तम्। 'सदृश'मिति शेषः। नाम। सर्गोपादेयकथया सर्गोपादेयमधिकृत्य निबद्धस्तया कथया सदृशमिति भावः। तु। सर्गनाम। 'विधेय'मिति शेषः॥ ६१३-६२२॥

उक्तमर्थं स्फुटयितुं तत्कठिनांशं विवृणोति-सन्ध्यङ्गानीत्यादिना। स्पष्टम्।

उदाहरति-यथेत्यादिना। स्पष्टम्।

आर्षमहाकाव्ये किञ्चिद्वैलक्षण्यमाह-६२३ अस्मिन् महाकाव्ये। पुनः। आर्षे ऋषिप्रणीते 'सती'ति शेषः। आख्यानसञ्ज्ञका आख्यानमिति वृत्तवर्णनं सञ्ज्ञा येषां तादृशाः। सर्गाः। भवन्ति।

काठिन्यपरिहारायाह-अस्मिन्नित्यादि। स्फुटम्।

प्राकृतमहाकाव्ये विशेषं लक्षयति-६२४ प्राकृतैः प्राकृतभाषामयैः पद्यैः। निर्मिते। तस्मिन् महाकाव्ये। आश्वाससञ्ज्ञका आश्वासनामानः। उच्छ्वाससञ्ज्ञका इति पाठान्तरे तु उच्छ्वासनामान इत्यर्थः। सर्गाः। 'भवन्ती'ति शेषः। एतत्प्राकृतमहाकाव्यम्। आस्कन्दकेन तदभिधेयेन। छन्दसा वृत्तेन। क्वचित्। गलितकैस्तदाख्यैः छन्दोभिः। अपि। 'निबद्धं विधेय'मिति भावः॥ ६२३॥

उदाहरति-यथेत्यादिना। स्पष्टम्।

अपभ्रंशमहाकाव्ये विशेषमाह-६२५ अस्मिन्महाकाव्ये। अपभ्रंशनिबद्धेऽपभ्रंशेनानियतस्वरूपया भाषया निबद्धे। कडवकाभिधाः कडवकनामानः। सर्गाः। तथा। अपभ्रंशयोग्यानि तदुचितानीति भावः। विविधानि। छन्दांसि लक्षणया तन्निबद्धानि पद्यानि भवन्तीत्यर्थः॥ ६२४॥

उदाहरति-यथेत्यादिना। स्पष्टम्।

६२६ भाषाविभाषानियमात् काव्यं सर्गसमुज्झितम् ॥ ६२५ ॥
एकार्थप्रवणैः पद्यैः सन्धिसामग्र्यवर्जितम् ।

यथा-भिक्षाटनम्, आर्य्याविलासश्च ।

६२७ खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च ॥ ६२६ ॥

यथा मेघदूतादि ।

६२८ कोषः श्लोकसमूहस्तु स्यादन्योऽन्यानपेक्षकः ।
व्रज्याक्रमेण रचितः स एवातिमनोहरः ॥ ६२७ ॥

सजातीयानामेकत्र सन्निवेशो व्रज्या । यथा-मुक्तावल्यादि । अथ गद्यकाव्यानि ।

६२९ वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ।
भवेदुत्कलिकाप्रायं चूर्णकं च चतुर्विधम् ॥ ६२८ ॥
आद्यं समासरहितं वृत्तभागयुतं परम् ।
अन्यद्दीर्घसमासाढ्यं तुर्य्यं चाल्पसमासकम् ॥ ६२९ ॥

मुक्तकं यथा-"गुरुर्वचसि, पृथुरुरसि"इत्यादि । वृत्तगन्धि यथा मम-"समरकण्डूलनिबिडभुजदण्डकुण्डलीकृतकोदण्डशिञ्जिनीटङ्कारोज्जागरितवैरिनगर !"इत्यादि । अत्र 'कुण्डलीकृतकोदण्ड' इत्यनुष्टुब्वृत्तस्य पादः, 'समरकण्डूल' इति प्रथमाक्षरद्वयरहितस्तस्यैव पादः । उत्कलिकाप्रायं यथा ममैव-'अणिसं विसुमरणिसिदसरविसरविदलिदसमरपरिगदपवरपरबलं[1] !"इत्यादि । चूर्णकं यथा मम-'गुणरत्नसागर ! जगदेकनागर ! कामिनीमदन ! जनरञ्जन !"इत्यादि ।

---

काव्यं लक्षयति-५२६ भाषाविभाषानियमात् भाषा देववाणी, विभाषा प्राकृतादिः तयोर्नियमं कृत्वेति भावः । 'रचित'मिति शेषः । सर्गसमुज्झितं सर्गहीनम् । एकार्थप्रवणैः प्रस्तुतार्थप्रतिपादनमात्रपरैः । पद्यैः । 'सहित'मिति शेषः । सन्धिसामग्र्यवर्जितं सन्धिसामग्र्या सहितम् । काव्यम् । अयम्भावः-संस्कृतं प्राकृतयन्यतमां वा भाषामाश्रित्य प्रस्तुतानुकूलतया महावाक्यायमानैः पद्यैः सहितं मुखादिशालिसर्गहीनं यत् तत् काव्यं नाम काव्यम् । इति ॥ ६२५ ॥

उदाहरति-यथा । मेघदूतादि । आदिना हंसदूतादेर्ग्रहणम् ।

खण्डकाव्यं लक्षयति-६२७ काव्यस्यानन्तरोक्तलक्षणस्य महावाक्यविशेषस्य । च । एकदेशानुसारि कियदंशानुरूपम् । खण्डकाव्यम् । भवेत् ॥ ६२६ ॥ उदाहरति-यथेत्यादिना । स्पष्टम् ।

कोषकाव्यं लक्षयति-६२८ श्लोकसमूहः । अन्योऽन्यानपेक्षक एकं प्रसङ्गमनुसृत्यानिबद्धः । तु । कोषस्तदाख्यं काव्यम् । स्यात् । स निरुक्तलक्षणः । एव । व्रज्याक्रमेण श्रेणीविशेषमार्गेण । रचितः । अतिमनोहरः । 'भवती'ति शेषः ॥ ६२७ ॥

कारिकां सुगमयितुं व्रज्यापदार्थं विवृणोति-सजातीयेत्यादिना । स्पष्टम् । उदाहरति-यथेत्यादिना । स्पष्टम् ।

गद्यकाव्यं लक्षयितुमाह-अथ । गद्यकाव्यानि । अत्र बहुवचनं तद्भेदबहुत्वद्योतनार्थम् । 'लक्ष्यत'इति शेषः । ६२९ वृत्तबन्धोज्झितं वृत्तरचनया शून्यम् । गद्यम् । तच्च-मुक्तकम् । वृत्तगन्धि । च । उत्कलिकाप्रायमुद्गता या कलिका तस्याः प्रायं सदृशम् । च । चूर्णकम् । इति-चतुर्विधम् । भवेत् । अत्र च-आद्यं मुक्तकमित्यर्थः । समासरहितम् । परं द्वितीयं वृत्तगन्धि इति यावत् । वृत्तभागयुतं वृत्तस्य भाग एकांशस्तेन युतम् । अन्यत् तृतीयमुत्कलिकाप्रायमिति यावत् । दीर्घसमासाढ्यमतिसमस्तम् । तुर्य्यं चतुर्थं चूर्णकमिति यावत् । च । अल्पसमासकं क्षुद्रसमासघटितम् ॥ ६२८ ॥ ६२९ ॥

उदाहरति-मुक्तकम् । यथा । "वचसि भाषणे । गुरुर्महान् सुराचार्य्यश्च । उरसि । पृथुः पुष्टो वासुदेवांशविशेषश्च"इत्यादि । वृत्तगन्धि वृत्तस्य गन्धो लेशभ्रमोऽस्मिन्नस्तीति तथोक्तम् । यथा । मम । "समर......

---

[1] अनिशंविस्मरनिशिततरशरविसरविदलितसमरपरिणतप्रबलपरबल ! इति संस्कृतम् ।

६३० कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्।
क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके ॥ ६३० ॥
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम्।

यथा कादम्बर्यादिः।

६३१ आख्यायिका यथावत्स्यात्कवेर्वंशानुकीर्त्तनम् ॥ ६३१ ॥
अस्यामन्यकवीनां च वृत्तं पद्यं क्वचित्क्वचित्।
कथांशानां व्यवच्छेद आश्वास इति बध्यते ॥ ६३२ ॥
आर्य्यावक्त्रापवक्त्राणां छन्दसा येन केनचित्।
अन्यापदेशेनोच्छ्वास-मुखे भाव्यर्थसूचनम् ॥ ६३३ ॥

यथा-हर्षचरितादिः।

"अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात्।" इति दण्ड्याचार्य्यवचनात् केचित् "आख्यायिका नायकेनैव निबद्धव्या" इत्याहुः। तदयुक्तम्। आख्यानादयश्च कथाऽऽख्यायिकयोरेवान्तर्भावान्न पृथगुक्ताः। यदुक्तं दण्डिनैव-"अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातयः।" इति। आसामुदाहरणम्-पञ्चतन्त्रादि। अथ पद्यगद्यमयानि—

---

समरस्य सङ्ग्रामस्य कण्डूलौ कण्डूतिमन्तौ यौ निविडौ पुष्टौ भुजदण्डौ ताभ्यां कुण्डलीकृतं यत् कोदण्डं धनुस्तस्य शिञ्जिनी मौर्वी तस्याष्टङ्कारः शब्दविशेषस्ततोजागरितमत्यन्तं जागरणं नीतं वैरिनगरं येन तत्सम्बुद्धौ तथोक्त!" इत्यादि। 'कुण्डलीकृतकोदण्ड' । इति अनुष्टुब्वृत्तस्य । पादः । अत्र 'समरकण्डूल'इति 'यत्त'दिति शेषः। प्रथमाक्षरद्वयरहितः 'महा'इत्यादिरूपं यदादौ अक्षरद्वयं तद्धीनः। तस्यानुष्टुब्वृत्तस्य। एव। पादः। उत्कलिकाप्रायम्। यथा। मम। एव। 'अणिसं अनिशं निरन्तरम्। विसुमरणिसिददरसरविसरविदलितसमरपरिगदपवरपरबल! विसृमरनिशिततरशरविसरविदलितसमरपरिगतप्रवलपरवल! विसृमराः सर्वतो व्याप्ता ये निशिततरा अत्यन्तं तीक्ष्णाः शरा वाणास्तेषां विसरः पुञ्जस्तेन विदलितानि समरपरिगतानि सङ्ग्रामं प्राप्तानि प्रवलानि परवलानि परेषां सैन्यानि येन तत्सम्बुद्धौ तथोक्त!" इत्यादि । चूर्णकम्। यथा। मम। "गुणरत्नसागर गुणा रत्नानीव तेषां सागरस्तत्सम्बुद्धौ तथोक्त! जगदेकनागर जगति एकोऽद्वितीयोऽसौ नागरश्चतुरस्तत्सम्बुद्धौ तथोक्त! कामिनीमदन कामिनीनां कृते कामस्वरूप! जनरञ्जन!" इत्यादि।

गद्यस्य कथेत्याख्योऽपि भेद इति सूचयंस्तत्स्वरूपमाह-६३०कथायां कथाऽऽख्ये गद्यकाव्य इति भावः। गद्यैः। एव। विनिर्मितम्। सरसं श्रुतिमधुरमर्थतश्च मधुरम्। वस्तु इतिवृत्तम्। 'भवती' ति शेषः। अत्रास्याम्। क्वचित् कस्मिंश्चिदंशे। आर्य्या तद्वृत्ते निवद्धं पद्यम् । क्वचित्। वक्त्रापवक्त्रके तन्नामनी छन्दसी तत्र निवद्धे पद्ये। 'स्याता' मिति शेषः । आदौ कथायाः प्रारम्भे। पद्यैः। नमस्कारः। खलादेर्दुष्टपापण्डादेः। वृत्तकीर्त्तनं चरितकीर्त्तनम्। 'चे' ति शेषः ॥ ६३० ॥

उदाहरति-यथेत्यादिना । स्पष्टम् । गद्यस्याख्यायिकाऽपि भेद इति सूचयंस्तत्स्वरूपमाह-६३१ कवेः। यथावत। वंशानुकीर्त्तनम्। आख्यायिका तन्नामकं गद्यकाव्यम् । स्यात्। अस्याम्। च। अन्यकवीनां स्वभिन्नानां कवीनाम्। वृत्तमितिवृत्तम्। क्वचित्क्वचित्। पद्यम्। कथांशानाम् । व्यवच्छेदः समाप्तिः। आश्वासः 'उच्छ्वास' इति पाठान्तरम्। इति। बध्यते। आर्य्यावक्त्रापवक्त्राणां तदाख्यानां मध्ये । येन। केनचित्। छन्दसा तन्निवद्धेन पद्येन। (कर्त्रा) अन्यापदेशेन परच्छलेन। उच्छ्वासमुखे उच्छ्वासारम्भे। भाव्यर्थसूचनं भाविनोऽर्थस्य सूचनम्। 'कर्त्तव्य' मिति शेषः ॥६३१-६३२॥

उदाहरति-यथेत्यादिना। स्पष्टम्। दण्डिमतानुकूल्येन परेषां मतं निराकरोति—

"आख्यायिका। नायकेन नायकभूतकविचरित्रेण। एव। निवद्धव्या, नहि तत्र परेषामपि चरित्रं निवद्धव्यम् इति शेषः।" इति'य'दिति शेषः। केचित्। आहुः। तत्। "अपितु किन्तु। तत्रापि तस्या-

**६३२ पद्यगद्यमयं काव्यं चम्पूरित्यभिधीयते ।**

यथा—देशराजचरितम् ।

**६३३ पद्यगद्यमयी राजस्तुतिर्विरुदमुच्यते ॥ ६३४ ॥**

यथा—विरुदमणिमाला ।

**६३४ करम्भकं तु भाषाभिर्विविधाभिर्विनिर्मितम् ।**

यथा—मम, षोडशभाषामयी प्रशस्तिरत्नावली ।

एवमन्येऽपि भेदा उद्देशमात्रप्रसिद्धत्वादुक्तभेदानतिक्रमाच्च न पृथग् लक्षिताः ।

इति साहित्यदर्पणे दृश्यश्रव्यकाव्यनिरूपणो नाम षष्ठः परिच्छेदः ।

---

माख्यायिकायामपि । अन्यैर्नायकभिन्नचरितैः 'सहे'ति शेषः । **उदीरणात्** 'नायकचरितस्ये'ति शेषः । **अनियमो** नायकस्यैव चरित्रं निबद्धमिति नियमाभावः । **दृष्टः** ।" इति । **दण्ड्याचार्यवचनात्** । **अयुक्तम्** । ननु आख्यानादयोऽपि कतिचिदपरैरुक्ता अत्र निरूपणीया इत्याशङ्क्याह—**आख्यानादयः** । आदिनोपन्यासादीनां ग्रहणम् । **च** । **कथाऽऽख्यायिकयोः**।**एव**।**अन्तर्भावात्** तं मत्वेति भावः। ल्यबर्थेयं पञ्चमी । **पृथक्** 'ताभ्याम्' इति शेषः।**न**। **उक्ताः**।अत्रापि दण्डिसम्मतिं दर्शयति—**यत्**।**दण्डिना**।**एव** । **उक्तम्** । "**अत्रैवान्योः** कथाऽऽख्यायिकयोरेव । **शेषा** अनुक्ताः । **आख्यानजातय** आख्यानभेदाः । **च** । **अन्तर्भविष्यन्ति** । न पुनरासां पृथगभिधानं युक्तमिति भावः । आख्यानजातीनामुदाहरणं दर्शयति—**आसामाख्यानजातीनाम्** । 'एषा' मिति पाठे आख्यानादीनामित्यर्थः । स्पष्टमन्यत् ।

पद्यगद्यमयं लक्षयितुमाह—**अथ** । **पद्यगद्यमयानि** लक्ष्यन्ते **६३२ पद्यगद्यमयम्** । **काव्यम्** । **चम्पूः** । **इति** । **अभिधीयते** ।

उदाहरति—**यथे**त्यादिना । स्पष्टम् ।

'मयानी' ति बहुवचनबोध्यं भेदान्तरमाह—**६३३ पद्यगद्यमयी**।**राजस्तुतिः**।**विरुदम्**।**उच्यते** कथ्यते ॥६३४॥

उदाहरति—**यथे**त्यादिना । स्पष्टम् ।

करम्भकाख्यं भेदं लक्षयति—**६३४ विविधाभिः** । **भाषाभि**स्तन्मयैः पद्यगद्यैरिति भावः । **विनिर्म्मितम्** । **तु** पुनः । **करम्भकम्** एतन्नामकं पद्यगद्यमयं काव्यं स्यादित्यर्थः ।

उदाहरति—**यथे**त्यादिना । स्पष्टम् । उदाहरणादिभेदानामनभिधाने हेतुमाह—**एवम्** । **अन्ये** । **अपि** । **भेदाः** 'पद्यगद्यमयस्ये' ति शेषः । **उद्देशमात्रप्रसिद्धत्वा**न्नाममात्रेण भिन्नतया विख्यातत्वात् । अतएव—**उक्तभेदानतिक्रमा**दुक्तभेदानामनतिक्रमात् पृथक्तयाऽनुपलम्भात् तानतिक्रम्य स्वरूपतोऽनवस्थानादिति यावत् । **च** । **न** । **पृथक्** । **लक्षिताः** । अनुक्तानामुदाहरणादीनां भेदानामत्रैवान्तर्भावो विभावनीय इति भावः । तथाहि—"येनकेनापि तालेन पद्यगद्यसमन्वितम् । जयेत्युपक्रमं मालिन्यादिप्रासविचित्रितम् ॥ तदुदाहरणं नाम्ना विभक्त्यष्टाङ्गसंयुतम् । सम्बोधनविभक्त्या यत् प्रचुरं पद्यपूर्वकम् । विमुक्तपुनराकृष्टशब्दं स्याच्चक्रवालकम् । आद्यन्तपद्यसंयुक्ता संस्कृतप्राकृतात्मिका ॥ अष्टभिर्वा चतुर्भिर्वा वाक्यैः स्कन्धसमन्विता । प्रतिस्कन्धं भिन्नवाक्यरीतिर्देवनृपोचिता ॥ सर्वतो देवशब्दादिरेषा भोगावली मता ॥ वर्ण्यनामाङ्कविरुदवर्णनप्रचुरोज्ज्वला ॥ वाक्याऽडम्बरसंयुक्ता कथिता विरुदावली । ताराणां सङ्ख्यया पद्यैर्युक्ता तारावली मता ॥ विश्वेषां सङ्ख्यया पद्यैर्युक्ता विश्वावली मता । रत्नानां सङ्ख्यया पद्यैर्युक्ता रत्नावली मता । पद्यैश्च पञ्चभिर्युक्ता प्रोक्ता पञ्चाननावली ॥" इत्यादयो भेदा उक्तेष्वन्तर्भाव्या इति निष्कर्षः ।

प्रसङ्गसमाप्तिं दर्शयति—**इति** । **साहित्यदर्पणे** । **दृश्यश्रव्यकाव्यनिरूपणो** दृश्यश्रव्यकाव्ययोर्निरूपणं यत्र तादृशः । **नाम** प्रसिद्धः । **षष्ठः** । **परिच्छेदः** ।

बहुविधाभिनयाननायकं विमलदृश्यविधानविचक्षणम् । सुपुरुषार्थमशेषसचेतसां सदयितं दयितं कमपि स्तुमः ॥

इति श्रीशिवनाथसूरिसूनुना श्रीशिवदत्तकविरत्नेन रचितायां रुचिराऽऽख्यायां साहित्यदर्पणव्याख्यायां षष्ठः परिच्छेदः समाप्तः ।

॥ श्रीः ॥

# शोधनसूचना ।

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| सदृशायां ... | सदृश्यां | १ | ३९ |
| तज्ज्ञानायासतायामल्प | तन्नानायासताया अल्प | ३ | २२ |
| लोकीप ... | लोकोप | ९ | २३ |
| ध्वन्यात्मनिर्ध्वन्य | ध्वन्यात्मनि ध्वन्य | १३ | ३५ |
| तथोक्तम् । ननु | तथोक्तम् । ननु | १७–१९ | २० |
| कदम्बानिला | कदम्वानिला | १८ | ३२ |
| भूतया ... | भूताया | २७ | १० |
| मूमिरिति .. | भूमिरिति | २७ | १० |
| प्राक् ॥ ... | प्राक् । अत्राहू रसगङ्गाधरकाराः "अत्रोत्थाय किञ्चिच्छनैरित्यत्र सवर्णझयूद्वयसंयोगस्तत्रापि नैक टयेनेति सुतरामश्रव्यः, एवं झयू द्वयघटितसंयोगपरह्रस्वस्यापि, तथा शनैर्निद्रेत्यत्र निर्वर्ण्य पत्यु र्मुखमित्यत्र च रेफघटितसंयो- गस्य झयूद्वयघटितसंयोगपरह्र- स्वस्य च प्राचुर्य, विश्रब्धमित्यत्र महाप्राणघटितस्य, लज्जेत्यत्र स्वात्मसवर्णझयूद्वयघटितस्य, मु- खी प्रियेणेत्यत्र भिन्नपदगतदी- र्घानन्तरस्य संयोगस्य, तथा क्त्वाप्रत्ययस्य पञ्चकृत्वः लोकतेश्च धातोर्द्विःप्रयोगः कवेर्निर्माणसाम- ग्रीदारिद्र्यं प्रकाशयति" इति, वयं तु ब्रूमः एवं दुष्टत्वेऽपि का- व्यत्वमक्षतं, सरसतासद्भावात्; इत्येव निदर्शयितुमेष प्रपञ्चः।इति दिक् ॥ ४ ॥" | २७ | १६ |
| 'तुही ... | स्तुही | २८ | ३२ |
| दहनादिवि ... | दहनादीनि | ३१ | २८ |
| योग्यसा ... | योग्यता | ३२ | २४ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| विवृत्तिकाराः ... | विवृतिकाराः | ३३ | ३७ |
| वाक ... | वाक् | ३५ | ३६ |
| विषिष्टार्थे ... | विशिष्टार्थे | ३६ | ३७ |
| वित्यन्ता ... | वित्यत्रा | ३७ | ९ |
| वोधकत्वेनऽपि ... | वोधकत्वेनापि | ३७ | १० |
| अत एव ... | यद्वा समष्टिरूपेण व्यष्टिरूपेण वा बुद्ध्युपस्थाप्यैकवस्तुकत्वमेकत्वम्। अत एव | ३७ | ११ |
| नन्त्यवर्ण ... | न्त्यवर्ण | ३७ | १८ |
| सामर्थ्यात् । .... | सामर्थ्यात् | ३७ | १८ |
| दर्थौ. ... | दयमर्थौ | ३८ | ७ |
| लक्षणा व्यञ्जना ... | लक्षणाव्यञ्जना | ३८ | ११ |
| बार्थबोधात् । ... | वार्थावोधात् । | ३८ | ३३ |
| इति तं ... | इति।एवम्। तं | ४० | ११ |
| दत्तेत्व ... | दत्तत्व | ४३ | ९ |
| तिरोभवौ ... | तिरोभावौ | ४३ | १२ |
| वा यद्वेति .... | वा यद्वेति | ४४ | १८ |
| पत्तो ... | पत्त्यो | ४४ | २० |
| तन् ... | तत् | ४५ | २७ |
| स्तत् तदर्थ ''चिह्नं न | तत्तदर्थ '''चिह्नं | ४५ | ३१ |
| अन्यत् ... | अन्यत् | ४५ | ३२ |
| रत्र ... | परत्र | ४८ | २६ |
| तथा चायु ... | तथाच 'आयु | ५१ | १३ |
| ननु ... | ननु | ५१ | १६ |
| पत्तो । ... | पत्तौ | ५१ | ३६ |
| सादृश्येतरसम्बन्धाः | सादृश्येतरसम्ब- न्धाः । | ५३ | ८ |
| कार्यकारणभावादयः। | कार्यकारणभावा- दयः । | ५३ | ८ |
| पेक्षायां ... | पेक्षा वा | ५३ | ११ |
| दादि साम्ये ... | दादिसाम्ये | ५५ | ५ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| गवयव, ... | गवय- | ५५ | २७ |
| गवयवार्थो''गवयत्र | गवयार्थो''गवय | ५५ | ३० |
| गवयवार्थो गवयत्र | गवयार्थो गवय | ५५ | ३१ |
| पदार्थमत्यन्तं ... | पदार्थस्यात्यन्तं | ५६ | २७ |
| इति । ... | इति भावः | ५९ | ३० |
| 'गङ्गायां ... | धर्मगतप्रयोजनमूलामुदाहरति 'गङ्गायां | ५९ | ३१ |
| तटे । ... | तटे व्यञ्जनया वोध्ये तीरपदार्थे, उपचारात्तद्गतस्येत्यर्थः । | ५९ | ३२ |
| अतिशयः । ... | अतिशयः । | ५९ | ३२ |
| लक्षणेति ... | लक्षणा, असौ च व्यज्यमानस्य तटादिगतस्य शीतलत्वादिरूपस्य धर्मस्यातिशयं प्रत्याययितुमेवेति | ५९ | ३४ |
| आसामपि...स्पष्टम्''- | | ६० | १० |
| अथ...प्रदर्शना ... | अथ...तत्प्रभेदप्रदर्शना' | ६१ | १३ |
| सुवर्ण ... | सुपर्ण | ६४ | ३१ |
| धत्त ... | धत्ते | ६६ | ३२ |
| रपार्थयो ... | रप्यर्थयो | ६७ | ३ |
| प्रसङ्गे ... | प्रसङ्गस्तत्र | ६७ | ३४ |
| ययि तुमशक्य ... | ययितुमशक्य | ६८ | १६ |
| प्रदर्श ... | प्रदर्शका | ६८ | २१ |
| शम्वरा ... | 'शम्वरा | ६९ | १५ |
| यस्य सः' ... | यस्य सः, | ६९ | १७ |
| सु दूरे ... | सुदूरे | ७३ | २६ |
| ॥' ... | ॥ १३ ॥' | ७४ | २ |
| वापिकाम् । ... | स्नानकालातिक्रमभयेन दविष्ठां नदीं मम प्रियं चाप्रतिपद्य समीपवर्त्तिनीं वापिकामिति भावः । | ७४ | २४ |
| हता । निःशेषच्युतचन्दनं... 'कालोमधुः | हता, निःशेषच्युतचन्दनं 'कालो मधुः | ७८ | १७ |
| व्यञ्जकत्वमिति ... | व्यञ्जकत्वं | ७९ | ६ |
| तद्बोधकं । ... | तद्बोधकं | ८० | २७ |
| जनकत्वं क्लृप्तं, व | जनकत्वं, क्लृप्तं च | ८४ | ११ |
| दुष्यन्ताद्य भेद बुद्धया | दुष्यन्ताद्यभेदबुद्धया | ८४ | २४ |
| यन्ते इति । ... | यन्ते'' इति, | ८६ | १ |
| हास्य ... | 'हास्य | ८६ | ३२ |
| रस्माक ... | रस्माकं | ८८ | २४ |
| तदद्भुत ... | तदद्भुत | ८८ | ३७ |
| केश्चिदिति ... | कैश्चिदिति | ८९ | १२ |
| उक्तमाचार्यै' ... | उक्तम् 'आचार्यै | ८९ | ३२ |
| विशेषाः । ... | विशेषाः | ९१ | ११ |
| एवतदपी ... | एव तदपी- | ९२ | २० |
| तस्मे ... | तस्मै | ९२ | २१ |
| प्रवतते ... | प्रवर्त्तते | ९२ | २९ |
| इत्यण् ... | इति ठञ् | ९३ | २२ |
| जायन्ते । ... | जायन्ते | ९४ | २ |
| जायते- ... | जायते ? | ९४ | ७ |
| रङ्गान्त ... | रङ्गान्तः | ९६ | २ |
| ननु ... | ननु | ९६ | ७ |
| प्रतीयन्ते ... | प्रतीयन्ते | ९८ | ११ |
| मप्यस्या ... | मपास्या | १०७ | ३६ |
| हरति ... | हरति | १०८ | २१ |
| * ५७ ... | * ५६ | १०८ | ३७ |
| तुभावा ... | तुभवा | ११२ | २६ |
| चतुधा ... | चतुर्धा | १२१ | ३० |
| त्तारुण्याद्य ... | तारुण्याद्यन्य | १२३ | २८ |
| तदुपारिणं ... | तदुपकारिणं | १२४ | २८ |
| तु एव ... | निवृत्ते । तु एव | १२५ | ३४ |
| चेष्टामियोपितां ... | चेष्टाभियोषितां | १२७ | ८ |
| श्वेटयते ... | श्वेटयते | १२७ | ९ |
| शेषः । इति ... | शेषः ।' इति । | १२८ | १९ |
| प्रषितः ... | प्रेषितः | १३१ | ६ |
| यनप्रष्यते ... | येन प्रेष्यते | १३१ | ३० |
| सर्वे स्मिन्नपि ... | सर्वस्मिन्नपि | १३३ | ३१ |
| वल्पो ... | खल्पोऽ | १३४ | ७ |
| देवस्य । ... | देवस्य, शृङ्गारशतकेऽप्युपलभ्यते | १३९ | ३४ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| च्छटा ॥' ... | च्छटा ॥३॥' | १४१ | ६ |
| तिलके ... | तिलकस्य | १४१ | १९ |
| स्त्रियाम् ... | ऽस्त्रियाम् | १४२ | २६ |
| पदं स्यापत्तिः ... | पदस्यापत्तिः | १४२ | २९ |
| रागः ... | राग— | १४३ | १५ |
| साधने ... | 'कर्तृकरणयोस्तृतीया' २।३।१८ इति शास्त्रेण करणेऽर्थे | १४५ | १७ |
| च्छन्दः ... | छन्दः | १५७ | २८ |
| प्राक ... | प्राक् | १५७ | ३८ |
| ॥८७॥' ... | ॥४७॥' | १५९ | ७ |
| परकीयाः ... | परकीयायाः | १५९ | ७ |
| यत्र त, ... | यत्र तु | १५९ | ३० |
| प्राक् ॥' ... | प्राक् ॥४७॥' | १६० | २४ |
| मपि स्वारस्येन | मपिस्वारस्येन | १६४ | २४ |
| उक्ता | उक्ताः | १६७ | ३१ |
| मात्रा त्रुटी | मात्रात्रुटी | १७० | २३ |
| मञ्ज मोष्ठ | मञ्जमोष्ठ | १७७ | ४ |
| साजः'''वा | सा अज्ज'''अ | १८९ | १८ |
| सुचि | सुचिरं | १८९ | ३१ |
| संप्रेषणं | सम्प्रेषणं | १९१ | ११ |
| त्रिचतुराणि | स्त्रिचतुराणि | २०६ | ४ |
| योगज | योगजं | २०६ | २९ |
| रोदिति | रोदिति। तथोक्तं भरतेन "उत्तमसत्त्वः शेते हसति च गायति च मध्यमप्रकृतिः । परुषवचनाभिधायी रोदित्यपि चाधमप्रकृतिः ॥ इति | २०६ | ३३ |
| लौकिकी | लौकिकी | २०७ | १३ |
| दपि | दित्यपि | २१४ | ११ |
| स्मृतिं लेभे | स्मृतिं लभेत ( तद्व्यपदेशं लभेत ) | २१४ | १४ |
| यत्रासौ | यत्र तद् | २१६ | ३१ |
| मिति वच इत्यर्थः | मित्यर्थः | २१७ | २० |
| प्रणेभ्यो | प्राणेभ्यो | २१८ | १४ |
| नेत्रादि | आदिना नेत्रादि | २१९ | १८ |
| लक्ष्माङ्घि | लक्ष्माङ्घ्रि | २२० | २७ |
| रुत्पन्ने | रुत्पन्नो | २२२ | १५ |
| समन्तान् | समन्तात् | २२२ | २२ |
| गुणर्द्धीनां | गुणर्द्धीना | २२३ | ३० |
| जट्टिव्य | जट्टिव्व | २२४ | ९ |
| वेणि ! | वेणी | २२४ | ३६ |
| भङ्गः । | भङ्गः । 'जमउरइव्व' इति पाठान्तरे तु 'यमोरगीव' इत्यर्थः। | २२५ | ११ |
| इति | अत्र वेण्या आयसयष्टिकालाहिवद् दारणदशनकारित्वोत्प्रेक्षणादुत्प्रेक्षा, तस्याश्च दारणदशनकारित्वासम्भवात्साक्षादायसयष्टिकालाहित्वाध्यवसायस्यार्थिकतया भेदेऽप्यभेदवर्णनमूलाऽतिशयोक्तिश्च, आयसयष्टेः कालाहेश्च दारणदशनोभयकार्यकारित्वाभावेऽपि वेण्या दारणदशनोभयकार्यकारित्वाभिधानेन तदुभयापेक्षयाऽतिशयोक्त्यर्व्यतिरेकश्च । अयं च व्यज्यमान इति विशेषः । इति | २२५ | १७ |
| जनैं नैजाः | जनैर्निजाः | २२५ | ३० |
| मित्याह | मित्यस्य दुष्टत्वमाशङ्क्याह | २२८ | ९ |
| स्थितं'''यस्याः | स्थापितं'''यया | २२८ | २८ |
| शशिने | शशिनो | २२९ | ६ |
| तथोक्तम् | तथोक्तं शुद्धोदनिमुनिना | २३१ | २० |
| अर्थे । | अर्थे | २३३ | ५ |
| मनस'''। प्रवणायितं | मनस''' । प्रवणायितं | २३३ | ९ |
| 'तदपि'''एव।' | तदपि'''एव। | २३३ | २२ |
| दीर्घ्यादे | दीर्घ्यादे | २३४ | २८ |
| 'अत्र | अत्र | २३७ | ३३ |
| रूपनायिका | रूपं नायिका | २३८ | २१ |
| युक | युक् | २३८ | २९ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| युक्ते | युक्तो | २३८ | ३४ |
| स्यात्। | स्यात् । तथोक्तं शुद्धोदनिना "पूर्वानुरागो मानात्मा प्रवासः करुणात्मकः । विप्रलम्भश्चतुर्धा स्यात्पूर्वपूर्वो ह्ययं गुरुः ॥" इति । | २३९ | १४ |
| मनस्तुवं | मनस्तु यं | २४० | ३४ |
| अवलोक्य । | अवलोक्य । एतेन 'निशीथसमये' इति व्यज्यते | २४३ | १६ |
| एतेनात्यन्तायासदातृत्वं | एतावन्तं समयं विरहं शक्तवन्त इति तेषामश्मसारसदृशकठिनत्वं युज्यते एतेनात्यन्तायासदातृत्वं प्रेमशून्यत्वं च, | २४४ | ८ |
| योगित्वं ... | योगित्वं प्रार्थनायाश्च पूर्त्तिसापेक्षत्वं | २४४ | ९ |
| श्वर्यएवासीदिति | श्वर्योऽपि नाशोभत भाविमहिम्ना विरहिततयैव तयोः प्रायोऽवस्थानाद्।इति | २४६ | २२ |
| सम्भव उत्पत्तिर्यस्याः | सम्भवा उत्पत्तिस्थानानि यस्याः | २५० | १८ |
| व्याप्नुवन् । | व्याप्नुवन् विषवत्सञ्चरन्निति यावत् | २५१ | २० |
| तथोक्तः । | तथोक्तः । कुसुमास्तरणे चिरं रमणेन कुसुमानां विमर्दे तत्सुरभिसुरभित इति भावः । यद्वा,—एतेन परस्या नायिकायाः' पद्मिनीत्वं बोध्यम्, अन्यथा प्रतिदिशमित्यादिवाक्यार्थो न सङ्गच्छेत । तथा च पद्मिनीरूपायास्तस्याः पारिरम्भणकालिकेन विमर्देन पद्मिन्या इव पारिमलविसर्पणं स्थाने | २५१ | २१ |
| आलम्बाख्या | अनालम्बनाख्या | २५५ | ५ |
| जिगमिषामि | जिगमिषामः | २५५ | २६ |
| विधेया । | विधेया | २५५ | ३० |
| सन्तिष्ठते । | सन्तिष्ठति । अत्र | २५६ | २२ |

| इदम् | एव | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| भावो | भावी | २५६ | २३ |
| सप्तमीयम् । | सप्तमीयम् । **प्रियसखैः** प्रियस्य कान्तस्य सखायः मित्राणि तथाभूतत्वेनोत्प्रेक्षितानीति यावत् तैस्तथोक्तैः। प्रियवियोगेऽस्थायिभिरित्यर्थः । 'राजाहःसखिभ्यष्टच्।' ५।४।९५ इति टच् । | २५६ | २६ |
| वस्तुतः प्रयाणं श्रुत्वैव···मित्राणि··· अस्त्रैरश्रुभिः । | अस्त्रैरश्रुभिः । प्रियसखैरिति शेषः । प्रियविरहे पतनशीलतया प्रियमित्रभूतैरित्यर्थः । | २५६ | ३०।३१।३४ |
| यावत् । | मेदिनी । | २५६ | ३१ |
| धैर्येण । | धैर्येण। लिङ्गवचनविपरिणामेन प्रियसख्येति योज्यम् । प्रियविरहे तिरोभविष्णुतया प्रियप्रीतिपात्रभूतयेत्यर्थः । | २५६ | ३३ |
| 'अपि | अत्रापि वचनविपरिणामेन प्रियसखेनेति योज्यम् । तथा च प्रियवियोगे हृतसर्वस्वतया स्थायिनेत्यर्थः।अपि | २५६ | ३४ |
| शेषः । | शेषः, प्रियसखत्वसामान्ये तवापि तदनुगमनौचित्येन अवश्यं तमनुगन्तुं तव निश्चितत्वे इति भावः। | २५६ | ३५ |
| सुहृदं | सुहृदां प्रियसखीभूतानां | २५६ | ३५ |
| वलायदीनां | वलयादीनां | २५६ | ३६ |
| स्तद्विन्न | :' तद्विन्न | २५८ | २९ |
| करुणः शोकस्थायिको, | 'करुणः शोकस्थायिकः, | २५८ | ३१ |
| । इति ।' | ।' इति । | २५८ | ३४ |
| भर्तृका एव | भर्त्तृकयेव | २५९ | ५ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| स्तस्मात् । | स्तस्मात् । यद्वा चुम्बनपरिरम्भणादिभिः कृता ये बहुभेदा बहवो भेदास्तानततीति तथोक्तः । 'अत सातत्यगमने' इत्यस्मात् क्विप् । अस्मिन् पक्षे 'अत एवे' त्याहृत्य संख्यातुमित्यत्र योजनीयम् । यद्वा चुम्बनपरिरम्भणादयो ये बहुभेदास्तेषां समाहारस्तस्मात्तथोक्तादित्यर्थः | २६० | ३३ |
| पवित्रम् । | पवित्रं | २६१ | ९ |
| समुद्भवति॥२४२॥'इति | समुद्भवति ।' इति ॥२४२॥' | २६१ | ११ |
| दृशनैः । | दृशनैः | २६२ | १२ |
| भावः ।' | भावः ।' | २६३ | १० |
| पुष्टम् । | पुष्टं, वस्तुतस्तु विपरीतलक्षणया कृशमित्यर्थः। | २६३ | १५ |
| शेषः । | शेषः । वस्तुतस्तु 'तुह पुणो (तव पुनः) इति सुपाठः, परिपुष्टमित्यर्थः | २६३ | १७ |
| ( इति | वस्तुतस्तु विपरीतलक्षणया प्रणयिन्याःमम वियोगे यथा भवान् तथा प्रणयिनस्तव वियोगेऽहमपि कृशेति भावः ॥ ( इति | २६३ | २० |
| 'अत्रे' ति | 'अत्रे'ति शेषः । | २६४ | १४ |
| मता' इति च···पठ्येते कीर्तितः ॥२४५॥ | मता' इति··पठ्यते कीर्त्तितः ।' इति ॥२४४॥ | २६४ | १५ |
| ॥२४६॥' इति | ॥२४५॥२४६॥ | २६४ | १७ |
| चापदे | च्यापरे | २६४ | ३१ |
| विकासिते | विकसिते | २६५ | ९ |
| इती | इति | २६५ | १४ |
| सा यथास्यात्तथेति | सा यत्र ( कर्मणि ) तत् यथास्यात्तथेति | २६५ | १६ |
| नायकै निवध्य | निवध्य | २६६ | १३ |
| ङ्गी कृतः | ङ्गीकृतः | २६६ | २० |
| यावत् | भावः | २६७ | १२ |
| ( शोक ) मित्येक | शोकमित्येक | २६७ | २१ |
| वनिन्दन | विनिन्दन– | २६७ | ३३ |
| वनवासादे रूप | वनवासादेरुप | २६८ | १७ |
| द्वेष | द्वेष | २६९ | १४ |
| दानकर्मणा | दानं कर्मणा | २६९ | २१ |
| गुरुपातकं··। इत्यर्थः । | गुरुपातकं··इत्यर्थः। | २६९ | ३३ |
| सम्बोध्ययोक्तिः . | सम्बोध्योक्तिः । | २७० | १६ |
| भिन्नत्वमावगन्तव्य | भिन्नत्वं यद्यपि युद्धवीरोद्रेके क्रोधस्यापि सम्भवः, तथाऽपि तावता तस्स्थायित्वं नोपपद्यते यमाश्रित्य रसः स्वरूपसन् भवति तस्यैव स्थायित्वाङ्गीकारात्, प्रकृतः क्रोधस्तु तदुद्रेक एव सम्भवति अतोऽस्य सञ्चारित्वमेव मन्तव्यं | २७० | २८ |
| तथोक्तः | तथोक्ताः | २७० | १० |
| संप्रदान | सम्प्रदान | २७१ | २८ |
| सम्बन्धित्वादत्र | सम्बन्धित्वात् | २७१ | ३२ |
| इरि | इति बोध्यम् । न च प्रशंसनप्राधान्येनास्य गुणीभूतव्यङ्ग्यत्वमिति शङ्क्यम्, रामस्य प्रशंसकत्वाभावेन तस्य याथात्म्येन तृतीयपादार्थे परशुरामस्य तादृशदाने उत्साह एव स्थायी रसतां प्रतिपद्यते । | २७१ | ३[illegible] |
| संप्र | सम्प्र | २७२ | १७ |
| म्बोध्यम् | म्बोध्यम्, यद्यपि जामदग्न्यस्तुतिपरतया व्यङ्ग्यस्य दानोत्साहस्य न ध्वनिव्यपदेश्यत्वमिति सुवचम्, तथाऽपि प्रकृतस्य जमदग्निगतदानोत्साहस्य च तदपेक्षया प्राधान्यमङ्गीकृत्य समाधेयम् अतः | २७२ | २२ |
| सहास्तै | सहासै | २७६ | १४ |
| यस्मात्तादृशो | यस्मिंस्तद् | २७७ | १७ |
| वितर्क | वितर्का | २७८ | ९ |
| ग्राम्य | ग्राम्य | २७८ | १९ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| रव्याप्ता, | रव्याप्तः, | २७८ | २० |
| रथ्याःतो | रथ्यान्ता | २७९ | ३२ |
| मलव | मलयव | २८० | ८ |
| याच्यायालब्ध | याच्ञया लब्ध | २८० | ८ |
| पष | एष | २८० | २६ |
| तत्त्व | तत्त्वं | २८० | २७ |
| दाविति | न्तारिति | २८० | ३३ |
| सम | शम | २८१ | ४ |
| समत्स्यते | सम्पत्स्यते | २८१ | १९ |
| कथितः | कथितः | २८१ | २२ |
| सर्वाकार | सर्वं आकार | २८२ | २२ |
| भावम् | भावं स्वस्वरूपं परित्यज्य शान्तरूपत्वम् | २८२ | २४ |
| अर्हन्ति | अर्हन्ति उपासते, आश्रयन्तीति यावत् | २८२ | २४ |
| ज्ञान | ज्ञान | २८३ | १२ |
| देवताविषया | अत्रापि शैवस्योक्तिरियमिति शिवविषयैव | २८३ | १७ |
| तदातुन | इति सहृदयानां हृदयं तदा नेयं | २८३ | १७ |
| इति ।' | इति ।' अत्र यद्यपि श्रीकृष्णालम्बना तदीयमधुरमधुरिमस्वरूपोद्दीपना नयननिमीलनाद्यनुभावा कदाऽऽदिपदाक्षेप्यौत्सुक्यादिसञ्चारिभावा रतिस्तथाऽपि देवदेवस्य नवनभस्याम्बुदरुचित्वेन विशेषिततयाऽविशेषत्वानुपपत्तिरिति भगवद्भक्तिरेव गरीयसी, न च सा शान्ततामवलम्बते। इति नव्याः, एषाम्मते "अहौ वा हारे वा, कुसुमशयने वा दृषदि वा, मणौ वा लोष्टे वा बलवति रिपौ वा सुहृदि वा । तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः क्वचित् पुण्यारण्ये शिव! शिव ! शिवेति प्रलपतः ॥" इत्याद्युदाहरणं बोध्यम् । नव्यतरास्तु रतेर्देवताविशेषमात्रगतत्वेऽपि "कदा निमिषमिव नेष्यामि दिवसान्" "कदा निमग्नः स्याम्" इत्यादिनाऽहङ्कारपरित्यागपुरस्कृतत्वप्रतीयमानतया शान्तानतिरेकित्वमेव । इति एषाम्मते तु उदाहृतं द्वयमपि शान्तचमत्कृतमिति । | २८३ | १९ |
| तातं | तात | २८४ | २१ |
| तेष | तेषु | २८५ | १९ |
| पूज्या पूज्य | पूज्यापूज्य | २८७ | २२ |
| 'भवती'ति शेषः | भवति | २८७ | ३१ |
| विवाहनियुक्ता वा पुरुषास्त | स्वविवाहार्थं प्रवृत्ता वा पुरुषाः शिबिकाऽऽरोहणोन्नतासनोपवेशनादिना प्रधानभूताः प्रतीयन्ते त | २८८ | १२ |
| ( रतयो | ( रनयो | २८८ | २२ |
| भृत्यतया प्रवृत्ता अपि जना | प्रवृत्ता भृत्यजना अपि शिबिकारोहणोच्चासनोपवेशनादिना | २८८ | २८ |
| मानोऽपि भाव...भूतः | माना अपि भावा... भूता | २८८ | २९ |
| इत्यत्र | उदाहृतं निर्दिशति इत्यत्र | २८९ | ८ |
| अस्तु । | अस्तु । अयम्भावः कर्मणां पुण्यपापतदुभयात्मकतया त्रिविधा गतिर्भवतीति तेषां प्रभावात् दिवि नरके भुवि वा मम वासो भवतु न ततो बिभेमीति | २८९ | १८ |
| सैन्ये | ससैन्ये | २९० | १६ |
| रुदाहरण | रथायिरव | २९० | २० |
| उदाहरण | व्यभिचारिरव | २९० | २१ |
| इति | इति प्राञ्चः । इति | २९० | २८ |
| पतिः | ईश्वरः यद्वा पतिः | २९४ | १८ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| मुग्धो | मुग्धः सुन्दरः, यद्वा | २९४ | १९ |
| एतेन | एतेन तत्समीपे झटिति स्वगमनौत्सुक्यसार्थक्यं तथा | २८९ | २० |
| त्यमरः। | त्यमरः। यद्वा वर्त्म राजमार्गं परवधूसंसर्गनिषेधकं शास्त्रमार्गं वेति भावः | २९५ | ३ |
| वल्यन्तरे | वल्ल्यन्तरे | २९७ | २ |
| किंपुन | किं पुनः | २९७ | १२ |
| अनोचित्यम् | अनौचित्यम् | २९८ | १३ |
| दिव | रिव | २९९ | २ |
| मूसो | मूसौ | २९९ | १० |
| नेहः | नेह | २९९ | २१ |
| दाय | दय | २९९ | २१ |
| परपदोदयः | परपटोदयः | ३०१ | ७ |
| इत्येवम् | इति एवम् | ३०१ | २० |
| चन्द्रस्य। | शशो लक्ष्म यस्य तथोक्तस्य चन्द्रस्येत्यर्थः। अत्रेदं बोध्यं, कुलस्य प्रशंसनीयतावर्णनप्रस्तावे शशलक्ष्मसम्बन्धित्वाभिधानमनौचित्यं प्रत्याययतीति 'क्व सुधाकरस्य च' इति पाठः साधीयान्, एतेन चन्द्रगतस्य महनीयत्वस्य समर्थितत्वात् | ३०२ | ३१ |
| ह्वं | विक्रमोर्वशीये चतुर्थेऽङ्के त्वं | ३०३ | १ |
| शार्दूल | यद्यपि नेदं पद्यं प्रायो मुद्रितेषु पुस्तकेषु उपलभ्यते, तथाऽपि १९३६ वैक्रमाब्दे अब्दे मुद्रितस्य पुस्तकस्य १२६ पृष्ठे दृश्यते इति बोध्यम्, एतेन शुक्राचार्यतनयां देवयानीं दृष्टवतो ययातेरुक्तिरियमिति व्याचक्षाणाः कमलाकरादयः प्रत्युक्ताः, तादृशकल्पनाया निर्मूलत्वात्। शार्दूल | ३०३ | २ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| व्यङ्ग्या | व्यङ्ग्या स्मृतिः | ३०३ | १० |
| पत्तिः। काचित्। | पत्तिः''काचित् | ३०४ | २५ |
| खनिकस्य ज्यसि | खनिकस्यज्यसि | ३०४ | २८ |
| दयितानऽऽना | दयिताऽऽनना | ३०५ | २१ |
| शायिनी...शार्यीति समासः पुनर्योग | शयिनी...शयीति समासः, स पुनः 'पञ्चमी भयेन' २।१।३७ इत्यत्र पञ्चमीतियोग | ३०६ | १३ |
| त्युक्तम् | त्युक्तमिति बोध्यम् | ३०७ | ४ |
| स्वार्थो | स्वार्थौ | ३०७ | १० |
| सहृदयः | सहृदयः | ३०७ | २६ |
| भुवन | भुवने | ३११ | ८ |
| सादृश्य | 'तुलासादृश्य | ३११ | ९ |
| कत्व दोषभयोपरारात् | कत्वदोषभयेनेत्यर्थः, उपचारात् | ३११ | १० |
| कष्टत्व | कष्ट | ३११ | २३ |
| कदल्य ति | कदल्यति | ३११ | २५ |
| तिरां | तितरां | ३११ | २६ |
| इति | इति बोध्यम् | ३१२ | २८ |
| दिसयस्य | दिकस्य | ३१३ | १६ |
| द्वयो | योर्द्वयो | ३१३ | २६ |
| भक्षणेन | भक्षणे | ३१३ | ३१ |
| क्वचिद | क्वचित् | ३१४ | २ |
| वाक्यालङ्कारः | इदं वाक्यालङ्कारे | ३१४ | ५ |
| तत्र | तत्रा | ३१६ | ११ |
| व्यङ्ग्यो | व्यङ्ग्ययो | ३१६ | ११ |
| रिति | रिति भावः। विभावादीनां च प्रतीतिरपि नैकदा विभावानुभावसञ्चारिणामानुपूर्व्येणावतारात्, इति सुतरां विभावादिप्रतीतिकारणस्यासंलक्ष्यक्रमव्यङ्ग्यरूपस्य रसादेः प्रतीतिरानुपूर्व्येणोत्तम्भितस्वरूपेति बोध्यम् | ३१६ | २५ |
| त्यत्यन्तं | त्यन्तं | ३१६ | २६ |
| सेलक्ष्यते | संलक्ष्यते | ३१६ | २७ |
| मेतेनैव...मिति | मकेनैव...मिति भावः | ३१६ | ३१ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| इति । | गणना संख्या ! न सर्वेषां गणना सम्भवतीति भावः । इति । | ३१६ | ३५ |
| तत् नालङ्कार इति स | तादृशं, नालङ्कारो यत्र तद | ३१८ | २२ |
| पयोधरादि– | प्रस्तरं पयोधर– | ३१९ | १३ |
| शब्दानाम | शब्दयोर | ३१९ | १४ |
| प्राप्तैः | प्राप्तैः लब्धैः | ३२० | ३३ |
| सहाय | सहाया | ३२१ | १६ |
| विरोधा | विरोधः | ३२२ | २१ |
| स्वगृहे | एतेन स्वगृहे | ३२४ | १३ |
| मेत्र | मेवेति लभ्यते । दृष्टिं दृष्टिपातं | ३२४ | १३ |
| यावत् ! | यावत् । एतेन यदि मत्स्वामी आगच्छेत्तदाश्वासयितव्य इति सूच्यते । | ३२४ | १३ |
| मत्स्वामी | मत्स्वामी, नतु मत्प्रियः, एतेन तत्र प्रेमाभावोऽभिव्यज्यते । | ३२४ | १४ |
| बाहुल्येन | बाहुल्येन, नतु सर्वदा; एतेन कथमद्यैव गच्छसीति जिज्ञासा निरस्ता । | ३२४ | १४ |
| पास्यति | पास्यति यद्यपि कूपजलमपि पिबति । किंतु न तथा, यथा नदीजलम्, अतः यथाकामं स तृप्तः स्यादिति यामि,आनीतानि च नदीजलानि यथेष्टं निपास्यतीति भावः। | ३२४ | १६ |
| शीघ्रम् | यावत् अस्य शिशोः पिता नागच्छेत् तावद् यथा पुनः प्रत्यागच्छेयमिति भावः । एतेन यथा सङ्केतस्थलमुपगतेना– | ३२५ | १७ |
| प्रतीयेते ... | प्रतीयते | ३२७ | ७ |
| लःक्षणं ... | लक्षणं | ३२७ | २७ |
| सम्रद्ध ... | सम्रद्धात्मना | ३२७ | ३३ |
| तीर ... | समीप | ३३० | ३० |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| पुयोधरयोः ... | पयोधरयोः | ३३० | ३१ |
| स्वकीर्त्तिं ... | स्वत्कीर्त्ति | ३३० | ३५ |
| लभ्यं ... | लभ्यदर्शनं | ३३१ | १७ |
| हेतुना तपोमहिम्ना | तपोमहिम्ना हेतुना | ३३१ | २३ |
| स्वनच्छिन्न ... | स्वनवच्छिन्न | ३३१ | २६ |
| वस्तु । ... | वस्तु | ३३२ | ६ |
| व्यज्यते । ... | व्यज्यते | ३३२ | २२ |
| महिलानां ... | महिलासहस्रभरिते महिलानां | ३३३ | ३३ |
| माना ... | मलभमाना | ३३४ | १० |
| तपतपः ... | तपत्तपः | ३३४ | १९ |
| राणनस्य ... | रणनस्य | ३३५ | २० |
| 'हिम ... | यथा । 'हिग | ३३६ | ६ |
| वेति ... | वेति तथोक्तः | ३३६ | ११ |
| साहिष्णुतया ... | सहिष्णुतया | ३३७ | ६ |
| वाक्यानाम् ... | वाक्यानामिति यावत् | ३३७ | १३ |
| मूलस्यार्थी ... | मूलस्यार्था | ३३७ | २७ |
| शेषः ... | भावः | ३३८ | २३ |
| यावत् ... | भावः | ३३९ | ११ |
| । इति ... | इति । इदं पुनर्बोध्यम्, सुमुख्या युवजनमोहनविद्यात्वाभिधानं प्रकृतानुपयोगि, प्रत्युत ग्रन्थस्वरूपप्रयोजनाभिधाने प्रत्यर्थि, इति | ३३९ | १३ |
| भविष्यसीत्युप ... | भविष्यस्युप | ३४० | १९ |
| मत्पदार्थस्यान्त ... | मत्पदार्थस्यात्यन्त | ३४० | २२ |
| समये ... | समये इति यावत् | ३४७ | ६ |
| ।रिति ... | ।रिति यावत् | ३४७ | १५ |
| कान्ताऽसि ... | क्रान्ता | ३४७ | १८ |
| ननु--न ... | न | ३४७ | १८ |
| स्तस्मा | स्तेषामुत्कर्षस्तस्मात्त | ३४७ | २० |
| दुत्कर्षात्सदुत्कर्षमप | मप | ३४७ | २१ |
| भावेनेति | भावनेति | ३४८ | १० |
| चानुप | उप | ३४८ | ११ |
| जगत् ... | जगत् सूतिः | ३४८ | १२ |
| यस्मा ... | यस्यास्तस्या | ३४८ | १५ |
| स्तत्तथा ... | भावस्तत्ता तया | ३४८ | १६ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| प्राप्ता । इति भावः ।... | प्राप्ता । | ३४८ | १७ |
| नचेदं पद्यद्वयमूह्यम् | युग्मरूपम्पद्यम् | ३४८ | १८ |
| प्रौढोक्तिं विनाअन्तरेण | प्रौढोक्तिम् । अन्तरेण विना | ३४८ | २५ |
| यावत् पुण्य ... | यावत्पुण्य | ३४९ | ६ |
| निर्वक्तिऽआह ... | निर्वक्ति आहेति | ३४९ | १७ |
| धिय ... | धिया | ३४९ | ३३ |
| हृदय ... | हृदये | ३५० | २ |
| यस्यार्थः ... | अस्यार्थः | ३५० | २३ |
| पद्योत्यः .... | पदद्योत्यः | ३५१ | ३ |
| निरीक्षमाणे ... | निरीक्षमाणेति | ३५१ | २३ |
| यावत् ... | भावः | ३५१ | २६ |
| असङ्ख्येति प ... | असङ्ख्येत्तिपद | ३५१ | २९ |
| वस्तुना मुखं ... | वस्तुना कमलं | ३५२ | २३ |
| स्मृतप्रायं ... | स्मृतप्रायं | ३५२ | २७ |
| न्नितराम् ॥ ... | न्नितराम् ॥' अस्यार्थः | ३५२ | ३२ |
| मध्ये ... | मध्ये निश्यं | ३५२ | ३३ |
| खण्डितायाः ... | स्वाधीनपतिकां प्रति | ३५२ | ३४ |
| उत्तिष्ठतीति ... | उत्तिष्ठतीति तथोक्तः | ३५२ | ३८ |
| सिद्धः । | सिद्धः, | ३५३ | १३ |
| वाक्यस्थ | वाक्ये | ३५३ | १६ |
| प्रसरेयु | गच्छेयु | ३५४ | १४ |
| स्थित | स्थितः | ३५४ | १८ |
| इति । ... | इति एवंविधं वस्त्वित्यर्थः | ३५४ | ३० |
| यावत् । ... | तस्य | ३५४ | ३२ |
| व्यज्यते | दिनेऽपारित्यागाभिलाषित्वं वस्तु व्यज्यते | ३५४ | ३३ |
| महतोऽप्यनर्थताया आ | महतामप्यनर्थताया | ३५५ | ८ |
| वाल्मिकीये ... | वाल्मीकीये | ३५५ | १३ |
| इति ... | इति प्रार्थितं | ३५५ | १८ |
| इत्युपदिष्टम् ... | इत्युपदिष्टम् | ३५५ | १९ |
| उदाहतम् ... | उदाहृतम् | ३५६ | १ |
| युक्त ... | युक्तः | ३५६ | १० |
| वस्तु ध्वनि ... | वस्तुध्वनि | ३५६ | ११ |
| त्वमेता ... | त्वमेक एवै | ३५६ | १६ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| विकास्य ... | विकासस्य | ३५६ | २४ |
| सुमुखि ! ... | 'विदितः सुमुखि! | ३५६ | ३२ |
| चर्चिता ... | चर्चिता सुषमा | ३५७ | ४ |
| कलेवरं ... | कलेवरमिति यावत् | ३५७ | ५ |
| धर्मस्य | धर्मत्वात् | ३५७ | ६ |
| मुखे वाधितत्वा | वाधितत्वा | ३५७ | ८ |
| मावि | आवि | ३५७ | ३२ |
| नक्षन्तव्य | क्षन्तव्य | ३५८ | २२ |
| लक्ष्यार्थस्य यथा | लक्ष्यार्थस्य यथा | ३५९ | ८ |
| मूलत्वमिति | मूलत्वं | ३५९ | १४ |
| रतिपक्ष्मले | रति पक्ष्मले | ३६० | ११ |
| तु किन्तु | तु किन्तु | ३६० | १५ |
| ङ्कारध्वनिः । | ङ्कारध्वनिः | ३६१ | १६ |
| दृष्टिः । | नयनयोर्द्वित्वेऽपि एकत्वेन निर्देशोऽभेदत्वस्यातिशयद्योतनार्थः । | ३६३ | १४ |
| व्यज्यते इति हृदयम् । | हृदयम् । इदं चोपलक्षणं, तेन नासाऽग्रे नयनमित्यस्य जनान्तरतो दृष्टिसम्बन्धाभावव्यञ्जकत्वम्, यद्यपि योगिन्या अपि नासाऽग्रे न्यस्तनयनइत्युक्तदिशा नासाऽग्रन्यस्तनयनत्वं सम्भवति, तथाऽपि योगातिरिक्तसमयेऽस्य प्रश्नस्य सद्भावेन योगिन्यास्तदसम्भवाद् वियोगिन्येवासीति व्यज्यते, एवं मनस एकतानत्वमपि वियोगिन्येवेति द्रढयतीति बोध्यम् | ३६३ | २३ |
| इत्यत्र .... | व्यङ्ग्यं निर्दिशति | ३६६ | २६ |
| न्यभूतः ... | न्यग्भूतः | ३६८ | २८ |
| नयता | नयतेति भावः | ३७० | ८ |
| भवतां | भवताम् | ३७० | २२ |
| मानाः | मानायाः | ३७२ | ३७ |
| तस्यात्पत्न्या...द्वयङ्गचो | तत्पत्न्या...व्यङ्ग्यो | ३७२ | ३८ |
| विषमेषु( ) | विषमेषु | ३७५ | ३ |
| सहिता यत् तद्द् | सह | ३७५ | २१ |
| चित्रवाच्य | काव्यचित्र | ३७७ | ३५ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| यत्। | यत् | ३७८ | २ |
| इति ॥ | इति ॥ २९३ ॥ | ३८० | १८ |
| सती' | सती' ति | ३८१ | १५ |
| तात्पर्य | तात्पर्या | ३८२ | १३ |
| त्पर्यस्य व्या | त्पर्यस्याव्य | ३८२ | ४ |
| पिक् | दिक् | ३८३ | २७ |
| निमित्तनि | निमित्तानि | ३८६ | २३ |
| गृहीतव्यम् | ग्रहीतव्यम् | ३८८ | ५ |
| मवलम्बते | मवलम्बेत्ते | ३९४ | २७ |
| पादितोऽर्थ | पादितोऽर्थः, | ३९४ | ३५ |
| बोधित्वं | बोधितं | ३९७ | १७ |
| नूव्यवसायः | नुव्यवसायः | ३९८ | ११ |
| ।' इति। | ।' इति। | ४०२ | २३ |
| शयेति | शयेति तथोक्ता | ४०२ | २९ |
| गोचरता | गोचरा | ४०३ | ११ |
| यत इति भावः | अन्यथा | ४०४ | १३ |
| श्रमणत्वं | श्रमणशालित्वं | ४०५ | १९ |
| अभी | भीं.– | ४०५ | २० |
| व्यापि'। | व्यापि' इति शेषः | ४०९ | १८ |
| रे कार्थः | रेकार्थः | ४१८ | ३ |
| कानिचित् | कानिचि | ४१८ | १५ |
| थाअसम्भवात् | पेयताया असम्भवात् | ४२० | १६ |
| द्दश्यं | दृश्यं | ४२० | १७ |
| इति॥' | इति ॥२२०॥' | ४२० | २१ |
| ३२६ | कथोद्धातं लक्षयति ३२६ | ४३३ | ३४ |
| आप्त | प्राप्त | ४३४ | ८ |
| धारस्य वाक्यार्थं | धारस्य 'कुरुराजसुता' इति वाक्यस्य 'धार्त्त-राष्ट्राः' इत्यर्थं | ४३५ | ३७ |
| ३२८ | प्रवर्त्तकं लक्षयति ३२९ | ४३६ | ३६ |
| ३२९ | अवगलिकमाह ३२९ | ४३७ | २२ |
| पताकाना | पताकास्थानकाना | ४४४ | १६ |
| कार्यं चानुगतं | चानुगतं कार्यं | ४४५ | १३ |
| शेषः। | शेषः। इति। | ४४५ | २९ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| नतूक्तम् | नतूक्तं, नवाऽभिनीय तथा दर्शितम् | ४४७ | ३४ |
| तदाऽङ्को | तदाऽङ्कः | ४५० | ६ |
| ङ्कारानु | ङ्कारा उपमाऽऽख्या अनु | ४५० | ३५ |
| वली प्राप्ति | वलीप्राप्ति | ४५१ | ६ |
| कीर्त्यते ॥' | कीर्त्यते।' इति। | ४५३ | ९ |
| दित्यर्थः। | वित्यर्थः। सुग्रीवादेर्ना-यिकानायकातिरिक्ततया तस्यतस्य पुनश्चारितं प्रा-सङ्गिकमिति भावः | ४५३ | २५ |
| पर्याशा | प्राप्त्याशा | ४५४ | २ |
| पर्याशानियताप्ति-फलागमास्तदाख्याः | प्राप्त्याशानियताप्तिफला-गमास्तदाख्याः; आरम्भः, यत्नः ( प्रयत्नः ), प्राप्त्याशा, नियताप्तिः, फलागमः ( फल-योगः ) चेत्यर्थः | ४५४ | १३ |
| स्पष्टम् ... | अयम्भावः, पूर्वत्र वत्सराजेन समं सहसा सङ्गोपयश्चित्रक-ल्पनं, परत्र सीतालाभोपायः समुद्रबन्धनं त्वरोपेतः। इति | ४५४ | ३१ |
| ऽचतुरा | चतुरेति यावत् | ४५७ | २१ |
| रुधिरम् | रुधिरम्। | ४५९ | १७ |
| दुष्करम् ।'...॥३४५॥ | दुष्करम्।' उदाहरणान्तरं निर्दि-शति, यथा वा।...स्पष्ट-मन्यत् ॥३४५॥' | ४६० | ३९ |
| अर्धाङ्गेन | अर्धाङ्गेन | ४६१ | १५ |
| रहसि | रहसि इति शेषः | ४६१ | ३३ |
| कंश ... | केश | ४६१ | ३३ |
| कुरुवने | कुरुवने दुर्योधनादिरूपे वने, विषये सप्तमीयम् | ४६२ | ३३ |
| पाठान्तरम् | पाठान्तरे तु अनादरे सप्तमी | ४६३ | ३४ |
| राजा | राजा दुष्यन्तः | ४६५ | ३४ |
| क्षिप्ते | क्षिप्ते वेतसैः परिक्षिप्तं मण्डितं तादृशे | ४६५ | ३५ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| शकुन्तलया | शकुन्तलया | ४६५ | ३५ |
| ऽवस्थितया ... | वस्थितया | ४६५ | ३५ |
| अधो ... | ऽधस्तात् चरणन्यासदेशमिति यावत् | ४६५ | ३६ |
| ॥ ३८६ ॥ | तिरस्कारः॥३८६॥ | ४६६ | १५ |
| प्रत्याह | प्रत्याहेति शेषः | ४६६ | १६ |
| अन्तः पुर ... | अन्तःपुर | ४६६ | १७ |
| अन्तः पुरविरहो ... | अन्तःपुरस्य विरहेण तत्रो | ४६६ | १७ |
| उव | इति यावत्। वो युष्माकम्। उव | ४६६ | १८ |
| नाम | नाम 'अंग' मिति शेषः | ४६६ | २४ |
| मरणं...शरणम् | मरणं प्राणत्याग इति भावः। अवशिष्टमिति भावः | ४६६ | २९ |
| मते ... | मते तपनं नाम न सन्ध्यङ्गं, किन्तु शमः। | ४६६ | २९ |
| इति। | तस्य च | ४६६ | २९ |
| स्तन्मते ... | :' इति लक्षणं न तन्मते | ४६६ | २९ |
| इति | यथा वा रत्नावल्यां "राजा (विदूषकं प्रत्याह) वयस्य! अनया (सागरिकया!) लिखितोऽहमिति सत्यम्, आत्मन्यपि मे बहुमानः, तत्कथं न पश्यामि..सागरिका (आत्मगगतम्) हिअअ! समस्सस समस्सस मणोरहो वि ए तेत्तिअं भूमिं ण गदो (हृदय! समाश्वसिहि समाश्वसिहि मनोरथोऽपि ते एतां भूमिं न गतः)' इति, अत्र सागरिकायाः किञ्चिदरत्युपशमः इति | ४६६ | ३१ |
| कपोलेन | कपोलेन। अत्रैकवचनेन यदभिमुखी भ्रूलता तदभिमुख एव कपोलः पुलकित इति ध्वन्यते। | ४७२ | १७ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| रागम् | रागं रतेः षष्ठीमवस्थाम्, तथोक्तं सुधाकरकारैः "अङ्कुरपल्लवकलिका प्रसूनफलभोगभागियं क्रमशः। प्रेमा मानः प्रणयः स्नेहो रागोऽनुरागश्च॥' इति | ४७२ | १७ |
| कारणस्य | कार्यस्य | ४७३ | २८ |
| दिसम्बन्धिनः | दीसम्बन्धिनः | ४७३ | ३१ |
| च्छलेन | श्छलेन | ४७४ | २ |
| स्मिन् | अस्मिन् | ४७४ | १२ |
| कस्य | कस्य तन्नाम्नो विदूषकस्य | ४७४ | १९ |
| माला वासदत्ताया वेषेण सुसङ्गता-सागरिका वेषेणैव च्छलेन | मालावासवदत्तावेषेण...च्छलेन | ४७४ | २१।२२ |
| कर्णस्य | कर्णस्य तदाख्यस्य त्वदेकाधारस्य वीरस्य | ४७४ | २८ |
| अत्र | च। अत्र | ४७४ | ३० |
| वानरनीके | वानरानीके | ४७४ | ३६ |
| दश इति | दश | ४७५ | १९ |
| षष्ठाङ्के | तत्षष्ठाङ्के इति भावः | ४७५ | २३ |
| षष्ठेङ्के | षष्ठेऽङ्के एव | ४७७ | २३ |
| धानं नाटकाङ्गम्। | धानेन स्फुटं शक्तिर्नाम सन्ध्यङ्गम् | ४७७ | ३० |
| कीर्त्तनम् | कीर्त्तनं तेन परिचयदानमिति भावः | ४७७ | ३२ |
| अज्जा आर्याः। | नगरे उद्घोषयत इति शेषः। अज्जा आर्याः! ईदृशाकार्यकरणात् सर्वदा पराङ्मुखाः! इति यावत् | ४७७ | ३३ |
| नीयते | नीयते वध्यस्थानं प्राप्यते | ४७७ | ३५ |
| दनम्। स्वगम्, | दं सोद्वेगम्। स्वगतम्) | ४७८ | ८ |
| आआरिआ | आआरिआ | ४७९ | २।१५ |
| 'राक्षसचरितमि'ति शेषः। अत एव तत्कृतावृथासन्तापेन निःश्वस्य। च। | कथं भीमस्य प्रतिज्ञा पूर्णा भविष्यतीति स्मृत्वा। निःश्वस्य क्वापि अन्तर्हितं दुर्योधनं कथं निहनिष्यति, कथं वा | | |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| कथम् । अपि । | प्रतिज्ञां पूर्णां करिष्यति भीम इति शोकमुद्रां नाटयित्वेति भावः । च । कथमपि केनापि अनिर्वचनीयेन प्रकारेण, महताऽऽयासेनेति यावत् । | ४७९ | २५।२६ |
| नतु कर्मणा । ... | अद्यैव दुर्योधनं हनिष्यामि नो चेत् स्वयं प्राणान् त्यक्ष्यामीति प्रतिज्ञारूपेण वचनेन | ४७९ | ३२ |
| रोपिताः । | रोपिताः यदि अन्तर्हितो दुर्योधनो नाथ तेन व्यापादिष्यते तर्हि स्वां प्रतिज्ञां सत्यां चिकीर्षौ मृते तस्मिन् वयमपि तदेकप्राणाः स्वतः पुनर्जीवितं हास्याम एवेति भावः | ४७९ | ३३ |
| अपमानादेः । | अपमानादेः आदिना प्रहारादीनां ग्रहणम् । | ४८१ | १७ |
| द्रौपदी | तपःपरा द्रौपदी | ४८२ | २१ |
| कुम् | कुलम् | ४८३ | ११ |
| प्रोक्तम् | प्रविवेचनशीलैः प्रोक्तम् | ४८५ | ३० |
| तस्य | इति । तस्य | ४८५ | ३२ |
| अनियते | अनियते खसम्बन्धित्वशून्ये यस्य सन्धेर्यदङ्गं कथितं तद्भिन्ने इति यावत् | ४८५ | ३३ |
| ॥४११॥ | । अयम्भावः यथा काव्यजीवातुश्चमत्कृतो रसः स्यात् तथा यतितव्यं, तदर्थं नियमोल्लंघनमपि न दुष्टम्॥४११॥ | ४८५ | ३४ |
| स्पष्टम्। सम्प्रसारणं युक्तिः । | सम्प्रसारणं युक्तिः । स्पष्टमन्यत् । | ४८५ | ३५ |
| प्रयोगश्च···भावः । | प्रयोगः··भावः।च। | ४८६ | १४ |
| नरः इति भावः । | इति भावः । नरः। | ४८६ | १८ |
| सम्भवे | सम्भवे इति शेषः | ४८६ | २६ |
| रसस्यैवम | रसस्याप्य | ४८७ | १४ |
| इति | इति ध्वनिकारैः | ४८७ | १६ |
| इति च | इति च भरताचार्यैः | ४८७ | १७ |
| ( इदं | ( इदं | ४८७ | २१ |
| हि । | निवेश्या इति शेषः । हेतुं निर्दिशति हि यतः। | ४८७ | ३२ |
| तदाख्यम् | तदाख्यं कौशिक्या अङ्गम् | ४८८ | २३ |
| क्के | क्के इति शेषः | ४८८ | २८ |
| एषा | एषा सागारिकेति भावः नाम्ना निर्देशस्तु तद्विपयर्कं कोपं व्यनक्तीति बोध्यम् | ४८८ | ३० |
| मन्यत् । | मन्यत् । तदानीं नायके कोपसद्भावात् तस्य च मिथ्यावादित्वप्रदर्शनमात्रपरत्वाद्धास्यस्य शृङ्गारशून्यत्वमूह्यम् | ४८८ | ३२ |
| किं | भ्रमरः इति प्रसङ्गानुप्रसक्तम् । किं | ४८८ | ३३ |
| राजानं | शकुन्तला । राजानं | ४८८ | ३२ |
| मन्यत् । | मन्यत् । 'ननु कमलस्य मधुकरः सन्तुष्यति गन्धमात्रेण' इति राज्ञोक्तं निशम्य शकुन्तलया 'असंतुट्ठो' इत्याद्युक्तम्, राजा च तदुत्तरं दातुमिव मधुकरः कमलमिव तस्या मुखं पातुं प्रवृत्तोऽदर्शयतात्मसन्तोषाभावम् । शकुन्तलाऽपि तद्व्यवसितं विज्ञाय मुखमाच्छादयति स्मेति स्फुटं हासस्य शृङ्गारानुगुणत्वमिति बोध्यम् | ४८८ | ३३ |
| त्वरितं | त्वरितं ( सहकाराङ्करोहणम् ) | ४८९ | २४ |
| देव्या महाराज्या | देव्या धारिण्या महाराज्या | ४८९ | २७ |
| प्रियम् | प्रियं त्वया समं सुरतासोदलाभरूपं स्वाभिमतार्थोपादानमिति यावत् | ४८९ | २८ |
| मतः | मतः स्वीकृतः | ४८९ | ३२ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| माधवे । | माधवे "मकरन्दः । कथितमवलोकितया मदनोद्यानं गतो माधव इति, भवतु तत्रैव गच्छामि ( परिक्रम्यावलोक्य च ) दिष्ट्याऽयं वयस्य इत एवाभिवर्त्तते ( निरूप्य ) अस्य तु' इत्यनन्तरमिति शेषः ।अत एव माधवं दृष्टवतो मकरन्दस्योक्तिरियम् | ४९० | १७ |
| प्रकटति | प्रकटयति | ४९० | २१ |
| विकारि | विकारि सर्वदा तथाऽस्थायीति भावः | ४९० | २२ |
| त्याह | त्याशङ्क्याह | ४९० | २२ |
| स्पष्टम् | स्तोकोऽल्पः । अन्यत् स्पष्टम् | ४९० | २४ |
| नेतु | नेतु | ४९० | २६ |
| विचित्रा | अतिशयिता विचित्रेति यावत् | ४९० | ३० |
| वाहौ ... | । विश्रुतजामदग्न्यदमने इति पाठान्तरे तु विश्रुतं जामदग्न्यदमनं यस्य तादृशे इत्यर्थः । अस्मिन् पक्षेऽस्मिन्नित्यस्य त्वदीये एतस्मिन्नित्यर्थः । वाहौ | ४९१ | १८ |
| म्परत्र । | म्परत्र । एतत् प्रायिकं, मृगाङ्कलेखाऽऽदावव्याप्तेः | ४९४ | २१ |
| भावः । ... | भावः । दर्शयेदिति पूर्ववत् एतदपि प्रायिकं, तेन ब्राह्मणानामपि दत्तान्तं नामोपपद्यते यथा "चारुदत्तः" इत्यादि | ४९४ | २२ |
| ॥४३८॥ | ॥४३८॥ क्रमेणोदाहरति । वेद्येत्यादिना । आदिपदैः क्रमेण मदनसिद्धा-धनदत्त-मकरन्द-माधवीप्रभृतीनां ग्रहणम् । नायं विष्णुदत्तश्चारुदत्तस्य मृच्छकटिकनायकस्य गुरुः,किन्त्वन्य एव, यद्वा कल्पयित्वैवेदमुक्तमिति बोध्यम् | ४९४ | २७ |
| 'अघोरघण्ट | 'भद्रदत्ताघोरघण्ड' | ४९४ | २९ |
| दिना । | दिना । अर्धमागधी मागधीमहाराष्ट्रीमिश्रितां भाषामित्यर्थः। अन्यत् | ४९६ | ३२ |
| माधुर्यादिभिः | माधुर्यादिभिः | ४९७ | ३० |
| अर्थः | अर्थः कार्यम् | ४९७ | ३५ |
| इयम् | इयं देवयानीत्यर्थः | ४९९ | २१ |
| अत्र | देवयानीं कूपपतितां दृष्टवतो ययातेः प्राथमिकोऽयं तर्कः । अत्र | ४९९ | २३ |
| अत्र | अत्र दुर्योधनस्य स्वात्मना शतसहोदरतयाऽहिवत् विषोद्गारितया च | ४९९ | ३६ |
| संश्चयो | सञ्चयो | ५०० | १ |
| अर्थानां | अर्थानां प्रमाणभूतानां कार्याणाम् | ५०० | २४ |
| प्रहृतः । | प्रहृतः।अत्र "शत्रुः पराङ्मुखः, त्यक्तशस्त्रः" इत्यादिविचारः कर्त्तव्य एव न,एतत्सर्वं वालिनं निघ्नता भगवता रामेणैवोपदिष्टमिति समर्थनम् | ५०० | २७ |
| अंशेन | अंशेन | ५०० | ३५ |
| भ्रमरः । | भ्रमरः । भविष्यति अभूत् 'अभिज्ञावचने' ३।२।११ इति लृट् | ५०१ | १६ |
| इत्थीअ | ह हा, कष्टमिति यावत्। इत्थीअ | ५०१ | १९ |
| भावः | भावः । अत्र संहरणस्य विपरीतं पादग्रहणं ( पादार्चनम् ) शिरसि निधानस्य च विपरीतं स्त्रीजीवनहरणं कार्यमिति स्फुटो लक्षणसमन्वयः । यद्वा मम "विधिना परोपकृतये विहितं वदनं सुधानिधानं ते । अथ विधिमपहरसि बलात् कृतिनामपि हन्त तेन रम्भोरु ! ॥" इति । अत्र श्लेषमूलं कार्यवैपरीत्यम् | ५०२ | २१ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| ( चन्द्रकलायाः मुखं निर्दिश्य | ( चन्द्रकलायाः। मुखम्। निर्दिश्य 'चन्द्रकलां प्रत्याह | ५०२ | २४ |
| लाञ्छनः | मृगलाञ्छनो निरस्तापवादो वेति भावः | ५०२ | २९ |
| मित्यर्थः | मुपमानानामित्यर्थः | ५०३ | १९ |
| 'यद्वीर्य' मित्यादौ। स्पष्टोऽर्थः | 'हे राजन्! त्वयि यत् कूर्मराजस्य कच्छपावतारस्य विष्णोः। वीर्यं मन्दराचलाद्युद्वहनबलम्। यः। च। शेषस्य पृथिवीधारिणो नागराजस्य। विक्रमः।तत् द्विविधमपि बलम्। पृथिव्याः। रक्षणे 'क्रियमाणे' इति शेषः।स्थितम् | ५०३ | २१ |
| सहितम्। | सहितम् 'वोपसर्जनस्य' ६।३।८२ इति वैकल्पिकः सभावः | ५०३ | २७ |
| सन्तोषे | सन्तोषे याच्ञावैमुख्ये | ५०३ | ३२ |
| प्रसिद्धदातृतया | प्रसिद्धदातृतया | ५०३ | ३३ |
| ऽदातृत्वस्य | न दातृत्वस्य | ५०३ | ३४ |
| साधु अङ्गराज! साधु कथमन्यथा | एवमेतत् कः सन्देहः | ५०४ | १०।११ |
| जयन्द्रथम् | जयद्रथम् | ५०४ | ३३ |
| दुरात्मन्! | दुरात्मन्! भीमार्जुनशत्रो | ५०५ | १४ |
| ( आह ) | ( कर्णं प्रत्याह ) | ५०५ | १५ |
| नवेनि। | नवेति। अत्र दुर्योधनस्य साक्षात्कारार्थां पृच्छा | ५०५ | २६ |
| स्पष्टमन्यत् | ( पष्ठेङ्के ) दुर्योधनभ्रान्त्या दुर्योधनस्य भ्रमेण। भीमम्। प्रति। युधिष्ठिरः (आह)। हे दुरात्मन्! दुष्टः आत्मा चित्तं यस्य तत्सम्बुद्धौ तथोक्त! भीमार्जुनशत्रो! भीमार्जुनयोः शत्रो! "भीमार्जुनौ शत्रू यस्य तत्सम्बुद्धौ तथोक्त इत्यर्थस्तु व्यङ्ग्यः। दुर्योधनहतक!" इत्यादि। आदिपदेन "आशैशवादनुदिनं जनितापराधो मत्तो बलेन भुजयोर्हतराजपुत्रः। आसाद्य मेऽन्तरमिदं भुजपञ्जरस्य जीवन् प्रयासि न पदात्पदमद्य पाप॥" इत्यस्य ग्रहणम्। अत्र स्फुटं दुर्योधनसारूप्येण युधिष्ठिरस्य क्षोभवर्धनम्। | ५०५ | ३५ |
| तव | तव भवत्याः प्राणेश्वर्या इति भावः | ५०६ | २० |
| सेवकः | सेवकः आज्ञाप्रतीक्षीति यावत् | ५०६ | २० |
| इत्यदि।"मिदम्। | इत्यादि"मिदम्। अत्र नेत्रादीनां खञ्जननेत्राद्यपेक्षयोत्कर्षाभिधानम् | ५०६ | २४ |
| यश"'सा | यशोऽभूत्"'साऽपयशोरूपा श्लाघा। | ५०६ | २८ |
| वताम् | वतां कौरवाणाम् | ५०६ | २९ |
| रतौ केलिकला यस्य | रतेः केलिं कलयति रचयतीति तथोक्तः | ५०६ | ३२ |
| सूचितः | कलहंसादिचेष्टानिदर्शनभङ्ग्या सूचितः | ५०६ | ३४ |
| सुन्दरचन्द्र | सुन्दरस्य चन्द्रस्य | ५०७ | २१ |
| पुष्यः | पुष्पः | ५०७ | २२ |
| त्यर्थः। | । अत्रानुक्तयोरपि रामलक्ष्मणयोः सौन्दर्यादिविशेषस्य भङ्ग्यन्तरेणाभिधानात् प्रत्यायनमिति स्फुटाऽनुक्तसिद्धिः। | ५०७ | २२ |
| भावः। | भावः। दुष्यन्तकर्तृकं कश्यपमुनेः प्रभावाशंसनमिदम्।अत्र मुनेः प्रसादप्रभावं वर्णयितुं कार्यकारणयोः पूर्वापरत्वनैयत्येऽपि वैपरीत्यं प्रसाधितम्। | ०७ | २८ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| लभख | लभस्व । यद्यपि ययातेर्देवयान्येव महाराज्ञ्यासीत्, तथाऽपि तस्या भृगुतनयात्वेन विपरीतसम्बन्धात् तत्पुत्राश्च ययातिनिदेशानङ्गीकारेण पितृप्रेमपात्रतां न गताः, राज्यं च न लब्धवन्तः, अतः शर्मिष्ठाया इव तस्याः पत्या भाविसौरतसुखाभावं तत्पुत्राणां च तत्पुत्राणामिव राज्यलाभं द्योतयितुं मुनेर्वागवततार । सम्यगुक्तं "वाचमर्थोऽनुधावति" इति। | ५०७ | ३४ |
| 'मृगरूप' मित्यादौ। तेन मारीचेन । स्पष्टमन्यत् । | 'तेन मारीचेन तदाख्येन राक्षसेन । वपुः शरीरं राक्षसरूपमिति यावत् । परित्यज्य । कपटं लक्षणया तत्प्रधानम् । मृगरूपं काञ्चनमृगाकृतिम् । विधाय । लक्ष्मणः श्रीमान् । "लक्ष्मीवाँल्लक्ष्मणः श्रीमा" नित्यमरः । युधि सङ्ग्रामे 'अयुधि' इति पाठाऽङ्गीकारे सङ्ग्रामानवसरे इत्यर्थः । संशयं किमयं सत्यं काञ्चनशरीरः,' 'किं वा मायया एवं प्रतिभासते' इति सन्देहम् । नीयते प्राप्यते । अत्र 'परित्यज्य विधाये'त्यनयोः अस्थानस्थत्वम् । प्रक्रतलक्षणसमन्वयस्तु स्पष्टः। | ५०८ | १९ |
| राना | राजा | ५०८ | २१ |
| ज्ञातम् । | ज्ञातम् । इमां शकुन्तलामित्यर्थः । | ५०८ | २१ |
| दुर्योधनः | दुर्योधनः | ५११ | १७ |
| इति | इति । अयम्भावः कोपकरुणालज्जावशात् परिश्रान्ता अपि स्वयमपि त्वयाऽश्वाश्वोदनीयाः, त्वं तु न केवलं तान् चोदयसि किन्तु तेषां परिश्रान्तत्वमुद्बोध्य पदातितया धावितुमपि ईहमानं निवर्त्तयसीति न क्रोधादिलेशः सम्भवति । | | |
| यथा | इति | ५११ | २१ |
| वृत्तम् | वृत्तम् । अत्रोपालम्भस्य प्रकारेणानेकधा पूर्वोक्तार्थकथनम् | ५११ | ३३ |
| कस्यापि | कस्यापि । कर्मणि षष्ठीयम् | ५११ | ३४ |
| त्वमयि | अतः त्वमपि | ५१२ | ५ |
| ( शकुन्तलां प्रति । ) | ( शकुन्तलाऽभिमुखो भूत्वा ) | ५१२ | १२ |
| स्पष्टमन्यत् | कृपं प्रति । "अश्वत्थामा 'आहे' ति शेषः। "कथमियममानुषी ( दैवी ) वाङ् नानुमनुते सङ्ग्रामावतरणम्मम ? आः पक्षपातिनो देवा अपि पाण्डवानाम् ! सर्वथा पीतं दुःशासनशोणितं भीमेन। भोः कष्टंकष्टम् । "दुःशासनस्य रुधिरे पीयमानेऽप्युदासितम् । दुर्योधनस्य कर्त्ताऽस्मि किमन्यत् प्रियमाहवे ॥" मातुल ! राधेयक्रोधवशादनार्यमाचरित' मित्यनन्तरमिति शेषः। अतः 'यद्यपि नार्यमाचरितं, तथाऽपि सम्प्रति यतोऽवश्यमाचरणीयं तत इति भावः । अयि ( इदं शिष्टालापे ) तावत् सर्वतोभावेन। राज्ञो दुर्योधनस्य । पार्श्ववर्त्ती रक्षकः। भव। कृपः ( अश्वत्थामानं प्रति ) अहम् । अद्यास्मिन् सङ्कटमये दिवसे। प्रतिकर्त्तुं यद्राज्ञाऽद्यावधि उपकृतं तदृणमपमार्ष्टुमिति भावः। वाञ्छामि । इत्यादि । अत्र दुर्योधनानुकूलात्मना भवनं स्पष्टम् | ५१२ | २४ |
| एव | एव | ५१२ | २६ |
| जणस्य | अत्राश्रमपदं गार्हस्थ्यमात्रपरम्,तत्रैवास्यावश्यकत्वात्। जणस्स | ५१४ | २८ |
| प्रधानत्वे | प्रधानत्वेन | ५१५ | १४ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| विभाव्यम्। | विभाव्यम्। अत्रायं पर्यालोकः नाट्यालङ्कारा आशीरादयः। एतेषु च आशीर्वत्सलस्यानुभावः, येषाम्मते वत्सलो रसो नाङ्गीक्रियते, तन्मते तद्विषयकस्य वात्सल्यापरपर्यायस्य रतिभावस्यैवानुभावोऽङ्गीक्रियते, आक्रन्दस्य करुणविप्रलम्भयोरनुभावरूपत्वं निर्बाधमेव, अक्षमा वीरस्य सञ्चारिभावः, उद्यम उत्साहापरनामधेयः, प्रोत्साहनं विलोभनं,तच्च मुखसन्धेरङ्गम्। उत्तेजनं भर्त्सना च द्युतिः, असौ च विमर्शाङ्गभूता। नीतिः स्वभावोक्तिर्नामालङ्कारश्चेत्येवं केषाञ्चिन्नाट्यालङ्काराणामन्यत्रान्तर्भावो युज्यते। अथ किमिति पृथङ् निर्दिष्टाः इति चेत्? "पञ्चसन्धिचतुर्वृत्ति" इत्याद्युक्तदिशा सन्ध्यङ्गानामावश्यकत्वेन विशिष्याभिधानम्, अन्यथोपमाऽऽदीनामिवाशीरादीनामपि सति सम्भवे उपादेयत्वं स्यात्। अत एवैषां नाट्यसम्बन्धित्वेन प्रशंसनम्। इति। | ५१५ | २० |
| एततूमदनो | एतत् मदनो | ५१६ | १३ |
| जलार्द्रंताम्यति | जलार्द्रं ताम्यति | ५१६ | २९ |
| युगग्नम् | युगलम् | ५१६ | २९ |
| चित्रा | चित्राः प्राकृतसंस्कृतमयत्वेन | ५१७ | २५ |
| स्पष्टम्। | स्पष्टम्। | ५१८ | २१ |
| कुसस्त्रीति | कुलस्त्रीति | ५१८ | २८ |
| शेषः। | शेषः। तथोक्तम्भरतेन "द्वादशनाडीविहितः प्रथमः कार्यः क्रियोपेतः। कार्यैरतथा द्वितीयः समाश्रितो नाडिकाश्चतसश्च। वस्तुसमापनविहितो द्विनाडिकः स्यात्तृतीयस्तु॥" इति। यद्यपि नाडिका "नाडीसञ्ज्ञा ज्ञेया मानं कालस्य यन्मुहूर्त्तार्द्धम्" इति भरतोक्त्या सपादघटिकेति सुवचम्, अथापि "नाडिका घटिकाद्वयम्" इति दशरूपकारोक्त्या नाडीशब्देन घटिकाद्वयमेव ग्राह्यम्, "नाडिकाघटिकाद्वयमुच्यते" इति वक्ष्यमाणदिशा दशरूपकारोक्तेरेवाभिमतत्वात्। | ५२० | ३१ |
| नायकयोर्मिलिता | नायकामिलिता | ५२२ | १२ |
| मृत्स्पष्टिकाऽङ्क | मुत्स्पष्टकाङ्क | ५२३ | ६ |
| शर्म्मिष्ठा ययातिः | शर्म्मिष्ठाययातिः | ५२३ | ७ |
| ङ्के | ङ्क | ५२३ | २५ |
| अजौज्झाएण | अजोज्झाए | ५२७ | ४।१८ |
| सम्बन्धे | सम्बन्धे प्रसङ्गे। 'सम्बद्धे' इति पाठे तु 'प्रस्तुते' इत्यर्थः | ५२७ | १४ |
| जातपुत्र | जात! पुत्र! | ५२७ | २१ |
| स्पष्टम् | इदं विकृतप्रभेदं प्रहसनम्। च। सङ्कीर्णेन 'वेश्याचेट' इत्यादिनोक्तस्वरूपेण। एव गतार्थं प्रतिपन्नार्थं, तत्स्वीकाराभिन्नस्वीकारमिति यावत्। इति। मुनिना भरतेन। पृथक् न। उक्तम् "अस्माभिस्तु 'आश्रित्य' इति लक्षणाक्रान्तत्वाभावेन पृथगुक्तमिति भावः | ५३१ | १७ |
| स्पष्टम्। | स्पष्टम्। यद्यपि 'प्रत्यङ्क' मिति प्रायोवादः, विक्रमोर्वश्यां प्रथमचतुर्थाङ्कयोर्विदूषकाभावात् तथाऽपि अस्य शृङ्गाराङ्गित्वमात्रद्योतनार्थं सविदूषकत्वादित्युक्तमवधेयम्। एतेन विदूषकस्यापि शृङ्गारानुगुण्यार्थमत्र सत्त्वं सूचितम्। | ५३१ | ३६ |
| यष्मालिक | पङ्नालिक | ५३६ | १६ |
| " | " | ५३७ | १५ |
| विलीनां | विलीन | ५३९ | ३६ |
| वेंण | वेंण | ५३९ | ३७ |
| स्ततो | स्तेनो | ५४३ | १६ |
| अनुष्टब्वृत्तस्य | अनुष्टुब्वृत्तस्य | ५४३ | १७ |

इति पूर्वभागस्थ शोधन सूचना।

॥ श्रीः ॥

श्रीविश्वनाथकविराजप्रणीतः

# साहित्यदर्पणः

नाम

## अलङ्कारसन्दर्भः ।

( सप्तमपरिच्छेदात्समाप्तिपर्यन्तम् )

अखिलशास्त्राध्यापकानां स्वपितामहसहजतनुजानां श्रीदेवीसहाय-शास्त्रिणां चरणानुकम्पया लब्धविद्येन पाटननगरवास्तव्येन सम्प्रति कलकत्तावासिना श्रीशिवनाथसूरितनुजेन शिवदत्त-कविरत्नेन विभावितया रुचिरया व्याख्ययाऽनुगतः ।

सोऽयं

मुम्बापुर्यां

क्षेमराज श्रीकृष्णदासश्रेष्ठिना

( खेतवाडी ७ वीं गली खम्वाटा लैन )

स्वकीये "श्रीवेङ्कटेश्वर" स्टीम् मुद्रणयन्त्रालये

मुद्रयित्वा

प्रकाशमानीतः ।

संवत् १९७३, शकाब्दाः १८३८.

# प्रस्तावना ।

सुविदितमेवैतत्साहित्यदर्पणाभिधमलङ्कारशास्त्रं भारतीदेव्याः सुरुचिरमलङ्करणमिति । निम्बचिरबिल्वादिविधातृनिर्मितरसास्वादलम्पटकरटादिमन्तरा नास्ति सार्वत्रिकी रुचिरता प्रजापतिविनिर्मितजनताचेतोहारिणी, कविनिर्मितनवरसेषु तु कोऽप्यपूर्वः सहृदयहृदयाह्लादको रसः सर्वदैव सुधीभिरनुभूयत एवेति विश्वजनीनमेतत् । शब्दस्य हि अभिधालक्षणाव्यञ्जनात्मिकास्तिस्रोऽपूर्वाः शक्तयः, तासु सर्वास्वपि तत्तन्महिममहितो ह्यर्थः सुधीस्वान्तानन्दजननो मृगमदामोद इव स्वैर्गुणैर्जागर्ति जगतीतले । परन्तु गतोऽस्तमर्क इत्यादिवाक्येषु व्यञ्जनाचमत्कारः साहित्यशास्त्रज्ञानमन्तरा नैव बोद्धुं शक्यत इति सर्वप्रवृत्तिः साहित्यज्ञानसम्पादने नैसर्गिक्येव । अत एव भारतवर्षीयसंस्कृतविद्यालयादिषु व्याकरणन्यायादिशास्त्रसहकृतस्साहित्यपाठोऽपि नान्तरीयकतया प्रचरति निर्विवादम् । वाराणसीप्रभृतिविद्यापीठेष्वपि बहुशः प्रचारोऽस्य ग्रन्थस्य वर्तते । काव्यसाहित्याचार्यादिपरीक्षासु प्रतिवर्षमनेके विद्यार्थिनः सश्रद्धमधीयत एनं ग्रन्थम् । यद्यपि द्वित्रव्याख्यासंवलितोऽयं ग्रन्थः साम्प्रतमुपलभ्यते परन्तु न तावतान्तेवासिसहृदयसन्तोषो भवति । नच कठिनस्थलेषु सुस्पष्टं व्याख्यानमुपलभ्यते, लभ्यते च क्वचित्सरलस्थलेषु मुधापाण्डित्यम् । अत्र च सर्वत्रैव तथातिसौलभ्यमापादितं यथा सरलबुद्धिमन्तोऽपि च्छात्रा अनायासमस्य पदपदार्थावगतिमवबुद्ध्येयुः । यथाशक्ति चात्र समस्तग्रन्थस्य काठिन्यपरिहारस्तथानुष्ठितो यथाऽऽदर्शेस्वप्रतिबिम्बगतमालिन्यादिज्ञानपुरस्सरं तन्मार्जनं सुकरं सम्पद्यते । मया स्वमनीषया विरचिताऽन्वर्थाभिधेयं रुचिरा व्याख्या ग्रन्थाशययाथार्थ्यप्रकटनमार्जितादर्शरत्ना रञ्जयत्वध्येतॄमनोम्भोजानीति शम् ।

किञ्च मयास्य सरुचिरसाहित्यदर्पणस्य पुनर्मुद्रणविक्रयादिसर्वेऽधिकाराः "श्रीवेङ्कटेश्वर" मुद्रणालयस्वामिश्रेष्ठिक्षेमराज श्रीकृष्णदासाय प्रदत्तास्सन्ति, अतश्चास्य पुनर्मुद्रणप्रतिबिम्बीकरणादिसाहसं न केपि कुर्युरन्यथा न्यायालयाद्दण्डभागिनस्ते स्युरिति श्रीशिवदत्तस्य कविरत्नस्य ।

श्रीहरिः ।

# प्रस्तावना ।

सुविदितमेव सर्वालङ्काराणां साहित्यदर्पणस्य परममाननीयत्वम्, एतस्य सर्वविषयोपपादनपरस्यापि हन्त नाद्यावधि कापि रुचिरा व्याख्या केनापि विदुषा निर्मिता, अत्र किल दुरवगाह्यविषयतैव हेतुःप्रतिभासते । अस्तु नाम किन्तु सम्प्रति भारतेश्वरस्य पञ्चमजार्जमहोदयस्य शासनावसरे सर्वतः सर्वेषां शास्त्राणां पठनपाठनप्रचारप्राचुर्ये प्रतिष्ठमानेऽलङ्कारशास्त्रेऽप्यस्यैव पाठः सर्वत्र प्रथमतया पठनपाठनादरः समुपलभ्यते, एवं लब्धादरस्यापि काठिन्यं छात्राणां कथमिव चेतो व्यापारयतीति त एव जानन्ति ये गुरुसविधे कृताध्ययनाः, न केवलं छात्राणामेव किन्त्वध्यापकमहोदयानामप्यनेकेषु स्थलेषु सम्मोहमवगाहयति चेतोवृत्तिमिति सर्वेषां छात्राणां विदुषामध्यापकानाञ्च प्रमोदाय पण्डितशिवदत्तकविरत्ननिर्मिता रुचिराभिधेयमन्वर्थाख्या व्याख्या मया स्वकीयेमुद्रणयन्त्रालये मुद्रिता । इयञ्च प्रायः प्रतिपदं दुरूहार्थतामपनयन्ती प्रौढां विचारपरम्परां प्रकाशयति, अतः सर्वथा सम्भाव्यतेऽस्या लाभेन सर्वेषां तेषां पठनपाठनसौकर्यम् ।

किञ्चाखिलविद्यामौलिस्थानीयाया अस्मद्गीर्वाणभारत्याः समधिकप्रचाराय साहित्यमर्मज्ञानमावश्यकन्तच्चानवद्यनिबन्धनिर्दुष्टव्याख्यानमन्तराऽसम्भवीति समवधार्य मयास्य साहित्यज्ञसाहित्यसम्पादकस्य ग्रन्थस्य रुचिरव्याख्यानिर्माणप्रतीतस्वान्तेन सदानमानमनेके धन्यवादा वितीर्यन्ते तस्मै बुधवरायेति कृतम्पल्लवितेनेति ॥

**क्षेमराज श्रीकृष्णदासस्य ।**

॥ श्रीः ॥

# निवेदनम् ।

अयि निखिलसहृदयधुरीणा निश्शेषविद्यानिष्णाता महानुभावाः ! साहित्यापरपर्यायमलङ्कारशास्त्रमेवालङ्कारायमाणमशेषाणां शास्त्राणामिति सुविदितचरं तत्रभवताम् । एतदेव हि शास्त्रान्तरचमत्कारजातन्निवेदयत्युपास्यमानम् । वापीकूपतडाकाद्यखिलजलाशयसम्पाद्यमर्थं जलनिधिरिवेदं सर्वेषां शास्त्राणां चमत्कारोद्बोधं समुपगमयति स्वं सेवमानानामित्येव साहित्याभिधानमलङ्कुरुते । हितेन सह वर्त्तमानत्वमेव साहित्यमितीदमपि तथाभूतम् । अलङ्कारशास्त्रमिति व्यपदेशबीजमपि तदेवैतस्य । साहित्यप्रधानमलङ्कारशास्त्रमिति न केवलं व्यपदेशः, अपि तु तथाभूतम् । एतदेकमुपासाना भवन्ति निश्चितन्निःशेषतन्त्रस्वतन्त्रा, लब्धाभिलषितार्थसार्थाश्च । एषां च साहित्यदर्पणो नाम निबन्धो निबध्नाति सचेतसां चेतांसि,अलङ्करोतिच चमत्कारं सुचेतसां चेतस्सु । यद्यपि सन्ति काव्यप्रकाशादयः परेऽपि परःशतं निबन्धाः, निवहन्ति चमत्कारं च परां प्रौढिम्, तदपि तेषां दुरधिगमत्वाज् झटिति च तेभ्यः फलालाभान्न तथाभूताः । एष पुनर्निबन्धो नातिदुरधिगमो न च झटिति चमत्कारानावहः । अनेकत्र च श्रश्रीयस्श्रीय लभ्यानि फलान्येकस्यैवैतस्योपासितारो लभन्ते, तत्सार्थयति स्वकीयं सुगृहीताभिधानमेषः । एनमुपास्य न चिन्तामणिं कामयते, न वा मन्दारम् । एष हन्त कालमहिम्ना दुर्व्याख्याभिर्विच्छायीक्रियमाणोऽतथाभूत इव जात इत्येव पुनः स्वरूपमेनं नेतुकामेन मया प्रतिपदमनुसृत्य सार्थकतान्नीतान्येतदीयान्यक्षराणि सर्वाणि । अथायं पुनः स्ववर्णसद्भावं प्रपन्नः सहृदयहृदयालङ्कारो भवितुमर्हतीत्यत्र निकषस्थानानि श्रीमन्त इति ।

सहृदयचरणानुगतस्य,

शिवदत्तशर्मणः.

॥ श्रीः ॥

# रुचिराख्यया व्याख्यया समेतः

# साहित्यदर्पणः ।

## सप्तमः परिच्छेदः ।

इह हि प्रथमतः काव्ये दोषगुणरीत्यलङ्काराणामवस्थितिः परिदर्शिता, सम्प्रति के ते ? इत्यपेक्षायामुद्देशक्रमप्राप्तानां दोषाणां स्वरूपमाह—

**१ रसापकर्षका दोषाः—**

---

महिम्नः सौरभ्यं दिशिदिशि वितन्वन्ननुपमं तिरस्कुर्वन् सद्यो नवजलदशोभां सुषमया ।
सुरेन्द्रान् वन्दारून् निजपदमरन्देन मदयन् सदा मोदायास्तां हृदि सुविलसन् कश्चन विभुः ॥ १ ॥

प्रधानं ( काव्यं ) स्वरूपतो निर्दिश्य तदीयानां दोषाणां च गुणानामपि वा निरूपणीयत्वं सङ्गच्छते तदपरिज्ञाने हेयत्वाहेयत्वबुद्धेरुदयासम्भवादितीह प्रधानस्य काव्यस्य स्वरूपं निरूप्य तदीयानां दोषाणां गुणानां च हेयोपादेयत्वं प्रदर्शयितुं तत्र तावद् दोषाणां स्वरूपं निरूपयन् काव्यस्य प्रकृतत्वं तेषां च निरूपणस्य गुणनिरूपणापेक्षया पूर्वमुचितत्वमुपपादयति—इह हीत्यादिना ।

इहास्मिन् प्रकृते निबन्धे साहित्यदर्पणाभिधेये इति यावत् । **हि** एव । 'हि हेताववधारणे ।' इत्यमरः । **प्रथमतः** पूर्वम् । **काव्ये दोषगुणरीत्यलङ्काराणां** दोषाश्च गुणरीत्यलंकाराश्चेति तेषाम् । **अवस्थितिः परिदर्शिता** प्रतिपादिताऽवसायिता वेत्यर्थः । 'हेयोपादेयत्वेने'ति शेषः । **सम्प्रति** साम्प्रतम् । **ते** दोषादयः । **के** किंस्वरूपाः । **इत्यपेक्षा**यामित्येवञ्जिज्ञासायाम् । **उद्देशक्रमप्राप्ताना**मुद्देशक्रमेणोद्देशक्रमं वा प्राप्ता इति, तेषां तथोक्तानाम् । उद्देशक्रमश्च यथावस्थाननिर्देशः । यथाहि—गुणरीत्यलंकारापेक्षया दोषनिर्देशप्राथम्यम् । **दोषाणां** वक्ष्यमाणानां दुःश्रवत्वादीनाम् । **स्वरूपं** लक्षणं सामान्यलक्षणमिति यावत् । सामान्यानवगमे विशेषावगमापेक्षाया अनुदयात् । **आह** प्रतिपादयति । **१ 'रसापकर्षका** इत्यादिना ।

अत्रेदमभिहितम्—काव्यवाक्यान्तर्दोषा गुणा रीतयोऽलङ्काराश्च सम्भवन्ति । यद्यपि गुणापेक्षया दोषनिर्देशप्राथम्यं न प्रायो दृष्टचरं, तथाऽपि गुणानां दोषपरिहारमूलकावस्थानत्वाद्दोषाणां परिहारस्य गुणानामुपादानापेक्षया च प्रागौचित्याद् दोषनिर्देशप्राथम्यमेव सङ्गच्छते । अथ ते यथोद्देशमुपपादनीयाः । तत्र तावत् पूर्वन्निर्देशो दोषाणामिति त एव सम्प्रति उद्देशक्रमप्राप्ता इति तेषां स्वरूपं प्रथमं दर्शयति । इति ।

**१ रसापकर्षका, रसः** काव्यमात्रजीवातुश्चमत्कारविशेषः श्रृङ्गारादिव्यपदेश्यात्मा तमपकर्षयन्ति स्वसन्निधानमात्रेणैव तिरोहितात्मतान्नयन्तीति ते तथोक्ताः । अप—कृष्—ण्वुल् । **दोषा** दूषयन्तीति, ते तथोक्ताः । 'भवन्ती'ति शेषः । तदुक्तं प्रकाशकारैः 'मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद् वाच्यः । उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः ॥' इति ।

अस्यार्थः प्रागेव स्फुटीकृतः ।

---

अत्रेदमवधेयम्-रस्यत आस्वाद्यत इति रसः, स च चमत्कारविशेषस्वरूप एव । तस्यापकर्षश्च प्रतीतिप्रतिवन्धमुखेन प्रकृष्टतया प्रतीतिप्रतिवन्धमुखेन प्रतीतिविलम्वनमुखेन च, स च न स्वरूपसन्, तथाऽनुपपत्तेः । (यथाहि-स्थूलशरीरे काणत्वप्रभृतयः खञ्जत्वप्रभृतयश्च सम्भवन्तः केचिद्दोषाः स्थूलं शरीरमेव दूषयन्ति, तथा भवन्तश्च ते तद्द्वारा तदात्मभूतं निर्विकारमपि चेतनविशेषं दूषयन्तीव । तथा पुनः शब्दार्थशरीरके काव्ये सम्भवन्तो दुःश्रवत्वादयोऽपुष्टार्थत्वादयश्च शब्दार्थौ दूषयन्तस्तद्द्वारा तदात्मभूतं चमत्कारविशेषं दूषयन्तीति तेऽपि दोषाः काणत्वखञ्जत्वप्रभृतय इव शब्दार्थसम्भविनो दुःश्रवत्वप्रभृतयोऽपुष्टार्थत्वप्रभृतयो ज्ञेयाः ।) अथ केऽपि यथा मूर्खत्वप्रमुखाः सूक्ष्मशरीरे सम्भवन्तोऽपि साक्षात् तदात्मानमपकर्षयन्ति, तथा स्वशब्दवाच्यत्वप्रमुखास्तत्र सम्भवन्त इव कल्प्यमाना अपि साक्षात्तदात्मानमपकर्षयन्तस्तदपकर्षकत्वेनाभिधीयमानाः सम्भवन्ति दोषाः । अतः-काणत्वादिना मूर्खत्वादिना वा शरीरिणो यदपकर्षकत्वं, तदेव तेषां यथा दोषत्वं, तथा दुःश्रवत्वादिनाऽपुष्टार्थत्वादिना स्वशब्दवाच्यत्वादिना वा रसस्य यदपकर्षकत्वं तदेव तेषां दोषत्वमिति । यथा शरीरिणोऽपकर्षकत्वं दोषत्वं तथेह पुना रसस्यापकर्षकत्वं दोषत्वमिति । यत्तूक्तं वामनाचार्यैः-'गुणविपर्ययात्मानो दोषाः' । इति तन्न रुचिरम्, क्वचिद्दोषशून्यत्वेऽपि सगुणत्वस्य क्वचित् पुनर्गुणशून्यत्वेऽपि सदोषत्वस्यादर्शनात् । अत्राहुः प्राञ्चः-"मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद् वाच्यः । ननु हतिर्विनाशः । न च दोषेण रसो विनाश्यते । दुष्टेष्वपि रसानुभवात् । तस्मादलक्षणमेवैतदिति चेत् ? मैवम् । हतिशब्दस्यापकर्षवाचित्वात् । 'हतिरपकर्षः' इति प्रकाशकारैरपि स्वयं विवृतम् । स च रसनिष्ठो जातिविशेषः । तद्व्यञ्जकं च दोषज्ञानम् । असत्यपि दुःश्रवत्वादौ तद्भ्रमेण रसापकर्षाभिव्यक्तेः । यद्वा-आनन्दांशे सम्यगावरणध्वंसाभावोऽपकर्षः । आनन्दांशश्च चमत्कारापरपर्यायो रस एव । ननु हतिरपकर्ष इति न सम्यक् । रसानुदयप्रयोजकेषु च्युतसंस्कारताऽऽदिष्वव्याप्तेरिति चेत् ? हतिरनुत्पत्तिः । इत्यपि न सम्यक् । यत्र रसः स्फुरन्नप्यपकृष्यते तत्राव्याप्तेः । अथैवमेतल्लक्षणमतिदरिद्रदम्पत्योः कृशतरनिशाऽवगुण्ठनीयवसनमिवैकेनापकृष्यमाणमपरं परिहरति । किञ्च मुख्यार्थस्यानुत्पत्तिरपकर्षो वा न दोषपरतन्त्रः ।" इति । अत्र ब्रूमः-हतिरपकर्षश्च न भिन्नार्थौ, अपकर्षोऽपि मुख्यस्य रसस्यैव । किन्तु-अपकर्ष उद्देश्यप्रतीतिविघातात्मा । उद्देश्या च प्रतीतिर्द्विधा-रसवत्यविलम्बिताऽनपकृष्टरसविषया चेति । रसवति शृङ्गाराद्यन्यतमशालिनीत्यर्थः । नीरसे पुनरविलम्बिता चमत्कारिणी चार्थविषया । तथा च-तादृशप्रतीतिविघातकत्वं सर्वेषामविशिष्टम् । दुष्टेषु हि क्वचिद् रसस्याप्रतीतिरस्त्येव, क्वचित् पुनः प्रतीयमानस्यापि तस्यापकर्षः । एवं नीरसे पुनः क्वचिदर्थस्य मुख्यभूतस्याप्रतीतिः क्वचिच्च तस्य प्रतीयमानस्याप्यपकर्षः क्वचिदेवं विलम्बेन प्रतीतिः क्वचिद्भूयश्चमत्काराहेतुरूपा इत्यनुभवसिद्धमुद्देश्यप्रतीत्यनुत्पादकत्वम् । अथोद्देश्यप्रतीतिविघातकता कस्यचित् साक्षात्, यथा-रसदोषाणां स्वशब्दवाच्यत्वप्रभृतीनाम् । रसापकर्षकाणामपि तेषां प्रकृष्टतया रसाभिव्यञ्जकत्वाभावात् । कस्यचित् परम्परया, यथा-शब्दार्थवर्णरचनादोषाणाम् । तेष्वपि कस्यचिदर्थोपस्थितेरभावात्, यथा-च्युतसंस्कारत्वादेः, कस्यचित् पुनर्विलम्बात्, यथा क्लिष्टत्वादेः, कस्यचित् पुनः सचेतसश्चेतसि व्यग्रत्वविमुखत्वाद्यापादनात्, यथा-अमतपरार्थत्वविरुद्धमतिकृत्त्वादेः । इति । अथ विघातकत्वं कस्यापि ज्ञातस्य, यथा व्याहतत्वादेः, कस्यचित् पुनः,स्वरूपसत एव; यथा-निहतार्थत्वादेः,एवं च रसापकर्षो दोषः, इति रसस्यैव उद्देश्यवाच्यत्वात्,तदपकर्षश्च प्रतीतिविघातात् । रसश्च चमत्कारविशेष इति निवेदितमसकृत् । एवं पुनर्दोषो द्विविधो नित्योऽनित्यश्च । तत्र-अनुकरणमन्तरा समाधातुमशक्यः सचेतसा वा नित्यं हेयो दोषो नित्यः । यथा-च्युतसंस्कारत्वादिः । अनित्यः पुनः क्वचिदुपादेयः, यथा-दुःश्रवत्वादिः तस्य रौद्रादावुपादेयत्वात् । शृङ्गारादौ च हेयस्यापि दुःश्रवत्वस्याप्रयुक्तत्वस्य च रौद्रे श्लेषे वा हेयत्वात् । इति दिक् ।

इत्येतत्सर्वमभिप्रेत्याह—अस्येत्यादि ।

अस्यानन्तरोदितस्य । अर्थस्तात्पर्यम् । 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः । प्राक् पूर्वम् । 'दोषास्तस्यापकर्षकाः ।' इति विवरणावसरे इति यावत् । एव । स्फुटीकृतः । 'अभूततद्भाव इति वक्तव्यम् ।' * इति च्विः । 'अस च्वौ' ७।४।३२ इतीत् ।

तद्विशेषानाह—

२ ते पुनः पञ्चधा मताः ।

पदे तदंशे वाक्येऽर्थे　　सम्भवन्ति रसेऽपि यत् ॥ १ ॥

३ दुःश्रवत्रिविधाश्लीलानुचितार्थाप्रयुक्तताः । ग्राम्याप्रतीतसन्दिग्धनेयार्थनिहतार्थताः ॥ २ ॥

अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता । अविमृष्टविधेयांशभावश्च पदवाक्ययोः ॥ ३ ॥

दोषाः केचिद् भवन्त्येषु पदांशेऽपि पदे पुनः । निरर्थकासमर्थत्वे च्युतसंस्कारता तथा ॥ ४ ॥

---

सामान्यज्ञानानन्तरं विशेषजिज्ञासाया अवश्यम्भावित्वादाह-**तद्विशेषानि**त्यादि ।

**तद्विशेषां**स्तस्य दोषस्य निरुक्तलक्षणस्येति यावत् विशेषा विभेदा इति तान् । **आह** कथयति । **२ ते पुनरि**त्यादिना ।

**२ ते** दोषाः । **पुनः** । **पञ्चधा** पञ्चप्रकाराः 'संख्याया विधाऽर्थे धा ।' ५।३।४२ इति धा । **मताः** स्वीकृताः । 'विवेकिभि'रिति शेषः । कुत इत्याह-**यद्** यस्मात् कारणात् । 'ते दोषा' इति शेषः । **पदे** 'सुप्तिङन्तं पदम् ।' १।४।१४ इत्युक्तस्वरूपे वाक्यांशभूते शब्दविशेषे इति यावत् । **तदंशे** तस्य पदस्यांश एकदेशस्तत्र । **वाक्ये** तात्पर्योपस्थापकत्वेन योग्ये पदसमुदायविशेषे । **अर्थे** वाच्याद्यन्यतमेऽभिधाऽऽदिप्रतिपाद्ये शब्दबोध्ये । **रसे** चमत्कारप्राणे काव्यात्मनि । **अपि** वस्तुतयाऽसम्भवत्वेऽपि उपाधिवशात् । **सम्भवन्ति** । केचित् कल्पनया केचिदागान्तुकत्वेन केचिद् वस्तुतया केचित्पुनः संसक्तत्वेन प्रतीयमानत्वेन वा भवन्तीति यावत् ॥ १ ॥

नैतद्गूढार्थमित्याह——**स्पष्टमिति** ।

तद्विशेषानभिधातुमुपक्रममाण आह-**तत्रे**त्यादि ।

**तत्र** तेषु दोषेषु मध्ये । **३ दुःश्रवत्रिविधाश्लीलानुचितार्थाप्रयुक्तताः** । दुष्टः श्रवः श्रवणं यस्य तद्दुःश्रवं तच्च, त्रिविधं व्रीडा जुगुप्साऽमङ्गलव्यञ्जकतया त्रिप्रकारमश्लीलं सहृदयहृदयानाह्लादकं तच्च, नोचितोविवक्षितार्थोल्लासकत्वव्यञ्जकतया योग्योऽर्थो यस्य तच्च, न प्रयुक्तं कविभिरादृतमिति, तच्चेत्येषामभावस्तास्तथोक्ताः । 'द्वन्द्वान्ते श्रूयमाणं प्रत्येकमभिसम्बध्यते' इति दुःश्रवता, त्रिविधाश्लीलता, अनुचितार्थता, अप्रयुक्तता चेत्यर्थः । **ग्राम्याप्रतीतसन्दिग्धनेयार्थनिहतार्थताः** । ग्राम्यं चाप्रतीतं च सन्दिग्धं च नेयार्थं च निहतार्थं चेति तेषामभावास्तत्ता इति तथोक्ता तथोक्ताः । च निहतोऽविवक्षितप्रसिद्धार्थप्रत्ययव्यवधानेन विवक्षितप्रत्ययोल्लासे हतशक्तिरर्थो यस्य तच्चेत्येषामभावस्तत्ता, तास्तथोक्ताः । ग्राम्यता, अप्रतीतता, सन्दिग्धता, नेयार्थता, निहतार्थता चेत्यर्थः । **अवाचकत्वं** न(ईषत्)वाचकं विवक्षितार्थाभिधायकं तस्य भावस्तत्त्वम् । **क्लिष्टत्वं** क्लिष्टं दुर्बोधं तात्पर्यावगमावसरे दुःखप्रदानमूलभूतमिति यावदिति तत्त्वम् । तात्पर्यनिर्णायकसामग्रीरहितत्वे सति विलम्बेनार्थबोधकत्वं क्लिष्टता । **विरुद्धमतिकारिता** विरुद्धा प्रकृतप्रतिकूला या मतिर्बोधस्तत्कारितेति तथोक्ता । पदान्तरसन्निधानेन प्रकृतार्थबोधप्रतिबन्धकीभूताप्रकृतार्थबोधकत्वं विरुद्धमतिकारितेति यावत् । **च** तथा **अविमृष्टविधेयांशभावो** न विमृष्टो निर्दिष्टोविचारसापेक्ष्येणादृत इति यावद्विधेयांशो विधेयस्य (अवश्यं प्राधान्येन निवेदयस्य ) अंशो ( भागो ) यस्य तस्य भावः । अप्रधानीकृतविधेयांशत्वमविमृष्टविधेयांशतेति यावत् । प्राधान्येन निर्देश्यस्याप्यंशस्योपसर्जनीकृतत्वेन निर्दिष्टत्वमविमृष्टविधेयांशभाव इति भावः । एते-**पदवाक्ययोः** पदं च वाक्यं चेति तयोः । 'सम्भवन्ती'ति शेषः । तथा——**एषु** निरुक्तेषु दोषेषु मध्ये । **केचिन्न** तु सर्वेऽपि । **दोषा** दुःश्रवत्वं त्रिविधमश्लीलत्वमनुचितार्थत्वं नेयार्थत्वन्निहतार्थत्वं चेत्येते इतियावत् । **पदांशे** । **अपि** । भवन्ति सम्भवन्तीत्यर्थः । **पदे** । **पुनः** । **निरर्थकासमर्थत्वे** निरर्थकं चासमर्थं चेति तयोर्भावौ तत्त्वे । तत्र निर्गतोऽर्थोऽर्थविषयकं तात्पर्यं यस्य तस्य भावः तत्त्वं, वृत्तन्यूनतापरिहारमात्रप्रयोजनकत्वे सति विवक्षिताऽर्थबोधानुपयुक्तत्वं निरर्थकत्वम् । न (ईषत्) समर्थमित्यसमर्थम् । तस्य भावस्तत्त्वमसमर्थत्वम्, तच्च शब्दानुशासनादिनाऽनुशिष्टत्वे सति प्रकृतार्थबोधजनकताशून्यत्वम् । **तथा** । **च्युत-**

**तत्र-परुषवर्णतया श्रुतिदुःखावहत्वं दुःश्रवत्वम् । तद् यथा—**
**'कार्त्तार्थ्यं यातु तन्वङ्गी कदाऽनङ्गवशंवदा ॥'**
**इत्यत्र 'कार्त्तार्थ्यं' मिति पदम् ।**
**अश्लीलत्वं व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वात् त्रिविधम् ।**

---

**संस्कारता** च्युतः स्खलितः संस्कारो व्याकरणलक्षणानुगमो यत्र तस्य भावस्तत्ता,भाषायाः संस्कारकं हि व्याकरणं तदनुशिष्टलक्षणप्रतिकूलत्वं च च्युतसंस्कृतित्वाद्यपरपर्यायश्च्युतसंस्कारता नाम दोषः, 'इत्येते त्रयो दोषाः सम्भवन्ति' इतिशेषः ॥ २ ॥ ३ ॥ ४ ॥

अत्रेदमवधेयम्-दुःश्रुवत्वादयस्तावत् षोडश दोषाः । तत्र-दुःश्रवत्वमश्लीलत्वमप्रयुक्तत्वं ग्राम्यत्वमप्रतीतत्वं सन्दिग्धत्वं निहतार्थत्वं क्लिष्टत्वं विरुद्धमतिकारित्वं निरर्थकत्वमविमृष्टविधेयांशत्वं चेत्येते एकादश दोषा अनित्याः, नित्याः पुनरनुचितार्थत्वनेयार्थत्वमवाचकत्वमविमृष्टविधेयांशत्वमसमर्थत्वं च्युतसंस्कारत्वं चेत्येते पञ्च । निरर्थकत्वमति नित्य इति नागेशः, विरुद्धमतिकारित्वमपि नित्य इत्यन्ये । अत्रापि—अप्रयुक्तत्वग्राम्यत्वाप्रतीतत्वावाचकत्वक्लिष्टत्वविरुद्धमतिकारित्वाविमृष्टविधेयांशत्वानां पदवाक्योभयसम्भवित्वमात्रं, तदन्येषां दुःश्रवत्वाश्लीलत्वानुचितार्थत्वसन्दिग्धत्वनेयार्थत्वनिहतार्थत्वानां पदपदांशवाक्यत्रितयसम्भवित्वम् । निरर्थकत्वासमर्थत्वच्युतसंस्कारत्वाख्यानां पुनर्दोषाणां पदसम्भवित्वमेव । च्युतसंस्कारत्वं दोषः पुनर्वाक्यसम्भवोऽपि इत्यन्ये । क्लिष्टत्वाविमृष्टविधेयांशत्वविरुद्धमतिकारित्वानां समाससत्त्व एव पदस्थत्वमन्येषान्न पुनर्नियमोऽयम् । यत्परिवृत्त्यसहो यो दोषः स तत्सम्भवीति पदपरिवृत्त्यसहः पददोषः, पदांशपरिवृत्त्यसहः पदांशदोषः, वाक्यपरिवृत्त्यसहो वाक्यदोषश्चेति दिक् ।

अथ क्रमादेतानुदाजिहीर्षुराह **तत्रे**त्यादि ।

**तत्र** तेषु षोडशदोषेषु मध्ये।**परुषवर्णतया** परुषा रूक्षा वर्णा यत्र तस्य भावस्तत्ता तया।परुषत्वं च वीररौद्रबीभत्सादिरसचर्चाविधुरचेतसां शृङ्गारकरुणादिरसमात्रनिरतानामनभिमतत्वम्। अत एव-**श्रुतिदुःखावहत्वं** श्रुत्या श्रवणेन यद् दुःखं तस्यावहं प्रापकं तस्य भावः तत्त्वम्, **दुःश्रवत्वम्** । तथा च-वीररौद्रबीभत्सादिरसचर्चाविधुरचेतसां शृङ्गारादिरसमात्रनिरतानामरुचिकरवर्णशालित्वे सति श्रवणद्वारा तेषामेव दुःखावहत्वं दुःश्रवत्वम् । अतएव-वीररौद्रादिषु रसेषु दुःश्रवत्वमपि न स्वरूपसत् । श्रवणद्वारा वीरादिरसचर्चाविमुखानां शृङ्गारादिरसनिरतानां सहृदयानां हृदयोद्वेजनमेवास्य बीजम् । अत एव शृङ्गारादिरसचर्चाविमुखत्वे सति वीरादिरसचर्चानिरतानां सहृदयानां हृदयस्योद्वेजकत्वाभावान्न वीरादिषु मधुरेतरेषु रसेषु दोषः प्रत्युत गुण एवायम् । न चास्य प्रतिकूलवर्णत्वेन संकरः । उपाधेयसाङ्कर्येऽपि उपाध्योः सङ्करत्वाभावात् । सति हि दुःश्रवत्वे न रसस्य प्रतिबन्धः किन्तु जायमानेऽपि रसे नास्वादोद्रेकः । प्रतिकूलवर्णत्वसद्भावे तु न रसास्वादोद्रेकाभाव एव, किन्तु रसस्य प्रतिबन्धोऽपि । **तत्** ' दुश्रवत्व ' मिति शेषः.। यथा-

' **अनङ्गवशंवदा**ऽनङ्गः कामस्तस्य वशंवदाऽधीनेति तथोक्ता । मदनपरतन्त्रेत्यर्थः । 'कन्दर्पो दर्पकोऽनङ्ग' इत्यमरः । **तन्वङ्गी** कृशोदरी तनु सूक्ष्ममङ्गमुदरादि यस्याः सा । ' तनुः काये त्वचि स्त्री स्यात्रिष्वल्पे विरले कृशे । ' इति विश्वः । **कदा** । ' कान्तेन सह सङ्गम्य स्मयमानमुखेन्दुना । ' इति शेषः । **कार्तार्थ्यं** कृतार्थतां सिद्धमनोरथताम्। **यातु** यायात् । 'लोट च' ३।३।१६२ इति लोट् ॥'

इत्यत्र 'श्लोके' इति शेषः । 'कार्तार्थ्यं' मिति पदम् । 'तद्दुष्टमि'ति शेषः ।

द्वितीयं पददोषमश्लीलत्वं व्याचष्टे-**अश्लीलत्वमित्यादिना** ।

**अश्लीलत्वम् । व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वाद्** व्रीडा च जुगुप्सा चामङ्गलं चेति तेषां व्यञ्जकत्वं तस्मात 'कारणा'दिति शेषः 'मन्दाक्षं ह्रीस्त्रपा व्रीडा' इत्यमरः । 'मोहो बीज्या जुगुप्सा च हृणीया हृणिया घृणा ।' इति वाचस्पतिः । **त्रिविधम्** । नास्य ग्राम्यत्वेनाभेदः, तस्य व्रीडाऽऽदिव्यञ्जकत्वाभावेऽपि असभ्यताप्रत्यायकत्वात् । न वाऽप्यनुचितार्थत्वेन भेदाभावः, तस्योपश्लोक्यमानतिरस्कारव्यञ्जकत्वेनैव तादवस्थ्यात्, अस्य पुनर्व्रीडाऽऽदिव्यञ्जकत्वेनैवेति भेदस्य स्फुटं प्रतिपत्तेः । व्रीडाऽऽदीनामप्यनभिमतत्वे एव व्यञ्जकत्वमस्यावष्टम्भः । अत एव-व्रीडाऽऽदीनाम-

क्रमेणोदाहरणम्–

**'दृप्तारिविजये राजन्! साधनं सुमहत्तव।' 'प्रससार शनैर्वायुर्विनाशे तन्वि! ते तदा।' इति च।**
**अत्र 'साधनवायुविनाश' शब्दा अश्लीलाः।**

---

भिमतत्वे सति व्यञ्जकत्वमप्येतस्य गुणः, कथमन्यथा शान्तबीभत्सादावुपादेयत्वेन तस्यानित्यत्वं स्यात्? एनयोर्नित्यत्वानित्यत्वे अपि भेदमूलम्। बीजं चैतस्य–अनभिमतत्वे सति व्रीडाऽऽदिव्यञ्जकत्वम्। इति। अत्रैतदपि बोद्धव्यम्–त्रिविधोऽप्ययं पुनस्त्रिविधः। क्वचिद्विवक्षितस्यैवार्थस्य व्रीडाऽऽद्यालम्बनत्वात्, क्वचिदविवक्षितस्यार्थस्य प्रकृतार्थोऽन्वयिनो व्रीडाऽऽद्यालम्बनत्वात्, क्वचित् पुनस्तादृशार्थस्य प्रकृतार्थेऽनन्वयिनोऽपि स्मृतिमात्रत्वात्। इति।

उदाहरन्नाह–क्रमेण 'यथासम्भव'मिति शेषः। **उदाहरणम्**। यथा–'**दृप्तारि**'–इत्यादि।

'**हे राजन्** भूपते स्वामिन्! इति वा भावः 'राजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ। यक्षे शक्रे च पुंसि स्यात्' इति मेदिनी। **तव** नरपतेः स्वामिन इति वा। **दृप्तारिविजये** दृप्ता अजेयत्वाभिमानेन प्रमत्ता अमी अरयः शत्रव इति तेषां विजयस्तत्र यद्वा दृप्तो दर्पं गतोऽसौ अरिः कामाख्यः शत्रुरिति, तस्य विजयस्तत्र तस्मिन् विषय इति यावत्। सुमहदतिविपुलम्। 'विशङ्कटं पृथु बृहद्विशालं पृथुलं महत्। वड्रोरुविपुलम्' इत्यमरः। **साधनं** सैन्यं लिङ्गं च। 'सर्वातिशयितं नित्यं सुदृढं परिदृश्यते॥' इति शेषः। हे **तन्वि** सुन्दरि! **तदा** तस्मिन् समये। **ते** तव। **विनाशे** अदर्शने दर्शनाभावे जाते इति यावत्। 'णश्' अदर्शने इत्यस्य घञि रूपमेतत्। **शनैर्मन्दम्। वायुः प्रससार** प्रचलति स्म। अत्रेदं बोद्धव्यम्–'साधनमि'तिपदस्य सैन्यवाचित्वेऽपि पुरुषचिह्नव्यञ्जकत्वम्, तच्च प्रकृते विरुद्धमिति व्रीडाव्यञ्जकत्वमेतस्य निर्बाधम् एवम्–'उदारचारितैस्तैस्तैर्धीरैः सदसि मण्डिते। प्रससार शनैर्वायुस्तस्य सुन्दरि सर्वतः॥' इति 'जीवितादपि पद्माक्षि! दयितायाः शुचिस्मिते। नष्टप्रायमिदं जातं विनाशे तन्वि ते तदा॥' इति च पद्यम्। अनयोर्भवेत्, पद्ययोः 'प्रससार शनैर्वायुर्विनाशे तन्वि! ते तदा' इति पादद्वयम्। अत्र च–'वायु'रिति पदमपानवायुं स्मारयति, न तु तदर्थतया वाक्यमुत्पद्यते। एवं च–जुगुप्साप्रतीतिरिति स्फुटमश्लीलत्वम्।–तथा–'विनाशे' इति 'मरणे' इत्यर्थं स्मारयति। न चायमर्थो विवक्षितः, अथाऽप्यमङ्गलं व्यञ्जयति। तस्मादेतस्याप्यश्लीलत्वम्। दूषकताबीजं त्वनुभवसिद्धं सहृदयस्य श्रोतुर्वैमुख्यम्।

एतत् सर्वमभिप्रेत्याह–अत्रेत्यादि।

**अत्रास्मिन्** 'उदाहृते स्थले' इति शेषः। '**साधनवायुविनाश**' **शब्दाः। अश्लीलाः।** 'व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वा'दिति शेषः। अत्रेदमवधेयम्–ननु 'विनाशशब्दोऽश्लीलोऽप्रयुक्तोऽनुचितार्थो वा? अश्लील एव, अमङ्गलव्यञ्जकत्वात्। अत एव, प्रकाशकारा अपि–'मृदुपवनविभिन्नो मत्प्रियाया विनाशाद्घनरुचिरकलापो निःसपत्नोऽद्य जातः। रतिविगलितबन्धे केशपाशे सुकेश्याः सति कुसुमसनाथे कं हरेदेष बर्ही॥' इत्यत्र 'विनाश' 'शब्दोऽश्लील' इत्याहुः। न चेदं क्षोदक्षमम्–तथाहि, शाब्दिकैरदर्शनार्थसाधारण्येनाभिधातुं शक्यस्यापि विनाशशब्दस्य कविभिः सहृदयैश्चानादृतत्वादप्रयुक्तत्वम्, यद्वा–किञ्चित्कालावधिकवियोगार्थत्वेन विवक्षितस्य चिरकालिकवियोगार्थकत्वेन प्रत्यायकत्वादनुचितार्थत्वम्। इति चेत् 'विनाश' शब्दस्याप्रयुक्तत्वेऽनुचितार्थत्वेऽपि वाऽमङ्गलव्यञ्जकताया अनपायादश्लीलत्वम्। अतएव–व्रीडाऽऽदिव्यञ्जकत्वे एवाश्लीलता, कविभिरनादृतत्वे एवाप्रयुक्तता, व्रीडाऽऽदिव्यञ्जकताऽभावेऽपि अनौचित्यान्तरव्यञ्जकत्वेऽनुचितार्थता पुनर्दोषः इति भेदः। इति। यथा वा–'न ब्रह्मविद्या न च राजलक्ष्मीस्तथा यथेयं कविता कवीनाम्। लोकोत्तरे पुंसि निवेश्यमाना पुत्रीव हर्षं हृदये करोति॥' इत्यत्र 'पुत्रीवे' ति। तथा–'कुहूकुहूस्वरेणेव मधुरेण निरन्तरम्। मनोहरमयं चूते कामं कूजति कोकिलः॥' इत्यत्र 'चूत' इति। एवम्–'मुदं सुमनसो यान्ति रमां वमन्ति दुर्जनाः। इति राजेन्द्र पश्यामि तव जाते महोदये।' इत्यत्र 'वमन्ती' ति। 'विभाते गृहमागम्य विच्छित्तं शयनोपरि। व्यजनादाशु तन्वङ्गी तोषयामास सादरम्॥' इत्यत्र 'विच्छित' मिति। 'दर्शं दर्शं महोदारं विदग्धं जीवितेश्वरम्। अन्तःप्रसन्ना शुशुभे स्मयमानमुखाम्बुजा॥' इत्यत्र 'विदग्ध' मिति। 'प्रवासयन्ती दयितं जीवितादपि वल्लभम्। सा क्वाऽपि भुवि नाके वा रमणी नान्यया समा॥' इत्यत्र 'प्रवासयन्ती' ति च।

**'शूरा अमरता यान्ति पशुभूता रणाध्वरे।'**

**इत्यत्र 'पशु' शब्दः कातर्यमभिव्यनक्तीत्यनुचितार्थत्वम्।**

**अप्रयुक्तत्वं तथा प्रसिद्धावपि कविभिरनादृतत्वम्। यथा-**

---

तृतीयं पदगतमनुचितार्थत्वं व्याचष्टे-'**शूरा**'-इत्यादिना।

'**शूरा** युद्धादपलायिनो वीराः। रणाध्वरे रण एवाध्वरो यज्ञस्तत्र।'रणः कोणे क्वणे पुंसि समरे पुन्नपुंसकम्।' इति, 'यज्ञः सवोऽध्वरोयागः सप्ततन्तुर्मखः क्रतुः।' इतिच मेदिनी। **पशुभूताः** पशुस्वरूपाः सन्तः।**अमरताममराणां** देवानां भावस्तत्तेति ताम्। **यान्ति** प्रतिपद्यन्ते।तथोक्तम्महाभारते-'द्वाविमौ पुरुषव्याघ्रौ सूर्य्यमण्डलभेदिनौ। परिव्राड् योगयुक्तश्च रणे चाभिमुखे हतः॥'इति। **इत्यत्रे**त्यस्मिन् 'पद्यार्धे' इति शेषः। **'पशु' शब्दः। कातर्यं** कातराणाम्भाव इति तत्त्वं तत्। **अभिव्यनक्ति**व्यञ्जनया बोधयति। **इती**त्यस्मात् कारणात्। **अनुचितार्थत्वम्**। यः स्याद् विवक्षितोऽर्थस्तस्यैव व्रीडाऽऽदिव्यञ्जकताशून्यत्वे सति तत्तिरस्कारप्रत्यायकताशून्यार्थत्वमनुचितार्थत्वमित्यर्थः। येन व्रीडाऽऽदिव्यञ्जकताशून्यत्वे सति वर्ण्यमान एवार्थः पराभूतः प्रत्याय्येत सोऽनुचितार्थत्वन्नाम दोष इति भावः। अत एव-विवक्षितस्यार्थस्य तिरस्कारोपस्थितिकारकत्वमेतस्य वीजम्, तस्मान्नित्यत्वं च। अत्रेदमाकूतम्-'यथा यज्ञेऽश्वमेधादौ पशवोऽश्वप्रमुखा वध्यन्ते हूयन्ते च, ते पुनः स्वर्गं प्रपद्यन्ते तथैव रणे रणविदो युध्यन्ते म्रियन्ते च, ते पुनः स्वर्गे महीयन्ते। इत्थेवं रणयज्ञे शूरा एव पशवः, ते तत्र वध्यमानाः स्वर्गमधिगच्छन्ती' ति, अत्र न पशवः स्वयं यथा स्वर्गं गन्तुमुपतिष्ठन्ति न वा स्वयं वलादत्रस्यन्तो वा जहति प्राणान्, किन्तु परतन्त्रास्त्रस्यन्त एव वध्यन्ते हूयन्ते चेति, तथा न राजन्या अपि स्वयमत्रस्यन्तो वलाज्जहति प्राणान्, न वा तत्र प्राणान् परित्यज्य स्वयं स्वर्गं जिगमिषन्तीति स्फुटं तेषां शूराणामपि कातरत्वं व्यज्यते, न चायमर्थो विवक्षाविषयस्तस्माद् विवक्षितस्यापि तेषां शूरत्वाभिव्यञ्जनस्य तिरस्काराद‌भिव्यज्यमानादत्रानुचितार्थत्वं दोषः। अयं च विवक्षितस्यार्थस्य तिरस्काराभिव्यक्तिमुपजीव्यैवावतिष्ठते, इति नित्यं परिहेयत्वान्नित्यः। तथोक्तं प्रदीपकारैः-'अत्र शौर्ये प्रतिपाद्ये पदान्तरानपेक्षमेव पशुपदं कातरतामभिव्यनक्ति, पशुपदार्थे कातरताया दर्शनात्। विरुद्धमतिकृत्त्वं तु पदान्तरसापेक्षं, न तथेदमिति तस्माद्भेदः। दूषकतावीजं च विवक्षिततिरस्कारकार्थोपस्थितिः। अतोऽस्य नित्यदोषत्वम्।' इति। यत्तूद्द्योतकारैरुक्तम्-'अस्य नित्यदोषत्वं चिन्त्यम्। तदर्थेऽगृहीतकातरत्वस्य तत्तिरस्कारोपस्थित्यभावात्।' इति। तत्रोच्यते न साक्षात्पशुपदार्थे कातरत्वं, येन सहृदयेतरोऽप्यधिगच्छेत् किन्तु व्यज्यमानम्। एवं च-विवक्षितार्थतिरस्कारोऽपि व्यज्यमान एवानुचितार्थत्वस्य मूलभूतः, न पुनरभिधीयमानः, तस्मात् पशुपदार्थे सहृदयेतरो यदि भवेदगृहीतकातरताकः, तस्य च व्यज्यमाना विवक्षितार्थतिरस्कारोपस्थितिर्न पुनर्यदि स्यात् तर्हि स्थाने। न ततस्तस्य नित्यत्वं व्याहन्यते। इति। यथा वा मम-"अवला तरुणेन तेन सा निगृहीता भुजपञ्जरे बलात्। चकिता तरलाम्बुजेक्षणा सुभगस्याननमेव वीक्षते॥" इत्यत्रा 'वलेति' पदं जुगुप्सामभिव्यनक्तीत्यनुचितार्थम्। अत्राहुस्तर्कवागीशाः-'अनुचितार्थत्वं क्वचिद् वाच्यार्थदोषप्रतिपादकत्वेन, क्वचिदर्थासम्भवेन, क्वचिदसत्समर्थकत्वेन। तत्राद्यमाह-'**शूरा**' इति। पशुभूताश्छेद्यस्वरूपाः। अत्र वाच्यार्थस्य शूरस्य कातर्यं दोषः। तस्य व्यञ्जकत्वात् पशुपदस्यानुचितार्थत्वम्। द्वितीयं यथा 'प्रज्वलज्जलधारावन्निपतन्ति शरास्तव।' इत्यत्र 'प्रज्वल' दिति पदमनुचितार्थम्। तृतीयं यथा-'दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम्। क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसामतीव॥' अत्रासद्भूतस्यान्धकारस्य समर्थकं द्वितीयार्थमनुचितार्थम्। एवमन्यदपि ज्ञेयम्। इति।

चतुर्थं पदगतमप्रयुक्तत्वं व्याचष्टे-**अप्रयुक्तत्व**मित्यादिना।

**तथा प्रसिद्धौ**। 'सत्या' मिति शेषः। '**अपि**, क्व पुनरन्यथा। **कविभिर्विवेकिभिः**, एतेन वैयाकरणानामपि सङ्ग्रहः। 'सङ्ख्यावान् पण्डितः कविः।' इत्यमरः। **अनादृतत्वं** न (ईषत्) आदृतं स्वीकृतमिति, तस्य भावः तत्त्वम्। 'नञभावे निषेधे च स्वरूपार्थेऽप्यतिक्रमे। ईषदर्थे च सादृश्ये तद्विरुद्धतदर्थयोः॥' इति मेदिनी। **अप्रयुक्तत्वं** नैषम्र तु सर्वदा सर्वथा प्रयुक्तं प्रयुज्यमानतयाधिकृतमिति तस्यऽभावः तत्त्वं तथोक्तम्। 'दोष' इति शेषः। तथा च-व्याकरणाद्यविरुद्धत्वे सत्यपि वैयाकरणैरालङ्कारिकैश्चैपदादृतत्वमेवाप्रयुक्तत्वन्नाम दोष इति निष्कृष्टम्। अयं चानित्यः, अनुशासनाद्याम्ना-

**'भाति पद्मः सरोवरे !'**

**इत्यत्र पद्मशब्दः पुंल्लिङ्गः ।**

**ग्राम्यत्वमापामरज्ञेयार्थत्वं यथा—'कटिस्ते हरते मनः ।' इत्यत्र कटिशब्दो ग्राम्यः ।**

**अप्रतीतत्वमेकदेशमात्रप्रसिद्धत्वम् । यथा—'योगेन दलिताशयः ॥'**

---

याविरुद्धत्वेन प्रयोगौचित्येऽपि सम्प्रदायत्वेन कविप्रयोगार्हत्वशून्यत्वात् । 'एतस्य च यमकश्लेषादौ स्वरूपसत्तयाऽवस्थितत्वात् सञ्चच्छतएवानित्यत्वम् । एतस्य बीजं च—प्रयोजनगौरवमन्तरेणापि तादृशकविजनसम्प्रदायोल्लङ्घनप्रयोजनानुसन्धानव्यग्रतया मुख्यार्थस्य विच्छित्तिः । अतएव यमकादौ नास्य स्वरूपेणावस्थानम् । इति ।

उदाहरति—**यथा । 'सरोवरे । पद्मः** कमलम् । 'वा पुंसि पद्म' मित्यमरः । **भाति** चकास्ति ।' इत्यत्र **पद्मशब्दः । पुंल्लिङ्गः ।** 'अप्रयुक्तत्वेन ग्रस्त' इति शेषः । अत्रायम्भावः—'मकरन्दप्रपानाय मधुपानाह्वयन्निव । सौरभोद्गारिकिञ्जल्को भाति पद्मः सरोवरे ॥' इत्यत्र 'पद्म' पदं 'वा पुंसि पद्म' मित्यमरोक्त्या पुंल्लिङ्गतया प्रयुक्तमाम्नातमेव, अथापि प्रायोऽयं शब्दः पुंल्लिङ्गतया विधिविशेषवाचित्वेनैव कविभिः प्रयुज्यते, न तु कमलवाचित्वेनापि, इति तथा प्रसिद्धावपि कविभिरनादृतस्यास्य प्रयोगादप्रयुक्तत्वं दुष्टत्वम् । इति ।

पञ्चमं पदगत ग्राम्यत्वमुदाहरति—**ग्राम्यत्वमि**त्यादिना ।

**'आपामरज्ञेयार्थत्व**मापामरं ज्ञेयोऽर्थो यस्य तत्त्वम् । पामरान् मर्यादीकृत्येत्यापामरम् । सर्वजनज्ञेयार्थत्वमिति भावः ॥ **ग्राम्यत्वं** ग्रामे नतु नगरे नवोपनगरे भवमिति तस्य भावस्तत्त्वम् 'दोष' इति शेषः । अत्रेदमवसेयम्—विदग्धमात्रस्थानं नगरं, किञ्चिद्विदग्धस्थानमुपनगरम्, अविदग्धमात्रस्थानं पुनर्ग्रामः । विदग्धमात्रप्रयोगास्पदं नागरम्, किञ्चिद्विदग्धप्रयोगार्हमुपनागरम्, अविदग्धमात्रप्रयोगार्हं पुनर्ग्राम्यम्; तत्र न तथाऽऽद्ये आपामरं प्रसिद्धार्थे यथाऽन्त्यं पदं, तस्मात् कविभिर्नागरमुपनागरमेव वा प्रयुज्यते न पुनर्ग्राम्यम्, वैदग्ध्याभावोन्नयनेन श्रोतुर्वैमुख्यापादकत्वात् । अत एव विदूषकाद्युक्तौ ग्राम्यमेव प्रयुज्यते पदम्, तच्चावहति शोभाम् तस्य तथौचित्येन वैरस्यापादकत्वाभावात्; प्रत्युत स्वारस्यापादकत्वात् । अनित्यश्च तस्मादयं दोषः । एतस्य मूलं च वक्तुर्वैदग्ध्याभावोन्नयनेन श्रोतुर्वैमुख्योत्पत्तिः ।

उदाहरति—**यथा—'ते तव ।' कटिः** श्रोणिः । 'कटिः श्रोणिः ककुद्मती ।' इत्यमरः । **मन**स्तद्वृत्तिमिति यात् । **हरते** स्वसौन्दर्येणाकर्षति, अनुरञ्जयतीत्यर्थः ॥ **इत्यत्र । 'कटि' शब्दः । ग्राम्यो** ग्राम्यत्वेन दुष्टः । 'राकाविभावरीकान्तसङ्क्रान्तद्युति ते मुखम् । तपनीयशिलाशोभा कटिस्ते हरते मनः ॥' इति समस्तम् ।

यथावा—'न हयैर्न च मातङ्गैर्न रथैर्न च पत्तिभिः । किन्तु स्त्री वामदृष्ट्यैव जगन्ति जयति क्षणात् ।' इत्यत्र 'स्त्री' शब्दः । यथा वा मम—'जयिनो मन्मथनृपतेर्जित्वा जगतीं सुखं शयानस्य । न्युब्जं निहितौ सुन्दरि ! तव स्तनौ दुन्दुभी मन्ये ॥' इत्यत्र 'स्तन' शब्दः ।

षष्ठं पदगतमप्रतीतत्वमुदाहरति—**अप्रतीत्वमि**त्यादिना ।

**एकदेशमात्रप्रसिद्धत्व**मेकोऽसौ देशः स्थलमित्येकदेशः, स एवेत्येकदेशमात्रं तत्र प्रसिद्धत्वम् । 'सप्तमी शौण्डैः ।' २।१।४० इति समासः । **अप्रतीतत्वं** न ( ईषत् ) प्रतीतं प्रतीतिविषयभूतमिति, तत्त्वम् । 'दोषः' इति शेषः । इदं बोध्यम्—यद्यपि कविभिरनादृतत्वादप्रयुक्तोऽपि शास्त्रस्यैकदेश एव प्रसिद्ध इति वक्तुं शक्यते।तथाऽपि न स कविभिरादृत इति न तस्य प्रसिद्धत्वम्, प्रतीतः पुनः आदृतोऽपि न प्रसिद्धः तस्मान्न प्रयुक्तत्वेऽप्रतीतस्यांतर्भावो युज्यत इति बोध्यम् । दोषश्चायमनित्यः । तदभिज्ञे स्वस्मिन्नेव वा परामर्शकर्त्तरि तत्स्वरूपसत्त्वानुपलब्धेः, प्रत्युत व्युत्पत्तिसूचकत्वेन गुणात्मनाऽवस्थानात् । अत एव असमर्थत्वादप्येतस्य भेदः । तत्तच्छास्त्राभिज्ञानामपि सर्वेषां तत्तदर्थानुपलब्धेः । इति ।

**यथा-'योगेन** चित्तवृत्तिनिरोधेन तदात्मनोपायेने'ति यावत् । तथोक्तम्—'योगश्चित्तवृत्तिनिरोधः' इति । **दलिताशयो**-दलितश्चूर्णित आशयो वासनाकृतानां शुभाशुभकर्मणां संस्कारो यस्य सः 'दल' विशरणे । क्तः । तथोक्तम्—'क्लेशकर्मविपा

इत्यत्र योगशास्त्र एव वासनार्थ 'आशय' शब्दः।

'आशीः परम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु ॥'

अत्र 'वन्द्या'मिति पदं किं बन्दीभूतायामुत वन्दनीयामिति सन्दिग्धत्वम्।

नेयार्थत्वं रूढिप्रयोजनाभावादशक्तिकृतं लक्ष्यार्थप्रकाशनम्। यथा--

'कमले चरणाघातं मुखं सुमुखि! तेऽकरोत् ॥' इत्यत्र चरणाघातेन निर्जितत्वं लक्ष्यम्।

---

काशयैरपरामृष्टः पुरुषविशेषः ईश्वरः।' इति। इत्यत्र वासनार्थो वासनावाचकः। 'आशय' शब्दः। पातञ्जलशास्त्र एव प्रसिद्धत्वादप्रतीतत्वेन ग्रस्त इति शेषः। अत्रायम्भावः--'चिरादभ्यस्यमानेन योगेन दलिताशयः। प्रयाति ब्रह्मनिर्वाणमचिरादकुतोभयम् ॥' इत्यस्यांशभूतं 'योगेन दलिताशयः' इति। तथा च--अत्र आशयशब्दस्य वासनार्थत्वेनाभिमतस्याप्रतीतत्वेन ग्रस्तत्वमिति भावः इति।

सप्तमं पदगतं सन्दिग्धत्वमुदाहरति--'आशीः परम्परा'मित्यादिना।

'वन्द्यां वन्दितुं योग्यां स्तवनार्हामिति यावत्। 'अर्हे कृत्यतृचश्च।' ३।३।१६९ इति ण्यत्। आशीःपरम्परा माशिषान्मङ्गलप्रार्थनानां परम्परा ताम्। कर्णे। कृत्वा। 'हे राजन्' इति शेषः। कृपाम्। कुरु ॥ यद्वा--'आशीः परम्परां कर्णे कृत्वा वन्द्यां ( वन्दीजने )-कृपां कुरु।' इत्यत्रोदाहृते स्थल। 'वन्द्या' मिति 'पदस्ये'ति शेषः। बन्दीभूतायाम्। उताथवा। वन्दनीयां स्तवनीयाम्। इति 'अर्थे' इति शेषः। तस्मात्। सन्दिग्धत्वं तदाख्यो दोषः। तात्पर्यविषयीभूतस्यार्थस्य तात्पर्यनिश्चयाभावेन यथाऽर्थतयाऽधिगमाभावविषयभूतत्वं सन्दिग्धत्वम्। न हि सन्दिग्धं तात्पर्येण निर्देष्टुं शक्यते, इयत्ताविपयकविकल्पावगाहिज्ञानस्यैव सन्देहपदार्थत्वात्। तस्मात्--तात्पर्यसन्देहविषयीभूतार्थद्वयोपस्थितिविषयीभूतत्वं सन्दिग्धत्वमिति निष्कृष्टम्। 'आलिङ्गितस्तव भवान् सम्पराये जयश्रिया।' इति तत्पूर्वार्द्धम्। अत्र च--'रलयोर्डलयोश्चैव शसयोर्बवयोस्तथा। वदन्त्येषां च सावर्ण्यमलङ्कारविदो जनाः ॥' इत्युक्तदिशा 'वन्द्या'मिति पदं 'नमस्यामित्यर्थे 'वन्दीकृताया'मित्यर्थे वा प्रकरणाद्यतन्त्रितमाहेति संदिग्धार्थम्। दूषकताबीजं पुनरुद्देश्यनिश्चयाभावः। अत एव तस्मिन्नभिमते न भवेद्दूषकतेत्यस्यानित्यत्वं विरुद्धमतिकारित्वाद्भेदश्च।

अष्टमं पदगतं नेयार्थत्वमुदाहरति-नेयार्थत्वमित्यादिना।

रूढिप्रयोजनाभावाद्रूढिश्च प्रयोजनं चेति, तयोरभावस्तस्मात्। रूढी रूढिमूला, प्रयोजनं पुनः प्रयोजनमूल लक्षणा, तयोरभावः सम्भवाभावः सङ्गत्यभावो वा। तथाच--रूढिमूलायाः प्रयोजनमूलाया वा प्रसिद्धाया लक्षणायाः सम्भवाभावात् सङ्गतताऽभावाद्वेत्यर्थः। अशक्तिकृतं न शक्तिरिति तया कृतम्। शक्तिः प्रतिभा प्रभावो व्युत्पत्तिर्वा तया कृतम्। लक्ष्यार्थप्रकाशनं लक्ष्यः शक्यविरुद्धोऽर्थस्तस्य प्रकाशनं प्रकाशकत्वम्। नेयार्थत्वं नेयो रूढिप्रयोजनाभ्यामन्यया लक्षणया कल्प्यो न तु स्वतःसम्भवी अर्थो यस्य तस्य भावस्तत्त्वम्। 'दोषः' इति शेषः। अत्रायं भावः---'निरूढा लक्षणाः काश्चित् सामर्थ्यादभिधानवत्। क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः॥' इत्याद्युक्तदिशा रूढिप्रयोजनमूलाभ्यां प्रसिद्धाभ्यां लक्षणाभ्यां व्यतिरिक्ताया अत एव निषिद्धाया लक्षणायाः प्रतिपाद्यो नेयोऽर्थः, तद्वत्त्वं पुनर्नेयार्थत्वं दोषः स च रूढिमूलायाः प्रयोजनमूलायाश्च प्रसिद्धाया लक्षणाया भिन्नया कयाऽपि लक्षणया प्रतिपाद्यार्थत्वे एव सम्भवति नान्यथेति निर्विचिकित्सितं विदुषाम्। रूढिप्रयोजनमूलाभ्यां लक्षणाभ्यां भिन्ना लक्षणा च कथमपि कल्प्यमानैव, न तु स्वरूपसतीत्यत एव तस्या अप्रसिद्धत्वम्। तया च-प्रतिपाद्यमानोऽप्यर्थो न किञ्चित्स्वरूपसन्निति तच्छाक्तित्वं दोषत्वमेवावहति। अत्र दूषकताबीजं पुनर्लक्षणाजन्यबोधे रूढिप्रयोजनान्यतरज्ञानस्य हेतुत्वेन प्रकृते तदभावात् वृत्त्यभावेनार्थानुपस्थितिः। अत एवाप्रयुक्तत्वाद्भेदः, नित्यश्चायं दोषः।इति।सच-यथा'हे सुमुखि! ते तव।मुखम् ( कर्तृ )। कमले। चरणाघातं चरणेनाघातस्तम्। अकरोत्।' इत्यत्र। चरणाघातेन चरणद्वारा य आघातस्तद्द्वारा। निर्जितत्वं 'कमलस्ये' तिशेषः। लक्ष्यं 'न च तथा सङ्गच्छत इति नेयार्थत्व'मिति शेषः। 'मित्रदर्शनसञ्जातप्रमोदोल्लाससुन्दरे। कमले चरणाघातं मुखं सुमुखि! तेऽकरोत् ॥' इत्यत्र मुखस्य चरणासम्भवात्तदाघातस्या-

**निहतार्थत्वमुभयार्थस्य शब्दस्याप्रसिद्धेऽर्थे प्रयोगः । यथा—**

**'यमुनाशम्बरमम्बरं व्यतानीत् ॥' इत्यत्र दैत्ये प्रसिद्धः 'शम्बर' शब्दो जले निहतार्थः ।**

---

प्यसम्भव इति चरणाघातपदस्यार्थो न साक्षात् सम्भवतीति मुख्यार्थबाधः । तस्मात्-निर्जितत्वे लक्षणया तस्य प्रयोगः । यद्यपि वैयाकरणैरिवालङ्कारिकैरपि वृत्तावेकार्थीभावाङ्गीकारात्, शक्यसम्बन्धरूपा लक्षणा सूपपादा, तथाऽपि निर्जितत्वे चरणाघातपदस्य रूढेः प्रयोजनस्य वाऽभावेन मुख्यशब्दार्थव्यतिरिक्तस्यार्थस्य प्रतीत्यभाव इति नेयार्थत्वम् । उक्तं च 'लक्षणा सा न कर्त्तव्या कष्टेनार्थागमो यतः । न यत्र शक्यसम्बन्धो न रूढिर्न प्रयोजनम् ॥' इति । न च निर्जितत्वातिशयप्रतिपत्तिः प्रयोजनमिति वाच्यम् । उपमानत्वेनोत्तमगुणे चन्द्रे, उपमेयत्वेन न्यूनगुणेन मुखेन चरणाघातदानवर्णने वर्ण्यस्यैवापकर्षापत्तेरिति भावः । तर्कवागीशास्त्वाहुः—'मुखस्य चरणासम्भवात्तदाघातस्याप्यसम्भव इत्यन्वयानुपपत्तिः । स्वजन्यचरणाघातपराभवः स्वजन्यवृत्तिपराभववत्त्वं मुख्यलक्ष्ययोः सम्बन्धः । अत्र रूढिप्रयोजनव्यतिरेकनिश्चयेन कवेरशक्तिनिश्चयः, ततो लक्ष्योपस्थितिः, ततः शाब्दबोध इति तद्विलम्बेनैव रसबोधविलम्बनमत्र दूषकताबीजम् ।' इति। यथा वा—'नवकुमुदवनश्रीहासकेलिप्रसङ्गादधिकरुचिरशोभामप्युषां जागरित्वा । अयमपरदिशोऽङ्के मुञ्चति स्रस्तहस्तः शिशयिषुरिव पाण्डुम्लानमात्मानमिन्दुः ॥' इत्यत्र 'स्रस्तहस्ते'ति पदस्य नेयार्थत्वम् ।

नवमं पदस्थं निहतार्थत्वं दोषमुदाहरन् व्याचष्टे—**निहतार्थत्व**मित्यादिना ।

**उभयार्थस्यो**भयः प्रकृताप्रकृतः प्रसिद्धाप्रसिद्धो वाऽर्थो यस्य तस्य । **शब्दस्य । अप्रसिद्धे** प्रसिद्धव्यतिरिक्ते । **अर्थे** वाच्येऽर्थे । **प्रयोगः** प्रकृतत्वेन न्यासः । **निहतार्थत्व**मिहतो विवक्षितेतरार्थप्रसिद्ध्याऽभिभूतोऽर्थो यस्य तस्य भाव स्तत्त्वम् । 'दोष' इति शेषः । तथा च—अविवक्षितस्य प्रसिद्धस्यार्थस्य झटिति बोधोपस्थित्या विवक्षितस्य प्रसिद्धेतरस्य बोधविलम्बे तिरस्कृतविवक्षितार्थबोधत्वं निहतार्थत्वन्नाम दोष इति फलितम् । प्रसिद्धत्वं च यदर्थतया भूरिप्रयोगप्रवाहः, तेन वा उपस्थाप्यमानदृढतरझटितिबोधसंस्कारविषयभूतत्वम् । तेन च तस्य तस्य झटित्युपस्थित्या तदतिरिक्तस्य न झटिति उपस्थितिरिति तिरस्कृतत्वमेव निहतार्थत्वम् । एवं च योगमात्रमवलम्ब्य कुमुदाद्यर्थे पङ्कजादिषु पदेषु प्रयुक्तेष्वप्यस्य दोषस्यैव सद्भावः, 'रूढिर्योगापहारिणी ।' इत्युक्तदिशा रूढ्यर्थस्य झटित्युपस्थितेः । नास्य नेयार्थत्वेन सङ्करः । प्रयोजनसद्भावेऽपि दुष्टत्वस्वीकारात् । नापि सङ्करोऽप्रयुक्तत्वेन, तस्य श्लेषयमकादिष्वेव दुष्टत्वपरिहानात्, एतस्य पुनरन्यत्रापि दुष्टत्वाभावात् । उक्तं च—'लक्षणया प्रयुक्तत्वेऽसति च प्रयोजने नेयार्थत्वं दोषः, सति त्वदोष एव । गूढेऽप्यर्थे क्वचित् प्रयोगान्नाप्रयुक्तत्वेन सङ्करः ।' इति । अत एवानित्योऽपीति स्थितं श्लेषयमकादिभ्यो व्यतिरिक्तेऽपि स्थले गूढेऽर्थे दुष्टत्वाभावात् । **यथा—'यमुनाशम्बरं** यमुनायाः शम्बरं जलम् ( कर्तृ ) । 'शम्बरं सलिले पुंसि मृगदैत्यविशेषयोः' इति विश्वः । **अम्बरमा**—काशम् । 'व्योम पुष्करमम्बरम् ।' इत्यमरः । **व्यतानीद्** व्याप्तं चकार ॥' **इत्यत्र । दैत्ये** दैत्यविशेषे इत्यर्थः । **प्रसिद्धः । 'शम्बर' शब्दः** । 'जले प्रसिद्धेतरार्थके प्रयुक्त इती'ति शेषः । **निहतार्थः** । अत्रेदं तत्त्वम्-'शम्बर' शब्दः श्रुतमात्रो दैत्यविशेषवाचकतामवगमयति, न पुनर्विवक्षितां जलवाचकताम्, तस्मात् स्फुटं निहतार्थत्वम् । ननु पुंलिङ्ग एव 'शम्बर' शब्दो दैत्यविशेषवाचको न तु नपुंसकलिङ्गः, नपुंसकलिङ्गस्य तस्य जलवाचकत्वस्यामरादिभिराम्नातत्वात् । प्रकृते च नपुंसकलिङ्गतया प्रयुक्तः 'शम्बर'शब्दः । तस्मात् कथमसौ 'श्रुतमात्रो दैत्यविशेषवाचकतामवगमयती' त्युच्यते ? इति चेत् ! 'शम्बर'शब्दो नपुंसकलिङ्गोऽपि न जलवाचकतया प्रसिद्धः, तत्र भूरिप्रयोगप्रवाहाभावात् । तस्मान्नपुंसकलिङ्गतया प्रयुक्तोऽपि 'शम्बर'शब्दः पुंलिङ्ग एवासौ दैत्यविशेषवाचक' इति विचारसापेक्ष्यकृतं तद्बोधमान्यर्थमुन्मूल्य श्रुतमात्रो दैत्यविशेषवाचकतामेवावगमयतीति तस्य स्वाभाव्यादिति युक्तमेवोदाहृतं कविराजैः । न च 'तर्हि भवेदप्रयुक्तत्वं दोषः' इति शङ्क्यम् । नपुंसकलिङ्गतयाऽऽम्नातस्य जलार्थकस्य 'शम्बर' शब्दस्य कविभिरनादृत्य पुंलिङ्गतयाऽपि वा तत्रादृतत्वाभावात् । 'नवनीरदकान्तिनाऽम्बुकेलौ प्रहतानां व्रजसुन्दरीकुचानाम् । मदपुञ्जभरेण मोदमानं यमुनाशम्बरमम्बरं व्यतानीत् ॥' इति भवेत् समस्तं पद्यम् । इति ।

**अवाचकत्वं यथा--'गीतेषु कर्णमादत्ते' इत्यत्रा'ङ्' पूर्वो 'दाञ्' धातुर्दानार्थेऽवाचकः। यथा वा-**
**'दिनम्मे त्वयि सम्प्राप्ते ध्वान्तच्छन्नाऽपि यामिनी।'**
**इत्यत्र 'दिन'मिति पदं प्रकाशमयार्थेऽवाचकम्। क्लिष्टत्वमर्थप्रतीतेर्व्यवहितत्वम्।**

---

दशमं पदस्थमवाचकत्वमुदाहरति-**अवाचकत्वमित्यादिना।**

**अवाचकत्वं** तदाख्यो दोषः। **यथा-'गीतेषु** गानेषु। **कर्णं** तदाख्यमिन्द्रियम्। **आदत्ते** ददाति।' इत्यत्र। '**आङ्** **पूर्वं** 'आङ्' उपसर्गपूर्वकः। **'दाञ्' धातुः** 'डुदाञ्' धातुः। **दानार्थे** 'विवक्षित' इति शेषः।' **अवाचकः** तस्य 'उपसर्गवलादर्थो धातोरन्यत्र नीयते।' इत्युक्तदिशा ग्रहणार्थमात्रत्वात्तस्मिन्नर्थे चाभिधाशक्तिप्रवृत्त्यभावादिति शेषः। अत्रायम्भावः-'गीतेषु कर्णमादत्ते, चक्षुर्लावण्यराशिषु। पद्मिन्या दिव्यगन्धेषु, घ्राणं चित्तं तु केलिषु॥' इति समस्तं पद्यम्, तत्र 'आदत्ते' इत्या'दानं करोती'त्यर्थस्य वाचकम्भवितुमर्हति, न तु विवक्षितस्य 'दानं करोती'-त्यस्यार्थस्येत्यवाचकत्वं स्फुटं दोषः। यद्यपि 'षष्ठी चानादरे।' २।३।३८ इति सप्तम्यां गीतान्यनादृत्य कर्णमादत्ते गृह्णाति ततस्ततोऽपनयते॥' इत्येवमत्रावाचकत्वं दोष इति वक्तुं शक्यते, तथाऽपि तादृशस्यार्थस्य विवक्षितत्वम्। अथ ददातेर्दाने शक्तिरूपसामर्थ्यसत्त्वेऽपि 'आङ्' इत्युपसर्गेणादाने ( उपादाने ) एव शक्तेर्नियमितत्वमित्यादातिर्दानेऽर्थे वाचको नत्वसमर्थः 'तस्मादादत्ते' इति पदं 'दत्ते' इति विवक्षितेऽर्थेऽवाचकत्वेन दोषेण ग्रस्तम्। एवं च न दानं व्यङ्ग्यमिति वक्तुं शक्यम्, अन्वितमर्थान्तरं प्रतिपादयत एव पदस्य व्यञ्जकत्वाङ्गीकारात्। एतस्य पुनर्बीजं विवक्षितस्यार्थस्योपस्थापनाभावः। इति। **यथा वा-'त्वयि** प्रियतमे। **सम्प्राप्ते** समुपागते सति। **ध्वान्तच्छन्ना** ध्वान्तेनान्धकारेण च्छन्ना व्याप्ता। 'छन्नं रहश्छादितयोः।' इति हैमः। **अपि** किंपुनश्चन्द्रिकारूपा। **यामिनी** रात्रिः। 'रजनी यामिनी तमी।' इत्यमरः। **मे** मम कृते। **दिनं** प्रकाशरूपा॥' **इत्यत्र। 'दिन'मिति पदम्।** प्रकाशमयार्थे प्रकाशप्रधानेऽर्थे। **अवाचकं** वाचकन्न भवतीति। 'सुडनपुंसकस्य।' १।१।४३ इत्यस्य ज्ञापकत्वेनासमर्थसमासः। अत्रायम्भावः-'दिन'मिति पदं 'प्रकाशमये'त्यर्थे विवक्षितम्, 'ध्वान्तच्छन्ने'ति विशेषणेन बोधितस्य यामिनीविषयस्य तमोमयत्वस्य वैपरीत्याभिधानायोपात्तत्वात्। तत्र च धर्मिणो योगमनपेक्ष्यैव रूढ्या 'दिन'मिति पदं दिनत्वेन शक्तं, न पुनः प्रकाशमयत्वेनेत्यवाचकम्। एतस्य पुनर्बीजं विवक्षितस्यार्थस्य प्रतीतितिरोधानम्। तर्कवागीशास्त्वाहुः-अत्र शृङ्गारप्रतीतिविलम्बनं दूषकताबीजम्। रूढ्यादिसत्त्वे लाक्षणिकपदप्रयोगेऽवाचकत्वं, तदसत्त्वे नेयार्थत्वमिति भेदः। निरूढलक्षणादौ शाब्दबोधविलम्बाभावान्न रसादिबोधविलम्बनमिति नास्यावसर इत्यवधेयम्। इति। 'गते नाथे स्फुरदपि यदासीत् प्रसृतं तमः। दिनम्मे त्वयि सम्प्राप्ते ध्वान्तच्छन्नाऽद्य यामिनी॥' इति भवेत् समस्तं पद्यम्। इति। यथा वा-'अवन्ध्यकोपस्य निहन्तुरापदाम्भवन्ति वश्याः स्वयमेव देहिनः। अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषा दरः॥' इत्यत्र पूर्वार्धे दारिद्र्यापद्विघातकतया दातृत्वं विवक्षितमित्युत्तरार्धे तद्वैपरीत्यप्रदर्शकत्वेनादातर्य्यर्थे 'जन्तुने'ति पदं प्रयुक्तम्, तत्र च 'जायते' इति योगमवलम्ब्य तस्य धर्मिणि शक्तत्वेऽपि विवक्षितेनादातृत्वेन न शक्तिरित्यवाचकत्वम्। न च तात्पर्यानुपपत्त्या लक्षणया भवेद्विवक्षितस्यार्थस्य बोधकत्वमिति वाच्यम्, प्रयोजनाद्यभावेन लक्षणाया अप्रसङ्गात्। यदि तु 'जन्तुने'ति पदं सर्वप्रकारानुपास्यत्वादिबोधरूपप्रयोजनाङ्गीकारेण लाक्षणिकं तदा माभूदेतस्य दोषस्य प्रसङ्गः। इति।

एकादशं पदस्थं क्लिष्टत्वमुदाहरति-**क्लिष्टत्वमित्यादिना।**

**अर्थप्रतीतेरर्थस्य** विवक्षिताभिधेयस्य प्रतीतिः प्रतिपत्तिस्तस्याः। **व्यवहितत्वं** व्यवधानं प्राप्तत्वम्। **क्लिष्टत्वम्।** 'दोष' इति शेषः। अर्थप्रतीतेर्व्यवधानमन्वयोपयोगावहकारणकलापप्रतिपत्तिमान्थर्यमात्रकृतम्, अन्वयोपयोगावहः कारणकलापश्चाकाङ्क्षाऽऽसत्तियोग्यत्वात्मा। तथा च-आकाङ्क्षाया आसत्तेर्योग्यतायाश्च प्रतिपत्तिमान्थर्येणैव विवक्षितस्यान्वितविशेषात्मनोऽर्थस्यापि प्रतिपत्तिर्मन्थरतां प्रतिपद्यते इति तथा दुःखावहत्वं क्लिष्टत्वमिति स्थितम्। आकाङ्क्षाऽऽदिप्रतीतिविलम्बादन्वयप्रतीतेर्विलम्बः, तस्य सद्भावे पुनर्विवक्षितोऽप्यन्वितोऽर्थो झटिति न प्रतीयते

यथा-'क्षीरोदजावसतिजन्मभुवः प्रसन्नाः॥' इत्यत्र क्षीरोदजा लक्ष्मीः, तस्या वसतिः पद्मं, तस्य जन्मभुवो जलानि, इत्यर्थप्रतीतौ व्यवधानम्।

विरुद्धार्थावगमकत्वं विरुद्धमतिकारिता। यथा-'भूतयेऽस्तु भवानीशः'

इत्यत्र 'भवानीश' शब्दो भवान्याः पत्यन्तरप्रतीतिकारित्वाद्विरुद्धमतिकृत्।

---

इति प्रतीतिमान्थर्य्येणैव क्लिष्टत्वं दोषः। स च पदसम्भवी वाक्यसम्भवी चेति द्विविधः। तत्राद्यः, समाससद्भाव एव, समासेन अनेकेषां पदानामेकपद्येऽन्वितार्थबोधस्य विलम्बेनोत्थानात्। अत एव दुःश्रवत्वादिभ्य एतस्य भेदः। तेषां समासासमासोभयसाधारण्यात् पदांशेऽपि सम्भवित्वाच्च। वस्तुतस्तु दूषकताबीजभेदादेव भेदः, अन्त्यः पुनरसमासेऽपि। दूषकताबीजं च विवक्षितविशिष्टार्थप्रतीतिविलम्बः। अत एवासावनित्यः, प्रहेलिकायमकादौ चित्रोद्देश्यत्वेन विवक्षितविशिष्टस्यार्थस्याभिप्रेतत्वे दोषत्वानवस्थानात्, मत्तोक्त्यादिषु तस्यौचित्याद् गुणत्वेनाप्यवस्थानात्। इति। यथा।-'क्षीरोदजावसतिजन्मभुवः क्षीरोदः समुद्रस्तस्माज्जायत इत्यसौ क्षीरोदजा लक्ष्मीस्तस्या वसतिर्निवासस्थानं कमलमिति यावत्तस्य जन्मभुव आपः, जलानीति यावत्। प्रसन्नाः।' इत्यत्र। क्षीरोदजा तच्छब्द इति भावः। लक्ष्मीस्तद्वाचक इति यावत्। तस्या लक्ष्म्याः। वसतिर्वासस्थानम्। 'वसतिः स्यात् स्त्रियां वासे यामिन्यां च निकेतने।' इति मेदिनी। पद्मम्। तस्य। जन्मभुवो जन्मनो भुवः स्थानानि तत्स्वरूपाइति यावत्। 'भूः स्थानमात्रे कथिता धरण्यामपि योषिति।' इति गोपालः। 'उत्तरपदस्य चेति वक्तव्यम्।' इत्युद्देशः। इतीत्थेवम्। अर्थप्रतीतौ। व्यवधानम्। 'तस्मात् क्लिष्टत्व'मिति शेषः। 'ताः क्वाप्यहो घनघटाविलयं प्रयाता ज्योत्स्नाश्चिराय मुदिताश्च विलासशीलाः। क्षीरोदजावसतिजन्मभुवः प्रसन्ना अद्यानुरञ्जयति भास्वति दक्षिणाशाम्॥' इति समस्तं पद्यम्। तत्र 'क्षीरोदजावसतिजन्मभुव' इति क्लिष्टम्, न तु नेयार्थम्। अभिधेयस्यैव दुःखबोध्यत्वात्, लक्ष्यत्वस्यासम्पर्काच्च। इति।

द्वादशं पदस्थं विरुद्धमतिकारित्वमुदाहरति-विरुद्धार्थावगमकत्वमित्यादिना।

विरुद्धार्थावगमकत्वं विरुद्धश्चासावर्थस्तमवगमयति बोधयतीति तत्त्वम्। विवक्षितविरुद्धार्थबोधकारित्वमित्यर्थः। विरुद्धमतिकारिता विरुद्धा विवक्षितादर्थात् तस्य वा प्रतिकूला या मतिरर्थबोधशक्तिस्तस्याः कारीति तत्ता। 'दोष' इति शेषः। तथा च-विवक्षितार्थापेक्षया विरुद्धस्यार्थस्य बोधजनकत्वं विरुद्धमतिकारित्वं नाम दोषः। विरुद्धत्वं च स्वान्यतरतिरस्कारप्रत्ययहेतुभूतत्वम्। तच्च प्रतिबन्धकात्मैव। तस्मात्-विवक्षितार्थस्य प्रतिबन्धकीभूततिरस्कारप्रत्ययहेतुभूतार्थजनकत्वं विरुद्धमतिकारिता नाम दोष इति फलितम्। अत्रेदं बोद्धव्यम्-अयं पदस्थो दोषः पदान्तरसन्निधानमन्तरेण न सम्भवति। अत एवाश्लीलत्वादनुचितार्थत्वान्निहतार्थत्वाच्चैतस्य भेदः। किञ्च-अश्लीलत्वमनुचितार्थत्वं निहतार्थत्वं वा न पदान्तरसन्निधानाद् भवन्तीति बोद्धव्यम्। एवं च-पदान्तरेण विवक्षितार्थप्रतिबन्धकीभूतस्यान्यतरस्यार्थस्य प्रत्ययहेतुत्वं विरुद्धमतिकारित्वं दोषः। अयं चानित्यः, श्लेषादौ तत्तयाऽनङ्गीकारात्। अत एव 'वर्धयन् कुमुदामोदं क्षणदाननमुन्नयन्। मित्रमारमयन्नुद्यन्नयं दोषाकरः स्थितः॥' इत्यत्र 'दोषाकर'इति पदं दोषाणामाकर इति प्रतीतिकरत्वाद्विरुद्धमतिकृदपि न दुष्टम्। इति। यथा-'भवानीशो भवान्या ईशः। भवस्य महादेवस्य स्त्रीति भवानी। 'पुंयोगादाख्यायाम्।' ४।१।४८ इति ङीप् 'इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्।' ४।१।५९ इत्यानुक् च। भूतये सम्पदे सम्पदं दातुमिति यावत्। 'क्रियाऽर्थोपपदस्य च कर्मणि स्थानिनः।' २।३।१४ इति चतुर्थी। 'विभूतिर्भूतिरैश्वर्यमणिमादिकमष्टधा।' इत्यमरः। अस्तु स्तात्। इत्यत्र 'अणिमादिविभूतीनामीश्वरो भूतभावनः। भूतयेऽस्तु भवानीशः स्वभावात् करुणानिधिः॥' इति पद्यस्यांशे। 'भवानीश'शब्दो 'भवानीश' इति पदम्। भवान्याः पार्वत्याः पत्यन्तरप्रतीतिकारित्वात् विरुद्धमतिकृत्। 'तस्मात् पद्यस्यास्य विरुद्धमतिकारित्वेन दूषितत्व'मिति शेषः। यथा वा-'गौरपि यद्वाहनतां प्राप्तवतः सोऽपि गिरिसुतासिंहः। सविधे निरहङ्कारः पायाद्वः सोऽम्बिकारमणः॥' इत्यत्रा'म्बिकारमण' इति पदस्य 'मातृगामी' ति प्रतीतिकारित्वाद्विरुद्धमतिकारित्वम्। अत्रेदमवसेयम्-'भवानीश' इति 'भवानीपति' रिति पदस्य वांऽशभूतेन 'भवानी'ति शब्देन 'अम्बिकारमण' इति

**विधेयस्यांशस्य विमर्शाभावेन गुणीभूतत्वमविमृष्टविधेयांशत्वम्। यथा--**
**'स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः।'**
**इत्यत्र वृथात्वं विधेयम्, तच्च समासे गुणीभावादनुवाद्यत्वप्रतीतिकृत्।**
**यथा वा--'रक्षांस्यपि पुरःस्थातुमलं रामानुजस्य मे।' इत्यत्र 'रामस्येति वाच्यम्।**

---

पदस्यांशभूतेनाम्बिकेतिशब्देन च 'ईश' शब्दस्य 'पति' शब्दस्य 'रमण'शब्दस्य च संयोगात् 'देवदत्तपत्न्यावल्लभ' इतिवत् 'मातृ रमण' इतिवच्च भवान्याः पत्यन्तरेऽम्बिकायाश्च पुत्रेण समं व्यभिचारे प्रतीतिमुपस्थापयतीति विवक्षितार्थप्रतिबन्धः स्फुटम्। तथा च--एतस्य पदस्य विरुद्धमतिकारित्वम्। इति प्राञ्चः। नव्यास्त्वाहुः 'भवानी'त्यादिभिः शब्दै'रीशपत्या'दिशब्दाना'मंबिके' त्यादिशब्दै 'रमणा' दिशब्दानां वा सन्निधानेऽपि 'रूढियोंगापहारिणी' इत्युक्तदिशा दुर्गात्वप्रकारक एव बोधोजन्यते, अन्यथा 'शिवा भवानी रुद्राणी' इत्याद्युक्तदिशा तस्य तस्य शब्दस्यापरपर्यायत्वं मा भूत्। एवं च--'भगिनी भगवती'त्यादीनां शब्दानां योगेनैकार्थकत्वेऽपि रूढ्या भिन्नभिन्नार्थत्वेन नियन्त्रितत्वं सङ्गच्छते। अत एवैतेषामश्लीलत्वमपि न। इति। वस्तुतस्तूक्तदोष एव न। अस्य हि प्रसिद्धप्रतिकूलतया विवक्षितार्थताया अवस्थानमिति बोध्यम्।

यथा वा मम--'जनतापहृतौ धृतव्रतं प्रथितोदारचरित्रमच्युतम्। खरदूषणरावणान्तकं शरणं यामि तमेकमीश्वरम्॥' इत्यत्र 'जनतापहृता'विति पदस्य 'जनानां तापस्तस्य हृतौ' इति विवक्षितार्थापेक्षया 'जनताया अपहृता'विति विरुद्धार्थप्रत्यायकत्वाद्विरुद्धार्थमतिकारित्वम्। तस्मात्--'जनशोकनिवर्त्तनव्रत'मिति युक्तः पाठः।

त्रयोदशं पदस्थमविमृष्टविधेयांशत्वं दोषमुदाहर्त्तुं व्याचष्टे--**'विधेयस्ये'**त्यादिना।

-**विधेयस्य** विधातुं प्राधान्येन निर्देष्टुं योग्यः शक्योवेति तस्य। 'अचोयत्।' ३।१।९७ इति यत्। 'ईयति।' ६।४।६५ इतीदादेशे गुणः। **अंशस्य** भागस्य। **विमर्शाभावेन** विमर्शस्य विचारस्याभावस्तेन। **गुणीभूतत्वम्।** **अविमृष्टविधेयांशत्वम**विमृष्टोऽनपेक्षितो विधेयांशो यस्य तस्य भावः तत्त्वम् 'दोष' इति शेषः। अत्रायम्भावः--यथातथमेव वर्णनमुपयुज्यते, नान्यथा; प्रधानस्य प्राधान्येन तदितरस्य पुनर्गुणीभावेन यथा वर्णनं सङ्गच्छते, न तथा प्रधानस्याप्राधान्येनाप्रधानस्य पुनः प्राधान्येन। एवं च--यत्र प्राधान्येन वर्णनीयस्य वर्णनं यदि भवेदप्राधान्येन, तर्हि तत्राविमृष्टविधेयांशत्वन्नाम दोषः। विधेयं प्रधानं, न पुनरनुवाद्यमिति विधेयस्याप्यनुवाद्यवद् गुणीभाव एवैतस्य मूलम्। अयं च नित्यः, विधेयस्यांशस्य गुणीभावेन तत्तिरस्कारस्यैवोपस्थानात्। न चास्याभवन्मतयोगत्वेन सङ्करः। अत्र पदार्थानां परस्परमन्वयबाधाभावात्, तत्र पुनस्तस्याप्यभावात्। पदगत एवायं सति समासे, न पुनर्वाक्यगत इत्येके, वस्तुतस्तु अनित्य एवैषः, 'सर्वाबलानां गतिः' इत्यादौ तस्य दुष्टत्वानुदयात्।

उदाहरणानान्तरं दर्शयति--**यथा वा--स्वर्गग्रामटिकाविलुण्ठवृथोच्छूनैः** स्वर्ग एव ग्रामटिकाऽल्पोग्रामस्तस्या विलुण्ठनं तत्र वृथोच्छूनास्तैः। **एभिः। भुजैः। किम्।** 'अस्ती'ति शेषः॥' **इत्यत्र। वृथात्वम्।** 'भुजाना'मिति शेषः। **विधेयम्। तत्** भुजानां वृथात्वम्। **च। समासे। गुणीभावात्। अनुवाद्यत्वप्रतीतिकृदनुवाद्यत्वस्य** प्रतीतिरिति, तां करोतीति तथोक्तम्। अत्रायम्भावः--पदार्थानाम्मध्ये विधेयोऽश एवोपादेय इति तस्य प्रधान्यमेवोपयुज्यते न तु गुणीभावः। असौ क्वचित् समासेन, क्वचित् पुनरुद्देश्यविधेयपदयोः पौर्वापर्यविपर्येण; तत्राद्ये पदस्थः, द्वितीये पुनर्वाक्यस्थो दोषः। एवं च--अत्र स्वर्गरूपाया ग्रामटिकाया विलुण्ठनेन समुच्छूनैरेभिर्भुजैः किं वृथेति भुजानां वैयर्थ्यं विधेयम, तच्च वृथापदस्योच्छूनपदेन समं समासे गुणीभूतम्, अनुवाद्यत्वप्रत्यायकत्वात्। तद्यथा--'स्वर्गरूपाया ग्रामटिकाया विलुण्ठनेन वृथोच्छूनैरेभिर्भुजैः 'किं' मित्यभिहिते 'तथा वृथोच्छूनैर्भुजैः किं' मिति वृथोच्छूनत्वविशिष्टानां भुजानां वैयर्थ्याभिधानमनुवाद्यत्वप्रत्ययमूलम्। इति। **यथा वा रामानुजस्य** रामस्य योऽनुजस्तस्येत्यर्थः। **मे** मम। 'लक्ष्मणस्ये'ति शेषः। **पुरः** पुरस्तात् सम्मुखे इति यावत्। **रक्षांसि** राक्षसाः। **अपि। स्थातुं** प्रतिष्ठितानि भवितुम्। **अलं** समर्थानि 'किं' मिति शेषः॥ इत्यत्र 'आकारेणैव घोराणि प्रबलानि च गर्जनात्। रक्षांस्यपि पुरः स्थातुमलं रामानुजस्य मे' ॥ इत्यत्र 'रामानुजस्ये' त्यस्मिन् स्थल इति यावत्। **'रामस्य।'** इतीत्येवं पृथक्कृत्य। **वाच्यं** वक्तुं योग्यम्। 'पद'मिति

यथा वा-'आसमुद्रक्षितीशानाम्' इत्यत्र 'समुद्र' मिति वाच्यम् ।
यथा वा-'यत्र ते पतति सुभ्रु! कटाक्षः षष्ठवाण इव पञ्चशरस्य ।'इत्यत्र 'षष्ठ इवे'त्युत्प्रेक्ष्यम् ।
यथा वा-'अमुक्ता भवता नाथ ! मुहूर्त्तमपि सा पुरा ।'
इत्यत्र 'अमुक्ते' त्यत्र नञः प्रसज्यप्रतिषेधत्वमिति विधेयत्वमेवोचितम् । यदाहुः-

---

शेषः । अत्रेदमभिहितम्-अनेकानेकपरःसहस्रराक्षसाधिराजराजिमर्दनपराक्रान्ततया विश्रुतप्रभावार्थक एव रामशब्दो लाक्षणिकोऽभिप्रेतः, तत्सम्बन्धित्वमेव पुना रक्षसां मर्दने युक्तं प्रतिभासते इति तस्य रामस्य सम्बन्धित्वमेव विधेयं, तच्च नानुवाद्यम्, किन्त्वनुजशब्देन समं रामशब्दस्य समासे तदनुवाद्यतां प्राप्तं गुणीभूतम्, न तु विधेयत्वेन प्राधान्यमुपगतमस्मात् 'रामस्य योऽनुजस्तस्ये'त्यभिप्रेतस्यार्थस्योल्लासाय 'रामस्यानुजस्ये'त्यसमस्तमेव वाच्यं, न तु 'रामानुजस्ये'ति समस्तम् । तत्पुषसमासे हि रामपदार्थस्य गुणीभावोऽनुजपदार्थस्य च प्राधान्यम् । रामस्य पूर्ववर्त्तित्वादनुजस्य चोत्तरवर्त्तित्वादिति तत्त्वम् । इति । **यथा वा-'आसमुद्रक्षितीशानां** समुद्रं मर्यादीकृत्येत्यासमुद्रं, क्षितेः पृथिव्या ईशाः स्वामिनस्तेषाम् । 'रघूणामन्वयं वक्ष्ये ।' इति शेषः। **इत्यत्र 'आसमुद्रम् ।'इतीत्येवं** पृथक्कृत्य । **वाच्यं** वक्तुं योग्यम् । अत्रायम्भावः-रघुवंशभवानां शासनं समुद्रावधिकं, तस्मात्तदेव विधेयम्, किन्तु समासे गुणीभूतत्वादनुवाद्यत्वस्य प्रतीतिमूलतां प्राप्तम् । तथा च विधेयमनुवाद्यत्वप्रत्यायकम्माभूदित्यसमस्तमेव 'आसमुद्रं क्षितीशाना'मिति वाच्यम् । एवं च-'समुद्रपर्यन्तं पृथिवीपतीना'मिति, न तु 'समुद्रावधिकपृथिवीपतीना'मिति विधेयांशस्य गुणीभूतत्वं प्रतिपत्स्यते । समासाभावे समुद्रपर्यन्तताया विशेषणविषयत्वासम्भवात् । इति । **यथा वा 'हे सुभ्रु !** सुभ्रू भ्रुवौ यस्यास्तत्सम्बुद्धौ तथोक्ते । **ते** तव । **कटाक्षः । पञ्चशरस्य** कामदेवस्य । 'कामः पञ्चशरः स्मरः ।' इत्यमरः । **षष्ठवाणः** षष्ठो वाणः । **इव । यत्र** यस्मिंल्लक्ष्ये । **पतति** । 'मञ्जुभाषिणि ! बलान्निगृहीतस्तत्क्षणाद्वशमुपैति स एव ॥' इति शेषः ।' **इत्यत्र षष्ठो** 'वाणः' इति शेषः । **इव । इतीत्येवम् । उत्प्रेक्ष्यमुत्प्रेक्षितुं युक्तम्** । अत्रेदमवसेयम्-'पञ्चशरस्य षड्वाणत्वासम्भवात्तद्वाणानां षट्कत्वस्याप्यसम्भवः । तस्माद्वाणे षष्ठत्वमुत्प्रेक्ष्य विधेयम्, वशीकरणे च वाणस्योत्प्रेक्ष्य विधेयं षष्ठत्वमेव हेतुरित्येवात्र हेतूत्प्रेक्षा । केचित्त्वाहुः-'कटाक्षस्य तीक्ष्णत्वेन वाणेन साम्यम्, तच्च पञ्चशरसम्बन्धिनैव; तस्यैव वशीकर्त्तृत्वसम्भवात् । अस्य च षष्ठत्वासम्भवात् षष्ठत्वमुत्प्रेक्ष्य विधेयम् । तस्माद्वशीकरणे कटाक्षरूपस्य षष्ठत्वमुत्प्रेक्ष्यते इति उत्प्रेक्षे'ति । अन्ये त्वाहुः-तीक्ष्णत्वेन हेतुना वाणेन समं सादृश्येनोत्प्रेक्षणीयस्यापि कटाक्षस्य वशीकरणे तस्य षष्ठत्वमेवोत्प्रेक्ष्यते इति हेतूत्प्रेक्षैवैषा, वाणस्य षष्ठत्वं चोत्प्रेक्ष्य विधेयं निर्वाधम् ।' इति । न च कटाक्षे षष्ठवाणत्वस्य विशिष्टस्यैवोत्प्रेक्ष्य विधेयत्वान्माभूदुक्तदोषावकाश इति वाच्यम् । वशीकरणे विधेयांशस्य वाणत्वस्याप्रयोजकत्वेन प्राधान्याभावाद्विशेषणांशस्य षष्ठत्वस्य च प्रयोजकत्वेन प्राधान्योपपत्तेरविशिष्टस्य षष्ठत्वस्यैवोत्प्रेक्ष्यत्वात् । अत एव 'आकडारादेका सञ्ज्ञा' १।४।१ इत्यत्रैकत्वस्य प्राधान्यभङ्गापत्तेः समासाभावः सङ्गच्छते । अन्यथाऽत्राप्येकस्मिन् सञ्ज्ञिन्युद्देश्ये एकत्वविशिष्टसञ्ज्ञिविधाने दोषो न स्यात् । इति । उत्प्रेक्ष्यविधेयस्य च वाणे षष्ठत्वस्य समासे गुणीभावादनिर्वाहः । तस्मात्-'सुभ्रु ! षष्ठ इव पञ्चशरस्य सायकः पतति यत्र कटाक्षः ।' इति युक्तः पाठः । **यथा वा-'हे नाथ ! भवता । पुरा** पूर्वस्मिन् समये । **मुहूर्तम् । अपि । अमुक्ता** न मुक्ता । 'अद्य या प्रोज्झिता हन्त लोकान्तरमुपस्थिता ॥' इति शेषः ।' **इत्यत्र** । 'श्लोक' इति शेषः । **'अमुक्ते'त्यत्रे**त्यस्मिन् पदे । **नञः । प्रसज्यप्रतिषेधत्वम्** । 'अभिमत'मितिशेषः । **इतीत्यस्मात् कारणात् विधेयत्वम् । एव** नत्वनुवाद्यत्वम् । **उचितम्** । अत्रायम्भावः-'अमुक्ता' इत्यत्र नञा 'मुक्ते'त्येतस्य तत्पुरुषसमासः स च परपुरुषप्रधानः, न चात्र परपुरुषो विधेयत्वेन विवक्षितः, तथा विवक्षितः पुनर्नञेवात्र; किन्त्वेतस्य समासे गुणीभावात् प्रसज्यप्रतिषेधत्वाभावः, प्रसज्यप्रतिषेधत्वं पुनः समासाभाव एव, समासे पुनः पर्युदासत्वापत्तेः पर्युदासत्वे च क्रियया सममन्वयानुपपत्तौ स्फुटमविमृष्टविधेयांशत्वम् । यथा वा-'अपण्डितास्ते पुरुषा मता मे ये स्त्रीषु च श्रीषु च विश्वसन्ति । श्रियो हि कुर्वन्ति तथैव नार्यो भुजङ्गकन्यापरिसर्पणानि ॥' इत्यत्र 'ते पण्डिता न मता' इति विवक्षितं, तच्च समासे गुणीभूतम्; नञः समासगतत्वात् । न च नञः प्रसज्यप्रतिषेधोऽर्थोऽवतिष्ठत इत्यविमृष्टविधेयांशत्वम् । इति ।

तदेवसमर्थयते-यदाहुरित्यादिना ।

**'अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता। प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्॥' इति।**
**यथा–'नवजलधरः सन्नद्धोऽयं, न दृप्तनिशाचरः।'**

**उक्तोदाहरणे तु तत्पुरुषसमासे गुणीभावे नञः पर्युदासतया निषेधस्य विधेयताऽनवगमः। यदाहुः––**

**'प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता। पर्युदासः स विज्ञेयो यत्रोत्तरपदे न नञ्॥' इति।**
**तेन––**

**'जुगोपात्मानमत्रस्तो भेजे धर्ममनातुरः। अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत्॥ १॥'**

---

**यद्** यतः–**आहुः** 'प्राञ्च' इति शेषः। '**यत्र** यस्मिन् वाक्ये। **विधेः** पदार्थान्तरस्य नञो हि निषधोऽर्थो मुख्य इति स्वपदस्य योऽर्थस्तद्व्यतिरिक्तस्यार्थस्येति यावत्। **अप्राधान्यं** प्राधान्याभावः। प्रधानस्य भाव इति प्राधान्यं, तन्न भवतीति तथोक्तम्। **प्रतिषेधे** निषेधार्थे स्वार्थे इति यावत्। **प्रधानता** प्राधान्यं विधेयत्वेन मुख्यत्वं नतू- द्देश्यत्वेनामुख्यत्वप्रत्यायकत्वमिति यावत्। अत एव–**यत्र**। **क्रियया**। **सह**। नञ् 'समन्वयते' इति शेषः। **असौ** नञ्। 'तत्रे'ति शेषः। **प्रसज्यप्रतिषेधः** प्रसज्योऽसौ प्रतिषेधो निषेधकृदिति तथोक्तः। प्रतिषेधतीति प्रतिषेधः। अत एवोक्तं 'प्रसज्यस्तु निषेधकृत्॥' इति। यद्वा–प्रसज्य प्रसक्तो भूत्वा प्रतिषेधतीति॥' इति।

उदाहरति–**यथे**त्यादिना।

**यथा** 'अयं पुरस्ताद्दृश्यमानः। **सन्नद्धः** कवची कवचीव स्थित इति यावत्। यद्वा–व्यूढ इत्यर्थः। 'सन्नद्धः कवची व्यूढ' इति मेदिनी। **नवजलधरो** नवो जलधर इति भावः। **दृप्तनिशाचरो** दृप्तो निशाचरः। **न** 'भवती' ति शेषः।' **इति**।अत्रेदं बोध्यम्––'नवजलधरः सन्नद्धोऽयं, न दृप्तनिशाचरः, सुरधनुरिदं दूराकृष्टं, न तस्य शरासनम्। अयमपि पटुर्धारासारो, न बाणपरम्परा, कनकनिकषस्निग्धा, विद्युत् प्रिया न समोर्वशी॥' इत्यत्र समासाभावान्नञः प्रसज्य- प्रतिषेधत्वं, न तु पर्युदासत्वम्। पूर्वापेक्षयाऽत्रानुपपत्त्यतिरेकं दर्शयति––

**उक्तोदाहरणे** 'अमुक्ता भवता' इत्यत्र 'अमुक्ते'ति पदे। **तु**। **तत्पुरुषसमासे** 'सती'ति शेषः। **नञो** नञर्थस्य नञ्पदार्थस्येति यावत्। **गुणीभावे** गौणत्वप्रतिपत्तौ सत्याम्। **पर्युदासतया** पर्युदासलक्षणाक्रान्तत्वेन। **निषेधस्य** निषेधरूपस्यार्थस्य। **विधेयताऽनवगमो** विधेयताया अनवगमोऽवगमाभाव इति। अत्रेदमुक्तम्–नहि प्रसज्यप्रतिषेधः सन् समस्यते पर्युदासस्यैव समासे उपपत्तेः। तस्मात् 'अमुक्ते'त्यत्र नञः समस्तत्वात् पर्युदासत्वमेव। अत्र च निषेधस्य प्रधानत्वासम्भवाद्विवक्षितस्य च निषेधप्राधान्यस्यानिर्वाहादविमृष्टत्वं निर्वाधम्। इति।

उक्तमर्थं प्राचां संवादेन प्रमाणयति–**यद्** यतः। **आहुः** 'प्राञ्च' इति शेषः। '**यत्र** यस्मिन् वाक्ये। **विधेः प्रधानत्वम्**। **प्रतिषेधे** नञर्थे। **अप्रधानता**। अत एव **यत्र**। **उत्तरपदेन** 'सह समस्त'इति शेषः। 'वृद्धो यूना- तल्लक्षणश्चेदेव विशेषः।' १।२।६५ इत्यादिनिर्देशात्तृतीया। **नञ्** 'य'इति शेषः। **स** 'तत्रे'ति शेषः। **पर्युदासः** पर्यु- दासयति स्वार्थमिति तथोक्तः। **विज्ञेयः**॥' इति।

एतेन सिद्धमर्थं निर्दिशति–**तेन** 'हेतुनेति' शेषः।

'**स** प्रकृतः प्रसिद्धो वा दिलीपो नाम महाराजः। **अत्रस्तो न** त्रस्त इति निर्भयः सन्नित्यर्थः।'त्रस्तो भीरुभीरुक- भीलुकाः।' इत्यमरः। **आत्मानम्**। **जुगोप** ररक्ष। **अनातुरो** नातुर इति तथोक्तः; रोगादिजन्यव्याकुलताशून्यः सन्नित्यर्थः। **धर्मम्**। **भेजे**। अगृध्नुर्न गृध्नुरिति, तृष्णाशून्यः सन्नित्यर्थः। गृधु अभिकाङ्क्षायाम्। 'त्रसिगृधिधृषिक्षिपेः क्नुः।' ३।२।१४० इति क्नुः। 'गृध्नुस्तु गर्धनः। लुब्धोऽभिलाषुकस्तृष्णक्' इत्यमरः। **अर्थान्** विषयान्। **आददे** जग्राह भुक्तवानिति यावत्। **असक्तोऽ**नासक्तः सन्नित्यर्थः। **सुखम्**। **अन्वभूत्**॥ तथा च–'स नृपतिरत्रस्तोऽपि त्रस्त इवात्मानं ररक्ष, अनातुरोऽपि आतुर इव धर्ममाचरितवान्, अतृषितोऽपि तृषित इव विषयान् भुक्तवान्, असक्तोऽपि सक्त इव सुखमनुभूतवान्। इति। निष्कृष्टोऽर्थः। इदं च पद्यं रघुवंशस्य॥ १॥'

इत्यत्र‘अत्रस्तता’द्यनूद्यात्म‘गोपना’द्येव विधेयमिति नञः पर्युदासतया गुणीभावो युक्तः ।

ननु ‘अश्राद्धभोजी ब्राह्मणः’ ‘असूर्यम्पश्या राजदारा’इत्यादिवत् ‘अमुक्ता’इत्यत्रापि प्रसज्य-प्रतिषेधो भवति इति चेत् ? न । अत्रापि यदि मोचनादिरूपेण क्रियांशेन नञः सम्बन्धः स्यात् तदा तत्रैव प्रसज्यप्रतिषेधत्वं वक्तुं शक्यं, न च तथा; तत्र विशेष्यतया प्रधानेन तद्भोज्याद्यर्थेन कर्त्रंशेनैव नञः, सम्बन्धात् । यदाहुः–

“श्राद्धभोजनशीलो हि यतः कर्त्ता प्रतीयते । न तद्भोजनमात्रं तु कर्त्तरीनेर्विधानतः ॥” इति ।

---

**इत्यत्र** । **‘अत्रस्तता’ऽऽदि** । **अनूद्य** । **‘आत्म गोपना’दि** । **एव** न तु ‘अत्रस्तता’ऽऽदि । **विधेयम्** । इतीत्यस्मात् । **नञः** । **पर्युदासतया** । **गुणीभावः** । **युक्तः** । एवं च नञः समासे पर्युदासत्वं, प्रसज्यप्रतिषेधत्वं पुनरन्यत्र । तयोः पूर्वं गुणीभावास्पदं, न परम्; इत्यस्मात् ‘अत्रस्तता’ऽऽदेरुद्देश्यताया एव युक्तत्वान्नात्र निरुक्तो दोषः, विधेयस्या‘त्मगोपना’देरुद्देश्यत्वाभावात् । इति निष्कृष्टम् ।

उक्तमर्थं द्रढयितुमाशंकते–**नन्वित्यादिना** ।

**ननु** । **‘अश्राद्धभोजी** न श्राद्धं लक्षणया तदन्नम्भुङ्क्ते इत्येवं शील इति तथोक्तः । श्राद्धान्नाभोजीति यावत् अत एव ‘व्रते ।’ ३।२।२० इति सूत्रात् व्रते गम्यमाने णिनिः । **ब्राह्मणः** । ‘अस्ती’ति शेषः । **‘असूर्यम्पश्याः** सूर्यंन पश्यन्तीति तथोक्ताः । सूर्यस्यापि न निरीक्षितार इति यावत् । ‘असूर्यललाटयोर्दृशितपोः ।’ ३।२।३६ इत्यसमर्थसमासः खश्च । **राजदारा** राज्ञोदाराः । ‘भार्या जायाऽथ पुम्भूम्नि दारा’ इत्यमरः । **इत्यादिवदि**त्यादिष्विवेति । ‘तत्र तस्येव ।’ ५।१।११६ इति वतिः । **‘अमुक्ते’त्यत्र** । **अपि** । **प्रसज्यप्रतिषेधः** । ‘नञ’ इति शेषः । **भवति** । ‘भविष्यती’ति पाठान्तरम् । **इतीत्येवम्** । **चेत्** ‘आशङ्कसे’ इति शेषः । **न** । **आशङ्कनीयम्** । कुत इत्याह–**अत्रापी**-त्यादि । **अत्र** ‘अमुक्ते’त्यत्र । **अपि** । **यदि** । **मोचनादिरूपेण** । **क्रियांशेन** । भोजनादिरूपक्रियांशेनेति पाठे तु‘भोज-नादीनां रूपमिव रूपं यस्य-तादृशो यो मोचनादिरूपो क्रियांशस्तेने’त्यर्थ इति बोध्यम् । ‘सहे’ति शेषः । **नञः** । **सम्ब-न्धो**ऽन्वयः । **स्याद्** ‘वस्तुतस्तु नास्ती’ति शेषः । **तदा** तर्हि । **तत्र** ‘अश्राद्धभोजी’त्यादौ । **इव** । **प्रतिषेधत्वं** निषेधार्थकत्वम् । **वक्तुम्** । **शक्यम्** । **च** किन्तु । **तथा** ‘यथे’ति शेषः । तथा च–यथा ‘तत्र अश्राद्धभोजीत्यादौ भोजनादिरूपेण क्रियांशेन नञः सम्बन्धस्तद्व’दित्यर्थः । **न** । यतः–**तत्र** ‘अश्राद्धभोजी’त्यादौ–‘तत्रे’ति पाठस्याभावे तत्रेत्यस्याध्याहारो विधेयः । **विशेष्यतया** विशेष्यत्वरूपेण हेतुना । अत एव–**प्रधानेन** । **तद्भोज्याद्यर्थेन** तस्य श्राद्धा-देर्भोज्यादिरिति, स एवार्थस्तेन ।‘तद्भोज्यार्थेन’ इति पाठश्चिन्त्यः । अतएव–‘श्राद्धभोज्यादिरूपार्थेने’ति विवृतिः सङ्गच्छते । **कर्त्रंशेन** कर्तुः ‘भोजनदर्शना’दिकर्त्तुरंशस्तेन तद्द्वारेति यावत् । **एव** न तु श्राद्धादिरूपेण कर्मांशेन । **नञः** । **सम्बन्धादन्वयात्** । न तु समस्ततया वर्त्तमानत्वात् । तथाच–‘अमुक्ते’त्यत्र तु नञो ‘मुक्ते’त्यनेन समस्तत्वेन तयोर-न्वयः सङ्गच्छते’ इति तत्र तस्य पर्युदासत्वमेवोचितम्, ‘अश्राद्धभोजी’त्यादौ पुनर्नञः कर्त्रंशद्वारा सम्बन्धो ‘भोजना’दि-स्वरूपया क्रियया खलु सम्भवतीति सङ्गच्छत एवात्र नञः प्रसज्यप्रतिषेधत्वम् । तस्मान्न तथाऽऽशङ्कनीयम् । इति निष्कृष्टम् ।

उक्तमर्थं समर्थयते–**यद्** यतः । **आहुः** ‘प्राञ्च’ इति शेषः । **‘हि’** यतःकारणात् । **‘अश्राद्धभोजी’**त्युक्ते **श्राद्ध-भोजनशीलः** श्राद्धान्नभोजी । **कर्त्ता** । ‘निषेधरूपेणे’ति शेषः । **प्रतीयते** । तत्कर्त्तरि श्राद्धभोजनकरणशीलत्वेन प्रतीयमाने कर्त्तरीति यावत् । **इनेः** णिनेः ‘व्रते ।’ ३।२।२० इति विहितस्य प्रत्ययस्येति यावत् । **विधानतो** विधा-नात् । **तद्भोजनमात्रं** तस्य श्राद्धस्य भोजनमिति, तदेवेति तथोक्तम् । **तु** । **न** । ‘व्रते ।’ ३।२।२० इति णिनेर-न्यथाऽनुपपत्तेः । तथा च–‘अश्राद्धभोजी’ त्यत्राप्युच्यमानेऽन्यत्रेव नञः पर्युदासत्वाशंकया, ‘अश्राद्धभोजी’त्येव तावदर्थः प्रतीयते, तेन–अश्राद्धस्य श्राद्धभिन्नतत्सदृशान्नस्य भोजनशीलत्वं कर्तृनिष्ठं प्रतीतिमुपपद्यते । किन्त्वेषा न प्रतीतिः प्रमा । यतः–‘भोजिनी’ त्याद्यात्मनि कर्त्तरि व्रते गम्यमाने विहितस्य णिनेः समावेश इति ‘अब्राह्मणस्य दयापात्र’ मितिवदारोपितश्राद्धभोजनशीलत्वमेव कर्तृनिष्ठतया न वक्तुं युक्तम्, किन्तु–निषेधार्थत्वमादायैव, तस्मात् ‘अश्राद्धभोजी’ त्यादावुक्ते न श्राद्धभिन्नतत्सदृशमपि भोक्तुं शील इत्येवार्थो बोद्धव्यः ।

'अमुक्ते' त्यत्र क्रिययैव सह सम्बन्ध इति दोष एव ।

एते च क्लिष्टत्वादयः समासगता एव पददोषाः । वाक्ये, दुःश्रवत्वं यथा–

---

अथ प्रकृतमनुसरति 'अमुक्ते' त्यत्र । 'नञ' इति शेषः । **क्रियया** 'आसी' दित्यनेन धात्वर्थेन । **एव** । **सह** । **सम्बन्धो**ऽन्वयः 'समस्यमानत्वेनान्वेतुमसमर्थत्वात् विवक्षितोऽपि न सङ्घटते' इति शेषः । इतीत्येवं कृत्वा । **दोषो**ऽविमृष्टविधेयांशत्वम् । **एव** तदवस्थ एवेति यावत् । अत्रायं पर्यालोकः 'अमुक्ते' त्यत्र नञो 'मुक्ते' त्यनेन समासः, स च न विवक्षितः, एवं सति–परपदार्थप्रधानतया नञः प्राधान्यापगमे विवक्षितस्य तस्य तिरस्कारापत्तिः । यथा हि–'अब्राह्मणमानये' त्यत्र न नञः प्राधान्यं, तस्य परपदेन समस्तत्वात् इति नञः पर्युदासापत्तौ पर्युदासस्य च 'पर्युदासः सदृग् ग्राही'त्युक्तदिशा सदृशार्थबोधकत्वेनारोपितब्राह्मणत्वविशिष्टतानिरूपितकर्मसम्बोध्यनिष्ठकर्तृतानिरूपितानयनक्रियानिरूपितकर्त्तव्यताक उपदेश इत्यर्थः । तदुक्तम्महाभाष्यकारैः–''अब्राह्मणमानये'' त्युक्ते ब्राह्मणसदृश एवानीयते नासौ लोष्टमानीय कृती भवतीति । 'अश्राद्धभोजी' त्यस्य तु न श्राद्धसदृशान्नभोजनशील इत्यर्थः, 'व्रते ।' ३ । २ । २० इति विधीयमानस्य णिनेरन्यथाऽनुपपत्तेः । भोजनं हि रागप्राप्तमिति तदभाव एव व्रतं, तस्मात् 'श्राद्धाभोजनशील' इत्यर्थः । तथा च–णिनेः सामर्थ्यादसमर्थसमासः । 'असूर्यम्पश्या' इत्यत्र पुनः 'असूर्यललाटयोर्दृशितपोः ।' ३ । २ । ३६ इत्यसमर्थसमासो निर्बाध एव । वस्तुतस्तु निरुक्तस्य वा 'सुडनपुंसकस्य ।' १ । १ । ४३ इत्यस्य वा सूत्रस्य ज्ञापकतामाश्रित्य 'असूर्यम्पश्या' इत्यादिव'दश्राद्धभोजी' त्यत्राप्यसमर्थसमासः, ज्ञापकता च न सार्वत्रिकीति 'अश्राद्धभोजी'त्यादौ णिन्यादीनामुपपत्त्यर्थं सङ्गच्छतेऽसमर्थसमासः, न चा 'मुक्ते'त्यादौ । 'अश्राद्धभोजी' त्यादौ च कर्त्रंशो भोज्यादिगतो णिन्यादिरूपः, तद्द्वारा पुनर्नञः क्रियया सम्बन्धः, णिनेरन्यथोपपत्त्यसम्भवात् । कर्त्रंशस्य कृदुपस्थापितत्वे धात्वर्थेनैव सम्बन्धस्य व्युत्पन्नत्वात् । इत्थेव नञः प्रसज्यप्रतिषेधत्वन्निर्बाधम् । 'अमुक्ते' त्यादौ पुनर्नञो 'मुक्ते' त्यनेन समस्तत्वे न सम्बन्ध उपपद्यते । एतस्य ( नञः ) तदभावे ( समासाभावे ) एव सद्भावात् । नञश्च 'मुक्ते' त्यनेन तत्पुरुष समासः, तत्र च परपदार्थस्य प्राधान्यान्नञो गुणीभूतत्वेन न निषेधार्थकतयाऽन्वयोपयोगित्वम् । एवं सति कर्मणि विहितक्तान्तेन मुञ्चतिधातुना नञः समासे उत्तरपदार्थस्यैव प्राधान्यं, न पुनर्नञ इति तस्य पर्युदासत्वं तदवस्थम् । नापि 'अ मा नो ना' इत्युक्तदिशाऽत्राऽप्यशब्द एव भवेत्, यन्न स्यान्निरुक्तदोषावकाश इति वक्तुं शक्यम् । समासाशङ्कया जायमानस्य सहृदयवैमुख्यस्य दुर्वारापत्तेः । अन्ये त्वेवमप्याहुः–'ननु पर्युदासार्थोऽमुक्तत्वमेव विधीयतां, फलाविशेषात् इति चेत् ? स्यादेवमपि, यदि तथा सति क्षणमपि तेन सम्बन्धः स्यात् स हि मुक्तत्वेनैव प्रतियोगिना विवक्षितः, न च पर्युदासे तथा सम्भवः, समासे एकदेशेनान्वयानुपपत्तौ विशिष्टेनैवारोपितमुक्तत्वेनान्वयात् । नन्वेवन्नाविमृष्टविधेयांशत्वं, विधेयस्योपस्थानाभावात् । किन्तु दानार्थे 'आदत्ते' इतिवदवाचकत्वं स्यात् । समासे नञोऽर्थान्तरं प्रतिपन्नत्वात् । इति चेत् ? न । तथाऽपि प्राधान्येन निर्देशाभावस्याक्षतत्वात् । न चावाचकत्वस्यात्रान्तर्भावोऽपि कर्त्तुं शक्यः, विवक्षितार्थानुपस्थितिमूलकत्वेन तयोः साम्येऽपि एतस्य विधेयांशसम्बन्धिन्याः प्रधानताया विमर्शाभावमात्रमूलकत्वेन तद्भिन्नत्वात्, सति समास एवैतस्य पदनिष्ठत्वात् तस्य चान्यथोपपत्तेश्च । अत एतस्य दूषकताबीजं विवक्षितस्योद्देश्यविधेयभावार्थस्य प्रत्ययाभावः ।' इति ।

सिंहनिरीक्षणन्यायेन पुनः पूर्वत्रैव वक्तव्यविशेषमुपस्थापयति–**एते** चेत्यादिना ।

**एते** दर्शितलक्ष्यलक्षणाः । **क्लिष्टत्वादयः** । आदिना विरुद्धमतिकारित्वाविमृष्टविधेयांशत्वयोर्ग्रहणम् । **समासगताः** । **एव** । **पददोषाः** । उक्तं च प्रकाशकारैः–'अथ भवेत् क्लिष्टम् । अविमृष्टविधेयांशं विरुद्धमतिकृत् समासगतमेव ॥' इति ।

अथैषां वाक्यगतत्वं निर्दिशति–**वाक्ये** इत्यादिना ।

इदं तावद्बोद्धव्यम्–पदान्तरानपेक्ष्येण दूषकत्वं पददोषः, स च पदपरिवृत्त्यसहत्वे एव भवति । वाक्यदोषः पुनः पदान्तरसापेक्ष्येण दूषकत्वम्, तत्सद्भावश्चानेकपदपरिवृत्त्यसहत्वे एव । साकाङ्क्षानेकपदवृत्तित्वेन रसापकर्षकत्वं वाक्यदोषः ।

'स्मरार्त्यन्धः कदा लप्स्ये कार्त्तार्थ्यं विरहे तव ॥' इति।
'कृतप्रवृत्तिरन्यार्थे कविर्वान्तं समश्नुते।' इत्यत्र जुगुप्सा व्यञ्जिकाऽश्लीलता।

---

निरर्थकत्वादीनां त्रयाणां दोषाणां स्वभावादेवान्वयबोधस्वरूपायोग्यानामन्वयबोधजनने पदान्तरविरहप्रयुक्तत्वविरहेण साकाङ्क्षत्वाभावान्न वाक्यदोषत्वम्। साकाङ्क्षत्वं च परस्परं भिन्नार्थानामप्यनेकेषां पदानां तात्पर्यवृत्त्याऽङ्गाङ्गिभावेनान्वयबोधजननेऽभिन्नत्वेनावस्थानम्। अत्राहुः प्रदीपकाराः–'यत्र पदान्तरसाहित्येन पदानां दुष्टत्वं स वाक्यदोषः। न चासाध्वसमर्थनिरर्थकत्वानां दुष्टत्वे पदान्तरसाहित्यापेक्षेति तन्नितयापासनमिति सम्प्रदायः, तदसत्, 'सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट, पितॄणतार्प्सीत् सममंस्त बन्धून्। व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥' इत्यादौ श्रुतिकटोर्दुष्टत्वे पदान्तरसाहित्यस्यानपेक्षणीयतया तदुदाहरणविरोधात्। न च 'सोऽध्यैष्ट' इत्यादावपि वाक्यस्य श्रुतिकटुत्वं पदान्तरापेक्षमिति वाच्यम्। परुषवर्णारब्धत्वस्य स्वत एव सत्त्वात्, तथात्वेऽपि वा 'स रातु वो दुश्च्यवनो भावुकानां परम्पराम्। अनेडमूकताद्यैश्च द्यतु दोषानसम्मतान् ॥' इत्याद्यप्रयुक्ताद्युदाहरणाव्याप्तिः। न हि तत्रापि दुष्टत्वे पदान्तरापेक्षेति वक्तुं शक्यते अप्रयुक्तत्वस्य पदमात्रधर्मत्वात्। किञ्च–अवाचकमप्यसमर्थसमानशीलं किमिति नापास्तमिति सर्वव्याख्यानेषु विनिगमकं वाक्यं वक्तव्यमित्यत्र ब्रूमः–विवक्षितधर्मिप्रत्यायकशब्दवृत्तित्वे सति नानापदवृत्तित्वमेवात्र वाक्यवृत्तित्वमभिप्रेतम्। 'न्यक्कारो ह्ययमेव' इत्यत्रापि नाव्याप्तिः, उद्देश्यविधेयाभिधायकयोर्द्वयोरपि दुष्टत्वात्। अत एवाविमृष्टविधेयांशमित्यत्रांशपदोपादानम्। 'योऽसौ सुभगे ! तवागत' इत्याद्युदाहरणे प्रकाश एव स्फुटमेतत्। एवं च युक्तं च्युतसंस्कृत्यादिव्युदसनम्। न चासमर्थसहोदरस्यावाचकस्यापि युक्तो व्युदासः, तेनापि केनचिद्विवक्षितधर्मिज्ञापनात्। यथोदाहृतेन ('अवन्ध्यकोपस्ये' त्यत्र) जन्तुपदेन। व्युदस्तेषु पुनर्न कोऽपि प्रभेदो विवक्षितधर्मिप्रतिपादकः। इति। 'विशिष्टैकार्थतात्पर्यकपदसमूहो वाक्यम्, तदपेक्षदोषत्वमेव वाक्यदोषत्वम्, तदपेक्षत्वं च केषाञ्चिदात्मलाभाय, केषाञ्चित् स्वोत्कर्षाय; तथाहि-ये केवला वाक्यदोषा येऽपि च विधेयाविमर्शादयो वाक्यगतास्ते वाक्ये एव सम्भवन्तीत्यात्मलाभाय वाक्यमपेक्षन्ते, ये पुनः श्रुतिकटुत्वादयः पददोषा अपि वाक्यघटकपदद्वयत्रयादिगतत्वेनातिशयदोषतामापद्यन्ते; ते स्वोत्सर्पलाभायैव वाक्यसापेक्षाः। इति। च्युतसंस्कारासमर्थत्वयोः स्वत एवातिशयदोषयोर्न वाक्यघटकपदद्वयादिगतत्वे न कोऽपि विशेषः, निरर्थकपदस्य वाक्यघटकत्वमेव नास्तीति नैषां वाक्यदोषत्वम्। एकस्य विवक्षितार्थावाचकपदस्य प्रसिद्धार्थमादायापि कथञ्चिद् वाक्यार्थबोधोत्पत्तिः सम्भवतीति नावाचकत्वस्य दोषस्य स्वत एवातिशय इति पदद्वयादिगत्वेनातिशायितो वाक्यदोषोऽयमिति यथा कथञ्चिद्विभजनीयम्।' इति विवृतिकाराः 'कः कः कल्याण चरितः कःकः कपटकृत्त्वरः। पर्यायेण सुखी दुःखी कःकः किञ्चिद्भवेन्न वा ॥' इत्यादौ 'कस्कादिषु च।' ८।३।४८ इति शासनविरुद्धतया च्युतसंस्कारत्वम्, न तु विसंधित्वम्; एतादृशस्थले वृत्तभङ्गभयाभावे विभाषाया असम्भवात्। अन्यथा 'कस्कादिषु च' ८।३।४८ इति शासनं सार्वत्रिकं मा भूत् 'कानाम्रेडिते' ८।३।१२ इत्यादौ 'आम्रेडिते' इत्यादि वा न सार्थकं स्यात्। अतोऽयं दोषो वाक्यगतोऽपि। आहुश्च 'च्युतसंस्कृत्यप्रयुक्ताविमृष्टविधेयांशविरुद्धकारित्वानि पदवाक्ययोः।' इत्यन्ये पदमात्रदोषोऽयमित्यपि केचित्। इति।

**वाक्ये**। दुःश्रवत्वं 'दोषः' इति शेषः। **यथा**–'तव प्रियायाः। **विरहे**। **स्मरार्त्यन्धः** स्मरस्यार्तिस्तयाऽन्धस्तथाभूत इव कर्त्तव्याकर्त्तव्यमूढतया स्थित इति यावत्। 'अह'मिति शेषः। **कदा** कस्मिन् विरहाभावप्रयुक्ते सुसमये इति यावत्। **कार्त्तार्थ्यं** कृतार्थतां स्मरार्तिजन्यान्धताशून्यतारूपामिति यावत्। **लप्स्ये** प्राप्स्यामि। 'प्राणेभ्योऽपि परं प्रेष्ठे ! पद्माक्षि ! दृष्टिहारिणि !' इति पूर्वार्द्धम्।' इति 'अत्र दुःश्रवत्वं दोष' इति शेषः।

अश्लीलत्वमुदाहरति–इति 'अन्यार्थेऽन्यस्यान्यकवेरर्थस्तात्पर्य्ये तत्र। **कृतप्रवृत्तिः** कृता प्रवृत्तिर्जिघृक्षारूपा प्रवृत्तिर्येन सः। **कविः**। **वान्तं** छर्दितम्। **समश्नुते** गृह्णाति भक्षयतीतियावत्। 'भुक्तोत्सृष्टाशनेनासौ जीवितं बहु मन्यते।' इति शेषः ॥' इत्यत्र। **जुगुप्साव्यंजिका** 'प्रवृत्तिवान्तोत्सृष्ट' शब्दैरिति शेषः। **अश्लीलता**।

अथानुचितार्थत्वं यथा–'कुविन्दस्त्वं तावत् पटयसि गुणग्राममभितो यशो गायन्त्येते दिशिदिशि च नग्नास्तव विभो!। शरज्ज्योत्स्नागौरस्फुटविकटसर्वाङ्गसुभगा तथाऽपि त्वत्कीर्तिर्भ्रमति विगताच्छादनमिह ॥' इत्यत्र 'कुविन्द' इति पदं

'उद्यत्कमललौहित्यैर्वक्राभिर्भूषिता तनुः ॥'

इत्यत्र कमललौहित्यं पद्मरागः, वक्रा वामा; इति नेयार्थता ।

'धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः। रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम् ॥ २ ॥'

---

तन्तुवाय इति 'पटयसी'ति 'पटं करोसी'ति, 'गुणग्राम' मिति 'तन्तुसन्तति' मिति, 'नग्ना' इति 'दिगम्बरा' इत्यर्थान्तरं च स्मारयन् स्तुत्यस्य तिरस्कारं व्यनक्तीत्यस्यानुचितार्थत्वम् । अप्रयुक्तत्वं यथा—'महतां शरणार्थिनां क्षणादपवर्गत्वविधानकान्तिकः। विषजातविशाललोचनः स नृपो भूतिभृतामधीश्वरः॥' इत्यत्र 'शरणार्थिनाम्' इति 'हननार्थिनां'मित्यर्थे 'अपवर्गत्व' इति 'हृतसङ्घत्व' इत्यर्थे 'कान्ति' इति 'इच्छा' इत्यर्थे 'विषजात' इति 'कमल' इत्यर्थे 'भूति' इति शब्दश्च 'जन्म' इत्यर्थे प्रयुक्तस्तस्मादप्रयुक्तत्वम् ।

ग्राम्यत्वं यथा—'ताम्बूलभृतगल्लोऽयम्भल्लं जल्पति मानुषः। करोति खादनं पानं सदैव तु यथा तथा ॥' इत्यत्र हि 'गल्लभल्लमानुषखादनपान' शब्दानां ग्राम्यत्वम् । अप्रतीतत्वं यथा—'तस्याधिमात्रोपायस्य तीव्रसंवेगिताजुषः। दृढभूमिः प्रियप्राप्तौ यत्नः स फलितः सखे ॥'' इत्यत्र हि 'अधिमात्र'शब्देन क्रियाविशेषस्य 'संवेगिता'शब्देन समाधिविशेषस्य 'दृढभूमि'शब्देन दृढाभ्यासस्य 'प्रिय'शब्देन च ज्ञानस्याभिप्रेतत्वादप्रतीतत्वम् । सन्दिग्धत्वं यथा—'सुरालयोल्लासकरः प्राप्तपर्य्यासकम्पनः। मार्गणप्रवणो भास्वद्भूतिरेष विलोक्यताम् ॥ इत्यत्र 'सुराकम्पनमार्गणभूति'शब्दाः किं देवसेनाशरविभूत्यर्थाः ? आहोस्विन्मदिराकम्पनपर्यटनभस्मार्था इति सन्देहात् ।

अथ मण्डूकप्लुतिन्यायेन वाक्ये दुःश्रवत्वमुदाहृत्य 'नेयार्थतामुदाहरति—'**वक्राभिः** कुटिलाभिर्वामाभिरिति यावत् । 'वामं धने पुंसि हरे कामदेवे पयोधरे। वल्गुप्रतीपसव्येषु त्रिषु नार्य्यां स्त्रियाम्' इति मेदिनीकारोक्तदिशा 'वामशब्दस्य प्रतीपार्थकतया वक्राशब्देन वामाग्रहणं बोध्यम् । **उद्यत्कमललौहित्यैरुद्यन्ति** प्रकाशमानानि यानि कमललौहित्यानि कमलानां पद्मानां लौहित्यानि रागाः इति तैस्तद्द्वारेति यावत् । पद्मरागद्वारेति भावः । **तनुः** शरीरं तत्स्वरूपभूतोऽलङ्कार इति यावत् । **भूषिताऽलङ्कृता** । 'प्रबुद्धे वज्रवैदूर्ये परिभ्रमणकेलिभिः ॥' इति शेषः। अत्र कस्याश्चिदभिसारोद्यमावस्थावर्णनमिदम् ।' इत्यत्र । **कमललौहित्यं** पद्मरागः । **वक्रा** वामाः । इत्येवम् । **नेयार्थता**। अत्रायम्भावः—कमल-लौहित्य-वक्रा-प्रबुद्ध-वज्र-वैदूर्य-परिभ्रमण-केलिपदैः स्ववाच्यकमलादिवाचकत्वसम्बन्धेन क्रमात्—पद्म-राग-प्रतिकूला-समुन्मीलिता-ऽम्बर-रत्नाऽभिचलन-क्रीडेतिपदानि लक्ष्यन्ते,तैश्च यथाक्रमं पद्म-राग-वामा-समुदित-मण्यभिसरण-कौतुकेत्यर्थां उपस्थाप्यंते इति लक्षितलक्षणेयम् । 'कमललौहित्यादिपदलक्षितैः पद्मरागाद्यर्थानां बोधनादियमिति केचित्, 'कमललौहित्यादिपदैरेव स्ववाच्यकमललौहित्यादिवाचकपद्मरङ्गादिपदवाच्यत्वसम्बन्धेन पद्मरागादय एव लक्ष्यन्त इति लक्षितलक्षणेयमिति परे प्राहुः। उभयमतेऽपि लक्षणाऽङ्गीकारे रूढिप्रयोजनान्यतराभावान्नेयार्थत्वं दोषः । निहतार्थत्वं यथा—'सायकसहायबाहोर्मकरध्वजनियमितक्षमाऽधिपतेः । अब्जरुचिरभास्वरस्ते भातितरामवनिप ! श्लोकः ॥' इत्यत्र सायकमकरध्वजक्षमाऽब्जश्लोकानां बाणकामक्षान्तिपद्मपद्येत्यर्थतया प्रसिद्धौ खड्गसिन्धुपृथिवीचन्द्रकीर्त्तिवाचकत्वस्य तिरस्कृतत्वान्निहतार्थत्वं दोषः । अवाचकत्वं यथा—'कमलादयितस्यन्दनपर्णैः कविशासिता गताः समयम् । न तथा यथा विपण्डितपतिशासनताडिताः पदं शयिता ॥' इत्यत्र 'कमलादयितस्यन्दनपर्णै' रित्यस्य पुण्डरीकाक्षस्यन्दनपत्रैरित्यर्थतया विष्णुरथपत्रैरितिवत् 'गरुडपक्षै'रितिवाचकतायाः, 'कविशासिता' इत्यस्य 'शुक्रशिष्या' इतिवद् 'दैत्या' इति वाचकताया 'विपण्डितपतिशासनशासिता' इत्यस्य 'विबुधपतिशस्त्रपीडिता' इतिवद् 'वज्रप्रहारव्याकुलीकृता' इति वाचकतायाः 'शयिता' इत्यस्य च 'मोहिता' इतिवन् 'मूर्च्छिता' इति वाचकताया असम्भवादवाचकत्वं दोषः ।

वाक्यगतं क्लिष्टत्वमुदाहरति—'**धम्मिल्लस्ये**'त्यादिना ।

'**कुरङ्गशावाक्ष्याः** कुरङ्गो हरिणस्तस्य शावः डिम्भस्तस्याक्षिणी इवाक्षिणी यस्यास्तस्याः, मृगशिशुनयनाया इत्यर्थः। **अपूर्वबन्धव्युत्पत्तेरपूर्वो** विलक्षणो बन्धस्तस्य व्युत्पत्तिर्नैपुण्यं यत्र तस्य मौक्तिकादिदामकृतबन्धविलक्षणसौन्दर्यस्ये-

इत्यत्र 'धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसन्न रज्यतीतिसम्वन्धात् क्लिष्टत्वम् ।

'न्यक्कारो ह्ययमेव मे यदरयः–' इत्यत्र वा 'अयमेव न्यक्कार' इति न्यक्कारस्य विधेयत्वं विवक्षितम्, तच्च शब्दरचनावैपरीत्येन गुणीभूतम् । रचना च पदद्वयस्य विपरीतेति वाक्यदोषः । यथा वा–'आनन्दयति ते नेत्रे योऽसौ सुभ्रु ! समागतः ।' इत्यादिषु 'यत्तदोर्नित्यसम्बन्धः' इति न्यायादुपक्रान्तस्य यच्छब्दस्य निराकाङ्क्षत्वप्रतिपत्तये तच्छब्दसमानार्थकतया प्रतिपाद्यमाना इदमेतददःशब्दा विधेया एव भवितुं युक्ताः । अत्र तु यच्छब्दनिकटस्थतयाऽनुवाद्यत्वप्रतीतिकृत् ।

---

स्येत्यर्थः । 'अपूर्वा वन्धस्य व्युत्पत्तिनैपुण्यं यस्याः ।' इति तु विवृतिकाराः । एतन्मते–कुरङ्गशावाक्ष्या विशेषणमिदम् । बन्धो रचना । धम्मिल्लस्य संयतानां कचानाम् । 'धम्मिल्लः संयताः कचाः ।' इत्यमरः । शोभाम् । प्रेक्ष्य 'स्थितवत' इति शेषः । कस्य । मानसं चित्तम् । न नैव । निकामम् अतिशयेन । रज्यति । हृष्यति । अत्रार्या छन्दः ॥ २ ॥'

इत्यत्र । 'धम्मिल्लस्य । शोभाम् । प्रेक्ष्य दृष्ट्वा । कस्य । मानसम् । न । रज्यति प्रसी' दति ।' इति सम्बन्धादित्यन्वयादित्यन्वयस्य झटिति बोद्धुमभिमतत्वेऽप्यनुपपत्तेरिति भावः । क्लिष्टत्वम् । 'आसत्तिज्ञानविलम्बादन्वयबोधविलम्बस्य दूषकताबीजस्य सद्भावा'दिति शेषः । न चास्य सङ्कीर्णत्वेन सङ्करः तस्यानेकवाक्यविषयत्वात्, एतस्य तदभावाच्च । विरुद्धमतिकारिता यथा–'अनुत्तमानुभावस्य परैरपिहितौजसः । अकार्यसुहृदोऽस्माकमपूर्वाश्चित्तवृत्तयः ॥' इत्यत्र मित्रस्य प्रशंसनं विवक्षितं, तस्य पुनर्गर्हणं प्रतीयते इति विरुद्धमतिकारित्वम् ।

अविमृष्टविधेयांशत्वमुदाहरति–'नक्कार' इत्यादिना ।

'यद् यतः । मे मम । अरयः शत्रवः । 'सन्ती' ति शेषः । तस्मात्–अयम् । एव न त्वन्यः । न्यक्कारो धिक्कारः ।' इत्यत्रेत्यस्मिन् ( प्राग्व्याख्याते ) पद्ये इति यावत् । पुनः 'अयम् । 'यदरयः सन्ती'त्यात्मेतिशेषः । एव । न्यक्कारः ।' इतीत्येवम् । न्यक्कारस्य । विधेयत्वम् । विवक्षितम् । तत् विधेयत्वम् । च । गुणीभूतम् । अत एवोक्तम्–'अनुवाद्यमनुक्त्वैव न विधेयमुदीरयेत् । न ह्यलब्धास्पदं किञ्चित् कुत्रचित् प्रतितिष्ठति ॥' इति । रचना । च पदद्वयस्य । इति । वाक्यदोषो वाक्यस्य दोषोऽविमृष्टविधेयांशत्वाख्यो दोषः । 'अस्ती' ति शेषः अत्रायम्भावः–'पर्वतो वह्निमा'नितिवदुद्देश्यमभिधाय विधेयो वाच्यः, न च प्रकृते तथा । 'वह्निमान् पर्वत-इतिवदुद्देश्यविधेययोर्वैपरीत्यात् । यथा हि पर्वतमुद्दिश्य वह्निमत्त्वस्यैव विधेयत्वम्, तथेदम्पदवाच्यमरिसद्भावमुद्दिश्य न्यक्कारस्यैव विधेयत्वम् । वैपरीत्ये पुनर्विधेयस्योद्देश्यत्वमुद्देश्यस्य च विधेयत्वं प्रतीयते, इत्येतस्मात् न विधेयांशस्य विमृष्टत्वम् । शब्दरचना च विपरीतेति शब्ददोषः, तत्राप्यनेकपदवैपरीत्यमितिवाक्यगतोऽयं दोषः ।

न केवलं विधेयस्योपसर्जनत्वव्युत्क्रमाभ्यामेवायं दोषः, किन्तु विधेयस्योपस्थित्यभावेऽपीत्युदाहरणान्तरं प्रस्तौति– यथा–'हे सुभ्रु ! यः । ते तव । नेत्रे नयनयुगलम् । आनन्दयत्याह्लादयति । असौ स नायक इत्यर्थः । समागतः ।' 'कलानिधिरुदारश्रीश्चकोरस्येव चन्द्रमाः ॥' इति शेषः । इत्यादिषु । 'यत्तदोर्यच्छब्दतच्छब्दयोः । नित्यसम्बन्धो नित्यं सम्बन्धः ।' इति न्यायात् । उपक्रान्तस्य प्रकृतस्य । यच्छब्दस्य । निराकाङ्क्षत्वप्रतिपत्तये निराकाङ्क्षत्वस्य प्रतिपत्तिर्निश्चयस्तस्यैतदर्थमितियावत् । तच्छब्दसमानार्थकतया । प्रतिपाद्यमानाः । इदमेतददः-शब्दाः । विधेयाः । एव नतूद्देश्याः । भवितुम् । युक्ताः । अत्र 'योऽसौ' इत्यत्र 'योऽय'मित्यत्र वा । तु । यच्छब्दनिकटस्थतया । अनुवाद्यत्वप्रतीतिकृत् । (अत्रायम्भावः–'योऽसौ' इत्यादौ आद्यमुद्देश्यतया, अन्त्यं विधेयतया विवक्षितम, अथापि सन्निहिततया प्रयुज्यमानमसावित्यादिपदं स्वसन्निहितयच्छब्दार्थगतप्रसिद्धिबोधकतयोद्देश्यतां प्राप्तं प्रतिभासते । 'यत्तदोर्नित्यसम्बन्धः ।' इति हि प्राचां सिद्धान्तः, तत्र तत्प्रतिपाद्यतया वक्तृबुद्धिविषय उद्देश्यो यत्पदार्थः, यत्पदप्रतिपाद्यतया वक्तृबुद्धिविषयो विधेयस्तत्पदार्थ इत्यत एव तयोर्नित्यं सम्बन्धः, तस्मान्निरुक्तस्थले यच्छब्दार्थस्य निराकाङ्क्षताप्रतिपत्तये तच्छब्दाभावे तच्छब्दसमानार्थकः शब्दोऽवश्यं निवेश्यः, स च अदःशब्दः, वा भवितुमर्हति, किन्तु

तच्छब्दस्यापि यच्छब्दनिकटस्थस्य प्रसिद्धपरामर्शित्वमात्रम् ।

'यः स ते नयनानन्दकरः सुभ्रु ! स आगतः ।' इति ।

यच्छब्दव्यवधानेन स्थितास्तु निराकाङ्क्षत्वमवगमयन्ति । यथा-

'आनन्दयति ते नेत्रे योऽधुनाऽसौ समागतः ।'

एवमिदमादिशब्दोपादानेऽपि । यत्र च-यत्तदोरेकस्यार्थः सम्भवति, तत्रैकस्योपादानेऽपि निराकाङ्क्षत्वप्रतीतिरिति न क्षतिः । तथाहि-यच्छब्दस्योत्तरवाक्यगतत्वेनोपादाने सामर्थ्यात् पूर्ववाक्ये तच्छब्दस्यार्थः ।

यथा-'आत्मा जानाति यत् पापम् ।'

---

यच्छब्दनिकटस्थतया निवेश्यमानोऽद इदमादिशब्दो विधेयतामप्राप्योद्देश्यतामेव । प्राप्तः प्रतीयते । तयोरसन्निधावेव तथा त्वेन प्रतिपत्तिस्वीकारात् । उक्तं च-'ख्यातार्थमनुभूतार्थंप्रक्रान्तार्थं च तत्पदम् । यत्पदापेक्षया हीनं न विधेयत्वरोधकृत्॥' इति । एवं सति विधेवतया विवक्षितस्य तच्छब्दसमानार्थकस्यादइदमादिशब्दस्योद्देश्यतया विवक्षितेन यच्छब्देन स्वविशेषणतां प्रति नीतत्वात् प्रसिद्धार्थकतयैवावस्थितत्वमिति विधेयांशस्य विमर्शाभावे स्फुटोऽविमृष्टविधेयांशत्वन्नाम दोषः । न खलु यच्छब्दसन्निहिततयाऽद आदिशब्दानामेव प्रसिद्धार्थकत्वं किन्तु तच्छब्दस्यापीत्याह-**यच्छब्दसन्निहितस्य । तच्छब्दस्य अपि** किं पुनस्तत्समानार्थकस्यादइदमादिशब्दस्य । **प्रसिद्धपरामर्शित्वमात्रं** प्रसिद्धस्य प्रसिद्धपदार्थस्य परामर्शी ग्राहकोवोधकः स एवेति तथोक्तम् ।' 'अस्ती'ति शेषः । **यथा**-'**हे सुभ्रु ! ते** तव । **यः** । **सः** । **नयनानन्दकरः**'आसी'दिति शेषः । **सः** । **आगतः** प्राप्तः । 'तेन सङ्गम्य मोदस्व रोहिणीव सहेन्दुना ॥' इति शेषः । इति । अत्रायम्भावः-'यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः । दीव्यताऽक्षैस्तदाऽनेन नूनं तदपि हारितम् ॥' इत्यादिवद् यच्छब्दसन्निहितस्तच्छब्दोऽत्रापि स्वसन्निहितयच्छब्दविशेषणतामेवावगमयति न तु यच्छब्दोत्थाप्यामाकाङ्क्षां सम्पूरयति । इति ।

नतु यत्तदोः कुत्र स्वातन्त्र्येण स्वार्थाभिधायकत्वमित्याशङ्क्याह-**यच्छब्दव्यवधानेन** यच्छब्दाद्व्यवधानं तेन **स्थिताः** । 'तददइदमेतच्छब्दा'इति शेषः । **निराकाङ्क्षत्वं** निर्गताऽऽकाङ्क्षा यच्छब्दोपस्थाप्या सम्बिवन्धिषा येभ्यस्तत्त्वम् । **अवगमयन्ति** वोधयन्ति । **यथा**-'**यः** । **ते** तव । **नेत्रे** । **आनन्दयति** । **असौ** सः । 'नायक'इति शेषः । **अधुना** । **समागतः** । 'कुमुदाक्षः स्मितज्योत्स्नां विकिरन् सुकलानिधिः ॥' इति शेषः । इत्यादावद आदीनां शब्दानां समानलिङ्गकत्वेऽपि व्यवहितत्वेनावस्थितत्वान्निराकांक्षत्वमेव, न तु सन्निहितयोरिवोद्देश्यविधेयभावस्य पार्थक्येनावगमकत्वाभावः, येन यच्छब्दोत्थाप्याया आकाङ्क्षायाः पूर्त्तिर्न प्रतीयते इति ।, एवं यथा निरुक्तस्थलेऽदःशब्दस्य विधेयत्वेनैवावगमकत्वम् । तथा । **इदमादिशब्दोपादाने** । अपि । 'निराकांक्षत्व'मिति शेषः ।

नतु केवलयोरपि यत्तदोः प्रयोगो दृश्यते इत्यनयोः सापेक्षत्वमेव तावदसिद्धम्, अथ तयोरेकतरोपादानेऽपि निराकाङ्क्षत्वप्रतीतौ कथं तत्र दोष इत्याशङ्क्याह--यत्र चेत्यादि।

**यत्र** । **च** । **यत्तदो**र्यच्छब्दतच्छब्दयोर्मध्ये । **एकस्य** यच्छब्दस्य तच्छब्दस्यैव वा । **अर्थः** । **सम्भवति तत्र** । **एकस्य** यत्तदोरन्यतरस्य । **उपादाने** । **अपि** 'निराकांक्षत्वप्रतीति' रिति शेषः । **इती**त्यस्मात् कारणात् । **न** । **क्षतिः** साकाङ्क्षत्वप्रतीतिजन्या हानिः । **तथाहि**-**यच्छब्दस्य** । **उत्तरवाक्यगतत्वेन** । **पूर्ववाक्ये** । **यच्छब्दस्य** । **अर्थः** । **यथा**-'**यत्** । पापम् । 'अस्ती'तिशेषः । तदिति शेषः । **आत्मा** । **जानाति** । अत्रायम्भावः-यच्छब्दस्योत्तरवाक्यगतत्वेनानुपात्तस्यापि तच्छब्दस्य स्वत एव तदाकाङ्क्षापूरकत्वम् । 'आत्मा जानाति यत् पापमत्र वाऽन्यत्र जन्मनि । प्रत्यक्षं वा परोक्षं वा स्वल्पं वा भूरि वा कृतम् ॥' इत्ययं पूर्णः श्लोकश्च ।' इति ।

एवम्-'यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च' इत्यादावपि ।

तच्छब्दस्य प्रक्रान्तप्रसिद्धानुभूतार्थत्वे यच्छब्दस्यार्थत्वम् । क्रमेण यथा-
'स हत्वा वालिनं वीरस्तत्पदे चिरकाङ्क्षिते । धातोः स्थान इवादेशं सुग्रीवं सन्न्यवेशयत् ॥ ३ ॥'
'स वः शशिकलामौलिस्तादात्म्यायोपकल्प्यताम् ।' 'तामिन्दुसुन्दरमुखीं हृदि चिन्तयामि ।'

---

अन्यत्राप्येवमूह्यमित्युपदिशति-एवमित्यादिना ।

एवं यथा निरुक्तस्थले तथा । 'सर्वशैलाः सर्वे शैलाः पर्वताः । दोहदक्षे दोहे दोहने दक्षश्चतुरस्तत्र । 'सप्तमी शौण्डैः ।' २।१।४ इत्यत्र 'सप्तमी' इति योगविभागात् समासः । यद्वा-दोहस्य दक्षस्तत्र । 'दक्षः प्रजापतौ रुद्रवृषभे कुक्कुटे पटौ । द्रुमे' इति विश्वः । मेरौ सुमेरौ पर्वते । दोग्धरि दोहनकर्त्तरि तत्त्वेन सम्मत इति यावत् । स्थिते 'सती'ति शेषः । यं हिमालयम् । वत्सं तत्त्वेन स्थितमिति भावः । परिकल्प्य । भास्वन्ति प्रकाशवन्ति । भास्वन्ति च भास्वन्तश्चेति तानि तथोक्तानि । भास्वंति भास्वतश्चेति भावः 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ।' १।२।६९ इति समासः । रत्नानि मणीन्, उत्कृष्टान् अन्यान् पदार्थान् वा । 'रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम् ।' इति मेदिनी । च पुनः । महौषधीन् महान्तो विशल्यकारकत्वादिना प्राणान्तकष्टनिवर्त्तकत्वादिना वोपकारका औषधय इति तान् सञ्जीवनप्रभृतीन्यौषधानीत्यर्थः । 'पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥' इति शेषः । 'हिमालयो नाम नगाधिराज' इति पूर्वेणाभिसम्बन्धः । पद्यमिदं कुमारसम्भवस्य, उपजातिश्छन्दः । लक्षणं चोक्तं प्राक् ॥'

इत्यादिषु । अपि 'यच्छब्देन तच्छब्दस्यार्थप्राप्तत्वम्' इति शेषः ।

एवं यच्छब्दोपादानेन तच्छब्दस्यार्थप्राप्तत्वं प्रदर्श्य तच्छब्दोपादानेन यच्छब्दस्याप्यर्थलभ्यत्वमुदाहर्तुमाह-तच्छब्दस्येत्यादिना ॥

तच्छब्दस्य । प्रक्रान्तप्रसिद्धानुभूतार्थत्वे प्रक्रान्तः प्रकरणप्राप्तः प्रसिद्धः सुगृहीतनामत्वादिना प्रथितोऽनुभूतोऽनुभवपथमारूढस्तादृशोऽर्थो यस्य तत्त्वं, तस्मिन् 'सती'ति शेषः । यच्छब्दस्य आर्थत्वमर्थेन लभ्य इत्यार्थस्तस्य भावस्तत्त्वम् । क्रमेण प्रक्रान्तार्थत्वादनन्तरं प्रसिद्धार्थत्वमित्येवं रूपेणेत्यर्थः । उदाहरति-यथा-

'सः प्रक्रान्तचरितः । वीरः पराक्रमी राम इति यावत् । वालिनं तन्नामानं कपिराजम् । हत्वा मारयित्वा । चिरकाङ्क्षिते चिरात् काङ्क्षितमभिलषितं तत्र । तत्पदे तस्य कपि ( कपीनां ) राज्यस्य पदं स्थानं तत्र । धातोः क्रियावाचकस्य शब्दविशेषस्य स्थाने । आदेशं स्थान्यर्थाभिधानसमर्थम् 'अस्तेर्भूः ।' २ । ४ । ५२ 'ब्रुवो वचिः ।' २।४।५३ इत्यादिना विधीयमानं कार्यविशेषम् । इव । सुग्रीवम् । सन्न्यवेशयत् ॥ रघुवंशस्य पद्यमिदम् ॥ ३ ॥'

प्रयोजनं निर्दिशति-इत्यत्र 'यः सुग्रीवहितकारी' इत्यर्थाल्लभ्यते इति शेषः । 'स प्रसिद्धः । वो युष्माकम् 'आराध्य' इति शेषः । शशिकलामौलिः शशिनश्चन्द्रस्य कलेति, सा मौलौ शेखरे यस्य स तथोक्तश्चन्द्रशेखर इत्यर्थः । 'मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम् ।' इति मेदिनी । तादात्म्याय तस्यात्मेति, तस्य भावस्तादात्म्यं तस्मै तथोक्ताय । उपकल्प्यतां सादरं मन्यताम् । 'समस्तजगदानन्दवर्धनायैव सक्षणः ॥' इति शेषः । कमपि कमनीयचरितं नृपतिमुद्दिश्योक्तिरियम् । एवं च 'तादात्म्याये'ति पदांशभूतस्तच्छब्दः कमनीयचरितत्वेन प्रसिद्धस्यैव वाचकः ।' 'तामनुभूतसुरतानन्दाम् । इन्दुसुन्दरमुखीम् । हृदि । चिन्तयामि स्मरामि । 'निःसंशयं खरकरेण विकर्त्तनेन सन्ताप्य दाहमपि सम्प्रति नीयमानम् । यूनाम्मनोजमुदयं पुनरुन्नयन्तीम्' इति शेषः । इत्यत्र 'ते' इत्यादिपदानामिति शेषः ।

यत्र च यच्छब्दनिकटस्थितानामपीदमादिशब्दानां भिन्नलिङ्गविभक्तिकत्वं, तत्रापि निराकाङ्क्षत्वमेव । क्रमेण यथा-

'विभाति मृगशावाक्षी येदम्भुवनभूषणम् ।' 'इन्दुर्विभाति यस्तेन दग्धाः पथिकयोषितः ॥'

क्वचिदनुपात्तयोर्द्वयोरपि सामर्थ्यादवगमः । यथा-

'न मे शमयिता कोऽपि भारस्येत्युर्वि ! मा शुचः ।
नन्दस्य भवने कोऽपि बालोऽस्त्यद्भुतपौरुषः ॥ ४ ॥'

---

ननु यच्छब्दसन्निहितानामिदमादिशब्दानां किं सर्वत्रैव यच्छब्दानुवाद्यप्रत्यायकत्वमिति चेन्नेत्याह-यत्र चेत्यादिना।

यत्र यस्मिन् वाक्ये । च यच्छब्दनिकटस्थितानां 'योऽसौ' इत्यादिव'दिति शेषः । अपि किं पुनस्तद्विपरीतानाम् । इदमादिशब्दानामिदंतदेतददःशब्दानाम् ।भिन्नलिङ्गविभक्तिकत्वम् । 'अस्ती'ति शेषः । तत्र । अपि किं पुनरन्यत्र । 'इदमादिशब्दाना'मिति शेषः । निराकाङ्क्षत्वं 'यच्छब्दोत्थाप्याया आकाङ्क्षायाः पूरकत्वात्' इति शेषः । एव न तु साकाङ्क्षत्वम् ।

उदाहर्तुकाम आह-क्रमेणेदमादिनिर्देशक्रमेण । यथा निराकाङ्क्षत्वं सम्भवति तथोदाह्रियते विभातीत्यादिना ।

'या । मृगशावाक्षी मृगस्य शावश्शिशुस्तद्वदक्षिणी यस्याः सा । विभाति । इदम् । भुवनभूषणम् ।' 'यः । इन्दुश्चन्द्रः । विभाति प्रकाशते । तेनेन्दुना । पथिकयोषितः पथिकानां पथि स्थितानां न तु गृहे वर्त्तमानानाम्, अत एव प्रियाभिर्विरहितानामिति यावत्, योषितो युवत्य इति; तास्तथोक्ताः । दग्धा दाहं प्रापिताः तासां चेतसि मदनानलं प्रज्वाल्य भस्मावशेषतां नीता इव तापिता इत्यर्थः ।'

अत्रेदं तत्त्वम्-'अनङ्गमपि साङ्गत्वं नयन्ती रुचिरस्मिता । विभाति मृगशावाक्षी येदम्भुवनभूषणम् ॥' इत्यत्र 'येद' मिति पदद्वयम् । तत्र-'ये' ति स्त्रीलिङ्गम्, 'इद'मिति पुनः क्लीबलिङ्गम्, अत्रापि यत्पदार्थस्य मृगशावाक्षीत्वेनोद्देश्यत्वम्, इदन्त्वेन विधेयत्वम् । 'भुवनभूषण'मिति पदार्थस्ये'द'मिति पदार्थेनाभिन्नत्वात् । 'य आधारस्तदधिकरणम् ।' २१७ इति कलापे सूत्रे 'य' इति पुंल्लिङ्गमपि'त'दिति क्लीबलिङ्गेनेति, यथा समन्वयते तथा प्रकृतेऽपि 'ये'ति स्त्रीलिङ्ग'मिद'मिति क्लीबलिङ्गेनेति । अन्ये चाहुः-'इदं सूत्रं ज्ञापकमिति तदादिशब्दानां न केवलं प्रक्रान्तसमानलिङ्गत्वं, किन्तु प्रक्रमिष्यमाणसमानलिङ्गत्वमपीति 'येद'मित्यत्र विभिन्नलिङ्गयोरपि सामान्याधिकरण्यन्निर्बाधम् ।' इति । नागेशभट्टा अप्याहुः-'उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत् सर्वनाम पर्य्यायेण तत्तल्लिङ्गभाक् ।' इति । न च 'वेदाः प्रमाण'मितिवद् 'या मृगशावाक्षी विभाति, विभूषणमिद'मिति वक्तुं शक्यम् । 'यत्तदोर्नित्यसम्बन्ध' इत्युक्तदिशा तत्तत्समानार्थकेदमादिशब्दानामेव यच्छब्दोत्थाप्याया आकाङ्क्षायाः पूरकत्वाद् भुवनभूषणादीनां च तदभावात् । इति । अथ 'विपन्नस्येव सर्वोऽपि हा हन्त शमनायते । इन्दुर्विभाति यस्तेन दग्धाः पथिकयोषितः ॥' इत्यत्रेन्दुकर्तृकपथिकयोषित्कर्म्मकदाहाभिधानम्, तच्च कविसमयसिद्धम् । तथाहि-कान्तेषु पथिकेषु तत्कान्ताः कामार्दिता भवन्ति, चन्द्रोदयस्य कामोद्रावकत्वाद्दाहकत्वं कविसमयसिद्धमेव, तस्मात् पूर्वत्रेदंशब्दस्य भिन्नलिङ्गत्वेन परत्र पुनर्भिन्नविभक्तिकत्वेनेति यच्छब्दसन्निहितयोरपि इदंतच्छब्दयोर्नानुवाद्यत्वम्; किन्तु विधेयत्वमेव । इति ।

उपात्तयोरेव यत्तदोर्न नित्यः सम्बन्धः, किन्तु अनुपात्तयोरपीत्याह-क्वचिदित्यादिना ।

क्वचित् । अनुपात्तयोः । द्वयोर्यत्तच्छब्दयोः । अपि सामर्थ्यात्तात्पर्यान्यथाऽनुपपत्तेः । अवगमोबोधः सम्पद्यते ।

उदाहरति-यथा-'हे उर्वि पृथिवि ! 'वसुधोर्वी वसुन्धरा ।' इत्यमरः । मे मम मदीयस्येति यावत् । भारस्य दुष्टदैत्येन्द्रधारणरूपस्य भारस्य । शमयिता निवर्त्तयिता विनाशयिता वा । कोऽपि कश्चिदपि । न नैवास्ति । इति । मा नैव । शुचः शोचस्व । 'माङि लुङ् ।' ३ । ३ । १७५ इति लुङ् । 'न माङ् योगे' ६ । ४ । ७४ इत्यदः प्रतिषेधः । यतः-नन्दस्य तन्नामकस्य गोपवरस्य । भवने स्थाने । अद्भुतपौरुषोऽद्भुतमलौकिकत्वेन विस्मयावहं पौरुषं विक्रमो यस्य सः । कोऽपि निरुपमतया निर्देष्टुमशक्यः । बालस्तत्तया प्रतीयमानः, परमार्थतस्तु वृद्धानामपि वृद्धः । अस्ति ॥ ४ ॥'

इत्यत्र 'योऽस्ति, स ते भारस्य शमयिते' ति बुध्यते ।

'यद्यद् विरहदुःखम्मे तत् को वाऽपहरिष्यति ।'

इत्यत्रैको यच्छब्दः साकाङ्क्ष इति न वाच्यम् । तथाहि यद्यदित्यनेन केनचिद्रूपेण स्थितं सर्वात्मकं वस्तु विवक्षितम् । तथाभूतस्य तस्य तच्छब्देन परामर्शः । एवमन्येषामपि वाक्यगतत्वेनोदाहणं बोध्यम् ।

पदांशे, श्रुतिकटुत्वं यथा—'तद्गच्छ सिद्ध्यै कुरु देवकार्यम् ।'

'पाणिः पल्लवपेलवः ।' इत्यत्र 'पेलव' शब्दस्याद्याक्षरे अश्लीले ।

---

उदाहरणीयं निर्दिशति—इत्यत्र । 'यः । अस्ति । सः । ते तव पृथिव्या इतियावत् । भारस्य । शमयिता ॥' इतीत्येवम् । बुध्यते । 'तात्पर्य्यस्यान्यथाऽनुपपत्त्ये'ति शेषः ।

ननु यत्तदोरन्यतरस्योपादानाभावेऽविमृष्टविधेयांशत्वं यदि भवत्येव ? तर्हि यत्र यच्छब्दो वारद्वयं पठितः, न तु तथा तच्छब्दः; तत्रैकस्य यच्छब्दस्य साकाङ्क्षत्वेनैवावस्थितत्वमिति एवंविधस्थलेऽपि निरुक्त एव दोषः स्यादिति न वाच्यमित्याह—'यद्य'दित्यादिना ।

'यद्' यत् । मे मम विरहिण्या इति यावत् । विरहदुःखम् 'अस्ती' तिशेषः । तत् विरहदुःखम् । कः । वा । 'प्रियाद्व्यतिरिक्त' इति शेषः । अपहरिष्यति । 'निःसरन्ति वत प्राणाः शरीरं परिदह्यते' इति शेषः ॥'

उदाहरणीयं निर्दिशति—इत्यत्र । एको द्वयो 'र्यद्य' दित्येतयोरन्यतर इति यावत् । यच्छब्दः । साकाङ्क्षः एकस्य तच्छब्दस्य यच्छब्दद्वितयोरथाप्याकाङ्क्षापूरकत्वासम्भवा' दिति शेषः । इति । न नैव । वाच्यम् । तथाहि- यद्। यदित्यनेन 'निर्दिष्टे' नेतिशेषः।केन चित्। रूपेण। स्थितमवस्थितम्।सर्वात्मकम्।वस्तु विरहदुःखाख्यं वस्तु। विवक्षितम् । तथाभूतस्य सर्वात्मकत्वेनाभिमतस्य । तस्य विरहदुःखस्य वस्तुनः । तच्छब्देन । परामर्शः । अत्रायम्भावः—'यदय'दिति पदद्वयम् । तेन ज्ञातत्वाज्ञातत्वाभ्यां रूपाभ्यां परामृष्टस्य सकलस्य विरहदुःखस्यैकेनैव 'त'दिति पदेन विरहदुःखत्वेन रूपेण परामर्शोपपत्तेर्न द्वितीयतत्पदापेक्षा, यत्तद्भ्यामेकरूपेणैव परामर्श इति नियमे प्रमाणाभावात् । न हि 'यावन्तो यच्छब्दास्तावन्तस्तच्छब्दा' इति, न वा 'यावन्तस्तच्छब्दास्तावन्तो यच्छब्दा' इति नियमः, किन्तु 'यत्पदार्थस्तत्पदेन परामृश्यते' इत्येव नियमः । एवं च नात्र विमृष्टविधेयांशत्वस्याप्याशङ्का । इति ।

अनुदाहृतानां वाक्यस्थानां दोषाणामुदाहरणान्यप्येवमूह्यानीत्याह—एवम् । अन्येषां दुःश्रवत्वजुगुप्साव्यञ्जकाश्लीलत्वनेयार्थत्वक्लिष्टत्वाविमृष्टविधेयांशत्वेभ्यो व्यतिरिक्तानाम् वाक्यगतत्वेन । उदाहरणम् । बोध्यम् ।

एवं पदवाक्यदोषान्निरूप्य पदांशदोषानुदाहर्त्तुमुपक्रमते—पदांश इत्यादिना ।

पदांशे पदस्यांश एकदेशस्तत्र 'सम्भवतां दोषाणाम्मध्ये' इति शेषः । श्रुतिकटुत्वं श्रुतेः श्रुतौ वा कटु तत्त्वम्, दुःश्रवत्वमिति यावत् । 'दोष' इति शेषः । अत्र 'दुःश्रवत्व'मित्यनुक्त्वा 'श्रुतिकटुत्व'मित्यभिधानमेतेषां यौगिकार्थलक्षणपरत्वं 'सूचयती'ति बोध्यम् ।

उदाहरति—यथा'तत् तस्मात् कारणात् । 'हे काम !'इति शेषः । सिद्ध्यै सिद्धये । गच्छ। देवकार्यम्। कुरु । 'देवकार्य'मिति पदद्वयस्वीकारे तु हे देव ! इति सम्मानार्थं सम्बुद्धिवचनम् । 'अर्थोऽयमर्थान्तरलभ्य एव । अपेक्षते प्रत्ययमङ्गलब्ध्यै बीजांकुरः प्रागुदयादिवाम्भः ॥' इति शेषः । उपजातिश्छन्दः । इदं पद्यं च कुमारसम्भवस्य । इन्द्रस्य कामं प्रति महादेवस्य कान्तानुरागोत्पादनार्थेयमुक्तिश्च । 'द्ध्यै' इत्यस्य श्रुतिकटुत्वाच्च लक्षणसमन्वय इति बोध्यम् ।

पदांशे द्वितीयोऽश्लीलत्वदोषो यथा—'पल्लवपेलवः पल्लववदभिनवोद्गतपत्रवत् पेलवः कोमलः । 'पल्लवोऽस्त्री किसलयम्'इत्यमरः । 'पेलवं विरले कृशे ।' इति रत्नाकरः । पाणिर्हस्तः इत्यत्र 'पदं कोकनदोद्भासि पाणिः पल्लवपेलवः । वदनं सौरभोद्गारि सुभगायाः स्वभावतः ॥' इति पद्यांशे । 'पेलव'शब्दस्य । आद्याक्षरे आद्य'पेले'तिरूपे अक्षरे 'लाट-

'सङ्ग्रामे निहताः शूरा वचोबाणत्वमागताः ।'

इत्यत्र 'वच'श्शब्दस्य 'गी'श्शब्दस्य वाचकत्वे नेयार्थत्वम् । तथा तत्रैव 'बाण'स्थाने 'शरे'ति पाठे अत्र हि पदद्वयमपि न परिवृत्तिसहम् 'जलध्या' दौ तूत्तरपदं, वाडवानलादौ च पूर्वपदमेव ।

'धातुमत्तां गिरिर्धत्ते' इत्यत्र मत्ताशब्दः क्षीबार्थे निहतः ।

---

भाषायां वृषणरूपगुह्याङ्गवाचकत्वेन व्रीडाव्यञ्जकत्वा'दिति शेषः। **अश्लीले**। तस्मादत्राश्लीलत्वं दोष इति बोध्यम् । 'आलिङ्गितस्तत्र भवान् सम्पराये जयश्रिया'इत्यत्र'लिङ्गी' त्यंशस्य व्रीडाव्यञ्जकत्वात्'निर्भीकशाखिना तेन' इत्यत्र'कशायी' त्यंशस्य जुगुप्साव्यञ्जकत्वात् 'अनुपममनघमनन्तं करुणावरुणालयं सदा मुदितम् । त्रिभुवनपालनशीलं केशवमेवाश्रये सततम् ॥' इत्यत्र 'शवे' त्यंशस्यामङ्गलाव्यञ्जकत्वाचाश्लीलत्वम् । पदांशे तृतीयोऽनुचितार्थत्वदोषो यथा--'अयि नरदेव ! तवैव स्नेहाञ्जर्गतीजना अमी मुदिताः । चिन्तामणित्वमेषां सर्वाभिमतार्थजातमुन्नयसि॥'इत्यत्र 'कृदिकारादक्तिनः ।' इति ङीषः स्त्रीत्वव्यञ्जनादनुचितार्थत्वम् । पदांशे चतुर्थपञ्चमषष्ठदोषासम्भवात्सप्तमः सन्दिग्धत्वदोषो यथा--'कस्मिन् कर्मणि सामर्थ्यमस्य नोत्तपतेतराम् । अयं साधुचरस्तस्मादञ्जलिर्बध्यतामिह ॥' इत्यत्र 'भूतपूर्वे चरट् ।' ५।३।५३ इति चरटः 'चरेष्टः ३।२।१६ इति टान्तस्य चरतेश्च सन्देहात् । इत्यपि बोध्यम् ।

अष्टमं नेयार्थत्वं पदांशदोषमुदाहरति **'संग्रामे'** इत्यादिना ।

**'सङ्ग्रामे।निहताः** शूराः।**वचोबाणत्वं** गीर्वाणत्वं देवस्वरूपतामिति यावत्।**आगताः** प्राप्ताः'प्राणानुपेक्ष्य युध्यन्तो महारस्कांस्तनुत्यजः ।' इति शेषः ।' **इत्यत्र** । **'वचः' शब्दस्य** । **'गीः'शब्दवाचकत्वे** 'गीर्वाण' शब्दांशभूत 'गीः' शब्दवाचकत्वे तद्विषय इति यावत् । **नेयार्थत्वं** 'गी-र्वाण' शब्दांशभूतस्यैव शब्दस्य देवेषु रूढत्वाद्रूढिप्रयोजनान्यतराप्रसिद्धलक्षणोन्नेयार्थत्वेन नेयार्थत्वदोषदुष्टत्वम् । **तथा** । **तत्र** गीर्वाणशब्दे । **एव** । **'बाण'स्थाने** बाणशब्दस्य स्थाने । 'गीः शब्दस्य स्थाने 'वचः' शब्दव'दिति शेषः ।**'शरे'तिपाठे** 'नेयार्थत्व' मिति शेषः । **हि** यतः । **अत्र पदद्वयम्** । **अपि** । **परिवृत्तिसहम्** । **न**'भवती'ति शेषः । अत्रायम्भावः--'वचोबाण' शब्दो 'गीर्वाणा'र्थत्वेन विवक्षितः, न चासौ तत्र समर्थः, समस्तयोरेव गीर्वाणशब्दयोस्तदर्थरूढत्वात्, तस्माद् 'वच'श्शब्देन 'गीः' शब्दो लक्ष्यते; न च तत्र रूढिः प्रयोजनं वेति स्फुटं नेयार्थता दोषः । एवं 'गीः शरे'त्यादावप्ययमेव दोषः, तत्र पूर्वोत्तरयोरुभयोरपि शब्दयोः परिवृत्तिसहत्वाभावात् ।

अथ **जलध्यादौ** । आदिना जलधरपयोधिपयोधरादिग्रहणम् । **तु** । **उत्तरपदमुत्तरं** ध्यादिरूपं पदम्। च पुनः । वाडवानलादौ । आदिपदेनाऽनलमधुसूदनवलसूदनादिशब्दानां ग्रहणम् । **पूर्वपदं** पूर्वं 'वाडवा' दिरूपं पदम् ।'न परिवृत्तिसह' मिति शेषः । अत्रायम्भावः जलध्यादिशब्दार्थस्य पयोध्यादिशब्देनैव प्रतीतिर्नतु जलधरादिना; जलधरादिशब्दार्थस्य च पयोधरादिशब्देनैव प्रतीतिर्भवति, नतु जलध्यादिशब्देन, इत्येषामुत्तरः शब्द एव परिवृत्त्यसहः, न तु पूर्वः । अथैवं वाडवानलादिशब्दस्य वाडवाग्न्यादिशब्देनैव प्रतीतिर्नतु तुरगानलादिशब्देन इति नैषां पूर्वः शब्दः परिवृत्तिसहः । तस्मादेतादृशस्य परिवृत्त्यसहस्यापि यदि भवेत् परिवृत्तिस्तर्हि दोष एव । नन्वेवं ? तर्हि जलध्याद्यर्थत्वेन जलधरादिप्रयोगेऽपि नेयार्थत्वस्यैव वक्तव्यत्वे 'जलधरमवलोक्य किं मृषैवं, जलधर ! गर्जसि' इत्यादौ कथं पुनरवाचकत्वदोषोऽभिहित इति चेत् ? पूर्वोत्तरोभयपरिवृत्त्यसहत्वपूर्वोत्तरान्यतरमात्रपरिवृत्त्यसहत्वकृतस्य भेदस्य जागरूकत्वात् । ननु तर्हि 'प्राभ्रभाड्विष्णुधामाप्यविषमाश्वः करोत्ययम् । निद्रां सहस्रपर्णानां पलायनपरायणाम् ॥' इत्यादाववाचकत्वस्य पुनरुपपत्त्यभावात् कथमत्र नेयार्थत्वम् ।' इति चेत् ? उच्यते । पर्यायपरिवृत्तावावाचकत्वम्, पर्यायेतरपरिवृत्तौ पुनर्नेयार्थत्वम् । अत एव पूर्वत्र पर्यायपरिवृत्तौ योगाभासेन तदर्थे शक्त्यभाव एव तादृशदूषकताबीजम्, परत्र पुनः पर्यायेतरपरिवृत्तौ योगाभासस्याप्यभावादाश्रयणीयाया लक्षणाया रूढिप्रयोजनमूलत्वाभाव एव तादृशदूषकताबीजं, तदेवं सङ्गच्छते तयोर्भेदः । नवमो निहतार्थत्वदोषे यथा--'**गिरिः** पर्वतः । **धातुमत्तां** धातवो रजतादयःपदार्था अस्मिन् सन्तीति तस्य भावस्तत्ता ताम् । **धत्ते** दधाति ।' 'विविधाकरमण्डितः । धनदस्य महान् कोष इव रत्नमयः सदा ॥' इति शेषः ।' इत्यत्र '**मत्ता**' शब्दो धातुमत्ताशब्दांशभूत इति भावः । **क्षीबार्थे** मदिरोन्मत्तार्थे । **निहतः** । तस्मात् प्रकृते

'वर्ण्यते किं महासेनो विजेयो यस्य तारकः ।' इत्यत्र 'विजेय' इति 'कृत्य' प्रत्ययः 'क्त' प्रत्ययार्थेऽवाचकः । एवमन्येऽपि यथासम्भवं पदांशदोषा ज्ञेयाः ।

निरर्थकत्वादीनां त्रयाणां च पदमात्रगतत्वेनैव लक्ष्ये सम्भवः। क्रमतो यथा–

'मुञ्च मानं हि मानिनि ॥' इत्यत्र 'हि' शब्दो वृत्तपूरणमात्रप्रयोजनः ।

'कुञ्जं हन्ति कृशोदरी ॥' इत्यत्र 'हन्ती'ति गमनार्थे पठितमपि न तत्र समर्थम् ।

'गाण्डीवी कनकशिलानिभम्भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः ।'

---

निहतार्थत्वं दोषः । पदांशे दशमोऽवाचकत्वदोषो यथा–'**यस्य** । **तारकः**स्तन्नामा दैत्यः । **विजेयो** विजेतुं योग्यो विजितोऽस्ति इति यावत् । 'स' इति शेषः । **महासेनः** कार्त्तिकेयः । **किम्** । **वर्ण्यते** स्तूयते 'वर्णनमन्तरैव तस्य सर्वतो विदितचरत्वात् । 'त्वये'ति शेषः ।' इत्यत्र 'उद्दण्डोद्दृप्तविध्वंसप्रख्यातोद्दामशक्तिकः ।' इत्युत्तरभागकेऽस्मिन् पद्ये। '**विजेय** ' इति । 'अस्ये'ति शेषः । '**कृत्य**' **प्रत्ययः** 'अर्हे कृत्यतृचः ।'३।३।१६९ इत्यर्हार्थे 'अचो यत् ।' ३।१।९७ इति विहितः कृत्यसञ्ज्ञो यत् प्रत्यय इति यावत् । **क्तप्रत्ययार्थे** 'क्तक्तवतू निष्ठा ।' १।१।२६ इत्यनेन विधीयमानस्य क्तप्रत्ययस्यार्थे इति यावत् । **अवाचको** न वाचकस्तथोक्तः । एवमुदाहरणान्तरमपि गवेषणीयमित्याह–**एवं**–यथोदाहृतास्तथा । **अन्ये** उदाहृतेभ्यो व्यतिरिक्ताः । **अपि** । **पदांशदोषाः** । **यथासम्भवम्** । **ज्ञेया** बोध्याः । अत एव–'आदावञ्जनपुञ्जलिप्तवपुषां श्यामानिलोल्लासितप्रोत्सर्पद्विरहानिलेन च ततः सन्तापितानां दृशाम् । सम्प्रत्येव निषेकमश्रुपयसा देवस्य चेतोभुवो भल्लीनामिव पानकर्म कुरुते कामं कुरङ्गेक्षणा ॥ ' इत्यत्रैकस्या नायिकाया दृशां बहुत्वासम्भवादनर्थकत्वं दोषः ।

एकादशद्वादशत्रयोदशानां पदांशगतत्वासम्भवात् निरर्थकत्वादीनुदाहर्तुमुपक्रमते–**निरर्थकत्वादीना**मित्यादिना

**निरर्थकत्वादीनाम्** । निरर्थकत्वासमर्थत्वच्युतसंस्कृतित्वानामितिभावः । **त्रयाणाम्** 'दोषाणा'मिति शेषः । **च** **पदमात्रगतत्वेन** । **एव** प्रायः ।'एवे चानियोगे*।' इत्यनेन पररूपम् । तेन-निरर्थकत्वस्य पदांशेऽपि प्रकाशकारोक्तदिशा सम्भवः, च्युतसंस्कारत्वस्य पुनर्वाक्येऽपि वाग्भटाद्युक्तदिशा सम्भव इति बोध्यम् । 'एव निश्चयेने' त्यर्थस्तु न सङ्घटते 'पदमात्रगतत्वेने'त्यत्र 'मात्र' शब्दोपादानस्य वैयर्थ्यापत्तेः । **लक्ष्ये** । **सम्भवः** । **क्रमत**'स्ते चे'ति शेषः । **यथा**–'**मानिनि** मानमभिमानम् । 'मानश्चित्तसमुन्नतिः ।' इत्यमरः । **हि** **मुञ्च** परित्यज ॥ 'अयं ते सुभगः कान्ते ! विनतश्चरणाम्बुजे किं पुनः कुपितेवासी'ति शेषः। 'इत्यत्र ।'**हि**'**शब्दः**।**वृत्तपूरणमात्रप्रयोजनो** वृत्तस्य पूरणमिति तदेवेति, तत्प्रयोजनं यस्य सः । 'तस्मान्निरर्थकत्वदोषग्रस्त' इति शेषः । '**कृशोदरी** कृशमुदरं यस्याः सा तथोक्ता 'नायिके'ति शेषः । **कुञ्जं** लतादिना गहनं देशं प्रियसङ्गमसङ्केतस्थानमिति यावत् । 'निकुञ्जकुञ्जौ वा क्लीबे लताऽऽदिपिहितोदरे ।' इत्यमरः । **हन्ति** गच्छति ।' हन् हिंसागत्योः 'आकर्षद्भिर्लतावृक्षैरङ्गमाराद्धुमिच्छती: । आपूर्णं शान्तगम्भीर'मिति शेषः । इत्यत्र '**हन्ती**'ति 'क्रियापद'मिति शेषः । **गमनार्थे** । **पठितम्** । **अपि** । **तत्र** तस्मिन् गमनार्थे इति यावत् । **न** । **समर्थम्** । यथा वा–'कान्ते ! जलनिधौ मग्नश्चन्द्रस्त्वन्मुखनिर्जितः । चकोराः शरणं तेऽद्य धेहि वा जहि वा प्रिये ॥' इत्यत्र 'डुधाञ् धारणपोषणयो'रित्युक्तदिशा पोषणार्थकतया पठितमप्यसमर्थम् । तस्मात् प्रकृतेऽसमर्थत्वं दोषः । अयं च न वाक्यगतः, हतशक्तिकस्य वाक्यघटकत्वासम्भवात्, नित्यश्च विवक्षितार्थबोधे हतशक्तिमूलकत्वात् । '**गाण्डीवी** गाण्डीवं तदाख्यं धनुरस्यास्तीति तथोक्तः, अर्जुन इति यावत् । **भुजाभ्यां** बाहुभ्याम् । करणे तृतीया । **कनकशिलानिभं** कनकं सुवर्णं तस्य शिला तन्निभम् । **विषमविलोचनस्य** विषमाण्यसमानि त्रीणीति यावद् विलोचनानि यस्य तस्य । **वक्ष** उरःस्थलम् ।**आजघ्ने** आजघान । 'उन्मज्जन्मकर इवामरापगाया वेगेन प्रतिमुखमेत्य बाणनद्याः ।' इति शेषः ।' इदं पद्यं किरातार्जुनीयस्य । अत्र प्रहर्षिणी वृत्तं, तल्लक्षणं च–'म्नौ ज्रौगस्त्रिदशयतिः प्रहर्षिणीयम् ।' इति ।

'आङोयमहनः ।' १।३।२८ इत्यनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्मकस्यैवात्मनेपदं नियमितम्, इह तु तल्लङ्घितमिति व्याकरणहीनत्वाच्च्युतसंस्कारत्वम् ।

नन्वत्र 'आजघ्ने' इति पदस्य स्वतो न दुष्टता, अपि तु पदान्तरापेक्षयैवेत्यस्य वाक्यदोषता, मैवम् । तथाहि–गुणदोषालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेस्तदन्वयव्यतिरेकानुविधायित्वं हेतुः । इह च दोषस्य 'आजघ्ने' इतिपदमात्रस्यान्वयव्यतिरेकानुविधायित्वम् । पदान्तराणां परिवर्त्तनेऽपि तस्य तादवस्थ्यमिति पददोषत्वमेव । तथा यथेहात्मनेपदस्य परिवृत्तौ न दोषः, तथा 'हन्' प्रकृतेरपीति न पदांशदोषः ।

---

'आङोयमहनः ।' १।३।२८ इत्यनुशासनबलात् । आङ्पूर्वस्य–हनो हन्तेर्धातोः । स्वाङ्गकर्मकस्य । एव 'सकर्मकत्वविवक्षाया मिति शेषः । अन्यथा 'स्वाङ्गकर्मकाच्चेति वक्तव्यम् *।' इत्यत्र 'चे'ति सार्थकं न स्यात् । तेन सकर्मकत्वविवक्षायां सत्यामेव स्वाङ्गकर्मकस्येत्यर्थः । आत्मनेपदम् । नियमितम्, इह निरुक्तस्थले–तु । तद्'अनुशासन'मिति शेषः । लङ्घितं 'सकर्मकत्वविवक्षासद्भावेऽपि पराङ्गकर्मकत्वे आत्मनेपदविधाना'दिति शेषः । इतीत्येषम् । व्याकरणहीनत्वाद् व्याकरणलक्षणानाक्रान्तत्वात् ।'च्युतसंस्कारत्वं दोष' इति शेषः । अत्राहुर्मल्लिनाथाः–'अत्रात्मनेपदं विचार्यम् 'आङोयमहनः ।' इत्यत्राकर्मकाधिकारात् 'स्वाङ्गकर्मकाच्च' इति वक्तव्यत्वात्, न च शिवस्य प्रतिमुखमित्यन्वयात् कनकशिलानिभं कनकनिषकतुल्यं श्यामं स्ववक्ष आजघ्ने इत्यर्थः, इति वाच्यम्; अनौचित्याचरणात् । न हि युद्धाय सन्नद्धा निपुणा अपि मल्लाः स्ववक्षस्ताडनमाचरन्ति, किन्तु, स्वभुजास्फालनम् । किञ्च अनन्तरवक्ष्यमाणभवकर्तृकाविनयसहनविरोधाद्वक्षएवेत्यन्वयस्याव्यवधानाच्च पूर्वैरेव दूषितत्वात्, अतो व्याकरणान्तराद् द्रष्टव्यम् । केचित्तु त्र्यम्बकस्य वक्षः 'प्राप्ये'त्यध्याहारं स्वीकृत्याकर्मकत्वादात्मनेपदमाहुः ।' इति ।

स्थूणानिखननन्यायेनात्र पददोषत्वं प्रतिपादयति–नन्वित्यादिना ।

ननु अत्र । 'आजघ्ने इतिपदस्य । स्वतः पदान्तरानपेक्षया । दुष्टता दुष्टत्वम् । न 'सम्भवती'ति शेषः । अपि तु । पदान्तरापेक्षया । इति । अस्य निरुक्तोदाहरणस्य च्युतसंस्कारत्वस्य । वाक्यदोषता 'न तु पददोषता स्या'दिति शेषः । एवम् । उत्तरयति–एवम् । 'मा वादी'रिति शेषः । तथा हि । गुणदोषालङ्काराणाम् । शब्दार्थगतत्वेन । व्यवस्थिते व्यवस्थायाः । तदन्वयव्यतिरेकानुविधायित्वं तस्य शब्दार्थगतत्वस्यान्वयव्यतिरेकाविति, तौ अनुविधातुं शीलमस्यास्तीति तस्य भावस्तत्त्वम् । हेतुः । (यत्सत्त्वे यत्सत्त्वं, सोऽन्वयः, यदसत्त्वे यदसत्त्वं स व्यतिरेकः;) तथा च शब्दगतत्वे सति गुणादिसत्त्वं शब्दगतत्वाभावे गुणादिसत्त्वाभावश्च गुणादीनां शब्दगतत्वे हेतुः,) अर्थगतत्वे सति गुणादिसत्त्वमर्थगतत्वाभावे गुणादिसत्त्वाभावो गुणादीनामर्थगतत्वे हेतुरिति नियमः इति निष्कृष्टम् । इहास्मिन् 'उन्मज्जन्' इति पद्ये । च । दोषस्य च्युतसंस्कारत्वस्य । 'आजघ्ने' इति पदमात्रस्य । अन्वयव्यतिरेकानुविधायित्वम् । 'आजघ्ने' इति पदस्य सत्त्वासत्त्वाभ्यां तस्य दोषस्य सत्त्वासत्त्वे इति भावः । हि यतः । पदान्तराणां 'गाण्डीवी' त्यादीनाम् । परिवर्त्तने 'कृते' इति शेषः । अपि । तस्य च्युतसंस्कारत्वस्य । तादवस्थ्यम् एव । इतीत्यतः पददोषत्वम् । एव । 'गाण्डीवी' त्यादीनां पर्य्यायान्तरन्यासेऽपि यावदाजघ्ने इति पदस्य पर्य्यायान्तराभावस्तावन्निरुक्तदोषस्य निवृत्त्यभाव इति पददोषत्वमेवेति भावः । तथा । यथा । इह 'आजघ्ने' इत्यत्र । आत्मनेपदस्य । परिवृत्तौ 'कृताया'मिति शेषः । 'आजघ्ने' इत्यपठित्वाऽऽ'जघान' पठने इति भावः । दोषः । न 'भवती'ति शेषः । तथा । 'हन्' प्रकृते'र्हन्' इत्यस्याः प्रकृतेः प्रत्ययोत्पत्तिनिमित्तभूतस्य शब्दविशेषस्येति यावत् । अपि 'परिवृत्तौ न दोष' इति शेषः । इतीत्येवकृत्वा । पदांशदोषः पदांशस्य दोषः । न 'सम्भवती'तिशेषः । अत्रेदमभिहितम्–'आजघ्ने' इत्यत्र पदांशदोषो न भवितुमर्हति, अन्वयव्यतिरेकानुविधायित्वासम्भवात् । तथाहि–यत्र यत्रात्मनेपदं तत्र तत्र पदांशदोष इति न सम्भवति, अत्र हि पराङ्गकर्मकतामात्रनिवृत्तौ आत्मनेपदसत्त्वेऽपि दोषानवस्थानम् । ननु पराङ्गकर्मकसद्भाव एवेति चेत् ? 'हन्' इति प्रकृतेः परिवृत्तौ कथन्न ? अथ–यत्र पराङ्गकर्मकतासद्भावे हन् प्रकृतेरुत्तरमात्मनेपदं तत्र दोष इति वक्तुं शक्यते, तथा सति आयातं पददोषत्वम् ' ननु यद्येवं' तर्हि 'तद्गच्छ सिद्ध्यै' इत्यत्र कथं पदांशदोषः 'सिध्' प्रकृतेरुत्तरं 'क्ति' प्रत्ययसद्भाव एव दोषाव:

**एवं प्राकृतादिव्याकरणलक्षणहानावपि च्युतसंस्कारत्वमूह्यम् ।**

**तथा 'पद्म' इत्यत्राप्रयुक्तत्वस्य पदगतत्वं बोध्यम् । इह शब्दानां सर्वथा प्रयोगाभावेऽसमर्थत्वं, विरलप्रयोगे तु निहतार्थत्वम्; निहतार्थत्वमनेकार्थस्य शब्दस्याप्रसिद्धार्थविषयम्, अप्रतीतत्वं त्वेकार्थस्यापि शब्दस्य सार्वत्रिकप्रयोगविरहः, अप्रयुक्तत्वमप्रसिद्धलिङ्गादिविषयम्, असमर्थत्वमनेकार्थशब्दविषयम्, असमर्थत्वे हि हन्त्यादयो गमनार्थे पठिताः, अवाचकत्वे पुनर्दिनादयः प्रकाशमयाद्यर्थे न तथेति परस्परभेदः ।**

---

स्थानात् इति चेत् ? तथा सत्त्वेऽपि रूपान्तरे दोषावस्थानाभावात् । न हि 'सिद्धयै' इत्यस्य 'द्धयै' इत्यंशे यादृशं श्रुतिकटुत्वं तादृशं 'सिद्धये' इत्यस्य 'द्ध' इत्यंशे सम्भवति । तस्मात् तत्र पदांशदोषत्वमेव, अत्र पुनः पददोषत्वं न्याय्यम् । ननु 'आदावञ्जन...॥' ...अत्रैव 'कुरुते' इत्यात्मनेपदमप्यनर्थकम्... इत्येवं प्रकाशकारोक्त, तत्र कथं पदांशमात्रस्य दोषित्वं सङ्घटते इति चेत् ? तत्रात्मनेपदमात्रस्य दुष्टत्वात् । 'कृ'प्रकृतिं परिवर्त्य 'तना'द्यन्यतमप्रकृतेर्निवेशेऽपि यावदात्मनेपदं न हि तन्निवृत्तिः । इति यथोक्तं ज्यायः । इति ।

व्याकरणलक्षणविरुद्धत्वं च्युतसंस्कारत्वं, तत्र व्याकरणं च प्रतिभाषं भिन्नम्; अतः–संस्कृतभाषाव्याकरणविरुद्धत्वे सति यथा संस्कृतभाषायां च्युतसंस्कारत्वम्, तथाऽन्यत्रापीत्याह–एवमित्यादि ।

**एवं** यथा संस्कृतभाषायां तद् व्याकरणलक्षणविरुद्धत्वे सति च्युतसंस्कारत्वं तथा । **प्राकृतादिव्याकरणलक्षणहानौ** प्राकृतादिभाषासंस्कारकव्याकरणानुशिष्टलक्षणपरित्यागे । **अपि । च्युतसंस्कारत्वं** 'दोष इति' इति शेषः । **ऊह्यं** बोध्यम् ।

उक्तं न्यायमन्यत्रातिदिशति–तथेत्यादिना ।

**तथा 'पद्म' इत्यत्र** 'भाति पद्मः सरोवरे ।' इति वाक्यगते 'पद्म' इत्यस्मिन् पदे । **अप्रयुक्तत्वस्य** 'दोषस्ये'ति शेषः । 'अप्रयुक्तस्ये'ति पाठे तु 'स्त्रियाम् ।' ४।१।३ इत्यत्र स्त्रीत्वे इत्यर्थे स्त्रियामितिवत् 'लघ्वादि धर्मैः साधर्म्यं, च वैधर्म्यं, गुणानाम् ।' १ । १ । २९ इत्यत्र लघुत्वादिधर्मैरित्यर्थे लघ्वादिधर्मैरितिवच्च भावप्रधानो निर्देशो बोध्यः । **पदगत्वम् । बोध्यम् ।**

एवं पदपदांशवाक्यदोषांल्लक्ष्यलक्षणाभ्यान्निरूप्य तत्र तेषां परस्परं भेदं दर्शयति–**इहे**त्यादिना ।

**इह** एतेषु दोषेषु मध्ये । **शब्दानां** प्रयुज्यमानानां हन्त्यादिशब्दानाम् । **सर्वथा । प्रयोगाभावे** । 'सती'ति शेषः । **असमर्थत्वम्** । यत्र यस्य यदर्थकतया प्रयोगस्तस्यान्यत्र तदर्थकतया सर्वथा प्रयोगाभावेऽसमर्थत्वं दोषः, यथा 'कुञ्जं हन्ति कृशोदरी ।' इत्यत्र 'हन्ती' त्यस्य 'गच्छती'त्यर्थे प्रयोगः, सचान्यत्र तस्मिन्नेवार्थे न दृश्यते इति तस्यासमर्थत्वमिति भावः । **विरलप्रयोगे** विरलः क्काचित्कः प्रयोग इति तत्र । **तु निहतार्थत्वम्** । प्रयुज्यमानस्य शब्दस्य क्काचित्के प्रयोगे निहतार्थत्वं दोषः । यथा–'यमुनाशम्बरमम्बरं व्यतानी'दित्यत्र 'शम्बर' शब्दस्य जलार्थे क्वचिदेव (श्लेषादौ) प्रयोगो दृश्यत इति तस्य निहतार्थत्वमिति भावः । **अनेकार्थस्य । शब्दस्य** 'शम्बरा'दिपदस्य । **अप्रसिद्धार्थविषयम**प्रसिद्धोजलादिरूपोऽर्थस्तद्विषयम् । **निहतार्थत्वम् । एकार्थस्य । अपि शब्दस्य सार्वत्रिकप्रयोगविरहः । तु अप्रतीतत्वं** 'दोष' इति शेषः । यथा 'योगेन दलिताशयः' इत्यत्राशयशब्दस्येति भावः । **अप्रसिद्धलिङ्गादिविषयम**प्रसिद्धमसार्वत्रिकप्रयोगं यल्लिङ्गादि लिंगप्रत्ययादि तद्विषयो यस्य तत् । 'एकार्कशब्दविषय' मिति पाठे तु एकः प्रसिद्धलिङ्गाद्यवस्थाक एवार्थो यस्य तादृशशब्दविषयमित्यर्थः । लिङ्गादिभिन्नत्वेऽपि अर्थपरिवृत्त्यभावेन प्रयोगक्काचित्कत्वमूलमितिभावश्चेति बोध्यम् । **अप्रयुक्तत्वम्** । यथा–"भाति पद्मः सरोवरे ॥" इत्यत्र 'पद्म' शब्दस्येति भावः । **अनेकार्थशब्दविषयम**नेके प्रकृताप्रकृताः प्रसिद्धाप्रसिद्धा वाऽर्था येषां ते चामी शब्दा इति ते विषया यस्य तत् तथोक्तम् । **असमर्थत्वम्** । यथा—'कुञ्जं हन्ति कृशोदरी ॥'इत्यत्र 'हन्ती'त्यस्यानेकार्थकस्यापि पदस्य न विवक्षितेऽर्थे शक्तिरित्यसमर्थत्वम् । **हि** यतः । **असमर्थत्वे** 'दोषे' इति शेषः । **हन्त्यादयः** 'शब्दा' इति शेषः । **गमनाद्यर्थे** गच्छतीत्याद्यर्थे । **पठिताः । अवाचकत्वे** 'दिनम्मे त्वयि सम्प्राप्ते' इत्यादौ **पुनः । दिनादयः** । 'शब्दा' इति शेषः । **प्रकाशमयाद्यर्थे** । 'पठिता' इति पूर्वेणान्वयः । **न । इति** । 'असमर्थत्वादीना'मिति शेषः । **परस्परभेदः** ।

**एवं पददोषसजातीया वाक्यदोषा उक्ताः सम्प्रति तद्विजातीया उच्यन्ते।**

**४ वर्णानां प्रतिकूलत्वं, लुप्ताहतविसर्गते।**
**अधिकन्यूनकथित-पदता, हतवृत्तता ॥ ५ ॥**
**पतत्प्रकर्षता सन्धौ विश्लेषाश्लीलकष्टताः।**
**अर्धान्तरैकपदता, समाप्तपुनरात्तता ॥ ६ ॥**

---

एवं पदवाक्यपदांशदोषान्निरूप्य वाक्यमात्रदोषान्निरूपयितुमुपक्रमते—एवमित्यादिना ।

**एवं** निरुक्तप्रकारेण । **पददोषसजातीयाः** पददोषाणां सजातीयाः । **वाक्यदोषाः । उक्ता** निरूपिताः । सम्प्रतीदानीम् । **तद्विजातीयाः उच्यन्ते**-४ **वर्णाना**मित्यादिना ।

४ **वर्णानाम् । प्रतिकूलत्वं** विरुद्धत्वं तिरोधायकत्वेनापकर्षकत्वेन वाऽननुकूलवृत्तित्वम् । 'दोषः' इति शेषः । अयं च दोषो यत्र शृङ्गाराद्यननुगुणा वर्णाः सम्भवंति तत्रैवेति प्रतिकूलवर्णत्वमित्यप्यभिधीयते । **तथाच**—शृङ्गारादिरसाद्यननुगुणत्वे सति यत् वर्णानां प्रतिकूलत्वं, तत् प्रतिकूलवर्णत्वापरपर्यायो वर्णप्रतिकूलत्वन्नाम दोष इति फलितम् । न चास्य दुःश्रवत्वेन सङ्करः, तत्र परुषवर्णानामेव दुष्टत्वम्, अत्र तु सुकुमाराणामपि रौद्रादाविति भेदात् । रसविरोधित्वमेवास्य वीजं च । अत एवायं नित्यो दोषः । **लुप्ताहतविसर्गते** लुप्तविसर्गताऽऽहतविसर्गता चेत्यर्थः । एतौ च दोषावनित्यौ यमकादौ तत्प्रतिप्रसवात् । अत एव—'विनीता विमला भव्याचरिता यस्य सत्कृते । दारा इव सदायत्ता जनता स कृती खलु ॥' 'पिकोऽपिकोऽपि कोपिको वियोगिनीरभर्त्सयत् । वचांसि भङ्गमालपन्निताानि तानि तानि ताः ॥' इत्यादौ विसर्गाणां लुप्ताहतत्वे अपि सङ्गच्छेते । यत्तूक्तं 'भूयो महीयोऽतियशोविभूषितः ।' इत्यादौ कथन्न पददोषत्वम् ।' इति, तच्चिन्त्यम्; विसर्गत्वस्य पदान्तरापेक्षितत्वेन वाक्यदोषत्वात् । अन्यथा 'न्यक्कारो-ह्ययमेव'—इत्यादावपि पददोषत्वमापद्येत । **अधिकन्यून**कथितपदताः । अधिकपदता न्यूनपदता कथितपदता चेत्यर्थः । तत्र—आद्यः—अविवक्षितार्थपदत्वम्, अनुपयुक्तार्थपदत्वं वा; अधिकं हि पदमविवक्षितार्थमनुपयुक्तार्थं वा भवति द्वितीयः पुनर्विवक्षितार्थपदविहीनत्वम् अनुपात्तविवक्षितार्थपदत्वम्, उपादेयार्थस्यापि पदस्यानुपात्ततविषयत्वं वा, न्यूनं हि पदं विवक्षितार्थकमपि उपादेयमपि वाऽवहेलितोपादानकम्भवति, तृतीयस्तु प्रयोजनशून्यत्वे सति उपात्तसमानार्थकसमाना-नुपूर्वीकपदवत्त्वम् । अधिकपदत्वे च अविवक्षितार्थकतया निष्प्रयोजनशब्दश्रवणेन श्रोतू रसोद्बोधवैगुण्याज्जायमानं वैमुख्यं दूषकतावीजम्, अत एव 'वद वद जितः सशत्रुर्न हतो जल्पंश्च तव तवास्मीति । चित्रं चित्रमरोदीद्धाहेति परम्मृते पुत्रे॥' इत्यादौ हर्षादावभिव्यज्यमाने दुष्टत्वाभावादेतस्यानित्यत्वम् । न्यूनपदत्वे च पदज्ञानविरहकृता विवक्षिताप्रतिपत्तिर्दूषकता-वीजम्, अत एव 'त्वं जीवितं त्वमसि मे हृदयं द्वितीयं, त्वं कौमुदी नयनयोरमृतं त्वमङ्गे । इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां तामेव शान्तमथवा किमतः परेण॥' इत्यादौ 'तामेवे'त्यतः परं 'कथं त्यक्तवानसी'ति 'नाशितवानसी'ति वा वाक्य-शेषस्य दुःखातिशयेन वक्तुमशक्यतया न्यूनत्वेऽपि दुःखातिशयव्यञ्जकत्वात् । कथितपदत्वे च कवेः शक्त्युन्नयनोपभुक्तभोग-वच्छ्रोतुर्वैमुख्यं दूषकतावीजम्, अत एव लाटानुप्रासादौ कवेर्नाशक्त्युन्नयनमित्यस्य प्रतिप्रसवः । न चैकस्यैव पदस्य द्वितीय-वारोपादाने पिष्टपेषणवदचमत्कारित्वं दूषकतावीजमिति वाच्यम्, अनवीकृतत्वेन साङ्कर्यापत्तेः । ननूदाहरिष्यमाणे 'पङ्कवाकृति रक्तोष्ठी ।' इत्यादौ 'रतिलीलाश्रमम्भिन्ते सलीलमनिलो वहन्' इत्यादौ चाधिकपदत्वकथितपदत्वयोः कथं वाक्यगतत्वं सङ्गच्छते । समासेनैकपद्येऽसमस्तदशायां नानापदत्वेनाप्यभिमतस्य पदांशत्वापत्तेः । **हतवृत्तता** हतं लक्षणाननुसारित्वेन नष्टं, लक्षणानुसारित्वेऽपि वाऽश्रव्यत्वादिना कुत्सितं वृत्तं छन्दो यस्य तस्य भावस्तत्ता । 'दोष' इति शेषः । तत्र दुःश्रव्यत्वादिना श्रोतुर्वैमुख्यं दूषकतावीजम् । दुःश्रव्यत्वं च लक्षणाऽननुसारित्वेन च्छन्दोभङ्गजन्यं, लक्षणाऽनुसारित्वेऽपि वर्णनिवेशविशेषजन्यं चेति द्विविधम् । आदिपदेन रसाननुगुणत्वमप्राप्तगुरुभावान्तलघुत्वं च । एवमेतच्चतुष्टयमूलतयाऽस्यापि दोषस्य चतुर्विधत्वमूह्यम् । अत्राप्याद्यतृतीयभेदस्य नित्यत्वं, नान्यस्यापि । **पतत्प्रकर्षता** पतन् उत्तरोत्तरं भ्रश्यमानः प्रकर्षोऽनुप्रासादिकृतबन्धदार्ढ्यौज्ज्वल्याद्यात्मा रचनाविशेषो यत्र तस्य भावस्तत्ता । अत्र पूर्वापेक्षयोत्तरत्र बन्धशैथिल्य-मिति कवेरशक्त्युन्नयनेन श्रोतुर्वैरस्यं दूषकतावीजम् । यत्र तु रसानुगुणतयोत्तरोत्तरं प्रकर्षपतनमपेक्षितमेव भवेत्, तत्र न दोष इत्ययमनित्यो दोषः । **सन्धौ** संहितायाम् । **विश्लेषाश्लीलकष्टता** विश्लेषश्चाश्लीलकष्टते चेति, तथोक्ताः ।

अभवन्मतसम्बन्धोऽक्रमोऽमतपरार्थता ।
वाच्यस्यानभिधानं च भग्नप्रक्रमता तथा ॥ ७ ॥

---

सन्धौ विश्लेषः, सन्धावश्लीलता, सन्धौ कष्टता चेति त्रयो दोषा इति भावः । अयम्भावः सन्धेर्वैरूप्यं विश्लेपादिना सम्भवतीति तदेवात्र दूषकताऽऽधायकम् । एवं च सन्धेर्वैरूप्यं त्रिधा, विश्लेषोऽश्लीलत्वं कष्टत्वं चेति भेदात् । विश्लेषश्च द्विविधः, 'संहितैकपदे नित्या, नित्या धातूपसर्गयोः । नित्या समासे, वाक्ये तु सा विवक्षामपेक्षते ॥' इति प्राचामभिधानादैच्छिक आनुशासनिकश्च; अत्राप्यानुशासनिको द्विविधः, प्रगृह्यहेतुकोऽसिद्धिहेतुकश्चेति भेदात् । तेष्वाद्यः, सकृदपि प्रयुक्तो दोषाय, इच्छानिबन्धनत्वेनाशक्तिमूलकतया प्रथमत एव सहृदयोद्वेजकत्वात्, अन्त्यौ त्वसकृद्वर्तमानावेव, आनुशासनिकत्वेनाशक्त्यनुन्नायकतया बन्धपारुष्येण बन्धशैथिल्येनैव वा सहृदयोद्वेजकत्वात् । इति केचित् । वस्तुतस्तु—यत्र सन्धेर्नित्यं प्राप्तावपि अविधानं तत्र तु वाक्यगतश्च्युतसंस्कारत्वं दोषः । यथा—'प्रवर्त्तयित्वा परितः स्वचक्रम् ।' इत्यत्र । यत्र च सन्धेः प्रगृह्यत्वेन विधानाभावस्तत्र कथं सन्धेर्वैरूप्यमिति न विद्मः; यत्र च सन्धावश्लीलत्वं कष्टत्वं वा समुत्पद्यते तत्र यद्यपि वैरूप्यमिति वक्तुं शक्यते, अथापि सन्धावश्लीलत्वं कष्टत्वं चेति बोध्यम् । अन्यथोपहतविसर्गत्वलुप्तविसर्गत्वयोरपि भवेदत्रैवान्तर्भावः । किं बहुना, 'जगदीश्वर,भवानीश्वरा'दिशब्दानामपि एतद्दोषाधिष्ठितत्वं युज्येत । अत्र च—बन्धशैथिल्यं, सहृदयोद्वेजकत्वं, मधुरिमोपघातेन श्रवणारञ्जकत्वं च क्रमाद्दूषकताबीजम्, अत एवाद्यो नित्यो नान्त्यौ,एतयोः शान्तवीरादिपूपादेयत्वात् । **अर्द्धान्तरैकपदता**ऽन्यद् द्वितीयं स्वानन्वयीभूतत्वेन भिन्नमिति यावत् यदर्द्धं, तदर्द्धान्तरं; तत्रैकमसहायमन्वयोपयोगिपदान्तरसाहाय्यशून्यं पदं विवक्षितं वाचकपदं द्योतकपदं वा यत्र ( वाक्ये ) तत्तेति तथोक्ता । 'दोष' इति शेषः । अर्द्धं च श्लोकस्य, स चाप्येकवाक्यात्मक एव ग्राह्यः, तथाच—अन्वयोपयोगिताशून्यैकवाक्यात्मकश्लोकार्द्धगतत्वेनासहायावश्योपादेयवाचकद्योतकान्यतरपदत्वमर्द्धान्तरैकपदत्वम् । वाक्यान्तरान्तःपातविरहान्न सङ्कीर्णत्वेन सङ्करः, सर्वेषामेव प्रायः पदानामेकैकपदान्तरान्तःप्रविष्टत्वे वाक्यार्द्धविभागस्यैव वक्तुमक्षमत्वात्, न च क्लिष्टत्वेनैतस्याभेदः, श्लोकार्द्धान्तरितत्वेनैवास्य सम्भवात्; नाप्यस्य अस्थानस्थपदत्वेन गतार्थत्वम्, अवश्यमुपादेयस्याप्यर्द्धान्तरितत्वेनैव निराकाङ्क्षत्वमूलकत्वात् । न वाऽपुष्टार्थत्वेनैतस्यैकात्मकत्वम्, अर्द्धान्तरपातित्वेऽपि अवश्योपादेयत्वानिवृत्तावपुष्टार्थत्वायोगात् । अर्द्धान्तरैकपदत्वे निराकाङ्क्षत्वं द्वितीयार्द्धपतितस्यैकस्य पदस्य विलम्बेनोपस्थित्याऽन्वयबोधविलम्बस्त्वाधिष्ठितश्लोकार्द्धान्वयभ्रमजनकत्वे सति अपरार्द्धान्वयाकाङ्क्षापूरकताशून्यत्वं वा दूषकताबीजम् । श्लेषादावुपादेयत्वान्नास्य नित्यत्वम् । यथाहि—"विनयं विमताधारपदद्वन्द्वे निवध्यते । वादीन्द्रदर्पदलनं शास्त्रतत्त्वोपपादनम् ॥" इत्यत्र 'ते पदद्वन्द्वे विनयं निवध्य विरच्य्य शास्त्रतत्त्वोपपादनं निवध्यते ॥' इत्येवं देहलीदीपकन्यायेन 'निवध्यते' इति चमत्कारकारि । वाचकस्यार्द्धान्तरितत्वमुदाहरिष्यते, द्योतकस्य पुनर्यथा; 'सन्तापशमनी सत्यव्रता शीतरुचे रुचिः । इवाभाति महाराज ! त्वदीययशसां ततिः ॥' इत्यत्र, 'इवे'त्यस्य पूर्वार्द्धपाठौचित्येऽपि परार्द्धे निवेशात् । **समाप्तपुनरात्तता** समाप्तं पुनरात्तं पश्चाद्गृहीतं पदं वाक्यं वा यत्र, तस्य भावस्तत्ता । समाप्तपुनरात्तत्वं च क्रियाकारकभावेनान्वयबोधकवाक्याभिधानानन्तरमभिहितस्यापि वाक्यस्य तदन्वयिपदवाक्यान्यतरोपादानेन पुनरुपादानं, क्रियाकारकान्वयेन समाप्तस्यापि वाक्यस्य विशेषाभिधित्सामन्तरेण पुनस्तदन्वयिपदवाक्यान्यतरोपादानेनाभिधानं वा । अत एव विशेषाभिधित्सायां नास्य दोषत्वमित्ययमनित्यो दोष इति स्थितम् । तत्र—समाप्तपुनरात्तपदत्वापरपर्यायोऽयमुदाहरिष्यते । अन्यो यथा—'अपारकरुणासिन्धुः शरणागतवत्सलः । कश्चिदेवेदृशो लोके न महात्मा जनोजनः ।' इत्यत्र चतुर्थपादात्मकस्य वाक्यस्य पुनरुपात्तत्वात् । **अभवन्मतसम्बन्धाक्रमामतपरार्थताः** । न भवति सम्भवतीति अभवन् मतोऽभिमतः सम्बन्धो यत्र तदभवन्मतसम्बन्धम् । न क्रम उपक्रमो यत्र तदक्रमम् । न मतोऽभिमतः परार्थो द्वितीयार्थो यत्र तदमतपरार्थम् । अभवन्मतसम्बन्धत्वमभिमतान्वयानुपपत्तिनिबन्धनम्, अत एवाविमृष्टविधेयांशत्वादेतस्य व्यवच्छेदः, अत्र हि पदार्थयोरन्वयस्यैवासम्भवः, तत्र पुनरन्वयसम्भवेऽपि उद्देश्यविधेयभावस्यैवावगमाभावः । उक्तं च—'नचाविमृष्टविधेयांशत्वस्यान्तर्भावः, उपजीव्यत्वेन भेदादिति केचित् । उपजीव्यत्वेनाविमृष्टविधेयांशत्वस्य मतसम्बन्धाभावप्रयोजकत्वेन । वस्तुतस्तु—तत्र परस्परान्वितत्वेन विवक्षितयोः पदार्थयोरन्वयो भवत्येव, परन्तु अनभिमतत्वेनाप्राधान्यादिना वा रूपेण,

**त्यागः[19] प्रसिद्धे,-रस्थाने[20] न्यासः[21], पदसमासयोः।**
**संकीर्णता[22], गर्भितता[23], दोषाः स्युर्वाक्यमात्रगाः ॥ ८ ॥**

---

अत्र तु सम्बन्ध एव तयोर्न प्रतीयते इति महान् भेदः । तथाच-तत्रान्वयविशेषाभावः, इह पुनरन्वयसामान्याभावः, इति भावः । एवं च-प्रकृते पदार्थयोर्वाक्यार्थविधया भासमानसंयोगस्यैव अभानम्, तत्र तूद्देश्यत्वादिशालिबोधस्यानुदय इति विशेष इति भावः । अत एवात्र सम्बन्धपदं चरितार्थम् । नन्वेवमन्वयसामान्याभावविवक्षाया 'मभवन्मतसम्बन्धत्व'-मित्यत्र विवक्षितार्थकमतत्वविशेषणमन्वये व्यर्थम्, प्रत्युताविमृष्टविधेयांशत्वेन सङ्कीर्णत्वापादकमेव स्यादिति चेत् ? नात्र विवक्षितार्थकतया मतशब्दप्रयोगः, किन्तु शाब्दबोधविषयत्वार्थकतया इति । अत्र चेष्टप्रतीतिविरहो दूषकता-बीजम्, तस्मादयं नित्यो दोषः । अक्रमत्वं पदसन्निवेशरूपरचनायाः प्रस्तुतार्थाप्रत्यायकत्वनिबन्धनम्, अत एवास्थानस्थ-पदत्वादस्य भेदः । न हि तत्र प्रस्तुतार्थाप्रत्यायकत्वं, किन्तु प्रस्तुतार्थप्रत्यायकत्वेऽप्यनौचित्यम् । अथ दुष्क्रमत्वमर्थ-क्रमस्यानौचित्ये, भग्नप्रक्रमत्वं पुनरुपक्रमोक्तक्रमस्योपसंहारे भङ्गे इत्यूह्यम् । अमतपदार्थत्वं 'ज्ञेयौ शृङ्गारबीभत्सौ तथा वीरभयानकौ । रौद्राद्भुतौ तथा हास्यकरुणौ वैरिणौ मिथः ॥' इत्युक्तदिशा प्राकरणिकव्यङ्ग्यशृङ्गाराद्यन्यतमरसप्रतिकूल-बीभत्साद्यन्यतमरसव्यञ्जकश्लेषादिमूलकव्यङ्ग्यद्वितीयार्थोपस्थितिनिबन्धनम् । अत एवास्य प्रकृतरसापकर्षकत्वं दूषक-ताबीजम्, विरुद्धमतिकारित्वादिभ्यश्च भेदः । विरुद्धमतिकारित्वं हि प्रकृतवाच्यार्थोपस्थितिनिबन्धनमूलम् । अयं च दोषो नित्यः, प्रकृतस्य व्यज्यमानस्य रसस्य रसान्तराभिव्यक्त्या तिरस्कारकत्वात् । च पुनः । **वाच्यस्यावश्यं** वक्तव्यस्य-पदस्येति शेषः नत्वर्थस्येति । अन्यथा शब्ददोषत्वानुपपत्तेः । वाच्योऽपि शब्दो वाचकातिरिक्त एव ग्राह्यः, तेन वाच्यस्यावश्यं वक्तव्यस्य वाचकातिरिक्तस्य शब्दविशेषस्य द्योतकरूपस्येति यावत् इत्यर्थः । 'कृत्याश्च ।' ३ । ३ । १७१ इत्यनेनावश्यकार्थे ण्यत् । **अनभिधानं** नाभिधानं कथनमभिहितार्थत्वमिति यावदिति तथोक्तम् । तथाच-अनभिहितावश्यवक्तव्यद्योतकपदत्वं वाच्यस्यानभिधानं दोषः । यत्र हि अवश्यं वक्तव्योऽपि द्योतकः शब्दो नाभिहितः, तत्त्वस्य वाच्यानभिधानपदार्थत्वात् । अत एव-न्यूनपदत्वादस्य भेदः । तत्र वाचकपदस्यैव न्यूनतायास्तादवस्थ्यात् । इति फलितम् । तस्मादुद्देश्यविधेयभावादिद्योतकवि-भक्तीनां निपातानां च न्यूनतायामप्येतस्यैव सम्भव इति बोध्यम् । अप्यादीनामपि वाचकत्वाङ्गीकारपक्षे तु 'वाचकातिरिक्तस्ये'त्यतन्त्रम् ।' अत एव 'वाच्यस्ये'त्येतावन्मात्रमभिहितं सङ्गच्छते कविराजानाम् । एवं सति-न्यूनपदत्वं विवक्षितार्थपदन्यूनत्वनिबन्धनम्, तस्य च क्वचिद्गुणत्वमपि, अनभिहितवाच्यत्वापरपर्य्यायं वाच्यस्यान-भिधानं पुनरवश्यं वक्तव्यन्यूनत्वनिबन्धनम्, तस्य च विवक्षितार्थसजातीयपदान्तरसन्निवेशेनाप्युत्थानाभावः, अस्य तु न; किन्तु-तत्सन्निवेशेनैवेत्यनयोर्भेद इति स्थितम् । तस्मात्-विवक्षितार्थनिपातेतरपदन्यूनत्वे न्यूनपदत्वं, विवक्षितार्थाप्या-दिनिपातसञ्ज्ञकपदन्यूनत्वे पुनर्वाच्यस्यानभिधानम् । न हि 'अपी'त्यस्य तत्समानार्थेन पदान्तरेणाकाङ्क्षा पूर्यते, पूर्य्यते पुनः 'कान्ताया' इत्यादेः 'प्रियाया' इत्यादिना । अत एवायं नित्यो दोष इति। **तथा। भग्नप्रक्रमता** भग्नो विच्छिन्नः प्रक्रमः प्रस्तावो यत्र यस्य वा, इति तत्त्वम् । प्रस्तावश्चात्राकाङ्क्षितप्रकारकोऽर्थः । यद् येन प्रकारेण प्राङ्निर्दिष्टं तस्य तत्प्र-कारेणानुक्तिरेव भङ्गः । तथाच-प्रत्युत्थिताकाङ्क्षाविषयीकृतेन प्रकारेण पश्चादनभिहितत्वं भग्नप्रक्रमता दोष इति फलितम्। **प्रसिद्धे** प्रयोगप्रवाहोत्थापि( तम्भि ) ताया अभिन्नार्थानामपि शब्दानां तत्तद्विशेषेणैव सन्निवेशौचित्यविषयिण्याः प्रख्यातेः । **त्याग** उल्लङ्घनम् । 'दोष' इति शेषः । यत्र प्रयोगप्रसिद्धेस्तिरस्कारः, स त्यक्तप्रसिद्धित्वापरपर्यायः प्रसि-द्धित्यागो नाम दोषः । अत्र च कवेः प्रसिद्धिपरित्यागेन तादृशाभिज्ञानशून्यत्वनिदर्शनं दूषकताबीजम् । 'प्रसिद्धित्याग-कृतसहृदयोद्वेगो दूषकताबीजम् ।' इति तृद्योतकाराः । अत एव श्लेषादौ तदभावान्नायं नित्यो दोषः । यथा-'प्रतिद्वन्द्वि तयाऽन्योऽन्यं जिगीषूणां सुरोषिणाम् । वीराणां रणितं कस्य चित्ते त्रासं न चादधौ ॥' इत्यत्र 'रणितं गर्जितं क्रीडितं चे'ति रणितशब्दस्य नानाऽर्थकतया प्रसिद्धस्य प्रयोगो न दोषाय । ननु रणितादिशब्दानां वीरगर्जनादिवाचकताप्रसिद्ध्य-भावेनैतस्यावाचकत्वेनाप्रयुक्तत्वेन वा गतार्थत्वं स्यादिति चेत्? न, सर्वथा विवक्षितार्थावाचकताविरहात् प्रयोगानिषेधाच्च । उभयत्र हि समानेनैव रूपेण. शक्तिसत्त्वेऽप्येकत्रैव प्रसिद्ध्या शक्तिस्वीकारेऽपि तद्भङ्गे एतस्योत्थानम्, न तु तयोः ।

**अस्थाने** न यथाश्रुतानुपूर्व्यां विवक्षितस्वार्थानुभावकत्वे सति स्वसाकाङ्क्षस्थानादव्यवहितत्वेनाप्रशस्तं स्थानमिति, तत्र । 'तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता । अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिताः ॥' इति वृद्धाः। **पदसमासयोः** पदं च समासश्चेति, तयोः । **न्यासः**। 'दोषौ' इति शेषः । 'भवान् पितरा'वित्यादिवदुद्देश्यविधेयभावविवक्षया सम्बन्धः । तथा च–अस्थानस्थपदत्वापरपर्यायोऽस्थानपदन्यासः, अस्थानस्थसमासत्वापरपर्यायोऽस्थानसमासन्यासश्चेति दोषद्वयम् । स च यथाश्रुतानुपूर्व्यां विवक्षितस्वार्थानुभावकत्वे सति स्वसाकाङ्क्षस्थानाद्व्यवहितस्थानप्रयुक्तत्वम् । सत्यन्तेनाक्रमसङ्कीर्णगर्भितत्वानां व्युदासः, तेषु तदाऽऽनुपूर्व्यां विवक्षितार्थबोधविरहात् । अनयोश्चास्थाने पदन्यासो विवक्षितार्थप्रतीतिं स्थगयतीति तन्मूलत्वादयं नित्यो दोषः । अथास्थाने समासन्यासो विवक्षितस्थले समासानौचित्येन सहृदयवैमुख्यमापादयतीत्ययमपि नित्यो दोषः । अत्राहुः केचित्–'प्रमत्तोन्मत्ताद्युक्तौ समासानौचित्यस्यापि सहृदयवैमुख्यापादकत्वाभावादयं दोषो न नित्यः । अत एव–'रक्ताशोक ! कृशोदरी क नु गता त्यक्त्वाऽनुरक्तं जनं ? नो दृष्टेति मुधैव चालयसि किं वातावधूतं शिरः । उत्कण्ठाघटमानषट्पदघटासङ्घट्टदष्टच्छदस्तत्पादाहतिमन्तरेण भवतः पुष्पोद्गमोऽयं कुतः ? ॥' इत्यत्र 'नो दृष्टा–' इति क्रोधोत्पत्त्यव्यवहितोच्चारितपदेष्वेव समासौचित्येऽपि तत्राकृत्वाऽन्यत्र ( कतिचित्पदानि परित्यज्य ) समासकरणादस्थानस्थसमासस्यापि उन्मत्तपुरूरवस उक्तिवशाद्गुणत्वम् ।' इति । अन्ये पुनः प्राहुः–'रक्ताशोक !– इत्यत्र शृङ्गारेऽनुचितस्यापि दीर्घसमासस्य सद्भावेनास्थानस्थत्वं रक्ताशोकं प्रति क्रोधमुत्कर्षयतीति तस्य गुणत्वम् ।' इति । वृद्धास्त्वेवं प्राहुः–'नात्रोन्मत्तस्योक्तिः, किन्तु रक्ताशोकं प्रति क्रुद्धस्य तस्मात्तत्रापि ( द्वितीयार्द्धेऽपि ) समासन्यासस्यौचित्यमेवेति समासस्यास्थाने न्यास एव न सम्भवति, तस्मादयं नित्य एव दोषः ।' इति । अथ नव्याः प्राहुः–'अस्थाने समासस्य न्यासः संन्यासस्त्याग इति यावत्, न्यासो विन्यासो विधानमिति यावत्, इति वा । तथाच–अस्थाने समासस्य त्यागो विधानं चेति 'अस्थानसमासत्यागास्थानसमासविधानापरपर्यायोऽस्थानसमासन्यासो नाम दोषो द्विविध इति स्थितम् । तत्राद्यो यथा–'उद्यद्दीपणवासनाभिरनिशं दुश्चेतसां वः क्षणादद्याहं स्वयमन्तको रणगतो गर्जामि वीरव्रतः । ये येऽत्रोपगताः स्थ, यात न चिरात् स्वेषां पितॄणां पुरं, ते युष्मान् समुपाह्वयन्ति किमु तद्व्यर्थं पदं तिष्ठत॥' इत्यत्र समासमारभ्यापि तत्त्यागः कृतः । इति । न चास्य वर्णानां प्रतिकूलत्वेऽन्तर्भावो युज्यते, समासवर्णरूपत्वाभावात् । रसाननुगुणवर्णबहुलवाक्यं हि वर्णानां प्रतिकूलत्वम् । एवं च–माधुर्यवच्छृङ्गारादिरसप्रधानस्थलेऽपि दीर्घसमासविधाने ओजोवद्रौद्रादिरसप्रधानस्थलेऽपि वा दीर्घसमासत्यागेऽयमेव दोषः । नाप्यत्र पतत्प्रकर्षता, प्रथमं प्रवृत्तस्य प्रकर्षस्याग्रे परित्यागे तत्सम्भवात्, अस्य पुनस्तद्वैपरीत्येन सम्भवात् । अथच–उभयत्रोचितस्यैव प्रकर्षस्याभावे पतत्प्रकर्षतोत्पद्यते, एष तु एकतरत्रैवोचितस्य समासस्य त्यागे दोषः । **सङ्कीर्णता** सङ्कीर्णमनेकवाक्यघटकपदानां परस्परमन्तःप्रविष्टत्वेन सङ्करतां प्राप्तं तस्य भावस्तत्ता । तथाच–भिन्नभिन्नवाक्यार्थान्वितपदानां तत्तदर्थनिराकाङ्क्षवाक्यघटकत्वं नाम सङ्कीर्णता दोष इति फलितम्। अत एवास्य क्लिष्टत्वाद्भेदो,वाक्यमात्रगतत्वं च । वाक्यान्तरघटकपदानां वाक्यान्तरप्रविष्टत्वे एतत्सम्भवाद् यथाऽभिमतार्थवाक्यावस्थितिप्रतीतिविलम्बोऽत्र दूषकताबीजम्,इष्टबोधबाधाद्रसस्वारस्यभङ्गो दूषकताबीजमित्यपरे। अत एवायं नित्यः। **गर्भितता** जातवाक्यान्तराधानगर्भं वाक्यं गर्भितं, तत्त्वं पुनस्तदाख्यो दोषः । तथाच–अन्तःस्थितवाक्यान्तरवाक्यत्वं गर्भितत्वन्नाम दोषः । तादृशवाक्यं तु क्वचित् स्वभावत एवैकं, क्वचित् पुनर्हेतुहेतुमत्त्वेन वाक्यैकवाक्यतयैकीभूतम् । एवं च–द्विविधोऽयम् । अत्र मध्यस्थितस्य स्वार्थानुभावकत्वं, न पुनः सङ्कीर्णत्वमित्यनयोर्भेदः । अन्ये त्वाहुः–'वाक्यान्तरे वाक्यान्तरीयपदानां प्रवेशे सङ्कीर्णत्वं, वाक्यान्तरस्यैव पुनः प्रवेशे गर्भितत्वम्; इत्येतयोर्भेदः।' इति । अत्र झटिति प्रतीतिविरहोऽनासत्तिर्वा दूषकताबीजम् । यत्र तु प्रतीतिविशेषाधानाय वाक्यान्तरस्य क्रोडीकरणं, तत्रास्य गुणत्वमपीत्ययमनित्यो दोषः । **दोषाः** निरुक्तावर्णप्रतिकूलत्वादय इतिभावः । **वाक्यमात्रगाः । स्युः** । अत्रेदं बोद्धव्यम्–वर्णानां प्रतिकूलत्वमारभ्य गर्भितताऽन्तं त्रयोविंशतिसङ्ख्याका वाक्यमात्रगता दोषा निरुक्ताः,तत्र–वर्णानां प्रतिकूलत्वं, हतवृत्तत्वं, सन्धौ विश्लेषः, अभवन्मतसम्बन्धत्वम्; अमतपरार्थत्वं, वाच्यस्यानभिधानं, भग्नप्रक्रमता, अस्थाने पदन्यासः, सङ्कीर्णत्वं चेति दश दोषा नित्याः, लुप्तविसर्गत्वादयः पुनस्त्रयोदशदोषा अनित्याः । इति ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

वर्णानां रसानुगुण्यविपरीतत्वं प्रातिकूल्यम्। यथा मम—

'ओवट्टइ उल्लोट्टइ, सअणे हट्टइ कहं पि उत्थाइ। हिअए पुट्टइ फिट्टइ लज्जइ खट्टइ दिहीए सा' ॥५॥

अत्र टकाराः शृङ्गाररसपरिपन्थिनः केवलं शक्तिप्रदर्शनाय निबद्धाः। एषां चैकद्वित्रिचतुःप्रयोगे न तादृशरसभङ्ग इति न दोषः।

'गता निशा इमा बाले' इत्यत्र लुप्ता विसर्गाः।

आहता उत्वं प्राप्ता विसर्गा यत्र यथा-'धीरो वरो, नरो याति' इति।

---

अथैषां लक्ष्यलक्षणानि निर्देष्टुं प्रवृत्त आह-वर्णानामित्यादि।

**वर्णानाम्**। रसानुगुण्यविपरीतत्वम्। तच्च-'मूर्ध्निवर्गान्त्यवर्णेने'त्यादिना दर्शयिष्यते। **प्रातिकूल्यम्**। उदाहरति-**यथा**। **मम** 'विरहिणीवर्णने' इति शेषः। '**सा**। विरहिणी। **सअणे** शयने शय्यायामिति यावत्। **ओवट्टइ** उद्वर्तयति शरीरमुत्तानीकरोतीति यावत्। उत् वृतु वर्तने। **उल्लोट्टइ** उल्लोटयति पार्श्वे परिवर्त्तयतीति यावत्। 'उत् लुट' लोटने। **कहंपि** कदापि। **उत्थाइ** उत्थाय। **हट्टइ** घट्टयति चलतीति यावत्। घट्ट चलने। **हिअए** हृदये। **पुट्टइ** पुट्यति अल्पीभवतीति यावत्। पुट्ट अल्पीभावे। **लज्जइ** लज्जया। **फिट्टइ** स्फिट्टयति हिनस्तीति यावत्। 'शरीर'मिति शेषः। स्फिट्ट हिंसायाम्। **दिहीए** धृतेर्धैर्यादिति यावत्। **खट्टइ** खट्टयति कुंठिता भवतीति यावत्। खट्ट संवरणे। अत्र विप्रलम्भवर्णनम्। **आर्या**छन्दः,लक्षणं चोक्तं प्राक् ॥ ५ ॥

**अत्रो**दाहृतेऽस्मिन् पद्ये इत्यर्थः। **टकाराः**। **शृङ्गाररसपरिपंथिनः**। शृङ्गारो विप्रलम्भशृङ्गारस्तस्य परिपंथिनः प्रतिकूलाः। 'वर्णा'इति शेषः। ननु किमर्थमेते निरूपिता इत्याशङ्कयाह-**केवलम्**। **शक्तिप्रदर्शनाय**। 'अकुण्ठोत्कंठया पूर्णमाकंठं कलकंठि ! माम्। कम्बुकंठयाः क्षणं कण्ठे कुरु कंठार्त्तिमुद्धर ॥' अत्र सम्भोगशृङ्गारस्य प्रतिकूला वर्णाः। अत्राहुस्तर्कवागीशाः-'ननूक्तोदाहरणे दुःश्रवत्वमेव दोष इति चेत् ? उदाहरणानन्तरं बोध्यम्। यथा-'वृन्दारकप्रकरमद्य करोम्यशङ्कमानन्दयामि मुनिवृन्दममन्दमङ्ग। भङ्गं भुजङ्गमगणस्य भयं नयामि त्वामन्तकातिथिमसन्तमहं विधाय ॥' रावणं प्रति श्रीरामस्योक्तिरियम्। अत्र माधुर्यव्यंजकवर्णप्राचुर्यं वीररसस्य परिपंथि।' इति।

अत्र विशेषं निर्दिशति-**एषा**मित्यादिना।

**एषां** प्रकृतरसप्रतिकूलवर्णानाम्। **एकद्वित्रिचतुःप्रयोगे**। **तादृशरसभङ्ग**स्तादृशो यादृशः 'ओवट्टइ'इत्यादौ रसभङ्ग इति तथोक्तः। **न** 'सम्भवती'ति शेषः **दोषः**। **न** 'अस्ती'ति शेषः।

लुप्तविसर्गत्वमुदाहरति-'**गता**' इत्यादिना।

'हे **बाले** ! **इमाः निशा** रात्रयः। **गता** व्यतीताः।'शीतला विमला भव्या दधाना ऐन्दवी रुचीः। गता निशा इमा बाले ! आगमिष्यंति नो पुनः ॥' इति समस्तं पद्यम् ॥ **इत्यत्र**। **विसर्गाः**। **लुप्ताः**। 'तस्मात्-लुप्तविसर्गत्वं दोष' इति शेषः।

आहतविसर्गत्वमुदाहरति-**आहता** इत्यादिना।

**आहताः**। **उत्व**मुकारत्वम्। **प्राप्ताः**। **विसर्गाः**। **यत्र** तद्वत्तो 'दोष' इति शेषः। **यथा**-'**धीरः**। अत एव **वरः** श्रेष्ठः। **नरः**। **याति**। 'यशो ज्यायो विरोचयन्। यत्र याति महात्मानो रजोमुक्तास्तमोजितः ॥' इति शेषः। इति। 'अत्र विसर्गाणामुत्वप्राचुर्यमाहतविसर्गत्व'मिति शेषः। नन्वेवं विसर्गप्राचुर्य्यमप्यन्यो दोषः स्यात्। यथा-'सरः खरः, खलः कान्तः, कायः कृशतरः सखि। अयं च सुरभिः कालः कालः क्रूरः पुरःस्थितः ॥' इत्यत्रेति चेत् ? न, दुःश्रवत्वेनैवैतस्य गतार्थत्वात्। एतेन प्रदीपकारादीनां दोषान्तरस्वीकारः प्रत्युक्तः।

---

१ 'उद्वर्तयति उल्लोटयति शयने घट्टयति कदाऽपि उत्थाय। हृदये पुट्यति स्फिट्यति, लज्जया खट्टयति धृतेः सा ॥' इति संस्कृतम्। 'ओवट्टइ उल्लोटइ सअणे कहिंपि मोट्टाअइ णो परिहट्ठ। हिअएण फिट्टइ लज्जाइ खुट्टइ दिहिए सा ॥' इति पाठे तु 'उद्वर्तयति उल्लोटयति कस्मिंपि मोट्टयति णो परिघट्टयति। हृदयेन स्फिटयति लज्जया खुट्यति धृतेः सा।' इति संस्कृतम्। इति विवृतिकाराः। एवं सति पदानां व्युत्पत्तिः छन्दसश्च निष्पत्तिश्चिन्त्ये।

'पल्लवाकृतिरक्तोष्ठी ।' इत्यत्राकृतिपदमधिकम् ।

एवं 'सदाशिवं नौमि पिनाकपाणिम् ।' इत्यत्र विशेषणमधिकम् ।

'कुर्यां हरस्यापि पिनाकपाणेः ।' इत्यत्र तु 'पिनाकपाणे'रिति पदं विशेषप्रतिपत्त्यर्थमुपात्तमिति युक्तमेव ।

यथा वा–'वाचमुवाच कौत्सः ।' इत्यत्र 'वाच'मित्यधिकम् । 'उवाचे'त्यनेनैव गतार्थत्वात् ।

क्वचित्तु विशेषणदानार्थं तत्प्रयोगो युज्यते । यथा—'उवाच मधुरां वाचम्'–इत्यत्र ।

केचित्त्वाहुः–यत्र विशेषणस्यापि क्रियाविशेषणत्वं सम्भवति, तत्रापि तत्प्रयोगो न घटते । यथा–'उवाच मधुरं धीमान्' इति ।

---

अधिकपदत्वमुदाहरति–'पल्लवाकृतिरक्तोष्ठी' इत्यादिना ।

'पल्लवाकृतिरक्तोष्ठी' पल्लवो नवपत्रं तस्याकृतिराकारस्तद्वद्रक्तमोष्ठं यस्याः सा । 'ओत्वोष्ठयोः समासे वा * ।' इति पररूपादेशः । 'शरदिन्दुनिभानना । सुस्मिता चकिताक्षीयं न हरेत् कस्य मानसम् ॥' इति शेषः इत्यत्र । आकृतिपदम् । अधिकम् । 'अत एवात्राधिकपदत्वं दोषः ।' इति शेषः । इदम्बोध्यम्–यत्राविवक्षितोऽप्यर्थः कथमप्यन्विततयाऽभिधीयते, तत्राधिकपदत्वम्; यत्र पुनर्विवक्षित एवार्थः, किन्तु अप्रयोजकत्वान्यलभ्यत्वाभ्यां न शब्देनोपात्तुमर्हः, तत्रास्त्यपुष्टत्वम् इति । एवम्–'पिनाकपाणिं पिनाकस्तदाख्यं धनुः पाणौ यस्य तम् । 'पिनाकोऽजगवं धनुः ।' इत्यमरः । सदाशिवं सदाऽऽनन्दमूर्त्तिं भगवन्तम् । नौमि स्तौमि । णु स्तुतौ । 'नासाग्रमाधाय विलोचनानि स्वमेव नित्यं परिचिन्तयन्तम् । शान्तं महान्तं स्वसमाधिनिष्ठ'मिति पूर्वमिति शेषः ।' इत्यत्र । विशेषणं पिनाकपाणिमिति विशेषणपदम् । अधिकमविवक्षिततयानोपयुक्तम् । 'प्रत्युत समाप्तपुनरात्ततामावहती'ति शेषः । ननु तर्हि 'तव प्रसादात् कुसुमायुधोऽपि 'कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं...'इत्यादावप्ययमेव दोषः स्यात् इति चेत् नेत्याह–'पिनाकपाणेः । हरस्य । अपि । कुर्यां 'धैर्यच्युति'मित्यभिमेणान्वयः।'इत्यत्र । तु । 'पिनाकपाणे'रिति विशेषणम् । विशेषप्रतिपत्त्यर्थम् । उपात्तम् इति युक्तम् । एव 'नत्वधिकं यतस्यान्निरुक्तो दोषः। 'इति शेषः । यथा । वा ।'कौत्सस्तन्नामा वरतन्तुशिष्यः । वाचम् । उवाच । इत्यत्र 'अथोष्ट्रवामीशतवाहितार्थं प्रजेश्वरं प्रीतमना महर्षिः । स्पृशन् करेणानतपूर्वकायं सम्प्रस्थितो वाचमुवाच कौत्सः ॥' इत्यस्मिन् पद्ये । 'वाचम् ।' इति'पद'मिति शेषः । अधिकम् । 'उवाचे' त्यनेन 'पदेने'ति शेषः । एव । गतार्थत्वात् । अत्रायम्भावः–'वच् परिभाषणे इति वच् धातोः परिभाषणमर्थः, परिभाषणं च वाच एवेति पुनस्तदुपादानमविवक्षितत्वादधिकम् । इति । ननु 'वाचमुवाचे'त्यत्रानुप्रासविशेषसद्भाववशाददोषत्वं स्यादिति चेत् ? न, अधिकपदत्वस्य तात्पर्यविशेषप्रत्यायकत्वमन्तरेणादोषत्वस्यास्वीकारात् । न हि अविवक्षितानां पदानां निवेशेनानुप्रासादीनां सङ्घटनं युज्यतेऽपेक्ष्यते वा; किन्तु अविवक्षितैरपि पदैर्यदि स्यात्तात्पर्यविशेषप्रतिपत्तिस्तदा स्थाने । अतएवाह–क्वचित् । तु विशेषणदानार्थं विशेषणं प्रयोक्तुमिति भावः । तत्प्रयोगस्तस्याधिकपदत्वेनाभिमतस्य प्रयोगः । युज्यते । यथा 'मधुरागपरुषाम् । वाचम् । उवाच ।' इत्यत्र । 'वाचमित्यधिक'मिति शेषः । अत्र मतान्तरं निर्दिशति–केचित् तु । 'यत्र । विशेषणस्य 'मधुरा'मित्यादिरूपस्य विशेषणपदस्य । अपि । क्रियाविशेषणत्वम् । सम्भवति । तत्र । अपि । तत्प्रयोगस्तस्य 'वाच'मित्यादिरूपस्य विशेष्यपदस्य प्रयोगः । न । घटते युज्यते । यथा–'धीमान् । मधुरम् । उवाच ।' इति । आहुः । अयमभिप्रायः–क्रियाविशेषणत्वमुत्पाद्य विशेषणदानार्थमप्युपात्तमविवक्षितं विशेष्यपदमधिकमेव, न तु सार्थकं यतस्याद्दुष्टम् । तस्मात्––'वाचमुवाच' इत्यादौ 'मधुर' मित्यादिक्रियाविशेषणनिवेशेऽपि 'वाच'मित्यादीनामुपादानं दुष्टमेव । इति । तर्कवागीशास्त्वाहुः 'वाच'मिति । यथा–'देवं यजति' गन्धं जिघ्रति' इत्यादौ 'सम्भेदेनान्यतरवैयर्थ्य'मिति न्यायेन यजादेः पूजाग्रहणमात्रार्थता, तथाऽत्रापि वच्धातोरुच्चारणमात्रार्थत्वम्, नतु वचनोच्चारणार्थत्वम् । अन्यथा पौनरुक्त्यं स्यात् । एवं च–तादृशकल्पनाऽत्र शब्दबोधविलम्बनकृदिति दोषत्वमेतस्य' इति । न्यूनपदत्वमुदा-

अत्र: प्रथमाद्वितीयगणौ भकार सकारौ: अनयो: सान्निध्यमश्रव्यं न चसम्या



'यदि मय्यर्पिता दृष्टिः किम्ममेन्द्रतया तदा।' इत्यत्र प्रथमे 'त्वये'ति पदं न्यूनम्।

'रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन्॥' इत्यत्र 'लीला' शब्दः पुनरुक्तः। एवम्–

'जक्षुर्बिसं धृतविकासिविसप्रसूनाः।' इत्यत्र बिसशब्दस्य 'धृतपरिस्फुटतत्प्रसूना' इति सर्वनाम्नैव परामर्शो युक्तः।

**हतं वृत्तं लक्षणानुसरणेऽपि अश्रव्यं रसाननुगुणमप्राप्तगुरुभावान्तलघु च क्रमेण यथा–**

**'हन्त सततमेतस्या हृदयम्भिन्ते मनोभवः कुपितः।'**

**'अयि मयि मानिनि! मा कुरु मानम्।'**

---

हरति–'**यदि**। **मयि**। **दृष्टिः** कृपया पूर्णे'ति शेषः। **अर्पिता** समर्पिता 'त्वये'ति शेषः। **तदा**। **मम** त्वत्कृपा-दृष्टिविषयीभूतस्यास्येति भावः। **इन्द्रतये**न्द्रत्वेनेन्द्रोभूत्वाऽवस्थानेनेति यावत्। **किम्**। 'महतां हि कृपापात्रं सम्पदा कन्न लङ्घते।' इति। शेषः।' इत्यत्र। **प्रथमे** 'पादे' इति शेषः। '**त्वये' इति पदम्**। **न्यूनं** विवक्षितमप्यनुपात्तम्। अत्र च पदज्ञानविरहकृताविवक्षितार्थाप्रतिपत्तिर्दूषकतावीजम्,तस्मात् झटित्याक्षेपतस्तल्लाभे न दोषः।कथितपदत्वमुदाहरति–'**अनिलो** वायुः। 'अनिलो वसुवातयोः'। **सलीलम्**। **वहन्** 'सन्नि'ति शेषः। **रतिलीलाश्रमं** रतेः सुरतेर्लीला तस्याः श्रमस्तद्विधानजन्यः श्रमस्तम्। **भिन्ते** भिनत्ति दूरीकरोतीति यावत्। भिदिर् विदारणे। 'परिष्वक्तसमुद्रासि-पद्मगन्धाक्तशीकरः।' इति शेषः।' इत्यत्र। **लीलाशब्दः**। **पुनरुक्तः**। **एवम्–'धृतविकासिबिसप्रसूना** धृतानि उद्धृत्य गृहीतानि विकसितानि विकासवन्ति विसप्रसूनानि जलपुष्पाणि कमलानि वा यैस्ते तथोक्ता हंसा इत्यर्थः।' 'विसप्रसूनराजीवपुष्कराम्भोरुहाणि च।' इत्यमरः। **बिसं** मृणालम्। जक्षुर्भक्षन्ति स्म। 'सस्नुः पयः पपुरनेनिजुर-म्बराणि जक्षुर्बिसं धृतविकासिविसप्रसूनाः। सैन्याः श्रियामनुपभोगनिरर्थकत्वदोषप्रवादममृजन्नगनिम्नगानाम्॥' इति समस्तं पद्यम्।' इत्यत्र। **बिसशब्दस्य**। '**धृतपरिस्फुटतत्प्रसूना** धृतानि पारिस्फुटानि तत्प्रसूनानि तस्य बिसस्य प्रसूनानि यैस्ते।' इतीत्येवम्। **सर्वनाम्ना** सर्वनामसञ्ज्ञकेन तच्छब्देन। **एव** नतु साक्षात्स्वरूपेण। **परामर्शः**। **युक्तः** 'कथितपदत्वस्यापाततः सम्भवा'दिति शेषः। अत्रायम्भावः–'जक्षुर्बिस'मित्यत्र बिसशब्दस्य साक्षान्निर्देशोऽस्त्येव 'धृतबिसप्रसूना' अत्र पुनः 'विसप्रसूने'ति शब्दो न केवलं रूढः 'बिसस्य प्रसून'मिति योगशक्त्या निष्पन्नोऽपि, तस्मात् तत्र'बिस'शब्दमप्रयुज्य सर्वनाम्नैव तस्य निर्देशोयुज्यते। यथा वा 'त्वचं समेध्यां परिधाय रौरवीमशिक्षतास्त्रं पितुरेव मन्त्रवत्। न केवलं तद्गुरुरेकपार्थिवः क्षितावभूदेकधनुर्धरोऽपि सः॥' .इत्यत्रै'क' शब्दोद्विवारं कथितः। तस्मात् 'न केवलं तद्गुरुरत्र पार्थिवः स्वसम्मितः किन्तु धनुर्धरोप्यभूत्॥' इति वाच्यम्।

हतवृत्तत्वमवगमयति––**हतमित्यादिना**।

**हतम्**। **वृत्तम् लक्षणानुसरणे** पिङ्गलाद्युक्तलक्षणानुगतत्वे। **अपि अश्रव्यं** न ईषत् श्रव्यं श्रोतुं योग्यमिति तथोक्तम्। तथा––**रसाननुगुणं** रसस्य प्रकृतस्य शृङ्गाराद्यन्यतमस्याननुगुणं नानुगुणमिति तथोक्तम्। **अप्राप्तगुरु-भावान्तलघु** अप्राप्तगुरुभावमन्तलघु (पदं) यत्र (वाक्ये) तत्। न प्राप्तो गुरुभावो यत्र येन वेत्यप्राप्तगुरुभावम्। अन्ते लघु इत्यन्तलघु। इति। **च**। अत्र––नष्टतास्वरूपभूताऽश्रव्यता यथा––'तं प्रीतिविशदैर्नेत्रैरन्वयुः पौरयोषितः। शरत्प्रसन्नैर्ज्योतिर्भिर्विभावर्य इव ध्रुवम्॥' इत्यस्य तृतीयेपादे 'सर्वत्र लघु पञ्चमम्।' इति नियमभङ्गात्। यतिभङ्गादश्र-व्यत्वं यथा। 'अभ्युद्यज्जलदरुचिः शुचिः सदाऽन्तः पार्मौघान्तक उदितास्त्रशस्त्रजालः। कस्तूरीचय इव सौरभं दधानः, श्रीशोराजति भगवानुदारकेलिः॥' इत्यत्र 'राजती'ति।

निरुक्तप्रभेदं हतवृत्तत्वमुदाहर्तुमुपक्रमते-क्रमेणेत्यादिना।

**क्रमेण**। **यथा**––'**हन्त** कष्टम्। **मनोभवो** मदनः। **एतस्या** नायिकायाः। **हृदयम्**। **सततं** निरन्तर-मनारततयेति यावत्। **भिन्ते** भिनत्ति। 'तस्य ज्यायान् सहजस्तत्र नियुङ्क्ते समुद्यन् यत्॥' इति शेषः 'इदमश्रव्य'-मितिशेषः। '**अयि मानिनि! मयि** 'तव प्रिये इति शेषः **मानमक्षुद्रताम्**। **मा**। **कुरु**। अहं तव दयित इति त्वया

(अत्र आदि पदेन इन्द्रवज्रोपेन्द्रवज्रयोः संग्रहः)



इदं वृत्तं हास्यरसस्यैवानुकूलम् । 'विकसितसहकारभारहारिपरिमल एष समागतो वसन्तः।' यत्पादान्ते लघोरपि गुरुभाव उक्तस्तत्सर्वत्र द्वितीयचतुर्थपादविषयम् । तृतीयपादविषयं तु वसन्ततिलकादेरेव । तस्मात्--अत्र 'प्रमुदितसौरभ आगतो वसन्त' इति पाठो युक्तः । यथा वा--

'अन्यास्ता गुणरत्नरोहणभुवो, धन्या मृदन्यैव सा,
सम्भाराः खलु तेऽन्यएव, विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणान्नितम्बस्थलाद्
दृष्टे यत्र पतन्ति गूढमनसामस्त्राणि वस्त्राणि च ॥ ६ ॥'

अत्र 'वस्त्राणि चे'ति बन्धस्य श्लथत्वश्रुतिः, 'वस्त्राण्यपी'ति पाठे तु दाढर्यमिति न दोषः । 'इदमप्राप्तगुरुभावान्तलघु' इति काव्यप्रकाशकारः । 'वस्तुतस्तु लक्षणानुसरणेऽप्यश्रव्यम्'इत्यन्ये।

---

प्रसादो विधेय इति भावः । 'वितर मृगाक्षि ! निजाधरपानम् । जीवतु दयितजनो हरिरेष प्रतिगतविरहजदुःखविशेषः॥' इति शेषः ।' इदं'प्रतिपदयमकितषोडशमात्रा नवमगुरुत्वविभूषितगात्राः । पज्झटिकाया एष विवेकः क्वापि न मध्यगुरुर्गण एकः ॥' इत्युक्तलक्षणमिति शेषः । वृत्तम् । हास्यरसस्य । एव न तु प्रकृतस्य रसस्य । अनुकूलम् । 'विकसितसहकारभारहारिपरिमलो विकसिताः कुसुमिता ये सहकारा अतिसौरभा आम्रविशेषास्तेषां भारोऽत्युत्कटस्तस्य हारि परिमलो मनोहारी गन्धविशेषो यत्र सः । 'सहकारोऽतिसौरभः ।' 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे ।' इति च अमरः । एष वसन्तः । समागतः । 'उपगतवति यत्र नीरसानामपि सरसत्वमुदेत्यचिराच्चिराय ॥' इति शेषः । अत्र च-यत्पादान्ते यस्य पद्यस्य पादस्तस्यान्ते । लघोः । अपि 'वर्णस्ये'ति शेषः । गुरुभावो गुरुत्वम् । उक्तः 'वा पादान्ते' इत्यादिनेति शेषः ।सः । सर्वत्र द्वितीयचतुर्थपादविषयः । प्रथमतृतीयपादविषयः । तु 'गुरुभाव' इति शेषः । वसन्ततिलकादेर्वसन्ततिलकादिच्छन्दोलक्षणघटितपद्यादेः । एव 'न तु पुष्पिताऽग्रादेः । इति शेषः । तस्मात् । 'प्रमुदितसौरभः प्रमुदितः प्रस्फुटः सौरभो यत्र येन वा सः । वसन्तः । आगतः ।' इतिपाठः । युक्तः 'प्रतिभासते' इति शेषः । यथावा-'शारदपार्वणचन्द्रवदतिशयशोभाशालि । सुस्मितनिर्जितचन्द्रिकं जयति तवाननमालि !' इत्यत्र प्रथमपादान्तस्थस्य लघोर्गुरुत्वमपेक्षितमपि न समुत्पद्यते इति'चन्द्रवन्निर्भरे'ति पाठो युक्तः । यथा वा-'श्रीमत्कान्तिजुषां श्रीमन्तश्च ते कान्तिजुष इति तेषां, श्रीमत्यश्च ताः कान्तिजुष इति तासाम्, इति वा । मूढमनसां मूढं भयात् कामाद्वा लुप्तप्रतिपत्तिकं मनो येषां यासां चेति तेषां तासामिति वा । द्विषाम् । करतलात् । अस्त्राणि मन्त्रप्रयोज्यानि शस्त्राणि । च पुनः । स्त्रीणाम् । नितम्बस्थलात् । वस्त्राणि यत्र यस्मिन् । दृष्टे 'सती'ति शेषः । पतन्ति । एषः । 'स' इति शेषः । युवा । यैः याश्च या च ये चेति तैस्तथोक्तैः । 'पदार्थै'रिति शेषः । 'पुमान् स्त्रिया' १।२।६७ इत्येकशेषः । विधिना विधात्रा । समुत्पादितः । तास्तदन्तर्गताः । धन्याः । गुणरत्नरोहणभुवो गुणा एव रत्नानि तेषां रोहणं तत्सम्बन्धिन्योभुव इति । अन्याः । सा । धन्या । मृत् मृत्स्ना । अन्या । एव काकाक्षीगोलकन्यायेन 'धन्या' इति उभयत्रान्वेति । ते । खलु । सम्भारा उपकरणानि । अन्ये । एव । सन्तीति शेषः । अत्र कस्यापि युववरस्य वर्णनं, शार्दूलविक्रीडितं च वृत्तम् । तल्लक्षणं चोक्तं प्राक् ॥ ६ ॥' अत्र । 'वस्त्राणि च' इति बन्धस्य । श्लथत्वश्रुतिः श्लथत्वं शैथिल्यं तस्य श्रुतिः श्रवणमिति । 'वस्त्राण्यपि' इति पाठे । तु । दाढर्यं दृढत्वम् । इति न । दोषः । 'इदम् । 'वृत्त' मिति शेषः । अप्राप्तगुरुभावान्तलघु' इति काव्यप्रकाशकारः । 'आहे'ति शेषः । 'वस्तुतः परमार्थतः । तु । लक्षणानुसरणे । अपि । अश्रव्यम् '। इतीत्येवम् । अन्ये 'प्राहु'रिति शेषः ।

'प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाच्छटः। श्वासक्षिप्तकुलक्ष्माभृत् पातु वो नरकेसरी॥७॥'
इत्यत्र क्रमेणानुप्रासप्रकर्षः पतितः।

'दलिते उत्पले एते अक्षिणी अमलाङ्गि! ते।' एवंविधसन्धिविश्लेषस्यासकृत् प्रयोगे एव दोषः। अनुशासनमुल्लंघ्य वृत्तभङ्गभयमात्रेण सन्धिविश्लेषस्य तु सकृदपि। यथा—
'वासवाशामुखे भाति इन्दुश्चन्दनबिन्दुवत्।' इति।
'चलण्डामरचेष्टितः।' इत्यत्र सन्धौ व्रीडाव्यञ्जकमश्लीलत्वम्।
'उर्व्यसावत्र तर्वाली मर्वन्ते चार्ववस्थितिः।' इत्यत्र सन्धौ कष्टत्वम्।

---

पतत्प्रकर्षत्वमुदाहरति—'प्रोज्ज्वल' इत्यादिना।

'प्रज्ज्वलज्ज्वलनज्वालाविकटोरुसटाच्छटः प्रोज्ज्वलन् यो ज्वलनोऽग्निस्तस्य ज्वाला तद्वद्विकटोरुसटाच्छटा यस्य सः। 'सटाजटाकेसरयोः।' इति मेदिनी। श्वासक्षिप्तकुलक्ष्माभृत् श्वासेन क्षिप्ता दूरमुद्धूय पातिताः कुलक्ष्माभृतो मर्यादागिरयो येन सः। नरकेसरी नृसिंहदेवः। वो युष्मान्। 'बहुवचनस्य वस्नसौ।८।१।१८ इति वः। पातु।' अत्रास्मिन्नुदाहृते पद्ये। क्रमेणोत्तरोत्तरमानुपूर्व्येणेति भावः। अनुप्रासप्रकर्षः। पतितः। 'तस्मात् स्फुटमिह पतत्प्रकर्षत्वमिति भावः। अत्र नृसिंहक्रुद्धावस्थाया वर्णने क्रमशो विकटत्वप्रकर्षस्यौचित्यमपि पतितम्।' इति शेषः।

सन्धिगतं दोषत्रयमुदाहरति—'दलिते' इत्यादिना।

'हे अमलाङ्गि! अमलान्यनवद्यानि विकलत्वादिदोषरहितानीति यावदङ्गानि यस्याः, तत्सम्बुधौ तथोक्ते। ते तव। एते दृश्यमाने 'मनोहारिणी' इति शेषः। अक्षिणी नेत्रे। दलिते विकासं प्राप्ते। उत्पले कमले। 'आननाख्ये सुधासिन्धौ उदिते उदिते रुचा।' इति शेषः।' इति—एवंविधसन्धिविश्लेषस्यैवंविधः प्रगृह्यादिहेतुको यः संधिविश्लेषस्तस्य। असकृत् पुनः पुनः। प्रयोगे। एव। दोषो विश्लेषितसन्धित्वापरपर्यायः संधिविश्लेषो नाम दोष इत्यर्थः। वृत्तभङ्गभयमात्रेण वृत्तस्य भङ्गस्तस्य भयं तदेवेति तेन। अनुशासनं नियमम्। उल्लङ्घ्य। सन्धिविश्लेषस्य। तु। सकृत्। अपि किं पुनरसकृत्। 'प्रयोगे दोषः' इति शेषः। यथा—'चन्दनबिंदुव चन्दनस्य बिन्दुस्तेन तुल्यमिति तथोक्तम्। इंदुश्चन्द्रः। वासवाशामुखे पूर्वदिग्द्वार इत्यर्थः भाति। 'तारावलिचमत्काररुचिरोऽयं समुन्नतः॥' इति शेषः।' इति 'अत्र वृत्तभङ्गभयेनैवानुशासनमुल्लङ्घितमिति सन्धेः सकृदपि विश्लेषो दोषाये'ति शेषः। 'चलन्। डामरचेष्टितो डामरं डमरस्याशस्त्रकलहस्य धावकलुण्ठनस्य वेदं चेष्टितं यस्य सः। 'डिम्बे डमरविप्लवौ।' इत्यमरः। इत्यत्र 'वेगादुड्डीय गगने चलण्डामरचेष्टितः। स्यन्दनं राक्षसेशस्य गृध्रराजो व्यदारयत्॥' इत्यस्मिन् पद्ये इत्यर्थः। सन्धौ 'कृते सती'ति शेषः। व्रीडाव्यञ्जकम्। अश्लीलत्वम्। 'मर्वन्ते मरोर्निर्जलदेशस्यान्तः पर्य्यन्तभागः 'समानौ मरुधन्वानौ' इत्यमरः। 'अन्तःस्वरूपे निकटे प्रान्ते निश्चयनाशयोः।' इति हेमचन्द्रः। असौ। ऊर्वी महती। तर्वाली तरूणां वृक्षाणामाली पङ्क्तिरिति तथोक्ता। 'कृदिकारादक्तिनः।' इति ङीप्। चार्ववस्थितिश्चारुर्मनोरमाऽवस्थितिरवस्था यस्याः सेति तथोक्ता। 'नात्रर्जु युज्यते गन्तुं शिरो नमय तन्मनाक्॥' इति शेषः।' इत्यत्र। सन्धौ। 'कृते सती'ति शेषः। कष्टत्वम्।

अत्रायं पर्यालोकः—तत्र तावत् सन्धौ त्रयो दोषाः समुत्पद्यन्ते विश्लेषाश्लीलत्वकष्टत्वरूपाः। तेषु—सन्धौ विश्लेषः प्रगृह्यहेतुकोऽसिद्धिहेतुकश्चेति द्विविधोऽनुशिष्टोऽपि बन्धशैथिल्यापादकत्वेन दोषः। तत्राप्याद्यो 'दलिते उत्पले' इत्यत्र मूलकृतैव दर्शितः। अत्र हि 'ईदूदेद्द्विवचनं प्रगृह्यम्।' १।१।११ इति द्विवचनस्य प्रगृह्यसञ्ज्ञा, प्रगृह्यसञ्ज्ञकस्य च तस्य 'प्लुतप्रगृह्या अचि नित्यम्।'६।१।१२ इति प्रकृतिवद्भावविधानात् प्रगृह्यहेतुकानुशासनिको विश्लेषः। स चासकृत् प्रयुज्यमान एव दोषाय। अत एव—'देवदेव! त्वमेवासि विश्वेषां जगतां प्रभुः। कृपां तवकृते तस्मान्न कश्चित् किञ्चिदीश्वरः॥' इत्यत्र 'ऋत्यकः।' ६।१।१२८ इत्यकः प्रगृह्यसञ्ज्ञायां प्रकृतिवद्भावाद्विश्लेषः सकृदेवेति न तथा दोषाय। असिद्धिहेतुकः पुनर्यथा—'तत उदित उदारहारहारिद्युतिरुच्चैरुदयाचलादिवेन्दुः। निजवंश उदात्तकांतकांतिर्वत मुक्तामणिवन्धकास्त्यनर्घः॥' इत्यत्र 'लोपः शाकल्यस्य।' ८।३।१९ इति विहितस्यापि लोपस्य 'आद्गुणः।' ६।१।८७ इत्यनेन प्राप्त

'इन्दुर्विभाति कर्पूरगौरैर्धवलयन् करैः। जगन् मा कुरु तन्वङ्गि ! मानं पादानते प्रिये ॥८॥'
इत्यत्र 'जग'दिति प्रथमार्द्धे पठितुमुचितम्। अभवन्मतसम्बन्धो यथा—
'या जयश्रीर्मनोजस्य यया जगदलङ्कृतम्। यामेणाक्षीं विना प्राणा विफला मे कुतोऽद्य सा ॥ ९ ॥'
इत्यत्र यच्छब्दनिर्दिष्टानां वाक्यानां परस्परनिरपेक्षत्वात्तदेकान्तःपातिनैणाक्षीशब्देनान्येषां

---

गुणं प्रति 'पूर्वत्रासिद्धम्।' ८।२।१ इत्यनेनासिद्धिविधानात्। अयमपि सकृत् प्रयुक्तो न दोषाय। अत एव 'रजनिचर-चमूरसूरपास्यन्नयमहमागत एव रामचन्द्रः। कुशिकसुतकुशाग्रतोयबिन्दोरिदमनुकल्पमेवत कार्मुकम्मे॥' इत्यादौ। अथ वृत्तं भज्येतेति विहितो विश्लेषो नानुशासनमनुगतः।यथा—'वासवाशामुखे भाति इंदुः—'इत्यादौ।अत एवास्योल्लङ्घितानुशासन त्वात् सकृदपि प्रयोगो दोषायेति सङ्गच्छते मूलकृतोक्तं'सकृदपी'ति। यद्यपि'वाक्ये तु सा विवक्षामपेक्षते॥'इति प्राचामनु-शासनेनैव 'भाति इन्दुः' इत्यादौ विश्लेषः सिद्धः। तथाऽपि तस्य श्लोकादन्यत्र विषयः, इति सुष्ठूक्तं 'अनुशासनमुल्लङ्घ्य' इति। काव्यालङ्कारसूत्रकारा अप्याहुः—'नित्यं संहितैकपदवत् पादेष्वर्द्धान्तवर्जम्।' ५।१।२ इति। 'कः कः कुत्र—' इत्यादौ पुनः 'कस्कादिषु च।' इत्यानुशासनिकस्य विश्लेषाभावस्य सिद्धत्वेऽपि विश्लेषस्यैव विधानम्, न चात्र 'वाक्ये तु सा विवक्षामपेक्षते'इत्यानुशासनिको विश्लेषः, एतदपेक्षया तस्यैव नित्यसिद्धत्वात्। तस्मादेवंविधे स्थले वाक्यगतं च्युत-संस्कृतित्वम्। अत एव प्रगृह्यहेतुकोऽसिद्धिहेतुकश्च विश्लेषोऽसकृत् प्रयुक्तः सन्धौ विश्लेष इत्यभिख्यां प्राप्तोऽपि दोषोऽ-नित्यः, अनुशासनमुल्लङ्घ्य सकृदपि प्रयुक्तस्तु विश्लेषो न सन्धौ विश्लेष इत्यभिख्यायते, किन्तु च्युतसंस्कृतित्वक इति; तस्मादयं नित्यः। 'सन्धौ विश्लेषो ह्यसकृदेव प्रयुक्तो दुष्टः, च्युतसंस्कृतित्वं पुनः सकृदपी'त्येवानयोर्भेदः। 'ऐच्छिक-विश्लेषस्य खेदादिना विच्छिद्य पाठे न दुष्टत्वम्, यथा—'एका एका शिरोरुहा—' इति केचित्।'खेदादिना विच्छिद्य पठतां विवेकविरह इति शोभत एव तदानीं तस्योपादेयत्वं, तस्मान्न नित्यत्वहानिरिति सर्वं निरवद्यम्।' इत्यन्ये। सन्धावश्लीलत्वं नाम द्वितीयो दोषः, स पुनस्त्रिविधः, व्रीडाजुगुप्साऽमङ्गलव्यञ्जनभेदात्। तत्राद्यः—'चलण्डामरचेष्टितः।' इत्यत्र 'लण्डा'इति पुंचिह्नं व्यञ्जयतीति व्रीडाव्यञ्जकमिति दर्शितप्रायम्। तत्र पुनर्द्वितीयो यथा—'अशेषाणां पदार्थानां ब्रह्माण्डपरिचारिणाम्। विधाता वा कविर्वाऽन्तं नान्यः कश्चित् प्रपद्यते॥' इत्यत्र 'वाऽन्त'मिति जुगुप्सां व्यनक्तीत्यश्लीलत्वम्। अथ तत्र तृतीयो यथा—'अनादिमध्यान्तमृतं विशुद्धं परात्परं नित्यविकाशशीलम्। सदाशिवं ब्रह्म हृदा प्रपद्य न कः प्रपद्येत पुनः प्रसादम्॥'. इत्यत्र 'मृत'मित्यमङ्गलं व्यनक्तीत्यश्लीलत्वम्। 'तृतीयं पुनः 'उर्व्यसावत्र' इत्यादिना मूलकृतोदाहृतम्। अत्र च सन्धौ दुःश्रवत्वमेव कष्टत्वम्, तच्छ्रेण्याः पुनर्विशेषणविशेष्यभावेनान्वय इति तस्य वाक्यगतत्वम्। इति।

अर्द्धान्तरैकपदत्वमुदाहरति—'इन्दु....' इत्यादिना।

'हे **तन्वङ्गि ! इन्दुः। कर्पूरगौरैः। करैः** किरणैः। **जगत्। धवलयन्** शुभ्रं कुर्वन्। **विभाति** विकाशते। अतः—**पादानते** पादयोः प्रणते। **प्रिये** (विषये)। **मानम्। मा। कुरु** ॥८॥' इत्यत्र। 'जगत्' इति 'पदमि'ति शेषः। **प्रथमार्धे। पठितुम्। उचितम्** 'तस्य तत्रैवान्वयोपपत्ते'रिति शेषः। अत्रायम्भावः—अर्धान्तरैकपदत्वन्नाम दोषो द्विविधः, प्रथमार्द्धे पठितुमुचितस्य पदस्य परार्द्धे पाठात्, परार्द्धे पठितुमुचितस्य प्रथमार्द्धे पाठाच्च। तत्राद्य उदाहृतः। अन्त्यः पुनर्यथा—'जगत् प्रकाशयन्निन्दुः करैः शुभ्रैर्विभाति मा। मानमायतनेत्रान्ते कुरु पादानते प्रिये॥' इत्यत्र परार्धे पठितुमुचितस्य 'मे'ति पदस्य प्रथमार्धे पाठात्। निराकाङ्क्षत्वप्रतिसन्धानेन शाब्दबो-धविलम्बनमेव दूषकताबीजम्। इति।

अभवन्मतमुदाहरति—**अभवन्मतसम्बन्धः। यथा**—'या नायिकेति शेषः **मनोजस्य** कामदेवस्य। **जयश्रीः। यया। जगद्विश्वम्। अलङ्कृतम्। याम्। एणाक्षीं** मृगाक्षीम्। **मम** तदेकजीविताधारस्येति यावत्। **प्राणाः। विफला** निष्फलाः। **सा** तथाभूतैणाक्षीति भावः। **अद्य। कुतः** केत्यर्थः,निपातानामनेकार्थत्वात्। 'अस्ति' इति शेषः। 'कुद्दे'ति पाठस्तु युक्तः ॥९॥' इत्यत्र। **यच्छब्दनिर्दिष्टानां** यच्छब्देन निर्दिष्टानि तेषाम्। **वाक्यानां** 'या मनोजस्य जयश्री'रित्यादीनामिति भावः।**परस्परनिरपेक्षत्वात्**परस्परं निरपेक्षाणि निराकाङ्क्षाणि सम्ब-न्धापेक्षाशून्यानीति यावत्। तेषाम्भावस्तत्त्वं तस्माच्च। **तदेकान्तःपातिना। एणाक्षीशब्देन** 'एणाक्षी'मिति पदस्य

सम्बन्धः कवेरभिमतो नोपपद्यत एव । 'यां विनाऽमी वृथा प्राणा एणाक्षी सा कुतोऽद्य मे ॥' इति तच्छब्दनिर्दिष्टवाक्यान्तःपातित्वे तु सर्वैरपि यच्छब्दनिर्दिष्टवाक्यैः सम्बन्धो घटते ।

यथा वा–

'ईक्षसे यत् कटाक्षेण तदा धन्वी मनोभवः ।'

अत्र यदित्यस्य तदेत्यनेन सम्बन्धो न घटते । 'ईक्षसे चे'दिति तु युक्तः पाठः ।

यथा वा–

'ज्योत्स्नाचयः पयःपूरस्तारकाः कैरवाणि च । राजति व्योमकासारराजहंसः सुधाकरः ॥ १० ॥'

अत्र व्योमकासारशब्दस्य समासे गुणीभावात्तदर्थस्य न सर्वैः संयोगः । विधेयाविमर्शे यद्-विमृष्टं तदेव दुष्टम्, इह तु प्रधानस्य कासारपदार्थस्य प्राधान्येनाप्रतीतेः सर्वोऽपि पयःपूरादिप-दार्थस्तदङ्गतया न प्रतीयते इति सर्ववाक्यार्थविरोधावभासः इत्युभयोर्भेदश्च ।

'अनेन च्छिन्दता मातुः कण्ठं परशुना तव । बद्धस्पर्द्धः कृपाणोऽयं लज्जते मम भार्गव ॥ ११ ॥'

---

प्रकृतिभूतेन शब्देनेति भावः । 'सम'मिति शेषः । अन्येषां 'या' इत्यादीनां विभिन्नविभक्तिकानाम् । सम्बन्धोऽन्वयः । कवेः । अभिमतो वाञ्छितः । उपपद्यते सम्पद्यते । एव । न 'तस्मात् स्फुटं प्रकृतेऽभवन्मतसम्बन्धत्वम्' इति शेषः ।

यथा वा मम–'योविश्वं विदधाति, यं सुमनसोनिष्कामसमामन्वते,येन व्याप्तमिदं, विशुद्धयशसे यस्मै तपः कल्प्यते । यस्मान्नान्यदुदेति, यस्य नयनोन्मेषोऽनवद्यं सुखं, यस्मिन् कृत्स्नमिदं प्रतिष्ठितमिव श्रेयोविदध्यात्स नः ॥' इत्यत्र 'विशुद्धयशसे'इत्यनेनाभिमतस्यापि यत्पदार्थानां सम्बन्धस्यानुपपत्तेः । अथात्र युक्तं पठति–'याम् । विना । अमी मदीया इति शेषः।प्राणाः । वृथा 'सन्ती'ति शेषः । सा मे मम 'दयिते'ति शेषः। एणाक्षीमृगनयना । अद्य । कुतः कुत्र 'अस्ती' ति शेषः ॥' इति । तच्छब्दनिर्दिष्टवाक्यान्तःपातित्वे । तु । सर्वैं 'जयश्रीः'इत्यादिभिरित्यर्थः । अपि । यच्छब्दनिर्दिष्टवाक्यैः । 'सहे'ति शेषः । सम्बन्धः । घटते 'तस्मान्न निरुक्तो दोषः स्यादिति शेषः । इति । यथावा–'यत् यदा कटाक्षेणापाङ्गदर्शनेन ईक्षसे पश्यसि । तदा । मनोभवः कामदेवः । धन्वी धनुर्धरः । 'क्षमते भुवनं जेतुं नान्यदा वामनोचने ॥' इति शेषः।' अत्र । 'यदेत्यर्थकत्वाभावा' दिति शेषः । 'तदे'त्यनेन । सम्बन्धोऽन्वयः । न नैव । घटते । तस्मात्–'ईक्षसे । चेद् यदा ।' इति । पाठः । तु ! युक्तः । यथा वा–'ज्योत्स्नाचयो ज्योत्स्नायाश्चन्द्रशोभायाः 'चयः पुञ्ज इति तथोक्तः । पयःपूरः पयसो जलस्य क्षीरस्य वा पूरः प्रवाहः । 'पयः क्षीरे च नीरे चे' ति हैमः ।'पूरो जलप्रवाहे स्याद्व्रणसंशुद्धिखाद्ययोः' रिति मेदिनी । तारकास्ताराः।च। कैरवाणि कुमुदानि । व्योमकासारराजहंसो व्योमाकाशमेव कासारः :सरस्तत्र राजहंसो हंसविशेष इति तथोक्तः, सुधाकरश्चन्द्रस्तद्रूप इति यावत् । राजति विभाति॥ १० ॥'इत्यत्र । व्योमकासारशब्दस्य । समासे 'राजहंस' इत्यनेन समं समस्तत्वे । गुणीभावात् । तदर्थस्य 'व्योमकासारे' इति पदार्थस्य । सर्वैर्ज्योत्स्नाचयादिरूपपदान्तरार्थैः साकम् । संयोगोऽन्वय इति यावत् । न 'सङ्घटते'इति शेषः ।

ननु अविमृष्टविधेयांशत्वादस्य को भेद उभयत्र सम्बन्धवैकल्यादित्याह––विधेयाविमर्शे इत्यादि ।

विधेयाविमर्शे अविमृष्टविधेयांशे दोषे । यत्'विधेय'मिति शेषः। अविमृष्टं गुणीभूतम्। तत् । एव । दुष्टम् । इहास्मिन् अभवन्मतसम्बन्धत्वे दोषे इति यावत् । तु । प्रधानस्य । कासारपदार्थस्य । प्राधान्येन प्रधानतया । अप्रतीतेः । सर्वः । अपि । पयःपूरादिपदार्थः । तदङ्गतया स कासारपदार्थ एवाङ्गं यस्य तत्तया । न । प्रतीयते । इति । सर्ववाक्यार्थविरोधावभासः। इति उभयोरविमृष्टविधेयांशत्वस्याभवन्मतसम्बन्धत्वस्य चेत्यर्थः। भेदःयथा। वा। 'हे भार्गव राम!मातू रेणुकायाः । कण्ठम् । छिन्दता छिन्नं कुर्वता । तव । अनेन । परशुना । बद्धस्पर्द्धो बद्धा स्पर्द्धा येन सः । अयम् । मम रावणस्य।कृपाणः खड्गः। लज्जते॥ ११॥' अत्र 'भार्गवनिन्दायाम् ।

अत्र भार्गवनिन्दायां प्रयुक्तस्य मातृकण्ठच्छेदनस्य परशुना सह सम्बन्धो न घटते इति प्राच्याः, 'परशुनिन्दामुखेन भार्गवनिन्दाऽऽधिक्यमेव वैदग्ध्यं द्योतयती'ति त्वाधुनिकाः प्राहुः ।

अक्रमता यथा–'समय एव करोति बलाबलं प्रणिगदन्त इतीव शरीरिणाम् ।
शरदि हंसरवाः परुषीकृतस्वरमयूरमयूरमणीयताम् ॥ १२ ॥'

अत्र परामृश्यमानवाक्यानन्तरमेव 'इति'शब्दोपयोगो युज्यते, न तु 'प्रणिगदन्त' इत्यनन्तरम् ।

एवम् । 'द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥ १३ ॥'

अत्र 'त्व'मित्यनन्तरमेव चकारो युक्तः ।

---

'प्रतिपाद्याया'मिति शेषः । प्रयुक्तस्य । मातृकण्ठच्छेदनस्य मातृकण्ठच्छेदनकर्तृत्वस्य । परशुना । सह । सम्बन्धः । न । युक्तः ।' इत्येवम् । प्राच्याः प्राञ्चः 'प्राहुरित्यग्रिमेण अन्वयः । आधुनिकाः । तु 'परशुनिन्दामुखेन परशुनिन्दाद्वारा । भार्गवनिन्दाऽऽधिक्यम् । एव । वैदग्ध्यं चातुर्यम् । द्योतयति प्रकाशयति ।' इत्येवम् । प्राहुः । अत्रायम्भावः–तवेत्यनेनमातुःसम्बन्धः 'स्थाली पचती'तिवत् करणस्यापि कर्तृत्वं स्त्रीवधकर्तृत्वेनारोपितेनापि निन्दनीयत्वं च परशौ सम्भाव्येते तस्मात् निन्दनीयस्य परशोः स्पर्धित्वं कृपाणगतं न स्थाने इति परशोर्निन्दया रामस्य निन्दा प्रत्याय्यते इति नात्र निरुक्तदोषावकाशः । इति । वस्तुतस्तु प्राचाम्मतमेव न्याय्यं प्रतीयते, क्लिष्टकल्पनायास्तत्रासम्पर्कात् । इति ।

अक्रमत्वमुदाहरति–अक्रमतेत्यादिना ।

अक्रमता । यथा । 'समयः कालः । एव । शरीरिणां शरीरं भोज्यायतनत्वेनैषामस्तीति तेषां, जीवानामित्यर्थः । बलाबलम् । 'विप्रतिषिद्धं चानधिकरणवाचि ।' २।४।१३ इत्येकवद्भावः । करोति । इत्येवम् । प्रणिगदन्तः । 'उपसर्गादसमासेऽपि णोपदेशस्य ।' ८।४।१४ इति नस्य णः । इव । शरदि । हंसरवा हंसानां रवाः शब्दाः । परुषीकृतस्वरमयूरं परुषीकृताः स्वरा येषां तादृशा मयूरा यस्मिन् कर्मणि, तद् यथा स्यात्तथा । रमणीयतां मनोरमत्वम् । अयुःगतवन्तः प्रापुरिति यावत् । तथा च–प्रावृषि रमणीयस्वरा मयूराः शरदि परुषस्वरा जायन्ते तेषां तदा मदात्ययात्; तदानीमेव ये परुषस्वरास्ते राजहंसाः शरदि मधुरस्वराः सम्पद्यन्ते तेषां तदैवामोदोद्रेकात्; इति सर्वेषां जीवानां बलवृद्धिं बलह्रासं च समय एव करोति, नतु कारणान्तरं तत्रोपपद्यते इत्युपदिशन्तो हंसाः प्रावृषि मधुरस्वरतयाऽभिमतानपि मयूरान् परुषस्वरान् स्वात्मनश्च तदानीं परुषस्वरतयाऽभिमतानपि मधुरस्वरानालक्षयन्तीं तदुभयेषां सम्पद्विनिमयमिव कारयन्तीं रमणीयतां प्रासवन्त इति निष्कृष्टोऽर्थः । शिशुपालवधस्येदं पद्यम् । द्रुतविलम्बितं च वृत्तं तल्लक्षणं प्रोक्तं प्राक् ॥ १२ ॥'

अत्र परामृश्यमानवाक्यानन्तरं परामृश्यमानं यद् वाक्यं 'समय एव बलाबलं करोती'त्यात्मकं, तस्यानन्तरम् । एव । 'इति'शब्दोपयोगः । युज्यते । न तु । 'प्रणिगदन्त'इत्यनन्तरम् । 'तस्मात् क्रमपरित्यागादक्रमतादोष' इति । यथा । वा । 'सा कपालिनो मौलिगतत्वेन प्रसिद्धा । कलावतः कलानिधेरित्यर्थः । नित्ययोगे मतुप् । कान्तिमती कला षोडशो भागः । अस्य । लोकस्य । च नेत्रकौमुदी नेत्रयोः कौमुदी आह्लादकतया चन्द्रिकारूपेति यावत् । त्वं पुरस्तादपह्नवनीयसुषमावैभवतया स्फुरन्ती । च । इति द्वयम् । सम्प्रति । कपालिनः । अत एवास्पृश्यस्य रुद्रस्येति यावत् । समागमप्रार्थनया । शोचनीयतां शोच्यत्वम् । गतम् । अत्र भूतकालनिर्देशेनावश्यम्भाव्यत्वं, 'कपालिनः' 'नेत्रकौमुदी इत्येताभ्यां शोचनीयत्वस्य युक्तता च ध्वन्यते ॥' कुमारसम्भवे पञ्चमसर्गे तपस्यन्तीं पार्वतीं बटुवेषेण वञ्चयतो महेश्वरस्य स्वनिन्दनोक्तिरियम् । अत्र वंशस्थं वृत्तं तल्लक्षणं तूक्तं प्राक् ॥'अत्र'त्वमित्यनन्तरम् । एव चकारः 'च' इति पाठः युक्तः ।

अमतपरार्थता यथा—'राममन्मथशरेण ताडिता' इत्यादौ शृङ्गाररसस्य व्यञ्जको द्वितीयोऽर्थः प्रकृतरसविरोधित्वादनिष्टः।

वाच्यस्यानभिधानं यथा—'व्यतिक्रमलवं कम्मे वीक्ष्य वामाक्षि! कुप्यसि।'

इत्यत्र 'व्यतिक्रमलवमपी'त्यपिरवश्यं वक्तव्यो नोक्तः। न्यूनपदत्वे वाचकपदस्यैव न्यूनता विवक्षिता, अपेस्तु न तथात्वमित्यनयोर्भेदः।

एवमन्यत्रापि। यथा—'चरणानतकान्तायास्तन्वि! कोपस्तथाऽपि ते।' इति

अत्र 'चरणानतकान्ताऽसी'ति वाच्यम्।

भग्नप्रक्रमता यथा—'एवमुक्तो मन्त्रिमुख्यै रावणः प्रत्यभाषत॥'

अत्र वचधातुना प्रक्रान्तं प्रतिवचनमपि तेनैव वक्तुमुचितं, तेन—'रावणः प्रत्यवोचत॥' इति पाठो युक्तः। एवं सति न कथितपदत्वदोषः, तस्योद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयकत्वात्।

---

अमतपरार्थत्वमुदाहरति—अमतेत्यादिना।

**अमतपरार्थता।** **यथा**—'**राममन्मथशरेण ताडिता**।' इत्यादौ उदाहृतपूर्वे इति शेषः। **शृङ्गाररसस्य व्यञ्जको द्वितीयो** 'बीभत्सादिरूप' इति शेषः। **अर्थः।** **प्रकृतरसविरोधित्वात्** प्रकृतरसस्य बीभत्सरसस्य विरोधित्वाद्धेतोः। **अनिष्टो** नेष्टः। 'तस्मादत्रामतपरार्थता दोषः' इति शेषः।

अनभिहितवाच्यत्वमुदाहरति—**वाच्यस्येत्यादिना**।

**वाच्यस्य अनभिधानमभिधानाभावः**। 'दोष' इति शेषः। **यथा**। 'हे **वामाक्षि** अतिसुन्दराक्षि! **कम्**। **व्यतिक्रमलवं** व्यतिक्रमस्यानुज्ञातरीत्याऽऽचाराभावस्योच्छृङ्खलतयाऽनुष्ठानस्येति यावत् लवो लेशस्तम्। 'अपीति शेषः। **वीक्ष्य** दृष्ट्वा। **कुप्यसि**। 'अहं तु सुस्मिते! नित्यं चकोरवदनुव्रतः॥' इति शेषः।' **इत्यत्र** '**व्यतिक्रमलवमपि**' **इत्यपि** 'शब्द'इति शेषः। **अवश्यम्**। **वक्तव्यः**। **न**। **उक्तः** 'तस्माद् वाच्यानभिधानं दोषः'इति शेषः। इतीत्येषः। **अनयोर्न्यूनपदत्वानभिहितवाच्यतयोः**। **भेदः**। **एवं** यथाऽत्र तथा। **अन्यत्र** दोषान्तरसङ्कीर्णत्वसंशये। **अपि** 'परस्परं सूक्ष्मदृशा भेदोऽवगन्तव्य' इति शेषः। **यथा**। '**हे तन्वि! चरणानतकान्तायाश्चरणयोरानतः** प्रणतः कान्तो यस्यास्तस्याः (यद्यप्ययं तव चरणावानतः)। **तथाऽपि**। **ते** तव। **कोपः**। 'हन्त जीवितमेतस्य कथं नाम लभेत शम्॥' इति शेषः॥ **इति अत्र**। **चरणानतकान्ता**। **असि** त्वम्।' **इत्येवम्**। **वाच्यम्**। अत्रायम्भावः—'तथाऽपी'त्यत्र तच्छब्दार्थः कमपि यच्छब्दार्थमपेक्षते, तं विना तस्य सम्बन्धानुपपत्तेः। तस्मात्तथाऽपीत्यपेक्षितस्य यद्यपीत्यस्य वक्तव्यतया 'चरणानतकान्तायाः' इत्यनभिधाय 'चरणानतकान्ताऽसि' इत्यभिधेयम्' अन्यथाऽध्याह्रियमाणस्य 'यद्यपी'त्यस्य सम्बन्धानुपपत्तेः। अतोऽत्र विभक्तिन्यूनत्वनिबन्धनो दोषः, विभक्तेरपि वाचकातिरिक्ततया द्योतकत्वस्वीकारात्। सम्बन्धानुपपत्तिर्दूषकताबीजमित्यभवन्मतसम्बन्धत्वसङ्कीर्णोऽयं नित्यो दोषः।

भग्नप्रक्रमत्वमुदाहरति—**भग्नप्रक्रमतेत्यादिना**।

**भग्नप्रक्रमता**। प्रक्रमश्च शब्दतोऽर्थतश्चेति द्विविधः, आद्यः शब्दस्य प्रकृतिप्रत्ययसर्वनामपर्यायादीनामनेकात्मा। अर्थतः पुनर्वाच्यलक्ष्यव्यङ्ग्यरूपेणार्थस्य त्रैविध्यात्त्रिविध एवेति बोध्यम्। **यथा**—'**एवम**नेन प्रकारेण। **मन्त्रिमुख्यै**र्मन्त्रिप्रवरैर्निकुम्भकुम्भाद्यैरिति यावत्। **उक्तः रावणः**। **प्रत्यभाषत**। 'नात्र प्रतिवचोयुक्तं तद्यात व्रत मा चिरम्॥' इति शेषः।' **अत्र** उदाहृते वाक्ये इत्यर्थः। **वचधातुना प्रक्रान्तम्**। तत् **प्रतिवचनम्**। **अपि**। **तेन एव** न तु भाषधातुना। **वक्तुम्**। **उचितं** युक्तम् अन्यथा, प्रक्रमभङ्गापत्तेः। तर्हि कीदृशो युक्तः पाठ इत्याह—**तेन 'रावणः। प्रत्यवोचत**।' **इति पाठः**। **युक्तः**। ननु 'नैकं पदं द्विः प्रयोज्यं प्रायेणे'त्युक्त्या 'प्रयुक्तपदत्वमेव दोषः स्यादित्याशङ्क्याह—**एवं सति** 'प्रत्यवोचते' ति पाठे कृते सति। **कथितपदत्वदोषः**। न 'आशङ्कनीयः' इति शेषः। **तस्य** कथितपदत्वस्य। **उद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयकत्वात्** उद्देश्य एव (प्राक् प्रत्याम्य एव) प्रतिनिर्देश्यो

इह हि वचनप्रतिवचनयोरुद्देश्यप्रतिनिर्देश्यत्वं, यथा–
'उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।' इत्यादौ ।

यदि पदान्तरेण स एवार्थः प्रतिपाद्यते तदाऽन्योऽर्थ इव प्रतिभासमानः प्रतीतिं स्थगयति । यथा वा–

'यशोऽधिगन्तुं सुखलिप्सया वा मनुष्यसङ्ख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ १४ ॥'

अत्र 'सुखमीहितु'मित्युचितम् । यथा वा–

'ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः॥१५॥'

अत्र 'अस्मै' इतीदमा प्रक्रान्तस्य तेनैव तत्समानाभ्यामेतददःशब्दाभ्यां वा परामर्शो युक्तो ननु तच्छब्देन ।

एवम्–'उदन्वच्छन्ना भूः स च पतिरपां योजनशतम् ।'

---

(पुनः प्रत्याय्यो) यत्र तस्माद्व्यतिरिक्त इत्यसौ विषयो यस्य तस्य भावस्तत्त्वं तस्मात् अत्रायम्भावः–उद्देश्यप्रतिनिर्देशाद्व्यतिरिक्तमेकं पदं न प्रयोज्यं, तस्य निषेधविषयत्वात् । अत एव 'प्रायेणे'ति सङ्गच्छते । एवं च–यत्रोद्देश्यप्रतिनिर्देश्यत्वं तत्र द्विः प्रयोग एव युक्तः, तस्य तथैवौचित्यात् । अन्यथा तयोरैक्यमेव न प्रतीयते । यत्र पुनरुद्देश्यप्रतिनिर्देश्यत्वं नास्ति, तत्र द्विः प्रयुक्तमेकं पदं दुष्टमेव । अतः कथितपदत्वमुद्देश्यप्रतिनिर्देश्यव्यतिरिक्तस्थले एवैकस्य पदस्य प्रयोगे, न तु अर्थान्तरसङ्क्रमितवाच्य–लाटानुप्रासादौ । इति । उक्तमेवार्थं दृष्टान्तेन स्पष्टयितुमाह–**हि** यतः **इह**–एवं पाठपरिवृत्तौ । **वचनप्रतिवचनयोः** । तथा–**उद्देश्यप्रतिनिर्देश्यत्वम्** । 'तस्मान्नात्र निरुक्तदोषावकाशः' इति शेषः । **यथा** । '**सविता** सूर्यः ।' **ताम्रो** रक्तः 'सन्नि'ति शेषः । **उदेति** । **च** पुनः । **ताम्रः** । **एव** 'सन् सविता' इति शेषः । **अस्तम्** । **एति** प्राप्नोति । 'सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥' इति शेष ।' **इत्यादौ** । एवमस्वीकारे दोषं दर्शयति–**यदि** । **पदान्तरेण** 'रक्त' इत्यादिरूपेणान्येन पदेनेत्यर्थः । **स** 'ताम्र' इति पदवाच्यः । **एव** । **अर्थः** । **प्रतिपाद्यते** । **तदा** । **अन्यः** । **अर्थ इव** । **प्रतिभासमानः** 'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' इति न्यायेन 'शाब्दबोधे शब्दस्यापि विशेषणतया भानात्' इति शेषः । **प्रतीतिं** 'ताम्ररक्त'पदार्थस्यैकरूपतया प्रत्ययम् । **स्थगयति** शिथिलयति । **यथा वा**–'**सिद्धिः** । **समुत्सुकेव** उत्कण्ठिता नायिकेव । अत्र 'इवेन समासो विभक्त्यलोपश्च'इति समासो विभक्त्यलोपश्च । **यशः** । **अधिगन्तुं** लब्धुम् । **वा** अथवा । **सुखलिप्सया** सुखस्य लिप्सया लब्धुमिच्छया । **वा** । **मनुष्यसङ्ख्याम्** मनुष्यस्य सङ्ख्या गणना ताम् । **अतिवर्त्तितुम्** अतिक्रमितुं देवात्मतां प्राप्तुमिति यावत् । **निरुत्सुकानाम्** अनुत्कण्ठितानाम् । **अभियोगभाजाम्** अभियोगं साभिनिवेशं यत्नं भजन्तीति तेषाम् । **अङ्कम्** उत्सङ्गम् । 'उत्सङ्गचिह्नयोरङ्कः' इत्यमरः । **उपैति** प्राप्नोति । किरातार्जुनीयस्थमिदं पद्यम्, उपेन्द्रवज्रा छन्दस्तल्लक्षणं चोक्तं प्राक् ॥ १४ ॥' **अत्रो**-दाहृते वाक्ये '**सुखम्** । **ईहितुम्** ।' **इत्युचितम्** । 'अन्यथा तुमनः प्रक्रमे सनः प्रयोगे प्रक्रमभङ्गस्य दोषस्य निरासासम्भवः ।' इति शेषः । **यथा वा** '**ते** मरीचिप्रभृतयो मुनयः । **हिमालयम्** । **आमन्त्र्य** पृष्ट्वा । **पुनः** । **शूलिनं** त्रिशूलधारिणं शङ्करम् । 'कच्चिदन्यस्मै न दास्यती'ति शूलसदृशाधिभूतमिति वा । **प्रेक्ष्य** । **च** । **अस्मै** शूलिने । **अर्थं** पार्वतीदानरूपं प्रयोजनम् । **सिद्धम्** । **निवेद्य** ज्ञापयित्वा । **च** । **तद्विसृष्टाः** तेन शूलिना विसृष्टा आज्ञप्ताः । **खम्** आकाशम् । 'अनन्तं सुरवर्त्म खम्' इत्यमरः । **उद्ययुः** उत्पेतुः । कुमारसम्भवस्थमिदं पद्यम् ॥ १५ ॥' **अत्रो**दाहृते पद्ये । '**अस्मै**' **इतीदमा** । **प्रक्रान्तस्य** **तेनेदंशब्देन** । **एव** । **तत्समानाभ्यां** तेनेदंशब्देन समानौ समानार्थवाचकाविति ताभ्याम् । **एतददःशब्दाभ्याम्** । **वा** । **परामर्शः** । **युक्तः** । **न ननु** । **तच्छब्देन** । उक्तन्यायमन्यत्रातिदिशति–**एवं** यथोदाहृते स्थले तथा । '**उदन्वच्छन्ना** उदन्वता समुद्रेण च्छन्ना तिरोहितेति तथोक्ता । उदकानि जलानि सन्त्यत्रेत्युदन्वान् । 'उदन्वानुदधौ च ।' ८।२।२३ इति निपातात् साधुः । **भूः** पृथ्वी । **स** समुद्रः । **च** । **अपां** जलस्य । 'आपः स्त्री भूम्नि वार्वारि' इत्यमरः । **पतिः** स्वामी । समुद्र इति यावत् । 'यादःपतिरपांपतिः ।' इत्यमरः । **योजनशतं** तत्पर्यन्तं स्थित इति

अत्र 'मिता भूः पत्याऽपा' मिति युक्तः पाठः । अत्राद्ययोः प्रकृतिप्रत्ययविषयः प्रक्रमभेदः, तृतीये सर्वनामविषयः, चतुर्थे पर्यायविषयः । एवमन्यत्रापि ।

प्रसिद्धेस्त्यागो यथा-'घोरो वारिमुचां रवः' इत्यत्र मेघानां गर्जितमेव प्रसिद्धम् । यदाहुः-

'मञ्जीरादिषु रणितप्रायं पक्षिषु च कूजितप्रभृति ।
स्तनितमणितादि सुरते मेघादिषु गर्जितप्रमुखम् ॥' इत्यादि ।

---

यावत् । 'कालाध्वनोरत्यन्तसंयोगे ।' २।३।५ इति द्वितीया ।' 'सदा पान्थः पूषा गगनपरिमाणं गणयति । इति प्रायो भावाः स्फुरदवधि मुद्रामुकुलिताः सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥' इति शेषः ।' अत्रोदाहृते पद्ये । 'उदन्वता प्रक्रम्यापांपतिनोपसंहार इति भग्नप्रक्रमत्वं तस्मात्' इति शेषः । 'मिता ( परिच्छन्ना ) भूः पत्याऽपा' मिति पाठः । युक्तः । अत्रायम्भावः-'उदन्वच्छन्ने'ति समस्तं, तच्छब्दश्चोदन्वतः परामर्शकः, तत्त्वं चैतस्यैकाकिनो न सम्भवति तस्य समासच्छन्नत्वात्, इत्यभवन्मतसम्बन्धत्वम् । अथ, यदि उदन्वता 'छन्ने'त्यसमस्तं स्यात्, तदाऽपि तच्छब्दस्य पूर्वपरामर्शकत्वेनादन्वच्छब्दस्यैव परामर्शकत्वं, नत्वपांपतिशब्दस्येति तयोः पर्यायत्वेऽपि न तथा झटित्यभिन्नार्थः स्फुरति, यथोभयत्रोदन्वतोऽपांपतेः प्रयोगात्, तस्मात् पर्यायक्रमभङ्गेन स्फुटं प्रकृते भग्नप्रक्रमत्वम् । एतदप्यभवन्मत-सम्बन्धत्वेन संश्लिष्टमिति सुयुक्तं 'मिता भू'रित्यादि । एवं सति न निरुक्तदोषावकाशः । इति ।

दर्शितोदाहरणानां विशेषमाह-अत्रेत्यादिना ।

अत्रोदाहृतेषु पद्येषु । **आद्ययोः** पूर्वमुदाहृतयोः 'एवमुक्तः' इत्यत्र 'यशोऽधिगन्तु'मित्यत्र चेत्यर्थः । **प्रकृतिप्रत्ययविषयः** 'क्रमा'दिति शेषः । तथा च-तत्राप्याद्ये प्रकृतिविषयः, अन्त्ये पुनः प्रत्ययविषय इत्यर्थः । प्रकृतिश्च प्रत्ययश्चेति, तौ विषयौ यस्य सः । **प्रक्रमभेदः** । **तृतीये** 'ते हिमालय'मित्यस्मिन्नुदाहृते पद्ये । **सर्वनामविषयः** । **चतुर्थे** 'उदन्वच्छन्ने'त्यत्र 'पुन'रिति शेषः **पर्यायविषयः** । 'प्रक्रमभेद' इति पूर्वेणान्वेति ।

न केवलमीदृशेष्वेव स्थलेषु निरुक्तदोषः सम्भवतीति बोध्यमित्याह-**एवमित्यादि** ।

एवं यथोदाहृतेषु तथेति भावः । **अन्यत्रान्येषु** 'स्थलेषु । **अपि** 'निरुक्तो दोषो बोध्य' इति शेषः । तथा हि-'विपदोऽभिभवन्त्यविक्रमं रहयत्यापदुपेतमायतिः । नियता लघुता निरायतेरगरीयान्न पदं नृपश्रियः ॥' अत्र 'विपद' इति व्युपसर्गं प्रक्रम्य 'आप'दित्याङुपादानात्, 'लघुते'ति पर्यायेण प्रक्रम्य 'अगरीया'नित्युपादानाच्च क्रमादुपसर्गपर्यायविषयः प्रक्रमभङ्गः । तस्मात्-'विपदोऽभिभवन्त्यविक्रमं तदभिभवः कुरुते निरायतिम् । लघुताम्भजते निरायतिर्लघुतावान् न पदं नृपश्रियः ॥' इति स्थाने ।

प्रसिद्धित्यागमुदाहरति-**प्रसिद्धे**रित्यादिना ।

**प्रसिद्धेः** प्रयोगप्रवाहोत्तम्भितायाः प्रख्यातेः । **त्याग** उल्लङ्घनम् । **यथा**—'**वारिमुचां** जलदानाम्, **घोरो** भयङ्करः । **रवो** ध्वनिर्गर्जितमिति यावत् ।'इत्यत्र घोरो वारिमुचां रवोऽयमुदितः प्राणेश ! विष्वङ्मुहुर्हादिन्यो निपतन्त्यमी, च तिमिरं व्याप्तं, च नाध्वा पुरः । आवां वाऽपि वने तदद्य शरणं कुञ्जो नचान्यत्, प्रभो ! बालाऽहं, न च हा भवानपि भृशं प्रौढो न च ज्ञः पथाम् ॥' इत्यस्मिन् पद्ये । **मेघानां** । **गर्जितम्** । **एव** न तु रवः । **प्रसिद्धम्** ।

ननु किमत्र प्रमाणमित्याशङ्क्याह-**यद्** यतः । **आहुः**।'**मञ्जीरादिषु** मञ्जीरो नूपुर आदिर्येषां तेषु । 'मञ्जीरो नूपुरोऽस्त्रियाम् ।' इत्यमरः । **रणितप्रायं** रणितेन ( शब्दविशेषेण ) तुल्यमिति तथोक्तम् । 'प्रायो बाहुल्यतुल्ययोः ।' इति विश्वः । अत्र प्रायपदमाद्यर्थकमवसेयम्, आद्यादीनां तुल्यार्थवाचकत्वात् । तथा च-रणितक्वणितशिञ्जितादीत्यर्थः' । 'पदं प्रसिद्ध'मिति शेषः । **पक्षिषु** च पुनर्मण्डूकादिष्विति यावत् ।**कूजितप्रभृति**कूजितरववासितादि।'पदं प्रसिद्धम्' इति शेषः । **सुरते** मैथुने । **स्तनितमणितादि** स्तनितं च मणितादि च **मेघादिषु** मेघसिंहवीरादिषु । **गर्जितप्रमुखं** गर्जितं प्रमुखं प्रधानं प्रथमं वा यत्र ( ध्वन्यादौ ) तत् । 'प्रमुखं प्रथमे मुख्ये' इति हैमः । 'पदं प्रसिद्ध'मिति शेषः ॥' **इत्यादि** । अत्रायम्भावः-'वारिमुचां रव' इत्यत्र 'रव' इत्यपठित्वा 'ध्वनि'रिति पठनीयम्, रवपदस्य शब्दसामान्यवाचकत्वेऽपि वारिमुचां

**अस्थानस्थपदता यथा–'तीर्थे तदीये गजसेतुबन्धात् प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।**
**अयत्नवालव्यजनीबभूवुर्हंसा नभोलङ्घनलोलपक्षाः ॥ १६ ॥'**

**अत्र तदीयपदात् पूर्वं 'गङ्गा'मित्यस्य पाठो युक्तः । एवम्–'हितान्न यः संशृणुते स किम्प्रभुः ।' अत्र 'संशृणुते' इत्यतः पूर्वं नञः स्थितिरुचिता । अत्र पदमात्रस्यास्थाने निवेशेऽपि सर्वमेव वाक्यं विवक्षितार्थप्रत्यायने मन्थरमिति वाक्यदोषता । एवमन्यत्रापि ।**

---

ध्वनेर्वाचकत्वाप्रसिद्धेः । अन्यद्धि व्युत्पत्तिनिमित्तम्, अन्यच्च प्रवृत्तिनिमित्तम्; इति प्रसिद्धिमहिमैवैवम्भूतः, यत्–रवो मण्डूकादीनामेव, ध्वनिः पुनर्वारिमुचामेव । अत एव मारीचादीनां मुनिविशेषदैत्यविशेषवाचकत्वसाधारण्येऽपि दैत्यविशेषवाचकत्वस्यैव प्राधान्योपपत्तिः ।

अस्थानस्थपदत्वमुदाहरति–**अस्थानेत्यादिना** ।

**अस्थानस्थपदता** नाप्रशस्तं स्थानमित्यस्थानं, तत्र तिष्ठतीत्येवम्भूतं पदं यत्र तस्य भावस्तत्ता । **यथा–'प्रतीपगां** प्रतिकूलवाहिनीम् । **गङ्गाम्** । **तदीये** तस्या गङ्गाया इदं तत्र गङ्गासम्बन्धिनीत्यर्थः । **तीर्थे** प्रवाहे । **गजसेतुबन्धात्** गजानां सेतुस्तस्य बन्धात् तमवलम्ब्येति यावत् । अत्र 'ल्यब्लोपे कर्मण्यधिकरणे च ।' १।४।३१ इत्यनेन ल्यब्लोपे पञ्चमी । **उत्तरतः** उल्लङ्घमानस्य । **अस्य** कुशस्य । **नभोलङ्घनलोलपक्षाः नभसः** आकाशस्य लङ्घनं तेन लोलाश्चलाः पक्षा येषां ते । **हंसाः** । **अयत्नवालव्यजनीबभूवुरयत्नेन** यत्नमन्तरेणैव वालव्यजनीबभूवुरवालव्यजनान्यपि वालव्यजनानि बभूवुरित्यर्थः । उपजातिश्छन्दस्तल्लक्षणन्तूक्तं प्राक् ॥ १८ ॥ '**अत्रो**दाहृते पद्ये । **तदीयपदात् पूर्वम्** । '**गङ्गा**'**मित्यस्य** '**पदस्ये**'ति शेषः । **पाठः** । **युक्तः** 'अन्यथा तच्छब्दस्य पूर्वपरामर्शकत्वे तेन परामर्शनीयस्य गङ्गापदार्थस्य परामर्शकत्वानुपपत्तेः पदार्थान्तरपरामर्शित्वाभ्युपगमे चानर्थपातः स्यात्' इति शेषः । अत्रेदं बोध्यम्–'तदीये' इति पदमस्थानस्थम्, विलम्बेन विवक्षितार्थप्रत्यायकत्वात्, अविवक्षितार्थस्य झटिति प्रत्यायकत्वाच्च । तस्मादत्र स्फुटमस्थाने पदन्यासः । 'प्रतीपगां स्वःसरितं तदीये तीर्थे गजैरुत्तरतः कुशस्य' इति पाठे तु तन्निरासः । इति । '**हितादा**सजनान्मित्रात्सकाशाद्वा । 'आख्यातोपयोगे ।' १।४।२९ इति पञ्चमी । **न** 'हित'मिति शेषः । **यः** । **संशृणुते** सम्यक् शृणोति । 'समो गम्यृच्छिभ्याम् ।' १ । ३ । २९ 'अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम् ।' * इत्यादिना सम्पूर्वाच्छृणोतेरकर्मत्वादात्मनेपदम् । **सः** । **किम्प्रभुः** कुत्सितः प्रभुः । 'किमः क्षेपे ।' ५ । ४ । ७ इति समासान्तनिषेधः ।' **अत्रास्मिन्** 'स किं सखा साधु न शास्ति योऽधिपं हितान्न यः संशृणुते स किंप्रभुः । सदाऽनुकूलेषु हि कुर्वते रतिं नृपेष्वमात्येषु च सर्वसम्पदः ॥' इति किरातार्जुनीयपद्यस्य द्वितीये उदाहृते पादे इति भावः । '**संशृणुते**' **इत्यतः** । **पूर्वम्** । 'अव्यवधानेने'ति शेषः । **नञः** । **स्थितिर्न्यासः** । **उचिता** । अत्रायम्भावः–नञो यथोपन्यस्तो 'हितोपदेष्टृजनसकाशात्, किन्तु तद्विपरीतात् अहितात् यः संशृणुते स किंप्रभुर्मतः ।' इति प्रतीयते, विवक्षितः पुनः 'हिताद् यो न संशृणुते' इत्येतावानेवार्थः । अन्यथा तस्य सर्वथा किंप्रभुत्वमिव ( वस्तुतस्तु किम्प्रभुत्वापेक्षया ) नितान्तं निन्दनीयं यथाजातत्वमपि अभिधेयं स्यात् । यत्तूक्तं कैश्चित्–अन्वयप्रतियोगिसन्निधिर्योग्यत्वं, तदभावः पुनरयोग्यत्वम्, एतदेव पदस्थानस्थत्वमूलम् ।' इति । तन्न । 'न खलु न खलु वाणः सन्निपात्योऽयमस्मिन्' इत्यादौ निरवद्यताया दुरवस्थापातात् । इति ।

ननु पदमात्रस्यास्थानस्थत्वे पददोषत्वस्वीकारौचित्येऽपि कथन्नाम नास्य पददोषत्वस्वीकार इत्याशङ्क्याह–**पदमात्रस्ये**त्यादि ।

**पदमात्रस्य** । **च** । **अस्थाने** । **निवेशे** । **अपि** । **सर्वम्** । **एव** न तु तत्पदमेव । **विवक्षितार्थप्रत्यायने** । **मन्थरं** विलम्बसहम् । **इतित्यस्मात्** । **वाक्यदोषता** 'अवसेया' इति शेषः । उक्तन्यायमन्यत्राप्यतिदिशेदित्याह–**एवम्** । **अन्यत्र** 'प्रियेण सङ्ग्रथ्य विपक्षसन्निधावुपाहितां वक्षसि पीवरस्तने । स्रजन्न काचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णि गुणा, न वस्तुषु ॥' इत्यादौ । **अपि** । **अस्थाने पदन्यासः** । 'न काचि'दित्यपठित्वा 'काचिन्ने'ति पठनीयत्वात् ।' इति शेषः । ननु यदि 'हितान्न यः संशृणुते' इत्यादावप्यस्थानस्थपदत्वमेव, तर्हि 'त्वमस्य लोकस्य

**इह केऽप्याहुः-'पदशब्देन वाचकमेव प्रायो निगद्यते, न च नञोवाचकता निर्विवादात्; स्वातन्त्र्येणार्थबोधनविरहात्; इति--यथा 'द्वयं गतम्' इत्यादौ 'त्व'मित्यनन्तरं चकारानुपादनादक्रमता, तथाऽत्रापि।' इति।**

---

चे'त्यादावपि कथं नैव तस्यैव सद्भावः स्वीक्रियते इति चेत् ? यस्याव्यवधानेनैव निवेशे विवक्षितार्थप्रतीतिजननसामर्थ्यं तस्य तथा निवेशाभावे दोषान्तरस्या( अक्रमत्वस्या )पातः, यस्य पुनर्व्यवधानेनापि निवेशे विवक्षितार्थजननसामर्थ्यं तत्र नैव दोषान्तरस्या ( अक्रमत्वस्या ) पातः, किन्तु अस्थानस्थपदत्वस्यैव; चादीनां च अव्यवहितपदार्थेष्वेव समुच्चयादिद्योतकता। तदुक्तम्महिमभट्टेन-'अत एव व्यवहितैर्बुधा नेच्छन्ति चादिभिः। सम्बन्धं ते हि स्वां शक्तिमुपदधुरनन्तरे॥' इति। न च नञोऽपि तथात्वम्। 'न खलु न खलु वाणः सन्निपात्योऽयमस्मिन्'-इत्यादौ नञो व्यवहिततया निवेशेऽपि विवक्षितार्थप्रतीतेर्निर्बाधितत्वात्। इति। वस्तुतस्तु-नैवम्। वाचकेतरपदस्यास्थाने निवेशेऽक्रमत्वस्य, वाचकस्य पुनरस्थाने निवेशे स्थानस्थपदत्वस्य स्वीकारौचित्यनियतत्वभङ्गात्।

स्वमतं दिदर्शयिषुराह-इहेत्यादि।

इह 'हितान्न यः संश्रृणुते' इत्यादौ असहमाना मत्सराः। **केचित्। आहुः। 'पदशब्देन** 'अस्थाने पदन्यास' इत्यत्र 'अस्थानस्थपदता' इत्यत्र वा पठितेन पदशब्देन। **वाचकम्। एव** न तु तद्भिन्नं द्योतकपदम्। **प्रायः। निगद्यते। वाचकता। च। न** निर्विवादात् सिद्धान्तात्। स्वातन्त्र्येण स्वतंत्रतया। **अर्थबोधनविरहा**दर्थबोधजननसामर्थ्यस्याभावात्। 'वाचकेतरस्ये'ति शेषः। न हि वाचकातिरिक्तं स्वयं कमप्यर्थं बोधयितुम्प्रभवति, तस्य परसाहाय्येनैवार्थबोधकत्वस्वीकारादिति भावः। यदुक्तं भर्तृहरिणा 'चादयो न प्रयुज्यन्ते पदत्वे सति केवलाः। प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते॥' इति। **इति। यथा-'द्वयं गतं'-इत्यादौ। 'त्व'मित्यनन्तरम्। चकारानुपादना**च्चकारस्यानुपादानादुपादानाभावात्। **अक्रमता। तथा। अत्र** 'हितान्न यः' इत्यादौ। **अपि** 'अक्रमतैव दोषः। न तु अस्थानस्थपदता।' इति शेषः। अत्रायं पर्यालोकः-'तीर्थे तदीये'-इत्यत्र तच्छब्देन गङ्गापदार्थस्य परामर्शोऽपेक्ष्यते, स च न सम्भवति, गङ्गाशब्दस्य तच्छब्देनापरामृष्टत्वात्। तच्छब्दो हि पूर्वपरामर्शी न तु परपरामर्शीति गङ्गापदस्यास्थाने न्यासः। इति कविराजानामभिप्रायः। किन्तु-'तदीये वैन्ध्ये' इति मल्लिनाथोक्तदिशा न तत्र तच्छब्देन गङ्गापदार्थः परामृश्यते, परामृश्यते पुनर्विन्ध्यपदार्थः। युज्यते चैतत्, विन्ध्यस्य प्रक्रान्तत्वात्, तच्छब्दस्य प्रक्रान्तपरामर्शित्वाच्च। तस्मात्-'लग्नः केलिकचग्रहश्लथजटालम्बेन निद्रान्तरे मुद्राङ्कः शितिकन्धरेन्दुशकलेनान्तः कपोलस्थलम्। पार्वत्या नखलक्ष्मशङ्कितसखीनर्मस्मितह्रीणया प्रोन्मृष्टः करपल्लवेन कुटिला ताम्रच्छविः पातु वः॥' इत्युदाहार्य्यम्। अत्र हि-'कुटिलताम्रच्छवित्वस्य साधर्म्यरूपस्य नखलक्ष्मशशाङ्कबीजस्य प्रागप्राप्तेस्तच्छङ्कायास्तन्मुखानिरीक्षकत्वेन अयोग्यताऽऽदिपरिहाराय साधर्म्योपस्थापकापेक्षणाद्विलम्बेन प्रतीतिः, पूर्वं प्रयोगे तु झटिति हेतुहेतुमद्भावेनान्वयप्रतीतिरिति 'नखलक्ष्मे'त्यतः पूर्वं 'कुटिला ताम्रे'ति वाच्यम्। अन्यथाऽस्थानस्थपदत्वं स्यादित्येके, अपरे तु-'यदि तत्पदेन विन्ध्यः परामृश्यते तदा माभूद्गङ्गापदस्यास्थाने न्यासः, यदि तु गङ्गापदार्थ एव तच्छब्देन परामृश्यते तदाऽस्त्येव निरुक्तो दोषः। तच्छब्देन गङ्गापदार्थस्यैव परामर्शः कवेरभिप्रेत इति कविराजानामभिधानं, तदादायैव दोषनिदर्शनं चेति सर्वमवदातम्। इति। अथ-'हितान्न यः संश्रृणुते' इत्यत्र नञोऽस्थाने न्यासाभिधानं 'स्रजं न काञ्चिद्विजहौ' इत्यत्रेव बोध्यम्। वस्तुतस्तु-अक्रमत्वस्य क्रमप्राप्तं स्थानमपहायान्यत्र वाचकेतरमात्रस्य निवेशोमूलम्, अस्थानस्थपदत्वस्य तु वाचकमात्रस्य क्रमप्राप्तं स्थानमपहायान्यत्र निवेशो मूलम्। इति 'द्वयं गतं'-इत्यत्रेव 'हितान्न यः संश्रृणुते' इत्यत्र 'स्रजं न काञ्चिद्विजहौ' इत्यत्र वा वाचकपदातिरिक्तस्य क्रमप्राप्तं स्थानमपहाय निवेशादक्रमत्वमेव, न त्वस्थानस्थपदत्वम्। एवं च-'न खलु न खलु वाणः, क्व नु खलु हरिणानां जीवितं चातिलोलं, क्व च'इत्यादौ चकारस्येव नञोऽस्थाने निवेशे नास्थानस्थत्वं माभूत्, किन्त्वक्रमत्वमेव।

**अस्थानस्थसमासता यथा–**

**'अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि**
**स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः।**
**प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्**
**फुल्लत्कैरवकोषनिःसरदलिश्रेणीकृपाणं शशी ॥ १७ ॥'**

**अत्र कोपिन उक्तौ समासो न कृतः, कवेरुक्तौ कृतः।**

**वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः सङ्कीर्णत्वम्। यथा–'चन्द्रं मुञ्च कुरङ्गाक्षि ! पश्य मानं नभोऽङ्गने' इति। अत्र 'नभोऽङ्गने चन्द्रम्पश्य मानम्मुञ्चे'ति युक्तम्। क्लिष्टत्वमेकवाक्यविषयमित्यस्माद्भिन्नम्।**

---

अस्थाने समासन्यासमुदाहरति–**अस्थानस्थसमासते**त्यादिना।

**अस्थानस्थसमासता**ऽस्थाने तिष्ठतीति तथोक्तः समासो यत्र तस्य भावस्तत्ता न कुत्सितं स्थानमिति अस्थानम्, तच्च प्रकृतानुकूलत्वमूलमेवेति बोध्यम्। **यथा–अद्य अपि। एषः। मानः** 'वयं नितान्तं सुभगाः विश्रम्भजितवल्लभाः।'इत्येवं रूपः 'स्त्रीणामीर्ष्याकृतः कोपो मानिन्याःसङ्गिनीप्रिये।' इत्युक्तस्वरूपो वा भावविशेषः। **स्तनशैलदुर्गविषमे** स्तना एव शैला इति, तौ एव दुर्गं तेन विषममिति, स्तनावेव शैलदुर्गे शैलनिर्मिते दुर्गे ताभ्यां विषममिति वा, स्तनौ शैल दुर्गे इवेति ताभ्यां विषममिति वा, स्तनौ एव शैलौ यत्र तादृशं यद्दुर्गमत एव विषममिति वा; तत्र। **सीमन्तिनीनां** स्त्रीणाम्। **हृदि** हृदये। **स्थातुम्। वाञ्छति** 'इतीद'मिति शेषः। **धिक्। इत्येवम्। क्रोधात। इव। आलोहितः** समन्ताल्लोहितः। **प्रोद्यद्दूरतरप्रसारितकरः** प्रोद्यन्तोऽत एव दूरतरं प्रसारिताः कराः किरणा हस्ता वा यस्य सः,प्रोद्यंश्चासौ दूरतरं प्रसारिताः करा येन स इति वा। **असौ** दृश्यमानः। **शशी** चन्द्रमाः। **तत्क्षणात्। फुल्लत्कैरवकोशनिःसरदलिश्रेणीकृपाणं** फुल्लद्विकसद् यत् कैरवं कुमुदं तस्य कोशः कुड्मलरूपं खड्गपिधानं तस्मान्निः सरन्ती याऽलिश्रेणी भ्रमरपङ्क्तिः सैव कृपाणः खड्गइति तम्। 'कोशोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके।' इति मेदिनी। **कर्षति** निःसारयति। अत्र–शशिनो नायकत्वं मानस्य च प्रतिनायकत्वं परिकल्प्य कविना जारस्येव मानस्य वधाय कुमुदकोशादलिरूपकृपाणकर्षणमुत्तम्भितं चन्द्रोदये च मदनोन्मादस्य स्वाभाविकतया मानिनीनां मानपरित्यागपुरःसरं कान्तप्रसादनं दृष्टचरं,चंद्रश्चोदयमानो रक्तिमानं प्रपद्यते,तदानीं च कुमुदकोशस्य विकसिततया भ्रमरश्रेणी निःसरतीति प्रत्यक्षदृष्टम्, अथापि क्रोधाच्चन्द्रमसोरक्तत्वम्, अलिश्रेण्याश्च कृपाणरूपत्वं कविनोत्प्रेक्ष्य प्रतिभामात्रेणोत्तम्भितम्। अत्र शार्दूलविक्रीडितं छन्दः, तल्लक्षणं च प्रोक्तं प्राक् ॥ १७ ॥'

**अत्र। कोपिनः** 'शशिन' इति शेषः। **उक्तौ** 'अद्यापि...धिगित्यभिधाने'।**समासो** दीर्घसमासः क्रोधानुगुणौजोगुणव्यञ्जक इति यावत्। **न। कृतः**, 'तत्र तस्यौचित्येऽपि' इति शेषः। **कवे**रकोपिन इति भावः। **उक्तौ** 'प्रोद्यद्' इत्यत्र। **कृतः** 'समास' इति शेषः।अत्र 'सहृदयवैमुख्यं दूषकतावीजम्।' इति।

द्वाविंशं सङ्कीर्णत्वं लक्षयन्नुदाहरति–**वाक्यान्तरपदाना**मित्यादिना।

**वाक्यान्तरपदानाम्।** अत्र बहुवचनमविवक्षितम्, तेन तद्बहुत्वाभावोऽपि बोध्यः। **सङ्कीर्णत्वं** तन्नाम दोषः। स च **यथा**–'हे **कुरङ्गाक्षि** मृगनयने। **मानं** रोषम्। **मुञ्च। नभोऽङ्गने** आकाशरूपे गृहान्तर्देशे। **चन्द्रं** चन्दयत्याह्लादयति पारस्परिकवैमनस्यहरणपूर्वकं युवानाविति तं तथोक्तम्, वस्तुतस्तत्त्वनाध्यस्तं नायकम्। **पश्य।** 'गृहाण शयनं कान्तं प्रणमन्तमलङ्कुरु। इति शेषः ॥' इति। अत्र 'चन्द्रं पश्ये'त्यादिवाक्यस्य पदानि 'मुञ्चादीनि''मुञ्च मान'मित्यस्य च'चन्द्रम्मुञ्चे'त्यादीनि। पदानि सङ्कीर्णानीति शेषः। अतः–'**नभोऽङ्गने। चन्द्रम्। पश्य। मानम्। मुञ्च' इति। युक्तम्।** 'वक्तु'मिति शेषः। नन्वेवं क्लिष्टत्वमापत्स्यते इत्याह–**क्लिष्टत्वं** तदाख्योदोषः। **एकवाक्यविषयम्।** 'अयं चानेकवाक्यविषय'मिति शेषः। **इत्यस्मात। भिन्नम्।** एकवाक्यत्वे सति स्वघटकपददुरन्वयव्यवहितविवक्षितार्थत्वं क्लिष्टत्वम्, अनेकवाक्यत्वे तु सङ्कीर्णत्वमिति भावः।

वाक्यान्तरे वाक्यान्तरप्रवेशो गर्भितता। यथा-

'रमणे चरणोपान्ते प्रणतिप्रवणे सति। वदामि सखि ते तत्त्वं मान एष न शोभते॥ १८॥'

अथार्थदोषानाह-

५ अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टताः।
अनवीकृतनिर्हेतुप्रकाशितविरुद्धताः॥ ९॥
सन्दिग्धपुनरुक्तत्वे ख्यातिविद्याविरुद्धते।
साकाङ्क्षता सहचरभिन्नताऽस्थानयुक्तता॥ १०॥
अविशेषे विशेषश्चानियमे नियमस्तथा।
तयोर्विपर्ययौ विध्यनुवादायुक्तते तथा॥ ११॥
निर्मुक्तपुनरुक्तत्वमर्थदोषाः प्रकीर्त्तिताः।

तयोर्विपर्ययौ विशेषेऽविशेषः, नियमेऽनियमः।

---

त्रयोविंशं गर्भितत्वं लक्षणमुदाहरति-**वाक्यान्तरे** इत्यादिना।

**वाक्यान्तरे। वाक्यान्तरप्रवेशः** 'नतु पदानां प्रवेश' इति शेषः। एवं चास्य सङ्कीर्णत्वादस्य भेदः सूचितः। **गर्भितता** तन्नामा दोषः। असौ **यथा**-'हे **सखि**! अत एवोपदेशार्हे। **रमणे** कान्ते। **चरणोऽपान्ते** चरणसमीपे। **प्रणतिप्रवणे**ऽपराधं स्वीकृत्य तं क्षमापयितुं प्रणमनोन्मुखे जाते इत्यर्थः। **सति। ते। तत्त्वं** कर्त्तव्यम्। **वदामि**। किं तदित्याह-**एष** दुःपरिणाम इत्यर्थः। **मानः। न। शोभते**। 'अत्र हि तृतीयपादरूपं वाक्यं गर्भितमिति' बोध्यम्। कस्या अपि सखीं प्रति प्रणयोक्तिरियम्।

अथार्थदोषान्निरूपयितुमुपक्रमते-**अथ** वाक्यदोषनिरूपणानन्तरम्। **अर्थदोषान्। आह**-५ **अपुष्टे**त्यादिना।

५ **अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टता** अपुष्टार्थता दुष्क्रमता ग्राम्यता व्याहतार्थता अश्लीलार्थता कष्टार्थता चेत्यर्थः। अत्राप्यश्लीलार्थत्वं पूर्ववत्त्रिविधमेव बोध्यम्। **अनवीकृतनिर्हेतुप्रकाशितविरुद्धता** अनवीकृतार्थता निर्हेत्वर्थता प्रकाशितविरुद्धार्थता चेत्यर्थः। **सन्दिग्धपुनरुक्तत्वे** सन्दिग्धार्थत्वं पुनरुक्तार्थत्वं चेत्यर्थः। **ख्यातिविद्याविरुद्धते** ख्यातिविरुद्धार्थता विद्याविरुद्धार्थता चेत्यर्थः। **साकाङ्क्षता** साकाङ्क्षार्थतेत्यर्थः। **सहचरभिन्नता** सहचरभिन्नार्थता। **अस्थानयुक्तता**ऽस्थानयुक्तार्थता। **अविशेषे** विशेषाभावे कर्त्तव्ये इति भावः। **विशेषो** विशेषार्थता। **च। अनियमे** नियमाभावे कर्त्तव्ये। **नियमो** नियमार्थता। **तथा। तयोर्वि**शेषार्थत्वनियमार्थतयोः। **विपर्ययौ** विपरीतौ अविशेषार्थत्वमनियमार्थत्वं चेत्यर्थः। **तथा। विध्यनुवादायुक्तते** विधिर्विधानं तस्यायुक्तार्थत्वम्, अनुवादस्य चायुक्तार्थत्वमित्यर्थः। **निर्मुक्तपुनरुक्तत्वं** निर्मुक्तोऽथ पुनरुक्तस्तदर्थत्वम्। इत्येते त्रयोविंशतिसङ्ख्याकाः **अर्थदोषाः। प्रकीर्त्तिताः**॥ ९॥ १०॥ ११॥

तयोरितिपदस्य दुर्बोधतां परिहरति-**तयो**रित्यादिना। स्पष्टम्।

अत्रायं पर्य्यालोकः-एषु त्रयोविंशतिसङ्ख्याकेषु दोषेषु-अपुष्टार्थत्वम्मुख्यार्थानुपकारित्वम्। अशक्त्युन्नयनेन श्रोतुर्वैमुख्यं दूषकताबीजम्। अत एव यमकादौ दोषाभावः। यथा 'सकलां सकलां लक्ष्मीं विभ्रद्विभ्रद्विभाविभाः। रुचिरोरुचिरोचिष्णू राजन् राजन्महामहान्॥' इत्यनित्योऽयं दोषः। दुष्क्रमार्थत्वं लोके शास्त्रे वा प्रथितस्य पौर्वापर्य्यनियमस्य विरुद्धतयाऽभिधानेन क्रमानौचित्यम्। तथासति-झटित्यर्थाप्रतीतिः सहृदयोद्वेगो वा दूषकताबीजम्। क्रमानौचित्यस्य लोकशास्त्रयोर्भेदादनेकत्वम्। प्रहसनादौ पुनस्तथैवौचित्यमित्ययमप्यनित्यो दोषः। यथा-'भुक्त्वा स्नात्वा स्वपित्वा च कृत्वा च रदधावनम्। मलमूत्रोत्सर्गकर एष आयाति सज्जनः॥'

इत्यादौ । ग्राम्यार्थत्वमविदग्धमात्रप्रतिपादितारंसाद्यर्थकपदाभिधेयार्थत्वम्, अश्लीलत्ववत् सहृदयहृदयवैमुख्यापादकत्वं चास्य दूषकताबीजं,विदूषकाद्युक्तौ तु तदौचित्यमित्ययमनित्यो दोषः । यथा–'भो जह कस्सवि पिंडीखज्जूरेहिं उव्वेजिदस्स तिंतिडीए अभिलासो भोदि, तह अंदेउरइत्थिआरअणपरिभोइणो भअदो इअ पत्थणा ।' इति । व्याहतार्थत्वं पूर्वापरविरुद्धार्थत्वेन तिरस्कृतप्रतिपाद्यार्थत्वम् । अस्य च वाक्यार्थाप्रतीतिर्दूषकताबीजम् । 'हेयोपादेयत्वविरोधो दूषकताबीजम्' इत्यन्ये प्राहुः । अत्रेदं बोध्यम्, यस्य कस्याप्युत्कृष्टत्वं प्रतिपाद्य पुनस्तस्यैवापकृष्टत्वप्रतिपादने पूर्वापरविरोध इत्येकविधो व्याहतार्थत्वनाम दोषः, यस्य कस्यचिदपकृष्टत्वं प्रतिपाद्य तस्यैव पुनरुत्कृष्टत्वप्रतिपादने पूर्वापरविरोध इत्यपरोऽयम् । द्विविधोऽप्ययमनित्यो दोषः । अश्लीलार्थत्वं व्रीडाजुगुप्साऽमङ्गलसमर्पकार्थत्वम्, तथासति श्रोतुर्वैरस्यं दूषकताबीजम् । अत एव असभ्याद्युक्तौ तदभावः प्रत्युत गुणत्वम् । न ततोऽयमनित्यो दोषः । असौ च समर्प्यमाणव्रीडादित्रयमूलत्वात्त्रिविधः । यथा–'आदित्सयांऽशुकानामुन्नतभुजवीरुधां कुमारीणाम् । पश्यति हरौ विरेजे गतवसनानामधो दृष्टिः ॥' "अन्त्राण्यस्थीनि मेदांसि रक्तान्यङ्गानि च क्वचित् । पितामह ! तव स्थाने सङ्ग्राममतिवर्त्तते ॥' 'लोकान्तरकृतप्रेमा निर्निमेषमुदीक्षिता । जितश्वासानिलः शान्त एष हन्त तव प्रियः॥' इत्यादौ । अस्य च प्रतिप्रसवो यथा–'स्तनौ तुङ्गौ निपतितौ कामसङ्ग्राममर्दितौ । पुरस्तादवलोक्यास्या भग्नं शुष्कम्भयादिव ॥' 'तेण परापडिदेण जेव्व वराइआ कल्लाणिआ मडमडाइदा ।' 'घटयत घटजालं तोयशून्यं पुरस्तात् पथि तुपनखलेखा क्षिप्यताम्भो नियुक्ताः । निजपुरपरिचर्चां कर्तुमेवायमुक्तो नृपतिरनयसिन्धुस्तूर्णमागच्छतीह ॥' इति । कष्टार्थत्वमासत्त्यादिसद्भावेऽपि दुरूहार्थत्वम् । सम्यक्प्रतीतिविरहश्च दूषकताबीजम् । अत एव तदभिमतत्वे दूषकताऽपायादनित्योऽयम् । न चास्य क्लिष्टत्वेन गतार्थत्वम्, घटनान्तरेण तत्रार्थस्य सुखेनैव प्रतिपत्तेः, अत्र पुनर्विवक्षितस्याप्यर्थस्य शब्दान्तरैः कथञ्चिदुन्नयनेऽपि क्लेशेनैव प्रतीतेः । निर्हेत्वर्थताऽनुपात्तहेतुकार्थत्वम्, इत्यनभिधानेनोद्देश्यप्रतीतिविरहो दूषकताबीजम् । अतः प्रसिद्धिसत्त्वे तदनुपादानेऽपि तदभावादस्य नित्यदोषत्वम् । ननु हेत्वनुपादाने निर्हेतुत्वम्, तत्र हेतुं विना प्रतीतेः पर्यवसानं, न वा; आद्ये दोषाभावः, अन्त्ये साकाङ्क्षार्थत्वेन सङ्कर इति चेत् ? केचिदाहुः–'उपात्तस्य परेणान्वये साकाङ्क्षार्थत्वम्, अनुपादाने निर्हेत्वर्थत्वमिति विशेष इति, तन्न; 'ऐशस्य॰' इत्यादा'वुपेक्षितु'मित्या'काङ्क्षती'त्यनेनानुपात्तसाकाङ्क्षार्थताया एव प्रदर्शनात् । तस्मात् हेतुतद्भिन्नसापेक्षतया द्वयोर्भेदः ।' इति । अन्ये त्वाहुः—'अत्र अप्रतीतिमात्रं तत्र तु विरुद्धप्रतीतिः श्रीरत्ने एवामर्षप्रतीतेरिति विशेषः ।' इति । प्रकाशितविरुद्धार्थता व्यञ्जितविवक्षितार्थप्रतिकूलार्थत्वम् ।विरुद्धार्थप्रकाशनं च दूषकताबीजम् । अत एवायं नित्यो दोषः । तत्तत्पदपरिवर्त्तनेऽपि यावत् तदर्थोपस्थितिस्तावत् प्रकाशितविरुद्धार्थत्वस्य तादवस्थ्यमिति नास्यामतपरार्थत्वेन सङ्करः । अत एवास्यार्थगतत्वम् । एतेन–विरुद्धमतिकारित्वादपि अस्य भेदोऽभिहितः । ननु तदस्तु सहचरभिन्नत्वेनैतस्य गतार्थत्वमिति चेत् ? न; नहि तत्र व्यञ्जितविवक्षितार्थप्रतिकूलार्थत्वं, किन्तु समभिव्याहृतभिन्नार्थमात्रत्वम् । इति । सन्दिग्धार्थता प्रकरणाद्यभावेन अनिश्चितोद्देश्यार्थत्वम् । अस्य चोद्देश्यनिश्चयाभावो दूषकताबीजं, तस्य पुनर्विवक्षितत्वे नायं दोषः । यथा–'शृणोषि परक्षेत्रादायाति क्षेत्ररक्षकः । यदद्य भुक्तं तदलं, क्षणं लोभं परित्यज ॥' इति । पदानामसन्दिग्धत्वात् पदगतादस्य भेदः। ख्यातिविरुद्धार्थता प्रसिद्धिविरुद्धार्थत्वम् । प्रसिद्धिश्च लौकिकी तद्भिन्ना च । अतो द्विविधोऽयं दोषः । विरोधादर्थाप्रतीतिर्दूषकताबीजम् । लोकप्रसिद्धिविरुद्धार्थतायाः कविप्रसिद्ध्यविरुद्धार्थतया. लोकेतरप्रसिद्धि ( कविसमय ) विरुद्धार्थताया लोकप्रसिद्ध्यविरुद्धार्थतयाऽर्थप्रतीतेरदोषत्वम् । उत्पातादिना विरुद्धताया अवश्यं वर्णनीयत्वे पुनर्गुणत्वम् । क्रमेण–यथा मम–'अपि विकसति कमलानां प्रेयसि महसान्निधौ तमालोक्य । कमलं विकसितमचिरात् स्वकरेणामीलयत् सुदती ॥' इत्यत्र सूर्ये उदयमानेऽपि कमलनिमीलनं विरोधाभासं पोषयत्, सुदत्या व्यज्यमानेन स्मयमानत्वेन व्यज्यमानं चन्द्रिकात्वं 'नायं रमणाय समयः, किन्तु चन्द्रिकामुदिर एवाहेती'ति विभावयत्य-

---

१ 'भो यथा कस्यापि पिंडीखर्जूरैरुद्वेजितस्य तिंतिड्यामभिलाषो भवति, तथाऽन्तःपुरस्त्रीरत्नपरिभोगिणो भवत इयं प्रार्थना ॥' इति संस्कृतम् ।

२ 'तेन परापतितेनैव वराका कल्याणी मटमटायिता ।' इति संस्कृतम् ।

लङ्कारविशेषावस्थानम्। यथा वा भागवते-'विचित्रोपवनोद्यानैः कूजद्द्विजकुलाकुलैः। प्रोत्फुल्लकुमुदाम्भोजकह्लारोत्पलवारिभिः॥जुष्टं'...इत्यत्र भगवदनुग्रहेण कुमुदादीनामेककालिको विरुद्धोऽपि सद्भावः सङ्गच्छते। यथा वा तत्रैव-'दैवतानि रुदन्तीव स्विद्यन्ति ह्युच्चलन्ति च।...' इत्यत्रोत्पातादिना मूर्त्तीनां रोदनादि विरुद्धमपि सङ्गच्छते। इति। विद्याविरुद्धार्थता शास्त्रविरुद्धार्थत्वम्, विद्यापदस्य शास्त्रोपलक्षकत्वात्; शास्त्राणि चानेकानि, तेनायं दोषोऽप्यनेकात्मा। अस्य च विरुद्धार्थप्रतीत्या सहृदयहृदयोद्वेगो दूषकताबीजम्। अयं च दोषो नित्यः। केचित् शास्त्राणामनैकान्त्ये तदेकतरविरुद्धत्वेऽपि तदन्यतरविरुद्धत्वाभावात्तथाऽभिधाने न दोषः।' यथा-'पशुश्चेन्निहतः स्वर्गं ज्योतिष्टोमे गमिष्यति। स्वपिता यजमानेन तत्र कस्मान्न हिंस्यते?॥' इत्यादौ। इति। अन्ये त्वाहुः-'वारिपर्णीचयैः साकं घृष्ट्वा वृश्चिकमङ्गतः। दातव्यो वानरीरेणुः सद्यः कण्डुहरो हि सः॥' इत्यादावस्य गुणत्वमपि, इत्यनित्य एवायम्। अत एव-'पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः।' इत्याद्यपि सङ्गच्छते। इति। अन्ये त्वेवमप्याहुः-विद्याविरुद्धार्थत्वन्नाम शास्त्रादिविरुद्धतया प्रतिपाद्यार्थत्वं दोषः। न केवलं विद्यापदेन शास्त्रग्रहणम्, तस्योपलक्षकत्वेन शास्त्रादिग्रहणोपपत्तेः। आदिपदेन पुनर्देशकालादीनां ग्रहणम्। तेन-'सुराष्ट्रेष्वस्ति नगरी मथुरा नाम विश्रुता। आक्षोटनारिकेलाढ्या यदुपान्ताद्रिभूमयः॥' सुराष्ट्रे देशे मथुरा नाम नगरी अस्ति, यदुपान्ताद्रिभूमय आक्षोटादिसम्पन्ना इति देशविरुद्धार्थत्वम्। 'पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती। मधुरुत्फुल्लनिचुलो निदाघो मेघनिस्वनः॥' पद्मिन्या नक्तं, कुमुद्वत्याश्च दिवा, वसन्ते जलवेतसापरपर्यायाणां निचुलानां, निदाघे च मेघानामुन्निद्रत्वाद्यसम्भवात् कालविरुद्धार्थत्वम्। 'आधूतकेसरो हस्ती तीक्ष्णशृङ्गस्तुरङ्गमः। गुरुसारोऽयमेरण्डो निःसारः खदिरद्रुमः॥' हस्तितुरङ्गमैरण्डखदिराणां सकेसरत्वाद्यनुपलब्धेर्लोकविरुद्धार्थत्वम्। 'यावज्जीवमहं मौनी ब्रह्मचारी च मे पिता। माता च मम वन्ध्याऽऽसीत् सत्यं वच्मि नवै मृषा॥' इत्यत्र न्यायविरुद्धत्वम्। तत्तत्पदार्थभेदमादायाभिधाने तु दोषाभावः। यथा मम-'रामचन्द्रमवलोक्य सा तदा पद्मिनी विकसति स्म भूमिजा। शुद्धमिद्धममृतात्मकं पदं प्राप्य कस्य हृदयन्न मोदते?॥' इत्यत्र पद्मिन्या भूमिजात्वाभिधाने देशविरुद्धार्थत्वं, चन्द्रमवलोक्य तस्या विकासाभिधाने नियमविरुद्धत्वं च न दुष्टे, 'रामचन्द्र'मित्यत्र विधेयांशस्याविमृष्टत्वं च निर्दुष्टम्। यथा वा-'भुवनत्रयजेतॄणामपि मानवतां मनः। अनङ्गः पुष्पधन्वाऽपि विदारयति तत्क्षणात्॥' इत्यत्रानङ्गत्वं धनुर्धरत्वं विलक्षणपराक्रमत्वं च युक्तिविरुद्धान्यपि कविसमयाविरुद्धानि। इति दिक्। ननु 'रामचन्द्र'मित्यत्र राघवं 'समवलोक्य' इतिपदपरिवृत्तौ दोषाभावादर्थदोषाभावो न कथम्? इति चेत्! 'रामचन्द्र'मित्यर्थकं पदं 'रामसोम'मिति, 'राघवेन्दु'मिति वा; तस्मात् 'रामचन्द्र'मिति परिवर्त्त्य 'रामसोम'मिति 'राघवेन्दु'मित्यभिधाने वाऽऽशङ्क्यमानोऽस्त्वेव दोषः, यस्यात्र स्वरूपेणावस्थानम्। 'राघव'मिति 'शुद्ध'मित्याद्यर्थेनापि न सङ्घटते। न च 'पद्मिनी'इत्यनभिधाय 'कमलवती' इतिविवक्षया 'अम्भोजिनी' इत्यभिधाने 'रामचन्द्र'मित्याद्यभिहितेऽपि नाशङ्क्यमानस्य दोषस्यावस्थानम्। अतोऽयं नित्य एव दोषः। इति वाच्यम्। 'रामचन्द्र' मित्यत्रेवापरत्रापि रूपकस्यैवाभिधेयत्वात्, अन्यथा च चमत्कारानुदयात्।' इति। साकाङ्क्षार्थताऽनुपात्तार्थोपादित्साविषयकार्थत्वम्। अभिधानापर्यवसानं विवक्षितार्थाप्रतीतिर्वा दूषकताबीजम्। नित्यश्चायं दोषः। सहचरभिन्नार्थतोत्कृष्टापकृष्टत्वाभ्यां समभिव्याहृतेभ्यो विजातीयार्थत्वम्। अत एवायं द्विविधः।तथा च-उत्कृष्टतया समभिव्याहृतेभ्योऽपकृष्टतया समभिव्याहार्य्याणाम्, अपकृष्टतया वा समभिव्याहृतेभ्य उत्कृष्टतया समभिव्याहार्य्याणामर्थानामभिधानेन विजातीयार्थत्वं सहचरभिन्नार्थता। अर्थानामिति बहुवचनमविवक्षितम्। उत्कृष्टापकृष्टभेदाप्रतीत्या हेयस्योपादेयत्वभ्रमः, उपादेयस्यार्थस्य च हेयत्वभ्रमो वा दूषकताबीजम्। अयं च नित्यो दोषः।अस्थानयुक्तार्थता विवक्षितार्थप्रतीतिविघटकतयाऽभिधानम्। अत्राहुः-अनुपयुक्तस्थाने समापितवाक्यार्थत्वमस्थानयुक्तार्थता। तच्च (समापितवाक्यार्थत्वं च) द्विविधम्। वाक्यार्थस्याधिकोपयोगे समापनम्, समापनोपयोगे चाधिक्यम्। तथोक्तम्-'युक्ताधिक्ये विसर्गे (परित्यागे) स्यादाधिक्ये वा समापने। अर्थे प्रकल्पिते यत्र सोऽस्थाने स्यात् समुज्झितः॥' इति। तदाद्यं यथा-'मातुलो माधवो यस्य पिता यस्य धनञ्जयः। स शेते समरे श्रीमानभिमन्युर्महाबलः॥' अत्र'नियतिः केन बाध्यते।' इत्यधिकं वक्तुं योग्यम्। द्वितीयं यथा 'आज्ञा...' इति। अविशेषविशेषार्थताऽविशेषे विशेषो यस्य तादृशार्थत्वम्, अविशिष्टत्वेनाभिधेयस्यार्थस्य विशिष्टत्वेनाभिधानमित्यर्थः। अविशिष्टतया (सामान्येन)ऽभिधेयस्य विशिष्टतया (सामान्याभावेन) ऽभिधानेन तदनिर्वाहो दूषकताबीजम्। अतोऽयं नित्यो दोषः। अनियमनियमार्थता नामानियमे नियमो यस्य तादृशार्थत्वम्। तथा च-अनियततरेना

अपुष्टार्थत्वम्मुख्यानुपकारित्वम्। यथा-'विलोक्य वितते व्योम्नि विधुं, मुञ्च रुषं प्रिये।' इत्यत्र 'वितत'शब्दो मानत्यागं प्रति न किञ्चिदुपकुरुते। अधिकपदत्वे पदार्थान्वयसमकालमेव बाधप्रतिभासः, इह तु पश्चादिति विशेषः।

दुष्क्रमता यथा-'देहि मे वाजिनं राजन्! गजेन्द्रं वा मदालसम्।' इति, अत्र गजेन्द्रस्य प्रथमं याचनमुचितम्।

ग्राम्यता यथा-'स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिये।' इति अत्रार्थो ग्राम्यः।

कस्यचित् प्रागुत्कर्षमपकर्षं वाऽभिधाय पश्चादन्यथाप्रतिपादनं व्याहतत्वम्। यथा-

'हरन्ति हृदयं यूनां न नवेन्दुकलादयः। वीक्षते यैरियं तन्वी लोकलोचनचन्द्रिका॥ १९॥'

---

(निश्चितत्वेना) भिधेयस्यार्थस्य नियतत्वेना (निश्चितत्वेना) भिधानमित्यर्थः। अनियततयाऽभिधेयस्याप्यर्थस्य नियततयाऽभिधाने अनौचित्यमिति सहृदयोद्वेगो दूषकताबीजम्। अतोऽयं नित्यो दोषः। विशेषाविशेषार्थता नाम विशेषेऽविशेषो यस्य तादृशार्थत्वम्, तथा च-विशिष्टतयाऽभिधेयस्यार्थस्याविशिष्टतयाऽभिधानमित्यर्थः, ततश्च सहृदयोद्वेगो दूषकताबीजम्। विशेषनियामकप्रकरणादिसद्भावे दोषाभावादस्यानित्यत्वम्। नियमानियमार्थता नाम नियमेऽनियमो यस्य तादृशार्थत्वम्। तथा च-नियतत्वेना (निश्चितत्वेना) भिधेयस्यार्थस्यानियतत्वेनाभिधानम्। अव्युपत्त्युन्नयनेन सहृदयवैमुख्यं दूषकताबीजम्। नित्यश्चायं दोषः। विध्ययुक्तार्थता विध्यविषयस्यैव विधिविषयत्वेनायुक्तक्रमत्वेन वा (विधेः) अयुक्तत्वम्। विवक्षितार्थानिर्वाहो दूषकताबीजम्। तस्मान्नित्योऽयं दोषः। न चाविमृष्टविधेयांशत्वेन सङ्करः, तत्र हि युक्तस्यैव विधिः, किन्तु तस्य विमर्शाभावः, प्रकृते पुनरयुक्तस्य विधिरिति भेदः। अनुवादायुक्तार्थत्वं सिद्धोपन्यासाननुगुणार्थत्वम्। सिद्धार्थविरुद्धाभिधानं दूषकताबीजम्। नित्योऽयं दोषः। अत्र च प्रकरणानुसंधानेन सिद्धाभिधानाननुगुणत्वप्रतीतिः, इत्यस्यार्थगतत्वम्। निर्मुक्तपुनरुक्तार्थत्वं क्रियाकारकान्वयेन निराकाङ्क्षतया निर्मुक्तेऽपि वाक्ये पुनः कारकान्तराभिधानेन तदर्थाभिधानम्। निर्मुक्ते समापिते इत्यर्थः। अप्रयोजकत्वं सहृदयवैरस्याधानं वा दूषकताबीजम्। तस्मान्नित्योऽयं दोषः। अत्राहुः-'त्यक्तं पुनःस्वीकृते एव वाक्यार्थे विशेषणान्तरोपादाने समाप्तपुनरात्तत्वम्, अत्र त्वन्य एव वाक्यार्थ इति भेदः।' इति।

एतान् लक्षयन्नुदाहर्तुं प्रवृत्त आह-अपुष्टार्थत्वमित्यादि।

**मुख्यानुपकारित्वं** प्रकृतार्थापरिपोषकत्वम्। **अपुष्टार्थत्वम्। यथा-'**हे **प्रिये वितते** विस्तृते **व्योम्नि'**। आकाशे 'उदित'मिति शेषः। **विधुं** चन्द्रम्। **विलोक्य**। **रुषम्** मानम्। **मुञ्च**। 'प्रिययोर्वैमनस्यं हि न कदाऽपि सुशोभते।' इति शेषः।' **इत्यत्र। विततशब्दो** व्योमविशेषणत्वेन न्यस्त इत्यर्थः। **मानत्यागं** कर्तव्यत्वेन बोध्यमानं कार्यमिति भावः। **प्रति। न। किञ्चित्। उपकुरुते। अधिकपदत्वे** तदाख्ये दोषे सति। **पदार्थान्वयसमकालम्। एव। बाधप्रतिभासो** विवक्षितार्थाघातप्रतीतिः। **इह**ास्मिन्नपुष्टार्थत्वे इत्यर्थः। **तु। पश्चात्।** 'बाधप्रतिभास' इति पूर्वेणान्वेति। **इति विशेषः।**

दुष्क्रमत्वं लक्षयन्नुदाहरति-**दुष्क्रमतेत्यादिना**। स्पष्टम्।

इदं तु बोध्यम्-लोके हि विशेषाशक्तौ अल्पं याच्यते इति, न तु आल्पशक्तौ विशेष इति क्रमत्यागः।

ग्राम्यार्थत्वं लक्षयन्नुदाहरति-**ग्राम्यतेत्यादिना**। स्पष्टम्।

व्याहतार्थत्वं लक्षयन्नुदाहरति-**कस्यचिदित्यादिना**।

**कस्यचित्** 'वर्णनीयस्ये' तिशेषः। **प्राक्। उत्कर्षम्। वा। अपकर्षम्। अभिधाय** वर्णयित्वा। **पश्चाद**नन्तरम्। **अन्यथा** प्रतिपादितार्थवैपरीत्येन। **प्रतिपादनम्। व्याहतत्वम्। यथा-'हरन्ती'**त्यादौ।

'**यैः। इयम्। लोकलोचनचन्द्रिका** लोको जगत्तस्य लोचनानि तस्य चन्द्रिका तद्वदानन्दाधायिका। **वीक्ष्यते**। तेषाम्-**यूनाम्**। मनः (कर्म)। **नवेन्दुकलाऽऽदयः। न। हरन्ति** आमोदाधायकतया प्रभवन्ती

इत्यत्र येषामिन्दुकला नानन्दहेतुस्तेषामेवानन्दाय चन्द्रिकात्वारोपः।

'हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः। यथाऽऽशु जायते पातो न तथा पुनरुन्नतिः॥२०॥'

इत्यत्राश्लीलोऽर्थः।

'वर्षत्येतदहर्पतिर्न तु घनो धामस्थमच्छं पयः
सत्यं सा सवितुः सुता सुरसरित्पूरो यया प्लावितः।
व्यासस्योक्तिषु विश्वसित्यपि न कः श्रद्धा न कस्य श्रुतौ
न प्रत्येति तथाऽपि मुग्धहरिणी भास्वन्मरीचिष्वपः॥ २१॥'

इत्यत्र 'यस्मात् सूर्याद्वृष्टेर्यमुनायाश्च प्रभवस्तस्मात्तयोर्जलमपि सूर्यप्रभवं, ततश्च सूर्यमरीचीनां जलप्रत्ययहेतुत्वमुचितं, तथाऽपि मृगी भ्रान्तत्वात्तत्र जलप्रत्ययं न करोति' इत्ययमप्रस्तुतोऽप्यर्थो दुर्बोधः, दूरे च प्रस्तुतार्थबोध इति कष्टार्थत्वम्।

---

त्यर्थः॥१९॥'इत्यत्र। येषां यूनामिति शेषः। इन्दुकला। न। आनन्दहेतुः।तेषाम्। एव। आनन्दायानन्दं प्रतिपादयितुम्। चन्द्रिकात्वारोपः। 'नायिकाया'मिति शेषः। तस्मात् स्फुटमिह व्याहतार्थत्वमिति भावः। 'युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत। तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः॥' इत्यत्र तु चमत्कारविशेषकत्वान्न दुष्टत्वम्।

अश्लीलत्वमुदाहरति-'हन्तुमेवे'त्यादिना।

'हन्तुं मारणं सुरतक्रियारूपयोनिताडनं वा कर्तुम्। एव। प्रवृत्तस्य। अत एव-स्तब्धस्य निर्लज्जतयोन्नतस्य। विवरैषिणः छिद्रान्वेषिणः। यथा। आशु। पातः पतनम्। जायते। तथा। पुनरुन्नतिः। न 'जायते' इति पूर्वेणान्वेति। इदं नीतिशास्त्रस्य वचनम्। अत एवात्र दोषः। अन्यथा तु 'द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु' इति सङ्गच्छेतैवेति बोध्यम्॥ २०॥' इत्यत्र। अश्लीलो व्रीडाव्यञ्जकः। अर्थः।

कष्टार्थत्वमुदाहरति- 'वर्षती'त्यादिना।

'अहर्पतिः सूर्यः। धामस्थं स्वप्रान्तवर्ति। एतत्। अच्छं निर्मलम्। पयो जलम्। वर्षति। नतु। घनो मेघः'वर्षती'ति पूर्वेतोऽन्वेति। अथ-यया (कन्यया)। सुरसरित्पूरो गङ्गाप्रवाहः। आप्लावितः समन्ततो वर्धितः। सा यमुनेत्यर्थः। सत्यम्। सवितुः सूर्यस्य। सुता पुत्री। ननु किमत्र प्रमाणमित्याह-व्यासस्य। उक्तिषु'सूर्यस्य पत्नी सञ्ज्ञाऽभूत्तनया विश्वकर्मणः। मनुर्यमो यमी ( यमुना ) चैव तदपत्यानि वै मुने॥'इत्यादिषु वाक्येषु। कः। न। 'आस्तिकः स' मिति शेषः। विश्वसिति। कस्य। च-श्रुतौ 'आदित्यात् पर्जन्य'इत्यादौ वेदवाक्ये। श्रद्धा सत्यत्वभावना। न। अपि तु सर्वस्यैवास्तीति भावः। तथाऽपि। मुग्धहरिणी ( अत्र मुग्धा हरिणीत्यसमस्तमेव वाच्यम्)। भास्वन्मरीचिषु सूर्यकिरणेषु। अपो जलानि। न। प्रत्येति विश्वसिति। शार्दूलविक्रीडितं वृत्तम्॥२१॥'

दोषं निर्दिशति-इत्यत्रेत्यादिना। स्पष्टम्।

अत्रेदमभिहितम्-अत्र हि-उत्तरोत्तरं विपद्यमानस्य धार्मिकस्य स्वविमर्शरूपेयमुक्तिः, यद्वा-तादृशस्य कामपि दशामवलोक्य खिद्यमानस्य विस्मयमानस्य वा कमपि प्रत्युक्तिरेषा, तथाहि-अहर्पतित्वेन प्रस्तूयमानो धर्मो भाग्यरूपधामस्थमच्छं ( शुभं ) पयः ( कर्मफलं ) वर्षति, न तु घनवद्वृष्टिकर्तृत्वेन प्रतीयमान उद्योग आश्रियमाणो वोपायः कश्चित्) सम्पत्तेरापातरमणीयतया प्रमादोद्बर्द्धकतया वा यमुनासदृशत्वं, तयोरुभयोरपि शुद्धस्वरूपत्वाभावात्, तादृश्याऽपि तया सम्पदा प्रयागसदृशं कमपि सज्जनरूपं तीर्थविशेषमुपगम्य गङ्गापूरसदृशः कीर्त्तिपुञ्जः प्रवृद्धिं नीतः। नन्वत्र किन्नियामकं प्राक्तनस्य कस्यचिदधर्मस्यापि तादृशफलकल्पनोपपत्तेरित्याशङ्क्याह-व्यासस्य धर्माधर्मयोः शुभाशुभयोः फलस्यावश्यम्भावित्वेन तयोर्मिथः प्रभेदमुपन्यस्यत आप्तस्योक्तिषु को न विश्वसिति ? को वा तादृशनिर्णायकतया प्रमाणकोटिमुपगतायां श्रुतौ न विश्वसिति, तथाऽपि मुग्धहरिणीसदृशीयं बुद्धिस्तादृशभास्वद्रूपधर्ममरीचिरूपभाग्यविलसितेषु अपः ( सम्पत्तीः ) न

'सदा चरति खे भानुः सदा वहति मारुतः। सदा धत्ते भुवं शेषः सदा धीरोऽविकत्थनः ॥२२॥'
अत्र 'सदे' ति न नवीकृतम् । अत्रास्य पदस्य पर्यायान्तरेणोपादानेऽपि यदि न स्याद्विच्छित्त्यन्तरं, तदाऽस्य दोषस्य सद्भाव इति कथितपदत्वाद्भेदः ।

नवीकृतत्वं यथा-'भानुः सदा युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति ।
विभर्त्ति शेषः सततं धरित्रीं षष्ठांशवृत्तेरपि धर्म एषः ॥ २३ ॥' इति,

'गृहीतं येनासीः परिभवभयान्नोचितमपि प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमसि सुतशोकान्न तु भयाद्विमोक्ष्ये शस्त्र! त्वामहमपि यतः स्वस्ति भवते ॥२४॥'

---

प्रत्येति । इति । यद्वा-स्वाभिधानमविख्यापयतोऽत एव परहस्तेनैव प्रददतो महोदारस्यापि सकाशात् किञ्चिदप्यलभमानस्यात एव खिद्यमानस्य स्वविमर्शरूपेयमुक्तिः-सूर्यसदृशोऽयमेव नित्यमनेकशः पुण्यक्षेत्ररूपधामस्थं धनं जलमिव वितरति, न तु प्रत्यक्षं तथा प्रतीयमानस्तत्तत्पुण्यक्षेत्रेशः, पुण्यक्षेत्रेषु दानसम्पत्त्या गङ्गापूरोपमस्य विमलस्य यशःपुञ्जस्य प्रवृद्धिविधातृतया तस्याः सम्पादयिताप्ययमेवेति निश्चितम् , अत आप्तवचनं तथाभूता किंवदन्ती च नाविश्वासपदमारोढुमर्हतः, तथाऽपि भास्वन्मरीचिषु जलमिव तस्योदारताविकाशेषु तस्मात् साक्षान्निराशताया उपपत्तेरर्थलाभं मदीयेयं हरिणीसदृशी मुग्धा मनीषा न विश्वसिति ॥ इति । यद्वा-कथमपि विचलच्चित्तां प्रति सख्या उक्तिरियम्-अहर्पतिसदृशः स्वपतिरेव श्रिया भाग्यरूपधामस्थं शुभफलमुपस्थापयति, न तु धनवन्मलिनात्मा मृषागर्जनशीलः कोऽप्यन्यः, सुरसरित्सदृश्या महाभागाया जीवनं या समुल्लासयति-साऽपि तस्य पत्युरेव विभूतिः । अत्र चाप्तस्य वचनं प्रमाणम्; स्वतः प्रमाणं वेदश्च; न कथं ततस्तत्र सुकृतिजनस्य विश्वासः स्यात्, अथापि मुग्धमतिर्भास्वन्मरीचिषु जलप्रत्ययं हरिणीव स्वपतेराराधनेषु ममापि सखी सुखप्रत्ययं न विधत्ते ॥' इति । इत्येवमनेकधा शेमुषीविलसितेष्वर्थस्य दुरवगम्यत्वन्निर्बाधम् ।

अनवीकृतार्थत्वमुदाहरति-'सदे' त्यादिना । स्पष्टम् ॥२२ ॥ यथा वा मम-'काव्यं पिबन्तु ललनाऽधरपानलुब्धाः काव्यं श्रयन्तु विषमासु विपत्सु मग्नाः । काव्यं स्तुवन्तु सुचिराय सुखाय यत्ताः काव्यं स्मरन्तु कृतिनो यदि पूर्णकामाः ॥' इत्यत्र 'काव्य'मिति न नवत्वं नीतम् । कथितदोषं निदर्शयति, । अत्र । अस्य 'सदे' त्येतस्य । पर्यायान्तरेण तदर्थकेनान्येन पदेनेत्यर्थः । उपादाने प्रयोगे । अपि यदि विच्छित्त्यन्तरं नवीकरणं न । स्यात् । तदा अस्यानवीकृतार्थत्वस्य । सद्भावः । इति कथितपदत्वात् भेदः । स्पष्टमन्यत् । इदं तु बोध्यम् 'एकार्थस्यापि शब्दस्य पुनः पुनः प्रयोगे भङ्ग्यन्तरेण पुनस्तदर्थस्य नवीकृतत्वे नानवीकृतत्वं न वा कथितपदत्वम् । नवीकारेण चमत्कारे समुदिते तयोरुभयोरपि तिरोधानात् । इति ।

निर्हेत्वर्थत्वमुदाहरति-'गृहीत'मित्यादिना ॥ २३ ॥

'हे शस्त्र ! येन मत्पित्रा द्रोणाचार्य्येणेति यावत् । नोचितमनुचितं ब्राह्मणस्य स्ववृत्तिविरोधादग्राह्यमिति यावत् । अपि परिभवभयात् परिभवस्य द्रुपदादिदुष्टक्षात्रकर्तृकस्यानादरस्येति यावत् भयं तस्मात् । गृहीतमङ्गीकृतम् । आसीस्त्वमभूः । तस्य मत्पितुर्द्रोणाचार्य्यस्येति यावत् । प्रभावात् सामर्थ्यात् । तव ( शस्त्रस्य ) । खलु ( वाक्यालङ्कारे ) । कश्चित् कोऽपि युयुत्सुरस्त इति यावत् । विषयो गोचरो लक्ष्य इति यावत् । न । अभूत् । इति न अपि तु सर्वोऽपि, 'द्वौ नञौ प्रकृतमर्थं सातिशयं गमयतः' इति नयः । तेन तादृशप्रभावेण मत्पित्रा । सुतशोकात् सुतस्य (ममाश्वत्थाम्नः) यः शोको मरणभ्रान्तिजन्यस्तापस्तस्मात् । न तु । भयात् । परित्यक्तम् । असि । 'अतः' इति शेषः । यतो यत्र । आद्यादिभ्य उपसङ्ख्यानमिति तसिः । भवते । स्वस्ति विश्रामसुखं स्यादिति भावः । 'नमः स्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च ।' २।३।१६ इति चतुर्थी । 'तत्र' इति शेषः । त्वाम् । अहमश्वत्थामा । अपि । विमोक्ष्ये परित्यक्ष्यामि ॥ अत्रायम्भावः-पुरा किल युद्धे सर्वं वीरजातं निघ्नन्तं द्रोणाचार्य्यमवलोक्य यावच्छस्त्रग्रहणं तावत्तस्याप्रतिद्वन्द्वितां च विज्ञाय अश्वत्थामनाम्नि गजे मृते 'अश्वत्थामा हतः' इति सत्यवादिना युधिष्ठिरेणाभिहितम्, सुतशोकभ्रान्तेन

अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्त इति निर्हेतुत्वम्।

'कुमारस्ते नराधीश! श्रियं समधिगच्छतु।' अत्र 'त्वं म्रियस्व' इति विरुद्धार्थप्रकाशनात् प्रकाशितविरुद्धत्वम्।

'अचला अबला वा स्युः सेव्या ब्रूत मनीषिणः।'

अत्र प्रकरणाभावात् 'शान्तशृङ्गारिणोः को वक्ता' इति न निश्चीयते, तस्मात् सन्दिग्धत्वम्।

'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥' २५॥

अत्र द्वितीयार्द्धं व्यतिरेकेण द्वितीयपादस्यैवार्थ इति पुनरुक्तता।

---

द्रोणाचार्य्येण शस्त्रं च परित्यक्तम्, मारितश्च द्रुपदपुत्रेण द्रोणाचार्य्यः। ततः पितृशोकादश्वत्थाम्नाऽपि शस्त्रं मुमुक्षुणेदमभिहितमित्याख्यायिकाऽनुसन्धेया। इति। वेणीसंहारस्येदं पद्यम्। अत्र शिखरिणी छन्दः, तल्लक्षणं च प्रागुक्तम्। अश्वत्थाम्नः पितृशोकातुरस्येयमुक्तिः॥ २४॥'

लक्ष्यं निर्दिशति-अत्रोदाहृते पद्ये। **द्वितीयशस्त्रमोचने** द्वितीयं यत् शस्त्रमोचनं तत्र। **हेतुः**। **न** नैव। **उक्तः**। **इत्यस्मात् निर्हेतुत्वम्**। अतः-'त्वदेवाम्ब! त्यक्षाम्यहमपि बत त्वां पितृशुचा।' इति पाठे हेत्वर्थाभिधानान्न निरुक्तदोषावकाश इति बोध्यम्।

प्रकाशितविरुद्धार्थत्वमुदाहरति-'**हे नराधीश**! **ते** तव। **कुमारः**। **श्रियं** लक्ष्मीं 'राज्यस्य' इति शेषः। **समधिगच्छतु** सम्यगधिकरोतु। 'राज्यभारमयं वोढुं समर्थः प्रतिभाति मे' इति शेषः॥'**त्वं** नराधीशः इत्यर्थः। **म्रियस्व** मृत्युमाप्नुहि।' इतीत्येवम्। **विरुद्धार्थप्रकाशनात्** विपरीतार्थस्य व्यञ्जनात्। **प्रकाशितविरुद्धत्वं** तन्नामाऽर्थदोष इत्यर्थः। अत्राहुः-'अत्रार्थसामर्थ्यनिबन्धना विरुद्धा प्रतीतिः, अन्यत्र पुनः शब्दसामर्थ्यनिबन्धना; इति भूयान् प्रकाशितविरुद्धविरुद्धमतिकारित्वयोर्भेदः। अमतपरार्थत्वे व्यङ्ग्यरसयोर्विरोधित्वमात्रम्, न तु तत्र विवक्षितविरुद्धार्थत्वम्।' इति।

सन्दिग्धार्थत्वमुदाहरति-'हे **मनीषिणो** बुद्धिमन्त इत्यर्थः। **ब्रूत** कथयत। **अचलाः** पर्वताः। **सेव्याः** सेवनीयाः।'मम'इति शेषः। **वा**। **अबला** अबलान्ति गृह्णन्ति वशीकुर्वन्ति मन इति यास्ताः।'सेव्या'इति पूर्वतोऽन्वेति। 'त्यक्त्वा कार्यान्तरे प्रेम किमद्य मम तृप्तये।' इति शेषः।' **अत्र प्रकरणाभावात्**। **शान्तशृङ्गारिणोः**। निर्धारणार्थेयं सप्तमी। **कः**। **वक्ता**। **इतीत्येवम्**। **न**। **निश्चीयते**, अचलसेवाया अभिमतत्वे शान्तत्वप्रतीतेः, अबलासेवायाः अभिमतत्वे पुनः शृङ्गारित्वप्रतीतेः' इति शेषः। **तस्मात्**। **सन्दिग्धत्वम्**। यथा वा-'आयुर्नश्यति पश्यतां, प्रतिदिनं याति क्षयं यौवनं, प्रत्यायान्ति गताः पुनर्न दिवसा, नाप्यासतेऽमी क्षणम्। यावज्जीवमुदर्कवृद्धिरुदिता कर्त्तव्यता कर्मणां, किं कुर्यां? किमु वा सुखाय? कुह वा स्वान्तं प्रमोदेत वा?॥' इत्यत्र प्रकरणाभावात् वक्तुः शान्तत्वं शृङ्गारित्वं वेति न निश्चेतुं शक्यते। प्रकरणसद्भावे तु नोक्तदोष इति सुष्ठूक्तं प्रकरणाभावादिति च बोध्यम्।

पुनरुक्तार्थत्वमुदाहरति-'**सहसा**' इत्यादिना।

'**सहसा** त्वरितं परिणामफलमविमृश्येति यावत्। **क्रियां** कर्म। **न** नैव। **विदधीत** कुर्य्यात्। **अविवेको** विवेकाभावः। **परमापदां** परमाश्च आपदस्तासाम्, **हि** यतः। **गुणलुब्धा** गुणेषु विमृश्यकारित्वादिषु लुब्धाः। **सम्पदः**। **स्वयमप्रार्थिताः**। **एव**। **विमृश्य** त्वरामकृत्वा परिणामफलं बाढमवगम्येति यावत्। **कारिणं** 'क्रियायाः' इति शेषः। **वृणुते** स्वीकुर्वन्ति। असौ भीमसेनं प्रति युधिष्ठिरस्योक्तिः, वैतालीयं वृत्तं, तल्लक्षणं च प्रोक्तं प्राक्॥ २५॥'

लक्ष्यं निर्दिशति-**अत्र**। **द्वितीयार्द्धं** पद्योत्तरार्द्धम्। **व्यतिरेकेण** प्रकारान्तरेण। **द्वितीयपादस्य** 'अविवेकः...'इत्यस्य वाक्यस्य। **एव**। **अर्थः**। अतः **पुनरुक्तता** तन्नामा दोष इति भावः।

प्रसिद्धिविरुद्धता यथा-'ततश्चचार समरे शितशूलधरो हरिः।'
अत्र हरेः शूलं लोकेऽप्रसिद्धम्।

यथा वा-'पादाघातादशोकस्ते सञ्जाताङ्कुरकण्टकः।'

अत्र पादाघातादशोकेषु पुष्पमेव जायते इति प्रसिद्धं, नत्वङ्कुरः, इति कविसमयख्यातिविरुद्धता।

'अधरे करजक्षतं मृगाक्ष्याः।' इत्यत्र अधरे करजक्षतस्य शृङ्गार (काम) शास्त्रविरुद्धत्वाद्विद्याविरुद्धता। एवमन्यशास्त्रविरुद्धत्वमपि।

---

ख्यातिविरुद्धार्थत्वं लक्षयन्नुदाहरति-**प्रसिद्धिविरुद्धता** ख्यातिविरुद्धार्थत्वं दोष इत्यर्थः।

**यथा**-'तत एव दैत्यानां जितकाशित्वोपपत्त्यनन्तरम्। **शितशूलधरः** शितं तीक्ष्णं यत् शूलं तस्य धरः। हरिर्विष्णुः। **समरे** सङ्ग्रामे। **चचार** सञ्चचार 'नयनज्वालया चाशु ददाह दनुजान् क्षणात्।' इति शेषः॥' **अत्र हरेर्विष्णोः। शूलम्। लोके। अप्रसिद्धम्** इत्यस्मात्। 'प्रसिद्धिविरुद्धता' इति पूर्वेणान्वयः। रुद्रस्य त्रिशूलं ज्वलनज्वाला च प्रसिद्धा। न तु विष्णोः; तस्मात्-विष्णोः शूलधारित्वे तन्नेत्रज्वालया दैत्यानां दाहे वर्ण्यमाने च हरिपदार्थो मन्थरायते इति दुष्टत्वम्। **यथा वा**-'ते तव प्रमदाया इति भावः। **पादाघातात्** पादाघातं प्राप्येत्यर्थः। **अशोकस्**तन्नामा वृक्षविशेषः। **सञ्जाताङ्कुरकण्टकः** सञ्जातोऽङ्कुर एव कण्टको रोमोद्गमो यस्य तादृशः। 'उन्मत्त इव सङ्क्रुद्ध इव हन्ति बताध्वगान्' इति शेषः॥' **अत्र। पादाघातात्** प्रमदानामिति शेषः। **पुष्पम्। एव। जायते** 'अशोकस्ये'ति शेषः। **इति प्रसिद्धम्। नतु अङ्कुरः। इति'कविसमयख्यातिविरुद्धता** कवीनां समयः सम्प्रदायः सिद्धान्तो वा तेन या ख्यातिः प्रसिद्धिस्तस्या विरुद्धो विपरीतोऽर्थं इति तस्य भावस्तत्ता। अत्रेदमभिहितम्-'पादाघातादशोकं विकसति'-त्येवं वक्ष्यमाणः कविसमयः, तेनाशोकपुष्पविकासमात्रं सिद्धम्, नतु अङ्कुरोद्गमनम्; तस्मात्तस्य विपरीततया पादाघातादशोकस्याङ्कुरोद्गमाऽभिधानात् प्रसिद्धिविरुद्धत्वम्। अयं च दोषोऽनित्यः। अत एव-'सुस्मितवसनालङ्कारायां कदाचन कौमुदी महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद् विधुः। तदनु भवतः कीर्त्तिः केनाप्यगीयत, येन सा प्रियगृहमगान्मुक्ताशङ्का, कनासि शुभप्रदः॥'अत्रामूर्त्ताऽपि कीर्त्तिर्ज्योत्स्नावत्, प्रकाशरूपा कथितेति लोकविरुद्धमपि कविप्रसिद्धेर्न दुष्टम्।' इति प्रकाशकाराः। 'असूत सद्यः कुसुमान्यशोकः स्कन्धात् प्रभृत्येव सपल्लवानि। पादेन नापैक्षत सुन्दरीणां सम्पर्कमाशिञ्जितनूपुरेण॥' अत्राकस्मादेव सर्वात्मना वसन्तस्य प्रवृत्तेरत्यन्तचित्तोन्मादकत्वं कालस्यावगम्यते।' इति च सूत्रकाराः प्राहुः। एतेन-वसन्तेऽशोकपुष्पोद्गमस्य लोकप्रसिद्ध्यविरुद्धतया कविसमयस्य (पादाघातमन्तरेण तदसम्भवाख्यानरूपस्य) विरुद्धत्वम्। इति निष्कृष्टम्। '**मृगाक्ष्याः** मृगनयनायाः कान्ताया इति यावत्। **अधरे** ओष्ठे। **करजक्षतं** करजानां नखानां क्षतं घातः। कराज्जायते इति करजः, 'अन्येष्वपि दृश्यते।' ३।२।११ इति डः। 'करजं स्याद् व्याघ्रनखे करजनखयोः पुमान्।' इति गोपालः। 'प्रियसख्या हृदये मुदं ततान। युगपत्स्फुरणं क्षणं गतानां प्रतिपच्चन्द्रमसां रुचिं नु यातम्॥' इति शेषः। अत्र वैतालीयं छन्दः, लक्षणं चोक्तं प्राक्॥' **इत्यत्र। अधरे। करजक्षतस्य** नखघातस्य। **शृङ्गारशास्त्रविरुद्धत्वा**च्छृङ्गारशास्त्रं शृङ्गारस्य शास्त्रं वात्स्यायनादिमुनिप्रणीतं कामशास्त्रमिति यावत्। तस्य विरुद्धत्वं तस्मात्। **विद्याविरुद्धता**। 'दोषः' इति शेषः। अत्रेदं बोद्धव्यम्-'नखक्षतस्य स्थानानि कक्षौ वक्षस्तथा गलः। पार्श्वौ जघनमूरू च स्तनगण्डललाटिकाः॥' इति वात्स्यायनादिभिरुक्तेषु स्थानेष्वधरस्यान्यतमत्वाभावात्तत्र नखक्षतोक्तिर्वात्स्यायनादिदर्शितशृङ्गारविरुद्धेति विद्याविरुद्धार्थत्वम्। 'मूढस्य तस्य नखरक्षतान्यधरपल्लवे। बाला दधाना व्यतनोत् सख्या मनसि सञ्ज्वरम्॥' इत्यादौ तु शास्त्रानभिज्ञस्य विरुद्धाविरुद्धत्वयोरकिञ्चित्करतया न सम्भवति निरुक्तो दोषः। अत एव-'मूढताया अन्यथाऽनुपपत्तेर्युक्तमेव तथावर्णनम्। तस्माद् विद्याविरुद्धतायास्तथा वर्णने गुणत्वमेव।' इत्यन्ये। इति।

शास्त्राणामनैक्यमिति सूचयन्नाह-**एवम्। अन्यशास्त्रविरुद्धम्। अपि।** तथाहि-'अष्टाङ्गयोगपरिशीलनकीलनेन दुःसाध्यसिद्धिसविधं विदधद्विदूरे। आसादयन्नभिमतामधुना विवेकख्यातिं समाधिधनमौलिमणिर्विमुक्तः॥' इत्यत्र

'ऐशस्य धनुषोभङ्गं क्षत्रस्य च समुन्नतिम् । श्रीरत्नं च कथन्नाम मृष्यते भार्गवोऽधुना ॥२६॥'॥
अत्र 'श्रीरत्नम्' इति 'उपेक्षितुम्' इत्याकाङ्क्षति ।

'सज्जनो दुर्गतौ मग्नः कामिनी गलितस्तनी । खलः पूज्यः समज्यायां तापाय मम चेतसः॥२७॥'
अत्र 'सज्जनः कामिनी च शोभनौ, तत्सहचरः खलोऽशोभनः' इति सहचरभिन्नत्वम् ।

'आज्ञाशक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं,
भक्तिर्भूतपतौ पिनाकिनि, पदं लङ्केति दिव्या पुरी ।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः, क्व नु पुनः सर्वत्र सर्वे गुणाः ॥ २८ ॥'

---

प्रकृतिपुरुषयोर्भिन्नत्वावगमात्मिकाया विवेकख्यातेरनन्तरं वितर्कविचाराद्यनुसार्यात्मा सम्प्रज्ञातयोगः, तत् पुनः पुरुषमात्रावलम्बनात्मकोऽसम्प्रज्ञातयोगः, इत्यपेक्ष्यैव मुक्तेर्योगशास्त्रेण सम्मतत्वात्, विवेकख्यातिमात्रतश्च तस्या असम्मतत्वात्, तस्माद्विरुद्धार्थत्वं दोषः । यथा वा—'अनन्यसदृशं यस्य बलं बाह्वोः समीक्ष्यते । षड्गुण्यानुसृतिस्तस्य सत्यं सा निष्प्रयोजना॥'इत्यत्र महाबलेनापि सन्ध्यादयः षड्गुणा अवश्यमुपादेयाः इति तेषां निष्प्रयोजनत्वाभिधानं नीतिविरुद्धम्।इति दिक्। अत्र विद्याशब्देन व्याकरणातिरिक्तं शास्त्रं गृह्यते, व्याकरणविरुद्धत्वे च्युतसंस्कृतित्वस्यैव अभिमतत्वात् । न हि च्युतसंस्कृतित्वस्यार्थगतत्वं सम्भवति, येन तस्याप्यत्रान्तर्भावो युज्येत । इति बोध्यम् । प्रहसनादावस्योपादेयत्वमपि दृश्यते, तस्मादनित्योऽयं दोषः ।

साकाङ्क्षार्थत्वमुदाहरति—'ऐशस्य' इत्यादिना ।

'भार्गवः परशुरामः । ऐशस्य महादेवसम्बन्धिनः । धनुषः । भङ्गम् । तेन च क्षत्रस्य क्षत्रियकुलोत्पन्नस्य । समुन्नतिम् । श्रीरत्नम् ।'श्रीरत्न'मिति पाठान्तरेऽपि सीतारूपं रत्नमित्यर्थः । कथन्नाम । अधुना मृष्यते । सहते न कथमपीति यावत् ॥ २६ ॥' अत्र । 'श्रीरत्नम्' इति 'पद'मिति शेषः । 'उपेक्षितुम्' । इति । 'पद'मिति शेषः । आकाङ्क्षति । इत्यतः । साकाङ्क्षत्वम् ।

सहचरभिन्नार्थत्वमुदाहरति—'सज्जन'इत्यादिना ।

'सज्जनः । दुर्गतौ दारिद्र्यरूपे आवर्त्ते । 'दुर्गतिः । नरके निःस्वतायां च' इति हैमः । मग्नः । कामिनी । गलितस्तनी गलितौ पतितौ स्तनौ यस्याः सा । खलो दुर्जनः । समज्यायां सभायाम् । 'समज्या परिषद्गोष्ठी'-त्यमरः । पूज्यः । 'इत्येते त्रयः' इति शेषः । मम । चेतसश्चित्तस्य । तापाय ॥२७॥' अत्र 'सज्जन'स्तत्पदार्थः । च । कामिनी तत्पदार्थः । शोभनौ । तत्सहचरस्तयोः सहचरः । खलः खलपदार्थः । अशोभनः । इत्यतः । सहचरभिन्नत्वम् ।

अस्थानयुक्तार्थत्वमुदाहरति—'आज्ञा' इत्यादिना ।

'आज्ञा शासनं 'यस्ये'ति शेषः, तथा च—यस्य ( रावणस्य ) शासनमित्यर्थः । शक्रशिखामणिप्रणयिनी शक्रो देवराजस्तस्य शिखेति तस्याः मणी रत्नं तस्य प्रणयिनी । प्रिया, ( सहधर्मिणीव अनपायिनी, तत्त्वेन रूपणाच्च दम्पत्योरिवाविच्छेदः सूच्यते ) शास्त्राणि । नवं नूतनं सर्वलोकविलक्षणमिति यावत् । चक्षुर्नेत्रम् । 'यस्ये'ति शेषः । ( अत्रोद्देश्यविधेयभावाभ्यां वचनव्यत्ययेऽपि नान्वयानुपपत्तिः । ) तथा—भूतपतौ प्रमथाधिपे । पिनाकिनि महादेवे । यस्य—भक्तिः । यस्य च—लङ्केति 'प्रसिद्धे'ति शेषः । दिव्या । पुरी । पदं निवासस्थानम् । द्रुहिणान्वये ब्रह्मणो वंशे । च । उत्पत्तिः 'यस्ये'ति शेषः । तत्तस्मात् । अहो आश्चर्यम् । ईदृगभिहितगुणगणगरिष्ठः । वरः । न । लभ्यते । चेत् । एषः । रावणः । न । स्यात् । नु वितर्क्यते । पुनः । सर्वत्र । सर्वे । गुणाः । क्व ? न क्वापीत्यर्थः, रावण एव सकलगुणगणमहिम्नोत्कृष्टोऽभविष्यत् यदि जगदाक्रन्दकारित्वेन बलवता

अत्र 'न रावणः' इत्येतावतैव समाप्यम्, 'क्व नु' इत्यादि पुनरधिकं, तस्मादस्थानयुक्तार्थता।
'हीरकाणां निधेरस्य सिन्धोः किं वर्णयामहे।' अत्र 'रत्नानान्निधेः' इत्यविशेष एव वाच्यः।
'आवर्त्त एव नाभिस्ते नेत्रे नीलसरोरुहे। भङ्गाश्च बलयस्तेन त्वं लावण्याम्बुवापिका ॥ २९॥'
अत्र 'आवर्त्त एव नाभि' रिति नियमो न वाच्यः।
'यान्ति नीलनिचोलिन्यो रजनीष्वभिसारिकाः।' अत्र 'तमिस्रासु' इति रजनीविशेषो वाच्यः।
'आपातसुरसे भोगे निमग्नाः किन्न कुर्वते ॥' अत्र 'आपातमेव' इति नियमो वाच्यः।

---

दोषेण नालङ्क्रियतेति भावः। इदं पद्यं बालरामायणस्य। शार्दूलविक्रीडितं च वृत्तं तल्लक्षणं चोक्तं प्राक्॥२८॥'अत्रास्याम् 'आश्चर्यम्! एकोऽपि गरीयान् दोषः समग्रमपि गुणग्रामं दूषयति, तथाहि–इत्युपक्रम्य जनकं प्रति तत्पुरोहितस्य शतानन्दस्योक्ताविति भावः। 'न रावणः' इत्येतावता 'अर्थाभिधानेन' इति शेषः। समाप्यम्। 'क्व नु'इत्यादि। पुनः। अधिकमस्थानेऽभिहिततयाऽनुपयुक्तम्। तस्मात्–अस्थानयुक्तार्थत ऽस्थाने विरुद्धे स्थाने युक्तः सम्बद्धोऽर्थो यत्र तस्य भावस्तत्ता। 'दोषः' इति शेषः। अत्रेदं बोध्यम्–जगदाक्रन्दकारितया रावणस्य त्याज्यत्वं विवक्षितम्, तच्च 'आश्चर्यम् एकोऽपि गरीयान् दोषः समग्रमपि गुणग्रामं दूषयति, तथाहि' इत्युपक्रमानुसन्धानेन 'न रावणः' इत्येतावत्यभिहिते एव सम्पद्यते, 'क्व नु पुनः' इत्यादि पुनर्योजितं तस्य जगदाक्रन्दकारित्वेन त्याज्यस्यापि विवक्षितविरुद्धमत्याज्यत्वं प्रत्याययति, एतस्य समाधाने एव पर्यवसानात्, अत एवास्थानयुक्तार्थत्वं निर्बाधम्।

अविशेषे विशेषार्थत्वमुदाहरति–'हीरके'त्यादिना।

'हीरकाणां हीराणां तदुपलक्षितानां रत्नानामिति यावत्। निधेर्निधानस्य। अस्य। सिन्धोः। कर्मणि षष्ठी। किम्। वर्णयामहे? 'कुबेरस्येव पद्मादिर्मुकुन्दोन्मोदकारिणः।' इति शेषः॥'

अत्रास्मिन् सिन्धोरत्नाकरत्वेनातिशये वर्ण्यमाने। 'रत्नानान्निधेः' इत्यविशेषः। एव ननु 'हीरकाणां निधेः' इति विशेषः। वाच्यः तस्मादविशेषविशेषार्थत्वम्।

अनियमनियमार्थत्वमुदाहरति–'आवर्त्त' इत्यादिना।

'ते तव 'सुन्दरि!' इति शेषः। नाभिः। आवर्त्तो जलानां चक्रवद्भ्रमः 'स्यादावर्त्तोऽम्भसाम्भ्रमः।' इत्यमरः। एव। नेत्रे नयने। 'एवे'ति पूर्ववत्। च। बलयो जठरावयवविशेषाः। भङ्गास्तरङ्गाः। 'एवे'ति पूर्ववत् त्वं सुन्दरी इत्यर्थः। लावण्याम्बुवापिका लावण्यजलस्य वापिकाभूता। 'एवे'ति पूर्ववत्। कस्याश्चित् सौन्दर्य्यं निरीक्ष्य तया सङ्गमभिलषत इयमुक्तिः॥२९॥ अत्र। 'आवर्त्तः। एव। नाभिः। इतीत्थम्। नियमः। न नैव। वाच्यः।'अथापि उक्तः, तस्मात्–अनियमनियमार्थत्वं दोषः' इति शेषः। यथा वा–'वक्त्राम्भोजं सरस्वत्यधिवसति सदा शोण एवाधरस्ते बाहुः काकुत्स्थवीर्यस्मृतिकरणपटुर्दक्षिणस्ते समुद्रः। वाहिन्यः पार्श्वमेता क्षणमपि भवतो नैव मुञ्चन्त्यभीक्ष्णं स्वच्छेऽन्तर्मानसेऽस्मिन् कथमवनिपते! तेऽम्बुपानाभिलाषः? ॥' इत्यत्र 'शोण एवे'ति नियमो न वाच्यः, तथाऽऽरोपे नियमासम्भवात्।

विशेषाविशेषार्थत्वमुदाहरति–'यान्ति'.... इत्यादिना।

'नीलनिचोलिन्यो नीलाः श्यामा निचोलाः पिधानपटा आसां सन्तीति, ताः। श्यामवर्णवस्त्रैः पिहितावयवा इत्यर्थः 'निचोलः प्रच्छदपटः।' इत्यमरः। अभिसारिकाः। रजनीषु (तिमिराकुलासु) रात्रिष्वित्यर्थः। यान्ति गच्छन्ति। 'परेणालक्ष्यसञ्चारा मूकीकृतविभूषणाः। इति शेषः।'

अत्रोदाहृते पद्यांशे। 'तमिस्रासु' इतीत्थम्। रजनीविशेषः। वाच्यो वक्तव्यः। 'स च नोक्तः, इति विशेषे वक्तव्येऽपि विशेषार्थानभिधानाद्विशेषाविशेषार्थत्वं नाम दोषः' इति शेषः।

नियमानियमार्थत्वमुदाहरति–'आपातसुरसे' इत्यादिना।

'आपातसुरसे आपातं पतनावधि (एव) सुरसस्तत्र, परिणामविरसे इति भावः। पातमभिव्याप्य मर्य्यादीकृत्य वाऽऽपातम्। 'आङ्मर्यादाऽभिविध्योः।' २।१।१३' इत्यव्ययीभावः। भोगे विषयसुखानुभवार्थानुष्ठाने ऐहिके आमुष्मिके वा भोगे

ननु वाच्यस्यानभिधाने 'व्यतिक्रमलवम्' इत्यादौ अपेरभावः, इह च-एवकारस्येति कोऽनयोर्भेदः ? अत्राह-'नियमस्यावचनमेव पृथग्भूतं नियमपरिवृत्तेर्विषयः ।' इति, तन्न, तथा सत्यपि द्वयोः शब्दार्थदोषतायान्नियामकाभावात्, तत्का गतिः ? इति चेत् ! 'व्यतिक्रमलवं' इत्यादौ शब्दोच्चारणानन्तरमेव दोषप्रतिभासः, इह तु अर्थप्रत्ययानन्तरम्, इति भेदः । एवं च-शब्दपरिवृत्तिसहत्वासहत्वाभ्यां पूर्वैराहतोऽपि शब्दार्थदोषविभागः पर्य्यवस्यति-यः शब्दपरिवृत्त्यसहः स शब्ददोष एव, यश्च पदार्थान्वयप्रतीतिपूर्वबोध्यः सोऽपि शब्ददोषः, यस्तु अर्थप्रतीत्यनन्तरं बोध्यः सोऽर्थाश्रयः इति । एवं च-अनियमपरिवृत्तत्वादेरपि अधिकपदत्वादेर्भेदो बोद्धव्यः । अमतपरार्थत्वे च 'राममन्मथशरेण' इत्यादौ नियमेन वाक्यव्यापित्वाभिप्रायाद्वाक्यदोषता, अश्लीलत्वादेस्तु न नियमेन वाक्यव्यापित्वम् ।

'आनन्दितस्वपक्षोऽसौ परपक्षान् हनिष्यति ।' अत्र 'परपक्षान् हत्वा स्वपक्षानानन्दयिष्यती'ति विधेयम् ।

---

इति यावत्, उभयविधानामपि भोगानामापातमात्रसुरसत्वात् । तथा च श्रुतिः-'यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र ।' इति । **निमग्नास्तडागादिगर्त्ते इव पतिता जना इत्यर्थः । किम् । न** नैव । **कुर्वन्ति**, अपि तु सर्वमनर्थजातं कुर्वन्तीति भावः । 'अविवेकेन सन्दष्टाः कृपणा हतलोचनाः ।' इति शेषः ॥' अत्र **'आरातं** पतनावधि । **एव न तु** पतनोत्तरम् । इत्येवम् । **नियमः । न वाच्यः** । 'तस्मात् 'आपातमात्रभव्येऽर्थे' इति युक्तः पाठः ।' इति शेषः ।

नन्वत्र वाच्यानभिधानमेवाङ्गीक्रियताम्, अप्येवयोर्भेदाभावात्, इत्यभिप्रेत्याशङ्कते—**नन्वित्यादिना** ।

**ननु । वाच्यानभिधाने । 'व्यतिक्रलवं' इत्यादौ । अपेः । अभावः । इह**ास्मिन् नियमानियमार्थत्वे सति 'आपातसुरसे इत्यादाविति यावत् । **च । एवकारस्य** । 'अभावः' इति पूर्वेण । इतीत्थेवम् । **अनयोः** 'दोषयोः' इति शेषः । **कः । भेदः** 'अप्येवयोर्द्योतकत्वेन सामान्ये तदभावमूलस्यापि दोषस्य नानात्वानङ्गीकार्य्यात्' इति शेषः । **इति । चेत्** अत्रास्यां मीमांसायामुपस्थितायामिति यावत् । **आह** 'कश्चित्' इति शेषः । **नियमस्य**ैवकारस्य । **पृथग्भूतम् । अवचनं** वचनाभावः । **एव । नियमपरिवृत्ते** नियमस्य परिवृत्तिः परिवर्त्तनं तस्याः । **विषयः । इति । तत् । न** 'युक्त'मिति शेषः । हेतुमाह-**तथा सति । अपि । द्वयो**र्वाच्यानभिधाननियमपरिवृत्त्योः । **शब्दार्थदोषतायां** शब्दत्वेन आर्थत्वे विभज्याभिधाने । **नियमाभावा**द्भेदकानुपलब्धेः । नन्वेवम्-**तत् । का** । गतिर्निर्वाहप्रकारः । **इति चेत् ? 'व्यतिक्रमलव'मित्यादौ**-अनभिहितवाच्यत्वे । **शब्दोच्चारणानन्तरम्** । **एव** न तु अर्थावगमानन्तरम् । **दोषप्रतिभासः । इह** 'आपातसुरसे' इत्यादौ परिवर्त्तितनियमत्वादौ दोषे । **तु । अर्थप्रत्ययानन्तरम्** । 'दोषप्रतिभास'इति पूर्वेणान्वेति । **इति भेदः** । नन्वेवं किं सिद्धान्तितमित्याह-**एवम् । च । शब्दपरिवृत्तिसहत्वासहत्वाभ्यां** शब्दपरिवृत्तिसहत्वेनार्थपरिवृत्तिसहत्वेन च । **पूर्वैः । आहृतः** स्वीकृतः । **अपि । शब्दार्थदोषविभागः** शाब्दोऽयमार्थोऽयमिति विभागः । एवं वक्ष्यमाणप्रकारेण । **पर्य्यवस्यति** युज्यते । तमेव प्रकारं निर्दिशति-**यः । दोषः । शब्दपरिवृत्त्यसहः** शब्दान्वयव्यतिरेकानुविधायी । **सः । शब्ददोषः**शब्दं दूषयतीति तथोक्तः । **एव** नत्वर्थदोषः । **यः । च** 'दोष' इति शेषः । **पदार्थान्वयप्रतीतिपूर्वबोध्यः** पदार्थानामन्वयो योग्यताऽऽदिकृतः सम्बन्धस्तस्य प्रतीतिः सा पूर्वा यत्र तद्यथा तथा बोध्यः । **सः । अर्थाश्रयो**ऽर्थान्वयव्यतिरेकानुविधायी दोषः । **इति** । किमेवं निष्पन्नमित्याह-**एवम् । च । अनियमपरिवृत्तित्वादेः** आवर्त्त एव नाभिस्ते इत्यादेरर्थदोषस्य । **अपि । अधिकपदत्वादेः** । 'पल्लवाकृतिरक्तोष्ठी'त्यादेः शब्ददोषात् । **भेदः । बोद्धव्यः** । तथा-'**राममन्मथशरेण ताडिता**' **इत्यादौ** ( उदाहृतपूर्वे ) । **अमतपरार्थत्वे**ऽनभिमतद्वितीयार्थमूलकतयाऽर्थदोषायमाणे शाब्दे दोषे । **तु । नियमेन । वाक्यव्यापित्वं** वाक्यान्वयव्यतिरेकानुविधायित्वम् । 'अतो नार्थदोषत्वभ्रमः कार्य' इति शेषः ।

अयुक्तविध्यर्थतामुदाहरन्ति-**'आनन्दित'**'''इत्यादिना । स्पष्टोऽर्थः ।

'चण्डीशचूडाभरण! चन्द्र! लोकतमोऽपह! । विरहिप्राणदमन! कदर्थय न मां वृथा ॥३०॥'
अत्र विरहिण उक्तौ तृतीयपादस्यार्थो नानुवाद्यः।

'लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासियष्टयाऽरिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती।
तत्सक्तोऽयं न किञ्चिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिति गतेवाम्बुधिं यस्य कीर्तिः ॥ ३१ ॥'

अत्र 'विदितं तेऽस्तु' इत्यनेन समापितमपि वचनं 'तेन' इत्यादिना पुनरुपात्तम्।
अथ रसदोषानाह–

६ रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि ॥ १२ ॥

---

इदं बोध्यम्–'आनन्दितस्वपक्षोऽसौ परपक्षान् हनिष्यति । मोदितास्तिकसन्दोहः कल्कीव ननु नास्तिकान् ॥' इति समस्तमिदम् । अत्र स्वपक्षस्यानन्दितत्वाभिधानं परपक्षनिहननपूर्वकमेवेति प्रकृतेऽन्यथाभिधानाद्विध्ययुक्तार्थत्वम् । इति ।

अनुवादायुक्तार्थत्वमुदाहरति–'चण्डीशे'त्यादिना । स्पष्टोऽर्थः ॥ ३० ॥

इदं तु बोध्यम्–अत्र विरहिणश्चन्द्रं प्रति 'कदर्थय न मां वृथा' इति प्रार्थनम्, तच्च 'चण्डीशचूडाऽऽभरणे'त्यादिना साभिप्रायविशेषणन्यासद्वारा समर्थितमपि तृतीयपादप्रतिपाद्येन 'विरहिप्राणदमने'त्यनेनापाकृतं, तस्य तथा स्वाभाव्योद्भावनात् । इत्ययमनुवादस्यायुक्तत्वमूलोऽर्थदोषः । इति ।

निर्मुक्तपुनरुक्तत्वमुदाहरति –'लग्न'मित्यादिना ।

'इह।स्मिन् सङ्ग्रामे । यया । एव । रागावृताङ्ग्या रागेण रुधिरलौहित्येन(अन्यत्रानुरागेण)आवृतमङ्गमवयवो विशिष्टलोहरेखाविशेषो ( अन्यत्र नेत्रादि ) यस्याः, तया । असियष्टयाऽसिः खड्ग एव यष्टिस्तया ( अन्यत्र तत्त्वेनाध्यस्तया नायिकया ) अरिकण्ठेऽरीणां शत्रूणां कण्ठस्तत्र ( अन्यत्रार्च्छन्त्यागच्छन्तीत्येवंशीलास्तेषामरीणां [ आगच्छतां जाराणां ] कण्ठे ) । सुदृढं यथा भवेत्तथा । लग्नं लग्यते स्म ( खण्डनाय रमणायेति वा ) । च तथा । याऽसियष्टिः (अन्यत्र तत्त्वेनाध्यवसिता नायिका ) । इह।स्मिन् सङ्ग्रामे । मातङ्गानां हस्तिनाम्(अन्यत्र तत्सदृशानाम्मदशालिनाम्) अपि किमु परेषाम् । उपरिपतन्ती ( स्वयमेव गत्वा खण्डनाय, रमणायेति वा ) । परपुरुषैः परेषां शत्रूणां पुरुषाः सैनिकास्तैः ( अन्यत्र–परे उदासीनामहान्तो वाऽर्मी पुरुषास्तैः) । दृष्टा । तत्सक्तस्तस्यामसियष्ट्यां ( अन्यत्र तत्त्वेनाध्यवसितायां नायिकायां ) सक्तः सम्बद्धो निरन्तरं तद्धारीति भावः ( अन्यत्रासक्तः ) । अयं वीरो राजा ( अन्यत्र तव जामाता, मम भर्त्ता ) । किञ्चित् किमपि युक्तायुक्तम् न । गणयति विचारयतीत्यर्थः । इदम्–ते तव ( मत्पितुः ) 'अम्बुधे !' इति शेषः । विदितं निवेदितम् । अस्तु । इदं किमित्याह–तेन ( नामानुल्लेखः क्रोधं व्यनक्ति ) भृत्येभ्यः सेवकेभ्यः । दत्ता । अस्म्यहमित्यर्थः । इतीत्थेवम् । श्रीनियोगात् श्रियो लक्ष्म्या नियोगो नियोजनं तस्मात् । मत्पितर्य्येवं निवेदय, इत्येवंरूपाच्छासनादित्यर्थः । गदितुमिव । यस्य वीरस्य राज्ञः । कीर्त्तिः । अम्बुधिं समुद्रम् । गता । अत्रासियष्टिरसाध्वीत्वेन, श्री राजपत्नीत्वेन, कीर्त्तिः पुनर्दूतीत्वेनाध्यवसिता समुद्रान्तं चैतस्या व्याप्तिरभिहिता । शार्दूलविक्रीडितं वृत्तम् । तल्लक्षणं चोक्तं प्राक् ॥ ३१ ॥'

लक्ष्यं स्पष्टयति–अत्रे त्यादिना ।

अत्र । 'विदितम् । ते । अस्तु ।' इत्यनेनेत्यन्तेनाभिधानेन । समापितम् । अपि । वचनमभिधानम् । 'तेने'त्यादिना । पुनरुपात्तम् । अत्रेदं बोध्यम्–'विदितं तेऽस्तु' इत्यनेन समाप्यमपि राजदोषाभिधानं 'तेनास्मि दत्ता भृत्येभ्यः' इत्येतावता पुनरभिधानेनोपात्तम्, तच्च निरर्थमेव, उत्प्रेक्षायास्तेनैव निर्वाहात् ।'श्रीनियोगात्'इत्यादि तु न दुष्टम्, अन्यथा वाक्यैकवाक्यत्वमुच्छिद्येत ।

रसदोषान् लक्षयितुं प्रतिजानीते–अथेत्यादिना ।

अथ रसदोषान् । आह कथयति–६ रसस्योक्तिरित्यादिना ।

६ रसस्य । स्वशब्देन स्वस्य रसस्य शृङ्गारादेर्वा शब्दस्तद्वाचकस्तेन तद्द्वारेति यावत् । उक्तिः कथनं वाच्यतेति

परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः ।
आक्षेपः कल्पितः कृच्छ्रा-दनुभावविभावयोः ॥ १३ ॥
अकाण्डे प्रथनच्छेदौ तथा दीप्तिः पुनःपुनः ।
अङ्गिनोऽननुसन्धान-मनङ्गस्य च कीर्त्तनम् ॥ १४ ॥
अतिविस्तृतिरङ्गस्य प्रकृतीनां विपर्य्ययः ।
अर्थानौचित्यमन्यच्च दोषा रसगता मताः ॥ १५ ॥

रसस्य स्वशब्दो रसशब्दः, शृङ्गारादिशब्दश्च, तेनोक्तिः क्रमेण यथा—
'तामुद्वीक्ष्य कुरङ्गाक्षीं रसो नः कोऽप्यजायत।' 'चन्द्रमण्डलमालोक्य शृङ्गारे मग्नमान्तरम् ॥ ३२ ॥'

---

यावत्। 'दोष' इति शेषः। **स्थायिसञ्चारिणोः** स्थायी च सञ्चारी चेति तयोः। **अपि** 'स्वशब्देनोक्तिर्दोषः' इति पूर्वेण समुच्चीयते। **परिपन्थिरसाङ्गस्य** परिपन्थी प्रतिकूलो ( विरुद्धस्वभावः ) यो रस इति, तस्याङ्गं तत्स्वरूपभूत इति यावत्, तस्य। **विभावादेः** विभावस्यानुभावस्य चेत्यर्थः। **परिग्रहः** 'दोषः' इति शेषः। **अनुभावविभावयोः**। **कृच्छ्रात्**। **कल्पितः**। **आक्षेपः** 'दोषः' इति शेषः। **अकाण्डे** काण्डादवसराद्विरुद्धस्तत्र। 'रसस्ये'ति शेषः। **प्रथनच्छेदौ** प्रथनं (आख्यानम्) च च्छेद(विराम) श्चेति, 'दोषौ' इति शेषः। तथा च-रसस्यानवसरे प्रथनं छेदश्चेत्युभौ दोषावित्यर्थः। **तथा**। **पुनःपुनः** 'रसस्य' इति शेषः। **दीप्तिः** प्रकाशनम्। 'दोषः' इति शेषः। **अङ्गिनः** प्रधानभूतस्य रसस्येत्यर्थः। **अननुसन्धान**मनुसन्धानस्याभावः। 'दोषः' इति शेषः। **च** पुनः। **अनङ्गस्य**ाङ्गाद्विरुद्धस्य, प्रकृतानुपकारिण इति यावत्। **कीर्त्तनम्**। 'दोषः' इति शेषः। **अनङ्गस्या**प्रधानस्येत्यर्थः। **अतिविस्तृति**रत्यन्तं विस्तरः। 'दोषः' इति शेषः। **प्रकृतीनां** स्वभावानाम्। **विपर्य्ययो** व्यत्ययो व्यतिक्रम्य वर्णनमिति यावत्। 'दोषः' इति शेषः। **च**। **अन्यद्**-भिन्नम् एतेभ्यो विलक्षणम्, एतेषां च बीजभूतमित्यर्थः। **अर्थानौचित्य**मर्थानां पदार्थानामनौचित्यमौचित्यस्याभावः। एवम्—**रसगताः** १ रसस्य स्वशब्दवाच्यत्वम्, २ स्थायिनः स्वशब्दवाच्यत्वम्, ३ सञ्चारिणः स्वशब्दवाच्यत्वम्, ४ परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः, ५ अनुभावस्य कष्टेन कल्पित आक्षेपः, ६ विभावस्य कष्टेन कल्पित आक्षेपः, ७ रसस्याकाण्डे प्रथनम्, ८ रसस्याकाण्डे छेदः, ९ रसस्य पुनःपुनर्दीप्तिः, १० अङ्गिनोऽननुसन्धानम्, ११ अनङ्गस्य कीर्त्तनम्, १२ अङ्गस्यात्यन्तं विस्तृतत्वम्, १३ प्रकृतीनां विपर्ययः, तथा १४ अर्थानौचित्यम्; इत्येते रसगताश्चतुर्दशेत्यर्थः। **दोषाः**। **मताः** ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥

रसस्य स्वशब्देन उक्तिमुदाहरति-**रसस्ये**त्यादिना।

**रसस्य**। **स्वशब्दः** स्वशब्देनाभिधानम्। **रसशब्दः शृङ्गारादिशब्दः**। **चे**ति द्विविधः। **तेन**। **उक्तिः क्रमेण**। रसस्य स्वशब्दाभिधेयौ दोषौ। **यथा**-'**तां** चिरेण दिदृक्षाविषयीकृताम्। **कुरङ्गाक्षीं** मृगनयनाम्। **उद्वीक्ष्य**। **नो**ऽस्माकम् ( अत्र बहुवचनेनात्मनः सुकृतित्वं ध्वनयति )। 'चेतसि' इति शेषः। **कोऽपि**। **रसः**। **अजायत**। 'कर्पूररुचिरां शश्वत् पीयूषपरिवर्षिणीम्।' इति शेषः।' अत्र-'रसः' इति शब्देनोक्तिरिति रसस्य स्वशब्दवाच्यत्वम्' इति भावः। '**चन्द्रमण्डलम्**। **आलोक्य**। 'स्थितवतो मम' इति शेषः। **आन्तर**मन्तःकरणम्। **शृङ्गारे** तदाख्ये रसे तत्प्रवाहे इति यावत्। **मग्नम्**। 'भावगम्भीरहसितं चकोरप्रियदर्शनम्।' इति शेषः।' अत्र 'शृङ्गारे' इति शब्देनोक्तिरिति रसस्य स्वशब्दवाच्यत्वमिति भावः। यथा वा-'तामनङ्गजयमङ्गलश्रियं किञ्चिदुच्चभुजमूललोकिताम्। नेत्रयोः कृतवतोऽस्य गोचरे कोऽप्यजायत रसो निरन्तरः ॥' इत्यत्र रसस्य 'रस' इति शब्देनोक्तौ स्वशब्दवाच्यत्वम्। 'आलोक्य कोमलकपोलतलाभिषिक्तव्यक्तानुरागसुभगामभिराममूर्त्तिम्। पश्यैष बाल्यमतिवृत्य विवर्त्तमानः शृङ्गारसीमनि तरङ्गितमातनोति ॥' इत्यत्र रसस्य 'शृङ्गार' इति शब्देनोक्तौ स्वशब्दवाच्यत्वम्। द्विविधोऽप्ययमनित्यो दोषः, विभावादिना प्रतीतस्यानुवादे तदसम्भवात्। अत एव-'स्थातिरमहितादेशाद्दूरं प्रयातुमुपस्थितं कथमपि बलात् प्राणेशानं निरोद्धुमनीश्वरा।

**स्थायिभावस्य स्वशब्दवाच्यत्वं यथा–'अजायत रतिस्तस्यास्त्वयि लोचनगोचरे ॥'**
**व्यभिचारिणः स्वशब्दवाच्यत्वं यथा–'जाता लज्जावती मुग्धा प्रियस्य परिचुम्बने ॥'**
**अत्र प्रथमे पादे 'आसीन्मुकुलिताक्षी सा' इति लज्जाया अनुभावमुखेन कथने युक्तः पाठः ।**

---

चकितचकितं भूयोभूयो निरीक्ष्य वतावला रहसि कमपि ध्यानानीतं रसं पिवति स्म सा॥' 'धातुः शिल्पातिशयनिकषस्थानमेषा मृगाक्षीरूपे देवोऽप्ययमनुपमो दत्तपत्रः स्मरस्य । जातं दैवात्सदृशमनयोः सङ्गतं यत्तदेतत् शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम् ॥' इत्यादौ 'रसशृङ्गारा' दिशब्दैरपि रसस्य स्वशब्दवाच्यत्वं सङ्गच्छते । इति ।

स्थायिव्यभिचारिणोः स्वशब्दवाच्यत्वमुदाहरति–**स्थायिभावस्ये**त्यादिना ।

**स्थायिभावस्य** स्थायिनो भावस्य । **स्वशब्दवाच्यत्वम्** । **यथा**–'त्वयि'सुन्दरे'इति शेषः । **लोचनगोचरे** दृष्टे सतीत्यर्थः । **तस्या** मम सख्या इत्यर्थः । **रतिः** शृङ्गारस्थायिभावः । **अजायत** । 'स्मितेन रुचिरे दृष्ट्या पीयूषपरिवर्षिणि ।' इति शेषः ।' इत्यत्र 'रतिः' इति शब्दोपादानात् स्थायिभावस्य स्वशब्दवाच्यत्वमिति भावः॥ यथा वा–'एकत्र हन्त विरुवन्ति सुहृज्जनास्ते, निघ्नन्ति तांश्च यमदस्युभटाः परत्र । अन्तः स्वदुष्कृतफलेन पचन्ति तप्तास्तान् पश्यतोऽपि हृदयं न भिनत्ति शोकः ॥' इत्यत्र 'शोकः' इति शब्दोपादानात् । द्विधाभूतश्चायं, सामान्यविशेषाभ्यां द्विधाऽवतारात् । अत्र न केवलं स्वप्रत्ययान्यथात्वं, किन्तु व्याघातोऽपीत्येतन्मूलोऽयम् । 'परिहसतु दुरात्मा दुर्गतिर्वा वृणोतु परिभवतु निकामं यश्च कश्चिज्जनो वा । छुरतु कुलिशपाणिर्हन्तु मां वा कृतान्तस्तदपि जयतु सोऽन्तः स्थाय्यनन्यः प्रसादः ॥' इत्यत्र पुनः स्थायीति प्रसादविशेषणतया प्रतीयते इति न दुष्टः शब्दः । एवं तत्रैव तुर्य्ये पादे 'तदपि नरवरेणोत्साह एवावलम्ब्यः ॥' इति पाठवैपरीत्ये 'उत्साह' इति कर्त्तव्योपदेशमात्रपरतया प्रतीयते इति सङ्गच्छते । तस्मादनित्य एवेति । **व्यभिचारिणो** व्यभिचारिभावस्य । **स्वशब्दवाच्यत्वं** स्वशब्दो व्यभिचारिसञ्चार्य्यन्यतरो निर्वेदाद्यन्यतमो वा शब्दस्तद्वाच्यत्वम् । तत्राद्यो यथा–'उपगतमपि निजदयितं दयिते ! किमिदं वतेति पृच्छन्तम् ।सञ्चारिणः प्रभावात् कस्याप्येषेति नावैति॥'इत्यत्र 'सञ्चारिण' इति शब्दोपादानात् ।**यथा** ('अन्त्यो दोषः।' इति शेषः)। '**मुग्धा**ऽप्राप्तयौवना नायिका । **प्रियस्य** प्रियसम्बन्धिन इत्यर्थः । 'अधरस्ये'ति शेषः । **परिचुम्बने** । 'क्रियमाणे' इति शेषः । **लज्जावती** । '**जाता** । 'पिपासिताऽपि सुचिराद्युताऽपि कथञ्चन ।' इति शेषः ।' इत्यत्र 'लज्जा'इति शब्दोपादानान् । इति भावः । इत्थमुदाहृत्य निर्दोषं पाठं निर्दिशति–**अत्रो**दाहृते वाक्ये । **प्रथमे** पादे । '**सा** । **मुकुलिताक्षी** । **आसीत्** ।' इतीत्थेवम् । **लज्जायाः** । **अनुभाव कथने** । **पाठः** । **युक्तो** निर्दोषः । यथा वा–'सव्रीडा दयिताऽऽनने, सकरुणा मातङ्गचर्माम्बरे, सत्रासा भुजगे, सविस्मयरसा चन्द्रेऽमृतस्यन्दिनि । सेर्ष्या जह्नुसुताऽवलोकनविधौ, दीना कपालोदरे, पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः ॥' इत्यत्र व्रीडाऽऽदिशब्दोपादानात् । अत्राहुः प्रदीपकाराः–'अत्र व्रीडादयो व्यभिचारिभावाः स्वशब्देनोपात्ताः । न च स्वशब्देनोपात्तेषु व्यभिचार्य्यादिष्वास्वादसम्भवोऽनुभूयते, किन्तु अनुभावादिमुखेनैव, व्यक्तेषु, तस्मादास्वादानुत्पत्तिर्दोषत्वबीजमिति सम्प्रदायः । तत्रेदमालोचनीयम्–एतावता शब्दवाच्यताया दोषत्वमेव तावद् दुर्लभम्, दूरे पार्थक्येन, दूरतरे साक्षात्, तथाहि–अनुभावादीनामुपस्थितावियं रसप्रतिबन्धिकताऽभिमा, तदनुपस्थितौ वा, अन्त्ये कारणाभावादेवास्वादाभावो, न तु वाच्यत्वकृतः, सत्येव कारणचक्रे कार्यानुत्पादस्य प्रतिबन्धकता व्यवस्थापकत्वात्, तथा च–न्यूनपदत्वमनभिहितवाच्यता वा दोषः, न त्वियम् । आद्येऽनुभावादित एव रसव्यक्तिरिति किं तच्छब्देनेति वैयर्थ्यमात्रं दोषः । वयं त्वालोचयामः–अनुभावादीनामुपस्थितावेव भावा ( भावरसा ) दीनां शब्दवाच्यतयाऽऽस्वादोपघातः प्रतीयते इति तस्याः पृथग्दोषत्वम्,अत एवौत्सुक्यादीनां शब्दवाच्यता न दोषः,तत्रास्वादविघाताप्रतीतेः । नच वाच्यमेवानुभावोपादानेऽपि किमिति नोदाहृतमिति, तदुपादानस्थले भावादि ( व्यभिचारिरसस्थायिभाव ) शब्दानां वैयर्थ्यमपीत्यसङ्कराभिप्रायेण तथोदाहरणात्, उदाहृते त्वनुभावाक्षेपकतया वैयर्थ्याभावात् । न चैवमुक्तोदाहरणविरोधस्तत्रानुभावाद्यनुपादानादिति वाच्यम्, 'दैवादहमत्र तया चपलायतनेत्रया वियुक्तश्च । अविरलविलोलजलदः कालः समुपागतश्चायम् ॥' इत्यादावाक्षेपेण तेषां प्रतीतेः । नहि व्रीडाऽऽदिशब्दैः प्रतिपादिता व्रीडाऽऽदय आस्वाद्यतामिव स्वानुभावाद्याक्षेपकतामप्यास्वादयितुमक्षमाः, व्रीडाभावात् ।' इति । एवमप्यपरे प्राहुः–'रसस्य स्थायिनो व्यभिचारिणश्च-

**'मानं मा कुरु तन्वङ्गि ! ज्ञात्वा यौवनमस्थिरम् ।' अत्र यौवनास्थैर्यनिवेदनं शृङ्गाररसपरिपन्थिनः शान्तरसस्याङ्गम्, शान्तस्यैव च विभाव इति शृङ्गारे तत्परिग्रहो न युक्तः ।**

**'धवलयति शिशिररोचिषि भुवनतलं लोकलोचनानन्दे ।**

---

स्वशब्दवाच्यत्वे आस्वादापकर्ष इति दोषः, स च तथा त्रिविधः सन् सामान्यासामान्याभ्यां द्विधा भूय षोढाऽऽस्मा । सति सम्भवेऽनुभावादिनाऽभिव्यक्तौ चमत्कारस्योत्कर्षः, नतु वाच्यत्वे; वाच्यत्वे हि अगूढत्वापत्तेस्तस्यापकर्षः । इत्थं च यत्र यस्यानुभावादिना स्फुटतरं नाभिव्यक्तिः तत्र तस्य वाच्यत्वेऽपि नापकर्षः।इति न स्वरूपसन् दोषः। ननु 'तामुद्वीक्ष्य' इत्यादौ तत्तच्चैव नेति कथमत्र दोष इति चेत् ? 'तामुद्वीक्ष्य' इत्यादौ उद्वीक्षणादिनैव अनुभावाद्यभिव्यक्तिरीति तदन्याभिव्यक्तिराक्षेपसिद्धाऽवसेया । यत्र त्वनुभावाद्यभिव्यक्तावपि चमत्कार विशेषाधानाय अन्यथैव उद्देशस्तत्र निर्दुष्टत्वमेवेति 'उपगत' इत्यादौ'केनापि सञ्चारिणोररोण प्रस्ता नावेति' इति सङ्गच्छते । नह्यत्र सञ्चारिशब्दो व्यभिचारिपर्य्याय एव किन्तु पर्य्यटनकारिपर्य्यायोऽपि । एवमन्यत्र । यथा-'न सखी न वा सपत्नीर्नाप्यात्मानं न चैव चारित्रम् । व्यभिचारिणं कमप्युपलभ्यासौ गणयते नान्यत् ॥' इत्यत्र 'व्यभिचारिण'मिति शब्दः । इदमभिहितम्-व्यभिचारिणः शब्दवाच्यत्वनाम दोषोऽनित्य एव, स रससम्बन्धी स्यात्तदन्यसम्बन्धी वा । 'क्वचित्' इत्यादि तु दिक्प्रदर्शनार्थमेव प्राचामनुरोधात् ।' इति ।

एवं रसादीनां स्वशब्दवाच्यत्वमुदाहृत्य रसाङ्गानां पारिपंथिपरिग्रहमुदाहरति-'**मानं...**' इत्यादिना ।

'हे **तन्वङ्गि ! यौवनम्** । **अस्थिरं** चञ्चलम् । **ज्ञात्वा** । **मानम**भिमानम् । **मा** नैव । **कुरु** । 'नेह किञ्चित् सदा स्थायि किं पुनः परिणाम्यदः ॥' इति शेषः ।' इति । दोषन्निदर्शयति-**अत्र** । **यौवनास्थैर्यनिवेदनं** यौवनस्यास्थैर्य्यं तन्निवेदनम् । **शृङ्गाररसपरिपन्थिनः** शृङ्गाररसस्य ( यः ) परिपन्थी विरुद्धस्तस्य । **शान्तरसस्य** । **अङ्ग**मङ्गभूतम् । **च** पुनः । **शान्तस्य** शान्तरसस्य । **एव** न तु शृङ्गाररसस्य । **विभावः** । **इती**त्यस्मात् । **शृङ्गारे** शृङ्गाररसे । **तत्परिग्रह**स्तस्य ( शान्ताङ्गभूतविभावस्य ) **परिग्रहः** । **न** । **युक्तः** । अत्रायम्भावः-निर्वेदस्थायिनि शान्त एव यौवनादीनामस्थायित्वनिवेदनपुरःसरमभिमानपरित्यागौचित्याशंसनं सङ्गच्छते । शृङ्गारश्च शान्तश्च नितान्तं भिन्नात्मानौ इति परिपन्थिरसाङ्गभूतविभावस्य परिग्रहः । इति । यथा वा-'प्रसादे वर्त्तस्व, प्रकटय मुदं, सन्त्यज रुषं, प्रिये शुष्यन्त्यङ्गान्यमृतमिव ते सिञ्चतु वचः । निधानं सौख्यानां क्षणमभिमुखं स्थापय मुखं, न मुग्धे प्रत्येतुं प्रभवति यतः कालहरिणः ॥' इत्यत्र प्रकृते शृङ्गारे तत्परिपंथिनः शान्तस्य कालनित्यत्वनिवेदनमुद्दीपनविभावस्तन्निवेदिते निर्वेदो भावश्च परिगृहीत इति परिपन्थिन उपस्थितौ प्रकृतचमत्कारापकारमूलः परिपन्थिरसाङ्गपरिग्रहो दोषः । यथा वा-'णिहुअरमणम्मि लोअणपहम्मि पडिए गुरुअणमज्झम्मि । सअलपरिहारहिअआ वणगमणं एव्व महइ वहू ॥'[1] इत्यत्र प्रकृते शृङ्गारे व्याजाद्यन्तरा सकलपरिहारवनगमनरूपयोः शान्तानुभावयोः परिपन्थिनोः परिग्रहः । अत्रेदं बोध्यम्-यत्र परिपन्थिनोः श्लेष एव तत्रनामतार्थत्वं, यत्र पुनरेकस्मिन्नपरस्य विभावादिस्फुरणमात्रं तत्रायम् । यद्यपि विभावादिस्फुरणेन परिपन्थिनो रसस्यापि स्फुरणे द्वयोरपि परिपन्थिनोः स्फुरणमत्रापि वक्तुं शक्यते, तथापि नात्र अभिमतार्थत्ववत्साधारण्यं, किन्तु प्रकृतस्य प्राधान्यं न परस्येत्यूह्यम् । अत एवास्य अनित्यत्वम्, तस्य नित्यत्वं च । अन्यथा 'विरोधिनोऽपि स्मरणं'इत्यादिवक्ष्यमाणनयेन अमतपरार्थत्वसद्भाव एव न भवेत् । काव्यप्रकाशकारा अप्याहुः-'अत्र सकल परिहारवनगमने शान्तानुभावौ । इन्धनाद्यानयनव्याजेन उपभोगार्थं वनगमनं चेत् न दोषः ।' इति । एतेनैतस्य 'अमतपरार्थत्वाद्भेदश्चिन्त्य' इति वदन्तः प्रत्युक्ताः ।

अथानुभावस्य विभावस्य च कष्टात् कल्प्यमानमाक्षेपमुदाहरति-'**धवलयति...**' इत्यादिना ।

'**लोकलोचनानन्दे** लोकस्य :लोकानां वा लोचने नेत्रे लोचनानि वाऽऽनन्दयतीति तथोक्ते । 'लोकस्तु भुवने जने ।' इत्यमरः । पचादित्वादच् । **शिशिररोचिषि** शिशिरं शीतलं तापशमनकतया दाहप्रतिद्वन्द्विभूतमिति यावद्रो-

---

१ 'निभृतरमणे लोचनपथे पतिते गुरुजनमध्ये । सकलपरिहृदया वनगमनमेवेच्छति वधूः ॥' इति संस्कृतम् ।

**ईषत्क्षिप्तकटाक्षा स्मेरमुखी सा निरीक्ष्यतां तन्वी ॥ ३२ ॥'**
**अत्र रसस्योद्दीपनालम्बनविभावावनुभावपर्यवसायिनौ स्थिताविति कष्टकल्पना ।**
**'परिहरति रतिं मतिं लुनीते स्खलतितरां परिवर्त्तते च भूयः ।**
**इति बत विषमा दशाऽस्य देहं परिभवति प्रसभं किमत्र कुर्मः ॥ ३३ ॥'**
**अत्र रतिपरिहारादीनां करुणादावपि सम्भवात्कामिनीरूपो विभावः कष्टादाक्षेप्यः ।**
**अकाण्डे प्रथनं यथा–वेणीसंहारे द्वितीयेऽङ्के वर्त्तमानेऽनेकवीरक्षयेऽकाले दुर्योधनस्य भानुमत्या सह शृङ्गारप्रथनम् । अकाण्डे छेदो यथा–महावीचरिते द्वितीयेऽङ्के राघवभार्गवयोर्धाराऽधि-**

---

चिर्विकासो यस्य तस्मिन् । चन्द्रमसीत्यर्थः । यद्वा–लोकलोचनानन्दे लोकलोचनं संसारनिरीक्षणमानन्दयतीति तादृशे । यदन्वयव्यतिरेकाभ्यां लोकनिरीक्षणस्य सत्त्वासत्त्वोपपत्तिस्तथाभूते इति भावः । अत एव- शिशिररोचिषि तद्वत् स्थिते, यद्वा–शिशिरं सर्वमानसिकसन्तापनिवर्त्तकतया शीतलं रोचिर्दर्शनं यस्य तस्मिन् नायके इत्यर्थः । **भुवनतलं** संसारम् । **धवलयति** श्वेतं सुन्दरं वा कुर्वति स्वविकासेन श्वेततां स्मितवितानेन सुन्दरतां वा नयतीत्यर्थः । धवलं करोतीति, धवलयतीति, तस्मिन् । 'अथ धवलो महोक्षे सुन्दरे सिते ।' इति हैमः । **ईषत्क्षिप्तकटाक्षेषत्** किञ्चित क्षिप्ताः कटाक्षा यया यस्या वेति सा । **स्मेरमुखी** स्मेरं विकस्मितं मुखं यस्याः सा । **सा** दुर्निरीक्ष्या । **तन्वो** । **निरीक्ष्यतां** दृश्यताम् । अत्र गीतिः छन्दस्तल्लक्षणं चोक्तं प्राक् ॥ ३२ ॥'

दोषं लक्षयति–अत्रोदाहृते पद्ये । **रसस्य** सम्भोगशृङ्गारस्येत्यर्थः । **उद्दीपनालम्बनविभाव**ावुद्दीपनं ( चन्द्रनिरीक्षणादि ) चालम्बनं ( नायकः ) चेति, ते अमू विभावाविति तथोक्तौ । **अनुभावपर्य्यवसायिना**वनुभावं नायकनिरीक्षणजन्यमानभङ्गसनाथीकृताह्लादं पर्यवसाययतः प्रकरणाद्यनुसन्धानसापेक्षतया विलम्बेनावगमयते इति तथोक्तौ । **स्थितौ** । इतीत्यतः । **कष्टकल्पना** कष्टेन कल्पनाऽऽक्षेपसमर्थनम् । अनुभावस्येति शेषः । अत्राय-म्भावः–स्मेरमुखीत्वादि चन्द्रनिरीक्षणादुद्दीपनान्नायकनिरीक्षणादालम्बनाद्विभावाद्वा भवितुं शक्यमिति तस्य रत्यनुभावरूपत्वमेवेति न वक्तुं शक्यते । वस्तुतस्तु अनुभाव इवालम्बनविभावोऽपि दुर्बोध एवेति बोध्यम्। अस्तु वाऽऽलम्बनव्यक्तिः, किन्तु चन्द्रोदये यूनोः परस्परालोकने भवत्येव कटाक्षपातादि, किन्तु आलम्बनस्य नायकस्य शृङ्गारित्वं कथमनुभूयेतेति दुर्वचम् । इत्यभिप्रेत्यैवाहुर्विवृतिकाराः–'नायकस्य शृङ्गारित्वनिश्चायकाभाव इत्यनुभावस्य नायिकायां चक्षुःप्रसारणस्य कष्टकल्पनयाऽऽक्षेपः । नायकस्याशृङ्गारित्वे दर्शनाभावस्यापि सम्भवात्तादृशसमये तादृशनायिकायां मुनेरपि प्रायो मनःक्षोभो भवतीत्यौत्सर्गिकमेव चक्षुःप्रसारणमिति कष्टकल्पना ।' इति ।

विभावस्य कष्टकल्पिताक्षेपमुदाहरति–'**परिभवति**...' इत्यादिना ।

'**बत** कष्टम् । **विषमा** कठिना दुश्चिकित्स्येतियावत् । **दशा**ऽवस्था । **रतिं** वस्तुनि स्पृहाम् । **परिहरति** दूरीकरोति । **मति**मर्थावधारणम् । **लुनीते** छिनत्ति । लूञ् छेदने । **भृश**मत्यन्तम् । **स्खलति** परिपतति । **भूयः** पुनः । **परिवर्त्तते** परिवर्त्तयते । **इती**त्येवम् । **अस्य** नायकस्य । **देहम्** । **प्रसभम्** । **परिभवति** । **अत्रा**स्मिन् विषये । **किम्** । **कुर्म्मः** । अत्र पुष्पिताग्रा छन्दः । तल्लक्षणं चोक्तं प्राक् ॥ ३२ ॥

अत्रेत्यस्मिन्नुदाहृते पद्ये । **रतिपरिहारादीना**मनुभावानामितिभावः । **करुणाऽऽदौ** । आदिपदेन भयानक-बीभत्सयोर्ग्रहणम् । **सम्भवात्** । तथा च–'संशयेन तदेकतरनिश्चयाभावे' इति शेषः । **कामिनीरूपः** । **आक्षेपः** । **कष्टात्** प्रकरणाद्यनुसन्धानरूपभूतात्क्लेशादित्यर्थः । **आक्षेप्यः** । इति ।

अथाकाण्डे रसस्य प्रथनच्छेदौ, तथा पुनः पुनर्दीप्तिरित्येतत्त्रयं क्रमादुदाहरति– **अकाण्डे** इत्यादिना ।

**अकाण्डे** प्रकृतप्रतिकूले समये । **प्रथनं** वर्णनं'रसस्य'इति शेषः। **यथा–वेणीसंहारे** तदाख्ये नाटके । **द्वितीये**। **अङ्के** । **अनेकवीरक्षये**। **वर्तमाने** । अत एव–**अकाले**ऽनवसरे । **दुर्योधनस्य भानुमत्या** तदाख्यया राज्ञ्या । **सह** । **शृङ्गारप्रथनं** शृङ्गारस्य प्रथनं विपुलतया वर्णनम् । 'उत्साहस्य शोकस्य वाऽवसरे रतेरवसरासम्भवे तदास्वाद-

रूढेऽन्योन्यसङ्ग्रामे 'कङ्कणमोचनाय गच्छामि' इति राघवस्योक्तौ। पुनः पुनर्दीप्तिर्यथा-कुमारसम्भवे चतुर्थे सर्गे रतिविलापे।

अङ्गिनोऽननुसन्धानं यथा-रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः।

अनङ्गस्य कीर्त्तनं यथा-कर्पूरमञ्जर्यां राजनायिकयोः स्वयंकृतं वसन्तस्य वर्णनमनादृत्य वन्दिवर्णितस्य प्रशंसनम्।

अङ्गस्यातिविस्तृतिर्यथा-किरातार्जुनीये सुराङ्गनाविलासादिः।

प्रकृतयो दिव्या, अदिव्या, दिव्यादिव्याश्च, तासां धीरोदात्तादिता, तेषामप्युत्तममध्यमाधम-

---

स्याप्यसम्भवाच्छृङ्गारवर्णनमयुक्तम्' इति शेषः। अकाण्डे। छेदः समाप्तिः। 'रसस्य' इति शेषः। यथा। महावीरचरिते तदाख्ये नाटके। द्वितीये। अङ्के। राघवभार्गवयो रामचन्द्रपरशुरामयोः। धाराऽधिरूढे धारयाऽधिरूढस्तत्र। अन्योऽन्यसङ्ग्रामे।'कङ्कणमोचनायकङ्कणयोस्तद्रूपयोर्वैवाहिकरक्षासूत्रयोर्मोचनं तस्मै तत् कर्तुम्। गच्छामि। इतीत्यस्याम्। राघवस्य। उक्तौ'भासमानायाम्'इति शेषः। एतेन-'तदनुपलभ्यमानत्वेऽपि तत्प्रकरणानुकूलतया गन्तव्यायाम्'इति निष्कृष्टम्।अत्रायं भावः-धीरोदात्तस्य रामस्य तथाऽभिधानं व्याजनिर्गमनं द्योतयत् कातरतामभिव्यनक्ति। इति। पुनः पुनः। दीप्तिः प्रकाशः।'रसस्य'इति शेषः। कुमारसम्भवे तदाख्ये काव्ये। रतिविलापे।अत्रायम्भावः-स्वसामग्रीलब्धपरिपोषस्य विच्छिद्य विच्छिद्य पुनः पोषणं पुनः पुनर्दीप्तिः। सा चाङ्गभूतरसादेरेव नत्वङ्गिनो रसस्य दोषाय। महाभारतादौ शान्तादेरिव तस्य वैरस्यावहत्वात्।इत्ययं नित्यो दोषः। तदुक्तम्-'उपभुक्तो हि पुनरुपभुज्यमान उपभुक्तकुसुमपरिमल इव सहृदयानामास्वादापकर्षकः। तथा चाह-'परिपाकं गतस्यापि पौनःपुन्येन दीपनम्। परस्य स्याद्विरोधाय' इति।

अथाङ्गिनोऽननुसंहितत्वं दोषमुदाहरति-अङ्गिन इत्यादिना।

अङ्गिनः प्रधानरसस्य। अननुसन्धानम्। यथा-रत्नावल्याम्। चतुर्थे। अङ्के। बाभ्रव्यागमने बाभ्रव्यस्य तदाख्यस्य सिंहलेश्वरकञ्चुकिन आगमनं तस्मिन्। सागरिकाया रत्नावल्याः विस्मृतिर्विजयवर्मवृत्तान्ताकर्णनिहितमनसा नरपतिना वत्सराजेन नाममात्रस्याप्यग्रहणादननुसन्धानमित्यर्थः। अयं भावः-नायिकाया विस्मरणेन प्रधानस्य शृङ्गारस्यैवानुसन्धानाभाव इति तस्योच्छेदः। इति।

अथानङ्गस्य कीर्तनमुदाहरति-अनङ्गस्येत्यादिना।

अनङ्गस्य प्रकृतानुपकारिणः। कीर्त्तनम्। यथा-कर्पूरमञ्जर्यां तदाख्ये राजशेखरकृते सट्टके। राजनायिकयोश्चण्डपालविभ्रमलेखयोः। सम्बन्धसामान्यविवक्षया षष्ठी। स्वयंकृतम्। वसन्तस्य। वर्णनम्। अनादृत्य। वन्दिवर्णितस्य। 'वसन्तस्ये'ति शेषः। प्रशंसनम्[1]। अत्रायम्भावः-'जह किल णिवेदिदं वंदीहिं' इत्यारभ्य विदूषकोक्तिपर्य्यन्तेन वन्दिवर्णितस्य वसन्तस्य प्रशंसनम्। तच्च प्रकृतरसानुपकारित्वादयुक्तम्। इत्येतदेव दूषकताबीजं, नित्यत्वे हेतुश्चेति।

अथाङ्गस्यातिविस्तृतिमुदाहरति- किरातार्जुनीये इत्यादिना।

किरातार्जुनीये तदाख्ये काव्ये। सुराङ्गनाविलासादिः। अत्रेदमभिहितम्-किरातार्जुनीयं हि वीररसप्रधानं काव्यं, न तत्र शृङ्गारप्राधान्यम्। इति तत्र सुराङ्गनाविलासादिवर्णनविस्तरोऽनुचित एवेति दोषः। इति।

अथ प्रकृतिविपर्ययमुदाहरन् प्रकृतीस्तावद् व्याचष्टे-प्रकृतय इत्यादिना।

प्रकृतयः स्वभावाः। दिव्याः केवलमुद्रिक्तसत्त्वाः, यथा देवानाम्; अत एवामी दिव्या इत्युच्यते। अदिव्या दिव्याभ्यो व्यतिरिक्ताः, यथा-मनुष्याणाम्। च। दिव्यादिव्याः किञ्चिद्दिव्याः किञ्चिददिव्याश्च इत्यर्थः। यथा-दैत्ययक्षादीनां महामहिमशालिनां रामभद्रादीनां च। अत एवामी न दिव्या, नाप्यदिव्या इति वक्तुं शक्यन्ते। तासां प्रकृतीनाम्। केचित्त्वाहुः-'प्रकृतयो नायिका नायकाश्च, ते च दिव्या अदिव्या दिव्यादिव्याश्च। तेषां नायकानामि'त्यर्थः।

---

१ 'यथा किल निवेदितं वन्दिने'ति संस्कृतम्।

त्वम्, तेषु च यो यथाभूतस्तस्यायथावर्णने प्रकृतिविपर्ययो दोषः। यथा—धीरोदात्तस्य रामस्य धीरोद्धतवच्छद्मना वालिवधः। यथा वा—कुमारसम्भवे—उत्तमदेवतयोः पार्वतीपरमेश्वरयोः सम्भोगश्रृङ्गारवर्णनम्। इदमेव 'पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम्।' इत्याहुः।

अन्यदनौचित्यं देशकालादीनामन्यथा यद्वर्णनम्। तथा सति हि काव्यस्यासत्यताप्रतिभासेन विनेयानामुन्मुखीकारासम्भवः।

---

इति। 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः।' इति मेदिनी। धीरोदात्तादिता धीरोदात्तः 'अविकत्थनः क्षमावान्' इत्याद्युक्तस्वरूपो नायकविशेष आदौ येषां ( धीरोद्धतादीनाम् ) तेषां भावस्तत्ता, धीरोदात्तधीरोद्धतादिस्वरूपत्वमित्यर्थः। 'कार्य'मिति शेष इति केचित्। तेषां प्रसिद्धानां धीरोदात्तादीनाम्। अपि। उत्तममध्यमाधमत्वमुत्तमत्वम्मध्यमत्वमधमत्वं चेत्यर्थः।तेषु दिव्यादिव्यप्रकृतिकेषु। च। यः। यथाभूतः। तस्य। अयथावर्णने। प्रकृतिविपर्ययः प्रकृतेर्विपर्ययो विपर्यासः। दोषः। यथा—धीरोदात्तस्य रामस्य रामभद्रस्य। धीरोद्धतवद्धीरोद्धतस्येवेत्यर्थः। 'तत्र तस्येव।' ५।१।११६. इति वतिः। वालिवधः। यथा वा—कुमारसम्भवे तदाख्ये काव्ये। उत्तमदेवतयोः। पार्वतीपरमेश्वरयोः। सम्भोगश्रृङ्गारवर्णनम्। इदम्। एव। 'पित्रोर्मातापित्रोः। सम्भोगवर्णनमिव। अत्यन्तम्। अनुचितम्।' इतीत्येवम्। आहुः 'काव्यप्रकाशकाराः' इति शेषः। अत्रेदमभिहितम्—न हि सर्वे समस्वभावाः, तत्तत्कारणभूतगुणवैचित्र्येण स्वभावानामपि वैचित्र्यात्। तथा च—केचिद्दिव्यस्वभावा दिव्याः, अदिव्यस्वभावा अदिव्याः, दिव्यादिव्यस्वभावाः पुनर्दिव्यादिव्या इति। तत्र दिव्या देवाः, अदिव्या मनुष्या वत्सराजादयः, दिव्यादिव्याः पुना रामभद्रादयः। एतेऽपि धीरोदात्तादिभेदेन चतुर्विधा, उत्तमत्वादिना पुनस्त्रिविधाः। एवं यस्य यादृशी प्रकृतिस्तस्य तादृशमेव वर्णनमनुरूपम्। छद्मना वालिवधः, तत्परित्यागस्तदन्यथाकल्पनं वा सङ्गच्छते एव यथोदात्तराघवमहावीरचरितयोः। उक्तमपि—'यत्तत्रानुचितं किञ्चिन्नायकस्य रसस्य वा। विरुद्धं तत् परित्याज्यमन्यथा वा प्रकल्पयेत्॥' इति। तथा—पार्वतीपरमेश्वरयोर्विरक्तमूर्धन्ययोः साधारणवत् सम्भोगवर्णनं पित्रोरिवानौचित्यमावहति। इत्ययं नित्यो दोषः। अत एवाहुः—'रतिस्तथैव हासश्च शोक आश्चर्यमेव च। दिव्यानामुचितं वर्ण्यमदिव्योत्तमनेतृवत्॥ किन्तु सम्भोगश्रृङ्गारो वर्ण्यो नोत्तमदेवयोः। सद्यः फलप्रदः क्रोधो भ्रूकुट्यादिविवर्जितः॥ उत्साहः स्वर्गपातालगत्यब्धिलङ्घनादिषु। दिव्यानामेव नेतॄणां वर्ण्यते बुधसत्तमैः॥ पूज्यादौ तु तत्रभवन् भगवन्निति चोच्यते। भट्टारकेति राजादौ महाराजेति चोच्यते॥ इत्याद्युचितमेतेषां विरुद्धं दूषणम्भवेत्॥' इति। एवं च—दिव्यादिव्यानामुभयं, यथाऽर्जुनस्य स्वःपातालादिलङ्घनोत्साहः, एष एवादिव्यानां दोषायेति निष्कृष्टम्। अत एवोक्तम्—'कुलशैलाम्बुनिधीनां न ब्रूयाल्लङ्घनं मनुष्येण। आत्मीययैव शक्त्या सप्तद्वीपावनिक्रमणम्॥' इति। एवं च—सर्वमुचितं वर्ण्यमानमेव सुशोभतेऽन्यथा प्रकृतिविपर्यासो रसमभिभवेत्। यथा—स्वर्गाङ्गनासु मानुषीवेषादिवर्णनम्, रसातलादौ मेघादिवर्णनम्, वसन्ते मेघादिवर्णनं, जरायां सम्भोगवर्णनम्, कुलाङ्गनानां स्पष्टमभिप्रायोद्घाटनं चेति दिक्।

अर्थानौचित्यमुदाहर्तुं तत्स्वरूपं विवृणोति—अन्यदित्यादिना।

अन्यत्। 'तदि'ति शेषः। अनौचित्यम् 'अर्थानाम्' इति शेषः। यत्। देशकालादीनाम् 'रसानुबन्धिनाम्' इति शेषः। अन्यथाऽन्यप्रकारेण यथा भाव्यं तद्वैपरीत्येनेति यावत्। वर्णनम्। हि यतः। तथा यो यथाभूतस्तस्य देशकालादेः तथा वर्णनाभावे इति भावः। सति। काव्यस्य। असत्यताप्रतिभासेन। विनेयानां शिक्षणीयानां राजपुत्रादीनामिति यावत्। उन्मुखीकारासम्भवः। अत्रायम्भावः—ननु'निद्राघूर्णितनयने स्पृशति बलात् स्वं रुषा पदं प्रहितम्। दयिताम्मन्येन पुनस्तेनापि तथैव मानिन्याम्॥ वहति समन्तात् सुरभौ विकसति कमलाकरे ध्वनत्सु भृङ्गेषु। गुरुषु च पठत्सु वेदान् कतिनो विहरन्ति कान्ताभिः॥' इत्यादौ को दोषः, नात्र विद्याविरुद्धत्वमिति वाच्यम्? तस्य साक्षाद् रसतिरस्कारकत्वाभावात्? इति चेत्? अर्थानौचित्यम्। अर्थानौचित्यनाम यस्य यथा

**७ एभ्यः पृथगलङ्कारदोषाणां नैव सम्भवः ।**

**एभ्य उक्तदोषेभ्यः । तथा हि-उपमायामसादृश्यासम्भवयोरुपमानस्य जातिप्रमाणगतन्यूनत्वाधिकत्वयोरर्थान्तरन्यासे उत्प्रेक्षितार्थसमर्थने चानुचितार्थत्वम् ।**

**क्रमेण यथा-'ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्' 'प्रज्वलज्जलधारावन्निपतन्ति शरास्तव।' 'चण्डाल इव राजाऽसौ सङ्ग्रामेऽधिकसाहसः ।' 'कर्पूरखण्डमिव राजति चन्द्रबिम्बम्।' 'हरवन्नी-**

---

वर्णने रसपोषस्तस्य पदार्थस्य तथा वर्णनाभावः । ननु तर्हि प्रकृतिविपर्यय एवेति वाच्यम् । इति चेत्? न, एतस्य प्रकृतिविपर्ययभिन्नस्थले एवावतारस्वीकारात्, तस्य च प्रकृतीनां वैपरीत्यमात्रमूलकत्वात् । वस्तुतस्तु सर्वेऽप्यमी दोषा अनौचित्यनिवन्धनाः, परिगणनप्रकारस्य तत्तत्सहृदयत्वप्रतिपादनार्थमात्रत्वात् ।तथा चोक्तम्-'अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम् । औचित्योपनिवन्धस्तु रसस्योपनिषत् परा ॥' इति । अथापि-निर्दिष्टेभ्यो व्यतिरिक्तं दूषणजातमर्थानौचित्यमिति मन्तव्यम् । तच्च स्वयं सुधीभिर्विमृश्यम् । अत एव काव्यप्रकाशकारेणोक्तम्-''ईदृशा इति । नायिकापादप्रहारादिना नायककोपादिवर्णनम् ।'' इति । एवं च-'अन्यत्' इति मूलकारोक्तं सुतरां सम्पन्नम् । तत्र देशानौचित्यं यथा-'मध्ये विबुधेशसभं निजदर्शनतः प्रमोहमृच्छन्तीम् । गायन् दृष्ट्वा दयितां धर्षितचेतास्तुरङ्गमुखः ॥' इति । कालानौचित्यं यथा-'वहति समन्तात् सुरभौ...' इति दर्शितमेव । अधिकारानौचित्यं यथा-'विम्वोष्ठं वहु मनुते तुरङ्गवक्त्रश्चुम्वन्तं मुखमिह किन्नरं प्रियायाः । श्लिष्यन्तं मुहुरितरोऽपि तां स्वकान्तामुत्तुङ्गस्तनभरभङ्गभीरुमध्याम् ॥' इत्यत्र निजदयितायाः परसङ्गेनान्तः प्रमोदाभिधानात् ।

ननु असदृशत्वप्रभृतीनामलङ्कारदोषाणां परम्परया काव्यात्मभूतरसापकर्षकतया काव्यदोषत्वमेवेति तेऽपि वाच्याः ? इत्याशङ्क्यामी यथातथमेतेष्वन्तर्भाव्या इत्याह-७ **एभ्यः...**इत्यादिना ।

**७ एभ्यो** निरुक्तदोषेभ्य इत्यर्थः । **पृथक्** पृथग्भूतः । **अलङ्कारदोषाणा**मलङ्काराणामुपमाऽऽदीनामनुप्रासादीनां च ये दोषास्तेषाम् । **सम्भवः । एव । न** 'अथ कथं ते पृथगुच्येरन्' इति शेषः ।

अथ--कारिकोक्तम् 'एभ्यः' इति पदं समवगमयति-**एभ्यः । उक्तदोषेभ्यः ।** इति । अन्तर्भावप्रकारमाह-तथाहि । **उपमायाम् । असादृश्यासम्भवयो**रसादृश्ये साधारणधर्मप्रसिद्ध्यभावेऽसम्भवे उपमानप्रसिद्ध्यभावे चेत्यर्थः। तथा-**उपमानस्य** येन सादृश्यमनुमीयते तस्येत्यर्थः । **जातिप्रमाणगतन्यूनत्वाधिकत्वयो**र्जातिगतन्यूनत्वे प्रमाणगतन्यूनत्वे जातिगताधिकत्वे प्रमाणगताधिकत्वे चेति भावः। च पुनः। **अर्थान्तरन्यासे** तदाख्येऽलङ्कारे।**उत्प्रेक्षितार्थसमर्थने** उत्प्रेक्षितार्थस्य समर्थनमयुक्तत्वेऽपि यथाकथञ्चित् तत्र युक्तवत्सम्भावनं तत्र **अनुचितार्थत्वं** तन्नामा दोष इत्यर्थः।

अथोदाहर्त्तुमुपक्रमते-**क्रमेणा**नुपूर्व्या । **यथा-'विततार्थरश्मि** विततोऽर्थरश्मिर्यस्येति तथोक्तम् अर्थो रश्मिरिवेति । **काव्यशशिनं** काव्यं शशीवेति तथोक्तम् । **ग्रथ्नामि** निवध्नामीत्यर्थः । 'चञ्चच्चमत्कृतिसुधीयमहाप्रवाहम्। तेन प्रसीदतु मुकुन्दनरेन्द्रचन्द्रमौलिः सुनीतिदयया भयहा प्रजायाः ॥' इति शेषः । अत्रायम्भावः-काव्यं शशीवेत्युपमितसमासः, ननु 'काव्यमेव शशी'ति रूपकसमासोऽयम्, रूपकस्यापि सादृश्यमूलकतया तत्राप्ययं सम्भवति दोष इति मन्तव्यम्, 'ग्रथ्नामि' इति वाधकोपस्थानात् । काव्यादीनां च शश्यादिभिः सादृश्यस्य कुत्रापि न प्रतीतिः प्रसिद्धिरिति साधर्म्यप्रतीत्यभावेनासादृश्यरूपमनुचितार्थत्वम् । इति । **'प्रज्वलज्जलधारावत्** प्रज्वलन्त्योऽमी जलधारास्ताभिस्तुल्यम् । **तव । शराः । निपतन्ति ।** 'यन्निपातेन सन्तापं प्राप्ता धावन्ति शत्रवः ॥' इति शेषः । अत्रायम्भावः-वह्निकर्मणः प्रज्वलनस्य जलेषु असम्भवात्तद्विशिष्टतया तद्धाराणामप्यसम्भव इति उपमानप्रसिद्ध्यभावेनासम्भवरूपमनुचितत्वम् । इति ।''**असौ । राजा । चण्डालो** हिंसाधमः । **इव । सङ्ग्रामे । अधिकसाहसो**ऽधिकं साहसं दुष्करकर्म यस्य सः । 'मारयित्वा पुरःप्राप्तान् करोति वलिसाद्वलात् ॥' इति शेषः । अत्रायम्भावः-राजरूपोपमेयजात्यपेक्षया चाण्डालरूपोपमानजातेर्न्यूनत्वेन दुष्कर्मकारित्वं प्रत्याययतीत्यनुचितार्थत्वम् । इति ।' **'कर्पूरखण्डमिव । चन्द्रबिम्बम् । राजति ।'** 'नक्तंदिवा तु रविरेष यथा स्फुलिङ्गः शीतार्दितस्य कृपणस्य जनस्य हन्त ॥ तत्स्यात् कदा कथमिति प्रशमोऽ

लकण्ठोऽयं विराजति शिखावलः' 'स्तनावद्रिसमानौ ते ।'

'दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसामतीव ॥ ३४ ॥'

एवमादिषूत्प्रेक्षितार्थस्यासम्भूततयैव प्रतिभासनं स्वरूपमित्यनुचितमेव समर्थनम् ।

यमकस्य पादत्रयगतत्वेऽप्रयुक्तत्वं दोषः । यथा–

'सहसाऽभिजनैः स्निग्धैः सहसा कुञ्जमन्दिरम् । उदिते रजनीनाथे सहसा याति सुन्दरि ॥ ३५ ॥'

उत्प्रेक्षायां यथाशब्दस्योत्प्रेक्षाद्योतकत्वेऽवाचकत्वम् । यथा–

'एष मूर्त्तो यथा धर्मः क्षितिपो रक्षति क्षितिम् ।'

---

जायाः ॥' इति शेषः । अत्रायम्भावः–उपमेयचन्द्रभानुप्रमाणापेक्षयोपमानकर्पूरस्फुलिङ्गप्रमाणन्यूनत्वं क्षुद्रत्वं व्यञ्जयतीत्यनुचितार्थत्वम् । इति । 'हरवन्महादेवतुल्यम् । नीलकण्ठः । अयम् । शिखावलो मयूरः । विराजति । 'पक्षिणोऽन्ये तथा भान्ति यथा देवर्षिपुङ्गवाः ॥' इति शेषः ।' अत्रायम्भावः—हरत्वजात्योपमानमधिकम्, तच्च प्रतिपाद्यमर्थं कदर्थयतीत्यनुचितार्थत्वम् । हरस्यैकादशात्मकव्यूहतया हरत्वं जातिः । 'नित्यमेकमनेकानुगतं सामान्यम्' इति लक्षणस्य तथा सम्भवात् । इति । 'ते तव । स्तनौ । अद्रिसमानावद्रिभ्यां समानौ तुल्यौ तद्वद् विपुलाविति यावत् । 'नाभिः पातालसन्निभः । कवरी यमुनादीर्घा तन्वि त्वं विधिशक्तिवत् ॥' इति शेषः ।' अत्रायम्भावः–परिमाणतोऽद्र्याद्युपमानमधिकमित्यनुचितार्थत्वम् । 'यो हिमालयः । दिवा दिने । दिवाकरात् सूर्यात् । 'भीत्रार्थानां भयहेतुः ।'१।४।२५ इति पञ्चमी । भीतमिव । गुहासु । लीनं परोक्षतां प्राप्य स्थितम् । अन्धकारम् । रक्षति । उक्तमर्थं समर्थयते–क्षुद्रे । अपि । शरणम् । प्रपन्ने । उच्चैश्शिरसामुन्नतशिरोधराणामिति भावः । अतीव । ममत्वम् । 'ममे' त्यव्ययात्त्वप्रत्यये रूपमेतत् । नूनं निश्चितम् । अत्र दिवाकरादित्यादिनोक्तस्यार्थस्य क्षुद्रेऽपीत्यादिना समर्थनादर्थान्तरन्यासः । उपजातिश्छन्दः । लक्षणं चोक्तं प्राक् । कुमारसम्भवस्य चेदं पद्यम् ॥ ३४ ॥ 'एवमादिषूदाहृतसदृशेषु' । उत्प्रेक्षितार्थस्य । असम्भूततया । प्रतिभासनं प्रतीतिः । एव । स्वरूपम् । इतीत्यतः । अनुचितम् । एव । समर्थनम् । अत्रायम्भावः–उत्प्रेक्षितार्थोऽन्धकारत्रासः, स चाचेतनसम्बन्धितया न सम्भवति, कुतः पुनस्तस्याद्रिणा त्राणम्, अस्यापि तथाभूतत्वादिति सर्वमनुचितार्थत्वकृते । इति ।

यमकालङ्कारस्य पादत्रयवृत्तित्वेऽप्रयुक्तत्वेऽन्तर्भावमाह–यमकस्येत्यादिना ।

यमकस्य तदाख्यस्य शब्दालङ्कारस्य । पादत्रयगतत्वे सतिसप्तमीयम् । अप्रयुक्तत्वम् । दोषः । यथा– 'रजनीनाथे चन्द्रे । उदिते । सा । सहसा हसेन हास्येन सहिता स्मयमानेति भावः । सुन्दरी । स्निग्धैः । अभिजनैः स्वकुलालङ्कारैः । 'भवेदभिजनः ख्यातौ जन्मभूम्यां कुलध्वजे ।' इति मेदिनी । सह । सहसाऽविचार्य । कुञ्जमन्दिरम् । याति गच्छति । अत्रायम्भावः–'यमकं तु विधातव्यं न कदाचिदपि त्रिपात् ।' इत्युक्तनयेन यमकस्य पादत्रयवृत्तित्वे प्रयोगानर्हत्वादप्रयुक्तत्वं दोषः । इति ॥ ३५ ॥

उत्प्रेक्षणबोधकेनापि यथाशब्देन यद्युत्प्रेक्षणं तदाऽवाचकत्वस्यैव सम्भव इत्याह–उत्प्रेक्षायां तदाख्येऽलङ्कारे । यथाशब्दस्य सादृश्यमात्रद्योतकस्य यथेति निपातशब्दस्येत्यर्थः । उत्प्रेक्षाद्योतकत्वे 'स्वीकृते' इति शेषः । अवाचकत्वं 'दोषः' इति शेषः । यथा–'एषः । क्षितिपो राजा । क्षितिं पृथिवीम् । रक्षति । 'इति' इति शेषः । मूर्त्तो धृतशरीरः । यथा नूनम् । धर्मः । 'प्रजाः स्वा इति मन्वानः सर्वत्र समदर्शनः ॥' इति शेषः । अत्रायम्भावः–'ध्रुवमिव नूनमवैमि शङ्के मन्ये जाने' इत्यादीनामेव सम्भावनबोधकत्वम्, न तु यथाशब्दस्य; अस्य 'व वा यथा तथैवैवं साम्ये' इति सादृश्यमात्रबोधकत्वात् । इति यथाशब्देन सम्भावनेऽवाचकत्वं निर्बाधम् । उक्तं च– 'सम्भावनं ध्रुवेवादय एव शब्दा वक्तुं सहन्ते, न तु यथाशब्दोऽपि; केवलस्यास्य साधर्म्यमेव प्रतिपादयितुं पर्याप्तत्वात् ।' इति ।

---

१ एष दोषः पद्य एव सम्भवति–तत्रैव पादकल्पनायाः सम्भवात् । इति केचित् ।

एवमनुप्रासस्य वृत्तिविरुद्धत्वे प्रतिकूलवर्णत्वम् । यथा-'ओवट्टइ उल्लट्टइ' इत्यादौ ।
उपमायां च साधारणधर्मस्याधिकत्वन्यूनत्वयोरधिकपदत्वं न्यूनपदत्वं च । क्रमेणोदाहरणम्-
'नयनज्योतिषा भाति शम्भुर्भूतिसितद्युतिः । विद्युतेव शरन्मेघो नीलवारिदखण्डधृक् ॥ ३६ ॥'
अत्र भगवतो नीलकण्ठत्वाप्रतिपादनाच्चतुर्थपादोऽधिकः ।
'कमलाऽऽलिङ्गितस्तारहारहारी मुरं द्विषन् । विद्युद्भिर्भूषितो नीलजीमूत इव राजते ॥ ३७ ॥'
अत्रोपमानस्य सबलाकत्वं वाच्यम् ।
अस्यामेवोपमानोपमेययोर्लिङ्गवचनभेदस्य कालपुरुषविध्यादिभेदस्य च भग्नप्रक्रमत्वम् ।
क्रमेणोदाहरणम्-'सुधेव विमलश्चन्द्रः' 'ज्योत्स्ना इव सिता कीर्त्तिः ।'

---

अनुप्रासस्य वृत्तिविरुद्धस्य प्रतिकूलवर्णत्वेऽन्तर्भावमाह-**एवम्** । **अनुप्रासस्य** तन्नाम्नोऽलङ्कारस्य । **वृत्तिविरुद्धत्वे** वृत्ते रीते रचनाया इति यावत्, विरुद्धत्वं तत्रेति तथोक्ते । **प्रतिकूलवर्णत्वं** तदाख्यो दोष इत्यर्थः । **यथा-'ओवट्टइ उल्लोट्टइ' इत्यादौ** । अत्रायम्भावः-'ओवट्टइ' इति व्याख्यातपूर्वः श्लोकः, तत्र पुनर्निदर्शितः प्रतिकूलवर्णत्वं नाम दोषः, असावेवानुप्रासस्य वृत्तिविरुद्धत्वम्, तथा हि-टकारानैक्येन सम्भवतोऽनुप्रासस्य प्रकृतशृङ्गाररसविरुद्धत्वं, तत एव वृत्तिविरुद्धत्वं; नहि रसप्रतिकूला युज्यते रीतिः । इति ।

उपमायां साधारणधर्मस्याधिक्यन्यूनत्वाभ्यामधिकन्यूनपदत्वे एवेत्याह-**उपमायाम्** । **साधारणधर्मस्य अधिकत्वन्यूनत्वयोः** 'सतोरि'ति शेषः । **अधिकपदत्वम्** । **च** । **न्यूनपदत्वम्** । **क्रमेण** 'तयोरि'ति शेषः । **उदाहरणम्** । यथेति शेषः । '**भूतिसितद्युति**र्भूत्या भस्मना सिता विमला द्युतिर्यस्य सः । **शम्भुः** । **नयनज्योतिषा** । ( करणेन ) । **नीलवारिदखण्डधृक्** नीलमेघांशधारी । **शरन्मेघः** शरत्कालिकोमेघः । **विद्युतेव** । **भाति** ॥ ३६ ॥ अत्रोदाहृते पद्ये । **भगवतः** । **नीलकण्ठत्वाप्रतिपादनात्** । **चतुर्थपादः** 'नीलवारिदखण्डधृक्' इति चतुर्थः पादः । **अधिकः** । अत्रायम्भावः-उपमायां खलूपमानोपमेययोः सादृश्यमभिप्रेतम्, तच्चात्र नैकान्तं सम्भवति-तथाहि-उपमेयो भगवान् उपमानभूतः शरन्मेघः, अथ यथोपमाने वारिदखण्डसम्बन्धेन मनाङ् नीलिमा निर्दिष्टस्तथा नोपमेये एतस्य भूतिसितत्वातिरिक्तनीलकण्ठत्वाप्रतिपादनात् स्फुटं चतुर्थपादाधिक्यम् । यदि त्वभविष्यत् 'नीलकण्ठः सितद्युतिः' इति द्वितीयः पादः, तर्हि नाभविष्यदधिकपदत्वं दोषः । इति । '**कमलाऽऽलिङ्गितः** कमलया लक्ष्म्याऽऽलिङ्गित इत्यर्थः । **तारहारहारी** तारः केवलं मुक्ताभिस्सुन्दरोऽसौ हारस्तेन हारी हारवान्मनोहरश्चेति वा । **मुरं** तदाख्यं दैत्यम् । **द्विषन्** शत्रुः ('न लोकाव्ययनिष्ठाखलर्थतृनाम् ।' २ । ३ । ५९ इति षष्ठीनिषेधः ) । श्रीकृष्ण इतियावत् । **विद्युद्भिर्भूषितो** विद्युता विभूषितस्तडिद्वानिति भावः । **नीलजीमूतो** नीलवर्णविशिष्टोऽसौ जीमूतो मेघ इति तथोक्तः । **इव** । **राजते** ॥ ३८ ॥' अत्रोदाहृते पद्ये । **उपमानस्य** जीमूतस्य । **सबलाकत्वं** बलाका वकपङ्क्तिस्तया सहित इति तस्य भावस्तत्त्वम् । **वाच्यम्** । 'किन्तु नोक्तमिति न्यूनपदत्वम्' इति शेषः । अत्रेदमुक्तम्-उपमानस्य तारस्थानापन्नो न कोऽपि केनापि पदेन धर्मः प्रतिपादित इति सबलाकत्वं वाच्यम्, अन्यथा न्यूनपदत्वम् । इति ।

उपमायामुपमानोपमेययोर्भिन्नलिङ्गवचनकालविध्यादित्वदोषा न भग्नप्रक्रमत्वातिरिक्ता इत्याह-**अस्यामि**त्यादिना । **अस्यामुपमायाम्** । **एव** । **उपमानोपमेययोः** । **लिङ्गवचनभेदस्य** । **च** । **कालपुरुषविध्यादिभेदस्य** कालपुरुषाभीष्टशंसनादिपार्थक्यस्य । **भग्नप्रक्रमत्वं** तदाख्यो दोषः । कथमित्याह-**क्रमेणानुपूर्व्या** । **उदाहरणम्** । **यथा-'सुधेव** । **विमलः** । **चन्द्रः** । 'क्षमेवानन्ददायकः । श्रीरिव श्रेयसः कारी दीक्षेव द्विजसेवितः ॥' इति शेषः ।' अत्रायम्भावः-'विमल इति साधारणो धर्मः, स च केवलमुपमेये न तूपमानेऽस्य पुंस्त्वविशेषात्; विशेष्यविशेषणभावान्वये समानलिङ्गवचनयोस्तन्त्रत्वादिति वाच्यधर्मविशिष्टप्रतीपधर्मविशिष्टयोरुपमेयोपमानत्वप्रतिभासश्च भग्नप्रक्रमत्वम् । यथा वा-'कुलमिव विमला विद्या विद्येव गुणस्तथा सतां गेयः । गुण इव सत्कृतिरनघा सत्कृतिरिव ते मतं चरितम् ॥ इति ।' '**ज्योत्स्ना**श्चन्द्रकान्तयः । 'चन्द्रिका कौमुदी ज्योत्स्ना' इत्य-

'काऽप्यभिख्या तयोरासीद्व्रजतोः शुद्धवेषयोः। हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव॥३८॥'
अत्र तथाभूतचित्राचन्द्रमसोः शोभा न खल्वासीत्, अपि तु सर्वदा भवति।
'लतेव राजसे तन्वि' अत्र लता राजते, त्वं तु राजसे।
'चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथा।'
अत्र मार्कण्डेयमुनिर्जीवत्येव, न खल्वेतदस्य 'जीवत्वि'त्यनेन विधेयम्।
इह हि यत्र लिङ्गवचनभेदेऽपि न साधारणधर्मस्यान्यथाभावस्तत्र न दोषः।
यथा—'मुखं चन्द्रइवाभाति'
'तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः। दधते स्म परां शोभां तदीया विभ्रमा इव॥३९॥'
पूर्वोदाहरणेषु तूपमानोपमेययोरेकस्यैव साधारणधर्मेणान्वयसिद्धेः प्रक्रान्तस्यार्थस्य स्फुटोऽनिर्वाहः।

---

मरः। इव। सिता स्वच्छा। कीर्त्तिः। 'ज्योत्स्नाः कीर्त्तिरिवोदिताः। भवांश्चन्द्रा इव महान् यस्मादासां विनिर्गमः॥ इति शेषः।' अत्रायम्भावः—उपमानोपमेययोर्वचनव्यत्यये धर्मगतवचनस्य विपरिणामकल्पनदुरापत्तिः। एकत्वविशिष्टो हि सितत्वरूपः साधारणो धर्म एकत्वविशिष्टायामुपमेयरूपायां कीर्त्तावेवान्वेति, न तूपमानरूपासु बहुत्वविशिष्टासु चन्द्रद्युतिषु। इति। यथा वा—'हृद्यानि सुमनांसीव सुस्मितं तव सुन्दरि। त्वं च स्फीता वेल्ल्य इव प्रोद्यतेति विभाव्यसे॥' इति। अत्र हि पूर्ववाक्ये उपमानमेवान्वेति, उत्तरवाक्ये पुनरुभयमन्वेति नान्वेति चेति वैचित्र्यम्। इति। 'हिमनिर्मुक्तयोर्हिमाभिमुक्तौ तयोः। चित्राचन्द्रमसोः। योगे सङ्गे पर्वणीति यावत्। इव। व्रजतोर्गच्छतोः। शुद्धवेषयोः पवित्रपरिधानयोः। तयोः सुदक्षिणादिलीपयोः। काऽप्यनिर्वचनीया। अभिख्या शोभा। 'अभिख्या नामशोभयोः।' इत्यमरः। आसीत्। इदं पद्यं रघुवंशस्य॥३८॥'अत्र। तथाभूतचित्राचन्द्रमसोः। तथाभूतौ हिमनिर्मुक्तौ। शोभा। न। खलु। आसीत् 'किन्तु भवतीति कालभेद' इति शेषः। 'हे तन्वि! लतेव। राजसे। 'कुसुमस्मितमञ्जुला। स्वात्मैकशरणान्वेषिभ्रमरभ्रमणापहृत्॥' इति शेषः।'अत्र।'लता। राजते। त्वम्। तु राजसे। 'इति पुरुषव्यत्यय' इति शेषः। 'यथा। मार्कण्डेयमुनिः। तथेति शेषः। ते तव। सूनुः पुत्रः। चिरम्। जीवतु। 'यदयं शाश्वतं धर्मं कल्कीवोन्वेतुमुद्यत' इति शेषः।'अत्र। मार्कण्डेयमुनिः। जीवति। एव। अस्य मार्कण्डेयमुनेः। जीवत्वित्यनेन। एतत् जीवनम्। न। खलु। विधेयम्। 'इति विधेर्भेदः' इति शेषः। यथा वा—'चमूरियं दूरविमुक्तभङ्गा गङ्गेव गां योधमनुप्रयातु। यया ऽरिसज्ञा विभटाः प्रकामं नश्यन्त्यधर्मा इव खेदसाध्याः॥' इत्यत्र गङ्गा प्रयाति, चमूः प्रयातु इति प्रक्रान्तविधेः स्फुटम्भङ्गः।

अस्य प्रतिप्रसवमाह—इहास्यामुपमायाम्। ह्येव। तत्र यस्मिन्नुदाहरणे। लिङ्गवचनभेदे लिङ्गं च वचनं चेति तयोर्भेदस्तस्मिन् 'सती'ति शेषः।अपि। साधारणधर्मस्योपमानोपमेयोभयवर्त्तिधर्मस्य। न।अन्यथाभावः। तत्र। न। दोषः प्रक्रमभङ्ग इत्यर्थः।

उदाहरति—यथा। 'मुखम्। चन्द्रः। इव। आभाति। 'चन्द्रिकेव तव स्मितम्। पीयूषमिव वाणीयं न तथाऽपि वियोगिनाम्॥' इति शेषः।' 'मधुरताभृतो मधुरतां बिभ्रति धारयन्तीति ते तथोक्ताः, मधुरया भृत इति वा। अन्याभिः। स्त्रीभिर्नायिकाभिरिति भावः। असदृशोऽसमाना असमानो वा। तदीयास्तस्याः प्रकृतनायिकाया इमे इति तथोक्ताः। विभ्रमा विलासाः। इव।तद्वेषस्तस्याः प्रकृतनायिकाया वेषो भूषणाऽम्बरादिधारणपरिपाटी। परामनिर्वचनीयाम्। शोभाम्। दधते दधति धत्ते इति वा। स्म॥' 'एवम् 'ब्रह्मणेव जगदद्य मयेदं सृज्यते ननु नवं किमनेन।' इत्यादौ पुरुषभेदे 'आसीत्। 'गङ्गाप्रवाह इव भगीरथपथप्रवृत्तः' इत्यादौ गङ्गाप्रवाहः साम्प्रतमपि भगीरथपथप्रवृत्तः, स त्वासीदेवेति कालभेदे वा अनुगमस्योभयथाऽप्युपपत्तेर्दोषाभावः। इति बोध्यम्।' इति शेषः।

ननु पूर्वोदाहरणापेक्षयाऽत्र किं वैलक्षण्यम्? इत्याशङ्क्याह—पूर्वोदाहरणेषु 'नयनज्योतिषा...' इत्यारभ्य मार्कण्डेयमुनिर्यथा।' इत्यन्तेषूदाहरणेष्वित्यर्थः। तु। उपमानोपमेययो'र्मध्ये' इति शेषः। एकस्यैकतरस्योपमानस्योपमेयस्य

एवमनुप्रासे वैकल्यस्यापुष्टार्थत्वम् । यथा-

'अनणुरणन्मणिमेखलमविरलशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे ! रणरणकमकारणं कुरुते ॥ ४० ॥'

एवं समासोक्तौ साधारणविशेषणवशात् पदार्थस्य प्रतीतावपि पुनस्तस्य शब्देनोपादानस्य, अप्रस्तुतप्रशंसायां व्यञ्जनयैव प्रस्तुतस्यार्थस्यावगतौ शब्देन तदभिधानस्य च पुनरुक्तत्वम् । क्रमेणोदाहरणम्-

"अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम् ।

---

वेति भावः । **एव** । **साधारणधर्मेण** । अन्वयसिद्धेरन्वयसिद्धिरित्यस्माद्धेतोरित्यर्थः । **प्रक्रान्तस्य** । **अर्थस्य** । **अनिर्वाहो** निर्वाहाभावः । **स्फुटः** प्रत्यक्षसिद्धः, 'न चानन्तरमुदाहृतेषु, यदिहापि दोष आपतेत् ।' इति शेषः । अत्रायम्भावः-'उपमानोपमेययोरेकतरानुसारिलिङ्गादिसत्त्वे तदन्यतरानुसारिलिङ्गाद्यसत्त्वे प्रक्रमभङ्गः । लिङ्गव्यत्ययादिना योग्यसामान्याधिकरण्योपपादने प्रथमोत्थापिताकाङ्क्षाऽऽविषयीकृतेन प्रकारेण पुनरनभिधानात् प्रक्रमभङ्ग इति भग्नप्रक्रमत्वस्य तादवस्थ्यमिति । एवम् 'मुखं चन्द्र इवाभाती'त्यादौ 'सुरतेव मन्थ जलधीशानं रत्नानि तान्ययं लुण्ठ । हनुमानिव दह रावणनगरं राजन् कुमारस्ते ॥ रावण इव परदारान् स्पृष्ट्वा मा भूच्छृगालभक्ष्योऽयम् । दुर्योधन इव मा वा परसम्पदमात्मसात् कार्षीत् ॥' इत्यादौ वा लिङ्गादिव्यत्ययेऽपि सामान्याभिधायिनां पदानां स्वरूपभेदकत्वानुपपत्तेर्दोषाभावः । इति फलितम् ।

अथानुप्रासस्य वैकल्यमपुष्टार्थत्वेऽन्तर्भावयति-**एवम् अनुप्रासे** तदाख्ये शब्दालङ्कारे । **वैकल्यस्य** विकलत्वस्य प्रकृतरसाद्युत्कर्षानाधायकत्वेनाशक्तत्वस्य ' अन्तर्भावकम्' इति शेषः । **अपुष्टार्थत्वम्** । **यथा**-'हे **अरुणचरणे**ऽरुणे रक्तेऽलक्तकरञ्जिततया स्वभावेन वा कोकनदसदृशे चरणे पादौ यस्यास्तत्सम्बुद्धौ तथोक्ते । 'तवे'ति दोषः । **अनणुरणन्मणिमेखलम**नणु नितान्तं रणन्ती शब्दं कुर्वन्ती मणिमेखला मणीनां मेखला ( काञ्ची ) यत्र तत् । नाणुरल्पा यस्मिन् कर्मणि तत् । यद्वा-अनणु रणन्तो मणयो रत्नानि यत्र तादृशी मेखला यत्र तत् । **अविरलशिञ्जानमञ्जुमञ्जीरम**विरलं घनं यथा भवेत्तथा शिञ्जानौ शब्दं कुर्वन्तौ मञ्जू मनोरमौ मञ्जीरौ नूपुरौ यत्र तत् । 'शिजि'अव्यक्ते शब्दे । तस्माच्छानच् । 'मनोज्ञं मञ्जु मञ्जुलम् ।' इत्यमरः । 'मञ्जीरोऽस्त्री स नूपुरः ।' इति रभसः । **परिसरणं** परितो भ्रमणम् । **अकारणम्** । **रणरणकं** चिन्ताम् । **कुरुते** । अत्रार्याछन्दः।लक्षणं च प्रोक्तं प्राक्॥४०॥ अत्रेदं तत्त्वम्-'भण तरुणि ! रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि ! यदि सल्लीलोल्लापिनि गच्छसि .तत् किं त्वदीयं मे ॥' इति तत्पूर्वपद्यम् ।

अथ समासोक्त्यप्रस्तुतप्रशंसयोः सम्भवतो दोषस्य पुनरुक्ततायामन्तर्भावं दर्शयति-**एवम्** । **समासोक्तौ** । **साधारणविशेषणवशात्** साधारणमुपमानानुयोगि यद्विशेषणं तस्य वश इच्छाऽऽनुकूल्यमिति यावत् तस्मात् । **परार्थस्य** संयोगाद्यनियन्त्रितस्यार्थस्य । **प्रतीतौ** । **अपि** । **पुनः** । **तस्य** प्रतीयमानस्य पदार्थस्येत्यर्थः । **'शब्देन** तदभिधायकेन पदेन । **उपादानस्य** । **च** । **अप्रस्तुतप्रशंसायाम्** । **व्यञ्जनया** । **एव** नतु तदितरया वृत्त्या । **प्रस्तुतस्योपमेयस्य** । **अर्थस्य** वस्तुनः । **अवगतौ** बोधे तामनादृत्येति यावत् । 'षष्ठी चानादरे ।'२ । ३ । ३८ इति सप्तमी । **शब्देन** प्रस्तुतार्थे गृहीतशक्तिकेन पदेन । **तदभिधानस्य** तस्य प्रस्तुतार्थस्याभिधानं तस्य । **पुनरुक्तत्वम्** । अयम्भावः-समासोक्तावलङ्कारे प्रस्तुताप्रस्तुतयोः साधारण्येन सङ्गच्छमानस्य विशेषणस्य बलादेवाप्रस्तुतस्यार्थस्य प्रतीतौ तस्य शब्देन साक्षादभिधानं व्यर्थम् । एवम्-अप्रस्तुतप्रशंसायां प्रस्तुतस्यार्थस्य प्रतीतत्वेऽपि शब्देन तस्याभिधानं पुनरुक्तमेवेत्यनयोः पुनरुक्तत्वे एवान्तर्भाव्यत्वम् । इति ।

उदाहर्तुकाममाह-**क्रमेण** । **उदाहरणम्** । यथा-"**अपरदिग्गणिका**ऽपरा पश्चिमाऽसौ दिक् सैव गणिकेति तथोक्ता । **अनुरागवन्तम**नुरागो रक्तिमा प्रेम च सोऽस्यास्तीति तं तथोक्तम् रक्तवर्णम्, अथ च-अनुरक्तम् इत्यर्थः **अपि** । **लोचयोः** । **सुखं** सुखयतीति तत्तथोक्तम्, शान्तत्वाद्रमणीयत्वाद्वा सुखजनकमिति भावः- । **वपुः** । **दधतं**

निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका ॥ ४० ॥"

'इत्यत्र अपरदिगि'त्येतावतैव तस्या गणिकात्वं प्रतीयते।

"आहूतेषु विहङ्गमेषु मशको नायान् पुरो वार्य्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम्।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतनं प्रभुमिवानामृष्टतत्त्वान्तरम् ॥ ४१ ॥'

इत्यत्र अचेतसः प्रभोरभिधातमनुचितम्।

---

दधानमपि। **अतापकरं** अतापस्य शान्तेः करस्तम्। अपि **रविं** सूर्य्यं कामिनं वा। **वियदालयाद्वियदाकाशमेवालय-**स्तस्मात्, यद्वा–वियद्वदाकाशवत् ( शून्यो जनसञ्चाररहितः अत एव–सुरतार्हः ) आलयस्तस्मात्। **अपेतवसुमपेत** नष्टा वसवो रश्मयो यस्य, अपेतं वसु धनं यस्य वा तम् निर्धनं वेत्यर्थः। 'देवभेदे नले रश्मौ वसू, रत्ने धने वसु।' इत्यमरः। **निरकासयत्** निष्कासितवती। धनलुब्धा वेश्या निर्गुणमपि धनिनं भजन्ति, धनं गृहीत्वा तमेव त्यजन्ति, बलाच्च गृहान्निष्काशयन्तीति दर्शितम्। अत्र सूर्य्यास्तवर्णनम्। शिशुपालवधस्येदं पद्यम्। प्रमिताक्षरा वृत्तम् 'प्रमिताक्षरा सजससैरुदिता।' इति च तल्लक्षणम् ॥ ४० ॥" इत्यत्र। **'अपरदिक्' इत्येतावता** पदन्यासेने'ति शेषः। **एव। तस्या** अपरदिश इत्यर्थः। **गणिकात्वं** वेश्यास्वरूपत्वम्। **प्रतीयते**। अतः–तस्य प्रतीयमानत्वमुच्छिद्य 'गणिके' त्यनेन वाच्यत्वविधानं राज्ञस्तुच्छत्वविधानायितमिति दुष्टम् इति भावः। इदं चोपलक्षणं वियदालयस्य, तेन 'वियद'इत्येव वाच्यम्। अयम्भावः–सदृश ( श्लेषमूलक ) विशेषणवशात् लिङ्गविशेषवशाच्च रवेर्नायकत्वं,वियदश्चालयत्व,–मपरदिशश्च गणिकात्वं व्यज्यते, तथा च–यथा, 'रवि'मित्येतावदभिधाय रवेर्नायकत्वं सूचितं, तथा वियद आलयत्वम्, अपरदिशश्च गणिकात्वं 'वियद' इति, 'अपरदिक्' इत्येतावदभिधाय सूचनीयम्, नतु अभिधेयम्। अतोऽत्रान्यथाऽऽचरणमर्थगतां पुनरुक्ततामवगमयतीति दिक्।

"**विहङ्गमेषु** पक्षिषु। **आहूतेषु** कृताह्वानेषु सत्स्वित्यर्थः।'यत्रे'ति शेषः।**पुर**'स्तेषा'मिति शेषः।**आयान्**आगच्छन्। **मशको** मक्षिकाऽपेक्षयाऽप्यतिक्षुद्रः कीटविशेषः। **न। वार्य्यते** निषेध्यते। तथा–**मध्ये** रत्नानां गणनायाः सति प्रस्तावे तेषामन्तर्न तु तेभ्यः पृथगिति भावः। **वा। धुरि** यानमुखे लक्षणया तेषां गणनाप्रारम्भे इति भावः। 'धूर्या-नमुखभारयोः।' इति हैमः। **वसन्। वा** यथा तथा। 'व वा यथा तथैवेवं साम्य' इत्यमरः। 'उपलभ्यमान' इति शेषः। **तृणमणिस्तृणप्रायो** मणिः, तृणानां वा मणिराकर्षकतया रत्नभूतः प्रस्तरविशेषः। यथा लोहस्याकर्षको लोहमणिरित्युच्यते, तथा तृणानामाकर्षकस्तृणमणिरिति बोध्यम्। **मणीनाम्। धुरं** भारम्। 'यत्र सामान्य' इति पूर्व-वत्। **धत्ते**। यस्मिन्–**खद्योतो** ज्योतिरिङ्गणनामा कीटविशेषः। **अपि। तेजस्विनां** प्रतापशालिना 'मग्निसूर्य्यादीना'–मिति तु न युक्तोऽर्थः। सूर्य्यप्रकाशे तत्प्रकाशस्य प्रत्यक्षविरोधात्। **मध्ये। प्रचलितुं** गन्तुम्। **न। कम्पते** त्रस्यतीति भावः। तेजस्वित्वेन भेदाभावात् किं पुनस्तन्मध्ये गमने भयमिति निश्शङ्कं तथा प्रतिपद्यते इति भावः। 'त'दिति शेषः। **सामान्यं** समानधर्मत्वम्। **अनामृष्टतत्त्वान्तरं** नामृष्टमालोचितं तत्त्वान्तरं स्वरूपतारतम्यं येन तादृशम्। **अचेतनं** न चेतनं विवेको यत्र तादृशम्। **प्रभुमिव। धिक्**। अत्र शार्दूलविक्रीडितं वृत्तम्, लक्षणं चोक्तं प्राक्॥४१॥'

उदाहरणसङ्गतये दोषं निर्दिशति–**इत्यत्र। अचेतसो**ऽचेतनस्य। **प्रभोः। अभिधान**मचेतनत्वेन कीर्त्तनम्। **अनुचितम्**। अयम्भावः–तादृशं सामान्यं धिगित्येतावतैव अविवेकिनः प्रभोः प्रतीतिरिति पुनः शब्देन तदभि-धानं पुनरुक्तम्। तथाऽऽहुः–'अत्राचेतसः प्रभोरुपमेयस्याप्रस्तुतनिष्ठसामान्यद्वारेणाभिव्यक्तिसम्भवादयुक्तमेव शब्देन कथनम्।' इति।

एवमनुप्रासे प्रसिद्ध्यभावस्य ख्यातविरुद्धत्वम्। यथा-

"चक्राधिष्ठिततां चक्री गोत्रं गोत्रभिदुच्छ्रितम्। वृषं वृषभकेतुश्च प्रायच्छन्नस्य भूभुजः॥४२॥"

उक्तदोषाणां च क्वचिददोषत्वं, क्वचिद् गुणत्वमित्याह-

८ वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते।
रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत्॥ १६॥

एषु च आस्वादस्वरूपविशेषात्मकतया मुख्यगुणप्रकर्षोपकारित्वाद्गुण इति व्यपदेशो भाक्तः। क्रमेण यथा-

"तद्विच्छेदकृशस्य कण्ठलुठितप्राणस्य मे निर्दयं
क्रूरः पञ्चशरः शरैरतिशितैर्भिन्दन्मनो निर्भरम्।
शम्भोर्भूतदयाविधेयमनसः प्रोद्दामनेत्रानल-
ज्वालाजालकरालितः पुनरसावास्तां समस्तात्मना॥ ४३॥"

---

अनुप्रासे प्रसिद्ध्यभावस्य ख्यातविरुद्धतायामन्तर्भावमाह-एवम्। अनुप्रासे प्रसिद्ध्यभावस्य प्रसिद्धेरनुप्रासिनयोः पदार्थयोर्विवक्षितेऽन्वये लोकतः शास्त्रतो वा ख्यातेरभावो विरहस्तस्य। ख्यातविरुद्धत्वम्। यथा-'चक्राधिष्ठितता'मित्यादौ।

"चक्री चक्रं सुदर्शनमस्यास्तीति तथोक्तः, विष्णुरित्यर्थः। चक्राधिष्ठिततां चक्रे राज्यचक्रेऽधिष्ठितस्तस्य भावस्तत्ता ताम्। गोत्रभिद्गोत्रं पर्वतं भिनत्ति कुलिशेनेति तथोक्तः। इन्द्र इत्यर्थः। 'गोत्रः शैले गोत्रं कुलाख्ययोः' इति मेदिनी। उच्छ्रितमुन्नतम्। गोत्रं वंशम्। वृषभकेतुर्वृषभः केतुर्ध्वजो यस्य तथोक्तः। शङ्कर इत्यर्थः। 'केतुर्ना रुक्पताकारिग्रहोत्पातेषु लक्षणे।' इति मेदिनी। च। वृषं धर्मम्। अस्य। भूभुजो राज्ञः। प्रायच्छन् ददुः। अत्र कर्तृकर्म्मनियमेन स्तुतिरनुप्रासानुरोधेनैव प्रतिपादिता, न पुनर्लोके शास्त्रे वा तथा प्रसिद्धा॥ ४२॥"

निरुक्तानां दोषाणां क्वचित् प्रतिप्रसवं दर्शयति-उक्तदोषाणां दुःश्रवत्वादीनामित्यर्थः। च। क्वचित् कस्मिंश्चिद्वक्त्रादिवैशिष्ट्ये इत्यर्थः। अदोषत्वम्। क्वचित्। गुणत्वम्। इति। आह-८ वक्तरीत्यादिना।

८ क्रोधसंयुक्ते कुपिते। वक्तरि। तथा। समुद्धते। वाच्ये प्रतिपाद्येऽर्थे सति। दुःश्रवत्वम्। गुणः। भवेत्। रौद्रादौ। आदिना वीरबीभत्सभयानकानां ग्रहणम्। तु। रसे। 'सती'ति शेषः। अत्यन्तम्। दुःश्रवत्वं गुणो भवेदिति भावः॥ १६॥

ननु गुणानां रसधर्म्मत्वाद्दुःश्रवत्वादीनां च तदभावात् कथं गुणत्वमित्यत आह-एषु दुःश्रवत्वादिषु दोषेषु। च। आस्वादस्वरूपविशेषात्मकतया आस्वादानां तदात्मकानां रसानां स्वरूपविशेषः साधर्म्यविशेष आत्मा येषां (मुख्यगुणानाम्) तेषां भावस्तत्ता तया। मुख्यगुणप्रकर्षोपकारित्वात् मुख्यगुणा माधुर्य्यादयस्तैः कृतो यः प्रकर्षो रसाद्युत्कर्षस्तमुपकरोतीति तस्य भावस्तत्त्वं तस्मात्। गुणः। इति। व्यपदेशः। भाक्तो गौणो न तु मुख्य इति भावः। इदमभिहितम्-काव्यस्यात्मा रसस्तस्यापकर्षकत्वाभावे दुःश्रवत्वादेरदुष्टत्वमात्रम्, अनपकर्षकत्वे सति प्रकर्षकत्वे पुनर्गुणत्वम्। एतच्च भाक्तम्, साक्षाद्गुणत्वस्य रसधर्म्मभूतेषु माधुर्य्यादिष्वेव सद्भावात्। माधुर्य्यादयो हि साक्षाद्रसधर्म्मभूता, दुःश्रवत्वादयः पुनस्तदुपकारितया परम्परासम्बन्धेनेति दिक्। यथा-उदाहृत्य स्पष्टयितुमाह-क्रमेण। यथा-"तद्विच्छेदकृशस्य तस्याः प्राणप्रियाया विच्छेदो विरहस्तेन कृशस्तथाभूतस्य। अत एव-कण्ठलुठितप्राणस्य कण्ठे लुठिता निरुद्धाः प्राणा यस्य तादृशस्य। मे मम। मनः (कर्म्म)। निर्भरमत्यन्तम्। निर्दयं निर्गता दया यस्मिन् कर्मणि तद् यथा भवेत्तथा। अतिशितैरत्यन्तं तीक्ष्णैः। 'तीक्ष्णे क्षीणे च शातं च शित'मिति गोपालः। शरैः। भिन्दन् विध्यन् न तु निघ्नन्। निहननोत्तरं तादृशस्य क्लेशस्यासम्भवात्। अत एव-क्रूरो नृशंसस्वभावः। असौ। पञ्चशरः कामदेवः। भूतदयाविधेयमनसो भूतेष्वस्मादृशेषु प्राणिषु दया तस्या विधेयं वशवर्त्ति मनो यस्य तादृशस्य। 'विधेयो विनयग्राही वचनेस्थित आश्रवः' इत्यमरः। शम्भोर्महादेवस्य। प्रोद्दामनेत्रानलज्वालाजाल-

इत्यत्र शृङ्गारे कुपितो वक्ता।

"मूर्धन्याधूयमानध्वनदमरधुनीलोलकल्लोलजालो-
द्धूताम्भःक्षोददम्भात् प्रसभमभिनभः क्षिप्तनक्षत्रलक्षम्।
ऊर्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभररभसोद्यन्नभस्वत्प्रवेग-
भ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिवं शाम्भवं ताण्डवं वः॥ ४४॥"

इत्यत्र उद्धतताण्डवं वाच्यम्। इमे पद्ये मम। रौद्रादिरसे तु एतद्द्वितयापेक्षयाऽपि दुःश्रवत्वमत्यन्तं गुणः। यथा-'उत्कृत्योत्कृत्य कृत्तिं...।' इति। अत्र बीभत्सो रसः।

**९ सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः।**

---

**करालितः** प्रोद्दामात्यन्तं प्रचण्डं यन्नेत्रानलज्वालाजालं तेन करालितो दग्ध इति भावः। **पुनः। समस्तात्मना। आस्ताम्।** यद्यपि प्राक् शम्भोर्नेत्राग्निना दग्धः तथाऽपि न समस्तात्मना; अतः पुनः समस्तात्मनाऽसौ दग्धः स्यादिति भावः। शार्दूलविक्रीडितं वृत्तम्॥४४॥"**इत्यत्रे**त्यादि। स्पष्टम्। अयम्भावः-प्रियाविरहे मदनपीडितस्येयमुक्तिरिति मदनोपरि वक्तुः कोपस्तस्मात् कुपितस्य तस्योक्तौ दुःश्रवत्वमौचित्यावहत्वाद् गुणः। इति। "**मूर्धन्याधूयमानः...**मूर्ध्नि शिरसि व्याधूयमानाऽत्यन्तं कम्पमानाऽत एव-ध्वनन्ती शब्दायमानाऽसावमरधुनी गङ्गा, तस्या लोलाश्चपलाः कल्लोला महान्तस्तरङ्गास्तेषां जालं तस्मादुद्धूता उत्क्षिप्ता येऽम्भःक्षोदा जलबिन्दवस्तेषां दम्भश्छलं तस्मात्। **प्रसभम्। अभिनभो** नभसि। विभक्त्यर्थेऽव्ययीभावः। **क्षिप्तनक्षत्रलक्षं** क्षिप्तं नक्षत्राणां लक्षं येन तादृशम्। **ऊर्ध्व...**ऊर्ध्वं न्यस्तः प्रक्षिप्तो योऽङ्घ्रिदण्डश्चरणरूपो दण्डस्तस्य भ्रमिभरो भ्रमणातिशयस्तेन यो रभसो वेगस्तस्मादुद्यन् उत्तिष्ठन् यो नभस्वान् वातस्तस्य प्रवेशस्तेन भ्रान्तं कुलालचक्रवद्भ्रमणविषयतामापन्नं ब्रह्माण्डखण्डं यत्र तादृशम्। **शाम्भवं** शम्भुसम्बन्धि। **ताण्डवं** नृत्यम् (कर्तृ)। **शिवं** शुभम् (कर्म)। **वो** युष्मभ्यम्। **प्रवितरतु** वितरतु। शार्दूलविक्रीडितं वृत्तम्॥४४॥" नन्वत्र कथं दुःश्रवत्वं गुण इत्याशङ्क्याह-**इत्यत्रे**त्यादि। स्पष्टम्। ताण्डवस्य लोकसंहारहेतुभूतत्वादुद्धतत्वम्।

ननु रौद्रादौ दुःश्रवत्वस्य कुत्र गुणत्वातिशयः? इत्याशङ्क्याह-**रौद्रादी**त्यादि।

**रौद्रादिरसे** रौद्रबीभत्सादौ रसे। **तु। एतद्द्वितयापेक्षया** एतयोः कुपितस्य वक्तुरुद्धतस्य वाच्यस्य च द्वितयं तस्यापेक्षा तया। **अपि। दुःश्रवत्वम्। अत्यन्तम्। गुणः।** 'क्रोधादेः स्थायित्वेन रसोत्कर्षात्' इति शेषः। **यथा।** 'उत्कृत्योत्कृत्य...इति व्याख्यानपूर्वं पद्यम्। **अत्र। बीभत्सः। रसः।** अतोऽस्य जुगुप्सास्थायिकत्वादोजोगुणान्वितायां रचनायां रसोत्कर्षकत्वात् दुःश्रवत्वस्य गुणत्वातिशय इति भावः। अत्र तर्कवागीशाः-"रौद्रे दुःश्रवत्वं यथा मम-"क्षिप्तोऽप्रक्षत्रपक्षे मयि सति सुतरां क्षत्रडिम्भेन शम्भोश्चापाचार्यस्य चण्डध्वनि धनुरधुना ध्वंसितं धिक् तितिक्षाम्। सद्यस्तथाकुण्ठधारं कठिनमतितरां तस्य कण्ठे कुठारं न्यस्याऽपीडाम्बुराशेः परिभवसरितश्चाद्य पारं प्रपद्ये॥" इत्यत्र क्रोधस्यास्वाद्यमानतया भार्गवस्य वक्तुः क्रुद्धतया च सुतरां दुःश्रवत्वस्य गुणत्वम्। सर्वथा-आस्वादरहिते काव्याभासे दुःश्रवत्वादीनां न दोषत्वम्, न वा गुणत्वम्; काव्यधर्माणां दोषगुणानां तत्राप्रवेशात्।' इत्याहुः। तथा च-"शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान् दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लासयन् यः। घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्तेर्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम्॥" इत्यादौ काव्यत्वाभासादेव दोषगुणत्वाभाव इति बोध्यम्।

अश्लीलत्वस्य गुणत्वमाह-९ **सुरतारम्भे**त्यादिना।

**९ तथा। सुरतारम्भगोष्ठ्यादौ** सुरतस्यारम्भ उद्योगस्तदर्थं या गोष्ठी वार्ता साऽऽदौ यत्र तत्र। आदिना-शमकथाबीभत्सादेर्ग्रहणम्। "गोष्ठी सभासंलापयोः स्त्रियाम्।" इति मेदिनी। **पुनः। अश्लीलत्वम्।** 'गुण' इति पूर्वतोऽनुवृत्तम्।

तथा पुनरिति गुण एव। यथा–

"करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते। उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते॥४५॥"

अत्र हि सुरतारम्भगोष्ठ्यां "द्व्यर्थैः पदैः पिशुनयेच्च रहस्यवस्तु।" इति कामशास्त्रस्थितिः। आदिशब्दात् शमकथाप्रभृतिषु बोद्धव्यम्।

**१० स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते ॥ १७ ॥**

यथा–"पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतं गहनम्।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत ॥ ४६ ॥"

---

कारिकाऽर्थं सुगमयितुमाह–**तथे**त्यादि। स्पष्टम्। उदाहरति–**यथा** 'अश्लीलत्वं गुणः। "**पुंसः** पुरुषस्य वीरस्येति यावत् (कामिन इति तु गोपनीयोर्थः)। **ध्वजः** पताका (लिङ्गमिति तु गोपनीयोऽर्थः)। "ध्वजः पूर्वदिशो गृहे। शिश्ने चिह्ने पताकायां खट्वाङ्गे शौण्डिकेऽपि च।' इति मेदिनी। **सम्बाधे** नराश्वादिभिर्दुर्गमे। (सङ्कुचिते इति गोपनीयोऽर्थः)। **करिहस्तेन** करिणां हस्तिनां हस्तः शुण्डादण्डस्तेन ("तर्जन्यनामिके युक्ते मध्यमा स्याद्बहिष्कृता। करिहस्तः समुद्दिष्टः कामशास्त्रविशारदैः॥" इत्युक्तदिशा कठिनयोनिशैथिल्यापादकेन बहिष्कृतमध्यमाङ्गुलीकेन तर्जन्यनामिकासंयोगेनेति गोपनीयोऽर्थः)। **अन्तः** सेनायाम्। (योन्यामिति गोपनीयोऽर्थः)। **प्रविश्य**। **विलोडिते**। **साधनान्तः** साधनं सैन्यं तस्यान्तः (योनेरन्तरिति गोपनीयोऽर्थः)। **उपसर्पन्**। **विराजते** ॥४५॥' **अत्र हि**। **सुतारम्भगोष्ठ्याम्**। (विषये सप्तमी)। "**द्व्यर्थैः** प्रकाशनीयाप्रकाशनीयार्थकैः। **पदैः**। **च**। **रहस्य वस्तु** गोपनीयमर्थम्। **पिशुनयेत्** व्यञ्जयेत्।" **इति**। **कामशास्त्रस्थितिः** कामशास्त्रस्य नीतिः। अतो गुणः।

कारिकाया आदिपदस्य सार्थकतां ध्वनयति–**आदिशब्दा**दित्यादिना। स्पष्टम्। तथा च–"उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे। क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते॥" इत्यत्र शमकथायामश्लीलत्वं गुणः। "उत्कृत्योत्कृत्य:..." इत्यत्र बीभत्से, "निर्वाणवैरदहनाः प्रशमादरीणाम्" इत्यत्र छद्मोक्तौ। इत्येवं यथातथं बोद्धव्यम्।

निहतार्थत्वाप्रयुक्तत्वयोः प्रतिप्रसवमुपदिशति–१० **स्याता**मित्यादिना।

**१० निहतार्थाप्रयुक्तते** निहतार्थताऽप्रयुक्तता चेत्यर्थः। **श्लेषादौ**। आदिना–यमकादीनां ग्रहणम्। **अदोषौ** परित्यक्तदुष्टताकौ। **स्याताम्** ॥ १७ ॥

उदाहरति–**यथा**। "**पर्वतभेदिपवित्रं** पर्वतान् भिनत्ति वज्रेण विनाशयतीत्येवंशीलः पर्वतभेदी, सोऽसौ पवित्रस्तम्। पविं वज्रं त्रायते रक्षति दधातीति यावत् पवित्रः। शैलानां पक्षच्छेदनपरं वज्रधरमिति भावः। **नरकस्य** नराणां कं शिरो मौलिरिति यावत् तस्य। **जैत्रं** जयशीलम्। 'जैत्रस्तु जेता' इत्यमरः। **बहुमतम्**। **गहनं** दुर्जयम्। **हरिमि**वेन्द्रमिव। 'यमानिलेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु।' इत्यमरः। **पर्वतभेदि पवित्रं** पर्वतस्य भेदश्छेदो गुहेति यावत् आश्रयत्वेनास्यास्तीति पर्वतभेदी,सोऽसौ पवित्रस्तम्। पविं दिशां स्वाधिष्ठितं देशमिति यावत्, त्रायते दुर्गम्यताविधानेन रक्षतीति पवित्रः। 'दिक् तु स्त्रियां दिशा दान्ती ककुप् देववधूः पविः।' इति शब्दार्णवः। **नरकस्य** मनुष्याणाम्। जातावेकवचनम्। **जैत्रं** जयशीलम्। **बहुमतङ्गहनम्** बहवो मतङ्गामातङ्गा हस्तिन इति यावत्,तान् हन्तीतितं तथोक्तम्। मतङ्गस्य गोत्रापत्यानि मतङ्गाः। 'बाह्वादिभ्यश्च।' ४।१।९६ इतीञ्। 'बह्वच इञः प्राच्यभरतेषु।' २।४।६६ इति लुक् च। 'क्विप् च।' ३।२।७६ इति क्विप्। हरिमिव सिंहमिव। **पर्वतभेदिपवित्रं** पर्वतभेदीन्द्रस्तस्य पविर्वज्रं तस्मात्, त्रायते गोकुलं रक्षतीति तं तथोक्तम्। **नरकस्य** तदाख्यस्यासुरस्य। **जैत्रम्**। **बहुमतम्**। गहनं दुर्बोधम्। **हरिमिव** विष्णुमिव। पर्वतभेदि पर्वतान् वृक्षान् भिनत्त्युन्मूलयतीत्येवंशीलमिति तत्तथोक्तम्। 'पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः। देवमुन्यन्तरे शैले' इति मेदिनी। **पवित्रं** पावनम्। **नरकस्य** निरयस्य। **जैत्रं** विनाशकम्। **बहुमत**मत्यन्तं महितम्। **गहनं** दुर्विगाह्यम्। **पतत्**। **सुरसरिदम्भः** सुरसरिद् गङ्गा तस्या अम्भो जलं तत्। 'भो मुमुक्षवः' इति शेषः। **नमत** प्रणमत। त्रिविक्रमस्येदं पद्यम्। आर्याछन्दस्तल्लक्षणं चोक्तं प्राक् ॥ ४६ ॥

इत्यत्र इन्द्रपक्षे पवित्रशब्दो निहतार्थः । सिंहपक्षे मतङ्गशब्दो मातङ्गार्थेऽप्रयुक्तः ।

**११ गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद्वक्तृवाच्ययोः ।**

यथा-

"त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम् । तद्दर्शनमुदासीनं त्वामेव पुरुषं विदुः ॥ ४७ ॥"

**१२ स्वयं वाऽपि परामर्शे**

अप्रतीतत्वं गुण इत्यनुषज्यते । यथा-

"युक्तः कलाभिस्तमसां विवृद्ध्यै क्षीणश्च ताभिः क्षतये य एषाम् ।
शुद्धं निरालम्बपदावलम्बं तमात्मचन्द्रं परिशीलयामि ॥ ४८ ॥"

---

इत्यत्रोदाहृते पद्ये । इन्द्रपक्षे । पवित्रशब्दः । निहतार्थो वज्रपरार्थेऽप्रसिद्धत्वात् निहतार्थदोषदुष्ट इत्यर्थः । सिंहपक्षे । मतङ्गशब्दः । मातङ्गार्थे गजार्थे । अप्रयुक्तः 'कविभिरनादृतत्वात्' इति शेषः । अथाऽपि श्लेषवशान्न दुष्ट इति भावः ।

अप्रतीतार्थत्वस्य गुणत्वं निर्दिशति-११ गुण इत्यादिना ।

११ चेत् । वक्तृवाच्ययोर्वक्तुर्बोद्धव्यस्य चेत्यर्थः । ज्ञत्वं सङ्केताभिज्ञत्वम् । तर्हि-अप्रतीतत्वमप्रतीतार्थत्वं नाम दोषः । गुणः । स्यात् ।

उदाहरति-यथा । "पुरुषार्थप्रवर्त्तिनीं पुरुषार्था धर्म्मार्थकाममोक्षास्तान् प्रवर्त्तयतीति तां तथोक्ताम् । प्रकृतिं प्रधानम् । 'प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे ।' इति यादवः । त्वाम् । आमनन्ति कथयन्ति । 'महात्मान' इति शेषः । तथा,-तद्दर्शिनं तां प्रकृतिं पश्यति साक्षित्वेन विलोकते इत्येवंशीलस्तं तथोक्तम् । उदासीनं कूटस्थम् । त्वाम् । एव 'नत्वन्य'मिति एवकारार्थः । पुरुषम् । विदुः विदन्ति । तथा च श्रुतिः-'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाम् । अजो ह्येको जुषमाणोऽनु शेते...'इति । इदं बोध्यम्-प्रकृतिपुरुषयोरभेदव्यपदेशः साङ्ख्यमतेन, वेदान्तसिद्धान्ते हि 'प्रकृतिश्च दृष्टान्तानुपरोधात् ।' इत्याद्युक्तदिशा ब्रह्मणः प्रकृतित्वमेवेति । कुमारसम्भवे देवानां ब्रह्मणः स्तुतिवाक्यमिदम् । अत्र च प्रकृतिपुरुषौ योगशास्त्रमात्रप्रसिद्धत्वेन अप्रतीतार्थावपि देवानां ब्रह्मणश्च प्रतीतार्थाविति न दुष्टौ, प्रत्युत गुणौ चमत्कारपोषकत्वात् । इति बोध्यम् ॥ ४७ ॥

अप्रतीतार्थत्वस्य प्रकारान्तरेण प्रतिप्रसवं निर्दिशति-१२स्वयमित्यादिना ।

१२ स्वयं स्वात्मनः । वा । परामर्शे पर्य्यालोचने । अपि । अप्रतीतार्थत्वं गुण इति पूर्वतोऽनुवृत्तम् । तदेवाह-अप्रतीतत्वमित्यादिना । स्पष्टम् ।

उदाहरति-यथा । "युक्त..." इत्यादौ ।

"यः । कलाभिः रजःसत्त्वतमोगुणरूपाभिर्मायाविभूतिभिः । युक्तो विशेषितविशेषणः । तमसामज्ञानानां तत्प्रधानानामविद्याकार्य्याणामिति यावत् । विवृद्ध्यै 'प्रभवती'ति शेषः । ताभिः कलाभिः । क्षीणो हीनो निर्गुण इति यावत् । च । एषां तमसामित्यर्थः । क्षतये तिरोभवाय यः प्रभवतीति भावः । तम् । शुद्धं निर्विकारम् । निरालम्बपदावलम्बं निरालम्बपदमुपास्योपासकत्वोज्झितं स्वस्वरूपभूतं मोक्षाख्यं पदं तदवलम्बयते प्रापयतेऽवलम्बते आश्रयते वेति तं तथोक्तम् । चन्द्रपक्षे तु-कलाभिः तत्प्रकाशपादैर्ज्योतिर्विशेषैः । यः । युक्तः । तमसां तिमिराणाम् । विवृद्ध्यै । यावद्रात्रितमःसत्वादिदमुक्तम् । ताभिः कलाभिः । क्षीणः कार्य्याक्षमत्वेन नष्टप्रभावः । च । यः । एषां तमसाम् । क्षतये । दिने हि चन्द्रः क्षीणकल इव भवति, तदा च तिमिराणामभाव इति दृष्टचरम् । तम् । शुद्धं शुभ्रप्रकाशम् । निरालम्बपदावलम्बं निरालम्बपदमाकाशमवलम्बो यस्य तं तादृशम् । इत्यर्थः । आत्मचन्द्रमात्मैव चन्द्र आत्मा चन्द्र इव वेति तं तथोक्तम् । परिशीलयामि चिन्तयामि वेदान्तनिष्ठस्येयमुक्तिः । कलाऽऽदिपदानां स्वशास्त्रमात्रप्रसिद्धार्थकतयाऽप्रतीतार्थत्वदोषप्रसक्तावेऽपि वक्तुः परामर्शकत्वाद् गुणावहत्वम् । उपजातिश्छन्दः ॥ ४८ ॥"

१३ कथितं च पदं पुनः॥ १८ ॥
विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि ।
दैन्येऽथ लाटानुप्रासे-ऽनुकम्पायां प्रसाधने ॥ १९ ॥
अर्थान्तरसङ्क्रमित-वाच्ये हर्षेऽवधारणे ।

गुण इत्येव । यथा-

"उदेति सविता ताम्रस्ताम्र एवास्तमेति च । सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥४९॥"
इत्यत्र विहितानुवादः ।

"हन्त हन्त गतः कान्तो वसन्ते सखि ! नागतः ।" इत्यत्र विषादः ।

"चित्रं चित्रमनाकाशे कथं सुमुखि ! चन्द्रमाः ।" इत्यत्र विस्मयः ।

'सुनयने ! नयने निधेहि' इत्यत्र लाटानुप्रासः ।

---

कथितपदत्वप्रतिप्रसवमाह-१३ कथितमित्यादिना ।

१३ विहितस्योद्दिष्टस्य । अनुवाद्यत्वे प्रतिनिर्देश्यत्वे । "उद्देश्यप्रतिनिर्देश्यस्थले उक्तपदप्रयोगादर्थान्तरप्रतीत्यभावेन झटित्येव शाब्दबोधः, ततो रसादिधीरविलम्बेनैवेत्यत्र कथितपदत्वस्य गुणत्व"मित्यन्यत्र विवृतम् । विषादे । विस्मये । क्रुधि क्रोधे । दैन्ये दीनतयोक्तौ । अथ । लाटानुप्रासे तदाख्ये शब्दालङ्कारे । अनुकम्पायां दयायां व्यञ्जनीयायाम् । प्रसादने प्रसन्नताऽऽपादने । अर्थान्तरसङ्क्रमितवाच्ये तदाख्ये ध्वनौ । हर्षे प्रमोदे । अवधारणे निश्चितताप्रतिपादने । पुनः । कथितम् । पदम् । चापि 'गुण' इति पूर्वतोऽनुवृत्तम्॥ १८ ॥ १९ ॥

पूर्वतोऽनुवर्त्तनीयमर्थं लक्षयति-गुण इत्यादिना । स्पष्टम् ।

उदाहरति-यथा । "उदेती"त्यादौ ।

"सविता सूर्य्यः । ताम्रस्तद्वत् प्रतीयमानः । उदेति । ताम्रस्तादृशवर्णः । एव । च । अस्तम् । एति प्रतिपद्यते । कथमेवमित्याह-महताम् । सम्पत्तौ । च । विपत्तौ । च । एकरूपताऽभिन्नस्वरूपत्वम्भवतीति भावः ॥ ४९॥ " इत्यत्र । विहितानुवाद उद्दिष्टप्रतिनिर्देशः 'अतः कथितपदत्वं गुण' इति प्रसक्तोऽर्थः । "हन्त हन्त कष्टं कष्टम् । हे सखि ! गतः 'परदेश'मिति शेषः । कान्तः । वसन्ते 'प्राप्तेऽपी'ति शेषः । न । आगतः । 'प्राप्तेऽपि विरहिप्राणनिस्सारणपरायणे ॥'इति शेषः ।"इत्यत्र । विषादः । अतोऽस्यातिशयव्यञ्जकत्वाद् गुणत्वम् । इति शेषः । "हे सुमुखि ! चित्रंचित्रमाश्चर्यमाश्चर्यम् । अनाकाशे आकाशाद्विरुद्धमनाकाशं तत्र । कथम् । चन्द्रमाः ? 'विभाति परिपूर्णोऽयं सदा विमलमण्डलः॥'इति च शेषः । कस्यापि प्रियां प्रति तन्मुखं चन्द्राभेदेन वर्णयत उक्तिरियम् । अत्राभेदातिशयोक्तिः ।" इत्यत्र । विस्मयः 'अतस्तदतिशयव्यञ्जकत्वेन कथितं पदं गुणः ।' इति शेषः । एवम्-"यातु यातु किमनेन तिष्ठता मुञ्चमुञ्च सखि ! सादरं वचः । पामरीवदनलोलुपो युवा नैष वेत्ति कुलजाधरासवम् ॥" इत्यत्र कोपातिशयस्य ।"एष त्वदेकशरणः पश्यैनं गतचेतसम् । हन्तहन्त प्रपद्यापि शरण्यां कथमीदृशः ॥" इत्यत्र दैन्यातिशयस्य च व्यञ्जकत्वात्,कथितं पदं गुणः । इति बोध्यम् ।"सुनयने ! नयने । निधेहि स्थापय ।"कान्ते ! पदाम्बुजयुगं शरणं त्वदीयं मत्वैष हन्त ! सुभगे समुपस्थितोऽद्य । अस्मिंस्तथाऽपि हतके न दयां तनोषि चेत्तन्मनाक् सुनयने ! नयने निधेहि ॥" इति समस्तं पद्यम् । वसन्ततिलकं वृत्तम् ।" इत्यत्र । लाटानुप्रासः । 'अस्य च कथितं पदमुपकारक'मिति तन्न्यासमन्तरा तस्य वैचित्र्यानुदयादिति कथितमपि पदं गुणः । इति भावः । एवम्--"वत्सवत्स ! त्वयैवाद्य कृतं कृतमनेन ते । यद्यत्स्वाभिमतं तत्तत् स्वैरं सर्वं गृहाण मत् ॥" इत्यत्रानुकम्पाऽतिशयस्य "मुञ्चमञ्च ननु नेत्रमुद्रणं न क्षमा मयि पदानतेऽक्षमा । निर्जितोऽपि बहुशः सुधाकरस्त्वन्मुखं जयति हन्त मानिनि ॥" इत्यत्र प्रसादनातिशयस्य च व्यञ्ज-

"नयने तस्यैव नयने च।" इत्यादावर्थान्तरसङ्क्रमितवाच्यो ध्वनिः। एवमन्यत्र।

१४ सन्दिग्धत्वं तथा व्याज-स्तुतिपर्य्यवसायि चेत् ॥ २० ॥

गुण इत्येव। यथा-

"पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव !
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥ ५० ॥"

१५ वैयाकरणमुख्ये तु प्रतिपाद्येऽथ वक्तरि।
कष्टत्वं दुःश्रवत्वं वा

गुण इत्येव। यथा-

---

कत्वात् कथितपदत्वं गुणः। "तस्य। एव। नयने। नयने। च। "सुभगः स एव सुभगः सुस्मितसुधयाऽसि यस्य मोदाय। जनुरिह जनुरयि सुषमे ! नयने तस्यैव नयने च ॥" इति समस्तं पद्यम्। आर्य्यावृत्तम्।" इत्यादौ। अर्थान्तरसङ्क्रमितवाच्यः। ध्वनिः। अतश्चमत्कारविशेषाधायकत्वेन कथितपदत्वं गुणः इति भावः।

क्रोधादौ कथितपदत्वस्य गुणत्वमवबोधितमपि नोदाहृतमित्याशङ्क्याह-एवमित्यादि।

एवम्। अन्यत्र क्रोधादावित्यर्थः। 'कथितं पदं गुण' इति शेषः। तथा चेदम्बोध्यम्-क्रोधादौ तावद्गुणत्वमुदाहृतमेवास्माभिः, अथ हर्षावधारणयोः क्रमेण यथा-"कथय कथय दूत ! क्वागतो रामभद्रो नवजलदगभीरस्निग्धगव्योदितश्रीः। क्व ननु सस सुमित्रानन्दनो लक्ष्मणो वा सुविमलपरिपूर्णप्रस्फुरत्सोमसौम्यः ॥" "तद्वचनाहितमतिर्बहुचाटुगर्भं कार्य्योन्मुखः खलु जनः कृतकं ब्रवीति। तत् साधवो न नु विदन्ति, विदन्ति किन्तु कर्तुं वृथा प्रणयमस्य न पारयामि ॥" इति।

सन्दिग्धत्वस्य गुणत्वमाह-१४ सन्दिग्धत्वमित्यादिना।

चेद्। व्याजस्तुतिपर्य्यवसायि व्याजस्तुतौ पर्य्यवस्यतीत्येवंशीलमिति तथोक्तम्। तर्हि-तथा। सन्दिग्धत्वम्। 'गुणः' इति पूर्ववदन्वेति ॥ २० ॥

अनुवर्त्तनीयमाह-गुण इत्यादिना। स्पष्टम्।

उदाहरति-यथा। "पृथुका"त्त्यादौ।

"हे देव राजन् ! पृथुकार्त्तस्वरपात्रं पृथूनि विपुलानि कार्त्तस्वरपात्राणि सुवर्णपात्राणि, यत्र तादृशं, पृथुकानां बालानां भोज्याभावात् आर्त्तस्वरः कातरध्वनिस्तस्य पात्रमिति वा। 'रुक्मं कार्त्तस्वरं जाम्बूनदमष्टापदोऽस्त्रियाम्।' इति 'पृथुकः शावकः शिशुः।' इति चामरः। भूषितनिःशेषपरिजनं भूषिता अलङ्कृता भुवि पृथ्व्यामुषिताः स्थिता आसनाभावाद्वा निःशेषाः परिजना यत्र तादृशम्। विलसत्करेणुगहनं विलसन्त्यः करेणवो हस्तिन्यस्ताभिर्गहनं सङ्कीर्णं व्याप्तमिति यावत्, बिले सीदन्तीति बिलसत्का मूषकास्तेषां रेणवस्तैर्गहनं व्याप्तम् इति वा। 'करेणुर्गजयोपायां स्त्रियां पुंसि मतङ्गजे।' इति मेदिनी। (बवयोः सावर्ण्यं चेत्यालङ्कारिकाः)। अत एव-आवयोः तव मम चेत्यर्थः। सदनं स्थानम्। सम्प्रति 'यावत् भवता न दीयते तावत्' इति शेषः। (दानलाभानन्तरं वैषम्यस्यावश्यम्भावित्वादिदमुक्तम्।) समम्। आर्य्याछन्दः। याचकस्य कस्यापि कवे राजानं प्रति स्वदशाद्योतनपरं वाक्यमिदम्। अत्र चपृथुकार्त्तस्वरपात्रादीनि विशेषणपदानि सन्दिग्धानि अपि राज्ञो व्याजस्तुतिपर्य्यवसायीनीति गुणतामापन्नानीति बोध्यम् ॥ ५० ॥"

कष्टत्वदुःश्रवत्वयोर्गुणत्वमाह-वैयाकरणेत्यादिना।

वैयाकरणमुख्ये व्याकरणमधीयते विदन्ति वेति वैयाकरणाः, तेषु मुख्यस्तस्मिन्। तु। प्रतिपाद्ये बोद्धव्ये। अथ। वक्तरि। सतिसप्तमीयम्। कष्टत्वम्। वा। दुःश्रवत्वम्। 'गुणः' इति शेषः।

अध्याहार्यं लक्षयति-गुण इत्यादिना। स्पष्टम्।

"दीधीवेवीङ्समः कश्चिद् गुणवृद्ध्योरभाजनम्।
क्विप्प्रत्ययनिभः कश्चिद् यत्र सन्निहिते न ते ॥ ५१ ॥"

इत्यत्रार्थः कष्टः, वैयाकरणश्च वक्ता। एवमस्य प्रतिपाद्यत्वेऽपि।

"अत्रास्मार्षमुपाध्याय! त्वामहं न कदाचन।" इत्यत्र दुःश्रवत्वं वैयाकरणो वाच्यश्च।

एवमस्य वक्तृत्वेऽपि।

**१६ ग्राम्यत्वमधमोक्तिषु ।**

गुण इत्येव। यथा—

---

उदाहरति–**यथा**। "**दीधी**" त्यादौ।

"**कश्चित्**। 'पुरुष' इति शेषः। **दीधीङ्वेवीङ्समो** दीधीङ्वेवीङ्भ्यां समः। 'दीधीङ्' दीप्तिदेवनयो· 'वेवीङ्' वेतिना तुल्ये इति धातुद्वयसदृश इति भावः साम्यमेवाह)। **गुणवृद्ध्योः** 'अदेङ् गुणः।' १।१।२ 'वृद्धि· रादैच्।' १।१।१ इति सूत्राभ्यां परिभाषितयोः सञ्ज्ञयोः शौर्याद्यभ्युदययोर्वा। **अभाजनमपात्रम्** ( धातुपक्षे 'दीधीवेवीटाम्।' १।१।६ इतिसूत्रेण गुणवृद्ध्योर्निषेधः। पुरुषपक्षे तु दैवहतत्वेन गुणवृद्ध्योरनाश्रयकत्वमिति बोध्यम्)। किञ्च–**कश्चित्** पुरुषः, **क्विप्प्रत्ययनिभः** क्विप्प्रत्ययेन सदृशः, तद्वत् सर्वतः प्राप्तलोप इति यावत्। ( 'वेरपृक्तस्य।' ६।१।६७ इत्यनेन सूत्रेण क्विपो लोपः, अन्यत्र सर्वथा दुष्टत्वात् लोपार्हत्वं बोध्यम्)। **यत्र** यस्मिन् क्विप्प्रत्यये पुरुषे वेत्यर्थः। **सन्निहिते** समीपस्थे सतीत्यर्थः। **ते** गुणवृद्धी इत्यर्थः। 'अन्यस्ये'ति शेषः। धात्वन्तरस्य पुरुषान्तरस्य वेत्यर्थः। ( धातुपक्षे 'क्ङिति च।' १।१।५ इति सूत्रेण निषेधात्)। **न**। "तादृश" इति शेषः। अत्र कीदृशा जना निवसन्तीति पृष्टवन्तं प्रति कस्यापि वैयाकरणस्योत्तरवचनमिदम् ॥५१॥" **इत्यत्र**। **अर्थः**। **कष्टो** दुर्बोध्यः, तथा च–कष्टत्वेऽपि वक्तुर्व्याकरणव्युत्पत्त्यतिशयप्रत्यायकत्वाद्गुणत्वम् इति निष्कर्षः। अत एवाह–**वैयाकरणः**। **च**। **वक्ता**।

प्रतिपाद्यत्वे उदाहरणमूह्यमित्याह–**एवमित्यादि**।

**एवम्**। **अस्य** वैयाकरणस्य। **प्रतिपाद्यत्वे** बोधनीयत्वे। **अपि** 'उदाहार्य'मिति शेषः। अत्र विवृति· काराः–'आत्मनेपदसंयोगियजिकर्ता गुरुर्भवान्।' ( इत्यत्र ) आत्मनः स्वर्गार्थं यागं करोषीत्यर्थः कष्टः ( गुणत्व· मापन्नः )।' इति।

दुःश्रवत्वस्य गुणत्वमुदाहरति–"**अत्रे**"त्यादिना।

"**अत्रास्मिन्**विषये। हे **उपाध्याय**! **त्वाम्**। **कदाचन** कदाऽपि। **न**। अहम्। **अस्मार्षं** त्वत्साहाय्य· मन्तरेणैव मया सर्वमुत्तारितमितिभावः।" **इत्यत्र**। **दुःश्रवत्वम्**। 'गुण' इति शेषः। ननु सर्वत्रैवं तर्हि स्यादित्याह–**अत्र, वैयाकरणः**। **वाच्यो** बोध्यः। केचित्तु–'यदा त्वामहमद्राक्षं पदविद्याविशारदम्। उपाध्यायं तदाऽस्मार्षं समस्प्राक्षं च सम्मदम् ॥' इत्यत्र वक्तृबोद्धव्ययोरुभयोरपि वैयाकरणत्वेन कष्टत्वदुःश्रवत्वोभयस्य गुणत्वमित्याहुः।

वक्तृत्वेऽप्यस्योदाहरणान्तरमूह्यमित्याह–**एवम्**। **अस्य** वैयाकरणस्य। **वक्तृत्वे**। **अपि** 'दुःश्रवत्वं गुण उह्य इति शेषः। तथा च–"सोऽध्यैष्ट वेदांस्त्रिदशानयष्ट पितॄनताप्सीत् सममंस्त बन्धून्। व्यजेष्ट षड्वर्गमरंस्त नीतौ समूलघातं न्यवधीदरींश्च ॥" इत्यत्र वैयाकरणस्य वक्तृत्वेन दुःश्रवत्वं गुण इति बोध्यम्। वैयाकरणेत्युपलक्षणं तार्किकस्य, तेन–'न्यायानुमानविगुणं कुयशस्ते महीपते! हेत्वाभासवदुद्भाव्यं विदुषो याति निग्रहम् ॥' इत्यादौ कष्टत्वादेर्गुणत्वम्।

ग्राम्यत्वस्य गुणत्वमाह–**१६ ग्राम्यत्वमित्यादिना**।

**१६ अधमोक्तिषु** अधमानां विदूषकादीनामुक्तयस्तासु। **ग्राम्यत्वम्**। 'गुण' इति पूर्ववत्।

किं ग्राम्यत्वं स्यादित्याह–**गुण** इत्यादि। स्पष्टम्।

"एसो ससहरबिंबो दीसइ हेअंगवीणपिंडोव्व।एदे अस्ससमोहा पडंति आसासु दुद्धधारं व्व॥५२॥'
इयं विदूषकोक्तिः। इदम्मम।

१७ निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति।
यथा-"सम्प्रति सन्ध्यासमयश्चक्रद्वन्द्वानि विघटयति।"
१८ कवीनां समये ख्याते गुणः ख्यातविरुद्धता॥ २२॥
कविसमयख्यातानि च-

१९ मालिन्यं व्योम्नि पापे यशसि धवलता वर्ण्यते हासकीर्त्योः
रक्तौ च क्रोधरागौ सरिदुदधिगतं पङ्कजेन्दीवरादि।
तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसङ्घो
ज्योत्स्ना पेया चकोरैर्जलधरसमये मानसं यान्ति हंसाः॥ २३॥

---

उदाहरति-यथा। "एसो" इत्यादौ।

"एसो एषः। हेअंगवीणपिंडोव्व हैयङ्गवीनपिण्ड इव। 'तत्तु हैयङ्गवीनं यद् ह्यो गोदोहोद्भवं घृतम्।' इत्यमरः। ससहरबिंबो शशधरबिम्बः। दीसइ दृश्यते। एदे एते। अस्ससमोहा अंशसमूहाः। दुद्धधारं-व्व दुग्धधारा इव। आसासु आशासु दिशासु इति यावत्। पडंति पतंति। आर्य्याछन्दः॥५२॥" इयम्। विदूषकोक्तिः। अतः-ग्राम्यत्वं गुण इति शेषः।

अस्य पद्यस्य परकीयत्वभ्रमनिरासायाह-इदमित्यादि। स्पष्टम्।

निर्हेतुतायाः प्रतिप्रसवमाह-१७ निर्हेतुतेत्यादिना।

१७ ख्याते विख्याते। अर्थे। प्रतिपाद्ये सति। तु। निर्हेतुता। दोषतां दुष्टत्वम्। नैव। गच्छति। दुष्टतां जहातीति भावः।

उदाहरति-यथा। "सम्प्रती"त्यादौ।

"सम्प्रति। सन्ध्यासमयः। चक्रद्वन्द्वानि चक्रवाकपक्षियुगलानि। विघटयति वियोजयति। "कमलानि निमीलयते नयते कुमुदानि सुप्रसादं च।" इति च तत्पूर्वार्द्धम्। सन्ध्यासमयस्य कमलनिमीलनकुमुदविकासनचक्रवाकविघटनकर्तृत्वं प्रसिद्धमित्यहेतुकमभिधानमपि न दुष्टमिति बोध्यम्।"

ख्यातविरुद्धताया गुणत्वमाह-१८ कवीनामित्यादिना।

१८ कवीनाम्। समये सङ्केते। ख्याते प्रसिद्धे सति। ख्यातविरुद्धता। गुणः॥ २२॥

ननु कस्कः कविसमय इत्याशङ्क्याह-कविसमयख्यातानि च 'उच्यन्ते' इति शेषः। १९ मालिन्यमित्यादिना।

१९ व्योम्न्याकाशे। तथा-पापेऽधर्म्मे। मालिन्यं मलिनता कविसमयसिद्धा। यशसि। तथा-हासकीर्त्योर्हासे कीर्त्तौ च। धवलता। वर्ण्यते 'कविभि'रिति शेषः। क्रोधरागौ क्रोधोऽनुरागश्चेत्येतद्द्वयम्। च। रक्तौ रक्तवर्णौ 'कविसमयख्यातौ' इति शेषः। सरिदुदधिगतं सरित्सु समुद्रेषु च सञ्जातम्। पङ्कजेन्दीवरादि, पङ्कजं श्वेतकमलम्, इन्दीवरं नीलकमलं, तदादि। अत्रादिपदेन कुमुद रत्नादीनामपि ग्रहणं बोध्यम्। 'कविसमयतः सिद्ध'मिति शेषः। अखिले सर्वस्मिन् विशिष्टत्वेनानिर्दिष्ट इति यावत्। अपि। तोयाधारे। मरालादिको मरालो हंसस्तदादिकश्चक्रवाकादिः। पक्षिसङ्घः। च। प्रसरति प्रचारितया कविभिर्वर्ण्यते इति भावः। चकोरैः। ज्योत्स्ना चन्द्रकान्तिः। पेया पेयत्वेन वर्ण्यते। जलधरसमये वर्षर्तुसमये। हंसाः। मानसं तदाख्यं सरोवरवि-

---

१ "एष शशधरबिम्बो दृश्यते हैयङ्गवीनपिण्ड इव। एतेऽंशुसमूहाः पतन्ति आशासु दुग्धधारा इव॥" इति संस्कृतम्।

पादाघातादशोकं विकसति बकुलं योषितामास्यमद्य-
यूनामङ्गेषु हाराः स्फुटति च हृदयं विप्रयोगस्य तापैः।
मौर्वी रोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतो-
र्भिन्नं स्यादस्य बाणैर्युवजनहृदयं स्त्रीकटाक्षेण तद्वत् ॥ २४ ॥
अह्न्यम्भोजं निशायां विकसति कुमुदं चन्द्रिका शुक्लपक्षे
मेघध्वानेषु नृत्यं भवति च शिखिनां नाप्यशोके फलं स्यात्।
न स्याज्जाती वसन्ते न च कुसुमफले गन्धसारद्रुमाणा-
मित्याद्युन्नेयमन्यत्कविसमयगतं सत्कवीनां प्रबन्धे ॥ २५ ॥

एषामुदाहरणान्याकरेषु स्पष्टानि।

२० धनुर्ज्याऽऽदिषु शब्देषु शब्दास्तु धनुरादयः। आरूढत्वादिबोधाय-

यथा-"पूरिता रोदसी ध्वानैर्धनुर्ज्याऽऽस्फालनोद्भवैः।"

इत्यत्र ज्याशब्देनापि गतार्थत्वे धनुः शब्देन ज्याया धनुष्यायत्तीकरणं बोध्यते।

---

शेषम्। यान्ति तथात्वेन वर्ण्यन्ते। **योषिताम्**। **पादाघातात्**। **अशोकम**शोकपुष्पमित्यर्थः। **विकसति**। **योषिताम्- आस्यमद्यै**र्गण्डूषपातैः। **बकुलं** केसरपुष्पम्। **विकसति**। **यूनां** युवतीनां यूनां चेत्यर्थः। **अङ्गेषु** कण्ठवक्षःस्थलेषु। **हाराः** 'कविभिर्वर्ण्यन्त' इति शेषः। **विप्रयोगस्य** विरहस्य। **तापैः** सन्तापैः। **च**। **हृदयम्**। **स्फुटति** विदीर्य्यते। **पुष्पकेतोः** कामस्य। **मौर्वी** ज्या। **रोलम्बमाला** भ्रमरपङ्क्तिः। 'रोलम्बो मधुपो भृङ्ग' इति धनदः। **धनुः**। **अथ**। **विशिखा** बाणाः। **कौसुमाः** पुष्पसम्बन्धिनः। 'कविसमयख्याता' इति शेषः। **अस्य** कामदेवस्य। **बाणैः**। **तद्वत्** तथा। **स्त्रीकटाक्षेण** तत्पातैरिति भावः। **युवजनहृदयं** यूनां हृदयम्। **भिन्नं** स्फुटितम्। **स्यात्** 'तथा वर्ण्यत' इति शेषः। **अह्नि** दिवा। **अम्भोजं** कमलम्। तथा-**कुमुदम्**। **निशायाम्**। **विकसति**। **शुक्लपक्षे** न तु कृष्णे पक्षे इति भावः। **चन्द्रिका**। **मेघध्वानेषु** मेघगर्जितेषु सत्सु च। **शिखिनां** मयूराणाम्। **नृत्यम्**। **भवति**। **अशोके**। **फलं** फलसद्भावः। **नापि** नैव। **स्यात्**। **वसन्ते**। **जाती** मालती। **न**। **स्यात्** 'विकसितत्वेन वर्ण्यमाने' ति शेषः। **गन्धसारद्रुमाणां** चन्दनवृक्षाणाम्। **कुसुमफले**। **च**। **न** 'वर्ण्येते' इति शेषः। **इत्यादि** 'कविसमयख्यात' मिति शेषः। **उन्नेयम्**। **अन्यत्**। **कविसमयगतम्**। **सत्कवीनां** महाकवीनाम्। **प्रबन्धे**। 'द्रष्टव्य' मिति शेषः। तथा च-'गजमूर्धसु मुक्तानां रत्नानां गिरिषूदयः। आकरेषु च हेमादेर्यत्र तत्र निरूप्यते ॥' इत्यादेर्ग्रहणम् ॥ २३ ॥ २४ ॥

एष ननु कुत्रोदाहरणानि दृष्टानीत्याशङ्क्याह-**एषा**मित्यादि। **आकरेषु** महाप्रबन्धेषु। स्पष्टमन्यत्।

पुनरुक्तस्य प्रतिप्रसवमाह-२० **धनुर्ज्ये**त्यादिना।

**२० धनुर्ज्याऽऽदिषु**। **शब्देषु**। **तु**। **धनुरादयः**। **शब्दाः**। **आरूढत्वादिबोधाय**। आदिपदेन-सन्नतत्वादीनां ग्रहणम्। अतः-'पुनरुक्तत्वमदुष्टतां प्रतिपद्यत' इति भावः। केचित्त्वेतेनापुष्टार्थत्वस्यापि प्रतिप्रसवमङ्गीकुर्वन्ति। तथाहि-प्रदीपकाराः, "अवतंसादिपदैर्जात्यादिपुरस्कारेण कर्णाभरणादीन्येवोच्यन्ते इत्यर्थतः प्राप्तौ कर्णादीनां पदानां यद्यपि अपुष्टार्थत्वं पुनरुक्तत्वं वा युज्यते, तथाऽपि क्वचित् कर्णेऽवतंस इत्यादिव्युत्पत्त्या क्वचिल्लक्षणादिना कर्णादिरूपस्याधिकस्य विवक्षितार्थस्य प्रतिपत्तेरदोषत्वम्।" इति।

उदाहरति-**यथा-"पूरिते"**त्यादौ।

"**धनुर्ज्याऽऽस्फालनोद्भवै**र्धनुषि(आरोपिता) या ज्या मौर्वी तस्या आस्फालनं तदेवोद्भव उत्पत्तिस्थानं येषां तस्माद्वोद्भवन्तीति तथोक्तैः। **ध्वानैः** शब्दैः। **रोदसी** द्यावाभूमी। 'भूद्यावौ रोदस्यौ रोदसी च ते।' इत्यमरः। **पूरिता**। 'रथहस्तिपदात्यश्व भीषणोन्नादबृंहितैः ॥' इत्युत्तरार्द्धम्।" इत्यत्र। **ज्याशब्देन** ज्यापदप्रयोगमात्रेणेति भावः। **अपि**।

आदिशब्दात् "भाति कर्णावतंसस्ते" इत्यत्रावतंसस्य कर्णस्थितत्वबोधनाय कर्णशब्दः। एवं श्रवणकुण्डलशिरःशेखरप्रभृतिः । तथा-निरुपपदो मालाशब्दः पुष्पस्रजमेवाभिधत्ते इति स्थितावपि "पुष्पमाला विभाति ते।" इत्यत्र पुष्पशब्द उत्कृष्टपुष्पवृद्ध्यै । एवम्-"मुक्ताहार" इत्यत्र मुक्ताशब्देन अन्यरत्नामिश्रितत्वम्।

२१ प्रयोक्तव्याः स्थिता अमी ॥ २६ ॥

धनुर्ज्याऽऽदयः सत्काव्ये स्थिता इति निबद्धव्याः, ननु अस्थिताः जघनकाञ्चीकरकङ्कणादयः।

२२ उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः।

---

गतार्थत्वे 'धनुष'इति शेषः। धनुःशब्देन। सहार्थेयं तृतीया, तथा च-धनुःशब्देन सह प्रयुक्तेन ज्याशब्देनेत्यर्थः। ज्याया मौर्व्याः। धनुषि। आयत्तीकरणम्। बोध्यते। अयम्भावः-कोटिरस्याटर्नी इत्युपक्रम्य 'मौर्वी ज्या शिञ्जिनी गुणः।' इत्यमरेण धनुर्गुणस्यैव ज्याशब्दो वाचक इति प्रतिपादितम्, तथा सति-ज्याशब्दस्यैव प्रयोगेण धनुर्गुणस्याभिधानं वस्तुतः सिद्धम्, अथ धनुरित्यधिकतयाऽभिधानं पुनरुक्ततामावहति इति यद्यपि वक्तुं शक्यते, तथाऽपि-ज्याया धनुःसम्बन्धिगुणमात्रत्वप्रत्यायकतया धनुषि आरोपितत्वस्य प्रत्यायनावशेषात् तस्य प्रत्यायनार्थं धनुश्शब्दसाहचर्य्यं युज्यते। इति। केचित्तु-'ज्या मौर्वी ज्या वसुन्धरा।' इति शाश्वतोक्तदिशा ज्याशब्दस्यानेकार्थवाचकतया धनुरित्यभिधानमन्तरा विवक्षितार्थनिर्णयाभाव इति तदर्थं धनुःशब्दप्रयोगपूर्वकं ज्याशब्दप्रयोगः स्थाने। इति, तन्न सत्, प्रकरणेनैवान्यस्यार्थस्य नियन्त्रितत्वात्। इति दिक्।

कारिकायामादिशब्दस्य सार्थकतां लक्षयति-आदिशब्दादित्यादिना।

आदिशब्दात्। "ते तव कान्तायाः। कर्णावतंसः कर्णेऽवतंस इति तथोक्तः, कर्णे निहितस्तदलङ्कारः। भाति। "सौन्दर्य्यं परिवर्द्धयन्। क्वचिज्जडोऽपि स्वगुणैरधः करोति चेतनम्॥' इत्यवशिष्टोंऽशः।" इत्यत्र। अवतंसस्य 'पुंस्युत्तंसावतंसौ द्वौ कर्णपूरे च शेखरे।' इत्यमरोक्त्या कर्णाभरणतया ख्यातस्य। कर्णस्थितत्वबोधनाय कर्णस्थितत्वं बोधयितुम्। कर्णशब्दः। 'प्रयुक्त इति स्थाने' इति शेषः। एवम्। श्रवणकुण्डल-शिरःशेखर-प्रभृतिः। प्रभृतिशब्देन नेत्राञ्जनादेर्ग्रहणम्। 'श्रवणादिस्थितत्वबोधनाये'ति शेषः। तथा। 'एव'मिति पाठान्तरम्। निरुपपदो निर्गतमुपपदं यस्य तादृशः। मालाशब्दः। पुष्पस्रजम्। एव। अभिधत्ते। तथा हि-'माल्यं मालास्रजौ मूर्ध्नि' इत्यमरः। इति स्थितौ। सत्यर्थेयं सप्तमी। अपि। "ते तव। पुष्पमाला। विभाति। 'चन्द्रांशुं मण्डलीकृत्य सेवमानोडुराशिवत्। विमला शन्तमाभासा' इति शेषः।" इत्यत्र। पुष्पशब्दः। उत्कृष्टपुष्पवृद्ध्यै उत्कृष्टानि यानि पुष्पाणि तेषां वृद्धिराधिक्यं तस्यै तां द्योतयितुमिति यावत्। एवम्-'मुक्ताहार! 'गुणीभूय नोपसर्प्यः स्तनस्त्वया। विभवे यस्य काठिन्यं व्यर्थं तदुपसर्पणम्॥' इति शेषः।" इत्यत्र। मुक्ताशब्देन अधिकेन प्रयुक्तेन' इति शेषः। अन्यरत्नामिश्रितत्वं 'प्रत्याय्यते, तस्मात्तस्यादुष्टत्वमि'ति शेषः। एवं च-'सकीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम्। शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः॥' इत्यादौ 'कीचका वेणवस्ते स्युर्ये स्वनन्त्यनिलोद्धताः।' इत्युक्तदिशा 'मारुतपूर्णरन्ध्रै'रित्यादि दुष्टमेव। इति बोधितम्।

नन्वेवम्माभूत् पुनरुक्तत्वमपुष्टार्थत्वं वा दोषः सर्वत्रैवंविधस्य तात्पर्य्यस्य सत्त्वात्। इति चेन्नेत्याह-२१ प्रयोक्तव्या इत्यादि।

२१ अमी पुनरुक्तत्वावहाः। स्थिता 'महाकाव्येषु' इति शेषः। प्रयोक्तव्याः। येषां पुनरुक्तत्वावहत्वेऽपि प्रयोगो बहुधा बहुत्र दृश्यते त एव प्रयोक्तव्या नान्ये इति भावः॥ २६॥

तदेव विवृणोति-धनुर्ज्याऽऽदय इत्यादिना। स्पष्टम्।

न्यूनपदत्वस्य गुणत्वमाह-२२ उक्तावित्यादिना।

२२आनन्दमग्नादेः, आनन्दे मग्न आनन्दप्रवाहे निमग्नवत् स्थित आदिर्यत्र तस्य आदिना दुःखशोकादिपरतन्त्रादेर्ग्रहणम्। उक्तौ। न्यूनपदता। गुणः। स्यात्।

यथा-"गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा ।
मा मा मानद ! माति मामलमिति क्षामाऽक्षरोल्लापिनी
सुप्ता किन्तु ? मृता नु किं ? मनसि मे लीना ? विलीना नु किम् ? ॥ ५३ ॥"

इत्यत्र "आयासय" इति "पीडय" इति च न्यूनम् ।

**२३ क्वचिन्न दोषो न गुणः**

न्यूनपदत्वमित्येव । यथा-

"तिष्ठेत् कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति,
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः ।

---

उदाहरति **यथा-"गाढलिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा** गाढालिङ्गनेन दृढपरिरम्भणेन वामनीकृतौ खर्वीकृतौ कठोरत्वाद्वा किञ्चिन्नामितौ कुचौ यस्याः, साऽसौ प्रोद्भिन्ना अत्यन्तमङ्कुरिता रोमोद्गमा रोमाञ्चा यस्याः सेति तथोक्ता । **सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा** सान्द्रो निविडो यः स्नेहरस आनन्दानुभवस्तस्यातिरेक उद्रेक आधिक्यमिति यावत् तेन विगलत् विस्रंसत् श्रीमन्नितम्बादम्बरं वस्त्रं यस्याः सा । हे **मानद** ! मानमभिमानं द्यति खण्डयति,मानं सम्मानं वा ददाति इति तत्सम्बुद्धौ तथोक्त! **मा** माम्। **मा** नैव।'आयासय'इति शेषः।**मा**। **अतिअत्यन्तम्** । **माम्** 'पीडय' इति शेषः। **अलमेतावदेव** पर्य्याप्तम्। **इति क्षामाक्षरोल्लापिनी** । क्षामाणि अक्षराणि यस्मिन् कर्म्मणि यथा स्यात्तथोल्लापिनीति तथोक्ता । **सुप्ता** । **किन्तु** एवं निश्चलेति किं निद्रां गतेति भावः । **मृता** । **नु** । **किम्** सुप्तत्वेऽपि श्वासः, अस्याश्च तदभावात् किं मृतेति भावः । **मे** मम । **मनसि** । **लीना** 'किमु' इति पूर्वतोऽनुपक्तम् । मृतत्वेऽपि बहिरनुभवः स्यादिति किं जतुकाष्ठन्यायेन मनस ऐक्यं गतेति भावः । ननु तादृशत्वेऽपि पृथक्कर्त्तुं शक्यते इत्यत आह-**विलीना** । **नु** । **किम्** । नीरक्षीरन्यायेन किं सर्वथा मनःसाहूप्यं गतेति भावः । अमरुशतकस्येदं पद्यम् । सुरतामोदातिरेकं प्राप्तां प्रेयसीमनेकधोल्लिख्य नायकस्य वितर्कोऽयम् । शार्दूलविक्रीडितं वृत्तम् ॥५३॥'

**इत्यत्र** । **"आयासय"** इति 'पद'मिति शेषः ॥ **"पीडय" इति** । **च** । **न्यूनम्** । "पद"मिति शेषः । इदम्बोध्यम्-अत्र "मा मा" इत्यतः पुरः "आयासय माऽति माम्" इत्यतः परं च "पीडय" इति पदं च न्यूनमपि न दुष्टम्, झटिति अध्याहारेण प्रतीतेः स्फुटत्वात्, प्रत्युत गुणः; रसातिरेकव्यञ्जकत्वात् । एवम्-"त्वं जीवितं त्वमसि मे हृदयं द्वितीयं त्वं कौमुदी नयनयोरमृतं त्वमङ्गे । इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां तामेव शान्तमथवा किमिहोत्तरेण ॥" इत्यादौ 'त्यक्तवान्' इत्यादीनि न्यूनान्यपि अशक्यवक्तव्यत्वेन शोकातिशयव्यञ्जकानीति गुणभूततां गतानि इति बोध्यम् ।

न्यूनपदत्वस्य दोषाभावमात्रत्वं निर्दिशति-**२३ क्वचिदित्यादिना** ।

**२३ क्वचित्** रसानपकर्षकत्वपुरस्कृतरसानुत्कर्षकत्वस्थले इति भावः । 'न्यूनपदत्व'मिति पूर्वतोऽनुवृत्तम् । **न** । **दोषः** । **न** । **गुणः** । 'चे'ति शेषः । दोषत्वमुज्झित्वाऽपि गुणत्वमप्राप्त इति भावः ।

कारिकां सङ्गमयितुमध्याहार्य्यं निर्दिशति-**न्यूनेत्यादिना** । स्पष्टम् ।

उदाहरति **यथा-"सा** उर्वशीत्यर्थः । **कोपवशात्** कोपवशं प्राप्य । **प्रभावपिहिता** प्रभावेनान्तर्धानकरणविद्यया पिहिताऽन्तर्हिता, 'सत्यत्रैव कुत्रचित्' इति शेषः । **तिष्ठेत्** । इति शेषः । 'कुपिता मां विहाय क्वापि तिष्ठेदिति न युज्यते यत' इति शेषः । **दीर्घमत्यन्तम्** । **न** । **कुप्यति** 'नैतद्यत' अतः-**स्वर्गाय** स्वर्गं गन्तुम् । 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः ।' २ । ३ । १४ इति चतुर्थी । **उत्पतिता** ऊर्ध्वं गता । **भवेत्** । 'नैतद्यत' इति शेषः । **अस्या** उर्वश्याः । **मनः** । **पुनः** । **मयि** मद्विषये । **भावार्द्रं** भावेन स्नेहेनार्द्रं सरसमिति भावः । ननु तर्हि दैत्यो वा-

तां हर्त्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्त्तिनीं
सा चात्यन्तमगोचरं नयनयोर्यातेति कोऽयं विधिः ?॥ ५४ ॥"

इत्यत्र 'प्रभावपिहिता' इत्यस्य 'भवेत्' इति, अस्य चानन्तरं 'नैतद्यत' इति पदानि न्यूनानि। एषां पदानां न्यूनतायामप्येतद्वाक्यव्यङ्ग्यस्य वितर्काख्यव्यभिचारिभावस्योत्कर्षाकरणान्न गुणः। 'दीर्घं न सा' इत्यादिवाक्यजन्यया प्रतिपत्त्या 'तिष्ठे'दित्यादिवाक्यप्रतिपत्तेर्बोधः स्फुटमेवावभासते इति न दोषः।

२४ गुणः क्वाप्यधिकं पदम्।

यथा-"आचरति दुर्जनो यत् सहसा मनसोऽप्यगोचरानर्थान्।
तन्न न जाने जाने स्पृशति मनः किन्तु नैव निष्ठुरताम्॥ ५५॥"

इत्यत्र "न न जाने" इत्यन्ययोगव्यवच्छेदाद्विच्छित्तिविशेषः।

२५ समाप्तपुनरात्तत्वं न दोषो न गुणः क्वचित्॥ २७॥

---

रक्षस्तां हरेदित्याशङ्क्याह-न च। तामुर्वशीम्। मे मम पुरूरवसो महावीरस्येति भावः। पुरोवर्त्तिनीम् अक्षिगोचरां सतीमिति भावः। हर्तुम्। विबुधद्विषो विबुधा देवास्तेषां द्विषः दैत्या राक्षसा वा इति भावः। अपि 'किं पुनरन्ये' इति शेषः। शक्ताः। तर्हि अत्रैव कुत्रचित् स्थिता स्यादित्याह-सा। च। नयनयोः। अत्यन्तम्। अगोचरमविषयम्। याता प्राप्ता। इति। अयम्। कः। विधिः प्रकारः ? पुरूरवस उक्तिरियम्। विक्रमोर्वश्याः पद्यमिदम्। शार्दूलविक्रीडितं वृत्तं तल्लक्षणं चोक्तं प्राक्॥ ५४॥"

ननु अत्र कानि न्यूनानि पदानीत्याशङ्कायां तानि दर्शयन् तेषां च लक्ष्यसङ्गत्यर्थं गुणदोषाभावं दर्शयति-इत्यत्र। 'प्रभावपिहिता' इत्यस्य। पश्चादिति शेषः। 'भवेत्' इति, अस्य। च पदस्येति शेषः। अनन्तरं पश्चात् 'न। एतत्। 'युक्त'मिति शेषः। यतः' । इति पदानि। न्यूनानि। एषां न्यूनानाम्। पदानाम्। न्यूनतायाम्। अपि। एतद्वाक्यव्यङ्ग्यस्यैतद्वाक्यं 'तिष्ठे'दित्यादि, तद्व्यङ्ग्यस्य। वितर्काख्यव्यभिचारिभावस्य। उत्कर्षाकरणात् उत्कर्षो रसस्फूर्त्तिस्तस्याकरणं तस्मात्। गुणो गुणस्वरूपत्वम्। न। तर्हि दोषत्वं स्यादित्याह-'दीर्घं न सा' इत्यादिवाक्यजन्यया। प्रतिपत्त्याऽध्यवसायेन। 'तिष्ठे'दित्यादिवाक्यप्रतिपत्तेः। बोधः। तत्-स्फुटमनायासं सुसिद्धम्। एव। अवभासते। इति। न। दोषो दुष्टत्वम्।

अधिकपदत्वस्य गुणत्वं क्वचित्सम्भवतीत्याह-२४ गुण इत्यादिना।

२४ क्वापि। 'रसस्योत्कर्षकत्वे सती'ति शेषः। अधिकम्। पदम्। गुणः।

उदाहरति- यथा-"यत्। दुर्जनः। मनसः। अपि 'किं पुनर्वचस' इति शेषः। अगोचरानर्थान् परोऽक्षान् अनर्थान्। आचरति। तत्। 'अह'मिति शेषः। न। जाने। 'इती'ति शेषः। न। जाने। किन्तु। मनः। निष्ठुरताम्। सहसा। नैव। स्पृशति। आर्याच्छन्दः॥ ५५॥"

इत्यत्र। 'न न जाने।' इत्यन्ययोगव्यवच्छेदात्। विच्छित्तिविशेषश्चमत्कारातिशयः। 'अतो जाने इत्यधिकं पदं गुणः।' इति शेषः। अयम्भावः-'न न जाने' इत्यनेन 'न जाने' इत्यस्यान्यस्य योगस्य व्यवच्छेद इति। 'जाने' इत्यनेन पुनश्चमत्कारातिशय इति गुणत्वमेवेति। अत्र तर्कवागीशाः-'अस्य शुद्धोदाहरणं तु "याहि माधव याहि केशव! मा वद कैतववादम्। तामनुसर सरसीरुहलोचन! या तव हरति विषादम्॥" अत्र माधवकेशवसरसीरुहलोचनपदानामन्यतमेनैवान्वयोपपत्तौ सर्वेषामुपपादनमर्थान्तरबोधकत्वाद् गुण एव, तथा हि माधवशब्देन लक्ष्मीपतित्वेऽपि तव वैदग्ध्यं नास्तीति, केशवपदेन वीरत्वेऽपि रतिसामर्थ्यं नास्तीति, सरसीरुहलोचनपदेन विलक्षणचक्षुःसत्त्वेऽपि मम रूपलावण्यातिशयं न पश्यसीति व्यज्यते' इत्याहुः।

समाप्तपुनरात्तत्वस्य प्रतिप्रसवमाह-२५ समाप्तेत्यादिना।

२५ समाप्तपुनरात्तत्वम्। क्वचित् वाक्यान्तरस्य पुनरुपादाने। न। दोषः। गुणः। 'चे'ति शेषः। न॥२७॥

यथा-"अन्यास्ता गुणदोषरोहणभुवः····" इत्यादौ । प्रथमार्धेन वाक्यसमाप्तावपि द्वितीयार्धवाक्यं पुनरुपात्तम् । एवं च-विशेषणमात्रस्य पुनरुपादाने समाप्तपुनरात्तत्वं, न वाक्यान्तरस्य; इति विज्ञेयम् ।

**२६ गर्भितत्वं गुणः क्वापि**

यथा-"दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा साऽपि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मात् प्रादुरभूत् कथाऽद्भुतमिदं यत्रैव चास्तं गतम् ॥ ५६ ॥"

इत्यत्र 'वदन्त एव' इत्यादिवाक्यं वाक्यान्तरप्रवेशाच्चमत्कारातिशयं पुष्णाति ।

**२७ पतत्प्रकर्षता तथा ।**

तथेति-क्वचिद्गुणः ।

यथा-'चञ्चद्भुजभ्रमित····' इत्यादौ चतुर्थपादे सुकुमारार्थतया शब्दाडम्बरत्यागो गुणः ।

---

उदाहरति-यथा । "अन्यास्ता····" ( इति च व्याख्यातपूर्वं पद्यम् । ) ननु कथमिह तस्य प्रतिप्रसव इत्यत आह-इत्यादावित्यादि । स्पष्टम् । इदं तत्त्वम्-विशेषणस्य पुनरुपादाने प्रतीतिविलम्बे निराकाङ्क्षत्वं च, वाक्यान्तरस्य पुनरुपादाने तदभाव इति, अस्यादुष्टत्वं, चमत्कारातिशयानाधायकत्वाच्चागुणत्वम् । इति ।

गर्भितत्वस्य गुणत्वमाह-**२६ गर्भितत्वमित्यादिना** ।

**२६ गर्भितत्वम्** । **क्वापि** चमत्काराधायकस्थले इति भावः । **गुणः** । 'मत' इति शेषः ।

उदाहरति-**यथा**-"**दिङ्मातङ्गघटाविभक्तचतुराघाटा** दिङ्मातङ्गा दिग्गजास्तेषां घटा समूहस्तया विभक्ताः परिच्छिन्नाश्चत्वारः आघाटाः सीमा यस्यास्तादृशी । **मही** पृथिवी । **साध्यते** स्ववशीक्रियते । **सा** तादृशी मही । **सिद्धा** । **अपि** । **वदन्तः** कथयन्तः । **एव** । **हि** । **वयम्** । **रोमाञ्चिताः** । इति-**पश्यत** । नात्र किञ्चिदपरोक्षमिति भावः । **विप्राय** ब्राह्मणाय कश्यपायेति भावः । **प्रतिपाद्यते** प्रदीयते । **किम्** । **अपरम्** इतरदितोऽधिकं वाच्यमिति यावत् । **यस्मात्** । **इदम्** । **कथाऽद्भुतम्** । **प्रादुरभूत्** । **यत्र** यस्मिन् । **एव** 'नतु अन्यस्मिन्न'ति शेषः । **च** । **अस्तम्** । **गतम्** । **तस्मै** । **रामाय** जमदग्निनन्दनाय । **नमः** । भट्टप्रभाकरस्येदं पद्यम् । शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ ५६ ॥'

ननु किं वाक्यमिह गर्भितं गुण इत्याशङ्क्याह-**इत्यत्र** । '**वदन्त एव**' **इत्यादिवाक्यम्** । **वाक्यान्तरप्रवेशात्** 'सिद्धा साऽपि विप्राय प्रतिपाद्यते' इति वाक्यान्तः प्रवेशस्तस्मात् । **चमत्कारातिशयम्** अभिधेयार्थस्य युद्धवीरदानवीरपर्य्यवसायितयाऽतिशयितं चमत्कारम् । **पुष्णाति** । तथा च-न तेन तुल्यो योद्धा, न च तेन समो दानी भूतो, भवन्, भविष्यन् वेति व्यङ्ग्योऽर्थोऽतिशयित इति निष्कर्षः ।

पतत्प्रकर्षताया गुणत्वमाह-**२७ पतदित्यादिना** ।

**२७ पतत्प्रकर्षता** । **तथा** । 'क्वचिद् गुणः' इति पूर्वतोऽनुवृत्तम् । अन्यत्स्पष्टम् ।

उदाहरति-**यथा** । "**चञ्चद्भुजभ्रमिते**"त्यादिना । व्याख्यातपूर्वमेतत्पद्यम् । ननु कथमिह गुणत्वमित्याह-**इत्यादौ** । **चतुर्थपादे** । **सुकुमारार्थतया** द्रौपदीकेशोत्तंसनरूपस्यार्थस्यानुद्धतत्वेन । **शब्दाडम्बरत्यागः** । **गुणः** । इदं बोध्यम्-अभिधेयस्यानुद्धतत्वेन तथा पतत्प्रकर्षो युक्त इति-अस्यादुष्टत्वम् , देव्यां च सौकुमार्य्यप्रकाशनस्यात्यन्तमुचितत्वेन चास्य गुणत्वम् । इति ।

**२८ क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः ॥ २८ ॥**

**अनुभावविभावाभ्यां रचना यत्र नोचिता ।**

यत्रानुभावविभावमुखेन प्रतिपादने विशदप्रतीतिर्नास्ति, यत्र च विभावानुभावकृतपुष्टिराहित्यमेवानुगुणं; तत्र व्यभिचारिणः स्वशब्देनोक्तौ न दोषः । यथा-

"औत्सुक्येन कृतत्वरा, सहभुवा व्यावर्त्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताऽभिमुख्यं पुनः ।
दृष्ट्वाऽग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसताऽऽश्लिष्टा शिवायास्तु वः ॥ ५७ ॥"

इत्यत्रौत्सुक्यस्य त्वरारूपानुभावमुखेन प्रतिपादने सङ्गमे न झटिति प्रतीतिः, त्वराया भयादिनाऽपि सम्भवात्, ह्रियोऽनुभावस्य च व्यावर्त्तमानस्य कोपादिनाऽपि सम्भवात् साध्वसहासयोस्तु विभावादिपरिपोषकस्य प्रकृतरसप्रतिकूलप्रायत्वाद् इत्येषां स्वशब्दाभिधानमेव न्याय्यम् ।

**२९ सञ्चार्य्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः ॥ २९ ॥**

यथा-'क्वाकार्य्यं....' इत्यादौ प्रशमाङ्गानां वितर्कमतिशङ्काधृतीनामभिलाषाङ्गैरौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारः पर्य्यन्ते चिन्ताप्रधानमास्वादप्रकर्षमाविर्भावयति ।

---

व्यभिचारिणः स्वशब्दवाच्यत्वे तददुष्टत्वमाह-२८ क्वचिदित्यादिना ।

**२८ यत्र । अनुभावविभावाभ्याम्** । **रचना** व्यञ्जनम् । **न** । **उचिता** । 'तत्रे'ति शेषः । **क्वचित् व्यभिचारिणः । स्वशब्देन । उक्तौ । न । दोषः ॥ २८ ॥**

तदेव विवृणोति-**यत्र । अनुभावविभावमुखेन**ानुभावद्वारा विभावद्वारा वेति भावः । 'व्यभिचारिण' इति शेषः । **प्रतिपादने** व्यञ्जने । **विशदप्रतीतिः** सम्यक् स्फुरणम् । **न । अस्ति । यत्र । च । विभावानुभावकृतपुष्टिराहित्यं** विभावानुभावाभ्यां कृता या पुष्टिस्तस्या राहित्यम् । **एव । अनुगुणं** युक्तम् । **तत्र । व्यभिचारिणः । स्वशब्देन । उक्तौ । न । दोषः ।**

उदाहरति-**यथा-"औत्सुक्येन** ( दयितसमीपगमने ) उत्कण्ठया । **कृतत्वरा** कृता त्वरा सहसा गमनारम्भो यया तथाभूता । **सहभुवा** सहजया । **ह्रिया** लज्जया । **व्यावर्त्तमाना** परावर्त्तमाना । **बन्धुवधूजनस्य** बन्धुरूपस्य वधूजनस्य ( प्रमदाजनस्य सखीजनस्य ) कुबेरादिदेवानामङ्गनाजनस्येति भावः । **तैस्तैः** 'तत्कालोचितै'रिति शेषः । **वचनैः । पुनः । आभिमुख्यं** साम्मुख्यम् । **नीता** प्रापिता । तथा-**अग्रे । वरं** कान्तं 'दिगम्बरं व्याघ्रचर्म्माम्बरं त्र्यक्षं कपर्दिन'मित्यादिविशेषणविशेषितं शङ्करमिति यावत् । **दृष्ट्वा । आत्तसाध्वसरसा**ऽऽत्तः साध्वसरसो भयोद्रेको यया तादृशी । **नवे**ऽभिनवे । **सङ्गमे । संरोहत्पुलका**ेद्गच्छद्रोमाञ्चा । **हसता । हरेण । आश्लिष्टा । गौरी । वो** युष्माकम् । **शिवाय । अस्तु ।** रत्नावल्याः पद्यमिदम् । शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं च प्रागुक्तम् ॥ ५७ ॥

ननु कस्य कथमनुभावद्वारा प्रतिपादने समुत्कर्ष इत्याशंक्याह-**इत्यत्रे**त्यादि । स्पष्टोऽर्थः ।

परिपन्थिविभावादिसङ्ग्रहस्यादोषत्वमाह-२९ **सञ्चार्य्यादे**रित्यादिना ।

**२९ विरुद्धस्य** प्रकृतरसपरिपन्थिरसाङ्गभूतस्य । **सञ्चार्य्यादेः** । आदिनाऽनुभावविभावयोर्ग्रहणम् । **बाध्यत्वेन । वचः** कथनम् । **गुणः** । तथा च-स्वभावतो बाध्यत्वेन कथनं गुण इति सूचितम् ॥ २९ ॥

उदाहरति-**यथा । "क्वाकार्य्य"**मित्यादिना । व्याख्यातपूर्वं पद्यमिदम् । नन्विह कस्य कस्य केन केन बाध्यत्वेन कथनमित्याशङ्क्याह-**इत्यादा**वित्यादि । स्पष्टम् ।

यथा वा-"सत्यं मनोरमा रामाः सत्यं रम्या विभूतयः । किन्तु मत्ताऽङ्गनाऽपाङ्गभङ्गलोलं हि जीवितम् ॥"

**३० विरोधिनोऽपि स्मरणे साम्येन वचनेऽपि वा।**
**भवेद्विरोधो नान्योऽन्यमङ्गिन्यङ्गत्वमाप्तयोः॥ ३०॥**

क्रमेण यथा–'अयं स रसनोत्कर्षी...' इत्यादौ आलम्बनविच्छेदे रतेररसात्मतया स्मर्यमाणानां तदङ्गानां शोकोद्दीपकतया करुणानुकूलता।

"सरागया स्रुतघनघर्मतोयया कराहतिध्वनितपृथूरुपीठया।
मुहुर्मुहुर्दशनविलङ्घितोष्ठया रुषा नृपाः प्रियतमयेव भेजिरे॥ ५८॥"

इत्यत्र सम्भोगशृङ्गारो वर्णनीयवीरव्यभिचारिणः क्रोधस्यानुभावसाम्येन विवक्षितः।

"एकं ध्याननिमीलनान्मुकुलितप्रायं द्वितीयं पुनः
पार्वत्या वदनाम्बुजस्तनभरे सम्भोगभावालसम्।

---

इत्यत्र पूर्वार्द्धे शृङ्गारस्य, परार्द्धे शान्तस्य विभावः। अनयोर्विरोधेऽपि पूर्वार्द्धस्य वाध्यतयोक्तत्वान्न दोषत्वम्। अपि तु परार्द्धस्य परिपोषाद्गुणत्वम्। अनुभावानां वाध्यत्वेनोक्तौ गुणत्वं तूह्यम्। नच–"पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः। आवेदयति नितान्तं क्षेत्रियरोगं सखि! हृदन्तः॥" इत्युदाहार्य्यम्। यद्यपि–अत्र पाण्डुत्वादीनां रोगानुभावत्वेन विरुद्धत्वेऽपि विप्रलम्भेऽध्यारोपादङ्गत्वप्राप्त्या निर्दुष्टत्वम् इति वक्तुं शक्यते, तथाऽपि तेषामुभयसाधारण्याद्विरुद्धत्वस्यैवासिद्धेः।

विरुद्धयोर्द्वयोरेकत्र समावेशे विषयविभागवशेन प्रतिप्रसवमाह–३० **विरोधिन** इत्यादिना।

३०**विरोधिनो** विरुद्धस्य रसस्य। **अपि**। **स्मरणे** पूर्वानुभूतस्य व्यञ्जनयाऽवगमे। **साम्येन**। **वचने**। **अपि**। **वा**। **अङ्गिनि** प्रधाने। **अङ्गत्वं** गौणत्वम्। **आप्तयोः** प्राप्तयोः। **अन्योऽन्यम्**। **विरोधः**। **न**। **भवेत्**॥ ३०॥

उदाहरति– **क्रमेण यथा**। **"अयं स"** इत्यादिना। व्याख्यातपूर्वमिदं पद्यम्। ननु कथमिह लक्षणसमन्वय इत्याशङ्क्याह–**इत्यादौ**। **आलम्बनविच्छेदे** आलम्बनस्य भूरिश्रवसो विच्छेदो विरहस्तस्मिन् सतीत्यर्थः। **रतेः**। **अरसात्मतया**ऽनास्वाद्यतया। **स्मर्य्यमाणानाम्**। **तदङ्गानां** रत्यङ्गानामनुभावानाम्। **शोकोद्दीपकतया**। **करुणाऽनुकूलता**। एतेन–शृङ्गारस्यापि स्मरणमवधेयम्, अत एव प्रकाशकारा अप्याहुः–'अत्र पूर्वावस्थास्मरणं शृङ्गाराङ्गमपि करुणं परिपोषयति।' इति।

साम्येन विरोधपरिहारमुदाहरति "**सरागया** रागेण मुखलौहित्यजनकत्वेनानुरागेण वा सह वर्त्तते इति तया तथोक्तया। **स्रुतघनघर्मतोयया** स्रुतं घनं घर्म्मतोयं तापव्यञ्जकं जलं यया तया ( क्रोधोद्रेके सुरतान्ते श्रमेण च स्वेदोद्गमः स्वतः सिद्धः )। **कराहतिध्वनितपृथूरुपीठया** कराघातेन ध्वनितं पृथूरुपीठं यत्र,पृथूरुरेव पीठं वा यथेति तया ( क्रोधे सति वीरैरूरुः पीठं च,सुरतोत्सुकाभिरूरुश्चाहन्यते इति स्वभावः कामशास्त्रं च)। **मुहुर्मुहुः**। **दशनविलङ्घितोष्ठया** दशनैः स्वरदैः कान्तरदैर्वा विलङ्घितो निपीडित ओष्ठो यत्र यस्या वा तया। **रुषा**। **प्रियतमयेव**। **नृपाः** ( कर्म्म ) **भेजिरे**। वंशस्थविलं छन्दस्तल्लक्षणं चोक्तं प्राक्॥ ५८॥"

उदाहृते पद्ये विरोधपरिहारं दर्शयति–**इत्यत्र**। **सम्भोगशृङ्गारः**। **वर्णनीयवीरव्यभिचारिणः**। **क्रोधस्य**। **अनुभावसाम्येन**। **विवक्षितः**। अयम्भावः–सरागत्वाद्यनुभावानां रतावपि सम्भवाद्रुषो न झटिति प्रत्ययः, तस्मात् तस्याः स्वशब्दोपादानं युक्तम्, प्रकरणादुत्साहस्यास्वाद्यमानत्वेन वीरत्वं, स्थायिनः क्रोधस्य च स्वशब्देनोपादानात् आस्वाद्याभावेन न रौद्रत्वम्, किन्तु–रौद्रस्य स्थायी भावः स्वशब्देनोपात्तो वीरस्य व्यभिचारी सन् सम्भोगशृङ्गारस्य स्वानुभावसाम्येन साम्यमावहति। इति।

एकस्मिन्नङ्गत्वं गतानां रसानां समावेशमुदाहरति–"**एकम्** 'नेत्र'मिति शेषः। **ध्याननिमीलनात्** ध्यानेन निमीलनं तस्मात् तं प्राप्य। **मुकुलितप्रायं** मुकुलितसदृशम्। **द्वितीयम्** 'नेत्र'मिति शेषः। **पुनः**। **पार्वत्या**स्तदाख्यायाः स्वप्रेयस्याः। **वदनाम्बुजस्तनभरे** वदनाम्बुजं च स्तनभरश्च इत्यनयोः समाहारस्तत्र तथोक्ते। **सम्भोग-**

अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं
शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः ॥ ५९ ॥"

इत्यत्र शान्तशृङ्गाररौद्रपरिपुष्टा भगवद्विषया रतिः । यथा वा—

"क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥ ६० ॥"

इत्यत्र कविगता भगवद्विषया रतिः प्रधानं, तस्याः परिपोषकतया भगवतस्त्रिपुरध्वंसं प्रत्युत्साहस्य अपरिपुष्टतया रसपदवीमप्राप्ततया भावमात्रस्य करुणोऽङ्गम् । तस्य च 'कामीवे'ति साम्यबलादायातः शृङ्गारः । एवं च—अविश्रान्तिधामतया करुणस्याप्यङ्गतैवेति द्वयोरपि करुणशृङ्गारयोर्भगवदुत्साहपरिपुष्टतद्विषयरतिभावास्वादप्रकर्षकतया यौगपद्यसद्भावादङ्गत्वेन न विरोधः ।

ननु समूहालम्बनात्मकपूर्णघनानन्दरूपस्य रसस्य तादृशेन इतररसेन कथं विरोधः सम्भा-

---

भावालसं सम्भोगस्य चुम्बनपरिमर्दनरूपयोर्भावोऽभिप्रायस्तेनालसं निश्चलम् । अन्यत् तृतीयं नेत्रमिति भावः । दूरविकृष्टचापमदनक्रोधानलोद्दीपितं दूरमत्यन्तं विकृष्ट आकृष्टः चापो धनुर्येन तादृशो यो मदनस्तस्मिन् क्रोधः स एवानलोऽग्निस्तेनोद्दीपितम् । एवम्—समाधिसमये । भिन्नरसं विरुद्धबहुरसव्यञ्जकमिति भावः । शम्भोः शङ्करस्य । नेत्रत्रयम् । वो युष्मान् । पातु रक्षतात् । शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥५९॥"

समावेशसङ्गतिं लक्षयति—इत्यत्रेत्यादिना । स्पष्टम् । इदमवोध्यम्—शृङ्गारिणोऽपि न समाधिभङ्ग इति शृङ्गारस्य परम्परया, क्रोधस्य समाधिविघ्ननिवारकत्वेन तत्परिणामिनो रौद्रस्य साक्षादेव भगवद्रतेः परिपोषकत्वम् । इति ।

परम्परया केवलमङ्गत्वमाप्तयोः समावेशमुदाहरति—यथा वा—"साश्रुनेत्रोत्पलाभिः । त्रिपुरयुवतिभिस्त्रिपुरासुरस्य नायिकाभिः । हस्तावलग्नो हस्तस्पर्शं कुर्वन् । क्षिप्तस्तिरस्कृतः । प्रसभं बलात् । अंशुकान्तं वस्त्रप्रान्तम् । आददानो गृह्णन् । अभिहतस्ताडितः । केशेषु । गृह्णन् । अपास्तो दूरीकृतः । चरणनिपतितश्चरणयोर्निपतितः सन् । सम्भ्रमेण भयेनादरेण च । नेक्षितः ।तथा—आलिङ्गन् । यः । आर्द्रापराधस्तत्कालकृतापराध इति भावः । कामीव । अवधूतो निराकृतः । सः । शाम्भवः शम्भोरयमिति तथोक्तः । शराग्निर्बाणरूपोऽग्निः । वो युष्माकम् । दुरितं पापम् । दहतु । अमरुशतकस्येदं पद्यम् । स्रग्धरा वृत्तम् ॥ ६० ॥"

अत्र करुणशृङ्गारयोर्विरोधपरिहारं दर्शयति—इत्यत्रेत्यादिना । स्पष्टोऽर्थः । इदमवोध्यम्—यद्यपि शृङ्गारापेक्षया करुणोऽङ्गी, तथाऽपि तस्य पर्य्यवसाने प्रकर्षाभाव इति तस्याङ्गत्वमेव, शृङ्गारश्च स्वयं 'कामीवे'तिसाम्यबलादायात इति सोऽपि भगवद्विषयाया रतेरङ्गम् । अत एतस्यास्ताभ्यां परिपोषः । इति ।

तदेव विशदयति—एवम् । च । अविश्रान्तिधामतया न विश्रान्तिः परिपुष्टतया स्फुरणं तस्या धामाश्रयः तस्य भावस्तया । करुणस्य । अपि ( शृङ्गारस्य तु 'साम्यबलादागन्तुकत्वादस्यैवे'ति सूचयितुमिदम् ) । अङ्गताऽप्रधानता । एव । इति । द्वयोः । अपि । करुणशृङ्गारयोः । भगवदुत्साहपरिपुष्टतद्विषयरतिभावास्वादप्रकर्षकतया भगवतः शङ्करस्योत्साहस्त्रिपुरध्वंसं प्रति चित्तोत्कर्षस्तेन परिपुष्टोऽसौ तद्विषया शङ्करविषया रतिः सैव भावः तस्यास्वादस्तस्य प्रकर्षकौ तयोर्भावस्तत्ता तया । यौगपद्यसद्भावादेककाले सम्भवात् । अङ्गत्वेन । 'स्थितयो' रिति शेषः । न । विरोधः ।

एतन्मतं विविच्य विशदयितुमाह—ननु । समूहालम्बनात्मकपूर्णघनानन्दरूपस्य समूहो विभावानुभावव्यभिचारिस्थायिभावानां समष्टिरालम्बनमुपजीवनं यस्य तादृश आत्मा यस्य तादृशोऽसौ पूर्णो घन आनन्दो रूपं यस्य तस्य तादृशस्य । रसस्य । तादृशेन समूहालम्बनात्मकपूर्णघनानन्दरूपेण । इतररसेन रसान्तरेण । कथम् । विरोधः ।

वनीयः ? एकवाक्ये निवेशप्रादुर्भावयौगपद्यविरहेण परस्परोपमर्दकत्वानुपपत्तेः। नापि अङ्गाङ्गिभावः द्वयोरपि पूर्णतया स्वातन्त्र्येण विश्रान्तेः। इति चेत् सत्यमुक्तम्, अत एव–अत्र प्रधानेतरेषु रसेषु स्वातन्त्र्यविश्रमराहित्यात् पूर्णरसभावमात्राच्च विलक्षणतया सञ्चारिरसनाम्ना व्यपदेशः प्राच्यानाम्, अस्मत्पितामहानुजकविपण्डितमुख्यश्रीचण्डीदासपादानां तु खण्डरसनाम्ना। यदाहुः–'अङ्गं बाध्योऽथ संसर्गी यद्यङ्गी स्याद्रसान्तरे। नास्वाद्यते समग्रं तत् ततः खण्डरसः स्मृतः॥' इति।

ननु–"आद्यः करुणबीभत्सरौद्रवीरभयानकैः।" इत्युक्तनयेन विरोधिनोर्वीरशृङ्गारयोः कथमेकत्र–

"कपोले जानक्याः करिकलभदन्तद्युतिमुषि स्मरस्मेरस्फारोड्डमरपुलकं वक्त्रकमलम्।
मुहुः पश्यञ् शृण्वन् रजनिचरसेनाकलकलं जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः॥६१॥"

इत्यादौ समावेशः इति चेत् ? अत्रोच्यते–इह खलु रसानां विरोधितायाः अविरोधितायाश्च त्रिधा व्यवस्था, कयोश्चिदालम्बनैक्येन, कयोश्चिदाश्रयैक्येन, कयोश्चिन्नैरन्तर्येण; इति। तत्र वीर-

---

सम्भावनीयः ? ननु रसोत्तरं रसान्तरं सम्पद्यतां नाम को दोषः ? इत्याशङ्क्याह–**एकवाक्ये**। **निवेशप्रादुर्भावयौगपद्यविरहेण** 'द्वयो रसयो'रिति शेषः। **परस्परोपमर्दकत्वानुपपत्तेः**। ननु अङ्गाङ्गिभावेन द्वयोरपि निवेशप्रादुर्भावयौगपद्यं स्यादित्याशङ्क्याह–**नापि** न वा। **अङ्गाङ्गिभावो**ऽङ्गत्वमेकस्य, अपरस्याङ्गित्वं च। 'सम्भवती'ति शेषः। कुत इत्याशङ्क्याह–**द्वयोः**। **अपि**। **पूर्णतया** समधिकत्वेन। एतत् घनत्वेनेत्यस्याप्युपलक्षकं, तेन सुखान्तरतिरोधायकत्वेन चेति निष्कृष्टो। **स्वातन्त्र्येण**। **विश्रान्तेः** स्फुरणात्। **इति**। **चेत्**। **सत्यम्**। **उक्तम्**। ( अत्र सत्यम॰ द्धाङ्गीकारे )। **अत एव**। **अत्र** यत्र द्वयोर्निवेशस्तत्र। **प्रधानेतरेषु** अङ्गत्वं गतेषु **रसेषु**। **स्वातन्त्र्यविश्रमराहित्यात्**। **पूर्णरसभावमात्रात्** पूर्णो रसो यस्य तादृशो यो भावः स एवेति, तस्मात् तथोक्तात्। **च**। **विलक्षणतया**। **सञ्चारिरसनाम्ना**। **व्यपदेशः**। **प्राच्यानां** पूर्वेषां मतेन। **अस्मत्पितामहानुजकविपण्डितमुख्यश्रीचण्डीदासपादानाम्**। **तु**। **खण्डरसनाम्ना**। प्राचां मतेन यस्य सञ्चारिरस इति व्यपदेशस्तस्यैव खण्डरस इति पुनरर्वाचामिति भावः। ननु किमत्र नियामकमित्याह–**यत्**। **आहुः**–'श्रीचण्डीदासपादा' इति शेषः। "**यदि**। **अङ्गी** प्रधानरसः। **रसान्तरे**। **अङ्गम्**। **बाध्यो** विरुद्धोऽपि स्मरणादिबलात् लब्धसमावेशः। **अथ**–यद्वेति भावः। **संसर्गी** अविरोध्यपि सन् प्रधानानुपकारितया स्वातन्त्र्येण मिलितः। **स्यात्**। **तत्**। **समग्रं** पूर्णं यथा स्यात्तथा। **न**। **आस्वाद्यते**। **ततः खण्डरस स्मृतः॥**" इति। अयम्भावः–रसस्य रसान्तरेण साक्षाद्विरोधासम्भवात् तत्र ( यत्र विरोधोऽनुभूयेत ) रसस्य सञ्चारित्वं खण्डत्वं वाऽङ्गीकृत्य तथा व्यपदेशो बोध्यः। इति।

प्रकारान्तरेणाशङ्कते–**ननु**–"**आद्यः** शृङ्गाररसः। **करुणबीभत्सरौद्रवीरभयानकैः**। 'विरोधभाक्' इति शेषः" **इत्युक्तनयेन**। **विरोधिनोः**। **वीरशृङ्गारयोः**। **कथम्**। **एकत्र** एकवाक्यरूपे।

"**जानक्याः** सीतायाः। **करिकलभदन्तद्युतिमुषि** करिणो गजस्य कलभः शिशुस्तस्य दन्तोऽभिनवोद्भूतो दशनाङ्कुरस्तस्य द्युतिस्तां मुष्णाति चोरयतीति तस्मिंस्तथोक्ते। **कपोले**। **स्मरस्मेरस्फारोड्डमरपुलकं** स्मरेण स्मेरः प्रकाशमानः स्फारोड्डमरोऽत्युत्कटः पुलको रोमाञ्चो यत्र तत्तथोक्तम्। **वक्त्रकमलम्**। 'आत्मन' इति शेषः। **मुहुः**। **पश्यन्**। अन्यतश्च **रजनिचरसेनाकलकलं** राक्षससैन्यध्वनिम्। **शृण्वन्**। **रघूणां** रघुवंश्यानां राज्ञाम्। **परिवृढः** प्रधानाध्यक्षो रामः। 'प्रभुः परिवृढोऽधिपः।' इत्यमरः। **जटाजूटग्रन्थिम्**। **द्रढयति**। कदाचित् दण्डकारण्ये निवसतो रामभद्रस्येहितवर्णनमिदम्। शिखरिणी छन्दः। तल्लक्षणं च प्रागुक्तम्॥ ६१॥

**इत्यादौ**। **समावेशः** ? **इति**। **चेत्**। **अत्र**। **उच्यते** उत्तरं दीयते। इहैवं मीमांसाव्यतिकरसमये इति भावः। **खलु**। **रसानां** शृङ्गारादीनाम्। **विरोधितायाः**। **अविरोधितायाः**। **च**। **त्रिधा**। **व्यवस्था**। कथमित्याशङ्क्य क्रमेण निरूपयति–**कयोश्चित्**। **आलम्बनैक्येन**। 'विरोधोऽविरोधश्चे'ति शेषः। **कयोश्चित्**।

शृङ्गारयोरालम्बनैक्येन विरोधः, तथा–हास्यरौद्रबीभत्सैः सम्भोगस्य । वीरकरुणरौद्रादिभिर्विप्रलम्भस्य आश्रयैक्येन वीरभयानकयोः । नैरन्तर्य्यविभावैक्याभ्यां शान्तशृङ्गारयोः । त्रिधाऽपि अविरोधो वीरस्याद्भुतरौद्राभ्याम्, शृङ्गारस्याद्भुतेन, भयानकस्य बीभत्सेन इति, तेनात्र वीरशृङ्गारयोर्भिन्नालम्बनत्वान्न विरोधः । एवं च—वीरस्य नायिकनिष्ठत्वेन, भयानकस्य प्रतिनायकनिष्ठत्वेन निबन्धे भिन्नाश्रयत्वेन विरोधः । यश्च नागानन्दे प्रशमाश्रयस्यापि जीमूतवाहनस्य मलयवत्यनुरागो दर्शितः, तत्र "अहोगीतम् ! अहो वादित्रम् !" इत्यद्भुतस्यान्तरा निवेशनान्नैरन्तर्य्याभावान्न शान्तशृङ्गारयोर्विरोधः । एवमन्यदपि ज्ञेयम् ।

"पाण्डुक्षामं वदनं···" इत्यादौ च पाण्डुताऽऽदीनामङ्गभावः करुणविप्रलम्भेऽपीति न विरोधः ।

**३१ अनुकारे च सर्वेषां दोषाणां नैव सम्भवः ॥ ३१ ॥**

---

**आश्रयैक्येन । कयोश्चित् । नैरन्तर्य्येण** 'विरोधोऽविरोधश्च' इति शेषः । **इति । तत्र** तयोर्विरोधाविरोधयोर्मध्ये । **वीरशृङ्गारयोः । विरोधः । आलम्बनैक्येन** एकालम्बनत्वे एव, नान्यथेति भावः । **तथा । सम्भोगस्य । हास्यरौद्रबीभत्सैः ।** 'आलम्बनैक्येन विरोध' इति पूर्वतोऽनुवृत्तम् । **वीरकरुणरौद्रादिभिः ।** आदिपदेन भयानकस्य ग्रहणम् । **विप्रलम्भस्य** 'आलम्बनैक्येन विरोध' इति शेषः । **वीरभयानकयोः । आश्रयैक्येन ।** च 'आलम्बनैक्येन च विरोध' इति शेषः । **शान्तशृङ्गारयोः । नैरन्तर्य्यविभावैक्याभ्यां** नैरन्तर्य्येण विभावैक्येन चेति भावः । 'विरोध' इति शेषः । **वीरस्य । अद्भुतरौद्राभ्याम् । त्रिधा** आलम्बनैक्येनाश्रयैक्येन नैरन्तर्य्येण चेति भावः । **अपि । अविरोधः ।** एवम्–**शृङ्गारस्य । अद्भुतेन** 'त्रिधाऽप्यविरोध इति शेषः । **भयानकस्य । बीभत्सेन** 'नैरन्तर्य्येणाविरोध' इति शेषः । **इति ।** अथ–**तेनो**क्तनियमेन । **अत्र** 'कपोल' इत्युदाहृतपूर्वे पद्ये । **वीरशृङ्गारयोः । भिन्नालम्बनत्वात्** वीरस्य राक्षससेनाकलकलश्रवणालम्बनत्वात् शृङ्गारस्य कपोलप्रतिबिम्बितस्वमुखकमलनिरीक्षणालम्बनत्वाच्चेति भावः । **न । विरोधः । एवम् । च । वीरस्य । नायकनिष्ठत्वेन । भयानकस्य । प्रतिनायकनिष्ठत्वेन । निबन्धे** रचनायां सत्याम् । **भिन्नाश्रयत्वे । न । विरोधः ।** 'इति ज्ञेयम्' इति शेषः । **यः । च । नागानन्दे । प्रशमाश्रयस्य** शान्तस्य । **अपि । जीमूतवाहनस्य । मलयवत्यनुरागो** मलयवत्यामनुरागः । **दर्शितः । तत्र । "अहो । गीतम् । अहो । वादित्रं** वाद्यम् ।" **इत्यद्भुतस्य । अन्तरा** मध्ये 'शान्तशृङ्गारयो' रिति शेषः । **निवेशनात् । नैरन्तर्य्याभावात् । न । शान्तशृङ्गारयोः । विरोधः ।** 'दुष्ट' इति शेषः । उक्तमर्थमन्यत्राप्यतिदिशति– **एवम् । अन्यद्** उदाहरणान्तरम् । **अपि । ज्ञेयम् ।** अत एवाहुर्ध्वनिकाराः–"एकाश्रयत्वे निर्दोषो नैरन्तर्य्ये विरोधवान् । रसान्तरव्यवधिना रसो न्यस्यः सुमेधसा ॥" इति ।

विरुद्धरससम्बन्धिविभावादिपरिग्रहस्यादोषत्वं निर्दिशति—**"पाण्डुक्षामं वदनम्···" इत्यादौ । च । पाण्डुताऽऽदीनाम्** 'अनुभावाना'मिति शेषः । **करुणविप्रलम्भे । अपि । अङ्गभावः । इति । न । विरोधः ।** एवं च–विरोधिरससम्बन्ध्यसाधारणाङ्गपरिग्रहे एव दोषः, न तु विरोधिरसीयसाधारणाङ्गपरिग्रहे दोषः । इति निष्कृष्टोऽर्थः ।

सर्वेषां दोषाणामेकममोघं प्रतिप्रसवोपायं निर्दिशति–**३१ अनुकार** इत्यादिना ।

**३१ अनुकारे**ऽनुकरणे । **च । सर्वेषां** निर्दिष्टानिर्दिष्टप्रतिप्रसवानां दुःश्रवत्वादीनाम् । **दोषाणाम् । संभवः ।** 'दोषता' इति पाठान्तरेऽप्ययमेवार्थः । **नैव ।** 'अवतिष्ठते' इति शेषः ॥ ३१ ॥

सर्वेषां दुश्रवत्वादीनाम्।

यथा–"एष दुश्च्यवनं नौमीत्यादि जल्पति कश्चन।" इत्यत्र दुश्च्यवनशब्दोऽप्रयुक्तः।

**३२ अन्येषामपि दोषाणामित्यौचित्यान्मनीषिभिः।**
**अदोषता च गुणता ज्ञेया चानुभयात्मता॥ ३२॥**

अनुभयताऽदोषगुणता।

**इति साहित्यदर्पणे दोषनिरूपणो नाम सप्तमः परिच्छेदः।**

---

सर्वेषामिति पदं विवृणोति–**सर्वेषा**मित्यादिना। स्पष्टम्।

उदाहरति–**यथा**। "**एषः**। 'अहं'मिति शेषः। **दुश्च्यवन**मिन्द्रम्। **नौमि** स्तवीमि। **इत्यादि** (कर्म्म) **कश्चन**। **जल्पति**। 'भवान् मां प्रतिपालयेतेत्येवं प्रार्थयते तथा॥' इति शेषः।" **इत्यत्र**। **दुश्च्यवनशब्दः**। **अप्रयुक्तः**। इदं च दुःश्रवत्वच्युतसंस्कृतत्वयोरप्युपलक्षकम्। इति।

ननु 'मृता नु किं'मित्यादावश्लीलत्वादेः कथं प्रतिप्रसवः? इत्याशङ्क्योत्तरयति–**३१ अन्येषा**मित्यादिना।

**३२ अन्येषा**मनुक्तप्रतिप्रसवानाम्। **अपि**। **दोषाणाम्**। **इत्यौचित्या**दित्येवंविधमौचित्यं दृष्ट्वा। **मनीषिभिः** सहृदयैः। **अदोषता** निर्दुष्टत्वम्। **च**। **गुणता** गुणभूतत्वम्। **च** तथा। **अनुभयात्मता** अदोषगुणत्वम्। **ज्ञेया** स्वयम्बुद्ध्या विमृश्येति भावः। एवं च–अविमृष्टविधेयत्वादेरपि क्वचिददुष्टत्वमुदाहृतं, तत् युक्तमेवेति बोध्यम्। अत एव–"हा पितः! क्वासि हे सुभ्रूः," "का त्वं चिकीर्षसि च किं मुनिवर्य्य! शैले मायाऽसि काऽपि भगवत्परदेवतायाः।" इत्यादौ प्रमत्तस्य वक्तृत्वेन च्युतसंस्कृतत्वादेरपि गुणत्वं प्राञ्चोऽपि प्राहुः। इति दिक्॥ ३२॥

कारिकां सुगमयितुमाह–**अनुभवते**त्यादि। स्पष्टम्।

प्रकरणं समापयन्नाह–**इती**त्यादि।

**इति**। **साहित्यदर्पणे** 'श्रीविश्वनाथकविराजकृते' इति शेषः। **दोषनिरूपणो** दोषाणां निरूपणं यत्र तादृशः। **नाम** प्रसिद्धः। **सप्तमः**। **परिच्छेदः**।'समाप्त' इति शेषः। शुभम्।

अपि बत प्रतिपद्य सदोषतां सगुणतां दधतं भवभूतये।
तदुभयीं च विहाय विलासिनं प्रकृतितः कृतितः परमाश्रये॥

इति श्रीशिवनाथसूरिसूनुना शिवदत्तकविरत्नेन विरचितया रुचिरया व्याख्यया सहितः साहित्यदर्पणस्य सप्तमः परिच्छेदः समाप्तः।

# अष्टमः परिच्छेदः ।

गुणानाह–

**३३ रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा । गुणाः–**

**यथा खलु अङ्गित्वमाप्तस्य आत्मन उत्कर्षहेतुत्वात् शौर्यादयो गुणशब्दवाच्याः, तथा काव्येऽ-**

---

अविद्यां तां घोरान्ध्य विलयमुद्बोधय जगत् प्रकाशं विद्यायाः पुनरपि तथाऽऽधेहि भगवन् ।
दयासिन्धो ! बन्धो ! विविधदुरितध्वंसनगुरो ! त्वमेकः सुप्तानां शरणमधुनोद्बोधनविधौ ॥

तत्र तावत् काव्यत्वापकर्षकदोषनिरूपणानन्तरमुद्देशक्रमप्राप्तगुणस्वरूपनिरूपणमुपक्रामन्नाह–**गुणा**नित्यादि ।

**गुणान्** रजस्तमःसत्त्वानतिरिक्तस्वरूपान्[1] काव्यात्मभूतरसनिष्ठान् धर्मविशेषान् । उपादेयनिरूपणस्य हेयनिरूप-णोपकृतत्वात् काव्यस्य हेयान् दुःश्रवत्वाद्यभिधेयान् दोषपदवाच्यान् निरूप्य उपादेयान् माधुर्यौजःप्रसादाभिधेयान् धर्मा-निति भावः । **आह–३३ रसस्ये**त्यादिना ।

**३३ यथा** लोके इति शेषः । **अङ्गित्वं** मुख्यत्वं प्रधानत्वमिति यावत् । अङ्गानि अप्रधानभूतान्यन्यान्यस्य सन्तीति तत्त्वम् । 'अङ्गं गात्रे प्रतीकोपाययोः पुंभूम्नि नीवृति । क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके ॥' इति मेदिनी । 'अत इनठनौ ।' ५ । २ । ११६ इतीनः । **आप्तस्य** प्राप्तस्य । आत्मन इति शेषः । **शौर्यादयो**ऽत्रादिपदेनौ-दार्यादीनामुपादानम् । **धर्माः** साक्षात्सम्बद्धाः । **गुणाः** । तथा–**रसस्य** काव्ये इति शेषः । अत्रायम्भावः–'शरी-रात्मानौ परस्परं विभिन्नौ तमःप्रकाशयोरिव जडाजडयोरनयोरभेदानुपपत्तेः । अथ यथा 'अपो दहति' इत्यादाव-प्स्वपि दाहकत्वमध्यस्तं वस्तुतो दहनस्यैव तथा 'वीरो रसः किमयमित्युत दर्प एषः ।' इत्यादौ शरीरेऽप्य-ध्यस्तं वीरत्वादि वस्तुत आत्मन एव । नहि जडस्य चेतने तस्य च परत्र धर्मा उपपद्यन्ते । ननु ते क्वचिदाभासन्ते-इति चेदाभासमात्रत्वं तेषाम्, ननु वस्तुयाथात्म्यम् इति निश्चीयताम् । शरीरं जडम्, आत्मा तु तद्भिन्नः; पुनः कथङ्कारं वस्तुतयाऽऽत्मन एव शौर्यादयो धर्मा शरीरस्य साक्षात् सम्बद्धा भवेयुः । एवं काव्यस्य शब्दश्चार्थश्च शरीरम्, आत्मा पुना रसः । अत्रात्मभूतस्यास्य धर्मा, न तु शब्दस्यार्थस्य वा । यत्तु वामनेन 'काव्यशोभायाः कर्त्तारो धर्मा गुणाः ।' ३।१।१ इति सूत्रयित्वा'ये खलु शब्दार्थयोर्धर्माः काव्यशोभां कुर्वन्ति ते गुणाः ।' इत्युक्तम् । तदापातरमणीयम् । उक्तं च प्रकाशकारैः 'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः । उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः ॥' इति सूत्रयित्वा 'आत्मन एव हि यथा शौर्यादयः नाकारस्य तथा रसस्यैव माधुर्या गुणा न वर्णादीनाम् । क्वचित्तु शौर्यादिसमुचितस्याकारमहत्त्वादेर्दर्शनाद् 'आकार एवास्य शूरः ।' इत्यादेर्व्यवहारादन्यत्राशूरेऽपि विततकृतित्वमात्रेण 'शूरः' इति, क्वापि शूरेऽपि मूर्त्तिलाघव-मात्रेणा'शूर'इत्यविश्रान्तप्रतीतयो यथा व्यवहरन्ति, तद्वन्मधुरादिव्यञ्जकसुकुमारादिवर्णानां मधुरादिव्यवहारप्रवृत्तेरमधुरा-दिरसाङ्गानां वर्णानां सौकुमार्यादिमात्रेण माधुर्यादि,मधुरादिरसोपकरणानां तेषामसौकुमार्यादेरमाधुर्यादिरसपर्यन्तविश्रान्त-प्रतीतिवन्ध्या व्यवहरन्ति । अत एव माधुर्यादयो रसधर्माः समुचितैर्वर्णैर्व्यज्यन्ते नतु वर्णमात्राश्रयाः । इति ।' इति ।

अथ कारिकार्थं विशदयति–यथेत्यादिना ।

**यथा** । लोके इति शेषः । **खलु** । **अङ्गित्वम्** प्रधानत्वम् । **आप्तस्य** प्राप्तस्य । **आत्मनो** देहिनः । **उत्कर्षहे-तुत्वा**दुत्कर्षस्य हेतुः कारणं तत्त्वात् । उत्कर्षणमुत्कर्षोऽतिशयः । 'भावे ।३।३।१८' इति घञ् । 'हेतुर्ना कारणं बीजम्' इत्यमरः । 'तस्य भावस्त्वतलौ ।' ५ । १ । ११९ इति त्वः । 'हेतौ ।' २ । ३ । २३ इति पञ्चमी । **शौर्यादयः** शौर्यं शूरधर्म आदौ येषां ते । शौर्यौदार्यौजस्वित्वादय इत्यर्थः । धर्मा इति शेषः । **गुणशब्दवाच्या** 'गुणा' इत्यभिधया

---

१ रजो माधुर्यम्, तम ओजः, सत्त्वं पुनः प्रसाद इति स्थितिः ।

ङ्गित्वमाप्तस्य रसस्य धर्माः स्वरूपविशेषा माधुर्यादयोऽपि स्वसमर्पकपदसन्दर्भस्य काव्यव्यपदेश-स्यौपयिकानुगुण्यभाज इत्यर्थः । यथा चैषां रसमात्र ( स्य ) धर्मत्वं, तथा दर्शितमेव ।

**३४ माधुर्यमोजोऽथ प्रसाद इति ते त्रिधा ॥ ३३ ॥**

ते गुणाः । तत्र-

**३५ चित्तद्रवीभावमयो ह्लादो माधुर्यमुच्यते ।**

---

प्रतिपाद्यः । **तथा** । **काव्ये** कविभणितौ । **अङ्गित्वं** प्रधानत्वम् । **आप्तस्य** । **रसस्य** । रस इत्युपलक्षणम् । तेन-शृङ्गारादितदाभासादेरिति निष्कृष्टोऽर्थः । ननु रस्यते आस्वाद्यते इति तस्येति बोध्यम् । तस्य ब्रह्मत्वेन सगुणत्वासम्भवात् । **धर्माः** साक्षात्समवायेन सम्बद्धाः । **स्वरूपविशेषाः** स्वमात्मा रूप्यते लक्ष्यते इतरव्यावृत्ततया ज्ञायते इति यावद्-अनेनेति स्वरूपमसाधारणं लक्षणं तत्प्रकारभूता इत्यर्थः । यथा 'गन्धवती पृथिवी'त्यत्र गन्धवत्त्वं पृथिव्या असाधारणं तथेति । **माधुर्यादयो** माधुर्यमोजः प्रसादश्चेति त्रय एव । **अपि** । गुणा इति शेषः । **काव्यव्यपदेशस्य** काव्यस्य व्यपदेशो व्यवहारस्तस्य तदात्मकस्येति यावत् । **स्वसमर्पकपदसन्दर्भस्य** स्वं स्वकीयो रस इति यावत्, तस्य समर्पको व्यञ्जकस्ता-दृशोऽसौ पदसन्दर्भस्तस्य वाक्यस्येति भावः । **औपयिकानुगुण्यभाज** उपायेन निर्वृत्तमित्यौपयिकम्, तच्च पदानुगुण्यमु-पकारित्वम्,तद्भाजः न्यायानुगतानुकूलत्वविधातार इत्यर्थः । 'विनयादिभ्यष्ठक्.' ५।४।२४ इति ठक् । 'उपायो ह्रस्वश्च ॥' इति ह्रस्वत्वम् । 'गुणवचनब्राह्मणादिभ्यः कर्मणि च ।' ५।१।१२४ इति भावे ष्यञ् । 'भजो ण्विः ।' ३।२।६२ इति ण्विः । **इत्यर्थः** कारिकाया इति शेषः । **यथा** येन प्रकारेण । **च** पुनः । **एषां** गुणानामित्यर्थः । **रसमात्रधर्मत्वं** रस एवेति रसमात्रं तस्य धर्मस्तत्त्वम् । एवकारः शब्दार्थयोर्व्यवच्छेदमाह । क्वचित् 'रसमात्रस्ये'ति पृथक् 'धर्मत्व'मिति च पृथक् पाठः । **तथा** तेन प्रकारेण । **दर्शितम्** । अस्माभिरिति शेषः । **एव** । काव्यप्रकाशकृतकाव्यलक्षणनिराकरणप्रसङ्गे इति शेषः । अत्रेदं तात्पर्यम्-लोके यथाऽऽत्मन एव शौर्यादयो धर्मास्तथा काव्ये रसस्यैव माधुर्यादयोऽपि । इति न मनाक् विप्रतिपन्नम् । अथापि उपचारात् तेऽन्यत्र कल्प्यन्ते । इति यथाऽऽत्मानमेवोत्कर्षयन्तः पुनः शौर्यादयः शरीरमपि तदायतनत्वेनोत्कर्षयन्तः प्रतीयन्ते व्यवह्रियन्ते च । तथैव रसस्य परमुत्कर्षयन्तोऽपि स्थिता माधुर्यादयः शब्दार्थावुत्क-र्षयन्तः प्रतीयन्ते व्यवह्रियन्ते च, न पुनर्वस्तुतः । तेषां चेतनधर्माणामचेतनधर्मत्वानुपपत्तेः । ते च नित्यं तेन साक्षा-त्सम्बद्धाः । अतः-रसं विना ये नावतिष्ठन्ते, अवतिष्ठमानाश्च रसमवश्यमुपकुर्वन्ति ते गुणा इति 'काव्यव्यवहारप्रयोजकत्वे सति रसधर्मवत्त्वं गुणः' इति वा फलितमिति ।

तान् गुणान् विभजति-३४ **माधुर्यमित्यादिना** ।

३४ **ते** गुणा इति यावत् । **माधुर्यं** मधुरस्य भाव इति । तदभिधेय इति यावत् । **ओजस्तदभिधेय** इति यावत् । **अथ** । **प्रसादस्तदभिधेय** इति यावत् । **इति** । **त्रिधा** त्रिप्रकाराः, ननु दशप्रकाराश्चतुर्विंशतिप्रकारा वा । 'सङ्ख्याया विधार्थे धा ।' ५ । ३ । ४२ इति धा । 'द्वित्र्योश्च धमुञ् ।' ५ । ३ । ४५ इति धमुञः पाक्षिकत्वेन नात्र तस्य प्रसक्तिः ॥ ३३ ॥

सन्देहापनोदाय '**ते**' इति पदं व्याचष्टे-**ते** तत्पदवाच्याः । **गुणाः** । इति बोद्धव्यम् ।

अथ माधुर्यादीनां प्रत्येकं स्वरूपं निर्देष्टुमुपक्रान्त आह-**तत्रे**त्यादि ।

**तत्र** त्रिप्रकारेषु गुणेषु मध्ये इत्यर्थः । ३५ **चित्तद्रवीभावमयश्चित्तस्य** सहृदयहृदयस्येति यावत्तस्यैव तत्रोपपत्तेः, **द्रवीभावो** द्रवरूपेणेवावस्थानमिति, स एवेति तथोक्तः । द्रवीभूयते इति द्रवीभावस्तन्मयः । अद्रवस्य द्रव इवावस्थानं द्रवी । एवं च-सहृदयहृदयस्य यो द्रव इव प्रत्ययस्तत्स्वरूप इति भावः । वस्तुं च साक्षाद् द्रवत्वानुपपत्तेः । इति-अभूततद्भावे च्विः । स्वार्थे च मयट् । **ह्लाद** आह्लादो दुःखाशबलितानन्दानुभवः । **माधुर्यम्** । इतीति शेषः । **उच्यते** मार्मिकैरिति शेषः । अत्रायम्भावः-चित्तमनुसन्धानात्मकवृत्तिमदन्तःकरणम् । द्रवः पुनर्द्वेषादिजन्यकाठिन्याद्यभावः । स च रसानुभ-वावसरे सहृदयानामेव । तेषां हि रसानुभवस्य सम्भवात् । अथाह्लादः सुखसम्वलितप्रतीतिः । तथा च-समस्तद्वेषादिजन्यका-

**यत्तु केनचिदुक्तम्–'माधुर्यं द्रुतिकारणम् ।' इति तन्न । द्रवीभावस्यास्वादस्वरूपाह्लादाभिन्नत्वेन कार्यत्वाभावात् । द्रवीभावश्च स्वाभाविकानाविष्टत्वात्मककाठिन्यमन्युक्रोधादिकृतदीप्तत्वविस्मयहासाद्युपहितविक्षेपपरित्यागेन रसाद्याकारानुविद्धानन्दोद्बोधेन सहृदयचित्तार्द्रप्रायत्वम् ।**

---

ठिन्याद्यपगमेन सहृदयचित्तस्याह्लादमात्रतयाऽवस्थानं माधुर्यम् । यत्तु 'सामाजिकानुभवसिद्धः सुकुमारचित्तस्यावस्थाविशेषो द्रुतिः ( तत्पदवाच्य इत्यर्थः ) स च ( अवस्थाविशेषः ) मधुररसास्वादादेव मनःकाठिन्यापगमे जायते, न तु माधुर्यमेव सः' इति सङ्गच्छते 'आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ।' इति काव्यप्रकाशोक्तमि'ति समर्थितं तद्व्याख्याकारैः । तन्न विचारपेशलम् । तत्र हि 'आह्लादयतीत्याह्लादकस्तत्त्वमानन्दहेतुत्वमिति यथाश्रुतस्तावत् सर्वथैव विरुध्यतेऽर्थः । शृङ्गारस्याह्लादरूपत्वेनाह्लादजनकताऽनुपपत्तेः, 'शृङ्गार' इत्यस्यासङ्गतत्वापत्तेः । अथ–आह्लाद एवेत्याह्लादकस्तत्त्वमिति समर्थनं शरणम् । नैतदनाविलं क्लिष्टकल्पनालभ्यत्वात् । यच्च 'तच्च द्रुतेःकारण'मित्युक्तम्, तत्र माधुर्यस्य द्रुतिकारणत्वं किम्मूलम् । नहि मधुररसास्वादाज्जायमानो मनसोऽवस्थाविशेषो द्रुतिरिति सुवचम् । मधुरस्य तदतिरिक्तत्वापत्तेः । न च तत् । नहि मनसो द्रवीभावाद् द्राक् कश्चनाह्लादः किञ्चिद्वा मधुरास्वादत्वं सम्भवति । निर्मलत्वानाविलत्वयोरिव द्रवत्वमधुरत्वयोरपृथग्भावात् । एवं च 'यद्वशेन श्रोतुर्विमनस्कतेव सम्पद्यते, तदाह्लादकत्वस्वरूपं माधुर्य'मिति व्याख्यानमपि दत्तोत्तरम् । इति ।

अथ 'आह्लादकत्वं माधुर्यं शृङ्गारे द्रुतिकारणम् ।' इत्यत्र'ह्लादकत्व'मित्युपेक्ष्य 'द्रुतिकारण'मित्येव मीमांसितुमुपक्रान्त आह–**यत्त्विति** ।

**तु** पुनः । अस्मन्निर्णीतविरुद्धमिति भावः । 'तु स्याद्भेदेऽवधारणे ।' इत्यमरः । **केनचित्** ! अत्र नामानुल्लेखस्तद्विचारस्य क्षोदाक्षमत्वेऽपि प्रकृतोपकृतत्वं समवधार्यैव प्रवर्त्त्यत इति सूचयति । अत एव तन्त्रैकत्वेनापि निर्देशः । **माधुर्यं** तदाख्यो गुणः । **द्रुतिकारणं** द्रुतेर्द्रवीभवनस्य कारणं जनकमित्यर्थः । **इति** । **यत्** । **उक्तम्** । **तत्** । **न** क्षोदक्षममिति शेषः । कुत इत्याह–**द्रवीभावस्य** न तु द्रवस्य द्रुतत्वस्येति वा । साक्षात्तया तदनुपपत्तेः । 'कृभ्वस्तियोगे सम्पद्यकर्त्तरि च्विः ।' ५ ।४ । ५० इति च्वौ 'अस्य च्वौ ।' ७।४।३२ इतीत्वम् । च्व्यन्तस्य चाव्ययत्वाद्'द्रवी'त्यव्ययपूर्वकाद् भूधातोः 'भावे ।' ३।३।१८ इति घञ् । **आस्वादस्वरूपाह्लादाभिन्नत्वेन**ास्वादनमास्वादो रसानुभवः, स एव स्वरूपं लक्षणं यस्येति, सोऽसावाह्लादश्चित्तस्य सुखालम्बनमात्रमवस्थानमिति,तेनाभिन्नत्वमभेदस्तेन तथोक्तेन । **कार्यत्वाभावात्** कार्यत्वानुपपत्तेः । जन्यत्व-जनकत्वयोर्विभिन्नाधिकरणकत्वस्यैव दृष्टचरत्वाद् द्रवीभावाभिन्नाह्लादात्मकस्य माधुर्यस्य द्रवीभावजनकत्वं न सङ्गच्छते इति भावः । उक्तं च तर्कवागीशैः–'आह्लादातिरिक्तस्य द्रवीभावस्य निर्वक्तुमशक्यतयाऽऽह्लादे एव पर्यवसानम् । एवमाह्लादजनकत्वापेक्षया लघुन आह्लादस्यैव माधुर्यपदशक्यताऽवच्छेदकत्वमुचितमित्याह्लाद एव माधुर्यपदार्थं इति भावः ।' इति । यत्तु पण्डितराजैः–'शृङ्गारकरुणशान्तानां माधुर्यवत्त्वेन द्रुतिकारणत्वं प्रातिस्विकरूपेण कारणत्वकल्पनापेक्षया लघुभूतमिति तु न वाच्यम् । परेण मधुरतरादिगुणानां पृथग्द्रुततरत्वादिकार्यतारतम्यप्रयोजकतयाऽभ्युपगमेन माधुर्यवत्त्वेन कारणताया गडुभूतत्वात् । इत्थं च प्रातिस्विकरूपेणैव कारणत्वे लाघवम् ।' इत्युक्तम् । तन्न । तथाऽपि तारतम्यातिरिक्तप्रयोजकत्वकल्पनागौरवानपायात् । ननु रसद्रवीभावयोराह्लादात्मकत्वेनैव स्वीकारे कथं तयोर्धर्मिधर्मत्वोपपत्तिरित्यत आह–**च** पुनः । **द्रवीभावस्**तत्पदार्थः । **स्वाभाविकानाविष्टत्वात्मककाठिन्यमन्युक्रोधादिकृतदीप्तत्वविस्मयहासाद्युपहितविक्षेपपरित्यागेन** स्वाभाविकं यदनाविष्टत्वं गूढविषयसञ्चाराक्षमत्वमिति, तदेवात्मा येषां ते, स्वाभाविकानाविष्टत्वात्मका एव काठिन्य ( कोमलत्वाभाव ) मन्यु ( शोक ) क्रोधादयः ( क्रोधजुगुप्साप्रभृतयः ) इति तैः कृताः समर्पिता इति, ते च ये दीप्तत्व ( दग्धप्रायत्व ) विस्मय ( अदृष्टश्रुतपूर्वदर्शनप्रवणजन्यचित्तापूर्वावस्थान ) हासादयः ( हासभयादयः ) इति,तैरुपहित आलिङ्गितोऽनुगृहीतो यो विक्षेपस्तत्परित्यागेनेत्यर्थः । विक्षेपो विषयान्तराग्रहित्वम् । **रत्याद्याकारानुविद्धानन्दोद्बोधेन** रत्यादीनां रतिहासादीनामाकारः परिणामो ज्ञानं तन्मयीभवनमिति यावत्तेनानुविद्धः संवलितो य आनन्दस्तस्योद्बोधोऽनुभवविशेषस्तेनेत्यर्थः । **सहृदयचित्तार्द्रप्रायत्वं** सहृदयाः काव्यभावनासु परिपक्वान्तःकरणास्तेषां यच्चित्तं तस्यार्द्रप्रायत्वं विगलितत्वेनैवावस्थानम् । इति । एवं च–

तच्च-

**३६ सम्भोगे करुणे विप्र-लम्भे, शान्तेऽधिकं क्रमात् ॥ ३४ ॥**

---

शृङ्गारकरुणशान्तरसोद्बोधानन्तरं जायमानो रत्याद्यविषयकः सहृदयहृदयद्रवीभावात्मकसम्बन्धान्तरानालिङ्गिताह्लादसन्दोह एव माधुर्यपदवाच्यः, तस्य च जनकतासम्बन्धेन रससम्बन्धितया रसधर्मत्वमपि निर्बाधम् इति निर्गलितोऽर्थः । इति विवृतौ स्पष्टम् । यत्तु केनापि 'गुर्जर्यादिवृत्तिरिव रसवृत्तिर्धर्मः कश्चित् स एव माधुर्याभिधेयो गुणः, येन सहृदयानां हृदयं द्रवीभवति । रत्यादिनां रसात्मकतया परिणामेन तस्य रसवृत्तित्वमवसेयमि' त्युक्तम् :। तन्नातिरुचिरं प्रतिभाति । तत्र हि तादृशधर्मसत्त्वे मानस्यासत्त्वात् । न पुनर्द्रवीभवनरूपस्यैव कार्यस्यान्यथाऽनुदयात् कल्प्यतां नाम तादृशोऽन्यो धर्मः । इति सुवचम् । तस्य रसस्वभावेनैव लब्धसत्ताकत्वे, तत्कृते धर्मान्तरं कल्पनीयमित्यभिधानस्य साहसिकमात्रत्वाभ्युपगमात् । अथ गुर्जर्यादौ तादृशो धर्मः स्वत एव सम्पन्नसत्ताक इति न तत्रापि कल्पनान्तरातिदेशः । इति । अत एव तर्कवागीशैर्विवृतौ 'केचित्तु 'गुर्जर्यादिरागवृत्तिरिव रसवृत्तिः कश्चिदेको धर्मोऽस्ति स एव द्रुतिरूपाह्लादस्य जनको माधुर्यमुच्यते ।' इत्याहुः । तन्न । रसस्यैव तादृशाह्लादजनकत्वाङ्गीकारेणैवोपपत्तौ तद्वृत्तिधर्मान्तरकल्पनाया अनाय्यत्वात् । इत्युक्तम् । यत् पुनः कश्चित् 'सुश्रवत्वमेव माधुर्यं काव्यधर्मः ।' इत्याह । तदपि सुश्रवत्वमन्तराऽपि काव्ये माधुर्योपलब्धौ नात्यादरणीयम् । इत्यपि विवृतौ स्पष्टम् । वस्तुतस्तु दुःश्रवत्वस्य दोषविशेषेष्वङ्गीकृतत्वात्तदभावरूपस्यास्यापि तेनैवाङ्गीकृतत्वमत्र बीजम् । दुःश्रवत्वस्यापि क्वचिद् दोषात्मकत्वेनानुपलम्भान्नास्य काव्यधर्मत्वमपि वक्तुं शक्यम् । धर्मस्यानियतवृत्तित्वानभ्युपगमात् । इति ।

*अथ माधुर्यस्य विषयानाह*–**तच्चे**त्यादिना ।

**च** पुनः । तन्निरुक्तलक्षणं माधुर्यमित्यर्थः । तच्छब्दस्य पूर्वपरामर्शकत्वात् । **३६ सम्भोगे** नायिकानायकयोः परस्परं संयोगविशेषालम्बनके शृङ्गारे । **करुणे** शोकप्रधाने स्वनाम्नैव प्रसिद्धे रसे । **विप्रलम्भे** सम्भोगप्रतिद्वन्द्वे शृङ्गारे रसे । **शान्ते** वैराग्यापरपर्यायनिर्वेदस्थायिभावके रसे । उपलक्षणे च तदाभासादिष्वपि । **क्रमात्** पूर्वपूर्वापेक्षया । **अधिकं** सातिशयमुत्कर्षवत् । अस्तीति शेषः । सम्भोगापेक्षया करुणे करुणापेक्षया विप्रलम्भे तदपेक्षया पुनः शान्ते सातिशयमुत्कर्षवन्माधुर्यम् । केचित्तु 'शान्तापेक्षयाऽपि विप्रलम्भेऽधिकं स्फुटं माधुर्य' मित्याहुः, परे पुनः सम्भोगापेक्षया करुणे विप्रलम्भे शान्ते चाधिकमेव स्फुटं माधुर्यम्, न च तत्र तारतम्यमित्याचक्षते । यत्तूक्तं केनापि 'करुणे' इति 'विप्रलम्भे' इत्यस्यैव विशेषणम् । तेन करुणवदश्रुपातादिकारणभूते विप्रलम्भे इति, नतु करुणे विप्रलम्भे चेति निष्कृष्टोऽर्थः ।' इति तन्न मनोरमम्, 'अश्रुपातादयस्तत्र द्रुतत्वाच्चेतसो मताः ।' इति करुणेऽपि चित्तद्रवीभवनस्याङ्गीकारेण सहृदयहृदयसाक्षिकत्वेन च 'करुणसदृशे विप्रलम्भे' इति स्वेनापि तथाऽङ्गीकृतत्वाच्च स्फुटमुपलब्धेः ॥ ३४ ॥

अत्रेयमुपपत्तिः–शृङ्गारस्तावद्रतिप्रधानः, सम्भोगो विप्रलम्भश्चेति द्विविधः । तत्र रतिर्नायिकानायकयोः परस्परं हृदयमात्रगम्योऽनुरागविशेषः । सम्भोगः पुनरेकत्रावस्थानमालोकनालिङ्गनादिप्रतिबन्धकीभूतदुरितविशेषानुपस्थितिकालिकः स्वस्वानुरागविशेषाविष्कारः । अतस्तत्रैव माधुर्यम् । अथ करुणः शोकप्रधानो निर्वेदसञ्चारिभावात्मा । निर्वेदस्य पुनर्विषयेष्वलंप्रत्ययहेतुत्त्वात् प्रतिबन्धकीभूततत्तद्विषयानुरागोच्छेदकत्वाच्च चेतसोऽतिद्रवीभूतत्वात्तत्र सम्भोगापेक्षया सातिशयं माधुर्यम् । अथ–विप्रलम्भः सम्भोगप्रतिद्वन्द्वी एकत्रावस्थानालोकनालिङ्गनसमुपस्थापकादृष्टविशेषविलासानवसरभवोऽनुरागोद्गारविशेषः । तत्र-करुणस्य स्थायिभूतशोकापेक्षया तस्यानुरागविशेषस्य कोमलतया प्रियसङ्गमाशाया अनिवृत्तौ प्रियसङ्गमनिवृत्तेश्च सर्वथाऽवच्छेदेन निर्वेदद्रढिमप्रसङ्गाच्च, करुणं पुनः प्रियतमसङ्गमाशानिवृत्तौ चित्तविक्षेपस्यापि निर्वेदविरोधिनः सम्भवाच्च चेतसोऽतिद्रवीभूतत्वात् सातिशयं माधुर्यम् । अथ–शान्तो निर्वेदप्रधान एव । तत्र-निर्वेदस्य चित्तविक्षेपविरोधिनः सर्वथाऽवच्छेदेन समुल्लासादनन्याधारभूतत्वाच्च सर्वात्मना विषयानुरागनिवृत्तौ निरतिशयस्यात्मसुखस्यैवानायासमुपलब्धेश्च विप्रलम्भापेक्षयाऽपि द्रवीभूतत्वाच्चेतसः सातिशयमुत्कर्षवन्माधुर्यम् । इति । अन्ये तु–निर्वेदस्याभिलाषाद्यपेक्षयाऽऽत्मसुखसमर्पकत्वेनोत्कृष्टत्वे भासमानेऽपि न वास्तविकमुत्कृष्टत्वं सहन्ते । अभिलाषादिना हि यादृशस्य चेतोद्रवीभावस्य प्रसङ्गः स्फुटमुपलभ्यते न तादृशो निर्वेदशतेनापि । निर्वेदे हि विषयानुरागस्तत्पुनरुदयश्च न सम्भवति,

**सम्भोगादिशब्दा उपलक्षणानि। तेन–सम्भोगाभासादिष्वप्येतस्यावस्थितिर्ज्ञेया।**

**३७ मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान् विना।**
**रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः॥ ३५॥**

---

अभिलाषादौ प्रियानुरागमात्रसम्भवः प्रियसङ्गमाभावश्च तुलामेकामधिरोहतः। अथ प्रियानुरागोद्गारेऽपि प्रियस्यैव सङ्गमनिवृत्तौ यादृशश्चेतोद्रवीभावो न तथा सर्वानुरागनिवृत्तौ सर्वथाऽवच्छेदेन तत्तत्सङ्गमनिवृत्तावपि निर्वेदावसरे सहृदयहृदयसाक्षिकः।' इत्याहुश्च। अपरे पुनः 'शोकाभिलाषादि–निर्वेदेषु चेतोद्रवीभावस्य न तारतम्यम्। शोकादीनां तारतम्यानुपलम्भात्।' इत्याचक्षते। तत्र–'सम्भोगे करुणे शान्ते विप्रलम्भेऽधिकं क्रमात्।' इति 'सम्भोगात्करुणे शान्ते ( विप्रलम्भे शान्ते ) विप्रलम्भेऽधिकं पुनः।' इति च पाठभेदः कल्पनीयः।' इति।

अथ 'सम्भोगे'–इत्यत्र निर्दिष्टैः सम्भोगादिशब्दैस्तदाभासाद्यर्थोऽपि बोद्धव्य इत्याह–**सम्भोगादि** इति।

**सम्भोगादिशब्दाः** सम्भोग आदौ येषां ( करुणविप्रलम्भशान्तानाम् ) ते सम्भोगादय एव शब्दास्ते। **उपलक्षणानि** तदात्मका इति यावत्। उपलक्ष्यतेऽन्योऽप्यर्थोऽनेनेत्युपलक्षणम्। अत्र करणे ल्युट्। उपलक्षणं नाम स्वस्य स्वसम्बन्धिनश्चाजहत्स्वार्थया वृत्त्या बोधनम्। **तेन** सम्भोगादिशब्दानामुपलक्षणात्मकत्वाङ्गीकारेणेत्यर्थः। **सम्भोगाभासादिषु** सम्भोगाभास आदौ येषां ( करुणाभासतत्तद्भावाभासादीनाम् ) तेषु तथोक्तेषु। **अपि**। अपिरत्र सम्भावनायाम्। नत्वेवार्थे। तेन–सम्भोगादिषु तूत्तरोत्तरमस्त्येव सातिशयमुत्कर्षवन्माधुर्यम्, किन्तु तदाभासादिष्वपि तथैवेति निष्कृष्टोऽर्थः। अथ–यथा सम्भोगाभासापेक्षया करुणाभासे नतु सम्भोगापेक्षयैव करुणाभासेऽपीति नियमः सर्वत्रैव बोद्धव्यः। एवं च–'अपिरेवार्थे' इति व्याचक्षाणास्तर्कवागीशाः परास्ताः। **एतस्य** माधुर्यस्य। **अवस्थितिः** स्थितिः। **ज्ञेया**।

नतु रसधर्माणां तेषां माधुर्यादीनां कथमभिव्यक्तिः शब्दधर्मत्वाभावादिति चेद् गुणवृत्त्येत्याह ३७ **मूर्ध्नी**त्यादि।

३७ **मूर्ध्नि** शिरसि अग्रभागे इति यावत्। **टठडढान्** टकारठकारडकारढकारान्। 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्।' २। ३। ३२ इति द्वितीया। **विना**। विहायेति यावत्। दुःश्रवत्वाबहुत्वात्। **वर्गान्त्यवर्णेन** वर्गस्य 'कुचुटुतुपु' इत्येतेषां वर्गाणा मध्ये यस्य कस्यापि सन्निवेशस्तस्य तत्सम्बन्धिन इति यावद् अन्त्योऽन्ते भव इत्यसौ वर्णोऽक्षरं 'ङञणनमे'त्येष्वन्यतममिति यावद् इति तेन। 'दिगादिभ्यो यत्।' ४। ३। ५४ इति यत्। 'वर्णो द्विजादिशुक्लादियशोगुणकथासु च। स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेखने॥' इति मेदिनी। यथा–'अनङ्गमङ्गलभुवः।' इत्यत्र कुवर्गो गकारः स्वान्त्येन 'ङ' कारेण। 'वृद्धो यूना तल्लक्षणश्चेदेव विशेषः।' १। २। ६५ इत्यत्र 'वृद्धो यूने'ति निर्देशात्तृतीया। **युक्ताः** समन्विताः। **च** पुनः। **लघू**। अत्रानेके पक्षाः। तत्र–'ह्रस्वान्तरितौ' इति काव्यप्रकाशकाराः, 'वर्णान्तरयोगराहित्येन लघुप्रयत्नोच्चार्यौ नतु गुरुविपरीतौ'इति व्याख्यातारः। 'विसर्गवर्णान्तरायुक्तावयुक्तान्तौ च' इत्यन्ये,'ह्रस्वान्तौ'इति बहवः प्राहुः। अथ–'ह्रस्वान्तरितौ'इति चेन्न। 'पुरोरेवापारे गिरिरतिदुरारोहशिखरो धनुष्पाणिः पश्चाच्छबरनिकरो धावति पुनः। शरः सव्येऽसव्ये दवदहनदाहव्यतिकरो क्व यामः किं कुर्मो हरिणशिशुरेवं विलपति॥' इत्यादौ रेफस्य माधुर्यव्यञ्जकत्वानुपपत्तेः। एवं वर्णान्तरयोगराहित्येन लघुप्रयत्नोच्चार्यौ।' इति चेन्न। 'स्मरः खलः खरः कालः' इत्यादौ रेफस्य माधुर्यव्यञ्जकत्वोपपत्तेः। 'विसर्गवर्णान्तरायुक्तावयुक्तान्तौ चे'ति चेन्न। 'अनङ्गरङ्गप्रतिमं तरङ्गं भङ्गीभिरङ्गीकृतमानताङ्ग्याः।' इत्यादौ रेफस्यायुक्तत्वाभावेन माधुर्यव्यञ्जकत्वानुपपत्तेः। नन्वेवं पुनः कोऽर्थः ? इति चेत् वर्गान्त्यवर्णसङ्घटितसंयोगान्तत्वातिरिक्तसंयोगान्तत्वशून्यौ विसर्गाभ्यां वर्णान्तरेण चाविहितान्तरालसम्पर्कौ लघू इति। **रणौ** रेफणकारौ। यद्यपि 'टठडढा'तिरिक्तानां सर्वेषामेव वर्गान्तर्गतानां वर्णानामङ्गीकारेण णकारस्याङ्गीकार आपाततः सङ्गच्छते तत्पुनर्णकारोल्लेखष्टठडढसाहचर्येण तेषां निषेधेन नास्य निषेधः शङ्कनीय इति भ्रमापनोदाय। रेफस्य पुनरुपादानं वर्गान्तर्गतत्वाभावेन तस्योपादानासम्भवे तस्य चोपादानस्य चावश्यमपेक्षितत्वादित्येके, परे तु न केवलं वर्गवर्णानामेव माधुर्यव्यञ्जकत्वसौभाग्यम्, किन्तु परेषामपि 'टठडढा'तिरिक्तानामिति द्योतनार्थं रेफोपादानमित्याहुः। अत एव—'अपसारय घनसारं कुरु हारं दूर एव किं

**अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ।**

---

कमलैः । अलमलमालि ! मृणालैरिति वदति दिवानिशं बाला ॥' इत्यादौ शरामपि माधुर्यव्यञ्जकत्वं सङ्गच्छते । तदुक्तं रसगङ्गाधरकारैः 'तत्र टवर्गवर्जितानां वर्गाणां प्रथमतृतीयैः शर्भिरन्तःस्थैश्च घटितानैकट्येन प्रयुक्तैरनुस्वारपरसवर्णैः शुद्धानुनासिकैश्च शोभिता वक्ष्यमाणैः सामान्यतो विशेषतश्च निषिद्धैः संयोगाद्यैरचुम्बिता अवृत्तिमृदुवृत्तिर्वा रचनाऽऽनुपूर्व्यात्मिका माधुर्यस्य व्यञ्जिका । द्वितीयचतुर्थास्तु वर्ग्या गुणस्यास्य नानुकूला, नापि प्रतिकूला; दूरतया सन्निवेशिताश्चेत् । नैकट्येन तु प्रतिकूला अपि भवन्ति, यदि तदायत्तोऽनुप्रासः ।' इति । **वर्णा** अक्षराणि । **तथा** । **अवृत्तिर्न** वृत्तिः समास इति । समासाभाव इत्यर्थः । **वाऽथवा** । **अल्पवृत्तिरल्पा** मृदुला वृत्तिरिति । **मधुरा** दुःश्रवत्वदोषेण सर्वथाऽस्पृष्टा मृदुलपदघटितानुप्रासादिभी रुचिरेति यावत् । अत एव–मधुरातीति वा । **रचना** समाहितेन चेतसा समुद्भाविता सहृदयस्य कविवरस्य कृतिः । तदुक्तम् 'अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम् । प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥' इति । **तद्व्यक्तौ** तस्य माधुर्यस्य व्यक्तिस्तत्र । तन्निमित्तमिति यावत् । माधुर्यव्यञ्जननिमित्तमित्यर्थः । 'निमित्तात् कर्मयोगे * ।' इति सप्तमी । **कारणताम्** । **गताः** । **प्राप्ताः** । अत्रायं पर्यालोकः–'कादयष्टवर्ग्यविहीना रेफणकारसमेताः स्वस्ववर्गान्त्यवर्णसंवलिता वर्णा माधुर्याभिव्यक्तेः कारणानि ।' इति प्राञ्चः । 'टवर्गविहीनाः शषससंयुक्ता यरलवयुता वर्णा माधुर्यव्यञ्जका' इति पण्डितराजप्रमुखाः । 'टठडढै' रेव विहीनाः स्वस्ववर्गान्त्यवर्णकृतसंश्लेषातिरिक्तसंयुक्तत्वशून्या माधुर्यं व्यञ्जयन्ति वर्णा' इत्यपरे । समासस्य सर्वथा परिहारस्तदसम्भवे मृदुलः समासश्च सहृदयेन कविवरेण समाहितेन चेतसा विहिता शब्दानां मधुरा सङ्कलना माधुर्यव्यक्तेः कारणानीति सर्वे प्राहुः । यत्तु–पण्डितराजैः–'तां तमालतरुकान्तिलङ्घिनीं किङ्करीकृतनवाम्बुदत्विषम् । स्वान्त ! मे कलय शान्तये चिरं नैचिकीनयनचुम्बितं श्रियम् ॥' यथावा–'स्वेदाम्बुसान्द्रकणशालिकपोलपालिरन्तःस्थितालसविलोकनवन्दनीया । आनन्दमङ्कुरयति स्मरणेन काऽपि रम्या दशा मनसि मे मदिरेक्षणायाः ॥' प्रथमे पद्येऽतिशयोक्त्यलङ्कृतस्य भगवद्ध्यानौत्सुक्यस्य भगवद्विषयकरतेर्वा ध्वन्यमानायाः शान्ते एव पर्यवसानात्तद्गतमाधुर्यस्याभिव्यञ्जिका रचनेयम् । द्वितीये तु स्मृत्युपष्टब्धशृङ्गारगतस्य इत्युक्तम् । तत्रेदमभिधीयते–उभयत्र पूर्वभागयोः समाससङ्कलना, त्वश्रव्यादिसंयुक्तवर्णाश्च माधुर्यव्यञ्जका ओजोव्यञ्जका वेति तु सहृदयेभ्य एव निवेद्यते । किन्तु पूर्वस्मिन् पद्ये भगवद्विषयकरतेर्ध्वननं व्यञ्जनं वा, न तावद् व्यञ्जनमित्यभिधातुं शक्यम् 'भगवद्विषयकरतेर्वा ध्वन्यमानायाः शान्ते एव पर्यवसानात् ।' इत्यभिहितस्य विस्मृतत्वापत्तेः । नच ध्वननमिति वचः शरणम् । उभयोरेव भगवद्ध्यानौत्सुक्यस्य भगवद्विषयकरतेश्च व्यज्यमानत्वे प्रतिबन्धादर्शनेऽन्योऽन्यमङ्गाङ्गिरवाद् ध्वन्यमानत्वानुपपत्तेः । अन्यथा 'न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतीयते ।' इति सिद्धान्तस्तिरोहितः स्यात् । न च ध्वननव्यञ्जनयोरपरपर्यायत्वं वक्तुं शक्यम् । ध्वननव्यञ्जनयोर्भेदावगमकस्य निरुक्तसिद्धान्तस्यैव जागरूकत्वात् । शान्तपर्यवसायिनो वा भगवद्ध्यानौत्सुक्यस्य भगवद्विषयकरतेर्वा तत्त्वेनैव गुणीभूतत्वात् । इति । ननु तत्र न नैकट्येन संयुक्ता वर्णा न च दीर्घः समासः, यद् भज्येत माधुर्यम् । इति चेत् । न । 'नैचिकी'त्यत्र नैकट्येन द्वितीयचतुर्थवर्ग्ययोर्वर्णयोः सन्निवेशस्य त्वश्रव्यादीनां च संयुक्तानां नैकट्याभावेऽपि दुःश्रवत्वावहत्वे माधुर्यव्यञ्जकत्वादर्शनात् । न च तादृशः समासोऽपि मृदुल इति सुवचम् । लम्बायमानस्य तस्य तत्त्वानुपलम्भात् । अन्यथा समासद्वयेनैव पूर्वोत्तरभागयोः सम्भृतस्य पद्यस्य माधुर्येण किमपराद्धं स्यात् । इति । अथ स्वाव्यवहितोत्तरं सकृदेकपदे सन्निविष्टा वर्णाः किञ्चिदश्रव्याः । यथा–'ककुभसुरभिः, विततगात्रः, पललमिवाभाती'त्यादौ । असकृद् यदि पुनरधिकं ते । यथा–'शुक ! क्वापि कथं विजने रुचिम् ।' इत्यादौ । असकृदथानेकेषु पदेषु यदि ते ततोऽप्यधिकम् । यथा–'पिक ! ककुभो मुखरीकुरु प्रकामम् ।' इत्यादौ । असकृद् यदि पुनरधिकम् । यथा–'वितथतरं तत्र वचनं प्रतीमः ।' इत्यादौ । एवं च वर्ग्यानां वर्णानां स्वसमानवर्ग्यवर्णाव्यवहितोत्तरं सन्निवेशेनाश्रव्यत्वमुदाहृतम्, तद्वर्गाणां प्रथमद्वितीययोस्तृतीयचतुर्थयोश्च वा वर्णयोरिति बोध्यम् । अन्यथा 'गगनं गगनाकार'मित्यादावपि तस्यापत्तिः स्यात् । अथ–प्रथमतृतीययोर्द्वितीयचतुर्थयोर्वा वर्ग्यवर्णयोरव्यवहितोत्तरं सन्निवेशः किञ्चिदश्रव्यः । एष यदि सकृत् । एतस्यापि पुनरसकृद्भावे

**यथा–'अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः । जनयन्ति मुहुर्यूनामन्तःसन्तापसन्ततिम् ।'**

---

स्फुटमश्रव्यत्वम् । यथा–'खगकलानिधिरेष विजृम्भते।' इत्यत्र कवर्गयोः प्रथमतृतीययोः ककारगकारयोर्द्वितीयतृतीययोश्च खकारगकारयोर्वर्गयोः सन्निवेशः सकृदिति न साधारणानामप्यवगम्यः । न तु'इति वदति दिवानिशं धन्या ( बाला ) ॥' इत्यादौ । यतः–प्रथमतृतीययो'र्वदर्ता'ति क्रियापदस्थयोस्तकारदकारयोरेव'इतो'त्यत्र'दिवानिश'मित्यत्र च सन्निवेशवशादश्रव्यत्वम् । अथवा 'दयिते ! दयितेति नाम ते वितथं नैव यथा तथा भव ।' इति त्रिविक्रमुदाहरणम् । अत्र हि प्रथमतृतीययोस्तकारदकारयोर्द्वितीयतृतीययोश्च थकारदकारयोरसकृदिति न सहृदयहृदयैकसाक्षिकमश्रव्यत्वम् । ङञणनमानां पुनः सन्निवेशः स्वसमानवर्गाव्यवहितोत्तरमनिशमपि नाश्रव्यः । तेषां माधुर्यैकस्वाभाव्यात् । अत एव कविराजमहोदयाः 'टठडढान् विना'इति निषेधपर्यवसितस्यापि णकारस्य'रणौ'इत्यनेनोपदेशमाम्रेडयन्ति । एवं तेषामेव स्वाव्यवहितोत्तरं विहितः सन्निवेशो भवति किञ्चिदश्रव्य इति बोध्यम् । तत्र–'तनुते तनुतां तनौ ।' इति 'मम महती मनसि व्यथाऽऽविरासीत्।' इति चोदाहरणम् । पूर्वत्र तवर्गान्त्यस्य नकारस्य स्वसमानवर्गैतकाराव्यवहितोत्तरवर्त्ती सन्निवेश इति नाश्रव्यः । उत्तरत्र तु पवर्गान्त्यस्य मकारस्य स्वस्यैवाव्यवहितोत्तरवर्त्ती सन्निवेश इति किञ्चिदश्रव्यः । एतेषां पुनरश्रव्यत्वं दीर्घस्वरान्तरितत्वेन किञ्चिन्निवर्त्तते । यथा–'हा हन्त तां तामरसाननां विना किन्नाम ते जीवित ! जीवितात् फलम् ।' इत्यत्र । क्वचित् संयोगपरत्वेनापि यथा–'भणितिषु सुकवीनामङ्गनानामिवाङ्ग–दिषु जयति मनोज्ञा काऽपि शोभाऽपरैव । तमपि पुनरनङ्गं रङ्गसङ्गं नयन्ती नवमधृततरङ्गं तुङ्गयन्ती प्रसङ्गे ॥' इत्यत्र । इदं त्ववश्यमवगन्तव्यम्–यदिह संयोगपरत्वं तद् वर्गान्त्ययोगविहितमेवेति । उक्तं चैवं प्रपञ्च्य रसगङ्गाधरकारैः–'मधुररसेषु दीर्घसमासञ्च्य् ( ङमञ्, घढधष्, जबगडदश्, खफछठथचटतव्, कपय् ) घटितसंयोगपरह्रस्वस्य विसर्जनीयादेशसकारजिह्वामूलीयोपध्मानीयानां टवर्गङझयां ( डढठटानाम् )रेफहकारान्यतरघटितसंयोगस्य हलां ( व्यञ्जनानाम् ) लभनभिन्नानां स्वात्मना संयोगस्य झयघटितसंयोगस्य श–( शषस ) भिन्नमहाप्राण ( खघछझठढथधह ) घटितसंयोगस्य सकृदपि ( नैकश्येन प्रयोगं वर्जयेद्, असकृत्तु सुतराम् ) इति संक्षेप. ( विस्तरस्तु अयमेव येन यथायथा माधुर्यं व्याहन्येत तथातथा तस्य सर्वहारो विधेयः ) ।' इति ।' इति ।

उदाहरति–यथेत्यादिना ।

**यथा** माधुर्यं यत्राभिव्यज्यते तथा तदुदाह्रियते—**'अनङ्गमङ्गलभुवः** । इत्यादिना ।

**'अनङ्गमङ्गलभुवो** नास्त्यङ्गं करचरणादिशरीरमित्येव वा अस्य ( महेश्वरस्य कोपानलेन दग्धत्वात् ) तथाभूतस्य मदनस्येति यावन्मङ्गलमानन्दः पुनः सञ्जीवनोत्सवस्तस्य भुवः पृथिव्य आधारभूता इत्यर्थः । 'अङ्गं गात्रे प्रतीकोपाययोः पुम्भूम्नि नीवृति । क्लीबैकत्वे त्वप्रधाने त्रिष्वङ्गवति चान्तिके ॥' इति मेदिनीकरः । 'कन्दर्पो दर्पकोऽनङ्गः ।' इत्यमरः । **तदपाङ्गस्य** तस्याः प्रसिद्धाया बुद्धिस्थाया वा रुचिरहावभावशालिन्याः प्रियतमाया इति यावद् अपाङ्गो लोचनयोः प्रान्तवर्त्ती भागस्तस्य । 'अपाङ्गस्त्वङ्गहीने स्यान्नेत्रान्ते तिलकेऽपि च ।' इति विश्वः । **भङ्गयो** विक्षेपा विन्यासविशेषा इति यावत् । 'दशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।' इति स्वाभाव्यात् । 'व्याजच्छलनिभे भङ्गिर्वैदर्भी तनर्मीलिका ॥' इति रभसः । **यूनां** तरुणानाम् । एतेन वालादीनां व्यवच्छेदः । युवानोऽप्यत्र दुर्भगा अविहिततत्सङ्गसौभाग्यहेतुसुकृतपुञ्जा एव । **अन्तर**भ्यन्तरे । हृदयस्येति शेषः । हृदयान्तःप्रदेशे इति भावः । एतेन वाह्यःप्रदेशो व्यवच्छिद्यते । **सन्तापसन्ततिं** सन्तापानां न तु सन्तापस्य सन्तापयोरिति वा सन्ततिः सन्तान उत्तरोत्तरं परिवृद्धिरिति यावत् ताम् । सन्तपनं सन्तापः । 'भावे' ३।३।१८ इति घञ् । सन्तन्यते इति सन्ततिः । 'स्त्रियां क्तिन् ।' ३।३।९४ इति क्तिन् । **मुहुर**सकृत् । **जनयन्ति** । अत्र कस्यापि दुर्भगस्य मित्रं प्रति सखीं प्रति वा स्वान्तःसन्तापवीजभूतस्य कस्याश्चित्सङ्गमाभावस्य निवर्त्तनायान्तरिकसन्तापाविष्करणम् । इत्येवं विप्रलम्भे माधुर्यस्य व्यञ्जकाः पुनः स्वान्त्यसम्वलिताः कवर्गाः । 'वामाऽपाङ्गस्ये'ति पाठस्तु युक्तः । 'रते' इति संयुक्तस्य निरासात् । 'स्ये'त्यपि संयुक्तो वर्णस्तस्य निरासोऽपि 'दयिताऽपाङ्गभङ्गस्य ।' इति समस्ते पाठान्तरे सम्भवति । किन्तु समासमृदुलत्वभङ्गभयान्न कृतम् इत्येके । अन्ये तु 'तदपाङ्गस्ये'त्यत्र तच्छब्दस्येव 'वाम'शब्दस्य रमणीयत्वानापादकत्वमिति यथास्थित एव पाठो युक्तः । इत्याहुः ॥ ६१ ॥

**यथा वा मम-**

**'लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन् समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन्।**
**मरुन्मदंमन्दं दलितमरविन्दं तरलयन् रजोवृन्दं विन्दन् किरति मकरन्दं दिशिदिशि ॥६२॥'**

---

उदाहरणान्तरमवतारयन्नाह-यथेत्यादि।

**यथा**। **वा**-माधुर्यमिति शेषः। **मम** मदीये प्रबन्धे इत्यर्थः। तथोदाह्रियते-'**लताकुञ्जमि**'त्यादिना।

'**मरुद्** गन्धवहः। 'समीरमारुतमरुज्जगत्प्राणसमीरणाः।' इत्यमरः। **गुञ्जन्मदवदलिपुञ्जं** गुञ्जन्तः शब्दं कुर्वन्तो मदवन्तो मत्ता अलिपुञ्जा मधुकराणां समूहा यत्र तथाभूतम्। अत्र त्रिपदो बहुव्रीहिः। **लताकुञ्जं** लतानां यूथीमाधवी-प्रभृतीनां वल्लीविशेषाणां कुञ्जो गुच्छावष्टम्भविशेषस्तम्। 'कुञ्जोऽस्त्रियां निकुञ्जेऽपि हनौ दन्तेऽपि दन्तिनाम्।' इति मेदिनी। **चपलयं**श्चपलं कुर्वन्। अङ्गं शरीरम्। **समालिङ्गन्** संस्पृशन्। तेन सह परिष्वङ्गं कुर्वन्निति भावः। **अनङ्गं** दग्धशरीरं मदनमित्यर्थः। **द्रुततर**मविलम्बं नतु विलम्ब्यात्। **प्रबलयन्** जनयन् प्रवर्धयंश्चेति भावः। **दलितं** दलानि पत्राणि जातानि विकसितान्यस्येति, तत्। 'तदस्य सञ्जातं तारकादिभ्य इतच्।' ५।२।३६। प्रफुल्लमिति भावः। **अरविन्दं** कमलम्। अत्र जातावेकवचनम्। तेन कमलवनमिति निष्कृष्टोऽर्थः। **मन्दंमन्दं** नतु त्वरितम्। यथा न विनश्येत् सुरभिश्च लभ्येत। 'नित्यवीप्सयोः।' ८।१।४ इति वीप्सायां द्विर्वचनम्। **तरलयन्** कम्पयन्। **रजोवृन्दं** रजसो वृन्दम्। सुरभितकुसुमान्तर्गतं पराग (तद्रजो) वृन्दमित्यर्थः। 'आर्तवे च परागे च रेणुमात्रेऽपि दृश्यते।' इति मेदिनी। **मकरन्दं** कुसुमरसम्। 'मकरन्दः पुष्परसः।' इत्यमरः। **दिशिदिशि** प्रतिदिशम्। 'आनुपूर्व्ये द्वे वाच्ये*' इति द्विर्वचनम्। **किरति** विकिरति। अत्र शिखरिणीछन्दः। तल्लक्षणं तु प्रागुक्तम्॥' इति। अत्र पूर्वभागे कवर्गस्य गकारस्य स्वान्त्येन ङकारेण संयोगभूयस्त्वमुत्तरत्र पुनस्तवर्गस्य दकारस्य नकारेण। न समासदैर्घ्यं चेति स्फुटं माधुर्यम्॥ ६२॥

यथा वा मम-'बत मां दयितां च तां दया-मभगां हन्त विधाय किं विभो। कुह नाथ! गतोऽसि कोऽनयोः शरणं वा तव कोऽनयोर्मतः॥' अत्रापि पूर्ववत्। किन्तु पूर्वत्र विरहिणो नायकस्य, अत्र पुनर्नायिकायाः प्रलापः। इति भेदः। यत्तु तर्कवागीशैः-अवृत्तेर्माधुर्यव्यञ्जकत्वं यथा-'मुद्रितामिन्दुमालोक्य पद्मिनीं पश्य सुन्दरि। हन्त कामस्य विच्छेदे मधुरोऽपि न रोचते॥' इति। असमासस्य यथा-'मानं विमुञ्च कल्याणि दासं मामनुकम्पय। विजहीहि रुषो रागमध-रस्य च कम्पनम्॥' इत्यभिधाय वा सुकुमारार्थप्रतिपादकरचनाया माधुर्यव्यञ्जकत्वं यथा-'उचितं गोपनमनयोः स्तन-योः कनकाद्रिधर्मतस्करयोः। अवमानितविधुमण्डलमुखमण्डलगोपनं किमिति॥' इतीत्युक्तम्। तदवहेयम्। पूर्वत्र हि 'मुद्रिता'मित्युदाहृते पद्ये 'इन्दुमालोक्य मुद्रितां पद्मिनी'मित्यभिमतान्वयस्य पदान्तरप्रविष्टत्वात् सङ्कीर्णत्वम्, संयुक्तवर्ण-घटितपारुष्यवशाच्च दुःश्रवत्वं नाम दोषः। अपरत्र पुनः 'मान'मित्यत्र न कश्चित्कवितापरिपाकः। 'विजहीहि'इत्यत्र ग्राम्योक्तेः स्फुटमुपलब्धेः। उत्तरत्र 'उचित'मिति पद्ये तु प्रसादः। न पुनर्माधुर्यम्, समासदैर्घ्यात्। अत्रायमभिप्रायः-'मूर्ध्नि वर्गान्त्यवर्णेने'ति निरुक्तं समस्तमेव लक्षणं माधुर्याभिव्यक्तेः। नच निरुक्तानां वर्णानां समासाभावस्य समासमा-र्दवस्य वा मधुरायाश्च रचनायाः प्रत्येकं माधुर्याभिव्यक्तिहेतुत्वमवसेयमिति वाच्यम्। तथा सति हि समासाभावस्य समासमार्दवस्य च माधुर्याभिव्यक्त्युदाहरणे 'टठडढा'नामपि निवेशस्योपपत्तेः। नापि 'माधुर्यव्यञ्जकत्वं यदसमासस्य दर्शितम्। पृथक्पदत्वम्माधुर्यं तेनैवाङ्गीकृतं पुनः॥' इति वक्ष्यमाणनयेनासमासस्यापि माधुर्यव्यञ्जकत्वमङ्गीकर्तव्यमिति शङ्क्यम्। निरुक्तलक्षणघटितवर्णानुगृहीतसमासाभावस्यैव तत्रापि तत्त्वाभिप्रेतत्वात्। ननु तर्हि 'श्वासान् मुञ्चती'त्यु-दाहरणं किम्मूलम्? संयुक्तवर्णानां च ठकारस्यापि तत्र निवेशात् इति चेत्! सत्यम्। तत्र पृथक्पदत्वमेवोदाह्रियते नतु माधुर्यव्यञ्जकत्वमपेक्ष्यते। अन्यथा केन पामरव्यतिरिक्तेन तथात्वेऽपि माधुर्यमभिधीयेत। ओजोघटकयावन्मात्रनिवेश-स्यैव माधुर्यतिरोधायकत्वेन सर्वैः स्वीकृतत्वात्। वस्तुतस्तु तत्र, पृथक्पदत्वमपि माधुर्यव्यञ्जकं भवितुमर्हति, चेन्न निरु-

**३८ ओजश्चित्तस्य विस्तताररूपं दीप्तत्वमुच्यते ॥ ३६ ॥**

**३९ वीरवीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु ।**

**अस्यौजसः । अत्रापि वीरादिशब्दा उपलक्षणानि । तेन वीराभासादिष्वप्यस्यावस्थितिर्ज्ञेया ।**

---

रूवर्णैर्विरुद्धम् । अन्यथा तु तस्य गुणत्वमेव न दुःश्रवत्वादिकलुषितत्वात् । 'कन्दर्पः कुटिलः करालकृतिकः कामं प्रचण्डैः शरैर्विध्यन् हन्ति न यान्ति हन्त तदपि प्राणा ममामी खलाः । काचित्कापि न मादृशी हतभगा दृष्टा श्रुता केनचित् कालं ! क्कासि झटित्युपेहि कवलीकृत्याङ्गमेतन्मृड ॥' इत्यादावपि पृथक्पदत्वेन माधुर्यव्यञ्जकोदाहरणापत्तेश्च । इति ।

अथोद्देशक्रमप्राप्तमोजःस्वरूपनिरूपणमारभते—३८ ओज इत्यादिना ।

३८ **चित्तस्य** सामाजिकानामिति शेषः । ते च सहृदया एव नान्ये इत्यपि बोध्यम् । **विस्ताररूपं** विस्तारो वीरादिरसास्वादावसरे द्रवीभावविरुद्धो विस्मयविशेषो वृत्तिविशेषो वा स एव रूपमात्मा यस्य तदित्यर्थः । **दीप्तत्वं** दीप्तस्य भाव इति । तस्य च साक्षादनुपपत्तेरुपचारः । तथा च—दीप्तत्वमिवेति निष्कर्षः । **ओजस्तदभिधेयो** गुणो भवतीत्यर्थः । तथा च—वीरादिरसास्वादावसरे ज्वलितमिव च मनसोऽवस्थानमेव ओजो नाम गुणः । न तु चित्तस्य ज्वलितत्वमिव विस्मितत्वमिव च अवस्थानमापादयति यत्, तदोज इति निष्कृष्टोऽर्थः । एतेन—'दीप्त्यात्मविस्मृतेर्हेतु-रोजः ।' इति काव्यप्रकाशाभिधानं नातिपेशलमित्यभिहितमिव भवति । तत्र कार्यकारणभावानुपपत्तेः । नहि चेतो विस्तारात्मकदीप्तत्वावस्थानभिन्नं किमप्योजस्त्वं प्रतीयते, येन तयोः कार्यकारणत्वं समुपपद्येतेति दिक् ॥ ३६ ॥

एवमोजःस्वरूपमभिधाय तदधिकरणकान् रसान्निर्दिशति—३९ **वीरवीभत्सरौद्रे**ष्वित्यादिना ।

३९ **तु** पुनः । **अस्यो**जोगुणस्येत्यर्थः । **वीरवीभत्सरौद्रेषु** वीरश्च वीभत्सश्च रौद्रश्चेति तेषु । **क्रमेण** पूर्वपूर्वा-पेक्षयोत्तरोत्तरत्रेति यावत् । **आधिक्यमधि**कत्वम् । तथा च—वीरापेक्षया वीभत्से तदपेक्षया पुना रौद्रे चित्ते दीप्तत्वम धिकमिति निष्कर्षः ।

अथ कारिकास्थस्य 'अस्ये'ति पदस्यार्थमाह—**अस्येतिपदस्ये**ति यावत् । **ओजसः** ।'ओजसः' इत्यर्थो बोद्धव्य इति ।

अत्र वीरादिशब्दानामुपलक्षकत्वमङ्गीकृत्य तत्प्रयोजनं निर्दिशति—**अत्रा**स्मिन् कारिकांशे इति यावत् । **अपि** यथा 'सम्भोगे—' इत्यत्र तथेति भावः । **वीरादिशब्दाः** वीरवीभत्सरौद्रशब्दा इत्यर्थः । **उपलक्षणानि** तद्रूपा इति यावत् । **तेन** वीरादिशब्दानामुपलक्षणात्मकत्वाङ्गीकारेणेत्यर्थः । **अस्यौजसः** । **वीराभासादिषु** वीराभास आदौ येषां वीरशान्त्यादीनां भावाभासभावशान्त्यादीनामिति यावत् तेषु । **अपि** वीरादिषु तु सुतरामित्यर्थः । **अवस्थितिः** स्थितिसम्भवः । क्वचित् 'स्थिति' रित्येव पाठः । **ज्ञेया** बोद्धव्या । क्वचिज् 'ज्ञेये'तिपाठ एव न ।

अत्रेदं निष्पन्नं तत्त्वम्—वीरे वीभत्से रौद्रे च क्रमादुत्तरोत्तरत्रौजः सातिशयं चमत्कारशालि इत्यावेदितचरम् । ओजश्च चित्तस्य ज्वलितवदवस्थानम् । तच्च अनभिमतनिरीक्षणादिना जायते । इत्यपि निर्विचिकित्सितम् । वीरस्तावदु-त्साहप्रधानो नतु क्रोधप्रधानः । वीभत्सः पुनर्जुगुप्साप्रधानः । अथ रौद्रः क्रोधप्रधानः। नतु उत्साहमात्रप्रधानः । क्रोधो यथा कर्त्तव्याकर्त्तव्यमूढत्वहेतुर्न तथोत्साहः । जुगुप्सा तु परं कथमपि परिहारेच्छामेवोद्भावयति न तूत्साहं क्रोधं वा । अत-एव तत्र जिगीषा जिहासा जिघांसा च क्रमात् । तासां च उत्तरोत्तरं चित्तस्य दीप्तत्ववत्त्वापेक्षितत्वादोजोऽपि वीरादावु-त्तरोत्तरं सातिशयमुत्कर्षशालि । तदुक्तं काव्यप्रकाशव्याख्यायां चक्रवर्त्तिभट्टाचार्यैः'वीरे तु जिजीषैव,वैरिवशीकरणमात्रोद्देश्य-त्वात् । वीभत्से जुगुप्सिते विषये ममताऽनास्पदत्वेन तितिक्षा नतु जिघांसा । रौद्रे त्वपकारिणि वधावधिकः प्रयास इति जिघांसैव, नतु जिगीसा नवा तितिक्षेति क्रमशो दीप्तेराधिक्यम् ।अयमेव रौद्रवीररसयोर्भेदोऽवसेयः।'इति । चण्डीदासेन तु'ओजसस्तावदवतारो वीभत्से, माधुर्यानुविद्धत्वान्नोत्कर्षभाक् । अथ रौद्रे वीरे च न माधुर्यानुविद्ध इत्युत्कर्षभागेव ।' इत्युक्तम् । ओजसस्तत्राधारभूता वीरादय इत्युभयथा निर्विवादम् । वीरादिशब्दाश्च लक्षणोपकृताः । सा च प्रकृतेऽजह त्स्वार्थैव । एवं—वीरापेक्षया वीभत्सादौ यथौजस उत्कर्षस्तथा तत्तदाभासाद्यपेक्षया तत्तदाभासादिष्वपि तारतम्यमवधार्यम् । तेषां तत्तदङ्गभूतत्वात् । इति । पुनः पर्यवसिता हास्योऽद्भुतो भयानकश्चेति त्रय एव रसाः । तत्र आद्ये माधुर्यमन्त्ययोः

**४० वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ ॥ ३७ ॥**
**उपर्यधोद्वयोर्वा, स-रेफौ टठडढैः सह ।**
**शकारश्च षकारश्च तस्य व्यञ्जकतां गताः ॥ ३८ ॥**
**तथा समासो बहुलो घटनौद्धत्यशालिनी ।**

यथा-'चञ्चद्भुज-'इत्यादौ ।

---

पुनरोजः स्फुटम् । आद्ये पुनरोजः अन्त्ययोःपुनर्माधुर्यमस्फुटम् । अन्ये तु 'शृङ्गाराङ्गविभावादिप्रभवत्वे माधुर्यं, वीराद्यङ्गप्रभवत्वे तु तेषामोजः प्रधानम् ।' इत्याहुः ।

अथ यथौजोऽभिव्यज्यते इति निर्दिशति-४० वर्गस्येत्यादिना ।

**४० वर्गस्य** । 'कुचुटुतुपु' इत्येते वर्गाः। तेषां मध्ये यस्य कस्यापि सजातीयस्य विजातीयस्य वा विन्यासो भवेत्तस्यैकतमस्येत्यर्थः । **आद्यतृतीया**भ्यामाद्यश्च तृतीयश्चेति ताभ्याम् । प्रथमवर्णेन तृतीयवर्णेन वेति भावः । प्रथमस्तावद्वर्णः-'कचटतपे' त्येतेषामेकतमः । तृतीयः पुनः-'गजडदबे'त्येतेषामेकतमो वर्णः । सहेति शेषः । 'सहयुक्तेऽप्रधाने ।' २।३।१९ इति तृतीया । यद्वा-'इत्थम्भूतलक्षणे' २।३।२१ इति तृतीया । यद्वा-'कर्त्तृकरणयोस्तृतीया ।' २।३।१८ इत्यनेनैव तृतीया । **तदन्तिमौ** तयोरन्तिमावन्त्यौ । 'कुचुटुतुपु' वर्गाणां मध्ये कस्यापि वर्गस्याद्यतृतीयवर्णयोरन्त्यौ द्वितीयचतुर्थौ वर्णौ इति भावः । तत्र-द्वितीयः 'खछठथफे' त्येषामेकतमो वर्ण, श्चतुर्थः पुनः-'घझढधभे'त्येषामेकतमो वर्णः । **युक्तौ** । सङ्गतौ संयुक्तौ संपृक्तौ इति वा भावः । **वर्णौ** । तथा-**उपरि** शिरोभागे । यथा तर्कौदकोर्जितोक्किरित्यत्र । **अधो**ऽधोभागे । यथा-शुभ्राभ्रैरित्यत्र । **वा** । पक्षान्तरसम्भवे त्वित्यर्थः । **द्वयो**रुपर्यधश्चेत्यर्थः । यथा-मुहुर्भ्रान्त इत्यत्र । **सरेफौ** रेफेण रकारेण सह वर्त्तमानौ । तौ च-वर्गस्याद्यतृतीयौ द्वितीयचतुर्थौ वा निर्देक्ष्यमाणौ शकारसकारौ वाऽन्यावेव वयथातथमवगन्तव्यौ । **च** तथा । **टठडढै**ष्टकारठकारडकारढकारैर्माधुर्यतिरोधायकैरिति भावः । एतच्चोपलक्षकम् । तेन-माधुर्याननुगुणानां वर्णादीनामोजोऽनुगुणत्वमिति द्योतितम् । **शकारः** । **च** । **षकारः** । **तथा** । बहुलो दीर्घः । **समासः 'समासबहुला'** इति समस्तपाठे तु समासैर्बहुलेति घटनाविशेषणमवधेयम् । **औद्धत्यशालिनी** उद्धतस्य भावस्तेन शाल्ते इत्येवंशीला । औद्धत्यशालित्वं च क्वचिद्वर्णवैकल्येन क्वचिदर्थकौटिल्येन सम्भवति । **घटना** गुम्फः । **तस्य** निरुक्तलक्षणस्यौजस इत्यर्थः । **व्यञ्जकताम्** । **गताः** प्राप्ताः । व्यञ्जका इतिमता इति भावः ॥ ३७ ॥ ३८ ॥

अत्रेदं निरुक्तम्-खघछझठढथधफभेत्येते वर्णाः, कगचजटडतदपबेत्येतैर्युक्ता उपरिष्टादधस्तादुभयत्रैव रकारालिङ्गिता वर्णाष्टठडढसहितौ रकारेण वा परिष्वक्तौ शकारषकारौ समासबाहुल्यं दुःश्रवत्वाधायिका घटना च कारणभूता ओजसोऽभिव्यक्तेः । दुःश्रवत्वं च घटनाया नैकट्येन बहुत्र वा संयुक्तानां वर्णानां निवेशात् संहिताऽऽदिना समासादिना वा वैरूप्यापादनाज्जिह्वामूलीयोपध्मानीययोश्च सम्पर्कात् सम्भवतीति । तथोक्तं पण्डितराजैः-'नैकट्येन द्वितीयचतुर्थवर्गवर्णटवर्गजिह्वामूलीयोपध्मानीयविसर्गसकारबहुलैर्वर्णैर्घटितो झयूरेफान्यतरघटितसंयोगपर ह्रस्वैश्च नैकट्येन प्रयुक्तैरालिङ्गितो दीर्घवृत्त्यात्मको गुम्फ ओजसः । अस्मिन् पतिताः प्रथमतृतीयवर्गा गुणस्यास्य नानुकूला नापि प्रतिकूलाः संयोगाघटकाश्चेत् । तद्घटकास्त्वनुकूला एव । एवमनुस्वारपरसवर्णा अपि ।' इति ।

तत्रोदाहरणमुपस्थापयति-**यथे**त्यादिना ।

**यथा** । तथेति शेषः । **'चञ्चद्भुज'-इत्यादौ** ।

अत्रेदमवोद्धव्यम्-'चञ्चद्भुजभ्रमितचण्डगदाऽभिघातसञ्चूर्णितोरुयुगलस्य सुयोधनस्य । स्त्यानावनद्धघनशोणितशोणपाणि-रुत्तंसयिष्यति कचांस्तव देवि ! भीमः ॥' इतीदं पद्यं षष्ठे परिच्छेदे पदन्यासोदाहरणप्रसङ्गे निवेदितं व्याख्यातं चेति नात्र व्याख्यायते । किन्तु स्फुटं संयुक्ता वर्णाः प्राचुर्यं च तेषां समासस्य पुनर्दीर्घत्वमिति व्यक्तमेवौजः । यथा वा हनुमन्नाटकेऽष्टमेऽङ्के-'मूर्धामुद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधाराधौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नाम् । कैला-

**४१ चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः ॥ ३९ ॥**
**स प्रसादः समस्तेषु रसेषु रचनासु च ।**

**व्याप्नोति आविष्करोति ।**

---

सोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां दोष्णां चैषां किमेतत्फलमिह नगरीरक्षणे यत् प्रयासः ॥' इति पद्यम् । असौ च वानरैरावेष्टितां पुरीमवलोकयतस्तद्रक्षणं चापारयतः कुप्यतो राक्षसेन्द्रस्योक्तिः । अर्थः पुनरेतस्य—'उद्वृत्तकृत्ताविरलगलगलद्रक्तसंसक्तधाराधौतेशाङ्घ्रिप्रसादोपनतजयजगज्जातमिथ्यामहिम्नामुद्वृत्तं निर्मर्यादं यत् कृत्तं कर्त्तनं छेदनमिति यावत्, तेनाविरलं गलात् कण्ठाद्गलन्तो प्रवहन्तो या रक्तसंसक्तधारा तया धौतौ प्रक्षालितौ पूजितौ इति यावद् यौ ईशाङ्घ्री महेशचरणौ तयोः प्रसादेन प्रसन्नतया कृपयेति यावदुपनतो यो जय उत्कर्षस्तेन जगति जातो मिथ्या महिमा येषां तेषामित्यर्थः । एषामेतेषाम् । मूर्ध्नां मस्तकानाम् । च पुनः एषाम्—कैलासोल्लासनेच्छाव्यतिकरपिशुनोत्सर्पिदर्पोद्धुराणां कैलासस्य पर्वतेन्द्रस्योल्लासनमुद्घाटनं तत्र तस्य वा या इच्छा तस्या व्यतिकर अधिकत्वं तस्य पिशुनाः सूचकास्तादृशा ये उत्सर्पिणोत्कटेन दर्पेणोद्धुरा दृढास्तेषाम् । दोष्णां भुजानाम् । इहास्मिन् वानरापादानके इति यावत् । नगरीरक्षणे । यत् । प्रयासः । तद्—एतदेवेति शेषः । किम् । फलम् ।' इति । ननु नगरीरक्षणे प्रयासो भुजानामेव भवितुमर्हति न पुनर्मूर्ध्नामिति न स्या 'न्मूर्ध्नां' मित्युपात्तं पदम् । इति चेन्न । तथाभूतानां मूर्ध्नां तथाभूतोत्कटक्लेशसोढृतयाऽलौकिकशौर्यव्यञ्जकत्वात् । अत्र चानेकानेकैः संयुक्ता वर्णाः समासदैर्घ्यं तादृशवर्णनपरतया चार्थघटितौद्धत्यसम्पन्ना घटना च स्फुटमोजो व्यञ्जयन्ति । इति ।

अथ समस्तानां काव्यानां जीवनभूतं प्रसादं स्वरूपतो निर्दिशति—४१ चित्तमित्यादिना ।

**४१ अनलः** पावकः । 'कृशानुः पावकोऽनलः ।' इत्यमरः । **शुष्केन्धनं** शुष्कं यदिन्धनं तत् । तत्रैव झटित्यग्नेः प्रसारसम्भवात् । **इव** । इदं सामान्येन, विशेषेण तु 'जलौघो विमलं वसनमिवे'त्यभिधातुमुचितम् । अत एव प्रकाशकारैः 'शुष्केन्धनाग्निवत् स्वच्छजलवत्सहसैव यः ।'इति 'यदा वीररौद्रादिषु चित्तं ( गुणः ) व्याप्नोति तदा शुष्केन्धनाग्निवत्, यदा शृङ्गारकरुणादिषु तदा स्वच्छजलवदि'ति तु तद्व्याख्याकारैरुक्तम् । **यः** । 'येन हि रसश्चित्तं व्याप्नोती'ति वक्तव्ये करणभूतस्यापि गुणस्य 'य' इति निर्देशः स्वातन्त्र्यविवक्षया । अन्यथा रसमात्रधर्मत्वेऽपि वक्ष्यमाणेन प्रकारेण रचनामात्रेष्वप्यवस्थानस्यानिष्पत्तिः स्यादिति बोध्यम् । **चित्तम्** । **क्षिप्रं** झटिति । **व्याप्नोति**आविशति । **सः** । **समस्तेषु** । **रसेषु** । आधेयतयेति शेषः । **च** । समस्तास्विति शेषः । **रचनासु** । व्यङ्ग्यतयेति शेषः । **प्रसादः** । सम्भवतीति शेषः ॥ ३९ ॥

अत्रायम्भावः—येन हि व्यङ्ग्यानामास्वाद्यत्वं सोऽयं प्रसादो नाम गुणः । एनमेव समस्तेषु रसेषु समस्तासु च रचनासु विराजमानमाहुः । नहि रसो रचना वा काचित् प्रसादमन्तरा यस्य यस्या वा कमनीयत्वम् । न चौजोमाधुर्ययोरिवैतस्य तयोरन्यतरेण सममेकाधिकरणत्वं व्याहन्यते । सर्वत्र तस्य साधारण्यात् । अत एव शुष्के इन्धनेऽग्नेरिव विमले वसने च जलौघस्येव चेतस्येतस्यापि व्यापकत्वम् । शुष्कत्वं विमलत्वं च तयोर्व्याप्योपयोगित्वमभिधातुम्, एवं च—सहृदयस्यैव सामाजिकस्य चेतसि स्फुरति नान्यत्रायमित्यभिहितम् । वीरवीभत्सरौद्रेषु, सति शुष्केन्धनेऽग्नेरिव चेतसि व्याप्तिरेतस्य शृङ्गारकरुणशान्तेषु विमलवसने जलौघस्येव । अन्यत्राप्येवं यत्र माधुर्यं तत्र विमलवसने जलौघस्येव यत्र पुनरोजस्तत्र शुष्केन्धनेऽग्नेरिवास्यापि । व्याप्तिश्च पूर्वत्र संयोगानुकूलो व्यापारः, उत्तरत्र तु विषयान्तरेभ्यो व्यासङ्गनिराकरणेन तस्योज्ज्वलत्वविधायकत्वम् । अत एव 'शुष्केन्धनमिवानलः ।' इत्युक्तम् ।

अथानलपक्षे व्यापनं स्फुटं मन्वानो रसादिपक्षे तदर्थं स्फुटयति—**व्याप्नोतीति** पदस्येति शेषः । **आविष्करोती**त्यर्थ इति शेषः । इति ।

यथोक्तं तर्कवागीशैः—'अनलपक्षे व्यापनं संयोगानुकूलो व्यापारः । गुणपक्षे त्वाह—व्याप्नोतीति । आविष्करोति व्यासङ्गनिराकरणेन निर्मलं करोति' । इति ।

**४२ शब्दास्तद्व्यञ्जका अर्थ-बोधकाः श्रुतिमात्रतः ॥ ४० ॥**

यथा-'सूचीमुखेन सकृदेवकृतव्रणस्त्वं मुक्ताकलाप ! लुठसि स्तनयोः प्रियायाः ।
बाणैः स्मरस्य शतशो विनिकृत्तमर्मा स्वप्नेऽपि तां कथमहंन विलोकयामि ॥ ६३ ॥"

**४३ एषां शब्दगुणत्वं च गुणवृत्त्योच्यते बुधैः ।**

शरीरस्य शौर्यादिगुणयोग इव इति शेषः ।

**४४ श्लेषः समाधिरौदार्यं प्रसाद इति ये पुनः ॥ ४१ ॥**

---

अस्य व्यञ्जकानाह-**४२ शब्दा** इत्यादिना ।

**४२ श्रुतिमात्रतः** श्रुतिः श्रवणमेवेति तस्मात् । **अर्थबोधका** अर्थस्य वाच्यस्य लक्ष्यस्य व्यङ्ग्यस्य वा बोधका अभिमतानुकूल्येन प्रत्यायकाः । अत्र त्रिविधस्यैवार्थस्य सङ्ग्रहाय बोधका इत्युक्तम् । **शब्दा** वाचका लक्षका व्यञ्जका वा । **तद्व्यञ्जकास्तस्य** निरुक्तलक्षणस्य प्रसादाभिधेयस्य गुणस्येति यावद् व्यञ्जका अनुग्राहकाः । भवन्तीति शेषः ॥४०॥
उदाहरति-यथा'सूचीमुखेने'त्यादिना ।

'**मुक्ताकलाप** ! मुक्तानां मौक्तिकानां कलापो गुच्छस्तत्सम्बुद्धौ । हारेति भावः । **सकृत्** । एव न तु पुनरपि । **सूचीमुखेन** सूच्यग्रभागेन । **कृतव्रणो** विद्धः । **त्वम्** । तत एव निवृत्तसमस्तप्रत्यवाय इति भावः । **प्रियायाः** । यत्र क्वापि विराजमानायाः । **स्तनयोः** । **लुठसि** न तु विलोकनायैव करोषि । पुनः-**अहम्** । **स्मरस्य** स्मरणमात्रेण प्रभवतो मनसिजस्य कन्दर्पदेवस्य । **बाणैर्नतु** सूच्यादिभिनैव । **शतशोऽ**नेकशतावृत्त्या । **विनिकृत्तमर्मा** विनिकृत्तानि नितरां कृन्तितानि मर्माणि यस्य सः । **अहम्** । नतु अन्यः । **तां** यस्याः स्तनोपरि यत्र क्वापि नितरां विराजसे न त्वन्याम् । **कथम्** । केन हेतुना । **स्वप्ने** । **अपि** कुतः पुनरन्यदा । **न** । **विलोकयामि** क्व पुनर्लुठनमिति को नाम मदीयः प्रत्यवायस्तत्र प्रतिबन्धको येन स्वप्नेऽपि तद्दर्शनमात्रसौभाग्यमपि निरुद्धमिति त्वमेव सुकृतित्वेन वर्णयोपदिशेति वा ।' पद्यमिदं श्रीकृष्णानन्दविरचिते सहृदयानन्दे द्वितीयेऽङ्के । वसन्ततिलं छन्दः । लक्षणं चोक्तं प्राक् ॥६३॥

नन्वेषां रसवर्त्तित्वे कथमिव पुनर्वामनादिभिः 'ये खलु शब्दार्थयोर्धर्माः काव्यशोभां कुर्वन्ति ते गुणाः ।' इति शब्दार्थधर्मत्वं स्वीकृतमित्याशङ्क्योपचारादित्युत्तरमवतारयति-**४३** एषामित्यादिना ।

**४३ च** पुनः । **बुधैर्विद्वद्भिः** (कर्तृभिः) । **गुणवृत्त्योपचारेण** (हेतुना) । **एषां** गुणानाम् । **शब्दगुणत्वम्** । अत्रार्थस्याप्युपलक्षकः'शब्द'शब्दः । तेन शब्दगुणत्वमर्थगुणत्वं चेति निष्कृष्टोऽर्थः ।(कर्म)। **उच्यते** न तु तथाऽङ्गीक्रियते ।
नचायमुपचारो दृष्टचर इति शङ्कनीयमित्याह-'**शरीरस्ये**'त्यादि ।

'**शौर्यादिगुणयोगः** शौर्यौदार्यादीनां गुणानां योगः सम्बन्ध इत्यर्थः । **शरीरस्य**।कारस्येति यावत् । **इव** ।' **इति** । **शेषोऽ**ध्याहृत्य कारिकया संयोक्तव्य इति भावः । तथा च-यथा शौर्यादयो गुणा आत्ममात्रधर्मा अपि शरीरसम्बन्धित्वेनापि उपचारवशादुपकल्प्यन्ते व्यवह्रियन्ते च तथा माधुर्यादयो रसमात्रवर्त्तिनोऽपि शब्दार्थधर्मत्वेनोपकल्प्यन्ते व्यवह्रियन्ते च । इति निष्कृष्टोऽर्थः । इदमपरमवसेयम्-शौर्यादीनां शरीरेण परम्परासम्बन्धः स्वसमवाय्यात्मावच्छेदकत्वम् । ननु गुणानां रसवृत्तित्वस्य निरुक्तपरम्परासम्बन्धस्य च कल्पने गौरवमिति शब्दार्थवृत्तित्वमेवैषां कल्पनीयमितिचेन्न । क्वचिन्नीरसे काव्ये गुणाभिव्यञ्जकयोः शब्दार्थयोः सत्त्वेऽपि माधुर्याद्यनुपलम्भात्, क्वचित् पुनर्गुणाभिव्यञ्जकशब्दार्थवत्त्वाभावेऽपि रसवशादेव गुणसम्भवोपपत्ते रसान्वयव्यतिरेकानुविधायित्वेन रसवृत्तित्वकल्पनाया अतिरोहितत्वात् । इति ।

ननु भवता त्रय एव गुणा अङ्गीकृताः, वामनादिभिः पुनरधिका इत्याशङ्क्याह-**४४ श्लेष**इत्यादि ।
**४४ चिरन्तनैः** प्राचीनैर्वामनादिभिरिति यावत् । 'सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ।' ४ । ३ । २३ ।

**गुणाश्चिरन्तनैरुक्ता ओजस्यन्तर्भवन्ति ते ।**

**ओजसि भक्त्या ओजःपदवाच्ये शब्दधर्मविशेषे । तत्र--श्लेषो बहूनामपि पदानामेकपदवद्भासनात्मा ।**

**यथा--'उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धताः**
**सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वनिनीः ।**
**उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथाऽयं तथा**
**प्रायः प्रेङ्खदसङ्ख्यशङ्खधवला वेलेयमुद्गच्छति ॥ ६४ ॥'**

---

**ये** । शब्दगता इति शेषः । **श्लेषः । समाधिः । औदार्यम् । पुनः । प्रसादः । इति** इत्येवमभिधेयाः । **गुणाः । उक्ताः । ते** शब्दगता गुणाः । **ओजसि** तत्पदवाच्ये गुणे । **अन्तर्भवन्ति** गतार्थां भवन्ति । तदेकतराङ्गीकारेण तेषामङ्गीकारस्य व्यर्थत्वात् ॥ ४१ ॥

ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमित्युक्ते ओजसि श्लेषादीनामन्तर्भावासम्भवात्तत्पदवाच्यमाह-**ओजसी**त्यादि ।

**भक्त्या** गुणवृत्त्या लक्षणयेति यावत् । **ओजसि । ओजःपदवाच्ये । शब्दधर्मविशेषे** शब्दस्य धर्मविशेषो बन्धगाढत्वात्मा तत्र । तदभिव्यञ्जकवर्णादिषु । श्लेषादयोऽन्तर्भवन्तीति पूर्वेणान्वयः । इतिभावः ॥

अत्रेदमभिहितम्-व्यवहारप्रवृत्तिर्हि द्वेधा औपचारिका वास्तविका च । तत्र-'अयो दहति' इत्यादौ 'पञ्चास्य वाह्वोर्बलम् ।' इत्यादौ च दाहकत्ववीर्यवत्त्वादिव्यवहारप्रवृत्तिर्यथौपचारिकेति विद्वांसः, वास्तविकेति, भ्रान्ताः स्वीकुर्वन्ति । तथैव 'मधुरः शब्दः मधुरोऽर्थः, मधुरेयं रचना, उद्धतः शब्दः, उद्धतोऽयमर्थः, उद्धता पुनरसौ रचना ।' इत्यादौ माधुर्यादिसम्बन्धिनी । अस्तु भ्रान्तानां चर्चा, किन्तु विदुषां विचारेण यथा वह्न्यात्माद्यभावे 'अयोदहती'-त्यादौ 'पञ्चास्य वाह्वोर्बलम्' इत्यादौ च दाहकत्ववीर्यवत्त्वादर्शनाद् वह्न्यात्मादिसत्त्वे च तत्रतत्र दाहकत्ववीर्यवत्त्वादिदर्शनाच्चेत्यन्वयव्यतिरेकानुविधायिनौपचारिकेत्यसौ निर्णीयते व्यवह्रियते च तथा प्रकृतेऽपीति निर्विचिकित्सितम् । अथौपचारिके पक्षे ओजःपदवाच्ये शब्दधर्मविशेषे श्लेषादीनामन्तर्भावः । शब्दघटितानां शब्दघटनाविशेषे एवान्तर्भावसम्भवात् । इति ।

अथ यथातथं श्लेषादीनामोजस्यन्तर्भावं विवक्षुस्तेषां लक्ष्यलक्षणव्यवस्थामपि दर्शयति-**तत्रे**त्यादिना ।

**तत्र** शब्दगुणेषु । **बहूनाम् । अपि । पदानाम् । एकपदवदे**कपदस्येव । 'तत्र तस्येव ।' ५।१।११६ इति वतिः । **भासनात्मा** भासनं प्रतीतिस्तदेवात्मा यस्य सः । **श्लेषः** । तथोक्तं वामनेन 'मसृणत्वं श्लेषः ॥३।१।११मसृणत्वं नाम यस्मिन् बहून्यपि पदान्येकवद्भासन्ते ॥' इति ।

उदाहरति-**यथे**त्यादिना ।

**यथा-'उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धताः** उन्मज्जन्त उद्विकसन्तो ये जलकुञ्जरेन्द्रा जलसञ्चारिणो गजेन्द्रा मकरेन्द्रा इति यावत्, यद्वा-उन्मज्जन्तो ये जलकुञ्जरेन्द्राः कुञ्जरेन्द्ररूपाणि साडम्बराणि जलानीति यावद्, इति, तेषां रभसो हर्षो वेगो वेति तस्य तेनेति वा आस्फाल आस्फालनं ताडनजन्यः शब्दविशेषस्तेनोद्धताः । जलस्य कुञ्जरेन्द्रा इति, जले कुञ्जरेन्द्रा इति वा । जलान्येव कुञ्जरेन्द्रा इति वा । 'रभसो वेगहर्षयोः ।' इति विश्वः । **सर्वाः । पर्वतकन्दरोदरभुवः** पर्वतानां कन्दरास्तासामुदराणि मध्यप्रदेशास्तेषां भुवः स्थलानि इति ताः । **प्रतिध्वानिनीः** प्रतिध्वानः प्रतिध्वनिस्तद्वतीः । **कुर्वन् । श्रुतिपथोन्माथी** श्रुत्योः कर्णयोः पथो रन्ध्रमिति, श्रुतेः श्रवणस्य पथो द्वारमिति वा तस्योन्माथी । 'श्रुतिः श्रोत्रे तथाऽऽम्नाये वार्त्तायां श्रोत्रकर्मणि ।' इति विश्वः । 'वाटः पथश्च मार्गश्चे'ति त्रिकाण्डशेषः । **अयमनुभूयमानः । ध्वनिः । यथा । उच्चैः । उच्चरति । तथा । प्रायःप्रेङ्खदसङ्ख्यशङ्खधवला** प्रायो वाहुल्येन प्रेङ्खन्त उच्छलन्तो येऽसङ्ख्यशङ्खा इति तैर्धवला । **इयम् । वेला । उद्गच्छत्यु**च्चैरुत्तिष्ठति । इदं च पद्यं प्रलयकालीनसमुद्रवर्णनपरम् । छन्दश्चात्र शार्दूलविक्रीडितम् । तथा

**अयं बन्धवैकट्यात्मकत्वादोज एव । समाधिरारोहावरोहक्रमः । आरोह उत्कर्षः । अवरोहोऽपकर्षः । तयोः क्रमो वैरस्यतानावहो विन्यासः । यथा–'चञ्चद्भुज–' इत्यादौ । अत्र च पादत्रये क्रमेण बन्धस्य गाढता चतुर्थपादे त्वपकर्षः । तस्यापि तीव्रप्रयत्नोच्चार्यतयौजस्विता उदारता विकटत्वलक्षणा विकटत्वं पदानां नृत्यत्प्रायत्वम् । यथा—**

**'सुचरणविनिविष्टैर्नूपुरैर्नर्त्तकीनां झणि ( टि ) ति रणितमासीत्तत्र चित्रं कलं च ।' इति ।**

---

समासवशाद् भिन्नान्यपि पदानि न तथा प्रतिभासन्ते । इति बन्धस्य गाढत्वसम्भवादोज एव ॥ ६४ ॥

तदेवाह–**अयं** श्लेष उदाहृतपद्यस्थ इति शेषः । **बन्धवैकट्यात्मकत्वाद्** बन्धस्य गुम्फस्य सन्दर्भस्य वा यद् वैकट्यं विकटत्वं तदेवात्मा स्वरूपं यस्येति तत्त्वात् । **ओजः** । **एव** । बन्धगाढमात्रत्वमोज इति स्वेनैव निरूपितत्वान्नात्रास्माकं वक्तव्यान्तरमित्यर्थमेवोपादानमिति बोध्यम् ।

समाधिमन्तर्भावयितुं तत्स्वरूपमाह–**समाधिरि**त्यादिना ।

**आरोहावरोहक्रम** आरोहावरोहयोर्बन्धगाढत्वागाढत्वयोः क्रमो विन्यासविशेष इति तथोक्तः । **समाधि**स्तदभिधेयो युष्मन्मते शब्दगतो गुण इति भावः । उक्तं च वामनेन 'आरोहावरोहक्रमः समाधिः ॥' ३।१।१३ इति ।

आरोहावरोहपदार्थमभिदधानस्तत्स्वरूपं निगमयति–**आरोह**स्तत्पदवाच्यः । **उत्कर्षः** । स च प्रकृते बन्धस्यैव । **अवरोह**स्तत्पदवाच्यः । **अपकर्षः** शैथिल्यम् । **तयोरारोहावरोहयोः** । **क्रम**स्तत्पदवाच्यः । **वैरस्यतानावहो** विरसस्य नीरसस्य सरसताऽभावस्येति यावद् भाव इति वैरस्यं तस्य तानः सन्तानस्तदवहस्तदप्रापकस्तदजनक इति यावत् । वस्तुतस्तु 'वैरस्यानावहः ।' इत्येव पाठो युक्तः । **विन्यासः** पदानां निवेशः । **समाधिः** ।

उदाहरति–**यथा–'चञ्चद्भुज–' इत्यादौ** ।

कथं सङ्घटते इत्याह–च पुनः । **अत्र**–'चञ्चद्भुजभ्रमितचण्डगदाऽभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्य । स्त्यानावनद्धघनशोणितशोणपाणि–रुत्तंसयिष्यति कचांस्तव देवि भीमः ॥' इत्युदाहृते पद्ये इत्यर्थः । **पादत्रये** 'शोणपाणि' रित्यन्तम् । **क्रमेण** । **बन्धस्य** गुम्फस्य । **गाढता** शैथिल्याभाव इत्यारोहः । **चतुर्थपादे** 'उत्तंसयिष्यती'त्याद्यात्मके । **तु** । **तस्य** बन्धस्य । **अपकर्षो**ऽवरोहः । तादृशारोहस्याप्रतीतेः । **च** । **तस्य** । चतुर्थपादस्यापकर्षापरपर्यायस्यावरोहस्य । **अपि** । **तीव्रप्रयत्नोच्चार्यतया** । **ओजस्विता** । गाढतेति भावः । अतस्त्वन्मतेनौजसि, अस्मन्मतेन तु तद्व्यंजकवर्णादौ समाधेरपि युक्त एवान्तर्भावः । औदार्यं निर्दिशति–**विकटत्वलक्षणा** विकटत्वस्वरूपा । **उदारता** । ननु किं नाम विकटत्वमित्याह–**विकटत्वं** नाम । **पदानाम्** । **नृत्यत्प्रायत्वम्** । उक्तं च वामनेन 'विकटत्वमुदारता ।३।१।२३ बन्धस्य विकटत्वं यदसावुदारता । यस्मिन् सति नृत्यन्तीव पदानि ।' इति ।

उदाहरति–**यथा** । '**तत्र** नृत्याङ्गणे । **नर्त्तकीनां** नर्त्तनकारिणीनाम् । स्त्रियामिति शेषः । **सुचरणविनिविष्टैः** सुचरणेषु विनिविष्टानि लग्नानि सङ्गतानीति यावत् तैः । **नूपुरैः** पादाङ्गदैः 'नेवरी'ति प्रसिद्धैराभूषणैः । **झणिति** । 'झण्' इति तेषां शब्दानुकरणम् । क्वचित् 'झटिती'त्यपि पाठः । तत्र–शीघ्रमित्यर्थः । **च** । **कलं** मनोरमं श्रवणं यथा भवेत्तथा । **रणितं** ध्वनिः । **आसीत्** । इति–**चित्रमा**श्चर्यम् । यद्वा–'चित्र'मिति 'रणित'मिति योज्यम् । तत्र–'विचित्र'मित्यर्थः ।' पद्यार्द्धमिदं वामनरचित एव 'काव्यालङ्कारसूत्रे । मालिनी चात्र छन्दः । उक्तं च तल्लक्षणं प्राक् ।

---

१ स्थूलदृशेदमभिहितम् । सूक्ष्मदृशा तु–'सञ्चूर्णिते'त्यन्तमारोहः 'सुयोधनस्ये'त्यन्तं पुन'स्तवान्त'मारोहः तत्र पुनरवरोहः । इति ।

अत्र च तन्मतानुसारेण रसानुसन्धानमन्तरेणैव शब्दप्रौढिमात्रेणौजः । प्रसाद ओजोमिश्रित-शैथिल्यात्मा । यथा-

'यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनाम् ।' इति ।

४५ माधुर्यव्यञ्जकत्वं य-दसमासस्य दर्शितम् ॥ ४२ ॥

पृथक्पदत्वं माधुर्यं तेनैवाङ्गीकृतं पुनः ।

यथा-'श्वासान् मुञ्चति-' इत्यादि ।

---

ननु कथमत्रौजो रसस्यासम्भवादित्यत आह-अत्रचेत्यादि ।

अत्र उदाहृते नीरसे पद्यार्थे । च पुनः । तन्मतानुसारेण । रसानुसन्धानं रसस्यानुसन्धानं गवेषणमिति तत् । 'अन्तराऽन्तरेण युक्ते ॥' २।३।४ इति द्वितीया ॥ रससद्भावपर्यालोचनमित्यर्थः । अन्तरेण विना । उपेक्ष्येति भावः । एव । वामनस्य दुर्ग्रहिलतावशादिति शेषः । शब्दप्रौढिमात्रेण शब्दानां प्रौढिराडम्बरानुकूलो यत्नस्तन्मात्रेण । ओजः । वस्तुतस्तु नात्रौजः किन्तु तद्व्यञ्जकवर्णाडम्बरः । अतोऽत्रैवैतादृशस्य गुणस्यापि पर्यवसानमवसेयम् । यक्षानुरूपबलिन्यायेन हि कल्पितस्यास्यौदार्यगुणस्यापि भवेदनुरूपे कल्पिते एवौजस्यन्तर्भाव इति युक्तमिति भावः ।

अथ प्रसादस्यापि गुणस्यौजस्यन्तर्भावं विवक्षुस्तत्स्वरूपं प्रथममाह-प्रसाद इत्यादिना ।

ओजोमिश्रितशैथिल्यात्मौजसा गाढत्वेन मिश्रितमुपसर्जनीभूतं यच्छैथिल्यं बन्धगाढत्वाभावस्तदेवात्मा स्वरूपं यस्य सः । यत्र हि बन्धस्य गाढत्वं शैथिल्यं च तथाभूत इत्यर्थः । प्रसादः । उक्तं च वामनेन 'शैथिल्यं प्रसादः ॥ ३।१।५ ॥००० नन्वयमोजोविपर्ययात्मा, तत् कथं गुण इत्याह-गुणः संप्लवात् ॥ ३ । १ । ७ गुणः प्रसादः । ओजसा सह संप्लवात् ( संमिश्रणात् ) । न शुद्धः ॥ ३।१। ८' इति ।

उदाहरति-यथा-'योयः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनाम् ।' इति ।

अत्रायम्भावः-'यो यः शस्त्रं विभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां,योयः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा । योयस्तत्कर्मसाक्षी, चरति मयि रणे यश्च यश्च प्रतीपः क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्॥' इति वेणीसंहारतृतीयाङ्कगतमिदं पद्यमुदाहृतं च षष्ठे परिच्छेदे उदाहरणोदाहरणावसरे । व्याख्यातं च तत्रैव । पाञ्चालहतकेनायुध्यमानस्यापि स्वगुरोः कृपाणसात् कृतं मौलिमवधार्य कुपितस्याश्वत्थाम्न उक्तिः । अथ-'योयः' इति शैथिल्यम्, 'शस्त्र'मित्योजः, 'विभर्त्ती'ति शैथिल्यम्, 'पाण्डवीना'मिति पुनरोजः 'योय' इति शैथिल्यम्, 'गोत्रे' इत्योजः पुनः शैथिल्यमिति अत्र शैथिल्यं प्रधानं दोषपरिहारार्थमोजः पुनर्गुणीभूतम् । तदपि तीव्रप्रयत्नोच्चार्याणां वर्णानामाधिक्यात् समुचित एवौजोव्यञ्जकवर्णेष्वस्यान्तर्भावः ।

अथ माधुर्यं नाम गुणान्तरं नाङ्गीकर्त्तव्यमित्याह-४५ माधुर्यव्यञ्जकत्वमित्यादिना ।

४५ यत् । असमासस्य समासाभावस्य । माधुर्यव्यञ्जकत्वं माधुर्यस्य व्यञ्जक इति तत्त्वम् । दर्शितम् । 'अवृत्तिरल्पवृत्तिर्वा ।' इत्यनेनेति शेषः । तेन दर्शितेनासमासस्य माधुर्यव्यञ्जकत्वेनेति यावत् । समासाभावस्य माधुर्यव्यञ्जकत्वप्रदर्शनेनेति भावः । एव । पृथक्पदत्वं पृथक्पृथग्भूतानि विभिन्नानीति यावत् पदानि यत्र तत्त्वम् । माधुर्यम् । अङ्गीकृतम् । इयानेवात्र भेदः-अस्मन्मतेन केवलं समासाभावस्य माधुर्यव्यञ्जकत्वं, त्वन्मते च तन्मात्रस्यापीति माधुर्यस्य यथातथं व्यञ्जके समासाभावे एव त्वन्मतेनैवोपलब्धं पृथक्पदत्वं माधुर्यमन्तर्भूतमिति मन्तव्यमिति भावः । अस्य लक्षणं चोक्तं वामनेन 'पृथक्पदत्वं माधुर्यम् ॥ ३।१।२१॥' इति ।

किं तत्रोदाहरणमित्याह-यथा-'श्वासान् मुञ्चति...' इत्यादि । उदाहरणमिति शेषः ।

अत्रेदमुक्तम्-'श्वासान् मुञ्चति, भूतले विलुठति त्वन्मार्गमालोकते दीर्घं रोदिति, विक्षिपत्यत इतः क्षामां भुजवल्लरीम् । किञ्च प्राणसमान ! काङ्क्षितवती स्वप्नेऽपि ते सङ्गमं निद्रां वाञ्छति, न प्रयच्छति पुनर्दग्धो विधिस्तामपि ॥'

**४६ अर्थव्यक्तेः प्रसादाख्य-गुणेनैव परिग्रहः ॥ १५ ॥**
**अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणम् ।**

स्पष्टमुदाहरणम् ।

**४७ ग्राम्यदुःश्रवतात्यागात् कान्तिश्च सुकुमारता ॥ ४४ ॥**

'अङ्गीकृते'ति सम्बन्धः । कान्तिरौज्ज्वल्यम् । तच्च हालिकादिविन्यासवैपरीत्येनालौकिकशोभाशालित्वम् । सुकुमारताऽपारुष्यम् । अनयोरुदाहरणे स्पष्टे ।

---

इतीदं पद्यं तृतीये परिच्छेदे तपनोदाहरणप्रस्तावे उपायनीकृतं व्याख्यातं च पूर्वम् । अत्र प्रायः सर्वाण्येव विभिन्नानि पदानि । इति समासाभावेन माधुर्यव्यञ्जकतयाऽस्यापि तत्रान्तर्भावः । माधुर्यव्यञ्जकस्य समस्तस्य लक्षणस्य चादर्शनान्न प्रकृते माधुर्यम्, किन्त्वेकदेशेन तद्व्यञ्जकत्वमात्रमिति ।

अर्थव्यक्तेः प्रसादेनैकात्म्यं दर्शयंस्तां गतार्थयति–**४६ अर्थव्यक्ते**रित्यादिना ।

**४६ प्रसादाख्यगुणेन** प्रसाद इत्याख्या यस्य तादृशेन गुणेन । **एव अर्थव्यक्ते**स्तदभिधेयस्य वामनेनाभिमतस्य गुणस्येति भावः । **परिग्रह** एकतरस्वीकारेऽन्यस्यापि स्वतः स्वीकारात् । **हि** यतः । **पदानाम्** । **झटिति** त्वरितम् । **अर्थसमर्पणम्** । **अर्थव्यक्ति**स्तदभिधेयः कल्पितो गुणः । इति ।

उदाहर्तुं प्रवृत्त आह–**उदाहरणम्** । **स्पष्टम्** । प्रसादोदाहरणेनैतदुदाहरणस्य सहाभिन्नत्वादिति नोदाहियत इति भावः ।

कान्तिसुकुमारत्वयोर्दोषाभावत्वमात्रमङ्गीकुर्वन्नाह–**४७ ग्राम्यदुःश्रवतात्यागा**दिति ।

**४७ ग्राम्यदुःश्रवतात्यागाद्** ग्राम्यताया दुःश्रवतायाश्च त्यागात् परिहारात् । **कान्तिः** । **च** । **सुकुमारता** । गतार्थ इति शेषः । ग्राम्यत्वदोषपरिहारमात्रा कान्तिः, दुःश्रवत्वदोषपरिहारमात्रा पुनः सुकुमारतेति भावः ।

अत्र 'अङ्गीकृते' त्यध्याहार्यमित्याह–'**अङ्गीकृते**'ति पदस्येति शेषः । **सम्बन्धः** पूर्वेणेति शेषः । तथा च–ग्राम्यत्वदोषत्यागात् कान्तिरङ्गीकृता । दुःश्रवत्वदोषत्यागाच्च सुकुमारताऽङ्गीकृतेति निष्कृष्टोऽर्थः ।

कथमेवमिति तत्स्वरूपमाह–**कान्ति**रित्यादिना ।

**औज्ज्वल्यं** बन्धस्येति शेषः । **कान्ति**स्तदभिधेयः शब्दगुणः । **च** । **तदौ**ज्ज्वल्यमित्यर्थः । **हालिकादिविन्यासवैपरीत्येन** हलं प्रहरणमस्य हलेन खनतीति वा हालिकः, स आदौ येषां ( ग्राम्याणां बालादीनां च ) तेषां पदानि तत्प्रयोज्यानि पदानि तेषां यो विन्यासस्तस्य वैपरीत्यं परिहार इति यावत्तेन । 'हलसीराट्ठक् ।' ४ । ३ । १२४ इत्यतः, 'तेन दीव्यति खनति जयति जितम् ।' ४ । ४ । २ इत्यतो वा ठकि हालिकः । **अलौकिकशोभाशालित्व**मलौकिका क्षुद्रलोकासम्भवा या शोभा पदसौन्दर्यं तच्छालित्वम् । उक्तं च वामनेन 'औज्ज्वल्यं कान्तिः ॥' ३ । १ । २५ इति, रसगङ्गाधरकारैः पुनः–'अविदग्धवैदिकादिप्रयोगयोग्यानां पदानां परिहारेण प्रयोज्यमानेषु पदेषु लोकोत्तरशोभारूपमौज्ज्वलं कान्तिः ।' इति विवृतम् । अथ–**अपारुष्यं** बन्धस्येति शेषः । पदानां परुषत्वपरिहारेण सङ्घटनमित्यर्थः । **सुकुमारता** । उक्तं च वामनेन–'अजरठत्वं सौकुमार्यम् ॥ ३ । १ । २२' इति ।

हालिकादिपदविन्यासो ग्राम्यत्वं नाम दोषः, तत्परिहारः पुनः कान्तिः तथा जरठ ( परुष ) त्वावहत्वेन श्रुतिकटुत्वं दुःश्रवत्वं नाम दोषः, तत्परिहारः पुनः सौकुमार्यम् । इति ग्राम्यत्वपरिहारमात्रेण कान्तेर्दुःश्रवत्वपरिहारमात्रेण पुनः सौकौमार्यस्य गतार्थत्वान्नोदाहार्ये इत्यभिप्रेत्याह–**अनयोः** कान्तिसौकौमार्ययोः । **उदाहरणे** । **स्पष्टे** । 'कामान्धमनुसर्पन्तं गां जवाद् वृषभं यथा । त्वां स्थूललोचने तद्वत् पश्येमां कष्टभोगिनम् ॥' इत्यत्र ग्राम्यत्वम्, 'अयि कमलायतनयने ! सफलय निजलोचनेन जनम् । मदनमहीपतिकरदीकृतमादृशमोक्षदा न यदा ॥' इत्यत्र पुनर्ग्राम्यत्वपरिहार

४८ क्वचिद् दोषस्तु समता मार्गाभेदस्वरूपिणी।
अन्यथोक्तगुणेष्वस्या अन्तःपातो यथातथम्॥ ४९॥

मसृणेन विकटेन वा मार्गेणोपक्रान्तस्य सन्दर्भस्य तेनैव परिनिष्ठानं मार्गाभेदः। स च क्वचिद् दोषः। तथा हि–

"अव्यूढाङ्गमरूढपाणिजठराभोगं च बिभ्रद् वपुः
पारीन्द्रः शिशुरेष पाणिपुटके सम्मातु किं तावता।

---

मात्रेण कान्तिः, 'शुष्को वृक्षस्तिष्ठत्यग्रे' इत्यत्र दुःश्रवत्वम्, 'नीरसतरुरिह विलसति पुरतः।' इत्यत्र तत्परिहारमात्रेण सुकुमारतेत्येवमुदाहरणयोर्विदितचरत्वात्। न च कान्तिसुकुमारत्वयोर्गुणत्वं दोषाभावमात्रात्मकत्वाद्रसानुगुणत्वरूपगुणत्वानुपपत्तेश्च।

अथ समत्वस्य गुणत्वं निषेधति–४८ क्वचिदित्यादिना।

४८ तु पुनः। मार्गाभेदस्वरूपिणी। मार्गो वैदर्भ्यादिरीतिः, तस्य ( मार्गस्य ) अभेदो निर्वाहः, स एव स्वरूपमिति, तदस्यास्तीति स्त्री चेत्तथोक्ता। यद्वा–मार्गाभेदः स्वरूपं यस्य ( बन्धस्य ) स मार्गाभेदस्वरूप इति, सोऽस्या वस्यास्तीति स्त्री चेत्तथोक्तेति। समता तदभिधेयः शब्दगुणः। क्वचिदनभिमतस्थले। दोषः। अन्यथा। अस्याः समतायाः। यथातथं यथा सङ्गच्छेत तथा। उक्तगुणेषु उक्ता ये गुणा माधुर्यौजःप्रसादाख्यास्तेषु तन्मध्ये तदेकतमे। अत्र निर्धारणे सप्तमी। अन्तःपातोऽन्तर्भावः। सम्भाव्यतामिति शेषः। अत्रायम्भावः–क्वचिद् यत्र मार्गाभेद एव भवेद् रसोपकृते तत्र पुनर्यदि समता ( मार्गाभेद ) सद्भावस्तर्हि रसापकर्षकत्वेन तस्या दोषत्वमेव। यत्र पुनः क्वापि सुकुमारमार्गोऽपेक्षितः,यत्रैव पुनरोजोव्यञ्जकमार्ग ( गौडी ) परिहारासद्भावस्तत्रापि तर्हि रसापकर्षकत्वेन दोषः। यत्र तु मार्गाभेदो रसोपकृते एव तत्रापि पुनर्माधुर्यव्यञ्जकैर्वर्णैस्तत्र माधुर्ये, यत्रौजोव्यञ्जकैस्तत्रौजसि, यत्र पुनर्झटित्यर्थसमर्पकैस्तत्रास्याः ( समतायाः ) प्रसादेऽन्तर्भावोऽवसेयः। इति।

अथ तदेव विवृणोति–मसृणेनेत्यादिना।

मसृणेन कोमलेन माधुर्याधायकेनेति यावत्। 'मसृणोऽकर्कशे स्निग्धे त्रिषु मायां तु योषिति।' इति विश्वः। वाऽथवा। विकटेनोद्धतेनौजोऽनुगुणेनेति यावत्। मार्गेण परिपाट्या। उपक्रान्तस्यारब्धस्य। सन्दर्भस्य ग्रन्थस्य। तेन येनोपक्रम आरब्धः। एव नतु तद्विपरीतेन। परिनिष्ठानं यावत्परिपूर्तिस्तावन्निर्वाहः। मार्गाभेदः। उक्तं च वामनेन–'मार्गाभेदः समता॥ ३। १। १२॥' इति विवृतं च रसगङ्गाधरे 'उपक्रमादासमाप्ते रीत्यभेदः समता॥' इति। च अथ। स मार्गाभेदः। क्वचिन्मार्गाभेदस्य यत्र रसोपकारकत्वं तत्र। दोषो रसापकर्षकत्वात्। तथा यथा क्वचिद् दोष इति शेषः। हि एव। "अव्यूढाङ्गम्..." इति।

"अव्यूढाङ्गं नव्यूढं धृतं सामर्थ्यमिति, तथाभूतमङ्गं करचरणादि यस्य यत्र वेति तत्। अप्रेतशैथिल्याङ्गमित्यर्थः। च तथा। अरूढपाणिजठराभोगमरूढोऽनिष्पन्नः पाणिजठराभोगो यत्र यस्य वेति तत्। पाण्योर्हस्तयोरुदरात्मकयोरग्रिमपादयोरिति यावज्जठराभोग इति। जठरः कठिनोऽसावाभोगः परिपूर्णत्वमिति। "जठरः कठिनेऽपि स्यात्" इत्यमरः। 'आभोगः परिपूर्णता।' इत्यमरः। इदं पुनर्विशेषणं सर्वथाऽपेक्षितस्य पाणिकाठिन्यस्याभावद्योतनार्थम्। यद्वा–'अरूढपाणी'ति 'जठराभोग'मिति च पदद्वयम्। तथा च अरूढौ पाणी यस्य यत्र वेति तत्। जठरे कुक्षौ आभोग उद्यमो यस्य तत्। अलब्धसामर्थ्यम्। 'सप्तमीविशेषणे बहुव्रीहौ।' २। २। ३५। 'जठरो न स्त्रियां कुक्षौ वद्धवङ्क्षणयोस्त्रिषु।' इति मेदिनी। 'आभोगो वरुणच्छत्रे पूर्णतायत्नयोरपि।' इति विश्वः। यद्वा–जठरे आभोग इति स यथा भवेत्तथा। वपुः शरीरम्। बिभ्रद् बिभर्तीति तथोक्तः। एषः। शिशुरतीव बालः। पारीन्द्रः सिंहः। 'कण्ठीरवस्तु पारीन्द्रः केशरी गजमोहनः ( मर्दनः )।' इति हारावली। पाणिपुटके स्थित इति शेषः। सम्मातु। अत्र 'लोट् च।' ३। ३। १९२ इति कामचारे लोट्। तावता तथा तस्य परिमितत्वेन। किम्। न्यूनत्वमिति

उद्यद्दुर्धरगन्धसिन्धुरशतप्रोद्दामदानार्णव-
स्रोतःशोषणरोषणात् पुनरितः कल्पाग्निरल्पायते॥६५॥' इति।

अत्रोद्धतेऽर्थे वाच्ये सुकुमारबन्धत्यागो गुण एव। अनेवंविधस्थले माधुर्यादावेवान्तः पातः। यथा-'लताकुञ्जं गुञ्जन्' इत्यादि।

**४९ ओजः प्रसादो माधुर्यं सौकुमार्यमुदारता।**
**तदभावस्य दोषत्वात् स्वीकृता अर्थगा गुणाः॥ ४६॥**

ओजः साभिप्रायत्वरूपम्, प्रसादोऽर्थवैमल्यम्, माधुर्यमुक्तिवैचित्र्यम्, सौकुमार्यमपारुष्यम्,

---

शेषः। यतः-पुनः किञ्चित्प्रौढत्वेऽव्यूढाङ्गत्वादिनिवृत्तौ इति भावः। **उद्यद्दुर्धरगन्धसिन्धुरशतप्रोद्दामदानार्णवस्रोतःशोषणरोषणात्**उद्यन्नुद्गच्छन् दुर्धरः परैरघ्रेयो गन्धो येषां ते ये सिन्धुरा गजास्तेषां शतं तस्य यत् प्रोद्दामदानार्णवस्रोतः प्रोद्दामाऽप्रतिबन्धं दानार्णवस्रोतो मदजलसमुद्रस्य प्रवाहस्तस्य शोषणं यस्मात्तद्रोषणं क्रोधाविर्भावनं यस्य तस्मात्। यद्वाउद्यन्नुद्गच्छन् यो दुर्धरगन्धसिन्धुरशतप्रोद्दामदानार्णवस्तस्य स्रोतस्तस्य शोषणं रोषणं यस्य तस्मादिति। गन्धसिन्धुरा गन्धहस्तिनः। ते च-'यस्योग्रमदगन्धेन हस्तिनो भयविह्वलाः। दूरादेव पलायन्ते गन्धहस्ती स उच्यते॥' इति निरुक्तस्वरूपा एव। **इतो**ऽस्मात् पारीन्द्रात् सिंहादिति यावत्। 'एतेतौ रथोः।' ५।३।४ इति,'पञ्चम्यास्तसिल्।' ५।३।७ इति च। **कल्पाग्निः। अल्पायते** तुच्छः प्रतीयते॥६५॥" इति। अत्र हि सिंहशिशुं लालयन्तं कमप्यवलोक्य तन्मिषेण तदुपमस्य कस्यापि लाल्यमानस्य भाविनी दशा वर्णिता।

तदेवाह-**अत्र। उद्धते** सिंहशिशाविति यावत्। **वाच्ये। अर्थे** सतीति शेषः। **सुकुमारबन्धत्यागः** सुकुमारस्य कोमलस्य बन्धस्य त्यागः। **गुणः। एव** नतु दोषः। यदि मार्गाभेदो गुण इत्यङ्गीकृत्याभविष्यत् सुकुमार बन्धात्यागस्तर्हि कथं नाभविष्यद् दोष इति विभावनीयं सूक्ष्मदृशा।

यथा वा-'ओवट्टइ उल्लट्टइ सअणे कहिं पि मोट्टाअइ णो परिहट्टइ। हिअएण फिट्टइ लज्जाइ खुट्टइ दिहीएसा॥' इत्यत्र (व्याख्यातपूर्वे पद्ये) मार्गाभेदसत्त्वेऽपि कथं न गुणाविर्भावः। इति।

न पुनर्यत्र तत्र का गतिरित्याह-**अनेवंविधस्थाने**ऽभिमतमार्गाभेदानुगुणत्वसम्भवावसर इति भावः। **माधुर्यादौ** माधुर्यमादौ यस्य (गुणस्य) तत्र माधुर्ये ओजसि प्रसादे वा। अस्या इति शेषः। **अन्तःपातो** बोद्धव्य इति शेषः।

ननु किं तदुदाहरणमित्याह-यथेत्यादि।

**यथा-'लताकुञ्जं गुञ्जन्...'**इत्याद्युदाहरणमिति शेषः। तथा च-'लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपलयन् समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन्। मरुन्मन्दंमन्दं दलितमरविन्दं तरलयन् रजोवृन्दं विन्दन् किरति मकरन्दं दिशिदिशि॥' इत्यत्र मसृणवर्णमात्रघटितमार्गाभेदो माधुर्येऽन्तर्भवति। इत्यास्तामेतादृशमितरदपि मार्गाभेदस्योदाहरणमिति पर्यवसितम्।

एवं न शब्दगुणा दशेति प्रत्याख्याय तानेवार्थगुणान् प्रत्याख्यातुं प्रवृत्त आह-४९ ओज इत्यादि।

**४९ ओजः। प्रसादः। माधुर्यम्। सौकुमा**र्यं सुकुमारता। अथ-**उदारता।** इत्येते इति शेषः। **अर्थगा** अर्थगताः। अर्थं गच्छन्तीति ते। 'अन्यत्रापि दृश्यते इति वक्तव्यम्।' इति डः। **गुणाः। तदभावस्य** तेषामोजःप्रसादमाधुर्यसौकुमार्यौदार्याणामभावसद्भावस्तस्य। **दोषत्वाद्** दोषरूपत्वात्। **स्वीकृताः**। ओजःप्रभृतीनामभावो दोषायेति दोषाभावत्वमेवैतेषामपि स्वीकर्त्तव्यमिति भावः॥ ४६॥

अथैषां स्वरूपाणि निर्दिशंस्तत्तदङ्गीकारं व्यर्थयति-**ओज** इत्यादिना।

**साभिप्रायत्वरूप**मभिप्रायेण तात्पर्येण सह वर्तत इति,तत्त्वमेव रूपं स्वरूपं यस्य तत्। 'वोपसर्जनस्य।' ६।३।८२ इति सादेशः। **ओजस्तदभिधेयोऽर्थगुणः**। पञ्चमप्रभेदात्मक इति शेषः। एवं च 'पदार्थे वाक्यरचना वाक्यार्थे च

उदारताऽग्राम्यत्वम्। एषां पञ्चानामपि अर्थगुणानां यथाक्रममपुष्टार्थाधिकपदा-नवीकृता-मङ्गल-रूपाश्लील-ग्राम्यत्वानां निराकरणेनैवाङ्गीकारः। स्वष्टान्युदाहरणानि।

५० अर्थव्यक्तिः स्वभावोक्त्यऽलङ्कारेण तथा पुनः।

---

पदाभिधा। प्रौढिर्व्यासस्समासौ च साभिप्रायत्वमस्य च ॥' इत्युक्तलक्षणेष्वोजसः पञ्चसु प्रमेदेषु आद्यांश्चतुरः प्रभेदानभिधानवैचित्र्यात्मकत्वमवगम्य तत्प्रत्याख्यानं च पुनर्विधेयत्वेनोपेक्ष्यान्तिमं पञ्चममेव प्रथमं प्रभेदं प्रत्याख्यातुं प्रवृत्तेनोक्तं साभिप्रायत्वमोज इति सूचितं भवति। अथ-अर्थवैमल्यमर्थस्य प्रयोजनस्य वैमल्यं विमलत्वं तन्मात्रत्वेन परिग्रह इति यावत्। प्रसादस्तदभिधेयोऽर्थगुणः। उक्तं च वामनेन 'अर्थवैमल्यं प्रसादः। ३।२।३० अर्थस्य वैमल्यं प्रयोजनमात्रपरिग्रहः प्रसादः।' इति पुनः-उक्तिवैचित्र्यमुक्तेर्वैचित्र्यं प्रकारान्तरेण कथनम्। माधुर्यं तदभिधेयोऽर्थगुणः। उक्तं च वामनेन 'उक्तिवैचित्र्यं माधुर्यम्। ३।२।११' इति। तथा-अपारुष्यं न पारुष्यं परुषत्वमर्थस्येति शेष इति। सौकुमार्यं तदभिधेयोऽर्थगुणः। तदुक्तं वामनेन 'अपारुष्यं सौकुमार्यम् ॥' ३।२।१२ इति। एवम्-अग्राम्यत्वं ग्राम्यत्वाभावः। ग्राम्यत्वेनार्थस्यानुल्लासनमिति भावः। उदारता तदाख्योऽर्थगुणः। उक्तं च वामनेन 'अग्राम्यत्वमुदारता ॥' ३।२।१३ इति। एषामोजः प्रसादमाधुर्यसौकुमार्यौदार्याभिधेयानाम्। पञ्चानाम्। अपि। नत्वेकस्य द्वयोस्त्रयाणां चतुर्णामेव वा। अर्थगुणानाम्। यथाक्रममुद्देशक्रमपूर्वकम्। अपुष्टार्था-धिकपदा-नवीकृता-मङ्गलरूपाश्लील-ग्राम्यत्वानाम् दोषाणामिति शेषः। दोषाश्चैते निरूपिता एव प्राक्। निराकरणेन परिहारेण। एव नतु रसोत्कर्षापेक्षणेन। अङ्गीकारः। अपुष्टार्थत्वादिदोषपरिहारमात्रेणैषामपेताभिप्रायमुपादानमिति भावः।

अत्रायम्भावः-साभिप्रायत्वमोजः, तच्च अपुष्टार्थत्वदोषाभावमात्रपर्यवसायि। अथ-अर्थवैमल्यं प्रसादः, सोऽप्यधिकपदत्वदोषोत्सर्जनमात्रेण लब्धवर्णः। पुनरुक्तिवैचित्र्यरूपं माधुर्यमनवीकृतत्वाभावमात्रपर्यवसितम्। एवमर्थापारुष्यं सौकुमार्यममङ्गलत्वात्मकाश्लीलत्वदोषनिराकरणेनैव लब्धसत्ताकम्। पुनरेवमग्राम्यत्वरूपोदारता स्फुटमेव ग्राम्यत्वाभावमात्रलब्धसद्भावा। इत्येषां दोषाभावत्वमेवाङ्गीकर्त्तव्यं न पुनर्गुणत्वम्। असत्त्वे च तेषां काव्यत्वापकर्षसम्भवात्, सत्त्वे पुनरुत्कर्षासम्भवात्। इति।

अथैतेषामुदाहरणानि स्पष्टानीत्युदासीन आह-उदाहरणानि। स्पष्टानि। इति।

अत्रेदं बोद्धव्यम्-'सुन्दरि! समुदितमेतत्तववदनमवेत्य सुधाकरः सततम्। गगने कुहापि सम्प्रति वसतिमुपेतुं गवेषयते ॥' इत्यत्रापुष्टार्थत्वम्। सततसम्प्रतिशब्दयोरन्यतरोपादानेन तथा गगनशब्दानुपादानेनापि रसोत्कर्षस्य तथैव संभवात्। अथ यदि तत्रैव 'सुन्दरि समुदितमेतत्तववदनमवेत्य सुधाकरो हन्त!। झटिति क्वापि विलीनः सम्प्रति भवितुं गवेषयते ॥' इत्येवं पाठः स्यात्तर्हि अपुष्टार्थत्वनिराकरणेन सममोजोलक्ष्यत्वलाभोऽप्येतस्य। तथा-'मदभरमन्थरगामिनि! भामिनि दयिते सुधानिधानमुखि!। मयि न मनागपि दयया लोचनपातं न किं कुरुषे ॥' इत्यत्र 'ने'त्यधिकपदत्वमावहतीति 'किमातनुषे' इति तत्रैव पाठे विवक्षितार्थपोषकत्वेन समं प्रसादतादवस्थ्यम्। अथ-'वचसि सुधाया धारा सुभगे सुषमा कला तवाङ्गेषु। दृशि मदनस्याविभूतिर्निर्दयता मनसि सम्भृता नितराम् ॥' इत्यत्रानवीकृतत्वम्। पुनर्यदि तत्रैव 'निर्दयता किं पुनर्मनसि।' इति चरमचरणव्यत्यासस्तर्हि तद्दोषपरिहारेण समं माधुर्यम्। तथा-'प्रमदे! किमु ते पथिकैरनभिमतं हन्त दुर्भगैर्विहितम्। यन्निजनिशितदृगन्तैर्विदधासि मृतान् मनोहरे दीनान् ॥' इत्यत्र मृतपदोपादानेनाश्लीलत्वम्। एवं पुनस्तत्रैव 'विदधासि चिराय तान् वितथम् (पथिकान्) ॥' इति चतुर्थपादपरिवर्त्तनं स्यात्तदा तस्य भवेत्सद्भावः। सम्भवेत् परं सौकुमार्यम् ॥ पुनरेवम्-'अधरसुधासवसुरभं चुम्बनदानेन मोदमानय माम्। सुकृतिनि! हास्यति हाऽयं निजजीवितमन्यथा सपदि ॥' इत्यत्र 'चुम्बने'ति स्फुटं ग्राम्यम् 'सुकृतिनी'ति न तथा। तथाऽपि ग्राम्यत्वमिति यदि 'त्वदधरमधुरिममोहित एव न विन्दति तथाविधं स्वदितम्। दयिते भुवनतलेऽस्मिञ्जीवितमय त्वमेव दीनस्य ॥' इति परिवर्त्तितः पाठस्तदा स्फुटमौदार्यम्। अग्राम्यत्वनिवृत्तेः।' इति।

अथार्थव्यक्तिं कान्तिं चान्तर्भावयति-५० अर्थव्यक्तिरित्यादिना।

५० स्वभावोक्त्या स्वभावोक्तिनामकेन। अलङ्कारेण। तथा यथा दोषपरिहारादिनाऽन्ये गुणा इति शेषः।

रसध्वनिगुणीभूतव्यङ्ग्याभ्यां कान्तिनामकः ॥ ४७ ॥

अङ्गीकृत इति सम्बन्धः। अर्थव्यक्तिरर्थस्वभावस्फुटत्वम्। कान्तिर्दीप्तरसत्वम्। स्पष्टे उदाहरणे।

५१ श्लेषो विचित्रतामात्रम्, अदोषः समता परम्।

श्लेषः क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटनात्मा। तत्र क्रमः क्रियासन्ततिः, विदग्धचे-

---

**अर्थव्यक्तिः**। अङ्गीकृतेति शेषः। **पुनः। रसध्वनिगुणीभूतव्यङ्ग्याभ्याम्**। रसपदस्य प्रत्येकमन्वयः। तेन रसस्य प्राधान्ये रसध्वनिना, अप्राधान्ये पुना रसवदलङ्कारात्मकगुणीभूतव्यङ्ग्येनेति निष्कृष्टोऽर्थः। **कान्तिनामकः**। कान्तिरिति कल्पितोऽर्थगतो गुण इत्यर्थः। अङ्गीकृत इति शेषः। तस्यैतदभिन्नत्वात् कल्पनान्तरवैयर्थ्यमिति भावः ॥ ४१ ॥

'अङ्गीकृत' इत्यध्याहारमन्तरा कारिकायावाक्यत्वानुदयमालोक्याह—**अङ्गीकृतः। इति**। पदस्येति शेषः। **सम्बन्धः**। पूर्वेणेति शेषः। अत्रापि वचनविपरिणामेन 'अङ्गीकृता' इति 'अङ्गीकृतः' इत्यस्य च सम्बन्धोऽङ्गीकर्त्तव्यः।

अत्रेदं निरुक्तम्—स्वभावोक्त्यलङ्कार एव यथा कल्प्यतेऽर्थव्यक्तिर्गुणः। तथा—रसध्वनिरेव रसवदलङ्काररूपगुणीभूतव्यङ्ग्यमेव वा कान्तिः। प्राधान्याप्राधान्यविवक्षया प्रकारद्वयोक्तिः। अत्र पुनराक्षेपः—'ननु अर्थव्यक्तिमेव तदाऽङ्गीकुरुताम्, माङ्गीकार्षीत् स्वभावोक्तिनामानमलङ्कारम्।' इति, 'अलङ्कारपरित्यागे आत्मभूतस्य रसस्याक्षतत्वेन काव्यत्वस्य पुनर्जागरूकत्वम्, गुणापगमे तस्यैव क्षतत्वापत्तौ काव्यत्वस्यापि व्याहन्यमानत्वमिति सिद्धान्तनयेन अर्थव्यक्तेरसद्भावेऽपि काव्यत्वस्य विचारदशा स्फूर्यमाणत्वान्न गुणत्व'मिति समाधिः। एवं पुनः—"ननु कान्तिरेव गुणोऽङ्गीकर्तव्यः। न पुना रसध्वनिर्गुणीभूतव्यङ्ग्यं वा विसदृशत्वाददर्शनादि"त्याक्षेपः। 'कान्तिर्दीप्तरसत्वम्। तत्र दीप्तो व्यक्तो रसस्तत्त्वम्। रसस्य दीप्तत्वं पुनस्तद्ध्वनिस्तद्वदलङ्कारो वा। अथ—गुणत्वस्वीकारेऽपि रसध्वनिगुणीभूतव्यङ्ग्ययोः स्वीकारजागरूकत्वेन तयोः प्रत्याख्यातव्यत्वेऽपि मानाभावात् तन्मात्र एव कान्तेरपि गतार्थत्वं तस्याः स्वीकार्यत्वे च मानाभाव इति गौरवापेक्षया लाघवस्यैव सर्वाभिप्रेतत्वेन नाङ्गीकर्तव्यं कान्तेर्गुणत्वम्, रसध्वनिगुणीभूतव्यङ्ग्ययोश्च तस्यापि अन्तर्भूतत्वेन तयोः स्वीकारापेक्षया कान्तेर्गुणान्तरत्वस्वीकारावतारस्य गुरुभूतत्वेन तयोरेव स्वीकार्यत्वं न पुनः कान्तेर्गुणत्वमिति वा समाधिः।

अथ स्वयमपि निर्दिशति तदेव ग्रन्थकारः—**अर्थव्यक्ति**रित्यादिना।

**अर्थस्वभावस्फुटत्वमर्थस्य** वर्णनीयस्य वस्तुनः स्वभावस्तत्त्वं तस्य स्फुटत्वं तथा भूत एव वर्णनोपन्यास इति। **अर्थव्यक्तिः**। उक्तं च वामनेन 'वस्तुस्वभावस्फुटत्वमर्थव्यक्तिः ॥ ३।२।१४' इति। **दीप्तरसत्वं** दीप्तः स्पष्टं भासमानो व्यक्त इति यावद्रसस्तत्त्वमिति। **कान्तिस्तदभिधेयोऽर्थगुणः**। उक्तं च वामनेनैव 'दीप्तरसत्वं कान्तिः।१३।२।१५। अर्थवमर्थव्यक्तेः स्वभावोक्तेश्चापरपर्यायत्वम्, कान्तेः पुना रसध्वनिना गुणीभूतव्यङ्ग्येन वा सह स्वरूपाभिन्नत्वं सिद्धम्। इति न तयोर्गुणत्वमिति भावः।

उदाहर्तुं प्रवृत्त आह—**स्पष्टे। उदाहरणे** इति। तथाहि—"अथावलम्ब्य क्षणमेकपादिकां तदा निदद्रावुपपल्वलं खगः। स तिर्यगावर्त्तितकन्धरः शिरः पिधाय पक्षेण रतिक्लमालसः॥" इत्यत्र स्वभावोक्तिरर्थव्यक्तिर्वा। 'प्रेयान् सायमपाकृतः सशपथं पादानतः कान्तया द्वित्राण्येव पदानि वासभवनाद्यावन्न यात्युन्मनाः। तावत् प्रत्युत पाणिसम्पुटमिलन्नीवीनितम्बं धृतो धावित्वैव कृतप्रणामकमहो प्रेम्णो विचित्रा गतिः॥' इत्यत्र रसः कान्तिर्वेति स्फुटं सहृदयानाम्।

अथ श्लेषस्य समतायाश्च गुणत्वानङ्गीकारे हेतुं निर्दिशति—५१ **श्लेष** इत्यादिना।

**५१ विचित्रतामात्रम्। श्लेषः**। अतस्तस्य गुणत्वं न सङ्घटते इति भावः। अथ—**अदोषो** न दोष इत्यदोषो दोषाभाव इति यावत्। **परं** केवलम्। नतु गुणः। 'परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले।' इति मेदिनी। **समता**। इति।

अथ श्लेषस्य स्वरूपं निदर्शयंस्तद्गुणत्वमपवदति—**श्लेष** इत्यादिना।

**क्रमकौटिल्यानुल्बणत्वोपपत्तियोगरूपघटनात्मा** क्रमकौटिल्यानुल्बणत्वोपपत्तीनां योगः सम्बन्धः स

ष्टितं कौटिल्यम्, अप्रसिद्धवर्णनाविरहोऽनुल्बणत्वम्, उपपादकयुक्तिविन्यास उपपत्तिः, एषां योगः सम्मेलनं स एव रूपं यस्या घटनायास्तद्रूपः श्लेषो वैचित्र्यमात्रम्। अनन्यसाधारणरसोपकारित्वातिशयविरहादिति भावः। यथा-'दृष्ट्वैकासनसंस्थिते प्रियतमे-' इत्यादि। अत्र दर्शनादयः क्रियाः। उभयसमर्थनरूपं कौटिल्यम्, लोकव्यवहाररूपमनुल्बणत्वम्, 'एकासनसंस्थिते, पश्चादुपेत्य, नयने पिधाय, ईषद्वक्रितकन्धरः' इति चोपपादकानि, एषां योगः। अनेन च वाच्योपप-

---

एव रूपं यस्याः सेति, सा च या घटनेति, सैवात्मा यस्य सः। **श्लेषः**। उक्तं च वामनेन 'घटना श्लेषः ॥' ३।२।४ इति। तत्र-**क्रमः** क्रमपदार्थः। **क्रियासन्ततिः** क्रियाणां व्यापाराणां सन्ततिः परम्परोत्तरोत्तरं विन्यास इति यावत्। इति। अथ-**कौटिल्यं** तत्पदवाच्य इति यावत्। **विदग्धचेष्टितं** विदग्धानां महाऽनुभावानां पटूनां वा चेष्टितम्। इति। अथ-**अनुल्बणत्वं** तत्पदार्थ इति यावत्। **अप्रसिद्धवर्णनाविरहो** न प्रसिद्धेत्यप्रसिद्धा, साऽसौ वर्णना तद्विरहस्तत्परिहार इति यावत्। अप्रसिद्धवर्णनविरह इति पाठस्तु श्रेयान्। इति। अथ उपपत्तिस्तत्पदार्थ इति यावत्। **उपपादकयुक्तिविन्यासः** उपपादकानि प्रकृतानुकूलानि वर्णनानि तेषां युक्तयः सङ्घटनोपायास्तासां विन्यासः। इति। एवम्-**एषां** क्रमकौटिल्यानुल्बणत्वोपपत्तिपदार्थात्मकानां क्रियासन्तत्याद्युपपादकयुक्तिविन्यासानाम्। **योगस्तत्पदवाच्य** इति यावत्। **सम्मेलनम्**। एकत्र सन्निवेशः सन्निपातो वेति। **स** योगः। **एव**। **रूपं** स्वरूपम्। **यस्याः**। **घटनायाः**। **तद्रूपः**। **श्लेषोऽर्थगुणः**। अन्यत्र तु 'क्रमकौटिल्यमतिक्रमः, तस्यानुल्वणत्वमस्फुटता, तत्रोपपत्तिर्युक्तिस्तस्या योगः सम्बन्धस्तद्रूपा या घटना रचना तदात्मा तद्रूपः श्लेषः।' इति 'क्रमकौटिल्यानुल्वणत्वोपपत्तियोगो घटना स श्लेषः।'इति वामनव्याख्यानं विशदीकृतम्। स च-**वैचित्र्यमात्रं** वैचित्र्यमेवेति। मात्रपदं तद्गुणत्वव्यवच्छेदकम्। कुत इत्याह-**अनन्यसाधारणरसोपकारित्वातिशयविरहान्न** साधारणो लौकिक इत्यसौ एव रसस्तस्योपकारित्वमुत्कर्षकत्वं तदतिशय उपकारित्वातिशय उपकारित्वविशेषो वा तदविरहात्। **इति**। **भावः**। तथा च-तादृशस्य श्लेषस्य रसोपकारित्वातिशयासम्भवान्न गुणत्वमिति निष्कृष्टोऽर्थः।

उदाहरणं निदर्शयति-**यथा-'दृष्ट्वैकासनसंस्थिते प्रियतमे०'**। 'दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरादेकस्या नयने पिधाय विहितक्रीडाऽनुबन्धच्छलः। ईषद्वक्रितकन्धरः सपुलकः प्रेमोल्लसन्मानसामन्तर्हासलसत्कपोलफलकां धूर्तोऽपरां चुम्बति ॥' **इत्यादि** उदाहरणमिति शेषः।

कुतोऽत्र वैचित्र्यमेवेत्याशङ्कयाह-**अत्र** पूर्वमुदाहृते पद्ये। **दर्शनादयो** व्यापारा इति शेषः। दर्शनोपगमपिधानाद्याः क्त्वाऽन्ताः सर्वे व्यापाराः। **क्रियास्तद्रूपा** इति शेषः। **उभयसमर्थनरूपमुभयसमर्थनं** ज्येष्ठाकनिष्ठयोश्चुम्बननयनपिधानाभ्यां प्रीणनं प्रतारणं च तदेव रूपं यस्य तत्। **कौटिल्यं** विदग्धचेष्टितापरपर्यायम्। **लोकव्यवहाररूपं** लोकस्य व्यवहार इति, स एव रूपं यस्य तत्। पश्चादुपेत्य, नयने पिधाय' इत्यादिव्यापारात्मक एव लोकप्रसिद्धो व्यवहारः। **अनुल्बणत्वम्** ॥ **'एकासनसंस्थिते** एकं च तदासनं तल्पं पर्यङ्करूपमिति यावत् तत्र संस्थिते याभ्यां कृतं शयनरूपमवस्थानं तादृशी इत्यर्थः। **पश्चान्न** तु सम्मुखतः कदाचिन्नयनयोरुन्नयनमन्तराले एव भवेदिति भयात्। **उपेत्य** समीपं गत्वा। **नयने**। **पिधाय** पिहिते विधाय। हस्तेनेति शेषः। **ईषत्** किञ्चित्। **वक्रितकन्धरो** वक्रिता वक्रीकृता कन्धरा ग्रीवाऽनेनेति। **इति च**। **उपपादकानि**। उभयसमर्थनात्मकस्य कौटिल्यस्येति शेषः। **एषां** दर्शनाद्युपपादकान्तानाम्। **योगः** उपकार्य्युपकार्यत्वाभ्यामवस्थानात्मकं सम्मेलनमिति यावत्। **च** तथा। **अनेन** योगेन तथा प्रतिसन्धानेनेति यावत्। **वाच्योपपत्तिग्रहणव्यग्रतया** वाच्यस्याभिधीयमानस्यार्थस्योपपत्तिस्तद्ग्रहणं तत्र व्यग्रता व्यापृतता व्याकुलता वा तया। **रसास्वादः**। **व्यवहितप्रायो** व्यवहितस्य प्रायस्तुल्य इति। 'प्रायश्चानशने मृत्यौ प्रायो बाहुल्यतुल्ययोः।' इति विश्वोक्तेः। **इतीति**-हेतोः। तत्तद्वाच्योपपत्तिग्रहणे मनसो व्यापृतत्वे रसास्वादस्य स्थगितत्वादिति हेतोरिति भावः। **अस्य** श्लेषस्य **अगुणता** गुणत्वाभावः। एतादृशवर्णनस्य स्वाभिमुखं मनसो व्याकर्षकत्वेन रसास्वादाभिमुख्याच्च व्यावर्त्तकत्वेन प्रत्युत दोषात्मकत्वम्। तथोक्तं तर्कवागीशैः-'व्यवहितप्रायो विलम्बेनोत्पादितः। अस्य श्लेषस्य। अगुणत्वं गुणविरोधित्वम्। दोषत्वमिति यावत्।' इति। अत एव केनापि कविना 'कवितास्वादवेलायां शब्दव्युत्पत्तिचिन्तनम्।

त्तिग्रहणव्यग्रतया रसास्वादो व्यवहितप्राय इत्यस्यागुणता। समता च प्रक्रान्तप्रकृतिप्रत्ययाविपर्यासेनार्थस्य विसंवादिताऽविच्छेदः। स च-प्रक्रमभङ्गरूपविरह एव। स्पष्टमुदाहरणम्।

**५२ न गुणत्वं समाधेश्च**

समाधिश्चायोन्यन्यच्छायायोनिरूपद्विविधार्थदृष्टिरूपः। तत्रायोनिरर्थो यथा–

'सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम्।' इति।

अन्यच्छायायोनिर्यथा–

'निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिताकाऽपि।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी ॥६६॥' इति।

अत्र नीलोत्पलनयनयोरतिप्रसिद्धं सादृश्यं विच्छित्तिविशेषेण निबद्धम्। अस्य च असाधारणशोभाऽनाधायकत्वान्न गुणत्वम्, किन्तु काव्यशरीरमात्रनिवर्त्तकत्वम्।

---

नीवीमोक्षणसमये वस्त्रमूल्यविचारवत्॥' इत्युपहसितम्। अत्र काव्यप्रकाशकाराः–'श्लेषोऽपि विचित्रतामात्रम्।' इति काव्यप्रकाशव्याख्याकारास्तु 'कवेश्चातुर्यमात्रं न गुणः, रसोपकाराभावात्, चुम्बनरूपभोगोपकारेऽपि छले एव चमत्कारातिशया'दित्याहुः।

अथ समताया गुणत्वमपवदति–**समेत्या**दिना।

च तथा। यथा श्लेषस्य गुणाभावत्वं तथेति भावः। **प्रक्रान्तप्रकृतिप्रत्ययविपर्यासेन** प्रक्रान्तस्य प्रकृतिप्रत्ययौ तयोरविपर्यासः विपरीतविन्यासाभावस्तेन तद्द्वारा। प्रकृतिः प्रत्ययोत्पत्तिनिमित्तभूतः शब्दविशेषः। प्रत्ययस्तु प्रकृतिं निमित्तीकृत्य विधीयमानः शब्दविशेषः। **अर्थस्य** वर्णनीयस्य वस्तुनः। **विसंवादिताऽविच्छेदः**। विसंवादिताया अङ्गीकृतानिर्वाहस्य विजातीयत्वप्रतिभासस्येति यावत्, विच्छेदो वियोगः। **समता**। उक्तं च वामनेन–'अवैषम्यं समता ॥३।२।५।' इति। च पुनः। **स** तादृशो विच्छेदः। **प्रक्रमभङ्गरूपविरहः** प्रक्रमस्य भङ्ग इति प्रक्रमभङ्गो भङ्गप्रक्रमत्वं तद्रूपस्य दोषस्य विरहः। **एव** न तु गुणः। तावता रसोपकारित्वासम्भवात्। **उदाहरणम्। स्पष्टम्।** प्रक्रमनिर्वाहावसर एवास्योदयात्।

अथ समाधेर्गुणत्वं निषेधति **५२ ने**त्यादिना।

**५२ च** पुनः। **समाधे**रर्थगतस्य गुणस्य। **गुणत्वम्। न**। वामनेनैव गुणत्वं स्वीक्रियते नतु तत्त्वज्ञैरपीति भावः। अथ समाधिस्वरूपं निर्दिशंस्तस्य दोषाभावमात्रत्वमाह–**समाधिरि**त्यादिना।

**समाधि**स्तदभिधेयो वामनेन कल्पितोऽर्थगुण इति भावः। **च। अयोन्यन्यच्छायायोनिरूपद्विविधार्थदृष्टिरूपः**। न योनिः कारणं यस्य सः केनाप्यन्येनानुल्लिखितपूर्व इति भावः। अन्यस्य च्छायेति, सा योनिर्यस्य सोऽन्यच्छाययोनिः अयोनिश्चान्यच्छायायोनिश्चेति तौ रूपं यस्य, सोऽसौ द्विविधार्थस्तस्य दृष्टिर्दर्शनस्तद्रूपः। उक्तं च वामनेन 'अर्थदृष्टिः समाधिः ॥ ३ । २ ।७।'००अर्थो द्विविधः 'अयोनिरन्यच्छायायोनिर्वा ॥ ३ । २ । ८ ॥'इति **तत्रा**-योन्यच्छायायोन्योर्मध्ये। **अयोनिः। अर्थः। यथा**–'**सद्य**स्तत्क्षणम्। **मुण्डितमत्तहूणचिबुकप्रस्पर्धि**। मुण्डितं यन्मत्तहूणचिबुकस्तत्प्रस्पर्धि। हूणः पाश्चात्यो यवनविशेषः। चिबुकमोष्ठाधोभागः। **नारङ्गकम्।' इति।** अत्र नारङ्गकस्य मुण्डितहूणचिबुकेन सममुपमानोपमेयभावो न केनापि परेण कविना प्रदर्शितः। **अन्यच्छाया-योनिर**र्थ इति शेषः। **यथा**–

"**का अपि**। मुग्धेति शेषः। **कुसुमलावी** कुसुमानि लावयति छिनत्तीति, स्त्री चेत्तथोक्ता। मालाकाराङ्गनेत्यर्थः। **निजनयनप्रतिबिम्बै**र्निजनयनयोः प्रतिबिम्बान्यनेकत्र प्रतिच्छायाभासास्तैः। **अम्बुनि** जले। **बहुशो** नतु एकवारं द्विवारं वा। **प्रतारिता** वञ्चिता। नीलोत्पलत्रोटनधिया प्रवृत्त्यनन्तरमपितदलाभात्। **नीलोत्पले**। अपि नतु नयनप्रतिबिम्बमात्रतया भासमाने। **करम्। अर्पयितुम्। विमृशति** विचारयति ॥६६॥'इति।

अत्र पूर्वमुदाहृतेऽस्मिन् पद्य इति। **नीलोत्पलयोः। अतिप्रसिद्धम्। सादृश्यम्। विच्छित्तिविशे-षेण**। विच्छित्तिर्वैचित्र्यम्। **निबद्धम्। च। अस्य** समाधेः। **असाधारणशोभाऽनाधायकत्वा**च्चम-

क्वचित् 'चन्द्रम्' इत्येकस्मिन् पदार्थे वक्तव्ये 'अत्रेर्नयनसमुत्थं ज्योतिः' इति वाक्यवचनम् । क्वचित् 'निदाघशीतलहिमकालोष्णसुकुमारशरीरावयवा योषित्' इति वाक्यार्थे वक्तव्ये 'वरवर्णिनी' इति पदाभिधानम् । क्वचिदेकस्य वाक्यार्थस्य किञ्चिद्विशेषनिवेशादनेकैर्वाक्यैरभिधानमित्येवंरूपो व्यासः । क्वचिद्बहुवाक्यप्रतिपाद्यस्यैकवाक्येनाभिधानमित्येवंरूपः समासश्च । इत्येवमादीनामन्यैरुक्तानां न गुणत्वमुचितम्, अपि तु वैचित्र्यमात्रावहत्वम् ।

**५३ तेन नार्थगुणाः पृथक् ॥ ४८ ॥**

तेनोक्तप्रकारेण । अर्थगुणा ओजःप्रभृतयः प्रोक्ताः ।

इति श्रीविश्वनाथकविराजकृतौ साहित्यदर्पणे गुणविवेचनो नामाष्टमः परिच्छेदः ।

---

त्कारविशेषस्याप्रयोजकत्वेन हेतुना । **गुणत्वम्** । **न** । असाधारणरूपस्यैव रसस्य शोभाऽऽधायकस्य गुणपदवाच्यत्वादिति भावः । **किन्तु** । **काव्यशरीरमात्रनिर्वर्त्तकत्वम्** । काव्यशरीरमिति चात्रार्थः । मात्रपदेन रसस्य तदात्मभूतस्य व्यवच्छेदः ।

इत्येवं वामनादिभिरङ्गीकृतान् अर्थगुणानपि निरस्य सिंहावलोकनन्यायेन पञ्चमप्रभेदस्यैव पूर्वमपुष्टार्थत्वनिराकरणात्मकतामभिहितामवलोक्य तस्यौजसः पुनश्चतुर्णां भेदानां कादाचित्कीं गुणत्वशङ्कामवेत्य च तेषामपि गुणत्वं निराकर्त्तुं प्रवृत्त आह—**क्वचिदित्यादि** ।

**क्वचित्** 'चन्द्रं विलोकये'त्यत्र । **'चन्द्रम्' इतीत्येवम्** । **एकस्मिन्** । **पदार्थे** । **वक्तव्ये** । सतीति शेषः । 'अत्रेः स्वनाम्नैव प्रसिद्धस्य मुनेः । **नयनसमुत्थम्** । **ज्योतिः**स्तदात्मकं चन्द्रं पश्येति शेषः ।' **इति वाक्यवचनम्** । वचनमुक्तिः । तथा—**क्वचित्** 'सद्यो निदाघपरितापविघातभूमिः शैत्यं निवर्त्तयितुमभ्युदिता च नित्यम् । श्यामा शिरीषमृदुलावयवा मनोज्ञा किं मां कदाऽपि सुभगं न विधास्यतीयम् ॥' इत्यत्र । '**निदाघशीतलहिमकालोष्णसुकुमारशरीरावयवा** । निदाघे शीतलाः । हिमकाले उष्णाः । **योषित्** ।' **इति** । **वाक्यार्थे** न तु पदार्थे । **वक्तव्ये** । सतीति शेषः । **'वरवर्णिनी' इति** । **पदाभिधानम्** । 'शीतकाले भवेदुष्णा ग्रीष्मकाले च शीतला । सुकुमारशरीरा च सा ज्ञेया वरवर्णिनी ॥' इत्यभिहितत्वात् । तथा— **क्वचित्**—'दैवाधीनं जगत्सर्वं'मित्यत्र । **एकस्य** । **वाक्यार्थस्य** । **किञ्चित्** । **विशेषनिवेशाद्** विशेषेण भेदेन निवेशस्तस्मात् । **अनेकैः** 'अयाचितः सुखं दत्ते याचितश्च न यच्छति । सर्वस्वं चापि हरते विधिरुच्छृङ्खलो नृणाम् ॥' इत्यत्रत्यैः । **वाक्यैः** । **अभिधानम्** । **इत्येवंरूपा** इत्येवं रूपं यस्य सः । **व्यासो** विस्तरः । **च** तथा । **क्वचित्** । 'राज्यं परित्यज्य पितुर्नियोगाद् वनं प्रपद्याशु मुनीन् विलोक्य । तैरर्थितो दूषणमेप हत्वा ददौ सुराज्ये शरणागताभ्याम् ॥' इत्यत्र । **बहुवाक्यप्रतिपाद्यस्य** । रामायणसर्वस्वभूतत्वात् । **एकवाक्येन** पूर्वोक्तेन । **अभिधानम्** । **इत्येवंरूपः** । **समासः** संक्षेपः । **इत्येवमादीनाम्** । अत्रादिपदं भोजराजप्रतिपादितानामन्येषां कतिपयगुणानां संग्रहपरम् । **अन्यै**र्वामनभोजराजादिभिः । **उक्तानां** गुणत्वेन कल्पितानाम् । **गुणत्वम्** । **न उचितम्** । **अपि तु** किन्तु । **वैचित्र्यमात्रावहत्वम्** । मात्रपदं रसोपकारित्वव्यवच्छेदकम् । गुणत्वं रसोपकारित्वमात्रलभ्यम्, तच्च माधुर्यौजःप्रसादानामेव । अन्येषां तु वर्णनवैचित्र्यनिदर्शकत्वमात्रम् । इति माधुर्यौजःप्रसादा इति त्रय एव गुणाः, अन्ये तु कल्पिता न वस्तुत इति भावः ।

उपसंहरति— **५३ तेनेति** ।

**५३ तेनो**क्तप्रकारेण । **अर्थगुणा** ओजःप्रभृतयः । **पृथक्** । **न** सन्तीति शेषः ॥ ४८ ॥

तदेव विवृणोति—**तेन** । **उक्तप्रकारेण** । **अर्थगुणाः** । **ओजःप्रभृतयः** । **प्रोक्ताः** । परैरिति शेषः । न गुणा इति कारिकांशेन सम्बन्धः ।

अत्रेदमवसेयम्—'श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः ॥' इत्येवं दण्डिना 'ओजःप्रसादश्लेषसमतासमाधिमाधुर्यसौकुमार्योदारताऽर्थव्यक्तिकान्तयो बन्धगुणाः ॥ ३ । १ । ४' इति

वामनेन च शब्दार्थगता दशगुणा अभिहितास्तेषां तु यथा न गुणत्वं तथा समर्थितमेव । अथ–'संक्षिप्तत्वमुदात्तत्वं प्रसादोक्तिसमाधयः । अत्रैवान्यसमावेशात् पञ्च शब्दगुणाः स्मृताः ॥' इति पञ्च शब्दगुणाः–'भाविकत्वं सुशब्दत्वं पर्यायोक्तिसुधर्मिता । चत्वारोऽर्थगुणाः प्रोक्ताः ।' इति चत्वारश्चार्थगुणाः । केशवेन–'अन्यूनाधिकवाचकसुक्रमपुष्टार्थशब्दचारुपदम् । क्षोदक्षममक्षुण्णं सुमतिर्वाक्यं प्रयुञ्जीत ॥'इति सप्त शब्दगुणा अर्थगुणाश्च, रुद्रटेन–श्लेषः प्रसादः समता माधुर्यं सुकुमारता । अर्थव्यक्तिस्तथा कान्तिरुदारत्वमुदात्तता ॥ ओजस्तथाऽन्यदौर्जित्यं प्रेयानथ सुशब्दता । तद्वत्समाधिः सौक्ष्म्यं च गाम्भीर्यमथ विस्तरः ॥ सङ्क्षेपः सम्मितत्वं च भाविकत्वं गतिस्तथा । रीतिरुक्तिस्तथा प्रौढिः ।' इति चतुर्विंशतयः शब्दार्थगुणा भोजराजेन च निरूपिता न गुणपदवाच्यार्हा' इत्येव सूचयितुं ग्रन्थकारैः 'इत्येवमादीनामन्यैरुक्तानां न गुणत्वमि'त्यत्रादिपदं प्रयुक्तं प्रतिभाति । तत्र–स्वल्पाक्षरेण भूयोऽर्थकथनं सङ्क्षेपः स एवार्थौजसः समासरूपश्चतुर्थः प्रभेदः श्लाघ्यविशेषणत्वमुदात्तत्वं, तच्चार्थौजसः पञ्चमः प्रभेदः । झटित्यर्थप्रत्यायकत्वं प्रसादः, स च गुण एव स्वनामकृतार्थः । कौशलादर्थविशेषलाभ उक्तिः, सा च माधुर्याख्योऽर्थगुण एव । अन्यधर्माणामन्यत्रारोपणं समाधिः, स चालङ्कारविशेषः । रूपके तस्यान्तर्भावसम्भवात् । अभिप्रायपूर्वकाभिधानं भाविकत्वम्, तच्चार्थौजसः पञ्चमः प्रभेदः । दारुणेऽर्थेऽदारुणपदता सुशब्दत्वम्, तच्च समासोक्तिर्नामार्थगुणः । यत्र विशेषणद्वारा विशेष्यलाभः, सा सुधर्मिता, सा चार्थौजसः प्रथमः प्रभेदः । इति न शब्दगता न वाऽर्थगता गुणाः केशवोक्ता भवितुमर्हन्ति । अथ–अन्यूनवाचकत्वमनधिकवाचकत्वं सुक्रमशब्दत्वं चारुपदत्वं पुष्टार्थशब्दत्वं क्षोदक्षमत्वमक्षुण्णत्वं चेति रुद्रटोक्ताः सप्तगुणाः, तत्र न्यूनत्वाधिकपदत्वभग्नक्रमत्वग्राम्यत्वापुष्टार्थत्वदोषाभावरूपाः पञ्चाद्या गुणाः । अथ पञ्चमः, सोऽर्थौजसः पञ्चमः प्रकारः । षष्ठः पुनरर्थगतः समाधिः । इति रुद्रटोक्ता अपि न गुणाः । एवम्–श्लेषः-प्रसाद-समता-माधुर्य-सौकुमार्या-र्थव्यक्ति–कान्त्यु-दारत्वो-दात्तत्वौ-जः–सुशब्दत्व-समाधि-सङ्क्षेप-भाविक-स्वोक्तीनां भोजराजप्रतिपादितानां पञ्चदशानां गुणत्वाभावः प्रदर्शित एव । अथ–'गाढबन्धत्वमौर्जित्यम्, तच्च शब्दगत ओजो नामा । चाटूक्तिसहकारिप्रियतराख्यानत्वं प्रेयान् स च सौकुमार्यमोजसः पञ्चमः प्रभेदो वा । शब्दानामन्तःसञ्जल्परूपत्वं सौक्ष्म्यम् । तच्चौजसश्चतुर्थः प्रभेदः । ध्वनिमत्ता गाम्भीर्यम्, तत् कान्तिरर्थगुणः । व्यासेनाभिधानं विस्तरः, स चौजसस्तृतीय. प्रभेदः । यावदर्थपदत्वं सम्मितत्वम्, तच्चौजसः पञ्चमः प्रभेदः । आरोहावरोहयोः क्रमो गतिः, सा च शब्दसमाधिः । उपक्रमनिर्वाहो रीतिः, सा च–समता । उक्तिप्रौढपरिपाकः प्रौढिः, असौ चार्थश्लेषः । इत्यत्रशिष्टानामपि न गुणत्वम् । इति ।

अथ प्रकरणप्रदर्शनमुपसंहरन्नाह–इतीत्यादि ।

इति । **श्रीविश्वनाथकविराजकृतौ** विश्वनाथकविराजस्य कृतिर्यत्नविशेषस्तद्रूपे । **साहित्यदर्पणे** तदभिधेयेऽलङ्कारशास्त्रे । **गुणविवेचनो** गुणानां विवेचनं विवेको यत्र यस्माद्वा सः । **नाम** प्रसिद्धः । **अष्टमः । परिच्छेदः** । समाप्त इति शेषः ।

सुविदिताखिलपावनसुश्रवं मधुरतादिगुणैकविभूषणम् ।
श्रुतिमनोरमणीयतया सतां सुनयनं नयनन्दनमाश्रये ॥

इति श्री शिवनाथसूरिसूनुश्रीशिवदत्त,'कविरत्न' प्रणीतायां श्रीसाहित्यदर्पणस्य रुचिराऽभिधेयायां व्याख्यायां गुणविवेको नामाष्टमः परिच्छेदः समाप्तः । शुभम्भूयात् ।

# नवमः परिच्छेदः ।

**अथोद्देशक्रमप्राप्तमलङ्कारनिरूपणं बहुवक्तव्यत्वेनोल्लङ्घ्य रीतिमाह–**

**५४ पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत् । उपकर्त्री रसादीनाम्,**

---

समस्तैर्देवेन्द्रैर्दनुजपतिभिश्चार्चितपदं श्रुतीनां मूर्धन्यं त्रिभुवनसमुद्धारनिरतम् ।
परम्प्रेम्णा गम्यं सुकृतिजनसन्तापहरणे सदोद्युक्तं नक्तन्दिनमहमुपासेऽम्बुदरुचिम् ॥

'उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः ।' इत्युक्तनयेन गुणनिरूपणानन्तरं क्रमप्राप्तमपि अलङ्कारनिरूपणमविधाय यतो रीतिं निरूपयितुमुपक्रमते तत् कारणं निदर्शनीयं मन्वान आह–अथेत्यादि ।

**अथ** गुणनिरूपणानन्तरमिति भावः । **उद्देशक्रमप्राप्तमुद्देशस्य** 'उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः ।' इत्यत्र सूत्रे मणीनामिव गुणादीनां सन्निवेशस्य पूर्वपश्चाद्भावेन निर्देशस्येति यावत् क्रमः शैलीति, तं प्राप्तमिति तत् .तथोक्तम् । उद्देशनमुद्देशः । 'भावे ।' ३ । ३ । १८ इति घञ् । 'द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः॥' २ । १ । २४ इत्यनेन 'क्रमप्राप्तम्' इत्यत्र समासः । **अलङ्कारनिरूपणमलङ्काराणां** निरूपणमिति तत् । अलङ्काराश्च शब्दगताः पुनरुक्तवदाभासादयः, अर्थगता उपमादयः । अलङ्क्रियते शब्दोऽर्थो वाऽनेनेत्यलङ्कारः । 'अकर्त्तरि च कारके सञ्ज्ञायाम्' ॥ ३।३।१९ इति घञ् । निरूप्यते इति निरूपणम् । 'ल्युट् च ।' ३ । ३ । ११५ इति ल्युट् । 'युवोरनाकौ ।' ७।१।१। इत्यनादेशः । **बहुवक्तव्यत्वेन** बहवो वक्तव्या प्रतिपादनीया विषया इति शेषो यत्र तत्त्वेन । अनल्पप्रतिपादनीयविषयत्वेन हेतुनेति शेषः । 'हेतौ ॥' २ । ३ । २३ इति तृतीया । **उल्लङ्घ्य** परिहाय पुनः प्रतिपादयितुमुपेक्ष्येति यावत् । अत्रोपेक्षणं सूचीकटाहवत् । **रीतिम्** । **आह**–अत्रेदमभिहितं भवति–यथा प्रतिज्ञातपूर्वमपि कटाहनिर्माणं न झटिति सम्भवत्स्वरूपमिति कश्चित्समयमपहायाप्रतिज्ञातपूर्वमपि सूचीनिर्माणं झटिति साध्यमिति मन्वानस्तत्र तावदुपक्रमते तथाऽलङ्कारा अनल्पप्रतिपादनीयविषया इति तेषां निरूपणमपि नाल्पकालसाध्यमिति तदल्पकालमपहायैषन्निरूपणीयविषयां रीतिमेव प्रथमं निरूपयितुमुपक्रमते–५४ **पदसङ्घटने**त्यादिना ।

५४ **अङ्गसंस्थाविशेषवदङ्गा**नां लोचनादीनामवयवानां संस्था सन्निवेश इति तद्विशेषस्तदीयः कश्चिद्वैलक्षण्यावहः प्रकारस्तद्वत् । शरीरस्येति शेषः । यथा शरीरस्याङ्गसंस्थाविशेषस्तथेति भावः । **रसादीनां** रस आदौ येषां ( भावतदाभासादीनाम् ) तेषाम् । **उपकर्त्री** उपकारिकोत्कर्षाधायिकेति यावत् । 'ण्वुल्तृचौ ॥' ३ । १ । १३३ इति तृच् । **पदसङ्घटना** पदानां पदविशेषाणां सङ्घटना सन्निवेश इति । पदविशेषाश्च माधुर्यादिगुणव्यञ्जकवर्णादिरूपाः । सङ्घट्यन्ते सन्निविश्यन्ते पदान्यस्यामिति । 'ल्युट्च ॥' ३ । ३ । ११५ इति ल्युट् । 'अजाद्यतष्टाप् ॥ ४ । १ । ४' इति टाप् । **रीति**स्तत्पदवाच्या इति भावः । रीयते ज्ञायते गुणानां निवेशोऽनयेति । गत्यर्थकाः सर्वे ज्ञानार्थका अपीति 'रीङ्' गतावित्यस्मात् 'स्त्रियां क्तिन् ॥ ३ । ३ । ९४' इति क्तिन् । माधुर्यादिगुणनिवेशज्ञापिकेति भावः । अत्रेदमवधेयम्–यथाऽङ्गसंस्थाविशेषोऽङ्गिनं शरीरमुत्कर्षयंस्तदन्तर्यामिनं शरीरिणमप्युत्कर्षयन्ति, तथा पदवर्णसमासादिसङ्घटनाऽऽत्मिका रीतिः शब्दार्थशरीरं काव्यमुत्कर्षयन्ती तदात्मभूतं रसादिकमप्युत्कर्षयन्तीति रीतेर्व्यभिचारित्वं पदसङ्घटनाया अन्यत्रापि सत्त्वादतिव्याप्तिवारणं च । अङ्गसंस्थाविशेषवत्त्वान्नास्या रसादिधर्मत्वं, येनेयं तत्रतत्र नियतवृत्तिः स्यात्, रसादीनामुपकर्त्रीति विशेषणबलाच्च पदसङ्घटनामात्रत्वाभावान्नास्या अतिपातः । तथा च–स्वाश्रयव्यङ्ग्यरसादिवृत्तिगुणव्यञ्जकतया तेषां रसादीनामुत्कर्षाधायिका रीतिरिति, गुणाभिव्यञ्जकपदवर्णसमासादिसङ्घटना रीतिरिति वा फलितम् । यत्तु वामनेन 'रीतिरात्मा काव्यस्य' ॥ १ । २ । ६ इत्युक्तम् । तदवलोकनीयम्–तत्र, समस्तगुणा रीतिरात्मा काव्यस्य आहोस्विद् असमस्तगुणा । उत समस्तासमस्तगुणा । न तावत् समस्तगुणा 'ओजःकान्तिमती गौडीया ॥ १ । २ ।१२००० माधुर्यसौकुमार्योपन्ना पाञ्चाली' ॥ १ । २ । १३ इत्युक्तस्वरूपयोरल्पगुणयोर्गौडीपाञ्चाल्योस्तत्त्वाप्रवृत्तेः ।

**रसादीनाम्, अर्थात्–शब्दार्थशरीरस्य काव्यस्यात्मभूतानाम् ।**

**५५ सा पुनः स्याच्चतुर्विधा ॥ ४९ ॥**

**वैदर्भी वाऽपि गौडी च पाञ्चाली लाटिका तथा ।**

---

न चाल्पगुणा । समस्तगुणायाः 'समगुणा वैदर्भी ॥ १।२।११' इति निर्दिष्टस्वरूपाया वैदर्भ्यास्तत्त्वानुदयात् । नापि च समस्तासमस्तगुणा । एकस्या रीतेः समस्तासमस्तगुणत्वासम्भवात् । ननु समस्तगुणा असमस्तगुणा वा भवतु नाम रीतिः, किन्तु तथा विधैवासौ रीतिरात्मा काव्यस्येति चेत्तदपि न । 'तासां पूर्वा ग्राह्या गुणसाकल्यात् ॥ १ । २ । १४ । तासां तिसृणां रीतीनां पूर्वा वैदर्भी ग्राह्या । गुणानां साकल्यात् । न पुनरितरे, स्तोकगुणत्वात् ॥ १ । २ । १५ । इतरे गौडीयपाञ्चाल्यौ न ग्राह्ये । 'स्तोकगुणत्वात् ।' इति समग्रगुणाया एव रीतेरुपादेयत्वविधानस्य वैयर्थ्यापत्तेः । न तर्हि समस्तगुणैव रीतिरात्मा काव्यस्येत्यापाततः सिद्धम् । इत्यभिधेयम् । काव्यात्मत्वघटकपदार्थस्यैव रीतिपदवाच्यत्वेऽन्ययो रीतित्वस्यैवानुपपत्तेस्तथाऽभिधानस्य वैयर्थ्यात् । न चेदं वक्तव्यम्,समस्तगुणा वैदर्भी वाढं काव्यस्यात्माऽसमग्रगुणे न पुनर्गौडीपाञ्चाल्यौ। इति । तथा सत्यात्मपदार्थस्याभिन्नत्वनैव प्रतीतेः । तदङ्गीकारे चोपस्थितोऽस्माकमेव पन्था तिरोहितश्च मुरारेस्तृतीयः पन्था । तस्यात्मपदार्थस्य रसस्वरूपताया एवमवश्यमभ्युपेयात् । इति ।

अथ पूर्वोक्तं स्मारयन् निरुक्तकारिकागतं 'रसादीना'मिति पदं विवृणोति–**रसादीना**मित्यादिना । [ 'ननु रीतेः साक्षादेव शब्दस्योत्कर्षाभिधायकत्वं निरुक्तम्, परम्परया तु रसादीनामित्युपपन्नम्, तथाऽपि तस्याः काव्योत्कर्षाधायकत्वमनुपपन्नमित्यत आह–**रसादीना**मिति तु तर्कवागीशाः । ]

**रसादीनां** रस आदौ येषां तेषाम् । 'चन्द्रशेखर' इत्यादिवत् सप्तम्यन्तेन व्यधिकरणो बहुव्रीहिः । रसादीनामिति पदस्येति भावः । **अर्थात्** सम्भववलात् । **शब्दार्थशरीरस्य** । शब्दार्थौ शरीरं यस्येति तस्य, तथाभूतस्येत्यर्थः । **काव्यस्य । आत्मभूताना**मात्मस्वरूपाणाम् । इत्यर्थः । अत्रायं निष्कर्षः–काव्यं हि शब्दार्थशरीरं तावन्तरेण तस्यानुपलम्भात् । न च रीतिस्तस्यात्मभूतेति वक्तुं युज्यते, अस्या अपि शब्दार्थाभिन्नत्वात्, अथ कस्तस्यात्मेति चेद् रसादयः । न चात्मा नित्यः, रसादयः पुनरनेके इति न तथाभूता भवितुमर्हन्तीति,एकस्यैव नित्यत्वश्रवणात् । इति वाच्यम् । उपाधिवशाद् भेदे भासमानेऽपि तेषां स्वरूपतस्तत्र तस्यानुपलम्भात् । स्वरूपतश्च 'रस्यते आस्वाद्यते' इति निर्वचनवलाच्चमत्कारविशेषात्मैव । तस्यैवास्वादात्मकत्वस्फुरणात् । स च श‍ृङ्गारादौ निर्वेदादौ तदाभासादौ चानन्यः । पदसङ्घटना तु रीतिः। पदानि पुनर्विशिष्टानीति शब्दार्थेभ्यो नातिरिच्यन्ते । इति शब्दार्थशरीरस्य काव्यस्योत्कर्षिका रीतिः, तद्द्वारा चाङ्गसंस्थाविशेषवदात्मभूतानामपि रसादीनामुत्कर्षिकेति ।

अथ तस्याश्चतुरः प्रभेदान् स्वीकुर्वन्नाह–**५५ से**ति ।

**५५ सा** निरुक्तलक्षणा प्रसिद्धा वेति भावः । **पुनः** । रीतिरिति शेषः । **वैदर्भी** विदर्भाणां विदर्भदेशभवानां महाकवीनामिति यावद्, इयमिति तथोक्ता । 'शेषे । ४ । २ । ९२' इत्यण् । 'टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ॥' ४।१। १५ इति ङीप् । **वा** । **गौडी** गौडानां देशभवानां महाकवीनामिति यावद् इयमिति तथोक्ता । **अपि** । **च** तथा । **पाञ्चाली** पाञ्चालानां पञ्चालदेशभवानां महाकवीनामिति यावद् इयमिति तथोक्ता । **तथा** । **लाटिका** । लाटे देशविशेषे भवा इति लाटास्तेषां लाटानां महाकवीनामिति यावद् इयमिति तथोक्ता । इतीति शेषः । **चतुर्विधा** चत्वारो विधाः प्रकारा अस्या इति तथोक्ता । **स्याद्** भवेत् । उक्तं च वामनेन 'विदर्भादिषु दृष्टत्वात्तत्समाख्या ॥' १ । २ । १० इति । अत्रेयं सङ्कलना–'वैदर्भी गौडीया पाञ्चाली ॥ १ । २ । ९' इति वामनमतेन त्रिप्रकारा रीतिः, 'अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् । तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥' इति दण्डिसिद्धान्तेन द्विप्रभेदा, 'तत्तद्रसोपकारिण्यस्तत्तद्देशसमुद्भवाः । पद्येषु रीतयो गौडी वैदर्भी मागधी तथा ॥' इति केशवमतेन त्रिविधा, 'वैदर्भी चाथ पाञ्चाली गौडी चावन्तिका तथा । लाटीया मागधी चेति षोढा रीतिर्निगद्यते ॥' इति भोजराजमतेन षट्प्रकारा, 'पाञ्चाली लाटीया गौडीया वैदर्भी चे'ति रुद्रटाभिप्रायेण चतुर्विधा, 'माधुर्यव्यञ्जकैर्व-

सा रीतिः । तत्र-

५६ माधुर्यव्यञ्जकैर्वर्णै रचना ललितात्मिका ॥ ५० ॥
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते ।

---

र्णैरुपनागरिकोच्यते । ओजःप्रकाशकैस्तैस्तु परुषा, कोमला परैः ॥ केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः ॥' इति मम्मटनिर्देशेन पुनस्त्रिविधा । अत्रैवं विप्रतिपत्तौ यथाशेमुषि यथासम्भावनं वा रीतिसङ्ख्याव्यवस्था प्रतिभाति । अथापि वामनमतेन 'समग्रगुणा वैदर्भी ॥ १ । २ । ११ ॥ ···ओजः कान्तिमती गौडीया ॥ १ । २ । १२ ॥ माधुर्यसौकुमार्योपपन्ना पाञ्चाली ॥ १ । २ । १३ ॥' इति वैदर्भीगौडीयापाञ्चालीनां लक्षणानि । तत्र-'गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यताम् । विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले विश्रान्तिं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः ॥' इति स्वेनैव निवेदिते समग्रगुणाया उदाहरणे 'गाहन्ता'मिति कर्तृकारकवाचकतिङः प्रक्रमे 'क्रियता'मिति कर्मकारकवाचकोपादानात् समताप्रतिद्वन्द्विभूतस्य भग्नक्रमत्वस्य दोषस्य स्फुटमुपलब्धौ कथं गुणसाकल्यम् ? । अथ-गौडीयापाञ्चाल्योर्घटकानामोजःकान्तिमाधुर्यसौकुमार्यगुणानामसद्भावे काऽपि रीतिरङ्गीकर्तव्येति प्रतीयते । कथमन्यथा-'विशिष्टा पदरचना रीतिः ॥ ॥ १ । २ । ७ ॥ विशेषवती पदानां रचना रीतिः । कोऽसौ विशेष इत्यतआह-विशेषो गुणात्मा ॥ १ । २ । ८ ॥' इति तेनैवाभिहितं सङ्गच्छेत । तत् पुनः पर्यवसिता । चतुर्थी लाटीया । एवं दण्डिमतेन न द्वे एव रीती । 'अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम् ।' इति तेनैवाभिहितत्वाद्वैदर्भीगौडीयाऽभिधानं केवलं तयोः प्रस्फुटं भिन्नत्वावगमकम् । तथा-केशवमतेन 'गौडी समासभूयस्त्वाद्वैदर्भी च तदल्पतः । अनयोः सङ्करो यस्तु मागधी साऽतिविस्तरा ॥' इति श्रीपादनिर्दिष्टमेव गौडीवैदर्भीमागधीनां लक्षणम् । तत्र मागध्येव पाञ्चाली । समासाल्पत्वानल्पत्वान्तराले समस्तपञ्चषट्पदात्मकत्वस्य स्फुटमुपलब्धेः । यात्पुनर्लाटीया साप्येतन्मते न मागध्याऽतिरिच्यते । 'मागधी साऽतिविस्तरा' इति श्रीपादेन, मागध्युदाहरणप्रदर्शनान्तरं च 'इयं बहुधा । विस्तृतमन्यत्रे'ति स्वेन चाभिहितत्वात् । भोजराजमतेन 'आवन्तिका मागधी चेति रीतिद्वयमधिकम् । तत्र-'अन्तराले तु पाञ्चालीवैदर्भ्योर्याऽवतिष्ठते । साऽऽवन्तिका समस्तैः स्याद्द्वित्रैस्त्रिचतुरैः पदैः ॥' इत्युक्ताऽऽवन्तिका न लाट्या पृथक्, एवम्-'पूर्वरीतेरनिर्वाहे खण्डरीतिस्तु मागधी ॥' इत्युक्तलक्षणा तु मागधी रीतिद्वयरूपेति तन्मतस्वारस्यात्तत्रतत्र काममन्तर्भाव्या । वस्तुतस्तु क्वचिदसौ प्रक्रमभङ्गरूपः स्वरूपसन् दोष एव, यदप्येवं मम्मटमतेन न स्वरूपतो निर्दिष्टा चतुर्थी रीतिः । तथाऽपि 'शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रतः॥...लाटजनवल्लभत्वाच्च लाटानुप्रासः ।' इत्युक्तदिशा लाटानुप्रासानुबन्धिनी लाटी रीतिरिति स्फुटम् । इति ॥ ४९ ॥

अथ सन्देहापनोदनाय कारिकास्थं 'से' ति परं व्याचष्टे-**सा** 'से' ति पदवाच्या । **रीतिः** । इति ।

नतु किंकिंस्वरूपास्तत्तत्प्रभेदा इत्याह-**तत्र** तेषु चतुर्षु रीतेः प्रभेदेषु । ५६ **माधुर्यव्यञ्जकैः**माधुर्यस्य व्यञ्जकास्तैः । **वर्णैः** 'मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान् विना । रणौ लघू चे' ति निर्दिष्टैरक्षरैः । अत्र-'कर्तृकरणयोस्तृतीया ॥ २ । ३ । १८ ॥' इति करणे तृतीया । तथा च-माधुर्यव्यञ्जकवर्णद्वारेति निष्कृष्टोऽर्थः । यद्वा-'धान्येन धनवा'नितिवदभेदे तृतीया । तथा च-तत्तदभिन्नेति भावः । **ललितात्मिका** ललित आत्मा स्वरूपमस्या इति । ललितत्वं च सुकुमारबन्धचारुत्वम् । **रचना** । तथा-**अवृत्तिर्न** वृत्तिः समास इति, न वृत्तिर्यत्रेति वा सा । 'नञ्' ॥ २ । २ । ६ ॥ इति नञ् समासः । 'नलोपो नञः ॥' ६ । ३ । ७३ इति नलोपः । इति । **वा** । **अल्पवृत्तिरल्पा** वृत्तिः समास इति, न वृत्तिर्यत्रेति वा, सा । **वैदर्भी** तदाख्या **रीतिः** । **इष्यते** । कविभिरिति शेषः । रसगङ्गाधरकारास्तु-'एभिर्विशेषवचनैः सामान्यैरपि च दूषणै रहिता । माधुर्यभारभङ्गुरसुन्दरपदवर्णविन्यासा ॥ व्युत्पत्तिमुद्गिरन्ती निर्मातुर्या प्रसादयुता । तां विबुधा वैदर्भीं वदन्ति वृत्तिं गृहीतपरिपाकाम् ॥' इत्याहुः । अत्रायं निष्कृष्टोऽर्थः-माधुर्यव्यञ्जको गुम्फो वैदर्भी । तथा हि-यावद्भिर्वर्णैर्माधुर्यमभिव्यज्यते ते एव तावन्तो वर्णा वैदर्भीपदवाच्याः । तथा-समासाभावः समासाल्पत्वं वा

यथा–'अनङ्गमङ्गलभुवः' इत्यादौ।

[ रुद्रटस्त्वाह– ] "असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी।

वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा सुविधेया॥" इति।

अत्र दश गुणास्तन्मतोक्ताः श्लेषादयः।

---

तद्वती वा माधुर्यव्यञ्जिका रचना वैदर्भी रीतिरिति। यत्तु काव्यप्रकाशकारैः–'माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते॥' इत्युक्तम्। तत्रोपनागरिकेति वैदर्भ्या एवापरः पर्यायः। 'केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः।' इत्यप्रतनेन सन्दर्भेण स्वारस्यस्य तथाऽभ्युदयात्। नन्वेवं समासदैर्घ्येऽपि वैदर्भी स्यात्? इति चेन्न। उपलक्षणया समासदैर्घ्याभावस्यापि तत्र विवक्षितत्वात्। अन्यथा– 'चञ्चत्काञ्चनकाञ्चयोलयचलच्चोलाञ्चलैर्वञ्चिताञ्चारीसञ्चरणैकचारुचरणास्सिञ्चन्ति चित्तं मम। लीलाचञ्चुरचञ्चरीकरुचिभिश्चूलालकैश्चर्चिताः किञ्चिच्चन्दनचन्द्रचम्पकरुचां चौर्यो मृगीलोचनाः॥' इति। 'अनङ्गरङ्गाङ्गणसङ्गिनाऽङ्गीकृताङ्गसन्मङ्गलतुङ्गभङ्गी। अभङ्गुरं सङ्गरमिङ्गितानां भङ्गेन साङ्गेषु तरङ्गयन्ती॥' इत्यत्र च सम्भवेद्वैदर्भी॥ ५०॥

उदाहरति–यथा–'अनङ्गमङ्गलभुवः।' इत्यादौ 'अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः। जनयन्ति मुहुर्यूनामन्तःसन्तापसन्ततिम्॥' इत्यादौ पद्ये गद्ये वेति भावः। व्याख्यातपूर्वमिदं पद्यम्।

इतः परं प्रक्षिप्तो रुद्रटमतप्रस्तावः प्रतिभाति। तद्ग्रन्थे गन्धस्यापि तथाऽनुपलब्धेः। तथाऽपि सर्वत्र स पाठो लभ्यते इति यथातथं समाधीयते व्याख्यायते च [ रुद्रटस्त्वाह– ] इत्यादिना।

[**रुद्रटः** काव्यालङ्कारकर्त्ता कविविशेषः। **तु**। '**असमस्ता** न समस्तं समासयुक्तं पदं यत्रे'ति सा। **एकसमस्ता** एकमसहायं मृदुलमिति यावत्, समस्तं समायुक्तं पदं यत्रेति सा। समासाभावस्यैकान्तमसम्भवे मृदुलः समासोऽपि युक्त इति भावः। 'एकं सङ्ख्यान्तरे श्रेष्ठे केवलेतरयोस्त्रिषु।' इतिः मेदिनी। **च** तथा। **दशभिः**। **गुणैः** श्लेषादिभिः शब्दनिष्ठत्वेनाभिमतैः। **युक्ता** सम्पन्ना। **वर्गद्वितीयबहुला** वर्गेषु वर्णानां मध्ये इति यावद् द्वितीयो द्वितीयवर्गश्चवर्ग इति यावत् तेन बहुलेति, नतु वर्णानां वर्गेषु मध्ये इति यावद् द्वितीयो द्वितीयवर्गस्तेन बहुलेति। 'न निर्धारणे॥ २।२।१०॥' इति निषेधात्। **च** तथा। **स्वल्पप्राणाक्षरा** स्वल्पः प्राण उच्चारणप्रयासो यत्रेति तानि स्वल्पप्राणान्यक्षराणि वर्णा यत्र सेति। स्वल्पप्राणत्वं च 'अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः॥' इति निर्दिष्टानामेव बोध्यम्। **सुविधेया** सुष्ठु विधेयं विधातुमुचितं कवित्वमिति यावद् यत्र सा। अत एव पण्डितराजैः–'व्युत्पत्तिमुद्गिरन्ती निर्मातुर्या प्रसादयुता॥' इत्युक्तम्। **वैदर्भी**। रीतिरिति शेषः। यद्वा–'वैदर्भी। **सुविधेया** सम्यक् समाहितेन चेतसेति भावः विधेया।' **इति**। वैदर्भीलक्षणमिति शेषः। **आह** निर्दिशतीति भावः। **अत्र** निरुक्तस्थले। **दश**। **गुणाः**। **तन्मतोक्ता** येन 'युक्ता दशभिर्गुणैश्च।' इत्युक्तम्, तस्य मते उक्ताः। **श्लेषादयः**। 'श्लेषः प्रसादः समता माधुर्यं सुकुमारता। अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः॥' इत्युक्ता इति यावत्। तन्मते च–'यावन्निरञ्जनमजं पुरुषं जरन्तं सञ्चिन्तयामि सकले जगति स्फुरन्तम्। तावद्बलात्स्फुरति हन्त हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः॥' इत्याद्युदाहरणमवसेयम्। अत्र हि चवर्गयंजकारस्यैव प्रायेण स्वान्त्येन सम्बन्धः। 'अनङ्गमङ्गलभुवः।' इत्याद्युदाहरणानि तु 'स्वल्पप्राणाक्षरा' इत्युक्तनयेन सम्भवन्ति। इति दिक्। रुद्रटग्रन्थस्तु 'आख्यातान्युपसर्गैः संसृज्यन्ते कदाचिदर्थाय। वृत्तेरसमासा या वैदर्भी रीतिरेकैव॥...अन्यूनाधिकवाचकसुक्रमपुष्टार्थशब्दचारुपदम्। क्षोदक्षममक्षुण्णं सुमतिर्वाक्यं प्रयुञ्जीत॥' इति। अथ पूर्वापरपर्यालोचनया 'रुद्रटस्त्वाहः...' इत्यादि ग्रन्थो विलक्षण एव प्रतिभासते। अन्यूनत्वादीनामेव गुणत्वेन तत्राभिमतत्वात्तथाविधस्यास्य च सर्वथा विरुद्धत्वात्। नाप्यन्यस्तदीयो ग्रन्थः। यत्रत्योऽयं स्यात्। एवं च काव्यालङ्कारप्रारम्भे 'साहित्यदर्पणस्य नवमपरिच्छेदे रुद्रटमतमुपन्यस्तमस्ति...अन्यो ग्रन्थस्तु रुद्रटकृतो न प्राप्यते।' इति लिखन्तः, ग्रन्थस्य च तस्य शोधने प्रवृत्ताः पण्डितपादा नमस्कार्या एवेति। अस्मन्मते च पुरुषोत्तमस्यायं ग्रन्थः। ]

**५७ ओजः प्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः ॥ ५१ ॥**

**समासबहुला गौडी ।**

**यथा-'चञ्चद्भुज...'इत्यादि ॥**

**पुरुषोत्तमस्त्वाह-**

**'बहुतरसमासयुक्ता सुमहाप्राणाऽक्षरा च गौडीया ।**
**रीतिरनुप्रासमहिमपरतन्त्रा स्तोकवाक्या च ॥' इति ।**

**५८ वर्णैः शेषैः पुनर्द्वयोः । समस्तपञ्चषपदो बन्धः पाञ्चालिका मता ५२ ॥**

**द्वयोर्वैदर्भीगौड्योः । यथा-**

**'मधुरया मधुबोधितमाधवी- मधुसमृद्धिसमेधितमेधया ।**

---

वैदर्भीस्वरूपं निर्दिश्य क्रमप्राप्तं गौडीयास्वरूपं निर्वक्तुमुपक्रमते-५७ **ओजःप्रकाशकै**रित्यादिना ।

**५७ पुनः । ओजःप्रकाशकै**रोजसः प्रकाशका व्यञ्जका इति तैस्तथोक्तैः । 'वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ । उपर्यधोद्वयोर्वा सरेफौ टठडढैः सह। शकारश्च षकारश्च' इत्युक्तैः । **वर्णैः** । अत्र करणेऽभेदे वा तृतीया । **आडम्बर** उद्भटः । **बन्धः** । तत्स्वरूपेति यावत् । **समासबहुला** समासा भावेन समासमार्देवेन च शून्येति यावत् । **गौडी** तदाख्या रीतिरिति भावः ॥ ५१ ॥

उदाहरति-**यथा-'चञ्चद्भुज...'इत्यादि** । व्याख्यातपूर्वमिदं पद्यम् । यथा वा-'दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यतष्टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः । द्राक् पर्यस्तकपालसम्पुटमिलद्ब्रह्माण्डभाण्डोदर-भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥' इति ।

अत्र मतान्तरमुपन्यस्यति-**पुरुषोत्तम** इत्यादिना ।

**पुरुषोत्तमः** । तदभिधेय आलङ्कारिकः कश्चित् । **तु** । '**बहुतरसमासयुक्ता** बहुतरोऽसौ समासस्तेन युक्ता, दीर्घसमासघटितबन्धेति भावः । **च** । **सुमहाप्राणाक्षरा** सुमहाप्राणानि अक्षराण्यत्रेति सा। सुमहान् प्राणोऽत्रेति तानि। तत्त्वं च स्वल्पप्राणव्यतिरिक्तानां वर्ग्यद्वितीयचतुर्थवर्णानां शषसहानां च सत्त्वम् । **अनुप्रासमहिमपरतन्त्रा**ऽनुप्रासस्य वक्ष्यमाणस्य शब्दालङ्कारविशेषस्य महिमा महत्त्वमाधिक्यमिति यावत्तत्परतन्त्रा तदधीना। **च**। **स्तोकवाक्या** स्तोकानि परिमितानि समासबहुलत्वाद् वाक्यानि यत्र सा । 'स्तोकस्त्रिष्वल्पे चातके पुमान् ।' इति मेदिनी। 'स्तोभवाक्ये'ति पाठस्तु न युक्तः। **गौडीया** तदाख्या । **रीतिः**।' **इति** । **आह** । एतन्मते 'निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्ड-सत्त्वस्वनाः स्वेच्छासुप्तगभीरभोगभुजगश्वासप्रदीप्ताग्नयः । सीमानः प्रदरोदरेषु विरलस्वल्पाम्भसो यास्वयं तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ॥' इत्यादीन्युदाहरणानि ।

अथ पाञ्चालीमाह-५८ **वर्णै**रित्यादिना ।

**५८ द्वयोर्वैदर्भ्यां गौड्याश्च** । **शेषै**र्भिन्नैः । प्रसादमात्रव्यञ्जकैरिति यावत् । **वर्णैः** । अत्र करणेऽभेदे वा तृतीया । **समस्तपञ्चषपदः** समस्तानि समासवन्ति पञ्चषाणि पञ्च षड्वा पदानि यत्र सः । **बन्धो** गुम्फः । **पाञ्चालिका** तदाख्या रीतिः । **मता** ॥ ५२ ॥

कारिकास्थं '**द्वयो**' रितिपदं व्याचष्टे-**द्वयो**रित्यस्येति शेषः । **वैदर्भीगौड्योर्वैदर्भी** च गौडी चेति तयोः इत्यर्थ इति शेषः ।

उदाहरति-**यथे**त्यादिना ।

**यथा-'मधुरया** प्रियया । 'मनोरमये'ति तर्कवागीशाः । 'मधुरस्तु रसे विषे । मधुरं रसवत्स्वादु प्रियेषु मधुरोऽन्यवत् ॥' इति विश्वः । **मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया** मधुना वसन्तेन बोधिता बोधं नीता

मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे ॥ ६७ ॥

भोजस्त्वाह-

'समस्तपञ्चषपदामोजःकान्त्यविवर्जिताम्। मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः॥' इति।

**५९ लाटी तु रीतिर्वैदर्भी-पाञ्चाल्योरन्तरे स्थिता।**

---

प्रकाशितेति यावद्, इति या माधवी वासन्ती ( वेला ) लता तस्या मधुसमृद्ध्या मकरन्दास्वादातिशयेन समेधिता वृद्धिं प्रापिता मेधा धारणावती बुद्धिर्यस्यास्तया। धारणा च बुद्धेः स्वरमाधुर्यानुबन्धिनीति बोध्यम्। मेधते सङ्गच्छते स्वरमाधुर्यमस्यामिति मेधा। 'मेधृ' सङ्गमे ॥ 'गुरोश्च हलः ॥' ३।३।१०३ इति स्त्रियामकारः। 'मेधा मधुरस्वरवैलक्षण्य'मिति विवृतिकाराः। **उन्मदध्वनिभृता** उद्गतो मदोऽस्येति उन्मद उन्मादयुक्तः, असौ ध्वनिरिति तं बिभर्तीति तया। 'अन्येभ्योऽपि दृश्यते ॥' ३।२।१०८ ॥ इति क्विप्। **मधुकराङ्गनया** मधुकरस्य भ्रमरस्याङ्गना स्त्रीति तया। भ्रमर्येत्यर्थः। **मुहुः** पुनःपुनः। **निभृताक्षरं** निभृतं गुप्तमव्यक्तमिति यावद्, अक्षरमत्रेति ( निभृताक्षरं ) यथा भवेत्तथा। **उज्जगे** उत्कृष्टं गानं चक्रे। पद्यमिदं शिशुपालवधस्थम्। अत्र च द्रुतविलम्बितं वृत्तम्, उक्तं च तल्लक्षणं प्राक् अत्र हि क्वचित्समासाभावः क्वचित्पुनः समासदैर्घ्यम्, क्वचिन्माधुर्यव्यञ्जकवर्णसद्भावः, क्वचित्पुनर्नापीति दिक् ॥ ६७ ॥'

अत्र भोजराजमतमाह -**भोजः** स्वनामकृतार्थः सरस्वतीकण्ठाभरणनिर्माता महाराजः। **तु**।'**कवयो** रीतिस्वरूपाभिज्ञाः। **समस्तपञ्चषपदां** समस्तानि समासवन्ति पञ्चषाणि पञ्च वा षड्वा पदानि अत्रेति ताम्। **ओजःकान्त्यविवर्जिताम्**। 'ओजः समासभूयस्त्व'मित्योजः, 'यदुज्ज्वलत्वं बन्धस्य काव्ये सा कान्तिरुच्यते ॥' इति निरुक्तस्वरूपा च कान्तिः ताभ्यामविवर्जिता न नितान्तं शून्येति ताम्। ओजःकान्तिभ्यां किञ्चिच्छून्यां किञ्चिच्च युक्ताम्। अनतिरिक्तौजःकान्तिगुणामिति भावः। अत्र सरस्वतीकण्ठाभरणव्याख्यातारः 'ओजःकान्तिविवर्जिता'मिति पाठमङ्गीकृत्य 'ओजःकान्त्योर्विशेषेण ( आधिक्येन ) वर्जिताम्। न्यग्भूतौजःकान्तिगुणामिति यावत्। यतः—तत्प्रतिद्वन्द्विनोर्माधुर्यसौकुमार्ययोस्तत्रोद्भवः। तदेतदाह—मधुरां सुकुमारां चेति।' इत्याहुः। अत्र समासव्यवस्था चिन्त्या। 'कुगतिप्रादयः॥' २।२।१८॥ इत्यनेन विनाक्रान्तस्य वर्जतेर्धातोर्नित्यं समस्यमानत्वात् 'कर्तृकरणे कृता बहुलम्॥' २।१।३२ इति तृतीयातत्पुरुषस्यैव सम्भवाच्च। यत्तु तर्कवागीशाः—'ओजः कान्तिसमन्विताभि' त्यङ्गीकृत्य पाठम् 'ओजः कान्तिमाधुर्यसौकुमार्यगुणयुक्ताभि' त्यर्थः।' इत्याहुः। तदवहेयम्। समासभूयस्त्वेऽभ्युपेतव्ये 'समस्तपञ्चषपदा'मित्यस्यानर्थक्यात् समस्तपञ्चषपदत्वमात्रेऽभ्युपेतव्ये च 'ओज' इति पुनरुक्तेरानर्थक्यात्। **मधुरां** माधुर्यव्यञ्जकत्वाभावविधुराम्। यद्वा—माधुर्यगुणयुक्ताम्। माधुर्यं च 'या पृथक्पदता वाक्ये तन्माधुर्यमिति स्मृतम्।' इत्युक्तस्वरूपमेव। एवं च पञ्चषपदानामेव समस्तत्वेन नौजोऽतिशायि, ओजसश्चानतिशायित्वेनैव पुनर्माधुर्यस्यापि सम्भव इति स्थितम्। **च**। **सुकुमारां** कोमलवर्णयुक्ताम्। संयुक्तवर्णभूयस्त्वविधुरामित्यर्थः। सौकुमार्यगुणयुक्तामिति भावः। सौकुमार्यं च 'अनिष्ठुरत्वं यत् प्राहुः सौकुमार्यं तदुच्यते ॥ इत्युक्तस्वरूपम्। 'वयसि प्रथमे॥ ४।१।२०' इति ङीपो वयोविशेषवाचिनोऽदन्तादेव विधीयमानत्वान्नात्र प्रसक्तिः। **पाञ्चालीम्**। तदाख्यां रीतिमित्यर्थः। **विदुः॥' इति। आह**। अत्रोदाहरणं तु—"तत्राभिघातदलिताङ्गदजर्जराणां गण्डस्थलीलुलितकुण्डलताडितानाम्। क्षोभस्फुटन्मुकुटकोटिविघट्टितानां नादोभवज्झणझणामुखरो मणीनाम्॥"इति निवेश्य सेयमोजःकान्त्यभावाद् आश्लिष्टश्लथभावापुराणच्छाया माधुर्यसौकुमार्यवती समस्तपञ्चषपदा पाञ्चाली रीतिः।' इत्युक्तं महाराजैः 'ओजःकान्त्यभावादिति। ईषदर्थे नञ्।' इति तु रत्नेश्वरैः। वस्तुतस्तु नेदं विविक्तमुदाहरणम्। अतः— 'दिगन्ते श्रूयन्ते मदमलिनगण्डाः करटिनः करिण्यः कारुण्यास्पदमसमशीलाः खलु मृगाः। इदानीं लोकेऽस्मिन्ननुपमशिखानां पुनरयं नखानां पाण्डित्यं प्रकटयतु कस्मिन् मृगपतिः ॥' इति 'इयमसौ तरलायतलोचना गुरुसमुन्नतपीनपयोधरा। पृथुनितम्बभरालसगामिनी प्रियतमा युवजीवितहारिणी ॥' इति वाऽप्युदाहरणमुचितम्।

अथ लाटीमाह—**लाटी**त्यादिना।

५९ **लाटी**। तदाख्या रीतिः। **तु**। **वैदर्भीपाञ्चाल्यो**र्वैदर्भी च पाञ्चाली चेति तयोः। **अन्तरे** मध्ये। 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥' इत्यमरः। **स्थिता**।

यथा—'अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम्।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन् कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥६८॥'

कश्चिदाह—

'मृदुपदसमाससुभगा युक्तैर्वर्णैर्नचातिभूयिष्ठा। उचितविशेषणपूरितवस्तुन्यासा भवेल्लाटी॥' इति।

अन्ये त्वाहुः—'गौडयाडम्बरबद्धा स्याद् वैदर्भी ललितक्रमा।
पाञ्चाली मिश्रभावेन लाटी तु मृदुभिः पदैः॥' इति।

६० क्वचित्तु वक्त्राद्यौचित्यादन्यथा रचनाऽऽदयः॥ ५३॥

---

वैदर्भीपाञ्चाल्योर्लक्षणाक्रान्ता लाटी रीतिरिति निष्कर्षः। वैदर्भी च माधुर्यानुगुणा। पाञ्चाली पुनः किञ्चित्तद्विजातीयाऽपीत्यावेदितचरम्।

उदाहरति—यथा—'अय'मित्यादौ।

'**पद्मिनीनां** कमलवनानां कमलिनीनां वा। 'पद्मिनी पद्मसङ्घाते स्त्रीविशेषे सरोऽम्बुजे॥' इति मेदिनीकारः। **मुद्राभञ्जनः**। मुद्रा सङ्कोचस्तस्या भञ्जनो भञ्जक इत्यर्थः। 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ ३।१।१३४॥' इति ल्युः। 'युवोरनाकौ॥ ७।१।१॥' इत्यनः। **उदयगिरिवनालीबालमन्दारपुष्पम्** उदयगिरिरुदयाचलस्तस्य वनाली वनानामाली पङ्क्तिस्तस्या बालमन्दारपुष्पं तद्रूप इति यावत्। बालं नवविकसितं यन्मन्दारपुष्पं मन्दारस्य सुरद्रुमविशेषस्य पुष्पम्। 'पञ्चैते देवतरवो मन्दारः पारिजातकः। सन्तानः कल्पवृक्षश्च पुंसि वा हरिचन्दनम्॥' इत्यमरः। **विरहविधुरकोकद्वन्द्वबन्धुः** विरहेण परस्परं विश्लेषेण विधुरं विकलं यत् कोकद्वन्द्वं तद्बन्धुः। 'वैकल्येऽपि च विश्लेषे विधुरं विकलं त्रिषु।' इति त्रिकाण्डशेषः। कोका च कोकश्चेति कोकौ तयोर्द्वन्द्वम्। कोकश्च चक्राङ्गः पक्षिविशेषः। 'कोकश्चक्रवाको रथाङ्गाह्वयनामकः।' इत्यमरः। 'द्वन्द्वं कलहयुग्मयोः।' इत्यमरः। 'पुमान् स्त्रिया॥१।२।६७॥' इति कोकस्यैव विशेषः। नक्तं हि तयोर्वियोगस्तन्निवृत्तिश्च दिवेति दिवाकरस्य तद्बन्धुत्वम्। **कुपितकपिकपोलक्रोडताम्रः** कुपितोऽसौ कपिस्तत्कपोलक्रोडं कपोलमध्यभागस्तद्वत्ताम्रः। कपिगण्डस्थलं हि स्वभावाद्रक्तं तत्पुनर्मध्यं तत्पुनः कोपे। 'क्रोडः कोले (सूकरे) शनौ क्रोडमङ्के' इति हैमः। **अयम्**। **तमांसि**। **विभिन्दन्**। पर्वतान् पचिरिवेति शेषः। **उदयत्युदयते**। 'अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यम्' अत्र मालिनीछन्दः। लक्षणं प्रोक्तं प्राक्। इति। अत्र मसृणानां क्षुद्रसमासघटितानां च पदानां सत्त्वाद्वैदर्भीसंवलिता पाञ्चालीति लाटी। अत एव नात्र प्रक्रमभङ्गः॥ ६८॥'

अत्र मतान्तरमवतारयति—कश्चिदित्यादिना।

**कश्चि**दालङ्कारिक इति शेषः। '**मृदुपदसमाससुभगा** मृदुभिः पदैः समासैश्च सुभगा। मृदवोऽमी पदसमासाः। पदानि च समासाश्चेति। **च**। **युक्तैः** संयुक्तैः। **वर्णैः**। **न**। **अतिभूयिष्ठा**। **उचितविशेषणपूरितवस्तुन्यासो**चितविशेषणैः पूरितः सम्पन्नोऽसौ वस्तुन्यासो यत्र सा। वस्तुनो वर्णनीयस्य न्यासः। **लाटी** तदाख्या रीतिः। **भवेत्**॥' **इति**। आह। एवं चोदाहृतस्थले विशेषणौचित्येनैव सूर्यवर्णनमभिव्यक्तमिति तत्रापि लाटीति स्थितम्।

अथ चतसृणामपि रीतीनां झटिति स्वरूपावगमायाभिमताद्यमुपन्यस्यति—अन्ये इत्यादिना।

**अन्ये**। आलङ्कारिका इति शेषः। **तु**। '**आडम्बरबद्धा** साडम्बरा। **गौडी**। **स्यात्**। **ललितक्रमा**। **वैदर्भी**। स्यादिति पूर्वेणान्वयः। एवं परत्रापि। **मिश्रभावेन**। मिश्रः सम्मेलनं, स च गौडीवैदर्भ्योरेव तयोश्च भावः सद्भावः। तथा च—गौडीवैदर्भ्युभयरूपेति निष्कर्षः। **पाञ्चाली**। **स्यात्**। **लाटी**। **तु**। **मृदुभिः**। **पदैः**। सङ्घटितेति शेषः। **स्यात्**॥' **इति**। **आहुः**। अत्रार्याछन्दः। लक्षणं च प्रागुक्तम्।

अथ—क्वचित् प्रकृतरीतिविपरीता अपि वक्तृवाच्यप्रबन्धवशाद्रचनादयो भवन्तीत्याह—६० क्वचित्त्वित्यादिना।

**६० क्वचित्** कस्मिंश्चित् स्थले। **तु**। **वक्त्राद्यौचित्याद्**वक्त्रादीनामौचित्यं तस्मात्तद्वशादिति यावत्। 'विभाषा गुणेऽस्त्रियाम्। २।३।२५।' इति पञ्चमी। **अन्यथा** प्रातिकूल्येन। **रचनादयः**। रचना समासवर्णा इति भावः। सम्भवन्तीति शेषः॥ ५३॥

'वक्त्रादी'त्यादिशब्दाद्वाच्यप्रबन्धौ। 'रचनादी'त्यादिशब्दाद् वृत्तिवर्णौ। तत्र वक्त्राद्यौचित्याद्यथा–

'मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटाऽन्योऽन्यसङ्घट्टचण्डः।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम्॥ ६९॥'

इत्यत्र वाच्यस्य क्रोधादिव्यञ्जकत्वाभावेऽपि भीमसेनस्य वक्तृत्वेनोद्धता रचनाऽऽदयः'

---

अथादिपदार्थं विवृणोति–'वक्त्रादी'त्यादिशब्दात्। वाच्यप्रबन्धौ। ग्राह्यौ इति शेषः। 'रचना'दी। त्यादिशब्दात्। वृत्तिवर्णौ। वृत्तिः समासः। वर्णश्चाकारादिः। ग्राह्याविति शेषः। एवं च क्वचिद्वक्तुर्वाच्यस्य प्रबन्धस्य वौचित्यवशाद्रचना समासव्यवस्था वर्णाश्च तत्तद्रसादिप्रतिकूला अपि भवन्तीति स्थितम्। इति।

तत्र। वक्त्रौचित्यात्। वक्तुरौचित्यं तस्मात्। उचितत्वं च स्वभावानुकूलत्वम्। यथा 'मन्थ–'इत्यादौ।

'मन्थायस्तार्णवाम्भःप्लुतकुहरचलन्मन्दरध्वानधीरो मन्थेन मन्थनेनायस्तमान्दोलितं यदर्णवाम्भस्तेन प्लुतमाप्लुतं कुहरं छिद्रं गुहेति यावद् यस्य, सोऽसौ चलन्मन्दरः सञ्चारशीलो मन्दरगिरिस्तद्ध्वानधीरस्तद्ध्वनिसदृशगम्भीरः। कोणाघातेषु। 'भेरीशतसहस्राणि ढक्काशतशतानि च। एकदा यत्रताड्यन्ते कोणाघातः स उच्यते॥' इति भरतपरिभाषितेषु शब्देषु सत्स्वित्यर्थः। गर्जत्प्रलयघनघटाऽन्योऽन्यसङ्घट्टचण्डो गर्जन्तः प्रलयघनाः प्रलयसामयिका मेघास्तेषां घटास्तासामन्योऽन्यं सङ्घट्टस्तद्वच्चण्डः। कृष्णाक्रोधाग्रदूतः कृष्णाया द्रौपद्या यः क्रोधस्तदग्रदूतस्तस्य प्रथममेव दूत इव सूचकः। यद्वाऽग्रः प्रधानो दूतः। 'कृष्णा स्याद् द्रौपदीनीलीकणाद्राक्षासु योषिति।' इति मेदिनी। 'अग्रं पुरस्तादुपरि परिमाणे पलस्य च। आलम्बने समूहे च प्रान्ते च स्यान्नपुंसकम्। अधिके च प्रधाने च प्रथमं चाभिधेयवत्।' इति मेदिनी। कुरुकुलनिधनोत्पातनिर्घातवातः कुरूणां कुरुवंशभवानां दुर्योधनादीनामिति यावत् कुलं वंशः समूहो वा तस्य निधनं पर्यवसानं तदर्थं उत्पातनिर्घातस्तद्वातः तत्प्रासिरूपः। यद्वा, तदर्थमुत्पातनिर्घातवातः। उत्पातोऽसौ निर्घातवात इति। 'भावे॥ ३। ३। १८॥' इति घञ्। 'हनस्तोऽचिण्णलोः॥ ७। ३। ३२॥' इति तान्तादेशः। 'हो हन्तेर्ञ्णिन्नेषु॥ ७। ३। ५४॥' इति घादेशः। स च निर्घातः 'यदाऽन्तरीक्षे बलवान् मारुतो मारुताहतः। पतत्यधः स निर्घातो जायते वायुसम्भवः॥' इत्युक्तनयात्माऽशुभसूचको ध्वनिरिति। अस्मत्सिंहनादप्रतिरसितसखः। वयं सिंहा इवेत्यस्मत्सिंहास्तेषां नादः, स एव प्रतिरसितो मेघध्वनिप्रतिद्वन्द्विभूतस्तत्सखेति। यद्वाऽस्मत्सिंहानां नादस्तत्प्रतिरसितं प्रतिध्वनिस्तत्सखः। इति। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे॥ २। १। ५६॥' इति विशेषस्य पूर्ववद्भावः। 'स्तनितं गर्जितं मेघ–निर्घोषो रसितादि च॥' इत्यमरः। 'राजाहःसखिभ्यष्टच्॥' ५। ४। ९१॥' इति टच्। 'कुगतिप्रादयः॥ २। २। १८॥' इति प्रतिना समासः। अयम्। केन निर्भीकेनेति शेषः। दुन्दुभिः। ताडितः। सशब्दः कृतः॥' इति। अत्र स्रग्धराछन्दः। लक्षणं च प्रागुक्तम्॥ ६९॥

अथ निरुक्तस्थले वक्त्रादयौचित्यं दर्शयति–इत्यत्रेत्यादिना।

इत्यत्रेत्येवमुदाहृतेऽस्मिन् पद्ये। वाच्यस्यार्थस्य प्रश्नरूपस्येति यावत्। क्रोधादिव्यञ्जकत्वाभावे। आदिपदेनोत्साहजुगुप्सयोरपि ग्रहणम्। अपि। भीमसेनस्य। वक्तृत्वेन वक्तृत्वरूपेण हेतुनेति भावः। रचनाऽऽदयः। आदिपदेन समासश्च वर्णाश्चापि ग्राह्याः। उद्धताः। सन्तीतिः शेषः। इति। अत्रायम्भावः–वेणीसंहारनाटकस्थं पद्यमिदम्। रणाङ्गणे दुन्दुभिध्वनिं श्रुत्वा तदर्थं प्रश्नावतारश्चात्र भीमस्य। नाटकात्मा चाभिनयार्थक इति तत्र न समासौद्धत्यमनुकूलम्। वाच्यस्य च प्रश्नात्मकत्वमिति न तस्यापि क्रोधादिव्यञ्जकत्वं, येन रचनादीनामौद्धत्यमनुकूलं स्यात्। अथाऽप्यत्र केवलं भीमसेनो वक्ता। स च स्वभावादुद्धतः। अतोऽस्यैवानुरूपं रचनादि। इति।

**वाच्यौचित्याद्यथोदाहृते 'मूर्धव्याधूयमान…' इत्यादौ । प्रबन्धौचित्याद्यथा नाटकादौ रौद्रेऽप्यभि-नयप्रतिकूलत्वेन न दीर्घसमासादयः । एवमाख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः । कथायां रौद्रेऽपि नात्यन्तमुद्धताः । एवमन्यदपि ज्ञेयम् ।**

**इति श्रीविश्वनाथ 'कविराज'कृतौ साहित्यदर्पणे रीतिविवेचनो नाम नवमः परिच्छेदः ।**

---

ननु वाच्यौचित्यात् क तर्हि रचनाद्युद्धतताया न प्रतिकूलत्वमित्याह–**वाच्यौचित्याद्**वाच्यस्यार्थस्यौचित्यमनु-रूपत्वं तस्मात्तद्वशादिति यावत् । **यथा** । **उदाहृते** । सप्तमे परिच्छेदे इति शेषः । **'मूर्धव्याधूयमान…'इत्यादौ** । 'मूर्धव्याधूयमानध्वनदमरधुनीलोलकल्लोलजालोद्भूताम्भःक्षोददम्भात्प्रसभमभिनभःक्षिप्तनक्षत्रजालः । ऊर्ध्वन्यस्ताङ्घ्रिदण्ड-भ्रमिभररभसोद्यन्नभस्वत्प्रवेगभ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिवं शाम्भवं ताण्डवं वः ॥' इत्यादौ पद्यविशेषे इत्यर्थः । इति ।

अत्रायम्भावः–अत्र हि ताण्डवं वाच्यम्, तदपि शम्भोः; इति तस्य स्वतो लोकसंहारकर्तृत्वादुद्भटत्वम्, येनानुगु-णत्वं रचनाद्युद्धततायाः । न चात्र वक्तुः प्रबन्धस्य वौचित्यं चिन्त्यम् । मङ्गलाभिमुखत्वाद्वक्तुः, प्रबन्धस्य च तदनुरूप-त्वान्नाटकविशेषरूपत्वाच्च । इति ।

अथ प्रबन्धमात्रस्यापि क्वचिदौचित्यं प्रधानमित्याह–**प्रबन्धौचित्यात्** प्रबन्धस्य नाटकादेरौचित्यं तस्मात् । **यथा** । **नाटकादौ** । प्रबन्धे इति शेषः । **रौद्रे** तदाख्ये रसे । प्रधाने सतीति शेषः । **अपि** । क्वचिदिति शेषः । **अभि-नयप्रतिकूलत्वेना**भिनयस्य शरीरचेष्टाऽऽदिभिर्दृश्यपदार्थज्ञापकस्य प्रतिकूलत्वं तेन । **दीर्घसमासादयः** । रौद्रानु-रूपा अपीति शेषः । **न** । निवेद्यन्ते कविभिरिति शेषः । एवं यथा निरुक्तस्थले तथेति भावः । **आख्यायिकाया-म्** । आख्यायिका च प्रसिद्धचरितगर्भितः कथानिबन्धविशेषः । **शृङ्गारे** । तत्प्रधाने काव्ये इति भावः । **अपि** क्वचिदिति शेषः । **मसृणवर्णादयो** मसृणा अपरुषा अमी वर्णादय इति । **न** । दृश्यन्ते इति शेषः । तथा–**कथायां** वृत्तान्त-वर्णनप्रकरण इति भावः । **रौद्रे** । **अपि** । स्थिते इति शेषः । **अत्यन्तम्** । **उद्धताः** । रचनादय इति शेषः । **न** । युक्ता भवन्तीति शेषः ।

उक्तं न्यायमन्यत्रापि निर्दिशति–**एवम्** । **अन्यत्** । **अपि** । **ज्ञेयम्** ।

अथ प्रकरणमुपसंहरन्नाह–इतीत्यादि ।

**इति** । **श्रीविश्वनाथकविराजकृतौ** विश्वनाथोऽसौ कविराजस्तस्य कृतौ कृतिरूप इत्यर्थः । **साहित्यदर्पणे** तदाख्येऽलङ्कारशास्त्रे । **रीतिविवेचनो** रीतीनां पदसङ्घटनविशेषरूपाणां वैदर्भीप्रभृतीनां विवेचनं यत्र सः । **नाम** प्रसिद्धः । **नवमः** । **परिच्छेदः** । समाप्त इति शेषः ॥

विविधरीतिनिदर्शनदीक्षितं सकललोकमनोहरवैभवम् । निखिलसद्गुणभव्यनिकेतनं विभवदं भवदंशहरं नुवे ॥

इति श्रीशिवनाथसूरिसूनुना श्रीशिवदत्तकविरत्नेन प्रणीतायां श्रीसाहित्यदर्पणस्य रुचिराख्यायां व्याख्यायां रीतिवि-वेचनो नाम नवमः परिच्छेदः सम्पूर्णः ॥ शुभम्भूयात् ।

# दशमः परिच्छेदः ।

अथावसरप्राप्तानलङ्कारानाह–

**६१ शब्दार्थयोरस्थिरा ये धर्माः शोभाऽतिशायिनः ।**
**रसादीनुपकुर्वन्त्यलङ्कारास्तेऽङ्गदादिवत् ॥ ५४ ॥**

---

अभूतिं सद्भूतिं प्रकृतिविधुरं साधुकृतिनं निरीहं नानेहं गुणरहितिमुल्लासिसुगुणम् ।
अनीशं सर्वेशं विसदृशमशेषैकसदृशं विरूपं रूपेज्यं किमपि कमनीयं विजयते ॥ १ ॥

अथ गुणादिनिरूपणानन्तरमलङ्कारनिरूपणं सङ्गमयति–अथेत्यादिना ।

**अथ** रीतिनिरूपणानन्तरम् । **अवसरप्राप्तान्** अवसरं निरूपणोचितः समयस्तं प्राप्ता इति तान् । **अलङ्कारान्** । **आह**–'सामान्यविशेषाभ्याम्' इति शेषः । 'तथा च–सामान्यविशेषोभयविधलक्षणैःतदनुरूपोदाहरणेन च समुद्भावयति–इति निष्कर्षः **६१ शब्दार्थयो**रित्यादिना ।

**६१ ये** । 'केचित्' इति शेषः । **अस्थिरा** न स्थिरा नियतस्थितिका इति तथोक्ताः । 'काव्येषु' इति शेषः । अत एव काव्यत्वोपकारकत्वमप्येतेषामनियतमेवेति बोध्यम् । **शब्दार्थयोः** शब्दस्यार्थस्य चेत्यर्थः । **शोभाऽतिशायिनः** । शोभामतिशाययन्ति इत्येवंशीला इति तथोक्ताः । तथा च-शब्दार्थसम्बन्धिन्या शोभायाः अतिशायका इति निष्कृष्टम् । 'सुप्यजातौ णिनिस्ताच्छील्ये ।' ३।२।७८ इति णिनिः । **धर्माः** । ननु गुणास्तेषामस्थिरत्वाभावात् । न च रीतयस्तासां शब्दार्थयोरुभयोरपि शोभाऽतिशयविधायकत्वाभावात् । **रसादीन्** शृङ्गारादितदाभासादीनित्यर्थः । **उपकुर्वन्ति** उत्कर्षयन्ति । 'अनैयत्येन' इति शेषः । तथा च–अनियतस्थितिकतया ये शब्दार्थयोः शोभामतिशाययन्तो रसादीनुपकुर्वन्तीति निष्कृष्टम् । 'उपकुर्वन्त' इति पाठे 'स्थिताः' इत्याहार्य्यम् । **ते** धर्मा इति शेषः । **अङ्गदादिवद**ङ्गदादिभिस्तुल्यम् । **अलङ्कारा** 'मताः' इति शेषः । एतेन–निरलङ्कारमपि काव्यमिति सूचितम् । अत्रायम्भावः–शब्दार्थ ( वाक्य ) शरीरं रसात्मशालि काव्यम्, तत्र शब्दार्थनिष्ठाः पुनरनुप्रासोपमाप्रभृतयः काव्यात्मभूतानां शृङ्गारादितदाभासादीनामलङ्कारा इत्यलङ्कारा इति व्यपदिश्यन्ते, अङ्गदादयो यथाऽलङ्काराश्चमत्कारविशेषरूपमात्मानमन्तरा शरीरेऽवस्थापिता अपि विडम्बयन्ति, न तु मनागुपकुर्वन्ति; तथा शब्दार्थयोरवस्थापिता अपि रसमन्तरेण तेऽप्यनुप्रासोपमादयः, इति तेषामिवैतेषां तदानीं गौणत्वमव्याहतमूर्त्ति, अनियतस्वाभाव्यात् । अथ यथाऽङ्गदादयः स्वनिवेशोचितयाह्लादयतिरिक्ताङ्गस्थिता नाङ्गिनोऽलङ्कृतये, तथाऽनुप्रासोपमादयोऽपि स्वनिवेशोचितरसानुगुणव्यतिरिक्तवाक्यविशेषस्थिता न काव्यस्योपकृतये, । तथा–सर्वस्याङ्गिनोऽलङ्कृतयेऽङ्गदादयोऽप्रभवन्तोऽपि यथा यस्यकस्यचित्तदङ्गस्य निर्बाधं क्षमन्तेऽलङ्कृतये तथाऽनुगुणः पुनरुक्तवदाभासोपमाऽऽदयः काव्यस्योपकृतयेऽप्रभवन्तोऽपि यस्यकस्यचित्तद्देशस्य प्रभवन्त्युपकृतयेऽवश्यम् । इति नालङ्कुर्वन्तु नामात्मानं, समस्तं वा शरीरं; किन्तु शरीरांशभूतमवयवविशेषं त्ववश्यमलङ्कुर्वन्तीति निर्विचिकित्सितं विदुषाम् । अत एवोक्तं प्रकाशकारैः–'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् । हारादिवदलङ्कारास्तेऽनुप्रासोपमाऽऽदयः ॥' इति । इदमभिहितम्, हारादयोऽलङ्कारा यथा कण्ठाद्युत्कर्षाधानमुखेन शरीरस्योत्कर्षका भवन्तः शरीरिणोऽप्युत्कर्षाय, तथाऽनुप्रासोपमाऽऽदयो वाचकवाच्योत्कर्षाधानमुखेन वाक्यस्योत्कर्षकाः सन्तो रसस्याप्युत्कर्षायेत्यमी अलङ्कारव्यपदेश्याः । एवं च–( शब्दार्थ ) शरीरशोभाऽतिशयाधानमुखेन ( रसस्य ) आत्मनः कदाचिदलङ्कारकत्वमलङ्कारत्वमिति निष्कृष्टम् । अन्ये त्वाहुः–'रसोपकारकत्वे सति रसावृत्तित्वं, रसोपकारकत्वे सति रसानियतस्थितिकत्वमलङ्कारत्वम् ।' इति ॥ ५४ ॥

यथा अङ्गदादयः शरीरशोभाऽतिशायिनः शरीरिणमुपकुर्वन्ति, तथाऽनुप्रासोपमाऽऽदयः शब्दार्थशोभाऽतिशायिनो रसादेरुपकारकाः । अलङ्कारा अस्थिरा इति नैषां गुणवदावश्यकी स्थितिः। शब्दार्थयोः प्रथमं शब्दस्य बुद्धिविषयत्वात् शब्दालङ्कारेषु वक्तव्येषु शब्दार्थालङ्कारस्यापि पुनरुक्तवदाभासस्य चिरन्तनैः शब्दालङ्कारमध्ये लक्षितत्वात् प्रथमं तमेवाह—

---

तदेव विवृणोति—यथा । अङ्गदादयः । शरीरशोभाऽतिशायिनः शरीरिणं शरीरमायतनत्वेन यस्य तं तथोक्तम् । उपकुर्वन्ति । तथा—अनुप्रासोपमाऽऽदय । शब्दार्थशोभाऽतिशायिनः । रसादेः रसः शृङ्गारादिरादौ यस्य तस्य तथोक्तस्य । उपकारका उत्कर्षयितारः । अत्रेदं तत्त्वम्—यथाऽहम्प्रत्ययस्यालम्बनं जीवः, शरीरं पुनरन्यत्, तथा काव्यत्वस्यालम्बनं रसो, वाक्यं पुनस्तदन्यत् । तत्र अङ्गदहारादयो नायिकादीनां शरीरमेव शोभाऽतिशयं नयन्ति, न पुनस्तदन्तर्यामिनं साक्षात्,अथापि गौणरूपेण नायिकाद्यालम्बनः शोभाऽतिशयः प्रत्याय्यते तैः । तथाहि—यथा स्वतःसम्पन्नसौन्दर्यमेव नायिकाऽऽदिशरीरमलङ्कुर्वन्ति यथौचित्यमवस्थापिता अङ्गदाद्या अलङ्काराः, तथा सरसस्यैव काव्यस्य वाक्यं ( शब्दमर्थं वा ) तेऽप्यनुप्रासोपमाऽऽद्याः, सौन्दर्यसद्भावे एवाङ्गदादीनामलङ्कारकत्वादिव रससत्त्वे एवानुप्रासोपमादीनामप्यलङ्कारकत्वात्। अत एव—'तमेव भान्तमनुभाति सर्वम्' इत्युक्तदिशा रसात्मनः प्रकाशानन्तरमेवेतरेषां प्रकाशकत्वमभिमन्वते मुनयः । एवं सति रसानुपदमनुप्रासादीनामलङ्कारकत्वाद्गौणत्वम् । अनुप्रासादीनां रसानुपदमलङ्कारकत्वमपि न सर्वदा साक्षात्, किन्तु क्वचिद्वाचकद्वारा क्वचिद्वाच्यद्वारा क्वचिद्वाचकस्यैव क्वचिद्वाच्यस्येति विवेकः । तत्र वाचकद्वारा यथा—'अपसारय घनसारं कुरु हारं दूर एव किं कमलैः । अलमलमालिमृणालैरिति वदति दिवानिशं बाला ॥' इत्यन्तरेफानुप्रासस्य विप्रलम्भानुपदम् । वाच्यद्वारा यथा—'मनोरागस्तीव्रं विषमिव विसर्पत्यविरतं प्रमाथी निर्धूमं ज्वलति विधुतः पावक इव । हिनस्ति प्रत्यङ्गं ज्वर इव गरीयानित इतो न मां त्रातुं तातः प्रभवति न चाम्बा न भवती ॥' इत्यत्रोपमाया विप्रलम्भानुपदम् । क्वचिद्वाचकस्य यथा—'अकुण्ठोत्कण्ठया पूर्णमाकण्ठं कलकण्ठि माम् । कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥' इत्यत्र टवर्गानुप्रासस्य । वाच्यस्य यथा—'मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति, क्रन्दत्सु भ्रमरेषु वीक्ष्य दयितासन्नं पुनः सारसम् । चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता कण्ठे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥' इत्यत्रोपमायाः । यत्तूक्तं रसशून्यस्यापि काव्यत्वम् । यथा—'स्वच्छन्दोच्छलदच्छकच्छकुहरच्छातेतराम्बुच्छटामूर्छन्मोहमहर्षिहर्षविहितस्नानाऽऽह्निकाऽह्नाय वः । भिन्द्यादुद्यदुदारदर्दुरदरीदीर्घादरिद्रद्रुमद्रोहोद्रेकमहोर्मिमेदुरमदा मन्दाकिनी मन्दताम् ॥' इत्यत्रानुप्रासात् । इति । तत्रोच्यते—नात्राप्यलङ्कारसद्भावमात्रेण । अत एवाहुः—'अत्र काव्यत्वं गङ्गाविषयकरतेरभिव्यक्तेः, अह्निपदेन भावस्याप्युक्तेश्च'इति। एवं 'शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान् दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः । घर्मांशोस्तस्य वोऽन्तर्द्विगुणघृतघृणानिघ्ननिर्विघ्नवृत्तेर्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम्॥' इत्यत्रापि सूर्यविषयकरतिभावस्याभिव्यक्तेः। इति । नहि रीतिः शब्दार्थयोः शोभाऽतिशयविधायिकेति तस्या एतेभ्यो भेदमनभिधायैव गुणेभ्य एषाम्भेदं दर्शयति—अलङ्काराः । अस्थिरा अनियतवृत्तयः । इति । 'हेतोः' इति शेषः । एषामनियतस्थितिकानामलङ्काराणामित्यर्थः । गुणवद् गुणानामिव । आवश्यकी निश्चिता । स्थितिः। न'गुणानां त्वावश्यकी स्थितिरित्येतेषां तेभ्यो भेदः'इति शेषः। यत्त्वाहुरुद्भटभट्टाः—'समवायवृत्त्या शौर्यादयः,संयोगवृत्त्या तु हारादय इत्यस्तु गुणालङ्काराणां भेदः,ओजःप्रभृतीनामनुप्रासोपमादीनां चोभयेषामपि समवायवृत्त्या स्थितिरितिगड्डरिकाप्रवाहन्यायेनैवैषां भेदः।इति।तत्रेदं तत्त्वम्—'समवायवृत्त्याऽपृथक्सिद्धिरूपेण नतु वैशेषिककल्पितेन सम्बन्धविशेषेण शौर्यादयो गुणास्तिष्ठन्ति।संयोगवृत्त्या संयुक्तत्वरूपेण सम्बन्धविशेषेण तु हारादयोऽलङ्कारास्तिष्ठन्तीति लौकिकानां गुणानामलङ्काराणां भेदोऽस्तु । ओजःप्रभृतीनां गुणानामनुप्रासोपमाऽऽदीनामलङ्काराणामलौकिकानां समवायवृत्त्या समवेतत्वरूपेण सम्बन्धेन, न त्वेकेषां समवेतत्वरूपेण, अपरेषां संयुक्तत्वरूपेण सम्बन्धविशेषेण स्थितिः । तस्मात् ( वस्तुतयाऽभिन्नत्वे सिद्धेऽपि ) गड्डरिकाप्रवाहन्यायेन गड्डरं मेषमनुधावतीति गड्डरिका मेषानुगतमेषपङ्क्तिस्तस्याः प्रवाहन्यायेन यथा काऽपि मेषी पुरो धावति, अन्या पुनस्तामनुधावति, सा चेत् कूपादौ निपतति तदाऽपरापि विचारमन्तरा निपतति, तथैवैतेषामलौकिकानां भेदः। इत्येवं केनापि कस्याप्यालङ्कारिकस्य गुणालङ्काराणां भे-

**६२ आपाततो यदर्थस्य पौनरुक्त्येन भासनम् ।**
**पुनरुक्तवदाभासः स भिन्नाकारशब्दगः ॥ ९९ ॥**

---

दाभिधानमनुमन्वानेन भ्रान्त्यैव भेदोऽभिहितः।' इति तदवहेयम्। अचलस्थितिकानां गुणानां चलस्थितिकानामलङ्काराणां च भेदस्य स्फुटत्वात्। यच्चोक्तं वामनाचार्य्यैः—'काव्यशोभायाः कर्त्तारो धर्मा गुणाः, तदतिशयहेतवस्त्वलङ्काराः।' इति। तदपि न सत्। अत्रायम्भावः—रीतिरात्मा काव्यस्य, सा च पदसङ्घटनविशेषरूपा त्रिप्रभेदा। वैदर्भी, गौडी, पाञ्चाली च। सर्वगुणाभिव्यञ्जकैर्वर्णैर्युक्ता वैदर्भी, ओजःप्रसादयोरेव गुणयोरभिव्यञ्जकैर्वर्णैर्युक्ता गौडी, माधुर्य्यप्रसादयोर्गुणयोश्चाभिव्यञ्जकैर्वर्णैर्युक्ता पाञ्चाली। तत्र रीतिधर्माणो गुणाः, शब्दार्थोभयरूपस्य काव्यस्य शोभाविधातारः, शब्दार्थाश्रयितारश्चालङ्काराः, गुणा हि शोभाऽतिशयविधायकाः। तत्र किं समस्तैरुत कतिपयैर्गुणैः काव्ये शोभोत्पत्तिः। अथ समस्तैरिति चेत् गौड्याः पाञ्चाल्याश्च समस्तगुणत्वाभावाच्छोभाया अनुत्पत्तौ काव्यत्वस्यैवाभावः येन केनापि गुणेनेति चेत्? 'शुष्को वृक्षस्तिष्ठत्यग्रे' 'अद्रावत्र प्रज्वलत्यग्निरुच्चैः प्राज्यः प्रोद्यन्नुल्लसत्येष धूमः।' इत्यादौ न कथं काव्यत्वम्। न चास्तीति वक्तुं शक्यम्, रसाभावात्। अथ—'स्वर्गप्राप्तिरनेनैव देहेन वरवर्णिनि! अस्या रदच्छदरसो न्यक्करोतितरां सुधाम्॥' इत्यत्रासत्यपि प्रसादादौ तदाधेयायाः शोभायाश्चानवतारे तस्या अतिशयविधानस्य दविष्ठत्वे न स्यातां विभावना व्यतिरेकश्च। ओमिति चेत्। 'एकगुणहानिकल्पनया शेषगुणदार्ढ्यं कल्पनाविशेषोक्तिः' 'उपमेयस्य गुणातिरेकत्वं व्यतिरेकः' इति किम्मूलम्?

अथ निरूपणीयसङ्गतिं दर्शयति—**शब्दार्थयोरि**त्यादिना।

**शब्दार्थयोः। प्रथमम्। शब्दस्य। बुद्धिविषयत्वात्** बुद्धिवृत्तिविषयभूतत्वात्। **शब्दालङ्कारेषु**। **वक्तव्येषु** 'सत्सु' इति शेषः। **शब्दार्थालङ्कारस्य** शब्दार्थोभयालङ्कारस्य। 'शब्दार्थोभयशक्तिमूलध्वनेरिव पश्चान्निरूपणीयस्येति' शेषः। **अपि। पुनरुक्तवदाभासस्य** पुनरुक्तमुक्तोक्तं तस्य तुल्यमिति, पुनरुक्तवत् आभास प्रतीतिस्तत्स्वरूप इति यावत् तस्य। यद्वा—पुनरुक्तं पुनरुक्तिः, तदस्यास्तीति पुनरुक्तवान्, तादृश आभासो यत्र तस्य तथोक्तस्य। **शब्दालङ्कारमध्ये** शब्दालङ्कारा अनुप्रासादयस्तेषां मध्यं तत्र। 'न निर्धारणे।' २।२।१० इति निषेधस्तु सम्बन्धाविषयक एवेति बोध्यम्। **चिरन्तनैः** 'आचार्य्यैः' इति शेषः। **लक्षितत्वात्** 'अलङ्कारसर्वस्वा'दिषु 'आमुखावभासनं पुनरुक्तवदाभासः' इत्यादिनेति शेषः। **प्रथमम्। तम्। एव। आह—६२ आपातत** इत्यादिना।

**६२ आपाततः** झटिति निर्धारणात्। **यदर्थस्य** यस्यार्थस्य। **पौनरुक्त्येन** पुनरुक्ततया। **भासनं** प्रतीतिः। **सः।** 'अर्थः' इति शेषः। **भिन्नाकारशब्दगो** भिन्नो विजातीय आकारो यस्येति भिन्नाकारः, सोऽसौ शब्दस्तं गच्छतीति तथोक्तः। एतेन 'यस्य मित्राणि मित्राणि' 'कदली कदली' इत्यादौ एतस्यावस्थानाभावः सूचितः। **पुनरुक्तवदाभासः।** 'स्यात्' इति शेषः। अत्रायम्भावः—वस्तुतः पुनरुक्तौ पुनरुक्त्याख्यो दोषः, एकाकारतस्तूक्तौ लक्षणामूलस्य ध्वनेरवस्थानम्। एवं सति- न वस्तुतया किंतु एकाकारतया यत्र पुनरुक्तिः प्रतीयते, न त्वस्त्येव, स पुनरुक्तवदाभासः। अयं च द्विविधः, शब्दनिष्ठः शब्दार्थनिष्ठश्च। तत्रापि शब्दनिष्ठः सभङ्गशब्दनिष्ठोऽभङ्गशब्दनिष्ठश्चेति। तत्त्वं च—पर्य्यायपरिवृत्त्यसहत्वात्। आद्यो यथा—'अरिवधदेहशरीरः सहसारथिसूततुरगपादातः। भाति सदानत्यागः स्थिरतायामवनितलतिलकः॥' इति। अत्र हि—देहशरीरादीनामापाततः पुनरुक्तिः प्रतीयते। शब्दाश्चैते सभङ्गाः। द्वितीयो यथा—'चकासत्यङ्गनारामाः कौतुकानन्दहेतवः। तस्य राज्ञः सुमनसो विबुधाः पार्श्ववर्त्तिनः॥' इति। अत्र हि अङ्गनारामाशब्दयोः स्त्र्यर्थकतया कौतुकानन्दशब्दयोः सन्तोषार्थकतया सुमनोविबुधशब्दयोश्च देवार्थकतयाऽऽपाततः पौनरुक्त्यं भासते। अभङ्गाश्चैते तदभङ्गशब्दनिष्ठोऽयं पुनरुक्तवदाभासः शब्दालङ्कारः। शब्दालङ्कारत्वं चैतस्य पर्य्यायपरिवृत्त्यसहत्वात्। ननु 'अङ्गनारामाः इत्यादौ अङ्गनाऽऽदिशब्दानां महिलाऽऽदिरूपपर्य्यायपरिवृत्तिसहत्वेनास्तामुभयालङ्कारत्वम्।' इति चेन्न, 'विशेषास्त्वङ्गना भीरुः' 'यत्रानन्दाश्च मोदाश्च' 'मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा।' इत्याद्युक्त्या पर्य्यायत्वानुपपत्तेः। यत्तु व्याख्यातम्—'अङ्गने आरमन्तेऽयङ्गनारामाः।' इति तच्चिन्त्यम्, तथाशब्दस्य सभङ्गत्वापत्तेः। अथ शब्दार्थनिष्ठो यथा—'तनुवपुरजघन्योऽसौ

**उदाहरणम्-**

**"भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः। जगन्त्यपि सदापायादव्याच्चेतोहरःशिवः॥७०॥"**

**अत्र भुजङ्गकुण्डल्यादिशब्दानामापातमात्रेण सर्पाद्यर्थकतया पौनरुक्त्यप्रतिभासनम् । पर्यवसाने तु 'भुजङ्गरूपं कुण्डलं विद्यते यस्ये'त्याद्यन्यार्थत्वात्। 'पायादव्यात्' इत्यत्र क्रियागतोऽयमलङ्कारः, 'पायात्' इत्यस्य 'अपायात्' इत्यत्र पर्य्यवसानात्। 'भुजङ्गकुण्डली' ति शब्दयोः प्रथमस्यैव परिवृत्तिसहत्वम्। 'हरःशिवः' इति द्वितीयस्यैव 'शशिशुभ्रांशु' इति द्वयोरपि । 'भाति सदानत्यागः' इति न द्वयोरपि। इति शब्दपरिवृत्तिसहत्वासहत्वाभ्यामस्योभयालङ्कारत्वम्।**

---

करिकुञ्जररुधिररक्तखरनखरः । तेजोधाममहः पृथुमनसामिन्द्रो हरिर्जिष्णुः ॥ इति'। अत्र हि 'तनुवपुः' शब्दयोः शरीरार्थकतया 'करिकुञ्जर'शब्दयोर्गजार्थकतया 'रुधिररक्त' शब्दयोः शोणितार्थकतया 'तेजोधाममहः'शब्दानां तेजोऽर्थकतया 'इन्द्रहरिजिष्णु'शब्दानां च देवराजार्थकतयाऽऽपाततः पुनरुक्तिर्भासते, तत्र 'वपुःकरिरुधिरेन्द्र'शब्दाः केवलं परिवृत्तिं सहन्ते, नतु 'तनुकुञ्जररक्तधाममहोहरि' शब्दा इति शब्दार्थोभयनिष्ठोऽयम्। इति ॥ ५५ ॥

उदाहर्तुमुपक्रमते-**उदाहरणं** 'यथा' इति शेषः । '**भुजङ्गकुण्डली** भुजङ्गावेव कुण्डले इति भुजङ्गकुण्डले, ते अस्य स्त इति तथोक्तः । यद्वा-भुजङ्गाभ्यां कुण्डली कर्णाभरणवान् कङ्कणवान्वेति तथोक्तः। 'कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च ।' इति मेदिनी । **व्यक्तशशिशुभ्रांशुशीतगुर्व्य**क्तो विख्यातोऽसौ शशिशुभ्रांशुशीतगुरिति तथोक्तः। शशिनश्चन्द्रमस इव शुभ्रा अंशवो यस्य तत् शशिशुभ्रांशु,तस्येव ( कर्पूरस्येव ) शीता गावः किरणा यस्य स इति तथोक्तः । 'गौः स्वर्गे च वलीवर्दे रश्मौ च कुलिशे पुमान् ।' इति मेदिनी । **चेतोहरः । शिवः** शङ्करः । **सदा । अपायाद्** वृजिनात्। 'भीत्रार्थानां भयहेतुः।' १ । ४ । २५ इति पञ्चमी । **जगन्ति** सर्वाणि विश्वानीत्यर्थः । **अपि** न केवलं माम्। **अव्यात्**। अत्र हि 'भुजङ्गकुण्डलि' शब्दयोर्नागार्थकतया 'शशिशुभ्रांशुशीतगु' शब्दानां चन्द्रार्थतया 'हरशिव'शब्दयोः शङ्करार्थकतया 'अपायादव्यात्' इत्येतयोः शब्दयोश्च रक्षणार्थकक्रियापदतया च पुनरुक्तत्वं भासमानमपि न तथा पर्य्यवसीयतेऽवसाने इति पुनरुक्तवदाभासः। 'अपाया'दित्यन्तरा सर्वेऽभङ्गाः शब्दा एते 'कुण्डलिशीतगुहरापाय' शब्दातिरिक्तानामेव भुजङ्गादिशब्दानां पर्य्यायपरिवृत्तिसहत्वमित्यभङ्गसभङ्गशब्दार्थनिष्ठश्चायम्। इति वोध्यम्॥ ७० ॥'

तदेवाह-अत्रोदाहृते पद्ये । '**भुजङ्गकुण्डल्यादिशब्दानाम्** । आदिपदेन 'शशिशुभ्रांशुशीतगु-हरशिव' शब्दानां ग्रहणम्। **आपातमात्रेण। सर्पाद्यर्थकतया** सर्पचन्द्रशङ्करार्थकतया। **पौनरुक्त्यप्रतिभासनं** पुनरुक्ततायाः प्रतीतिः। **पर्य्यवसाने** निर्धारणावसरे। **तु** पुनः।'**भुजङ्गरूपम्। कुण्डलं** कर्णाभरणं वलयो वा। **विद्यते। यस्य** 'स' इति शेषः। '**इत्याद्यन्यार्थकत्वात 'पायात'** इत्यस्य 'शब्दस्य च' इति शेषः। '**अपायात्' इत्यत्र** 'सदा' इत्यत्राकारश्लेषोररीकरणात्' इति शेषः। **पर्य्यवसाना**दन्ततस्तात्पर्य्यावस्थानात्। **अपायादव्यात्। इत्यत्र। क्रियागतः**। अयं पुनरुक्तवदाभास इत्यर्थः। **अलङ्कारः**। '**भुजङ्गकुण्डली'तिशब्दयो** 'र्मध्ये' इति शेषः। **प्रथमस्य** भुजङ्गशब्दस्येत्यर्थः।एव नतु 'कुण्डली'ति शब्दस्य। **परिवृत्तिसहत्वम्। 'हरः शिवः इत्य**'त्रे'ति शेषः। **द्वितीयस्य** शिवशब्दस्येत्यर्थः। एव 'परिवृत्तिसहत्वम्' इति शेषः। '**शशिशुभ्रांशु' इति** 'शब्दयो'रिति शेषः । **द्वयोः। अपि** 'परिवृत्तिसहत्वम्'इति शेषः । इत्येवम्। **शब्दपरिवृत्तिसहत्वासहत्वाभ्याम्। अस्य** 'पुनरुक्तवदाभासस्ये' त्यर्थः। **उभयालङ्कारत्वं** शब्दार्थालङ्कारत्वम्। एवं शब्दार्थोभयनिष्ठोदाहरणप्रदर्शनेनैवान्यान्यपि पृथक्पृथगुदाहरणान्यवगन्तव्यानीत्यभिप्रेत्याह-'**भाति। सदानत्यागः' इति**। 'अत्रे'ति शेषः। **द्वयोः** 'देहशरीरे' त्यादिरूपयोर्द्वयोर्द्वयो' शब्दयोरिति भावः। **अपि। न**। 'परिवृत्तिसहत्वम्' इति शेषः। **इति**।'पुनरुक्तवदाभास' इति शेषः। अत्रायम्भावः-उदाहृतमिदमन्यत्र 'अरिवधदेहशरीरः सहसारथिसूततुरगपादातः । भाति सदानत्यागः स्थिरतायामवनितलतिलकः ॥'

**६३ अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत् ।**

**स्वरमात्रसादृश्यं तु वैचित्र्याभावान्न गणितम् । रसाद्यनुगतत्वेन प्रकर्षेण न्यासोऽनुप्रासः ।**

---

इति । अविधदेहा चेष्टा येषां ते, अमी च शरीरिण इति तानीरयतीति तथोक्तः । सहसा शीघ्रं हठेनेति वा । रथिभिः सुसूताः सम्बद्धास्तुरगाः पादातानि पदातिसमूहाश्च यस्य सः । स्थिरतायाम् । अगः पर्वतस्तत्सदृश इति यावत् । अवनितलस्य तिलको राजा । सदाऽऽनत्या सतामानतिः प्रणमनमिति तयेति वा । भाति ॥' इत्ययमर्थः । आर्य्याछन्दस्तल्लक्षणं च प्रागुक्तम् । 'पादातं पत्तिसंहतिः ।' इत्यमरः । अत्र 'देह-शरीर' शब्दयोः 'सारथि-सूत' शब्दयोः 'दान-त्याग'शब्दयोश्च परिवृत्त्यसहत्वेन सभङ्गत्वेनामुख एवैकार्थकत्वेन पर्य्यवसाने पुनर्भिन्नार्थकत्वेन सभङ्गशब्दनिष्ठः पुनरुक्तवदाभासः । इति । अथाभङ्गशब्दनिष्ठ उदाहृत एवायमस्माभिः। यथा वा-'अम्बरेण गगनेन संवृतं जीवनैः सिरसि वारिभिः श्रितम् । भोगिभिश्च भुजगैर्विभूषितं शङ्करं शुभकरं भजामहे ॥' इति।

एवं सूचीकटाहन्यायेनाल्पप्रभेदं पुनरुक्तवदाभासं निरूप्य बहुप्रभेदं 'तथाऽनुप्रासोपमादयः' इत्युक्तदिशा प्रथमं निरूपणीयमप्यनुप्रासं निरूपयति-६३ **अनुप्रास** इत्यादिना ।

६३ **यत्** । **स्वरस्य**ाचः प्रत्याहारस्य, नतु निषादादेः । **वैषम्ये** विषमत्वे विजातीयत्वे इति यावत् । **अपि** किं पुनस्तस्यापि साम्ये इत्यर्थः । 'अपि सम्भावनाप्रश्नशङ्कागर्हासमुच्चये । तथा युक्तपदार्थे च कामचारक्रियासु च ॥' इति विश्वः । **शब्दसाम्यं** शब्दस्य वर्णपदैकदेशपदानामन्यतमस्य साम्यं सादृश्यं समानाकारत्वमिति यावत् । 'तत्' इति शेषः । **अनुप्रासो**ऽनुगतः प्रकृष्ट आसो न्यासस्तत्स्वरूप इति यावत् । प्रकृष्टत्वं च रसानुगतत्वे एव । अत्रायम्भावः-अनुप्रासस्तावद् द्विविधः, वर्णानुप्रासः पदानुप्रासश्चेति । तत्रावाचकवर्णावृत्तिर्वर्णानुप्रासः, वाचकवर्णानुवृत्तिश्च पदानुप्रासः । इति ।

स्वरसादृश्यं नैकान्तमपेक्षितमित्याह-**स्वरमात्रसादृश्यं** स्वर एवेति तेन सादृश्यम् 'हारिविष्णु' इत्यादिषु यथेकारेण सादृश्यमिति यावत्। **तु** । **वैचित्र्याभावात्** । **न** । **गणितं** 'वैषम्येऽपि स्वरस्य' इत्युक्तदिशा स्वरेण सादृश्यं न नितान्तमपेक्षितं,तदन्तराऽपि शब्दसादृश्यमात्रे वैचित्र्येण तत्सम्भवादिति भावः।**रसाद्यनुगतत्वेन**।**प्रकर्षेण**ाह्लादजनकेन व्यापारविशेषेणेति भावः । **न्यासः** शब्दयोः शब्दानां वा नतु शब्दस्य तत्र प्रकृष्टत्वासम्भवात्। **अनुप्रास**स्तत्पदार्थ इत्यर्थः। अत्रायम्भावः-शृङ्गारादय एव विचित्रा रसास्तत्त्वस्यात्रैवोपलब्धेः।काव्यं च रसात्मकवाक्यमिति निर्णीतपूर्वम्।तस्मादेतच्छृङ्गाराद्यन्यतमात्मकमिति काव्ये शृङ्गाराद्यन्यतमसम्भवो निर्बाधः। अन्यथा काव्यमचेतनमिव परित्याज्यं स्यात् । एवं यमुपजीव्य काव्यं सचेतनं चमत्कुरुते स एव रसस्तस्यैव रस्यते आस्वाद्यते सहृदयैरिति निर्वचनोत्पत्तेः । तथा च-तद्व्यञ्जकयोश्शब्दयोस्तद्व्यञ्जकानां वा शब्दानामनतिव्यवधानेन न्यासोऽनुप्रासः । अनतिव्यवधानमन्तरेण तद्व्यञ्जकत्वस्योद्रेकाभावात् । अनतिव्यवहिततया चमत्काराधायिकाऽत एव प्रकृतरसव्यञ्जकवर्णघटितशब्दावृत्तिरनुप्रासपदार्थ इति वा निर्गलितोऽर्थः । नच 'काव्यस्य रसात्मकत्वाद्रसस्य च व्यञ्जकवर्णसङ्घटितशब्दाधीनत्वाद्व्यञ्जकवर्णानां चानुप्रासे सम्भवान्माभूदनुप्रासमन्तरा काव्यत्वम् ।' इति वाच्यम् । 'काव्यत्वजीवातोश्चमत्कारापरपर्य्यायस्य रसात्मनो व्यञ्जकवर्णाभावेऽपि अनपोहितत्वात् । 'व्यञ्जकवर्णानां हि तत्प्रत्यायकत्वमात्रम् नतु तत्सद्भावहेतुत्वमपि । अन्यथा व्यञ्जकव्यपदेशोऽप्यपार्थः स्यात् । न वा रसस्य स्वसत्ताकत्वं सञ्छेते'त्येके, 'वर्णानां व्यञ्जकत्वसाधर्म्येण सजातीयत्वेऽपि तेषां चानैकात्म्येन विजातीयानामव्यवधानेनावस्थानस्याक्षतमूर्तावप्यनुप्रासघटकलक्षणासम्भवेऽपि काव्यत्वानपायादित्य'परे । 'ननुप्रकृतरसव्यञ्जकवर्णेतरघटकशब्दानतिव्यवहितासकृन्न्यासोऽनुप्रासः, सूत्रकारेण शब्दावृत्तिमात्रे तस्य स्वीकृतत्वात् । इति चेत् ? सत्यम् । 'रसाद्यनुगतत्वेन प्रकर्षेण न्यासोऽनुप्रासः'इति वृत्तिकारोक्तनिर्वचनेन प्रकृतरसव्यञ्जकत्वे एवेति क्रोडीकरणात् ।' इत्येके 'शब्दानामव्यवहिताऽऽवृत्तिरनुप्रासः, स च निवेशौचित्ये कुण्डलादिरिव प्रकृतरसव्यञ्जकत्वे, समुपादेयःअन्य ॥ यथाकथञ्चिद्वोपादेयः ।' इत्यपरे ।

**६४ छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा ॥ ५६**

छेकश्छेकानुप्रासः। अनेकधेति स्वरूपतः क्रमतश्च। 'रसःसर' इत्यादेः क्रमभेदेन सादृश्यं नास्यालङ्कारस्य विषयः। उदाहरणं मम तातपादानाम्—

"आदायवकुलगन्धानन्धीकुर्वन् पदे पदे भ्रमरान्।
अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः ॥ ७१ ॥"

अत्र'गन्धानन्धी'ति संयुक्तयोः, 'कावेरीवारी'त्यसंयुक्तयोः, 'पावनः पवनः' इति व्यञ्जनानां बहूनां सकृदावृत्तिः। छेको विदग्धस्तत्प्रयोज्यत्वादेष छेकानुप्रासः।

---

अयं च द्विविधः, निरर्थकसार्थकशब्दभेदात्, तत्राप्याद्यश्छेकानुप्रासो वृत्त्यनुप्रासः श्रुत्यनुप्रासोऽन्त्यानुप्रासश्चेति चतुर्भेदः। तौ च क्रमाद्दर्शनीयाविति प्रथमं प्रथममाह-६४छेक इत्यादिना।

६४ **सकृदे**कवारम्। **अनेकधा** नैकधा, स्वरूपेण क्रमेण चेति प्रकारद्वयेनेति यावत्। **व्यञ्जनसङ्घस्य** व्यञ्जनानां हलां सङ्घस्तस्य। **साम्यं** सदृशाकारत्वम्। **छेक**स्तन्नामाऽनुप्रास इत्यर्थः। अयम्भावः—स्वरूपेणैव क्रमेणैव वेति न, किन्तूभयथा यत्र व्यञ्जनानामेकवारं सदृशाकारतया न्यासः स छेको नामानुप्रासः। इति ॥ ५६ ॥

कठिनांशं व्याचष्टे—छेक'इत्यस्ये'ति शेषः। **छेकानुप्रास** 'इत्यर्थः' इति शेषः। 'छेकस्त्रिषु विदग्धेषु गृहासक्तमृगाण्डजे।' इति रभसोक्त्या छेकश्चतुरो लक्षणया तत्प्रयोज्योऽपि स एव। छेकाः (चतुराः) ह्यनुप्रासं प्रायः प्रयुञ्जते। तस्माच्छेक (चतुर) प्रयोज्योऽलङ्कारश्छेको नामानुप्रास इति भावः। **अनेकधा इति** इत्यस्य। **स्वरूपतः** स्वरूपेण। **च** तथा। **क्रमतः** क्रमेण। 'इत्यर्थ' इति शेषः। अयम्भावः—यद् यथा निहितं तत्तथा यदि पुनरपि निविश्येत तर्हि सादृश्यं, तत्स्वरूपतस्त्वस्त्येव, अथ यदि क्रमतोऽपि, तर्ह्यलङ्कृतये, यदि न तर्हि नालङ्कृतयेऽपि, यथा—'प्रसर सरसि पद्मं यर्हि लब्धुं तवेष्टम्' इत्यत्र 'सरे'ति स्वरूपतः क्रमतश्च सदृशम्, 'रसः सरः स्थित'इत्यत्र 'रस' इति स्वरूपतः सदपि न क्रमतः सदृशं प्रतिभासते, इत्युभयथैव सादृश्यमलङ्कृतिविशेषे हेतुरित्युक्तमनेकधेति। तदेवाह—**'रसः सर' इत्यादेः** 'शब्दस्ये'ति शेषः। **क्रमभेदेन** न तु क्रमेण न वा स्वरूपभेदेनापीति भावः। **सादृश्यं** 'यत्त'दिति शेषः। **न** नैव। **अस्य**। **अलङ्कारस्य**। **विषयः** स्थानम्।

अत्रायम्भावः—स्वरसादृश्यं नैकान्तमपेक्ष्यते, तदसत्त्वेऽपि चारुत्वोल्लासेनालङ्कारं वक्तुं युक्तत्वात्। इत्युक्तं 'व्यञ्जनसङ्घस्ये'ति। अथ यदि तदप्यापतेत्तर्हि सुतरामित्युच्यते नैकान्तमिति। नहि 'व्यञ्जनसङ्घस्ये' त्युक्तनयेन सति व्यञ्जनसाम्ये स्वरसाम्यमुत्सार्य्यते, किन्तु तावताऽलङ्कार इति निदर्श्यते।' इति।

लक्षणं निरूप्य लक्ष्यं निरूपयितुमुपक्रमते—**मम** विश्वनाथस्येत्यर्थः। **तातपादानां** तातः पितरश्चन्द्रशेखरा इति यावत्, त एव पादाः पूज्यास्तेषाम्। 'कृतौ' इति शेषः। **उदाहरणम्**, 'यथे'ति शेषः। **'आदाय'''** इत्यादि।

**'बकुलगन्धान्** बकुलस्य 'मोल्सरी'ति प्रसिद्धस्य सुरभितकुसुमविशेषस्य गन्धाः इति तान्। 'अथ केशरे। बकुल' इत्यमरः। **आदाय** गृहीत्वा। **पदेपदे** स्थानेस्थाने। 'पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु।' इत्यमरः। 'आनुपूर्व्ये द्वे वाच्ये।' इति द्वित्वम्। **भ्रमरान्** भ्रमन्ति मधुनि लुब्धतयेति भ्रमरा मधुपास्तान्। **अन्धीकुर्वन्**नन्धानिव कुर्वन्। **अयं** स्पर्शवत्तया प्रत्याख्यातुमशक्यः। **कावेरीवारिपावनः** कावेर्य्यास्तदाख्यायाः सरितो वारि जलं तेन पावनः पवित्रतासम्पादकः। पावयति पवित्रतां नयति स्वसेविनमिति पावनः। **पवनो** गन्धवहः। **मन्दमन्दं** मन्देषु मन्द इति मन्दमन्दः, स यथा भवेत्तथेति तथोक्तम्। 'न निर्धारणे।' २। २। १० इति निर्धारणार्थे षष्ठ्या एव निषेधात्सप्तम्या समासः। **एति** गच्छति सञ्चरतीति यावत्। अत्रार्य्या छन्दः, लक्षणं चोक्तं प्राक्'॥ ७१ ॥

लक्ष्यं समर्थयते—**अत्र**। **'गन्धानन्धी'ति**। 'अत्रे'ति शेषः। एवमग्रेऽपि। **संयुक्तयोः** संयोगवतोः। 'न्ध्' इत्येतयोरिति शेषः। **'कावेरीवारी'ति**। अत्र। **असंयुक्तयोः** 'वर' इत्येतयोरिति भावः। **'पावनः पवनः' इति**। अत्र पुनः—'पवन' इत्येतेषाम्। **बहूनाम्**। **व्यञ्जनानां** हलाम्। **सकृदे**कवारम्। **आवृत्तिः**। **छेको विदग्धः**।

**६५ अनेकस्यैकधा साम्यमसकृद्वाऽप्यनेकधा।**
**एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ॥ ५७ ॥**

एकधा स्वरूपत एव, न तु क्रमतोऽपि। अनेकधा स्वरूपतः क्रमतश्च। 'सकृदपी'त्यपि शब्दादसकृदपि। उदाहरणम्–

"उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरक्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षणप्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः ॥७२॥"

अत्र 'रसोल्लासैरमी' इति रसयोरेकधैव साम्यम्, न तु तेनैव क्रमेणापि द्वितीये पादे। कल-

---

तत्प्रयोज्यत्वात्। एषः छेकानुप्रासः। 'यथा वा मम–'सुमुखि! समुन्नय नयने महिमानं मानयानयं स्वस्याः। दीनान् दुनोष्यथापि स्मयसे नयसे ततः पदं किं त्वम् ॥' इति।

अथ द्वितीयमाह–६५ **अनेकस्ये**त्यादिना।

६५ **अनेकस्य** नैको वर्णान्तरेणासम्पृक्त इत्यनेकस्तस्य तथोक्तस्य संयुक्तस्येति भावः। 'व्यञ्जनस्ये'ति शेषः। एतेन–स्वरेण साम्यावश्यकत्वं व्युदस्तम्। **एकधै**केन प्रकारेण। **वा**। **अनेकधा**। **अपि** न केवलमेकधैवेति भावः। **असकृ**दनेकवारम्। **साम्यम्**। **वृत्त्यनुप्रासो** वृत्तौ रीतावनुप्रास इति तथोक्तः। वृत्तिश्च मधुरादिरसानुगुणनियतमसृणादिशब्दविशेषगतो रसविषयो व्यापारो व्यञ्जनाख्य इत्येके माधुर्यादिव्यञ्जकसुकुमारादिवर्णगतत्वेन मधुरादिरसोपकारकः शब्दस्य सङ्घटनाख्यो रीत्यात्मा व्यापारविशेष इत्यपरे। अथवा–एकस्यासंयुक्तस्य 'व्यञ्जनस्ये'ति शेषः। एतेन स्वरेण साम्यावश्यकत्वं व्युदस्तम्। **सकृ**देकवारम्। **अपि** किं नरनेकवारमिति भावः। 'साम्य'मिति शेषः। **एषः**। **वृत्त्यनुप्रासः**। **उच्यते**। अयम्भावः–असत्यपि स्वरेण समानत्वे संयुक्तस्य व्यञ्जनस्य स्वरूपेणैव, स्वरूपेण क्रमेण चेत्युभयथा वा; असकृत्साम्यं वृत्त्यनुप्रासः, असंयुक्तस्य वा व्यञ्जनस्य सकृदसकृद्वा सादृश्यं वृत्त्यनुप्रासः। एवं च अनेकस्य व्यञ्जनस्य स्वरूपेणासकृत्साम्यं स्वरूपेण क्रमेण चेत्युभयथा असकृत् पुम्यं, तथा एकस्य व्यञ्जनस्य सकृत्साम्यम्, असकृत्साम्यं वेति चतुर्भेदो वृत्त्यनुप्रासः। इति ॥ ५७ ॥

अथ सूत्रोक्तपदानां दुरूहमर्थं व्याचष्टे–**एकधा** 'इत्यस्ये'ति शेषः। **स्वरूपतः** स्वस्य रूपं प्रतिकृतिस्तस्मात्। **एव**। **न तु**। **क्रमत** उद्देशानुपूर्व्या। **अपि**। 'इत्यर्थः' इति शेषः। **अनेकधा** 'इत्यस्ये'ति शेषः। **स्वरूपतः**। **क्रमतः**। **च**। 'इत्यर्थ' इति शेषः। **'सकृदपी'ति**। 'अत्रे'ति शेषः। **अपिशब्दात्**। 'पठिता'दिति शेषः। **असकृत्**। **अपि**। 'इति निष्कृष्टम्' इति शेषः।

उदाहरणं दर्शयति–**उदाहरणम्**। यथा–**उन्मीलन्मधुगन्ध...**उन्मीलदुल्लासं प्राप्नुवद् यन्मधु पुष्परस इति तस्योन्मीलन्मधुनो गन्धः सौरभं तेन लुब्धा लोभं नीता इत्यमी मधुपा मधुपानशीला भ्रमरा इति तैरुन्मीलन्मधुगन्धलुब्धमधुपैर्व्याधूता विशेषेण (स्वपातवशात्) कम्पान्नीता अमी चूताङ्कुरा आम्रदलानां नूतनप्ररोहा इति तेषून्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुरेषु क्रीडन्तश्च ते कोकिलास्तेषां काकली स्वरविशेष इति तस्याः कलकला मधुरशब्दास्तैस्तथोक्तैः। **उद्गीर्णकर्णज्वरा** उद्गीर्ण उद्गारं प्रापितः कर्णज्वरो येषु ते तथोक्ताः। **अमी**। वासन्तिका इत्यर्थः। **वासरा** दिवसाः (कर्म)। **ध्यानाव...**ध्याने प्रियायाश्चिन्तनेऽवधानं चित्तैकाग्र्यं तेन क्षणं प्राप्तः प्राणसमासमागमरसोल्लासो यैस्तैस्तथोक्तैः प्राणैः (प्रियत्वेन) समास्तुल्येति तथाभूतायाः समागमः सम्यग्लाभ इति तस्य रस आस्वादः इति तस्योल्लास इति प्राणसमासमागमरसोल्लासः। उल्लासः प्राचुर्य्येणोद्गमः। **पथिकैः** प्रवासिभिः (कर्तृ) **कथंकथमपि** महता कष्टेन। **नीयन्ते** व्यतीयन्ते ॥' पद्यमिदं गीतगोविन्दस्य शार्दूलविक्रीडितं वृत्तम्। लक्षणं च प्रोक्तं प्राक्। इति ॥ ७२ ॥'

उदाहरणीयं निर्दिशति–**अत्र 'रसोल्लासैरमी' इति**। 'अंशे' इति शेषः। **रसयो** रकारसकारयोः। **एकधा** स्वरूपेण। **एव**। **साम्यम्**। **न तु** पुनः। **तेन** निर्दिष्टेन। **एव**। **क्रमेण**। **अपि** 'तयोःपुनर्वैपरीत्येन न्यासात्' इति शेषः। द्वितीये 'क्रीडत् कोकिल' इति रूपे। **पादे**: चरणे भाग इति यावत्। **कलयोः**ककारलकारयोः। **असकृ**दनेकवारम्।

योरसकृन्नैव क्रमेण, प्रथमे एकस्य तकारस्य सकृत्, धकारस्य च असकृत् । रसविषयव्यापारवती वर्णरचना वृत्तिः, तदनुगतत्वेन प्रकर्षेण न्यसनाद् वृत्त्यनुप्रासः ।

**६६ उच्चार्य्यत्वाद् यदेकत्र स्थाने तालुरदादिके ।**
**सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते ॥ ५८ ॥**

उदाहरणम्—

"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः। विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः ॥७३॥"

अत्र 'जीवयन्ति" इति, "या" इति, "जयिनी"रिति । अत्र जकारयकारयोरेकत्रस्थाने तालौ

---

तेन 'येन ( आनुपूर्व्येण) निर्दिष्टा' विति शेषः । **एव** **नतु** विपरीतेन । **क्रमेण**ानुपूर्व्येण । 'साम्य' मिति शेषः । [अथ— **प्रथमे** 'पादे' इति शेषः । **एकस्य** । **तकारस्य** । **सकृ**देकवारम् । 'साम्य' मिति शेषः । **धकारस्य** । **च** पुनः । **असकृ**दनेकवारम् । 'साम्य' मिति शेषः । अत्रेदं बोध्यम्—अत्र न केवलं वृत्त्यनुप्रास एव, किन्तु छेकानुप्रासोऽपि, 'उन्मीलन्मधु' इत्यादौ 'न्मे'त्यादेः सकृत्साम्यात् । अत एव तर्कवागीशा अप्याहुः । 'तदतिरिक्तास्छेकानुप्रासा इह वेदितव्याः' इति । ननु कथं वृत्त्यनुप्रास इति व्यपदेशः ? इत्यत आह—**रसविषयव्यापारवती** रस एव विषयो यस्य तादृशोऽसौ व्यापारो व्यञ्जनरूपः क्रियाविशेष इति रसविषयव्यापारः, सोऽस्यामस्तीति तथोक्ता । **वर्णरचना** वर्णानां रचना ( सङ्घटना ) वृत्तिः 'इति व्यपदिश्यते' इति शेषः । **तदनुगतत्वेन** तस्याः(वृत्तेरित्यर्थः) अनुगतत्वमानुकूल्यं तेन तद्रूपेणेति भावः । **प्रकर्षेण**ातिशयेन । **न्यसना**न्न्यासविधानात् । **वृत्त्यनुप्रासः** 'इति व्यपदेशः सङ्गच्छते' इति शेषः। अत्रेदं बोध्यम्—वृत्तिस्त्रिविधा, उपनागरिका परुषा कोमला चेति भेदात् । तथोक्तं प्रकाशकारैः—'माधुर्य्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते । ओजःप्रकाशकैस्तैस्तु कोमला परुषा परैः ॥ परैः' शेषैः । इति । कोमलानेव ग्राम्येत्यपि व्यपदिशन्ति केचित् । तदुक्तम्—'शेषैर्वर्णैर्यथायोगं ग्रथितां कोमलाख्यया । ग्राम्यां वृत्तिं प्रशंसन्ति काव्ये निष्णातबुद्धयः ॥' इति । एताश्च वैदर्भीगौडीपाञ्चाल्यभिधेया रीतयः । अत एव प्रकाशकारैरयुक्तम्—'केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः ।' एतास्तिस्रो वृत्तयो वामनादीनाम्मते वैदर्भीगौडीपाञ्चाल्याख्या रीतयो मताः । इति । अमी च निरुक्तस्वरूपा एव इति नात्र ग्रन्थकृता पुनर्निरूपिता इति बोध्यम् ।

अथ तृतीयमाह—**६६ उच्चार्यत्वादि**त्यादिना ।

**६६ यदा** । **एकत्रै**कस्मिन् । **तालुरदादिके** । तालु जिह्वेन्द्रियाधिष्ठानम् । रदा दन्ताः । 'शेषाद्विभाषा ।' ५ । ४ । १५४ इति कप् । आदिना मूर्धकण्ठादेः सङ्ग्रहः । **स्थाने उच्चार्य्यत्वात्** । **व्यञ्जनस्य** । **एव** नतु स्वरस्यापि । **सादृश्यं** सवर्णत्वम् । **श्रुत्यनुप्रासः** । श्रुतौ श्रवणेऽनुप्रास इति तथोक्तः । **उच्यते** अयमभावः—स्वरूपतः सादृश्याभावेऽपि तात्वाद्येकस्थानवशाद् यस्य व्यञ्जनस्यैव येन व्यञ्जनेनैव सादृश्यं सम्भवेत्तस्य स्वरूपतोऽसदृशस्यैव सकृदसकृद्वा न्यासे श्रुत्यनुप्रासः । एवं व्यञ्जनमात्रस्य स्वरूपतः सादृश्याभावेऽपि तात्वादिस्थानैक्यवशात्सादृश्ये श्रुत्यनुप्रासस्तात्वादिना सादृश्यं च—'तुल्यास्यप्रयत्नं सवर्णम् ।' १।१।९ इत्याकरे विवृतम् ॥ ५८ ॥

**उदाहरणं** 'यथे'ति शेषः । **'याः** । **दृशा** नेत्रेण'महादेवस्ये'ति शेषः । **दग्धं** भस्मसात् कृतम् । **मनसिजं** कामदेवम् । **दृशा** नेत्रेण'स्वात्मन' इति शेषः । **एव** नतु साधनान्तरेण । **जीवयन्ति** सचेतनतां नयन्ति । अत एव— **विरूपाक्षस्य** विरूपमक्षि यस्येति तस्य तथोक्तस्य । 'बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात् षच्' ।५ । ४ । ११३ इति षच् । **जयिनीः** पराजयकर्त्रीः । **ताः** । **वामलोचना** वामं सुन्दरं लोचनं यासां ताः । **स्तुमः** प्रशंसामः । राजशेखरकृताया विद्धशालभञ्जिकायाः पद्यमिदम् ॥ ७३ ॥'

उदाहरणीयं दर्शयति—**अत्र 'जीवयन्ति'इति** 'अत्रे'ति शेषः। **'या'इति** । 'अत्रे'ति शेषः। तथा—**'जयिनीः'**

उच्चार्य्यत्वात् सादृश्यम् । एवं दन्त्यकण्ठ्यानामप्युदाहार्य्यम् । एष च सहृदयानामतीव श्रुतिसुखावहत्वात् श्रुत्यनुप्रासः ।

**६७ व्यञ्जनं चेद् यथाऽवस्थं सहाद्येन स्वरेण तु ।**
**आवर्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत् ॥ ५९ ॥**

"यथाऽवस्थम्" इति यथासम्भवमनुस्वारविसर्गस्वरसंयुक्ताक्षरविशिष्टम् । एष च प्रायेण पादस्य पदस्य चान्ते प्रयोज्यः । पादान्तगो यथा मम–

"केशः काशस्तवकविकाशः कायः प्रकटितकरभविलासः ।

---

इति । अत्र । जकारयकारयोः एकत्रैकस्मिन् । तालौ तालुरूपे स्थाने । उच्चार्य्यत्वात् 'कारणा'दिति शेषः । सादृश्यं सावर्ण्यम् । 'अतोऽत्र श्रुत्यनुप्रास'इति शेषः । अत्रेदं बोध्यम्–योहि हरेण दृग्रूपेणोपायेन दाहं नीतस्तस्य मदनस्य दाहहेतुभूतेनैव तेन दृग्रूपेणोपायेन हरं जिगीषुभिर्वामलोचनाभिर्जीवनरूपस्य तद्विपरीतस्य कार्यस्य सम्पादितत्वाद् व्याघातः । यद्यपि विरूपाक्षदृग्वामलोचनादृशोर्नैक्यम्, तथाऽपि दृशोरेकजातीयतया व्याघात एव, यद्वा–कार्य्यवैजात्यस्य कारणवैजात्यप्रयोजत्वादेकजातीयाद्विजातीयकार्य्याभिधानाद् व्याघात एव । तथा–'जीवयन्ती'त्यादौ जकारयकारयोः 'इचुयशानां तालु' इत्युक्त्या तालुरूपस्थानैक्यात्सावर्ण्ये श्रुत्यनुप्रासः । इति ।

अन्यत्राप्येवमुदाहार्य्यमित्याह–एवं यथाऽस्य तालुस्थानीयस्य तथा । दन्त्यकण्ठ्यानाम् । अपि । 'सावर्ण्यं' इति शेषः । उदाहार्य्यमुदाहरणीयमन्यद्गवेषणीयमिति भावः ।

यथावा–'अद्याप्युन्मदयातुधानतरुणीचञ्चत्करास्फालनव्यावल्गन्नृकपालतालरणितैर्नृत्यत्पिशाचाङ्गनाः । उद्गायन्ति यशांसि यस्य विततैर्नादैः प्रचण्डानिलप्रक्षुभ्यत्करिकुम्भकूटकुहरव्यक्ते रणक्षोणयः ॥' इत्यत्र 'लृतुलसानां दन्ताः' इति नयेन 'तुधानत' इति दन्त्यानां साम्यात्, 'ऋटुरषाणां मूर्धा' इति 'रुणी' त्यत्र मूर्द्धन्ययो रणयोः साम्यात्, श्रुत्यनुप्रासः । यथा वा मम–'अयि यदि जयसि शशाङ्कं निरुपमसौभगलसन्मुखि ! स्थाने । अधरसुधाया अधरं निपाय्य हननं परं परमम् ॥' इत्यत्र प्रथमे तालव्यानां द्वितीये दन्त्यानामेवं तृतीये साम्याच्छ्रुत्यनुप्रासः । इति दिक् ।

अथास्य सार्थकतां दर्शयति–एषः । च । सहृदयानां सचेतसां काव्यमार्मिकाणामिति यावत् । अतीवात्यन्तम् । श्रुतिसुखावहत्वाच्छ्रुत्योः कर्णयोर्यत् सुखमानन्दस्तस्यावहत्वात् कारणात् । श्रुत्यनुप्रासः । 'इति गीयते' इति शेषः।

अथ चतुर्थमाह–६२ व्यञ्जनमित्यादिना ।

६७ चेद् यदि । आद्येन । स्वरेणाचा । सह । तु पुनः । यथाऽवस्थम् । व्यञ्जनम् । आवर्त्यते पुनः पठ्यते । तत्तर्हि । अन्त्ययोज्यत्वादन्तेऽवसाने योजयितुं योक्तुमर्हमिति तत्त्वात्तथोक्तात् कारणात् । अन्त्यानुप्रासोऽन्त्योऽसावनुप्रास इति तथोक्तः । एव न त्वन्यत्रान्तर्भाव्य प्रत्याख्यातुं शक्यः, एवं तन्मूलस्य चमत्कारस्य स्फुटत्वात् । अयम्भावः–यदावर्त्यते तद् यदि स्वाद्येन स्वरेण सहैव सम्भवतोऽनुस्वारविसर्गयुक्तं तर्ह्यन्त्यानुप्रासोऽयम् । अस्य च प्रायः पादस्य पदस्य वाऽवसाने एव सम्भव इति व्यपदेशसार्थक्यम् । न चायं यमकेन गतार्थयितुं शक्यः, 'आशाः स्वच्छ प्रकाशाः' इत्यादौ तदसम्भवेऽप्यसम्भवात् । अत एव'एवे'ति सङ्गच्छते । इति ॥ ५९ ॥

अथ कारिकास्थं दुरूहार्थं पदं व्याचष्टे । यथाऽवस्थम् । इतीत्यस्य । यथासम्भवम् । अनुस्वारविसर्गस्वरसंयुक्ताक्षरविशिष्टम् । 'इत्यर्थः' इति शेषः । तथा च–स्वराश्रयेणोच्चार्य्यमाणो विन्दुरेखया व्यज्यमानोऽनुनासिको वर्णविशेषोऽनुस्वार इति निष्कृष्टम् । एषोऽन्त्यानुप्रासः । च । प्रायेणाधिक्येन । पादस्य पद्यचतुर्थांशस्य । च तथा । पदस्य । अन्ते । प्रयोज्यः 'प्रयोज्यनियोज्यौ शक्यार्थे ।' ७ । ३ । ६८ इत्यनेन उत्वाभावो ण्यच्च ।

उदाहरति–पादान्तगः । 'अन्त्यानुप्रास' इति शेषः । यथा । मम । 'केशः'...इत्यादौ ।

'काशस्तवकविलासः काशस्य काशकुसुमस्य स्तवको विकासोन्मुखकलिका तद्वद्विलास उल्लासो यस्य सः । 'अथो काशमस्त्रियाम् ।' 'स्याद्गुच्छकस्तु स्तवकः' इति चामरः । काशस्तवको हि सितो भवतीत्यस्योपमानत्वम् । केशः । 'यस्ये'ति शेषः । तथा–प्रकटितकरभविलासः प्रकटितः करभवद् विलासो येन सः । करभ उष्ट्रशावकः । 'करभः

चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम् ॥ ७४ ॥'

पदान्तगो यथा—"मन्दं हसन्तः पुलकं वहन्तः" इत्यादि ।

**६८ शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्य्यमात्रतः ।**

**लाटानुप्रास इत्युक्तो—**

---

शिशुः ।' इत्यमरः । उष्ट्रशावकवत् कुब्जतयाऽलक्ष्यमाण इति भावः । **कायः** शरीरम् । एवम्—**दग्धवराटककल्पं** दग्धो यो वराटकस्तस्मात् किञ्चिन्न्यूनमित्यर्थः । वराटकः पद्मवीजकोशः कपर्दिका वा । 'वराटकः पद्मवीजकोशे रज्जौ कपर्दके ।' इति कोशः । 'ईषदसमाप्तौ कल्पदेश्यदेशीयरः । ५' । ३ । ६७ इति कल्पः । दग्धवराटकवन्निर्ज्योतिष्कमिति भावः । **चक्षुः** । 'तदपी'ति शेषः । **चेतः** । **अनल्पम्** । **कामम्** ( कर्म ) **न** । **त्यजति** 'इति चित्रम्' इति शेषः । वार्द्धक्यदुःखेन निर्विण्णस्योक्तिरियम् । चतुष्पदी छन्दः । तल्लक्षणं यथा—'षोडशकलाश्चरणगा यस्याश्चतुष्पदीत्यभिधा खलु तस्याः ।' इति । अत्रेदं बोध्यम्—निर्विण्णत्वरूपे कारणेऽभिहितेऽपि कामपरित्यागरूपस्य कार्य्यस्योत्पत्त्यभावाभिधाना द्विशेषोक्तिः, एवं यौवनरूपकारणाभावेऽभिहितेऽपि कामापरित्यागरूपकार्य्याभिधानाद्विभावना, 'यदपि तदपी'ति शब्दयोरदर्शनात्तयोर्व्यङ्ग्यत्वमात्रम् । प्रकृते तथा विरुद्धशीलयोस्तयोः कतमेति सन्देहात्तन्मूलः सन्देहसङ्करो जयति । पादान्ते 'कासलासे'त्यादीनामन्त्यमात्रस्य सादृश्यादन्त्यानुप्रासस्तथा प्रत्यक्षसिद्धः । इति ॥ ७४ ॥'

**पदान्तगः । यथा—'मन्दं'…'इत्यादौ ।**

**'मन्दमल्पम्' हसन्तो** हासं कुर्वन्तः । अत एव प्रेम्णा—**पुलकं** रोमोद्गमम् । **वहन्तः** । इत्यादि 'गोष्ठीं श्रयन्तश्चषकं पिबन्तः । रतिं नयन्तः सुविकाशमन्तः प्रियां स्पृशन्तः स्वरिवावसन्तः ॥' इति शेषः ॥ स्वरिव स्वर्गे इवावसन्तो मोदन्ते इति भावः । यथा वा मम पादान्ते 'म्लायति दर्शंदर्शं तव मुखमपरस्य दुर्लभादर्शम् । तदिति ग्लौरिति लोके प्रथितं चन्द्रं समालोके ॥' इति । यथा वा पदान्ते 'सारासारविदः सताम्भयभिदः प्रह्वोपतापच्छिदः कारुण्यार्द्रहृदः प्रपन्नसुहृदः स्फारीभवत्संविदः । त्राताशेषविशः प्रकाशितदिशः कीर्त्या महीनिर्विशः कर्षन्तीश ! निशः प्रसक्तसुदृशस्त्वत्पादपीठस्पृशः ॥' इति । अत्राहुः सूत्रकाराः—'पूर्वस्वरविनाकृतस्याप्यन्त्यव्यञ्जनस्यावृत्तिर्दृश्यते । यथा—'पुनरपि मरणं पुनरपि जननं पुनरपि जननीजठरे शयनम् । क्षणमपि सज्जनसङ्गतिरेका भवति भवार्णवतरणे नौका ॥' इति । अत्रेदं तत्त्वम्—अनुप्रासो हि स्वरसाम्यं नात्यपेक्षते । अत एवेदं सङ्गच्छते । इति ।

अथ सार्थकवर्णानुप्रासं निरूपयति—**६८ शब्दार्थयो**रित्यादिना ६८ ।

**तात्पर्य्यमात्रत**स्तात्पर्य्यमेवेति तस्मात्तथोक्तात् । **भेदे** । 'सती' ति शेषः । **शब्दार्थयोः** शब्दस्यार्थस्य चेत्यर्थः। **पौनरुक्त्यं** पुनरुक्तत्वम् । **लाटानुप्रासो** लाटोऽसावनुप्रासः । **इति** । **उक्तः** । लाटो देशविशेषः, लक्षणया तत्रत्यजनप्रियोऽपि लाटः, तस्माल्लाटो नामायमनुप्रासः ।

अयम्भावः—तात्पर्य्यं नाम उद्देश्यविधेयभावादिरूपः, कर्त्तृकर्मत्वादिरूपश्च पदार्थयोः सम्बन्धः। तन्मात्राद्भेदे ( नतु स्वरतःक्रमतश्च भेदेऽपि ) शब्दार्थयोरुभयोर्नतु केवल शब्दस्य नवाऽर्थस्य यत् पुनरुक्तत्वमाम्रेडितत्वं तत् लाटजनवल्लभत्वाल्लाट इति व्यपदेश्योऽनुप्रासः । तथा च—यत्र स्वरूपत एव नतु तात्पर्य्यैक्यादपि, शब्दार्थयोः पौनरुक्त्यं, तल्लाटो नाम 'अनुप्रासः शब्दसाम्य'मित्यादिनाऽभिहितस्वरूपोऽनुप्रासः । इति फलितम् । अत्र तात्पर्य्यैक्याभावे पौनरुक्त्यं, न दोषाय, किन्तु साम्यायैव, तेन—अन्वयभेदे सति समानानुपूर्वीकतया समानस्वरूपयोः शब्दार्थयोरनतिव्यवहिता पुनरुक्तता निरवद्यतयाऽवतिष्ठमाना लाटानुप्रासकृते इति सिद्धम्, एवम्—'यातुयातु' इत्यादावन्वयभेदाभावात्, 'कदली कदली' इत्यादावर्थस्यापुनरुक्तत्वाच्च नातिव्याप्तिः । अयं च—पदगस्तदंश गतश्चेति द्विविधः, तत्राप्याद्यः—अनेकपदगत एकपदगतश्चेति द्विविधः, अन्त्यः पुनः—समासासमासगत, एकसमासगतो विभिन्नसमासगतश्चेति त्रिविधः, तस्मादनेकात्मेति सिद्धम् । अत्र समासासमासगतोऽनेकपदगतश्च मूल एवोदाहारिष्येते, अन्ये पुनर्यथाक्रमेण—'वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः । सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत् ॥' इत्यत्र 'सुधाकर' इत्येकस्यैव सार्थकस्य पदस्य तात्पर्य्यभेदेन

**उदाहरणम्।**

**"स्मेरराजीवनयने ! नयने किं निमीलिते । पश्य निर्जितकन्दर्पं कन्दर्पवशगं प्रियम् ॥७५॥"**

**अत्र विभक्त्यर्थस्यापौनरुक्त्येऽपि मुख्यतरस्य प्रातिपदिकांशद्योत्यधर्म्मिरूपस्याभिन्नार्थत्वाल्लाटानुप्रासत्वमेव।**

---

पौनरुक्त्यमित्येकपदगतः। अत्र प्राथमिकस्य विधेयपरत्वं, द्वितीयस्योद्देश्यपरत्वमिति तात्पर्य्यानैक्यम्। अत एवाहुः—'अत्राद्यसुधाकरपदस्य लाक्षणिकत्वेऽपि प्राग्वदर्थाभेदः (प्राग्वत्—'यस्य न सविधे दयिता' इत्यत्रेव)। उद्देश्यविधेयभावभेदाच्च तात्पर्य्यभेदः।' इति। 'सितकरकररुचिरविभा विभाकराकार ! धरणिधर ! कीर्त्तिः। पौरुषकमला कमला साऽपि तवैवास्ति नान्यस्य॥' इत्यत्र 'कमला कमले'ति पूर्वस्य समासः उत्तरस्यासमास इति समासासमासगतः, 'करकरे' त्येकसमास इत्येकसमासगतः। 'विभा, विभे'ति विभिन्नौ समासाविति विभिन्नसमासगतः। एवं त्रिविधोऽप्यत्रैव द्रष्टव्यः। इति।

उदाहर्त्तुमुपक्रमते—**उदाहरणम्**। 'यथा' इति शेषः। 'हे **स्मेरराजीवनयने** स्मेरे प्रफुल्ले ये राजीवे कमले इति ते इव नयने यस्यास्तत्सम्बुद्धौ तथोक्ते !। 'स्मेरं विकसिते किञ्चिद्धास्ययुक्ते च वाच्यवत्।' इति श्रीधरः। 'विसप्रसूनराजीवपुष्कराम्भोरुहाणि च।' इत्यमरः। **नयने**। **किं** किमु। **निमीलिते**। 'त्वये' ति शेषः। 'स्मेरराजीवनयनाया नयनस्मेरत्वमेव स्थाने, नतु तदभावः, तस्मात्—यथा तवेदं स्मेरराजीवनयनत्वं सङ्गच्छेत तथा त्वया यतितव्यम्। इति' भावः। अथ नयनोन्मीलनस्यापि साफल्यमाह—**निर्जितकन्दर्पं** निर्जितः कन्दर्पः कामो येन (स्वसौन्दर्य्येण) तम्। अथापि—**कन्दर्पवशगं** कन्दर्पस्य वशमाधीन्यं गच्छतीति तम्। मदनेन वशीकृतमिति भावः। 'अन्यत्रापि दृश्यते इति वक्तव्यम् *' इति डः। **प्रियम्** कान्तम्। **पश्य** अवलोकय। अत्रेदं बोध्यम्—असौ रतिकलहे कुपितस्यापि कामनिर्जिततया कोपमपहाय स्वयमुपतिष्ठतः स्वविरहे स्वमेव ध्यायन्तीं प्रियां प्रति कस्याप्यनुनयोक्तिः। स्मेरराजीवनयनत्वेन सम्बोध्यां प्रति नयननिमीलनत्वाभिधानं निक्षेपेण कन्दर्पजयिनश्च स्वस्य तद्वश्यत्वाभिधानं विरुद्धम्, स्मेरराजीवनयनयोर्दिव्यत्वमात्रावेदनं, सौन्दर्य्येण कन्दर्पजयिनो रागेण तद्वश्यत्वावेदनं चेष्टमिति विरोधाभावाद्विरोधाभासः। इति॥ ७५॥'

लक्ष्यं समर्थयते—**अत्र** 'स्मेरराजीवनयने ! नयने' इत्यंशे इति भावः। **विभक्त्यर्थस्य**। **अपौनरुक्त्ये** पुनरुक्तत्वाभावे। 'भिन्नत्वेने'ति शेषः। **अपि**। **प्रातिपदिकांशद्योत्यधर्मिरूपस्य** प्रातिपदिकस्य ('अर्थवदधातुरप्रत्ययःप्रातिपदिकम्।' १।२।४५ 'कृत्तद्धितसमासाश्च' १।२।४६ इत्युक्तदिशा प्रकृते 'स्मेरराजीवनयन' इत्यस्यांशोऽवयवः 'नयन' इत्यात्मकस्तेन द्योत्यो ऽसौ धर्मी नयनपदार्थस्तद्रूपस्येत्यर्थः। **मुख्यतरस्या**तिशयेन मुख्य इति तस्य। अभिन्नार्थत्वाद्भेदाभावात्।'पौनरुक्त्यमिती' ति शेषः। **लाटानुप्रासत्वं** लाटोऽनुप्रासो यत्र तत्त्वम्। **एव**। अत्रेदं तत्त्वम्—'समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।' इति नयेन प्रकृते 'स्मेरराजीवनयने' इति समुदिते शक्तिः, शक्तिमच्चैवं तदेव, तदेव प्रातिपदिकं च; शक्तिमद्भिन्नस्य प्रादिपदिकत्वानुपपत्तेः। तस्य 'प्रकृतिप्रत्यययोः प्रकृतेरेव बलीयस्त्वम् आश्रयत्वात्' इति टाप्प्रत्ययस्याप्रधानतया तद्भिन्नस्यैव प्राधान्यमिति 'टाप्' भिन्नत्वे सति यदवशिष्टं तत् 'स्मेरराजीवनयन' इत्येतावत् प्रातिपदिकं, तस्य च विवक्षावशात् 'नयन' इत्येतावानंशः प्रकृतोपयुक्तः, तेन द्योत्यो धर्मिरूपो 'नयन' पदार्थः, असौ च द्वितीयेन सजातीयेन 'नयन' पदार्थेन। भिन्न एवेति स्फुटमभिन्नार्थतया पुनरुक्तत्वं, तेन च लाटानुप्रासो निर्बाधः। अत्र 'स्मेरराजीवनयने' इति समुदिते एव प्रातिपदिकत्वेनाभिमन्तव्येऽपि 'प्राधान्येन व्यपदेशा भवन्ती'ति 'नयन' इत्येतदेव प्रातिपदिकं कल्प्यम्, तदेवांशस्तेन द्योत्यस्य धर्मिरूपस्य 'नयन' इत्येतस्येत्यर्थः। 'स्मेरराजीव' इति 'टाप्' इति च तत्रैव प्रकारीभूततयाऽप्रधानम्।' इत्येके, 'स्मेरराजीवनयन' इत्येतावत् प्रादिपदिकं, तस्यांशो 'नयन' इति। अन्यत् स्पष्टम्।' इत्यपरे 'नयने' इत्येतावत् प्रातिपदिकं तदेवांशः। 'अंश' इतिशब्दोऽविवक्षित एव। अन्यत् स्पष्टम्।' इति बहवः प्राहुः। अत्र पूर्वस्य समस्ततया, उत्तरस्य तदभावात्समासासमासगतत्वम्। इति। अत्राहुः—कृतद्धितादिगतोऽप्ययं दृश्यते, यथा—'हंसायते चारुगतेन कान्ता कान्तायते स्पर्शसुखेन वायुः। वायुर्यथा वाति न वाति सद्वाक् सद्वाक्कृतं चारु न चारु चान्यत्॥' इत्यादौ। इति।

ननु एवमर्थान्तरसङ्क्रमितवाच्ये ध्वनावापाततः शब्दार्थयोः पौनरुक्त्यं प्रतिभासते, पर्य्यवसाने वक्तृतात्पर्य्यविषयविशेषगान्तरप्रतीत्याभिन्नार्थत्वमिति तत्राप्ययमेवास्तामिति चेन्नेत्यभिसन्धायाह—'**नयने**' इत्यादि।

**"नयने तस्यैव नयने च ।"** अत्र द्वितीयनयनशब्दो भाग्यवत्त्वादिगुणविशिष्टत्वरूपतात्पर्यमात्रेण भिन्नार्थः । यथा वा-

"यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ॥ ७६ ॥'

अत्र अनेकपदानां पौनरुक्त्यम्, एष च प्रायेण लाटजनप्रियत्वाल्लाटानुप्रासः ।

**६९ ( अ ) नुप्रासः पञ्चधा ततः ॥ ६० ॥ स्पष्टम् ।**

---

'**तस्य** तादृशस्य सुभगस्य । **एव** । **नयने** । नेत्रद्वयम् । च पुनः । **नयने** भाग्यवत्ताऽऽदिगुणविशिष्टे ।' अत्रास्मिन्नुदाहृते'येनानुपममनोज्ञे ! रमिताऽसि विलोकिताऽसि वा जातु । सुभगः स एव सुभगो नयने तस्यैव नयने च ॥' इति पद्यांशे इति यावत् । **द्वितीयनयनशब्दो** द्वितीयो द्वितीयवारं पठितोऽसौ नयनशब्दः 'स्वार्थेऽसम्भवन्' इति शेषः । **भाग्यवत्त्वाऽऽदिगुणविशिष्टरूपतात्पर्यमात्रेण** भाग्यं सौभाग्यमनयोरस्तीति तत्ता आदिर्येषां ( महनीयतादीनाम् ) ते,तथोक्ता अमी गुणा इति तैर्विशिष्ट इति तत्त्वं तद्रूपं च यत्तात्पर्यं वक्तुरभिप्रायस्तन्मात्रेणेति तथोक्तेन अभेदे हेतौ वा तृतीया । **भिन्नार्थो** भिन्नोऽर्थो यस्य स तथोक्तः । अत एव नात्र लाटानुप्रासः, किन्तु-अर्थान्तरसङ्क्रमितवाच्यो ध्वनिरेव' इति शेषः । 'अत्रायम्भावः-'स्मेरराजीवनयने नयने' इत्यत्रोभययोरपि नयनपदार्थयोः प्रातिपदिकांशबोध्यधर्मिरूपस्याभिन्नतया पौनरुक्त्येऽपि तात्पर्यमात्रे भेदाल्लाटानुप्रासः, 'नयने तस्यैव नयने च' इत्यत्र तु द्वितीयो नयनपदार्थः स्वार्थेऽसम्भवँल्लक्षणया भाग्यवत्ताऽऽदिगुणविशिष्टत्वरूपतात्पर्यमात्रेणार्थान्तरसङ्क्रमिततां नीत इति न लाटानुप्रासः, किन्तु-अर्थान्तरसङ्क्रमितवाच्यो ध्वनिरेव । इति ।

**यथा वा-"यस्य**'पुरुषस्य' इति शेषः । **सविधे** समीपे । 'समीपे निकटासन्नसन्निकृष्टसनीडवत् । सदेशाभ्याशसविधसमर्यादसवेशवत् ॥...' इत्यमरः । **दयिता** प्रिया । **न**'शेते'इति शेषः । **तस्य** तथाभूतस्य । **तुहिनदीधितिश्चन्द्रः** । तुहिनं हिमं दीधितिषु किरणेषु यस्य, तुहिनास्तुहिनवद् वा शीतला दीधितयो यस्य स इति तथोक्तः । 'भानुः करो मरीचिः स्त्रीपुंसयोर्दीधितिः स्त्रियाम् ।' इत्यमरः । **दवदहनो** वनाग्निः । 'विरहोद्दीपकतया भवती'ति शेषः । **यस्य** । च पुनः । अत्र समुच्चयार्थासम्भवात्'चे'ति'त्वि'त्यर्थे । **सविधे** । **दयिता** । 'शेते'इति शेषः । **तस्य** दयितयाऽनुगृहीतस्य । **दवदहनो** वनाग्निः । **तुहिनदीधितिश्चन्द्रः** । 'भवती'ति शेषः । एवमुभयथाऽपि रूपकम् ॥' अत्रार्या छन्दः,लक्षणं प्रोक्तं प्राक् ॥ ७६ ॥"

अत्रेदं बोध्यम्-'सविधे...' इत्यादीनामनेकेषां पदानां तात्पर्यमात्रभेदेनाम्रेडनमित्यनेकपदगतो लाटानुप्रासः । पूर्वत्र-तुहिनदीधितिमुद्दिश्य दवदहनत्वम्, उत्तरत्र पुनर्दवदहनमुद्दिश्य तुहिनदीधितित्वं विधीयते; इत्यनयोरेव वैपरीत्येन विधेयत्वम्, नतु क्रमेण तापकरत्वस्य शैत्यकरस्य वा, तथा सति भिन्नार्थत्वापत्त्या लाटानुप्रासोदाहरणं न सङ्गच्छेत । उद्देश्यविधेयभाववैपरीत्येन शाब्दबोधरूपान्वयभेदात्तात्पर्यभेदे स्फुटो लाटानुप्रासः । इति । तदेव निर्दिशति-**अत्र । अनेकपदानां** 'सविधे...स्तस्ये'त्येतेषामनेकेषां पदानामित्यर्थः । **पौनरुक्त्यं** 'सति तात्पर्यभेदेऽर्थैक्यात्'इति शेषः । **एषः । च । प्रायेणा**धिक्येन । **लाटजनप्रियत्वाल्**लाटस्तन्नामा देशविशेषश्चतुरो वा तस्य सोऽसौ वा जनस्तत्प्रियत्वात् । 'कारणात्' इति शेषः । 'लाटो देशविशेषे स्याद्दक्षे वस्त्रे तु नद्वयोः ।' इति श्रीकण्ठः । **लाटानुप्रासो** लाटो लक्षणया लाटप्रियोऽसावनुप्रास इति तथोक्तः ।

एवं सप्रभेदमनुप्रासमभिधाय तत्प्रभेदसङ्ख्यामाह-६९ **अनुप्रास** इत्यादिना ।

६९ **अनुप्रासो** निरुक्तलक्षणोऽलङ्कारविशेषः । **पञ्चधा** पञ्चविधः 'छेक-वृत्ति-श्रुत्य-न्त्य-लाटोपाधिभेदात्' इति शेषः । **मतः** । 'आलङ्कारिकै'रिति शेषः ॥ ६० ॥

नात्र किञ्चिद्विवरणीयमित्याह-**स्पष्टम्** । इति ।

**७० सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।**
**क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥ ६१ ॥**

अत्र द्वयोरपि पदयोः क्वचित् सार्थकत्वं, क्वचिन्निरर्थकत्वं, क्वचिदेकस्य सार्थकत्वम् अपरस्य निरर्थकत्वम्, अत उक्तम् 'सत्यर्थे' इति, 'तेनैव क्रमेणे'ति 'दमो मोद' इत्यादेर्विभक्तविषयत्वं सूचितम्। एतच्च-पदपादार्द्धश्लोकावृत्तित्वेन पादाद्यावृत्तेश्च अनेकविधतया प्रभूततमभेदम्। दिङ्मात्रमुदाह्रियते—

---

अथ यमकालङ्कारमाह—७० सतीत्यादिना ।

७० अर्थे वाच्यार्थे इत्यर्थः । **सति** । **पृथगर्थायाः** पृथग्भिन्नोऽर्थो यस्यास्तस्याः । **स्वरव्यञ्जनसंहतेः** स्वरसहिते व्यञ्जने इति, स्वरसहितानि व्यञ्जनानीति वा, तयोस्तेषां वा संहतिः समुदाय इति तस्यास्तथोक्तायाः । शाकपार्थिवादिवन्मध्यमपदलोपः।। 'स्वराश्च व्यञ्जनानि चेति तेषां संहतिस्तस्याः ।' इति तु न युक्तम्, 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते ।' इति नयेन संहतिपदस्य प्रत्येकमन्वयापत्त्या 'स्वरसंहतेः' 'व्यञ्जनसंहतेः' इत्यर्थापत्तेः । **तेन** पूर्वेण । **एव** नतु विपरीतेन । **क्रमेण** । **आवृत्तिः** पुनः पाठः । **यमकं** तन्नामाऽलङ्कार इत्यर्थः । यमौ द्वौ समानजातिकाविति यावत्, तत्प्रतिकृतिरिति तथोक्तम् । 'इवे प्रतिकृतौ ।' ५ । ३ ।९६ इति कन् । यद्वा—यमयति नियमयति स्वरव्यञ्जनसंहतिं क्रमेण निवेश्यत्वेनेति यमकम् । 'ण्वुल्तृचौ ।' ३ । १ । १३३ इति एण्वुल् । **विनिगद्यते** ॥ ६१ ॥

इदं तत्त्वम्—लाटानुप्रासोऽभिन्नार्थायाः स्वरव्यञ्जनसंहतेः :पुनरुक्तौ, अयं तु विभिन्नार्थाया इति विशेषः । 'शुभपते भवते' इत्यादावाद्यायाः 'भवता भवतापभीतोऽहम्' इत्यादावन्त्याया आवर्त्त्यमानायाः स्वरव्यञ्जनसंहतेरनर्थकतयाऽप्रसङ्गनिवारणाय 'सत्यर्थे' इत्युक्तम् । यद्यर्थस्तदा पृथग्भूत इत्यर्थः । 'वंदे देवं...' इत्यादावतिप्रसक्तिवारणाय 'क्रमेण तेनैवावृत्तिः' इत्युक्तम् । अत्र स्वरव्यञ्जनसंहतेः साम्येऽपि न स क्रमः । एवं च—समानार्थकत्वाभाववत्समानानुपूर्वीकस्वरसंवलितव्यञ्जनसंहत्यावृत्तिर्यमकम् । इति । तदिदं विवृणोति—**अत्र**ास्मिन् यमके इति यावत् । **क्वचित्** 'सुषमया समया दिवमञ्चति ॥' इत्यादौ इत्यर्थः । **द्वयोर्**यस्यावृत्तिर्विधीयते, यच्चावर्त्यते तयोरुभयोराद्यस्यान्त्यस्य चेत्यर्थः । **अपि** । **पदयोः** स्वरसंवलितव्यञ्जनसंहतिविशेषयोः । **सार्थकत्वम्** । **क्वचित्** 'विजयते जयतेपि त शात्रवम् ॥' इत्यादावित्यर्थः । 'पुन'रिति शेषः । **निरर्थकत्वम्** । क्वचित् 'द्वयोरपि पदयोः' इति पूर्वेणान्वयः । अथ—**क्वचित्** 'भवता भवतापभीतोऽहम् ॥,' 'समुदितं मुदितं भुवि तत् पुरम् ॥' इत्यादावित्यर्थः । **एकस्य** तयोर्द्वयोरेकतरस्याद्यस्यान्त्यस्य वेति यावत् । **सार्थकत्वम्** । **अपरस्य** तद्भिन्नस्येत्यर्थः । **निरर्थकत्वम्** । **अतो**ऽस्मात् कारणात् । **'अर्थे । सति।' इति । उक्तम्** । अयम्भावः—यत्र सार्थकत्वं तत्र पृथगर्थत्वमेव । अन्यथा लाटानुप्रासेनैक्यं स्यात् । अत एवाहुः प्रदीपकाराः—'अर्थे सतीति । यद्यर्थस्तदा भिन्न इत्यर्थः ।' इति । एवं च—पृथगर्थैवावर्त्यमाना स्वरसंवलितव्यञ्जनसंहतिर्यमकमिति फलितम् । **तेन** पूर्वेण । **एव** । **क्रमेण** 'पृथगर्थायाः स्वरव्यञ्जनसंहतेरावृत्तिर्यमक'मिति शेषः । **इत्य**भिधानेनेत्यर्थः । **'दम** इंद्रियजयः । **मोद** आह्लादः ।' **इत्यादौ** 'पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।' इत्यर्थः । **विभक्तविषयत्वं** विभक्तः पृथक्कृतो विषयो यस्य तत्त्वम् । **सूचितम्** । :अयम्भावः—'दमो मोदः' इत्यादौ पृथगर्थत्वमपि स्वरव्यञ्जनसंहतिरपि पूर्वक्रमस्य पर परित्याग इतीदं नास्य विषयः।इति।**एतद्** 'यमक'मिति शेषः। **च** । **पदपदार्धश्लोकावृत्तित्वेन** । पदावृत्तिरूपत्वेन पदार्धावृत्तिरूपत्वेन श्लोकावृत्तिरूपत्वेन चेत्यर्थः । **पादाद्यावृत्तेः**।आदिना पादद्वयादेर्ग्रहणम् । **च** । **अनेकविधतया**ऽनेकप्रकारैरवस्थिततया । **प्रभूततमभेदं** प्रभूततमा अतिसङ्ख्याका भेदा यस्य तत्तथोक्तम् । इदं बोध्यम्—अयं चालङ्कार एकस्मिन् पादे द्वयोर्वा पादयोश्चतुर्ष्वपि वा :पादेषु प्रयोज्यः, न तु त्रिषुः 'यमकं तु विधातव्यं न कदाचिदपि त्रिपात् ।' इति निषेधात् । अत एवोक्तं कविराजैः—'यमकस्य पादत्रयगतस्याप्रयुक्तत्वं दोषः ।' इति । अत्रेदं टिप्पणीकाराः प्राहुः ( १ ) 'यदि प्रथमपादो द्वितीये यम्यते तदा मुखयमकम् । यथा—'दर्पकान्तकविराजमानयाऽदर्पकान्तकविराजमानया । त्वत्प्रसादविधिलब्धया धिया साधवो दधति वैबुधीं धुरम् ॥' ( २ ) प्रथमस्तृतीयपादे चेत्, तदा संदंशः । यथा—'सन्नारीभरणोपायमाराध्य विधुशेखरम् । सन्नारीभरणोऽप्रायस्ततस्त्वं पृथिवीं जय ॥'

(३) प्रथमश्चतुर्थपादे चेत्तदाऽऽवृत्तिः । यथा-'मुदाऽऽरताडीसमराजिराऽजितः प्रवृद्धतेजाः प्रथमो धनुष्मताम् । भवान् बिभर्त्तीह नगश्च मेदिनीमुदार-ताडी-समराजि-राजितः ॥' (४) द्वितीयस्तृतीयपादे चेत्तदा गर्भः । यथा-'अध्यास्यते शमजुषा भवतः प्रसादादामोदराजि-तरु-चारु चिरं जनेन । दामोदरा-जितरुचा-रुचिरञ्जनेन कीर्णं तृणेन मृदुना वनमार्त्तवेन ॥' (५) द्वितीयपादश्चतुर्थे चेत्तदा संदष्टकम् । यथा -'शारदीमिव नदीं प्रसादिनीमुच्चकैरव-सरोज-राजिताम् । स्तोतुमेष मम मूर्त्तिमैश्वरीमुच्चकैरवसरोऽजराजिताम् ॥' (६) तृतीयपादश्चतुर्थे चेत्तदा पुच्छम् । यथा-'उत्तुङ्गमातङ्गकुलाकुले यो व्यजेष्ट शत्रून् समरे-सदैव । ससारमानीय महारिचक्रं ससारमानीयमहाऽरिचक्रम् ॥' (७) प्रथमपादस्त्रिष्वपि यम्यते चेत्तदा पङ्क्तिः । यथा-'तनुशङ्करवैरसमायतया तनुशङ्करवैरसमायतया । तनु शंकर वै रस-मायतया तनुशंकर वैरसमायतया ॥' 'हे शङ्कर ! मा मां रस सम्भावय । मां प्रति स्ववचनामृतं मुञ्चति । वै प्रसिद्धौ । कैः । अतनु यथा स्यात्तथा ये तनुशङ्का निःशङ्का रवा भक्तजनान् प्रत्यभयदानवचनानि तैः । कीदृशं मा कर्मभूतम् । असमोऽनन्यसदृशोऽयः शुभावहो विधिर्यस्य सोऽसमायः, तस्य भावस्तत्ता तयाऽसमायतयोपलक्षितम् । कथम्भूतयाऽ-समायतया । आयतयाऽनियतया । हे विभो, शं कैवल्यलक्षणं तनु विस्तारय,अहं रसं भक्तिरसं करवै। त्वं मा माम् अतनु-शम् अतनुः कामस्तं श्यति तनूकरोतीत्यतनुशस्तथाभूतं कर कुर्वित्यर्थः । करेति च्छान्दसः प्रयोगः । 'छान्दसा अपि क्वचिद्भाषायां प्रयुज्यन्ते' इति वचनात् । कया हेतुभूतया । वैरसमायतया वैरेणान्तरारिपुसद्भावजनितेन, सह मायया वर्त्तत इति समायः । तस्य भावस्तत्ता तया । कीदृश्याऽऽयतया विस्तीर्णया ।' इति तदर्थः । 'यमकं तु विधातव्यं न कदाचिदपि त्रिपात् ।' इति नियमादेकस्यापरपादद्वयगतत्वेन भेदो न भवतीत्यसङ्कीर्णे पादगतं यमकं सप्तधैव । (८) प्रथमः पादश्चतुर्थे पादे द्वितीयस्तृतीये चेद् यम्यते तदा वृत्तिगर्भयोगात् परिवृत्तिः । यथा-'मुदा रताऽसौ रमणीयतायां स्मरस्यदोऽलंकु-रुते नवोढा । स्मरस्यदोऽलंकुरुतेऽनवोढामुदारतासौ रमणीयतायाम् ॥' (९) प्रथमो द्वितीये तृतीयश्चतुर्थे चेद् यम्यते तदा मुखपुच्छयोगाद् युग्मकम् । यथा-'शमित-सज्जमसज्ज-नतापदं शमितसज्ज-मसज्जनतापदम् । न-मत-काममहीन-विभासितं नमत काममहीन-विभा-सितम् ॥' इत्यर्थाभ्यासमृते पादद्वयावृत्तौ द्वयमिति नव । (१०) अर्धावृत्तिः समुद्रकम् । यथा-'कलि-तमो-हनमारव-राजितं स्मर हरं शिखि-चन्द्रकला-ऽञ्छितम् । कलितमोहन-मारवरा-ऽजितं स्मरहरं शिखिचन्द्रकलाञ्छितम् ॥' (११) श्लोकावृत्तिर्महायमकम् । यथा-'सकलशं सकपालमलङ्कृतप्रमदमस्थिरसं मदनाशनम् । भवमदभ्र-महानिधने हितं शमनमज्जनमानमताऽलयम् ॥ 'सकल-शंसक-पालमलं कृतप्रमदमास्थिर-सम्मद-नाशनम् । भव-मद-भ्रम-हानि धनेहितं शम-नमज्जन-मान-मताऽऽलयम् ॥' 'अदभ्रे यन्महद् अनिधनम् अविनाशित्वं निजभक्तजनदेयं तत्र हितम् । शमनं यमं मज्जयतीति, तं शमनमज्जनम् । अलयं निर्नाशम् । सकला ये शंसकाः स्तुतिकर्त्तारस्तान् पालयति तथाभूतम् । कृतः प्रमदः परमानन्दो येन तादृशम् । भवे संसारे यः मदस्तेन यो भ्रमस्तस्य हानिः, सैव धनं येषां ते संसारभ्रमविरक्तास्तैरीहितस्तम् । शमेन नमन्तो ये जनास्तेषां मानार्थं मतोऽङ्गीकृतः आलयः प्रतिदेहस्थितिरूपो येन तादृशम् । शेषं स्पष्टम् ।' इति तदर्थः । एतद्द्वितयमपि पादावृत्तिविशेष इत्येकादश पादयमकानि । पादभागवृत्ति (यमकं) त्वनेकविधम्-द्विधा विभक्तेषु पादेषु प्रथमादिपादानामाद्यभागाः पूर्ववद्द्वितीयादिपादेष्वाद्यभागेष्वेव यदि यम्यन्ते तदा पूर्ववन्मुखादयो दश भेदा उत्पद्यन्ते । यथा-प्रथमपादाद्यभागो द्वितीयतृतीयचतुर्थपादाद्यभागेषु यम्यत इति त्रिधा । द्वितीयपादाद्यभागस्तृतीयच-तुर्थपादाद्यभागयोर्यम्यते इति द्विधा । तृतीयपादाद्यभागश्चतुर्थपादाद्यभागे यम्यत इत्येकः । प्रथमपादाद्यभागस्त्रिष्वपि आद्यभागेषु यम्यत इत्यन्य इति सप्तासङ्कीर्णभेदाः । प्रथमपादाद्यभागसमानो द्वितीयपादाद्यभागस्तृतीयपादाद्यभागसमान श्चतुर्थपादाद्यभाग इत्येकः सङ्करः । प्रथमपादाद्यभागस्तृतीयपादाद्यभागसमानो द्वितीयपादाद्यभागश्चतुर्थपादाद्यभागसमान इत्यपरः सङ्कर इति नव । अर्धावृत्त्या समं पूर्ववद्दश भेदाः। एवं प्रथमादिपादानामन्त्यभागस्य द्वितीयादिपादान्त्यभागेष्वेव-यमने पूर्ववद्दश भेदा जायन्ते । यथा-प्रथमपादान्त्यभागस्य द्वितीयतृतीयचतुर्थभागेषु यमनं त्रिधा । द्वितीयपादान्त्य-भागस्य तृतीयचतुर्थपादान्त्यभागयोर्यमने द्विधा । तृतीयपादान्त्यभागस्य चतुर्थपादान्त्यभागे यमन एकः । प्रथमपादान्त्य-भागस्य त्रिष्वप्यन्त्यभागेषु यमन इत्यपर इति सप्तासङ्कीर्णाः । प्रथमपादान्त्यभागद्वितीयपादान्त्यभागयोस्तृतीयपादान्त्य-

"नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम् ।
मृदुलतान्तलतान्तमलोकयत् स सुरभिं सुरभिं सुमनोभरैः ॥ ७७ ॥"

अत्र पदावृत्तिः "पलाशपलाश" इति, "सुरभिं सुरभिम्" इत्यत्र च द्वयोः सार्थकत्वम्, "लतान्तलतान्त"इत्यत्र प्रथमस्य निरर्थकत्वम्, "परागपराग" इत्यत्र द्वितीयस्य । एवमन्यत्राप्युदाहार्य्यम् ।

---

भागचतुर्थपादान्त्यभागयोश्च साम्येऽन्य इति सङ्करा इति नव । अर्धावृत्त्या समं पूर्ववद्दशभेदाः । इत्थं द्विखण्डीकृतेषु पादेषु विंशतिः, त्रिखण्डीकृतेषु त्रिंशत, चतुःखण्डीकृतेषु चत्वारिंशद्भेदाः स्थानापरिवर्त्तिनो भवन्ति । तेषामुदाहरणानि पादावृत्तिदिशैवावसेयानि । अथ-स्थानपरिवर्त्तनभेदाः-प्रथमादिपादानामन्त्यादिभागा द्वितीयादिपादानामाद्यादिभागेषु यम्यंते इत्याद्यन्वर्थताऽनुसारेणान्त्याद्यादियमकादयः प्रभेदा भवन्ति । तथा हि-द्विखण्डे यथा प्रथमपादस्यान्त्यमर्धं द्वितीयपादस्यार्धं चेद् यम्यते तदाऽन्तादियमकम् । प्रथमभाग एव चेदन्त्यभागे तदाद्यन्तयमकम् । एवं प्रथमपादस्याद्यान्तभागौ द्वितीयस्यान्तादिभागयोर्यम्येते तदाद्यन्तादियमकयोः समुच्चयः । अत्र त्रिखण्डचतुःखण्डयोः पूर्वपादमध्यभागे उत्तरपादस्यादिभागे यदि यम्यते तदा मध्यादियमकम् । पूर्वस्यादिभागश्चेदुत्तरस्याद्यमध्ययोस्तदा मध्याद्यादिमध्ययोः समुच्चयः । एवं-प्रथमस्यान्त्यभागो द्वितीयस्य मध्यभागे चेत्तदाऽन्त्यमध्यम् । पूर्वस्य मध्यभागश्चेद् द्वितीयस्यान्त्यभागे तदा मध्यान्तिकम् । पूर्वस्यान्त्यमध्यभागौ चेद्द्वितीयस्य मध्यान्त्यभागयोस्तदान्त्यमध्यमध्यान्त्ययोः समुच्चयः । यद्यपि पूर्वस्यादिभाग उत्तरस्यान्त्यभागे चेत्तदाद्यन्तकमन्त्यभागस्त्वाद्यभागे चेत्तदादिकमित्यादिप्रकारद्वयं सम्भवति, तथाऽपि द्विखण्डान्तर्गतमेव तदिति पृथङ् न गण्यते । सर्वेषां चैषामपरः समुच्चय इति भिन्नपादे यमने प्रभेदाः । एवं तस्मिन्नेव पादे आद्यादिभागानां मध्यादिभागेष्वावृत्तौ भेदा द्रष्टव्याः । सर्वे चैते नियतस्थानविवक्षया स्थानयमकभेदा नियतेषु स्थानेष्वावृत्तेरिति बोध्यम् । अनियतस्थानयमकभेदा अपि बहवो भवन्तीति प्रभूततमभेदं यमकम् । एतेषामुदाहरणानि तत्र महाकविप्रयोगेष्वनुसन्धेयानि, विस्तरभयान्नेह प्रपञ्च्यन्ते ॥' इति ।

इक्षुदण्डे चर्व्यमाणे गडुवत् काव्येऽपि यमकस्य रसप्रतिबन्धकत्वमित्येतस्य प्रभूततयोदाहृतैरपि किं भेदैरित्याशयेनाह-**दिङ्मात्र**मित्यादि । स्पष्टम् '**नवे**'त्यादि ।

'स श्रीकृष्णः । **नवपलाशपलाशवनं** नवानि पलाशानि पत्राणि यस्य तत्, तादृशं पलाशवनं पलाशानां (किंशुकानां)वनं यत्र तम् । 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् ।' इति'पलाशे किंशुकः पर्णो वातपोथः'इति चामरः । **स्फुटपरागपरागतपङ्कजं** स्फुटानि विकसितानि परागपरागतानि पङ्कजानि यत्र तम् । परागेण सुगन्धाश्रितेन रजोविशेषेण परागतानि व्याप्तानीति परागपरागतानि । 'परागः सुमनोरजः ।' इत्यमरः । **मृदुल-तान्त-लतान्तं** मृदुलाः कोमला अत एव तान्ताः क्लिष्टाः ( आतपेन ) लताऽन्ता लतानामन्ता अन्त्यावयवा यत्र तम् । तमेःक्त 'अनुनासिकस्य क्विझलोःक्ङिति ।' ६।४।१५ इति दीर्घे तान्तः।'अथास्त्रियाम् । अन्तो जघन्यं चरममन्त्यःपाश्चात्यपश्चिमम् ।' इत्यमरः । **सुमनोभरैः** सुमनसां पुष्पाणां भरा अतिशयाः समृद्धय इति यावत् तैः । 'स्त्रियां सुमनसो भूम्नि पुष्पं' इति व्याडिः । 'अथातिशयो भरः ।' इत्यमरः । **सुरभिं** सुगन्धिम् । **सुरभिं** वसन्तम् । 'सुरभिश्चम्पके स्वर्णे जातीफलवसन्तयोः । सुगन्धौ च मनोज्ञे च वाच्यवत् ।' इति विश्वः । **पुरः** पुरस्तात् प्रथमं वा । **अलोकयत्** ॥ ७७ ॥'

अत्र यमकं दर्शयति-**अत्र** । **पदावृत्तिः** पदस्य पादांशस्यावृत्तिः तत्प्रभेदं यमकमिति यावत् । तत्र च '**पलाशपलाश**'इति । 'अत्रे'ति शेषः । '**सुरभिं सुरभिम्**' इत्यत्र । **च** । **द्वयो**राद्यान्त्ययोः पादांशयोरित्यर्थः । **सार्थकत्वम्** । '**लतान्त-लतान्त**' इत्यत्र । **प्रथमस्य** प्राथमिकस्य । **निरर्थकत्वम्** । 'तदवयवायमानस्य'ल' इत्यस्य पदान्तरावयवत्वात् ।' इति शेषः।'**पराग-पराग**' इत्यत्र । **द्वितीयस्य** 'परागत' इत्यंशभूतस्यान्त्यस्य यमकस्येत्यर्थः । 'पुनर्निरर्थकत्वम्'इति शेषः । एवं च-पादांशभूतानां'पलाशा'दिपदानामावर्त्यमानत्वात्पदावृत्तिर्नाम यमकम् ।

"यमकादौ भवेदैक्यं डलोर्बवोर्लरोस्तथा ।" इत्युक्तनयात् 'भुजलतां जडतामबलाजनः' इत्यत्र न यमकत्वहानिः ।

७१ अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद् यदि ।
अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा ॥ ६२ ॥

'द्विधे'ति श्लेषवक्रोक्तिः, काकुवक्रोक्तिश्च । क्रमेणोदाहरणम्—

"के यूयं, स्थल एव सम्प्रति वयं, प्रश्नो विशेषाश्रयः,
किं ब्रूते विहगः स वा फणिपतिर्यत्रास्ति सुप्तो हरिः ।
वामा यूयमहो विडम्बरसिकः कीदृक् स्मरो वर्त्तते
येनास्मासु विवेकशून्यमनसः पुंस्वेव योषिद्भ्रमः ॥ ७८ ॥"

---

इदं च बोध्यम्—अत्र एषां सार्थकत्वं निरर्थकत्वं च, यत्र पुनः सार्थकत्वं तत्रार्थौ भिन्न एवेति न लाटानुप्रासेनास्य गतार्थत्वम् । इति । **एवम्** । **अन्यत्र** । **अपि** । **उदाहार्यम्** ।

ननु ' अनुभवन्नवदोलमृतूत्सवं पटुरपि प्रियकण्ठजिघृक्षया । अनयदासनरज्जुपरिग्रहे भुजलतां जडतामबलाजनः॥' इत्यादौ यमकं कथं सम्भवति, तथैवावृत्त्यभावात् । इत्याशङ्कयाह—'**यमकादौ** । आदिना श्लेषादिग्रहणम् । 'अलङ्कारे' इति शेषः । **डलोर्ड**कारलकारयोः । **बवोर्व**कारवकारयोः । तथा **लरोर्ल**काररकारयोः । **ऐक्यं** समानात्मकत्वम् । **भवेत्** । 'शष ( सष ) योर्नणयोश्चान्ते सविसर्गाविसर्गयोः । सबिन्दुकाविन्दुकयोः स्यादभेदप्रकल्पनम् ॥' इति शेषः । **इत्युक्तनयात्** । '**भुजलतां जड (ल) तामबलाजनः**॥' इत्यत्र । 'कालिदासप्रबन्धे' इति शेषः । **यमकत्वहानिः** । **न** । डकारलकारयोः सबिन्दुकाबिन्दुकयोश्च भेदसत्त्वेऽपि श्रुतिसाम्यात्' इति शेषः ।

अथ वक्रोक्तिं लक्षयति ७१ **अन्यस्ये**त्यादिना ।

७१ **अन्यो** भिन्नो जनः 'वक्तु'रिति शेषः । **यदि** । **अन्यस्य** स्वभिन्नस्य वक्तुरित्यर्थः । **अन्यार्थकम**न्यः स्वतात्पर्य्याद्भिन्नोऽर्थस्तात्पर्य्यं यस्य तत् । **वाक्यम्** । **अन्यथा**ऽर्थान्तरप्रतिपादकत्वेन । **योजयेत्** समर्थयेत । तर्हि— **वक्रोक्तिः** । **सा** । 'यत' इति शेषः । **श्लेषेण** शब्दश्लेषेण । **वा**ऽथवा । **काक्वा** ध्वनिविकारेण । 'सम्पद्यते' इति शेषः । **ततस्त**स्मात् कारणात् । **द्विधा** द्विविधा । इदं तत्त्वम्—येन केनापि जनेन येन केनापि तात्पर्य्येण यत् किञ्चिदुक्तं तद्भिन्नेन जनेन पुनस्तत् किमपि वाक्यं तद्भिन्नेन केनापि तात्पर्य्येण कल्प्यते, तद् ( वाक्यं ) वक्रोक्तिर्नामालङ्कारः, तत्र तथा कल्पनं श्लेषेण काक्वा वेति द्विविधैषा । श्लेषश्च सभङ्गपदोऽभङ्गपदश्चेति श्लेषवक्रोक्तिर्द्विविधा । शब्दपरिवृत्त्यसहत्वाच्छाब्दीयम् । इति ॥ ६२ ॥

कारिकां सुगमयितुमाह—**द्विधे**त्यादि । स्पष्टम् । उदाहरति—'**के** । **यूयं** पुरःस्थिता भवन्तः । (इति वक्तृतात्पर्य्यम् ) **सम्प्रति** । **वयम्** । **स्थले** निर्जले प्रदेशे । **एव** न तु के (जले) 'मारुते वेधसि ब्रध्ने पुंसि कः, कं शिरोऽम्बुनोः।' इत्यमरः । ( इति तात्पर्य्यान्तरम् ) । वक्ताऽऽह—**विशेषाश्रयो** विशेषो व्यक्तिराश्रयो विषयो यस्य सः । **प्रश्नः** ( युष्मद्व्यक्तिजिज्ञासाविषयको मम प्रश्नः । इति तात्पर्य्यम् ) । **विहगः** पक्षी । **किम्** । **ब्रूते** पृच्छति । **यत्र** यद्योगे इत्यर्थः । **हरि**र्विष्णुः । **सुप्तः** । **अस्ति** । **सः** । **वा** । **फणिपतिः** शेषः । 'किं ब्रूते'इति पूर्वेणान्वयः । ( विश्व शेषश्चेति तावाश्रयोऽधिष्ठानं यस्य सः । तथा च न युष्मभ्यं, किन्तु वये ( पक्षिणे ) शेषाय वा मम प्रश्न इति तात्पर्य्यान्तरेणोत्तरम् ) 'नगौकोवाजिविकिरविविष्किरपतत्रियः ।' इत्यमरः । एवमुत्तरेण कदर्थित आह—**वामाः** कुटिलाः । 'वामं सव्ये प्रतीपे च द्रविणे चातिसुन्दरे । पयोधरे हरे कामे विद्याद्वाममपि स्त्रियाम् ॥' इति विश्वः । **यूयम्** ( वाक्छलेन कदर्थयथेति यूयं कुटिला इति तात्पर्य्यम् ) । **अहो** आश्चर्य्यम् । **येन** यद्द्वारा यद्वशतयेति यावत् । **अस्मात्** । **पुंसु** पुंव्यक्तिकेषु विषये । **एव** । अप्यर्थमिदम् । **विवेकशून्यमनसो** विवेकेन विचारेण वक्तव्यावक्तव्यरूपेणाज्ञानेनेति यावत्, शून्यं रहितं मनो बुद्धिर्यस्य तस्येति तथोक्तस्य। 'मनश्चित्ते मनीषायाम् ।' इति व्याख्यासुधा । **योषिद्भ्रमो** योषिदवलम्बनो भ्रमः:( अत

अत्र 'विशेष'पदस्य 'विः ( पक्षी ) शेषो (नागः)' इत्यर्थद्वययोगात् सभङ्गश्लेषः । अन्यत्र तु अभङ्गः ।

'काले कोकिलवाचाले सहकारमनोहरे । कृतागसः परित्यागात्तस्याश्चेतो न दूयते ॥ ७९ ॥"

अत्र कयाचित्सख्या निषेधार्थे नियुक्तो नञ्, अन्यथा काक्वा 'दूयत एव' इति विध्यर्थे घटितः ।

**७२ शब्दैरेकविधैरेव भाषासु विविधास्वपि ।**
**वाक्यं यत्र भवेत्सोऽयं भाषासम इतीष्यते ॥ ६३ ॥**

---

एव-वामाः स्त्रियो यूयमिति प्रश्नः । इति तात्पर्यान्तरम् । सः-**विडम्बरसिको** विडम्बः प्रतारणं तत्र रसिकः । **स्मरो** मदनः । **कीदृक्** । **वर्त्तते** ॥' अत्र शार्दूलविक्रीडितं वृत्तम् । तल्लक्षणं चोक्तं प्राक् ॥ ७८ ॥

**अत्रे**त्यत्रेत्यर्थः । 'वक्रोक्तौ'इति शेषः । **विशेषपदस्य**'विशेषाश्रय'इत्यवयवभूतस्य'विशेष' इति शब्दस्य । **विः ( पक्षी ) शेषः । ( नागः ) इत्यर्थद्वययोगात् । सभङ्गश्लेषो** भङ्गो विभागस्तेन सह वर्त्तते इति सभङ्गः,सोऽसौ श्लेषः । **अन्यत्र । तु** पुनः । **अभङ्गः** । 'श्लेषः'इति शेषः ।

यथा वा-'किं गौरि ! मां प्रति रुषा ननु गौरहं किं कुप्यामि कां प्रति मयीत्यनुमानतोऽहम्।जानाम्यतस्त्वमनुमानत एव सत्यमित्थं गिरे गिरिभुवः कुटिला जयन्ति ॥' इत्यत्र 'गौरिमाम्''अनुमानतोऽहम्'इत्येतयोर्भङ्ग एव श्लेषः । यथा वा-'नाथ ! मयूरो नृत्यति, तुरगवदनवक्षसः कुतो नृत्यम् । ननु कथयामि कलापिनमिह सुखलापी प्रिये ! कोऽस्ति ॥' इत्यत्र-'मयूरः' 'कलापिनम्'इत्येतयोर्भङ्गे श्लेषः । अभङ्गश्लेषो यथा-'अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता।दारुणा श्रूयते बुद्धिर्नतु दारुमयी क्वचित् ॥' इत्यत्र 'दारुणे'त्यभङ्गमेव श्लिष्टम् । अत्राहुः प्रदीपकाराः-'इयं च न वाकोवाक्यमात्रे किन्तु स्वतोऽप्यन्येनोक्तस्यान्यथायोजनमात्रे, न्यायसाम्यात् । यथा-'कृष्णो वैरिविमर्दने सुविदितः प्रीत्यर्जने त्वर्जुनः पीतः पङ्कजलोभिरभितो नेत्राञ्चलैश्चञ्चलैः । रक्तः सज्जनसङ्गमेषु करणश्रेणीगणे श्रीधर ! स्थाने वर्णचतुष्टयस्य भुवने भर्त्ता भवान् गीयते ॥' इत्यत्र वर्णचतुष्टयस्य भर्त्ता श्रीधर इति सार्वलौकिकं वाक्यमन्वयश्लेषादिनाऽस्माभिः समर्थितम् ।' इति । वाकोवाक्यं चान्याभिप्रायेणोक्तस्य वाक्यस्यान्याभिप्रायेण योज्यमानत्वम्। तदुक्तम् । 'अन्याभिप्रायेणोक्तं वाक्यमन्येनान्यार्थकतया यद्योज्यते सा वक्रोक्तिः । एतदेव वाकोवाक्यमुच्यते ।' इति ।

एवं श्लेषमूलां वक्रोक्तिमुदाहृत्य काकुमूलामुदाहरति-'**काले**' इत्यादिना । इति ।

'**कोकिलवाचाले** कोकिलैर्वाचालस्तत्र । कोकिलानां ध्वनिभिर्व्याप्ते इत्यर्थः । यद्वा कोकिला एव वाचाला विरहिजनस्य दुःखप्रदतया बहुलतया वाऽनादरास्पदका कलिका यत्र तत्रेति तथोक्ते । 'आलजाटचौ बहुभाषिणि ।' ५ । २ । १२५ इति वाच आलः । **सहकारमनोहरे** सहकारैरतिसौरभैराम्रैर्मनोहरस्तत्र 'सहकारोऽतिसौरभः ।' इत्यमरः । **काले** समये वसन्तर्तौ इति यावत् । **कृतागसः** कृतमागोऽपराधः सपत्नीपरिष्वङ्गरूपो येन तस्येति भावः । 'अपि प्रियस्य' इति शेषः । 'आगोऽपराधो मन्तुश्च ।' इत्यमरः । **परित्यागात्** परित्यागकरणात् । तं परित्यज्यावस्थानादित्यर्थः । **तस्या** मम सख्याः । **चेत**श्चित्तम् । **न ? दूयते** । 'दु' उपतापे ।' अत्र कयाऽपि 'न दूयते' इति निषेधार्थकतया प्रयुक्तो 'नञ्' शब्दोऽन्यथाविध्यर्थतया योजितः । कानेकतयाःच छेकानुप्रासः ॥ ७९ ॥'

अत्र काकुं दर्शयति-**अत्रा**स्मिन्नुदाहृते पद्य इति भावः । **कयाञ्चित्** । **सख्या** । **निषेधार्थे** । **नञ्** 'नञ्' इति शब्दः । **नियुक्तः** । **अन्यथा** 'पुन'रिति शेषः । **काक्वा** काकुद्वारा । '**दूयते** । **एव**' इतीत्येवम् । **विध्यर्थे** । **घटितो योजितः**। यथा वा-'गुरुपरतन्त्रतया वत दूरतरं देशमुद्यतो गन्तुम् । अलिकुलकोकिलललिते सखि ! नैष्यति सुरभिसमयेऽसौ ॥' इत्यत्र 'नैष्यती' ति कयाऽपि निषेधार्थकतयोक्त्याऽन्यया विध्यर्थे तस्यैव काक्वा योजित्वात् । यथा वा-'सुस्मितरुचिरं मधुरं सुभगे मुदितं विलासि मित्रेण । तव मुखमिदमयि दयिते ! कुवलयमेवानुसञ्जयति ॥' इत्यत्र काक्वा 'एवे'ति निषेधे समर्थ्ये 'कुवलयमेव न किन्तु 'कमलमपी' ति विध्यर्थे समर्थ्यते ।

अथ भाषासममाह-७२**शब्दै**रित्यादिना ।

**७२ यत्र** यस्मिन्नलङ्कारे शब्दन्यासे वा।**विविधासु** संस्कृतप्राकृताद्यनेकतयाऽनेकविधासु। **अपि** । **भाषासु** विषये । **एकविधैः** । **एव** । **शब्दैः** । अभेदे तृतीया । तथा च-तादृशशब्दाभिन्नमिति फलितम् । **वाक्यम्** । **भवेत्** ।

यथा मम–"मञ्जुलमणिमञ्जीरे कलगम्भीरे विलाससरसीतीरे ।
विरसाऽसि केलिकीरे किमालि धीरे च गन्धसारसमीरे ॥८०॥"

एष श्लोकः संस्कृतप्राकृतशौरसेनीप्राच्यावन्तीनागरापभ्रंशेष्वेकविध एव ।

"सरसं कइण कव्वम्" इत्यादौ तु "सरस"मित्यत्र संस्कृतप्राकृतयोः साम्येऽपि वाक्यगतत्वाभावे वैचित्र्याभावान्नायमलङ्कारः ।

७३ श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते ।

---

सः । **अयम्** अलङ्कारः शब्दन्यासो वेति शेषः । **भाषासमो** भाषया भाषणेन समस्तुल्य इति तथोक्तः । 'पूर्वसदृशसनामार्थकलहनिपुणमिश्रश्लक्ष्णैः ।' २ । १ । ३१ इति समासः । **इति** । **इष्यते**ऽभिलष्यते । 'आलङ्कारिकै'रिति शेषः ॥ ६३ ॥

उदाहरति–**यथा** । **मम** विश्वनाथस्य कृतौ–"मञ्जुलमणिमञ्जीरे" इत्यत्र' ।

'हे **आलि** सखि ! "**मञ्जुलमणिमञ्जीरे**" मंजुलो मनोरमोऽसौ मणि ( युक्त ) मञ्जीरो नूपुरस्तत्र । 'मनोज्ञं मंजु मंजुलम् ।' 'रत्नं मणिर्द्वयोरश्मजातौ मुक्ताऽऽदिकेऽपि च' 'मञ्जीरो नूपुरोऽस्त्रियाम् ।' इति चामरः । तथा–**कलगम्भीरे** कलेन कोकिलादीनां रवविशेषेण गम्भीरेऽत्यन्तं निविडतया पूर्णे । **विलाससरसीतीरे** विलासः क्रीडा तस्य या सरसी वापी तस्यास्तीरं तत्र । तथा–**केलिकीरे** केलेः क्रीडायाः कीरः शुकस्तत्र । **च** पुनः । **धीरे** मन्दे । **गन्धसारसमीरे** गन्धसारं चन्दनं तस्य समीरो वायुस्तत्र । **किम्** । **विरसा** विरक्ता । **असि** । अत्र स्कन्धकं वृत्तम् । तदुक्तम् यथा–'स्कन्धकमिति तत् कथितं यत्र चतुष्कलगणाष्टकेनार्धं स्यात् । तत्तुल्यमग्रिमदलं भवति चतुःषष्टिमात्रकशरीरमिदम् ॥' इति ॥ ८० ॥

अत्र कथं भाषासमत्वमित्याशङ्कामपनेतुमाह–

**एष** उदाहृतः । **श्लोकः** पद्यम् । **संस्कृतप्राकृतशौरसेनीनागरापभ्रंशेषु** । **एकविध** एकप्रकारः । **एव** । तस्मादत्र भाषाणां साम्याद्भाषासमः इति शेषः । विस्तरभयादुपरम्यते ।

अथ यत् किञ्चिद्वाक्यांशभूतं पदं भाषासममपि नास्य पात्रमित्याह–'**सरसं** रसयुक्तम् । **कइण** कवेः । 'कगचजतदपयवां प्रायो लोपः ।' २।२ इत्यनेन वस्य लोपः । 'इदुतोः शसोणो' ५।१४ इत्यनेनेतः परस्य ङसो णो ॥ **कव्वं** काव्यम् । 'अदातो यथादिषु वा ।' १ । १० इत्यातोऽदादेशः । अधोमयाम् ।' ३।२ इति यलोपः ।' **इत्यादौ** । **तु** पुनः । '**सरसं**' **इत्यत्र संस्कृतप्राकृतयोः** संस्कृतस्य प्राकृतस्य चेत्यर्थः । **साम्ये** । **अपि** । **वाक्यगतत्वाभावे** वाक्यं 'सरसं कइणो कव्वं' इति, तद्गतत्वाभावे सतीत्यर्थः । 'तस्य साम्यस्ये'ति शेषः । **वैचित्र्याभावात्** । **अयम्** । **अलङ्कारः** । **न** नास्ति । अत्रायम्भावः–'सरसं कइणो कव्वं पअडिअपीऊसप्पसारसव्वस्स । तहजह णिचं मुदिअं सुखिणं पेअं मुहं तेत्थि ॥' इत्यादौ 'सरसं' इत्यादेर्वाक्यत्वाभावाद्भाषासमस्य च वाक्यमात्रसम्भवितया नात्र भाषासमोऽलङ्कारः । इति ।

अथ सप्रभेदं श्लेषं लक्षयति–७३ **श्लिष्टै**रित्यादिना ।

**७३ श्लिष्टैः** सम्मिलितैः परस्परं विभिन्नतां परित्यज्यानन्यतयाऽवस्थितैरिति यावत् । **पदैः** शब्दैः 'पदं शब्दे च वाक्ये च व्यवसायापदेशयोः । पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः ॥' इति विश्वः । **अनेकार्थाभिधाने**ऽनेके येऽर्थास्तेषामभिधान-मभिधयोपस्थापनं तत्रेति तथोक्ते । 'सती'ति शेषः । **श्लेष**स्तदाख्यः शब्दगतोऽलङ्कार इत्यर्थः । **इष्यते** । अत्राहुस्तर्कवागीशाः–'सकृदुच्चारितः शब्दः सकृदर्थं गमयती'ति नयेन काव्ये स्वरभेदानादराद् 'यावन्तोऽर्थास्तावन्त एव शब्दा एकप्रयत्नेनोच्चार्य्यन्ते' इति नये युगपन्नानाशब्दोच्चारणेऽपि तेषां भेदोपलम्भो न भवति । तत्रापि प्रकरणादिनियमाभावादनेकार्थानामभिधयैव बोधः । प्रकरणादिनियमसत्त्वे तु एकस्याभिधयाऽपरस्य व्यञ्जनयेति मतमाश्रित्येदं लक्षणम् । एवं च–एकप्रयत्नोच्चार्यत्वेन लुप्तभेदानां वर्णादीनां मेलकः श्लेषः, तद्विशिष्टैः पदैरनेकार्थानामभिधया बोधने सति

**वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि ॥ ६४ ॥**
**श्लेषाद्विभक्तिवचनभाषाणामष्टधा च सः ।**

---

श्लेषो भवतीत्यर्थः। एवं सति नात्माश्रयः।' इति। स श्लेषः। च पुनः। **वर्णप्रत्ययलिङ्गानां** वर्णौ च प्रत्ययौ च लिङ्गे चेति तेषां तथोक्तानाम्। वर्णौ प्रत्ययाद्यतिरिक्ताक्षरविशेषौ। प्रत्ययौ विभक्तिभिन्नौ शब्दविशेषौ, अन्यथा 'विभक्ति…' इति पृथगुपादानमयुक्तं स्यात्। उक्तं च प्रदीपकारैः 'विभक्तेर्वैचित्र्यविशेषहेतुतया पृथगुपादानात् प्रत्ययपदं तदतिरिक्तपरम्।' इति। अत एव वामनाचार्यैरप्युक्तम्-'प्रत्ययः प्रत्ययसञ्ज्ञकः। प्रत्येति (प्रत्याययति) अर्थं बोधयतीति व्युत्पत्तिः। एवं च-प्रत्ययाधिकारपठितत्वे सत्यर्थबोधकत्वं प्रत्ययत्वम्। प्रत्ययपदमत्र गोबलीवर्दन्यायेन विभक्तिभिन्नपरम्।' इति। लिङ्गे पुंस्त्वस्त्रीत्वरूपे पुंस्त्वनपुंसकत्वरूपे स्त्रीत्वनपुंसकत्वरूपे वा। प्रकृत्योः प्रत्ययविधानावधिभूतयोः। **पदयोः**। अपि तथेत्यर्थः। अव्ययानामनेकार्थत्वात्। **विभक्तिवचनभाषाणाम्**। **श्लेषा**न्मिलितत्वात्। 'कारणा'दिति शेषः। **अष्टधा**ऽष्टप्रकारः। अत्रेदं तत्त्वम्-'सकृदुच्चारितः शब्दः सकृदर्थं गमयति' 'अर्थभेदे शब्दभेदः' 'काव्यमार्गे स्वरो न गण्यते,' 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः' इत्याद्युक्तदिशाऽनेकार्थस्याप्येकस्य शब्दस्य 'संयोगो विप्रयोगश्च...शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः।' इत्युक्तदिशा संयोगादिपरतन्त्रतयाऽर्थद्वयवाचकत्वं न वक्तुं शक्यते, यत्र पुनरर्थद्वयं तत्र संयोगादिमहिम्ना प्रकरणाद्यनियन्त्रितत्वे एव, अथ यत्रैकवाच्यार्थस्याप्येकस्य शब्दस्यार्थद्वयं, तत्र कविकौशलेनैकवत् प्रतीयमानस्य शब्दद्वयस्य माहात्म्यम्, नतु वस्तुत एकस्य। यत्र पुनर्वस्तुत एक एव शब्दः सोऽपि स्वभावादेकार्थस्तत्राभिधेयार्थस्त्वेक एव, किन्तु क्वचिल्लक्ष्योऽपि, यथाऽर्थश्लेषे, एवं स्वभावादेकवाच्यार्थस्यैकस्यापि शब्दस्याभिधा ( निरूढ ) लक्षणाभ्यामर्थद्वयेऽर्थश्लेषः, अनेकवाच्यार्थस्य प्रकरणाद्यनियन्त्रितस्यैकस्यापि शब्दस्य संयोगादिमहिम्नाऽर्थद्वये पुनः शब्दविशेषगतोऽभङ्गः श्लेषः। प्रकरणादिनियन्त्रितस्य तस्यार्थद्वये व्यञ्जनाया माहात्म्यम्, अभिधाया एकार्थोपस्थापनानन्तरं क्षीणव्यापारत्वे व्यञ्जनाया एव तत्र प्रभुत्वात्। अत्रैवं-'यत्रैकप्रयत्नोच्चार्य्यतयाऽभिन्नत्वेन प्रतीयमानैः पदैः 'एकवृन्तगतफलद्वय'न्यायेनार्थद्वयस्योपस्थानं स शब्दश्लेषः' इति फलितम्। स त्रिविधः, सभङ्गपदाभङ्गपदसभङ्गाभङ्गपदभेदात्, तत्राद्योऽष्टविधः, वर्ण-प्रत्यय-लिङ्ग-प्रकृति-लिङ्ग-विभक्ति-वचन-भाषाणां भेदात्। अत्राहुर्भीमसेनाः-...तथा च-एकोच्चारणापहुतभेदकभिन्नार्थकसदृशनानाशब्दत्वं श्लेषत्वमिति फलितम्। अत्र केचित्, नन्वेकोच्चारणेन सदृशनानाशब्दोत्पत्तिर्दुर्घटा; न चानेकार्थप्रतिपादयिषयोच्चारणात्तथा, नानाघटचिकीर्षातः कपालादिसंयोगादेकस्मान्नानाघटोत्पत्त्यापत्तेः। अत्र चक्रवर्त्तिनः समवाय्य समवायभेदान्न तथा, तदैक्यात्तत्सम्भव इत्याहुः। तच्चिन्त्यम्, सामग्र्यैक्ये कार्य्यैक्यात्, भेदे मानाभावाद्गौरवाच्च। एकस्माच्छब्दात् 'सकृदुच्चारितः' इत्यादिनियमसत्त्वे आवृत्त्या नानाऽर्थबोधः सम्भवति, आवृत्तिः पुनरनुसन्धानमिति तत्क्षतानुपूर्वीभेदाद् वृत्तिभेदाच्च पदभेद इत्याहुः। तदपि न रमणीयम्, आवृत्त्यङ्गीकारे एकवृन्तगतफलद्वयन्यायानुपपत्त्या श्लेषस्य दुरुपपादत्वात्। यत्रानेकत्र क्रमेण प्रकरणादिकमवतरति तत्रावृत्तिरिति सिद्धान्तात्। अपरे तु द्वितीयक्षणे शब्दजशब्दोत्पत्त्या पदभेदः सम्भवतीत्याहुः। तदपि मौनिमात्रविदितश्लेषव्यापकमिति न रमणीयम्। वयं तु वस्तुत एकः शब्दः सकृदुच्चरितः सकृदर्थं गमयति, न त्वेकोच्चारणापहुतभेदोऽपीति श्लिष्टस्योभयत्र तात्पर्यग्राहकसद्भावेऽभावे वा एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वादुद्बुद्धस्वस्वसंस्कारेण द्वयोर्युगपदुपस्थितिः, ततश्च 'सकृदि'त्यादिनियमवशात्सदृशनानाशब्दबोधः। तदुक्तं श्रीवाग्देवताऽवतारैः-'अर्थभेदेन शब्दभेद' इति। शब्दे सादृश्यं तु क्वचित् साहजिकम्। यथा-'विद्वन्मानसहंस ! वैरिकमलासङ्कोचदीप्तद्युते ! दुर्गामार्गणनीललोहित ! समित्स्वीकारवैश्वानर! सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीम ! प्रभो ! साम्राज्यं वरवीर ! वत्सरशतं वैरिञ्च

क्रमेणोदाहरणम्-

"प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्त्तुरभून्न पतिष्यतः करसहस्रमपि ॥ ७५ ॥"

अत्र 'विधा' विति विधुविधिशब्दयोरुकारेकारयोर्वर्णयोरौकाररूपत्वात् श्लेषः ।

"किरणा हरिणाङ्कस्य दक्षिणश्च समीरणः। कान्तोत्सङ्गजुषां नूनं सर्व एव सुधाकिरः ॥७६॥"

---

गुणैः क्रियाः ॥' इत्यादौ अखण्डपदश्लेषे क्वचित्त्वपह्नुतभेदत्वेन यथा-'श्वेतो ( श्व-इतो ) धावति' 'येन ध्वस्तमनोभवेन००' इत्यादिसखण्डपदश्लेष इति युक्तमुत्पश्यामः । एवं चैकोच्चारणेन सदृशनानाशब्दोत्पत्तिदुर्घटेति रिक्तं वचः । यत्तु जयरामन्यायपञ्चाननैरुक्तम्-'इदं तु बोध्यम्-'यत्रैकस्यैव शब्दस्य शक्यलक्ष्योभयपरत्वं तत्रार्थश्लेष एव पदस्य परिवृत्तिसहत्वे । यस्य चैकस्य समुदायस्य बोधितार्थस्य तेन रूपेण नार्थान्तरबोधनं तत्र न श्लेषः । यथा-' वैदेही'ति 'देवं हिमकराङ्कितम् ।' इत्यत्र च, एकत्र केवलमर्थप्रयुक्तभेदाभावात्, रूपतोऽपि भेदात् । तदाहुर्वैयाकरणाः-'त्रिधा शब्दो भिद्यते, रूपतः स्वरतोऽर्थतश्च, 'त्रिधा तु भिद्यते शब्दो रूपतः स्वरतोऽर्थतः ।' इत्युक्तोरिती'ति । तच्चिन्त्यम् । तथा सति-सखण्डपदश्लेषोच्छेदापत्तेः, रूपभेदाभावस्योपपादितत्वाच्चेति सुधीभिः परिभावनीयम् ।' इति । अन्ये पुनः प्राहुः-"यत्रैकस्यैव शब्दस्य स्वभावादेकवाच्यार्थत्वे द्वितीयो लक्ष्यार्थोऽस्ति, तत्राश्लेषः, यत्र तु स्वरूपमपह्नुवानैः पदैर्वाच्यार्थस्यैव द्विधोपस्थानं तत्र सखण्डपदगतः श्लेषः ।" इति ॥ ६४ ॥

अथोदाहर्त्तुमुपक्रमते-**क्रमेण** वर्णादीनामानुपूर्व्या । **उदाहरणम्** 'यथा-**विधौ** चन्द्रे भाग्ये वा । 'विधुः सुधांशुः शुभ्रांशुः ।' 'भाग्यं स्त्री नियतिर्विधिः ।' इति चामरः । **प्रतिकूलतां** प्रतिकूलफल ( उदयरूपफल ) भागित्वं प्रतिद्वन्द्विवदनभिमतार्थोपस्थापकत्वं वा । **उपगते** । **बहुसाधनता** बहूनि साधनान्युपाया यस्य तस्य भावस्तत्ता तथोक्ता । **विफलत्वमकिञ्चित्सहायकत्वम्** । **एति** गच्छति । **हि** च । एवं विशेषमभिधाय-सामान्यं समर्थयते-**पतिष्यत** उन्नतपदाद् भ्रश्यत उदयादस्तं सौभाग्याद्वा दौर्भाग्यं गमिष्यत इति यावत् । **दिनभर्तुः** सूर्य्यस्य तत्त्वेनाध्यस्तस्य वा कस्यापि जनस्य । **अवलम्बनायाश्रयाय** । **करसहस्रं** कराणां किरणानां हस्तानां वा सहस्रम् । 'करो वर्षोपले रश्मौ पाणौ प्रत्यायशुण्डयोः ।' इति मेदिनी । **अपि** । **न** नैव । **अभूत्** । अयम्भावः-पततो जनस्य करद्वयमपि साहाय्याय,किं पुनस्तत्सहस्रम् अथापि विधौ प्रतिकूले तदकिञ्चित्करमभूदिति साम्प्रतम् । अत एवार्थान्तरन्यासः॥ अत्र सूर्यास्तवर्णनम् । इदं च शिशुपालवधीयम् । वैतालीयं छन्दः । लक्षणं चोक्तं प्राक् ॥ ७५ ॥"

अत्र श्लेषं दर्शयति-**अत्र 'विधौ'इति । 'विधुविधि'शब्दयोः उकारेकारयो**'र्विजातीययोरपी'ति शेषः । **वर्णयोः। आकाररूपत्वा**दौकाररूपेणैकप्रयत्नोच्चार्य्यत्वाद्धेतोः । **श्लेषो**'विधुविधिशब्दार्थद्वयस्यापि वाच्यत्वात्'इति शेष :। अत्रायम्भावः-'विधु विधि-'शब्दावयवभूतयोर्विजातीययोरप्युकारेकारयोः 'अच्च घेः ।' ७ । ३ । ११९ इत्यनेन ङौ परे समानरूपत्वम्, तस्मात्-औकारमहिम्नाऽभिन्नप्रयत्नोच्चार्य्यत्वमिति तयोर्वर्णयोः श्लेषः, तथा सति-'विधु-विधि' शब्दप्रतिपाद्यार्थद्वयस्य वाच्यत्वम् । अथापि-श्लेषमहिम्ना तात्पर्य्यस्य च विधोरुदये दिनभर्त्तुरस्तमितत्ववर्णनपरत्वात् 'विधिविधु' पदवाच्ययोरुपमानोपमेयत्वेन प्रतीत्योपमाध्वनिः । न च 'ननु यदि विधोरुदये दिनभर्त्तुरस्तमितत्ववर्णन एव तात्पर्य्यं तर्हि 'विफलत्वमेति बहुसाधनता' इति द्वितीयपादार्थः कथं सङ्गमिष्यते ।'इति शङ्क्यम्, कविना विधोः ( चन्द्रमसः ) प्रतिकूलतयोपस्थित्या सूर्य्यास्तस्य वर्णितत्वात् । विधोः ( चन्द्रमसः ) प्रतिकूलतायां क्रियमाणं सर्वं विपरीतं भवति, सम्पन्नं च विनश्यतीति दैवज्ञसिद्धान्तः । प्रकृते च विधोः प्रतिकूलतोदयपदलब्धिरेवेदि सर्वमवदातम् ।' इति ।

एवं वर्णमात्रश्लेषमुदाहृत्य प्रत्यययोर्वचनयोश्चैकत्रैव श्लेषमुदाहरति-'**किरणाः**······' इत्यादिना ।

'**हरिणाङ्कस्य** मृगाङ्कस्य चन्द्रमस इति यावत् । 'ग्लौर्मृगाङ्कः कलानिधिः ।' इत्यमरः । **किरणः** । **च** तथा । **दक्षिणो** दक्षिणदेशतः प्रत्यावर्त्तमान इति भावः । **समीरणो** वायुः । 'समीरणः स्यात् पवने पथिके च फणिज्जके ।' इति मेदिनी । इत्येवम्-**सर्वे, सर्वः** इति वा । **एव** । **नूनम्** । **कान्तोत्सङ्गजुषां** कान्तानामुत्सङ्गः क्रोडं, तं जुषन्तीति तासां तेषां वेति तथोक्तानाम् । **सुधाकिरः** सुधाममृतं किरन्तीति, किरतीति वेति तथोक्ताः । अत्र श्लोकश्छन्दः । लक्षणं चोक्तं प्राक् ॥ ७६ ॥'

आत्मनेपदे एकवचनेऽपि (दत्ताम्) मिति भवति। (प्रथमपुरुषे)



अत्र 'सुधाकिर' इति क्विप्-क-प्रत्यययोः। किञ्चात्र बहुवचनैकवचनयोरैकरूप्याद्वचनश्लेषोऽपि।

"विकसन्नेत्रनीलाब्जे तथा तन्व्याः स्तनद्वयी। तव दत्तां सदामोदं लसत्तरलहारिणी॥ ७७॥

अत्र नपुंसकस्त्रीलिङ्गयोः श्लेषो वचनश्लेषोऽपि।

---

अत्र प्रत्यययोर्वचनयोश्च युगपत् श्लेषं दर्शयति-अत्राऽस्मिन्नुदाहृते पद्य इति भावः। **'सुधाकिरः'** इत्य'त्रे'ति शेषः। **क्विप्-कप्रत्यययोः** 'श्लेषः' इति शेषः। तथा च-एकत्र बहुवचनम्, अन्यत्रैकवचनमित्येवं वचनयोरपि श्लेष इत्याह-**किञ्च। अत्र** 'सुधाकिर' इत्यत्र। **बहुवचनैकवचनयो**र्बहुवचनस्यैकवचनस्य चेत्यर्थः। 'विजातीययोरपी'ति शेषः। **ऐकरूप्या**देकरूपत्वात्कारणात्। **वचनश्लेषो** वचनयोर्बहुवचनैकवचनयोः श्लेष इति तथोक्तः। **अपि।** इदमिह समुच्चये। अत्रायम्भावः-'सुधाकिर' इत्यत्र 'सुधां किरन्ती' त्येवं व्युत्पत्तौ 'अन्येभ्योऽपि दृश्यते।' ३। २। १७८ इति क्विप्। 'ऋत इद्धातोः।' ७। १। ११० इतीत्। अथ 'सुधां किरति' इति व्युत्पत्तौ 'इगुपधज्ञाप्रीकिरः कः।' ३। १। १३६ इति कः। पूर्वत्र-जस्, परत्र पुनः सुः। एवं विभिन्नयोरपि 'क्विप्क' प्रत्यययोस्तदनुगतयोर्बहुवचनैकवचनयोश्च समानरूपत्वेन श्लेषः। असौ च 'सर्व एव' इत्यत्र संहितामहिम्ना संपन्नमूर्त्तिः। तथा च-कान्तोत्सङ्गजुषां सर्वे हरिणाङ्कस्य किरणाः सुधाकिर एव, सर्वो दक्षिणः (मलयगिरितः प्रत्यावर्त्तमानः) समीरणश्च सुधाकिर एवेति निष्कृष्टम्। एवम्-कान्तानां सुन्दरीणामुत्सङ्गजुषः सुन्दर्य्यः, कान्तानां सुन्दरीणां वोत्सङ्गजुषः सुन्दराः, इत्येवं पूर्वत्र परत्र च क्रमेण पुंस्त्वस्त्रीत्वयोः, स्त्रीत्वपुंस्त्वयोरैक्याच्छेषः। इति। यथा वा, मम क्रमेण-'अयि दयिते! तव वदनं न नयति कमलं मुदं कुमुद्वन्तम्। अमृतभृतो ननु महिमा तस्मादपरस्य नो विदितः॥' अस्य चायमर्थः-अयि दयिते! तव वदनं कं कुमुद्वन्तं (कौमुदिति, साऽस्यास्तीति तम्) मुदमलं न नयति, यद्वा-कमलं मुदं न नयति, किन्तु कुमुद्वन्तं कुमुदप्रायं देशम्। कुत इत्याह-तस्माद्वदनादितरस्यामृतभृतो महिमा नो विदितः, यद्वा-तस्मादमृतभृतो वदनेन्दोरित्यर्थः, अपरस्य (चन्द्रमसः) महिमा नोऽस्माकमविदितः, यद्वा-तस्मादपरस्यामृतभृतोऽमृतेन पूर्णो महिमा नो नैव विदितः, यद्वा-तस्मात् कारणात् अपरस्य सर्वोत्कृष्टस्य (न परो महितो यस्मात्तस्य) तस्य महिमाऽमृतेन भृत इति नोऽस्माकं विदितः॥' इति। अत्र हि महिमविशेषणत्वेऽमृतभृत इत्यत्र क्तः, अपरस्य तस्मादित्यस्य वा विशेषणत्वे पुनः क्विप्, इत्येवं क्त-क्विपोः श्लेषः, तथा-प्रथमापञ्चमीषष्ठीनां विभक्तीनां श्लेषः। 'कमल'मित्यत्र पदयोरपीति 'न तथा त्वन्मुखसुषमा कला यथेन्दोर्ददत्यहो मोदम्। एषा दयिते! सततं तावद् यत् केवलं नक्तम्॥' इत्यत्र 'यथेन्दोः कला मोदं ददति, तथा त्वन्मुखसुषमा न मोदं ददती' इत्येवं बहुवचनैकवचनयोः श्लेषः।

अथ क्रमप्राप्तं लिङ्गश्लेषमुदाहरति-**'विकसन्नेत्रनीलाब्जे'** इत्यादिना।

**'लसत्तरलहारिणी** लसन्ती च तरले च हारिणी चेति, लसंस्तरलो हारमध्यगो मणिर्यत्र, सा चासौ हारिणीति वा तथोक्ता। तर्कवागीशस्त्वेवमपि व्याचक्षते-'यद्वा-लसंस्तरलो यत्र एवंभूतो हारो यत्रास्ति (तथोक्ता)। कर्मधारयो त्तरमतुनिषेधस्य प्रायिकत्वादेतत्साधुवचनम्।' इति। **तन्व्याः** दयितायाः। **विकसन्नेत्रनीलाब्जे** विकसन्ती एव तत्र नीलाब्जे इति तथोक्ते **तथा। स्तनद्वयी। तव। सदा। आमोदम्** आनन्दम्। **दत्तां** दद्याद्दद्यातां वा। आशिषि लोट्॥ ७७॥'

अत्रास्मिन्नुदाहृते पद्ये इति भावः। **नपुंसकस्त्रीलिङ्गयोः** 'लसत्तरलहारिणी' इति नपुंसके प्रथमाया द्विवचनम्, स्त्रीलिङ्गे प्रथमाया एकवचनं, तस्मात्-विकसन्नेत्रनीलाब्जयोः स्तनद्वय्याश्च विशेषणत्वे समानरूपत्वात् क्लीबस्त्रीलिङ्गयोः श्लेषः। तथा-**वचनश्लेषो** वचनयोर्द्विवचनैकवचनयोः श्लेष इत्यर्थः। 'हारिणी' इत्यस्य नीलाब्जविशेषणत्वे क्लीबे प्रथमाया द्विवचनान्तत्वं, 'द्वयी' त्यस्य विशेषणत्वे स्त्रीलिङ्गे एकवचनान्तत्वं च, तथा ददातेः परस्मैपदे लोटो द्विवचनान्तत्वम्, आत्मनेपदे लोटः पुनरेकवचनान्तत्वम्, इत्यनयोः श्लेष इति भावः। **अपि** 'ज्ञेय' इति शेषः। तर्कवागीशास्त्वाहुः-'अपिना' 'णिन्' प्रत्ययस्य 'इन्' प्रत्ययस्य च श्लेषः।' इति। यथा वा- 'भक्ति-

"अयं सर्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति। सामर्थ्यकृदमित्राणां मित्राणां च नृपात्मजः॥७८॥"
अत्र 'वक्ष्यती'ति वहि-वच्योः, 'सामर्थ्यकृ' दिति कृन्तति-करोत्योः प्रकृत्योः ।

"पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव !
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम् ॥ ७९ ॥"

अत्र पदभङ्गे विभक्तिसमासयोरपि वैलक्षण्यात् पदश्लेषः, नतु प्रकृतिश्लेषः । एवं च-
"नीतानामाकुलीभावं लुब्धैर्भूरि शिलीमुखैः । सदृशे वनवृद्धानां कमलानां तदीक्षणे ॥८०॥"

---

प्रहृविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी, ध्यानालम्बनतां समाधिनिरतैर्नीतेहितप्राप्तये । लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥' अत्रापि नेत्रयोर्विशेषणत्वे 'प्रणयिनी' इत्यादीनां क्लीबे प्रथमाद्विवचनान्तत्वम्, तथा-तन्वीविशेषणत्वे स्त्रियामेकवचनान्तत्वम्, इति लिङ्गवचनश्लेषः ।

अथ प्रकृतिश्लेषमुदाहरति-'अयं...' इत्यादिना ।

'**अयम्** । **नृपात्मजो** नृपस्यात्मजः । **अमित्राणां** शत्रूणाम् । **सामर्थ्यकृत** सामर्थ्यं कृन्ततीति तथोक्तः । **च** तथा । **मित्राणाम्**। 'सामर्थ्यकृत्' इति शेषः, सामर्थ्यं करोतीति तथोक्तः। तथा च-मित्रसम्बन्धिनः सामर्थ्यस्य विधातेति निष्कृष्टोऽर्थः । **सर्वाणि** सर्वविधानि व्याकरणादीनि । **शास्त्राणि** (कर्म) । **हृदि** मनसि । **च** तथा । **ज्ञेषु** विद्वत्सु तन्मध्य इति यावत् । **वक्ष्यति** प्रापयिष्यति, कथयिष्यतीति वा । अत्र नृपात्मजस्य कस्यापि जन्मग्रहान् जानतो दैवज्ञस्योक्तिः ॥ ७८ ॥'

अत्रास्मिन्नुदाहृते पद्ये इति भावः । '**वक्ष्यति**' इति 'अत्र' इति शेषः । '**वहि-वच्योः**' '**सामर्थ्यकृत**' इति । 'अत्रे'ति शेषः । '**कृन्तति-करोत्योः**' 'कृति'छेदने, 'डुकृञ्' करणे । 'इक्श्तिपौ धातुनिर्देशे ।' इति तिपा-निर्देशे, तथा च-कृद्रूपायाः कृरूपायाश्चेत्यर्थः । **प्रकृत्योः** । 'श्लेषः' इति शेषः ।

इदमिह तत्त्वम्-'वक्ष्यते' इति 'वह' प्रापणे, 'वच्' परिभाषणे; इत्यस्माद्वा लृटि स्ये तिपि 'कुहोश्चुः ।' ७ । ४ । ६२ इति चुत्वे सस्य च 'आदेशप्रत्यययोः ।' ८ । ३।५९ इति षत्वे 'वह,-वच' प्रकृत्योः, तथा-सामर्थ्ये कर्मण्युपपदे 'कृतः' 'कृञो' वा क्विपि पूर्वत्र तल्लोपमात्रे परत्र 'ह्रस्वस्य पिति कृति तुक् ।' ६ । १ । ७१ इति तुकि सिद्धेः, तयोः प्रकृत्योः स्फुटः श्लेषः । इयान् पुनर्विशेषः-पूर्वत्र, तिङ्प्रत्ययस्य, परत्र कृत्प्रत्ययस्य माहात्म्यम् । इति ।

अथ पदश्लेषमुदाहरति-'पृथुकार्त्ते'त्यादिना । व्याख्यातपूर्वमिदम् । अत्र दरिद्रस्य कस्यापि राजानं प्रति तदैश्वर्य-प्रशंसनपूर्वं स्वदुःखनिवेदनार्थोक्तिः ॥ ७९ ॥

लक्ष्यं निर्दिशति-**अत्र** । **पदभङ्गे** पदानां'पृथु-कार्त्तस्वर...'इत्यादिरूपाणां 'पृथुक-आर्त्तस्वर...'इत्यादिरूपाणां वा भङ्गस्तस्मिन् । **विभक्तिसमासयोर्**विभक्तिः समासघटकभूता, समासस्तत्पुरुषादिरूपस्तयोस्तथोक्तयोरित्यर्थः । **अपि** 'किं पुनः प्रकृतेः' इति शेषः । अत एव विवृतिकारा आहुः-'अपिना प्रकृतेः सङ्ग्रहः' इति । **वैलक्षण्याद्** भेदात् । **पदश्लेषः** । **न** । **तु** पुनः **प्रकृतिश्लेषः** । अयम्भावः-अत्र हि-नरदेवसदनपक्षे-पदभङ्गे 'पृथूनि कार्त्तस्वरपात्राणि यत्रे'त्येवं क्रमेण 'पृथुकार्त्तस्वरपात्र' इत्यादिः प्रकृतिः बहुव्रीह्यादिसमासघटका प्रथमादिर्विभक्तिः, बहुव्रीह्यादिश्च समासोऽस्त्येव तथा । याचकपक्षे-'पृथुकानामार्त्तस्वरास्तेषां पात्रमधिकरणम्' इत्येवं क्रमेण-'पृथुक-आर्त्तस्वर-पात्र' इत्यादिः प्रकृतिः, षष्ठ्यादिर्विभक्तिः, तत्पुरुषादिः समासः, इत्येवं प्रकृतिविभक्तिसमासानां विलक्षणतया पदानां श्लेषः, नतु प्रकृतीनाम्, समासे समासघटकत्वेन वा तत्तत्पदत्वानपायात् । इति ।

विभक्तिसमासवैलक्षण्ये एव पदश्लेषः, अन्यथा प्रकृतिश्लेषः; इत्याह-

**एवं** निर्दिष्टक्रमेण । **च** । '**लुब्धै**र्व्याधैः, सौरभे लोभं प्राप्तैश्च । 'लुब्ध आकाङ्क्षिणि व्याधे' इति हेमचन्द्रः । **शिलीमुखैर्**बाणद्वारा, भ्रमरैः (कर्तृभिः) च । 'अलिबाणौ शिलीमुखौ' इत्यमरः । **भूरि**अत्यन्तम् । **आकुलीभावम्** । **नीतानाम्** । **वनवृद्धानां** वने विपिने जले वा वृद्धा (वृद्धिं गताः) वृद्धानि वा तेषाम् । 'वने सलिलकानने ।' इत्य-

अत्र 'लुब्धशिलीमुखा'दिशब्दानां श्लिष्टत्वेऽपि विभक्तेरभेदात्प्रकृतिश्लेषः, अन्यथा सर्वत्र पदश्लेषप्रसङ्गः।

"सर्वस्वं हर सर्वस्य त्वं भवच्छेदतत्परः। नयोपकारसाम्मुख्यमायासि तनुवर्त्तनम् ॥८१॥"

अत्र 'हर' इति पक्षे 'शिव' सम्बोधनमिति सुप् पक्षे च हृधातोस्सिङिति विभक्तेः। एवं 'भव' इत्यादौ। अस्य च भेदस्य प्रत्ययश्लेषेणापि गतार्थत्वे प्रत्ययान्तरासाध्यसुबन्ततिङन्तगतत्वेन विच्छित्तिविशेषाश्रयणात् पृथगुक्तिः।

---

मरः। **कमलानां** मृगाणामम्बुजानां वा। 'कमलं सलिले ताम्रे जलजे व्योम्नि भेषजे। मृगभेदे तु कमलः' इति मेदिनी। **सदृशे** समाने समानसुन्दरे इति यावत्। **तदीक्षणे** तस्या नायिकाया ईक्षणे नेत्रे इति तथोक्ते ॥ 'अत्रे'त्यत्र-त्यर्थः। **'लुब्धशिलीमुखादिशब्दानाम्**। **श्लिष्टत्वे** नानाऽर्थकतया सम्बद्धे त्वे इत्यर्थः। **अपि**। **विभक्तेः** 'समासस्य चे'ति शेषः। **अभेदाद्** वैलक्षण्याभावात्। **प्रकृतिश्लेषः** प्रकृतीनां लब्धादिरूपाणां श्लेषः। 'ननु पदश्लेषः, विभक्त्यादिवैलक्षण्य एव तत्स्वीकारादि'ति शेषः। **अन्यथा**ऽनेनं स्वीकारेऽर्थभेदेन प्रकृतिभेदस्वीकारे इति यावत्। **सर्वत्र** प्रकृतिश्लेषस्थलेऽपीत्यर्थः। **पदश्लेषप्रसङ्गः** पदयोः श्लेषस्तस्य प्रसङ्गोऽस्ति प्रसङ्ग इति भावः।

विभक्तिश्लेषमुदाहरति- **'सर्वस्वं'''** इत्यादिना।

'हे **हर** शङ्कर! **सर्वस्य** जगत इति शेषः। **सर्वस्वं** सर्वं च तत् स्वं धनमैश्वर्य्यमिति यावदिति तथोक्तम्। सर्वस्वभूत इति भावः। 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने।' इत्यमरः। 'ईशावास्यमिदं सर्वं यत् किञ्चिज्जगत्यां जगत्।' इति श्रुतिः। **भवच्छेदतत्परो** भवस्य संसारस्य, जननमरणरूपस्याविद्याकृतस्य प्रवाहस्येति यावच्छेदो मुक्तिप्रदानेन ततो निवर्त्तनमुद्धारो वा तत्र तत्पर उद्यत इति तथोक्तः। मोक्षप्रद इति भावः। **त्वम्। नयोपकारसाम्मुख्यं** नयेन नीत्या नीतिपूर्वकाचारेणोपकार इह परत्र वाऽऽनन्दलाभस्साम्मुख्यमानुकूल्यं यस्मात्तत्। **तनुवर्त्तनं** तनोः शरीरस्य वर्त्तनं धारणमिति तथोक्तम्। **आयासि** प्राप्नोषि करोषीति यावत्। यद्वा-सर्वस्वं यत् किञ्चिद् यस्यास्ति तत्सर्वम् हरापहर। नात्र काऽपि क्षतिः, 'यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम्। यन्मदः पुरुषः स्तब्धो लोकं मां चावमन्यते॥' इत्याद्युक्तदिशा तथा तवानुग्रहोदयात्। इति भावः। किन्तु सर्वस्य लोकस्य। भवच्छेदतत्परो मोक्षदाता। त्वम्। यद्वा सर्वस्य। छेदतत्परश्छेदे बन्धच्छेदे तत्पर इत्यर्थः। त्वम्। भव। 'छेदतत्परो बन्धच्छेदतत्परो भव' इत्युद्द्योतः। इति। अथ च-उपकारसाम्मुख्यम्। नयापनय। आयास्त्वायासस्तपश्चर्य्यादिपरिश्रमोऽस्मिन्नस्तीति तत्तथोक्तम्। वर्त्तनं जीवनम्। तनु विस्तारय। इति। यद्वा-भवच्छेदतत्परः। त्वम्। सर्वस्याविद्याविजृम्भितजातस्य। सर्वस्वं यत् किञ्चिदविद्याविजृम्भितं तत्सर्वम्। हरापहर। आयास्त्वायासो विविधदुरर्थेहया परमात्मोपासनातिरिक्तव्यापारविषयकः परिश्रमोऽस्यास्तीति तत्तथोक्तम्। **तनुवर्त्तनं** तनोः शरीरस्य वर्त्तनमवस्थानं, तनु क्षणिकं वा वर्त्तनं जीवनमिति तत्तथोक्तम्। उपकारसाम्मुख्यमुपकारस्यसाम्मुख्यमानुकूल्यमिति तत् (प्रति)। नय। यद्वा-(दस्युपक्षे) त्वम्। सर्वस्वम्। हर। सर्वस्य दीनादीनस्य। छेदतत्परः। भव। अपकारसाम्मुख्यम्। नय। उ ननु। वर्त्तनं जीवनम्। आयासि दुःखितम्। यथेष्टम्। तनु। यद्वा-नयोपकारसाम्मुख्यम्। मा नैव। किन्तु-तनुवर्त्तनं शरीरमात्ररक्षणम्। यासि।' असौ शिवं दस्युं वा प्रति कस्याप्युक्तिः ॥ ८१ ॥

अत्र विभक्तिश्लेषं दर्शयति-**अत्रे**त्यादिना।

**अत्रे**त्यस्मिन्नुदाहृते पद्ये। **पक्षे** 'एकस्मिन्' इति शेषः। **'हर'** इति 'रूपम्' इति शेषः। **शिवसम्बोधनं** शिवस्य सम्बोधनं सम्बुद्धिस्तत्पदमिति यावदिति तत्। **इतीत्य**स्मात्। सुप् तदन्तर्गता'सु' विभक्तिरित्यर्थः। 'तत्रे'ति शेषः। **पक्षे** 'द्वितीये' इति शेषः। **'हृ'धातो**र्हरणार्थकात् 'हृञ्' धातोः। 'परस्माद्विधीयमानाया' इति शेषः। **तिङिति विभक्तेः** 'सिङि'ति सञ्ज्ञकाया विभक्तेस्तिङन्तर्गताया लोटि सिपो विभक्तेरिति तात्पर्य्यम्। **एवं** यथाऽत्र सुप्तिङो श्लेषस्तथा **'भव' इत्यादौ** भवनयायासि तन्विरयेतेष्वित्यर्थः।

"महदे सुरसन्धं मे तमव समासङ्गमागमाहरणे।
हर बहुसरणं तं चित्तमोहमवसर उमे सहसा ॥ ८२ ॥"

अत्र संस्कृतमहाराष्ट्र्योः।

---

अथ विभक्तेरपि प्रत्ययत्वे प्रत्ययश्लेषेणैव विभक्तिश्लेषस्याप्यभिधाने किं पुनस्तस्याभिधानमित्याशङ्कयाह–**अस्य** चेत्यादि।

**अस्य** विभक्तिश्लेषपरस्य। च पुनः। **भेदस्य। प्रत्ययश्लेषेण। गतार्थत्वे। अपि। प्रत्ययान्तरासाध्यसुबन्ततिङन्तगतत्वेन** प्रत्ययान्तरेणासाध्यमनिष्पाद्यं सुबन्ततिङन्तगतत्वं सुबन्ततिङन्ताद्यन्यतमान्तर्गत (वर्ति) त्वं तेन। **विच्छित्तिविशेषाश्रयणाद्** विच्छित्तिश्चमत्कारस्तद्विशेषस्याश्रयणं तस्मादित्यर्थः। **पृथक्। उक्तिः।**

विभक्तिश्लेषो यथा वा मम–'त्रिविधवृजिनतापैर्भर्जितानामपि स्वशरणमुपगतानां जीवनोद्धारदक्षे। त्वयि सुमहिमसूर्ते! त्राहि मां सानुरागं न गणय मम दोषान् दर्शयोदारभावम् ॥' इत्यत्र देवीं भगवन्तं च प्रत्युक्तिरिति 'दक्ष' इति सुङ्भ्यां श्लिष्टम्। 'त्वदनुग्रहमप्राप्य मृडान्यहमिति स्थितिः। मृषैव जगतीशानि! तन्मन्ये नापरां गतिम् ॥' इत्यत्र 'मृडानी' ति सम्बुद्धिपदं क्रियापदं चेति सुप्तिङोः श्लेषः। इति दिक्।

वचनश्लेष उदाहृतपूर्व इति तमनुदाहृत्य भाषाश्लेषमुदाहरति–'**महदे**...' इत्यादिना।

हे **महदे** महमुत्सवं ददातीति तत्सम्बुद्धौ तथोक्ते 'मह उद्धव उत्सवः।' इत्यमरः। **उमे** गौरि! **मे** मम। **तं** प्रसिद्धम्। **आगमाहरण** आगमा वेदास्तेषामाहरणं ग्रहणं तत्र। **सुरसन्धं** सुरा शोभनदात्री सन्धा सन्धानं यस्य तमिति तम्। शोभनं रातीति तथोक्ता। शोभनदायकसन्धानशालिनमिति तात्पर्यम्। **समासङ्गं** सम्यग्भूतोऽसावासङ्ग आसक्तिस्तम्। **अव** रक्ष। **अवसरे** मोहापचयोचिते समये इति भावः। **तम्। बहुसरणं** बहु सरणं संसारो यस्मात्तम्। **चित्तमोहम्। सहसा। हर।** यद्वा–'धंमे धर्म्मे। मह मम। रसं रतिम्। देसु देहि। गमागमा गमागमात्संसारादिति यावत्। गमो गमनं मरण,आगमः पुनर्जन्म यस्मिंस्तस्मात्। तमोवसं तमोवशां तमोगुणाधीनामिति यावत्। णे नोऽस्माकमिति यावत्। आसमाशाम्। हर। हे हरवहु हरवधु महेश्वरीति यावत्। सरणं शरणमाश्रयः। 'शरणं गृहरक्षित्रोः।' इत्यमरः। तं त्वम्। अतः–मे मम। चित्तमोहं चित्तमोहश्चित्तस्य मोह इति भावः। 'त्वत्कृपये'ति शेषः। सहसा शीघ्रम्। अवसरउ अपसरतु दूरीभवत्विति यावत् ॥' अत्र जघनविपुलाछन्दः। लक्षणं चोक्तं प्राक् ॥'

अत्र श्लेषं दर्शयति–**अत्र। संस्कृते**त्यदिना।स्पष्टम् संस्कृतं च महाराष्ट्री चेति तयोः।महती चासौ राष्ट्री राष्ट्र (राज्य) सम्बन्धिनी प्राकृतभाषेति महाराष्ट्री।तदुक्तं दण्डिना–'महाराष्ट्राश्रयां भाषां प्रकृष्टं प्राकृतं विदुः। सागरः सूक्तिरत्नानां सेतुबन्धादि यन्मयम् ॥ इति'। 'श्लेष'इतिश्लेषः।इति। अत्रेदं बोध्यम्–'संस्कृतप्राकृतमागधपिशाचभाषाश्च शौरसेनी च षष्ठोऽत्र भूरिभेदो देशविशेषादपभ्रंशः॥' इत्युक्तदिशा षड्विधा भाषाः। तत्र संस्कृतप्राकृतोदाहरणं तु दर्शितमेव, प्रकृष्टप्राकृतस्यैव महाराष्ट्रीति व्यपदेशात्। उदाहरणानि यथा काव्यालङ्कारे–'कुललालिलावलोले शशिलेशे शालशालिलवशूले। कमलाशवलालिवलेऽमाले दिशमन्तकेऽविश मे ॥' इदं संस्कृतमागध्युदाहरणम्। 'कुररालिरावरोलं सलिलं तत्सारसालिरवशूरम्। कमलासवलालिवरं मारयति शाम्यतो विषमम् ॥' इति मागध्याः संस्कृतम्। तदर्थो यथा 'कुलानि लालयन्तीत्येवंशीलास्तेषां कुललालिनां (सतां) लावे छेदे लोलो लम्पटस्तत्र। शलिनः खड्गयोधाँल्लिशत्यल्पीकरोतीति तस्मिन्। शालैर्गृहैः शालन्ते इत्येवंशीलाँल्लुनातीत्येवंभूतं शूलं तत्र।कमलाया लक्ष्म्याः शवा मृततुल्या दरिद्रा इति यावत्तेषु ललति विलसतीत्येवंशीलं बलं यस्य तत्र। मलनं मालः, तदभावोऽमालस्तत्रानिवार्ये इति भावः, (मल धारणे)। अन्तके 'उपस्थित' इति शेषः। ए विष्णौ 'अकारो वासुदेवः स्या' दित्युक्तेः। दिशं मार्गम्। अविशमे ॥ यद्वा–'कुरराणां पक्षिविशेषाणामालिस्तद्रावै रोलः कलकलो यत्र तत्। सारसालिरवेण सारसपङ्क्तिक्रन्दनविधानेन शूरम् इति तथाभूतम्। कमलानामासवस्तं

---

१ 'मम देहि रसं धर्मे तमोवशामाशां गमागमाद्धर नः। हरवधु! शरणं त्वं चित्तमोहोऽपसरतु मे सहसा ॥' इति संस्कृतम्। २ विरक्तस्येयमुक्तिः।

७४ पुनस्त्रिधा सभङ्गोऽथाभङ्गस्तदुभयात्मकः ॥ ६९ ॥

लान्ति गृह्णन्तीत्येवंभूता-येऽलिनस्तैर्वरम्। विषमं विरहिजनदुःखावहम्। सलिलम्। शाम्यतः शमयुजः। 'अपी'ति शेषः। मारयति।'शरदि तादृशं सलिलं विलोक्य मुनयोऽपि म्रियन्ते'इति निष्कर्षः।'कमनेकतमादानं सुरतनरजतु च्छलं तदासीनम्। अप्पतिमानं खमते सोऽगनिकानं न रंजेतुम्।' इदं संस्कृतपैशाच्युदाहरणम्।'कामे कृतामोदानां सुवर्णरजतोच्छलद्दासीनाम्। अप्रतिमानं क्षमते सगणिकानां न रञ्जयितुम्॥' इति पैशाच्याः संस्कृतम्। तदर्थो यथा-'हे सुरतनः निधुवन पुरुष! स्वच्छन्या मतिर्यस्य तत्सम्बुद्धौ। सः। कम्।अनेकतमान्यादानानि यस्मात्तत्। तत् प्रसिद्धम्।छलम्(कर्म)आसीनमाश्रितम्। अप्पतेर्वरुणस्येव मानोऽभिमानो यस्य तम्। अगा निश्चला निकाना दीप्तिर्यस्य तम्।नम्। जेतुम्।अहो।अजतु यातु॥'यद्वा-'कामेकृत आमोदो यासां तासाम्।सुवर्णरजताभ्यामुच्छलन्त्यो दास्यो यासां तासाम्।गणिकानाम्।रञ्जयितुम्। अप्रतिमानम्। सः। न क्षमैते॥'इति। 'तोदी सदि गगणमदो, कलहंससदावलंविदन्तारिदम्। आरदमेहावसरं सासदमारं गदासारम्॥' इदं संस्कृतशौरसेन्युदाहरणम्। 'ततो दृश्यते गगनमदः कलहंसशतावलंवितान्तारितम्। आरतमोघावसरं शाश्वतमारंगतासारम्॥' इति शौरसेन्याः संस्कृतम्। तदर्थो यथा-'तुदति परानिति तोदी, देशनं दिगुपदेशस्तया सह वर्तत इति सदिक्। न गणेन सहायेन मदो यस्य सः। सः। वित्। सदा। अरलहम्। दमेहाया अवसरो यस्य तत्। अस्यन्ते क्षिप्यन्ते इत्यासाः शरास्तान् यन्तीत्यासदा धनुर्धरास्तैः सह वर्तत इति सासदम्। गदाभिः सारमिति गदासारम्। इदम्। आरमरिसक्तम्। बलम्। अन्तः। आरससारे॥' यद्वा-आरतोविरतो मेघावसरो यत्र तत् शाश्वतो मारो यत्र तत्। गतः आसारो यतस्तत्। कलहंसशतेनावलम्बितमंतारितं चेति तथोक्तम्। अदः। गगनम्। ततः प्रावृषोऽपगमानन्तरम्। दृश्यते॥' इति। 'धीरा गच्छदु मेहतमुदुद्धखारिसदःसु। अभ्रमदप्पसराहरणु रविकिरणा ते जःसु॥' इदं संस्कृतापभ्रंशोदाहरणम्। 'धीरा गच्छतु मेघतमो दुर्द्धरवार्षिकदस्यु। अभ्रमदप्रसराहरणं रविकिरणास्ते यस्य॥' इत्यपभ्रंशसंस्कृतम्। तदर्थो यथा'हे उमे धीरा भव यतः-अवेर्गङ्गारिकाया इव किरणं विक्षेपणं निर्वासनं यस्याः सा।हतामुदुर्यस्याःसा। अणुः कृशा अभ्रे माद्यतीत्येवंभूतोऽप्रसरो जलप्रसारो यस्याः सा गङ्गा। अहर्दिवसम्। 'अपी'ति शेषः। उद्गता धरा (पृथिवी) प्रलयापन्निमग्ना यस्मात्तच्च यद्वारि जलं तदेव सदः स्थानं येषां तेषु। तेजःसु। वडवानलतेजःस्वित्यर्थः। अगच्छदपतत्॥' यद्वा-हे धीराः। दुर्धरा वार्षिका दस्यवो यत्र तत्। मेघतमः। अच्छतु। यस्य (मेघतमसः) न भ्रमं ददातीत्येवंभूतः प्रसरो येषां ते रविकिरणाः। हरणं हर्त्तारः॥' इति। एवं प्राकृतमागध्यादीनामप्युदाहरणानि द्रष्टव्यानि। यत्तु तत्रैव-वाक्ये यत्र कस्मिन्ननेकभाषानिबन्धनं क्रियते। अयमपरो विद्वद्भिर्भाषाश्लेषोऽत्र विज्ञेयः॥' इत्युक्तम्। तन्मन्दम्, अर्थविशेषमन्तराऽश्लिष्टयोरपि भाषयोः साधारण्यात्तत्समत्वस्यैवाङ्गीकार्यत्वात्। एतेन 'समरे भीमारम्भं विमलासु कलासु सुन्दरं सरसम्। सारं सभासु सूरिं तमहं सुरगुरुसमं वन्दे॥' 'शूलं शलन्तु शं वा विशन्तु शवलावशं विशङ्का वा। अशमदशं दुःशीला दिशन्ति काले खला अशिवम्॥' 'चम्पाककलिकाकोमलकान्तिकपोलाऽथ दीपिकाऽनङ्गी। इच्छति गजपतिगमना चपलायतलोचना लपितुम्॥' 'अधरदलं ते तरुणा मदिरामद मधुरवाणि! सामोदम्। साधु पिबन्तु सुपीवर परिणाहि पयोधरारम्भे॥' 'क्रीडन्ति प्रसरन्ति मधुकमलप्रणयि लिहन्ति। भ्रमरामित्रसुविभ्रमा मत्ता भूरि रसन्ति॥' इत्यादीनि संस्कृतसमानि प्राकृतमागधीपैशाचीशौरसेन्यपभ्रंशवाक्यानि न श्लेषव्यपदेशभाञ्जि, अर्थविशेषमन्तरेण स्वरूपसमानयोर्विजातीयत्वाभावे तयोः श्लेष एव सादृश्यमिति वक्तुमनर्हत्वादिति सूचितम्। इति।

अस्य पुनः प्रभेदानवतारयति-

७४ सभङ्गो भङ्गेन पद (शब्द) भङ्गेन सह वर्त्तत इति तथोक्तः। अथ। अभङ्गो न भङ्गः पदभङ्गो यत्र सः। तथा-तदुभयात्मकस्तौ सभङ्गाभङ्गौ चामू उभयौ, तावात्मानौ यस्य सः। इत्येवम्-पुनः। 'श्लेष' इति शेषः।

१ शरदि पान्थस्य तत्कालिकं सलिलं विलोकयत इयमुक्तिः। २ पौरुषस्तवनार्थेयमुक्तिः। ३ वेश्यासङ्गेन खिन्नस्येयमुक्तिः। ४ रणस्थस्य कस्यापि वर्णनमिदम्। ५ शरदि नभोवर्णनमिदम्। ६ गङ्गाव्यसनं दर्शयन्त्या गौरीसख्या गौरीं प्रत्युक्तिरियम्। ७ गौर्य्याः पुरस्ताद्गुरसमरवर्णनमिदम्।

एतद्भेदत्रयं चोक्तभेदाष्टके यथासम्भवं ज्ञेयम् । यथा वा—

"येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयोगङ्गां च योधारयत् ।
यस्याहुः शशिमच्छिरोहर इति स्तुत्यं च नामामराः
पायात्स स्वयमन्धकक्षयकरस्त्वां सर्वदो माधवः ॥ ६३ ॥"

अत्र 'येन–' इत्यादौ सभङ्गः श्लेषः, 'अन्धक' इत्यादौ अभङ्गः, अनयोश्च एकत्र सम्भवात् सभङ्गाभङ्गात्मको ग्रन्थगौरवभयात् पृथङ् नोदाहृतः ।

---

त्रिधा । 'त्रिविधोऽप्ययं श्लेषः प्रकृतानेकविषयाप्रकृतानेकविषयप्रकृताप्रकृतानेकभेदैर्भिद्यते ।' इति टिप्पणीकाराः । इदं तत्त्वम्—श्लेषस्त्रिविधः सभङ्गा–भङ्ग–सभङ्गाभङ्गभेदात्, सोऽपि पुनः प्रत्येकं प्रकृतानेकविषया–प्रकृतानेकविषय–प्रकृताप्रकृतानेकविषयभेदात्त्रिधा भिद्यमानो नवविधः प्रोच्यते । तथा च–सभङ्गश्लेषोऽभङ्गश्लेष इत्येवं व्यपदिश्यमानोऽसौ त्रिविधः, अन्यदा स्वरूपसत्त्वेन सभङ्गादिभेदात्त्रिविध इत्युभयथा त्रिविधः । इति ।

प्रकृतानेकविषयादीनामपि सभङ्गत्वादि मन्यमान आह–**एतद्भेदत्रयम्** । **च** । **उक्तभेदाष्टके** उक्तभेदानां 'वर्ण...' इत्यादिनाऽभिहितभेदानामष्टकं तत्र । **यथासम्भवम्** । **ज्ञेयम्**न्वेषणीयम्, तत एषामनतिरेकादिति भावः । **यथा वा**–

**'येन** । **अभवेन** न भवो जन्म यस्य तेनाजन्मनेत्यर्थः । **अनः** शकटं तत्र निलीनोऽसुर इति यावत् । 'क्लीबेऽनः शकटोऽस्त्री स्यात्' इत्यमरः । **ध्वस्तं** परावृत्त्य पातितम् । तथा–**बलिजित्कायो** बलिं जितवानिति बलिजित्, तादृशः कायः शरीरम् । **पुरा** । **स्त्रीकृतः** । यद्वा–ध्वस्तमनोभवेन ध्वस्तो विनाशितो मनोभवो येन तेन मदनान्तकेनेत्यर्थः । बलिजित् कायः शरीरं यस्य स हरिरित्यर्थः । पुरा अर्द्धाङ्गीकृतः 'त्रिपुरासुरं हन्तु'मिति भावः । **च** पुनः । **यः** । **उद्वृत्तभुजङ्गहोद्वृत्ता** दुराचारिणो ये भुजङ्गास्तान् हन्तीति तथोक्तः । 'यश्चोद्वृत्तस्याघासुरस्य ( भुजङ्गस्य ) हन्ता । यद्वा–कालियस्य पीडाकरः ।' इति विवृतिकाराः । **आरवलय** आरमरीणां सम्बन्धि यद् बलं तद् यातीति तथोक्तः । **यः** । **अगं** गोवर्धनपर्वतम् । **च** तथा । **गां** पृथ्वीम् । **अधारयत्** । यद्वा–उद्वृत्तभुजङ्गहारवलय उद्वृत्ता ये भुजङ्गास्त एव हारवलया हारवलयभूता यस्य सः । यः । च । गङ्गाम् । अधारयत् । **अमरा** देवाः । **शशिमच्छिरोहरः** शशिनं चन्द्रं मथ्नातीति शशिमत् सैंहिकेयस्तस्य शिरोहर इति तथोक्तः । **इति** । **यस्य** । **च** । **स्तुत्यं** प्रशंसनीयम् । **नाम** । **आहुः** । यद्वा–अमराः । यस्य शशिमच्छशी चन्द्रोऽस्मिन्नस्तीति तत् शिरः यस्य सोऽसौ हरः । इतीत्येवम् । स्तुत्यम् । नाम । आहुः । **सः** । **अन्धकक्षयकरो**ऽन्धकानां यादवानां क्षयः स्थानं द्वारकेति यावत्, यद्वा अन्धकस्य तदाख्यासुरस्य क्षयो विनाशस्तत्करः । **सर्वदः** सर्वं ( स्वाभीष्टम् ) ददातीति तथोक्तः । यद्वा–सर्वदा सर्वस्मिन्समये । **माधवः** यद्वा–उमाधवः । **स्वयम्** । **त्वाम्** । **पायाद्**रक्षेत् । अत्र कस्यापि स्वार्तस्य कमपि यजमानम्प्रत्याशीर्वादोक्तिः । पद्यमिदं सुभाषितावलीस्थं चन्द्रककवेः । अत्र 'येनध्वस्तमनोभवेने' त्यादौ 'या जयश्रीः···' इत्यादाविवाभवन्मतयोगत्वं दोषः । शार्दूलविक्रीडितं वृत्तम् । लक्षणं चोक्तं प्राक् ॥ ६३ ॥'

उक्तं श्लेषस्य त्रैविध्यं क्रमाद्दर्शयति–**अत्र 'येन···' इत्यादौ** 'येन ध्वस्तमनोभवेन···' इत्यादौ । **सभङ्गः** । **श्लेषः** । **'अन्धक' इत्यादौ** 'अन्धकक्षयकर' इत्यत्र । **अभङ्गो**ऽभङ्गश्लेषः । **अनयोः** सभङ्गाभङ्गश्लेषयोः । **च** । **एकत्र** । **सम्भवात्** । **सभङ्गाभङ्गात्मकः** । 'श्लेष' इति शेषः । नन्वेष पृथक् कथं नोदाहृत इत्याह–**ग्रन्थगौरवभयात्** । **पृथक्** । **न** नैव । **उदाहृतः** । 'अस्माभिरि'ति शेषः । अत्रायं पर्य्यालोकः–'पृथुकार्त्तस्वरपात्रं···' इत्यादौ सभङ्गः, 'नीतानामाकुलीभावं···' इत्यादावभङ्गः, सर्वस्वं हर सर्वस्य···' इत्यादौ पुनः सभङ्गाभङ्गः श्लेषः । तथा 'पृथुकार्त्तस्वरपात्रं···' इत्यादौ कृतानेकविषयः, 'सर्वस्वं हर सर्वस्य···' इत्यादावप्रकृतानेकविषयः, 'प्रतिकूलतामुपगते हि विधौ···' इत्यादौ पुनः प्रकृताप्रकृतानेकविषयः श्लेषः । इत्येवमन्यत्राप्यूह्यम् । इति ।

**अत्र केचिदाहुः-सभङ्गश्लेष एव शब्दश्लेषविषयः, यत्रोदात्तादिस्वरभेदाद्भिन्नप्रयत्नोच्चार्यत्वेन भिन्नयोः शब्दयो'र्जतु-काष्ठ'न्यायेन श्लेषः। अभङ्गस्त्वर्थश्लेष एव, यत्र स्वराभेदादभिन्नप्रयत्नोच्चार्यतया शब्दाभेदादर्थयो'रेकवृन्तगतफलद्वय'न्यायेन श्लेषः। यो हि यदाश्रितः स तदाकार एव, अलङ्कार्यालङ्करणभावस्य लोकवदाश्रयाश्रयिभावेनोपपत्तेः। इति।**

---

अत्र परमतं दर्शयति-**अत्रा**स्मिन् सभङ्गाभङ्गयोः शब्दार्थालङ्कारतामीमांसाऽवसर इति यावत्। **केचित्**। अलङ्कारसर्वस्वकारादय इत्यर्थः। **आहुः**। **यत्र** यस्मिन् सभङ्गश्लेषे। **उदात्तादिस्वरभेदा**दुदात्तः 'उच्चैरुदात्तः' १।२।२९ इत्युक्तस्वरूपः स्वर आदिर्येषां, ते चामी स्वरास्तद्भेदात। आदिपदेन 'नीचैरनुदात्तः।' १।२।३० 'समाहारः स्वरितः।' १।२।३१ इत्युक्तस्वरूपस्वरग्रहणम्। **भिन्नप्रयत्नोच्चार्यत्वेन** भिन्नौ विजातीयौ बाह्याभ्यन्तर-प्रयत्नभेदेन भिन्नौ यौ प्रयत्नौ ताभ्यामुच्चार्यौ तयोर्भावस्तत्त्वं तेन। **भिन्नयो**र्विजातीययोः। 'अपी'ति शेषः। **शब्दयोः**। **'जतु-काष्ठ' न्यायेन** 'जतुना युक्तं काष्ठं' तन्न्यायस्तेन। यथा जतु-काष्ठयोर्भिन्नयोरपि संपृक्तयो-रेकत्वेन प्रतिभासस्तथेत्यर्थः। **श्लेषः**। 'स'इति शेषः। **सभङ्गश्लेषो** भङ्गेन समासवैचित्र्यानुपदं सम्पद्यमानेन पदभङ्गेन सह वर्तत इत्यसौ श्लेष इति तथोक्तः। **शब्दश्लेषविषयः** शब्दयोः श्लेष इत्यसावेव विषयो यस्य सः। **एवे**ति निर्विचिकित्सितम्। इदमभिहितम्-सभङ्गस्य समासभेदेनानेकधा भिद्यमानैः पदैः श्लिष्टत्वेन स्वरभिन्नत्वं, तत्सत्त्वे प्रयत्नभिन्नत्वं, प्रयत्नभेदे शब्दभेदः, एवं पुनर्भिन्नयोस्तयोर्जतुकाष्ठयोरिवैकत्र समावेशः श्लेषः। अत एवासौ शब्दश्लेषः। यथाऽऽहुरलङ्कारसर्वस्वकाराः। उदात्तादिस्वरभेदात् प्रयत्नभेदाच्च शब्दान्यत्वे शब्दश्लेषः, यत्र प्रायेण पदभङ्गो भवति।' इति। इति। अत एव-**यत्र** यस्मिन् अभङ्गश्लेष इति यावत्। **स्वराभेदात्** स्वराणामुदात्तादी-नामभेदः समासाभेदेन भेदाभावस्तस्मादिति तथोक्तात्। **अभिन्नप्रयत्नोच्चार्यतयाऽ**भिन्न एकोऽसौ प्रयत्नस्तेनो-च्चार्यौ तत्तया। 'हेतुने'ति शेषः। **शब्दाभेदा**च्छब्दयोरर्थद्वयप्रतिपादकत्वेन भिन्नयोरपि तथाऽभिन्नयोरिति यावत्, अभेद ऐक्यं तस्मात्। **अर्थयोः**। 'स्वरूपतो भिन्नयोरप्येकजन्मभूमितया सोदरयोरिव कविप्रतिभोट्टङ्कनमहिम्नाऽभि-न्नतया प्रतीयमानयो'रिति शेषः। **'एकवृन्तगतफलद्वय'न्यायेनै**कं च तद्वृन्तं प्रसवस्थानं तद्गतं यत् फलद्वयं तन्न्यायस्तन्मार्गस्तेन। 'वृन्तं प्रसवबन्धनम्।' इत्यमरः। **श्लेषः**। 'स' इति शेषः। **अभङ्गो** न भङ्गः समासाभावात्पद-विभागो यत्र तादृशः। **तु** पुनः। **अर्थश्लेषो**ऽर्थयोः श्लेष एकत्रैकत्वेन समावेशो यत्र तादृशः। 'अलङ्कार'इति शेषः। **एवे**ति सिद्धान्तः। अत्र हेतुमाह-**अलङ्कार्यालङ्करणभावस्या**लङ्कार्यमलङ्कर्तुमर्हमलङ्करणं येनालङ्क्रियते तच्च तयोर्भावस्तस्य। अलङ्कार्यत्वस्य मस्तकादित्वस्येवालङ्करणत्वस्य मुकुटादित्वस्येव चालङ्कार्यत्वस्य शब्दार्थान्यतरस्याल-ङ्करणत्वस्य पुनरुक्तवदाभासोपमादित्वस्य चेति भावः। 'अचो यत्।' ३।१।९७ इति यत्। 'ल्युट् च' ३।३।११५ इति ल्युट्। **लोकव**ल्लोक इव। 'तत्र तस्येव।' ५।१।११६ इति वतिः। **आश्रयाश्रयिभावेना**श्रयत्वेनाश्रयित्वेन चेत्यर्थः। **उपपत्तेः** 'हेतो'रिति शेषः। **यो** ध्वनि-गुणीभूतव्यङ्ग्य-दोष-गुणा-लङ्कारान्यतमः। **ह्येव**। **यदाश्रितो** यं शब्दमर्थं वाऽऽश्रितः आश्रित्यावस्थित इत्यर्थः। **स** ध्वन्याद्यन्यतमः। **तदाकार**स्तस्य स्वाश्रयभूतस्येवा-कारो यस्य तादृशः। **एव**। इदमभिहितम्-सभङ्गः शब्दयोः श्लेषमधिगतोऽवतिष्ठत इति तस्य शब्दालङ्कारत्वम्, अभङ्गः पुनरर्थयोरित्यस्यार्थालङ्कारत्वमेव युक्तम्, दृश्यते हि लोके सौवर्णस्य मुकुटकुण्डलादेः शिरः कर्णाद्याश्रयमहिम्ना शिरःप्रभृत्य-लङ्कारत्वम्। यथाऽऽहुरलङ्कारसर्वस्वकाराः-'अर्थश्लेषस्तु यत्र स्वरादिभेदो नास्ति, अत एव न तत्र सभङ्गपदत्वम्। सङ्कलनया तूभय (शब्दार्थोभय) श्लेषः। यथा-'रक्तच्छदत्वं विकचा वहन्तो नालं जलैः सङ्गतमादधानाः। निरस्य पुष्पेषु रुचिं समग्रां पद्मा विरेजुः श्रमणा यथैव॥' अत्र 'रक्तच्छदत्व'मित्यादावर्थश्लेषः, 'नाल'मित्यादौ शब्दश्लेषः। उभयघट-नायामुभयश्लेषः। एवं च नाप्राप्तेष्वलङ्कारेष्वारभ्यमाणस्तद्बाधकत्वेन तत्प्रतिभोत्पत्तिहेतुरिति केचित्, 'येन ध्वस्तमनोभवेन

---

१ एष श्लेषः पुनः'निरवकाशा हि विधयः सावकाशान् बाधन्ते'इति नयेन निरवकाशतया सर्वालङ्कारापवादक इत्युद्भटादीनां मतं'स्थूणानिखनन'न्यायेन दृढयितुं प्रवृत्तोऽपि प्रथमं पूर्वपक्षवत्तन्निदर्शयति-एष चेत्यादिना। अत एवाहू रसगङ्गाधरकाराः-'अत्राहुरुद्भटाचार्याः'येन नाप्राप्ते य आरभ्यते स तस्य बाधक'इति न्यायेनालङ्कारान्तरविषय एवायमारभ्य-माणोऽलङ्कारान्तरं बाधते, न चास्य विविक्तः कश्चिदस्ति विषयो यत्र सावकाशो नान्यं बाधेत ! तथा हि-अप्राकृतगात्र-

बलिजित्कायः पुरा स्त्रीकृत' इत्यादौ विविक्तोऽस्य विषय इति निरवकाशत्वाभावात् नान्यबाधकत्वमित्यन्ये; तत्र पूर्वे षामयमभिप्रायः–इह प्राकरणिकाप्राकरणिकोभयरूपानेकार्थगोचरत्वेन तावत् प्रतिष्ठितोऽयमलङ्कारः । तत्राद्ये प्रकारद्वयं तुल्ययोगिताया विषयः। तृतीये तु प्रकारे दीपकं भवतीति तावदलङ्कारद्वयमिदं श्लेषविषये व्याप्त्या व्यवतिष्ठते। तत्पृष्ठे चालङ्कारान्तराणामुत्थापनमिति नास्ति विविक्तोऽस्य विषयः। अत एवालङ्कारान्तराणां बाधितत्वात् प्रतिभानमात्रेणावस्थानम् । 'येन ध्वस्तमनोभवेन' इत्यादौ च प्राकरणिकत्वादर्थद्वयस्य तुल्ययोगितायाः प्रतिभानम् । अलङ्कार्य्यालङ्करणभावस्य लोकवदाश्रयाश्रयिभावेनोपपत्तेः । 'रक्तच्छदत्व···' इत्यादावर्थद्वयाश्रितत्वादयमर्थालङ्कारः 'नालं···' इत्यादौ तु शब्दद्वयाश्रितत्वाच्छब्दालङ्कारोऽयम्।यद्यप्य'र्थभेदाच्छब्दभेद' इति दर्शने 'रक्तच्छदत्वं...'इत्यादावपि शब्दाश्रितोऽयं,तथाऽप्यौपपत्तिकत्वादत्र शब्दभेदस्य प्रतीतेरेकताऽवसायान्नास्ति शब्दभेदः।'नालं...'इत्यादौ तु प्रयत्नादिभेदात् प्रातीतिक एव शब्दभेदः। अतश्च पूर्वत्र 'एकवृन्तगतफलद्वय'न्यायेनार्थद्वयस्य शब्दश्लिष्टत्वम्, अपरत्र 'जतुकाष्ठ–' न्यायेन स्वयमेव श्लिष्टत्वम्, 'पूर्वत्र अन्वयव्यतिरेकाभ्यां शब्दहेतुकत्वाच्छब्दालङ्कारत्वम्' इति चेत् ? न, आश्रयाश्रयिभावेनालङ्कारत्वस्य लोकवद्व्यवस्थानात्, एवं च–'सकलकलं पुरमेतत् सम्प्रति सुधांशुबिम्बमिव ।' इत्यादौ न गुणक्रियासाम्यवत् शब्दसाम्यमुपमाप्रयोजकम्, अपि तु-उपमाप्रतिमोत्पत्तिहेतुः श्लेष एवावसेयः । श्लेषगर्भे रूपके तु रूपकहेतुकस्य श्लेषस्य तृतीयकक्षायां रूपके एव विश्रान्तिरिति रूपकेण श्लेषो बाध्यते । श्लिष्टविशेषणनिबन्धनायां च समासोक्तौ विशेष्यस्यापि गम्यत्वात् श्लेषस्यापि बाधिका समासोक्तिः । 'त्रयीमयोऽपि प्रथितो जगत्सु यद्वारुणीं प्रत्यगमद् विवस्वान् । मन्येऽस्तशैलात् पतितोऽत एव विवेश शुद्ध्यै वडवाग्निमध्यम् ॥' इत्यत्र श्लोके विवस्वतो वस्तुवृत्तसम्भवि अधःप्रदेशसंयोगलक्षणं यत्, यत् पतितत्वं, यच्च वडवाग्निमध्यप्रवेशनं, ते द्वे अपि त्रयीमयत्वसम्बन्धिवारुणीगमनरूपविरुद्धाचरणहेतुकाभ्यां पतितत्वाग्निप्रवेशनाभ्यामतिशयोक्त्या श्लेषमूलयाऽभेदेनाध्यवसिते, सोऽयमतत्क्रियायोगः । तद्धेतुका च 'मन्ये' इति क्रिया अत एव 'विशुद्ध्यै' इत्युत्प्रेक्षाऽत्र, 'अत एवे' ति परामृष्टो विरोधालङ्कारालङ्कृतोऽर्थो हेतुत्वेनोत्प्रेक्ष्यते 'विशुद्ध्यै' इति च फलत्वेन । ततश्च हेतुफलयोर्द्वयोरप्यत्रोत्प्रेक्षा । विरोधाभासस्य विरोधाभासत्वं लक्षणम् । अतो विरोधाभासनसमय एव हेतुफलोत्प्रेक्षयोरुत्थानम्, उत्तरकालं तु विरोधसमाधिः । श्लेषस्य च सर्वालङ्कारापवादकत्वाद् विरोधे प्रतिभोत्पत्तिहेतुरयं श्लेषः । यत्र तु प्रस्तुताभिधेयपरत्वेऽपि वाक्यस्य श्लिष्टपदमहिम्ना वक्ष्यमाणार्थनिष्ठमुपक्षेपापराभिधानं सूचकत्वं तत्र किं श्लेषः? उत शब्दशक्तिमूलध्वनिः ? इति विचार्य्यते–तत्र न तावत् श्लेषः, अर्थद्वयस्योचितत्वेनाभिधेयतया वक्तुमिष्टेः, नापि ध्वनिः, उपक्षेप्यस्यार्थस्यासम्बद्धत्वाभावात्तेन सहोपमानोपमेयत्वस्याविवक्षणात् । न चान्या गतिरस्ति तदत्र किं कर्त्तव्यम् ? उच्यते–श्लेषस्योक्तनयेनाप्रवृत्तेर्ध्वनेरेवायं विषय इति निश्चयः । तथा हि–शब्दशक्तिमूले ध्वनावर्थान्तरस्यासम्बद्धत्वात्तत्सम्बन्धार्थमौपम्यं कल्प्यते । स च सम्बन्धः प्रकारान्तरेणौपम्यपरिहारेण यद्यप्युपपादयितुं शक्यः स्यात् तत् कोऽयमभिनिवेशस्तत्र । उपमाध्वनौ वस्तुध्वनिरपि सम्बन्धान्तरेण तत्र समीचीनः स्यात् । अत एव–'अलङ्कारोऽथ वस्त्वेव शब्दादेवावभासते । प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा ॥' इति न्यायभरबन्धेन द्विधा शब्दशक्त्युद्भव उक्तः। एवं प्रकृतेऽपि यत्र सूचनाव्यापारोऽस्ति, तत्र शब्दशक्तिमूलो वस्तुध्वनिर्बोद्धव्यः, यथा–'सद्यः कौशिकदिग्विजृम्भण-

---

–योः प्रकृतमात्रयोर्वा तावत् तुल्ययोगितैव जागर्त्ति, प्रकृताप्रकृतयोस्तु दीपकम्,तदनुमोदिता उपमादयश्च । न च 'देव ! त्वमेव पाता (ऽ) लमाशानां त्वं निबन्धनम् । त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः ॥' इत्यादिकाव्यप्रकाशोक्तौ विविक्तो विषय इति वाच्यम्, रूपकस्यैव स्फुटत्वात् । श्लेषोपस्थापितया तात्पर्यार्थस्यारोपारोपमन्तरेण लोकत्रयात्मकत्वस्य दुरुपपादत्वात् । कथं तर्हि 'न दीनां सम्पदं बिभ्रद् राजाऽयं सागरो यथा ।' इत्यादावुपमायाः प्रत्ययः, कथं वा तत्रैव यथाशब्ददाने उत्प्रेक्षायाः, 'अपर' इति कृते च रूपकस्येति चेन्न, अत्र हि उपमादीनां प्रतिभानमात्रं न वास्तवी स्थितिः । नहि शैल्येन शुक्तौ रजतत्वं प्रतीयमानमपि वस्तुतोऽस्ति । तस्मादुपमोत्पत्तिहेतुः श्लेष एव स्वविषये सर्वत्राऽलङ्कारः ।' इति । २ 'आहु'रिति शेषः ।

**तदन्ये न मन्यन्ते, यथा हि-अत्र ध्वनिगुणीभूतव्यङ्ग्य-दोष-गुणा-लङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेरन्वयव्यतिरेकानुविधायित्वेन नियम इति । न च-'अन्धकक्षय' इत्यादौ शब्दाभेदः,'अर्थभेदेन**

---

वशादाकाशराष्ट्रं रसात्त्यक्त्वा धूसरकान्तिवल्कलधरो राजाऽस्तशैलं ययौ । तत्कान्ताऽप्यथ सान्त्वयन्त्यलिकुलध्वानैः समुल्लासिभिः क्रन्दन्तं कुमुदाकरं सुतमिव क्षिप्रं प्रतस्थे निशा ॥' इत्यत्र हरिश्चन्द्रचरिते प्रभातवर्णनानुगुण्येन राजशब्दाभिधेयेऽस्तमुपेयुपि चन्द्रे रोहिताश्वाख्यतनयसहितयोशीनर्या वध्वा युक्तस्य हरिश्चन्द्रस्य राज्ञो विश्वामित्रसम्पादितोपद्रववशात् प्रातः स्वराष्ट्रं त्यक्त्वा वाराणसीं प्रति गमनं सूचितं स्यात्, तथा च कौशिकशब्दः प्रकृत इन्द्रोलूकयोर्वर्त्तते । सूचनीयार्थविषयत्वेन तु विश्वामित्रवृत्तिः । वल्कलसुताभ्यां त्वौपम्यं सूचनीयार्थनैरपेक्ष्येण सादृश्यसम्भवमात्रेण सम्भवनीयम् । अतश्च प्रकृते न सूचनीयस्य सम्बन्धात् शब्दशक्तिमूलो वस्तुध्वनिरयम् । इह च-'आकृष्यादावमन्दग्रहमलकचयं वक्त्रमासज्य वक्त्रे कण्ठे लग्नः सुकण्ठः प्रभवति कुचयोर्दत्तगाढाङ्गसङ्गः । बद्धासक्तिर्नितम्बे पतति चरणयोर्यः स तादृक् प्रियो मे बाले लज्जा निरस्ता नहिनहि सरले चोलकः किं त्रपाकृत् ॥' इत्यलङ्कारान्तरविविक्तोऽयं श्लेषस्य विषय इति नाशङ्कनीयम्, अपह्नुतेरत्र विद्यमानत्वात् । वस्तुतोऽपह्नवस्य सादृश्यपर्य्यवसायिता वाऽपह्नवेनापह्नवपर्य्यवसायिना वा सादृश्येन भूतार्थापह्नवस्योभयत्र विद्यमानत्वात् । 'सादृश्यव्यक्तये यत्रापह्नवोऽसावपह्नुतिः। अपह्नवाय सादृश्यं यत्राप्येषाप्यपह्नुतिः॥' इति सङ्क्षेपः।आद्या स्वप्रस्ताव एवोदाहृता, द्वितीया तु सम्प्रति दर्शिता । तेनालङ्कारान्तरविविक्तो नास्य विषयोऽस्तीति सर्वालङ्कारापवादोऽयमिति स्थितम् ।' इति । एतेन 'अन्वयव्यतिरेकानुविधायित्वेन तत्तदीयं मन्दमिति सूचितम् । अत एवाहू रसगङ्गाधरकाराः-'अन्वयव्यतिरेकाभ्यां हि हेतुत्वावगमो घटादिं प्रति दण्डादेरिवास्तु, न त्वाश्रयावगमः, स तु तद्वृत्तित्वज्ञानाधीनः । इह हि सभङ्गश्लेषस्य शब्दद्वयवृत्तित्वं 'जतुकाष्ठ'न्यायेन, अभङ्गश्लेषस्य चार्थद्वयवृत्तित्वम्'एकवृन्तगतफलद्वय'वत् स्फुटमेवेत्येकस्य शब्दालङ्कारत्वम्, अपरस्यार्थालङ्कारत्वम् । यद्यपि द्वितीयस्यापि'प्रतिप्रवृत्तिनिमित्तं शब्दभेदः'इति नये शब्दद्वयवृत्तित्वात् शब्दालङ्कारत्वमुचितम्,तथाऽपि शक्तताऽवच्छेदकानुपूर्व्यभेदादभेदाध्यवसानात् शब्दद्वयवृत्तित्वज्ञानं दुःशकम्; अन्यथा 'प्रत्यर्थं शब्दभेदः'इति नये पराभिमतोऽर्थश्लेषोऽपि शब्दालङ्कार एव स्यात् ।' इत्यलङ्कारसर्वस्वकारादयः ।' इति । इति । अत्रेदं तत्त्वम्-सभङ्ग एव शब्दश्लेषविषयः, न त्वभङ्गः, एतस्य परमर्थालङ्कारत्वमिति ।

एतन्निराकरोति-**अन्ये** तेभ्यो भिन्नाः श्रद्धेया इति यावत् । **तद्** यत् 'स भङ्ग एव शब्दश्लेषः' इत्यादि केचिदाहुस्तत्सर्वमिति भावः ( कर्म ) । **न** नैव । **मन्यन्ते** 'क्षमन्ते' इति पाठान्तरम् । 'क्षोदक्षमत्वाभावादि'ति शेषः । **तथाहि-अत्रा**स्मिन् काव्ये।**ध्वनिगुणीभूतव्यङ्ग्य-दोष-गुणा-लङ्काराणाम्** । **शब्दार्थगतत्वेन** शब्दगतत्वेनार्थगतत्वेन-शब्दार्थोभयगतत्वेन चेत्यर्थः । **व्यवस्थिते**र्व्यवस्थायाः। **अन्वयव्यतिरेकानुविधायित्वेन** । **नियमः** । अयम्भावः-यथाहि-मृन्मये मृदोऽन्वयव्यतिरेकाभ्यां व्यवस्थानं तथैव काव्येऽपि यत्र तत्र शब्दाद्यन्यतमस्यैवैषं स्थाने पन्था, न तु दण्डादेरिव शब्दादेर्निमित्तत्वेन,मृन्मयस्य दण्डाद्यसद्भावेऽपि तत्तत्सद्भावस्यैव ध्वन्यादेः शब्दाद्यसद्भावेऽपि तत्तत्सद्भावस्याङ्गीकारापत्तेः। न च तथेति घटादेर्मृन्मयत्वायुक्तौ मृदादेरिव ध्वन्यादेः शाब्दत्वायुक्तौ शब्दादेरन्वयव्यतिरेकाभ्यामेव व्यवस्थानं नियतम् । लोकवत्तत्तद्व्यवस्थास्वीकारे तु मौल्यादिनिष्ठत्वाभावावसरेऽपि मुकुटादेर्मौल्याद्यलङ्कारत्वस्यैव शब्दाद्याश्रयाभावेऽपि तस्यतस्य शब्दाद्यलङ्कारादित्वस्य प्रसङ्गः स्यात्, न च तथा, तस्माद् यथोक्तमेव ज्याय इति स्थितम् । यथा व्याचक्षतेऽभियुक्ताः-'यस्मिन् शब्देऽर्थे वा सत्येव ये ध्वन्यादयः सम्भवन्ति, असति च तस्मिन् यदि त एव न, तर्हि ते तदधीनस्वरूपतया तदीया इति निर्विचिकित्सितम् । एवं च-यथा वस्तुध्वन्यादयो रसाद्यङ्गभूतव्यङ्ग्याद्यो दुःश्रवत्वादयो माधुर्य्यादयः पुनरुक्तवदाभासादयश्च यस्मिन् शब्देऽर्थे वा सति सन्ति, यस्मिन् पुनरसति त एव न, तथाऽस्यापि तत्सत्त्वासत्त्वाभ्यां सत्त्वासत्त्वव्यवस्थाऽङ्गीकार्य्या ।' इति । ननु शब्दाभेदादर्थश्लेषः, यत्रयत्र शब्दाभेदस्तत्रतत्र तथोपपत्तेः; इति चेन्नेत्याह-'**अन्धकक्षयः...**' **इत्यादौ** 'श्लेषे' इति शेषः । '**अर्थभेदेना**र्थयोर्भेदो विजातीयत्वं तेन । अत्र हेतौ तृतीया । **शब्दभेदः** शब्दयोर्भेदो विजातीयत्वम् । 'भवती' ति शेषः ।' **इतिदर्शना**दित्येतस्मात् सिद्धान्तात्, **शब्दाभेदः**।**इति** । **न च**।'वाच्य'मिति शेषः। इदमभिहितम्-'अर्थभेदेन शब्दभेद'इति नये प्रत्यर्थं शब्दभेद

शब्दभेद' इति दर्शनात् । किञ्च—अत्र शब्दस्यैव मुख्यतया वैचित्र्यबोधोपायत्वेन कविप्रतिभोट्टङ्कनाच्छब्दालङ्कारत्वमेव, विसदृशशब्दद्वयस्य बन्धे चैवंविधस्य वैचित्र्यस्याभावात्, वैचित्र्यस्यैव चालङ्कारत्वात् । अर्थमुखप्रेक्षितया चार्थालङ्कारत्वेऽनुप्रासादीनामपि रसादिपरत्वेनार्थमुखप्रेक्षितयाऽर्थालङ्कारत्वप्रसङ्गः । शब्दस्याभिन्नप्रयत्नोच्चार्यत्वेन अर्थालङ्कारत्वे 'प्रतिकूलतामुपगते हि विधौ'

इति स्थिते 'अन्धकक्षये' इत्यादौ 'अन्धके'त्यादीनां शब्दानामभेदापायात्तेषामेव परस्परं वैजात्येऽपि 'जतुकाष्ठ' सादृश्येन श्लेषः । असौ च शब्दानामित्यन्वयव्यतिरेकानुविधायित्वे शाब्दे शाब्दः । ननु 'अर्थभेदेन शब्दभेद' इति स्वीकारेऽर्थश्लेषो न क्वापि सम्पत्स्यते, तत्रापि तथा शाब्दभेदे शाब्दत्वोपपत्तेरिति चेत्सत्यम् । यदि तत्र शब्दान्वयव्यतिरेकानुविधायित्वं समपत्स्यत । एतेन 'अन्यथा 'प्रत्यर्थं शब्दभेद' इति नये पराभिमतोऽर्थश्लेषोऽपि शब्दालङ्कार एव स्यात् ।' इति दूरं गतम् । अत एव—'शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम् ।' इत्यत्र 'स्वभावादेकार्थै'रिति च वक्ष्यमाणं सङ्गंस्यते । इति । ननु-'अर्थभेदेन शब्दभेद' इति नयेन 'अन्धकक्षय' इत्यादौ शब्दभेद आस्तां नाम, किन्तु सत्यर्थभेदे अर्थश्लेष एव स्वीक्रियताम्, किमन्वयव्यतिरेकानुविधायितामुखप्रेक्षित्वेन ? इत्याशङ्क्याह—**किञ्च** 'न तावानेव तत्र शाब्दत्वे हेतुः, किन्त्वन्योऽपि' इति भावः। **अत्र** 'अन्धकक्षय' इत्यादावित्यर्थः । **मुख्यतया** प्राधान्येन । **शब्दस्य** 'अन्धक' इत्यादिशब्दमात्रस्य । **एव** न तु तत्तदर्थस्य। **वैचित्र्यबोधोपायत्वेन** । वैचित्र्यं चमत्कारोऽलङ्कारापरनन्यस्थितिहेतुः। **कविप्रतिभोट्टङ्कनात्** कवेः प्रतिभाऽनुभवस्तस्या उट्टङ्कनं स्फुरणं तस्मात्। **शब्दालङ्कारत्वम्। एव**। न त्वर्थालङ्कारत्वम् । 'सम्भवती'ति शेषः। इदमभिहितम्—'अन्धकक्षय…' इत्यादौ 'अन्धक' इत्यादिशब्दजातस्यैव चमत्कारस्तदसत्त्वे तदसत्त्वात् तस्माद् वैचित्र्यस्य शब्दाधीनतया प्रकृते शब्दालङ्कारत्वमेव साम्प्रतम् । इति । ननु 'शब्दस्यैवे'त्यत्र 'एव'कारेण वैचित्र्यस्य शब्दान्वयानुविधायित्वं तदा समयोक्ष्यत, यदा नार्थस्य; इत्याशङ्क्य तस्य शब्दव्यतिरेकानुविधायित्वंप्रदर्श्य 'नार्थस्ये'ति द्रढयति—**विसदृशशब्दद्वयस्य** विसदृशस्यान्यविधस्य 'अन्धकक्षय' इत्यादौ 'यादवालय' इत्यादेः । **बन्धे** । अत्र विषये सप्तमी । **च** । **एवंविधस्य** तादृशस्य 'अन्धकक्षय' इत्यादिसदृशशब्दद्वयबन्धगतस्येति यावत् । **वैचित्र्यस्य । एव** । न तु यादवालयेत्यादिबन्धगतस्य । **अलङ्कारत्वात्** अलङ्काररूपत्वात् । **च** । इदमभिहितम्—यदि 'अन्धकक्षय' इत्यादावर्थाश्रिततयाऽर्थालङ्कारोऽभविष्यत्तर्हि तद्विसदृशशब्दद्वय ( यादवालय ) बन्धेऽपि समभविष्य द्वैचित्र्यम्, किन्तु न; इति वैचित्र्यस्यालङ्कारत्वबीजभूतस्य प्रकृते शब्दव्यतिरेकानुविधायित्वेन शब्दालङ्कारत्वमिति निर्विवादम् । ननु 'यो यन्मुखप्रेक्षी स तदलङ्कार'इति नयेन 'पृथुकार्त्तस्वरपात्रं…' इत्यादौ शब्दमुखप्रेक्षितया शब्दालङ्कारत्वम् । 'अन्धकक्षयकर' इत्यादौ पुनरर्थप्रेक्षितयाऽर्थालङ्कारत्वमवगन्तव्यम्, किमन्वयव्यतिरेकानुविधायित्वगवेषणेन ? इत्याशङ्क्याह—**अर्थमुखप्रेक्षितया**ऽर्थस्य मुखं लक्षणया तद्वत्स्वरूपप्रत्यायकं चिह्नं तत् प्रेक्षितुं शीलमस्यास्तीति तस्य भावस्तत्ता तया । **च** । **अलङ्कारत्वे**ऽलङ्कारत्वस्वीकारे इति भावः । **अनुप्रासादीनाम्** । 'शब्दालङ्काराणा'मिति शेषः । **अपि** । **रसादिपरत्वेन**रसादौ चमत्कारात्मनि शृङ्गारादौ परस्तत्त्वेनतदनुकूलतयाऽवस्थितत्वेन । अत्राभेदे तृतीया । **अर्थमुखप्रेक्षितया**ऽर्थापेक्षितत्वेन । **अर्थालङ्कारत्वप्रसङ्गः** । 'स्या'दिति शेषः । अत्रेदमुक्तम्—अर्थापेक्षितयाऽऽर्थत्वेऽनुप्रासादीनां शाब्दानामप्यार्थत्वमेव स्यात् । न चानुप्रासादीनां चमत्कारेऽर्थमुखप्रेक्षित्वाभावाच्छब्दालङ्कारत्वमिति वाच्यम्, तेषां रसाद्युत्कर्षाभिप्रायप्रयोज्यत्वात् । अत एवोक्तं कुवलयानन्दकारैः—'तत्र सभङ्गश्लेषः शब्दालङ्कारः । अभङ्गश्लेषस्त्वर्थालङ्कार इति केचित् । (अलङ्कारसर्वस्वकारादयः ), 'उभयमपि शब्दालङ्कार इत्यन्ये (काव्यप्रकाशकारादयः) 'उभयमप्यर्थालङ्कार' इति स्वाभिप्रायः । एतद्विवेचनं तु चित्रमीमांसायां द्रष्टव्यम् ।' इति । 'नन्वभिप्रायस्यार्थालङ्कारमध्यकथनादवगतस्यापि विशेषतः कथनमन्तरेण कथमुपपत्तिरित्याशङ्क्याह—**एत**दिति । यद्यप्युत्प्रेक्षाग्रन्थानन्तरं चित्रमीमांसा न क्वापि दृश्यते, तथाऽप्ययमाशय उन्नीयते चमत्कारेऽर्थमुखप्रेक्षित्वादर्थालङ्कारत्वम् ।' इति चालङ्कारचन्द्रिका ( कुवलयानन्दव्याख्या ) कारैः । एतेन यदुक्तमेभिः 'अनुप्रासयमकादेस्तु न चमत्कारेऽर्थमुखप्रेक्षित्वादर्थालङ्कारत्वम्, अपि तु शब्दवैचित्र्याच्छब्दालङ्कारत्वमेव ।' इति तदुक्तोत्तरम् । इति ।

अथ पुनः सिंहनिरीक्षणन्यायेन 'स्वराभेदादभिन्नप्रयत्नोच्चार्यतया शब्दार्थयो-'रेकवृन्तगतफलद्वय' न्यायेन श्लेषः' इति परमतं निराकरोति—**शब्दस्ये**त्यादिना ।

इत्यादौ शब्दश्लेषेऽपि अर्थालङ्कारत्वं तवापि प्रसज्यति। इत्युभयत्रापि शब्दालङ्कारत्वमेव। यत्र तु शब्दपरिवर्त्तनेऽपि न तथा श्लेषत्वखण्डना, तत्र-

'स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्। अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥८४॥'

इत्यादावर्थश्लेषः।

अस्य चालङ्कारान्तरविविक्तविषयताया असम्भवाद् विद्यमानेष्वलङ्कारान्तरेष्वपवादत्वेन तद्बाधकतया तत्प्रतिभोत्पत्तिहेतुत्वम्। इति केचित् ( प्राहुः )। इत्थमत्र विचार्य्यते-समासोक्त्य-

---

शब्दस्य। 'स्वराभेदा'दिति शेषः। अभिन्नप्रयत्नोच्चार्यत्वेन। अर्थालङ्कारत्वेऽर्थालङ्कारत्वस्वीकारे। 'प्रतिकूलतामुपगते हि विधौ।' इत्यादौ 'शब्दश्लेषे' इति शेषः। शब्दभेदे शब्दयोर्विधुविधि' इत्येतयोः शब्दयोर्भेदे। अत्र सत्यर्थे सप्तमी। अपि। 'अभिन्नप्रयत्नोच्चार्यत्वेने'ति शेषः। अर्थालङ्कारत्वमर्थालङ्कारतास्वीकारः। तव। अत्र प्रतिवादित्वमुद्दिश्यैकवचनम्, अन्यथा-'केचि'दित्युपक्रम्य 'तेषां' 'युष्माकम्' इत्येव वक्तुमयोक्ष्यत। अपि। प्रसज्यति। इति। उभयत्र सभङ्गेऽभङ्गे चेत्यर्थः। अपि। शब्दालङ्कारत्वम्। एव। इदमभिहितम्-समासभेदे स्वरभेदस्तस्मिन् पुनः सति प्रयत्नभेद इति शब्दभेदे सभङ्गोऽस्तु शब्दश्लेषः, किन्तु यदीममेव नयमनुसृत्य 'विधा' वित्यादौ शब्दश्लेषत्वं गवेष्यते न तद्ध्यसावुपपद्यते, तथा हि-अत्र समासाभावात् स्वराभेदे प्रयत्नाभेदः,तत्सत्त्वे पुनः शब्दाभेदे शब्दश्लेषो न सम्भवति शब्दानेकत्वे तच्छ्लेषानुपपत्तेः। तस्मात्-'स्वराभेदात्'इत्यादि यदुक्तं न तत् सङ्गच्छते। इति।

नन्वेवं सति सर्वत्रैवास्तां शब्दश्लेषः, कथं वा कुत्रचिदर्थश्लेषोऽपि भवेत् इत्यर्थश्लेषस्य सावकाशतां दर्शयति-यत्र यस्मिन्। तु। शब्दपरिवर्त्तने। 'कृते' इति शेषः। अपि। तथा। श्लेषत्वखण्डना श्लेषत्वस्य श्लेषस्य खण्डना भङ्गो व्याघात इति यावत्, इति तथोक्ता। श्लिष्यतीति श्लेषस्तत्त्वं श्लेषत्वम्। ननु श्लेषणं श्लेषस्तत्त्वं श्लेषत्वम्;:भावाद्भावप्रत्ययावश्यकत्वाभावात्। न 'सम्भवती'ति शेषः। तत्र-

'स्तोकेनाल्पेनाल्पद्रव्यमानह्रासेनेत्येकत्रार्थः, अन्यत्राल्पोद्योगसार्थक्येनेत्यर्थः। उन्नतिमुन्नमनमूर्ध्वंगमनमुन्नतत्वं वा खस्वरूपस्याविश्रिकीर्षामित्यर्थः। आयाति प्राप्नोति। स्तोकेन। अधोगतिम्। आयाति। इत्येवम्-तुलाकोटेस्तुलायाः कोटिरेकदेशस्तस्य। च तथा। खलस्य दुर्जनस्य। वृत्तिर्वर्त्तनं जीवनं वा। अहो आश्चर्य्यम्। सुसदृशी। नितान्तं सदृशत्वमधिगतेति भावः। सदृशशब्दस्य वाच्यलिङ्गत्वात्स्त्रीप्रत्ययः। अत्राल्पेन द्रव्यह्रासेन, तुलाकोटेरूर्ध्वगमनमिव खलस्याल्पलाभादिनाऽहङ्काराविष्कारः क्षणादेवाधःपाताय, अल्पेनैव पुनर्द्रव्यातिरेकेण तुलाकोटेरधःस्थानमिव खलस्य पुरुषार्थविपर्य्यासादिनाऽवमानावमननमपि क्षणिकम्। इत्यर्थो व्यङ्ग्यः॥ ८४॥'

इत्यादौ। अर्थश्लेषः 'शब्दपरिवृत्तिसहत्वा'दिति शेषः।

ननु श्लेषस्यालङ्कारान्तराणां च परस्परं वाध्यवाधकत्वेनानुस्यूतत्वमेव, केषाञ्चित् श्लेषविषयत्वात्, श्लेषस्यैवं केषाञ्चिद्विषयत्वाच्च, तस्मान्नायं पृथग्व्यपदेश्यः इति परमतमाह-अस्य चेत्यादिना।

अस्य श्लेषालङ्कारस्य। च पुनः। अलङ्कारान्तरविविक्तविषयताया अलङ्कारान्तरा विविक्तविषयता तस्याः। 'पञ्चमी विभक्तेः' २।३।४२ इति पञ्चमी। विविक्तो विषयो येषां तेषां भावस्तत्ता। असम्भवात्। विद्यमानेषु स्वस्वविषयविशेषमहिम्नाऽपरिहेयेषु। अत्र विषये सप्तमी। अलङ्कारान्तरेषु। अपवादत्वेनापवाद्यत्वेनापवादकत्वेनेति वा। अपवाद्यते इति, अपवादयतीति वाऽपवादस्तेन।'अकर्त्तरि च कारके सञ्ज्ञायाम्।' ३।३।१९ ति घञ् 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः।' ३।१।१३४ इति पचादित्वादच् वा। अत्राभेदे तृतीया। तद्बाधकतया तानि अलङ्कारान्तराणि वाधकानि यस्येति तत्तया तेषां वाधक इति तस्य भावस्तत्ता तयेति वा। अत्र हेतौ तृतीया। तत्प्रतिभोत्पत्तिहेतुत्वं तेषां प्रतिभेति, सैवोत्पत्तिहेतुर्यस्य तस्य भावस्तत्त्वमिति, तत्प्रतिभाया उत्पत्तिहेतुस्तत्त्वमिति वा।' इतीत्थेवम्। केचिदपसिद्धान्ततयोपेक्षणीयाभिधाना उद्भटादय इति यावत्। प्राहुः। इदमभिहितम्-केषाञ्चिद्विषयं श्लेषोऽभिनिविशते, श्लेषस्य विषयं केचिदिति नायमलङ्कारान्तरेभ्यो विविक्तः,तेष्वेव वाध्यवाधकत्वाभ्यामेतस्य स्थितेः। 'येन नाप्राप्ते य आरभ्यते स तस्य वाधकः' इति च नयः। येनेति कर्त्तरि तृतीया। नञ् द्वयं प्रकृतं दृढयतुम्।

**प्रस्तुतप्रशंसादौ द्वितीयार्थस्यानभिधेयतया नास्य गन्धोऽपि, 'विद्वन्मानस...' इत्यादौ श्लेषगर्भे रूपके 'मानस' शब्दस्य चित्तसरोरूपोभयार्थत्वेऽपि रूपकेण श्लेषो बाध्यते, सरोरूपस्यैवार्थस्य-विश्रामधामतया प्राधान्यात्, श्लेषे हि अर्थद्वयस्यापि समकक्षत्वम्, 'सन्निहितबालान्धकारा भास्वन्मूर्त्तिश्च' इत्यादौ विरोधाभासेऽपि विरुद्धार्थस्य प्रतिभातमात्रस्य प्ररोहाभावान्न श्लेषः । एवं**

---

आपेश्च भावे क्तः । तथा च–यद्विषय एव य आरभ्यते स तं बाधते, अन्यथैतस्य बाध्य इति येषां विषय एव श्लेष आर-भ्यते तानलङ्कारान् श्लेषो बाधते, ये च श्लेषविषय एव स्वयमारभ्यन्ते ते श्लेषं बाधन्ते श्लेषश्च तेषां बाध्य इति स्थितम्। इत्युद्भटादीनां मतम् । इति । अथ तदेव तावत् स्पष्टं विवृणोति-इत्थमनेन प्रकारेण । अत्रास्मिन् श्लेषविषय इति भावः । **विचार्य्यते** विचारः क्रियते 'तत्रैवे'ति शेषः । **समासोक्त्यप्रस्तुतप्रशंसादौ** 'उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्। यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम्॥' 'नितरान्नीचोऽस्मीति त्वं खेदं कूप! मा कदाऽपि कृथाः।अत्यन्तसरसहृदयो यतः परेषां गुणग्रहीताऽसि॥'इत्याद्युदाहरणायां समासोक्तावप्रस्तुतप्रशंसायां पर्य्यायोक्तौ चेति भावः।आदिपदेन पर्य्यायोक्तेर्ग्रहणात् । अत्र सति सप्तमी।**द्वितीयार्थस्य** द्वितीयश्चन्द्रातिरिक्तनायकादि-प्रत्यायकश्चासावर्थस्तस्य।**अनभिधेयतया**ऽभिधया प्रतिपाद्यमानत्वस्याभावादिति भावः।**अस्य** श्लेषस्य।**गन्धो** लक्षणयाऽ-ल्पसम्पर्कः । **अपि** किं पुनः साक्षात् सम्बन्धः।**न** नैवास्ति।इदमभिहितम् । समासोक्त्यादौ यो हि द्वितीयोऽर्थः स केवलं व्यञ्जनयाऽवगम्यते, तस्मान्न तत्रास्य सम्भवः, उभयोरर्थयोर्वाच्यत्वे एवैतस्य स्वीकारात् । यत्त्वाहुः–'अयमतिजरठाः प्रका-मगुर्वीरलघुविलम्बिपयोधरोपरुद्धाः । सततमसुमतामगम्यरूपाः परिणतदिक्करिकास्तटीर्विभर्त्ति ॥' अत्र हि ( यः ) समासोक्त्युदाहरणे वृद्धवेश्यावृत्तान्तः प्रतीयते तत्राभङ्गश्लेषः, इति सर्वेषामभिमतम्। एवं च–'अप्रकृतार्थो न व्यङ्ग्यः ।'इति, तत्प्रमत्तजल्पितम्, अन्यथा 'प्रतीयते'इति'तत्राभङ्गश्लेष' इति च कथं सङ्गच्छेत। न च'श्लेषो नाम द्वयोः सम्बन्धः ।' इति वक्तुं शक्यम् । 'एवं च अप्रकृतार्थो न व्यङ्ग्य'इति विरोधात् । एवं च–'समासोक्तिः परिस्फूर्त्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।' इत्यनभिधाय 'अभिधानं समासोक्तिः प्रस्तुतेऽप्रस्तुतस्य चेत् ।' इत्येवाभिधेयत्वं प्रसज्येत । यत्तु–'एवं चान्योऽन्यसन्नि-धानबलादित्यर्थकेनोक्तार्थकेनेदं बोधितं यत् प्रकृतार्थे नियामकद्वयसत्त्वात् प्रथममुपस्थितिः, द्वितीयेऽपि शब्दान्तरसन्नि-धिरूपनियामकमात्रसत्त्वेन तस्याप्युपस्थितिः, किन्तु पश्चात् । ...तद्वरं व्यञ्जनामनङ्गीकृत्य तेषां शक्त्युल्लासादिहेतुत्वक-ल्पनमेव ।' इत्युक्तम्, तस्य मारीचवद्दूरे पातः । इति । **'विद्वन्मानस...' इत्यादौ** 'विद्वन्मानसहंसवैरिकमलासङ्कोच-दीप्तद्युत दुर्गामार्गणनीललोहितसमित्स्वीकारवैश्वानर । सत्यप्रीतिविधानदक्षविजयप्राग्भावभीम प्रभो ! साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥' इत्यादावित्यर्थः । **श्लेषगर्भे** श्लेषो गर्भे यस्य तत्र । **रूपके** 'रूपकं रूपितारोपाद्विषये-निरपह्नवे ।' इति वक्ष्यमाणलक्षणेऽलङ्कारे । **'मानस'शब्दस्य । चित्तसरोरूपोभयार्थत्वे** चित्तसरोरूपरूप्यरूपको-भयार्थत्वे इत्यर्थः । **अपि । रूपकेण । श्लेषः । बाध्यते** नतु श्लेषेण रूपकमिति शेषः । कुत इत्याह–**सरोरूपस्य । एव** नतु चित्तरूपस्यापि । **अर्थस्य** मानसपदार्थस्येत्यर्थः । **विश्रान्तिधामतया** विश्रान्तेः प्रतीतिपर्य्यवसानस्य धामास्पदमिति तस्य भावस्तत्ता तयेति तथोक्तया । **प्राधान्यात** । प्राधान्ये हेतुमाह–**हि** यतः। **श्लेषे** 'सती'ति विशेषः । **अर्थद्वयस्य । अपि । समकक्षत्वं** परस्परनिरपेक्षतया प्रधानत्वम् । तथा च–श्लेषो नामार्थयोर्द्वयोरपि साम्यम्, रूपकं पुना रूप्यार्थमात्रप्राधान्यम् । तस्मादिह रूपकेण श्लेषो बाध्यते, नतु श्लेषेण रूपकमिति निष्कृष्टम् । तर्कवागीशा अप्याहुः– 'अर्थयोरसमकक्षत्वाभावोपपादकं समकक्षत्वं परस्परनिरपेक्षतया प्रधानत्वम् । तथा च–अर्थद्वयस्य समकक्षत्वे श्लेषस्य विषयः सम्भवति। प्रकृते तु उद्देश्यविधेयभावेन गुणप्रधानापेक्षितयाऽतुल्यकक्षत्वाद्रूपकेण श्लेषो बाध्यते । अन्यथा-श्लिष्टपर-म्परितरूपकस्य निर्विषयताऽऽपत्तेरिति भावः ।' इति । ननु द्वयोरप्यर्थयोः समकक्षत्वे श्लेषस्य प्राधान्याङ्गीकारे विरोध-स्योच्छेदः, तत्रापि अर्थयोः समकक्षत्वादित्याशङ्क्याह–**सन्निहितबालान्धकारा** सन्निहितो बालोऽल्पः केश एवेति वाऽन्धकारो यत्र सा । **चापि । भास्वन्मूर्त्तिर्भास्वतो** मूर्त्तिर्भास्वती मूर्त्तिर्यस्या इति सेति वा ।' **इत्यादौ** 'पुन'रिति शेषः । **विरोधाभासे** विरोधमाभासयतीति तस्मिन् सतीत्यर्थः । **अपि । विरुद्धार्थस्य** सन्निहितबालान्धकारत्वेऽपि भास्वन्मूर्त्तित्वाभिधानरूपस्येति भावः । **प्रतिभातमात्रस्य** प्रतिभात एवेति तस्य तथोक्तस्य । **प्ररोहाभावात्** प्ररो-

पुनरुक्तवदाभासेऽपि। तेन 'येन ध्वस्तमनोभवेन' इत्यादौ प्राकरणिकयोः 'नीतानां...' इत्यादावप्राकरणिकयोरेकधर्माभिसम्बन्धात् तुल्ययोगितायाम्,

'स्वेच्छोपजातविषयोऽपि न याति वक्तुं देहीति मार्गणशतैश्च ददाति दुःखम्।
मोहात् समुत्क्षिपति जीवनमप्यकाण्डे कष्टं प्रसूनविशिखः प्रभुरल्पबुद्धिः॥ ८५॥'

इत्यत्र प्राकरणिकाप्राकरणिकयोरेकधर्माभिसम्बन्धाद्दीपके,

'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव'

इत्यादौ चोपमायां विद्यमानायामपि श्लेषस्यैतद्विषयपरिहारेणासम्भवात्, एषां च श्लेष-

---

हस्य वस्तुतयाऽवस्थानस्याभावस्तस्मात्। श्लेषः।न्न न सम्भवतीत्यर्थः। न चैवं विरोधाभासस्योच्छेद इति भावः। आहुश्च तर्कवागीशाः—'प्रतिभातमात्रस्य पदार्थस्मृतिविषयस्यैव प्ररोहाभावादयोग्यत्वेन शब्दाननुभवात्। तथा च—अर्थद्वयस्य शब्दतोऽनुभवेऽपि श्लेषस्य विषयसम्भवादुत्सर्गत्वम्, विरोधाभासस्यायोग्यतया शब्दतोऽनुभवाभावेऽपि विषय इत्यपवादः त्वमिति भावः।' इति। एवं यथा विरोधे द्वितीयार्थस्य प्रतिभातमात्रस्य प्ररोहाभावान्न श्लेषस्तथेत्यर्थः। **पुनरुक्तवदाभासः। अपि** 'न सम्भवती'ति शेषः। **तेन** समासोक्त्यादौ श्लेषस्य प्रसङ्गाभावादेव वाच्यत्वाभाव इत्यनेन हेतुनेति भावः। **'येन ध्वस्तमनोभवेन' इत्यादौ** 'श्लोके' इति शेषः। **प्राकरणिकयोः** प्रकरणप्राप्तयोः शिवहरिरूपयोरर्थयोः। 'पाया'दित्यत्रोपयोगित्वेन प्रकृतयोरित्यर्थः। **'नीतानां···' इत्यादौ** 'श्लोक'इति शेषः। **अप्राकरणिकयोः** पद्ममृगविशेषरूपयोरुपमानत्वेनाप्राकृतयोरर्थयोरित्यर्थः। **एकधर्माभिसम्बन्धादेको** धर्मो गुणक्रियाद्यन्यतमरूपस्तस्याभिसम्बन्धः संयोगस्तस्मात्। पूर्वत्र पालनरूपैकक्रियासम्बन्धात्, परत्र पुनराकुलीभावादिरूपैकगुणसम्बन्धादिति भावः। **तुल्ययोगितायां** 'पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्। एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता॥' इति वक्ष्यमाणलक्षणेऽलङ्कारविशेष इत्यर्थः। 'विद्यमानायामपी' त्यग्रिमेणान्वयः।

**'स्वेच्छोपजातविषयो** स्वेच्छया निजकामनयोपजाताः सम्पन्ना विषयाः कामिजनरूपाणि लक्ष्याणि यस्य स इति, यद्वा स्वेच्छं यथेष्टमुपजाता उपपन्ना विषया लक्ष्याण्युपभोगसाधनानीति यावद् यस्य सः। **देही** शरीरी 'देहि' इति वा पदच्छेदः। दानं कुरुष्वेत्यर्थः। **इति। वक्तुम्।** न 'योग्यता'मिति शेषः। **याति। मार्गणशतैर्मा**र्गणानां बाणानामुपायानां वा शतानीति तैः। अत्र करणे तृतीया। **च** तथा। **दुःखं** पीडाम्। **ददाति। मोहात्। जीवनं** 'कामिजनस्ये'ति 'प्रजाजनस्ये'ति वा शेषः। **अपि। अकाण्डेऽ**काले। **समुत्क्षिपति** हरति। अतः— **प्रसूनविशिखः** प्रसूनानि पुष्पाण्येव विशिखा बाणा यस्य सः, काम इत्यर्थः। 'तथे'ति शेषः। **अल्पबुद्धिरल्पा** मन्दा बुद्धिर्यस्य सः। **प्रभुः। इति—कष्टम्।** इदमत्र निष्कृष्टम्—कामो मूढः प्रभुश्चातिकष्टप्रदः, तत्र कामोऽनङ्गत्वान्न देहवानिति वक्तुं शक्यते, अथापि—मार्गणशतैः कामिजनान् दुःखाकरोति, न केवलं दुःखाकरोति किन्तु तेषां जीवनमप्यकाण्डे एव संशयं नयति, मूढः प्रभुः सेव्यमान्योऽप्यनेकसाधनैर्दुःखाकरोति, अपराधभ्रममात्रे त्वकाले जीवनं चापहरतीति॥ अत्र निर्वोधराजसेवकस्योक्तिरियम्। अत्र वसन्ततिलकं छन्दः। तल्लक्षणं चोक्तं प्राक्॥ ८५॥'

**इत्यत्र। प्राकरणिकाप्राकरणिकयोरु**पमेयोपमानत्वाभ्यां प्रकृताप्रकृतयोः प्रभुस्मरयोरित्यर्थः। **एकधर्माभिसम्बन्धात्स्वे**च्छोपजातविषयत्वादिरूपैकधर्मसम्बन्धात्। **दीपके** 'अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते।' इति वक्ष्यमाणलक्षणेऽलङ्कारविशेषे। 'विद्यमानायामपी'ति वक्ष्यमाणस्य 'लिङ्गव्यत्ययेनाविद्यमानेऽपी'ति योज्यम्। **'एतत्। पुरम्। सम्प्रति** वर्तमानसमये। **सुधांशुबिम्बं** सुधांशोर्बिम्बमिति तथोक्तम्। **इव। सकलकलं** कलकलेन सह वर्तत इति सकलाः कला यत्र तदिति वा। **जातम्।** 'नक्षत्राधिकृततत्वं दधति करा यस्य सर्वत्र॥' इति शेषः। अत्रार्याछन्दः, लक्षणं चोक्तं प्राक्।' **इत्यादौ। च** पुनः। **उपमायां** 'साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमाद्वयोः।' इति वक्ष्यमाणलक्षणेऽलङ्कारविशेषे। **विद्यमानायाम्। अपि। श्लेषस्य** तदाख्यस्यालङ्कारस्येत्यर्थः। **एतद्विषयपरिहारेणै**तेषां तुल्ययोगिताऽऽद्यलङ्काराणां विषया उदाहरणानि तेषां परिहारः परित्यागस्तेन; तुल्ययोगितादयुदाहरणानि परित्यज्येति भावः। **असम्भवात्। एषां** तुल्ययोगिताऽऽद्यलङ्कारा-

विषयपरिहारेणापि स्थितेः, एतद्विषये श्लेषस्य प्राबल्येन चमत्कारित्वप्रतीतेश्च श्लेषेणैव व्यपदेशो भवितुं सक्तः, अन्यथा तद्व्यपदेशस्य सर्वथाऽभावप्रसङ्गाच्च। इति।

अत्रोच्यते—न तावत्परमार्थतः श्लेषस्यालङ्कारान्तराविविक्तविषयता, 'येन ध्वस्तमनोभवेन' इत्यादिना विविक्तविषयत्वात्, न चात्र तुल्ययोगिता, तस्यां च द्वयोरप्यर्थयोर्वाच्यत्वनियमाभावात्। अत्र हि—माधवोमाधवयोरेकस्य वाच्यत्वनियमेऽपरस्य व्यङ्ग्यत्वं स्यात्, किञ्च—तुल्ययोगितायामेकस्यैव धर्मस्यानेकधर्मिसम्बद्धतया प्रतीतिः, इह तु अनेकेषां धर्मिणां पृथक्पृथग्धर्मसम्बद्ध-

---

णाम्। च पुनः। श्लेषविषयपरिहारेण श्लेषोदाहरणानि परित्यज्येति भावः। अपि। स्थितेः सम्भवात्। 'श्लेषस्तुल्ययोगितादिबाधक' इति शेषः। एतद्विषये एतेषां तुल्ययोगिताद्युदाहरणे इति भावः। श्लेषस्यानेकार्थवाचनस्यालङ्कारस्य। प्राबल्येन प्रबलतया प्रधानतयेति यावत्। चमत्कारित्वप्रतीतेश्चमत्करणशीलतायाः प्रत्ययेनेत्यर्थः। च। श्लेषेण श्लेषद्वारा। एव। व्यपदेशोऽभिधानम्। तत्र तत्र श्लिष्टत्वमित्युक्तिः। भवितुम्। शक्तः। अन्यथा तुल्ययोगितादीनां श्लिष्टत्ववत्ताऽनङ्गीकारे इति भावः। तद्व्यपदेशस्य तस्य श्लेषस्य व्यपदेशस्तस्य। सर्वथा सर्वविधया। अभावप्रसङ्गादभावस्य प्रसङ्गस्तस्मात्। च 'एतद्विषये (तुल्ययोगिताद्युदाहरणे) श्लेषेणैव व्यपदेशो भवितुं युक्तः' इति पूर्वेणान्वयः। अयम्भावः—समासोक्त्यादौ श्लेष एव न, तत्र द्वितीयार्थस्य व्यङ्ग्यमात्रत्वात्, रूपकादौ च श्लेषः सन्नपि रूपकादिना बाध्यते, तत्र रूपकादेरेव प्राबल्यात्, तुल्ययोगितादौ पुनः श्लेषो बाधकः, तदपेक्षयाऽस्यैव प्राबल्यात्; एवं च—'निरवकाशो विधिः सावकाशं बाधते' इति नयेन तुल्ययोगिताऽऽदिसम्भवस्थले एव श्लेषस्यापि सम्भवोऽभ्युपगन्तव्यः असौ च तत्रापवादस्वरूपेणावतिष्ठते, नच रूपकादावपि तत्रास्य तेन बाधितत्वात्। इति।

एवं पूर्वपक्षं संदर्श्योत्तरपक्षं दर्शयितुमुपक्रमते—अत्रास्मिन् 'अस्य च....' इत्यादिना प्रदर्शिते पूर्वपक्षे। उच्यते सिद्धान्तत्वेन प्रतिपाद्यत इति भावः। परमार्थतः सिद्धान्तविचारतः। श्लेषस्य। अलङ्कारान्तराविविक्तविषयताऽलङ्कारान्तरेभ्योऽविविक्तोऽभिन्नो विषयो यस्य तद्भावस्तत्ता। न नैव। तावत् प्रथमं 'सम्भवती'ति शेषः। कुत इत्याह—'येनध्वस्तमनोभवेन' इत्यादिना। विविक्तविषयत्वाद्विविक्तः पृथगुदाहृतो विषयो यस्य तत्त्वात्। ननु 'येन...' इत्यादौ तु प्राकरणिकयोर्माधवोमाधवयोरेकधर्माभिसम्बन्धात्तुल्ययोगिताऽप्यस्तीति कथमिह तस्य विविक्तविषयत्वमित्याशङ्क्याह—अत्र 'येन' इत्यत्र। च न। तुल्ययोगिता। यतः—तस्यां 'येन' इत्यत्र तथाऽभिमन्यमानायां तुल्ययोगितायामित्यर्थः। च। द्वयोः 'प्राकरणिकाप्राकरणिकयो'रिति शेषः। अपि। अर्थयोः। वाच्यत्वनियमाभावाद् वाच्यत्वेन नियमस्तदभावस्तस्मात् तुल्ययोगितायां द्वावप्यर्थौ वाच्यौ भवतः, किन्तु 'येन' इत्यादौ तन्नियमाभाव इति हेतोरिति भावः। ननु 'येने'त्यादौ कथं न द्वयोरप्यर्थयोर्वाच्यत्वं, पर्यायेणोभयत्राप्यभिधासञ्चारात्' इत्याशङ्क्याह—अत्र 'येने'त्यादौ। हि यतः। माधवोमाधवयोः। अत्र निर्धारणे सप्तमी। एकस्य माधवोमाधवान्यतरपदार्थस्येत्यर्थः। वाच्यत्वनियमे वाच्यत्वस्य नियमः 'संयोगो विप्रयोगश्च' इत्याद्युक्तदिशा नियन्त्रणमिति यावत् तस्मिन्। अत्र सत्यर्थे सप्तमी। अपरस्य नियन्त्रितत्वविधुरस्य। व्यङ्ग्यत्वं व्यञ्जनयाऽभिनेयत्वम्। स्यात्। अयम्भावः—'येने'त्यादौ माधवोमाधवान्यतरपरार्थं एवाभिधाया विषयः, 'संयोगो विप्रयोगश्च' इत्याद्युक्तदिशैकत्रास्यानियन्त्रितत्वेऽन्यत्र विषयमभिधातुमशक्यम्, एवं च—यत्र नाभिधासञ्चारस्तत्र व्यञ्जनयोपनीयतेऽर्थं इति सिद्धान्ते माधवोमाधवयोरेकस्य वाच्यत्वेऽपरस्य व्यङ्ग्यत्वं निर्बाधम्। इति। एवमेकं दोषं प्रदर्श्यापि असन्तुष्यन् दोषान्तरं दर्शयति—किञ्च दोषान्तरमपीत्यर्थः। तुल्ययोगितायाम्। अत्र विषये सप्तमी। एकस्य। एव नत्वनेकेषाम्। धर्मस्य 'यथा—'स्वच्छोपजातविषयोऽपी' त्यादौ स्वेच्छोपजातविषयत्वादिरूपस्य तथा' इति शेषः। अनेकधर्मिसम्बद्धतयाऽनेके च ते धर्मिण इति तैस्सम्बद्धस्तद्भावस्तत्ता तया। 'यथा—'स्वेच्छोपजात...' इत्यादौ प्रसूनविशिखरूपधर्मिणा भूडप्रभुरूपधर्मिणा च सम्बद्धतया तथे' इति शेषः। प्रतीतिः 'सम्भवती'ति शेषः। इह 'येन' इत्यादौ। तु। अनेकेषां 'माधवोमाधवादिरूपाणा'मिति शेषः। अत्र बहुवचनमविवक्षितम्। धर्मिणाम्। पृथक्पृथक्। वीप्सायां द्वित्वम्। धर्मसम्बद्धतया धर्मैरन्धोध्वंसनाभवत्वादिभिर्ध्वस्तमनोभवत्वादिभिश्चेति भावः। सम्बद्धास्तद्भावस्तत्ता तया। 'प्रतीति' रिति पूर्वेणान्वयः। 'न तस्मात्—'येन ध्वस्तम

तथा 'सकलकलं..' इत्यादौ च नोपमाप्रतिभोत्पत्तिहेतुः श्लेषः, पूर्णोपमाया निर्विषयताऽऽप-त्तेः। 'कमलमिव मुखं मनोज्ञमेतत् कचतितरां..' इत्याद्यस्ति पूर्णोपमाविषय इति चेन्न। यदि 'सकलकलं..' इत्यादौ शब्दश्लेषतया नोपमा? तर्हि किमपराद्धं 'मनोज्ञ...' इत्यादा-वर्थश्लेषेण? स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ, किन्तु 'आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवतः।' इति रुद्रटोक्तदिशा गुणक्रियासाम्यवत् शब्दसाम्यस्याप्युपमाप्रयोजकत्वात्। ननु गुणक्रियासाम्यस्यैवोपमाप्रयोजकता युक्ता, शब्दसाम्यस्य तु न तथा, तत्र साधर्म्यस्यावास्तव-त्वात्। ततश्च-पूर्णोपमाया अन्यथाऽनुपपत्तेर्गुणक्रियासाम्यस्यैवार्थश्लेषविषयतापरित्यागे पूर्णोप-माविषयता युक्ता। न तु 'सकलकलं...' इत्यादौ शब्दसाम्यस्येति चेन्न 'साधर्म्यमुपमे'त्येवावि-

---

नोभवेन' इत्यादौ तुल्ययोगितायाः सम्भवोऽपी' ति शेषः। अयम्भावः-'येन ध्वस्तमनोभवेन' इत्यादावपि 'स्वेच्छोपजात-विपदोऽपि' इत्यादिवद्यथंभविष्यदनेकैर्धर्मिभिरेकस्यैव धर्मस्य सम्बद्धस्तर्ह्यत्रापि तुल्ययोगिता समभविष्यत्। नच तथेति न किञ्चिदेतदिति। अलङ्काराणां मध्ये यो यत्प्रतिभाजन्यप्रतिभाविषयः स तद्बाध्य इति नियममनुसृत्य ननु श्लेषेणोपमा बाध्यते इति चेन्नेत्याह 'सकलकलं···' इत्यादौ। च। उपमाप्रतिभोत्पत्तिहेतुरुपमाप्रतीतिजननहेतुभूत उपमाबाधक इति यावत्। श्लेषः। न नैवाभ्युपगन्तव्यः। कुत इत्याह-पूर्णोपमायाः। निर्विषयत्वापत्तेः। 'सकलकलं···' इत्यादावपि यदि श्लेषः, तर्हि पूर्णोपमा कुत्र? न च कुत्रापि, तस्मादुपमैव श्लेषस्य बाधिकेति भावः। न 'कमलम्' इव। एतत्। 'ललनासम्बन्धी'ति शेषः। मुखम्। मनोज्ञं मनोरमम्। 'कचतितराम् विभाति।' इत्यादि 'वाक्य'मिति शेषः। अस्ति। पूर्णोपमाविषयः पूर्णोपमाया विषयभूतम्। इति। चेत्। न। कुत इत्याशङ्क्याह-यदि। शब्दश्लेषतया शब्दानां श्लेषो यत्र तत्तया। शब्दश्लेषवत्तयेति भावः। 'सकलकलं···' इत्यादौ। उपमा। न। 'बाध्यते' इति शेषः। तर्हि। 'मनोज्ञं' इत्यादौ। 'सम्भवता' इति शेषः। अर्थश्लेषेण। मनोज्ञत्वस्योपमानोपमेयभूतयोः कमलमु-खयोर्भिन्नतया श्लिष्टत्वादर्थयोः श्लेषेणेति भावः। किम्। अपराद्धं। मपराधः कृतः। अयं भावः-यथा 'सकलकलं···' इत्यादौ शब्दश्लेषेणोपमा न बाध्यते, तथा 'कमलमिव' इत्यादावर्थश्लेषेण कथं न सा बाधिष्यते, उभयत्र श्लेषस्य तुल्यबल-त्वात्। इति। ननु शब्दश्लेषोऽर्थश्लेष इति शब्दार्थयोर्भेद एव नियामकः, उपमाया अर्थालङ्कारतया शब्दश्लेषस्यैवोपमा-बाधकत्वात्, अर्थश्लेषस्य चोपमाबाध्यत्वादिति चेन्नेत्याह-'एतौ पूर्वमभिहितलक्षणौ। उपमासमुच्चयौ। स्फुटं निश्चि-तम्। अर्थालङ्कारौ। किन्तु। शब्दमात्रं शब्द एवेति तत्तथोक्तम्। सामान्यं साधारणं धर्मम्। आश्रित्योपजी-व्य। इह 'सकलकलं...' इत्यादौ। अपि। सम्भवतः।' इतीत्येवम्। रुद्रटोक्तदिशा रुद्रटः काव्यालङ्कारकर्त्ता तेनोक्ताऽसौ दिक् मार्गदर्शनं तया। गुणक्रियासाम्यवद् गुणक्रिययोः साम्यस्येव। शब्दसाम्यस्य केवलशब्दरूपसा-धारणधर्मसमानतायाः। अपि। उपमाप्रयोजकत्वादुपमासाधकत्वेन स्वीकारादित्यर्थः। 'सकलकलं···' इत्यादौ नोपमाप्रति-भोत्पत्तिहेतुः श्लेषः' इति 'पूर्वेणान्वयः। ननु (आशङ्कते)। गुणक्रियासाम्यस्य। एव नतु शब्दसाम्यस्य। उपमाप्र-योजकतोपमानिर्वाहकता। युक्ता सङ्गता। कुत इत्याह-तत्र गुणक्रियासाम्य इत्यर्थः। साधर्म्यस्य समानधर्मताया उपमानोपमेययोस्समानतया प्रत्यायकस्य धर्मस्येति भावः। वास्तवत्वादुपमानोपमेयरूपवस्तुनः समवेतत्वादिति भावः। शब्दसाम्यस्य। तु पुनः। तथा यथा गुणक्रियासाम्यस्योपमाप्रयोजकता' इति पूर्वेणान्वयः। न नैव। 'युक्ते'ति शेषः। कुत इत्या-शङ्क्य तत्परिपन्थिनं हेतुमाह-साधर्म्यस्य समानधर्मतायाः। अवास्तवत्वादुपमानोपमेयरूपवस्तुनोरसमवेतत्वात्। अथा-नेवंस्वीकारे आपत्तिं दर्शयन् स्वमतं निवेदयति-ततस्तस्मात्, गुणक्रियासाम्यमात्रस्योपमाप्रयोजकतेति स्वीकारात्। च पुनः। अन्यथा शब्दसाम्यस्याप्युपमाप्रयोजकत्वमिति स्वीकारे। पूर्णोपमायाः। अनुपपत्तेरुपपत्तेरसम्भवात् शब्दसाम्ये सादृश्य-स्यावास्तवत्वान्न शब्दसाम्य उपमा पूर्णेति हेतोरिति भावः। गुणक्रियासाम्यस्य। एव नतु शब्दसाम्यस्य। अर्थ-श्लेषविषयतापरित्यागेऽर्थश्लेषस्य विषयस्तस्य भाव इति तस्यास्तत्तायाः परित्यागस्तस्मिन्निति तथोक्ते। अत्र सत्यर्थे सप्तमी। पूर्णोपमाविषयता। युक्ता। न। तु पुनः। 'सकलकलं...' इत्यादौ। शब्दसाम्यस्य 'शब्दश्लेषविषयता-

शिष्टस्योपमालक्षणस्य शब्दसाम्याद् व्यावृत्तेरभावात्। यदि च शब्दसाम्ये साधर्म्यमवास्तवत्वान्नोपमाप्रयोजकं, तदा कथं 'विद्वन्मानसहंस' इत्यादावाधारभूते चित्तादौ सरोवराद्यारोपो राजादेर्हंसाद्यारोपरूपकप्रयोजकः,किञ्च यदि वास्तवसाम्ये एवोपमाऽङ्गीकार्य्या, तदा कथं त्वयाऽपि 'सकलकलं' इत्यादौ बाध्यभूतोपमाऽङ्गीक्रियते? किञ्चात्र श्लेषस्यैव साम्यनिर्वाहकता ननु साम्यस्य श्लेषनिर्वाहकता, श्लेषबन्धतः प्रथमं साम्यस्यासम्भवादित्युपमाया एवाङ्गित्वेन व्यपदेशो ज्यायान्।

---

परित्यागे पूर्णोपमाविषयते'ति शेषः। इतीत्थेवम्। चेत्। अत्रेदं हैय्यङ्गवीनम्-ननु यत्रोपमानस्योपमेयस्य च गुणैः क्रियाभिश्च सादृश्यं तत्रैवोपमा, यत्र तु न गुणैर्न वा क्रियाभिरुपमानोपमेययोः सादृश्यं, तत्र शब्दमात्रसादृश्यं नोपमोपकृतये। अथ यदि शब्दसाम्यमुपमां निर्वहतीति स्वीक्रियेत? पूर्णोपमायाः को नाम तर्हि विषयः? 'कमलमिव' इत्यादौ तु न शब्दसाम्यम्, अस्ति पुनः-'सकलकलं'इत्यादौ, अत्रैवं शब्दसाम्ये पूर्णोपमैव न सम्भवति, उपमानोपमेययोर्वस्तुतया सादृश्योल्लासानुपस्थानात्। तस्मात् 'सकलकलं...'इत्यादौ श्लेषः प्रधानः सन् कथमपि सम्भवन्तीमप्युपमां बाधते 'कमलमिव' इत्यादावुपमाप्रधानभूता कथमपि सम्भवन्तं श्लेषम्। इति चेत्! को दोषः? इति। उत्तरमाह-न तथाऽभिधेयमिति भावः। यतः-'साधर्म्यं समानः सदृश एको वा धर्मो गुणक्रियासमानशब्दवाच्यत्वरूपो ययोः (उपमानोपमेययोः) तौ सधर्माणौ तयोर्भावः साधर्म्यमुपमानोपमेययोः समानधर्मेण सह सम्बन्ध इति भावः। 'समानस्य च्छन्दस्य मूर्धप्रभृत्युदर्केषु।'६।३।८४ इत्यत्र 'समानस्य' इति योगविभागे 'सपक्षः' इत्यादिवत्सादेशः। "इति काशिकाकाराः। 'वोपसर्जनस्य।' ६।३।८२ इति 'समानः सख्येति ससखी'ति वदस्वपदविग्रहे सहशब्दस्य समानवचनत्वात्सादेशः। इति दीक्षिताः। धर्मादनिच् केवलात्।' ५।४।१२४ इत्यनिच्। उपमा तन्नामालङ्कारः।' इतीत्थेवम्। अविशिष्टस्य 'वास्तवं साधर्म्यमुपमा, न पुनरवास्तवम्;' इति विशिष्यानभिहितस्येति भावः। एव उपमालक्षणस्य। शब्दसाम्यात्। व्यावृत्तेः। अभावात्। अयम्भावः-गुणक्रियाभिः साम्यं (साधर्म्यम्) चेदुपमा, शब्दतश्चेन्नेति विशिष्य साधर्म्यस्योपमात्वेनास्वीकारात् शब्दसाम्यस्याप्युपमाप्रयोजकत्वेनाभ्युपगमात्। इति। तर्कवागीशा अप्याहुः-'अविशिष्टस्य वास्तवरूपविशेषरहितस्य। उपमालक्षणस्य काव्यप्रकाशाद्युक्तस्य। तथा च-येन केनापि सम्बन्धेनोपमानोपमेयवृत्तिधर्म उपमा, नतु समवायसम्बन्धेनेति नियमः। शब्दस्योपस्थाप्यत्वसम्बन्धेनोपमानोपमेयवृत्तित्वेनोपमाप्रयोजकत्वमक्षतम्।' इति। वास्तवमेव साधर्म्यमुपमाप्रयोजकमित्यपि नो वक्तव्यमित्याह-यदि। च। शब्दसाम्ये 'सती'ति यावत्। साधर्म्यम्। अवास्तवत्वात्। उपमाप्रयोजकम्। न। तदा। कथम्। 'विद्वन्मानसहंस' इत्यादौ। 'उपमानोपमेययोरभेदप्रतिपत्तिरूपस्य रूपकस्य (साधर्म्यस्य) अवास्तवत्वेऽपी'ति शेषः। आधारभूते। चित्तादौ मानसपदवाच्यादौ। सरोवराद्यारोपः। राजादेः राजपदवाच्यादेः। हंसाद्यारोपरूपकप्रयोजको हंसादेरारोप इति तं रूपयतीति हंसाद्यारोपरूपकः, सोऽसौ प्रयोजक इति तथोक्तः। अयम्भावः-यथा-शब्दसाम्ये साधर्म्यस्यावास्तवत्वेऽपि 'विद्वन्मानसहंस' इत्यादौ उपमानोपमेययोरभेदस्तथा स्वीक्रियतां नाम 'सकलकलं' इत्यादावपि। इयान् भेदः। तत्र साधर्म्यवाचकाभावः, अत्र पुनः-साधर्म्यवाचकमपि पदम्। अत एव तत्र उपमानेन सममुपमेयस्य साक्षाद्भेदाभावार्थं आरोपः, अत्र पुनर्न तथा, किन्तु साधर्म्यमात्रम्। यद्यपि रूपकस्थले साधर्म्यं नेति न वक्तुं शक्यते, तथाऽपि तद्वाचकपदानुपादानाद् व्यङ्ग्यम्। एवं च-'रूपकादिषु साम्यस्य व्यङ्ग्यत्वम्' इति वृत्तिकारेण वक्ष्यमाणं सङ्गच्छते। एतेन-'शब्दसाम्ये साधर्म्यस्यावास्तवत्वेन नोपमाप्रयोजकत्वम्।' इति दत्तोत्तरम्। शब्दसाम्ये साधर्म्यस्य वास्तवत्वानङ्गीकारे 'विद्वन्मानसहंस' इत्यादौ रूपकेऽप्युपमानोपमेयभावरूपवस्तुनः समवेतत्वं वक्तुमशक्यत्वात्। इति। अथ वादिनः स्ववचनविरोधं दर्शयति-किञ्च। यदि। वास्तवसाम्ये गुणक्रियासाम्यरूपे वास्तवे सादृश्य इत्यर्थः। एव नतु शब्दसाम्यरूपेऽवास्तवे सादृश्य इत्यर्थः। उपमा। अङ्गीकार्य्याऽङ्गीकार्य्यत्वेनाभिमतेति भावः। तदा। कथम्। त्वया 'वादिसमाजेन' इति शेषः। वादिनां बहुत्वेऽपि समाजमुद्दिश्यैकत्वेनाभिधानमनवद्यम्। अपि। 'सकलकलं' इत्यादौ। बाध्यभूता श्लेषकर्तृकबाधविषयकभूतेति भावः। उपमा। अङ्गीक्रियते। अयम्भावः-शब्दसाम्ये साधर्म्यं न वास्तवम्, अवास्तवत्वे च तस्य नोपमा, इत्येव यदि स्वसिद्धान्तः, तर्हि तादृशस्थले श्लेषेणोपमा बाध्यते इत्यप्यभिधानं किम्मूलम्? इति। नच 'सकलकलं' इत्यादौ श्लेषस्य प्राधान्यम्, इति वक्तुमर्हमित्याह-किञ्च। अत्र 'सकलकलं...' इत्यादौ। श्लेषस्य। एव। साम्यनिर्वाहकता साम्यस्योपमात्वस्य निर्वाहकस्तस्य भावस्तत्ता। न। तु। साम्यस्योपमात्वस्य। श्लेषनिर्वाहकता। अत्र हेतुमाह-श्लेषबन्धतः। प्रथमम्। साम्यस्य। असम्भवात्। एवमुत्तरयित्वोपदिशति। इत्यस्माद्धेतोः।

'प्राधान्येन व्यपदेशा भवन्ती' त्युक्तनयात् । ननु शब्दालङ्कारविषयेऽङ्गाङ्गिभावसङ्करो नाङ्गीक्रियते तत् कथमत्र श्लेषोपमयोरङ्गाङ्गिभावः सङ्कर इति चेत् ! न। अर्थानुसन्धानविरहिण्यनुप्रासादावेव तथाऽनङ्गीकारात्, एवं दीपकादावपि ज्ञेयम् ।

'सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः ।
निपतन्ति धार्त्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥ ८६ ॥'

इत्यत्र शरद्वर्णनया प्रकरणेन धार्त्तराष्ट्रादिशब्दानां हंसाद्यर्थाभिधाने नियमनाद् दुर्योधनादिरूपोऽर्थः शब्दशक्तिमूलो वस्तुध्वनिः । इह च प्रकृतप्रबन्धाभिधेयस्य द्वितीयार्थस्य सूच्यतयैव

---

उपमायाः एव (नतु श्लेषस्य) अङ्गित्वेन प्रधानत्वेन । व्यपदेशः । ज्यायान् । अत्र हेतुमाह–'प्राधान्येन । अत्र करणे तृतीया । 'प्रधानेने'ति पाठे तु अभेदे इति बोध्यम् । व्यपदेशाः । भवन्ति ।' इत्युक्तनयात् । अयम्भावः– 'सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव' इत्यादौ 'सकलकलम्' इत्येतावत्यंशे श्लेषः, असौ च 'सुधांशुबिम्बमिव' इत्यौपम्यं निर्वहति, न हि 'सुधांशुबिम्बमिव' इत्येतावत्यभिहिते 'पुरमेतत्' इत्यनेनौपम्यं सङ्घटते, तस्मात् तन्निर्वाहाय 'सकलकलम्' इति श्लेषः । एवं सति–श्लेषोत्तरमौपम्यम्, न त्वौपम्योत्तरं श्लेषः, इत्युपमाऽङ्गितया प्रधानभूता, श्लेषः पुनरङ्गतयाऽप्रधानभूतः इत्येव वक्तुं युक्तम् । 'अलङ्कारा हि प्राधान्येन चमत्काराधायका भवन्तो' ति च नयः । इति । ननु ( आशङ्कयते ) । शब्दालङ्कारविषये शब्दालङ्काराणां मध्ये । अङ्गाङ्गिभावसङ्करः । न । अङ्गीक्रियते 'सङ्करस्यार्थालङ्कारमात्रविषयत्वात्' इति शेषः । तत्तर्हि । कथम् । अत्र 'सकलकलं' इत्यादौ । श्लेषोपमयोः । अङ्गाङ्गिभावस्तद्रूपः । सङ्करः । इति चेत् । न । कुत इत्याह–अर्थानुसन्धानविरहिण्यर्थालङ्कारैः शून्ये । अनुप्रासादौ । एव नतु श्लेषादौ । तथाऽङ्गाङ्गित्वेन सङ्कर इति । अनङ्गीकारात् । उक्तमर्थमन्यत्राप्यतिदिशति–एवम् । दीपकादौ दीपकतुल्ययोगितादौ । अपि । ज्ञेयम् । 'प्राधान्येन व्यपदेश' इति नयानुसरणमिति शेषः । प्राधान्येन व्यपदेश इति नयः सति सन्देहे विविच्योपासनीय इति ध्वनयति– 'सत्पक्षाः सन्त उत्तमाः पक्षाः पत्राणि तत्सदृशाः सहायाश्च येषां ते इति तथोक्ताः । मधुरगिरो मधुरा गीर्वाक् येषां यस्य चेति ते तस्येति वा । यद्वा द्वितीये पक्षे–सत्पक्षाश्च तेऽमधुरगिर इति सत्पक्षामधुरगिरः । प्रसाधिताशाः प्रसाधिता अलङ्कृताः, पूर्णाः कृता इति वाऽऽशा दिशो मनोरथा वा यैरिति ते तथोक्ताः । मदोद्धतारम्भा मदेन शरत्कालकृतेन चित्तविकारेण, राज्यसम्पदादिकृतेन गर्वेण वाऽऽरम्भा व्यापारा येषां ते । धार्त्तराष्ट्रा हंसविशेषा, धृतराष्ट्रस्यात्मजा दुर्योधनादयो वा । 'धार्त्तराष्ट्राः सितेतरैः ।' इत्यमरः । धृतराष्ट्रस्यापत्यानि पुमांस इति धार्त्तराष्ट्राः । 'तस्यापत्यम् ।' ४।१।९२ इत्यण् । कालवशात् कालः सूत्रधारानुज्ञातसङ्गीतानुरागितया शरत्समयः, भविष्यनाटकीयवस्तुसूचनाऽनुरोधितया मृत्युसमयो वा तस्य वश इच्छा तस्मात् । कालेच्छामनुरुध्येत्यर्थः । 'वशः कान्तौ' इत्यमरः । 'ल्यब्लोपे कर्मण्यधिकरणे चे' ति पञ्चमी । मेदिनीपृष्ठे मेदिन्या मानससरोवरसम्बन्धिन्याः सङ्ग्रामसम्बन्धिन्या वा पृथिव्याः पृष्ठं तत्र । निपतन्ति । 'शरदि मानसं हंसा प्रयान्ती'ति कविसमयात्, 'कालेन कवलिता दुर्योधनादयो भवन्ती' ति द्योतनीयत्वाच्च । वेणीसंहारे सूत्रधारस्योक्तिरियम् । अत्रार्याछन्दः, तल्लक्षणं चोक्तं प्राक् ॥८६॥'

इत्यत्र । शरद्वर्णनया शरदो वर्णनेन (अभेदे तृतीया) प्रकरणेन । धार्त्तराष्ट्रादिशब्दानाम् । अत्र 'सत्पक्षादिशब्दाना'मिति वक्तव्येऽप्येतद्वचनमेतत्प्राधान्यं द्योतयितुम् । हंसाद्यर्थाभिधाने हंसाद्यर्थानामभिधानमभिधया प्रतिपादन तत्र । तथा ह्युक्तम्–'सूत्रधारः–(सवैलक्ष्यस्मितम्) मारिष ! शरत्समयवर्णनाशंसया हंसा धार्त्तराष्ट्रा व्यपदिश्यन्ते, तत् किं शान्तं पापम्'…' इति । नियमनात् 'संयोगो'…'अर्थः प्रकरणं'…'शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ।' इत्युक्तदिशा नियन्त्रणात् । दुर्योधनादिरूपः । अर्थः । 'व्यज्यमानत्वा 'दिति शेषः । शब्दशक्तिमूलः शब्दानामनेकार्थानां सत्पक्षादिशब्दानां शक्तिरनेकार्थोपस्थापनसामर्थ्यरूपाऽभिधेति सैव मूलं ( तामेवाश्रित्यात्र व्यञ्जनायाः प्रवृत्तेः ) यस्य सः । वस्तुध्वनिर्वस्तुनः 'दुर्योधनादयो म्रियन्ते' इत्यर्थस्य ध्वनिः । नन्विह न कथं 'हंसा इव कालवशा दुर्योधनादयो निपतन्ती' त्युपमाध्वनिः, तदुभयार्थस्य वा शक्तिमूलत्वाच्छ्लेष इत्याशङ्क्याह–इह 'सत्पक्षा मधुरगिरः' इत्यत्र । च । प्रकृतप्रबन्धा-

विवक्षितत्वादुपमानोपमेयभावो न विवक्षित इति नोपमाध्वनिर्नचाश्लेष इति सर्वमवदातम्।

---

**भिधेयस्य** प्रकृतः 'शान्तं पापं, प्रतिहतममङ्गलम्' इत्यादिपारिपार्श्वकाद्युक्तदिशा दुर्योधनादिपतनं प्रतिपादयितुमारब्धोऽसौ प्रवन्धः 'सत्पक्षा...' इत्यादिग्रन्थ इति तस्याभिधेयस्तद्द्वाराऽभिधया प्रतिपाद्य इति तस्य, तत्स्वरूपस्येति भावः। **द्वितीयार्थस्य** द्वितीयः शरदाशंसनरूपप्रकरणवशात्प्रथममवतिष्ठमानस्य हंसाद्यर्थस्यापेक्षया पश्चादवतिष्ठमानोऽसावर्थ इति तस्य तथोक्तस्य। **सूच्यतया** सूचितुं योग्य इति सूच्यस्तस्य भावस्तत्ता तया। 'अल्पमात्रं समुद्दिष्टं बहुधा यत्प्रसर्पति। फलस्य प्रथमो हेतुर्बीजं...' इत्याद्युक्तदिशाऽस्पष्टं प्रतिपाद्यत्वेनात एवाप्रधानतयेति भावः। **एव** अन्यथा सूत्रधारः-( मारिष ! शरद्वर्णनाशंसया हंसा धार्त्तराष्ट्रा व्यपदिश्यन्ते तत् किं शान्तं पापं, प्रतिहतममङ्गलमित्यादि ) वाक्यं विरुद्धं स्यादित्यवधारणम्। **विवक्षितत्वात्। उपमानोपमेयभावः। विवक्षितः। न** 'सम्भवती' ति शेषः। **इत्यस्मात्। उपमाध्वनिः** 'दुर्गालङ्कृतविग्रहो...' इत्यादिवदुपमाया ध्वनिः। **न। श्लेषः। वा। न। इतीत्येवम्। सर्वम्। अवदातं** निर्दोषम्।

अत्राहुर्गङ्गाधरकाराः-'अयं चालङ्कारः प्रायेणालङ्कारान्तरस्य विषयमभिनिविशते, तत्र किमस्य बाधकत्वं स्यादाहोस्वित्सङ्कीर्णत्वम्, उताहो वाध्यत्वम्; इति। अत्राहुरुद्भटाचार्याः-'येन नाप्राप्ते य आरभ्यते स तस्य बाधक' इति न्यायेनालङ्कारान्तरविषय एवायमारभ्यमाणोऽलङ्कारान्तरं बाधते। न चास्य विविक्तः कश्चिदस्ति विषयो यत्र सावकाशोऽयं नान्यं बाधेत। तथा हि-अप्रकृतमात्रयोः प्रकृतमात्रयोर्वा तुल्ययोगितैव जागर्त्ति, प्रकृताप्रकृतयोस्तु दीपकम्, तदनुमुदिता उपमादयश्च। न च'देव ! त्वमेव पाता(ऽ)लमाशानां त्वं निबन्धनम्। त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः॥'इत्यादिकाव्यप्रकाशोक्तौ विविक्तोऽस्य विषय इति वाच्यम्, रूपकस्यैवात्र स्फुटत्वात्। श्लेषस्थापितपातालाद्यर्थस्याभेदारोपमन्तरेण लोकत्रयात्मकत्वस्य दुरुपपादत्वात्। कथं तर्हि 'नदीनां सम्पदं बिभ्रद्राजाऽयं सागरो यथा।' इत्यादावुपमायाः प्रत्ययः, कथं वा तत्रैव यथा शब्दस्थाने किमुशब्ददाने उत्प्रेक्षायाः, अपर इति कृते च रूपकस्य; इति चेत्। न। अत्र ह्युपमादीनां प्रतिभानमात्रं न तु वास्तवी स्थितिः। नहि श्वैत्येन शुक्तौ रजतत्वं प्रतीयमानं वस्तुतोऽस्ति, तस्मादुपमाऽऽदिप्रतिभोत्पत्तिहेतुः श्लेष एव स्वविषये सर्वत्रालङ्कारः।' इति। एतच्चापरे न क्षमन्ते, तथाहि-यत्तावदुच्यते-'येन नाप्राप्ते...'इत्यादि तत्र प्रागुदाहृते 'पद्माख्यं तत् किमपि ललितं...'इत्यस्मत्पद्ये, 'सर्वदोमाधवः-पातु योगङ्गां समदीधरत्।' इत्यादिपरकीयपद्ये च श्लेषातिरिक्तः कोऽलङ्कारः? तुल्ययोगिता तु सादृश्यप्रतीतिनियता कथमत्र शक्यते वक्तुम्। नहि-लक्ष्मीकमलयोर्हरिहरयोर्वा प्रकृते सादृश्यं प्रतिविपादयिषितम्। नापि चात्रैकश्रुत्याऽर्थद्वयोपपादनं विनाऽन्यत् किञ्चिच्चमत्कारजनकं, येनालङ्कारान्तरमभ्युपगच्छेम। एकश्रुत्याऽर्थद्वयोपादानं तु श्लेष एव। एवं च सावकाशत्वाच्छ्लेषस्यालङ्कारान्तरापवादकत्वं न युक्तम्। अत एवोपमाऽऽदीनां प्रतिभानमात्रमिति यदुक्तं, तदपि न सङ्गतम्। गुणक्रियाऽऽदेरिव शब्दमात्रस्यापि समानधर्मत्वेनोपमायां तावद्बाधकाभावात्। एवमेवालङ्कारान्तरस्यापि श्लेषविषये पारमार्थिक्येव सत्ता, न प्रातिभासिकी, प्रत्युत श्लेषस्यैव प्रतिभानमात्रमिति वक्तुं युक्तम्। पूर्णोपमाया विषयस्य सर्वस्यापि त्रिविधश्लेषेणाक्रान्तत्वान्निरवकाशतयाऽस्य सावकाशस्य स्वविषये बाधौचित्यात्। तथा-'समरार्चितोऽप्यमरार्चितः' इत्यादौ श्लेषस्य तैमिरिकचन्द्रद्वयवत्प्रतिभानमात्रमेव, न त्वलङ्कारत्वम्, तज्जीवातोर्द्वितीयार्थस्याप्रतिष्ठानात्। विरोधस्य त्वाभासरूपस्याप्यलङ्कारत्वं नतु श्लेषस्येति स्फुटमेव। तस्मादेवमादौ श्लेषप्रतिभयोत्पाद्यो विरोध एवालङ्कारः, नतु विरोधप्रतिभयोत्पाद्यः श्लेषः। किञ्च-प्रत्येकं तत्तद्रूपपुरस्कारेण कस्याप्यलङ्कारस्य नास्ति श्लेषविषये नाप्राप्तत्वमलङ्कारान्तरपुरस्कारेणेति चेत्, एवं तर्हि बाध्यसामान्यचिन्तया स्वविषये प्राप्तस्य सर्वस्यापि बाधापत्तौ श्लिष्टपरम्परितरूपकस्य श्लिष्टसमासोक्तेश्चोच्छेद एव स्यात्। तस्माच्छ्लेषस्य नापवादकत्वं, सङ्कीर्णत्वं तु स्यात्।' इति। अन्ये तु-'अलङ्कारा हि प्राधान्येन चमत्काराधायकाः स्वांस्वामाख्यां लभन्ते, त एव

परोपकारकतया वर्तमानास्तां त्यजन्ति। यथा-'रराज भूमौ वदनं मृगाक्ष्या नभोविभागे हरिणाङ्कबिम्बम्।' इत्यत्र प्रकृताप्रकृतात्मकानामेकधर्मसम्बन्धो दीपकाख्यां भजते, त्यजति च-'राजते वदनं तन्व्या नभसीव निशाकरः।' इत्यत्र। अत एवोच्यते-'प्रा ( प्र ) धान्ये ( ने ) न व्यपदेशा भवन्ति' इति। एवं चालङ्कारान्तरोपस्कारकतया स्थितः श्लेषः कथङ्कारं स्वगृहस्थ इव श्लेषालङ्कारव्यपदेशं बोढुमीष्टामिति वाध्यप्राय एव।' इत्यप्याहुः।' इति। प्रदीपकारा अप्याहुः-'ननु श्लेषस्तावद् द्विधा सभङ्गपदोऽभङ्गपदश्च। तत्राद्यः शब्दश्लेषः स्वरितादिगुणभेदाद्भिन्नप्रयत्नोच्चार्यतया भिन्नानां शब्दानां बन्धे 'जतुकाष्ठ' न्यायाच्छब्दयोरेव श्लिष्टत्वात्, द्वितीयस्त्वर्थश्लेषः स्वरितादिगुणाभेदादेकप्रयत्नोच्चार्यतया शब्दभेदाभावा'देकवृन्तगतफलद्वय'न्यायेनार्थयोरेव श्लिष्टत्वात्। यद्यपि-'अर्थभेदेन शब्दभेद' इति नयेन द्वितीयेऽपि शब्दस्य भेदः,तथाऽप्युपपत्त्या शब्दभेदप्रतीतावप्येकताऽध्यवसायान्नास्ति शब्दभेदः,स एव निरवकाशतया सर्वालङ्कारबाधक इत्यलङ्कारान्तराणां प्रतिभामात्रमुत्पादयति,नतु तत्पर्याप्तिम्।यथा-'स्वयं च पल्लवाताम्रभास्वत्करविराजिनी। प्रभातसन्ध्येवास्वापफललुब्धे हितप्रदा।' अत्र पूर्वार्धेऽभङ्गपदः, द्वितीयार्धे सभङ्गपदः। द्वयमप्युपमाप्रतिभोत्पत्तिहेतुः। साधर्म्याभावेन तस्याः प्ररोहाभावात्।'एकप्रयत्नोच्चार्याणां तच्छायां चैव बिभ्रताम्।स्वरितादिगुणैर्भिन्नैर्बन्धः श्लिष्ट इहोच्यते॥' 'अलङ्कारान्तरगतां प्रतिभां जनयेत्पदैः। द्विविधैरर्थशब्दोक्तिविशिष्टं तत्प्रतीयताम्॥' इति। द्विविधोऽलङ्कारसर्वस्वकारादिभिरर्थाश्रितत्वेनार्थालङ्कारमध्ये पठितस्तत् कथं शब्दालङ्कारमध्ये पठ्यते।'इति।उच्यते-दोषगुणालङ्काराणां शब्दार्थगतत्वेन यो विभागः सोऽन्वयव्यतिरेकाभ्यामेव व्यवतिष्ठते।...यच्चोक्तम्-'स्वयं च...' इत्यादावुदाहृते उपमाप्रतिभोत्पत्तिहेतुःश्लेषः। इति, तदप्ययुक्तम्। प्रत्युतोपमैवात्र श्लेषप्रतिभोत्पत्तिहेतुः। तद्बाधकत्वात्। तथा हि-साधर्म्याभावेनोपमायाः प्ररोहाभावादेव तावच्छ्रोपमा वाध्या। यतः-'कमलमिव मुखं मनोज्ञमेतत् कचतितराम्' इत्यादौ मनोज्ञत्वस्य गुणस्य दीप्तिरूपायाः क्रियाया वा उभयोर्वा साम्यं यथोपमा निर्वहति तथा 'सकलकलं पुरमेतज्जातं संप्रति सुधांशुबिम्बमिव।' इत्यादावपि शब्दमात्रसाम्येनापि सा युक्तैव, साधर्म्यमात्रस्योपमाप्रयोगकत्वात्, तस्य चार्थरूपस्येव शब्दरूपस्याविशेषेण सम्भवात्। यथा ह्युक्तं रुद्रटेन-'स्फुटमर्थालङ्कारावुपमासमुच्चयौ' इति। अथात्र साधर्म्यसम्भवेऽपि नोपमा। साधारणधर्मप्रयोगशून्यो हि 'कमलमिव मुखम्।' इत्येतावन्मात्रादिरुपमाविषयः। अत्र तु शब्दरूपसाधारणधर्मप्रयोग एवेति वैजात्याद्वक्तव्यं, तदपि न युक्तम्। पूर्णोपमाया निर्विषयत्वापत्तेः। साधारणधर्मप्रयोगे उपमात्वाभावात् तदप्रयोगे त्वपूर्णात्वात्। तदेतदुक्तम्। 'नच कमलमिव मुखम्' इत्यादि। साधारणधर्मप्रयोगशून्य उपमाविषय इति वक्तुं युक्तम्। पूर्णोपमाया निर्विषयत्वापत्तेः। इति। केचित्पुनस्तदन्यथा व्याचक्षते-तथा हि 'यत्र साधारणधर्मोद्धारेऽप्युपमा सम्भवति प्रसिद्धत्वात्स उपमाविषयो न चात्र तथेत्याक्षेपार्थः। अयं पूर्णोपमाविषयो न स्यात्। इति। यद्वा-श्लेषस्योपमाबाधकत्वायैतदङ्गीक्रियते तथा श्लेषस्योपमाबाधकत्वे पूर्णोपमा निर्विषयैव स्यात्।'कमलमिव मुखं मनोज्ञमेतत्' इत्यत्र मनोज्ञत्वस्य-सम्बन्धिभेदान्नानात्वेनार्थश्लेषस्वीकारात्। इति समाधानार्थः। ननु एवं श्लेषस्य निर्विषयत्वम्, असङ्कीर्णस्थलाभावात् इति चेत्, न 'देव! त्वमेव पातालमाशानां त्वं निबन्धनम्। त्वं चामरमरुद्भूमिरेको लोकत्रयात्मकः॥' इत्यादावलङ्कारान्तरासम्भवात्। तथा हि-न तावदत्रोपमा। इवाद्यप्रयोगात्। नापि तुल्ययोगितादीपके। नापि पातालादिना रूपकं वाच्यम्। व्यङ्ग्यस्य तस्य सम्भवेऽपि वाच्यापेक्षयैवासङ्करगवेषणम्। इति। किञ्च-'येन ध्वस्तमनोभवेन' इत्यादौ नास्त्येव किञ्चिदलङ्कारान्तरमित्युपमाश्लेषयोर्विभक्तोदाहरणसम्भवाद्बाध्यबाधकभावानुपगमे द्वयोर्योगे सङ्कर एवेति वरमभ्युपगन्तव्यम्। उत्पत्तिपर्यालोचने तु उपमाया एवायं विषयो न श्लेषस्य। इत्युक्तमेव। उत्पत्तिश्चेयम्-'व्यपदेशाः प्राधान्येन सम्भवन्ती' ति वस्तुस्थितिः। प्रधानं चात्रोपमा, श्लेषस्य तन्निर्वाहकस्य तदङ्गत्वात्। नहि श्लेषं विना समानशब्दवाच्यत्वलक्षणं साध-

**७५ पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते ।**

**आदिशब्दात् खड्गमुरजचक्रगोमूत्रिकादयः । अस्य च—तथाविधलिपिनिवेशविशेषवशेन चमत्कारविधायिनामपि वर्णानां तथाविधश्रोत्राकाशसमवायविशेषवशेन चमत्कारविधायिभिर्वर्णैरभेदेनोपचाराच्छब्दालङ्कारत्वम् ।**

---

र्थमुपमानिर्वाहकं निर्वहति । उपमा तु न श्लेषाङ्गम् । श्लेषप्रतीतिं विना तत्प्रतीत्यभावेन तदनुपकारकत्वात् । इति । यदि चोपमाव्यवहारवारणाय साधारणधर्मप्रयोगशून्य उपमाविषय इति स्वीकर्तव्यम्, तदा पूर्णोपमाया निर्विषयत्वमेव स्यात् । इति ।तदेतदुक्तम्—'अन्यथा पूर्णोपमाया निर्विषयत्वापत्तेः ।' इति न केवलमुपमाया एव श्लेषबाधकत्वं, किन्त्वलङ्कारान्तरस्यापि, 'अविन्दुसुन्दरी नित्यं गलल्लावण्यविन्दुका ।' इत्यत्र विरोधालङ्कारस्य । न ह्यत्र अर्थद्वयप्रतिपादकशब्दस्य श्लेषः । विन्दुसाहित्यरूपस्य द्वितीयार्थस्य प्रतिभामात्रविषयस्य प्ररोहाभावात् । नन्वप्ररूढोऽपि श्लेषालङ्कार आस्तां,विरोधाभासवत् इति चेत् ? भवेदेवम्—यदि विरोधाभासस्य विरोधित्वमिव श्लेषाभासस्य श्लेषत्वमनुमतं कस्यापि भवेत् ! नचैवम् तस्मादेवंविधे विषये श्लेषप्रतिभोत्पत्तिहेतुरलङ्कारान्तरं प्राधान्यात् । तथा च—'सद्वंशमुक्तामणिः' इत्यत्र परम्परितश्लिष्टरूपके रूपकं प्रधानम् । वंशशब्दे श्लेषस्तु वेणुकुलयो रूपकोपयोगितया तदङ्गमिति श्लेषप्रतिभोत्पत्तिहेतु रूपकमेव व्यपदेश्यम् । 'नाल्पः कविरिव स्वल्पश्लेषो देव महान् भवान्' इत्यत्र श्लेषव्यतिरेके व्यतिरेक एव प्रधानं श्लेषस्तु तन्निर्वाहक इति तत्प्रतिभोत्पत्तिहेतुर्व्यतिरेकः । 'अनुरागवती सन्ध्या दिवसस्तत् पुरःसरः । अहो दैवगतिश्चित्रा तथाऽपि न समागमः ॥' इत्यत्र समासोक्तिरलङ्कारः । 'अभिधाया नियमेन श्लेषस्यासम्भवात् । 'आदाय चापमचलं कृत्वा हीनं गुणे विषमदृष्टिः । यश्चित्रमच्युतशरो लक्ष्यमभाङ्क्षीत्नमस्तस्मै ॥' इत्यत्र विरोध एवालङ्कारः, श्लेषस्तु तदङ्गमात्रम्; अप्ररोहात् । 'कवीनां सन्तापो भ्रमणमभितो दुर्गतिरिति त्रयाणां पत्रत्वं रचयसि न तच्चित्रमधिकम् । चतुर्णां वेदानां व्यरचि नवता वीर ! भवता द्विषत्सेनालीनामयुतमपि लक्षं त्वमकृथाः ॥' अत्र मदीये काव्यलिङ्गस्य श्लेषोऽङ्गमिति श्लेषप्रतिभोत्पत्तिहेतुः काव्यलिङ्गम् । तस्मादलङ्कारान्तरप्रतिभोत्पत्तिहेतुः श्लेष इति रिक्तं वचः ।' इति ।

अथ चित्राख्यमनेकविधमप्यलङ्कारं'कष्टं काव्यमेतत्'इत्याद्युक्तदिशा रसस्योपकारिणममन्वानो मनाङ्निर्दिशति—**७५ पद्माद्याकारहेतुत्वे**···इत्यादिना ।

**७५ वर्णानां** शब्दस्वरूपाणामकाराद्यक्षराणाम् । **पद्माद्याकारहेतुत्वे** पद्ममादौ येषां ( खड्गादीनां ) तेषामाकारः सादृश्यप्रत्यायकं चिह्नं तस्य हेतवो हेतुभूतास्तत्त्वं तस्मिन् । सति सप्तमीयम् । **चित्रं** 'नामे'ति शेषः । **उच्यते** । तथा च—येये वर्णा यद्यदाकारहेतवः स्युस्ते ते तत्तदाकारभेदेन भिन्नं चित्रमिति व्यपदेशं लभन्ते इति निष्कृष्टम् ।

'पद्माकार···' इत्यत्रादिशब्दाद्बोध्यमाह—**आदिशब्दात् । खड्गमुरजचक्रगोमूत्रिकादयः ।** खड्गः करवालः शस्त्रविशेषः । मुरजो मृदङ्गो वाद्यविशेषः । चक्रं प्रसिद्धम् । गोमूत्रिका गोमूत्रधारा । आदिपदेन हारनागशक्तिधनुःशृङ्गारकादिग्रहणम् । गोमूत्रमत्रास्तीति स्त्री चेद् गोमूत्रिका । 'अत इनि ठनौ ।' ५।२।११५ इति ठन् । नन्वमूर्त्तानामपि वर्णानां कथं पद्माद्याकारता, कथं वा तया चित्रालङ्कारतया व्यपदेश इत्यत आह—**अस्य** चित्रालङ्कारस्य **च । तथाविधलिपिनिवेशविशेषवशेन** तथाविधा पद्मादिसदृश्योऽसौ लिपिस्तस्या निवेशविशेषस्तद्वशेन । पद्माद्याकारतया लेखविन्यासमहिम्नेत्यर्थः । **चमत्कारविधायिनां** चमत्कारोऽलौकिकत्वमलौकिकत्वाभास इति यावत् ( साक्षादलौकिकत्वस्य काव्यजीवातोस्तथा तिरोभावात् ) तस्य विधायिनस्तेषाम् । 'वक्तुश्चेतसी'ति शेषः । **अपि । वर्णानाम् । तथाविधश्रोत्राकाशसमवायविशेषवशेन** तथाविधः पद्माद्याकारं लेखविशेषं सङ्केतमहिम्ना प्रत्यानेयोऽसौ श्रोत्राकाशसमवायविशेषः कर्णरन्ध्रसम्बन्धविशेषस्तद्वशेन । **चमत्कारविधायिभिः** 'श्रोतुश्चेतसी'ति शेषः । **वर्णैः** । 'सम'मिति शेषः । **अभेदेन । उपचारात्** लक्षणया । **शब्दालङ्कारत्वम् ।** अयम्भावः—पद्माद्याकारलिपिनिवेशविशेषमवलोक्य ये वर्णा उच्चार्य्यन्ते तैरेव श्रोतुः श्रोत्रे पद्माद्याकारा वर्णा जन्यमानाः कमपि चमत्कारमादधतीव, तेषां

**तत्र पद्मबन्धो यथा मम-**

**'मारमासुषमा चारुरुचा मारवधूत्तमा। मात्तधूर्त्ततमावासा सा वामा मेऽस्तु मा रमा ॥८७॥'**

---

च कार्य्यकारणयोरभेदेनोपचाराज्जन्यानामपि वर्णानां चित्रालङ्कारव्यपदेशभाक्त्वं सङ्गच्छते। इति। यथाहुः-प्रदीपकाराः 'यद्यपि वर्णानामाकाशगुणानां खड्गाद्याकृतिहेतुत्वमसम्भवि, तथाऽपि विन्यस्तवर्णानुमापिका लिपयः सन्निवेशविशेषवत्त्वेन यत्र खड्गाद्याकारमुल्लासयन्ति, तच्चित्रमिति विवक्षितम्। तर्हि-'लिपिनिष्ठत्वाच्छब्दालङ्कारत्वं न स्या'दिति चेत्, न। तादृशवर्णविन्यासं विना तादृशलिपिविन्यासाभावात्। शब्दान्वयव्यतिरेकयोरभग्नत्वात्। लिपेर्वर्णाभेदस्य लोकप्रसिद्धिमाश्रित्य शब्दालङ्कारत्वमिति कश्चित्। तथाऽपि शृङ्गारादिरसानुपकारकस्य कथमलङ्कारकत्वमिति चेत्, कविनैपुण्यवशेन विस्मयोपकारकत्वादिति गृहाण। श्लेषनिर्वाह्यं चैतत्। न च तादृशं रसोपकारकम्।' इति।

अथोदाहर्त्तुमुपक्रमते-तत्र तेषु पद्माद्याकारभेदेनानेकविधेषुचित्रालङ्कारेष्विति यावत्। 'उदाहर्त्तव्ये'ष्विति शेषः। **पद्मबन्धः** पद्मवद्बन्ध इति तथोक्तः। **यथा**। **मम** ग्रन्थकर्त्तुरित्यर्थः। 'कृता'विति शेषः। **'मारमासुषमा....'** इत्यादौ।

**तच्चित्रं यथा-**




-'**मारमासुषमा** मा नैव रमासुषमा लक्ष्म्या अप्युत्कृष्टाऽपि शोभा यस्या यदपेक्षयेति तथोक्ता। लक्ष्म्या अप्युत्कृष्टत्वं यच्छोभाऽपेक्षया न तादृशीति भावः। यद्वा-'मारमे' ति 'असुषमे' ति च पदच्छेदः। मां लक्ष्मीं रमयति विनोदयति विडम्बनास्पदं करोतीति यावत्, इति तथा। न सुषमा यदपेक्षया सा, स्वयमेव परममुत्कृष्टेत्यर्थः। अत एव-**चारुरुचा** चारु रमणीया या रुक्कान्तिस्तया, रमणीयकान्त्येत्यर्थः। **मारवधूत्तमा** मारस्य कामस्य वधू रतिस्तस्या उत्तमा, रतेरप्युत्कृष्टेति भावः। यद्वा-'अमारवधूत्तमा' इति पदच्छेदः। न मारवधूरुत्तमा यदपेक्षया सा। **मात्तधूर्त्ततमावासा** मा नैवात्तो गृहीतो धूर्त्ततमावासो यया सा। धूर्त्तश्चासौ तमो राहुरिति, तस्या वासः सङ्ग इति धूर्त्ततमावासः। तथा सौन्दर्य्येऽपि वञ्चकस्य राहोः कवलनावसरो यया न दत्तस्तादृशीति भावः। 'स्वर्भानुस्तु तमो राहु'रित्यमरमाला। **सा** प्रसिद्धा। **मे** मम। **वामा** सुन्दरी प्रिया। **अस्तु**। किन्तु-**रमा** लक्ष्मीः। **मा** नैव। 'वामा मेऽस्तु' इति पूर्वेणान्वयः। कुत इत्यपेक्षायां वामाविशेषणानि व्यतिरेकेण रमापरत्वेन योज्यानि, तथा हि-मारं मृत्युं मिमीते कथयतीति मारमा। लक्ष्म्या योगवियोगयोः प्राणात्यय इति वेदान्तिनः। अत एव-न सुषमाऽत्यन्तं शोभा यस्याः सेति-असुषमा।

एषोऽष्टदलपद्मबन्धोदिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्टवर्णः, किन्तु विदिग्दलेष्वन्यथा, कर्णिकाक्षरं तु श्लिष्टमेव । एवं खड्गबन्धादिकमप्यूह्यम् । काव्यान्तर्गडुभूततया नेह प्रपञ्च्यते ।

७६ रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिका ॥ ६६ ॥
उक्तिवैचित्र्यमात्रं सा च्युतदत्ताक्षरादिका ॥

च्युताक्षरा, दत्ताक्षरा, च्युतदत्ताक्षरा च । उदाहरणम्—
'कूजन्ति कोकिलाः साले, यौवने फुल्लमम्बुजम्। किं करोतु कुरङ्गाक्षी वदनेन निपीडिता ॥८८॥'

---

ननु तर्हि कथमसाङ्गपास्यत इत्यपेक्ष्याह–रुचा । चारु ( क्रियाविशेषणमिदम् ) मारस्य कामस्य वधूर्भार्या तदपेक्षयोत्तमा । यद्वा–तत एव–अचारुरुचा निन्दितकान्त्या । मारस्य मृत्योर्भयमार्याया वधूः स्नुषा यातनेति यावत् तस्या उत्तमोत्कृष्टेति मारवधूत्तमा । 'मारोऽनङ्गे मृतौ विघ्ने ।' इति गोपालः 'वधूः पत्न्यां स्नुषानार्योः..' इति हैमः । 'दुरुक्तौ कलिराधत्त भयं मृत्युं च सत्तम। तयोश्च मिथुनं जज्ञे यातना निरयस्तथा ॥' इति भागवतम् । यदपेक्षा यातना ( पीडा )ऽपि नेति भावः । मा नास्ति गृहीतेति मात्ताऽतन्त्रेत्यर्थः, सा चासौ धूर्ततमाया इवेति धूर्ततमवदावासो निवासः स्थानमिति यावद् यस्याः सेति । अत्र श्लेषानुगृहीतो व्यतिरेकः ॥ ८७ ॥'

अस्य स्वरूपं निर्दिशति–एषः । अष्टदलपद्मबन्धोऽष्टपत्रकमलाकारबन्धः । दिग्दलेषु पूर्वादिषु चतुर्षु भागेषु । निर्गमप्रवेशाभ्याम् । श्लिष्टवर्णः श्लिष्टा अनेकत्वेऽप्येकायमाना वर्णा यत्र सः । किन्तु–विदिग्दलेषु ईशानादिषु भागेषु । अन्यथाऽश्लिष्टवर्ण इत्यर्थः । कर्णिकाक्षरं मध्यभागस्थो वर्णः । तु । श्लिष्टं नानापदान्वययोगि । एव । एवं यथा पद्मबन्धस्तथा । खड्गबन्धादिकम् । आदिना मुरजचक्रबन्धादेर्ग्रहणम् । ऊह्यम् । अत्र हेतुं निर्दिशति–काव्यान्तर्गडुभूततया काव्यस्य (इक्षोरिव) अन्तः गडुभूतः ( ग्रन्थिभूतः ) तत्र तत्तया । इह । चित्रम्–न । प्रपञ्च्यते ।

प्रहेलिकाया अलङ्कारत्वं प्रसह्य निषेधति–७६ रसस्येत्यादिना ।

७६ रसस्य काव्यजीवातोश्चमत्कारस्य।परिपन्थित्वात् परिपन्थिन्या विरोधिन्या भावस्तत्त्वं तस्मात्।काव्यजीवातुभूतं चमत्कारमपगमयतीति हेतोरिति भावः । प्रहेलिका प्रहेलयति सूचयति भावं नतु स्वरूपार्थमिति तथोक्ता । अलङ्कारः । न 'प्रत्युत तथादोषलक्षणाक्रान्ततयाऽपहेये' ति शेषः । ननु तर्हि–'व्यक्तीकृत्य कमप्यर्थं स्वरूपार्थस्य गोपनात्। यत्र बाह्यार्थसम्बन्धः कथ्यते सा प्रहेलिका ॥' 'प्रहेलिका सङ्कृतप्रश्नः साऽपि षोढा च्युताक्षरा । दत्ताक्षरोभयं मुष्टिर्विन्दुमत्यर्थवत्यपि ॥ क्रीडा गोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे । पराव्यामोहने चापि सोपयोगाः प्रहेलिकाः ॥' इत्यादिना किमिति जरत्तरा आद्रियन्ते स्मेत्यत आह–सा प्रहेलिकेति भावः।च्युतदत्ताक्षरादिका च्युतं च दत्तं चेति, च्युतदत्ते चेति च्युतदत्तानि, तथाभूतान्यक्षराणि यत्र, स आदौ यस्याः सा तथाभूतेति भावः। उक्तिवैचित्र्यमात्रमुक्तेर्वैचित्र्यमिति तदेवेति तथोक्तम् । तथाहुः–'मात्राबिन्दुच्युतके प्रहेलिकाकारकक्रियागूढे । प्रश्नोत्तरादि चान्यक्रीडामात्रोपयोगमिदम् ॥' इति । अयम्भावः–च्युताक्षरादत्ताक्षरेत्येवमनेकविधाऽपि प्रहेलिका केवलमुक्तेर्वैचित्र्यरूपा रसं च काव्यजीवातुमपनयतीत्यलङ्कार इति न व्यपदेष्टुमर्हा प्रत्युत तथाभूताऽसौ काव्येऽपनेया । इति ॥ ६६ ॥

'च्युतदत्ताक्षरादिका' इत्यस्य 'च्युतदत्ताक्षरा' इत्यंशं व्याचष्टे–च्युताक्षरा । दत्ताक्षरा । च्युतदत्ताक्षरा । च । चात्र समुच्चयार्थः ।

उदाहर्तुमुपक्रमते, यथा–उदाहरणम्–'साले रसाले । अत्र 'र' इत्यस्य च्युतत्वम् । कोकिलाः । कूजन्ति 'कुहू' इति कलमुद्गिरन्ति । यौवने वन इत्यर्थः । अत्र 'यौ' इत्यस्य दत्तत्वम् । अम्बुजं कमलम् । फुल्लम् । वदनेन

---

१ चित्रबन्धैकरसिकैस्तु अस्माकं चित्ररहस्यं द्रष्टव्यम् ।

अत्र 'रसाले' इति वक्तव्ये, 'साले' इति, 'र' इति च्युतः 'वने' इत्यत्र 'यौवने' इति, 'यौ' इति दत्तः । 'मदनेन' इत्यत्र 'वदनेन' इति, 'म' इति च्युतः, 'व' इति दत्तः । आदिपदात् क्रियाकारकगुप्त्यादयः । तत्र क्रियागुप्तिर्यथा-

'पाण्डवानां सभामध्ये(ऽ)दुर्यो(ऽ)धन उपागतः।तस्मै गां च सुवर्णं च सर्वाण्याभरणानि च॥८८॥'

अत्र 'दुर्योधन'इत्यत्र 'अदुर्योऽधन' इति 'अदु' रिति क्रियागुप्तिः । एवमन्यत्रापि ।

अथावसरप्राप्तेष्वर्थालङ्कारेषु प्राधान्यात्सादृश्यमूलेषु लक्षितव्येषु तेषामप्युपजीव्यत्वेन प्रथममुपमामाह--

---

मदनेन कामेनेति भावः । अत्र 'म' इत्यस्य च्युतत्वं, 'व' इत्यस्य च दत्तत्वं चेति बोध्यम् । **निपीडिता** । **कुरङ्गाक्षी** मृगलोचना । **किम्** । **करोतु** कुर्यात् ॥ ८८ ॥' इति ।

अत्र प्रहेलिकायास्त्रैविध्यं लक्षयति-**अत्र**ास्मिन्नुदाहृते पद्य इत्यर्थः । **'रसाले'इति वक्तव्ये** 'अपि' इति शेषः । **'साले'**इत्ये 'वोक्त'मिति शेषः । तस्मात्-**'र'इति** 'वर्ण' इति शेषः । **च्युतः** । **'वने'इत्यत्र** 'वक्तव्येऽपी'ति शेषः । **'यौवने'** इत्युक्तमिति शेषः। तस्मात्-**'यौ'इति** 'वर्ण' इति शेषः । **दत्तः** । **'मदनेन'इत्यत्र** 'वक्तव्येऽपि'इति शेषः । **'वदनेन'** इत्यु'क्त'मिति शेषः । तस्मात् **'म'इति** 'वर्ण' इति शेषः । **च्युतः** । **'व'** इति 'वर्ण' इति शेषः । **दत्तः** । तथा च-क्रमात् तिस्रोऽत्र प्रहेलिका इति निष्कृष्टम् । अथादिपदद्योत्यमाह-**आदिपदात्** । **क्रियाकारकगुप्त्यादयः** 'प्रहेलिका भाव्या' इति शेषः । **तत्र** तासु मध्ये । **क्रियागुप्तिः** क्रियायाः क्रियापदस्य गुप्तिर्गोपनं यत्र सेति तथोक्ता । अत्र व्यधिकरणो बहुव्रीहिः । सा-**यथ**

**'पाण्डवानां** युधिष्ठिरादीनां पाण्डुपुत्राणामित्यर्थः । **सभामध्ये** । **दुर्योधनो** धृतराष्ट्रपुत्रस्तेषां भ्रातेति भावः । **उपागतः** । **तस्मै** दुर्योधनाय । **गाम्** । **च** । **सुवर्णम्** । **च** । **सर्वाणि** सर्वप्रकाराणि । **आभरणानि** भूषणानि । **च** ॥ ८९ ॥'

**अत्रा**स्मिन्नुदाहृते 'असमापितक्रियाऽऽकाङ्क्षोत्थाने' इति यावत् । **'दुर्योधन'इत्यत्र** 'श्रूयमाणे शब्दविशेषे' इत्यर्थः । **'अदुर्योऽधन'** इत्य'कारश्लेष' इति शेषः । तस्मात् **'अदु'रितिक्रियागुप्तिः** 'अदु'रिति क्रियाया गुप्तिरिति तथोक्ता । **एवम्** । **अन्यत्र** कारकगुप्त्यादौ । **अपि** । कारकगुप्त्यादयो बोद्धव्या' इति शेषः ।

एवं शब्दालङ्कारान्निरूप्यार्थालङ्कारान्निरूपयितुमुपक्रमते-**अथ** । **अवसरप्राप्तेषु** निरूपणोचितावसरेषु । **अर्थालङ्कारे**ष्वर्थान्वयव्यतिरेकानुविधायिष्वलङ्कारेषु मध्ये । **प्राधान्यात्** । **सादृश्यमूलेषु** सादृश्यमूलचमत्कारेषु। **लक्षितव्येषु** लक्षणीयेषु सत्सु । **तेषां** सादृश्यमूलानाम् । **अपि**। **उपजीव्यत्वेन** । **प्रथमम्** । **उपमाम्** । **आह**--७७साम्यमित्यादिना ।

इदं तावदत्रसेयम्-'उपमाऽनन्वयश्चैवमुपमेयोपमा ततः । स्मरणं रूपकं चैव परिणामस्ततः परम् ॥ सन्देहो भ्रान्तिमानेवमुल्लेखो वाऽप्यपह्नुतिः । निश्चयश्चैवमुत्प्रेक्षाऽतिशयोक्तिरनन्तरम् ॥ तुल्ययोगितेवमुद्दिष्टं दीपकं तदनन्तरम् । प्रतिवस्तूपमा प्रोक्ता दृष्टान्तश्च निदर्शना ॥ व्यतिरेकः सहोक्तिश्च समासोक्तिरतःपरम् । स्यातां परिकरश्लेषौ प्रस्तुतप्रशंसनम् ॥ व्याजस्तुतिरथोद्दिष्टं पर्यायोक्तमतः परम् । भवेदर्थान्तरन्यासः काव्यलिङ्गमनुमानके ॥ हेतुर्वाऽप्यनुकूलं स्यादाक्षेपश्च विभावना । विशेषोक्ति विरोधाभासङ्गतिविषमं समम् ॥ विचित्रमधिकोन्योऽन्यं विशेषो व्याहतिस्तथा । हेतुर्माला भवेन् मालादीपकश्चावली पुनः ॥ सारश्चैव यथासङ्ख्यं पर्यायपरिवर्त्तने । परिसङ्ख्योत्तरं चैवमर्थापत्तिर्विकल्पनम् ॥ समुच्चयसमाधी वा प्रत्यनीकं प्रतीपकम् । मीलितं वाऽपि सामान्यं तद्गुणोऽतद्गुणस्तथा ॥ सूक्ष्मं व्याजोक्तिरुद्दिष्टा स्वभावोक्तिश्च भाविकम् । उदात्तं रसवत् प्रेयं ऊर्जस्वि च समाहितम् ॥ भावोदयो भावसन्धिर्भावशावल्यमीरितम् । संसृष्टिः सङ्करश्चेति नामतोऽत्र प्रकीर्त्तिताः॥' एते सर्वेऽपि प्रायः सादृश्यमूलाः,किन्तु केऽपि साक्षात्, केचित्पुनः परम्परया प्रकारान्तरेण वा; तत्रानन्वयोपमेयोपमाऽऽदयः साक्षात्, स्मरणादयः प्रकारान्तरेण । एवं च- अनेकेषामनन्वयोपमेयोपमारूपकपरिणामसन्देहभ्रान्तिमदपह्नुतिनिश्चयोत्प्रेक्षाऽतिशयोक्तितुल्ययोगितादीपकादीनां मूलभूतोपमैवेति ।

**७७ साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः ॥ ६७ ॥**

---

७७ **वाक्यैक्ये** वाक्यस्यैकत्वे एकस्मिन् वाक्ये सतीति यावत्। **द्वयोः** प्रसिद्धयोरुपमानोपमेययोः। **अवैधर्म्यं** विरुद्धधर्म्मोक्तिशून्यम्। **वाच्यम**भिधया प्रतिपाद्यम्। **साम्यं** साधर्म्यम्। **उपमा** तन्नामाऽर्थालङ्कारः। एकवाक्यगतत्वे सति प्रसिद्धोपमानोपमेययोर्वैधर्म्याविषयमिवादिपदवाच्यं यत् साधर्म्यं तदुपमेत्यर्थः। तत्र एकवाक्यगतत्वे सतीत्यनेन 'गिरिरिव गजराजोऽयं गजराज इवोच्चैर्विभाति गिरिः। निर्झर इव मदधारा मदधारेवास्य निर्झरः स्रवति ॥' इत्यादेर्व्यवच्छेदः। एकपदं च वाक्यान्तरव्यावर्त्तकं, न तु एकपदव्यावर्त्तकं, तेन 'शशिमुखी' त्यादावेकपदत्वेऽप्येषा। प्रसिद्धेत्यनेन "सरसीव सुभगेव स्फुरति च लावण्यवल्लभं सलिलम्। वदनमिवाम्भःप्रभवं शफरीनयने यथा तथा यस्याः ॥' इत्यादेः, उपमानोपमेयेत्यनेन 'वदनमिवास्या वदनं नयने नयने इवाद्भुते स्फुरतः। लावण्यमिवाङ्गानां लावण्यं वाऽपि सन्नद्धम् ॥" इत्यादेः,वैधर्म्याविषयमित्यनेन 'अमृतनिधानं सहसा सन्तापप्रशमकर्म्मणि प्रथितम्। शशिमण्डलमिव वदनं तन्निशि चेदं दिवाऽपि ते सुमुखि।' इत्यादेः, वाच्यमित्यनेन 'अपि सुभगे तव वदनं श्यामान् केशान् दधानमालोक्य। मुग्धा अमी चकोरा हन्त विलोक्य कथञ्चु नृत्यन्ति ॥" इत्यादेश्चेति बोद्धव्यम्। अथ-उपमानं नाम सादृश्यप्रतियोगि, उपमेयं पुनः सादृश्यानुयोगि-एते एव-'साधारणधर्म्यवत्त्वेन सिद्धः पदार्थ उपमानम्, तद्धर्म्मवत्तया कविसंरम्भगोचर उपमेयम् इति, 'उत्कृष्टगुणवत्तया सम्भाव्यमानमुपमानम्, अपकृष्टगुणवत्तया सम्भाव्यमानमुपमेयम्'इति' 'उत्कृष्टगुणवत्तया प्रसिद्धमुपमानम्,अपकृष्टगुणवत्तया, प्रसिद्धं चोपमेयम्' इति चान्ये आहुः। उपमानोपमेययोरनुगतो धर्म्मः साधर्म्यम्, साम्यं सादृश्यं साधारणो धर्म्म इत्यन, र्थान्तरम्। तथा च-'अम्बुजमिव तव वदनं विकसति मित्रावलोकनं यावत्। मधुपानां स्पृहणीयं विमुखं दोषाकरीय-रुचेः ॥' इत्यादौ स्फुटमुपमा अम्बुजवदनयोरुपमानोपमेययोर्विकसत्त्वादिरूपस्य साम्यस्येवादिपदवाच्यत्वात् इयं च-"उपमैका शैलूषी सम्प्राप्ता चित्रभूमिकाभेदान्। रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः ॥" इत्युक्तदिशा 'वदनं वदनमिव' 'कमलमिव वदनं, वदनमिव कवलम्' 'कमलमवलोक्य वदनं स्मरामि', 'वदनमेव कमलम्' 'वदनकमलेन मधुप उन्मायते' 'किमिदं वदनम् उत कमलम्' 'वदनं विलोक्य मधुपा अनुनयन्ते,' 'कमलमिति मधुपाः, सुधानिधिरिति चकोरास्तव वदने रज्यन्ति,' 'कमलमिदं, न वदनम्' 'वदनमिदं, न कमलम्', 'कमलमिदम्', 'वदनेन ते शशिकमले विजिते', 'मित्रं दृष्ट्वा त्वद्वदनं कमलं च हृष्यति', 'त्वद्वदन एवाहं रज्यामि, कमले एव मधुपो रज्यति', 'सलिले कमलम्, स्थले त्वद्वदनम्', 'मित्रमण्डलं त्वद्वदनस्य विकाशकम्', 'त्वद्वदनं कमलं च सदा ऽऽ (ऽ) लिगणं मोदयतः', 'त्वद्वदनस्य पुरः कमलं न किञ्चित्', इत्यनन्वयो–पमेयोपमास्मरण–रूपक–पारिणामस-न्देह–भ्रान्तिम–दुल्लेखा–पह्नुति–निश्चयोत्प्रेक्षाऽ–तिशयोक्ति–तुल्ययोगिता–दीपक–प्रतिवस्तूपमा–दृष्टान्त–निदर्शना–व्य-तिरेक–सहोक्ति–समासोक्ति–परिकर–श्लेषा–प्रस्तुतप्रशंसाऽदीनामभिनयं दर्शयन्ती सहृदयहृदयमनुरञ्जयन्तीत्येका सर्वेष्व-र्थालङ्कारान्तरेषु प्रधानभूताऽत एव प्रथमं निरूपणीया, अस्याश्च 'सरसी–न्दुकलाऽम्भोजदम–काञ्चनवल्लरी। स्वर्ण-यष्टि–स्तडि–द्दीपज्वालाश्च योषितः समाः ॥ रोचना कनकं विद्युद्धरिद्रा च वराटकः। हेमकेतक–चाम्पेयौ रम्भा-चाद्यास्तनूसमाः ॥ तमो–जीमूत–शैवाल–वर्हं–नीलाश्मचामरैः। इन्दीवरार्कजावीचि–मधुपैश्च कचः समः ॥ अर्द्धचन्द्रो हेमपट्टस्तथा भालस्य साम्ययुक्। वल्ली–स्मरधनु–र्वीचिभृङ्गाली–पल्लवा भ्रुवोः ॥ चन्द्रादर्शौ कपोलस्य, मुखस्येन्द्वब्जदर्पणाः। तिलपुष्पं च नासायाः, कम्वोः कण्ठः स्मृतस्तथा ॥ अब्ज–तत्पत्र–शफरी–मृग–तन्नेत्रखञ्जनैः। नेत्रं चकोर–तन्नेत्र–केतकालि–स्मराशुगैः ॥ प्रवाल–विम्व–वन्धूकपल्लवैरधरोष्ठकौ। मुक्ता–माणिक्य–नारङ्गकुन्ददाडिमकोरकैः ॥ ताराचन्द्र-करैर्दन्ता वाग्घंसशुककिन्नरैः। वीणावेणुमृदङ्गैस्तु पिकेन स्वरसौभगम् ॥ विसवल्लीमृणालैश्च वाहुः पाणिस्तु पङ्कजैः। प्रवा-लपल्लवाभ्यां च नखास्त्विन्दुकलासमाः ॥ कुन्दकोरकतुल्याश्च वर्ण्याः सहृदयोत्तमैः ॥ पूगाब्जतत्कोरकविल्वतालगुच्छेभकु-म्भाचलकुम्भचक्रैः। सौवीरजम्वीरकवीजपूरसमुद्गछोलङ्गफलैरुरोजः॥ नाभी रसातलावर्त्तह्रदकूपनदादिभिः। वली तन्निम्या तद्रूपैः पृष्ठं काञ्चनपट्टकैः ॥ सूच्यग्रतलशून्याणुत्रिदिसिंहादिभिः समः। मुष्टिग्राह्यो भवेन्मध्यो जघनं पुलिनोपमम् ॥ पीठ-प्रस्तरभूचक्रैर्नितम्बः परिवर्ण्यते। ऊरुस्तु हस्तिहस्तेन कदल्या करभेण च ॥ चरणः पल्लवाम्भोजस्थलपद्मप्रवालकैः। पूर्णेन्दु-

**रूपकादिषु साम्यस्य व्यङ्ग्यत्वम्, व्यतिरेके च वैधर्म्यस्यापि उक्तिः, उपमेयोपमायां वाक्यद्वयम्, अनन्वये तु एकस्यैव साम्योक्तिः, इत्यस्या भेदः ।**

---

नाऽङ्गुष्ठनखौ गमनं हंसहस्तिवत् ॥ कटाक्षो यमुनावीचिभृङ्गावलिविषामृतैः । ज्योत्स्नेन्दुपुष्पपीयूषफेनकैरववद्धसः ॥' इत्युक्तनयेन उपमानप्रसिद्धिरवसेया, एष च दिङ्निर्देशः, विस्तरतस्तु स्वयमूह्य पमानोपमेयत्वम् ॥ ६७ ॥

वाच्यादीनां चतुर्णां पदानां सार्थकतां दर्शयति–**रूपकादिषु** रूपकपरिणामादिष्वलङ्कारेषु । **साम्यस्य** सादृश्यस्य साधर्म्यस्येति यावत् । **व्यङ्ग्यत्वम्** 'नतु वाच्यत्व' मिति शेषः । 'इत्यस्याभेद' इति परेणान्वेति । तथा च–'सुभगे तव किल वदनं कमलं मधुपप्रमोदकोल्लासम् ।' इत्यादौ 'वदनं कमल' मित्यभेदप्रत्ययानन्तरं 'वदनं कमलसाधर्म्यशाली' ति प्रत्ययो व्यङ्ग्य इति रूपकादौ साम्यस्य व्यङ्ग्यत्वान्नातिव्याप्तिः, ननु तर्हि 'विधवति तव वदनमये' इत्यादौ अपि साम्यस्य व्यङ्ग्यत्वान्माभूदुपमाविषयत्वमिति चेन्न, व्यङ्ग्यत्वस्यैव तत्रासिद्धेः, 'अम्भोजन्म स्मरति' इत्यादौ लुप्तस्यामादेः प्रतिसन्धानात् कर्म्मतादेरिव लुप्तस्य क्विप्प्रत्ययस्य प्रतिसन्धानात् साम्यस्य वाच्यत्वात् । ननु 'वदनं ते ननु चन्द्रजित्वरम्' 'सद्यो मुण्डितमत्तहूणचिवुकप्रस्पर्धि नारङ्गकम्' इत्यादौ कथं न पुनरव्याप्तिः, साम्यस्य व्यङ्ग्यत्वादिति चेत् अस्तु नाम, जित्वरप्रस्पर्धित्वयोश्चेतनधर्मतया वदननारङ्गकसम्बन्धित्वासम्भवात् उपमायां पर्य्यवसाने निदर्शनाया एव स्वीकारात्, 'वदनकमले सुरुचिरे' इत्यादौ तु साधर्म्यस्य वाच्यत्वेऽपि इवादिपदोपादानाभावान्नोपमात्वम् । इति फलितम् । **व्यतिरेके** तदाख्येऽलङ्कारे । **च** । **वैधर्म्यस्य** । **अपि** । 'नतु केवलं साधर्म्यस्ये' ति शेषः । **उक्तिः** । 'इत्यस्याभेद' इति परेणान्वयः । तथा च–'पङ्कजमिव तव वदनं विकसति न तदिव पुनः परं दिवसे ।' इत्यादौ वैधर्म्यस्याप्यभिधानान्नातिव्याप्तिः, अत्र हि नक्तमपि विकास उपमानस्य, दिवैव विकासः पुनरुपमेयस्य वैधर्म्यम् । ननु 'पङ्कजमिवे' त्यादौ साम्यस्य वाच्यत्वमस्तु नाम, किन्तु नञा तस्य वदने सम्बन्धापोहनात् कथमुपमायाः प्रसक्तिरेव, इति चेन्न; वदने विकाससाधर्म्यप्रतिपादनानन्तरं तस्योत्कर्षबोधाय नञा केवलं दिवा विकासित्वनिषेधनात् । इति फलितम् । **उपमेयोपमायां** तदाख्येऽलङ्कारे 'मतिरिव कमला कमलेव मति' रित्यादाविति यावत् । **वाक्यद्वयम्** 'नत्वेकं वाक्य' मिति शेषः । 'इत्यस्याभेद' इति परेणान्वेति । तथा च–लक्ष्मीबुद्ध्योरसदृशत्वरूपं साधर्म्यं वाच्यमपि वाक्यद्वयप्रतिपाद्यमिति न तत्रातिव्याप्तिः । उपमेयोपमायामिति रसनोपमाऽऽदेरप्युपलक्षकम् । तेनेतोऽप्यस्या अनेनैव व्यवच्छेदः । इति बोध्योऽर्थः । **अनन्वये** तदाख्येऽलङ्कारे । **तु** । **एकस्यो**पमानोपमेयैकतरस्य । **एव** । 'नतु तयोरुभयोरपी' ति शेषः । **साम्योक्तिः** साधर्म्यस्याभिधया प्रतिपादनम् । **इति** । अस्माद्धेतोः । **अस्या** निरुक्तलक्षणाया उपमायाः । **भेदो** व्यवच्छेदः । तथा च–'विधुरिव विधुर्मनोज्ञः' 'मुखमिव मुखं मनोज्ञ'मित्यादौ विधुमुखाद्येकतरस्य मनोज्ञत्वादि साधर्म्यमिवादिशब्दप्रतिपाद्यम्, तच्चोपमानोपमेयोभयासम्बन्धित्वेन वाच्यमपि नोपमात्वानुयोगीति सूचितम् ।

अत्राहुर्विवृतिकाराः–"केचित्तु–'इवादिशब्दवत् तुल्यादिशब्देनापि साधारणधर्म्मस्य प्रतिपादनात् करिष्यमाणश्रौत्यार्थीविभागानुपपत्त्या साधारणधर्म्मसम्बन्ध एवोपमा, नतु साधारणधर्म्ममात्रम्, स च प्रतियोगितारूपः । 'चन्द्र इव मुखम्' इत्यादौ चन्द्रप्रतियोगिकसादृश्याश्रयो मुखमिति प्रतीतेरानुभविकत्वात् तादृशसम्बन्धश्च इवादिशब्देन वाच्यस्तुल्यादिपदेनार्थवशलभ्य इति श्रौत्यार्थी विभागः ।' इत्याहुः, तन्न; आर्थ्यामुपमायामव्याप्तेः । तत्र–साधारणधर्म्मसम्बन्धस्य विभक्त्यादिप्रतिसन्धानलभ्यतया इवादिशब्दवाच्यत्वाभावात् । उभयसम्बन्धित्वस्य इवादिवाच्यत्वे श्रौती, अर्थवशलभ्यत्वे तु आर्थीति विवक्षयैव विभागोपपत्तेश्च ।" इति ।

ननु 'अस्थीव धवलं यशः' 'घट इव पटो द्रव्यम्' इत्यादौ उपमात्वमस्ति, न वा; अस्तीति चेत् तदलङ्कारतां कथमधिगतम्, नास्तीति चेत् कथं न उपमालक्षणस्य अत्र सर्वथा सत्त्वात् । इति चेत् ! अत्र सर्वत्र 'अलङ्कारत्वे सती' ति विशेषणस्यानुवक्तव्यमवधेयम् । तथा च–सत्यपि 'साम्यं वाच्य' मित्यादिलक्षणानुलक्षितत्वेनोपमात्वे वैचित्र्यानाधायकत्वेनालङ्कारव्यपदेशार्हत्वम् । एवम्–पुरस्तादपि बोध्यम् ।

**७८ सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च ।
उपमेयं चोपमानं भवेद्वाच्यम्–**

**सोपमा, सामान्यधर्म्मो द्वयोः सादृश्यहेतुर्मनोज्ञत्वादिः, औपम्यवाचकमिवादि, उपमेयं मुखादि, उपमानं चन्द्रादि ।**

---

७८ अस्याः पूर्णा लुप्ता चेति भेदद्वयं विवक्षुस्तावत् पूर्णां लक्षयति–सेत्यादिना ।

७८ **यदि । सामान्यधर्म्म** उपमानोपमेयोभयगतो लक्षणीयत्वेन अभिमतो धर्म्मविशेषः । **औपम्यवाच्यौ**पम्यस्य साधर्म्यस्य वाचि 'इववद्वायथातुल्यसमाननिभसम्मितम् । सदृशं च समं प्रायः सन्निभं च सदृक्पदम् ॥' इत्यादिपदमिति यावत् । **च । उपमेयम् । च । उपमानम् । वाच्यम**भिधया प्रतिपाद्यम् । **भवेत्** । 'तर्हि' ति शेषः । **सा** निरुक्तलक्षणा 'साम्यं वाच्य'मिति लक्षितेति यावत् । **पूर्णा** । 'उपमे' ति पूर्वतोऽनुक्रान्तम् । तथा च–निरुक्तलक्षणैव यद्युपमासामान्यधर्म्मप्रतिपादनपुरस्सरमिवाद्युपादाने सति उपमेयोपमानयोः शोभाऽतिशयार्थमभिधानं स्यात् । तदाऽसौ पूर्णेति निर्गलितोऽर्थः ।

सूत्रार्थं सुबोधयितुं तत्पदानि व्याचष्टे–**सा** 'इत्यर्थे'ति शेषः । **उपमा** 'साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः ।' इत्युक्तलक्षणोऽलङ्कारविशेषः 'इत्यर्थ'इति शेषः । **सामान्यधर्म्मः** साधारण धर्मः । 'नामे'ति शेषः । **द्वयोः** प्रसिद्धयोरुपमानोपमेययोरिति भावः । **सादृश्यहेतुः । मनोज्ञत्वादिः** । आदिना 'भाती' त्यादीनां ग्रहणम् । 'सादृश्यहेतू गुणक्रिये मनोज्ञत्वादि'रिति पाठान्तरे सादृश्यहेतुभूते ये गुणक्रिये तद्रूपो मनोज्ञत्वादिरित्यर्थः । तत्र मनोज्ञत्वादिर्गुणो, 'भाती'त्यादिः क्रिया । इति बोध्यम् । **औपम्यवाचकं** सादृश्यवाचि । निपातानां द्योतकत्वेऽपि वाचकत्वाङ्गीकारः साम्यस्य वाच्यत्वविवक्षास्फुटीकरणार्थः । यद्वा–अव्ययानामपि अन्विताभिधानस्वीकाराद्वाचकत्वोपपत्तिरिति । बोध्यम् । 'नामे'ति शेषः । **इवादि** । आदिपदेन वद्वावयथातथा समसमानसम्मितसन्निभादेर्ग्रहणम् । अत्रेदम्बोध्यम् ''इववद्वायथाशब्दाःसमाननिभसन्निभाः । तुल्यसङ्काशनीकाशप्रकाशप्रतिरूपकाः ॥ प्रतिपक्षप्रतिद्वन्द्वि-प्रत्यनीकविरोधिनः । सदृक्सदृशसंवादिसजातीयानुवादिनः ॥ प्रतिबिम्बप्रतिच्छन्दसरूपसमसप्रभाः । सलक्षणसदृक्षाभाः सपक्षोपमितोपमाः ॥ कल्पदेशीयदेश्यादिप्रख्यप्रतिनिधी अपि । सवर्णतुलितौ शब्दौ ये वाऽन्यूनार्थवाचिनः ॥ समासश्च बहुव्रीहिः शशाङ्कवदनादिषु । स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥ आक्रोशत्यवजानाति कदर्थयति निन्दति । विडम्बयति संरुन्धे हसतीर्ष्यत्यसूयति ॥ तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति । तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ॥ तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते । तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ॥ तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः'' इत्युक्तदिशेवादयः 'बन्धुश्चौरः सुहृद्वादी प्रतिमा प्रतिभा तथा। सोदरः प्रतिभानं च प्रतिमानं च वादि च॥' इत्युक्तदिशा बन्ध्वादयश्चौपम्यार्थाः, एषु च-इवाद्याःसोदराद्याश्च अभिधया, स्पर्धते इत्यादयो बन्ध्वादयश्च लक्षणया,हसतीत्याद्या व्यञ्जनया सादृश्यमवगमयन्ते । इति । **उपमेय**मुपमातुं समानतया प्रत्याययितुं योग्यम् । 'यथे'ति शेषः । **मुखादि** । आदिनोत्रादीनां ग्रहणम् । **उपमान**मुपमीयते समानतया प्रत्याय्यतेऽनेनेति तथोक्तम् । 'यथे'ति शेषः । **चन्द्रादि** । आदिना रम्भादीनां ग्रहणम् । तथा च–यत्रोपमेयोपमानयोः प्रसिद्धयोः सतोः सप्रभेदमभिधानमिवाद्युपादानपूर्वकं सचमत्कारकारणमेकवाक्यगतं सामान्यधर्म्मवाच्यत्वं सा पूर्णोपमा । अत्र'द्वयो'रित्येतावतोपादानेनोपमेयोपमानयोः प्रसिद्धत्वमभिप्रेयते । अत एवाहुः–''यदाऽयमुपमानांशो लोकतः सिद्धिमृच्छति । तदोपमैव येनेवशब्दः सादृश्यवाचकः ॥ यदा पुनरयं लोकादसिद्धः कविकल्पितः । तदोत्प्रेक्षैव येनेवशब्दः सम्भावनापरः ॥'' इति । एवं च–'मुखमिव कमलं रुचिर'मित्यादौ नातिव्याप्तिः । मुखस्योपमानत्वेन कमलस्य चोपमेयत्वेनाप्रसिद्धेः । इवाद्युपादानपूर्वकमित्यनेन 'मुखं शशाङ्कसुन्दर'मित्यादेरस्या व्यवच्छेदः । सचमत्कारकारणमित्यनेन–'मुखं कमलमिव सितम्' इत्यादेर्व्यवच्छेदः, अत्र हि सादृश्यवाच्यत्वादिसत्त्वेऽपि चमत्कारकत्वाभावान्नात्रालङ्कारत्वम् । एकवाक्यगतमित्यनेन 'चन्द्रायते शुक्लरुचाऽपि हंसो हंसायते चारुगतेन कान्ता' इत्यादेर्व्यवच्छेदः। सामान्यधर्म्मवाच्यत्वमित्यनेन–'कमलमिव वदन' मित्यादेर्व्यवच्छेदः। सामान्यधर्म्मो नाम सादृश्याद्यपरपर्य्यायः, सादृश्यं च

७९ इयं पुनः ॥ ६८ ॥

**श्रौती यथेववाशब्दा इवार्थो वा वतिर्यदि ॥**
**आर्थी तुल्यसमानाद्यास्तुल्यार्थो यत्र वा वतिः ॥ ६९ ॥**

यथेववादयः शब्दा उपमानानन्तरप्रयुक्ततुल्यादिपदसाधारणा अपि श्रुतिमात्रेण उपमानोपमेयगतसादृश्यलक्षणसम्बन्धं बोधयन्तीति तत्सद्भावे श्रौत्युपमा, एवं-

---

तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम्, प्रकृते च तस्य व्यङ्ग्यत्वं,शब्देन साक्षादप्रतिपादनात्। यत्तु विश्वेश्वरेणोक्तम् 'वाचकधर्मसमत्वप्रतियोग्यनुयोगिनां ग्रहे पूर्णा।' इति, तत्र-वाचकेतिपदसमभिव्याहारेण समत्वादीनामपि वाच्यत्वमवधेयम्। अन्यथा-लक्ष्यव्यङ्ग्योपमयोरपि वाचकोपादाने लक्ष्यव्यङ्ग्यत्वोपपत्तिरेव न सम्पत्स्यते। इति।

उक्तायाः पूर्णोपमाया एव द्वैविध्यं लक्षयति-७९ इयमित्यादिना।

७९ इयं निरुक्तलक्षणापूर्णोपमेत्यर्थः। **पुनः**। **यदि**। **यथेववाशब्दाः** यथा-इव-वा-इत्येते शब्दाः। अत्र बहुवचनं 'व' इत्यस्यापि उपलक्षकम्। तथाच-'पङ्कजदलानि व समुत्स्फुरन्ति तासां सुनेत्रयुग्मानि।' इत्यादावपि पूर्णोपमात्वमक्षतम्। 'मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम।' इत्यादौ तूत्प्रेक्षैव, वत्सतरयोर्मण्योश्च उपमेयोपमानभावाप्रसिद्धेः॥ एवम्-'शात्रवं च पुपुर्यशः।' इत्यादावपि नोपमा, मधुपानस्योपमेयतायाः शत्रुयशःपानस्य चोपमानताया अप्रसिद्धेः। अतः-'शात्रवं व पपुर्यशः।' इत्युपलभ्यमान एव पाठः साधीयान्। इति दिक्। **इवार्थः**। **वा**ऽथवा। **वतिः**। 'तदे' ति शेषः। **श्रौती** श्रूयत इति श्रुतिः, तया साक्षादेवोपलभ्यमानोपमानोपमेयसम्बन्धेति तथोक्ता। **यत्र**। **तुल्यसमानाद्याः**। आद्यपदेन समसदृशादीनां ग्रहणम्। **वा**ऽथवा।**तुल्यार्थः**तुल्यार्थे विहितः। **वतिः**। 'से'ति शेषः। **आर्थी**। अस्या आर्थत्वं च-पदार्थान्तरानुसन्धानापेक्षया प्रतीयमानोपमानोपमेयसम्बन्धवत्त्वात्। विश्वेश्वरोऽप्याह-'स्यादिव यथाऽऽदियोगे वताविवपदार्थे च सा श्रौती। तुल्यादिकपदयोगे वतौ तदर्थेऽपि चार्थी सा॥' इति। तथा च-यथाशब्दस्येवशब्दस्य वाशब्दस्य वशब्दस्य 'तत्र तस्येव।'५।१।११६ इत्यनेन सप्तमीसमर्थात् षष्ठीसमर्थाद्वा इवार्थे विहितस्य वतेर्वा योगे सैव पूर्णा श्रौतीति व्यपदिश्यते, यत्र तु तुल्यसमानसदृशादीनां 'तेन तुल्यं क्रिया चेद्वतिः।' ५।१।११५ इत्यनेन वा तुल्यार्थे विहितस्य वतेश्च योगः साऽऽर्थीति व्यपदिश्यते इति निष्कर्षः॥ ६९॥

तदेव सुबोधयितुं सूत्रार्थं विशदयति-**यथेववाऽऽदयः**। आदिना 'व' इत्यस्य ग्रहणम्। **शब्दाः**। **उपमानानन्तरप्रयुक्ततुल्यादिपदसाधारणा** उपमानस्योपमानभूतपदस्यानन्तरं परं प्रयुक्तं यत् तुल्यादिपदं तस्य साधारणाः सदृशाः। **अपि**। **श्रुतिमात्रेण** स्वोपलब्धिमात्रेण। **उपमानोपमेयगतसादृश्यलक्षणसम्बन्धम्**उपमानोपमेययोर्गतं यत्सादृश्यं तदेव लक्षणं यस्य तादृशो यः सम्बन्धस्तं तथोक्तम्। **बोधयन्ति** ज्ञापयन्ति। **इति** अस्मात् कारणात्। **तत्सद्भावे** तेषां यथेववावशब्दानां सद्भावस्तस्मिन् सति। **श्रौती**। **उपमा**। तदेव विवृतिकारा अप्याहुः-'यद्यपि यथाऽऽदयः शब्दा उपमानवाचकात् पदात् परं प्रयुज्यमानस्य तुल्यादिपदस्य साधारणाः ( तदुपमानोपमेयगतसाधर्म्यबोधकाः ), तथापि श्रुतिमात्रेण स्वोपलब्धिमात्रेण नतु पदार्थान्तरानुसन्धानापेक्षयोपमानोपमेयवृत्तिसाधर्म्यं बोधयन्तीति हेतोस्तेषां यथाऽऽदिशब्दानां सद्भावे ( प्रयोगे ) श्रौती उपमेत्यर्थः। अव्ययानामन्विताभिधानस्वीकारात् यथा-'घटो न पटः' इत्यादौ नञ्पदं पदार्थोपस्थितिमन्तरेणैव पदार्थोपस्थितेः प्रागेव समभिव्याहृतपदार्थयोरन्वितं भेदं बोधयति, तथा-'कमलमिव मुखम्' इत्यादाविवादिपदमपि श्रवणमात्रेण समभिव्याहृतपदार्थयोरन्वितं साधर्म्यं बोधयति। अन्विताभिधानवादिमते हि-अखण्डवाक्यस्याखण्डवाक्यार्थे शक्तिरेकाऽतिरिक्ता कल्प्यते, प्रथमं तयैव वाक्यार्थबोधो जायते, पश्चात् शक्त्या लक्षणया वा प्रत्येकपदार्थोपस्थितिरिति भावः। अव्ययानामभिहितान्वयाङ्गीकारेऽपि अध्ययातिरिक्तनामार्थयोरभेदातिरिक्तसम्बन्धेन साक्षादन्वयास्वीकारादव्ययार्थस्य नामार्थेन साक्षादेवान्वयः सम्भवतीत्यव्ययपदेनोपमानोपमेयभावेऽपि साधारणधर्मोपस्थापनेन विभक्त्यर्थप्रतिसन्धानापेक्षेति बोध्यम्।' इति। 'चन्द्रवद् दृशि ते सुधा।' इत्यादावप्यैवैवेत्याह-

—'तत्र तस्येव।' ५।१।११६ इत्यनेनेवार्थे विहितस्य वतेरुपादाने। तुल्यादयस्तु—'कमलेन तुल्यं मुखम्' इत्यादावुपमेय एव, 'कमलं मुखस्य तुल्यम्' इत्यादावुपमान एव, 'कमलं मुखं च तुल्यम्' इत्यादावुभयत्रापि विश्राम्यन्तीत्यर्थानुसन्धानादेव साम्यं प्रतिपादयन्तीति तत्सद्भावे आर्थी। एवं-'तेन तुल्यं क्रिया चेद्वतिः।' ५।१।११५ इत्यनेन तुल्यार्थे विहितस्य वतेरुपादाने।

८० द्वे तद्धिते समासेऽथ वाक्ये

द्वे श्रौती आर्थी च। उदाहरणम्—

'सौरभमम्भोरुहवन्मुखस्य कुम्भाविव स्तनौ पीनौ।
हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले!॥ ८९॥'

---

—एवं यथा यथाऽऽदिपदानामुपादाने तथा। 'तत्र तस्येव।'५।१।११६ इत्यनेन 'सप्तमीसमर्थात् षष्ठीसमर्थाच्च इवार्थे वतिप्रत्ययो भवतीत्यर्थकेन सूत्रेण। इवार्थे उपमाऽर्थे। विहितस्य प्रतिपादितस्य। वतेः। उपादाने। 'अपि' इति शेषः। 'श्रौत्युपमे' ति पूर्वतोऽन्वेति। तथा च—'पद्मवत्त्वन्मुखे कान्ते! भान्ति···' 'चन्द्रवत्त्वन्मुखस्यापि सुषमा सुभगा सदा' इत्यादौ च क्रमेण सप्तम्यन्तात् पद्मशब्दात्, षष्ठ्यन्ताच्चन्द्रशब्दाच्च विहितौ वतिप्रत्ययौ पद्म इव चन्द्रस्येवेत्यर्थं चावगमयतः। इति निष्कृष्टोऽर्थः। ननु तुल्यादीनामपि योगे तर्हि श्रौत्येव किन्न भवेत्? इत्याशङ्कयाह—तुल्यादयः। 'शब्दा' इति शेषः। आदिना—समानादीनां ग्रहणम्। तु। 'कमलेन। तुल्यं सदृशमित्यर्थः। मुखम्। 'सुभगाया' इति शेषः।' इत्यादौ। उपमेये मुखादिपदार्थे। एव। 'न तूपमाने' इति शेषः। 'अपि विश्राम्यन्ती' ति परेणानुषज्यते। 'कमलम्। मुखस्य 'कान्ताया' इति शेषः। तुल्यम्।' इत्यादौ। उपमाने कमलादिपदार्थे। एव 'न तूपमेये' इति शेषः। 'अपि विश्राम्यन्ती' ति परतोऽनुषज्यते। 'कमलम्। मुखं कान्तामुखम्। च। तुल्यम्।' इत्यादौ। उभयत्रोपमेये उपमाने च कमलादौ मुखादौ चेति यावत्। अपि। विश्राम्यन्ति व्याप्रियन्ते। इति अतः कारणात्। अर्थानुसन्धानात् षष्ठ्याद्यर्थानुसन्धानमाश्रित्य। एव। साम्यं सादृश्यमुपमेयादिना साधर्म्यमिति यावत्। प्रतिपादयन्ति बोधयन्ति। इति। तत्सद्भावे तुल्यादिशब्दानामुपस्थितौ। आर्थी। अयम्भावः—उपमानोपमेययोः साधारणधर्म्मसम्बन्धरूपाया उपमायाः शाब्दबोधविषयत्वं श्रौतत्वम्, उपमानोपमेययोः साधारणधर्म्मसम्बन्धरूपायाश्च तस्या आर्थबोधविषयत्वमार्थत्वम्, अत एव—श्रौत्यां तस्यां यथेवादीनामुपलब्ध्यनन्तरमेवोपमानोपमेययोः साधारणधर्म्मसम्बन्धावगमः। आर्थ्यां पुनः षष्ठ्याद्यर्थानुसन्धानोत्तरम्। इति। 'मधुरः सुधावदधरः' इत्यादावप्यस्या एव आर्थ्याः सद्भावमुदाहर्त्तुकामस्तावत् तत्सङ्गतिं दर्शयति—एवम्। 'तेन तुल्यं क्रिया चेद्वतिः।' ५।१।११५ इत्यनेन तृतीयासमर्थात् तुल्यमित्यर्थे वतिः प्रत्ययो भवति, यत्तुल्यं क्रिया चेत् सा भवतीत्यर्थकेन सूत्रेण। तुल्यार्थे। विहितस्य। वतेः। उपादाने 'आर्थी' ति शेषः। एवं च—पूर्णोपमा श्रौत्यार्थी चेति द्विभेदा, तत्राद्या यथेवादिप्रयोगे इवार्थस्य वतेर्वोपादाने, अन्या पुनः तुल्यादीनां शब्दानां तुल्यार्थे वा विहितस्य वतेरुपादाने। इति निष्कृष्टोऽर्थः।

एवं द्विविधाया अस्याः प्रत्येकं तद्धितसमासवाक्यगतत्वेन त्रैविध्यं व्यवस्थापयन् षड्विधत्वं निर्दिशति—८० द्वे इत्यादिना।

८० द्वे श्रौती आर्थी चेति द्विविधा पूर्णोपमेत्यर्थः। तद्धिते। समासे। अथ। वाक्ये 'सम्भवति तस्मात्तयोः प्रत्येकं त्रैविध्यमि' ति शेषः।

सन्देहापनयनाय—द्वे इति सूत्रस्थं पदं व्याचष्टे—द्वे इत्यादिना। स्पष्टम्।

ते चोदाहर्त्तुकाम आह—उदाहरणं 'तयोः क्रमेण यथे' ति शेषः। 'सौरभ'मित्यादि।

'हे बाले। तव। मुखस्य। अम्भोरुहवत् अम्भोरुहं कमलं तस्येवेत्यर्थः। सौरभम्। तव—स्तनौ कुचौ। कुम्भाविव कलशाविव। पीनौ पुष्टौ। तव—वदनं मुखम्। यथा। शरदिन्दुः शारदश्चन्द्रः। 'तथे'ति शेषः।

अत्र क्रमेण त्रिविधा श्रौती।

'मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः।
चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः॥ ९०॥'

---

हृदयं चित्तम्। मदयति मोदयति। इदम्बोध्यम्-अत्र-अम्भोरुहमुपमानम्, तस्माच्च षष्ठयन्तात् 'तत्र तस्येव' ५। १। ११६ इति वतिः। मुखमुपमेयम्, सौरभं साधारणो धर्म्मः, वतिश्च तद्वाचकः, तस्य च तद्धितीयत्वेन श्रौतीयं तद्धितगा पूर्णोपमा। अम्भोरुहस्य मुखसम्बन्धिसौरभलक्षकत्वेनाम्भोरुहसम्बन्धिसौरभसदृशं मुखसम्बन्धिसौरभमित्यवगमः, अथ-अम्भोरुह-मुख-सम्बन्धिनोः सौरभयोः सादृश्यमूलकाभेदाध्यवसायेनाभिन्नधर्म्ममूला अम्भोरुहमुखयोः सादृश्यप्रतीतिः। तथा-कुम्भद्वयमुपमानम्, स्तनद्वयमुपमेयम्, पीनत्वं साधारणो धर्म्मः, इवशब्दश्च तद्वाचकः, 'इवेन समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च *' इति वार्त्तिकेन 'कुम्भाविवे'त्यत्र समासः, तस्मात् समासगेयं श्रौती पूर्णोपमा। शरदिन्दुरुपमानम्, वदनमुपमेयम्, मादनं साधारणो धर्म्मः। यथाशब्दश्च तद्वाचकः, अत्र च-'यथाऽसादृश्ये।' २। १। ७ इत्यनेनासादृश्ये एव समासस्योपपत्तौ सादृश्ये च समासस्याप्रतिपादनाद्वाक्यगैवेयं श्रौती पूर्णोपमा। इति। अत्रार्याछन्दः। तल्लक्षणं चोक्तं प्राक्॥ ८९॥'

ननु कस्मिन्नंशे केत्याशङ्क्याह-अत्रेत्यादि।

अत्र निरुक्तोदाहरणे। क्रमेण निर्देशानुपूर्व्या। त्रिविधा। श्रौती 'पूर्णोपमे'ति शेषः। यथा वा-'सुकुमारत्वमरुणता दशोर्वशीकारकारणत्वं च। भातीह मत्तकाशिनि पाणियुगे तामरसवत्॥' इत्यत्र सप्तम्यर्थे वतिरिति तद्धितगा श्रौतीयम्। "अस्यायतैर्नियमकारिभिरुद्धतानां दिव्यैः प्रभाभिरनपायमयैरुपायैः। शौरिर्भुजैरिव चतुर्भिरदः सदा यो लक्ष्मीविलासभवनैर्भुवनं बभार॥" इत्यत्र 'भुजै'रित्यस्येवेन समासात्समासगेयं श्रौती। 'इतीरितैर्नैषधसूनृतामृतैर्विदर्भजन्मा भृशमुल्ललास सा। ऋतोरधिश्रीः शिशिरानुजन्मनः पिकस्वरैर्दूरविकस्वरैर्यथा॥" इत्यत्र यथाशब्दस्यासमस्तत्वाद्वाक्यगेयम्। यथा वा-"पाण्डयोऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो नवचन्दनेन। आभाति बालातपरक्तसानुः स निर्झरोद्गार इवाद्रिराजः॥" "चण्डीजङ्घाकाण्डः शिरसा चरणस्पृशि प्रिये जयति। शङ्करपर्य्यन्तजितो विजयस्तम्भः स्मरस्येव॥" इत्यादाविवेन समासस्याविवक्षितत्वाद्वाक्यगेयम्।

"तस्या मनसा विषयीक्रियमाणायाः कान्तायाः। अधरः। सुधावत् सुधया तुल्यम्। 'तेन तुल्यं क्रिया चेद्वतिः।' ५। १। ११५ इति वतिः। मधुरः। तस्याः-पाणिर्हस्तः। पल्लवतुल्यः पल्लवो नवपत्रं तस्य तुल्यः समानः। अतिपेलवोऽत्यन्तं कोमलः।-'पेलवं विरलं मृदु।' इति गोपालः।तस्याः-लोचने नेत्रे।च। चकितमृगलोचनाभ्यां चकिते ये मृगलोचने ताभ्याम्। 'तुल्यार्थैरतुलोपमाभ्यस्तृतीयाऽन्यतरस्याम्।' २। ३। ७२ इति तृतीया। सदृशी समाने। अत एव-चपले। इदम्बोध्यम्-अत्र, सुधोपमानम्, तस्माच्च तृतीयान्तात्तुल्यार्थे वतिः प्रत्ययः। अधर उपमेयम्, माधुर्य्यं साधारणो धर्म्मः, वतिश्च तद्वाचकः, तस्य च-तद्धितीयत्वादियं तद्धितगाऽऽर्थी। 'सुधावत् (सुधया तुल्यम्) इत्यत्र तृतीयाऽर्थो निरूपितत्वं, तस्य च तुल्यतायामन्वयात् सुधानिरूपिततुल्यताऽऽश्रयाभिन्न इति, तन्निरूपिततुल्यता च माधुर्य्येणेति सुधानिरूपितमाधुर्य्यप्रयोज्यतुल्यतावदभिन्नोऽधर इति बोधः। अत्र हि तुल्यताप्रयोजकं माधुर्य्यं तदर्थानुसन्धानोत्तरमवगम्यत इत्यस्या आर्थत्वम्। एवम्-पल्लव उपमानम्, पाणिरुपमेयम्, अतिपेलवत्वं साधारणो धर्मः, तुल्यशब्दश्च पल्लवशब्देन समस्तस्तद्वाचक इति समासगेयमार्थी। तथा-चकितमृगलोचने उपमानम्, लोचने उपमेयम्, चापल्यं साधारणो धर्म्मः, सदृशीति च तद्वाचकम्, सदृशस्य चासमस्तत्वाद्वाक्यगेयम्। इति। आर्याछन्दः, लक्षणं चोक्तं प्राक्॥ ९०॥"

यथा वा-"उन्नतिमानतिकठिनः समुदितनक्षत्रमालोऽयम्। बाले पयोधरस्तव कनकाचलवद्दरीवर्त्ति॥" इत्यत्र तद्धितगार्थी। "अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः। सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर न कस्य॥" इत्यत्र सदृशपदस्य समस्तत्वात्समासगाऽर्थी। "जलदोदरादुदीता भामिनि! सौदामिनीलेखा। नीलनिचोलादाविर्भूता

अत्र क्रमेण त्रिविधाऽऽर्थी ।

**८१ पूर्णा षडेव तत् ।**

स्पष्टम् ।

**८२ लुप्ता सामान्यधर्म्मादेरेकस्य यदि वा द्वयोः ॥७०॥**
**त्रयाणां वाऽनुपादाने श्रौत्यार्थी साऽपि पूर्ववत् ॥**

सा लुप्ता । तद्भेदानाह-

**८३ पूर्णावद्धर्म्मलोपे सा विना श्रौतीं तु तद्धिते ॥७१॥**

सा लुप्तोपमा, धर्म्मस्य साधारणगुणक्रियारूपस्य लोपे पूर्णावदिति पूर्वोक्तरीत्या षट्प्रकारा, किन्तु-अत्र तद्धिते श्रौत्या असम्भवात् पञ्चप्रकारा ।

---

कान्तिश्च ते समा रम्या ॥" इत्यत्र वाक्यगेयम् । यथा वा-"चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारिकान्ति । सरसिजमिदमाननं च तस्याः सममिति चेतसि सम्मदं विधत्ते ॥" इति ।

एवमुदाहृत्य बोधसौकर्य्यायाह-अत्रोदाहृते पद्ये । क्रमेण सूत्रनिर्दिष्टानुपूर्व्या । त्रिविधा तद्धितसमासवाक्यगात्वभेदात् त्रिप्रकारा । आर्थी । "पूर्णोपमा" इति शेषः । अत्राहुर्विवृतिकाराः-'नन्वम्भोरुहस्येव मुखस्य सौरभमित्यादौ साधारणधर्म्मस्योपमानसम्बन्धित्वबोधे षष्ठ्यर्थानुसन्धानस्यापेक्षणीयतया कथं श्रौतीत्वमिति चेत् ! न, नामार्थनिपातयोरन्वयबोधे विभक्त्यर्थानुसन्धानस्यातन्त्रतया तत्र षष्ठ्या विशेषणविभक्तेरिव प्रयोगसाधुत्वमात्रार्थकत्वात्; अन्यथा-'चन्द्रादिव मुखात्तस्य निरक्षति कथाऽमृतम् ।' इत्यादौ सम्बन्धबोधकविभक्त्यभावादुपमानसम्बन्धबोधो न स्यात् ।' इति ।

बोधसौकर्य्यायोक्तमर्थं स्मारयति-८१ **तत्** तस्मात् । **पूर्णा** पूर्णोपमेत्यर्थः । **षट्** षड्विधा । **एव** ।···**स्पष्टम्** ।

एवं पूर्णायां लक्षितायामपूर्णाया अपि लक्षयितव्यत्वे आह-८२ **लुप्ते**त्यादि ।

८२**लुप्ता**ऽपूर्णा । 'उपमे' ति प्रक्रमादनुपज्यते । **सामान्यधर्म्मादेः** । आदिना-वाचकोपमानोपमेयानां ग्रहणम् । निर्धारणार्थेयं षष्ठी । **एकस्य** साधारणस्य तद्वाचकस्योपमानस्योपमेयस्य वेत्यर्थः । **द्वयोः** साधारणधर्म्मतद्वाचकयोः साधारणधर्मोपमानयोः साधारणधर्मवाचकोपमेययोः । **वा** । **यदि** । **त्रयाणां** साधारणधर्म्मतद्वाचकोपमानानाम् । **अनुपादाने** साक्षादनभिधाने । 'भवति' इति शेषः । तथा च-अष्टविधेयं लुप्तोपमा, तत्र-एकस्य लोपे चतुर्धा, साधारणधर्म्मस्योपमानस्यौपम्यवाचकस्योपमेयस्य लोपात् । द्वयोर्लोपे त्रिधा, साधारणधर्म्मोपमानयोः साधारणधर्मतद्वाचिनोर्धर्म्मोपमेययोश्च लोपात् त्रयाणां लोपे पुनरेकधा, साधारणधर्म्मतद्वाचकोपमानानां लोपात् । साधारणधर्मतद्वाचकोपमेयानां लोपे तु नेयम् , असम्भवात् । अस्याश्च पूर्णावत् श्रौत्यार्थीति भेदद्वयमाह-**श्रौ**तीत्यादिना । **सा**ऽष्टविधा लुप्तोपमेत्यर्थः । **अपि** । **पूर्ववत्** पूर्णोपमावत् । **श्रौती** । **आर्थी** । 'चे' ति शेषः । एवं चास्याः षोडशविधात्वं स्फुटम् ॥ ७० ॥

सूत्रस्थं तत्पदं व्याचष्टे-**से**त्यादिना । स्पष्टम् ।

अथैवं षोडशभेदभिन्नाया अप्यस्याः प्रकारान्तरेण भेदानाह-**तद्भेदां**स्तस्या निरुक्तदिशा षोडशविधाया लुप्तोपमाया भेदास्तान् । **आह**-८३ **सा** लुप्तोपमा । **पूर्णावत्** पूर्णा यथा श्रौत्यार्थी चेति भिद्यमाना तद्धितसमासवाक्यगत्वभेदैस्त्रिधा भिन्ना षड्विधा तथेति भावः । **धर्म्मलोपे** साधारणधर्मस्य साक्षादनभिधाने सति । **तद्धिते** । **तु** । **श्रौतीम्** । **विना** वर्जयित्वा । 'सम्भवती'ति शेषः । अतश्चास्याः पञ्चविधात्वं स्पष्टमिति भावः ॥ ७१ ॥

तदेव विवृणोति-**सा** । **लुप्तोपमा** । **साधारणगुणक्रियारूपस्य** । साधारणो गुणो मनोज्ञत्वादिः, क्रिया पुनर्भातीत्यादिरुपचारात्तदनुकूलव्यापृतत्वम्, तदात्मकस्येति भावः । **धर्म्मस्य** । **लोपे** । **पूर्णावत्** पूर्णोपमेव भिद्यते इत्यर्थः । **इति** । **पूर्वोक्तरीत्या** प्रागुक्तेन नयेन । **षट्प्रकारा** । **किन्तु** । अत्रानयोः श्रौत्यार्थ्योः । **श्रौत्याः** । **तद्धिते** । **असम्भवात्** । **पञ्चप्रकारा** । अयम्भावः-अस्याः साधारणधर्म्मलोपे पूर्णावदभिधानात् षड्विधात्वं वक्तुं सङ्गतं, किन्तु-

उदाहरणम्-

**'मुखमिन्दुर्यथा पाणिः पल्लवेन समः प्रिये। वाचः सुधा इवोष्ठस्ते बिम्बतुल्यो, मनोऽश्मवत् ॥९१॥'**

---

श्रौत्यास्तद्धितेऽसम्भवात् पञ्चविधात्वमेवावस्थितम् । तथा च-लुप्तोपमेयं धर्म्मलोपे श्रौती समासगता वाक्यगता चेति द्विधा, आर्थी पुनः तद्धितसमासवाक्यगतत्वेन त्रिधेति पञ्चविधेति निष्कृष्टोऽर्थः ॥७१॥

विस्तरभयादाह-**उदाहरणम्**। 'यथे'ति शेषः। '**हे प्रिये ! यथा**। **इन्दुः** 'तथे'ति शेषः। **ते** तव। **मुखम्**। एवं परस्तादपि। 'भाती'ति शेषः। **पल्लवेन** किसलयेन नवपत्रेणेति यावत्। **समः** सदृशः। तव-**पाणिः**। 'पाणी पल्लवाभ्यां समौ' इति पाठः साधीयान्। 'कोमलौ' इति शेषः। **सुधा इव**। तव-**वाचः**। 'मधुरा' इति शेषः। **बिम्ब-तुल्यो** विम्बफलसदृशः। तव-**ओष्ठोऽधरः**। 'रक्त'इति शेषः। **अश्मवद**श्मना पाषाणेन तुल्यम्। तव-**मनः**'कठिन'मिति शेषः। इदम्बोध्यम्-'मुखमिन्दुर्यथे' त्यत्र मुखमुपमेयम्, इन्दुरुपमानम्, यथा धर्म्मवाचकम्, उपमानोपमेययोश्चाह्लादकत्वाद्यनुगतं मानस्य च साधारणधर्मस्यानुपादानम्, तस्मात् धर्म्मलोपः, यथापदस्य चासमस्तत्वाद्वाक्यगतात्वमस्याः। 'पाणिः पल्लवेन समः' इत्यत्र पाणिरुपमेयम्, पल्लव उपमानम्, समश्च धर्मवाचकः, कोमलत्वरूपस्य धर्म्मस्य चानुपादानात् समपदेन च समासाभावाद्वाक्यगता धर्मलुप्ताऽऽर्थी। 'वाचः सुधा इवे' त्यत्र वागुपमेयम्, सुधोपमानम्, इव च धर्म्मवाचकम्,तस्य च पूर्वपदेन समस्तत्वात् माधुर्यधर्म्मस्य चानुपादानात्समासगा धर्मलुप्ता श्रौती। 'ओष्ठस्ते विम्बतुल्यः' इत्यत्रौष्ठ उपमेयम्, बिम्बमुपमानम्, तुल्यपदं च तेन समस्यमानं धर्म्मवाचकम्, रक्तिमरूपस्य धर्म्मस्य चानुपादानमिति समासगता धर्म्मलुप्ताऽऽर्थी। 'मनोऽश्मव'दित्यत्र 'मन उपमेयम्, अश्मोपमानम्, तुल्यार्थो वतिश्च धर्म्मवाचकः, तस्य च तद्धितीयत्वात् तद्धितगा धर्म्मस्य च काठिन्यस्यानुपादानात् धर्म्मलुप्ताऽऽर्थी। इति। श्लोकश्छन्दः ॥ ९१ ॥"

यथा वा-"धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः। करणीयं वचश्चेतःसत्यं तस्यामृतं यथा" इत्यत्र वाक्यगा श्रौती धर्म्मलुप्ता, "आकृष्टकरवालोऽसौ साम्पराये परिभ्रमन्। प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः ॥" इत्यत्र वाक्यगा धर्म्मलुप्ताऽऽर्थी। "लद्धा[1] सादेणचिरं सुरवंदिपरिग्गहे णिसाअरवइणा।सीआ रक्खसवसइं दिट्ठिविसघरं विसोसहि व्व उपणीआ॥" इत्यत्र समासगा धर्म्मलुप्ता श्रौती।"अग्घाइ[2] छिवइ चुंबइ ठवेइ हिअअंमि जणिअरोमंचो। जाआकवोल-सारिसाइ पहिउ महुअउप्फाइं॥" इत्यत्र समासगा धर्म्मलुप्ताऽऽर्थी। "मुखममृतद्युतिकल्पं कपोलदेशो मुकुरदेश्यः। तस्या दृशां विलासाः कुवलयदलदामदेशीयाः ॥" इत्यत्र तद्धितगा धर्म्मलुप्तार्थी। अत्र कौस्तुभकाराः-"ननु तद्धिते धर्म्मलुप्ता श्रौती कुतो नोच्यते इति चेत्, न। 'तत्र तस्येव'। ५। १। ११६ इति सूत्रेण विहितस्य वतेः प्रयोगे हि श्रौती सम्भवति न च धर्म्मलोपः सम्भवति,उपमेये उपमानसम्बन्धबोधकस्य तस्य साधारणधर्म्मप्रयोगं विनाऽनुपपत्तेः। न हि 'मधुरायामिव स्रुघ्ने प्राकारं' इति सम्भवति, सप्तम्यर्थाद्यनन्वयापत्तेः। किन्तु मधुरावत् स्रुघ्ने इत्येव। तस्मात् षष्ठ्यर्थसम्बन्धविशेषणस्य सप्तम्यर्थाधारत्वविशेषणस्य साधारणधर्म्मरूपस्य प्रयोगं विना इवार्थवतेरसम्भवान्न तद्धिते श्रौती धर्म्मलुप्ता। ननु मा भूदिवार्थकवतियोगे धर्म्मलुप्ता श्रौती, तथाऽपि-इवार्थकतद्धितान्तरे सा दुर्वारा। तथा हि-'इवे प्रतिकृतौ ॥' ५।३।९६। इत्यधिकारे'कुशाग्राच्छः।' ५। ३। १०५ इति सूत्रेण'कुशाग्रमिवेति कुशाग्रीया बुद्धिरित्यत्र छप्रत्ययविधानेन एतादृश स्थले तत्सम्भवात् इति चेत्! अत्राहुः-'इवे प्रतिकृतौ'। ५। ३। ९६ इत्यधिकारे विहिताः प्रत्ययास्तुल्यार्था एव। 'कुशाग्रतुल्या बुद्धि'रित्यभेदान्वयदर्शनात् तस्य सादृश्यमात्रार्थत्वे तद्वत् परत्वाभावेन उपमेयसामानाधिकरण्यासम्भवात्। न च इवार्थे तद्विधानेन तदविरोधादिति। अथ सादृश्यादिपदप्रयोगे श्रौत्यार्थी वा यथा-"परस्पराक्षिसादृश्यमदूरोज्झितवर्त्मसु। मृगद्वन्द्वेषु पश्यन्तौ स्यन्दनाबद्धदृष्टिषु ॥" इत्यादाविति चेत्! अत्र दीक्षिताः। "श्रौत्येवेयम्, ष्यञ्प्रत्ययप्रकृतिभूतेन सदृशशब्देन सादृश्यवदभिधानेऽपि भावप्रत्ययस्य प्रकृत्यर्थताऽवच्छेदकशक्ततया तदुक्तसादृश्यस्यैव वाक्यार्थां-

---

१ "लब्ध्वा स्वादेन चिरं सुरबन्दीपरिग्रहे निशाचरपतिना। सीता राक्षसवसतिं दृष्टिविषग्रहं विषौषधीवोपनीता॥" इति संस्कृतम् २ 'आजिघ्रति स्पृशति चुम्बति स्थापयति हृदये जनितरोमाञ्चः। जायाकपोलसदृशानि पथिको मधूक पुष्पाणि ॥' इति संस्कृतम्।

**८४ आधारकर्म्मविहिते द्विविधे च क्यचि क्यङि ।**
**कर्म्मकर्त्रोर्णमुलि च स्यादेवं पञ्चधा पुनः ॥ ७२ ॥**

---

न्वयित्वादि''त्याहुः । न्यायपञ्चाननादयस्तु—'यत्पदार्थविशेषणस्योपमानत्वनियमस्तत्रैव श्रौती, इवादिविशेषणीभूतस्य चन्द्रादेरुपमानत्वनियमात् । सादृश्यादिपदविशेषणस्य च नोपमानत्वनियमः । 'चन्द्रसादृश्य'मित्यादौ तथात्वेऽपि'चन्द्र-मुखयोःसादृश्य'मित्यादौ व्यभिचारात्' । इत्याहुः । तस्मात्–धर्म्मलुप्तायाः पञ्च भेदाः स्थिताः। अत्र दीक्षिताः द्विर्भावेऽपि धर्म्मलुप्ता दृश्यते । यथा–पटुपटुरिति । 'प्रकारे गुणवचनस्य ।' ८ । १ । १२ इति सूत्रेण सादृश्ये द्विर्भावविधानात् पटुसदृश इत्यर्थः । वस्तुतोऽपटावयं प्रयोगः, न चेयं वाक्यगा, 'कर्म्मधारयवद्वुत्तरेषु ।' ८ । १ । ८१ इति सूत्रेण तत्रैक-पद्यविधानात्, नापि समासगा, वास्तवसमासत्वाभावात् । इति, तन्न; आतिदेशिकसमाससाधारण्येनैवात्रोपमाविभाग-करणेनातिदेशिककर्म्मधारयवद्भावेऽपि समासगायामेव तदन्तर्भावसत्त्वात् । अत एव–'पटुपटु'रित्यादौ समासत्वप्रयुक्ताः, पुंवद्भावान्तोदात्तत्वादयोऽपि सिद्ध्यन्ति । केचित्तु ( रसगङ्गाधरकारादयस्तु ) 'वाचकधर्म्मलुप्तायामेतद्भेदस्याधिक्यम्, न तु केवलधर्म्मलुप्तायाम्, न चात्र द्विर्भावस्य सादृश्यवाचकस्य सत्त्वान्न वाचकलोप इति वाच्यम्, सादृश्ये द्योत्ये द्विर्भवत-इति दर्शनात्, द्विर्भावस्य वाचकताया भाष्यकैयटविरुद्धत्वात्' इत्याहुः। तन्न। द्योतकत्वेऽप्युभयलुप्तत्वासम्भवात् । अन्यथा-इवादीनां द्योतकत्वपक्षे चन्द्र इवेत्यादावपि लुप्तोपमानत्वप्रसङ्गात् । पदान्तरेण तादृशार्थबोधे सहकारित्वरूपस्य द्योतकस्य सत्त्वे तद्वाचकत्वस्य पदान्तरे स्वीकारस्यावश्यकत्वाच्च । यदीयमेकलुप्ता, यदि वा द्विलुप्ता, उभयथाऽपि समासमध्येऽन्त-र्भावान्न दोषः । इति तत्त्वम् ।'' इति । रसगङ्गाधरकारा एवमाहुः–''यच्चाप्यदीक्षितैरस्मिन्नेव प्रस्तावे ''धर्म्मलुप्ता वाक्य-समासतद्धितेषु दर्शिता, द्विर्भावेऽपि दृश्यते । 'पटुपटुर्देवदत्त' इत्यत्र'प्रकारे गुणवचनस्य ।'८।१।१२ इति सादृश्ये द्विर्भाव-विधानात् ।'' इति निगदितं तत्तुच्छम्, अत्र च वाचकस्याप्यनुपादानाद्वाचकधर्म्मलुप्तायामेतदाधिक्यमुद्भावयितुमुचितम्, नतु धर्म्मलुप्तायाम्, धर्म्ममात्रलुप्ताया एव धर्म्मलुप्ताशब्देन तैर्विवक्षणात् । अन्यथा–एकलुप्तास्वेव द्विलुप्तानां त्रिलुप्तायाश्च ग्रहणात्पृथगुपादानमसम्बद्धमेव स्यात् । न चात्र वाचकस्य द्विर्भावस्यैव सत्त्वान्नास्ति लोपः, अपि तु धर्म्ममात्रस्येति वक्तुं शक्यम्, द्विर्भावस्य सादृश्यद्योतकत्वोक्तेर्भाष्यकैयटादिविरुद्धत्वात् । तदुक्तं कैयटेन–'प्रकारे गुणवचनस्य ।' ८ । १ । १२ इति सूत्रे सिद्धं त्विति प्रतीकमादाय 'द्विर्वचनस्य प्रकृतिः स्थानी इति तदर्थो विशिष्यते, न तु प्रकारः, तत्र सर्वस्य गुणवचन-त्वाद्व्यभिचाराभावात् । तद्ग्रहणाद्गुणवचनो यः शब्दो निर्ज्ञातस्तस्य सादृश्यद्योत्ये द्वे भवत इति सूत्रार्थः ।' इति सूत्रार्थः । इति ।''

अत्र च नागेशभट्टा रसगङ्गाधरस्यैव मर्म्मप्रकाशाख्यायां व्याख्यायाम्,''सूत्रार्थ''इति प्रतीकमुपादायाहुः–''द्विर्भावस्य सादृश्यद्योतकत्वेऽपि शक्तत्वरूपवाचकत्वाभावाद्वाचकलोप इति तव हृदयम् । तत्तु–इवादेर्द्योतकतानये 'चन्द्र इव मुख'मि-त्यत्र'चन्द्रसुहृन्मुख'मित्यत्र च वाचकलुप्ताव्यवहाराभावाय सादृश्यतद्विशिष्टान्यतरबोधकाभावस्यैव वाचकलुप्ताव्यवहारप्रयोज-कत्वस्य वाच्यत्वेन द्योतकस्यापि बोधकत्वानपायेन नास्ति वाचकलोप इति तदाशयात् (अथ दीक्षिताभिप्रायात्) अबोधमू-लकमिति चिन्त्यमिदम् ।'' इति ।

पुनरन्यान् धर्म्मलुप्तायाः पञ्च भेदान्निर्दिशति–**८४आधारकर्म्मविहिते** आधारोऽधिकरणं स च कर्म्म च ताभ्यां विहितस्तस्मिन् अधिकरणात् कर्म्मणश्च परस्तात् विहिते इत्यर्थः । अत एव–**द्विविधे । च । क्यचि** क्यच्प्रत्यये । अस्यैव 'ईय' इति सञ्ज्ञान्तरम् । तथा च–अधिकरणे क्यच् ( ईय ) प्रत्यये, कर्म्मक्यच् ( ईय ) प्रत्यये च सतीति निष्कृष्टोऽर्थः । **क्यङि** 'कर्त्तुर्विहिते' इति शेषः । अस्यैव 'आयी' ति सञ्ज्ञाऽन्तरम् । तथा च–कर्त्तुर्विहिते क्यङि ( आयि ) प्रत्यये सतीत्यर्थः । **कर्मकर्त्रोः** कर्म्म च कर्त्ता च तयोः, कर्म्मणि कर्त्तरि चेत्यर्थः । 'उपपदयोर्विहिते' इति शेषः । **च । णमुलि** । तथा च–कर्म्मकर्त्रोरुपपदयोः सतोर्विहिते णमुलि प्रत्यये चेत्यर्थः । **एवम्** इत्येवम् । **पुनः** । 'धर्म्मलुप्ता' इति पूर्वतोऽनुषज्यते । **पञ्चधा** पञ्चविधा । **स्यात्** ॥ ७२ ॥

'धर्म्मलोपे लुप्ते'ति अनुषज्यते। क्यच्-क्यङ्-णमुलः कलापमते णिण्णायिणमः।

क्रमेणोदाहरणम्-

"अन्तःपुरीयसि रणेषु, सुतीयसि त्वं पौरं जनं, तव सदा रमणीयते श्रीः।
दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्द्रसञ्चारमत्र भुवि सञ्चरसि क्षितीश॥"

इत्यत्र 'अन्तःपुरीयसी' त्यत्र सुखविहारास्पदत्वस्य, 'सुतीयसी' त्यत्र स्नेहनिर्भरत्वस्य च साधारणधर्मस्य लोपः। एवमन्यत्र।

---

बोधसौकर्य्यार्थं-किञ्चिदाह-'धर्म्मलोपे। लुप्ता धर्म्मलुप्तोपमेति भावः' इति 'पूर्वत' इति शेषः। अनुषज्यते। क्यचादीनां कलापमतानुसारेण सञ्ज्ञान्तरमाह-क्यच्-क्यङ्-णमुलः। 'एवे' ति शेषः। कलापमते कलापव्याकरण-सिद्धान्ते। णिण्णायिणमः णिण्-णायि-णमः। 'इत्युच्यन्ते' इति शेषः।

उदाहर्त्तुमाह-क्रमेण। उदाहरणम्। 'यथे' ति शेषः। 'हे क्षितीश क्षितेः पृथिव्या ईशस्तत्सम्बुद्धौ तथोक्त! पृथ्वीपते इति यावत्। त्वम्। रणेषु समरेषु प्रतिद्वन्द्वितयोपस्थितेषु वीरजनेष्विति यावत्। अन्तःपुरीयसि अन्तःपुरेऽवलागृहेऽवलाजने इति यावत् इवाचरसीति भावः। 'उपमानादाचारे' ३।१।१० इति सूत्रस्थेन 'अधिकरणाच्चेति वक्तव्यम् *' इति वार्त्तिकेनोपमानवाचका'दन्तःपुरे' इत्यधिकरणादाचारेऽर्थे क्यच्। तुल्यत्वमाचारश्च क्यच्प्रत्ययार्थः। आचारश्चात्राधिकरणत्वान्वययोग्यक्रिया। सा च-प्रकृते सञ्चाररूपा ग्राह्या। व्युत्पत्तिवैशिष्ट्येन तुल्यतायाः प्रकृत्यर्थे आचारस्याख्यातार्थोऽन्वयः। तथा च-अन्तःपुरतुल्येषु रणेषु (अवलासदृशेषु वीरजनेषु मध्ये) सञ्चारकर्त्तेत्यन्वयावगमः। पौरं पुरे प्रकृतिमण्डले भव इति तम्। 'तत्र भवः।' ४।३।५३ इत्यण्। जनम्। सुतीयसि सुतमिवाचरसीति भावः। 'उपमानादाचारे।' ३।१।१० इति सूत्रेणोप-मानवाचकात् 'सुत' मिति कर्म्मपदादाचारेऽर्थे क्यच्। अत्र चाचारो मननम्, तथा च-प्रकृतिमण्डलं सुततुल्यं मन्यसे इति भावः। श्रीः सम्पद्राज्यलक्ष्मीरिति यावत्। सदा। तव। रमणीयते रमणीवाचरतीत्यर्थः। 'कर्त्तुः क्यङ् सलोपश्च।'।३।१।११ इति सूत्रेणोपमानवाचकात् 'रमणी'ति पदादाचारेऽर्थे क्यङ्। क्यङो ङित्त्वादात्मनेपदम्। अत्राचारो वर्त्तनम्। तथा च-रमणीतुल्या श्रीर्वर्त्तत इति भावः। प्रियाभिः। अमृतद्युतिदर्शममृतद्युतिरिवेत्यर्थः। दृष्टः। 'उपमाने कर्म्मणि च।' ३।४।४५ इति सूत्रेणोपमानवाचके 'अमृतद्युति'मितिकर्मपदे उपपदे 'दृश्' धातोर्भावे णमुल्। 'कृन्मेजन्तः।' १।१।३९ इति सूत्रेणाव्ययसञ्ज्ञा। 'कषादिषु यथाविध्यनुप्रयोगः।' ३।४।४९ इति सूत्रेण-'कषादिषु मध्ये यस्माद्धातोर्णमुल् विहितस्स एव धातुरनुप्रयोक्तव्य' इति 'दृष्ट' इति 'दृश्' धातोरेवानुप्रयोगः। अत्र मनोज्ञत्वादिरूपः साधारणो धर्म्मः। दर्शनं चानुभवनम्। तथा च-अमृतद्युतितुल्यो मनोहरोऽनुभूत इति भावः। अत्रास्याम्। भुवि पृथ्व्याम्। इन्द्रसञ्चारम् इन्द्रः स्वर्गाधिष्ठाता स इवेत्यर्थः। सञ्चरसि। अत्रापि 'उपमाने कर्म्मणि च।' ३।४।४५ इति सूत्रेण चकारानुवर्त्तिते उपमानवाचके 'इन्द्र' इति कर्त्तृपदे उपपदे सम्पूर्वकाच्चरतेर्भावे णमुल्। स च 'तुमर्थे सेसेनसेअसेन्क्सेकसेन....।' ३।४।९ इत्यादिसूत्रमहाभाष्यगतेन 'अव्ययकृतो भावे भवन्ति' इति वाक्येन भावे एव। सञ्चरणं चाप्रतिहतैश्वर्य्यतया वर्त्तनम्। तथा च-इन्द्रतुल्योऽप्रतिहतैश्वर्य्यो भूलोके सञ्चरसीति भावः। वसन्ततिलकं वृत्तम्। अत्र विवृतिकाराः-"केचित्तु-'क्यच्क्यङोरर्थे आचारः, तस्यात्र विद्यमानत्वात् धर्म्मलोपोदाहरणमेतन्न भवति।' इत्याहुः, तन्न; आचारस्य साधनत्वेऽपि प्रकृते सादृश्यहेतुत्वेन विवक्षणात्, उपदर्शितधर्म्माणां सादृश्यहेतुत्वेन झटिति प्रतीयमानत्वात् 'चन्द्रायते शुक्ररुचाऽपि हंस' इत्यादौ सत्यपि आचारे 'शुक्ररुचे' ति साधारणधर्म्मप्रयोग-दर्शनाच्चाचारस्याख्यातार्थान्वितत्वेन निराकाङ्क्षतया क्यच्क्यङोरर्थे सादृश्येऽभेदान्वयसम्भवेन सादृश्यहेतुत्वायो-गाच्च।" इति ॥ ९३ ॥"

ननु कस्मिन्नंशे को लुप्तो धर्म इत्याशङ्कयाह-इत्यत्र। 'अन्तः पुरीयसि' इत्यत्र 'अंशे' इति शेषः। सुख-विहारास्पदत्वस्य 'साधारणधर्मस्य लोप' इति परेणान्वयः। 'सुतीयसि' इत्यत्र। च। स्नेहनिर्भरत्वस्य। साधारणधर्मस्य। लोपः। एवम्। अन्यत्र 'रमणीयते' इत्यत्र अत्यन्ताधीनत्वस्य, उपभोगसाधनत्वस्य वा 'अमृतद्युतिदर्शे' मित्यत्र मनोज्ञत्वादिरूपस्य, 'इन्द्रसञ्चार' मित्यत्र विभवातिशयत्वस्य च साधारणधर्मस्य लोप ऊह्यः इति भावः।

**इह च यथाऽऽदितुल्यादिविरहात् श्रौत्यादिविशेषचिन्ता नास्ति । इदं च-केचित्, औपम्यप्रतिपादकस्येवादेर्लोपमुदाहरन्ति । तदयुक्तम् । क्यच्क्यङादेरपि तदर्थविहितत्वेन औपम्यप्रतिपादकत्वात् । ननु क्यङादिषु सम्यगौपम्यप्रतीतिर्नास्ति, प्रत्ययत्वेन अस्वतन्त्रत्वाद, इवादिप्रयोगाभावाच्च; इति वाच्यम्, कल्पबादावपि तथाप्रसङ्गात् । न च कल्पबादीनामिवादितुल्यतया औपम्यस्य वाचकत्वम्, क्यजादीनां तु द्योतकत्वम् । इवादीनामपि वाचकत्वे निश्चयाभावात्, वाच-**

---

यथा वा क्रमेण—"भूधरीयति पयोधरद्वये चन्द्रमस्यति मुखे तवाद्य दृक् । विद्रुमीयति रदच्छदान्तरे दर्पणीयति कपोलमण्डले ॥", "घर्मागमापगमकालसमुत्सुकानां ढङ्मण्डली सपदि दण्डकवह्नियूनाम् । कादम्बिनीयति तनू रघुनन्दनस्य सौदामिनीयति मुदा जनकेन्द्रजाताम् ॥", "चन्द्रश्चण्डकरायते, मृदुगतिर्वातोऽपि वज्रायते, माल्यं सूचिकुलायते, मलयजालेपः स्फुलिङ्गायते । आलोकं स्तिमितायते, विधिवशात् प्राणोऽपि भारायते, हा हन्त प्रमदावियोगसमयः संहारकालायते ॥', "सांवर्त्तिकतीक्ष्णद्युतिदर्शं पदयति सुधाकरं बाला । विरहेण निधिविधायं निदधाति स्तनगतं नखाङ्कं ते ॥" "त्वद्विप्रयोगदहनज्वरदह्यमाने ये ये गुणा हृदि वसन्ति पुरो मृगाक्ष्याः । ते वह्निमध्यविलसद्बिसतन्तुनाशं नष्टत्रपाभृतिविवेकमुखाः समस्ताः ॥" इत्यादि ।

ननु लुप्तायाः श्रौत्यार्थीत्वात् अत्र का श्रौती का वाऽऽर्थीत्याशङ्क्याह—**इह** 'अन्तःपुरीयती'त्यादौ । **च** । **यथाऽऽदितुल्यादिविरहात्** । **श्रौत्यादिविशेषचिन्ता** श्रौतीयमार्थीयमिति विभज्य प्रदर्शनविचारः । **न** । **अस्ति** 'अनतिप्रयोजनीयत्वात् ।' इति शेषः । 'वस्तुतस्तु—यथा तुल्यार्थविहितस्य वतेर्योगे आर्थीत्वम्, तथाऽत्रापि तुल्यार्थविहितक्यच्क्यङोर्योगे आर्थीत्वम् ।' इति च विवृतिकाराः । ननु 'वादेर्लोपे समासे सा कर्म्माधारक्यचि क्यङि । कर्म्मकर्त्रोर्णमुलि' इत्युक्तदिशाऽत्र वाचकलुप्तैव गदितुं योग्या, कथं पुनस्त्वया धर्म्मलुप्ता गदितेत्याशङ्कयोत्तरयितुमाह—**इदं च**त्यादि ।

**केचित्** काव्यप्रकाशकारादय इति भावः । **इदम्** 'अन्तःपुरीयती'त्युदाहरणम् । **च** । **औपम्यप्रतिपादकस्य** । **इवादेः** । **लोपम्** । **उदाहरन्ति**आहुः । **तद्** । **अयुक्तं** युक्तिसङ्गतम् । कुत इत्याशङ्क्याह-**क्यच्क्यङादेः** । आदिपदेन णमुलो ग्रहणम् । **अपि** । **तदर्थविहितत्वेन** तुल्यार्थे विधानात् । **औपम्यप्रतिपादकत्वात्** प्रतिपादनात् । अयम्भावः—'अन्तःपुरीयसी'त्यत्र यथा धर्म्मलुप्तोदाहृता, तथैव एतस्यैव च्छायाभूते "पौरं सुतीयति जनं, समरान्तरेऽसावन्तः पुरीयति विचित्रचरित्रचञ्चुः । नारीयते समरसीम्नि कृपाणपाणेरालोक्य तस्य चरितानि सपत्नसेना ॥" इत्यादौ वाचकोपमा काव्यप्रकाशकारैरुदाहृता, तदुदाहरणं च न युक्तम्, यथा आर्थ्यां पूर्णोपमायां समादियोगे न वाचकलुप्तात्वम्, तथैव-अत्रापि तदर्थे वस्तुतः तत्स्थाने विहितस्य क्यजादेर्योगात् । ननु क्यजादौ साधर्म्यवाचकानामिवादीनां प्रयोग इव साधर्म्यप्रत्यायकत्वासम्भवाद्वाचकलुप्तात्वमेव कुतो नेत्याशङ्कामुन्मूलयति—**ननु** । **क्यङादिषु** 'प्रत्ययेषु सत्सु' इति शेषः । **सम्यक्** । **औपम्यप्रतीतिः** साधर्म्यस्य प्रत्ययः । **प्रत्ययत्वेन** 'क्यजादे'रिति शेषः । **अस्वतन्त्रत्वात्** 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति नयेन स्वातन्त्र्येणार्थबोधकत्वविरहादिति भावः । **इवादिप्रयोगाभावात्** । **च** । **न** । **अस्ति** । अतः औपम्यप्रतिपादकलोप एवात्रानुमेय' इति शेषः ।" **इति** । **न वाच्यम्** । अयम्भावः—यत्र यत्रेवादिः तत्र तत्र साधर्म्यस्य सम्यक्प्रत्ययः, यत्र नैवं तत्र नैवम् । यथा-क्यजादीनां योगे । तस्मात्—अत्रौपम्यप्रतिपादकाभावस्य स्फुटत्वाद्वाचकलुप्तात्वमेव वक्तुमुचितम्, इति; कुत इत्याशङ्क्याह—**कल्पबादौ** । आदिना-देश्यादीनां ग्रहणम् । **अपि** 'ननु केवलं क्यजादौ प्रयुक्ते' इति शेषः । **तथाप्रसङ्गात्** सम्यगौपम्यप्रतीत्यभावापत्तेः । इदमभिहितम्-'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ।' ५।३।६७ इति सूत्रेण विहितस्य कल्पप्प्रत्ययस्य 'विषकल्पं मन' इत्यादिसामानाधिकरण्येन निर्देशाकिंचदपरिसमाप्तिविशिष्टोधर्म्यर्थः । किञ्चिदपरिसमाप्तिश्च यत्किञ्चिन्न्यूनसमस्तधर्म्मसम्बन्धरूपोपमैव । तथा च—'इवादेर्लोप' इति न पार्य्यते, तत्र धर्म्मलोप एव गदितुं क्षमत्वात् । इति । ननु—'कमलमिवास्य वदन' मित्यादौ 'उपमालक्षणसङ्गत्यनुरोधेन इवादेरुपमावाचकत्वं स्वीकार्य्यमित्यभिप्रेत्याह—इवादीनाम् । 'वाचकत्वेन स्वीक्रियमाणानाम् । **अपि** 'किं पुनरन्येषां निपातानां'मिति शेषः । **वाचकत्वे** । **निश्चयाभावात्** सिद्धान्तानैक्यात् । इदं तत्त्वम्—सर्वेषामेव निपातानां द्योतकत्वम्, तच्च तात्पर्य्यग्राहकत्वम् । 'ईश्वरमनुभवती' त्यादौ अनुभवादिः प्रतीयमानो न धात्वर्थः, 'भवती' त्यत्राप्यापत्तेः, नोपसर्गार्थः,

कत्वे वा 'समुदितं पदं वाचकम्' 'प्रकृतिप्रत्ययौ स्वस्वार्थबोधकौ' इति मतद्वयेऽपि वत्यादिक्यजाद्योः साम्यमेव। इति।

यच्च-केचिदाहुः, 'वत्यादय इवाद्यर्थेऽनुशिष्यन्ते' क्यङादयस्त्वाचाराद्यर्थे।' इति, तदपि

---

तथा सति अप्रकृत्यर्थतया तत्राख्यातार्थानन्वयापत्तेः, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमात्, 'अनुगच्छती' त्यादौ अनुभवादिप्रत्ययापत्तेश्च, न विशिष्टार्थौ गौरवात्। तथा च-धातोरेव विद्यमानत्वादिवाचकस्यास्तु लक्षणा। ननु उपसर्गास्तात्पर्य्यग्राहका इत्येषामस्तु द्योतकत्वम्, इति चेत्! एतत् इवादिष्वपि, 'चैत्रमिव मैत्रं पश्यती'त्यादौ सादृश्यविशिष्टं चैत्रपदलक्ष्यम् इवशब्दश्च तात्पर्य्यग्राहक इति, 'उपास्यते गुरुः' इत्यादौ चोपासना किमुपसर्गार्थो विशिष्टस्य वा धातुमात्रस्य। नाद्यः, तथा सति-स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्म्मकत्वस्यासधातोरुपासनारूपफलवाचकत्वाभावादनापत्तेः, ततः कर्म्मणि लकारो न स्यात्। एवम्-'साक्षात् क्रियते दयिता', 'अलङ्क्रियते देवः', 'उरीक्रियते सिद्धान्त' इत्यादौ अपि धातोस्तदर्थे कर्मणि लकारसिद्धये तत्तदर्थवाचकत्वं वाच्यम्, इत्युपसर्गवदेव द्योतकत्वममीषाम्। यद्यपि कृधातोः सकर्म्मकत्वमेवास्ति अथापि एष्वर्थेषु सकर्म्मकता न भवेत्। अन्यथा-'वायुर्विकुरुते' इत्यादौ आत्मनेपदोपपत्तिर्नस्यात्, 'अकर्म्मकाच्च।' १।३।४५ इत्यनेनाकर्म्मकत्व एवात्मनेपदविधानात्। तथा-'शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव।' इत्यादौ उस्रादिपदस्योस्रादिसदृशपरत्वेनोस्रादिसदृशैरुस्रादेरुद्धरणक्रियां प्रति कारणत्वाभावात्। इवार्थसादृश्यान्वयित्वेन करणीभूतशरविशेषणत्वविरहाच्च। इति। इवादीनामपि द्योतकत्वमेवेति वैयाकरणानां सिद्धान्तः, विस्तरस्तु तत्तदाकरग्रन्थेषु स्वयमूह्यः।एवं वाचकत्वस्यानिश्चितत्वेनोक्तमर्थं दूषयित्वा तथास्वीकारेऽपि प्रौढवादेन दोषं निर्दिशति-वाचकत्वे। 'इवादीना' मिति शेषः। वा। '**समुदितं** प्रकृतिप्रत्ययसमुदायरूपम्। **पदम्। वाचकम्।** तथा चप्रकृत्यार्थान्वितप्रत्ययार्थप्रतिपादकत्वं वाचकम्। इति निष्कृष्टोऽर्थः।' **प्रकृतिप्रत्ययौ। स्वस्वार्थबोधकौ** 'क्रमेणे'ति शेषः।' इति **मतद्वये। अपि। वत्यादिक्यजाद्योः।** आदिपदाभ्यामेव कल्पवादेः, क्यङादेश्च ग्रहणम्। **साम्यम्। एव।** इति। 'बोध्य'मिति शेषः। इदं तत्त्वम्-नैयायकादय इवादीनां निपातत्वेऽपि वाचकत्वमेवाङ्गीकुर्वन्ति, तथाहि-उपसर्गाणां द्योतकत्वमेव, अन्यथा-'उपास्यते गुरुः,' 'परिभूयते शत्रुः' इत्यादौ धात्वर्थासनभवनक्रिययोरकर्म्मकतया कर्म्मलकारोपपत्तिर्न स्यात्। इवादीनां तु वाचकत्वमेव, बाधकाभावात्। निपातमात्रस्य द्योतकत्वाङ्गीकारे तु अव्ययानामपि द्योतकत्वमेव स्यात्, न च इष्टापत्तिः, स्वरादीनां स्वातन्त्र्येण प्रयोगानापत्तेः। अथैवं वाचकत्वाङ्गीकारेऽपि इववत्यादेः क्यच्क्यङादेश्चसमुदितं पदं वाचकम्। 'प्रकृतिप्रत्ययौ स्वस्वार्थबोधकौ' इति उभयविधाभ्यां मताभ्यामपि साम्यमेव, उभयत्र न्यायस्य तुल्यत्वात्। अत्राहुः-निपातमात्रस्य द्योतकत्वं वाचकत्वं च, न केवलमुपसर्गाणां द्योतकत्वम्, इवादीनां वा वाचकत्वम्, वैषम्ये बीजाभावात्। तथा हि-'समुदितं पदं वाचकम्,' 'प्रकृतिप्रत्ययौ स्वस्वार्थबोधकौ।' इति नयेन च द्योतकत्वेनाभिमतानामपि वाचकत्वापत्तेः, वाचकत्वेनाभिमतानां पुनर्निपातानां द्योतकत्वापत्तेः।' इति। काव्यप्रकाशव्याख्याकारा अपि-अत एवाहुः, 'ननु 'नारीयते' इत्यादौ कथमौपम्यप्रतिपादकप्रयोगाभावः, क्यङादीनामेव तदर्थविहिततया तत्कर्म्मक्षमत्वात्। अथैषां प्रत्ययत्वेनास्वतन्त्रतया प्रयोगाभावेन वा न सम्यगौपम्यप्रतीतिरिति चेत्। तर्हि वतिकल्पबादावपि तथैव प्रसज्येत। नहि प्रत्ययतया तद्धितान्ययोः कश्चिद्विशेषः। कल्पबादयइवादितुल्यादय औपम्यवाचकाः, क्यङादयस्तु द्योतका एवेत्यपि न,इवादीनामपि वाचकत्वे संदेहात्। अस्तु वा वाचकत्वम् तथाऽपि 'समुदितमेव पदं वाचकम्' 'प्रकृतिप्रत्ययौ स्वस्वार्थवाचकौ' इति मतद्वयेऽपि वत्यादिक्यङाद्योः साम्यमेवेति, सत्यमेवम्, अथाऽपि प्राचीनोपरोधनियन्त्रितोऽयमाचार्य्यो विद्वानपि ईदृशानि दुर्यशःसङ्कुचितानि सङ्कटानि प्रविशतीत्यत्र किं ब्रूमः' इति।

प्रकारान्तरेण परमतं समाधाय पुनः स्वमतं दृढयितुं खण्डयति-**यत्। च। केचित्** 'नारीयते' इत्यादौ वाचकलुप्तात्वमेव समाधत्सत्रः। **आहुः। 'वत्यादयः'।** आदिना कल्पबादेर्ग्रहणम्। **इवाद्यर्थे** सादृश्याद्यर्थे। **अनुशिष्यन्ते**ऽनुशासनेन नियम्यन्ते। **क्यङादयः।** आदिना क्यजादेर्ग्रहणम्। **तु** ( इदं च व्यवच्छेदकम् )। **आचाराद्यर्थे।** 'अनुशिष्यन्ते' इति पूर्वतोऽन्वेति। 'अतोऽत्र 'नारीयते' इत्यादौ न धर्म्मलुप्तात्व' मिति शेषः।' इति। **तत्। अपि**

न; न खलु क्यङादय आचारमात्रार्थाः, अपि तु सादृश्याचारार्थाः । इति । तदेवं धर्मलोपे दशप्रकारा लुप्ता ।

## ८५ उपमानानुपादाने द्विधा वाक्यसमासयोः ।

उदाहरणम्–

"तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम् ।"

अत्र मुखनयनप्रतिनिधिवस्त्वन्तरयोर्गम्यमानत्वादुपमानलोपः । अत्रैव च 'मुखेन सदृश-

---

न । 'युज्यते' इति शेषः । कुत इत्याह–**न खलु** । **क्यङादयः** । आदिना क्यजादेर्ग्रहणम् । **आचारमात्रार्थाः** आचारार्थस्यैव प्रतिपादकाः । **अपितु** । **सादृश्याचारार्थाः** सादृश्यार्थान्विताचारार्थप्रतिपादकाः । इदमभिहितम्–'उपमानादाचारे ।' ३ । १ । १० इत्यतः 'कर्तुः क्यङ् सलोपश्च ।' ३ । १ । ११ इत्यत्र 'उपमाना' दित्यनुवर्त्तते । तथा च–उपमानार्थककर्तृपदोत्तरमाचारार्थे क्यङ्प्रत्ययः स्यात् इति स्थूलार्थः सम्पद्यते । आचारश्चाचरणम्, तच्च प्रकृते उपमेयस्योपमानताबोधनम्, प्रकृतेरुपमानार्थकत्वोपपत्तये इवार्थवाचकता तत एव क्यङ् सम्पद्यते । तथा च–उपमानार्थकात् कर्तृपदादुत्तरमिवार्थानुगताचरणार्थे क्यङ्प्रत्ययः स्यादिति वास्तविकोऽर्थः । एवम्–क्यङ इवार्थकत्वोपपत्तौ धर्मलोप एव पर्य्यवसीयते । इति ।

उपसंहरति–**तदेव**मित्यादिना । स्पष्टम् । श्रौती धर्मलुप्ता, आर्थी धर्मलुप्ता च,तत्राद्या समासगा वाक्यगा चेति द्विविधा, अन्या पुनः, तद्धितगा समासगा वाक्यगा चेति त्रिविधा, सम्मिलिताः पुनः पञ्च विधा धर्मलुप्तायाः । तथा–आधारक्यचि, कर्म्मक्यचि, कर्तरि क्यङि, कर्म्मणमुलि, कर्तृणमुलि च; इत्येवं पञ्च विधा अन्याधर्मलुप्तायाः । सम्मेलने च स्फुटं दश भेदाः । इति भावः ।

उपमानलुप्तां निर्दिशति–**८५उपमानानुपादाने** उपमानवाचकपदानुपादाने उपमानवाचकस्य पदस्याप्रयुक्तत्वेऽवाच्यत्वेवेति यावत् । 'लुप्तोपमा' इति शेषः । **वाक्यसमासयो**र्वाक्ये समासे च । 'सम्भवतीत्यस्माद्धेतो'रिति शेषः **द्विधा** । तथा च–उपमानलुप्ता, वाक्यगा समासगा चेति द्विविधा ।

उदाहर्तुमुपक्रमते– **उदाहरण**मित्यादिना । स्पष्टम् ।

"**तस्याः । मुखेन । सदृशम् । रम्यं** रमणीयम् । **न । आस्ते** । तस्याः–**नयनतुल्यं** नयनाभ्यां तुल्यम् । **वा** । 'रम्य'मिति पूर्वतोऽनुषज्यते । **न** । 'आस्ते' इति शेषः । 'भुवनत्रितये सदृशी वरवर्णिन्या यया न भव्या वा' इति शेषः । आर्यागीतिश्छन्दः ॥" यथा वा–"यस्य तुलामधिरोहसि लोकोत्तरवर्णपरिमलोद्गारैः । कुसुमकुलतिलक ! चम्पक ! न वयं तं तु जानीमः ॥" इति, अत्र हि–'यत्तुलनामधिरोहसि' इत्याद्यचरणनिर्म्माणे समासगात्वम् । 'उपमाऽभावेन सादृश्याभावस्य पर्य्यवसानात्, सादृश्यपर्य्यवसानस्य चोपमाजीवितत्वादलङ्कारान्तरमेव न तूपमानलुप्तेति न शङ्कनीयम्, 'यस्य तुला ( यत्तुलना ) मधिरोहसि न तं जानीम इत्युक्त्याऽस्माकमसर्वज्ञत्वादस्मदगोचरः कश्चित्तवोपमानं भविष्यतीति सादृश्यपर्य्यवसानमस्तीत्युपमानलुप्तैवेयम् । उदाहरणसङ्गतिं दर्शयति–**अत्र** 'तस्या मुखेन सदृशं रम्यं नास्ते' इत्युदाहरणे । **मुखनयनप्रतिनिधिवस्त्वन्तरयो**र्मुखसदृशस्य नयनसदृशस्य चान्यस्य वस्तुनः । **गम्यमानत्वा**दुद्बुध्यमानत्वात् । **उपमानलोपः**।अयम्भावः–अत्र मुखं नयने चोपमानम्,उपमानं च नोपात्तम्, रम्यमिति साधारणो धर्मः सदृशेनासमस्तात् पूर्वत्र वाक्यगा, परत्र तुल्यपदेन समस्तात्समासगा । 'सदृशं तुल्य'मिति पदाभ्यां सामान्यत उपमानोक्तावपि विशेषतोऽनभिधानादुपमानलुप्तेयम् । वस्त्वन्तरस्य विशिष्य केवलमनुपादानमिति उपमानलोपव्यवहारः । एतेन–'अनन्वयोऽत्र' इति वदन्तः परास्ताः । इति । ननु 'तस्या मुखं यथेदं रम्यं नास्ते' इत्येवं श्रौतीत्वेऽप्यस्याः सम्भवे कथं द्विविधमेवास्या इत्याशङ्क्याह–**अत्र** 'तस्या मुखेन सदृशं रम्यं नास्ते' इत्युदाहरणे । **एव** 'किं पुनः परत्रे',

मित्यत्र 'मुखं यथेदम्।' 'नयनतुल्यम्' इत्यत्र 'दृगिव' इति पाठे श्रौत्यपि सम्भवती-त्यनयोर्भेदयोः प्रत्येकं श्रौत्यार्थीत्वभेदेन चतुर्विधत्वसम्भवेऽपि प्राचीनानां रीत्या द्विप्रकारत्वमेवोक्तम्।

८६ औपम्यवाचिनो लोपे समासे क्विपि च द्विधा ॥ ७३ ॥

क्रमेणोदाहरणम्—

'वदनं मृगशावाक्ष्याः सुधाकरमनोहरम्।'

'गर्दभति श्रुतिपरुषं व्यक्तं निनदन् महात्मनां पुरतः।'

---

ति शेषः। च। 'मुखेन सदृश'मित्यत्र 'अंशे' इति शेषः। 'मुखं यथेदम्' 'इति पाठे परिवृत्ते' इति शेषः। 'नयनतुल्यम्' इत्यत्र 'अंशे' इति शेषः। 'दृगिव' इति पाठे। 'परिवृत्ते' इति शेषः। श्रौती। अपि। 'आर्थी तु तथा सम्भवत्येव' इति शेषः। सम्भवति। इति। अनयोः 'वाक्यसमासगतया द्वयो' रिति शेषः। भेदयोः। प्रत्येकम्। श्रौत्यार्थीत्वभेदेन श्रौतीत्वेनार्थीत्वेन चेति भावः। चतुर्विधत्वसम्भवे। अपि। प्राचीनानां काव्यप्रकाशकारादीनाम्। रीत्या मार्गेण। द्विप्रकारत्वम्। एव। उक्तम्। अयम्भावः—'तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम्' इत्यत्र यथावाक्यगता समासगता चेति द्विविधोपमानलुप्ताऽऽर्थी, तथा—'तस्या मुखं यथेदं रम्यं नास्ते न वा न तादृगिव।' इति पाठवृत्तौ वाक्यगा समासगा च सैवार्थीति अस्याश्चातुर्विध्येऽपि द्वैविध्याभिधानं प्राचीनानामनुरोधात्। प्राचां ह्येष सिद्धान्तः 'नेयं श्रौती' इत्यादिपदानामुपमानानन्तर्य्यनियमेनोपमानपदं विनाऽन्वयावोधकत्वात्।' इति। यद्यपि—इवेन नित्यसमासविधानस्येवोपमानानन्तर्य्यमिवादीनामवस्थितिनियमस्याग्रहमात्रमूलत्वम्, तथाऽपि किं प्राचां दूषणगवेषणया?। इति। अत्राहुः—'कथमियमुपमानलुप्ता, 'सुधाकरस्य सदृश' मित्यादौ सुधाकरस्योपमानताया इव 'मुखस्य सदृश'मित्यादावपि मुखादेः उपमानताया एवाभिधानं किन्न स्वीक्रियते? इति चेत्! 'मुखस्य सदृश' मित्यादौ मुखप्रतियोगिकसादृश्यानुयोगीति नार्थः। किन्तु—मुखनिष्ठसादृश्यप्रतियोगीत्येव; मुखस्य प्रकृततया तदुत्कर्षायोपमेयत्वस्यैवाभिधित्सितत्वात्। यद्यपि—'सुधाकरस्य सदृश'मित्यादावपि एवं समाधातुं शक्यते, तथाऽपि—सर्वस्य सुधाकरादेरुपमानतयैव प्रसिद्धिरिति बोध्यम्। अत एव प्रदीपकारैरप्युक्तम् 'अत्र विशेषत उपमानं नोपात्तम्, चिन्त्यमेतत्' इति, अस्यायम्भावः—प्रकृततया काव्यस्यैव ( मुखस्यैव ) उपमेयत्वमुत्कर्षाय, इत्यसङ्गतम्, स्वनिष्ठसादृश्यप्रतियोगिनिषेधस्यैव स्वप्रतियोगिसादृश्यानुयोगिनिषेधस्यापि उत्कर्षपर्य्यवसायित्वात्। यथा-'रक्षांसीति पुराऽपि संशृणुमहे वीरस्तु कस्तादृशो यो जागर्त्ति जगत्त्रयीविपदलङ्कर्म्मीणदोर्विक्रमः। शश्वद्द्वारभुवि प्रशस्तिरचनावर्णायमानेक्षणश्रेणीसम्भृतगोत्रभिन्मयजयस्तम्भो यथा रावणः॥' अत्र हि रावणस्याश्रवणोक्त्या यथोक्तार्थलाभः। यथा वा—'त्वमिव कोऽपि परापकृतौ कृती न ददृशे न च मन्मथ! शुश्रुवे।' इत्यत्र प्रकृतः कामः। तथा च-अत्र। 'कामप्रतियोगिकसादृश्यवानन्यो दर्शनश्रवणविषयत्वाभाववान्।' इत्यवगम इव तत्र 'सुधाकरप्रतियोगिकसादृश्यवानन्यो दर्शनश्रवणविषयत्वाभाववान्।'इति बोधः। इति।

वाचकलुप्तां निर्दिशति—८६ औपम्यवाचिनः साधर्म्यप्रतिपादकस्येवादेः। लोपेऽप्रयोगे लुप्तत्वे वा। समासे क्विपि क्विप्प्रत्यये। च 'इती' ति शेषः। द्विधा 'वाचकलुप्ते' ति शेषः ॥ ७३ ॥

उदाहर्त्तुं प्रतिजानीते—क्रमेणेत्यादिना। स्पष्टम्। 'वदन'मित्यादि।

'मृगशावाक्ष्या मृगशावस्य मृगस्य शावो वालस्तस्याक्षिणी इवाक्षिणी यस्यास्तस्यास्तथोक्तायाः। मृगकिशोरनेत्रसदृशचञ्चलनेत्राया इति भावः। पदलोपः, 'उक्तार्थानामप्रयोग' इति नयेनेवस्य चाप्रयोगः ( सामान्यधर्मस्याप्यनुपादानान्नात्र केवलं वाचकलुप्तेति नोदाहरणमिदम्)। वदनं मुखम्। सुधाकरमनोहरं सुधाकर इव मनोहरमिति तथोक्तम्।'उपमानानि सामान्यवचनैः।'२।१।५५ इति कर्म्मधारयः। 'आत्मानं दर्शयँल्लोकमुदेधयति कौमुदम्॥' इति शेषः। अत्र साधर्म्यवाचकस्येवस्य समासेऽनुपादानात् समासगा वाचकलुप्ता॥' यथा वा—'कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम्। अवेहि मां किङ्करमष्टमूर्त्तेः! कुम्भोदरं नाम निकुम्भमित्रम्॥' इत्यत्र 'कैलासगौर'मित्यत्रेवस्यानुपादानात्। 'महात्मनां महनीयचरितानां सुमतीनाम्, अथ च—गजराजादीनाम्। पुरतः। व्यक्तं प्रकटमुच्चैरिति

अत्र 'गर्दभती' त्यत्र औपम्यवाचिनः क्विपो लोपः।

**८७ द्विधा समासे वाक्ये च लोपे धर्म्मोपमानयोः।**

'तस्या मुखेन' इत्यत्र 'रम्य' मिति स्थाने 'लोके' इति पाठेऽनयोरुदाहरणम्।

**८८ क्विप्समासगता द्वेधा धर्म्मेवादिविलोपने ॥ ७४ ॥**

उदाहरण-'विधवति मुखाब्जमस्याः' इति।

अत्र 'विधवति' इति मनोहरत्व-क्विप्प्रत्यययोर्लोपः। केचित्त्वत्रापि प्रत्ययलोपमाहुः। 'मुखाब्जम्' इति च समासगा।

---

यावत्। **श्रुतिपरुषं** श्रुतौ श्रवणे परुषं यथा भवेत्तथा। **निनदन्** शब्दं कुर्वन्। **गर्दभति** गर्दभ इवाचरति। 'सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः।' इति क्विप्। तस्य च-सर्वापहारिलोपविधानात् क्विपो लुप्तत्वम्। अत एवात्र क्विब्लोपेन वाचकलुप्तेयम्। 'उपपादितपुरुषार्थो न्यस्यन् पादान् समुद्धतं सहसा।' इति शेषः। आर्यागीतिश्छन्दः ॥'

अत्र कथं वाचकलोप इत्याशङ्क्याह-**अत्रे**त्यादि। स्पष्टम्।

ननु उपमेयस्यापि अत्र लोप इत्याशङ्क्याह-**नचे**त्यादि। स्पष्टम्। इदं त्ववसेयम्-अत्र-गर्दभ उपमानम्, निनादकर्त्तोपमेयम्, परुषनिनदनं च साधारणो धर्मः। औपम्यवाचकस्य क्विपः केवलं लोप इति वाचकलुप्तैवेयम्। इति। यथा वा-'कुचकलशेष्ववलानामलकायामथ पयोनिधेः पुलिने। क्षितिपाल! कीर्त्तयस्ते हारन्ति हरन्ति हीरन्ति॥' इत्यत्र 'हार, हर, हीर' शब्दा आचारार्थके क्विपि लुप्ते धातवः, लक्षणया च हारादिसादृश्यं बोधयन्ति।

धर्मोपमेयलुप्तायाः पूर्वमेवोपमेयलुप्ताया अपि निर्देशमुपमेयलोपनिर्देशोपक्रमौचित्येन मन्वानस्तामनिर्दिश्य धर्मोपमानलुप्तां तावन्निर्दिशति-**८७ द्विधा समास** इत्यादिना।

**८७ धर्मोपमानयोः**। **लोपे**ऽप्रयोगे। 'धर्मवाचकलुप्तोपमे'ति शेषः। **वाक्ये**। **समासे**। **च** 'सम्भवतीयतः' इति शेषः। **द्विधा**।

उदाहरति-'**तस्या मुखेन**' इत्यत्र 'तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम्।' इत्युदाहरण इत्यर्थः। '**रम्य'मिति स्थाने**। '**लोके' इति पाठे**। **अनयोः** वाक्यगायाः समासगायाश्चेति द्विविधाया धर्मवाचकलुप्ताया इति भावः। 'क्रमेणे'ति शेषः। **उदाहरणम्**। अयम्भावः-'तस्या मुखेन सदृशं लोके नास्ते न वा नयनतुल्यम्।' इत्यत्र क्रमात्-वाक्यगा समासगा चेयम्। यथा वा-'गाहितमखिलं विपिनं परितो दृष्टाश्च विटपिनः सर्वे। सहकार! न प्रपेदे मधुपेन तथाऽपि ते समं जगति॥''ढुंढोल्लंतो मारिहिसि कंटअकलिआणि केअइवणाइं। मालइकुसुमसारिच्छं भमर! भमंतो ण पाविहिसि'[1] ॥' इत्यनयोः पूर्वत्र 'सम'मित्यस्यासमस्तत्वाद्वाक्यगा, परत्र 'सरिच्छं (सदृशम्)' इत्यस्य समस्तत्वात् पुनः समासगा।

धर्म्मवाचकलुप्तां निर्दिशति-**८८ धर्म्मेवादिविलोपने** धर्म्मश्चेवादिश्च तयोर्विलोपनं तस्मिन्सतीत्यर्थः। 'लुप्तोपमे'ति शेषः। **क्विप्समासगता** क्विब्गता समासगता चेति भावः। **द्विधा** ॥ ७४ ॥

उदाहर्त्तुकाम आह-**उदाहरणं** यथा-''**अस्याः**। **मुखाब्जं** मुखमब्जमिवेति तथोक्तम्। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे।' २। १। ५६ इति समासः। **विधवति** विधुश्चन्द्रः स इवाचरतीत्यर्थः। विधुसदृशं भवतीति भावः। 'अब्जति नयनद्वयं च रम्भोरोः। ऊरवति तथा करभः सौभगसर्वस्वभूतायाः॥' इति शेषः। आर्य्या छन्दः॥''

उदाहरणं समर्थयते-**अत्र** 'विधवति मुखाब्ज' मित्यत्र। '**विधवति' इति** 'पदे' इति शेषः। **मनोहरत्व-क्विप्प्रत्यययोर्**मनोहरत्वरूपस्य साधारणधर्मस्य तद्वाचकस्य च क्विप्प्रत्ययस्य च लोपस्येति भावः। **लोपः**।

---

[1] 'अन्वेषयन् मरिष्यसि कण्टककलितानि केतकीवनानि। मालतीकुसुमसदृशं भ्रमर! भ्रमन्नपि न प्राप्स्यसि॥' इति संस्कृतम्।

न चेहोपमेयस्यापि लोपः, 'निनदन्' इत्यनेनैव तस्य निर्देशात् ।

**८९ उपमेयस्य लोपे तु स्यादेका प्रत्यये क्यचि ।**

यथा-

**'अरातिविक्रमालोकविकस्वरविलोचनः । कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति ॥९३॥'**

इत्यत्र 'सहस्रायुधमिवात्मानमाचरती'ति वाक्ये उपमेयस्यात्मनो लोपः। न चेह औपम्यवाचकलोपः, उक्तादेव न्यायात् । अत्र केचिदाहुः-'सहस्रायुधेन सह वर्त्तत इति सहस्रायुधः, स इवाचरती'ति वाक्यात्'ससहस्रायुधीयती'ति पदसिद्धौ विशेष्यस्य शब्दानुपात्तत्वादिहोपमेयलोपः। इति, तन्न विचारसहम्; कर्त्तरि क्यचोऽनुशासनविरुद्धत्वात् ।

---

अयम्भावः-अत्र मनोहरत्वं विधुमुखयोः साधारणो धर्मः, स चोपात्त एव नेति तस्य लोपसदृशत्वाल्लोपः, तत्प्रतिपादकतयोपस्थितस्यापि क्विपः 'वेरपृक्तस्य ।' ६ । १ । ६७ इति सर्वापहारी लोपः । तस्मात् स्फुटमनयोर्लोपाद्धर्म्मवाचकलुप्तात्वम् । इति ।

परमतेन समाधत्ते-**केचित्** । **तु** । **अत्र 'विधवति' इत्यत्र** । **अपि** । **प्रत्ययलोपम्** । **आहुः** । **'मुखाब्जम्' इति** । **च** । **समासगा** । एषामयमभिप्रायः-अत्र क्विप्प्रत्ययः एव, तुल्याचाररूपसाधारणवाचकः, तस्य च 'वेरपृक्तस्य ।' ६ । १ । ६७ इति सूत्रेण नित्यं लोपः, तेनानुषङ्गिको धर्मलोपः, नतु ऐच्छिकः ।' इति । केचिदित्यनेनास्वारस्योद्भावनम् । 'विधवति विभया वदन' मित्युक्तौ धर्मोपादानस्यासङ्गत्यापत्तेः । अत एवाहुः-यद्यपि आचारार्थे क्विपि धर्मलोपो न सम्भवति, तथाऽपि 'वेरपृक्तस्य ।' ६ । १ । ६७ इति सूत्रेण लोपात् धर्मलोपस्यापि व्यवहारः । वस्तुतस्तु-अत्रैच्छिको धर्मलोपः ।' इति ।

उपमेयलुप्तां निर्दिशति-**८९ उपमेयस्ये**'त्यादिना ।

**८९ उपमेयस्य** । **लोपे** । **तु** । 'लुप्तोपमे'ति शेषः। **क्यचि** । **प्रत्यये** । **एका** । **स्यात्** । क्यच्प्रत्ययगतोपमेयलुप्तैकविधैवेति भावः ।

उदाहरति-**यथा**-'**अराती**त्यादिना ।

'**अरातिविक्रमालोकविकस्वरविलोचनो**ऽरातीनां शत्रूणां विक्रमस्तस्यालोको दर्शनं तेन विकस्वरे ( मदग्रेऽपि शत्रवो विक्रमं दर्शयन्तीति साश्चर्य्यमुद्रे ) विलोचने नेत्रे यस्य तथोक्तः । **कृपाणोदग्रदोर्दण्डः** कृपाणेन करवालेन उदग्रो भयावहो दोर्दण्डो वाहुदण्डो यस्य तादृशः । **सः** । **सहस्रायुधीयति** सहस्रायुधः कार्त्तवीर्य्यस्तमिवात्मानमाचरतीति तथा । यथा तं दुर्जयं मन्यते तथाऽऽत्मानमपीति भावः । तथाऽभिमानप्रयोजनं तु निःशङ्कं शत्रुषु प्रविश्यैकेनैव कृपाणेनायुधसहस्र सम्पाद्यस्य शत्रूत्सारणस्य सम्पादनम् । अत एवात्र वीररसप्रकर्ष इति विभाव्यम्॥९३॥'

उदाहरणसङ्गतये उपमानलोपं दर्शयति-**इत्यत्रे**त्यादिना । स्पष्टम् ।

अयम्भावः-'उपमानादाचारे ।'३।१।१०इत्यनेनोपमानवाचकात् 'सहस्रायुध'मिति पदात् आचारार्थे क्यच् । आचारोऽत्र दुर्जयत्वरूपः । तथा च-सहस्रायुधमिवात्मानमाचरतीत्यर्थात् अत्रात्मोपमेयः,तस्य चाप्रयोग इति लोपः।यद्यपि-'स' इति पदेन साक्षादुपात्तः कर्त्तोपमेय एवाथापि कर्म्मत्वेन विवक्षित आत्मोपमेयः, तस्य च कर्म्मत्वेनानुपादानाल्लोप इति ।

ननु प्रकाशकारेणात्र कथं धर्मवाचकलुप्तात्वमिति चेत् ! मैवं शङ्कीरित्याह-**इह** । **औपम्यवाचकलोपः** । **च** । **न** । कुत इत्याह- **उक्तात्** । **एव** । **न्यायात्** । उक्तन्यायश्च क्यजादेः सादृश्यबोधकत्वव्यवस्थापनात्मैव ।

अत्र परमतं निराकरोति-**अत्र** 'अराति' इत्युदाहृते पद्ये । **केचित्** । **आहुः** । **सहस्रायुधेन** । **सह** । **वर्त्तते** । **इति** । ससहस्रायुधः 'सहस्य सः सञ्ज्ञायाम् ।'६।३।७८ इति सादेशः । स सहस्रायुध इत्यर्थः। **इव** । **आचरति** । **इति वाक्यात्** । '**स सहस्रायुधी**'**ति पदसिद्धौ विशेष्यस्य। शब्दानुपात्तत्वात्** साक्षादनुपादानात् । **इह** । **उपमेयलोपः**। विशेष्यस्यैवोपमेयभूतत्वादिति भावः। **इति** । **तत्** ।**न**।**विचारसहम्** । **कर्त्तरि** । **क्यचः** । **अनुशासनविरुद्धत्वात्** । अनुशासनं हि-'उपमानादाचारे ।' ३।१।१० इति, तच्च कर्म्मण्येव क्यचमनुशास्ते इति स्फुटं विरुद्धमिति भावः । यथा वा मम-'सहस्रनयनीयन्त्यनिमिषीयन्ति च प्रभो ! अशेषाद्भुतकर्म्माणं त्वां विलोक्य तदा तदा ॥' इति ।

**९० धर्मोपमेयलोपेऽन्या–**

यथा–'यशसि प्रसरति भवतः क्षीरोदीयन्ति सागराः सर्वे।'

अत्र 'क्षीरोदमिवात्मानमाचरन्ती'त्युपमेय आत्मा, साधारणधर्म्मः शुक्लता, च लुप्तौ।

**९१ त्रिलोपे च समासगा ॥७५॥**

यथा–'राजते मृगलोचना॥'

अत्र 'मृग (स्य) लोचने इव चञ्चले लोचने यस्या' इति समासे उपमाप्रतिपादक-साधारण-धर्मो-पमानानां लोपः।

**९२ तेनोपमाया भेदाः स्युः सप्तविंशतिसङ्ख्यकाः।**

---

धर्म्मोपमेयलुप्तां निर्दिशति–९० अन्योपमेयलुप्तातो भिन्नेति भावः। **धर्म्मोपमेयलोपे**। 'लुप्तोपमे'ति शेषः। इय-मपि क्यचयैवेति 'क्यची'ति पूर्वतोऽनुवर्त्तनीयम्।

उदाहरति–**यथा–भवतः। यशसि। प्रसरति** सर्वतो व्याप्नुवति सतीति भावः। **सर्वे** क्षीरोदातिरिक्ताः। **सागराः। क्षीरोदीयन्ति** क्षीरोदमिवात्मानमाचरन्ति। 'द्विषतामपयशसि पुनर्यमुनीयन्ति स्वरापगावाहाः॥' इति शेषः। आर्यागीतिश्छन्दः।

उदाहरणं विशदीकृत्य निर्दिशति–**अत्रो**दाहृते पद्ये इत्यर्थः। '**क्षीरोदं** क्षीरसमुद्रम्। **इव। आचरन्ति।**' इत्यै'वम्भूते विवक्षितेऽर्थे' इति शेषः। **उपमेय** उपमेयभूतः। **आत्मा। साधारणधर्मः। शुक्लता। च।** 'इति ता'विति शेषः। **लुप्तौ।** इदं बोध्यम्–'सहस्रायुधीयती'त्यत्रेव 'क्षीरोदीयन्ती'त्यत्र क्यच आचारार्थे सद्भावेऽपि न पूर्वत्र धर्म्मस्यापि लोपः, सहस्रायुधशब्दस्य सहस्रायुधविशिष्टवाचकतापरत्वेन, सहस्रायुधत्वस्य च विवक्षितस्य धर्मस्य साक्षादुपादानात्। परत्र तु–क्षीरोदत्वस्याविवक्षितत्वात् शुक्लत्वमात्रस्य धर्म्मस्य विवक्षितत्वात्तस्य च नोपादानम्। इति।

धर्मवाचकोपमानलुप्तां निर्दिशति–९१ **त्रिलोपे** त्रयाणां धर्मवाचकोपमानानां लोपस्तस्मिन् सतीत्यर्थः। **च। समा' सगा।** 'लुप्तोपमे'ति शेषः ॥७५॥

उदाहरति–**यथा–'मृगलोचना।** मृगलोचने इव लोचने यस्यास्तादृशी। 'गजराजगतिश्चन्द्रसुषमा भुवनेश्वरी। मालतीसुरभिः काऽपि' इति शेषः। **राजते॥'**

अयम्भावः–'मृगलोचना' इत्यत्र मृगशब्देनैव यदि लक्षणया तल्लोचने विवक्षयित्वा 'मृग इव लोचनं यस्याः सेति। समासो विधीयेत तर्हि, नेदमुदाहरणं धर्म्मवाचकोपमानलुप्तायाः मृगस्यैवोपमानभूतत्वात् तस्य च लोपाप्रसक्तेः। यदा तु–'मृगलोचने इव चञ्चले लोचने यस्याः से'ति, तदा 'अनेकमन्यपदार्थे।' २।२।२४ इति सूत्रस्य भाष्यस्थेन 'सप्तम्युपमान-पूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च।' इति वार्त्तिकेन 'मृगलोचने' इति उपमानवाचकस्य 'लोचने' इत्यनेन बहुव्रीहौ मृग-पदोत्तरपदभूतस्य 'लोचने' इत्यस्य लोपे उपमेयभूतस्य द्वितीयस्य 'लोचने' इत्यस्य चावशेषादिदमुदाहरणम्। तथा च–'मृगलोचने' इत्युत्तरपदभूतस्य 'लोचने' इत्युपमानस्य 'इवे'ति औपम्यवाचकस्य चञ्चलत्वरूपस्य साधारणधर्म्मस्यानुपादान-मिति तेषां त्रयाणां लोपे समासगेयम्। न च लोचनपदस्यैवोपमानवाचकत्वेन मृगलोचनशब्दस्योपमानपूर्वपदकत्वं न स्या-दिति वाच्यम्, अवयवधर्म्मेण समुदायस्य व्यपदेशात् मृगलोचनशब्दस्यैवोपमानपूर्वपदकत्वात्। यद्यपि–एवं मृग-स्योपमानत्वस्वीकारे मृगपदस्यलोपादुपादानाल्लोपः प्राप्तः, अथाऽपि तथयोपमानत्वावगमकस्य लोचनशब्दस्य लोपादुप-मानस्यापि लोपः। इति बोध्यम्। एवम्–गजराजगतिरित्यादावपि इयं निर्बाधा, गजराजगतिरिव मत्ता गतिर्यस्या इत्यु-पमानवाचकधर्माणां लोपात्। उपमानलोप आनुशासनिको वाचकसाधारणधर्म्मयोर्लोपस्तु ऐच्छिकः। इति।

एवं भेदान्निर्दिश्य तत्साकल्यं निर्दिशति–९२ **तेने**त्यादिना।

९२ **तेन** निर्दिष्टक्रमेण। **उपमायाः। सप्तविंशतिसङ्ख्यकाः** सप्तविंशतिं संख्यान्तीति सप्तविंशतिसङ्ख्यास्त एवेति तथोक्ताः। 'आतश्चोपसर्गे'। ३। १। १३६ इति कः। 'न सामिवचने।' ५। ४। ५ इति ज्ञापकात् स्वार्थे कन्। **भेदाः। स्युः।**

पूर्णा षड्विधा, लुप्ता च एकविंशतिविधा, इति मिलित्वा सप्तविंशतिप्रकारोपमा । एषु च-उपमा भेदेषु मध्ये अलुप्तसाधारणधर्म्मेषु भेदेषु विशेषः प्रतिपाद्यते।

**९३ एकरूपः क्वचित् क्वापि भिन्नः साधारणो गुणः ॥ ७६ ॥**
**भिन्ने बिम्बानुबिम्बत्वं शब्दमात्रेण वा भिदा ।**

एकरूपे यथोदाहृतम्-'मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः ।' इत्यादि ।

बिम्बानुबिम्बत्वे यथा-

"भल्लापवर्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् । तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव॥९४॥"

---

कथमेतत्सङ्ख्याका भेदा इत्याशङ्कयाह-**पूर्णे**त्यादि । स्पष्टोऽर्थः । अयम्भावः-पूर्णोपमा तावत्-श्रौती, आर्थी च; उभे अपि तद्धितसमासवाक्यनिष्ठतोपाधेस्त्रिधेति षाड्विध्यम्, एवं लुप्तोपमा-धर्म्मलोपे दशविधा उपमानलोपे द्विविधा,वाचकलोपे द्विविधा, धर्म-वाचकोभयलोपे द्विविधा, उपमेयलोपे एकविधा, धर्म्मोपमेयोभयलोपे एकविधा, धर्म्म-वाचकोपमानत्रितयलोपे चैकविधेति तस्या एकविंशतिविधात्वम् । उभयसम्मेलने पुनर्यथोक्तप्रकारेयमिति ।

अत्र केषुचिद्भेदेषु विशेषं लक्षयितुं प्रतिजानीते-एषु सप्तविंशतिसङ्ख्याकेषु । **उपमाभेदेषु । मध्ये । च ।अलुप्तसाधारणधर्म्मे**ष्वलुप्तः साधारणधर्म्मो येषु तेषु । **भेदेषु । विशेषो**भेदः । **प्रतिपाद्यते-९३ एकरूप** इत्या दिना - **९३ साधारणः । गुणो** धर्म्म इति भावः । **क्वचित् । एकरूप** एकविधः । **क्वापि** क्वचित् । **भिन्नो**नेकविधः । 'निरूप्यते' इति शेषः । तत्र-**भिन्ने**ऽनेकविधे साधारणे धर्म्मे । **बिम्बानुबिम्बत्वं** बिम्बस्य सादृश्यस्यानुबिम्बत्वं प्रणिधानगम्यत्वम् । **शब्दमात्रेण** मात्रपदेन तात्पर्य्यस्य व्यवच्छेदः । **वा । भिदा** भेदः। अयम्भावः-वस्तुतो भिन्नयोरपि उपमानोपमेययोर्यो हि साधारणो धर्म्मः, स गुणरूपः क्रियारूपश्चेति द्विविधोऽपि क्वचित् नानाव्यक्तिषु जातिवदेकविधः, क्वचित् पुनरनेकविधः। अथ-यत्रानेकविधस्तत्र बिम्बानुबिम्बत्वम्, शब्दमात्रेण वा भिन्नत्वम् । तथा च-'अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता । मम्लौ साऽथ विषादेन पद्मिनीव हिमाम्भसा॥'इत्यत्र बहूनां राज्यश्रीप्रभृतीनामुपमानानां तच्छब्दयाच्याया नायिकाया उपमेयस्य च म्लानिरूप एकविधः साधारणो गुणः । 'ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् । प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥' इत्यत्र ज्योत्स्नादीनां बहूनामुपमानानां नितम्बिन्या उपमेयस्य च नयनानन्दहेतुत्वादयोऽनेके बिम्बप्रतिबिम्बतया साधारणा धर्म्माः । 'विमला चन्द्रकलेव स्फुरति सतां श्रीरिवानघा सततम् । क्षीरोदधिफेनततिर्यथा तथा ते मनोरमा विद्या ॥' इत्यत्र विमलादिपदबोधितचन्द्रकलादीनामुपमानानां विद्याया उपमेयस्य चैक एव साधारणो धर्म्मोनेकधा प्रत्यायितः । इति दिक् ॥७६॥

विस्तरभयाद् दिङ्मात्रमुदाहर्त्तुकाम आह-**एकरूपे** 'साधारणे धर्मे'इति ।, शेषः । सत्यर्थेयं सप्तमी । **यथा । उदाहृतम्-'मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः ।' इत्यादि** । आदिना-'चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः ॥' इत्यस्य ग्रहणम् । व्याख्यातपूर्वमेतत् । अत्र हि-उपमानोपमेययोः सुधाऽऽधरयोर्माधुर्य्यादिः। यद्यपि-उपमानोपमेययोः सर्वत्रैवैकविधः साधारणो धर्म्मः, अन्यथोपमाया एवासम्भव इत्येवं स्थितौ किमत्र वैचित्र्यं दर्शितमिति वक्तुं शक्यते, तथाऽपि अत्र-ऐकरूप्यं विवक्षितम्, नतु श्लेषमहिम्ना प्रतिपादितम्, अतः-'हंसीव कृष्ण ! ते कीर्त्तिः स्वर्गङ्गामवगाहते ।' इत्यादौ 'स्वर्गङ्गामवगाहते' इत्यादिना प्रतिपादितः साधारणो धर्म्मो नैकरूपदप्रतिपाद्य इति बोध्यम् । क्रियैकत्वे यथा मम-'गच्छति करिणीव शनैः मृगीव चकितं निरीक्षते भूयः । आलपति कोकिलेव श्रयति मनोभावनेवासौ ॥' इति । यत्तूदाहृतं तर्कवागीशैः-'स्त्रीव गच्छति षण्ढोऽयं वक्त्येषा स्त्री पुमानिव ।' इति, तदकाव्यत्वात्तेषामेवोदाहरणीयम् ।

एवं धर्म्मैक्यमुदाहृत्य धर्म्मानैक्यमुदाहर्त्तुकाम आह-**बिम्बानुबिम्बत्वे** इत्यादिना । स्पष्टम् । 'बिम्बप्रतिबिम्बत्व' इति पाठान्तरम्। '**भल्ला**पेत्यादि । '**स** रघुः । **भल्लापवर्जितै**र्भल्लैस्तदाकारैर्बाणविशेषैरपवार्जितानि पतितानि तैस्तथाभूतैः । **तेषां** यवनानाम् । **श्मश्रुलैः** श्मश्रुर्मुखाग्रवर्त्ती रोमपुञ्जः स एषामस्तीति तैस्तथोक्तैः । सिध्मादित्वात्

इत्यत्र 'श्मश्रुलैः' इत्यस्य 'सरघाव्याप्तैः' इति दृष्टान्तवत् प्रतिविम्बनम्।

शब्दमात्रेण भिन्नत्वे यथा–

'स्मेरं निधाय नयनं विकसितमिव नीलमुत्पलं मयि सा।
कथयामास कृशाङ्गी मनोगतं निखिलमाकूतम्॥ ९५॥'

अत्र एके एव स्मेरत्वविकसितत्वे प्रतिवस्तूपमावच्छब्देन निर्दिष्टे।

**९४ एकदेशविवर्त्तिन्यु–पमा वाच्यत्वगम्यते॥ ७७॥**
**भवेतां यत्र साम्यस्य–**

यथा–

'नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः। पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव॥ ९६॥'

---

इलच्। **शिरोभिर्मुण्डैः**। **सरघाव्याप्तैः** सरघाभिर्मधुमक्षिकाभिर्व्याप्तास्तैः। 'सरघा मधुमक्षिका।' इत्यमरः। **क्षौद्रपटलैः** क्षौद्रं मधु तस्य पटला उत्पत्तिस्थानविशेषास्तैः। **इव**। **महीम्**। **तस्तार** छादयामास। रघुवंशस्येदं पद्यम्॥ ९४॥'

लक्ष्यं सङ्गमयति–इत्यत्र। **'श्मश्रुलैः'** इत्यस्य। **'सरघाव्याप्तैः'** इति 'अभिधान' मिति शेषः। **दृष्टान्तवत्**। **प्रतिविम्बनम**भिन्नतया स्फुरणम्। अयम्भावः–शिरसां श्मश्रुलत्वेन प्रतिपादनीयो धर्मः क्षौद्रपटलानां सरघाव्याप्तत्वेन प्रतिपादितः, इदं च प्रतिपादनं मुखस्य दर्पणादौ प्रतीयमानत्वमिव भिन्नत्वेऽपि साधारणधर्मस्यानुरूपतानिरूपणपरम्।

शब्दमात्रेण धर्मभेदमुदाहर्तुमुपक्रमते–**शब्दमात्रेणे**त्यादिना। स्पष्टम्। **'स्मेर'**मित्यादि।

**'सा**। **कृशाङ्गी** कृशोदरी। अत्राङ्गपदेनोदरस्यैव विवक्षा, अन्यथा तस्याश्चारुत्वद्योतनासम्पत्तेः। **विकसितम्**। **नीलम्**। **उत्पलम्**। **इव**। **स्मेरं** विकासशालि। **नयनं** दृष्टिम्। जातावेकवचनम्। **विधाय** तेन निरीक्ष्य स्थिता। तेनैव–**मनोगतं** मनसि स्थितम्। **निखिलं** सर्वम्। **आकूत**मावेदनीयमर्थम्। **मयि**। **कथयामास** सूचयामास। लक्षणा तु तदतिशयद्योतनार्था। अत्रार्य्या छन्दः॥ ९५॥"

शब्दमात्रेण भेदं विस्पष्टयति–**अत्र**। **स्मेरत्वविकसितत्वे**। **एके** तात्पर्य्यतोऽभिन्ने। **एव**। **प्रतिवस्तूपमावत्** प्रतिवस्तूपमायामिव। **शब्देन**। 'भिन्नतये' ति शेषः। **निर्दिष्टे** निदर्शिते। 'अत्रैकमेव प्रफुल्लत्वं प्रतिवस्तूपमावद् विभिन्नाभ्यां स्मेरविकसितशब्दाभ्यां निर्दिष्टे' इति पाठान्तरेऽप्ययमेवार्थः। अत्र तर्कवागीशाः–'एकक्रियायाः शब्दभेदेनोपादाने यथा"प्रकाशते मुखं तस्याश्चन्द्रमा दीप्यते यथा॥" नन्वत्र–वाक्यैक्याभावात् कथमुपमेति चेत्! न, यथा–"अमावास्यायां श्राद्धं कुर्य्याद् रात्रौ श्राद्धं न कुर्यात्" इत्यत्र 'सम्भेदेनान्यतरवैयर्थ्य'मिति न्यायेन रात्रेरितरत्रामावास्यायां श्राद्धं कुर्य्यादित्येकवाक्यत्वं, तथाऽत्रापि एकवाक्यत्वस्वीकारात्।' इति।

एवं शुद्धामुपमां निर्दिश्यास्या एव प्रकारान्तरेण भेदावतारं निर्देष्टुकाम एकदेशविवर्तिन्याख्यं भेदं तावत् निर्दिशति–**९४ एके**त्यादिना।

९४ यत्र यस्मिन् उपमाकाव्य इत्यर्थः। **साम्यस्य** साधर्म्यस्य। **वाच्यत्वगम्यते** वाच्यत्वव्यङ्ग्यत्वोभयसाङ्कर्य्यम्। **भवेताम्**। 'से' ति शेषः। **उपमा** 'साम्यं वाच्यमवैधर्म्यं वाक्यैक्य उपमा द्वयोः।' इति लक्षितस्वरूपा। 'एवं' ति शेषः। **एकदेशविवर्त्तिनी**। अयम्भावः–'साम्यं वाच्य' मिति लक्षितोपमैव साम्यस्य वाच्यत्वगम्यत्वमात्रेण भिद्यमानैकदेशविवर्त्तिनीति गीयते। यत्रांशे साम्यस्य वाच्यत्वं तत्रास्याः सर्वात्मनाऽलङ्करणात् अन्यत्र च व्यज्यमानतयेति स्फुटमेकदेशविवर्त्तनशीलत्वम्। अत एवेयम्–एकदेशविवर्त्तिरूपकवत् साङ्गस्याङ्गिनः सादृश्य एव सम्भवति। एकदेशे विवर्त्तत इत्येवं शीलमस्या अस्तीत्यन्वर्थेयं सञ्ज्ञा च। इति॥ ७७॥

उदाहरति यथा–**यथा–'नेत्रैरिव**। **उत्पलैः** कमलैः। **मुखैरिव**। **पद्मैः**। **स्तनैरिव**। 'स्फुरद्भि' रिति शेषः। **चक्रवाकैः**। 'चे' ति शेषः। **सरःश्रियः** सरसां जलाशयानां श्रियः सम्पदः। **पदेपदे** प्रतिवस्तु। **विभान्ति**। **स्म**। अत्रेदं बोध्यम्–नेत्रादीन्युपमानानि उत्पलादीन्युपमेयानि अध्याहियमाणस्फुरत्पदद्योत्यो धर्म-

**अत्रोत्पलादीनां नेत्रादीनां सादृश्यं वाच्यम्, सरःश्रीणां चाङ्गनासाम्यं गम्यम्।**

**९५ कथिता रसनोपमा। यथोर्द्ध्वमुपमेयस्य यदि स्यादुपमानता ॥ ७८ ॥**

**यथा-'चन्द्रायते शुक्लरुचेह हंसो हंसायते चारुगतेन कान्ता।**
**कान्तायते स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः ॥ ९७ ॥'**

**९६ मालोपमा यदेकस्योपमानं बहु दृश्यते।**

---

स्तद्वाचक इव शब्दश्चेत्येषां सद्भावादुपमैवात्र 'अङ्गना इव सरः श्रियः' इति शब्दानुपात्तमपि सादृश्यं प्रत्याययन्ती विवर्त्तात्मतामवलम्बते। इति ॥ ९६ ॥'

साम्यस्य वाच्यत्वव्यङ्ग्यत्वे एव निर्दिशति-अत्रेत्यादिना। स्फुटम्।

ननु--नेत्रादीनामुपमेयत्वेन प्रसिद्धानामुपमानत्वेनाभिधानमयुक्तमिति चेत्, उपमानोपमेयभावस्यानियतत्वं गृहाण, अत एव-'आदिमध्यान्तरहितं दशाहीनं पुरातनम्। अद्वितीयमहं वन्दे मद्वक्त्रसदृशं हरिम् ॥' इत्यादौ भगवतोऽप्युपमेयत्वाभिधानेऽप्युपमा सङ्गच्छते। यद्वा-अत्रैव-'नेत्रैरिन्दीवरैस्तुल्याः पुण्डरीकैरिवाननैः। स्तनैश्चक्राङ्गवद्रम्यैस्तदाऽऽभुर्व्रजवल्लभाः ॥' इति पाठं परिवर्त्त्य लक्षणीयेयम्। नात्र विशेषो विशेषः, किन्तु पूर्वत्र नेत्रादित्रयमुपमानस्योत्पलादित्रयमुपमेयस्याङ्गम्। अत्र-इन्दीवरादित्रयमुपमानस्य नेत्रादित्रयमुपमेयस्याङ्गम्। अतः-इन्दीवरादिभिर्नेत्रादीनां साम्यं वाच्यम्, सरःश्रीभिर्व्रजाङ्गनानां पुनर्व्यङ्ग्यमिति विशेषः।

प्रकारान्तरेणास्या एव भेदान्तरं निर्दिशति-९५**यथोर्द्ध्वम्** ऊर्द्ध्वमूर्द्ध्वम्। **यदि**। **उपमेयस्य** उपमेयत्वेन प्रतिपादितस्य। **उपमानता**। **स्यात्**। 'तदे'ति शेषः। **उपमा**। **रसना**। **कथिता**। यथा खलु काञ्च्यपरनामधेयायां रसनायां पूर्वमधिगतायाः क्षुद्रघण्टिकायाः परया क्षुद्रघण्टिकया योजनावसरे पराश्रितत्वं सम्पद्यते, तथैव--उपमायां पूर्वमभिधिगतस्योपमेयस्य परेणोपमेयेन सादृश्योद्भावनावसरे उपमानत्वेन पराश्रितत्वमित्यन्वर्थेयं रसनेति सञ्ज्ञेति बोध्यम् ॥ ७८ ॥

उदाहरति-यथा-'**इह** स्वच्छजलाशये। **हंसः** जातावेकवचनम्। **शुक्लरुचा** शुक्लया स्वकान्त्या। **चन्द्रायते** चन्द्र इवाचरतीत्यर्थः। 'कर्त्तुः क्यङ् सलोपश्च।' ३।१।११ इति क्यङ्। एवं परत्रापि। **कान्ता**। **चारुगतेन** सुन्दरेण गमनेन। अत्र भावे क्तः। **हंसायते** हंस इवाचरतीत्यर्थः। **वारि** **जलम्**। **स्पर्शसुखेन** सुखस्य स्पर्श इति तेन, सुख ( आनन्द ) कारिणा स्पर्शेन। राजदन्तादित्वात् परनिपातः। **कान्तायते** कान्तेवाचरति विहाय आकाशम्। 'पुंस्याकाशविहायसी।' इत्यमरः। **स्वच्छतया** निर्म्मलतया। **वारीयते** वारीवाचरति। कदाचित् निरुपद्रवावसरे हंससन्निहितं स्वच्छजलं जलाशयमुपयन्तीं कामपि कान्तामवलोकयमानस्योक्तिरियम्। इन्द्रवज्रावृत्तम् ॥ ९७ ॥'

इदम्बोध्यम्-अत्र हि प्रथमं चन्द्र उपमानम्, हंस उपमेयम्, पुनः-हंस उपमानम्, कान्तोपमेयम्, कान्तोपमानम्, जलमुपमेयम्, जलमुपमानम्, आकाशमुपमेयमित्येवं परपराश्रयणेन रसनोपमत्वादियमुपमा रसना। एषैव क्वचित् साधारणधर्म्मस्य भेदे क्वचिदभेदे च सम्भवति, तत्राद्योदाहृता, अन्त्या यथा-'महीभृतो वदान्यस्य भारतीवामला मतिः। चेष्टा मतिरिव स्वच्छा चेष्टेव गुणसन्ततिः॥' इति। अत्र हि स्वच्छत्वं शब्दमात्रेण भिन्नः साधारणो धर्मः। इयं च तद्धितसमासवाक्यगतत्वेन त्रिविधा। तत्राद्या मूलकृतोदाहृता, द्वितीयाऽस्माभिः। अथ तृतीया यथा-'यथा वाक्यं सतां गूढं यथा गूढं तथेहितम्। यथेहितं विशुद्धं च यशः शश्वत्स्वभावतः ॥' इति दिक्।

भेदान्तरं लक्षयति-९६ **यद्** यदि। **एकस्य** 'उपमेयस्ये'ति शेषः। **बहु**। **उपमानम्**। **दृश्यते**। 'तर्हि'ति शेषः। **उपमा**। **माला**। अयम्भावः-यथा माला सजातीयैरेव विजातीयैरेव सजातीयविजातीयोभयविधैरेव वा कुसुमैरलङ्क्रियते, तथा-बहुभिर्बहुविधैरेव वोपमानैरलङ्क्रियमाणा मालासादृश्यान्मालेत्यपराभिधेयोपमा। इति।

---

१ अत्र विवृतिकारा आहुः-'बह्वित्येकाधिकपरम्। तेन-"तां हंसमालाः शरदीव गङ्गां महौषधीर्नक्तमिवात्मभासः। स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ॥" इत्यादावुपमाद्वयेऽपि मालात्वमक्षतम्।' इति।

यथा—'वारिजेनेव सरसी शशिनेव निशीथिनी । यौवनेनेव वनिता नयेन श्रीर्मनोरमा ॥ ९८ ॥'
क्वचिदुपमानोपमेययोर्द्वयोरपि प्रकृतत्वं दृश्यते ।

'हंसश्चन्द्र इवाभाति जलं व्योमतलं यथा । विमलाः कुमुदानीव तारकाः शरदागमे ॥ ९९ ॥'

'अस्य राज्ञो गृहे भान्ति भूपानां ता विभूतयः । पुरन्दरस्य भुवने कल्पवृक्षभवा इव ॥१००॥'

इत्यत्र—उपमेयविभूतिभिः 'कल्पवृक्षभवा इव' इत्युपमानभूता विभूतय आक्षिप्यन्ते इत्याक्षेपोपमा, अत्रैव 'गृहे' इत्यस्य 'भवने' इत्यनेन प्रतिनिर्देशात् प्रतिनिर्देश्यात्मा । इत्यादयश्च न लक्षिताः, एवंविधवैचित्र्यस्य सहस्रधा दर्शनात् ।

---

उदाहरति—यथा—'वारिजेन कमलेन । सरसी । इव । यद्वा—सरसी । वारिजेनेव कमलेनेव । शशिना चन्द्रेण । निशीथिनी रात्रिः । इव । यद्वा—निशीथिनी । शशिनेव । यौवनेन तारुण्येन । वनिता कान्ता । इव । यद्वा—वनिता । यौवनेनेत्यन्वयः । श्रीः सम्पत् । नयेन । यद्वा—नयेन । श्रीरित्यन्वयः । मनोरमा ॥' इदमत्रोच्यम्—अत्र प्रथमे पक्षे सरस्यादय उपमानभूताः, श्रीः पुनरुपमेयभूता, द्वितीये पक्षे—वारिजादीनामुपमानत्वम्, नयस्योपमानत्वम् । एवमुभयथाऽपि उपमेयैक्येऽपि उपमानानैक्यम् । सरस्यादीनामुपमानत्वे मनोरमत्वं धर्मः, वारिजादीनामुपमानत्वे चेवस्य नित्यसमासत्वं सङ्गच्छते यथा वा—''ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् । प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥'' इति । अत्र च नेत्रानन्दजननादयो विभिन्नाः सादृश्यहेतवो धर्माः, पूर्वत्र मनोहरत्वमेको धर्म इति भेदः । इति ॥ ९८ ॥

अस्या अपि प्रभेदं निर्देष्टुमुपक्रमते—क्वचित् । द्वयोः । अपि । उपमानोपमेययोः । प्रकृतत्वम् । इदमवगमयति—'उपमेयस्य प्रकृतत्वमुपमानस्याप्रकृतत्वमिति प्रवादः प्रायिकः । प्रकृतत्वं च वर्णनीयस्योत्कर्षाधायकत्वेनाकाङ्क्षितत्वम् । इति । दृश्यते' यथा—'हंसः । चन्द्र । इव । आभाति । यथा व्योमतलं व्योम । अत्र तलशब्दः स्वरूपवाचकः । 'तथे'ति शेषः । जलम् । शरदागमे शरदः प्रारम्भे । तारकाः । कुमुदानीव । विमलाः । 'स्फुरन्ती'ति पाठान्तरं साधु, भिन्नलिङ्गत्वेऽपि अन्वयोपपत्तेः ॥ ९९ ॥

एतच्च दिग्दर्शनमित्यभिप्रायेणाह—'अस्य । राज्ञः । गृहे प्रासादे । भूपानां राजान्तरान्तराणाम् । ताः । विभूतयः । भान्ति । 'याः' इति शेषः । पुरन्दरस्य देवेन्द्रस्य । भवने प्रासादे । कल्पवृक्षभवाः । इवः । 'स्थिता' इति शेषः ।

इत्यत्र । उपमेयविभूतिभिः प्रकृतस्य राज्ञो भवने विद्यमानाभिः सम्पद्भिः । 'कल्पवृक्षभवा इव' इत्युपमानभूताः । विभूतयः । आक्षिप्यन्ते बलात्सादृश्यप्रतियोगिन्यः क्रियन्ते । इत्याक्षेपोपमा । तथा—अत्र । एव । 'गृहे' इत्यस्य । 'भवने' इत्यनेन । प्रतिनिर्देशात् । ल्यबर्थे पञ्चमी । प्रतिनिर्देश्यात्मा 'उपमे'ति शेषः । अयम्भावः—यथा—इन्द्रस्य भवने यथाऽभिलापं सम्पदः सृजतां कल्पपादपानां सम्पाद्याः सम्पदः सर्वतो विलसन्ति, एवम् अस्य नृपतेः सद्मन्यपि कामं समर्पयमाणानां वश्यानां नृपतीनां विभूतयः । एवमिन्द्रविभूतय उपमानभूताः, प्रकृता विभूतय उपमेयभूताः । अत्र च—'ता' इत्यनेन विशेष्यतया निर्दिष्टानामुपमेयविभूतीनामुपमानविभूतयो विशेषणतां नीता एव सादृश्यप्रतियोगितयाऽऽक्षिप्यन्त इत्याक्षेपोपमेयम् । तथा—'राज्ञो गृहे' इति निर्दिश्य 'पुरन्दरस्य भुवने' इति प्रतिनिर्देशात् उभयोः सादृश्यं निर्दिश्य प्रतिनिर्देश्यात्मनाऽवस्थितमिति प्रतिनिर्दिश्यात्मेयमुपमा । इति । इत्यादयः । 'उपमाभेदा' इति शेषः । च । एवंविधवैचित्र्यस्य । सहस्रधा । दर्शनात् । न । लक्षिताः, 'किन्तु ते स्वयमूह्या' इति शेषः । तथा हि—'चन्द्रबिम्बादिव विषं चन्दनादिव पावकः । परुषा वागितो वक्त्रान्निःसरेन्मतिमन्मणे ॥' इत्यसम्भावितोपमा, 'उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम् । तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥' इति कविकल्पितोपमानोपमा 'अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् । एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः ॥' इत्युपपादकोपमा, 'इतराण्यपि रक्षांसि पेतुर्वानरकोटिषु । रजांसि

९७ उपमानोपमेयत्वमेकस्यैव त्वनन्वयः ॥७९॥

अर्थादेकवाक्ये यथा—

'राजीवमिव राजीवं जलं जलमिवाजनि। चन्द्रश्चन्द्र इवातन्द्रः शरत्समुदयोद्यमे ॥१०१॥'

अत्र राजीवादीनामनन्यसदृशत्वप्रतिपादनार्थमुपमानोपमेयभावो वैवक्षिकः। 'राजीवमिव पाथोजम्' इति चास्य लाटानुप्रासाद्विविक्तो विषयः। किन्तु अत्र, उचितत्वादेकशब्दप्रयोग एव श्रेयान्। तदुक्तम्—

'अनन्वये च शब्दैक्यम् औचित्यादानुषङ्गिकम्।
अस्मिँल्लाटानुप्रासे तु साक्षादेव प्रयोजकम् ॥१०२॥' इति।

---

समरोत्थानि तच्छोणितनदीष्विव ॥' इति समुचितोपमा, 'न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे। इति विस्पष्टसादृश्या-तत्त्वाख्यानोपमैव सा ॥' इत्युक्ता तत्त्वाख्यानोपमा, 'उद्गर्भहूणतरुणीरमणोपमर्दभग्नोन्नतस्तननिवेशनिभं हिमांशोः। बिम्बं कठोरबिसकाण्डकडारमेतद्विष्णोः पदं प्रथममग्रकरैर्व्यनक्ति ॥' इत्यप्रसिद्धोपमानोपमा, 'सद्यो मुण्डितमत्तहूणचिबुकप्रस्पर्धि नारङ्गकम्।' इति कल्पितोपमा; इत्यनेकशः किञ्चिद्वैचित्र्यविशेषा उपमाः। काव्यप्रकाशकृता तु—एकदेशविवर्तिन्याद्य-त्रयोऽपि नोदिता भेदाः। इति दिक् ॥१००॥

एवमुपमां निरूप्यानन्वयं निरूपयति—९७ उपमेत्यादिना।

९७ एकस्य प्रकृतस्य वर्णनीयस्य। एव 'वस्तुन' इति शेषः। उपमानोपमेयत्वमुपमानत्वमुपमेयत्वं च। तु (इदं पूर्वतो व्यवच्छेदसूचनार्थम्)। अनन्वयः। अयम्भावः—न विद्यतेऽन्वय उपमानान्तरेण सम्बन्धो यत्र सोऽनन्वयः। अत एवोक्तम्—'द्वितीयसदृशव्यवच्छेदफलकवर्णनविषयीभूतं यदेकोपमानोपमेयकं सादृश्यं तदनन्वयः।' इति ॥७९॥

ननु—एवमुपमेयोपमादावतिव्याप्तौ क उद्धारोपाय इत्याशङ्क्य स्वयमाह—अर्थादित्यादि। स्पष्टम्। एतेन—यत्र वाक्यैक्ये सति यद्धर्म्मावच्छिन्नप्रतियोगिताकं सादृश्यं तत्र तद्धर्मावच्छिन्नतदनुयोगिताकत्वमनन्वयत्वम्। एतेनोपमेयोप-मारसनोपमाऽऽदौ अतिप्रसङ्गो निरस्तः। अत्राहुर्विवृतिकाराः—'ननूपमेयोपमायां 'द्वयोः' इत्युपादानात् कथमतिव्याप्तिरिति चेत्? न, तत्र—प्रत्येकपदार्थस्यापि पर्य्यायेणोपमानोपमेयसम्भवात्' इति।

उदाहरति—यथा—'राजीवमिवे'त्यादि।

'शरत्समुदयोद्यमे शरदः समुदयं समुल्लासं यथा भवेत्तथोद्यम इति तस्मिंस्तथोक्ते। 'सती'ति शेषः। राजीव-मिव कमलमिव। 'राजीवं नलिने, ना तु भेदे मीनकुरङ्गयोः।' इति गोपालः। राजीवम्। जलमिव। जलम्। अजनि। तथा—चन्द्रः। इव। अतन्द्रोऽम्लानः। चन्द्रः। 'अजनी'ति पूर्वतोऽन्वेति ॥१०१॥

लक्षणं सङ्गमयते—अत्रेत्यादिना।

अत्र। राजीवादीनाम्। अनन्यसदृशत्वप्रतिपादनार्थम्। वैवक्षिको विवक्षया प्रतिपादितः। उपमानोपमेयभावः।

ननु लाटानुप्रासादस्य कथं व्यवच्छेद इत्याशङ्क्याह—'राजीव'मित्यादि।

'राजीवमिव। पाथोजं पाथो जलं तस्माज्जायत इति तथोक्तम्। कमलमित्यर्थः।' इति। 'एवंविधस्ये'ति। शेषः। च। अस्य। लाटानुप्रासात्। विविक्तः। विषयः। अयम्भावः—लाटानुप्रासो हि—तात्पर्यमात्रतो भेदे शब्दै-क्ये, अयं तु तात्पर्यतोऽभेदे शब्दभेदेऽपि सम्भवतीति। ननु कथं शब्दैक्ये उदाह्रियते—इत्याशङ्क्याह—किन्तु। अत्रा-ऽनन्वये। उचितत्वाच्चमत्कारविशेषकत्वात्। एकशब्दप्रयोगः एकविधशब्दप्रयोगः। एव। श्रेयान्। ननु किंमत्र नियामकमित्याह—तत् तथा। उक्तम् 'आचार्य्यै'रिति शेषः।

'अनन्वये। च। औचित्यात्। शब्दैक्यम्। आनुषङ्गिकमनुषङ्गतः प्राप्तमनियतमिति यावत्। अस्मिन्। लाटानुप्रासे। तु। 'शब्दैक्य'मिति पूर्वतोऽन्वेति। साक्षात् स्वयम्। एव। प्रयोजकमुपस्कारकम-लङ्कारत्वाधायकमिति यावत् ॥' इति। यथा वा—'इयति प्रपञ्चविषये तीर्थानि कियन्ति सन्ति पुण्यानि। परमार्थतो

## ९८ पर्य्यायेण द्वयोरेतदुपमेयोपमा मता ।

विचरे देवी गङ्गा तु गङ्गेव ॥' इति । यत्तूदाहृतम्–'लोहितपीतैः कुसुमैरावृतमाभाति भूभृतः शिखरम् । दावज्वलनज्वालैः कदाचिदाकीर्णमिव समये ॥' इति, 'नखकिरणपरम्पराऽभिरामं किमपि पदाम्बुरुहद्वयं मुरारेः । अभिनवसुरदीर्घिकाप्रवाहप्रकरपरीतमिव स्फुटं चकासे ॥' इति च; तत्, शिखरस्य पदाम्बुरुहस्य चैकस्यैवोपमानोपमेयत्वेऽपि 'धर्मभेदेन धर्म्मिभेद' इति नयेन पूर्वत्र कुसुमावृतत्वज्वालाकीर्णत्वाभ्याम्, परत्र नखकिरणाभिरामत्व-सुरदीर्घिकाप्रवाहपरीतत्वाभ्यां शिखरस्य पदाम्बुरुहस्य च भेदात् । अत्राहुर्गङ्गाधरकाराः–"स च पूर्णो लुप्तश्चेति तावद् द्विविधः। पूर्णस्तूपमावत् षड्विधोऽपि सम्भवति । यथा–'गङ्गा इव यथा गङ्गा गङ्गा गङ्गेव पावनी । हरिणा सदृशो बन्धुर्हरिस्तुल्यः परो हरिः ॥'' गुरुवद् गुरुराराध्यो गुरुवद्गौरवं गुरोः ।' लुप्तेऽपि धर्म्मलुप्तः पञ्चविधः सम्भवति । प्रागुक्ते साधर्म्ये धर्मवाचकपदमपहाय पदान्तरद्धाने । तथा वाचकलुप्तः यथा–'रामायमाणः श्रीरामः सीता सीतामनोरमा । ममान्तः करणे नित्यं विहरेतां जगद्गुरू ॥' इत्यत्र क्यङ्समासयोः । एवम् 'लङ्कापुरादतितरां कुपितः फणीव निर्गत्य जातु पृतनापतिभिः परीतः । क्रुद्धं रणे सपदि दाशरथिं दशास्यः संरब्धदाशरथिदर्शमहो ददर्श ॥' एवं कर्तृ-णमुलादावप्यूह्यम् । 'अम्बरमम्बरं यद्वत् समुद्रोऽपि समुद्रति । विक्रमार्कमहीपाल ! तथा त्वं विक्रमार्कसि ॥' अत्र वाक्यार्थावयवेष्वनन्वयेषु धर्मवाचकयोर्लोपः । मुखवाक्यार्थस्त्वनन्वयफलेन निरुपमत्वेन समानधर्मेण प्रयोजितो मालोपमैव । एषा च ज्ञानसौकर्य्यायात्रैव दर्शिता 'एतावति प्रपञ्चेऽस्मिन् सदेवासुरमानुषे । केनोपमीयतां तज्ज्ञै रामो रामपराक्रमः ॥' अत्र वाचकधर्मोपमानां लोपः। अत्र च उपमानलुप्तादयोऽन्ये भेदा असम्भवादहृद्यत्वाच्च नोदाहृताः ।" इति । अयं ध्वन्यमानो यथा–'पृष्टाः खलु परपुष्टाः परितो दृष्टाश्च विटपिनः सर्वे । भेदेन भुवि न पेदे साधर्म्यं ते रसाल ! मधुपेन ॥' इत्यत्र हि 'भेदेने'त्यभिधानेनाभेदे सादृश्यमनन्वयात्मकं, तच्च प्रपेदे इति ध्वन्यते । 'ननु 'भुवनत्रितयेऽपि मानवैः परिपूर्णे विबुधैश्च दानवैः । न भविष्यति नास्ति नाभवन्नृप ! यस्ते भजते तुलापदम् ॥' इत्यादौ सर्वथैवोपमाननिषेधात्मकोऽसमालङ्कारः प्राचीनैरुक्तः, उपमानलुप्तोपमाऽतिव्याप्तिवारणाय 'सर्वथैवे'ति । एवं च–तद्ध्वनिनैव चमत्कारोपपत्तौ अनन्वयस्य पृथगलङ्कारत्वं किमर्थम् ? यदि तु रस्यनुकूलतया कुतश्चिदङ्गात् भूषणापसारणं यथा चमत्काराय तथा प्रकृते उपमानालङ्काराभाववर्णनमेव चमत्काराय न तु तत्रासमनामा पृथगलङ्कार इत्युच्यते, तर्हि तद्ध्वनिनैवोपपत्तिरिति चेन्न, पर्य्यायोक्तसादृश्यमूला प्रस्तुतप्रशंसादौ ध्वन्यमानार्थसत्त्वेऽपि वाच्यार्थकृतचमत्कारमादायालङ्कारत्ववदुपपत्तेः, अन्यथा दीपकादावपि उपमाऽभिव्यक्त्यैव चमत्कारोपपत्तौ तेषामपि पृथगलङ्कारत्वं न स्यात् ।' इत्युद्द्योतकाराश्च ॥ १०२ ॥

एवमनन्वयं निरूप्योपमेयोपमां लक्षयति–९८पर्य्यायेण क्रमेण । द्वयोरुपमानोपमेययोः।एतदुपमानोपमेयत्वम् । उपमेयोपमा । मता । अयम्भावः–यत्र द्वयोरुपमानोपमेययोः पर्य्यायेण तृतीयसदृशव्यवच्छेदबुद्धिफलकवर्णनविषयीभूतमुपमानोपमेयत्वम्, सोपमेयोपमा । एतच्च वाक्यद्वय एव सम्भवति, तत्र क्रमिकताया अन्यथाऽनुपपत्तेः । एवं च अस्या रसनोपमाऽनन्वयपरस्परोपमाभ्यो व्यवच्छेदः। तथा हि–रसनोपमायां न पर्य्यायेणोपमानोपमेयत्वम्, अनन्वये च न द्वयोः, 'तडिदिव तन्वी भवती, भवतीवेयं तडिल्लता गौरी ।' इत्यादौ परस्परोपमायां तृतीयसदृशव्यवच्छेदकबुद्धिफलकवर्णनविषयीभूतत्वाभावान्नातिव्याप्तिः।ननु–'कमलेव मतिर्मतिरिव कमले'त्यत्र कथं पुनर्लक्षणं समन्वेति ? इति चेत् ! तत्र तानवगौरिमाभ्यां धर्माभ्यां तृतीयसदृशव्यवच्छेदाभावः, अत्र च तथा धर्मानुल्लेखाद्द्वयोरुपमानोपमेयत्वेऽस्त्येव तृतीयसदृशव्यवच्छेदः । एवं च–'तडिदिव गौरी भवती भवतीव तडिद्गौरी' इत्यादौ उभयोरेकधर्मानुगामितया तृतीयसदृशव्यवच्छेदान्न परस्परा, किन्त्वेषैव । इदमुक्तम्–'कमलमिव वदनं रुचिर'मिति मुखे रुचिरतथा कमलसादृश्ये वर्णिते कमलेऽपि रुचिरतया मुखसादृश्यमर्थत आयाति, साधारणधर्मस्योभयानुगतत्वात् । 'वदनमिव कमलं रुचिर'मिति पुनः कमले मुखसादृश्ये वर्ण्यमाने वदनकमलयो रुचिरतया सादृश्यं परस्परमनुगतं सिध्यति, न त्वन्ग्येवेति तृतीयसदृशव्यवच्छेदः फलति । अथ–तानवधर्मेण भवत्पदवाच्यायां कान्तायां तडित्सादृश्ये वर्णिते तडिति पुनर्गौरिमविशिष्टभवत्पदवाच्यया सादृश्यं नार्थतः सिध्यति । तानवविशिष्टत्वगौरिमविशिष्टत्वयोर्धर्मयोरुपमाद्वये भिन्नत्वात् । अतः–एवंविधे स्थले पर्य्या-

एतदुपमानोपमेयत्वम्। अर्थात्-वाक्यद्वये। यथा-

'कमलेव मतिर्मतिरिव कमला, तनुरिव विभा, विभेव तनुः।
धरणीव धृतिर्धृतिरिव धरणी, सततं विभाति बत यस्य ॥ १०३ ॥'

अत्रास्य राज्ञः श्रीबुद्धयादिसदृशं नान्यदस्तीत्यभिप्रायः।

९९ सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते ॥ ८० ॥

यथा-

'अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमंजुलम्। स्मरामि वदनं तस्याश्चारु चञ्चललोचनम् ॥१०४॥'

---

येणोपमानो पमेयभावो वर्ण्यमानो न सदृशान्तरव्यवच्छेदफलक इति परस्परोपमाया एव साम्राज्यम्। अत्र च धर्म्मः क्वचिदनुगामी, क्वचिद्बिम्बप्रतिबिम्बभावापन्नश्च। इति दिक्।

कारिकां स्पष्टयितुं तद्दुरूहार्थतां परिहरति-एतदित्यादिना। स्पष्टम्।

उदाहरति-यथा-कमलेवेत्यादिना। 'यस्य। बत भद्रम्। कमलेव सम्पदिव। 'कमला श्रीर्हरिप्रिया।' इत्यमरः। मतिर्बुद्धिः। 'स्पृहणीये'ति शेषः। मतिरिव। कमला 'स्पृहणीये'ति शेषः। तनुरिव शरीरमिवाकृतिरिवेति यावत्। विभा कान्तिः 'प्रचिते'ति शेषः। विभेव। तनुः। 'प्रचिते'ति शेषः। धरणीव पृथिवीव। धृतिर्धैर्य्यम्। धृतिरिव। धरणी 'विस्तृते'ति शेषः। सततम्। विभाति। 'सोऽय'मिति शेषः। आर्य्यागीतिश्छन्दः ॥ १०३ ॥'

अत्र वैचित्र्यं निर्दिशति-अत्रेत्यादिना। स्पष्टम्। इदं बोद्धव्यम्-अत्रानुगामी धर्मः अर्थानुगृहीतः, शाब्दस्तु-'निखिले निगमकदम्बे लोकेष्वप्येष निर्विवादोऽर्थः। शिव इव गुरुर्गरीयान् गुरुरिव सोऽयं सदा शिवोऽपि तथा॥' इति। बिम्बानुबिम्बत्वमापन्नो यथा-'सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः। वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः॥' अत्र सच्छायत्वेन वदनाम्बुजानां धर्म्मः। उपचारिते धर्मेऽप्येषा सम्भवति यथा-'अचला इव विद्वांसो विद्वांस इवाचला गुरवः। शास्त्राणि तोयनिधिवत् तोयनिधिः शास्त्रवद्बहुगभीरः॥' इति। गुरुत्वगभीरत्वयोः शास्त्रेषूपचाराच्चोपचरितो धर्म्मः। न। चानुगामिन आर्थत्वे धर्मानेकत्वेऽप्यस्याः सम्भव एतेन-'कमलेव मति' रित्यादावपि-धर्मानेकत्वाङ्गीकारे परस्परोपमैवेति सूचितम्। अन्यथा-'सविता विधवति विधुरपि सवितरति दिनन्ति यामिन्यः। यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि॥' इत्यादावतिप्रसज्येत। न चेष्टम् इति वाच्यम्, सवित्रादेर्विध्वादिसदृशीभवने शीतलत्वादेः, विध्वादेश्च सवित्रादिसदृशीभवने प्रचण्डत्वादेश्च धर्मस्य विवक्षितस्य भेदात् तृतीयसदृशव्यवच्छेदफलकत्वानुपपत्तेः। इति दिक्।

स्मरणं लक्षयति-९९ सदृशानुभवात् सदृशस्य समानगुणकारादेरनुभवस्तस्मात्। वस्तुस्मृतिर्वस्तुनः स्मृतिः। स्मरणम्। उच्यते। अयम्भावः-गुणादिना कस्यचित् कस्मिंश्चित् प्रतिफलितस्य सादृश्यस्य दर्शनादिना स्वस्मिन् तयोरुभयोर्जातस्य संस्कारस्य महिम्नोद्भावितं सादृश्यप्रतियोग्यनुसन्धानपूर्वकं सादृश्यानुयोग्यनुसन्धानं स्मरणम्। अत एवोक्तम्-'सदृशज्ञानोद्बोधितसंस्कारभवा मतिः स्मरणम्' इति। एवं च-'भवदभिमतवस्तून्याकिरन्त्याः समन्तात् सरसिजदलतल्पं मर्मरं कल्पयन्त्याः। हतकरुण! वयस्या जीवनोपायमस्याः स्मरणमविरलं ते हन्त सम्पादयन्ति॥' इत्यादौ सम्बन्धिज्ञानजन्यस्मरणस्य नालङ्कारत्वम्। चिन्ताजन्यस्मृतेश्चालङ्कारत्वाभावं स्वयमुदाहरिष्यते-'मयि सकपट'-मित्यादिना। इति ॥ ८० ॥

उदाहरति-यथा। खेलत्खञ्जनमञ्जुलं 'खेलन्तौ समीपे मध्ये वा क्रीडन्तौ खञ्जनौ पक्षिविशेषौ ताभ्यां मञ्जुलं सुन्दरम्, तत्तथोक्तम्। इदम्। अरविन्दम्। वीक्ष्य दृष्ट्वा। तस्याः। चारु सुन्दरम्। चञ्चललोचनं चञ्चले लोचने यत्र तत्तथोक्तम्। यद्वा-चारुचञ्चललोचनमिति समस्तं पदम्, तेन-चारुणी सुन्दरे चञ्चले लोचने यत्र, चारु यथा स्यात्तथा वा चञ्चले लोचने यत्र तत्तथोक्तम्। वदनं मुखम्। स्मरामि। अत्र हि-खञ्जनसान्निध्ये कमलशोभायाः,

'मयि सकपटं किञ्चित् क्वापि प्रणीतविलोचने । किमपि नयनं प्राप्ते तिर्यग्विजृम्भिततारकम् ।
स्मितमुपगतामालीं दृष्ट्वा सलज्जमवाञ्चितं कुवलयदृशःस्मेरं स्मेरं स्मरामि तदाननम् ॥ १०५ ॥'

इत्यादौ च स्मृतेः सादृश्यानुभवं विना उत्थापितत्वान्नायमलङ्कारः। राघवानन्दमहापात्रास्तु वैसादृश्यात् स्मृतिमपि स्मरणालङ्कारमिच्छन्ति । तत्रोदाहरणं तेषामेव यथा–

'शिरीषमृद्वी गिरिषु प्रपेदे यदा यदा दुःखशतानि सीता।
तदा तदास्याः सदनेषु सौख्य-लक्षाणि दध्यौ गलदस्रु रामः ॥ १०६ ॥'

**१०० रूपकं रूपितारोपो विषये निरपह्नवे ।**

'रूपित' इति परिणामाद् व्यवच्छेदः, एतच्च तत्प्रस्तावे विवेचयिष्यामः ।

---

चञ्चललोचनशालित्वे मुखस्य सदृशमिति तद्दर्शनेनास्य स्मरणं शृङ्गारपोषकत्वादलङ्कारतां प्राप्तम् ॥' इदं द्विधा, एतज्जन्मनि जन्मान्तरे वाऽनुभूतस्य संस्कारजन्यत्वात् । तत्राद्यमुदाहृतम् । यथा वा क्रमेण–'निम्ननाभिकुहरेषु यदम्भः प्लावितं चलदृशां लहरीभिः । तद्भवैः कुहुरुतैः सुरनार्यः स्मारिताः सुरतकण्ठरुतानाम् ॥' 'दिव्यानामपि कृतविस्मयं पुरस्तादम्भस्तः स्फुरदरविन्दचारुहस्ताम् । उद्वीक्ष्य श्रियमिव काञ्चिदुत्तरन्तीमस्मार्षीज्जलनिधिमन्थनस्य शौरिः ॥' अत्र हि कस्याश्चिदरविन्दहस्ताया अम्भस उपायान्त्याः कान्ताया दर्शनेन श्रीस्मरणपूर्वकं पूर्वानुष्ठितसमुद्रमन्थनसंस्कारोद्बोधात् । अत्राहुः–'न चैकसम्बन्धिज्ञानमात्रस्यापरसम्बन्धिस्मारकतया नायिकादर्शनजन्यश्रीस्मरणकल्पने मानाभाव इति वाच्यम् । वास्तवश्रीपतियोगिकसादृश्यवत् कामिनीज्ञानस्य मन्थनस्मारकत्वाभावात् सादृश्यवत्त्वेन ज्ञायमानस्य कामिनीज्ञानस्य चावश्यं श्रीस्मरणजनकत्वात् । अन्यथा 'उद्वीक्ष्यास्मार्षी' दित्यस्यासङ्गतत्वापत्तेः । अन्यसदृशदर्शनेनान्यस्मरणानुपपत्तेः । श्रीस्मरणद्वारैव दर्शनस्य समुद्रमथनस्मरणजनकताया विवक्षितत्वात् । इति ॥१०४॥

चिन्तानन्यस्मृतेरनलङ्कारत्वमुदाहृत्य दर्शयति–'मयीत्यादिना । व्याख्यातपूर्वमिदम्। अन्यत्स्पष्टम् ॥१०५॥

स्वपूर्वजानां मतेन प्रकारान्तरेणापि स्मरणं लक्षयितुमाह–**राघवानन्दमहापात्राः । तु** ( इदं पूर्वतो व्यवच्छेदार्थम् )। **वैसादृश्यात्** विसदृशं सदृशविरुद्धं तस्य भाव इति तस्मात् तथोक्तात् । 'जायमाना'मिति शेषः । **स्मृतिम् । अपि । स्मरणालङ्कारम् । इच्छन्ति** मन्यन्ते । ननु तत्र किमुदाहरणमित्युदाहर्तुकाम आह–**तत्र** तथाभूते स्मरणे । **तेषां** राघवानन्दानाम् । **एव । उदाहरणम् । यथा–'यदा यदा** यस्मिन्यस्मिन् क्रतौ इत्यर्थः । **शिरीषमृद्वी । सीता । दुःखशतानि । गिरिषु** पर्वतप्रदेशेषु । **प्रपेदे** प्राप्तवती । **तदा तदा । अस्याः** सीतायाः। **सदनेषु । सौख्यलक्षाणि । गलदस्रु** गदलश्रुधारं यथाभवेत्तथा । **रामः । दध्यौ** सस्मार । अत्र हि–रामस्य सीतायाः । प्रासादेषु अनुभूतानि सौख्यकारणभूतानि सुरतानि सीतायाः पर्वतेषु दुःखकारणभूतानां सञ्चरणादीनां दर्शनजन्यस्मृतिकानि अभिहितानि । अत्रापि–उपस्कारकतासद्भावादलङ्कारव्यपदेश्यत्वम् ॥१०६॥

रूपकं लक्षयति–**१०० विषये** उपमेये । **निरपह्नवे** निरस्तोऽपह्नवः स्वरूपतो गोपनं यस्य तादृशे । उपमानेन सममभिन्नतया प्रतिपाद्यमानस्यापि यस्योपमेयस्य स्वरूपतोऽनुपादानाभावादनपह्नवस्तथाभूते उपमेये सतीति भावः । **रूपितारोपो** रूपितस्याभिन्नतया प्रतिपादितस्योपमानस्यारोप आरोपणम्, यद्वा–रूपितो निरूपित आरोपोऽभेदाध्यवसाय उपमानस्याभेदोद्भावनमिति तथोक्तः। 'रूपितारोपा'दिति पाठे तु रूपितः कल्पितोऽसावारोप इति तमतति व्याप्नोतीति तथोक्तम् । **रूपकं** रूपयत्युपमानोपमेययोरभेदमध्यवसाययति कल्पयितुमपि वास्तवमिवावगमयतीति तथोक्तम्। तन्नामाऽलङ्कारः । तथा च–उपमानेन सममुपमेयस्याभेदारोपस्य कल्पितत्वेनोपमेयस्य स्वरूपतोभिभावनाभावः, उपमेयस्य वा उपमानेनातिसादृश्ये स्वरूपापह्नवार्हतायामपि स्वरूपापह्नवशून्यत्व एव तयोरभेदारोपणं रूपकालङ्कार इति फलितम् । अत एव पण्डितराजा अप्याहुः–उपमेयताऽवच्छेदकपुरस्कारेणोपमेये शब्दान्निश्चीयमानमुपमानतादात्म्यं रूपकम् । तदेवोपस्कारकत्वविशिष्टमलङ्कारः ।' इति । उपस्कारकत्वं चालङ्कारत्वबीजम् ।

अलङ्कारान्तरादस्य व्यवच्छेदं निर्दिशति–'**रूपित' इति** 'अनेने'ति शेषः । **परिणामात्** तदभिधेयादलङ्कारात् । 'अस्ये' ति शेषः । **व्यवच्छेदः** । ननु एतावता कथं व्यवच्छेद इत्याशङ्क्याह–**एतत्** रूपकपरिणामयोर्वैलक्षण्यम् । **च । तत्प्रस्तावे** तस्य परिणामस्य प्रस्तावः प्रकरणं तस्मिन् । **विवेचयिष्यामो** विविच्य दर्शयिष्यामः । अयम्भावः–पारि-

'निरपह्नव' इत्यपह्नुतिव्यवच्छेदार्थम् ।

**१०१ तत्परम्परितं साङ्गं निरङ्गमिति च त्रिधा ॥८१॥**

तद्रूपकम् । तत्र-

**१०२ यत्र कस्यचिदारोपः परारोपणकारणम् ।**
**तत्परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम् ॥८२॥**
**प्रत्येकं केवलं माला-रूपं चेति चतुर्विधम् ।**

तत्र-श्लिष्टशब्दनिबन्धनं केवलपरम्परितं यथा-

'आहवे जगदुद्दण्डराजमण्डलराहवे । श्रीनृसिंहमहीपाल ! स्वस्त्यस्तु तव बाहवे ॥१०७॥'

---

णामे हि आरोप्यमाणस्य प्रकृतोपयोगित्वेनाप्रकृतत्वनियतोपमानताया बाधितत्वात् 'रूपिते'ति पदेन तद्व्यवच्छेदः । इति । **निरपह्नव' इति** 'विशेषण'मिति शेषः । **अपह्नुतिव्यवच्छेदार्थम**पह्नुतेर्व्यवच्छेदाय । अपह्नुतौ हि उपमेयगोपनेन भेदस्याप्यपह्नव इति स्फुटं ततोऽस्य भेदः। निगीर्य्याध्यवसानरूपायामतिशयोक्तौ विषयस्य निगीर्णत्वाच्च प्रत्यक्षो भेदः। एवं निदर्शनायामुपमेयस्य सत्त्वेऽपि आरोपस्यारूपितत्वाद्भेदः । भ्रान्तिमति भ्रान्तेरुत्थानावसरे एव विषयापह्नव इत्यस्य भेदः । उत्प्रेक्षायामपि नारोपः,किन्तु-अभेदेन तथा सम्भावनमिति व्यवच्छेदः।'विकसितं वदनकमल'मिति समासस्थले विशेषणस्य मुख्यतया, उपमानगतत्वादरूपकम् । उपमेयगतत्वे तु उपमा, यथा 'सहासं वदनकमल'मिति, उभयत्र तुल्यरूपत्वे रूपको-पमयोः सङ्करः। 'यथा रमणीयं वदनकमलम्'इति,अत्रापि-'रमणीयत्वमहो वदनेन्दोः' इत्युभयत्र रमणीयत्वस्यानुगतत्वेऽपि समासस्य मयूरव्यंसकादित्वान्न रूपकोपमयोः सङ्करः,किन्तु रूपकमेव । उपमा हि 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इति समाससत्त्व एव । अयमपि समास उपमानोपमेययोः समानलिङ्गत्वे सम्भवतीत्यत्र च समानलिङ्गत्वाभावादस्य चाभा-नाद्रूपकमेवेति बोध्यम् ।

अस्य च प्रथमं भेदत्रयं निर्दिशति-**तद्रूपकम्**।**परम्परितम्** परम्परा कार्य्यकारणभावानुपूर्वी जाताऽस्यास्मिन् वेति तथोक्तम् । **साङ्गं** सावयवम् । तथा-**निरङ्गं** निरवयवम् । **इति** । **च** । **त्रिधा** ॥ ८१ ॥

तत्पदं व्याचष्टे-**तदि**त्यादिना । स्पष्टम् ।

तत्रापि परम्परितं लक्षयन् तद्भेदानाह-**तत्र** तेषु त्रिविधेषु रूपकेषु मध्ये इत्यर्थः । **यत्र** यस्मिन् निरुक्तलक्षणाति-क्रान्तेऽलङ्कारे । **कस्यचित्** । **आरोपः** । **परारोपणकारणं** परमन्यद् यदारोपणं तस्य कारणं निमित्तभूतमिति तथोक्तम् । **तत्** । **परम्परितं** कार्य्यकारणरूपाऽऽरोपपरम्परा जाताऽस्येति तथोक्तम् । 'तदस्य सञ्जातं तारकादिभ्य इतच् ।' ५ । २ । ३६ इतीतच् । तदाख्यं रूपकमित्यर्थः। एतदेव-**श्लिष्टाश्लिष्टशब्दनिबन्धनं** श्लिष्टं श्लेषानुगृहीतम-श्लिष्टं श्लेषाननुगृहीतं तयोः शब्दयोः निबन्धनं वर्णनसम्पत्तिर्यस्य तत्तथाविधम् । **केवलम्**।**मालारूपम्** ।**च** । **इति** । **प्रत्येकम्** 'भिद्यमान'मिति शेषः । **चतुर्विधम्** । अयम्भावः । आरोपान्तरकारणकारणीभूतः कस्यचिदारोपः परम्परितं नाम रूपकालङ्कारः, असौ च केवलरूपो मालारूपश्च द्विविधः, अनयोरपि द्वयोर्विधयोः प्रत्येकं श्लिष्टनि-बन्धनत्वमश्लिष्टनिबन्धत्वञ्चेति द्वैविध्ये चातुर्विध्यमिति ॥८२॥

क्रमादुदाहर्त्तुकाम आह-**तत्र** तेषु चतुर्षु भेदेषु मध्ये । **श्लिष्टशब्दनिबन्धनं** श्लिष्टाः श्लेषानुगृहीता ये शब्दास्तै-र्निबन्धनं यस्य, श्लिष्टाः शब्दा यत्र तादृशं निबन्धनं यस्येति वा तत्तथोक्तम् । **केवलपरम्परितम्** । **यथा** 'आहवे इत्यादि ।

'हे **श्रीनृसिंहमहीपाल** ! **आहवे** सङ्ग्रामे । 'आहवः सङ्गरे यज्ञे' इति हैमः । **जगदुद्दण्डराजमण्डलरा-हवे** जगति विश्वस्मिन् विश्वे ये उद्दण्डा निरङ्कुशाः कुलागममर्य्यादोल्लङ्घिनः स्वविक्रममदेन परं तुच्छं मन्यमाना ये राजानस्तेषां मण्डलं चक्रं तस्य राहुस्तस्मै तत्स्वरूपभूतायेत्यर्थः । **तव** । **बाहवे** । **स्वस्ति** । **अस्तु** ॥१०७॥'

अत्र 'राजमण्डलं' नृपसमूह एव'चन्द्रबिम्ब' मित्यारोपो राजवाहो राहुत्वारोपे निमित्तम् । मालारूपं यथा–

'पद्मोदयदिनाधीशः सदागतिसमीरणः । भूभृदावलिदम्भोलिरेक एव भवान् भुवि ॥१०८॥'

अत्र पद्मांया उदय एव पद्मानामुदयः, सतामागतिरेव सदागमनम्, भूभृतो राजान एव पर्वता इत्यध्यारोपो राज्ञः सूर्य्यत्वाद्यारोपे निमित्तम् ।

---

उदाहृतमर्थं दर्शयति–अत्रास्मिन्नुदाहृते पद्य इति यावत् । 'राजमण्डलं राज्ञां मण्डलम् । नृपसमूहः । एव । 'चन्द्रबिम्ब'मित्यारोपः । 'चन्द्रबिम्ब'मित्यभेदेन प्रतिपादनम् । राजबाहो राज्ञो वर्णनीयमहिम्नो नृपतेर्बाहुस्तस्य । राहुत्वारोपे । निमित्तं कारणम् । अयम्भावः–बाहो राहुत्वं चन्द्रमण्डलस्य मर्दनकर्मठत्वमूलकं सम्भवितुमर्हतीति 'राजमण्डल'मिति पदस्य नृपतिमण्डलार्थकस्यापि चन्द्रबिम्बा ( मण्डला ) भेदप्रतिपादनद्वारकम् । बाहोश्च चन्द्रबिम्बमर्दनकर्तृत्वमसम्भवमिति 'राजमण्डले'ति पदस्य 'चन्द्रबिम्बार्थकतया प्रतिपादितस्यापि 'नृपमण्डला'र्थकत्वेन कीर्त्तनमावश्यकमिति–राजमण्डलपदस्य नृपतिचक्रार्थकतया प्रयुक्तस्य अत एव–एतत्पदवाच्यस्य चन्द्रबिम्बत्वेन प्रतिपादनं शब्दकृताभेदद्वारकम् । 'रजा प्रभौ च नृपतौ क्षत्रिये रजनीपतौ । यक्षे शक्रे च पुंसि स्यात्' इति मेदिनीकारोक्तेः 'स्यान्मण्डलं द्वादशराजके च देशे च बिम्बे च कदम्बके च ।' इति विश्वकारोक्तेश्च । एवं च–अस्याभेदस्य बाहो राहुत्वारोपः कारणम्, एतच्चैकलस्येति परम्परितस्य श्लिष्टशब्दनिबन्धनं केवलत्वम् । इति । तर्कवागीशा अप्याहुः–'अत्र श्लेषेण रूप्यरूपकयोर्द्वयोरेवाभिधानं शब्दसाम्यरूपसादृश्यमूलं प्रथमं रूपकम्, तेन राजमण्डलपदवाच्योपमर्दकत्वरूपसादृश्यनिबन्धनं द्वितीयं रूपकम् ।' इति । प्रथमं राजमण्डलस्य राजमण्डलत्वारोपरूपम् । द्वितीयं बाहो राहुत्वप्रतिपादनरूपम् ।

मालारूपमुदाहर्तुमना आह–मालारूपम् । 'श्लिष्टशब्दनिबन्धन'मिति शेषः । 'परम्परितं रूपक'मिति तु प्रकृतप्राप्तम् । यथा । 'पद्मोदये'त्यादि ।

'पद्मोदयदिनाधीशः पद्माया लक्ष्म्यास्सम्पत्तेरिति यावत्, अन्यत्र पद्मानां कमलानामुदय उपार्जनं प्रकाशो वा तत्र दिनाधीशः सूर्य इति तथोक्तः । सदागतिसमीरणः सतामगतिरागमनमानयनमिति यावत्तत्र साधुजनानां गोष्ठीकरण इत्यर्थः समीरणो वायुः, अन्यत्र सदागतौ सदागमने समीरण इति तथोक्तः । 'समीरणः स्यात्पवने पथिके च फणिज्झके।' इति मेदिनी । भूभृदावलिदम्भोलिर्भूभृतां राज्ञामनुज्झितमदानां भूपानामिति,पर्वतानां वेति भावः आवलिः पङ्क्तिस्तत्र दम्भोलिर्वज्रम् । एकः । भवान् । एव । भुवि 'विदित' इति शेषः । अयम्भावः–कस्यचिद्राज्ञः स्तुतिपरमिदं पद्यम्,तथा च–भवान् लक्ष्मीसञ्चयने कमलविकासने सूर्य्य इव,सज्जनानां सङ्ग्रहणे सुगन्धानादाय सदा सञ्चरणशीलो वायुरिव,उन्मत्तानां राज्ञामुन्मूलने पर्वतानां विदारणे कुलिशमिव भवानेव जगतीतले विदित इति निष्कृष्टोऽर्थः । तत्र–पद्मोदयादयः शब्दा द्व्यर्थाः, एषां द्व्यर्थतामादायैवात्र रूप्यरूपकभावः सिद्ध इति वेदितव्यम् । इति ॥ १०८ ॥'

उदाहृतमर्थं निर्दिशति–अत्रेत्यादिना । स्पष्टोऽर्थः । अयम्भावः–'पद्मोदय' इत्यस्य 'पद्माया उदय' इत्यर्थः प्रकृतः, अस्य च राज्ञो दिनेश्वरत्वाभिधानेऽसङ्गतत्वात् 'पद्मानामुदय' इत्यर्थोऽप्रकृतोऽपि विवक्षितः, एवं प्रकृताप्रकृतयोः सङ्गतये एकस्यारोप्यत्वमपरस्यारोपकत्वम् । अत एव रूपकस्य परम्परितत्वम् । एवम्–'सदागतिः' इत्यस्य 'सतामागति'रित्यर्थः प्रकृतः, अस्य च समीरणत्वेन राज्ञः कीर्त्तनेऽसङ्गतत्वात् 'सदागमनम्' इत्यर्थोऽप्रकृतोऽपि विवक्षितः, एवमनयोः सङ्गतये आरोप्यारोपकत्वम् । तथा–'भूभृतः' इत्यस्य पदस्य 'राजानः' इत्यर्थः प्रकृतः, अस्य च दम्भोलित्वेन राज्ञः स्तवनेऽनिमित्तत्वात् 'पर्वता' इत्यप्रकृतोऽप्यर्थः प्रकृताप्रकृतयोरारोप्यारोपकत्वमादाय विवक्षितः समर्थ्यते । इत्थमनेकेषां क्रमेणारोप्यारोपकत्वे परम्परितस्य रूपकस्य मालारूपत्वम् । इति दिक् ।

यथा वा–'विद्वन्मानसहंस ! वैरिकमलासङ्कोचदीप्तद्युते ! दुर्गामार्गणनीललोहित ! समित्स्वीकारवैश्वानर ! । सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीम ! प्रभो ! साम्राज्यं वरवीर ! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥' इति, अत्र हिमानसादीनि श्लिष्टानि राज्ञो हंसत्वारोपेणाभिधाने श्लेषमहिम्ना मानसप्रभृतिषु सरोवरविशेषत्वारोपः कारणम्, तस्मात् परम्परितं रूपकमिदम्, एकस्मिन् सूत्रेऽनेकेषां कुसुमानामिव राज्ञि हंसादीनामारोपान्मालारूपं च ।

अश्लिष्टशब्दनिबन्धनं केवलं यथा-

'पान्तु वो जलदश्यामाः शार्ङ्गज्याऽऽघातकर्कशाः। त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः॥ १०९॥'

अत्र त्रैलोक्यस्य मण्डपत्वारोपो हरिबाहूनां स्तम्भत्वारोपे निमित्तम्।

मालारूपं यथा-

'मनोजराजस्य सितातपत्रं श्रीखण्डचित्रं हरिदङ्गनायाः।
विराजते व्योमसरःसरोजं कर्पूरपूरप्रभमिन्दुबिम्बम्॥ ११०॥'

अत्र मनोजादे राजत्वाद्यारोपश्चन्द्रबिम्बस्य सितातपत्रत्वाद्यारोपे निमित्तम्। तत्र च-राजभुजादीनां राहुत्वाद्यारोपो राजमण्डलादीनां चन्द्रमण्डलत्वाद्यारोपे निमित्तम्।' इति केचित्।

**१०३ अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्॥ ८३॥**

**समस्तवस्तुविषयमेकदेशविवर्त्ति च।**

---

एवं श्लेषनिबन्धनं परम्परितमुदाहृत्याश्लेषनिबन्धनमप्युदाहर्तुकाम उपक्रमते-अश्लिष्टेत्यादिना। स्पष्टम्। 'पान्त्वि'त्यादि।

'**जलदश्यामा** जलदा मेघा इव श्यामाः **शार्ङ्गज्याघातकर्कशाः** शार्ङ्गस्य तदाख्यस्य धनुषो ज्या मौर्वी तयाऽऽघात आहननं तेन कर्कशाः। **त्रैलोक्यमण्डपस्तम्भास्त्रै**लोक्यं लोकत्रयमेव मण्डपस्तस्य स्तम्भास्तत्स्वरूपभूताः। **चत्वारः**। **हरिबाहवो** हरेर्बाहवः। **वो** युष्मान्। **पान्तु**॥ १०९॥'

अत्र परम्परितत्वं दर्शयन् रूपकस्य केवलत्वं निर्दिशति-अत्रेत्यादिना। स्पष्टम्।

तथाविधमेव मालारूपमुदाहर्तुमाह-मालेत्यादि। स्पष्टम्। '**मनोजे**'त्यादि।

'**मनोजराजस्य** मनोजः कामदेव एव राजेति तस्य तथोक्तस्य। **सितातपत्रं** सितं च तदातपत्रं छत्रम्। **हरिदङ्गनाया** हरित् दिक् सैवाङ्गना तस्याः। **श्रीखण्डचित्रं** श्रीखण्डं चन्दनं तस्य चित्रं तिलकं तत्स्वरूपभूतम्। **व्योमसरःसरोजं** व्योमाकाशमेव सरस्तस्य सरोजं कमलं तथाभूतम्। **कर्पूरपूरप्रभं** कर्पूरस्य पूरस्तस्य प्रभा यस्मिन् कर्मणि तद् यथा भवेत्तथा। **इन्दुबिम्बम्**। **विराजते**। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः॥'

उदाहृतमर्थं दर्शयति-**अत्रे**त्यादिना। स्पष्टम्। इदम्बोध्यम्-मनोजादीनां श्लिष्टत्वाभावादश्लिष्टशब्दनिबन्धनत्वमेतस्येति।

'आहवे' इत्यादौ केषाञ्चिन्मतं निर्दिशति-**तत्र** 'आहवे जगदुद्दण्डराजमण्डलराहवे' इत्यादौ। **च**। **राजभुजादीनाम्**। आदिपदेन हरिभुजादीनां ग्रहणम्। बहुवचनमन्यत्राप्येवमिति सूचनार्थम्। **राहुत्वाद्यारोपः**। **राजमण्डलादीनाम्**। **चन्द्रमण्डलत्वाद्यारोपे**। **निमित्तम्**।' **इति**। **केचित्**। 'आहु'रिति शेषः। अयम्भावः-अन्येषां मतेन-'आहवे' इत्यादौ राजमण्डलादौ चन्द्रमण्डलत्वाद्यारोपो राजबाहो राहुत्वारोपे कारणम्, केषाञ्चिन्मतेन पुनरन्यथा। इति।

साङ्गं द्विप्रभेदं रूपकं पुनर्निर्दिशति-**१०३यदि**। **साङ्गस्य** सावयवस्याप्रधानभूतै रूपकान्तरैः सह वर्त्तमानस्येति यावत्। अत एव-**अङ्गिनः** प्रधानस्य। **रूपणम्**। **तत्** तर्हि। **साङ्गम्**। **एव**। अयम्भावः-प्रधानस्य रूपकस्य यद्यप्रधानै रूपकान्तरैः समं निरूपणं स्यात्तर्हि साङ्गं रूपकम्। अत एवास्य सावयवमिति संज्ञान्तरम्। प्राधान्याप्राधान्ये च अपेक्षकत्वापेक्षणीयत्वकृते एव। तथा च-यदपेक्षाकृतनिरूपणकं यत्तदपेक्षयाऽप्रधानम्, तत्तु स्वयं प्रधानम्। अत एवाहुः-'परस्परापेक्षनिष्पत्तिकानां रूपकाणां सङ्घातः सावयवम्।' इति। 'साङ्गत्वमनेकरूपकसमुदायः, एकस्मिन् रूपके द्वितीयस्याङ्गत्वेन अवस्थानात्। अङ्गशब्दो हि हेत्वर्थः।' इति च। इदं च-**समस्तवस्तुविषयम्**। **च**। **एकदेशविवर्त्ति**। 'इति द्विविधम्' इति शेषः॥ ८३॥

तत्र-

१०४ आरोप्याणामशेषाणां शाब्दत्वे प्रथमं मतम् ॥८४॥

प्रथमं समस्तवस्तुविषयम्। यथा-

'रावणावग्रहक्लान्तमिति वागमृतेन सः। अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे ॥१११॥'

अत्र कृष्णस्य मेघत्वारोपे वागादीनाममृतत्वादिकमारोपितम्।

१०५ यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तत्।

कस्यचिदारोप्यमाणस्य। यथा-

'लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम्। लोके लोचनरोलम्बकदम्बैः कैर्न पीयते! ॥१२॥'

अत्र लावण्ये मधुत्वारोपः शाब्दः, मुखस्य पद्मत्वारोप आर्थः। न चेयमेकदेशविवर्त्तिन्युपमा, विकस्वरत्वधर्मस्य आरोप्यमाणे पद्मे मुखतया वर्त्तमानात्, मुखे चोपचरितत्वात्।

---

एते च क्रमाल्लक्षयितुकाम आह-तत्र तयोर्मध्ये इत्यर्थः। समस्तवस्तुविषयमुच्यते इति शेषः। १०४आरोप्येत्यादिना।

१०४ अशेषाणाम्। आरोप्याणां भेदाभावेन निरूपणीयानाम्। शाब्दत्वे शब्दप्रतिपाद्यत्वे। प्रथमं समस्तवस्तुविषयं समस्तं वस्तु आरोप्यमाणविषयं शब्दप्रतिपाद्यो यत्र तादृशम्। मतम्। तदुक्तम्। 'समस्तवस्तुविषयं श्रौत आरोपिता यदा।' इति ॥८४॥

सूत्रोक्तं प्रथमपदार्थं व्याचष्टे-प्रथममित्यादिना। स्पष्टम्।

उदाहरति-यथा-'सः। कृष्णमेघः कृष्णो विष्णुरेव मेघः। रावणावग्रहक्लान्तं रावण एवावग्रहो वृष्टिप्रतिबन्धको ग्रहस्तेन क्लान्तं म्लानं मलिनच्छायमिति यावत्, तत्तथोक्तम्। मरुत्सस्यं मरुदेव एव सस्यं व्रीह्यादिक्षेत्रं तत्तथोक्तम्। इति एवम्। वागमृतेन वागुपदेशवाक्यमेवामृतं तदभिन्नं जलं तेन। अभिवृष्य प्रीणयित्वाऽभिषिच्य वा। तिरोदधेऽन्तर्दधे। रघुवंशस्येदं पद्यम्। अत्र हि-कृष्णे मेघत्वारोपः प्रधानभूतः, वागादावमृतत्वाद्यारोपोऽप्रधानभूतः, मेघत्वारोपस्य शाब्दत्वमिवामृतत्वाद्यारोपस्यापि। एवं च-अस्य शाब्दं समस्तवस्तुविषयत्वमिति निष्कृष्टम् १११॥'

लक्ष्यं सङ्गमयति-अत्रेत्यादिना। स्पष्टम्। अतोऽस्य साङ्गत्वमिति भावः।

एकदेशविवर्त्तिं लक्षयति-१०५ यत्र। कस्यचित् 'आरोप्यमाणस्ये'ति शेषः। 'नतु सर्वेषा'मिति त्वर्थतः प्राप्तम्। आर्थत्वम्। अर्थवशलभ्यत्वम्। तत्। एकदेशविवर्त्ति। 'साङ्गं रूपक'मित्यनुपज्यते। यत्र कस्यचिदारोप्यमाणस्यार्थत्वम्, अन्येषां तु शाब्दत्वं स्यात् तत् एकदेशे शाब्दमेकदेशे चार्थमिति एकदेशविवर्त्तिं रूपकमुच्यते इति भावः। तदेव स्फुटीकृतं पण्डितराजैः-'यत्र च क्वचिदवयवे शब्दोपात्तमारोप्यमाणं, क्वचिच्चार्थसामर्थ्याक्षिप्तं तदेकदेशे शब्दानुपात्तविषयिकेऽवयवरूपके विवर्त्तनात्स्वस्वरूपगोपनेनान्यथात्वेन वर्त्तनादेकदेशविवर्त्ति।' इति।

कस्यचिदिति पदार्थं सन्देहापनोदाय विवृणोति-कस्यचिदित्यादिना। स्पष्टम्।

उदाहरति-यथा-लावण्यमधुभिर्लावण्यान्येव मधूनि तैः। पूर्णम्। अस्याः। विकस्वरं प्रफुल्लम्। 'विकासी तु विकस्वरः।' इत्यमरः। आस्यं मुखम्। कैः। लोके जगति। लोचनरोलम्बकदम्बैर्लोचनान्येव रोलम्बकदम्बा भ्रमरपुञ्जास्तैः। 'इन्दिन्दरस्तु रोलम्बश्चञ्चरीको मधुव्रतः।' इति हारावली। न। पीयते ? अपि तु सर्वैरिति भावः ॥११२॥

शाब्दमार्थं चारोपं विभज्य निर्दिशति-अत्रेत्यादिना। स्पष्टम्।

एकदेशविवर्त्तिन्या भेदं निर्दिशति-नचेत्यादिना। स्पष्टम्। अयम्भावः-मुखस्य विकस्वरत्वं न साक्षात्, पुष्पधर्मस्य मुखसम्बन्धित्वानुपपत्तेः, 'नहि परधर्माः परत्र सम्भवन्ती'ति न्यायात्। अतोऽस्य विकस्वरत्वसिद्ध्यर्थं पद्मत्वेन निरूपणं युज्यते, अतः-मुखस्यारोपितपद्मत्वमधिश्रित्य लावण्ये मधुत्वमप्यारोप्यमाणं सङ्गच्छते, एवं साङ्गत्वेऽपि एकदेशे शाब्दत्वादेकदेचार्थत्वादेकदेशविवर्त्तित्वं रूपकस्य। इति। विवृतं च विवृतिकारैः-'नचेयमिति। समभिव्याहृतपदार्थस्य

**१०६ निरङ्गं केवलस्यैव रूपणं तदपि द्विधा ॥ ८५ ॥**
**मालाकेवलरूपत्वात्**

तत्र मालारूपं निरङ्गं यथा-
'निर्म्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम्। क्रीडागृहमनङ्गस्य सेयमिन्दीवरेक्षणा ॥११३॥'

केवलं यथा-
'दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहार इति सुन्दरि ! नात्र दूये।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रैर्यद्भिद्यते मृदु पदं ननु सा व्यथा मे ।। ११४ ॥'

---

मुख्यया वृत्त्याऽन्वयसम्भव एवैकदेशविवर्त्तिनोरुपमारूपकयोरन्यतराङ्गीकारे वीजम्। 'मुखपद्मं विकस्वर'मित्युपमाऽङ्गीकारे क्रियाविशेषशालित्वरूपविकस्वरस्य मुखे वाधात् कान्तिविशेषे लक्षणाप्रसङ्गः। 'मुखमेव पद्मम्' इति रूपकाङ्गीकारे तु विशेष्ये पद्मे विकस्वरत्वस्य मुख्यया वृत्त्याऽन्वयः सम्भवति। 'दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी। केशपाशालिवृन्देन सुवेषा हरिणेक्षणा॥' इत्यत्र रूपकाङ्गीकारे भूषणादिकृतशोभाविशेषस्य लतायां वाधात् शोभामात्रे लक्षणाप्रसङ्गः, उपमाङ्गीकारे तु मुख्यया वृत्त्याऽन्वयः सम्भवतीत्येतादृशं विशेषमनवलोक्यैव केचिदेकदेशविवर्त्तिनीमुपमामनेकदेशविवर्त्तिनि रूपक एवान्तर्भावयन्ति। इति। यथा वा-'रूपजला चलनयना नाभ्यावर्त्ता कचावलिभुजङ्गा। मज्जन्ति यत्र सन्तः सेयं तरुणी तरङ्गिणी विषमा ॥' इति। अत्र हि रूपादौ जलादेरारोपस्य शाब्दत्वेऽपि नयने मीनत्वारोपस्यार्थत्वम्।

एवं साङ्गं सप्रभेदं रूपकं निर्दिश्य निरङ्गं सप्रभेदं निर्दिशति-**१०६ केवलस्य**ाङ्गिनः प्रधानस्येति यावत्। **एव** ननु 'साङ्गस्ये'ति शेषः। **रूपणम्। निरङ्गं** निर्गतान्यङ्गानि अप्रधानभूतान्यारोपमाणानीति यावत् यत्र तत्। 'रूपक'मित्यनुषज्यते। **तत्। अपि। मालाकेवलरूपत्वात्** 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति नयेन मालारूपत्वात् केवलरूपत्वाच्चेत्यर्थः। **द्विधा**। अयम्भावः-यत्राङ्गाङ्गित्वमपहाय केवलस्यैव रूपितत्वं तत् निरवयवं रूपम्, तदपि मालारूपत्वेन केवलरूपत्वेन च भिद्यमानं द्विप्रभेदं भवतीति ॥ ८५ ॥

उदाहरति-**तत्र** तयोर्मालाकेवलरूपयोर्निरवयवयोरूपकयोर्मध्ये इत्यर्थः। **मालारूपम्। निरङ्गम्। यथा-** 'धातुर्विधातुर्जगद्रचयितुरिति यावत्। **निर्माणकौशलं** निर्माणस्य जगदुत्पादनस्य कौशलं चातुर्य्यं तत्स्वरूपभूतेति यावत्। **लोकचक्षुषाम्। चन्द्रिका** कौमुदी आह्लादकत्वेन तथाभूतेति भावः। **अनङ्गस्य** कामदेवस्य। **क्रीडागृहं** तथाभूतेति भावः। **सा** प्रसिद्धा। **इयं** प्रत्यक्षभूता। **इन्दीवरेक्षणे**न्दीवरं नीलकमलं तद्वदीक्षणं यस्याः सा। इदम्बोध्यम्-अत्रेन्दीवरेक्षणाया एव सौन्दर्य्यातिशयं ध्वनयितुं रूपणं, नतु तदङ्गानामपि; तदिदं निरङ्गम्। मालारूपत्वं तु-एकस्यामेवोपमेयभूतायामिन्दीवरेक्षणायां वहूनां निर्माणकौशलादीनामुपमानानामारोपात्। यथा वा मम-'अमृतनिधित्वं शशिनो मदनत्वं वाऽपि कामदेवस्य। लक्ष्म्या वा सुभगत्वं तव वदनं लोकसर्वस्वम् ॥' इति ॥ ११३ ॥

एवं मालारूपमुदाहृत्य निरङ्गमुदाहर्त्तुमाह-केवलमित्यादि।

**केवलं** 'निरवयवं रूपक'मिति पूर्वतोऽनुषज्यते। **यथा**। 'दासे'इत्यादि।

'हे **सुन्दरि ! कृतागसि** कृतमागोऽपराधो येन तादृशे। **दासे** किङ्करे। **प्रभूणाम्** अधीश्वराणाम्। **पादप्रहारः** पादेन प्रहरः। **उचितः। भवति। इति। अत्रा**स्मिन् पादप्रहारे। **न**। 'अह'मिति शेषः। **दूये** खिद्यामि' 'दुङ्' उपतापे। तत् कथं खिन्न इवासीत्याशङ्क्याह-**यत्** यतः **उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै**रुद्यन्त उन्मुखीभवन्तोऽत एव कठोरा ये पुलकाङ्कुरा रोमोद्गमास्ते एव कण्टका द्रुमाङ्गविशेषास्तेषामग्राणि पुरोभागास्तैः। **मृदु** कोमलम्। **पदम्। भिद्यते। सा। ननु। मे** मम। **व्यथा**। अयम्भावः-मानिन्या पादप्रहृतस्यापि तामनुनयतः कामुकस्योक्तिरियम्। त्वया यः कुपितया पादः प्रहियते, तेनापि मम आश्लेषसुखेन रोमोद्गमः, अतोऽहं नितान्तं त्वय्यनुरक्तः, न च तत् तव पादप्रहारः स्थाने। अथापि तव प्रेमवशात् तमविगणय्य प्रार्थये यत् त्वया प्रहृतं तत्त्वयोपकृतमेव मन्ये। यदि पापभ्रान्त्योपदिष्टं कारितं वा केनापि प्रभुणा प्रायश्चित्तमाचरन् कश्चिदपहन्यते। अथ-त्वया पादे प्रहियमाणे यो रोमोद्गमो जातस्तेन तव मृदोः पादस्य कण्टकाग्रैरिव यो भेदस्तेन केवलं दूये। इति। अत्र पुलकाङ्कुरेषु कण्टकत्वारोपः केवलः

## १०७ तेनाष्टौ रूपके भिदाः ।

'चिरन्तनैरुक्ताः ।' इति शेषः । क्वचित् परम्परितमप्येकदेशविवर्त्ति यथा–

'पर्यङ्को राजलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गो
भग्नप्रत्यर्थिवंशोल्वणविजयकरिस्त्यानदानाम्बुपट्टः ।
सङ्ग्रामत्रासताम्यन्मुरलपतियशोहंसनीलाम्बुवाहः
खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य ॥ ११५ ॥'

अत्रार्थः-क्ष्मायां महिषीत्वारोपः खड्गे सौविदल्लत्वारोपे निमित्तम् ।
अस्य भेदस्य पूर्ववत्केवलरूपत्वेऽपि उदाहरणं मृग्यम् ।

---

तदिदं निरवयवं केवलं रूपकम् । उत्प्रेक्षाऽपह्नुती त्वत्र निरपेक्षोपस्थितिके बोध्ये ॥' यथा वा–'दैवात् पश्येर्जगति विचरन् मत्प्रियां मालतीं चेदाश्वास्यादौ तदनु कथयेर्माधवीयामवस्थाम् । आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः प्राणत्राणं सपदि सुकरोत्यायताक्ष्याः स एकः ॥' इति, अत्र ह्याशायास्तन्तुत्वेन रूपणम् ॥ ११४ ॥

एवमभिहितान् भेदान् गणयते–१०७तेनेत्यादिना । स्पष्टम् ।

अध्याहार्य्यमर्थं सूचयति–'चिरन्तनैरित्यादिना । स्पष्टम् । इदम्बोध्यम्–रूपकं तावत् त्रिविधम्,साङ्गं, निरङ्गं, परम्परितं चेति भेदात् । तत्र साङ्गं समस्तवस्तुविषयम्, एकदेशविवर्त्ति चेति द्विविधम् । निरङ्गमपि मालारूपं केवलं चेति द्विविधम् । परम्परितं तु श्लिष्टशब्दनिबन्धनम्, अश्लिष्टशब्दनिबन्धनं चेति द्विविधम् । तच्च केवलं मालारूपं चेति द्विविधम् । एषां च सम्मेलनेऽष्टविधत्वं रूपकस्य । इति ।

चिरन्तनैरित्यनेनास्वरसतां ध्वनयितुमाह–क्वचित् । परम्परितम् । अपि । एकदेशविवर्त्ति एकोऽसौ देशोंऽशस्तत्र विवर्त्तते विशेषतो वर्त्तत इति तथोक्तम् । यथा । 'पर्य्यङ्क' इत्यादि ।

'राजलक्ष्म्याः । हरितमणिमयो नीलमणिरचितः । पर्य्यङ्कः । पौरुषाब्धेरुद्यमरूपस्य समुद्रस्य । तरङ्गः । भग्नप्रत्यर्थिवंशोल्वणविजयकरिस्त्यानदानाम्बुपट्टो भग्नाः प्रत्यर्थिवंशाः शत्रूणां वंशाः शत्रुरूपा वा वंशवृक्षा येन तादृश उल्वणःप्रवृद्धप्रभावो यो विजयकरी विजयरूपो हस्ती तस्य स्त्यानदानं घनीभूतो मदः स एवाम्बु तस्य पट्टस्तन्निःसरणस्थाने निबद्धवस्त्रभूतः । 'अभिघातिपरारातिप्रत्यर्थिपरिपन्थिनः ।' इत्यमरः । 'वंशो वेणौ कुले वर्गे पृष्ठाद्यवयवेऽपि च ।' इति विश्वः । 'पट्टः पेषणपाषाणे व्रणादीनां च बन्धने । चतुष्पथे च राजादिशासनान्तरपीठयोः ॥' इति मेदिनी । सङ्ग्रामत्रासताम्यन्मुरलपतियशोहंसनीलाम्बुवाहः सङ्ग्रामस्य त्रासो भयं तेन ताम्यन्तो ये मुरलपतियशोहंसा मुरलपतीनां यशोरूपाः हंसास्तेषां नीलाम्बुवाहो घनघटाप्रादुर्भावसमयस्वरूपः । वर्षासु हि तडागेषु खिद्यन्तो हंसास्तान् परिहाय मानसं यान्तीति समयः, तथा च–यशसां स्थानानि मुरलपतयस्तानि परित्याज्य मानसरूपं स्वमधिगमयितुं तथा भूत इति फलितोऽर्थः । क्ष्मासौविदल्लः क्ष्मायाः पृथिव्याः सौविदल्लः कञ्चुकी तत्स्वरूपः । 'सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते ।' इत्यमरः । मालवाखण्डलस्य मालवानामाखण्डल इन्द्रस्तस्य तथा भूतस्य ।'आखण्डलः सहस्राक्षः'इत्यमरः। खड्गः। समिति सङ्ग्रामाङ्गणे। विजयते । स्रग्धराछन्दः॥११५॥'

उदाहृतमर्थं निर्दिशति– अत्र । क्ष्मायां पृथिव्याम् । 'क्ष्माऽवनिर्मेदिनी मही ।' इत्यमरः । महिषीत्वारोपो राज्ञीत्वमारोप्याभिधानम् । आर्थोऽर्थवशलभ्यः । अतोऽस्यैकदेशविवर्त्तित्वमिति भावः । स च–खड्गे खड्गविषयकतया निरूपिते । सौविदल्लत्वारोपे कञ्चुकित्वारोपे। निमित्तं कारणभूतः । अतोऽस्य परम्परितत्वमिति भावः । अयम्भावः–सौविदल्लोऽन्तःपुरे स्त्रीणां रक्षायामधिकृतो भवति, क्ष्मायाश्च स्त्रीत्वमन्तरा सौविदल्लत्वासम्भव इति तदुपपादयितुमार्थं आरोपस्तत्राङ्गीक्रियते । स च क्ष्मायां महिष्यामिव राजभोग्यत्वसादृश्यनिबन्धनः । इदं च रूपकमश्लिष्टशब्दनिबन्धनं निरङ्गं च । इति ।

एवं मालारूपस्य निरङ्गस्य परम्परितत्वे उदाहरणं निर्दिश्य मालारूपस्योदाहरणान्वेषणीयतामाह–अस्येत्यादिना ।

**१०८ दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके ॥ ८६ ॥**

तत्रैकदेशविवर्त्ति श्लिष्टं यथा मम-

'करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य ।
विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः ॥ ११६ ॥'

समस्तवस्तुविषयं यथाऽत्रैव-'विचुम्बती'त्यादौ 'चुचुम्बे हरिदबलामुखमिन्दुनायकेन ॥' इति पाठे। न चात्र श्लिष्टपरम्परितम्, तत्र हि 'भूभृदावलिदम्भोलिः' इत्यादौ राजादौ पर्वतत्वाद्यारोपं विना वर्णनीयस्य राजादेर्दम्भोलिताऽऽदिरूपणं सर्वथैव सादृश्याभावादसङ्गतम्। कथं तर्हि 'पद्मोदयदिनाधीशः' इत्यादौ परम्परितम्, राजादेः सूर्यादिना सादृश्यस्य तेजस्विताहेतुकस्य सम्भवादिति न वाच्यम्, तथा हि-राजादेस्तेजस्विताहेतुकं सुव्यक्तं सादृश्यम्, नतु तत् प्रकृते विवक्षि-

---

स्पष्टम्। उदाहरणं यथा-'मधुरिमसम्भृतरदनं सुस्मितरुचिरं सदैव रम्भोरु ! शोणिमसुस्फुरदल्पं सुभगे वदनं तवेदमाभाति ॥' इति। अत्र हि रदनेषु मधुरिमसम्भृतत्वमारोप्यमाणं दाडिमबीजत्वारोपस्यार्थस्य कारणभूतम्। अतः परम्परितमेकदेशविवर्त्तीदं रूपकम्। पूर्वत्र तु खङ्गे पर्य्यङ्कादीनां बहूनामारोप्यमाणत्वान्मालारूपमेव। एतेन-'मालारूपत्वेऽप्युदाहरणं मृग्य' मित्युपलभ्यमानः पाठः प्रामादिक इति सूचितम्।

एवं निरङ्गे विशेषं दर्शयित्वा साङ्गे विशेषं निर्देष्टुमाह-**१०८ क्वचित्** । **साङ्गे** सावयवे। **रूपके**। **अपि**। **श्लिष्टाः** श्लेषमूलाः। **आरोप्याः**। **दृश्यन्ते** ॥ ८६ ॥

उदाहर्तुमुपक्रमते-तत्र साङ्गेषु श्लिष्टेषु रूपकेषु मध्ये इति यावत्। **एकदेशविवर्त्ति**। **श्लिष्टम्**। **यथा**। **मम-'अयम्**। **सुधांशुः**। **गलिततमःपटलांशुके** गलितं स्थानाच्च्युतं तमःपटलांशुकं यस्य तस्मिन्निति तथोक्ते। तमसां पटलं पुञ्ज एवांशुकमिति तमःपटलांशुकम्। **उदयमहीधरस्तनाग्रे** उदयमहीधर उदयाचल एव स्तनस्तस्याग्रं तस्मिन् तदुपरीति भावः। **करं** किरणं तद्रूपं हस्तमिति भावः। 'बलिहस्तांशवः कराः।' इत्यमरः। **निवेश्य** स्थापयित्वा। **अमरेशदिश** इन्द्राधिष्ठिताया दिशः प्राच्यास्तद्रूपाया नायिकाया इति यावत्। **विकसितकुमुदेक्षणं** विकसितानि यानि कुमुदानि तान्येवेक्षणानि नयनानि यत्र तादृशम्। **मुखम्**। **विचुम्बति** विशेषेण चुम्बति। पुष्पिताग्रावृत्तम्। अत्रामरेशदिशि नायिकात्वारोपस्य सुधांशौ नायकत्वारोपस्यार्थत्वादेकदेशविवर्त्ति, करादेः श्लिष्टत्वात् श्लेषनिबन्धनं चेदम् ॥११६॥'

समस्तवस्तुविषयमुदाहर्त्तुकाम आह-**समस्ते**त्यादि। स्पष्टम्। अत्र हि आरोपस्य शब्दमात्रत्वात् समस्तवस्तुविषयत्वम्।

श्लिष्टपरम्परिततोऽस्य भेदं दर्शयितुमाह-**न च**। **अत्र**ास्मिन्नुदाहृते पद्ये। **श्लिष्टपरम्परितम्**। 'शङ्क्य' मिति शेषः। **हि** यतः। **तत्र** श्लिष्टपरम्परिते। **'भूभृदावलिदम्भोलिः' इत्यादौ**। **राजादौ**। **पर्वतत्वाद्यारोपम्**। **विना**। **वर्णनीयस्य**। **राजादेः**। **दम्भोलिताऽऽदिरूपणं** वज्रत्वादिना निरूपणम्। **सर्वथा**। **एव**। **सादृश्याभावात्**। **असङ्गतम्**। 'अत्र तु न तथा, महीधरादेः स्तनादिना सादृश्यस्य पीनत्वोच्चत्वादिना सुव्यक्तत्वा'दिति शेषः। **कथम्**। **तर्हि**। **'पद्मोदयदिनाधीशः' इत्यादौ**। **परम्परितं** श्लिष्टपरम्परितम्। हेतुं निर्दिशति-**राजादेः**। **सूर्य्यादिना**। सहार्थेयं तृतीया। **तेजस्विताऽऽदिहेतुकस्य**। **सादृश्यस्य**। **सम्भवात्**। **इति**। **न**। **वाच्यम्**। **तथा हि**। **राजादेः**। 'सूर्य्यादिने' ति शेषः। **तेजस्विताऽऽदिहेतुकम्**। **सादृश्यम्**। **सुव्यक्तम्**। **नतु**। **प्रकृते** पद्मोदयदिनाधीश' इत्यादावित्यर्थः। **तत्** सादृश्यमित्यर्थः। **विवक्षितम्**। **पद्मोदयादेः** पद्मोदयादिपदार्थस्य। एव 'नतु तेजस्विताऽऽदे'रिति शेषः। **द्वयो** राजा-

तम् । पद्मोदयादेरेव द्वयोः साधारणधर्म्मतया विवक्षितत्वात् । इह तु महीधरादेः स्तनादिना सादृश्यं पीनत्वोत्तुङ्गत्वादिना सुव्यक्तमेवेति न श्लिष्टपरम्परितम् ।

क्वचित्समासाभावेऽपि रूपकं दृश्यते, यथा–'मुखं तव कुरङ्गाक्षि ! सरोजमिति नान्यथा ।'
क्वचिद् वैयधिकरण्येऽपि, यथा–'विदधे मधुपश्रेणीमिह भ्रूलतया विधिः ।'
क्वचिद् वैधर्म्येऽपि, यथा; मम–

'सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा ।
यैरेषाऽपि दुराशया कलियुगे राजावली सेविता
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत् कौशलम् ॥११७॥'

---

दिदिनाधीशयोः । साधारणधर्म्मतया । अभेदार्थेयं तृतीया । विवक्षितत्वात् । इह 'करमुदयंमहीधरस्तनाग्रे' इत्यत्र । तु । महीधरादेः । स्तनादिना । पीनत्वोत्तुङ्गत्वादिना । अभेदार्थेयं तृतीया । सादृश्यम् । सुव्यक्तम् । 'विवक्षित' मिति शेषः । एव । इति । श्लिष्टपरम्परितम् । न । अयम्भावः–'पद्मोदयदिनाधीश' इत्यादौ पद्मोदयादिशब्दानां द्व्यर्थतया श्लेषमहिम्ना पद्मोदयादौ ( लक्ष्मीसञ्चयादौ ) पद्मोदया ( कमलविकासा ) द्यारोपो राजादौ दिनाधीशत्वाद्यारोपस्य निमित्तभूतमिति पद्मोदयादिप्रकारकदिनाधीशादे राजादावन्वयात् पद्मोदयादी राजादिदिनाधीशयोः साधारणो धर्म्मः, अत एतत्कारणकमेव सादृश्यं विवक्षितम्, नतु तथाऽत्राऽपि । यदि च तत्रापि तेजस्विताऽदिहेतुकमेव नतु पद्मोदयादिश्लेषमूलकसादृश्यमविवक्षिष्यत्, तदाऽत्रेव न तत्रापि श्लेषपरम्परितं समभविष्यत् । नच प्रकृते, महीधरादिना हि स्तनादेर्यत् साधर्म्यं विवक्षितम्, तत् पीनत्वोत्तुङ्गादिनिमित्तकमश्लिष्टम्, न चारोपान्तरोत्थापितम् । इति महान् विशेषः । इति दिक् । अत्राहुस्तर्कवागीशाः–'नन्वत्र शब्दसाम्यविवक्षावशात् प्रसिद्धतेजस्वितादिरूपसाम्यविवक्षायास्तु, 'त्रैलोक्यमण्डपस्तम्भा' इत्यादौ तु दीर्घत्वपीवरत्वादिसाम्यसम्भवेनात्र तन्मूलक एव स्तम्भत्वाद्यारोपोऽस्तु त्रैलोक्यादौ मण्डपत्वाद्यारोपस्य तत्कारणत्वस्वीकारेण किमिति चेत्, न । स्तम्भा यथा मण्डपभारसहिष्णवः, तथा हरिवाहवस्त्रैलोक्यभारसहिष्णव इति साम्यस्यैव विवक्षितत्वात् । तच्च त्रैलोक्यादौ मण्डपत्वाद्यारोपं विना दुर्बोधम् ।' इति । इदं च व्यस्तं समस्तं व्यस्तमसमस्तं चेति त्रिविधं द्योतयितुमाह–क्वचिदुदाहरिष्यमाणे काव्ये इत्यर्थः । समासाभावे । अपि । रूपकम् । दृश्यते । उदाहरति–यथा । 'मुखमित्यादि । स्पष्टम् । 'लावण्यं सलिलं स्वच्छं त्वं चासि सरसी प्रिये ।' इति शेषः ॥' यथा वा मम–'नयने मीनावूरू कदली, उदरं च मुष्टिमेयत्वम् । विकसद्वदनं कमलं, सुभगे ! नासे रतीशतूणीरौ ॥' इति । एवं सामानाधिकरण्य उदाहृत्य वैयधिकरण्येऽप्युदाहर्त्तुमाह–क्वचित् वैयधिकरण्ये व्यधिकरणस्य भावस्तत्र । सत्यर्थेयं सप्तमी । अपि । 'रूपकं दृश्यते' इति' शेषः । यथा–'विधिर्विधाता । इहास्यां नायिकाया'मित्यर्थः । भ्रूलतया । अभेदार्थेयं तृतीया । मधुपश्रेणीं भ्रमरावलिम् । विदधे । विहितवान् । 'वदनेन सुधांशुं च लावण्येन च जीवनम् ॥' इति शेषः । अत्र हि भ्रूलताऽऽदौ मधुपश्रेण्याद्यारोपो व्यधिकरणः ।

वैधर्म्येऽपि रूपकसद्भावं दर्शयितुमाह–क्वचित् । वैधर्म्ये विरुद्धधर्म्मसद्भावे । अपि । 'रूपकं दृश्यते' इति शेषः । यथा । मम–'सौजन्ये'त्यादि ।

'सौजन्याम्बुमरुस्थली सौजन्यमेवाम्बु तस्य मरुस्थली मरुप्रदेशभूतेत्यर्थः । सौजन्यहीनेति भावः । सुचरितालेख्यद्युभित्तिः सुचरितान्येवालेख्यानि लेखनीयानि चित्राणि तेषां द्युभित्तिराकाशरूपं कुड्यम्, तथाभूतेत्यर्थः । सुचरिततयाऽपि सर्वथा शून्येति भावः । गुणज्योत्स्नाकृष्णचतुर्दशी गुणा एव ज्योत्स्ना तासां कृष्णचतुर्दशी कृष्णपक्षीया चतुर्दशी तत्तुल्येत्यर्थः । गुणैरपि सर्वथा हीनेति भावः । सरलतायोगश्वपुच्छच्छटा सरलताया योगः सम्बन्धः तस्य श्वपुच्छच्छटा कुक्कुरपुच्छाकृतिभूतेत्यर्थः । सरलताया अपि सम्बन्धं त्यक्त्वा स्थिता । एषा । दुराशया दुरभिप्रायो । राजावली राजपरम्परा । यैः । कलियुगे । अपि । सेविता । तेषाम् । भक्तिमात्रसुलभे भक्ति-

अत्र केषाञ्चिद्रूपकाणां शब्दश्लेषमूलत्वेऽपि रूपकविशेषत्वादर्थालङ्कारमध्ये गणनम्, एवं वक्ष्यमाणेष्वलङ्कारान्तरेष्वपि बोध्यम्।

**१०९ अधिकारूढवैशिष्ट्यं रूपकं यत्तदेव तत्।**

तदेवाधिकारूढवैशिष्ट्यसञ्ज्ञं रूपकम्। यथा, मम-

'इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः सुधाधाराधाराश्चिरपरिणतं बिम्बमधरः।
इमे नेत्रे रात्रिन्दिवमधिकशोभे कुवलये तनुर्लावण्यानां जलधिरवगाहे सुखतरः॥११८॥'

अत्र कलङ्कराहित्यादिनाऽधिकं वैशिष्ट्यम्।

**११० विषयात्मतयाऽऽरोप्ये प्रकृतार्थोपयोगिनि ॥८७॥**
**परिणामो भवेत् तुल्यातुल्याधिकरणो द्विधा।**

---

रेवेति भक्तिमात्रं तेन सुलभः सुखेन लब्धुं योग्यस्तत्र। मात्रपदेनोपकरणान्तरस्यानावश्यकत्वं द्योत्यते। **शूलिनि** शङ्करे। **सेवा**। **कियत्**। **कौशलम्**, न किञ्चिदिति भावः। शार्दूलविक्रीडितं वृत्तम्। लक्षणं चोक्तं प्राक्। अत्र सौजन्याम्बादौ मरुस्थल्याद्यारोपो विधर्म्मतामूलकः॥११७॥'

लक्षितेषु रूपकेषु न सर्वाण्यर्थालङ्कारेषु गणनीयान्यथापि तेषां तथात्वे हेतुं निर्दिशति-अत्रेषु लक्षितेषु रूपकेषु मध्ये इति भावः। **केषाञ्चित्**। **रूपकाणाम्**। **शब्दश्लेषमूलत्वे**। **अपि**। **रूपकविशेषत्वात्** रूपकप्राधान्यात् अर्थमूलकाया रूपकप्रधानतायाः सद्भावादिति यावत्। **अर्थालङ्कारमध्ये**। **गणनम्**। अयम्भावः-यद्यपि श्लेषस्येव रूपकस्यापि शब्दालङ्कारत्वमर्थालङ्कारत्वं च वक्तुमर्हम्, तथाऽपि श्लेषे शाब्दार्थत्वोभयप्राधान्यस्य सरूपत्वात्, रूपके च न्यूनाधिकत्वेन वैषम्यात् भेदे 'प्राधान्येन व्यपदेशा भवन्ती' ति नयेन रूपकस्यार्थालङ्कारत्वमूह्यम्। एतेन-केषाञ्चित् शब्दालङ्कारत्वमपि यद्यभिदधीत तर्हि तद् युक्तमेव स्यात्। इति सूचितम्। इति। न केवलं रूपक एवैष नयः सङ्गच्छत इति बोध्यमित्याह-एवमित्यादि। स्पष्टम्।

अस्य प्रभेदान्तरं पुनर्निर्दिशति-१०९ यत्। **अधिकरूढवैशिष्ट्यमधिकमारूढं** वैशिष्ट्यविलक्षणत्वं येन तथोक्तम्। **रूपकम्**। **तत्**। **तत्** अधिकारूढवैशिष्ट्यम्। **एव**।

कारिकांशे काठिन्यं परिहरति-**तदेवेत्यादिना**। स्पष्टम्।

उदाहरति-**यथा**। मम '**इदम्**। **वक्त्रं** मुखम्। **साक्षात्**। **विरहितकलङ्को** विरहितः कलङ्को यस्य तादृशः, कलङ्कारकल्माषचिह्नरहितः। **शशधरश्चन्द्रः**। **अधरः**। **चिरपरिणतं** चिरेण परिणतं फलत्वेनोद्भूतम्, परिपक्वमिति भावः। **सुधाधाराधारः** तत्स्वरूपभूतम्। **बिम्बम्**। **इमे**। **नेत्रे**। **रात्रिन्दिवमहर्निशं** निरन्तरमिति यावत्। **अधिकशोभे** अधिका शोभा ययोः तथोक्ते। **कुवलये** कुमुदपुष्पभूते। **तनुः** शरीरम्। **अवगाहे** स्नाने उपचारेणोपभोगमात्रे। **सुखतरो**ऽत्यन्तं सुखकारी। **लावण्यानाम्**। **जलधिः** समुद्रः। शिखरिणीवृत्तम् ॥११८॥'

अत्र वैशिष्ट्याधिक्यं सूचयति-**अत्रेत्यादिना**। स्पष्टम्। इदं चान्यमानमपि दृश्यते। तत्र शब्दशक्तिमूलं यथा-'अविरलविगलद्दानोदकधारासारसिक्तधरणितलः। धनदाग्रमहितमूर्त्तिर्देव त्वं सार्वभौमोऽसि॥' अत्र हि सार्वभौमशब्दश्चक्रवर्त्यर्थतया नियमितोऽपि राजनि'असी'त्यनेन दिग्गजविशेषारोपमेव प्रत्याययति। अर्थशक्तिमूलं यथा-'तिमिरं हरन्ति हरितां पुरःस्थितं तिरयन्ति तापमथ तापशालिनाम्। वदनत्विषस्तव चकोरलोचने परिमुद्रयन्ति सरसीरुहश्रियः॥' इत्यत्र वदनस्य चन्द्रत्वं तिमिरहरणाद्यर्थमात्रमूलम्।

परिणामं लक्षयति-११० **विषयात्मतयोपमेयाभेदेन**। **आरोप्ये** निरूपणीये 'उपमान' इति शेषः। **प्रकृतार्थोपयोगिनो** प्रकृतार्थः प्रस्तुतं प्रयोजनं तस्योपयोग्युपकारकं तस्मिंस्तथाभूते सतीत्यर्थः। **परिणामः**। स च-**तुल्यातुल्याधिकरणः** समानाधिकरणो व्यधिकरणश्चेत्यर्थः। 'स'श्चेति शेषः। **द्विधा**। **भवेत्** ॥८७॥

आरोप्यमाणस्यारोपविषयात्मतया परिणमनात् परिणामः । यथा–
'स्मितेनोपायनं दूरादागतस्य कृतं मम । स्तनोपपीडमाश्लेषः कृतो द्यूते पणस्तया ॥११९॥'
अन्यत्र उपायनपणौ वसनाभरणादिभावेनोपयुज्येते, अत्र तु नायकसम्भावनद्यूतयोः स्मिताश्लेषतया । प्रथमार्धे वैयधिकरण्येन प्रयोगः, द्वितीये सामानाधिकरण्येन। रूपके 'मुखचन्द्रं पश्यामि' इत्यादावारोप्यमाणचन्द्रादेरुपरञ्जकतामात्रम्, नतु प्रकृते दर्शनादावुपयोगः । इह तूपायनादेर्विषयेण तादात्म्यं प्रकृते च नायकसम्भावनादावुपयोगः । अत एव–रूपके आरोप्यस्यावच्छेद-

---

अस्यान्वर्थं नामेत्याह–आरोप्यमाणस्येत्यादिना । स्पष्टोऽर्थः । इदमभिहितम्–यत्र खलूपमानं स्वतः प्रकृतेऽनुपयुज्यमानं सदुपमेयात्मतया परिणमत् प्रकृत उपयुज्यते स परिणामः, रूपके तु उपमेयस्योपमानात्मतया परिणमनम्, न त्वत्रेवोपमानस्योपमेयात्मतया, अत एवानयोर्भेदः । किञ्च रूपके उपमानेनोपमेयस्योपादेयत्वम्, अत्र पुनस्तद्वैपरीत्यम् । तथा च–'मुखं चन्द्रो राजते' इत्यत्रेव 'चन्द्रो मुखं राजते' इत्यत्रापि रूपकम् । 'मुखेन चन्द्रेण चुम्ब्यते' इत्यत्रेव 'चन्द्रेण मुखेन चुम्ब्यते' इत्यत्रापि परिणामः, पूर्वत्रोपमानस्य चन्द्रस्य आत्मतया परिणतं मुखरूपमुपमेयं राजनोपयोगितां धत्ते, परत्र तूपमेयस्य मुखस्यात्मतया परिणतं चन्द्ररूपमानं चुम्बनोपयोगितां धत्ते । ननु तर्हि 'मुखं चन्द्रं पश्यामि', 'मुखचन्द्रं पश्यामि' 'चन्द्रं मुखं पश्यामि,' 'चन्द्रमुखं पश्यामि' इत्यादौ रूपकं परिणामो वा, दर्शनकर्म्मोपयोगितायामुभयोः सामान्येन परिणतत्वात् इति चेत्, रूपकमेव 'मुखं चन्द्रः' 'मुखचंद्र' इत्यादेः श्रवणानन्तरं रूपकावगाहिन्या विच्छित्तेस्तत्र कर्म्मताऽऽपादनपुरःसरं 'पश्यामी'त्यादिना दर्शनादिक्रिययाऽन्वयोपपादनेऽपि विरूपत्वानापत्तेः उपमानस्य प्राधान्येनोपयोगिताभावाच्च एतेनात्र रूपकपरिणामयोः सन्देहसङ्करं स्वीकुर्वन्तः प्रत्युक्ताः । अयं च परिणामोऽलङ्कारः सामानाधिकरण्ये वैयधिकरण्ये च सम्भवतीति द्विविधः । इति ।

सौकर्य्यायैकत्रैव तद्भेदद्वयमुदाहर्तुमाह–'यथा–तया सौन्दर्य्यादिना प्रसिद्धया नायिकयेति भावः । दूरात् । आगतस्य । मम । स्मितेन मृदुहसितेन । अभेदे तृतीया । उपायनमुपहारः । कृतम् । द्यूते द्यूतजये । स्तनोपपीडम् । क्रियाविशेषणमिदम् । आश्लेषः आलिङ्गनदानम् । पणः । कृतः । सखायं प्रति कस्यचित् स्वनायिकासौजन्यवर्णनपरोक्तिरियम् ॥ ११९ ॥'

अत्र युक्त्या परिणामं समर्थयमानस्तद्द्वैविध्यं निर्दिशति–अन्यत्र नायकसम्भावनद्यूताभ्यां भिन्नस्थले । उपायनपणौ उपहारसमर्पणं पणनिधानं च । वस्त्राभरणादिभावेन । उपयुज्येते । अत्र । तु । नायकसम्भावनद्यूतयोः । स्मिताश्लेषतया 'उपहारपणावुपयुज्येते' इति शेषः । प्रथमार्धे वैयधिकरण्येन विभिन्नविभक्तिकत्वेन। प्रयोगः । द्वितीये उत्तरार्द्धे इत्यर्थः। सामानाधिकरण्येन समानविभक्तिकत्वेन 'प्रयोग' इति पूर्वतोऽन्वेति । तस्मात् क्रमाद्व्यधिकरणस्समानाधिकरणश्च अत्र परिणाम इति भावः । यथा वा–'अपारे संसारे विषमविषयारण्यसरणौ मम भ्रामं भ्रामं विगलितविरामं जडमतेः । परिश्रान्तस्यायं तरणितनयातीरनिलयः समन्तात्सन्तापं हरिनवतमालस्तिरयतु ॥'इति,अत्र हि उपमानभूतस्य तमालस्योपमेयभूतभगवदात्मतयैव संसारतापतिरस्करणकर्तृत्वोपपत्तिरिति समानाधिकरणोऽयम्। 'अहीनचन्द्रा लसताऽऽननेन ज्योत्स्नावती चापि शुचिस्मितेन । एषा हि योषा सितपक्षदोषा तोषाय केषां न महीतले स्यात् ॥' इति, अत्र चोपमेयभूताननस्मितयोरुपमानभूतचन्द्रज्योत्स्नयोश्च समानविभक्तिकत्वाभावात् परिणामो व्यधिकरणः । रूपकादस्य भेदमुपपादयति–'मुखचन्द्रं पश्यामि' इत्यादौ। रूपके। आरोप्यमाणचन्द्रादेरारोप्यमाण उपमानभूतोऽसौ चन्द्रादिस्तस्य । उपमेये उपमानस्यैवारोपः कल्प्यते, न तूपमाने उपमेयस्येति बोध्यम् । उपरञ्जकतामात्रमुपमेयोत्कृष्टताद्योतकत्वमात्रम् । मात्रपदेनोपमेयतया परिणमनस्य व्यवच्छेदः । अत एवाह–न तु । प्रकृते 'मुखचन्द्रं पश्यामि इत्यादौ दर्शनादौ उपमानस्योपमेयतया परिणतत्वावगमके दर्शनादिव्यापाराश्रयत्वे । उपयोगः । एवं रूपके उपमानोपमेययोरभेदारोपेऽपि उपमेयत उपमाने प्रकर्षस्थितिं दर्शयित्वा परिणामे तद्वैपरीत्यं दर्शयति–इह परिणामे 'स्मितेने' त्यादौ । तु । उपायनादेरुपायनभूतस्येति भावः । विषयेणोपमेयेन । तादात्म्यं तत्तया परिणतत्वम् । अत एव । प्रकृते उपमेयभूते । नायकसम्भावनादौ । उपयोगस्तत्तया परिणतत्वद्योतनम् । च । एवमुभयोर्भेदं दर्शयित्वाऽपि बोधसौलभ्याय फलितं निर्दिशति–अतः । एव । रूपके । आरोप्यस्योपमानस्य । अवच्छेदकत्वमा-

कत्वमात्रेणान्वयः। अत्र तु तादात्म्येन। 'दासे कृतागसी'त्यादौ रूपकमेव, न तु परिणामः, आरोप्यमाणकण्टकस्य पादभेदनकार्य्यस्य अप्रस्तुतत्वात्। न खलु तत् कस्यचिदपि प्रस्तुतकार्य्यस्य घटनार्थमनुसन्धीयते।

अयमपि रूपकवदधिकारूढवैशिष्ट्यो दृश्यते, यथा-

'वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः॥ १२० ॥'

अत्र प्रदीपानामौषध्यात्मतया प्रकृते सुरतोपयोगिन्यन्धकारनाशे उपयोगः। अतैलपूरत्वेनाधिकारूढवैशिष्ट्यम्।

**१११ सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः॥ ८८ ॥**

---

त्रेण विशेषकत्वमात्रेण। अन्वयः। अत्र परिणामे। तु। तादात्म्येनोपमेयाभिन्नत्वेन। 'अन्वयः' इत्यनुषज्यते। 'दासे कृतागसि' इत्यादौ। रूपकम्। एव। न तु। परिणामः। ननु 'यत् खिद्यते' इत्यग्रिमग्रन्थस्वारस्येन पादभेदनकार्य्यस्य प्रस्तुतत्वे कथं न परिणामः, प्रतिज्ञामात्रेण कार्य्यस्यासिद्धेः; इत्याशङ्क्य हेतुनिर्देशेन उक्तमेवार्थमुपपादयति-आरोप्यमाणकण्टकस्योपमानभूतस्य कण्टकस्य। पादभेदनकार्य्यस्य। अप्रस्तुतत्वात् प्रस्तुतातिरिक्तत्वात्। 'मानभङ्गस्यैव प्रस्तुतत्वाच्चे'ति शेषः। अयम्भावः-'दासे कृतागसी'त्यादौ उपमानभूताः कण्टकाः, उपमेयभूताश्च पुलकाङ्कुरा इति उपमानस्योपमेयतया प्रकृते परिणामस्वीकारे पादभेदनकार्य्यं प्रस्तुतं न वक्तुं शक्यम्। तस्य कार्यस्य उपमेयस्यैवोपमानतया परिणामे उपपत्तेः। पुलकाङ्कुरा हि नायकस्य नायिकायामनुरागसत्त्वे एव सम्भवन्तीति सुविदितचरं रसिकानाम्। अतः-पुलकाङ्कुराणां कार्य्यमनुनयावेदनम्, तद् यदि कण्टककार्यत्वेनाभिहितमभविष्यत् तर्हि प्रस्तुतमिति व्यपदिष्टमपि, न च तथा; स्फुटं तत् 'दासे कृतागसी'त्यादौ रूपकमेव नतु परिणामः। इति। ननु प्रस्तुतघटकस्यापि कार्य्यस्योपचारेण प्रस्तुतत्वोपपत्तौ पादभेदनस्यापि प्रस्तुतत्वमङ्गीक्रियतां को दोष इत्याशङ्क्याह-न। खलु। तत् कण्टकानां पादभेदनकार्य्यम्। कस्यचित्। अपि 'किं पुनः सर्वप्रकारस्ये'ति शेषः। प्रस्तुतकार्य्यस्य। घटनार्थमुपपादनाय। अनुसन्धीयते प्रतीयते। इदमुक्तम्-प्रस्तुतकार्य्यं ह्यनुनयनम्, तस्य घटकं न पादभेदनमित्यस्याप्रस्तुतत्वमेव। इति। अस्य भेदान्तरं निर्दिशति-अयमित्यादिना। स्पष्टम्।

उदाहरति-यथा-'यत्र यस्मिन् हिमालये इति यावत्। रजन्यां निशायाम्। दरीगृहोत्सङ्गनिषक्तभासो दर्य्यो गर्त्ता एव गृहास्तेषामुत्सङ्गलक्षणयाऽभ्यन्तरभागास्तेषु निषक्ता नितान्तमासक्ता भासः प्रकाशा यासां तास्तथाभूताः। 'दरी तु कन्दरो वा स्त्री' 'गृहाः पुंसि च भूम्न्येव' इति चामरः। ओषधयः। वनितासखानां वनिता एव सखायो येषां ते तथोक्ताः। वनेचराणाम्। अतैलपूरा न तैलपूरो यत्र तथोक्तास्तैलमन्तरैव ज्वलनशीलाः। सुरतप्रदीपाः। भवन्ति। 'स हिमालय' इति पूर्वेणान्वयः। कुमारसम्भवस्येदं पद्यम्। उपेन्द्रवज्राछन्दः॥ १२० ॥'

लक्षणीयं निर्दिशति-अत्रेत्यादिना। स्पष्टम्। अयं च ध्वन्यमानोऽपि सम्भवति। तत्र शब्दशक्तिमूलो यथा-'पान्थ! मन्दमते! किं वा सन्तापमनुविन्दसि। पयोधरं समाश्वास्य येन शान्तिमवाप्नुयाः॥' अत्र 'पयोधर' शब्दमूलः पयोधरे पयोधरतया तापशमनकार्य्योपयोगिता पयोधरशब्दशक्तिमूला ध्वन्यते। अर्थशक्तिमूलो यथा-'इन्दुना परसौन्दर्य्यसिन्धुना बन्धुना विना। ममायं विषमस्तापः केन वा शमयिष्यते॥' अत्र वक्तुः प्रियया विरहितत्वेन प्रियावदनाभिन्नत्वेनेन्दुरभिव्यज्यतेऽभिप्रेतः।

एवं परिणामं लक्षयित्वा सन्देहं लक्षयति-१११ प्रकृत उपमेये उपमाने वा। अन्यस्याप्रकृतस्योपमेयस्योपमानस्य वेति यावत्। प्रतिभोत्थितः प्रतिभया विलक्षणया बुद्ध्योपचारात्तामुपपद्य कवेरुद्भूतया प्रौढोक्त्योत्थित उत्थापित इति तथोक्तः। णिजोऽन्तर्भावे रूपमिदम्। संशयोऽनिश्चयश्च। सन्देहः सन्देहोऽस्मिन्नस्तीति तथोक्तः। अत एवास्य 'ससन्देह' इति संज्ञाऽन्तरम्। इदं तत्त्वम्-कविना यदि स्वप्रौढोक्त्योत्थापित उपमेये उपमानस्य उपमाने उपमेयस्य वा

**११२ शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा ।**

यत्र संशये एव पर्य्यवसानं स शुद्धः । यथा–

> किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी,
> वेलाप्रोच्छलितस्य किं लहरिका लावण्यवारान्निधेः ।
> उद्गाढोत्कलिकावतां स्वसमयोपन्यासविश्रम्भिणः
> किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ॥ १२१ ॥'

यत्रादावन्ते च संशय एव मध्ये निश्चयः स निश्चयमध्यः । यथा–

---

संशयस्तर्हि स सन्देह इति व्यपदिश्यते । उपमेयोपमानयोः संशयो भेदस्य किञ्चित् प्रतीयमानत्व एव सम्भवति, स च क्वचिदुच्यते, क्वचिच्च न । अत एवोक्तम्-'ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशयः ।' इति प्रकाशकृता । उपमेयोपमानयोश्च संशयहेतुको भेदः सादृश्यमूलो भवति, सादृश्यं हि तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वम् । उपमेयोपमानयोः संशयः सन्देह इत्युक्त्या--'इतो गता सा क्व गता न जाने, गेहं गता, मे हृदयं गता वा ।' इत्यादेर्व्यवच्छेदः । संशयस्य प्रतिभोत्थापितत्वे सन्देहाङ्गीकारेण वस्तुस्वभावसिद्धस्य निरासः । अत एव वक्ष्यते 'स्थाणुर्वा पुरुषो वा'इत्यादौ न सन्देहालङ्कार इति । 'पश्य नीलोत्पलद्वन्द्वान्निःसरन्ति शिताः शराः ।' इत्यादौ उपमेये उपमानस्य सर्वथाऽभेदावगमप्राधान्ये संशयतिरोभावाच्च नातिप्रसङ्गः । उत्प्रेक्षायां च सम्भावनाप्राधान्यान्नातिपातः । तथोक्तम्–'उपमानोपमेयकोटिकस्य संशयस्याभावान्नोत्प्रेक्षायामस्त्यातिप्रसङ्गः, तत्र सम्भावनाया एव वैशिष्ट्यम्' इति । एवम्–'तदोजसस्तद्यशसः स्थिताविमौ वृथेति चित्ते कुरुते यदायदा ।' इत्यादेः सुतरां व्युदासः । इति दिक् ॥ ८८ ॥

अस्य भेदत्रयं निर्दिशति–**११२असौ** निरुक्तलक्षणः सन्देहः । **शुद्धः** । **निश्चयगर्भो** निश्चयो गर्भेऽन्तर्यत्र स तथोक्तः । तथा–**निश्चयान्तो** निश्चयोऽन्ते यत्र तथोक्तः । **इति** । **त्रिधा** । अतएवोक्तं पण्डितराजैः 'सादृश्यहेतुका निश्चयसम्भावनान्यतरभिन्ना धी रमणीया संशया ( सन्देहा ) लङ्कृतिः । सा च–शुद्धा, निश्चयगर्भा निश्चयान्ता चेति त्रिविधा ।' इति । शुद्धं लक्षयति–**यत्र** यस्मिन् सन्देहे । **संशये** । **एव** । **पर्य्यवसानम्**न्ततो बुद्धिः । **सः** । **शुद्ध**स्तत्प्रभेदकः सन्देह इत्यर्थः । अयम्भावः–आदावन्ते मध्ये च संशय एव प्रतिभयोत्थाप्यमानो यत्र स्यात् स शुद्धसन्देहालङ्कारः । एवकारेण भेदान्तरतोऽस्य व्यवच्छेदः । इति ।

उदाहरति–**यथा**–'**इयं** पुरतो दृश्यमाना नायिकेति भावः । **तारुण्यतरो**स्तारुण्यं यौवनमेव तरुस्तस्य । **रसभरोद्भिन्ना** रसभरेण रसभारेण रसातिशयेनेति यावत् उद्भिन्ना पूर्णा । **नवा**ऽभिनवाऽम्लाना । **वल्लरी** मञ्जरी । **किम्** । **वेलाप्रोच्छलितस्य** वेलासु तटप्रदेशेषु प्रोच्छलितोऽत्यन्तमुत्थितस्तस्य । **लावण्यवारान्निधे**र्लावण्यान्येव वारीणि जलानि तेषां निधिस्तस्य । यद्वा-लावण्यस्य वारान्निधिस्तस्येति । **लहरिका** लहरी । **किम्** । 'इय'मित्यनुपज्यते । **अथवा** । **उद्गाढोत्कलिकावता**मुद्गाढाऽत्युत्कटा योत्कलिकोत्कण्ठा कान्ताविषयिण्युत्सुकतेति यावत्-सैषामस्तीति तेषां, तथाभूतानां कामुकानामिति भावः । **स्वसमयोपन्यासविश्रम्भिणः** स्वेषां समयः सिद्धान्तस्तस्योपन्यासो ज्ञापनं तत्र विश्रम्भोऽस्यास्तीति तस्य तथाभूतस्य । **शृङ्गारिणः** प्रशस्तशृङ्गारस्य तत्प्रधानस्येति यावत् । **देवस्य** कामदेवस्य । **साक्षात्** मूर्त्तिमती । **उपदेशयष्टि**रुपदेशस्य ( सूचिका ) यष्टिः । **किम्** । 'इय'-मित्यनुषज्यते । अत्रोपमेयभूतायां कस्याश्चिन्नायिकायामुपमानभूतानां वल्लर्य्यादीनामनैकान्त्यम् । शार्दूलविक्रीडितं वृत्तम् । शृङ्गारतिलकस्येदम् ॥ १२१ ॥'

यथा वा–'किमिन्दुः ? किं पद्मं ? किमु मुकुरबिम्बं ? किमु मुखं ? किमब्जे ? किं मीनौ ? किमु मदनबाणौ ? किमु दृशौ ? । खगौ वा ? गुच्छौ वा ? कनककलशौ वा ? किमु कुचौ ? तडिद्वा ? तारा वा ? ललितलतिका वा ? किमनला ? ॥' इति । निश्चयगर्भ इत्यन्वर्थेयं सञ्ज्ञेति द्योतयन्नाह–**यत्रे**त्यादि । स्पष्टम् ।

'अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम्।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति पुनः
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः॥ १२२॥'

अत्र मध्ये मार्त्तण्डाद्यभावनिश्चयो राजनिश्चये द्वितीयसंशयोत्थानासम्भवात्। यत्रादौ संशयः, अन्ते च निश्चयः स निश्चयान्तः। यथा-

'किं तावत् सरसि सरोजमेतदारादाहो स्विन्मुखमवभासते तरुण्याः।
संशय्य क्षणमिति निश्चिकाय कश्चिद्विव्वोकैर्बकसहवासिनां परोक्षैः॥ १२३॥'

---

उदाहरति—यथा-'अयम्। मार्त्तण्डः सूर्य्यः। किम्? ननु नायं मार्तण्डः, यतः—सः मार्तण्डः। खलु। सप्तभिः। तुरगैरश्वैः। इतो युक्तः। अतो नायं मार्तण्ड इति भावः। कृशानुरग्निः। किम्? 'अय'मित्यनुषज्यते। नायमग्निरपि यतः—एष कृशानुः। नियतं खलु। क्रियाविशेषणमिदम्। सर्वाः। दिशः। नैरन्तर्य्ये द्वितीयेयम्। न प्रसरति, ऊर्द्ध्वप्रसरणस्यैव निश्चितत्वात्। अतो नायं कृशानुरिति भावः। कृतान्तो यमः। साक्षात्। किम्? 'अय'मित्यनुषज्यते। ननु नायं कृतान्तो यतः—असौ कृतान्तः। महिषवहनो महिषवाहनः। अतो नायं यम इति भावः। इति। त्वाम्। आजौ सङ्ग्रामे। 'आजौ स्त्री समभूमौ सङ्ग्रामे' इति मेदिनी। समालोक्य। प्रतिभटाः प्रतियोद्धारः शत्रुसैनिकाः। पुनः। विकल्पान् नानासम्भावनाः। विदधति। शिखरिणीवृत्तम्॥ १२२॥'

ननु कथमयं निश्चयगर्भः सन्देह इत्याशङ्कयाह—अत्रोदाहृते पद्य इति भावः। मध्ये। मार्तण्डाद्यभावनिश्चयः। नच राजनिश्चय इत्याह-राजनिश्चये। द्वितीयसंशयोत्थानासम्भवात् द्वितीयोऽसौ संशयस्तस्योत्थानं तस्यासम्भवस्तस्मात्। अयम्भावः-अत्र जायमानस्य संशयस्य निराकरणपरायामपि शेमुष्यामन्ततोऽनिवृत्तिरित्यस्य सन्देहोपस्कारकत्वम्। इति। निश्चयान्तं लक्षयति—यत्रेत्यादिना। स्पष्टम्।

उदाहरति-यथा-'आरात्समीपे पुरोवर्ति इति यावत्। 'आराद्दूरसमीपयोः।' इत्यमरः। एतत्। सरसि। 'विकस'दिति शेषः। किम्। तावत्। सरोजम्? आहो अथवा। 'आहो उताहो किमुत विकल्पे किं किमूत च।' इत्यमरः। स्वित् किम्। 'स्वित्प्रश्ने च वितर्के च' इत्यमरः। तरुण्याः। मुखम्। अवभासते स्फुरति। इति इत्थम्। क्षणं क्षणावधि। संशय्य। कश्चित्। बकसहवासिनां बकानां सहवासीति तेषाम्, सरोजानामिति भावः। परोक्षैरगोचरैः। विव्वोकैर्विलासविशेषैः। निश्चिकाय निश्चितं कृतवान्। 'इदं मुखम्, इदं च सरोजम्' इति ज्ञातवानिति भावः। प्रहर्षिणीवृत्तम्। शिशुपालवधस्येदं पद्यम्॥ १२३॥'

इदम्बोध्यम्-अत्र संशयस्य जनविशेषनिष्ठस्यान्ते कविना निराकृतौ हेतुनिर्देशं निर्दिष्टायामपि चमत्कारित्वानपायात् सन्देहोपस्कारकत्वम्। यथा वा-'चपला जलदाच्च्युता लता वा तरुमुख्यादिति संशये निमग्नः। गुरुनिःश्वसितैः कविर्मनीषी निरणैषीदथ तां वियोगिनीति॥' अयं लक्ष्यो व्यङ्ग्योऽपि च सम्भवति, क्रमेण यथा-'साम्राज्यलक्ष्मीरियमृष्यकेतोः सौन्दर्य्यसृष्टेरधिदेवता वा। रामस्य रामामवलोक्य लोकैरीति स्म दोलाऽऽरुरुहे तदानीम्॥', 'तीरे तरुण्या वदनं सहासं नीरे सरोजं च मिलद्विकासम्। आलोक्य धावत्युभयत्र मुग्धा मरन्दलुब्धाऽऽलिकिशोरमाला॥' इति। संशयश्च क्वचिदनाहार्य्यः, क्वचिदाहार्यः। स हि यत्र परनिष्ठस्तत्र प्रायशोऽनाहार्यः, यत्र च स्वनिष्ठ एव तत्राहार्य्यः। अत्राद्यो यथा-'किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी'त्यादौ संशयानस्य निर्णयाभावात्। 'अयं मार्त्तण्डः किम्' इत्यादौ पुनरन्त्यः, अत्र वक्तुस्तत्त्वज्ञत्वात्। एवं च-'किमिन्दुः' इत्यादावनाहार्य्य एव। 'गगनाद्गलितो गभस्तिमानुत वाऽयं शिशिरो विभावसुः। मुनिरेवमरुन्धतीपतिः सकलङ्कः समशेत राघवे॥' इत्यादावाहार्य एव मुनेर्वशिष्ठस्य सकलज्ञत्वात्। अयं परम्परितोऽपि सम्भवति यथा-'विद्वद्दैन्यतमस्त्रिमूर्त्तिरथवा वैरीन्द्रवंशाटवीदावाग्निः किमहो महोज्ज्वलयशःशीतांशुदुग्धाम्बुधिः। किं वाऽनङ्गभुजङ्गदष्टवनिताजीवातुरेवं नृणां केषामेष नराधिपो न जनयत्यल्पेतराः कल्पनाः॥' इति दिक्।

अप्रतिभोत्थापिते तु 'स्थाणुर्वा पुरुषो वा' इत्यादिसंशये नायमलङ्कारः ।

'मध्यं तव सरोजाक्षि ! पयोधरभरार्दितम् ।
अस्ति नास्तीति सन्देहः कस्य चित्ते न जायते ॥ १२४ ॥'

इत्यत्रातिशयोक्तिरेव, उपमेय उपमानसंशयस्यैव एतदलङ्कारविषयत्वात् ।

११३ साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थिता ॥ ८९ ॥

यथा—'मुग्धा दुग्धधिया गवां विदधते कुम्भानधो बल्लवाः,
कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि ।
कर्कन्धूफलमुच्चिनोति शवरी मुक्ताफलाकाङ्क्षया,
सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ॥ १२५ ॥'

---

अथालङ्कारान्तरतोऽस्य व्यावृत्तिं दर्शयितुमाह—अप्रतीत्यादि । स्पष्टम् ।

उदाहरति—'हे **सरोजाक्षि ! पयोधरभरार्दितं** पयोधरयोर्भरो भारस्तेनार्दितं पीडितम् । **तव** । **मध्यमु**दरम् । **अस्ति** । न 'वे'ति शेषः । **अस्ति** । **इति** इत्येवम् । **सन्देहः** । **कस्य** । **चित्ते** । **न** । **जायते** सम्भवति । अपि तु सर्वस्यैवेति भावः ॥ १२४ ॥

अत्र लक्ष्यं निर्दिशति—इत्यत्रोदाहृते पद्ये इत्यर्थः । **अतिशयोक्तिः** । **एव** । 'नतु सन्देहः' इति शेषः । कुत इत्याह—**उपमेये** । **उपमानसंशयस्य** । **एव** । **एतदलङ्कारविषयत्वा**त्सन्देहालङ्कारजीवातुत्वात् । अत्र च तदभावान्नायमिति भावः। अत्रेदमवधेयम्-'सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः।' इति सूत्रं 'प्रकृते उपमेयेऽन्यस्योपमानस्ये' त्यनुसन्धमध्य 'उपमेयोपमानसंशयस्यैव' इत्यु 'पमेये उपमानसंशयस्यैवे'ति तु व्याख्यानं नोपयुक्तम्, 'आहोस्विन्मुखमवभासते तरुण्या' इत्युदाहृतो ग्रन्थकृतोऽभिप्रायाननुकूलत्वात् । अत एवाहुर्नवालङ्कारसूत्रकाराः "ये तु उपमेये धर्मिण्युपमानसंशयं सन्देहालङ्कारं वदन्तः 'किं तावत्...॥' इति निश्चयान्तसन्देहस्योदाहरणमाहुः । तेषां कथं न पूर्वापरविरोध इति त एव प्रष्टव्याः । अत्र खलु एकस्मिन् धर्मिण्युपमानमुपमेयं चालम्ब्य संशयो वर्णितः । न त्वयमुपमेये धर्मिण्युपमानसंशयः । न ह्येककोटिकः संशयो भवति ।" इति । यच्चामी अपि—'उपमानस्योपमेये संशयः सन्देहः' इति सूत्रयित्वा 'किमिन्दुः, किं पद्मं, किमु मुकुरबिम्बं किमु मुखम्' इत्युदाहृतवन्त इति 'किमु मुखम्' इत्यादौ उपमेये उपमानसंशयाभावात् स्वयं प्रष्टव्याः । एतेन—'प्रकृते तदन्यविषया सादृश्यज्ञानजन्या या बुद्धिर्निश्चयभिन्ना तामाचख्युः ससन्देहम्॥' इत्युक्त्वा 'उपमेये उपमानविषयकः संशयः ससन्देह इत्यर्थः ।' इत्याचक्षाणा अपि दत्तोत्तराः । संशयश्चात्र निश्चयानवगाहिनी बुद्धिः, नतु नानाकोटिका बुद्धिः 'किं तावत्...' इत्युदाहरणसङ्गतेः । न चास्त्विति वाच्यम्, प्राचां सिद्धान्ततोऽनेकत्र विरोधापत्तेः । अत एव 'बुद्धिर्निश्चयभिन्ना' इत्यलङ्कारकौस्तुभकारा अपि संशयपदार्थमभिहितवन्तः । इति दिक् ।

भ्रान्तिमन्तं लक्षयति—११३ **साम्यात्** सादृश्यात् । **अतस्मिन्न** तदिति तस्मिंस्तथोक्ते । **प्रतिभोत्थिता** प्रतिभोत्थापिता कविप्रौढोक्तिसिद्धेति यावत् । **तद्बुद्धि**स्तस्य बुद्धिर्निश्चय इति तथोक्ता । **भ्रान्तिमान्** । अयम्भावः-कमले कमलबुद्धिस्तस्मिंस्तद्बुद्धिः, वदने कमलबुद्धिरतस्मिंस्तद्बुद्धिः, एषैव भ्रमः । संशयस्तु उभयत्रानिश्चितबुद्ध्याकारो भवति । अत एव—सन्देहभ्रान्तिमतोर्भेदः । भ्रमापरपर्य्यायां चातस्मिंस्तद्बुद्धिरियं यदि प्रतिभोत्थापिता स्यात्तदा भ्रान्तिमान् । नच रूपकेऽतिशयोक्तौ वाऽतिव्याप्तिः, तयोरभेदस्याहार्य्यरूपत्वात्, भ्रमस्य चाहार्य्यभिन्नत्वात् । नहि तत्र साम्यादतस्मिंस्तद्बुद्धिर्भवति, किन्तु—कविनैवाभेदेन तथा वर्ण्यते । इति ॥ ८९ ॥

उदाहरति—**यथा**—'**मुग्धा** अप्रौढाः । **बल्लवा** गोपाः । **दुग्धधिया** दुग्धमिदमिति निश्चयेन । **गवाम्** । **अधः** । **कुम्भान्** दोहनपात्राणि । **विदधते** कुर्वन्ति । **कान्ताः** । **अपि** 'मुग्धा' इति पूर्वतोऽनुषज्यते । **कैरवशङ्कया** कैरव ( कुमुद ) मिदमिति भ्रमेण । 'सिते कुमुदकैरवे' इत्यमरः । **कुवलयं** नीलाब्जम् । 'श्यामं शितिकण्ठनीलं कुवलयमिन्दीवरं च नीलाब्जम् ।' इति नाममाला । **कर्णे** । **कुर्वन्ति** । **शवरी** भिल्ली । 'मुग्धा' इत्यनुष

अस्वरसोत्थापिता भ्रान्तिर्नायमलङ्कारः, यथा-'शुक्तिकायां रजतम्' इति । न चासादृश्यमूला, यथा-

'सङ्गमविरहविकल्पे वरमिह विरहो, न सङ्गमस्तस्याः ।
सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे ॥ १२६ ॥'

**११४ क्वचिद्भेदाद् ग्रहीतॄणां विषयाणां तथा क्वचित् ।**
**एकस्यानेकधोल्लेखो यः स उल्लेख उच्यते ॥ ९० ॥**

---

ज्यते । **मुक्ताफलाकाङ्क्षया** एतानि-मुक्ताफलानीति निश्चीय तानि ग्रहीतुमिच्छया । **कर्कन्धूफलं** बदरीफलानि । जाताविकत्वोक्तिः । **उच्चिनोति** सञ्चिनुते । **सान्द्रा** निविडा सर्वतो बाढं व्याप्तेति यावत् । **चन्द्रमसः** । **चन्द्रिका** ज्योतिः । **कस्य** । **चित्तभ्रमम्** । **न** । **कुरुते** अपि तु सर्वस्यैव करोति इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥१२५॥

एवमुदाहृत्य 'प्रतिभोत्थिते' त्यस्य सार्थक्यं दर्शयति-अस्वेत्यादिना । स्पष्टम् । नहि शुक्तिकायां जाताऽपि रजतबुद्धिरलङ्कारतां धत्ते । 'साम्या' दित्यस्य प्रकारान्तरेण सार्थक्यं दर्शयितुमाह-नचेत्यादि । स्पष्टम् । उदाहृत्य दर्शयति-यथा-'सङ्गमेत्यादिना ।

'**तस्या** मनसा विषयीक्रियमाणायाः प्रियतमाया इति भावः । **इह** । **सङ्गमविरहविकल्पे** सङ्गमविरहयोर्विकल्पः कल्पनाविशेषः तस्मिन् । **विरहः** । **वरं** साम्प्रतम् । **सङ्गमः** । **न** । 'वर' मिति पूर्वतोऽनुषज्यते । हेतुं निर्दिशति-**सङ्गे** सङ्गमे । **सा** । **एव** । **तथा** । **एका** । यद्वा-सा तथा तथाभूता एका एवेति योज्यम् । **विरहे** । **त्रिभुवनम्** । **अपि** । **तन्मयं** प्रियारूपम् । आर्य्याछन्दः । अत्र भ्रान्तेर्भावनातिशयजन्यत्वेन न सादृश्यमूलत्वम् । अतोऽस्याः प्रतिभोत्थापितत्वेऽपि नालङ्कारोपस्कारकत्वम् ॥ १२६ ॥'

इदमवधेयम्-कयोश्चित् सादृश्यमादाय कविना यदि स्वप्रतिभोन्मेषेणान्यस्मिन् अन्यबुद्धिः कल्प्येत तदाऽसौ भ्रान्तिमानिति व्यपदिश्यते । व्यपदेशश्चायमौपचारिकः, तथोक्तम्-'प्रमात्रन्तरधीर्भ्रान्तिरूपा यस्मिन्ननूद्यते । स भ्रान्तिमानिति ख्यातोऽलङ्कारे त्वौपचारिकः ॥' इति । तत्र-सादृश्यमादायेत्यनेन 'सङ्गम' इत्यादौ अतिप्रसङ्गो निवारितः । अत एव-'अकरुणहृदय ! प्रियतम ! मुञ्चामि त्वामितः परं नाहम् । इत्यालपति कराम्बुजमादायालीजनस्य विकला सा ॥' इत्यादेरप्यस्य व्यवच्छेदः । अत्र हि-उन्मादोत्था तथा बुद्धिः । प्रतिभोन्मेषेणान्यस्मिन्नन्यबुद्धिः कल्प्यमाना स्वरसोत्थापितेति व्यपदेशान्तराश्रयभूता भवतीत्यत एवोक्तम्, **अस्वरसोत्थापिते**त्यादि । यत्त्वाहुः-'लक्षणे च अत्रैकत्वं विवक्षितम्, अन्यथा वक्ष्यमाणानेकग्रहीतृकानेकप्रकारकैकविशेष्यकभ्रान्तिसमुदायात्मन्युल्लेखेऽतिप्रसङ्गापत्तेः ।' इति । तत् न किञ्चित्, अत्रैकत्वाभिवेशेऽपि उल्लेखेऽतिप्रसङ्गानापत्तेः, तस्यानेकप्रकारकोल्लेख एव सम्भवात्, नच तत्र साम्यमपि विवक्षितम् । अन्यथा-'नरैर्वरगतिप्रदेत्यथ सुरैः स्वकीयापगेत्युदारतरसिद्धिदेत्यखिलसिद्धसङ्घैरपि । हरेस्तनुरिति श्रिता मुनिभिरस्तसङ्गैरियं तनोतु मम शं तनोः सपदि शन्तनोरङ्गना ॥' इत्यादावुदाहरिष्यमाणेऽपि तस्या व्याप्तिः । नत्वत्र साम्यम्, किन्तु ग्रहीतॄणां केवलं भावनाभेदः । ध्वन्यमानोयं यथा-'कनकद्रवकान्तिकान्तया मिलितं राममुदीक्ष्य कान्तया । परिफुल्लपतत्रपल्लवैर्मुमुदे चातकपोतकैर्वने ॥' अत्र हि चकोराणां वारिददर्शने आमोदस्वाभाव्याद्रामदर्शनमात्रेणामोदाभिधाने भगवतो रामस्य वारिदसाम्यस्य प्रसिद्धत्वात् तद्दर्शने तद्दर्शनप्रत्ययस्यार्थिकत्वाद्भ्रान्तिर्ध्वन्यते । इति ।

उल्लेखं लक्षयति-११४ **क्वचिद्** यत्रतत्र । **ग्रहीतॄणां** बोधकानाम् । **तथा** । **विषयाणां** ग्राह्याणां बोध्यानामिति यावत् । **क्वचित्** । **भेदात्** । **एकस्य** 'यस्यकस्यचि' दिति शेषः । **यः** । **अनेकधा**ऽनेकप्रकारेण । **उल्लेख** उद्भाव्याभिमननम् । **सः** । **उल्लेख**स्तन्नामाऽलङ्कारः । **उच्यते** । अयम्भावः-एकस्य वस्तुनोऽनेकधोल्लेख उल्लेखाख्योऽलङ्कारः, अनेकधोल्लेखश्चोल्लेखकानामुल्लेखनीयानां वा भेदात् ( अनैक्यात् ) एव विवक्षितः । अतोऽस्य द्वैविध्यम् । द्विविधोऽप्ययम्, क्वाचित्कः, क्वचिदित्यनेन 'देवदत्तं देवदत्ता पतिं, दैवदत्तिः पितरं, दैवदत्तिजः पितामहं मनुते' इत्यादेर्व्यवच्छेदः ॥ ९० ॥

क्रमेणोदाहरणम्—'प्रिय इति गोपवधूभिः, शिशुरिति वृद्धैरधीश इति देवैः।
नारायण इति भक्तै; ब्रह्मेत्यग्राहि योगिभिर्देवः ॥ १२७ ॥'

अत्र एकस्यापि भगवतस्तत्तद्गुणयोगादनेकत्वोल्लेखे गोपवधूप्रभृतीनां रुच्यादयो यथायोगं प्रयोजकाः । यदाहुः—

'यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते ।
आभासोऽप्यर्थ एकस्मिन्ननुसन्धानसाधितः ॥'

इत्यत्र भगवतः प्रियत्वादीनां वास्तवत्वाद्, ग्रहीतृभेदाच्च न मालारूपकम्, न च भ्रान्तिमान् । न चायमभेदे भेदः इत्येवंरूपाऽतिशयोक्तिः । तथा हि—

'अन्यदेवाङ्गलावण्यमन्याः सौरभसम्पदः । तस्याः पद्मपलाशाक्ष्याः सरसत्वमलौकिकम्॥१२८॥'

---

उदाहर्तुमुपक्रान्तः प्राह—क्रमेणेत्यादि । स्पष्टम् । प्रिय इत्यादि ।

'देवः श्रीकृष्णचन्द्रः । गोपवधूभिर्गोपीभिः । प्रियः । इति । वृद्धैर्नन्दाद्यैर्वसुदेवाद्यैर्वा । शिशुर्बालकः । इति । देवैरिन्द्रादिभिः । अधीशः । इति । भक्तैरुद्धवादिभिः । नारायणः । इति । योगिभिर्गर्गादिभिः । ब्रह्म । इति । अग्राहि अज्ञायि । आर्य्याछन्दः ॥ १२७ ॥'

नन्वेकस्यानेकधोल्लेखः किन्निमित्तक इत्याशङ्क्याह—अत्रोदाहृते पद्ये इत्यर्थः । एकस्य । अपि । भगवतः । तत्तद्गुणयोगात् तस्यतस्य प्रियत्वादेर्गुणस्य सम्बन्धात् । अनेकत्वोल्लेखेऽनेकत्वेनोल्लेखस्तस्मिंस्तस्थोक्ते । गोपवधूप्रभृतीनाम् । प्रभृतिपदेन वृद्धादेर्ग्रहणम् । रुच्यादयः । आदिपदेनार्थित्वव्युत्पत्त्योर्ग्रहणम् । यथायोगं यथासम्भवम् । प्रयोजकाः कारणानि । भगवति यावद्गुणसत्त्वेऽपि तस्यतस्य ग्राहकस्य रुच्यादिभेदे विविधप्रकारेणैव स्फुरणमिति बोध्यम् । प्राचां संवादेनोक्तमर्थं सिद्धान्तयति—यत् । आहुः । 'यथारुचि रुचिमभिलाषमनतिक्रम्य । यथाऽर्थित्वमर्थित्वमर्थः प्रयोजनापेक्षाऽस्यास्तीति तस्य भावस्तत्त्वं, तदनतिक्रम्य । यथाव्युत्पत्ति व्युत्पत्तिर्भावना तामनतिक्रम्य । 'यथाऽसादृश्ये ।' २।१।७ इति सूत्रेणाव्ययीभावः । एकस्मिन् । अपि 'किं पुनरनेकविधे' इत्यर्थतोऽवगम्यते । अर्थे पदार्थे । आभासः प्रत्ययविशेषः । अपि ( इदमुभयत्रानुयोगि ) । अनुसन्धानसाधितोऽनुसन्धानं भावना तेन साधितः सम्पादितः । भिद्यते । एकस्मिन्नपि विषये व्यक्तिभेदेन विविधप्रकारकभावनासम्पत्तौ तत्तद्विशेषणकप्रत्ययविशेषसहकृतं रुच्यादिकं कारणमिति भावः ॥' इति । अतः—अत्र । भगवतः । प्रियत्वादीनाम् । वास्तवत्वात् आरोपितत्वाभावात् । ग्रहीतृभेदात्प्रत्येतॄणां नानात्वात् । च । न । मालारूपकम् । तथा च—'पिता प्रजानां, शमनो रिपूणां, वनीपकानाममरद्रुमश्च । कविः कवीनां, सुहृदां सुधांशुः, सतां गुरुर्भूमिपतिः प्रतीतः ॥' 'यमः खलु महीभृतां हुतवहोऽसि तन्नीवृतां सतां प्रति युधिष्ठिरो धनपतिर्धनाकाङ्क्षिणाम् । गृहं शरणमिच्छतां कुटिलकोटिभिर्निर्मितं त्वमेक इह भूतले बहुविधो विधात्रा कृतः ॥' इत्यादौ पितृत्वादीनां यमत्वादीनां च वास्तवत्वे सति ग्रहीतृभेदादेव न मालारूपकमित्यपि सूचितं वेदितव्यम् । न । च । भ्रान्तिमान् । 'कपाले मार्जारः पय इति कराँल्लेढि शशिनस्तरुच्छिद्रप्रोतान् बिसमिति करी सङ्कलयति । रतान्ते तल्पस्थान् हरति वनिताऽप्यंशुकमिति प्रभामत्तश्चन्द्रो जगदिदमहो विभ्रमयति ॥' इत्यादौ तु भ्रान्तिमानेव, तत्तद्रूपतायाः सादृश्यमूलकत्वात्, कराणां चानेकत्वात्तेषु जात्यभिप्रायेणैकत्वारोपेऽपि श्वेतत्वैक्येन भेदमूलकताया अनुपपत्तेश्चेत्यपि बोध्यम् । ननु तदयमभेदाध्यवसायिकायामतिशयोक्तावन्तर्भाव्यतामित्याशङ्क्याह—न । च । अयं निरुक्तलक्षण उल्लेखः । अभेदे । भेदः । इत्येवंरूपाऽतिशयोक्तिः । ननु कथं नेत्याशङ्क्य—उपपादयति, तथाहि । 'तस्याः । पद्मपलाशाक्ष्याः पद्मस्य पलाशे ते इव विशाले चारुणी चाक्षिणी नेत्रे यस्यास्तस्यास्तथाभूतायाः । अङ्गलावण्यमङ्गस्य शरीरस्याङ्गानां मुखादीनां वा लावण्यं सौन्दर्यविशेषः । अन्यत् लोकेऽनुभूयमानेभ्यः पृथक् । एव । सौरभसम्पदः सौरभस्य सौगन्ध्यस्य सम्पदः सम्पत्तयः । अन्याः 'एवे'ति पूर्वतोऽनुपज्यते । तथा—सरसत्वं रसिकत्वं शृङ्गारपात्रत्वं वेति भावः । अलौकिकम् । न लोके सम्भवीति भावः ॥ १२८ ॥

इत्यादौ लावण्यादेर्विषयस्य पृथक्त्वेनाध्यवसानम्। न चेह भगवति गोपवधूप्रभृतिभिः प्रियत्वादि अध्यवसीयते। प्रियत्वादेर्भगवति तत्काले तात्त्विकत्वात्।

केचिदाहुः—'अयमलङ्कारो नियमेनालङ्कारान्तरविच्छित्तिमूलः। उक्तोदाहरणे च शिशुत्वादीनां नियमाभिप्रायात् प्रियत्वादीनां भिन्नत्वाध्यवसाय इत्यतिशयोक्तिरस्ति, तत्सद्भावेऽपि प्रत्येतृभेदेन नानात्वप्रतीतिरूपो विच्छित्तिविशेष उल्लेखभिन्नालङ्कारप्रयोजकः। श्रीकण्ठजनपदवर्णने 'वज्रपञ्जरमिति शरणागतैः, विटगोष्ठीति विदग्धैः, सुकृतपरिणाम इति पथिकैः, अम्बरविवरमिति वातिकैः।' इत्यादिश्चातिशयोक्तेर्विविक्तो विषयः। इह च रूपकालङ्कारयोगः। इति।

---

इत्यादौ। लावण्यादेस्तद्रूपस्य। विषयस्य। पृथक्त्वेन 'अन्यदेवे'त्यादिनिर्दिष्टेनासाधारणत्वेनेति भावः। अध्यवसानं निश्चित्य प्रतिपादनम्। न च। इहोदाहृते पद्ये। भगवति। गोपवधूप्रभृतिभिः। प्रियत्वादि। अध्यवसीयते। हेतुं निर्दिशति–प्रियत्वादेः। भगवति श्रीकृष्णे। तत्काले तदानीम्। तात्त्विकत्वात् स्वत एव वर्त्तमानत्वात्। अयम्भावः–तत्रातिशयोक्तौ तावत् 'अन्यदेवाङ्गलावण्यम्'इत्यादौ युवत्यामन्यत्वेन ( पृथक्त्वेन ) अवर्त्तमानमपि लावण्यादि पृथक्त्वेन निश्चाय्यते, उल्लेखे तु 'प्रिय'इत्यादौ प्रियत्वादिवर्त्तमानमुल्लिख्यते, नतु अस्मादन्यत्वेन प्रत्याय्यते। इदमनयोर्भेदप्रयोजकम्। भ्रान्तौ 'मुग्धा दुग्धधिया'इत्यादौ 'कपाले मार्जार'इत्यादौ वा चन्द्रकिरणादौ वर्त्तमानस्य शैत्यस्य साम्यमादाय दुग्धत्वादिप्रत्ययः, अत्र तु न साम्यमादाय किञ्चित् प्रियत्वादि भगवति आवेद्यते, किन्तु तेषु सत्सु कियतां ग्रहीतृभेदेनावेदनम्। नच 'यमः खलु' इत्यादौ राजनि साम्यमादाय यमत्वाद्यावेद्यते, यत्स्याद्भ्रान्तिः किन्तु 'अष्टाभिश्च सुरेन्द्राणां मात्राभिर्निर्म्मितो नृपः।' इत्यादिमानवादिनिदेशमादायैव। इत्यनयोरपि भेदः। मालारूपके च–'मनोजराजस्य सितातपत्रम्'इत्यादौ न ग्रहीतृभेदः, न वा विषयभेदः। इत्यनयोर्भेदः। इति।

मतान्तरं निर्दिशति–केचित्। आहुः। 'अयमुल्लेखनामा। अलङ्कारः। नियमेनाव्यभिचारेण। अलङ्कारान्तरविच्छित्तिमूलोऽलङ्कारान्तरस्य विच्छित्तिरुपस्कारकत्वमलङ्कारत्वबीजभूतश्चमत्कारविशेष इति यावत् मूलं यस्य तादृशः। अलङ्कारान्तरस्य बीजभूतां चमत्कृतिमुपादायैवायं सम्भवतीति भावः। कथमित्याह–उक्तोदाहरणे 'प्रिय इति' इत्यादौ। च। शिशुत्वादीनाम्। आदिपदेन 'प्रियत्वा'दीनां ग्रहणम्। नियमाभिप्रायात् व्यवच्छेदतात्पर्य्यमङ्गीकृत्येति भावः। प्रियत्वादीनाम्। आदिना 'शिशुत्वा'दीनां ग्रहणम्। भिन्नत्वाध्यवसायः शिशुत्वादिभेदप्रत्ययः। इति। अतिशयोक्तिः। अस्ति। अयम्भावः–'प्रिय'इत्यादौ गोपीवृद्धदेवभक्तयोगिजनानां क्रमेण प्रियशिशुस्वामिनारायणब्रह्मत्वैः प्रत्ययाभिधानात् तदन्यतमस्यैतदन्यतमत्वप्रत्यये क्रमनैयत्यमिति 'गोपवधूभिः प्रियः एव, देवैरधीश एवे'त्येवं प्रतीतत्वे वर्ण्यमाने तदन्यतमस्यैतदन्यतरभिन्नत्वाध्यवसायः स्फुटः, स्फुटं चेत्थमेतस्यातिशयोक्तिसम्भिन्नत्वम्। इति। ननु एवमतिशयोक्तिरेवमङ्गीक्रियताम्, किमेतेनेत्याशङ्क्याह–तत्सद्भावे तस्याः सद्भावे। अपि। प्रत्येतृभेदेन प्रत्येतॄणां ग्रहीतॄणां भेदो नानात्वं तेन। नानात्वप्रतीतिरूपः प्रियशिशुत्वादिनाऽनेकत्वज्ञानात्मा। विच्छित्तिविशेषः। उल्लेखभिन्नालङ्कारप्रयोजक उल्लेखेन भिन्नः सङ्कीर्णोऽसावलङ्कारोऽतिशयोक्त्यलङ्कारस्तस्य प्रयोजकः प्रत्यायकः। यद्वा–उल्लेख एव भिन्नालङ्कारोऽतिशयोक्तीतरालङ्कारस्तस्य प्रयोजक इति पूर्ववत्। न चैवमयमतिशयोक्त्यैव सङ्कीर्ण इति दर्शयन्नाह–श्रीकण्ठजनपदवर्णने बाणकविना रचिते हर्षचरिते श्रीकण्ठाख्यस्य जनपदस्य वर्णने क्रियमाणे स्थाण्वीश्वरनामधेयस्य जनपदस्य वर्णनप्रसङ्ग इति भावः। 'तृतीय उच्छ्वास'इति शेषः। 'वज्रपञ्जरं वज्रमिन्द्रायुधं तदेव पञ्जरं निलीय स्थातुं योग्यं स्थानमिति तथोक्तम्। वज्रस्य पञ्जरमिति समासेऽप्ययमेव भावः। अमोघत्वेनाप्रतिहतत्वेन स्थानस्य वज्रपञ्जरत्वेनाभिधानम्। इति। शरणागतैः। विटगोष्ठी चतुरसमाज इति भावः। इति। विदग्धैश्चतुरैः। सुकृतपरिणामः पुण्यफलम्। इति। पथिकैः। अम्बरविवरमम्बरस्य गुहारूपं स्थानम्। इति। वातिकैर्वातप्रभूतैर्देवयोनिविशेषैः। 'योऽगृह्यते'ति शेषः।' इत्यादिः। च। अतिशयोक्तेः। विविक्तः संपर्कविहीनः। विषयः। इह 'वज्रपञ्जर'इत्यादौ। च। रूपकालङ्कारयोगः। ननु उल्लेख एवेति

'वस्तुतस्तु–'अम्बरविवरम्'इत्यादौ भ्रान्तिमानेव, न रूपकं भेदप्रतीतिपुरःसरस्यैवारोपस्य गौणीमूलरूपकादिप्रयोजकत्वात्। यदाहुः–शारीरकमीमांसाभाष्यव्याख्याने श्रीवाचस्पतिमिश्राः- 'अपि च-परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्त्तते, इति यत्र प्रयोक्तृप्रतिपत्त्रोः सम्प्रतिपत्तिः स गौणः, स च भेदप्रत्ययपुरःसरः।'इति। इह तु वातिकानां श्रीकण्ठजनपदवर्णने भ्रान्तिकृत एवाम्बरविवराद्यारोपः। अत्रैव च'तपोवनमिति मुनिभिः, कामायतनमिति वेश्याभिः'इत्यादौ परिणामालङ्कारयोगः।'इति च परे।

'गाम्भीर्य्येण समुद्रोऽसि गौरवेणासि पर्वतः।
कामदत्वाच्च लोकानामसि त्वं कल्पपादपः॥ १२९॥'

इत्यत्र अनेकधोल्लेखे गाम्भीर्य्यादिविषयभेदः प्रयोजकः। अत्र च रूपकयोगः।

'गुरुर्वचसि, पृथुरुरसि, अर्जुनो यशसि'इत्यादिषु चास्य रूपकाद् विविक्तो विषयः। अत्र श्लेषमूलातिशयोक्तियोगः।

---

भावः।' इति। एवं केषाञ्चिन्मतं दर्शयित्वाऽत्रापि परमतं दर्शयति–'वस्तुतस्तु यद्यपि केचित्तथा प्राहुः–किन्तु सिद्धान्तनयेन इति भावः। 'अम्बरविवरम्।'इत्यादौ। भ्रान्तिमान्। एव। न। रूपकम्। 'भ्रान्तिमन्तमेवेच्छन्ति, न रूपकम्'इति पाठे'ऽस्मदादय'इति शेषः, स्पष्टमन्यत्। हेतुं निर्दिशति–भेदप्रतीतिपुरःसरस्य। एव'न त्वभेदप्रतीतिपुरःसरस्ये' ति शेषः। आरोपस्य। गौणीमूलरूपकादिप्रयोजकत्वात्। आदिपदेन परिणामादेर्ग्रहणम्। अत्राप्तवाक्यं प्रमाणमिति निर्दिशति–यत्। शारीरकमीमांसाभाष्यव्याख्याने वेदान्तसूत्राणां श्रीशङ्कराचार्य्यभगवत्पादैः कृतं भाष्यं शारीरकभाष्यं तस्य व्याख्यानं व्याख्या तत्रेति तथोक्ते। 'अथातो ब्रह्मजिज्ञासा' इति प्रथमसूत्रस्य भाष्यव्याख्यानावसर इति भावः। श्रीवाचस्पतिमिश्राः। आहुः। अपि। च। परशब्दः यथा–'एतत्तैलम्'इत्यादौ तिलभवस्नेहवाचकस्तैलशब्द इति भावः। परत्र एतत्पदवाच्ये सार्षपादिस्नेहे। लक्ष्यमाणगुणयोगेन लक्ष्यमाणो गुणो घृतादिभिन्नद्रवत्वरूपस्तस्य योगस्तेन। वर्त्तते। इति अस्मात् हेतोः। यत्र। प्रयोक्तृप्रतिपत्त्रोः 'एतत्तैलम्'इत्यादेरुच्चरिता प्रयोक्ता, तद्वाक्यार्थाभिज्ञः प्रतिपत्ता चेति तयोः। सम्प्रतिपत्तिर्निश्चयः। सः। गौणो गौणीलक्षणाविषयः। सः। च। भेदप्रत्ययपुरःसरः।' अयम्भावः–गौणीलक्षणा हि सादृश्यमूला भवति, सादृश्यं च सति भेद एवेति'एतत्तैल'मित्यादौ तैलादिशब्दाः एतदादिषु लक्ष्यमाणगुणसम्बन्धेन वर्त्तन्ते, तादृशी च सम्प्रतिपत्तिस्तत्तद्वक्तृबोद्धव्ययोरवतिष्ठते। रूपकं च गौणीमूलम् 'अम्बरविवरमिलत्यगृह्यते'त्यादौ भेदप्रत्ययाभावादभेदप्रत्ययस्य मिथ्यात्वेन भ्रमरूपत्वादत्र भ्रान्तिमानेव। इति। तदेव विशदयन्नाह–इह। तु। वातिकानाम्। श्रीकण्ठजनपदवर्णने श्रीकण्ठजनपदान्तर्गतस्थाण्वीश्वरजनपदवर्णनप्रसङ्गे। भ्रान्तिकृतः। एव। अम्बरविवराद्यारोपः। अम्बरविवराद्यभेदाध्यवसायः। अत्रास्मिन् प्रस्तावे। एव। च। तपोवनम्। इति। मुनिभिः। कामायतनम्। इति। वेश्याभिः। 'योऽगृह्यते'ति शेषः।' इत्यादौ। परिणामालङ्कारयोगः परिणामसङ्कीर्णोल्लेख इति भावः। इदमभिहितम्–अम्बरविवरत्वेनाभिमतोऽपि स्थाण्वीश्वरजनपदो न तथा परिणत इति तत्र भ्रान्तिरेव, तदौचित्यं च वातिकानाम्, अतस्तत्र भ्रान्तिमानेव। तपोवनत्वादिना तु स तथा क्रियोपयोगितया परिणत इति परिणामः। उल्लेखस्त्वेकस्मिन् जनपदे अनेकधोल्लेखनमूलः। इति।' इति। च। परे। 'आहु'रिति शेषः।

द्वितीयमुदाहरति–'गाम्भीर्य्येण। त्वम्–समुद्रः। असि। गौरवेण। पर्वतः। असि। लोकानाम्। कामदत्वात् कामपूरकत्वात्। च। कल्पपादपः कल्पवृक्षः। त्वम्। असि। अत्र हि गाम्भीर्य्यादिविषयभेदेनैकस्य राज्ञोऽनेकधोल्लेखनादुल्लेखः॥ १२९॥'

लक्ष्यं स्पष्टार्थयति–इत्यत्रेत्यादिना। स्पष्टम्। अत्रापि केषाञ्चिन्मतं निर्दिशति–अत्र चेत्यादिना। स्पष्टम्। नन्वेवं 'गुरुर्वचसि'इत्यादावपि रूपकं किमित्याशङ्क्याह–'वचसि। गुरुर्बृहस्पतिर्गरीयांश्च। उरसि। पृथुर्वैन्यः पृथुलश्च। यशसि। अर्जुनः सहस्रबाहुर्धवलश्चेत्यर्थः। इत्यादिषु। च। अस्योल्लेखस्य। रूपकात्। विविक्तः पृथग्भूतः। विषयः। अत्र। श्लेषमूलातिशयोक्तियोगः। 'उल्लेखस्ये'ति शेषः। इति। अयं संशयसङ्कीर्णः

**११५ प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः।**

इयं द्विधा, क्वचिद्धचपह्नवपूर्वक आरोपः, क्वचिच्चारोपपूर्वकोऽपह्नव इति। क्रमेणोदाहरणम्-

'नेदं नभो,मण्डलमम्बुराशि,नैताश्च तारा,नवफेनभङ्गाः।
नायं शशी,कुण्डलितः फणीन्द्रो,नासौ कलङ्कः शयितो मुरारिः ॥ १३० ॥'

'एतद्विभाति चरमाचलचूडचुम्बि हिण्डीरपिण्डरुचि शीतमरीचिबिम्बम्।
उज्ज्वालितस्य रजनीं मदनानलस्य धूमं दधत्प्रकटलाञ्छनकैतवेन ॥ १३१ ॥'

इदम्मम। एवम्-विराजति व्योमवपुः पयोधिस्तारामयास्तत्र च फेनभङ्गाः।
सुधांशुमूर्तिः शयितः फणीन्द्रः सान्द्राङ्कभामाच्युतभासितान्तः ॥ १३२ ॥

---

'भानुरग्निर्यमो वाऽयं बलिः कर्णोऽथवा शिबिः। प्रत्यर्थिनश्चार्थिनश्च विकल्पन्त इति त्वयि ॥' अत्र प्रथमद्वितीयपाद-प्रतिपाद्ययोः प्रत्येकं संशयत्वम्। अयं फलोल्लेखो यथा-'अर्थिनो दातुमेवेति त्रातुमेवेति कातराः। जातोऽयं हन्तुमेवेति वीरास्त्वां देव जानते ॥' हेतूल्लेखो यथा-'हरिचरणनखरसङ्गादेके हरमूर्धसंस्थितेरन्ये। त्वां प्राहुः पुण्यतमामपरे सुरतटिनि वस्तुमाहात्म्यात् ॥' अयं ध्वन्यमानो यथा-'अनल्पतापाः कृतकोटिपापा गदैकशीर्णा भवदुःखजीर्णाः। विलोक्य गङ्गां विचलत्तरङ्गाममी समस्ताः सुखिनो भवन्ति ॥' अत्र हि-पूर्वार्धोक्तानां सुखित्वोक्त्या तापपापरोगभव-नाशकत्वप्रकारकाणि ग्रहणान्याक्षिप्यन्ते। अयं च शुद्धस्य ध्वनिः। सङ्कीर्णस्य यथा-'स्मयमानाननां तत्र तां विलोक्य विलासिनीम्। चकोराश्चञ्चरीकाश्च मुदं परतरां ययुः ॥' अत्र हि ध्वन्यमानयैकैकग्रहणरूपया भ्रान्त्या तदुभयसमुदाया-त्मोल्लेखः। यथा वा-'भासयति व्योमगता जगदखिलं, कुमुदिनीर्विकासयति। कीर्तिस्तव धरणिगता सगरसुतायाः समफलतां नयते ॥' अत्र ह्यधिकरणभेदप्रयुक्तमेकस्यामेव कीर्तौ चन्द्रिकाचन्द्रिकात्वाद्यनेकधोल्लेखो रूपसङ्कीर्णो ध्वन्यते।

अपह्नुतिं लक्षयति-११५ **प्रकृतम्** उपमेयम्। **प्रतिषिध्य** निषिध्य। **अन्यस्थापनम्** अन्यस्योपमानस्य स्थापनम्। **अपह्नुतिः। स्यात्।** तथा च-उपमेयनिषेधपूर्वकमुपमानस्योपमेयतादात्म्येनोपपादनमपह्नुतिरिति फलितोऽर्थः। अस्यां चोपमेयस्य निषेधादुपमेयोपमानयोर्विरोधः, रूपके तु सामानाधिकरण्यम्; इत्यनयोर्भेदः।

अस्या द्वैविध्यमाह-**इयम्**अपह्नुतिः। **द्विधा। हि** यतः। **क्वचित्** कस्याञ्चिदपह्नुत्याम्। **अपह्नवपूर्वकः।** 'उपमेयस्ये'ति शेषः। **आरोपः।** उपमानस्ये'ति शेषः। **क्वचित्** कस्याञ्चिदपह्नुतौ। **च। आरोपपूर्वक** 'उपमा-नस्ये'ति शेषः। **अपह्नव** 'उपमेयस्ये'ति शेषः। **इति** 'द्विधा'इत्यनेन सम्बन्धः। तथा च-उपमेयापह्नवपूर्वकोपमाना-रोपात्मिका, उपमानारोपपूर्वकोपमेयापह्नवात्मिका चेति द्विविधापह्नुतिरलङ्कार इति निष्कृष्टम्।

उदाहरति-**क्रमेण। उदाहरणम्। 'इदम्। नभोमण्डलम्**आकाशम्। **न। किन्तु-अम्बुराशिः** समुद्रः क्षीरसमुद्र इति यावत्। **एताः। ताराः। च। न। किन्तु-नवफेनभङ्गा** नवाश्च ते फेनभङ्गा इति तथोक्ताः। **अयम्। शशी** चन्द्रः। **न।** किन्तु-**कुण्डलितः** कुण्डलाकारेणावस्थितः। **फणीन्द्रः** शेषः। **असौ। कलङ्कः। न।** किन्तु-**शयितः। मुरारिः**लक्ष्मीपतिर्भगवान्। एवं च-उच्छलत्फेने क्षीरसमुद्रे शेषपर्य्यङ्कस्थः श्रीपतिरिव तारासङ्कुलिते नभोमण्डले लाञ्छनश्रियं बिभ्रच्चन्द्रमा इत्युपमा ध्वन्यते इति बोध्यम्। अत्र नभआदीनामुपमेयानां निषेधपूर्वकमम्बुराश्या-दीनामुपमानानामारोपः। अत उपमेयापह्नवपूर्वकोपमानारोपात्मिकेयम्। इन्द्रवज्रावृत्तम् ॥ १३० ॥

'**एतत्। प्रकटलाञ्छनकैतवेन** प्रकटं यत् लाञ्छनं कलङ्कस्तस्य कैतवं छलस्तेन। **रजनीं** रात्रिं याप्य। नैरन्तर्य्ये द्वितीया। **उज्ज्वालितस्य**उद्गता ज्वालेत्युज्ज्वाला, सा जाताऽस्य, तादृशस्य। **मदनानलस्य** कामरूप-स्याग्नेः। **धूमम्। दधत्। चरमाचलचूडचुम्बि** चरमाचलस्यास्ताचलस्य चूडश्चूडा शिखरमिति यावत् तं चुम्बती-त्येवंशीलम्। **हिण्डीरपिण्डरुचि** हिण्डीराः फेनास्तेषां पिण्डं तस्येव रुचिर्यस्य तथोक्तम्। 'हिण्डीरोऽब्धिकफः फेन'इत्यमरः **शीतमरीचिबिम्बं** शीताः शीतला मरीचयः किरणा यस्य तस्य (चन्द्रस्य) बिम्बम्। **विभाति।** अत्र धूमत्वारोपपूर्वकमुपमेयभूतस्य लाञ्छनस्यापह्नव इत्यारोपपूर्वापह्नवात्मिकेयम्। वसन्ततिलकं वृत्तम् ॥ १३१ ॥

इदं पद्यं च कविराजानां कृतिः। अतः स्वयमेवाहुः-**इदम्। मम।** नेयं शाब्द्येव, किन्त्वार्थ्यपि सम्भवतीति ध्वनयन्नाह-**एवम्**-

'**व्योमवपुः**र्व्योमाकाशं तदेव वपुर्यस्य तादृशः। **पयोधिः** क्षीरोदः। **विराजति** विराजते। **तत्र** तस्मिन् अयोनौ। **च। तारामयाः। फेनभङ्गाः** फेनखण्डाः। **सुधांशुमूर्तिः** सुधांशोर्मूर्त्तिः। तथा-**सान्द्राङ्कभामाच्युत-**

इति च प्रकृतनिषेधो बोद्धव्यः।

---

भासितान्तः सान्द्रो निबिडोऽसौ अङ्कश्चन्द्रलक्ष्म तदिव भाम यस्य सोऽसावच्युतः श्रीपतिस्तेन भासितमन्तर्मध्यभागो यस्य तादृशः। **फणीन्द्रः** शेषः। **शयितः**। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ॥ १३२ ॥'

**इति**। **च**। **प्रकृतनिषेधः** प्रकृतापह्नवपूर्वकोपमानारोपात्मिकाऽपह्नुतिरिति भावः। **बोद्धव्यः**। इयं चार्थी, निषेधस्यार्थतो लभ्यमानत्वात्, 'नेद'मिति तु शाब्दीशब्देनोपात्तत्वात्। इदमवधेयम्—अपह्नुतिस्तावत् प्रकृतापह्नवपूर्वकाप्रकृतारोपात्मिकाऽप्रकृतारोपपूर्वकप्रकृतापह्नवात्मिका चेति द्विविधा, एषाऽपि शाब्दी आर्थी चेति द्विविधेति चतुर्विधत्वमेतस्याः। अत्र शाब्दी द्विविधाऽप्युदाहृता, आर्थी तु पूर्वैव। परा यथा मम—'कमलं वदनच्छलतो लावण्ये क्षीरपूरसम्पूर्णे। विकसदिदं तत् सुभगे दर्शंदर्शं सुधाजनाश्चकिताः ॥' इति। इयमेव कैतवापह्नुतिरित्यपि गीयते। इयं च हेतुनिर्देशे चेद्धेत्वपह्नुतिरिति व्यपदिश्यते, यथा—श्यामं सितं च सुदृशो न दृशोः स्वरूपं, किन्तु स्फुटं गरलमेतदथामृतं च। नो चेत् कथं निपतनादनयोस्तदैव मोहं मुदं च नितरां दधते युवानः ॥' इति। एतदुभयात्मिकाऽप्येषा—'वदने विनिवेशिता भुजङ्गी पिशुनानां रसनामिषेण धात्रा। अनया कथमन्यथाऽवलीढा नहि जीवन्ति जना मनागमन्त्राः ॥' इति। इयं चोत्प्रेक्षासङ्कीर्णाऽपि, यथा—'अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये! कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि। अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥' इति। इयं मालारूपाऽपि, यथा—'क्वापि क्षीरनिधिच्छलात्, क्वचिदपि प्रोत्फुल्लकुन्दच्छलात्, कुत्रापीन्द्रगजच्छलात्, क्वचिदपि प्रालेयरश्मिच्छलात्। कुत्रापि स्मरवैरिदेहमिषतः, कुत्रापि शेषच्छलात्, त्रैलोक्यं हिमतुल्यकीर्त्तिरटति श्रीवाजचन्द्रप्रभोः ॥' अत्र क्षीरनिधिप्रभृतीन् निषिध्यैकस्याः कीर्त्तेस्तेषु बहुष्वारोपः। क्वाप्येषा—एकापह्नवपूर्वकबह्वारोपात्मिका दृश्यते, यथा—'नारीणामनुरञ्जनादनुनयनात् पञ्चाशुगस्याशुगान्, शत्रूणामवधीरणापकरणव्यापारतः पाण्डवान्। कामानामनुपूरणात् सुरतरून् भीतार्त्तसञ्जीवनात् प्राणान् पाणिरयं बिभर्त्ति नृपतेः पञ्चाङ्गुलीव्याजतः ॥' अत्र वाजचन्द्रनृपतेरङ्गुलिनिषेधपूर्वकं बहूनां कामबाणादीनामारोपः। अथ ध्वन्यमाना यथैषा—'दयिते! रदनत्विषां मिषादयि तेऽमी विलसन्ति केसराः। अपि चालकवेषधारिणो मकरन्दस्पृहयालवोऽलयः ॥' इति। अत्र हि—'नेमा रदनत्विषः, किं तु किञ्जल्कपरम्पराः, न चामी अलकाः, किन्तु अलयः' इति पूर्वोत्तरभागाभ्यामपह्नुतिद्वयं स्फुटं, तेन च 'न त्वं सुदती युवती, किन्तु पद्मिनी'इति तृतीयाऽपह्नुतिः प्राधान्येन ध्वन्यते। इति। चित्रमीमांसाकारास्तु—'त्वदालेख्ये कौतूहलतरलतन्वीविरचिते विधायैका चक्रं विलिखति सुपर्णासुतमपि। अपि खिद्यत्पाणिस्त्वरितमपमृज्यैतदपरा करे पौष्पं चापं मकरमुपरिष्टाच्च लिखति ॥' इत्यपह्नुतिध्वनिरुदाहृतः। अत्र 'अयं न साधारणः कश्चित् पुरुषः, किन्तु नारायणः, इति चक्रादिलेखनद्वारा कयाचिद् व्यञ्जितम्। अन्यथा पुनः—तस्यापि एतादृशं रूपं न सम्भवतीत्यभिप्रायेण 'नायं नारायणोऽपि, किन्तु कामदेव'इति तदुभयमपमृज्य पुष्पचापमकरध्वजलेखनमुखेन ध्वनितम्। अत्र गङ्गाधरकृतः—'अपह्नुतेर्द्वौ भागौ, उपमेयनिषेधः, उपमानारोपश्चेति, तयोस्तावदुपमानारोपभागः 'पुण्डरीकाक्षोऽय' मित्याकारश्चक्रसुपर्णलेखनेन अभिव्यङ्क्तुं शक्यः, चक्रसुपर्णयोस्तत्सम्बन्धित्वात्। ननु'नायं साधारणः पुरुषः' इत्युपमेयनिषेधभागोऽपि। व्यञ्जकस्यारोपमात्रव्यञ्जनसमर्थस्य तादृशनिषेधव्यञ्जने सामर्थ्याभावात्। नाप्यनुभवसिद्धः सः, येन तद्व्यञ्जनोपायो गवेष्येत। नापि गवेष्यमाणोऽपि तद्व्यञ्जनोपायः शब्दोऽर्थो वोपलभ्यते। येनानुभवकलहोऽपि स्यात्। न च साधारणपुरुषनिषेधमन्तरेण पुण्डरीकाक्षतादात्म्यारोपो दुर्घट इति सोऽपि व्यज्यत इति वाच्यम्। रूपकोच्छेदापत्तेः। 'मुखं चन्द्र'इत्यादौ मुखनिषेधमन्तरेण चन्द्रत्वं दुरारोपमित्यस्यापि सुवचत्वात्। तत्रापि मुखनिषेधावगमे जितमपह्नुत्या। अथ 'मुखं चन्द्र'इति रूपके मुखत्वसामानाधिकरण्येन चन्द्रतादूप्यस्यारोप्यमाणतया न मुखनिषेधापेक्षेति चेत्, प्रकृतेऽपि तर्हि तादृशसाधारणपुरुषत्वसामानाधिकरण्येन पुण्डरीकाक्षतादात्म्यारोपरूपमसौ राजा पुण्डरीकाक्ष इत्याकाररूपकमेव भवितुमीष्टे, नापह्नुतिः। यदपि च उच्यते'नायं पुण्डरीकाक्षः, अपि तु मन्मथः'इत्यादि। तत्र यद्यपि चक्रसुपर्णदूरीकरणेन'नायं पुण्डरीकाक्ष'इति निषेधः पुष्पचापध्वजगतमकरयोर्लेखनेन च 'मन्मथोऽय'मित्युपमानारोपश्च व्यङ्ग्यो भवितुमर्हति। तथाऽपि नासावपह्नुतिः। 'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्।'इति त्वत्कृतलक्षणस्याप्यत्रासत्त्वात्। अत्र हि निषेध्यस्य भगवतः पुण्डरीकाक्षस्यावर्ण्यत्वेनाप्रकृततया प्रकृतनिषेधाभावात्। नहि पूर्वारोपिततामात्रेण प्रकृतत्वं

**११६ गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन ॥ ९१ ॥**
**यदि श्लेषेणान्यथा वाऽन्यथयेत् साऽप्यपह्नुतिः ॥**

श्लेषेण यथा-'काले वारिधराणामपतितया नैव शक्यते स्थातुम् ।
उत्कण्ठिताऽसि तरले नहिनहि सखि ! पिच्छिलः पन्था: ॥ १३३ ॥'

---

वक्तुं शक्यम्। प्रकृतपदस्यारोपविषयपरतया निषिध्य विषयमित्यादिना'क्त्वा'प्रत्ययफलं ब्रुवता भवतैव तत्र स्फुटीकरणात्। काव्यप्रकाशकृताऽपि 'प्रकृतं यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः।'इति सूत्रं व्याचक्षाणेन 'उपमेयमसत्यं कृत्वा'-इत्यादिना प्रकृतपदस्योपमेयपरतयैव व्याख्यानाच्च । प्राचीनमतसिद्धेयमपह्नुतिर्व्यङ्ग्यत्वेनास्माभिरिहोच्यत इत्यपि कुशकाशावलम्बनमात्रम्। 'प्रकृतस्य निषेधेन यदन्यत्वप्रकल्पनम्।' इति लक्षणं कुर्वता भवतैव तस्या बहिःकरणात्। एवमपि उक्तपद्ये कोऽलङ्कारो व्यङ्ग इति चेत् ! विच्छित्तिवैलक्षण्येऽतिरिक्तः ( रूपकाख्यः ) । अन्यथा त्वपह्नुतिरेवास्तु, लक्षणं तु तदा-'प्रसक्तयत्किञ्चिद्वस्तुनिषेधसामानाधिकरण्येन क्रियमाणवस्त्वन्तरारोपमेवापह्नुतित्वम् । 'इति प्राहुः, कौस्तुभकारास्तु-'वस्तुतस्तु-'मुखं चन्द्र'इत्यादौ मुखत्वं धर्मितावच्छेदकीकृत्य चन्द्रतादात्म्यारोपस्यानुभवसाक्षिकत्वादभ्युपगमेऽपि प्रकृते पुण्डरीकाक्षभेदव्याप्यचक्राद्यभावस्य साधारणपुरुषधर्मस्य च चक्रादिभिरपसारणे साधारणपुरुषनिषेधमन्तरेण पुण्डरीकाक्षतादात्म्यस्य व्यञ्जयितुमशक्यत्वात् तन्निषेध आवश्यक इति दीक्षिताशयः।' इत्याहुः । मर्मप्रकाशकाराः पुनः—'अत्रेदं चिन्त्यम्-दीक्षितैर्हि 'दण्डी तु अपह्नुतेः साधर्म्यमूलत्वनियममनादृत्य 'अपह्नुतिरपह्नुत्य किञ्चिदन्यार्थसूचनम्।'इति लक्षयित्वोदाजहार'न पञ्चेषुः स्मरस्तस्य सहस्रं पत्रिणां यतः। चन्दनं चन्द्रिका मन्दो गन्धवाहश्च दक्षिणः॥' इत्याद्युपक्रम्य'त्वदालेख्ये'इत्याद्युक्तमिति तदनुसारेणैव तत्रापह्नुतिध्वनिरुदाहृत इति न कश्चिदहृदयङ्गमम्। प्रकाशविरोधोऽपि न, तत्रोपमेयपदस्य पदार्थोपलक्षणपरत्वात् । अन्यथा-'केसेसु बलामोडिअ तेण अ समरम्मि जअसिरी गहिआ। जह कंदराहिं विहुरा तस्स दढं कंठअम्मि संठविआ॥'[1]इत्यत्र स्वयं न प्रपलाय्य गतास्तद्वैरिणोऽपि तु ततः पराभवं सम्भाव्य तान् कन्दरा न त्यजन्तीत्यपह्नुतिर्व्यज्यते'इति प्रकाशग्रन्थासङ्गतिः स्यादिति बोध्यम्।' इति समादधते । इति।

प्रकारान्तरेणैनां लक्षयति-११६ **कमपि** । **गोपनीयम**प्रकाश्यम्। **अर्थं** प्रयोजनम् । **कथञ्चन** प्रमादादिवशात्। **द्योतयित्वा** प्रकाश्य । **यदि** 'अथ कस्यचिद् भीत्ये'ति शेषः । **श्लेषेण** । **अन्यथा** प्रकारान्तरेणाश्लेषेणेति यावत्। **वा** । **अन्यथयेत्** अभिप्रायान्तरेणासङ्गमयेत्। 'प्रथयेत्।' इति पाठान्तरम्। **सा** । **अपि** । **अपह्नुतिः**। अयम्भावः-यं कमपि स्वभावतो गोपनीयमप्यर्थं यदि प्रमादादिवशात् गोपायितुं न शक्नुयात्, तं प्रकाश्यापि श्लेषमहिम्ना कारणान्तरपरतया सङ्गमय्य परकर्तृकतत्कर्म्मकप्रबोधपरायणतामपह्नुवीत सा द्वितीयप्रकाराऽपह्नुतिः। इति ॥ ९१ ॥

एवं द्विविधाऽप्येषा तत्राद्या तावदुदाह्रियते-**श्लेषेण**। **यथा**-'**वारिधराणां** मेघानाम्। **काले** समये । वर्षासमय इति फलितोऽर्थः ।' **अपतितया** न पतिर्मदनज्वालाप्रशमितृतया रक्षको यस्यास्तस्या भावस्तत्ता तया । **स्थातुम**वस्थातुम् । **नैव** । **शक्यते** । मदनोद्दीपकस्याऽस्य समयस्य साहाय्येन प्रचण्डतरतां प्रतिपन्नेन स्वभावतो वियोगिनीजनान्तकेन मदनेन पीड्यमानाऽहमिति पत्युश्च परदेशगततया तथाभूतस्यान्यस्य कस्यचित्तरुणवरसुकृतिन आश्रयमन्तरा न मम जीवनास्था सम्भवति इति भावः । एवं प्रस्फुटमर्थं बुद्ध्वा तत्सखी पृच्छति-हे **तरले** चञ्चले पातिव्रत्यतो भ्रश्यमानचित्ते इति यावत् । **उत्कण्ठिता** 'परसङ्गस्ये'ति शेषः । उत्कण्ठिताऽभिलाषिणी । **असि** ( अत्र काकुः, अतः-'किं'मित्यर्थो लभ्यते ) एवं सख्या ज्ञातमपि तथ्यं भावमपह्नोतुमाह-**नहिनहि** ( सम्भ्रमे द्विरुक्तिरियम्) हे **सखि**! 'यथा तयाऽऽशङ्क्यते तथा न, किन्त्वि'ति भावः । **पन्थाः** । **पिच्छिलः** 'कर्दमातिशया'दिति शेषः। अतः-'अपतितया' इत्यस्य पतितत्वमन्तरेति भावः । अत्र 'अपतितये'ति श्लिष्टम् । आर्य्याछन्दः ॥ १३३ ॥

---

[1] 'केशेषु बलात्कारेण तेन च समरे जयश्रीर्गृहीता। यथा कन्दराभिर्विधुरास्तस्य दृढं कण्ठे संस्थापिताः॥' इति संस्कृतम्।

अत्र'अपतितये'त्यनेन'पतिं विना'इत्युक्त्वा पतनाभावेनेत्यन्यथाकृतम्। अश्लेषेण यथा-

'इह पुरोऽनिलकम्पितविग्रहा मिलति का न वनस्पतिना लता।
स्मरसि किं सखि! कान्तरतोत्सवं नहि घनागमरीतिरुदाहृता ॥ १३४ ॥'

वक्रोक्तौ परोक्तेरन्यथाऽऽकारः, इह तु स्वोक्तेरेवेति भेदः। गोपनकृता गोपनीयस्यापि प्रथममभिहितत्वाच्च व्याजोक्तेः।

**११७ अन्यन्निषिध्य प्रकृतस्थापनं निश्चयः पुनः ॥ ९२ ॥**

निश्चयाख्योऽयमलङ्कारः। अन्यदित्यारोप्यमाणम्। यथा मम-

'वदनमिदं न सरोजं, नयने नेन्दीवरे एते।
इह सविधे मुग्धदृशो मधुकर! न मुधा परिभ्राम्य ॥ १३५ ॥'

यथा वा-'हृदि बिसलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणीकण्ठे न सा गरलद्युतिः।
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्याऽनङ्ग! क्रुधा किमु धावसि ? ॥ १३६ ॥'

---

बोधसौकर्य्यायोदाहृतमर्थं सूचयति-अत्रेत्यादिना। स्पष्टम्।

द्वितीयोदाहियते-अश्लेषेण। यथा-इहास्मिन् वर्षासमये। पुरोनिलकम्पितविग्रहा पुरोऽग्रतोऽनिलेन वायुना कम्पितो विग्रहः शरीरं यस्याः सा। का। लता। वनस्पतिना। सहार्थेयं तृतीया। न। मिलति संयुज्यते। 'अपि तु सर्वैवे'ति शेषः। इत्युदीर्य्यमाणं श्रुत्वा सखी पृच्छति-हे सखि! किम्। कान्तरतोत्सवं कान्तस्य सुरतजन्यमुत्सवम्। स्मरसि? इत्यवगतं स्वमर्थं ज्ञात्वाऽपह्नुते-नहि यत्त्वया कथ्यते शङ्क्यते वा तन्नेति भावः। किन्तु-घनागमरीतिर्वर्षाप्रभावः। उदाहृता। द्रुतविलम्बितं वृत्तम् ॥ १३४ ॥

व्याजोक्तेरस्या व्यवच्छेदं लक्षयति-वक्रोक्ताविसादिना। स्पष्टम्। व्याजोक्तेरस्या भेदं लक्षयति-गोपनेत्यादिना। 'भेद'इति शेषः। स्पष्टमन्यत्।

एवमपह्नुतिं निरूप्य निश्चयं लक्षयति-११७ अन्यत् अप्रकृतमुपमानमिति यावत्। निषिध्य। प्रकृतस्थापनं प्रकृतस्योपमेयस्य स्थापनम्। पुनः (इदमपह्नुतेर्भिन्नक्रमद्योतनार्थम्) निश्चयस्तदाख्योऽलङ्कारः। अयम्भावः-अपह्नुत्यां यथोपमेयनिषेध उपमानारोपः, तथा यत्रोपमाननिषेध उपमेयस्थापनं स प्रकृतदृढकरणहेतुकतया निश्चयनामाऽलङ्कारः॥९२॥

सन्देहापकरणाय निश्चयपदं व्याचष्टे-निश्चयाख्य इत्यादिना। स्पष्टम्।

अन्यत्पदं व्याचष्टे-अन्यदित्य'स्ये'ति शेषः। आरोप्यमाणमुपमानम्। इत्यर्थः।

उदाहरति-यथा। मम। 'हे मधुकर! इदम्। वदनं मुखम्। सरोजं कमलम्। न। एते। नयने नेत्रे। इन्दीवरे नीलकमले। न। इहास्मिन् प्रदेशे। मुग्धदृशो मुग्धे लज्जया नमिते दृशौ यस्यास्तस्याः। सविधे समीपे। मुधा व्यर्थम्। न। परिभ्राम्य परिभ्रम। अत्र कान्तायां मुखस्य नयनयोश्चोपमेयभूतानां सादृश्यातिशयेन कमलेन्दीवरैः प्रतीयमानमभेदं निषिध्य स्थापनमिति निश्चयाख्योऽयम्। आर्याछन्दः ॥ १३५ ॥'

उदाहरणान्तरं दर्शयति-यथा वा। 'हे अनङ्ग कामदेव! हृदि वक्षसि। बिसलताहारो मृणालतन्तुनिर्मितो हारः। अयम्। भुजङ्गमनायकः फणिराजो वासुकिः। न। कण्ठे। कुवलयदलश्रेणी कुवलयस्य दलानि पत्राणि तेषां श्रेणी माला। 'इय'मिति शेषः। सा। गरलद्युतिर्गरलस्य द्युतिः। न। इदम्। मलयजरजो मलयगिरिसम्भूतस्य चन्दनस्य रजः। भस्म विभूतिः। न। प्रियारहिते विरहिणि। मयि। हरभ्रान्त्या सदाहकभ्रमेण। न। प्रहर। किमु। क्रुधा कोपेन। धावसि प्रहर्त्तुमुद्यतसे। अत्र हरिणीछन्दः। भुजङ्गमनायकादीन्निषिध्य बिसलताहारादीनां स्थापनात् निश्चयः ॥ १३६ ॥

नह्ययं निश्चयान्तः सन्देहः, तत्र संशयनिश्चययोरेकाश्रयत्वेनावस्थानात्। अत्र तु भ्रमरादेः संशयः, नायकादेर्निश्चयः। किञ्च–न भ्रमरादेरपि संशयः। एककोट्यधिके ज्ञाने तथा समीपगमनासम्भवात्। तर्हि भ्रान्तिमानस्तु। अस्तु नाम भ्रमरादेर्भ्रान्तिः। नचेह तस्याश्चमत्कारविधायित्वम्। अपितु तथाविधनायकाद्युक्तेरेवेति सहृदयसंवेद्यम्। किञ्च–अविवक्षितेऽपि भ्रमरादेः पतनादौ भ्रान्तौ वा नायिकाचाट्वादिरूपेणैव सम्भवति तथाविधोक्तिः। नच रूपकध्वनिरयम्, मुखस्य कमलत्वेनानिर्धारणात्। नचापह्नुतिः, प्रस्तुतस्यानिषेधात्। इति पृथगेवायमलङ्कारश्चिरन्तनोक्तालङ्कारेभ्यः। शुक्तिकाया रजतधिया पतति पुरुषे शुक्तिकेयं न रजतमिति कस्यचिदुक्तिर्नायमलङ्कारो, वैचित्र्याभावात्।

---

एवमुदाहृत्यास्यालङ्कारतो व्यवच्छेदं दर्शयति—अयं निरुक्तलक्षणो निश्चयालङ्कारः। निश्चयान्तस्तत्प्रभेदः। सन्देहस्तन्नामालङ्कारः। नहि नैवेत्यर्थः। हेतुं निर्दिशति– तत्र तस्मिन् सन्देहालङ्कारे। संशयनिश्चययोः। एकाश्रयत्वेनैकाधिकरणकत्वेन। अवस्थानात्। अत्र निश्चयालङ्कारे। तु। भ्रमरादेः। आदिना कामदेवादेर्ग्रहणम्। संशयः। नायकादेः। आदिना कविप्रभृतीनां ग्रहणम्। निश्चयः। ननु भ्रमरादेः संशयमूलक एव सोऽस्तु इत्याशङ्कयोक्तमर्थमाक्षिपति–किञ्च। भ्रमरादेः। अपि। संशयः। न। हेतुं निर्दिशति–एककोट्यधिके एका कोटिर्विषयस्तस्या अधिकं तत्र, उपचारात्तदवगाहिनीत्यर्थः। अनेककोटिके इत्यर्थः। 'एककोट्यनधिके' इति पाठस्तु न साधीयान्। ज्ञाने। तथा। समीपगमनासम्भवात्। संशयो हि अनेककोटिकं ज्ञानम्, तत्सत्त्वे च मधुकरादेर्वदनसरोजयोरुभयोरेव समीपे भ्रमणं युक्तम्, तयोरेकतरस्य सरोजत्वेनानिश्चयात्, अत्र तु वदनादेः सविधे स्पष्टं गमनमभिहितमिति नायं संशय इति भावः। आशङ्कते–तर्हि। भ्रान्तिमान्। अस्तु 'भ्रान्तिमुपजीव्यैवास्य प्रवृत्तत्वा' दिति शेषः। उत्तरयति–अस्तु। नाम यथेष्टम्। भ्रमरादेः। भ्रान्तिः। एवं भ्रान्तिमात्रसत्त्वे न भ्रान्तिमानत्रेत्याह–नच। इह भ्रमरादौ। तस्या भ्रान्तेः। चमत्कारविधायित्वमलङ्कारत्वाधायकत्वम्। अपितु किन्तु। तथाविधनायकाद्युक्तेस्तथाविधो विरहिसदृशोऽसौ नायकादिस्तस्योक्तिः तस्याः, यद्वा–तथाविधाया नायकाद्युक्तिस्तस्याः। एव। 'चमत्कारविधायित्व'मिति पूर्वतोऽन्वेति। इति। सहृदयसंवेद्यम्। ननु तथाविधोक्तिस्तु भ्रान्तिव्यञ्जिकैवेत्यत आह– किञ्च। भ्रमरादेः। पतनादौ वदनोपरि पतने विरहिणं प्रति धावने वा। अविवक्षिते। अपि। भ्रान्तौ। वा। 'अविवक्षितायां' मिति शेषः। भ्रमरादेर्वदनाद्युपरि पतनादौ विरहिप्रभृतीन् प्रति वा धावनादौ अविवक्षितेऽपि तथा भ्रान्तावविवक्षितायामपीति भावः। नायिकाचाट्वादिरूपेण नायिकायाश्चाट्वादिः प्रियताऽऽपादनादिस्तद्रूपेण। एव। तथाविधा। उक्तिः। सम्भवति। ननु रूपकं ध्वन्यमानमस्तु नामेत्याशङ्कयोत्तरयति–नच। अयम्। रूपकध्वनिस्तद्रूप इति भावः। हेतुं निर्दिशति–मुखस्य। कमलत्वेन। उपलक्षणेन विरहिणो हरत्वेन चेत्यर्थः। अनिर्धारणात्। नच। अपह्नुतिः। प्रस्तुतस्योपमेयस्य। अनिषेधात्। इति इत्थम्। अयम्। चिरन्तनोक्तालङ्कारेभ्यश्चिरन्तनाः प्रकाशकारादयस्तैरुक्ता ये अलङ्कारास्तेभ्यः। पृथक्। एव। अलङ्कारः। उपस्कारकत्वस्यैवालङ्कारत्वमिति पुनः प्रकृते दर्शयति–शुक्तिकायाम्। रजतधिया रजतमिदमिति भ्रमेण। पुरुषे। पतति लब्धुमिच्छति सतीति भावः। शुक्तिका। इयम्। रजतम्। न। इति। कस्यचित्। उक्तिः। अयं निश्चयाख्यः। अलङ्कारः। न। वैचित्र्याभावात्। वैचित्र्यं हि उपस्कारकत्वापरनामधेयमलङ्कारत्वाधायकं भवति, अतोऽस्याभावात्। इदमवसेयम्—अपह्नुतिवदस्यापि अपह्नवपूर्वकत्वादारोपपूर्वकत्वाच्च भेदद्वयम्, तत्राद्य उदाहृतः, द्वितीयो यथा मम:–'कमलं न, किन्तु वदनं, न विकासः किन्तु सुस्मितं तन्व्याः। नेमे त्वदीयगोष्ठी, भ्रुकुटी किमले मुधोपैषि ॥' इति। यदेनमेव भ्रान्त्यपह्नुतिमन्ये प्राहुः, तन्न रुचिरम्, 'न चापह्नुतिः प्रस्तुतस्यानिषेधात्' इत्यनेन प्रथममेव तद्भ्रमस्यापकरणात्। न चाविषयैव भ्रान्त्यपह्नुतिरास्तामिति वाच्यम्' न वदनमेतत् कमलं, न मन्दहसितं, तदीयमुत्स्फुरणम्। 'मधुकर! किमिति विमुग्धो भ्रमसि परस्यान्तिकं भूयः ॥' इत्यादौ तद्विषयावशेषात् कमलं नायिकाया वदनमिदमिति भ्रमेणापहाय तत्रैवावगाहमानायाः कस्याश्चित् ततोऽपि सुन्दरं मुखं समुपव्रजन्तं मधुकरं प्रति तत्त्वज्ञस्य कस्यापि कवेरुक्तिरियम्। न चात्रापि

११८ भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना ।
११९ वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता ॥ ९३ ॥
वाच्येवादिप्रयोगे स्यादप्रयोगे परा पुनः ।
जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि ॥ ९४ ॥
तदष्टधाऽपि प्रत्येकं भावाभावाभिमानतः ।

---

निश्चय एवास्तु इति वाच्यम्, उपमेयं निषिध्योपमानस्यात्र स्थापनात् । न चारोप्यमाणत्वेन वदनादेरेवोपमानता स्वीक्रियतामिति, प्रसिद्ध्यनुरोधेन वदनादेरुपमेयतया कमलादेरुपमानतयैव चाङ्गीकर्त्तुमौचित्यात् । प्रसिद्ध्यनुरोधापहानौ व्यतिरेकादौ विच्छित्तेर्मूलोच्छेदापाताच्च । इति ।

उत्प्रेक्षां लक्षयति-११८ **प्रकृतस्य** प्रस्तुतस्य स्वरूपेणावस्थितस्येति यावत्। **परात्मना**ऽप्रस्तुतरूपेण। **सम्भावना। उत्प्रेक्षा** तन्नामाऽलङ्कारः। **भवेत्**। अयम्भावः—उत्कृष्टा प्रकृष्टस्य (उपमानस्य) ईक्षा ज्ञानमित्युत्प्रेक्षापदस्यार्थः। सम्भावना चोत्कटकोटिकः संशयः। प्रकृतं यदधिकृत्य वर्ण्यते तदुपमेयमिति भावः। परमुत्कृष्टमुपमानं तस्यात्मा स्वरूपमिति परात्मशब्दार्थश्च। तथा च—प्रकृतस्योपमेयस्य परेणोत्कृष्टेनोपमानेन समं तादात्म्येन सम्भावनोत्प्रेक्षेति कारिकार्थः। प्रकृतस्योपमेयस्य परेणोपमानेन तादात्म्ये वर्ण्यमाने प्रकृतविषयकमुत्कटोपमानकोटिकं संशयापरपर्य्यायं ज्ञानमुत्प्रेक्षेति भावः। यद्वा-उत्कटैककोटिकः संशयः सम्भावना, संशयो हि द्विकोटिको भवति, यथा-'अयं स्थाणुः पुरुषो वा'इत्यादौ प्रथमा कोटिः स्थाणोर्विधानरूपा, द्वितीया'पुरुषो वा'इति पुरुषस्य पुनर्विधानरूपा, 'अयं पुरुषो, न वा'इत्यादौ च प्रथमा कोटिः पुरुषस्य विधानरूपा, द्वितीया पुनः 'नवा'इति पुरुषस्य निषेधरूपा। एवं च यस्यां कोटौ निश्चितप्रायत्वं सैव(प्रथमा)संशयस्य कोटिः सम्भावनापदवाच्या। उपमेयस्योपमानतया निश्चितप्राया सम्भावनोत्प्रेक्षेति फलितम्। निश्चितप्रायेत्यनेन दोलायमानाया द्वितीयायाः कोटेर्निरासः। सन्देहे संशयस्य तुल्यकोटिकतया, अत्र च उत्कट(टैक)कोटिकतया नास्य तत्रातिप्रसङ्गः। 'रामं स्निग्धतरश्यामं विलोक्य वनमण्डले। प्रायो धाराधरोऽयं स्यादिति नृत्यन्ति केकिनः॥' इत्यत्र सम्भावनायां, परार्द्धव्यत्यासेनास्मिन्नेव'धाराधरधिया धीरं नृत्यन्ती स्म शिखावलाः॥'इति पठिते भ्रांतौ च नातिप्रसङ्गः' पूर्वत्र संशयस्य प्रकृतविषयकत्वाभावात्, परत्र प्रकृतस्य परात्मतया प्रथमत एव गृहीतत्वेन तथा सम्भावनाया एवानुदयाच्च। अलङ्काराश्च विच्छित्तिमूला भवन्तीति प्रकृतस्य परात्मतया रमणीयं सम्भावनमुत्प्रेक्षेति देवदत्त इव दूरस्थोऽयं भातीत्यादेश्चास्य व्यवच्छेदः। रमणीयत्वसम्भावनं च प्रकृताप्रकृतयोः साधारणधर्मत्व एवेति वोध्यम्, एतेन 'प्रायः पतेद् द्यौः शकलीभवेद् ग्लौः सहाचलैरम्बुधिभिः स्खलेद् गौः। नूनं ज्वलिष्यन्ति दिशः समस्ता यद्द्रौपदी रोदिति हा हतेति ॥' 'वदनकमलेन वाले! स्मितसुषमालेशमावहसि यदा। जगदिह तदैव जाने दशार्धवाणेन विजितमिति ॥'इत्यादेरपि च व्यवच्छेदः। विवृत्तिकारा अप्याहुः-'सम्भावना उत्कटैककोटिकः संशयः। प्रकृतस्य संशयस्य, परात्मनोपमानरूपेण। तादात्म्यसम्बन्धलाभायात्मपदोपन्यासः। प्रकारत्वं तृतीयाऽर्थः। तथा च-तादात्म्यसंसर्गकोपमानप्रकारकोपमेयविशेष्यकोत्कटैकः संशय उत्प्रेक्षेत्यर्थः। सन्देहालङ्कारवारणाय उत्कटैककोटिक इति। रूपकभ्रान्तिमदतिशयोक्तीनां निश्चयरूपत्वात् संशयपदेन वारणम्।'इति।

११९ अस्या भेदानाह- **सा** निरुक्तलक्षणोत्प्रेक्षा। **प्रथमम्**। **वाच्या**। तथा-**प्रतीयमाना**। इति-**द्विविधा। मता** ननु का वाच्या ? का वाऽन्या ? इत्याशङ्क्याह-**इवादिप्रयोगे**। आदिना नूनं ध्रुवमित्यादेर्ग्रहणम्। **वाच्या। स्यात्**। **अप्रयोगे** द्योतकस्य पदस्य प्रयोगस्याभावे इति भावः। **पुनः**। **परा** प्रतीयमानोत्प्रेक्षा मतेत्यर्थः। ननु प्रथममिति किमर्थमुक्तमित्याशङ्क्याह-**द्वयोर्**द्विविधयोः। **अपि**एतयोः। **यत्** यस्माद्धेतोः। **जातिः**। **गुणः**। **क्रिया**। **द्रव्यम्**। 'इत्येतच्चतुष्टय'मिति शेषः। **उत्प्रेक्ष्यं** सम्भावनीयम्। **तत्**तस्मात्। **अष्टधा**। **अपि**। **भावाभावाभिमानतः**। 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते'इति नयेन-भावाभिमानतोऽभावाभिमानतश्चेत्यर्थः। **प्रत्येकम्**। 'भिद्यते'इति

**गुणक्रियास्वरूपत्वान्निमित्तस्य पुनश्च ताः ॥ ९५ ॥**
**द्वात्रिंशद्विधतां यान्ति**

तत्र वाच्योत्प्रेक्षायामुदाहरणं दिङ्मात्रं यथा-

'ऊरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति ।
सपताकः कनकमयो विजयस्तम्भः स्मरस्येव ॥ १३७ ॥'

अत्र विजयस्तम्भस्य बहुवाचकत्वाज्जात्युत्प्रेक्षा ।

'ज्ञाने मौनं, क्षमा शक्तौ, त्यागे श्लाघाविपर्य्ययः ।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव ॥ १३८ ॥

इत्यत्र सप्रसवत्वं गुणः ।

---

शेषः । ताः षोडशविधाः । च । निमित्तस्य । पुनः । **गुणक्रियास्वरूपत्वात्** गुणस्वरूपत्वात् क्रियास्वरूपत्वाच्चे-त्यर्थः । **द्वात्रिंशद्विधताम्** । **यान्ति** । इदमुक्तम्-उत्प्रेक्षा तावद् द्विविधा, वाच्या, प्रतीयमाना चेति । इवादीनां प्रयोगे वाच्या, तेषामप्रयोगे पुनः प्रतीयमाना । एवं द्विविधाऽप्येषा जातिगुणक्रियाद्रव्याणामप्रकृतानामध्यवसे-यतया प्रत्येकं चातुर्विध्येनाष्टविधा, अष्टविधाऽप्येवं प्रत्येकं भावाभिमानेन अभावाभिमानेन च द्विधा षोडशविधा सम्पद्यते । एषेत्थं षोडशविधाऽपि निमित्तस्य जातिस्वरूपत्वेन क्रियास्वरूपत्वेन चेति द्विधा भिद्यमाना द्वात्रिंशद्विधा सम्पद्यते । इति ॥ ९३ ॥ ९४ ॥ ९५ ॥

एवं द्वात्रिंशद्विधाया एतस्या, विविक्तोदाहरणप्रदर्शने विस्तरभयमाशङ्क्याह-**तत्र** तासु मध्ये । **वाच्योत्प्रेक्षा-याम्** । सत्यर्थे सप्तमी ।

**दिङ्मात्रम्** । **उदाहरणम्** । **यथा**-'**कुरङ्गकदृशो**ऽल्पः कुरङ्गो मृग इति कुरङ्गकस्तद्दृशाविव दृशौ यस्या-स्तस्याः, मृगशावाक्ष्या इति भावः । **चञ्चलचेलाञ्चल**श्चञ्चलं चेलाञ्चलं सूक्ष्मवस्त्रं यत्र तथोक्तः । **ऊरुः** । **स्मरस्य** । **सपताकः** पताकासहितः । **कनकमयः** सुवर्णघटितः । **विजयस्तम्भः** शत्रून् विजित्य स्वसर्वजेतृत्वसूचक आरोपितः स्तम्भविशेषः । **इव** । **भाति** । आर्य्याछन्दः ॥ १३७ ॥

कथमियं जात्युत्प्रेक्षेत्याह-**अत्र** । **विजयस्तम्भस्य** । **बहुवाचकत्वात्** । **जात्युत्प्रेक्षा** । अयम्भावः-स्तम्भानां बहुत्वात् स्तम्भत्वं जातिः, 'एकत्वे सत्यनेकसमवेतत्वं जातिः' इति नियमात् । इवप्रयोगाच्चेयं वाच्या, स्तम्भश्च भावपदार्थ इति भावाभिमानिन्येषा, उत्प्रेक्षानिमित्तं च नायिकोरोः सौन्दर्य्यं गुणश्च । नचेवशब्दस्योपमोपकारकत्वमेवेति शङ्क्यम्, 'मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥' इत्यादिदण्डयुक्तदिशेवास्य सम्भावनावाचकत्वस्याप्यक्षतत्वात् । अत एव-'इवादिप्रयोग'इत्यादि कविराजैरप्युक्तम् ।

गुणोत्प्रेक्षामुदाहरति-'**ज्ञाने** । सत्यर्थे सप्तमी । **मौनम्** । **शक्तौ** । **क्षमा**ऽपराधसहत्वम् । **त्यागे** दाने । **श्लाघाविपर्यय** आत्मप्रशंसोत्सुकत्वाभावः । इत्येवम्-**तस्य** दिलीपस्य । **गुणा** मौनादयः । **गुणानुबन्धित्वात्** ज्ञानादिगुणानुयायित्वात् । **सप्रसवाः** प्रसवाः सन्ततयस्तैः सहिताः । **इव** । 'आस'न्निति शेषः । रघुवंशस्येदं पद्यम् ॥ १३८ ॥'

अत्र पूर्वतो वैलक्षण्यं दर्शयति-इत्यत्रेत्यादिना । स्पष्टोऽर्थः । अयम्भावः-अत्र इवप्रयोग इति वाच्येयम्, उत्प्रे-क्षणीयो गुणः सप्रसवत्वम् । प्रसवस्य च भावरूपत्वाद्भावाभिमानिनीयमुत्प्रेक्षा, अस्या निमित्तं च गुण इति गुणनिमित्ता च । प्रसवस्य कुक्षिगर्भविभागरूपत्वात् विभागस्य च 'अथ गुणा रूपं रसो गन्धस्ततः परम् । स्पर्शः संख्या परिमितिः संयोगश्च विभागकः ॥' इत्युक्तदिशा गुणत्वमेव । ज्ञानादीनां मौनाद्युत्पादने प्रसवसम्भावना, ज्ञानादिसत्त्व एव मौनादीनां गुणत्वमिति ज्ञानादीनां मौनादिप्रयोजकत्वमवधेयम् । अत एवोक्तम् 'गुणानुबन्धित्वा'दिति ।

'गङ्गाऽम्भसि सुरत्रातस्तव निर्याणनिःस्वनः। स्नातीवारिवधूवर्गगर्भपातनपातकी॥ १३९॥'
अत्र स्नातीति क्रिया।

'मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः। यमुनेव च वेणीयं स्मितं राकेव दृश्यते॥ १४०॥'
अत्र चन्द्र इत्येकव्यक्तिवाचित्वाद् द्रव्यशब्दः। एते भावाभिमाने च। अभावाभिमाने यथा—
'कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ। अपश्यन्ताविवान्योऽन्यमीदृक्षां क्षामतां गतौ॥१४१'
अत्र 'अपश्यन्ता'विति क्रियाया अभावः। एवमन्यत्। निमित्तस्य गुणक्रियारूपत्वे यथा— 'गङ्गाऽम्भसि'इत्यादौ 'स्नाती'वेत्युत्प्रेक्षा, निमित्तं पातकित्वं गुणः। 'अपश्यन्ताविवे'त्यादौ क्षामतागमनरूपं निमित्तं क्रिया। एवमन्यत्।

---

एवं गुणोत्प्रेक्षामुदाहृत्य क्रियोत्प्रेक्षामुदाहरति—'**सुरत्रातः** सुराणां त्रातेति तत्सम्बुद्धौ तथोक्त! **अरिवधूवर्गगर्भपातनपातकी** अरीणां शत्रूणां वध्वो नार्य्यस्तासां गर्भस्तस्य पातनं तेन पातकी। **तव**। **निर्य्याणनिःस्वनो** निर्य्याणस्य प्रयाणस्य निःस्वनः शब्दः। अत्र प्रयाणशब्द उपचारात् स्वसम्बन्धिवाद्यादीनामुपलक्षकः। **गङ्गाऽम्भसि** गङ्गाजले। **स्नाति**। **इव**। राजस्तुतिरियम्॥ १३९॥'

अत्र क्रियां निर्दिशति—**अत्रे**त्यादिना। स्पष्टम्। इदं बोध्यम्—स्नानक्रियाया अपि भावपदार्थत्वात् भावाभिमानिनीयं क्रियोत्प्रेक्षा। इवशब्दप्रयोगाच्च वाच्या। इति।

द्रव्योत्प्रेक्षामुदाहरति—'**एणीदृश** एणीदृशौ मृगीनेत्रे इव दृशौ यस्यास्तस्याः। **मुखम्**। **अपरः**। **पूर्णचन्द्रः**। **इव**। **भाति**। **इयम्**। **वेणी**। **च**। **यमुना**। **इव**। 'भाती'ति पूर्वतोऽनुवर्त्तते। **स्मितम्**। **राका** पूर्णमासी। **इव**। **दृश्यते**। परार्द्धं प्रायः पुस्तकान्तरे न दृश्यते॥ १४०॥'

द्रव्यं निर्दिशति—**अत्र**। **चन्द्रः**। **इति**। **एकव्यक्तिवाचित्वात्**। **द्रव्यशब्दः**। एतदुपलक्षणं यमुनाऽऽदेः। तथा च—चन्द्रादेर्द्रव्यत्वाद्द्रव्योत्प्रेक्षेयम्। चन्द्रादेर्भावपदार्थत्वाद्भावाभिमानिनीव शब्दप्रयोगाच्च वाच्या। न चेयमुपमा, चन्द्रस्यापरत्वे यमुनायाः राकायाश्चोपमानताया अप्रसिद्धेः। यथा वा—'कलिन्दशैलादियमाप्रयागं केनापि दीर्घा परिखा निखाता। मन्ये तलस्पर्शविहीनमस्यामाकाशमानीलमिदं विभाति॥' इति, अत्र हि आकाशत्वस्य स्वरूपात्मकत्वात् द्रव्योत्प्रेक्षा।

एवं जात्याद्युत्प्रेक्षां निर्दिश्यात्र भावाभिमानित्वेन विशेषयति—**एते** इत्यादिना। स्पष्टम्। अभावाभिमानेनोत्प्रेक्षामुदाहर्त्तुमाह—**अभावाभिमाने**। **यथा**—'**कष्टं** हन्त। **अस्याः** कान्तायाः। **कपोलफलकौ** गण्डदेशौ। **तथाविधौ** तथाऽनुभूतसौन्दर्य्यौ। **भूत्वा**। **अन्योऽन्यं** परस्परम्। **अपश्यन्तौ**। **इव**। **ईदृक्षामी**दृशीमेवंविधामिति यावत्। **क्षामतां** कृशताम्। **गतौ**। वियोगावस्थायां कामपि दृष्टवत उक्तिरियम्। पूर्वं संयोगे स्फीतत्वादुभौ परस्परं ददृशतुः, संप्रति पुनः प्रवासे कार्श्यातिशयात्तयोरवनतत्वेन नासाया उन्नताया व्यवधायिकात्वेन दर्शनाभावः सम्भवति, कपोलफलकयोरचेतनतया दर्शकत्वासम्भवेऽपि दर्शनमुत्प्रेक्षितमिव प्रयोगाद् वाच्या दर्शनस्याभावरूपत्वादभावाभिमानिनी दृशेश्च क्रियात्वात् क्रियोत्प्रेक्षेयम्॥ १४१॥'

क्रियोत्प्रेक्षां निर्दिशति—**अत्रे**त्यादिना। स्पष्टम्। उदाहरणान्तरविषये प्राह—**एवमि**त्यादि। स्पष्टम्। यथा वा—'बाहुजानां समस्तानामभाव इव मूर्तिमान्। जयत्यतिबलो लोके जामदग्न्यः प्रतापवान्॥' इत्यत्र बाहुजत्वावच्छिन्नानामभावो विरोधित्वनिमित्तेनोत्प्रेक्ष्यते। 'समस्तलोकदुःखाना'मिति प्रथमपादपाठे गुणस्याभावाभिमानिन्युत्प्रेक्षा। 'चौरञ्जनकालीभिर्जलदालीभिस्तथा वव्रे। जगदखिलमपि यथाऽऽसीन्निर्लोचनवर्गसर्गमिव॥' अत्र चाक्षुषज्ञानसामान्यशून्यतया पार्य्यन्तिकः क्रियाऽभावो धर्म्मः। मन्मथस्याभावमिव दृक्पातं तव मन्महे। समुद्धर दयासिन्धो नानाऽर्थाभासतर्षणात्॥' इत्यत्र मन्मथस्य द्रव्यत्वात्तस्य विरोधित्वेन निमित्तेनाभावतादात्म्येनोत्प्रेक्षणम्। निमित्तभेदेन भिद्यमानामेतामुदाहरति—**निमित्तस्ये**त्यादिना। स्पष्टम्। एवं वाच्यां दिङ्मात्रमुदाहृत्य प्रतीयमानामुत्प्रेक्षामुदाहरति—

प्रतीयमानोत्प्रेक्षा यथा-

'तन्वङ्ग्याः स्तनयुग्मेन मुखं न प्रकटीकृतम्।
हाराय गुणिने स्थानं न दत्तमिति लज्जया ॥ १४२ ॥'

अत्र 'लज्जयेवे'तीवाद्यभावात् प्रतीयमानोत्प्रेक्षा। एवमन्यत्। ननु ध्वनिनिरूपणप्रस्तावे 'अलङ्काराणां सर्वेषामपि व्यङ्ग्यत्वं भवती'त्युक्तम्, सम्प्रति पुनर्विशिष्य कथमुत्प्रेक्षायाः प्रतीयमानात्वमुच्यते! उच्यते व्यङ्ग्योत्प्रेक्षायाम्-

'महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअंती।
अणुदिणमणण्णकम्मा अंगं तणुअं पि तणुएहि॥

इत्यादौ उत्प्रेक्षणं विनाऽपि वाक्यविश्रान्तिः, इह तु स्तनयोर्लज्जाया असम्भवात् 'लज्जयेवे' त्युत्प्रेक्षयैवेति व्यङ्ग्यप्रतीयमानयोर्भेदः।

अत्र वाच्योत्प्रेक्षायाः षोडशसु भेदेषु मध्ये विशेषमाह-

**१२० तत्र वाच्याभिदाः पुनः।**

**विना द्रव्यं त्रिधा सर्वाः स्वरूपफलहेतुगाः ॥ ९६ ॥**

तत्र उक्तेषु वाच्यप्रतीयमानोत्प्रेक्षयोर्भेदेषु मध्ये ये वाच्योत्प्रेक्षायाः षोडशभेदास्तेषु जात्यादीनां त्रयाणां ये द्वादशभेदास्तेषां प्रत्येकं स्वरूपफलहेतुगत्वेन द्वादशभेदतया षट्त्रिंशद्भेदाः, द्रव्यस्य स्वरूपोत्प्रेक्षणमेव सम्भवतीति चत्वार इति मिलित्वा चत्वारिंशद्भेदाः। तत्र स्वरूपोत्प्रेक्षा, यथा पूर्वोदाहरणेषु-'स्मरस्य विजयस्तम्भः', 'सप्रसवा इव' इत्यादयो जातिगुणगाः।

---

**प्रतीयमाना।** **उत्प्रेक्षा।** यथा-**तन्वङ्ग्याः** कृशोदर्याः। **स्तनयुग्मेन** पयोधरयुगलेन। **गुणिने** गुणः सूत्रम्, अन्यत्र दयादाक्षिण्यादिस्तद्वते। **हाराय।** **स्थानम**वकाशम् अन्यत्रोपभोगकत्वेनाश्रयम्। **न।** **दत्तम्।** **इति।** **लज्जया।** **मुखम्।** **न।** **प्रकटीकृतं** विकासितम्। कलिल्पावृत्तत्वात् निर्मलाभाव एवात्राप्रकटनम्। दानाभावश्च लज्जायाः कारणम्। स्तनयोः सान्द्रत्वेन हारस्यावकाशाभावे चोत्प्रेक्षेयम् ॥ १४२ ॥

लक्ष्यं समर्थयते-अत्रेत्यादिना। स्पष्टम्। इदम्बोध्यम्-लज्जा गुणस्तन्निमित्तेयं चोत्प्रेक्षा। उदाहरणान्तरविषये प्राह-**एवम्।** **अन्यत्।** 'उदाहरणीयमपि बोध्यमिति शेषः। यथा-'निष्कलङ्कं तव यशः पश्यन् खं च कलङ्कितम्। न कश्चन दिवा लोकं विभावयति चन्द्रमाः ॥' इत्यत्र 'नूनं मन्ये'इत्यादेरभावात्। 'खं न दर्शयतीति मन्ये'इत्यर्थस्य च प्रतीयमानत्वेनेयं प्रतीयमानोत्प्रेक्षा। इति दिक्।

अस्याः प्रतीयमानात्वाङ्गीकारे आशङ्कते-नन्वित्यादिना। स्पष्टम्। व्याख्यातपूर्वं च पद्यमिदं चतुर्थे परिच्छेदे। अयम्भावः-'तव हृदये वस्तुमिवे'त्युत्प्रेक्षामन्तरापि'महिला'इत्यत्र वाक्यार्थावगमः सम्पन्नमूर्तिः, अत्र तु उत्प्रेक्षावाचकस्येवाद्यन्यतमस्याध्याहारे एव लज्जायास्तत्र वस्तुतोऽसम्भवात्। इति।

अस्या भेदान्तरं लक्षयितुमुपक्रमते-अत्रेत्यादिना। स्पष्टम्। अत्रापि विशेषं लक्षयति-**१२०तत्र** तासु द्वात्रिंशद्भिदासु उत्प्रेक्षासु मध्ये इत्यर्थः। **वाच्याभिदा** वाच्योत्प्रेक्षाया भेदा इति भावः। **पुनः।** **द्रव्यं** तन्मूलामुत्प्रेक्षामिति भावः। **विना।** **सर्वा** जातिगुणक्रियामूलाः अत एव-द्वादशप्रकारा इति भावः। **स्वरूपफलहेतुगाः** स्वरूपगा गुणगा हेतुगाश्च सत्य इति भावः। **त्रिधा।** 'भिद्यन्ते'इति शेषः ॥ ९६ ॥

तदेव स्वयं व्याचष्टे-तत्रेत्यादि। स्पष्टोऽर्थः। इदं तु बोध्यम्-तादर्थ्यचतुर्थ्यन्तेन तुमुनन्तेन वा पदेन यत्रोत्प्रेक्षा, सा फलोत्प्रेक्षा,हेत्वर्थबोधकेन पदेन यत्रोत्प्रेक्षा सा हेतूत्प्रेक्षा,एताभ्यामितरा स्वरूपोत्प्रेक्षा च सम्भवति। फलहेतुभावेन द्रव्यसम्भावनायाश्च विच्छित्त्यनाधायकत्वान्न द्रव्योत्प्रेक्षाया अपि जातिगुणक्रियोत्प्रेक्षाणामिव फलहेत्वात्मना भेदान्तरभागित्वम्। अत एव-स्वरूपेण द्रव्योत्प्रेक्षाया अपि भेदान्तरभागित्वमभिहितम्। इति।

विस्तरभयाद् उदाहर्तुं प्रवृत्तोऽप्याह-तत्रेत्यादि। स्पष्टम्। इदम्बोध्यम्-'स्मरस्य विजयस्तम्भ' इत्यत्र जातिस्वरूपोत्प्रेक्षा, 'सप्रसवा'इत्यत्र गुणस्वरूपोत्प्रेक्षा च। अत एवोक्तम्-इत्यादय इत्यादि। इति।

फलोत्प्रेक्षा यथा-

'रावणस्यापि रामास्तो भित्त्वा हृदयमाशुगः।
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम् ॥ १४३ ॥'

अत्र 'आख्यातु'मिति भूप्रवेशस्य फलं क्रियारूपमुत्प्रेक्षितम्। हेतूत्प्रेक्षा यथा-

'सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम्।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥ १४४ ॥'

अत्र दुःखरूपो गुणो हेतुत्वेनोत्प्रेक्षितः। एवमन्यत्।

**१२१ उक्त्यनुक्त्योर्निमित्तस्य द्विधा तत्र स्वरूपगाः।**

तेषु चत्वारिंशत्सङ्ख्याकेषु भेदेषु मध्ये ये स्वरूपगायाः षोडशभेदाः, ते उत्प्रेक्षानिमित्तस्यो-

---

फलोत्प्रेक्षामुदाहरति-**फलोत्प्रेक्षा**। यथा-'**रामास्तो** रामेण रामचन्द्रेणास्तः प्रहृत इति तथोक्तः। 'असु'क्षेपणे इत्यस्मात् क्तः। **आशुगो** बाणः। 'आशुगौ वायुविशिखौ'इत्यमरः। **रावणस्य** लङ्कापते राक्षसराजस्य। **हृदयं** वक्षः। **भित्त्वा**। **अपि**। **उरगेभ्यः** सर्पेभ्यः। 'उरगः पन्नगो भोगी..'इत्यमरः। **प्रियं** 'रावणो युष्माकं कन्याहर्त्ता मयाऽद्य व्यापादित'इति प्रीतिकरं वाक्यम्। **आख्यातुम्**। **इव**। **भुवम्** 'भित्त्वे'ति पूर्वतोऽनुवृत्तम्। **विवेश** प्रविवेश। रघुवंशस्येदं पद्यम् ॥ १४३ ॥'

उत्प्रेक्षितं फलं निर्दिशति-**अत्रे**त्यादिना। स्पष्टम्। इदमवोध्यम्-रामबाणस्य पातालप्रवेशो रामस्य वीर्य्यातिशयद्योतनार्थस्तत्र प्रियाख्यानमुत्प्रेक्षितम्। इति।

हेतूत्प्रेक्षामुदाहरति-**हेतूत्प्रेक्षा**। यथा-'प्रिये! (इदमध्याहार्य्यम्) **यत्र**। **त्वाम्**। **विचिन्वता**ऽन्वेषयता। **मया**। **उर्व्यां** पृथिव्याम्। 'वसुधोर्वी वसुन्धरा।' इत्यमरः। **भ्रष्टं** च्युतम्। **एकम्**। (विशिष्यबोधनार्थमिदम्) **नूपुरं** तदाख्यं चरणाभरणम्। **त्वच्चरणारविन्दविश्लेषदुःखात्** तव चरणारविन्दं तस्य विश्लेषस्तस्य दुःखं तस्मात्। **इव**। **बद्धमौनं** बद्धं दृढप्रतिज्ञं गृहीतं मौनं तूष्णीम्भवनव्रतं येन तथोक्तम्। **अदृश्यत** दृष्टम्। **सा**। **एषा**। **स्थली** भूमिः। रघुवंशस्येदं पद्यम्। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः। रावणं निहत्य पुष्पकेणागच्छतो रामस्य सीतां प्रति सीतानूपुरलाभदेशप्रदर्शनपरमिदं वचः। अत्र सीताचरणविश्लेषदुःखत्वेन सीताचरणासम्बन्ध उत्प्रेक्षितः ॥ १४४ ॥

उत्प्रेक्षितमर्थं निर्दिशति-**अत्रे**त्यादिना। स्पष्टम्। उदाहरणान्तरविषये प्राह-**एवमन्य**दिति। स्पष्टम्। तथा च-द्रव्यस्य स्वरूपोत्प्रेक्षा यथा-'पातालमेतन्नयनोत्सवेन विलोक्य शून्यं शशलाञ्छनेन। इहाङ्गनाभिः स्वमुखच्छलेन कृताऽम्बरे चन्द्रमयीव सृष्टिः ॥' इत्यत्र 'चन्द्रमयीवे'ति चन्द्रस्यैकत्वेन द्रव्योत्प्रेक्षा। इति। अत्रान्ये तु प्राहुः-जात्यादेरिव द्रव्यस्यापि स्वरूपादिकृतं भेदत्रयम्। तत्र स्वरूपोत्प्रेक्षोदाहृतैव, फलोत्प्रेक्षा यथा-'मध्ये सलिलमादित्यसम्मुखं धूलिधूसराः। कुमुदिन्यस्तपस्यन्ति चन्द्रायेव दिने दिने ॥' अत्र हि 'चन्द्रायेवे'ति। हेतूत्प्रेक्षा यथा-'जयति शिशिरतायाः कारणं सा हिमांशोस्त्रिपुरहरकिरीटादापतन्ती द्युसिन्धुः। सततसहनिवासी क्षीरसिन्धोः प्रसूतो हिमकर इव हेतुः श्वैत्यशैत्यस्य यस्याः ॥' अत्र हिमकरस्य हेतुत्वेनोत्प्रेक्षितम्।

स्वरूपोत्प्रेक्षाया भेदान्तरं निर्दिशति-**१२१ तत्र** तासु निरुक्तासूत्प्रेक्षासु मध्ये। **स्वरूपगाः** स्वरूपोत्प्रेक्षाः। **निमित्तस्य**-गुणक्रियारूपस्य प्रयोजकस्य। **उक्त्यनुक्त्योः** उक्तावनुक्तौ चेत्यर्थः। **द्विधा** द्विप्रभेदाः। 'स्यु'रिति शेषः।

तदेव विवृणोति-**तेष्वि**त्यादिना। स्पष्टम्। इदमवोध्यम्-तथा च-द्वात्रिंशद्भेदा वाच्याः स्वरूपोत्प्रेक्षाः, चतुर्विंशतिभेदाश्च वाच्याः फलहेतूत्प्रेक्षा इति मिलित्वाऽमी यथोक्तप्रकाराः सम्पद्यन्ते। इति।

पादानानुपादानाभ्यां द्वात्रिंशद्भेदा इति मिलित्वा षट्पञ्चाशद्भेदा वाच्योत्प्रेक्षायाः। तत्र निमित्तस्योपादानं यथा पूर्वोदाहृते 'म्लातीव' इत्युत्प्रेक्षायां निमित्तं पातकित्वमुपात्तम्। अनुपादाने यथा–'चन्द्र इवापर' इत्यत्र तथाविधसौन्दर्य्याद्यतिशयो नोपात्तः। हेतुफलयोस्तु नियमेन निमित्तस्योपादानमेव। तथाहि–'विश्लेषदुःखादिव' इत्यत्र यन्निमित्तं बद्धमौनत्वम्। 'आख्यातुमिव' इत्यत्र च भूप्रवेशस्तयोरनुपादानेऽसङ्गतमेव वाक्यं स्यात्। प्रतीयमानायाः षोडशसु भेदेषु विशेषमाह–

**१२२ प्रतीयमानाभेदाश्च प्रत्येकं फलहेतुगाः ॥ ९७ ॥**

यथोदाहृते 'तन्वङ्ग्याः स्तनयुग्मेन' इत्यत्र 'लज्जयेवे'ति हेतुरुत्प्रेक्षितः। अस्यामपि निमित्तस्यानुपादानं न सम्भवति। इवाद्यनुपादाने निमित्तस्य चाऽकीर्त्तने उत्प्रेक्षणस्य प्रमातुर्निश्चेतुमशक्यत्वात्। स्वरूपोत्प्रेक्षाऽप्यत्र न सम्भवति, धर्मान्तरतादात्म्यनिबन्धनायामस्यामिवाद्यप्रयोगे विशेषणयोगे सत्यतिशयोक्तेरभ्युपगमात्। यथा–'अयं राजाऽपरः पाकशासनः' इति।

---

दिङ्मात्रमुदाहरति–तत्रेत्यादिना। स्पष्टम्। नन्वेवं हेतुफलोत्प्रेक्षास्वपि निमित्तस्योक्तानुक्तत्वं कुतो नेत्याह–हेतुफलयोर्हेतूत्प्रेक्षायां फलोत्प्रेक्षायां चेत्यर्थः। जात्यभिप्रायेणैकत्वम्। तु। नियमेनाव्यभिचारेण। निमित्तस्य। उपादानमुक्तिः। एव, 'हेतूत्प्रेक्षायां फलरूपस्य निमित्तस्य फलोत्प्रेक्षायां हेतुरूपस्य चावश्यवाच्यत्वा'दिति शेषः। तदेवोपपादयति–तथाहि। 'विश्लेषदुःखादिव' इत्यत्र 'हेतूत्प्रेक्षाया'मिति शेषः। यत्। बद्धमौनत्वम्। निमित्तम्। 'आख्यातुमिव' इत्यत्र 'फलोत्प्रेक्षाया'मिति शेषः। च। भूप्रवेशः। 'यन्निमित्त'मिति पूर्वतोऽनुषज्यते। तयोर्बद्धमौनत्वपातालप्रवेशरूपयोर्निमित्तयोरिति भावः। अनुपादानेऽनुक्तौ। सत्यर्थे सप्तमीयम्। वाक्यम्। असङ्गतम्। एव। स्यात्। 'अन्वयवैकल्यापत्ते'रिति शेषः।

एवं वाच्योत्प्रेक्षां निरूप्य प्रतीयमानोत्प्रेक्षां विशिष्य लक्षयितुमाह–प्रतीयमानायाः षोडशसु। भेदेषु। विशेषं भेदम्। आह–१२२प्रतीयेत्यादिना।

१२२ प्रतीयमानाभेदाः प्रतीयमानोत्प्रेक्षायाः प्रभेदाः। च। प्रत्येकं भेदंभेदं प्रतीति भावः। फलहेतुगाः फलगा हेतुगाश्चेति द्विधा भिद्यमाना द्वात्रिंशद्भेदाः सम्पद्यन्ते। तत्राद्या यथा–'राहुणा ग्रस्यते पूर्णः पान्थहिंस्रः कलानिधिः। दीनेष्वार्येण मार्गेण वर्तितव्यं सुखोषितुम् ॥' इति, अत्र हीवाद्यभावात्प्रतीयमाना 'सुखोषितु'मिति ग्रसनस्य च फलमिति फलरूपा च ॥ ९७ ॥

अन्त्यां स्वयं निर्दिशति–यथेत्यादिना। स्पष्टम्। अस्या अनुक्तनिमित्तात्वाभावमुपपादयति–अस्यां प्रतीयमानायां फलाद्युत्प्रेक्षायाम्। अपि। 'न केवलं वाच्याया'मिति शेषः। निमित्तस्य। अनुपादानमुपादानाभावः। न। सम्भवति। हेतुं निर्दिशति–इवाद्यनुपादाने इवादेरनुपादानं तस्मिन् सतीति भावः। निमित्तस्य। वा। अकीर्त्तने। 'सती'ति शेषः। उत्प्रेक्षणस्य सम्भावनायाः। सम्बन्धसामान्यविवक्षयेयं षष्ठी। प्रमातुः। निश्चेतुम्। अशक्यत्वात्। अयम्भावः–यत्रेवादेरनुपादानं तत्र यदि निमित्तस्याप्यनुपादानं स्यात् तर्हि उत्प्रेक्ष्यमाणस्यार्थस्य प्रमातृजनहृदयङ्गमत्वं नोपपद्येत, प्रमातृजनहृदयङ्गमो ह्युत्प्रेक्ष्यमाणोऽर्थः, असौ एव प्रतीयमानायां निमित्तत्वेनावस्थितः अथास्यानुपादाने स्वतः प्रमातृजनहृदयङ्गमत्वाभावः। अत एव प्रागपि हेतुफलयोस्तु–'नियमने निमित्तस्योपादानमेव' इत्युपदिष्टम्' इति। ननु प्रतीयमानायाः स्वरूपगात्वं कुत इत्याशङ्क्याह–अत्रास्यां प्रतीयमानायाम्। स्वरूपोत्प्रेक्षा। अपि। 'न केवलमनुपात्तनिमित्ते' ति शेषः। न। सम्भवति। हेतुं निर्दिशति–धर्म्मान्तरतादात्म्यनिबन्धनायां धर्म्मान्तरमन्यो धर्म्मस्तेन तस्य वा तादात्म्यमभेदः तन्निबन्धनं कारणं यस्यास्तस्यां तथाभूतायाम्। प्रकृतधर्म्मापेक्षयाऽप्रकृतधर्म्मो धर्म्मान्तरमिति प्रकृतस्याप्रकृततादात्म्यापादाने धर्म्मान्तरतादात्म्यनिबन्धनं व्यक्तमिति बोध्यम्। 'धर्म्मान्तरतादात्म्यनिबन्धताया'मिति पाठान्तरं स्पष्टार्थम्। अस्यामुत्प्रेक्षायाम्। इवाद्यप्रयोगे। 'सती'ति शेषः। विशेषणयोगे विशेषणस्यासम्भवित्वेऽपि सम्भवित्वेन सम्भावकस्य धर्म्मस्य योगस्तस्मिन्। सति। अतिशयोक्तेस्तदाख्यस्यालङ्कारस्य। अभ्युपगमात् स्वीकारात्। उदाहरति–यथा–'अयम्। राजा। अपरो द्वितीयः। पाकशासन इन्द्रः।' इति। इदमुक्तम्–इवाद्यभावे हि 'अयं राजाऽ

तदेवं द्वात्रिंशत्प्रकारा प्रतीयमानोत्प्रेक्षा ।

**१२३ उक्त्यनुक्त्योः प्रस्तुतस्य प्रत्येकं ता अपि द्विधा ।**

ता उत्प्रेक्षाः । उक्तौ यथा-'ऊरुः कुरङ्गकदृशः' इति । अनुक्तौ यथा मम प्रभावत्याम्, 'प्रद्युम्नः-इह हि सम्प्रति दिगन्तरमाच्छादयता तिमिरपटलेन—

घटितमिवाञ्जनपुञ्जैः पूरितमिव मृगमदक्षोदैः ।
ततमिव तमालतरुभिर्वृतमिव नीलांशुकैर्भुवनम् ॥ १४५ ॥'

अत्राञ्जनादिना घटितत्वादेरुत्प्रेक्षणीयस्य विषयव्याप्तत्वं नोपात्तम् । यथा वा—

'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः । असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ १४६ ॥'

अत्र तमसो लेपनस्य व्यापनरूपो विषयो नोपात्तोऽञ्जनवर्षणस्य च तमःसम्पातः । अनयोरुत्प्रेक्षानिमित्तं च तमसोऽतिबहुलत्वम्, धारारूपेणाधःसंयोगश्च यथासङ्ख्यम् । केचित्तु-'अलेपनकर्तृभूतमपि तमोलेपनकर्तृत्वेनोत्प्रेक्षितं व्यापनं च निमित्तम्, एवं नभोऽपि वर्षक्रियाकर्तृत्वेन ।' इत्याहुः ।

---

परः पाकशासनः' इत्युत्प्रेक्षाया अनुपात्तनिमित्ताया उदाहरणं स्यात्, एतदेवाभेदे भेदरूपाया अतिशयोक्तेः । अतोऽनयोः साङ्कर्यमापद्येतेति । **तत्** । **एवम्** । **द्वात्रिंशतप्रकारा** । **प्रतीयमाना** । **उत्प्रेक्षा** । अयम्भावः—जातिगता गुणगता क्रियागता द्रव्यगता चेति चतुर्विधा प्रतीयमानोत्प्रेक्षा, सा च भावाभिमानिन्यभावाभिमानिनी चेति अष्टविधा, एषा च गुणनिमित्ता क्रियानिमित्ता चेति षोडशविधापि फलरूपा हेतुरूपा चेति द्विधा भिद्यमाना यथोक्तप्रकारा । इति ।

प्रकारान्तरेण भेदं निर्दिशति-१२३ **ता** अष्टाशीतिविधा उत्प्रेक्षाः । **अपि** । **प्रत्येकम्** । **प्रस्तुतस्योपमेयस्य** । **उक्त्यनुक्त्योरुक्तावनुक्तौ** च सत्यामित्यर्थः । **द्विधा** द्विविधा भवन्ति । एवं रसनगविधुमिताः सर्वा वाच्याः प्रतीयमानाश्चोत्प्रेक्षा ज्ञेया इति निष्कृष्टोऽर्थः ।

कारिकायाः कठिनांशं परिहर्तुं तत्पदं व्याचष्टे-**ता** इत्यादिना । स्पष्टम् । उदाहरति-**उक्तौ**'प्रस्तुतस्ये'ति शेषः । **यथा**'उत्प्रेक्षे'ति शेषः । '**ऊरुः कुरङ्गकदृशः**'इति । अयम्भावः-अत्रोरुर्विजयस्तम्भत्वेन सम्भावित इत्यूरुरुपमेयभूतः, एतस्य चोक्तत्वात् उक्तप्रस्तुतेयमुत्प्रेक्षा । इति दिक् । **अनुक्तौ** । 'प्रस्तुतस्ये'ति शेषः । **यथा** । **मम** । **प्रभावत्याम्** '**प्रद्युम्नः** 'आहे'ति शेषः । **इह**ास्मिन् रणप्रदेशे । **हि** । **सम्प्रति** । **दिगन्तरम्** । **आच्छादयता** तिरोदधानेन । **तिमिरपटलेना**न्धकारपुञ्जेन'सर्वं मलिनीकृतं यतः'इति शेषः ।

**अञ्जनपुञ्जै**रञ्जनस्य कज्जलस्य पुञ्जास्तैः । 'अञ्जनं कज्जले चाक्तौ सौवीरे च रसाञ्जने ।'इति मेदिनी । **घटितं** निर्मितम् । **इव** । **मृगमदक्षोदैः** कस्तूरीचूर्णैः । 'चूर्णे क्षोद'इत्यमरः । **पूरितं** पूर्णम् । **इव** । **तमालतरुभि**स्तमालवृक्षैः । **ततं** विस्तृतम् । **इव** । **नीलांशुकै**र्नीलवस्त्रैः । **वृत**मावृतम् । **इव** । **भुवनं** लोकः । अत्रोपगीतिश्छन्दः ॥ १४५ ॥'

तमसा व्याप्तमित्युपक्रम्य'घटितमिवाञ्जनपुञ्जै'रित्याद्युत्प्रेक्षितमिति तमसो व्याप्तिः प्रस्तुता, अञ्जनपुञ्जादिना घटितत्वाद्युत्प्रेक्ष्यमाणमप्रस्तुतं चेत्येवं स्थितौ तमसो व्याप्तेरुदाहृतपद्येऽनभिधानादनुपात्तप्रस्तुताऽत्रेत्याह-**अत्रा**स्मिन्नुदाहृते पद्ये । **अञ्जनादिना** । 'अञ्जनेने'ति पाठे त्वादिपदमुपलक्षणीयम् । **घटितत्वादे**र्घटितत्वादिरूपस्य । **उत्प्रेक्षणीयस्य** । **विषयव्याप्तत्वं** विषय एव व्याप्तत्वं व्याप्तिः । 'तमस'इति तु शेषः । **न** । **उपात्तम्** । ननु'तिमिरपटलेने'त्यादिना विषय उपात्त एवेति चेदिदमुदाहार्य्यमित्याशयेनाह-**यथा** वेत्यादि । **यथा** । **वा** । **तमो**ऽन्धकारः । **अङ्गानि** गात्राणि । **लिम्पति** लिप्तानि करोति । **इव** । **नभ** आकाशम् (कर्तृपदम्) **अञ्जनं** कज्जलम् । **वर्षति** वृष्टं करोति । **इव** । अतः-**दृष्टि**र्नेत्रम् । जातावेकवचनम् । **असत्पुरुषसेवा**ऽसन्तो दुष्टाः कदर्य्या इति यावत् ये पुरुषास्तेषां सेवा । **इव** । **निष्फलतां** व्यर्थताम् । **गता** । मृच्छकटिकस्येदं पद्यम् ॥ १४६ ॥'

अस्योत्तरेऽर्द्धे तूपमेति तच्चर्चां विहायाह-**अत्रे**त्यादि । स्पष्टम् । **यथासङ्ख्यं** यथाक्रमम् । अयम्भावः-'लिम्पतीव तमोऽङ्गानी'त्यत्र तमसो व्याप्तिर्विषयः, स एव लेपनत्वेनोत्प्रेक्षितः 'वर्षतीवाञ्जनं नभः'इत्यत्र तमसः सम्पातो नभः-

**१२४ अलङ्कारान्तरोत्था सा वैचित्र्यमधिकं भजेत् ॥ ९८ ॥**

तत्र,साऽपह्नवोत्प्रेक्षा यथा मम—
'अश्रुच्छलेन सुदृशो हुतपावकधूमकलुषाक्ष्याः।
अप्राप्य मानमङ्गे विगलति लावण्यवारिपूर इव ॥ १४७ ॥'
श्लेषहेतुगा यथा—मुक्तोत्करः सङ्कटशुक्तिमध्याद्विनिर्गतः सारसलोचनायाः।
जानीमहेऽस्याः कमनीयकम्बुग्रीवाऽधिवासाद्गुणवत्त्वमाप ॥ १४८ ॥'

---

कर्तृकाञ्जनकर्मकवर्षणत्वेनोत्प्रेक्षितो विषयः। उभयोरप्यनुपादानमिति अनुपात्तविषयो (प्रस्तुतो) त्प्रेक्षेयमुभयत्र। अत एवोक्तम्–'अत्र..तमः। सम्पातः'इति। तमःकर्तृकं सम्भाव्यमानं लेपनं च तमसो भूयस्त्वनिमित्तकम्, तमोभूयस्त्वे हि तमःकर्तृकेन लेपनेन भुवनमलिनीकरणत्वोपपत्तिः। नभःकर्तृकमञ्जनवर्षणं च सम्भाव्यमानं तमसोऽधःप्रसार-निमित्तकम्, तमसोऽधःप्रसारे हि नभःकर्तृकाञ्जनकर्मकवर्षणसम्भावनाया उपपत्तिः। अत एवोक्तम्–**अनयो**रित्यादि। परमतेन समाधत्ते–**केचित्त्वि**त्यादिना। स्पष्टम्। अयम्भावः–अचेतनं तमः, तस्य लेपनकर्तृत्वमसम्भवम्, अथाप्येतदुत्प्रेक्षितम्, इति तमसो लेपनाकर्तृत्वेऽपि तमोलेपनकर्तृकत्वोत्प्रेक्षणे तमसो व्यापनं विषयः, स च नोक्तः। तथा–नभसो वर्षणक्रियाकर्तृत्वम्, अञ्जनस्य च वर्षणक्रियाकर्मत्वमसम्भवम्, अथाऽप्येतदुभयमुत्प्रेक्षितम्, इति नभसोऽञ्जनावर्षकत्वेऽपि अञ्जनवर्षकत्वोत्प्रेक्षणे तमसोऽधः संयोगो विषयः, स च नोक्तः। एवम्–अञ्जनस्य नभः-कर्तृकवर्षणकर्मकत्वासम्भवेऽपि नभःकर्तृकवर्षणकर्मकत्वोत्प्रेक्षणे तमसो निविडीभवनं विषयः, सोऽप्यनुपात्तः। अत एवात्रानुक्तप्रस्तुतो(विषयो)त्प्रेक्षा। इति। अत्र विवृतिकारा आहुः–'नभसोऽञ्जनकर्तृत्वेन सम्भावनायां प्रकृतस्योपमेयस्य तमसो बोधो दुर्घट इत्यस्वरसः 'केचि'दित्यनेन सूचितः। अपरे तु–'तमोऽञ्जनत्वेनोत्प्रेक्षितम्, नीलत्वमत्रोत्प्रेक्षितम्'इत्याहुः।' इति।

अस्यां चमत्कारातिशयाधानायोपायं निर्दिशति–**१२४ सा** निरुक्तोत्प्रेक्षा। **अलङ्कारान्तरोत्था**ऽलङ्कारा-न्तरादुत्थोत्थितेति तथोक्ता। अलङ्कारान्तरमाश्रित्योत्पादितेति भावः। **अधिकम्**। **वैचित्र्यं** विच्छित्तिम्। **भजेत्**।'वहे' दिति पाठान्तरम्। एवं च-अस्या यदि चमत्कारातिशयोऽभिमतो भवेत्, तर्हि अलङ्कारान्तरेणैनां संमिश्रयेत्। इति फलितोऽर्थः ॥

उदाहरति–**तत्र** तासूत्प्रेक्षासु मध्ये। **सापह्नवा**। **उत्प्रेक्षा**। **यथा**। **मम**। **हुतपावकधूमकलुषाक्ष्या** हुतः कृतहोमो यः पावकोऽग्निस्तस्य धूमस्तेन कलुषे आविले अक्षिणी यस्यास्तस्या इति तथोक्तायाः। **सुदृशः**। **अश्रुच्छलेन** जलोद्गममिषेण। **लावण्यवारिपूरो** लावण्यमेव वारि तस्य पूरः प्रवाहः। 'पूरो जलप्रवाहे स्याद्व्रणसंशुद्धिखाद्ययोः।' इति मेदिनी। **अङ्गे** शरीरे। 'अङ्गं गात्रे...त्रिष्वङ्गवति चान्तिके' इति मेदिनी। **मानमि**यत्ताम्। **अप्राप्या**लब्ध्वा। **इव**। **विगलति**। अत्रोद्गीतिश्छन्दः ॥ १४७ ॥

अत्रेदम्बोध्यम्–छलशब्दस्य कैतवार्थकतया तेनाश्रूणामपह्नवश्चेति कैतवापह्नुतिः, नेत्रयोः कलुषाभिधानेन अश्रूद्ग-मयोग्यतायाश्च समर्थनमिति परिकरः, लावण्यस्य वारिपूरत्वेन परिणामोक्तेः परिणामश्चेत्येवं यद्यपि केवलया नापह्नुत्येयमुत्प्रेक्षा सङ्कीर्णा, किन्तु परिकरपरिणामाभ्यामपि, अथापि अश्रूण्यपह्नूय लावण्यवारिपूरत्वेनोत्प्रेक्षणे एव परिकरपरिणामयोरन्तः-साचिव्यम्। इति सापह्नवा ( अपह्नुत्यलङ्कारमूला ) एवोत्प्रेक्षा चमत्कुरुते। इति यथोक्तं ज्यायः।

एवमपह्नुतिमूलामुदाहृत्य श्लेषहेतूभयमूलामुदाहरति–**श्लेषहेतुगा** श्लेषहेतू गच्छतीति तथोक्ता। श्लेषहेतुमूलोत्प्रेक्षेति भावः। **यथा**। **सङ्कटशुक्तिमध्या**त्सङ्कटं सङ्कीर्णं यत् शुक्तिमध्यं शुक्तिगर्भभागस्तस्मात् तदभ्युष्येति भावः। **विनिर्गतः**। 'कारागारमनुभूय निस्तीर्णप्रत्यवायक्लेश' इति तु ध्वन्योऽर्थः। **मुक्तोत्करो** मुक्तानां मौक्तिकानामुत्करः समूहः। 'मुक्तानां बन्धनतो निस्तीर्णाना'मिति तु ध्वन्योऽर्थः। **अस्याः**। **सारसलोचनायाः** कमलनेत्रायाः। ( अत्रार्द्धान्तरैकपदत्वम् )। **कमनीयकम्बुग्रीवाऽधिवासात्** कमनीयो रमणीयो यः कम्बुः शङ्खस्तद्वद्ग्रीवा ( तस्य ग्रीवेति तु ध्वन्योऽर्थः ) तस्या अधिवास आश्रयः, तस्यामधिवासो निवास इति वा तस्मात्। **गुणवत्त्वं** सुकृतफलभूत-यशस्वितादिशालित्वम्' सूत्रवत्त्वं वा। **आप** प्राप्तवान्। इति–**जानीमहे** वयं भावयाम इति भावः। इन्द्रवज्रोपेन्द्र-वज्रयोरुपजातिश्छन्दः ॥ १४८ ॥'

अत्र-गुणवत्त्वे श्लेषः । कम्बुग्रीवाऽधिवासादिवेति हेतूत्प्रेक्षाया हेतुः । अत्र 'जानीमहे' इत्युत्प्रेक्षावाचकम् । एवम्-

**१२५ मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः ।**

क्वचिदुपमोपक्रमोत्प्रेक्षा, यथा-

'पारेजलं नीरनिधेरपश्यन्मुरारिरानीलपलाशराशीः ।

वनावलीरुत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभाः ॥ १४९ ॥

इत्यत्र-आभाशब्दस्योपमावाचकत्वादुपक्रमे उपमा, पर्य्यवसाने तु-जलधितीरे शैवालस्थितेः सम्भावनानुपपत्तेः सम्भावनोत्थानमित्युत्प्रेक्षा । एवम्-विरहवर्णने, 'केयूरायितमङ्गदैः ॥'

---

लक्ष्यं सङ्गमयति-अत्र।गुणवत्त्वे'गुणवत्त्वं' मिति पद इति भावः । श्लेषः।'गुणो मौर्व्यांमप्रधाने...त्यागशौर्य्यादि सत्त्वादिसन्ध्याऽऽवृत्तिरज्जुषु ।...' इति मेदिनीकाराद्युक्त्या गुणशब्दस्यानेकार्थवाचितयाऽत्र च प्रयुक्तत्वादिति शेषः । **कम्बुग्रीवाऽधिवासादिवेति** । 'चे'ति शेषः । **हेतूत्प्रेक्षायाः । हेतुः** । अतस्तदुभयमूलेयमुत्प्रेक्षेति भावः । इदं बोध्यम्-हारस्य ( मुक्तोत्करस्य ) गुण ( सूत्र ) वत्त्वं स्वतः सिद्धम्, अथापि-अपकृष्टकुलभवानामप्युत्कृष्टकुलभवाश्रयवशाद् गुण ( यशस्विताऽऽदि ) शालित्वं भवतीति सूचयितुं श्लेषमुपजीव्यगुणवत्त्वमुत्प्रेक्षितमिति श्लेषमूलात्वमेतस्याः । तत्र च हेतु'र्वासा' दिति पञ्चम्युक्तः । शुक्तिमध्यापेक्षया कम्बुग्रीवाया महत्त्वात्तत्राधिवासस्य गुणवत्त्वलाभे च हेतुत्वमुचितमेवोत्प्रेक्ष्यमाणम् । इति ।

ननूत्प्रेक्षामहे इत्यादेरभावात् कथमियमुत्प्रेक्षेत्याशङ्क्याह-**अत्रे**त्यादि । स्पष्टम् ।

न केवलमेतदेवेत्याह-**एवं** यथेदं तथेति भावः ।

१२५ **मन्ये । शङ्के । ध्रुवम् । प्रायः । नूनम् । इत्येवमादय** इत्यादय इत्यर्थः । 'उत्प्रेक्षावाचका'इति शेषः । आदिपदेन-'जानीमहे, सम्भावयामः, उत्प्रेक्षामहे, खलु, किल, इव, किमु, ननु' प्रभृतीनां ग्रहणम् । अत एवाहुश्चित्रमीमांसाकाराः-"मन्ये, शङ्के, ध्रुवं, प्रायो, नूनमित्येवमादिभिः । उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः । इत्यत्रादिशब्देन'तर्कयामि, सम्भावयामि, जाने, उत्प्रेक्षे, स्यात्; इत्येवमादीनां सङ्ग्रहः ।" इति ।

उपमामूलामुदाहरति-**क्वचित् । उपमोपक्रमो**पमोपक्रमे आरम्भे ( मूलत्वेन स्थिता ) यस्यास्तथोक्ता । **उत्प्रेक्षा । यथा । 'मुरारिः** श्रीकृष्णचन्द्रः । **नीरनिधेः** समुद्रस्य । **पारेजलं** जलस्य पारे । 'पारे मध्ये षष्ठ्या वा' २।१।१८ इत्यव्ययीभावः, तत्सम्बन्धात् पारशब्दस्यैदन्तत्वं निपातसिद्धम् । **आनीलपलाशराशी**रासमन्तान्नीला इत्यानीलाः पलाशराशयः ( पलाशानां पत्राणां राशयः पुञ्जाः ) यासां ताः तथोक्ताः । 'पत्रं पलाशं छदनम्' इत्यमरः । **उत्कलिकासहस्रप्रतिक्षणोत्कूलितशैवलाभा** उत्कलिकानामूर्म्मीणां सहस्रं तेन प्रतिक्षणमुत्कूलिता उद्गताः कूलं कूलदेशं प्रापिता इति यावत्,ये शैवलाः शेवालानि तेषामाभेवाभा यासां ताः तथोक्ताः । 'ऊर्म्मिरुत्कलिकोल्लोलकल्लोललहरिस्तथा ।' इति हलायुधः । 'तत्करोति तदाचष्टे ।'* इति ण्यन्ताद् उत्कूलशब्दात् कर्म्मणि क्तः । 'जलनीली तु शेवालं शैवलः' इत्यमरः । **वनावलीर्व**नपङ्क्तीः । **अपश्यत्** । शिशुपालवधस्येदं पद्यम् । इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ॥ १४९ ॥'

उदाहृतमर्थं सम्भावयति-इत्यत्रोदाहृते पद्ये । **आभाशब्दस्य**'शैवलाभा' इत्यंशभूतस्येति शेषः । **उपमावाचकत्वात् । उपक्रमे** आरम्भे । **उपमा । पर्य्यवसाने** विचारदशायाम् । **तु । जलधितीरे । शैवालस्थितेः । सम्भावनानुपपत्ते**रसम्भव इत्यस्माद्धेतोरित्यर्थः । **सम्भावनोत्थान**मुत्प्रेक्षणोद्भावनम् । **इति । उत्प्रेक्षा** । अयम्भावः-साम्यमाश्रित्यानिदम इदमा सम्भावनमुत्प्रेक्षा, यद्यपि जलाशयप्रान्ते शैवलः प्रायः सम्भवति, किन्तु न समुद्रस्य प्रान्ते, अत्र हि दूरस्थितस्य दृष्ट्या समुद्रजलस्य स्वाभाविको नीलिमैव शैवलत्वेन प्रतीयते, अतः प्रतीतिरियं यद्यपि भ्रान्तिरूपा, तथाऽपि प्रकृते शैवलस्य जलीयत्वेन जलाशयान्तरवत्समुद्रस्यापि जलाशयत्वेनात्र तत्सम्भवः स्यादिति नास्या भ्रान्तिरूपत्वम्, किन्तु तथोत्प्रेक्षाया उपस्कारकत्वमेव । इति ।

अन्यत्राप्येवमूह्यमित्याह-**एवम् । विरहवर्णने** 'उत्कान्त' इति शेषः । **'अङ्गदैः** कङ्कणैः । 'अङ्गदं करभूषायां केयूरे सुहृदि त्रिपु । अङ्गदो वालिपुत्रे ना हस्तिनीदिग्गजभिदोः स्त्रियाम् ॥' इति गोपालः । **केयूरायितं** केयूरैरिवाच-

इत्यत्र 'विकाशिनीलोत्पलति स्म कर्णे मृगायताक्ष्याः कुटिलः कटाक्षः ।' इत्यादौ च ज्ञेयम् । भ्रान्तिमदलङ्कारे-'मुग्धा दुग्धधिया' इत्यादौ भ्रान्तानां वल्लवादीनां विषयस्य चन्द्रिकाऽऽदेर्ज्ञानं नाऽस्ति, तदुपनिबन्धनस्य कविनैव कृतत्वात् । इह तु सम्भावनाकर्त्तुर्विषयस्यापि ज्ञानमिति द्वयोर्भेदः । सन्देहे-समकक्षतया कोटिद्वयस्य प्रतीतिः, इह तूत्कटा सम्भाव्यभूता एका कोटिः । अतिशयोक्तौ विषयिणः प्रतीतस्य पर्य्यवसानेऽसत्यता प्रतीयते, इह तु प्रतीतिकाल एवेति भेदः । यत्तु-

'रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु ।
पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण ॥ १५० ॥'

---

रितम् । 'प्रयास्यन्तं प्रियं श्रुत्वा गोविन्दं व्रजयोषिताम् । तत्क्षणाज्जातमौनाना' मिति पूर्वं पादत्रयमिति बोद्धव्यम् । 'कङ्कणैरङ्गदायित'मिति पाठान्तरम् ।' इत्यत्र 'आय'प्रत्ययस्योपमावाचकत्वेनोपक्रमे उपमायाः प्रतीतावपि भुजमध्ये कङ्कणस्थितेरसम्भवात् सम्भावनोपयोगितायां पर्य्यवसानादुत्प्रेक्षा इति शेषः । **मृगायताक्ष्या** मृगाक्षिणी इवायते अक्षिते अक्षिणी यस्यास्तस्याः । **कुटिलः** । **कटाक्षः** । **कर्णे** । **विकासिनीलोत्पलति** विकसनशीलं नीलकमलमिवाचरति । **स्म** । 'नासाऽग्रमुक्तामधरप्रसारिरोचिर्भिन्नायेव च विद्रुमाभाम् ॥' इत्युत्तरमर्द्धमिति बोध्यम् । उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिश्छन्दः ॥' **इत्यादौ** । **च** । 'क्विप्'प्रत्ययस्योपमावाचकत्वेनोपमाया उपक्रमे प्रतीतावपि कर्णे कटाक्षस्यासम्भवात्तत्त्वेन सम्भावनादुत्प्रेक्षैवेति । **ज्ञेयम्** ।

अस्या मालारूपात्वमपि दृश्यते यथा-'द्विनेत्र इव वासवः करयुगो विवस्वानिव द्वितीय इव चन्द्रमाः श्रितवपुर्मनोभूरिव । नराकृतिरिवाम्बुधिर्गुरुरिव क्षमामागतो नुतो निखिलभूसुरैर्जयति कोऽपि भूमीपतिः ॥' इति ।

बोधसौकर्य्यायास्या अलङ्कारान्तरतः साम्यभ्रमं निराकर्त्तुमुपक्रमते-**भ्रान्तिमदलङ्कारे-'मुग्धादुग्धधिया' इत्यादौ** 'मुग्धा दुग्धधिया गवां विदधते कुम्भानधो वल्लवाः कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि । कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षया सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका ॥' इत्यत्रेत्यर्थः । **भ्रान्तानाम्** । **वल्लवादीनाम्** । **विषयस्योपमेयभूतस्य** । **चन्द्रिकाऽऽदेः** । **ज्ञानम्** । **न** । **अस्ति** । **तदुपनिबन्धनस्य** तस्य चन्द्रिकाऽऽद्यज्ञानस्योपनिबन्धनं वर्णनम् । **कविना** । **एव** । **कृतत्वात्** दर्शितत्वात् । इहास्यामुत्प्रेक्षायाम् । **तु** । **सम्भावनाकर्त्तुरु**त्प्रेक्षकस्य कवेरन्यस्य वेति भावः । **विषयस्योपमेयभूतस्य** 'ऊरुः कुरङ्गकदृश' इत्यादावूर्वादेरिति भावः । **ज्ञानम्** । **अपि एव** ( निपातानामनेकार्थत्वम् ) । **इति** । **द्वयोर्भ्रा**न्तिमदुत्प्रेक्षयोः । **भेदः** । **सन्देहे** । 'किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा वल्लरी'इत्यादाविति शेषः । **कोटिद्वयस्यो**पमेयोपमानयोः । **समकक्षतया** समानावस्थाकत्वेन । अभेदे तृतीया । **प्रतीतिः** । इहास्यामुत्प्रेक्षायाम् । **तु** । **उत्कटा** निश्चितप्राया । **सम्भाव्यभूतो**त्प्रेक्षणीया अनिर्धारितस्वरूपेति यावत् । **एको**पमानरूपा । **कोटिः** प्रकारः । 'कोटिः स्त्री धनुषोऽग्रेऽश्रौ सङ्ख्याभेदप्रकर्षयोः ।' इति मेदिनी । 'अतोऽनयोर्भेद'इति शेषः । **अतिशयोक्तौ** 'कथमुपरि कलापिनः कलाप' इत्यादौ । **प्रतीतस्य** ज्ञातस्य । **विषयिण** उपमानस्य । **पर्य्यवसाने** विचारान्तिमदशायाम् । **असत्यता प्रतीयते** । **इहो**त्प्रेक्षायाम् । **तु** । **प्रतीतिकाले** । **एव** । असत्यता प्रतिष्ठितेति शेषः । **इति** । **भेदः** । अयम्भावः-आहार्य्योऽन्यतादात्म्यप्रत्ययः सम्भावना, एषैवोत्प्रेक्षाया मूलम् । अनाहार्य्योऽन्यतादात्म्यप्रत्ययोऽध्यवसानम्, एतदेवातिशयोक्तिर्बीजम् । अतः-पूर्वत्र न निश्चितोऽन्यतादात्म्यप्रत्ययः । अतिशयोक्तौ तु निश्चित इत्यनयोर्भेदकम् । इति ।

कश्चिदाचार्य्याणामपि भ्रमः सम्भवतीति नितान्तं गवेषणीयमित्युपदेष्टुकाम आह-**यत्** । **तु** । **केचित्** । अलङ्कारसर्वस्वकारादय इति भावः । **आहुः** । '**तिमिरेणा**न्धकारेण । **विविधा** अनेकविधाः । **तरुशैलास्तरवः** शैला इवेति, तरव एव शैला इति वा, तरवश्च शैलाश्चेति वा, तरुभिरुपलक्षिताश्शैला इति वेति तथोक्ताः । **रञ्जिताः** । **नु** किमु ! **गगनमा**काशम् । **नामितमधः**पातितम् । **नु** किमु ! **स्थगितमा**च्छादितम् । **नु** किमु ! **विषमेषु**-

इत्यत्र तर्वादौ तिमिराक्रान्तता रञ्जनादिरूपेण सन्दिह्यत इति सन्देहालङ्कारः। इति केचिदाहुः, तन्न; एकविषये समानबलतयाऽनेककोटिस्फुरणस्यैव सन्देहत्वात्, इह तु तर्वादिव्याप्तेः प्रतिसम्बन्धिभेदो व्यापनादेर्निगरणेन रञ्जनादेः स्फुरणं च। यच्चान्ये—'अनेकत्वनिर्धारणरूपविच्छित्त्याश्रयत्वेन एककोटचधिकोऽपि भिन्नोऽयं सन्देहप्रकारः।' इति वदन्ति स्म, तदप्ययुक्तम्। निगीर्णस्वरूपस्यान्यतादात्म्यप्रतीतिर्हि सम्भावना, तस्याश्चात्र स्फुटतया सद्भावात् 'नु' शब्देन च 'इव' शब्देनेव तस्या द्योतनादुत्प्रेक्षैवेयं भवितुं युक्ता। इत्यलमदृष्टसन्देहप्रकारकल्पनया।

---

नतानतेषु प्रदेशेषु। धरित्री पृथ्वी। पूरिता पूर्णतां नीता। नु। 'विषमेषु धरित्री'ति समस्तपाठे तु विषमेषोर्मदनस्य धरित्री भूमिः आश्रयभूता रात्रिरिति यावत्, इत्यर्थः। अन्यत्पूर्ववत्। ककुभो दिशः। "दिशस्तु ककुभः काष्ठा" इत्यमरः। संहता एकत्र समावेशिताः। नु! किरातार्जुनीयस्येदं पद्यम्। स्वागताछन्दः। 'स्वागता नौ भगौ गू।' इति च तल्लक्षणम्॥ १५०॥

इत्यत्र। तर्वादौ। तिमिराक्रान्तताऽन्धकाराच्छादितता। रञ्जनादिरूपेण। सन्दिह्यते। इति। सन्देहालङ्कारः। इति। तत्। न। 'युक्त'मिति शेषः। हेतुं निर्दिशति—एकविषये एकस्मिन् प्रस्तुते (उपमेये)। समानबलतयोपमानसदृशकक्षतया। अनेककोटिस्फुरणस्यानेककोटिकावगाहिज्ञानस्य। एव। सन्देहत्वात्सन्देहपदार्थत्वात्। 'स्थाणुर्वा पुरुषो वा' इत्यादौ यथैकस्मिन् विषये स्थाणुपुरुषाद्यनेककोटिकावगाहि ज्ञानं तुल्यकक्षकमित्यस्य सन्देहपदवाच्यत्वम् इति भावः। इहोत्प्रेक्षायामित्यर्थः। तु। तर्वादिव्याप्तेस्तरुशैलादौ तिमिरव्याप्तेः। प्रतिसम्बन्धिभेदस्तरुशैलगगनधरणिदिशः तमोव्याप्तेः सम्बन्धिभूताः, तासां प्रत्येकं रञ्जनादिना तत्तदवगाहि ज्ञानं भिन्नम्। तथा च—एकविषयकानेककोटिकावगाहिज्ञानत्वाभावात् अत्र सन्देहपदवाच्यताऽनुपपन्नेति निष्कृष्टोऽर्थः। उक्तमर्थं द्रढयितुमन्यदप्याह—व्यापनादेः (अत्रादिपदमुदाहरणान्तरविवक्षया) विषयस्य। निगरणेनाधःकरणेन। रञ्जनादेः। आदिना नामनादेर्ग्रहणम्। स्फुरणम्। च। अयम्भावः—अत्र विषयस्तमोव्याप्तिः, असौ तथाऽनभिधाय रञ्जनादिना अभिधीयते, अतोऽत्र रञ्जनादेर्यथा प्राधान्यं, न तथा तमोव्याप्तेः। सन्देहे तु—विषयस्य विषयिणश्च समकक्षत्वं ननु विषयविषयिणोः प्राधान्याप्राधान्याभ्यां भेदः। अतोऽत्रोत्प्रेक्षैव, नतु सन्देहः। इति।

अत्र सन्देहं मन्वानानां युक्त्यन्तरं खण्डयितुमाह—यत्। च। अन्ये 'रञ्जिता नु विविधा'इत्यादौ सन्देहं स्वीकुर्वन्तः। अनेकत्वनिर्धारणरूपविच्छित्त्याश्रयत्वेन एकत्वस्य निर्धारणं तदभावोऽनेकत्वनिर्धारणमेव रूपं यस्याः साऽसौ विच्छित्तिश्चमत्कारस्तस्या आश्रय आधारभूतस्तस्य भावस्तत्त्वं तेन। एककोटचधिकोऽनेककोटिकः। अपि। अयम्। भिन्नो द्वितीयः। सन्देहप्रकारः।' इति। वदन्ति। स्म। एषामयमभिप्रायः—यत्रैष एवैक इति निर्धारणं न स्यात्, तत्कृतां विच्छित्तिमाश्रित्यानेककोटचवगाहि ज्ञानमपि सन्देहविशेषः। तथा च—'रञ्जिता नु' इत्यादौ रञ्जिता एव नामितमेवेत्येवमेकस्य निश्चयस्याभावाद् रञ्जननामनाद्यनेककोटिकस्य ज्ञानस्य च सद्भावात्सन्देह इति फलितम्। इति। निराकरोति—तत्। अपि। अयुक्तम्। तदेवोपपादयति—हि यतः। निगीर्णस्वरूपस्याधःकृतस्वरूपस्य विषयस्य। अन्यतादात्म्यप्रतीतिरन्येन विषयिणा तादात्म्यं तस्य प्रतीतिः। सम्भावना। तस्याः सम्भावनायाः। च। अत्र। स्फुटतया। सद्भावात्। 'नु' शब्देन 'उत्प्रेक्षावाचकत्वेनाभिमतेने'ति शेषः। च। 'इव' शब्देन। इव। तस्या। सम्भावनायाः। द्योतनादुद्बोधनात्। इयम् 'रञ्जिता नु'इत्यादौ सन्देहोपस्कारकत्वेन तवाभिमता प्रतीतिरिति भावः। उत्प्रेक्षा। एव। भवितुम्। युक्ता। अयम्भावः—'तरुशैलेषु तिमिरं व्याप्त'मित्याद्यर्थः प्रस्तुतः, तं च निगीर्य रञ्जनादिना साम्यप्रतीतिः 'रञ्जिता'इत्यादिनोद्भाविता, तस्याश्च 'नु' शब्देनोत्प्रेक्षोपस्कारकतां प्रतिनीतत्वम्। अतोऽत्रोत्प्रेक्षैव। इति एवमलङ्कारान्तरतो व्यतिरिक्तविषयतयोत्प्रेक्षां निर्णीय विवेचनमुपसंहरन्नाह—इति। अदृष्टसन्देहप्रकारकल्पनयाऽदृष्टः परैरनालोचितः (अत एवान्यथाऽसिद्धान्तितः) यः सन्देहप्रकार उत्प्रेक्षाया अलङ्कारान्तरेण साङ्कर्यमस्ति न वेति सन्देहावस्थापनं तस्य कल्पना तया। अलम्।

'यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते तदाचष्टे लोकः शशक इति नो मां प्रति तथा।
अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणीकटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥१५१॥'

इत्यत्र 'मन्ये' शब्दप्रयोगेऽपि उक्तस्वरूपायाः सम्भावनाया अप्रतीतेर्वितर्कमात्रम्, नासावपह्नवोत्प्रेक्षा।

**१२६ सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ॥ ९९ ॥**

विषयनिगरणेन अभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः। अस्य च-उत्प्रेक्षायां विषयिणोऽनिश्चितत्वेन निर्देशात् साध्यत्वम्, इह तु निश्चितत्वेनैव प्रतीतिरिति सिद्धत्वम्। विषयनिगरणं चोत्प्रेक्षायां विषयस्याधःकरणमात्रेण, इहापि 'मुखं द्वितीयश्चन्द्रः' इत्यादौ। यदाहुः—

---

न चोत्प्रेक्षावाचकनिवेशमात्रेणोत्प्रेक्षैवेति दर्शयितुमाह-**यत्**। **एतत्** दृश्यमानं वस्तु इति भावः। **चन्द्रान्तः** चन्द्रस्यान्तश्चन्द्रमण्डलस्य मध्य इति भावः। **जलदलवलीलां** जलदो मेघस्तस्य लवः खण्डस्तस्य लीला विलासः शोभेति यावत् तां तथोक्ताम्। **वितनुते** विस्तारयति। **लोको** जनः। 'लोकस्तु भुवने जने।' इत्यमरः। **तत्** (वस्तु)। **शशकः** शशसञ्ज्ञो जन्तुविशेषः। **इति**। **आचष्टे** कथयते। किन्तु-**नो**। **माम्**। **प्रति**। **तथा** 'भासत' इति शेषः। किं त्वां तत्प्रतिभासत इत्याशङ्कायामाह-**अहम्**। **तु**। **इन्दुं** चन्द्रम्। **त्वदरिविरहाक्रान्ततरुणी...तनुं** तवारयः शत्रुजनास्तेषां विरहेणाक्रान्ताः पीडिता या तरुण्यः (त्वया युद्धे समापितानां शत्रूणां या रमण्यः) तासां कटाक्षा एवोल्कापातास्तैः (कृतं) यद् व्रणं छिद्रं तस्य किणोंऽशः स एव कलङ्कस्तेनाङ्किता चिह्निता तनुः शरीरं यस्य तं तथोक्तम्। **मन्ये**। शिखरिणीवृत्तम् ॥ १५१ ॥

तात्पर्य्यं निर्दिशति-**इत्यत्र**। **'मन्ये' शब्दप्रयोगे** 'मन्ये' इति क्रियापदस्य प्रयोगे कृते। **अपि**। **उक्तस्वरूपायाः** 'निगीर्णस्वरूपस्यान्यतादात्म्यप्रतीतिर्हि सम्भावना' इत्यनन्तरोदितायाः। **सम्भावनायाः**। **अप्रतीतेः** प्रतीत्यभावात्। **वितर्कमात्रं** वितर्क एव। ननु यदेतत्पदाभ्यां बोध्यं वस्त्वपह्नुत्यान्यारोपादपह्नुतिमूलैवेयमास्तामिति चेत्तत्राह-**असौ**। **अपह्नवोत्प्रेक्षा** अपह्नुतिमूलोत्प्रेक्षा। **न**। अयम्भावः—यदेतदित्यनेन किमपि अनिर्दिष्टस्वरूपं वस्तु प्रस्तुतत्वेनाभिमतम्, तस्यैव शशरूपत्वं प्रतिषिध्य कलङ्करूपत्वेन व्यवस्थापितम्, ननूपमानसारूप्यमुद्भावितम्। अतोऽत्र नोत्प्रेक्षा। इति।

अतिशयोक्तिं लक्षयति-१२६ **अध्यवसायस्य** विषयं निगीर्य्य तेन सहाभिन्नत्वेनावस्थितो यो विषयी तस्य यः प्रत्ययस्तस्येति भावः। **सिद्धत्वे** सिद्धौ सत्यामनिश्चयसम्भावनाभ्यामनालिङ्गितायां सम्पत्ताविति यावत्। **अतिशयोक्तिः** अतिशयेन विषयनिगरणसम्पादितविषयिप्रकर्षेणोक्तिरिति तथोक्ता। अत एव तथा प्रसिद्धोऽलङ्कार इत्यर्थः। **निगद्यते**। अयम्भावः-यत्र विषयिणो विषयनिगरणपूर्वकं विषयेण सह निश्चितमभेदसिद्धत्वमभिधीयते साऽतिशयोक्तिरलङ्कारः। इति ॥ ९९ ॥

अध्यवसायपदार्थमाह-**विषयनिगरणेन** विषयस्य प्रस्तुतस्य निगरणं स्वरूपेण प्रकटनाभावस्तेन तदभिन्नेनेति भावः। **विषयिणोऽ**प्रस्तुतस्येति भावः। **अभेदप्रतिपत्तिः** अभेदस्य निश्चयः। **अध्यवसायः** तत्पदवाच्योऽर्थ इति भावः। ननु सिद्धत्वं साध्यतामतिक्रम्यावस्थितत्वम्, तत् किंनाम साध्यात्वमित्याशङ्क्याह-**अस्य**ाध्यवसायस्य। **च**। **उत्प्रेक्षायां** सम्भावनाऽवस्थायां तदाख्येऽलङ्कारे वा। **विषयिण** उपमेयस्य। **अनिश्चितत्वेन**। **निर्देशात्**। **साध्यत्वम्** असम्पन्नसिद्धत्वम्। **इह**ास्यामतिशयोक्तौ सत्याम्। **तु**। **निश्चितत्वेन**। **एव**। **प्रतीतिः** विश्वासः। **इति** अस्मात् कारणात्। **सिद्धत्वं** सम्पन्नस्वरूपत्वम्। ननु शब्देन विषयस्यानुपादानमेव तस्य निगरणम्, तच्च-उपात्तप्रस्तुताया मुत्प्रेक्षायामतिशयोक्तौ च न सम्भवति, तत् कथमनयोर्विषयनिगरणं, कथं वाऽनयोर्भेद इति चेत्, अत्र विषयनिगरणमधःकरणमात्रेण तच्चोभयत्र, उभयोश्च भेदो विषयनिगरणस्य साध्यत्वसिद्धत्वाभ्यामिति द्योतयितुमाह-विषये आदि।

**विषयनिगरणम्**। **च**। **उत्प्रेक्षायाम्**। **इह**ास्यामतिशयोक्तौ। **'मुखम्**। **द्वितीयो**ऽपरः। **चन्द्रः**।' **इत्यादौ**। **अपि**। **विषयस्य**। **अधःकरणमात्रेण**ापकर्षकत्वेनैव 'ननु शब्दानुपादानेनैवेति नियम' इति शेषः।

'विषयस्यानुपादानेऽप्युपादानेऽपि सूरयः । अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते ॥' इति ।

**१२७ भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययौ ।**
**पौर्वापर्यात्ययः कार्य्यहेत्वोः सा पञ्चधा ततः ॥ १०० ॥**

**तद्विपर्य्ययौ अभेदे भेदः, असम्बन्धे सम्बन्धः । सातिशयोक्तिः । अत्र भेदेऽभेदो यथा मम—**

**'कथमुपरि कलापिनः कलापो विलसति तस्य तलेऽष्टमीन्दुखण्डम् ।**
**कुवलययुगलं ततो विलोलं तिलकुसुमं तदधः प्रवालमस्मात् ॥ १५२ ॥'**

---

एवं विश्यनिगरणस्योभयत्र साधारण्येनोपात्तप्रस्तुतात्वसाधारण्येऽपि विषयनिगरणस्य साध्यत्वसिद्धत्वाभ्यां प्राङ्निर्दिष्टाभ्यामेव भेदः, उत्प्रेक्षायां च विषयनिगरणं यदि, तर्हि शब्देन तस्योपादानेऽपि विषयिणाऽधःकरणमात्रेण; अथातिशयोक्तौ यदि, तर्हि शब्देन तस्योपादानेऽनुपादानेऽपि चेत्युभयथेत्यपि एनयोर्भेदः । अत एवास्या अनुपात्तविषयात्वमपि सङ्गच्छते । इति निष्कृष्टोऽर्थः । विषयनिगरणस्य विषयाधःकरणमात्रत्वस्वीकारं प्राचां संवादेन द्रढयितुमाह-यत् यतः कारणात् । आहुः । **'सूरयो** विद्वांसः । 'धीमान् सूरिः कृती...' इत्यमरः । **विषयस्य । अनुपादाने** 'शब्देने'ति शेषः । **अपि । उपादाने । अपि । अधःकरणमात्रेण** विषयिणा विषयस्य न्यूनत्वप्रत्यायनमात्रेणेति भावः । **निगीर्णत्वं** निगरणम् । **प्रचक्षते** ब्रुवते ॥' इति ।

अस्याः प्रभेदाँल्लक्षयति-१२७ **भेदे** । 'विषयविषयिणो'रिति शेषः । **अपि । अभेदः** । तथा-**सम्बन्धे** । 'अपी'ति शेषः । **असम्बन्धः** । तथा-**तद्विपर्य्ययौ** तयोर्भेदेऽप्यभेदस्य सम्बन्धेऽप्यसम्बन्धस्य च विपर्य्ययौ विपरीतौ । एवम्-**कार्य्यहेत्वोः** कार्य्यकारणयोः । **पौर्वापर्यात्ययः** पौर्वापर्य्यस्य पूर्वपश्चाद्भावस्यात्यय उल्लङ्घनम् । 'यतोऽस्या' मिति शेषः । **ततः । साऽतिशयोक्तिः । पञ्चधा** ॥ १०० ॥

कारिकायाः काठिनांशं सुगमयति-तद्वित्यादिना । स्पष्टम् । इदं बोध्यम्-अध्यवसायस्य सिद्धत्वमतिशयोक्तिः, सा च पञ्चविधा, भेदेऽप्यभेदप्रतिपत्तिरूपा, सम्बन्धेऽप्यसम्बन्धप्रतिपत्तिरूपा, अभेदेऽपि भेदप्रतिपत्तिरूपा, असम्बन्धेऽपि सम्बन्धप्रतिपत्तिरूपा, कार्य्यकारणयोः पूर्वपश्चाद्भावत्वेऽपि पूर्वपश्चाद्भावस्य विपर्य्ययस्तत्त्वप्रतिपत्तिरूपा चेति । अध्यवसायस्य सिद्धावस्था च विषयिणा विषयस्य निगरणं, तच्चाधःकरणम् । अथ-यत्र विषयस्य विषयिणा भेदेऽप्यभेदप्रतिपत्तिस्तत्र विषयस्य विषयितया पर्य्यवसाने विषयस्य निगरणं स्पष्टम्, एवम्-यत्र विषयस्य विषयिणाऽभेदेऽपि भेदप्रतिपत्तिस्तत्र विषयस्य विषय्यभिन्नत्वेऽपि विषयितो भेदप्रत्यायनं विषयस्य निगरणम् । यत्र च यस्य कस्यापि वस्तुनो येन केनापि वस्तुना यस्मिन् कस्मिंश्चित्सम्बन्धसद्भावेऽपि तस्य वस्तुनस्तेन वस्तुना तस्य सम्बन्धस्याप्रत्यायनं, तत्र यस्य सम्बन्धस्य यद् गोपनं तस्य तदेव निगरणमिति स्फुटं विषयनिगरणम् । एवम्-यत्र यस्य कस्यापि वस्तुनो येन केनापि वस्तुना यस्य कस्यचित्सम्बन्धस्याभावेऽपि तस्य तेन तस्य सम्बन्धस्य प्रत्यायनम्, तत्र तस्याभावस्य निगरणं विषयनिगरणम् । अथ-यस्य कार्य्यस्य यत् कारणं तस्य तत् पूर्वभावि, अस्य च तत् पश्चाद्भावीति नियमः, अस्य च यत्र विपर्य्ययः कारणात् प्राक् कार्य्यस्य, कारणस्य समकाले वा कार्य्यस्य सद्भावः, तत्र तादृशनियमभङ्ग एव विषयनिगरणम् । इति सर्वेष्वप्येषु पञ्चसु भेदेषु सामान्यलक्षणानुगतेर्न काऽपि अनुपपत्तिः, तथा च-यत् पञ्चधैव लक्षणलक्षणं, तज्झटित्यवबोधार्थमेव । अत एव तत्तद्व्याख्यातारः-अतिशया उक्तिरित्यतिशयोक्तिरित्येवं सामान्यं लक्षणं व्याचक्षाणा आसामन्योऽन्यं सजातीयत्वं समादधते । इति दिक् ।

उदाहर्तुमुपक्रमते—अत्रैषु पञ्चसु भेदेषु मध्ये इति यावत् । **भेदे । अभेदः । यथा । मम । 'कलापिनो** मयूरस्य । कलापो बर्हमस्यास्तीति कलापी । 'अत इनिठनौ ।' ५।२।११५ इतीनिः । **उपरि** शिरसीति भावः । **कलापो** बर्हम् । 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च ।' इत्यमरः । **कथम् । विलसति !** मयूरस्य बर्हं पुच्छवर्त्त्येव दृष्टचरम्, अस्य च कथमुपरिभागे इत्याश्चर्य्यमिति भावः । **तस्य** कलापस्य । **तलेऽ**धोभागे । **अष्टमीन्दुखण्ड**मष्टम्या इन्दुश्चन्द्रस्तस्य (अष्टकलस्यात एवार्द्धपूर्णस्य चन्द्रस्य) खण्डम् । 'कथं विलसती'ति पूर्वतोऽनुषज्यते । अर्द्धश्चन्द्रः शिवस्य भाले दृष्टचरः, अथ कथं बर्हस्याधोभाग इत्याश्चर्य्यमिति भावः । **ततस्तस्याष्टमीन्दुखण्डस्येति**

अत्र कान्ताकेशपाशादेर्मयूरकलापादिभिरभेदेनाध्यवसायः ।
यथा वा-'सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥'
अत्र चेतनगतं मौनित्वमन्यत्, अचेतनगतं चान्यत्; इति द्वयोर्भेदेऽप्यभेदः । एवम्-
'सहाधरदलेनास्या यौवने रागभाक् प्रियः ।'
अत्राधरस्य रागो लौहित्यम्, प्रियस्य रागः प्रेम, द्वयोरभेदः । अभेदे भेदो यथा-
'अन्यदेवाङ्गलावण्यमन्याः सौरभसम्पदः । तस्याः पद्मपलाशाक्ष्याः सरसत्वमलौकिकम् ॥ १५३ ॥'

---

भावः । 'तले' इति पूर्वतोऽनुषज्यते । **विलोलं** विशेषेण चञ्चलम् । **कुवलययुगलं** कुवलयस्य नीलोत्पलस्य युगलं युग्मम् । 'कथं विलसती'ति पूर्वतोऽनुषज्यते । 'श्यामं शितिकण्ठनीलं कुवलयमिन्दीवरं च नीलाब्जम् ।' इति नाममाला। नीलकमलं सरोवरस्य जले दृष्टचरम्, अथ कथं चन्द्रखण्डस्याधोभागे इत्याश्चर्यमिति भावः । **तत्तस्मात्** । **अधोऽधस्तात्** । कुवलययुगलस्याधोभागे इति भावः । **तिलकुसुमं** तिलपुष्पम् । 'कथं विलसती'ति पूर्वतोऽनुषज्यते । तिलवृक्षस्योपरि तदीयं पुष्पं प्रायो दृष्टचरम्, अथ कथं कुवलययुगलस्याधोभाग इत्याश्चर्य्यमिति भावः । **अस्मात्** तिलकुसुमात् । 'अध' इति देहलीदीपकन्यायेन काकाक्षिगोलकन्यायेन वाऽनुषज्यते । **प्रवालं** विद्रुमो नवपल्लवो वा । 'कथं विलसती'ति पूर्वतोऽनुषज्यते । 'प्रवालो विद्रुमे वीणादण्डेऽभिनवपल्लवे ।' इति हैमः । तिलपुष्पस्याधोभागे वृन्तस्यैव दृष्टचरत्वम्, अथ कथं प्रवालमित्याश्चर्य्यमिति भावः । पुष्पिताऽग्रावृत्तम् ॥ १५२ ॥'

लक्ष्यं समर्थयते-**अत्र** । **कान्ताकेशपाशादेः** । आदिपदेन ललाटलोचननासिकाऽधराणां ग्रहणम् । **मयूरकलापादिभिः** । आदिपदेनाष्टमीन्दुखण्डकुवलयतिलपुष्पप्रवालानां ग्रहणम् । सहार्थे तृतीयेयम् । **अभेदेन** । अभेदार्थेयं तृतीया । **अध्यवसायः** । इदं तत्त्वम्-अत्र कलापित्वेन प्रशस्तकेशा कान्ता, कलापत्वेन केशपाशः, अष्टमीन्दुखण्डत्वेन ललाटम्, कुवलययुगलत्वेन लोचनद्वन्द्वम्, तिलकुसुमत्वेन नासिका, प्रवालत्वेनाधरश्चाध्यवसितः, एषां परस्परं भेदेऽपि सादृश्यातिशयेनाभेदोऽध्यवसितः। अत एव कान्ताऽऽदेर्निगरणम्। एतच्च शब्दानुपादानमूलम् । इति।

उदाहरणान्तरं दर्शयति-**यथा वा-'सैषे**त्यादिना । व्याख्यातपूर्वमिदम् । उदाहरणफलं दर्शयति-**अत्रे**त्यादिना । स्पष्टोऽर्थः । अयम्भावः-मौनं हि वस्तुतोऽवचनत्वम्, तच्च यद्यपि चेतनविशेषधर्म्मः, तथाऽपि तस्याचेतन(नूपुर) धर्मेण (ध्वन्यभावेन) सममभेदेनाध्यवसितत्वम् । इति ।

पुनरुदाहरणान्तरं दर्शयति-**एवम्**-'**अस्याः** कान्तायाः । **अधरदलेनाधर** एव दलं तेन । **सह** । **यौवने** । **प्रियः** । **रागभाक्** । यथायथाऽधरदलं रक्तं, तथातथा कान्तस्तस्यां रक्तो जात इति भावः । 'कान्तायाश्चोन्नतो जातः स्तनद्वन्द्वेन च स्मरः ॥' इति शेषः ।'

उदाहार्य्यं निर्दिशति-**अत्रे**त्यादिना । स्पष्टोऽर्थः । अयम्भावः-अधरस्य रागो लोहितवर्णत्वम्, तस्यैव तत्र सम्भवात्, प्रियस्य तु न लोहितवर्णत्वमुपयुक्तम्, किन्तु प्रेमैव रागशब्दवाच्यम्, अस्यैवात्र सम्भवात् । इत्येवम्-प्रेमित्वापरपर्य्यायस्य रागभाक्त्वस्य प्राधान्येन प्रियगतत्वेनैवोपपत्तौ तस्य च लोहितवर्णत्वेनाध्यवसीयमानत्वे भेदेऽप्यभेदः सम्पद्यते । अयं च श्लेषमूलः । इति ।

अभेदे भेदातिशयोक्तिमुदाहर्त्तुमाह-**अभेदे** इत्यादि । स्पष्टम् । '**तस्याः** । **पद्मपलाशाक्ष्याः** पद्मपत्रसदृशायतसुन्दरनेत्रायाः । **अङ्गलावण्यं** शरीरस्य सौन्दर्य्यविशेषः । **अन्यत्** भिन्नमलौकिकमिति यावत् । **एव** । **सौरभसम्पदः** सौरभस्य सम्पदः सम्पत्तयः । **अन्या** भिन्ना अलौकिकाः । 'एवे'ति पूर्वतोऽन्वेति । तथा-**सरसत्वं** रसोऽनुरागस्तेन सह वर्त्तत इति तस्या भावस्तत्त्वम् । **अलौकिकं** लोकेऽदृष्टचरमिति भावः । 'एवे'ति पूर्वतोऽन्वेति । अत्र लोकप्रसिद्धलावण्याद्यभेदेऽपि भेदो वर्णितः, एवं सति 'अन्यदेवे'त्याद्युक्तदिशाऽस्या लावण्यादौ लावण्याद्यन्तरादतिशयोऽवगम्यत इति स्फुटो लावण्याद्यन्तरतोऽभेदेऽपि भेदाध्यवसायः । 'सौरभसम्पद' इत्यत्र तु भेदेऽप्यभेदातिशयोक्तिः, माधुर्य्यादिगुणपुञ्जस्य सौरभसम्पत्तेर्भिन्नत्वेऽपि अभिन्नत्वेनाध्यवसानात् ॥' यथा वा मम-'स्मितमपरं रुचिरपरा, नयनयुगस्यापरं च चापल्यम् । अपरैव नासिकेयं मुखरचना ते ह्यलौकिकी कान्ते ॥' इति ॥ १५३ ॥

सम्बन्धेऽसम्बन्धो यथा-

'अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः, शृङ्गारैकरसः स्वयं नु मदनोऽमासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः॥१५४॥'

अत्र पुराणप्रजापतिनिर्माणसम्बन्धेऽप्यसम्बन्धः। असम्बन्धे सम्बन्धो यथा-

---

सम्बन्धेऽप्यसम्बन्धमुदाहर्त्तुमाह-**सम्बन्ध** इत्यादि। स्पष्टम्। 'अस्या उर्वश्याः। **सर्गविधौ** सर्ग उत्पत्तिस्तस्य विधिर्विधानं सम्पादनमिति यावत्तस्मिन्। विषये सप्तमीयम्। **चन्द्रः**। **कान्तिप्रदः** कान्ति स्वशोभां प्रददाति समर्पयत इति तथोक्तः। 'आतश्चोपसर्गे।' ३।१।१३६ इति कः। **प्रजापतिर्विधाता**। **अभूत्**। **नु** पुरा। अत्र 'अभू'दित्यस्यैवातीतार्थवाचकत्वेऽपि पुराऽर्थ (अतीतार्थ) कस्य नुशब्दस्य प्रयोगोऽतीतार्थस्य दार्ढ्यार्थं इति बोध्यम्। एतेन 'नु प्रश्ने विकल्पे वेति ससन्देह'इति यद्व्याख्यातं तदपास्तम्। 'नु प्रश्नेऽनुनयेऽतीतार्थे विकल्पवितर्कयोः।' इति हैमः। अपूर्वकान्तेरन्यथाऽसम्भवादिदमुक्तम्। **स्वयं** साक्षात्। **मदनः** कामदेवः। **शृङ्गारैकरसः** शृङ्गाररस्यैवानुभावयितेति भावः। शृङ्गाररस्यैको मुख्यो रस आस्वादयितेति तथोक्तः। रसयत्यास्वादयतीति रसः। पचादित्वादच्। 'अस्याः सर्गविधौ प्रजापतिरभूत्'इत्यनुषज्यते। **नु** (अत्रापि अतीतार्थमेवेदम्, तथैवातीतार्थस्य दाढर्यं द्योतयते च)। शृङ्गाररसिकत्वातिशयस्यान्यथाऽसम्भवादिदमुक्तम्। **पुष्पाकरो** वसन्तः, अत्रैव पुष्पाणां विकासातिशयात्। **अमासो**ऽमामलक्ष्मीदुर्भगत्वादिदोषं स्यत्येकपदं हरतीति तथोक्तः। न मा लक्ष्मीरिति अमा। 'मा स्त्री पद्मालयायां स्यात्' इति मेदिनी। 'षो' अन्तकर्मणि इत्यस्मात् 'आतोऽनुपसर्गे कः।' ३।२।३ इति कः। 'अस्याः..' इति पूर्ववदनुषज्यते। **नु** (अत्राप्यतीतार्थकमिद 'मभू' दित्यर्थं द्रढयितुम्)। सुभगत्वातिशयस्यान्यथाऽसम्भवादिदमुक्तम्। वसन्तस्य पुष्पाणामिवाङ्गानां सौभगभाजनत्वविधानं कविनिबद्धप्रौढोक्तिसिद्धम्। एतेन अङ्गानां पुष्पाणामिव सौकुमार्य्यादि अपि द्योतितम्। एवं च-अस्याः कान्तिश्चन्द्रप्रजापतिनिर्मिता, शृङ्गाररसिकत्वं साक्षान्मदनप्रजापतिनिर्मितम्, सौभगत्वं च वसन्तप्रजापतिनिर्मितम्, न त्वन्यप्रजापतिनिर्मितमिति फलितोऽर्थो, द्योतितश्च सौन्दर्य्यातिशयश्च तस्याः। नन्वेवमनेकप्रजापतिकर्त्तृकमस्या निर्माणं किमित्यध्यवसीयते? प्रसिद्धेनैकेनैव ब्रह्मणा तत्सम्पादयितुं शक्तत्वादित्याह-**वेदाभ्यासजडो** वेदानामभ्यासः पुनःपुनराम्रेडनमनुशीलनं वा तेन जडः कर्मान्तरानर्हः। अतएव-**विषयव्यावृत्तकौतूहलो** विषयेभ्यश्चक्षुरादिग्राह्येभ्यो व्यावृत्तं निवृत्तं कौतूहलं कौतुकं चक्षुरादिप्रवर्त्तको मनोव्यापार इति यावत् यस्य तादृशः। **पुराणो** वृद्धो जरठ इति यावत्। **मुनि**र्मननशीलो ब्रह्मेति यावत्। **इदम्**। **मनोहरम्**। **रूपं** स्वरूपम्। **निर्मातुम्**। **कथम्**। **नु** (इदं वितर्के)। **प्रभवेत्**। न कथमपि प्रभवेत्। अतश्चन्द्रादिकर्त्तृकमेवास्याः सर्गविधानं, नतु असिद्धप्रजापतिकर्त्तृकमिति भावः। अत्र'मुनिरि'त्यस्य 'ब्रह्मे'त्येवार्थः, नतु 'नारायण'इति, एतस्य मुनित्वेऽपि पुराणत्वाभावात्, उत्पादकत्वेऽपि निर्मातृत्वाभावाच्च। अतः प्रकृते निर्मातृत्वव्यवच्छेदस्य विवक्षितत्वेन ब्रह्मणः पुराणत्वमुनित्वादि अध्यवसितम्। यत्तु व्याख्यातम् 'ऊरूद्भवा नरसखस्य मुनेः सुरस्त्री।' इति विक्रमोर्वशीयसन्दर्भात्, 'नारायणोरुं निर्भिद्य सम्भूता वरवर्णिनी। ऐलस्य दयिता देवी योषिद्रत्नं किमुर्वशी॥' इति हरिवंशीयवचनाच्च 'मुनि' रित्यस्य 'नारायण' इति भावः। इति। तन्मन्दम्, वेदाभ्यासजडत्वादेरन्यथाऽनुपपत्तेः। विक्रमोर्वशीयं पद्यम्। उर्वशीं प्रकृत्य पुरूरवस उक्तिरियम्। शार्दूलविक्रीडितं वृत्तम्॥ १५४॥'

उदाहृतमर्थं निर्दिशति-अत्रास्मिन्नुदाहृते पद्य इति भावः। **पुराणप्रजापतिनिर्माणसम्बन्धे** पुराणो दक्षाद्यपेक्षया प्राचीनोऽसौ प्रजापतिस्तस्य निर्माणं रचना तस्य सम्बन्धस्तत्र। पुराणप्रजापतिकर्त्तृकस्य निर्माणस्य सम्बन्धे इति भावः। **अपि**। **असम्बन्धः**। अयम्भावः-सकलजगत्सृष्टिकर्त्तृकत्वेन प्रजापतेः, जगदन्तर्गततयोर्वश्याश्च सृज्यसर्जकत्वेन सम्बन्धः, अस्य च प्रजापतेर्वेदाभ्यासजडत्वादिना तादृशसर्जनासम्भवनिदर्शनेनाभावो निदर्शितः। स्पष्टश्च सम्बन्धेऽप्यसम्बन्धः। अस्य च चन्द्रादेः कान्तिप्रदत्वादिना प्रजापतित्वे निरूप्यमाणेऽतिशयितत्वम्। पूर्वार्द्धे प्रयुक्तस्य नुत्रयस्य 'अभू' दिति क्रियया बोध्यस्यैवार्थस्य द्योतकतया 'पुराऽभू' दित्यादाविवानुगुण्येनावस्थितत्वम्।

'यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम् ।
तदोपमीयते तस्या वदनं चारुलोचनम् ॥ १५५ ॥'

अत्र यद्यर्थबलादाहृतेन सम्बन्धेन सम्भावनया सम्बन्धः । कार्य्यकारणयोः पौर्वापर्य्यविपर्य्ययश्च द्विधा भवति, कारणात् प्रथमं कार्य्यस्य भावेन, द्वयोः समकालित्वेन च । क्रमेण यथा–

'प्रागेव हरिणाक्षीणां चित्तमुत्कलिकाऽऽकुलम् । पश्चादुद्भिन्नबकुलरसालमुकुलश्रियः ॥१५६॥'

'सममेव समाक्रान्तं द्वयं द्विरदगामिना । तेन सिंहासनं पित्र्यं मण्डलं च महीक्षिताम् ॥१५७॥'

इह केचिदाहुः–'केशपाशादिगतो लौकिकोऽतिशयोऽलौकिकत्वेनाध्यवसीयते । केशपाशा-

---

यद्वा–तेष्वाद्यस्य 'अयी' त्यर्थकतयाऽन्त्ययो 'रभू' दित्यर्थकतया 'अभू' दित्यनाध्याहरणीयं तेषां नूनां सन्देहपरत्वमपहरणीयम् । एतेन–'नु' शब्दस्य प्रश्नपरतयाऽध्यवसायकताऽभाव इति, दत्तोत्तरम् । इति ।

असम्बन्धेऽपि सम्बन्धमुदाहरति–असम्बन्धे इत्यादिना । स्पष्टम् । 'यदि । इन्दोश्चन्द्रस्य । मण्डले विम्बे । इन्दीवरद्वयमिन्दीवरयोर्नीलकमलयोर्द्वयम् । सक्तं संश्लिष्टम् । स्यात् । तदा । तस्या नायिकायाः । चारुलोचनं चारुणी सुन्दरे लोचने यत्र तत्तादृशम् । वदनं मुखम् । उपमीयते नान्यथेति शेषः ॥ १५५ ॥'

अत्र सम्बन्धध्यवसायं दर्शयति–अत्र । यद्यर्थबलात् 'यदी'त्यस्यार्थसामर्थ्यात् । आहृतेनारोपितेन कल्पितेनेति यावत् । सम्बन्धेन । अभेदे तृतीया । सम्भावनयाऽध्यवसायेन । अत्राप्यभेदेऽपि तृतीया । सम्बन्धः । तथा च–यद्यपि मुखं निरुपममेव, तथाऽपि यदि चन्द्रमण्डल एवेन्दीवरद्वयमुदियात् तदा तेनेदमुपमियेतेत्येवं तत्सादृश्यस्य सम्बन्धासत्त्वेऽपि यद्यर्थसामर्थ्यादारोपितः सम्भावनाऽभिन्नः सम्बन्धोऽध्यवसित इति बोध्यम् । ये तु कल्पितोपमामेनामेवाङ्गीकुर्वन्ति, तन्मते 'धीरध्वनिभिरलं ते नीरद ! मे मासिको गर्भः । उन्मदवारणबुद्ध्या मध्ये जरठं समुच्छलति ॥' इत्युदाहरणम् । अत्र हि सिंह्या मेघं प्रत्युक्तौ मासिकगर्भस्य समुच्छलनासम्बन्धेऽपि शौर्य्यातिशायिका समुच्छलनसम्बन्धाध्यवसायरूपाऽतिशयोक्तिः । कार्य्यकारणयोः पौर्वापर्य्यात्ययमुदाहर्तुकाम आह–कार्य्येत्यादि । स्पष्टम् । 'हरिणाक्षीणां मृगलोचनानां नायिकानाम् । प्राक् प्रथमम् । एव । चित्तम् । उत्कलिकाऽऽकुलमुत्कलिकयोत्कण्ठया रिरंसयेति यावत्, आकुलमिति तथोक्तम् । 'जात' मिति शेषः । 'कथितोत्कलिकोत्कण्ठाहेलासलिलवीचिषु ।'इति मेदिनी । पश्चात्तदनन्तरम् । उद्भिन्नबकुलरसालमुकुलश्रिय उद्भिन्ना विकसिताश्च ता बकुलरसालमुकुलश्रियो बकुलानां रसाल (आम्र) मुकुलानां च श्रियः सम्पत्तय इति तथोक्ताः । 'जाता'इति शेषः । बकुलादीनां सम्पत्तयः किल मदनोन्नेत्र्य इति बकुलादिश्रीणामुद्भेदानन्तरं रिरंसोद्भावनाया वाच्यत्वेऽपि अन्यथावचनं रिरंसाया अतिशयं द्योतयितुमिति बोध्यम् ॥ १५६ ॥'

'तेन । द्विरदगामिना द्विरदो गजराजस्तद्वद्गन्तुं शीलमस्यास्तीति तेन । 'रघुणा' इति शेषः । सममेकदा । एव । पित्र्यं पितुः प्राप्तम् । सिंहासनं राजासनम् । महीक्षितां राज्ञाम् । 'राज्ञि राट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः।' इत्यमरः । मण्डलं देशः समुदायो वा । 'मण्डलं देशविम्बयोः । भुजङ्गभेदे परिधौ शुनि द्वादशराजके । सङ्घाते कुष्ठभेदे चे'ति कोशः । च । द्वयम् । समाक्रान्तं सम्यगारुह्याधिकृतं, जित्वा वशीकृतं चेति भावः । रघुवंशस्येदं पद्यम् । अत्र राजासनाधिरोहणं कारणं राजमण्डलवशीकरणं च कार्य्यमित्यनयोरेककालत्वेनाध्यवसानम् । न च 'धुनोति चासिं तनुते च कीर्त्तिम् ।' इत्यादिवत् 'सम'मिति प्रयोगवशात् समुच्चयः शङ्क्यः, विरूपशब्दाभ्यामेव क्रियाऽनैक्ये तत्स्वीकारात् ॥ १५७ ॥'

अलङ्कारसर्वस्वकाराणां धर्ममात्रगतमध्यवसायं स्वीकुर्वतां मतं दूषयितुमाह–इहास्मिन्प्रकरणे । केचित् 'आलङ्कारिका'इति शेषः । आहुः । केशपाशादिगतः । आदिपदेन नेत्रादीनां ग्रहणम् । लौकिको लोकप्रसिद्धः । अतिशयः तत्तेषां सादृश्यमूल उत्कर्षः । अलौकिकत्वेन 'कविप्रतिभासमर्पितेने'ति शेषः । अध्यवसीयतेऽभेदेन प्रत्याय्यते । अयमेषां भावः–केशपाशादीनां कलापादिभिर्भेदेऽपि लौकिकं (वास्तवं) सौन्दर्य्यम् (अतिशयितत्वम्) कविप्रतिभासमर्पितेन सौन्दर्य्येण (अतिशयितत्वेन) अभेदेनाध्यवसीयते, तदेव तेषां भेदेऽपि अभेदाभिधाने निमित्तम् । तथा च धर्मगताभेदाध्यवसायो धर्मिगतभेदस्य तिरोधायकः । इति । एवमस्वीकारे आपत्तिमुद्भावयति–केशपाशा-

दीनां कलापादिभिरध्यवसाये विवक्षिते 'अन्यदेवाङ्गलावण्य' मित्यादिषु प्रकारेष्वव्याप्तिर्लक्षणस्य ।' इति, तन्न; तत्रापि हि अङ्गलावण्यमन्यत्वेनाध्यवसीयते । तथाहि—'अन्यदेवे' ति स्थाने 'अन्यदिवे'ति पाठेऽध्यवसायस्यासाध्यत्वमेवेत्युत्प्रेक्षाऽङ्गीक्रियते । 'प्रागेव हरिणाक्षीणा' मित्यत्र बकुलादिश्रीणां प्रथमभाविताऽपि पश्चाद्भावित्वेन अध्यवसिता । अत एवात्रापि'इव'शब्दप्रयोगे उत्प्रेक्षा । एवमन्यत्र ।

१२८ पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् ।
एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता ॥ १०१ ॥

---

दीनाम् । कलापादिभिः । आदिपदेन कुवलयादीनां ग्रहणम् । सहार्थेयं तृतीया । अध्यवसायेऽभेदप्रत्यायने । विवक्षिते । 'सती'ति शेषः । 'अन्यदेवाङ्गलावण्य'मित्यादिषु । प्रकारेषु अभेदादिषु भेदाद्यध्यवसायाभिधानमूलेषु भेदेषु इति भावः । लक्षणस्य 'सिद्धत्वेऽध्यवसायस्यातिशयोक्ति'रित्युक्तस्य स्वरूपस्य । अव्याप्तिरनुगमाभावः । अयम्भावः—अथ यदि धर्मिणोर्भेदेऽपि धर्मिणोरेवाभेदाध्यवसायोऽतिशयोक्तिप्रयोजकः स्वीक्रियेत, तदा अभेदे भेदाध्यवसायमूलायामसम्बन्धे सम्बन्धाध्यवसायमूलायां चातिशयोक्तावव्याप्तिः, नहि तत्र धर्मिणोर्भेदोऽध्यवसीयते । अतः—धर्माध्यवसाय एवातिशयोक्तौ स्वीकार्य्यः । इतिइति । 'य'दिति शेषः । तत् । न । हि यतः । तत्राभेदे भेदाध्यवसायमूलायामसम्बन्धे सम्बन्धमूलायामतिशयोक्तौ च । अपि । अङ्गलावण्यम् । अन्यत्वेन लावण्यान्तरत्वेन । अध्यवसीयते । तदेव प्रकारान्तरेण सिद्धान्तयति—तथाहि । 'अन्यदेवे' ति स्थाने । अन्यदिवेति पाठे । अध्यवसायस्याभेदप्रत्यायनस्य । असाध्यत्वमनुद्भावनीयत्वम् । एव । इति अस्मात् कारणात् । उत्प्रेक्षा । अङ्गीक्रियते । स्पष्टमन्यत् । इदमाकूतम्—'एषु पञ्चसु भेदेषु भेदेऽभेदादिवचनं लोकातिक्रान्तगोचरम् । अत्र चातिशयाख्यं यत् फलं प्रयोजकत्वान्निमित्तं, तत्राभेदाध्यवसायः तथा हि—'कमलमनम्भसि, कमले च कुवलये, तानि कनकलतिकायाम् । सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥' इत्यादौ वदनादीनां कमलाद्यैर्भेदेऽपि वास्तवं ( लौकिकम् ) सौन्दर्य्यं (अतिशयितत्वम्) कविसमर्पितेन सौन्दर्य्येण (अतिशयितत्वेनाभेदेनाध्यवसितं भेदेऽभेदवचनस्य निमित्तम् । तत्र च सिद्धोऽध्यवसाय इत्यध्यवसितप्राधान्यम्, नतु वदनादीनां कमलादिभिरभेदाध्यवसायो योजनीयः। अभेदे भेद इत्यादिषु प्रकारेष्वव्याप्तिः। तत्र हि 'अण्णं लउहत्तणअं, अण्णा वि अ का वि वत्तणच्छाआ । सामा सामण्णपआवइणो रेह च्चि अ ण होई'[1]॥' इत्यादौ सातिशयं सुकुमारत्वं निमित्तभूतमभेदेनाध्यवसितम्, एवमन्यत्रापि ज्ञेयम्; तदभिप्रायेणैवाध्यवसितप्राधान्यम् ।' इत्यलङ्कारसर्वस्वकाराः प्राहुः । कविराजाः पुनः— धर्मिणां धर्माणां वाऽध्यवसाये न कोऽपि विशेषः, 'कथमुपरि कलापिनः कलापः ।' 'कमलमनम्भसि' इत्यादौ हि धर्मिणोर्भेदेऽभेदाध्यवसायः सम्भवत्येव, 'अन्यदेवाङ्गलावण्यं' 'अण्णं लडहत्तणअं' इत्यादौ पुनर्धर्मिण एवाभेदे भेदाध्यवसायाङ्गीकारेऽपि न कश्चिद्दोषः । प्रत्युत 'अन्यदेवे'त्यादौ 'अन्यदिवे'ति पाठे उपमा स्यात्, अस्ति चोत्प्रेक्षा । अभेदे भेदेऽध्यवसीयमाने धर्मिण एकत्वेऽपि 'धर्मभेदेन धार्मिभेद' इति नयेन धर्मिभेदापत्तौ उपमानोपमेयत्वमापद्येत, धर्म्मिणोऽभिन्नत्वे तस्यैव भिन्नत्वाध्यवसायेऽपि अभिन्नताया अपि सर्वथाऽनिरासः । अत्र हि भिन्नत्वं कविप्रतिभामात्रोत्तम्भितम्, नतु तत्र तथा । इति, जयरथास्त्वलङ्कारसर्वस्वव्याख्यायां 'यावता ह्यध्यवसितप्राधान्यमस्या लक्षणम् । तच्च धर्म्मिणामस्तु धर्माणां वेति को विशेषः ? येनाव्याप्तिः स्यात्, प्रत्युत धर्मयोरभेदाध्यवसायाभ्युपगमे उपमाऽऽदीनामप्यतिशयोक्तिप्रसङ्गः स्यात्, तत्रापि धर्माणामेव भेदेऽभेदविवक्षणात् । एवं च विजातीयत्वेन भेदे धर्मयोरप्यव्याप्तिः प्रसज्यत इत्यलमसङ्गतग्रन्थार्थोदीरणेन ।' इति ।

तुल्ययोगितां लक्षयति—१२८ यदा । प्रस्तुतानां प्रकरणप्राप्तानाम् । वा । अन्येषामप्रस्तुतानां प्रकरणमप्राप्तानाम् इति यावत् । पदार्थानाम् । एकधर्माभिसम्बन्ध एकोसौ धर्मस्तेनाभिसम्बन्धोऽन्वयः । भवेत् । तदा । तुल्ययोगिता तुल्यानां समानानां योगिता सम्बन्धित्वमिति तथोक्ता । तन्नामाऽलङ्कारः । स्यात् ।

---

[1] 'अन्यत् सौकुमार्य्यम्, अन्यैव च काऽपि वर्त्तनच्छाया । श्यामा सामान्यप्रजापते रेखैव च न भवति ॥' इति संस्कृतम् ।

अन्येषामप्रस्तुतानां धर्मो गुणक्रियारूपः। उदाहरणम्—

'अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपदशाः।
समयेन तेन सुचिरं शयित—प्रतिबोधितस्मरमबोधिषत ॥ १५८ ॥'

अत्र सन्ध्यावर्णनस्य प्रस्तुतत्वात् प्रस्तुतानामनुलेपनादीनामेकबोधनक्रियाऽभिसम्बन्धः।

'तदङ्गमार्दवं द्रष्टुः कस्य चित्ते न भासते। मालतीशशभृल्लेखाकदलीनां कठोरता ॥ १५९ ॥'

---

अयम्भावः—अत्र 'वा'शब्दः प्रस्तुतानामप्रस्तुतानां व्यवच्छेदकः, तथा च प्रस्तुतानामेव, अप्रस्तुतानामेव वेति फलितोऽर्थः, साधर्म्यं व्यङ्ग्यं, तत्प्रयोजकस्योपादीयमानत्वेऽप्यवाच्यत्वात्। तथोक्तम् 'प्रस्तुतानां तथाऽन्येषां केवलं तुल्यधर्मतः। औपम्यं गम्यते यत्र सा मता तुल्ययोगिता ॥' इति। अत्र च बहुवचनमविवक्षितम्, द्वयोर्धर्म्मैक्येनाप्यन्वयेऽस्याः सम्भवात्। एवं च—'सङ्कुचन्ति सरोजानि स्वैरिणीवदनानि च।' 'प्रिये! विषादं विजहीति वाचं प्रिये सरागं वदति प्रियायाः। वारामुदारा विजगाल धारा विलोचनाभ्यां, मनसश्च मानः ॥'' इत्याद्युदाहरणानि सङ्गच्छन्ते। इति। न चात्र सादृश्यस्य व्यङ्ग्यतया व्यङ्ग्योपमयैव निर्वाहः स्यादिति वाच्यम्, तावन्मात्रकृतचमत्काराभावात्, एकधर्मान्वयकृतस्यापि सद्भावात्; यज्यमानस्यापि सादृश्यस्यासुन्दरसाधारणधर्मकत्वेनासुन्दरत्वात्। इति ॥ १०१ ॥

कारिकायाः कठिनांशं सुगमयति—**अन्येषाम्** 'इत्यस्ये'ति शेषः। **अप्रस्तुतानाम्**। 'इत्यर्थ' इति शेषः। **धर्मः। गुणक्रियारूपो** गुणक्रिये रूपं यस्य तादृशः। गुणक्रिये, इत्यत्र गुणपदमेककालत्वादेरप्युपलक्षकम्। अत एवाहुः पण्डितराजाः 'प्रकृतानामेवाप्रकृतानामेव वा गुणक्रियादिरूपैकधर्मान्वयस्तुल्ययोगिता।' इति। एतेन—'निर्दिशन् युधि रुषा निजाधरं दंशयत्यरिजनं पिशाचकैः। प्रार्थ्यमान उदरम्भरैरपि प्रार्थयत्यमरनायकैश्च तान् ॥' इत्यादावपि तुल्ययोगितैव, अत एव—'गाढकान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः। ओष्ठविद्रुमदलान्यमोचयन् निर्दशन् युधि रुषा निजाधरम् ॥' इत्यत्र विरोधालङ्कारेणाधरनिर्दशनसमकालमेव शत्रवो व्यापादिता इति तुल्ययोगिता इति प्रकाशोऽपि सङ्गच्छते। इत्यन्ये प्राहुः। वस्तुतस्तु—'निर्दशन्...' इत्यादौ नास्ति तुल्ययोगिता किन्तु कार्य्यकारणयोः पौर्वापर्य्यात्ययरूपाऽतिशयोक्तिरेव, 'गाढ'मित्यत्र तु समुच्चयः। अत एव—'तुल्ययोगितेति पदस्य तुल्ययोगिताऽलङ्कार इत्यर्थस्तु न, 'नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता।' इति सूत्रेण लक्षितायाः प्रकृतानामप्रकृतानां वा एकधर्म्मसम्बन्धरूपतुल्ययोगितायाः प्रकृतेऽसम्भवात्; तुल्ययोगितायां धर्म्मस्य गुणक्रियाऽन्यतररूपस्यैव ग्रहणात्। किन्तु—तुल्ययोगिपदस्याधरो निर्दष्टश्च शत्रवो व्यापादिताश्चेति तुल्यकालं योगो ययोस्तौ तुल्ययोगिनौ तयोर्भावस्तुल्ययोगितेति व्युत्पत्त्या समुच्चयालङ्कारः, अधरनिर्दशन—शत्रुव्यापादनक्रिययोर्यौगपद्यप्रतीतेः। इति प्रदीपकाराः प्राहुः।

उदाहरन्नाह—**उदाहरणम्** 'यथे'ति शेषः। '**तेन। समयेन** सन्ध्याकालेन। **अनुलेपना**—यङ्गरागद्रव्याणि। **कुसुमानि** पुष्पाणि। **पतिषु** स्वामिजनेषु। **कृतमन्यवः** कृतकोपाः। **अबला** नायिकाः। तथा—**दीपदशा** दीपानां दशा वर्त्तय इति तथोक्ताः। **सुचिरमतिचिरकालावधि। शयितप्रतिबोधितस्मरं** शयितः प्रथमं कृतशयनः पश्चात् प्रतिबोधितो जागरितः स्मरः कामदेवो यत्र तद् यथा तथा (इदं क्रियाविशेषणम्) **अबोधिषत** बोधिताः। शिशुपालवधस्येदं पद्यम्। अत्रानुलेपनानां कुसुमानां सायङ्कालस्य च कामोद्दीपकत्वेन मानभञ्जनसाधनत्वात्, दीपदशानां सुरतसामग्रीत्वाच्चाप्रबुद्धकामप्रबोधकत्वम्, इति 'अबोधिषते'ति बोधनार्थकक्रियया सम्बन्धात्तुल्ययोगिता। प्रमिताक्षरावृत्तम्। 'प्रमिताक्षरा-सजससैरुदिता' इति च तल्लक्षणम् ॥ १५८ ॥'

उदाहृतमर्थं स्वयमपि दर्शयति—**अत्रे**त्यादिना। स्पष्टोऽर्थः। अयम्भावः—सन्ध्याकालस्य कामोद्दीपकस्य प्रस्तुतत्वात् अनुलेपनादीनामपि कामोद्दीपकत्वेन प्रस्तुतत्वमित्येषां 'शयितप्रतिबोधितस्मर' मिति क्रियाविशेषणेन 'अबोधिषते'ति क्रियायामन्वयात्तुल्ययोगत्वम्। अतोऽत्र बोधनक्रिया समानधर्मत्वेनोपात्ता। इति।

एकगुणरूपधर्माभिसम्बन्धा यथा—'न्यञ्चति वयसि प्रथमे, समुदञ्चति किं च तरुणिमनि सुदृशः। उल्लसति काऽपि शोभा वचसां च दृशां च विभ्रमाणां च ॥' अत्र मदनाक्रान्तत्वेन यौवनस्यैव वचनादीनामपि प्रस्तुतत्वात् शोभारूपेणैकेन गुणेन योगः।

अप्रस्तुतानां गुणरूपैकधर्मसम्बन्धादुदाहरति—**तदङ्गमार्दवं** तस्या अङ्गानि तेषां मार्दवं सौकुमार्य्यं तत्तथोक्तम्। 'नलोकाव्ययनिष्ठाखलर्थतृनाम्।' २।३।६९ इति सूत्रेण षष्ठ्या निषेधः। **द्रष्टुः। कस्य।**

इत्यत्र मालत्यादीनामप्रस्तुतानां कठोरतारूपैकगुणसम्बन्धः। एवम्-

'दानं वित्ताद्दतं वाचः कीर्तिधर्मौ तथाऽऽयुषः। परोपकरणं कायादसारात् सारमाहरेत्॥ १६०॥'

अत्र दानादीनां कर्मभूतानां सारतारूपैकगुणसम्बन्ध एकाहरणक्रियासम्बन्धः।

---

चित्ते। मालतीशशभृल्लेखाकदलीनां मालती च शशभृत् ( चन्द्रः ) च कदली चेति तासाम्। कठोरता। न। भासते प्रतीतिं प्रतिपद्यमाना भवतीत्यर्थः। नायिकाया अङ्गमात्रापेक्षया न मालत्यादीनां सौकुमार्य्यमिति स्थूलोऽर्थः, सूक्ष्मस्तु-नायिकाया रदनापेक्षया मालत्याः, मालतीपदस्य च कोकनदेन्दीवरादीनामुपलक्षकत्वेन करचरणनयनाद्यपेक्षया कोकनदादीनां च, मुखापेक्षया शशलाञ्छितत्वेन दूषितस्य चन्द्रस्य, ऊर्वपेक्षया कदल्याश्च न किमपि सुकुमारत्वम्, प्रत्युतात्यतिशयितं कठोरत्वमेव, तां विना नायकस्य मालत्यादिसत्त्वेऽपि विरसत्वावहत्वात् प्रत्युतासह्यमदनानलज्वालकत्वात्। इति॥ १५९॥'

लक्षणीयं निर्दिशति-इत्यत्रेत्यादिना। स्पष्टोऽर्थः। वर्णनीयतया नायिका प्रस्तुता, मालत्यादीनां तूपमानत्वेनाप्रस्तुतत्वम्; इति बोध्यम्। क्रियारूपैकधर्मसम्बन्धाऽसावेव यथा-'न्यञ्चति बाल्ये मृदृशः समुदञ्चति गण्डसीम्नि पाण्डिमनि। न्यञ्चति राकाऽधिपतिर्लवलीपुरटं पुण्डरीकं च॥'इत्यत्र न्यञ्चनक्रियारूपस्य धर्मस्य लवल्यादिभिरुपमानभूतैः सम्बन्धः। असौ गुणविशिष्टक्रियारूपधर्मसम्बन्धाचारीयत्तामावहति, तत्र प्रस्तुतानां स्वयमुदाहर्तुमाह-एवं-'वाचो वचनात्(लिङ्गविपरिणामेन 'असारा' दिति 'असाराया' इति विशेषणत्वेन योज्यम्)। वित्ताद्दतं वित्तानुकूलं'वित्तशाठ्यं विवर्जयेत्।'इति निषेधानास्पदभूतमिति यावत्। दानम्। तथा। आयुषो जीवनात् 'असारा'दिति शेषः। कीर्त्तिधर्मौ कीर्त्तिरूपं धर्मरूपं चेत्यर्थः। असारात्। कायाच्छरीरात्। 'पुन'रिति शेषः। परोपकरणं परोपकाररूपमिति भावः। सारं तत्त्वम्। आहरेत् सञ्चिनुयात्॥ १६०॥'

अत्र। दानादीनाम्। कर्मभूतानाम्। 'आहरे'दिति क्रियाया इति शेषः। सारतारूपैकगुणसम्बन्धे सारता रूपं यस्य तादृशोऽसावेकगुणस्तस्य सम्बन्धो योगस्तत्र। एकाहरणक्रियासम्बन्ध एकाऽसावाहरणक्रिया तस्याः सम्बन्धः। इदमुक्तम्-पुरुषस्य कर्त्तव्यतायां प्रस्तूयमानायां कर्त्तव्यत्वेन दानादीनां प्रस्तुतत्वम्, एषां च सारतारूपैकगुणविशिष्टाहरणैकक्रियया सम्बन्धः। इति। यथा वा-'न्यञ्चति वयसि प्रथमे समुदञ्चति किञ्च तरुणिमनि सुदृशः। दधति स्म मधुरिमाणं वाचो गतयश्च विभ्रमाश्च भृशम्॥' इत्यत्र मधुरिमरूपैकगुणविशिष्टधातिरूपैकक्रियासम्बन्धः। अप्रस्तुतानां यथा-'न्यञ्चति बाल्ये सुदृशः समुदञ्चति गण्डसीम्नि पाण्डिमनि। धवलीभवत्यनुदिनं लवनी कनकं कलानिधिश्चायम्॥'इत्यत्र नायिकाया गण्डयोः पाण्डिमोदये प्रस्तुतेऽप्रस्तुतानां धवल्यादीनां धवलीभवनरूपैकगुणविशिष्टक्रियायोगः। इयं श्लेषानुगुणिताऽपि सम्भवति, यथा-'प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया॥'इति। अत्र पराभूतिपदस्यानेकार्थकतया पराभूतिप्रदानक्रियारूपैकधर्मसम्बन्धः। इयं रसनारूपाऽपि, यथा-'दधीचिबलिकर्णेषु हिमहेमाचलाब्धिषु। अदातृत्वमधैर्य्यं च दृष्टे भवति भासते॥'इति, अर्थान्तरन्यासानुगताऽप्येषा यथा-'दूरीकरोति कुमतिं, विमलीकरोति, चेतश्चिरन्तनमघं चुलकीकरोति। भूतेषु किं च करुणां बहुलीकरोति सङ्गः सतां किमु न मङ्गलमातनोति॥'इति, अत्र ह्यर्थान्तरन्यासानुगता कारकतुल्ययोगिताऽनेकासां क्रियाणामेककत्रान्वयात्। यथा वा-'वसु दातुं यशो धातुं विधातुमरिमर्दनम्। त्रातुं च सकलां पृथ्वीमतीव निपुणो भवान्॥' अत्र निपुणत्वरूपैकधर्मयोगः। यथा वा-'केऽपि स्मरन्त्यनुसरन्ति च केचिदन्ये पश्यन्ति पुण्यपुरुषाः कति च स्पृशन्ति। मातर्मुरारिचरणाम्बुजमाध्वि! गङ्गे! भाग्याधिकाः कतिपये भवतीं पिबन्ति॥' इति, अत्र स्मरणादिक्रियाणां गङ्गायाः कर्मतारूपैकधर्मेण सम्बन्धः। व्यङ्ग्या यथा-'अये लीलाभग्नत्रिपुरहरकोदण्डमहिमन् कथा यत्रोदञ्चत्यतुलबलधैर्य्यस्य भवतः। अयं को वा तत्र प्रसमरफणाकोणनिहितक्षितिः शेषः श्रीमान् कमठकुलचूडामणिरपि॥' इति, अत्र 'को वा' इत्यनेन वाच्यलक्ष्यताऽनालिङ्गितस्यागणनीयत्वस्य शेषकमठाभ्यां योगः प्रतीयते। इति।

**१२९ अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते।**
**अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥ १०२ ॥**

क्रमेणोदाहरणम्-'बलावलेपादधुनाऽपि पूर्ववत् प्रबाध्यते तेन जगज्जिगीषुणा।
सती च योषित्प्रकृतिश्च निश्चला पुमांसमभ्येति भवान्तरेष्वपि ॥१६१॥'

अत्र प्रस्तुताया निश्चलायाः प्रकृतेः प्रकृतत्वेऽप्रस्तुतायाश्च सत्या योषित एकानुगमनक्रियासम्बन्धः।

---

दीपकं लक्षयति-१२९दीपकम्। तु। अप्रस्तुतप्रस्तुतयोः। द्विवचनमविवक्षितम्, तेन-अप्रस्तुतप्रस्तुतानामित्यपि लभ्यते। अप्रस्तुतानां प्रस्तुतानां च सम्मिलितानामिति भावः। एतेन-तुल्ययोगिताया व्यवच्छेदः। 'यदा भवेत् एकधर्म्माभिसम्बन्धः तदा' इति पूर्वसूत्रादनुवर्त्तनीयम्। निगद्यते। धर्मश्चात्रापि गुणक्रियाऽन्यतररूप एवेति बोध्यम्। अथ अथवेति भावः। चेत्। अनेकासु। क्रियासु। 'सतीषु' इति शेषः। एकं 'कर्त्ता कर्म च करणं सम्प्रदानं तथैव च। अपादानाधिकरणमित्याहुः कारकाणि षट् ॥' इत्युक्तेषु षट्स्वेकतममिति भावः। कारकम्। स्यात्। तदाऽपि दीपकं निगद्यते इति शेषः। दीपकं द्विविधम् एकस्य धर्मस्यैकत्रैवाप्रस्तुतानां प्रस्तुतानां च सम्बन्धित्वेनोपात्तत्वात्, एकस्यैव कारकस्य वा एकत्रानेकासां क्रियाणां सम्बन्धित्वेनोपात्तत्वात्। अत्र च यासां क्रियाणामेकं कारकमपेक्ष्यते, ता अप्रस्तुतप्रस्तुता ज्ञेयाः, यत्र प्रस्तुतासु अप्रस्तुतास्वेव वा क्रियासु सतीष्वेकं कारकं तत्र कारकोपाधिका तुल्ययोगितेव, यत्र तु अप्रस्तुतासु प्रस्तुतासु च सम्मिलितासु क्रियासु सतीष्वेकं कारकं तत्र कारकोपाधिकं दीपकं ज्ञेयम्। दीपकत्वं च प्रकृताप्रकृतप्रकाशकत्वम्। अतएवास्य 'दीप इवेति, दीपयतीति वा घटादिमिव सर्वं वाक्य' मिति अन्वर्था सञ्ज्ञा। अत्रापि तुल्ययोगितायामिव सादृश्यं व्यङ्ग्यम्। तुल्ययोगितायां प्रस्तुतानामप्रस्तुतानामेव वेति तुल्यत्वमपेक्षितम्, अत्र तु प्रस्तुताप्रस्तुतोभयसाधारणत्वमिति विवेकः ॥ १०२ ॥

उदाहर्त्तुकाम आह-क्रमेणेत्यादि। स्पष्टम्। 'जिगीषुणा जेतुमिच्छुना नित्योत्साहवतेति यावत्। तेन शिशुपालेन। बलावलेपाद्बलस्य सामर्थ्यविशेषस्यावलेपस्तत्प्रयोज्यो गर्वस्तस्मात्तं प्राप्येति भावः। अधुना साम्प्रतं वर्त्तमाने जन्मनीति यावत्। अपि। पूर्ववत् पूर्वजन्मनीव। जगत्। प्रबाध्यते तदेवोपपादयति-सती पतिव्रता 'पतिं या नाभिचरति मनोवाक्कायसंयता। सा भर्तुर्लोकमाप्नोति सद्भिः साध्वीति चोच्यते।' इत्यादिप्रसिद्धमाहात्म्येति यावत्। योषित्। च। निश्चला दृढा। प्रकृतिः स्वभावः। च। भवान्तरेषु जन्मान्तरेषु। अपि, किं पुनस्तस्मिन्नेव जन्मनीति भावः। पुमांसं पुरुषम्। अभ्येति अन्वेति। शिशुपालवधस्येदं पद्यम्। वंशस्थविलं छन्दः ॥ १६१ ॥'

उदाहरणसङ्गतिं दर्शयितुमाह-अत्रेत्यादि। स्पष्टोऽर्थः। इदम्बोध्यम्-प्रकृतौ प्रस्तूयमानायां सत्या अप्यनुगमनक्रियारूपैकधर्मान्वयोपपादनमिति क्रियादीपकमिदम्, तथा च-सतीव प्रकृतिरित्यर्थो व्यज्यते। अत्र च प्रस्तुतैकत्वमिवाप्रस्तुतैकत्वमपि, प्रकृताप्रकृतानां बहुत्वे पुनरिदमेव यथा-'किवणाणँ धणं णाआणँ फणमणी केशराइँ सीहाणं। कुलवालिआणँ त्थणआ कुत्तो छिप्पंति असुआणं'[1] ॥' इति, अत्र कुलवधूस्तनानां प्रस्तुतत्वे स्पर्शनक्रियैकरूपधर्मान्वयित्वेन कृपणधनादीनां वर्णनादप्रस्तुतत्वम्। यथा वा-'भूष्यन्ते प्रमदवनानि बालपुष्पैः, कामिन्यो मधुमदमांसलैर्विलासैः। ब्रह्माणः श्रुतिगदितैः क्रियाकलापैः, राजानो विरलितवैरिभिः प्रतापैः ॥' इति, अत्र हि प्रतापकर्तृकराजकर्मकभूषणक्रियारूपैकधर्मान्वयित्वेन बालपुष्पादिप्रमदवनादीनां वर्णनमप्रस्तुतमिति। धर्मस्य गुणक्रियाऽन्यतरत्वेनाङ्गीकारात् अस्य च द्वैविध्यम्, तत्रान्त्यमुदाहृतम्, आद्यं यथा-'मृतस्य लिप्सा कृपणस्य दित्सा विमार्गगायाश्च रुचिः स्वकान्ते। सर्पस्य शान्तिः कुटिलस्य मैत्री विधातृसृष्टौ नहि दृष्टपूर्वा ॥' इति। अत्र कुटिलस्य मैत्र्या असम्भवत्वे प्रस्तूयमाने मृतलिप्सादेरुपमानभूतस्योपादानम् इति कुटिलमैत्री प्रस्तुता, मृतलिप्सादिरप्रस्तुता, अभावो गुणश्च; एवम्-अभावगुणरूपैकधर्मान्वयं दीपकमिदम्। नच 'श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभिः। भुवश्च सुकुमाराभिर्नवशाद्वल-

---

१ 'कृपणानां धनं, नागानां फणामणिः, केसराः सिंहानाम्। कुलवालिकानां स्तनाः कुतः स्पृश्यन्तेऽमृतानाम् ॥' इति संस्कृतम्।

**'दूरंसमागतवति त्वयि जीवनाथे भिन्ना मनोभवशरेण तपस्विनी सा।**
**उत्तिष्ठति स्वपिति वासगृहं त्वदीयमायाति याति हसति श्वसिति क्षणेन॥ १६२॥'**

**इदं मम । अत्रैकस्या नायिकाया उत्थानाद्यनेकक्रियासम्बन्धः । अत्र च गुणक्रिययोरादिमध्यावसानसद्भावेन त्रैविध्यं न लक्षितम्, तथाविधवैचित्र्यस्य सर्वत्रापि सहस्रधा सम्भवात्।**

---

राजिभिः ॥' इत्युदाहार्य्यम्, प्रावृष उपक्रमे जीमूतपङ्क्तीनामिव शाद्वलराजीनामपि प्रस्तुतत्वेन तुल्ययोगिताया एवाङ्गीकारौचित्यात्। इति ।

कारकदीपकमुदाहरति—'**त्वयि** । **जीवनाथे** प्राणनाथे प्राणेभ्योऽप्यतिप्रिये । **दूरम्** असन्निहितत्वम् । **समागतवत्यागच्छति** सतीति भावः । **सा** त्वदेकाधारा । **मनोभवशरेण** कामबाणप्रहारेण । **भिन्ना** । **तपस्विनी** दुःखिता, तथाऽपि त्वदनुग्रहाभिलाषैकव्रतपरेति वा भावः । **उत्तिष्ठति** 'त्वामायान्तमिव सम्भाव्ये'ति शेषः । **स्वपिति** 'त्वत्सङ्गानिर्वृतेवे'ति शेषः । **त्वदीयम्** । **वासगृहं** निवासभवनम् । **आयाति** 'कदाचिन्निलीय मद्वञ्चनार्थं नात्र स्थित इति द्रष्टु'मिति शेषः । **याति** । 'त्वां तत्र अप्राप्ये'ति शेषः । **हसति** 'त्वन्नर्मोक्ति स्मृत्वेवे' ति शेषः । **क्षणेन** । पुनः—**श्वसिति** उच्छ्वासं प्रकटयति 'तव वस्तुतो दूरं प्रयाणं निश्चित्ये'ति शेषः । वसन्ततिलकं वृत्तम्। अत्र कस्या अपि नायिकादूत्या नायकं प्रति तद्दुःखावस्थावर्णनम् ॥' अत्र परकीयत्वभ्रममपनेतुमाह—इदमित्यादि । स्पष्टम् ॥ १६२ ॥'

उदाहरणं सङ्गमयितुमाह—अत्रेत्यादि । स्पष्टोऽर्थः । (इदम्बोध्यम्—अत्रोत्थानादीनामनेकासां क्रियाणां तत्पदवाच्या नायिकैवेकं कर्तृकारकम् । अथ—यद्यपि नायिकाया विरहावस्थायां वर्ण्यमानायां सर्वासामेव क्रियाणां प्रकृतत्वमिति वक्तुं शक्यते, तथाऽपि—नायकागमनालिङ्गनादीनां सम्भाव्यमानानां परस्परं विजातीयत्वेनैकस्याः क्रियायाः प्रस्तुतात्वम्, अपरस्या अप्रस्तुतात्वमित्यासां प्रस्तुताप्रस्तुतात्वं समाधेयम् ।) यथा वा—'वासयति हीनसत्त्वानतिसत्त्वानुद्धतान् विवासयति । त्रासयति सकलशत्रून् नीतिविदामग्रणीर्नराधिपतिः ॥' इति, अत्र हि—कस्यचित् हीनसत्त्वस्य, सत्त्वाधिकं वाऽसहमानस्य, शत्रुणा पीडितस्य वा; राजानं प्रत्युक्तौ सामान्यविशेषात्मिकायामप्रस्तुतप्रशंसायामेकस्याः क्रियायाः प्रकृतात्व इतरयोरप्रकृतात्वम् । यथा वा—'वसु दातुं यशो धातुं विधातुमरिमर्दनम् । त्रातुं च मादृशान् राजन्नतीव निपुणो भवान् ॥' इति, अत्र हि कस्यचिद्वृत्तिहीनस्य दीनस्योक्तौ वसुदानत्राणलक्षणयोः क्रिययोः प्रकृतयोः सत्योररिमर्दन—यशोधानलक्षणयोः क्रिययोरप्रकृतात्वम् । इति । अत्र रसगङ्गाधरमतं निराकुर्वन्तोऽलङ्कारसर्वस्वकाराः प्राहुः 'अत्र वदन्ति—दीपकमपि तुल्ययोगितायामेवान्तर्भवति, धर्मस्य सकृद्वृत्तेरुभयत्राविशेषात्। प्रकृताप्रकृतत्वादिविशेषस्य चावान्तरभेदसाधकत्वेऽपि अलङ्कारतायामसाधकत्वात्। अन्यथा श्लेषस्य तद्भेदयोरपि भिन्नालङ्कारत्वापत्तेः। तस्मात् प्रकृतानामेवाप्रकृतानामेव प्रकृताप्रकृतानां चैकधर्मान्वय इति तुल्ययोगिताया एव त्रयो भेदा वक्तुमुचिताः, तथा सति दीपकस्य तुल्ययोगिताया भेदं वदतां प्राचीनानां दुराग्रह एवेति, तच्चिन्त्यम्; 'नानाऽधिकरणस्थानां शब्दानां सम्प्रदीपकः । एकवाक्येन संयोगो यस्तु दीपकमुच्यते ॥' यथा—'सरांसि हंसैः कुसुमैश्च वृक्षा मत्तैर्द्विरेफैश्च सरोरुहाणि । गोष्ठीभिरुद्यानवनानि चैव यस्मिन्नशून्यानि सदा क्रियन्ते ॥' इति भगवता भरतमुनिना दीपकस्याङ्गीकारात्तत्रैव तुल्ययोगिताऽन्तर्भावस्यौचित्यात्।' इति, अन्ये तु 'न च दीपके तुल्ययोगिताया अप्यन्तर्भावः स्थाने, अन्वर्थताया उच्छेदात्। दीपकं हि दीप इवेत्यर्थकम्, दीपस्य च अभेदेन सर्वेषां प्रकाशकत्वम्। न चैतत्तुल्ययोगितायाः। तुल्यानां योगितेत्यन्वर्थताया अपहानात्।' इति । यदपि 'न भाति रमणीयोऽपि वैराग्येण विना यतिः । वैदुष्येण विना विप्रो, नरलोकस्त्वया विना ॥' 'लावण्येन प्रमदा मदातिरेकेण वारणाधिपतिः। भाति विभवेन भवकान्[1], राजन् भवता च वसुमतीवलयम् ॥' 'आखण्डलेन नाकः कुण्डलिकुलकुण्डलेन पातालम् । नरमण्डन रिपुखण्डन भवता भूमण्डलं विभातितमाम् ॥' इत्यादौ धर्मस्यादिमध्यान्तगततयाऽस्य भेदान्तरं न चमत्कारीत्युपेक्षमाण आह—अत्रेत्यादि । स्पष्टम् । बिम्बप्रतिबिम्बभावेऽपि इदं दृश्यते, यथा—'शीलभारवती कान्ता, पुष्पभारवती लता। अर्थभारवती वाणी, भजते कामपि श्रियम् ॥' इति ।

---

[1] भवानित्यर्थः । स्वार्थे कः ।

**१३० प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः।**
**एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ॥ १०३ ॥**

यथा—'धन्याऽसि वैदर्भि! गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि।
'इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति ॥ १६३ ॥'

अत्र-समाकर्षणमुत्तरलीकरणं च क्रियैकैव पौनरुक्त्यनिरासाय भिन्नवाचकतया निर्दिष्टा। इयं मालयाऽपि दृश्यते यथा--

विमल एव रविर्विशदः शशी, प्रकृतिशोभन एव हि दर्पणः।
शिवगिरिः शिवहाससहोदरः सहजसुन्दर एव हि सज्जनः ॥ १६४ ॥'

अत्र विमलविशदादिरर्थत एक एव।

---

प्रतिवस्तूपमां लक्षयति-१३० यत्र यस्मिन् काव्ये। **गम्यसाम्ययोर्गम्यं** व्यङ्ग्यं साम्यं साधर्म्यं यत्र (प्रतिपाद्यमानं) तयोस्तथोक्तयोः। साधर्म्यं चोपमानोपमेयत्वम्, तथा च-यत्रोपमानोपमेयभावो व्यज्यते तादृशयोरिति फलितोऽर्थः। **वाक्ययोर्वा**क्यद्वय इत्यर्थः। अत एव-'वाक्यद्वये'इति प्रकाशोऽपि। उपमानोपमेययोरिति शेषः। उपमानोपमेयसम्बन्धिनोरित्यर्थः। तथा च--उपमानवाक्यमेकम्, अपरं चोपमेयवाक्यम्; इति वाक्यद्वयं च बोध्यम्। **एको**ऽपृथग्भूतः। **अपि**। **सामान्य** उपमानोपमेयोभयसाधारणः। **धर्मः**। **पृथक्** भिन्नतया। **निर्दिश्यते**। **सा**। **प्रतिवस्तूपमा** प्रतिवस्तु प्रत्यर्थमुपमासादृश्यं व्यज्यमानेति शेषः, इति तथोक्ता, तद्व्यपदेश्योऽलङ्कार इति भावः। **स्यात्**। एवं च-'पद्मं मनोज्ञं, रुचिरः शशाङ्क' इत्यादौ एकस्यैव धर्मस्य पृथङ्निर्देशेऽपि वाक्यद्वयगतत्वाभावान्नातिप्रसङ्गः। 'प्रकाशते मुखं तस्याश्चन्द्रमा दीप्यते यथा।' इत्यादौ पुनः साम्यस्य वाच्यत्वमिति व्यवच्छेदः। दीपकादावप्येवं धर्मस्य पृथङ्निर्देशाभावात् न साङ्कर्य्यमिति सूचितम् ॥ १०३ ॥

उदाहरति-यथा-'हे **वैदर्भि** विदर्भराजनन्दिनि दमयन्ति! इति भावः। **यया** (त्वया)। **नैषधो** निषधाधिराजो नलः। **अपि** (एतेनास्य गभीरताऽतिशयतया 'समाकृष्यते'ति क्रियायाः कर्मत्वायोग्यत्वमावेद्यते)। **उदारैः**। **गुणैः**। **समाकृष्यत** स्ववशं प्रापितः। सा त्वम्-**धन्या** प्रशंसनीया। **असि**। तदेव विशदयति-**इतो**ऽस्मादपेक्षया। **चन्द्रिकाया**श्चन्द्रसुषमायाः। 'चन्द्रिका कौमुदी ज्योत्स्ने' इत्यमरः। **का**। **खलु**। **स्तुतिः** प्रशंसा'न काऽपी' त्यवसितोऽर्थः। **यत्**। **अब्धिं** (गभीरतया प्रसिद्धम्) **अपि**। **उत्तरलीकरोति** समाकर्षति चञ्चलयतीति यावत्। नैषधचरितस्येदं पद्यम्। दमयन्तीं प्रति हंसस्योक्तिरियम्। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ॥ १६३ ॥'

लक्ष्यं समर्थयते-अत्रेत्यादिना। स्पष्टम्। अयम्भावः-'समाकृष्यते'ति, 'उत्तरलीकरोती'ति च क्रियाद्वयं स्वरूपतः परम्, न त्वर्थभेदात्; इति तात्पर्य्यबलात्समाकर्षणोत्तरलीकरणैक्येन नैषधसमुद्रयोरुपमेयोपमानभावौ प्रत्याय्यमानौ सम्भवतः, अनयोश्चैवं साम्यं स्फुटं प्रतीयमानम्। तथा च-समुद्रोत्तरलीकरणमिव नैषधसमाकर्षणमित्युपमा व्यज्यमानाऽपि वाक्यद्वयगततया व्यङ्ग्योपमान्तरतो व्यवच्छिद्यत इति फलितम्। इति।

इयं मालारूपाऽपीत्युपदिशन्नुदाहरति-इयमित्यादिना। स्पष्टम्। '**रविः** सूर्य्यः। **विमलः** स्वच्छप्रकाशः। एवेतिप्रसिद्धमिति भावः। **शशी** चन्द्रः। **विशदो** विपुलसुप्रकाशः। 'एवे'ति पूर्वतोऽनुषज्यते। **दर्पणः**। **प्रकृतिशोभनः** प्रकृत्या स्वभावेन शोभनो रमणीयः। **एव**। **हि**। **शिवगिरिः** कैलासः। **शिवहाससहोदरः** शिवं कल्याणं, तच्च हासश्च तयोः सहोदरः सजन्मा तत्तया यथाऽर्थमनुगत इति यावत्। **सज्जनः**। **सहजसुन्दरः** सहज आजन्मसिद्धः सुन्दरः पवित्रात्मा। **एव**। **हि**। अत्र द्रुतविलम्बितं वृत्तम्, 'द्रुतविलम्बितमाह नभौ भरौ।' इति च तल्लक्षणम् ॥ १६४ ॥'

लक्ष्यं निर्दिशति-अत्रेत्यादिना। स्पष्टम्। विमलादीनां पदानां भिन्नार्थतया प्रतीयमानत्वेऽपि तात्पर्य्येण विमलतारूपस्यैकस्यैवार्थस्य बोधकत्वमिति भावः।

वैधर्म्येण यथा—

'चकोर्य्य एव चतुराश्चन्द्रिका चामकर्मणि। विनाऽवन्तीर्न निपुणाः सुदृशो रतनर्मणि॥१६५॥'

१३१ दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्।

सधर्मस्येति प्रतिवस्तूपमाव्यवच्छेदः। अयमपि साधर्म्यवैधर्म्याभ्यां द्विधा। क्रमेणोदाहरणम्-

'अविदितगुणाऽपि सत्कवि-भणितिः कर्णेषु वमति मधुधाराम्।
अनधिगतपरिमलाऽपि हि हरति दृशं मालतीमाला॥ १६६॥'

'त्वयि दृष्टे कुरङ्गाक्ष्याः स्रंसते मदनव्यथा। दृष्टाऽनुदयभाजीन्दौ ग्लानिः कुमुदसंहतेः॥१६७॥'

---

वैधर्म्येऽप्यस्याः सम्भव इति सूचयन्नुदाहरति—वैधर्म्येणेत्यादिना। स्पष्टम्। 'चन्द्रिकाचामकर्मणि चन्द्रिकायाश्चामः पानमिति तस्य कर्म तत्र। विषये सप्तमीयम्। 'चामे' त्यत्र 'पाने ति पाठान्तरे स्पष्टोऽर्थः। **चकोर्य्यः**। **एव**। **चतुराः** कुशलाः। **अवन्तीः**रवन्ति ( उज्जयनी ) देशोत्पन्ना नारीरिति भावः। **विना**। **सुदृशो** नायिकाः। **रतनर्मणि** सुरतक्रीडायाम्। 'क्रीडा खेला च नर्म च।' इत्यमरः। **निपुणाः** प्रवीणाः। **न**। 'भवन्ती'ति शेषः। किन्तु—यथाऽवन्त्य एव रमणकेलिविषये चतुरास्तथा चकोर्य्यः (चकोराङ्गनाः) चन्द्रिकापानकर्मणि निपुणा इति भावः। बालरामायणस्येदं पद्यम्॥ १६५॥

दृष्टान्तं लक्षयति—१३१ **दृष्टान्तो** दृष्टो ज्ञातप्रामाण्यकोऽन्तो दार्ष्टान्तिकवाक्यार्थनिश्चयो यत्र तथोक्तः, अत एव तन्नाम्ना प्रसिद्धोऽलङ्कार इति भावः। **तु**। 'वाक्ययो'रिति पूर्वतोऽनुवर्त्तनीयम्। वाक्यद्वयस्येत्यर्थः, उपमानोपमेययोरिति शेष इत्यावेदितपूर्वम्। **सधर्मस्य** समानो धर्मं इति तस्य, तद्रूपस्येति भावः। 'समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु।' ६।३।८४ इति 'समानस्ये'ति योगविभागे सादेशः। 'सदृशस्ये'ति तु नार्थः। 'धर्मादनिच् केवलात्।' ५।४।१२४ इत्यनिजापत्तेः। **वस्तुनः**। **प्रतिबिम्बनं** प्रतिरूपणम्। एवं च-यत्रोपमानोपमेयवाक्ययोः सतोस्तदुभयवर्त्तिनः साधारणधर्मस्य प्रतिरूपतया निर्देशोऽवतिष्ठेत स दृष्टान्त इति स्थूलार्थः। सति वाक्यद्वये उपमानोपमेययोः साधारणधर्मस्य च ( बिम्बभूतस्य ) प्रतिबिम्बतया निर्देशो दृष्टान्त इति फलितोऽर्थश्च। तथोक्तम्—'प्रकृतवाक्यार्थघटकानामुपमानादीनां साधारणधर्मस्य च बिम्बप्रतिबिम्बभावे दृष्टान्त' इति गङ्गाधरकारैः।

नन्वस्य प्रतिवस्तूपमातः को भेदः ? यत् 'दृष्टान्तस्त्वि'ति तु नाव्यवच्छेदः सूचितः; इत्याशङ्कयाह—**सधर्मस्यो**पमानोपमेयवर्त्तिनः साधारणधर्मस्येति भावः। **इति** 'अनेने'ति शेषः। **प्रतिवस्तूपमाव्यवच्छेदः** प्रतिवस्तूपमाया व्यवच्छेदो भेदः।अयम्भावः—प्रतिवस्तूपमायां न साधारणो धर्मः प्रतिरूपतया निर्दिश्यते,किन्तु भिन्नतयैवेत्यनयोः पार्थक्यम्। इति। प्रतिवस्तूपमाया इवास्यापि भेदं निर्दिशति—**अयमि**त्यादिना। स्पष्टम्। उदाहर्त्तुकाम आह—**क्रमेणे**त्यादि। स्पष्टम्।

'**अविदितगुणा** न विदिता गुणा माधुर्यादयो यस्यास्तादृशी। **अपि**। 'किं पुनर्विदितगुणे'ति शेषः। **सत्कविभणितिः** सत्कवेर्भणितिर्वचनम्। **कर्णेषु**। श्रोतॄणामिति शेषः। **मधुधारां** मधुन उपचारात्तदुपमरमणीयताया धारोपचारादतिशयस्ताम्। रमणीयताऽतिशयमिति निष्कृष्टोऽर्थः। **वमति** उपचारात् प्रकटयति। **हि** यतः। **अनधिगतपरिमला**ऽनधिगतोऽप्राप्तः परिमलः सौरभविशेषो यस्यास्तादृशी। 'विमर्दोत्थे परिमलो गन्धे जनमनोहरे।' इत्यमरः। **अपि**। **मालतीमाला** मालतीनां तत्पुष्पाणां मालेति तथोक्ता। **दृशं** दृष्टिम्। **हरति** स्ववशं नयति। वासवदत्तायाः पद्यमिदम्। अत्रार्य्याछन्दः, तल्लक्षणं च प्रागुक्तम्॥ इदम्बोध्यम्—अत्र भणितिमालयोर्गुणपरिमलयोः कर्णविषयकमधुधारावमन-दृग्घरणयोश्च बिम्बप्रतिबिम्बत्वमिति अनधिगतपरिमलाऽपि मालतीमाला यथा दृशं हरति तथाऽविदितगुणाऽपि सुकविभणितिः कर्णेषु मधुधारां वमतीत्युपमा प्रतीयते। स्फुटश्चैवं साधर्म्यनिबन्धनोऽयमिति॥ १६६॥'

'**त्वयि** कान्ते नरवर इति यावत्। **दृष्टे**। सति सप्तमीयम्। **कुरङ्गाक्ष्याः**। **मदनव्यथा** 'त्वद्विरहमूले'ति शेषः। **स्रंसते** भ्रश्यति विनश्यतीति यावत्। **इन्दौ** चन्द्रमसि। **अनुदयभाजि** अस्तं सेवमाने सति। अस्तमिते सतीति भावः। **कुमुदसंहतेः** कुमुदानां नक्तं विकासिनां सरोजानां पुञ्जस्य। **ग्लानि**र्विकासाभावः। **दृष्टा**।

'वसन्तलेखैकनिबद्धभावं परासु कान्तासु मनः कुतो नः ? ।
प्रफुल्लमल्लीमधुलम्पटः किं मधुव्रतः काङ्क्षति वल्लिमन्याम् ॥ १६८ ॥'

इदं पद्यं मम । अत्र 'मनः कुतो न' इत्यस्य, 'काङ्क्षति वल्लिमन्या' मित्यस्य चैकरूपतयैव पर्य्यवसानात् प्रतिवस्तूपमैव, तत्र च कर्णे मधुधारावमनस्य नेत्रहरणस्य च साम्यमेव, न त्वैकरूप्यम् । अत्र सामर्थ्यसमर्थकवाक्ययोः सामान्यविशेषभावोऽर्थान्तरन्यासः, प्रतिवस्तूपमादृष्टान्तयोस्तु न तथेति भेदः ।

**१३२ सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वाऽपि कुत्रचित् ॥ १०४ ॥**
**यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शना ।**

---

अत्र-'इन्दावुदयमाने कुमुदसंहतेर्ग्लानिर्नन्दयती'त्येवं वैधर्म्यविपर्य्यये साधर्म्यपर्य्यवसानमिति कान्तदर्शने-हृदययोर्मदनव्यथा-कुमुदसंहतिग्लान्योश्च बिम्बप्रतिबिम्बत्वम् । मदनव्यथाकुमुदसंहतिग्लान्योरन्तःसन्तापजन्यबहिर्विकारविशेषरूपेण साम्यम् । दूत्याः सख्या वा कमपि स्वस्वामिनीवयस्याऽन्यतरेशं प्रति उक्तिरियम् ॥ १६७ ॥'

इत्थेवं द्विविधं दृष्टान्तमुदाहृत्य प्रतिवस्तूपमातो व्यतिरेकं दर्शयितुं तामुदाहरति-'**वसन्तलेखैकनिबद्धभावं** वसन्तलेखायां तदाख्यायां सुरगणिकायामेको मुख्यो निबद्धो भावो वृत्तिविशेषो यस्य तादृशम् । **नोऽस्माकम्** । **मनश्चित्तम्** । **परासु** अन्यासु । **कान्तासु** । विषये सप्तमीयम् । **कुतः** । **प्रफुल्लमल्लीमधुलम्पटः** प्रफुल्ला विकसितपुष्पा या मल्ली मल्लिका तस्या मधु रसस्तत्र लम्पटः समासक्तचित्तः । **मधुव्रतो** भ्रमरः । **अन्याम्** । **वल्लिं** लताम् । **किम्** । **काङ्क्षति** । उपेन्द्रवज्रावृत्तम् ॥ १६८ ॥'

परपद्यशङ्कामपहरति-**इदमित्यादिना** । स्पष्टम् ॥

प्रयोजनं निर्दिशति-**अत्रेत्यादिना** । **अत्र** । '**मनः कुतो नः**' **इत्यस्य** 'वाक्यस्ये'ति शेषः । '**काङ्क्षति वल्लिमन्या' मित्यस्य** 'वाक्यस्ये'ति शेषः । **च** । **एकरूपतया** । **एव** । 'स्वरूपतो भेदेऽपी'ति शेषः । **पर्य्यवसानात्** निश्चयात् । **प्रतिवस्तूपमा** । **एव** 'नतु दृष्टान्त' इति शेषः । अयम्भावः-'मनः कुतो नः' इति वाक्यं, 'किं काङ्क्षति वल्लिमन्या'मिति वाक्यं च तात्पर्य्येऽन्विष्यमाणे एकमेव, एकस्यैव परत्र मनः प्रतिहतत्वस्य धर्मस्य पृथक्कृत्वेन प्रतिपादनात् । इति । नन्वत्र किं वैलक्षण्यमित्याह-**तत्र** 'अविदितगुणे'त्याद्युदाहृते । **च** । **कर्णे** । जातावेकवचनम् । **मधुधारावमनस्य** । **नेत्रहरणस्य** । **च** । **साम्यम् एव** । एतद्व्यवच्छेद्यं दर्शयति-**न तु** । **ऐकरूप्यम्** । अयम्भावः-धर्मस्यैकरूप्येऽपि भिन्नतयाऽभिधाने प्रतिवस्तूपमा, धर्मस्य साम्यमात्रनिर्देशे दृष्टान्तम्, साम्यं च सति द्वयोर्भेद एवेति तत्त्वज्ञाः, अतः पूर्वत्र नेयम्, उत्तरत्र पुनरयमपि न । इति । अथ प्रसङ्गात् अर्थान्तरन्यासाद्भेदं निर्दिशति-**अत्रास्मिन्** सन्देहनिराकरणप्रस्तावे । **सामर्थ्यसमर्थकवाक्ययोः** समर्थनीयसमर्थकयोर्वाक्ययोः पूर्वापरवाक्ययोरिति यावत् । **सामान्यविशेषभावः** । **अर्थान्तरन्यासः** 'इति बोध्य'मिति शेषः । **प्रतिवस्तूपमादृष्टान्तयोः** । **तु** । **तथा** 'यथाऽर्थान्तरन्यासे' इति शेषः । 'समर्थ्यसमर्थकवाक्ययोः सामान्यविशेषभाव' इति पूर्वतोऽनुषज्यते । **न** । इति 'अर्थान्तरन्यासा'दिति शेषः । **भेदः** । 'इति बोध्य'मिति शेषः । अयम्भावः-यदपि प्रतिवस्तूपमादृष्टान्तोदाहरणयोर्वाक्यद्वयमिति तत्र पूर्वस्य समर्थनीयत्वमुत्तरस्य समर्थकत्वमित्यर्थान्तरन्यासत्वं संशयितुं शक्यते, तदपि प्रतिवस्तूपमादृष्टान्तयोर्वाक्ययोर्धर्मस्यैकस्यापि शब्दमात्रेण पृथक्तया तात्पर्य्यतो वा प्रतिरूपतया निर्देशमुखेनैव चमत्कारः, अर्थान्तरन्यासे पुनर्वाक्ययोः सामर्थ्यसमर्थकतयैवेत्येषां भेदोऽवधार्यः । अत एवार्थान्तरन्यासे पूर्वापरवाक्ययोः सामान्यविशेषभावः । प्रतिवस्तूपमायां धर्मस्यैकस्यैव पृथक्कृतयाऽभिधातुं वाक्यद्वयावतारः, दृष्टान्ते पुनर्धर्मस्य बिम्बप्रतिबिम्बतया निर्देष्टुम्; इति ।

निदर्शनां लक्षयति-१३२ **यत्र** । **कुत्रचित्** । **सम्भवन्** उपपद्यमानः । **वाऽथवा** । **अपि** । **असम्भवन्** अनुपपद्यमानः । **वस्तुसम्बन्धो** वस्तुनोर्वाक्यार्थयोः पदार्थयोर्वा सम्बन्धोऽन्वयः । **बिम्बानुबिम्बत्वं** बिम्बप्रतिबिम्बभावम् । **बोधयेत्** व्यञ्जयेत्, 'नतु अभिदध्यात्, न वा लक्षयेत्;' इति शेषः । **सा** । **निदर्शना** निदर्श्यते

तत्र सम्भवद्वस्तुसम्बन्धनिदर्शना, यथा--

'कोऽत्र भूमिवलये जनान् मुधा तापयन् सुचिरमेति सम्पदम्।
वेदयन्निति दिनेन भानुमानाससाद चरमाचलं ततः ॥ १६९ ॥'

अत्र रवेरीदृशार्थवेदनक्रियायां वक्तृत्वेनान्वयः सम्भवत्येव, ईदृशार्थज्ञापनसमर्थचरमाचलप्राप्तिरूपकर्मवत्त्वात्; स च रवेरस्ताचलगमनस्य परितापिनां विपत्प्राप्तेश्च बिम्बप्रतिबिम्बभावं बोधयति। असम्भवद्वस्तुनिदर्शना त्वेकवाक्यानेकवाक्यगतत्वेन द्विविधा। तत्रैकवाक्यगा यथा-

कलयति कुवलयमाला-ललितं कुटिलः कटाक्षविक्षेपः।
अधरः किसलयलीलामाननमस्याः कलानिधिविलासम् ॥ १७० ॥'

---

सूच्यते व्यञ्जनया प्रत्याय्यते इति यावत् अनया ( सम्भवदसम्भवदन्यतरवस्तुसम्बन्धस्य बिम्बप्रतिबिम्बत्वम् ) इति,तथोक्ता विच्छित्तिरलङ्कारस्तादृशी विच्छित्तिरेव तन्नामाऽलङ्कार इति यावत्। अयम्भावः-कयोश्चित्सम्बन्ध उपपद्यते, कयोश्चिच्च न; इति लोकस्थितिः। अथ कविर्यदि यत्रोपपद्यमानस्यानुपमानस्य वा कयोश्चित् वाक्यार्थयोः सम्बन्धिनः सम्बन्धस्य रूपप्रतिरूपत्वं व्यञ्जनया निदर्शयेत्, तर्हि सा ( वस्तुनोस्तयोः सादृश्यव्यञ्जिका विच्छित्तिः ) निदर्शनेत्युच्यते। इयं च द्विविधा, सम्भवद्वस्तुसम्बन्धा, असम्भवद्वस्तुसम्बन्धा च। ययोर्वस्तुनोश्च सम्बन्ध,उपात्तयोरेव स इति बोध्यम्। अत एव-रूपकातिशयोक्त्योर्व्यवच्छेदः। इति ॥ १०४ ॥'

क्रमादुदाहर्तुमिच्छुराह-तत्रेत्यादि। स्पष्टम्। 'अत्रास्मिन्। भूमिवलये। कः किंस्वरूपः किन्नामा वेति भावः। **जनान्** प्राणिनः। **मुधा** व्यर्थम्, विनाऽपराधप्रतिकारेच्छामिति यावत्। **तापयन्** सन्तापं नयन्। **सुचिरं** चिरकालम्। **सम्पदमभ्युदयम्**। **एति** प्राप्नोति न कोऽपि परमनपराधिनं सन्तापं प्रापयन् जनः सम्पन्नैश्वर्य्यो भवति इति भावः। **इति**। **दिनेन** दिनद्वारा। **वेदयन्** ज्ञापयन्। **भानुमान्** रश्मिमान् तेजस्वी ( सूर्यः ) इति यावत्। 'भानू रश्मिदिवाकरौ।' इत्यमरः। **तत** उदयाचलात्। **चरमाचलमस्ताचलम्**। **आससाद** प्राप। अत्र रथोद्धतावृत्तम्, 'रथोद्धता नौ लौ ग्।' इति च तल्लक्षणम् ॥' 'सूर्य्य उदयं प्राप्यात्यन्तं तेजसा तपन्नपि शनैः शनैः क्षीणतेजस्त्वं प्राप्नुवन् अस्ताचलं सर्वथा प्रापेत्यत्र बीजं निदर्शयति-यथाऽहं पान्थान् अनपराधिनः सन्तापये तथाऽन्योऽप्येवं कश्चित् सन्तापयिष्यति, स कियन्तमप्यभ्युदयं किमिति नेयात्, किन्तु यथा मम तेजसां धाम्नोऽपि ततोऽवश्यं भवति पतनम्, तथा सर्वस्याप्यन्यस्येति वाढं विभाव्यम्। इति बोधयति तांतां स्वीयां परिवर्त्यमानामवस्थां दर्शयन् सूर्य्य, इति कविः ॥ १६९ ॥'

स्फुटा चैवं निदर्शनेत्येव निर्दिशति-**अत्रो**दाहृते पद्य इत्यर्थः। **रवेः** सूर्य्यस्य। **ईदृशार्थवेदनक्रियायाम्** ईदृशः 'कोऽत्रे'त्यादिपादद्वयात्मकवाक्यतात्पर्य्यरूपोऽसावर्थस्तस्य वेदनं ज्ञापनं तदेव क्रिया तस्याम्। **वक्तृत्वेन**। **अन्वयः** सम्बन्धः। **सम्भवति**। **एव**। हेतुं निर्दिशति-**ईदृशार्थज्ञापनसमर्थचरमाचलप्राप्तिरूपकर्मवत्त्वात्** ईदृशार्थस्य पूर्वपादद्वयात्मकवाक्यतात्पर्य्यार्थस्य ज्ञापनं तत्र समर्था या चरमाचलप्राप्तिरस्ताचलेऽवस्थानं सैव रूपं यस्य तादृशं यत् कर्म तदस्यास्तीति तस्य ( तादृशस्य सूर्य्यस्य ) भावस्तत्त्वं तस्मात्। **स** ईदृशार्थवेदनक्रियायां वक्तृत्वेनान्वयः। **च**। **रवे** रविसम्बन्धिनः। **अस्ताचलगमनस्य**। **च** तथा। **परितापिनां** परितापकारिणां तत्सम्बन्धिन्या इति यावत्। **विपत्प्राप्तेः**। **बिम्बप्रतिबिम्बभावं** स्वरूपप्रतिरूपत्वं सादृश्यमिति यावत्। **बोधयति**। अयम्भावः-एति क्रियाप्रतिपाद्यस्य कार्य्यस्य तापनक्रियाप्रतिपाद्यं कारणमित्यनयोः सम्बन्धः। स चासादनक्रियया प्रतिपाद्यते; तदेवम्-सूर्य्यकर्तृकास्ताचलकर्मकासादनस्य जनकर्मकमृषातापनकर्तृकर्तृकसम्पत्कर्मकचिरकालावधिकालाभस्य च सादृश्यं वेदनक्रियया निदर्श्यते। इति।

असम्भवद्वस्तुनिदर्शनामुदाहर्तुकाम आह-**असम्भवदि**त्यादि। स्पष्टम्। '**अस्या** नायिकायाः। **कुटिलः**। **कटाक्षविक्षेपः**। **कुवलयमालाललितं** कुवलयानि नीलाम्बुजानि तेषां माला तस्या ललितं विलासस्तत्। 'लड' विलासे इत्यस्माद्भावे क्तः, डलयोरभेदाल्लेन निर्देशश्च। **अधरः**। **किसलयलीलां** किसलयं नवपत्रं तस्य लीला क्रीडा ताम्। अथ-**आननं** मुखम्। **कलानिधिविलासं** कलानिधिश्चन्द्रस्तस्य विलासस्तम्। **कलयति** रचयति। गीतिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १७० ॥'

अत्रान्यस्य धर्मं कथमन्यो वहत्विति कटाक्षविक्षेपादीनां कुवलयमालाऽऽदिगतललितादीनां कलनमसम्भवत्तल्ललितादिसदृशं ललितादिकमवगमयत् कटाक्षविक्षेपादेः कुवलयमालाऽऽदेश्च बिम्बप्रतिबिम्बभावं बोधयति। यथा वा--

'प्रयाणे तव राजेन्द्र! मुक्ता वैरिमृगीदृशाम्। राजहंसगतिः पद्भ्यामाननेन शशिद्युतिः॥ १७१॥'

अत्र पादाभ्यामसम्बद्धराजहंसगतेस्त्यागोऽनुपपन्न इति तयोस्तत्सम्बन्धः कल्प्यते, स चासम्भवन् राजहंसगतिमिव गतिं बोधयति। अनेकवाक्यगा यथा--

'इदं किलाव्याजमनोहरं वपुस्तपःक्लमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति॥ १७२॥'

अत्र यत्तच्छब्दनिर्दिष्टवाक्यार्थयोरभेदेनान्वयोऽनुपपद्यमानस्तादृशवपुषस्तपःक्लमत्वसाधनेच्छा नीलोत्पलपत्रधारया शमीलताछेदनेच्छेवेति बिम्बप्रतिबिम्बभावे पर्य्यवस्यति।

---

अत्र सम्बन्धासम्भवं दर्शयन् लक्षणं सङ्गमयते-अत्रेत्यादिना। स्पष्टम्।

उदाहरणान्तरं निर्दिशति-यथा वा-'हे राजेन्द्र! तव। प्रयाणे विजययात्रायां सत्याम्। वैरिमृगीदृशां वैरिणां या मृगीदृशस्तासाम्। पद्भ्यां चरणाभ्याम्। राजहंसगतिः। तथा-आननेन मुखेन। शशिद्युतिश्शशिनो द्युतिश्शोभा। मुक्ता परित्यक्ता। त्वामायान्तं श्रुत्वैव म्लानवदनाभिः शत्रुस्त्रीभिः सर्वं परित्यज्य पलायितमिति भावः॥ १७१॥'

उदाहृतमर्थं निर्दिशति-अत्रोदाहृते पद्ये। पादाभ्यां 'वैरिमृगीदृशा'मिति शेषः। असम्बद्धराजहंसगतेरसम्बद्धाऽनुपपन्ना परधर्मस्य परत्रासम्भवात् असौ राजहंसगतिस्तस्याः। त्यागः। अनुपपन्नो न युक्त्या सिद्धः। इति। तयोः पदयोः। तत्सम्बन्धस्तस्या राजहंसगतेः सम्बन्धः। कल्प्यते। सः वैरिमृगीदृशां पदयोः राजहंसस्य गतेः सम्बन्धः। च। असम्भवन्। राजहंसगतिम्। इव। गतिं 'वैरिमृगीदृशां पदयो'रिति शेषः। बोधयति। अयम्भावः-अन्यस्य धर्ममन्यः कथं वहतु इति वैरिमृगीदृशां पद्भ्यां राजहंसगतिर्वोढुमसम्भवन्ती तद्गतिसदृशीं गतिमवगमयति। पूर्वत्र ललितादेर्धर्मस्य कुवलयादेश्च धर्मिण औपम्यम्। अत्र तु गतेर्धर्मस्य, गतेर्धर्मस्य च; इत्यत एवेदमुदाहरणान्तरमिति बोध्यम्। एवम्- आननेन शशिद्युतेस्त्यागोऽनुपपन्न इति तयोस्तत्सम्बन्धः कल्प्यते, स चासम्भवन् शशिद्युतिमिव द्युतिं बोधयति। इत्यपि बोध्यम्।

द्वितीयामेनामुदाहरति-अनेकेत्यादिना। स्पष्टम्। 'किल (इदमरुचौ) 'किल सम्भाव्यवार्त्तयोः। हेत्वरुच्योरलीके चे'ति हैमः। अव्याजमनोहरमव्याजेन व्याजं कपटं (कृत्रिमताम्) विना मनोहरं रमणीयम्, स्वभावसुन्दरमिति भावः। इदम्। वपुः शरीरम् 'शकुन्तलाया' इति शेषः। यः। तपःक्लमं तपसा क्लमं दुःखानुभवपरम् इति तत्तथोक्तम्। क्लाम्यतीति क्लमम्। पचादित्वादच्। 'तपःक्षम'मिति पाठान्तरम्। साधयितुं सम्पादयितुम्। इच्छति। सः। ऋषिः (कण्वः)। नीलोत्पलपत्रधारया नीलं च यदुत्पलं कमलं तस्य पत्रं तस्य धाराऽग्रभागस्तया। ध्रुवं नूनम्। शमीलतां शमीवृक्षम्। कोमलत्वातिशयं दर्शयितुं लतात्वारोपेणाभिधानमिदम्। छेत्तुम्। व्यवस्यति उद्यतते कमलपत्रधारया शम्याश्छेदनं यथाऽसम्भवम्, तथाऽनेन वपुषा तपसे प्रवर्त्तनमित्यसम्भवन् वस्तुसम्बन्धः। तपस्विनीमिव वने शकुन्तलां निरीक्ष्य दुष्यन्तस्य 'असाधुदर्शी खलु भगवान् कण्व' इत्युक्तं समर्थयमानस्येयमुक्तिः। शाकुन्तलस्येदं पद्यम्। वंशस्थवृत्तम्, तल्लक्षणं चोक्तं प्राक्॥ १७२॥'

उदाहृतमर्थं निर्दिशति-अत्रोदाहृते पद्य इत्यर्थः। यत्तच्छब्दनिर्दिष्टवाक्यार्थयो 'स्तपःपरतासाधक-शमीलताछेदकरूपयोरुपमेयोपमानभूतयोर्लक्षितलक्षकविशेषयो'रिति शेषः। अभेदेन 'अभिन्नत्वा (एकत्वा) भावात्' इति शेषः। अन्वयः। अनुपपद्यमानः। तादृशवपुषः तादृशमव्याजमनोहरं यत् वपुस्तस्य। तपःक्लमत्वसाधनेच्छा। नीलोत्पलपत्रधारया। शमीलताछेदनेच्छा। इव। इति। बिम्बप्रतिबिम्बभावे। पर्य्यवस्यति। इदं तु बोध्यम्-यत्तद्वाक्यार्थयोरनेकत्वात् अनेकवाक्यार्थगतत्वमेतस्याः। इति।

---

१ तपः क्लमसाधनताऽनौचित्ये केवलस्य सुन्दरत्वस्यासम्भवादव्याजेत्युपादानम्, तेन कोमलताया अप्युपादानं बोध्यम्। २ नीलविशेषणं त्वपुष्टार्थमेवेति विभाव्यम्।

यथा वा—

'जन्मेदं वन्ध्यतां नीतं भवभोगोपलिप्सया। काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया॥ १७३॥'

अत्र भवभोगलोभेन जन्मनो व्यर्थताऽऽनयनं काचमूल्येन चिन्तामणिविक्रय इवेति पर्य्यवसानम्। एवम्—

'क्व सूर्य्यप्रभवो वंशः क्व चाल्पविषया मतिः। तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्॥१७४॥'

अत्र मन्मत्या सूर्य्यवंशवर्णनमुडुपेन सागरतरणमिवेति पर्य्यवसानम्। इयं च क्वचिदुपमेयवृत्तस्योपमानेऽसम्भवेऽपि भवति। यथा—

'योऽनुभूतः कुरङ्गाक्ष्यास्तस्या मधुरिमाधरे। समास्वादि स मृद्वीकारसे रसविशारदैः॥१७५॥'

अत्र प्रकृतस्याधरस्य मधुरिमधर्मस्य द्राक्षारसेऽसम्भवात् पूर्ववत्साम्ये पर्य्यवसानम्। मालारूपाऽप्येषा, यथा मम—

'क्षिपसि शुकं वृषदंशकवदने मृगमर्पयसि मृगादनरदने।
वितरसि तुरगं महिषविषाणे निदधच्चेतो भोगविताने॥ १७६॥'

---

प्रकारान्तरेणोदाहर्तुमाह—यथा। वा —'इदम्। जन्म। भवभोगोपलिप्सया भवः संसारस्तस्य भोगस्तस्य उपलिप्सा लम्पटता तया। वन्ध्यतां निष्फलताम्। नीतम्। हन्त। मया तथा जन्म वन्ध्यतां नीतवतेति भावः। काचमूल्येन। चिन्तामणिस्तदाख्यं मनोरथपूरकं रत्नम्। हन्त कष्टम्। विक्रीतः। वीतरागस्येयमुक्तिः॥१७३॥'

उदाहृतमर्थं निर्दिशति—अत्रेत्यादिना। स्पष्टम्। इदं तु बोध्यम्—पूर्वत्र यद्वाक्यार्थस्य तद्वाक्यार्थस्य च सत्त्वेनानेकवाक्यगतत्वम्, अत्र पुनर्यत्तदोरभावेऽपि पूर्वार्धोत्तरार्द्धयोर्वाक्ययोरेवानैक्यम्। इति।

प्रसिद्धोदाहरणमपि स्मारयति—एवम्—'सूर्य्यप्रभवः सूर्य्यः प्रभव उत्पत्तिस्थानं यस्य तादृशः। वंशः। क्व ? अल्पविषयाऽल्पो विषयो ज्ञेयोऽर्थो यस्याः सा। मतिर्बुद्धिः। च। क्व ? (क्वशब्दद्वयमिदं महदन्तरसूचकम्)। दुस्तरम्। सागरम्। मोहात् अज्ञानात्। उडुपेन चर्मावनद्धवंशपात्रेण 'चर्मावनद्धमुडुपं प्लवः काष्ठकरण्डवत्।' इति सज्जनः। तितीर्षुस्तरितुमिच्छुः। अस्मि। रघुवंशस्येदं पद्यम्, स्वौद्धत्यमपहर्तुकामस्य कालिदासस्येयमुक्तिः॥ १७४॥'

उदाहृतमर्थं निर्दिशति—अत्रेत्यादिना। स्पष्टम्। इदं तत्त्वम्—सूर्य्यप्रभवस्यास्य रघुवंशस्यातिविस्तृततया सर्वथा गणनमपि न सम्भवति, तत्पुनः तस्य मदीययाऽनया सुकुमारया बुद्ध्या वर्णनं नितान्तमसम्भवम्; इत्येवं प्रस्तुत्य 'तितीर्षु'रित्यादि प्रस्तुतम्, अनयोश्च परस्परमसम्बद्धत्वमेव उडुपेन सागरतरणमिव मदीयया बुद्ध्या सूर्य्यप्रभव (रघु) वंशवर्णनमसम्भवमिति बिम्बप्रतिबिम्बत्वं कल्पयति। इति।

एवं प्राचां निदेशानुसारं भेदद्वयमुदाहृत्य नव्यसिद्धान्तेन भेदान्तरमुदाहर्तुकामस्तावदाह—इयं निदर्शना। च। क्वचित्। उपमेयवृत्तस्योपमेयस्य वृत्तं धर्मस्तस्य। उपमाने। असम्भवे। अपि। भवति सम्भवति। यथा—'तस्याः। कुरङ्गाक्ष्या मृगलोचनायाः कान्तायाः। अधरे। यः। मधुरिमा माधुर्य्यम्। अनुभूतः। स 'मधुरिमे'ति शेषः। रसविशारदै रसे आस्वादने विशारदाश्चतुरास्तैः, रसमर्मज्ञैरिति भावः। मृद्वीकारसे मृद्वीकाया द्राक्षाया रसस्तत्र। 'मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च।' इत्यमरः। समास्वादि॥ १७५॥'

उदाहृतमर्थं सूचयति—अत्र। प्रकृतस्योपमेयस्य। अधरस्य 'तत्सम्बन्धिन' इति शेषः। मधुरिमधर्मस्य। द्राक्षारसे'ऽप्रस्तुते (उपमाने)' इति शेषः। असम्भवात्। पूर्ववत् पूर्वमुदाहृते पद्य इव। साम्ये बिम्बप्रतिबिम्बत्वकल्पने। पर्य्यवसानम्। इदं तत्त्वम्—अधरद्राक्षामधुरिम्णोर्भिन्नत्वेनाधरमधुरिम्णो द्राक्षारसमधुरिमरूपेणासम्भवेऽपि रसानुभवितृसूचितरीत्या सम्भवसूचनमसम्बद्धं माभूदित्यनयोः साम्यं कल्पयति। इति।

उपमेयवृत्तस्यैव तूपमेयेऽसम्भवे नेयं, किं तूपमैव; यथा—'मुखं ते चन्द्रमःस्पर्धि पङ्कजद्वेषि लोचनम्॥' इति। अत्र हि स्पर्द्धाद्वेषयोश्चेतनविशेषधर्मत्वान्मुखलोचनयोरसम्भवादुपमायां पर्य्यवसानम्।

भेदान्तरं दर्शयितुं प्रवृत्त आह—एषा। मालारूपा। अपि 'इय'मिति शेषः। यथा। मम—भोगविताने भोगानां विषयाणां वितानं विस्तारस्तत्र। चेतः। निदधत्। 'त्व'मिति शेषः। शुकं तदाख्यं पक्षिणम्। वृषदंशक-

इह बिम्बप्रतिबिम्बताऽऽक्षेपं विना वाक्यार्थापर्य्यवसानम्, दृष्टान्ते तु पर्य्यवसितेन वाक्यार्थेन सामर्थ्यात् बिम्बप्रतिबिम्बताप्रत्यायनम्। नापीयमर्थापत्तिः, तत्र 'हारोऽयं हरिणाक्षीणाम्-' इत्यादौ सादृश्यपर्य्यवसानाभावात्।

१३३ आधिक्यमुपमेयस्योपमानान्न्यूनताऽथवा ॥ १०५ ॥

व्यतिरेकः

स च--

१३४ एक उक्तेऽनुक्ते हेतौ पुनस्त्रिधा।

चतुर्विधोऽपि साम्यस्य बोधनाच्छब्दतोऽर्थतः ॥ १०६ ॥

---

वदने वृषदंशकस्य बिडालस्य वदनं मुखं तत्र। 'वृषदंशक आखुभुक्।' इत्यमरः। क्षिपसि। मृगादनरदने मृगादनस्य मृगभक्षकस्य तरक्षो रदनं तत्र। 'तरक्षुस्तु मृगादनः।' इत्यमरः। मृगम्। अर्पयसि। महिषविषाणे महिषशृङ्गे। तुरगम्। वितरसि। कस्यापि महतः शिष्यं संसारत उपरमयितुमिच्छोरुक्तिरियम्। पज्झटिकावृत्तम्, 'प्रतिपदयमकितषोडशमात्रा नवमगुरुत्वविभूषितगात्रा। पज्झटिकाया एष विवेकः क्वापि न मध्यगुरुर्गण एकः ॥' इति च तल्लक्षणम् ॥ १७६ ॥'

उदाहृते निदर्शनां निरूपयति-इहोदाहृते पद्ये। बिम्बप्रतिबिम्बताऽऽक्षेपं बिम्बं प्रकृतमुपमेयं भोगेषु चित्तनिधानरूपम्, प्रतिबिम्बमप्रकृतमुपमानं मृगादनवदनादिषु शुकक्षेपादिरूपं च तयोर्भावस्तत्ता तस्या आक्षेपः कल्पनयाऽङ्गीकारस्तम्। विना। वाक्यार्थापर्य्यवसानं वाक्यार्थस्योदाहृतपद्यरूपवाक्यतात्पर्य्यस्यापर्य्यवसानं सम्बन्धोपपत्त्याऽसिद्धान्तः। 'अतो निदर्शनेय'मिति शेषः। यत्रयत्र बिम्बप्रतिबिम्बभावस्य सत्यां कल्पनायामेव वाक्यार्थः सङ्गच्छते तत्रैव निदर्शनायाः स्वीकारादिति तत्त्वम्। ननु प्रकृताप्रकृतयोर्बिम्बप्रतिबिम्बत्वेन दृष्टान्त एवायं किन्न स्यादित्याशङ्क्याह-दृष्टान्ते। तु। पर्य्यवसितेन समुपपन्नसम्बन्धतयाऽभिमतेन। वाक्यार्थेन तदभिन्नादिति यावत्। अभेदे तृतीयेयम्। सामर्थ्यात्। बिम्बप्रतिबिम्बताप्रत्यायनं सादृश्यस्य ज्ञापनम्। तथा च-यत्र प्रकृताप्रकृतयोर्बिम्बप्रतिबिम्बत्वमाक्षिप्यैव वाक्यार्थोपपत्तिः सा निदर्शना, यत्र पुनर्वाक्यार्थोपपत्त्यनन्तरमेव प्रकृताप्रकृतयोर्बिम्बप्रतिबिम्बत्वोपपत्तिः स दृष्टान्त इत्यनयोर्भेदात्, प्रकृते च दृष्टान्तलक्षणासम्भवात् एतल्लक्षणसम्भवाच्च निदर्शनैवेति निष्कृष्टोऽर्थः। नन्वेवं दण्डापूपन्यायेन अर्थापत्तिरेव स्वीक्रियतामित्याशङ्क्याह-इयं निदर्शना। अर्थापत्तिः। अपि। न। हेतुं निर्दिशति-तत्र तस्यामर्थापत्तावित्यर्थः। 'हारोऽयं हरिणाक्षीणाम्'इत्यादौ। आदिपदेन 'लुठति स्तनमण्डले। मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः ॥' इति ग्रहणम्। सादृश्यपर्य्यवसानाभावात्। अत्र च सादृश्यपर्य्यवसानमिति निदर्शनैवेयम्, इति सिद्धम्। अथ-अत्रैकस्य प्रकृतस्यानेकेषां प्रकृतानामन्वयित्वेन मालारूपात्वमित्यपि बोध्यम्।

व्यतिरेकं लक्षयति-१३३ उपमानात् उपमानापेक्षया। उपमानं चात्र प्रसिद्धमेव ग्राह्यम्। उपमेयस्य आधिक्यम्। अथवा। न्यूनता न्यूनत्वम्। व्यतिरेकः। व्यतिरेचनं व्यतिरिक्तत्वेन भवनम् इति व्यतिरेकः, प्रकृते च उपमानात् उपमेयस्य, उपमेयाद्वोपमानस्य, सोऽपि आधिक्यकृतो न्यूनत्वकृतश्च, तत्र-यत्र उपमानादुपमेयस्याधिक्ये व्यतिरेकस्तत्रोपमेयापेक्षयोपमानस्य न्यूनत्वम्, यत्रोपमानादुपमेयस्य न्यूनत्वे व्यतिरेकस्तत्र उपमेयापेक्षयोपमानस्याधिक्यम्, इति लाघवात्सूक्तम्-आधिक्यमित्यादि। उत्कर्षापकर्षभावश्च न रूपके, न चोपमायां,नापि परिणामादाविति विभाव्यम् ॥ १०५ ॥

अस्य प्रभेदान्निर्दिशति-स व्यतिरेकः। च। १३४ हेतौ उपमानादुपमेयस्योपमेयाद्वोपमानस्योत्कर्षसाधके। उक्ते। एक एकविधः। अनुक्ते। पुनः। त्रिधा, उपमेयाधिक्ये तस्योपमेयमात्रोत्कर्षसाधकत्वेनोपमानमात्रापकर्षसाधकत्वेनोपमेयोत्कर्षपूर्वकोपमानापकर्षसाधकत्वेन च;उपमानाधिक्ये पुनरुपमानमात्रोत्कर्षसाधकत्वेनोपमेयमात्रसाधकत्वेनोपमानोत्कर्षपूर्वकोपमेयापकर्षसाधकत्वेन च; त्रिविधत्वात्। इत्येवम्-चतुर्विधः। अपि। शब्दतः शब्दात्। अर्थतोऽर्थात्।

आक्षेपाच्च द्वादशधा श्लेषेऽपीति त्रिरष्टधा।
प्रत्येकं स्यान्मिलित्वाऽष्टचत्वारिंशद्विधः पुनः ॥ १०७॥

उपमेयस्योपमानादाधिक्ये हेतुरुपमेयगतमुत्कर्षकारणमुपमानगतं निकर्षकारणं च। तयोर्द्वयोरप्युक्तावेकः प्रत्येकं समुदायेन वा अनुक्तौ त्रिविधः, इति चतुर्विधेऽप्यस्मिन्नुपमानोपमेयस्य निवेदनं शब्देनाक्षेपेण चेति द्वादशप्रकारोऽपि श्लेषे'ऽपि'शब्दादश्लेषेऽपीति चतुर्विंशतिप्रकारः। उपमानान्न्यूनतायामप्यनयैव भङ्ग्या चतुर्विंशतिप्रकारतेति मिलित्वा अष्टचत्वारिंशत्प्रकारो व्यतिरेकः। उदाहरणम्—

'अकलङ्कं मुखं तस्या न कलङ्की विधुर्यथा।'

अत्रोपमेयगतमकलङ्कत्वमुपमानगतं च कलङ्कित्वं हेतुद्वयमप्युक्तम्। यथाशब्दप्रतिपादनाच्च शाब्दमौपम्यम्। अत्रैव 'न कलङ्कि विधूपमम्।' इति पाठे आर्थम्, 'जयतीन्दुं कलङ्किनम्।' इति पाठे तु इववत्तुल्यादिपदविरहादाक्षिप्तम्। अत्रैवाकलङ्कपदत्यागे उपमेयगतोत्कर्षकारणानुक्तिः, कलङ्किपदत्यागे च उपमानगतनिकर्षकारणानुक्तिः, द्वयोरनुक्तौ द्वयोरनुक्तिः। श्लेषे यथा— 'अतिगाढगुणायाश्च नाब्जवद्भङ्गुरा गुणाः।'

---

आक्षेपात्। च। साम्यस्य। बोधनात्। साम्यबोधकस्य शब्दार्थाक्षेपत्रैविध्येन त्रैविध्यादिति भावः। द्वादशधा। एष च—श्लेषे श्लेषसद्भावे। अपि 'श्लेषाभावे तु भवत्येवे'ति शेषः। इति एवं द्विविधः सन्नित्यर्थः। त्रिः त्रिवारं कृत्वा। अष्टधा। चतुर्विंशतिधा भवतीति निष्कर्षः। प्रत्येकं व्यतिरेकस्य भेदयोरेकैकमपेक्ष्येति भावः। पुनः। 'चतुर्विंशतिविधत्वात्'इति शेषः। मिलित्वा चतुर्विंशतिविधानामुपमेयाधिक्यनिबन्धनव्यतिरेकाणां, तावतामेवोपमानाधिक्यनिबन्धनव्यतिरेकाणां चैकत्र व्यतिरेकाभिन्नत्वेनाकलनादिति भावः। अष्टचत्वारिंशद्विधः। 'व्यतिरेक' इत्यनुक्रमप्राप्तः। स्यात्॥ १०६॥ १०७॥

कारिकाऽर्थं विवृणोति—उपमेयस्येत्यादिना। स्पष्टम्।

उदाहर्तुमाह—उदाहरणमिति। 'दिङ्मात्रं यथे'ति शेषः। 'तस्या नायिकायाः'। मुखम्। अकलङ्कं कलङ्क (मालिन्यांश) शून्यम्। विधुः। यथा। कलङ्की। तथा—न। 'अकठोरा तनू तन्व्या नामृद्वी हेममूर्तिवत्।' इति शेषः॥'

अनेकान् भेदानत्रैव निर्देष्टुमाह—अत्रोदाहृते पद्यांशे इति भावः। उपमेयगतं मुखनिष्ठम्। अकलङ्कत्वम्। उपमानगतं चन्द्रनिष्ठम्। च। कलङ्कित्वम्। इति—हेतुद्वयम्। अपि। उक्तम्। इत्यसावुपमेयाधिक्य उक्तहेतुको व्यतिरेक इति बोध्यम्। यथाशब्दप्रतिपादनात् 'साम्यस्ये'ति शेषः। च। शाब्दम्। औपम्यम्। अयं च श्लेषमन्तरैवेत्यूह्यम्। अत्रोदाहृतपद्यांशे। एव। 'विधूपमं विधुरिव। कलङ्कि। न।' इति। पाठे। 'परिवृत्त'इति शेषः। आर्थम्। 'साम्य'मिति शेषः। 'कलङ्किनम्। इन्दुम्। जयति।' इति। पाठे। तु। इववत्तुल्यादिपदविरहात्। आक्षिप्तम्। 'साम्य'मिति शेषः। अथ—अत्र। एव। अकलङ्कपदत्यागे। 'किन्तु—'ललनाया मुखं तस्या'इति पाठे'इति शेषः। उपमेयगतोत्कर्षकारणानुक्तिः। कलङ्किपदत्यागे। च। न विभाति विधुर्यथा' इति पाठे पुनः इति भावः। उपमानगतनिकर्षकारणानुक्तिरुपमानगतो विधुनिष्ठो यो निकर्षोऽपकर्षस्तस्य कारणं (कलङ्कित्वं) तस्यानुक्तिरिति तथोक्ता। द्वयोरुपमेयगतोत्कर्षकारणस्याकलङ्कित्वस्योपमानगतापकर्षकारणस्य कलङ्कित्वस्य चेत्यर्थः। अनुक्तौ। द्वयोः 'पुन'रिति शेषः। अनुक्तिः। 'यथा— 'रमणीयं मुखं तस्या न विभाति विधुर्यथा।' इत्यत्रे'ति शेषः। श्लेषे। 'सती'ति शेषः। यथा व्यतिरेकः इति शेषः। 'अतिगाढगुणाया अत्यन्तं गाढा दृढा गुणा अनुरागादयो धर्मा यस्यास्तथाभूतायाः। 'तस्या' इति शेषः। च। अब्जवदब्जं कमलं तस्येव। 'अब्जं पद्मे विधावब्ज' इति गोपालः। 'तत्र तस्येव।' ५।१।११६ इति वतिः। भङ्गुराः क्षयशीलाः। गुणा अनुरागादयस्तन्तुविशेषा वा। न। 'वामाया

अत्रेवार्थे वतिरिति शाब्दमौपम्यम्, उत्कर्षनिकर्षकारणयोर्द्वयोरप्युक्तिः। गुणशब्दः श्लिष्टः। अन्ये भेदाः पूर्ववदूह्याः। एतानि चोपमेयस्योपमानादाधिक्य उदाहरणानि। न्यूनत्वे दिङ्मात्रं यथा—

'क्षीणःक्षीणोऽपि शशी भूयोभूयोऽभिवर्धते सत्यम्।
विरम प्रसीद सुन्दरि! यौवनमनिवर्ति यातं तु ॥ १७७ ॥'

अत्रोपमेयभूतयौवनास्थैर्यस्याधिक्यम्। तेनात्र 'उपमानादुपमेयस्याधिक्ये विपर्य्यये वा व्यतिरेक'इति केषाञ्चिल्लक्षणे 'विपर्य्यये वे'तिपदमनर्थक'मिति यत् केचिदाहुः, तन्न विचारसहम्। तथा हि-अत्राधिकन्यूनत्वे सत्त्वासत्त्वे एव विवक्षिते। अत्र च चन्द्रापेक्षया यौवनस्यासत्त्वं स्फुटमेव। अस्तु वा, अत्रोदाहरणे यथाकथञ्चिद्गतिः, किन्तु—

'हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूतपथः सितीकृतः ॥'

इत्यादिषु का गतिरिति सुष्ठूक्तं 'न्यूनताऽथवा'इति।

---

भ्रुकुटी वामे नावामे मधुपालिवत्।' इति तत्पूर्वार्द्धम् ॥' अत्र। इवार्थे। वतिः। इति। शाब्दम्। औपम्यम्। उत्कर्षनिकर्षकारणयोः। द्वयोः। अपि। उक्तिः। तथाऽत्र—गुणशब्दः। श्लिष्टः। अथ—अन्ये हेत्वनुक्तिनिबन्धनास्त्रय इति भावः। भेदाः। पूर्ववत्। ऊह्याः। ते हि क्रमेण यथा—'कुरङ्गायतनेत्राया नाञ्जवद्भङ्गुरा गुणाः' इति, 'अतिगाढगुणायाश्च नाञ्जवत्सुमते! गुणाः।' इति, 'कुरङ्गायतनेत्रायास्तन्वङ्गया नाञ्जवद्गुणाः।'इति च।

एवमुदाहृत्य कस्यैतान्युदाहरणानीति बोधसौकर्य्यायाह—एतानि। उदाहरणानि। च। उपमेयस्य। उपमानात्। आधिक्ये 'ऊह्यानी'ति शेषः।

उपमेयादुपमानाधिक्यमुदाहर्त्तुं प्रवृत्त आह—न्यूनत्वे 'उपमेयस्योपमाना'दिति शेषः। उपमानादुपमेयन्यूनत्वमुपमेयादुपमानस्याधिक्यं तस्मिन् सति व्यतिरेक इति भावः। दिङ्मात्रम्। यथा—

'क्षीणःक्षीणोऽत्यन्तं कृशः। अपि। शशी चन्द्रः। भूयोभूयः पुनःपुनः। अभिवर्द्धते। इति—सत्यम्। हे सुन्दरि! मानात्—विरम। प्रसीद। यातं गतम्। यौवनम्। तु पुनः। अनिवर्त्ति न प्रत्यागन्तृ। रुद्रटालङ्कारस्येदं पद्यम्। अत्रार्य्याछन्दः ॥ १७७ ॥'

सङ्गमयति। अत्रोदाहृते पद्ये। उपमेयभूतयौवनास्थैर्य्यस्योपमेयभूतं यद् यौवनं तस्यास्थैर्य्यमुपमानभूतचन्द्रापेक्षया न्यूनत्वावसायि चाञ्चल्यं तस्य। आधिक्यमतिशयः। अयम्भावः—चन्द्रस्योपमानभूतस्यास्थैर्य्यरूपदोषन्यूनत्वेनोत्कृष्टत्वम्, यौवनस्योपमेयभूतस्यास्थैर्य्यरूपदोशाधिक्येनापकृष्टत्वम्; अत एवात्र व्यतिरेक उपमानाधिक्यनिबन्धनः। इति।

अस्यानुषङ्गिकमपि फलं दर्शयति—अत्र। तेनोपमानाधिक्येन (उपमेयन्यूनत्वेन च)। 'उपमानात्। उपमेयस्य। आधिक्ये उत्कर्षे। विपर्य्ययेऽनाधिक्येऽनुत्कर्षे इति यावत्। वा। व्यतिरेकः।' इति। केषाञ्चिदलङ्कारसर्वस्वकारादीनाम्। लक्षणे व्यतिरेकलक्षणे। 'विपर्य्ययेऽनाधिक्ये। वा, इतिपदम्। अनर्थकमनुपयुक्तम् 'उपमानाधिक्ये (उपमेयन्यूनत्वे) व्यतिरेकस्यैवास्वीकारा'दिति शेषः।' इति। यत् (कर्म)। केचित् प्रकाशकारानुबन्धिन इति भावः। आहुः। तत्। न। विचारसहम्। तथाहि 'उपपाद्यते'इति शेषः। अत्र। अधिकन्यूनत्वे 'उपमानोपमेययो'रिति शेषः। सत्त्वासत्त्वे स्थैर्य्यास्थैर्य्ये। एव। विवक्षिते। अत्र। च पुनः। चन्द्रापेक्षयोपमानापेक्षया। यौवनस्योपमेयस्य। असत्त्वमस्थैर्य्यम्। स्फुटम्। एव 'अत उपमेयस्य न्यूनत्वमुपमानस्याधिक्यमिति भावः। ननु आधिक्यमात्रस्य व्यतिरेकानुबन्धित्वं स्वीकृत्य यौवनास्थैर्य्याधिक्यस्यैवोपमेयाधिक्यं स्वीक्रियतां को दोषः? इत्याशङ्क्याह—अस्तु। वा। अत्र। उदाहरणे। यथाकथञ्चित्। गतिर्निर्वाह उपमेयाधिक्यस्वीकारः। किन्तु।—'हनूमदाद्यैर्हनुमत्प्रभृतिभिः। यशसा स्वस्वामिनो यथाऽभिमतार्थानुष्ठानजन्यया प्रशंसया। दूतपथो दूतमार्गः। सितीकृत उज्ज्वलीकृतः। मया। पुनः। द्विषां शत्रूणाम्।, हसैर्हास्यैः। 'नतु यशसे'तिशेषः। सितीकृत इति पूर्वतोऽन्वेति।'स्वनाम यन्नाम सुधाभ्यधामहो महेन्द्रकार्य्यं महदेतदुज्झितम्।'इति तत्पूर्वार्द्धम्। दमयन्तीं प्रति दौत्येन प्रेषितस्य दौत्येऽकृतार्थत्वेन विषण्णस्य नलस्योक्तिरियम्। वंशस्थं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥' इत्यादिषु। का। गतिः 'न काऽपि गति'रिति भावः। इति। सुष्ठु। उक्तम् 'विपर्य्यये वा। इति परिष्कुर्वद्भिरस्माभि'रिति शेषः। 'न्यूनताऽथवा' इति। विवृतिकाराः प्राहुः—'अत्र प्रभुप्रयोजननिष्पादकत्वेन हनूमदादे

१३५ सहार्थस्य वलादेकं यत्र स्याद्वाचकं द्वयोः ।
सा सहोक्तिर्मूलभूताऽतिशयोक्तिर्यदा भवेत् ॥ १०८ ॥

अतिशयोक्तिरप्यत्राभेदाध्यवसायमूला, कार्यकारणपौर्वापर्य्यविपर्य्ययरूपा च; अभेदाध्यवसायमूलाऽपि श्लेषभित्तिका, अन्यथा च । क्रमेणोदाहरणम्—

'सहाधरदलेनास्या यौवने रागभाक् प्रियः ।'

---

रुपमानस्योत्कृष्टत्वम्, तद्व्यतिरेकेणोपमेयस्य नलस्यापकृष्टत्वं च प्रतीयते । अत्र दूतयोरुपमानोपमेयभावविलक्षणत्वेऽप्युपमानस्यैवाधिक्यम्, नतूपमेयस्य ।' इति ।

अयं पर्य्यालोकः—'क्षीणःक्षीणोऽपी'ति पद्यमुपमानाधिक्यव्यतिरेकानुगृहीतमित्यलङ्कारसर्वस्वकाराणां सिद्धान्तः, एते हि—शशिनः क्षैण्येऽपि पुनर्वृद्धिरित्यस्योपमानस्योत्कर्षः, यौवनस्य क्षैण्येऽसत्त्वमेव, किं पुनस्तस्योत्थानम्; इत्यस्योपमेयस्यापकर्षः । एवं सत्युपमानापेक्षयोपमेयन्यूनत्वमुपमेयापेक्षयोपमानाधिक्यं चेति तद्रूपोऽत्र व्यतिरेकः । इत्याहुः । प्रकाशानुयायिनां पुनः—उपमेयादुपमानाधिक्यरूपो व्यतिरेक एव न, का पुनस्तत्सत्त्वासत्त्वचर्चा ? 'क्षीणः क्षीणोपी' त्यपि पद्यमुपमेयाधिक्यव्यतिरेकानुगृहीतमेवेति सिद्धान्तः, एते हि—अत्र न शश्युपमानभूतः, न वा यौवनमुपमेयभूतम्, उभयोः सादृश्यस्यैवाविवक्षितत्वात् । किन्तु तवतदोः क्षीणत्वे उपमानोपमेयभूते, शशिक्षीणत्वस्योपमानत्वेन यौवनक्षीणत्वस्योपमेयत्वेन च विवक्षितत्वात् । एवं यौवनक्षीणत्वस्यापुनरावर्त्तनशीलतयाऽऽधिक्यं, शशिक्षीणत्वस्य पुनर्निवर्त्तनीयतया न्यूनत्वम् । इत्युपमेयस्यैवोपमानापेक्षयाऽऽधिक्यम् । इत्याहुः । क्षीणत्वं दोषस्तस्याधिक्यमपकर्षावहत्वेन स्वानुगृहीतस्य न्यूनत्वकृते एवेत्युपमेयस्य यौवनस्य न्यूनत्वम्, नचात्र यौवनमुपमेयभूतमेव नेति वाच्यम्, क्षीणत्वस्य यौवनसम्बन्धित्वेन पृथङ्निर्देशाभावात्, क्षीणत्वशालितयैव यौवनस्य च निर्देशात् । अत्रैवापित्वोरप्यानुकूल्यम् । इति कविराजानुसारेण आहुः । वयं तु ब्रूमः—अस्तु वा तत्र सर्वत्रानैकान्त्यम्, किं तु—'असौरभं मुखं तस्या नाब्जवत् सुरभि श्रितम् ।' 'सुचारुरूपं वदनं मृगीदृशां सुधानिधित्वेन कलाऽब्धिरभ्यभूत्।कुचौ सुवर्णावपि नामलाननौ सुवर्णकुम्भाविव हन्त सर्वतः॥' 'सुरम्यमपि ते वक्त्रं चन्द्रश्चन्द्रः सुविश्रुतः ।' इत्यादौ न कथमपि सहृदयेतरेणोपमेयाधिक्यमभिधातुं शक्यते । इत्युपमेयमात्राधिक्येऽस्य स्वीकारः सर्वथाऽऽग्रहमूलः । इति दिक् ।

सहोक्तिं लक्षयति—१३५ **यत्र । सहार्थस्य** सहार्थकस्य शब्दस्य सह समं साधं साकमित्याद्यन्यतमस्य पदस्येति यावत् । **वलात्** सामर्थ्यात् । **एकं** 'पद'मिति शेषः । **द्वयो**'रर्थयो'रिति शेषः । **वाचकं** लक्षणया बोधकम् । तेन—एकस्यार्थस्य वाचकम् अपरस्यार्थस्याक्षेपकमिति फलितोऽर्थः ।यद्वा—एकं 'वस्तु'इति शेषः, द्वयोः प्रधानाप्रधानयोः, वाचकं लक्षणयाऽनुबन्धि । अन्यत्पूर्ववत् । इत्यर्थः । **स्यात् । सा । यदा मूलभूतातिशयोक्तिर्मूलभूता** विच्छित्तिविशेषाधायकतयोपस्कारिकातिशयोक्तिर्यस्यास्तादृशी । तदा—**सहोक्तिः** । 'अलङ्कृतिरिति व्यपदिश्यत'इति शेषः । **भवेत् ॥ १०८ ॥**

अस्या उपस्कारिकामतिशयोक्तिं विशिष्य निर्दिशति—**अतीत्यादिना** । स्पष्टम् । अत एवोक्तं पण्डितराजैः—'गुणप्रधानभावावच्छिन्नसम्बन्धः सहोक्तिः ।' इति सूत्रयित्वा 'हृद्यत्वं चालङ्कारसामान्यलक्षणगतं सकलालङ्कारसाधारणमेवेत्यसकृदुक्तम् । तच्चात्र—'कार्य्यकारणपौर्वापर्य्यविपर्य्ययात्मिकया श्लेषभित्तिकाभेदाध्यवसानात्मिकया केवलाभेदाध्यवसानात्मिकया चातिशयोक्त्याऽनुप्राणने भवतीति वदन्ती'ति । एवं च—अत्रातिशयोक्तिमूलक एव चमत्कार इति सूचितम् । अत्रेदं तत्त्वम्—'सहयुक्तेऽप्रधाने ।' २।३।१९ इति सूत्रेण यत्र तृतीया विधीयते, यत्र वा'वृद्धो यूना...।' १।२।६५ इति निर्देशात् तत्रास्य सम्भवः, गुणप्रधानभावावच्छिन्नयोः शाब्दार्थमर्य्यादयैकधर्माभिसम्बन्धस्य तत्रैवावस्थितेः । एतेन—'शशिना च निशा निशया च शशी शशिना निशया च विभाति नभः । पयसा कमलं कमलेन पयः पयसा कमलेन विभाति सरः ॥ मणिना वलयं वलयेन मणिर्मणिना वलयेन विभाति करः । भवता च सभा सभया च भवान् भवता सभया च विभाति गृहम् ॥' इत्यादौ नायं । तेन तृतीयाया अनुपपत्तेः, 'हेतौ' । २।३।२३ इति सूत्रेण उपपत्तेः । 'पुत्रेण सहागतः पिता'इत्यादौ पुनश्चमत्काराधायिकाया अतिशयोक्तेरभावान्नायम् । 'चैत्रमैत्रौ सह गच्छतः' इत्यादौ अपि नायम्, सहार्थसामर्थ्याभावेऽपि उभयान्वयित्वोपपत्तेः । इति दिक् ।

उदाहरति—**क्रमेणेत्यादिना** । स्पष्टम् । '**सहेत्यादि** । व्याख्यातपूर्वमिदम् ॥'

अत्र रागपदे श्लेषः।

'सह कुमुदकदम्बैः काममुल्लासयन्तः सह घनतिमिरौघैर्धैर्यमुत्सारयन्तः।
सह सरसिजषण्डैः स्वान्तमामीलयन्तः प्रतिदिशममृतांशोरंशवः सञ्चरन्ति ॥ १७८॥'

इदम्मम। अत्रोल्लासादीनां सम्बन्धिभेदादेव भेदः, नतु श्लिष्टतया।

---

उदाहार्यं दर्शयति-अत्रेत्यादिना। स्पष्टम्।

इदं तु बोध्यम्-'सहाधरदलेनास्या यौवने रागभाक् प्रियः। कान्तायाश्चोन्नतो जातः स्तनद्वन्द्वेन दर्पकः ॥' इत्यत्र पूर्वार्द्धे सहयोगे परत्र सहार्थे तृतीया। 'रागभाक्' 'उन्नत'इति ( पदं वस्तु वा ) च अधरप्रिययोः स्तनद्वन्द्वकामदेवयोश्चान्वयिरागभजनोन्नमनबोधकम्। तथा च-अधरदलप्रतियोगिकसाहित्यशाली प्रियः स्तनद्वन्द्वप्रतियोगिकसाहित्यशाली कन्दर्पश्च क्रमेण 'रागभाक्' 'उन्नत'इति शाब्दबोधः। अथ-अधरदलवृत्तिरागभजनसमानकालभवसमानकालभवरागभजनवान् प्रिय इति, स्तनद्वन्द्ववृत्त्युन्नमनसमानकालभवसमानकालभवोन्नतिमान् कन्दर्प इति च मानसो बोधः। अत्र तृतीयाऽन्तस्य विशेषणतयाऽप्रधानत्वम्, प्रथमान्तस्य विशेष्यतया च प्रधानत्वम्। एवं च प्रथमान्ते रागभजनोन्नमनयोः शाब्दः, तृतीयान्ते सहार्थसामर्थ्यादार्थः। एवं पुरस्तादन्यत्र च। रागशब्दः श्लिष्टः, तेन-प्रेमलौहित्ययोरभेदारोपः, एवमुन्नतशब्दः श्लिष्टः, तेनोच्छ्रितोद्धतत्वयोरभेदारोपः। इति। यथा वा-'बहु मन्यामहे राजन्न वयं भवतः कृतिम्। विपद्भिः सह दीयन्ते सम्पद्रो भवता यतः ॥' इति, अत्र हि 'दीयन्ते'इति श्लिष्टम्।

एवं श्लेषभित्तिकतयोदाहृत्य तद्वैपरीत्येऽप्युदाहरति-**'कुमुदकदम्बैः** कुमुदानि रात्रिविकासीनि कमलानि तेषां कदम्बानि पुञ्जास्तैः। 'कदम्बं निकुरम्बे स्यान्नीपसर्षपयोः पुमान्।' इति मेदिनी। **सह**। **कामं** मदनम्। **उल्लासयन्तो** विकासयन्तो वर्धयन्तश्चेति भावः। **घनतिमिरौघैर्घनानि** निविडानि यानि तिमिराणि तेषामोघास्तैरिति तथोक्तैः। **सह**। **धैर्यम्**। **उत्सारयन्तः** सम्बन्धाभावं विनाशं वा नयन्तः। **सरसिजषण्डैः** सरसिजानि कमलानि तेषां षण्डानि समुदायास्तैः। 'अब्जादिकदम्बे षण्डमस्त्रियाम्।' इत्यमरः। **सह**। **स्वान्तं** चित्तम्। 'स्वान्तं हृन्मानसं मनः।' इत्यमरः। **आमीलयन्तः** सङ्कोचयन्तो विषयान्तरादाकर्षयन्तो वा। **अमृतांशोश्चन्द्रमसः**। **अंशवः**। **प्रतिदिशं** सर्वासु दिक्षु। **सञ्चरन्ति**। अत्र मालिनीछन्दः ॥ १७८ ॥'

अस्य पद्यस्य स्वकीयत्वं सम्भावयति-इदम्ममेति। स्पष्टम्।

अत्राभेदारोपं दर्शयितुं भेदं दर्शयति-अत्रेत्यादिना।

अत्रोदाहृते पद्ये। **उल्लासादीनाम्**। आदिपदेनोत्सारणामीलनयोर्ग्रहणम्। **सम्बन्धिभेदात्** कुमुद-कामादिसम्बन्धिभेदात्। **एव**। **भेदः**। एवकारव्यवच्छेद्यं निर्दिशति-**न तु**। **श्लिष्टतया**। अतोऽत्राभेदारोपः सादृश्यमूल इति भावः। इदमभिहितम्-कुमुदस्योल्लासो विकासः, कामस्य पुनर्वर्द्धनम्; तिमिरस्योत्सारणं तद्देशे सम्बन्धाभावः, धैर्य्यस्य पुनर्विनाशः; सरसिजस्यामीलनं सङ्कोचः, स्वान्तस्य पुनर्विषयान्तरादाकर्षणम्; इत्येवं कुमुदकामादीनां भेदादेवोल्लासादेर्भेदः, तस्मिन् सत्यपि विकास इव वर्धनमिति सादृश्यमूलोऽभेदारोपः। इति।

यथा वा-'सह दिअसणिसाहिं दीहरा सासदंडा सह मणिवलयेहिं वाप्पधारा गलंति। तुह सुहअ विओए तीअ उव्विग्गिरीए सह अ तुणुलदाए दुव्वला जीविदासा ॥'[1] अत्र हि दीर्घत्वादेः श्वासादिनाऽन्वयः शाब्दः, दिवसनिशादिना त्वन्वयसामार्थ्यादार्थः, दीर्घादेश्च सम्बन्धिभेदादेव भेद इति दिवसनिशादीनां दीर्घत्वाभेदाध्यवसायः। तथा हि-दिवसादेर्दीर्घत्वमनायाससमनपनेयत्वम्, श्वासस्य पुनर्दूरप्रसारित्वमतिवेगशालित्वं वा, मणिवलयस्य गलनं पतनं, नेत्राम्बुनः पुनः प्रवहणम्, तनुलतायां दौर्बल्यं कार्श्यमकर्मण्यत्वं वा, जीविताशायाः पुनः कादाचित्कत्वम्; इति भेदेऽप्यभेदाध्यवसायः। इति। एतेन-यदुक्तं विवृतिकारैः-'वस्तुतस्तु यत्र वैचित्र्यमनुभूयते तत्रैवास्यालङ्कारत्वमङ्गीकरणीयम्। अन्यथा-'सह मणिवलयेहिं वाप्पधारा गलंति' इति काव्यप्रकाशदत्तोदाहरणमसङ्गतं स्यात्। अत्र स्वस्थानाच्च्यवनरूपं गलनमेकमेव। न च गलनयोरेकजातीयत्वेऽपि व्यक्तिभेदाद् भेद इति वाच्यम्, 'लक्ष्मणेन समं रामः काननं गहनं ययौ।।'

---

१ 'सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः, सह मणिवलयैर्वाष्पधारा गलन्ति। तव सुभग ! वियोगे तस्या उद्विग्नायाः सह च तनुलतया दुर्बला जीविताशा ॥'इति संस्कृतम्।

'सममेव नराधिपेन सा गुरुसम्मोहविलुप्तचेतना।
अगमत्सह तैलबिन्दुना ननु दीपार्चिरिव क्षितेस्तलम् ॥ १७९ ॥'

इयं च मालयाऽपि सम्भवति, यथोदाहृते–'सह कुमुदकदम्बैः...'इत्यादौ। 'लक्ष्मणेन समं रामः काननं गहनं ययौ।' इत्यादौ चातिशयोक्तिमूलत्वाभावान्नायमलङ्कारः।

१३६ विनोक्तिर्यद्विनाऽन्येन नासाध्वन्यदसाधु वा।

नासाधु अशोभनं न भवति, एवं च–यद्यपि शोभनत्व एव पर्य्यवसानम्, तथाऽप्यशोभनत्वाभावमुखेन शोभनवचनस्यायमभिप्रायो यत् कस्यचिद्वर्णनीयस्याशोभनत्वं तत्परसन्निधेरेव दोषः। तस्य पुनः स्वभावतः शोभनत्वमेवेति, यथा–

---

इत्यादावपि तथाकल्पनस्य सम्भवात्, व्यावृत्त्यभावेन तद्विलक्षणस्याकिञ्चित्करत्वात्।' इति, तदुक्तोत्तरम्। अन्यथा–'इयं धर्मयोरभेदाध्यवसायमूला' इति विरुध्येतोद्द्योतोऽपि।

एवमभेदाध्यवसायमूलामुदाहृत्य द्वितीयामुदाहरति–'ननु कष्टमाश्चर्य्यं वा। **तैलबिन्दुना। सह। दीपार्चिः** दीपरोचिः। **इव। सा** इन्दुमती। **नराधिपेन** राज्ञाऽजेन। **समम्** एकदा। **एव। गुरुसम्मोहविलुप्तचेतना** गुरुर्महानसौ सम्मोहस्तेन विलुप्ता चेतना बुद्धिर्यस्याः सा, तथाभूता सतीति भावः। **क्षितेः** पृथिव्याः। **तलम्। अगमत्।** रघुवंशस्येदं पद्यम्। अत्राजस्य पतनमिन्दुमतीपतनजन्यमपि समकालत्वेनाध्यवसितम्। वैतालीयं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ १७९ ॥'

एवं कार्य्यकारणपौर्वापर्य्यविपर्य्ययरूपातिशयोक्तिमूलामपि सहोक्तिमुदाहृत्यास्याः सम्भवन्तं प्रकाशायनुदाहृतमपि भेदमुदाहर्तुमाह–इयं चेत्यादि। स्पष्टम्। अत एवान्येऽप्याहुः–"इयं मालारूपाऽपि सम्भवति, यथा–'उत्क्षिप्तं सह कौशिकस्य पुलकैः, सार्धं मुखैर्नामितं भूपानां, जनकस्य संशयधिया साकं समास्फालितम्। वैदेह्या मनसा समं तदधुना कृष्टं, ततो भार्गवप्रौढाहङ्कृतिकन्दलेन च समं भग्नं तदैशं धनुः ॥' इति।"

विनोक्तिं लक्षयति–**यत्** यदि यत्र वेति भावः। **अन्येन। विना। अन्यत्। असाधु** अशोभनम्। **न,**किन्तु शोभनम्। **वा**ऽथवा। अन्यत्–**असाधु** अशोभनम्। 'न साध्वन्यदसाधु वा'इति पाठे तु–यत्। अन्यत्। साधु शोभनम्। न। वाऽथवा। यत् अन्यत् असाधु अशोभनम्। 'ने'ति पूर्वतोऽन्वेति। इति योज्यम्। तर्हि। सेति वा शेषः। **विनोक्तिः।** अन्येन विनाऽन्यस्य यदि शोभनत्वम्, अशोभनत्वं प्रतिपाद्येत प्रतिपद्येत वा। तर्हि, यद्वा–अन्येन विनाऽन्यस्य यच्छोभनत्वमशोभनत्वं वा सेति विनोक्तिरिति भावः।

दुर्बोधतां परिहर्तुं कारिकायाः 'नासाधु'इति दुर्बोधं पदं विवृणोति–**नासाध्वित्यादिना।**

**नासाधु**'इत्यस्ये'ति शेषः। **अशोभनम्। न। भवति**'इत्यर्थ'इति शेषः। अस्य तात्पर्य्यं निर्दिशति–**एवं। च। यद्यपि**'नासाध्वित्यस्ये'ति शेषः। **शोभनत्वे। एव,** न त्वशोभनत्व इति शेषः। **पर्य्यवसानं**'द्वौ नञौ प्रकृतमर्थमवगमयत'इति नयेनान्ततोऽवस्थानम्। **तथाऽपि। अशोभनत्वाभावमुखेन** 'न असाधु, किन्तु साधु' इत्यसाधुत्वप्रतिषेधद्वारेति भावः। **शोभनवचनस्य** 'साधु'इति प्रतिपादनस्य। **अयम्। अभिप्रायः। यत्। कस्यचित्। वर्णनीयस्य** प्रकृतस्य वस्तुनः। **अशोभनत्वम**साधुत्वम्। 'प्रतिपाद्यते''प्रतिपद्यते' इति वा शेषः। **तत्। परसन्निधेः** परस्य दोषावहस्य सन्निधिः सन्निधानं तस्येति तथोक्तस्य। **एव। दोषः।** ननु वर्णनीयस्याशोभनत्वमेव किन्नाङ्गीक्रियताम्? किं वा परसन्निधानेन शोभनत्वमित्याशङ्क्याह–**तस्य** परसन्निधिजातदोषस्य। **पुनः। स्वभावतः। शोभनत्वं** साधुत्वम्। **एव। इति** ('अभिप्राय'इत्यनेनास्य सम्बन्धः)। इदमुक्तम्–विनार्थकं पदं प्रयोज्य यस्य साधुत्वं प्रतिपाद्यते,तस्य स्वाभाविकं साधुत्वमेव, असाधुत्वं तु यस्य विनाऽर्थकेन पदेन सन्निधानं निषिध्यते तत्कृतमेव। एतेन–'दुःखदत्वं विना पापमविद्यामोहमन्तरा। विना दुःखं च निरयः साधुः कस्य न सम्मतः?'इत्यादौ नायमिति सूचितम्, दुःखदत्वादि विना पापादित्यस्यैवानभिमतत्वात्। इति।

उदाहरति–**यथा**–**विनेत्यादिना।**

'विना जलदकालेन चन्द्रो निस्तन्द्रतां गतः। विना ग्रीष्मोष्मणा मञ्जुर्वनराजिरजायत॥१८०॥'

असाधु यथा—

'अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम्।
का दिनश्रीर्विनाऽर्केण का निशा शशिना विना॥ १८१॥'

'निरर्थकं जन्म गतं नलिन्या यया न दृष्टं तुहिनांशुबिम्बम्।
उत्पत्तिरिन्दोरपि निष्फलैव दृष्टा विनिद्रा नलिनी न येन॥ १८२॥'

अत्र परस्परविनोक्तिभङ्गया चमत्कारातिशयः। विनाशब्दप्रयोगाभावेऽपि विनाऽर्थविवक्षायां विनोक्तिरेवेयम्। एवं सहोक्तेरपि सहशब्दप्रयोगाभावेऽपि सहार्थविवक्षया भवतीति बोध्यम्।

**१३७ समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः॥ १०९॥**
**व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः।**

---

'जलदकालेन वर्षाकालम्। 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्।' २।३।३२ इति तृतीया। **विना। चन्द्रः। निस्तन्द्रतां** निरालस्यमुपचाराद्उज्ज्वलप्रकाशत्वम्। **गतः। ग्रीष्मोष्मणा** ग्रीष्मघर्मेण। **विना। वनराजि**र्वनानां राजिः पङ्क्तिः। **मञ्जुः** सुन्दरा। 'मनोज्ञं मञ्जु मञ्जुलम्।' इत्यमरः। **अजायत**। अत्र स्वतः सुन्दरयोश्चन्द्रवनराज्योर्मेघग्रीष्मोष्मसन्निधानरूपदोषापगमेन साधुत्वसिद्धिः॥' यथा वा-'निशयेव विना सरोजिनी सरसी प्रावृषमन्तरा यथा। विशदत्वमुपैति भारती जडभावेन विना विपश्चिताम्॥' इति॥ १८०॥'

एवं साधुत्वप्रत्यायिकां विनोक्तिमुदाहृत्यासाधुत्वप्रत्यायिकामुदाहरति-**असाध्वि**त्यादिना।

**असाधु** अशोभनमुपचारात्तत्प्रत्यायिका विनोक्तिरित्यर्थः। एतेन-विनोक्तेर्भेदद्वयं दर्शितम्। **यथा-'अनुयान्त्ये**त्यादि। व्याख्यातपूर्वमिदम्। पतिमन्तरा योषितो व्यर्थत्वं सूचयितुमिदमुक्तम्। अत एवात्र असाधु (अशोभन) त्वम्॥ १८१॥'

उदाहरणान्तरं निर्दिशति-'**यया। तुहिनांशुबिम्बं** तुहिनांशुश्चन्द्रस्तस्य बिम्बं मण्डलम्। **न। दृष्टम्।** तस्याः-**नलिन्याः** पद्मिन्याः। **जन्म। निरर्थकं** व्यर्थम्। **गतं** व्यतीतम्। चन्द्रदर्शनं विना नलिनीसमुत्पन्नाऽपि व्यर्थेति भावः। **येन। विनिद्रा** विकाशवती। **नलिनी। न। दृष्टा।** तस्य-**इन्दो**श्चन्द्रस्य। **उत्पत्ति**र्जन्म। **अपि। निष्फला। एव।** विह्लण-राजकन्ययोरुक्तिप्रत्युक्तिपरमिदं पद्यम्। उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिश्छन्दः, तल्लक्षणं चोक्तं प्राक्॥ १८२॥'

ननूदाहरणान्तरनिर्देशस्य किं निमित्तमित्याशङ्क्याह-**अत्रे**त्यादि।

**अत्रो**दाहृते पद्ये। **परस्परविनोक्तिभङ्गया** परस्परं विनोक्तिर्दर्शनाभावाभिधानविशेषस्तया। **चमत्कारातिशयः।** यथा चन्द्रदर्शनं विना कमलिन्या जन्म निरर्थं, तथा विकसितकमलिनीदर्शनमन्तरा चन्द्रस्यापि जन्म व्यर्थमिति परस्परजन्मनिरर्थकत्वाभिधानद्वारा चमत्कारातिशय इत्यर्थमुदाहरणान्तरमिदमिति भावः।

ननु विनाशब्दप्रयोगाभावात् कथमियं विनोक्तिरित्याह-**विने**त्यादि। स्पष्टम्। अयम्भावः-नायं शब्दालङ्कारः, किन्तु-अर्थालङ्कारः; अत एवात्र विनाशब्दप्रयोगाभावेऽपि विनाऽर्थकस्य नञ एव प्रयोगात् तुहिनांशुदर्शनं विना नलिनीजन्मनः, नलिनीविकासदर्शनमन्तरा तुहिनांशुजन्मनोऽशोभनत्वप्रतिपत्तेः। इति। उक्तमर्थमन्यत्राप्यतिदिशति-**एव**मित्यादिना। स्पष्टम्। अतः-'प्राणैश्च कोशैर्द्विषतां नरेन्द्र! मौर्व्याः समाकृष्टिमुदाहरन्ति। टङ्कारपूर्त्यां सुहृदां जनानां प्रमोदपूर्तिं च तव प्रविज्ञाः॥' इत्यादावपि सहोक्तिः, सहप्रयोगाभावेऽपि 'वृद्धो यूना..।' १।२।६५ इति निर्देशेन सहार्थे तृतीयाया एवोपपत्तेरिति स्थितम्।

समासोक्तिं लक्षयति-१३७ **यत्र** यस्मिन् काव्ये। **समैः** प्रस्तुताप्रस्तुतसाधारणैः। **कार्य्यलिङ्गविशेषणैः** कार्य्याणि (व्याधुवनादीनि) च लिङ्गानि (पुंस्त्रीनपुंसकत्वद्योतकानि चिह्नानि) च विशेषणानि (विकसितमुखीप्रभृतीनि) चेति तैस्तथोक्तैः, तद्द्वारेति भावः। **प्रस्तुते** प्रकृतधर्मिणि। **अन्यस्या**प्रकृतधर्म्मिणः। **वस्तुनः। व्यवहारसमारोपो** व्यवहारस्य (व्यवह्रियते विशेषेण प्रतीयतेऽनेनेति तस्य) अवस्थाविशेषस्य समारोपः सम्यगारो-

**अत्र समेन कार्य्येण प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपो, यथा—**

**'व्याधूय यद्वसनमम्बुजलोचनाया वक्षोजयोः कनककुम्भविलासभाजोः ।**
**आलिङ्गसि प्रसभमङ्गमशेषमस्या धन्यस्त्वमेव मलयाचलगन्धवाह! ॥ १८३ ॥'**

**अत्र गन्धवाहे हठकामुकव्यवहारसमारोपः ।**

---

पोऽभेदप्रत्यायनम् । सा—**समासोक्तिः** समासेन संक्षेपेण ननु सर्वथा उक्तिः प्रस्तुताप्रस्तुतयोरभेदप्रत्यायिकानिदर्शनेति तथा प्रसिद्धेति भावः । 'अलङ्कार' इति प्रकृतानुप्रसक्तम् । अयम्भावः—प्रस्तुतेऽप्रस्तुतत्वप्रत्यायनमात्रं समासेनोक्तिरिति समासोक्तिः । असौ च प्रस्तुताप्रस्तुतयोः साधारणैः कार्य्यादिभिरेव सम्भवतीति समकार्य्यमूला समलिङ्गमूला समव्यवहारमूला चेति त्रिविधेति । अन्ये तु—'कार्य्यलिङ्गविशेषणैरित्यस्य 'कार्य्याणि च लिङ्गानि च विशेषणानि चेति, तानि च तानि चेति तैस्तथोक्तैः' इत्येकशेषमङ्गीकृत्य 'कार्य्यलिङ्गविशेषणमूला चे'ति चतुर्विधामम्मुं प्राहुः । एवं च—प्रस्तुतेऽप्रस्तुतव्यवहारारोपः समासोक्तिः, असौ च केनापि कार्य्यसाम्यादिना स्यात्, न तत्राग्रहः । 'समै'रित्यादिना तु केवलं तत्सम्भावनमिति द्योतितम् । इति । अत एव रसगङ्गाधरकाराः प्राहुः—'यत्र प्रस्तुतधर्मिको व्यवहारः साधारणमात्रोपस्थापिताप्रस्तुतधर्म्मिकव्यवहाराभेदेन भासते सा समासोक्तिः ।' इति ॥ १०९ ॥

अत्र विवृतिकाराः—समासोक्तिरिति । समैः प्रस्तुताप्रस्तुतसाधारणैः । यत्रेत्यव्ययं य इत्यर्थे । लिङ्गं स्त्रीत्वादि । व्यवह्रियते विशेषेण प्रतीयतेऽनेनेति व्यवहारोऽवस्थाभेदः । 'इह तु स्वावस्थासमारोपेणे'त्यादिवक्ष्यमाणस्वरसादत्र व्यवहारसमारोपे कृतप्रकृतविशेषाधानस्यानुभवसिद्धतया व्यवहारः । अथवा—'तत्त्वमौपम्ये यत्प्रतीयते' इति प्राचीनोक्तानुसारेण च व्यवहारसमारूपैव समासोक्तिरनेनाङ्गीकृता । ननु 'परोक्तिर्भेदकैः श्लिष्टैः समासोक्ति'रिति काव्यप्रकाशलक्षणानुसारेण प्रकृतवाचिना श्लिष्टविशेषणवशादप्रकृतव्यञ्जनरूपद्वितीयार्थस्योपमानत्वानङ्गीकारेणासङ्गतिप्रसङ्गात् । अन्यस्याप्रस्तुतस्य समासेन सकृदुच्चारणरूपसङ्क्षेपेणावस्थाद्वयप्रतीतिः समासोक्तिरिति सञ्ज्ञाव्युत्पत्तिरवधेया । यद्वा—समस्य कार्य्यादेरासेनोपन्यासेनोक्तिरप्रस्तुतावस्थाव्यञ्जनम् ।' इत्याहुः ।

कार्य्यसाम्येनामुमुदाहर्त्तुमुपक्रमते—अत्रेत्यादिना । स्पष्टम् । 'व्याधूयेत्यादि ।

'**हे मलयाचलगन्धवाह** मलयाचलस्य चन्दनोत्पत्तिस्थानतया प्रसिद्धस्य मलयनाम्नः पर्वतस्य गन्धवाहो वायुस्तत्सम्बुद्धौ तथोक्त ! **अम्बुजलोचनायाः** कमलनेत्रायाः कान्ताया इति यावत् । **कनककुम्भविलासभाजोः** कनककुम्भयोः स्वर्णघटितघटयोर्विलासः शोभा तं भजत इति तयोस्तथोक्तयोः । 'भजो ण्विः ।' ३।२।६२ इति ण्विः । **वक्षोजयोः** कुचयोः । **वसनं** वस्त्रम् । **व्याधूय** विशेषेण कम्पयित्वाऽपसार्य्येति यावत् । **यत्** । **प्रसभं** बलात्कारेण । **अस्याः** । **अशेषं** सर्वम् । **अङ्गं** गात्रम् । यत्—**आलिङ्गसि** । तत्—**त्वम्** । **एव** 'न त्वन्य' इति शेषः । **धन्यः** कृतार्थः । वायुनोन्नीयमानवस्त्रां नायिकामवलोक्य वायुं स्तुवतो जनस्य कस्याप्युक्तिरियम् । वसन्ततिलकं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ १८३ ॥'

अत्रास्मिन् प्रस्तुते किमारोप इत्याशङ्कयाह—अत्रेत्यादि ।

**अत्रो**दाहृते पद्ये । **गन्धवाहे** ( प्रस्तुते ) । **हठकामुकव्यवहारसमारोपो** हठेन कामुकः कामी परस्त्रीचञ्चलमना इति यावत् तस्य ( अप्रस्तुतस्य ) व्यवहारस्तदारोपः । 'नायिकायाः स्तनवस्त्रापक्षेपपूर्वकालिङ्गनरूपकार्य्यस्य प्रस्तुताप्रस्तुतोभयसम्बन्धित्वसाधारण्या'दिति शेषः ।

अत्राहुस्तर्कवागीशाः—'यदि पुनर्नायिकायास्तादृशालिङ्गनमप्राप्नुवतः कस्यचिदात्मनोऽधन्यत्वनिवेदनमेतत् स्यात्तदा वायोरप्रकृतत्वान्नेयं समासोक्तिः; किंतु 'धन्याः खलु वने वाता' इत्यादिवक्ष्यमाणवद्वैधर्म्येणाप्रस्तुतप्रशंसैव, 'अहमधन्य' इति प्रस्तुतस्य गम्यत्वात् । एवं च—' नवा लता गन्धवहेन चुम्बिता करम्बिताङ्गी मकरन्दशीकरैः ।'इत्याद्युदाहरणमस्यानुगन्तव्यम् ।अत्र वायोर्वर्णनीयत्वेन प्रकृतत्वाच्चुम्बनरूपकार्य्यसाम्येन शृङ्गारिरूपनायिकावस्थासमारोपश्चारुत्वमावहति।'इति ।

यथा वा—' देव ! त्वां परितः स्तुवन्तु कवयो लोभेन किं तावता स्तव्यस्त्वं भविताऽसि यस्य तरुणश्चापप्रतापोऽधुना । क्रोडान्तः कुरुतेतरां वसुमतीमाशाः समालिङ्गति द्यां चुम्बत्यमरावतीं च सहसा गच्छत्यगम्यामपि ॥' इति । अत्र हि राज्ञि दुराचारित्वव्यवहारारोपहेतुरुत्तरार्द्धोक्तकार्य्यसाधारण्यम् ।

लिङ्गसाम्येन यथा—

'असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः। अनाक्रम्य जगत् कृत्स्नं नो संध्यां भजते रविः॥१८४॥'

अत्र पुंस्त्रीलिङ्गमात्रेण रविसन्ध्ययोर्नायकनायिकाव्यवहारः।

विशेषणसाम्यं तु श्लिष्टतया, साधारण्येन, औपम्यगर्भत्वेन च त्रिधा। तत्र श्लिष्टतया यथा, मम—

'विकसितमुखीं रागासङ्गाद्गलत्तिमिरावृतिं दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः।
जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः श्रयति हरितं हन्त प्राचेतसीं तुहिनद्युतिः॥१८५॥'

अत्र मुखरागादिशब्दानां श्लिष्टता। अत्रैव च 'तिमिरावृति'मित्यत्र 'तिमिरांशुका'मिति पाठे एकदेशस्य रूपणेऽपि समासोक्तिरेव, न त्वेकदेशविवर्त्ति रूपकम्। तत्र हि तिमिरांशुकयो रूप्यरूपकभावो द्वयोरावरकत्वेन स्फुटसादृश्यतया परसाचिव्यमनपेक्ष्यापि स्वमात्रविश्रान्त

---

लिङ्गसाधारण्यमूलमुदाहरति—लिङ्गेत्यादिना। स्पष्टम्। असमाप्तेत्यादि।

'असमाप्तजिगीषस्य न समाप्ता पूर्णा जिगीषा जेतुमिच्छा यस्य तादृशस्य। मनस्विनो नीतिज्ञस्य। का। स्त्रीचिन्ता स्त्रीविषयिणी चिन्ता। 'श्रीचिन्ता' इति पाठान्तरे 'लक्ष्मीप्राप्तिकामना' इत्यर्थः। कृत्स्नं समस्तम्। 'विश्वमशेषं कृत्स्नं समस्तनिखिलाखिलानि निश्शेषम्।' इत्यमरः। जगत्। अनाक्रम्य। रविः सूर्यः। सन्ध्याम्। नो। भजते सेवत इति भावः। राजतरङ्गिण्याः पद्यमिदम्॥ १८४॥'

लिङ्गसाम्येन व्यवहारारोपं निर्दिशति—अत्र। पुंस्त्रीलिङ्गमात्रेण रवेः पुंस्त्वेन सन्ध्यायाः स्त्रीत्वेन चेति भावः। रविसन्ध्ययोः। नायकनायिकाव्यवहारः। 'आरोपित' इति शेषः। 'दृष्टान्तत्वेनाप्रकृतयोरपि रविसन्ध्ययोः प्रकृताङ्गत्वेनैव प्रकृततत्त्वमवधेयम्।' इति विवृतिकाराः। यथा वा—'मनस्त्वया न गन्तव्याः सङ्कल्पनविकल्पनाः। किं करिष्यसि गत्वाऽपि ततस्तूष्णीं क्षणं भव।' इति, नपुंसकस्त्रीलिङ्गाभ्यां मनोविकल्पनानां क्लीबत्वनायिकात्वप्रत्ययः।

विशेषणसाम्यस्य त्रैविध्यं ब्रुवन्नाद्यमुदाहरति—विशेषणेत्यदिना। स्पष्टम्। 'विकसितेत्यादि।

'तुहिनद्युतिश्चन्द्रः। पुरोऽग्रतः। रागासङ्गाद्रागस्य रक्तिम्नोऽनुरागस्य वाऽऽसङ्गः शालित्वमावेशो वा तस्मात्। विकसितमुखीं विकसितं सप्रकाशं प्रसन्नं वा मुखमेकदेशो वक्त्रं वा यस्यास्तां तथोक्ताम्। गलत्तिमिरावृतिं गलन्ती नश्यन्ती संवलन्ती वा तिमिरावृतिस्तिमिरकृतमावरणं तिमिररूपं वाऽऽवरणं यस्यास्तां तथोक्ताम्। दिनकरकरस्पृष्टां दिनकरः सूर्यस्तस्य करः किरणः पाणिर्वा तेन स्पृष्टा तां तथोक्ताम्। ऐन्द्रीं पूर्वाम्। दिशम्। निरीक्ष्य। जरठलवलीपाण्डुच्छायो जरठा पक्वा लवली 'हरफारेवड़ी'ति प्रसिद्धं फलं तद्वत् पाण्डुः छाया यस्य स इति तथोक्तः। भृशमत्यन्तम्। कलुषान्तरः कलुषं कलङ्कितत्तदीर्ष्याकषायिततया वा मलिनमान्तरं मध्यदेशश्चित्तं वा यस्य तथोक्तः। 'स'न्निति शेषः। हन्त। प्राचेतसीं पश्चिमाम्। हरितं दिशम्। श्रयति। हरिणीप्लुतं छन्दः, तल्लक्षणं चोक्तं प्राक्॥ १८५॥'

समासोक्तिं निर्दिशति—अत्रेत्यादिना। स्पष्टम्। अयम्भावः—एषां श्लिष्टानां प्रस्तुताप्रस्तुतोभयानुकूलत्वेनैन्द्र्या बन्धकीत्वं, चन्द्रस्य च नायकत्वं चाप्रस्तुतमारोप्यते। इति।

अत्र समासोक्तिं स्थूणनिखननन्यायेन द्रढयितुमाह—अत्रैवेत्यादि।

अत्रोदाहृते पद्ये। एव। च। 'तिमिरावृति' मित्यत्र 'अंशे' इति शेषः। 'तिमिरांशुका'मिति पाठे। 'परिवर्त्तिते' इति शेषः। एकदेशस्य। रूपणे 'शाब्दे' इति शेषः। अपि। समासोक्तिः। एव। नतु 'यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तत्' इत्युक्तदिशेति शेषः। एकदेशविवर्त्ति। रूपकम्। कोऽत्र हेतुरित्याशङ्क्याह—हि यतः। तत्रोदाहृते पद्ये। तिमिरांशुकयोः। रूप्यरूपकभावो रूप्यमारोपविषयः (तिमिरम्) च रूपकमारोप्यमाणम् (अंशुकम्) च तयोर्भाव इति तथोक्तः। द्वयोस्तिमिरांशुकरूपयो रूप्यरूपकयोः। आवरकत्वेन। स्फुटसादृश्यतया स्फुटं सादृश्यं ययोस्तयोः (तिमिरांशुकयोः) भावस्तत्ता तयेति तथोक्तया। परसाचिव्यं परस्य दिशि नायिकाऽऽरोपस्य (आर्थस्य रूपणस्य) साचिव्यं साहाय्यं तत् तथोक्तम्। अनपेक्ष्य। अपि। स्वमात्रविश्रान्तः स्वमात्रे तिमिरांशुकयोः रूप्यरूपकत्वरूपे शाब्दे रूपणे विश्रान्तः। मात्रपदेन दिशि नायिकात्वारोपस्यार्थस्य

इति न समासोक्तिबुद्धिं व्याहन्तुमीशः । यत्र तु रूप्यरूपकयोः सादृश्यमस्फुटं तत्रैकदेशान्तररूपणं विना तदसङ्गतं स्यादिति । शाब्दमप्येकदेशान्तररूपणमार्थमपेक्षत एवेति तत्रैकदेशविवर्त्ति रूपकमेव । यथा—

'जस्स रणंतेउरए करे कुणंतस्स मंडलग्गलअं ।
रससंमुही वि सहसा परम्मुही होइ रिउसेणा ॥ १८६ ॥' इति,

अत्र रणान्तःपुरयोः सादृश्यमस्फुटमेवा क्वचिच्च यत्र स्फुटसादृश्यानामपि बहूनां रूपणं शाब्दमेकदेशस्य चार्थं तत्रैकदेशविवर्त्ति रूपकमेव;रूपकप्रतीतेर्व्यापितया समासोक्तिप्रतीतितिरोधायकत्वात् ।

---

व्यपेक्षाव्यवच्छेदः । इति शाब्दार्थयो रूपणयोः परस्परमनपेक्षित्वेनेति भावः । समासोक्तिबुद्धिम् । व्याहन्तुम् एकदेशविवर्त्तिरूपकनिश्चयं प्रतिपादयितुम् । न । ईशः । ननु 'लावण्यमधुभि'रित्यत्रापि तत्समासोक्तिरेवास्तामित्याशङ्क्याह—यत्र 'लावण्यमधुभि'रित्यादौ । तु । रूप्यरूपकयोः(यथा—लावण्यमधुनोः) । सादृश्यम् । अस्फुटम् । तत्र । एकदेशान्तररूपणमेकदेशान्तरं यस्मिन् शाब्दं रूपणं तदपेक्षयाऽऽर्थम्, यस्मिन् वांऽशे आर्थं तदपेक्षया शाब्दं रूपणमिति भावः । विना । तत् आर्थं शाब्दं वेति भावः । असङ्गतम् । स्यात् । इति 'अत्र शाब्दार्थयोरन्योऽन्यं सापेक्षत्वेने'ति शेषः । शाब्दम् ( कर्तृ ) एकदेशान्तररूपणं तदभिन्नम् । आर्थम् । अपि । अपेक्षते । एव । इति । तत्र 'लावण्यमधुभि'रित्यत्र । एकदेशविवर्त्तिरूपकम् । एव । अत्र 'यत्र तु रूप्यरूपकयोः सादृश्यमस्फुटं तत्रैकदेशान्तररूपणमार्थमपेक्षत एवेति तत्रैकदेशविवर्त्ति रूपकमेवे'ति पाठान्तरं सुगमम् । 'शाब्द'मित्यत्र 'शाब्द'मिति त्वपपाठ एव, असङ्गतत्वापत्तेः । अतः 'तिमिरांशुकयो'रित्यत्रेव 'लावण्यमधुभि'रित्यत्र सादृश्यताया अनुपलम्भात् शाब्दार्थयोश्च परस्परमनपेक्षिताया असम्भवान्न समासोक्तिः किन्तु एकदेशविवर्त्ति रूपकमेव । अथ—'तिमिरांशुका'मिति पाठेऽपि सादृश्यस्फुटताया उपलम्भात् शाब्दार्थयोश्च परस्परमनपेक्षित्वान्नैकदेशविवर्त्ति रूपकं, किन्तु समासोक्तिरेवेति भावः ।

एकदेशविवर्त्ति पुनरप्युदाहृत्य समासोक्तिं व्यवच्छिनत्ति—यथा—जस्सेत्यादि ।

'रणंतेउरए रणान्तःपुरे रणः ( सङ्ग्रामः ) एवान्तःपुरं तत्र । करे पाणौ । मंडलग्गलअं मण्डलाग्रलतां मण्डलाग्रः खड्ग एव लता ताम् । कौक्षेयको मण्डलाग्रः करवालः कृपाणवत् ।'इत्यमरः । कुणंतस्स कुर्वाणस्य । जस्स यस्य । रससंमुही रससंमुखी रस उत्साहोऽनुरागो वा तेन सम्मुखी । वि अपि । रिउसेणा रिपुसेना । परम्मुही पराङ्मुखी । सहसा । होइ भवति । अत्रार्याछन्दः, तल्लक्षणं चोक्तं प्राक् ॥'इति ॥ १८६ ॥'

उदाहरणसङ्गतिसूचनाय रूपकहेतुं निर्दिशति—अत्रेत्यादिना । स्फुटम् । इदम्बोध्यम्—अत्रापाततः समासोक्तेः प्रतीयमानत्वेऽपि सादृश्यास्फुटत्वेन शाब्दार्थयोरनपेक्षित्वेनैकदेशविवर्त्ति रूपकमेव । इति । अत्र विवृतिकाराः 'अत्र यद्यपि लिङ्गसाम्येन मण्डलाग्रलतायां नायिकाव्यवहारः, पराङ्मुखत्वकार्य्यसाम्येनापि रिपुसेनायां प्रतिनायिकाव्यवहारः प्रतीयते, तथाऽपि तदुभयं रणेऽन्तःपुररूपणस्यासङ्गतिप्रसङ्गसापेक्षमित्येकदेशविवर्त्ति रूपकमेवेदमिति भावः ।' इत्याहुः ।

ननूदाहृते पद्येऽस्फुटसादृश्यानां शाब्दरूपणभूयस्त्वं दृश्यते,तत् किं स्फुटसादृश्यानां शाब्दरूपणभूयस्त्वे रूपणं सर्वथैव न सम्भवति ? इत्याशङ्क्य क्वचित्सम्भवतीत्याह—क्वचिच्चेत्यादिना । स्पष्टम् । अयम्भावः—'विकसितमुरुचिरवदना परितो लावण्यवारिणा पूर्णा । शितधम्मिल्लमधुव्रतजुष्टा कान्तातरङ्गिणी जयति ॥' इत्यत्र स्फुटसाम्यानामपि लावण्यवार्य्यादीनां रूप्यरूपकत्वं शाब्दं वदनारविन्दयोश्चार्थमिति 'विकसितमुखी'मित्यादाविव समासोक्तिरिति सुवचत्वेऽपि,अत्र कान्तायां तरङ्गिणीत्वारोपेण रूपकप्रतीत्या समासोक्तिबुद्धेर्बाधः, तत्र पुनर्विशेष्ये शाब्दारोपस्याभावात् समासोक्तिरेव । एवं च—यत्र स्फुटसादृश्यानां शाब्दरूपणभूयस्त्वेऽपि विशेष्यपदार्थस्य न शाब्दं रूपणं तत्र समासोक्तिः, यत्र च विशेष्यपदार्थस्य शाब्दं रूपणं तत्रैकदेशान्तररूपणस्यार्थत्वेऽपि स्फुटसादृश्यानामन्येषां भूयसा शाब्दत्वेन रूपकमेव । अथास्फुटसादृश्यानां शाब्दरूपणभूयस्त्वेन विशेष्यपदार्थस्य शाब्दरूपणानालिङ्गितत्वे रूपकमिति स्थितम् । इति ।

---

१ 'यस्य रणान्तःपुरे करे कुर्वाणस्य मण्डलाग्रलताम् । रणसम्मुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥' इति संस्कृतम् ।

नन्वस्ति रणान्तःपुरयोरपि सुखसञ्चारतया स्फुटं सादृश्यमिति चेत् ! सत्यमुक्तम्; अस्त्येव, किंतु वाक्यार्थपर्यालोचनसापेक्षम्, न खलु निरपेक्षम्; मुखचन्द्रादेर्मनोहरत्वादिवद् रणान्तः- पुरयोः स्वतः सुखसञ्चारत्वाभावात्। साधारण्येन यथा--

'निसर्गसौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी। उदिते वासराधीशे स्मेराऽजनि सरोजिनी॥१८७॥'

अत्र 'निसर्ग'त्यादिविशेषणसाम्यात् सरोजिन्या नायिकाव्यवहारप्रतीतौ स्त्रीमात्रगामिनः स्मेरत्वधर्मस्य समारोपः कारणम्, तेन विना विशेषणसाम्यमात्रेण नायिकाव्यवहारप्रतीतेरसम्भवात्। औपम्यगर्भत्वं पुनस्त्रिधा सम्भवति, उपमारूपकसङ्करगर्भत्वात्। तत्रोपमागर्भत्वे यथा--

'दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी। केशपाशालिवृन्देन सुवेशा हरिणेक्षणा॥१८८॥'इति,

अत्र सुवेशत्ववशात् प्रथमं'दन्तप्रभाः पुष्पाणीवे'त्युपमागर्भत्वेन समासः, अनन्तरं च 'दन्तप्रभासदृशैः पुष्पैश्चिते' त्यादिसमासान्तराश्रयेण समानविशेषणमाहात्म्याद्धरिणेक्षणायां

---

तदेव द्रढयितुमाशङ्कयोत्तरयति-नन्वित्यादिना। स्पष्टम्।

साधारण्येन विशेषणसाम्ये समासोक्तिमुदाहर्तुमाह-साधारण्येनेत्यादि। स्पष्टम्।

'वासराधीशे वासराणां दिनानामधीशस्तत्र। उदिते 'सती'ति शेषः। निसर्गसौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी निसर्गसौरभेण स्वभावसिद्धेन सौगन्ध्येनोद्भ्रान्ता अत्यन्तं मत्ततां नीता ये भृङ्गा भ्रमरास्तेषां सङ्गीतं झङ्कारशब्दरूपं सुष्ठु गानं तद्वद्वा सङ्गीतं तेन शालते शोभत इत्येवंशीलेति तथोक्ता। सरोजिनी पद्मिनी। स्मेरा सुस्मिता। अजनि जाता॥ १८७॥'

ननु श्लिष्टविशेषणस्य द्व्यर्थवाचकतयाऽस्तु नामार्थान्तरप्रतिपादकत्वेन, तेन चास्तां समासोक्तिप्रत्ययः, किन्तु प्रकृते कथं साधारणविशेषणत्वे सङ्गतिरित्याशङ्क्याह-अत्रेत्यादि।

अत्रोदाहृते पद्ये। 'निसर्ग'त्यादिविशेषणसाम्यात् 'निसर्गसौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी'ति विशेषणस्य सरोजिनीनायिकोभयसाधारण्येन। सरोजिन्याः। नायिकाव्यवहारप्रतीतौ। स्त्रीमात्रगामिनः। मात्रपदेन सरोजिन्या व्यवच्छेदः। स्मेरत्वधर्मस्य। समारोपः। कारणं। सहकारिकारणमिति भावः। तेन स्मेरत्वसमारोपेण। विना। विशेषणसाम्यमात्रेण। नायिकाव्यवहारप्रतीतेः। असम्भवात्। इदमुक्तम्-उदाहृते पद्ये 'निसर्गे'ति विशेषणं विषयविषय्युभयसाधारणं 'स्मेरे'तिविशेषणसान्निध्येन सरोजिन्यां नायिकाव्यवहारं प्रत्याययति।इति। अत एव विवृतिकारैरप्युक्तम्-'असम्भवादिति।साधारणविशेषणस्य वाच्यविशेषणप्राधानेनैवोपक्षीणतया व्यङ्ग्यबोधे सामर्थ्याभावादिति भावः।एवं च-साधारणविशेषणमप्रस्तुतासाधारणधर्मारोपादिसहकृतमेवार्थान्तरप्रतिपादकमिति फलितम्।'इति।

औपम्यगर्भेण विशेषणसाम्येन समासोक्तिमुदाहर्तुकामस्तत्रतावत्तस्य त्रैविध्यमाह-औपम्येत्यादिना।

औपम्यगर्भत्वमौपम्यं सादृश्यं गर्भेऽन्तर्यस्य (विशेषणसाम्यस्य) तस्य भावस्तत्त्वम्। पुनः। उपमारूपकसङ्करगर्भत्वात् उपमा च रूपकं च सङ्कर उपमारूपकयोः सन्दिग्धत्वं चेति ते गर्भे येषां तेषां भावस्तत्त्वं तस्मात्। उपमागर्भत्वेन रूपकगर्भत्वेन उपमारूपकोभयगर्भत्वेन चेति भावः। त्रिधा। सम्भवति। तत्र तेषु मध्ये। उपमागर्भत्वे 'सति विशेषणसाम्यात्समासोक्ति'रिति शेषः। यथा-'दन्तेत्यादि।

'दन्तप्रभापुष्पचिता दन्तानां प्रभाः, ताः पुष्पाणीव तैश्चिता व्याप्ता। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे।' २।५।५६ इति सूत्रेणोपमेयस्य पूर्वनिपातः। पक्षे-दन्तप्रभा इव पुष्पाणि तैश्चिता। पाणिपल्लवशोभिनी पाणिः पल्लव इवेति,पक्षे पाणिरिव पल्लव इति; शोभत इत्येवंशीला इति तथोक्ता। केशपाशालिवृन्देन केशपाशोऽलिवृन्दमिवेति, पक्षे केशपाश इवालिवृन्दमिति, तेन। सुवेशा रुचिरनेपथ्या। हरिणेक्षणा॥ इति॥ १८८॥'

अत्रौपम्यगर्भत्वं विशदीकृत्य निर्दिशति-अत्रेत्यादिना।

अत्र। सुवेशत्ववशात्सुवेशत्वसामर्थ्यात्। (हरिणेक्षणायाः) 'सुवेशे'ति विशेषणमाश्रित्येति यावत्। प्रथमम्। 'दन्तप्रभाः। पुष्पाणीव।' इत्युपमागर्भत्वेनोपमितत्वेनेति भावः। समासः। अनन्तरम्। च। 'दन्तप्रभासदृशैः। पुष्पैः। चिता व्याप्ता।' इत्यादिसमासान्तराश्रयेण तद्भिन्नसमासस्याश्रयेण। समानविशेषणमाहात्म्यात् समानं प्रकृताप्रकृतोभयानुगतं यद्विशेषणं ('दन्तप्रभापुष्पचिता' इत्यादि) तस्य माहात्म्यं तस्मात्। हरि-

(एकदेशविवर्तिरूपक एव: पर्यालोचने वाद्यप्रकारे)



**लताव्यवहारप्रतीतिः। रूपकगर्भत्वे यथा—'लावण्यमधुभिः पूर्ण'मित्यादि। सङ्करगर्भत्वे यथा—'दन्तप्रभापुष्पचिता'इत्यादौ 'सुवेशा' इत्यत्र ह्युपमारूपकसाधकबाधकाभावात्सङ्करसमाश्रयणम्। समासान्तरं पूर्ववत्, समासान्तरमहिम्ना लताप्रतीतिः। एषु च येषां मते उपमासङ्करयोरेकदेशविवर्तिता नास्ति, तन्मते आद्यतृतीययोः समासोक्तिः। द्वितीयस्तु प्रकार एकदेशविवर्तिन्युपमैव।**

णेक्षणायाम् । लताव्यवहारप्रतीतिः । अयम्भावः—यद्यपि 'दन्तप्रभे'त्यादि विशेषणं प्रकृताप्रकृतानुगतत्वेन साधारणम्, अथापि 'सुवेशे'ति प्रकृतमात्रानुगतमिति प्रथमसुपमितं समासमाश्रित्य 'दन्तप्रभे'त्यादि उपमेयमेवानुगतं सङ्गच्छते । एवं च-पुष्पादिसदृशदन्तप्रभाचितत्वादिशालिनी हरिणेक्षणेति प्रथमोऽवगमः शक्त्योदेति, अनन्तरम् 'दन्तप्रभा इव पुष्पाणी'ति समासान्तरमाहात्म्येन दन्तप्रभासदृशपुष्पचितत्वादिशालिनी हरिणेक्षणेत्यवगमस्तयैव शक्त्या व्यक्त्या वोदेति, अस्मिन् पक्षे हारिणेक्षणा कापि लतेति प्रतीतिरीषद्दुरते । अथ-द्वाविमौ वाक्यार्थौ सव्येतरगोविषाणवद् विश्लिष्टौ यदि भवेतां, तर्हि—हरिणेक्षणाया लतात्वं सहृदयहृदयानुमतं न स्यात्, अस्ति च, एवं पुनर्वाक्यभेदोऽपि; अतः—यदि आनन्तरोऽर्थः प्रकृते आरोप्यते तदा न वाक्यभेदः, अत्र हेतुर्विशेषणसाम्यम्, एतदपि न श्लिष्टं, किंतु औपम्यगर्भितम् । एवं च—लतात्वव्यवहारवती हारिणेक्षणेति बोधः सम्पद्यते, नतु लतेव हरिणेक्षणेति; 'सुवेशा' इति विशेषणस्य लक्षणया 'परीता' इत्यर्थेऽप्रकृतानुगते सम्पद्यमानेऽपि 'राजत्युमावल्लभ' इत्यत्रेव 'हरिणेक्षणा' इत्यत्र श्लिष्टत्वस्यानुपपत्तेः । इति ।

एवमौपम्यगर्भितमुदाहृत्य रूपकगर्भितविशेषणसाम्यत्वे समासोक्तिमुदाहरति—**रूपकगर्भत्व** इत्यादिना । 'विशेषणसाम्यस्य समासोक्ति'रिति शेषः । स्पष्टम् । ननु कथमिदमेकदेशविवर्त्ति रूपकोदाहरणमपीति चेत् ! मतान्तरमिदमिति गृहाण । अत एव विवृतिकारा अप्याहुः—'अत्र लावण्यमधुनोराह्लादकत्वे लोचनरोलम्बयोः श्यामत्वादिना स्फुटसादृश्यसम्भवाद्रूपकाणां बहुत्वाभावाच्च समासोक्तिरेव, न त्वेकदेशविवर्त्तिरूपकम् । एकदेशविवर्त्तिरूपकस्य यदेतदुदाहरणं दत्तं तन्मतभेदेनेत्यवगन्तव्यम् । नन्वत्र मध्वादीनां मुखे बाधात् प्राथमिकबोधानुपपत्तिरिति चेत् ! न; यथा 'मुखचन्द्रं चुम्बति' इत्यादौ चुम्बनस्य मुखचन्द्रे बाधान्मुखे पर्य्यवसानं तथा मुखसम्बन्धस्य मध्वादावसम्भवाल्लावण्यादौ पर्य्यवसानमिति स्वीकारात् । नन्वेवमपि पूर्ववत् समासद्वयाङ्गीकारेणोपमागर्भमेवेदमस्तु किमधिकेन रूपकगर्भत्वकल्पनेनेति चेत् ! सत्यम्, गतानुगतिकन्यायेनास्य प्रकारस्य स्वीकाराद् ग्रन्थकृतैव खण्डनीयत्वाच्च ।' इति ।

उपमारूपकगर्भत्व उदाहरति—**सङ्करे**त्यादिना ।

**सङ्करगर्भत्वे** सङ्कर उपमारूपकयोः सन्दिग्धत्वं गर्भे यस्य तस्य भावस्तत्त्वं तस्मिन् सतीत्यर्थः 'विशेषणसाम्यस्य समासोक्ति'रिति शेषः । **यथा** । **'दन्तप्रभापुष्पचिता'इत्यादौ** ।

नन्वेदमौपम्यमात्रगर्भत्वे उदाहृतं, कथं पुनरौपम्यरूपकोभयगर्भत्व उदाह्रियते इत्याशङ्क्याह—**'सुवेशे**त्यादि ।

**हि** यतः । **'सुवेशा'इत्यत्र** । 'परीता' इति पाठे । **उपमारूपकसाधकबाधकाभावात्** उपमारूपकयोः साधकबाधकौ तयोरभावस्तस्मात् । उपमाया यत्साधकं तदेव रूपकबाधकं, यच्च रूपकसाधकं तदेवोपमाबाधकम्, एवं च प्रकृते 'सुवेशा'इत्यत्र 'परीते'ति पाठे नोपमा न वा रूपकं साधयितुं बाधितुं वा शक्यते, 'सुवेशे'त्येव पाठे तु उपमा सिध्यति रूपकं च बाध्यते; अत उपमारूपकयोः यत्साधकं बाधकं वा तस्या भावः स्फुटः । इति भावः । **सङ्करसमाश्रयणम्** । तथा च 'सुवेशे'ति पाठसत्त्वे इदमुपमाया एव, 'परीते'ति पाठे पुनरिदमेवोपमारूपकयोरिति फलितम् । ननु तथा समासे कथं रूपकमपीत्याह—**समासान्तरम**न्यः समासः समासपरिवर्त्तनमिति यावत् । **पूर्ववत्** पूर्वं यथा समासद्वैविध्यं दर्शितं तथात्र तृतीयविधः समासः समाश्रयणीयः । तथा च—रूपकगर्भत्वाङ्गीकारे 'दन्तप्रभा एव पुष्पाणि तैश्चिते'त्येवं समासो बोध्यः । ननु कथं तर्हि हरिणेक्षणायां लतात्वारोपः सेत्स्यतीत्याह—**समासान्तरमहिम्ना** समासान्तरस्य रूपकानुयोगितः समासस्य महिमा सार्थक्यान्वेषणं तेन । **लताप्रतीतिः** ।

अत्रापि मतभेदं दर्शयन् स्वमतमपि दर्शयति—**एषु** चेत्यादिना ।

**एषू**दाहृतेषु त्रिषु विशेषणसाम्येषु मध्ये । **च** । **येषाम्** । **मते** सिद्धान्ते । **उपमासङ्करयो**रुपमाया उपमारूपकयोश्चेत्यर्थः । **एकदेशविवर्त्तिता** । **न** । **अस्ति** । ये उपमां रूपकं तदुभयं वा एकदेशविवर्त्तित्वेन नाङ्गीकुर्वन्ति इति भावः । **तन्मते** । **आद्यतृतीययोः** प्रथमतृतीययोरुदाहरणयोः । 'दन्तप्रभा...सुवेशा'इत्यत्र 'दन्तप्रभा...

वाङ्गीकर्त्तुमुचिता। अन्यथा—

'ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम्।
प्रमोदयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार॥ १८९॥'

इत्यत्र कथं शरदि नायिकाव्यवहारप्रतीतिः। नायिकापयोधरेणार्द्रनखक्षताभशक्रचापधारणासम्भवात्। ननु अत्र 'आर्द्रनखक्षताभ'मित्यत्र स्थितमप्युपमानत्वं वस्तुपर्य्यालोचनया ऐन्द्रे धनुषि सञ्चारणीयम्। यथा—'दध्ना जुहोति' त्यादौ हवनस्यान्यथा सिद्धेर्दध्नि सञ्चार्य्यते विधिः। एवं च—इन्द्रचापाभमार्द्रनखक्षतं दधानेति प्रतीतिर्भविष्यतीति चेत्! न एवंविधानिर्वाहे कष्टसृष्टिकल्पनादेकदेशविवर्तिन्युपमाऽङ्गीकारस्यैव ज्यायस्त्वात्। अस्तु वाऽत्र यथाकथञ्चिद् समासोक्तिः, किन्तु—

---

रीता'इत्यत्र चेति यावत्। समासोक्तिः। द्वितीयो रूपकगर्भितत्वरूपः। तु। प्रकारो भेदः। एकदेशविवर्त्तिरूपकविषयः। एव। एवकारेण समासोक्तेर्व्युदासः। तदेवाहुः'मुखे मध्वाद्यन्वयस्यासम्भवात् प्रथमत एव पद्माध्याहारेण प्रतीतिः, कुतो व्यञ्जनामात्रप्राणासमासोक्तिरिति भावः।'इति। पर्य्यालोचने परितः सिद्धान्तत्वेनालोचनं विचारस्तस्मिन् सति। तु। आद्ये प्रकारे। 'दन्तप्रभा…सुवेशा…'इत्युदाहरण इति भावः। एकदेशविवर्त्तिनी। उपमा। एव। एवकारेण समासोक्तेर्व्युदासः अङ्गीकर्त्तुम्। उचिता। अन्यथा प्रकृते तदनङ्गीकारात्—

'पाण्डुपयोधरेण पाण्डुर्नीलतया श्वेतः, अन्यत्र दुग्धसम्भृततया श्वेतपीतः, असौ पयोधरो मेघः, अन्यत्र कुचस्तेन। 'पाण्डुः कुन्तीपतौ सिते।' इति हैमः, 'हरिणः पाण्डुरः पाण्डु'रित्यमरः, 'पयोधरः कोषकारे नारिकेले स्तनेऽपि च। कशेरुमेघयोः पुंसि'इति मेदिनी। आर्द्रनखक्षताभमार्द्रनखक्षतसदृशम्। ऐन्द्रमिन्द्रसम्बन्धि। धनुश्चापम्। दधाना। सकलङ्कं चिह्नविशेषशालिनं परस्त्रीगामिताऽपवाददूषितं वा। इन्दुम्। प्रमोदयन्ती 'प्रसाधयन्ती'ति पाठान्तरम्। शरत्। रवेः सूर्यापेक्षया सूर्य्यस्य वा। अभ्यधिकम्। तापम्। चकार। अत्रेन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः। तल्लक्षणं चोक्तं प्राक्॥ १८९॥'

इत्यत्र। शरदि। नायिकाव्यवहारप्रतीतिः। कथम्। शरदो नायिकासदृशत्वेन सहृदयहृदयाभ्यनुमता प्रतीतिर्न स्यात्, किन्तु अस्ति; तस्मात्तत्राप्यत्रेव सङ्गतिर्बोद्धव्येति भावः। ननु किमिह कारणमित्याशक्य तन्निर्दिशति—नायिकापयोधरेण नायिकावत् (नायिकाया इव) पयोधरस्तेन। 'शरद'इति शेषः। आर्द्रनखक्षताभशक्रचापधारणासम्भवात्। इदमुक्तम्—नायिकेव यदि शरन्नाङ्गीक्रियेत! तदा तथाऽभिधानं न सङ्गच्छेत। अतः—नायिकायाः शरदश्च, पयोधरस्य पयोधरस्य च, इन्दोर्जारस्य च, नायकस्य सूर्य्यस्य च यत्सादृश्यं तदार्थम्, आर्द्रनखक्षतस्यैन्द्रधनुषश्च सादृश्यं शाब्दमित्येकदेशविवर्तिन्युपमा यथा प्रकृतेऽङ्गीक्रियते तथा 'दन्तप्रभापुष्पचिते'त्यत्रापीति निर्बाधोपपत्तिः। इति। एतदेव स्थूणानिखननन्यायेन द्रढयति—ननु। अत्र 'आर्द्रनखक्षताभ'मित्यत्र। स्थितम्। अपि। उपमानत्वम्। वस्तुपर्य्यालोचनया वस्तुनोऽभिप्रेतार्थस्य पर्य्यालोचना तात्पर्य्यान्वेषणं तया। ऐन्द्रे। धनुषि। सञ्चारणीयम्। 'याचितमण्डनन्यायेने'ति शेषः। तदेवागमसिद्धं दृष्टान्तेन स्पष्टयति—यथा। 'दध्ना। जुहोति।'इत्यादौ'आगमवाक्ये'इति शेषः। हवनस्य होमस्य। अन्यथा'अग्निहोत्रं जुहुयात्'इत्यागमवचनद्वारा। सिद्धेः। दध्नि दधिपदे। विधिरप्राप्तप्रापकत्वरूपाऽऽगमोपदेशशक्तिः। सञ्चार्य्यते। 'तथाऽऽर्द्रनखक्षताभमित्यत्र स्थितमप्युपमानत्वं वस्तुपर्य्यालोचनया ऐन्द्रे धनुषि सञ्चार्य्यते'इति प्रकृतः सम्बन्धः। फलितमवगमयति—एवम्। च। ऐन्द्रचापाभम्। आर्द्रनखक्षतम्। दधाना। 'शर'दिति शेषः। इति। प्रतीतिः। भविष्यति। इदमुक्तम्—'अग्निहोत्रं जुहुया'दित्युत्पत्तिवाक्यम्, एतेन हवनं विहितम्, विहितस्यास्य च 'दध्ना जुहोती'त्यादिना पुनर्विधानमनुपयुक्तम्, तदिति तत्रादग्धदहनन्यायेन दधिपदे याचितमण्डनमिव सञ्चार्य्यते, तथा प्रकृते नायिकाया आर्द्रनखक्षतामैन्द्रधनुर्धारणोपयोगिताऽनुपपत्तौ ऐन्द्रे धनुषि उपमानत्वं याचितमण्डनन्यायेन सञ्चारणीयम्। एवं च—'ऐन्द्रधनुराभमार्द्रनखक्षत'मिति प्रत्ययोपपत्तौ नायिकाया उपमानत्वप्रत्ययो निर्बाधं सम्पत्स्यते। एतेन'ऐन्द्र'मित्यादौ कथं शरदि 'नायिकाव्यवहारप्रतीति'रिति दत्तोत्तरम्। इति। आक्षिपति—इति। चेत् 'समाधत्से'इति शेषः। न। 'एवं समाधेय'मिति शेषः। हेतुं निर्दिशति—एवंविधानिर्वाहे। कष्टसृष्टिकल्पनात् कष्टाया सृष्टिः

'नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः । पदेपदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥ १९० ॥'

इत्यादौ नास्त्येवान्यगतेः सम्भवः । किञ्च उपमायां व्यवहारप्रतीतेरभावात् कथं तदुपजीविकायाः समासोक्तेः प्रवेशः ? यदाहुः--

'व्यवहारोऽथवा तत्त्वमौपम्ये यत्प्रतीयते । तन्नौपम्यं समासोक्तिरेकदेशोपमा स्फुटा॥' इति ।

एवं च-उपमारूपकयोरेकदेशविवर्त्तिताऽङ्गीकारे तन्मूलसङ्करेऽपि समासोक्तेरप्रवेशो न्यायसिद्ध एव, तेनौपम्यगर्भविशेषणोत्थापितत्वं नास्या विषय इति विशेषणसाम्ये श्लिष्टविशेषणोत्थापिता साधारणविशेषणोत्थापिता चेति द्विधा । कार्य्यलिङ्गयोस्तुल्यत्वे च द्विविधेति चतुष्प्रकारा समासोक्तिः, सर्वत्रैवात्र व्यवहारसमारोपः कारणम् । स च क्वचित् लौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपः, शास्त्रीये वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपः, लौकिके वा शास्त्रीय-

---

समाधानं तस्याः कल्पनं प्रणयनं दुराग्रहेण समर्थनं तस्मात् । एकदेशविवर्तिन्युपमाऽङ्गीकारस्य । एव । ज्यायस्त्वान्महनीयत्वात् । ननु 'धर्मिकल्पनातो धर्मकल्पनायां लाघव'मिति नयेनैकदेशविवर्त्तिन्युपमाकल्पनाऽपेक्षयोपमेयस्योपमानत्वकल्पनं वरमित्याशङ्कयाह-अस्तु । वा । अत्र 'ऐन्द्रं धनु'रित्यादौ । यथा । कथञ्चित् । समासोक्तिः । किन्तु । 'नेत्रैरिवोत्पलैः...॥ १९० ॥'

इत्यादौ । अन्यगतेरेकदेशविवर्त्तिन्युपमाऽङ्गीकारभिन्नाश्रयस्य । सम्भवः । एव । न । अस्ति । 'किन्तु-'नेत्रै...।' '...सम्भवः'इत्यस्य स्थाने'नेत्रैरिवोत्पलै'रित्यादौ चान्यगत्यसम्भवात् इति विवृतिकारसम्मतः पाठः,अत एव-'अन्यगत्यसम्भवात्समासोक्तिप्रकारासम्भवात् एकदेशविवर्त्तिन्युपमैवाङ्गीकर्त्तुमुचिता'इति पूर्वेणान्वयः । ननु प्रागुक्तयुक्त्या उत्पलादावुपमानत्वं सद्धारणीयमिति चेत्, न; 'आर्द्रनखक्षताभ'मित्यत्रार्थ्या उपमाया अर्थवशेनैव कल्पनाया योग्यत्वात् प्रकृते तु श्रौत्यास्तदसम्भवादिति भावः ।' इति विवृतिकाराः । ननु अत्रापीवशब्दव्यत्ययेन व्यवहारारोपः सेत्स्यतीत्यत आह-किञ्चान्योऽपि तत्र समासोक्तेरनङ्गीकारे हेतुरिति भावः । उपमायाम् । व्यवहारप्रतीतेः। अभावात् असम्भवात् । 'विशेषणानां सादृश्योपलम्भमहिम्ना विशेष्यस्यापि अध्याहारेण प्रथमत एव सादृश्यप्रतीतिरनुभवसिद्धा, तथैव श्रोतुराकाङ्क्षाविरहाद् व्यवहारव्यञ्जनं न भवतीति भावः ।' इति विवृतं तर्कवागीशैः।कथम् । तदुपजीविकायाः सा व्यवहारप्रतीतिरिवोपजीवितोपस्कारिका यस्यास्तस्यास्तथोक्तायाः । समासोक्तेः । प्रवेशोऽन्तर्भावः । ननु समासोक्तौ प्राधान्येन व्यवहारप्रतीत्यङ्गीकारे किं मानमित्याशङ्कय प्राचां संवादं निर्दिशति-यत् । आहुः ।

'यत् यस्मिन् । औपम्ये सादृश्ये सति । व्यवहारोऽप्रस्तुतसाधर्म्यम् । अथवा । तत्त्वम् अप्रस्तुतत्वम् । 'तत्त्वप्रतीतौ समासोक्तिमन्ये स्वीकुर्वन्ति तन्मतानुसारेणैवा 'थवा तत्त्व' मित्युक्तम् ।' इति विवृतिकाराः । प्रतीयते व्यज्यते । तत् । औपम्यम् । समासोक्तिः । न । किन्तु-एकदेशोपमा एकदेशविवर्त्तिन्युपमा । स्फुटाऽनुभवसिद्धा । औपम्योत्थापितमप्रस्तुतसाधर्म्यमप्रस्तुतत्वं वा । समासोक्तेरविषयः, विषयः पुनरेकदेशोपमाया इति फलितोऽर्थः ॥' इति ।

उक्तमर्थं प्रकृते सङ्गमयति-एवम् । च । उपमारूपकयोः । एकदेशविवर्त्तिताऽङ्गीकारे । तन्मूलसङ्करे एकदेशविवर्त्तितामूलकोपमारूपकसङ्करे । अपि चेत्यर्थः । समासोक्तेः । अप्रवेशोऽतिव्याप्त्यभावः । न्यायसिद्धः । एव । तेन । औपम्यगर्भविशेषणोत्थापितत्वं विशेषणसाम्यस्यौपम्यगर्भत्वमिति भावः । अस्याः समासोक्तेः । विषयः । न । इति । विशेषणसाम्ये । श्लिष्टविशेषणोत्थापिता । साधारणविशेषणोत्थापिता । च 'समासोक्ति' रिति शेषः । इति । द्विधा, 'ननु त्रिधा' इति शेषः । कार्य्यलिङ्गयोः । तुल्यत्वे सादृश्ये । च । 'सम्भवती'ति शेषः । द्विविधा । इति । चतुष्प्रकारा । समासोक्तिः । सर्वत्र सर्वप्रभेदासु । एव । अत्रासु समासोक्तिष्विति भावः । व्यवहारसमारोपः । 'अप्रस्तुतस्ये'ति शेषः । कारणम् । सोऽप्रस्तुतव्यवहारसमारोपः । च । क्वचित् । लौकिके । वस्तुनि । लौकिकवस्तुव्यवहारसमारोपस्तद्रूप इति भावः । शास्त्रीये । वस्तुनि । शास्त्रीयवस्तुव्यवहारसमारोपः। लौकिके । वा 'वस्तुनी'ति शेषः । शास्त्रीयवस्तुव्यवहार-

वस्तुव्यवहारसमारोपः, शास्त्रीये वा लौकिकवस्तुव्यवहारसमारोप इति चतुर्द्धा। तत्र लौकिक-वस्त्वपि रसादिभेदादनेकविधम्, शास्त्रीयमपि तर्कायुर्वेदज्योतिःशास्त्रादिप्रसिद्धतयेति बहुप्रकारा समासोक्तिः। दिङ्मात्रं यथा—'व्याधूय यद्वसनम्...' इत्यादौ लौकिके वस्तुनि लौकिकस्य हठ-कामुकस्य व्यवहारादेः समारोपः।

'यैरेकरूपमखिलास्वपि वृत्तिषु त्वां पश्यद्भिरव्ययमसङ्ख्यतया प्रवृत्तम्।
लोपः कृतः किल परत्वजुषो विभक्तेस्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये॥ १९१॥'

अत्रागमशास्त्रप्रसिद्धे वस्तुनि व्याकरणप्रसिद्धवस्तुव्यवहारसमारोपः। एवमन्यत्र, रूपके ऽप्रकृतमात्मस्वरूपसन्निवेशेन प्रकृतस्य रूपमवच्छादयति, इह तु स्वावस्थासमारोपेणावच्छादित-

---

समारोपः। शास्त्रीये 'वस्तुनि' इति शेषः। वा। लौकिकवस्तुव्यवहारसमारोपः। इति। चतुर्द्धा। तत्र तेषु चतुर्षु प्रकारेषु मध्ये। लौकिकवस्तु। अपि। रसादिभेदात्। अनेकविधम्। एवम्—शास्त्रीयम्। अपि 'वस्त्वि'ति शेषः। तर्कायुर्वेदज्योतिःशास्त्रादिप्रसिद्धतया 'अनेकविध'मिति पूर्वेणान्वेति। इति। बहुप्रकाराऽनेकविधा। समासोक्तिः।

उदाहरति—दिङ्मात्रम्। यथा। 'व्याधूय। यद्वसनम्...' इत्यादौ। लौकिके। वस्तुनि। लौकिकस्य। हठकामुकस्य। व्यवहारादेः। समारोपः।

'हे भगवन्! (इदमध्याहार्य्यम्)। अखिलासु समस्तासु। अपि। वृत्तिषु वस्तुषु पदार्थान्वयेषु वा। अव्ययमविनाशिनं निपातविशेषं वा। असंख्यतयाऽनन्तरूपतया सङ्ख्याविशेषप्रतिपादकतया वा। प्रवृत्तम्। त्वाम्। एकरूपम्। पश्यद्भिः। यैः। परत्वजुषः परत्वस्योत्कर्षस्य पुरोवर्त्तित्वस्य वा। विभक्तेर्भेदग्रहस्य प्रत्ययविशेषस्य वा। लोपो निरासः। किल। कृतः। तैः। तव। लक्षणं विशिष्टज्ञानं सूत्रं वा। कृतम्। इति—ध्रुवं निश्चितम्। एव। मन्ये। वसन्ततिलकं वृत्तम्, एतल्लक्षणं चोक्तं प्राक्॥ १९१॥'

उदाहार्य्यं निर्दिशति—अत्रेत्यादिना।

अत्रोदाहृते पद्ये। आगमशास्त्रप्रसिद्धे आगमा वेदाः शास्त्राणि न्यायादीनि तेषु प्रसिद्धस्तत्र। आगमानां शास्त्रत्वेऽपि ततो विभज्याभिधानं तेषामपौरुषत्वेन वैलक्षण्यद्योतनार्थम्। वस्तुनि 'भगवद्रूपे'इति शेषः। व्याकरण-प्रसिद्धवस्तुव्यवहारसमारोपो व्याकरणप्रसिद्धं वस्तु अव्ययरूपं तस्य व्यवहारसमारोपः। एवम्। अन्यत्र लौकिके शास्त्रीयस्य शास्त्रीये वा लौकिकस्य व्यवहारस्य समारोप ऊह्य इति भावः। तत्र लौकिके शास्त्रीयव्यवहारसमारोपो यथा—'सीमानं न जगाम यन्नयनयोर्नान्येन यत्सङ्गतं न स्पृष्टं वचसा कदाचिदपि यद् दृष्टोपमानं न यत्। अर्थादापतितं न यन्न च न यत् तत् किञ्चिदेणीदृशां लावण्यं जयति प्रमाणरहितं चेतश्चमत्कारकृत्॥' शास्त्रीये लौकिकव्यवहारसमारोपो यथा—'कृत्वा सूत्रैः सुगूढार्थैः प्रकृतेः प्रत्ययं परम्। आगमान् भावयन् भाति वैयाकरणपुङ्गवः॥' इति दिक्। अत्र रसगङ्गाधरकाराः—'इयं चालङ्कारान्तरेषु बहुष्वानुगुण्येन स्थिता, यथा—"स्थितेऽपि सूर्य्ये पद्मिन्यो वर्त्तन्ते मधुपैः सह। अस्तंगते तु सुतरां स्त्रीणां कः प्रत्ययो भवेत्॥" अत्र समर्थ्यत्वेन स्थिताऽर्थान्तरन्यासानुगुण्यमाधत्ते। "उत्तमानामपि स्त्रीणां विश्वासो नैव विद्यते। राजप्रियाः कैरविण्यो रमन्ते मधुपैः सह॥" अत्र समर्थकत्वेन "व्यागुञ्जन्मधुकरपुञ्ज-मञ्जुगीतान्याकर्ण्य स्तुतिमुदयत्त्रपाऽतिरेकात्। आभूमीतलनतकन्धराणि मन्येऽरण्येऽस्मिन्नवनिरुहां कुटुम्बकानि॥" अत्र हि परकृतनिजस्तुत्याकर्णनेकन्धरानमनादिविशेषणसाम्योत्थापितया समासोक्त्या सज्जनव्यवहाराभिन्नतया स्थित एव तरुव्यवहारे भूशाखासम्बन्धाभेदाध्यवसितमस्तकमूलनमननिमित्तोत्थापिता त्रपारूपहेतूत्प्रेक्षा सम्भवति, अन्यथा कितवकृतग्रीवानमनस्यापि त्रपोत्थापकताऽऽपत्तेः। इत्युत्प्रेक्षाऽनुगुणा समासोक्तिः। एवम्—"राज्याभिषेकमाज्ञाय शम्बरासुरवैरिणः। सुधाभिर्जगतीमध्यं लिम्पतीव सुधाकरः॥" इत्यत्रापि स्वामिसेवकव्यवहारमूला सुधालेपनोत्प्रेक्षा। अमुयैव दिशा अचेतनव्यवहारे प्रकृते चेतनव्यवहारसम्बन्धिस्वरूपहेतुफलोत्प्रेक्षायां च समासोक्तिरेव मूलम्।' इत्यप्याहुः।

अलङ्कारान्तरादस्या भेदं निर्दिशति—रूपके इत्यादिना।

रूपके। अप्रकृतमुपमानरूपं। वस्तु। आत्मस्वरूपसन्निवेशेनात्मस्वरूपारोपणेन। प्रकृतस्योपमेयस्य। रूपं स्वरूपम्। अवच्छादयति तिरोधत्ते। इहास्यां समासोक्तौ। तु। स्वावस्थासमारोपेण स्वस्याप्रकृतस्य

स्वरूपमेव तत्पूर्वावस्थातो विशेषयति। अत एवा"त्र व्यवहारसमारोपो नतु स्वरूपसमारोपः" इत्याहुः। उपमाध्वनौ श्लेषे च विशेष्यस्यापि साम्यम्, इह तु विशेषणमात्रस्य; अप्रस्तुतप्रशंसायां प्रस्तुतस्य गम्यत्वम्, इह त्वप्रस्तुतस्य; इति भेदः।

**१३८ उक्तैर्विशेषणैः साभिप्रायैः परिकरो मतः ॥ ११० ॥**

यथा—'अङ्गराज ! सेनापते ! द्रोणोपहासिन् ! कर्ण ! रक्षैनं भीमाद्दुःशासनम् ॥'

**१३९ शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम्।**

'स्वभावादेकार्थै'रित्यनेन शब्दश्लेषादस्य व्यवच्छेदः, 'वाचन' मित्यनेन च ध्वनेः।

---

वस्थासाधर्म्यं तस्याः समारोपस्तेन । **अवच्छादितस्वरूपम**वच्छादितं तिरोहितं स्वरूपं यस्य तत्तथोक्तम् । **एव** । **तत्** प्रकृतम् । **पूर्वावस्थातः** पूर्वाऽप्रकृतसाधर्म्यारोपात्प्राग्भवाऽवस्था तस्याः । **विशेषयति** उत्कृष्टत्वेन बोधयतीति भावः । अत्र कर्तृपदमप्रकृतमित्येव । **अतः। एव** । "**अत्र** समासोक्तौ । **व्यवहारसमारोपः** । **नतु** । **स्वरूपसमारोपः** ।"**इति** । **आहुः** । **उपमाध्वनौ** । **श्लेषे** । **च** । **विशेष्यस्य** । **अपि**'विशेषणस्य तु स्फुटमेवे'ति शेषः । **साम्यम्** । **इह**ास्यां समासोक्तौ । **तु** । **विशेषणमात्रस्य**'साम्य'मिति पूर्वतोऽन्वेति 'प्रतीयत'इति शेषः। **अप्रस्तुतप्रशंसायाम्** । **प्रस्तुतस्यो**पमेयस्य । **गम्यत्वं** व्यङ्ग्यत्वम् । **इह** समासोक्तौ । **तु** । **अप्रस्तुतस्यो**पमानस्य । **इति** इत्येवमित्यर्थः । **भेदः** ।

परिकरं लक्षयति–१३८ **उक्तैः** कथितैः । **साभिप्रायैर**भिप्रेतार्थबोधकतापूर्णैः प्रकृतार्थोपकारकचमत्कारिव्यङ्ग्यताशालिभिरिति यावत् (अत एवास्य हेतोर्वैलक्षण्यम्, व्यङ्ग्यस्य तत्रानावश्यकत्वात्) । **विशेषणैः** । **परिकरः** । **मतः** । परिकरोति प्रकृतमर्थमुपकरोतीति सोऽस्मिन्नस्तीति तथोक्तः । अत्र मत्वर्थीयोऽच् । 'संपरिभ्यां करोतौ भूषणे ।' ६।१।१३७ इत्यनेन सुट् तु न, भूषणार्थाभावात् । अत्र 'विशेषणै'रिति बहुवचनमविवक्षितम्, तेन–एकस्मिन् अपि प्रकृतार्थोपकारकचमत्कारिताव्यञ्जके विशेषणेऽप्ययं सम्भवति । अत एव'वयं त्वालोचयामः–तादृशैकविशेषणोपन्यासेऽप्यलङ्कारत्वमुचितम्, अपुष्टार्थत्वविरहस्य निर्विशेषणतयाऽप्युपपत्ते,रनुभवसिद्धत्वाभावाद्वैचित्र्यस्य चानुभवसिद्धत्वात् ।'इति प्रदीपकाराः । अत्रोदाहरणं यथा–'क्षितिभृतैव सदैवतका वयं वनवता,ऽनवता किमहिद्रुहा' इति, 'विशेषणै'रिति विशेष्यस्याप्युपलक्षकम्, एतेन–'साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुरः । चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥'इति चन्द्रालोककृताऽङ्गीकृतः परिकराङ्कुरोऽत्रैवान्तर्भावितः ॥ ११० ॥

उदाहरति–यथा–'अङ्गराजे'त्यादिना ।

'**हे अङ्गराज** अङ्गस्य दुर्योधनदत्तस्य देशविशेषस्य राजेति तत्सम्बुद्धौ तथोक्त ! **सेनापते** सेनाया रक्षकपदे नियुक्त । **द्रोणोपहासिन्** द्रोणं तन्नामानमाचार्य्यमुपहसतीत्येवंशील इति तत्सम्बुद्धौ तथोक्त ! **हे कर्ण** ! **एनं** दुर्योधनस्य भ्रातरं युवराजपदारूढमिति भावः । **दुःशासनम्** । **भीमात्** । **रक्ष** ।' वेणीसंहारे भीमेन हन्यमानं दुःशासनं रक्षितुमक्षममाणं कर्णं प्रति तत्कृताचार्य्योपहासामर्षितस्याश्वत्थाम्न उक्तिरियम् । अत्र विशेषणत्रयं कर्णस्य तद्रक्षणौचित्यं सूचयत्त्रपां समुद्भावयति । यथा वा–'मदकामविमोहमत्सरा रिपवस्त्वत्पुर एव हो विभो । रभसा बत हन्त तावकं प्रहरन्ते न कथं निहंसि तान् ॥' इति ।

श्लेषं लक्षयति–१३९ **शब्दै**रित्यादिना ।

१३९ **स्वभावात्** वस्तुतत्त्वविचारतः । **एकार्थै**रनेकार्थप्रतिपादकताशून्यैः । **शब्दैः** । **अनेकार्थवाचनम**नेकार्थाभिधायकं'शक्त्या,-लक्षणया वा, तदुभयेन वा'इति शेषः । **श्लेषः** ।

शब्दश्लेषाद्भेदकं निर्दिशति–'**स्वभावादि**त्यादिना । स्पष्टम् ।

ध्वनेर्भेदकं निर्दिशति–**वाचन**मित्यादिना । स्पष्टम् । इदमुक्तम्–स्वभावत एकार्थकाः शब्दाः परिवृत्तिसहाः सन्त एवानेकार्थप्रतिपादका भवन्तीति शब्दश्लेषादेतस्य भेदः । अत एव प्रदीपकारा अप्याहुः–'परिवृत्तिसहानामेव शब्दानामेकवृन्तफलगतफलद्वयन्यायेन यत्रानेकार्थप्रतिपादकता सोऽर्थश्लेषः ।' इति । एकस्मिन्नर्थे प्रकरणादिना नियन्त्रिते व्यञ्जनया द्वितीयोर्थो यत्र बुध्यते, स ध्वनिर्भवति, यथा–'राजत्युमावल्लभ' इत्यादौ, श्लेषोऽयं पुनरेकार्थशब्दमूलः, अतोऽत्र प्रकरणादिनियन्त्रणाभावः, प्रकरणादिनियन्त्रणमयं हि अनेकार्थानां शब्दानाम् । स्फुटश्चैवं ध्वनिश्लेषयोर्भेदः ।

उदाहरणम्—

'प्रवर्त्तयन् क्रियाः साध्वीर्मालिन्यं हरितां हरन्। महसा भूयसा दीप्तो विराजति विभाकरः॥१९२॥'

अत्र प्रकरणादिनियमाभावाद् द्वावपि राजसूर्य्यौ वाच्यौ।

१४० क्वचिद्विशेषः सामान्यात्सामान्यं वा विशेषतः॥ १११ ॥
कार्य्यान्निमित्तं कार्य्यं च हेतोरथ समात् समम्।
अप्रस्तुतात् प्रस्तुतं चेद्गम्यते पञ्चधा ततः॥ ११२ ॥
अप्रस्तुतप्रशंसा स्याद्

क्रमेणोदाहरणम्—

'पादाहतं यदुत्थाय मूर्धानमधिरोहति। स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः॥ १९३ ॥'

---

एतेन—'विभाकरः सूर्य्यस्तन्नामको राजा चे'ति श्लेषोदाहरणप्रसङ्गे व्याख्यानं निरस्तम्, तत्सद्भावाङ्गीकारे हि उपमाध्वनेर्निवारणासम्भवः। इति सुष्ठूक्तम् 'वाचन' मित्यादि। इति।

उदाहर्तुमुपक्रमते-उदाहरणम्। (उदाह्रियते इति भावः) 'प्रवर्तयन्नित्यादिना।

'साध्वीः शोभनाः सन्ध्योपासनादिरूपा निर्विघ्नगमनादिरूपाश्च, अन्यत्राविरुद्धाचरणरूपाः। क्रियाः। प्रवर्त्तयन्। हरितां दिशाम्, अन्यत्र तत्रत्यदस्युजनानाम्। मालिन्यं तमस्खितासम्पत्तिम्, अन्यत्रोद्दण्डत्वादिरूपम्। हरन् निरस्यन् निर्वर्त्तयन् वा। भूयसाऽतिविपुलेन। महसा तेजसा। दीप्तः। विभाकरः सूर्य्यः, अन्यत्र लक्षणया तथाऽभिमतो राजा। विराजति॥ १९२ ॥'

विभाकरशब्दस्य राजविशेषवाचकत्वाभावेनानेकार्थकत्वाभावादभिधाया नियन्त्रणं न सम्भवति, अतोऽत्रोपमाध्वनिशङ्का हेयेत्याशयेनाह-अत्रेत्यादिना। स्पष्टम्। वाच्यौ 'अभिधया लक्षणया चे'ति शेषः। अत्र वाच्यशब्दो व्यङ्ग्यातिरिक्ताभिप्रायपरतया लक्ष्यस्याप्युपलक्षको बोध्य इति सर्वं निरवद्यम्। यथा वा—'स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्। अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च॥' इत्युदाहृते पद्ये।

अप्रस्तुतप्रशंसां लक्षयति-१४० क्वचित्। सामान्यात्. साधारणात्। विशेषः। वा। क्वचित्-विशेषतो विशेषात्। सामान्यम्। क्वचित्-कार्य्यात्। निमित्तं कारणम्। क्वचित्-हेतोः कारणात्. च। कार्य्यम्। अथ। क्वचित्-समात् सदृशात्। समं सदृशम्। इत्येवम्-अप्रस्तुतात्। प्रस्तुतम्। चेत्। गम्यते व्यज्यते। ततः। अप्रस्तुतप्रशंसाऽप्रस्तुतस्य प्रशंसाकथनमिति तदभिधेयाऽलङ्कृतिः। पञ्चधा पञ्चविधा। स्यात्। इदमुक्तम्-अप्रस्तुतात् प्रस्तुतस्य व्यङ्ग्यत्वमप्रस्तुतप्रशंसा, सा च पञ्चविधा, अप्रस्तुतात् प्रस्तुतस्य व्यज्यमानस्य पञ्चविधत्वात्। तत्र प्रस्तुतं सामान्यरूपं, विशेषरूपं, कार्य्यरूपं, निमित्तरूपं, समरूपं च; प्रस्तुतमप्येवं क्रमेण विशेषरूपं, सामान्यरूपं, निमित्तरूपं, कार्य्यरूपं, समरूपं चेति। तथा च-'अप्रस्तुतात्'इति 'सामान्या'दित्यादिना, 'प्रस्तुत'मिति लिङ्गविपरिणामविपरिणामाभ्यां 'विशेष'इत्यादिना च विशिनष्टि, तथा हि-चेत् सामान्यात् अप्रस्तुतात् क्वचित् विशेषः प्रस्तुतो गम्यते तर्हि प्रथमा, चेत् विशेषादप्रस्तुतात् सामान्यं प्रस्तुतं क्वचिद् गम्यते तर्हि द्वितीया, चेत् क्वचित् कार्य्यादप्रस्तुतात् निमित्तं प्रस्तुतं गम्यते तर्हि तृतीया, चेत् निमित्तात् अप्रस्तुतात् क्वचित् कार्य्यं प्रस्तुतं गम्यते तर्हि चतुर्थी, क्वचिच्चेदेवं समादप्रस्तुतात्समं प्रस्तुतं गम्यते तर्हि पञ्चमी अप्रस्तुतप्रशंसा स्यात् इति फलितोऽर्थः। अस्याः सामान्यं लक्षणम् 'अप्रस्तुतात् प्रस्तुतं गम्यते चे'दिति, विशेषलक्षणं पुनः 'क्वचिद्विशेषः सामान्या'दित्यादि। अत्राप्रस्तुतात्प्रस्तुतस्य व्यङ्ग्यत्वम्, समासोक्तौ तु प्रस्तुतात् अप्रस्तुतस्य व्यङ्ग्यत्वम्, इत्यनयोर्भेदः। इति॥ १११ ॥ ११२ ॥

उदाहर्त्तुमुपक्रममाण आह-क्रमेणेत्यादि। स्पष्टम्। 'पादेत्यादि।

'यत् ( रजः ) पादाहतं पादेनाहतं ताडितमिति तथोक्तम्। 'स'दिति शेषः। उत्थायोद्गतं भूत्वा। मूर्धानं मस्तकम्। अधिरोहत्यधितिष्ठति। तत्। रजः। अपमानेऽवज्ञायां सत्याम्। अपि। स्वस्थादप्रतिकारेच्छोः। एव। देहिनः प्राणिनस्तदपेक्षयेति यावत्। वरमुत्तमम्, मनागभिमतं वा। 'देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबं मनाक् प्रिये।' इत्यमरः। शिशुपालक्षस्येदं पद्यम्। बलदेवस्य सभायामुक्तिरियम्॥ १९३ ॥'

अत्रा'स्मदपेक्षया रजोऽपि वर'मिति विशेषे प्रस्तुते सामान्यमभिहितम्।

'स्रगियं यदि जीवितापहा हृदये किं निहिता न हन्ति माम्।
विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ॥ १९४ ॥'

अत्रेश्वरेच्छया क्वचिदहितकारिणोऽपि हितकारित्वं हितकारिणोऽप्यहितकारित्वमिति सामान्ये प्रस्तुते विशेषोऽभिहितः। एवं चात्राप्रस्तुतप्रशंसामूलोऽर्थान्तरन्यासः। दृष्टान्ते प्रख्यातमेव वस्तु प्रतिबिम्बत्वेनोपादीयते, इह तु विषामृतयोरमृतविषीभावस्याप्रसिद्धेर्न तस्य सद्भावः।

'इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा।
कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव ॥ १९५ ॥'

---

लक्ष्यार्थं निर्दिशति–अत्रेत्यादिना। स्पष्टम्। 'देहिनस्तद्वरं रजः'इत्यप्रस्तुताभिधान'मस्मदपेक्षया रजोऽपि वर'मिति विशेषस्य प्रस्तुतार्थस्य व्यञ्जकम्। इति भावः।

'यदि। इयम्। स्रक् माला। जीवितापहा जीवितं प्राणानपहन्तीति तथोक्ता। 'अपे क्लेशतमसोः।' ३।२।५० इत्यनेन डप्रत्ययस्यानुपपत्तेरेतादृशप्रयोगाणां च बाहुल्यात् 'पृषोदरादीनि यथोपदिष्टम्।' ६।३।१०९ इत्यनेन साधुत्वं बोध्यम्। तर्हि–हृदये वक्षसि। निहिता मया स्वयं स्वस्योरसि स्थापितेति भावः। माम् (अजम्)। किम्। न। 'स्रगिय'मिति शेषः। हन्ति हिनस्ति ? अतो नेयं जीवितापहा, अथ कथमिन्दुमतीमपहृतवती ? इत्याशङ्कयाह–ईश्वरेच्छयेश्वरस्य कर्तुमकर्तुमन्यथा वा कर्तुं समर्थस्य स्वतन्त्रतया जगन्नियन्तुरिति यावत् इच्छा तया। विषम्। अपि किंपुनरमृतम्। अमृतम्। क्वचित्। भवेत्। अमृतम्। वा। 'अपी'ति शेषः। विषम्। 'क्वचित् भवेत्'इति पूर्वेणान्वेति। रघुवंशे इन्दुमत्या मालास्पर्शमात्रेण प्राणनिर्गमेऽजस्य विलापोऽयम्, अत्र वैतालीयं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ १९४ ॥

लक्ष्यार्थं निर्दिशन् लक्ष्यं समर्थयते–अत्रेत्यादिना।

अत्र। ईश्वरेच्छया। क्वचित् (मादृशे)। अहितकारिणः (इन्दुमत्याः प्राणघातकत्वेन मालारूपस्य वस्तुनः)। अपि। हितकारित्वम् (प्राणान् हन्तुमप्रवृत्तत्वम्)। हितकारिणः (मादृशस्य प्राणाघातकस्य)। अपि। अहितकारित्वम् (इन्दुमत्याः प्राणघातकत्वम्) 'भवती'ति शेषः। इति। सामान्ये। प्रस्तुते'विवक्षितेऽपि तदनभिधाय तद्व्यञ्जयितु'मिति शेषः। विशेषोऽमृतविषयोर्विषामृतीभवनम्। अभिहितः। एवं पूर्ववाक्यार्थस्योत्तरवाक्यार्थेन समर्थनात्। च। अत्र। अप्रस्तुतप्रशंसामूलः। अर्थान्तरन्यासः। 'अपि ज्ञेय'इति शेषः। ननु अत्र बिम्बप्रतिबिम्बत्वसद्भावेन दृष्टान्त एवायं किन्न स्यादित्याशङ्कयाह–दृष्टान्ते। प्रख्यातं प्रसिद्धम्। एव'नत्वप्रसिद्धम्'इति शेषः। वस्तु। प्रतिबिम्बत्वेन। उपादीयते। इहाप्रस्तुतप्रशंसायाम्। तु। विषामृतयोः। अमृतविषीभावस्य। अप्रसिद्धेः प्रख्यातत्वाभावात्। तस्य दृष्टान्तस्य प्रतिबिम्बत्वसद्भावकल्पनस्य वा। सद्भावः। न।

'सीतायाः जानक्याः। पुरतः पुरस्तात्। इन्दुश्चन्द्रः। अञ्जनेन। लिप्तः। इव। 'प्रस्तुत'इति शेषः। मृगीणाम्। दृष्टिः। जडिता स्तब्धा। इव। 'प्रस्तुत'इति शेषः। विद्रुमदलं प्रवालपत्रम्। प्रम्लानारुणिम। प्रकर्षेण म्लानो हतश्रीररुणिमा रक्तिमा यस्य तादृशम्। इव। 'प्रस्तुत'इति शेषः। हेमप्रभा स्वर्णशोभा। श्यामा। इव। 'प्रस्तुत'इति शेषः। कोकिलवधूकण्ठेषु कोकिलानां पिकानां वध्वः तासां कण्ठा ध्वन्युद्भूततास्थानानि तेषु। इव। कलयाऽऽधिक्येन। कार्कश्यं कर्कशत्वम्। च। प्रस्तुतम्। हन्त। शिखिनां मयूराणाम्। बर्हाः पिच्छानि। 'बर्हं पिच्छे दलेऽस्त्रियाम्।' इति मेदिनी। अत्र यद्यपि क्लीवलिङ्गतयैव निर्देशो युक्तः, तथाऽपि छन्दोऽनुरोधेन पुँल्लिङ्गत्वेन निर्देशो बोध्यः। च। सगर्हा गर्हिताः। इव। 'प्रस्तुता' इति शेषः। इदमुक्तम्–सीताया मुखच्छवेः पुरस्तात् इन्दुश्छविरञ्जनलिप्तेव, सीताया दृष्टिच्छवेः पुरस्ताच्च मृगीणां दृष्टिच्छविश्चित्रितेव, सीताया अधरच्छवेः पुरस्ताच्च विद्रुमदलच्छविः प्रम्लानेव, सीतायाः शरीरच्छवेः पुरस्तात्सुवर्ण-

अत्र सम्भाव्यमानेभ्य इन्द्वादिगताञ्जनलिप्तत्वादिभ्यः कार्य्येभ्यो वदनादिगतसौन्दर्य्यविशेषरूपं प्रस्तुतं कारणं प्रतीयते।

'गच्छामीति मयोक्तया मृगदृशा निःश्वासमुद्रेकिणं
त्यक्त्वा तिर्य्यगवेक्ष्य बाष्पकलुषेणैकेन मां चक्षुषा।
अद्य प्रेम मदर्पितं प्रियसखीवृन्दे त्वया बध्यता-
मित्थं स्नेहविवर्धितो मृगशिशुः सोत्प्रासमाभाषितः॥ १९६ ॥'

अत्र कस्यचिदगमनरूपे कार्य्ये कारणमभिहितम्। तुल्ये प्रस्तुते तुल्याभिधाने च द्विधा, श्लेषमूला, सादृश्यमात्रमूला च; श्लेषमूलाऽपि समासोक्तिवद्विशेषणमात्रश्लेषे श्लेषवद्विशेष्यस्यापि-श्लेषे भवतीति द्विधा। क्रमेण यथा—

'सहकारः सदामोदो वसन्तश्रीसमन्वितः। समुज्वलरुचिः श्रीमान् प्रभूतोत्कलिकाऽऽकुलः॥ १९७॥'

---

च्छविः श्यामैव, सीताया गिरो माधुर्य्यात् पुरस्ताच्च कोकिलानां कण्ठध्वनिः कर्कश इव, सीतायाः केशच्छवेः पुरस्ताच्च बर्हाणि गर्हितानीव जातानि। इति। महानाटकस्येदं पद्यम्, अत्र शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं चोक्तं प्राक्॥ १९५ ॥'

लक्ष्यार्थं निर्दिशति-अत्रेत्यादि।

अत्रोदाहृते पद्ये। सम्भाव्यमानेभ्य उत्प्रेक्ष्यमाणेभ्यः। इन्द्वादिगताञ्जनलिप्तत्वादिभ्य आदिपदाभ्यां दृष्ट्यादेर्जडितत्वादेश्च ग्रहणम्। कार्य्येभ्यः। 'अभिधीयमानेभ्य' इति शेषः। वदनादिगतसौन्दर्य्यविशेषरूपम्। 'सीतायाः' इति शेषः। प्रस्तुतम्। कारणम्। प्रतीयते।

'गच्छामि साम्प्रतं गमिष्यामि। 'वर्त्तमानसामीप्ये वर्त्तमानवद्वा।' ३। ३। १३१ इति लट्। इति। मया। उक्तया। मृगदृशा मृगाक्ष्या। उद्रेकिणं दीर्घम्। निःश्वासम्। त्यक्त्वा। बाष्पकलुषेण वाष्पेणाञ्जनकलुषितेनाश्रुणा कलुषं तेन मलिनं तेन। 'कलुषोऽनच्छ आविलः।' इत्यमरः। एकेन। चक्षुषा। माम्। तिर्यक् वक्रम्। अवेक्ष्य दृष्ट्वा। अद्य। मदर्पितं मय्यर्पितमिति तत्तथोक्तम्। प्रेम (कर्म)। त्वया। प्रियसखीवृन्दे प्रियाः प्रीतिपात्रभूताः सख्योऽनुरागेण गृहीता अन्या अङ्गनास्तासां वृन्दं समूहस्तत्र। बध्यताम्। इत्थमनेन प्रकारेण। स्नेहविवर्धितः स्नेहेन विवर्धितः परिपोषितः। मृगशिशुर्मृगपोतः। सोत्प्रासं साक्षेपम्। आभाषितः। कस्यचित् सखायं प्रति स्वभाविप्रयाणश्रवणदुःखितकुपितायाः स्वोत्सङ्गस्थमृगशावकनिराकरणेन स्वप्रयाणं निषेधन्त्याश्चेष्टितवर्णनमिदम्। अत्र शार्दूलविक्रीडितं वृत्तम्॥ १९६ ॥'

लक्ष्यार्थं निर्दिशति-अत्रेत्यादिना।

अत्र। कस्यचित् (स्वप्रियायाश्चेष्टितं वर्णयतः)। अगमनरूपे गमनावरोधात्मनि। कार्य्ये। प्रस्तुते तदनभिधाय' इति शेषः। कारणं प्रेयस्या उद्वेगाधिक्यरूपो हेतुः। अभिहितम्। 'अद्य प्रेमे'त्यादिनेति शेषः। तथा च-प्रेयस्या उद्वेगाधिक्यरूपादभिहितादप्रस्तुतात् कारणात् प्रेयसो गमनावरोधरूपं प्रस्तुतं कार्य्यं सूचितमिति निष्कृष्टोऽर्थः।

समात् समे प्रस्तुतेऽस्या भेदानाह-तुल्ये इत्यादिना।

तुल्ये समे। प्रस्तुते। तुल्याभिधाने तुल्यस्य समस्य अप्रस्तुतस्याभिधानं तत्र। च। 'अप्रस्तुतप्रशंसे'ति शेषः। द्विधा। तदेव स्पष्टयति-श्लेषमूला। सादृश्यमात्रमूला। मात्रपदेन श्लेषस्य व्यवच्छेदः। च। श्लेषमूला। अपि। समासोक्तिवद् समासोक्तिरिव। विशेषणमात्रश्लेषे। मात्रपदेन विशेष्यस्य व्यवच्छेदः। 'सम्भवती'ति शेषः। श्लेषवत् श्लेष इव। विशेष्यस्य। अपि 'विशेषणस्य चे'त्यर्थः। श्लेषे। भवति। इति। द्विधा।

उदाहर्तुमुपक्रमते-क्रमेणेत्यादिना। स्पष्टम्। 'सहकार इत्यादि।

'सदामोदः सन्नामोदः सौरभमानन्दो वा यस्य तथोक्तः। 'आमोदः सोऽतिनिर्हारी'ति '...प्रमोदामोदसम्मदाः' इति चामरः। वसन्तश्रीसमन्वितो वसन्तस्य श्रीः शोभा वेशरचना वा तया समन्वितो वसन्तशोभाया हेतुत्वेनावस्थितः, वसन्तकालोचितवेशशाली वेति भावः। 'श्रीर्वेश (ष) रचना शोभा भारतीसरलद्रुमे। लक्ष्म्यां त्रिवर्गसम्पत्तौ वेषोपकरणे मतौ॥' इति विश्वमेदिन्यौ। समुज्वलरुचिः सम्यगुज्ज्वला मनोरमा रुचिर्दीप्तिः, सम्यगुज्ज्वले शृङ्गारे रुचिरभिलाषो वा यस्य तथोक्तः। 'उज्ज्वलस्तु विकासिनि। शृङ्गारे विशदे दीप्तेऽपी'ति हैमः। श्रीमान्

अत्र विशेषणमात्रश्लेषवशादप्रस्तुतात् सहकारात् कस्यचित् प्रस्तुतस्य नायकस्य प्रतीतिः ।

'पुंस्त्वादपि प्रविचलेद् यदि, यद्यधोऽपि यायाद् यदि प्रणयने न महानपि स्यात् ।
अभ्युद्धरेत् तदपि विश्वमितीदृशीयं केनापि दिक् प्रकटिता पुरुषोत्तमेन ॥ १९८ ॥'

अत्र 'पुरुषोत्तमेने'ति पदेन विशेष्येणापि श्लिष्टेन प्रचुरप्रसिद्ध्या प्रथमं विष्णुरेव बोध्यते । तेन वर्णनीयः कश्चित्पुरुषः प्रतीयते । सादृश्यमात्रमूला यथा–

'एकः कपोतपोतः शतशः श्येनाः क्षुधाऽभिधावन्ति ।
अम्बरमावृतिशून्यं हरिहरि शरणं विधेः करुणा ॥ १९९ ॥'

अत्र कपोतादप्रस्तुतात् कश्चित् प्रस्तुतः प्रतीयते । इयं क्वचिद्वैधर्म्येणापि भवति । यथा–

---

प्रभूतोत्कलिकाकुलः प्रभूताः प्रचुरा या उत्कलिका उद्गताः कलिकास्ताभिराकुलो व्याप्तः प्रभूता योत्कलिकोत्कण्ठा कान्तासम्भोगविषयाऽभिलाषा तयाऽऽकुलः परतन्त्रः । 'उत्कण्ठोत्कलिके समे ।' इत्यमरः । सहकार आम्रविशेषः । 'सहकारोऽतिसौरभः ।' इत्यमरः ॥ १९७ ॥'

लक्ष्यार्थं निर्दिशति–अत्रेत्यादिना । स्पष्टम् । न चेयं समासोक्तिः, नायकप्रतीतावपि तद्व्यवहारारोपानुदयात् ।

'यदि । पुंस्त्वात् पुरुषत्वात् । अपि ( असम्भवद्योतकमिदम् ) । प्रविचलेत् प्रकर्षेण भ्रश्येत् । यदि । अधः । अपि । यायाद्गच्छेत् । यदि । प्रणयने याचने । महान् । अपि । न । स्यात् । तत् । तर्हि–अपि । विश्वम् । अभ्युद्धरेत् । इतीदृशीत्येवम्भूता । केनापि केनचित् । पुरुषोत्तमेन । इयम् । दिक् नीतिः । प्रकटिता । जगदुपकृतये सर्वमपि स्वमहत्त्वं नश्येत्तदपि तथाऽपि न ततो विरज्येतेति भावः । भल्लटशतकस्येदं पद्यम् । वसन्ततिलकं वृत्तम्, एतल्लक्षणं चोक्तं प्राक् ॥ १९८ ॥'

उदाहृतमर्थं निर्दिशति–अत्र । 'पुरुषोत्तमेने'ति पदेन तदभिन्नेन । विशेष्येण । अपि न केवलं 'पुंस्त्वा'-दित्यादिना विशेषणेनैवेति भावः । श्लिष्टेन । प्रथमम् । प्रचुरप्रसिद्ध्या भूरिप्रयोगेणातिप्रसिद्ध्या वा । विष्णुः । एव । बोध्यते प्रतिपाद्यते । तेन । वर्णनीयः प्रस्तुतः । कश्चित् । पुरुषः । प्रतीयते । इदमुक्तम्–'उत्तमः पुरुषस्त्वन्यः' इत्युक्तदिशोत्तमः पुरुष इति पुरुषोत्तम इति व्युत्पन्नोऽयं 'हरिर्यथैकः पुरुषोत्तमः स्मृतः' इत्यभिजनोक्त्या विष्णुमेवाभिधत्ते, पुरुषेषूत्तम इति पुरुषोत्तम इति व्युत्पन्नोऽयं पुनः शब्दः 'परोपकरणे नित्यं यतन्ते ये नरोत्तमाः'इति पुरुषविशेषम्; इत्येवमेतस्य श्लिष्टस्य विशेष्यस्य महिम्ना 'पुंस्त्वा'दित्यावपि श्लिष्टम्, तथा च–पुंस्त्वात् पुरुषचिह्नवत्त्वादपि प्रविचलेत् स्त्रीत्वमपि गृह्णीयात्, अधः पातालमपि गच्छेत्, याच्ञया लघुत्वमपि भवेत्, किन्तु विश्वं यथातथमुद्धरेत् इति मार्गो मोहिनीरूपं धृतवता पृथ्वीमुद्धर्त्तुं पातालं गतवता देवराज्यसमुन्नतये बलेर्याच्ञायां वामनत्वं प्रकटितवता पुरुषोत्तमेन 'अहमिव जगदुद्धरे'दिति मार्गः प्रकटित इत्यभिहितोऽप्रस्तुतोऽर्थः 'कदाचित् पुरुषत्वात् पौरुषार्थतोऽपि ( पौरुषं कुर्वाणोऽपि ) भ्रश्येत् ( हतार्थः स्यात् ) नीचतामपि गच्छेत् याचनया यद्यपि महत्त्वं नश्यति तथाऽपि परोपकारम् 'उदारचरितानां तु वसुधैव कुटुम्बकम् ।' इत्युक्तदिशा कुर्य्यात् इति नीतिः केनापि महनीयेन तथा यतमानेन प्रकटित इति प्रस्तुतमर्थमवगमयति । एनयोश्च समत्वात् समेनाप्रस्तुतेन समः प्रस्तुतोऽर्थो व्यज्यते । इति ।

एवं द्विविधां श्लेषमूलामुदाहृत्य सादृश्यमात्रमूलामुदाहर्त्तुमाह–सादृश्येत्यादि । स्पष्टम् । 'एक इत्यादि ।

'एकोऽशरणः । कपोतपोतः कपोतशिशुः । 'यानपात्रे शिशौ पोत'इत्यमरः । शतशः 'बह्वल्पार्थाच्छस्कार-कादन्यतरस्याम् ।' ५।४।४२ इति शस् । श्येना मांसप्रियाः पक्षिविशेषाः । क्षुधा । अभिधावन्ति । अम्बर-माकाशम् । आवृतिशून्यमावरणशून्यमात्मगोपनाश्रयप्रतिद्वन्द्विभूतम् । हरिहरि कष्टंकष्टम् ( इदमव्ययम् ) । विधेः परमात्मनः । करुणा दया । शरणम् । आर्य्याछन्दः, तल्लक्षणं चोक्तं प्राक् ॥ १९९ ॥'

उदाहृतमर्थं निर्दिशति–अत्रेत्यादिना ।

अत्र । कपोतात् । अप्रस्तुतात् । 'अभिधीयमाना'दिति शेषः । कश्चित् बहुभिर्हिंस्रैर्दस्युभिर्वा पीड्यमानः शरणमिच्छुः पुरुष इति भावः । प्रस्तुतः । प्रतीयते व्यञ्जनया बुध्यते । नचेयं समासोक्तिः, अत्राप्रस्तुताप्रतीतेः । अत एव नेयं शिवंरुक्तिरिति बोध्यम् ।

एवं साधर्म्येणोदाहृत्य वैधर्म्येणोदाहर्त्तुमुपक्रमते–इयमित्यादिना । स्पष्टम् । 'धन्या इत्यादि ।

'धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः। राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः॥२००॥'

अत्र 'वाता धन्याः, अहमधन्य'इति वैधर्म्येण प्रस्तुतः प्रतीयते। वाच्यस्य सम्भवासम्भवोभयरूपतया त्रिप्रकारेयम्। तत्र सम्भवे उक्तान्युदाहरणान्येव, असम्भवे यथा—

'कोकिलोऽहं भवान् काकः समानः कालिमाऽऽवयोः।
अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः॥ २०१॥'

अत्र काककोकिलयोर्वाकोवाक्यं प्रस्तुताध्यारोपणं विनाऽसम्भवि। उभयरूपत्वे यथा—

'अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः। कथं कमलनालस्य मा भूवन् भङ्गुरा गुणाः॥२०२॥'

अत्र प्रस्तुतस्य कस्यचिदध्यारोपणं विना कमलनालान्तश्छिद्राणां गुणभङ्गुरीकरणे हेतुत्वम-

---

'ये। अनिवारिता अप्रतिषेधिताः सन्तः। इन्दीवरश्याममिन्दीवरं नीलकमलं तद्वत् श्यामस्तम्। **रामम्।** **स्पृशन्ति** उपलक्षणेन सेवन्ते। ते-**कह्लारस्पर्शशीतलाः** कह्लाराणां सौगन्धिकानां जलरुहविशेषाणामुपचारात्तत्प्रधानानां जलाशयानां स्पर्शः संयोगस्तेन शीतला इति तथोक्ताः। 'सौगन्धिकं तु कह्लार'मित्यमरः। **वने।वाताः। खलु। धन्याः।** दशरथस्योक्तिरियमिति विवृतिकाराः॥ २००॥'

उदाहृतमर्थं निर्दिशति-अत्रेत्यादिना। स्पष्टम्।

अस्या भेदान्तरं व्यवस्थापयति-वाच्यस्येत्यादिना।

**वाच्यस्य** वाक्यार्थस्य। **सम्भवासम्भवोभयरूपतया** सम्भवोऽसम्भव उभयं चेति तानि रूपाणि यस्यास्तस्या भावस्तत्ता तया। **त्रिप्रकारा। इयम्।** तथा च-सम्भवद्वाच्याऽसम्भवद्वाच्या सम्भवदसम्भवद्वाच्या चेति त्रिभेदेयमिति निष्कृष्टोऽर्थः। **तत्र** त्रिषु वाच्यस्य सम्भवादिषु मध्ये। **सम्भवे। उक्तानि। उदाहरणानि। एव। असम्भवे**'पुनर्वाच्यस्ये'ति शेषः। **यथा-'कोकिल** इत्यादि।

'**अहम्। कोकिलः**स्तद्वत् स्वगुणरमणीय इति यावत्। **भवान्। काकः**स्तद्वत् स्वदोषप्रथितः। एवं सत्यपि-**आवयोः** कोकिलायितकाकायितयोः। **कालिमा** कृष्णवर्णत्वम्, लक्षणया (मनुष्यत्वादिना) समानधर्मत्वमित्यर्थः। **समानः। काकलीकोविदाः** काकल्या मधुरगिर उपचाराद्भेदकधर्मविशेषस्य कोविदाश्चतुराः। **पुनः। अन्तरं** भेदम्। **कथयिष्यन्ति।** कस्यचित् स्वस्मै स्पर्धमानं प्रत्युक्तिरियम्॥ २०१॥'

उदाहरणेऽसम्भवितां निर्दिशति-अत्रेत्यादिना।

**अत्र। काककोकिलयोः।** 'अल्पाच्तरम्।' २।२।३४ इति काकशब्दस्य पूर्वनिपातः। **वाकोवाक्यम्**उक्तिप्रत्युक्ती। वाक्यं च प्रतिवाक्यं चेत्यनयोः समाहार इति तथोक्तम्। पृषोदरादित्वात् साधु। **प्रस्तुताध्यारोपणं** प्रस्तुतयोर्वक्तृबोद्धव्ययोरध्यारोपणमभेदाध्यवसानं तत्। **विना। असम्भवि,** मनुष्ययोर्वक्तृबोद्धव्यत्वे काककोकिलयोर्वक्तृबोद्धव्यत्वाभावाच्चमत्काराभावाच्चे'ति शेषः।

उभयरूपत्व उदाहर्तुमाह-उभयेत्यादि। स्पष्टम्। 'अन्तरित्यादि।

**कमलनालस्य** कमलदण्डस्य। **अन्तः**र्मध्यभागे। **भूयांसि** सुबहूनि। **छिद्राणि** रन्ध्राणि। 'छिद्रं विवररन्ध्रवत्। गर्ते दोषे' इति हैमः। **बहि**रुपरि। **बहवः। कण्टका**स्तीक्ष्णाग्रा अङ्गविशेषाः। 'कण्टकः क्षुद्रशत्रौ च द्रुमाङ्गे रोम्णि मस्करे।' इति गोपालः। अतः-**कथम्। गुणा**स्तन्तवः। 'गुणो मौर्व्यामप्रधाने रूपादौ सूत्र इन्द्रिये। त्यागशौर्यादिसत्त्वादिसन्ध्याद्यावृत्तिषु रज्जुषु॥ शुक्लादावपि वृद्धयां च।' इति मेदिनी। **भङ्गुरा** भङ्गशीलाः। **मा। भूवन्** भवेयुः। कस्यचिद्विपन्नताहेतुं सूचयत उक्तिरियम्॥ २०२॥'

उदाहृतमर्थं समर्थयते-अत्रेत्यादिना।

**अत्रो**दाहृते पद्ये। **प्रस्तुतस्य** दुर्दैवहतकस्य। **कस्यचित्। अध्यारोपणम**भेदाध्यवसानम्। **विना। कमलनालान्तश्छिद्राणां** कमलदण्डवर्त्तिनां छिद्राणाम्। **गुणभङ्गुरीकरणे। हेतुत्वं** कारणत्वम्।

सम्भवि, अन्येषां तु सम्भवीत्युभयरूपत्वम्, अस्याश्च समासोक्तिवद् व्यवहारसमारोपप्राणत्वाच्छब्दशक्तिमूलाद्वस्तुध्वनेर्भेदः उपमाध्वनावप्रस्तुतस्य व्यङ्ग्यत्वम्, एवं समासोक्तौ । श्लेषे तु द्वयोरपि वाच्यत्वम् ।

१४१ उक्ता व्याजस्तुतिः पुनः ।
निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः ॥ ११३ ॥

निन्दया स्तुतेर्गम्यत्वे व्याजेन स्तुतिरिति व्युत्पत्त्या व्याजस्तुतिः, स्तुत्या निन्दाया गम्यत्वे व्याजरूपा स्तुतिः ।

क्रमेण यथा--

'स्तनयुगमुक्ताभरणाः कण्टककलिताङ्गयष्टयो देव !
त्वयि कुपितेऽपि प्रागिव विश्वस्ता द्विट्स्त्रियो जाताः ॥ २०३ ॥'

---

असम्भवि।अन्येषां कण्टकानाम्।तु।सम्भवि।उभयरूपत्वं सम्भवासम्भवोभयविधत्वमिति भावः।इति।अत्रेदं तत्त्वम्–छिद्राणि गुणान् भज्येरन् इति न सम्भवति, कण्टकास्तान् भज्येरन्निति पुनः सम्भवतीति कमलदण्डे दुर्दैवहतकाभिन्नत्वेनाध्यवसिते 'छिद्राणी'त्यस्य 'क्षुद्रत्वप्रत्यायकानि कार्य्याणि इति, 'कण्टका' इत्यस्य च 'क्षुद्रशत्रवः' इत्यर्थे गुणानां शौर्य्यादीनां भङ्गुरत्वं सर्वथाऽध्यवसीयते । यदाहुरलङ्कारसर्वस्वकाराः–'अत्र वाच्येऽर्थे कण्टकानां भङ्गुरीकरणे हेतुत्वं सम्भवि, छिद्राणां तु असम्भवि' इत्युभयविधत्वम् ( रूपत्वम् ), प्रस्तुतस्य तात्पर्य्येण प्रतीतेस्तदध्यारोपात्तत्र सङ्गतमेवैतदिति नासमीचीनं किञ्चित् ।' इति ।

अस्या वाच्यत्वमलङ्कारान्तरतो भेदं च निर्दिशति–अस्याश्चेत्यादिना ।

अस्याः श्लेषमूलसमाप्रस्तुतप्रशंसायाः । च । समासोक्तिवत् समासोक्तेरिव । व्यवहारसमारोपप्राणत्वाद् व्यवहारस्य व्यापारस्य समारोपस्स एव प्राणो जीवनं यस्यास्तस्या भावस्तत्त्वं तस्मात् । शब्दशक्तिमूलात् । वस्तुध्वनेः । भेदः । तात्पर्य्यं च विवृतं यथा विवृतिकारैः–'समासोक्तौ यथा श्लिष्टशब्दप्रयोगमात्रेण व्यवहारो न प्रतीयते, किंतु विशेषणसाम्यानुसन्धानेनापि; तथाऽत्रापि विशेषणसाम्यानुसन्धानमप्यपेक्षितम्, शब्दशक्तिमूलवस्तुध्वनौ तु तन्नापेक्षितमिति ततोऽस्या भेद इति भावः ।' इति । उपमाध्वनौ । अप्रस्तुतस्य । व्यङ्ग्यत्वम् 'अत्र पुनर्वाच्यत्वम् । अत्र प्रस्तुतस्य व्यङ्ग्यत्वं, तत्र पुनर्वाच्यत्वम्; इत्यनयोर्महान् भेद' इति शेषः । एवम् । समासोक्तौ । 'प्रस्तुतस्य व्यङ्ग्यत्वम्' इति पूर्वतोऽन्वेति 'अत्र पुनर्वाच्यत्वम् । अत्र प्रस्तुतस्य व्यङ्ग्यत्वं, तत्र पुनर्वाच्यत्वम्; इत्यनयोर्महान् भेद' इति शेषः । श्लेषे । तु 'अपी'ति पाठान्तरेऽप्ययमेवार्थः, निपातानामनेकार्थत्वात् । द्वयोः प्रस्तुताप्रस्तुतयोः । अपि 'न त्वेकतरस्ये'ति शेषः । वाच्यत्वम् 'अत्राप्रस्तुतस्यैकस्येति भेद' इति शेषः । 'अन्योक्ति'रित्यस्या एवापरः पर्य्याय इति बोध्यम् ।

व्याजस्तुतिं लक्षयति–१४१ उक्तेत्यादिना ।

१४१ वाच्याभ्याम् । निन्दास्तुतिभ्याम् । स्तुतिनिन्दयोः । गम्यत्वे बोध्यत्वे सति । पुनः । व्याजस्तुतिस्तन्नामाऽलङ्कारः । उक्ता । तथा च यत्र वाच्यया निन्दया स्तुतिः, स्तुत्या पुनर्निन्दा पर्य्यवसीयते सा व्याजस्तुतिरिति फलितोऽर्थः ॥ ११३ ॥

अस्या अन्वर्थतां निर्दिशति–निन्दयेत्यादिना । स्पष्टम् ।

उदाहर्तुकाम आह–क्रमेणेत्यादि । स्पष्टम् । 'स्तनेत्यादि ।

हे देव राजन् ! त्वयि । कुपिते । अपि । द्विट्स्त्रियो द्विषां रिपूणां स्त्रियः । स्तनयुगमुक्ताभरणाः स्तनयुगेषु मुक्ताभरणानि मौक्तिकगुम्फितभूषणानि यासां तादृश्यः । कण्टककलिताङ्गयष्टयः कण्टकै रोमाञ्चैः पतिसुरतानुभवजन्यैः सात्त्विकभावविशेषैः कलिता व्याप्ता अङ्गयष्टयो यासां तादृश्यः । अत एव-प्राक् त्वय्यकुपिते । इव । विश्वस्ता निश्शङ्काः । जाताः । इति वाच्या राज्ञो निन्दा, अथ–त्वयि । कुपिते । स्तनयुगैर्मुक्तान्याभरणानि यासां ता इति स्तनयुगमुक्ताभरणाः । कण्टकैः पलायनसमये वृक्षाङ्गैः कलिताः खण्डिता अङ्गयष्टयो यासां ताः कण्टक

इदं मम --

'व्याजस्तुतिस्तव पयोद ! मयोदितेयं सञ्जीवनाय जगतस्तव जीवनानि ।
स्तोत्रं तु ते महदिदं घन ! धर्मराजसाहाय्यमर्जयसि यत् पथिकान्निहत्य॥ २०४ ॥'

**१४२ पर्यायोक्तं यदा भङ्गया गम्यमेवाभिधीयते ।**

उदाहरणम्--

'स्पृष्टास्ता नन्दने शच्याः केशसम्भोगलालिताः। सावज्ञं पारिजातस्य मञ्जर्यो यस्य सैनिकैः॥२०५॥'

अत्र 'हयग्रीवेण स्वर्गो विजित'इति प्रस्तुतमेव गम्यं कारणं वैचित्र्यविशेषप्रतिपत्तये सैन्यस्य पारिजातमञ्जरीसावज्ञस्पर्शनरूपकार्य्यद्वारेणाभिहितम् । न चेदं कार्य्यात् कारणप्रतीतिरूपाऽ-

---

कलिताङ्ग्यष्टयः । प्रागिव । विश्वस्ता विधवाः । 'विश्वस्ता विधवा समे ।' इत्यमरः । अपि । द्विट्स्त्रियः । जाताः; इति गम्या स्तुतिः । राज्ञः स्तुतिरियम् । अतएव स्तुतेर्व्यङ्ग्यत्वमावश्यकमूह्यम् । अत्रार्य्याछन्दस्तल्लक्षणं चोक्तं प्राक् ॥ २०३ ॥'

उक्तपद्यस्य स्वीयत्वं निर्दिशति-इदमित्यादिना । स्पष्टम् ।

'हे पयोद मेघ ! तव । जीवनानि प्राणधारणाजलानि च । 'जीवनं सलिले प्राणधारणायां च जीविते ।' इति गोपालः । जगतो विश्वस्य । सञ्जीवनाय जीवितरक्षणाय । 'यज्जीवनाये'ति पाठे तु 'य'दिति पृथक् पदम् । इति ( यत् ) इयम् । तव । व्याजस्तुतिर्व्याजरूपा स्तुतिः । मया । उदिता । हे घन ! स्तोत्रं स्तुतिर्वास्तविकी प्रशंसा । तु । इदम् । ते । महत् । यत् । पथिकान् । निहत्य । 'पथिकार्पणेने'ति पाठस्तु साधीयान् । धर्मराजसाहाय्यं धर्मराजस्य साहाय्यम् । अर्जयसि सम्पादयसि । अत्र स्तुत्या वाच्यया निन्दाया अवगमः । वसन्ततिलकं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ २०४ ॥'

अत्राहुः-'इयं चालङ्कारान्तरसङ्कीर्णाऽपि, यथा-" अये राजन्नाकर्णय कुतुकमाकर्णनयन ! स्फुरन्ती हस्ताम्भोरुहि तव कृपाणी रणमुखे । विपक्षाणां वक्षस्यहह तरुणानां निपतति प्रगल्भाः श्यामानामनुपरतकामाः प्रकृतयः ॥" इति, अत्र हि समासोक्त्यर्थान्तरन्यासपोषिता निन्दया स्तुतिः । ननु कथमिह व्याजेन स्तुतिः, वाच्याभ्यामेव निन्दास्तुतिभ्यां स्तुतिनिन्दयोर्गम्यत्वे तस्याः स्वीकारात्, समासोक्त्या च कामुकव्यापारस्य निन्दनीयत्वेऽपि गम्यत्वात् न प्रकृतोपयोगित्वम् । इति चेत् ! वाच्याभ्यामामुखे प्रतीयमानाभ्यामित्यर्थं गृहाण ।' इत्येके, अपरे तु 'गम्यया निन्दया गम्यायाः-स्तुतेर्व्याजस्तुत्युपस्कारकत्वमेव न, व्याजस्तुतिर्हि वाच्यार्थोह विवक्षिता, न तु गम्या ।' इति ।

पर्य्यायोक्तं लक्षयति-१४२ पर्य्यायोक्तमित्यादिना ।

१४२ यदा भङ्ग्योक्तिवैचित्र्येण । गम्यं बोध्यम् । एव । अभिधीयते । तदा-पर्य्यायोक्तं पर्यायेण प्रकारान्तरेणोक्तं कथनमिति तन्नामालङ्कार इति भावः । तथाऽऽहुः-'विवक्षितस्यार्थस्य भङ्गयन्तरेण प्रतिपादनं पर्य्यायोक्तम् ।' इति ।

उदाहर्तुकाम आह-उदाहरणमिति । स्पष्टम् । 'यथा'इति शेषः । 'स्पृष्टा इत्यादि ।

'नन्दने । यस्य हयग्रीवस्य दैत्यराजस्य । सैनिकैः सेनास्थितैर्वीरैः । शच्या इन्द्रपत्न्याः । केशसम्भोगलालिताः केशानां सम्भोगो भूषणं तस्मै लालिता प्रेम्णा वर्धिताः । ताः प्रसिद्धाः । पारिजातस्य कल्पवृक्षस्य । मञ्जर्य्यः । सावज्ञं साक्षेपम् । स्पृष्टाः । 'स हयग्रीव'इति शेषः । मेण्ठकवेर्हयग्रीववधस्येदं पद्यम् ॥ २०५ ॥'

भङ्गयन्तरेणाभिधानं सप्रयोजनं निर्दिशति-अत्रेत्यादिना ।

अत्र । 'हयग्रीवेण तदाख्येन दैत्येन । स्वर्गः । विजितः ।' इति । प्रस्तुतम् । एव । कारणम् । गम्यं व्यङ्ग्यम् । वैचित्र्यविशेषप्रतिपत्तये वैचित्र्यविशेषस्याप्रस्तुतप्रशंसासमासोक्तिचमत्कारातिशयस्य प्रतिपत्तिरवबोधस्तस्यै । सैन्यस्य हयग्रीवयोद्धृसङ्घस्य । पारिजातमञ्जरीसावज्ञस्पर्शनरूपकार्य्यद्वारेण । अभिहितम् । अयम्भावः-हयग्रीवस्य सैनिकैर्नन्दनस्थाः शचीप्रियाः पारिजातमञ्जर्यः सावज्ञं स्पृष्टा इत्यभिधानं'हयग्रीवेण स्वर्गो विजित'इति प्रस्तुतं व्यञ्जयति, स्वर्गविजयमन्तरा शचीप्रियाणां तासां सावज्ञपरस्पर्शनासम्भवात् । अतः प्रकृतं स्वर्गविजयमनभि

प्रस्तुतप्रशंसा, तत्र कार्य्यस्याप्रस्तुतत्वात्, इह तु वर्णनीयस्य प्रभावातिशयबोधकत्वेन कार्य्यमपि कारणवत् प्रस्तुतम् । एवं च—

'अनेन पर्य्यासयताऽश्रुबिन्दून् मुक्ताफलस्थूलतमान् स्तनेषु ।
प्रत्यर्पिताः शत्रुविलासिनीनामाक्षेपसूत्रेण विनैव हाराः ॥ २०६ ॥'

अत्र वर्णनीयस्य राज्ञो गम्यभूतशत्रुमारणरूपकारणवत् कार्य्यभूतं तथाविधशत्रुस्त्रीक्रन्दनजलमपि प्रभावातिशयबोधकत्वेन वर्णनार्हमिति पर्य्यायोक्तमेव ।

'राजन् ! राजसुता न पाठयति मां देव्योऽपि तूर्ष्णीं स्थिताः
कुब्जे ! भोजय मां कुमार ! सचिवैर्नाद्यापि किं भुज्यते ।
इत्थं नाथ ! शुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥ २०७ ॥'

अत्र 'प्रस्थानोद्यतम्भवन्तं श्रुत्वा सहसैवारयः पलायिता इति कारणं प्रस्तुतम्, कार्य्यमपि वर्णनार्हत्वेन प्रस्तुतम्, इति केचित्, अन्ये तु—'राजशुकवृत्तान्तेन कोऽपि प्रस्तुतप्रभावो बोध्यत इत्यप्रस्तुतप्रशंसैव'इत्याहुः ।

---

धाय प्रकृतं तत्कार्य्यं पारिजातमञ्जरीस्पर्शनरूपमभिहितम्, एतच्च 'साक्षाद्' मिति साचिव्येन प्रस्तुतस्यानायाससिद्धत्वं प्रत्याययति । इति । नन्वेवं कार्य्यात् कारणप्रतीतिरूपाऽप्रस्तुतप्रशंसैवेयं किं न स्यादित्याशङ्क्याह—इदं कारणं प्रत्याययितुं कार्य्याभिधानमित्यर्थः । च । कार्य्यात् कारणप्रतीतिरूपा । अप्रस्तुतप्रशंसा । न । हेतुं निर्दिशति—तत्र तस्यामप्रस्तुतप्रशंसायाम् । कार्य्यस्य । अप्रस्तुतत्वात् । इह । तु । वर्णनीयस्य स्वर्गविजयरूपस्य प्रस्तुतस्य कारणस्य । प्रभावातिशयबोधकत्वेन । कार्य्यम् । अपि । कारणवत् । प्रस्तुतम् । एतेन सिद्धमर्थं निर्दिशति—एवं । च ।

'शत्रुविलासिनीनां शत्रुस्त्रीणाम् । स्तनेषु । मुक्ताफलस्थूलतमान् मुक्ताफलेभ्यः स्थूलतमा अत्यन्तं स्थूलास्तान् । अश्रुबिन्दून् । पर्यासयता पातयता । अनेन शत्रुहन्त्राऽङ्गदेशाधिपेन । आक्षेपसूत्रेण ग्रन्थनसूत्रेण । विना । हाराः । एव । प्रत्यर्पिताः । रघुवंशस्येदं पद्यम् ॥ २०६ ॥'

उदाहृते पद्ये तत्सद्भावं समर्थयते—अत्रेत्यादिना ।

अत्र । वर्णनीयस्य प्रस्तुतवर्णनस्य । राज्ञोऽङ्गदेशाधीशस्य । गम्यभूतशत्रुमारणरूपकारणवत् गम्यभूतं शत्रुस्त्रीक्रन्दनकार्य्यानुमेयं यत् शत्रुमारणं तदेव रूपं यस्य तादृशं यत् कारणं तद्वदिवेति तथोक्तम् । कार्य्यभूतम् । तथाविधशत्रुस्त्रीक्रन्दनजलम् । अपि । प्रभावातिशयबोधकत्वेन प्रभावातिशयोऽङ्गराजस्य पराक्रमातिशयस्तस्य बोधकं तस्य भावस्तत्त्वं तेन । वर्णनार्हं प्रस्तुतमिति भावः । इति । पर्य्यायोक्तम् । एव 'नत्वप्रस्तुतप्रशंसा' इति शेषः ।

उदाहरणान्तरं दर्शयति—'राजन्नित्यादिना ।

'हे राजन् ! राजसुता । माम् (शुकम्) । न । पाठयति । देव्यो राज्ञ्यः । अपि । तूष्णीम् । स्थिताः । हे कुब्जे (इदं तथाभूताया भोजिकायाः सम्बोधनम्) ! माम् (शुकम्) । भोजय । हे कुमार राजकुमार ! सचिवैर्मन्त्रिभिः । अद्यापि । किम् । न । भुज्यते । इत्थम् । हे नाथ प्रभो ! तव । शून्यवलभौ शून्या त्वदागमनभिया वलभ्युपरिगृहं यत्र तादृशे । अरिभवने । अध्वगैः पथिकजनैः । 'शत्रुभि'रिति शेषः । पञ्जरात् । मुक्तो निर्मुक्तवन्धनो निर्गत इति यावत् । शुकः । चित्रस्थान् राजादीन् । अवलोक्य । एकैकमेकमेकम् । आभाषते । यत्तु—'शून्यवलभा'विति'अरिभवने'इत्यस्य विशेषणमस्मरन्तः 'शून्यायां वलभौ उपरिगृहे'इति विवृण्वन्ति, तन्न साधु; 'शुद्धान्ते वलभी चन्द्रशाले सौधोर्ध्ववेश्मनि ।'इति रभसयुक्तस्य वलभीशब्दस्य गौरादित्वेनीवन्ततया तथा निष्पत्त्यसम्भवात् । कस्यापि कवे राजानं प्रति स्तुतिपरेयमुक्तिः शार्दूलविक्रीडितं वृत्तम् ॥ २०७ ॥'

अत्र मतभेदेन पर्य्यायोक्तमप्रस्तुतप्रशंसां च निर्दिशति—अत्रेत्यादिना । स्पष्टम् ।

१४३ सामान्यं वा विशेषेण विशेषस्तेन वा यदि ॥ ११४ ॥
कार्य्यं च कारणेनेदं कार्य्येण च समर्थ्यते ।
साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ॥ ११५ ॥

क्रमेणोदाहरणम्—

'बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति। सम्भूयाम्भोधिमभ्येति महानद्या नगापगा॥२०८॥'

अत्र द्वितीयार्धगतेन विशेषरूपेणार्थेन प्रथमार्धगतः सामान्योऽर्थः सोपपत्तिकः क्रियते।

'यावदर्थपदां वाचमेवमादाय माधवः। विरराम महीयांसः प्रकृत्या मितभाषिणः ॥ २०९ ॥'

'पृथ्वि! स्थिरा भव, भुजङ्गम! धारयैनां, त्वं कूर्मराज! तदिदं द्वितयं दधीथाः।
दिक्कुञ्जराः! कुरुत तत्त्रितये दिधीर्षां देवः करोति हरकार्मुकमाततज्यम् ॥ २१० ॥'

---

अर्थान्तरन्यासं लक्षयति—१४३ सामान्यमित्यादिना।

यदि। विशेषेण व्याप्यधर्मावच्छिन्नेन। सामान्यं व्यापकधर्मावच्छिन्नम्। वा (इदं समुच्चयार्थम्)। तेन सामान्येन व्यापकधर्मावच्छिन्नेन। वा। विशेषो व्याप्यधर्मावच्छिन्नम्। कारणेन ज्ञापकनिष्पादकेतरसमर्थकरूपेण हेतुना। च। कार्य्यं ज्ञाप्यनिष्पाद्येतरसमर्थ्यरूपं साध्यम्। कार्य्येण ज्ञाप्यनिष्पाद्येतरसमर्थ्यरूपेण साध्येन। च। इदं कारणं ज्ञापकनिष्पादकेतरसमर्थकरूपो हेतुरिति यावत्। समर्थ्यते। ततस्तर्हि। साधर्म्येण साधर्म्यप्रकारकज्ञानेन। अथवा—इतरेण वैधर्म्येण वैधर्म्यप्रकारकज्ञानेनेति यावत्। अर्थान्तरन्यासोऽर्थान्तरस्यानुपपद्यमानतया सम्भाव्यमानमर्थं समर्थयितुं तद्भिन्नस्योपपद्यमानतया सम्भाव्यमानस्यार्थस्य न्यासः समर्थकतया निरूपणमिति तथोक्तः। तन्नामाऽलङ्कार इति भावः। अष्टधाऽष्टप्रकारः। अयम्भावः—कमप्यनुपपद्यमानतया सम्भाव्यमानमर्थं समर्थयितुं कस्यचिदुपपद्यमानतया सम्भाव्यमानस्यार्थस्य समर्थकतया न्यासोऽर्थान्तरन्यासः। स च साधर्म्येण वैधर्म्येण चेति द्विविधः। अयमपि प्रतिभेदं चतुर्धा भिद्यमानोऽष्टविधः। तत्र-विशेषेण सामान्यसमर्थनात्मैकः, सामान्येन विशेषसमर्थनात्मा द्वितीयः, कारणेन कार्यसमर्थनात्मा तृतीयः, कार्य्येण कारणसमर्थनात्मा पुनश्चतुर्थो भेदः। तथा च—अर्थान्तरस्य न्यास इति सामान्यं लक्ष्म, अर्थान्तरस्य पुनर्न्यासः साधर्म्येण वैधर्म्येण च भवतीति तस्य भेदद्वयम्, भेदद्वयस्य पुनः प्रत्येकं चातुर्विध्येऽष्टविधत्वमिति फलितम् ॥ ११४ ॥ ११५ ॥

उदाहर्तुं प्रतिजानीते—क्रमेणेत्यादिना। क्रमेणानुपूर्व्येण। उदाहरणमुदाह्रियते 'ऽय'मिति प्रक्रमप्राप्तम्। बृहदित्यादिना।

'क्षोदीयान् अतिशयेन क्षुद्र इति तथोक्तः। 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः।' ६।४। १५६ इत्यनेन यणादिपरलोपः पूर्वगुणश्च। अपि। बृहत्सहायो बृहन्तः सहाया यस्य तथोक्तः सन्। कार्य्यान्तं कार्य्यस्यान्तः पारस्तम्। गच्छति। तथा हि—नगापगा पर्वतनदी। महानद्या गङ्गायमुनाऽऽद्यन्यतमया नद्या। सम्भूय। अम्भोधिं समुद्रम्। अभ्येति। शिशुपालवधस्येदं पद्यम्। उद्धवस्य सभायामुक्तिरियम् ॥ २०८ ॥'

उदाहृतमर्थं निर्दिशति—अत्रेत्यादिना। स्पष्टम्।

'माधवः श्रीकृष्णः। यावदर्थपदां यावानर्थो यावदर्थं पदानि यस्यास्ताम्। 'यावदवधारणे।' २।१।८ इत्यव्ययीभावः। एवमुक्तरूपाम्। वाचम्। आदाय गृहीत्वोक्त्वेति यावत्। विरराम तूष्णीं बभूव। 'व्याङ्परिभ्यो रमः।' १।३।८३ इति परस्मैपदम्। तथा हि—महीयांसोऽतिशयेन महान्तः। प्रकृत्या स्वभावेन। मितभाषिणो मितं भाषन्ते इत्येवंशीला भवन्तीति भावः। अत्र 'यावदर्थमुक्त्वे' पीत्यनुक्त्वा तथाऽभिधानं दुष्टमपि छन्दोऽनुरोधेन। एवं 'विररामे'त्यसहायस्योत्तरवाक्ये विन्यासोऽपि दुष्टः। शिशुपालवधस्येदं पद्यम्। अत्र सामान्येन 'महीयांस' इत्याद्यर्थेन विशेषस्य 'यावदर्थे' त्याद्यर्थस्य समर्थनम्। विवृण्वन्ति विवृतिकाराः—'अत्र व्यञ्जनया विधीयमानमपि माधवस्याल्पभाषणं प्रतिपाद्य बाहुल्ये सति अनुपपन्नमहत्तरस्य स्वभावत एवाल्पभाषणमिति सामान्यगोचरसाधर्म्यज्ञानेन समर्थ्यते। सामान्यधर्मो विशेषेष्वप्रतिहतप्रसर इति विशेषदर्शनेनानुपपत्तिनिरास इति भावः।' इति ॥ २०९ ॥

'हे पृथ्वि! स्थिरा। भव। हे भुजङ्गम शेषनाग! एनां पृथ्वीम्। धारय। हे कूर्मराज! त्वम्। तत्। इदम्। द्वितयं 'पृथ्वीभुजङ्गमयो'रिति शेषः। दधीथा धारय। हे दिक्कुञ्जरा दिग्गजाः! तत्त्रितये

अत्र कारणभूतं हरकार्मुकाततज्यीकरणं पृथ्वीस्थैर्य्यादेः कार्य्यस्य समर्थकम्।

'सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥ २११॥'

अत्र सम्पत्करणं कार्य्यं सहसा विधानाभावस्य विमृश्यकारित्वरूपस्य कारणस्य समर्थकम्, एतानि साधर्म्ये उदाहरणानि, वैधर्म्ये यथा—

'इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम्। शाम्येत् प्रत्युपकारेण नोपकारेण दुर्जनः॥२१२॥'

अत्र सामान्यं विशेषस्य समर्थकम्। 'सहसा विदधीत...'इत्यादौ सहसा विधानाभावस्यापत्पदत्वं विरुद्धं कार्य्यं समर्थकम्। एवमन्यत्।

**१४४ हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते।**

---

तेषां पृथ्वीभुजङ्गमकूर्मराजानां त्रितयं तत्र। दिधीर्षा धर्तुमिच्छाम्। कुरुत। देवः पूज्यः श्रीरामभद्रः। हरकार्मुकं महादेवस्य धनुः। आततज्यमातताऽऽरूढा ज्या मौर्वी यस्य तत्तथोक्तम्। करोति। बालरामायणे श्रीलक्ष्मणस्योक्तिरियम्। वसन्ततिलकं वृत्तं, तल्लक्षणं चोक्तं प्राक्॥ २१०॥'

उदाहृतमर्थं निर्दिशति—अत्रेत्यादिना। स्पष्टम्। 'सहसा......। व्याख्यातपूर्वं पद्यमिदम्॥ २११॥'

उदाहृतमर्थं निर्दिशति—अत्रेत्यादिना।

अत्र। सम्पत्करणं 'वृणते' इत्याद्युक्तम्। कार्य्यम्। सहसाऽविमृश्य। विधानाभावस्य। विमृश्यकारित्वरूपस्य। कारणस्य। समर्थकम्।

साधर्म्यनिबन्धनस्यास्योदाहृतान्येवोदाहरणानीत्याह—एतानीत्यादिना। स्पष्टम्।

वैधर्म्ये उदाहरणानि दर्श्यन्त इत्याह—वैधर्म्ये इत्यादिना। स्पष्टम्। 'इत्थमित्यादि।

'इत्थं निरुक्तप्रकारेण। आराध्यमान उपास्यमानः। अपि 'किं पुनरुपेक्ष्यमाण'इति शेषः। 'तारकासुर'इति प्रक्रमप्राप्तम्। भुवनत्रयं, नत्वस्माकमेव भुवनमिति शेषः। क्लिश्नाति दुःखाकरोति। तथा हि—दुर्जनो दुष्टो जनः। प्रत्यपकारेणापकारप्रतिक्रियया। शाम्येत्। उपकारेण। न 'शाम्ये'दिति पूर्वतोऽन्वेति। कुमारसम्भवे ब्रह्माणं प्रति गुरोरुक्तिरियम्॥ २१२॥'

उदाहृतमर्थं निर्दिशति—अत्रेत्यादिना।

अत्र। सामान्यं 'शाम्ये' दित्याद्युक्तं दुर्जनमात्रस्वाभाव्यम्। विशेषस्य 'इत्थमाराध्यमानोऽपी' त्यस्य तारकासुरचेष्टितस्य। 'उपकारेण कुप्येत्'इति वैधर्म्येणेति शेषः। समर्थकम्। 'सहसा विदधीत..'इत्यादौ व्याख्यातपूर्वे पद्ये। 'पूर्वार्द्धे' इति शेषः। सहसा। विधानाभावस्य 'सहसा विदधीत न क्रिया'मित्यनेन निर्दिष्टस्य कारणस्य। 'असहसा विधानं श्रेय'इति वैधर्म्यद्वारेति शेषः। आपत्पदत्वं आपत्पदता 'अविवेकः परमापदां पद' मित्युक्तरूपमिति यावत्। विरुद्धं विरुद्धजन्यं सहसा विधानजन्यमिति यावत्। कार्य्यम्। समर्थकम्।

उदाहरणान्तरं स्वयमूह्यमित्याह—एवम्। अन्यत्। इति। स्पष्टम्। एवं च—'अहन्नेको रणे रामो यातुधानाननेकशः। नूनं सहायसम्पत्तिमपेक्षन्ते बलोज्झिताः॥'इत्यत्र 'नून'मित्याद्युक्तेन विशेषेण 'नूनं सहायसम्पत्तिमुपेक्षन्ते बलोद्धताः।'इति वैधर्म्यद्वारा'अह'न्नित्यादिनोक्तं सामान्यं समर्थितम्। 'वहिरेव चिरादनाश्रवे विलसत्येष तुषारदीधितिः। भज सम्मदमत्र सन्ततं ननु सन्तापमिनः प्रसूयते॥' इत्यत्रेनः (सूर्य्यः) सन्तापं प्रसूयत इत्युक्तदिशा सूर्य्यस्य सन्तापजनने कारणत्वम्, तच्च'इनादन्यः प्रशान्तिजनक'इति वैधर्म्यद्वारा तुषारदीधितेः (चन्द्रात्) सम्मदरूपकार्य्यस्योत्पत्तिं समर्थते। इति बोध्यम्।

काव्यलिङ्गं लक्षयति—१४४हेतोर्ज्ञापकसमर्थकेतरनिष्पादककारणस्य।वाक्यपदार्थत्वे वाक्यं च पदानि चेति वाक्यपदानि, तान्यर्थाः प्रयोजनभूतानि यस्य तस्य भावस्तत्त्वं तस्मिंस्तथोक्ते। पदं च पदे च पदानि चेति पदानि, तथा च—वाक्यार्थत्वे एकपदार्थत्वे द्विपदार्थत्वे बहुपदार्थत्वे चेति फलितम्। इदमवधेयम्—अस्य द्विपदार्थत्वबहुपदार्थत्वाभ्यां द्विभेदत्वमनेकपदार्थत्वेनैकभेदत्वमेवामनन्त्याचार्या इति। काव्यलिङ्गं काव्यस्य लिङ्गं निष्पादकं कारणमिति तथोक्तम्। तन्नामाऽलङ्कार इति भावः। निगद्यते। एवं च—निष्पादकत्वावच्छिन्नस्य कारणस्य वाक्यार्थत्वमेकपदार्थत्वमनेकपदार्थत्वं चेति

तत्र वाक्यार्थता यथा–'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये ! तव मुखच्छायाऽनुकारी शशी ।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ २१३ ॥'

अत्र चतुर्थपादे पादत्रयवाक्यानि हेतवः। पदार्थता यथा–

'त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम्। न धत्ते शिरसा गङ्गां भूरिभारभिया हरः॥२१४॥'

अत्र द्वितीयार्धे प्रथमार्धमेकपदं हेतुः।

---

त्रिविधः काव्यलिङ्गनामाऽलङ्कारः। अत्रापि अलङ्कारसामान्यलक्षणस्यानुस्यूतत्वम्।तेन–'दण्डेन घट' इत्यादौ नातिप्रसङ्गः। अत एव नाप्येवंविधस्थले काव्यत्वम्। इति निष्कृष्टोऽर्थः। अनुमानादर्थान्तरन्यासाच्चैतस्य भेदः स्वयं वक्ष्यते, परिकरात् पुनः 'परिकरे वाक्यार्थपदार्थसामर्थ्यात् प्रतीयमानोऽर्थो वाच्योपस्कारकत्वं भजते, काव्यलिङ्गे पुनर्वाक्यार्थ-पदार्थावेव हेतुभावं भजत' इत्युक्तदिशाऽवगन्तव्यमित्येके, 'वस्तुतस्तु–निष्पादकस्य वाक्यार्थपदार्थत्वाभावादस्य सर्वेभ्योऽप्यन्येभ्यो भेद'इत्येव बोध्यमि'त्यन्ये प्राहुः। अत्र कौस्तुभकाराः–"यत्तु रसगङ्गाधरे–'अनुमितिकरणत्वेन सामान्यविशेषभावाभ्यां चानालिङ्गितः प्रकृतार्थोपपादकत्वेन विवक्षितोऽर्थः काव्यलिङ्गम्'इति लक्षणं कृत्वो-पपादकत्वेनेत्यस्य ननु शब्दात् तेन रूपेण बोधित इत्यर्थकतया शब्दप्रतिपादितहेतुत्वकस्य हेतोरेव वारणं प्रयोजनम्। तेन–'भयानकत्वादसि वर्जनीयोदयाऽऽश्रयत्वादसि देव ! सेव्यः।'इत्यत्र न व्यभिचारः।..'इत्युक्त्वा 'विनिन्द्यान्युन्मत्तैरपि च परिहार्य्याणि पतितैरवाच्यानि व्रात्यैः सपुलकमपास्यानि पिशुनैः। हरन्ती लोकाना-मनवरतमेनांसि कियतां कदाऽप्यश्रान्ता त्वं जगति पुनरेका विजयसे। त्रपन्ते तीर्थानि त्वरितमिह यस्योद्धृतिविधौ करं कर्णे कुर्वन्त्यपि किल कपालिप्रभृतयः। इयं तं मामम्ब त्वमथ करुणाऽऽक्रान्तहृदये पुनाना सर्वेषामघमथनदर्पं दलयसि ॥'इत्युदाहृतं, तत्परस्परविरुद्धमिति स्पष्टमेव; हेत्वर्थकशतृप्रत्ययेन हेतुत्वस्य बोधितत्वात्, अन्यथा पञ्चम्याऽपि तद्बोधानुपपत्तेः। 'हरिं पश्यन्मुच्यते'इत्यादौ भगवद्दर्शनभक्त्योः कार्य्यकारणभावप्रत्ययस्य सर्वानुभव-सिद्धत्वात्। तत्र'हेतुभूतहरिदर्शनाश्रयो मुच्यते'इति बोधस्यावश्यकत्वात्। हेतुत्वं च समभिव्याहृतकार्य्यापेक्षमेवेति। तत्रार्थान्मुक्तिनिष्ठकार्य्यत्वनिरूपितत्वलाभात्।"इति दिक्।

अथ क्रमादुदाहर्त्तुकाम आह–तत्र तयोर्द्विप्रभेदयोर्मध्ये। **वाक्यार्थता** तन्मूलं काव्यलिङ्गम्। **यथा**–

'हे प्रिये सीते ! **यत्**। **त्वन्नेत्रसमानकान्ति** तव नेत्रे तयोः समाना सदृशी कान्तिर्यस्य तथोक्तम्। **तत्**। **इन्दीवरं** नीलकमलम्। **सलिले** जले। 'सलिलं कमलं जलम्।' इत्यमरः। **मग्नं** मज्जितम्। अत्रान्तर्भावितो णिच्प्रत्ययः। 'वर्षाजलौघं सर्वतो वर्धयित्वे'ति शेषः। **तव**। **मुखच्छायानुकारी** मुखस्य च्छाया प्रतिबिम्बं कान्तिर्वा तामनुकरोतीति तथोक्तः। 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः।'इत्यमरः। 'यः स'इति शेषः। **शशी**। **मेघैः**। **अन्तरितो**ऽन्तर्गमितः। अत्रापि णिजोऽन्तर्भावः। **ये**। **अपि**। **त्वद्गमनानुसारि-गतयस्तव** गमनं तस्यानुसारिणी गतिर्येषां तथोक्ताः। **ते**। **राजहंसाः**। **गता** गमिता'मानस'मिति शेषः। अत्रापि णिजोऽन्तर्भावः। 'वर्षासु मानसं हंसाः प्रयान्ती'ति कविसमयमनुरुध्येदमुक्तम्। एवम्–**मे**। **दैवेन** दुर्दैवेन। **त्वत्सादृश्यविनोदमात्रं** तव सादृश्यं तस्य विनोदमात्रं विडम्बनमात्रं, तेन वा विनोदमात्रं सन्तापनि-वर्तनमात्रमिति तथोक्तम्। **अपि न**। **क्षम्यते**। सीतां स्मरतस्तद्विरहेण वर्षासु व्याकुलस्य रामस्योक्तिरियम्। 'हनुमन्नाटके'ति प्रसिद्धस्य चम्पूकाव्यस्येदं पद्यम्। शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ २१३ ॥'

लक्ष्यं लक्षयति–**अत्र**। **चतुर्थपादे** 'त्वत्सादृश्य...'-इति पद्ये सादृश्यविनोदाभावे। **पादत्रयवाक्यानि**। 'यत्त्वन्नेत्र...' इत्यारभ्य 'गता' इत्यन्ताः पूर्वपादवाक्यार्था इति भावः। **हेतवः**। मज्जितादिक्रियाकर्म्मीभूता इन्दीवरा-दयो दैवेन त्वत्सादृश्यदर्शनजन्यसुखासहिष्णुत्वनिष्पादका इति फलितोऽर्थः।

हेतोरेकपदार्थतायामुदाहरति–**पदार्थते**त्यादिना। स्पष्टम्। '**त्वद्वाजी**त्यादि। व्याख्यातपूर्वं पद्यमिदम् ॥२१४॥'

लक्ष्यं निर्दिशति–**अत्र**। **द्वितीयार्धे** ' न धत्ते' इत्यादिप्रतिपाद्ये सम्भाव्यमानभूरिभारभयकरणहरगङ्गात्यागे। **प्रथमार्धं** 'त्वद्वाजि' इत्यादि। **एकपदम्**उपचारात्तदर्थः कविप्रौढोक्तिसिद्धतादृशपङ्किलत्वाभिधेय इति यावत्। **हेतुस्तस्य**

अनेकपदं यथा मम—

'पश्यन्त्यसङ्ख्यपथगां त्वद्दानजलवाहिनीम्। देव! त्रिपथगाऽऽत्मानं गोपयत्युग्रमूर्धनि॥२१५॥'

इह केचिद् वाक्यार्थगतेन काव्यलिङ्गेनैव गतार्थतया कार्य्यकारणभावेऽर्थान्तरन्यासं नाद्रियन्ते, तदयुक्तम्। तथाहि अत्र हेतुस्त्रिधा भवति–ज्ञापको निष्पादकः समर्थकश्चेति। तत्र ज्ञापकोऽनुमानस्य, निष्पादकः काव्यलिङ्गस्य, समर्थकोऽर्थान्तरन्यासस्य; इति पृथगेव कार्य्यकारणभावेऽर्थान्तरन्यासः काव्यलिङ्गात्। तथाहि—'यत्त्वन्नेत्र'इत्यादौ चतुर्थपादवाक्यम्, अन्यथा साकाङ्क्षतयाऽसमञ्जसमेव स्यात् इति पादत्रयवाक्यं निष्पादकत्वेनापेक्षते। 'सहसा विदधीत..'इत्यादौ तु 'परापकारनिरतैर्दुर्जनैः सह सङ्गतिः। वदामि भवतस्तत्त्वं न विधेया कदाचन॥' इत्यादिवदुपदेशमात्रेणापि निराकाङ्क्षतया स्वतोऽपि गतार्थं सहसाविधानाभावं सम्पद्वरणं सोपपत्तिकमेव करोतीति पृथगेव कार्य्यकारणभावेऽर्थान्तरन्यासः काव्यलिङ्गात्।

---

निष्पादक इति भावः। यथा वा–'वदनाम्बुसहालोकनिन्दितेन्दुप्रभाभराम्। त्वामवेक्ष्य मनोजस्य को युवा न वशंवदः॥' इत्यत्र पूर्वार्द्धैकपदार्थः परार्थे हेतुः।

हेतोरनेकपदार्थतायामुदाहरति–अनेकपदमनेकपदार्थतेति भावः। यथा। मम 'पश्यन्तीत्यादि। व्याख्यातपूर्वं पद्यमिदम्॥ २१५॥' अत्र क्रियाऽन्वयासमाप्तौ वाक्यत्वमप्राप्तस्य 'पश्यन्ती' त्यादिपदानैक्यस्य कविप्रौढोक्तिसिद्धोऽर्थः सम्भाव्यमानो गङ्गाया आत्मगोपने हेतुरिति बोध्यम्। यथा वा–'प्रणयि सखी सलीलपरिहासरसाधिगतैर्ललितशिरीषपुष्पहननैरपि ताम्यति यत्। वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः पततु शिरस्यकाण्ड यमदंड इवैष भुजः॥' इत्यत्र 'वपुषि शस्त्रमुपक्षिपतः' इत्यादीनां क्रियासाकाङ्क्षतया वाक्यत्वमप्राप्तानां शस्त्रोपक्षेपरूपोऽर्थो भुजपातस्य निष्पादकः।

अर्थान्तरन्यासादेरस्यावच्छेदकं लक्षयन्मतान्तरमाक्षिपति–केचित् काव्यप्रकाशकारादयः। इह काव्यलिङ्गोदाहरणप्रस्तावे। वाक्यार्थगतेन हेतोर्वाक्यार्थताया सम्भवतेति भावः ( पदार्थगतेन काव्यलिङ्गेनार्थान्तरन्यासासम्भवादिदमुक्तम् )। काव्यलिङ्गेन। एव। गतार्थतया 'कारणेन कार्य्यस्य, कार्य्येण वा कारणस्य समर्थकस्य परैः स्वीकृतस्यार्थान्तरन्यासस्ये'ति शेषः। कार्यकारणभावे कार्य्यस्य कारणेन कारणस्य वा कारणेन समर्थने इति भावः। अर्थान्तरन्यासम्। न। आद्रियन्ते, 'किन्तु काव्यलिङ्गमेवे'ति शेषः। तत्। अयुक्तमसमञ्जसम्। उपपादयति–तथा। हि। 'उपपाद्यत'इति शेषः। अत्रार्थालङ्कारप्रस्तावे। हेतुः। ज्ञापकः। निष्पादक उपपादकः। समर्थकः पोषकः। च। इति। त्रिधा। भवति। तत्र त्रिषु तेषु मध्ये इत्यर्थः। ज्ञापको बोधको हेतुः। अनुमानस्य 'उपस्कारक' इति शेषः, एवं पुरस्तात्। निष्पादकः। काव्यलिङ्गस्य। समर्थकः। अर्थान्तरन्यासस्य तदभिधेयस्यालङ्कारस्योपस्कारक इत्यर्थः। इति निरुक्तादस्माद्धेतोः। काव्यलिङ्गात्। अर्थान्तरन्यासः। कार्य्यकारणभावे। पृथक्। एव। काव्यलिङ्गार्थान्तरन्यासयोः कार्य्यकारणभावपार्थक्येन पार्थक्यं सुतरामिति भावः। एतेनोपपादितमर्थं निर्दिशति– तथा। हि अत एवेति भावः। 'यत्त्वन्नेत्र' इत्यादौ। चतुर्थपादवाक्यं 'निष्पाद्य'मिति शेषः। अन्यथा निष्पाद्यत्वानङ्गीकारे। साकाङ्क्षतया कारणापेक्षितत्वेन। असमञ्जसमयुक्तं सुदृढप्रतिपत्तिजननाक्षममिति यावत्। एव। स्यात्। इति। पादत्रयवाक्यम्। निष्पादकत्वेनोपपादकत्वेन। अपेक्षते। नच अर्थान्तरन्यासोदाहरणेष्वप्येवमित्याह–'सहसा विदधीत' इत्यादौ। 'अर्थान्तरन्यासोदाहरणम्' इति शेषः। तु। 'परापकारनिरतैः। दुर्जनैः। सह। सङ्गतिः सङ्गः। कदाचन कदाऽपि। न। विधेया। इति–भवतः। तत्त्वं यथाऽर्थम्। वदामि॥' इत्यादिवदित्यादाविव। उपदेशमात्रेण। अपि। निराकाङ्क्षतया। स्वतो हेतूक्तिं विना। अपि। गतार्थं सुदृढप्रतिपादितस्वार्थम्। सहसाविधानाभावम्। सम्पद्वरणम्। सोपपत्तिकम्। एव। करोति। इति। काव्यलिङ्गात्। कार्य्यकारणभावः। अर्थान्तरन्यासः। पृथक्। एव। स्पष्टीकृतं च विवृतिकारैः–'तथा च–हेत्वाकाङ्क्षया यद्वाक्यं ( कर्तृ ) यद्वाक्यमपेक्षते, तदर्थस्य तदर्थो निष्पादकः, स एव काव्यलिङ्गस्य विषयः ( उपस्कारकः )। यत्र हेतूपदेशादिना हेतुनिरपेक्षं वाक्यं हेतुवाक्यस्यार्थः समर्थकः, स चार्थान्तरन्यासस्य विषयः (उपस्कारकः)।

'न धत्ते शिरसा गङ्गां भूरिभारभिया हरः। त्वद्वाजिराजिनिर्धूतधूलिभिः पङ्किला हि सा॥२१६॥'
इत्यत्र हिशब्दोपादानेन पङ्किलत्वादितिवद्धेतुत्वस्य स्फुटतया नायमलङ्कारः, वैचित्र्यस्यैवालङ्कारत्वात्।

१४५. अनुमानं तु विच्छित्त्या ज्ञानं साध्यस्य साधनात् ॥ ११६ ॥

यथा—'जानीमहेऽस्या हृदि सारसाक्ष्या विराजतेऽन्तः प्रियवक्त्रचन्द्रः।

---

एवंविधं भेदमनङ्गीकृत्य समर्थकहेतोरपि काव्यलिङ्गविषयत्वस्वीकारेऽर्थान्तरन्यासोच्छेदप्रसङ्ग इति भावः।' इति।

अस्या विषयमुदाहरति—'हरः। भूरिभारभिया। गङ्गाम्। शिरसा। न। धत्ते विभर्त्ति। हि यतः। सा गङ्गा। त्वद्वाजिराजिनिर्धूतधूलिभिः। पङ्किला पङ्कवती। राज्ञः स्तुतिरियम् ॥२१६॥ इत्यत्र। हिशब्दोपादानेन। पङ्किलत्वादितिवत्। हेतुत्वस्य। स्फुटतया। अयं काव्यलिङ्गाख्यः। अलङ्कारः। न। हेतुं निर्दिशति—वैचित्र्यस्य विच्छित्तिविशेषस्य। एव। अलङ्कारत्वात्। अत्राहुः कौस्तुभकाराः—"यत्तु (रसगङ्गाधरे)'काव्यलिङ्गं नालङ्कारः, कविप्रतिभानिर्मितत्वप्रयुक्तचमत्कारविशेषात्मकविच्छित्तिविरहात्। हेतुहेतुमद्भावस्य लोकसिद्धत्वात्। श्लेषादिसंमिश्रणजन्यस्तु चमत्कारः श्लेषप्रयुक्तत्वात् तदंशस्यैवालङ्कारतां कल्पयति, नतु काव्यलिङ्गस्य; तत्प्रयोज्यचमत्कारान्तराभावात्'इति। तत्तुच्छम्। लौकिकत्वेऽपि कविप्रतिभामात्रगम्यतया चमत्कारजनकत्वात्, एतदीयहेतुहेतुमद्भावमात्रस्य लोकसिद्धत्वाभावाच्च। न ह्युक्तसुखालोकोच्छेदादीनां महामोहतादात्म्यादिहेतुत्वं क्वचित् सिद्धम्। किञ्च एवमप्युपमाऽऽदेरप्यलङ्कारत्वं न स्यात्, सादृश्यस्य वास्तवत्वेन कविप्रतिभाकल्पितत्वविरहात्। नच तत्राप्युपमाप्रयोजकसाधारणधर्माभेदांशे तत् कल्पितत्वमेवेति वाच्यम्, रमणीयत्वादिनिमित्तधर्मस्यापि लोकप्रसिद्धत्वात्, 'गोसदृशो गवय'इत्यादेरपि वस्तुतो भिन्नसाधारणधर्माभेदाध्यवसायमूलकत्वात्, द्रव्यत्वादिनिमित्तकसादृश्यस्य शक्तिपरिच्छेदकत्वायोगात्। अभेदांशस्यैव शक्तिकल्पिततया तदंशस्यैवालङ्कारत्वं, नतु सादृश्यस्येत्युक्तदोषापरिहाराच्च। कल्पितत्वावच्छेदकधर्मावच्छिन्नचमत्कारजनकतायास्तद्धर्मावच्छिन्नमात्रालङ्कारत्वप्रयोजकतायास्त्वयैवोक्तत्वात्। चमत्कारजनकस्य लौकिकस्याप्यलङ्कारत्वे बाधकाभावात्सर्वालङ्कारोच्छेदापत्तेश्च।"इति।

अनुमानं लक्षयति—१४५ विच्छित्त्याऽलङ्कारत्वोपस्कारकेण चमत्कारविशेषेण। अभेदे तृतीयेयम्। तथा च-विच्छित्त्यभिन्नमित्यर्थः। साध्यस्य साधयितुं योग्यमिति, तस्य वह्न्यादेरित्यर्थः। साधनात् साध्यतेऽनेन वह्न्यादिरिति, तस्मात् धूमादेरित्यर्थः। ज्ञानमवगमः। तु पुनः। अनुमानमनुमीयते ज्ञायते साध्यस्य साधनेन यत्तदिति तथोक्तं, तन्नामाऽलङ्कार इति भावः। इदम्बोध्यम्—धर्म्मिणि नियतो व्यापकसम्बन्धः साध्यत्वम्, पक्षवृत्तित्वसपक्षवृत्तित्वविपक्षावृत्तित्वेन त्रिरूपो हेतुविशेषः साधनम्। तथा च—यथा 'पर्वतो वह्निमान् धूमात्' इत्यत्र पर्वते पक्षे धूमस्य हेतुविशेषस्य वृत्तित्वमस्ति, एवं वह्निरूपसाध्यनिश्चयवति महानसेऽपि सपक्षे, तथा वह्निरूपसाध्याभावनिश्चयवति ह्रदे विपक्षे धूमस्य हेतुविशेषस्य वृत्तित्वं नास्तीति त्रिविधेन धूमेन ज्ञापकेन हेतुना पर्वते पक्षे साध्यस्य वह्नेर्ज्ञानं यज्जायते तदनुमानम्, अस्य च 'पर्वतो वह्निमान् धूमा'दित्यादौ सत्त्वेऽपि विच्छित्त्यनालिङ्गितत्वेन नालङ्कारव्यपदेश्यत्वम्, इत्युक्तं विच्छित्त्येति। विच्छित्तिश्च अलङ्कारान्तरोद्भाविता कविप्रतिभोद्भाविता च चमत्कृत्यपरपर्यायाऽलङ्कारत्वोपस्कारकत्वसम्पत्तिः। विवृतं च कौस्तुभकारैः—'अव्यभिचरितसामानाधिकरण्यरूपव्याप्तिविशिष्टस्य साधनस्य दर्शनात् धर्मिणि पक्षे तन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपव्यापकत्वविशिष्टस्य साध्यस्य यज् ज्ञानं तदनुमानमित्यर्थः। अत्रानुमितिरेवानुमानपदेनोच्यते, तस्या एव चमत्कारजनकत्वेनालङ्कारत्वात् तां विना परामर्शमात्रेण प्रकृतानुकूलार्थसिद्धिविरहात्। व्याप्तिश्च पारमार्थिकी कविकल्पिता च।' इति। अयं चालङ्कारः—मन्ये-शङ्के-जाने-अवैमीत्यादिवाचकपदोपादाने वाच्यः। यत्र लिङ्गलिङ्गिनोः सत्त्वं तत्र तेषामनुमितिबोधकत्वम्, यत्र सादृश्यादिनिमित्तसद्भावस्तत्र तेषामुत्प्रेक्षाबोधकत्वम्, अत एववमेतयोर्भेदः। वक्ति कथयती-त्यादिलक्षकपदोपादाने पुनर्लक्ष्यः, एवं मन्ये इत्यादीनां वक्तीत्यादीनां चानुपादाने साध्यसाधनाभ्यां तदाक्षेपे व्यङ्ग्यः। इति ॥ ११६ ॥

उदाहरति—यथा—अस्याः। सारसाक्ष्याः सारसे कमले इवायते अक्षिणी यस्यास्तस्याः, कमलायतनेत्रायाः कान्ताया इति भावः। हृदि हृदये। अन्तो रहसि। प्रियवक्त्रचन्द्रः प्रियस्य नायकस्य वक्त्रचन्द्रो वक्त्रं वदनमेव

---

१ मन्ये इत्यादीनाम्।

तत्कान्तिजालैः प्रसृतैस्तदङ्गेष्वापाण्डुता, कुड्मलताऽक्षिपद्मे ॥ २१७ ॥'

अत्र रूपकवशाद्विच्छित्तिः। यथा वा--

'यत्र पतत्यवलानां दृष्टिर्निशिताः पतन्ति तत्र शराः।
तच्चापरोपितशरो धावत्यासां स्मरो मन्ये ॥ २१८ ॥'

अत्र कविप्रौढोक्तिवशाद्विच्छित्तिः। उत्प्रेक्षायामनिश्चिततया प्रतीतिः, इह तु निश्चिततयेत्यनयोर्भेदः।

**१४६ अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह।**

यथा मम-'तारुण्यस्य...' अत्र वशीकरणहेतुर्नायिका वशीकरणत्वेनोक्ता। विलासहासयोस्त्वध्यवसायमूलोऽयमलङ्कारः।

---

चन्द्रः। **विराजते**। इति-जानीमहे निश्चिनुमः। **तत्**। तथाहि-**प्रसृतैः** विस्तीर्णैः। **तत्कान्तिजालैः**तस्य प्रियवक्त्रचन्द्रस्य कान्तयस्तासां जालानि पुञ्जास्तैः। **अङ्गेषु**। **आपाण्डुता** समन्ततः स्फुरितत्वम्। तथा-**अक्षिपद्मे**ऽक्षि नेत्रमेव पद्मं कमलं तत्र। **कुड्मलता** मुकुलित्वम्। 'कुड्मलो मुकुलोऽस्त्रियाम्।' इत्यमरः। अत्राङ्गानामापाण्डुतयाऽक्षिपद्मस्य च कुड्मलतया च साधनेन प्रियवक्त्रचन्द्रस्य हृद्यन्तर्विराजनमनुमीयते। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः ॥ २१७ ॥'

अत्र विच्छित्तिं निर्दिशति-**अत्र**। **रूपकवशात्** रूपकालङ्कारसंसर्गबलात्। **विच्छित्तिः**रलङ्कारत्वोपस्कारकश्चमत्कारः।

उदाहरणान्तरं निर्दिशति-**यथा**। **वा**। '**यत्र** यस्मिन् ( यूनि )। **अवलानां** कामिनीनाम्। **दृष्टिः**। **पतति**। **तत्र** तस्मिन् ( यूनि ) **निशिताः**स्तीक्ष्णा उन्मादकत्वेनासह्या इति यावत्। **शराः**। 'कामस्ये'ति शेषः। **पतन्ति**। **तत्**। **आसाम**वलानाम्। पुरोऽग्रे। **चापरोपितशर**श्चापे धनुषि रोपित आरोपितः शरो येन तादृशः। **स्मरः** कामः। **धावति**। इति-**मन्ये**। अत्रावलानां दृष्टिपातविषयस्य ( काम ) निशितशरपातविषयत्वरूपात् साधनात् स्मरस्य धनुरारोपितशरतया पुरोधावनरूपस्य साध्यस्यानुमानम्। आर्य्याछन्दः, तल्लक्षणं चोक्तं प्राक् ॥ २१८ ॥

अत्र विच्छित्तिं निर्दिशति-**अत्रे**त्यादिना। स्पष्टम्। अत्रोत्प्रेक्षैव किं नाङ्गीक्रियेत ? इत्याशङ्क्याह-**उत्प्रेक्षायामि**त्यादि। स्पष्टम्। इदमवोध्यम्-अस्य स्वार्थपरार्थत्वाभ्यां भेदद्वयमामनन्ति, तत्र-यत्र मयाऽयमनुमितोऽर्थ इति स्वपरामर्शनिश्चयः तत्स्वार्थम्, यत्र परेणाननुमितस्यार्थस्य प्रत्यायनं तत्परार्थम्। आद्यमुदाहृतम्, द्वितीयं यथा-'तदस्ति तेषां तमसि प्रसर्पिणां निशाचरत्वं यदि पारमार्थिकम्। ततः प्रिये ! सन्निहितेऽत्र वासरे कथं नु तत् सञ्चरणं भविष्यति।' अत्र दिवासञ्चरणस्य साध्यस्य विरुद्धं निशाचरत्वं परप्रत्यायकं साधनम्। अस्यालङ्कारान्तरविच्छित्तिमन्तराऽपि सम्भवति। यथा-'विकसन्ति कदम्वानि स्फुटन्ति कुटजोद्गमाः।'

हेतुं लक्षयति-१४६ **हेतुमता** कार्य्येण। **सह**। **हेतोः** कारणस्य। **अभेदेन**। **अभिधा** कथनम्। **हेतुः** कारणं तन्नामाऽलङ्कार इत्यर्थः।

उदाहरति-**यथा**। **मम**-'**तारुण्यस्ये**त्यादि। व्याख्यातपूर्वमिदं पद्यम्। लक्षणसमन्वयं दर्शयति-**अत्रा**स्मिन्नुदाहृते पद्ये। **वशीकरणहेतुः** 'युवजनस्ये'ति शेषः। **नायिका**। **वशीकरणत्वेन** वशीकरणरूपकार्य्यत्वेन। **उक्ता**। ननु लक्षणया वशीकरणकारणप्रतीतिरेव, न त्वभेदप्रतीतिरित्यत आह-**विलासहासयोः**। 'तारुण्यस्य विलासः समधिकलावणसम्पदो हास' इत्युक्तदिशा तारुण्यसम्वन्धिविलासस्य समधिकलावण्यसम्पत्सम्वन्धिनो हासस्य चेत्यर्थः। **तु**। **अध्यवसायमूलो**ऽध्यवसाय आहार्याभेदप्रतीतिर्मूलमस्येति तथोक्तः। **अयं** हेत्वाख्यः। **अलङ्कारः**। निष्कर्षितं च विवृतिकारैः-'तथा च नायिकाया विलासहासयोः कार्य्यकारणभावरूपसम्वन्धाभावेन कारणलक्षणाया असम्भवादाहार्य्याभेदप्रतीतिरवश्यमङ्गीकरणीया तत्साहचर्य्यात् प्रकृतेऽप्याहार्य्यप्रतीतिरेव, ननु,

---

१ प्रकरणादिदं लभ्यते।

१४७ अनूकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत् ॥ ११७ ॥

यथा-'कुपिताऽसि यदा तन्वि ! निधाय करजक्षतम् ।
बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा ॥ २१९ ॥'

अस्य च विच्छित्तिविशेषस्य सर्वालङ्कारविलक्षणत्वेन स्फुरणात् पृथगलङ्कारत्वमेव न्याय्यम्।

१४८ वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये ।
निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा ॥ ११८ ॥

तत्र वक्ष्यमाणविषये क्वचित्सर्वस्यापि सामान्यतः सूचितस्य निषेधः, क्वचिदंशोक्तावंशान्तरे

---

लाक्षणिकी प्रतीतिरिति भावः।'इति। अत्र प्राञ्चः-'हेतुमता सह हेतोरभिधानमभेदतो हेतुः'इति हेत्वलङ्कारो न लक्षितः, 'आयुर्घृत'मित्यादिरूपो ह्येष न भूषणतां कदाचिदर्हति, वैचित्र्याभावात् 'अविरलकमलविकासः सकलालिमदश्च कोकिलानन्दः। रम्योऽयमेति सम्प्रति लोकोत्कण्ठाकरः कालः ॥' इत्यत्र काव्यरूपतां कोमलानुप्रासमहिम्नैव समाम्नासिषुर्न पुनर्हेत्वलङ्कारकल्पनयेति पूर्वोक्तकाव्यलिङ्गमेव हेतुः । इति, नव्यास्त्वाहुः-माभूत् 'आयुर्घृत'मित्यादौ वैचित्र्याभावात्, किन्त्वयं 'अविरल..'इत्यादावस्त्येव, न ह्यत्रानुप्रासेन गतार्थत्वं कल्पनीयम्, अनुप्रासघटकशब्दपरिवृत्तावपि वैचित्र्यस्य सद्भावात्। अत एव तद्व्याख्यातारोऽपि "वस्तुतस्तु 'अविरलकमलविकास'इत्यादिषु वैचित्र्यमनुभवसिद्धमेवेत्युद्भटादिमतं समीचीनमेवेति नवीनाः।"इति।

अनुकूलं लक्षयति-१४७ **चेत्** । **अनुकूलानुबन्धि** अनुकूलमभिमतमनुबध्नातीति तथोक्तम्, आनुकूल्येन सम्भवीत्यर्थः। **प्रातिकूल्यं** प्रतिकूलत्वम्। तर्हि-**अनुकूलमेतदभिधेयोऽलङ्कारः** ॥ ११७ ॥

उदाहरति-**यथा**-'हे **तन्वि** ! **यदा** यदि। **कुपिता**। **असि** त्वम्। **तदा** तर्हि । **करजक्षतं** करजैर्नखैः क्षतं तत् । **निधाय**। **अस्य**'ममे'ति शेषः। **कण्ठम्**। **दृढं** गाढम्। **भुजपाशाभ्यां** भुजरूपाभ्यां पाशाभ्याम्। **बधान**। अत्र क्षतस्य पाशबन्धनस्य च प्रतिकूलत्वेऽपि प्रकृतनायकानुकूल्यकरत्वेन युज्यते इत्यनुकूलम् ॥ २१९ ॥'

अस्य प्राचीनैरलङ्कारत्वेनानङ्गीकारेऽपि कथं तदङ्गीक्रियते इत्याशङ्क्याह-**अस्येत्यादि**। स्पष्टम्।

आक्षेपं लक्षयति-१४८ **वक्तुम्**। **इष्टस्या**भिमतस्य। **वस्तुनो** विषयस्य । **विशेषप्रतिपत्तये** विशेषेण वैलक्षण्येन प्रतिपत्तिर्बोधनं तस्यै। **निषेधाभासो** निषेधस्याभासः प्रकाशनम्। **आक्षेप** आक्षेपणं विवक्षितस्यार्थस्य भर्त्सनमिति तथोक्तः, तन्नामाऽलङ्कारः। स च-**वक्ष्यमाणोक्तगो** वक्ष्यमाणो वक्ष्यमाणं चोक्तं चेति ते (वस्तुनी) गच्छतीति तथोक्तः। **द्विधा**। अयम्भावः-विवक्षितं वस्तु वचनानार्हमवचनार्हं वा, तस्य निषेधाभासः (शब्दशक्त्या निषेधोऽप्यर्थशक्त्या विधानम्) आक्षेपः। स च-विशेषेण विवक्षितमेवार्थं बोधयितुमीप्स्यते, अन्यथा तस्य चमत्काराधायकत्वाभावेनालङ्कारव्यपदेशार्हत्वं न स्यात्। तत्सुष्ठूक्तं विशेषप्रतिपत्तय इति । वक्ष्यमाणविषयगत उक्तविषयगतश्चायम्। एवं च-'वक्तुमिष्टस्य वस्तुनो निषेधाभास आक्षेप इति सामान्यं लक्षणम्, तावन्मात्रत्वेऽलङ्कारत्वोपकारकस्य वैचित्र्यस्यानुदयात् 'विशेषे'त्याद्युक्तम्, तेन सति विशेषप्रतिपादकत्व एवेति पर्य्यवसितम्। अस्य भेदद्वयम्-वक्ष्यमाणविषयगतत्वेनोक्तविषयगतत्वेन चेति । तत्र वक्ष्यमाणे प्रकृतोपयोगिनि वस्तुनि विशेषोऽशक्यवक्तव्यत्वरूप, उक्ते पुनरतिप्रसिद्धत्वरूप इति बोध्यम्। तथाऽऽहुः-'अवश्यवक्तव्यस्यार्थस्य विधानाभिप्रायकं विशेषप्रतिपत्तये प्रतिषेधनमाक्षेपालङ्कारः। स च वक्ष्यमाणे विषयेऽशक्यवक्तव्यत्वेनोक्ते विषयेऽतिप्रसिद्धत्वेन विच्छित्तिं लभत इति द्विविधः।' इति ॥ ११८ ॥'

एवमस्य भेदद्वयं निर्दिश्य सूक्ष्मदृशा पुनर्भेदद्वयं वृत्तिकारो निर्दिशति-**तत्रेत्यादिना**।

**तत्र** तयोर्भेदयोर्मध्ये। **वक्ष्यमाणविषये** वक्ष्यमाणे विषये । **क्वचित्** कस्मिंश्चिल्लक्ष्ये। **सामान्यतः**। **सूचितस्य**। **सर्वस्य** समुदितस्य। **अपि**। **निषेधः**। **क्वचित्**। **अंशोक्तावंशे**नोक्तिः कथनं तस्यां सत्याम्। **अंशान्तरे**

निषेध इति द्वौ भेदौ, उक्तविषये च क्वचिद्वस्तुस्वरूपस्य निषेधः, क्वचिद्वस्तुकथनस्येति द्वावित्याक्षेपस्य चत्वारो भेदाः। क्रमेण यथा—

'स्मरशरशतविधुराया भणामि सख्याः कृते किमपि।
क्षणमिह विश्राम्य सखे! निर्दयहृदयस्य किं वदाम्यथवा॥ २२०॥'

अत्र सख्या विरहस्य सामान्यतः सूचितस्य वक्ष्यमाणविशेषे निषेधः।

'तव विरहे हरिणाक्षी निरीक्ष्य नवमालिकां दलिताम्।
हन्त नितान्तमिदानीमाः! किं हतजल्पितैरथवा॥ २२१॥'

'अत्र मरिष्यती'त्यंशेनोक्तम्।

'बालअ! णाहं दूती तुअ प्पिओसि त्ति ण मह बावारो।
सा मरइ तुज्झ अअसो एअं धंमक्खरं भणिमो'॥ २२२॥'

---

ऽन्यस्मिन्नंशे। उक्तिविषयांशातिरिक्तेंऽश इति भावः। **निषेधः। इति। द्वौ। भेदौ।** तथा च–वक्ष्यमाणविषयगतोऽयं द्विविधः,तत्र सामान्यतः सूचितस्य सर्वस्य निषेधात्मा,अंशेनाभिधानेंऽशान्तरे निषेधात्मा चेति फलितम्। **उक्तविषये। क्वचित्** कस्मिंश्चिल्लक्ष्ये। **वस्तुस्वरूपस्य** वस्तुनो यत् स्वरूपमवच्छेदकं तस्य। वस्तुनि यद्वस्तुत्वावच्छेदकं तस्येति भावः। **च। निषेधः। क्वचित्। वस्तुकथनस्य** वस्तुनो विषयस्य यत् कथनं तस्य। 'निषेध'इति देहलीदीपकन्यायेनानुषज्यते। **इति। द्वौ।** 'भेदा'इति पूर्वतोऽनुषज्यते। तथा च–उक्तविषयगतोऽप्ययं द्विधा, वस्तुत्वनिषेधात्मा, वस्तुकथननिषेधात्मा च; इति फलितम्। **इति। आक्षेपस्य। चत्वारः। भेदाः।**

उदाहर्त्तुकाम आह–**क्रमेण। यथा।** 'हे **सखे! स्मरशरशतविधुरायाः** स्मरस्य शरशतेन विधुरा दुःखिता तस्यास्तथोक्तायाः। कामदेवस्य बहुबाणप्रहारेण व्याकुलीकृताया इति भावः। 'वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिषु।' इति त्रिकाण्डशेषः। **सख्याः। कृते** निमित्तम्। **किमपि** किञ्चित्। **भणामि** कथये। अतः–**क्षणम्। इह। विश्राम्य** उपविश। **अथवा। किम्। निर्दयहृदयस्य** निष्करुणान्तःकरणस्य। कर्मणि सम्बन्धमात्रविवक्षया षष्ठी। **वदामि** वदेयमित्यर्थः। न किमपि वक्तुं शक्यमिति भावः। अत्र वक्ष्यमाणवस्तुगत आक्षेपः। अत्रोद्गीतिश्छन्दः, तल्लक्षणं चोक्तं प्राक्॥ २२०॥'

उदाहृतमर्थं निर्दिशति–**अत्र** नायिकासख्या नायकं प्रत्युक्तौ। **सख्याः** सखीसम्बन्धिनः। **विरहस्य। सामान्यतः। सूचितस्य** 'स्मरशरे'त्यादिनेति शेषः। **वक्ष्यमाणविशेषे** वक्ष्यमाणे (वस्तुनि) विशेषोऽशक्यवक्तव्यत्वरूपं वैलक्षण्यं तत्र, तस्मिन् विषय इति भावः। **निषेधः** 'निर्दयहृदयस्ये' त्यनेन विवक्षितं व्यञ्जयित्वेति शेषः।

'**हरिणाक्षी। तव** तदेकाधारस्य भवत इति भावः। **विरहे** सान्निध्याभावे सतीति भावः। **नवमालिकाम्। दलितां** विकसिताम्। **निरीक्ष्य** दृष्ट्वा। **हन्त** कष्टम्। **इदानीम्। नितान्तम्। आः!** 'मृतप्राये'ति शेषः। **अथवा। हतजल्पितैः** हतानि वचनानर्हाणि यानि जल्पितानि वचनानि तैः। **किम्।** न किमपि प्रयोजनम्। अत्रापि वक्ष्यमाण आक्षेपः, किन्तु अंशत उक्त्वेति विशेषः। उपगीतिश्छन्दः॥ २२१॥'

उदाहरणसङ्गतेर्हेतुं निर्दिशति–**अत्र। 'मरिष्यती'ति** 'अशक्यं वक्तव्य' मिति शेषः। **अंशेन**ैकदेशेन 'हन्त नितान्तमिदानी'मित्यनेन। **उक्तम्।** 'अंशान्तरेण पुनरशक्यवक्तव्यतया तस्य निषेधः। अशक्यवक्तव्यतायाश्च 'हतजल्पितै'रित्यनेन जल्पितनिन्दनद्वारा सूचन'मिति शेषः।

'हे **बालअ** बालक लक्षणया तद्वदविदग्ध! **अहम्। दूती** 'तस्या (तस्यास्तव प्रियायाः)' इति शेषः। **ण** नैवास्मीत्यर्थः। **तुअ** त्वम्। **प्पिओ** प्रियः। **असि। त्ति** इति। **मह** मम। **बावारो** व्यापार उद्यम इति यावत्। **ण** नैवास्तीत्यर्थः। तदर्थं न ममायं प्रयास इति भावः। **सा** तव कान्ता त्वदेकाधारेति यावत्। **मरइ** म्रियते 'जदि (यदि)' इति शेषः। **तुज्झ** तव। 'तद्दि (तर्हि)' इति शेषः। **अअसो** अयशः। **एअं** एतत्। **धंमक्खरं** धर्माक्षरं सत्यवचनमिति यावत्। **भणिमो** भणामः। अत्रोक्तेऽपि दूतीत्वेऽति प्रसिद्धं 'दूत्या मिथ्यावादित्वं' निषेद्धुं 'नाहं

---

१ 'बालक! नाहं दूती, त्वं प्रियोऽसीति न मम व्यापारः। सा म्रियते तवायश एतद्धर्माक्षरं भणामः॥' इति संस्कृतम्।

अत्र दूतीत्वस्य वस्तुनो निषेधः ।

'विरहे तव तन्वङ्गी कथं क्षपयतु क्षपाम् । दारुणव्यवसायस्य पुरस्ते भणितेन किम्॥२२३॥'

अत्र कथनस्यैव निषेधः । प्रथमोदाहरणे'सख्या'अवश्यम्भावि 'मरण'मिति विशेषः प्रतीयते, द्वितीयेऽशक्यवक्तव्यत्वादि, तृतीये दूतीत्वे यथाऽर्थवादित्वम्, चतुर्थे दुःखस्यातिशयः । न चायं विहितनिषेधः, अत्र निषेधाभासत्वात् ।

**१४९ अनिष्टस्य तथाऽर्थस्य विध्याभासः परो मतः ।**

तथेति पूर्ववद्विशेषप्रतिपत्तये । यथा—

'गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥ २२४ ॥'

---

दूत्यन्तरवन्मिथ्यावादिनी'ति प्रत्याययितुं स्ववैलक्षण्यं सूचितम् । आर्याछन्दः । दूतीत्वेन कथितात्मनः कस्याश्चित् स्वाभिधित्सितं द्योतयितुं निषेधोक्तिरियम् ॥ २२२ ॥'

अत्र यस्य वस्तुनो निषेधस्तन्निर्दिशति–अत्रेत्यादिना । स्पष्टम् । 'अत्र सतोऽपि स्वस्मिन् दूतीत्वस्य निषेधेन दूत्यन्तरवन्नाहं मिथ्या वदामीति स्ववैलक्षण्यं व्यज्यते । निषेधस्यारोप्यमाणत्वादाभासत्वम् ।' इति विवृतिकाराः ।

'तव । विरहे वियोगे । तन्वङ्गी कृशोदरी । कथम् । क्षपां रात्रिम् । क्षपयतु व्यपनयतु । अथवा–दारुणव्यवसायस्य दारुणः परप्राणान्तकारकत्वेन निष्ठुरो व्यवसायो निश्चयो यस्य तादृशस्य । ते तव । पुरः । भणितेन कथनेन । किम् । दूत्या नायकं प्रत्युक्तिरियम् । यत्तूक्तं 'वर्षाऽऽरम्भे प्रवसन्तं नायकं प्रति सख्या वचनमिद'मिति, तन्न; तादृशप्रकरणोपयोगिनोऽर्थस्यानुपलम्भात् ॥ २२३ ॥'

उदाहृतमर्थं निर्दिशति–अत्रेत्यादिना ।

अत्र । कथनस्य विवक्षिताभिधानस्य । एव । निषेधः । अयम्भावः–'कथं क्षपयतु क्षपा'मित्यनेन 'तत्सविधेऽवश्यं रात्रौ त्वया गन्तव्य'मित्यर्थस्य प्रत्यायनम्, अतोऽस्य कथनम् । अनन्तरं तस्यैव 'पुरस्ते' इत्यादिना प्रतिषेधः । अयं चाभासमात्रेण ।

एवं चतुरो भेदानुदाहृत्य तत्र क्रमेण बोद्धव्यं विशेषं निर्दिशति–प्रथमोदाहरणे 'स्मरशर...' इत्यादावित्यर्थः । 'सख्याः । अवश्यम्भावि । मरणम् ।' इति । विशेषः 'अशक्यवक्तव्य' इति शेषः । प्रतीयते । द्वितीये 'तव विरह' इत्यादौ । अशक्यवक्तव्यत्वादि अशक्यं यद्वक्तव्यत्वं तदादिर्यस्य तत् 'मरिष्यती'त्येवम्भूतं वस्तु । 'प्रतीयत' इति शेषः । तृतीये 'वालअ' इत्यत्र । दूतीत्वे 'सत्यपि' इति शेषः । यथाऽर्थवादित्वम् 'विशेषः प्रतीयते' इति शेषः । चतुर्थे 'विरहे' इत्यत्र । दुःखस्य । अतिशयः 'नायिकाया' इति शेषः । 'विशेषः प्रतीयत' इति शेषः । अयम्भावः–नायिकाया नायकविरहे रात्र्यपक्षमनं दुःशकमित्यतिप्रसिद्धत्वरूपो विशेषः प्रतीयते । इति । नच 'निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ।' इत्याद्युक्तदिशा वास्तवनिषेध आक्षेपघटक इति न चिन्त्यम्, तस्य वैचित्र्यानाधायकत्वात् इत्यभिप्रायेणाह–न । च । अयम् । विहितनिषेधः । 'येन वैचित्र्यन्न स्यात्' इति शेषः । कुत इत्याह–अत्र । निषेधाभासत्वात् निषेधस्याभासमात्ररूपत्वात् ।

अस्यैव प्रकारान्तरं लक्षयति–१४९ तथा विशेषप्रतिपत्तये । परोऽन्य आक्षेपः । अनिष्टस्य अनभिमतस्य । अर्थस्य विषयस्य । विध्याभासो विधेराभासः नतु वास्तविकत्वम् । मतः ।

तथेत्यस्य दुर्बोधतां परिहरति–तथेत्यादिना । स्पष्टम् ।

उदाहरति–यथा–'हे कान्त ! चेत् । गच्छसि प्रयासि 'परदेश'मिति शेषः । तर्हि–गच्छ । ते तव । पन्थानो मार्गा गन्तव्याः प्रदेशा इति यावत् । शिवाः । सन्तु । यत्र । भवान् । गतः प्राप्तः'स्या'दिति शेषः । तत्र । एव नान्यत्रेति भावः । मम । अपि । जन्म । भूयात् । प्रवसन्तं नायकं प्रत्युक्तिरियम् । दण्डिनः पद्यमिदम् ॥ २२४ ॥'

अत्रानिष्टत्वाद्गमनस्य विधिः प्रस्खलद्रूपो निषेधे पर्य्यवस्यति, विशेषश्च गमनस्यात्यन्तपरिहार्य्यत्वरूपः प्रतीयते ।

१५० विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते ॥ ११९ ॥
उक्तानुक्तनिमित्तत्वाद् द्विधा सा परिकीर्तिता ।

विना कारणमुपनिबध्यमानोऽपि कार्य्योदयः किञ्चिदन्यत्कारणमपेक्ष्यैव भवितुं युक्तः । तच्च कारणान्तरं क्वचिदुक्तं, क्वचिदनुक्तमिति द्विधा । यथा—

'अनायासकृशं मध्यमशङ्कतरले दृशौ । अभूषणमनोहारि वपुर्वयसि सुभ्रुवः ॥ २२५ ॥'

अत्र वयोरूपं निमित्तमुक्तम्, अत्रैव 'वपुर्भाति मृगीदृशः' इति पाठेऽनुक्तम् ।

१५१ सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा ॥ १२० ॥

तथेति उक्तानुक्तनिमित्तत्वात् । तत्रोक्तनिमित्ता यथा—

'धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः । प्रभवोऽप्यप्रमादास्ते महामहिमशालिनः ॥२२६॥'

अत्र महामहिमशालित्वं निमित्तमुक्तम् । अत्रैव चतुर्थपादे 'कियन्तः सन्ति भूतले ॥' इति पाठे त्वनुक्तम् । अचिन्त्यनिमित्तत्वं चानुक्तनिमित्तत्वमेवास्या भेद इति पृथङ् नोक्तम् ।

---

उदाहृतमर्थं निर्दिशति—अत्र । अनिष्टत्वादनभिमतत्वात् । गमनस्य 'गच्छे'त्यनुज्ञाया इति भावः । विधिः । प्रस्खलद्रूपोऽत्यन्तमसम्भवन् । निषेधे 'न त्वया गन्तव्यं, गते त्वयि मम मरणं निश्चितमेव' इत्येवं प्रतिषेधसूचने । पर्य्यवस्यति परिणमति । गमनस्य । अत्यन्तपरिहार्य्यत्वरूपः । विशेषः । च । प्रतीयते ।

विभावनां लक्षयति–१५० यत् यत्र । हेतुं कारणम् । विना । कार्य्योत्पत्तिः कार्य्यस्योत्पत्तिः । उच्यते । सा । विभावना विभावयति कारणं विना कार्य्यं प्रत्याययति(सम्भावयति)इति तथोक्ता, तन्नामाऽलङ्कार इति भावः । उक्तानुक्तनिमित्तत्वादुक्तं चानुक्तं चेति तादृशे निमित्ते यस्यां तस्या भावस्तत्त्वं तस्मात् । द्विधा । परिकीर्तिता । अयम्भावः—कारणं विना यद्यपि न किमपि कार्यं समुत्पद्यते, तथाऽपि प्रसिद्धं कारणं विना यदि कविः स्वप्रतिभोन्मेषेण कार्य्योत्पत्तिं सूचयेत् तर्हि विभावना अत्र प्रसिद्धस्यैव कारणस्य निषेधात् तत्सद्भावे पुनर्वैचित्र्यानुदयात् । इति ॥ ११९ ॥

तदेव स्वयं वृत्तिकारो विवृणोति–विनेत्यादिना । स्पष्टम् ।

उदाहरति–यथा–'सुभ्रुवः सुन्दरे भ्रुवौ यस्यास्तस्याः । वयसि अवस्थायां यौवनप्रादुर्भाव इति यावत् । मध्यमुदरम् । अनायासकृशमायासमन्तरैव कृशमिति भावः । 'जात'मिति शेषः । दृशौ नेत्रे । अशङ्कतरले शङ्कामन्तरा चञ्चले । वपुः शरीरम् । अभूषणमनोहारि भूषणपरिधानमन्तरा मनोरमणीयम् ॥ २२५ ॥' अत्रोक्तं निमित्तं सूचयन् अनुक्तनिमित्तत्वे पाठभेदं निर्दिशति–अत्रेत्यादिना । स्पष्टम् ।

विशेषोक्तिं लक्षयति–१५१ हेतौ कारणे । सति । फलाभावः फलस्य कार्य्यस्याभावस्तथोक्तः । तद्रूपेति भावः । विशेषोक्तिः । तथोक्तानुक्तनिमित्तत्वादित्यर्थः । द्विधा ॥ १२० ॥

तथेतिपदार्थं स्पष्टयति–तथेत्यादिना । निगदव्याख्यातम् । उदाहर्तुमाह–तत्रेत्यादि । स्पष्टम् । 'ते । महामहिमशालिनो महान् असौ महिमा तेन शालन्त इत्येवंशीलास्तथोक्ताः । धनिनः । अपि । निरुन्मादा उन्मादहीनाः । युवानः । अपि । चञ्चलाः । न । प्रभवः । अपि । अप्रमादाः प्रमादशून्याः । अत्रोन्मादस्य हेतोर्धनित्वस्य, चाञ्चल्यस्य हेतोर्युवत्वस्य, प्रमादस्य हेतोः प्रभुत्वस्य च सत्त्वेऽपि उन्मादादिराहित्याभिधानेन तत् कार्य्याभावोऽभिहितः ॥ २२६ ॥' अत्र निमित्तोक्तिं निर्दिशति–अत्रेत्यादिना । स्पष्टम् ।

अत्रैवैकेनांशेन पाठपरिवृत्तौ द्वितीयोदाहरणं समर्थयते–अत्रैवेत्यादिना । स्पष्टम् ।

निमित्तस्याचिन्त्यतायामस्या अचिन्त्यनिमित्तत्वन्नाम परैः स्वीकृतो भेदोऽन्तर्भवतीत्याह–अचिन्त्यनिमित्तत्वमचिन्त्यं निमित्तं यत्र तस्य भावस्तत्त्वम् । च । अस्या निरुक्तलक्षणाया विशेषोक्तेः । अनुक्तनिमित्तत्वम् । एव । भेदः । इति । पृथक् । न । उक्तम् ।

यथा—

'स एकस्त्रीणि जयति जगन्ति कुसुमायुधः। हरतापि तनुं यस्य शम्भुना न बलं हृतम्॥२२७॥'

अत्र तनुहरणेऽपि बलाहरणे निमित्तमचिन्त्यम्। इह च कार्य्याभावः कार्य्यविरुद्धसद्भावमुखेनापि निबध्यते, विभावनायां कारणाभावः कारणविरुद्धसद्भावमुखेनाप्येवम्। अतः 'यः कौमारहरः' इत्यत्र उत्कण्ठाकारणविरुद्धस्य निबन्धनाद्विभावना, कारणस्य विरुद्धं यत् 'चेतः समुत्कण्ठते' इति कार्य्यं तस्य निबन्धनाद्विशेषोक्तिश्च। अत एवात्र विभावनाविशेषोक्त्योः सङ्करः। शुद्धोदाहरणं तु मृग्यम्।

**१९२ जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः।**
**क्रिया क्रियाद्रव्याभ्यां यद्द्रव्यं द्रव्येण वा मिथः॥ १२१॥**
**विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः।**

---

अथापि उदाहरति—**यथा**—'**यस्य**। **तनुं** शरीरम्। **हरता** निघ्नता। **अपि**। **शम्भुना** शङ्करेण। **बलम्**। **न**। **हृतम्**। **सः**। **एको**ऽद्वितीयः। **कुसुमायुधः**। **त्रीणि**। **जगन्ति** लोकान्। **जयति**। अत्र तनुहरणरूपे हेतौ सत्यपि बलहरणरूपस्य कार्य्यस्यासत्त्वम्॥ २२७॥'

निमित्तस्याचिन्त्यतां निर्दिशति—अत्रेत्यादिना। स्पष्टोऽर्थः। अत्रेदम्बोध्यम्—अनुक्तनिमित्ताया द्वौ भेदौ, तत्राद्योऽनुक्तचिन्त्यनिमित्तो द्वितीयोऽनुक्ताचिन्त्यनिमित्त इति; अथापि भेदकल्पनाया गौरवं मन्यमाना द्वावप्येतौ भेदावनुक्तनिमित्तरूपावेवात एवायं भेदो न पृथगुक्तः। इति।

अस्यां कार्य्याभावस्य विच्छित्त्यन्तरेण बन्धं दर्शयन् विभावनायां कारणाभावस्य तथा बन्धमनुषङ्गतो दर्शयति-**इह**ास्यां विशेषोक्ताविति यावत्। **च**। **कार्य्याभावः**। **कार्य्यविरुद्धसद्भावमुखेन** कार्य्यस्य यद् विरुद्धं (कारणं)तस्य सद्भावस्तस्य मुखं द्वारं तेन। **अपि**'किम्पुनरन्यथे'ति शेषः। **निबध्यते**। **एवम्**। **विभावनायाम्**। **कारणाभावः**। **कारणविरुद्धसद्भावमुखेन** कारणस्य विरुद्धं (कार्य्यम्) तस्य सद्भावस्तस्य मुखं द्वारं तेन। **अपि**'किम्पुनरन्यथे'ति शेषः। 'निबध्यत'इत्यनुषज्यते। **अतः**। '**यः कौमारहरः..**'इति व्याख्यातपूर्वं पद्यम्। **इत्यत्र**। **उत्कण्ठाकारणविरुद्धस्यो**त्कण्ठायास्तद्रूपस्य कार्य्यस्य कारणं (नायकाद्यसन्निधिः), तस्य विरुद्धं (नायकादिसन्निधिः) तस्य। **निबन्धनात्**। **विभावना**। **कारणस्योत्कण्ठारूपकार्य्यस्य कारणभूतो** यो नायकाद्यसन्निधिस्तस्येति भावः। **विरुद्धं** प्रतिकूलम्। **यत्**। '**चेतः**।**समुत्कण्ठते**' **इति**। **कार्य्यम्**। उत्कण्ठारूपं कार्य्यमिति भावः। **तस्य**। **निबन्धनात्**। **विशेषोक्तिः**। **च**। **अतः**। **एव**। **अत्रो**दाहृते पद्ये। **विभावनाविशेषोक्त्योः**। **सङ्करः**। अलङ्कारसर्वस्वकारा अप्याहुः—'कार्य्यानुत्पत्तिश्चात्र क्वचित् कार्य्यविरोधोत्पत्त्या निबध्यते, एवं विभावनायामपि कारणाभावः कारणविरुद्धमुखेन क्वचित्प्रतिपाद्यते। तथा च सति—'यः कौमारहर...' इत्यादौ विभावनाविशेषोक्त्योः सन्देहसङ्करः। तथाहि—उत्कण्ठाकारणं विरुद्धं'यः कौमारहर'इत्यादिनिबद्धमिति विभावना। तथा 'यः कौमारहर'इत्यादेः कारणस्य कार्य्यं विरुद्धं'चेतः समुत्कण्ठते' इत्युत्कण्ठाऽऽख्यं निबद्धमिति विशेषोक्तिः।'इति। **शुद्धोदाहरणम्**। निरुक्तलक्षणयोरेतयोः पृथक्पृथगुदाहरणमिति भावः। **तु**। **मृग्य**मन्वेषणीयम्। अत्र विवृतिकाराः—"कार्यकारणविरुद्धसद्भावमुखेन कार्य्याभावकारणाभावोक्तौ विशेषोक्तिविभावनयोः शुद्धोदाहरणे क्रमेण यथा—'धनिनोऽपि स्थिरस्वान्ता यौवने धर्मतत्पराः। अनात्मश्लाधिनः शूरा भूपाला रघुवंशजाः॥' अत्र स्थिरस्वान्तत्वमुन्मादविरुद्धं धर्मोपार्जनकारणं वार्द्धकं तद्विरुद्धं यौवनम्।" इति।

विरोधं लक्षयति—**यद्** यदि। **चतुर्भिः**। **जात्याद्यै**र्जातिगुणक्रियाद्रव्यैः। सहार्थेयं तृतीया। **जातिः**। 'विरुद्धमेव भासेते'त्येव लिङ्गविपरिणामेनात्र सर्वत्रान्वेति, तथा च—'विरुद्धैव भासेते' त्याकर्षणीयम्। **त्रिभिः**। **गुणादिभि**र्गुणक्रियाद्रव्यैः। सहार्थेयं तृतीया। **गुणः**। 'विरुद्ध एव भासेते' त्याकर्षणीयम्। **क्रियाद्रव्याभ्याम्**। सहार्थेयं तृतीया। **क्रिया**। 'विरुद्धैव भासेते' त्याकर्षणीयम्। **वा**। **द्रव्येण**। **मिथः** समम्। **द्रव्यम्**। **विरुद्धम्**। **इव**। **भासेत**। तर्हि-**असौ**। **दशाकृति**र्दशविधः। **विरोधः**॥ १२१॥

क्रमेण यथा--'तव विरहे मलयमरुद् दवानलः शशिरुचोऽपि सोष्माणः।
हृदयमलिरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः ॥ २२८ ॥'
'सन्ततमुसलासङ्गाद्बहुतरगृहकर्मघटनया नृपते !
द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः ॥ २२९ ॥'
'अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः। स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव॥२३०॥'
'वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः। राकाविभावरीजानिर्विषज्वालाऽऽकुलोऽभवत्॥२३१॥'
'नयनयुगासेचनकं मानसवृत्त्याऽपि दुष्प्रापम्। रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे॥२३२॥'
'त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम्। न धत्ते शिरसा गङ्गां भूरिभारभिया हरः॥२३३॥'
'वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः। राकाविभावरीजानिर्मध्यन्दिनदिनाधिपः ॥ २३४ ॥'

---

उदाहर्त्तुमुपक्रमते–क्रमेण यथानिर्देशम्। यथा। 'तव। विरहे 'जाते'इति शेषः। अस्यास्त्वदेकाधारायाः प्रियाया इत्यर्थः। मलयमरुन्मलयस्तन्नामा चन्दनोत्पत्तिस्थानभूतः पर्वतस्तस्य मरुद्वायुः। चन्दनसौगन्ध्यसम्भृततया शीतलोऽपि वात इति भावः। दवानलो दावाग्निः। शशिरुचश्चन्द्रकान्तयः। अपि। सोष्माण उष्णाः। अलिरुतम्भ्रमरझङ्कारः। अपि। हृदयम्। भिन्ते विदारयति। नलिनीदलं पद्मिनीपत्रम्। अपि। निदाघरविर्ग्रीष्मसूर्य्यः। 'जात'इति शेषः। अत्र क्रमेण जातेर्जात्यादिभिश्चतुर्भिर्विरोधो भासते ॥ २२८ ॥'

एवं जातेर्जात्यादिभिर्विरोधाभासं दर्शयित्वा गुणस्य गुणेन विरोधाभासं दर्शयति–हे नृपते! बहुतरगृहकर्मघटनया बहुतरं गृहाणां कर्माणि गृहोचितानि कार्य्याणि तेषां घटना निर्माणं तया। सन्ततमुसलासङ्गात् सन्ततं निरन्तरं मुसलस्यासङ्गोऽत्यन्तं प्रसङ्गस्तस्मात्। द्विजपत्नीनां ब्राह्मणीनाम्। कठिनाः कठोराः। 'अपी'ति शेषः। करा हस्ताः। भवति यथेष्टं सन्ततं सम्प्रदातृत्वेन प्रसिद्धे त्वयीति भावः। सति। सरोजसुकुमाराः कमलवत् अत्यन्तं कोमलाः। 'जाताः'इति शेषः। त्वया तथा सन्ततं सम्प्रदीयते यथा ब्राह्मणा दासीभिरेव खस्त्रीणां कर्तव्यानि कारयन्तीति भावः। गीतिश्छन्दः। तल्लक्षणं चोक्तं प्राक् ॥ २२९ ॥'

गुणस्य क्रियया विरोधाभासं दर्शयति–अजस्य न जायते कर्माधीनत्वेनेति तस्य। 'अपी'ति शेषः। जन्म। गृह्णतः 'स्वेच्छये'ति शेषः। निरीहस्य निरस्तेहा चेष्टा यस्य तस्य। 'अपी'ति शेषः। हतद्विषो हता विनाशिता भक्तानुकम्पितया द्विषो भक्तदुःखदा येन तस्य। जागरूकस्य जागर्त्तीति तथोक्तस्य। 'अपी'ति शेषः। स्वपतः स्वप्नं नाटयतः। 'स्वप्नस्य सिद्धया मनःसंयोगरूपतया गुणत्वम्।' इति विवृतिः। तव भगवतः। याथार्थ्यं सत्यं स्वरूपम्। कः किंस्वरूपो जनो ब्रह्मा वा। वेद जानीयात्। रघुवंशस्येदं पद्यम् ॥ २३० ॥'

गुणस्य द्रव्येण सह विरोधाभासं दर्शयति–'वल्लभोत्सङ्गसङ्गेन वल्लभस्य प्राणप्रियस्योत्सङ्गः क्रोडमुपचारात् तत्सान्निध्यं तस्य सङ्गः सम्पर्कस्तेन। विना। हरिणचक्षुषो मृगाक्ष्याः। राकाविभावरीजानिः राका पूर्णिमाऽसौ विभावरी रात्रिरिति, सा जाया यस्य तथोक्तः। राकेशश्चन्द्र इति भावः। 'जायाया निङ्।'५।४।१३४ इति निङादेशः। विषज्वालाऽऽकुलः। अभवत्। अत्र राकेशस्यानेकव्यक्तिवाचित्वाभावाद्द्रव्येण दाहजनकत्वस्य गुणस्य विरोध आभासमानोऽपि विरहदशायां तस्य सम्भवात्परिह्रियते ॥ २३१ ॥'

क्रियायाः क्रियया विरोधाभासं दर्शयति–'नयनेत्यादिना। व्याख्यातपूर्वमिदम्। अत्र खेदजननक्रियायाः प्रहर्षजननक्रियया समं विरोध आभासते, परन्तु सङ्गाभावं यावदित्यन्ततोऽविरोधः ॥ २३२ ॥' क्रियाया द्रव्येण विरोधाभासं दर्शयति–'त्वद्वाजीत्यादिना। व्याख्यातपूर्वमिदम्। अत्र हरेणैकव्यक्तिवाचितया द्रव्येण गङ्गाधरत्वेन प्रसिद्धेनापि समं गङ्गाधारणाभावरूपक्रियायास्तादात्म्येनापाततो विरोधः कविप्रौढोक्त्या निरसनीय इत्याभासमात्रः ॥ २३३ ॥'

द्रव्यस्य द्रव्येण विरोधाभासं दर्शयति–'वल्लभोत्सङ्गसङ्गेन। विना। हरिणचक्षुषः। राकाविभावरीजानिः। मध्यन्दिनदिनाधिपो मध्यन्दिनस्य मध्याह्नस्य दिनाधिपः सूर्यः। अत्र राकाविभावरीजानेश्चन्द्रस्य दिनाधिपस्य सूर्यस्य च द्रव्यत्वाद विरोधो भासते, अथापि विरहे राकेशस्य सन्तापकत्वेन तथाप्रतीतिः सङ्गच्छत एवेत्यविरोधः ॥ २३४ ॥'

अत्र 'तव विरहे...'इत्यादौ पवनादीनां बहुव्यक्तिवाचकत्वाज्जातिशब्दानां दवानलोष्महृदयभेदनसूर्य्यैर्जातिगुणक्रियाद्रव्यरूपैरन्योऽन्यं विरोधो मुखत आभासते, विरहहेतुकत्वात्समाधानम्। 'अजस्य..'इत्यादौ अजत्वादिगुणस्य जन्मग्रहणादिक्रियया विरोधो भगवतः प्रभावातिशयात्तु समाधानम्। 'त्वद्वाजि...'इत्यादौ 'हरोऽपि शिरसा गङ्गां न धत्ते'इति विरोधो, 'त्वद्वाजि...'इत्यादिकविप्रौढोक्त्या तु समाधानम्। स्पष्टमन्यत्। विभावनायां कारणाभावेनोपनिबध्यमानत्वात् कार्य्यमेव बाध्यत्वेन प्रतीयते, विशेषोक्तौ च कार्य्याभावेन कारणमेव; इह त्वन्योऽन्यं द्वयोरपि बाध्यत्वमिति भेदः।

१५३ कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिः॥ १२२॥

यथा-'सा बाला, वयमप्रगल्भमनसः सा स्त्री, वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते, सखेदा वयम्।
साऽऽक्रान्ता जघनस्थलेन गुरुणा, गन्तुं न शक्ता वयं;
दोषैरन्यजनाश्रयैरपटवो जाताः स्म इत्यद्भुतम्॥ २३५॥

---

बोधसौलभ्याय दुर्बोधं लक्ष्यसमन्वयं निर्दिशति-अत्रैतेषूदाहृतेषु मध्ये। 'तव विरहे...'इत्यादौ। पवनादीनां पवनत्वादीनामित्यर्थः। आदिपदेन रुचिध्वनिपत्रत्वानां ग्रहणम्। बहुव्यक्तिवाचकत्वात्। जातिशब्दानां जातिः शब्दो येषां तेषां तथाभूतानाम्। दवानलोष्म-हृदयभेदन-सूर्यैर्दवानलत्वोष्म-हृदयभेदन-सूर्य्यैः। जातिगुणक्रियाद्रव्यरूपैः। अन्योऽन्यं परस्परम्। विरोधः। मुखतः प्रथमतः। आभासते प्रतीयते। विरहहेतुकत्वाद् मलयमरुदादेर्विरहिणीनां सन्तापकत्वेन। समाधानं तत्र दवानलत्वाद्यारोपेण परिहारः। एवम्-'अजस्य..'इत्यादौ। अजत्वादिगुणस्य। आदिपदेन निरीहत्वजागरूकत्वयोर्ग्रहणम्। 'नन्वजत्वं जन्माभाव एव कथमस्य गुणत्वमिति चेत्! जातिक्रियाभिन्नानां विशेषणानामपि गुणत्वस्वीकारात्।'इति विवृतिः। जन्मग्रहणादिक्रियया। आदिपदेन शत्रुहनन-स्वपनयोर्ग्रहणम्। विरोधः। तस्य च-भगवतो भगवत्सम्बधिनः। प्रभावातिशयात्। तु पुनः। समाधानं परिहारः। तथा-'त्वद्वाजि..'इत्यादौ। 'हरो गङ्गाधरत्वेन प्रसिद्धः शङ्करः। अपि। शिरसा। गङ्गाम्। न। धत्ते।' इति। विरोधः। तस्य च-'त्वद्वाजि..'इत्यादिकविप्रौढोक्त्या। तु। समाधानम्। अन्यत् उदाहरणान्ते विरोधस्तत्समाधानं चेत्यर्थः। स्पष्टम्।

अस्यालङ्कारतो भेदं निदर्शयति-विभावनायाम् (इत्यस्य 'प्रतीयते' इत्यनेनान्वयः)। कारणाभावेन। कार्य्यस्ये'ति शेषः। उपनिबध्यमानत्वात्। कार्य्यम्। एव। 'नतु कारणम्' इति शेषः। बाध्यत्वेन विरुद्धत्वेन। प्रतीयते। विशेषोक्तौ। च पुनः। कार्य्याभावेन। 'कारणस्योपनिबध्यमानत्वा'दिति शेषः। कारणम्। एव 'नतु कार्य्यं बाध्यत्वेन प्रतीयत' इति शेषः। इह विरोधाभासापरपर्य्याये विरोधालङ्कारे। तु। अन्योऽन्यं परस्परम्। द्वयोः कार्य्यकारणयोः। अपि। बाध्यत्वं विरुद्धत्वम्। इति। भेदः।

असङ्गतिं लक्षयति-१५३ कार्य्यकारणयोः। भिन्नदेशतायां भिन्नदेशवर्त्तित्वे। असङ्गतिस्तन्नामाऽलङ्कारः। तथोक्तम्-'यद्देशं कारणं तद्देशमेव कार्य्यमुत्पद्यमानं दृष्टं यथा घटादिः; किन्तु-यत्र केनापि हेतुना तयोर्नानादेशसम्भवितयाऽसङ्गतत्वं साऽसङ्गतिर्नामालङ्कारः।' इति॥ १२२॥

उदाहरति-यथा-'सा। बाला। वयं तत्सम्पर्कमपि अलब्धवन्तः। अप्रगल्भमनसो न प्रगल्भं कार्य्याकार्य्यावधारणक्षमं मनो येषां तथोक्ताः। सा। स्त्री। वयम्। कातराः सभयचेतसः। सा। पीनोन्नतिमत्पयोधरयुगं पीनं पुष्टं चोन्नतिमदिति तथाभूतं पयोधरयुगं कुचद्वन्द्वं तत्तथोक्तम्। धत्ते। वयम्। सखेदाः। सा। गुरुणा बृहता। जघनस्थलेन। आक्रान्ता। वयम्। गन्तुम्। न। शक्ताः क्षमाः। एवम्-'अन्यजनाश्रयैरन्यजनवर्त्तिभिः। दोषैर्बालत्वादिभिः। स्मो वयम् (इदमव्ययम्)। अपटवोऽकर्मण्याः। जाताः। इति। अद्भुतं विचित्रत्वम्। सखायं प्रति कस्याश्चिद्दर्शनेन खिन्नस्योक्तिरियम्।' अमरुशतकस्येदम्। शार्दूलविक्रीडितं वृत्तम्। तल्लक्षणं चोक्तं प्राक्॥ २३५॥'

अस्याश्चापवादकत्वादेकदेशस्थयोर्विरोधे विरोधालङ्कारः।

१५४ गुणौ क्रिये वा चेत् स्यातां विरुद्धे हेतुकार्य्ययोः।
यद्वाऽऽरब्धस्य वैकल्यमनर्थस्य च सम्भवः ॥ १२३ ॥
विरुद्धयोः सङ्घटना या च तद्विषमं मतम्।

क्रमेण यथा—'सद्यः करस्पर्शमवाप्य चित्रं रणेरणे यस्य कृपाणलेखा।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोक्याभरणं प्रसूते ॥ २३६ ॥'

अत्र कारणरूपासिलतायाः 'कारणगुणाः कार्यगुणानारभन्ते'इति स्थितेर्विरुद्धा शुक्लयशस उत्पत्तिः।

---

अत्र तर्कवागीशाः—''केचित्तु ( काव्यप्रकाशकारादयः ) 'कार्य्यकारणभावयोर्धर्मयोरत्यन्तं भिन्नदेशतया युगपदुत्पन्नत्वेन ख्यातिरसङ्गतिः। एकधर्मिण्यवच्छेदकभेदेन भिन्नदेशतावारणायात्यन्तमिति। तेन 'दष्टो भुजङ्गेन पदेऽक्ष्णि घूर्णना' इत्यत्र नातिव्याप्तिः। दंशनघूर्णनयोरेकस्मिन् शरीरे सङ्गतिसत्त्वात्। कालभेदेन तदुभयख्यातिवारणाय युगपदिति। तेन—'क्रियाशरीरेऽत्र परत्र भोगः' इत्यत्र नातिव्याप्तिः।' इत्याहुः। तन्न, 'दन्तक्षतं कपोले वध्वा, वेदना सपत्नीनाम्।' इत्यत्र स्वोक्तोदाहरणे बोधकाभावेन कार्य्यकारणयोर्युगपदुत्पन्नत्वख्यातिविरहात्। 'सा स्त्री वयं कातराः' इत्यत्र स्त्रीत्वस्य कारणत्वस्योत्पन्नत्वाभावादेव कार्योत्पत्तियुगपदुत्पन्नत्वख्यातिविरहात्। न च स्त्रीत्वस्योत्पन्नत्वमारोप्यमिति वाच्यम्, तस्य वैचित्र्यानावहत्वेन तदङ्गीकारस्यान्याय्यत्वात्। 'दष्टो भुजङ्गेन पदेऽक्ष्णि घूर्णना' इत्यादौ युगपदुत्पन्नत्वख्यातिविरहादेवातिप्रसङ्गभङ्गेन तद्वारणार्थमुपात्तस्यात्यन्तपदस्यानर्थकत्वाच्च। अस्मन्मते तु। कार्य्यकारणयोर्वैयधिकरण्यस्यैव यत्र विच्छित्तिविशेषजनकत्वं तत्रैव तस्यालङ्कारत्वस्वीकारः। 'दष्टो भुजङ्गेन पदेऽक्ष्णि घूर्णना' इत्यादौ कार्य्यकारणयोरवच्छेदकभेदसत्त्वेऽपि अधिकरणस्यैकत्वेन वैयधिकरण्याभावात्। 'क्रियाशरीरेऽत्र परत्र भोगः' इत्यादौ वैयधिकरण्यस्य सत्त्वेऽपि तस्य विच्छित्तिविशेषानाधायकत्वादेव नातिप्रसङ्गः। इत्याहुः।'' ननु कार्य्यकारणयोः सहानवस्थानलक्षणो विरोध एवात्राङ्गीक्रियतां किमस्या अङ्गीकारगौरवेणेत्याह—**अस्या** असङ्गतेः। **च**। **अपवादकत्वात्** कार्य्यकारणयोर्भिन्नदेशवर्तित्वेन विलक्षणविच्छित्त्याधायकतया विशेषत्वात्। **एकदेशस्थयोः**। **विरोधे**। **विरोधालङ्कारः**। 'भिन्न' इति शेषः। एवं च—सामानाधिकरण्ये विरोधः, वैयधिकरण्येऽसङ्गतिरित्येतयोर्भेद इति फलितम्।

विषमं लक्षयति—१५४ **चेत्**। **हेतुकार्य्ययोः** कारणस्य कार्य्यस्य चेत्यर्थः। **गुणौ**। 'विरुद्धौ' इति शेषः। **वा**ऽथवा। **क्रिये**। **विरुद्धे**। **स्याताम्**। **यद्वा**। **आरब्धस्य**। 'कार्य्यस्ये'ति शेषः। **वैकल्यम्**। **अनर्थस्या**नभिमतस्य फलस्य। **च**। **सम्भवः**। **च**। यद्वा **विरुद्धयोरे**कत्र वस्तुन्यत्यन्तमसम्भवतोः। **या**। **सङ्घटना** मेलनम्। **तत्**। अत्र-सर्वनाम्नां पर्य्यायेणोद्देश्यविधेयलिङ्गभाक्त्वेन विधेयलिङ्गत्वम्। **विषमं** तदाख्योऽलङ्कारः। **मतम्**। तथा च—कार्य्यकारणयोर्गुणविरुद्धत्वे एकम्, क्रियाविरुद्धत्वे द्वितीयम्, आरब्धस्य वैकल्यानर्थक्ययोस्तृतीयम्, विरूपयोर्मेलने चतुर्थं विषमं च, तत्त्वं समविरुद्धत्वम्, एतच्च तत्रानुगतमित्यन्वर्थं सामान्यं लक्षणम्। इति फलितम् ॥ १२३ ॥

उदाहर्तुमुपक्रमते-**क्रमेण**। **यथा**। '**तमालनीला** तमालवृक्षवन्नीला। **कृपाणलेखा** कृपाणस्य लेखा रेखा धारेति यावत्। तद्रूपा काऽपि नायिकेति भावः। **रणेरणे** प्रतिसङ्ग्रामम्। **यस्य**। **करस्पर्शम्**। **अवाप्य**। **सद्यः**। **शरदिन्दुपाण्डु** शारदचन्द्रवत् शुभ्रम्। **त्रिलोक्याभरणम्**। **यशस्त**द्रूपं पुत्रम्। **प्रसूते** जनयति। **चित्रम्**। 'स राजे'ति शेषः। पद्मगुप्तरचितस्य नवसाहसाङ्कचरितस्येदं पद्यम्। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दस्तल्लक्षणं चोक्तं प्राक् ॥ २३६ ॥'

उदाहृतमर्थं निर्दिशति-**अत्र**। **कारणरूपासिलतायाः** 'तमालनीलाया'इति शेषः। '**कारणगुणाः**।**कार्य्यगुणान्**। **आरभन्ते** उत्पादयन्ते।' **इति**। **स्थितेः**। **विरुद्धा**। **शुक्लयशसः**। **उत्पत्तिः**। अत्र विवृतिः—'यद्यपि अवयवविरूपकार्यगुणक्रिययोरेकावयवरूपकारणगुणक्रियाजन्यत्वनियमस्तथाऽपि तत्र तथादर्शनादन्यत्रापि तथात्वं कविसृष्टौ कल्प्यत इति नानुपपत्तिरिति भावः।' इति।

'आनन्दममन्दमिमं कुवलयदललोचने ! ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे ॥ २३७ ॥'

अत्रानन्दजनकस्त्रीरूपकारणात्तापजनकविरहोत्पत्तिः ।

'अयं रत्नाकरोम्भोधिरित्यसेवि धनाशया । धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः ॥ २३८ ॥'

अत्र केवलं काङ्क्षितधनलाभो माऽभूत्, प्रत्युत क्षारवारिभिर्वदनपूरणम् ।

'क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता ।
नियतं प्रतिकूलवर्त्तिनो बत धातुश्चरितं सुदुःसहम् ॥ २३९ ॥'

अत्र वनराज्यश्रियोर्विरूपयोः सङ्घटना । इदम्मम । यथा वा—

'विपुलेन सागरशयस्य कुक्षिणा भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः स पुरस्त्रियैकतमयैकया दृशा ॥ २४० ॥'

---

द्वितीयमुदाहरति–'हे कुवलयदललोचने कुवलयस्य नीलकमलस्य दले तद्वल्लोचने यस्यास्तत्सम्बुद्धौ तथोक्ते । त्वम् । इमं मया सम्प्रत्यनुभूयमानमित्यर्थः । अमन्दम् । आनन्दम् । ददासि विदधासीति भावः । त्वया । एव । जनित उत्पादितः । विरहः । मे मम । शरीरम् । तापयतितराम् । नायिकां प्रति नायकस्योक्तिरियम् । रुद्रटालङ्कारस्येदं पद्यम् । अत्रार्याछन्दस्तल्लक्षणं चोक्तं प्राक् ॥ २३७ ॥'

उदाहृतमर्थं निर्दिशति–अत्रेत्यादिना । स्पष्टम् । अत्र विवृतिकाराः–'अत्र कारणस्य नायिकायाः क्रिया आनन्ददानं नायिकाकार्य्यस्य विरहस्य क्रिया शरीरतापनं तद्विरुद्धम् । यद्यपि–आनन्दतापौ गुणौ तथाऽपि अत्र द्वयोर्धात्वर्थघटकत्वेन क्रियात्वेनैव व्यवहारः ।' इति ।

तृतीयमुदाहरति–'अयम् । अम्भोधिः समुद्रः । रत्नाकरो रत्नानामाकरः । इति । धनाशया । असेवि । 'मये'ति शेषः । धनम् । दूरे । अस्तु । किन्तु–क्षारवारिभिः । वदनं मुखम् । अपूरि 'तेने'ति शेषः । अत्र यद्यपि अप्रस्तुतप्रशंसाऽप्यस्त्येतदविरुद्धेति विभाव्यम् ॥ २३८ ॥'

उदाहृतमर्थं निर्दिशति–अत्रेत्यादिना । स्पष्टम् । अयम्भावः–धनलाभाशयाऽऽरब्धं रत्नाकरस्य सेवनम्, तस्याभिमतलाभाभावेन न केवलं वैकल्यं जातं, किन्तु क्षारवारिभिर्मुखपूर्त्तेरनिष्टं फलं च जातमिति स्फुटो लक्षणसमन्वयः । इति ।

चतुर्थमुदाहरति–'तरुवल्कभूषणं तरूणां वृक्षाणां वल्कं वल्कलम्, तदेव भूषणं यत्र तथोक्तम् । वनम् । क्व । महेन्द्रवन्दिता महेन्द्रेण देवराजेन वन्दिता प्रशंसितेति तथोक्ता । नृपलक्ष्मी राजलक्ष्मीः । क्व । बत कष्टम् । प्रतिकूलवर्तिनः प्रतिकूलतया स्थितवतः । धातुर्विधातुः । चरितं चरित्रम् । नियतं नूनम् । सुदुःसहमत्यन्तं दुःसहम् । वैतालीयं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ २३९ ॥'

उदाहृतमर्थं निर्दिशति–अत्र । विरूपयोः । वन–राज्यश्रियोः । सङ्घटना मेलनम् । अत्रेदम्बोध्यम्–श्रीरामे यौवराज्येनाह्यमाणे कैकय्या वनवासं नीयमाने तदानीं तं दृष्टवतः कस्याप्युक्तिरियम् । एवं च–तस्मिन् राजलक्ष्म्या वनवासस्य च सम्मेलनं सङ्गच्छते । एतेन–"वस्तुतस्तदानीं श्रीरामस्य राजश्रीलाभ एव नास्तीति न विरुद्धयोः सङ्घटनम् । किन्तु दशरथप्रयत्नस्य रामस्य राज्यलाभरूपफलानवाप्तिः, प्रत्युतानिष्टस्य रामवनवासस्य सम्भव इति तृतीयप्रकार एवेति पर्य्यवस्यति । एवं च–'शरीरादपि मृद्वङ्गी क्वेयमायतलोचना । अयं क्व च कुकूलाग्निकर्कशो मदनानलः ॥' इत्युदाहरणमस्य वेदितव्यम् । अत्राङ्गमार्दवमदनानलसहनयोरेकत्र नायिकायां मेलकम् ।" इति विवृतिकारोक्तं दत्तोत्तरम् । अस्य स्वकीयत्वं सम्भावयति–इदमुदाहृतं पद्यम् । मम ।

उदाहरणान्तरं निर्दिशति–यथा । वा । 'यस्य । सागरशयस्य सागरे महासमुद्रे शेते योगनिद्रां नाटयतीति तादृशस्य । श्रीकृष्णस्येति भावः । विपुलेन विस्तृतेन । कुक्षिणोदरेण । युगक्षये प्रलयकाले । भुवनानि भूर्भुवःस्वःसञ्ज्ञका लोका इत्यर्थः । पपिरे पीतानीत्यर्थः । स तथाभूतः श्रीकृष्णः । पुनः । एकतमया (कयाचित्) । पुरस्त्रिया । मदविभ्रमासकलया मदेन मदस्य वा विभ्रमो हावः शोभा वा तेनासकलाऽसम्पूर्णा तया तथाभूतया । एकया । दृशा । पपे सादरं दृष्ट इति भावः । शिशुपालवधस्येदं पद्यम् । मञ्जुभाषिणीछन्दः, तल्लक्षणं

१९९　समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः ॥ १२४ ॥

यथा—'शशिनमुपगतेयं कौमुदी मेघमुक्तं जलनिधिमनुरूपं जह्नुकन्याऽवतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥ २४१ ॥'

१९६　विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत् ।

यथा—'प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥ २४२ ॥'

---

च्चोक्तं यथा—'सजसा जगौ भवति मञ्जुभाषिणी ।' इति ॥' अत्र यदेकावयवभूते कुक्षौ सर्वेषां जगतां विलयस्तस्यैव कस्याश्चित् पुरस्त्रियाश्चक्षुरेकदेशेऽवस्थानमिति विपुलतमत्वाल्पतमत्वयोर्भगवति समावेश इति तत्त्वम् । अत्र रसगङ्गाधरकाराः प्राहुः—"ननु'क्व शुक्तयः क्व वा मुक्ताः क्व पङ्कः क्व च पङ्कजम्।क्व मृगाः क्व च कस्तूरी धिग् विधातुर्विदग्धताम् ॥' इत्यादौ वस्तुमात्रकथने विषमालङ्कारप्रसङ्गः । न चेष्टापत्तिः । वस्तुवृत्तस्य लोकसिद्धत्वेनालङ्कारत्वायोगात् । यतो वहिरसन्तः कविप्रतिभामात्रकल्पिता अर्थाः काव्येऽलङ्कारं पदास्पदम् । न च 'यथा पद्मं तथा मुखम् ।' इत्यादौ सादृश्यस्य लोकसिद्धत्वात् कविप्रतिभाऽनुत्थापितत्वेऽपि कथमलङ्कारत्वमिति वाच्यम् । सादृश्यरूपे सादृश्योत्थापके वाऽभिन्नधर्मेऽभेदांशस्य कविप्रतिभामात्राधीनत्वात् । नहि पद्ममुखयोः शोभारूपो धर्मो जात्यादिवद्वस्तुत एकोऽस्ति । यो हि जात्यादिरूपो वस्तुत एकस्तदुत्थापितं सादृश्यमलङ्कारवहिर्भूतमेव । यथा—'पद्ममिवास्या मुखं द्रव्य'मित्यादौ । एवं च—'वनान्तः खेलन्ती शशकशिशुमालोक्य चकिता भुजप्रान्तं भर्तुः श्रयति भयहर्तुः सपदि वा । अहो सेयं सीता शिव ! शिव ! परीता श्रुतिचलत्किरीटीकोटीभिर्वसति खलु रक्षोयुवतिभिः ॥'इति प्रतिपाद्यायाः सीताराक्षसवधूसंसर्गानुरूपताया लौकिकीत्वेन कविप्रतिभानपेक्षत्वान्नालङ्कारत्वम् । एतेन—'अरण्यानी क्वेयं, धृतकनकसूत्रः क्व स मृगः, क्व मुक्ताहारोऽयं, क्व च स पतगः, क्वेयमबला । क्व तत् कन्यारत्नं ललितमहिभर्तुः क्व च वयं स्वमाकूतं धाता कमपि निभृतं पल्लवयति ॥' इत्यलङ्कारसर्वस्वकृतोदाहृतमपि प्रत्युक्तम् । इयमेव पद्यान्तरेऽपि कविप्रतिभाऽनुत्थापितार्थके सरणिरिति सत्यम् । एवं तर्हि—'क्व सा कुसुमसाराङ्गी सीता चन्द्रकलोपमा । क्व रक्षः खदिराङ्गारमध्यसंवासवैशसम् ॥' इति पद्यमुदाहरणं गृहाण । अत्र हि केवलसीतायाः केवलराक्षसीनां च संसर्गस्यानुरूपतायां सत्यामपि न सा कवेर्विवक्षिता, किन्तु या कुसुमसारखदिराङ्गारसंसर्गस्यानुरूपता सेति स्फुटमेवास्यामलौकिकत्वात् कविप्रतिभाऽपेक्षित्वम् ।"इति ॥ २४० ॥

समं लक्षयति—१५५ **आनुरूप्येण**ानुरूपतया समानतयेति यावत् । **योग्यस्य** । **वस्तुनः** । **श्लाघा** प्रशंसनम् । **समं** सह तुल्यतया मीयते इति तथोक्तम् । तन्नामाऽलङ्कार इति भावः । **स्यात्** ॥ १२४ ॥

उदाहरति—**यथा**—'**इय**मिन्दुमती । **कौमुदी** चन्द्रिका । अनुरूपं सदृशम् (अजम्) । **मेघमुक्तं** मेघावरणशून्यम् । **शशिनं** चन्द्रम् । **उपगता** । इयम् (इन्दुमती) **जह्नुकन्या**(गङ्गा) । **अनुरूपम्** (अजम्) । **जलनिधिं** समुद्रम् । **अवतीर्णा** प्राप्ता । **इति** । **समगुणयोगप्रीतयः** समोऽन्योऽन्यमनुरूपो गुणो ययोस्तयोर्योगस्तेन प्रीतिर्येषां तथोक्ताः । अत्र व्यधिकरणो बहुव्रीहिः । **पौरा** नागरिकाः । **तत्र** स्वयंवरमण्डपे । **नृपाणा**मिन्दुमतीमुपलब्धुमुपेतानाम्, अथ च तामप्राप्तवतामजद्वेषिणां राज्ञाम् । **श्रवणकटु** । **एकवाक्यम**भिन्नवाक्यम् । **विवव्रुः** कथयामासुः । रघुवंशस्येदं पद्यम् । अत्र लक्षणसमन्वयः स्फुटः । मालिनीवृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ २४१ ॥'

विचित्रं लक्षयति—१५६ **चेत्** । **इष्टफला**याभिमतायार्थाय । **विरुद्धस्या**निष्टफलकस्य कर्मणः । **कृति**र्विधानम् । तत्तर्हि । **विचित्रं** तन्नामाऽलङ्कारः ।

उदाहरति—**यथा**—'**उन्नतिहेतो**रुन्नतिं लब्धुमिति भावः । **प्रणमति** प्रकर्षेणावनतो भवति । **जीवितहेतो** र्जीवननिमित्तम् । **प्राणान्** (युद्धादिषु) । **विमुञ्चति** । **सुखहेतोः** सुखलाभाशया । **दुःखीयति** परिश्रान्तोऽपीतस्ततो धावति, अशक्यमपि कर्तुं प्रवर्त्तते चेति भावः । अतः—**सेवकात्** किङ्करात् । **अन्यः** । **कः** । **मूढो** न कोऽपि मूढ इति भावः । आर्य्याछन्दः, तल्लक्षणं चोक्तं प्राक् ॥ २४२ ॥'

१५७ आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते ॥ १२५ ॥

आश्रयाधिक्ये यथा-'किमधिकमस्य ब्रूमो महिमानं वारिधेर्यत्र।
अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि ॥ २४३ ॥'

आश्रिताधिक्ये यथा-'युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत।
तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसम्भवा मुदः ॥ २४४ ॥'

१५८ अन्योऽन्यमुभयोरेकक्रियायाः करणं मिथः।

'त्वया सा शोभते तन्वी तया त्वमपि शोभसे। रजन्या शोभते चन्द्रश्चन्द्रेणापि निशीथिनी॥२४५॥'

१५९ यदाधारमनाधारमेकं चानेकगोचरम् ॥ १२६ ॥
किञ्चित् प्रकुर्वतः कार्य्यमशक्यस्येतरस्य वा।
कार्य्यस्य करणं दैवात् (गुणे दोषेऽपि वाऽन्यथा।

---

अधिकं लक्षयति-१५७ आश्रयाश्रयिणोराधाराधेययोर्मध्ये इति भावः। एकस्यैकतरस्याश्रयस्याश्रयिणो वेति यावत्। आधिक्ये। अधिकम्। तन्नामाऽलङ्कार इति भावः। उच्यते। तथा च-आश्रयाधिक्यनिबन्धनमाश्रय्याधिक्यनिबन्धनं चेति द्विप्रभेदमेतदिति फलितम् ॥ १२५ ॥

तत्राद्यमुदाहरति-आश्रयाधिक्ये। यथा-'कुक्षौ। भुवनानि भूर्भुवःस्वर्लोकान्। निक्षिप्य। हरिर्विष्णुः। यत्र यस्मिन्। अज्ञातोऽविदितमहत्त्वः। एव। शेते। अस्य'तस्ये'ति शेषः। वारिधेः सागरस्य। अधिकम्। महिमानं महत्त्वम्। किम्। ब्रूमः। इत्येवास्य महत्त्वम्, यत् 'येन कुक्षौ भुवनानि निक्षिप्तानि, सोऽपि (एवम्-अत्यन्तं महनीयोऽपि)हरिर्यस्यैकांशे स्थितो न ज्ञायते; कुत्र विलीन'इति। स्फुटं चैवाधेयाधिक्यापेक्षयाऽऽधाराधिक्यम्। आर्यांछन्दः ॥ २४३ ॥'

द्वितीयमुदाहरति-आश्रिताधिक्ये। यथा-'युगान्तकालप्रतिसंहृतात्मनो युगान्तकाले प्रतिसंहृताः स्वोदरं प्रवेशिता आत्मानः समस्ता जीवा येन तथोक्तस्य। कैटभद्विषः कैटभनिहन्तुः श्रीकृष्णस्य। यस्याम्। तनौ शरीरे। जगन्ति लोकाः। सविकासं सावकासम् (क्रियाविशेषणमेतत्)। आसत अविष्न्त। तत्र तस्यां तनौ। तपोधनाभ्यागमसम्भवास्तपोधनस्य नारदस्याभ्यागमः स सम्भव उत्पत्तिस्थानं यासां तास्तथोक्ताः। मुदो हर्षाः। न। ममुरवकाशं लब्धवन्तः। अवकाशालाभादाश्रितानां मुदामतिमहत्त्वं व्यज्यते। शिशुपालवधस्थेदं पद्यम्। वंशस्थविलं छन्दः ॥ २४४ ॥'

अन्योऽन्यं लक्षयति-१५८ उभयोर्द्वयोर्वस्तुनोरित्यर्थः। एकक्रियाया एकस्याः क्रियायाः, उपचाराद् गुणस्य च। मिथः। करणं सम्पादनम्। 'विच्छित्तिविशेषेणे'ति शेषः। अन्योऽन्यं तन्नामाऽलङ्कार इत्यर्थः।

उदाहरति-'त्वया कान्तेन। सा। तन्वी। शोभते। तया तन्व्या। त्वं (कान्तः)। अपि। शोभसे। रजन्या रात्र्या। चन्द्रः। शोभते। चन्द्रेण। निशीथिनी रात्रिः। अपि'शोभते'इति शेषः। अत्र परस्परं शोभनक्रियायाः समुत्पादनम् ॥ यथा वा-'परपूरुषदृष्टिपातवज्राहतिभीता हृदयं प्रियस्य सीता। अविशत् परकामिनीभुजङ्गीभयतः सत्वरमेव सोऽपि तस्याः ॥' अत्र सीतारामयोः परस्परं प्रवेशनक्रियाया उत्पादनम्। गुणस्य विशेषाधायकत्वं यथा-'सुदृशो जितरत्नजालया सुरतान्तश्रमबिन्दुमालया। अलिकेन च हेमकान्तिना विदधे काऽपि रुचिः परस्परम् ॥'इति। अत्र हि रुचिरूपस्य गुणस्योत्पादनम्। नच विधानरूपायाः क्रियाया उत्पादनं वाच्यम्, भावनासामान्यरूपस्य विधानस्याचमत्कारितयाऽविशिष्टत्वात्। मिथ इत्यनेन 'दुदोह गां स यज्ञाय सस्याय मघवा दिवम्।' इत्यादौ नातिप्रसङ्गः। अत्र हि स्वंस्वं दोहनं प्रति स्वंस्वमेव साधनम् ॥ २४५ ॥'

विशेषं लक्षयति-१५९ यत्। आधारम्। अनाधारमीषत् (अप्रसिद्धः) आधारो यस्य तत्तथोक्तम् (प्रतिपाद्येत तदैकः)। च। एकम्। अनेकगोचरमनेकेऽनेकविधा गोचरा विषया एककाले यस्य तथोक्तम् (एकं वस्तु एकस्मिन्समयेऽनेकगोचरं प्रतिपाद्येत तदा द्वितीयः)। किञ्चिदनिर्दिष्टम्। कार्य्यम्। प्रकुर्वतः साधयतो जनस्य।

बोधनं प्रतिपाद्येत) विशेषस्त्रिविधस्त (पञ्चधा त) तः ॥ १२७ ॥

क्रमेण यथा—'दिवमप्युपयातानामाकल्पमनल्पगुणा येषाम्।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥ २४६ ॥'

'कानने सरिदुद्देशे गिरीणामपि कन्दरे । पश्यन्त्यन्तकसङ्काशं त्वामेकं रिपवः पुरः ॥ २४७ ॥'

'गृहिणी, सचिवः, सखी मिथः, प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वत किन्न मे हृतम् ॥ २४८ ॥'

---

**दैवाद्** भाविमहिम्ना । **इतरस्य** तस्माद्भिन्नस्य । **अशक्यस्य** दुःसाध्यस्य । **वा** यद्वा । **कार्य्यस्य** । **करणं** सम्पादनम् । ( प्रतिपाद्येत तदा तृतीयः । **गुणे** । **वा** । **दोषे** । **अपि** । अन्यथा दोषरूपेण गुणरूपेण चेत्यर्थः । **बोधनम्** । **प्रतिपाद्येत** तदा चतुर्थः पञ्चमश्च ) । **ततः** । **त्रिविधः** ( **पञ्चधा** पञ्चविधः । ) **विशेषो** विशेषणमाधेयादेरनाधारत्वप्रतिपादनादिनेति तथोक्तः, तन्नामाऽलङ्कार इत्यर्थः । अत्रेदम्बोध्यम्—यद्यपि प्रायो विशेषालङ्कारस्त्रिविध एवाम्नातः, तथाऽपि अनुज्ञालेशयोरत्रान्तर्भावं सिसाधयिषव आमनन्ति, तथा हि—त्रिविध इत्युपलक्षणम्, तेनानुज्ञालेशयोर्ग्रहणम् । ननु 'दोषस्याभ्यर्थनाऽनुज्ञा तत्रैव गुणदर्शनात् ।' 'लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम् ।' इत्युक्तदिशा गुणदोषयोरन्यथा बोधनस्य लेशमात्रविषयतयाऽनुज्ञाया अवशिष्टत्वेन कथमन्तर्भावः ? इति चेत् ! दोषेऽपि गुणमवधाय तदभ्यर्थनरूपाया अनुज्ञाया दोषेऽपि गुणत्वकल्पनरूपाल्लेशादनतिरिक्तत्वेन न काऽपि अनुपपत्तिः । यद्यपि—एनयोरप्रस्तुतप्रशंसाकाव्यलिङ्गदृष्टान्तादिष्वपि यथातथमन्तर्भावः कर्त्तुं शक्यः, तथाऽपि विशेषविशेषत्वाङ्गीकार ऋजुः पन्थाः । एतेनैनयोः पार्थक्यम्, अनुज्ञायाश्च लेशातिरिक्तत्वं च परैरङ्गीक्रियमाणमपास्तम् । एवं—'सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः ।' इत्युक्तामुद्राया अलङ्कारत्वमेव न, प्रकृतोपस्कारकत्वाभावात्, अमुष्या नाटकोपकरणमात्रत्वाच्च । 'क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः । चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते ॥' इति लक्षितस्य क्रमिकस्य तु रूपकेणैव गतार्थत्वम्, तद्भिन्नविच्छित्त्यनुपलब्धेः । यच्च—'दोषविशेषानुबन्धाद्गुणत्वेन प्रसिद्धस्यापि द्वेषस्तिरस्कारः ।' इति तिरस्कारस्यालङ्कारान्तरत्वं समर्थितं गङ्गाधरकारैः, तन्न; तस्याप्येनयोरेवान्तर्भावात् । इति दिक् ॥ १२६ ॥ १२७ ॥

उदाहर्त्तुमाह—**क्रमेण** । **यथा**—'**दिवं** स्वर्गम् । **उपयातानां** प्राप्तानाम् । मृतानामिति भावः । **अपि** । **येषां** 'कवीना'मिति शेषः । **अनल्पगुणा** अनल्पा बहवो गुणा यास्विति तथोक्ताः । **गिरो** वचांसि । **आकल्पम्** । **जगन्ति** । **रमयन्ति** रञ्जयन्ति । **ते** । **कवयः** । **कथमिव** कथम् । 'कथमिहे'ति पाठान्तरम्, तत्र—इहास्मिँल्लोक इत्यर्थः । **न** । **वन्द्याः** । अत्र कविरूपमाधारमन्तरैव गिरामुपस्थितिर्वर्णितेति बोध्यम् । आधाराधेयभावश्चायं कविप्रकल्पितः । 'शब्दगुणमाकाश'मिति गिरामाधारस्तु आकाशमेव वास्तविकम् । आर्याछन्दः, तल्लक्षणं चोक्तं प्राक् ॥ २४६ ॥' यथा वा—'अये राजन्नाकर्णय कुतुकमाकर्णनयन ! त्वदाधारा कीर्त्तिर्वसति किल मौलौ दशदिशाम् । त्वदेकालम्बोऽयं गुणगणकदम्बो गुणनिधे ! मुखेषु प्रौढानां विलसति कवीनामविरतम् ॥'' युक्तं तु याते दिवमासफेन्दौ तदाश्रितानां यदभूद्विनाशः । इदं तु चित्रं भुवनावकाशे निराश्रया खेलति तस्य कीर्तिः ॥' इति वा ।

द्वितीयमुदाहरति—'**रिपवः** । **कानने** वने । **सरिदुद्देशे** सरितां नदीनामुद्देश उत्कृष्टो देशस्तत्र । **गिरीणां** पर्वतानाम् । **कन्दरे** गुहाप्रदेशे । **अपि** । **त्वाम्** । **एकम्** । **अन्तकसंकाशं** यमराजसदृशम् । **पुरः** । **पश्यन्ति** । अत्र राज्ञः काननादयोऽनेकविधा विषया निर्दिष्टाः ॥ २४७ ॥'

तृतीयमुदाहरति—'हे' प्रिये ( इन्दुमति ! 'त्वं मे' इत्यध्याहार्य्यम् । **गृहिणी** गृहेश्वरी । **सचिवः** ( हितोपदेशात् ) मन्त्री । **मिथो** रहसि । 'मिथोऽन्योऽन्यं रहस्यपि ।' इत्यमरः । **सखी** । **ललिते** सुन्दरे । **कलाविधौ** कलानां चातुर्य्यविशेषाणां कामकलानां वा विधिर्विधानं तत्र । **प्रियशिष्या** प्रेमास्पदतया शिक्षणीया । एवंविधाम्—**त्वाम्** । **हरता**ऽपहरता । **करुणाविमुखेन** निर्दयेन । **मृत्युना** कालाधिष्ठात्रा । 'मृत्युर्ना मरणे यमे ।' इति मेदिनी । **वत** कष्टम् । **किम्** । **मे** मम । **न** । **हृतम्**, अपि तु सर्वमेव हृतम् । अजविलापोऽयम् । अत्रेन्दुमतीहरणरूपमेकं कुर्वता यमेन तेनैवैकदैव गृहिण्यादिकं सर्वं हृतमित्यशक्यस्यास्य कार्य्यान्तरस्य करणम् । अपरवक्त्रं छन्दः, तल्लक्षणं च यथोक्तम्, 'अपरवक्त्रं नौ लौं गू नजौ जौ ।' इति ॥२४८॥' यथा वा—'लोभाद्वराटिकानां विक्रेतुं तक्रमानि-

'मय्येव जीर्णतां यातु यत्त्वयोपकृतं हरे!। नरः प्रत्युपकारार्थी विपत्तिमभिकाङ्क्षति ॥२४९॥'
'अखिलेषु विहङ्गेषु हन्त! स्वच्छन्दचारिषु। शुकः! पञ्जरबन्धस्ते मधुराणां गिरां फलम्॥२५०॥'
यथा वा–'नरत्वमेव साधीयो धिगस्तु सुरसम्पदम्।
नरा मुक्तिं प्रपद्यन्ते सुरा नीचैश्च्युतिं बलात् ॥ २५१ ॥')

१६० **व्याघातः सतु केनापि वस्तु येन यथा कृतम्।**
**तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा ॥ १२८ ॥**

यथा–'दृशा दग्धं मनसिज'मित्यादि।

१६१ **सौकर्य्येण च कार्य्यस्य विरुद्धं क्रियते यदि।**

व्याघात इत्येव।

'इहैव त्वं तिष्ठ द्रुतमहमहोभिः कतिपयैः समागन्ता कान्ते! मृदुरसि न चायाससहना।
मृदुत्वं मे हेतुः सुभग! भवता गन्तुमधिकं न मृद्वी सोढा यद्विरहकृतमायासमसमम्॥२५२॥'

---

शमटन्त्या। लब्धो गोपकिशोर्य्या मध्ये रथ्यं महेन्द्रनीलमणिः॥' इति, अत्र हि तक्रविक्रयणकार्य्यकरणेन महेन्द्रनीलमण्युपार्जनस्य सम्पादनम्।

(चतुर्थमुदाहरति–'हे हरे हनुमन्! यत्। त्वया। उपकृतम्। तत्–मयि रामे। एव। जीर्णताम्। यातु! यत्–प्रत्युपकारार्थी 'एतेन ममैतदुपकृतमिति मयाऽप्येतस्य यदि विपत्स्यात्तदोपकारः कर्त्तव्य'इत्यभिलाषी। नरः। उपकर्तुः–विपत्तिम्। अभिकाङ्क्षति। रामचन्द्रस्य हनुमन्तं प्रत्युक्तिरियम्। अत्र प्रत्युपकारस्य गुणस्य दोषत्वेन बोधनम् ॥ २४९ ॥'

पञ्चममुदाहरति–'हे शुक! अखिलेषु समस्तेषु। विहङ्गेषु पक्षिषु। स्वच्छन्दचारिषु। सत्यर्थेयं सप्तमी। हन्त कष्टम्। ते तव। पञ्जरबन्धः पञ्जरे बन्धः। मधुराणाम्। गिरां वाचाम्। फलम्। अत्र मधुराणां वाचां दोषरूपेण बोधनम् ॥ २५० ॥'

प्रकारान्तरेणोदाहरति–यथा। वा–नरत्वं मनुष्यत्वम्। एव। साधीयो वरम्। सुरसम्पदं दैवतानां विभूतिम्। धिक्। अस्तु। नरा मनुष्याः। मुक्तिम्। प्रपद्यन्ते। सुराः। नीचैरधः। च्युतिं पातम्। बलात् पारतन्त्र्येण। 'प्रपद्यन्ते'इति पूर्वतोऽन्वेति। अत्र देवसम्पदि दोषोद्भावनम् ॥ २५१ ॥')

व्याघातं लक्षयति–१६० येन। केनापि केनचिदुपायेन। यथा येन प्रकारेण। कृतमुत्पादितम्। वस्तु। 'यदि'ति शेषः। तेन। एव न त्वन्येन। उपायेन। चेत्। अन्यस्तद्भिन्नो जनः। तत्'कार्य्य'मिति शेषः। अन्यथा प्रकारान्तरेण। कुरुते। तदा–सः। तु। व्याघातः। यः कश्चिद् यं कञ्चिदुपायमालम्ब्य येन केनापि प्रकारेण विशेषितं यत् किञ्चित् कृतम्, तदन्यः तमेवोपायमालम्ब्य तद्भिन्नविशेषणविशेषितं तत् कर्म कुरुते तदा तस्यान्यथाभूतत्वेन व्याहन्यमानत्वात् तद्वर्णनोपस्कृतोऽयं व्याघातनामाऽलङ्कार इति भावः। व्याहननं व्याघात इति चास्यान्वर्थेयं सञ्ज्ञा ॥ १२८ ॥

उदाहरति–यथा–'दृशा..'इति। व्याख्यातपूर्वं पद्यम्। अत्र महेश्वरेण दृशा दाहितस्य स्मरस्य कान्ताभिर्दृशैव तस्य जीवनम् ॥

प्रकारान्तरेण लक्षयति–१६१सौकर्य्येण सुकरतया आयासेनेति यावत्। यदि। कार्य्यस्य। विरुद्धम्। क्रियते लक्षणया क्रियमाणं वर्ण्यत इति भावः। च 'व्याघात'इति पूर्वतोऽन्वेति।

आकाङ्क्षापूर्त्त्यै आह–व्याघातः। इत्येव'पूर्वतोऽध्याहृत्य योजनीय'मिति शेषः।

उदाहरति–'हे कान्ते! इह। एव। 'गृहे'इति शेषः। त्वम्। तिष्ठ। अहम्। कतिपयैः। अहोभिर्दिनैः। द्रुतं शीघ्रम्। समागन्ता समागमं कर्त्ता भविष्यामि प्रत्यावृत्त्य त्वया सङ्गमिष्यामीति भावः। त्वम्–मृदुः कोमलाङ्गी। असि। आयाससहना क्लेशसहनयोग्या। च। न 'असी'ति पूर्वतो'देहलीदीपक'न्यायेनानुयुज्यते। (इति प्रवत्स्यतः कान्तस्योक्तिः)। हे सुभग! यत् यस्मात्। असमं विषमं भयङ्करमिति यावत्।

अत्र नायकेन नायिकाया मृदुत्वं सहगमनाभावहेतुत्वेनोक्तम्, नायिकया प्रत्युत सहगमने ततोऽपि सौकर्य्येण हेतुतयोपन्यस्तम्।

१६२　परंपरं प्रति यदा पूर्वपूर्वस्य हेतुता ॥ १२९ ॥

तदा कारणमाला स्यात्

यथा-'श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात्।
लोकानुरागो विनयान्न किं लोकानुरागतः॥ २५३ ॥'

१६३　तन्मालादीपकं पुनः।

धर्मिणामेकधर्मेण सम्बन्धो यद्यथोत्तरम् ॥ १३० ॥

यथा-'त्वयि सङ्गरसम्प्राप्ते धनुषाऽऽसादिताः शराः। शरैररिशिरस्तेन भूस्तया त्वं त्वया यशः २५४'
अत्रासादनक्रिया धर्मः।

---

विरहकृतं'तवे'ति शेषः। आयासं परिश्रमम्। मृद्वी मृदुला। 'अह'मिति शेषः। न। सोढा शक्ता। तव-मे मम। मृदुत्वम्। भवता त्वया सह। गन्तुम्। अधिकमतिशयितं यथा स्यात्तथा। हेतुः। (इति तं प्रति प्रवत्स्यन्नायकाय नायिकायाः उक्तिः)। अत्र शिखरिणीवृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ २५२ ॥'

उदाहृतस्य सङ्गतिं निर्दिशति-अत्रेत्यादिना। स्पष्टम्।

कारणमालां लक्षयति-१६२ परम्परमुत्तरमुत्तरं कारणं कार्य्यं वेति भावः। प्रति। पूर्वपूर्वस्य पूर्वस्य पूर्वस्य कार्य्यस्य कारणस्य वेति भावः। यदा। हेतुता कारणत्वमुपचारात् कार्य्यत्वं चेति भावः। तदा। कारणमाला कारणानां मालेति तदाख्योऽलङ्कार इत्यर्थः। स्यात्। तथा चेयं द्विविधा, परम्परं कारणं प्रति पूर्वपूर्वस्य कार्य्यस्य कारणत्वरूपैका, परम्परं कार्य्यं प्रति पूर्वपूर्वस्य कारणस्य कार्य्यत्वरूपाऽपरा। अत्र कारणानामिव कार्य्याणामपि मालेति कार्यमालेत्यपि सुवचम्, अथायं व्यपदेशः 'विपक्षापूर्विका हि शब्दार्थप्रतिपत्ति'रिति न्यायेन कारणगुणवर्णनमपेक्ष्यैव कवे-रुद्योगात्। अत एव गङ्गाधरकाराः 'सैव शृङ्खलाऽऽनुगुण्यस्य कार्य्यकारणभावरूपत्वे कारणमाला।' इति सूत्रयित्वा 'तत्र पूर्वं पूर्वं कारणं परं परकार्य्यमित्येका, पूर्वं पूर्वं कार्य्यं परम्परं कारणमित्यपरा' इति विवृतम् ॥ १२९ ॥

उदाहरति-यथा-'कृतधियां कृता निपुणतां प्रापिता धीर्बुद्धिर्विज्ञानमिति यावत् यैस्तेषां तथोक्तानाम्, निपुणताभावितात्मनां विदुषामिति भावः। सङ्गात् प्रसङ्गात्। श्रुतं शास्त्रं लक्षणया तज्ज्ञानम्। जायते। श्रुतात् शास्त्रज्ञानात्। विनयोऽनुद्धतत्वम्। 'जायत' इति पूर्वतोऽन्वेति। विनयात्। लोकानुरागो लोकस्यानुरागः प्रेमा। 'जायत' इति पूर्वतोऽन्वेति। लोकानुरागतो लोकप्रीतेः। किम्। न 'जायते' इति पूर्वतोऽन्वेति। अत्र श्रुतादिकं प्रति कृतधीसङ्गादिकारणत्वेन वर्णितम् ॥ २५३ ॥' द्वितीया यथा-'स्वर्गापवर्गौ खलु दानलक्ष्मीर्दानं प्रसूते विपुला समृद्धिः। समृद्धिमल्पेतरभागधेयं भाग्यं च शम्भो! तव पादभक्तिः ॥' इति, अत्र हि स्वर्गादिकं प्रति दानलक्ष्म्यादेः कारणत्वं निर्दिष्टम् ॥

मालादीपकं लक्षयति-१६३ यत्। यथोत्तरमुत्तरोत्तरम्। अत्र वीप्सायां यथाशब्दः। धर्मिणां ननु धर्मिणो धर्मिणोर्वेति शेषः। बहूनां धर्मिणामिति भावः। एकधर्मेण। सम्बन्धः। तत्। पुनः। मालादीपकं मालायां यथाऽनेकेषां पुष्पाणामवस्थानं, तथा बहूनां धर्मिणामवस्थानं माला, तस्या दीप इव धर्मैक्येन प्रकाशनमिति तथोक्तम्, तन्नामालङ्कार इति भावः ॥ १३० ॥

उदाहरति-यथा-'त्वयि। सङ्गरसम्प्राप्ते सङ्गरे सङ्ग्रामे सम्प्राप्ते सतीत्यर्थः। धनुषा। शराः। आसादिता गृहीताः। शरैः। अरिशिरः। लिङ्गवचनविपरिणामेन 'आसादित'मित्यनुषञ्जनीयम्। तेनारिशिरसा। भूः। अत्रापि पूर्ववत् 'आसादिते'ति। तया भुवा। त्वम्। (राजा)। अत्रापि पूर्ववत्। 'आसादित'इति। त्वया। यशः। अत्रापि पूर्ववल्लिङ्गवचनविपरिणामेन 'आसादित' मित्यनुषञ्जनीयम् ॥ २५४ ॥'

अत्र धनुरादीनामेकधर्माभिसम्बन्धं निर्दिशति-अत्रेत्यादिना। स्पष्टम्। यथा वा-'आस्वादेन रसो, रसेन कविता,

१६४ पूर्वंपूर्वं प्रति विशेषणत्वेन परम्परम् ।
स्थाप्यतेऽपोह्यते वा चेत्स्यात्तदैकावली द्विधा ॥ १३१ ॥

क्रमेणोदाहरणम्-'सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम् ।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं सस्मरोदयम् ॥ २५५ ॥'

'न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद् यदलीनषट्पदम् ।
न षट्पदोऽसौ न जुगुञ्ज यः कलं न जुञ्जितं तन्न जहार यन्मनः ॥ २५६ ॥'

क्वचिद्विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितं च दृश्यते ।

यथा—'वाप्यो भवन्ति विमलाः स्फुटन्ति कमलानि वापीषु ।
कमलेषु पतन्त्यलयः करोति सङ्गीतमलिषु पदम् ॥ २५७ ॥'

एवमपोहनेऽपि ।

१६५ उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते ॥

---

काव्येन वाणी, तया लोकान्तःकरणानुरागरसिकः सभ्यः, सभा चामुना । दारिद्र्यानलदह्यमानजगतीपीयूषधाराधरक्षोणीनाथ ! तया भवांश्च भवता भूमण्डलं भासते ॥' इति, अत्र भासनधर्मेणान्वयः ।

एकावलीं लक्षयति-१६४ चेद् यदि । पूर्वंपूर्वम् । प्रति । परम्परमुत्तरमुत्तरम् । विशेषणत्वेनोपलक्षणेन विशेष्यत्वेन चेत्यर्थः । उपलक्षणे तृतीया । अत एव-'क्वचिद्विशेष्यमपी'त्यादि वक्ष्यति । स्थाप्यते विधीयते । अपोह्यते निषिध्यते । वा । तदा 'स्थापनापोहनात्मकतया' इति शेषः । एकावली एकरूपेण विशेषणत्वेन विशेष्यत्वेन विहितानामपोहितानां वाऽऽवली पङ्क्तिस्तथोक्ता, तन्नामालङ्कार इति भावः । द्विधा । स्यात् ॥ १३१ ॥

उदाहर्तुमाह-क्रमेण । उदाहरणम् । तत्राद्या यथा-'सरस्तडागः । विकसिताम्भोजम् । अम्भोजं कमलम् । भृङ्गसङ्गतं भृङ्गैर्भ्रमरैः सङ्गतम् । भृङ्गा अत्र 'भोभगो अघो अपूर्वस्य योऽशि ।' ८।३।१७ इति यत्वं तल्लोपश्च । यत्र । ससङ्गीताः सङ्गीतपराः । सङ्गीतं सुष्ठु गानम् । सस्मरोदयं स्मरोदयेन कामोल्लासकत्वेन सह वर्त्तत इति तथोक्तम् । अत्राम्भोजादीनि उत्तरोत्तरत्र विशेष्याणि पूर्वपूर्वत्र विशेषणात्मना विहितानि ॥ २५५ ॥' यथा वा-'पुराणि यस्यां सवराङ्गनानि वराङ्गनारूपपरिस्कृताङ्गयः । रूपं समुन्मीलितसद्विलासमात्रं विलासाः कुसुमायुधस्य ॥'

द्वितीयामुदाहरति-'तत् । जलम् । न । यत् । सुचारुपङ्कजं सुचारूण्यत्यन्तं रमणीयानि पङ्कजानि यत्र तथोक्तम् । न । तद् । पङ्कजम् । न । यद् । अलीनषट्पदं न लीनाः षट्पदा भ्रमरा यत्र तथोक्तम् । असौ । षट्पदः । न । यः । कलं रमणीयम् । न । जुगुञ्ज गुञ्जितवान् । तत् । गुञ्जितम्मत्तभ्रमरशब्दः । न । यत् । मनः । न । जहाराचकर्ष । अत्र पङ्कजादीन्युत्तरोत्तरत्र विशेष्याणि जलादिषु विशेषणभूतात्मनाऽपोहितानि । भट्टेः पद्यमिदम् । अत्र वंशस्थविलं छन्दस्तल्लक्षणं चोक्तं प्राक् ॥ २५६ ॥'

प्रकाशकारादिनाऽलक्षितामपि द्वितीयस्वरूपामेकावलीं दर्शयितुमाह-क्वचित् । विशेष्यम् । अपि । यथोत्तरमुत्तरमुत्तरं प्रति । विशेषणतया । उपलक्षणे तृतीयेयम् । स्थापितम् । अपोहितं निराकृतम् । च । दृश्यते । अयम्भावः- पूर्वंपूर्वं विशेषणं प्रत्युत्तरोत्तरं विशेष्यं यत् स्थाप्यतेऽपोह्यते वा, तत् उत्तरोत्तरं विशेष्यं प्रति पूर्वंपूर्वं विशेष्यमित्ययं विवेकः । इति ।

उदाहरति-यथा । वाप्यः । विमलाः स्वच्छजलाः । भवन्ति । वापीषु । कमलानि । स्फुटन्ति विकसन्ति । अलयो भ्रमराः । कमलेषु । पतन्ति । अलिषु । सङ्गीतं सुन्दरं गानम् । पदमधिकारम् । करोति । अत्र वाप्यादय उत्तरोत्तरत्र विशेषणात्मानः पूर्वंपूर्वं विशेष्यतया वर्णिताः । अत्रार्याछन्दः ॥ २५७ ॥'

एतद्दिग्दर्शनमित्याशयेनाह-एवमित्यादि । स्पष्टम् । यथा-'पुण्यक्षेत्रं न सर्वत्र पुण्यक्षेत्रे न नास्तिकाः । नास्तिकेषु न धर्मोऽस्ति न धर्मे दुःखहेतुता ॥' इति, अत्र परंपरं विशेषणभूताः पूर्वंपूर्वं पुण्यक्षेत्रादयो विशेष्यतयाऽपोहिताः ।

सारं लक्षयति-१६५ वस्तुनो विशेष्यस्य । उत्तरोत्तरम् । उत्कर्षः । सारः । उच्यते । अत्र विवृति

यथा—'राज्ये सारं वसुधा, वसुधायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम् ॥ २५८ ॥'

१६६ यथासङ्ख्यमनूद्देश उद्दिष्टानां क्रमेण यत् ॥ १३२ ॥

यथा—'उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु
क्रीडाकाननमाविशन्ति वलयक्वाणैः समुत्त्रासय ।
इत्थं वञ्जुलदक्षिणानिलकुहूकण्ठेषु साङ्केतिक-
व्याहाराः सुभग ! त्वदीयविरहे तस्याः सखीनां मिथः ॥ २५९ ॥

१६७ क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् ।
भवति क्रियते वा चेत्तदा पर्य्याय इष्यते ॥ १३३ ॥

---

काराः—"केचित्तु 'आश्लोकसमापनमुत्तरोत्तरोत्कर्षेणायमलङ्कारो भवति । तथात्व एव वैचित्र्यविशेषप्रतीतेः ।' इत्याहुः । तन्न । 'लोकस्रजि यौर्दिवि चादितेया अप्यादितेयेषु महान् महेन्द्रः । किं कर्त्तुमर्थीयति सोऽपि रागाज्जागर्त्ति कक्षा किमतः परा ते ॥' इत्यादौ श्लोकार्धसमाप्तिपर्य्यन्तमुत्कर्षसत्त्वेनाप्यस्यालङ्कारस्य सम्भवात् ।" इत्याहुः ॥

उदाहरति—**यथा**—'**राज्ये** । **वसुधा** पृथिवी । **सारं** वरम् । सामान्ये नपुंसकम् 'मृदु पचती' त्यादिवत् । अत एव—'शक्यं चानेन श्वमांसादिभिरपि क्षुत् प्रतिहन्तुम्' इति 'वृद्धिरादैच् ।' १।१।१ इति सूत्रे महाभाष्यम् । **वसुधायाम्** । **पुरं** नगरम् । 'सार'मिति पूर्वतोऽनुषज्यते । **पुरे** नगरे । **सौधं** सुधालिप्तं मन्दिरम् । 'सार'मिति पूर्ववत् । **सौधे** । **तल्पं** शय्या । 'सार'मिति पूर्ववत् । **तल्पे** । **अनङ्गसर्वस्वम**नङ्गस्य कामदेवस्य सर्वस्वं तत्स्वरूपा । **वराङ्गना** । 'सार'मिति पूर्ववत् । रुद्रटस्य पद्यम् । आर्य्याछन्दः, तल्लक्षणं चोक्तं प्राक् ॥ २५८ ॥' यथा वा—'तृणाल्लघुतरस्तूलस्तूलादपि च याचकः । वायुना किन्न नीतोऽसौ मामयं याचयेदिति ॥' इति, अत्र अश्लाघ्यगुणानामुत्कर्षः पूर्वत्र श्लाघ्यगुणानामिति विशेषः ।

यथासङ्ख्यं लक्षयति—१६६ **यत्** । **उद्दिष्टानां** निर्दिष्टानां वस्तूनाम् । **क्रमेणो**द्देशानुपूर्व्येण । **अनूद्देशः** पश्चान्निर्देशः । तत्—**यथासङ्ख्यं** सङ्ख्यामनतिक्रम्येति तथोक्तं, तन्नामाऽलङ्कारः । पूर्वं निर्दिष्टानां वस्तूनां पुनर्निर्दिष्टैर्वस्तुभिः क्रमेण सम्बन्धो यथासङ्ख्यालङ्कार इति भावः । अत्राहुः—'यद्यपि नात्रालङ्कारोपस्कारकत्वं तथाऽपि बहूनां क्रमेण सम्बन्धस्य तत्तया स्वीकारोऽभ्युपगन्तव्यः । यथा कारणमालाऽऽदौ ।' इति ॥ १३२ ॥

उदाहरति—**यथा**—'**उन्मीलन्ति** प्रफुल्लन्ति 'वञ्जुला' इति शेषः ( इत्येकयोक्तम् ) । **नखैः** । **लुनीहि** छिन्धि 'तत्पुष्पाणी'ति शेषः ( इति द्वितीयया ) । एषां दर्शनं एषा मदनार्दिता यथा न लभेतेति भावः । **वहति** वाति 'दक्षिणानिल' इति शेषः ( इति तृतीयया ) । **क्षौमाञ्चलेन** पट्टवस्त्रेण । **आवृणु** प्रतिवधान 'त'मिति शेषः । अन्यथाऽस्य स्पर्शेन विपत्स्यतेऽसाविति भावः ( इति चतुर्थ्या ) । **क्रीडाकाननं** क्रीडाऽर्थं निर्मितमुद्यानम् । **आविशन्ति** प्रविशन्ति 'कोकिलाः' इति शेषः ( इति पञ्चम्या ) । **वलयक्वाणै**र्वलयानां कङ्कणानां क्वाणाः शब्दास्तैः । **समुत्त्रासय** । यदि तेषां कलं श्रोष्यति तदेयं सद्यो विपत्स्यत इति भावः ( इति षष्ठ्योक्तम् ) । हे **सुभग** ! **इत्थम्** । **त्वदीयविरहे** तव विरहे । **तस्या** मृतप्रायत्वेन त्वद्विरहेण वा हतभागाया इति भावः । **सखीनाम्** । **मिथः** । **वञ्जुल-दक्षिणानिल-कुहूकण्ठेषु** । वञ्जुला वकुलाः । दक्षिणानिलश्चन्दनसुगन्धितो वायुः । कुहूकण्ठाः कोकिलाः । विषये सप्तमीयम् । **साङ्केतिकव्याहारा** इङ्गितमात्रेण वचनानि । 'भवन्ती'ति शेषः । अत्रो'न्मीलन्ती' त्याद्युक्त्वा 'वञ्जुले'त्यादिना पश्चान्निर्देशः । शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं चोक्तं प्राक् । नायकं प्रति दूत्या उक्तिरियम् ॥ २५९ ॥'

पर्य्यायं लक्षयति—१६७ **चेत्** । **क्वचित्** । **एकं** 'वस्त्वि'ति शेषः । **अनेकस्मिन्** । 'भवति क्रियते वा' इति परेणान्वयः । **अनेकम्** 'वस्त्वि'ति शेषः । **च** । **एकग**मेकनिष्ठम् । **क्रमात्** नतु यौगपद्येन ( अत एव समुच्चयादौ 'यौगपद्येने'ति निवेशनीयम् ) । **भवति** । **क्रियते** । **वा** । **तदा** । **पर्य्यायः** क्रमिकः, अतस्तन्नामालङ्कारः । **इष्यते** स्वीक्रियते । अत्र 'क्रमेणे'ति समुच्चयो, द्वितीयप्रभेदो विशेषश्च व्यवच्छिन्ते । इदम्वोध्यम्—एकमनेकगं भव-

क्रमेण यथा—'स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः।
वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः ॥ २६० ॥'
'विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः। वृककाकशिवास्तत्र धावन्त्यरिपुरे तव॥२६१॥'
'विसृष्टरागादधरान्निवर्तितः स्तनाङ्गरागादरुणाच्च कन्दुकात्।
कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥ २६२ ॥'

---

तीत्येकः, अनेकमेकगं भवतीति द्वितीयः, एकमनेकगं क्रियते इति तृतीयः, अनेकमेकगं क्रियत इति चतुर्थोऽयं पर्यायः। एवं चास्य चत्वारो भेदाः। इति ॥ १३३ ॥

उदाहर्तुमुपक्रममाण आह—क्रमेणेत्यादि। स्पष्टम्। 'स्थिता इत्यादि।

'प्रथमोदबिन्दवः प्रथमाः प्रथमं निपतिता उदबिन्दवो वृष्टिजलबिन्दवः, नतु उदधारा इति तथोक्ताः। तस्या घोरतपःकर्मणि। दृढिलतया प्रसिद्धाया भगवत्याः पार्वत्याः। क्षणं नतु दीर्घकालम्। पक्ष्मसु। स्थिताः पक्ष्मणां श्लक्ष्णत्वेन 'क्षणं' घनतयाऽऽधारौचित्येन वा स्थिततया 'स्थिता' इति चोक्तम्। अथ—ताडिताधरास्ताडितोऽधरो यैस्तथाभूताः, एतेनाधरस्य म्रदिमा द्योतितः, प्रपतनक्रियायाश्चाभाव्यं च दर्शितम्। पयोधरोत्सेधनिपातचूर्णिताः पयोधरयोः कुचयोरुत्सेध उच्चत्वं तत्र निपातस्तेन चूर्णिताः। एतेन काठिन्यं द्योतितम्। अत एव—वलीषु त्रिवलीमध्ये। स्खलिताः स्खलनं प्राप्ताः सन्तः। चिरेण बहोः कालात्। नाभिम्। प्रपेदिरे प्रापुः। कुमारसम्भवस्येदं पद्यम्। भगवत्याः पार्वत्या 'महेश्वर एव मे पाणिं गृह्णातु'इति तपःप्रवृत्तायाः समाधौ ग्रीष्मान्ते कदाचित् निपततां वृष्टिबिन्दूनां पतनक्रमनिर्देशपूर्वकं समाधिसौन्दर्यप्रत्यायिका कवेरियमुक्तिः। अत्र बिन्दुरूपमेकं वस्त्वनेकपक्ष्मादिगतत्वेन वर्णितमिति यथोक्तोऽलङ्कारस्तवस्त्येव, किन्तु—'स्थिता'इत्यनेन पक्ष्मणामविरलत्वं, 'क्षण'मित्यनेन तेषां मसृणत्वं च, 'ताडिताधरा'इत्यनेनाधरमृदुत्वम्, 'पयोधरो०' इत्यादिना कुचयोः काठिन्यम्, वलीषु तेषां स्खलनपातोक्त्या वलीनां विस्पष्टत्वं, नाभौ प्रवेशोक्त्या तस्यातिगभीरत्वं, 'चिरेणे'ति च तत्र प्रवेशमान्थर्योक्त्या वलीनां व्यासश्चेति सौन्दर्याभिव्यञ्जनम्, 'नासाऽग्रन्यस्तनयनः संवृतास्यः सुनिश्चलः। ध्यायीत मनसा देवमुरो विष्टभ्य चाग्रतः ॥'इति समाहितानामवस्थानोक्तदिशा तत्तद्देहोपरि सुखपारवश्यसम्भ्रमहेतावपि अविहता देव्याः समाध्यवस्था चावेद्यते। तथा हि—तत्र,'पक्ष्मसु स्थिता'इत्यनेन नासाऽग्रन्यस्तनयनत्वात्मकमर्धनिमीलनं नयनयोरभिव्यज्यते, सर्वथा निमीलने तेषामधोऽग्रतया, सर्वथोन्मीलने तेषामूर्ध्वाग्रतया तेषु जलबिन्दूनां स्थित्यसम्भवात्, आस्ये प्रवेशाद्युक्त्याऽधरोष्ठे निपत्य ततस्तेषां च्युत्युक्त्या संवृतास्यत्वं व्यज्यते। ततश्च्युतानां तेषां स्तनोत्सेधनिपतनादिवर्णनयोरोविष्टम्भः, अलसवदनावस्थाने हि स्तनयोरन्तःसङ्कुचिताकारतया तदुत्सेधयोश्च्युतिर्न स्यात्। कथञ्चित्तयोः पतित्वा वलित्रयं प्राप्तानामपि तिर्यगेव गमनं स्यात्, न नाभिदेशप्रतिपत्तिः। नाभौ च संवृतायां प्रवेशो न स्यात्। पक्ष्माधरादिच्युतिक्रमोक्त्या च निश्चलत्वमभिव्यज्यते वदनादिसञ्चलने पक्ष्मच्युतानां तेषामधरपयोधरादिपातासम्भवात्।इति बोध्यम्। वंशस्थविलं वृत्तम्, एतल्लक्षणं चोक्तं प्राक् ॥ २६० ॥'

'यत्र यस्मिंस्तवदरिपुरे। श्रोणिभरालसाः श्रोण्यो भरेणालसाः। विलासिन्यः। विचरन्ति। 'स्मे'ति शेषः। तत्र तस्मिन्। तव। अरिपुरे शत्रूणां स्थाने। वृककाकशिवा वृकाश्च काकाश्च शिवाः शृगाल्यश्चेति तथोक्ताः। 'शिवा गौरी फेरवयोः'इत्यमरः। धावन्ति। शत्रूणां त्वया समापितत्वात्तन्नगरं वनीभूतमिति भावः। राज्ञः स्तुतिरियम्। अत्र विलासिनीनां वृकादीनां चैकत्र क्रमेण सम्भवो वर्णितः ॥ २६१ ॥'

यथा वा—'मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति। अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥' अत्र खलवचसि सुधाहालाहलयोः क्रमेण निर्देशः। 'विसृष्टरागाद् विसृष्टस्त्यक्तो व्रतविरोधितया परिहृतो रागस्ताम्बूलचर्वणेन रञ्जनं यस्य तथोक्तात्। अधरादधरोष्ठात्। तथा—स्तनाङ्गरागात् स्तनयोरङ्गरागो गौरवर्णत्वं तस्मात् तं प्राप्येत्यर्थः। अरुणात्। कन्दुकात्। च। निवर्तितः। तया पार्वत्या। कुशाङ्कुरादानपरिक्षताङ्गुलिः कुशाङ्कुराणामादानेनोच्चाटूयग्रहणेन परिक्षताः परितः क्षता अङ्गुलयो यस्य तादृशः। करः। अक्षसूत्रप्रणयी, अक्षाणां रुद्राक्षाणां सूत्रं मालारूपं तन्तुस्तत्र प्रणयी प्रेमी। कृतः। कुमारसम्भवस्येदं पद्यम्। एकस्य करस्याधरात् कन्दुकाच निवर्तितत्वे जपमालायां निरतत्वे च विधानमुक्तम्। तर्कवागीशास्तु-

'ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः । निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुबिन्दवः॥२६३॥'

एषु च-क्वचिदाधारः संहतरूपोऽसंहतरूपश्च, क्वचिदाधेयमपि, यथा-'स्थिताः क्षण'मित्यादावुदबिन्दवः पक्ष्मादावसंहतरूप आधारे क्रमेणाभवन्'विचरन्ति'इत्यादावाधेयभूता वृकादयः संहतरूपारिपुरे क्रमेणाभवन् । एवमन्यत् । अत्र चैकस्यानेकत्र क्रमेणैव वृत्तेर्विशेषालङ्काराद्भेदः, विनिमयाभावात्परिवृत्तेः ।

१६८ परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् ।

क्रमेणोदाहरणम्—

'दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम । मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः ॥२६४॥'

अत्र प्रथमेऽर्धे समेन, द्वितीयेऽर्धे न्यूनेन ।

---

'अत्रैकः करस्तपसः पूर्वं रागदानार्थमधरे, क्रीडार्थं कन्दुके कृतः, तपःकाले तु कुशाङ्कुरेक्षसूत्रे च कृत इत्ययं क्रमः ।' इत्याहुः । वंशस्थं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ २६२ ॥'

'ते तव राज्ञ इति यावत् । अरिवधूजनैः शत्रूणां स्त्रीभिः । 'पतिसद्भावे' इति शेषः । ययोः । तारः शुद्धमौक्तिकः । 'तारो मुक्तादिसंशुद्धौ तरणे शुद्धमौक्तिके ।' इति विश्वः । हारः । आरोपितः । तयोः । स्तनयोः । 'पत्यसद्भावे' इति शेषः । स्थूलाः । अश्रुबिन्दवः । निधीयन्ते । राज्ञः स्तुतिरियम् । अत्रैकस्मिन् स्तने हारायनेककारणम् ॥ २६३ ॥'

यथा वा-प्रथमं श्रितकञ्जकोरकाभावथ शोभामनुभूय कन्दुकानाम् । अधुनाऽऽश्रयितुं कुचौ यतेते दयिते ! ते करिशावकुम्भलीलाम् ॥' इत्यत्र हि कोरकाद्यनेककरणम् ।

अस्य प्रकारान्तरं पुनर्निर्दिशति-एषु उदाहृतेषु मध्ये । च । क्वचित् । आधारः । संहतरूपः समुदितरूपः । असंहतरूपः । च । एवम्-क्वचित् । आधेयम् । अपि 'संहतरूपमसंहतरूपं चे'ति शेषः । यथा । 'स्थिताः क्षण' मित्यादौ उदाहृतपूर्वे पद्ये । उदबिन्दवः । 'संहतरूपा आधेया' इति शेषः । असंहतरूपे । आधारे । पक्ष्मादौ । क्रमेण । अभवन् । 'विचरन्ति' इत्यादौ । आधेयभूताः । 'संहतरूपा आधेया' इति शेषः । वृकादयः । संहतरूपारिपुरे । क्रमेण । अभवन् । एवम् 'विसृष्टरागादित्यादावसंहतरूपे धरादावाधारे' इति शेषः । अन्यत 'असंहतरूपस्य करस्य संहतरूपस्य हारादेः क्रमेण करण'मिति शेषः ।

अस्यालङ्कारान्तराद्भेदं निर्दिशति-अत्रास्मिन् पर्यायालङ्कारे । च । क्रमेण । एव । एकस्य । अनेकत्र । वृत्तेः । विशेषालङ्काराद् यौगपद्येनैकस्यानेकत्र वृत्तिमुपजीव्य दर्शिताद्विशेषाख्यादलङ्कारात् । 'अस्ये'ति शेषः । भेदः । विनिमयाभावादेकवस्तुत्यागोपाधिकापरवस्तूपादानरूपस्य विनिमयस्याभावात् । परिवृत्तेस्तदाख्यादलङ्काराद्भेदः । एवं च-पूर्वत्र वस्तुभेदाभावादन्यत्रान्यवस्तूपादानं प्रत्यन्यवस्तुत्यागस्याभावात् तद्विच्छित्तिकात् परिवृत्त्यलङ्काराद्भेद इति भावः ।

परिवृत्तिं लक्षयति-१६८ समन्यूनाधिकैः समानि च न्यूनानि चाधिकानि चेति तैः । विनिमयः पारिवर्त्तनम् । परिवृत्तिः । भवेत् । तथा च-समं न्यूनमधिकं वा दत्त्वा समस्यान्यूनस्य न्यूनस्य चादानं परिवृत्तिः । अत एवायं त्रिविध इति फलितोऽर्थः ।

उदाहर्त्तुमुपक्रमते-क्रमेणेत्यादिना । स्पष्टम् । 'एणाक्षी मृगनयना । कटाक्षम् । दत्त्वा । मम । हृदयम् । जग्राहाददौ । मया । तु हृदयमन्तःकरणम् । दत्त्वा । मदनज्वरः कामजनितः सन्तापः । गृहीत आत्त इत्यर्थः ॥ २६४ ॥'

अत्र प्रभेदद्वयं निगमयति-अत्र । प्रथमे । अर्धे । समेन तुल्येन कटाक्षेण'समस्य हृदयस्य परिवर्त्तन'मिति शेषः । द्वितीये । अर्धे । न्यूनेन मदनज्वरेण 'अन्यूनस्य हृदयस्य परिवर्त्तन'मिति शेषः । यथा वा-'किमहं कथयामि योषितामधरं बिम्बफलं समर्प्य याः । सुरसानि हरन्ति हन्त हा विदुषां पुण्यफलानि सत्त्वरम् ॥' इत्यत्र न्यूनेनाधरेणोत्तमस्य पुण्यफलस्य पारिवर्त्तनम् ।

'तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना।
येन जर्जरकलेवरव्ययात् क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥ २६५ ॥'

अत्राधिकेन।

१६९ प्रश्नादप्रश्नतो वाऽपि कथिताद्वस्तुनो भवेत् ॥ १३४ ॥
तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा।
परिसङ्ख्या

क्रमेणोदाहरणम्-'किं भूषणं? सुदृढमत्र यशो, न रत्नं; किं कार्य्यमार्यचरितं सुकृतं, न दोषः
किं चक्षुरप्रतिहतं? धिषणा, न नेत्रं; जानाति कस्त्वदपरः सदसद्विवेकम् ॥ २६६ ॥'

अत्र व्यवच्छेद्यं रत्नादि शाब्दम्।

---

'येन। जर्जरकलेवरव्ययाज्जर्जरं जराक्षीणं यत् कलेवरं शरीरं तस्य व्ययः सीताकृते रावणेन विनाशनं तस्मात्। इन्दुकिरणोज्ज्वलं चन्द्रकिरणवद्विमलम्। यशः। क्रीतम्। तस्य। च। प्रवयसः प्रवृद्धस्य। जटायुषस्तन्नाम्नो गृध्रराजस्य। अधुना रामदत्तपितृगत्या दानानन्तरमिति भावः। स्वर्गिणः। किमिव। शोच्यते न किमपि शोच्यत इति भावः। रथोद्धताछन्दः ॥ २६५ ॥'

अत्र। अधिकेन विमलेन यशसा'न्यूनस्य कलेवरस्य परिवृत्ति'रिति शेषः। यथा वा-'गरिमाणमर्पयित्वा लघिमानं कुचयुगात् कुरङ्गदृशाम्। स्वीकुर्वते नमस्ते यूनां धैर्य्याय निर्विवेकाय ॥' अत्रोत्तमेन गरिम्णा न्यूनस्य लघिम्नः परिवृत्तिः। अत्राहुर्गङ्गाधरकाराः-'एषु दानादानव्यवहारः कविकल्पित एव, नतु वास्तवः। यत्र वास्तवस्तत्र नालङ्कारः। यथा-'क्रीणन्ति प्रविकचलोचनाः समन्तान् मुक्ताभिर्बदरफलानि यत्र बालाः।'इदं चापरं बोध्यम्-अत्र परस्मै स्वकीययत्किञ्चिद्वस्तुत्यागमात्रम्। 'किशोरभावं परिहाय रामा बभार कामानुगुणां प्रणालीम्।' इत्यत्रातिव्याप्त्यापत्तेः। न चेदं लक्ष्यमेवेति वाच्यम्, पूर्वावस्थात्यागपूर्वकमुत्तरावस्थाग्रहणस्य वास्तवत्वे नालङ्कारत्वात्।' इति।

परिसङ्ख्यां लक्षयति- १६९ चेत्। प्रश्नात् प्रश्नं कृत्वा प्रश्नादुत्तरमिति यावत्। अप्रश्नतः प्रश्नमकृत्वा। वा। अपि। कथितान्निर्णीतात्। वस्तुनः पदार्थात्। शाब्दः शब्दप्रतिपाद्यः। भवेत्। अथवा। आर्थोऽर्थगम्यः। तादृक् कथितसदृशः। अन्यव्यपोहोऽन्यस्य कथितभिन्नस्य वस्तुनो व्यपोहो निषेधः। तदा। परिसङ्ख्या तदाख्योऽलङ्कारः स्यादिति भावः। 'प्रश्ना'दित्यादिभेदवचनम्, 'कथिताद्वस्तुनस्तादृगन्यव्यपोह' इति स्वरूपवचनम्। अतएव गङ्गाधरकारैः 'सामान्यतः प्राप्तस्यार्थस्य कस्माच्चिदर्थाद् व्यावृत्तिः परिसङ्ख्या।' इत्येवोक्तम्। इदम्बोध्यम्-'परेर्वर्जने।' ८।१।५ इति निर्देशात् परिशब्दो वर्जनार्थः। सङ्ख्याशब्दश्च 'यत्साङ्ख्यैः प्राप्यते स्थान' मिति बुद्ध्यर्थः। तथा च-वर्जनबुद्धिः पारिसङ्ख्येति फलितम्। तावन्मात्रायाश्चालङ्कारोपस्कारकत्वाभावात् यत्र कविप्रतिभोन्नीतोऽन्यव्यपोहः स एवास्या विषय इति सिद्धम्, तेन 'पञ्च पञ्चनखा भक्ष्या' इत्यादौ नातिप्रसङ्गः। इयं च-प्रश्नपूर्विकाऽप्रश्नपूर्विका चेति द्विविधा, असावपि शाब्दी आर्थी चेति चतुर्विधा। इति ॥ १३४ ॥

उदाहर्तुकाम आह-क्रमेण। उदाहरणम्। 'भूषणम्। किम् (इति प्रश्ने)। अत्र।स्मिँल्लोके। सुदृढं सात्त्विकतयाऽनपोहनीयविकाशम्। यशः। 'भूषण'मिति शेषः। रत्नं माणिक्यादि। न 'भूषण'मिति शेषः (इत्युत्तरम्)। कार्य्यं कर्त्तव्यम्। किम् (इति प्रश्ने)। सुकृतं सात्त्विकतयाऽऽचरितम्। आर्य्यचरितमार्य्याणां 'महाजनो येन गतः स पन्था' इत्युक्तानां सज्जनविशेषाणां चरितम्। 'कार्य्य'मिति शेषः। दोषो दुष्टत्वमनार्य्यचरितसेवनमिति यावत्। न। 'कार्य्य'इति शेषः। (इत्युत्तरम्)। अप्रतिहतं निर्मलविकाशम्। चक्षुः। किम् (इति प्रश्ने)। धिषणा बुद्धिः। 'चक्षु'रिति शेषः। नेत्रं प्रसिद्धं चर्ममयं चक्षुरिति भावः। न। 'चक्षु'रिति शेषः। एवमुचितमुत्तरयन्तं प्रष्टा प्रशंसते-त्वत्। अपरः। सदसद्विवेकं सदसतोरुत्तमदूषितयोर्विवेकस्तम्। कः। जानाति 'न कोऽपि'इति शेषः। वसन्ततिलकं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ २६६ ॥'

उदाहृतमर्थं निर्दिशति-अत्र। शब्दं 'न रत्न' मित्यादिशब्दबोध्यम्। रत्नादि। 'प्रश्नपूर्वक'मिति शेषः। व्यवच्छेद्यं

'किमाराध्यं ? सदा पुण्यं, कश्च सेव्यः? सदागमः ।
को ध्येयो ? भगवान् विष्णुः, किं काम्यं ? परमं पदम् ॥ २६७ ॥'

अत्र व्यवच्छेद्यं पापादि आर्थम्। अनयोः प्रश्नपूर्वकत्वम्। अप्रश्नपूर्वकत्वे यथा—

'भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ॥ २६८ ॥'

'बलमार्त्तभयोपशान्तये विदुषां सम्मतये बहु श्रुतम् ।
वसु तस्य न केवलं विभोर्गुणवत्ताऽपि परप्रयोजनम् ॥ २६९ ॥'

श्लेषमूलत्वे चास्य वैचित्र्यविशेषो यथा—

'यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्मसु वर्णसङ्कराः,चापेषु गुणच्छेदाः...'इत्यादि।

१७० उत्तरं प्रश्नस्योत्तरादुन्नयो यदि ॥ १३९ ॥
यच्चासकृदसम्भाव्यं सत्यपि प्रश्न उत्तरम् ॥

---

व्यपोह्यम् । इदं तत्त्वम्—यशःप्रभृतेर्भूषणत्वमागमादिना विदितचरमेवेति न तद्वेदनायेदमभिधानम्, अपि तु—तदभिन्नस्य भूषणत्वादिव्यपोहनार्थमिति परिसङ्ख्येयम् । इति ।

'आराध्यम् । किम् ? ( इति प्रश्ने ) । सदाऽहर्निशम् । अत एव 'कायेन वाचा मनसेन्द्रियैर्वे'ति शेषः । पुण्यं परोपकारादि 'आराध्य'मिति शेषः ( इत्युत्तरम् ) । सेव्यः । च । कः ( इति प्रश्ने ) । सदागमः सतां महात्मनामागमः सम्मेलनम् । यद्वा—सन् भागवतचरितपरतया श्रेष्ठ आगमः श्रीमद्भागवतादि शास्त्रम् । 'सेव्य' मिति शेषः ( इत्युत्तरम् ) । ध्येयः स्मरणीयः । कः ( इति प्रश्ने ) । भगवान् । विष्णुः । 'ध्येय'इति शेषः ( इत्युत्तरम् ) । काम्यमभिलषणीयम् । किम् । परमं 'तद्विष्णोः परमं पद छं सदा पश्यन्ति सूरयः' इत्याद्युक्तम् । पदं स्थानम् ( इत्युत्तरम् ) ॥ २६७ ॥'

व्यवच्छेद्यं निर्दिशति—अत्रेत्यादिना । आदिपदेन दुःसङ्गपरस्त्रीक्षुद्रसुखानां ग्रहणम् । स्पष्टमन्यत् । एवं प्रश्नपूर्वकत्वेनोदाहृत्यान्यथोदाहर्त्तुमाह—अनयोरित्यादि । स्पष्टम् । 'भवे शङ्करे । 'व्योमकेशो भवो भीम' इत्यमरः । भक्तिः प्रेम । विभवे सम्पत्तौ । न । 'भक्ति' रिति शेषः । शास्त्रे वेदादौ । व्यसनं चिन्तानुरागः । युवतिकामास्त्रे युवतिरेव कामास्त्रं तत्र तच्चिन्तने इति यावत् । न । 'व्यसन'मिति शेषः । यशसि तदुपार्जने इति भावः । चिन्ता । वपुषि शरीरे तद्रक्षण इति यावत् । न 'चिन्ते'ति शेषः । प्रायः । महतां महात्मनाम् । परिदृश्यते । अत्र प्रश्नमन्तरैव भक्त्यादेरन्याधिकरणत्वं व्यवच्छेद्यम् । आर्य्याछन्दः ॥ २६८ ॥'

'आर्त्तभयोपशान्तये । बलम् । 'न परपीडनाये'ति शेषः । विदुषाम् । सम्मतये सम्यगुपकृतये । बहु । श्रुतं शास्त्रं ' नतु विवादाये'ति शेषः । एवम्—तस्य दशरथस्य । विभो राज्ञः । केवलम् । वसु धनम् । न । किन्तु—गुणवत्ता गुण ( विद्याऽऽदि ) शालित्वम् । अपि । परप्रयोजनं तन्निमित्तमिति भावः । 'आसी'दिति शेषः । वैतालीयं वृत्तम् । अत्रापि 'किं तस्य बल'मित्यादिप्रश्नाभावः, अथ—'परपीडनाय ने'त्यादिव्यवच्छेद्यमार्थमिति विशेषः ॥ २६९ ॥ '

अस्य श्लेषमूलकत्वे वैचित्र्यमित्याह—श्लेषेत्यादिना । स्पष्टम् ।

उदाहरति—'यस्मिन् शूद्रके । च । राजनि । जितजगति जितं वशीकृतं जगत्संसारो येन तादृशे । महीं पृथिवीम् । पालयति । 'सती'ति शेषः । चित्रकर्मसु । वर्णसङ्करा वर्णानां पीतादीनां सङ्कराः । 'आस'न्निति शेषः । 'न प्रजासु वर्णानां ब्राह्मणादीनां स्त्रीपुरुषदोषतः सङ्करा मेलना' इति व्यपोह्योऽर्थः । चापेषु धनुःषु । गुणच्छेदा गुणस्य मौर्व्याः छेदाः 'आस'न्निति शेषः । 'न प्रजासु गुणानां माधुर्य्यादीना'मिति व्यपोह्योर्थः । ...' इत्यादि । कादम्बर्य्यां गद्यमिदम् । अत्र वर्णगुणादिपदानां श्लिष्टत्वम् ।

उत्तरं लक्षयति—१७०यदि । उत्तरात् । प्रश्नस्य ।'असत' इति शेषः । उन्नयः कल्पनम् । 'तदैक'मिति शेषः । उत्तरम् । यत् । च । प्रश्ने । सति । अपि । असम्भाव्यं सम्भावयितुमशक्यम् । असकृत्पुनःपुनः । उत्तरम् ।



लोकतिलकग्रणामस्यर्थः

यथा मम—

'वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः। अहमेकाकिनी बाला तवेह वसतिः कुतः?॥२७०॥'

अनेन पथिकस्य वसतियाचनं प्रतीयते।

'का विसमा देव्वगई किं लद्धव्वं जणो गुणग्गाही।
किं सोक्खं सुकलत्तं किं दुग्गेज्झं खलो लोओ ॥ २७१ ॥'

अत्रान्यव्यपोहे तात्पर्य्याभावात् परिसङ्ख्यातो भेदः। न चेदमनुमानम्, साध्यसाधनयोर्निर्देश एव तस्याङ्गीकारात्। न च काव्यलिङ्गम्, उत्तरस्य प्रश्नं प्रत्यजनकत्वात्।

१७१ दण्डापूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते ॥ १३६ ॥

'मूषिकेण दण्डो भक्षितः' इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायातं भवतीति नियतसमानन्यायादर्थान्तरमापततीत्येष न्यायो दण्डापूपिका। अत्र च-क्वचित् प्राकरणिकादर्थादप्राकरणिकस्यार्थस्यापतनम्, क्वचिदप्राकरणिकात् प्राकरणिकस्यार्थस्येति द्वौ भेदौ। क्रमेणोदाहरणम्—

---

'तदपर'मिति शेषः। 'असक्त'दिति चमत्कारपुष्ट्यर्थं वचनम्, अतः—'किमिति कृशाऽसि कृशोदरि ! किं तव परकीयवृत्तान्तैः' इत्यादौ उत्तरस्याकूतगर्भत्वेन सकृदपि चमत्कारित्वेनोपस्कारकत्वमेवेति बोध्यम् ॥ १३५ ॥

उदाहरति—यथा। मम—'श्वश्रूः स्वामिमाता। वीक्षितुं द्रष्टुं गतागतं बोद्धुमिति यावत्। न। क्षमा शक्ता। अन्धेति भावः। स्वामी। दूरतरं नितान्तं दूरं देशमित्यर्थः। गतः प्राप्तः। अतस्तस्य सहसा प्रत्यागमनसम्भावना नास्तीति भावः। अहम्। बाला। एकाकिनी। अतः—तव पथिकस्य। इह। वसतिर्वासः। कुतः कथं सङ्गच्छेतेति भावः ॥ २७० ॥'

अत्र प्रश्नोन्नयं निर्दिशति—अनेनेत्यादिना। अनेनोत्तरेणेत्यर्थः। स्पष्टमन्यत्।

द्वितीयमुदाहरति—'विसमा विषमा प्रतिकूलेति यावत्। का ? देव्वगई दैवगतिः प्रारब्धभोग ईश्वरेच्छेति यावत्। 'विषमे'ति शेषः। लद्धव्वं लब्धव्यं यत्नेनोपार्जनीयमिति यावत्। किम् ? गुणग्गाही गुणग्राही। जणो जनः। 'लब्धव्य'इति शेषः। सोक्खं सौख्यं सुखसाधनमिति यावत्। किम् ? सुकलत्तं सुकलत्रं सुभगायाः सम्पत्तिरिति यावत्। दुग्गेज्झं दुर्ग्राह्यं दुर्वश्यमिति यावत्। किम् ? खलो दुर्जनः। लोओ लोकः। आर्याछन्दः। अत्रासक्तप्रश्नः ॥ २७१ ॥'

अलङ्कारान्तरतोऽस्य व्यवच्छेदं निर्दिशति—अत्रोत्तरालङ्कारे। 'प्रश्नस्ये'ति शेषः। अन्यव्यपोहे वस्त्वन्तरनिराकरणे। तात्पर्याभावात्। परिसङ्ख्यातः। भेदो भिन्नत्वम्। इदमुत्तरम्। च। अनुमानम्। न। तस्यानुमानस्य। साध्यसाधनयोर्लिङ्गिलिङ्गयोः। निर्देशे। एव। अङ्गीकारात्। इदम्—काव्यलिङ्गम्। च। न। उत्तरस्य प्रतिवचनस्य। प्रश्नं प्रश्नवाक्यम्। प्रति। अजनकत्वात् हेतुत्वाभावात्।

अर्थापत्तिं लक्षयति—१७१ दण्डापूपिकया दण्डापूपन्यायेनेत्यर्थः। दण्डापूपयोर्भावो दण्डापूपिका। 'द्वन्द्वमनोज्ञादिभ्यश्च।' ५।१।१३३ इति वुञ्। अन्यार्थागमोऽन्यार्थज्ञानम्। अर्थापत्तिस्तदभिधेयोऽलङ्कारः। इष्यते॥१३६॥

दण्डापूपिकां निर्दिशति—'मूषिकेण। दण्डः। भक्षितः।' इति इत्युक्तौ। अनेन दण्डभक्षणेन। तत्सहचरितं तस्य दण्डस्य सहचारितम्। अपूपभक्षणम्। अर्थात्तात्पर्य्यतः। आयातं ज्ञातम्। भवति। इति। नियतसमानन्यायान्नियतस्य नियतवत्त्वेन निश्चितस्य समानन्यायः सदृशः पन्थाः तस्मात् तत्सामर्थ्यादिति भावः। अर्थान्तरम्। आपतत्यर्थतो न तु शब्दतः प्रतिपद्यते। इत्येषः। न्यायः। दण्डापूपिका। मूषिकस्य दण्डभक्षणं दुश्शकमिति सुशकं तत्सहचरितापूपभक्षणं सम्भाव्यते यथा, तथा यत्र सहचरितैकसिद्धेरपरसिद्धिरौचित्यात् सम्भाव्यते सा क्वचित्प्रतिभोत्थाऽर्थापत्तिर्नामालङ्कार इति भावः।

अस्याश्च भेदद्वयमित्याह—अत्र चेत्यादिना। स्पष्टम्। उदाहरणं निर्दिशति—क्रमेण। उदाहरणमुदाह्रियते—

---

१ 'विषमा का दैवगतिः किं लब्धव्यं जनो गुणग्राही। किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोकः ॥' इति संस्कृतम् ॥

'हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले। मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः॥२७२॥'

'विललाप स बाष्पगद्गदं सहजामप्यपहाय धीरताम्।
अतितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिणाम्॥ २७३॥'

अत्र च समानन्यायस्य श्लेषमूलत्वे वैचित्र्यविशेषः, यथोदाहृते'हारोऽय'मित्यादौ। न चेदमनुमानम्, समानन्यायस्य सम्बन्धरूपत्वाभावात्।

१७२ विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुतः।

यथा--'नम्यन्तां शिरांसि, धनूंषि वा कर्णपूरीक्रियन्तामाज्ञा मौर्व्यो वा'

अत्र शिरसां धनुषां च नमनयोः सन्धिविग्रहोपलक्षणत्वात्, सन्धिविग्रहयोश्चैकदा कर्त्तुमशक्यत्वाद्विरोधः, स चैकपक्षाश्रयणपर्य्यवसानः। तुल्यबलत्वं चात्र धनुःशिरोनमनयोर्द्वयोरपि स्पर्धया सम्भाव्यमानत्वात्, चातुर्य्यं च औपम्यगर्भत्वेन। एवं-'कर्णपूरीक्रियन्ता'मित्यत्रापि।

---

अयं मुक्तानां पुञ्जभूतः। हारस्तदाख्यं भूषणम्। हरिणाक्षीणाम्। स्तनमण्डले। लुठति अवज्ञात इव पतितो भवतीति भावः। मुक्तानां (मौक्तिकानाम्) विरतानाम्। अपि। इयम्। अवस्था। 'चेत्तर्हीं'ति शेषः। स्मरकिङ्कराः स्मरेण किङ्करत्वं नीताः। के। वयम्। अस्माकं तु कथैव केत्यर्थः। मुक्तानां तावद् योषिदालिङ्गनं दुर्घटम्, अथ यदि तत्सुघटम्, किं पुनः स्वभावतो रक्तानां तत्सुघटत्वे संशयनमिति तत्त्वम्। अत्र मुक्तानां वर्णनीयत्वेन प्राकरणिकत्वम्॥ २७२॥'

द्वितीयामुदाहरति-'सोऽजो नाम राजेन्द्रः। सहजां स्वभावसिद्धाम्। अपि। धीरताम्। अपहाय। बाष्पगद्गदम्। विललाप। अतितप्तम्। अयो लोहम्। अपि। मार्दवं मृदुत्वम्। भजते। शरीरिणाम्। कथा। एव। का। यदि संतप्तं लोहमपि द्रवति, तर्हि अज इन्दुमत्या वियोगेन सन्तप्तस्तथाभूतो जात इति किं चित्रमिति भावः। रघुवंशस्येदं पद्यम्। वैतालीयं छन्दः। अत्रायसो वर्णनीयत्वाभावादप्राकरणिकत्वम्॥ २७३॥'

अत्र वैचित्र्यहेतुं निर्दिशति-अत्रार्थापत्तौ। च। समानन्यायस्य दण्डापूपिकान्यायस्य। श्लेषमूलत्वे। वैचित्र्यविशेषः। उदाहरति-यथा। उदाहृते। 'हारोऽय'मित्यादौ। व्याख्यातपूर्वमिदम्। अनुमानादस्य व्यवच्छेदमाह-इदमर्थापत्तिरूपम्। च। अनुमानम्। न। समानन्यायस्य। सम्बन्धरूपत्वाभावाद् व्याप्तिरूपत्वाभावात्। व्याप्तिश्च ज्ञाप्यज्ञापकयोरव्यभिचरितसामानाधिकरण्यरूपः, प्रकृते तु एकस्य साधर्म्यग्रहेण तत्सधर्मणो योग्यतया तादृशधर्मग्रहो भवतीति नात्रानुमानशङ्केति भावः।

विकल्पं लक्षयति-१७२ तुल्यबलयोस्तुल्यं बलं ययोस्तादृशयोः। 'अर्थयो'रिति शेषः। चातुरीयुतश्चातुरी चातुर्य्यं वैचित्र्यमिति यावत् तया युतः। विरोधः। विकल्पः।

उदाहरति-यथा-'शिरांसि। नम्यन्ताम्। 'यदि योद्धुमशक्ति'रिति शेषः। धनूंषि। वा'नम्यन्ता'मिति पूर्वतोऽन्वेति। 'यदि योद्धुं शक्ति'रिति शेषः। आज्ञाः 'अस्माक'मिति शेषः। कर्णपूरीक्रियन्तां कर्णपूरा इव क्रियन्तामित्यर्थः। श्रूयन्तामिति भावः। 'यदि सन्धित्से'ति शेषः। मौर्व्यो धनुर्ज्याः। वा। 'कर्णपूरीक्रियन्ता'मिति पूर्वतोऽन्वेति आकृष्यन्तामिति भावः। 'यदि युयुत्से'ति शेषः। कमपि शत्रुं प्रति राज्ञो दूतस्योक्तिरियम्। गद्यमिदम्।'

उदाहृतं सङ्गमयति-अत्र। शिरसाम्। धनुषाम्। च। नमनयोः। सन्धिविग्रहोपलक्षणत्वात् सन्ध्युपलक्षणत्वात् विग्रहोपलक्षणत्वाच्चेत्यर्थः। उपलक्षणं परिचायकम्। सन्धिविग्रहयोः। च। एकदा। कर्त्तुम्। अशक्यत्वात्। विरोधः। ननु सर्वत्र तथा विरोधो न सम्भवतीत्यत आह-स विरोधः। च। एकपक्षाश्रयणपर्य्यवसान एकपक्षस्य शिरोधनुर्नमनयोरेकतरस्य पक्षस्याश्रयणं तत्र पर्य्यवसानं समाप्तिर्यस्य तादृशः। तदन्यतरपक्षाश्रयणे तस्य निराकरणमिति भावः। 'तथा च-तुल्यबलयोरेकतरस्मिन् प्रकृतेऽनन्वयविरोध इति परमतात्पर्य्य'मिति विवृतिकाराः। एवमुपलक्षणमाश्रित्य तुल्यबलत्वं साधितम्, अथ तदन्तरा साधयति-तुल्यबलत्वम्। च। अत्र। द्वयोः। अपि। धनुःशिरोनमनयोः। स्पर्धया। 'वक्तु'रिति शेषः। सम्भाव्यमान-

एवं 'युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ।' 'अत्र श्लेषावष्टम्भेन चारुत्वम् । 'दीयतामर्जितं वित्तं देवाय ब्राह्मणाय च ।' इत्यत्र चातुर्य्याभावान्नायमलङ्कारः ।

१७३ समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके ॥ १३७ ॥
खले कपोतिकान्यायात्तत्करः स्यात्परोऽपि चेत् ।
गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये ॥ १३८ ॥

यथा मम—'हंहो धीरसमीर ! हन्त ! जननं ते चन्दनक्ष्माभृतो
दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः ।
प्रत्यङ्गं दहसीह मे त्वमपि चेदुद्दामदावाग्निव-
न्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः ॥ २७४ ॥'

---

त्वात् । चातुर्य्यं वैचित्र्यम् । च । औपम्यगर्भत्वेन 'धनूंषीव शिरांसि नम्यन्ता'मिति विच्छित्तिविशेषशालित्वेन । अभेदार्थेयं तृतीया । एवम् । 'कर्णपूरीक्रियन्ता' मित्यत्र । अपि । एतेन 'मौर्व्यो वा' इत्यस्य ग्रहणम् ।

एवमुदाहरणं सङ्गमयान्यत्राप्येवं सङ्गमनीयमित्याह—एवमित्यादिना । स्पष्टोऽर्थः । 'भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये । लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥' इति समस्तं पद्यम् । अत्र द्विवचनैकवचनश्लेषः । 'अत्र तनुनेत्रयोर्भवार्तिशमनसाधनक्षमत्वेन तुल्यबलत्वम् । तयोरेकतरस्यैव भवार्तिशमनरूपे प्रकृतकार्य्ये हेतुत्वेनान्वयो, नतु समुच्चयवदुभयोरिति विरोधः । ' इति विवृतिकाराः । यथा वा—'पतत्यविरतं वारि नृत्यन्ति शिखिनो मुदा । अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति ॥' इत्यत्र विप्रलम्भानुगुण्येन वैचित्र्यम् । यथा वा—'प्राणानर्पय सीतां वा, गृध्रांस्तर्पय वा द्विजान् । यमं भजस्व रामं वा यथेच्छसि तथा चर ॥' इत्यत्र त्वौपम्यगम्येन चातुर्य्यम् ।

समुच्चयं लक्षयति—१७३ चेत् । एकस्मिन् । कार्य्यस्य प्रस्तुतार्थस्य । साधके । सति स्थिते सतीति भावः । खलेऽन्नोत्पत्तिस्थानविशेषे । कपोतिकान्यायात् कपोता इवेति सैव न्यायस्तस्मात् । 'इवे प्रतिकृतौ ।' ५।३।९६ इति कन् । खले यथा कपोतानां युगपत् भक्षणरूपैककार्य्यार्थं पतनं तथेति भावः । परोऽन्यः । अपि । तत्करस्तस्य कार्य्यस्य करः साधकः । स्यात् । 'तदैकः' इति शेषः । अयम् । समुच्चयः । अथ चेत्—गुणौ गुणद्वयम् । युगपदेककालम् । स्यात् 'तदा द्वितीयः' इति शेषः । वा यद्वा । क्रिये क्रियाद्वयम् । युगपत् । स्याताम् 'तदा तृतीय' इति शेषः । यद्वा । गुणक्रिये । एको गुण एका च क्रियेति भावः । युगपत् स्याताम् । 'तदा चतुर्थ' इति शेषः । 'अयं समुच्चय' इति पूर्वतोऽनुषज्यते । तथा च—समुच्चयनं कारणयोर्गुणयोः क्रिययोर्गुणक्रिययोर्वा युगपदुपस्थानमिति समुच्चय इति साधारणं लक्षणम् । अत्र द्वित्वं चाविवक्षितम् । चतुर्विधोऽप्ययं सद्योगेऽसद्योगे सदसद्योगे चेति त्रिधा भिन्नो द्वादशविधः ॥ १३७ ॥ १३८ ॥

उदाहरति—यथा । मम । 'हंहो विस्मयः । हे धीरसमीर धीरवायो ! ते तव । चन्दनक्ष्माभृतश्चन्दनप्रधानात् पर्वतात् । जननमुत्पत्तिः । हन्त ! जगदुत्तरं जगत्युत्तरं विलक्षणम्, अलौकिकमिति भावः । तव दाक्षिण्यं चातुर्य्यं परसन्तोषकत्वमिति यावत् । गोदावरीवारिभिः । परिचयः सङ्गः । अत एवंविधः—अपि । त्वम् । चेत् । उद्दामदावाग्निवदुद्दामा प्रचण्डोऽसौ दावाग्निस्तद्वत् । इह । मे । (अनागसः) । प्रत्यङ्गं सर्वाङ्गम् । दहसि । तत्—अयम् । मत्तः प्रमादं प्राप्तः । मलिनात्मको मलिन आत्मा स्वभावो देहो वा यस्य तथोक्तः । वनचरः । कोकिलः । किम् । वक्ष्यते न किमपि वक्तुं शक्य इति भावः । यदि साधुतया सर्वैराख्यातोऽपि धीरः समीरस्त्वं मां दहसि, तदयं मलिनः कोकिलस्त्वत्साहाय्यं कर्त्तुमुपस्थितः केन प्रतिषेध्य इति निष्कर्षः । विरहिणः कोकिलस्वनेन पीड्यमानस्य दक्षिणानिलं प्रत्युक्तिरियम् । शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ २७४ ॥'

अत्रादाहे एकस्मिंश्चन्दनक्ष्माभृज्जन्मरूपे कारणे सत्यपि दाक्षिण्यादीनां हेत्वन्तराणामुपादानम्। अत्र सर्वेषामपि हेतूनां शोभनत्वात् सद्योगः। अत्रैव चतुर्थपादे मत्तादीनामशोभनानां योगादसद्योगः। सदसद्योगो यथा—

'शशी दिवसधूसरो गलितयौवना कामिनी सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ २७५॥'

इह केचिदाहुः–'शशिप्रभृतीनां शोभनत्वम्, खलस्याशोभनत्वं चेति सदसद्योग'इति। अन्ये तु 'शशिप्रभृतीनां स्वतः शोभनत्वम्, धूसरत्वादीनां त्वशोभनत्वमेवेति सदसद्योगः। अत्र हि शशिप्रभृतिषु धूसरत्वादेरनुचितत्वमिति विच्छित्तिविशेषस्यैव चमत्कारविधायित्वम् 'मनसि सप्त शल्यानि मे'इति सप्तानामपि शल्यत्वेनोपसंहारश्च। 'नृपाङ्गणगतः खल'इति तु क्रमभेदाद्दुष्टत्वमेवावहति, सर्वत्र विशेष्यस्यैव शोभनत्वेन प्रक्रमात्।'इति। इह च खले

---

उदाहरणं सङ्गमयति–अत्र। अदाहे दाहाभावे दाहकत्वानौचित्यसमर्थन इति यावत्। एकस्मिन्। चन्दनक्ष्माभृज्जन्मरूपे। कारणे। सत्यपि। दाक्षिण्यादीनाम्। आदिपदेन गोदावरीवारिपरिचय–धीरत्वयोर्ग्रहणम्। हेत्वन्तराणाम्। उपादानम्। अथ–अत्र। सर्वेषां चन्दनक्ष्माभृज्जन्मादीनाम्। अपि। हेतूनाम्। शोभनत्वात्। सद्योगः। तथा–अत्र। एव। चतुर्थपादे। मत्तादीनां मत्तत्वादीनामित्यर्थः। 'सर्वेषामपी'ति शेषः। अशोभनानाम्। योगात्। असद्योगः।

सदसद्योगमुदाहरति–सदसद्योग इत्यादिना–। स्पष्टम्। 'शशी चन्द्रः। दिवसधूसरो दिवसे धूसरो गतप्रभः। कामिनी। गलितयौवना गलितं नष्टं यौवनं यस्याः तादृशी। सरस्तडागः। विगतवारिजं विगतानि निरस्तानि वारिजानि कमलानि यस्मात्तथोक्तम्। स्वाकृतेः शोभनाऽऽकृतिर्नासिकाद्यङ्गनिवेशपूर्विकाऽङ्गरमणीयता यस्य तस्य भावः। मुखम्। अनक्षरं विद्याहीनम्। प्रभुः स्वामी। धनपरायणो धनलुब्धः कदर्य्य इति यावत्। सज्जनः। सततदुर्गतः सततं निरन्तरं दुर्गतो दरिद्रः। 'निःस्वस्तु दुर्विधो दीनो दरिद्रो दुर्गतोऽपि सः।' इत्यमरः। खलः पिशुनः। नृपाङ्गणगतो राजसभायां स्थित इति भावः। 'पिशुनो दुर्जनः खलः।' इत्यमरः। इत्येतानि–सप्त। मे मम। मनसि। शल्यानि बाणाप्रभूतानीति भावः। 'शल्यं तु न स्त्रियां शङ्कौ, क्लीबं क्ष्वेडेषु-तोमरे। मदनद्रुश्वाविधोर्ना' इति मेदिनी। भर्तृहरिकृतस्य नीतिशतकस्येदं पद्यम्। अत्र पृथ्वीछन्दः, तल्लक्षणं यथोक्तम्–'पृथ्वी जसौ जसौ यलौ ग् वसुमवकौ।' इति ॥ २७५ ॥'

अत्र द्वैविध्येन सदसद्योगं समर्थयते–इह। केचित्। आहुः। 'शशिप्रभृतीनां चन्द्रादीनाम्। शोभनत्वम्। खलस्य। च। अशोभनत्वम्। इति इत्येवम्। सदसद्योगः शोभनाशोभनमेलनम्।' इति। अन्ये। तु। 'आहुः' इति पूर्वतोऽन्वेति। 'शशिप्रभृतीनाम्। स्वतः स्वभावतः। शोभनत्वम्। धूसरत्वादीनाम्। तु। अशोभनत्वम्। एव। इति 'शोभनाशोभनात्मनां कारणानां योगा'दिति शेषः। सदसद्योगः। ननु 'शशिप्रभृतीनां शोभनत्वं, खलस्य चाशोभनत्व' मित्येव सदसद्योगः किं न स्वीक्रियते ? इत्याशङ्क्याह–हि यतः। अत्र। शशिप्रभृतिषु। धूसरत्वादेर्दिवसधूसरत्वादेः। अनुचितत्वम्। अशोभनत्वम्। इति इत्येतद्विहितस्येत्यर्थः। शोभनेषु अशोभनतापातवर्णनसमर्पितस्येति भावः। विच्छित्तिविशेषस्य। एव। चमत्कारविधायित्वम्। नन्वेतत् कथमवगतमित्याशङ्क्य–'उपक्रमोपसंहाराभ्या'मिति नयं सूचयन्नाह–'मनसि सप्त शल्यानि मे' इति इत्येवम्। सप्तानाम्। अपि। शल्यत्वेन। उपसंहारः। च। अत्र 'चे'त्यनेन तथोपक्रमस्त्वस्त्वेवे'ति सूच्यते। अयम्भावः–सतां शशिप्रभृतीनां दिवसधूसरत्वाद्युपक्रम्य तस्यैव 'मनसि सप्त शल्यानि मे' इति समर्थक उपसंहारः। अन्येऽप्याहुः–इह शोभनस्य सतोऽशोभनत्वमिति विवक्षा.. अत एवैकत्रोपसंहृतं 'मनसि सप्त शल्यानि मे' इति इति। 'नृपाङ्गणगतः। खलः। इति। तु। क्रमभेदात् क्रमस्य विशेष्यस्यान्यत्र सर्वत्र शोभनत्वं विशेषणस्य चाशोभनत्वमित्यस्य मार्गस्य भेदो भिन्नत्वस्तस्मात्। दुष्टत्वम्। एव। आवहति। सर्वत्र। विशेष्यस्य। एव। शोभनत्वेन। प्रक्रमात्। 'अतः–'नृपाङ्गणमसद्युत'मिति पाठः साधीयान्।' इति शेषः।

कपोतवत् सर्वेषां कारणानां साहित्येनावतारः। समाध्यलङ्कारे त्वेककार्यं प्रति साधके समग्रेऽप्यन्यस्य काकतालीयन्यायेनापतनमिति भेदः।

'अरुणे च तरुणि! नयने तव मलिनं च प्रियस्य मुखम्।
मुखमानतं च सखि! ते ज्वलितश्चास्यान्तरे स्मरज्वलनः॥ २७६॥'

अत्राद्येऽर्द्धे गुणयोर्यौगपद्यम्, द्वितीये क्रिययोः। उभयोर्यौगपद्ये यथा—

'कलुषं च तवाहितेष्वकस्मात् सितपङ्केरुहसोदरश्रि चक्षुः।
पतितं च महीपतीन्द्र! तेषां वपुषि प्रस्फुटमापदां कटाक्षैः॥ २७७॥'

'धुनोति चासिं तनुते च कीर्त्तिम्'

---

इदमुक्तम्—शशी शोभनस्तस्य दिवसधूसरत्वेनाशोभनेन योगः, एवमेव कामिन्यादयः शोभना गलितयौवनत्वादिनाऽशोभनेन च तेषां योग इति सदसद्योगात्मा समुच्चयः। 'शशी दिवसधूसर' इत्यादौ विशेष्यभूताः शश्यादयः शोभना दिवसधूसरादयो विशेषणभूताः। पुनरशोभना इत्युपक्रमः, अस्य च 'नृपाङ्गणगतः खलः' इत्यत्र भङ्गः, विशेष्यस्य खलस्याशोभनत्वात्, विशेषणस्य नृपाङ्गणगतपदार्थस्य शोभनत्वाच्च। एतेन—'शशिप्रभृतीनां शोभनत्वं खलस्याशोभनत्वं चेति सदसद्योग'इति प्रत्युक्तम्। इति।

समाधेरस्य भेदं निर्दिशति—इहास्मिन् समुच्चयोदाहरणे। च। खले धान्यादिक्षेत्रे। **कपोतवत्** कपोतानामिव। 'तत्र तस्येव।' ५।१।११६ इति वतिः। **सर्वेषाम्**। **कारणानां** धूसरत्वादीनां हेतूनामिति भावः। **साहित्येन**। **अवतारः**। **समाध्यलङ्कारे**। **तु**। **एककार्यम्**। **प्रति**। **समग्रे** पर्य्याप्ते। **अपि**। **साधके** कारणे। **अन्यस्य** साधकान्तरस्य। **काकतालीयन्यायेन**। **आपतनम्**। **इति**। **भेदः**। 'यत्र कार्य्यविशेषं मिलितान्येव कारणानि जनयन्ति समुच्चयस्य विषयः। [illegible] त्वेकस्मिन् कारणे फलसाधनायानुष्ठीयमाने दैवादुत्पन्नेन कारणान्तरेण तत्फलस्य सुकरत्वं स समाधिरिति भावः।' इति विवृतिकाराः।

अथ गुणयोः क्रिययोश्च समुच्चयमुदाहरति—'हे **तरुणि**! **तव**। **नयने**। **अरुणे** रक्ते। **च** (इदं समुच्चयार्थम्)। तव-**प्रियस्य**। **मुखम्**। **मलिनं** विच्छायम्। **च**। हे **सखि**! **ते** तव। **मुखम्**। **आनतम्**। **च**। **अस्य** त्वत्प्रियस्य। **अन्तरे**ऽन्तः। **स्मरज्वलनः** कामाग्निः। **ज्वलितः**। **च**। नायकदूत्या नायिकां प्रत्युक्तिरियम्। उद्गीतिश्छन्दः॥ २७६॥'

उदाहृतमर्थं निर्दिशति—अत्रोदाहृते पद्ये। **आद्ये**। **अर्धे**। **गुणयोररुणत्वमलिनत्वयोः**। **यौगपद्यमेककालावच्छेदेन समुच्चयः**। **द्वितीये**। 'अर्द्धे' इति शेषः। **क्रिययोरानमनज्वलनयोः**। 'यौगपद्यमि'ति शेषः। यथा वा—'प्रादुर्भवति पयोदे कज्जलमलिनं बभूव नभः। रक्तं च पथिकहृदयं कपोलपाली मृगीदृशः पाण्डुः॥' अत्र मलिनत्वरक्तत्वपाण्डुत्वगुणानां सदसदां योगः। 'उदितं मण्डलमिन्दोरुदितं सद्यो वियोगिवर्गेण। मुदितं च सकलयुवजनचूडामणिशासनेन मदनेन॥' अत्रोदयनरोदनमोदनरूपाणां शोभनाशोभनक्रियाणां योगः।

गुणक्रिययोर्यौगपद्यमुदाहर्त्तुमाह—**उभयोर्गुणक्रिययोः**। **यौगपद्ये**। 'समुच्चय' इति शेषः। **यथा**—'हे **महीपतीन्द्र** महीपतीनां राज्ञामिन्द्रस्तत्सम्बुद्धौ तथोक्त! राजाधिराजेत्यर्थः। **तव**। **सितपङ्केरुहसोदरश्रि** सितानि यानि पङ्केरुहाणि कमलानि तेषां सोदराऽत्यन्तं समाना श्रीः शोभा यस्य तथोक्तम्। **चक्षुर्नेत्रम्**। **अहितेषु** शत्रुषु। **अकस्मात्** दैवात्। **कलुषं** रोषाविलम्। **च** (इदं समुच्चयार्थम्)। **तेषां** तव कलुषचक्षुर्विषयीभूतानां शत्रूणामित्यर्थः। **वपुषि** (जात्यभिप्रायेणैकत्वम्)। **आपदामापत्तीनां** तद्रूपाणां कालनायिकानामिति भावः। **कटाक्षैः**। **प्रस्फुटम्**। **पतितम्**। **च**। अत्र कलुषत्वगुणपतनक्रिययोर्योगः। औपच्छन्दसिकं वृत्तमिदम्, तल्लक्षणं च यथोक्तम्—'गौपच्छन्दसिकम्।' इति॥ २७७॥' यथा वा मम—'पतिते पतितेऽपि ते कटाक्षे विभुताभिः समुपास्यते स सद्यः। विपदां विरतिस्ततस्तदैव सुरतिस्तत्र मुकुन्द! सम्पदां च॥' इति॥ इति।

अस्य प्रायो वैयधिकरण्ये एव सम्भवः, किन्तु क्वचित्सामानाधिकरण्येऽपीत्याशयेनोदाहरति—'**असिं** खड्गम्। **धुनोति** कम्पयति चञ्चलयतीति यावत्। **च**। **कीर्त्तिम्**। **च**। **तनुते** वितनोति। 'प्रियार्पणैरप्सरसां प्रमोदिता।

इत्यादावेकाधिकरण्येऽप्येष दृश्यते । न चात्र दीपकम् । एते हि गुणक्रियायौगपद्ये समुच्चयप्रकारा नियमेन कार्यकारणकालनियमविपर्य्ययरूपातिशयोक्तिमूलाः । दीपकस्य चातिशयोक्तिमूलत्वाभावः ।

**१७४ समाधिः सुकरे कार्य्ये दैवाद्वस्त्वन्तरागमात् ।**

यथा—

'मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः । उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥ २७८ ॥'

**१७५ प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि ॥ १३९ ॥**

**तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः ।**

तस्यैव रिपोरेव । यथामम—

'मध्येन तनुमध्या मे मध्यं जितवतीत्ययम् । इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः २७९'

---

नरेन्द्र ! देवान् कुरुते हताहितान् भवान् खलांस्तान्नयति स्वरंहसा ॥' इति शेषः । अत्रैक एवास्यादीनां धूननादिकर्त्ता । वंशस्थं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥'

एवमयं सामानाधिकरण्येऽपि सम्भवतीति निर्दिशन्नलङ्कारान्तरसंशयमपाकरोति–**इत्यादौ । एकाधिकरण्ये । अपि । एष** समुच्चयः । **दृश्यते । अत्र । च । दीपकम् । न** 'शङ्क्य'मिति शेषः । **हि** यतः । **एते** उदाहृतस्वरूपाः । **समुच्चयप्रकाराः** समुच्चयभेदाः । **नियमेन । गुणक्रियायौगपद्ये** गुणक्रियाश्च गुणक्रियाश्चेति गुणक्रियास्तासां यौगपद्यं तस्मिन्सतीति भावः । **कार्यकारणकालनियमविपर्य्ययरूपातिशयोक्तिमूलाः** कार्य्यकारणयोः कालनियमः पौर्वापर्य्यं तस्य विपर्य्ययो यौगपद्यम् ( आरोपितमेककालभवत्वं ) एव रूपं यस्याः साऽसावतिशयोक्तिरिति, सा मूलं यस्यास्तथोक्ता । **दीपकस्य । च । अतिशयोक्तिमूलत्वाभावो**ऽतिशयोक्तिर्मूलं यस्य तस्य भावस्तत्त्वं तस्याभावः ।

समाधिं लक्षयति–१७४ **दैवाद**कस्मात् । **वस्त्वन्तरागमाद**न्यद्वस्तुकारणरूपः पदार्थ इति वस्त्वन्तरं तस्यागम उपस्थितिस्तस्मात् । **कार्ये । सुकरे** सुसाध्ये सतीत्यर्थः । **समाधिः** समाधीयते सुकरत्वेनाधीयते क्रियते इति तथोक्तः तन्नामाऽलङ्कार इत्यर्थः । एककारणजन्यस्य कार्य्यस्याकस्मिकोपस्थितिकेनान्येन कारणेन समवधानाहितं सौकर्य्यं समाधिर्नामालङ्कार इति भावः । 'उपसर्गे घोः किः ।' ३ । ३ । ९२ इति किः ।

उदाहरति–**यथा–अस्या** मानिन्याः प्रियाया इत्यर्थः । **मानं** क्रोधम् । **निराकर्त्तुम् । पादयोः । पतिष्यतः । मे** मम । **उपकाराय । दिष्ट्या** भद्रम् । **इदम् । घनगर्जितं** मेघगर्जनम् । **उदीर्णमु**द्भूतम् । मानभङ्गे घनगर्जितस्य कामोद्दीपकत्वेन सहायकत्वमित्यस्य पादपतनेन तन्निराकरणावसरे उपस्थित्या मानभङ्गसाध्यत्वं समाहितम् । सखायं प्रति कस्याप्युक्तिरियम् ॥ २७८ ॥'

प्रत्यनीकं लक्षयति–१७५ **यदि रिपोः** शत्रोः । **प्रतीकारे**ऽपाकरणे मर्दन इति यावत् । **अशक्तेना**समर्थेन केनापि जनेनेत्यर्थः । **तस्य रिपोः । एव । उत्कर्षसाधक** उत्कर्षकः । **तदीयस्य** रिपुसम्बन्धिनः । **तिरस्कार**स्तिरस्करणम् । **प्रत्यनीकं** तदाख्योऽलङ्कार इत्यर्थः । तथाऽऽहुः 'बलिनः प्रतिपक्षस्य प्रतीकारे सुदुष्करे । यस्तदीयतिरस्कारः प्रत्यनीकं तदुच्यते ॥' इति ॥ १३९ ॥

तदेव विवृणोति–**तस्यैवे**त्यादिना । स्पष्टम् । उदाहरति–**यथा । मम–'तनुमध्या** तनु कृशं मध्यमुदरं यस्यास्तथोक्ता । **मे** मम ( सिंहस्य ) । **मध्यमु**दरम् ( कर्म ) । **मध्येन** ( कृशेन मध्येन ) । **जितवती** ( सिंहोदरापेक्षया कान्ताया उदरकार्श्यमधिकं सम्भाव्येदमुद्भाव्यते ) । **इती**त्यस्मात् कारणादित्यर्थः । **अयम् । हरिः** सिंहः । **अस्याः** कृशोदर्य्याः । **कुचकुम्भनिभौ** कुचावेव कुम्भौ तयोर्निभौ सदृशाविति तौ तथोक्तौ । **इभकुम्भौ** इभस्य हस्तिनः कुम्भौ गण्डौ तौ । **भिनत्ति** विदारयति । अत्र मध्यजयित्वेन प्रमदारूपस्य शत्रोः प्रतिकाराक्षमेण सिंहेन प्रमदारूपस्य शत्रोरेवौपम्येनोत्कर्षप्रत्यायकः कुचसदृशकुम्भतया शत्रुसम्बन्धित्वेन सम्भावितस्य हस्तिनः कुम्भभेदनेन तिरस्कारो विहितः । यथा वा–'रे रे, मनो मम मनोभवशातनस्य पादाम्बुजद्वयमनारतमानमन्तम् । किम्मां निपातयसि

१७६ प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् ॥ १४० ॥
निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते ॥

क्रमेण यथा--

'यत्त्वन्नेत्रसमानकान्ति सलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये! तव मुखच्छायानुकारी शशी।
येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ २८० ॥'

'तद्वक्त्रं यदि मुद्रिता शशिकथा हा हेम, सा चेद् द्युति-
स्तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत्स्मितं का सुधा।
धिक् कन्दर्पधनुर्भ्रुवौ यदि च ते किंवा बहु ब्रूमहे
यत्सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः ॥ २८१ ॥'

अत्र वक्त्रादिभिरेव चन्द्रादीनां शोभाऽतिवहनात्तेषां निष्फलत्वम्।

---

संसृतिगर्त्तमध्ये नैतावर्ता तव गमिष्यति पुत्रशोकः ॥' इति। यत्तूक्तं गङ्गाधरकारैः-'अत्र विचार्यते-हेतूत्प्रेक्षयैव गतार्थत्वान्नेदमलङ्कारान्तरम्भवितुमर्हति।...हेतुतायाश्च स्फुटं प्रतीतेः। 'अस्मिन्नलङ्कारे हेतुत्वं निश्चीयमानम्, हेतूत्प्रेक्षायां तु सम्भाव्यमानमित्यस्ति विशेष इति चेत्! प्रतीयमानहेतूत्प्रेक्षात्वापत्तेः। वाचकस्येवादेरभावाद्धेतुत्वस्य निश्चीयमान-तायास्तत्रापि वक्तुं शक्यत्वात्। 'यस्य किञ्चिदपकर्त्तुमक्षमः कायनिग्रहगृहीतविग्रहः। कान्तवक्त्रसदृशाकृतिं कृती राहु-रिन्दुमधुनाऽपि बाधते ॥' इत्यलङ्कारसर्वस्वकृतोदाहृते प्राचीनपद्येऽपि भगवद्वैरानुबन्धादिव भगवद्वक्त्रसदृशमिन्दुं राहुर्बाधत इति प्रतीतेरुत्प्रेक्षैव गम्यमाना। 'मम रूपकीर्तिमहरद्भुवि यस्तदनुप्रविष्टहृदयेयमिति। त्वयि मत्सरादिव निरस्तदयः सुतरां क्षिणोति खलु ताम्मदनः ॥' इति कुवलयानन्दकारेणोदाहृते तु पद्ये हेत्वंश उत्प्रेक्षांशश्चेत्युभयमपि शाब्दमिति कथ-ङ्कारमस्यालङ्कारस्योदाहरणतां नीतमिदमायुष्मतेति न विद्मः। प्रतिपक्षगतबलवत्त्वस्वात्मगतदुर्बलत्वयोः प्रतीतेर्हेतूत्प्रेक्षा-न्तरादस्य वैलक्षण्यम्। नैतावता हेतूत्प्रेक्षाया बहिर्भवितुमिदमीष्टे, तदविनाभावात्। किंतु तदवान्तरविशेषीभवितुम्। नहि पृथिव्यवान्तरभेदाद्घटात् पटो विलक्षण इति पृथिव्या बहिर्भवतीत्यपि वदन्ति।' इति, तन्निराकृतं तस्यैव व्याख्यातृभिः 'हेतूत्प्रेक्षासत्त्वेऽपि तद्धेतुकप्रतिपक्षीयबाधे नैतद्विषयत्वाच्चिन्त्यमिदम्।' इति ॥ २७९ ॥

प्रतीपं लक्षयति-१७६ **प्रसिद्धस्य। उपमानस्य** सादृश्यप्रतियोगिनः। **उपमेयत्वप्रकल्पनम्** उपमेयत्वस्य सादृश्यानुयोगित्वस्य प्रकल्पनम्। **वा** यद्वा। **निष्फलत्वाभिधानं** व्यर्थत्वकथनम्। **प्रतीपम्। इति। कथ्यते।** इदम्बोध्यम्-उपमानापकर्षानुभावको वाग्व्यापारः प्रतीपनामाऽलङ्कारः, स च द्विविधः, उपमानस्यापकर्षमनुभावयितु-मुपमेयत्वेनाभिधानम्, निष्फलत्ववचनं चेति ॥ १४० ॥

उदाहर्तुमुपक्रमते-क्रमेणेत्यादि। स्पष्टम्। 'यत्त्वदित्यादि। व्याख्यातपूर्वमिदम्। अत्र नेत्रादेरुपमेयस्येन्दी-वराद्युपमानं प्रसिद्धं, तस्य च वैपरीत्याभिधानात् प्रतीपम् ॥ २८० ॥

'**यदि। तत्। वक्त्रम्**मुखम्। तर्हि-**शशिकथा** शशिनश्चन्द्रस्य कथोत्कर्षप्रत्यायिका चर्चेति तथोक्ता। **मुद्रिता** सङ्कुचिता नष्टेति यावत्। **चेत्। सा। द्युतिः** शोभा। तर्हि-हे **हेम** स्वर्ण! **हा** कष्टं त्वं मृतमिति भावः। **यदि। तत्। चक्षु**र्नेत्रम्। तर्हि-**कुवलयै**र्नीलकमलैः। **हारितं** पराभूतं पराभवोऽङ्गीकृत इति यावत्। **चेत्। तत्। स्मितं** मन्दहसितम्। तर्हि-**सुधा। का। यदि। च। ते। भ्रुवौ।** तर्हि-**कन्दर्पधनुः** कन्दर्पस्य कामस्य धनुस्तत्तथोक्तम्। **धिक्। किंवा। बहु। ब्रूमहे** कथयामः। **यत्। वेधसो** ब्रह्मणः। **पुनरुक्तवस्तु-विमुखः** पुनरुक्तं पुनरुक्तिविषयं यद्वस्तु तस्मात् विमुखः शून्यः। **सर्गक्रमः** सृष्टिनियमः। इति तत्-**सत्यम्।** सीतां ध्यायतो रावणस्येयमुक्तिः। तत्पदं च दृष्टपूर्वतत्तद्वैलक्षण्यसूचनार्थम्। हनुमन्नाटकस्येदम्पद्यम्। शार्दूलविक्रीडितं वृत्तम्, तल्लक्षणं चोक्तं प्राक् ॥ २८१ ॥'

उदाहृतमर्थं निर्दिशति-अत्रेत्यादिना। स्पष्टम्।

१७७ उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः ॥ १४१ ॥
कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे ।

यथा—'अहमेव गुरुः सुदारुणानामिति हालाहल ! तात ! मा स्म दृप्यः ।
नन्वु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥ २८२ ॥'

अत्र प्रथमपादे उत्कर्षातिशय उक्तः । तदनुक्तौ तु नायमलङ्कारः, यथा-'ब्रह्मेव ब्राह्मणो वदती'त्यादि ।

१७८ मीलितं वस्तुनो गुप्तिः केनचित्तुल्यलक्ष्मणा ॥ १४२ ॥

अत्र समानलक्षणं वस्तु क्वचित्सहजं, क्वचिदागन्तुकं; क्रमेण यथा—
'लक्ष्मीवक्षोजकस्तूरीलक्ष्म वक्षःस्थले हरेः । ग्रस्तं नालक्षि भारत्या भासा नीलोत्पलाभया॥२८३॥
अत्र भगवतः श्यामा कान्तिः सहजा ।

---

मतान्तरेण प्रतीपं लक्षयति-१७७ केचित् । अत्युत्कृष्टस्य येन धर्मेण यदत्युत्कृष्टं तस्येति भावः । वस्तुनः । अत्यन्तम् । उत्कर्षं तेन धर्मेणोत्कृष्टत्वम् । उक्त्वा कथयित्वा । च ( इदं प्रकारान्तरबोधनार्थम् ) । उपमानत्वे । कल्पिते । अपि । 'तदपकर्षप्रत्यायन'मिति शेषः । प्रतीपम् । ऊचिरे कथयामासुः । अयम्भावः-येन धर्मेण यदुत्कृष्टं तस्योपमानतयाऽप्रसिद्धस्यापि तेनैव धर्मेणोत्कर्षमभिधाय तस्यापकर्षं द्योतयितुमुपमानत्वकल्पनमपि प्रतीपम् । इति ॥ १४१ ॥

उदाहरति-यथा-'हे तात वत्स ! हालाहल ! सुदारुणानाम् । गुरुर्मुख्यः । अहम् ( हालाहलः ) । एव । इति । त्वम्-मा । स्म । दृप्यो गर्वं कृथाः । हेतुं निर्दिशति-ननु । अस्मिन् । भुवने संसारे । भवादृशानि भवत्सदृशानि । दुर्जनानाम् । वचनानि । भूयः पुनः । सन्ति । अत्र हालाहलस्यात्युत्कटदुःखहेतुत्वेनोत्कर्षमभिधाय दुर्जनवचनोपमानत्वेन तस्याप्रसिद्धस्यापि उपमानत्वं कल्पयित्वाऽसदृशत्वनिराकरणेन तिरस्करणम् । एवं च तिरस्कारफलकोपमानापकर्षबोधानुकूलव्यापारस्य स्फुटं समन्वयः । मालभारिणीछन्दः, तल्लक्षणं च यथोक्तम्-'विषमे ससजा यदा गुरू चेत्सभरा येन तु मालभारिणीयम् । ' इति ॥ २८२ ॥'

नन्वत्रोपमैव किं न स्वीक्रियत इत्याशङ्क्याह-अत्रोदाहृते पद्ये । प्रथमपादे । उत्कर्षातिशयोऽत्युत्कटदुःखहेतुत्वेनासदृशत्वोक्तिमूलोऽतिशयः । उक्तः । तदनुक्तौ । तु । अयं प्रतीपाख्यः ।अलङ्कारः । न । यथा ।'ब्राह्मणः। ब्रह्मा । इव । वदति ।' इत्यादि । इदमुक्तम्-'ब्रह्मेवे'त्यादौ उपमैव, नतु प्रतीपालङ्कारः, अत्र च प्रतीपमेव, न तूपमा; उपमानत्वेनाभिधास्यमानस्य हालाहलस्यात्युत्कर्षाभिधानात्, तत्र च ब्रह्मणोऽत्युत्कर्षानभिधानाच्च । इति ।

मीलितं लक्षयति-१७८ केनचित् । तुल्यलक्ष्मणा तुल्यं लक्ष्म यस्य तथोक्तेन, सदृशेन वस्तुनेति भावः । वस्तुनः । गुप्तिस्तिरोभावोऽलक्षितत्वमिति यावत् । मीलितं तदाख्योऽलङ्कारः ॥ १४२ ॥

येन निगूहनं तस्य द्वैविध्यं निर्दिशति-अत्रेत्यादिना । स्पष्टम् । अत एवाहुः-'समेन लक्ष्मणा वस्तु वस्तुना यन्निगूह्यते । निजेनागन्तुना वाऽपि तन्मीलितमिति स्मृतम् ॥' इति । एवं च-तुल्यस्वरूपयोरपि वस्तुनोरेकस्य वस्तुनः स्वभावतोऽन्येन वा केनापि हेतुनोत्कृष्टत्वं सम्भवति तेन यदि अपरस्य वस्तुनस्तिरोधानम्भवेत् तर्हि मीलितं नामालङ्कारः । उत्कर्षस्य च द्विविधतयाऽस्यापि द्विविधत्वम् । इति फलितम् ।

उदाहर्तुमुपक्रमते-क्रमेण । यथा-'भारत्या सरस्वत्या सपत्न्येति भावः ( कर्तृपदमिदम् ) । हरेर्नारायणस्य । नीलोत्पलाभया नीलोत्पलस्यामेवाभा यस्यास्तया तथोक्तया । भासा कान्त्या । ग्रस्तं तिरोहितम् । वक्षःस्थले । लक्ष्मीवक्षोजकस्तूरीलक्ष्म लक्ष्म्या वक्षोजौ कुचौ तयोः ( आलिङ्गनकाले समर्पितम् ) कस्तूरीलक्ष्म कस्तूर्या लक्ष्म चिह्नमिति तथोक्तम् ( इदं कर्मपदम् ) । न । अलक्षि । अत्र भगवतो देहप्रभया कस्तूरीलक्ष्मणो निगूहनम् । एतच्च-उत्कृष्टेन निकृष्टस्यैव सम्भवतीति बोध्यम्, अत एव-सामान्यादस्य भेदो वक्ष्यते ॥ २८३ ॥' तिरोधायिकाया भासः स्वाभाविकत्वमत्रोह्यमित्याह-अत्रेत्यादि । स्पष्टम् ।

'सदैव शोणोपलकुण्डलानां यस्याम्मयूखैररुणीकृतानि ।
कोपोपरक्तान्यपि मानिनीनां मुखानि शङ्कां विदधुर्न यूनाम् ॥ २८४ ॥'

अत्र माणिक्यकुण्डलानामरुणिमा मुखेष्वागन्तुकः।

१७९ सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः ।

यथा--'मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिताः ।
अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः ॥ २८५ ॥'

मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानम्, इह तूभयोस्तुल्यगुणतया भेदाग्रहः ।

१८० तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः ॥ १४३ ॥

यथा-'जगाद वदनच्छद्मपद्मपर्यन्तपातिनः ।
नयन्मधुलिहः श्वैत्यमुदग्रदशनांशुभिः ॥ २८६ ॥

मीलिते प्रकृतस्य वस्तुनो वस्त्वन्तरेणाच्छादनम्, इह तु वस्त्वन्तरगुणेनाक्रान्तता प्रतीयत इति भेदः ।

१८१ तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः ।

---

'यस्यां नगर्याम् । सदा । एव । शोणोपलकुण्डलानां शोणा रक्ता उपला रत्नानि येषु तादृशानि यानि कुण्डलानि तेषाम् । मयूखैः किरणैः । अरुणीकृतानि रक्तिमानं नीतानि । मनिनीनाम् । कोपोपरक्तानि कोपेन क्रोधेनोपरक्तानि रक्तप्रभत्वं गतानि । अपि । मुखानि । यूनां कामुकानाम् । शङ्कां कोपभयम् । न । विदधुश्चक्रुः । कस्याश्चिन्नगर्या वर्णनमिदम् । अत्र माणिक्यप्रभया कोपरक्तिम्नो निगूहनम् । उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ २८४ ॥' अत्र तिरोधायिकायाः कान्ते आगन्तुकत्वमित्याह-अत्रेत्यादि । स्पष्टम् ।

सामान्यं लक्षयति-१७९ सदृशैः । गुणैः । प्रकृतस्य प्रस्तुतस्य वर्ण्यस्येति यावत् । अन्यतादात्म्यमन्यस्याप्रस्तुतस्य तादात्म्यमभिन्नत्वम्, नतु तिरोभावः । सामान्यं तदाख्योऽलङ्कारः ।

उदाहरति-यथा-मल्लिकाचितधम्मिल्ला मल्लिकाभिः तृणशून्यपुष्पैराचिता अलङ्कृता धम्मिल्लाः संयताः कचा यासां तथोक्ताः । 'तृणशून्यं तु मल्लिका ।' इत्यमरः । चारुचन्दनचर्चिताश्चारु शुभ्रातिशयिततया सुन्दरं यत् चन्दनं तेन चर्चिताः कृतसर्वाङ्गरागाः । अत एव-चन्द्रिकासु । अविभाव्या भिन्नत्वेनानिश्चेयाः । अभिसारिकाः कान्तसङ्गाभिलाषेण सङ्केतस्थानगन्त्र्यो नायिकाः । सुखम् । यान्ति । अत्र चन्द्रिकासदृशैर्मल्लिकादिगुणैश्चन्द्रिकाऽभिन्नत्वेनाभिसारिकाणां प्रत्ययः ॥ २८५ ॥' मीलितादस्य भेदं निर्दिशति-मीलित इत्यादिना । स्पष्टम् ।

तद्गुणं लक्षयति-१८० स्वगुणत्यागात् स्वस्य प्रस्तुतस्य गुणस्तस्य त्यागस्तस्मात् तं कृत्वेत्यर्थः । ल्यबर्थेयं पञ्चमी । अत्युत्कृष्टगुणग्रहोऽत्युत्कृष्टस्याप्रस्तुतस्य गुणस्तस्य ग्रहो ग्रहणम् । तद्गुणः सोऽत्युत्कृष्टो वस्त्वन्तरगतो गुणो यत्र तथोक्तः, तन्नामाऽलङ्कारः ॥ १४३ ॥

उदाहरति-यथा । 'वदनच्छद्मपद्मपर्यन्तपातिनो वदनं मुखं छद्म कपटो यस्य तादृशं यत् पद्मं तस्य पर्यन्तः तत्र पातिनस्तान् । मुखकमललुब्धानित्यर्थः । मधुलिहो भ्रमरान् । उदग्रदशनांशुभिरुदग्रा उन्नता ये दशनांशवो दन्तकान्तयस्तैः । श्वैत्यम् । नयन् प्रापयन् ( द्विकर्मकोऽयं धातुः ) । बलदेव इति प्रकृतोऽर्थः । जगाद । अत्र भ्रमराणां निकृष्टस्य मालिन्यस्य त्यागपूर्वकमुत्कृष्टस्य श्वैत्यस्य ग्रहणम् । शिशुपालवधस्येदं पद्यम्॥२८६॥' ननु उत्कृष्टेन निकृष्टस्य तिरोधानसाम्ये मीलितादस्य को भेदः ? इत्याशङ्क्याह-मीलित इत्यादि । स्पष्टोऽर्थः । अयम्भावः-मीलिते वस्तुनस्तिरोभावः, अत्र गुणमात्रस्येति विशेषः । इति ।

अतद्गुणं लक्षयति-१८१ हेतौ कारणे । सति । अपि । तद्रूपाननुहारस्तस्याप्रस्तुतस्य रूपं स्वरूपं तस्यानुहारोऽनुहाराभावो ग्रहणाभाव इति यावत् । तु अतद्गुणस्तन्नामाऽलङ्कार इत्यर्थः । परगुणग्रहणसामग्रीसत्त्वेऽपि परगुणाग्रहणमतद्गुणो नामालङ्कार इति फलितोऽर्थः ।

यथा—'हन्त सान्द्रेण रागेण भृतेऽपि हृदये मम।
गुणगौर! निषण्णोपि कथं नाम न रज्यसि॥ २८७॥'

यथा वा—'गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः।
राजहंस! तव सैव शुभ्रता चीयते न च, न चापचीयते॥ २८८॥'

पूर्वत्रातिरक्तहृदयसम्पर्कात् प्राप्तवदपि गुणगौरवाच्यस्य नायकस्य रक्तत्वं न निष्पन्नम्। उत्तरत्राप्रस्तुतप्रशंसायां विद्यमानायामपि गङ्गायमुनाऽपेक्षया प्रकृतस्य हंसस्य गङ्गायमुनयोः सम्पर्केऽपि न तद्रूपता। अत्र च गुणाग्रहणरूपविच्छित्तिविशेषाश्रयाद्विशेषोक्तेर्भेदः। वर्णान्तरोत्पत्त्यभावाच्च विषमात्।

१८२ संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा॥ १४४॥
कयाऽपि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते।

सूक्ष्मः स्थूलमतिभिरसँल्लक्ष्यः। अत्राकारेण यथा—
'वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्नं कुङ्कुमं काऽपि कण्ठे।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखां लिलेख॥ २८९॥'

---

उदाहरति—यथा—'हे गुणगौर गुणैर्गौरः शुद्धस्तत्सम्बुद्धौ तथोक्त!। हन्त कष्टम्। सान्द्रेण। रागेणानुरागेण रक्तिम्णा च। भृते पूर्णे। अपि। मम। हृदये। निषण्णः। अपि। कथम्। नाम। न। रज्यसि रक्तो भवसीत्यर्थः। अत्र रक्तस्थाने निषण्णत्वरूपे हेतौ सत्यपि रक्तत्वाग्रहणम्। कान्तं प्रति कस्याश्चिदुक्तिरियम्॥२८७॥'

उदाहरणान्तरं निर्दिशति—

हे राजहंस! गाङ्गं गङ्गासम्बन्धि। सितं शुभ्रम्। अम्बु जलम्। यामुनं यमुनासम्बन्धि। कज्जलाभं कज्जलस्याभेवाभा यस्य तत्तथोक्तम्। अम्बु जलम्। इत्येवम्भूते। उभयत्र गङ्गायमुनयोः सितासिताम्बुनीति भावः। मज्जतो बाढं स्नातः। तव। सा सहजा। एव। शुभ्रता। असौ-च। न। चीयते गङ्गाजलसम्पर्केण वर्धते। नच नवेत्यर्थः। अपचीयते ह्रसति। अत्र मज्जनहेतुसत्त्वेऽपि सितासितत्वाग्रहणम्। रथोद्धतावृत्तं, तल्लक्षणं चोक्तं प्राक्॥२८८॥

उभयत्र वैलक्षण्यं निर्दिशन् लक्षणं सङ्गमयति—पूर्वत्र पूर्वस्मिन्नुदाहरण इत्यर्थः। अतिरक्तहृदयसंपर्कात् अतिरक्तमत्यन्तमनुरक्तम्, अथ च-अत्यन्तं शोणवर्णम्, यत् हृदयं तस्य सम्पर्कस्तस्मात्। गुणगौरवाच्यस्य गुणगौरपदाभिधेयस्य। नायकस्य। प्राप्तवत्। अपि। रक्तत्वम्। न। निष्पन्नं जातम्। उत्तरत्रोत्तरस्मिन्नुदाहरण इत्यर्थः। अप्रस्तुतप्रशंसायाम्। विद्यमानायाम्। अपि 'प्रकृतस्य पुरुषान्तरस्योदासीनत्वप्रशंसना'दिति शेषः। गङ्गायमुनाऽपेक्षया गङ्गायमुनासम्बन्ध्यम्ब्वपेक्षया। 'प्रतिपाद्यत्वेने'ति शेषः। प्रकृतस्य। हंसस्य राजहंसस्य। गङ्गायमुनयोर्गङ्गायमुनासम्बन्ध्यम्बुनोः। सम्पर्के। अपि। तद्रूपता तयोर्गङ्गायमुनासम्बन्ध्यम्बुनो रूपं तदिव रूपं यस्य तस्य भावस्तत्ता। न। ननु कारणसत्त्वे कार्यानुत्पत्तिरूपा विशेषोक्तिरेव किन्नेयं स्वीक्रियत इत्याशङ्क्याह-अत्र-तद्गुणे। च। गुणाग्रहणरूपविच्छित्तिविशेषाश्रयाद् गुणस्याग्रहणं तद्रूपं यस्याः साऽसौ विच्छित्तिरलङ्कारत्वजीवातुश्चमत्कारस्तस्या विशेषः प्रकारस्तस्याश्रयस्तस्मात्। विशेषोक्तेः। भेदः। विशेषोक्तौ हि कारणसत्त्वे कार्यानुत्पत्तिः, अतद्गुणे गुणरूपकारणसत्त्वे गुणाग्रहणमित्येनयोर्भेद इति भावः। ननु रागादिरूपस्य गुणस्य सम्पर्काभावरूपविरुद्धकार्य्यसत्तया विषममेवायं स्यादित्याह—वर्णान्तरोत्पत्त्यभावात्। विषमात्तन्नाम्नोऽलङ्कारात्। च 'भेद' इति पूर्वतोऽनुषज्यते। विषमे हि कारणगुणेभ्यो विरुद्धकार्य्यगुणोत्पत्तिः, अत्र च गुणोत्पत्त्यभाव एवेत्येनयोर्विशेष इति भावः।

सूक्ष्मं लक्षयति—१८२ आकारेण नेपथ्यादिचेष्टितेन। इङ्गितेन भ्रुवादिचेष्टितेन। वा। संलक्षितः। सूक्ष्मः सहृदयेतरैरसँल्लक्ष्यः। अर्थः। तु। यत्र। कयाऽपि। भङ्ग्या प्रकारेण। सूच्यते। तत्। सूक्ष्मं तदाख्योऽलङ्कारः। उच्यते। सूक्ष्मपदार्थं निर्दिशति-सूक्ष्म इत्यादिना। स्पष्टम्॥ १४४॥

अत्राकारेण संलक्षितस्य सूचनमुदाहर्तुकाम आह—अत्र आकारेण संलक्षितस्य सूचनम्। यथा 'काऽपि। वयस्या सखी। वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्वक्त्रान्नायिकामुखात्तदुपलक्षितात् स्थानात्। स्यन्दिनः प्रस्रवणशीला ये स्वेद-

अत्र कयाचित् कुङ्कुमभेदेन संलक्षितं कस्याश्चित् पुरुषायितं पाणौ पुरुषचिह्नखड्गलेखालेखनेन सूचितम्। इङ्गितेन यथा—

'सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया। हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्॥ २९०॥'

अत्र विटस्य भ्रूक्षेपादिना लक्षितः सङ्केतकालाभिप्रायो रजनीकालभाविना पद्मनिमीलनेन प्रकाशितः।

१८३ व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः॥ १४९॥

यथा—'शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चादिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः।
आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः॥ २९१॥'

---

बिन्दवो विपरीतसुरतजन्यश्रमविन्दवस्तेषां प्रबन्धास्तैः। कण्ठे। भिन्नम्भेदं प्राप्तम्। कुङ्कुमम्। दृष्ट्वा। अत एव- स्मित्वा। तन्व्याः स्ववयस्यायास्तस्या इति भावः। पुंस्त्वं पुरुषत्वम्। व्यञ्जयन्ती। पाणौ 'नायिकाया' इति शेषः। खड्गलेखां खड्गस्य लेखा पङ्क्तिस्ताम्। लिलेख लिखितवती। स्त्रीणां हस्तेऽलङ्कारार्थं चन्दनादिभिर्लतापत्रा- देर्लेखनं सम्प्रदायः,अतस्तच्छलेन सख्याः पुरुषायितं सूचयितुं पुरुषहस्ते लेखनीया खड्गलेखा लिखितेति बोध्यम्। अनुकूल- सुरते उत्तानाया नायिकाया मुखमण्डलाद्गलितानां स्वेदाम्बूनां पृष्ठे एव गमनम्, कण्ठे तेषां गमनं तु विपरीतसुरत एवेति 'वक्त्रस्यन्दी' त्यादिना सूचितम्। शालिनीछन्दः, तल्लक्षणं च यथोक्तम्, 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः।' इति॥ २८९॥'

उदाहृतमर्थं निर्दिशति-अत्रेत्यादिना। स्पष्टम्। अत्राहुः 'अत्र स्वेदलिङ्गकस्यानुमितिविषयस्य पुरुषायितत्वस्य खड्गलेखालेखनेनाभिव्यञ्जनम्। अत्र विद्यमानमप्यनुमानं सूक्ष्माङ्गम्, स्ववैदग्ध्यप्रकाशनद्वारा सूक्ष्मस्यैव चमत्कारि- त्वात्।' इति।

इङ्गितात् संलक्षितस्य सूचनमुदाहर्तुकाम आह-इङ्गितेन। यथा 'विदग्धया चतुरया। हसन्नेत्रार्पिताकूतं हसन्ती प्रसीदन्ती नेत्रे ताभ्यामर्पितं सूचितमाकूतं रहस्यं येन तादृशम्। विटं जारम्। सङ्केतकालमनसं सङ्केतकाले मनो यस्य तादृशम्। सङ्केतसमयमवजिगमिषुम्। ज्ञात्वा। लीलापद्मं क्रीडार्थं धृतं पद्मम्। निमीलितं सङ्को- चितम्॥ २९०॥

उदाहृतमर्थं निर्दिशति-अत्रेत्यादिना। स्पष्टम्।

व्याजोक्तिं लक्षयति-१८२ उद्भिन्नस्य प्रकटितस्य। अपि। वस्तुनः। व्याजात् केनापि प्रतारणोपायेन। गोपनम्। व्याजोक्तिर्व्याजेनोक्तिरिति तन्नामाऽलङ्कार इत्यर्थः॥ १४५॥

उदाहरति-यथा-'शैलेन्द्र...शैलेन्द्रेण हिमालयगिरिणा प्रतिपाद्यमाना दीयमाना या गिरिजा पार्वती तस्या हस्त- स्तस्योपगूढं सम्बन्धस्तेनोल्लसदुद्गच्छद् यद्रोमाञ्चादि तेन विसंष्ठुलो व्यग्रोऽव्यवस्थ इति यावत् योऽखिलविधिः समस्त- वैवाहिककर्तव्यत्वं तस्य व्यासङ्गस्तत्परता तस्य भङ्गस्तेनाकुलश्चकित इति तथोक्तः। उपगूहनमुपगूढम्, भावे क्तः। एवम्भूत एव-शैलान्तःपुरमातृमण्डलगणैश्शैलस्य हिमाद्रेरन्तःपुरमवरोधस्तत्र यन्मातृमण्डलम्मेनकापरिवारस्तस्य गणास्तैः, यद्वा-शैलान्तःपुरं ( मेनका ) च मातृमण्डलं ( मातॄणां ब्राह्मीवैष्णवीतत्सखीप्रभृतीनाम्मण्डलम् ) च गणः ( देववृन्दं प्रमथादिगणो वा ) चेति तैस्तथोक्तैः। सस्मितं मन्दहासपूर्वं यथा स्यात्तथा। दृष्टः। आः कष्टम्। तुहिनाचलस्य हिमालयस्य। करयोः। शैत्यम् (कन्यादानसमये हिमाचलकरयोः सम्बन्धे रोमाञ्चादिसात्त्विक- भावभावगोपनायेदमुक्तम्)। इत्यूचिवान्। इत्येवं कथितवान् इत्यर्थः। शिवः। वो युष्मान्। अवतात् रक्षतात्। भवानीशङ्करयोर्वैवाहिकवृत्तस्य वर्णनं प्रस्तूयाशीर्वादोऽयम्। ( अत्र रोमाञ्चकम्पादिरूपेण कार्य्येण प्रकटितस्य पार्वतीविषयकस्य भावस्य शैत्यरूपकारणान्तरोद्भावनेन गोपनम्। शार्दूलविक्रीडितं वृत्तम्॥ २९१॥'

नेयं प्रथमापह्नुतिः, अपह्नवकारिणो विषयस्यानभिधानात्। द्वितीयापह्नुतेर्भेदस्तु तत्प्रस्तावे दर्शितः।

१८४ स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्।

दुरूहयोः कविमात्रवेद्ययोरर्थस्य डिम्भादेः स्वयोस्तदेकाश्रययोश्चेष्टास्वरूपयोः। यथा मम—

'लाङ्गूलेनाभिहत्य क्षितितलमसकृद् दारयन्नग्रपद्भ्या-
मात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन् विक्रमेण।
स्फूर्जद्धूङ्कारघोषः प्रतिदिशमखिलान् द्रावयन्नेष जन्तून्-
कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः॥ २९२॥'

१८५ अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः॥ १४६॥
यत् प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम्।

---

ननु प्रकृतगोपनेनाप्रकृतोद्भावनरूपाया अपह्नुतेरस्याः को भेद इत्याशङ्क्याह—इयं व्याजोक्तिः। प्रथमा प्रकृत-निषेधपूर्वकाप्रकृतोद्भावनरूपा। अपह्नुतिः। न। हेतुं निर्दिशति—अपह्नवकारिणः प्रतिषेधकारिणः। विषयस्या प्रकृतारोपविषयस्य। अनभिधानात्। अयम्भावः—अपह्नुतौ प्रकृतं निषिध्याप्रकृतं स्थाप्यते, अत्रानिषिध्यैव लिङ्गा-दिना प्रकटितस्य वस्तुनो गोपनम्। इति। द्वितीयापह्नुतेः। भेदः। तु। तत्प्रस्तावे तस्या अपह्नुतेः प्रस्तावः प्रसङ्गस्तत्र। दर्शितः। 'गोपनकृता गोपनीयस्यापि प्रथममभिहितत्वाच्च व्याजोक्तेः' इत्यनेनेति शेषः। तत्र गोपनकृता गोपनीयं प्रथममभिधीयते, अत्र तु न तथेत्येतयोर्भेद इति भावः।

स्वभावोक्तिं लक्षयति—१८४ दुरूहार्थस्वक्रियारूपवर्णनं दुरूहे ये अर्थस्वक्रियारूपे तयोर्वर्णनम्। अर्थस्य स्वक्रियारूपे इत्यर्थस्वक्रियारूपे। स्वे स्वकीये ये क्रियारूपे इति स्वक्रियारूपे। स्वभावोक्तिस्तन्नामाऽलङ्कारः। अयम्भावः—यस्य या क्रिया रूपं वा, तयोः कविमात्रवेद्ययोः सतोर्वर्णनं स्वभावोक्तिर्नामालङ्कारः। इति।

सूत्रं सुगमयितुं तत्कठिनांशं व्याचष्टे—दुरूहयोः। कविमात्रवेद्ययोः। मात्रपदेन पामरजननिरासः, एतेन—'श्वा मुखं व्यादाय बुक्कतीत्यादौ नातिप्रसङ्गः। अर्थस्य। डिम्भादेः। आदिपदेन—जन्त्वन्तरमात्रस्य ग्रहणम्। डिम्भो बालः। स्वयोः स्वीययोः। तदेकाश्रययोः (इति यावत्)। चेष्टास्वरूपयोः। 'वर्णनं स्वभावोक्ति'रिति शेषः। तथा च—दुरूहे ये डिम्भाद्याश्रिते क्रियारूपे तयोर्वर्णनं स्वभावोक्तिरिति फलितम्।

उदाहरति—यथा। मम—'एषः। तरक्षुर्व्याघ्रविशेषः। 'तरक्षुस्तु मृगादनः।' इत्यमरः। असकृत् वारंवा-रम्। लाङ्गूलेन पुच्छेन। 'पुच्छोऽस्त्री लूमलाङ्गूले' इत्यमरः। क्षितितलं पृथ्वीम्। अभिहत्य ताडयित्वा। अग्र-पद्भ्यां पादाग्राभ्याम्। 'असकृत् क्षितितल'मिति पूर्वतोऽन्वेति। दारयन् भिन्दन्। आत्मनि स्वशरीरे। एव। अवलीय विलीय सङ्कुचद्वपुर्भूत्वेति यावत्। अथ। द्रुतं त्वरितम्। विक्रमेण। गगनमाकाशम्। प्रोत्पतन्नुल्लम्फन्। स्फूर्जद्धूङ्कारघोषः स्फूर्जन् हूङ्कारघोषो यस्य तथोक्तः। भयङ्करं हूङ्कारं कुर्वन्निति भावः। प्रतिदिशं दिशिदिशि। अखिलान्। जन्तून् मृगादीन्। द्रावयन् सवेगं सञ्चालयन्। कोपाविष्टः कुपितः। अत एव—अरुणोच्छून-चक्षुररुणे शोणवर्णे अथ च—उच्छूने स्फीते चक्षुषी नेत्रे यस्य तथोक्तः 'सन्नि'ति शेषः। प्रतिवनं वनंवनम्, यद्वा—वनं प्रतीत्यर्थः। प्रविष्टः। अत्र कोपाविष्टस्य क्रियारूपं च दर्शितम्। शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं चोक्तं प्राक्॥२९२॥' यथा वा—'ग्रीवाभङ्गाभिराममुहुरनुपतति स्यन्दने बद्धदृष्टिः, पश्चार्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्। शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति॥' इति॥

भाविकं लक्षयति—१८४ भूतस्य जातस्य। अथ। भविष्यतो भाविनः। अद्भुतस्य। पदार्थस्य। यत्। प्रत्यक्षायमाणत्वं प्रत्यक्षवद्भासमानत्वम्। तत्। भाविकम्भावो वक्तुरभिप्रायो वर्णनीयस्वरूपेणास्तीति तथोक्तम् (व्यङ्ग्यम्) उपचारात्तन्नामाऽलङ्कारः। उदाहृतं कथितम्॥ १४६॥

यथा—'मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ ॥ २९३ ॥'

यथा वा—'आसीदञ्जनमत्रेति पश्यामि तव लोचने।
भाविभूषणसम्भारां साक्षात्कुर्वे तवाकृतिम् ॥ २९४ ॥'

न चायं प्रसादाख्यो गुणः, भूतभाविनोः प्रत्यक्षायमाणत्वे तस्याहेतुत्वात्। न चाद्भुतो रसः, विस्मयं प्रत्यस्य हेतुत्वात् न चातिशयोक्तिः। अध्यवसायाभावात्। न च भ्रान्तिमान्, भूतभाविनोर्भूतभावितयैव प्रकाशनात्। न च स्वभावोक्तिस्तस्य लौकिकवस्तुगतसूक्ष्मधर्मस्वभावस्यैव यथावद्वर्णनं स्वरूपम्, अस्य तु वस्तुनः प्रत्यक्षायमाणत्वरूपो विच्छित्तिविशेषोऽस्तीति, यदि पुनर्वस्तुनः क्वचित्स्वभावोक्तावप्यस्या विच्छित्तेः सम्भवस्तदोभयोः सङ्करः।

'अनातपत्रोऽप्ययमत्र लक्ष्यते सितातपत्रैरिव सर्वतो वृतः।
अचामरोऽप्येष सदैव वीज्यते विलासवालव्यजनेन कोऽप्ययम् ॥ २९५ ॥'

---

उदाहरति–यथा 'येन। एकचुलुके एकस्मिंश्चुलुके। तौ जगदाधारकत्वेन प्रसिद्धौ। अत एव–दिव्यौ। मत्स्यकच्छपौ। दृष्टौ। समुद्रस्यैकचुलुककरणे तत्रत्ययोर्भगवतोर्मत्स्यकच्छपयोरप्येतदन्तःपातित्वं दृष्टचरम्। सः–योगीन्द्रः। महात्मा। कुम्भसम्भवः कुम्भः सम्भव उत्पत्तिस्थानं यस्य तथोक्तः। अगस्त्य इत्यर्थः। उर्वशीं दृष्ट्वोन्मथितेन्द्रियाभ्यां मित्रावरुणाभ्यां कुम्भे वीर्यं सिक्तं, तत एतस्य जन्मेति पुराणप्रसिद्धम्। मुनिः। जयति। अत्र दिव्ययोर्मत्स्यकच्छपयोः प्रत्यक्षः ॥ २९३ ॥'

उदाहरणान्तरमपि निदर्शयति। यथा वा–अत्रानयोर्नेत्रयोः। अञ्जनम्। आसीत्। इत्येवम्। तव। लोचने। पश्यामि। भाविभूषणसम्भारां भाविनो ये भूषणसम्भारा भूषणानां विशिष्टानि नेपथ्यानि यत्र तादृशीम्। तव। आकृतिं स्वरूपम्। साक्षात्कुर्वे। अत्र भूतभाविनोरुभयोरपि साक्षात्कारः। यथाऽऽहुर्विवृतिकाराः–'अत्र पूर्वार्धे भूतस्य परार्धे भाविनः प्रत्यक्षायमाणत्वं नयनशोभाविशेषवशेन अञ्जनं सौन्दर्यातिशयवशीकृतस्य धनिनः पत्युरादरातिशयेन भूषणसम्भारमनुमाय सख्या तथाऽभिहितं यथा भूतभाविनामप्यञ्जनभूषणसम्भारौ सन्निकृष्टश्रोतॄणां प्रत्यक्षवद् भासेते।' इति ॥ २९४ ॥' यदि तु–अत्र सहृदयैश्चमत्कारो नानुभूयते, तर्हि–'जगदीश ! भवन्तमीक्षमाणो भुवनं प्रस्फुटमीक्षते न कस्तत्। यदभूदचरं चरं तथा वा ननु यद्भावि कदाऽपि यत्र तत्र ॥' इत्युदाहार्य्यम्। इदम्मम ॥

ननु सन्निकृष्टपदार्थस्य वर्णनेन तदा प्रत्यक्षायमाणत्वम्, यदा प्रसन्नार्थाः शब्दाः प्रयुज्यन्त इत्यत्र प्रसादगुण एवाङ्गीक्रियतामित्याशङ्क्याह–नचेत्यादि। स्पष्टम्। ननु तर्हि एवं विस्मयहेतुत्वमङ्गीकृत्याद्भुतरसोऽङ्गीक्रियतामित्याशङ्क्याह–नचेत्यादि। स्पष्टम्। 'विस्मयं चमत्कारम् (प्रत्यस्य भाविकस्य हेतुत्वाभावात्)। चमत्कारायोगे रसरूपत्वासम्भवादिति भावः।' इति विवृतिकाराः। नन्वत्र वर्णनीयनिष्ठस्यातिशयविशेषस्य सद्भावेनातिशयोक्तिरेवाङ्गीक्रियतामित्याशङ्क्याह–नचेत्यादि। स्फुटम्। अध्यवसायाभावादभेदारोपासत्त्वादिति भावः। ननु भूतभाविनोः प्रत्यक्षायमाणत्वम्भ्रममूलमेवेति भ्रान्तिमानेवाङ्गीक्रियतामित्याशङ्क्याह–नचेत्यादि। स्पष्टम्। ननु तर्हि वस्तुस्वाभाव्यमिति स्वभावोक्तिरेवाङ्गीक्रियतामित्याशङ्क्याह–स्वभावोक्तिस्तन्नामाऽलङ्कारः। च। न। हेतुमुपपादयति–तस्य स्वभावोक्त्यलङ्कारस्य। लौकिकवस्तुगतसूक्ष्मधर्मस्वभावस्य लौकिकवस्तुगतो यः सूक्ष्मो दुरूहरूपो धर्म्मस्वभावस्तस्य। एव। यथावद्याथातथ्येन। वर्णनम्। स्वरूपम्। अस्य भाविकस्य। तु। वस्तुनो वर्णनीयस्य पदार्थस्य। प्रत्यक्षायमाणत्वरूपः। विच्छित्तिविशेषो भिन्नश्चमत्कारः। अस्ति। इति 'ततोऽस्य भेद' इति भावः। अस्य क्वचित्स्वभावोक्त्यनुप्राणत्वमित्याह– यदि। पुनः। वस्तुनः। क्वचित् कस्मिंश्चिदुदाहरण इत्यर्थः। स्वभावोक्तौ। 'सत्या'मिति शेषः। अपि। अस्या भाविकसम्बन्धिन्याः। विच्छित्तेः। सम्भवः। तदा। उभयोः स्वभावोक्तिभाविकयोः। सङ्करः।

अलङ्कारसर्वस्वकृतोदाहृतं दूषयति–'अत्र। अयम्। अनातपत्रो नातपत्रं छत्रं यस्य तथोक्तः। अपि। सितातपत्रैः श्वेतच्छत्रैः। सर्वतः। वृतः। इव। लक्ष्यते। एषः। कोऽपि। अचामरो न चामरं यस्य तथोक्तः। अपि। सदा। एव। विलासवालव्यजनेन। अयं शुभावहो विधिर्यथा भवेत्तथा। वीज्यते। यद्वा–

अत्र प्रत्यक्षायमाणस्यैव वर्णनान्नायमलङ्कारः। वर्णनावशेन प्रत्यक्षायमाणत्वस्यास्य सरूपत्वात्। यत् पुनरप्रत्यक्षायमाणस्यापि वर्णने प्रत्यक्षायमाणत्वं तत्रायमलङ्कारो भवितुं युक्तः। यथोदाहृते—'आसीदञ्जनमत्रे'त्यादौ।

१८६ लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते ॥ १४७ ॥
यद्वाऽपि प्रस्तुतस्याङ्गं महतां चरितं भवेत्।

क्रमेणोदाहरणम्—

'अधःकृताम्भोधरमण्डलानां यस्यां शशाङ्कोपलकुट्टिमानाम्।
ज्योत्स्नानिपातात् क्षरतां पयोभिः केलीवनं वृद्धिमुरीकरोति ॥ २९६ ॥'

'नाभिप्रपन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते ॥ २९७ ॥'

१८७ रसभावौ तदाभासौ भावस्य प्रशमस्तथा ॥ १४८ ॥
गुणीभूतत्वमायान्ति यदाऽलङ्कृतयस्तदा।
रसवत्प्रेय ऊर्जस्वि समाहितमिति क्रमात् ॥ १४९॥

---

एषः। अचामरः। अपि। सदा। एव। विलासवालव्यजनेन। वीज्यते। अतः—अयम्। कोऽपि अलौकिकगुण इत्यर्थः। वंशस्थविलं छन्दः, तल्लक्षणं चोक्तं प्राक् ॥ २९५ ॥'

अत्र—इत्यत्रेत्यर्थः। प्रत्यक्षायमाणस्य। एव। 'नतु भूतस्य भविष्यतो वे'ति शेषः। वर्णनात्। अयम्भाविकनामा। अलङ्कारः। न। तदेव पुनः स्पष्टयति—अस्य भाविकस्य। वर्णनावशेन वर्णनमहिम्ना। 'नतु विद्यमानत्वेने'ति शेषः। प्रत्यक्षायमाणत्वस्य 'भूतभाविनो'रिति शेषः। सरूपत्वात्। यत् यत्र। पुनः। अप्रत्यक्षायमाणस्य भूतस्य भविष्यतो वेत्यर्थः। वर्णने। अपि। प्रत्यक्षायमाणत्वम्। तत्र। अयं भाविकनामा। अलङ्कारः। भवितुम्। युक्तः। उदाहरति—यथेत्यादिना। स्पष्टम्।

उदात्तं द्विधा लक्षयति—१८६ लोकातिशयसम्पत्तिवर्णना लोकानतिशेतेऽतिक्रामतीति लोकातिशया, साऽसौ सम्पत्तिर्धनादिसम्पत्तस्या वर्णना व्यञ्जनया बोधनम्। यद्वा। अपि। प्रस्तुतस्य वर्णनीयस्य। अङ्गम्। महतां महाप्रभावाणाम्। चरितम् अङ्गमनुप्राणकम्। भवेत्। तदा—उदात्तं तदाख्योऽलङ्कारः। उच्यते। तथा च—द्विविधमिदमुदात्तम्, अलौकिकं वैभववर्णनम्, प्रस्तुतानुप्राणकमहच्चरितवर्णनं च। उदात्तत्वं च महनीयतावर्णनशालित्वम्, तच्चोभयत्रानुगतमिति बोध्यम् ॥ १४७ ॥

क्रमादुदाहर्तुकाम आह—क्रमेणेत्यादि। स्पष्टम्। 'यस्याम् 'पुर्या'मिति शेषः। अधःकृताम्भोधरमण्डलानामधःकृतान्यम्भोधर (मेघ) मण्डलानि (उच्चतया) यैस्तथोक्तानाम्। शशाङ्कोपलकुट्टिमानां शशाङ्कोपलाश्चन्द्रकान्तमणयः कुट्टिमेषु येषां तादृशानाम्। अत एव- ज्योत्स्नानिपाताच्चन्द्रप्रतिच्छायापातेन। पयोभिर्जलैः। क्षरताम्। केलीवनं क्रीडाऽर्थं निर्मितमुद्यानम्। वृद्धिम्। उरीकरोत्यङ्गीकरोति। उपेन्द्रवज्रेन्द्रवज्रयोरुपजातिश्छन्दः, तल्लक्षणं चोक्तं प्राक् ॥' अत्र स्फुटं पौराणां समृद्धत्वं व्यज्यते ॥ २९६ ॥'

'युगान्तोचितयोगनिद्रो युगान्ते प्रलये उचिता योग्या योगनिद्रा यस्य तादृशः। पुरुषः 'पुराण' इति शेषः। नारायण इत्यर्थः। नाभिप्रपन्नाम्बुरुहासनेन नाभेः प्रपन्नमुत्थितं यदम्बुरुहं कमलं तदेवासनं यस्य तादृशेन। प्रथमेन जगदाद्येन। धात्रा। संस्तूयमानः। लोकान्। संहृत्य। अमुं समुद्रम्। अधिशेतेऽधिकृत्य स्वपिति। अत्र समुद्रमहत्त्वस्याङ्गं नारायणचरितम्। इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिश्छन्दः, तल्लक्षणं चोक्तं प्राक्। रघुवंशस्येदं पद्यम्॥२९७॥'

रसवत्प्रेय ऊर्जस्विसमाहितानि लक्षयति— १८७ रसभावौ रसो भावश्चेत्यर्थः। तदाभासौ तयो रसभावयोराभासौ। तथा। भावस्य। प्रशमः क्षयः। यदा। गुणीभूतत्वं न्यग्भूतचमत्कारत्वम्। आयान्ति। तदा। क्रमात्। रसवत्। प्रेयः। ऊर्जस्वि। समाहितम्। इति। अलङ्कृतयोऽलङ्काराः। तथा च—रसस्य

**तदाभासौ रसाभासो भावाभासश्च । तत्र-रसयोगाद्रसवदलङ्कारो यथा--**

**'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः । नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ २९८ ॥'**

**अत्र शृङ्गारः करुणस्याङ्गम् । एवमन्यत्रापि । प्रकृष्टप्रियत्वात् प्रेयः । यथा मम--**

**'आमीलितालसविवर्त्तिततारकाक्षीं मत्कण्ठबन्धनदरश्लथबाहुवल्लीम् ।**
**प्रस्वेदवारिकणिकाचितगण्डबिम्बां संस्मृत्य तामनिशमेति न शान्तिमन्तः ॥ २९९ ॥'**

**अत्र सम्भोगशृङ्गारः स्मरणाख्यभावस्याङ्गम् । स, च विप्रलम्भस्य ।**

**ऊर्जो बलम् अनौचित्यप्रवृत्तौ तदत्रास्तीत्यूर्जस्वि । यथा-**

**'वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः ।**
**त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्वते रतिम् ॥ ३०० ॥'**

**अत्र शृङ्गाराभासो राजविषयरतिभावस्याङ्गम् । एवं भावाभासोऽपि । समाहितं परीहारः ।**

---

गुणीभूतत्वे रसवत्, भावस्य गुणीभूतत्वे प्रेयः, रसाभासस्य भावाभासस्य च गुणीभावे ऊर्जस्वि, भावप्रशमस्य गुणीभावे समाहितं चालङ्कारः । इति फलितम् । अत एवालङ्कारसूत्रकारैः-'रसभावा-भास-भावप्रशमानामितरगुणी-भावो रसवत्-प्रेय-ऊर्जस्वि-समाहितानि ।'इति सूत्रयित्वा'रसाः शृङ्गारादयः । विभावादिभिरपरिपुष्टा देवादि-विषया रत्यादयो निर्वेदादयश्च भावाः । अनौचित्येन प्रवृत्ता रसाभावाश्च रसवद्भाववच्चावभासमाना अपि न खल्वपि परमार्थतो रसाभावाश्च भवन्तीति त इहाभासाः । भावस्य कस्यचिदुपशमो भावप्रशमः । ते खल्वमी यदेतरत्र रसादौ वाक्यार्थे वा गुणीभावमायान्ति, तदा यथाक्रमं रसवदादिनामानोऽलङ्काराः । रसस्य गुणीभावो रसवद-भिधेयोऽलङ्कारः । भावस्य प्रेयोऽभिधानः । आभासस्योर्जस्विनामा । भावप्रशमस्य समाहिताह्वः । इति विवृ-तम् ॥ १४८ ॥ १४९ ॥

सूत्रदुर्बोधांशं परिहरति-**तदाभासावि**त्यादिना । स्पष्टम् ।

क्रमादुदाहर्तुमुपक्रमते-**तत्र** तेषु रसवदादिषु मध्ये इत्यर्थः । **रसयोगाद्**रसशालितया । **रसवदलङ्कारः । यथा** । **'अयं स'**इत्यादि । व्याख्यातपूर्वमिदम् ॥ २९८ ॥ अत्र रसस्यालङ्कारत्वे हेतुं निर्दिशति-**अत्रे**त्यादिना । स्पष्टम् । नायमत्रैव नियम इत्याशयेनाह-**एवमि**त्यादि । स्पष्टम् । वीरादेः शृङ्गाराद्यङ्गत्वेऽप्येवमूह्यमिति भावः ।

भावस्य गुणीभावः प्रेय इत्युक्तं तत्र हेतुं निर्दिशति-**प्रकृष्टप्रियत्वात्** प्रकृष्टं रसान्तराङ्गत्वेऽपि रसान्त-राङ्गत्वेनोत्कृष्टं यत् प्रियत्वं तस्मात् । **प्रेयः** । तच्च-**यथा । मम** ।

**'आमीलितालसविवर्त्तिततारकाक्षी**मामीलिते ईषत्सङ्कुचिते अथ च अलसं यथातथा विवर्तिते चालिते तारके ययोः, तादृशे अक्षिणी नेत्रे यस्यास्तथोक्ताम् । **मत्कण्ठबन्धनदरश्लथबाहुवल्लीं** मम ( प्रेयसः ) कण्ठस्तस्य वन्धनं वाहुक्षेपेणालिङ्गनं तत्र दरश्लथेषदलसा वाहुवल्ली वाहुरूपा लता यस्यास्तथोक्ताम् । **प्रस्वेदवारिकणिका-चितगण्डबिम्बां** प्रस्वेदवारिकणिकाभिः सुरतश्रमात्समुद्भूतस्वेदविन्दुभिराचितं व्याप्तं गण्डस्थलं यस्यास्तथोक्ताम् । **ताम् । संस्मृत्य** चिन्तयित्वा । **अन्त**रन्तःकरणम् । **अनिशं** निरन्तरम् । **शान्तिम् । न । एति** प्रयाति । सखायं प्रति कस्याप्युक्तिरियम् । वसन्ततिलकं वृत्तं, तल्लक्षणं चोक्तं प्राक् ॥ ९२९ ॥'

भावस्य गुणीभावं निर्दिशति-**अत्रो**दाहृते पद्ये । **सम्भोगशृङ्गारः । स्मरणाख्यभावस्य । अङ्ग**मनुपोष-कम् । **स** स्मरणनामा भावः । **च । विप्रलम्भस्य** विप्रलम्भशृङ्गारस्य । 'अङ्ग'मिति पूर्वतोऽन्वेति । रसभावा-भासयोर्गुणीभाव ऊर्जस्वीत्युक्तम्, तत्पदार्थं निर्दिशति-**ऊर्जः । बलम्** । 'ऊर्जः कार्तिके बले ।' इति हैमः । **तद्**बलम् । **अनौचित्यप्रवृत्तौ** 'रसभावाभासयोः' इति शेषः । **अत्र** ( वाक्ये ) **अस्ति । इति । ऊर्जस्वि** ।

उदाहरति-**यथा** । **'पुलिन्दा** वनेचरा म्लेच्छविशेषाः । **अखिलकलासक्ता** अखिलाः स्वोचिताः सर्वाः कलाः सुरतविधानानि तत्रासक्तास्ताः । **निजस्त्रियः । परिहृत्य** परित्यज्य । हे राजन्!-**त्वद्वैरिवनितावृन्दे** तव वैरिणः शत्रवस्तेषां वनितानां स्त्रीवृन्दं तत्र । **वने । रतिं** प्रेम । **कुर्वते** । कस्यचिद्राज्ञः स्तुतिरियम् ॥ ३०० ॥'

उदाहृतं निर्दिशति-**अत्रे**त्यादिना । स्पष्टम् । अत्र परोढाविषयत्वाच्छृङ्गाराभासः, सोऽपि नीचजनस्सोऽपि पराङ्गमित्यनौचित्यमिति वोध्यम् । द्वितीयोदाहरणं तूह्यमित्याह-**एवमि**त्यादि । स्पष्टम् । तथा च-'वन्दीकृत्य नृप!

यथा—'अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
दद्दशे तव वैरिणाम्मदः स गतः क्वापि तवेक्षणेक्षणात् ॥ ३०१ ॥'

अत्र मदाख्यभावस्य प्रशमो राजविषयरतिभावस्याङ्गम् ।

**१८८ भावस्य चोदये सन्धौ मिश्रत्वे च तदाख्यकाः ।**

तदाख्यका भावोदय-भावसन्धि-भावशबल-नामानोऽलङ्काराः । क्रमेणोदाहरणम्—

'मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः ।
श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम् ॥ ३०२ ॥'

अत्र त्रासोदयो राजविषयरतिभावस्याङ्गम् ।

'जन्मान्तरीणरमणस्याङ्गसङ्गसमुत्सुका ।
सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा ॥ ३०३ ॥'

अत्रौत्सुक्यलज्जयोश्च सन्धिर्देवताविषयरतिभावस्याङ्गम् ।

'पश्येत् कश्चि, च्चल चपल रे, का त्वराऽहं कुमारी हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः कन्या कश्चित् फलकिसलयान्याददानाऽभिधत्ते॥३०४॥'

---

द्विषां मृगदृशस्ताः पश्यतां प्रेयसीं श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः । अस्माकं सुकृतैर्दृशोर्निपतितस्यौचित्यवाराम्निधे ! विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥' अत्र प्रथमार्धे सैनिकनिष्ठः शृङ्गारोऽननुरक्तस्त्रीविषयकतया परस्त्रीविषयकतया च प्रवृत्त इत्याभासः, परार्धे पुनः प्रत्यर्थिनिष्ठो रतिरूपो भावः प्रकृतराजरूपशत्रुविषयकतयाऽऽहार्यतया प्रवृत्त इत्याभासः । एवमेतौ रसभावाभासौ कविगतस्य राजविषयकस्य रतिभावस्याङ्गम् । भावप्रशमे गुणीभूते समाहितमित्युक्तम्, तत्र समाहितपदार्थं निर्दिशति—**समाहित**मित्यादिना । स्पष्टम् । परीहारप्रशमावभिन्नार्थौ इति भावस्य प्रशमोऽपि परीहारापरपर्यायः समाहितनामाऽलङ्कार इति भावः ।

उदाहरति—**यथा—'अविरलकरवालकम्पनै**रविरलं निरन्तरं यानि करवालकम्पनानि तलवारसञ्चारणानि तैः । तथा—**भ्रुकुटीतर्जनगर्जनै**र्भ्रुकुटीभिस्तर्जनानि 'छिन्धिभिन्धि' इत्यादीनीङ्गितोद्भावनानि च गर्जनानि चेति तैस्तथोक्तैः । **मुहुः** । हे राजन् !—**तव** । **वैरिणां** शत्रूणाम् । **मदः** । 'य' इति शेषः । **दद्दशे** । **सः** । **तव** । **ईक्षणेक्षणा**दीक्षणयोर्नेत्रयोरीक्षणं दृष्टिपातस्तस्मात् । यद्वा—तव । ईक्षणे दर्शने । क्षणादित्यर्थः । **क्वापि** । **गतः** । वैतालीयं वृत्तम् । तल्लक्षणं चोक्तं प्राक् ॥ ३०१ ॥'

उदाहृतमर्थं निर्दिशति—**अत्रे**त्यादिना । स्पष्टम् ।

भावोदयादीन् लक्षयति—१८८ **भावस्य** निर्वेदादेः । **च** । **उदये** । **सन्धौ** 'तयो'रिति शेषः । **मिश्रत्वे** सम्मेलने 'तेषा' मिति शेषः । **च** । **तदाख्यका** रसा भावोदयादिरूपाऽऽख्या येषां तथोक्ताः ।

'तदाख्यका'इति पदं व्याचष्टे—**तदे**त्यादिना । स्पष्टम् । उदाहर्तुमाह—**क्रमेणे**त्यादि । स्पष्टम् ।

'**सुहृद्भि**र्मित्रैः । **सह** । **मधुपानप्रवृत्ता** मद्यपानपरायणाः । हे राजन् !—**ते** तव । **वैरिणः** शत्रवः । **कुतोऽपि** । **त्वन्नाम** । **श्रुत्वा** । **विषमां** सङ्कटप्रधानाम् । **दशा**मवस्थाम् । **लेभिरे** लब्धवन्तः ॥ ३०२ ॥

उदाहृतमर्थं निर्दिशति—**अत्रे**त्यादिना । स्पष्टम् ।

'**जन्मान्तरीणरमणस्य** जन्मान्तरे ( दक्षगृहे जन्मनि ) भव इति, तादृशोऽसौ रमणो नायकः ( महेश्वरः ) तस्य । **अङ्गसङ्गसमुत्सुका**ऽङ्गसङ्गे समुत्सुकोत्कण्ठिता । अत एव—**सख्याः** । **अन्तिके** । **च** ( तथा व्यापारे ) **सलज्जा** । **पार्वती** । **सदा** । **नो**ऽस्मान् । **पातु** रक्षतु ॥ ३०३ ॥'

उदाहृतमर्थं निर्दिशति—**अत्रे**त्यादिना । स्पष्टम् ।

'**हे पृथ्वीपरिवृढ** पृथ्व्याः परिवृढोऽधिपस्तत्संबुद्धौ तथोक्त ! 'प्रभुः परिवृढोऽधिपः ।' इत्यमरः । **अरण्यवृत्ते**रण्ये वने वृत्तिर्निवासो यस्य तादृशस्य । **भवद्विद्विषो** भवतो विद्विट् शत्रुस्तस्य । **कन्या** । **फलकिसलयानि** फलानि च किसलयानि नवपल्लवाश्चेति तानि । **आददाना** गृह्णन्ती सती । **कश्चित्** कोऽपि जनः । **पश्येत** रहस्यं

अत्र शङ्काऽसूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता राजविषयरतिभावस्याङ्गम् । इह केचिदाहुः—'वाच्यवाचकरूपालङ्करणमुखेन रसाद्युपकारका एवालङ्काराः । रसादयस्तु वाच्यवाचकाभ्यामुपकार्या एवेति न तेषामलङ्कारता भवितुं युक्ता' इति, अन्ये तु 'रसाद्युपकारमात्रेणेहालङ्कृतिव्यपदेशो भाक्तश्चिरन्तनप्रसिद्ध्याऽङ्गीकार्य एव' इति, अपरे च-'रसाद्युपकारमात्रेणालङ्कारत्वमुख्यता, रूपकादौ वाच्याद्युपधानम् 'अजागलास्तन'न्यायेन ।' इति । अभियुक्तास्तु—

---

जानीयात् ( इति शङ्का तद्धेतुश्च व्यङ्ग्या सङ्गोपनीयपुरुषचेष्टा ) । रे चपल स्वच्छन्दाचरणशील ! चलापयाहि ( इत्यसूया, तद्धेतुश्च परत्र रागानौचित्यं व्यज्यते ) । का । त्वरा । सत्वरं गमने को हेतुरिति भावः ( इति धृतिः, तद्धेतुश्चानुरागप्राबल्यम् ) । अहं त्वया गृह्यमाणेत्यर्थः । कुमारी कन्या ( इति स्वात्मनस्तत्र प्रागल्भ्यज्ञानेन स्मृतिः, तद्धेतुश्च ततकुलीनं त्वव्यङ्ग्यम् ) । हस्तालम्बं हस्तरूपमालम्बनम् । वितर देहि ( इति श्रमः, तद्धेतुश्च तत्सौकुमार्यं व्यङ्ग्यम् ) । हहहा कष्टंकष्टम् ( इति दैन्यम्, तद्धेतुश्च मदनबाधया किंकर्तव्यताविमूढत्वम् ) । व्युत्क्रमोऽनर्थाचरणमिदम् ( इति विबोधः, तद्धेतुश्च स्वस्वरूपपरिचिन्तनम् ) । क्व कुत्र । असि त्वमिति भावः ( इदमन्वयम् ) । यासि 'मां विहाये'ति शेषः ( इत्यौत्सुक्यम्, तद्धेतुश्च पुनः कन्दर्पोन्मादप्राबल्यम् ) । इत्थम् इत्येवम् । कश्चित् कमपि स्वमनोहरं युवानमिति भावः । अभिधत्ते । किञ्चिदुद्भूततारुण्यायाः प्रस्तुतराजशत्रुकन्याया वनवासे फलाद्याहरणे क्रियमाणे कस्मिंश्चिज्जातानुरागाया अवस्थावर्णनमुद्दिश्य प्रकृतराजस्तुतिरियम् । मन्दाक्रान्ताछन्दः ' ॥ ३०४ ॥' उदाहृतमर्थं निर्दिशति-अत्रेत्यादिना । स्पष्टम् ।

सम्प्रति रसवदादीनामलङ्कारत्वं निर्णयते-इह । केचित् । आहुः । 'वाच्यवाचकरूपालङ्करणमुखेन वाच्योऽर्थश्च वाचकः शब्दश्चेति तयो रूपं स्वरूपं तस्यालङ्करणं शोभाजननं तदेव मुखं द्वारं तेन । रसाद्युपकारकाः । एव । अलङ्काराः । रसादयो रसभावरसाभासभावाभासभावप्रशमादयः । तु । वाच्यवाचकाभ्यामर्थेन शब्देन च । उपकार्याश्चमत्कार्याः । एव । इति । तेषां रसादीनाम् । अलङ्कारताऽलङ्कारव्यपदेशभाक्त्वम् । भवितुम् । न । युक्ता । इति । इदं तत्त्वम्-प्रकाशकारादयः-'उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित् । हारादिवदलङ्कारास्तेऽनुप्रासोपमादयः ॥' इत्यादिनाऽलङ्काराणां रसाद्युपकारकत्वमात्रं, रसादीनां च तदुपकार्य्यत्वं मन्यमाना रसवदादीनामलङ्कारव्यपदेशभाक्त्वं न मन्यन्ते । इत्येव केषाञ्चिन्मतत्वेनेह निर्दिष्टम् । इति । अन्ये रसवदादीनामप्यलङ्कारव्यपदेश्यत्वं मन्यमानाः कुवलयानन्दकारादय इति भावः । तु । 'इह रसवदादौ । अलङ्कृतिव्यपदेशोऽलङ्कार इति व्यपदेशः । रसाद्युपकारमात्रेण । मात्रपदेन'शब्दार्थद्वारे'त्यस्य व्यवच्छेदः । भाक्तो गौणः । अथापि चिरन्तनप्रसिद्ध्या प्राचीनानाम्मतानुरोधेन । अङ्गीकार्य्यः । एव ।' इति 'आहुः' इति पूर्वतोऽन्वेति । इदं तत्त्वम्-शब्दार्थद्वारा रसाद्युपकारकत्वेनालङ्कारत्वं मुख्यम्, रसाद्युपकारकत्वमात्रेणालङ्कारत्वं पुनर्गौणम् । अत एषां गुणप्रधानभावमङ्गीकृत्य शब्दार्थोपस्कारमन्तराऽपि स्वीकार्योऽलङ्कारभावो भाक्तः । एतेन केषाञ्चिन्मतं परास्तमिति बोद्धव्यम् । इति । अपरे रसवदादीनामपि मुख्यमलङ्कारत्वम्मन्यमानाः । च । 'रसाद्युपकारमात्रेण । मात्रपदेन शब्दार्थोपस्कारापेक्षाव्युदासः । अलङ्कारत्वमुख्यता मुख्यमलङ्कारव्यपदेश्यत्वम् । रसाद्युपकारकत्वमेवालङ्कारत्वम्, नतु शब्दार्थोपस्कारद्वारेत्येवालङ्कारसामान्यलक्षणम्, एवं च-रसवदादीनां प्रधानभूतरसाद्युपकारकतयालङ्कारत्वम्मुख्यमिति भावः । नन्वेवं रूपकादेः का व्यवस्थेत्याशङ्क्याहुः-रूपकादौ । वाच्याद्युपधानं वाच्यादेः शब्दार्थयोरुपधानमुपस्कारकत्वम् । 'अतोऽत्रालङ्कारत्व'मिति शेषः । 'अजागलस्तन'न्यायेन । अजागले लम्बमानः स्तनो यथा दुग्धानुपयोगित्वेऽपि स्तनत्वेन यथा व्यवह्रियते तथा-रूपकादौ वाच्याद्युपधानप्रयुक्तमलङ्कारत्वं गौणमिति भावः ।' इति 'आहु'रिति पूर्वतोऽन्वेति । इदं तत्त्वम्-रसवदादौ गौणमलङ्कारत्वन्नाङ्गीकार्यम्, प्रत्युत शब्दार्थमात्रावष्टम्भेपु । अलङ्कारत्वं हि रसाद्युपकारकत्वम्, तच्च-अत्राङ्गभूतस्य रसादेः प्रधानभूतरसाद्युपकारकतयाऽनुगतम् । रूपकादौ च तदभावादलङ्कारत्वस्य गन्धमात्रम् । इति । इदं चावधेयम्-रसवदादेरलङ्कारत्वं नास्त्येवेति यत् केचिदाहुः, तत्तु परास्तम् । अथात्र विप्रतिपत्तिरेषैव, यत्-केचिद्रसवदादेर्गौणम् अन्ये रूपकादेरलङ्कारत्वमाहुः । इति । एवं परेषाम्मतं निदर्श्य महनीयानाम्मतं दर्शयन् स्वमतस्यापि तदनुकूलत्वं सूचयति-अभियुक्ता मान्याः । तु ।

'स्वव्यञ्जकवाच्यवाचकाद्युपकृतैरङ्गभूतै रसादिभिरङ्गिनो रसादेर्वाच्यवाचकोपस्कारद्वारेणोपकुर्वद्भिरलङ्कृतिव्यपदेशो लभ्यते। समासोक्तौ तु नायिकादिव्यवहारमात्रस्यैवालङ्कृतिता, न त्वास्वादस्य, तस्योक्तरीतिविरहात्।' इति मन्यन्ते। अत एव ध्वनिकारेणोक्तम्—

'प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गं तु रसादयः। काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः॥'

यदि च रसाद्युपकारमात्रेणालङ्कृतित्वं तदा वाचकादिष्वपि तथा प्रसज्येत। एवं च—यत्र

---

'स्वव्यञ्जकवाच्यवाचकाद्युपकृतैः स्वमङ्गभूतं रसादि तस्य व्यञ्जकं यद् वाच्यवाचकादि शब्दार्थकाकादि तेनोपकृताभिव्यक्तिं नीतास्तैः । अङ्गभूतैरप्रधानभूतैः। रसादिभिः। आदिपदेन भावादीनां ग्रहणम्। अङ्गिनः प्रधानभूतस्य । रसादेः। सम्बन्धसामान्यविवक्षया कर्मणि षष्ठीयम् । वाच्यवाचकोपस्कारद्वारेण वाच्यवाचकयोः शब्दार्थयोरुपस्कारः साहाय्यं स एव द्वारं तेन, शब्दार्थसाहाय्येनेति भावः। उपकुर्वद्भिरुपकारपरायणैरिति भावः। अलङ्कृतिव्यपदेशः। लभ्यते(रसादिभिरिति कर्तृपदम्)। इदमुक्तम्-शब्दार्थादिना रसादेरभिव्यक्तिः, सोऽपि अपरस्य रसादेरभिव्यक्तौ हेतुः। अतः—यस्य रसादेरभिव्यञ्जको यो रसादिस्तदपेक्षयाऽस्य गौणत्वम् (उपकारकत्वम्) एतदपेक्षया च तस्य प्रधानत्वम् (उपकार्य्यत्वम्) एतदुभयापेक्षया च वाच्यवाचकादेर्गौणत्वम् (उपकारकत्वम्) एतदपेक्षयाऽप्रधानरसाद्यपेक्ष्य गौणस्य रसादेरपि प्रधानत्वम् (उपकार्यत्वम्)। एवं च रसाद्युपकारकत्वं शब्दादे रसादेश्चेत्युभयोरपि सम्प्रतिपन्नम् । तत्र-रसादे रसाद्युपकारकत्वं शब्दादिद्वारकम्, शब्दादेः पुनः स्वस्वद्वारकमेवेति विशेषः । किन्तु—अलङ्काराणां रसाद्युपकारकत्वं शब्दादिद्वारेत्युभयत्रेति निर्विवादम्। एवं सति— उपमादे रसवदादेश्च मुख्यमेवालङ्कारव्यपदेशार्हत्वम्। इति । ननु तर्हि समासोक्तौ कथमलङ्कारव्यपदेश्यत्वम्? तत्र हि नायिकादिव्यवहारारोपजन्यस्यास्वादस्यालङ्कारत्वम्, आस्वादश्च रसाद्यभिन्न एवेत्येवं रसाद्युपकारकत्वाभावः। इत्याशङ्क्याह—समासोक्तौ। तु। नायिकाऽऽदिव्यवहारमात्रस्य (मात्रपदेनास्वादस्य व्यवच्छेदः पुरस्तादेव वक्ष्यते)। एव। अलङ्कृतिताऽलङ्कारव्यपदेशभाक्त्वम्। आस्वादस्य नायिकादिव्यवहारारोपकार्यास्वादस्य। तु। न। नन्वत्र का बाधेत्याहुः—तस्यास्वादस्य। उक्तरीतिविरहाद् वाच्यवाचकादिद्वारा रसाद्युपकारकत्वाभावात्। इदमुक्तम्—समासोक्तावपि रसाद्युपकारकत्वमादायैवालङ्कारत्वम्, तच्चात्र नायिकाऽऽदिव्यवहारस्य। अत एव-'वाच्यवाचकाद्युपकृतै'रित्यत्रादिपदस्य निवेशः। आस्वादस्येति तु नास्माकं पक्षः । तस्यालङ्कार्यत्वेनैवाभिमतत्वात्। इति।' इति। मन्यन्ते (अभियुक्ता इत्यनेन सम्बन्धः)। ननु एकस्य रसादेरुपकारकत्वमपरस्योपकार्य्यत्वं कल्पयित्वा किमिति रसवदाद्यलङ्कारत्वं समर्थ्यतेऽत्र भवद्भिरित्याशङ्क्य तदुपपादयितुमाह—अतः। 'यतस्तथा मन्यन्ते तत' इति भावः। एव। ध्वनिकारेण। उक्तम्। 'रसादयः। तु पुनः। यत्र। अन्यत्र स्वस्मात् (अप्रधानापेक्षया) भिन्ने। अत एव— प्रधाने (अलङ्कार्ये)। वाक्यार्थे विभावादौ रसादाविति यावत्। अङ्गमङ्गभूताः। तस्मिन्। काव्ये रसादौ। रसादिरङ्गभूतः 'स' इति शेषः। अलङ्कारोऽलङ्कारव्यपदेश्यः। इति। मे मम ध्वन्यालोककर्तुरानन्दवर्धनाचार्यस्येत्यर्थः। मतिः सिद्धान्तः॥' 'इति' इति शेषः।

एवं सर्वतोभद्रं सिद्धान्तमुपपाद्य 'इह केचिदाहु'रित्यादिना दर्शितं मतं 'अन्ये तु' इत्यादिना दर्शितेन मतेन निराकृतम्, अथैतदपि निराकर्त्तुमभियुक्तानां च मतं प्रकारान्तरेण द्रढयितुमाह—यदि। च। रसाद्युपकारमात्रेण। मात्रपदेन'शब्दार्थद्वारे'त्यस्य व्यवच्छेदः। अलङ्कृतित्वमलङ्कारव्यपदेश्यत्वं स्वीक्रियेतेति भावः। तदा। तथा रसाद्युपकारमात्रत्वमादायेति भावः। वाचकादिषु शब्दादिषु। 'वाच्यादिषु' इति पाठान्तरेऽर्थादिष्वित्यर्थः। अपि। 'अलङ्कारत्वं मुख्यतया' इति शेषः। प्रसज्येत। इदं तत्त्वम्—यदि रसाद्युपकारकत्वमलङ्कारत्वमिति मन्यमानैरपि भवद्भिः रूपकादिषु तु वाच्याद्युपधानम्, 'अजागलस्तन'न्यायेन इति कथमुच्यते, रूपकादीनां दूरमास्तां कथा, किन्तु तथा वाचकाद्युपधानेषु पुनरुक्तवदाभासादिष्वपि अलङ्कारत्वम्मुख्यमापद्यते, रसाद्युपकारकत्वमात्रस्य तत्रापि सत्त्वात्। इति अपरेषाम्मतमपि न सम्यक्। इति । एवमपरेषां मतं निरस्य मतान्तरं निराकर्तुमुपक्रमते- एवमभियुक्तानां सिद्धान्तस्य ध्वनिकाराद्यनुकूलत्वेन प्राह्यत्वोपपादनात्। च । यत्। च तु (इदं'वाच्यवाचक-

कैश्चिदुक्तम्, 'रसादीनामङ्गित्वे रसवदाद्यलङ्काराः, अङ्गत्वे तु द्वितीयोदात्तालङ्कारः'इति, तदपि परास्तम्।

१८९ यद्येत एवालङ्काराः परस्परविमिश्रिताः ॥ १५० ॥
तदा पृथगलङ्कारौ संसृष्टिः सङ्करस्तथा।

यथा लौकिकानामलङ्काराणां परस्परमिश्रणे पृथक्चारुत्वेन पृथगलङ्कारत्वम्, तथोक्तरूपाणां काव्यालङ्काराणामपि संसृष्टिसङ्कराख्यौ पृथगलङ्कारौ। तत्र—

१९० मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते ॥ १५१ ॥

एतेषां शब्दार्थालङ्काराणाम्। यथा—

---

रूपालङ्कारमुखेन'इत्यादिना दर्शितं स्मारयति)। **कैश्चित्। उक्तम्। 'रसादीनाम्। अङ्गित्वे** प्रधानत्वे। **रसवदाद्यलङ्काराः। अङ्गत्वे**ऽप्रधानत्वे। **तु। द्वितीयोदात्तालङ्कारः।' इति। तद्। अपि** (इदं केषाञ्चिदन्येषामपरेषां च मतस्य ग्राहकम्)। **परास्तम्।** इदमुक्तम्—ध्वनिकारोक्तदिशाऽभियुक्तानां सिद्धान्तेन चाङ्गभूतानां रसादीनां प्रधानरसाद्युपकारकत्वमादाय रसवदाद्यलङ्कारत्वं, नतु प्रधानभूतानां रसादीनामिति 'रसादीनामङ्गित्वे रसवदाद्यलङ्कारा'इति पराहतम्। अथ-अङ्गत्वे द्वितीयोदात्तालङ्कारस्वीकारोऽप्येतेनैव पराहतः, अङ्गत्वे रसवदाद्यलङ्कारत्वस्य तैः स्वीकृतत्वात्। इति।

एवं शुद्धा अलङ्कारा दर्शिताः, अथैषां मेलनेऽलङ्कारान्तरद्वयमुपपादयति—१८९ **यदि। एते** दर्शिताः शुद्धाः पुनरुक्तवदाभासादय उपमाऽऽदयश्चेत्यर्थः। **एव। अलङ्काराः। परस्परविमिश्रिता** अन्योऽन्यं मेलनं गता भवन्ति। **तदा। संसृष्टिः। तथा। सङ्करः।** इति—**पृथगन्यौ। अलङ्कारौ।** 'ज्ञेया'विति शेषः ॥ १५० ॥

तदेव स्पष्टम्बोधयितुं विवृणोति—**यथा। लौकिकानाम्।** अपि'किम्पुनरलौकिकाना'मिति शेषः। **अलङ्काराणाम्। परस्परमिश्रणे। पृथक्चारुत्वेन** विलक्षणचमत्कारत्वेन। 'अमिश्रितालङ्कारापेक्षया'इति शेषः। **पृथगलङ्कारत्वम्। तथा। उक्तरूपाणा**मभिहितलक्षणानाम्। **काव्यालङ्काराणाम्।** परस्परमिश्रणे। **संसृष्टिसङ्कराख्यौ। पृथक्। अलङ्कारौ।** अयम्भावः—यथा—एकत्राङ्गे (कण्ठादौ) अनेकेऽलङ्कारा अपृथक्कृतयोपनीताः पृथग्भूतामेव कामपि शोभामुपपादयन्ते, यथा वा केनापि शिल्पिपटुनाऽनेकालङ्कारकार्यकारित्वमुपपादयितुं तत्तत्सरूप एक एवालङ्कारस्तथोपपाद्यते स यथा कामपि शोभां सम्पादयन् तत्तदेकतरत्वं न जहाति; तथा—क्वचिदलौकिका अपि अलङ्कारास्तिलतण्डुलन्यायेन क्वचिन्नीरक्षीरन्यायेन मिश्रिताः कामपि पृथग्भूतां शोभां जनयन्तीति तेषां मेलनं संसृष्टिसङ्करव्यपदेश्यम्। अत्रैवानुक्तानां परैरुक्तानामन्येषामलङ्काराणामन्तर्भावस्तस्यतस्य मिश्रितालङ्कारत्वाविरहात्। अत एव—'अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनम्' इत्युक्तोऽत्युक्त्यलङ्कारोऽतिशयोक्त्युदात्तयोः, 'प्राक्सिद्धस्वगुणोत्कर्षोऽनुगुणः परसन्निधेः।' इत्युक्तोऽनुगुण उदात्ततद्गुणयोः, 'असम्भवोऽर्थनिष्पत्तेरसम्भाव्यत्ववर्णनम्।' इत्युक्तोऽसम्भवो व्याजोक्तिविरोधोदात्तानाम्, 'यस्मिन् विशेषसामान्यविशेषाः विकस्वरः।' इत्युक्तो विकस्वरोऽर्थान्तरन्यासस्याद्ययोर्भेदयोर्मेलनम्। एवमसमोदाहरणातुल्ययोगित्वादीनामपि अनेकालङ्कारान्तरवैचित्र्यमूलत्वं याथातथ्येन बोध्यम्।' इति दिक्।

एवं संसृष्टिसङ्करयोः सामान्यं लक्षणं दर्शयित्वा विशेषं दर्शयति—**तत्र**—१९०**एतेषां** निरुक्तालङ्काराणाम्। **मिथः। अनपेक्षयो**पकार्योपकारकत्वोपेक्षया। **स्थितिः।** 'तिलतण्डुलन्यायेने'ति शेषः। **संसृष्टिः। उच्यते।** अयम्भावः—यथा तिलतण्डुलमिश्रणं परस्परमनुपकार्यानुपकारकत्वेन स्थितं तथा यत्र पद्ये गद्ये वा शाब्दयोः शाब्दार्थयोः शाब्दार्थयोर्वाऽलङ्कारयोः स्थितिः संसृष्टिपदाभिधेया। सा यथा—'वदनसौरभलोभपरिभ्रमद्भ्रमर! सम्भ्रमसम्भृतशोभया। चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया ॥' इति, अत्र वृत्त्यनुप्रासयमकयोः सद्भावात्। 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः। असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥' इति, अत्र ह्युपमोत्प्रेक्षयोः तृतीया तु स्वयमुदाहरिष्यते। इति ॥ १५१ ॥

कारिकां सुगमयितुं तत्कठिनांशं सुगमयति—एतेषामित्यादिना। स्पष्टम्।

'देवः पायादपायान्नः स्मेरेन्दीवरलोचनः। संसारध्वान्तविध्वंसहंसः कंसनिषूदनः॥ ३०५॥'

अत्र 'पायादपाया'दिति यमकम्, 'संसारध्वान्तविध्वंसहंस'इत्यादौ चानुप्रासः; इति शब्दालङ्कारयोः संसृष्टिः। द्वितीयपादे उपमाद्वितीयार्धे च रूपकम्; इत्यर्थालङ्कारयोः संसृष्टिः। उभयोः स्थितत्वाच्छब्दार्थालङ्कारसंसृष्टिः।

१९१　अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ।
सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः॥ १९२॥

अङ्गाङ्गिभावो यथा—

'आकृष्टिवेगविगलद्भुजगेन्द्रभोगनिर्मोकपट्टपरिवेष्टनयाऽम्बुराशेः।
मन्थव्यथाव्युपशमार्थमिवाशु यस्य मन्दाकिनी चिरमवेष्टत पादमूले॥ ३०६॥'

---

उदाहरति–यथा–संसारध्वान्तविध्वंसहंसः संसारश्चराचरात्मकं जगदेव ध्वान्तमविद्याविजृम्भितत्वादन्धकारस्तस्य विध्वंसस्तत्र हंसः सूर्यः। 'भानुर्हंसः सहस्रांशु'रित्यमरः। स्मेरेन्दीवरलोचनः स्मेरे प्रफुल्ले इन्दीवरे नीलकमले तद्वल्लोचने यस्य तथोक्तः। कंसनिषूदनः कंसारिः। देवः। अपायात् क्लेशात्। नोऽस्मान्। पायाद्रक्षेत्॥ ३०५॥'

अत्र शब्दार्थालङ्काराणां स्थित्यंशनिर्देशपूर्वकं मिश्रणं निर्दिशति–अत्रेत्यादिना। स्पष्टम्।

यथा वा–'आनन्दमन्थरपुरन्दरमुक्तमाल्यं मौलौ हठेन निहितं महिषासुरस्य। पादाम्बुजं भवतु मे विजयाय मञ्जु–मञ्जीरसिञ्जितमनोहरमम्बिकायाः॥' इति, अत्र हि–अनुप्रासोपमयोः संसृष्टिः। गद्ये पुनरियं कादम्बर्यादौ यथातथं स्वयं द्रष्टव्या।

सङ्करमुपपाद्य लक्षयति–१९१ अलङ्कृतीनामुक्तालङ्काराणाम्। अङ्गाङ्गित्वे गौणप्रधानत्वे। तद्वत् तथा। एकाश्रयस्थितावेकः पादरूपः पदरूपः पद्यरूपो वाऽऽश्रय आधारस्तत्र स्थितिस्तस्याम्। सन्दिग्धत्वे साधकबाधकाभावेन स्थितत्वे। च। सङ्करः। पुनः। त्रिविधः। भवति। अयम्भावः–सङ्करस्त्रिविधः, अङ्गाङ्गित्वैकाश्रयत्व–सन्दिग्धत्वभेदात्। तत्र–अङ्गाङ्गित्वं नाम स्वातन्त्र्यमप्राप्ततयोपकार्योपकारकत्वं गतत्वम्। तथाऽऽहुः 'अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु सङ्करः।' इति। एकाश्रयत्वं नाम एकत्र पदे पादे वाक्ये वा व्यवस्थितत्वम्। सन्दिग्धत्वं च द्वयोर्बहूनां वा साधकबाधकाभावेनैकत्राविरुद्धसमाविष्टत्वम्। इदं बोध्यम्–अयं प्रायः–नीरक्षीरन्यायेनास्फुटपार्थक्येनालङ्कारमिश्रणमूलः, अत एवास्य शाब्दयोरार्थयोरेव वा एकत्र समावेशो सम्भवति। शाब्दार्थमिश्रणमूलत्वे नीरक्षीरसादृश्यानुपपत्तेः। प्रायःपदेन–एकाश्रयत्वे शाब्दार्थमिश्रणमूलत्वेऽपि न क्षतिरिति सूचितम्॥ १५२॥

अङ्गाङ्गित्वप्रभेदं सङ्करमुदाहर्तुमाह–अङ्गाङ्गीत्यादि। स्पष्टम्। 'आकृष्टीत्यादि।

'मन्दाकिनी आकाशगङ्गा लक्षणया गङ्गेत्यर्थः। 'मन्दाकिनी वियद्गङ्गे'त्यमरः। यस्य यत्पदवाच्यस्य, यद्वा–ई लक्ष्मीः पत्नीत्वेनास्यास्तीति तस्य, लक्ष्मीपतेरित्यर्थः। अम्बुराशेः समुद्रस्य, यद्वा–लक्षणया तदभिन्नस्येत्यर्थः। दयामिश्रा सेव्यत्वेन चेयं लक्षणा(अस्मिन्पक्षे यस्येति विशेष्यम्)। आशु। मन्थव्यथाव्युपशमार्थं मन्थस्य मन्थनस्य, यद्वा मन्थे मन्थने या व्यथा तस्या व्युपशमो विशेषेणोपशमनं तदर्थम्। इव। पादमूले एकदेशे, यद्वा-चरणसमीपभागौ। 'पादा रश्म्यङ्घ्रितुर्यांशा'इत्यमरः। आकृष्टि...आकृष्टेराकर्षणस्य वेगोऽत्यन्तत्वरया विधानं तेन विगलन् दूरीभवन् भुजगेन्द्रस्य वासुकेर्भोग(स्य)निर्मोकः (कञ्चुकः) एव पट्टो बन्धनवस्त्रं यद्वा–....निर्मोकः पट्ट इवेति, स एव परिवेष्टना परितः प्रवहणं प्रत्यवरोध्यावस्थानं वा तया 'तच्छलेने'ति विवृतिकाराः। चिरं चिरकालं व्याप्य। अवेष्टत पर्य्यवहत् प्रत्यवरोध्य वाऽतिष्ठत्। वसन्ततिलकं वृत्तम्, तल्लक्षणं चोक्तं प्राक्॥ ३०६॥'

अत्र निर्मोकपट्टापह्नवेन मन्दाकिन्या आरोप इत्यपह्नुतिः, सा च मन्दाकिन्या वस्तुवृत्तेन यत्पादमूलवेष्टनं तच्चरणमूलवेष्टनमिति श्लेषमुत्थापयतीति तस्याङ्गम्। तस्याश्च पादमूलवेष्टनमेव चरणमूलवेष्टनमित्यतिशयोक्तेरङ्गम्, अतिशयोक्तिश्च 'मन्थव्यथाव्युपशमार्थमिवे'त्युत्प्रेक्षाया अङ्गम्, उत्प्रेक्षा चाम्बुराशिमन्दाकिन्योर्नायकनायिकाव्यवहारं गमयतीति समासोक्तेरङ्गम्। यथा वा—

'अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः। अहो दैवगतिश्चित्रा तथाऽपि न समागमः॥३०७॥'

अत्र समासोक्तिर्विशेषोक्तेरङ्गम्। सन्देहसङ्करो यथा—

'इदमाभाति रुचिरं भिन्दानं सन्ततं तमः। अमन्दनयनानन्दकरं मण्डलमैन्दवम्॥ ३०८॥'

---

अलङ्कारसाङ्कर्यं निर्दिशति—अत्रोदाहृते पद्ये। **निर्मोकपट्टापह्नवेन** निर्मोकपट्टस्य परिवेष्टनात्मतया प्रतिपादनेनेति शेषः। **मन्दाकिन्याः**। **आरोपः** 'अस्याः परिवेष्टन (परितः प्रवहण) रूपत्वात्'इति शेषः। **इति**। **अपह्नुतिः** 'प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः।'इति वक्ष्यमाणलक्षणोऽपह्नुत्यलङ्कारः। **साऽपह्नुतिः**। **च**। **मन्दाकिन्याः**। **वस्तुवृत्तेन** वस्तुनः स्वरूपस्य वृत्तमितिवृत्तं निर्वचनमिति यावत्, तेन। **यत्पादमूलवेष्टनं** यस्याम्बुराशेः पादमूल ( एकदेश ) वेष्टनमिति तथोक्तम्। एव। **तच्चरणमूलवेष्टनं** तस्य श्रीपतेः चरणमूलवेष्टनम्। **इति**। **श्लेषम्**। **उत्थापयत्यर्थ**शक्त्या निरूपयति। **इति**। **तस्य** श्लेषस्य। **अङ्गं** परिपोषिका। तदेवोपपादयति—**तस्या** इत्यादि। अयम्भावः—पादमूलशब्दस्य एकदेशेतिचरणसन्निधानेति चार्थः। पादमूलशब्दस्य परिवृत्तावप्युक्तस्यार्थस्यापरिवृत्तिः, एवं परिवेष्टनशब्दस्यापि अर्थद्वयम्। प्रकरणस्य च गङ्गायाः समुद्रव्यथाव्युपशमपरत्वे भगवद्व्यथाव्युपशमपरत्वे च संमानतया श्लेषः, अस्योपकारिका निर्मोकपट्टमपह्नुत्य तत्र परिवेष्टनारोपेणोत्तम्भिताऽपह्नुतिः, अस्या असत्त्वे तत्परिपोषाभावात्। इति। **अतिशयोक्तिः**। समुद्रलक्ष्मीपत्योर्भेदेऽप्यभेदाध्यवसायरूपोऽतिशयोक्त्यलङ्कारः। **च**। '**मन्थव्यथाव्युपशमार्थमिवे'त्युत्प्रेक्षायाः** ( इवशब्दवाच्यायाः )। **अङ्गम्**। अयम्भावः—इवशब्दप्रतिपाद्योत्प्रेक्षा, अम्बुराशिपदार्थस्य समुद्रात्मकत्वेऽपि यत्- ( लक्ष्मीपति ) पदार्थेन विशेष्येण विशेषणतामुपपादयितुं तयोरभेदाध्यवसायेऽतिशयोक्तिश्च, अनयोरतिशयोक्तिरुत्प्रेक्षायाः परिपोषिका, तां विनोत्तम्भिताया अप्यस्या अपरिपोषात् ( अचमत्कारकत्वात् )। समुद्रस्य जडतया मन्थव्यथाया असम्भवात्, तत्र विष्णुसादृश्यमुद्भाव्यैव गङ्गाया मन्थव्यथाव्युपशमपरत्वोत्प्रेक्षणस्य ह्यौचित्यम्। इति। **उत्प्रेक्षा**। **च**। **अम्बुराशि** ( समुद्र-विष्णु ) **मन्दाकिन्योः**। **नायकनायिकाव्यवहारम्**। **गमयत्य**वगमयति। **इति** **समासोक्तेः**। **अङ्गं** परिपोषिका।

उदाहरणान्तरेण विषयकाठिन्यं परिहर्त्तुमाह—**यथा वा**। स्पष्टम्। 'अन्वित्यादि। **सन्ध्या** ( तदात्मना व्यवहृता नायिका )। **अनुरागवती** लौहित्यवती प्रेमवती चेत्यर्थः। **दिवसः** ( तदात्मना व्यवहृतो नायकः )। **तत्पुरःसरस्त**स्याः सन्ध्यायाः ( तदात्मना व्यवहृताया नायिकायाः ) पुरःसरः पुरोवर्त्ती। **अहो** आश्चर्यम्। **दैवगतिः** प्रारब्धोदयः। **चित्रा** विलक्षणा। यत्—**तथाऽपि** तयोः पाश्चात्त्यपुरस्त्ययोः सन्ध्यादिवसयोः। **समागमः** परस्परं मेलनम्। **न**। 'सम्भवती'ति शेषः॥ ३०७॥

उदाहृतमर्थं निर्दिशति—**अत्र**। **समासोक्तिः** 'सन्ध्यादिवसयोर्नायिकानायकव्यवहारमूलेति' शेषः। **विशेषोक्तेः** 'सति हेतौ फलाभावे विशेषोक्ति' रित्युक्तस्य सन्ध्यादिवसयोः पाश्चात्त्यपुरस्त्यरूपे हेतौ सत्यपि समागमरूपस्य कार्य्यस्याऽनिष्पत्तिमूलस्य 'अहो'इत्यादिनोक्तनिमित्तस्यालङ्कारविशेषस्य। **अङ्गम्**।

क्रमवशेन प्रागुदाहार्य्यस्यापि एकाश्रयानुप्रविष्टत्वस्य सन्देहसङ्करातिरिक्तो विषय इति एकाश्रयानुप्रविष्टत्वमनुदाहृत्य सन्देहसङ्करमेवोदाहर्त्तुमाह—**सन्देहसङ्करः**। **यथा**—'**सन्ततं** सम्यग्व्याप्तं विपुलीभूतं वा। **तमो**ऽन्धकारं स्वरजनितमज्ञानं वा ( कर्म्म )। **भिन्दानं** निवर्त्तयन्तम्। **अमन्दनयनानन्दकरम**मन्दं यथा स्यात्तथा नयनयोरानन्दस्तस्य करमुत्पादकम्। **ऐन्दवमि**न्दुसम्बन्धि। **इदम्**। **रुचिरम्**। **मण्डलं** विम्बम्। **आभाति** ॥ ३०८॥'

अत्र किंमुखस्य चन्द्रतयाऽध्यवसानादतिशयोक्तिः ? उत इदमिति मुखं निर्दिश्य चन्द्रत्वारोपाद्रूपकम् ? अथवा इदमिति मुखस्य चन्द्रमण्डलस्य च द्वयोरपि प्रकृतयोरेकधर्माभिसम्बन्धात्तुल्ययोगिता? आहोस्वित् चन्द्रस्याप्रकृतत्वाद्दीपकम् ? किंवा विशेषणसाम्यादप्रस्तुतस्य मुखस्य गम्यत्वात् समासोक्तिः ? यद्वा अप्रस्तुतचन्द्रवर्णनया प्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा ? यद्वा मन्मथोद्दीपनः कालः स्वकार्यभूतचन्द्रवर्णनमुखेन वर्णित इति पर्यायोक्तिः ? इति बहूनामलङ्काराणां सन्देहात् सन्देहसङ्करः ।

यथा वा—'मुखचन्द्रं पश्यामी' त्यत्र किं मुखं चन्द्र इवेत्युपमा ? उत चन्द्र एवेति रूपकम् ? इति सन्देहः । साधकबाधकयोर्द्वयोरेकतरस्य सद्भावे पुनर्न सन्देहः । यथा—'मुखचन्द्रं चुम्बति' इत्यत्र चुम्बनं मुखस्यानुकूलमित्युपमायाः साधकम्, चन्द्रस्य तु प्रतिकूलमिति रूपकस्य बाधकम् । 'मुखचन्द्रः प्रकाशते'इत्यत्र तु प्रकाशाख्यो धर्मो रूपकस्य साधको मुखे उपचरितत्वेन सम्भवतीति नोपमाबाधकः ।

---

उदाहृतमर्थं निर्दिशति—अत्रेत्यादिना । स्पष्टोऽर्थः । इदं तत्त्वम्—इदंपदार्थस्य मुखरूपत्वेऽपि चन्द्रतयाऽध्यवसानादतिशयोक्तिः 'भेदेऽप्यभेद'इत्युक्तलक्षणा निर्बाधा, इदंपदवाच्यं मुखमुद्दिश्य चन्द्ररूपेण रूपणाद्रूपकं 'रूपकं रूपितारोपाद्विषये निरपह्नवे ।' इत्युक्तलक्षणं च निर्बाधम् । इदम्पदवाच्यम्मुखमैन्दवमण्डलपदवाच्यं चन्द्रबिम्बं च यदि प्रकृते, तयोश्च सन्तततमोभेदनादिरूपस्य धर्मस्य समानतया निर्देशात्तुल्ययोगिता 'पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत् । एकधर्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता॥'इत्युक्ता च निर्बाधा । इदम्पदवाच्यस्य मुखस्य प्रकृतत्वमैन्दवमण्डलवाच्यस्य च चेच्चन्द्रस्याप्रकृतत्वम्, इत्येवं स्थितौ तयोरेकधर्मत्वेन दीपकम् 'अप्रस्तुतप्रस्तुतयोर्दीपकं तु निगद्यते ।'इत्युक्तं निर्बाधं च । इदम्पदवाच्यं यदीन्दुमण्डलं प्रकृतं, विशेषणसाम्याद् वदनव्यवहारो वा यदि तत्रावगम्यते तत्समासोक्तिः 'समासोक्तिः समैर्यत्र कार्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः ॥' इत्युक्ता निर्बाधा च । यदि मुखवर्णनं प्रस्तुतं चन्द्रस्याप्रस्तुतस्य पुनर्वर्णनं प्रतिपादितं तदप्रस्तुतप्रशंसा'अप्रस्तुतात्प्रस्तुतं चेद्गम्यते'इत्युक्ता समात् (चन्द्रात्) सम (मुख) रूपा निर्बाधा । 'इद' मित्यादिना वा सम्प्रति सुरतावसर इति बोधितं चेत् पर्यायोक्तिः 'पर्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते ।'इति स्फुटं सम्पद्यते । इति इत्येवम् । **बहूनामतिशयोक्त्यादीनाम्** । **अलङ्काराणाम्** । 'साधकबाधकाभावेने'ति शेषः । **सन्देहात्** । **सन्देहसङ्करः** सन्देहेन युक्तः सङ्करः ।

उदाहरणान्तरं निर्दिशति—**यथा**—वेत्यादिना । स्पष्टम् । इदं तत्त्वम् 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ।' २।१।५६ इत्यनेन 'मुखं चन्द्र इवे'ति समासाश्रयणे उपमा निर्बाधा, 'मुखमेव चन्द्र'इति समासस्य 'मयूरव्यंसकादयश्च ।' २।१।७२ इत्यनेनाश्रयणे रूपकं च । उभयत्रापत्त्यभावात्समासस्योभयथोपपत्तिः । इति । ननु साधकबाधकयोरेकतरसत्त्वेऽप्यस्याङ्गीकारः स्यादित्याशङ्कयाह—**साधके**त्यादि । **द्वयोः** । **साधकबाधकयोः** । निर्धारणार्थेयं षष्ठी सप्तमी वा । **एकतरस्य** साधकस्य बाधकस्यैव वेत्यर्थः । **पुनः** । **सद्भावे** । **सन्देहः** । **न** । अतस्तत्रास्य विषय इति भावः । उदाहरति- **यथा** । **'मुखचन्द्रं चुम्बति'** इत्यत्र समासस्योपमारूपकोभयघटकत्वेऽपि । **चुम्बनं** मुखसंयोगानुकूलव्यापारः । **मुखस्य** । **अनुकूलम्** । **इति** । **उपमायाः** । **साधकम्** । **चन्द्रस्य** । **तु** । **प्रतिकूलम्** । **इति** । **रूपकस्य** । **बाधकम्** । अतोऽत्र नालङ्कारद्वयं, न वा तस्य सङ्कर इति भावः । **'मुखचन्द्रः प्रकाशते ।'** **इत्यत्र** । **तु** (इदं पूर्वतो वैलक्ष्यण्यद्योतकम्) । **प्रकाशाख्यः** । **धर्मः** । **रूपकस्य** । **साधकः** । **मुखे** । **उपचरितत्वेन**ोपचारेण गौण्या लक्षणयेति यावत् । **सम्भवति** । **इति** । **उपमाबाधकः** । 'अपी'ति शेषः । **न** । 'अतोऽत्रोपमारूपकयोः सन्देहसङ्कर एवे'ति केचित्, 'संसृष्टि'रित्यपरे प्राहुः ।

यथा वा—'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्।
चञ्चलाऽपि चिरायात्मदूषणं परिमार्ज्य सा ॥ ३०९ ॥

अत्र 'योषित आलिङ्गनं नायकस्य सादृश्येनोचित'मिति लक्ष्म्यालिङ्गनस्य राजन्यसम्भवादुपमाबाधकम्, नारायणे सम्भवाद्रूपकम्। एवम्—

'वदनाम्बुजमेणाक्ष्या भाति चञ्चललोचनम्। रुचिरभ्रुकुटीशालि मधुरस्मितशोभनम्॥३१०॥'

अत्र वदने लोचनस्य सम्भवादुपमायाः साधकता, अम्बुजे चासम्भवाद्रूपकस्य बाधकता एवं 'वदनाम्बुज'मित्यादौ साधारणधर्मप्रयोगे 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' २।१।५६ इतिवचनादुपमासमासो न सम्भवतीत्युपमाया बाधकः। एवं चात्र मयूरव्यंसकादित्वाद्रूपकसमास एव। एकाश्रयानुप्रवेशो यथा मम—

'कटाक्षेणापीषत्क्षणमपि निरीक्षेत यदि सा तदानन्दः सान्द्रः स्फुरति पिहिताशेषविषयः।
सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः परीरम्भारम्भः क इव भविताऽम्भोरुहदृशः॥३११॥'

---

यथा। वा। 'सा प्रसिद्धा। लक्ष्मीः। चञ्चलाऽस्थिरस्वभावा। अपि। चिराय। आत्मदूषणं स्वचाञ्चल्यदोषम्। परिमार्ज्य निःशेष्य। निर्भरं स्थिरप्रेमपूर्वकम्। राजनारायणं राजैव नारायणस्तम्। त्वाम्। आलिङ्गति ॥ ३०९ ॥'

अत्र। 'योषितस्तत्कर्तृकमिति भावः। नायकस्य। आलिङ्गनम्। सादृश्येन तत्तदनुरूपेण दाम्पत्येनेति भावः। उचितम्।' इति। लक्ष्म्यालिङ्गनस्य लक्ष्मीकर्तृकस्याश्लेषस्य। राजनि। असम्भवात्। 'त'दिति शेषः। उपमाबाधकम्। नारायणे। सम्भवात्। रूपकम्। अयम्भावः—राजा नारायण इवेति समासस्तदैव समगमिष्यत, यर्हि लक्ष्म्यालिङ्गनौचित्यं राजन्यभविष्यत्। अतस्तदभावादुपमाया बाधः, रूपकस्य तु सम्पत्तिः। इति। एवम्।

'एणाक्ष्या मृगनेत्रायाः। चञ्चललोचनं चञ्चले लोचने नेत्रे यस्य तथोक्तम्। रुचिरभ्रुकुटीशालि रुचिरे ये भ्रुकुटी ताभ्यां शालते शोभते इत्येवम्भूतम्। मधुरस्मितशोभनं मधुरस्मितेन शोभनं रमणीयम्। वदनाम्बुजं वदनम्मुखमम्बुजमिवेति तथोक्तम्। भाति ॥ ३१० ॥

अत्र। वदने मुखे। लोचनस्य। सम्भवात्। उपमायाः। साधकता। अम्बुजे कमले। च। असम्भवात्। रूपकस्य। बाधकता। एवम्। 'वदनाम्बुज'मित्यादौ। साधारणधर्मप्रयोगे। 'वदनसुन्दराम्बुज'मित्येवं पाठपरिवृत्ताविति भावः। 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे।' २। १। ५६ इतिवचनात् ( इति सूत्रात् )। उपमा ( उपमाघटक ) समासः। न। सम्भवति। इति। उपमायाः। बाधकः ? 'साधारणधर्मप्रयोग' इति शेषः। एवं तथासति। च। अत्र। मयूरव्यंसकादित्वात् 'मयूरव्यंसकादयश्च।' २। १। ७२ इत्यनेन सूत्रेणेति शेषः। रूपकसमासः। एव। अयम्भावः—'वदनसुन्दराम्बुज'मित्यत्र वदनमेव सुन्दराम्बुजमित्येव समासः, मयूरव्यंसकादिगणगतत्वेन तस्य स्वीकारात्। ननु 'वदनं सुन्दरमम्बुजमिवे'ति वदनं' सुन्दराम्बुज'मित्यपि वा समासः। एतद्घटकस्य 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे।' २। १। ५६ इति सूत्रस्य सामान्याप्रयोग एव प्रवृत्तेः, अत्र च 'सुन्दरे'ति सामान्यधर्मवाचकस्य प्रयोगात्। इति।

एकाश्रयत्वमुदाहर्तुमाह–एकाश्रयानुप्रवेशः। यथा। मम–'सा मनोरमतया प्रसिद्धा कान्ता। यदि। ईषत्क्षणं किञ्चित्क्षणावधि। अपि। कटाक्षेण। अपि। निरीक्षेत। तदा। पिहिताशेषविषयः पिहिता अशेषा विषया येन तादृशः। अत एव–सान्द्रो निबिडः। आनन्दः प्रमोदः। स्फुरति। अथ–अम्भोरुहदृशोऽम्भोरुहे इव दृशो यस्यास्तस्याः, कमलनेत्रायास्तस्याः कान्ताया इत्यर्थः। सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः सरोमाञ्चमुदञ्चन्तौ वर्धमानौ कुचकलशौ ताभ्यां निर्भिन्नं छिन्नं वसनं यत्र तादृशः। परीरम्भारम्भः परीरम्भस्याश्लेषस्यारम्भः।

अत्र 'कटाक्षेणापीषत्क्षणमपी'त्यत्रच्छेकानुप्रासस्य 'निरीक्षेते'त्यत्र क्षकारमादाय वृत्त्यनुप्रासस्य चैकाश्रयेऽनुप्रवेशः। एवं चात्रैवानुप्रासार्थापत्त्यलङ्कारयोः।

यथा वा--'संसारध्वान्तविध्वंसहंस'इत्यत्र रूपकानुप्रासयोः। यथा वा--'कुरवका रवकारणतां ययुः'इत्यत्र'रवकारवका'इत्येकं 'वकारवकार' इत्येकमिति यमकयोः।

---

'उपसर्गस्य घञ्यमनुष्ये बहुलम्।' ६। ३। १२२ इति दीर्घः। क्तः। इव। भविता। तत्र कियान् प्रमोदो भावीति न वेत्तुं शक्यत इति भावः। मनसा कामपि भावयतः कस्याप्युक्तिरियम्। शार्दूलविक्रीडितं वृत्तं, तल्लक्षणं चोक्तं प्राक्॥ ३११॥'

उदाहृतमर्थं निगमयति–अत्रेत्यादिना। स्पष्टोऽर्थः। अयम्भावः–'छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा।' इत्युक्तः छेकानुप्रासः 'अनेकस्यैकधा-साम्य'–मित्याद्युक्तो वृत्त्यनुप्रासश्च क्षकारमादायोत्तम्भितशरीरौ। अनयोश्चैकस्मिन् पादरूपे आश्रये प्रवेशः। विवृतं चैतत्तर्कवागीशैः 'कटाक्षेणापीषत्क्षणमपी' त्यत्र वर्ण (क्-ष्)-द्वयघटितस्य क्षकारस्य क्रमस्वरूपाभ्यां सकृत्साम्याच्छेकानुप्रासः, पश्चात्–'निरीक्षेते'ति क्षकारमादाय क्रमस्वरूपाभ्यामसकृत्साम्यसम्भवाद् वृत्त्यनुप्रासः। एवं चतुर्थपादेऽपि मकारभकारघटितवर्णपिण्डस्य च्छेकवृत्त्यनुप्रासौ वेदितव्यौ।' इति। अयं च सङ्कर एकपादाश्रयः, एकपद्याश्रयस्तु–अनुप्रासार्थापत्त्यलङ्कारयोः, तथा हि–अनुप्रासश्छेकवृत्त्यात्मा दर्शित एव, अथ–'दण्डापूपिकयाऽन्यार्थागमोऽर्थापत्तिरिष्यते' इत्युक्तोऽर्थापत्त्यलङ्कारः 'क इवे' त्यत्रार्पितः। इति। इदं बोध्यम्–एकाश्रयत्वे तिलतण्डुलन्यायस्य चरितार्थत्वेन संसृष्टिस्वीकारौचित्येऽपि प्राचामादेशेन सङ्करस्वीकारः। यद्यपि–एकपदाश्रययोः सजातिकयोरलङ्कारयोर्मिश्रणं नीरक्षीरन्यायानुगतमिति तत्र सङ्करः, अन्यथा संसृष्टिः। यथोदाहरिष्यमाणे 'अहिणअ' इत्यत्रोपमारूपकयोरेकपदाश्रितत्वात्सजातीयत्वान्मिश्रणं सङ्कर इति न्यायः। एवमुदाहृतेऽनुप्रासयोः सजातीयत्वेऽपि एकपदाश्रितत्वाभावेन मिश्रणं संसृष्टिः, अनुप्रासार्थापत्त्योस्तु विजातीयत्वेनैकपदाश्रितत्वाभावेन च मिश्रणं संसृष्टिः स्फुटेति विभागः कर्तुं शक्यते। अत एव–विषयस्फुटीकरणायानेकधोदाहृत्यान्ते 'अहिणअ' इत्येवोदाहृतमिति च वक्तुं शक्यं तथाऽपि 'कटाक्षेणापीषत्क्षण' मित्यत्र च्छेकवृत्त्योरेकपदाश्रयत्वाभावेऽपि एकपादाश्रयत्वेन नीरक्षीरन्यायस्य सुचरितत्वेन च सङ्कर इति सहृदयाः। एवमनेकपदाश्रयत्वेऽपि एकपादाश्रयत्वेन सङ्करोपपत्तौ एकाश्रयत्वे क्वचित्सङ्करः क्वचित् संसृष्टिरिति कल्पनमयुक्तम्, विषयान्वेषणक्लिष्टत्वापत्तेः। अत एव–शाब्दार्थयोरेकपदगतत्वेन एकाश्रयानुप्रविष्टत्वेऽपि नीरक्षीरन्यायस्य सुचरितत्वाभावेन मिश्रणस्य संसृष्टिरूपत्वम्, अथाऽपि तत्रैष एव सङ्करः प्रकाशकारादिभिरुदाहृत्याङ्गीकृतः। इति।

शाब्दार्थावलङ्कारावुदाहरति–यथा वेत्यादिना। स्पष्टम्। इदं तत्त्वम्–अत्र हि कंसनिषूदनस्य हंसत्वेन रूपणाद्रूपकम्, धकारोत्तरवकारघटितवर्णसाम्येन चानुप्रासः। एवमनुप्रासस्य शाब्दत्वं रूपकस्य चार्थत्वम्। इति।

पुनरुदाहरति–यथा वा–'कुरबका रक्तवर्णा अम्लानाः। 'तत्र शोणे कुरवक'इत्यमरः। रवकारणतां ध्वनिपरत्वनिमित्ततामित्यर्थः। 'मधुलिहा'मिति पूर्वतोऽनुषज्यते। ययुः। अस्य पूर्वपादत्रयं 'विरचिता मधुनोपवनश्रियामभिनवा इव पत्रविशेषकाः। मधुलिहां मधुदानविशारदाः' इति। रघुवंशस्येदं पद्यम्। द्रुतविलम्बितं वृत्तं, तल्लक्षणं चोक्तं प्राक्॥' उदाहरणीयं सूचयति–इत्यत्रेत्यादिना। स्पष्टम्।

यथा वा—'अहिणअपओदरसिअसु पहिअस्सामाइएसु दिअसेसु।
मोहइ पसारिअगिआणं णिच्चिअं मोरविंदाणं'॥ ३१२॥'

अत्र'पहिअस्सामाइएसु'इत्येकाश्रये पथिकश्यामायितेष्वित्युपमा। पथिकसामाजिकेष्विति रूपकं प्रविष्टम्।

श्रीचन्द्रशेखरमहाकविचन्द्रसूनुश्रीविश्वनाथकविराजकृतं प्रबन्धम्।
साहित्यदर्पणममुं सुधियो विलोक्य साहित्यतत्त्वमखिलं सुखमेव वित्त॥
यावत्प्रसन्नेन्दुनिभानना श्रीर्नारायणस्याङ्कमलङ्करोति।
तावन्मनः सम्मदयन् कवीनामेष प्रबन्धः प्रथितोऽस्तु लोके॥

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापनपरमाचार्यकविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहापात्रश्रीविश्वनाथकविराजकृतौ साहित्यदर्पणेऽलङ्कारस्वरूपनिरूपणं नाम दशमः परिच्छेदः।

समाप्तश्चायं साहित्यदर्पणः।

---

एकपदगतत्वेनैकाश्रयमुदाहरति–यथा वेति। 'अहिणअ' इत्यादि। 'अहिणअपओदरसिअसु अभिनवपयोदरसितेषु अभिनवा ये पयोदा जलदास्तै रसिता ध्वनिशालितां नीतास्तेषु इति यावत्। अभिनवत्वेन पयोदानां तर्पणक्षमत्वतदुन्मुखत्वे सूचिते। पहिअस्सामाइएसु पथिकश्यामायितेषु पथिका विरहिणः श्यामायिता मलिन इवाचरितवन्तो येषु तेषु।यद्वा–'पथिकसामाजिकेषु'इत्यर्थः पथिका एव सामाजिका उत्सव(नृत्य)दर्शका येषु तथाभूतेष्विति भावः। आहिताग्न्यादित्वात्परनिपातः। दिअसेसु दिवसेषु। पसारिअगिआणं प्रसारितग्रीवाणाम्। मोरविन्दाणं मयूरवृन्दानाम्। णिच्चिअं नृत्यम्। मोहइ मोहयति। गाथासप्तशत्याः पद्यमिदं, गाथाछन्दः, तल्लक्षणं चोक्तं प्राक्॥ ३१२॥'

उदाहृतमर्थं निर्दिशति–अत्रेत्यादिना। स्पष्टम्।

विदुषः सम्बोध्यास्य फलानुभवाय प्रार्थयते–'हे सुधियो विद्वांसः सदसद्विवेचनपूर्वकं सारमात्रग्रहणपटव इति यावत्। श्रीचन्द्रशेखर...श्रीचन्द्रशेखर एव महाकविचन्द्रो महाकविषु ( तारागणेष्विव ) चन्द्रभूतस्तस्य सूनुः पुत्रः, सोऽसौ विश्वनाथकविराजस्तेन कृतस्तम्। अमुम्। साहित्यदर्पणम्। प्रबन्धम्। विलोक्य। अखिलम-ङ्गोपाङ्गसहितम्। साहित्यतत्त्वं साहित्यस्यालङ्कार ( प्रधान)–शास्त्रस्य तत्त्वं तत्। सुखमनायासम्। एव। वित्त यूयं जानीत। एतद्विलोकनानन्तरं रसमञ्जर्यादेरप्यपेक्षा न भविष्यतीति भावः। वसन्ततिलकं वृत्तं, तल्लक्षणं चोक्तं प्राक्॥

परमात्मानं स्मरन् ग्रन्थाभ्युदयाय प्रार्थयते–यावदित्यादिना।

यावत्। प्रसन्नेन्दुनिभानना प्रसन्न आवरणशून्यो य इन्दुस्तन्निभमाननं मुखं यस्यास्तथोक्ता। श्रीर्लक्ष्मीः। नारायणस्य परमात्मनः। अङ्कं वक्षःस्थलम्। अलङ्करोति। तावत्। एष साहित्यदर्पणनामा। प्रबन्धः। लोके जगति। कवीनां विदुषाम्। मनः। सम्मदयन् प्रमोदं नयन्। प्रथितः। अस्तु। इन्द्रवज्राछन्दः, तल्लक्षणं चोक्तं प्राक्॥

प्रकरण–प्रबन्धयोः समाप्तिं निर्दिशति–इतीत्यादिना। पूर्ववदूह्यम्।

---

१ "अभिनवपयोदरसितेषु पथिकश्यामायितेषु दिवसेषु। मोहयति प्रसारितग्रीवाणां नृत्यं मयूरवृन्दानाम्॥" इति संस्कृतम्।

चरणरजांसि शिरोभिर्वोढुं भूभृद्वरा[1] अनेकशो यत्र ।
तदुदयसिंहनराधिपशासितमुद्भाति पाटनं नगरम् ॥ १ ॥
भुवनभावुकभावितभावनं भयभयावहनाममनोहरम् ।
शिवमहं शिवदत्तकविर्मुहुर्विनतवाञ्नतवाञ्छितपूरकम् ॥
भारद्वाजान्वयजनिरभूत्कुण्डुरामः पवित्रस्वान्ताराध्यः परमपुरुषाराधनव्यापृतात्मा ।
तस्यात्मोद्भूर्महितचरितः श्रीमतां धीमतां च नित्यं मान्यो जगति बलदेवेत्युपाह्वः प्रभूतः ॥ २ ॥
तत्सूनुर्निगमागमक्षमहितः शान्तो वदान्यः प्रियः सिद्धः श्रीशिवनाथसूरिरुदभूद्दिग्व्क् प्रसिद्धो गुणैः ।
तस्यात्मप्रभवः प्रभूतधिषणो निर्मत्सराराधकः पृथ्व्यां श्रीशिवदत्तइत्यधिगताभिख्योऽहमेष स्थितः ॥३॥
एतेन साहित्यमहासमुद्रमुन्मथ्य रत्नानि ततो गृहीत्वा ।
व्याख्येयमाविष्क्रियते स तेषां निधानभूता रुचिरा प्रयत्नात् ॥ ४ ॥
साहित्यदर्पणस्येयं रुचिरा प्रथिता गुणैः । रचिता शिवदत्तेन विश्वनाथस्य तुष्टये ॥ ५ ॥
लोचनाचलनन्देन्दुमिते विक्रमवत्सरे । भाद्रमासेऽसिते पक्षे दशम्यां रविवासरे ॥ ६ ॥
पूरिता कविरत्नेन व्याख्येयं रुचिराऽभिधा । चिराय रुचिरा भूयात् स्वगुणैर्विमलात्मनाम् ॥७ ॥
यदिहोद्भावितं नूत्नं प्राचीनं वा मतं मया । तत्सर्वं सुविचार्य्यैव न मनागवहेलया ॥ ८ ॥
अथापि स्खलितं क्वापि कथञ्चिदपि यन्मनाक् । संशोधयन्तु तत्सर्वं करुणावरुणालयाः ॥ ९ ॥
इह यद्यपि भूयांसः सुलभा दोषाः समन्ततः सन्ति । न तथाऽपि सर्वथाऽऽस्ते विगुणं किमपीति हन्त तुष्यामि१०
अथवा रत्ननिधावपि न तथा सुलभानि सन्ति रत्नानि । प्रस्तरशङ्खवराटकशकलानि यथा पदेपदे हन्त ॥ ११ ॥

इति श्रीमद्भारद्वाजवंशावतंसानां सहृदयशिरोमणीनां सुगृहीतनाम्नां श्रीशिवनाथसूरीणां तनूभुवा स्वपितामह-
ज्येष्ठसहोदर ज्येष्ठात्मजानां समस्तशास्त्रनिष्णातानां प्रथितमहिम्नां श्रीदेवीसहायचरणानामाराधनया
गृहीतशास्त्रेण श्रीरम्भादेवीगर्भभुवा काव्यप्रकाशध्वन्यालोकादिव्याख्यात्रा भगवत्सुधाशत-
कार्याशतकसंस्कारसर्वस्वादिनिर्मात्रा श्रीशिवदत्तकविरत्नेन विरचितायां
साहित्यदर्पणव्याख्यायां रुचिरायां दशमः परिच्छेदः ।

समाप्ता चेयं व्याख्या ।

इति शम् ।

---

१ भूभृद्वराः शैलेन्द्राराजनिष्ठाः ।

# उत्तरभागस्य शोधनसूचना ।

| इदम् | | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|---|
| पुनः, | ... | पुनः | २ | २९ |
| ३दुःश्रव | ... | स्पष्टम् । तत्र ३दुःश्रव | ३ ३ | ४ ५ |
| इत्यत्र | ... | दुष्टत्वं निर्दिशति इत्यत्र | ४ | ३१ |
| 'कातार्थ्य' मितिपदम् | | कातार्थ्यमितिपदम् | ४ | ३१ |
| विधि | ... | निधि | ७ | ११ |
| यात् | ... | भावः | ७ | २२ |
| स्तव | ... | स्तत्र | ८ | १७ |
| अयुक्तः | ... | प्रयुक्तः | ९ | ३० |
| स्तद्वाचकइतियावत् | | स्तद्वाचकः | ११ | १२ |
| वसति | ... | वस्तुति | ११ | १२ |
| कारीति | ... | कारीति तस्य भावः | ११ | २१ |
| नन्तरं | ... | न्तरं | १२ | २६ |
| विधेयो | ... | विधेयो | १२ | २९ |
| पूर्व | ... | पूर्वं | १३ | २८ |
| नञ्, | ... | नञ् | १४ | ११ |
| 'अश्राद्धभोजी' त्युक्ते | | 'अश्राद्धभोजी' त्युक्ते | १५ | ३० |
| सदृग् ग्राही | | सदृग्ग्राही | १६ | ८ |
| पादकः । | ... | पादकः ।' | १७ | १६ |
| काराः | ... | काराः । | १७ | २१ |
| 'पटयसा | ... | 'पटयसी' | १८ | ४ |
| 'दृढभूम | ... | 'दृढभूमि' | १८ | १२ |
| 'प्रिय | ... | 'प्रिय' | १८ | १२ |
| दियमिति | ... | दियम्' इति | १८ | २४ |
| मिति | ... | म्' इति | १८ | २५ |
| रज्यतीति | .... | रज्यति' इति | १९ | १ |
| इत्यत्र वा | ... | इत्यत्र पुनः | १९ | २ |
| कृत् | ... | कृतः | १९ | ६ |
| ( प्रागुव्याख्याते ) पद्ये इति यावत् । पुनः | | प्राग्व्याख्याते पद्ये । पुनः । | १९ | १८ |
| रचना । च | ... | रचना । च । | १९ | २१ |
| प्रतीतिकृत् । | ... | प्रतीतिकृतः इदमादय इति पूर्वतोऽन्वेति | १९ | ३२ |

| इदम् | | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|---|
| शब्दः, वा | ... | शब्दः, इदंशब्दो वा | १९ | ३६ |
| मात्रम् । | ... | मात्रम् । यथा– | २० | १ |
| मेव । प्राप्तः | ... | मेव प्राप्तः | २० | ९ |
| विधेवतया | ... | विधेयतया | २० | ११ |
| तच्चबस्य अपि | | तच्छब्दस्य।अपि | २० | १४ |
| प्राप्तः | ... | प्राप्तः | २० | १६ |
| इति ।, | ... | इति । | २० | २४ |
| गमकत्वम् । | | गमकत्वं | २० | २५ |
| अपि | ... | अपि | २० | २५ |
| पापम् | ... | पापम् | २० | ३१ |
| स्यादिना | ... | त्यादिना | २२ | ७ |
| 'वेद' | ... | 'येद' | २२ | १८ |
| लिङ्गेनेति, | ... | लिङ्गेनेति | २२ | २० |
| 'विपन्नस्येव | ... | 'विपन्नस्यैव | २२ | २६ |
| माङ्योग | ... | माङ्योगे | २२ | ३५ |
| 'दुःश्रवत्त्व' | ... | 'दुःश्रवत्व' | २३ | २७ |
| गच्छा | ... | गच्छ । | २३ | २९ |
| पाठे | ... | पाठे । | २४ | ३० |
| मणित्व | .... | ऋणी त्व | २४ | ९ |
| मत्तां | ... | मत्ता | २४ | ३७ |
| यत् प्रत्यय इति यावत् | | यत्प्रत्ययः | २५ | ११ |
| स्यार्थे इति यावत् | | स्यार्थे | २५ | १२ |
| मानिनि मान ! | | मानिनि ! मान | २५ | २२ |
| हिमुञ्च | ... | हि । मुञ्च | २५ | २२ |
| यावत् । न । समर्थम् | | भावः। न । समर्थम् | २५ | २८ |
| स्थले | ... | स्थले । | २६ | १० |
| व्यवस्थिते | ... | व्यवस्थिते | २६ | २२ |
| एव । इतीत्यतः | | । एव । इतीत्यतः। | २६ | २९ |
| हन् प्रकृते | ... | हन्प्रकृते | २६ | ३७ |
| तु | ... | तु । | २७–२६ | ३० |
| लिंग | ... | लिङ्ग | २७ | ३१ |
| विसर्गत्वस्य | ... | लुप्ताहतविसर्गत्वस्य | २८ | १७ |
| कथितपदताः | ... | कथितपदताः | २८ | १८ |
| पानोप | ... | यानोप | ३३ | १७ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| तु | **तु** | ३३–१९।२७ | |
| उपात्तम् | उपात्तम् । | ३३ | २० |
| 'त्वये' | 'त्वया' | ३४ | १० |
| अन्तेलघु | अन्ते लघु यस्य | ३४ | २९ |
| पा मौघा | पाप्मौघा | ३४ | ३१ |
| शेषः । | शेषः ।' | ३५ | १७ |
| 'तस्मात् स्फुटमिहपतत् | तस्मात्स्फुटमिह पतत् | ३६ | १२ |
| कमले । | कमले तद्रूपे इति यावत् | ३६ | १६ |
| तु | **तु** | ३६ | २० |
| वेदं | वेदं तादृशं, | ३६ | २३ |
| इत्यत्र | इत्यत्र | ३६ | २४ |
| मुचितम् । | 'मुचितम् । नाशयन्तो घन-ध्वान्तं तापयन्तो वियोगिनः। पतन्ति शशिनः पादा भास-यन्तः क्ष्मातलम् ॥' अत्र चतुर्थपादो वाक्यसमाप्तावपि पुनरुक्तः । | ३७ | २ |
| ल्पमेवत | ल्पितरेव | ३७ | ६ |
| अभवन्मत | समाप्तपुनरात्तत्वमुदाहरति, 'घनध्वान्तं–निबिडभूतम-न्धकारम् । **नाशयन्तः** विनाशयन्तः । **वियोगिनः** पथिकान् । **तापयन्तः** मद-नाग्निं प्रज्वाल्य सन्तापं नय-न्तः। **क्ष्मातलं** पृथिवीम् । 'क्ष्मा तितिक्षा पृथ्वी च'इति धरणिः । **भासयन्तः** । **शशिनः** चन्द्रस्य । **पादाः** किरणाः । 'पादा रश्म्यङ्घ्रि-तुर्यांशाः' इत्यमरः। **पतन्ति** विभान्तीति भावः । ( पत-न्तीतिपदं पादशब्दस्य चर-णार्थकत्वमपि निर्वोढुं प्रयुक्त-मिति बोध्यम् । तथा च पा-दाः पादा इवेत्यर्थो ध्वन्यते॥' अत्रास्मिन्नुदाहृते पद्ये चतु-र्थपादः 'भासयन्तः क्ष्मा-तलम्' इत्यात्मा चरणः । **वाक्यसमाप्तौ** "पतन्ति शशिनः पादाः" इत्यन्तस्य वाक्यस्य समाप्तिसद्भावे जाते। **अपि । पुनरुक्तः** । अतो-ऽत्र समाप्तपुनरात्तत्वमिति-भावः । अभवन्मतसम्ब-न्धत्व | ३७ | ३२ |
| इक्षसे | ईक्षसे | ३८ | ४ |
| कल्प्याते | कल्प्यते | ३८ | १५ |
| इत्येवम् | इतीत्येवम् | ३९ | १२ |
| अत्र | उदाहृतमर्थं निर्दिशति, अत्र । | ३९ | २८ |
| कपालिनः । | कपालिनो नरमुण्डा-स्थिधारिणः, | ३९ | ३२ |
| कम्मे | किम्मे | ४० | ३ |
| कम् | किम् | ४० | १६ |
| न | न । | ४० | ३५ |
| इह– | । इह । | ४१ | १६ |
| तत्समानाभ्यां | **तत्समानाभ्यां** | ४१ | ३३ |
| भृश | भृशं | ४२ | २९ |
| पद | पदा | ४३ | २८ |
| त्यस्मात् | इत्यस्मात् | ४३ | ३३ |
| स्थानस्थ | ऽस्थानस्थ | ४४ | १० |
| मत्सराः | मत्सरा इति शेषः | ४४ | १२ |
| पादर्थस्य | पदार्थस्य | ४४ | १९ |
| निवेशेना | निवेशेना | ४४ | ३४ |
| म्पद्य | म्पद्य | ४५ | ८ |
| शैल दुर्गे | शैलदुर्गे | ४५ | १५ |
| इत्येवम् । | इत्येवम् । | ४५ | १७ |
| अत्र । | लक्ष्यं निर्दिशति,अत्र | ४५ | २६ |
| धिगित्यभिधाने' | धिगि' त्यभिधाने | ४५ | २६ |
| क्षामा | क्ष्मा | ४६ | ३३ |
| इत्यनभि | इति हेतोरनभि | ४७ | १७ |
| अपि यदि विच्छि-त्यन्तरं नवीकरणं | अपि । यदि । विच्छि-त्यन्तरं चमत्कारान्तरमन्य-विधया नवीकरणमिति या-वत् | ५१ | २२ |

| इदम् | एव | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| इति कथितपदत्वात् भेदः। स्पष्टमन्यत्। | इति कथितपदत्वात् तद्दोषदुष्टत्वाद्धेतोः। भेदः। नवीकृतत्वे दोषाभाव इति तदुदाहृत्य दर्शयति, नवीकृतत्वे। यथा 'भानुः सूर्यः। सदा निरन्तरम्। युक्ततुरङ्गो युक्ता रथे नियोजिताः तुरङ्गा अश्वा यस्य तथाभूतः। एव। गन्धवहः वायुः। रात्रिन्दिवम् अहोरात्रम्। प्रयाति सञ्चरति। शेषः अनन्तदेवः। सततं सर्वदा। धरित्रीं पृथिवीम्। बिभर्त्ति। एषः भान्वादिवत्सदायुक्ततुरङ्गाद्यात्मना भवनरूपः। षष्ठांशवृत्तेः षष्ठोऽशः शस्यादेः षष्ठो भागःएव वृत्तिर्जीवनोपायो यस्य तादृशस्य, न्यायप्रवृत्तस्य राज्ञ इति भावः। अपि। धर्मः। कञ्चुकिनो दुष्यन्तं प्रत्युक्तिरियम्। इन्द्रवज्राछन्दः। अत्र चतुर्थपादार्थेन पादत्रयप्रतिपाद्यार्थो नवीकृतः। | ५१ | २३ |
| इति ... | इति ॥२३॥' | ५१ | २५ |
| वृणुते ... | वृणते | ५२ | ७।३ |
| रावणः ... | रावणः | ५२ | १ |
| शब्दत्वेन आर्थत्वे | शाब्दत्वेन आर्थत्वेन च | ५६ | २३ |
| गति ... | गति | ५६ | २४ |
| वाम्बुधि ... | वाम्बुधिं | ५७ | ६ |
| भाव कथने ... | भावकथने | ५९ | २३ |
| ऽभिमा ... | ऽभिमता | ५९ | २८ |
| एवमप्यपरे ... | एवमपरेऽपि | ५९ | ३७ |
| द्यभिव्यक्ति ... | द्यभिव्यक्ति– | ६० | ७ |
| सखी नवा ... | सखीर्नवा | ६० | १० |
| लोचने नेत्रे ... | लोचने | ६० | ३४ |
| परिहृदया ... | परिहारहृदया | ६० | ३६ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| दांनां ... | दीनां | ६१ | ५ |
| द्वितीये ... | द्वितीये | ६१ | ३४ |
| दोषाय ... | पोषाय | ६३ | १४ |
| कर्णंनि ... | कर्णननि | ६३ | २० |
| स्वयंकृतम् ... | स्वयङ्कृतम् | ६३ | २५ |
| तथाहि ... | तथाहि | ६४ | २१ |
| दोष, ... | । दोष | ६४ | २४ |
| प्रतीतिः प्रसिद्धि | प्रतीतिप्रसिद्धि | ६४ | २९ |
| सुन्दरि ... | सुन्दरी | ६५ | ६ |
| लीनं ... | लीनं | ६५ | १६ |
| ज्योतिषा। | ज्योतिषा | ६६ | १७ |
| निषेधः ... | निषेधात् कर्मणि षष्ठी | ६६ | २४ |
| भेदस्म ... | भेदस्य | ६६ | ३२ |
| यस्मि ... | तस्मि | ६७ | २६ |
| वेपो ... | वेषो | ६७ | ३२ |
| काङ्क्षाऽऽ ... | ऽऽकाङ्क्षा | ६८ | ११ |
| प्राक्॥४०॥अत्रेदंतत्त्वम् | प्राक्। | ६८ | २३ |
| तत्पूर्वपद्यम्। ... | तु तत्पूर्वपद्यम्॥४०॥' | ६८ | २४ |
| लोचयोः ... | लोचनयोः | ६८ | ३६ |
| 'इत्यत्र ... | इत्यत्र' | ६९ | २ |
| तद्दर्शिनं ... | तद्दर्शिनं | ७३ | १७ |
| ऽनुशेते ... | नुशेते | ७३ | १९ |
| तादृशम्। ... | तादृशम् | ७३ | ३५ |
| व्यञ्जनी यायाम्... | व्यञ्जनीयायाम् | ७४ | ११ |
| गुणः। ... | गुणः | ७४ | ३२ |
| मञ्च ... | मुञ्च | ७४ | ३३ |
| १४सन्दग्धत्वं... | १४सन्दिग्धत्वं | ७५ | २ |
| इत्यादैा ... | इत्यादौ | ७५ | १० |
| गुणः ... | गुण | ७५ | ११ |
| अत्र चपृथु ... | अत्र च पृथु | ७५ | ३० |
| अत्राहार्यो ... | अध्याहार्ये | ७५ | ३५ |
| भावः ... | भावः ( | ७६ | १० |
| अहम् ... | अहम् | ७६ | २४ |
| । प्रतिपाद्ये ... | प्रतिपाद्ये | ७७ | १८ |
| मद्य ... | मद्यै | ७८ | १ |
| त्यश्च भीषणो ... | त्यश्चभीषणो | ७८ | ३६ |
| वपिहिता ... | प्रभावपिहिता | ८१ | १८ |
| एतत्। प्रभा ... | एतत् | ८१ | १८ |
| ऽभिमुख्यं ... | ऽऽभिमुख्यं | ८३ | ६ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| सप्वरसा ... | साध्वसरसा | ८३ | २७ |
| भेजिरे ... | भेजिरे । माघस्येदं पद्यम् | ८४ | २८ |
| मेकत्र ... | मेकत्र ? | ८६ | ६ |
| शेषः । ... | शेषः । तथोक्तं शुद्धोदनिना "शृङ्गारहास्यौ करुणवीभत्सौ वीररुद्रकौ । भयानकाद्भुतौ मित्रे मिथः शान्तो न कस्यचित् ॥ शान्ते करुणवीभत्सौ न कश्चिद्द्वेष्टि चाद्भुतः।शृङ्गारशान्तकरुणौ हास्यस्य करुणो रिपुः ॥" इति । | ८७ | २० |
| भिधेपान् ... | धेयान् | ८९ | ८ |
| त्वः ... | त्वप्रत्ययः | ८९ | ३० |
| निष्ठन्ते ... | तिष्ठन्ते | ९० | २२ |
| वत्त्वं ... | तद्वत्त्वं | ९० | ३३ |
| आह्लादस्यैव ... | आह्लादनस्यैव | ९१ | २५ |
| ज्ञानं ... | ज्ञानमिति यावत् | ९१ | ३५ |
| यावत्तेना ... | हृदयं तेना | ९१ | ३६ |
| रत्यादिनां ... | रत्यादीनां | ९२ | ६ |
| शान्तोनिर्वेद ... | शान्तः शम | ९२ | ३३ |
| निर्वेदस्य ... | शमस्य | ९२ | ३३ |
| निर्वेदस्या ... | 'शमात्मकस्य निर्वेदस्या | ९२ | ३५ |
| त्करुणे ... | त्करुणे | ९३ | ७ |
| वर्गाणा म्मध्ये ... | वर्गाणाम्मध्ये | ९३ | २० |
| तृतीया ... | त्सहार्थे तृतीया | ९३ | २४ |
| व्याख्यातारः ... | तद्व्याख्यातारः | ९३ | २५ |
| वर्णान्तरा ... | वर्णान्तरा– | ९३ | २५ |
| विसर्गाभ्यां ... | विसर्गेण | ९३ | ३२ |
| चुम्बित ... | चुम्बितां | ९४ | १७ |
| गतस्य इत्युक्तम् । तत्र | गतस्य' इत्युक्तम् । तत्रे | ९४ | २१ |
| त्वश्रव्यादि ... | दुःश्रव्यत्वादिदुष्ट | ९४ | २१ |
| त्वश्रव्यादीनां ... | अश्रव्यादीनां | ९४ | २९ |
| 'इतो' ... | 'इती' | ९५ | ५ |
| वैदर्भी तन ... | वैदर्भीतन | ९५ | २८ |
| 'स्ते' ... | 'स्त' | ९५ | ३६ |
| भङ्गस्य ।' ... | भङ्गाय ।' | ९५ | ३७ |
| ठकारस्यापि ... | ठकारस्यापि च | ९६ | ३३ |

| इदम् | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|
| रौदे चित्तस्य दीप्तत्वम | रौद्रे चित्तस्य दीप्तत्वम | ९७ | १७ |
| यावत् ... | भावः | ९७ | १९।२० |
| अस्योजसः ... | | ९७ | २२ |
| दीनामिति यावत् | दीनां च | ९७ | २३ |
| द्वितोय ... | द्वितीय | ९८ | १३ |
| वर्ण, श्चतुर्थः ... | वर्णः, चतुर्थः | ९८ | १४ |
| युक्तौ ... | युक्तौ | ९८ | १५ |
| उद्धतस्थ ... | उद्धतस्य | ९८ | २० |
| स्तेन ... | इति औद्धत्यं तेन | ९८ | २१ |
| पर हस्वैश्च ... | परहस्वैश्च | ९८ | २७ |
| करण्ठाद्गलन्तो प्रवहन्तो | कण्ठाद्गलन्ती प्रवहन्ती | ९९ | ७ |
| महंन ... | महं न | १०० | ३ |
| मेवेति ... | मेवेति श्रुतिमात्रं | १०० | ८ |
| कथम् । ... | कथं | १०० | १७ |
| लुंठन ... | लौंठन | १०० | १७ |
| द्वितीऽङ्के । वसन्ततिलं | द्वितीयेऽङ्के । वसन्ततिलकं | १०० | १९ |
| ध्वनिनीः ... | ध्वानिनीः | १०१ | ५ |
| मकरेन्द्रा ... | मकरेन्द्रविशेषा | १०१ | २८ |
| पद्यं ... | नागानन्दस्य पद्यं | १०१ | ३६ |
| दुर्म्रहिलता ... | दुर्म्रेहिलता | १०२ | १० |
| पाठो ... | 'विरस्यतानावह' इत्येव वा पाठो | १०२ | १६ |
| संहार ... | संहारस्य | १०२ | ३१ |
| सौकुमार्यम् ... | सौकुमार्यम् | १०३ | २१ |
| प्रयोज्य ... | प्रयुज्य | १०५ | २७ |
| नुपपयत्तेश्च ... | नुपपत्तेश्च | १०५ | ९ |
| आरब्धः ... | आरब्धस्तथाभूतेन | १०५ | २३ |
| धृतंसामर्थ्यं ... | धृतसामर्थ्यं | १०५ | २७ |
| आभोग इति स ... | आभोगो यत्र तद् | १०५ | ३३ |
| एतेतौ रथौ ।' ५।३।४ | 'इदम इश् ।' ५।३।३ | १०६ | १३ |
| यावत् ... | भावः | १०९–११० | १३ |
| उपपत्ति ... | उपपत्ति | १०९ | १० |
| गुणः ... | गुणविशेषः | १०९ | १४ |
| पश्चादुपेत्य ... | 'पश्चादुपेत्य' | १०९ | २६ |
| रूपा ... | रूप | १११ | २३ |
| तदल्पकाल ... | तदनल्पकालसाध्यनिरूपण | ११३ | १७ |
| त्कर्षयन्तीति ... | त्कर्षयतीति | ११३ | २७ |

| इदम् | | एवं | पृष्ठस्य | पङ्क्तौ |
|---|---|---|---|---|
| समगुणा | ... | समस्तगुणा | ११४ | ४ |
| तथा विधै | ... | तथाविधै | ११४ | ६ |
| भिन्नत्वनैव | ... | भिन्नत्वेनैव | ११४ | ११ |
| मभ्युपेयात् | ... | मभ्युपेयत्वात् | ११४ | १२ |
| मर्हतीति | ... | मर्हन्तीति | ११४ | २० |
| वला | ... | वला | ११४ | २१ |
| चतुर्थी | ... | चतुर्थी | ११५ | १४ |
| भिहित्वा | ... | भिहितत्वा | ११५ | १५ |
| भिधानं | ... | भिधानं तु | ११५ | १५ |
| पञ्चपट् | ... | पञ्चष | | |
| यात्पुन | .... | या पुन | ११५ | १५ |
| ऽतिरिच्यते | ... | अतिरिच्यते | ११५ | १५ |
| पादेन, | ... | पादेन | ११५ | १६ |
| ताऽऽवन्तिका | ... | साऽऽवन्तिका | ११५ | १८ |
| वैदर्भि | ... | वैदर्भी | ११६ | २ |
| प्राणक्षारा चसु | ... | प्राणाक्षरा चसु | ११६ | ३ |
| यावत् | ... | बोध्यम् | ११६ | २४ |
| समासा भावेन | ... | समासाभावेन | ११७ | १३ |
| पञ्च | ... | पञ्च वा | ११७ | २९ |
| लक्षण्यमि | ... | लक्षण्यम्' इ | ११८ | ७ |
| दिक्तौजः | ... | दिक्तौजः– | ११८ | १६ |
| मधुरां | ... | 'मधुरां | ११८ | १९ |
| नेताति | ... | नं चाति | ११९ | ४ |
| आह | ... | आह | ११९ | २८ |
| रचनादी। | ... | रचनादी– | १२० | ८ |
| घातेसु | ... | घातेषु | १२० | १४ |
| दुन्दभिः | ... | दुन्दुभिः | १२० | २८ |
| रहिति | .. | रहित | १२२ | ४ |
| नुगुणः | ... | नुगुणाः | १२२ | २४ |
| यामिनं | ... | यामिणं | १२३ | ९ |
| भिन्द्वया | ... | भिन्द्या | १२३ | २२ |
| मनुप्रासो। | ... | मनुप्रासो– | १२३ | ३० |
| वि शेषे | ... | विशेषे | १२७ | १९ |
| स्वर | ... | 'स्वर | १२७ | २२ |
| छेकोविदग्धः।... | | छेकश्छेकपदम्। विदग्धो विदग्धार्थकम्। | १२७ | ३६ |
| त्यपि | ... | त्यपि– | १२८ | ३ |
| लुव्ध | ... | लुब्ध | १२८ | ५ |
| नरनेक | ... | पुनरनेक | १२८ | १६ |
| पुाम्यं, | ... | साम्यं, | १२८ | १९ |
| उद्गीर्ण | ... | उद्गीर्णम् | १२८ | २९ |
| र युक्तम् | ... | रप्युक्तम् | १२९ | १९ |
| प्रयोजत्वा | ... | प्रयोजकत्वा | १३० | १२ |
| सम्भवतो | ... | सम्भवदन्ते | १३० | २७ |
| प्यसम्भवात् | ... | प्य सम्भवात् | १३० | २८ |
| भिधाना | ... | भिधाना– | १३१ | १० |
| स्मेरा | ... | स्मेररा– | १३२ | १७ |
| प्रतीत्या | ... | प्रतीत्य | १३२ | ३८ |
| षद्यांशे | ... | पद्यस्यांशे | १३३ | ९ |
| 'अन्नाय | ... | अन्ताय | १३३ | १३ |
| जयते पित शा | ... | जयतेपितशा | १३४ | २१ |
| पर | ... | परत्र | १३४ | ३० |
| मुञ्चति | ... | मुञ्चेति | १३५ | ८ |
| लंकु, रुते | ... | लङ्कुरुते | १३५ | १७ |
| व्यन्त्य | ... | प्यन्त्य | १३५ | ३७ |
| मन्त्य; पाश्चात्य | ... | मन्त्यपाश्चात्य | १३६ | २७ |
| हे महदे | ... | 'हे महदे | १४५ | १४ |
| सन्धानं | ... | सन्धानं प्रतिज्ञेति यावत् | १४५ | १५ |
| तम् | ... | तथाभूतम् | १४५ | १६ |
| मरण, मा | ... | मरणमितियावत्आ | १४५ | १९ |
| अत्र | ... | इति। अत्र | १४५ | २२ |
| उदाहरणानि | ... | अन्यासामुदाहरणानि | १४५ | २७ |
| वाक्ये यत्र कस्मि- | ... | 'वाक्ये यत्रैकस्मि- | १४६ | २२ |
| श्लेष | ... | श्लेषःसभङ्गाभङ्गश्ले- षश्च | १४७ | १० |
| इती | ... | इती | १४७ | २५ |
| स्तुत्यम्। | ... | स्तुत्यं स्तोतुमुचि- तम्। | १४७ | २५ |
| नाम। आहुः | ... | नाम। आहुः | १४७ | २५ |
| न चास्यं | ... | न चास्य | १४८ | ३८ |
| रूपकस्येति | ... | न रूपकस्येति | १४९ | ३३ |
| द्रववा | ... | द्रवव– | १५० | ५ |
| प्रकृते न | ... | प्रकृतेन | १५० | ८ |
| सायिता | ... | सायिना | १५० | ११ |
| सायिना व | ... | साविना वा | १५० | ११ |
| मृदो | ... | मृदो | १५० | २६ |
| प्रैक्षि- | ... | प्रेक्षि- | १५१ | ३५ |
| व्यङ्गः॥ | ... | व्यङ्ग्यः॥ | १५२ | २४ |
| न्तरा | ... | न्तराद् | १५२ | २८ |

